अभक्तेष्वनपत्येषुपाषण्डलौकिकेषुच
कटुतैलसमायुक्तंनस्येपानेचदापयेत् ५३
सूर्यावर्तजलंपुत्रसर्वरोगाद्विमुच्यते
मूलमंत्रस्तुजप्तव्यः संध्यायांहोमकर्मसु ५४
जप्यमानेतुंनश्यंतिरोगाः क्रूरग्रहास्तथा
किमन्यैर्बहुभिः शास्त्रैर्मंत्रैर्वाबहुविस्तरैः ५५
सर्वशांतिरियंवत्ससर्वार्थप्रतिसाधिका
नास्तिकायनदातव्यादेवब्राह्मणनिंदके ५६
गुरुभक्तायदातव्यानान्येभ्योपिकदाचन
प्रातरुत्थाययोनित्यंकीर्तयिष्यतिमानवः ५७
गोघ्नः कृतघ्नकश्चैवमुच्यतेसर्वपातकैः
शरीरारोग्यकृच्चैवधनवृद्धियशस्करः ५८
जायतेनात्रसंदेहोयस्यतुष्येद्दिवाकरः
एककालंद्विकालंवात्रिकालंनित्यमेवच ५९
यः पठेद्रविसान्निध्येसोऽभीष्टंफलमाप्नुयात्
पुत्रार्थीलभतेपुत्रंकन्यार्थीकन्यकांलभेत् ६०
विद्यार्थीलभतेविद्यांधनार्थीलभतेधनं
शृणुयात्संयुतोभक्त्याशुद्धाचारसमन्वितः ६१
सर्वपापविनिर्मुक्तस्सूर्यलोकंव्रजत्यपि
भास्करस्यव्रतेयच्चव्रताचारमखेषुच ६२
पुण्यस्थानेषुतीर्थेषुपठेत्कोटिगुणंभवेत्
ग्रहेभोज्येषुपूजायांब्रह्मभोज्येद्विजाग्रतः ६३
यइदंपठतेविप्रस्तस्यानंतफलंभवेत्
तपस्विनांचविप्राणांदेवानामग्रतः सुधीः ६४
यः पठेत्पाठयेद्वापिसुरलोकेमहीयते ६५
इति श्रीपाद्मपुराणेप्रथमेसृष्टिखंडेसूर्यशांतिर्नामाष्टसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः

व्यासउवाच-
मध्यदेशेस्वराट्सम्राट्भद्रेश्वरइतिश्रुतः

तपोभिर्बहुभिःपूतोव्रतैर्नानाविधैरपि १
देवांस्तुपूजयेन्नित्यंसुभावेनसदाखलु
तस्यसव्येऽभवत्कुष्ठंकरेश्वेतमजायत २
ततोभिषक्प्रयोगाच्चलक्षणंदृश्यतेपुरा
आहूयद्विजमुख्यांश्चमंत्रिणःसोब्रवीद्वचः ३
राजोवाच-
किल्बिषंमेकरेविप्रादुःसहंलोकगर्हितं
तस्मात्पुण्यंमहाक्षेत्रंयत्रत्यक्ष्यामिविग्रहं ४
आज्ञापयतधर्मज्ञाःपरलोकहितायवै
वंशहीनस्यमेवीराःप्रेत्यामुत्रहितंचयत् ५
तद्ब्रूतसुप्रसन्नामउद्दिष्टंयत्करोम्यहं
द्विजाऊचुः
परित्यक्तेत्वयाराष्ट्रेधर्मशीलेनधीमता ६
नष्टंजगदिदंराजंस्तस्मान्नोवक्तुमर्हसि
अयमस्यप्रतीकारोह्यस्माभिरवगम्यते ७
सूरंमंत्रैर्महादेवंयत्नादाराधयप्रभो
राजोवाच-
केनोपायेनविप्रेंद्रास्तोषयिष्यामिभास्करं ८
अमेध्येनाथकुष्ठेनलोकानांगर्हितेनच
अदृश्यःसर्वभूतानांगर्हितोस्मिद्विजातयः ९
किंकरिष्यामिराज्यंचकिंस्यादाराधनेनतु
द्विजाऊचुः-
अत्रस्थित्वास्वराज्येतुसमुपास्यविरोचनं १०
प्रमुच्यकिल्विषाद्घोरात्स्वर्गंमोक्षंचलप्स्यसे
एतच्छ्रुत्वातुराजेंद्रःप्रणिपत्यद्विजोत्तमान् ११
आकार्षीत्तस्यसूर्यस्यपरमाराधनंचयत्
नित्यपूजांतथामंत्रैरुपहारैर्विलेपनैः १२
फलैर्नानाविधैरर्घैरक्षतातपतंडुलैः
जपापुष्पार्कपर्णैश्चकरवीरकरंजकैः १३
रक्तकुंकुमसिन्दूरैस्तथावासंतिकादिभिः

सुगंधकदलीपत्रैस्तत्फलैःसुमनोहरैः १४
अर्घ्यमौदुंबरेकृत्वासदासूर्यायपार्थिवः
आदित्यसंमुखोदत्तेसदामंत्रिपुरोहितैः १५
महिषीभिस्तथाचार्घोभोगिनीभिःसमंततः
सर्वैरंतःपुरस्थैश्चसपत्नीकैश्चरक्षिभिः १६
चेटवर्गैस्तथान्यैश्चदीयतेऽर्घोदिनेदिने
अर्कशांतिभिरत्युग्रैःस्तोत्रमंत्रादिभिःपरैः १७
मूलमंत्रान्यमंत्रैश्चयजंतिस्मदिवाकरं
तथार्कांगव्रतंचान्यत्कृतंतैःसुसमाहितैः १८
क्रमात्समांसमासाद्यरोगस्यांतंगतोनृपः
बाधितेचामयेघोरेसराजानिखिलंजगत् १९
नियम्यकारयामासकल्येचयाजनव्रतम्
एवमेवजपापुष्पंसुगंधंकदलीफलम् २०
बाणैर्जायाभिरालभ्यमर्कपर्णान्यपुष्पकं
एवमेवमहापुण्यंकृत्वासर्वजनप्रियं २१
हविष्यान्नोनिराहारोजनोयजतिभास्करम्
एवमेवत्रिभिर्वर्गैरर्चितस्तैर्विभाकरः २२
संतुष्टोभूपमागम्यकृपयाचाब्रवीद्वचः
वरंवरयचाभीष्टंयस्तेमनसिवर्तते २३
सर्वेषांवोहितार्थायसानुगःपुरवासिनाम्
राजोवाच-
यदीच्छसिवरंदातुंसर्वलोचनमतिप्रियम् २४
सर्वेषांनःपरंस्वर्गंत्वत्सकाशेभवत्विति
सूर्यउवाच-
अमात्यास्तेद्विजाविप्राःसदारास्सपरिच्छदाः २५
नवीनयौवनाःशुद्धायावदाभूतसंप्लवम्
तिष्ठंतुमत्पुरेरम्येसर्वभोगैर्निरामयाः २६
सुरद्रुमैःसुसंपूर्णैःप्रासादैर्द्रुमकल्पकैः
प्रमदाभिर्महाभागनृत्यगीतादिभिःपरैः २७
पंचकल्पांतरेराजामन्वादौत्वंभविष्यसि

अमीतेमनुजाभूपपुरस्थाश्चपुरोधसः २८
तथाजनपदस्थाश्चविद्वांसोधनिनोनराः
तत्रमत्तोवरंलब्ध्वासुखंस्वर्गमवाप्स्यथ २९
एवमुक्त्वाजगच्छन्नुस्तत्रैवांतरधीयत
ततोभद्रेश्वरोराजासपुरोदिविमोदते ३०
तत्रकीटादयोयेचतेपीताःससुतादयः
स्वर्गेदेवद्रुमेभोग्यंकुर्वंतिमहदद्भुतम् ३१
एवमेवनृपाविप्रामुनयश्शंसितव्रताः
येचक्षत्रादयोवर्णास्सूरस्वर्गंययुर्द्रुतम् ३२
कैश्चिदभ्यर्थितंवित्तंपुत्रदारास्तथापरैः
सुखंस्वर्गंतथारोग्यंभास्करस्यप्रसादतः ३३
पुण्यकूटमिदंभद्रंयःपठेन्मानवःशुचिः
सर्वपापक्षयस्तस्यरुद्रवत्पूजितोभुवि ३४
सर्वसाक्षीभवेत्स्वर्गेवरदोभास्करप्रियः
शृणोतिसंयतोमर्त्यःसोभीष्टंफलमाप्नुयात् ३५
पारगःसर्वपापानांभास्करस्यैवसंसदि
वावदूकोभवेन्नित्यंश्रवणात्पुण्यवान्धनी ३६
इदंगुह्यातिगुह्यंचभास्करेणप्रचारितं
इदंयमायकथितंक्षितौव्यासेनकीर्तितम् ३७

इति श्रीपाद्मपुराणेप्रथमेसृष्टिखंडेभद्रेश्वराख्यानंनामैकोनाशीतितमोऽध्यायः ७९

## अशीतितमोऽध्यायः

वैशंपायनउवाच-
श्रुतोग्रहेश्वरस्यैषप्रभावस्त्वत्प्रसादतः
रव्यादीनांग्रहाणांचसाधनंनोवदद्विज १
केतेरव्यादयस्तेषांकथंतोषःकथंप्रियम्
कालेदेशेतुसंप्राप्तेदर्शनंतच्छिवाशिवम् २
व्यासउवाच-
ग्रहादयोयेलोकेतुभुंजंतिपुण्यपातकम्

शिवाशिवंचकुर्वीतिविश्वकर्मक्षयायवै ३
सूरःकालोंतकोज्ञेयोजनेषुचग्रहेषुच
तिग्मसौम्याच्चयोगात्सनिग्रहानुग्रहेप्रभुः ४
ग्रहभावाच्चतस्यैवसंतोषंनिगदाम्यहम्
उदुम्बरपलाशाभ्यांपल्लवाभ्यांजुहोतियः ५
आकृष्णेनेतिमंत्रेणमूलकेनाथशांतये
जुहुयादाज्ययुक्ताभ्यामभीष्टफलहेतवे ६
शांतयेसर्वरोगाणांवधबंधविमोचने
एकैकेनतुमंत्रेणहोतव्यंचशतंशतम् ७
शितंचच्छागलंदद्यात्सूरायादित्यवासरे
भोजयेद्ब्राह्मणान्शक्त्याहव्यकव्यैर्मनोहरैः ८
सप्तम्यांचसितेपक्षेपंचदश्यांतथैवच
रोगाद्विमुच्यतेरोगीनरोगात्कृच्छ्रमेष्यति ९
परमंचामरंसत्वमाब्रह्मस्तंबमात्रके
ब्रह्मांडेचाणुमात्रेचसूरःसंभावयिष्यते १०
संहारांतंक्रमात्सर्वमुत्पत्तिस्थितिकारणात्
प्राणसर्गेजनानांसपाताविश्वचरस्तनौ ११
मृत्युकालेतनोर्मध्यात्प्राणेनसहगच्छति
शीर्षान्तस्थःसदाचंद्रोद्विरष्टकलयायुतः १२
अहर्निशंसुधावृष्टिंदेहेवर्षत्यधोमुखः
जंतवस्तेनजीवंतिमहासत्वानुमात्रकाः १३
उर्व्यांसस्यानिपुष्णातितथास्थावरजंगमान्
एताभ्यांपुष्पवद्भ्यांचधारितंजनितंजगत् १४
तयोराराधनात्पुष्टिःसदापुण्यापरार्धिका
साधयेत्सर्वकार्याणिसाधकःसर्वदाशुचिः १५
नपूजयतियोमोहात्सुधांशुंमानवाधमः
आयुस्तस्यक्षयंयातिनरकंचाधिगच्छति १६
निष्कलंककलाधारगंगाधरशिरोमणे
द्वितीयायांजगन्नाथतुभ्यंचंद्रनमोस्तुते १७
तिथिमन्यामनुप्राप्यनमस्कारंविधोरपि

प्रकरोतिनरोयस्तुसोभीष्टंफलमाप्नुयात् १८
अत्रिनेत्रोद्भवश्रीमन्क्षीरोदमथनोद्भव
महेशमुकटावासतुभ्यंचंद्रनमोस्तुते १९
दिव्यरूपनमस्तुभ्यंसुधाकरजगत्पते
शुक्लपक्षेतथाकृष्णेत्रियामायांविदुर्बुधाः २०
ऊँ ह्रांह्रींसोमायनमः इतिजप्यमंत्रः
प्रभातेजपनीयः-
एवंयःपूजयेत्सोमंश्रावयेच्चशृणोतिवा
सपीयूषसमोलोकेभवेज्जन्मनिजन्मनि २१
एवंसहस्रनाम्नायःस्तौतिपूजयतेभुवि
सोऽक्षयंलभतेस्वर्गंपुनरावृत्तिदुर्लभम् २२
इतिसोमपूजा-
पित्तलेभाजनेकांस्येदधिपूर्णेघृतेशिवे
न्यूनोऽधिकस्तुविभवाच्छ्रुत्वाकर्मविमत्सरः २३
स्वर्णेवाराजतेवारेसौम्येकृष्णभवेबुधम्
संस्थाप्यसर्वसंस्थानेदद्याद्बहुसुतायच २४
परंभवतिसौभाग्यंपीयूषादधिकंभृशम्
स्त्रीणांचपुरुषाणांचनदौर्भाग्यंकदाचन २५
रूपसौभाग्यकामोहंदधिपूर्णंचभाजनम्
ददामिकांस्यपात्रस्थंदेहिसौभाग्यरूपकम् २६
द्विजायवाक्यपूर्वेणदद्याद्विमत्सरोनरः
शक्तितोदक्षिणादेयातथावस्त्रादिकंनवम् २७
भोज्यान्नंसर्वसम्पूर्णंतांबूलंसुमनोहरम्
पुष्पमालादिकंदद्याद्रूपसौभाग्यहेतवे २८
एवंयःकुरुतेदानंसोमोद्दिष्टंद्विजातये
स्वर्लोकेनरलोकेवारूपसौभाग्यभुग्भवेत् २९
इति श्रीपाद्मपुराणेप्रथमेसृष्टिखंडेसोमार्चनं-
नामाशीतितमोऽध्यायः ८०

एकाशीतितमोऽध्यायः

वैशंपायनउवाच-
उद्भवंलोहितांगस्यसंतोषंतुजनेषुच
प्रभावंवैभवंतेजःश्रोतुमिच्छामितत्त्वतः १
व्यासउवाच-
हरांशसंभवोदेवःकुजातःपृथिवीसुतः
सत्त्वस्थस्सत्वसंपूर्णश्शूरःशक्तिधरोभुवि २
तीक्ष्णःक्रूरग्रहोदेवोलोहितांगःप्रतापवान्
कुमारोरूपसंपन्नोविद्युत्पातमयःप्रभुः ३
अनेनभर्जितादैत्याःक्रव्यादायसुरद्विषः
दशायोगाच्चमनुजाउद्भिज्जाःपशुपक्षिणः ४
वैशंपायनउवाच-
शंभोरेषकथंजातःकथंजातोमहीसुतः
ग्रहोदेवःकथंक्रूरएतदिच्छामिवेदितुम् ५
कथमस्यभवेत्तुष्टिःसर्वलोकेषुसर्वदा
गुरोमय्याप्तभावेतुवदनिस्संशयंमुखात् ६
व्यासउवाच-
हिरण्याक्षकुलेधीमानसुराणांचपार्थिवः
अंधकेतिसमाख्यातोदैत्यःसर्वसुरांतकृत् ७
जातोविष्णुवरादेवजातोविष्णुपराक्रमः
तेनैवनिर्जितादेवास्सेन्द्राःक्रतुभुजःक्रमात् ८
ततोदेवाविधिंगत्वावचनंचेदमब्रुवन्
अन्धकेनैवचास्माकंहृतंराज्यंसुखंमखः ९
तस्मात्तस्यवधोपायउच्यतांतद्विधीयताम्
अथधाताब्रवीद्वाक्यंदेवानस्यचनैधनम् १०
नास्तिविष्णुवरादेवपीयूषस्यचभक्षणात्
किंतुतस्यासुरत्वस्ययथापरिभवोध्रुवम् ११
कुर्वेलोकहितार्थायश्रद्धांकामसमन्विताम्
विचिकित्सातुतत्रैवसर्वास्त्रीरतिगच्छति १२
त्यक्त्वैकांपार्वतींदुर्गांनतस्यमानसंस्थिरम्

ततःक्रुद्धोजगत्स्वामीतंचवैरूप्यतांनयेत् १३
ततोऽसुरत्वंसंत्यज्यगणस्तस्यभविष्यति
एवमुक्त्वाप्रजाध्यक्षःश्रद्धांकामसमन्विताम् १४
विचिकित्सांस्वमायांचप्रेषयामासतंप्रति
ततोविचेष्टितःकामाद्योषान्वेषणतत्परः १५
स्वदारान्परयोषांचनापश्यद्विचिकित्सया
ततोमायाप्रयुक्तोसौत्रैलोक्यंविचचारह १६
दृष्टंचहिमवत्पृष्ठेस्त्रीरत्नंचातिशोभनं
दृष्ट्वाचपार्वतींदैत्यःकामस्यवशगोभवत् १७
ज्ञानलोपात्ततोदुर्गांग्रहीतुंतांसचेच्छति
उमाचकोटवीरूपंकृत्वादेहस्यचात्मनः १८
ईश्वरस्यांतिकस्थाचग्रहीतुंतांससारसः
ततःकामविचेताश्चउन्मत्तीकृतचेतनः १९
नजहातिशिवांधात्रींपार्वतींदैत्यपुंगवः
ततोध्यानात्समागम्यमिलितः पार्वतींधवः २०
दृष्ट्वातंचसदैत्येन्द्रःप्रगतस्तुस्वमालयम्
सज्जीकृत्यस्वयोधांश्चशंभुंजेतुंसमुत्सुकः २१
गौरीमेवसमानेतुंकाममोहादचेतनः
एतच्छ्रुत्वातुत्रिदशागत्वातंनंदिनेरिताः २२
अकुर्वंश्चमहद्युद्धंघोरंलोकभयंकरम्
दैत्यान्रणेमृतांस्तत्रदैत्याचार्योह्यजीवयत् २३
एतद्वृत्तंतुकैलासेसर्वेचैवन्यवेदयन्
क्रोधाच्छंभुस्तदावाक्यंनंदिनंनिजगादह २४
गच्छदैत्यालयंवीरद्रुतमेवममाज्ञया
पश्यतांसर्वदैत्यानांदैत्येंद्रस्यचसंसदि २५
गृहीत्वाचिकुरेऽत्यर्थंभार्गवंतंदुरात्मकम्
लब्ध्वाचास्मत्सकाशंवैविह्वलंचानयक्षणात् २६
ततोनंदीश्वरःश्रीमान्पार्वतीपतिनेरितः
काव्यंतंकुंतलेधृत्वादैत्यानांपुरतोबलात् २७
आनयंतंचतंदैत्याजघ्नुःप्रहरणैःशरैः

नशेकुस्तेरुजांकर्तुंनंदिनोबलशालिनः २८
देवानामग्रतोनंदीगृहीत्वातंचकुंतले
हरस्यपुरतोहृष्टःसहतेनसमाययौ २९
गृहीत्वाभार्गवंशंभुरसुराणांगुरुंरुषा
अगिलद्रौद्रमूर्तोसौकालांतकसमःप्रभुः ३०
ततोदैत्यपतिःक्रुद्धःसर्वसैन्यवृतोबली
दुद्रावशंकरंतत्रघोरैःप्रहरणादिभिः ३१
त्रिदशाश्चतथाक्रुद्धास्ततोविद्याधरादयः
प्रययुःसमरंतत्रदैत्यानांचभृशंरुषा ३२
एतस्मिन्नंतरेघोरंयुद्धंभीष्मंसमुत्थितम्
देवदानवयोरेवंसर्वलोकभयंकरम् ३३
ततःप्रत्ययितास्त्रैश्चदेवानिघ्नंतिदानवान्
दनुजानिर्जरांस्तत्रविनिघ्नंतिमहाहवे ३४
शातकुंभमयाङ्गैस्तेशरैर्वज्रसमानकैः
बिभिदूरत्नपुंखैश्चपरस्परजयैषिणः ३५
दीपयंतिभृशंकांतैस्तद्गात्राणिनभांसिच
वीर्यवंतोमहादैत्यानमोघैरस्त्रसंचयैः ३६
हत्वाचपातयामासुःकाश्यपाःसुरसत्तमाः
जगद्व्याप्तंमहासैन्यंबलायुधसुसंवृतम् ३७
नीतंक्षयंसुरैःसर्वैःशस्त्रैःप्रत्ययितैःक्षणात्
स्वयंचयुध्यमानेनमहादेवेनयत्नतः ३८
शूलोद्धृतोपिसुचिरमविनष्टोऽथनम्रधीः
अन्धकोगणतांनीत्वाकृतोभृंगीरिटिर्द्विज ३९
ततोदेवान्समाभाष्यशुक्रमुद्गीर्णवान्शिवः
भूमौनिपतितोगर्भस्ततोभौमइतिस्मृतः ४०
शुक्रश्शिवंसमाभाष्यगतोदैत्यान्मुदान्वितः
एवंभौमस्समुत्पन्नोहरांशोभूसमुद्भवः ४१
तस्यपूजाचतुर्थ्यांतुभौमवारेचसुव्रतैः
दशाद्यरिष्टेचतथागोचरेनिष्टराशिगे ४२
त्रिकोणेमंडलेचैवरक्तपुष्पानुलेपनैः

एवंवैपूजितोभौमःप्रयच्छतिमतिंधनम् ४३
पुत्रान्सुखंयशश्चैवकिंभूयःश्रोतुमिच्छसि
व्यासउवाच-
एतद्वःकथितंशिष्याधर्माख्यानंशुभावहम् ४४
यच्छ्रुत्वानपुनर्भूयोजायतेम्रियतेपिवा
द्विजातीनांपुण्यदंचसंसेव्यंचशुभेप्सुभिः ४५
यथासुखंचगच्छध्वंकृतकृत्याममाज्ञया
ब्रह्मोवाच-
एवंविश्राव्यभगवान्व्यासःसत्यवतीसुतः ४६
निर्णीयधर्मंविविधंशम्याप्रासमगात्सुत
त्वमपिश्रद्धयावत्सज्ञात्वातत्त्वंयथासुखम् ४७
विहरस्वयथाकालंगायमानोहरिंमुदा
लोकान्धर्मंचोपदिशन्प्रीणयन्जगतांगुरुम् ४८
पुलस्त्यउवाच-
इत्युक्तःप्रययौभूपनारदोगंधमादनम्
नारायणंमुनिवरंद्रष्टुंबदरिकाश्रमे ४९
इति श्रीपाद्मपुराणेप्रथमेसृष्टिखंडेभौमोत्पत्तिपूजनंनामैकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

भीष्मउवाच-
श्रुतंसूर्यस्यचंद्रस्यभौमस्यापिप्रपूजनं
बुधस्यसोमसूनोश्चपूजनंकथयाधुना १
पुलस्त्यउवाच-
तारागर्भसमुद्भूतोबुधश्चंद्रकुमारकः
सौम्यःक्रूरोग्रहोज्ञेयःशुभाशुभप्रदोनृणां २
शराकारंमंडलंतुबुधस्यपरिकीर्तितं
हरिन्मणिसमैर्वर्णैश्चूर्णैःकुर्यात्तुमंडलं ३
पूजयेत्तत्रगंधाद्यैःपुष्पैर्धूपैस्सुशोभनैः
दानंचविधिवत्कुर्याद्दशारिष्टेचगोचरे ४
कर्पूराश्चैवमुद्गाश्चहरिद्वस्त्रंहरिन्मणिः

सुवर्णंचयथाशक्तिदद्याद्बोधनतुष्टये ५
सोमपुत्रमहाप्राज्ञवेदवेदांगपारग
नमस्तेग्रहमध्यस्थप्रसन्नोभवमेसदा ६
इतिस्तुत्वामहाराजबुधंभक्त्यासमाहितः
प्राप्नुयान्निखिलान्कामान्सोमसूनुप्रसादतः ७
गुरोश्चपूजनंप्रोक्तंपट्टसाकारमंडले
पीतवर्णैःसुनिष्पन्नैश्चूर्णैराजन्सुशोभनैः ८
पीतैर्गंधयुतैःपुष्पैर्वस्त्रैर्हेम्नाचपूजयेत्
दशागोचरयोर्दौष्टयेदानंदद्याच्चशक्तितः ९
चणकद्विदलंचैवपीतवस्त्रंसुवर्णकं
पुष्यरागंतुविप्रायदद्याच्चारिष्टशांतये १०
बृहस्पतेसुराचार्यसर्वशास्त्रविशारद
दानेनानेनसंतुष्टोभवसौम्योममाधुना ११
एवंकृतेतुराजेंद्रस्वानुकूलोभवेद्गुरुः
सर्वान्कामानवाप्नोतिनरोगुरुसमर्चनात् १२
भार्गवस्यापिवक्ष्यामिपूजनंनृपतेधुना
यत्कृत्वासर्वकामाप्तिःसम्यक्पुंसांप्रजायते १३
पंचकोणंसमुद्दिष्टंमंडलंभार्गवस्यतु
चूर्णकैःश्वेतवर्णैश्चविधिनासुधियाकृतं १४
श्वेतगंधैश्चपुष्पैश्चवस्त्रैश्चापिसितैस्तथा
पूजयेद्भार्गवंभक्त्यानरःश्रद्धासमन्वितः १५
रौप्यंचदक्षिणादानंयथाशक्तिप्रकीर्तितं
दशाद्यरिष्टेचोत्पन्नेसितमश्वंप्रदापयेत् १६
तंडुलाःश्वेतवस्त्रंचरौप्यंचंदनमेवच
कर्पूरंचसुगंधाढ्यंदेयंदानंद्विजातये १७
भृगुपुत्रमहाभागदानवानांपुरोहित
दानेनानेनसंतुष्टोभवसर्वासुरार्चित १८
इतिमंत्रंसमुच्चार्यदद्याद्दानंयथोदितं
तस्यतुष्टोभवत्याशुभार्गवःकुरुनंदन १९
शनैश्चरस्यपूजार्थंमंडलंचनराकृति

कृत्वाचूर्णैःकृष्णवर्णैःपूजयेत्तत्रभक्तितः २०
कृष्णैर्गन्धैश्चपुष्पैश्चवस्त्रैश्चापितथाविधैः
लोहंचदक्षिणादानंपिरायाकंचतिलस्यच २१
दानंशनैश्चरारिष्टेकृष्णांगांकृष्णवस्त्रकं
सुवर्णंचयथाशक्तिदद्यान्नीलमणिंतथा २२
सूर्यसूनोमहाभागछायापुत्रमहाबल
अधोदृष्टेभवशनेप्रसन्नोऽस्मात्प्रदानतः २३
एवंस्तुत्वाशनिंभक्त्यायश्चदद्यादिद्वजातये
स्वानुकूलोभवेत्तस्यशनिःपापेचगोचरे २४
राहोर्वर्णादिकंसर्वंशनिवन्मंडलंतथा
सूर्याकारंसमुद्दिष्टंतत्रपूजार्कसूनुवत् २५
गोमेदंसर्षपाश्चैवतिलामाषाश्चकृष्णकाः
महिषीचतथाच्छागोदानंराहोःप्रकीर्तितम् २६
सिंहिकासुतदैत्येंद्रराहोचंद्रार्कमर्दन
भवतुष्टोमहाभागदानेनानेनसुव्रत २७
केतोर्मंडलकंकुर्याद्ध्वजाकृतिसुशोभनम्
शनिवत्सकलंज्ञेयंपूजावर्णादिकंनृप २८
सप्तधान्यंसमुद्दिष्टंसस्वर्णंकेतुदानकम्
एवंकृतेस्वानुकूलौभवेतांचनृणांनृप २९
प्रदद्यातांधनंपुत्रान्सुखंसौभाग्यमेवच
आकृष्णेतिरवेर्मंत्रइमंदेवास्तथाविधोः ३०
अग्निर्मूर्धेतिभौमस्यमंत्रोजप्येर्हणेतथा
उद्बुध्यस्वेतींदुसूनोर्बृहस्पतेगुरोस्तथा ३१
अन्नात्परीतिशुक्रस्यशन्नोदेवीरयंशनेः
कयानइतिराहोश्चकेतोःकेतुमितिस्मृतः ३२
एतेमंत्रास्समुद्दिष्टाग्रहणांपूजनेजपे
एवंकृतेनृपश्रेष्ठानुकूलाअखिलाग्रहाः ३३
भवंतिपुंसांसततंयच्छंतिचसुसंपदः
एतन्महाराजमयासमस्तंतुभ्यंसमुद्दिष्टमिहक्रमेण ३४
श्रुत्वानरःसर्वश्रुतार्थसारमेतीश्वरस्यैवचसन्निधानम्

इदंपवित्रंयशसोनिधानमिदंपितॄणामतिवल्लभंस्यात् ३५
इदंचदेवेष्वमृतायकल्पतेपुरयावहंपातकिनांचपुंसाम्
इतिपठतियशस्यंयःशृणोतीहभक्त्यामधुमुरनकारेरर्चनंवाथपश्येत् ३६
मतिमपिचजनानांयोददातींद्रलोकेविधिशिवविबुधेन्द्रैःपूज्यतेकल्पमेकम्
यइदंशृणुयान्नित्यमृषीणांचरितंशुभम् ३७
विमुक्तस्सर्वपापेभ्यःस्वर्गलोकेमहीयते
तपःकृतेप्रशंसंतित्रेतायांज्ञानमेवच ३८
द्वापरेयज्ञमित्याहुर्दानमेकंकलौयुगे
सर्वेषामेवदानानामिदमेवैकमुत्तमम् ३९
अभयंसर्वभूतानांनास्तिदानमतःपरम्
दानंप्रधानंशूद्रस्यत्वित्याहभगवान्प्रभुः ४०
दानेनसर्वकामाप्तिस्तस्यसंजायतेतपः
पुरयंपवित्रमायुष्यंसर्वपापविनाशनम् ४१
पुराणमेतत्कथितंतीर्थश्राद्धानुवर्णनम्
शृणोतियःपठेद्वापिश्रीमान्संजायतेनरः ४२
सर्वपापविनिर्मुक्तःसलक्ष्मीकंहरिंलभेत्
इदंमहाराजअगादितुभ्यंपुरयंमहापातकनाशनंच ४३
ब्रह्मार्करुद्रैश्चसुपूजितंचश्रोतव्यमेतत्प्रवदंतितज्ज्ञाः
सृष्टिखंडमिदंराजन्मयातुभ्यंप्रकीर्तितम् ४४
पुराणस्यादिभूतंचनवधासृष्टिपौष्करम्
द्विजेभ्यःश्रावयेद्विद्वान्यश्चवैशृणुयात्पठेत्
कल्पकोटिशतंसाग्रंब्रह्मलोकेसमोदते ४५

इति श्रीपाद्मपुराणेसृष्टिखंडेपुराणावतारेग्रहार्चनवर्णनं-
नामद्व्यशीतितमोऽध्यायः ८२

सृष्टिखंडंसमाप्तम्

शुभंभवतु

# अथ श्रीपाद्मे महापुराणे द्वितीयं भूमिखण्डं प्रारभ्यते

## प्रथमोऽध्यायः

ॐश्रीगणेशाय नमः

ऋषयऊचुः-
शृणुसूतमहाभागसर्वतत्त्वार्थकोविद
संदेहमागतंविद्वन्दारुणंबुद्धिनाशनम् १
केचित्पठंतिप्रह्लादंपुराणेषुद्विजोत्तमाः
पंचवर्षान्वितेनापिकेशवःपरितोषितः २
देवासुरेकथंप्राप्तेहरिणासहयुध्यति
निहतोवासुदेवेनप्रविष्टोवैष्णवींतनुम् ३
सूतउवाच-
कश्यपेनपुराज्ञातंकृतंव्यासेनधीमता
ब्रह्मणाकथितंपूर्वंव्यासस्याग्रेस्वयंप्रभोः ४
तमेवंहिप्रवक्ष्यामिभवतामग्रतोद्विजाः
संदेहकारणंजातंछिन्नंदेवेनवेधसा ५
व्यासउवाचः-
शृणुसूतमहाभागब्रह्मणापरिभाषितम्
प्रह्लादस्ययथाजन्मपुराणेप्यन्यथाश्रुतम् ६
जातमात्रःसर्वसुखंवैष्णवंमार्गमाश्रितः
महाभागवतश्रेष्ठःप्रह्लादोदेवपूजितः ७
विष्णुनासहयुद्धायसपुत्रःसंगरंगतः
निहतोवासुदेवेनप्रविष्टोवैष्णवींतनुम् ८
सृष्टिभावंशृणुष्वत्वमस्यैवचमहात्मनः
संगरंप्राप्यपुत्राद्यैर्विष्णुनासहवीर्यवान् ९
प्रविष्टोवैष्णवंतेजःसंप्राप्यस्वेनतेजसा
पुराकल्पेमहाभागयथाजातःसवीर्यवान् १०
वृत्तांतंतस्यवीरस्यप्रवक्ष्यामिसमासतः
पश्चिमेसागरस्यांतेद्वारकानामवैपुरी ११
सर्वऋद्धिसमायुक्तासर्वसिद्धिसमन्विता

तस्यामास्तेसदादेवोयोगज्ञोयोगवित्तमः १२
शिवशर्मेतिविख्यातोवेदशास्त्रार्थकोविदः
तस्यापिपंचपुत्रास्तुबभूवुःशास्त्रकोवदाः १३
यज्ञशर्मावेदशर्माधर्मशर्मातथैवच
विष्णुशर्मामहाभागोनूनंतत्कर्मकोविदः १४
पंचमःसोमशर्मेतिपितृभक्तिपरायणः
पितृभक्तिंविनाचैवधर्ममन्यंद्विजोत्तमाः १५
नविदंतिमहात्मानस्तद्भावेनतुभाविताः
तेषांतुभक्तिंसंपश्यञ्छिवशर्माद्विजोत्तमः १६
चिंतयामासमेधावीनिष्कर्षिष्येसुरोत्तमान्
पितृभक्तेषुयोभावोनैतेषांमनसिस्थितः १७
यथाजानाम्यहंचाथकरिष्येबुद्धिपूर्वकम्
विष्णोश्चैवप्रसादात्ससर्वसिद्धिर्बभूवह १८
सद्भावंचिंतयामासश्रंजनार्थंद्विजोत्तमाः
उपायंब्राह्मणश्रेष्ठस्तपसस्तेजसःकिल १९
चकारसोप्युपाज्ञोमाययाब्रह्मवित्तमः
तेषामग्रेततोव्याजंशिवशर्माव्यदर्शयत् २०
महताज्वररोगेणमृतामाताविदर्शिता
तैस्तुदृष्टामृतामातापितरंवाक्यमब्रुवन् २१
ययावयंमहाभागगर्भोदरेप्रवर्द्धिताः
कलेवरंपरित्यज्यस्वयमेवगतान्नयम् २२
श्रपहायगतासेयंस्वर्गेतातकिमुच्यते
शिवशर्मोपरिभवंपुत्रंभक्तिपरायणम् २३
यज्ञशर्माणमाहूयइत्युवाचद्विजोत्तमः
शिवशर्मोवाच-
श्रनेनापिसुतीक्ष्णेनशस्त्रेणनिशितेनवै २४
विच्छिद्यांगानिसर्वाणियत्रतत्रक्षिपस्वह
तत्कृतंतेनपुत्रेणयथादेशःश्रुतःपितुः २५
समायातःपुनःपश्चात्पितरंवाक्यमब्रवीत्
यथादिष्टंत्वयातातततत्सर्वंकृतवानहम् २६

समादिशममान्यच्चकार्यकारणमद्यच
तच्चसर्वंकरिष्यामिदुर्जयंदुर्लभंपितः २७
तमाज्ञायमहाभागंपितृभक्तंसचद्विजः
निश्चयंपरमंज्ञात्वाद्वितीयस्यविचिंतयन् २८
वेदशर्माणमाहूयगच्छत्वंममशासनात्
स्त्रियाविनानशक्नोमिस्थातुंकंदर्पमोहितः २९
माययादर्शितानारीसर्वसौभाग्यसंपदा
एनामानयवत्सत्वंममार्थेकृतनिश्चयः ३०
एवमुक्तस्तथाप्राहकरिष्येतवसुप्रियम्
पितरंतंनमस्कृत्यतामुवाचगतस्ततः ३१
त्वांदेवियाचतेतातःकामबाणप्रपीडितः
अतस्त्वंजरयायुक्तेप्रसादसुमुखीभव ३२
भजत्वंचारुसर्वांगिपितरंममसुंदरि
एवमाकर्णितंतस्यमाययावेदशर्मणः ३३
स्त्र्युवाच–
जरयापीडितस्यापिनैवेच्छामिकदाचन
सश्लेष्ममुखरोगस्यव्याधिग्रस्तस्यसांप्रतम् ३४
शिथिलस्यापिचार्तस्यतस्यवृद्धस्यसंगमम्
भवंतरंतुमिच्छामिकरिष्येतवसुप्रियम् ३५
भवंतंरूपसौभाग्यैर्गुणरत्नैरलंकृतम्
दिव्यलक्षणसंपन्नंदिव्यरूपंमहौजसम् ३६
किंकरिष्यसितातेनवृद्धेनशृणुमानद
ममांगभोगभावेनसर्वंप्राप्स्यसिदुर्लभम् ३७
यद्यत्त्वमिच्छसेविप्रतद्ददामिनसंशयः
एतद्वाक्यंमहच्छ्रुत्वाअप्रियंपापसंकुलम् ३८
वेदशर्मोवाच–
अधर्मयुक्तंतेवाक्यमयुक्तंपापमिश्रितम्
नेदृशंमांवदेर्देविपितृभक्तिमनागसम् ३९
पितुरर्थंसमायातस्त्वामहंप्रार्थयेशुभे
अन्यदेवंनवक्तव्यंभजत्वंपितरंमम ४०

यद्यत्त्वमिच्छसेदेवित्रैलोक्येसचराचरम्
तत्तद्द्मिनसंदेहोदेवराज्याधिकंशुभे ४१
स्त्र्युवाच-
एवंसमर्थोदातुंमेपितुरर्थेयदाभवान्
तदामेदर्शयाद्यैवसेंद्रांस्त्वंसमहेश्वरान् ४२
दातुमेवंसमर्थोसिदुर्लभंसांप्रतंकिल
किंतेबलंमहाभागदर्शयस्वत्वमात्मनः ४३
वेदशर्मोवाच-
पश्यपश्यबलंदेविप्रभावंतपसोमम
मयाहूताःसमायाताइंद्राद्याःसुरसत्तमाः ४४
वेदशर्माणमूचुस्तेकिंकुर्मोहिद्विजोत्तम
यमेवमिच्छसेविप्रतंददामोनसंशयः ४५
वेदशर्मोवाच-
यदिदेवाःप्रसान्नामेप्रसादसुमुखायदि
ददंतुविमलांभक्तिंपादयोःपितुरेवमे ४६
एवमस्तुसुराःसर्वेयथायातास्तथागताः
तमुवाचतथादृष्ट्वादृष्टंतेतपसोबलम् ४७
देवैस्तुनास्तिमेकार्यंयदिदातुमिहेच्छसि
यन्मांनयसिगुर्वर्थंतत्कुरुष्वममप्रियम् ४८
देहित्वंस्वंशिरोविप्रस्वहस्तेननिकृत्यवै
वेदशर्मोवाच-
धन्योहमद्यसंजातोमुक्तश्चैवऋणत्रयात् ४९
स्वशिरोदेविदास्यामिगृह्यतांगृह्यतांशुभे
शितेनतीक्ष्णधारेणशस्त्रेणद्विजसत्तमः ५०
निकृत्यस्वंशिरश्चाथदत्तंतस्यैप्रहस्यच
रुधिरेणप्लुतंसाचपरिगृह्यगतामुनिम् ५१
स्त्र्युवाच-
तवार्थेप्रेषितंविप्रपुत्रेणवेदशर्मणा
एतच्छिरःसंगृहाणनिकृत्तंचात्मनात्मनः ५२
उत्तमांगंप्रदत्तंमेपितृभक्तेनतेनते

तवार्थेद्विजशार्दूलमामेवंपरिभुंन्दववै ५३
तस्यतैर्भ्रातृभिर्दृष्टंसाहसंवेदशर्मणः
वेपितांगत्वमापन्नास्तेबभूवुःपरस्परम् ५४
मृतानोधर्मसाध्वीसामातासत्यसमाधिना
श्रयमेवमहाभागःपितुरर्थेमृतःशुभः ५५
धन्योयंधन्यतांप्राप्तःपितुरर्थेकृतंशुभम्
एवंसंभाषितंतैस्तुभ्रातृभिःपुरायचारिभिः ५६
समाकरार्यद्विजोवाक्यंज्ञात्वाभक्तिपरायणम्
निकृत्तंचशिरस्तेनपुत्रेणवेदशर्मणा ५७
धर्मशर्माणमाहाथशिरएतत्प्रगृह्यताम् ५८

इति श्रीपद्मपुराणेभूमिखंडेशिवशर्मचरितेप्रथमोऽध्यायः १

द्वितीयोऽध्यायः

सूतउवाच-
तदादायमहात्मासौनिर्जगामत्वरान्वितः
पितृभक्त्यातपोभिश्चसत्यार्जवबलेनसः १
धर्ममाकृष्टवांश्चैवधर्मशर्माततस्तदा
समाकृष्टस्तुवैधर्मस्तपसातस्यधीमतः २
धर्मशर्माणमायातइदंवचनमब्रवीत्
कस्मात्त्वयासमाहूतोधर्मशर्मन्समागतः ३
तन्मेकथयकार्यंत्वंतत्करोमिनसंशयः
धर्मशर्मोवाच-
यद्यस्तिगुरुशुश्रूषायदिनिष्ठाऽचलंतपः ४
तेनसत्येनमेधर्मवेदशर्मासजीवतु
धर्मउवाच-
दमशौचेनसत्येनतपसातवसुव्रत ५
पितृभक्त्यातवभ्रातावेदशर्मामहाभुजः
पुनरेवमहात्मासौजीवनंचलभिष्यति ६
तपसानेनतुष्टोस्मिपितृभक्त्यामहामते
वरंवरयभद्रंतेदुर्लभंधर्मवित्तमैः ७

एवमाकर्णितंतेनसुवाक्यंधर्मशर्मणा
वैवस्वतंमहात्मानंसमुवाचमहायशाः ८
देहिमेत्वचलांभक्तिंपितुःपादार्हणेपुनः
धर्मेरतिंतथामोत्तंसुप्रसन्नोयदामम ९
तमुवाचततोधर्मोमत्प्रसादाद्भविष्यति
एवमुक्तेमहावाक्येवेदशर्मातदोत्थितः १०
प्रसुप्तवन्महाप्राज्ञोधर्मशर्माणमब्रवीत्
क्वसादेवीगताभ्रातःक्वसतातोभवेदिति ११
समासेनसमाख्यातंयथापित्रानियोजितः
समाज्ञायततोहृष्टोधर्मशर्मातमब्रवीत् १२
ममाद्यैवमहाभागशिरसाजीवितेनच
संमुखीभववैभ्रातः कोन्योमेत्वादृशोभुवि १३
भ्रातरंचैवमाभाष्यउत्सुकःपितरंप्रति
गमनायमतिंचक्रेभ्रात्राचधर्मशर्मणा १४
द्वावेतौतुगतौतत्रपितरंहृष्टमानसौ
द्वाभ्यांतत्रसमास्थायशिवशर्माणमुत्तमम् १५
धर्मशर्मातदोवाचपितरंदीप्तिसंयुतम्
ममाद्यैवमहाभागतपसाजीवितेनच १६
वेदशर्मासमानीतस्तंपुत्रंप्रगृहाणभोः
शिवशर्माततोहृष्टोभक्तिंविज्ञायतस्यच १७
नकिंचिदब्रवीत्तंतुपुनश्चिंतामुपेयिवान्
पुरतोविनयेनापिवर्तमानंमहामतिम् १८
विष्णुशर्माणमाभाषीद्वत्समेवचनंकुरु
इंद्रलोकंव्रजस्वाद्यतस्मादानयचामृतम् १९
अनयाकान्तयासार्द्धंस्थातुमिच्छामिसांप्रतम्
सागराद्यत्समुत्पन्नममृतंव्याधिनाशनम् २०
साधुनेच्छतिमामेषायथैनांतुलभाम्यहम्
तथाकुरुष्वशीघ्रंत्वमन्यथान्यंप्रयास्यति २१
वृद्धंज्ञात्वावमन्येतइयंबालासुरूपिणी
अद्यदेव्यानयासार्द्धंप्रिययाभुवनत्रये २२

निर्दोषोव्याधिनिर्मुक्तोयथातातभवाम्यहम्
तथाकुरुष्वमेवत्समद्भक्तोसियदाभुवि २३
एवमाकर्ण्यतद्वाक्यंपितुस्तस्यमहात्मनः
विष्णुशर्मातदोवाचपितरंदीप्ततेजसम् २४
सर्वमेतत्करिष्यामिभवतःसुखमुत्तमम्
एवमाभाष्यधर्मात्माविष्णुशर्मामहामतिः २५
पितरंतंनमस्कृत्यपुनःकृत्वाप्रदक्षिणम्
बलेनमहतासोपितपसानियमेनच २६
अंतरिक्षगतश्चासीद्गच्छमानस्यधीमतः
समहावायुवेगेनएंद्रंसंप्रतिगच्छति २७
इति श्रीपद्मपुराणेभूमिखंडेशिवशर्मचरितेद्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

सूतउवाच-
प्रस्थितस्तेनमार्गेणप्रविष्टोगगनांतरे
सदृष्टोदेवदेवेनसहस्राक्षेणधीमता १
उद्यमंतस्यवैज्ञात्वाचक्रेविघ्नंसुराधिराट्
मेनिकांतामुवाचेदंगच्छत्वंममशासनात् २
समाचरस्वास्यशीघ्रंगत्वाविघ्नंसुमध्यमे
अस्यैवविप्रवर्यस्यपुत्रस्यशिवशर्मणः ३
तथाकुरुष्वभद्रंतेयथानायातिमेगृहम्
एवमाकर्ण्यतद्वाक्यंमेनिकाप्रस्थितात्वरात् ४
सूतउवाच-
रूपौदार्यगुणोपेतासर्वालंकारभूषिता
नंदनस्यवनस्यांतेदोलायांसमुपस्थिता ५
सुस्वरेणप्रगायंतीगीतंवीणास्वरोपमम्
तेनदृष्टाविशालाक्षीचतुराचारुलोचना ६
व्यवसायंततोज्ञात्वातस्याविघ्नमनुत्तमम्
इंद्रेणप्रेषिताचैषानचभद्रकराभवेत् ७
एवंज्ञात्वाजगामाथसत्वरेणद्विजोत्तमः

तयादृष्टस्तथापृष्टःक्वयास्यसिमहामते ८
विष्णुशर्मातदोवाचमेनिकांकामचारिणीम्
इंद्रलोकंप्रयास्यामिपितुरर्थेत्वरान्वितः ९
मेनिकाविष्णुशर्माणंप्रत्युवाचप्रियंपुनः
कामबाणैःप्रभिन्नाहंत्वामद्यशरणंगता १०
रक्षस्वद्विजशार्दूलयदिधर्ममिहेच्छसि
यावद्धित्वंमयादृष्टःकामाकुलितचेतसा ११
कामानलेनसंदग्धातावदेवनसंशयः
संभ्रांताकामसंतप्ताप्रसादसुमुखोभव १२
विष्णुशर्मोवाच-
चरित्रंदेवदेवस्यविदितंमेवरानने
भवत्याश्चप्रजानामिनाहंचैतादृशःशुभे १३
भवत्यास्तेजसारूपैरन्येमुह्यंतिशोभने
विश्वामित्रादयोदेविपुत्रोहंशिवशर्मणः १४
योगसिद्धिंगतस्यापितपःसिद्धस्यचाबले
कामादयोमहादोषाआदावेवविनिर्जिताः १५
अन्यंभजविशालाक्षिइंद्रलोकंव्रजाम्यहम्
एवमुक्त्वाजगामाथत्वरितोद्विजसत्तमः १६
निष्फलामेनकाजातापृष्टादेवेनवज्रिणा
विभीषांदर्शयामासनानारूपांपुनःपुनः १७
यथानलेनसंदग्धास्तृणानांसंचयाद्विजाः
भस्मीभूताभवंत्येवतथातास्ताविभीषिकाः १८
विप्रस्यतेजसातस्यपितृभक्तस्यसत्तमाः
प्रलयंगतास्तुघोरास्तादारुणाभीषिकाद्विजाः १९
सविघ्नान्दर्शयामाससहस्राक्षःपुनःपुनः
तेजसानाशयद्विप्रःस्वकीयेनमहायशाः २०
एवंविघ्नान्बहूंस्तस्यइंद्रस्यापिमहात्मनः
नाशयामासमेधावीतपसस्तेजसापिवा २१
नष्टेषुतेषुविघ्नेषुदारुणेषुमहत्सुच
ज्ञात्वातस्यकृतान्विघ्नान्दारुणान्भीषणाकृतीन् २२

अथक्रुद्धोमहातेजाविष्णुशर्माद्विजोत्तमः
इंद्रंप्रतिमहाभागोरागरक्तांतलोचनः २३
इंद्रलोकादहंचेंद्रंपातयिष्यामिनान्यथा
निजधर्मैरतस्याद्ययोविघ्नंतुसमाचरेत् २४
तस्यदंडंप्रदास्यामियोवैहन्यात्सहन्यते
एवमन्यंकरिष्यामिदेवानांपालकंपुनः २५
एवंसमुद्यतोविप्रइंद्रनाशायसत्तमः
तावदेवसमायातोदेवेंद्रःपाकशासनः २६
भोभोविप्रमहाप्राज्ञतपसानियमेनच
दमेनसत्यशौचाभ्यांत्वत्समोनास्तिचापरः २७
अनयापितृभक्त्यातेजितोहंदैवतैःसह
ममापराधंत्वंसर्वंक्षंतुमर्हसिसत्तम २८
वरंवरयभद्रंतेदुर्लभंचददाम्यहम्
विष्णुशर्मातदोवाचदेवराजंतथागतम् २९
विप्रतेजोमहेंद्रेंद्रअसह्यंदेवदैवतैः
पितृभक्तस्यदेवेशदुःसहंसर्वथाविभो ३०
तेजोभंगोनकर्त्तव्योब्राह्मणानांमहात्मनाम्
पुत्रपौत्रैःसमस्तैस्तुब्रह्मविष्णुहरान्पुनः ३१
नाशयंतेनसंदेहोयदिरुष्टाद्विजोत्तमाः
नागच्छेद्यद्भवानद्यतदाराज्यमनुत्तमम् ३२
आत्मतपःप्रभावेणअन्यस्मैत्वंमहात्मने
दातुकामस्तुसंजातोरोषपूर्णेनचक्षुषा ३३
भवानद्यसमायातोवरंदातुमिहेच्छसि
अमृतंदेहिदेवेंद्रपितृभक्तिंतथाचलाम् ३४
एवंविधंवरंदेहियदितुष्टोसिशत्रुहन्
एवंददामिपुण्यंतेवरंचामृतसंयुतम् ३५
एवमाभाष्यतंविप्रममृतंदत्तवान्स्वयम्
सकुंभंदत्तवांस्तस्मैप्रीयमाणेनचात्मना ३६
अचलातेभवेद्विप्रभक्तिःपितरिसर्वदा
एवमाभाष्यतंविप्रंविसृज्यचसहस्रदृक् ३७

प्रसन्नोभूच्चतद्दृष्ट्वाविप्रतेजःसुदुःसहम्
विष्णुशर्माततोगत्वापितरंवाक्यमब्रवीत् ३८
तातइंद्रात्समानीतममृतंव्याधिनाशनम्
अनेनापिमहाभागनीरुजोभवसर्वदा ३९
अमृतेनत्वमद्यैवपरांतृप्तिमवाप्नुहि
एतद्वाक्यंमहच्छ्रुत्वाशिवशर्मासुतस्यहि ४०
सुतान्सर्वान्समाहूयप्रीयमाणेनचेतसा
पितृभक्ताःसुतायूयंमद्वाक्यपरिपालकाः ४१
वरंवृणुध्वंसुप्रीताःपुत्रकादुर्लभंभुवि
एवमाभाषितंतस्यशुश्रुवुःसर्वसंमताः ४२
तेसर्वेतुसमालोच्यपितरंप्रत्यथाब्रुवन्
अस्माकंजीवताम्मातागतायायममंदिरम् ४३
नीरुजाभवनाद्देवीप्रसादात्तवसुव्रता
भवान्पिताइयंमाताजन्मजन्मांतरेपितः ४४
वयंसुताभवेमेतिसर्वेपुण्यकृतस्तथा
शिवशर्मोवाच-
अद्यैवापिमृतामाताभवतांपुत्रवत्सला ४५
जीवमानासुहृष्टासाएष्यतेनात्रसंशयः
एवमुक्तेशुभेवाक्येऋषिणाशिवशर्मणा ४६
तेषांमातासमायाताप्रहृष्टावाक्यमब्रवीत्
एतदर्थंसमुत्पन्नंसुवीर्यंतनयंसुतम् ४७
नराःसत्पुत्रमिच्छंतिकुलवंशप्रभावकम्
स्त्रियोलोकेमहाभागाःसुपुण्याःपुण्यवत्सलाः ४८
सुतमिच्छंतिसर्वत्रपुण्यांगंपुण्यसाधकम्
कुक्षिंयस्यागतोगर्भःसुपुण्यःपरिवर्त्तते ४९
पुण्यान्पुत्रान्प्रसूयेतसानारीपुण्यभागिनी
कुलाचारंकुलाधारंपितृमातृप्रतारकम् ५०
विनापुण्यैःकथंनारीसंप्राप्नोतिसुतोत्तमम्
नजानेकीदृशैःपुण्यैरेषभर्तासुपुण्यभाक् ५१
संजातोधर्मवीर्योपिधर्मात्माधर्मवत्सलः

यस्यवीर्यान्मयाप्राप्तायूयंपुत्रास्ततोधिकाः ५२
एवंपुरायप्रभावोयंभवंतःपुरायवत्सलाः
ममपुत्रास्तुसंजाताःपितृभक्तिपरायणाः ५३
ग्रहोलोकेषुपुरायैश्चसुपुत्रःपरिलभ्यते
एकैकशोधिकाःपंचमयाप्राप्तामहाशयाः ५४
यज्वानःपुरायशीलाश्चतपस्तेजःपराक्रमाः
एवंसंवर्धितास्तेतुतयामात्रापुनःपुनः ५५
हर्षेणमहताविष्टाःप्रणेमुर्मातरंसुताः
पुत्राऊचुः-
सुपुरायैःप्राप्यतेमातासन्मातासुपिताकिल ५६
भवतीपुरायकृन्मातानोभाग्यैस्तुप्रवर्तिता
यस्यागर्भोदरंप्राप्यसुपुरायैश्चप्रवर्द्धिताः ५७
जन्मजन्मनित्वंमातापिताचैवभविष्यथः
पितोवाच-
शृणुध्वंमामकाःपुत्राःसुवरंपुरायदायकम् ५८
मयितुष्टेसुताभोगाननुभुंजंतुचाक्षयान्
पुत्राऊचुः-
यदितातप्रसन्नोसिवरंदातुमिहेच्छसि ५९
ग्रस्मान्प्रेषयगोलोकंवैष्णवंदाहवर्जितम्
पितोवाच-
गच्छध्वंवैष्णवंलोकंयूयंविगतकल्मषाः ६०
मत्प्रसादात्तपोभिश्चपितृभक्त्यानयास्वया
एवमुक्तेतुतेनापिसुवाक्येऋृषिणाततः ६१
शंखचक्रगदापाणिर्गरुडारूढग्रागतः
सपुत्रंशिवशर्माणमित्युवाचपुनःपुनः ६२
सपुत्रेणत्वयाद्यैवजितोभक्त्यास्मिवैद्विज
पुत्रैःसार्द्धंसमागच्छचतुर्भिःपुरायकारिभिः ६३
ग्रनयाभार्ययासार्द्धंपुरायययापतिकाम्यया
शिवशर्मोवाच-
ग्रमीगच्छंतुपुत्रामेवैष्णवंलोकमुत्तमम् ६४

कंचित्कालंतुनेष्यामिभूमौवैभार्ययासह
अनेनापिसुपुत्रेणअंत्येनसोमशर्मणा ६५
एवमुक्तेशुभेवाक्येऋषिणासत्यभाषिणा
तानुवाचाथदेवेशःसुपुत्राञ्छिवशर्मणः ६६
गच्छंतुमोक्षदंलोकंदाहप्रलयवर्जितम्
एवमुक्तेततोविप्राश्चत्वारःसत्यचेतसः ६७
विष्णुरूपधराःसर्वेबभूवुस्तत्क्षणादपि
इंद्रनीलसमावर्णैःशंखचक्रगदाधराः ६८
सर्वाभरणसौभाग्याविष्णुरूपामहौजसः
हारकंकणशोभाढ्यारत्नमालाभिशोभिताः ६९
सूर्यतेजःप्रतीकाशास्तेजोज्वालाभिरावृताः
प्रविष्टावैष्णवंकायंपश्यतःशिवशर्मणः ७०
दीपंदीपायथायांतितद्वल्लीनामहामते
गतास्तेवैष्णवंधामपितृभक्त्याद्विजोत्तमाः ७१
प्रभावंतुप्रवक्ष्यामिसुसत्यंसोमशर्मणः ७२
इति श्रीपद्मपुराणेभूमिखंडेशिवशर्मोपाख्यानेतृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

सूतउवाच-
गतेषुतेषुगोलोकंवैष्णवंतमसःपरम्
शिवशर्मामहाप्राज्ञःकनिष्ठंवाक्यमब्रवीत् १
ब्राह्मणउवाच-
सोमशर्मन्महाप्राज्ञत्वंपितुर्भक्तितत्परः
अमृतस्यमहाकुंभंरक्षदत्तंमयाधुना २
तीर्थयात्रांप्रयास्यामिअनयाभार्ययासह
एवमस्तुमहाभागकरिष्येरक्षणंशुभम् ३
कुंभंदत्वासमेधावीतस्यहस्तेमहात्मनः
दशवर्षप्रमाणंतुतपस्तेपेनिरंतरम् ४
कुंभंरक्षतिधर्मात्मादिवारात्रमतंद्रितः
पुनःसहिसमायातःशिवशर्मामहायशाः ५

मायांकृत्वामहाप्राज्ञोभार्ययासहतंसुतम्
कुष्ठरोगातुरोभूत्वातस्यभार्याचतादृशी ६
मांसपिंडोपमौजातौद्वावेतौमाययाकृतौ
संनिधिंतस्यघोरस्यविप्रस्यसोमशर्मणः ७
समागतौहितौदृष्ट्वासर्वतोहिसुदुःखितौ
कृपयापरयाविष्टःसोमशर्मामहायशाः ८
तयोःपादंनमस्कृत्यभक्त्यानमितकंधरः
भवादृशौनपश्यामितपसाभिसमन्वितम् ९
गुणव्रातैःसुपुरायैश्चकिमिदंवर्तितंत्वयि
दासवद्देवताःसर्वावर्ततेसर्वदातव १०
आदेशंप्राप्यविप्रेंद्रआकृष्टास्तेजसातव
तवांगेकेनपापेनगदोयंवेदनान्वितः ११
संजातोब्राह्मणश्रेष्ठतन्मेकथयकारणम्
इयंपुरायवतीमातामहापुरायापतिव्रता १२
याहिभर्तृप्रसादेनत्रैलोक्यंकर्तुमिच्छति
साकथंदुःखमाप्नोतिकिंनास्तितपसःफलम् १३
रागद्वेषौपरित्यज्यविविधेनापिकर्मणा
याचशुश्रूषतेकांतंदेववद्गुरुवत्सला १४
साकथंदुःखमाप्नोतिकुष्ठरोगंसुदुःखदम्
शिवशर्मोवाच-
माशुचस्त्वंमहाभागभुज्यतेकर्मजंफलम् १५
नरेणकर्मयुक्तेनपापपुरायमयेनहि
शोधनंचकुरुष्वत्वमुभयोरोगयुक्तयोः १६
शुश्रूषणंमहाभागयदिपुरायमिहेच्छसि
एवमुक्तेशुभेवाक्येसोमशर्मामहायशाः १७
शुश्रूषांवाकरिष्यामियुवयोःपुराययुक्तयोः
मयापापेनदुष्टेनकृपणेनद्विजोत्तम १८
किंकर्तव्यमिहाद्यैवयोगुरुंनहिपूजयेत्
एवमाभाष्यदुःखाद्वातयोर्दुःखेनदुःखितः १९
श्लेष्ममूत्रपुरीषंचउभयोःपर्यशोधयत्

पादप्रक्षालनंचक्रेअंगसंवाहनंतथा २०
स्नानस्थानादिकंसोपितयोर्भक्त्यान्वितःस्वयम्
द्वावेतौहिगुरूविप्रःसौमशर्मामहायशाः २१
तीर्थंनयतिधर्मात्मास्कंधमारोप्यसत्तमः
द्वावेतौहिस्वहस्तेनस्नापयित्वातुमंगलैः २२
सुमंत्रैर्वेदविच्चैवस्नानस्यविधिपूर्वकम्
तर्पणंचपितॄणांतुदेवतानांतुपूजनम् २३
द्वाभ्यामपिसधर्मात्मासकारयतिनित्यशः
स्वयंहोमंददात्यग्नौपचत्यन्नमनुत्तमम् २४
संज्ञापयतिसुप्रीतौद्वावेतौचमहागुरू
शय्यासनेचतौविप्रःप्रस्वापयतिनित्यशः २५
वस्त्रपुष्पादिकंसर्वंताभ्यांनित्यंप्रयच्छति
तांबूलंबहुगंधाढ्यमुभयोरर्पयेत्सतु २६
सोमशर्मामहाभागस्ताभ्यामपिचपूरयेत्
मूलंपयःसुभक्ष्याद्यंनित्यमेवददात्यसौ २७
तयोस्तुवांछितंनित्यंसोमशर्मामहायशाः
अनेनक्रमयोगेननित्यमेवप्रसादयेत् २८
सोमशर्मासुधर्मात्मापितरौपरिपूजयेत्
सोमशर्माणमाहूयपिताकुत्सतिनिष्ठुरः २९
निंदितैर्निष्ठुरैर्वाक्यैस्ताडयेन्मुनिसन्निधौ
कृतकार्येकृतेपुण्येनित्यमेवसुतेपुनः ३०
नकृतंशोभनंमह्यंत्वयैवकुलपांसन
एवंनानाविधैर्वाक्यैर्निष्ठुरैर्दुःखदायकैः ३१
अताडयद्दंडघातैःशिवशर्मासदातुरः
एवंकृतेपिधर्मात्मानैवकुप्यतिकर्हिचित् ३२
मनसावचसाचैवकर्मणात्रिविधेनच
संतुष्टःसर्वदासोपिपितरंपरिपूजयेत् ३३
तद्वत्ससोमशर्मावैमातरंचदिनेदिने
यज्ञात्वाशिवशर्माचचरितंस्वीयमीक्षते ३४
अमृतंमत्कृतेचापिआनीतंविष्णुशर्मणा

पुगययुक्तःसधर्मात्मापितृभक्तिपरःसदा ३५
एवंबहुतिथेकालेशतसंख्येगतेसति
शिवशर्मापितस्यैवभक्तिंदृष्ट्वाविचिंत्यवै ३६
मयावैपूर्वमित्युक्तंसुपुत्रंयज्ञसंज्ञकम्
मातृखंडानिमान्पुत्रयत्रतत्रक्षिपस्वहि ३७
मद्वाक्यंपालितंतेनकृतानमातरिकृपा
एतत्स्वल्पतरंदुःखंनिर्जीवेघातमिच्छतः ३८
साहसंतुकृतंतेनपुत्रेणवेदशर्मणा
अस्याधिकमहंमन्येयतोऽयचलतेनच ३९
निमेषमात्रमेवापिसाहसंकारयेत्पुनः
अपरंसत्यसंपन्नंप्रभावंतपसःपुनः ४०
नित्यंसमाराधनेपिअधिकंचास्यदृश्यते
तस्मादस्यपरीक्षाचसमयेतपसःकृता ४१
भक्तिभावात्तथासत्यान्नैवपुत्रःप्रणश्यति
माययाचनिजांगेऽपिकुष्ठरोगोनिदर्शितः ४२
श्लेष्ममूत्रमलानांचघृणांनैवकरोतिच
व्रणान्विशोधयेन्नित्यंस्वहस्तेनमहायशाः ४३
पादसंवाहनंदद्याच्छौचंचैवमहामतिः
दुःसहंवचनंमह्यंदारुणंसहतेसदा ४४
भर्त्सनेताडनेचैवसदाभीष्टप्रवाचकः
एवंदुःखसमाचारोममपुत्रोमहामतिः ४५
दुःखानांसागरंमन्येबहुक्लेशैस्तुक्लेशितः
अपनेष्याम्यहंदुःखंविष्णोश्चैवप्रसादतः ४६
विचार्यमनसाविप्रःशिवशर्मामहामतिः
पुनर्मायांचकाराथकुंभादपहृतंपयः ४७
पश्चात्तंचसमाहूयसोमशर्माणमब्रवीत्
तवहस्तेमयादत्तममृतंव्याधिनाशनम् ४८
तन्मेशीघ्रंप्रयच्छस्वयथापानंकरोम्यहम्
येननीरुग्भवाम्यद्यप्रसादाद्विष्णुशर्मणः ४९
एवमुक्तेतदावाक्येऋषिणाशिवशर्मणा

समुत्थायत्वरायुक्तःसोमशर्माकमंडलुम् ५०
तंचरिक्तंततोदृष्ट्वाह्यमृतेनविनाकृतम्
कस्यपापस्यवैकर्मकेनमेविप्रियंकृतम् ५१
इतिचिंतापरोभूत्वासोमशर्मासुदुःखितः
पितुरग्रेचवृत्तांतंकथयिष्याम्यहंयदा ५२
ततःकोपंप्रयास्येतगुरुर्मेव्याधिपीडितः
सुचिरंचिंतयित्वातुसोमशर्मामहामतिः ५३
यदिमेसत्यमस्तीतिगुरुशुश्रूषणंयदि
तपस्तप्तंमयापूर्वंनिर्व्यलीकेनचेतसा ५४
दमशौचादिभिःसत्यंधर्ममेवप्रपालितम्
तदाघटोऽमृतयुतोभवत्वेषनसंशयः ५५
यावदेवमहाभागश्चिंतयित्वाविलोकयेत्
तावच्चामृतपूर्णस्तुपुनरेवाभवद्घटः ५६
तंदृष्ट्वाहर्षसंयुक्तःसोमशर्मामहायशाः
गत्वागुरुंनमस्कृत्यकुंभमादायसत्वरम् ५७
गृहाणत्वंपितश्चेमंपयःकुंभंसमागतम्
पानंकुरुमहाभागगदान्मुक्तोभवाचिरम् ५८
एतद्वाक्यंमहापुण्यंसत्यधर्मार्थकंपुनः
शिवशर्मासुतस्यापिश्रुत्वाचमधुराक्षरम् ५९
हर्षेणमहताविष्टइदंवचनमब्रवीत् ६०
इति श्रीपद्मपुराणेभूमिखंडेशिवशर्मोपाख्यानेचतुर्थोऽध्यायः ४

## पञ्चमोऽध्यायः

शिवशर्मोवाच-
तपसादमशौचाभ्यांगुरुशुश्रूषयातथा
भक्त्याभावेनतुष्टोस्मितवाद्यचसुपुत्रक १
त्यजामिवैकृतंरूपंमत्तःसुखमवाप्नुहि
एवमुक्त्वासुतंविप्रोदर्शयामासतांतनुम् २
यथापूर्वंस्थितौतौतुतथासदृष्टवान्गुरू
दीप्तिमंतौमहात्मानौसूर्यबिंबोपमावुभौ ३

ननामपादौसद्भक्त्याउभयोस्तुमहात्मनोः
ततःसुतंसमामंत्र्यहर्षेणमहतान्वितः ४
विष्णोःप्रसादाद्धर्मात्माभार्ययासहकेशवम्
जगामनिजपुरायैश्चयोगाभ्यासेनसत्तमः ५
प्रविष्टोवैष्णवंधामसमुनिर्दुर्लभंपदम्
नत्वन्यैःप्राप्यतेपुरायैस्तपोभिर्मुक्तिदंपदम् ६
विष्णोस्तुचिंतनैर्न्यासध्यानज्ञानैःस्तवैस्तथा
नदानैस्तीर्थयात्राभिर्दृश्यतेमधुसूदनः ७
समाधिज्ञानयोगेनदृश्यतेपरमंपदम्
महायोगैर्यथाविप्रःप्रविष्टोवैष्णवींतनुम् ८
सूतउवाच-
ततस्तत्रतपस्तेपेसोमशर्मामहाद्युतिः
अश्मलोष्टसमंमेनेकांचनंभूषणंपुनः ९
जिताहारःसधर्मात्मानिद्रयापरिवर्जितः
ससर्वान्विषयांस्त्यक्त्वाएकांतमपिसेवते १०
योगासनसमारूढोनिराशोनिःपरिग्रहः
तस्यवेलासुसंप्राप्तामृत्युकालस्यवैतदा ११
आगतादानवाविप्रंसोमशर्माणमंतिके
मृत्युकालेतुसंप्राप्तेप्राणयात्राप्रवर्तिनः १२
शालिग्रामेमहाक्षेत्रेऋषीणांमानवर्द्धने
केचिद्वदंतिवैदैत्याःकेचिद्वदंतिदानवाः १३
एवंविधोमहाशब्दःकर्णरंध्रंगतस्तदा
तस्यैवविप्रवर्यस्यसुचिरात्सोमशर्मणः १४
ज्ञानध्यानविलग्नस्यप्रविष्टंदैत्यजंभयम्
तेनध्यानेनतस्यापिदैत्यभीत्यैववैतदा १५
सत्वरंचैवतत्प्राणागतास्तस्यमहात्मनः
दैत्यभयेनसंयुक्तःसहिमृत्युवशंगतः १६
तस्माद्दैत्यगृहेजातोहिरण्यकशिपोःसुतः
देवासुरेमहायुद्धेनिहतश्चक्रपाणिना १७
युद्ध्यमानेनतेनापिप्रह्लादेनमहात्मना

सुदृष्टंवासुदेवत्वंविश्वरूपसमन्वितम् १८
योगाभ्यासेनपूर्वेणज्ञानमासीन्महात्मनः
सस्मारपूर्वकंसर्वंचरितंशिवशर्मणः १९
प्रागहंसोमशर्माख्यःप्रविष्टोदानवींतनुम्
अस्मात्कायात्कदापुण्यंकेवलंधामउत्तमम् २०
प्रयास्यामिमहापुण्यैर्ज्ञानाख्यैर्मोक्षदायकम्
समरेम्रियमाणेनप्रह्लादेनमहात्मना २१
एवंचिंताकृतापूर्वंश्रूयतांद्विजसत्तमाः
एवंतुचसमाख्यातंसर्वसंदेहनाशनम् २२
सूतउवाच-
प्रह्लादेनिहतेसंख्येदेवदेवेनचक्रिणा
रुरुदेकमलासातुहतपुत्राचकामिनी २३
प्रह्लादस्यतुयामाताहिरण्यकशिपोःप्रिया
प्रह्लादस्यमहाशोकैर्दिवारात्रौप्रशोचति २४
पतिव्रतामहाभागाकमलानामतत्प्रिया
रोदमानांदिवारात्रौनारदस्तामुवाचह २५
माशुचस्त्वंमहाभागेपुत्रार्थंपुण्यभागिनि
निहतोवासुदेवेनतवपुत्रःसमेष्यति २६
भूयःस्वलक्षणोपेतस्त्वत्सुतश्चमहामतिः
प्रह्लादेतिचवैनामपुनरस्यभविष्यति २७
विहीनश्चासुरैर्भावैर्देवत्वेनसमन्वितः
इंद्रत्वेमोदतेभद्रेसर्वदेवैर्नमस्कृतः २८
सुखीभवमहाभागेतेनपुत्रेणवैसदा
नप्रकाश्यात्वयादेविसुवार्तेयंचकस्यचित् २९
कर्त्तव्यमज्ञानभावैःसुगोप्यंकुरुत्वंसदा
एवमुक्त्वागतोविप्रोनारदोमुनिसत्तमः ३०
कमलायाश्चोदरेतुजन्मास्यानुत्तमंपुनः
प्रह्लादेतिचवैनामतस्याख्यानंमहात्मनः ३१
बाल्यंभावंगतोविप्राःकृष्णमेवव्यचिंतयत्
नरसिंहप्रसादेनदेवराजोभवेद्दिवि ३२

देवत्वंलभ्यचैवासावैंद्रंपदमनुत्तमम्
मोक्षंयास्यतिज्ञानात्मावैष्णवंधामचोत्तमम् ३३
असंख्यातामहाभागाःसृष्टेर्भावाह्यनेकशः
मोहएवंनकर्त्तव्योज्ञानवद्भिर्महात्मभिः ३४
एतद्वःसर्वमाख्यातंयथापृष्टंद्विजोत्तमाः
अन्यंपृच्छमहाभागसंदेहंतेभिनद्म्यहम् ३५
विजयंदेवतानांतुदानवानांमहत्क्षयम्
कृतंहिदेवदेवेनस्थापितंभुवनत्रयम् ३६
ऋषयऊचुः–
इन्द्रत्वंकस्यसंजातंदेवानांशब्दधारकम्
केनदत्तंत्वमाचक्ष्वविस्तराद्द्विजसत्तम ३७
सूतउवाच–
विस्तरेणप्रवक्ष्यामिइन्द्रत्वेयेनसत्तमः
प्राप्तएषमहाभागोयथापुरायतमेनच ३८
हतेषुतेषुदैत्येषुसमस्तेषुमहाहवे
अतिनष्टेषुपापेषुगोविंदेनमहात्मना ३९
ततोदेवाःसगंधर्वानागाविद्याधरास्तथा
संप्रोचुर्माधवंसर्वेबद्धप्रांजलयस्ततः ४०
भगवन्देवदेवेशहृषीकेशनमोस्तुते
विज्ञापयामहेत्वांवैतत्सर्वमवधार्यताम् ४१
शास्तागोप्ताचपुरायात्माअस्माकंकुरुकेशव
राजानंपुरायधर्माणांत्वमिंद्रंलोकशासनम् ४२
त्रैलोक्यस्यप्रजादेवयमाश्रित्यसुखंलभेत्
वासुदेवउवाच–
ममलोकेमहाभागावैष्णवेनसमन्वितः ४३
तेजसाब्राह्मणश्रेष्ठश्चिरकालंनिवासितः
तस्यकालःप्रपूर्णश्चममलोकेमहात्मनः ४४
वसतस्तस्यविप्रस्यमद्भक्तस्यसुरोत्तमाः
तेजसावैष्णवेनैवभवतांपालकोहिसः ४५
भविष्यतिसधर्मात्मासचधर्मानुरंजकः

पालकोधारकश्चैवसचब्राह्मणसत्तमः ४६
भविष्यतिसधर्मात्माभवतांत्राणकारणात्
अदित्यास्तनयश्चैवसुव्रताख्योमहामनाः ४७
महाबलोमहावीर्यःसवइंद्रोभविष्यति
सूतउवाच-
एवंवरान्सदेवेशोदत्वादेवेभ्यउत्तमम् ४८
देवाविजयिनःसर्वेविष्णुनासहसत्तमाः
कश्यपंपितरंदृष्टुंमातरंचततोगताः ४९
प्रणेमुस्तेमहात्मानउभावेतौसुखासनौ
ऊचुःप्रांजलयःसर्वेहर्षेणमहतान्विताः ५०
युवयोश्चप्रसादेनदेवत्वंहिगतावयम्
हर्षेणमहताविष्टोदेवान्वाक्यमुवाचसः ५१
कश्यपउवाच-
यूयंवैसत्यधर्मेणवर्तमानाः सदैवहि
आवयोश्चप्रसादेनतपसश्चप्रभावतः ५२
प्राप्तवंतोभवंतस्तुदेवत्वंचाक्षयंपदम्
वरमेवददाम्येषांबहुप्रीतिसमन्विताः ५३
अमरानिर्जराश्चैवअक्षयाश्चभविष्यथ
सर्वकामसमृद्धार्थाः सर्वसिद्धिसमन्विताः ५४
देवानागाश्चगंधर्वामत्प्रसादान्महासुराः
विष्णुरुवाच-
वरंवरयभद्रंतेदेवमातर्यशस्विनि ५५
मनसाचेप्सितंसर्वंतत्तेदद्मिसुनिश्चितम्
अदितिरुवाच-
पूर्वंपुत्रवतीभूताप्रसादात्तवमाधव ५६
अमरानिर्जराःसर्वेअक्षयाःपुण्यवत्सलाः
अमीपुत्रामयालब्धाःश्रूयतांमधुसूदन ५७
सुतरांत्वंचगोविंदसर्वकामसमृद्धिदः
ममगर्भेवसंश्चैवभवांश्चममनंदनः ५८
त्वयापुत्रेणनित्यंचयथानंदामिकेशव

एवंमहोदयंनाथपूरयस्वमनोरथम् ५९
वासुदेवउवाच-
भवत्यादेवकार्यार्थंगंतव्यंमानुषींतनुम्
तदाहंतवगर्भेवैवासंयास्यामिनिश्चितम् ६०
युगेद्वादशकेप्राप्तेभूभारहरणायवै
जमदग्निसुतोदेविरामोनामद्विजोत्तमः ६१
प्रतापतेजसायुक्तःसर्वक्षत्रवधायच
तवपुत्रोभविष्यामिसर्वशस्त्रभृतांवरः ६२
सप्तविंशतिकेप्राप्तेत्रेताख्येतुतथायुगे
रामोनामभविष्यामितवपुत्रःपतिव्रते ६३
पुनःपुत्रोभविष्यामितवैवशृणुपुरायधेः
अष्टाविंशतिकेप्राप्तेद्वापरांतेयुगेतदा ६४
सर्वदैत्यविनाशार्थेभूभारहरणायच
वासुदेवाख्यस्तेपुत्रोभविष्यामिनसंशयः ६५
इदानींकुरुकल्याणिमद्वाक्यंधर्मसंयुतम्
सर्वलक्षणसंपन्नंसत्यधर्मसमन्वितम् ६६
सर्वज्ञंसर्वदेदेविपुत्रमुत्पाद्यसुंदरम्
इंद्रत्वंतस्यदास्यामिइंद्रःसोपिभविष्यति ६७
एवंसंभाषितंश्रुत्वामहाहर्षसमन्विता
देवदेवप्रसादेनइंद्रःपुत्रोभविष्यति ६८
एवमस्तुमहाभागतववाक्यंकरोम्यहम्
ततस्तादेवताःसर्वाजग्मुःस्वस्थानमेवहि ६९
हरिणासहतेसर्वेनिरातंकामुदान्विताः
सूतउवाच-
अदितिः कश्यपंप्राहऋतुंप्राप्यमनस्विनी ७०
भगवन्दीयतांपुत्रःसुरेंद्रपदभोजकः
चिंतयित्वाक्षणंविप्रस्तामुवाचमनस्विनीम् ७१
एवमस्तुमहाभागेतवपुत्रोभविष्यति
त्रैलोक्यस्यापिकर्तासयज्ञभोक्तासएवच ७२
तस्याःशिरसिसन्यस्यस्वहस्तंचद्विजोत्तमः

तपश्चचारतेजस्वीसत्यधर्मसमन्वितः ७३
सुव्रतोनामतेजस्वीविष्णुलोकेवसेत्सदा
तस्यपुण्यक्षयेजातेविष्णुलोकाद्द्विजोत्तमाः ७४
पतनंकर्मवशतस्ततस्तस्यद्विजोत्तमाः
पुण्यगर्भंगतोविप्रश्रदित्यास्तुमहातपाः ७५
इंद्रत्वंभोक्तुकामार्थंसत्यपुण्येनकर्मणा
गर्भंदधारसादेवीपुण्येनतपसाकिल ७६
तपस्तेपेनिरालस्यावनवासंगतासती
दिव्यंवर्षशतंयातंतपंत्यांदेवमातरि ७७
तपंत्यथतपस्तीव्रंदुष्करंदेवतासुरैः
ततःसातपसातेनतेजसाचप्रभान्विता ७८
सूर्यतेजःप्रतीकाशाद्वितीयइवभास्करः
शुशुभेसायथादीप्तापरमंध्यानमास्थिता ७९
रूपेणाधिकतांयातातपसस्तेजसातदा
तपोध्यानपरासाचवायुभक्षातपस्विनी ८०
अधिकंशुशुभेदेवीदक्षस्यतनयातदा
सिद्धाश्चऋषयःसर्वेदेवाश्चापिमहौजसः ८१
स्तुवंतितांमहाभागांरक्षंतिचसुतत्पराः
पूर्णेवर्षशतेतस्याविष्णुस्तत्रसमागतः ८२
तामुवाचमहाभागामदितिंतपसान्विताम्
देविगर्भःसुसंपूर्णःसूतिकालःप्रवर्तते ८३
तवैवतपसापुष्टस्तेजसाचप्रवर्द्धितः
अद्यैवगर्भमेतंत्वंमुंचमुंचयशस्विनि ८४
एवमाभाष्यदेवेशःसजगामस्वकंगृहम्
असूतपुत्रंसादेवीकालेप्राप्तेमहोदये ८५
सापुत्रंदीप्तिसंयुक्तंद्वितीयमिवभास्करम्
सुभगंचारुसर्वांगंसर्वलक्षणसंयुतम् ८६
चतुर्बाहुंमहाकायंलोकपालंसुरेश्वरम्
तेजोज्वालासमाकीर्णंचक्रपद्मसुहस्तकम् ८७
चंद्रबिंबानुकारेणवदनेनमहामतिः

राजमानंमहाप्राज्ञंतेजसावैष्णवेनच ८८
अन्यैश्चलक्षणैर्दिव्यैर्दिव्यभावैरलंकृतम्
सर्वलक्षणसंपूर्णंचंद्रास्यंकमलेक्षणम् ८९
आजग्मुस्तेत्रयोदेवाऋषयोवेदपारगाः
गंधर्वाश्चततोनागाःसिद्धाविद्याधरास्तथा ९०
ऋषयःसप्ततेदिव्याःपूर्वापरमहौजसः
अन्येचमुनयःपुरायाःपुरायमंगलदायिनः ९१
आजग्मुस्तेमहात्मानोहर्षनिर्भरमानसाः
तस्मिञ्जातेमहाभागेभगवंतोमहौजसि ९२
आजग्मुर्देवताःसर्वेपर्वतास्तुतपस्विनः
क्षीराद्याःसागराःसर्वेनद्यश्चैवतथामलाः ९३
प्रीतिमंतस्ततःसर्वेयेचान्येहिचराचराः
मंगलैस्तुमहोत्साहंचक्रुःसर्वेसुरेश्वराः ९४
ननृतुश्चाप्सराःसंघागंधर्वाललितंजगुः
वेदमंत्रैस्ततोदेवाब्राह्मणावेदपारगाः ९५
स्तुवंतितंमहात्मानंसुतंवैकश्यपस्यच
ब्रह्माविष्णुश्चरुद्रश्चवेदाश्चैवसमागताः ९६
सांगोपांगैश्चसंयुक्तास्तस्मिञ्जातेमहौजसि
त्रैलोक्येयानिसत्वानिपुराययुक्तानिसत्तम ९७
समागतानितत्रैवतस्मिञ्जातेमहौजसि
मंगलंचक्रिरेसर्वेगीतपुरायैर्महोत्सवैः ९८
हर्षेणनिर्भराःसर्वेपूजयंतोमहौजसः
ब्रह्माद्याश्चत्रयोदेवाःकश्यपोथबृहस्पतिः ९९
चक्रिरेनामकर्माणितस्यैवहिमहात्मनः
वसुदत्तेतिविख्यातोवसुदेतिपुनस्तव १००
आखंडलेतितन्नाममरुत्वान्नामतेपुनः
मघवांश्चबिडौजास्त्वंपाकशासनइत्यपि १०१
शक्रश्चैवहिविख्यातइंद्रश्चैवेतितेसुतः
इत्येतानिचनामानितस्यैवचमहात्मनः १०२
चक्रुश्चदेवताःसर्वाःसंतुष्टाहृष्टमानसाः

स्नानंतुकारयामासुःसंस्काराणिमहासुरः १०३
विश्वकर्माणमाहूयददुराभरणानिच
तानिपुण्यानिदिव्यानितस्मैतेतुमहात्मने १०४
जातेतस्मिन्महाभागेदेवराजेमहात्मनि
एवंमुदंततःप्रापुःसर्वेदेवामहौजसः १०५
पुण्येतिथौतथाऋृक्षेसुमुहूर्तेमहात्मभिः
इंद्रत्वेस्थापितोदेवैरभिषिक्तःसुमंगलैः १०६
प्राप्तमैंद्रपदंतेनप्रसादात्तस्यचक्रिणः
तपश्चकारतेजस्वीवसुदत्तःसुरेश्वरः १०७
उग्रेणतेजसायुक्तोवज्रपाशांकुशायुधः १०८
सूतउवाच-
उग्रंसमस्तंतपसःप्रभावंविलोक्यशुक्रोनिजगादगाथाम्
लोकेषुकोन्योनभविष्यतीतियथाहिचायंचसुदर्शनीयः १०९
विष्णोःप्रसादान्नपरोमहात्मासंप्राप्तमैश्वर्यमिहैवदिव्यम् ११०
अनेनतुल्योनभविष्यतीतिलोकेषुचान्यस्तपसोग्रवीर्यः १११
इति श्रीपद्मपुराणेभूमिखंडेदेवासुरेइंद्राभिषेकोनामपंचमोऽध्यायः ५

## षष्ठोऽध्यायः

सूतउवाच-
कश्यपस्यचभार्यान्यादनुर्नामतपस्विनी
पुत्रशोकेनसंतप्तासंप्राप्तादितिमंदिरम् १
रोदमानाप्रणम्यैवपादपद्मयुगंतदा
दुःखेनमहताप्राप्तादितिस्तांप्रत्यबोधयत् २
दितिरुवाच-
तवैवहिमहाभागेकिमिदंरोदकारणम्
पुत्रिण्यश्चैकपुत्रेणलोकेनार्योभवंतिवै ३
भवतीशतपुत्राणांगुणिनामपिभामिनि
मातात्वमसिकल्याणिशुंभादीनांमहात्मनाम् ४
कस्माद्दुःखंत्वयाप्राप्तमेतन्मेकारणंवद
हिरण्यकशिपूराजाहिरण्याक्षोमहाबलः ५

यस्याःपुत्रौमहात्मानौमहाबलपराक्रमौ
कस्माद्दुःखंमहज्ञातंतस्माच्चैवसखेवद ६
ग्राख्याहिकारणंसर्वंयस्माद्रोदिषिसांप्रतम्
एवमाभाष्यतांदेवींविररामनस्विनी ७
दनुरुवाच-
पश्यपश्यमहाभागेसपत्न्याश्चमनोरथम्
परिपूर्णंकृतंतेनदेवदेवेनचक्रिणा ८
यथापूर्ववरोदत्तोह्यदित्यैदेविविष्णुना
तथेदानींचपुत्रायतस्यादत्तोवरोमहान् ९
कश्यपाद्विश्रुतोजातस्त्रैलोक्यपालकःसुतः
इंद्रत्वंतस्यवैदत्तंतवपुत्राद्विहृत्यच १०
मनोरथैस्तुसंपूर्णाग्रदितिःसुखवर्द्धिनी
कनीयान्वसुदत्तश्चतस्याःपुत्रश्चसंप्रति ११
एंद्रंपदंसुदुष्प्राप्यंदेवैःसार्द्धंभुनक्तिच
दितिरुवाच-
कस्मात्पदात्परिभ्रष्टोममपुत्रोमहामतिः १२
ग्रन्येचदानवादैत्यास्तेजोभ्रष्टाःकथंसखे
तस्यत्वंकारणंब्रूहिविस्तरेणयशस्विनि १३
तामाभाष्यदितिर्वाक्यंविररामसुदुःखिता
दनुरुवाच-
देवाश्चदानवाःसर्वेसक्रोधाःसंगरंगताः १४
तत्रयुद्धंमहज्ञातंदैत्यसंज्ञयकारकम्
देवैश्चविष्णुनायुद्धेममपुत्रानिपातिताः १५
तथैवतवपुत्रास्तेदेवदेवेनचक्रिणा
वनेगतान्यथासिंहोद्रावयेत्स्वेनतेजसा १६
तथातेमामकाःपुत्रानिहताःशङ्खपाणिना
कालनेमिमुखंसैन्यंदुर्जयंससुरासुरैः १७
नाशितंमर्दितंसर्वंद्रावितंविकलीकृतम्
स्वैरर्चिभिर्यथावह्निस्तृणानिज्वालयेद्वने १८
तथादैत्यगणान्सर्वान्निर्दहत्येवकेशवः

ममपुत्रामृतादेविबहुशस्तवनंदनाः १९
वह्निंप्राप्ययथासर्वेशलभायांतिसंक्षयम्
तथातेदानवाःसर्वेहरिंप्राप्यक्षयंगताः २०
एवमेतंहिवृत्तांतंदितिःशुश्रावदारुणम्
दितिरुवाच-
वज्रपातोपमंभद्रेवदस्येवंकथंमम २१
एवमाभाष्यतांदेवीमूर्च्छितानिपपातह
हाहाकष्टमिदंजातंबहुदुःखंप्रतापकम् २२
रुरोदकरुणंसाथपुत्रशोकसुपीडिता
तांदृष्ट्वासमुनिश्रेष्ठउवाचवचनंशुभम् २३
मारोदिषिचभद्रंतेनैवंशोचंतित्वद्विधाः
सत्ववंतोमहाभागेलोभमोहेनवर्जिताः २४
कस्यपुत्राहिसंसारेकस्यदेवीसुबांधवाः
नास्तिकस्येहकेनापितत्सर्वंश्रूयतांप्रिये २५
दक्षस्यापिसुतायूयंसुन्दर्यश्चैवमामकाः
भवतीनामहंभर्ताकामनापूरकःशुभे २६
योजकःपालकश्चैवरक्षकोस्मिवरानने
कस्माद्वैरंकृतंक्रूरैरसुरैरजितात्मभिः २७
तवपुत्रामहाभागेसत्यधर्मविवर्जिताः
तेनदोषेणतेसर्वेतवदोषेणवैशुभे २८
निहतावासुदेवेनदैवतैस्तुनिपातिताः
तस्माच्छोकोनकर्तव्यःसत्यमोक्षविनाशनः २९
शोकोहिनाशयेत्पुण्यंक्षयात्पुण्यस्यनश्यति
तस्माच्छोकंपरित्यजविघ्नरूपंवरानने ३०
आत्मदोषप्रभावेणदानवामरणंगताः
देवानिमित्तभूताश्चनाशिताःस्वेनकर्मणा ३१
एवंज्ञात्वामहाभागेसमागच्छसुखंप्रति
एवमुक्त्वामहायोगीतांप्रियांदुःखभागिनीम् ३२
विषादाच्चनिवृत्तोसौविरराममहामतिः ३३

इति श्रीपद्मपुराणेभूमिखंडेदेवासुरेदितिविलापोनामषष्ठोऽध्यायः ६

सप्तमोऽध्यायः

दितिरुवाच–
सत्यमुक्तंत्वयानाथसर्वमेवनसंशयः
भर्तृस्नेहंपरित्यज्यगतासापत्न्यजंद्विज १
अभिमानेनदुःखेनमानभंगेनसत्तम
महादुःखेनसंतप्ताकरिष्येप्राणमोचनम् २
कश्यपउवाच–
श्रूयतामभिधास्यामियथाशांतिर्भविष्यति
नकःकस्यभवेत्पुत्रोनमातानपिताशुभे ३
नभ्राताबांधवःकस्यनचस्वजनबांधवाः
एवंसंसारसंबंधोमायामोहसमन्वितः ४
स्वयमेवपितादेविस्वयंमाताथबांधवाः
स्वयंस्वजनवर्गश्चस्वयंधर्मःसनातनः ५
आचारेणनरोदेविसुखित्वमुपजायते
अनाचारेणपापेननाशंयातितथाध्रुवम् ६
क्रूरयोनिंप्रयात्येवंनरोदेविनसंशयः
कर्मणासत्यहीनेनमहापापेनमोहतः ७
रिपुत्वेवर्त्ततेमर्त्यःप्राणिनांनित्यसंस्थितः
रिपवस्तस्यवर्तन्तेयत्रतत्रनसंशयः ८
मैत्रेणवर्ततेमर्त्योयदालोकेप्रियेशुभे
तदातस्यभवंत्येवमित्राःसर्वत्रभामिनि ९
कृषिकारोयदादेविछन्नंबीजंसुसंस्थितम्
यादृशंतुभवत्येवतादृशंफलमश्नुते १०
तथातवचपुत्रैश्चसाधुभिःस्पर्धितंसह
कर्मणस्तस्यतत्प्राप्तंफलंभुंन्वसुसंस्थितम् ११
तवपुत्रामहाभागेतपःशांतिविवर्जिताः
तेनपापेनतेसर्वेपतितावैमहत्पदात् १२
एवंज्ञात्वाशमंगच्छमुंचदुःखंसुखंतथा
कस्यपुत्राश्चमित्राणिकस्यस्वजनबांधवाः १३
आत्मकर्मानुसारेणसुखंजीवंतिजंतवः

परार्थेचिंतनंदेवितत्त्वज्ञानेनपंडिताः १४
नकुर्वंतिमहात्मानोव्यर्थमेवनसंशयः
पंचभूतात्मकंकायंकेवलंसंधिजर्जरम् १५
ग्रात्ममित्रंकृतंतेनसर्वदेविसुखाशया
ग्रात्मानाममहापुण्यःसर्वगःसर्वदर्शकः १६
सर्वसिद्धिस्तुसर्वात्मासात्विकःसर्वसिद्धिदः
एवंसर्वमयोदेविभ्रमत्येकोनिरञ्जनः १७
भ्रमतानिर्जनेयेनमूर्तिमंतोद्विजोत्तमाः
चत्वारोदर्शिताःपुण्यामूर्तिमंतोमहौजसः १८
पंचमःश्वसनश्चैवपूर्वाणांमित्रमेवच
ग्रथोग्रात्मासमायातोज्ञानसाहाय्यमेववा १९
सतान्दृष्ट्वामहात्मावैज्ञानमात्मासमब्रवीत्
ज्ञानपश्यग्रमीपंचमंत्रयंतःपरस्परम् २०
एतान्गत्वाब्रवीहित्वंयूयंकइतिपृच्छह
ज्ञानंवाक्यंपरंश्रुत्वासार्थंतस्यमहात्मनः २१
तदाहात्मानमाराध्यमेतैःकिंतेप्रयोजनम्
तत्त्वतोब्रूहिमेदेवसदाशुद्धोसिसर्वदा २२
ग्रात्मोवाच–
एतेपंचमहाभागारूपवंतोमनस्विनः
गत्वासंदर्शयाम्येनानाभाष्येज्ञानश्रूयताम् २३
भव्यानेतान्प्रवक्ष्यामिपंचमींगतिमागतान्
दूतत्वंगच्छभोज्ञानकुशलोदूतकर्मणि २४
ज्ञानमुवाच–
त्वमात्मञ्छृणुमेवाक्यंसत्यंसत्यंवदाम्यहम्
एतेषांसंगतिस्तातकार्यानैवत्वयाकदा २५
पंचानामपिशुद्धात्मन्नकार्यंशुभमिच्छता
भवतःसंगतिंमोहइच्छत्येषमहामते २६
ग्रात्मोवाच–
एतेषांसंगतिंज्ञानकस्माद्वारयतेभवान्
तन्मेत्वंकारणंब्रूहियाथातथ्येनपंडित २७

ज्ञानमुवाच-
एतेषांसंगमात्रात्तुमहद्दुःखंभविष्यति
दुःखमूलाहिपंचैवशोकसंतापकारकाः २८
एवमस्तुमहाप्राज्ञकरिष्येवचनंतव
ज्ञानमाभाष्यसह्यात्माध्यानेनसहसंगतः २९
कश्यपउवाच-
ततःपंचैवतेतत्राद्राक्षुरात्मानमेवतम्
बुद्धिमूचुःसमाहूयसंगच्छात्मानमेवहि ३०
दूतत्वंकुरुकल्याणिअस्माकमात्मनासह
पंचतत्त्वामहात्मानोविश्वस्यधारकाःशुभाः ३१
भवतोमैत्रमिच्छंतिइत्याभाष्यमहामतिम्
गत्वाबुद्धेत्वयाकार्यंकर्तव्यंनइतोव्रज ३२
एवमस्तुमहाभागाकरिष्येकार्यमुत्तमम्
एवमाभाषितंतेषांगत्वाऽहात्मानमेवतम् ३३
अहंबुद्धिर्महाभागभवंतंसमुपागता
दूतत्वेमहतांपार्श्वात्तेषांत्वंवचनंशृणु ३४
भवन्मैत्रींसमिच्छंतिअद्वयांपंचआत्मकाः
कुरुमैत्रींमहाप्राज्ञजहिध्यानंसुदूरतः ३५
ध्यानमुवाच-
नकर्तव्यंत्वयाचात्मन्नैतेषांवैसमागमम्
एषांसंसर्गमात्रेणमहद्दुःखंभविष्यति ३६
मयाज्ञानेनहीनस्त्वंकथंकर्मकरिष्यति
एवमेवनकर्तव्यंतेषांचैवसमागमम् ३७
गर्भवासंनयिष्यंतिभवंतंनान्यथाविभो
ज्ञानेनैवमयाहीनोअज्ञानंयास्यसिध्रुवम् ३८
एवमुक्त्वातमात्मानंविररामममहामतिम्
ततस्तामागतांबुद्धिमात्माप्रोवाचनिश्चितः ३९
ज्ञानध्यानौमहात्मानौमंत्रिणौममशोभनौ
तत्रयानंनमेयुक्तंतद्बुद्धेकिंकरोम्यहम् ४०
एवंश्रुत्वाततोबुद्धिस्तेषांपार्श्वेयशस्विनी

समाचष्टसमग्रंतत्कथनंज्ञानध्यानयोः ४१
ततस्तेपंचकाःसर्वेआत्मानंप्रतिजग्मिरे
मैत्रीमेवप्रतीच्छामोभवतोनित्यमेवहि ४२
यस्माच्छुद्धोसिलोकेशतस्मात्त्वांसमुपागताः
स्वयमेवविचार्यैवउत्तरंनःप्रदीयताम् ४३
आत्मोवाच-
यूयंपंचैवसंप्राप्तामममैत्रंसमिच्छथ
स्वीयंगुणंप्रभावंचकथयंतुममाग्रतः ४४
भूमिरुवाच-
सर्वकार्यस्यसंस्थानंचर्ममांससमन्वितम्
अस्थिमूलदृढत्वंमेनखलोमसमन्वितम् ४५
प्रभावोहिमहाप्राज्ञकायमध्येममैवहि
नासिकागमनोगंधस्समेभृत्योमहामनाः ४६
आकाशउवाच-
अहमाकाशकःप्राप्तोममकायेप्रभावकम्
श्रूयतामभिधास्यामिपरब्रह्मस्वरूपिणम् ४७
बाह्यांतरावकाशश्चशून्यस्थानेवसाम्यहम्
तत्रामात्यौतुकर्णौमेश्रवणार्थंप्रतिष्ठितौ ४८
वायुरुवाच-
पंचरूपेणतिष्ठामिकरोम्येवंशुभाशुभम्
चर्मकायेस्थितोमात्यःस्पर्शंसंश्रयतेगुणम् ४९
तेजउवाच-
कायेसंस्थःसदानित्यंपाकयोगंकरोम्यहम्
सबाह्याभ्यंतरंसर्वंद्रव्याद्रव्यंप्रदर्शये ५०
शुक्रंमज्जातथालालाएवंत्वक्संधिसंस्थितम्
रुधिरंप्रेषयाम्येवकायमध्येस्थितोस्म्यहम् ५१
तत्रनेत्रावमात्यौमेद्रव्यलब्धिप्रसाधकौ
एवंमयात्मव्यापारस्तवाग्रेकथितःपरः ५२
जलमुवाचः-
सुतोषयाम्यहंनित्यममृतेनकलेवरम्

एवंमेतत्रव्यापारःकायपत्तनकेप्रिये ५३
अमात्यंरसनांविद्धिरसास्वादकरींपराम्
नासिकोवाच-
सुगंधेनपरांपुष्टिंकायस्यापिकरोम्यहम् ५४
दुर्गंधंतुपरित्यज्यकायेगंधंप्रदर्शये
बुद्धियुक्तामहाभागतस्याभावेनभाविता ५५
स्वामिकार्यायकायेस्मिन्नहंतिष्ठामिनिश्चला
गंधंममगुणंविद्धिद्विविधंयत्प्रवर्तितम् ५६
श्रवणावूचतुः-
कार्याकार्यादिकंशब्दंलोकैरुक्तंशुभाशुभम्
शृणुयावःस्वकायस्थौसत्यासत्येप्रियाप्रिये ५७
शब्दोहिमेगुणःप्रोक्तोममव्यापारमेवहि
योजयामिनसंदेहोयदाबुद्धिःप्रपूरयेत् ५८
त्वगुवाच-
पंचरूपात्मकोवायुः शरीरेस्मिन्व्यवस्थितः ५९
सबाह्याभ्यंतरेचेष्टांतेषांजानामितत्त्वतः
शीतोष्णमातपंवर्षंवायोःस्फुरणमेवच ६०
सर्वंजानामिसंस्पर्शसंगश्लेषादिकंनृणाम्
स्पर्शएवगुणोमह्यमेतत्सत्यंवदाम्यहम् ६१
एवंहितेसमाख्यातोमयाव्यापारएवहि
नेत्रेऊचतुः-
संसारेयानिरूपाणिभव्याभव्यानिसत्तम ६२
यदाप्रेरयतेबुद्धिस्तदापश्यावनान्यथा
वसावः कायमध्येवैरूपंगुणमिहावयोः ६३
एवंव्यापारसंबंधःकायमध्येमहामते
जिह्वोवाच-
बुद्धियुक्ताअहंतातरसभेदान्विचारये ६४
क्षारमम्लादिकंसर्वंनीरसंस्वादुचिंतये
व्यापारेणअनेनापिनित्ययुक्तावसाम्यहम् ६५
इन्द्रियाणांहिसर्वेषांबुद्धिरेषाप्रणायकः

एवंपंचसमायातानींद्रियाणिप्रियेशृणु ६६
स्वीयानियानिकर्माणिकथयंतिपुनःपुनः
अथबुद्धिःसमायातातमुवाचमहामतिम् ६७
मद्विहीनोयदाकायस्तदानश्यतिनान्यथा
तस्मात्त्वंमांसमास्थायवर्त्तयस्वमहामते ६८
अथकर्मसमायातमात्मानमिदमब्रवीत्
अहंकर्ममहाप्राज्ञतवपार्श्वंसमागतम् ६९
त्वांप्रेषयाम्यहंतेनपथायेनेहगच्छसि
एवमाकर्ण्यतत्सर्वमात्माप्रोवाचतान्प्रति ७०
यूयंपंचात्मकैर्युक्ताःसर्वसाधारणाःकिल
कस्मान्मैत्रंसमिच्छंतितत्रपंचात्मकंप्रति ७१
ब्रुवंतुकारणंसर्वेममाग्रेसर्वमेवतत्
पंचात्मकाऊचुः-
अस्मत्संगप्रसंगेनपिंडमेवप्रजायते ७२
तस्मिन्पिंडेमहाबुद्धेभवान्वसतिसुव्रतः
तिष्ठामोहिवयंसर्वेप्रसादात्तवतत्रहि ७३
एतस्मात्कारणान्मैत्रमिच्छामस्तवनित्यशः
आत्मोवाच-
एवमस्तुमहाभागाभवतांप्रियमेवच ७४
करिष्येनात्रसंदेहोमैत्रंहिप्रीतिकारणात्
वार्यमाणोमहाभागोज्ञानेनापिमहात्मना ७५
ध्यानेनचमहात्मासौतेषांसंगतिमागतः
सतैःप्रमोहितस्तत्ररागद्वेषादिभिस्तदा ७६
पंचतत्त्वसमायुक्तःकायित्वंगतवान्प्रभुः
यदागर्भंसमायातोविष्ठामूत्रसमाकुले ७७
दुर्गंधेपिच्छिलावर्तेपतितस्तैःससंयुतः
अंगेनव्याकुलीभूतः पंचात्मकानुवाचसः ७८
भोभोःपंचात्मकाःसर्वेशृणुध्वंवचनंमम
भवतांसंप्रसंगेनमहादुःखेनमोहितः ७९
तत्रास्मिन्पिच्छिलेघोरेपतितोहिमहाभये

पंचात्मकाऊचुः-
तावत्संस्थीयतांराजन्यावद्गर्भः प्रपूरयेत् ८०
पश्चान्निर्गमनंतेवैभविष्यतिनसंशयः
अस्माकंहिभवान्स्वामीकायदेशेव्यवस्थितः ८१
राज्यमेवंप्रकर्तव्यंसुखभोक्ताभविष्यति
तेषांतद्वचनंश्रुत्वाआत्मादुःखेनपीडितः ८२
गंतुमिच्छन्नसौतस्मात्पलायनपरोभवत् ८३
इति श्रीपद्मपुराणेभूमिखंडेदेवासुरेशरीरकथनंनामसप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

कश्यपउवाच-
सगर्भेव्याकुलोजातःखिद्यमानोदिनेदिने
दुःखाक्रांतोहिधर्मात्मासर्वपीडाभिपीडितः १
अधोमुखस्तुगर्भस्थोमोहजालेनबंधितः
आधिव्याधिसमाक्रांतोहाहाभूतोविचेतनः २
दुःखेनमहताविष्टोज्ञानमाहप्रपीडितः
आत्मोवाच-
तववाक्यंमहाप्राज्ञनकृतंतुमयातदा ३
ध्यानेनवार्यमाणोपिपतितोमोहसंकटे
तस्माद्रक्षमहाप्राज्ञगर्भवासात्सुदारुणात् ४
ज्ञानमुवाच-
मयात्वंवारितोह्यात्मन्कृतंवाक्यंनचैवमे
पंचात्मकैर्महाक्रूरैः पातितोगर्भसंकटे ५
इदानींगच्छत्वंध्यानंतस्मात्संप्राप्स्यसेसुखम्
गर्भवासाद्भविष्यस्तेमोक्षएवनसंशयः ६
तस्यतद्वचनंश्रुत्वाज्ञात्वाज्ञानस्यतत्त्वताम्
ध्यानमाहूयप्रोवाचश्रूयतांवचनंमम ७
त्वामहंशरणंप्राप्तोध्यानमांरक्षनित्यशः
एवमस्तुमहाप्राज्ञध्यानमाहमहामतिम् ८
एतद्वाक्यंततःश्रुत्वाआत्मावैध्यानमागतः

ध्यानेनहिसमंगर्भेसंस्थितोमोहवर्जितः ९
यदाध्यानंगतोह्यात्माविस्मृतंगर्भजंभयम्
सद्वाभ्यांसहितस्तत्रआत्मामोहविनाकृतः १०
चिंतयन्नेववैनित्यमात्मकंसुखमेवहि
इतोनिष्क्रांतमात्रस्तुत्यजेपंचात्मकंवपुः ११
एवंचिंतयतेनित्यंगर्भवासगतःप्रभुः
सूतिकालेतुसंप्राप्तेप्राजापत्येवरानने १२
वायुनाचलितोगर्भःप्राणेनापिबलीयसा
योनिर्विकासमायातिचतुर्विंशांगुलंतदा १३
पंचविंशांगुलोगर्भस्तेनपीडाविजायते
एवंसंपीड्यमानस्तुमूर्च्छयामूर्च्छितःप्रिये १४
पतितोभूमिभागेतुज्ञानध्यानसमन्वितः
प्राजापत्येनदिव्येनवायुनासपृथक्कृतः १५
भूमिसंस्पर्शमात्रेणज्ञानध्यानेतुविस्मृते
संसारबंधसंदिग्धआत्माप्रियतयास्थितः १६
गुणदोषसमाक्रांतोमहामोहसमन्वितः
खाद्यंपानादिकंसर्वमिच्छत्येवदिनेदिने १७
एवंसंपुष्यमाणस्तुआत्मापंचात्मकैःसह
व्यापितोहींद्रियैःसर्वैर्विषयैःपापकारिभिः १८
बांधवानांसमोहेनभार्यादीनांतथैवच
आकुलव्याकुलोदेविजायतेचदिनेदिने १९
महामोहेनसंदिग्धोमोहजालगतःप्रभुः
कैवर्तेनयथाबद्धःशकुलोजालबंधनैः २०
चलितुंनैवशक्तोस्तितथात्मासीत्प्रबंधितः
मोहजालैस्तुतैःसर्वैर्दृढबंधैस्तुबंधितः २१
एवमादिप्रपंचेनव्यापितोव्यापकेनहि
ज्ञानविज्ञानविभ्रष्टोरागद्वेषादिभिर्हतः २२
कामेनपीड्यमानस्तुक्रोधेनैवतथैववा
प्रकृत्याकर्मणाबद्धोमहामूढोव्यजायत २३
सूतउवाच–

एवंमूढोयदात्मासौकामक्रोधवशंगतः
लोभरागादिभिःसर्वैर्व्यापृतस्तैर्दुरात्मभिः २४
इयंभार्याह्ययंपुत्रइदंमित्रमिदंगृहम्
एवंसंसारजालेनमहामोहेनबंधितः २५
पुत्रशोकादिभिर्दुःखैर्विविधैराकुलस्तदा
जरयाव्याधिभिश्चैवसंग्रस्तश्चाधिभिस्तथा २६
एवमात्मासंप्रतप्तोदुःखमोहैःसुदारुणैः
अभिमानैर्मानभंगैर्नानादुःखैश्चखंडितः २७
वृद्धत्वेनतथादेविशबलत्वेनपीडितः
दुःखंचिंतयतेनित्यंहाहाभूतोविचेतनः २८
रात्रौस्वप्नान्प्रपश्येतदिवाचैतन्यवर्जितः
वैकल्येनतथांगानांव्याप्तोदेविदिनेदिने २९
संसारेभ्रममाणेनवैराग्यंतत्रदर्शितम्
निःशंकंबंधुहीनंचप्रशांतंतुष्टमेवच ३०
तमुवाचतदात्मावैकामक्रोधविवर्जितम्
कोभवान्नग्नरूपेणकथंमित्रैर्नलज्जसे ३१
यत्रलोकाःस्त्रियोवृद्धायुवत्योमातरस्तथा
एतासांहिगतोमध्येनबिभेषिअनावृतः ३२
वीतरागउवाच–
कोह्यत्रनग्नोदृश्येतननग्नोस्मीतिवैकदा
सुसंबद्धस्त्वमेवापिपरिधानसमन्वितः ३३
ननग्नोस्मिकदादिव्यभवान्नग्नःप्रदृश्यते
इंद्रियार्थवशेवर्तीमर्यादापरिवर्जितः ३४
आत्मोवाच–
पुरुषस्यकाहिमर्यादातामाचक्ष्वचसुव्रत
विस्तरेणमहाप्राज्ञयदिजानासिनिश्चितम् ३५
वीतरागोमहाप्राज्ञस्तमुवाचमहामतिः
सुस्थैर्यंभजतेचित्तंसुखदुःखेषुनित्यदा ३६
क्लेशितंसर्वभावैश्चतेषुतेषुपरित्यजेत्
अथलज्जांप्रवक्ष्यामिमनोयानिर्विशत्यलम् ३७

मयाद्यैवंनकर्तव्यंनग्नःस्थानविवर्जितः
पश्चात्तापेसुसंलीनःसालज्ञापरिकथ्यते ३८
कस्यलज्ञाप्रकर्तव्याद्वितीयोनास्तिसर्वदा
एकश्चपुरुषोदिव्यःकस्यकिंचिन्ननाशयेत् ३९
अथलोकान्प्रवक्ष्यामियेत्वयापरिकीर्तिताः
यथाकुलालकश्चक्रेमृत्पिंडंचनिधापयेत् ४०
भ्रामयित्वातुसूत्रेणनानाभेदान्प्रकाशयेत्
भांडानांतुसहस्राणिस्वेच्छयामतिसंस्थितः ४१
तथायंसृजतेधातानानारूपाणिनान्यथा
पश्चाद्विनाशमायांतियेनकेनापिहेतुना ४२
सर्वदैवस्थितायेचयेलोकाश्चसनातनाः
तेषांलज्ञाप्रकर्तव्यानावर्ततेहितेभुवि ४३
आकाशवायुतेजांसिपृथ्वीचापश्चपंचमः
अमीलोकाःप्रकाशंतेयेचसर्वत्रसंस्थिताः ४४
सत्त्वानामंगदेशेषुपंचैतेषुसुसंस्थिताः
सर्वत्रैवचवर्ततेकस्यलज्ञाविधीयते ४५
स्त्रीणांरूपंप्रवक्ष्यामिश्रूयतांतातसांप्रतम्
यथाघटसहस्रेषुसोदकेषुविराजते ४६
एकश्चंद्रोहिसर्वत्रभवांस्तद्वद्विराजते
गतोजंतुसहस्रेषुमोहचक्रेमहात्मवान् ४७
स्थावरेषुचसर्वेषुजंगमेषुतथाभवान्
योनिद्वारेणपापेनमायामोहमयेनवै ४८
कुचाभ्यांचनितंबाभ्यांवयसाचविराजते
हृन्मांसस्याधिकावृद्धिर्दृष्टाचात्रनसंशयः ४९
पतनायचलोकानांमोहरूपंविदर्शितम्
नभवत्येवसानारीयात्वयापरिकीर्तिता ५०
लीलयाकुरुतेधाताविनोदायसदात्मनः
यथानार्यास्तथापुंसोजीवःसर्वत्रसंस्थितः ५१
कुचयोनिविहीनायेजीवन्मुक्ताःसदैवहि
नरस्तुपुरुषःप्रोक्तोनारीप्रकृतिरुच्यते ५२

रमतेतेनवैसार्द्धंनमुक्ताहिकदाचन
भवान्प्रकृतिसंयुक्तःपुरुषेषुप्रदृश्यते ५३
कःकस्यकुरुतेलज्ञामेवंज्ञात्वासुखंव्रज
वृद्धांस्त्रियंप्रवन्द्यामिसदावृद्धांवरानने ५४
त्वचाजर्जरतांयातायस्याप्यंगेवरानने
श्वेतैश्चैवतथाकेशैःपलितैश्चसमाकुला ५५
बलहीनाथदीनापिव्यापितावलिनातदा
नेयंवृद्धाभवेन्नारीपरंवृद्धाचकथ्यते ५६
एतस्यालन्नणंप्रोक्तंयुवतींप्रवदाम्यहम्
ज्ञानेनवर्द्धतेनित्यंजीवपार्श्वेसमाश्रिता ५७
सुमतिर्नामसंप्रोक्तासावृद्धायुवतीतिच
नारीपुरुषलोकेषुसर्वदैवप्रतिष्ठिता ५८
लज्ञातस्याःप्रकर्तव्याश्रन्यच्चैववदाम्यहम्
मातरंवैप्रवन्द्यामियात्वयापरिकीर्तिता ५९
प्राणिनामंगदेशेषुसदैवचेतनास्थिता
परज्ञानप्रदायाचसाप्रज्ञापरिकथ्यते ६०
प्रज्ञामातासमाख्याताप्राणिनांपालनायसा
संस्थितासर्वलोकेषुपोषणायहितायवा ६१
सुमतिर्नामयाप्रोक्तासामातापरिकथ्यते
संसारद्वारमार्गाणियानिरूपाणिनित्यशः ६२
भवंतिमातरोह्येताबहुदुःखप्रदर्शिकाः
मातृरूपंसमाख्यातमन्यत्किंतेवदाम्यहम् ६३
श्रात्मोवाच–
भवान्कोहिसमायातोममसंतापनाशकः
विस्तरेणसमाख्याहिस्वरूपमात्मनःस्वयम् ६४
वीतरागउवाच–
यस्मात्कामानिवर्ततेनिराशाःसर्वएवते
यंदुष्टत्वान्नपश्यंतिकर्माणयेतानिनान्यथा ६५
यत्समीपंहिनायातिश्राशाचैवकदाचन
क्रोधोलोभस्तथामोहोयद्भयात्प्रलयंगताः ६६

वीतरागोस्मिभद्रंतेविवेकोममबांधवः
आत्मोवाच-
कीदृशोऽसौतवभ्राताविवेकोनामनामतः ६७
तस्यत्वंलक्षणंब्रूहिभ्रातुरात्मनएवच
वीतरागउवाच-
तस्यैवलक्षणंरूपंनवदामितवाग्रतः ६८
भ्रातुस्तस्यमहाभागआह्वानंचकरोम्यहम्
भोभोविवेकमेभ्रातरावयोस्त्वंवचःशृणु ६९
एह्येहिसुमहाभागममस्नेहान्महामते
कश्यपउवाच-
शांतिक्षमाभ्यांसंयुक्तोभार्याभ्यांचसमागतः ७०
सर्वदृक्सर्वगोव्यापीसर्वतत्त्वपरायणः
संदेहानांचसर्वेषांयोरिपुर्ज्ञानवत्सलः ७१
धारणाधीश्चद्वेपुत्र्यौतस्यैवहिमहात्मनः
तस्ययोगःसुतोज्येष्ठोमोक्षोयस्यमहागुरुः ७२
निर्मलोनिरहंकारोनिराशोनिष्परिग्रहः
सर्ववेलाप्रसन्नात्मागतद्वंद्वोमहामतिः ७३
सविवेकःसमायातोगुणरत्नैर्विभूषितः
यस्यामात्यौमहात्मानौधर्मसत्यौमहामती ७४
क्षमाशांतिसमायुक्तःसविवेकःसमागतः
वीतरागमुवाचेदमाहूतोहंसमागतः ७५
तद्भ्रातःकारणंसर्वंकथ्यतांहिममाग्रतः
यमाश्रित्यत्वयाद्यैवकृतमाह्वानमेवमे ७६
वीतरागउवाच-
पुमान्स्थितोयःपुरतोमहापाशैर्नियंत्रितः
मोहस्यबाणैःसंभ्रांतःसंसारस्यचबंधनैः ७७
सर्वस्यव्यापकःस्वामीअयमात्माममैवच
पंचतत्त्वैःसमाविष्टोज्ञानध्यानविवर्जितः ७८
पृच्छतामेनमात्मानंभवांस्तत्त्वेषुपंडितः
वीतरागवचःश्रुत्वाविवेकोवाक्यमब्रवीत् ७९

विवेकउवाच-
सुखेनस्थीयतेदेवभवताविश्वनायक
आगतेत्वयिसंसारेकिंकिंभुक्तंसुखंस्वयम् ८०
आत्मोवाच-
गर्भवासोमहद्दुःखमसह्यंदारुणंमया
भुक्तमेवमहाप्राज्ञज्ञानहीनेनवैसदा ८१
देहेपिज्ञानविभ्रष्टःसोहंजातोह्यनेकधा
बाल्यावस्थांगतेनाथकृत्याकृत्यंकृतंमया ८२
तारुण्येनकृताक्रीडाभुक्ताभार्याह्यनेकशः
वार्धकंप्राप्यसंतप्तःपुत्रशोकादिभिस्तथा ८३
भार्यादीनांवियोगैस्तुदग्धोस्म्यहमहर्निशम्
दुःखैरनेकसंवर्णैःसंतप्तोस्मिदिनेदिने ८४
दिवारात्रौमहाप्राज्ञनविंदामिसुखंक्वचित्
एवंदुःखैसुसंतप्तःकिंकरोमिमहामते ८५
तमुपायंवदस्वैवसुखंविंदामियेनवै
अस्मात्संसारजालौघान्मोचयाद्यसुबंधनात् ८६
विवेकउवाच-
भवाञ्छुद्धोसिनिर्द्वन्द्वोह्यपापोसिजगत्पते
एनंगच्छमहात्मानंवीतरागंसुखप्रदम् ८७
निःसंशयंत्वयादृष्टंनग्नमाचारवर्जितम्
सुखप्रदर्शकोह्येषसर्वसंतापनाशकः ८८
एवमाकर्ण्यशुद्धात्मावीतरागंगतःपुनः
तमुवाचश्वसन्दीनःश्रूयतांवचनंमम ८९
सुखंविंदामियेनाहंतंमार्गंममदर्शय
एवमस्तुमहाप्राज्ञकरिष्येवचनंतव ९०
पुनर्गच्छविवेकंहिसुखवार्ताकृतात्वया
सुखमार्गस्यवैवक्तातवएषभविष्यति ९१
वीतरागेणपुण्येनप्रेषितोगतवान्प्रभुः
तमुवाचमहात्मानंविवेकंशुद्धसत्तमम् ९२
सुखंमेदर्शयत्वंहिवीतरागेणप्रेषितः

भवच्छरणमापन्नोरक्षसंसारदारुणात् ९३
विवेकउवाच-
ज्ञानंगच्छमहाप्राज्ञसतेसर्वंवदिष्यति
आत्मातथोक्तःसंप्राप्तोयत्रज्ञानंप्रतिष्ठितम् ९४
भोभोज्ञानमहातेजःसर्वभावप्रदर्शक
शरणंत्वामहंप्राप्तःसुखमार्गंप्रदर्शय ९५
ज्ञानमुवाच-
भृत्योहंतवलोकेशत्वंमांवेत्सिनसुव्रत
मयाध्यानेनवैपूर्वंवारितस्त्वंपुनःपुनः ९६
पंचात्मकानांसंगेनआपदंप्राप्तवान्भवान्
ध्यानंगच्छमहाप्राज्ञसतेदातासुखस्यच ९७
ज्ञानेनप्रेषितोह्यात्माध्यानमाश्रित्यसंस्थितः
सुखमत्यंतसिद्धंचध्यानंमेदर्शयस्वह ९८
भवच्छरणमायातंमामेवंपरिरक्षय
एवंसंभाषितंतस्यध्यानमाकर्ण्यतद्वचः ९९
समुवाचपुनश्चापितमात्मानंप्रहृष्टवान्
नैवत्याज्योस्म्यहंतातसर्वकर्मसुनिश्चितः १००
त्वयैववीतरागेणविवेकेनसदैवहि
ध्यानयुक्तोभवस्वत्वमात्मानमवलोकय १०१
आत्मवांस्त्वंस्थिरोभूत्वानिरातंकोविकल्पितः
यथादीपोनिवातस्थःकज्जलंवमतेस्थिरः १०२
तथादोषान्प्रज्वलित्वानिर्वाणंहिप्रयास्यति
एकांतस्थोनिराहारोमिताशीभवसर्वदा १०३
निर्द्वंद्वःशब्दसंहीनोनिश्चलोह्यासनेस्थितः
आत्मानमात्मनाध्यायन्ममैवस्थिरबुद्धिना १०४
प्राप्स्यसेपरमंस्थानंतद्विष्णोःपरमंपदम् १०५
इति श्रीपद्मपुराणेभूमिखंडेऽध्यात्मवर्णनेऽष्टमोऽध्यायः ८

## नवमोऽध्यायः

कश्यउवाच-

एवंसंबोधितस्तत्रआत्माध्यानादिकैस्तदा
त्यक्तुकामःसतत्कार्यंपंचात्मकंसबुद्धिमान् १
निमित्तान्येवपश्यैवप्राप्यतांस्तान्प्रयातिसः
विहायकार्यंनिर्लक्ष्यंपतितंनैवपश्यति २
सहवर्द्धितयोर्नास्तिसंबंधःप्राणदेहयोः
धनपुत्रकलत्रैश्चसंबंधःकेनहेतुना ३
एवंज्ञात्वाशमंगच्छक्लैब्यंमाभजसुप्रिये
अयमेवपरंब्रह्मअयमेवसनातनः ४
अयमात्मस्वरूपेणदैत्यदेवेषुसंस्थितः
अयंब्रह्माअयंरुद्रोह्ययंविष्णुःसनातनः ५
अयंसृजतिविश्वानिअयंपालयतेप्रजाः
संहरत्येषधर्मात्माधर्मरूपीजनार्दनः ६
अनेनोत्पादितादेवादानवाश्चैवसुप्रिय
देवाश्चाधर्मनिर्मुक्ताधर्महीनाःसुतास्तव ७
धर्मोयंमाधवस्यांगंसर्वदैवैश्चपालितम्
धर्मंचचिंतयेद्देविधर्मंचैवतुपालयेत् ८
तस्यविष्णुःसधर्मात्मासर्वदैवप्रसादवान्
धर्मेणवर्तितादेवाःसत्येनतपसाकिल ९
येषांविष्णुःप्रसन्नोवैधर्मस्तैरिहपालितः
विष्णोःकायमिदंधर्मंसत्यंहृदयमेवच १०
यस्तौपालयतेनित्यंतस्यविष्णुःप्रसीदति
दूषयेद्यःसत्यधर्मौपापमेवप्रपालयेत् ११
तस्यविष्णुःप्रकुप्येतनाशयेदतिवीर्यवान्
वैष्णवैःपालितंधर्मंतपःसत्येनसंस्थितैः १२
तेषांप्रसन्नोधर्मात्मारक्षामेवंकरोतिच
तवपुत्रादनोःपुत्राःसैंहिकेयास्तथैवच १३
अधर्मेणापिपापेनवर्तिताःपापचेतसः
सूदितावासुदेवेनसमरेचक्रपाणिना १४
योसावात्मामयोक्तःपूर्वमेवतवाग्रतः
सोयंविष्णुर्नसंदेहोधर्मात्मासर्वपालकः १५

दैत्यकार्येषुयःस्वस्थःपापमेवसमास्थितः
जघ्निवान्दानवान्देविसचक्रुद्धोमहामतिः १६
सबाह्याभ्यंतरेभूत्वातवपुत्रानिपातिताः
येनचोत्पादितादेवितेनैवविनिपातिताः १७
नैषांमोहस्तुकर्तव्योभवत्यावचनंशृणु
पापेनवर्ततेयोसौसएवनिधनंव्रजेत् १८
तस्मान्मोहंपरित्यज्यसदाधर्मंसमाश्रय
दितिरुवाच-
एवमस्तुमहाभागकरिष्येवचनंतव १९
कश्यपंचमुनिश्रेष्ठमेवमाभाष्यदुःखिता
संबोधितासामुनिनादुःखंसंत्यज्यसंस्थिता २०
इति श्रीपद्मपुराणेभूमिखंडेदेवासुरेदितिसंबोधनंनामनवमोऽध्यायः ९

## दशमोऽध्यायः

ऋषयऊचुः-
ततस्तेदानवाःसर्वेहिरण्यकशिपूत्तराः
युद्धाद्भग्नास्तुकिंकुर्युर्व्यवसायंमहामते १
विस्तरेणापिनोब्रूहितेषांवृत्तमनुत्तमम्
श्रोतुमिच्छामहेसर्वेत्वत्तोवैसांप्रतंद्विज २
सूतउवाच-
भग्नारणात्तुतेसर्वेबलहीनास्तुवैतदा
गतदर्पाःसुदुःखार्तादैत्यास्तेपितरंगताः ३
भक्त्याप्रणम्यतेसर्वेसमूचुःकश्यपंतदा
दानवाऊचुः-
भवद्वीर्यात्समुत्पत्तिरस्माकंद्विजसत्तम ४
देवतानांमहाभागदानवानांतथैवच
वयंचदानवाः सर्वेबलवीर्यपराक्रमाः ५
उपायज्ञाः सुधीराश्चउद्यमेनसमन्विताः
वयंतुबहवस्तातदेवास्त्वल्पास्तथैवच ६
कथंजयंतितेसर्वेवयंभग्नामहाहवात्

तत्किंवैकारणंतातबलतेजःसमन्विताः ७
मत्तनागसहस्राणामेकैकस्यमहामते
बलमस्तिचदैत्यस्यनास्तिदेवेषुतादृशम् ८
जयश्चदृश्यतेतातदेवेष्वेवमहाहवे
तत्सर्वंकथयस्वैवसंशयंछेत्तुमर्हसि ९
कश्यपउवाच-
शृणुध्वंपुत्रकाः सर्वेजयस्यापिचकारणम्
यस्माद्धिदेवताः सर्वेसमरेजयिनोभवन् १०
वीर्यनिर्वापकस्तातोमाताक्षेत्रमिदंसदा
धारणेपालनेचैवपोषणेचयथैवहि ११
किंकुर्याद्विषमार्थेतुपितापुत्रेचवैतथा
अत्रप्रधानंकर्मैवमामेवंबुद्धिराश्रिता १२
द्वैविध्यंकर्मसंबंधंपापपुण्यसमुद्भवम्
सत्यमेवसमाश्रित्यक्रियतेधर्मउत्तमः १३
तपोध्यानसमायुक्तंतारणायहितंसुताः
पतनायपातकंप्रोक्तंसर्वदैवनसंशयः १४
बलेनपरिवारेणआभिजात्येनपुत्रकाः
पुण्यहीनस्यपुंसोवैतद्बलंविकलायते १५
उन्नतागिरिदुर्गेषुवृक्षाःसंतिसुपुत्रकाः
पतंतिवातवेगेनसमूलास्तुघनास्तथा १६
सत्यधर्मविहीनास्तेतथायांतियमक्षयम्
साधारणःप्राणिनांचधर्मएषसुपुत्रकाः १७
येनसंतरतेजंतुरिहचैवपरत्रच
तद्युष्माभिः परित्यक्तंसत्यंधर्मसमन्वितम् १८
अधर्ममास्थितंपुत्रायुष्माभिः सत्यवर्जितैः
सत्यधर्मतपोभ्रष्टाः पतितादुःखसागरे १९
देवाश्चसत्यसंपन्नाःश्रेयसाचसमन्विताः
तपःशांतिदमोपेताःसुपुण्यापापवर्जिताः २०
यत्रसत्यंचधर्मश्चतपः पुण्यंतथैवच
यत्रविष्णुर्हृषीकेशोजयस्तत्रप्रदृश्यते २१

तेषांसहायः संभूतोवासुदेवः सनातनः
तस्माञ्जयंतितेदेवाः सत्यधर्मसमन्विताः २२
सहायेनबलेनैवपौरुषेणतथैवच
भवंतःकिलवैपुत्रास्तपःसत्यविवर्जिताः २३
यस्यविष्णुःसहायश्चतपश्चैवबलंतथा
तस्यैवचजयोदृष्टइतिधर्मविदोविदुः २४
यूयंधर्मविहीनास्तुतपःसत्यविवर्जिताः
एंद्रंपदंबलेनैवप्राप्तवंतश्चपूर्वतः २५
तपोविनामहाप्राज्ञाधर्मेणयशसाविना
बलदर्पगुणैःपुत्रानप्राप्यमैन्द्रकंपदम् २६
प्राप्याप्यैंद्रंपदंपुत्रास्ततोभ्रष्टाभवंतिहि
तस्माद्यूयंप्रकुर्वंतुतपःपुत्राःसमन्विताः २७
अविरोधेनसंयुक्ताज्ञानध्यानसमन्विताः
वैरंचैवनकर्तव्यंकेशवेनसमंकदा २८
एवंविधायदापुत्रायूयंधन्याभविष्यथ
परांसिद्धिंतदासर्वेप्रयास्यथनसंशयः २९
एवंसंभाषितास्तेतुकश्यपेनमहात्मना
समाकर्ण्यपितुर्वाक्यंदानवास्तेमहौजसः ३०
प्रणम्यकश्यपंभक्त्यासमुत्थायत्वरान्विताः
सुमंत्रंचक्रिरेदैत्याः परस्परसमाहिताः ३१
हिरण्यकशिपूराजातानुवाचाथदानवान्
तपश्चैवकरिष्यामोदुष्करंसर्वदायकम् ३२
हिरण्याक्षस्तदोवाचकरिष्येदारुणंतपः
ततोबलेनत्रैलोक्यंग्रहीष्येनात्रसंशयः ३३
रणेनिर्जित्यगोविंदंतमिमंपापचेतसम्
व्यापाद्यदेवताःसर्वाःपदमैंद्रंव्रजाम्यहम् ३४
बलिरुवाच-
एवंनयुज्यतेकर्तुंयुष्माभिर्दितिजेश्वराः
विष्णुनासहयद्वैरंतद्वैरंनाशकारणम् ३५
दानधर्मैस्तथापुण्यैस्तपोभिर्यज्ञयाजनैः

तमाराध्यहृषीकेशंसुखंगच्छंतिमानवाः ३६
हिरएयकशिपुरुवाच–
अहमेवंनकरिष्येहरेराराधनंकदा
स्वभावंतुपरित्यज्यशत्रुसेवाप्रचर्यते ३७
मरणादधिकंतंतुमानयंतिहिपंडिताः
विष्णोःसेवानवैकार्यामयाचान्यैश्चदानवैः ३८
तमुवाचमहात्मानंबलिपितामहंपुनः
धर्मशास्त्रेषुयद्दृष्टंमुनिभिस्तत्त्ववेदिभिः ३९
राजनीतियुतंमंत्रंशत्रोश्चैवप्रधानतः
हीनमात्मानमाज्ञायरिपुंतंबलिनंथा ४०
तस्यपार्श्वेप्रगत्वैवजयकालंप्रतीक्षयेत्
दीपच्छायांसमाश्रित्यतमोवसतिसर्वदा ४१
स्नेहंदशागतंप्रेक्ष्यदीपस्यापिमहाबलम्
प्रकाशंयातिवेगेनतमश्चवर्द्धतेपुनः ४२
तथाप्रसादयेच्छन्नःस्नेहंनिर्दिश्यतत्त्वतः
स्नेहंकृत्वासुरैःसार्द्धंधर्मभावैःसुरद्विषः ४३
पूर्वमुक्तंसुमंत्रंतुमुनिनाकश्यपेनहि
तेनमंत्रेणराजेंद्रकुरुकार्यंस्वमात्मवान् ४४
तस्यतद्वचनंश्रुत्वाप्राहदैत्यःप्रतापवान्
पौत्रनैवंकरिष्येहंमानभंगंतथात्मनः ४५
अन्येचबांधवाःसर्वेतमूचुर्नयपंडितम्
बलिनोक्तंचयत्पुएयंदेवतानांप्रियंकरम् ४६
शक्रमानकरंप्रोक्तंदानवानांभयंकरम्
करिष्यामोवयंसर्वेतपएवमनुत्तमम् ४७
तपसानिर्जित्यदेवान्हरिष्यामःस्वकंपदम्
एवमामंत्र्यतेसर्वेनिराकृत्यबलितदा ४८
विष्णोःसार्द्धंमहावैरहृदिकृत्वामहासुराः
तपश्चक्रुस्ततःसर्वेगिरिदुर्गेषुसानुषु ४९
एवंतेदानवाःसर्वेत्यक्तरागाःसुनिश्चिताः
कामक्रोधविहीनाश्चनिराहाराजितक्लमाः ५०

इति श्रीपद्मपुराणेभूमिखंडेदैत्यतपश्चर्यावर्णनंनामदशमोऽध्यायः १०

एकादशोऽध्यायः

ऋषयऊचुः-
सर्वज्ञेनत्वयाप्रोक्तंदैत्यदानवसंगरम्
इदानींश्रोतुमिच्छामःसुव्रतस्यामहात्मनः १
कस्यपुत्रोमहाप्राज्ञःकस्यगोत्रसमुद्भवः
किंतपस्तस्यविप्रस्यकथमाराधितोहरिः २
सूतउवाच-
कथाप्रज्ञाप्रभावेणपूर्वमेवयथाश्रुता
तथाविप्राःप्रवक्ष्यामिसुव्रतस्यमहात्मनः ३
चरितंपावनंदिव्यंवैष्णवंश्रेयआवहम्
भवतामग्रतःसर्वंविष्णोश्चैवप्रसादतः ४
पूर्वकल्पेमहाभागाःसुक्षेत्रेपापनाशने
रेवातीरेसुपुण्येचतीर्थेवामनसंज्ञके ५
कौशिकस्यकुलेजातःसोमशर्माद्विजोत्तमः
सतुपुत्रविहीनस्तुबहुदुःखसमन्वितः ६
दारिद्र्येणसदुःखेनसर्वदैवप्रपीडितः
पुत्रोपायंधनस्यापिदिवारात्रौप्रचिंतयेत् ७
एकदातुप्रियातस्यसुमनानामसुव्रता
भर्तारंचिंतयोपेतमधोमुखमलक्षयत् ८
समालोक्यतदाकांतंतमुवाचतपस्विनी
दुःखजालैरसंख्यैस्तुतवचित्तंप्रधर्षितम् ९
व्यामोहेनप्रमूढोसित्यजचिंतांमहामते
ममदुःखंसमाचक्ष्वस्वस्थोभवसुखंव्रज १०
नास्तिचिंतासमंदुःखंकायशोषणमेवहि
यश्चिंतांत्यज्यवर्तेतससुखेनप्रमोदते ११
चिंतायाःकारणंविप्रकथयस्वममाग्रतः
प्रियावाक्यंसमाकर्ण्यसोमशर्माब्रवीत्प्रियाम् १२
सोमशर्मोवाच-

इच्छयाचिंतितंभद्रेचिंतादुःखस्यकारणम्
तत्सर्वंतुप्रवद्त्यामिश्रुत्वाचैवावधार्यताम् १३
नजानेकेनपापेनधनहीनोस्मिसुव्रते
तथापुत्रविहीनश्चएतद्दुःखस्यकारणम् १४
सुमनोवाच–
श्रूयतामभिधास्यामिसर्वसंदेहनाशनम्
स्वरूपमुपदेशस्यसर्वविज्ञानदर्शनम् १५
लोभःपापस्यबीजंहिमोहोमूलंचतस्यहि
असत्यंतस्यवैस्कंधोमायाशाखासुविस्तरा १६
दंभकौटिल्यपत्राणिकुबुद्ध्यापुष्पितःसदा
अनृतंतस्यसौगंधंफलमज्ञानमेवच १७
छद्मपाखंडशौर्येर्ष्याःक्रूराःकूटाश्चपापिनः
पद्तिणोमोहवृद्तस्यमायाशाखासमाश्रिताः १८
अज्ञानंसुफलंतस्यरसोऽधर्मःफलस्यहि
तृष्णोदकेनसंवृद्धाऽश्रद्धातस्यद्रवःप्रिय १९
अधर्मःसुरसस्तस्यउत्कटोमधुरायते
यादृशैश्चफलैश्चैवसुफलोलोभपादपः २०
अस्यच्छायांसमाश्रित्ययोनरःपरितुष्यते
फलानितस्यचाश्नातिसुपक्वानिदिनेदिने २१
फलानांतुरसेनापिअधर्मेणतुपालितः
ससंतुष्टोभवेन्मर्त्यःपतनायाभिगच्छति २२
तस्माच्चिंतांपरित्यज्यपुमाँल्लोभंनकारयेत्
धनपुत्रकलत्राणांचिंतामेकांनकारयेत् २३
योहिविद्वान्भवेत्कांतमूर्खाणांपथमेतिहि
मूर्खश्चिंतयतेनित्यंकथमर्थंममैवहि २४
सुभार्यामिहविंदामिकथंपुत्रानहंलभे
एवंचिंतयतेनित्यंदिवारात्रौविमोहितः २५
द्तणमेकंप्रपश्येतचिंतामध्येमहत्सुखम्
पुनश्चैतन्यमायातिमहादुःखेनपीड्यते २६
चिंतामोहौपरित्यज्यअनुवर्तस्वचद्विज

संसारेनास्तिसंबंधःकेनसार्धंमहामते १७
मित्राश्चबांधवाःपुत्राःपितृमातृसभृत्यकाः
संबंधिनोभवंत्येवकलत्राणितथैवच २८
सोमशर्मोवाच-
संबंधःकीदृशोभद्रेतथाविस्तरतोवद
येनसंबंधिनःसर्वेधनपुत्रादिबांधवाः २९
सुमनोवाच-
ऋणसंबंधिनःकेचित्केचिन्न्यासापहारकाः
लाभप्रदाभवंत्येकेउदासीनास्तथापरे ३०
भेदैश्चतुर्भिर्जायंतेपुत्रमित्रस्त्रियस्तथा
भार्यापिताचमाताचभृत्याःस्वजनबांधवाः ३१
स्वेनस्वेनहिजायंतेसंबंधेनमहीतले
न्यासापहारभावेनयस्ययेनकृतंभुवि ३२
न्यासस्वामीभवेत्पुत्रोगुणवान्रूपवान्भुवि
येनैवापहृतंन्यासंतस्यगेहेनसंशयः ३३
न्यासापहरणाद्दुःखंसदत्वादारुणंगतः
न्यासस्वामीसुपुत्रोभून्न्यासापहारकस्यच ३४
गुणवान्रूपवांश्चैवसर्वलक्षणसंयुतः
भक्तिंतुदर्शयंस्तस्यपुत्रोभूत्वादिनेदिने ३५
प्रियवाङ्मधुरोरोगीबहुस्नेहंविदर्शयन्
स्वीयंद्रव्यंसमुद्गृह्यप्रीतिमुत्पाद्यचोत्तमाम् ३६
यथायेनप्रदत्तंस्यान्न्यासस्यहरणात्पुरा
दुःखमेवमहाभागदारुणंप्राणनाशनम् ३७
तादृशंतस्यसौहृद्यात्पुत्रोभूत्वामहागुणैः
अल्पायुषस्तथाभूत्वामरणंचोपगच्छति ३८
दुःखंदत्वाप्रयात्येवंभूत्वाभूत्वापुनःपुनः
यदाहापुत्रपुत्रेतिप्रलापंहिकरोतिसः ३९
तदाहास्यंकरोत्येवकस्यपुत्रोहिकःपिता
अनेनापहृतंन्यासंमदीयस्योपकारणम् ४०
द्रव्यापहरणेनापिनमेप्राणागताःकिल

दुःखेनमहताचैवग्रसह्येनचवैपुरा ४१
तथादुःखंप्रदत्वाहंद्रव्यमुद्गृह्यचोत्तमम्
गंतास्मिसुभृशंचाद्यकस्याहंसुतईदृशः ४२
नचैषमेपितापुत्रःपूर्वमेवनकस्यचित्
पिशाचत्वंमयादत्तमस्यैवेतिदुरात्मनः ४३
एवमुक्त्वाप्रयात्येवंतंप्रहस्यपुनःपुनः
प्रयात्यनेनमार्गेणदुःखंदत्वासुदारुणम् ४४
एवंन्यासंसमुद्धर्तुःपुत्राःकांतभवंतिवै
संसारेदुःखबहुलादृश्यंतेयत्रतत्रच ४५
ऋणसंबंधिनःपुत्रान्प्रवद्त्यामितवाग्रतः ४६
इति श्रीपद्मपुराणेभूमिखंडेसुव्रतोपाख्यानेएकादशोऽध्यायः ११

## द्वादशोऽध्यायः

सुमनोवाच-
ऋणसंबंधिनंपुत्रंप्रवद्त्यामितवाग्रतः
ऋणंयस्यगृहीत्वायःप्रयातिमरणंकिल १
अर्थदातासुतोभूत्वाभ्राताचाथपिताप्रिया
मित्ररूपेणवर्त्तेतअतिदुष्टःसदैवसः २
गुणंनैवप्रपश्येतसक्रूरोनिष्ठुराकृतिः
जल्पतेनिष्ठुरंवाक्यंसदैवस्वजनेषुच ३
मिष्टंमिष्टंसमश्नातिभोगान्भुंजतिनित्यशः
द्यूतकर्मरतोनित्यंचौरकर्मणिसस्पृहः ४
गृहद्रव्यंबलाद्भुंक्तेवार्यमाणःसकुप्यति
पितरंमातरंचैवकुत्सतेचदिनेदिने ५
द्रावकस्त्रासकश्चैवबहुनिष्ठुरजल्पकः
एवंभुक्त्वाथतद्द्रव्यंसुखेनपरितिष्ठति ६
जातकर्मादिभिर्बाल्येद्रव्यंगृह्णातिदारुणः
पुनर्विवाहसंबंधान्नानाभेदैरनेकधा ७
एवंसंजायतेद्रव्यमेवमेतद्ददात्यपि
गृहत्तेत्रादिकंसर्वंममैवहिनसंशयः ८

पितरंमातरंचैवहिनस्त्येवदिनेदिने
सुखंडैर्मुशलैश्चैवसर्वघातैःसुदारुणैः ९
मृतेतुतस्मिन्पितरिमातर्यैवातिनिष्ठुरः
निःस्नेहोनिष्ठुरश्चश्चैवजायतेनात्रसंशयः १०
श्राद्धकर्माणिदानानिनकरोतिकदैवसः
एवंविधाश्चवैपुत्राःप्रभवंतिमहीतले ११
रिपुंपुत्रंप्रवक्ष्यामितवाग्रेद्विजपुंगव
बाल्येवयसिसंप्राप्तेरिपुत्वेवर्ततेसदा १२
पितरंमातरंचैवक्रीडमानोहिताडयेत्
ताडयित्वाप्रयात्येवप्रहस्यैवपुनःपुनः १३
पुनरायातिसंत्रस्तःपितरंमातरंप्रति
सक्रोधोवर्ततेनित्यंकुत्सतेचपुनःपुनः १४
एवंसंवर्ततेनित्यंवैरकर्मणिसर्वदा
पितरंमारयित्वाचमातरंचततःपुनः १५
प्रयात्येवंसदुष्टात्मापूर्ववैरानुभावतः
अथातःसंप्रवक्ष्यामियस्माल्लभ्यंभवेत्प्रियम् १६
जातमात्रःप्रियंकुर्याद्बाल्येलालनक्रीडनैः
वयःप्राप्यप्रियंकुर्यान्मातृपित्रोरनन्तरम् १७
भक्त्यासंतोषयेन्नित्यंतावुभौपरितोषयेत्
स्नेहेनवचसाचैवप्रियसंभाषणेनच १८
मृतेगुरौसमाज्ञायस्नेहेनरुदतेपुनः
श्राद्धकर्माणिसर्वाणिपिंडदानादिकांक्रियाम् १९
करोत्येवसुदुःखार्तस्तेभ्योयात्रांप्रयच्छति
ऋणत्रयान्वितःस्नेहाद्धुंजापयतिनित्यशः २०
यस्माल्लभ्यंभवेत्कांतप्रयच्छतिनसंशयः
पुत्रोभूत्वामहाप्राज्ञअनेनविधिनाकिल २१
उदासीनंप्रवक्ष्यामितवाग्रेप्रियसांप्रतम्
उदासीनेनभावेनसदैवपरिवर्तते २२
ददातिनैवगृह्णातिनचकुप्यतितुष्यति
नोवाददातिसंत्यज्यउदासीनोद्विजोत्तम २३

तवाग्रेकथितंसर्वंपुत्राणांगतिरीदृशी
यथापुत्रस्तथाभार्यापितामाताथबांधवाः २४
भृत्याश्चान्येसमाख्याताःपशवस्तुरगास्तथा
गजामहिष्योदासाश्चऋणसंबंधिनस्त्वमी २५
गृहीतंनऋणंतेनआवाभ्यांतुनकस्यचित्
न्यासमेवंनकस्यापिकृतंवैपूर्वजन्मनि २६
धारयावोनकस्यापिऋणंकांतशृणुष्वहि
नवैरमस्तिकेनापिपूर्वजन्मनिवैकृतम् २७
आवाभ्यांहिनविप्रेंद्रनत्यक्तंहितथापते
एवंज्ञात्वाशमंगच्छत्यजचिंतामनर्थकीम् २८
कस्यपुत्राःप्रियाभार्याकस्यस्वजनबांधवाः
हृतंनचैवकस्यापिनैवदत्तंत्वयापुनः २९
कथंहिधनमायातिविस्मयंव्रजमाधव
प्राप्तव्यमेवयत्रैवभवेद्द्रव्यंद्विजोत्तम ३०
अनायासेनहस्तेहितस्यैवपरिजायते
यत्नेनमहताचैवद्रव्यंरक्षतिमानवः ३१
व्रजमानोव्रजत्येवधनंतत्रैवतिष्ठति
एवंज्ञात्वाशमंगच्छजहिचिंतामनर्थकीम् ३२
कस्यपुत्राःप्रियाभार्याकस्यस्वजनबांधवाः
कःकस्यनास्तिसंसारेअसंबंधाद्द्विजोत्तम ३३
महामोहेनसंमूढामानवाःपापचेतसः
इदंगृहमयंपुत्रइमानार्योममैवहि ३४
अनृतंदृश्यतेकांतसंसारस्यहिबंधनम्
एवंसंबोधितोदेव्याभार्ययाप्रिययातदा ३५
पुनःप्राहप्रियांभार्यांसुमनांज्ञानवादिनीम्
सोमशर्मोवाच-
सत्यमुक्तंत्वयाभद्रेसर्वसंदेहनाशनम् ३६
तथापिवंशमिच्छंतिसाधवः सत्यपंडिताः
यथापुत्रस्यमेचिंताधनस्यचतथाप्रिये ३७
येनकेनाप्युपायेनपुत्रमुत्पादयाम्यहम्

सुमनोवाच-
पुत्रेणलोकाञ्जयतिपुत्रस्तारयतेकुलम् ३८
सत्पुत्रेणमहाभागपितामाताचजंतवः
एकःपुत्रोवरोविद्वान्बहुभिर्निर्गुणैस्तुकिम् ३९
एकस्तारयतेवंशमन्येसंतापकारकाः
पूर्वमेवमयाप्रोक्तमन्येसंबंधगामिनः ४०
पुण्येनप्राप्यतेपुत्रः पुण्येनप्राप्यतेकुलम्
सुगर्भः प्राप्यतेपुण्यैस्तस्मात्पुण्यंसमाचर ४१
जातस्यमृतिरेवास्तिजन्मएवमृतस्यच
सुजन्मप्राप्यतेपुण्यैर्मरणंतुतथैवच ४२
सुखंधनचयःकांतभुज्यतेपुण्यकर्मभिः
सोमशर्मोवाच-
पुण्यस्याचरणंब्रूहितथाजन्मान्यपिप्रिये ४३
सुपुण्यः कीदृशोभद्रेवदपुण्यस्यलक्षणम्
सुमनोवाच-
आदौपुण्यंप्रवक्ष्यामियथापुण्यंश्रुतंमया ४४
पुरुषोवाथवानारीयथानित्यंचवर्तते
यथापुण्यैःसमाप्नोतिकीर्तिंपुत्रान्प्रियान्धनम् ४५
पुण्यस्यलक्षणंकांतसर्वमेववदाम्यहम्
ब्रह्मचर्येणसत्येनमखपंचकवर्तनैः ४६
दानेननियमैश्चापिक्षमाशौचेनवल्लभ
अहिंसयासुशक्त्याचअस्तेयेनापिवर्तनैः ४७
एतैर्दशभिरंगैस्तुधर्ममेवंप्रपूरयेत्
संपूर्णोजायतेधर्मोग्रासैर्भोगोयथोदरे ४८
धर्मंसृजतिधर्मात्मात्रिविधेनैवकर्मणा
तस्यधर्मःप्रसन्नात्मापुण्यमेवंतुप्रापयेत् ४९
यंयंचिंतयतेप्राज्ञस्तंतंप्राप्नोतिदुर्लभम्
सोमशर्मोवाच-
कीदृङ्मूर्तिस्तुधर्मस्यकान्यंगानिचभामिनि ५०
प्रीत्याकथयमेकांतेश्रोतुंश्रद्धाप्रवर्तते

सुमनोवाच-
लोकेधर्मस्यवैमूर्तिः कैर्दृष्टानद्विजोत्तम ५१
अदृश्यवर्त्मासत्यात्मानदृष्टोदेवदानवैः
अत्रिवंशेसमुत्पन्नोअनसूयात्मजोद्विजः ५२
तेनदृष्टोमहाधर्मोदत्तात्रेयेणवैसदा
द्वावेतौतुमहात्मानौकुर्वाणौतपउत्तमम् ५३
धर्मेणवर्तमानौतौतपसाचबलेनच
इंद्राधिकेनरूपेणप्रशस्तेनभविष्यतः ५४
दशवर्षसहस्रंतौयावत्तुवनसंस्थितौ
वायुभक्षौनिराहारौसंजातौशुभदर्शनौ ५५
दशवर्षसहस्रंतुतावत्कालंतपोर्जितम्
सुसाध्यमानयोश्चैवतत्रधर्मःप्रदृश्यते ५६
पंचाग्निःसाध्यतेद्वाभ्यांतावत्कालंद्विजोत्तम
त्रिकालंसाधितंतावन्निराहारंकृतंतथा ५७
जलमध्येस्थितौतावद्दत्तात्रेयोयतिस्तथा
दुर्वासास्तुमुनिश्रेष्ठस्तपसाचैवकर्षितः ५८
धर्मंप्रतिसधर्मात्माचुक्रोधमुनिपुंगवः
क्रुद्धेसतिमहाभागतस्मिन्मुनिवरेतदा ५९
अथधर्मः समायातः स्वरूपेणचवैतदा
ब्रह्मचर्यादिभिर्युक्तस्तपोभिश्चसबुद्धिमान् ६०
सत्यंब्राह्मणरूपेणब्रह्मचर्यंतथैवच
तपस्तुद्विजवर्योस्तिदमः प्राज्ञोद्विजोत्तमः ६१
नियमस्तुमहाप्राज्ञोदानमेवतथैवच
अग्निहोत्रिस्वरूपेणह्यात्रेयंहिसमागताः ६२
क्षमाशांतिस्तथालज्ञाचाहिंसाचह्यकल्पना
एताःसर्वाःसमायाताःस्त्रीरूपास्तुद्विजोत्तम ६३
बुद्धिःप्रज्ञादयाश्रद्धामेधासत्कृतिशांतयः
पंचयज्ञास्तथापुरायाःसांगावेदास्तुतेतदा ६४
स्वस्वरूपधराश्चैवतेसर्वेसिद्धिमागताः
अग्न्याधानादयःपुरायाअश्वमेधादयस्तथा ६५

रूपलावरायसंयुक्ताःसर्वाभरणभूषिताः
दिव्यमाल्यांबरधरादिव्यगंधानुलेपनाः ६६
किरीटकुंडलोपेतादिव्याभरणभूषिताः
दीप्तिमंतःसुरूपास्तेतेजोज्वालाभिरावृताः ६७
एवंधर्मःसमायातःपरिवारसमन्वितः
यत्रतिष्ठतिदुर्वासाःक्रोधनःकालवत्तथा ६८
धर्मउवाच-
कस्मात्कोपःकृतोविप्रभवांस्तपस्समन्वितः
क्रोधोहिनाशयेच्छ्रेयस्तपएवनसंशयः ६९
सर्वनाशकरस्तस्मात्क्रोधंतत्रविवर्जयेत्
स्वस्थोभवद्विजश्रेष्ठउत्कृष्टंतपसःफलम् ७०
दुर्वासाउवाच-
भवान्कोहिसमायातएतैर्द्विजवरैःसह
सप्तनार्यःप्रतिष्ठंतिसुरूपाःसमलंकृताः ७१
कथयस्वममाग्रेत्वंविस्तरेणमहामते
धर्मउवाच-
अयंब्राह्मणरूपेणसर्वतेजःसमन्वितः ७२
दंडहस्तःसुप्रसन्नःकमंडलुधरस्तथा
तवाग्रेब्रह्मचर्योयंसोयंपश्यसमागतः ७३
अन्यंपश्यस्ववैत्वंचदीप्तिमंतंद्विजोत्तम
कपिलंपिंगलाक्षंचसत्यमेनंद्विजोत्तम ७४
तादृशंपश्यधर्मात्मन्वैश्वदेवसमप्रभम्
यत्तपोहित्वयाविप्रसर्वदेवसमाश्रितम् ७५
एतंपश्यमहाभागतवपार्श्वसमागतम्
प्रसन्नवाग्दीप्तियुक्तःसर्वजीवदयापरः ७६
दमएवतथायंतेयःपोषयतिसर्वदा
जटिलःकर्कशःपिंगोह्यतितीव्रोमहाप्रभुः ७७
नाशकोहिसपापानांखड्गहस्तोद्विजोत्तम
अभिशांतोमहापुरायोनित्यक्रियासमन्वितः ७८
नियमस्तुसमायातस्तवपार्श्वेद्विजोत्तम

अनिर्मुक्तोमहादीप्तःशुद्धस्फटिकसन्निभः ७९
पयःकमंडलुकरोदंतकाष्ठधरोद्विजः
शौचएषसमायातोभवतःसन्निधाविह ८०
अतिसाध्वीमहाभागासत्यभूषणभूषिता
सर्वभूषणशोभांगीशुश्रूषेयंसमागता ८१
अतिधीराप्रसन्नांगीगौरीप्रहसितानना
पद्महस्ताइयंधात्रीपद्मनेत्रासुपद्मिनी ८२
दिव्यैराभरणैर्युक्ताक्षमाप्राप्ताद्विजोत्तम
अतिशांतासुप्रतिष्ठाबहुमंगलसंयुता ८३
दिव्यरत्नकृताशोभादिव्याभरणभूषिता
तवशांतिर्महाप्राज्ञज्ञानरूपासमागता ८४
परोपकारकरणाबहुसत्यसमाकुला
मितभाषासदैवासौत्र्यकल्पातेसमागता ८५
प्रसन्नासाक्षमायुक्तासर्वाभरणभूषिता
पद्मासनासुरूपासाश्यामवर्णायशस्विनी ८६
अहिंसेयंमहाभागाभवंतंतुसमागता
तप्तकांचनवर्णांगीरक्तांबरविलासिनी ८७
सुप्रसन्नासुमंत्राचयत्रतत्रनपश्यति
ज्ञानभावसमाक्रांतापुरायहस्तातपस्विनी ८८
मुक्ताभरणशोभाढ्यानिर्मलाचारुहासिनी
इयंश्रद्धामहाभागपश्यपश्यसमागता ८९
बहुबुद्धिसमाक्रांताबहुज्ञानसमाकुला
सुभोगासक्तरूपासासुस्थिताचारुमंगला ९०
सर्वेष्टध्यानसंयुक्तालोकमातायशस्विनी
सर्वाभरणशोभाढ्यापीनश्रोणिपयोधरा ९१
गौरवर्णासमायातामाल्यवस्त्रविभूषिता
इयंमेधामहाप्राज्ञतवैवपरिसंस्थिता ९२
हंसचंद्रप्रतीकाशामुक्ताहारविलंबिनी
सर्वाभरणसंभूषासुप्रसन्नामनस्विनी ९३
श्वेतवस्त्रेणसंवीताशतपत्रंशयेकृतम्

पुस्तककरापंकजस्थाराजमानासदैवहि ९४
एषाप्रज्ञामहाभागभाग्यवंतंसमागता
लाक्षारससमावर्णासुप्रसन्नासदैवहि ९५
पीतपुष्पकृतामालाहारकेयूरभूषणा
मुद्रिकाकंकणोपेताकर्णकुंडलमंडिता ९६
पीतेनवाससादेवीसदैवपरिराजते
त्रैलोक्यस्योपकारायपोषणायाद्वितीयका ९७
यस्याःशीलंद्विजश्रेष्ठसदैवपरिकीर्तितम्
सेयंदयासुसंप्राप्तातवपार्श्वेद्विजोत्तम ९८
इयंवृद्धामहाप्राज्ञभावभार्यातपस्विनी
ममसाताद्विजश्रेष्ठधर्मोहंतवसुव्रत ९९
इतिज्ञात्वाशमंगच्छमामेवंपरिपालय
दुर्वासाउवाच-
यदिधर्मःसमायातोमत्समीपंतुसांप्रतम् १००
एतन्मेकारणंब्रूहिकिंतेधर्मकरोम्यहम्
धर्मउवाच-
कस्मात्क्रुद्धोसिविप्रेन्द्रकिमेतैर्विप्रियंकृतम् १०१
तन्मेत्वंकारणंब्रूहिदुर्वासोयदिमन्यसे
दुर्वासाउवाच-
येनाहंकुपितोदेवतदिदंकारणंशृणु १०२
दमशौचैःसुसंक्लेशैःशोधितंकायमात्मनः
लक्षवर्षप्रमाणंवैतपश्चर्यामयाकृता १०३
एवंपश्यसिमामेवंदयातेनप्रवर्तते
तस्मात्क्रुद्धोस्मितेह्येवशापमेवंददाम्यहम् १०४
एवंश्रुत्वातदातस्यतमुवाचमहामतिः
धर्मउवाच-
मयिनष्टेमहाप्राज्ञलोकोनाशंसमेष्यति १०५
दुःखमूलमहंतातनिकर्शामिभृशंद्विज
सौख्यंपश्चादहंदद्मियदिसत्यंनमुंचति १०६
पापोयंसुखमूलस्तुपुण्यंदुःखेनलभ्यते

पुरायमेवंप्रकुर्वाणःप्राणीप्राणान्विमुंचति १०७
महत्सौख्यंददाम्येवंपरत्रचनसंशयः
दुर्वासाउवाच-
सुखंयेनाप्यतेतेनपरंदुःखंप्रपद्यते १०८
तत्तुमर्त्यःपरित्यज्यअन्येनापिप्रभुज्यते
तत्सुखंकोविजानातिनिश्चयंनैवपश्यति १०९
तच्छ्रेयोनैवपश्यामिअन्याय्यंहिकृतंतव
येनकायेनक्रियतेभुज्यतेनैवतत्सुखम् ११०
अन्येनक्रियतेक्लेशमन्येनापिप्रभुज्यते
तत्सुखंकोविजानातिचान्यायंधर्ममेववा १११
अन्येनक्रियतेक्लेशमन्येनापिसुखंपुनः
भुनक्तिपुरुषोधर्मतत्सर्वंश्रेयसायुतम् ११२
पुरायंचैवअनेनापिअनेनफलमश्नुते
क्रियमाणंपुनःपुरायमन्येनपरिभुज्यते ११३
तत्सर्वंहिसुखंप्रोक्तंयत्तथायस्यलक्षणम्
धर्मशास्त्रोदितंचैवकृतंसर्वत्रनान्यथा  ११४
येनकायेनकुर्वंतितेनदुःखंसहन्तिते
परत्रतेनभुंजंतिअनेनापितथैवच ११५
इति ज्ञात्वासधर्मात्माभवान्समवलोकयेत्
यथाचौरामहापापाःस्वकायेनसहंतिते ११६
दुःखेनदारुणंतीव्रंतथासुखंकथंनहि
धर्मउवाच-
येनकायेनपापाश्चसंचरन्तिहिपातकम् ११७
तेनपीडांसहंत्येवपातकस्यहितत्फलम्
दंडमेकंपरंदृष्टंधर्मशास्त्रेषुपंडितैः ११८
तंधर्मपूर्वकंविद्धिएतैर्न्यायैस्त्वमेवहि
दुर्वासाउवाच-
एवंन्यायंनमन्येहंतथैवशृणुधर्मराट् ११९
शापत्रयंप्रदास्यामिक्रुद्धोहंतवनान्यथा
धर्मउवाच-

यदाक्रुद्धोमहाप्राज्ञमामेवहित्वमस्वच १२०
नैवत्वमसिविप्रेंद्रदासीपुत्रंहिमांकुरु
राजानंतुप्रकर्तव्यंचांडालंचमहामुने १२१
प्रसादसुमुखोविप्रप्रणतस्यसदैवहि
दुर्वासाश्चततःक्रुद्धोधर्मंचैवशशापह १२२
दुर्वासाउवाच-
राजाभवत्वंधर्माद्यदासीपुत्रश्चनान्यथा
गच्छचांडालयोनिंचधर्मत्वंस्वेच्छयाव्रज १२३
एवंशापत्रयंदत्त्वागतोसौद्विजसत्तमः
अनेनापिप्रसंगेनदृष्टोधर्मःपुराकिल १२४
सोमशर्मोवाच-
धर्मस्तुकीदृशोजातस्तेनशप्तोमहात्मना
तद्रूपंतस्यमेब्रूहियदिजानासिभामिनि १२५
सुमनोवाच-
भरतानांकुलेजातोधर्मोभूत्वायुधिष्ठिरः
विदुरोदासीपुत्रस्तुअन्यंचैववदाम्यहम् १२६
यदाराजाहरिश्चंद्रोविश्वामित्रेणकर्षितः
तदाचांडालतांप्राप्तःसहिधर्मोमहामतिः १२७
एवंकर्मफलंभुक्तंधर्मेणापिमहात्मना
दुर्वाससोहिशापाद्वैसत्यमुक्तंतवाग्रतः १२८

इति श्रीपद्मपुराणेभूमिखंडेसोमशर्माख्यानेसोमशर्म-
सुमनासंवादे द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

सोमशर्मोवाच-
लक्षणंब्रह्मचर्यस्यतन्मेविस्तरतोवद
कीदृशंब्रह्मचर्यंचयदिजानासिभामिनि १
नित्यंसत्येरतिर्यस्यपुण्यात्मातुष्टितांव्रजेत्
ऋतौप्राप्तेव्रजेन्नारींस्वीयांदोषविवर्जितः २
स्वकुलस्यसदाचारंकदानैवविमुंचति

एतदेवसमाख्यातंगृहस्थस्यद्विजोत्तम ३
ब्रह्मचर्यमयाप्रोक्तंगृहिणामुत्तमंकिल
यतीनांतुप्रवक्ष्यामितन्मेनिगदतःशृणु ४
दमसत्यसमायुक्तःपापाद्भीतस्तुसर्वदा
भार्यासंगंवर्जयित्वाध्यानज्ञानप्रतिष्ठितः ५
यतीनांब्रह्मचर्यंचसमाख्यातंतवाग्रतः
तपएवप्रवक्ष्यामितन्मेनिगदतःशृणु ६
आचारेणप्रवर्तेतकामक्रोधविवर्जितः
प्राणिनामुपकारायसंस्थितउद्यमावृतः ७
तपएवंसमाख्यातंसत्यमेवंवदाम्यहम्
परद्रव्येष्वलोलुप्त्वंपरस्त्रीषुतथैवच ८
दृष्ट्वामतिर्नयस्यस्यात्ससत्यःपरिकीर्तितः
दानमेवप्रवक्ष्यामियेनजीवंतिमानवाः ९
आत्मसौख्यंप्रतीच्छेद्यःसइहैवपरत्रवा
अन्नस्यापिमहादानंसुखस्यैवध्रुवस्यवा १०
ग्रासमात्रंतथादेयंक्षुधार्तायनसंशयः
दत्तेसतिमहत्पुण्यममृतंसोश्नुतेसदा ११
दिनेदिनेप्रदातव्यंयथाविभवसंभवम्
तृणंशय्यांचवचनंगृहच्छायांसुशीतलाम् १२
भूमिमापस्तथाचान्नंप्रियवाक्यमनुत्तमम्
आसनंवचनालापंकौटिल्येनविवर्जितम् १३
आत्मनोजीवनार्थायनित्यमेवकरोतियः
देवान्पितॄन्समभ्यर्च्यएवंदानंददातियः १४
इहैवमोदतेसोवैपरत्रहितथैवच
अवंध्यंदिवसंयोवैदानाध्ययनकर्मभिः १५
प्रकुर्यान्मानुषोभूत्वासदेवोनात्रसंशयः
नियमंचप्रवक्ष्यामिधर्मसाधनमुत्तमम् १६
देवानांब्राह्मणानांचपूजास्वभिरतोहियः
नित्यंनियमसंयुक्तोदानव्रतेषुसुव्रत १७
उपकारेषुपुण्येषुनियमोऽयप्रकीर्तितः

क्षमारूपंप्रवक्ष्यामिश्रूयतांद्विजसत्तम १८
पराक्रोशंहिसंश्रुत्यताडितेसतिकेनचित्
क्रोधंनचैवगच्छेत्तुताडितोनहिताडयेत् १९
सहिष्णुःस्यात्सधर्मात्मानहिरागंप्रयातिच
समश्नातिपरंसौख्यमिहचामुत्रवापिच २०
एवंक्षमासमाख्याताशौचमेवंवदाम्यहम्
सबाह्याभ्यंतरेयोवैशुद्धोरागविवर्जितः २१
स्नानाचमनकैरेवव्यवहारेणवर्तते
शौचमेवंसमाख्यातमहिंसांतुवदाम्यहम् २२
तृणमपिविनाकार्यञ्छेत्तव्यंनविजानता
अहिंसानिरतोभूयाद्यथात्मनितथापरे २३
शांतिमेवप्रक्ष्यामिशांत्यासुखंसमश्नुते
शांतिरेवप्रकर्तव्याक्लेशान्नैवपरित्यजेत् २४
भूतवैरंविसृज्यैवमनएवंप्रकारयेत्
एवंशांतिःसमाख्याताअस्तेयंतुवदाम्यहम् २५
परस्वंनैवहर्तव्यंपरजायातथैवच
मनोभिर्वचनैःकायैर्मनएवंप्रकारयेत् २६
दममेवप्रवक्ष्यामितवाग्रेद्विजसत्तम
दमनादिंद्रियाणांवैमनसोपिविकारिणः २७
औद्धत्यंनाशयेत्तेषांसचैतन्योवशीतदा
शुश्रूषांतुप्रवक्ष्यामिधर्मशास्त्रेषुयादृशी २८
पूर्वाचार्यैर्यथाप्रोक्तातामेवंप्रवदाम्यहम्
वाचादेहेनमनसागुरुकार्यंप्रसाधयेत् २९
जायतेऽनुग्रहोयत्रशुश्रूषासानिगद्यते
सांगोधर्मःसमाख्यातस्तवाग्रेद्विजसत्तम ३०
अन्यच्चतेप्रवक्ष्यामिश्रोतुमिच्छसियत्पते
ईदृशेचापिधर्मेतुवर्ततेयोनरःसदा ३१
संसारेतस्यसंभूतिःपुनरेवनजायते
स्वर्गंगच्छतिधर्मेणसत्यंसत्यंवदाम्यहम् ३२
एवंज्ञात्वामहाप्राज्ञधर्ममेवव्रजस्वहि

सर्वंहिप्राप्यतेकांतयदसाध्यंमहीतले ३३
धर्मप्रसादतस्तस्मात्कुरुवाक्यंममैवहि
भार्यायास्तुवचःश्रुत्वासोमशर्मासुबुद्धिमान् ३४
पुनःप्रोवाचतांभार्यांसुमनांधर्मवादिनीम् ३५

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे-
ऐंद्रेसुमनोपाख्यानेत्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

सोमशर्मोवाच-
एवंविधंमहापुण्यंधर्मव्याख्यानमुत्तमम्
कथंजानासिभद्रेत्वंकस्माच्चैवत्वयाश्रुतम् १
सुमनोवाच-
भार्गवाणांकुलेजातःपितामममहामते
च्यवनोनामविख्यातःसर्वज्ञानविशारदः २
तस्याहंप्रियकन्यावैप्राणादपिचवल्लभा
यत्रयत्रव्रजत्येषतीर्थारामेषुसुव्रत ३
सभासुचमुनीनांतुदेवतायतनेषुच
तेनसार्द्धंव्रजाम्येकाक्रीडमानासदैवहि ४
कौशिकान्वयसंभूतोवेदशर्मामहामतिः
पितुर्ममसखादैवादटमानःसमागतः ५
दुःखेनमहताविष्टश्चिंतयानोमुहुर्मुहुः
समागतंमहात्मानंतमुवाचपितामम ६
भवंतंदुःखसंतप्तमितिजानामिसुव्रत
कस्माद्दुःखीभवाञ्जातस्तस्मात्त्वंकारणंवद ७
एतद्वाक्यंततःश्रुत्वाच्यवनस्यमहात्मनः
तमुवाचमहात्मानंपितरंममसुव्रतः ८
वेदशर्मामहाप्राज्ञसर्वदुःखस्यकारणम्
ममभार्यामहासाध्वीपातिव्रत्यपरायणा ९
अपुत्रासाहिसंजातामनवंशोनविद्यते
एतत्तेकारणंप्रोक्तंप्रश्नितोस्मियतस्त्वया १०

एतस्मिन्नंतरेप्राप्तः कश्चित्सिद्धःसमागतः
ममपित्रातथातेनह्युत्थायवेदशर्मणा ११
द्वाभ्यामपिचसिद्धोसौपूजितोभक्तिपूर्वकैः
उपहारैस्सभोज्यान्नैर्वचनैर्मधुराक्षरैः १२
द्वाभ्यामन्तर्गतंपृष्टंपूर्वोक्तंचयथात्वया
उभौतौप्राहधर्मात्माससर्वंपितरंमम १३
धर्मस्यकारणंसर्वंमयोक्तंतेतथाकिल
धर्मेणप्राप्यतेपुत्रोधनंधान्यंतथास्त्रियः १४
ततस्तेनकृतंधर्मंसंपूर्णंवेदशर्मणा
तस्माद्धर्मात्सुसंजातंमहत्सौख्यंसपुत्रकम् १५
तेनसंगप्रसंगेनममैषमतिनिश्चयः
यथाकांततवप्रोक्तंमयैवचपरंशुभम् १६
तस्माच्छ्रुतंमहासिद्धात्सर्वसंदेहनाशनम्
विप्रधर्मंसमाश्रित्यअनुवर्त्तस्वसर्वदा १७
सोमशर्मोवाच–
धर्मेणकीदृशोमृत्युर्जन्मचैववदस्वमे
उभयोर्लक्षणंकांतेतत्सर्वंहिवदस्वमे १८
सुमनोवाच–
सत्यशौचक्षमाशांतितीर्थपुण्यादिकैस्तथा
धर्मश्चपालितोयेनतस्यमृत्युंवदाम्यहम् १९
रोगोनजायतेतस्यनचपीडाकलेवरे
नश्रमोवैनचग्लानिर्नचस्वेदोभ्रमस्तथा २०
दिव्यरूपधराभूत्वागंधर्वाब्राह्मणास्तथा
वेदपाठसमायुक्तागीतज्ञानविशारदाः २१
तस्यपार्श्वंसमायांतिस्तुतिंकुर्वंतिचातुलाम्
स्वस्थोहिआसनेयुक्तोदेवपूजारतःकिल २२
तीर्थंचलभतेप्राज्ञःस्नानार्थंधर्मतत्परः
अग्न्यागारेचगोस्थानेदेवतायतनेषुच २३
आरामेचतडागेचयत्राश्वत्थोवटस्तथा
ब्रह्मवृक्षंसमाश्रित्यश्रीवृक्षंचतथापुनः २४

अश्वस्थानंसमाश्रित्यगजस्थानगतोनरः
अशोकंचूतवृक्षंचसमाश्रित्ययदास्थितः २५
संनिधौब्राह्मणानांचराजवेश्मगतोथवा
रणभूमिंसमाश्रित्यपूर्वंयत्रमृतोभवेत् २६
मृत्युस्थानानिपुरायानिकेवलंधर्मकारणम्
गोग्रहंतुसुसंप्राप्यतथाचामरकंटकम् २७
शुद्धधर्मकरोनित्यंधर्मतोधर्मवत्सलः
एवंस्थानंसमाप्नोतियदामृत्युंसमाश्रितः २८
मातरंपश्यतेपुरायंपितरंचनरोत्तमः
भ्रातरंश्रेयसायुक्तमन्यंस्वजनबांधवम् २९
बंदीजनैस्तथापुरायैःस्तूयमानंपुनःपुनः
पापिष्ठंनैवपश्येतमातृपित्रादिकंपुनः ३०
गीतंगायंतिगंधर्वाः स्तुवंतिस्तावकाःस्तवैः
मंत्रपाठैस्तथाविप्रामातास्नेहेनपूजयेत् ३१
पितास्वजनवर्गाश्चधर्मात्मानंमहामतिम्
एवंदूताःसमाख्याताःपुरायस्थानानितेविभो ३२
प्रत्यक्षान्पश्यतेदूतान्हास्यस्नेहसमाविलान्
नचस्वप्नेनमोहेनक्लेदयुक्तेननैवसः ३३
धर्मराजोमहाप्राज्ञोभवंतंतुसमाह्वयेत्
एह्येहित्वंमहाभागयत्रधर्मःसतिष्ठति ३४
तस्यमोहोनचभ्रांतिर्नग्लानिःस्मृतिविभ्रमः
जायतेनात्रसंदेहःप्रसन्नात्मासतिष्ठति ३५
ज्ञानविज्ञानसंपन्नःस्मरन्देवंजनार्दनम्
तैःसार्द्धंतुप्रयात्येवंसंतुष्टोहृष्टमानसः ३६
एकत्वंजायतेतत्रत्यजतःस्वंकलेवरम्
दशमद्वारमाश्रित्यआत्मातस्यसगच्छति ३७
शिबिकातस्यआयातिहंसयानंमनोहरम्
विमानमेवचायातिहयोवागजउत्तमः ३८
छत्रेणध्रियमाणेनचामरैर्व्यजनैस्तथा
वीज्यमानःसपुरायात्मापुरायैरेवंसमंततः ३९

गीयमानस्तुधर्मात्मास्तूयमानस्तुपंडितैः
बंदिभिश्चारणैर्दिव्यैर्ब्राह्मणैर्वेदपारगैः ४०
साधुभिःस्तूयमानस्तुसर्वसौख्यसमन्वितः
यथादानप्रभावेणफलमाप्नोतितत्रसः ४१
आरामवाटिकामध्येसप्रयातिसुखेनवै
अप्सरोभिःसमाकीर्णोदिव्याभिर्मंगलैर्युतः ४२
देवैःसंस्तूयमानस्तुधर्मराजंप्रपश्यति
देवाश्चधर्मसंयुक्ताजग्मुःसंमुखमेवतम् ४३
एह्येहिवैमहाभागभुंद्क्ष्वभोगान्मनोनुगान्
एवंसपश्यतेधर्मंसौम्यरूपंमहामतिम् ४४
स्वस्यपुण्यप्रभावेणभुंक्तेचस्वर्गमेवसः
भोगक्षयात्सधर्मात्मापुनर्जन्मप्रयातिवै ४५
निजधर्मप्रसादात्सकुलंपुण्यंप्रयातिवै
ब्राह्मणस्यसुपुण्यस्यक्षत्रियस्यतथैवच ४६
धनाढ्यस्यसुपुण्यस्यवैश्यस्यैवमहामते
धर्मेणमोदतेतत्रपुनःपुण्यंकरोतिसः ४७
इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे-
एंद्रेसुमनोपाख्यानेचतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

सोमशर्मोवाच-
पापिनांमरणंभद्रेकीदृशैर्लक्षणैर्युतम्
तन्मेत्वंविस्तराद्ब्रूहियदिजानासिभामिनि १
सुमनोवाच-
श्रूयतामभिधास्यामितस्मात्सिद्धाच्छ्रुतंमया
पापिनांमरणेकांतयादृशंलिंगमेवच २
महापातकिनांचैवस्थानंचेष्टांवदाम्यहम्
विण्मूत्रामेध्यसंयुक्तांभूमिंपापसमन्विताम् ३
सतांप्राप्यसुदुष्टात्माप्राणान्दुःखेनमुंचति
चांडालभूमिंसंप्राप्यमरणंयातिदुःस्थितः ४

गर्दभाचरितांभूमिंवेश्यागेहंसमाश्रितः
कल्पपालगृहंगत्वानिधनायोपगच्छति ५
अस्थिचर्मनखैःपूर्णमाश्रितंपापकिल्बिषैः
तांप्राप्यचसदुष्टात्मामृत्युंयातिसुनिश्चितम् ६
अन्यांपापसमाचारांप्राप्यमृत्युंसगच्छति
अथचेष्टांप्रवक्ष्यामिदूतानांतुतमिच्छताम् ७
भैरवान्दारुणान्घोरानतिकृष्णान्महोदरान्
पिंगाक्षान्पीतनीलांश्चअतिश्वेतान्महोदरान् ८
अत्युच्चान्विकरालांश्चशुष्कमांसवसोपमान्
रौद्रदंष्ट्रान्करालांश्चसिंहास्यान्सर्पहस्तकान् ९
सतान्दृष्ट्वाप्रकंपेतखिद्यतेचमुहुर्मुहुः
शिवासंनादवद्घोरान्महारावान्महामते १०
मुंचंतिदूतकाःसर्वेकर्णमूलेतुतस्यहि
गलेपाशैःप्रबद्ध्वातेकटिंबद्ध्वातथोदरे ११
समाधृष्यनिपात्यंतेहाहेतिवदतेमुहुः
म्रियमाणस्ययाचेष्टातामेवंप्रवदाम्यहम् १२
परद्रव्यापहरणंपरभार्याविडंबनम्
ऋणंपरस्यसर्वस्वंगृहीतंयत्तुपापिभिः १३
पुनर्नैवप्रदत्तंहिलोभास्वादविमोहतः
अन्यदेवंमहापापंकुप्रतिग्रहमेवच १४
कंठमायांतितेसर्वेम्रियमाणस्यतस्यच
यानिकानिचपापानिपूर्वमेवकृतानिच १५
आयांतिकंठमूलंतेमहापापस्यनान्यथा
दुःखमुत्पादयंत्येतेकफबंधेनदारुणम् १६
पीडाभिर्दारुणाभिस्तुकंठोघुरघुरायते
रोदतेकंपतेऽत्यर्थंमातरंपितरंपुनः १७
स्मरतेभ्रातरंतत्रभार्यांपुत्रान्पुनःपुनः
पुनर्विस्मरणंयातिमहापापेनमोहितः १८
तस्यप्राणानगच्छंतिबहुपीडासमाकुलाः
पततेकंपतेचैवमूर्च्छतेचपुनःपुनः १९

एवंपीडासमायुक्तोदुःखंभुंक्तेतिमोहितः
तस्यप्राणाःसुदःखेनमहाकष्टैःप्रचालिताः २०
अपानमार्गमाश्रित्यशृणुकांतप्रयांतिते
एवंप्राणीमहामुग्धोलोभमोहसमन्वितः २१
नीयतेयमदूतैस्तुतस्यदुःखंवदाम्यहम् २२

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडेएंद्रेसुमनोपाख्यानेपापमरणविवक्षानामपंचदशोऽध्यायः १५

## षोडशोऽध्यायः

सुमनोवाच–
अंगारसंचयेमार्गेघृष्यमाणोहिनीयते
दह्यमानःसदुष्टात्माचेष्टमानःपुनःपुनः १
यत्रातपोमहातीव्रोद्वादशादित्यतापितः
नीयतेतेनमार्गेणसंतप्तःसूर्यरश्मिभिः २
पर्वतेष्वेवदुर्गेषुछायाहीनेषुदुर्मतिः
नीयतेतेनमार्गेणक्षुधातृष्णाप्रपीडितः ३
सदूतैर्हन्यमानस्तुगदाखड्गैःपरश्वधैः
कशाभिस्ताड्यमानस्तुनिंद्यमानस्तुदूतकैः ४
ततःशीतमयेमार्गेवायुनासेव्यतेपुनः
तेनशीतेनदुःखीसभूत्वायातिनसंशयः ५
आकृष्यमाणोदूतैस्तुनानादुर्गेषुनीयते
एवंपापीसदुष्टात्मादेवब्राह्मणनिंदकः ६
सर्वपापसमाचारोनीयतेयमकिंकरैः
यमंपश्यतिदुष्टात्माकृष्णांजनचयोपमम् ७
तमुग्रंदारुणंभीमंभीमदूतैःसमावृतम्
सर्वव्याधिसमाकीर्णंचित्रगुप्तसमन्वितम् ८
आरूढंमहिषंदेवंधर्मराजंद्विजोत्तम
दंष्ट्राकरालमत्युग्रंतस्यास्यंकालसंनिभम् ९
पीतवासंगदाहस्तंरक्तगंधानुलेपनम्
रक्तमाल्यकृताभूषंगदाहस्तंभयंकरम् १०

एवंविधंमहाकायंयमंपश्यतिदुर्मतिः
तंदृष्ट्वासमनुप्राप्तंसर्वधर्मबहिष्कृतम् ११
यमःपश्यतितंदुष्टंपापिष्ठंधर्मकंटकम्
शासयेत्तुमहादुःखैःपीडाभिर्दारुमुद्गलैः १२
यावद्युगसहस्रांतंतावत्कालंप्रपच्यते
नानाविधेचनरकेपच्यतेचपुनःपुनः १३
नारकींयातिवैयोनिंकृमिकोटिषुपापकृत्
अमेध्येपच्यतेनित्यंहाहाभूतोविचेतनः १४
मरणंचसपापात्माएवंयातिसुनिश्चितम्
एवंपापस्यसंयोगंभुंक्तेचैवसुदुर्मतिः १५
पुनर्जन्मप्रवक्ष्यामियासुयोनिषुयातिच
शुनांयोनिशतंप्राप्यभुंक्तेवैपातकंपुनः १६
व्याघ्रोभवतिदुष्टात्मारासभींयातिवैपुनः
मार्जारशूकरींयोनिंसर्पयोनिंतथैवच १७
नानाभेदासुसर्वासुतिर्यक्षुचपुनःपुनः
पापपक्षिषुसंयातिअन्यासुमहतीषुच १८
चांडालभिल्लयोनिंचपुलिंदींयातिपापकृत्
एतत्तेसर्वमाख्यातंपापिनांजन्मचैवहि १९
मरणेश्रृणुकांतत्वंचेष्टांतेषांसुदारुणाम्
पापपुरायसमाचारस्तवाग्रेकथितोमया २०
अन्यदेवंप्रवक्ष्यामियदिपृच्छसिमानद २१

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायामैंद्रेसुमनोपाख्याने-
पापपुरायविवक्षानामषोडशोऽध्यायः १६

सप्तदशोऽध्यायः

सोमशर्मोवाच-
सर्वंदेविसमाख्यातंधर्मसंस्थानमुत्तमम्
कथंपुत्रमहंविंद्यांसर्वज्ञंगुणसंयुतम् १
वदत्वंमेमहाभागेयदिजानासिसुव्रते
दानधर्मादिकंभद्रेपरत्रेहनसंशयः २

सुमनोवाच-
वसिष्ठंगच्छधर्मज्ञंतंप्रार्थयमहामुनिम्
तस्मात्प्राप्स्यसिवैपुत्रंधर्मज्ञंधर्मवत्सलम् ३
सूतउवाच-
एवमुक्तेतयावाक्येसोमशर्माद्विजोत्तमः
एवंकरिष्येकल्याणितववाक्यंनसंशयः ४
एवमुक्त्वाजगामाशुसोमशर्माद्विजोत्तमः
वसिष्ठंसर्ववेत्तारंदिव्यंतंतपतांवरम् ५
गंगातीरेस्थितंपुण्यमाश्रमस्थंद्विजोत्तमम्
तेजोज्वालासमाकीर्णंद्वितीयमिवभास्करम् ६
राजमानंमहात्मानंब्रह्मण्यंचद्विजोत्तमम्
भक्त्याप्रणम्यविप्रेशंदंडवच्चपुनःपुनः ७
तमुवाचमहातेजाब्रह्मसूनुरकल्मषः
उपाविशासनेपुण्येसुखेनसुमहामते ८
एवमुक्त्वासयोगींद्रःपुनःप्राहतपोधनम्
गृहेपुत्रेषुतेवत्सदारभृत्येषुसर्वदा ९
क्षेममस्तिमहाभागपुण्यकर्मसुचाग्निषु
निरामयोसिचांगेषुधर्मंपालयसेसदा १०
एवमुक्त्वामहाप्राज्ञःपुनःप्राहसुशर्मणम्
किंकरोमिप्रियंकार्यंसुप्रियंतेद्विजोत्तम ११
एवंसंभाषितंविप्रंविररामसकुंभजः
तस्मिन्नुक्तेमहाभागेवसिष्ठेमुनिपुंगवे १२
सहोवाचमहात्मानंवसिष्ठंतपतांवरम्
भगवञ्छ्रूयतांवाक्यंसुप्रसन्नेनचेतसा १३
यदिमेसुप्रियंकार्यंत्वयैवमुनिपुंगव
ममप्रश्नार्थसंदेहंविच्छेदयद्विजोत्तम १४
दारिद्र्यंकेनपापेनपुत्रसौख्यंकथंनहि
एतन्मेसंशयंतातकस्मात्पापाद्वदस्वमे १५
महामोहेनसंमुग्धःप्रिययाबोधितोद्विज
तयाहंप्रेषितस्तातनवपार्श्वंसमातुरः १६

तत्सर्वंहिसमाचद्त्वसर्वसंदेहनाशकम्
मुक्तिदाताभवस्वत्वंममसंसारबंधनात् १७
वसिष्ठउवाच-
पुत्रामित्राणयथभ्राताअन्येस्वजनबांधवाः
पंचभेदास्तुसंभेदात्पुरुषस्यभवंतिते १८
तेतेसुमनयाप्रोक्ताःपूर्वमेवतवाग्रतः
ऋृणसंबंधिनःसर्वेतेकुपुत्राद्विजोत्तम १९
पुत्रस्यलत्तणंपुणयंतवाग्रेप्रवदाम्यहम्
पुणयप्रसक्तोयस्यात्मासत्यधर्मरतःसदा २०
शुद्धिविज्ञानसंपन्नस्तपस्वीवाग्विदांवरः
सर्वकर्मसुसंधीरोवेदाध्ययनतत्परः २१
ससर्वशास्त्रवेत्ताचदेवब्राह्मणपूजकः
याजकःसर्वयज्ञानांदातात्यागीप्रियंवदः २२
विष्णुध्यानपरोनित्यंशांतोदांतःसुहृत्सदा
पितृमातृपरोनित्यंसर्वस्वजनवत्सलः २३
कुलस्यतारकोविद्वान्कुलस्यपरिपोषकः
एवंगुणैश्चसंयुक्तःसपुत्रःसुखदायकः २४
अन्येसंबंधसंयुक्ताःशोकसंतापदायकाः
एतादृशेनकिंकार्यंफलहीनेनतेनच २५
आयांतियांतितेसर्वेतापंदत्वासुदारुणम्
पुत्ररूपेणतेसर्वेसंसारेद्विजसत्तम २६
पूर्वजन्मकृतंपुणयंयत्त्वयापरिपालितम्
तत्सर्वंहिप्रवद्त्यामिश्रूयतामद्भुतंपुनः २७
वसिष्ठउवाच-
भवाञ्छूद्रोमहाप्राज्ञपूर्वजन्मनिनान्यथा
कृषिकर्त्ताज्ञानहीनोमहालोभेनसंयुतः २८
एकभार्यासदाद्वेषीबहुपुत्रोह्यदत्तवान्
धर्मंनैवविजानासिसत्यंनैवपरिश्रुतम् २९
दानंनैवत्वयादत्तंशास्त्रंनैवप्रतिश्रुतम्
कृतानैवत्वयातीर्थेयात्राचैवमहामते ३०

एवंकृतंत्वयाविप्रकृषिमार्गंपुनःपुनः
पशूनांपालनंसर्वंगवांचैवद्विजोत्तम ३१
महिषीणांतथाश्वानांपालनंचपुनःपुनः
एवंपूर्वंकृतंकर्मत्वयैवद्विजसत्तम ३२
विपुलंचधनंतद्वल्लोभेनपरिसंचितम्
तस्यव्ययंसुपुण्येननकृतंतुत्वयाकदा ३३
पात्रेदानंनदत्तंतुदृष्ट्वादुर्बलमेवच
कृपांकृत्वानदत्तंतुभवताधनमेवच ३४
गोमहिष्यादिकंसर्वंपशूनांसंचितंत्वया
विक्रीयचधनंविप्रसंचितंविपुलंत्वया ३५
तक्रंघृतंतथाक्षीरंविक्रयित्वाततोदधि
दुष्कालंचिंतितंविप्रमोहितोविष्णुमायया ३६
कृतंमहार्घमेवात्रअन्नंब्राह्मणसत्तम
निर्दयेनत्वयादानंनदत्तंतुकदाचन ३७
देवानांपूजनंविप्रभवतानकृतंकदा
प्राप्यपर्वाणिविप्रेभ्योद्रव्यंनचसमर्पितम् ३८
श्राद्धंकालंतुसंप्राप्यश्रद्धयानकृतंत्वया
भार्यावदतितेसाध्वीदिनमेनंसमागतम् ३९
श्वशुरस्यश्राद्धकालःश्वश्र्वाश्चैवमहामते
त्वंश्रुत्वातद्वचस्तस्यागृहंत्यक्त्वापलायसे ४०
धर्ममार्गंनदृष्टंतेश्रुतंनैवकदात्वया
लोभोमातापिताभ्रातालोभःस्वजनबांधवाः ४१
पालितंलोभमेवैकंत्यक्त्वाधर्मंसदैवहि
तस्माद्दुःखीभवाञ्जातोदरिद्रेणातिपीडितः ४२
दिनेदिनेमहातृष्णाहृदयेतेप्रवर्द्धते
यदायदागृहेद्रव्यंवृद्धिमायातितेतदा ४३
तृष्णयादह्यमानस्तुतयात्वंवह्निरूपया
रात्रौवासुप्रसुप्तस्तुनिश्चितोहिप्रचिंतसि ४४
दिनंप्राप्यमहामोहैर्व्यापितोसिसदैवहि
सहस्रंलक्षमेकोटिःकदाअर्बुदमेवच ४५

भविष्यतिकदाखर्वोनिखर्वश्चाथमेगृहे
एवंसहस्रंलक्षंचकोटिरर्बुदमेवच ४६
खर्वोनिखर्वःसंजातस्तृष्णानैवप्रगच्छति
तवकार्यंपरित्यज्यवृद्धिमायातिसर्वदा ४७
नैवदत्तंहुतंविप्रभुक्तंनैवकदात्वया
खनितंभूमिमध्येतुक्षिप्तंपुत्रानजानते ४८
अन्यमेवमुपायंतुद्रव्यागमनकारणात्
कुरुषेसर्वदाविप्रलोकान्पृच्छसिबुद्धिमान् ४९
खनित्रमंजनंवादंधातुवादमतःपरम्
पृच्छमानोभ्रमस्येकस्तृष्णयापरिमोहितः ५०
स्पर्शंचिंतयसेनित्यंकल्पान्सिद्धिप्रदायकान्
प्रवेशंविवराणांतुचिंतमानःसुपृच्छसि ५१
तृष्णानलेनदग्धेनसुखंनैवप्रगच्छसि
तृष्णानलेनसंदीप्तोहाहाभूतोविचेतनः ५२
एवंमुग्धोसिविप्रेंद्रगतस्त्वंकालवश्यताम्
दारापुत्रेषुतद्द्रव्यंपृच्छमानेषुवैत्वया ५३
कथितंनैववृत्तांतंप्राणांस्त्यक्त्वागतोयमम्
एवंसर्वंमयाख्यातंवृत्तांतंतवपूर्वकम् ५४
अनेनकर्मणाविप्रनिर्धनोसिदरिद्रवान्
संसारेयस्यसत्पुत्राभक्तिमंतःसदैवहि ५५
सुशीलाज्ञानसंपन्नाःसत्यधर्मरताःसदा
संभवंतिगृहेतस्ययस्यविष्णुःप्रसीदति ५६
धनंधान्यंकलत्रंतुपुत्रपौत्रमनंतकम्
सभुंक्तेमर्त्यलोकेवैयस्यविष्णुःप्रसन्नवान् ५७
विनाविष्णोःप्रसादेनदारापुत्रान्नचाप्नुयात्
सुजन्मचकुलंविप्रतद्विष्णोःपरमंपदम् ५८
इति श्रीपद्मपुराणेभूमिखंडेऐंद्रेसुमनोपाख्यानेसप्तदशोऽध्यायः १७

अष्टादशोऽध्यायः

सोमशर्मोवाच–

पूर्वजन्मकृतंपापंत्वयाख्यातंचमेमुने
शूद्रत्वेनतुविप्रेन्द्रमयैवपरिवर्जितम् १
विप्रत्वंहिमयाप्राप्तंतत्कथंद्विजसत्तम
तत्सर्वंकारणंब्रूहिज्ञानविज्ञानपंडित २
वसिष्ठउवाच-
यत्त्वयाचेष्टितंपूर्वंकर्मधर्माश्रितंद्विज
तदहंसंप्रवक्ष्यामिश्रूयतांयदिमन्यसे ३
ब्राह्मणःकश्चिदनघःसदाचारःसुपंडितः
विष्णुभक्तस्तुधर्मात्मानित्यंविष्णुपरायणः ४
यात्राव्याजेनतीर्थानांभ्रमत्येकःसमेदिनीम्
अटमानःसमायातस्तवगेहंमहामतिः ५
याचितंस्थानमेकंवैवासार्थंद्विजसत्तम
तवैवभार्ययादत्तंत्वयाचसहपुत्रकैः ६
एयतामेयतांब्रह्मन्सुखेनसुगृहेमम
वैष्णवंब्राह्मणंपुण्यमित्युवाचपुनःपुनः ७
सुखेनस्थीयतामत्रगृहोयंतवसुव्रत
अद्यधन्योस्म्यहंपुण्यमद्यतीर्थमहंगतः ८
अद्यतीर्थफलंप्राप्तंतवांघ्रिद्वयदर्शनात्
गवांस्थानंवरंपुण्यंनिवासायनिवेदितम् ९
अंगसंवाहनंकृत्वापादौचैवप्रमर्दितौ
क्षालितौचपुनस्तोयैःस्नातःपादोदकेनहि १०
सद्योघृतंदधिक्षीरमन्नंतक्रंप्रदत्तवान्
तस्मैचब्राह्मणायैवभवानित्थंमहात्मने ११
एवंसंतोषितोविप्रस्त्वयाचसहभार्यया
पुत्रैःसार्धंमहाभागोवैष्णवोज्ञानपंडितः १२
अथप्रभातेसंप्राप्तेदिनेपुण्येसुभाग्यदे
आषाढस्यतुशुद्धस्यैकादशीपापनाशनी १३
तस्मिन्दिनेसुसंप्राप्तासर्वपातकनाशिनी
यस्यांदेवोहृषीकेशोयोगनिद्रांप्रगच्छति १४
तांप्राप्यचततोलोकास्तत्यजुर्बुद्धिपंडिताः

गृहस्यसर्वकर्माणिविष्णुध्यानरताद्विज १५
उत्सवंपरमंचक्रुर्गीतमंगलवादनैः
स्तुवंतिब्राह्मणाःसर्वेवेदैःस्तोत्रैःसुमंगलैः १६
एवंमहोत्सवंप्राप्यसचब्राह्मणसत्तमः
तस्मिन्दिनेस्थितस्तत्रसंप्राप्तंसमुपोषणम् १७
एकादश्यास्तुमाहात्म्यंपठितंब्राह्मणेनवै
भार्यापुत्रैःसुतैःसार्द्धंश्रुतंधर्ममनुत्तमम् १८
श्रुतेतस्मिन्महापुण्येभार्यापुत्रैस्तुप्रेरितः
संसर्गादस्यविप्रस्यव्रतमेतत्समाचर १९
तदाकर्ण्यमहद्वाक्यंसर्वपुण्यप्रदायकम्
व्रतमेतंकरिष्यामिइतिनिश्चितमानसः २०
भार्यापुत्रैःसमंगत्वानद्यांस्नानंकृतंत्वया
हृष्टेनमनसाविप्रपूजितोमधुसूदनः २१
सर्वोपहारैःपुण्यैश्चगंधधूपादिभिस्तथा
रात्रौजागरणंकृत्वानृत्यगीतादिभिस्तथा २२
ब्राह्मणस्यप्रसंगेननद्यांस्नानंपुनःकृतम्
पूजितोदेवदेवेशःपुष्पधूपादिमंगलैः २३
भक्त्याप्रणम्यगोविंदंस्नापयित्वापुनःपुनः
निर्वापंतादृशंदत्तंब्राह्मणायमहात्मने २४
भक्तयाप्रणम्यतंविप्रंदत्तातस्मैसुदक्षिणा
कृतवान्पारणंविप्रपुत्रैर्भार्यादिभिःसमम् २५
प्रेषितोभक्तिपूर्वेणसद्भावेनत्वयैवसः
एवंव्रतंसमाचीर्णंत्वयावैद्विजसत्तम २६
संगत्याब्राह्मणस्यैवविष्णोश्चैवप्रसादतः
भवान्ब्राह्मणतांप्राप्तःसत्यधर्मसमन्वितः २७
तस्यव्रतस्यभावेनत्वयाप्राप्तंमहत्कुलम्
भूसुराणांमहाप्राज्ञंसत्यधर्मसमाविलम् २८
तस्मैतुब्राह्मणायैववैष्णवायमहात्मने
श्रद्धयासत्यभावेनदत्तमन्नंसुसंस्कृतम् २९
तस्यदानस्यभावेनमिष्टान्नमुपतिष्ठति

महामोहैःप्रमुग्धोहितृष्णयाव्यापितंमनः ३०
पूर्वजन्मनितेविप्रअर्थमेवप्रसंचितम्
नदत्तंब्राह्मणेभ्योहिदीनेष्वन्येषुवैत्वया ३१
दारेषुपुत्रलोभेनम्रियमाणेनवैतदा
तस्यपापस्यभावेनदारिद्रंत्वामुपाविशत् ३२
पुत्रलोभंपरित्यज्यस्नेहंत्यक्त्वाप्रदूरतः
अपुत्रवान्भवाञ्जातस्तस्यपापस्यवैफलम् ३३
सुपुत्रंचकुलंविप्रधनधान्यवरस्त्रियः
सुजन्ममरणंचैवसुभोगाःसुखमेवच ३४
राज्यंस्वर्गश्चमोक्षश्चयद्यद्दुर्लभमेवच
प्रसादात्तस्यदेवस्यविष्णोश्चैवमहात्मनः ३५
तस्मादाराध्यगोविन्दंनारायणमनामयम्
प्राप्स्यसित्वंपरंस्थानंतद्विष्णोःपरमंपदम् ३६
सुपुत्रत्वंधनंधान्यंसुभोगान्सुखमेवच
पूर्वजन्मकृतंसर्वंयत्त्वयापरिचेष्टितम् ३७
तन्मयाकथितंविप्रतवाग्रेपरिनिष्ठितम्
एवंज्ञात्वामहाभागनारायणपरोभव ३८
ब्रह्मात्मजेनापिमहानुभावःसविप्रवर्यःपरिबोधितोहि
हर्षेणयुक्तःसमहानुभावोभक्त्यावसिष्ठंप्रणिपत्यतत्र ३९
आमंत्र्यविप्रंसजगामगेहंतांप्राप्यभार्यांसुमनांप्रहर्षः
सर्वंहिवृत्तंममपूर्वचेष्टितंतेनैवविप्रेणतवप्रसादात् ४०
भद्रेवसिष्ठेनविकाशनीतमद्यैवमोहंपरिनाशितंमे
आराधयिष्येमधुसूदनंहियास्यामिमोक्षंपरमंपदंतत् ४१
आकर्णयवाक्यंपरमंमहांतंसुमंगलंमंगलदायकंहि
हर्षेणयुक्तातमुवाचकांतंपुणयोसिविप्रेणविबोधितोऽसि ४२

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे-
ऐंद्रेसुमनोपाख्यानेअष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

सूतउवाच-

सोमशर्मामहाप्राज्ञःसुमनयासहसत्तमः
कपिलासंगमेपुण्येरेवातीरेसुपुण्यदे १
स्नात्वातत्रसमेधावीतर्पयित्वासुरान्पितॄन्
तपस्तेपेसुशांतात्माजपन्नारायणंशिवम् २
द्वादशाक्षरमंत्रेणध्यानयुक्तोमहामनाः
तस्यैवदेवदेवस्यवासुदेवस्यसुव्रतः ३
आसनेशयनेयानेस्वप्नेपश्यतिकेशवम्
सदैवनिश्चलोभूत्वाकामक्रोधविवर्जितः ४
साचसाध्वीमहाभागापतिव्रतपरायणा
सुमनाकांतमेवापिशुश्रूषतितपोन्वितम् ५
ध्यायमानस्यतस्यापिविघ्नैःसंदर्शितंभयम्
सर्पाविषोल्बणाःकृष्णास्तत्रयांतिमहात्मनः ६
पार्श्वेतेतप्यमानस्यतस्यतेसोमशर्मणः
सिंहव्याघ्रगजादृष्टाभयमेवंप्रचक्रिरे ७
वेतालाराक्षसाभूताःकूष्मांडाःप्रेतभैरवाः
भयंविदर्शयंत्येतेदारुणंप्राणनाशनम् ८
नानाविधामहाभीमाःसिंहास्तत्रसमागताः
दंष्ट्राकरालवक्त्राश्चजगर्जुश्चातिभैरवम् ९
विष्णोर्ध्यानात्सधर्मात्मानचचालमहामतिः
महाविघ्नैःसुसंरूढैश्चालितोमुनिपुंगवः १०
एवंनचलतेध्यानात्सोमशर्माद्विजोत्तमः
झंझावातैश्चशीतेनमहावृष्ट्यासुपीडितः ११
भंभारावमहाभीमः सिंहस्तत्रसमागतः
तंदृष्ट्वाभयवित्रस्तः सस्मारनृहरिंद्विजः १२
इंद्रनीलप्रतीकाशंपीतवस्त्रंमहौजसम्
शंखचक्रधरंदेवंगदापंकजधारिणम् १३
महामौक्तिकहारेणइंदुवर्णानुकारिणा
कौस्तुभेनापिरत्नेनद्योतमानंजनार्दनम् १४
श्रीवत्सांकेनदिव्येनहृदयंयस्यराजते
सर्वाभरणशोभांगंशतपत्रनिभेक्षणम् १५

सुस्मितास्यंसुप्रसन्नंरत्नदामाभिशोभितम्
भ्राजमानंहृषीकेशंध्यानंतेनकृतंध्रुवम् १६
त्वमेवशरणंकृष्णशरणागतवत्सल
नमोस्तुदेवदेवायकिंमेभयंकरिष्यति १७
यस्योदरेत्रयोलोकाःसप्तचान्येमहात्मनः
शरणंतस्यप्रविष्टोस्मिक्वास्तेभयंममैवहि १८
यस्माद्भयाःप्रवर्ततेकृत्यादिकमहाबलाः
सर्वभयप्रहर्तारंतमस्मिशरणंगतः १९
पातकानांतुसर्वेषांदानवानांमहाभयम्
रक्षकोविष्णुभक्तानांतमस्मिशरणंगतः २०
वृंदारकाणांसर्वेषांदानवानांमहात्मनाम्
योगतिःकृष्णभक्तानांतमस्मिशरणंगतः २१
अभयोभयनाशायपापनाशायज्ञानवान्
एकश्चेंद्रस्वरूपेणतमस्मिशरणंगतः २२
व्याधीनांनाशकायैवयऔषधस्वरूपवान्
निरामयोनिरानंदस्तमस्मिशरणंगतः २३
अचलश्चालयेल्लोकानपापोज्ञानमेवच
तमस्मिशरणंप्राप्तोभयंकिंमेकरिष्यति २४
साधूनांचापिसर्वेषांपालकोयोह्यनामयः
पातिविश्वंचविश्वात्मातमस्मिशरणंगतः २५
योमेमृगेंद्ररूपेणभयंदर्शयतेग्रतः
तमहंशरणंप्राप्तोनरसिंहंनमाम्यहम् २६
मदमत्तोमहाकायोवनहस्तीसमागतः
गजलीलागतिंदेवंशरणागतवत्सलम् २७
गजास्यंज्ञानसंपन्नंसपाशांकुशधारिणम्
कालास्यंगजतुंडंचशरणंसुगतोस्म्यहम् २८
हिरण्याक्षप्रहर्तारंवाराहंशरणंगतः
वामनंतंप्रपन्नोस्मिशरणागतवत्सलम् २९
ह्रस्वास्तुवामनाःकुब्जाःप्रेताःकूष्मांडकादयः
मृत्युरूपधराःसर्वेदर्शयंतिभयंमम ३०

अमृतंत्रंपपन्नोस्मिकिंभयंमेकरिष्यति
ब्रह्मण्योब्रह्मदोब्रह्माब्रह्मज्ञानमयोहरिः ३१
शरणंतंप्रपन्नोस्मिभयंकिंमेकरिष्यति
अभयोयोहिजगतोभीतिघ्नोभीतिदायकः ३२
भयरूपंप्रपन्नोस्मिभयंकिंमेकरिष्यति
तारकःसर्वलोकानांनाशकःसर्वपापिनाम् ३३
तमहंशरणंप्राप्तोधर्मरूपंजनार्दनम्
सुरारण्योहिरणेवपुर्द्धारयतेऽद्भुतम् ३४
शरणंतस्यगंतास्मिसदागतिरयंमम
झंझावातोमहाचंडोवपुर्दूयतिमेभृशम् ३५
शरणंतंप्रपन्नोस्मिसदागतिरयंमम
अतिशीतंचातिवर्षाआतपस्तापदायकः ३६
एषांरूपेणयोदेवस्तस्याहंशरणंगतः
कालरूपाअमीप्राप्ताभयदाममचालकाः ३७
एषांशरणंप्रपन्नोस्मिहरेःस्वरूपिणांसदा ३८
यंसर्वदेवंपरमेश्वरंहिनिष्केवलंज्ञानमयंप्रदीपम्
वदंतिनारायणमादिसिद्धंसिद्धेश्वरंतंशरणंप्रपद्ये ३९
इतिध्यायन्स्तुवन्नित्यंकेशवंक्लेशनाशनम्
भक्त्यातेनसमानीतस्तदात्महृदयेहरिः ४०
उद्यमंविक्रमंतस्यसदृष्ट्वासोमशर्मणः
आविर्भूयहृषीकेशस्तमुवाचप्रहृष्टवान् ४१
सोमशर्मन्महाप्राज्ञश्रूयतांभार्ययासह
वासुदेवोस्मिविप्रेंद्रवरंयाचयसुव्रत ४२
तेनोक्तोहिसविप्रेन्द्रउन्मील्यनयनद्वयम्
दृष्ट्वाविश्वेरंदेवंघनश्यामंमहोदयम् ४३
सर्वाभरणशोभांगंसर्वायुधसमन्वितम्
दिव्यलक्षणसंपन्नंपुंडरीकनिभेक्षणम् ४४
पीतेनवाससायुक्तंराजमानंसुरेश्वरम्
वैनतेयसमारूढंशंखचक्रगदाधरम् ४५
ब्रह्मादीनांसुधातारंजगतोस्यमहायशाः

विश्वस्यास्यसदातीतंरूपातीतंजगद्गुरुम् ४६
हर्षेणमहताविष्टोदंडवत्प्रणिपत्यतम्
श्रियायुक्तंभासमानंसूर्यकोटिसमप्रभम् ४७
बद्धांजलिपुटोभूत्वातयासुमनयासह
जयजयेत्युवाचैनंजयमाधवमानद ४८
जययोगीशयोगीन्द्रजयनागांगशायन
यज्ञांगजययज्ञेशजयशाश्वतसर्वग ४९
जयसर्वेश्वरानंतयज्ञरूपनमोऽस्तुते
जयज्ञानवतांश्रेष्ठजयत्वंज्ञाननायक ५०
जयसर्वदसर्वज्ञजयत्वंसर्वभावन
जयजीवस्वरूपेशमहाजीवनमोस्तुते ५१
जयप्रज्ञादप्रज्ञांगजयप्राणप्रदायक
जयपापघ्नपुण्येशजयपुण्यपतेहरे ५२
जयज्ञानस्वरूपेशज्ञानगम्यायतेनमः
जयपद्मपलाशाक्षपद्मनाभायतेनमः ५३
जयगोविंदगोपालजयशंखधरामल
जयचक्रधराव्यक्तव्यक्तरूपायतेनमः ५४
जयविक्रमशोभांगजयविक्रमनायक
जयलक्ष्मीविलासांगनमोवेदमयायते ५५
जयविक्रमशोभांगजयउद्यमदायक
जयउद्यमकालायउद्यमायनमोनमः ५६
जयउद्यमशक्तायउद्यमत्रयधारक
युद्धोद्यमप्रवृत्तायतस्मैधर्मायतेनमः ५७
नमोहिरण्यरेतायतस्मैतेजायतेनमः
अतितेजःस्वरूपायसर्वतेजोमयायच ५८
दैत्यतेजोविनाशायपापतेजोहरायच
गोब्राह्मणहितार्थायनमोस्तुपरमात्मने ५९
नमोस्तुहुतभोक्त्रेचनमोहव्यवहायते
नमःकव्यवहायैवस्वधारूपायतेनमः ६०
स्वाहारूपाययज्ञायपावनायनमोनमः

नमस्तेशार्ङ्गहस्तायहरयेपापहारिणे ६१
सदसद्योदनायैवनमोविज्ञानशालिने
नमोवेदस्वरूपायपावनायनमोनमः ६२
नमोस्तुहरिकेशायसर्वक्लेशहरायते
केशवायपरायैवनमस्तेविश्वधारिणे ६३
नमःकृपाकरायैवनमोहर्षमयायते
अनंतायनमोनित्यंशुद्धायक्लेशनाशिने ६४
आनंदायनमोनित्यंशुद्धायकेवलायते
रुद्रैर्नमितपादायविरंचिनमितायते ६५
सुरासुरेंद्रनमितपादपद्मायतेनमः
नमोनमःपरेशायअजितायामृतात्मने ६६
क्षीरसागरवासायनमःपद्माप्रियायते
ॐकारायचशुद्धायअचलायनमोनमः ६७
व्यापिनेव्यापकायैवसर्वव्यसनहारिणे
नमोनमोवराहायमहाकूर्मायतेनमः ६८
नमोवामनरूपायनृसिंहायमहात्मने
नमोरामायदिव्यायसर्वक्षत्रवधायच ६९
सर्वज्ञानायमत्स्यायनमोरामायतेनमः
नमःकृष्णायबुद्धायनमोम्लेच्छप्रणाशिने ७०
नमःकपिलविप्रायहयग्रीवायतेनमः
नमोव्यासस्वरूपायनमःसर्वमयायते ७१
एवंस्तुत्वाहृषीकेशंतमुवाचजनार्दनम्
गुणानांतुपरंपारंब्रह्मावेत्तिनपावन ७२
नचैवस्तोतुंसर्वज्ञस्तथारुद्रःसहस्रदृक्
वक्तुंकोहिसमर्थस्तुकीदृशीमेमतिर्विभो ७३
निर्गुणंसगुणंस्तोत्रंमयैवतवकेशव
क्षमशब्दापशब्दंमेतवदासोस्मिसुव्रत ७४
जन्मजन्मनिलोकेशदयांमेकुरुपावन ७५

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे-
एंद्रेसुमनोपाख्यानेएकोनविंशोऽध्यायः १९

विंशोऽध्यायः

हरिरुवाच–
तपसानेनपुण्येनसत्येनानेनतेद्विज
स्तोत्रेणपावनेनापितुष्टोस्मिव्रियतांवरः १
वरंदद्मिमहाभागयत्तेमनसिवर्तते
यंयमिच्छसिकामंत्वंतंतंतेपूरयाम्यहम् २
सोमशर्मोवाच–
प्रथमंदेहिमेकृष्णवरमेकंसुवाञ्छितम्
सुप्रसन्नेनमनसायद्यस्तिसुदयामम ३
जन्मजन्मांतरंप्राप्यतवभक्तिंकरोम्यहम्
दर्शयस्वपरंस्थानमचलंमोक्षदायकम् ४
स्ववंशतारकंपुत्रंदिव्यलक्षणसंयुतम्
विष्णुभक्तिपरंनित्यंममवंशप्रधारकम् ५
सर्वज्ञंसर्वदंदांतंतपस्तेजःसमन्वितम्
देवब्राह्मणलोकानांपालकंपूजकंसदा ६
देवमित्रंपुण्यभावंदातारंज्ञानपंडितम्
देहिमेईदृशंपुत्रंदारिद्रंहरकेशव ७
भवत्वेवंनसंदेहोवरमेनंवृणोम्यहम्
हरिरुवाच–
एवमस्तुद्विजश्रेष्ठभविष्यतिनसंशयः ८
मत्प्रसादात्सुपुत्रस्तुतववंशप्रतारकः
भोक्ष्यसित्वंवरान्भोगान्दिव्यांश्चमानुषानिह ९
समालोक्यपरंसौख्यंपुत्रसंभवजंशुभम्
यावज्जीवसिविप्रत्वंतावद्दुःखंनपश्यसि १०
दाताभोक्तागुणग्राहीभविष्यसिनसंशयः
सुतीर्थेमरणंचापियास्यसित्वंपरांगतिम् ११
एवंवरंहरिर्दत्त्वासप्रियायद्विजायसः
अंतर्धानंगतोदेवःस्वप्नवत्परिदृश्यते १२
तदासुमनयायुक्तःसोमशर्माद्विजोत्तमः
सुतीर्थेपावनेतस्मिन्रेवातीरेसुपुण्यदे १३

अमरकंटकेविप्रोदानंपुरायंकरोतिसः
गतेबहुतरेकालेतस्यवैसोमशर्मणः १४
कपिलारेवयोःसंगेस्नानंकृत्वासनिर्गतः
दृष्टवान्पुरतोविप्रःश्वेतमेकंहिकुंजरम् १५
सुप्रभंसुंदरंदिव्यंसुमदंचारुलक्षणम्
नानाभरणशोभांगंबहुलक्ष्म्यासमन्वितम् १६
सिंदूरैःकुंकुमैस्तस्यकुंभस्थलेविराजिते
कर्णनीलोत्पलयुतंपताकादंडसंयुतम् १७
नागोपरिस्थितोदिव्यःपुरुषोदृढसुप्रभः
दिव्यलक्षणसंपन्नःसर्वाभरणभूषितः १८
दिव्यमाल्यांबरधरोदिव्यगंधानुलेपनः
सुसौम्यंसोमवत्पूर्णच्छत्रचामरसंयुतम् १९
नागारूढंप्रयांतंतंपुनःपश्यतिसत्तमः
सिद्धचारणगंधर्वैःस्तूयमानंसुमंगलम् २०
सगजंसुंदरंदृष्ट्वापुरुषंदिव्यलक्षणम्
व्यतर्कयत्सोमशर्माविस्मयाविष्टमानसः २१
कोऽयप्रयातिदिव्यांगःपंथानंप्राप्यसुव्रतः
एवंचिंतयतस्तस्ययावद्गृहंसमाप्तवान् २२
प्रविशंतंगृहद्वारंदेवरूपंमनोहरम्
हर्षेणमहताविष्टःसोमशर्माद्विजोत्तमः २३
स्वगृहंप्रतिधर्मात्मात्वरमाणःप्रयातिच
गृहद्वारंगतोयावत्तावत्तंतुनपश्यति २४
पतितान्येवपुष्पाणिसौहृद्यानिमहामतिः
दिव्यानिवासयुक्तानिप्रांगणेद्विजसत्तमः २५
चंदनैःकुंकुमैःपुरायैःसुगंधैस्तुविलेपितम्
स्वकीयंप्रांगणेदृष्ट्वादूर्वाक्षतसमन्वितम् २६
सएवंविस्मयाविष्टश्चिंतयानःपुनःपुनः
ददर्शसुमनांप्राज्ञोदिव्यमंगलसंपदम् २७
सोमशर्मोवाच-
केनदत्तानिदिव्यानिएतान्याभरणानिच

शृंगारंरूपसौभाग्यंवस्त्रालंकारभूषणम् २८
तन्मेत्वंकारणंभद्रेकथयस्वाविशंकिता
एवंसंभाष्यतांभार्यांविररामद्विजोत्तमः २९
सुमनोवाच-
शृणुकांतसमायातःकश्चिद्देववरोत्तमः
श्वेतनागसमारूढोदिव्याभरणभूषितः ३०
दिव्यगंधानुलिप्तांगोदिव्याश्चर्यसमन्वितः
नजानेकोहिदेवोसौविप्रगंधर्वसेवितः ३१
स्तूयमानःसमायातोदेवगंधर्वचारणैः
योषितःपुण्यरूपाढ्यारूपशृंगारसंयुताः ३२
सर्वाभरणशोभाढ्याःसर्वाःपूर्णमनोरथाः
ताभिःसहसमक्षंमेपुरुषेणमहात्मना ३३
चतुष्कंपूरितंरत्नैःसर्वशोभासमन्वितम्
तत्राहमासनेपुण्येस्थापिताब्राह्मणैःकिल ३४
वस्त्रालंकारभूषांमेददुस्तेसर्वएवहि
वेदमंगलगीतैस्तुशास्त्रगीतैश्चपुण्यदैः ३५
अभिषिक्तास्मितैःसर्वैरंतर्धानंपुनर्गताः
मामेवंपरितःसर्वेपुनरूचुर्द्विजोत्तम ३६
तवगेहंवयंसर्वेवसिष्यामःसदैवहि
शुचिर्भवसुकल्याणिभर्त्रासार्द्धंसदैवहि ३७
एवमुक्त्वागताःसर्वेएवंदृष्टंमयैवहि
तयायत्कथितंवृत्तंसमाकर्ण्यमहामतिः ३८
पुनश्चिंतांप्रपन्नोऽसौकिमिदंदेवनिर्मितम्
विचिन्तयित्वाथतदासोमशर्मामहामतिः ३९
ब्रह्मकर्मणिसंयुक्तःसाधर्म्यंधर्ममुत्तमम्
तस्माद्गर्भंमहाभागादधारव्रतशालिनी ४०
तेनगर्भेणसादेवीअधिकंशुशुभेतदा
संदीप्तपुत्रसंयुक्ततेजोज्वालासमन्विता ४१
साहिजज्ञेचतपसातनयंदेवसन्निभम्
अंतरिक्षेततोनेदुर्देवदुंदुभयस्तदा ४२

शंखान्दध्मुर्महादेवागंधर्वाललितंजगुः
अप्सरसस्तथासर्वाननृतुस्तास्तदाकिल ४३
अथब्रह्मासुरैःसार्द्धंसमायातोद्विजोत्तमः
चकारनामतस्यैवसुव्रतेतिसमाहितः ४४
नामकृत्वाततोदेवाजग्मुःसर्वेमहौजसः
गतेषुतेषुदेवेषुसोमशर्मासुतस्यच ४५
जातकर्मादिकंकर्मचकारद्विजसत्तमः
जातेपुत्रेमहाभागेसुव्रतेदेवनिर्मिते ४६
तस्यगेहेमहालक्ष्मीर्धनधान्यसमाकुला
गजाश्वमहिषीगावःकांचनंरत्नमेवच ४७
यथाकुबेरभवनंशुशुभेधनसंचयैः
तत्सोमशर्मणोगेहंतथैवपरिराजते ४८
ध्यानपुरायादिकंकर्मचकारद्विजसत्तमः
तीर्थयात्रांगतोविप्रोनानापुरायसमाकुलः ४९
अन्यानियानिपुरायानिदानानिद्विजसत्तमः
चकारतत्रमेधावीज्ञानपुरायसमन्वितः ५०
एवंसाधयतेधर्मंपालयेच्चपुनःपुनः
पुत्रस्यजातकर्मादिकर्माणिद्विजसत्तमः ५१
विवाहंकारयामासहर्षेणमहताकिल
पुत्रस्यपुत्राःसंजाताःसगुणालक्षणान्विताः ५२
सत्यधर्मतपोपेतादानधर्मरताःसदा
सतेषांपुरायकर्माणिसोमशर्माचकारह ५३
पौत्राणांतुमहाभागस्तेषांसुखेनमोदते
सर्वंसौख्यंचसंभुज्यजरारोगविवर्जितः ५४
पंचविंशाब्दिकोयद्वत्तद्वत्कायंतुतस्यहि
सूर्यतेजःप्रतीकाशःसोमशर्मामहामतिः ५५
साचापिशुशुभेदेवीसुमनापुरायमंगलैः
पुत्रपौत्रैर्महाभागादानव्रतैश्चसंयमैः ५६
अतिभातिविशालाक्षीपुरायैःपतिव्रतादिभिः
तारुरायेनसमायुक्तायथाषोडशवार्षिकी ५७

मोदमानौमहात्मानौदंपतीचारुमंगलौ
हर्षेणचसमायुक्तौपुण्यात्मानौमहोदयौ ५८
एवंतयोस्तुवृत्तांतंपुण्याचारसमन्वितम्
सुव्रतस्यप्रवक्ष्यामिव्रतचर्यांद्विजोत्तमाः ५९
यथातेनसमाराध्यनारायणमनामयम् ६०

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडेएंद्रेसुमनोपाख्यानेसुव्रतोत्पत्तिर्नामविंशोऽध्यायः २०

## एकविंशतितमोऽध्यायः

सूतउवाच–
एकदाव्यासदेवोऽसौब्रह्माणंजगतःपतिम्
सुव्रताख्यानकंसर्वंपप्रच्छातीवविस्मितः १
व्यासउवाच–
लोकात्मँल्लोकविन्यासदेवदेवमहाप्रभो
सुव्रतस्याथचरितंश्रोतुमिच्छामिसांप्रतम् २
ब्रह्मोवाच–
पाराशर्यमहाभागश्रूयतांपुण्यमुत्तमम्
सुव्रतस्यसुविप्रस्यतपश्चर्यासमन्वितम् ३
सुव्रतोनाममेधावीबाल्यादपिसचिंतयन्
गर्भेनारायणंदेवंदृष्टवान्पुरुषोत्तमम् ४
सपूर्वकर्माभ्यासेनहरेर्ध्यानंगतस्तदा
शंखचक्रधरंदेवंपद्मनाभंसुपुण्यदम् ५
ध्यायतेचिंतयेत्सोहिगीतेज्ञानेप्रपाठने
एवंदेवंहरिंध्यायन्सदैवद्विजसत्तमः ६
क्रीडत्येवंसदाडिंभैःसार्द्धंचबालकोत्तमः
बालकानांस्वकंनामहरेश्चैवमहात्मनः ७
चकारसहिमेधावीपुण्यात्मापुण्यवत्सलः
समाह्वयतिवैमित्रंहरेर्नाम्नामहामतिः ८
भोभोःकेशवएह्येहिएहिमाधवचक्रधृक्
क्रीडस्वचमयासार्धंत्वमेवपुरुषोत्तम ९

सममेवंप्रगंतव्यमावाभ्यांमधुसूदन
एवमेवसमाह्वानंनामभिश्चहरेर्द्विजः १०
क्रीडनेपठनेहास्येशयनेगीतप्रेक्षणे
यानेचह्यासनेध्यानेमंत्रेज्ञानेसुकर्मसु ११
पश्यत्येवंवदत्येवंजगन्नाथंजनार्दनम्
सध्यायतेतमेकंहिविश्वनाथंमहेश्वरम् १२
तृणेकाष्ठेचपाषाणेशुष्केसार्द्रेहिकेशवम्
पश्यत्येवंसधर्मात्मागोविंदंकमलेक्षणम् १३
आकाशेभूमिमध्येतुपर्वतेषुवनेषुच
जलेस्थलेचपाषाणेजीवेष्वेवमहामतिः १४
नृसिंहंपश्यतेविप्रःसुव्रतःसुमनासुतः
बालक्रीडांसमासाद्यरमत्येवंदिनेदिने १५
गीतैश्चगायतेकृष्णंसुरागैर्मधुराक्षरैः
तालैर्लयसमायुक्तैःसुस्वरैर्मूर्च्छनान्वितैः १६
सुव्रतउवाच-
ध्यायंतिवेदविदुषःसततंसुरारिंयस्यांगमध्येसकलंहिविश्वम्
योगेश्वरंसकलपापविनाशनंचव्रजामिशरणंमधुसूदनस्य १७
लोकेषुयोहिसकलेष्वनुवर्ततेयोलोकाश्चयस्मिन्निवसंतिसर्वे
दोषैर्विहीनमखिलैःपरमेश्वरंतंतस्यैवपादयुगलंसततंनमामि १८
नारायणंगुणनिधानमनंतवीर्यंवेदांतशुद्धमतयःप्रपठंतिनित्यम्
संसारसागरमनंतमगाधदुर्गमुत्तारणार्थमखिलंशरणंप्रपद्ये १९
योगींद्रमानससरोवरराजहंसंशुद्धंप्रभावमखिलंसततंहियस्य
तस्यैवपादयुगलंविमलंविशालंदीनस्यमेऽसुररिपोकुरुतस्यरक्षाम् २०
ध्यायेऽखिलस्यभुवनंस्वपतिंचदेवंदुःखांधकारदलनार्थमिहैवचंद्रम्
लोकस्यपालनकृतेपरिणीतधर्मंसत्यान्वितंसकललोकगुरुंसुरेशम् २१
गायाम्यहंसुरसगीतकतालमानैःश्रीरंगमेकमनिशंभुवनस्यदेवम्
अज्ञाननाशकमलंचदिनेशतुल्यमानंदकंदमखिलंमहिमासमेतम् २२
संपूर्णमेवममृतस्यकलानिधानंतंगीतकौशलमनन्यरसैःप्रगाये
युक्तंस्वयोगकरणैःपरमार्थदृष्टिंविश्वंसपश्यतिचराचरमेवनित्यम् २३
पश्यंतिनैवयमिहाथसुपापलोकास्तंकेशवंशरणमेवमुपैतिनित्यम् २४

कराभ्यांवाद्यमानस्तुतालंतालसमन्वितम्
गीतेनगायतेकृष्णंबालकैःसहमोदते २५
एवंक्रीडारतोनित्यंबालभावेनवैतदा
सुव्रतःसुमनापुत्रोविष्णुध्यानपरायणः २६
क्रीडमानंप्राहमातासुव्रतंचारुलक्षणम्
भोजनंकुरुमेवत्सक्षुधात्वांपरिपीडयेत् २७
तामुवाचपुनःप्राज्ञःसुमनामातरंपुनः
महामृतेनतृप्तोस्मिहरिध्यानरसेनवै २८
भोजनासनमारूढोमिष्टमन्नंप्रपश्यति
इदमन्नंस्वयंविष्णुरात्माह्यन्नंसमाश्रितः २९
आत्मरूपेणयोविष्णुरनेनान्नेनतृप्यतु
क्षीरसागरसंवासोयस्यैवपरिसंस्थितः ३०
जलेनानेनपुण्येनतृप्तिमायातुकेशवः
तांबूलचंदनैर्गंधैरेभिःपुष्पैर्मनोहरैः ३१
आत्मस्वरूपेणतृप्तस्तृप्तिमायातुकेशवः
शयनेयातिधर्मात्मातदाकृष्णंप्रचिंतयेत् ३२
योगनिद्रान्वितंकृष्णंतमहंशरणंगतः
भोजनाच्छादनेष्वेवमासनेशयनेद्विजः ३३
चिंतयेद्वासुदेवंतंतस्मैसर्वंप्रकल्पयेत्
तारुण्यंप्राप्यधर्मात्माकामभोगान्विहायवै ३४
सयुक्तःकेशवध्यानेवैडूर्यपर्वतोत्तमे
यत्रसिद्धेश्वरंलिंगंवैष्णवंपापनाशनम् ३५
रुद्रमोंकारसंज्ञंचध्यात्वाचैवमहेश्वरम्
ब्रह्मणावर्द्धितंदेवंनर्मदादक्षिणेतटे ३६
सिद्धेश्वरंसमाश्रित्यतपोभावंव्यचिंतयत् ३७

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे-
एंद्रेसुमनोपाख्यानेएकविंशोऽध्यायः २१

द्वाविंशतितमोऽध्यायः

व्यासउवाच-

प्रश्नमेकंमहाभागकरिष्येसांप्रतंवद
त्वयैवपूर्वमुक्तंहिसुव्रतंचप्रतीश्वरम् १
पूर्वाभ्यासेनसंध्यायन्नारायणमनामयम्
कस्यांज्ञात्यांसमुत्पन्नःसुव्रतःपूर्वजन्मनि २
तन्मेत्वंसांप्रतंब्रूहिकथमाराधितोहरिः
अनेनापिसदेवेशकोयंपुरायसमाविलः ३
ब्रह्मोवाच-
वैदिशेनगरेपुरायेसर्वऋृद्धिसमाकुले
तत्रराजामहातेजाऋृतध्वजसुतोबली ४
तस्यात्मजोमहाप्राज्ञोरुक्मभूषणविश्रुतः
संध्यावलीतस्यभार्याधर्मपत्नीयशस्विनी ५
तस्यांपुत्रंसमुत्पाद्यसआत्मसदृशंततः
तस्यधर्मांगदंनामचकारनृपनंदनः ६
सर्वलक्षणसंपन्नःपितृभक्तिपरायणः
रुक्मांगदस्यतनयोयोयंभगवतांवरः ७
पितुःसौख्याययेनापिमोहिन्यैतुशिरोददे
वैष्णवेनचधर्मेणपितृभक्त्यातुतुस्यहि ८
सुप्रसन्नोहृषीकेशःसकायोवैष्णवंपदम्
नीतस्तुसर्वधर्मज्ञोवैष्णवःसात्वतांवरः ९
धर्मांगदोमहाप्राज्ञःप्रज्ञाज्ञानविशारदः
तत्रस्थोवैमहाप्राज्ञोधर्मोसौधर्मभूषणः १०
दिव्यान्मनोनुगान्भोगान्मोदमानःप्रभुंजति
पूर्णेयुगसहस्रांतेधर्मोवैधर्मभूषणः ११
तस्मात्पदात्परिभ्रष्टोविष्णोश्चैवप्रसादतः
सुव्रतोनाममेधावीसुमनानंदवर्द्धनः १२
सोमशर्मस्यतनयःश्रेष्ठोभगवतांवरः
तपश्चचारमेधावीविष्णुध्यानपरोभवत् १३
कामक्रोधादिकान्दोषान्परित्यज्यद्विजोत्तमः
संयम्यचैन्द्रियंवर्गंतपस्तेपेनिरंतरम् १४
वैडूर्यपर्वतश्रेष्ठेसिद्धेश्वरस्यसन्निधौ

एकीकृत्यमनश्चायंसंयोज्यविष्णुनासह १५
एवंवर्षशतंस्थित्वाध्यानेनास्यमहात्मनः
सुप्रसन्नोजगन्नाथःशंखचक्रगदाधरः १६
तस्मैवरंददावन्यंसलक्ष्म्यासहकेशवः
भोभोःसुव्रतधर्मात्मन्बुध्यस्वविबुधांवर १७
वरंवरयभद्रंतेकृष्णोऽहतेसमागतः
एवमाकर्ण्यमेधावीविष्णोर्वाक्यमनुत्तमम् १८
हर्षेणमहताविष्टोदृष्ट्वादेवंजनार्दनम्
बद्धांजलिपुटोभूत्वाप्रणाममकरोत्तदा १९
सुव्रतउवाच-
संसारसागरमतीवमहासुदुःखजालोर्मिभिर्विविधमोहचयैस्तरंगैः
संपूर्णमस्तिनिजदोषगुणैस्तुप्राप्तस्तस्मात्समुद्धरजनार्दनमाशुदीनम् २०
कर्मांबुदेमहतिगर्जतिवर्षतीवविद्युल्लतोल्लसतिपातकसंचयैर्मे
मोहांधकारपटलैर्ममनास्तिदृष्टिर्दीनस्यतस्यमधुसूदनदेहिहस्तम् २१
संसारकाननघनंबहुदुःखवृक्षैःसंसेव्यमानमपिमोहमयैश्चसिंहैः
संदीप्तमस्तिकरुणाबहुवह्नितेजःसंतप्यमानमनिशंपरिपाहिकृष्ण २२
संसारवृक्षमतिजीर्णमपीहउच्चंमायासुकंदकरुणाबहुदुःखशाखम्
जायादिसंगच्छदनंफलितंमुरारेतत्राधिरूढपतितंभगवन्हिरक्ष २३
दुःखानलैर्विविधमोहमयैःसुधूमैःशोकैर्वियोगमरणांतिकसन्निभैश्च
दग्धोस्मिकृष्णसततंममदेहिमोक्षंज्ञानांबुदैःसमभिषिंचसदैवमांत्वम् २४
घोरांधकारपटलेमहतीवगर्तेसंसारनाम्निपतितंसततंहिकृष्ण
त्वंसत्कृपोममहिदीनभयातुरस्यतस्माद्विरज्यशरणंतवआगतोस्मि २५
त्वामेवयेनियतमानसभावयुक्ताध्यायंतिज्ञानमनसापदवींलभंते
नत्वैवपादयुगलंचमहासुपुण्यंयद्देवकिन्नरगणाःपरिचिंतयंति २६
नान्यंवदामिनभजामिनचिंतयामित्वत्पादपद्मयुगलंसततंनमामि
कामंत्वमेवममपूरयमेद्यकृष्णादूरेणयातुममपातकसंचयस्ते २७
दासोस्मिदेवतवकिंकरजन्मजन्मत्वत्पादपद्मयुगलंसततंस्मरामि २८
यदिकृष्णप्रसन्नोसिदेहिमेसुवरंप्रभो
मन्मातापितरौकृष्णसकायौमंदिरेनय २९
आत्मनश्चमहादेवमयासहनसंशयः

श्रीकृष्णउवाच–
एवंतेपरमंकार्यंभविष्यतिनसंशयः ३०
तस्यतुष्टोहृषीकेशोभक्त्यातस्यप्रतोषितः
प्रयातौवैष्णवंलोकंदाहप्रलयवर्जितौ ३१
सुव्रतेनसमंतौद्वौसुमनासोमशर्मकौ
यावत्कल्पद्वयंप्राप्तंतावत्ससुव्रतोद्विजः ३२
ब्भुजेबुभुजेदिव्याँल्लोकांश्चैवमहामते
देवकार्यार्थमत्रैवकाश्यपस्यगृहंपुनः ३३
अवतीर्णोमहाप्राज्ञोवचनात्तस्यचक्रिणः
एंद्रंपदंहियोभुंक्तेविष्णोश्चैवप्रसादतः ३४
वसुदत्तेतिविख्यातःसर्वदेवैर्नमस्कृतः
एंद्रंपदंहियोभुंक्तेसांप्रतंवासवोदिवि ३५
एतत्तेसर्वमाख्यातंसृष्टिसंबंधकारणम्
अन्यदेवंप्रवक्ष्यामियदेवपरिपृच्छसि ३६
व्यासउवाच–
धर्माङ्गदोमहाप्राज्ञोरुक्माङ्गदसुतोबली
आद्येकृतयुगेजातःसृष्टिकालेसवासवः ३७
तत्कथंदेवदेवेशअन्योधर्माङ्गदोभुवि
अन्योरुक्मांङ्गदोराजाकिंचायंत्रिदशाधिपः ३८
एतन्मेसंशयंजातंतद्भवान्वक्तुमर्हति
ब्रह्मोवाच–
हंततेकथयिष्यामिसर्वसंदेहनाशनम् ३९
देवस्यलीलासृष्ट्यर्थेवर्ततेद्विजसत्तम
यथावाराश्चपक्षाश्चमासाश्चऋतवोयथा ४०
संवत्सराश्चमनवस्तथायांतियुगाःपुनः
पश्चात्कल्पःसमायातिव्रजाम्येवंजनार्दनम् ४१
अहमेवमहाप्राज्ञमयियांतिचराचराः
पुनःसृजतियोगात्मापूर्ववद्विश्वमेवहि ४२
पुनरहंपुनर्वेदाःपुनस्तेदेवताद्विजाः
तथाभूपाश्चतेसर्वेस्वचरित्रसमाविलाः ४३

प्रभवंतिमहाभागविद्वांस्तत्रनमुह्यति
पूर्वकल्पेमहाभागोयथारुक्मांगदोनृपः ४४
तथाधर्मांगदश्चायंसंजातःख्यातिमान्द्विजः
रामादयोमहाप्राज्ञाययातिर्नहुषस्तथा ४५
मन्वादयोमहात्मानःप्रभवंतिलयंतिच
ऐंद्रंपदंप्रभुंजंतिराजानोधर्मतत्पराः ४६
यथाधर्मांगदोवीरःप्रभुंजतिमहत्पदम्
एवंवेदाश्चदेवाश्चपुराणाःस्मृतिपूर्वकाः ४७
एतत्तुसर्वमाख्यातंतवाग्रेद्विजसत्तम
चरितंसुव्रतस्याथपुण्यंसुगतिदायकम् ४८
अव्यक्तंतुमहाभागप्रब्रवीमितवाग्रतः ४९

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडेऐंद्रेसुव्रतो-
पाख्यानंनामद्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

ऋषयऊचुः-
विचित्रेयंकथापुण्याधन्यायशोविधायिनी
सर्वपापहराप्रोक्ताभवतावदतांवर १
सृष्टिसंबंधमेतन्नस्तद्भवान्वक्तुमर्हति
पूर्वमेवयथासृष्टिर्विस्तरात्सूतनंदन २
सूतउवाच-
विस्तरेणप्रवक्ष्यामिसृष्टिसंहारकारणम्
श्रुतमात्रेणयस्यापिनरःसर्वज्ञतांव्रजेत् ३
हिरण्यकश्यपेनापिव्यापितंभुवनत्रयम्
तपसाराध्यप्रब्रह्माणंवरंप्राप्तंसुदुर्लभम् ४
तस्माद्देवान्महाभागादमरत्वंतथैवच
देवाँल्लोकान्ससंव्याप्यप्रभुत्वंस्वयमर्जितम् ५
ततोदेवाःसगंधर्वामुनयोवेदपारगाः
नागाश्चकिन्नराःसिद्धयक्षाश्चैवतथापरे ६
ब्रह्माणंतुपुरस्कृत्यजग्मुर्नारायणंप्रभुम्

क्षीरसागरसंसुप्तंयोगनिद्रांगतंप्रभुम् ७
तंसंबोध्यमहास्तोत्रैर्देवाःप्रांजलयस्तथा
संबुद्धेसतिदेवेशेवृत्तंतस्यदुरात्मनः ८
आचचक्षुर्महाप्राज्ञसमाकर्ण्यजगत्पतिः
नृसिंहरूपमास्थायहिरण्यकशिपुंव्यहन् ९
पुनर्वाराहरूपेणहिरण्याक्षोमहाबलः
उद्धृतावसुधापुण्याअसुरोघातितस्तदा १०
अन्यांश्चघातयामासदानवान्घोरदर्शनान्
एवंचैतेषुनष्टेषुदानवेषुमहत्सुच ११
अन्येषुतेषुनष्टेषुदितिपुत्रेषुवैतदा
पुनःस्थानेषुप्राप्तेषुदेवेषुचमहत्सुच १२
यज्ञेष्वेवप्रवृत्तेषुसर्वेषुधर्मकर्मसु
सुस्थेषुसर्वलोकेषुसादितिर्दुःखपीडिता १३
पुत्रशोकेनसंतप्ताहाहाभूताविचेतना
भर्तारंसूर्यसंकाशंतपस्तेजःसमन्वितम् १४
दातारंचमहात्मानंभर्तारंकश्यपंतदा
भक्त्याप्रणम्यविप्रेन्द्रतमुवाचमहामतिम् १५
भगवन्नष्टपुत्राहंकृतादेवेनचक्रिणा
दैतेयादानवाःसर्वेदेवैश्चैवनिपातिताः १६
पुत्रशोकानलेनाहंसंतप्तामुनिसत्तम
ममानंदकरंपुत्रंसर्वतेजोहरंविभो १७
सुबलंचारुसर्वांगंदेवराजसमप्रभम्
बुद्धिमंतंसुसर्वज्ञंज्ञातारंसर्वपंडितम् १८
तपस्तेजःसमायुक्तंसबलंचारुलक्षणम्
ब्रह्मण्यंज्ञानवेत्तारंदेवब्राह्मणपूजकम् १९
जेतारंसर्वलोकानांममानंदकरंद्विज
सर्वलक्षणसंपन्नंपुत्रंमेदेहित्वंविभो २०
एवमाकर्ण्यवैतस्याःकश्यपोवाक्यमुत्तमम्
कृपाविष्टमनास्तुष्टोदुःखितायाद्विजोत्तम २१
तामुवाचमहाभागकृपणांदीनमानसाम्

तस्याःशिरसिसंन्यस्यस्वहस्तंभावतत्परः २२
भविष्यतिमहाभागेयादृशोवांछितःसुतः
एवमुक्त्वाजगामासौमेरुंगिरिवरोत्तमम् २३
तपस्तेपेनिरालंबःसाधयन्परमव्रतः
एतस्मिन्नंतरेसातुदधारगर्भमुत्तमम् २४
सादितिःसर्वधर्मज्ञाचारुकर्मामनस्विनी
शतवर्षप्रमाणंसाशुचिस्वांताबभूवह २५
तयावैजनितःपुत्रोब्रह्मतेजःसमन्वितः
अथकश्यपआयातोहर्षेणमहतान्वितः २६
चकारनाममेधावीतस्यपुत्रस्यसत्तमः
बलमित्यब्रवीत्पुत्रंनामतःसदृशोमहान् २७
एवंनामचकाराथव्रतबंधंचकारसः
प्राहपुत्रमहाभागब्रह्मचर्यंप्रसाधय २८
एवमेवंकरिष्यामितववाक्यंद्विजोत्तम
वेदस्याध्ययनंकुर्यांब्रह्मचर्येणसत्तम २९
एवंवर्षशतंसाग्रंगतंतस्यतपस्यतः
मातुःसमक्षमायातस्तपस्तेजःसमन्वितः ३०
तपोवीर्यमयंदिव्यंब्रह्मचर्यंमहात्मनः
दितिःपश्यतिपुत्रस्यहर्षेणमहतान्विता ३१
तमुवाचमहात्मानंबलंपुत्रंतपस्विनम्
मेधाविनंमहात्मानंप्रज्ञाज्ञानविशारदम् ३२
त्वयिजीवतिमेधाविन्प्रजीवंतिसुताामम
हिरण्यकशिपाद्यास्तेयेहताश्चक्रपाणिना ३३
वैरंसाधयमेवत्सजहिदेवान्रिपून्रणे
सादनुस्तमुवाचेदंबलंपुत्रंमहाबलम् ३४
आदाविंद्रंहिदेवेंद्रंद्रुतंसूदयपुत्रक
पश्चाद्देवानिपात्यंतांततोगरुडवाहनः ३५
तयोराकर्ण्यसादेवीअदितिःपतिदेवता
दुःखेनमहताविष्टापुत्रमिंद्रमभाषत ३६
दितिपुत्रोमहाकायोवर्द्धतेब्रह्मतेजसा

देवानांहिवधार्थायतपस्तेपेनिरंजने ३७
एवंजानीहिदेवेशयदिक्षेममिहेच्छसि
एवमाकर्र्यतद्वाक्यंसमातुःपाकशासनः ३८
चिंतामवापदुःखेनमहतींदेवराट्तदा
महाभयेनसंत्रस्तश्चिंतयामासवैततः ३९
कथमेनंहनिष्यामिदेवधर्मविदूषकम्
इतिनिश्चित्यदेवेशोबलस्यनिधनंप्रति ४०
एकदाहिबलःसोपिसंध्यार्थंसिंधुमाश्रितः
कृष्णाजिनेनदिव्येनदंडकाष्ठेनराजितः ४१
अमलेनापिपुरायेनब्रह्मचर्येणतेनसः
सागरस्योपकंठेतंसंध्यासनमुपागतम् ४२
जपमानंसुशांतंतंददृशेपाकशासनः
वज्रेणतेनदिव्येनताडितोदितिनंदनः ४३
बलंनिपतितंदृष्ट्वागतसत्वंगतंभुवि
हर्षेणमहताविष्टोदेवराएमुमुदेतदा ४४
एवंनिपात्यतंदैत्यंदितिनंदनमेवच
राज्यंचकारधर्मात्मासुखेनपाकशासनः ४५

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडेबल-
दैत्यवधोनामत्रयोविंशोऽध्यायः २३

## चतुर्विंशतितमोऽध्यायः

सूतउवाच-
हतंश्रुत्वादितिःपुत्रंसुबलंबलमेवच
रुदितंकरुणंकृत्वाहाहाकष्टंभृशंमम १
एवंसुकरुणंकृत्वाबहुकालंतपस्विनी
सागताकश्यपंकांतंतमुवाचयशस्विनी २
तवपुत्रोमहापापइंद्रःसुरगणेश्वरः
सागरोपगतंदृष्ट्वाबलंमेब्रह्मलक्षणम् ३
वज्रेणघातयामाससंध्यामास्यंतमेवहि
एवंश्रुत्वाततःक्रुद्धोमरीचितनयस्तदा ४

क्रोधेनमहताविष्टःप्रजज्वालेववह्निना
अवलुंच्यजटामेकांशुच्यग्नौसद्विजोत्तमः ५
इंद्रस्यैववधार्थायपुत्रमुत्पादयाम्यहम्
तस्मात्कुंडात्समुत्पन्नोहुताशनमुखादपि ६
कृष्णांजनचयोपेतःपिंगाक्षोभीषणाकृतिः
दंष्ट्राकरालवक्त्रांतोजगतांभयदायकः ७
महाचर्वरिकोघोरःखड्गचर्मधरस्तथा
सर्वांगतेजसादीप्तोमहामेघोपमोबली ८
उवाचकश्यपंविप्रमादेशोममदीयताम्
कस्मादुत्पादितोविप्रभवताकारणंवद ९
तमहंसाधयिष्यामिप्रसादात्तवसुव्रत
कश्यपउवाच-
अस्यामनोरथंपुत्रपूरयस्वममैवहि १०
अदित्यास्त्वंमहाप्राज्ञजहिइंद्रंदुरात्मकम्
निहतेदेवराजेहिएंद्रंपदंप्रभुंक्ष्वच ११
एवंतेनसमादिष्टःकश्यपेनमहात्मना
वृत्रस्तुउद्यमंचक्रेतस्येंद्रस्यवधायच १२
धनुर्वेदस्यचाभ्यासंसचक्रेपौरुषान्वितः
बलंवीर्यंतथाक्षात्रंतेजोधैर्यसमन्वितम् १३
दृष्ट्वाहितस्यदैत्यस्यसहस्राक्षोभयातुरः
उपायंचिंतितंतस्यवृत्रस्यापिदुरात्मनः १४
वधार्थंदेवदेवेनसमाहूयमहामुनीन्
सप्तर्षीन्प्रेषयामासवृत्रंदैत्येश्वरंप्रति १५
भवंतस्तत्रगच्छंतुयत्रवृत्रःसतिष्ठति
संधिंकुर्वंतुवैतेनसार्द्धंममुनीश्वराः १६
एवंतेनसमादिष्टामुनयःसप्ततेतदा
वृत्रासुरंततःप्रोचुःसहस्राक्षप्रचालिताः १७
सख्यंकर्तुंप्रयच्छेत्सक्रियतांदैत्यसत्तम
ऋषयःसप्ततत्त्वज्ञाऊचुर्वृत्रंमहाबलम् १८
सहस्राक्षोमहाप्राज्ञोभवतासहसत्तम

मैत्रमिच्छतिवैकर्तुंतत्कथंनकरोषिकिम् १९
अर्धमैंद्रंपदंवीरसत्वंभुंन्दवसुखेनवै
वर्तत्वर्द्धेनइंद्रस्तुअसुरादेवतास्तथा २०
सुखंवर्ततुतेसर्वेवैरंचैवविसृज्यवै
वृत्रउवाच-
यदिसत्येनदेवेंद्रोमैत्रमिच्छतिसत्तमः २१
सत्यमाश्रित्यचैवाहंकरिष्येनात्रसंशयः
छद्मचैवंपुरस्कृत्यइंद्रोद्रोहंसमाचरेत् २२
तदाकिंक्रियतेविप्राइत्यर्थेप्रत्ययंहिकिम्
ऋषयस्त्विंद्रमाचख्युरित्यर्थंप्रत्ययंवद २३
तन्नस्त्वंसत्यतांब्रूहियदिसख्यमिहेच्छसि
इंद्रउवाच-
यद्यऽसत्येनवर्तामिभवद्भिःसहछद्मना २४
ब्रह्महत्यादिकैःपापैर्लिप्येहंनात्रसंशयः
छद्मचैवंपुरस्कृत्यइंद्रोद्रोहंसमाचरेत् २५
ब्रह्महत्यादिकैःपापैर्लिप्येहंनात्रसंशयः
इत्युवाचमहाप्राज्ञत्वामेवंसपुरंदरः २६
एतेनप्रत्ययेनापिसख्यंकुरुमहामते
वृत्रउवाच-
भवतांशिष्टमार्गेणसत्येनानेनतस्यच २७
मैत्रमेवंकरिष्यामितेनसार्द्धंद्विजोत्तमाः
वृत्रमिंद्रस्यसंस्थानंनीतंब्राह्मणपुङ्गवैः २८
इन्द्रस्तमागतंदृष्ट्वावृत्रंमित्रार्थमुद्यतः
सिंहासनात्समुत्थायअर्घमादायसत्वरः २९
ददौतस्मैसधर्मात्मावृत्रायद्विजसत्तम
अर्धंभुंन्दवमहाप्राज्ञएंद्रमेतन्महत्पदम् ३०
वर्तितव्यंसुखेनापिआवाभ्यांदैत्यसत्तम
एवंविश्वासयन्दैत्यंवृत्रमैत्रेणवैतदा ३१
गतेषुतेषुविप्रेषुस्वस्थानंद्विजसत्तम
छिद्रंपश्यतिदुष्टात्मावृत्रस्यापिसदैवहि ३२

सावधानत्वमिंद्रोपिदिवारात्रौप्रचिंतयेत्
तस्यच्छिद्रंनपश्येतवृत्रस्यापिमहात्मनः ३३
उपायंचिंतयामासतस्यैववधहेतवे
रंभासंप्रेषितातेनमोहयस्वमहासुरम् ३४
येनकेनाप्युपायेनयथाहत्वालभेसुखम्
तथाकुरुष्वकल्याणिसंमोहायसुरद्विषः ३५

वनंपुण्यंमहादिव्यंपुण्यपादपसेवितम्
बहुवृक्षफलोपेतंमृगपक्षिसमाकुलम् ३६
विमानमंदिरैर्दिव्यैःसर्वत्रपरिशोभितम्
दिव्यगंधर्वसंगीतंभ्रमराकुलितंसदा ३७
कोकिलानांरुतैःपुण्यैःसर्वत्रमधुरायतैः
शिखिसारंगनादैश्चसर्वत्रसुसमाकुलम् ३८
दिव्यैस्तुचंदनैर्वृक्षैःसर्वत्रसमलंकृतम्
वापीकुंडतडागैश्चजलपूर्णैर्मनोहरैः ३९
कमलैःशतपत्रैश्चपुष्पितैःसमलंकृतम्
देवगंधर्वसंसिद्धैश्चारणैश्चैवकिन्नरैः ४०
मुनिभिः शुशुभेदिव्यैर्दिव्योद्यानवरेणच
अप्सरोगणसंकीर्णंनानाकौतुकमंगलैः ४१
हेमप्रासादसंबाधंदंडच्छत्रैश्चचामरैः
कलशैश्चपताकाभिःसर्वत्रसमलंकृतम् ४२
वेदध्वनिसमाकीर्णंगीतध्वनिसमाकुलम्
एवंनंदनमासाद्यसारंभाचारुहासिनी ४३
अप्सरोभिःसमंतत्रक्रीडत्येवंविलासिनी
सूतउवाच-
एकदातुसवृत्रोवैकालाकृष्टोगतोवनम् ४४
कतिभिर्दानवैःसार्द्धंमुदयापरयायुतः
अलक्ष्येभ्रमतेपार्श्वंतस्यैवचमहात्मनः ४५
देवराजोपिविप्रेंद्रश्छिद्रान्वेषीद्विषांकिल
सहिवृत्रोमहाप्राज्ञोविश्वस्तःसर्वकर्मसु ४६

इंद्रंमित्रंपरंजानन्भयंचक्रेनतस्यसः
भ्रममाणोवनंपश्येत्सर्वत्रपरमंशुभम् ४७
सुरम्यंकौतुकवनंवनितागणसंकुलम्
चंदनस्यापिवृक्षस्यछायांशीतांसुपुगयदाम् ४८
समाश्रित्यविशालाक्षीरंभातत्रप्रदीव्यति
सखीभिस्तुमहाभागादोलारूढायशस्विनी ४९
गायतेसुस्वरंगीतंसर्वविश्वप्रमोहनम्
तत्रवृत्रःसमायातःकामाकुलितमानसः ५०
दोलारूढांसमालोक्यरंभांचारुसुलोचनाम् ५१

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडेवृत्र-
वंचनंनामचतुर्विंशोऽध्यायः २४

## पञ्चविंशतितमोऽध्यायः

सूतउवाच-
इयंहिकागायतिचारुलोचनाविलासभावैःपरिविश्वमेव
अतीवबालाशुशुभेमनोहरासंपूर्णभावैःपरिमोहयेज्जनम् १
दृष्ट्वासरंभांकमलायताक्षींपीनस्तनींचर्चितकुंकुमांगीम्
पद्माननांकामगृहंममैषानोवारतिश्चारुमनोहरेयम् २
संपूर्णभावांपरिरूपयुक्तांकामांगशीलामतिशीलभावाम्
यास्याम्यहंवश्यमिहैवअस्यामनोभवेनाद्यइहैवप्रेषितः ३
इतीवदैत्यःसुविचिंतयान्वितःकामेनमुग्धोबहुकालनोदितः
समातुरस्तत्रजगामसत्वरमुवाचतांदीनमनाःसुलोचनाम् ४
कस्यासिवासुंदरिकेनप्रेषिताकिंनामतेपुगयतमंवदस्वमे
तवैवरूपेणमहातितेजसामुग्धोस्मिबालेममवश्यतांव्रज ५
एवमुक्ताविशालाक्षीवृत्रंकामाकुलंप्रति
अहंरंभामहाभागक्रीडार्थंवनमुत्तमम् ६
सखीसार्धंसमायातानंदनंवनमुत्तमम्
त्वंतुकोवाकिमर्थंहिममपार्श्वंसमागतः ७
वृत्रउवाच-
श्रूयतामभिधास्यामियोहंबालेसमागतः

हुताशनात्समुत्पन्नःकश्यपस्यसुतःशुभे ८
सखाहंदेवदेवस्यइंद्रस्यापिवरानने
एंद्रंपदंवरारोहेअर्धंमेभुक्तिमागतम् ९
अहंवृत्रःकथंदेविमामेवंनतुविंदसि
त्रैलोक्यंवशमायातंयस्यैववरवर्णिनि १०
अहंशरणमायातःकामाद्रक्षवरानने
भजस्वमांविशालाक्षिकामेनाकुलितंप्रिये ११
रंभोवाच-
वशगाहंतवैवाद्यभविष्यामिनसंशयः
यंयंवदाम्यहंवीरतंतंकार्यंत्वयैवहि १२
एवमस्तुमहाभागेतंतंसर्वंकरोम्यहम्
एवंसंबंधकंकृत्वातयासहमहाबलः १३
तस्मिन्वनेमहापुण्येरेमेदानवसत्तमः
तस्यागीतेननृत्येनहास्येनललितेनच १४
अतिमुग्धोमहादैत्यःसतस्याःसुरतेनच
तमुवाचमहाभागंवृत्रंदानवसत्तमम् १५
सुरापानंकुरुष्वेहपिबस्वमधुमाधवीम्
तामुवाचविशालाक्षींरंभांशशिनिभाननाम् १६
पुत्रोहंब्राह्मणस्यापिवेदवेदांगपारगः
सुरापानंकथंभद्रेकरिष्यमिविनिंदितम् १७
तयातुरंभयादेव्याप्रीत्यादत्तासुराहठात्
तस्यादाक्षिण्यभावेनसुरापानंकृतंतदा १८
अतीवमुग्धंसुरयाज्ञानभ्रष्टोयदाभवत्
तदंतरेसुरेंद्रेणवज्रेणनिहतस्तदा १९
ब्रह्महत्यादिकैःपापैः सलिप्तोवृत्रहाततः
ब्राह्मणास्तुततःप्रोचुरिंद्रपापंकृतंत्वया २०
अस्माद्वाक्यात्तुविश्वस्तोवृत्रोनाममहाबलः
हतोविश्वासभावेनएवंपापंत्वयाकृतम् २१
इंद्रउवाच-
येनकेनाप्युपायेनहंतव्योरिःसदैवहि

देवब्राह्मणहंतारंयज्ञानांधर्मकंटकम् २२
निहतंदानवंदुष्टंत्रैलोक्यस्यापिनायकम्
तदर्थंकुपितायूयमेतन्न्यायस्यलक्षणम् २३
विचारमेवंकर्त्तव्यंभवद्भिर्द्विजसत्तमाः
पश्चात्कोपंप्रकर्त्तव्यमन्यायंममचिंत्यताम् २४
एवंसंबोधिताविप्राइंद्रेणापिमहात्मना
ब्रह्मादिभिःसुरैःसर्वैर्बोधितास्तेचसत्तमाः २५
जग्मुःस्वस्थानमेवंहिनिहतेधर्मकंटके २६
इति श्रीपद्मपुराणेभूमिखंडेवृत्रासुरवधोनामपंचविंशोऽध्यायः २५

## षड्विंशोऽध्यायः

सूतउवाच-
तंपुत्रंनिहतंश्रुत्वासादितिर्दुःखपीडिता
पुत्रशोकेनतेनैवसंदग्धाद्विजसत्तमाः १
पुनरूचेमहात्मानंकश्यपंमुनिपुंगवम्
इंद्रस्यापिसुदुष्टस्यवधार्थंद्विजसत्तम २
ब्रह्मतेजोमयंतीव्रंदुःसहंसर्वदैवतैः
पुत्रैकंदीयतांकांतसुप्रियाहंयदाविभो ३
कश्यपउवाच-
निहतौबलवृत्रौचममपुत्रौमहाबलौ
अघमाश्रित्यदेवेनइंद्रेणापिदुरात्मना ४
तस्यैवचवधार्थायपुत्रमेकंददाम्यहम्
वर्षाणांतुशतैकंत्वंशुचिर्भवयशस्विनि ५
एवमुक्त्वासयोगींद्रोहस्तंशिरसिवैतदा
दत्त्वादित्यासहैवासौगतोमेरुंतपोवनम् ६
तपस्ततापसादेवीतपोवननिवासिनी
शुचिष्मतीसदाभूत्वापुत्रार्थाद्विजसत्तम ७
ततोदेवःसहस्राक्षोज्ञात्वाउद्यममेवच
दित्याश्चैवमहाभागअंतरप्रेक्षकोऽभवत् ८
पंचविंशाब्दिकोभूत्वादेवराड्दैवतोपमः

ब्राह्मणस्यचरूपेणतस्याश्चांतिकमागतः ९
सतांप्रणम्यधर्मात्मामातरंतपसान्विताम्
तयोक्तस्तुसहस्राक्षोभवान्कोद्विजसत्तम १०
तामुवाचसहस्राक्षःपुत्रोऽहतवशोभने
ब्राह्मणोवेदविद्वांश्चधर्मंजानामिभामिनि ११
तपसस्तवसाहाय्यंकरिष्येनात्रसंशयः
शुश्रूषतिसतांदेवींमातरंतपसान्विताम् १२
तमिंद्रंसानजानातिआगतंदुष्टकारिणम्
धर्मपुत्रंविजानातिशुश्रूषंतंदिनेदिने १३
अंगंसंवाहयेद्देव्याःपादौप्रक्षालयेत्ततः
पत्रंमूलंफलंतत्रवल्कलाजिनमेवच १४
ददात्येवंसधर्मात्मातस्यैदित्यैसदैवहि
भक्त्यासंतोषितातस्यसंतुष्टातमभाषत १५
पुत्रेजातेमहापुण्येइंद्रेचनिहतेसति
कुरुराज्यंमहाभागपुत्रेणममदैवकम् १६
एवमस्तुमहाभागेतेप्रसादाद्भविष्यति
तस्याश्चैवांतरंप्रेप्सुरभवत्पाकशासनः १७
ऊनेवर्षशतेचास्याददर्शांतरमच्युतः
अकृत्वापादयोःशौचंदितिःशयनमाविशत् १८
शय्यांतेसाशिरःकृत्वामुक्तकेशातिविह्वला
निद्रामाहारयामासतस्याःकुक्षिंप्रविश्यह १९
वज्रपाणिस्ततोगर्भंसप्तधातंन्यकृंतत
वज्रेणतीक्ष्णधारेणरुरोदउदरेस्थितः २०
सगर्भस्तत्रविप्रेंद्राइंद्रहस्तगतेनवै
रोदमानंमहागर्भंतमुवाचपुनःपुनः २१
शतक्रतुर्महातेजामारोदीरित्यभाषत
सप्तधाकृतवाञ्छक्रस्तंगर्भंदितिजंपुनः २२
एकैकंसप्तधाच्छित्त्वारुदमानंसदेवराट्
एवंवैमरुतोजातास्तेतुदेवामहौजसः २३
यथाइंद्रेणतेप्रोक्ताबभूवुर्नामभिस्ततः

अतिवीर्यमहाकायास्तीव्रतेजःपराक्रमाः २४
एकोनावैबभूवुस्तेपंचाशन्मरुतस्ततः
मरुतोनामतेख्याताइंद्रमेवसमाश्रिताः २५
भूतानामेवसर्वेषांरोचयंतिगणंमहत्
निकायेषुनिकायेषुहरिःप्रादात्प्रजापतिः २६
क्रमशस्तानिराज्यानिपृथुपूर्वाणितानिवै
सदेवःपुरुषःकृष्णःसर्वव्यापीजगद्गुरुः २७
तपोजिष्णुर्महातेजाःसर्वएकःप्रजापतिः
पर्जन्यःपावकःपुण्यःसर्वात्मासर्वएवहि २८
तस्यसर्वमिदंपुण्यंजगत्स्थावरजंगमम्
भूतसर्गमिमंसम्यग्जानतोद्विजसत्तम २९
नावृत्तिभयमस्तीहपरलोकभयंकुतः
इमांसृष्टिंमहापुण्यांसर्वपापहरांशुभाम् ३०
यःशृणोतिनरोभक्त्यासर्वपापैःप्रमुच्यते
सहिधन्यश्चपुण्यश्चसहिसत्यसमन्वितः ३१
यःशृणोतिइमांसृष्टिंसयातिपरमांगतिम्
सर्वपापविशुद्धात्माविष्णुलोकंसगच्छति ३२
इति श्रीपद्मपुराणेभूमिखंडेमरुदुत्पत्तिर्नामषड्विंशोऽध्यायः २६

## सप्तविंशोऽध्यायः

सूतउवाच–
सप्रभुःसर्वलोकेशोह्यभिषिच्यततोनृपम्
पृथुंवेनस्यतनयंसर्वराज्येमहाप्रभुम् १
महाबाहुंमहाकायंयथेंद्रंचसुरेश्वरम्
क्रमेणापिततोब्रह्माराज्यानिचविचार्यवै २
यद्यस्यापिभवेद्योग्यंदातुंतदुपचक्रमे
वृद्धाणांब्राह्मणानांचग्रहर्क्षाणांतथैवच ३
सोमंराज्येसोभ्यषिंचत्तपसांचमहामतिः
धर्माणांधर्मयज्ञानांपुण्यानांपुण्यतेजसाम् ४
अपांमध्येतथादेवंतीर्थानांहितथैवच

वरुणंसोभिषिच्यैवरत्नानांचद्विजोत्तम ५
अन्येषांसर्वयक्षाणांराज्येवैश्रवणंपुनः
विष्णुमेवमहाप्राज्ञमादित्यानांपितामहः ६
राज्येसंस्थापयामासजनताहितहेतवे
सर्वेषामेवपुण्यानांदक्षमेवप्रजापतिम् ७
समर्थंसर्वधर्मज्ञंप्रजापतिगणेश्वरम्
प्रह्लादंसर्वधर्मज्ञंसहिराज्येन्यरूपयत् ८
दैत्यानांदानवानांचविष्णुतेजःसमन्वितम्
यमंवैवस्वतंधर्मंपैत्र्येराज्येभिषिच्यच ९
यक्षराक्षसभूतानांपिशाचोरगसर्पिणाम्
योगिनीनांचसर्वासांवैतालानांमहात्मनाम् १०
कंकालानांहिसर्वेषांकूष्मांडानांतथैवच
पार्थिवानांचसर्वेषांगिरिशंशूलपाणिनम् ११
पर्वतानांहिसर्वेषांहिमवंतंमहागिरिम्
नदीनांचतडागानांवापिकानांतथैवच १२
कुंडानांकूपराज्येहिदिव्येषुचसुरेश्वरः
सागरंस्थापितंपुण्यंसर्वतीर्थमनुत्तमम् १३
गंधर्वाणांतुसर्वेषांराज्येपुण्येतथैवच
चित्ररथंततोब्रह्माअभिषिच्यसुरेश्वरः १४
नागानांपुण्यवीर्याणांवासुकिंचचतुर्मुखः
सर्पाणांतुतथाराज्येअभिषिच्यसतक्षकम् १५
वारणानांततोराज्येएरावणमसिंचत
अश्वानांचैवसर्वेषामुच्चैःश्रवसमेवच १६
पक्षिणांचैवसर्वेषावैनतेयमथापिसः
मृगाणांचततोराज्येब्रह्मासिंहमथादिशत् १७
गोवृषंतुगवांमध्येअभिषिच्यप्रजापतिः
वनस्पतीनांसर्वेषांप्लक्षमेवपितामहः १८
एवंराज्यानिसर्वाणिसंस्थाप्यचपितामहः
दिशापालांस्ततोब्रह्मास्थापयामाससत्तमः १९
वैराजस्यतथापुत्रंपूर्वस्यांदिशिसत्तमः

सुधन्वानंदिशःपालंराजानंसोभ्यषिंचत २०
दक्षिणस्यांमहात्मानंकर्दमस्यप्रजापतेः
पुत्रंशंखपदंनामराजानंसोभ्यषिंचत २१
पश्चिमायांतथाब्रह्मावरुणस्यप्रजापतेः
पुत्रंचपुष्करंनामसोऽभ्यषिंचत्प्रजापतिः २२
उत्तरस्यांदिशिब्रह्मनलकूबरमेवच
एवंचैवाभ्यषिंचच्चदिक्पालान्समहौजसः २३
यैरियंपृथिवीसर्वासप्तद्वीपासपत्तना
यथाप्रदेशमद्यापिधर्मेणप्रतिपाल्यते २४
पृथुश्चैवंमहाभागःसोभिषिक्तोनराधिपः
राजसूयादिभिःसर्वैरभिषिक्तोमहामखैः २५
विधिनावेददृष्टेनराजराज्येमहीपतिः
चाक्षुषेनाम्निसंपुण्येऽतीतेचमहौजसि २६
मन्वंतरेमहाभागदेवपुण्यहितैषिणि
ततोवैवस्वतायैवमनवेराज्यमादिशत् २७
विस्तरंचापिव्याख्यास्येपृथोश्चैवमहात्मनः
यदिमामेवविप्रेन्द्रशुश्रूषसिअतंद्रितः २८
एतदेवमधिष्ठानंमहत्पुण्यंप्रकीर्तितम्
सर्वेष्वेवपुराणेषुएतद्धिनिश्चितंसदा २९
पुण्यंयशस्यमायुष्यंस्वर्गवासकरंशुभम्
धन्यंपवित्रमायुष्यंपुत्रदंवृद्धिदायकम् ३०
यःशृणोतिनरोभक्त्याभावध्यानसमन्वितः
अश्वमेधफलंतस्यजायतेनात्रसंशयः ३१

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे-
राज्याभिषेकोनामसप्तविंशोऽध्यायः २७

## अष्टाविंशतितमोऽध्यायः

ऋषयऊचुः-
विस्तरेणसमाख्याहिजन्मतस्यमहात्मनः
पृथोश्चैवमहाभागश्रोतुकामावयंपुनः १

राज्ञातेनयथादुग्धाइयंधात्रीमहात्मना
पुनर्देवैश्चपितृभिर्मुनिभस्तत्त्ववेदिभिः २
यथादैत्यैश्चनागैश्चयथायक्षैर्यथाद्रुमैः
शैलैश्चैवपिशाचैश्चगंधर्वैःपुरायकर्मभिः ३
ब्राह्मणैश्चतथासिद्धैराक्षसैर्भीमविक्रमैः
पूर्वमेवयथादुग्धाअन्यैश्चसुमहात्मभिः ४
तेषामेवहिसर्वेषांविशेषंपात्रधारणम्
क्षीरस्यापिविधिंब्रूहिविशेषंचमहामते ५
वेनस्यापिनृपस्यैवपाणिरेवमहात्मनः
ऋषिभिर्मथितःपूर्वंसकस्मादिहकारणात् ६
क्रुद्धश्चैवमहापुरायैःसूतपुत्रवदस्वनः
विचित्रेयंकथापुरयासर्वपापप्रणाशिनी ७
श्रोतुकामामहाभागतृप्तिर्नैवप्रजायते
सूतउवाच-
वैन्यस्यहिपृथोश्च्वतस्यविस्तरमेवच ८
जन्मवीर्यंतथाक्षेत्रंपौरुषंद्विजसत्तमाः
प्रवक्ष्यामियथासर्वंचरित्रंतस्यधीमतः ९
शुश्रूषध्वंमहाभागामामेवंद्विजसत्तमाः
अभक्तायनवक्तव्यमश्रद्धायशठायच १०
सुमूर्खायसुमोहायकुशिष्यायतथैवच
श्रद्धाहीनायकूटायसर्वनाशायमाद्विजाः ११
अन्यथापठतेयोहिनिरयंचप्रयातिहि
भवंतोभावसंयुक्ताःसत्यधर्मपरायणाः १२
भवतामग्रतःसर्वंचरित्रंपापनाशनम्
संप्रवक्ष्याम्यशेषेणशृणुध्वंद्विजसत्तमाः १३
स्वर्ग्यंयशस्यमायुष्यंधन्यंवेदैश्चसंमितम्
रहस्यमृषिभिःप्रोक्तंप्रवक्ष्यामिद्विजोत्तमाः १४
यश्चैनंकीर्तयेन्नित्यंपृथोर्वैन्यस्यविस्तरम्
ब्राह्मणेभ्योनमस्कृत्वानसशोचेत्कृताकृतम् १५
सप्तजन्मार्जितंपापंश्रुतमात्रेणनश्यति

ब्राह्मणोवेदविद्वांश्चक्षत्रियोविजयीभवेत् १६
वैश्योधनसमृद्धःस्याच्छूद्रःसुखमवाप्नुयात्
एवंफलंसमाप्नोतिपठनाच्छ्रवणादपि १७
पृथोर्जन्मचरित्रंचपवित्रंपापनाशनम्
धर्मगोप्तामहाप्राज्ञोवेदशास्त्रार्थकोविदः १८
अत्रिवंशसमुत्पन्नःपूर्वमत्रिसमःप्रभुः
स्रष्टासर्वस्यधर्मस्यअंगोनामप्रजापतिः १९
यआसीत्तस्यपुत्रोवैवेनोनामप्रजापतिः
धर्ममेवंपरित्यज्यसर्वदैवप्रवर्तते २०
मृत्योःकन्यामहाभागासुनीथानामनामतः
तांतुअंगोमहाभागःसुनीथामुपयेमिवान् २१
तस्यामुत्पादयामासवेनंधर्मप्रणाशनम्
मातामहस्यदोषेणवेनःकालात्मजात्मजः २२
निजधर्मंपरित्यज्यअधर्मनिरतोभवत्
कामाल्लोभान्महामोहात्पापमेवसमाचरत् २३
वेदाचारमयंधर्मंपरित्यज्यनराधिपः
अन्ववर्ततपापेनमदमत्सरमोहितः २४
वेदाध्यायंविनालोकेप्रावर्तंततदाजनाः
निःस्वाध्यायवषट्काराःप्रजास्तस्मिन्प्रजापतौ २५
प्रवृत्तंनपपुःसोमंहुतंयज्ञेषुदेवताः
इत्युवाचसदुष्टात्माब्राह्मणान्प्रतिनित्यशः २६
नाध्येतव्यंनहोतव्यंनदेयंदानमेवच
नयष्टव्यंनहोतव्यमितितस्यप्रजापतेः २७
आसीत्प्रतिज्ञाक्रूरेयंविनाशेप्रत्युपस्थिते
अहमिज्यश्चयष्टाचयज्ञश्चेतिपुनःपुनः २८
मयियज्ञाविधातव्यामयिहोतव्यमित्यपि
इत्यब्रवीत्सदावेनोह्यहंविष्णुःसनातनः २९
अहंब्रह्माअहंरुद्रोमित्रइंद्रःसदागतिः
अहमेवप्रभोक्ताचहव्यंकव्यंनसंशयः ३०
अथतेमुनयःक्रुद्धावेनंप्रतिमहाबलाः

ऊचुस्तेसंगताःसर्वेराजानंपापचेतनम् ३१
ऋषयऊचुः-
राजाहिपृथिवीनाथःप्रजांपालयतेसदा
धर्ममूर्तिःसराजेंद्रतस्माद्धर्मंहिरक्षयेत् ३२
वयंदीक्षांप्रवेक्ष्यामोयज्ञेद्वादशवार्षिकीम्
अधर्मंकुरुमायागेनैषधर्मःसतांगतिः ३३
कुरुधर्मंमहाराजसत्यंपुण्यंसमाचर
प्रजाहंपालयिष्यामिइतितेसमयःकृतः ३४
तांस्तथाब्रुवतःसर्वान्महर्षीनब्रवीत्तदा
वेनःप्रहस्यदुर्बुद्धिरिममर्थमनर्थकम् ३५
वेनउवाच-
स्रष्टाधर्मस्यकश्चान्यःश्रोतव्यंकस्यवामया
श्रुतवीर्यतपःसत्येमयावाकःसमोभुवि ३६
प्रभवंसर्वभूतानांधर्माणांचविशेषतः
संमूढानविदुर्नूनंभवंतोमांविचेतसः ३७
इच्छन्दहेयंपृथिवींप्लावयेयंजलैस्तथा
द्यांभुवंचैवरुंधेयंनात्रकार्याविचारणा ३८
यदानशक्यतेमोहादवलेपाच्चपार्थिव
अपनेतुंतदावेनंततःक्रुद्धामहर्षयः ३९
विस्फुरंतंतदावेनंबलाद्गृह्यततोरुषा
वेनस्यतस्यसव्योरुंममंथुर्जातमन्यवः ४०
कृष्णांजनचयोपेतमतिह्रस्वंविलक्षणम्
दीर्घास्यंचविरूपाक्षंनीलकंचुकवर्चसम् ४१
लंबोदरंव्यूढकर्णमतिभीतंदुरोदरम्
ददृशुस्तेमहात्मानोनिषीदेत्यब्रुवंस्ततः ४२
तेषांतद्वचनंश्रुत्वानिषसादभयातुरः
पर्वतेषुवनेष्वेवतस्यवंशःप्रतिष्ठितः ४३
निषादाश्चकिराताश्चभिल्लानाहलकास्तथा
भ्रमराश्चपुलिदाश्चयेचान्येम्लेच्छजातयः ४४
पापाचारास्तुतेसर्वेतस्मादंगात्प्रजज्ञिरे

अथतेऋषयःसर्वेप्रसन्नमनसस्ततः ४५
गतकल्मषमेवंतंजातंवेनंनृपोत्तमम्
ममंथुर्दक्षिणंपाणिंतस्यैवचमहात्मनः ४६
मथितेतस्यपाणौतुसंजातंस्वेदमेवहि
पुनर्ममंथुस्तेविप्रादक्षिणंपाणिमेवच ४७
सुकरात्पुरुषोजज्ञेद्वादशादित्यसन्निभः
तप्तकांचनवर्णांगोदिव्यमाल्यांबरावृतः ४८
दिव्याभरणशोभांगोदिव्यगंधानुलेपनः
मुकुटेनार्कवर्णेनकुंडलाभ्यांविराजते ४९
महाकायोमहाबाहूरूपेणाप्रतिमोभुवि
खड्गबाणधरोधन्वीकवचीचमहाप्रभुः ५०
सर्वलक्षणसंपन्नःसर्वालंकारभूषणः
तेजसारूपभावेनसुवर्णैश्चमहामतिः ५१
दिविइंद्रोयथाभातिभुविवेनात्मजस्तथा
तस्मिञ्जातेमहाभागेदेवाश्चऋषयोमलाः ५२
उत्सवंचक्रिरेसर्वेवेनस्यतनयंप्रति
दीप्यमानःस्ववपुषासाक्षादग्निरिवोज्ज्वलः ५३
आद्यमाजगवंनामधनुर्गृह्यमहावरम्
शरान्दिव्यांश्चरक्षार्थेकवचंचमहाप्रभम् ५४
जातेसतिमहाभागेपृथौवीरेमहात्मनि
संप्रहृष्टानिभूतानिसमस्तानिद्विजोत्तम ५५
सर्वतीर्थानितोयानिपुण्यानिविविधानिच
तस्याभिषेकेविप्रेंद्राःसर्वएवप्रतस्थिरे ५६
पितामहाद्यादेवास्तुभूतानिविविधानिच
स्थावराणिचराण्येवअभ्यषिंचन्नराधिपम् ५७
महावीरंप्रजापालंपृथुमेवद्विजोत्तम
पृथुर्वैन्योराजराज्येअभिगम्यचराचरैः ५८
देवैर्विप्रैस्तथासर्वैरभिषिक्तोमहामनाः
राज्ञांसमधिराज्येवैपृथुर्वैन्यःप्रतापवान् ५९
तस्यपित्राप्रजाःसर्वाःकदानैवानुरंजिताः

तेनानुरंजिताः सर्वामुमुदिरेसुखेनवै ६०
अनुरागात्तस्यवीरस्यनामराजेत्यजायत
प्रयातस्यसुवीरस्यसमुद्रस्यद्विजोत्तम ६१
आपस्तस्तंभिरेसर्वाभयात्तस्यमहात्मनः
दुर्गंमार्गंविलोप्यैवसुमार्गंपर्वताददुः ६२
ध्वजभंगंनचक्रुस्तेगिरयः सर्वएवते
अकृष्टपच्यापृथिवीसर्वत्रकामधेनवः ६३
पर्जन्यःकामवर्षीचवेदयज्ञान्महोत्सवान्
कुर्वंतिब्राह्मणाः सर्वेक्षत्रियाश्चतथापरे ६४
सर्वकामफलावृक्षास्तस्मिञ्छासतिपार्थिवे
नदुर्भिक्षंनचव्याधिर्नाकालमरणंनृणाम् ६५
सर्वेसुखेनजीवंतिलोकाधर्मपरायणाः
तस्मिञ्छासतिदुर्धर्षेराजराजेमहात्मनि ६६
एतस्मिन्नेवकालेतुयज्ञेपैतामहेशुभे
सूतसूत्यांसमुत्पन्नः सौम्येहनिमहात्मनि ६७
तस्मिन्नेवमहायज्ञेजज्ञेप्राज्ञोऽथमागधः
पृथोः स्तवार्थंतौतत्रसमाहूतौमहर्षिभिः ६८
सूतस्यलक्षणंवक्ष्येमहापुण्यंद्विजोत्तमाः
शिखासूत्रेणसंयुक्तोवेदाध्ययनतत्परः ६९
सर्वशास्त्रार्थवेत्तासावग्निहोत्रमुपासते
दानाध्ययनसंपन्नोब्रह्माचारपरायणः ७०
देवानांब्राह्मणानांचपूजनाभिरतः सदा
याचकस्तावकैः पुण्यैर्वेदमंत्रैर्यजेत्किल ७१
ब्रह्माचारपरोनित्यंसंबंधंब्राह्मणैः सह
एवंसमागधोजज्ञेवेदाध्ययनवर्जितः ७२
बंदिनश्चारणाः सर्वेब्रह्माचारविवर्जिताः
ज्ञेयास्तेचमहाभागाः स्तावकाः प्रभवंतिते ७३
स्तवनार्थमुभौसृष्टौनिपुणौसूतमागधौ
तावूचुर्ऋषयः सर्वेस्तूयतामेषपार्थिवः ७४
कर्मैतदनुरूपंचयादृशोयंनराधिपः

तावूचतुस्तदासर्वांस्तानृषीन्बंदिमागधौ ७५
ग्रावांदेवानृषींश्चैवप्रीणयावःस्वकर्मभिः
नचास्यविद्वोवैकर्मनतथालक्षणंयशः ७६
कर्मणायेनकुर्यावःस्तोत्रमस्यमहात्मनः
जानीवस्तन्नविप्रेंद्राग्रविज्ञातगुणस्यहि ७७
भविष्यैस्तैर्गुणैःपुरायैःस्तोतव्योयंनरोत्तमः
कृतवान्यानिकर्माणिपृथुरेवमहायशाः ७८
ऊचुस्तेमुनयःसर्वेगुणान्दिव्यान्महात्मनः
सत्यवाञ्ज्ञानसंपन्नोबुद्धिमान्ख्यातविक्रमः ७९
सदाशूरोगुणग्राहीपुरयवांस्त्यागवान्गुणी
धार्मिकःसत्यवादीचयज्ञानांयाजकोत्तमः ८०
प्रियवाक्सत्यवादीचधान्यवान्धनवान्गुणी
गुणज्ञःसगुणग्राहीधर्मज्ञःसत्यवत्सलः ८१
सर्वगःसर्ववेत्ताचब्रह्मरायोवेदवित्सुधीः
प्रज्ञावान्सुस्वरश्चैववेदवेदांगपारगः ८२
धातागोप्ताप्रजानांसविजयीसमरांगणे
राजसूयादिकानांतुयज्ञानांराजसत्तमः ८३
ग्राहर्ताभूतलेचैकःसर्वधर्मसमन्वितः
एतेगुणाग्रस्यचांगेभविष्यंतिमहात्मनः ८४
ऋषिभिस्तौनियुक्तौतुकुर्वाणौसूतमागधौ
गुणैश्चैवभविष्यैश्चस्तोत्रंतस्यमहात्मनः ८५
तदाप्रभृतिवैलोकास्तवैस्तुष्टामहामते
पुरतश्चभविष्यंतिदातारःस्तावनैर्गुणैः ८६
ततःप्रभृतिलोकेस्मिन्स्तवेषुद्विजसत्तमाः
ग्राशीर्वादाःप्रयुज्यंतेतेषांद्रविणमुत्तमम् ८७
सूतायमागधायैवबंदिनेचमहोदयम्
चारणायततःप्रादात्तैलंगंदेशमुत्तमम् ८८
पृथुःप्रसादाद्धर्मात्माहैहयंदेशमेवच
रेवातीरेपुरंकृत्वास्वनाम्नानृपनंदनः ८९
ब्राह्मणेभ्योद्विजश्रेष्ठयजन्दातापृथुःपुरा

सर्वज्ञंसर्वदातारंधर्मवीर्यंनरोत्तमम् ९०
तंददृशुःप्रजाःसर्वामुनयश्चतपोमलाः
ऊचुःपरस्परंपुरायाएषराजामहामतिः ९१
देवादीनांवृत्तिदाताअस्माकंचविशेषतः
प्रजानांपालकश्चैववृत्तिदोहिभविष्यति ९२
इयंधात्रीमहाप्राज्ञाउप्तंबीजंपुराकिल
जीवनार्थंप्रजाभिस्तुग्रासयित्वास्थिराभवत् ९३
ततःपृथुंद्विजश्रेष्ठप्रजाःसमभिदुद्रुवुः
विधत्स्वेतिसुवृत्तिंनोमुनीनांवचनंतदा ९४
ग्रासयित्वातदान्नानिपृथ्वीजातासुनिश्चला
भयंप्रजानांसुमहत्सदृष्ट्वाराजसत्तमः ९५
महर्षिवचनात्सोपिप्रगृह्यसशरंधनुः
अभ्यधावतवेगेनपृथ्वद्यंक्रुद्धोनराधिपः ९६
कौंजरंरूपमास्थायभयात्तस्यतुमेदिनी
वनेषुदुर्गदेशेषुगुप्ताभूत्वाचचारसा ९७
नपश्यतिमहाप्राज्ञःकुरूपंद्विजसत्तमाः
आचचक्षुर्महाप्राज्ञंकुंजररूपमास्थिता ९८
ततःकुंजररूपांतामभिदुद्रावपार्थिवः
ताड्यमानाचसातेननिशितैर्मार्गणैस्ततः ९९
हरिरूपंसमास्थायपलायनपराभवत्
हरेरूपंसमास्थायअभिदुद्रावपार्थिवः १००
सोतिक्रुद्धोमहाप्राज्ञोरोषारुणसुलोचनः
सुबाणैर्निशितैस्तीक्ष्णैराजघानसमेदिनीम् १०१
आकुलव्याकुलाजाताबाणाघातहतातदा
माहिषंरूपमास्थायपलायनपराभवत् १०२
अभ्यधावतवेगेनबाणपाणिर्धनुर्धरः
सागौर्भूत्वाद्विजश्रेष्ठास्वर्गमेवगताध्रुवम् १०३
ब्रह्मणःशरणंप्राप्ताविष्णोश्चैवमहात्मनः
रुद्रादीनांचदेवानांत्राणस्थानंनविंदति १०४
अलभंतीभृशंत्राणंवैन्यमेवान्वविंदत

तस्यपार्श्वंपुनःप्राप्ताबाणघातसमाकुला १०५
बद्धांजलिपुटाभूत्वातंपृथुंवाक्यमब्रवीत्
त्राहित्राहीतिराजेंद्रसाराजानमभाषत १०६
अहंधात्रीमहाभागसर्वाधारावसुंधरा
निहतायांमयिनृपनिहतंलोकसप्तकम् १०७
कृतांजलिपुटाभूत्वापूज्यालोकैस्त्रिभिःसदा
उवाचचैनंराजानमवध्यास्त्रीसदानृप १०८
स्त्रीणांवधेमहत्पापंदृष्टमस्तिद्विजोत्तमैः
गवांवधेमहत्पापंदृष्टमस्तिद्विजोत्तमैः १०९
मयाविनामहाराजकथंधारयसेप्रजाः
अहंयदास्थिराराजंस्तदालोकाश्चराचराः ११०
स्थिरत्वंयांतितेसर्वेस्थिरीभूतायदाह्यहम्
मांविनातुइमेलोकाविनश्येयुश्चराचराः १११
ततःप्रजाविनश्येयुर्ममनाशेसमागते
कथंधारयिताचासिप्रजाराजन्मयाविना ११२
मयिलोकाःस्थिराराजन्मयेदंधार्यतेजगत्
मद्विनाशेविनश्येयुःप्रजाःसर्वानसंशयः ११३
नमामर्हसिवैहंतुंश्रेयश्चेत्त्वंचिकीर्षसि
प्रजानांपृथिवीपालशृणुदेववचोमम ११४
उपायैश्चमहाभागसुसिद्धिंयांत्युपक्रमाः
समालोक्यह्युपायंत्वंप्रजायेनधरिष्यति ११५
मांहत्वात्वंमहाराजधारणेपालनेसदा
पोषणेचमहाप्राज्ञमद्विनाहिकथंनृप ११६
धरिष्यसिप्रजांचेमांकोपंयच्छत्वमात्मनः
अन्नमयीभविष्यामिधरिष्यामिप्रजामिमाम् ११७
अहंनारीअवध्याचप्रायश्चित्तीभविष्यसि
अवध्यांतुस्त्रियंप्राहुस्तिर्यग्योनिगतामपि ११८
विचार्यैवंमहाराजनधर्मंत्यक्तुमर्हसि
एवंनानाविधैर्वाक्यैरुक्तोधात्र्यानराधिपः ११९
कोपमेनंमहाराजत्यजदारुणमेवहि

प्रसन्नेत्वयिराजेंद्रतदास्वस्थाभवाम्यहम् १२०
एवमुक्तस्तयाराजापृथुर्वैन्यःप्रजापतिः
तामुवाचमहाभागांधरित्रींद्विजसत्तमाः १२१
इति श्रीपद्मपुराणेभूमिखंडेपृथूपाख्यानेऽष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

पृथुरुवाच-
हतेचैवमहापापेएकस्मिन्पापचारिणि
लोकाःसुखेनजीवंतिसाधवःपुण्यदर्शिनः १
तस्मादेकंप्रहर्तव्यंपापिष्ठंपापचेतनम्
तस्मात्त्वांहिहनिष्यामिसर्वसत्त्वप्रणाशिनीम् २
त्वयाबीजानिसर्वाणिलुप्तान्येतानिसांप्रतम्
ग्रासंकृत्वास्थिरीभूत्वाप्रजांहत्वाक्वयास्यसि ३
हतेपापेदुराचारेसुखंजीवंतिसाधवः
तस्मात्पापंप्रहंतव्यंसत्यमेवंनसंशयः ४
पालितव्यंप्रयत्नेनयस्माद्धर्मःप्रवर्द्धते
भवत्यातुमहत्पापंप्रजासंक्षयकारकम् ५
एकस्यार्थेनयोहन्यादात्मनोवापरस्यवा
लोकोपतापकंहत्वानभवेत्तस्यपातकम् ६
सुखमेष्यंतिबहवोयस्मिंस्तुनिहतेशुभे
वसुधेनिहतेदुष्टेपातकंनोपपातकम् ७
प्रजानिमित्तंत्वामेवहनिष्यामिनसंशयः
यदिमेपुण्यसंयुक्तंवचनंनकरिष्यति ८
जगतोऽस्यहितार्थायसाधुचैववसुंधरे
हनिष्येत्वांशितैर्बाणैर्मद्वाक्यात्तुपराङ्मुखीम् ९
स्वीयेनतेजसाचैवपुण्यांत्रैलोक्यवासिनीम्
प्रजांचैवधरिष्यामिधर्मेणापिनसंशयः १०
मच्छासनंसमास्थायधर्मयुक्तंवसुंधरे
इमाःप्रजाश्चाज्ञयामेसंजीवयसदैवहि ११
एवंमेशासनंभद्रेश्चाद्ययर्हिकरिष्यसि

ततःप्रीतोऽस्मितेनित्यंगोपायिष्यामिसर्वदा १२
त्वामेवहिनसंदेहश्रन्येचैवनृपोत्तमाः
धेनुरूपेणसापृथ्वीबाणांचितकलेवरा १३
उवाचेदंपृथुंवैन्यंधर्माधारंमहामतिम्
धरगयुवाच-
तवादेशंमहाराजसत्यपुरयार्थसंयुतम् १४
प्रजानिमित्तमत्यर्थंविधास्यामिनसंशयः
उद्यमेनापिपुरयेनउपायेननरेश्वर १५
समारंभाःप्रसिद्ध्यंतिपुरयाश्चैवाप्युपक्रमाः
उपायंपश्यराजेंद्रयेनत्वंसत्यावान्भवेः १६
धारयेथाःप्रजाश्चेमायेनसर्वाःप्रवर्द्धये
संलग्नाश्चोत्तमाबाणाममांगेतेशिलाशिताः १७
समुद्धरस्वयंराजंश्छल्यंतिभृशमेवते
समांकुरुमहाराजतिष्ठेन्मयियथापयः १८
सूतउवाच-
धनुषोग्रेणताञ्छैलान्नानारूपान्गुरूंस्तथा
उत्सारयंस्ततःसर्वांसमरूपांचकारसः १९
तदाप्रभृतितेशैलावृद्धिमापुर्द्विजोत्तमाः
तस्याश्रंगात्स्वयंबाणान्स्वकीयान्नृपनंदनः २०
समुद्धृत्यततोवैन्यःप्रीतेनमनसातदा
गर्ताश्चकंदराश्चैवबाणाघातैःसमीकृताः २१
एवंपृथ्वद्यंसमांसर्वांचकारपुरयवर्द्धनः
समीकृत्यमहाभागोवत्संतस्याव्यकल्पयत् २२
मनुंस्वायंभुवंपूर्वंपरिचिंत्यपुनःपुनः
अतीतेष्वथसर्वेषुमन्वंतरेषुसत्तमाः २३
विषमत्वंगताभूमिःपंथानासीच्चकुत्रचित्
समानिविषमाणयेवंस्वयमासन्द्विजोत्तमाः २४
पूर्वंमनोश्चाक्षुषस्यप्राप्तेचैवांतरेतदा
जातेपूर्वविसर्गेचविषमेचधरातले २५
ग्रामाणांचपुराणांचपत्तनानांतथैवच

देशानांक्षेत्रपन्नानांमर्यादानहिदृश्यते २६
कृषिर्नैवनवाणिज्यंनगोरक्षाप्रवर्तते
नानृतंभाषतेकश्चिन्नलोभोनचमत्सरः २७
नाभिमानंचवैपापंनकरोतिकदाकिल
वैवस्वतस्यसंप्राप्तेग्रंतरेद्विजसत्तम २८
वैन्यस्यसंभवात्पूर्वंप्रजानामेवसंभवः
इमाःप्रजाद्विजाःसर्वानिवासंसमरोचयन् २९
क्वचिद्भूमौगिरौक्वापिनदीतीरेषुवैतदा
कुंजेषुसर्वतीर्थेषुसागरस्यतटेषुच ३०
निवासंचक्रिरेसर्वाःप्रजाःपुण्येनवैतदा
तासामाहारःसंजातःफलमूलमधुस्तथा ३१
महताकृच्छ्रेणतासामाहारश्चद्विजोत्तमाः
पृथुर्वैन्यःसमालोक्यप्रजानांकष्टमेवहि ३२
स्वायंभुवोमनुर्वत्सःकल्पितस्तेनभूभुजा
स्वपाणिःकल्पितस्तेनपात्रमेवंमहामते ३३
सपृथुःपुरुषव्याघ्रोदुदोहवसुधांतदा
सर्वसस्यमयंक्षीरंससर्वान्नंगुणान्वितम् ३४
तेनपुण्येनचान्नेनसुधाकल्पेनताःप्रजाः
तृप्तिंनयंतिदेवान्वैप्रजाःपितृंस्तथापरान् ३५
प्रसादात्तस्यवैन्यस्यसुखंजीवंतिताःप्रजाः
देवेभ्यश्चपितृभ्यश्चदत्वाचान्नंप्रजास्ततः ३६
ब्राह्मणेभ्योविशेषेणअतिथिभ्यस्तथैवच
पश्चाद्भुंजंतिपुण्यास्ताःप्रजाःसर्वाद्विजोत्तमाः ३७
यज्ञैश्चान्येयजंत्येवतर्पयंतिजनार्दनम्
तेनचान्नेनदेवेशंतृप्तिंगच्छंतिदेवताः ३८
पुनर्वर्षतिपर्जन्यःप्रेषितोमाधवेनच
तस्मात्पुण्यामहौषध्यःसंभवंतिसुपुण्यदाः ३९
सस्यजातानिसर्वाणिपृथुर्वैन्यःप्रजापतिः
तेनान्नेनप्रजाःसर्वावर्ततेद्यापिनित्यशः ४०
ऋृषिभिश्चैवमिलितैर्दुग्धाचेयंवसुंधरा

पुनर्विप्रैर्महाभाग्यैःसत्यवद्भिःसुरैस्तथा ४१
सोमोवत्सस्वरूपोभूद्दोग्धादेवगुरुःस्वयम्
ऊर्जंचीरंपयःकल्पंयेनजीवंतिचामराः ४२
तेषांसत्येनपुगयेनसर्वेजीवंतिजंतवः
सत्यपुगयेप्रवर्तंतेऋषिदुग्धावसुंधरा ४३
अथातःसंप्रवच्यामियधादुग्धाइयंधरा
पितृभिश्चपुरावत्सविधिनायेनवैतदा ४४
सुपात्रंराजतंकृत्वास्वधाचीरंसुधान्वितम्
परिकल्प्ययमंवत्संदोग्धाचांतकएवसः ४५
नागैःसर्पैस्ततोदुग्धातचकंवत्समेवच
अलाबुपात्रमादायविषंचीरंद्विजोत्तमाः ४६
नागानांतुतथादोग्धाधृतराष्ट्रःप्रतापवान्
सर्पानागाद्विजश्रेष्ठास्तेनवर्तंतिचातुलाः ४७
नागावर्ततितेनापिह्युत्युग्रेगाद्विजोत्तमाः
विषेगाघोररूपेगासर्पाश्चैवभयानकाः ४८
तेनैववर्तयंत्युग्रामहाकायामहाबलाः
तदाहारास्तदाचारास्तद्वीर्यास्तत्पराक्रमाः ४९
अथातःसंप्रवच्यामियथादुग्धावसुंधरा
असुरैर्दानवैःसर्वैःकल्पयित्वाद्विजोत्तमाः ५०
पात्रमत्रान्नसदृशमायसंसर्वकामिकम्
चीरंमायामयंकृत्वासर्वारातिविनाशनम् ५१
तेषामभूत्सवैवत्सोविरोचनःप्रतापवान्
ऋत्विग्द्विमूर्द्धादैत्यानांमधुर्दोग्धामहाबलः ५२
तयाहिमाययादैत्याःप्रवर्त्तंतेमहाबलाः
महाप्रज्ञामहाकायामहातेजःपराक्रमाः ५३
तद्बलंपौरुषंतेषांतेनजीवंतिदानवाः
तयैतेमाययाद्यापिसर्वमायाद्विजोत्तमाः ५४
प्रवर्तंतेमितप्रज्ञास्तेतदेषामिदंबलम्
तथातुदुग्धायचैःसासर्वाधारासुमेदिनी ५५
इतिशुश्रुमविप्रेंद्राःपुराकल्पेमहात्मभिः

अंतर्धानमयंचीरमयस्पात्रेसुविस्तरे ५६
वैश्रवणोमहाप्राज्ञस्तदावत्सःप्रकल्पितः
मणिधरस्यपितापुण्यःप्राज्ञोबुद्धिमतांवरः ५७
दोग्धारजतनाभस्तुतस्याश्चासीन्महामतिः
सर्वज्ञःसर्वधर्मज्ञोयक्षराजसुतोबली ५८
अष्टबाहुर्महातेजाद्विशीर्षःसुमहातपाः
यक्षावर्तंततेनापिसर्वदैवद्विजोत्तमाः ५९
पुनर्दुग्धाइयंपृथ्वीराक्षसैश्चमहाबलैः
तथाचैषापिशाचैश्चसातुरैर्दग्धवारिभिः ६०
उत्प्लुतंनृकपालंतंशावपात्रमयःकृतम्
सुप्रजांभोक्तुकामास्तेतीव्रकोपपराक्रमाः ६१
दोग्धारजतनाभस्तुतेषामासीन्महाबलः
सुमालीनामवत्सश्चशोणितंक्षीरमेवच ६२
रक्षांसियातुधानाश्चपिशाचाश्चमहाबलाः
यक्षास्तेनचजीवंतिभूतसङ्घाश्चदारुणाः ६३
गंधर्वैरप्सरोभिश्चपुनर्दुग्धावसुंधरा
कृत्वावत्संसुविद्वांसंतैश्चचित्ररथंपुनः ६४
दुदुहुःपद्मपात्रेतुगांधर्वंगीतसंकुलम्
सुरुचिर्नामगंधर्वस्तेषामासीन्महामतिः ६५
दोग्धापुण्यतमश्चैवतस्याश्चद्विजसत्तमाः
शुचिगीतंमहात्मानःसुक्षीरंदुदुहुस्तदा ६६
गंधर्वास्तेनजीवंतिअन्याश्चाप्सरसस्तथा
पर्वतैश्चमहापुण्यैर्दुग्धाचेयंवसुंधरा ६७
रत्नानिविविधान्येवओषधीश्चामृतोपमाः
वत्सश्चैवमहाभागोहिमवान्परिकल्पितः ६८
मेरुर्दोग्धाचसंजातःपात्रंकृत्वातुशैलजम्
तेनक्षीरेणसंवृद्धाःशैलाःसर्वेमहौजसः ६९
पुनर्दुग्धामहावृक्षैःपुण्यैःकल्पद्रुमादिभिः
पालाशंपात्रामानिन्युश्छिन्नदग्धप्ररोहणम् ७०
शालोदुदोहपुष्पांगःप्लक्षोवत्सोभवत्तदा

गुह्यकैश्चारणैःसिद्धैर्विद्याधरगणैस्तदा ७१
दुग्धाचेयंसर्वधात्रीसर्वकामप्रदायिनी
यंयमिच्छंतियेलोकाःपात्रवत्सविशेषणैः ७२
तैस्तैस्तेषांददात्येवत्तीरंसद्भावमीदृशम्
इयंधात्रीविधात्रीतुइयंश्रेष्ठावसुंधरा ७३
सर्वकामदुघाधेनुरियंपुरायैरलंकृता
इयंज्येष्ठाप्रतिष्ठातुइयंसृष्टिरियंप्रजा ७४
पावनीपुरायदापुरायासर्वसस्यप्ररोहिणी
चराचरस्यसर्वस्यप्रतिष्ठायोनिरेवच ७५
महालक्ष्मीरियंविद्यासर्वविश्वमयीसदा
सर्वकामदुघादोग्ध्रीसर्वबीजप्ररोहिणी ७६
सर्वेषांश्रेयसांमातासर्वलोकधराइयम्
पंचानामपिभूतानांप्रकाशोरूपमेवच ७७
असीदियंसमुद्रांतामेदिनीतिपरिश्रुता
मधुकैटभयोःकृत्स्नामेदसासमभिप्लुता ७८
तेनेयंमेदिनीनामप्रोच्यतेब्रह्मवादिभिः
ततोभ्युपगमात्प्राज्ञपृथोर्वैन्यस्यसत्तमाः ७९
दुहितृत्वमनुप्राप्तादेवीपृथ्वीतिचोच्यते
तेनराज्ञाद्विजश्रेष्ठाःपालितेयंवसुंधरा ८०
ग्रामाधारंगृहाणांचपुरपत्तनमालिनी
सस्याकरवतीस्फीतासर्वतीर्थमयीद्विजाः ८१
एवंवसुमतीदेवीसर्वलोकमयीसदा
एवंप्रभावोराजेंद्रःपुराणेपरिपठ्यते ८२
पृथुर्वैन्योमहाभागः सर्वकर्मप्रकाशकः
यथाविष्णुर्यथाब्रह्मायथारुद्रः सनातनः ८३
नमस्कार्यास्त्रयोदेवादेवाद्यैर्ब्रह्मवादिभिः
ब्राह्मणैर्ऋषिभिःसर्वैर्नमस्कार्योनृपोत्तमः ८४
वर्णानामाश्रमाणांयःस्थापकःसर्वलोकधृक्
पार्थिवैश्चमहाभागैःपार्थिवत्वमिहेप्सुभिः ८५
आदिराजोनमस्कार्यःपृथुर्वैन्यःप्रतापवान्

धनुर्वेदार्थिभिर्योधैःसदैवजयकांक्षिभिः ८६
नमस्कार्योमहाराजोवृत्तिदातामहीभृताम्
एवंपात्रविशेषाश्चमयाख्याताद्विजोत्तमाः ८७
वत्सानांसुविशेषाश्चदोग्धृणांभवदग्रतः
क्षीरस्यापिविशेषंतुयथोद्दिष्टंहिभूभुजा ८८
समाख्यातंतथाग्रेचभवतांवैयथार्थतः
धन्यंयशस्यमारोग्यंपुण्यंपापप्रणाशनम् ८९
पृथोर्वैन्यस्यचरितंयःशृणोतिद्विजोत्तमाः
तस्यभागीरथीस्नानमहन्यहनिजायते ९०
सर्वपापविशुद्धात्माविष्णुलोकंप्रयातिसः ९१
इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे-
पृथूपाख्यानएकोनत्रिंशोऽध्यायः २९

त्रिंशोऽध्यायः

ऋषयऊचुः-
योसौवेनस्त्वयाख्यातःपापाचारेणवर्तितः
तस्यपापस्यकावृत्तिःकिंफलंप्राप्तवान्द्विज १
चरित्रंतस्यवेनस्यसमाख्याहियथापुरा
विस्तरेणविदांश्रेष्ठत्वंनएतन्महामते २
सूतउवाच-
चरित्रंतस्यवेनस्यवैन्यस्यापिमहात्मनः
प्रवक्ष्यामिसुपुण्यंचयथान्यायंश्रुतंपुरा ३
जातेपुत्रेमहाभागस्तस्मिन्पृथौमहात्मनि
विमलत्वंगतोराजाधर्मत्वंगतवान्पुनः ४
महापापानिसर्वाणिअर्जितानिनराधमैः
तीर्थसंगप्रसंगेनतेषांपापंप्रयातिच ५
सतांसंगात्प्रजायेतपुण्यमेवनसंशयः
पापानांतुप्रसंगेनपापमेवप्रजायते ६
संभाषाद्दर्शनात्स्पर्शादासनाद्भोजनात्किल
पापिनांसंगमाच्चैवकिल्बिषंपरिसंचरेत् ७

तथापुरायात्मकानांचपुरायमेवप्रसंचरेत्
महातीर्थप्रसंगेनपापाः शुध्यंतिनान्यथा ८
पुरायांगतिंप्रयान्त्येतेनिर्द्धूताशेषकल्मषाः
ऋषयऊचुः-
तत्कथंयांतितेपापाःपरांसिद्धिंद्विजोत्तम ९
तन्नोविस्तरतोब्रूहिश्रोतुंश्रद्धाप्रवर्तते १०
सूतउवाच-
लुब्धकाश्चमहापापाःसंजातादासधीवराः
रेवाचयमुनागंगास्तासामंभसिसंस्थिताः ११
ज्ञानतोज्ञानतःस्नात्वासंक्रीडंतिचवैजले
महानद्याःप्रसंगेनतेयांतिपरमांगतिम् १२
दासत्वंपापसंघातंपरित्यज्यव्रजंतिते
पुरायतोयप्रसंगाच्चह्याप्लुताःसर्वएवते १३
महानद्याःप्रसंगाच्चअन्यासांनैवसत्तमाः
महापुरायजनस्यापिपापंनश्यतिपापिनाम् १४
प्रसंगाद्दर्शनात्स्पर्शान्नात्रकार्याविचारणा
अत्रार्थेश्रूयतेविप्राइतिहासोऽघनाशनः १५
तंवोअद्यप्रवक्ष्यामिबहुपुरायप्रदायकम्
कश्चिदस्तिमृगव्याधःसुलोभाख्योमहावने १६
श्वभिर्वागुरिजालैश्चधनुर्बाणैस्तथैवच
मृगान्घातयतेनित्यंपिशितास्वादलंपटः १७
एकदातुसुदुष्टात्माबाणपाणिर्धनुर्धरः
श्वभिःपरिवृतोदुर्गंवनंविंध्यस्यवैगतः १८
मृगान्रुरून्वराहांश्चभीतान्सूदितवान्बहून्
रेवातीरंसमासाद्यकश्चिच्छफरघातकः १९
शफरान्सूदयित्वासनिर्जगामबहिर्जलात्
मृगव्याधस्यलोभस्यभयत्रस्तात्ततोमृगी २०
जीवत्राणपरासार्ताभीताचलितचेतना
त्वरमाणापलायंतीरेवातीरंसमाश्रिता २१
श्वभिश्चचालितासातुबाणघातक्षतातुरा

श्वसनस्यापिवेगेनसुलभोमृगघातकः २२
पृष्ठएवसमायातिपुरतोयातिसामृगी
दृष्टवांस्तांशफरहाबाणपाणिःसमुद्यतः २३
धनुरानम्यवेगेनअनुरुध्यचतांमृगीम्
तावल्लुब्धकलोभाख्यःश्वभिःसार्द्धंसमागतः २४
नहंतव्यामदीयेयंमृगयांमेसमागता
तस्यवाक्यंसमाकर्ण्यमीनहामांसलंपटः २५
बाणंमुमोचदुष्टात्मातामुद्दिश्यमहाबलः
निहतामृगलुब्धेनबाणेननिशितेनच २६
प्रमृतासामृगीतत्रबाणाभ्यांपापचेतसोः
श्वभिर्दंतैःसमाक्रांतात्वरमाणापपातसा २७
शिखराच्चह्रदेपुण्येरेवायाःपापनाशने
श्वानश्चत्वरमाणास्तेपतिताविमलेह्रदे २८
मृगव्याधोवदत्येवधीवरंक्रोधमूर्च्छितः
मदीयेयंमृगीदुष्टकस्माद्बाणैर्हतात्वया २९
तमुवाचपुनःसोऽपिमीनहामृगघातकम्
मदीयेयंनसंदेहोअवलिप्तप्रभाषसे ३०
युध्यमानौततस्तौतुद्वावेतौतुपरस्परम्
क्रोधलोभान्महाभागौपतितौविमलेजले ३१
तस्मिन्कालेमहापर्ववर्ततेगतिदायकम्
अमावास्यासमायोगंमहापुण्यफलप्रदम् ३२
वेलायांपतिताःसर्वेपर्वणस्तस्यसत्तम
जपध्यानविहीनास्तेभावसत्यविवर्जिताः ३३
तीर्थस्नानप्रसंगेनमृगीश्वाचसलुब्धकः
सर्वपापविनिर्मुक्तास्तेगताःपरमांगतिम् ३४
तीर्थानांचप्रभावेणसतांसंगाद्द्विजोत्तमाः
नाशयेत्पापिनांपापंदहेदग्निरिवेंधनम् ३५
सूतउवाच–
तेषामेवंहिसंसर्गादृषीणांचमहात्मनाम्
संभाषाद्दर्शनान्नष्टंस्पर्शाच्चैवनृपस्यच ३६

वेनस्यकल्मषंनष्टंसतांसंगात्पुराकिल
अत्युग्रपुरायसंसर्गात्पापंनश्यतिपापिनाम् ३७
अत्युग्रपापिनांसंगात्पापमेवप्रसंचरेत्
मातामहस्यदोषेणसंलिप्तोवेनएवसः ३८
ऋषयऊचुः-
मातामहस्यकोदोषस्तंनोविस्तरतोवद
समृत्युःसचवैकालःसयमोधर्मएवच ३९
नहिंसकोहिकस्यापिपदेतस्मिन्प्रतिष्ठितः
चराचराश्चयेलोकाःस्वकर्मवशवर्तिनः ४०
जीवंतिचम्रियंतेचभुंजंत्येवंस्वकर्मभिः
पापाःपश्यंतितंघोरंतेषांकर्मविपाकतः ४१
निरयेषुचसर्वेषुकर्मणैवंसुपुरायवान्
योजतेत्ताडयेत्सूतयमएषदिनेदिने ४२
सर्वेष्वेवसुपुरायेषुकर्मस्वेवंसपुरायवान्
योजयत्येवधर्मात्मातस्यदोषोनदृश्यते ४३
समृत्योःकेनदोषेणपापीवेनस्त्वजायत
सूतउवाच-
समृत्युःशासकोनित्यंपापानांदुष्टचेतसाम् ४४
वर्ततेकालरूपेणतेषांकर्मविमृश्यति
दुष्कृतंकर्मयस्यापिकर्मणातेनघातयेत् ४५
तस्यपापंविदित्वासौनयत्येवंहितंयमः
सुकृतात्मालभेत्स्वर्गंकर्मणासुकृतेनवै ४६
योजयत्येषतान्सर्वान्मृत्युरेवसुदूतकैः
महतासौख्यभावेनगीतमंगलकारिणा ४७
दानभोगादिभिश्चैवयोजयेच्चकृतात्मकान्
पीडाभिर्विविधाभिश्चक्लेशैःकाष्ठैश्चदारुणैः ४८
त्रासयेत्ताडयेद्विप्रान्सक्रोधोमृत्युरेवतान्
कर्मरायेवंहितस्यापिव्यापारःपरिवर्तते ४९
मृत्योश्चापिमहाभागलोभात्पुरायात्प्रजायते
सुनीथानामवैकन्यासंजातैषामहात्मनः ५०

पितुःकर्मविमृश्यैवक्रीडमानासदैवसा
प्रजानांशास्तिकर्तारंपुण्यपापनिरीक्षणम् ५१
सातुकन्यामहाभागासुनीथानामतस्यसा
रममाणावनंप्राप्तासखीभिःपरिवारिता ५२
तत्रापश्यन्महाभागंगंधर्वतनयंवरम्
गीतकोलाहलस्यापिसुशंखंनामसातदा ५३
ददर्शचारुसर्वांगंतप्यंतंसुमहत्तपः
गीतविद्यासुसिद्ध्यर्थंध्यायमानंसरस्वतीम् ५४
तस्योपधातमेवासौसाचकारदिनेदिने
सुशंखःक्षमतेनित्यंगच्छगच्छेतिसोब्रवीत् ५५
प्रेषितानैवगच्छेत्साविघ्नमेवसमाचरेत्
तेनाप्युक्तासाहिक्रुद्धाताडयत्तपसिस्थितम् ५६
तामुवाचततःक्रुद्धःसुशंखःक्रोधमूर्च्छितः
दुष्टेपापसमाचारेकस्माद्विघ्नस्त्वयाकृतः ५७
ताडनात्ताडनंदुष्टेनकुर्वंतिमहाजनाः
आक्रुष्टानैवकुप्यंतिइतिधर्मस्यसंस्थितिः ५८
त्वयाहंघातितःपापेनिर्दोषस्तपसान्वितः
एवमुक्त्वासधर्मात्मासुनीथांपापचारिणीम् ५९
विरराममहाक्रोधाज्ज्ञात्वानारींनिवर्तितः
ततःसापापमोहाद्वाबाल्याद्वातमिहैवच ६०
समुवाचमहात्मानंसुशंखंतपसिस्थितम्
त्रलोक्यवासिनांतातोममैवपरिघातकः ६१
असतोघातयेन्नित्यंसत्यान्सपरिपालयेत्
नैवदोषोभवेत्तस्यमहापुण्येनवर्तयेत् ६२
एवमुक्त्वागतासातुपितरंवाक्यमब्रवीत्
मयाहिताडितस्तातगंधर्वतनयोवने ६३
तपस्तपन्सदैकांतेकामक्रोधविवर्जितः
समामुवाचधर्मात्माक्रोधरागसमन्वितः ६४
ताडयेन्नैवताडंतंक्रोशंतंनैवक्रोशयेत्
इत्युवाचसमांताततन्मेत्वंकारणंवद ६५

एवमुक्तःसवैमृत्युःसुनीथांद्विजसत्तमाः
किंचिन्नोवाचधर्मात्माप्रश्नप्रत्युत्तरंततः ६६
वनंप्राप्तापुनःसाहिसुशंखोयत्रसंस्थितः
कराघातैस्ततोदौष्ट्याद्घातितस्तपतांवरः ६७
सुशंखस्ताडितोविप्रामृत्योश्चैवहिकन्यया
ततःक्रुद्धोमहातेजाःशशापतनुमध्यमाम् ६८
निर्दोषोहियतोदुष्टेत्वयैवपरिताडितः
अहमत्रवनेसंस्थस्तस्माच्छापंददाम्यहम् ६९
गार्हस्थ्यंचसमास्थायसहभर्त्रायदाशृणु
पापाचारमयःपुत्रोदेवब्राह्मणनिंदकः ७०
सर्वपापरतोदुष्टेतवगर्भेभविष्यति
एवंशप्त्वागतःसोपितपएवसमाश्रितः ७१
गतेतस्मिन्महाभागेसासुनीथागृहंगता
समाचष्टमहात्मानंपितरंतप्तमानसा ७२
यथाशप्तातदातेनगंधर्वतनयेनसा
तत्सर्वंसंश्रुतंतेनमृत्युनापरिभाषितम् ७३
कस्मात्कृतस्त्वयाघातस्तपतिदोषवर्जिते
युक्तंनैवकृतंपुत्रिसत्यस्यैवहिताडनम् ७४
एवमाभाष्यधर्मात्मामृत्युःपरमदुःखितः
बभूवसहितत्तस्यादिष्टमेवंविचिंतयन् ७५
सूतउवाच-
अत्रिपुत्रोमहातेजाअंगोनामप्रतापवान्
एकदातुगतोविप्रानंदनंप्रतिसद्विजः ७६
तत्रदृष्ट्वादेवराजंतमिंद्रंपाकशासनम्
अप्सरसांगणैर्युक्तंगंधर्वैःकिन्नरैस्तथा ७७
गीयमानंगीतगैश्चसुस्वरैःसप्तकैस्तथा
वीज्यमानंसुगंधैश्चव्यजनैःसर्वएवसः ७८
योषिद्भीरूपयुक्ताभिश्चामरैर्हंसगामिभिः
छत्रेणहंसवर्णेनचंद्रबिंबानुकारिणा ७९
राजमानंसहस्राक्षंसर्वाभरणभूषितम्

कामक्रीडागतंदेवंदृष्टवानमितौजसम् ८०
तस्यपार्श्वेमहाभागांपौलोमींचारुमंगलाम्
रूपेणतेजसाचैवतपसाचयशस्विनीम् ८१
सौभाग्येनविराजंतींपातिव्रत्येनतांसतीम्
तयासहसहस्राक्षःसरेमेनंदनेवने ८२
तस्यलीलांसमालोक्यअंगश्चैवद्विजोत्तमः
धन्योवैदेवराजोऽयमीदृशैःपरिवारितः ८३
अहोऽस्यतपसोवीर्यंयेनप्राप्तंमहत्पदम्
यदाममेदृशःपुत्रःसर्वलोकप्रधारकः ८४
भवेत्तदामहत्सौख्यंप्राप्स्यामीहनसंशयः
इतिचिंतापरोभूत्वात्वरमाणोगृहागतः ८५
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेत्रिंशोऽध्यायः ३०

## एकत्रिंशोऽध्यायः

सूतउवाच-
अथत्वंगोमहातेजादृष्ट्वाइंद्रस्यसंपदम्
भोगंचैवविलासंचलीलांतस्यमहात्मनः १
कथंमेइंद्रसदृशःपुत्रःस्याद्धर्मसंयुतः
चिंतयित्वाक्षणंचैवअंगोधर्मभृतांवरः २
स्वकंगेहंसमायातःसत्वंगःसत्यतत्परः
अत्रिंपप्रच्छपितरंप्रणतोनम्रकंधरः ३
कोयंपुण्यःसमाचारैरिंद्रत्वंभुंजतेमहत्
कस्यपुण्यस्यवैपुष्टिःकिंकृतंकर्मकीदृशम् ४
कीदृशंतपएतस्यकमाराधितवान्पुरा
एतन्मेविस्तरेणत्वंब्रूहिसत्यवतांवर ५
अत्रिरुवाच-
साधुसाधुमहाभागयद्येवंपृच्छसेमयि
चरित्रमिंद्रस्यवत्सतन्मेनिगदतःशृणु ६
सुव्रतोनाममेधावीपुराब्राह्मणसत्तमः
तेनकृष्णोहृषीकेशस्तपसाचैवतोषितः ७

पुरयगर्भंपुनःप्राप्तोह्यदित्याःकश्यपात्किल
विष्णोश्चैवप्रसादेनसुरराजोबभूवह ८
अंगउवाच-
कथमिंद्रसमःपुत्रोममस्यात्पुत्रवत्सल
तदुपायंसमाचद्त्वभवाञ्ज्ञानवतांवरः ९
अत्रिरुवाच-
समासेनैवतस्यैवसुव्रतस्यमहात्मनः
चरित्रमखिलंपुरयंनिशामयमहामते १०
यथासुव्रतमेधावीपुराराधितवान्हरिम्
तस्यभावंचभक्तिंचध्यानंचैवमहात्मनः ११
समालोक्यजगन्नाथोदत्तवान्वैमहत्पदम्
सएंद्रंसर्वभोगाढ्यंत्रैलोक्यंसचराचरम् १२
विष्णोश्चैवप्रसादाच्चपदंभुंक्तेत्रिलोकधृक्
एवंतेसर्वमाख्यातमिंद्रस्यापिविचेष्टितम् १३
भक्त्यातुष्यतिगोविंदोभावध्यानेनसत्तम
सर्वंददातितुष्टात्माभक्त्यासंतोषितोहरिः १४
तस्मादाराध्यगोविंदंसर्वदंसर्वसंभवम्
सर्वज्ञंसर्ववेत्तारंसर्वेषांपुरुषंवरम् १५
तस्मात्प्राप्स्यसिसर्वंत्वंयद्यदिच्छसिनंदन १६
सुखस्यदातापरमार्थदातामोद्मस्यदाताजगतांहिनाथः
तस्मात्तमाराधयगच्छपुत्रसंप्राप्स्यसेइंद्रसमंहिपुत्रम् १७
आकरार्यवाक्यंपरमार्थयुक्तमुक्तंमहात्मात्रृषिणाहितेन
संगृह्यतत्त्वंवचनस्यतस्यप्रणम्यतंशाश्वतमभ्ययात्सः १८
आमंत्र्यचांगःपितरंमहात्माब्रह्मात्मजंब्रह्मसमानमेव
संप्राप्तवान्मेरुगिरेस्तुशृंगंतंकांचनैरत्नमयैःसमेतम् १९
इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे-
वेनोपाख्यानेएकत्रिंशोऽध्यायः ३१

द्वात्रिंशोऽध्यायः

सूतउवाच-

नानारत्नैःसुदीप्तांगोहाटकेनापिसर्वतः
राजमानोगिरिश्रेष्ठोयथासूर्यःस्वरश्मिभिः १
छायामशोकांसंप्राप्यशीतलांसुखदायिनीम्
ध्यायंतियोगिनःसर्वेउपविष्टादृढासने २
क्वचित्तपंतिमुनयःक्वचिद्गायंतिकिन्नराः
संतुष्टाऋृषिगंधर्वावीणातालकराविलाः ३
तालमानलयेलीनाःस्वरैःसप्तभिरन्वितैः
मूर्च्छनारत्नसंयुक्तैर्व्यक्तंगीतंमनोहरम् ४
तस्मिन्वैपर्वतश्रेष्ठेचंदनच्छायसंश्रिताः
गंधर्वागीततत्वज्ञागीतंगायंतितत्पराः ५
नृत्यंतियोषितस्तत्रदेवानांपर्वत्तोत्तमे
पापहापुण्यदोदिव्यःसुश्रेयसांप्रदायकः ६
वेदध्वनिःसमधुरःश्रूयतेपर्वतोत्तमे
चंदनाशोकपुन्नागैःशालैस्तालैस्तमालकैः ७
वटैस्तुमेघसंकाशैराजतेपर्वतोत्तमः
संतानकैःकल्पवृक्षैरंभापादपसंकुलैः ८
नगेंद्रोभातिसर्वत्रनाकवृक्षैःसुपुष्पितैः
नानाधातुसमाकीर्णोनानारत्नचयोगिरिः ९
नानाकौतुकसंयुक्तोनानामंगलसंयुतः
वेदवृंदैःसुसंजुष्टोह्यप्सरोगणसंकुलः १०
ऋषिभिर्मुनिभिःसिद्धैर्गंधर्वैःपरिभातिसः
गजैश्चाचलसंकाशैःसिंहनादैर्विराजते ११
शरभैर्मत्तशार्दूलैर्मृगधूर्तैरलंकृतः
वापीकूपतडागैश्चसंपूर्णैर्विमलोदकैः १२
हंसकारंडवाकीर्णैःसर्वत्रपरिशोभते
कनकोत्पलैश्चश्वेतैश्चरक्तोत्पलैर्विराजते १३
नदीस्त्रवणसंघातैर्विमलैश्चोदकैस्तथा
शालतालैश्चरूपैश्चसगजैःस्फाटिकैस्तथा १४
विस्तीर्णैःकांचनैर्दिव्यैःसूर्यवह्निसमप्रभैः
शिलातलैश्चसंपूर्णःशैलराजोविराजते १५

विमानैर्देवतानांचप्रासादैःपर्वतोत्तमैः
हंसचंद्रप्रतीकाशैर्हेमदंडैरलंकृतः १६
कलशैश्चामरैर्युक्तैःप्रासादैःपरिशोभितः
नानागुणप्रमुदितदेववृंदैश्चशोभितः १७
देववृंदैरनेकैश्चगंधर्वैश्चारणैस्तथा
सर्वत्रराजतेपुरयोमेरुर्गिरिवरोत्तमः १८
तस्माद्गंगामहापुरयापुरयतोयामहानदी
प्रसूतापुरयतीर्थाढ्याहंसपद्मैःसमाकुला १९
मुनिभिःसेव्यमानासाऋषिसंघैर्महानदी
एवंगुणंगिरिश्रेष्ठंपुरयकौतुकमंगलम् २०
अंगश्चात्रिसुतःपुरयःप्रविवेशमहामुनिः
गंगातीरेसुपुरयेचएकांतेचारुकंदरे २१
तत्रोपविश्यमेधावीकामक्रोधविवर्जितः
सर्वेंद्रियाणिसंयम्यहृषीकेशंमनोगतम् २२
ध्यायमानःसधर्मात्माकृष्णंक्लेशापहंप्रभुम्
आसनेशयनेयानेध्यानेचमधुसूदनम् २३
नित्यंपश्यतियुक्तात्मायोगयुक्तोजितेंद्रियः
चराचरेषुजीवेषुतेषुपश्यतिकेशवम् २४
आर्द्रेषुचैवशुष्केषुसर्वेष्वन्येषुसद्द्विजः
एवंवर्षशतंजातंतप्यमानस्यतस्यच २५
समालोक्यजगन्नाथश्चक्रपाणिर्द्विजोत्तमम्
बहुविघ्नान्सुघोरांश्चदर्शयत्येवनित्यशः २६
तेजसातस्यदेवस्यनृसिंहस्यमहात्मनः
निरातंकःसधर्मात्मादहत्यग्निरिवेंधनम् २७
नियमैःसंयमैश्चान्यैरुपवासैर्द्विजोत्तमः
क्षीयमाणस्तुसंजातोदीप्यमानःस्वतेजसा २८
सूर्यपावकसंकाशस्त्वंगएवंप्रदृश्यते
एवंतपःसुनिरतंध्यायमानंजनार्दनम् २९
आविर्भूयाब्रवीद्देवोवरंवरयमानद
तंचदृष्ट्वाहृषीकेशमंगःपरमनिर्वृतः ३०

तुष्टावप्रणतोभूत्वावासुदेवंप्रसन्नधीः ३१
अंगउवाच-
त्वंगतिःसर्वभूतानांभूतभावनपावन
भूतात्मासर्वभूतेशनमस्तुभ्यंगुणात्मने ३२
गुणरूपायगुह्यायगुणातीतायतेनमः
गुणायगुणकर्त्रेचगुणाढ्यायगुणात्मने ३३
भवायभवकर्त्रेचभक्तानांभवहारिणे
भवोद्भवायगुह्यायनमोभवविनाशिने ३४
यज्ञाययज्ञरूपाययज्ञेशायनमोनमः
यज्ञकर्मप्रसंगायनमःशंखधरायच ३५
नमोनमोहिरण्यायनमोरथांगधारिणे
सत्यायसत्यभावायसर्वसत्यमयायच ३६
धर्मायधर्मकर्त्रेचसर्वकर्त्रेचतेनमः
धर्मांगायसुवीरायधर्माधारायतेनमः ३७
नमःपुण्यायपुत्रायह्यपुत्रायमहात्मने
मायामोहविनाशायसर्वमायाकरायते ३८
मायाधरायमूर्तायत्वमूर्तायनमोनमः
सर्वमूर्तिधरायैवशंकरायनमोनमः ३९
ब्रह्मणेब्रह्मरूपायपरब्रह्मस्वरूपिणे
नमस्तेसर्वधाम्नेचनमोधामधरायच ४०
श्रीमतेश्रीनिवासायश्रीधरायनमोनमः
क्षीरसागरवासायचामृतायचतेनमः ४१
महौषधायघोरायमहाप्रज्ञापरायच
अक्रूरायप्रमेध्यायमेध्यानांपतयेनमः ४२
अनंतायह्यशेषायचानघायनमोनमः
आकाशस्यप्रकाशायपक्षिरूपायतेनमः ४३
हुतायहुतभोक्त्रेचहवीरूपायतेनमः
बुद्धायबुधरूपायसदाबुद्धायतेनमः ४४
नमोहव्यायकव्यायस्वधाकारायतेनमः
स्वाहाकारायशुद्धायह्यव्यक्तायमहात्मने ४५

व्यासायवासवायैववसुरूपायतेनमः
वासुदेवायविश्वायवह्निरूपायतेनमः
हरयेकेवलायैववामनायनमोनमः ४६
नमोनृसिंहदेवायसत्वपालायतेनमः ४७
नमोगोविंदगोपायनमएकाक्षरायच
नमःसर्वाक्षरायैवहंसरूपायतेनमः ४८
त्रितत्त्वायनमस्तुभ्यंपंचतत्त्वायतेनमः
पंचविंशतितत्त्वायतत्त्वाधारायवैनमः ४९
कृष्णायकृष्णरूपायलक्ष्मीनाथायतेनमः
नमःपद्मपलाशायआनंदायपरायच ५०
नमोविश्वंभरायैवपापनाशायवैनमः
नमःपुरायसुपुरायायसत्यधर्मायतेनमः ५१
नमोनमःशाश्वतअव्ययायनमोनमःसंघनभोमयाय
श्रीपद्मनाभायमहेश्वरायनमामितेकेशवपादपद्मम् ५२
आनंदकंदकमलाप्रियवासुदेवसर्वेशईशमधुसूदनदेहिदास्यम्
पादौनमामितवकेशवजन्मजन्मकृपांकुरुष्वममशांतिदशंखपाणे ५३
संसारदारुणहुताशनतापदग्धंपुत्रादिबंधुमरणैर्बहुशोकतापैः
ज्ञानांबुदेनममप्लावयपद्मनाभदीनस्यमच्छरणरूपभवस्वनाथ ५४
एवंस्तोत्रंसमाकर्ण्यत्वंगस्यापिमहात्मनः
दर्शयित्वास्वकंरूपंघनश्याममंमहौजसम् ५५
शंखचक्रगदापाणिंपद्महस्तंमहाप्रभुम्
वैनतेयसमारूढमात्मरूपंप्रदर्शितम् ५६
सर्वाभरणशोभांगंहारकंकणकुंडलैः
राजमानंपरंदिव्यंनिर्मलंवनमालया ५७
अंगस्याग्रेहृषीकेशःशोभमानमहत्प्रभः
श्रीवत्सांकेनपुरायेनकौस्तुभेनजनार्दनः ५८
दर्शयित्वास्वकंदेहंसर्वदेवमयोहरिः
सउवाचमहात्मानंतमंगमृषिसत्तमम् ५९
भोभोविप्रमहाभागश्रूयतांवचनंशुभम्
मेघगंभीरघोषेणसमाभाष्यद्विजोत्तमम् ६०

तपसानेनतुष्टोस्मिवरंवरयशोभनम्
तुष्यमाणंहृषीकेशंतंदृष्ट्वाकमलापतिम् ६१
दीप्यमानंविराजंतंविश्वरूपंजनेश्वरम्
पादांबुजद्वयंतस्यप्रणम्यचपुनःपुनः ६२
हर्षेणमहताविष्टस्तमुवाचजनार्दनम्
दासोहंतवदेवेशशंखचक्रगदाधर ६३
वरंमेदातुकामोसिदेहित्वंवंशजंसुतम्
दिविशक्रोयथाऽभातिसर्वतेजःसमन्वितः ६४
तादृशंदेहिमेपुत्रंसर्वलोकस्यरक्षकम्
सर्वदेवप्रियंदेवब्रह्मण्यंधर्मपंडितम् ६५
दातारंज्ञानसंपन्नंधर्मतेजःसमन्वितम्
त्रैलोक्यरक्षकंकृष्णसत्यधर्मानुपालकम् ६६
यज्वनामुत्तमंचैकंशूरंत्रैलोक्यभूषणम्
ब्रह्मण्यंवेदविद्वांसंसत्यसंधंजितेंद्रियम् ६७
अजितंसर्वजेतारंविष्णुंतेजःसमप्रभम्
वैष्णवंपुण्यकर्तारंपुण्यजंपुण्यलक्षणम् ६८
शांतंतुतपसोपेतंसर्वशास्त्रविशारदम्
वेदज्ञंयोगिनांश्रेष्ठंभवतोगुणसंनिभम् ६९
ईदृशंदेहिमेपुत्रंदातुकामोयदावरम्
श्रीवासुदेवउवाच-
एभिर्गुणैःसमोपेतस्तवपुत्रोभविष्यति ७०
अत्रिवंशस्यवैधर्ताविश्वस्यास्यमहामते
तेजसायशसापुण्यैःपितरंचोद्धरिष्यति ७१
उद्धरिष्यतियःसत्यैःपितरंचपितामहम्
भवान्यास्यतिमेस्थानंतद्विष्णोःपरमंपदम् ७२
इत्युक्त्वादेवदेवेशस्तमंगंप्रतिसद्विज
कस्यचित्पुण्यवीर्यस्यपुण्यांकन्यांविवाहय ७३
तस्यामुत्पादयसुतंशुभंपुण्यावहप्रियम्
सभविष्यतिधर्मात्मामत्प्रसादान्महामते ७४
सर्वज्ञःसर्ववेत्ताचयादृशोवांछितस्त्वया

एवंवरंततोदत्वाश्रंतर्धानंगतोहरिः ७५
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेश्रंगवरप्रदानं
नामद्वात्रिंशोऽध्यायः ३२

त्रयस्त्रिंशोऽध्यायः

ऋषयऊचुः-
शप्तागंधर्वपुत्रेणसुशंखेनमहात्मना
तस्यशापात्कथंजाताकिंकिंकर्मकृतंतया १
सालेभेकीदृशंपुत्रंतस्यशापाद्द्विजोत्तम
सुनीथायाश्चचरितंत्वंनोविस्तरतोवद २
सूतउवाच-
सुशंखेनापितेनैवसाशप्तातनुमध्यमा
पितुःस्थानंगतासातुसुनीथादुःखपीडिता ३
पितरंचात्मनश्चैवचरितंचप्रकाशितम्
श्रुतवान्सोपिधर्मात्मामृत्युःसत्यवतांवर ४
तामुवाचसुनीथांतुसुतांशप्तांमहात्मना
भवत्यादुष्कृतंपापंधर्मतेजःप्रणाशनम् ५
कस्मात्कृतंमहाभागेसुशांतस्यहिताडनम्
विरुद्धंसर्वलोकस्यभवत्यापरिकल्पितम् ६
कामक्रोधविहीनंतंसुशांतंधर्मवत्सलम्
तपोमार्गेविलीनंचपरब्रह्मणिसंस्थितम् ७
तमेवघातयेद्योवैतस्यपापंशृणुष्वहि
पापात्माजायतेपुत्रःकिल्बिषंलभतेबहु ८
ताडंतंताडयेद्योवैक्रोशंतंक्रोशयेत्पुनः
तस्यपापंसवैभुंक्तेताडितस्यनसंशयः ९
सवैशांतःसजितात्माताडयंतंनताडयेत्
निर्दोषंप्रतियेनापिताडनंचकृतंसुते १०
पश्चान्मोहेनपापेननिर्दोषेऽपिचताडयेत्
निर्दोषंप्रतियेनापिहृद्रोगःक्रियतेवृथा ११
निर्दोषंताडयेत्पश्चान्मोहात्पापेनकेनचित्

सपापीपापमाप्नोतिनिर्दोषस्यशरीरजम् १२
निर्दोषोघातयेत्तंवैताडंतंपापचेतसम्
पुनरुत्थायवेगेनसाहसात्पापचेतनम् १३
पापकर्तुश्चयत्पापंनिर्दोषंप्रतिगच्छति
ताडनंनैवतस्माद्वैकार्यंदोषवतोऽपिच १४
दुष्कृतंचमहत्पुत्रित्वयैवपरिपालितम्
शप्तातेनापियाद्यैवतस्मात्पुरायंसमाचर १५
सतांसंगंसमासाद्यसदैवपरिवर्तय
योगध्यानेनज्ञानेनपरिवर्तयनंदिनि १६
सतांसंगोमहापुरायोबहुश्रेयोविधायकः
बालेपश्यसुदृष्टांतंसतांसंगस्ययद्गुरणम् १७
अपांसंस्पर्शनात्पानात्स्नानात्तत्रमहाधियः
मुनयःसिद्धिमायांतिबाह्याभ्यंतरक्षालिताः १८
शुचिष्मंतोभवंत्येतेलोकाःसर्वेचराचराः
आपःशांताःसुशीताश्चमृदुगात्राःप्रियंकराः १९
निर्मलारसवत्यश्चपुरायवीर्यामलापहाः
तथासंतस्त्वयाज्ञेयानिषेव्याश्चप्रयत्नतः २०
यथावह्निप्रसंगाच्चमलंत्यजतिकांचनम्
तथासतांहिसंसर्गात्पापंत्यजतिमानवः २१
सत्यवह्निःप्रदीप्तश्चप्रज्वलेत्पुरायतेजसा
सत्येनदीप्ततेजास्तुज्ञानेनापिसुनिर्मलः २२
अत्युष्णोध्यानभावेनअस्पृश्यःपापजैनरैः
सत्यवह्नेःप्रसंगाच्चपापंसर्वंविनश्यति २३
तस्मात्सत्यस्यसंसर्गःकर्तव्यःसर्वथात्वया
पापभारंपरित्यज्यपुरायमेवंसमाश्रय २४
सूतउवाच-
एवंपित्रासुनीथासादुःखिताप्रतिबोधिता
नमस्कृत्यपितुःपादौगतासानिर्जनंवनम् २५
कामंक्रोधंपरित्यज्यबाल्यभावंतपस्विनी
मोहद्रोहौचमायांचत्यक्त्वाएकांतमास्थिता २६

तस्याःसख्यःसमाजग्मुःक्रीडार्थंलीलयान्विताः
तांददृशुर्विशालाद्यःसुनीथांदुःखभागिनीम् २७
ध्यायंतींचिंतयानांतामूचुश्चिंतापरायणाः
कस्माच्चिंतसिभद्रेत्वमनयाचिंतयान्विता २८
तन्नोवैकारणंब्रूहिचिंतादुःखप्रदायिनी
एकैवसार्थकीचिंताधर्मस्यार्थेविचिंत्यते २९
द्वितीयासार्थकाचिंतायोगिनांधर्मनंदिनी
अन्यानिरर्थिकाचिंतातांनैवपरिकल्पयेत् ३०
कायनाशकरीचिंताबलतेजःप्रणाशिनी
नाशयेत्सर्वसौख्यंतुरूपहानिंनिदर्शयेत् ३१
तृष्णांमोहंतथालोभमेतांश्चिंताहिप्रापयेत्
पापमुत्पादयेच्चिंताचिंतिताचदिनेदिने ३२
चिंताव्याधिप्रकाशायनरकायप्रकल्पयेत्
तस्माच्चिंतांपरित्यज्यचानुवर्तस्वशोभने ३३
अर्जितंकर्मणापूर्वंस्वयमेवनरेणतु
तदेवभुंक्तेऽसौजंतुर्ज्ञानवान्नविचिंतयेत् ३४
तस्माच्चिंतांपरित्यज्यसुखदुःखादिकंवद
तासांतद्वचनंश्रुत्वासुनीथावाक्यमब्रवीत् ३५

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडेवेनोपाख्याने
सुनीथाचरितंनामत्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

सूतउवाच–
यथाशप्तावनेपूर्वंसुशंखेनमहात्मना
तासुसर्वंसमाख्यातंसखीष्वेवविचेष्टितम् १
आत्मनश्चमहाभागादुःखेनातिप्रपीडिता
सुनीथोवाच–
अन्यच्चैवप्रवक्ष्यामिसख्यःशृणवंतुसांप्रतम् २
मदीयरूपसंपत्तिवयःसगुणसंपदः
विलोक्यतातश्चिंतात्मासंजातोममकारणात् ३

देवेभ्योदातुकामोसौमुनिभ्यस्तुमहायशाः
मांचहस्तेविगृह्यैवसर्वान्वाक्यमुदाहरत् ४
गुणयुक्तासुताबालाममेयंचारुलोचना
दातुकामोस्मिभद्रंवोगुणिनेसुमहात्मने ५
मृत्योर्वाक्यंततोदेवाॠषयःशुश्रुवुस्तदा
तमूचुर्भाषमाणंतेदेवाइंद्रपुरोगमाः ६
तवकन्यागुणाढ्येयंशीलानांपरमोनिधिः
दोषेणैकेनसंदुष्टाॠषिशापेनतेनवै ७
अस्यामुत्पत्स्यतेपुत्रोयस्यवीर्यात्पुमान्किल
भवितासमहापापीपुण्यवंशविनाशकः ८
गंगातोयेनसंपूर्णःकुंभएवप्रदृश्यते
सुरायाबिन्दुनालिप्तोमद्यकुम्भःप्रजायते ९
पापस्यपापसंसर्गात्कुलंपापिप्रजायते
आरनालस्यवैबिंदुःक्षीरमध्येप्रयातिचेत् १०
पश्चान्नाशयतेक्षीरमात्मरूपंप्रकाशयेत्
तद्वद्विनाशयेद्वंशंपापःपुत्रोनसंशयः ११
अनेनापिहिदोषेणतवेयंपापभागिनी
अन्यस्मैदीयतांगच्छदेवैरुक्तःपितामम १२
देवैश्चापिसगंधर्वैॠषिभिश्चमहात्मभिः
तैश्चापिसंपरित्यक्तःपितामेदुःखपीडितः १३
ममान्येचापिस्वीकारंनकुर्वंतिहिसज्जनाः
एवंपापमयंकर्ममयाचैवपुराकृतम् १४
संतप्तादुःखशोकेनवनमेवसमाश्रिता
तपएवचरिष्यामिकरिष्येकायशोषणम् १५
भवतीभिःसुपृष्टाहंकार्यकारणमेवहि
ममचिंतानुगंकर्ममयातद्वःप्रकाशितम् १६
एवमुक्त्वासुनीथासामृत्योःकन्यायशस्विनी
विररामचदुःखार्ताकिंचिन्नोवाचवैपुनः १७
सख्यऊचुः-
दुःखमेवमहाभागेत्यजकायविनाशनम्

नास्तिकस्यकुलेदोषोदेवैःपापंसमाश्रितम् १८
जिह्ममुक्तंपुरातेनब्रह्मणाहरसंनिधौ
देवैश्चापिसहित्यक्तोब्रह्मापूज्यतमोभवत् १९
ब्रह्महत्याप्रयुक्तोसौदेवराजोपिपश्यभोः
देवैःसार्धंमहाभागस्त्रैलोक्यंपरिभुंजति २०
गौतमस्यप्रियांभार्यामहल्यांगतवान्पुरा
परदाराभिगामीसदेवत्वेपरिवर्त्तते २१
ब्रह्महत्योपमंकर्मदारुणंकृतवान्हरः
ब्रह्मणस्तुकपालेनचाद्यापिपरिवर्तते २२
देवानमंतितंदेवमृषयोवेदपारगाः
आदित्यःकुष्ठसंयुक्तस्त्रैलोक्यंचप्रकाशयेत् २३
लोकानमंतितंदेवंदेवाद्याःसचराचराः
कृष्णोभुंक्तेमहाशापंभार्गवेणकृतंपुरा २४
गुरुभार्यांगतश्चंद्रःक्षयीतेनप्रजायते
भविष्यतिमहातेजाराजराजःप्रतापवान् २५
पांडुपुत्रोमहाप्राज्ञोधर्मात्मासयुधिष्ठिरः
गुरोश्चैववधार्थायअनृतंसवदिष्यति २६
एतेष्वेवमहत्पापंवर्ततेचमहत्सुच
वैगुण्यंकस्यवैनास्तिकस्यनास्तिचलांछनम् २७
भवतीस्वल्पदोषेणविलिप्तासिवरानने
उपकारंकरिष्यामस्तवैववरवर्णिनि २८
तवांगेयेगुणाःसंतिसत्यस्त्रीणांयथाशुभे
अन्यत्रापिनपश्यामस्तान्गुणांश्चारुलोचने २९
रूपमेवगुणःस्त्रीणांप्रथमंभूषणंशुभे
शीलमेवद्वितीयंचतृतीयंसत्यमेवच ३०
आर्जवत्वंचतुर्थंचपंचमंधर्ममेवहि
मधुरत्वंततःप्रोक्तंषष्ठमेववरानने ३१
शुद्धत्वंसप्तमंबालेअंतर्बाह्येषुयोषितम्
अष्टमंहिपितुर्भावःशुश्रूषानवमंकिल ३२
सहिष्णुर्दशमंप्रोक्तंरतिश्चैकादशंतथा

पातिव्रत्यंततःप्रोक्तंद्वादशंवरवर्णिनि ३३
तैस्त्वंसंभूषिताबालेमाबिभेषिवरानने
येनोपायेनतेभर्ताभविष्यतिसुधर्मधृक् ३४
तमुपायंप्रपश्यामस्तवार्थंवयमेवहि
तामूचुस्तावराःसख्योमात्वंवैसाहसंकुरु ३५
सूतउवाच-
एवमुक्तासुनीथासापुनरूचेसखीस्तुताः
कथयध्वंममोपायंयेनभर्ताभविष्यति ३६
तामूचुस्तावरानार्योरंभाद्याश्चारुलोचनाः
रूपमाधुर्यसंयुक्ताभवतीभूतिवर्द्धनी ३७
ब्रह्मशापेनसंभीतावयमत्रसमागताः
तांप्रोचुश्चविशालाक्षींमृत्योःकन्यांसुलोचनाम् ३८
विद्यामेकांप्रदास्यामःपुरुषाणांप्रमोहिनीम्
सर्वमायाविदांभद्रेसर्वभद्रप्रदायिनीम् ३९
विद्याबलंततोदद्युस्तस्यैताःसुखदायकम्
यंयंमोहयितुंभद्रेइच्छस्येवंसुरादिकम् ४०
तंतंसद्योमोहयवाइत्युक्तासातथाकरोत्
विद्यायांहिसुसिद्धायांसासुनीथासुनंदिता ४१
भ्रमत्येवंसखीभिस्तुपुरुषान्साविपश्यति
अटमानागतापुण्यंनंदनंवनमुत्तमम् ४२
गंगातीरेततोदृष्ट्वाब्राह्मणंरूपसंयुतम्
सर्वलक्षणसंपन्नंसूर्यतेजःसमप्रभम् ४३
रूपेणाप्रतिमंलोकेद्वितीयमिवमन्मथम्
देवरूपंमहाभागंभाग्यवंतंसुभाग्यदम् ४४
अनौपम्यंमहात्मानंविष्णुतेजःसमप्रभम्
वैष्णवंसर्वपापघ्नंविष्णुतुल्यपराक्रमम् ४५
कामक्रोधविहीनंतमत्रिवंशविभूषणम् ४६
दृष्ट्वासुरूपंतपसांस्वरूपंदिव्यप्रभावंपरितप्यमानम्
पप्रच्छरंभांसुसखींसरागाकोयंदिविष्ठःप्रवरोमहात्मा ४७

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेचतुस्त्रिंशोऽध्यायः ३४

पंचत्रिंशोऽध्यायः

रंभोवाच-

ब्रह्माअव्यक्तसंभूतस्तस्माज्जज्ञेप्रजापतिः
अत्रिर्नामसधर्मात्मातस्यपुत्रोमहामनाः १
अंगोनामअयंभद्रेनंदनंवनमागतः
इंद्रस्यसंपदंदृष्ट्वालीलातेजसमुत्तमाम् २
कृतास्पृहाअनेनापिइंद्रस्यसदृशेपदे
ईदृशोहियदापुत्रोममस्याद्धर्मसंयुतः ३
सुश्रेयोमेभवेज्जन्मयशःकीर्तिसमन्वितम्
आराधितोहृषीकेशस्तपोभिर्नियमैस्तथा ४
सुप्रसन्नेहृषीकेशेवरंयाचितवानयम्
इंद्रस्यसदृशंपुत्रंविष्णुतेजःपराक्रमम् ५
वैष्णवंसर्वपापघ्नंदेहिमेमधुसूदन
दत्तवान्सतदापुत्रमीदृशंसर्वधारकम् ६
तदाप्रभृतिविप्रेंद्रःपुण्यांकन्यांप्रपश्यति
यथात्वंचारुसर्वांगीतथायंपरिपश्यति ७
एनंगच्छवरारोहेअस्मात्पुत्रोभविष्यति
पुण्यात्मापुण्यधर्मज्ञोविष्णुतेजःपराक्रमः ८
एतत्तेसर्वमाख्यातंतथाहंपृच्छितात्वया
अयंभर्ताभवत्यर्होभवेदेवनसंशयः ९
सुशंखस्यापियःशापोवृथासोऽपिभविष्यति
अस्माज्जातेमहाभागेपुत्रेधर्मप्रचारिणि १०
भविष्यसिसुखीभद्रेसत्यंसत्यंवदाम्यहम्
सुक्षेत्रेकृषिकारस्तुबीजंवपतितत्परः ११
सतथाभुंजतेदेवियथाबीजंतथाफलम्
अन्यथानैवजायेततत्सर्वंसदृशंभवेत् १२
अयमेषमहाभागस्तपस्वीपुण्यवीर्यवान्
अस्यवीर्यात्समुत्पन्नोअस्यैवगुणसंपदा १३
युक्तःपुत्रोमहातेजाःसर्वदेहभृतांवरः
भविष्यतिमहाभाग्योयुक्तात्मायोगतत्ववित् १४

एवंहिवाक्यंतुनिशम्यबालारंभाप्रियोक्तंशिवदायकंतत्
विचिंत्यबुद्ध्येहसुनीथयातदातत्त्वार्थमेतत्परिसत्यमेवहि १५
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेपंचत्रिंशोऽध्यायः ३५

## षट्त्रिंशोऽध्यायः

सुनीथोवाच-
सत्यमुक्तंत्वयाभद्रेएवमेतत्करोम्यहम्
अनयाविद्ययाविप्रंमोहयिष्यामिनान्यथा १
साहाय्यंदेहिमेपुण्यंयेनगच्छामिसांप्रतम्
एवमुक्तातयारंभातामुवाचमनस्विनीम् २
कीदृग्ददामिसाहाय्यंतत्त्वंकथयभामिनि
दूतत्वंगच्छमेभद्रेएतंप्रतिसुसांप्रतम् ३
एवमुक्तंतयातांतुरंभांप्रतिसुलोचनाम्
एवमेवप्रतिज्ञातंरंभयादेवयोषिता ४
करिष्येतवसाहाय्यमादेशोममदीयताम्
सद्भावेनविशालाक्षीरूपयौवनशालिनी ५
माययादिव्यरूपासासंबभूववरानना
रूपेणाप्रतिमालोकेमोहयंतीजगत्त्रयम् ६
मेरोश्चैवमहापुण्येशिखरेचारुकंदरे
नानाधातुसमाकीर्णेनानारत्नोपशोभिते ७
देववृक्षैःसमाकीर्णेबहुपुष्पोपशोभिते
देववृंदसमाकीर्णेगंधर्वाप्सरसेविते ८
मनोहरेसुरम्येचशीतच्छायासमाकुले
चंदनानामशोकानांतरूणांचारुहासिनी ९
दोलायांसासमारूढासर्वशृङ्गारशोभिता
कौशेयेनसुनीलेनराजमानावरानना १०
बंधूकपुष्पवर्णेनकंचुकेनद्विजोत्तम
सर्वांगसुंदरीबालावीणातालकराविला ११
गायमानावरंगीतंसुस्वरंविश्वमोहनम्
ताभिःपरिवृताबालासखीभिःसुमनोहरा १२

अंगस्तुकंदरेपुरायेएकांतेध्यानमास्थितः
कामक्रोधविहीनस्तुध्यायमानोजनार्दनम् १३
सश्रुत्वासुस्वरंगीतंमधुरंसुमनोहरम्
तालमानक्रियोपेतंसर्वसत्वविकर्षणम् १४
ध्यानाच्चचालतेजस्वीमायागीतेनमोहितः
समुत्थायासनात्तूर्णंवीक्षमाणोमुहुर्मुहुः १५
जगामतत्रवेगेनमायाचलितमानसः
दोलासंस्थांविलोक्यैववीणादंडकराविलाम् १६
हसमानांसुगायंतींपूर्णचंद्रनिभाननाम्
मोहितस्तेनगीतेनरूपेणापिमहायशाः १७
तस्यालावरायभावेनमन्मथस्यशराहतः
आकुलव्याकुलज्ञानऋृषिपुत्रोद्विजोत्तमः १८
प्रलपत्यतिमोहेनजृंभतेचपुनःपुनः
स्वेदःकंपोथसंतापस्तस्याजायततत्क्षणात् १९
मुह्यन्निवमहामोहैर्ग्लानिश्चलितमानसः
वेपमानस्ततस्त्वंगोदूयमानःसमागतः २०
तामालोक्यविशालाक्षींमृत्युकन्यांयशस्विनीम्
अथोवाचमहात्माससुनीथांचारुहासिनीम् २१
कात्वंकस्यवरारोहेसखीभिःपरिवारिता
केनकार्येणसंप्राप्ताकेनत्वंप्रेषितावनम् २२
तवांगंसुंदरंसर्वमत्रभातिमहावने
समाचक्ष्वममाद्यैवप्रसादसुमुखीभव २३
मायामोहेनसंमुग्धस्तस्याःकर्मनविंदति
मार्गणैर्मन्मथस्यापिपरिविद्धोमहामुनिः २४
एवंविधंमहद्वाक्यंसमाकरार्यमहामतेः
नोवाचकिंचित्साविप्रंसमालोक्यसखीमुखम् २५
रंभांचप्रेरयामाससुनीथासंज्ञयासखीम्
समुवाचततोरंभासादरंतंद्विजंप्रति २६
इयंकन्यामहाभागामृत्योश्चापिमहात्मनः
सुनीथाख्याप्रसिद्धेयंसर्वलक्षणसंपदा २७

पतिमन्विच्छतीबालाधर्मवंतंतपोनिधिम्
शांतंदांतंमहाप्राज्ञंवेदविद्याविशारदम् २८
एवंविधंमहद्वाक्यंसमाकर्ण्यमहामुनिः
तामुवाचततस्त्वंगोरंभामप्सरसांवराम् २९
मयाचाराधितोविष्णुःसर्वविश्वमयोहरिः
तेनदत्तोवरोमह्यंपुत्राख्यःसर्वसिद्धिदः ३०
तन्निमित्तमहंभद्रेसुतार्थंनित्यमेवच
कस्यचित्पुण्यवीर्यस्यकन्यामेकांप्रचिंतये ३१
सदैवाहंनपश्यामिसुभार्यासत्यमीदृशीम्
इयंधर्मस्यवैकन्याधर्माचारावरानना ३२
मामेवंहिभजत्वेषायदिकान्तमिहेच्छति
यंयमिच्छेदियंबालातंददामिनसंशयः ३३
अदेयंदेयमित्याहअस्याःसंगमकारणात्
एकमेवंत्वयादेयंश्रूयतांद्विजसत्तम ३४
रंभोवाच-
विप्रेंद्रत्वंशृणुष्वेहप्रतिज्ञांवच्मिसांप्रतम्
एषानैवत्वयात्याज्याधर्मपत्नीतवैवहि ३५
अस्यादोषोगुणोनैवग्राह्यएवत्वयाकदा
इत्यर्थेप्रत्ययंविप्रप्रत्यक्षंपरिदर्शय ३६
स्वहस्तंदेहिविप्रेंद्रसत्यप्रत्ययकारकम्
एवमस्तुमयादत्तोह्यस्याहस्तोनसंशयः ३७
सूतउवाच-
एवंसंबधिकंकृत्वासत्यप्रत्ययकारकम्
गांधर्वेणविवाहेनसुनीथामुपयेमिवान् ३८
तस्मैदत्वासुनीथांतांरंभाहृष्टेनचेतसा
सातांचामंत्रयित्वावैगतागेहंस्वकंपुनः ३९
प्रहृष्टचेतसःसख्यःस्वस्थानंपरिजग्मिरे
गतासुतासुसर्वासुसखीषुद्विजसत्तमः ४०
रेमेत्वंगस्तयासार्धंप्रिययाभार्ययासह
तस्यामुत्पाद्यतनयंसर्वलक्षणसंयुतम् ४१

चकारनामतस्यैववेनाख्यंतनयस्यहि
ववृधेसमहातेजाःसुनीथातनयस्तदा ४२
वेदशास्त्रमधीत्यैवधनुर्वेदंगुणान्वितम्
सर्वासामपिमेधावीविद्यानांपारमेयिवान् ४३
अंगस्यतनयोवेनःशिष्टाचारेणवर्तते
सवेनोब्राह्मणश्रेष्ठःक्षत्राचारपरोभवत् ४४
दिविचेंद्रोयथाभातिसर्वतेजःसमन्वितः
भात्येवंतुमहाप्राज्ञःस्वबलेनपराक्रमैः ४५
चाक्षुषस्यांतरेप्राप्तेवैवस्वतसमागते
प्रजापालंविनालोकेप्रजाःसीदंतिसर्वदा ४६
ऋषयोधर्मतत्त्वज्ञाःप्रजाहेतोस्तपोधनाः
व्यचिंतयन्महीपालंधर्मज्ञंसत्यपंडितम् ४७
तंवेनमेवददृशुःसंपन्नंलक्षणैर्युतम्
प्राजापत्येपदेपुण्येअभ्यषिंचन्द्विजोत्तमाः ४८
अभिषिक्तेमहाभागेत्वंगपुत्रेतदानृपे
तेप्रजापतयःसर्वेजग्मुश्चैवतपोवनम् ४९
गतेषुतेषुसर्वेषुवेनोराज्यमकारयत्
सूतउवाच-
सासुनीथासुतंदृष्ट्वासर्वराज्यप्रसाधकम् ५०
विशंकतेप्रभावेणशापात्तस्यमहात्मनः
ममपुत्रोमहाभागोधर्मत्राताभविष्यति ५१
इत्येवंचिंतयेन्नित्यंपूर्वपापाद्विशंकिता
धर्मांगानिसुपुण्यानिसुताग्रेपरिदर्शयेत् ५२
सत्यभावादिकान्पुण्यान्गुणान्सावैप्रकाशयेत्
इत्युवाचसुतंसाहिअहंधर्मसुतासुत ५३
पितातेधर्मतत्त्वज्ञस्तस्माद्धर्मंसमाचर
इत्येवंबोधयेन्नित्यंपुत्रंवेनंतदासती ५४
मातापित्रोस्तयोर्वाक्यंप्रजायुक्तंप्रपालयेत्
एवंवेनःप्रजापालःसंजातःक्षितिमंडले ५५
सुखेनजीवतेलोकःप्रजाधर्मेणरंजिताः

एवंराज्यप्रभावंतुवेनस्यापिमहात्मनः ५६
धर्मभावाःप्रवर्त्तंतेतस्मिञ्छासतिपार्थिवे ५७
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेषट्त्रिंशोऽध्यायः ३६

## सप्तत्रिंशोऽध्यायः

ऋषयऊचुः-
एवंवेनस्यचैवासीत्सृष्टिरेवमहात्मनः
धर्माचारंपरित्यज्यकथंपापमतिर्भवेत् १
सूतउवाच-
ज्ञानविज्ञानसंपन्नामुनयस्तत्त्ववेदिनः
शुभाशुभंवदंत्येवंतन्नस्यादिहचान्यथा २
तप्यमानेनतेनापिसुशंखेनमहात्मना
दत्तःशापःकथंविप्रानयथावच्चजायते ३
वेनस्यपातकाचारंसर्वमेववदाम्यहम्
तस्मिञ्छासतिधर्मज्ञेप्रजापालेमहात्मनि ४
पुरुषःकश्चिदायातश्छद्मलिगधरस्तदा
नग्नरूपोमहाकायःशिरोमुंडोमहाप्रभः ५
मार्जनींशिखिपत्राणांकक्षायांसहिधारयन्
गृहीतंपानपात्रंतुनालिकेरमयंकरे ६
पठमानोह्यसच्छास्त्रंवेदधर्मविदूषकम्
यत्रवेनोमहाराजस्तत्रायातस्त्वरान्वितः ७
सभायांतस्यवेनस्यप्रविवेशसपापवान्
तंदृष्ट्वासमनुप्राप्तंवेनःप्रश्नंतदाकरोत् ८
भवान्कोहिसमायातईदृग्रूपधरोमम
सभायांवर्तमानस्यपुरःकस्मात्समागतः ९
कोवेषःकिंनुतेनामकोधर्मःकर्मतेवद
कोवेदस्तेकआचारःकिंतपःकाप्रभावना १०
किंज्ञानंकःप्रभावस्तेकिंसत्यंधर्मलक्षणम्
तत्त्वंसर्वंसमाचक्ष्वममाग्रेसत्यमेवच ११
श्रुत्वावेनस्यतद्वाक्यंपापोवाक्यमुदाहरत्

पातकउवाच–
करोष्येवंवृथाराज्यंमहामूढोनसंशयः १२
अहंधर्मस्यसर्वस्वमहंपूज्यतमोसुरैः
अहंज्ञानमहंसत्यमहंधातासनातनः १३
अहंधर्मअहंमोक्षःसर्वदेवमयोह्यहम्
ब्रह्मदेहात्समुद्भूतःसत्यसंधोऽस्मिनान्यथा १४
जिनरूपंविजानीहिसत्यधर्मकलेवरम्
मामेवहिप्रधावंतियोगिनोज्ञानतत्पराः १५
वेनउवाच–
तवैवकीदृशंकर्मकिंतेदर्शनमेवच
किमाचारोवदस्वैहिइत्युक्तंतेनभूभुजा १६
पातकउवाच–
अर्हंतोदेवतायत्रनिर्ग्रंथोदृश्यतेगुरुः
दयाचैवपरोधर्मस्तत्रमोक्षःप्रदृश्यते १७
दर्शनेस्मिन्नसंदेहआचारान्प्रवदाम्यहम्
यजनंयाजनंनास्तिवेदाध्ययनमेवच १८
नास्तिसंध्यातपोदानंस्वधास्वाहाविवर्जितम्
हव्यकव्यादिकंनास्तिनैवयज्ञादिकाक्रिया १९
पितृणांतर्पणंनास्तिनातिथिर्वैश्वदेविकम्
क्षपणस्यवरापूजाअर्हतोध्यानमुत्तमम् २०
अयंधर्मसमाचारोजैनमार्गेप्रदृश्यते
एतत्तेसर्वमाख्यातंनिजधर्मस्यलक्षणम् २१
वेनउवाच–
वेदप्रोक्तोयथाधर्मोयत्रयज्ञादिकाःक्रियाः
पितृणांतर्पणंश्राद्धंवैश्वदेवंनदृश्यते २२
नदानंतपएवास्तिक्वास्तेधर्मस्यलक्षणम्
वदसत्यंममाग्रेतुदयाधर्मंचकीदृशम् २३
पातकउवाच–
पंचतत्त्वप्रवृद्धोयंप्राणिनांकायएवच
आत्मावायुस्वरूपोयंतेषांनास्तिप्रसंगता २४

यथाजलेषुभूतानामपिसंगमवेहितत्
जायतेबुद्बुदाकारंतद्वद्भूतसमागमः २५
पृथ्वीभावोरजःस्थस्तुचापस्तत्रैवसंस्थिताः
ज्योतिस्तत्रप्रदृश्येतसुवायुर्वर्ततेत्रिषु २६
आकाशमावृणोत्पश्चाद्बुद्बुदत्वंप्रजायते
अप्सुमध्येप्रभात्येवसुतेजोवर्तुलंवरम् २७
क्षणमात्रंप्रदृश्येतक्षणान्नैवचदृश्यते
तद्वद्भूतसमायोगःसर्वत्रपरिदृश्यते २८
अंतकालेप्रयात्यात्मापंचपंचसुयांतिते
मोहमुग्धास्ततोमर्त्यावर्तंतेचपरस्परम् २९
श्राद्धंकुर्वंतिमोहेनक्षयाहेपितृतर्पणम्
क्वास्तेमृतःसमश्नातिकीदृशोऽसौनृपोत्तम ३०
किंज्ञानंकीदृशंकायंकेनदृष्टंवदस्वनः
मिष्टान्नंभोजयित्वाचतृप्तायांतिचब्राह्मणाः ३१
कस्यश्राद्धंप्रदीयेतसातुश्रद्धानिरर्थिका
अन्यदेवंप्रवक्ष्यामिवेदानांकर्मदारुणम् ३२
यदातिथिर्गृहेयातिमहोक्षंपचतेद्विजः
अजंवाराजराजेंद्रअतिथिंपरिभोजयेत् ३३
अश्वमेधमखेअश्वंगोमेधेवृषमेवच
नरमेधेनरंराजन्वाजपेयेतथाह्यजान् ३४
राजसूयेमहाराजप्राणिनांघातनंबहु
पुंडरीकेगजंहन्याद्गजमेधेऽथकुंजरम् ३५
सौत्रामण्यांपशुंमेध्यंमेषमेवप्रदृश्यते
नानारूपेषुसर्वेषुश्रूयतांनृपनंदन ३६
नानाजातिविशेषाणांपशूनांघातनंस्मृतम्
यच्चापिदीयतेदानंकिंतद्दानस्यलक्षणम् ३७
ज्ञेयंतदन्नमुच्छिष्टंक्रियतेभूरिभोजनम्
अत्यंतदोषहीनांस्तान्हिंसंतियन्महामखे ३८
तत्रकिंदृश्यतेधर्मःकिंफलंतत्रभूपते
पशूनांमारणंयत्रनिर्दिष्टंवेदपंडितैः ३९

तस्माद्विनष्टधर्मंचनपुरायंमोन्नदायकम्
दयांविनाहियोधर्मःसधर्मोविफलायते ४०
जीवानांपालनंयत्रतत्रधर्मोनसंशयः
स्वाहाकारःस्वधाकारस्तपःसत्यंनृपोत्तम ४१
दयाहीनंचापलंस्यान्नास्तिधर्मस्तुतत्रहि
एतेवेदानवेदाःस्युर्दयायत्रनविद्यते ४२
दयादानपरोनित्यंजीवमेवप्ररन्नयेत्
चांडालोऽप्यथशूद्रोवासवैब्राह्मणउच्यते ४३
ब्राह्मणोनिर्दयोयोवैपशुघातपरायणः
सवैसुनिर्दयःपापीकठिनःक्रूरचेतनः ४४
वंचकैःकथितोवेदोयोवेदोज्ञानवर्जितः
यत्रज्ञानंभवेन्नित्यंतत्रवेदःप्रतिष्ठति ४५
दयाहीनेषुवेदेषुविप्रेषुचमहामते
नास्तिसत्यंक्रियातत्रवेदविप्रेषुवैतदा ४६
वेदानवेदाराजेंद्रब्राह्मणाःसत्यवर्जिताः
दानस्यापिफलंनास्तितस्माद्दानंनदीयते ४७
यथाश्राद्धस्यवैचिह्नंतथादानस्यलन्नणम्
जिनस्यापिचयद्धर्मंभुक्तिमुक्तिप्रदायकम् ४८
तवाग्रेऽहप्रवन्द्यामिबहुपुरायप्रदायकम्
श्रादौदयाप्रकर्तव्याशांतभूतेनचेतसा ४९
श्राराधयेद्धृदादेवंजिनंयेनचराचरम्
मनसाशुद्धभावेनजिनमेकंप्रपूजयेत् ५०
नमस्कारःप्रकर्तव्यस्तस्यदेवस्यनान्यथा
मातापित्रोस्तुवैपादौकदानैवप्रवंदयेत् ५१
श्रन्येषामपिकावार्ताश्रूयतांराजसत्तम
वेनउवाच–
एतेविप्राश्चश्राचार्यागंगाद्याःसरितस्तथा ५२
वदंतिपुरायतीर्थानिबहुपुरायप्रदानिच
तत्किंवदस्वसत्यंमेयदिधर्ममिहेच्छसि ५३
पातकउवाच–

आकाशाद्वैमहाराजमेघावर्षंतिवैजलम्
भूमौहिपर्वतेष्वेवंसर्वत्रपतितेजलम् ५४
सआप्लाव्यततस्तिष्ठेद्दयांसर्वत्रभावयेत्
नद्यःपापप्रवाहास्तुतासुतीर्थंश्रुतंकथम् ५५
जलाशयामहाराजतडागाःसागरास्तथा
पृथिव्याधारकाश्चैवगिरयोअश्मराशयः ५६
नास्त्येतेषुचवैतीर्थंजलैर्जलदमुत्तमम्
स्नानेयदामहत्पुण्यंकस्मान्मत्स्येषुवैनहि ५७
दृष्टास्नानेनवैसिद्धिर्मीनाःशुद्ध्यंतिनान्यथा
यत्रजिनस्तत्रतीर्थंतत्रधर्मःसनातनः ५८
तपोदानादिकंसर्वंपुण्यंतत्रप्रतिष्ठितम् ५९
एकोजिनःसर्वमयोनृपेंद्रनास्त्येवधर्मंपरमंहितीर्थम्
अयंतुलाभःपरमस्तुतस्माद्ध्यायस्वनित्यंसुसुखोभविष्यसि ६०
विनिंद्यधर्मंसकलंसवेदंदानंसपुण्यंपरयज्ञरूपम्
पापस्वभावैर्बहुबोधितोनृपस्त्वंगस्यपुत्रोभुवितेनपापिना ६१
इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे
वेनोपाख्यानेसप्तत्रिंशोऽध्यायः ३७

## अष्टत्रिंशोऽध्यायः

सूतउवाच–
एवंसंबोधितोवेनःपापभावंगतःकिल
पुरुषेणतेनजैनेनमहापापेनमोहितः १
नमस्कृत्यततःपादौतस्यैवचदुरात्मनः
वेदधर्मंपरित्यज्यसत्यधर्मादिकांक्रियाम् २
सुयज्ञानांनिवृत्तिःस्याद्वेदानांहितथैवच
पुण्यशास्त्रमयोधर्मस्तदानैवप्रवर्तितः ३
सर्वपापमयोलोकःसंजातस्तस्यशासनात्
नैवयागाश्चवेदाश्चधर्मशास्त्रार्थमुत्तमम् ४
नदानाध्ययनंविप्रास्तस्मिञ्छासतिपार्थिवे
एवंधर्मप्रलोपोभून्महत्पापंप्रवर्तितम् ५

अंगेनवार्यमाणस्तुअन्यथाकुरुतेभृशम्
ननामपितुःपादौमातुश्चैवदुरात्मवान् ६
सनकस्यापिविप्रस्यअहमेकःप्रतापवान्
पित्रानिवार्यमाणश्चमात्राचैवदुरात्मवान् ७
नकरोतिशुभंपुरायंतीर्थदानादिकंकदा
आत्मभावानुरूपंचबहुकालंमहायशाः ८
पुनःसर्वैर्विचार्यैवंकस्मात्पापीव्यजायत
अंगप्रजापतेःपुत्रोवंशलाञ्छनमागतः ९
पुनःपप्रच्छधर्मात्मासुतांमृत्योर्महात्मनः
कस्यदोषात्समुत्पन्नोवदसत्यंममप्रिये १०
सुनीथोवाच-
पूर्वमेवस्ववृत्तांतमात्मपुरायंचनंदिनी
समाचष्टचअंगायममदोषान्महामते ११
बाल्येकृतंमयापापंसुशंखस्यमहात्मनः
तपसिसंस्थितस्यापिनान्यत्किंचित्कृतंमया १२
शप्ताहंकुप्यतातेनदुष्टातेसंततिर्भवेत्
इतिजानेमहाभागतेनायंदुष्टतांगतः १३
समाकरार्यमहातेजास्तयासहवनंययौ
गतेतस्मिन्महाभागेसभार्येचवनेतदा १४
सप्तैतेऋषयस्तत्रवेनपार्श्वंगतास्तथा
समाहूयततःप्रोचुरंगस्यतनयंप्रति १५
ऋषयऊचुः-
मावेनसाहसंकार्षीःप्रजापालोभवानिह
त्वयासर्वमिदंलोकंत्रैलोक्यंसचराचरम् १६
धर्मेचैवमहाभागसकलंहिप्रतिष्ठितम्
पापकर्मपरित्यज्यपुरायंकर्मसमाचर १७
एवमुक्तेषुतेष्वेवप्रहसन्वाक्यमब्रवीत्
वेनउवाच-
अहमेवपरोधर्मोऽहमेवार्हःसनातनः १८
अहंधाताअहंगोप्ताअहंवेदार्थएवच

अहंधर्मोमहापुण्योजैनधर्मःसनातनः १९
मामेवकर्मणाविप्राभजध्वंधर्मरूपिणम्
ऋषयऊचुः-
ब्राह्मणाःक्षत्रियावैश्यास्त्रयोवर्णाद्विजातयः २०
सर्वेषामेववर्णानांश्रुतिरेषासनातनी
वेदाचारेणवर्तंतेतेनजीवंतिजंतवः २१
ब्रह्मवंशात्समुद्भूतोभवान्ब्राह्मणएवच
पश्चाद्राजापृथिव्याश्चसंजातःकृतविक्रमः २२
राजपुण्येनराजेंद्रसुखंजीवंतिवैद्विजाः
राज्ञःपापेननश्यंतितस्मात्पुण्यंसमाचर २३
समादृतस्त्वयाधर्मःकृतश्चापिनराधिप
त्रेतायुगस्यकर्मापिद्वापरस्यतथानहि २४
कलेश्चैवप्रवेशंतुवर्त्तयिष्यंतिमानवाः
जैनधर्मंसमाश्रित्यसर्वेपापप्रमोहिताः २५
वेदाचारंपरित्यज्यपापंयास्यंतिमानवाः
पापस्यमूलमेवंवैजैनधर्मंनसंशयः २६
अनेनमुग्धाराजेंद्रमहामोहेनपातिताः
मानवाःपापसंघातास्तेषांनाशायनान्यथा २७
भविष्यत्येवगोविंदःसर्वपापापहारकः
स्वेच्छारूपंसमासाद्यसंहरिष्यतिपातकात् २८
पापेषुसंगतेष्वेवंम्लेच्छनाशायवैपुनः
कल्किरेवस्वयंदेवोभविष्यतिनसंशयः २९
व्यवहारंकलेश्चैवत्यजपुण्यंसमाश्रय
वर्तयस्वहिसत्येनप्रजापालोभवस्वहि ३०
वेनउवाच-
अहंज्ञानवतांश्रेष्ठःसर्वंज्ञातंमयाइह
योऽन्यथावर्ततेचैवसदंड्योभवतिध्रुवम् ३१
अत्यर्थंभाषमाणंतंराजानंपापचेतनम्
कुपितास्तेमहात्मानःसर्वेवैब्रह्मणःसुताः ३२
कुपितेष्वेवविप्रेषुवेनोराजामहात्मसु

ब्रह्मशापभयात्तेषांवल्मीकंप्रविवेशह ३३
अथतेमुनयःक्रुद्धावेनंपश्यंतिसर्वतः
ज्ञात्वाप्रनष्टंभूपंतंवल्मीकस्थंसुसांप्रतम् ३४
बलादानिन्युस्तंविप्राःक्रूरंतंपापचेतनम्
दृष्ट्वाचपापकर्माणंमुनयःसुसमाहिताः ३५
सव्यंपाणिंममंथुस्तेभूपस्यजातमन्यवः
तस्माज्जातोमहाह्रस्वोनीलवर्णोभयंकरः ३६
बर्बरोरक्तनेत्रस्तुबाणपाणिर्धनुर्द्धरः
सर्वेषामेवपापानांनिषादानांबभूवह ३७
धातापालयिताराजाम्लेच्छानांतुविशेषतः
तंदृष्ट्वापापकर्माणमृषयस्तुमहामते ३८
ममंथुर्दक्षिणंपाणिंवेनस्यापिमहात्मनः
तस्माज्जातोमहात्मासयेनदुग्धावसुंधरा ३९
पृथुर्नाममहाप्राज्ञोराजराजोमहाबलः
तस्यपुण्यप्रसादाच्चवेनोधर्मार्थकोविदः ४०
चक्रवर्तिपदंभुक्त्वाप्रसादात्तस्यचक्रिणः
जगामवैष्णवंलोकंतद्विष्णोःपरमंपदम् ४१
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेऽष्टत्रिंशोऽध्यायः ३८

## एकोनचत्वारिंशोऽध्यायः

ऋषयऊचुः-
कथंवेनोगतःस्वर्गंपापंत्यक्त्वाप्रदूरतः
तन्नोविस्तरतोऽत्रापिवदसत्यवतांवर १
सूतउवाच-
ऋषीणांपुण्यसंसर्गात्संवादाच्चद्विजोत्तम
कायस्यमथनात्पापोबहिस्तस्यविनिर्गतः २
पश्चाद्वेनःसपुण्यात्माज्ञानंलेभेचशाश्वतम्
रेवायादक्षिणेकूलेतपश्चचारसद्विजाः ३
तृणबिन्दोर्ऋषेश्चैवआश्रमेपापनाशने
वर्षाणांतुशतंसाग्रंकामक्रोधविवर्जितः ४

तस्योग्रतपसादेवःशंखचक्रगदाधरः
प्रसन्नोभून्महाभागानिष्पापस्यनृपस्यवै ५
उवाचचप्रसन्नोऽस्मिव्रियतांवरउत्तमः
वेनउवाच-
यदिदेवप्रसन्नोऽसिदेहिमेवरमुत्तमम् ६
अनेनापिशरीरेणगंतुमिच्छामित्वत्पदम्
पित्रासार्धंमहाभागमात्राचैवसुरेश्वर
तवैवतेजसादेवतद्विष्णोःपरमंपदम् ७
श्रीवासुदेवउवाच-
क्वगतोऽसौमहामोहोयेनत्वंमोहितोनृप
लोभेनमोहयुक्तेनतमोमार्गेनिपातितः ८
वेनउवाच-
यन्मेपूर्वकृतंपापंतेनाहंमोहितोविभो
अतोमामुद्धरास्मात्त्वंपापाच्चैवसुदारुणात् ९
प्रजप्तव्यमथोपठ्यंतद्वदानुग्रहाद्विभो
भगवानुवाच-
साधुभूपमहाभागपापंतेनाशमागतम् १०
शुद्धोसितपसाचत्वंततःपुण्यंवदाम्यहम्
पुरावैब्रह्मणातातपृष्टोहंभवतायथा ११
तस्मैयदुदितंवत्सतत्तेसर्वंवदाम्यहम्
एकदाब्रह्मणाध्यानस्थितेननाभिपंकजे १२
प्रादुरासतदातस्यवरदानायसुव्रत
तेनपृष्टंमहत्पुण्यंस्तोत्रंपापप्रणाशनम् १३
वासुदेवाभिधानंचसुगतिप्रदमिच्छता
स्तोत्राणांपरमंतस्मैवासुदेवाभिधंमहत् १४
सर्वसौख्यप्रदंनृणांपठतांजपतांसदा
उपादिशंमहाभागविष्णुप्रीतिकरंपरम् १५
विष्णुरुवाच-
एतत्सर्वंजगद्व्याप्तंमयात्वव्यक्तमूर्तिना
अतोमांमुनयःप्राहुर्विष्णुंविष्णुपरायणाः १६

वसंतियत्रभूतानिवसत्येषुचयोविभुः
सवासुदेवोविज्ञेयोविद्वद्भिरहमादरात् १७
संकर्षतिप्रजाश्चांतेह्यव्यक्तायततोविभुः
ततःसंकर्षणोनाम्नाविज्ञेयःशरणागतैः १८
इंगितेकामरूपोहंबहुस्यामितिकाम्यया
प्रद्युम्नोहंबुधैस्तस्माद्विज्ञेयोस्मिसुतार्थिभिः १९
अत्रलोकेविनाचेशौसर्वेशौहरकेशवौ
निरुद्धोहंयोगबलान्नकेनातोनिरुद्धवत् २०
विश्वाख्योहंप्रतिजगज्ज्ञानविज्ञानसंयुतः
अहमित्यभिमानीचजाग्रच्चिंतासमाकुलः २१
तैजसोहंजगच्चेष्टामयश्चेंद्रियरूपवान्
ज्ञानकर्मसमुद्रिक्तःस्वप्नावस्थांगतोह्यहम् २२
प्राज्ञोहमधिदैवात्माविश्वाधिष्ठानगोचरः
सुषुप्तावास्थितोलोकादुदासीनोविकल्पितः २३
तुरीयोहंनिर्विकारीगुणावस्थाविवर्जितः
निर्लिप्तःसाक्षिवद्विश्वप्रतिबिंबितविग्रहः २४
चिदाभासश्चिदानंदश्चिन्मयश्चित्स्वरूपवान्
नित्योक्षरोब्रह्मरूपोब्रह्मन्नेवमवेहिमाम् २५
भगवानुवाच-
इत्युक्त्वांतर्दधेविष्णुःस्वरूपंब्रह्मणेपुरा
सोपिज्ञात्वाजगद्व्याप्तिंकृतात्मासमभूत्क्षणात् २६
राजंस्त्वमपिशुद्धात्मापृथोर्जन्मनएवच
तथाप्याराधयविभुंस्तोत्रेणानेनसुव्रत २७
तुष्टोविष्णुस्तमभ्याहवरंवरयमानद
वेनउवाच-
सुगतिंदेहिमेविष्णोदुष्कृतात्तारयस्वमाम् २८
शरणंत्वांप्रपन्नोस्मिकारणंवदसद्गतेः
विष्णुरुवाच-
पूर्वमेवमहाभागत्वंगेनापिमहात्मना २९
अहमाराधितस्तेनतस्मैदत्तोवरोमया

प्रयास्यसिमहाभागवैष्णवंलोकमुत्तमम् ३०
कर्मणास्वेनविप्रेंद्रपुण्येननृपनंदन
आत्मार्थेत्वंमहाभागवरमेवप्रयाचय ३१
शृणुवेनमहाभागवृत्तांतंपूर्वसंभवम्
तवमात्रेपुरादत्तःशापःक्रुद्धेनभूपते ३२
सुशंखेनसुनीथायैबाल्येपूर्वंमहात्मना
ततस्त्वंगेवरोदत्तोमयैवविदितात्मना ३३
त्वांसमुद्धर्त्तुकामेनसुपुत्रस्तेभविष्यति
एवमुक्त्वातुपितरंतवाहंगुणवत्सल ३४
भवदंगात्समुद्भूतःकरिष्येलोकपालनम्
दिवींद्रोहियथाभातितथाहंभूतलेस्थितः ३५
आत्मावैजायतेपुत्रइतिसत्यवतीश्रुतिः
अतस्त्वंसुगतिंवत्सलभिष्यसिवरान्मम ३६
गत्यर्थमात्मनोराजन्दानमेकंसमाचर
यस्त्वांपातकरूपोऽहसुनीथायाःपरंतप ३७
अब्रुवन्नग्नरूपेणकर्तुंत्वांतुविधर्मगम्
अन्यथातुसुशंखस्यवाक्यमेवान्यथाभवेत् ३८
अतोविधिर्निषेधश्चह्यहमेवनृपोत्तम
कर्मानुरूपफलदोबुद्ध्यतीतोगुणाग्रहः ३९
दानमेवपरंश्रेष्ठंदानंसर्वप्रभावकम्
तस्माद्दानंददस्वत्वंदानात्पुण्यंप्रवर्तते ४०
दानेननश्यतेपापंतस्माद्दानंददस्वहि
अश्वमेधादिभिर्यज्ञैर्यजस्वनृपसत्तम ४१
भूमिदानादिकंदानंब्राह्मणेभ्योददस्ववै
सुदानात्प्राप्यतेभोगःसुदानात्प्राप्यतेयशः ४२
सुदानाज्ञायतेकीर्तिःसुदानात्प्राप्यतेसुखम्
दानेनस्वर्गमाप्नोतिफलंतत्रभुनक्तिच ४३
दत्तस्यापिसुदानस्यश्रद्धायुक्तस्यसत्तम
कालेप्राप्तेव्रजेत्तीर्थंपुण्यस्यापिफलंत्विदम् ४४
पात्रभूतायविप्रायश्रद्धापूतेनचेतसा

योददातिमहादानंमयिभावंनिवेश्यच ४५
तस्याहंसकलंदद्मिमनसायंयमिच्छति
वेनउवाच–
कालंदानस्यमेब्रूहिकीदृक्कालस्यलक्षणम् ४६
तीर्थस्यापिचयद्रूपंपात्रस्यापिसुलक्षणम्
दानस्यापिजगन्नाथविधिंविस्तरतोवद ४७
प्रसादसुमुखोभूत्वादयामेयदिवर्त्तते
श्रीकृष्णउवाच–
दानकालंप्रवक्ष्यामिनित्यं नैमित्तिकंनृप ४८
काम्यंचान्यंमहाराजचतुर्थप्रापकंपुनः
सूर्योदयस्यवेलायांपापंनश्यतिसर्वतः ४९
अंधकाराधिकाघोरानराणांनाशकारकाः
दिविसूर्योममांशोऽयतेजसांकल्पितोनिधिः ५०
तस्यैवतेजसादग्धाभस्मतांयांतिकिल्बिषाः
उदयंतंममांशंयोदृष्ट्वादत्तेतुवार्यपि ५१
तस्यकिंकथ्यतेभूपनित्यंपुण्यविवर्द्धनम्
संप्राप्तायांसुवेलायांतस्यांपुण्यकरोनरः ५२
स्नात्वाभ्यर्च्यपितृन्देवान्दानदाताभवेत्पुनः
यथाशक्तिप्रभावेनश्रद्धापूतेनचेतसा ५३
अन्नंपयःफलंपुष्पंवस्त्रंतांबूलभूषणम्
हेमरत्नादिकंचैवतस्यपुण्यमनंतकम् ५४
मध्याह्नेतुततोराजन्नपराह्णेतथैवच
मामुदृश्यचयोदद्यात्तस्यपुण्यमनंतकम् ५५
खाद्यपानादिकंमिष्टलेपनंगंधकुंकुमम्
कर्पूरादिकमेवापिवस्त्रालंकारसंयुतम् ५६
अविच्छिन्नंददात्येवंभोगसौख्यप्रदायकम्
नित्यकालोमयाख्यातोदानपूजार्थिनांशुभः ५७
अथातःसंप्रवक्ष्यामिनैमित्तिकमनुत्तमम्
त्रिकालेष्वपिदातव्यंदानमेवनसंशयः ५८
शून्यंदिनंनकर्तव्यमात्मनोहितमिच्छता

यस्मिन्कालेप्रदत्तंहिकिंचिद्दानंनराधिप ५९
तत्प्रभावान्महाप्राज्ञोबहुसामर्थ्यसंयुतः
धनाढ्योगुणवान्प्राज्ञःपंडितोऽपिविचक्षणः ६०
पक्षंमासंदिनंयावन्नदत्तंवैयदाशनम्
तमेववारयाम्येवभक्ष्याच्चैवनरोत्तमम् ६१
स्वमलंभक्षितंचैवअदत्वादानमुत्तमम्
उत्पादयाम्यहंरोगंसर्वभोगनिवारणम् ६२
तेषांकायेष्वसंतुष्टोबहुपीडाप्रदायकम्
मंदानलेनसंयुक्तंज्वरसंतापकारकम् ६३
त्रिकालेषुनदत्तंयैर्ब्राह्मणेषुसुरेषुच
स्वयमश्नातिमिष्टंतुतेनपापंमहत्कृतम् ६४
प्रायश्चित्तेनरौद्रेणतमेवंपरिशोधयेत्
उपवासैर्महाराजकायशोषकरादिकैः ६५
चर्मकारोयथाचर्मकुंडस्थोपरिनिर्घृणः
शोधयेच्चकषायैश्चतच्चर्मस्फोटयेद्यथा ६६
तथाहंपापकर्तारंशोधयामिनसंशयः
औषधीनांसुयोगाच्चकषायैःकटुकैर्ध्रुवम् ६७
उष्णोदकैश्चसंतापैर्वैद्यरूपेणनान्यथा
अन्येभुंजन्तितस्योग्रभोगान्पुण्यान्मनोनुगान् ६८
किंकरोतिसमर्थश्चनदत्तंदानमुत्तमम्
महतापापरूपेणतमेवंपरितापये ६९
नित्यकालस्ययद्दानमात्मार्थंपापिभिर्यथा
नदत्तंराजराजेंद्रश्रद्धापूतेनचेतसा ७०
तथाताञ्जारयाम्येतानुपायैर्दारुणैःकिल
वासुदेवउवाच-
नैमित्तिकंतथाकालंपुण्यंचैवतवाग्रतः ७१
प्रवक्ष्यामिनरश्रेष्ठसुबुद्ध्याशृणुतत्परः
अमावास्यामहाराजपौर्णमासीतथैवच ७२
यदाभवतिसंक्रांतिर्व्यतीपातोनरेश्वर
वैधृतिश्चयदाप्रोक्तायदाएकादशीभवेत् ७३

महामाघीतथाषाढीवैशाखीकार्तिकीतथा
अमासोमसमायोगेमन्वादिषुयुगादिषु ७४
गजच्छायातथाप्रोक्तापितृक्षयातथैवच
एतेनैमित्तिकाःख्यातास्तवाग्रेनृपसत्तम ७५
एतेषुदीयतेदानंतस्यदानस्ययत्फलम्
तत्फलंतुप्रवक्ष्यामिश्रूयतांनृपसत्तम ७६
मामुद्दिश्यनरोभक्त्याब्राह्मणायप्रयच्छति
तस्याहंनिर्विकल्पेनप्रयच्छामिनसंशयः ७७
गृहंसौख्यंमहाराजस्वर्गमोक्षादिकंबहु
काम्यंकालंप्रवक्ष्यामिदानस्यफलदायकम् ७८
व्रतानामेवसर्वेषांदेवादीनांतथैवच
दानस्यपुण्यकालंतुसंप्रोक्तंद्विजसत्तमैः ७९
आभ्युदयिकमेवापिकालंवक्ष्यामितेनृप
मखानामेवसर्वेषांवैवाहिकमनुत्तमम् ८०
पुत्रस्यजातमात्रस्यचौलमौंज्यादिकंतथा
प्रासादध्वजदेवानांप्रतिष्ठादिककर्मणि ८१
वापीकूपतडागानांगृहवास्तुमयंनृप
तदाभ्युदयिकंप्रोक्तंमातृणांयत्रपूजनम् ८२
तस्मिन्कालेददेद्दानंसर्वसिद्धिप्रदायकम्
आभ्युदयिकएवायंकालःप्रोक्तोनृपोत्तम ८३
अन्यच्चैवप्रवक्ष्यामिपापपीडानिवारणम्
मृत्युकालेचसंप्राप्तेक्षयंज्ञात्वानरोत्तम ८४
तत्रदानंप्रदातव्यंयममार्गसुखप्रदम्
नित्यनैमित्तिकाःकालाःकाम्याभ्युदयिकास्तथा ८५
अंत्यःकालोमहाराजसमाख्यातस्तवाग्रतः
एतेकालाःसमाख्याताःस्वकर्मफलदायकाः ८६
तीर्थस्यलक्षणंराजन्प्रवक्ष्यामितवाग्रतः
सुतीर्थानामियंगंगाभातिपुण्यासरस्वती ८७
रेवाचयमुनातापीतथाचर्मण्वतीनदी
सरयूर्घर्घरावेणासर्वपापप्रणाशिनी ८८

कावेरीकपिलाचान्याविशालाविश्वतारणी
गोदावरीसमाख्यातातुंगभद्रानरोत्तम ८९
पापानांभीतिदानित्यंभीमरथ्याप्रपठ्यते
देविकाकृष्णगंगाचअन्याःसरिद्वरोत्तमाः ९०
एतासांपुण्यकालेषुसंतितीर्थान्यनेकशः
ग्रामेवायदिवारण्येनद्यःसर्वत्रपावनाः ९१
तत्रतत्रप्रकर्तव्याःस्नानदानादिकाःक्रियाः
यदानज्ञायतेनामतासांतीर्थस्यसत्तमाः ९२
नामोच्चारंप्रकुर्वीतविष्णुतीर्थमिदंनृप
तीर्थस्यदेवतातद्वदहमेवनसंशयः ९३
मामेवमुच्चरेद्योवैतीर्थेदेवेषुसाधकः
तस्यपुण्यफलंजातंमन्नाम्नानृपनंदन ९४
अज्ञातानांसुतीर्थानांदेवानांनृपसत्तम
स्नानेदानेमहाराजमन्नामहिसमुच्चरेत् ९५
तीर्थानामेवराजेंद्रधात्राधात्र्यइमाःकृताः
सिंधवःसर्वपुण्यानांसर्वस्थाःक्षितिमंडले ९६
यत्रतत्रप्रकर्त्तव्यंस्नानदानादिकंनृप
अक्षयंफलमाप्नोतिसुतीर्थानांप्रसादतः ९७
तीर्थरूपामहापुण्याःसागरासप्तएवच
मानसाद्यास्तथाराजन्सरस्यश्चप्रकीर्तिताः ९८
निर्झराःपल्वलाःप्रोक्तास्तीर्थरूपानसंशयः
स्वल्पानद्योमहाराजतासुतीर्थंप्रतिष्ठितम् ९९
खातेष्वेवंचसर्वेषुवर्जयित्वाचकूपकम्
पर्वतास्तीर्थरूपाश्चमेर्वाद्याश्चमहीतले १००
यज्ञभूमिश्चयज्ञश्चअग्निहोत्रेयथास्थितः
श्राद्धभूमिस्तथाशुद्धादेवशालातथापुनः १०१
होमशालातथाप्रोक्तावेदाध्ययनवेश्मच
गृहेषुपुण्यसंयुक्तंगोस्थानंवरमुत्तमम् १०२
सोमपायीभवेद्यत्रतीर्थंतत्रप्रतिष्ठितम्
आरामोयत्रवैपुण्योअश्वत्थोयत्रतिष्ठति १०३

ब्रह्मवृक्षोभवेद्यत्रवटवृक्षस्तथैवच
अन्येचवन्यसंस्थानेतत्रतीर्थंप्रतिष्ठितम् १०४
एतेतीर्थाःसमाख्याताःपितामातातथैवच
पुराणंपठ्यतेयत्रगुरुर्यत्रस्वयंस्थितः १०५
सुभार्यातिष्ठतेयत्रतत्रतीर्थंनसंशयः
सुपुत्रस्तिष्ठतेयत्रतत्रतीर्थंनसंशयः १०६
एतेतीर्थाःसमाख्याताराजवेश्मतथैवच
वेनउवाच-
पात्रस्यलक्षणंब्रूहियस्मैदेयंसुरोत्तम १०७
प्रसादसुमुखोभूत्वाकृपयामममाधव
वासुदेवउवाच-
शृणुराजन्महाप्राज्ञपात्रस्यापिसुलक्षणम् १०८
यस्मैदेयंसुदानंचश्रद्धापूतैर्महात्मभिः
ब्राह्मणंसुकुलोपेतंवेदाध्ययनतत्परम् १०९
शांतंदांतंतपोयुक्तंशुक्लमेवविशेषतः
प्रज्ञावंतंज्ञानवंतंदेवपूजनतत्परम् ११०
सत्यवंतंमहापुण्यंवैष्णवंज्ञानपंडितम्
धर्मज्ञंमुक्तलौल्यंचपाखंडैस्तुविवर्जितम् १११
एवंपात्रंसमाख्यातमन्यदेवंवदाम्यहम्
एवमेतैर्गुणैर्युक्तंस्वसृपुत्रंनरोत्तमम् ११२
एतंपात्रंविजानीहिदुहितुस्तनयंततः
जामातरंमहाराजभावैरेतैश्चसंयुतम् ११३
गुरुंचदीक्षितंचैवपात्रभूतंनरोत्तम
एतान्येवसुपात्राणिदानयोग्यानिसत्तम ११४
वेदाचारसमोपेतस्तृप्तिंनैवचगच्छति
वर्जयेत्किलतंविप्रंतथाकाणंसुधूर्तकम् ११५
अतिकृष्णंमहाराजकपिलंपरिवर्जयेत्
कर्कटाक्षंसुनीलंचश्यावदन्तंविवर्जयेत् ११६
नीलदंतंतथाराजन्पीतदंतंतथैवच
गोघ्नंसुकृष्णदंतंचबर्बरंचातिपांशुलम् ११७

हीनांगमधिकांगंचकुष्ठिनंकुनखंतथा
दुश्चर्माणंमहाराजखल्वाटंपरिवर्जयेत् ११८
अन्यायेषुरतायस्यजायाविप्रस्यकस्यच
तस्मैदानंनदातव्यंयदिब्रह्मसमोभवेत् ११९
स्त्रीजितायनदातव्यंशाखारंडेमहामते
व्याधितायनदातव्यंमृतभोजिषुभूपते १२०
चोरायचनदातव्यंसयद्यत्रिसमोभवेत्
अतृप्तायनदातव्यंशावंतुपरिवर्जयेत् १२१
अतिस्तब्धायनोदेयंशठायचविशेषतः
वेदशास्त्रसमायुक्तःसदाचारेणवर्जितः १२२
श्राद्धेदानेचराजेंद्रनैवयुक्तःकदाभवेत्
अथदानंप्रवक्ष्यामिसफलंपुण्यदायकम् १२३
कालतीर्थसुपात्राणांश्रद्धायोगात्प्रजायते
नास्तिश्रद्धासमंपुण्यंनास्तिश्रद्धासमंसुखम् १२४
नास्तिश्रद्धासमंतीर्थंसंसारेप्राणिनांनृप
श्रद्धाभावेनसंयुक्तोमामेवंपरिसंस्मरेत् १२५
पात्रहस्तेप्रदातव्यंस्वल्पमेवनृपोत्तम
एवंविधस्यदानस्यविधियुक्तस्ययत्फलम् १२६
अनंतंतदवाप्नोतिमत्प्रसादात्सुखीभवेत् १२७

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे
वेनोपाख्यानेएकोनचत्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

वेनउवाच–
नित्यदानफलंदेवत्वत्तःपूर्वंमयाश्रुतम्
नैमित्तिकस्यदानस्यदत्तस्यापिहियत्फलम् १
तत्फलंमेसमाचक्ष्वत्वत्प्रसादात्प्रयत्नतः
महातृप्तिंनगच्छामिश्रोतुंश्रद्धाप्रवर्तते २
विष्णुरुवाच–
नैमित्तिकंप्रवक्ष्यामिदानमेवनृपोत्तम

महापर्वणिसंप्राप्तेयेनदानानिश्रद्धया ३
सत्पात्रेभ्यःप्रदत्तानितस्यपुरायफलंश‍ृणु
गजंरथंप्रदत्तेयोह्यश्वंचापिनृपोत्तम ४
सचभृत्यैस्तुसंयुक्तःपुरायदेशेनृपोत्तमः
जायतेहिमहाराजमत्प्रसादान्नसंशयः ५
राजाभवतिधर्मात्माज्ञानवान्बलवान्सुधीः
अजेयःसर्वभूतानांमहातेजाःप्रजायते ६
महापर्वणिसंप्राप्तेभूमिदानंददातियः
गोदानंवामहाराजसर्वभोगपतिर्भवेत् ७
ब्राह्मणायसुपुरायायदानंदद्यात्प्रयत्नतः
महादानानियोदद्यात्तीर्थेपर्वणिपात्रवित् ८
तेषांचिह्नंप्रवक्ष्यामिभूपतित्वंप्रजायते
तीर्थेपर्वणिसंप्राप्तेगुप्तदानंददातियः ९
निधीनामाशुसंप्राप्तिरक्षरापरिजायते
महापर्वणिसंप्राप्तेतीर्थेषुब्राह्मणायच १०
सुचैलंचमहादानंकांचनेनसमन्वितम्
पुरायंफलंप्रवक्ष्यामितस्यदानस्यभूपते ११
जायंतेबहवःपुत्राःसुगुणावेदपारगाः
आयुष्मंतः प्रजावंतोयशःपुरायसमन्विताः १२
विपुलाश्चैवजायंतेस्फीतालक्ष्मीर्महामते
सौख्यंचलभतेपुरायंधर्मवान्परिजायते १३
महापर्वणिसंप्राप्तेतीर्थेगत्वाप्रयत्नतः
कपिलांकांचनींदद्याद्ब्राह्मणायमहात्मने १४
तस्यपुरायंप्रवक्ष्यामिदानस्यचमहामते
कपिलादोमहाराजसर्वसौख्यान्प्रभुंजति १५
यावद्ब्रह्माप्रजीवेत्सतावत्तिष्ठतितत्रसः
महापर्वणिसंप्राप्तेअलंकृत्यचगांतदा १६
कांचनेनापिसंयुक्तांवस्त्रालंकारभूषणैः
तस्यदानस्यराजेंद्रफलभोगंवदाम्यहम् १७
विपुलाजायतेलक्ष्मीर्दानभोगसमाकुला

सर्वविद्यापतिर्भूत्वाविष्णुभक्तोभवेत्किल १८
विष्णुलोकेवसेन्मर्त्योयावत्तिष्ठतिमेदिनी
तीर्थंगत्वातुयोदद्याद्ब्राह्मणायविभूषणम् १९
भुक्त्वातुविपुलान्भोगानिन्द्रेणक्रीडतेसह
महापर्वणिसंप्राप्तेवस्त्रंचद्विजपुंगवे २०
दत्त्वान्नंभूमिसंयुक्तंपात्रेश्रद्धासमन्वितः
मोदतेसतुवैकुंठेविष्णुतुल्यपराक्रमः २१
सवस्त्रंकांचनंदत्त्वाद्विजायपरिशांतये
स्वेच्छयाग्निसदृशोवैकुंठेसवसेत्सुखी २२
सुवर्णस्यसुकुंभंचघृतेनपरिपूरयेत्
पिधानंरौप्यंकर्तव्यंवस्त्रहारैरलंकृतम् २३
पुष्पमालान्वितंकुर्याद्ब्रह्मसूत्रेणशोभितम्
प्रतिष्ठितंवेदमंत्रैस्तंसंपूज्यमहामते २४
उपचारैःपवित्रैश्चषोडशैःपरिपूजयेत्
स्वलंकृत्यततोदद्याद्ब्राह्मणायमहात्मने २५
षोडशैवततोगावःसवस्त्राःकांस्यदोहनाः
कुंभयुक्ताश्चचत्वारोदक्षिणांचसकांचनाम् २६
तथाद्वादशकागावोवस्त्रालंकारभूषणाः
पृथग्भूतायविप्रायदातव्यानात्रसंशयः २७
एवमादीनिदानानिचान्यानिनृपनंदन
तीर्थकालंसुसंप्राप्यविप्रावसथमेवच २८
श्रद्धाभावेनदातव्यंबहुपुण्यकरंभवेत्
विष्णुरुवाच-
विष्णुमुद्दिश्ययद्दानंकामनापरिकल्पितम् २९
तस्यदानस्यभावेनभावनापरिभावितः
तादृक्फलंसमश्नातिमानुषोनात्रसंशयः ३०
अभ्युदयंप्रवक्ष्यामियज्ञादिषुप्रवर्तते
तेनदानेनतस्यापिश्रद्धयाचद्विजोत्तम ३१
प्रज्ञावृद्धिंसमाप्नोतिनचदुःखंप्रविंदति
भोगान्भुनक्तिधर्मात्माजीवमानस्तुसांप्रतम् ३२

एंद्रांस्तुभुंक्तेभोगान्सदातादिव्यांगतिंगतः
स्वकुलंनयतेस्वर्गंकल्पानांचसहस्रकम् ३३
एवमाभ्युदयंप्रोक्तंप्राप्तंतेषुवदाम्यहम्
कायस्यचक्षयंज्ञात्वाजरयापरिपीडितः ३४
दानंतेनप्रदातव्यमाशांकस्यनकारयेत्
मृतेचमयिमेपुत्राअन्येस्वजनबांधवाः ३५
कथमेतेभविष्यंतिमांविनासुहृदोमम
तेषांमोहात्प्रमुग्धोवैनददातिसकिंचन ३६
मृत्युंप्रयातिमोहात्मारुदंतिमित्रबांधवाः
दुःखेनपीडिताःसर्वेमायामोहेनपीडिताः ३७
संकल्पयंतिदानानिमोक्षंवैचिंतयंतिच
तस्मिन्मृतेमहाराजमायामोहेगतेसति ३८
विस्मरंतिचदानानिलोभात्मानोददंतिन
योऽसौमृतोमहाराजयमपंथंसुदुःखितः ३९
तृषाक्षुधासमाक्रांतोबहुदुःखैःप्रपीडितः
तस्माद्दानंप्रदातव्यंस्वयमेवनसंशयः ४०
कस्यपुत्राश्चपौत्राश्चकस्यभार्यानृपोत्तम
संसारेनास्तिकःकस्यतस्माद्दानंप्रदीयते ४१
ज्ञानवताप्रदातव्यंस्वयमेवनसंशयः
अन्नंपानंचतांबूलमुदकंकांचनंतथा ४२
युग्मंवस्त्रंचछत्रंचस्वयमेवनसंशयः
जलपात्रारायनेकानिसोदकानिनृपोत्तम ४३
वाहनानिविचित्राणियानान्येवमहामते
नानागंधान्सकर्पूरंयमपंथसुखप्रदे ४४
उपानहौप्रदातव्येयदीच्छेद्विपुलंसुखम्
एतैर्दानैर्महाराजयमपंथंसुखेनवै ४५
प्रयातिमानवोराजन्यमदूतैरलंकृतम् ४६

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायांभूमिखंडे
वेनोपाख्यानेचत्वारिंशोऽध्यायः ४०

## एकचत्वारिंशोऽध्यायः

वेनउवाच-
पुत्रोभार्याकथंतीर्थंपितामाताकथंवद
गुरुश्चैवकथंतीर्थंतन्मेविस्तरतोवद १
श्रीविष्णुरुवाच-
अस्तिवाराणसीरम्यागंगायुक्तामहापुरी
तस्यांवसतिवैश्यैकःकृकलोनामनामतः २
तस्यभार्यामहासाध्वीपतिव्रतपरायणा
धर्माचारपरानित्यंसावैपतिपरायणा ३
सुकलानामपुण्यांगीसुपुत्राचारुमंगला
सत्यंवदासदाशुद्धाप्रियाकाराप्रियप्रिया ४
एवंगुणैःसमायुक्तासुभगाचारुकारिणी
सवैश्यउत्तमोनानाधर्मज्ञोज्ञानवान्गुणी ५
पुराणेश्रौतधर्मेचसदाश्रवणतत्परः
तीर्थयात्राप्रसंगेनबहुपुण्यप्रदायकम् ६
श्रद्धयानिर्गतोयात्रांतीर्थानांपुण्यमंगलाम्
ब्राह्मणानांप्रसंगेनसार्थवाहेनतेनच ७
प्रस्थितोधर्ममार्गंतुतमुवाचपतिव्रता
पतिस्नेहेनसंमुग्धाभर्तारंवाक्यमब्रवीत् ८
सुकलोवाच-
अहंतेधर्मतःपत्नीसहपुण्यकराप्रिय
पतिमार्गप्रतीक्ष्याहंपतिदेवंयजाम्यहम् ९
कदानैवमयात्याज्यंसामीप्यंतेद्विजोत्तम
तवच्छायांसमाश्रित्यकरिष्येधर्ममुत्तमम् १०
पतिव्रताख्यंपापघ्नंनारीणांगतिदायकम्
पुण्यस्त्रीकथ्यतेलोकेयास्यात्पतिपरायणा ११
युवतीनांपृथक्तीर्थंविनाभर्तुर्नशोभते
सुखदंनास्तिवैलोकेस्वर्गमोक्षप्रदायकम् १२
सव्यंपादंचभर्तुश्चप्रयागंविद्धिसत्तम
वामंचपुष्करंतस्ययानारीपरिकल्पयेत् १३

तस्यपादोदकस्नानात्तत्पुरयंपरिजायते
प्रयागपुष्करसमंस्नानंस्त्रीणांनसंशयः १४
सर्वतीर्थमयोभर्तासर्वपुरयमयःपतिः
मखानांयजनात्पुरयंयद्वैभवतिदीक्षिते १५
तत्फलंसमवाप्नोतिसेवयाभर्तुरेवहि
गयादीनांसुतीर्थानांयात्रांकृत्वाहियद्भवेत् १६
तत्फलंसमवाप्नोतिभर्तुःशुश्रूषणादपि
समासेनप्रवक्ष्यामितन्मेनिगदतःशृणु १७
नास्त्यासांहिपृथग्धर्मःपतिशुश्रूषणंविना
तस्मात्कांतसहायंतेकुर्वाणासुखदायिनी १८
तवच्छायांसमाश्रित्यग्रागमिष्यामिनान्यथा
विष्णुरुवाच-
रूपंशीलंगुणंभक्तिंसमालोक्यवयस्तथा १९
सौकुमार्यंविचार्यैवंकृकलःसपुनःपुनः
यद्येवंहिनयिष्यामिदुर्गमार्गंसुदुःखदम् २०
रूपनाशोभवेच्चास्याःशीतातपविलोडनात्
पद्मगर्भप्रतीकाशमस्याश्चांगंप्रवर्णकम् २१
झंझावातेनशीतेनकृष्णवर्णंभविष्यति
पंथाःकर्कशसुग्रावापादौचास्याःसुकोमलौ २२
एष्यतेवेदनांतीव्रामथोगंतुंनचक्षमा
क्षुत्तृष्णाभिपरीतांगीकीदृशीयंभविष्यति २३
वामांगीममचस्थानंसुखस्थानंवरानना
ममप्राणप्रियानित्यंनित्यंधर्मस्यचाश्रयः २४
नाशमेतियदाबालाममनाशोभवेदिह
इयंमेजीविकानित्यमियंप्राणस्यचेश्वरी २५
ननयिष्येवनंतीर्थमेकश्चैवाप्यहंव्रजे
चिंतयित्वाक्षणंनूनंकृकलेनमहात्मना २६
तस्यचित्तानुगोभावस्तयाज्ञातोनृपोत्तम
पुनरूचेमहाभागाभर्त्तारंप्रस्थितंतदा २७
ग्रनघानैववैत्याज्यापुरुषैःशृणुसत्तम

मूलमेवंहिधर्मस्यपुरुषस्यमहामते २८
एवंज्ञात्वामहाभागमामेवंनयसांप्रतम्
विष्णुरुवाच-
श्रुत्वासर्वंहितेनापिप्रियायाभाषितंबहु २९
प्रहस्यैववचोब्रूतेतामेवंकृकलःपुनः
नैवत्याज्याभवेद्भार्याप्राप्ताधर्मेणवैप्रिये ३०
येनभार्यापरित्यक्तासुनीताधर्मचारिणी
दशांगधर्मस्तेनापिपरित्यक्तोवरानने ३१
तस्मात्त्वामेवभद्रंतेनैवत्यद्व्येकदाप्रिये
विष्णुरुवाच-
एवमाभाष्यतांभार्यासंबोध्यचपुनःपुनः ३२
तस्याश्र्यज्ञातमात्रेणससार्थेनसमंगतः
गतेतस्मिन्महाभागेकृकलेपुण्यकर्मणि ३३
देवकर्मसुवेलायांकालेपुण्येशुभानना
नैवपश्यतिभर्तारंकृकलंनिजमंदिरे ३४
समुत्थायत्वरायुक्तारुदमानासुदुःखिता
वयस्यान्पृच्छतेभर्तुर्दुःखशोकाधिपीडिता ३५
युष्माभिर्वामहाभागादृष्टोऽसौकृकलोमम
प्राणेश्वरोगतःक्वापिभवंतोममबांधवाः ३६
यदिदृष्टोमहाभागाःकृकलोममसांप्रतम्
भर्तारंपुण्यकर्तारंसर्वज्ञंसत्यपंडितम् ३७
कथयंतुमहात्मानंयदिदृष्टोमहामतिः
तस्यास्तद्भाषितंश्रुत्वातामूचुस्तेमहामतिम् ३८
धर्मयात्राप्रसंगेननाथस्तेकृकलःशुभे
तीर्थयात्रांचकारासौकस्माच्छोचसिसुव्रते ३९
साधयित्वामहातीर्थंपुनरेष्यतिशोभने
एवमाश्वासितासाचपुरुषैराप्तकारिभिः ४०
पुनर्गेहंगताराजन्सुकलाचारुभाषिणी
रुरोदकरुणंदुःखंसुकलापिपरायणा ४१
यावदायातिमेभर्त्ताभूमौस्वप्स्यामिसंस्तरे

घृतंतैलंनभोद्त्येऽहदधिद्तीरंतथैवच ४२
लवरांचपरित्यक्तंतथातांबूलमेवच
मधुरंचतथाराजंस्त्यक्तंगुडादिकंतथा ४३
एकाहारानिराहारातावत्स्थास्येनसंशयः
यावच्चागमनंभर्तुःपुनरेवभविष्यति ४४
एवंदुःखान्विताभूत्वाएकवेणीधरापुनः
एककंचुकसंवीतामलिनाचबभूवसा ४५
मलिनेनापिवस्त्रेणएकेनैवस्थितापुनः
हाहाकारंप्रमुंचंतीनिःश्वसंतीसुदुःखिता ४६
वियोगानलसंदग्धाकृष्णांगीमलधारिणी
एवंदुःखसमाचारासुकृशाविह्वलातदा ४७
रोदमानादिवारात्रौनिद्रांलेभेनवैनिशि
त्तुधांनविंदतेराजन्दुःखेनविदलीकृता ४८
अथसख्यःसमायाताःपप्रच्छुःसुकलांतदा
सुकलेचारुसर्वांगिकस्माद्रोदिषिसंप्रति ४९
ततस्त्वंकारणंब्रूहिदुःखस्यास्यवरानने
सुकलोवाच–
समांत्यक्त्वागतोभर्ताधर्मार्थंधर्मतत्परः ५०
तीर्थयात्राप्रसंगेनअटतेमेदिनींततः
मांत्यक्त्वासगतःस्वामीनिर्दोषांपापवर्जिताम् ५१
अहंसाध्वीसमाचारासदापुरयापतिव्रता
मांत्यक्त्वासगतोभर्तातीर्थसाधनतत्परः ५२
तेनाहंदुःखितासख्योवियोगेनातिपीडिता
जीवनाशोवरंश्रेष्ठोवरंवैविषभद्तणम् ५३
वरमग्निप्रवेशश्चवरंकायविनाशनम्
नारींप्रियांपरित्यज्यभर्तायातिसुनिष्ठुरः ५४
भर्तृत्यागोवरं नैवप्राणत्यागोवरंसखि
वियोगंनसमर्थाहंसहितुंनित्यदारुणम् ५५
तेनाहंदुःखितासख्योवियोगेनापिनित्यशः
सख्यऊचुः–

तीर्थयात्रांगतोभर्तापुनरेष्यतितेपतिः ५६
वृथाशोषयसेकायंवृथाशोकंकरोषिवै
वृथात्वंतप्यसेबालेवृथाभोगान्परित्यजेः ५७
पिबस्वपानंभुंक्ष्वत्वंस्वप्रदत्तंहिपूर्वकम्
कस्यभर्तासुताःकस्यकस्यस्वजनबांधवाः ५८
कःकस्यनास्तिसंसारेसंबंधःकेनचैवहि
भक्ष्यतेभुज्यतेबालेसंसारस्यहितत्फलम् ५९
मृतेप्राणिनिकोऽश्नातिकोहिपश्यतितत्फलम्
पीयतेभुज्यतेबालेएतत्संसारतःफलम् ६०
सुकलोवाच-
भवतीभिःप्रयुक्तंयत्तन्नस्याद्वेदसंमतम्
यातुभर्तुःपृथग्भूतातिष्ठत्येकासदैवहि ६१
पापभूताभवेन्नारीतांनमन्यंतिसज्जनाः
भर्तुःसार्धंसदासख्योदृष्टोवेदेषुसर्वदा ६२
संबंधःपुण्यसंसर्गाज्जायतेनात्रसंशयः
नारीणांचसदातीर्थंभर्ताशास्त्रेषुपठ्यते ६३
तमेवावाहयेन्नित्यंवाचाकायेनकर्मभिः
मनसापूजयेन्नित्यंभावसत्येनतत्परा ६४
भर्तुःपार्श्वंमहातीर्थंदक्षिणांगंसदैवहि
तमाश्रित्ययदानारीगृहस्थापरिवर्त्तयेत् ६५
यजतेदानपुण्यैश्चतस्यदानस्ययत्फलम्
वाराणस्यांचगंगायांयत्फलंनचपुष्करे ६६
द्वारकायांनचावन्त्यांकेदारेशशिभूषणे
लभतेनैवसानारीयजमानासदाकिल ६७
तादृशंफलमेवंसानप्राप्नोतिकदासखि
सुमुखंपुत्रसौभाग्यंस्नानंदानंचभूषणम् ६८
वस्त्रालंकारसौभाग्यंरूपंतेजःफलंसदा
यशःकीर्तिमवाप्नोतिगुणंचवरवर्णिनी ६९
भर्तुःप्रसादात्सर्वंचलभतेनात्रसंशयः
विद्यमानेयदाकांतेअन्यंधर्मंकरोतिया ७०

निष्फलंजायतेतस्याःपुंश्चलीपरिकथ्यते
नारीणांयौवनंरूपमवतारंस्मृतंध्रुवम् ७१
एकस्यापिहिभर्तुश्चतस्यार्थेभूमिमंडले
सुपुत्रासुयशानारीपरिकथ्येतवैसदा ७२
तुष्टेभर्तरिसंसारेदृश्यानारीनसंशयः
पतिहीनाभवेन्नारीभवेत्साभूमिमंडले ७३
कुतस्तस्याःसुखंरूपंयशःकीर्तिःसुताभुवि
सुदौर्भाग्यंमहद्दुःखंसंसारेपरिभुज्यते ७४
पापभागाभवेत्साचदुःखाचारासदैवहि
तुष्टेभर्तरितस्यास्तुतुष्टाःसर्वाश्चदेवताः ७५
तुष्टेभर्तरितुष्यंतिऋषयोदेवमानवाः
भर्तानाथोगुरुर्भर्तादेवतादैवतैःसह ७६
भर्तातीर्थश्चपुरायश्चनारीणांनृपनंदन
शृंगारंभूषणंरूपंवर्णंसौगंधमेवच ७७
कृत्वासातिष्ठतेनित्यंवर्जयित्वासुपर्वसु
शृंगारैर्भूषणैःसातुशुशुभेसायदापतिः ७८
पत्याविनाभवत्येवंन्नीरंसर्पमुखेयथा
भर्तुरर्थेमहाभागासुव्रताचारुमंगला ७९
गतेभर्तरियानारीशृंगारंकुरुतेयदि
रूपंवर्णंचतत्सर्वंशवरूपेणजायते ८०
वदंतिभूतलेलोकाःपुंश्चलीयंनसंशयः
तस्माद्भर्तुर्वियुक्तायानार्याःशृणुतभूतले ८१
इच्छंत्यावैमहासौख्यंभवितव्यंकदाचन
सुजायायाःपरोधर्मोभर्ताशास्त्रेषुगीयते ८२
तस्माद्वैशाश्वतोधर्मोनत्याज्योभार्ययाकिल
एवंधर्मंविजानामिकथंभर्तापरित्यजेत् ८३
इत्यर्थेश्रूयतेसख्यइतिहासःपुरातनः
सुदेवायाश्चचरितंसुपुरायंपापनाशनम् ८४

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित
एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशत्तमोऽध्यायः

सख्यऊचुः-
सुदेवाकात्वयाप्रोक्ताकिमाचारावदस्वनः
त्वयाप्रोक्तंमहाभागेवदनःसत्यमेवच १
सुकलोवाच-
अयोध्यायांमहाराजःसआसीद्धर्मकोविदः
मनुपुत्रोमहाभागःसर्वधर्मार्थतत्परः २
इक्ष्वाकुर्नामसर्वज्ञोदेवब्राह्मणपूजकः
तस्यभार्यासदापुण्यापतिव्रतपरायणा ३
तयासार्द्धंयजेद्यज्ञंतीर्थानिविविधानिच
वेदराजस्यवीरस्यकाशीशस्यमहात्मनः ४
सुदेवानामवैकन्यासत्याचारपरायणा
उपयेमेमहाराजइक्ष्वाकुस्तांमहीपतिः ५
सुदेवाचारुसर्वांगीसत्यव्रतपरायणा
तयासार्द्धंसवैराजाजनानांपुण्यनायकः ६
सरेमेनृपशार्दूलोनित्यंचप्रिययातया
एकदातुमहाराजस्तयासार्द्धंवनंययौ ७
गंगारण्यंसमासाद्यमृगयांक्रीडतेसदा
सिंहान्हत्वावराहांश्चगजांश्चमहिषांस्तथा ८
क्रीडमानस्यतस्याग्रेवराहश्चसमागतः
बहुशूकरयूथेनपुत्रपौत्रैरलंकृतः ९
एकाचशूकरीतस्यप्रियापार्श्वेप्रतिष्ठिता
वराहैःशूकरैस्तस्यतमेवपरिवारिता १०
दृष्ट्वाचराजराजेंद्रंदुर्जयंमृगयारतम्
पर्वताधारमाश्रित्यभार्ययासहशूकरः ११
तिष्ठत्येकःसुवीर्येणपुत्रान्पौत्रान्गुरूञ्छिशून्
ज्ञात्वातेषांमहाराजमृगाणांकदनंमहत्१२
तानुवाचसुतान्पौत्रान्भार्यांतांचसशूकरः
कोशलाधिपतिर्वीरोमनुपुत्रोमहाबलः १३
क्रीडतेमृगयांकांतेमृगान्संहरतेबहून्

समांदृष्ट्वामहाराजएष्यतेनात्रसंशयः १४
अन्येषांलुब्धकानांमेनास्तिप्राणभयंध्रुवम्
ममरूपंनृपोदृष्ट्वाक्षमांनैवकरिष्यति १५
हर्षेणमहताविष्टोबाणपाणिर्धनुर्द्धरः
श्वभिर्युक्तोमहातेजालुब्धकैःपरिवारितः १६
प्रियेकरिष्यतेघातंममाप्येवंनसंशयः १७
शूकर्युवाच-
यदायदापश्यसिलुब्धकान्बहून्महावनेकांतसमायुधान्बहून्
एतैस्तुपुत्रैर्ममपौत्रकैःसमंदूरंनुभोयासिपलायमानः १८
त्यक्त्वासुधैर्यंबलपौरुषंमहन्महाभयेनापिविषराणचेतनः
दृष्ट्वानृपेंद्रंपुरुषोत्तमोत्तमंकरोषिकिंकांतवदस्वकारणम् १९
तस्यास्तुवाक्यंसनिशम्यकोलउवाचतांशूकरराजउत्तरम्
यदर्थभीतोस्मिसुलुब्धकात्प्रियेदृष्ट्वागतोदूरनिशम्यशूकरान् २०
सुलुब्धकाःपापकराःशठाःप्रियेकुर्वंतिपापंगिरिदुर्गकंदरे
सदैवदुष्टाबहुपापचिंतकाजाताश्चसर्वेपरिपापिनांकुले २१
तेषांहिहस्तान्मरणाद्बिभेमिमृतोपियास्यामिपुनश्चपापम्
दूरंगिरिंपर्वतकंदरंचव्रजामिकांतेअपमृत्युभीतः २२
अयंहिपुरयोनरनाथआगतोविश्वाधिकःकेशवरूपभूपः
युद्धंकरिष्येसमरेमहात्मनासार्द्धंप्रियेपौरुषविक्रमेण २३
जेष्यामिभूपंयदिस्वेनतेजसाभोक्ष्यामिकीर्तिंत्वतुलांपृथिव्याम्
तेनाहतोवीरवरेणसंगरेयास्यामिलोकंमधुसूदनस्य २४
ममांगभूतेनपलेनमेदसातृप्तिंपरांयास्यतिभूमिनाथः
तृप्ताभविष्यंतिसुलोकदेवताअस्मादयंचागतोवज्रपाणिः २५
अस्यैवहस्तान्मरणंयदाभवेल्लाभश्चमेसुंदरिकीर्तिरुत्तमा
तस्माद्यशोभूमितलेजगत्त्रयेव्रजामिलोकंमधुसूदनस्य २६
नैवंभीतोस्मिक्षुब्धोस्मिगतोऽहगिरिसानुषु
पापाद्भीतोगतःकांतेधर्मंदृष्ट्वास्थितोह्यहम् २७
नजानेपातकंपूर्वमन्यजन्मनिचार्जितम्
येनाहंशौकरींयोनिंगतोऽहपापसंचयात् २८
क्षालयिष्याम्यहंघोरंपूर्वपातकसंचयम्

बाणोदकैर्महाघोरैःसुतीक्ष्णैर्निशितैःशतैः २९
पुत्रान्पौत्रांस्तुवाराहिकन्यांकुटुंबबालकम्
गिरिंगच्छगृहीत्वातुममर्मोहमिमंत्यज ३०
ममस्नेहंपरित्यज्यहरिरेषसमागतः
अस्यहस्तात्प्रयास्यामितद्विष्णोःपरमंपदम् ३१
दैवेनापिममाद्यैवस्वर्गद्वारमनुत्तमम्
उद्घाटितकपाटंतुयास्यामिसुमहादिवम् ३२
सुकलोवाच-
तच्छ्रुत्वावचनंतस्यशूकरस्यमहात्मनः
उवाचतत्प्रियासख्यःसीदमानांतरातदा ३३
शूकर्युवाच-
यस्मिन्यूथेभवान्स्वामीपुत्रपौत्रैरलंकृतः
मित्रैश्चभ्रातृभिश्चैवअन्यैःस्वजनबांधवैः ३४
त्वयैवालंकृतोयूथोभवतापरिशोभते
त्वांविनायंमहाभागकीदृग्यूथोभविष्यति ३५
तवैवस्वबलेनापिगर्जमानाश्चशूकराः
विचरंतिगिरौकांततनयाममबालकाः ३६
कंदान्मूलान्सुभक्षंतिनिर्भयास्तवतेजसा
दुर्गेषुवनकुंजेषुग्रामेषुनगरेषुच ३७
नकुर्वंतिभयंतीव्रंसिंहानामिहपर्वते
मनुष्याणांमहाबाहोपालितास्तवतेजसा ३८
त्वयात्यक्ताअमीसर्वेबालकाममदारकाः
दीनाश्चैवाकुलाश्चैवभविष्यंतिविचेतनाः ३९
नित्यमेवसुखंवर्त्मगत्वापश्यंतिबालकाः
पतिहीनायथानारीशोभतेनैवशोभना ४०
अलंकृतायथादिव्यैरलंकारैःसकांचनैः
परिच्छदैरत्नवस्त्रैःपितृमातृसहोदरैः ४१
श्वश्रूश्वशुरकैश्चान्यैःपतिहीनानभातिसा
चंद्रहीनायथारात्रीपुत्रहीनंयथाकुलम् ४२
दीपहीनंयथागेहं नैवभातिकदाचन

त्वांविनायंतथायूथोनैवशोभेतमानद ४३
ग्राचारेणविनामर्त्योज्ञानहीनोयतिर्यथा
मंत्रहीनोयथाराजातथायंनैवशोभते ४४
कैवर्तेनविनानौर्वासंपूर्णापरिसागरे
नभात्येवंयथासार्थःसार्थवाहेनवैविना ४५
सेनाध्यक्षेणचविनायथासैन्यंनभातिच
त्वांविनावैतथासैन्यंशूकराणांमहामते ४६
दीनोभविष्यतितथावेदहीनोयथाद्विजः
मयिभारंकुटुंबस्यविनिवेश्यप्रगच्छसि ४७
मरणंसुलभंज्ञात्वाकाप्रतिज्ञातवेदृशी
त्वांविनाहंनशक्नोमिधर्तुंप्राणान्प्रियेश्वर ४८
त्वयैवसहितास्वर्गंभूमिंवाथमहामते
नरकंवापिभोक्ष्यामिसत्यंसत्यंवदाम्यहम् ४९
त्वंवापुत्रांस्तुपौत्रांस्तुगृहीत्वायूथमुत्तमम्
ग्रावांव्रजावयूथेशदुर्गमेवंसुकंदरम् ५०
जीवितव्यंपरित्यज्यरणायपरिगम्यते
तत्रकोदृश्यतेलाभोमरणेवदसांप्रतम् ५१
वाराहउवाच-
वीराणांत्वंनजानासिसुधर्मंशृणुसांप्रतम्
युद्धार्थिनाहिवीरेणवीरंगत्वाप्रयाचितम् ५२
देहिमेयोधनंसंख्येयुद्धार्थ्यहंसमागतः
परेणयाचितंयुद्धंनददातियदानरः ५३
कामाल्लोभाद्भयाद्वापिमोहाद्वाशृणुवल्लभे
कुंभीपाकेतुनरकेवसेद्युगसहस्रकम् ५४
क्षत्रियाणांपरोधर्मोयुद्धंदेयंनसंशयः
तद्युद्धंदीयमानेनरणभूमिगतेनवै ५५
निर्जितंतुपरंतत्रयशःकीर्त्तिंप्रभुंजते
सवाहतोयुध्यमानःपौरुषेणातिनिर्भयः ५६
वीरलोकमवाप्नोतिदिव्यान्भोगान्प्रभुंजते
यावद्वर्षसहस्राणांविंशत्येकांप्रियेशृणु ५७

वीरलोकेवसेत्तावद्देवाचारैर्महीयते
मनुपुत्रःसमायातश्रयंवीरोनसंशयः ५८
संग्रामंयाचमानस्तुयुद्धंदेयंमयाध्रुवम्
युद्धातिथिःसमायातोविष्णुरूपःसनातनः ५९
सत्कारोयुद्धरूपेणकर्तव्यश्चमयाशुभे
शूकर्युवाच-
यदायुद्धंत्वयादेयंराज्ञेचैवमहात्मने ६०
ततोऽहपौरुषंकांतपश्यामितवकीदृशम्
एवमुक्त्वाप्रियान्पुत्रान्समाहूयत्वरान्विता ६१
उवाचपुत्रकायूयंशृणुध्वंवचनंमम
युद्धातिथिःसमायातोविष्णुरूपःसनातनः ६२
मयातत्रप्रगंतव्यंयत्रायंहिगमिष्यति
यावत्तिष्ठतिवैनाथोभवतांप्रतिपालकः ६३
यूयंगच्छतवैदूरंदुर्गंगिरिगुहामुखम्
सुखंजीवतमेवत्सावर्जयित्वासुलुब्धकान् ६४
मयातत्रैवगंतव्यंयत्रैषहिगमिष्यति
भवतांश्रेष्ठोऽयभ्रातायूथरक्षांकरिष्यति ६५
एतेपितृव्यकाःसर्वेभवतांत्राणकारकाः
दूरंप्रयातवैसर्वेमांविहायसुपुत्रकाः ६६
पुत्राऊचुः-
श्रयंहिपर्वतश्रेष्ठोबहुमूलफलोदकः
भयंतुकस्यवैनास्तिसुखंजीवनमस्तिवै ६७
युवाभ्यांहिश्रकस्माद्वैइदमुक्तंभयंकरम्
तन्नोहिकारणंमातर्वदसत्यमिहैवहि ६८
शूकर्युवाच-
श्रयंराजामहारौद्रःकालरूपःसमागतः
क्रीडतेमृगयालुब्धोमृगान्हत्वाबहून्वने ६९
इक्ष्वाकुर्नामदुर्धर्षोमनुपुत्रोमहाबलः
संहरिष्यतिकालोऽयदूरंयातसुपुत्रकाः ७०
पुत्राऊचुः-

मातरंपितरंत्यक्त्वायःप्रयातिसपापधीः
महारौद्रंसुघोरंतुनरकंप्रतिपद्यते ७१
मातुःपुरायंपयःपीत्वापुष्टोभवतिनिर्घृणः
मातरंपितरंत्यक्त्वायःप्रयातिसुदुर्बलः ७२
पूयंनरकमेतीहकृमिदुर्गंधसंकुलम्
मातुस्तस्मान्नयास्यामोगुरुंत्यक्त्वाइहैवच ७३
एवंविषादःसंजातस्तेषांधर्मार्थसंयुतः
व्यूहंकृत्वास्थिताःसर्वेबलतेजःसमाकुलाः ७४
साहसोत्साहसंपन्नाःपश्यंतिनृपनंदनम्
नदंतःपौरुषैर्युक्ताःक्रीडमानावनेतदा ७५

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे
द्विचत्वारिंशत्तमोऽध्यायः ४२

## त्रयश्चत्वारिंशत्तमोऽध्यायः

सुकलोवाच-
एवंतेशूकराःसर्वेयुद्धायसमुपस्थिताः
पुरःस्थितस्यतेराज्ञोह्यवतस्थुश्चलुब्धकाः १
महावराहोराजेंद्रगिरिसानुंसमाश्रितः
महतायूथभावेनव्यूहंकृत्वाप्रतिष्ठति २
कपिलःस्थूलपीनांगोमहादंष्ट्रोमहामुखः
दुःसहःशूकरोराजन्गर्जतेचातिभैरवम् ३
तानपश्यन्महाराजःशालतालवनाश्रयान्
तेषांतद्वचनंश्रुत्वामनुपुत्रःप्रतापवान् ४
गृह्यतांशूरवाराहोविध्यतांबलदर्पितः
एवमाभाष्यतान्वीरोमनुपुत्रःप्रतापवान् ५
अथतेलुब्धकाःसर्वेमृगयामदमोहिताः
संनद्धादंशिताःसर्वेश्वभिःसार्द्धंप्रजग्मिरे ६
हर्षेणमहताविष्टोराजराजोमहाबलः
अश्वारूढःसुसैन्येनचतुरंगेणसंयतः ७
गंगातीरंसमायातोमेरौगिरिवरोत्तमे

रत्नधातुसमाकीर्णैर्नानावृक्षैरलंकृते ८
सुकलोवाच-
योबलधाममरीचिचयकरनिकरमयप्रोत्तुंगोऽत्युच्चम्
गगनमेवसंप्राप्तोनानानगाचरितशोभोगिरिराजोभाति ९
योजनबहलविमलगंगाप्रवाहसमुच्चरत्तीरवीचीतरंगभंगैर्मुक्ताफलसदृशैर्निर्मल
ांबुकणैः
सर्वत्रप्रक्षालितधवलतलशिलातलोगिरींद्रःसुश्रियायुक्तः १०
देवैश्चारणकिन्नरैःपरिवृतोगंधर्वविद्याधरैःसिद्धैरप्सरसांगणैर्मुनिजनैर्नागेंद्रविद्या
धरैः
श्रीखंडैर्बहुचंदनैस्ससरलैःशालैस्तमालैर्गिरीरुद्राक्षैर्वरसिद्धिदायकघनैःकल्पद्रु
मैःशोभते ११
नानाधातुविचित्रोवैनानारत्नविचित्रितैः
विमानैःकांचनैर्दंडैःकलत्रैरुपशोभते १२
नालिकेरवनैर्दिव्यैःपूगवृक्षैर्विराजते
दिव्यपुन्नागबकुलैःकदलीखंडमंडितैः १३
पुष्पकैश्चंपकैरद्रिःपाटलैःकेतकैस्तथा
नानावल्लीवितानैश्चपुष्पितैःपद्मकैस्तथा १४
नानावर्णैःसुपुष्पैश्चनानावृक्षैरलंकृतः
दिव्यवृक्षैःसमाकीर्णःस्फाटिकस्यशिलातलैः १५
योगियोगीन्द्रसंसिद्धैःकंदरांतर्निवासिभिः
निर्झरैश्चैवरम्यैश्चबहुप्रस्रवणैर्गिरिः १६
नदीप्रवाहसंहृष्टैःसंगमैरुपशोभते
ह्रदैश्चपल्वलैःकुंडैर्निर्मलोदकधारिभिः १७
गिरिराजोविभात्येकःसानुभिःसहसंस्थितैः
शरभैश्चैवशार्दूलैर्मृगयूथैरलंकृतः १८
महामत्तैश्चमातंगैर्महिषैरुरुभिःसदा
अनेकैर्दिव्यभावैश्चगिरिराजोविभातिसः १९
अयोध्याधिपतिर्वीरइक्ष्वाकुर्मनुनंदनः
तयासुभार्ययायुक्तश्चतुरंगबलेनच २०
पुरतोलुब्धकायांतिशूराःश्वानश्चशीघ्रगाः

यत्रास्तेशूकरःशूरोभार्ययासहितोबली २१
बहुभिःशूकरैर्गुप्तोगुरुभिःशिशुभिस्ततः
मेरुभूमिंसमाश्रित्यगंगातीरंसमंततः २२
सुकलोवाच–
तामुवाचवराहस्तुसुप्रियांहर्षसंयुतः
प्रियेपश्यसमायातःकोशलाधिपतिर्बली २३
मामुद्दिश्यमहाप्राज्ञोमृगयांक्रीडतेनृपः
युद्धमेवकरिष्यामिसुरासुरप्रहर्षकम् २४
अथभूपोमहातेजाबाणपाणिर्धनुर्धरः
सुदेवांसत्यधर्मांगींतामुवाचप्रहर्षितः २५
पश्यप्रियेमहाकोलंगर्जमानंमहाबलम्
परिवारसमायुक्तंदुःसहंमृगघातिभिः २६
अद्यैवाहंहनिष्यामिसुबाणैर्निशितैःप्रिये
मामेवहिमहाशूरोयुद्धायसमुपाश्रयेत् २७
एवमुक्त्वाप्रियोभार्यांलुब्धकान्वाक्यमब्रवीत्
यथाशूरोमहाशूराःप्रेषयध्वंहिशूकरम् २८
अथतेप्रेषिताःशूराबलतेजःपराक्रमाः
गर्जमानाःप्रधावंतिबलतेजःपराक्रमाः २९
कोलंप्रतिगताःसर्वेवायुवेगेनसांप्रतम्
विध्यंतिबाणजालैस्तेनिशितैर्वनचारकाः ३०
नानाशस्त्रैरथास्त्रैश्चवाराहंवीररूपिणम् ३१
सुकलोवाच–
पतंतिबाणतोमराविमुक्तालुब्धकैःशराघनागिरिंप्रवर्षिणोयथातथाधरांतरे
हतोदृढप्रहारिभिःसनिर्जितस्ततस्तथाशतैस्तुयूथपालकःसकोलःसंगरंगतः ३२
स्वपुत्रपौत्रबांधवैःपरांश्चसंहरेत्सवैपतंतितेस्वदंष्ट्रयाहताहवेऽवलुब्धकाः
पतंतिपादहस्तकाःस्थितस्यवेगभ्रामणैःसलुब्धगर्जमेवतंवराहोऽपश्यदागतम्
३३
स्वतेजसाविनाशितंमुखाग्रदंष्ट्रयाहतं
गतःसयत्रभूपतिःसवांछतेनसंगरम् ३४
इक्ष्वाकुनाथंसुमहत्प्रसह्यसंत्रास्यक्रुद्धःसहिशूकरेशः

युद्धंवनेवांछतितेनसार्द्धमिच्वाकुणासंगरहर्षयुक्तः ३५
वाराहःपुनरेवयुद्धकुशलःसंवांछतेसंगरंतुंडाग्रेणसुतीच्णदंतनखरैःक्रुद्धोधरांचो भयन्
हुंकारोच्चारगर्वात्प्रहरतिविमलंभूपतिंतंचराजञ्ज्ञात्वाविष्णुपराक्रमंमनुसुतस्त्वा नन्दरोमांचितः ३६
दृष्ट्वाशूकरपौरुषंयमतुलंमेनेपतिर्वावराड्देवारिंमनसाविचिन्त्यसहसावाराहरू पेणवै
संप्रेच्यैवमहाबलंबहुतरंयुक्तंत्वरेर्वारणंसैन्यंकोलविनाशनायसहसासंगृह्यसंगृ ह्यताम् ३७
प्रेषिताश्चवारणारथाश्चवेगवत्तराःसुबाणखड्गधारिणोभुशुंडिभिश्चमुद्गरैः
सपाशपाणिलुब्धकानदंतितत्रतत्परानिवारितोनतिष्ठतोहयागजाश्चयद्गताः ३८
क्वचित्क्वचिन्नदृश्यतेक्वचित्क्वचित्प्रदृश्यतेक्वचिद्भयंप्रदर्शयेत्क्वचिद्भयान्प्र मर्दयेत् ३९
मर्दयित्वाभटान्वीरान्वाराहोरणदुर्जयः
शब्दंचकारदुर्धषंक्रोधारुणविलोचनः ४०
कोशलाधिपतिर्वीरस्तंदृष्ट्वारणदुर्जयतम्
युध्यमानंमहाकायंमुचंतंमेघवत्स्वनम् ४१
गर्जतिसमरंविचरतिविलसतिवीरान्स्वतेजसाधीरः
तडिदिवमुखेषुदंष्ट्रातस्यविभात्युल्लसत्येव ४२
मनुपुत्रस्तथादृष्ट्वाकोलंचनिशितैःशरैः
प्रतिभिन्नमेकैकंशस्त्राहतंचबंधुभिः ४३
नरपतिरुवाचसैन्याःकिमिहनगृह्णंतुग्रोजसाशूराः
युध्यध्वंतत्रनिशितैर्बाणैस्तीच्णैरनेनापि ४४
समाकर्ण्यततोवाक्यंक्रुद्धस्यापिमहात्मनः
ततस्तेसैनिकाःसर्वेयुद्धायसमुपस्थिताः ४५
अनेकैर्भटसाहस्रैर्वनेतंसमरेस्थितम्
दिचुसर्वासुसंहत्यबिभिदुःशूकरंरणे ४६
विद्धश्चकैश्चित्तदाबाणजालैःसुयोधैश्चसंग्रामभूमौविशालैः
क्वचिच्चक्रघातैःक्वचिद्वज्रपातैर्हतंदुर्जयंसंगरेतंमहांतैः ४७
ततःपौरुषैःक्रोधयुक्तःसकोलःसुविच्छिद्यपाशान्रणेप्रस्थितःसः

महाशूकरैःसार्धमेवप्रयातस्ततःशोणितस्यापिधाराभिषिक्तः ४८
करोतिप्रहारंचतुंडेनवीरहयानांद्विपानांचचिच्छेदवीरः
स्वदंष्ट्राग्रभागेनतीक्ष्णेनवीरान्पदातीन्हिसंपातयेद्रोषभावैः ४९
जघानास्यशुंडंगजस्यापिरुष्टोभटान्हतान्पादनखैस्तुहृष्टः ५०
ततस्तेशूकराःसर्वेलुब्धकाश्चपरस्परम्
युयुधुःसंगरंकृत्वाक्रोधारुणविलोचनाः ५१
लुब्धकैश्चहताःकोलाःकोलैश्चापिसुलुब्धकाः
निहताःपतिताभूमौक्षतजेनापिसारुणाः ५२
जीवंत्यक्त्वाहताःकोलैर्लुब्धकाः पतितारणे
मृताश्चशूकरास्तत्रश्वानःप्राणांश्चतत्यजुः ५३
यत्रयत्रमृताभूमौपतितामृगघातकाः
बहवःशूकराराज्ञाखड्गपातैर्निपातिताः ५४
कतिनष्टाहताःकोलाभीतादुर्गेषुसंस्थिताः
कुंजेषुकंदरांतेषुगुहांतेषुनृपोत्तम ५५
लुब्धकाश्चमृताःकेचिच्छिन्नादंष्ट्राग्रसूकरैः
प्राणांस्त्यक्त्वागताःस्वर्गंखंडशोविदलीकृताः ५६
वागुराःपाशजालाश्चकुटकाःपंजरास्तथा
नाडयश्चपतिताभूमौयत्रतत्रसमंततः ५७
एकोदयितयासार्धंवाराहः परितिष्ठति
पौत्रकैःपंचसप्तभिर्युद्धार्थंबलदर्पितः ५८
तमुवाचतदाकांतंशूकरंशूकरीपुनः
गच्छकांतमयासार्द्धमेभिस्तुबालकैःसह ५९
प्राहप्रीतोवराहस्तांविवस्तांसुप्रियामिति
क्वगच्छामिप्रभग्नोहंस्थानंनास्तिमहीतले ६०
मयिनष्टेमहाभागेकोलयूथंविनंक्ष्यति
द्वयोश्चसिंहयोर्मध्येजलंपिबतिशूकरः ६१
द्वयोःशूकरयोर्मध्येसिंहोनैवपिबत्यपः
एवंशूकरजातीषुदृश्यतेबलमुत्तमम् ६२
तदहंनाशयाम्येवयदाभग्नोव्रजाम्यहम्
जानेधर्मंमहाभागेबहुश्रेयोविधायकम् ६३

कस्माल्लोभाद्भयाद्वापियुध्यमानःप्रणश्यति
रणतीर्थंपरित्यज्यसस्यात्पापीनसंशयः ६४
निशितंशस्त्रसंव्यूहंदृष्ट्वाहर्षंप्रगच्छति
अवगाह्यामरींसिंधुंतीर्थपारंप्रगच्छति ६५
सयातिवैष्णवंलोकंपुरुषांश्चसमुद्धरेत्
समायांतंचतदहंकथंभग्नोव्रजामिवै ६६
योधनंशस्त्रसंकीर्णंप्रवीरानन्ददायकम्
दृष्ट्वाप्रयातिसंहृष्टस्तस्यपुण्यफलंशृणु ६७
पदेपदेमहत्स्नानंभागीरथ्याःप्रजायते
रणाद्भग्नोगृहंयातियोलोभाच्चप्रियेशृणु ६८
मातृदोषंप्रकाशेतस्त्रीजातःपरिकथ्यते
अत्रयज्ञाश्चतीर्थाश्चअत्रदेवामहौजसः ६९
पश्यंतिकौतुकंकांतेमुनयःसिद्धचारणाः
त्रैलोक्यंवर्ततेतत्रयत्रवीरप्रकाशनम् ७०
समराद्भग्नंप्रपश्यंतिसर्वेत्रैलोक्यवासिनः
शपंतिनिर्घृणंपापंप्रहसन्तिपुनःपुनः ७१
दुर्गतिंदर्शयेत्तस्यधर्मराजोनसंशयः
सम्मुखःसमरेयुद्धेस्वशिरःशोणितंपिबेत् ७२
अश्वमेधफलंभुंक्तेइंद्रलोकंप्रगच्छति
यदाजयतिसंग्रामेशत्रूञ्छूरोवरानने ७३
तदाप्रभुंजतेलक्ष्मींनानाभोगान्नसंशयः
यदातत्रत्यजेत्प्राणान्सम्मुखःसन्निराश्रयः ७४
सगच्छेत्परमंस्थानंदेवकन्यांप्रभुंजते
एवंधर्मंविजानामिकथंभग्नोव्रजाम्यहम् ७५
अनेनसमरेयुद्धंकरिष्येनात्रसंशयः
मनोःपुत्रेणधीरेणराज्ञाइक्ष्वाकुणासह ७६
डिंभान्गृहीत्वायाहित्वंसुखंजीववरानने
तस्यश्रुत्वावचःप्राहबद्धाहंतवबंधनैः ७७
स्नेहमानरसाख्यैश्चरतिक्रीडनकैःप्रिय
पुरतस्तेसुतैःसार्द्धंप्राणांस्त्यक्ष्यामिमानद ७८

एवमेतौसुसंभाष्यपरस्परहितैषिणौ
युद्धायनिश्चितौभूत्वासमालोकयतोरिपून् ७९
कोशलाधिपतिंवीरंतमिद्त्वाकुंमहामतिम् ८०
यथैवमेघःपरिगर्जतेदिविप्रावृट्सुकालेषुतडित्प्रकाशैः
तथैवसंगर्जतिकांतयासमंसमाह्वयेद्राजवरंखुराग्रैः ८१
तंगर्जमानंददृशेमहात्मावाराहमेकंपुरुषार्थयुक्तम्
ससारश्रश्वस्यजवेनयुक्तःससम्मुखंतस्यनृवीरधीरः ८२
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे-
त्रयश्चत्वारिंशत्तमोऽध्यायः ४३

चतुश्चत्वारिंशत्तमोऽध्यायः

सुकलोवाच-
स्वसैन्यंदुर्धरंदृष्ट्वानिर्जितंदुर्धरेणतम्
चुकोपभूपतिःक्रूरंदुःसहंशूकरंप्रति १
धनुरादायवेगेनबाणंकालानलोपमम्
तस्याभिमुखमेवासौहयेनाभिससारसः २
सयदानृपतिंहयपृष्ठगतंवरपौरुषयुक्तममित्रहणम्
परिपश्यतिशूकरयूथपतिःप्रगतोभिमुखंरणभूमितले ३
निशितेनशरेणहतोहियदानृपतेर्हयपादतलेप्रगतः
तमिहैवविलंघ्यचवेगमनाःप्रखरेणजवेनचकोलवरः ४
व्यथितस्तुरगःसकिरिःकिटिनानहियातिद्वितौसहिविद्धगतिः
तुरगःपतितोभुवितुंडहतोलघुस्यंदनमेवगतोनृपतिः ५
सहिगर्जतिशूकरजातिरवैरथसंस्थितकोशलयेनजवैः
गदयानिहतःकिलभूपतिनारणमध्यगतःसहियूथपतिः ६
परित्यज्यतनुंचस्वकांहितदागतएवहरेर्गृहमेववरम् ७
कृत्वाहियुद्धंसमरेहितेनराज्ञासमंशूकरराजराजः
पपातभूमौचहतोयदातुववर्षिरेदेववराःसुपुष्पैः ८
तस्योर्ध्वगःपुष्पचयःसुजातःसंतानकानामिवसौरभश्च
सकुंकुमैश्चंदनवृष्टिमेवकुर्वंतिदेवाःपरितुष्यमाणाः ९
विमृश्यमानःसहितेनराज्ञाचतुर्भुजःसोपिबभूवराजन्

दिव्यांबरोभूषणदिव्यरूपःस्वतेजसाभातिदिवाकरोयथा १०
दिव्येनयानेनदिवंगतोयदासुपूज्यमानःसुरराजदेवैः
गंधर्वराजःसबभूवभूयःपूर्वंस्वकंकायमिहैवहित्वा ११
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे
चतुश्चत्वारिंशत्तमोऽध्यायः ४४

पंचचत्वारिंशत्तमोऽध्यायः

सुकलोवाच-
अथतेलुब्धकाःसर्वेशूकरींप्रतिजग्मिरे
शूराश्चदारुणाःप्राप्ताःपाशहस्ताश्चभीषणाः १
चतुरश्चततोडिंभान्कृत्वास्थित्वाचशूकरी
कुटुंबेनसमंकांतंहतंदृष्ट्वामहाहवे २
भर्तुर्मेचिंतितंप्राप्तमृषिदेवैश्चपूजितः
गतःस्वर्गंमहात्मासौवीर्येणानेनकर्मणा ३
अनेनापिपथायास्येस्वर्गंभर्त्तासतिष्ठति
तयासुनिश्चितंकृत्वापुत्रान्प्रतिविचिंतितम् ४
यदाजीवंतिमेबालाश्चत्वारोवंशधारकाः
भवत्यस्यसुवीरस्यकोलस्यापिमहात्मनः ५
केनोपायेनपुत्रान्वैरक्षायुक्तान्करोम्यहम्
इतिचिंतापराभूत्वादृष्ट्वापर्वतसंकटम् ६
तत्रमार्गंसुविस्तीर्णंनिष्कासायप्रयास्यते
तयासुनिश्चितंकृत्वापुत्रान्प्रतिविचिंतितम् ७
तानुवाचमहाराजपुत्रान्प्रतिसुमोहितान्
यावत्तिष्ठाम्यहंपुत्रास्तावद्गच्छतशीघ्रगाः ८
तेषांमध्येसुतोज्येष्ठःकथंयास्यामिमातरम्
संत्यज्यजीवलोभाच्चाधिङ्मेमातःसुजीवितम् ९
पितृवैरंकरिष्यामिसाधयिष्येरणेरिपून्
गृहीत्वात्वंकनीयसोभ्रातृन्स्त्रीन्दुर्गकंदरम् १०
पितरंमातरंत्यक्त्वायोयातिहिसपापधीः
नरकंचप्रयात्येवकृमिकोटिसमाकुलम् ११

तमुवाचसुदुःखार्तात्वांत्यक्त्वाहंकथंसुत
संयास्यामिमहापापात्रयोगच्छंतुमेसुताः १२
कनीयसस्त्रयस्त्वेवगतागिरिवनांतरम्
तौजग्मतूरणभुवंतेषामेवसुपश्यताम् १३
तेजसासुबलेनापिगर्जंतौचपुनःपुनः
अथतेलुब्धकाःशूराःसंप्राप्तावातरंहसः १४
पथातेनापिदुर्गेणत्रयस्तेप्रेषितानृप
तिष्ठतःस्मपथंरुद्ध्वाद्वावेतौजननीसुतौ १५
लुब्धकाश्चततःप्राप्ताःखड्गबाणधनुर्धराः
प्रजघ्नुस्तोमरैस्तीक्ष्णैश्चक्रैश्चमुशलैस्ततः १६
मातरंपृष्ठतःकृत्वातनयोयुध्यतेसतैः
दंष्ट्रयानिहताःकेचित्केचित्तुंडेनघातिताः १७
संजघानखुराग्रैश्चशूराश्चपतितारणे
युयुधेशूकरःसंख्येदृष्टोराज्ञामहात्मना १८
पितुःसकाशाच्छूरोयमितिज्ञात्वाससम्मुखः
बाणपाणिर्महातेजामनुसूनुःप्रतापवान् १९
निशितेनापिबाणेनअर्द्धचंद्रानुकारिणा
राज्ञाहतःपपातोर्व्यांविद्धोरस्कोमहात्मना २०
ममारसहसाभूमौपपातसहिशूकरः
पुत्रमोहंपरंप्राप्तातस्योपरिगतास्वयम् २१
तयाचनिहताःशूरास्तुंडघातैर्महीतले
निपेतुर्लुब्धकाःशूराःकतिनष्टामृतानृप २२
द्रावयंतीमहत्सैन्यंदंष्ट्रयासूकरीततः
यथाकृत्यासमुद्भूतामहाभयविधायिका २३
तमुवाचततोराज्ञीदेवराजसुतोपमम्
अनयानिहतंराजन्महत्सैन्यंतवैवहि २४
कस्मादुपेक्षसेकांततन्मेत्वंकारणंवद
तामुवाचमहाराजोनाहंहन्मिइमांस्त्रियम् २५
महादोषंप्रियेदृष्टंस्त्रीवधेदैवतैःकिल
तस्मान्नघातयेन्नारींप्रेषयेहंनकंचन २६

अस्यावधनिमित्तार्थेपापाद्बिभेमिसुंदरि
एवमुक्त्वातदाराजाविररराममहीपतिः २७
लुब्धकोझार्झरोनामददृशेसतुसूकरीम्
कुर्वंतींकदनंतेषांदुःसहांसुभटैरपि २८
आविव्याधसुवेगेनबाणेननिशितेनहि
संलग्नेनतुबाणेनशोणितेनपरिप्लुता २९
शोभमानात्वरांप्राप्तावीरश्रियासमाकुला
तुंडेनापिहतःसंख्येझार्झरःसतयापुनः ३०
पतमानेनतेनापिझार्झरेणतदाहता
खड्गेननिशितेनापिपपातविदलीकृता ३१
श्वसमानारणेनापिमूर्च्छनाभिपरिप्लुता
दुःखेनमहताविष्टाजीवमानामहीतले ३२

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे
पंचचत्वारिंशोऽध्यायः ४५

## षट्चत्वारिंशोऽध्यायः

सुकलोवाच–
श्वसंतींशूकरींदृष्ट्वापतितांपुत्रवत्सलाम्
सुदेवाकृपयाविष्टागत्वातांदुःखितांप्रति १
अभिषिच्यमुखंतस्याःशीतलेनोदकेनच
पुनःसर्वांगमेवापिदुःखितांरणशालिनीम् २
पुण्येनशीततोयेनसाउवाचाभिषिंचतीम्
उवाचमानुषींवाचंसुस्वरंनृपतिप्रियाम् ३
सुखंभवतुतेदेविअभिषिक्तात्वयायदि
संपर्काद्दर्शनात्तेद्यगतोमेपापसंचयः ४
तदाकर्ण्यमहद्वाक्यमद्भुताकारसंयुतम्
चित्रमेतन्मयादृष्टंकृतंतेऽनामयंवचः ५
पशुजातिमतीचेयंसौष्ठवंभाषतेस्फुटम्
स्वरव्यंजनसंपन्नंसंस्कृतमुत्तमंमम ६
हर्षेणविस्मयेनापिकृत्वासाहसमुत्तमम्

तत्रस्थासामहाभागातंपतिंवाक्यमब्रवीत् ७
पश्यराजन्नपूर्वेयंसंस्कृतंभाषतेमहत्
पशुयोनिगताचेयंयथावैमानुषोवदेत् ८
तदाकर्ण्यततोराजासर्वज्ञानवतांवरः
अद्भुतमद्भुताकारंयन्नदृष्टंश्रुतंमया ९
तामुवाचततोराजासुदेवांसुप्रियांतदा
पृच्छचैनांशुभांकांतेकाचेयंतुभविष्यति १०
श्रुत्वातुनृपतेर्वाक्यसापप्रच्छचसूकरीम्
काभविष्यसित्वंभद्रेचित्रंतेदृश्यतेबहु ११
पशुयोनिगतात्वंवैभाषसेमानुषंवचः
सौष्ठवंज्ञानसंपन्नंवदमेपूर्वचेष्टितम् १२
भर्तुश्चापिमहाराजभटस्यास्यमहात्मनः
कोयंधर्मोमहावीर्योगतःस्वर्गंपराक्रमैः १३
आत्मनश्चस्वभर्तुश्चसर्वंपूर्वानुगंवद
एवमुक्त्वामहाभागाविररामनृपप्रिया १४
शूकर्युवाच–
यदिपृच्छसिमांभद्रेममास्यचमहात्मनः
तत्सर्वंतेप्रवक्ष्यामिचरितंपूर्वचेष्टितम् १५
अयमेषमहाप्राज्ञोगंधर्वोगीतपंडितः
रंगविद्याधरोनामसर्वशास्त्रार्थकोविदः १६
मेरुंगिरिवरश्रेष्ठंचारुकंदरनिर्झरम्
तमाश्रित्यमहातेजाःपुलस्त्योमुनिसत्तमः १७
तपश्चचारतेजस्वीनिर्व्यलीकेनचेतसा
विद्याधरस्तत्रगतःस्वेच्छयासमहाप्रभो १८
तमाश्रित्यगिरिश्रेष्ठंगीतमभ्यसतेतदा
स्वरतालसमोपेतंसुस्वरंचारुहासिनि १९
गीतंश्रुत्वामुनिस्तस्यध्यानाच्चलितमानसः
गायंतंतमुवाचेदंगीतविद्याधरंप्रति २०
भवद्गीतेनदिव्येनदेवामुह्यंतिनान्यथा
सुस्वरेणसुपुण्येनतालमानेनपंडित २१

लययुक्तेनभावेनमूर्च्छनासहितेनच
मेमनश्चलितंध्यानाद्गीतेनानेनसुव्रत २२
इदंस्थानंपरित्यज्यअन्यस्थानंव्रजस्वतत्
गीतविद्याधरउवाच-
आत्मज्ञानसमंगीतमन्यस्थानंव्रजामिकिम् २३
दुःखंददेनकस्यापिसुखदोनृषुसर्वदा
गीतेनानेनदिव्येनसर्वास्तुष्यंतिदेवताः २४
शंभुश्चापिसमानीतोगीतध्वनिरतोद्विज
गीतंसर्वरसंप्रोक्तंगीतमानंददायकम् २५
शृंगाराद्यारसाःसर्वेगीतेनापिप्रतिष्ठिताः
शोभामायांतिगीतेनवेदाश्चत्वारउत्तमाः २६
गीतेनदेवताःसर्वास्तोषमायांतिनान्यथा
तदेवंनिन्दसेगीतंमामेवंपरिचालयेः २७
अन्यायोऽयमहाभागतवैवइहदृश्यते
पुलस्त्यउवाच-
सत्यमुक्तंत्वयाद्यैवगीतार्थंबहुपुरायदम् २८
शृणुत्वंमामकंवाक्यंमानंत्यजमहामते
नाहंगीतंप्रकुत्सामिगीतंवंदामिनान्यथा २९
विद्याश्चतुर्दशैवैताएकीभावेनभावदाः
प्राणिनांसिद्धिमायांतिमनसानिश्चलेनच ३०
तपश्चतद्वन्मंत्राश्चसुसिद्ध्यंत्येकचिंतया
हृषीकाणांमहावर्गश्चपलोममसंमतः ३१
विषयेष्वेवसर्वेषुनयत्यात्मानमुच्चकैः
चालयित्वामनस्तस्माद्ध्यानादेवनसंशयः ३२
यत्रशब्दंनरूपंचयुवतीनैवतिष्ठति
मुनयस्तत्रगच्छंतितपःसिद्ध्यर्थमेवहि ३३
अयंगीतःपवित्रस्तेबहुसौख्यप्रदायकः
नपश्येमवयंवीरतिष्ठामोवनसंस्थिताः ३४
अन्यत्स्थानंप्रयाहित्वंनोवावयंव्रजामहे
गीतविधाधरउवाच-

इंद्रियाणांबलंवर्गंजितंयेनमहात्मना ३५
सजयीकथ्यतेयोगीसचवीरःससाधकः
शब्दंश्रुत्वाथवादृष्ट्वारूपमेवंमहामते ३६
चलतेनैवयोध्यानात्सधीरस्तपसाधकः
भवांस्तुतेजसाहीनइंद्रियैर्विजितोयतः ३७
स्वर्गेपिनास्तिसामर्थ्यंममगीतस्यधर्षणे
वर्जयंतिवनंसर्वेहीनवीर्यानसंशयः ३८
अयंसाधारणोविप्रवनदेशोनसंशयः
देवानांसर्वजीवानांयथाममतथातव ३९
कथंगच्छाम्यहंत्यक्त्वावनमेवमनुत्तमम्
यूयंगच्छंतुतिष्ठंतुयद्भव्यंतत्तुनान्यथा ४०
एवमाभाष्यतंविप्रंगीतविद्याधरस्तदा
समाकर्ण्यततस्तेनमुनिनातस्यउत्तरम् ४१
चिंतयामासमेधावीकिंकृत्वासुकृतंभवेत्
क्षमांकृत्वाजगामाथअन्यत्स्थानंद्विजोत्तमः ४२
तपश्चचारधर्मात्मायोगासनगतःसदा
कामंक्रोधंपरित्यज्यमोहंलोभंतथैवच ४३
सर्वेन्द्रियाणिसंयम्यमनसासममेवच
एवंस्थितस्तदायोगीपुलस्त्योमुनिसत्तमः ४४
सुकलोवाच–
गतेतस्मिन्महाभागेपुलस्त्येमुनिपुंगवे
कालादिष्टेनतेनापिगीतविद्याधरेणच ४५
चिंतितंसुचिरंकालंनदृष्टोयंभयान्मम
क्वगतस्तिष्ठतेवापिकुरुतेकिंकथंचसः ४६
ज्ञात्वापद्मात्मजसुतमेकांतवनशालिनम्
गतोवराहरूपेणतस्याश्रममनुत्तमम् ४७
आसनस्थंमहात्मानंतेजोज्वालासमाविलम्
दृष्ट्वाचकारवैक्षोभंतस्यविप्रस्यभामिनि ४८
धर्षयेन्नियतंविप्रंतुंडाग्रेणकुचेष्टया
पशुंज्ञात्वामहाराजक्षमतेतस्यदुष्कृतम् ४९

मूत्रयेत्पुरतःकृत्वाविष्ठांचकुरुतेततः
नृत्यतेक्रीडतेतत्रपततिप्रोच्चलेत्पुनः ५०
पशुंज्ञात्वापरित्यक्तोमुनिनातेनभूपते
एकदातुतथायातेतेनरूपेणवैपुनः ५१
अट्टाट्टहासेनपुनर्हास्यमेवंकृतंतदा
रोदनंचकृतंतत्रगीतंगायतिसुस्वरम् ५२
तथातमागतंविप्रोगीतविद्याधरंनृप
चेष्टितंतस्यवैदृष्ट्वाघोणिरेषभवेन्नहि ५३
ज्ञात्वातस्यतुवृत्तांतंमामेवंपरिचालयेत्
पशुंज्ञात्वामयात्यक्तोदुष्टएषसुनिर्घृणः ५४
एवंज्ञात्वामहात्मानंगंधर्वाधममेवहि
चुकोपमुनिशार्दूलस्तंशशापमहामतिः ५५
यस्माच्छूकररूपेणमामेवंपरिचालयेः
तस्माद्व्रजमहापापपापयोनिंतुशौकरीम् ५६
शप्तस्तेनापिविप्रेणगतोदेवंपुरंदरम्
तमुवाचमहात्मानंकंपमानोवरानने ५७
शृणुवाक्यंसहस्राक्षतवकार्यंकृतंमया
तपएवहिकुर्वन्सन्दारुणंमुनिपुंगवः ५८
तस्मात्तपःप्रभावात्तुचालितःक्षोभितोमया
शप्तस्तेनास्मिविप्रेणदेवरूपंप्रणाशितम् ५९
पशुयोनिंगतंशक्रमामेवंपरिरक्षय
ज्ञात्वातस्यसवृत्तांतंगीतविद्याधरस्यच ६०
तेनसार्धंगतश्चेंद्रस्तंमुनिंपर्यभाषत
दीयतामनुग्रहोनाथसिद्धिज्ञोसिद्विजोत्तम ६१
क्षम्यतांमुनिवर्यास्मिन्क्रियतांशापमोक्षणम्
इतिसंप्रार्थितोविप्रोमहेंद्रेणाहहृष्टधीः ६२
पुलस्त्यउवाच-
वचनात्तवदेवेशक्षंतव्यंचमयापिहि
भविष्यतिमहाराजमनुपुत्रोमहाबलः ६३
इक्ष्वाकुर्नामधर्मात्मासर्वधर्मानुपालकः

तस्यहस्ताद्यदामृत्युरस्यैवचभविष्यति ६४
तदैषवैस्वकंदेहंप्राप्स्यतेनात्रसंशयः
एतत्तेसर्ववृत्तांतंशूकरस्यनिवेदितम् ६५
ग्रात्मनश्चप्रवक्ष्यामिपत्यासार्धंशृणुष्वहि
मयाचपातकंघोरंकृतंयत्पापयापुरा ६६

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे
षट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

सुकलोवाच-
सुदेवाचारुसर्वांगीतामुवाचाथसूकरीम्
पशुयोनिंगतात्वंहिकथंवदसिसंस्कृतम् १
एवंविधंमहाज्ञानंकस्माद्भूतंवदस्वमे
कथंजानासिवैभर्तुश्चरित्रमात्मनःशुभे २
शूकर्युवाच-
पशोर्भावेनमोहेनमुष्टाहंवरवर्णिनि
निहताखड्गबाणैश्चपतितारणमूर्धनि ३
मूर्च्छयाभिपरिक्लिन्नाज्ञानहीनावरानने
त्वयाभिषिक्तायेनाहंपुण्यहस्तेनसुंदरि ४
पुण्योदकेनशीतेनतवहस्तगतेनवै
ग्रभिषिक्तेहिमेकायेमोहोनष्टोविहायमाम् ५
यथाविनाशंतेजोभिरंधकारःप्रयातिसः
तथातवाभिषेकेणममपापंगतंशुभे ६
प्रसादात्तवचार्वंगिलब्धंज्ञानंपुरातनम्
पुण्यांगतिंप्रयास्यामिइतिज्ञातंमयाशुभे ७
श्रूयतामभिधास्यामिपूर्ववृत्तांतमात्मनः
यत्कृतंतुमयाभद्रेपापयादुष्कृतंबहु ८
कलिगाख्येमहादेशेश्रीपुरंनामपत्तनम्
सर्वसिद्धिसमाकीर्णंचतुर्वर्णनिषेवितम् ९
वसतिस्मद्विजःकोपिवसुदत्तइतिश्रुतः

ब्रह्माचारपरोनित्यंसत्यधर्मपरायणः १०
वेदवेत्ताज्ञानवेत्ताशुचिमान्गुणवान्धनी
धनधान्यसमाकीर्णःपुत्रपौत्रैरलंकृतः ११
तस्याहंतनयाभद्रेसोदरैःस्वजनबांधवैः
अलंकारैस्तुशृंगारैर्भूषितास्मिवरानने १२
सुदेवानाममेतातश्चकारसमहामतिः
तस्याहंदयितानित्यंपितुश्चापिमहामते १३
रूपेणाप्रतिमाजातासंसारेनास्तितादृशी
रूपयौवनगर्वेणमत्ताहंचारुहासिनी १४
अहंकन्यासुरूपावैसर्वालंकारशोभिता
मांचदृष्ट्वाततोलोकाःसर्वेस्वजनवर्गकाः १५
मामेवंयाचमानास्तेविवाहार्थेवरानने
याचिताहंद्विजैःसर्वैर्नददातिपितामम १६
स्नेहाच्चैवमहाभागेमुमोहसमहामतिः
नदत्ताहंतदातेनपित्राचैवमहात्मना १७
संप्राप्तंयौवनंबालेमयिभावसमन्वितम्
रूपंमेतादृशंदृष्ट्वाममातासुदुःखिता १८
पितरंमेउवाचाथकस्मात्कन्यानदीयते
त्वंकस्मैसुद्विजायैवब्राह्मणायमहात्मने १९
देहिकन्यांमहाभागसंप्राप्तायौवनंत्वियम्
वसुदत्तोद्विजश्रेष्ठःप्रत्युवाचद्विजोत्तमः २०
मातरंमेमहाभागेश्रूयतांवचनंमम
महामोहेनमुग्धोऽस्मिसुतायावरवर्णिनि २१
योमेगृहस्थोविप्रोवैभविष्यतिशुभेशृणु
तस्मैकन्यांप्रदास्यामिजामात्रेतुनसंशयः २२
ममप्राणप्रियाचैषासुदेवानात्रसंशयः
एवमूचेमदर्थेसवसुदत्तःपितामम २३
कौशिकस्यकुलेजातःसर्वविद्याविशारदः
ब्राह्मणानांगुणैर्युक्तःशीलवान्गुणवाञ्छुचिः २४
वेदाध्ययनसंपन्नंपठमानंहिसुस्वरम्

भिन्नार्थंद्वारमायांतंपितृमातृविवर्जितम् २५
तंदृष्ट्वासमनुप्राप्तंरूपंवीन्द्यमहामतिः
तंप्रोवाचपिताएवंकोभवान्वैभविष्यति २६
किंतेनामकुलंगोत्रमाचारंवदसांप्रतम्
समाकरार्यपितुर्वाक्यंवसुदत्तमुवाचसः २७
कौशिकस्यान्वयेजातोवेदवेदांगपारगः
शिवशर्मेतिमेनामपितृमातृविवर्जितः २८
संतिमेभ्रातरश्चान्येचत्वारोवेदपारगाः
एवंकुलंसमाख्यातमाचारःकुलसंभवः २९
एवंसर्वंसमाख्यातंपितरंशिवशर्मणा
शुभेलग्नेतिथौप्राप्तेनन्नत्रेभगदैवते ३०
पित्रादत्तास्मिसुभगेतस्मैविप्रायवैतदा
पितृगेहेवसाम्येकातेनसार्धंमहात्मना ३१
नैवशुश्रूषितोभर्तामयासपापयातदा
पितृमातृसुद्रव्येणगर्वेणापिप्रमोहिता ३२
अंगसंवाहनंतस्यनकृतंहिमयाकदा
रतिभावेनस्नेहेनवचनेनमयाशुभे ३३
क्रूरबुद्ध्याहिदृष्टोसौसर्वदापापयामया
पुंश्चलीनांप्रसंगेनतद्भावंहिगताशुभे ३४
मातापित्रोश्चभर्तुश्चभ्रातृणांहितमेवच
नकरोम्यहमेवापियत्रयत्रव्रजाम्यहम् ३५
एवंमेदुष्कृतंदृष्ट्वाशिवशर्मापतिर्मम
स्नेहाच्छ्वशुरवर्गस्यममभर्त्तामहामतिः ३६
नकिंचिद्वक्तिमांसोपिन्नमतेदुष्कृतंमम
वार्यमाणाकुटुंबेनअहमेवंसुपापिनी ३७
तस्यशीलंविदित्वातेसाधुत्वंशिवशर्मणः
पितामाताचमेसर्वेममपापेनदुःखिताः ३८
भर्त्तामेदुष्कृतंदृष्ट्वास्वगृहान्निर्गतोबहिः
तंदेशंग्राममेनंचपरित्यज्यगतस्ततः ३९
गतेभर्तरिमेतातःसंजातश्चिंतयान्वितः

ममदुःखेनदुःखात्मायथारोगेणपीडितः ४०
ममंमाताउवाचैनंभर्तारंदुःखपीडितम्
कस्माच्चिंतयसेकांतवददुःखंममाग्रतः ४१
वसुदत्तउवाचैनांमातरंममनंदने
सुतांत्यक्त्वागतोविप्रोजामाताशृणुवल्लभे ४२
इयंपापसमाचारानिर्घृणापापचारिणी
अनयाहिपरित्यक्तःशिवशर्मामहामतिः ४३
समस्तस्यकुटुंबस्यदाक्षिण्येनमहामतिः
ममायंसद्विजःकांतेसुदेवांनैवभाषते ४४
वसतेसौम्यभावेननैवनिंदतिकुत्सति
सुदेवांपापसंचारांसवैपंडितबुद्धिमान् ४५
भविष्यतित्वियंदुष्टासुदेवाकुलनाशिनी
अहमेनांपरित्यज्यव्रजामिगृहवासिनि ४६
ब्राह्मण्युवाच-
अद्यज्ञातंत्वयाकांतसुतायागुणदूषणम्
तवमोहेनस्नेहेननष्टेयंशृणुसांप्रतम् ४७
तावद्विलाडयेत्पुत्रंयावत्स्यात्पंचवार्षिकः
शिक्षाबुद्ध्यासदाकांतपुनर्मोहेनपोषयेत् ४८
स्नानाच्छादनकैर्भक्ष्यैर्भोज्यैःपेयैर्नसंशयः
गुणेषुयोजयेत्कांतसद्विद्यासुचतंसुतम् ४९
गुणशिक्षार्थंनिर्मोहःपिताभवतिसर्वदा
पालनेपोषणेकांतसंमोहःपरिजायते ५०
सगुणंनवदेत्पुत्रंकुत्सयेच्चदिनेदिने
काठिन्यंचवदेन्नित्यंवचनैःपरिपीडयेत् ५१
यथाहिसाधयेन्नित्यंसुविद्यांज्ञानतत्परः
अभिमानेच्छलेनापिपापंत्यक्त्वाप्रदूरतः ५२
नैपुण्यंजायतेनित्यंविद्यासुचगुणेषुच
माताचताडयेत्कन्यांस्नुषांश्वश्रूर्विताडयेत् ५३
गुरुश्चताडयेच्छिष्यंततःसिध्यंतिनान्यथा
भार्यांचताडयेत्कांतअमात्यंनृपतिस्तथा ५४

हयंचताडयेद्धीरोगजंमात्रोदिनेदिने
शिद्धाबुद्ध्याप्रसिध्यंतिताडनात्पालनाद्विभो ५५
त्वयेयंनाशितानाथसर्वदैवनसंशयः
सार्धंसुब्राह्मणेनापिभवताशिवशर्मणा ५६
निरंकुशाकृतागेहेतेननष्टामहामते
तावद्धिधारयेत्कन्यांगृहेकांतवचःशृणु ५७
अष्टवर्षान्वितायावत्प्रबलांनैवधारयेत्
पितुर्गेहस्थितापुत्रीयत्पापंहिप्रकुर्वती ५८
उभाभ्यामपितत्पापंपितृभ्यामपिविंदति
तस्मान्नधार्यतेकन्यासमर्थानिजमंदिरे ५९
यस्यदत्ताभवेत्साचतस्यगेहेप्रपोषयेत्
तत्रस्थासाधयेत्कांतंसगुणंभक्तिपूर्वकम् ६०
कुलस्यजायतेकीर्तिःपितासुखेनजीवति
तत्रस्थाकुरुतेपापंतत्पापंभुंजतेपतिः ६१
तत्रस्थावर्द्धतेनित्यंपुत्रैःपौत्रैःसदैवसा
पिताकीर्तिमवाप्नोतिसुतायाःसुगुणैःप्रिय ६२
तस्मान्नधारयेत्कांतगेहेपुत्रींसभर्तृकाम्
इत्यर्थेश्रूयतेकांतइतिहासोभविष्यति ६३
अष्टविंशतिकेप्राप्तेयुगेद्वापरकेमहान्
उग्रसेनस्यवीरस्ययदुज्येष्ठस्ययत्प्रभो ६४
चरित्रंतेप्रवक्ष्यमिशृणुष्वैकमनाद्विज ६५

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे
सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

ब्राह्मण्युवाच–
माथुरेविषयेरम्येमथुरायांनृपोत्तमः
उग्रसेनेतिविख्यातोयादवःपरवीरहा १
सर्वधर्मार्थतत्त्वज्ञोवेदज्ञःश्रुतवान्बली
दाताभोक्तागुणग्राहीसद्गुणान्वेत्तिभूपतिः २

राज्यंचकारमेधावीप्रजाधर्मेणपालयेत्
एवंसचमहातेजाउग्रसेनःप्रतापवान् ३
वैदर्भेविषयेपुण्येसत्यकेतुःप्रतापवान्
तस्यकन्यामहाभागापद्मानीकमलानना ४
नाम्नापद्मावतीनामसत्यधर्मपरायणा
सातुस्त्रीणांगुणैर्युक्ताद्वितीयेवसमुद्रजा ५
वैदर्भीशुशुभेराजन्स्वगुणैःसत्यकारणैः
माथुरउग्रसेनस्तुउपयेमेसुलोचनाम् ६
तयासहमहाभागसुखैरेमेप्रतापवान्
अतिप्रीतोगुणैस्तस्यास्तयासहसुखीभवेत् ७
तस्याःस्नेहेनप्रीत्याचसंमुग्धोमाथुरेश्वरः
पद्मावतीमहाभागातस्यप्राणप्रियाभवत् ८
तयाविनानबुभुजेतयासहप्रक्रीडयेत्
तयाविनानसेवेतपरमंसुखमेवसः ९
एवंप्रीतिकरौजातौपरस्परमनुत्तमौ
स्नेहवंतौद्विजश्रेष्ठसुखसंप्रीतिदायकौ १०
सत्यकेतुश्चराजेंद्रःसस्मारसपद्मावतीम्
स्वसुतांतांमहाभागोमातातस्याःसुदुःखिता ११
सदूतान्प्रेषयामासवैदर्भोमथुरांप्रति
उग्रसेनंनृवीरेंद्रंसादरेणद्विजोत्तम १२
उग्रसेनंमहाराजंसदूतोवाक्यमब्रवीत्
विदर्भाधिपतिर्वीरोभक्त्यास्नेहेननंदयन् १३
आत्मनःकुशलंब्रूतेभवतांपरिपृच्छति
सत्यकेतुर्महाराजत्वामेवंपरिपृष्टवान् १४
दर्शनायप्रेषयस्वसुतांपद्मावतींमम
यदित्वंमन्यसेनाथप्रीतिस्नेहंहितस्यच १५
प्रेषयस्वमहाभागांप्रियांप्रीतिकरांतव
औत्कण्ठ्येनमहाराजससोत्कंठेनवर्तते १६
समाकर्ण्यततोवाक्यमुग्रसेनोनृपोत्तमः
प्रीत्यास्नेहेनतस्यापिसत्यकेतोर्महात्मनः १७

दाक्षिरायेनचविप्रेंद्रप्रेषयामासभूपतिः
पद्मावतींप्रियांभार्यामुग्रसेनःप्रतापवान् १८
प्रेषितानेनराजेंद्रगतापद्मावतीस्वकम्
पूर्वंगृहंसतीसातुमहाहर्षेणसंकुला १९
पितृपूर्वंकुटुंबंतुददृशेचारुमंगला
पितुःपादौननामाथशिरसासत्यतत्परा २०
आगतायांमहाराजापद्मावत्यांद्विजोत्तम
हर्षेणमहताविष्टोविदर्भाधिपतिर्नृपः २१
वर्द्धितादानमानैश्चवस्त्रालंकारभूषणैः
पद्मावतीसुखेनापिपितुर्गेहेप्रवर्तते २२
सखीभिःसहितासातुनिःशंकापरिवर्तते
रमतेसातदातत्रयथापूर्वंतथैवच २३
गृहेवनेतडागेषुप्रासादेचतथैवसा
पुनर्बालेवभूतासानिर्लज्ञासंप्रवर्तते २४
निःशंकावर्ततेविप्रसखीभिःसहसर्वदा
पतिव्रतामहाभागाहर्षेणमहतान्विता २५
सुखंतुपितृगेहस्यदुर्लभंश्वशुरेगृहे
एवंज्ञात्वातदारेमेकदाईदृग्भविष्यति २६
अनेनमोहभावनेक्रीडालुब्धावरानना
सखीभिःसहितानित्यंवनेषूपवनेतदा २७

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकला-
चरित्रेऽष्टचत्वारिंशोऽध्यायः ४८

## एकोनपंचाशत्तमोऽध्यायः

ब्राह्मरायुवाच-
एकदातुमहाभागगतासापर्वतोत्तमे
रमणीयंवनंदृष्ट्वाकदलीखंडमंडितम् १
शालैस्तालैस्तमालैश्चनालिकेरैस्तथोत्कटैः
पूगीफलैर्मातुलिगैर्नारंगैश्चारुजंबुकैः २
चंपकैःपाटलैःपुरायैःपुष्पितैःकुटकैर्वटैः

अशोकबकुलोपेतंनानावृक्षैरलंकृतम् ३
पर्वतंपुरायवंतंतंपुष्पितैश्चनगोत्तमैः
सर्वत्रदृश्यतेरम्योनानाधातुसमाकुलः ४
तडागंसर्वतोभद्रंपुरायतोयेनपूरितम्
कमलैःपुष्पितैश्चान्यैःसुगंधैःकनकोत्पलैः ५
श्वेतोत्पलैर्विभासंतंरक्तोत्पलसुपुष्पितैः
नीलोत्पलैश्चकह्लारैर्हंसैश्चजलकुक्कुटैः ६
पक्षिभिर्जलजैश्चान्यैर्नानाधातुसमाकुलः
तडागंसर्वतःशुभ्रंनानापक्षिगणैर्युतम् ७
कोकिलानांरुतैःपुरायैःसुस्वरैःपरिशोभितः
मधुराणांतथाशब्दैःसर्वत्रमधुरायते ८
षट्पदानांसुनादेनसर्वत्रपरिशोभते
एवंविधंगिरिंरम्यंतदेववनमुत्तमम् ९
तडागंसर्वतोभद्रंददृशेनृपनंदिनी
वैदर्भीक्रीडमानासासखीभिःसहितातदा १०
समालोक्यवनंपुरायंसर्वत्रकुसुमाकुलम्
चापल्येनप्रभावेणस्त्रीभावेनचलीलया ११
पद्मावतीसरस्तीरेसखीभिःसहितातदा
जलक्रीडासमालीनाहसतेगायतेपुनः १२
रममाणाचसातस्मिंस्तस्मिन्सरसिभामिनी
एवंविप्रतदासातुसुखेनपरिवर्तयेत् १३
विष्णुरुवाच-
गोभिलोनामवैदैत्योभृत्योवैश्रवणस्यच
दिव्येनापिविमानेनसर्वभोगपरिप्लुतः १४
यातिचाकाशमार्गेणगोभिलोदैत्यसत्तमः
तेनदृष्टाविशालाक्षीवैदर्भीनिर्भयातदा १५
सर्वयोषिद्वरासाहिउग्रसेनस्यवैप्रिया
रूपेणाप्रतिमालोकेसर्वांगेषुविराजते १६
रतिर्वैमन्मथस्यापिकिंवापीयंहरिप्रिया
किंवापिपार्वतीदेवीशचीकिंवाभविष्यति १७

यादृशीदृश्यतेचेयंनारीणांप्रवरोत्तमा
अन्यापिईदृशीनास्तिद्वितीयाक्षितिमंडले १८
नक्षत्रेषुयथाचंद्रःसंपूर्णोभातिशोभनः
गुणरूपकलाभिस्तुतथाभातिवरानना १९
पुष्करेषुयथाहंसस्तथेयंचारुहासिनी
अहोरूपमहोभावअस्यास्तुपरिदृश्यते २०
काकस्यशोभनाबालाचारुवृत्तपयोधरा
व्यमृशद्गोभिलोदैत्यःपद्मावतींवराननाम् २१
चिंतयित्वाक्षणंविप्रकाकस्यापिभविष्यति
ज्ञानेनमहताज्ञात्वावैदर्भीतिनसंशयः २२
दयिताउग्रसेनस्यपतिव्रतपरायणा
आत्मबलेनतिष्ठंतीदुष्प्राप्यापुरुषैरपि २३
उग्रसेनोमहामूर्खःप्रेषितायेनवैवरा
पितुर्गेहमियंबालासतुभाग्येनवर्जितः २४
अनयाविनासजीवेच्चकथंकूटमतिःसदा
किंवानपुंसकोराजाएनांयोहिपरित्यजेत् २५
तांदृष्ट्वासतुकामात्मासंजातस्तत्क्षणादपि
इयंपतिव्रताबालादुष्प्राप्यापुरुषैरपि २६
कथंभोक्ष्याम्यहंगत्वाकामोमामतिपीडयेत्
अभुक्त्वैनांयदायास्येतत्स्यान्मृत्युर्ममैवहि २७
अद्यैवहिनसंदेहोयतःकामोमहाबलः
इतिचिंतापरोभूत्वागोभिलोमनसैक्षत २८
कृत्वामायामयंरूपमुग्रसेनस्यभूपतेः
यादृशस्तूग्रसेनश्चसांगोपांगोमहानृपः २९
गोभिलस्तादृशोभूत्वागत्याचस्वरभाषया
यथावस्त्रोयथावेशोवयसाचतथापुनः ३०
दिव्यमाल्यांबरधरोदिव्यगंधानुलेपनः
सर्वाभरणशोभांगोयादृशोमाथुरेश्वरः ३१
भूत्वाथतादृशोदैत्यउग्रसेनमयस्तदा
माययापरयायुक्तोरूपलावरायसंपदा ३२

पर्वताग्रेग्रशोकस्यच्छायामाश्रित्यसंस्थितः
शिलातलस्थोदुष्टात्मावीणादंडेनवीरकः ३३
सुस्वरंगायमानस्तुगीतंविश्वप्रमोहनम्
तालमानक्रियोपेतंसप्तस्वरविभूषितम् ३४
गीतंगायतिदुष्टात्मातस्यारूपेणमोहितः
पर्वताग्रेस्थितोविप्रहर्षेणमहतान्वितः ३५
सखीमध्यगतासातुपद्मावतीवरानना
शुश्रुवेसुस्वरंगीतंतालमानलयान्वितम् ३६
कोऽयगायतिधर्मात्मामहत्सौख्यप्रदायकम्
गीतंहिसत्क्रियोपेतंसर्वभावसमन्वितम् ३७
सखीभिःसहितागत्वाग्रौत्सुक्येननृपात्मजा
ग्रशोकच्छायामाश्रित्यविमलेसुशिलातले ३८
ददर्शभूपवेषेणगोभिलंदानवाधमम्
पुष्पमालांबरधरंदिव्यगंधानुलेपनम् ३९
सर्वाभरणशोभांगंपद्मावतीपतिव्रता
मथुरेशःसमायातःकदाधर्मपरायणः ४०
ममनाथोमहात्मावैराज्यंत्यक्त्वाप्रदूरतः
यावद्धिचिंतयेत्साचतावत्पापेनतेनसा ४१
समाहूतातुरीभूयएहित्वंहिप्रियेमम
चकिताशंकितासाचकथंभर्त्तासमागतः ४२
लज्जितादुःखिताजाताग्रधःकृत्वाततोमुखम्
ग्रहंपापादुराचारानिःशंकापरिवर्तिता ४३
कोपमेवंमहाभागःकरिष्यतिनसंशयः
यावद्धिचिंतयेत्साचतावत्तेनापिपापिना ४४
समाहूतातुरीभूयएह्येहित्वंममप्रिये
त्वयाविनाकृतोदेविप्राणान्धर्तुंवरानने ४५
नहिशक्नोम्यहंकांतेजीवितंप्रियमेवच
तवस्नेहेनलुब्धोस्मित्वांत्यक्त्वानोत्सहेभृशम् ४६
ब्राह्मण्युवाच-
एवमुक्तागतापश्यत्सुमुखंलज्जयान्विता

समालिग्यततोदैत्यःसतींपद्मावतींतदा ४७
एकांतंतुसमानीतासुभुक्ताइच्छयाततः
दैत्येनगोभिलेनापिसत्यकेतोःसुतातदा ४८
सुकलोवाच-
मुष्कस्थानेस्यसंकेतंनाविंदतवरानना
स्ववस्त्रंसापरिगृह्यशंकितादुःखिताह्यभूत् ४९
सासक्रोधावचःप्राहगोभिलंदानवाधमम्
कस्त्वंपापसमाचारोनिर्घृणोदानवाकृतिः ५०
शप्तुकामासमुद्युक्तादुःखेनाकुलितेक्षणा
वेपमानातदाराजन्दुःखभारेणपीडिता ५१
ममकांतच्छलेनैवत्वयागत्यदुरात्मवन्
नाशितंधर्ममेवाग्र्यंपातिव्रत्यमनुत्तमम् ५२
सुस्वरंरुदितंकृत्वाममजन्मत्वयाहृतम्
पश्यमेबलमत्रैवशापंदास्येसुदारुणम् ५३
एवंसंभाषमाणातंशप्तुकामातुगोभिलम् ५४

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे
एकोनपंचाशत्तमोऽध्यायः ४९

## पंचाशत्तमोऽध्यायः

सुकलोवाच-
तस्यास्तुवचनंश्रुत्वागोभिलोवाक्यमब्रवीत्
भवतीशप्तुकामासिकस्मान्मेकारणंवद १
केनदोषेणलिप्तोस्मियस्मात्त्वंशप्तुमुद्यता
गोभिलोनामदैत्योस्मिपौलस्त्यस्यभटःशुभे २
दैत्याचारेणवर्त्तामिजानेविद्यामनुत्तमाम्
वेदशास्त्रार्थवेत्तास्मिकलासुनिपुणःपुनः ३
एवंसर्वंविजानामिदैत्याचारंशृणुष्वमे
परस्वंपरदारांश्चबलाद्भुंजामिनान्यथा ४
वयंदैत्याःसमाकर्ण्यदैत्याचारेणसांप्रतम्
वर्त्तामोज्ञानिभावेनसत्यंसत्यंवदाम्यहम् ५

ब्राह्मणानांहिच्छिद्राणिविपश्यामोदिनेदिने
तेषांहितपसोनाशंविघ्नैःकुर्मोनसंशयः ६
छिद्रंप्राप्यवयंदेविनाशयामोनसंशयः
ब्राह्मणाञ्छ्रूयतांभद्रेदेवयज्ञंवरानने ७
नाशयामोवयंयज्ञान्धर्मयज्ञंनसंशयः
सुब्राह्मणान्परित्यज्यदेवंनारायणंप्रभुम् ८
पतिव्रतांमहाभागांसुमतिंभर्तृतत्पराम्
दूरेणापिपरित्यज्यतिष्ठामोनात्रसंशयः ९
तेजोदेविसुविप्रस्यहरेश्चैवमहात्मनः
नार्याःपतिव्रतायाश्चसोढुंदैत्याश्चनक्षमाः १०
पतिव्रताभयेनापिविष्णोःसुब्राह्मणस्यच
नश्यंतिदानवाःसर्वेदूरंराक्षसपुंगवाः ११
अहंदानवधर्मेणविचरामिमहीतलम्
कस्मात्त्वंशप्तुकामासिममदोषोविचार्यताम् १२
पद्मावत्युवाच-
ममधर्मःसुकायश्चत्वयैवपरिनाशितः
अहंपतिव्रतासाध्वीपतिकामातपस्विनी १३
स्वमार्गेसंस्थितापापमाययापरिनाशिता
तस्मात्त्वामप्यहंदुष्टश्राधक्ष्यामिनसंशयः १४
गोभिलउवाच-
धर्ममेवप्रवक्ष्यामिभवतीयदिमन्यते
अग्निचिद्ब्राह्मणस्यापिश्रूयतांनृपनंदिनी १५
जुह्वन्देवंद्विकालंयोनत्यजेदग्निमंदिरम्
सचाग्निहोत्रीभवतियजत्येवदिनेदिने १६
अन्यच्चैवंप्रवक्ष्यामिभृत्यधर्मंवरानने
मनसाकर्मणावाचाविशुद्धोयोऽपिनित्यशः १७
नित्यमादेशकारीयःपश्चात्तिष्ठतिचाग्रतः
सभृत्यःकथ्यतेदेविपुण्यभागीनसंशयः १८
यःपुत्रोगुणवाञ्ज्ञातापितरंपालयेच्छुभः
मातरंचविशेषेणमनसाकायकर्मभिः १९

तस्यभागीरथीस्नानमहन्यहनिजायते
अन्यथाकुरुतेयोहिसपापीयान्नसंशयः २०
अन्यच्चैवंप्रवक्ष्यामिपतिव्रतमनुत्तमम्
वाचासुमनसाचैवकर्मणाशृणुभामिनि २१
शुश्रूषांकुरुतेयाहिभर्तुश्चैवदिनदिने
तुष्टेभर्त्तरियाप्रीतानत्यजेत्क्रोधनंपुनः २२
तस्यदोषंनगृह्णातिताडितातुष्यतेपुनः
भर्त्तुःकर्मसुसर्वेषुपुरतस्तिष्ठतेसदा २३
साचापिकथ्यतेनारीपतिव्रतपरायणा
पतितोपिपितापुत्रैर्बहुदोषसमन्वितः २४
कस्मादपिचनत्याज्यःकुष्ठितःक्रुधितोऽपिवा
एवंपुत्राःशुश्रूषंतिपितरंमातरंकिल २५
तेयांतिपरमंलोकंतद्विष्णोःपरमंपदम्
एवंहिस्वामिनंयैवैउपाचरंतिभृत्यकाः २६
पत्युर्लोकंप्रयांत्येतेप्रसादात्स्वामिनस्तदा
अग्निंनैवत्यजेद्विप्रोब्रह्मलोकंप्रयातिसः २७
अग्नित्यागकरोविप्रोवृषलीपतिरुच्यते
स्वामिद्रोहीभवेद्भृत्यःस्वामित्यागान्नसंशयः २८
अग्निंचपितरंचैवनत्यजेत्स्वामिनंशुभे
सदाविप्रःसुतोभृत्यःसत्यंसत्यंवदाम्यहम् २९
परित्यज्यप्रगच्छंतितेयांतिनरकार्णवम्
पतितंव्याधितंदेविविकलंकुष्ठिनंतथा ३०
सर्वकर्मविहीनंचगतवित्तादिसंचयम्
भर्तारंनत्यजेन्नारीयदिश्रेयइहेच्छति ३१
त्यक्त्वाकांतंव्रजेन्नारीअन्यत्कार्यमिहेच्छति
सामतापुंश्चलीलोकेसर्वधर्मबहिष्कृता ३२
गतेभर्तरियाग्रामंभोगंशृंगारमेवच
लौल्याच्चकुरुतेनारीपुंश्चलीवदतेजनः ३३
एवंधर्मविजानामिवेदशास्त्रैश्चसंमतम्
दानवाराक्षसाःप्रेताधात्रासृष्टायदादितः ३४

तत्रेहकारणंसर्वंप्रवक्ष्यामिनसंशयः
ब्राह्मणादानवाश्चैवपिशाचाश्चैवराक्षसाः ३५
धर्मार्थंसकलंप्रोक्तमधीतंतैस्तुसुंदरि
विंदंतिसकलंसर्वेंग्राचरंतिनदानवाः ३६
विधिहीनंप्रकुर्वंतिदानवाज्ञानवर्जिताः
अन्यायेनव्रजंत्येतेमानवाविधिवर्जिताः ३७
तेषांशासनहेत्वर्थंकृताएतेपिनान्यथा
विधिहीनंप्रकुर्वंतियेहिधर्मंनराधमाः ३८
तान्वयंशासयामोवैदंडेनमहताकिल
भवत्यादारुणंकर्मकृतमेवसुनिर्घृणम् ३९
गार्हस्थ्यंचपरित्यज्यअत्रायाताकिमर्थतः
वदस्येवंमुखेनापिअहंहिपतिदेवता ४०
कर्मणानास्तितद्दृष्टंपतिदैवत्यमेवते
भर्तारंतंपरित्यज्यकिमर्थंत्वमिहागता ४१
शृंगारंभूषणंवेषंकृत्वातिष्ठसिनिर्घृणा
किमर्थंहिकृतंपापेकस्यहेतोर्वदस्वमे ४२
निःशंकावर्त्तसेचापिप्रमत्तागिरिकानने
मयात्वंसाधितापापादंडेनमहताशृणु ४३
अधर्मचारिणीदुष्टापतिंत्यक्त्वासमागता
क्वास्तेतत्पतिदेवत्वंदर्शयत्वंममाग्रतः ४४
भवतीपुंश्चलीनामययात्यक्तःस्वकःपतिः
पृथक्छय्यायदानारीतदासापुंश्चलीमता ४५
योजनानांशतैकस्यसोन्तरेणप्रवर्त्तते
क्वास्तितेपतिदैवत्यंपुंश्चल्याचारचारिणी ४६
निर्लज्जेनिर्घृणेदुष्टेकिंमेवदसिसंमुखी
तपसःक्वास्तितेभावःक्वतेजोबलमेवच ४७
दर्शयस्वममाद्यैवबलवीर्यपराक्रमम्
पद्मावत्युवाच–
स्नेहेनापिसमानीताश्रूयतामसुराधम ४८
भर्तुर्गेहादहंपित्राक्वास्तेतत्रचपातकम्

नैवकामान्नलोभाच्चनमोहान्नचमत्सरात् ४९
आगताहंपतिंत्यक्त्वापतिभावेनसंस्थिता
भर्तृरूपच्छलेनापित्वयैवपरिवंचिता ५०
भवंतंमाथुरंज्ञात्वागताहंसम्मुखंतव
मायाविनंयदाजानेत्वामेवंदानवाधम ५१
एकेनहुंकृतेनैवभस्मीभूतंकरोम्यहम्
गोभिलउवाच-
चक्षुर्हीनानपश्यंतिमानवाःशृणुसांप्रतम् ५२
धर्मनेत्रविहीनात्वंकथंजानासिमामिह
यदातेभावउत्पन्नःपितुर्गेहंप्रतिशृणु ५३
पतिध्यानंपरित्यज्यमुक्ताध्यानेनत्वंतदा
ज्ञाननेत्रंतदानष्टंस्फुटंचहृदयेतव ५४
कथंमांत्वंविजानासिज्ञानचक्षुर्हताभुवि
कस्यामातापिताभ्राताकस्याःस्वजनबांधवाः ५५
सर्वस्थानेपतिर्ह्येकोभार्यायास्तुनसंशयः
इत्युक्त्वाहिप्रहस्यैवगोभिलोदानवाधमः ५६
नभयंविद्यतेतेऽद्यममापिशृणुपुंश्चलि
किंभवेत्तवशापेनवृथैवपरिकंपसे ५७
ममगेहंसमाश्रित्यभुंक्ष्वभोगान्मनोऽनुगान्
पद्मावत्युवाच-
गच्छपापसमाचारकिंत्वंवदसिनिर्घृणः ५८
सतीभावेनसंस्थास्मिपतिव्रतपरायणा
धक्ष्यामित्वांमहापापयद्येवंतुवदिष्यसि ५९
एवमुक्त्वातथैकांतेनिषसादमहीतले
दुःखेनमहताविष्टांतामुवाचसगोभिलः ६०
तवोदरेमयान्यस्तंस्ववीर्यंसुकृतंशुभे
तस्मादुत्पत्स्यतेपुत्रस्त्रैलोक्यक्षोभकारकः ६१
एवमुक्त्वाजगामाथगोभिलोदानवस्तदा
गतेतस्मिन्दुराचारेदानवेपापचारिणी ६२
दुःखेनमहताविष्टानृपकन्यारुरोदह ६३

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे
पंचाशत्तमोऽध्यायः ५०

## एकपंचाशत्तमोऽध्यायः

ब्राह्मण्युवाच-
गतेतस्मिन्दुराचारेगोभिलेपापचेतसि
पद्मावतीरुरोदाथदुःखेनमहतान्विता १
तस्यास्तुरुदितंश्रुत्वासख्यःसर्वाद्विजोत्तम
पप्रच्छुस्तांराजकन्यांताःसर्वाश्चवराननाः २
कस्माद्रोदिषिभद्रंतेकथयस्वहिचेष्टितम्
क्वगतोऽसौमहाराजोमाथुराधिपतिस्तव ३
येनत्वंहिसमाहूताप्रियेत्युक्त्वावदस्वनः
ताउवाचसुदुःखेनरोदमानापुनःपुनः ४
तयाश्चावेदितंसर्वंयज्ञातंदोषसंभवम्
ताभिर्नीतापितुर्गेहंवेपमानासुदुःखिता ५
मातुःसमक्षंतस्यास्तुश्चाचचक्षुस्तदास्त्रियः
समाकर्ण्यततोदेवीगतासाभर्तृमंदिरम् ६
भर्तारंश्रावयामाससुतावृत्तांतमेवहि
समाकर्ण्यततोराजामहादुःखीश्चजायत ७
यानाच्छादनकंदत्वापरिवारसमन्विताम्
मथुरांप्रेषयामासगतासाप्रियमंदिरम् ८
सुतादोषंसमाच्छाद्यपितामाताद्विजोत्तम
उग्रसेनस्तुधर्मात्मापद्मावतींसमागताम् ९
सदृष्ट्वामुमुदेचाशुउवाचेदंवचःपुनः
त्वयाविनानशक्तोस्मिजीवितुंहिवरानने १०
बहुप्रभासिमेप्रीतागुणशीलैस्तुसर्वदा
भक्त्यासत्येनतेकांतेपतिदैवत्यकैर्गुणैः ११
समाभाष्यप्रियांभार्यांपद्मावतींनरेश्वरः
तयासार्धंसवैरेमेउग्रसेनोनृपोत्तमः १२
ववृधेदारुणोगर्भःसर्वलोकभयप्रदः

पद्मावतीविजानातितस्यगर्भस्यकारणम् १३
स्वोदरेवर्द्धमानस्यचिंतयंतीदिवानिशम्
अनेनकिमुजातेनलोकनाशकरेणवै १४
अनेनापिनमेकार्यंदुष्टपुत्रेणसांप्रतम्
औषधींपृच्छतेसातुगर्भपातस्यसर्वतः १५
नारीमहौषधींसाहिविंदंतीचदिनेदिने
गर्भस्यपातनायैवउपायाबहुशःकृताः १६
ववृधेदारुणोगर्भःसर्वलोकभयंकरः
तामुवाचततोगर्भःपद्मावतींचमातरम् १७
कस्मात्त्वंव्यथसेमातरौषधीभिर्दिनेदिने
पुरायेनवर्द्धतेचायुःपापेनाल्पंतुजीवितम् १८
आत्मकर्मविपाकेनजीवंतिचम्रियंतिच
आमगर्भाःप्रयांत्यन्येअपक्वास्तुमहीतले १९
जातमात्राम्रियंतेऽन्येकतितेयौवनान्विताः
बालावृद्धाश्चतरुणाआयुषोवशतांगताः २०
सर्वेकर्मविपाकेनजीवंतिचम्रियंतिच
ओषध्योमंत्रदेवाश्चनिमित्ताःस्युर्नसंशयः २१
मामेवहिनजानासिभवतीयादृशोह्यहम्
दृष्टःश्रुतस्त्वयापूर्वंकालनेमिर्महाबलः २२
दानवानांमहावीर्यस्त्रैलोक्यस्यभयप्रदः
देवासुरेमहायुद्धेहतोहंविष्णुनापुरा २३
साधयितुंचतद्वैरमागतोऽस्मितवोदरम्
साहसंचश्रमंमातर्माकुरुष्वदिनदिने २४
एवमुक्त्वाद्विजश्रेष्ठमातरंविररामसः
मातोद्यमंपरित्यज्यमहादुःखादभूत्तदा २५
दशाब्दाश्चगतायावत्तावद्वृद्धिमवाप्तवान्
पश्चाज्जज्ञेमहातेजाःकंसोभूत्समहाबलः २६
येनसंत्रासितालोकास्त्रैलोक्यस्यनिवासिनः
योहतोवासुदेवेनगतोमोक्षंनसंशयः २७
एवंश्रुतंमयाकांतभविष्यंतुभविष्यति

पुराणेष्वेवसर्वेषुनिश्चितंकथितंतव २८
पितृगेहेस्थिताकन्यानाशमेवंप्रयातिसा
गृहावासायमेकांतकन्यामोहंनकारयेत् २९
इमांदुष्टांमहापापांपरित्यज्यस्थिरोभव
प्राप्तव्यंतुमहापापंदुःखंदारुणमेवच ३०
लोकेश्रेयःकरंकांतद्वंद्वत्वंमयासह
शूकर्युवाच-
एतद्वाक्यंसुमंत्रंतुश्रुत्वासहिद्विजोत्तमः ३१
त्यागेमतिंचकारासौसमाहूताह्यहंतदा
सकलंवस्त्रशृंगारंममदत्तंशुभेशृणु ३२
तवैवदुर्नयैर्विप्रःशिवशर्माद्विजोत्तमः
गतोवैमतिमान्दुष्टेकुलदुष्टप्रचारिणि ३३
यत्रतेतिष्ठतेभर्तातत्रगच्छनसंशयः
तवयद्रोचतेस्थानंयथादिष्टंतथाकुरु ३४
एवमुक्त्वामहाभागेपितृमातृकुटुंबकैः
परित्यक्तागताशीघ्रंनिर्लज्जाहंवरानने ३५
नलभाम्यहमेवापिवासस्थानंसुखंशुभे
भर्त्सयंतिचमांलोकाःपुंश्चलीयंसमागता ३६
अटमानागतादेशात्कुलमानेनवर्जिता
देशेगुर्जरकेपुण्येसौराष्ट्रेशिवमंदिरे ३७
वनस्थलेतिविख्यातंनगरंवृद्धिसंकुलम्
अतीवपीडितादेविक्षुधयाहंतदाशृणु ३८
कर्परंहिकरेगृह्यभिक्षार्थमुपचक्रमे
गृहिणांद्वारदेशेषुप्रविशामिसुदुःखिता ३९
ममरूपंविपश्यंतिलोकाःकुत्संतिभामिनि
नददंतेचमेभिक्षांपापाचेयंसमागता ४०
एवंदुःखसमाहारादारिद्र्यपरिपीडिता
अटंत्याचमयादृष्टंगृहमेकमनुत्तमम् ४१
तुंगप्राकारसंवेष्टंवेदशालासमन्वितम्
वेदध्वनिसमाकीर्णंबहुविप्रसमाकुलम् ४२

धनधान्यसमाकीर्णंदासीदासैरलंकृतम्
प्रविवेशगृहंरम्यंलक्ष्मीमुदितमेवतत् ४३
तद्गृहंसर्वतोभद्रंतस्यैवशिवशर्मणः
भिक्षांदेहीत्युवाचाथसुदेवादुःखपीडिता ४४
शिवशर्माथशुश्रावभिक्षाशब्दंद्विजोत्तमः
मंगलांनामवैभार्यांलक्ष्मीरूपांवराननाम् ४५
तांहसन्प्राहधर्मात्माशिवशर्मामहामतिः
इयंहिदुर्बलाप्राप्ताभिक्षार्थंद्वारमागता ४६
समाहूयप्रियेचैनांदेहित्वंभोजनंशुभे
कृपयापरयाविष्टाज्ञात्वामांतुसमागताम् ४७
प्रोवाचमंगलाकांतंदास्यामिप्रियभोजनम्
एवमुक्त्वाचभार्तरंमंगलामंगलान्विता ४८
पुनर्मांभोजयामाससमिष्टान्नेनसुदुर्बलाम्
मामुवाचसधर्मात्माशिवशर्मामहामुनिः ४९
कात्वमत्रसमायाताकस्यवाश्रमसेजगत्
केनकार्येणसर्वत्रकथयस्वममाग्रतः ५०
एवमाकर्णयतद्वाक्यंभर्तुश्चैवमहात्मनः
स्वरेणलक्षितःकांतोमयावैपापयातदा ५१
व्रीडयाधोमुखीजातादृष्टोभर्तायदामया
मंगलाचारुसर्वांगीभर्तारमिदमब्रवीत् ५२
काचेयंहिसमाचक्ष्वत्वांदृष्ट्वाहिविलज्जति
कथयस्वप्रसादेनकाचएषाभविष्यति ५३

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे
एकपंचाशत्तमोऽध्यायः ५१

## द्विपंचाशत्तमोऽध्यायः

शिवशर्मोवाच–
मंगलेश्रूयतांवाक्यंयदिपृच्छसिसांप्रतम्
यदर्थंहित्वयापृष्टंतन्निबोधवरानने १
इयंहिसांप्रतंप्राप्तावराकीभिक्षुरूपिणी

वसुदत्तस्यविप्रस्यसुतेयंचारुलोचने २
सुदेवानामभद्रेयंममजायाप्रियासदा
केनापिकारणेनैवदेशंत्यक्त्वासमागता ३
ममदुःखेनदग्धेयंवियोगेनवरानने
मांज्ञात्वातुसमायाताभिक्षुरूपेणतेगृहम् ४
एवंज्ञात्वात्वयाभद्रेश्रातिथ्यंपरिशोभितम्
कर्त्तव्यंनचसंदेहइच्छंत्याममसुप्रियम् ५
भर्तुर्वाक्यंनिशम्यैवमंगलापतिदेवता
हर्षेणमहताविष्टास्वयमेवसुमंगला ६
स्नानाच्छादनभोज्यंचममचक्रेवरानने
रत्नकांचनयुक्तैश्चाभरणैश्चपतिव्रता ७
अहंहिभूषिताभद्रेतयैवपतिकाम्यया
तयाहंभूषितादेविमानस्नानैश्चभोजनैः ८
भर्त्राहंमानितादेविजातंदुःखमनंतकम्
ममोरसिमहातीव्रंसर्वप्राणविनाशनम् ९
तस्यामानोमयादृष्टोदुःखमात्मगतंतथा
चिंतामेदारुणाजाताययाप्राणाव्रजंतिमे १०
कदापिवचनंदत्तंनमयापापयाशुभम्
अस्यैवविप्रवर्यस्यआचरंत्याचदुष्कृतम् ११
पादप्रक्षालनंनैवअंगसंवाहनंनहि
एकांतंनमयादत्तंतस्यैवहिमहात्मनः १२
संभाषांकथमस्यैवकरिष्येपापनिश्चया
रात्रौचैवतदातत्रपतितादुःखसागरे १३
एवंहिचिंतमानायाःस्फुटितंहृदयंमम
गताःप्राणास्तदाकायंपरित्यज्यवरानने १४
तत्रदूताःसमायाताधर्मराजस्यवैतदा
वीराश्चदारुणाःक्रूरागदाचक्रासिधारिणः १५
तैस्तुबद्धामहाभागेशृंखलैर्दृढबंधनैः
नीतायमपुरंतैस्तुरुदमानासुदुःखिता १६
मुद्गरैस्ताड्यमानाहंदुर्गमार्गेणपीडिता

भर्त्स्यमानायमस्याग्रेतैस्तत्राहंप्रवेशिता १७
दृष्टाहंयमराजेनसक्रोधेनमहात्मना
अंगारसंचयेक्षिप्ताक्षिप्तानरकसंचये १८
लोहस्यपुरुषंकृत्वाअग्निनापरितापितः
ममोरसिसमुत्क्षिप्तोनिजभर्तुश्चवंचनात् १९
नानापीडातिसंतप्तानरकाग्निप्रतापिता
तैलद्रोरयांपरिक्षिप्ताकरम्भवालुकोपरि २०
असिपत्रैश्चसंच्छिन्नाजलमंत्रेणवाहिता
कूटशाल्मलिवृक्षेषुक्षिप्तातेनमहात्मना २१
पूयशोणितविष्ठायांपतिताकृमिसंकुले
सर्वेषुनरकेष्वेवंक्षिप्ताहंनृपनंदिनि २२
पीडायुक्तेषुतीव्रेषुतेनैवापिमहात्मना
करपत्रैःपाटिताहंशक्तिभिस्ताडिताभृशम् २३
अन्येष्वेवनरकेषुपातितानृपनंदिनि
योनिगर्तेषुक्षिप्तास्मिपतितादुःखसंकटे २४
धर्मराजेनतेनाहंनरकेषुनिपातिता
वल्गुनीयोनिमासाद्यभुक्तंदुःखंसुदारुणम् २५
गताहंक्रौष्टुकींयोनिंशुनीयोनिंपुनर्गता
सकुक्कुटींचमार्जारीमाखुयोनिंगताह्यहम् २६
एवंयोनिविशेषेषुपापयोनिषुतेनच
क्षिप्तास्मिधर्मराजेनपीडितासर्वयोनिषु २७
तेनैवाहंकृताभूमौशूकरीनृपनंदिनि
तवहस्तेमहाभागेसंतितीर्थान्यनेकशः २८
तेनोदकेनसिक्तास्मित्वयैववरवर्णिनि
ममपापंगतंदेविप्रसादात्तवसुंदरि २९
तवैवतेजःपुरयेनजातंज्ञानंवरानने
इदानींमामुद्धरस्वपतितांनरकसंकटे ३०
यदानोद्धरसेदेविपुनर्यास्यामिदारुणम्
नरकंचमहाभागेत्राहिमांदुःखभागिनीम् ३१
गताहंपापभावेनदीनाहंचनिराश्रया

सुदेवोवाच-
किंकृतंहिमयाभद्रेसुकृतंपुरयसंभवम् ३२
येनाहमुद्धरेत्वांवैतन्मेत्वंवदसांप्रतम्
शूकर्युवाच-
अयंराजामहाभागइच्वाकुर्मनुनंदनः ३३
विष्णुरेषमहाप्राज्ञोभवतीश्रीर्हिनान्यथा
पतिव्रतामहाभागापतिव्रतपरायणा ३४
त्वंसतीसर्वदाभद्रेसर्वतीर्थमयीप्रिया
देविसर्वमयीनित्यंसर्वदेवमयीसदा ३५
महापतिव्रतालोकएकात्वंनृपतेःप्रिया
ययाशुश्रूषितोभर्ताभवत्याहिअहर्निशम् ३६
एकस्यदिवसस्यापिपुरयंदेहिवरानने
पतिशुश्रूषितस्यापियदिमेकुरुषेप्रियम् ३७
ममातापितात्वंवैत्वंमेगुरुःसनातनः
अहंपापादुराचाराअसत्याज्ञानवर्जिता ३८
मामुद्धरमहाभागेभीताहंयमताडनैः
सुकलोवाच-
एवंश्रुत्वातयाप्रोक्तंसमालोक्यनृपंतदा ३९
किंकरोमिमहाराजएषाकिंवदतेपशुः
इच्वाकुरुवाच-
एनांदुःखांवराकींवैपापयोनिंगतांशुभे ४०
समुद्धरस्वपुरयैस्त्वंमहच्छ्रेयोभविष्यति
एवमुक्तावरानारीसुदेवाचारुमंगला ४१
उवाचैकाब्दपुरयंतेमयादत्तंवरानने
एवमुक्तेनवाक्येनतयादेव्याहितत्क्षणात् ४२
रूपयौवनसंपन्नादिव्यमालाविभूषिता
दिव्यदेहाचसंभूतातेजोज्वालासमावृता ४३
सर्वभूषणशोभाढ्यानानारत्नैश्चशोभिता
संजातादिव्यरूपासादिव्यगंधानुलेपना ४४
दिव्यंविमानमारूढाअंतरिक्षंगतासती

तामुवाचततोराज्ञींप्रणतानतकंधरा ४५
स्वस्त्यस्तुतेमहाभागेप्रसादात्तवसुंदरि
व्रजामिपातकान्मुक्तास्वर्गंपुरायतमंशुभम् ४६
प्रणम्यैवंगतास्वर्गंसुदेवाशृणुसत्तम
एतत्तेसर्वमाख्यातंसुकलायानिवेदितम् ४७
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रेसुदेवास्वर्गारोहणंना-
मद्विपंचाशत्तमोऽध्यायः ५२

त्रिपंचाशत्तमोऽध्यायः

सुकलोवाच-
एवंधर्मंश्रुतंपूर्वंपुराणेषुतदामया
पतिहीनाकथंभोगंकरिष्येपापनिश्चया १
कांतेनतुविनातेनजीवंकायेनधारये
विष्णुरुवाच-
एवमुक्त्वापरंधर्मंपतिव्रतमनुत्तमम् २
तास्तुसख्योवरानार्योहर्षेणमहतान्विताः
श्रुत्वाधर्मंपरंपुरायंनारीणांगतिदायकम् ३
स्तुवंतितांमहाभागांसुकलांधर्मवत्सलाम्
ब्राह्मणाश्चसुराःसर्वेपुरायस्त्रियोनरोत्तम ४
तस्याध्यानंप्रकुर्वंतिपतिकामप्रभावतः
अत्यर्थंदृढतामिंद्रःसुविचिंत्यसुरेश्वरः ५
सुकलायाःपरंभावंसुविचार्यामरेश्वरः
चालयेधैर्यमस्याश्चपतिस्नेहंनसंशयः ६
सस्मारमन्मथंदेवंत्वरमाणःसुराधिपः
पुष्पचापंससंगृह्यमीनकेतुःसमागतः ७
प्रिययाचतयायुक्तोरत्यादृष्टमहाबलः
बद्धांजलिपुटोभूत्वासहस्राक्षमुवाचसः ८
कस्मादहंत्वयानाथअधुनासंस्मृतोविभो
आदेशोदीयतांमेद्यसर्वभावेनमानद ९
इंद्रउवाच-

सुकलेयंमहाभागापतिव्रतपरायणा
शृणुष्वकामदेवत्वंकुरुसाहाय्यमुत्तमम् १०
निष्कर्षयमहाभागांसुकलांपुण्यमंगलाम्
तच्छ्रुत्वावचनंतस्यशक्रस्यतमथाब्रवीत् ११
एवमस्तुसहस्राक्षकरिष्यामिनसंशयः
साहाय्यंदेवदेवेशतवकौतुककारणात् १२
एवमुक्त्वामहातेजाःकंदर्पोमुनिदुर्जयः
देवाञ्जेतुंसमर्थोऽहसमुनीनृषिसत्तमान् १३
किंपुनःकामिनींदेवयस्याअंगेनवैबलम्
कामिनीनामहंदेवअंगेषुनिवसाम्यहम् १४
भालेकुचेषुनेत्रेषुकचाग्रेषुचसर्वदा
नाभौकटयांपृष्ठदेशेजघनेयोनिमंडले १५
अधरेदंतभागेषुकक्षायांहिनसंशयः
अंगेष्वेवंप्रत्यंगेषुसर्वत्रनिवसाम्यहम् १६
नारीममगृहंदेवसदातत्रवसाम्यहम्
तत्रस्थःपुरुषान्सर्वान्मारयामिनसंशयः १७
स्वभावेनाबलादेवसंतप्ताममार्गणैः
पितरंमातरंदृष्ट्वाअन्यंस्वजनबांधवम् १८
सुरूपंसगुणंदेवममबाणाहतासती
चलतेनात्रसंदेहोविपाकंनैवचिंतयेत् १९
योनिःस्पंदेतनारीणांस्तनाग्रौचसुरेश्वर
नास्तिधैर्यंसुरेशानसुकलांनाशयाम्यहम् २०
इद्रउवाच-
पुरुषोहंभविष्यामिरूपवान्गुणवान्धनी
कौतुकार्थमिमांनारींचालयामिमनोभव २१
नैवकामान्नसंत्रासान्नवालोभान्नकारणात्
नवैमोहान्नवैक्रोधात्सत्यंसत्यंरतिप्रिय २२
कथंमेदृश्यतेतस्यामहत्सत्यंपतिव्रतम्
निष्कर्षिष्यइतोगत्वाभवन्मोहोत्रकारणम् २३
एवंकामंचसंदिश्यजगामसुरराट्स्वयम्

आत्मविकृतिसंभूतोरूपवान्गुणवान्स्वयम् २४
सर्वाभरणशोभांगःसर्वभोगसमन्वितः
भोगलीलासमाकीर्णःसर्वदौदार्यसंयुतः २५
यत्रसातिष्ठतेदेवीकृकलस्यप्रियानृप
आत्मलीलांस्वरूपंचगुणंभावंप्रदर्शयेत् २६
नैवपश्यतिसातंतुपुरुषंरूपसंपदम्
यत्रयत्रव्रजेत्साहितत्रतांपश्यतेनृप २७
साभिलाषेणमनसातामेवंपरिपश्यति
कामचेष्टांसहस्राक्षोऽदर्शयत्सर्वभावकैः २८
चतुष्पथेपथेतीर्थेयत्रदेवीप्रयातिसा
तत्रतत्रसहस्राक्षस्तामेवपरिपश्यति २९
इंद्रेणप्रेषितादूतीसुकलांप्रतिसागता
सुकलांसुमहाभागांप्रत्युवाचप्रहस्यवै ३०
अहोसत्यमहोधैर्यमहोकांतिरहोक्षमा
अस्यारूपेणसंसारेनास्तिनारीवरानना ३१
कात्वंभवसिकल्याणिकस्यभार्याभविष्यसि
यस्यत्वंसगुणाभार्यासधन्यःपुण्यभाग्भुवि ३२
तस्यास्तुवचनंश्रुत्वातामुवाचमनस्विनी
वैश्यजात्यांसमुत्पन्नोधर्मात्मासत्यवत्सलः ३३
तस्याहंहिप्रियाभार्यासत्यसंधस्यधीमतः
कृकलस्यापिवैश्यस्यसत्यमेववदामिते ३४
ममभर्तासधर्मात्मातीर्थयात्रांगतःसुधीः
तस्मिन्गतेमहाभागेममभर्तरिसंप्रति ३५
अतिक्रांताःशृणुष्वत्वंत्रयश्चैवापिवत्सराः
ततोहंदुःखिताजाताविनातेनमहात्मना ३६
एतत्तेसर्वमाख्यातमात्मवृत्तांतमेवते
भवतीपृच्छतेमांकाभविष्यतिवदस्वमे ३७
सुकलायावचःश्रुत्वादूत्याआभाषितंपुनः
मामेवंपृच्छसेभद्रेतत्तेसर्ववदाम्यहम् ३८
अहंतवांतिकंप्राप्ताकार्यार्थंवरवर्णिनि

श्रूयतामभिधास्यामिश्रुत्वाचैवावधार्यताम् ३९
गतस्तेनिर्घृणोभर्तात्वांत्यक्त्वातुवरानने
किंकरिष्यसितेनापिप्रियाघातकरेणच ४०
यस्त्वांत्यक्त्वागतःपापीसाध्व्याचारसमन्विताम्
किंवासतेगतोबालेतत्रजीवतिवैमृतः ४१
किंकरिष्यतितेनैवंभवतीखिद्यतेवृथा
कस्मान्नाशयतेचांगंदिव्यंहेमसमप्रभम् ४२
बाल्येवयसिसंप्राप्तेमानवोनचविंदति
एकंसुखंमहाभागेबालक्रीडांविनाशुभे ४३
वार्द्धकेदुःखसंप्राप्तिर्जराकायंप्रहिंसयेत्
तारुण्येभुज्यतेभोगःसुखात्सर्वोवरानने ४४
यावत्तिष्ठतितारुण्यंतावद्भुंजंतिमानवाः
सुखभोगादिकंसर्वंस्वेच्छयारमतेनरः ४५
यावत्तिष्ठतितारुण्यंतावद्भोगान्प्रभुंजते
वयस्यपिगतेभद्रेतारुण्येकिंकरिष्यति ४६
संप्राप्तेवार्द्धकेदेविकिंचित्कार्यंनसिध्यति
स्थविरश्चिंतयेन्नित्यंसुखकार्यंनगच्छति ४७
वयस्यपिगतेबालेक्रियतेसेतुबंधनम्
तादृशोयंभवेत्कायस्तारुण्येतुगतेशुभे ४८
तस्माद्भुंक्ष्वसुखेनापिपिबस्वमधुमाधवीम्
कामाबाणादहंत्यंगंतवेमेचारुलोचने ४९
अयमेकःसमायातःपुरुषोरूपवान्गुणी
अयंहिपुरुषव्याघ्रःसर्वज्ञोगुणवान्धनी ५०
तवार्थेनित्यसंयुक्तःस्नेहेनवरवर्णिनि
सुकलोवाच-
बाल्यंनास्त्यपिजीवस्यतारुण्यंनास्तिजीविते ५१
वृद्धत्वंनास्तिचैवास्यस्वयंसिद्धःसुसिद्धिदः
अमरोनिर्जरोव्यापीसुसिद्धःसर्ववित्तमः ५२
अकामःकामदोलोकेआत्मरूपेणवर्तते
यथागेहस्यसंस्थानंतथाकायस्यदृश्यते ५३

यथावार्द्धकिनाकायस्तथासूत्रेणमंदिरम्
अनेककाष्ठसंघातैर्नानादारुसमुच्चयैः ५४
मृत्तिकयोदकेनापिसमंतात्परिणामयेत्
लिपितंलेपकैःकाष्ठंचित्रंभवतिचित्रकैः ५५
प्रथमंरूपमायातिगृहंसूत्रेणसूत्रितम्
पुष्णंतिचस्वयंतत्तुलेपनाद्वैदिनेदिने ५६
वायुनादोलितंनित्यंगृहंचमलिनायते
मध्यमोवर्तुतःकालोगृहस्यपरिकथ्यते ५७
रूपहानिर्भवेत्तस्यगृहस्वामीविलेपयेत्
स्वेच्छयाचगृहस्वामीरूपवत्त्वंनयेद्गृहम् ५८
तारुण्यंतस्यगेहस्यदूतिकेपरिकथ्यते
काष्ठसंघैश्चजीर्णत्वंबहुकालैःप्रयातिसः ५९
स्थानभ्रष्टाःप्रजायंतेमूलाग्रेप्रचलंतिते
नसहेल्लेपनाभारमाधारेणप्रतिष्ठति ६०
एतद्गृहस्यवार्द्धक्यंकथितंशृणुदूतिके
पतमानंगृहंदृष्ट्वागृहस्वामीपरित्यजेत् ६१
गृहमन्यंप्रवेशायप्रयात्येवहिसत्वरम्
तथाबाल्यंचतारुण्यंनृणांवृद्धत्वमेवच ६२
सबाल्येबालरूपश्चज्ञानहीनंप्रकारयेत्
चित्रयेत्कायमेवापिवस्त्रालंकारभूषणैः ६३
लेपनैश्चंदनैश्चान्यैस्तांबूलप्रभवादिभिः
कायस्तरुणतांयातिअतिरूपोविजायते ६४
बाह्याभ्यंतरमेवापिरसैःसर्वैःप्रपोषयेत्
तेनपोषणभावेनपरिपुष्टःप्रजायते ६५
जायतेमांसवृद्धिस्तुरसैश्चापिनवोत्तमा
यांतिविस्तरतांराजन्नंगान्याप्यायितान्यपि ६६
प्रत्यंगानिरसैश्चैवस्वंस्वंरूपंप्रयांतिवै
दंताधरौस्तनौबाहूकटिपृष्ठमुरूउभे ६७
हस्तपादतलौतद्वद्वृद्धित्वंप्रतिपेदिरे
उभाभ्यामपितान्येववृद्धिमायांतितानिवै ६८

अंगानिरसमांसाभ्यांसुरूपाणिभवंतिते
तैःस्वरूपैर्भवेन्मर्त्योरसबद्धश्चदूतिके ६९
सुरूपःकथ्यतेमर्त्योलोकेकेनप्रियोभवेत्
विष्ठामूत्रस्यवैकोशःकायएषचदूतिके ७०
अपवित्रशरीरोयंसदास्रवतिनिर्घृणः
तस्यकिंवर्ण्यतेरूपंजलबुद्बुदवच्छुभे ७१
यावत्पंचाशद्वर्षाणितावत्तिष्ठतिवैदृढः
पश्चाच्चजायतेहानिस्तस्यैवापिदिनेदिने ७२
दंताःशिथिलतांयांतितथालालायतेमुखम्
चक्षुर्भ्यामपिपश्येन्नकर्णाभ्यांनशृणोतिच ७३
गतिंकर्तुंनशक्नोतिहस्तपादैश्चदूतिके
अक्षमोजायतेकायोजराकालेनपीडितः ७४
तद्रसःशोषमायातिजराग्नितापशोषितः
अक्षमोजायतेदूतिकेनरूपत्वमिष्यते ७५
यथाजीर्णगृहंयातिक्षयमेवंनसंशयः
तथासंक्षयमायातिवार्द्धकेतुकलेवरम् ७६
ममरूपंसमायातंवर्णस्येवंदिनेदिने
केनाहंरूपसंयुक्ताकेनरूपत्वमिष्यते ७७
यथाजीर्णगृहंयातिकेनासौपुरुषोबली
यस्यार्थमागतादूतिभवतीकेनशंसति ७८
किमुचैवत्वयादृष्टंममांगेवदसांप्रतम्
तस्यांगादिहहीनंचदूतिनास्त्यधिकंतथा ७९
यथात्वंचतथासौवैतथाहंनात्रसंशयः
कस्यरूपंनविद्येतरूपवान्नास्तिभूतले ८०
उच्छ्रायाःपतनांताश्चनगास्तुगिरयःशुभे
कालेनपीडितायांतितद्वद्भूताश्चनान्यथा ८१
अरूपोरूपवान्दिव्यआत्मासर्वगतःशुचिः
स्थावरेष्वेवसर्वेषुजंगमेषुचदूतिके ८२
एकोनिवसतेशुद्धोघटेष्वेकंयथोदकम्
घटनाशात्प्रयात्येकमेकत्वंत्वंनबुध्यसे ८३

पिंडनाशादयंचात्माएकरूपोविजायते
एकंरूपंमयादृष्टंसंसारेवसतासदा ८४
एवंवदस्वतंज्ञात्वायस्यार्थमिहचागता
दर्शयस्वअपूर्वंमेयदिभोक्तुमिहेच्छसि ८५
व्याधिनापीडयमानस्यकफेनापिवृतस्यच
अंगाद्विचलतेशोणः स्थानभ्रष्टोभिजायते ८६
अंगसंधिषुसर्वासुपलत्वंचांतरंगतः
एकतोनाशमायातिस्वंहिरूपंपरित्यजेत् ८७
विष्ठात्वंजायतेशीघ्रंकृमिभिश्चभवेत्किल
तद्वदुःखकरंवापिनिजरूपंपरित्यजेत् ८८
श्रूयतांजायतेपश्चात्कृमिदुर्गंधसंकुलम्
जायंतेतत्रवैयूकाःकृमयोवानसंशयः ८९
सकृमिःकुरुतेस्फोटंकंडूंचपरिदारुणाम्
व्यथामुत्पादयेद्यूकासर्वांगंपरिचालयेत् ९०
नखाग्रैर्घृष्यमाणासाकंडूःशांताप्रजायते
तद्वत्तैश्चशृणुष्वैवसुरतस्यनसंशयः ९१
भुंजत्येवरसान्मर्त्यःसुभिद्मान्पिबतेपुनः
वायुनातेनप्राणेनपाकस्थानंप्रणीयते ९२
यद्भक्तंप्राणिभिर्दूतिपाकस्थानंगतंपुनः
सर्वंतत्पिहितंतत्रवायुर्वैपातयेन्मलम् ९३
सारभूतोरसस्तत्रतद्रक्तश्चप्रजायते
निर्मलःशुद्धवीर्यस्तुब्रह्मस्थानंप्रयातिच ९४
आकृष्टःससमानेननीतस्तेनापिवायुना
स्थानंनलभतेवीर्यंचंचलत्वेनवर्तते ९५
प्राणिनांहिकपालेषुकृमयःसंतिपंचवै
द्वावेतौकर्णमूलेतुनेत्रस्थानेततःपुनः ९६
कनिष्ठांगुलिमानेनरक्तपुच्छाश्चदूतिके
नवनीतस्यवर्णेनकृष्णपुच्छानसंशयः ९७
तेषांनामापिभद्रेत्वंमत्तोनिगदितंशृणु
पिंगलीशृंखलीनामद्वौकृमीकर्णमूलयोः ९८

चपलःपिप्पलश्चैवद्वावेतौनासिकाग्रयोः
शृंगलीजंगलीचान्यौनेत्रयोरंतरस्थितौ ९९
कृमीणांशतपंचाशत्तादृग्भूतानसंशयः
भालांतेवस्थिताःसर्वेराजिकायाःप्रमाणतः १००
कपालरोगिणःसर्वेविकुर्वंतिनसंशयः
केशद्वयंमुखेतस्यविद्यतेशृणुदूतिके १०१
प्राणिनांसंक्षयंविद्धितत्क्षणेहिनसंशयः
स्वस्थानेसंस्थितस्यापिप्राजापत्यस्यवैमुखे १०२
तद्वीर्यंरसरूपेणपततेनात्रसंशयः
मुखेनपिबतेवीर्यंतेनमत्तःप्रजायते १०३
तालुमध्यप्रदेशेचचंचलत्वेनवर्तते
इडाचपिंगलानाडीसुषुम्णाख्याचसंस्थिता १०४
सुबलेनापितस्यैवनाडिकाजालपंजरे
कामकंडूर्भवेद्दूतिसर्वेषांप्राणिनांकिल १०५
पुंसश्चस्फुरतेलिगंनार्यायोनिश्चदूतिके
स्त्रीपुंसौसंप्रमत्तौतुव्रजतःसंगमंततः १०६
कायेनकायसंघृष्टिर्मैथुनेनहिजायते
क्षणमात्रंसुखंकायेपुनःकंडूश्चतादृशी १०७
सर्वत्रदृश्यतेदूतिभावएवंविधःकिल
व्रजत्वमात्मनःस्थानंनैवास्त्यत्रअपूर्वता १०८
अपूर्वंनास्तिमेकिंचित्करोम्येवनसंशयः १०९

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे
त्रिपंचाशत्तमोऽध्यायः ५३

## चतुःपंचाशत्तमोऽध्यायः

विष्णुरुवाच-
एवमुक्त्वागतादूतीतयासुकलयातदा
समासेनसुसंप्रोक्तमवधार्यपुरंदरः १
तदर्थंभाषितंतस्याःसत्यधर्मसमन्वितम्
आलोच्यसाहसंधैर्यंज्ञानमेवपुरंदरः २

ईदृशंहिवदेत्काहिनारीभूत्वामहीतले
योगरूपंसुसंशिष्टंन्यायोदैःद्मालितंवचः ३
पवित्रेयंमहाभागासत्यरूपानसंशयः
त्रैलोक्यस्यसमस्तस्यधुरंधर्तुंभवेत्द्ममा ४
एतदर्थंविचार्यैवजिष्णुःकंदर्पमब्रवीत्
त्वयासहगमिष्यामिद्रष्टुंतांकृकलप्रियाम् ५
प्रत्युवाचसहस्राद्मंमन्मथोबलदर्पितः
गम्यतांतत्रदेवेशयत्रास्तेसापतिव्रता ६
मानंवीर्यंबलंधैर्यंतस्याःसत्यंपतिव्रतम्
गत्वाहंनाशयिष्यामिकियन्मात्रासुरेश्वर ७
समाकरार्यसहस्राद्मोवचनंमन्मथस्यच
भोभोनंगश्शृणुष्वत्वमधिकंभाषितंमुधा ८
सुदृढासत्यवीर्येणसुस्थिराधर्मकर्मभिः
सुकलेयमजेयावैतत्रतेपौरुषंनहि ९
इत्याकरार्यततःक्रुद्धोमन्मथस्त्विन्द्रमब्रवीत्
ऋषीणांदेवतानांचबलंमयाप्रणाशितम् १०
अस्याबलंकियन्मात्रंभवताममकथ्यते
पश्यतस्तवदेवेशनाशयिष्यामितांस्त्रियम् ११
नवनीतंयथाचाग्नेस्तेजोदृष्ट्वाद्रवंव्रजेत्
तथेमांद्रावयिष्यामिस्वेनरूपेणतेजसा १२
गच्छतत्रमहत्कार्यमुपस्थंसांप्रतंध्रुवम्
कस्मात्कुत्ससिमेतेजस्त्रैलोक्यस्यविनाशनम् १३
विष्णुरुवाच–
आकरार्यवाक्यंतुमनोभवस्यएतामसाध्यांतवकामजाने
धैर्यंसमुद्यम्यचपुरायदेहांपुरायेनपुरायांबहुपुरायचाराम् १४
पश्यामितेपौरुषमुग्रवीर्यमितोहिगत्वातुधनुष्मतावै
तेनापिसार्धंप्रजगामभूयोरत्याचदूत्याचपतिव्रतांताम् १५
एकांसुपुरायांस्वगृहस्थितांतांध्यानेनपत्युश्चरणेनियुक्ताम्
यथासुयोगीप्रविधायचित्तंविकल्पहीनंनचकल्पयेत १६
अत्यद्भुतंरूपमनंततेजोयुतंचकाराथसतीप्रमोहम्

नीलांचितंभोगयुतंमहात्माझषध्वजश्चैवपुरंदरश्च १७
दृष्ट्वासुलीलंपुरुषंमहांतंचरंतमेवंपरिकामभावम्
जायाहिवैश्यस्यमहात्मनस्तुमेनेनसारूपयुतंगुणज्ञम् १८
अंभोयथापद्मदलेगतंवैप्रयातिमुक्ताफलकस्यकीर्तिम्
तद्वत्स्वभावःपरिसत्ययुक्तोजज्ञेचतस्यास्तुपतिव्रतायाः १९
अनेनदूतीपरिप्रेषितापुरायामांयुवत्याहगुणज्ञमेनम्
लीलास्वरूपंबहुधात्मभावंममैषसर्वंपरिदर्शयेच्च २०
ममैवकालंप्रबलंविचिंत्यागतोहिमेकांतगुणैश्चसत्खलः
रत्यासमेतस्तुकथंचजीवेत्सत्याश्मभारेणप्रमर्दितश्च २१
ममापिभावंपरिगृह्यकांतोजीवेत्कियान्वापिसुबुद्धियुक्तः
शून्योहिकायोममचास्तिसद्यश्चेष्टाविहीनोमृतकल्पएव २२
कायस्यग्रामस्यप्रजाःप्रनष्टाःसुविक्रियाख्यंपरिगृह्यकर्म
ममाधिकेनापिसमंसुकांतंसऊद्ध्र्वशोभामनयच्चकामः २३
यदामृतोबलवान्हर्षयुक्तःस्वयंदृशावैपरिनृत्यमानः
तथाअनेनापिप्रभाषयेद्धुतंयोमांहिवाञ्छत्यपिभोक्तुकामः २४
एवंविचार्यैवतदामहासतीसत्याख्यरज्ज्वादृढबद्धचेतना
गृहंस्वकीयंप्रविवेशसातदातत्तस्यभावंनियमेनवेत्तुम् २५

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे-
चतुःपंचाशत्तमोऽध्यायः ५४

## पंचपंचाशत्तमोऽध्यायः

विष्णुरुवाच-
भावंविदित्वासुरराट्चतस्याःप्रोवाचकामंपुरतःस्थितंसः
नचास्तिशक्यास्मरतेजयायसत्यात्मकध्यानसुदंशितासती १
धर्माख्यचापंस्वकरेगृहीत्वाज्ञानाभिधानंवरमेवबाणम्
योद्धुंरणेसंप्रतिसंस्थितासतीवीरोयथादर्पितवीर्यभावः २
जिगीषयेयंपुरुषार्थमेवत्वमात्मनःकुरुषेपौरुषंतु
त्वामद्यजेतुंसमरेसमर्थायद्धाव्यमेवंतदिहैवचिंत्यम् ३
दग्धोसिपूर्वंत्वमिहैवशंभुनामहात्मनातेनसमंविरोधम्
कृत्वाफलंतस्यविकर्मणश्चजातोस्यनंगःस्मरसत्यमेव ४

यथा त्वयाकर्मकृतंपुरास्मरफलंतुप्राप्तंतुतथैवतीव्रम्
सुकुत्सितांयोनिमवाप्स्यसिध्रुवंसाध्व्यानयासार्धमिहैवकथ्यसे ५
येज्ञानवंतःपुरुषाजगत्त्रयेवैरंप्रकुर्वन्तिमहात्मभिःसमम्
भुंजन्तितेदुष्कृतमेवतत्फलंदुःखान्वितंरूपविनाशनंच ६
व्याघुष्यश्रावांतुव्रजावकामएनांपरित्यज्यसतींप्रयुज्य
सत्याःप्रसंगेनपुरामयातुलब्धंफलंपापमयंत्वसह्यम् ७
त्वमेवजानासिचरित्रमेतच्छप्तोस्मितेनापिचगौतमेन
जातश्चमेषवृषणःसदाह्यहंभवान्गतोमांतुविहायतत्र ८
तेजःप्रभावोह्यतुलःसतीनांधातासमर्थःसहितुंनसूर्यः
सुकुत्सितंरूपमिदंतुरक्षेत्पुरानुसूयामुनिनाहिशप्तम् ९
निरुध्यसूर्यंपरिवेगवंतमुद्यंतमेवंप्रभयासुदीप्तम्
भर्तुश्चमृत्युंपरिबाधमानंमांडव्यशापस्यचकौंडिनस्य १०
अत्रेःप्रियासत्यपतिव्रतातयास्वपुत्रतांदेवत्रयंहिनीतम्
नकिंपुरामन्मथतेश्रुतंसदासंस्कारयुक्ताःप्रभवंतिसत्यः ११
सावित्रीनाम्नीद्युमत्सेनपुत्रीनीतंप्रियंसापुनरानिनाय
यमादिहैवाश्वपतेःसुपुत्रंसतीत्वमेवंपरिसंश्रुतंच १२
अग्नेःशिखांकःपरिसंस्पृशेद्वैतरेद्धिकःसागरमेवमूढः
गलेतुबद्धासुशिलांभुजाभ्यांकोवासतींवश्यतिवीतरागाम् १३
उक्तेतुवाक्येबहुनीतियुक्तेइंद्रेणकामस्यसुशिक्षणार्थम्
आकर्ण्यवाक्यंमकरध्वजस्तुउवाचदेवेंद्रमथैनमेव १४
कामउवाच-
तवातिदेशादहमागतोवैधैर्यंसुहृत्त्वंपुरुषार्थमेव
त्यक्त्वातदर्थंपरिभाषसेमांनिःसत्वरूपंबहुभीतियुक्तम् १५
व्याबुद्धि यास्यामियदासुरेशस्याल्लोकमध्येममकीर्तिनाशः
ऊढिंकरोमानविहीनएवसर्वेवदिष्यंत्यनयाजितंमाम् १६
येवैजितादेवगणाश्चदानवाःपूर्वंमुनींद्रास्तपसःप्रयुक्ताः
हास्यंकरिष्यंतिममापिसद्योनार्याजितोमन्मथएषभीमः १७
तस्मात्प्रयास्यामित्वयैवसार्धमस्याबलंमानमतःसुरेश
तेजश्चधैर्यंपरिणाशयिष्येकस्माद्भवानत्रबिभेतिशक्र १८
संबोध्यचैवंससुराधिनाथंचापंगृहीतंसशरंसुपुष्पम्

उवाचक्रीडांपुरतःस्थितांतांविधायमायांभवतीप्रयातु १९
वैश्यस्यभार्यांसुकलांसुपुरायांसत्येस्थितांधर्मविदांगुणज्ञाम्
इतोहिगत्वाकुरुकार्यमुक्तंसाहाय्यरूपंचप्रियेसखेशृणु २०
क्रीडांसमाभाष्यततोमनोभवस्त्वंतेस्थितांप्रीतिमथाह्वयत्पुनः
कार्यंभवत्याममकार्यमुत्तममेतांसुस्नेहैःपरिभावयत्वम् २१
इंद्रंहिदृष्ट्वासुकलायथाभवेत्स्नेहानुगाचारुविलोचनेयम्
तैस्तैःप्रभावैर्गुणवाक्ययुक्तैर्नयस्ववश्यंचप्रियेसखेशृणु २२
भोभोःसखेसाधयगच्छशीघ्रंमायामयंनंदनरूपयुक्तम्
पुष्पोपयुक्तंचफलप्रधानंघुष्टंरुतैःकोकिलषट्पदानाम् २३
आहूयवीरंमकरंदमेवरसायनंस्वादुगुणैरुपेतम्
सहानिलाद्यैर्निजकर्मयुक्तैःसंप्रेषयित्वापुनरेवकामम् २४
एवंसमादिश्यमहत्ससैन्यंत्रैलोक्यसंमोहकरंतुकामः
चक्रेप्रयाणंसुरराजसार्धंसंमोहनायैवमहासतींताम् २५
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे-
पंचपंचाशत्तमोऽध्यायः ५५

षट्पंचाशत्तमोऽध्यायः

विष्णुरुवाच-
तस्याःसत्यविनाशायमन्मथःससुराधिपः
प्रस्थितःसुकलांतर्हिसत्योधर्ममथाब्रवीत् १
पश्यधर्ममहाप्राज्ञमन्मथस्यविचेष्टितम्
तवार्थमात्मनश्चैवपुरायस्यापिमहात्मनः २
विसृजामिमहास्थानंवास्तुरूपंसुखोदयम्
सत्याख्यंचसुप्रियाख्यंसुदेवाख्यंगृहोत्तमम् ३
तमेवनाशयेद्गत्वाकामएषप्रमत्तधीः
रिपुरूपःसुदुष्टात्माअस्माकंहिनसंशयः ४
पतिस्तपोधनोविप्रःसुसतीयापतिव्रता
सुसत्योभूपतिर्धर्ममगेहानसंशयः ५
यत्राहंवृद्धिसंपुष्टस्तत्रवासोहितेभवेत्
तत्रपुरयंसमायातिश्रद्धयासहक्रीडते ६

क्षमाशांत्यासमायुक्ताआयातिममंदिरम्
यथासत्योदमश्चैवदयासौहृदमेवच ७
प्रज्ञायुक्तःसनिर्लोभोयत्राहंतत्रसंस्थितः
शुचिःस्वभावस्तत्रैवअमीचममबांधवाः ८
अस्तेयमप्यहिंसाचतितिक्षावृद्धिरेवच
ममगेहेसमायाताधन्यतांशृणुधर्मराट् ९
गुरूणांचापिशुश्रूषाविष्णुर्लक्ष्म्यासमावृतः
मद्देहंतुसमायांतिदेवाश्चाग्निपुरोगमाः १०
मोक्षमार्गंप्रकाशेद्योज्ञानोदीप्त्यासमन्वितः
एतैःसार्धंवसाम्येवसतीषुधर्मवत्सुच ११
साधुष्वेतेषुसर्वेषुगृहरूपेषुमेसदा
उक्तेनापिकुटुंबेनवसाम्येवत्वयासह १२
ससत्वाःसाधुरूपास्तेवेधसामेगृहीकृताः
संचरामिमहाभागस्वच्छंदेनचलीलया १३
ईश्वरश्चजगत्स्वामीत्रिनेत्रोवृषवाहनः
ममगेहेस्वरूपेणवर्ततेशिवयायुतः १४
तदिदंसंसृतेःसारंगृहरूपंमहेश्वरम्
सदनंशंकरेत्याख्यंनाशितंमन्मथेनवै १५
विश्वामित्रंमहात्मानंतपंतंतपउत्तमम्
मेनकांहिसमाश्रित्यकामोयंजितवान्पुरा १६
सतीपतिव्रताहल्यागौतमस्यप्रियाशुभा
सुसत्याच्चालितातेनमन्मथेनदुरात्मना १७
मुनयःसत्यधर्मज्ञानानास्त्रियःपतिव्रताः
मद्गृहास्ताइमाःसर्वादीपिताःकामवह्निना १८
दुर्धरोदुःसहोव्यापीयोतिसत्येषुनिष्ठुरः
मामेवंपश्यतेनित्यंक्वसत्यःपरितिष्ठति १९
समांज्ञात्वासमायातिबाणपाणिर्धनुर्धरः
नाशयेन्मद्गृहंपापोवीतिहोत्रैश्चनामकैः २०
पापलेशाश्चयेकूराअन्येपाखंडसंश्रयाः
तेतुबुद्ध्याऽहिताःसर्वेसत्यगेहंविशंतिहि २१

सेनाध्यत्तैरसत्यैस्तुछद्मनातेनसाधितः
पातयेदर्दयेद्देहंपापःशस्त्रैर्दुरात्मभिः २२
मामेवंताडयेत्पापोमहाबलमनोभवः
अस्यधाम्नाप्रदग्धोहंशून्यतांहिव्रजामिवै २३
नूतनंगृहमिच्छामिस्त्रियाख्यंपतिभूपतिम्
कृकलस्यापिपुरायस्यप्रियेयंशिवमंगला २४
तद्गृहंसुकलाख्यंमेदग्धुंपापःसमुद्यतः
अयमेषसहस्राद्मःकामेनसहितोबली २५
कामस्यकारणात्कस्मात्पूर्ववृत्तंनविंदति
अहल्यायाःप्रसंगेनमेषोपस्थोव्यजायत २६
पौरुषंहिमुनेर्दृष्ट्वासत्याश्चैवप्रधषर्णात्
नष्टःकामस्यदोषेणसुरराट्तत्रसंस्थितः २७
भुक्तवान्दारुणंशापंदुःखेनमहतान्वितः
कृकलस्यप्रियामेनांसुकलांपुरायचारिणीम् २८
एषहंतुंसहस्राद्मउद्यतःकामसंयुतः
यथाचेंद्रेणनायातिकामएषतथाकुरु २९
धर्मराजमहाप्राज्ञभवान्मतिमतांवरः
धर्मराजउवाच–
ऊनंतेजःकरिष्यामिकामस्यमरणंतथा ३०
एकोपायोमयादृष्टस्तमिहैवप्रपश्यतु
प्रज्ञाचैषामहाप्राज्ञाशकुनीरूपचारिणी ३१
भर्तुरागमनंपुरायंशब्देनाख्यातुखेयतः
शकुनस्यप्रभावेणभर्तुश्चागमनेनच ३२
दुष्टैर्नष्टानभूयेतस्वस्थचित्तानसंशयः
प्रज्ञासंप्रेषितातेनगतासासुकलागृहम् ३३
प्रकुर्वतीमहच्छब्दंदृष्टदेवेवसाबभौ
पूजितामानिताप्रज्ञाधूपदीपादिभिस्तदा ३४
ब्राह्मणंसुकलापृच्छत्किमेषाचवदेन्मम
ब्राह्मणउवाच–
भर्तुश्चागमनंब्रूतेतवैवसुभगेस्थिरा ३५

दिनसप्तकमध्येसञ्चागमिष्यतिनान्यथा ३६
इत्येवमाकरार्यसुमंगलंवचःप्रहर्षयुक्तासहसाबभूव
धर्मज्ञमेकंसगुणंहिकांतंशकुनात्प्रदिष्टंहिसमागतंतम् ३७
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे षट्पंचाशत्तमोऽध्यायः
५६

## सप्तपंचाशत्तमोऽध्यायः

विष्णुरुवाच-
क्रीडासतीरूपधराप्रभूत्वागेहंगताचारुपतिव्रतायाः
तामागतांसत्यस्वरूपयुक्तासासादरंवाक्यमुवाचधन्या १
वाक्यैःसुपुरायैःपरिपूजितासाउवाचक्रीडासुकलांविहस्य
मायानुगंविश्वविमोहनंसतीप्रत्युत्तरंसत्यप्रमेयुक्तम् २
ममापिभर्ताप्रबलोगुणज्ञोधीरःसविद्योमहिमाप्रयुक्तः
त्यक्त्वागतःपापतरांसुपुरायोमामेवनाथःशृणुपुरायकीर्तिः ३
वाक्यैस्तुपुरायैरबलास्वभावादाकरार्यसर्वंसुकलासमुक्तम्
संशुद्धभावांचविचिंत्यचाहकस्माद्गतःसुंदरितेऽद्यनाथः ४
विहायतेरूपमतीवसत्यमाचद्दवसर्वंभवतीसुभर्तुः
ध्यानोपयुक्तासकलंकरोतिसखीस्वरूपागृहमागतामे ५
क्रीडाबभाषेशृणुसत्यमेतंचरित्रभावंममभर्त्तुरस्य
अहंप्रियेयस्यसदैवयुक्तायमिच्छतेतंप्रतिसांत्वयामि ६
कर्तुःसुपुरायंवचनंसुभर्तुर्ध्यानोपयुक्तासकलंकरोमि
एकांतशीलासगुणानुरूपाशुश्रूषयैकस्तमिहैवदेवि ७
ममपूर्वविपाकोऽयसंप्रत्येवप्रवर्तते
यतस्त्यक्त्वागतोभर्त्तामामेवंमंदभागिनीम् ८
सखेनधारयेजीवंस्वकीयकायमेवच
पत्याहीनाःकथंनार्यःसुजीवंतिचनिर्घृणाः ९
रूपशृंगारसौभाग्यंसुखंसंपच्चनान्यथा
नारीणांहिमहाभागोभर्ताशास्त्रेषुगीयते १०
तयासर्वंसमाकरार्ययदुक्तंक्रीडयातदा
सत्यभावंविदित्वासामेनेसंभाषितंतदा ११

विश्वस्तासामहाभागासुकलापतिदेवता
तामुवाचपुनःसर्वमात्मचेष्टानुगंवचः १२
समासेनसमाख्यातंपूर्ववृत्तांतमात्मनः
यथाभर्तागतोयात्रांपुण्यसाधनतत्परः १३
आत्मदुःखंसुसत्यंचतपएवमनस्विनि
बोधिताक्रीडयासातुसमाश्वास्यपतिव्रता १४
सूतउवाच-
एकदातुतयाप्रोक्तंक्रीडयासुकलांप्रति
सखेपश्यवनंसौम्यंदिव्यवृक्षैरलंकृतम् १५
तत्रतीर्थंपरंपुण्यमस्तिपातकनाशनम्
नानावल्लीवितानैश्चसुपुष्पैःपरिशोभितम् १६
आवाभ्यामपिगंतव्यंपुण्यहेतोर्वरानने
समाकर्ण्यतयासार्द्धंसुकलामाययातदा १७
प्रविवेशवनंदिव्यंनंदनोपममेवसा
सर्वर्तुकुसुमोपेतंकोकिलाशतनादितम् १८
गीयमानंसुमधुरैर्नादैर्मधुकरैरपि
कूजद्भिःपक्षिभिःपुण्यैःपुण्यध्वनिसमाकुलम् १९
चंदनादिकवृक्षैश्चसौरभैश्चविराजितम्
सर्वभोगैःसुसंपूर्णंमाधव्यामाधवेनवै २०
रचितंमोहनायैवसुकलायाश्चकारणात्
तयासार्धंप्रविष्टासातद्वनंसर्वभावनम् २१
ददर्शसौख्यदंपुण्यंमायाभावंनविंदति
वीक्षमाणावनंदिव्यंतयासहजनेश्वर २२
शक्रोपिचाभ्ययात्तत्रदेवमूर्तिविराजितः
तयादूत्यासमंप्राप्तःकामस्तत्रसमागतः २३
सर्वभोगपतिर्भूत्वाकामलीलासमाकुलः
काममाहसमाभाष्यएषासासुकुलागता २४
प्रहरस्वमहाभागक्रीडायाःपुरतःस्थिताम्
मायांकृत्वासमानीताक्रीडयातवसंनिधौ २५
पौरुषंदर्शयाद्यैवयद्यस्तिकुरुनिश्चितम्

कामउवाच-
आत्मरूपंदर्शयस्वचतुरंलीलयान्वितम् २६
येनाहंप्रहराम्येतांपंचबाणैःसहस्रदृक्
इंद्रउवाच-
क्वास्तेतेपौरुषंमूढयेनलोकंविडंबसे २७
ममाधारपरोभूत्वायोद्धुमिच्छसिसांप्रतम्
कामउवाच-
तेनापिदेवदेवेनमहादेवेनशूलिना २८
पूर्वमेवहृतंरूपंममकायोनविद्यते
इच्छाम्यहंयदानारींहंतुंशृणुष्वसांप्रतम् २९
पुंसांकायंसमाश्रित्यआत्मरूपंप्रदर्शये
पुमांसंवासहस्राद्यनार्याःकार्यंसमाश्रये ३०
पूर्वदृष्टायदानारीतामेवपरिचिंतयेत्
चिंत्यमानस्यपुंसस्तुनार्यारूपंपुनःपुनः ३१
अदृष्टंतुसमाश्रित्यपुंसमुन्मादयाम्यहम्
तथाप्युन्मादयाम्येवंनारीरूपंनसंशयः ३२
संस्मरणात्स्मरोनाममजातंसुरेश्वर
तांदृष्ट्वातादृशोरंगवस्तुरूपंसमाश्रये ३३
आत्मतेजःप्रकाशेनबाध्यबाधकतांव्रजेत्
नारीरूपंसमाश्रित्यधीरंपुरुषंप्रमोहयेत् ३४
पुरुषंतुसमाश्रित्यभावयामिसुयोषितम्
रूपहीनोस्मिहेइंद्रअस्मद्रूपंसमाश्रयेत् ३५
तवरूपंसमाश्रित्यतांसाधयेयथेप्सिताम्
एवमुक्त्वासदेवेंद्रंकायंतस्यमहात्मनः ३६
सखासौमाधवस्यापिसमाश्रित्यसुमायुधः ३७
तामेवहंतुंकुसुमायुधोपिसाध्वींसुपुण्यांकृकलस्यभार्याम्
समुत्सुकस्तिष्ठतिबाणलद्यंतस्याश्चकायंनयनैर्विलोक्य ३८
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे सप्तपंचाशत्तमोऽध्यायः
५७

# अष्टपंचाशत्तमोऽध्यायः

विष्णुरुवाच-
क्रीडाप्रयुक्तासुवनंप्रविष्टावैश्यस्यभार्यासुकलासुतन्वी
ददर्शसर्वंगहनंमनोरमंतामेवपप्रच्छसखींसतीसा १
अरण्यमेतत्प्रवरंसुपुण्यंदिव्यंसखेकस्यमनोभिरामम्
सिद्धंसुकामैःप्रवरैःसमस्तैःपप्रच्छहर्षात्सुकलासखींताम् २
क्रीडोवाच-
एतद्वनंदिव्यगुणैःप्रयुक्तंसिद्धस्वभावैःपरिभावनेन
पुष्पाकुलंकामफलोपयुक्तंविपश्यसर्वंमकरध्वजस्य ३
एवंवाक्यंततःश्रुत्वाहर्षेणमहतान्विता
समालोक्यमहद्वृत्तंकामस्यचदुरात्मनः ४
वायुनानीयमानंतंसमाघ्रातिनसौरभम्
वातिवायुःस्वभावेनसौरभेणसमन्वितः ५
तद्घ्राणोविशतेनासांयथातथासुलीलया
सागंधंनैवगृह्णातिपुष्पाणांचवरानना ६
नचास्वादयतेसातुसुरसान्सामहासती
ससखाकामदेवस्यरममाणोविनिर्जितः ७
लज्जितःपराङ्मुखोभूत्वाभूंपपातलवच्छदैः
फलेभ्योहिसुपक्वेभ्यःपुष्पमंजरिसंस्कृतः ८
लवरूपोपतद्भूमौरसस्त्वेषतयाजितः
मकरंदःसुदीनात्माफलाद्भूमिंततःपुनः ९
भक्ष्यतेमक्षिकाभिश्चयथामृतोरणेतथा
मक्षिकाभक्ष्यमाणस्तुप्रवाहेनप्रयातिसः १०
मंदंमंदंप्रयात्येवतंहसंतिचपक्षिणः
नानारुतैःप्रचलंतिसुखमानंदनिर्भरैः ११
प्रीत्याशकुनयस्तत्रवनमध्यनगस्थिताः
सुकलयाजितोह्येषनिम्नंपंथानमाश्रितः १२
प्रीत्यासमेतारतिःकामभार्यागत्वाब्रवीत्सासुकलांविहस्य
स्वस्त्यस्तुतेस्वागतमेवभद्रेरमस्वप्रीत्यानयनाभिरामम् १३
तेरूपमिष्टममलमिंद्रस्यापिमहात्मनः

यदेष्टंतेतदाब्रूहिसमानेष्येनसंशयः १४
सूतउवाच–
वदंत्यौतेस्त्रियौदृष्ट्वाश्रुत्वोवाचसुभाषितम्
रतिंप्रतिगृहीत्वामेगतोभर्त्तामहामतिः १५
यत्रमेतिष्ठतेभर्त्तातत्राहंपतिसंयुता
तत्रकामश्चमेप्रीतिरयंकायोनिराश्रयः १६
द्वेअप्युक्तंसमाकर्ण्यरतिप्रीतीविलज्जिते
व्रीडमानेगतेतेद्वेयत्रकामोमहाबलः १७
ऊचतुस्तंमहावीरमिंद्रकायसमाश्रितम्
चापमाकर्षमाणंतंनेत्रलक्ष्यंमहाबलम् १८
दुर्जयेयंमहाप्राज्ञत्यजपौरुषमात्मनः
पतिकामामहाभागापतिव्रतासदैवसा १९
कामउवाच–
अनयालोक्यतेरूपमिंद्रस्यास्यमहात्मनः
यदिदेवितदाचाहंहनिष्यामिनसंशयः २०
अथवेषधरोदेवोमहारूपःसुराधिपः
सतयानुगतस्तूर्णंपरयालीलयातदा २१
सर्वभोगसमाकीर्णःसर्वाभरणशोभितः
दिव्यमाल्यांबरधरोदिव्यगंधानुलेपनः २२
तयारत्यासमायातोयत्रास्तेपतिदेवता
प्रत्युवाचमहाभागांसुकलांसत्यचारिणीम् २३
पूर्वंदूतीसमक्षंतेप्रीत्याचप्रहितामया
कस्मान्नमन्यसेभद्रेभजंतंत्वामिहागतम् २४
सुकलोवाच–
रक्षायुक्तास्मिभद्रंतेभर्तुःपुत्रैर्महात्मभिः
एकाकिनीसहायैश्चनैवकस्यभयंमम २५
शूरैश्चपुरुषाकारैःसर्वत्रपरिरक्षिता
नातिप्रस्तावयेवक्तुंव्यग्राकर्मणितस्यच २६
यावत्प्रस्यंदतेनेत्रंतावत्कालंमहामते
भवान्नलज्जतेकस्माद्रममाणोमयासह २७

भवान्कोहिसमायातोनिर्भयोमरणादपि
इंद्रउवाच-
त्वामेवंहिप्रपश्यामिवनमध्येसमागताम् २८
समाख्यातास्त्वयाशूराभर्तुश्चतनयाःपुनः
कथंपश्याम्यहंतावद्दर्शयस्वममाग्रतः २९
सुकलोवाच-
सनिजसकलवर्गस्याधिपत्येनिवेश्यधृतिमतिगतिबुद्ध्याख्यैस्तुसंन्यस्यसत्य
म्
अचलसकलधर्मोनित्ययुक्तोमहात्मामदनसबलधर्मात्मासदामांजुगोप ३०
मामेवंपरिरक्षतेदमगुणैःशौचैस्तुधर्मःसदासत्यंपश्यसमागतंममपुरःशांतिक्षमा
भ्यांयुतम्
बोधश्चातिमहाबलःपृथुयशायोमांनमुंचेत्कदाबद्धाहंदृढबंधनैःस्वगुणजैःसांनिध
यमेवंगतः
३१
रक्षायुक्ताःकृताःसर्वेसत्याद्याममसांप्रतम्
धर्मलाभादिकाःसर्वेदमबुद्धिपराक्रमाः ३२
मामेवंहिप्ररक्षंतिकिंमांप्रार्थयसेबलात्
कोभवान्निर्भयोभूत्वादूत्यासार्धंसमागतः ३३
सत्यंधर्मस्तथापुण्यंज्ञानाद्याःप्रबलास्तथा
ममभर्तुःसहायाश्चतेमांरक्षंतिवेश्मनि ३४
अहंरक्षायुतानित्यंदमशांतिपरायणा
नमांजेतुंसमर्थश्चअपिसाक्षाच्छचीपतिः ३५
यदिवामन्मथोवापिसमागच्छतिवीर्यवान्
दंशिताहंसदासत्यंसत्यकेनैवनान्यथा ३६
निरर्थकास्तस्यबाणाभविष्यंतिनसंशयः
त्वामेवंहिहनिष्यंतिधर्मादयोमहाभटाः ३७
दूरंगच्छपलायत्वमत्रमातिष्ठसांप्रतम्
वार्यमाणोयदातिष्ठेर्भस्मीभूतोभविष्यसि ३८
भर्त्राविनानिरीक्षेतममरूपंयदाभवान्
यथादारुदहेदग्निस्तथाधक्ष्यामिनान्यथा ३९

एवंश्रुत्वासहस्त्राक्षोमन्मथस्यापिसम्मुखम्
पश्यपौरुषमेतस्यायुध्यस्वनिजपौरुषैः ४०
यथागतास्तथासर्वेमहाशापभयातुराः
स्वंस्वंस्थानंमहाराजइंद्राद्याःप्रययुस्तदा ४१
गतेषुतेषुसर्वेषुसुकलासापतिव्रता
स्वगृहंपुरायसंयुक्तापतिध्यानेनचागता ४२
स्वगृहंपुरायसंयुक्तंसर्वतीर्थमयंतदा
सर्वयज्ञमयंराजन्संप्राप्तापतिदेवता ४३
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रेष्ट- पंचाशत्तमोऽध्यायः
५८

## एकोनषष्टितमोऽध्यायः

विष्णुरुवाच-
कृकलःसर्वतीर्थानिसाधयित्वागृहंप्रति
प्रस्थितःसार्थवाहेनमहानंदसमन्वितः १
एवंचिंतयतेनित्यंसंसारःसफलोमम
तृप्ताःस्वर्गंप्रयास्यंतिपितरोममनान्यथा २
तावत्प्रत्यक्षरूपेणबद्ध्वातस्यपितामहान्
पुरतस्तस्यसंब्रूतेनहितेपुरायमुत्तमम् ३
दिव्यरूपोमहाकायःकृकलंवाक्यमब्रवीत्
तवतीर्थफलंनास्तिश्रममेववृथाकृथाः ४
स्वयंसंतोषमाप्नोषिनहितेपुरायमुत्तमम्
एवंश्रुत्वाततोवैश्यःकृकलोदुःखपीडितः ५
भवान्कःसंवदस्येवंकस्माद्बद्धाःपितामहाः
केनदोषप्रभावेणतन्मेत्वंकारणंवद ६
कस्मात्तीर्थफलंनास्तिममयात्राकथंनहि
सर्वमेवसमाचक्ष्वयदिजानासिसंस्फुटम् ७
धर्मउवाच-
पूतांपुरायतमांस्वीयांभार्यांत्यक्त्वाप्रयातियः
तस्यपुरायफलंसर्वंवृथाभवतिनान्यथा ८

धर्माचारपरांपुरायांसाधुव्रतपरायणाम्
पतिव्रतरतांभार्यांसुगुणांपुरायवत्सलाम् ९
तामेवापिपरित्यज्यधर्मकार्यंप्रयातियः
वृथातस्यकृतःसर्वोधर्मोभवतिनान्यथा १०
सर्वाचारपराभव्याधर्मसाधनतत्परा
पतिव्रतरतानित्यंसर्वदाज्ञानवत्सला ११
एवंगुणाभवेद्भार्यायस्यपुरायामहासती
तस्यगेहेसदादेवास्तिष्ठंतिचमहौजसः १२
पितरोगेहमध्यस्थाःश्रेयोवांछंतितस्यच
गंगाद्याःपुरायनद्यश्चसागरास्तत्रनान्यथा १३
पुरायासतीयस्यगेहेवर्ततेसत्यतत्परा
तत्रयज्ञाश्चगावश्चऋषयस्तत्रनान्यथा १४
तत्रसर्वाणितीर्थानिपुरायानिविविधानिच
भार्यायोगेनतिष्ठंतिसर्वारयेतानिनान्यथा १५
पुरायभार्याप्रयोगेणगार्हस्थ्यंसंप्रजायते
गार्हस्थ्यात्परमोधर्मोद्वितीयोनास्तिभूतले १६
गृहस्थस्यगृहःपुरायःसत्यपुरायसमन्वितः
सर्वतीर्थमयोवैश्यसर्वदेवसमन्वितः १७
गार्हस्थ्यंचसमाश्रित्यसर्वेजीवंतिजंतवः
तादृशंनैवपश्यामिअन्यमाश्रममुत्तमम् १८
मंत्राग्निहोत्रंदेवाश्चसर्वेधर्माःसनातनाः
दानाचाराःप्रवर्तंतेयस्यपुंसश्चवैगृहे १९
एवंयोभार्ययाहीनस्तस्यगेहंवनायते
यज्ञाश्चवैनसिध्यंतिदानानिविविधानिच २०
भार्याहीनस्यपुंसोपिनसिध्यतिमहाव्रतम्
धर्मकर्माणिसर्वाणिपुरायानिविविधानिच २१
नास्तिभार्यासमंतीर्थंधर्मसाधनहेतवे
शृणुष्वत्वंगृहस्थस्यनान्योधर्मोजगत्रये २२
यत्रभार्यागृहंतत्रपुरुषस्यापिनान्यथा
ग्रामेवाप्यथवाररायेसर्वधर्मस्यसाधनम् २३

नास्तिभार्यासमंतीर्थंनास्तिभार्यासमंसुखम्
नास्तिभार्यासमंपुगयंतारगायहितायच २४
धर्मयुक्तांसतींभार्यांत्यक्त्वायासिनराधम
गृहंधर्मंपरित्यज्यक्वास्तेधर्मस्यतेफलम् २५
तयाविनायदातीर्थेश्राद्धदानंकृतंत्वया
तेनदोषेगावैबद्धास्तवपूर्वपितामहाः २६
भवांश्चौरोह्यमीचौरायैस्तुभुक्तंसुलोलुपैः
त्वयादत्तस्यश्राद्धस्यअन्नमेवंतयाविना २७
सुपुत्रःश्रद्धयायुक्तःश्राद्धदानंददातियः
भार्यादत्तेनपिंडेनतस्यपुगयंवदाम्यहम् २८
यथाऽमृतस्यपानेननृगांतृप्तिर्हिजायते
तथापितृगांश्राद्धेनसत्यंसत्यंवदाम्यहम् २९
गार्हस्थ्यस्यचधर्मस्यभार्याभवतिस्वामिनी
त्वयैषावंचितामूढचौरकर्मकृतंवृथा ३०
अमीपितामहाश्चौरायैर्भुक्तंतुतयाविना
भार्यापचतिचेदन्नंस्वहस्तेनामृतोपमम् ३१
तदन्नमेवभुंजंतिपितरोहृष्टमानसाः
तेनैवतृप्तिमायांतिसंतुष्टाश्चभवंतिते ३२
तस्माद्भार्यांविनाधर्मःपुरुषस्यनसिध्यति
नास्तिभार्यासमंतीर्थंपुंसांसुगतिदायकम् ३३
भार्यांविनाचयोधर्मःसएवविफलोभवेत् ३४
इति श्रीपद्मपुरागोभूमिखंडेवेनोपाख्यानेसुकलाचरित्रे एकोनषष्टितमोऽध्यायः
५९

## षष्टितमोऽध्यायः

कृकलउवाच-
कथंमेजायतेसिद्धिःकथंपितृविमोचनम्
एतन्मेविस्तरेगापिधर्मराजवदाधुना १
धर्मउवाच-
गच्छगेहंमहाभागत्वांविनादुःखमाचरत्

संबोधयत्वंसुकलांस्वपत्नींधर्मचारिणीम् २
श्राद्धदानंगृहंगत्वातस्याहस्तेनवैकुरु
स्मृत्वापुण्यानितीर्थानियजस्वत्वंसुरोत्तमान् ३
तीर्थयात्राकृतासिद्धिस्तवचैवभविष्यति
भार्यांविनातुयोलोकेधर्मंसाधितुमिच्छति ४
सगार्हस्थ्यंविलोप्यैवएकाकीविचरेद्वनम्
विफलोजायतेलोकेतंनमन्यंतिदेवताः ५
यज्ञाःसिद्धिंतदायांतियदास्याद्गृहिणीगृहे
एकाकीससमर्थोनधर्मार्थसाधनायच ६
विष्णुरुवाच-
एवमुक्त्वाचतंवैश्यंगतोधर्मोयथागतम्
कृकलोपिसधर्मात्मास्वगृहंप्रतिप्रस्थितः ७
स्वगृहंप्राप्यमेधावीदृष्ट्वातांचपतिव्रताम्
सार्थवाहेनतेनापिस्वस्थानंप्राप्यबुद्धिमान् ८
तयासमागतंदृष्ट्वाभर्तारंधर्मकोविदम्
कृतंसुमंगलंपुण्यंभर्तुरागमनेतदा ९
समाचष्टसधर्मात्माधर्मस्यापिविचेष्टितम्
समाकर्ण्यमहाभागाभर्तुर्वाक्यंमुदावहम् १०
धर्मवाक्यंप्रशस्याथअनुमेनेचतंतथा
विष्णुरुवाच-
अथोसकृकलोवैश्यस्तयासार्धंसुपुण्यकम् ११
चकारश्रद्धयाश्राद्धंदेवतागृहसंस्थितः
पितरोदेवगंधर्वाविमानैश्चसमागताः १२
तुष्टुवुस्तौमहात्मानौदंपतीमुनयस्तथा
अहंचापितथाब्रह्मादेव्यायुक्तोमहेश्वरः १३
सर्वेदेवाःसगंधर्वाविमानैश्चसमागताः
अहमेवततोब्रह्मादेव्यायुक्तोमहेश्वरः १४
सर्वेदेवाःसगंधर्वास्तस्याःसत्येनतोषिताः
ऊचुश्चतौमहात्मानौधर्मज्ञौसत्यपंडितौ १५
भार्ययासहभद्रंतेवरंवरयसुव्रत

कृकलउवाच-
कस्यपुण्यप्रसंगेनतपसश्चसुरोत्तमाः १६
सभार्यायवरंदातुंभवंतोहिसमागताः
इंद्रउवाच-
एषासतीमहाभागासुकलाचारुमंगला १७
अस्याःसत्येनतुष्टाःस्मदातुकामावरंतव
समासेनतुतत्प्रोक्तंपूर्ववृत्तांतमेवच १८
तस्याश्चरितमाहात्म्यंश्रुत्वाभर्तासहर्षितः
तयासहसधर्मात्माहर्षव्याकुललोचनः १९
ननामदेवताःसर्वाउवाचचपुनःपुनः
यदितुष्टामहाभागात्रयोदेवाःसनातनाः २०
अन्येचऋषयःपुण्याःकृपांकृत्वाममोपरि
जन्मजन्मनिदेवानांभक्तिमेवंकरोम्यहम् २१
धर्मसत्यरतिःस्यान्मेभवतांहिप्रसादतः
पश्चाद्धिवैष्णवंलोकंसभार्यश्चपितामहैः २२
गंतुमिच्छाम्यहंदेवायदितुष्टामहौजसः
देवाऊचुः-
एवमस्तुमहाभागसर्वमेवभविष्यति २३
पुष्पवृष्टिंततश्चक्रुस्तयोरुपरिभूपते
जगुर्गीतंमहापुण्यंललितंसुस्वरंततः २४
गंधर्वागीततत्त्वज्ञाननृतुश्चाप्सरोगणाः
ततोदेवाःसगंधर्वाःस्वंस्वंस्थानंनृपोत्तम २५
वरंदत्वाप्रजग्मुस्तेस्तूयमानाःपतिव्रताम्
नारीतीर्थंसमाख्यातमन्यत्किंचिद्ददामिते २६
एतत्तेसर्वमाख्यातंपुण्याख्यानमनुत्तमम्
यःशृणोतिनरोराजन्सर्वपापैःप्रमुच्यते २७
श्रद्धयाशृणुतेनारीसुकलाख्यानमुत्तमम्
सौभाग्येनतुसत्येनपुत्रपौत्रैर्नमुच्यते २८
मोदतेधनधान्येनसहभर्त्रासुखीभवेत्
पतिव्रताभवेत्साचजन्मजन्मनिनान्यथा २९

ब्राह्मणोवेदविद्वांश्चक्षत्रियोविजयीभवेत्
धनधान्यंभवेच्चैववैश्यगेहेनसंशयः ३०
धर्मज्ञोजायतेराजन्सदाचारःसुखीभवेत्
शूद्रःसुखमवाप्नोतिपुत्रपौत्रैःप्रवर्धते ३१
विपुलाजायतेलक्ष्मीर्धनधान्यैरलंकृता ३२
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेसुकलाचरित्रेषष्टितमोऽध्यायः ६०

## एकषष्टितमोऽध्यायः

वेनउवाच-
भार्यातीर्थंसमाख्यातंसर्वतीर्थोत्तमोत्तमम्
पितृतीर्थंसमाख्याहिपुत्राणांतारणंपरम् १
विष्णुरुवाच-
कुरुक्षेत्रेमहाक्षेत्रेकुंडलोनामब्राह्मणः
सुकर्मानामसत्पुत्रःकुंडलस्यमहात्मनः २
गुरूतस्यमहावृद्धौधर्मज्ञौशास्त्रकोविदौ
द्वावेतौतुमहात्मानौजरयापरिपीडितौ ३
तयोःशुश्रूषणंचक्रेभक्त्याचपरयाततः
धर्मज्ञोभावसंयुक्तोअहर्निशमनारतम् ४
तस्माद्वेदानधीतेसपितुःशास्त्राण्यनेकशः
सर्वाचारपरोदक्षोधर्मज्ञोज्ञानवत्सलः ५
अंगसंवाहनंचक्रेगुर्वोश्चस्वयमेवसः
पादप्रक्षालनंचैवस्नानभोजनकींक्रियाम् ६
भक्त्याचैवस्वभावेनतद्ध्यानेतन्मयोभवेत्
मातापित्रोश्चराजेंद्रउपचर्यांप्रकारयेत् ७
सूतउवाच-
तद्वर्तमानकालेतुबभूवनृपसत्तम
पिप्पलोनामवैविप्रःकश्यपस्यमहात्मनः ८
तपस्तेपेनिराहारोजितात्माजितमत्सरः
दयादानदमोपेतःकामंक्रोधंविजित्यसः ९
दशारण्यगतोधीमाञ्ज्ञानशांतिपरायणः

सर्वेंद्रियाणिसंयम्यतपस्तेपेमहामनाः १०
तपःप्रभावतस्तस्यजंतवोगतविग्रहाः
वसंतिसुयुगेतत्रएकोदरगताइव ११
तत्तपस्तस्यमुनयोदृष्ट्वाविस्मयमाययुः
नेदृशंकेनचित्तप्तंयथासौतप्यतेमुनिः १२
देवाश्चइंद्रप्रमुखाःपरंविस्मयमाययुः
अहोअस्यतपस्तीव्रंशमश्चेंद्रियसंयमः १३
निर्विकारोनिरुद्वेगः कामक्रोधविवर्जितः
शीतवातातपसहोधराधरइवस्थितः १४
विषयेविमुखोधीरोमनसोतीतसंग्रहम्
नशृणोतियथाशब्दंकस्यचिद्द्विजसत्तमः १५
संस्थानंतादृशंगत्वास्थित्वाएकाग्रमानसः
ब्रह्मध्यानमयोभूत्वासानंदमुखपंकजः १६
अश्मकाष्ठमयोभूत्वानिश्चेष्टोगिरिवत्स्थितः
स्थाणुवद्दृश्यतेचासौसुस्थिरोधर्मवत्सलः १७
तपःक्लिष्टशरीरोतिश्रद्धावाननसूयकः
एवंवर्षसहस्रैकंसंजातंतस्यधीमतः १८
पिपीलिकाभिर्बह्वीभिःकृतंमृद्भारसंचयम्
तस्योपरिमहाकायंवल्मीकंनिजमंदिरम् १९
वल्मीकोदरमध्यस्थोजडीभूतइवस्थितः
सएवंपिप्पलोविप्रस्तपतेसुमहत्तपः २०
कृष्णसर्पैस्तुसर्वत्रवेष्टितोद्विजसत्तमः
तमुग्रतेजसंविप्रंप्रदशंतिविषोल्बणाः २१
संप्राप्यगात्रमर्माणिविषंतस्यनभेदयेत्
तेजसातस्यविप्रस्यनागाःशांतिमथागमन् २२
तस्यकायात्समुद्भूताअर्चिषोदीप्ततेजसः
नानारूपाःसुबहुशोदृश्यंते च पृथक्पृथक् २३
यथावह्नेःखरतरास्तथाविधानरोत्तम
यथामेघोदरेसूर्यःप्रविष्टोभातिरश्मिभिः २४
वल्मीकस्थस्तथाविप्रःपिप्पलोभातितेजसा

सर्पादशंतिविप्रंतंसक्रोधादशनैरपि २५
नभिंदंतिचदंष्ट्राग्राश्चर्मभित्त्वानृपोत्तम
एवंवर्षसहस्रैकंतपश्चाचरतस्ततः २६
गतंतुराजराजेंद्रमुनेस्तस्यमहात्मनः
त्रिकालंसाध्यमानस्यशीतवर्षातपान्वितः २७
गतःकालोमहाराजपिप्पलस्यमहात्मनः
तद्वच्चवायुभक्षंतुकृतंतेनमहात्मना २८
त्रीणिवर्षसहस्राणिगतानितस्यतप्यतः
तस्यमूर्ध्नितत्तोदेवैःपुष्पवृष्टिःकृतापुरा २९
ब्रह्मज्ञोसिमहाभागधर्मज्ञोसिनसंशयः
सर्वज्ञानमयोऽसित्वंसंजातःस्वेनकर्मणा ३०
यंयंत्वंवांछसेकामंतंतंप्राप्स्यसिनान्यथा
सर्वकामप्रसिद्धस्त्वंस्वतएवभविष्यसि ३१
समाकर्ण्यमहद्वाक्यंपिप्पलोपिमहामनाः
प्रणम्यदेवताःसर्वाभक्त्यानमितकंधरः ३२
हर्षेणमहताविष्टोवचनंप्रत्युवाचसः
इदंविश्वंजगत्सर्वंममवश्यंयथाभवेत् ३३
तथाकुरुध्वंदेवेंद्राविद्याधरोभवाम्यहम्
एवमुक्त्वासमेधावीविररामनृपोत्तम ३४
एवमस्त्वितितेप्रोचुर्द्विजश्रेष्ठंसुरास्तदा
दत्वावरंमहाभागजग्मुस्तस्मैमहात्मने ३५
गतेषुतेषुदेवेषुपिप्पलोद्विजसत्तमः
ब्रह्मण्यंसाधयेन्नित्यंविश्ववश्यंपचिंतयेत् ३६
तदाप्रभृतिराजेंद्रपिप्पलोद्विजसत्तमः
विद्याधरपदंलब्ध्वाकामगामीमहीयते ३७
एवंसपिप्पलोविप्रोविद्याधरपदंगतः
संजातोदेवलोकेशःसर्वशास्त्रविशारदः ३८
एकदातुमहातेजाःपिप्पलःपर्यचिंतयत्
विश्ववश्यंभवेत्सर्वंममदत्तोवरोत्तमः ३९
तदर्थंप्रत्ययंकर्तुमुद्यतोद्विजपुंगवः

यंयंचिंतयतेकर्तुंतंतंहिवशमानयेत् ४०
एवंसप्रत्ययेजातेमनसापर्यकल्पयत्
द्वितीयोनास्तिवैलोकेमत्समःपुरुषोत्तमः ४१
सूतउवाच-
एवंहिकल्पमानस्यपिप्पलस्यमहात्मनः
ज्ञात्वामानसिकंभावंसारसस्तमुवाचह ४२
सरस्तीरगतोराजन्सुस्वरंव्यंजनान्वितम्
स्वनंसौष्ठवसंयुक्तमुक्तवान्पिप्पलंप्रति ४३
कस्मादुद्वहसेगर्वमेवंत्वंपरमात्मकम्
सर्ववश्यात्मिकींसिद्धिंनाहंमन्येतवैवहि ४४
वश्यावश्यमिदंकर्मअर्वाचीनंप्रशस्यते
पराचीनंनजानासिपिप्पलत्वंहिमूढधीः ४५
वर्षाणांतुसहस्राणियावत्रीणित्वयातपः
समाचीर्णंततोगर्वंकुरुषेकिंमुधाद्विज ४६
कुंडलस्यसुतोधीरःसुकर्मानामयःसुधीः
वश्यावश्यंजगत्सर्वंतस्यासीच्छृणुसांप्रतम् ४७
अर्वाचीनंपराचीनंसवैजानातिबुद्धिमान्
लोकेनास्तिमहाज्ञानीतत्समःशृणुपिप्पल ४८
नकुंडलस्यपुत्रेणसदृशस्त्वंसुकर्मणा
नदत्तंतेनवैदानंनज्ञानंपरिचिंतितम् ४९
हुतयज्ञादिकंकर्मनकृतंतेनवैकदा
नगतस्तीर्थयात्रायांनचवह्नेरुपासनम् ५०
सकदाकृतवान्विप्रधर्मसेवार्थमुत्तमम्
स्वच्छंदचारीज्ञानात्मापितृमातृसुहृत्सदा ५१
वेदाध्ययनसंपन्नःसर्वशास्त्रार्थकोविदः
यादृशंतस्यवैज्ञानंबालस्यापिसुकर्मणः ५२
तादृशंनास्तितेज्ञानंवृथात्वंगर्वमुद्वहेः
पिप्पलउवाच-
कोभवान्पक्षिरूपेणमामेवंपरिकुत्सयेत् ५३
कस्मान्निंदसिमेज्ञानंपराचीनंतुकीदृशम्

तन्मेविस्तरतोब्रूहित्वयिज्ञानंकथंभवेत् ५४
अर्वाचीनगतिंसर्वांपराचीनस्यसांप्रतम्
वदत्वमंडजश्रेष्ठज्ञानपूर्वंसुविस्तरम् ५५
किंवाब्रह्माचविष्णुश्चकिंवारुद्रोभविष्यसि
सारसउवाच-
नास्तितेतपसोभावःफलंनास्तिचतस्यतु ५६
त्वयानपरितप्तस्यतपसःसांप्रतंशृणु
कुंडलस्यापिपुत्रस्यबालस्यापियथागुणः ५७
तथातेनास्तिवैज्ञानंपरिज्ञातंनतत्पदम्
इतोगत्वापिपृच्छत्वंममरूपंद्विजोत्तम ५८
सवदिष्यतिधर्मात्मासर्वंज्ञानंतवैवहि
विष्णुरुवाच-
एवमाकर्ण्यतत्सर्वंसारसेनप्रभाषितम् ५९
निर्जगामसवेगेनदशारण्यंमहाश्रमम् ६०

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेएकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

विष्णुरुवाच-
कुंडलस्याश्रमंगत्वासत्यधर्मसमाकुलम्
सुकर्माणंततोदृष्ट्वापितृमातृपरायणम् १
शुश्रूषंतंमहात्मानंगुरूसत्यपराक्रमम्
महारूपंमहातेजंमहाज्ञानसमाकुलम् २
मातापित्रोःपदांतेतमुपविष्टंददर्शसः
महाभक्त्यान्वितंशांतंसर्वज्ञानमहानिधिम् ३
कुंडलस्यापिपुत्रेणसुकर्मणामहात्मना
आगतंपिप्पलंदृष्ट्वाद्वारदेशेमहामतिम् ४
आसनात्तूर्णमुत्थायअभ्युत्थानंकृतंपुनः
आगच्छत्वंमहाभागविद्याधरमहामते ५
आसनंपाद्यमर्घंचददौतस्मैमहामतिः
निर्विघ्नोऽसिमहाप्राज्ञकुशलेनप्रवर्त्तसे ६

निरामयंचपप्रच्छपिप्पलंतंसमागतम्
यस्मादागमनंतेद्यतत्सर्वंप्रवदाम्यहम् ७
वर्षाणांचसहस्राणित्रीणियावत्त्वयातपः
तप्तमेवमहाभागसुरेभ्यःप्राप्तवान्वरम् ८
वश्यत्वंचत्वयाप्राप्तंकामचारस्तथैवच
तेनमत्तोनजानासिगर्वमुद्वहसेवृथा ९
दृष्ट्वातेचेष्टितंसर्वंसारसेनमहात्मना
ममाभिधानंकथितंममज्ञानमनुत्तमम् १०
पिप्पलउवाच–
योसौमांसारसोविप्रसरित्तीरेप्रयुक्तवान्
सर्वज्ञानंवदेन्मांहिसतुकःप्रभुरीश्वरः ११
सुकर्मोवाच–
भवंतमुक्तवान्योवैसरित्तीरेतुसारसः
ब्रह्माणंत्वंमहाज्ञानंतंविद्धिपरमेश्वरम् १२
अन्यत्किंपृच्छसेब्रूहितमेवंप्रवदाम्यहम्
विष्णुरुवाच–
एवमुक्तःसधर्मात्मासुकर्मानृपनंदन १३
पिप्पलउवाच–
त्वयिवश्यंजगत्सर्वमितिशुश्रुमभूतले
तन्मेत्वंकौतुकंविप्रदर्शयस्वप्रयत्नतः १४
पश्यकौतुकमेवाद्यत्वंवश्यावश्यकारणम्
तमुवाचसधर्मात्मासुकर्मापिप्पलंप्रति १५
अथसस्मारवैदेवान्सुकर्माप्रत्ययायवै
इंद्राद्यालोकपालाश्चदेवाश्चाग्निपुरोगमाः १६
समागताःसमाहूतानानाविद्याधरास्तथा
सुकर्माणंततःप्रोचुर्देवाश्चाग्निपुरोगमाः १७
कस्मात्स्मृतास्त्वयाविप्रततोर्थकारणंवद
सुकर्मोवाच–
अयमेषसुसंप्राप्तोविद्याधरोहिपिप्पलः १८
मामेवंभाषतेविप्रवश्यावश्यत्वकारणम्

प्रत्ययार्थंसमाहूताश्रस्यैवचमहात्मनः १९
स्वंस्वंस्थानंप्रगच्छध्वमित्युवाचसुरान्प्रति
तमूचुस्तेततोदेवाःसुकर्माणंमहामतिम् २०
अस्माकंदर्शनंविप्रनमोघंजायतेवरम्
वरंवरयभद्रंतेमनसायद्धिरोचते २१
तत्तेदद्मोनसंदेहस्त्वेवमूचुःसुरोत्तमाः
भक्त्याप्रणम्यतान्देवान्ययाचेसद्विजोत्तमः २२
अचलांदत्तदेवेंद्राःसुभक्तिंभावसंयुताम्
मातापित्रोश्चमेनित्यंतद्धैवरमनुत्तमम् २३
पितामेवैष्णवंलोकंप्रयात्वेतद्वरोत्तमम्
तद्वन्माताचदेवेशावरमन्यंनयाचये २४
देवाऊचुः-
पितृभक्तोसिविप्रेंद्रभक्त्यातववयंद्विज
सुकर्मञ्छ्रूयतांवाक्यंप्रीत्यायुक्तासदैवते २५
एवमुक्त्वागतादेवाःस्वर्लोकंनृपनंदन
सर्वमैश्वर्यमेतेनतस्याग्रेपरिदर्शितम् २६
दृष्टंतुपिप्पलेनापिकौतुकंचमहाद्भुतम्
तमुवाचसधर्मात्मापिप्पलंकुंडलात्मजम् २७
अर्वाचीनंत्विदंरूपंपराचीनंचकीदृशम्
प्रभावमुभयोश्चैववदस्ववदतांवर २८
सुकर्मोवाच-
पराचीनस्यरूपस्यलिगमेववदामिते
येनलोकाःप्रमोदंतेइंद्राद्याःसचराचराः २९
अयमेवजगन्नाथःसर्वगोव्यापकः प्रभुः
अस्यरूपंनदृष्टंहिकेनाप्येवहियोगिना ३०
श्रुतिरेववदत्येवंतंवक्तुंशंकितेवसा
अपाणिपादनासश्चअकर्णोमुखवर्जितः ३१
सर्वंपश्यतिवैकर्मकृतंत्रैलोक्यवासिनाम्
तेषामुक्तमकर्णश्चसशृणोतिसुसाद्यदः ३२
गतिहीनोव्रजेत्सोपिसहिसर्वत्रदृश्यते

पाणिहीनोपिगृह्णातिपादहीनःप्रधावति ३३
सर्वत्रदृश्यतेविप्रव्यापकःपादवर्जितः
यंनपश्यंतिदेवेंद्रामुनयस्तत्त्वदर्शिनः ३४
सचपश्यतितान्सर्वान्सत्यासत्यपदेस्थितान्
व्यापकंविमलंसिद्धंसिद्धिदंसर्वनायकम् ३५
यंजानातिमहायोगीव्यासोधर्मार्थकोविदः
तेजोमूर्तिःसचाकाशमेकवर्णमनंतकम् ३६
तदेतन्निर्मलंरूपंश्रुतिराख्यातिनिश्चितम्
व्यासश्चैवहिजानातिमार्कंडेयश्चतत्पदम् ३७
अर्वाचीनंप्रवक्ष्यामिशृणुष्वैकाग्रमानसः
यदासंहृत्यभूतात्मास्वयमेकःप्रगच्छति ३८
अप्सुशय्यांसमास्थायशेषभोगासनस्थितः
तमाश्रित्यस्वपित्येकोबहुकालंजनार्दनः ३९
जलांधकारसंतप्तोमार्कंडेयोमहामुनिः
स्थानमिच्छन्सयोगात्मानिर्विगणोभ्रमणेनसः ४०
भ्रममाणःसददृशेशेषपर्यंकशायिनम्
सूर्यकोटिप्रतीकाशंदिव्याभरणभूषितम् ४१
दिव्यमाल्यांबरधरंसर्वव्यापिनमीश्वरम्
योगनिद्रांगतंकांतंशंखचक्रगदाधरम् ४२
एकानारीमहाभागाकृष्णांजनचयोपमा
दंष्ट्राकरालवदनाभीमरूपाद्विजोत्तम ४३
तयोक्तोसौमुनिश्रेष्ठोमाभैरितिमहामुनिः
पद्मपत्रंसुविस्तीर्णंपंचयोजनमायतम् ४४
तस्मिन्पत्रेमहादेव्यामार्कगडेयोनिवेशितः
केशवेसतिसुप्तेपिनास्त्यत्रचभयंतव ४५
तामुवाचसयोगींद्रःकात्वंभवसिभामिनि
अस्मिन्विनिर्जितेचैकाभवतीपरिबृंहिता ४६
पृष्टैवंमुनिनादेवीसादरंप्राहभूसुर
नागभोगांकपर्यंकेसयःस्वपितिकेशवः ४७
अस्याहंवैष्णवीशक्तिःकालरात्रिरिहोच्यते

मामेवंविद्धिविप्रेंद्रसर्वमायासमन्विताम् ४८
महामायापुराणेषुजगन्मोहायकथ्यते
इत्युक्त्वासागतादेवीअंतर्धानंहिपिप्पलः ४९
देव्यामनुगतायांतुमार्कंडेयस्यपश्यतः
तस्यनाभ्यांसमुत्पन्नंपंकजंहाटकप्रभम् ५०
तस्माज्जज्ञेमहातेजाब्रह्मालोकपितामहः
तस्माद्विजज्ञिरेलोकाःसर्वेस्थावरजंगमाः ५१
इंद्राद्यालोकपालाश्चदेवाश्चाग्निपुरोगमाः
अर्वाचीनंस्वरूपंतुदर्शितंहिमयानृप ५२
अर्वाचीनस्वरूपोयंपराचीनोनिराश्रयः
यदासदर्शयेत्कायंकायरूपाभवंतिते ५३
ब्रह्माद्याःसर्वलोकाश्चअर्वाचीनाहिपिप्पल
अर्वाचीनाअमीलोकायेभवंतिजगत्त्रये ५४
पराचीनःसभूतात्मायंसुपश्यंतियोगिनः
मोक्षरूपंपरंस्थानंपरब्रह्मस्वरूपकम् ५५
अव्यक्तमक्षरंहंसंशुद्धंसिद्धिसमन्वितम्
पराचीनस्ययद्रूपंविद्याधरतवाग्रतः ५६
सर्वमेवमयाख्यातमन्यत्किंतेवदाम्यहम्
पिप्पलउवाच-
कस्मादेतन्महाज्ञानमुद्भूतंतवसुव्रत ५७
अर्वाचीनगतिंविद्वान्पराचीनगतिंतथा
त्रैलोक्यस्यपरंज्ञानंत्वय्येवंपरिवर्तते ५८
तपसोनैवपश्यामिपरांनिष्ठांहिसुव्रत
यजनंयाजनंतीर्थंतपोवाकृतवानसि ५९
तत्प्रभावंवदस्वैवंकेनज्ञानंतवाखिलम्
सुकर्मोवाच-
तपएवनजानामिनकृतंकायशोषणम् ६०
यजनंयाजनंवापिनजानेतीर्थसाधनम्
नमयासाधितंध्यानंपुण्यकालंसुकर्मजम् ६१
स्फुटमेकंप्रजानामिपितृमातृप्रपूजनम्

उभयोरपिहस्तेनमातापित्रोस्तुनित्यशः ६२
पादप्रन्नालनंपुरायंस्वयमेवकरोम्यहम्
अंगसंवाहनंस्नानंभोजनादिकमेवच ६३
त्रिकालेध्यानसंलीनःसाधयामिदिनेदिने
पादोदकंतयोश्चैवमातापित्रोर्दिनेदिने ६४
भक्तिभावेनविंदामिपूजयामिसुभावतः
गुरूमेजीवमानौतुयावत्कालंहिपिप्पल ६५
तावत्कालंहिमेलाभोह्यतुलश्चप्रजायते
त्रिकालंपूजयाम्येतौशुद्धभावेनचेतसा ६६
स्वच्छंदलीलासंचारीवर्ताम्येवहिपिप्पल
किंमेचान्येनतपसाकिंमेकायस्यशोषरौः ६७
किंमेसुतीर्थयात्राभिरन्यैःपुरायैश्चसांप्रतम्
मखानामेवसर्वेषांयत्फलंप्राप्यतेद्विज ६८
तत्फलंतुमयादृष्टंपितुःशुश्रूषरणादपि
मातुःशुश्रूषरणंतद्वत्पुत्राराणांगतिदायकम् ६९
सर्वकर्मसुसर्वस्वंसारभूतंजगत्रये
पुत्रस्यजायतेलोकोमातुःशुश्रूषरणादपि ७०
पितुःशुश्रूषरौतद्वन्महत्पुरायंप्रजायते
तत्रगंगागयातीर्थंतत्रपुष्करमेवच ७१
यत्रमातापितातिष्ठेत्पुत्रस्यापिनसंशयः
अन्यानितत्रतीर्थानिपुरायानिविविधानिच ७२
भवंत्येतानिपुत्रस्यपितुःशुश्रूषरणादपि
पितुःशुश्रूषरणात्तस्यदानस्यतपसःफलम् ७३
सत्पुत्रस्यभवेद्विप्रअन्यधर्मःश्रमायते
पितुःशुश्रूषरणात्पुरायंपुत्रःप्राप्नोत्यनुत्तमम् ७४
स्वकर्मरणस्तुसर्वस्वमिहैवचपरत्रच
जीवमानौगुरूत्वेतौस्वमातापितरौतथा ७५
शुश्रूषतेसुतोभूत्वातस्यपुरायफलंशृरणु
देवास्तस्यापितुष्यंतिऋषयःपुरायवत्सलाः ७६
त्रयोलोकास्तुतुष्यंतिपितुःशुश्रूषरणादिह

मातापित्रोस्तुयःपादौनित्यमेवहिद्मालयेत् ७७
तस्यभागीरथीस्नानमहन्यहनिजायते
पुरायैर्मिष्टान्नपानैर्यःपितरंमातरंतथा ७८
भक्तयाभोजयतेनित्यंतस्यपुरायंवदाम्यहम्
अश्वमेधस्ययज्ञस्यफलंपुत्रस्यजायते ७९
तांबूलैश्छादनैश्चैवपानैश्चाशनकैस्तथा
भक्तयाचान्नेनपुरायेनगुरूयेनाभिपूजितौ ८०
सर्वज्ञानीभवेत्सोपियशःकीर्तिमवाप्नुयात्
मातरंपितरंदृष्ट्वाहर्षात्संभाषयेत्सुतः ८१
निधयस्तस्यसंतुष्टास्तस्यगेहेवसंतिते
गावःसौहृद्यमायांतिपुत्रस्यसुखदाःसदा ८२

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातृपितृतीर्थ-
माहात्म्येद्विषष्टितमोऽध्यायः ६२

त्रिषष्टितमोऽध्यायः

सुकर्मोवाच-
तयोश्चापिद्विजश्रेष्ठमातापित्रोश्चस्नातयोः
पुत्रस्यापिहिसर्वांगेपतंत्यंबुकणायदा १
सर्वतीर्थसमंस्नानंपुत्रस्यापिसुजायते
पतितंविकलंवृद्धमशक्तंसर्वकर्मसु २
व्याधितंकुष्ठिनंतातंमातरंचतथाविधाम्
उपाचरतियःपुत्रस्तस्यपुरायंवदाम्यहम् ३
विष्णुस्तस्यप्रसन्नात्माजायतेनात्रसंशयः
प्रयातिवैष्णवंलोकंयदप्राप्यंहियोगिभिः ४
पितरौविकलौदीनौवृद्धावेतौगुरूसुतः
महागदेनसंप्राप्तौपरित्यजतिपापधीः ५
पुत्रोनरकमाप्नोतिदारुणंकृमिसंकुलम्
वृद्धाभ्यांचसमाहूतोगुरूभ्यामिहसांप्रतम् ६
नप्रयातिसुतोभूत्वातस्यपापंवदाम्यहम्
विष्ठाशीजायतेमूढोग्रामघ्रोणीनसंशयः ७

यावज्जन्मसहस्त्रंतुपुनःश्वाचाभिजायते
पुत्रगेहेस्थितौवृद्धौमाताचजनकस्तथा ८
अभोजयित्वातावन्नंस्वयमत्तिचयःसुतः
मूत्रंविष्ठांसभुंजीतयावज्जन्मसहस्त्रकम् ९
कृष्णसर्पोभवेत्पापीयावज्जन्मशतद्वयम्
मातरंपितरंवृद्धमवज्ञायप्रवर्त्तते १०
ग्राहोपिजायतेदुष्टोजन्मकोटिशतैरपि
तावेतौकुत्सतेपुत्रःकटुकैर्वचनैरपि ११
सचपापीभवेद्व्याघ्रःपश्चादृक्षःप्रजायते
मातरंपितरंपुत्रोयोनमन्येतदुष्टधीः १२
कुंभीपाकेवसेत्तावद्यावद्युगसहस्त्रकम्
नास्तिमातृसमंतीर्थंपुत्राणांचपितुःसमम् १३
तारणायहितायैवइहैवचपरत्रच
तस्मादहंमहाप्राज्ञपितृदेवंप्रपूजये १४
मातृदेवंसर्वदेवयोगयोगीतथाभवम्
मातृपितृप्रसादेनसंजातंज्ञानमुत्तमम् १५
त्रिलोकीयंसमस्तातुसंयाताममवश्यताम्
अर्वाचीनगतिंजानेदेवस्यास्यमहात्मनः १६
वासुदेवस्यतस्यैवपराचीनांमहामते
सर्वंज्ञानंसमुद्भूतंपितृमातृप्रसादतः १७
कोनपूजयतेविद्वान्पितरंमातरंतथा
सांगोपांगैरधीतैस्तैःश्रुतिशास्त्रसमन्वितैः १८
वेदैरपिचकिंविप्रापितायेननपूजितः
मातानपूजितायेनतस्यवेदानिरर्थकाः १९
यज्ञैश्चतपसाविप्रकिंदानैःकिंचपूजनैः
प्रयातितस्यवैफल्यंनमातायेनपूजिता २०
नपितापूजितोयेनजीवमानोगृहेस्थितः
एषपुत्रस्यवैधर्मस्तथातीर्थंनरेष्विह २१
एषपुत्रस्यवैमोक्षस्तथाजन्मफलंशुभम्
एषपुत्रस्यवैयज्ञोदानमेवनसंशयः २२

पितरंपूजयेन्नित्यंभक्त्याभावेनतत्परः
तस्यजातंसमस्तंतद्यदुक्तंपूर्वमेवहि २३
दानस्यापिफलंतेनतीर्थस्यापिनसंशयः
यज्ञस्यापिफलंप्राप्तंमातायेनाप्युपासिता २४
पितायेनसुभक्त्याचनित्यमेवाप्युपासितः
तस्यसर्वासुसंसिद्धायज्ञाद्याःपुरायदाःक्रियाः २५
एतदर्थंसमाज्ञातंधर्मशास्त्रंश्रुतंमया
पितृभक्तिपरोनित्यंभवेत्पुत्रोहिपिप्पल २६
तुष्टेपितरिसंप्राप्तंयदुराज्ञापुरासुखम्
रुष्टेपितरिचप्राप्तंमहत्पापंपुराशृणु २७
रुरुणापौरवेणापिपित्राशप्तेनभूतले
एवंज्ञानंमयाचाप्तंद्वावेतौयदुपासितौ २८
एतयोश्चप्रसादेनप्राप्तंफलमनुत्तमम् २९

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थ-
माहात्म्येत्रिषष्टितमोऽध्यायः ६३

## चतुःषष्टितमोऽध्यायः

पिप्पलउवाच-
पितुःप्रसादभावाद्वैयदुनासुखमुत्तमम्
कथंप्राप्तंसुभुक्तंचतन्मेविस्तरतोवद १
कस्मात्पापप्रभावंचरुरुर्भुंक्तेद्विजोत्तम
सकलंविस्तरेणापिवदमेकुंडलात्मज २
सुकर्मोवाच-
श्रूयतामभिधास्यामिचरित्रंपापनाशनम्
नहुषस्यसुपुरायस्यययातेश्चमहात्मनः ३
सोमवंशात्प्रभूतोहिनहुषोमेदिनीपतिः
दानधर्माननेकांश्चचकारह्यतुलानपि ४
मखानामश्वमेधानामियाजशतमुत्तमम्
वाजपेयशतंचापिअन्यान्यज्ञाननेकधा ५
आत्मनःपुरायभावेनइंद्रलोकमवापसः

पुत्रंधर्मगुणोपेतंप्रजापालंचकारसः ६
ययातिंसत्यसंपन्नंधर्मवीर्यंमहामतिम्
एंद्रंपदंगतोराजातस्यपुत्रःपदेस्वके ७
ययातिःसत्यसंपन्नःप्रजाधर्मेणपालयेत्
स्वयमेवप्रपश्येत्सप्रजाकर्माणितान्यपि ८
याजयामासधर्मज्ञःश्रुत्वाधर्ममनुत्तमम्
यज्ञतीर्थादिकंसर्वंदानपुरायंचकारसः ९
राज्यंचकारमेधावीसत्यधर्मेणवैतदा
यावदशीतिसहस्राणिवर्षाणांनृपनंदनः १०
तावत्कालंगतंतस्यययातेस्तुमहात्मनः
तस्यपुत्राश्चचत्वारस्तद्वीर्यबलविक्रमाः ११
तेषांनामानिवद्दयामिशृणुष्वैकाग्रमानसः
तस्यासीज्ज्येष्ठपुत्रस्तुरुरुर्नाममहाबलः १२
पुरुर्नामद्वितीयोऽभूत्कुरुश्चान्यस्तृतीयकः
यदुर्नामसधर्मात्माचतुर्थोनृपतेःसुतः १३
एवंचत्वारःपुत्राश्चययातेस्तुमहात्मनः
तेजसापौरुषेणापिपितृतुल्यपराक्रमाः १४
एवंराज्यंकृतंतेनधर्मेणापिययातिना
तस्यकीर्तिर्यशोभावस्त्रैलोक्येप्रचुरोभवत् १५
विष्णुरुवाच–
एकदातुद्विजश्रेष्ठोनारदोब्रह्मनंदनः
एंद्रंलोकंगतोराजन्द्रष्टुंचैवपुरंदरम् १६
सहस्राद्मस्ततोपश्यद्धुताशनसमप्रभम्
देवोविप्रंसमायांतंसर्वज्ञंज्ञानपंडितम् १७
पूजितंमधुपर्काद्यैर्भक्त्यानमितकंधरः
निवेश्यचासनेपुरायेपप्रच्छमुनिपुंगवम् १८
इंद्रउवाच–
कस्मादागमनंतेद्यकिमर्थमिहचागतः
किंतेहिसुप्रियंविप्रकरोम्यद्यमहामुने १९
नारदउवाच–

देवराजकृतंसर्वंभक्त्यायच्चप्रभाषितम्
संतुष्टोस्मिमहाप्राज्ञप्रश्नोत्तरंवदाम्यहम् २०
महीलोकात्सुसंप्राप्तःसांप्रतंतवमंदिरम्
त्वामन्वेष्टुंसमायातोदृष्ट्वानाहुषमेवच २१
इंद्रउवाच-
सत्यधर्मेणकोराजाप्रजाःपालयतेसदा
सर्वधर्मसमायुक्तःश्रुतवाञ्ज्ञानवान्गुणी २२
पृथिव्यामस्तिकोराजावेदज्ञोब्राह्मणप्रियः
ब्रह्मण्योवेदविच्छूरोयज्वादातासुभक्तिमान् २३
नारदउवाच-
एभिर्गुणैस्तुसंयुक्तोनहुषस्यात्मजोबली
यस्यसत्येनवीर्येणसर्वेलोकाःप्रतिष्ठिताः २४
भवादृशोहिभूर्लोकेययातिर्नहुषात्मजः
भवान्स्वर्गेसचैवास्तिभूतलेभूतिवर्धनः २५
पितुःश्रेष्ठोमहाराजह्यश्वमेधशतंतथा
वाजपेयशतंचक्रेययातिःपृथिवीपतिः २६
दत्तान्यनेकरूपाणिदानानितेनभक्तितः
गवांलक्षसहस्राणिगवांकोटिशतानिच २७
कोटिहोमांश्चकाराथलक्षहोमांस्तथैवच
भूमिदानादिदानानिब्राह्मणेभ्योददाच्चयः २८
सर्वंयेनस्वरूपंहिधर्मस्यपरिपालितम्
एवंगुणैःसमायुक्तोययातिर्नहुषात्मजः २९
वर्षाणांतुसहस्राणिअशीतिर्नृपसत्तमः
राज्यंचकारसत्येनयथादिविभवानिह ३०
सुकर्मोवाच-
एवमाकर्ण्यदेवेंद्रोनारदात्समुनीश्वरात्
समालोच्यसमेधावीसंभीतोधर्मपालनात् ३१
शतयज्ञप्रभावेणनहुषोहिपुरामम
एंद्रंपदंगतोवीरोदेवराजोभवत्पुरा ३२
शचीबुद्धिप्रभावेणपदभ्रष्टोव्यजायत

तादृशोयंमहाराजःपितुस्तुल्यपराक्रमः ३३
प्राप्स्यतेनात्रसंदेहःपदमैंद्रंनसंशयः
येनकेनाप्युपायेनतंभूपंदिवमानये ३४
इत्येवंचिंतयामासतस्माद्भीतःसुरेश्वरः
भूपालस्यनृपश्रेष्ठययातेःसुमहद्भयात् ३५
तमानेतुंततोदूतंप्रेषयामासदेवराट्
नहुषस्यविमानंतुसर्वकामसमन्वितम् ३६
सारथिंमातलिनामविमानेनसमन्वितम्
गतोहिमातलिस्तत्रयत्रास्तेनहुषात्मजः ३७
प्रहितःसुरराजेनसमानेतुंमहामतिम्
सभायांवर्त्तमानस्तुयथाइंद्रःप्रशोभते ३८
तथाययातिर्धर्मात्मास्वसभायांविराजते
तमुवाचमहात्मानंराजानंसत्यभूषणम् ३९
सारथिर्देवराजस्यशृणुराजन्वचोमम
प्रहितोदेवराजेनसकाशंतवसांप्रतम् ४०
यद्ब्रूतेदेवराजस्तुतत्सर्वंसुमनाःकुरु
आगंतव्यंत्वयादेवएंद्रंलोकंहिनान्यथा ४१
पुत्रेराज्यंविसृज्यैवकृत्वाचांतेष्टिमुत्तमाम्
इलोराजामहातेजावसतेनहुषात्मज ४२
पुरूरवामहावीर्योविप्रचित्तिर्महामनाः
शिबिर्वसतितत्रैवमनुरिक्ष्वाकुभूपतिः ४३
सगरोनाममेधावीनहुषश्चपितातव
ऋतवीर्यःकृतज्ञश्चशंतनुश्चमहामनाः ४४
भरतोयुवनाश्वश्चकार्तवीर्योनरेश्वरः
यज्ञानाहृत्यबहुधामोदंतेदिविभूभृतः ४५
अन्येचैवतुराजानोयज्ञकर्मसुतत्पराः
सर्वेतेदिविचेंद्रेणमोदंतेस्वेनकर्मणा ४६
त्वंपुनःसर्वधर्मज्ञःसर्वधर्मेषुसंस्थितः
शक्रेणसहमोदस्वस्वर्गलोकेमहीपते ४७
ययातिरुवाच–

किंमयातत्कृतंकर्मयेनमय्यर्थितातव
इंद्रस्यदेवराजस्यतत्सर्वमेवदस्वच ४८
मातलिरुवाच-
यदशीतिसहस्राणिवर्षाणांहित्वयानृप
दानपुण्यादिकंकर्मयज्ञैस्तुपरिसाधितम् ४९
दिवंगच्छमहाराजकर्मणास्वेनभूपते
सखित्वंदेवराजेनकुरुगच्छसुरालयम् ५०
पंचात्मकंशरीरंचभूमौत्यजमहामते
दिव्यरूपंसमास्थायभुंद्वभोगान्मनोनुगान् ५१
यथायथाकृताभूमौयज्ञादानंतपश्चते
तथातथास्वर्गभोगाःप्रार्थयंतेनरेश्वर ५२
ययातिरुवाच-
येनकायेनसिध्येतसुकृतंदुष्कृतंभुवि
मातलेतत्कथंत्यक्त्वागच्छेल्लोकमुपार्जितम् ५३
मातलिरुवाच-
यत्रैवोपार्जितंकायंपंचात्मकमिदंनृप
तत्तत्रैवपरित्यज्यदिव्येनैवव्रजंतितम् ५४
इतरेमानवाःसर्वेपापपुण्यप्रसाधकाः
तेऽपिकायंपरित्यज्यअधऊर्ध्वंव्रजंतिवै ५५
ययातिरुवाच-
पंचात्मकेनकायेनसुकृतंदुष्कृतंनराः
उत्पाद्यैवप्रयांत्येवअधऊर्ध्वंतुमातले ५६
कोविशेषोहिधर्मज्ञभूमौकायंपरित्यजेत्
पापपुण्यप्रभावाद्वैकायस्यपतनंभवेत् ५७
दृष्टांतोदृश्यतेसूतप्रत्यक्षंमर्त्यमंडले
विशेषंनैवपश्यामिपापपुण्यस्यचाधिकम् ५८
सत्यधर्मादिकंकर्मयेनकायेनमानवः
समर्जयतिवैमर्त्यस्तंकस्माद्विप्रसर्जयेत् ५९
आत्माकायश्चद्वावेतौमित्ररूपावुभावपि
कायंमित्रंपरित्यज्यआत्मायातिसुनिश्चितः ६०

मातलिरुवाच-
सत्यमुक्तंत्वयाराजन्कायंत्यक्त्वाप्रयातिसः
संबंधोनास्तितेनापिसमंकायेनचात्मनः ६१
यस्मात्पंचत्वरूपोऽयसंधिजर्जरितःसदा
जरयापीडयमानस्तुव्याधिभिर्दूषितःसदा ६२
जरादोषैःप्रभग्नोऽसौग्रत्रस्थातुंसनेच्छति
ग्राकुलव्याकुलोभूत्वाजीवस्त्यक्त्वाप्रयातिसः ६३
सत्येनधर्मपुगयैश्चदानैर्नियमसंयमैः
ग्रश्वमेधादिभिर्यज्ञैस्तीर्थैःसंयमनैस्तथा ६४
सुपुगयैःसुकृतैश्चान्यैर्जरानैवप्रधार्यते
पातकैश्चमहाराजद्रवतेकायमेवसा ६५
ययातिरुवाच-
कस्माज्जरासमुत्पन्नाकस्मात्कायंप्रपीडयेत्
ममविस्तरतस्त्वंचवक्तुमर्हसिसत्तम ६६
मातलिरुवाच-
हंततेवर्णयिष्यामिजरायाःपरिकारणम्
यस्माच्चेयंसमुद्भूताकायमध्येनृपोत्तम ६७
पंचभूतात्मकःकायोविषयैःपंचभिःश्रितः
यदात्मात्यजतेराजन्सकायःपरिधक्ष्यते ६८
वह्निनादीप्यमानस्तुसरसोज्वलतेनृप
तस्माद्विजायतेधूमोधूमान्मेघाश्चजज्ञिरे ६९
मेघादापःप्रवर्तंतेग्रद्भ्यःपृथ्वीप्रकल्पते
जलमायातिसाध्वीसायथानारीरजस्वला ७०
तस्मात्प्रजायतेगंधोगंधाद्रसोनृपोत्तम
रसात्प्रभवतेचान्नमन्नाच्छुक्रंनसंशयः ७१
शुक्राद्धिजायतेकायःकुरूपःकायएवच
यथापृथ्वीसृजेद्गंधान्नसैश्चरतिभूतले ७२
तथाकायश्चरेन्नित्यंरसाधारोहिसर्वशः
गंधश्चजायतेतस्माद्गंधाद्रसोभवेत्पुनः ७३
तस्माज्जज्ञेमहावह्निर्दृष्टांतंपश्यभूपते

यथाकाष्ठाद्भवेद्वह्निःपुनःकाष्ठंप्रकाशयेत् ७४
कायमध्येरसादग्निस्तद्वदेवप्रजायते
तत्रसंचरतेनित्यंकायंपुष्णातिभूपते ७५
यावद्रसस्यचाधिक्यंतावज्जीवःप्रशांतिमान्
चरित्वाताादृशंवह्निःक्षुधारूपेणवर्तते ७६
अन्नमिच्छत्यसौतीव्रःपयसाचसमन्वितम्
प्रदानंलभतेचान्नमुदकंचापिभूपते ७७
शोणितंचरतेवह्निस्तद्वद्वीर्यंनसंशयः
यक्ष्मरोगोभवेत्तस्मात्सर्वकायप्रणाशकः ७८
रसाधिक्यंभवेद्राजन्नथवह्निःप्रशाम्यति
रसेनपीड्यमानस्तुज्वररूपोभिजायते ७९
ग्रीवापृष्ठंकटिंपायुंसर्वास्वेवतुसंधिषु
आरुध्यतिष्ठतेवह्निःकायेवह्निःप्रवर्तते ८०
तस्याऽधिक्यंचरेन्नित्यंकायंपुष्णातिसर्वतः
रसस्तुबंधमायातिबलरूपोभवेत्तदा ८१
अतिरिक्तोबलेनैववीर्यान्मर्माणिचालयेत्
तेनैवजायतेकामःशल्यरूपोभवेन्नृप ८२
सकामाग्निःसमाख्यातोबलनाशकरोनृप
मैथुनस्यप्रसंगेनविनाशत्वंकलेवरे ८३
नारींचसंश्रयेत्प्राणीपीडितःकामवह्निना
मैथुनस्यप्रसंगेनमूर्छितःकामकर्शितः ८४
तेजोहीनोभवेत्कायोबलहानिश्चजायते
बलहीनोयदास्याद्वैदुर्बलोवह्निनेरितः ८५
सवह्निःप्रचरेत्कायेशोणितंशुक्रमेवच
शुक्रशोणितयोर्नाशाच्छून्यदेहोभिजायते ८६
अतीवजायतेवायुःप्रचंडोदारुणाकृतिः
विवर्णोदुःखसंतप्तःशून्यबुद्धिस्ततोभवेत् ८७
दृष्टाश्रुतातुयानारीतच्चित्तोभ्रमतेसदा
तृप्तिर्नजायतेकायेलोलुपेचित्तवर्त्मनि ८८
विरूपश्चसुरूपश्चध्यानान्मध्येप्रजायते

बलहीनोयदाकामीमांसशोणितसंक्षयात् ८९
पलितंजायतेकायेनाशितेकामवह्निना
तस्मात्संजायतेकामीवृद्धोभूत्वादिनेदिने ९०
सुरतेचिंततेनारींयथावार्द्धुषिकोनरः
तथातथाभवेद्धानिस्तेजसोऽस्यनरेश्वर ९१
तस्मात्प्रजायतेकायोनाशरूपंसमृच्छति
अग्निःप्रजायतेभूयोजरारूपोनसंशयः ९२
प्राणिनांक्षयरूपेणज्वरोभवतिदारुणः
स्थावराजंगमाःसर्वेज्वरेणपरिपीडिताः ९३
नाशमायांतितेसर्वेबहुपीडाप्रपीडिताः
एतत्तेसर्वमाख्यातमन्यत्किंतेवदाम्यहम् ९४
एवमुक्तोमहाराजोमातलिवाक्यमब्रवीत् ९५

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थमाहात्म्ये-
चतुःषष्टितमोऽध्यायः ६४

## पंचषष्टितमोऽध्यायः

ययातिरुवाच-
धर्मस्यरक्षकःकायोमातलेचात्मनासह
नाकमेषनप्रयातितन्मेत्वंकारणंवद १
मातलिरुवाच-
पंचानामपिभूतानांसंगतिर्नास्तिभूपते
आत्मनासहवर्तंतेसंगत्यानैवपंचते २
सर्वेषांतत्रसंघातःकायग्रामेप्रवर्तते
जरयापीडिताःसर्वेःस्वंस्वंस्थानंप्रयांतिते ३
यथारसाधिकापृथ्वीमहाराजप्रकल्पिता
रसैःक्लिन्नाततःपृथ्वीमृदुत्वंयातिभूपते ४
भिद्यतेपिपीलिकाभिर्मूषिकाभिस्तथैवच
छिद्राण्येवप्रजायंतेवल्मीकाश्चमहोदराः ५
तद्वत्कायेप्रजायंतेगंडमालाविचार्चिकाः
कृमिभिर्भिद्यमानश्चकायएषनरोत्तम ६

गुल्मास्तत्रप्रजायंतेसद्यःपीडाकरास्तदा
एभिर्दोषैःसमायुक्तःकायोयंनहुषात्मज
कथंप्राणसमायोगाद्दिवंयातिनरेश्वर ७
कायेपार्थिवभागोऽयसमानार्थंप्रतिष्ठितः
नकायःस्वर्गमायातियथापृथ्वीतथास्थितः ८
एतत्तेसर्वमाख्यातंदोषौघैःपार्थिवस्ययः ९
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थ-
माहात्म्येपंचषष्टितमोऽध्यायः ६५

षट्षष्टितमोऽध्यायः

ययातिरुवाच-
पापात्पततिकायोयंधर्माच्चश्रृणुमातले
विशेषंनचपश्यामिपुण्यस्यापिमहीतले १
पुनःप्रजायतेकायोयथाहिपतनंपुरा
कथमुत्पद्यतेदेहस्तन्मेविस्तरतोवद २
मातलिरुवाच-
अथनारकिणांपुंसामधर्मादेवकेवलात्
क्षणमात्रेणभूतेभ्यःशरीरमुपजायते ३
तद्वद्धर्मेणचैकेनदेवानामौपपादिकम्
सद्यःप्रजायतेदिव्यंशरीरंभूतसारतः ४
कर्मणाव्यतिमिश्रेणयच्छरीरंमहात्मनाम्
तद्रूपपरिणामेनविज्ञेयंहिचतुर्विधम् ५
उद्भिज्जाःस्थावराज्ञेयास्तृणगुल्मादिरूपिणः
कृमिकीटपतंगाद्याःस्वेदजानामदेहिनः ६
अंडजाःपक्षिणःसर्वेसर्पानक्राश्चभूपते
जरायुजाश्चविज्ञेयामानुषाश्चचतुष्पदाः ७
तत्रसिक्ताजलैर्भूमिर्रक्तेउष्मविपाचिता
वायुनाधम्यमानाचक्षेत्रेबीजंप्रपद्यते ८
यथाउप्तानिबीजानिसंसिक्तान्यंभसापुनः
उपगम्यमृदुत्वंचमूलभावंव्रजंतिच ९

तन्मूलादंकुरोत्पत्तिरंकुरात्पर्णसंभवः
पर्णान्नालंततःकांडंकांडाच्चप्रभवःपुनः १०
प्रभवाच्चभवेत्क्षीरंक्षीरात्तंदुलसंभवः
तंदुलाच्चततःपक्वाभवंत्योषधयस्तथा ११
यवाद्याःशालिपर्यंताःश्रेष्ठाःसप्तदशस्मृताः
ओषध्यःफलसाराढ्याःशेषाक्षुद्राःप्रकीर्तिताः १२
एतालूनामर्दिताश्चमुनिभिःपूर्वसंस्कृताः
शूर्पोलूखलपात्राद्यैःस्थालिकोदकवह्निभिः १३
षडिवधाहिस्वभेदेनपरिणामंव्रजंतिताः
अन्योन्यरससंयोगादनेकस्वादतांगताः १४
भक्ष्यंभोज्यंपेयलेह्यंचोष्यंखाद्यंचभूपते
तासांभेदाःषडंगाश्चमधुराद्याश्चषड्गुणाः १५
तदन्नंपिंडकवलैर्ग्रासैर्भुक्तंचदेहिभिः
अन्नमूलाशयेसर्वप्राणान्स्थापयतिक्रमात् १६
अपक्वंभुक्तमाहारंसवायुःकुरुतेद्विधा
संप्रविश्यान्नमध्येचपक्वंकृत्वापृथग्गुणम् १७
अग्नेरूर्ध्वंजलंस्थाप्यतदन्नंचजलोपरि
जलस्याधःस्वयंप्राणःस्थित्वाग्निंधमतेशनैः १८
वायुनाधम्यमानोग्निरत्युष्णंकुरुतेजलम्
तदन्नमुष्णयोगेनसमंतात्पच्यतेपुनः १९
द्विधाभवतितत्पक्वंपृथक्किट्टंपृथग्रसः
मलैर्द्वादशभिःकिट्टंभिन्नंदेहाद्बहिर्व्रजेत् २०
कर्णाक्षिनासिकाजिह्वादंतोष्ठप्रजनंगुदा
मलान्स्रवेदथस्वेदोविरामूत्रंद्वादशस्मृताः २१
हृत्पद्मेप्रतिबद्धाश्चसर्वनाड्यःसमंततः
तासांमुखेषुतंसूक्ष्मंप्राणःस्थापयतेरसम् २२
रसेनतेनतानाडीःप्राणःपूरयतेपुनः
संतर्पयंतितानाड्यःपूर्णादेहंसमंततः २३
ततःसनाडीमध्यस्थःशारीरेणोष्मणारसः
पच्यतेपच्यमानश्चभवेत्पाकद्वयंपुनः २४

त्वङ्मांसास्थिमज्ञामेदोरुधिरंचप्रजायते
रक्ताल्लोमानिमांसंचकेशाःस्नायुश्चमांसतः २५
स्नायोर्मज्ञातथास्थीनिवसामज्ञास्थिसंभवा
मज्ञाकारेणवैकल्यंशुक्रंचप्रसवात्मकम् २६
इतिद्वादशशान्तस्यपरिणामाःप्रकीर्तिताः
शुक्रंतस्यपरीणामःशुक्राद्देहस्यसंभवः २७
ऋतुकालेयदाशुक्रंनिर्दोषंयोनिसंस्थितम्
तदातद्वायुसंसृष्टंस्त्रीरक्तेनैकतांव्रजेत् २८
विसर्गकालेशुक्रस्यजीवःकारणसंयुतः
नित्यंप्रविशतेयोनिंकर्मभिःस्वैर्नियंत्रितः २९
शुक्रस्यसहरक्तस्यएकाहात्कललंभवेत्
पंचरात्रेणकललेबुद्बुदत्वंततोभवेत् ३०
मांसत्वंमासमात्रेणपंचधाजायतेपुनः
ग्रीवाशिरश्चस्कंधश्चपृष्ठवंशस्तथोदरम् ३१
पाणीपादौतथापार्श्वौकटिर्गात्रंतथैवच
मासद्वयेनपर्वाणिक्रमशःसंभवंतिच ३२
त्रिभिर्मासैःप्रजायंतेशतशोंकुरसंधयः
मासैश्चतुर्भिर्जायंतेअंगुल्यादियथाक्रमम् ३३
मुखंनासाचकर्णौचमासैर्जायंतिपंचभिः
दंतपंक्तिस्तथाजिह्वाजायतेतुनखाःपुनः ३४
कर्णयोश्चभवेच्छिद्रंषण्मासाभ्यंतरेपुनः
पायुर्मेढ्रमुपस्थंचशिश्नश्चाप्युजायते ३५
संधयोयेचगात्रेषुमासैर्जायंतिसप्तभिः
अंगप्रत्यंगसंपूर्णंशिरःकेशसमन्वितम् ३६
विभक्तावयवस्पष्टंपुनर्मासाष्टमेभवेत्
पंचात्मकसमायुक्तःपरिपक्वःसतिष्ठति ३७
मातुराहारवीर्येणषड्विधेनरसेनच
नाभिसूत्रनिबद्धेनवर्द्धतेसदिनेदिने ३८
ततःस्मृतिंलभेज्जीवःसंपूर्णोस्मिञ्छरीरके
सुखंदुःखंविजानातिनिद्रांस्वप्नंपुराकृतम् ३९

मृतश्चाहंपुनर्जातोजातश्चाहंपुनर्मृतः
नानायोनिसहस्राणिमयादृष्टान्यनेकधा ४०
अधुनाजातमात्रोहंप्राप्तसंस्कारएवच
ततःश्रेयःकरिष्यामियेनगर्भेनसंभवः ४१
गर्भस्थश्चिंतयत्येवमहंगर्भाद्विनिःसृतः
अध्येष्यामिपरंज्ञानंसंसारविनिवर्तकम् ४२
अवश्यंगर्भदुःखेनमहतापरिपीडितः
जीवःकर्मवशादास्तेमोक्षोपायंविचिंतयेत् ४३
यथागिरिवराक्रांतःकश्चिद्दुःखेनतिष्ठति
तथाजरायुणादेहीदुःखंतिष्ठतिदुःखितः ४४
पतितःसागरेयद्वद्दुःखमास्तेसमाकुलः
गर्भोदकेनसिक्तांगस्तथास्तेव्याकुलात्मकः ४५
लोहकुंभेयथान्यस्तःपच्यतेकश्चिदग्निना
गर्भकुंभेतथाक्षिप्तःपच्यतेजठराग्निना ४६
सूचीभिरग्निवर्णाभिर्भिन्नगात्रोनिरंतरम्
यद्दुःखंजायतेतस्यतद्गर्भेष्टगुणंभवेत् ४७
गर्भवासात्परंवासंकष्टंनैवास्तिकुत्रचित्
देहिनांदुःखमतुलंसुघोरमपिसंकटम् ४८
इत्येतद्गर्भदुःखंहिप्राणिनांपरिकीर्तितम्
चरस्थिराणांसर्वेषामात्मगर्भानुरूपतः ४९
गर्भात्कोटिगुणापीडायोनियंत्रनिपीडनात्
संमूर्च्छितस्यजायेतजायमानस्यदेहिनः ५०
इक्षुवत्पीडयमानस्यपापमुद्गरपेषणात्
गर्भान्निष्क्रममाणस्यप्रबलैःसूतिवायुभिः ५१
जायतेसुमहद्दुःखंपरित्राणंनविंदति
यंत्रेणपीडयमानाःस्युर्निःसाराश्चयथेक्षवः ५२
तथाशरीरंयोनिस्थंपात्यतेयंत्रपीडनात्
अस्थिमद्वर्तुलाकारंस्नायुबंधनवेष्टितम् ५३
रक्तमांसवसालिप्तंविरामूत्रद्रव्यभाजनम्
केशलोमनखच्छन्नंरोगायतनमुत्तमम् ५४

वदनैकमहाद्वारंगवाद्माष्टकभूषितम्
ओष्ठद्वयकपाटंतुदंतजिह्वागलान्वितम् ५५
नाडीस्वेदप्रवाहंचकफपित्तपरिप्लुतम्
जराशोकसमाविष्टंकालवक्त्रानलेस्थितम् ५६
कामक्रोधसमाक्रांतंश्वसनैश्चोपमर्दितम्
भोगतृष्णातुरंगूढंरागद्वेषवशानुगम् ५७
सवर्णितांगप्रत्यंगंजरायुपरिवेष्टितम्
संकटेनाविविक्तेनयोनिमार्गेणनिर्गतम् ५८
विरामूत्ररक्तसिक्तांगंषट्कौशिकसमुद्भवम्
अस्थिपंजरसंघातंज्ञेयमस्मिन्कलेवरे ५९
शतत्रयंशताधिकंपंचपेशीशतानिच
सार्धाभिस्तिसृभिश्छन्नंसमंताद्रोमकोटिभिः ६०
शरीरंस्थूलसूक्ष्माभिर्दृश्यादृश्याभिरंततः
एताभिर्मांसनाडीभिःकोटिभिस्तत्समन्वितम् ६१
प्रस्वेदमशुचिंताभिरंतरस्थंचतेनहि
द्वात्रिंशद्दशनाःप्रोक्ताविंशतिश्चनखाःस्मृताः ६२
पित्तस्यकुडवंज्ञेयंकफस्यार्धाढकंतथा
वसायाश्चपलाःपंचतदर्धंफलकस्यच ६३
पंचार्बुदपलाज्ञेयाःपलानिदशमेदसः
पलत्रयंमहारक्तंमज्जारक्ताच्चतुर्गुणा ६४
शुक्रार्धकुडवंज्ञेयंतदर्धंदेहिनांबलम्
मांसस्यचैकंपिंडेनपलसाहस्त्रमुच्यते ६५
रक्तंपलशतंज्ञेयंविरामूत्रंचाप्रमाणतः
इतिदेहगृहेराजन्वासःस्यान्नित्यमात्मनः ६६
अशुद्धंचविशुद्धस्यकर्मबंधविनिर्मितम्
शुक्रशोणितसंयोगाद्देहःसंजायतेक्वचित् ६७
नित्यंविरामूत्रसंयुक्तस्तेनायमशुचिःस्मृतः
यथावैविष्ठयापूर्णःशुचिःसांतर्बहिर्घटः ६८
शौचेनशोध्यमानोपिदेहोयमशुचिर्भवेत्
यंप्राप्यातिपवित्राणिपंचगव्यहवींषिच ६९

अशुचित्वंप्रयांत्याशुदेहोयमशुचिस्ततः
हृद्यान्यप्यन्नपानानियंप्राप्यसुरभीणिच ७०
अशुचित्वंप्रयांत्याशुकोऽन्यस्यादशुचिस्ततः
हेजनाःकिंनपश्यध्वंयन्निर्यातिदिनेदिने ७१
देहानुगोमलःपूतिस्तदाधारःकथंशुचिः
देहःसंशोध्यमानोपिपंचगव्यकुशांबुभिः ७२
घृष्यमाणइवांगारोनिर्मलत्वंनगच्छति
स्रोतांसियस्यसततंप्रवहंतिगिरेरिव ७३
कफमूत्राद्यमशुचिःसदेहःशुध्यतेकथम्
सर्वाशुचिनिधानस्यशरीरस्यनविद्यते ७४
शुचिरेकप्रदेशोपिशुचिर्नस्यादृतेऽपिवा
दिवावायदिवारात्रौमृत्तौयैःशोध्यतेकरः ७५
तथापिशुचिभाङ्नस्यान्नविरज्यंतितेनराः
कायोयमग्र्यधूपाद्यैर्यत्नेनापिसुसंस्कृतः ७६
नजहातिस्वभावंहिश्वपुच्छमिवनामितम्
तथाजात्यैवकृष्णोर्णानशुक्लाजातुजायते ७७
संशोध्यमानापितथाभवेन्मूर्तिर्ननिर्मला
जिघ्रन्नपिस्वदुर्गंधंपश्यन्नपिमलंस्वकम् ७८
नविरज्यतिलोकोऽयपीडयन्नपिनासिकाम्
अहोमोहस्यमाहात्म्यंयेनव्यामोहितंजगत् ७९
जिघ्रन्पश्यन्स्वकान्दोषान्कायस्यनविरज्यते
स्वदेहस्यविगंधेनविरज्येतनयोनरः ८०
विरागकारणंतस्यकिमन्यदुपदिश्यते
सर्वमेवजगत्पूतंदेहमेवाशुचिःपरम् ८१
यन्मलावयवस्पर्शाच्छुचिरप्यशुचिर्भवेत्
गंधलेपापनोदायशौचंदेहस्यकीर्तितम् ८२
द्वयस्यापगमात्पश्चाद्भावशुद्ध्याविशुद्ध्यति
गंगातोयेनसर्वेणमृद्भारैर्गात्रलेपनैः ८३
मर्त्योदुर्गंधदेहोसौभावदुष्टोनशुध्यति
तीर्थस्नानैस्तपोभिश्चदुष्टात्मानचशुध्यति ८४

स्वमूर्तिः क्षालितातीर्थेनशुद्धिमधिगच्छति
अंतर्भावप्रदुष्टस्यविशतोपिहुताशनम् ८५
नस्वर्गोनापवर्गश्चदेहनिर्दहनंपरम्
भावशुद्धिःपरंशौचंप्रमाणंसर्वकर्मसु ८६
अन्यथालिंग्यतेकांताभावेनदुहितान्यथा
मनसाभिद्यतेवृत्तिरभिन्नेष्वपिवस्तुषु ८७
अन्यथैवसतीपुत्रंचिंतयेदन्यथापतिम्
यथायथास्वभावस्यमहाभागउदाहृतम् ८८
परिष्वक्तोपियद्भार्यांभावहीनांनकारयेत्
नाद्याद्विविधमन्नाद्यंरस्यानिसुरभीणिच ८९
अभावेननरस्तस्माद्भावःसर्वत्रकारणम्
चित्तंशोधययत्नेनकिमन्यैर्बाह्यशोधनैः ९०
भावतःशुचिशुद्धात्मास्वर्गंमोक्षंचविंदति
ज्ञानामलांभसापुंसःसवैराग्यमृदापुनः ९१
अविद्यारागविण्मूत्रलेपोनश्येद्विशोधनैः
एवमेतच्छरीरंहिनिसर्गादशुचिंविदुः ९२
विद्यादसारनिःसारंकदलीसारसन्निभम्
ज्ञात्वैवंदोषवद्देहंयःप्राज्ञःशिथिलीभवेत् ९३
सोतिक्रामतिसंसारंदृढग्राहोवतिष्ठति
एवमेतन्महाकष्टंजन्मदुःखंप्रकीर्तितम् ९४
पुंसामज्ञानदोषेणनानाकर्मवशेनच
गर्भस्थस्यमतिर्यासीत्साजातस्यप्रणश्यति ९५
सुमूर्च्छितस्यदुःखेनयोनियंत्रनिपीडनात्
बाह्येनवायुनाचास्यमोहसंगेनदेहिनाम् ९६
स्पृष्टमात्रस्यघोरेणज्वरःसमुपजायते
तेनज्वरेणमहतामहामोहःप्रजायते ९७
संमूढस्यस्मृतिभ्रंशःशीघ्रंसंजायतेपुनः
स्मृतिभ्रंशात्ततस्तस्यपूर्वकर्मवशेनच ९८
रतिःसंजायतेतस्यजंतोस्तत्रैवजन्मनि
रक्तोमूढश्चलोकोयमकार्येसंप्रवर्त्तते ९९

नचात्मानंविजानातिनपरंनचदैवतम्
नशृणोतिपरंश्रेयःसचन्नुरपिनेन्नते १००
समेपथिशनैर्गच्छन्स्खलतीवपदेपदे
सत्यांबुद्धौनजानातिबोध्यमानोबुधैरपि १०१
संसारेक्लिश्यतेतेननरोलोभवशानुगः
गर्भस्मृतेरभावेचशास्त्रमुक्तंशिवेनच १०२
तद्दुःखकथनार्थायस्वर्गमोन्नप्रसाधकम्
येनतस्मिञ्छिवेज्ञातेधर्मकामार्थसाधने १०३
नकुर्वंत्यात्मनःश्रेयस्तदत्रमहदद्भुतम्
ग्रव्यक्तेंद्रियबुद्धित्वाद्बाल्येदुःखंमहत्पुनः १०४
इच्छन्नपिनशक्नोतिवक्तुंकर्तुंनसत्कृती
दंतजन्ममहद्दुःखंलौल्येनवायुनातथा १०५
बालरोगैश्चविविधैःपीडाबालग्रहैरपि
तृड्बुभुन्नापरीतांगःक्वचित्तिष्ठतिगच्छति १०६
विरामूत्रभन्नणाद्यंचमोहाद्बालःसमाचरेत्
कौमारःकर्णवेधेनमातापित्रोश्चताडनैः १०७
ग्रन्नराध्ययनाद्यैश्चदुःखंगुर्वादिशासनात्
प्रमत्तेंद्रियवृत्तेश्चकामरागप्रपीडिनः १०८
रोगार्दितस्यसततंकुतःसौख्यंहियौवने
ईर्षयासुमहद्दुःखंमोहाद्दुःखंप्रजायते १०९
तत्रस्यात्कुपितस्यैवराग्दुःखायकेवलम्
रात्रौनविंदतेनिद्रांकामाग्निपरिखेदितः ११०
दिवावापिकुतःसौख्यमर्थोपार्जनचिंतया
स्त्रीष्वायासितदेहस्ययेपुंसःशुक्रबिंदवः १११
नतेसुखायमंतव्याःस्वेदजाइवबिंदवः
कृमिभिस्ताड्यमानस्यकुष्ठिनःपामरस्यच ११२
कंडूयनाग्नितापेनयत्सुखंस्त्रीषुतद्विदुः
यादृशंमन्यतेसौख्यमर्थोपार्जनचिंतया ११३
तादृशंस्त्रीषुमंतव्यमधिकंनैवविद्यते
मर्त्यस्यवेदनासैवयांविनाचित्तनिर्वृतिः ११४

ततोन्योन्यंपुराप्राप्तमंतेसैवान्यथाभवेत्
तदेवंजरयाग्रस्तमामयाव्यपिनप्रियम् ११५
अ्रपूर्ववत्समात्मानंजरयापरिपीडितम्
यःपश्यन्नविरज्येतकोन्यस्तस्मादचेतनः ११६
जराभिभूतोपिजंतुःपत्नीपुत्रादिबांधवैः
अ्रशक्तत्वाद्दुराचारैर्भृत्यैश्चपरिभूयते ११७
नधर्ममर्थंकामंचमोक्षंचजरयायुतः
शक्तःसाधयितुंतस्माद्युवाधर्मंसमाचरेत् ११८
वातपित्तकफादीनांवैषम्यंव्याधिरुच्यते
वातादीनांसमूहेनदेहोयंपरिकीर्तितः ११९
तस्माद्व्याधिमयंज्ञेयंशरीरमिदमात्मनः
वाताद्यव्यतिरिक्तत्वाद्व्याधीनांपंजरस्यच १२०
रोगैर्नानाविधैर्यातिदेहीदुःखान्यनेकधा
तानिचस्वात्मवेद्यानिकिमन्यत्कथयाम्यहम् १२१
एकोत्तरंमृत्युशतमस्मिन्देहेप्रतिष्ठितम्
तत्रैकःकालसंयुक्तःशेषाश्चागंतवःस्मृताः १२२
येत्विहागंतवःप्रोक्तास्तेप्रशाम्यंतिभेषजैः
जपहोमप्रदानैश्चकालमृत्युर्नशाम्यति १२३
यदिवापमृत्युर्नस्याद्विषास्वादादशंकितः
नचात्तिपुरुषस्तस्मादपमृत्योर्बिभेतिसः १२४
विविधाव्याधयस्तत्रसर्पाद्याःप्राणिनस्तथा
विषाणिचाभिचाराश्चमृत्योर्द्वाराणिदेहिनाम् १२५
पीडितंसर्वरोगाद्यैरपिधन्वंतरिःस्वयम्
स्वस्थीकर्तुंनशक्नोतिकालप्राप्तंनचान्यथा १२६
नौषधंनतपोदानंनमातानचबांधवाः
शक्नुवंतिपरित्रातुंनरंकालेनपीडितम् १२७
रसायनतपोजाप्ययोगसिद्धैर्महात्मभिः
अ्रवांतरितशांतिःस्यात्कालमृत्युमवाप्नुयात् १२८
जायतेयोनिकीटेषुमृतःकर्मवशात्पुनः
देहभेदेनयःपश्येद्वियोगंकर्मसंक्षयात् १२९

मरणंतद्धिनिर्दिष्टंननाशःपरमार्थतः
महातमःप्रविष्टस्यछिद्यमानेषुमर्मसु १३०
यद्दुःखंमरणेजंतोर्नतस्येहोपमाक्वचित्
हातातमातःकांतेतिक्रंदत्येवंसुदुःखितः १३१
मंडूकइवसर्पेणग्रस्यतेमृत्युनाजगत्
बांधवैःसपरित्यक्तःप्रियैश्चपरिवारितः १३२
निःश्वसन्दीर्घमुष्णंचमुखेनपरिशुष्यता
खट्वायांपरिवृत्तोहिमुह्यतेचमुहुर्मुहुः १३३
संमूढःक्षिपतेत्यर्थंहस्तपादावितस्ततः
खट्वातोवांछतेभूमिंभूमेःखट्वांपुनर्महीम् १३४
विवशस्त्यक्तलज्जश्चमूत्रविष्ठानुलेपितः
याचमानश्चसलिलंशुष्ककंठोष्ठतालुकः १३५
चिंतयानःस्ववित्तानिकस्यैतानिमृतेमयि
यमदूतैर्नीयमानःकालपाशेनकर्षितः १३६
म्रियतेपश्यतामेवंगलोघुरुघुरायते
जीवस्तृणजलौकेवदेहाद्देहंविशेत्क्रमात् १३७
प्राप्नोत्युत्तरमंगंचदेहंत्यजतिपूर्वकम्
मरणात्प्रार्थनाद्दुःखमधिकंहिविवेकिनाम् १३८
क्षणिकंमरणेदुःखमनंतंप्रार्थनाकृतम्
जगतांपतिरर्थित्वाद्विष्णुर्वामनतांगतः १३९
अधिकःकोपरस्तस्माद्योनयास्यतिलाघवम्
ज्ञातंमयेदमधुनामृत्योर्भवतियद्गुरुः १४०
नपरंप्रार्थयेद्भूयस्तृष्णालाघवकारणम्
आदौदुःखंतथामध्येदुःखमंतेचदारुणम् १४१
निसर्गात्सर्वभूतानामितिदुःखपरंपरा
वर्तमानान्यतीतानिदुःखान्येतानियानितु १४२
ननरःशोचयेज्जन्मनविरज्यतितेनवै
अत्याहारान्महद्दुःखमल्पाहारात्तदंतरम् १४३
त्रुटतेभोजनेकंठोभोजनेचकुतःसुखम्
क्षुधाहिसर्वरोगाणांव्याधिःश्रेष्ठतमःस्मृतः १४४

सच्छांतौषधलेपेनक्षणमात्रंप्रशाम्यति
क्षुद्व्याधिवेदनातीव्रानिःशेषबलकृंतनी १४५
तयाभिभूतोम्रियतेयथान्यैर्व्याधिभिर्नरः
तद्रसेपिहिकिंसौख्यंजिह्वाग्रपरिवर्तिनि १४६
तत्क्षणादर्धकालेनकंठंप्राप्यनिवर्तते
इतिक्षुद्व्याधितप्तानामन्नमोषधवत्स्मृतम् १४७
नतत्सुखायमंतव्यंपरमार्थेनपंडितैः
मृतोपमश्चयःशेतेसर्वकार्यविवर्जितः १४८
तत्रापिचकुतःसौख्यंतमसाचोदितात्मनः
प्रबोधेपिकुतःसौख्यंकार्येषूपहतात्मनः १४९
कृषिवाणिज्यसेवाद्यगोरक्षादिपरश्रमैः
प्रातर्मूत्रपुरीषाभ्यांमध्याह्नेक्षुत्पिपासया १५०
तृप्ताःकाम्येनबाध्यंतेनिद्रयानिशिजंतवः
अर्थस्योपार्जनेदुःखंदुःखमर्जितरक्षणे १५१
नाशेदुःखंव्ययेदुःखमर्थस्यैवकुतःसुखम्
चौरेभ्यःसलिलेभ्येग्नेःस्वजनात्पार्थिवादपि १५२
भयमर्थवतांनित्यंमृत्योर्देहभृतामिव
खेयथापक्षिभिर्मांसंभक्ष्यतेश्वापदैर्भुवि १५३
जलेचभक्ष्यतेमत्स्यैस्तथासर्वत्रवित्तवान्
विमोहयंतिसंपत्सुवारयंतिविपत्सुच १५४
खेदयंत्यर्जनेकालेकदार्थाःस्युःसुखावहाः
प्रागर्थपतिरुद्विग्नःपश्चात्सर्वार्थनिःस्पृहः १५५
तयोरर्थपतिर्दुःखीसुखीमन्येर्विरक्तधीः
वसंतग्रीष्मतापेनदारुणंवर्षपर्वसु १५६
वातातपेनवृष्ट्याचकालेप्येवंकुतःसुखम्
विवाहविस्तरेदुःखंतद्गर्भोद्वहनेपुनः १५७
सूतिवैषम्यदुःखैश्चदुखंविष्ठादिकर्मभिः
दन्ताक्षिरोगेपुत्रस्यहाकष्टंकिंकरोम्यहम् १५८
गावोनष्टाःकृषिर्भग्नाभार्याचप्रपलायिता
अमीप्राघूर्णिकाःप्राप्ताभयंमेशंसिनोगृहान् १५९

बालापत्याचमेभार्याकःकरिष्यतिरंधनम्
विवाहकालेकन्यायाःकीदृशश्चवरोभवेत् १६०
एतच्चिंताभिभूतानांकुतःसौख्यंकुटुंबिनाम् १६१
कुटुंबचिंताकुलितस्यपुंसःश्रुतंचशीलंचगुणाश्चसर्वे
अपक्वकुंभेनिहिताइवापःप्रयांतिदेहेनसमंविनाशनम् १६२
राज्येपिहिकुतःसौख्यंसंधिविग्रहचिंतया
पुत्रादपिभयंयत्रतत्रसौख्यंहिकीदृशम् १६३
स्वजातीयाद्भयंप्रायःसर्वेषामेवदेहिनाम्
एकद्रव्याभिलाषित्वाच्छुनामिवपरस्परम् १६४
नप्रविश्यवनंकश्चिन्नृपःख्यातोस्तिभूतले
निखिलंयस्तिरस्कृत्यसुखंतिष्ठतिनिर्भयः १६५
युद्धेबाहुसहस्रंहिपातयामासभूतले
श्रीमतःकार्तवीर्यस्यऋषिपुत्रःप्रतापवान् १६६
ऋषिपुत्रस्यरामस्यरामोदशरथात्मजः
जघानवीर्यमतुलमूर्ध्वगंसुमहात्मनः १६७
जरासंधेनरामस्यतेजसानाशितंयशः
जरासंधस्यभीमेनतस्यापिपवनात्मजः १६८
हनुमानपिसूर्येणविक्षिप्तःपतितःक्षितौ
निवातकवचान्सर्वदानवान्बलदर्पितान् १६९
हतवानर्जुनःश्रीमान्गोपालैःसविनिर्जितः
सूर्यःप्रतापयुक्तोऽपिमेघैःसंछाद्यतेक्वचित् १७०
क्षिप्यतेवायुनामेघोवायोर्वीर्यंनगैर्जितम्
दह्यंतेवह्निनाशैलाःसवह्निःशाम्यतेजलैः १७१
तज्जलंशोष्यतेसूर्यैस्तेसूर्याःसहवारिणा
त्रैलोक्येनसमस्ताश्चनश्यंतिब्रह्मणोदिने १७२
ब्रह्मापित्रिदशैःसार्धमुपसंह्रियतेपुनः
परार्धद्वयकालांतेशिवेनपरमात्मना १७३
एवंनैवास्तिसंसारेयच्चसर्वोत्तमंबलम्
विहायैकंजगन्नाथंपरमात्मानमव्ययम् १७४
ज्ञात्वासातिशयंसर्वमतिमानंविवर्जयेत्

एवंभूतेजगत्यस्मिन्कःसुरःपंडितोपिवा १७५
नह्यस्तिसर्ववित्कश्चिन्नवामूर्खोपिसर्वतः
यावद्यस्तुविजानातितावत्तत्रसपंडितः १७६
समाधानेतुसर्वत्रप्रभावःसदृशःस्मृतः
वित्तस्यातिशयत्वेनप्रभावःकस्यचित्क्वचित् १७७
दानवैर्निर्जितादेवास्तेदैवैर्निजिताःपुनः
इत्यन्योन्यंश्रितोलोकोभाग्यैर्जयपराजयैः १७८
एवंवस्त्रयुगंराज्ञांप्रस्थमात्रांबुभोजनम्
यानंशय्यासनंचैवशेषंदुःखायकेवलम् १७९
सप्तमेचापिभवनेखट्वामात्रपरिग्रहः
उदकुंभसहस्रेभ्यःक्लेशायासप्रविस्तरः १८०
प्रत्यूषेतूर्यनिर्घोषःसमंपुरनिवासिभिः
राज्येभिमानमात्रंहिममेदंवाद्यतेगृहे १८१
सर्वमाभरणंभारःसर्वमालेपनंमलम्
सर्वंप्रलपितंगीतंनृत्यमुन्मत्तचेष्टितम् १८२
इत्येवंराज्यसंभोगैःकुतःसौख्यंविचारतः
नृपाणांविग्रहेचिंतावान्योन्यविजिगीषया १८३
प्रायेणश्रीमदालेपान्नहुषाद्यामहानृपाः
स्वर्गंप्राप्तानिपतिताःकःश्रियाविंदतेसुखम् १८४
स्वर्गेपिचकुतःसौख्यंदृष्ट्वादीप्तांपरश्रियम्
उपर्युपरिदेवानामन्योन्यातिशयस्थिताम् १८५
नरैःपुण्यफलंस्वर्गेमूलच्छेदेनभुज्यते
नचान्यत्क्रियतेकर्मसोऽत्रदोषःसुदारुणः १८६
छिन्नमूलतरुर्यद्वद्दिवसैःपततिक्षितौ
पुण्यस्यसंक्षयात्तद्वन्निपतंतिदिवौकसः १८७
सुखाभिलाषनिष्ठानांसुखभोगादिसंप्लवैः
अकस्मात्पतितंदुःखंकष्टंस्वर्गेदिवौकसाम् १८८
इतिस्वर्गेऽपिदेवानांनास्तिसौख्यंविचारतः
क्षयश्चविषयासिद्धौस्वर्गेभोगायकर्मणाम् १८९
तत्रदुःखंमहत्कष्टंनरकाग्निषुदेहिनाम्

घोरैश्चविविधैर्भावैर्वाङ्मनःकायसंभवैः १९०
कुठारच्छेदनंतीव्रंवल्कलानांचतक्षणम्
पर्णशाखाफलानांचपातश्चंडेनवायुना १९१
उन्मूलनान्नदीभिश्चगजैरन्यैश्चदेहिभिः
दावाग्निहिमशोषैश्चदुःखंस्थावरजातिषु १९२
तद्वद्भुजंगसर्पाणांक्रोधेदुःखंचदारुणम्
दुष्टानांघातनंलोकेपाशेनचनिबंधनम् १९३
अकस्माज्जन्ममरणंकीटानांचमुहुर्मुहुः
सरीसृपनिकायानामेवंदुःखान्यनेकधा १९४
पशूनामात्मशमनंदंडताडनमेवच
नासावेधेनसंत्रासःप्रतोदेनसुताडनम् १९५
वेत्रकाष्ठादिनिगडैरंकुशेनांगबंधनम्
भावेनमनसाक्लेशैर्भिक्षायुवादिपीडनम् १९६
आत्मयूथवियोगैश्चबलान्नयनबंधने
पशूनांसंतिकायानामेवंदुःखान्यनेकशः १९७
वर्षाशीतातपाद्दुःखंसुकष्टंग्रहपक्षिणाम्
क्लेशमानातिकायानामेवंदुःखान्यनेकधा १९८
गर्भवासेमहद्दुःखंजन्मदुःखंतथानृणाम्
सुबाल्यदुःखंचाज्ञानंकौमारेगुरुशासनम् १९९
यौवनेकामरागाभ्यांदुःखंचैवेर्ष्ययापुनः
कृषिवाणिज्यसेवाद्यैर्गोरक्षादिककर्मभिः २००
वृद्धभावेचजरयाव्याधिभिश्चप्रपीडनात्
मरणेचमहद्दुःखंप्रार्थनायांततोधिकम् २०१
राजाग्निजलदाघातचौरशत्रुभयंमहत्
अर्थस्यार्जनरक्षायांभयंनाशेव्ययेपुनः २०२
कार्पण्यंमत्सरोदम्भोधनाधिक्येभयंमहत्
अकार्येसंप्रवृत्तिश्चदुःखानिधनिनांसदा २०३
भृत्यवृत्तिःकुसीदंचदासत्वंपरतंत्रता
इष्टानिष्टाभियोगश्चसंयोगाश्चसहस्रशः २०४
दुर्भिक्षंदुर्भगत्वंचमूर्खत्वंचदरिद्रता

अधरोत्तरभागश्चनारकंराजविक्रमम् २०५
अन्योन्याभिभवंदुःखमन्यांन्यतोभयंमहत्
अन्योन्याच्चप्रकोपश्चराज्ञोदुःखंमहीभृताम् २०६
अनित्यतात्रभावानांकृतकाम्यस्यदेहिनः
अन्योन्यमर्मभेदाच्चअन्योन्यकरपीडनात् २०७
लुब्धाश्चपापभेदेनअन्योन्यस्यचभक्षणम्
इत्येवमादिभिर्दुःखैर्यस्माद्भीतंचराचरम् २०८
निरयादिमनुष्यांतंतस्मात्सर्वंत्यजेद्बुधः
स्कंधात्स्कंधेनयन्भारंविश्रामंमन्यतेयथा २०९
तद्वत्सर्वमिदंलोकेदुःखंदुःखेनशाम्यति
अन्योन्यातिशयोपेताःसर्वदाभोगसंप्लवाः २१०
धर्मक्षयाच्चदेवानांदिविदुःखमवस्थितम्
नानायोनिसहस्रेषुसंभवःपुण्यसंक्षयात् २११
रोगाश्चविविधाकारादेवलोकेऽपिसंस्मृताः
यज्ञस्यहिशिरश्छिन्नमश्विभ्यांसंधितंपुनः २१२
तेनदोषेणयज्ञस्यशिरोरोगःसदैवहि
मार्तंडभानोःकुष्ठंचवरुणस्यजलोदरम् २१३
पूष्णोदशनवैकल्यंभुजस्तंभःशचीपतेः
सुमहान्क्षयरोगश्चसोमस्यपरिकीर्तितः २१४
ज्वरश्चसुमहानासीद्दक्षस्यापिप्रजापतेः
कल्पेकल्पेचदेवानांमहतामपिसंक्षयः २१५
परार्धद्वयकालांतेब्रह्मणश्चाप्यनित्यता
दक्षस्यदुहितांपौत्रींब्रह्माकामितवान्पुनः २१६
क्रोधेनचजयांदेवींयोगज्ञांशप्तवान्प्रभुः
कामक्रोधौस्थितौयत्रतत्रदोषास्तदात्मकाः २१७
दुःखानिचसमस्तानिसंस्थितानिनसंशयः
विशीर्णजन्ममरणांसर्वाशित्वंहविर्भुजः २१८
स्त्रीवधःकामसक्तिश्चसारथ्यंपांडवेबले
रुद्रेणत्रिपुरंदग्धंदक्षयज्ञोविनाशितः २१९
स्कंदस्यजन्मवैशुक्रात्क्रीडादीनांसहस्रशः

एवंत्रयोपिरागाद्यैर्दोषैर्देवाःसमन्विताः २२०
एभ्यःपरःप्रभुःशांतःपरिपूर्णःसमुक्तिदः
एवमेतज्जगत्सर्वमन्योन्यातिशयेस्थितम् २२१
दुःखैराकुलितंज्ञात्वानिर्वेदंपरमंव्रजेत्
निर्वेदाच्चविरागःस्याद्विरागाज्ज्ञानसंभवः २२२
ज्ञानेनतत्परंज्ञानंशिवंमुक्तिमवाप्नुयात्
समस्तदुःखनिर्मुक्तस्वस्थात्मासुखीतदा २२३
सर्वज्ञःपरिपूर्णश्चमुक्तइत्यभिधीयते
मातलिरुवाच-
एतत्तेसर्वमाख्यातंयत्त्वयापरिपृच्छितम् २२४
धर्माधर्मविवेकोहिसर्वज्ञानसमुद्भवः
इंद्रलोकेप्रगंतव्यंदेवराजस्यशासनात् २२५

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेपितृमातृतीर्थ -
माहात्म्येषट्षष्टितमोऽध्यायः ६६

सप्तषष्टितमोऽध्यायः

ययातिरुवाच-
अस्मद्भाग्यप्रसंगेनभवतोदर्शनंमम
संजातंशक्रसंवाहएतच्छ्रेयोममातुलम् १
मानवामर्त्यलोकेचपापंकुर्वंतिदारुणम्
तेषांकर्मविपाकंचमातलेवदसांप्रतम् २
मातलिरुवाच-
श्रूयतामभिधास्यामिपापाचारस्यलक्षणम्
श्रुतेसतिमहज्ज्ञानमत्रलोकेप्रजायते ३
वेदनिंदांप्रकुर्वंतिब्रह्माचारस्यकुत्सनम्
महापातकमेवापिज्ञातव्यंज्ञानपंडितैः ४
साधूनामपिसर्वेषांयःपीडांहिसमाचरेत्
महापातकमेवापिप्रायश्चित्तेनहिव्रजेत् ५
कुलाचारंपरित्यज्यअन्याचारंव्रजंतिच
एतच्चपातकंघोरंकथितंकृत्यवेदिभिः ६

मातापित्रोश्चयोनिंदांताडनंभगिनीषुच
पितृस्वसृनिंदनंचतदेवपातकंध्रुवम् ७
संप्राप्तेश्राद्धकालेपिपंचक्रोशांतरेस्थितम्
जामातरंपरित्यज्यतथाचदुहितुःसुतम् ८
स्वसारंचैवस्वस्त्रीयंपरित्यज्यप्रवर्तते
कामात्क्रोधाद्भयाद्वापिअन्यंभोजयतेयदा ९
पितरोनैवभुंजंतिदेवाश्चैवनभुंजते
एतच्चपातकंतस्यपितृघातसमंकृतम् १०
दानकालेपिसंप्राप्तेआगतेब्राह्मणेकिल
भूरिदानंपरित्यज्यकतिभ्योहिप्रदीयते ११
एकस्मैदीयतेदानमन्येभ्योपिनदीयते
एतच्चपातकंघोरंदानभ्रंशकरंस्मृतम् १२
यजमानगृहेसेवासंस्थितान्ब्राह्मणान्निजान्
परित्यज्यहियद्दानंनदानस्यचलक्षणम् १३
समाश्रितंहियंविप्रंधर्माचारसमन्वितम्
सर्वोपायैःसुपुष्येत्तंसुदानैर्बहुभिर्नृप १४
नगणयेन्मूर्खंविद्वांसंपोष्योविप्रःसदाभवेत्
सर्वैःपुण्यैःसमायुक्तंसुदानैर्बहुभिर्नृप १५
तंसमभ्यर्च्यविद्वांसंप्राप्तंविप्रंसदार्हयेत्
तंहित्यक्त्वाददेद्दानमन्यस्मैब्राह्मणायवै १६
दत्तंहुतंभवेत्तस्यनिष्फलंनात्रसंशयः
ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चापिचतुर्थकः १७
पुण्यकालेषुसर्वेषुसंश्रितंपूजयेद्द्विजम्
मूर्खंवापिहिविद्वांसंतस्यपुण्यफलंशृणु १८
अश्वमेधस्ययज्ञस्यफलंतस्यप्रजायते
कस्माद्धिकारणाद्राजञ्छक्यंप्राप्यनकारयेत् १९
अन्योविप्रःसमायातस्तत्कालंश्राद्धकर्मणि
उभौतौपूजयेत्तत्रभोजनाच्छादनैस्ततः २०
तांबूलदक्षिणाभिश्चपितरस्तस्यहर्षिताः
श्राद्धभुक्तायदातव्यंसदादानंचदक्षिणा २१

नददेच्छ्राद्धकर्तायोगोहत्यादिसमंभवेत्
द्वावेतौपूजयेत्तस्माच्छ्रद्धयानृपसत्तम २२
निर्द्धनत्वप्रभावाद्वैतमेकंहिप्रपूजयेत्
व्यतीपातेपिसंप्राप्तेवैधृतौचनृपोत्तम २३
ग्रमावास्यांतथाराजन्त्तयाहेपरपत्तके
श्राद्धमेवंप्रकर्तव्यंब्राह्मणादित्रिवर्णकैः २४
यज्ञेतथामहाराजऋृत्विजश्चप्रकारयेत्
तथाविप्राःप्रकर्तव्याःश्राद्धदानायसर्वदा २५
ग्रविज्ञातःप्रकर्तव्योब्राह्मणोनैवजानता
यस्यापिज्ञायतेवंशःकुलंत्रिपुरुषंतथा २६
ग्राचारश्चतथाराजंस्तंविप्रंसन्निमंत्रयेत्
कुलंनज्ञायतेयस्यग्राचारेणविचारयेत् २७
श्राद्धदानेप्रकर्तव्येविशुद्धोमूर्खएवहि
ग्रविज्ञातोभवेद्विप्रोवेदवेदांगपारगः २८
श्राद्धदानंप्रकर्तव्यंतस्माद्विप्रंनिमंत्रयेत्
ग्रातिथ्यंतुप्रकर्तव्यमपूर्वंनृपसत्तम २९
ग्रन्यथाकुरुतेपापीसयातिनरकंध्रुवम्
तस्माद्विप्रःप्रकर्तव्योदानेश्राद्धेचपर्वसु ३०
ग्रादौपरीत्तयेद्विप्रंश्राद्धेदानेप्रकारयेत्
नाश्नंतितस्यवैगेहेपितरोविप्रवर्जिताः ३१
शापंदत्त्वाततोयांतिश्राद्धाद्विप्रविवर्जितात्
महापापीभवेत्सोपिब्रह्मणःसदृशोयदि ३२
पैत्राचारंपरित्यज्ययोवर्तेतनरोत्तम
महापापीसविज्ञेयःसर्वधर्मबहिष्कृतः ३३
येत्यजंतिशिवाचारंवैष्णवंभोगदायकम्
निंदंतिब्राह्मणंधर्मंविज्ञेयाःपापवर्द्धनाः ३४
येत्यजंतिशिवाचारंशिवभक्तान्द्विषंतिच
हरिंनिंदंतियेपापाब्रह्मद्वेषकराःसदा ३५
ग्राचारनिंदकायेतेमहापातककृत्तमाः
ग्राद्यंपूज्यंपरंज्ञानंपुरायंभागवतंतथा ३६

वैष्णवंहरिवंशंवामत्स्यंवाकूर्ममेवच
पाद्मंवायेपूजयंतितेषांश्रेयोवदाम्यहम् ३७
प्रत्यक्षंतेनवैदेवःपूजितोमधुसूदनः
तस्मात्प्रपूजयेज्ज्ञानंवैष्णवंविष्णुवल्लभम् ३८
देवस्थानेचनित्यंवैवैष्णवंपुस्तकंनृप
तस्मिन्प्रपूजितेविप्रपूजितःकमलापतिः ३९
असंपूज्यहरेर्ज्ञानंयेगायंतिलिखंतिच
अज्ञायतत्प्रयच्छंतिशृणवंत्युच्चारयंतिच ४०
विक्रीडंतिचलोभेनकुज्ञाननियमेनच
असंस्कृतप्रदेशेषुयथेष्टंस्थापयंतिच ४१
हरिज्ञानंयथाक्षेमंप्रत्यक्षाच्चप्रकाशयेत्
अधीतेचसमर्थश्चयःप्रमादंकरोतिच ४२
अशुचिश्चाशुचौस्थानेयःप्रवक्तिशृणोतिच
इतिसर्वंसमासेनज्ञाननिंदासमंस्मृतम् ४३
गुरुपूजामकृत्वैवयःशास्त्रंश्रोतुमिच्छति
नकरोतिचशुश्रूषामाज्ञाभंगंचभावतः ४४
नाभिनंदतितद्वाक्यमुत्तरंसंप्रयच्छति
गुरुकर्मणिसाध्येचतदुपेक्षांकरोतिच ४५
गुरुमार्तमशक्तंचविदेशंप्रस्थितंतथा
अरिभिःपरिभूतंवायःसंत्यजतिपापकृत् ४६
पठमानंपुराणंतुतस्यपापंवदाम्यहम्
कुंभीपाकेवसेत्तावद्यावदिंद्राश्चतुर्दश ४७
पठमानंगुरुंयोहिउपेक्षयतिपापधीः
तस्यापिपातकंघोरंचिरंनरकदायकम् ४८
भार्यापुत्रेषुमित्रेषुयश्चावज्ञांकरोतिच
इत्येतत्पातकंज्ञेयंगुरुनिन्दासमंमहत् ४९
ब्रह्महास्वर्णस्तेयीचसुरापीगुरुतल्पगः
महापातकिनश्चैतेतत्संयोगीचपंचमः ५०
क्रोधाद्द्वेषाद्भयाल्लोभाद्ब्राह्मणस्यविशेषतः
मर्मातिकृन्तकोयश्चब्रह्मघ्नःसप्रकीर्तितः ५१

ब्राह्मणंयःसमाहूययाचमानमकिंचनम्
पश्चान्नास्तीतियोब्रूयात्सचवैब्रह्महानृप ५२
यस्तुविद्याभिमानेननिस्तेजयतिवैद्विजम्
उदासीनंसभामध्येब्रह्महासप्रकीर्तितः ५३
मिथ्यागुणैरथात्मानंनयत्युत्कर्षतांपुनः
गुरुंविरोधयेद्यस्तुसचवैब्रह्महास्मृतः ५४
क्षुत्तृषातप्तदेहानामन्नभोजनमिच्छताम्
यःसमाचरतेविघ्नंतमाहुर्ब्रह्मघातकम् ५५
पिशुनःसर्वलोकानांरंध्रान्वेषणतत्परः
उद्वेजनकरःक्रूरःसचवैब्रह्महास्मृतः ५६
देवद्विजगवांभूमिंपूर्वदत्तांहरेत्तुयः
प्रनष्टामपिकालेनतमाहुर्ब्रह्मघातकम् ५७
द्विजवित्तापहरणंन्यासेनसमुपार्जितम्
ब्रह्महत्यासमंज्ञेयंतस्यपातकमुत्तमम् ५८
अग्निहोत्रंपरित्यज्यपंचयज्ञीयकर्मणि
मातापित्रोर्गुरूणांचकूटसाक्ष्यंचयश्चरेत् ५९
अप्रियंशिवभक्तानामभक्ष्याणांचभक्षणम्
वनेनिरपराधानांप्राणिनांचप्रमारणम् ६०
गवांगोष्ठेवनेचाग्नेःपुरेग्रामेचदीपनम्
इतिपापानिघोराणिसुरापानसमानितु ६१
दीनसर्वस्वहरणंपरस्त्रीगजवाजिनाम्
गोभूरजतवस्त्राणामोषधीनांरसस्यच ६२
चंदनागुरुकर्पूरकस्तूरीपट्टवाससाम्
परन्यासापहरणंरुक्मस्तेयसमंस्मृतम् ६३
कन्यायावरयोग्यायाअदानंसदृशेवरे
पुत्रमित्रकलेत्रेषुगमनंभगनीषुच ६४
कुमारीसाहसंघोरमंत्यजस्त्रीनिषेवणम्
सवर्णायाश्चगमनंगुरुतल्पसमंस्मृतम् ६५
महापातकतुल्यानिपापान्युक्तानियानितु
तानिपातकसंज्ञानितन्न्यूनमुपपातकम् ६६

द्विजायार्थंप्रतिज्ञायनप्रयच्छतियःपुनः
तत्रविस्मरतेविप्रस्तुल्यंतदुपपातकम् ६७
द्विजद्रव्यापहरणंमर्यादायाव्यतिक्रमम्
अतिमानातिकोपश्चदांभिकत्वंकृतघ्नता ६८
अन्यत्रविषयासक्तिःकार्पण्यंशाठ्यमत्सरम्
परदाराभिगमनंसाध्वीकन्याभिदूषणम् ६९
परिवित्तिःपरिवेत्तायययाचपरिविद्यते
तयोर्दानंचकन्यायास्तयोरेवचयाजनम् ७०
पुत्रमित्रकलत्राणामभावेस्वामिनस्तथा
भार्याणांचपरित्यागःसाधूनांचतपस्विनाम् ७१
गवांक्षत्रियवैश्यानांस्त्रीशूद्राणांचघातनम्
शिवायतनवृक्षाणांपुण्यारामविनाशनम् ७२
यःपीडामाश्रमस्थानामाचरेदल्पिकामपि
तद्भृत्यपरिवर्गस्यपशुधान्यवनस्यच ७३
कर्षधान्यपशुस्तेयमयाज्यानांचयाजनम्
यज्ञारामतडागानांदारापत्यस्यविक्रयः ७४
तीर्थयात्रोपवासानांव्रतानांचसुकर्मणाम्
स्त्रीधनान्युपजीवंतिस्त्रीभगात्यंतजीविता ७५
स्वधर्मंविक्रयेद्यस्तुअधर्मंवर्णतेनरः
परदोषप्रवादीचपरच्छिद्रावलोककः ७६
परद्रव्याभिलाषीचपरदारावलोककः
एतेगोघ्नसमानाश्चज्ञातव्यानृपनंदन ७७
यःकर्तासर्वशास्त्राणांगोहर्तागोश्चविक्रयी
निर्दयोऽतीवभृत्येषुपशूनांदमकश्चयः ७८
मिथ्याप्रवदतेवाचमाकर्णयतियःपरैः
स्वामिद्रोहीगुरुद्रोहीमायावीचपलःशठः ७९
योभार्यापुत्रमित्राणिबालवृद्धकृशातुरान्
भृत्यानतिथिबंधूंश्चत्यक्त्वाश्नातिबुभुक्षितान् ८०
येतुमृष्टंसमश्नंतिनोवांच्छंतंददंतिच
पृथक्पाकीसविज्ञेयोब्रह्मवादिषुगर्हितः ८१

नियमान्स्वयमादाययेत्यजंत्यजितेंद्रियाः
प्रव्रज्यागमितायैश्चसंयुक्तायेचमद्यपैः ८२
येचापिक्षयरोगार्तांगांपिपासाक्षुधातुराम्
नपालयंतियत्नेनतेगोघ्नानारकाःस्मृताः ८३
सर्वपापरतायेचचतुष्पात्क्षेत्रभेदकाः
साधून्विप्रान्गुरूंश्चैवयश्चगांहिप्रताडयेत् ८४
येताडयंत्यदोषांचनारींसाधुपदेस्थिताम्
आलस्यबद्धसर्वांगोयःस्वपितिमुहुर्मुहुः ८५
दुर्बलांश्चनपुष्णंतिनष्टान्नान्वेषयंतिच
पीडयंत्यतिभारेणसक्षतान्वाहयंतिच ८६
सर्वपापरतायेचसंयुक्तायेचभुंजते
भग्नांगींक्षतरोगार्तांगोरूपांचक्षुधातुराम् ८७
नपालयंतियत्नेनतेजनानारकाःस्मृताः
वृषाणांवृषणौयेचपापिष्ठाघातयंतिच ८८
बाधयंतिचगोवत्सान्महानारकिणोनराः
आशयासमनुप्राप्तंक्षुत्तृषाश्रमपीडितम् ८९
येचातिथिंनमन्यंतेतेवैनिरयगामिनः
अनाथंविकलंदीनंबालंवृद्धंभृशातुरम् ९०
नानुकंपंतियेमूढास्तेयांतिनरकार्णवम्
अजाविकोमाहिषिकोयःशूद्रावृषलीपतिः ९१
शूद्रोविप्रस्यक्षत्रस्ययआचारेणवर्तते
शिल्पिनःकारवोवैद्यास्तथादेवलकानराः ९२
भृतकामात्यकर्माणःसर्वेनिरयगामिनः
यश्चोदितमतिक्रम्यस्वेच्छयाआहरेत्करम् ९३
नरकेषुसपच्येतयश्चदंडंवृथानयेत्
उत्कोचकैरधिकृतैस्तस्करैश्चप्रपीड्यते ९४
यस्यराज्ञःप्रजाराज्येपच्यतेनरकेषुसः
येद्विजाःप्रतिगृह्णंतिनृपस्यपापवर्तिनः ९५
प्रयांतितेपिघोरेषुनरकेषुनसंशयः
पारदारिकचौराणांयत्पापंपार्थिवस्यच ९६

भवत्यरक्षतोघोरोराज्ञस्तस्यपरिग्रहः
अचौरंचौरवद्यश्चचौरंचाचौरवत्पुनः ९७
अविचार्यनृपःकुर्यात्सोऽपिवैनरकंव्रजेत्
घृततैलान्नपानादिमधुमांससुरासवम् ९८
गुडेक्षुक्षीरशाकादिदधिमूलफलानिच
तृणकाष्ठंपुष्पपत्रंकांस्यभाजनमेवच ९९
उपानच्छत्रकटकशिबिकामासनंमृदु
ताम्रंसीसंत्रपुकांस्यंशंखाद्यंचजलोद्भवम् १००
वादित्रंवेणुवंशाद्यंगृहोपस्करणानिच
ऊर्णाकार्पासकौशेयरंगपद्मोद्भवानिच १०१
तूलंसूक्ष्माणिवस्त्राणियेलोभेनहरंतिच
एवमादीनिचान्यानिद्रव्याणिविविधानिच १०२
नरकेषुध्रुवंगच्छेदपहृत्याल्पकान्यपि
यद्वातद्वापरद्रव्यमपिसर्षपमात्रकम् १०३
अपहृत्यनरोयातिनरकेनात्रसंशयः
बह्वल्पकाद्यपितथापरस्यममताकृतम् १०४
अपहृत्यनरोयातिनरकेनात्रसंशयः
एवमाद्यैर्नरःपापैरुत्क्रांतिसमनंतरम् १०५
शरीरघातनार्थायपूर्वाकारमवाप्नुयात्
यमलोकंव्रजंत्येतेशरीरस्थायमाज्ञया १०६
यमदूतैर्महाघोरैर्नीयमानाःसुदुःखिताः
देवतिर्यङ्मनुष्याणामधर्मनियतात्मनाम् १०७
धर्मराजःस्मृतःशास्तासुघोरैर्विविधैर्वधैः
विनयाचारयुक्तानांप्रमादान्मलिनात्मनाम् १०८
प्रायश्चित्तैर्गुरुःशास्तानचतैरीक्ष्यतेयमः
पारदारिकचौराणामन्यायव्यवहारिणाम् १०९
नृपतिःशासकःप्रोक्तःप्रच्छन्नानांचधर्मराट्
तस्मात्कृतस्यपापस्यप्रायश्चित्तंसमाचरेत् ११०
नाभुक्तस्यान्यथानाशःकल्पकोटिशतैरपि
यःकरोतिस्वयंकर्मकारयेद्वानुमोदयेत् १११

कायेनमनसावाचातस्यचाधोगतिःफलम्
इतिसंक्षेपतःप्रोक्ताःपापभेदास्त्रिधाधुना ११२
कथ्यंतेगतयश्चित्रानराणांपापकर्मणाम्
एतत्तेनृपतेधर्मफलंप्रोक्तंसुविस्तरात् ११३
अन्यत्किंतेप्रवक्ष्यामितन्मेब्रूहिनरोत्तम
अधर्मस्यफलंप्रोक्तंधर्मस्यापिवदाम्यहम् ११४
इत्युक्त्वामातलिस्तत्रराजानंसर्ववत्सलम्
तस्मिन्धर्मप्रसंगेनइत्याख्यातंमहात्मना ११५
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेपितृतीर्थवर्णनेययातिचरित्रे
सप्तषष्टितमोऽध्यायः ६७

अष्टषष्टितमोऽध्यायः

ययातिरुवाच-
अधर्मस्यफलंसूतश्रुतंसर्वंमयाविभो
धर्मस्यापिफलंब्रूहिश्रोतुंकौतूहलंमम १
मातलिरुवाच-
अथपापैरिमेयांतियमलोकंचतुर्विधाः
संत्रासजननंघोरंविवशाःसर्वदेहिनः २
गर्भस्थैर्जायमानैश्चबालैस्तरुणमध्यमैः
पुंस्त्रीनपुंसकैर्वृद्धैर्यातव्यंजंतुभिस्ततः ३
शुभाशुभफलंतत्रदेहिनांप्रविचार्यते
चित्रगुप्तादिभिःसर्वैर्मध्यस्थैःसर्वदर्शिभिः ४
नतेत्रप्राणिनःसंतियेनयांतियमक्षयम्
अवश्यंहिकृतंकर्मभोक्तव्यंतद्विचारितम् ५
येतत्रशुभकर्माणःसौम्यचित्तादयान्विताः
तेनरायांतिसौम्येनपथायमनिकेतनम् ६
यःप्रदद्याच्चविप्राणामुपानत्काष्ठपादुके
सविमानेनमहतासुखंयातियमालयम् ७
छत्रदानेनगच्छंतिपथासाभ्रेणदेहिनः
दिव्यवस्त्रपरीधानायांतिवस्त्रप्रदायिनः ८

शिबिकायाःप्रदानेनविमानेनसुखंव्रजेत्
सुखासनप्रदानेनसुखंयांतियमालयम् ९
आरामकर्ताछायासुशीतलासुसुखंव्रजेत्
यांतिपुष्पकयानेनपुष्पारामप्रदायिनः १०
देवायतनकर्ताचयतीनामाश्रमस्यच
अनाथमंडपानांचक्रीडन्यातिगृहोत्तमैः ११
देवाग्निगुरुविप्राणांमातापित्रोश्चपूजकः १२
विप्रेषुदीनेषुगुणान्वितेषुयच्छ्रद्धयास्वल्पमपिप्रदत्तम्
तत्सर्वकामान्समुपैतिलोकेश्राद्धेचदानंप्रवदंतिसंतः १३
श्रद्धादानेनविज्ञेयमपिवालाग्रमात्रकम्
यत्पात्रादिचतुष्टयंश्रद्धातेषुसदामम १४
श्रद्धीयतेसदातस्माच्छ्रद्धायास्तत्फलंभवेत्
गुणान्वितेषुदीनेषुयच्छत्यावसथान्यपि १५
सप्रयातिसर्वकामंस्थानंपैतामहंनृप
श्रद्धयायेनविप्रायदत्तंकाकिणिमात्रकम् १६
सस्याद्दिव्यतिथिर्भूपदेवानांकीर्तिवर्धनः
तस्माच्छ्रद्धान्वितैर्देयंतत्फलंभवतिध्रुवम् १७

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेपितृतीर्थवर्णनेययाति-
चरित्रेऽष्टषष्टितमोऽध्यायः ६८

## एकोनसप्ततितमोऽध्यायः

मातलिरुवाच-
अथधर्माःशिवेनोक्ताःशिवधर्मागमोत्तमाः
ज्ञेयाबहुविधास्तेचकर्मयोगप्रभेदतः १
हिंसादिदोषनिर्मुक्ताःक्लेशायासविवर्जिताः
सर्वभूतहिताःशुद्धाःसूक्ष्मायासामहत्फलाः २
अनंतशाखाकलिताःशिवमूलैकसंश्रिताः
ज्ञानध्यानसुपुष्पाढ्याःशिवधर्माःसनातनाः ३
धारयंतिशिवंयस्माद्धार्यंतेशिवभाषितैः
शिवधर्माःस्मृतास्तस्मात्संसारार्णवतारकाः ४

तथाऽहिसाक्षमासत्यंह्रीःश्रद्धेन्द्रियसंयमः
दानमिज्यातपोदानंदशकंधर्मसाधनम् ५
अथव्यस्तैःसमस्तैर्वाशिवधर्मैरनुष्ठितैः
शिवैकरस्यसंप्राप्तैर्गतिरेकैवकल्पिता ६
यथाभूःसर्वभूतानांस्थानंसाधारणंस्मृतम्
तत्तथाशिवभक्तानांतुल्यंशिवपुरंस्मृतम् ७
यथेहसर्वभूतानांभोगाःसातिशयाःस्मृताः
नानापुरायविशेषेणभोगाःशिवपुरेतथा ८
शुभाशुभफलंचापिभुज्यतेसर्वदेहिभिः
शिवधर्मस्यचैकस्यफलंतत्रोपभुज्यते ९
यस्ययादृग्भवेत्पुरायंश्रद्धापात्रविशेषतः
भोगाःशिवपुरेतस्यज्ञेयाःसातिशयाःशुभाः १०
स्थानप्राप्तिःपरंतुल्याभोगाःशांतिमयाःस्थिताः
कुर्यात्पुरायंमहत्तस्मान्महाभोगजिगीषया ११
सर्वातिशयमेवैकंभावितंचसुरोत्तमैः
आत्मभोगाधिपत्यंस्याच्छिवःसर्वजगत्पतिः १२
केचित्तत्रैवमुच्यंतेज्ञानयोगरतानराः
आवर्तंतिपुनश्चान्येसंसारेभोगतत्पराः १३
तस्माद्विमुक्तिमिच्छंस्तुभोगासक्तिंचवर्जयेत्
विरक्तःशांतचित्तात्माशिवज्ञानमवाप्नुयात् १४
येचापीशान्यहृदयायजंतीशंप्रसंगतः
तेषामपिददातीशःस्थानंभावानुरूपतः १५
तत्रार्चयंतियेरुद्रंसकृदुच्छिन्नकल्मषाः
तेषांपिशाचलोकेषुभोगानीशःप्रयच्छति १६
संतप्तादुःखभारेणम्रियंतेसर्वदेहिनः
अन्नदःपुरायदःप्रोक्तःप्राणदश्चापिसर्वदः १७
तस्मादन्नप्रदानेनसर्वदानफलंलभेत्
त्रैलोक्येयानिरत्नानिभोगस्त्रीवाहनानिच १८
अन्नदानप्रदःसर्वमिहामुत्रफलंलभेत्
यस्यान्नपानपुष्टांगःकुरुतेपुरायसंचयम् १९

अन्नप्रदातुस्तस्यार्धंकर्तुश्चार्धंनसंशयः
धर्मार्थकाममोक्षाणांदेहःपरमसाधनम् २०
स्थितिस्तस्यान्नपानाभ्यामतस्तत्सर्वसाधनम्
अन्नंप्रजापतिःसाक्षादन्नंविष्णुःशिवःस्वयम् २१
तस्मादन्नसमंदानंनभूतंनभष्यिति
त्रयाणामपिलोकानामुदकंजीवनंस्मृतम् २२
पवित्रमुदकंदिव्यंशुद्धंसर्वरसायनम्
अन्नपानाश्वगोवस्त्रशय्यासूत्रासनानिच २३
प्रेतलोकेप्रशस्तानिदानान्यष्टौविशेषतः
एवंदानविशेषेणधर्मराजपुरंनरः २४
यस्माद्यातिसुखेनैवतस्माद्धर्मंसमाचरेत्
येपुनःक्रूरकर्माणःपापादानविवर्जिताः २५
भुंजतेदारुणंदुःखंनरकेनृपनंदन
तथासुखंप्रभुंजंतिदानकर्तारएवतु २६
तेषांतुसंभवेत्सौख्यंकर्मयोगरतात्मनाम्
अप्रमेयगुणैर्दिव्यैर्विमानैःसर्वकामकैः २७
असंख्यैस्तत्पुरंव्याप्तंप्राणिनामुपकारकैः
सहस्रसोमदिव्यंवासूर्यतेजःसमप्रभम् २८
रुद्रलोकमितिप्रोक्तमशेषगुणसंयुतम्
सर्वेषांशिवभक्तानांतत्पुरंपरिकीर्तितम् २९
रुद्रक्षेत्रेमृतानांचजंगमस्थावरात्मनाम्
अप्येकदिवसंभक्त्यायःपूजयतिशंकरम् ३०
सोपियातिशिवस्थानंकिंपुनर्बहुशोर्चयन्
वैष्णवाविष्णुभक्ताश्चविष्णुध्यानपरायणाः ३१
तेपिगच्छंतिवैकुंठेसमीपंदेवचक्रिणः
ब्रह्मवादीचधर्मात्माब्रह्मलोकंप्रयातिसः ३२
पुण्यकर्तासुपुण्येनपुण्यलोकंप्रयातिच
तस्मादीशेसदाभक्तिंभावयेदात्मनात्मनि ३३
हरौवापिमहाराजयुक्तात्माज्ञानवान्स्वयम्
तस्मात्सर्वविचारेणभावदोषविचारतः ३४

एवंविष्णुप्रभावेणविशिष्टेनापिकर्मणा
नरःस्थानमवाप्येतदेशभावानुरूपतः ३५
इत्येतदपरंप्रोक्तंश्रीमच्छिवपुरंमहत्
देहिनांकर्मनिष्ठानांपुनरावर्त्तकंस्मृतम् ३६
ऊर्ध्वंशिवपुराज्ज्ञेयंवैष्णवंलोकमुत्तमम्
वैष्णवामानवायांतिविष्णुध्यानपरायणाः ३७
ब्राह्मणाब्रह्मलोकंतुसदाचारानरोत्तमाः
प्रयांतियज्विनःसर्वेपुरींतांतत्त्वकोविदाः ३८
एंद्रलोकंतथायांतिक्षत्रियायुद्धशालिनः
अन्येचपुण्यकर्त्तारःपुण्यलोकान्प्रयांतिते ३९
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेपितृतीर्थेययाति-
चरितेएकोनसप्ततितमोऽध्यायः ६९

## सप्ततितमोऽध्यायः

मातलिरुवाच-
यमपीडांप्रवक्ष्यामिमहातीव्रांसुदारुणाम्
भुंजंतिपापिनःसर्वेक्रूरास्तेब्रह्मघातकाः १
क्वचित्पापाःप्रपच्यंतेतीव्रेणकरिषाग्निना
क्वचित्सिंहैर्वृकैर्व्याघ्रैर्दंशैःकीटैश्चदारुणैः २
क्वचिन्महाजलौकोभिःक्वचिदाजगरैःपुनः
मक्षिकाभिश्चरौद्राभिःक्वचित्सर्पैर्विषोल्बणैः ३
मत्तमातंगयूथैश्चबलोत्कृष्टैःप्रमाथिभिः
पंथानमुल्लिखद्भिश्चतीक्ष्णशृंगमहावृषैः ४
महाशृंगैश्चमहिषैर्दुष्टगात्रप्रबाधकैः
डाकिनीभिश्चरौद्राभिर्विकरालैश्चराक्षसैः ५
व्याधिभिश्चमहाघोरैःपीडयमानाव्रजंतिते
महातुलांसमारूढादह्यमानादवानले ६
महावेगप्रधूतास्तेमहाचंडेनवायुना
महापाषाणवर्षेणभिद्यमानाश्चसर्वतः ७
पतद्भिर्वज्रनिर्घोषैरुल्कापातैश्चदारुणैः

प्रदीप्तांगारवर्षेणहन्यमानाव्रजंतिते ८
महतापांसुवर्षेणपूर्यमाणायमंगताः
येनराःपापकर्माणःपापंभुंजंतिदारुणम् ९
एवंपापविशेषेणपापिष्ठाःपापकारकाः
नरकंप्रतिभुंजंतिबहुपीडासमाकुलम् १०
एतत्तेसर्वमाख्यातंविवेकंपुण्यपापयोः
अन्यत्किंतेप्रवक्ष्यामिधर्मशास्त्रमनुत्तमम् ११
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेपितृतीर्थवर्णनेययाति-
चरितेसप्ततितमोऽध्यायः ७०

## एकसप्ततितमोऽध्यायः

ययातिरुवाच-
यत्त्वयासर्वमाख्यातंधर्माधर्ममनुत्तमम्
शृणवतोऽथममश्रद्धापुनरेवप्रवर्तते १
देवानांलोकसंस्थानांवदसंख्याःप्रकीर्तिताः
यस्यपुण्यप्रसंगेनयेनप्राप्तंचमातले २
मातलिरुवाच-
योगयुक्तंप्रवक्ष्यामितपसायदुपार्जितम्
देवानांलोकसंस्थानंसुखभोगप्रदायकम् ३
धर्मभावंप्रवक्ष्यामिआयासैरर्जितंपृथक्
उपरिष्टाच्चलोकानांस्वरूपंचाप्यनुक्रमात् ४
तत्राष्टगुणमैश्वर्यंपार्थिवंपिशिताशिनाम्
तस्मात्सद्योगतानांचनराणांतत्समंस्मृतम् ५
रक्षसांषोडशगुणंपार्थिवानांचतद्विधम्
एवंनिरवशेषंचयच्छेषंकुलतेजसाम् ६
गंधर्वाणांचवायव्यंयाक्षंचसकलंस्मृतम्
पांचभौतिकमिंद्रस्यचत्वारिंशद्गुणंमहत् ७
सोमस्यमानसंदिव्यंविश्वेशंपांचभौतिकम्
सौम्यंप्रजापतीशानामहंकारगुणाधिकम् ८
चतुष्षष्टिगुणंब्राह्मंबौधमैश्वर्यमुत्तमम्

विष्णोःप्राधानिकंतंत्रमैश्वर्यंब्रह्मणःपदम् ९
श्रीमच्छिवपुरेदिव्येएश्वर्यंसर्वकामिकम्
अनंतगुणमैश्वर्यंशिवस्यात्मगुणंमहत् १०
आदिमध्यांतरहितंविशुद्धंतत्त्वलक्षणम्
सर्वावभासकंसूक्ष्ममनौपम्यंपरात्परम् ११
सुसंपूर्णंजगद्वेषंपशुपाशाविमोक्षणम्
योयत्स्थानमनुप्राप्तस्तस्यभोगस्तदात्मकः १२
विमानंतत्समानंचभवेदीशप्रसादतः
नानारूपाणितारागांदृश्यंतेकोटयस्त्विमा १३
अष्टविंशतिरेवंतेसंदीप्ताःसुकृतात्मनाम्
येकुर्वंतिनमस्कारमीश्वरायक्वचित्क्वचित् १४
संपर्कात्कौतुकाल्लोभात्तद्विमानंलभंतिते
नामसंकीर्तनाद्वापिप्रसंगेनशिवस्ययः १५
कुर्याद्वापिनमस्कारंनतस्यविलयोभवेत्
इत्येतागतयस्तत्रमहत्यःशिवकर्मणि १६
कर्मणाभ्यंतरेणापिपुंसामीशानभावतः
प्रसंगेनापियेकुर्युःशंकरस्मरणंनराः १७
तैर्लभ्यंत्वतुलंसौख्यंकिंपुनस्तत्परायणैः
विष्णुचिंतांप्रकुर्वंतिध्यानेनगतमानसाः १८
तेयांतिपरमंस्थानंतद्विष्णोःपरमंपदम्
शैवंचवैष्णवंरूपमेकरूपंनरोत्तम १९
द्वयोश्चअंतरंनास्तिएकरूपमहात्मनोः
शिवायविष्णुरूपायशिवरूपायविष्णवे २०
शिवस्यहृदयंविष्णुर्विष्णोश्चहृदयंशिवः
एकमूर्तिस्त्रयोदेवाब्रह्मविष्णुमहेश्वराः २१
त्रयाणामंतरंनास्तिगुणभेदाःप्रकीर्तिताः
शिवभक्तोसिराजेंद्रतथाभागवतोसिवै २२
तेनदेवाःप्रसन्नास्तेब्रह्मविष्णुमहेश्वराः
सुप्रीतावरदाराजन्कर्मणस्तवसुव्रत २३
इंद्रादेशात्समायातःसन्निधौतवमानद

एंद्रमेनंपदंयाहिपश्चाद्ब्राह्मंमहेश्वरम् २४
वैष्णवंचप्रयाहित्वंदाहप्रलयवर्जितम्
अनेनापिविमानेनदिव्येनसर्वगामिना २५
दिव्यमूर्तिरतोभुंक्ष्वदिव्यभोगान्मनोरमान्
समारुह्यविमानंत्वंपुष्पकंसुखगामिनम् २६
सुकर्मोवाच-
एवमुक्त्वाद्विजश्रेष्ठमौनवान्मातलिस्तदा
राजानंधर्मतत्त्वज्ञंययातिंनहुषात्मजम् २७
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीथवर्णनेययाति-
चरित्रेएकसप्ततितमोऽध्यायः ७१

## द्विसप्ततितमोऽध्यायः

पिप्पलउवाच-
मातलेश्चवचःश्रुत्वासराजानहुषात्मजः
किंचकारमहाप्राज्ञस्तन्मेविस्तरतोवद १
सर्वपुण्यमयीपुण्याकथेयंपापनाशिनी
श्रोतुमिच्छाम्यहंप्राज्ञनैवतृप्यामिसर्वदा २
सुकर्मोवाच-
सर्वधर्मभृतांश्रेष्ठोययातिर्नृपसत्तमः
तमुवाचागतंदूतंमातलिशक्रसारथिम् ३
ययातिरुवाच-
शरीरंनैवत्यक्ष्यामिगमिष्येनदिवंपुनः
शरीरेणविनादूतपार्थिवेननसंशयः ४
यद्यप्येवंमहादोषाःकायस्यैवप्रकीर्तिताः
पूर्वंचापिसमाख्यातंत्वयासर्वंगुणागुणम् ५
नाहंत्यक्ष्येशरीरंवैनागमिष्येदिवंपुनः
इत्याचक्ष्वइतोगत्वादेवदेवंपुरंदरम् ६
एकाकिनाहिजीवेनकायेनापिमहामते
नैवसिद्धिंप्रयात्येवंसांसारिकमिहैवहि ७
नैवप्राणंविनाकायोजीवःकायंविनानहि

उभयोश्चापिमित्रत्वंनयिष्येनाशमिंद्रन ८
यस्यप्रसादभावाद्वैसुखमश्नातिकेवलम्
शरीरस्याप्ययंप्राणोभोगानन्यान्मनोनुगान् ९
एवंज्ञात्वास्वर्गभोग्यंनभोज्यंदेवदूतक
संभवंतिमहादुष्टाव्याधयोदुःखदायकाः १०
मातलेकिल्बिषाच्चैवजरादोषात्प्रजायते
पश्यमेपुरायसंयुक्तंकायंषोडशवार्षिकम् ११
जन्मप्रभृतिमेकायःशतार्धाब्दंप्रयातिच
तथापिनूतनोभावःकायस्यापिप्रजायते १२
ममकालोगतोदूतअब्दाप्रनंत्यमनुत्तमम्
यथाषोडशवर्षस्यकायःपुंसःप्रशोभते १३
तथामेशोभतेदेहोबलवीर्यसमन्वितः
नैवग्लानिर्नमेहानिर्नश्रमोव्याधयोजरा १४
मातलेममकायेपिधर्मोत्साहेनवर्द्धते
सर्वामृतमयंदिव्यमौषधंपरमौषधम् १५
पापव्याधिप्रणाशार्थंधर्माख्यंहिकृतम्पुरा
तेनमेशोधितःकायोगतदोषस्तुजायते १६
हृषीकेशस्यसंध्यानंनामोच्चारणमुत्तमम्
एतद्रसायनंदूतनित्यमेवंकरोम्यहम् १७
तेनमेव्याधयोदोषाःपापाद्याःप्रलयंगताः
विद्यमानेहिसंसारेकृष्णनाम्निमहौषधे १८
मानवामरणंयांतिपापव्याधिप्रपीडिताः
नपिबंतिमहामूढाःकृष्णनामरसायनम् १९
तेनध्यानेनज्ञानेनपूजाभावेनमातले
सत्येनदानपुरायेनममकायोनिरामयः २०
पापर्द्धैरामयाःपीडाःप्रभवंतिशरीरिणः
पीडाभ्योजायतेमृत्युःप्राणिनांनात्रसंशयः २१
तस्माद्धर्मःप्रकर्तव्यःपुरायसत्याश्रयैर्न रैः
पंचभूतात्मकःकायःशिरासंधिविजर्जरः २२
एवंसंधीकृतोमर्त्योहेमकारीवटंकणैः

तत्रभातिमहानग्निर्द्धातुरेवचरःसदा २३
शतखंडमयेविप्रयःसंधत्तेसबुद्धिमान्
हरेर्नाम्नाचदिव्येनसौभाग्येनापिपिप्पल २४
पंचात्मकाहियेखंडाःशतसंधिविजर्जराः
तेनसंधारिताःसर्वेकायोधातुसमोभवेत् २५
हरेःपूजोपचारेणध्यानेननियमेनच
सत्यभावेनदानेननूत्नःकायोविजायते २६
दोषानश्यंतिकायस्यव्याधयःशृणुमातले
बाह्याभ्यंतरशौचंहिदुर्गंधिर्नैवजायते २७
शुचिस्ततोभवेत्सूतप्रसादात्तस्यचक्रिणः
नाहंस्वर्गंगमिष्यामिस्वर्गमत्रकरोम्यहम् २८
तपसाचैवभावेनस्वधर्मेणमहीतलम्
स्वर्गरूपंकरिष्यामिप्रसादात्तस्यचक्रिणः २९
एवंज्ञात्वाप्रयाहित्वंकथयस्वपुरंदरम्
सुकर्मोवाच-
समाकर्ण्यततःसूतोनृपतेःपरिभाषितम् ३०
आशीर्भिरभिनंद्याथआमंत्र्यनृपतिंगतः
सर्वंनिवेदयामासइंद्रायचमहात्मने ३१
समाकर्ण्यसहस्राक्षोययातेस्तुमहात्मनः
तस्याथचिंतयामासानयनार्थंदिवंप्रति ३२

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति-चरितेद्विसप्ततितमोऽध्यायः ७२

## त्रिसप्ततितमोऽध्यायः

पिप्पलउवाच-
गतेतस्मिन्महाभागेदूतइंद्रस्यवैपुनः
किंचकारसधर्मात्माययातिर्नहुषात्मजः १
सुकर्मोवाच-
तस्मिन्गतेदेववरस्यदूतेसचिंतयामासनरेंद्रसूनुः
आहूयदूतान्प्रवरान्ससत्वरंधर्मार्थयुक्तंवचआदिदेश २

गच्छंतुदूताः प्रवराः पुरोत्तमेदेशेषुद्वीपेष्वखिलेषुलोके
कुर्वंतुवाक्यंममधर्मयुक्तंव्रजंतुलोकाः सुपथाहरेश्च ३
भावैः सुपुरायैरमृतोपमानैर्ध्यानैश्चज्ञानैर्यजनैस्तपोभिः
यज्ञैश्चदानैर्मधुसूदनैकमर्चंतुलोकाविषयान्विहाय ४
सर्वत्रपश्यंत्वसुरारिमेकंशुष्केषुचार्द्रेष्वपिस्थावरेषु
अभ्रेषुभूमौसचराचरेषुस्वीयेषुकायेष्वपिजीवरूपम् ५
देवंतमुद्दिश्यददंतुदानमातिथ्यभावैः परिपैत्रिकैश्च
नारायणंदेववरंयजध्वंदोषैर्विमुक्ताअचिराद्भविष्यथ ६
योमामकंवाक्यमिहैवमानवोलोभाद्विमोहादपिनैवकारयेत्
सशास्यतांयास्यतिनिर्घृणोध्रुवंममापिचौरोहियथानिकृष्टः ७
आकरार्यवाक्यंनृपतेश्चदूताः संहृष्टभावाः सकलांचपृथ्वीम्
आचख्युरेवंनृपतेः प्रणीतमादेशभावंसकलंप्रजासु ८
विप्रादिमर्त्याअमृतंसुपुरायमानीतमेवंभुवितेनराज्ञा
पिबंतुपुरायंपरिवैष्णवाख्यंदोषैर्विहीनंपरिणाममिष्टम् ९
श्रीकेशवंक्लेशहरंवरेरायमानंदरूपंपरमार्थमेवम्
नामामृतंदोषहरंसुराज्ञाआनीतमस्त्येवपिबंतुलोकाः १०
सखड्गपाणिंमधुसूदनाख्यंतंश्रीनिवासंसगुणंसुरेशम्
नामामृतंदोषहरंसुराज्ञाआनीतमस्त्येवपिबंतुलोकाः ११
श्रीपद्मनाथंकमलेक्षणंचआधाररूपंजगतांमहेशम्
नामामृतंदोषहरंसुराज्ञाआनीतमस्त्येवपिबंतुलोकाः १२
पापापहंव्याधिविनाशरूपमानंददंदानवदैत्यनाशनम्
नामामृतंदोषहरंसुराज्ञाआनीतमस्त्येवपिबंतुलोकाः १३
यज्ञांगरूपंचरथांगपाणिंपुरायाकरंसौख्यमनंतरूपम्
नामामृतंदोषहरंसुराज्ञाआनीतमस्त्येवपिबंतुलोकाः १४
विश्वाधिवासंविमलंविरामंरामाभिधानंरमणंमुरारिम्
नामामृतंदोषहरंसुराज्ञाआनीतमस्त्येवपिबंतुलोकाः १५
आदित्यरूपंतमसांविनाशंबंधस्यनाशंमतिपंकजानाम्
नामामृतंदोषहरंसुराज्ञाआनीतमस्त्येवपिबंतुलोकाः १६
नामामृतंसत्यमिदंसुपुरायमधीत्ययोमानवविष्णुभक्तः
प्रभातकालेनियतोमहात्मासयातिमुक्तिंनहिकारणंच १७

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेपितृतीर्थवर्णनेययाति-
चरितेत्रिसप्ततितमोऽध्यायः ७३

## चतुःसप्ततितमोऽध्यायः

सुकर्मोवाच-
दूतास्तुग्रामेषुवदंतिसर्वेद्वीपेषुदेशेष्वथपत्तनेषु
लोकाःशृणुध्वंनृपतेस्तदाज्ञांसर्वप्रभावैर्हरिमर्चयंतु १
दानैश्चयज्ञैर्बहुभिस्तपोभिर्धर्माभिलाषैर्यजनैर्मनोभिः
ध्यायंतुलोकामधुसूदनंतुआदेशमेवंनृपतेस्तुतस्य २
एवंसुघुष्टंसकलंतुपुण्यमाकर्ण्यतंभूमितलेषुलोकैः
तदाप्रभृत्येवयजंतिविष्णुंध्यायंतिगायंतिजपंतिमर्त्याः ३
वेदप्रणीतैश्चसुसूक्तमंत्रैःस्तोत्रैःसुपुण्यैरमृतोपमानैः
श्रीकेशवंतद्गतमानसास्तेव्रतोपवासैर्नियमैश्चदानैः ४
विहायदोषान्निजकायचित्तवागुद्भवान्प्रेमरताःसमस्ताः
लक्ष्मीनिवासंजगतांनिवासंश्रीवासुदेवंपरिपूजयंति ५
इत्याज्ञातस्यभूपस्यवर्ततेक्षितिमंडले
वैष्णवेनापिभावेनजनाःसर्वेजयंतिते ६
नामभिःकर्मभिर्विष्णुंयजंतेज्ञानकोविदाः
तद्ध्यानास्तद्व्यवसिताविष्णुपूजापरायणाः ७
यावद्भूमंडलंसर्वंयावत्तपतिभास्करः
तावद्विमानवालोकाःसर्वेभागवताबभुः ८
विष्णोर्ध्यानप्रभावेणपूजास्तोत्रेणनामतः
आधिव्याधिविहीनास्तेसंजातामानवास्तदा ९
वीतशोकाश्चपुण्याश्चसर्वेचैवतपोधनाः
संजातावैष्णवाविप्रप्रसादात्तस्यचक्रिणः १०
आमयैश्चविहीनास्तेदोषैरोषैश्चवर्जिताः
सर्वैश्वर्यसमापन्नाःसर्वरोगविवर्जिताः ११
प्रसादात्तस्यदेवस्यसंजातामानवास्तदा
अमराःनिर्जराःसर्वेधनधान्यसमन्विताः १२
मर्त्याविष्णुप्रसादेनपुत्रपौत्रैरलंकृताः

तेषामेवमहाभागगृहद्वारेषुनित्यदा १३
कल्पद्रुमाःसुपुरायास्तेसर्वकामफलप्रदाः
सर्वकामदुघागावःसचिंतामरायस्तथा १४
संतितेषांगृहेपुरायाःसर्वकामप्रदायकाः
अमरामानवाजाताःपुत्रपौत्रैरलंकृताः १५
सर्वदोषविहीनास्तेविष्णोश्चैवप्रसादतः
सर्वसौभाग्यसंपन्नाःपुरायमंगलसंयुताः १६
सुपुरायादानसंपन्नाज्ञानध्यानपरायणाः
नदुर्भिक्षंनचव्याधिर्नाकालमरणंनृणाम् १७
तस्मिञ्शासतिधर्मज्ञेययातौनृपतौतदा
वैष्णवामानवाःसर्वेविष्णुव्रतपरायणाः १८
तद्ध्यानास्तद्गताःसर्वेसंजाताभावतत्पराः
तेषांगृहाणिदिव्यानिपुरायानिद्विजसत्तम १९
पताकाभिःसुशुक्लाभिःशंखयुक्तानितानिवै
गदांकितध्वजाभिश्चनित्यंचक्रांकितानिच २०
पद्मांकितानिभासंतेविमानप्रतिमानिच
गृहाणिभित्तिभागेषुचित्रितानिसुचित्रकैः २१
सर्वत्रगृहद्वारेषुपुरायस्थानेषुसत्तमाः
वनानिसंतिदिव्यानिशाद्वलानिशुभानिच २२
तुलस्याचद्विजश्रेष्ठतेषुकेशवमंदिरैः
भासंतेपुरायदिव्यानिगृहाणिप्राणिनांसदा २३
सर्वत्रवैष्णवोभावोमंगलोबहुदृश्यते
शंखशब्दाश्चभूलोकेमिथःस्फोटरवैःसखे २४
श्रूयंतेतत्रविप्रेंद्रदोषपापविनाशकाः
शंखस्वस्तिकपद्मानिगृहद्वारेषुभित्तिषु २५
विष्णुभक्त्याचनारीभिर्लिखितानिद्विजोत्तम
गीतरागसुवर्णैश्चमूर्च्छनातानसुस्वरैः २६
गायंतिकेशवंलोकाविष्णुध्यानपरायणाः २७
हरिंमुरारिंप्रवदंतिकेशवंप्रीत्याजितंमाधवमेवचान्ये
श्रीनारसिंहंकमलेक्षणंतंगोविंदमेकंकमलापतिंच २८

कृष्णंशरण्यंशरणंजपंतिरामंचजप्यैःपरिपूजयंति
दंडप्रणामैःप्रणमंतिविष्णुंतद्ध्यानयुक्ताःपरवैष्णवास्ते २६
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति-
चरित्रेचतुःसप्ततितमोऽध्यायः ७४

## पंचसप्ततितमोऽध्यायः

सुकर्मोवाच-
विष्णुंकृष्णंहरिंरामंमुकुंदंमधुसूदनम्
नारायणंविष्णुरूपंनारसिंहंतमच्युतम् १
केशवंपद्मनाभंचवासुदेवंचवामनम्
वाराहंकमठंमत्स्यंहृषीकेशंसुराधिपम् २
विश्वेशंविश्वरूपंचअनंतमनघंशुचिम्
पुरुषंपुष्कराक्षंचश्रीधरंश्रीपतिंहरिम् ३
श्रीनिवासंपीतवासंमाधवंमोक्षदंप्रभुम्
इत्येवंहिसमुच्चारंनामभिर्मानवाःसदा ४
प्रकुर्वंतिनराःसर्वेबालवृद्धाःकुमारिकाः
स्त्रियोहरिंसुगायंतिगृहकर्मरताःसदा ५
आसनेशयनेयानेध्यानेवचसिमाधवम्
क्रीडमानास्तथाबालागोविंदंप्रणमंतिते ६
दिवारात्रौसुमधुरंब्रुवंतिहरिनामच
विष्णूच्चारोहिसर्वत्रश्रूयतेद्विजसत्तम ७
वैष्णवेनप्रभावेणमर्त्यावर्ततिभूतले
प्रासादकलशाग्रेषुदेवतायतनेषुच ८
यथासूर्यस्यबिंबानितथाचक्राणिभांतिच
वैकुंठेदृश्यतेभावस्तद्भावंजगतीतले ९
तेनराज्ञाकृतंविप्रपुण्यंचापिमहात्मना
विष्णुलोकस्यसमतांतथानीतंमहीतलम् १०
नहुषस्यापिपुत्रेणवैष्णवेनययातिना
उभयोर्लोकयोर्भावमेकीभूतंमहीतलम् ११
भूतलस्यापिविष्णोश्चअंतरंनैवदृश्यते

विष्णूच्चारंतुवैकुंठेयथाकुर्वंतिवैष्णवाः १२
भूतलेतादृशोच्चारंप्रकुर्वंतिचमानवाः
उभयोर्लोकयोर्विप्रएकभावःप्रदृश्यते १३
जरारोगभयंनास्तिमृत्युहीनानराबभुः
दानभोगप्रभावश्चअधिकोदृश्यतेभुवि १४
पुत्राणांतुसुखंपुगयमधिकंपौत्रजंनराः
प्रभुंजंतिसुखेनापिमानवाभुविसत्तम १५
विष्णोःप्रसाददानेनउपदेशेनतस्यच
सर्वव्याधिविनिर्मुक्तामानवावैष्णवाःसदा १६
स्वर्गलोकप्रभावोहिकृतोराज्ञामहीतले
पंचविंशप्रमाणेनवर्षाणिनृपसत्तम १७
गदैर्हीनानराःसर्वेज्ञानध्यानपरायणाः
यज्ञदानपराःसर्वेदयाभावाश्चमानवाः १८
उपकाररताःपुगयाधन्यास्तेकीर्तिभाजनाः
सर्वेधर्मपराविप्रविष्णुध्यानपरायणाः १९
राज्ञातेनोपदिष्टास्तेसंजातावैष्णवाभुवि
विष्णुरुवाच–
श्रूयतांनृपशार्दूलचरित्रंतस्यभूपतेः २०
सर्वधर्मपरोनित्यंविष्णुभक्तश्चनाहुषिः
अब्दानांतत्रलक्षंहितस्याप्येवंगतंभुवि २१
नूतनोदृश्यतेकायःपंचविंशाब्दिकोयथा
पंचविंशाब्दिकोभातिरूपेणवयसातदा २२
प्रबलःप्रौढिसंपन्नःप्रसादात्तस्यचक्रिणः
मानुषाभुवमास्थाययमंनैवप्रयांतिते २३
रागद्वेषविनिर्मुक्ताःक्लेशपाशविवर्जिताः
सुखिनोदानपुगयैश्चसर्वधर्मपरायणाः २४
विस्तारंतेजनाःसर्वेसंतत्यापिगतानृप
यथादूर्वावटाश्चैवविस्तारंयांतिभूतले २५
यथातेमानवाःसर्वेपुत्रपौत्रैःप्रविस्तृताः
मृत्युदोषविहीनास्तेचिरंजीवंतिवैजनाः २६

स्थिरकायाश्चसुखिनोजरारोगविवर्जिताः
पंचविंशाब्दिकाःसर्वेनरादृश्यंतिभूतले २७
सत्याचारपराःसर्वेविष्णुध्यानपरायणाः
एवंसर्वेचमर्त्यास्तेप्रसादात्तस्यचक्रिणः २८
संजातामानवाःसर्वेदानभोगपरायणाः
मृतोनश्रूयतेलोकेमर्त्यःकोपिनरोत्तम २९
शोकंनैवप्रपश्यंतिदोषंनैवप्रयांतिते
यद्रूपंस्वर्गलोकस्यतद्रूपंभूतलस्यच ३०
संजातंमानवश्रेष्ठप्रसादात्तस्यचक्रिणः
विभ्रष्टायमदूतास्तेविष्णुदूतैश्चताडिताः ३१
रुदमानागताःसर्वेधर्मराजंपरस्परम्
तत्सर्वंकथितंदूतैश्चेष्टितंभूपतेस्तुतैः ३२
अमृत्युभूतलंजातंदानभोगेनभास्करे
नहुषस्यात्मजेनापिकृतंदेवययातिना ३३
विष्णुभक्तेनपुण्येनस्वर्गरूपंप्रदर्शितम्
एवमाकर्णितंसर्वंधर्मराजेनवैतदा ३४
धर्मराजस्तदातत्रदूतेभ्यःश्रुतविस्तरः
चिंतयामाससर्वार्थंश्रुत्वैवंनृपचेष्टितम् ३५

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति-
चरित्रेपंचसप्ततितमोऽध्यायः ७५

## षट्सप्ततितमोऽध्यायः

सुकर्मोवाच-
सौरिर्दूतैस्तथासर्वैःसहस्वर्गंजगामसः
द्रष्टुंतत्रसहस्राक्षंदेववृंदैःसमावृतम् १
धर्मराजंसमायांतंददर्शसुरराट्तदा
समुत्थायत्वरायुक्तोदत्वाचार्घमनुत्तमम् २
पप्रच्छागमनंतस्यकथयस्वममाग्रतः
समाकर्ण्यमहद्वाक्यंदेवराजस्यभाषितम् ३
धर्मराजोऽब्रवीत्सर्वंययातेश्चरितंमहत्

धर्मराजउवाच-
श्रूयतांदेवदेवेशयस्मादागमनंमम ४
कथयाम्यहमत्रापियेनाहमागतस्तव
नहुषस्यात्मजेनापिवैष्णवेनमहात्मना ५
वैष्णवाश्चकृतामर्त्यायेवसंतिमहीतले
वैकुंठस्यसमंरूपंमर्त्यलोकस्यवैकृतम् ६
अमरामानवाजाताजरारोगविवर्जिताः
पापमेवनकुर्वंतिअसत्यंनवदंतिते ७
कामक्रोधविहीनास्तेलोभमोहविवर्जिताः
दानशीलामहात्मानःसर्वेधर्मपरायणाः ८
सर्वधर्मैःसमर्चंतिनारायणमनामयम्
तेनवैष्णवधर्मेणमानवाजगतीतले ९
निरामयावीतशोकाःसर्वेचस्थिरयौवनाः
दूर्वावटायथादेवविस्तारंयांतिभूतले १०
तथातेविस्तरंप्राप्ताःपुत्रपौत्रैःप्रपौत्रकैः
तेषांपुत्रैःप्रपौत्रैश्चवंशाद्वंशांतरंगताः ११
एवंहिवैष्णवःसर्वोजरामृत्युविवर्जितः
मर्त्यलोकःकृतस्तेननहुषस्यात्मजेनवै १२
पदभ्रष्टोस्मिसंजातोव्यापारेणविवर्जितः
एतत्सर्वंसमाख्यातंममकर्मविनाशनम् १३
एवंज्ञात्वासहस्राक्षलोकस्यास्यहितंकुरु
एतत्तेसर्वमाख्यातंयथापृष्टोस्मिवैत्वया १४
एतस्मात्कारणादिंद्रआगतस्तवसन्निधौ
इंद्रउवाच-
पूर्वमेवमयादूतआगमायमहात्मनः १५
प्रेषितोधर्मराजेंद्रदूतेनास्यापिभाषितम्
नाहंस्वर्गसुखस्यार्थीनागमिष्येदिवंपुनः १६
स्वर्गरूपंकरिष्यामिसर्वंतद्भूमिमंडलम्
इत्याचचक्षेभूपालःप्रजापाल्यंकरोतिसः १७
तस्यधर्मप्रभावेणभीतस्तिष्ठामिसर्वदा

धर्मउवाच-
येनकेनाप्युपायेनतमानयसुभूपतिम् १८
देवराजमहाभागयदीच्छसिममप्रियम्
इत्याकर्णयवचस्तस्यधर्मस्यापिसुराधिपः १९
चिंतयामासमेधावीसर्वतत्वेनभूपते
कामदेवंसमाहूयगंधर्वांश्चपुरंदरः २०
मकरंदंरतिंदेवश्चानिनायमहामनाः
तथाकुरुतवैयूयंयथाऽगच्छतिभूपतिः २१
यूयंगच्छन्तुभूर्लोकंमयादिष्टानसंशयः
कामउवाच-
युवयोस्तुप्रियंपुण्यंकरिष्यामिनसंशयः २२
राजानंपश्यमांचैवस्थितंचैवसमायुधि
तथेत्युक्त्वागताःसर्वेयत्रराजासनाहुषिः २३
नटरूपेणतेसर्वेकामाद्याःकर्मणाद्विज
आशीर्भिरभिनंद्यैवतेचऊचुःसुनाटकम् २४
तेषांतद्वचनंश्रुत्वाययातिःपृथिवीपतिः
सभांचकारमेधावीदेवरूपांसुपंडितैः २५
समायातः स्वयंभूपोज्ञानविज्ञानकोविदः
तेषांतुनाटकंराजापश्यमानःसनाहुषिः २६
चरितंवामनस्यापिउत्पत्तिंविप्ररूपिणः
रूपेणाप्रतिमालोकेसुस्वरंगीतमुत्तमम् २७
गायमानाजराराजन्नार्यारूपेणवैतदा
तस्यागीतविलासेनहास्येनललितेनच २८
मधुरालापतस्तस्यकंदर्पस्यचमायया
मोहितस्तेनभावेनदिव्येनचरितेनच २९
बलेश्चैवयथारूपंविंध्यावल्यायथापुरा
वामनस्ययथारूपंचक्रेमारोथतादृशम् ३०
सूत्रधारःस्वयंकामोवसंतःपारिपार्श्वकः
नटीवेषधराजातासारतिर्हृष्टवल्लभा ३१
नेपथ्यांतश्चरीराजन्सातस्मिन्नृत्यकर्मणि

मकरंदोमहाप्राज्ञःक्षोभयामासभूपतिम् ३२
यथायथापश्यतिनृत्यमुत्तमंगीतंसमाकर्णतिसक्षितीशः
तथातथामोहितवान्सभूपतिंनटीप्रणीतेनमहानुभावः ३३
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थेययाति-
चरित्रेषट्सप्ततितमोऽध्यायः ७६

सप्तसप्ततितमोऽध्यायः

सुकर्मोवाच-
कामस्यगीतलास्येनहास्येनललितेनच
मोहितोराजराजेंद्रोनटरूपेणपिप्पल १
कृत्वामूत्रंपुरीषंचसराजानहुषात्मजः
अकृत्वापादयोःशौचमासनेउपविष्टवान् २
तदंतरंतुसंप्राप्यसंचचारजरानृपम्
कामेनापिनृपश्रेष्ठइंद्रकार्यकृतंहितम् ३
निवृत्तेनाटकेतस्मिन्गतेषुतेषुभूपतिः
जराभिभूतोधर्मात्माकामसंसक्तमानसः ४
मोहितःकाममोहेनविह्वलोविकलेंद्रियः
अतीवमुग्धोधर्मात्माविषयैश्चापवाहितः ५
एकदातुगतोराजामृगयाव्यसनातुरः
वनेचक्रीडतेसोपिमोहरागवशंगतः ६
सरसंक्रीडमानस्यनृपतेश्चमहात्मनः
मृगश्चैकःसमायातश्चतुःशृंगोह्यनौपमः ७
सर्वांगसुंदरोराजन्हेमरूपतनूरुहः
रत्नज्योतिःसुचित्रांगोदर्शनीयोमनोहरः ८
अभ्यधावत्सवेगेनबाणपाणिर्धनुर्द्धरः
इत्यमन्यतमेधावीकोपिदैत्यःसमागतः ९
मृगेणचसतेनापिदूरमाकर्षितोनृपः
गतःसरथवेगेनश्रमेणपरिखेदितः १०
वीक्षमाणस्यतस्यापिमृगश्चांतरधीयत
सपश्यतिवनंतत्रनंदनोपममद्भुतम् ११

चारुवृक्षसमाकीर्णंभूतपंचकशोभितम्
गुरुभिश्चंदनैःपुण्यैःकदलीखंडमंडितैः १२
बकुलाशोकपुंनागैर्नालिकेरैश्चतिंदुकैः
पूगीफलैश्चखर्जूरैःकुमुदैःसप्तपर्णकैः १३
पुष्पितैःकर्णिकारैश्चनानावृक्षैःसदाफलैः
पुष्पितामोदसंयुक्तैःकेतकैःपाटलैस्ततः १४
वीक्षमाणोमहाराजददर्शसरउत्तमम्
पुण्योदकेनसंपूर्णंविस्तीर्णंपंचयोजनम् १५
हंसकारंडवाकीर्णंजलपक्षिविनादितम्
कमलैश्चापिमुदितंश्वेतोत्पलविराजितम् १६
रक्तोत्पलैःशोभमानंहाटकोत्पलमंडितम्
नीलोत्पलैःप्रकाशितंकल्हारैरतिशोभितम् १७
मत्तैर्मधुकरैश्चपिसर्वत्रपरिनादितम्
एवंसर्वगुणोपेतंददर्शसरउत्तमम् १८
पंचयोजनविस्तीर्णंदशयोजनदीर्घकम्
तडागंसर्वतोभद्रंदिव्यभावैरलंकृतम् १९
रथवेगेनसंखिन्नःकिंचिच्छ्रमनिपीडितः
निषसादतटेतस्यचूतच्छायांसुशीतलाम् २०
स्नात्वापीत्वाजलंशीतंपद्मसौगंध्यवासितम्
सर्वश्रमोपशमनममृतोपममेवतत् २१
वृक्षच्छायेततस्तस्मिन्नुपविष्टेनभूभृता
गीतध्वनिःसमाकर्णिगीयमानोयथातथा २२
यथास्त्रीगायतेदिव्यातथायंश्रूयतेध्वनिः
गीतप्रियोमहाराजएवचिंतांपरांगतः २३
चिंताकुलस्तुधर्मात्मायावच्चिंतयतेक्षणम्
तावन्नारीवराकाचित्पीनश्रोणीपयोधरा २४
नृपतेःपश्यतस्तस्यवनेतस्मिन्समागता
सर्वाभरणशोभांगीशीललक्षणसंपदा २५
तस्मिन्वनेसमायातानृपतेःपुरतःस्थिता
तामुवाचमहाराजःकाहिकस्यभविष्यसि २६

किमर्थंहिसमायातातन्मेत्वंकारणंवद
पृष्टासतीतदातेननकिंचिदपिपिप्पल २७
शुभाशुभंचभूपालंप्रत्यवोचद्वरानना
प्रहस्यैवगताशीघ्रंवीणादंडकराऽबला २८
विस्मयेनापिराजेंद्रोमहताव्यापितस्तदा
मयासंभाषिताचेयंमांनब्रूतेस्मसोत्तरम् २९
पुनश्चिंतांसमापेदेययातिःपृथिवीपतिः
योवैमृगोमयादृष्टश्चतुःशृंगःसुवर्णकः ३०
तस्मान्नारीसमुद्भूतातत्सत्यंप्रतिभातिमे
मायारूपमिदंसत्यंदानवानांभविष्यति ३१
चिंतयित्वाक्षणंराजाययातिर्नहुषात्मजः
यावच्चिंतयतेराजातावन्नारीमहावने ३२
अंतर्धानंगताविप्रप्रहस्यनृपनंदनम्
एतस्मिन्नंतरेगीतंसुस्वरंपुनरेवतत् ३३
शुश्रुवेपरमंदिव्यंमूर्छनातानसंयुतम्
जगामसत्वरंराजायत्रगीतध्वनिर्महान् ३४
जलांतेपुष्करंचैवसहस्रदलमुत्तमम्
तस्योपरिवरानारीशीलरूपगुणान्विता ३५
दिव्यलक्षणसंपन्नादिव्याभरणभूषिता
दिव्यैर्भावैःप्रभात्येकावीणादंडकराविला ३६
गायंतीसुस्वरंगीतंतालमानलयान्वितम्
तेनगीतप्रभावेणमोहयंतीचराचरान् ३७
देवान्मुनिगणान्सर्वान्दैत्यान्गंधर्वकिन्नरान्
तांदृष्ट्वासविशालाक्षींरूपतेजोपशालिनीम् ३८
संसारेनास्तिचैवान्यानारीदृशीचराचरे
पुरानटोजरायुक्तोनृपतेःकायमेवहि ३९
संचारितोमहाकामस्तदासौप्रकटोभवत्
घृतंस्पृष्ट्वायथावह्नीरश्मिवान्संप्रजायते ४०
तांचदृष्ट्वातथाकामस्तत्कायात्प्रकटोऽभवत्
मन्मथाविष्टचित्तोसौतांदृष्ट्वाचारुलोचनाम् ४१

ईदृग्रूपानदृष्टामेयुवतीविश्वमोहिनी
चिंतयित्वाक्षणंराजाकामसंसक्तमानसः ४२
तस्याःसविरहेणापिलुब्धोभून्नृपतिस्तदा
कामाग्निनादह्यमानःकामज्वरेणपीडितः ४३
कथंस्यान्ममचैवेयंकथंभावोभविष्यति
यदामांगूहतेबालापद्मास्यापद्मलोचना ४४
यदीयंप्राप्यतेतर्हिसफलंजीवितंभवेत्
एवंविचिंत्यधर्मात्माययातिःपृथिवीपतिः ४५
तामुवाचवरारोहांकात्वंकस्यापिवाशुभे
पूर्वंदृष्टातुयानारीसादृष्टापुनरेवच ४६
तांपप्रच्छसधर्मात्माकाचेयंतवपार्श्वगा
सर्वंकथयकल्याणिअहंहिनहुषात्मजः ४७
सोमवंशप्रसूतोहंसप्तद्वीपाधिपःशुभे
ययातिर्नाममेदेविख्यातोहंभुवनत्रये ४८
तवसंगमनेचेतोभावमेवंप्रवांछते
देहिमेसंगमंभद्रेकुरुसुप्रियमेवहि ४९
यंयंहिवांछसेभद्रेतद्ददामिनसंशयः
दुर्जयेनापिकामेनहतोहंवरवर्णिनि ५०
तस्मात्राहिसुदीनंमांप्रपन्नंशरणंतव
राज्यंचसकलामुर्वींशरीरमपिचात्मनः ५१
संगमेतवदास्यामित्रैलोक्यमिदमेवते
तस्यराज्ञोवचःश्रुत्वासास्त्रीपद्मनिभानना ५२
विशालांस्वसखींप्राहब्रूहिराजानमागतम्
नामचोत्पत्तिस्थानंचपितरंमातरंशुभे ५३
ममापिभावमेकाग्रमस्याग्रेचनिवेदय
तस्याश्चवांछितंज्ञात्वाविशालाभूपतिंतदा ५४
उवाचमधुरालापैःश्रूयतांनृपनंदन
विशालोवाच-
कामएषपुरादग्धोदेवदेवेनशंभुना ५५
रुरोदसारतिर्दुःखाद्भर्त्राहीनापिसुस्वरम्

अस्मिन्सरसिराजेंद्रसारतिर्न्यवसत्तदा ५६
तस्यप्रलापमेवंसासुस्वरंकरुणान्वितम्
समाकर्ण्यततोदेवाःकृपयापरयान्विताः ५७
संजाताराजराजेंद्रशंकरंवाक्यमब्रुवन्
जीवयस्वमहादेवपुनरेवमनोभवम् ५८
वराकीयंमहाभागभर्तृहीनाहिकीदृशी
कामेनापिसमायुक्तामस्मत्स्नेहात्कुरुष्वहि ५९
तच्छ्रुत्वाचवचःप्राहजीवयामिमनोभवम्
कायेनापिविहीनोयंपंचबाणोमनोभवः ६०
भविष्यतिनसंदेहोमाधवस्यसखापुनः
दिव्येनापिशरीरेणवर्तयिष्यतिनान्यथा ६१
महादेवप्रसादाच्चमीनकेतुःसजीवितः
आशीर्भिरभिनंद्यैवंदेव्याःकामंनरोत्तम ६२
गच्छकामप्रवर्तस्वप्रिययासहनित्यशः
एवमाहमहातेजाःस्थितिसंहारकारकः ६३
पुनःकामःसरःप्राप्तोयत्रास्तेदुःखितारतिः
इदंकामसरोराजन्रतिरत्रसुसंस्थिता ६४
दग्धेसतिमहाभागेमन्मथेदुःखधर्षिता
रत्याःकोपात्समुत्पन्नःपावकोदारुणाकृतिः ६५
अतीवदग्धातेनापिसारतिर्मोहमूर्छिता
अश्रुपातंमुमोचाथभर्तृहीनानरोत्तम ६६
नेत्राभ्यांहिजलेतस्याःपतिताअश्रुबिंदवः
तेभ्योजातोमहाशोकःसर्वसौख्यप्रणाशकः ६७
जरापश्चात्समुत्पन्नाअश्रुभ्योनृपसत्तम
वियोगोनामदुर्मेधास्तेभ्योजज्ञेप्रणाशकः ६८
दुःखसंतापकौचोभौजज्ञातेदारुणौतदा
मूर्छानामततोजज्ञेदारुणासुखनाशिनी ६९
शोकाज्जज्ञेमहाराजकामज्वरोथविभ्रमः
प्रलापोविह्वलश्चैवउन्मादोमृत्युरेवच ७०
तस्याश्चअश्रुबिंदुभ्योजज्ञिरेविश्वनाशकाः

रत्याःपार्श्वेसमुत्पन्नाःसर्वेतापांगधारिणः ७१
मूर्तिमंतोमहाराजसद्भावगुणसंयुताः
कामएषसमायातःकेनाप्युक्तंतदानृप ७२
महानंदेनसंयुक्तादृष्ट्वाकामंसमागतम्
नेत्राभ्यामश्रुपूर्णाभ्यांपतिताश्रश्रुबिन्दवः ७३
अप्सुमध्येमहाराजचापल्याज्जज्ञिरेप्रजाः
प्रीतिर्नामतदाजज्ञेख्यातिर्लज्जानरोत्तम ७४
तेभ्योजज्ञेमहानंदशांतिश्चान्यानृपोत्तम
जज्ञातेद्वेशुभेकन्येसुखसंभोगदायिके ७५
लीलाक्रीडामनोभावसंयोगस्तुमहान्नृप
रत्यास्तुवामनेत्राद्वैआनंदादश्रुबिंदवः ७६
जलांतेपतिताराजंस्तस्माज्जज्ञेसुपंकजम्
तस्मात्सुपंकजाज्जाताइयंनारीवरानना ७७
अश्रुबिंदुमतीनामरतिपुत्रीनरोत्तम
तस्याःप्रीत्यासुखंकृत्वानित्यंवर्त्तेसमीपगा ७८
सखीभावस्वभावेनसंहृष्टासर्वदाशुभा
विशालानाममेख्यातंवरुणस्यसुतानृप ७९
अस्याश्चांतेप्रवर्तामिस्नेहात्स्निग्धास्मिसर्वदा
एतत्तेसर्वमाख्यातमस्याश्चात्मनएवते ८०
तपश्चचारराजेंद्रपतिकामावरानना
राजोवाच-
सर्वमेवत्वयाख्यातंमयाज्ञातंशुभेशृणु ८१
मामेवंहिभजत्वेषारतिपुत्रीवरानना
यमेषावांछतेबालातत्सर्वंतुददाम्यहम् ८२
तथाकुरुष्वकल्याणियथामेवश्यतांव्रजेत्
विशालोवाच-
अस्याव्रतंप्रवक्ष्यामितदाकर्णयभूपते ८३
पुरुषंयौवनोपेतंसर्वज्ञंवीरलक्षणम्
देवराजसमंराजन्धर्माचारसमन्वितम् ८४
तेजस्विनंमहाप्राज्ञंदातारंयज्विनांवरम्

गुणानांधर्मभावस्यज्ञातारंपुरायभाजनम् ८५
लोकइंद्रसमंराजन्सुयज्ञैर्धर्मतत्परम्
सर्वैश्वर्यसमोपेतंनारायणमिवापरम् ८६
देवानांसुप्रियंनित्यंब्राह्मणानामतिप्रियम्
ब्रह्मरायंवेदतत्त्वज्ञंत्रैलोक्येख्यातविक्रमम् ८७
एवंगुणैःसमुपेतंत्रैलोक्येनप्रपूजितम्
सुमतिंसुप्रियंकांतंमनसावरमीप्सति ८८
ययातिरुवाच-
एवंगुणैःसमुपेतंविद्धिमामिहचागतम्
अस्यानुरूपोभर्त्ताहंसृष्टोधात्रानसंशयः ८९
विशालोवाच-
भवंतंपुरायसंवृद्धंजानेराजञ्जगत्त्रये
पूर्वोक्तायेगुणाःसर्वेमयोक्ताःसंतितेत्वयि ९०
एकेनापिचदोषेणत्वामेषाहिनमन्यते
एषमेसंशयोजातोभवान्विष्णुमयोनृप ९१
ययातिरुवाच-
समाचद्त्वमहादोषंयमेषानानुमन्यते
तत्त्वेनचारुसर्वांगीप्रसादसुमुखीभव ९२
विशालोवाच-
आत्मदोषंनजानासिकस्मात्त्वंजगतीपते
जरयाव्याप्तकायस्त्वमनेनेयंनमन्यते ९३
एवंश्रुत्वामहद्वाक्यमप्रियंजगतीपतिः
दुःखेनमहताविष्टस्तामुवाचपुनर्नृपः ९४
जरादोषोनमेभद्रेसंसर्गात्कस्यचित्कदा
समुद्भूतंममांगेवैतंनजनेजरागमम् ९५
यंयंहिवांछतेचैषात्रैलोक्येदुर्लभंशुभे
तमस्यैदातुकामोहंव्रियतांवरउत्तमः ९६
विशालोवाच-
जराहीनोयदास्यास्त्वंतदातेसुप्रियाभवेत्
एतद्विनिश्चितंराजन्सत्यंसत्यंवदाम्यहम् ९७

श्रुतिरेवंवदेद्राजन्पुत्रेभ्रातरिभृत्यके
जरासंक्राम्यतेयस्यतस्यांगेपरिसंचरेत् ९८
तारुण्यंतस्यवैगृह्यतस्मैदत्वाजरांपुनः
उभयोःप्रीतिसंवादःसुरुच्याजायतेशुभः ९९
यथात्मदानपुण्यस्यकृपयायोददातिच
फलंराजन्हितत्तस्यजायतेनात्रसंशयः १००
दुःखेनोपार्जितंपुण्यमन्यस्मैहिप्रदीयते
सुपुण्यंतद्भवेत्तस्यपुण्यस्यफलमश्नुते १०१
पुत्रायदीयतांराजंस्तस्मात्तारुण्यमेवच
प्रगृह्यैवसमागच्छसुंदरत्वेनभूपते १०२
यदात्वमिच्छसेभोक्तुंतदात्वंकुरुभूपते
एवमाभाष्यसाभूपंविशालाविररामह १०३
सुकर्मोवाच-
एवमाकर्ण्यराजेंद्रोविशालामवदत्तदा
राजोवाच-
एवमस्तुमहाभागेकरिष्येवचनंतव १०४
कामासक्तःसमूढस्तुययातिःपृथिवीपतिः
गृहंगत्वासमाहूयसुतान्वाक्यमुवाचह १०५
तुरुंपूरुंकुरुंराजायदुंचपितृवत्सलम्
कुरुध्वंपुत्रकाःसौख्यंयूयंहिममशासनात् १०६
पुत्राऊचुः-
पितृवाक्यंप्रकर्तव्यंपुत्रैश्चापिशुभाशुभम्
उच्यतांतातततच्छीघ्रंकृतंविद्धिनसंशयः १०७
एवमाकर्ण्यतद्वाक्यंपुत्राणांपृथिवीपतिः
आचचक्षेपुनस्तेषुहर्षेणाकुलमानसः १०८

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति-
चरित्रेसप्तसप्ततितमोऽध्यायः ७७

## अष्टसप्ततितमोऽध्यायः

ययातिरुवाच-

एकेनगृह्यतांपुत्राजरामेदुःखदायिनी
धीरेणभवतांमध्येतारुरायंममदीयताम् १
स्वकीयंहिमहाभागाःस्वरूपमिदमुत्तमम्
संतप्तंमानसंमेह्यस्त्रियांसक्तंसुचंचलम् २
भाजनस्थाययथाश्रापश्रावर्त्तयतिपावकः
तथामेमानसंपुत्राःकामानलसुचालितम् ३
एकोगृह्णातुमेपुत्राजरांदुःखप्रदायिनीम्
स्वकंददातुतारुरायंयथाकामंचराम्यहम् ४
योमेजरापसरणंकरिष्यतिसुतोत्तमः
सचमेभोद्त्यतेराज्यंधनुर्वंशंधरिष्यति ५
तस्यसौरव्यंसुसंपत्तिर्धनंधान्यंभविष्यति
विपुलासंततिस्तस्ययशःकीर्तिर्भविष्यति ६
पुत्राऊचुः-
भवान्धर्मपरोराजन्प्रजाःसत्येनपालकः
कस्मात्तेहीदृशोभावोजातःप्रकृतिचापलः ७
राजोवाच-
श्रागतानर्तकाःपूर्वंपुरंमेहिप्रनर्तकाः
तेभ्योमेकामसंमोहेजातोमोहश्चईदृशः ८
जरयाव्यापितःकायोमन्मथाविष्टमानसः
संबभूवसुतश्रेष्ठाःकामेनाकुलव्याकुलः ९
काचिद्दृष्टामयानारीदिव्यरूपावरानना
मयासंभाषितापुत्राःकिंचिन्नोवाचमेसती १०
विशालानामतस्याश्चसखीचारुविचत्तणा
सामामाहशुभंवाक्यंममसौरव्यप्रदायकम् ११
जराहीनोयदास्यास्त्वंतदातेसुप्रियाभवेत्
एवमंगीकृतंवाक्यंतयोक्तंगृहमागतः १२
मयाजरापनोदार्थंतदेवंसमुदाहृतम्
एवंज्ञात्वाप्रकर्तव्यंमत्सुखंहिसुपुत्रकाः १३
तुरुरुवाच-
शरीरंप्राप्यतेपुत्रैःपितुर्मातुःप्रसादतः

धर्मश्चक्रियतेराजञ्शरीरेणविपश्चिता १४
पित्रोःशुश्रूषणंकार्यंपुत्रैश्चापिविशेषतः
नचयौवनदानस्यकालोऽयमेनराधिप १५
प्रथमेवयसिभोक्तव्यंविषयंमानवैर्नृप
इदानींतन्नकालोयंवर्ततेतवसांप्रतम् १६
जरांतातप्रदत्वावैपुत्रेतातमहद्गताम्
पश्चात्सुखंप्रभोक्तव्यंनतुस्यात्तवजीवितम् १७
तस्माद्वाक्यंमहाराजकरिष्येनैवतेपुनः
एवमाभाषतनृपंतुरुर्ज्येष्ठसुतस्तदा १८
तुरोर्वाक्यंतुतच्छ्रुत्वाक्रुद्धोराजाबभूवसः
तुरुंशशापधर्मात्माक्रोधेनारुणलोचनः १९
अपध्वस्तस्त्वयाऽदेशोममायंपापचेतन
तस्मात्पापीभवस्वत्वंसर्वधर्मबहिष्कृतः २०
शिखयात्वंविहीनश्चवेदशास्त्रविवर्जितः
सर्वाचारविहीनस्त्वंभविष्यसिनसंशयः २१
ब्रह्मघ्नस्त्वंदेवदुष्टःसुरापःसत्यवर्जितः
चंडकर्मप्रकर्तात्वंभविष्यसिनराधमः २२
सुरालीनःक्षुधीपापीगोघ्नश्चत्वंभविष्यसि
दुश्चर्मामुक्तकच्छश्चब्रह्मद्वेष्टानिराकृतिः २३
परदाराभिगामीत्वंमहाचंडःप्रलंपटः
सर्वभक्षश्चदुर्मेधाःसदात्वंचभविष्यसि २४
सगोत्रांरमसेनारींसर्वधर्मप्रणाशकः
पुण्यज्ञानविहीनात्माकुष्ठवांश्चभविष्यसि २५
तवपुत्राश्चपौत्राश्चभविष्यंतिनसंशयः
ईदृशाःसर्वपुण्यघ्नाम्लेच्छाःसुकलुषीकृताः २६
एवंतुरुंसुशप्त्वैवयदुंपुत्रमथाब्रवीत्
जरांवैधारयस्वेहभुंद्ध्वराज्यमकंटकम् २७
बद्धाञ्जलिपुटोभूत्वायदूराजानमब्रवीत्
यदुरुवाच-
जराभारंनशक्नोमिवोढुंतातकृपांकुरु २८

शीतमध्वाकदन्नंचवयोतीताश्चयोषितः
मनसःप्रातिकूल्यंचजरायाःपंचहेतवः २९
जरादुःखंनशक्नोमिनवेवयसिभूपते
कःसमर्थोहिवैधर्तुंक्षमस्वत्वंममाधुना ३०
यदुंक्रुद्धोमहाराजःशशापद्विजनंदन
राज्यार्होनचतेवंशःकदाचिद्वैभविष्यति ३१
बलतेजःक्षमाहीनःक्षात्रधर्मविवर्जितः
भविष्यतिनसंदेहोमच्छासनपराङ्मुखः ३२
यदुरुवाच–
निर्दोषोहंमहाराजकस्माच्छप्तस्त्वयाधुना
कृपांकुरुष्वदीनस्यप्रसादसुमुखोभव ३३
राजोवाच–
महादेवःकुलेतेवैस्वांशेनापिहिपुत्रक
करिष्यतिविसृष्टिंचतदापूतंकुलंतव ३४
यदुरुवाच–
अहंपुत्रोमहाराजनिर्दोषःशापितस्त्वया
अनुग्रहोदीयतांमेयदिमेवर्त्ततेदया ३५
राजोवाच–
योभवेज्ज्येष्ठपुत्रस्तुपितुर्दुःखापहारकः
राज्यदायंसुभुंक्तेचभारवोढाभवेत्सहि ३६
त्वयाधर्मंनप्रवृत्तमभाष्योसिनसंशयः
भवतानाशिताज्ञामेमहादंडेनघातिनः ३७
तस्मादनुग्रहोनास्तियथेष्टंचतथाकुरु
यदुरुवाच–
यस्मान्मेनाशितंराज्यंकुलंरूपंत्वयानृप ३८
तस्माद्दुष्टोभविष्यामितववंशपतिर्नृप
तववंशेभविष्यंतिनानाभेदास्तुक्षत्रियाः ३९
तेषांग्रामान्सुदेशांश्चस्त्रियोरत्नानियानिवै
भोक्ष्यंतिचनसंदेहोअतिचंडामहाबलाः ४०
ममवंशात्समुत्पन्नास्तुरुष्काम्लेच्छरूपिणः

त्वयायेनाशिताःसर्वेशप्ताःशापैःसुदारुणैः ४१
एवंबभाषेराजानंयदुःक्रुद्धोनृपोत्तम
अथक्रुद्धोमहाराजःपुनश्चैवंशशशापह ४२
मत्प्रजानाशकाःसर्वेवंशजास्तेशृणुष्वहि
यावच्चंद्रश्चसूर्यश्चपृथ्वीनक्षत्रतारकाः ४३
तावन्म्लेच्छाःप्रपद्यंतेकुंभीपाकेचरौरवे
कुरुंदृष्ट्वाततोबालंक्रीडमानंसुलक्षणम् ४४
समाह्वयतितंराजानसुतंनृपनंदनम्
शिशुंज्ञात्वापरित्यक्तःसकुरुस्तेनवैतदा ४५
शर्मिष्ठायाःसुतंपुण्यंतंपूरुंजगदीश्वरः
समाहूयबभाषेचजरामेगृह्यतांपुनः ४६
भुंक्ष्वराज्यंमयादत्तंसुपुण्यंहतकंटकम्
पूरुरुवाच–
राज्यंदेवेनभोक्तव्यंपित्राभुक्तंयथातव ४७
त्वदादेशंकरिष्यामिजरामेदीयतांनृप
तारुण्येनममाद्यैवभूत्वासुंदररूपदृक् ४८
भुंक्ष्वभोगान्सुकर्माणिविषयासक्तचेतसा
यावदिच्छामहाभागविहरस्वतयासह ४९
यावज्जीवाम्यहंतातजरांतावद्धराम्यहम्
एवमुक्तस्तुतेनापिपूरुणाजगतीपतिः ५०
हर्षेणमहताविष्टस्तंपुत्रंप्रत्युवाचसः
यस्माद्वत्सममाज्ञावैनहताकृतवानिह ५१
तस्मादहंविधास्यामिबहुसौख्यप्रदायकम्
यस्माज्जरागृहीतामेदत्तंतारुण्यकंस्वकम् ५२
तेनराज्यंप्रभुंक्ष्वत्वंमयादत्तंमहामते
एवमुक्तःसुपूरुश्चतेनराज्ञामहीपते ५३
तारुण्यंदत्तवानस्मैजग्राहास्माज्जरांनृप
ततःकृतेविनिमयेवयसोस्तातपुत्रयोः ५४
तस्माद्वृद्धतरःपूरुःसर्वांगेषुव्यदृश्यत
नूतनत्वंगतोराजायथाषोडशवार्षिकः ५५

रूपेणमहताविष्टोद्वितीयइवमन्मथः
धनूराज्यंचछत्रंचव्यजनंचासनंगजम् ५६
कोशंदेशंबलंसर्वंचामरंस्यंदनंतथा
ददौतस्यमहाराजःपूरोश्चैवमहात्मनः ५७
कामासक्तश्चधर्मात्मातांनारीमनुचिंतयन्
तत्सरःसागरप्रख्यंकामाख्यंनहुषात्मजः ५८
अश्रुबिंदुमतीयत्रजगामलघुविक्रमः
तांदृष्ट्वातुविशालाक्षींचारुपीनपयोधराम् ५९
विशालांचमहाराजःकंदर्पाकृष्टमानसः
राजोवाच-
आगतोऽस्मिमहाभागेविशालेचारुलोचने ६०
जरात्यागःकृतोभद्रेतारुरायेनसमन्वितः
युवाभूत्वासमायातोभवत्वेषाममाधुना ६१
यंयंहिवांछतेचैषातंतंदद्मिनसंशयः
विशालोवाच-
यदाभवान्समायातोजरांदुष्टांविहायच ६२
दोषेणैकेनलिप्तोसिभवंतंनैवमन्यते
राजोवाच-
ममदोषंवदस्वत्वंयदिजानासिनिश्चितम् ६३
तंतुदोषंपरित्यक्ष्येगुणरूपंनसंशयः ६४

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति-
चरितेऽष्टसप्ततितमोऽध्यायः ७८

एकोनाशीतितमोऽध्यायः

विशालोवाच-
शर्मिष्ठायस्यवैभार्यादेवयानीवरानना
सौभाग्यंतत्रवैदृष्टमन्यथानास्तिभूपते १
तत्कथंत्वंमहाभागअस्याःकार्यवशोभवेः
सपत्नजेनभावेनभवान्भर्ताप्रतिष्ठितः २
ससर्पोसिमहाराजभूतलेचंदनंयथा

सर्पैश्चवेष्टितोराजन्महाचंदनएवहि ३
तथात्वंवेष्टितःसर्पैःसपत्नीनामसंज्ञकैः
वरमग्निप्रवेशश्चशिखाग्रात्पतनंवरम् ४
रूपतेजःसमायुक्तंसपत्नीसहितंप्रियम्
नवरंतादृशंकांतंसपत्नीविषसंयुतम् ५
तस्मान्नमन्यतेकांतंभवंतंगुणसागरम्
राजोवाच-
देवयान्यानमेकार्यंशर्मिष्ठयावरानने ६
इत्यर्थंपश्यमेकोशंसत्वधर्मसमन्वितम्
अश्रुबिंदुमत्युवाच-
अहंराज्यस्यभोक्त्रीचतवकायस्यभूपते ७
यद्यद्वदाम्यहंभूपतत्तत्कार्यंत्वयाध्रुवम्
इत्यर्थेममदेहिस्वंकरंत्वंधर्मवत्सल ८
बहुधर्मसमोपेतंचारुलक्षणसंयुतम्
राजोवाच-
अन्यभार्यांनविंदामित्वांविनावरवर्णिनि ९
राज्यंचसकलामुर्वींममकायंवरानने
सकोशंभुंक्ष्वचार्वंगिएषदत्तःकरस्तव १०
यदेवभाषसेभद्रेतदेवंतुकरोम्यहम्
अश्रुबिंदुमत्युवाच-
अनेनापिमहाभागतवभार्याभवाम्यहम् ११
एवमाकर्ण्यराजेंद्रोहर्षव्याकुललोचनः
गांधर्वेणविवाहेनययातिःपृथिवीपतिः १२
उपयेमेसुतांपुण्यांमन्मथस्यनरोत्तम
तयासार्द्धंमहात्मावैरमतेनृपनंदनः १३
सागरस्यचतीरेषुवनेषूपवनेषुच
पर्वतेषुचरम्येषुसरित्सुचतयासह १४
रमतेराजराजेंद्रस्तारुण्येनमहीपतिः
एवंविंशत्सहस्राणिगतानिनिरतस्यच १५
भूपस्यतस्यराजेंद्रययातेस्तुमहात्मनः

विष्णुरुवाच-
एवंतयामहाराजोययातिर्मोहितस्तदा १६
कंदर्पस्यप्रपंचेनइंद्रस्यार्थेमहामते
सुकर्मोवाच-
एवंपिप्पलराजासौययातिःपृथिवीपतिः १७
तस्यामोहनकामेनरतेनललितेनच
नजानातिदिनंरात्रिंमुग्धःकामस्यकन्यया १८
एकदामोहितंभूपंययातिंकामनंदिनी
उवाचप्रणतंनम्रंवशगंचारुलोचना १९
अश्रुबिंदुमत्युवाच-
संजातंदोहदंकांततन्मेकुरुमनोरथम्
अश्वमेधमखश्रेष्ठंयजस्वपृथिवीपते २०
राजोवाच-
एवमस्तुमहाभागेकरोमितवसुप्रियम्
समाहूयसुतश्रेष्ठंराज्यभोगेविनिःस्पृहम् २१
समाहूतःसमायातोभक्त्यानमितकंधरः
बद्धांजलिपुटोभूत्वाप्रणाममकरोत्तदा २२
तस्याःपादौननामाथभक्त्यानमितकंधरः
आदेशोदीयतांराजन्येनाहूतःसमागतः २३
किंकरोमिमहाभागदासस्तेप्रणतोस्मिच
राजोवाच-
अश्वमेधस्ययज्ञस्यसंभारंकुरुपुत्रक २४
समाहूयद्विजान्पुरायानृत्विजोभूमिपालकान्
एवमुक्तोमहातेजाःपूरुःपरमधार्मिकः २५
सर्वंचकारसंपूर्णंयथोक्तंतुमहात्मना
तयासार्धंसजग्राहसुदीक्षांकामकन्यया २६
अश्वमेधयज्ञवाटेदत्वादानान्यनेकधा
ब्राह्मणेभ्योमहाराजभूरिदानमनंतकम् २७
दीनेषुचविशेषेणययातिःपृथिवीपतिः
यज्ञांतेचमहाराजस्तामुवाचवराननाम् २८

अन्यत्तेसुप्रियंबालेकिंकरोमिवदस्वमे
तत्सर्वंदेविकर्तास्मिसाध्यासाध्यंवरानने २९
सुकर्मोवाच-
इत्युक्तातेनसाराज्ञाभूपालंप्रत्युवाचह
जातोमेदोहदोराजंस्तत्कुरुष्वममानघ ३०
इंद्रलोकंब्रह्मलोकंशिवलोकंतथैवच
विष्णुलोकंमहाराजद्रष्टुमिच्छामिसुप्रियम् ३१
दर्शयस्वमहाभागयदहंसुप्रियातव
एवमुक्तस्तयाराजातामुवाचससुप्रियाम् ३२
साधुसाधुवरारोहेपुण्यमेवप्रभाषसे
स्त्रीस्वभावाच्चचापल्यात्कौतुकाच्चवरानने ३३
यत्तवोक्तंमहाभागेतदसाध्यंविभातिमे
तत्साध्यंपुण्यदानेनयज्ञेनतपसापिच ३४
अन्यथानभवेत्साध्यंयत्त्वयोक्तंवरानने
असाध्यंतुभवत्यावैभाषितंपुण्यमिश्रितम् ३५
मर्त्यलोकाच्छरीरेणअनेनापिचमानवः
श्रुतोदृष्टोनमेद्यापिगतःस्वर्गंसुपुण्यकृत् ३६
ततोऽसाध्यंवरारोहेयत्त्वयाभाषितंमम
अन्यदेवकरिष्यामिप्रियंतेतद्वदप्रिये ३७
देव्युवाच-
अन्यैश्चमानुषैराजन्नसाध्यंस्यान्नसंशयः
त्वयिसाध्यंमहाराजसत्यंसत्यंवदाम्यहम् ३८
तपसायशसाक्षात्रैर्दानैर्यज्ञैश्चभूपते
नास्तिभवादृशश्चान्योमर्त्यलोकेचमानवः ३९
क्षात्रंबलंसुतेजश्चत्वयिसर्वंप्रतिष्ठितम्
तस्मादेवंप्रकर्तव्यंमत्प्रियंनहुषात्मज ४०

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति-
चरित्रेएकोनाशीतितमोऽध्यायः ७९

## अशीतितमोऽध्यायः

पिप्पलउवाच-
कामकन्यांयदाराजाउपयेमेद्विजोत्तम
किंचक्रातेतदातेद्वेपूर्वभार्येसुपुरायके १
देवयानीमहाभागाशर्मिष्ठावार्षपर्वणी
तयोश्चरित्रंतत्सर्वंकथयस्वममाग्रतः २
सुकर्मोवाच-
यदानीताकामकन्यास्वगृहंतेनभूभुजा
अत्यर्थंस्पर्धतेसातुदेवयानीमनस्विनी ३
तस्यार्थेतुसुतौशप्तौक्रोधेनाकुलितात्मना
शर्मिष्ठांचसमाहूयशब्दंचक्रेयशस्विनी ४
रूपेणतेजसादानैःसत्यपुरायव्रतैस्तथा
शर्मिष्ठादेवयानीचस्पर्धेतेस्मतयासह ५
दुष्टभावंतयोश्चापिसाऽज्ञासीत्कामजातदा
राज्ञेसर्वंतयाविप्रकथितंतत्क्षणादिह ६
अथक्रुद्धोमहाराजःसमाहूयाब्रवीद्यदुम्
शर्मिष्ठावध्यतांगत्वाशुक्रपुत्रीतथापुनः ७
सुप्रियंकुरुमेवत्सयदिश्रेयोहिमन्यसे
एवमाकर्ण्यतत्तस्यपितुर्वाक्यंयदुस्तदा ८
प्रत्युवाचनृपेंद्रंतंपितरंप्रतिमानद
नाहंतुघातयेतातमातरौदोषवर्जिते ९
मातृघातेमहादोषःकथितोवेदपंडितैः
तस्माद्घातंमहाराजएतयोर्नकरोम्यहम् १०
दोषाणांतुसहस्रेणमातालिप्तायदाभवेत्
भगिनीचमहाराजदुहिताचतथापुनः ११
पुत्रैर्वाभ्रातृभिश्चैवनैववध्याभवेत्कदा
एवंज्ञात्वामहाराजमातरौनैवघातये १२
यदोर्वाक्यंतदाश्रुत्वाराजाक्रुद्धोबभूवह
शशापतंसुतंपश्चाद्ययातिःपृथिवीपतिः १३
यस्मादाज्ञाहतात्वद्यत्वयापापिसमोपिहि

मातुरंशंभजस्वत्वंमच्छापकलुषीकृतः १४
एवमुक्त्वायदुंपुत्रंययातिःपृथिवीपतिः
पुत्रंशप्त्वामहाराजस्तयासार्द्धंमहायशाः १५
रमतेसुखभोगेनविष्णोर्ध्यानेनतत्परः
अश्रुबिंदुमतीसाचतेनसार्द्धंसुलोचना १६
बुभुजेचारुसर्वांगीपुण्यान्भोगान्मनोनुगान्
एवंकालोगतस्तस्ययथातेस्तुमहात्मनः १७
अक्षयानिर्जराःसर्वाअपरास्तुप्रजास्तथा
सर्वेलोकामहाभागविष्णुध्यानपरायणाः १८
तपसासत्यभावेनविष्णोर्ध्यानेनपिप्पल
सर्वेलोकामहाभागसुखिनःसाधुसेवकाः १९

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति-
चरित्रेऽशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

सुकर्मोवाच-
यथेंद्रोसौमहाप्राज्ञःसदाभीतोमहात्मनः
ययातेर्विक्रमंदृष्ट्वादानपुण्यादिकंबहु १
मेनकांप्रेषयामासअप्सरांदूतकर्मणि
गच्छभद्रेमहाभागेममादेशंवदस्वहि २
कामकन्यामितोगत्वादेवराजवचोवद
येनकेनाप्युपायेनराजानंत्वमिहानय ३
एवंश्रुत्वागतासाचमेनकातत्रप्रेषिता
समाचष्टतुतत्सर्वंदेवराजस्यभाषितम् ४
एवमुक्तागतासाचमेनकातत्प्रचोदिता
गतायांमेनकायांतुरतिपुत्रीमनस्विनी ५
राजानंधर्मसंकेतंप्रत्युवाचयशस्विनी
राजंस्त्वयाहमानीतासत्यवाक्येनवैपुरा ६
स्वकरश्चांतरेदत्तोभवनंचसमाहृता
यद्यद्वदाम्यहंराजंस्तत्तत्कार्यंहिवैत्वया ७

तदेवंहित्वयावीरनकृतंभाषितंमम
त्वामेवंतुपरित्यद्त्येयास्यामिपितृमंदिरम् ८
राजोवाच-
यथोक्तंहित्वयाभद्रेतत्तेकर्त्तानसंशयः
असाध्यंतुपरित्यज्यसाध्यंदेविवदस्वमे ९
अश्रुबिंदुमत्युवाच-
एतदर्थेमहीकांतभवानिहमयावृतः
सर्वलक्षणसंपन्नःसर्वधर्मसमन्वितः १०
सर्वंसाध्यमितिज्ञात्वासर्वधर्तारमेवच
कर्त्तारंसर्वधर्माणांस्रष्टारंपुरयकर्मणाम् ११
त्रैलोक्यसाधकंज्ञात्वात्रैलोक्येऽप्रतिमंचवै
विष्णुभक्तमहंजानेवैष्णवानांमहावरम् १२
इत्याशयामयाभर्त्ताभवानंगीकृतःपुरा
यस्यविष्णुप्रसादोऽस्तिससर्वत्रपरिव्रजेत् १३
दुर्लभंनास्तिराजेंद्रत्रैलोक्येसचराचरे
सर्वेष्वेवसुलोकेषुविद्यतेतवसुव्रत १४
विष्णोश्चैवप्रसादेनगगनेगतिरुत्तमा
मर्त्यलोकंसमासाद्यत्वयैववसुधाधिप १५
जरापलितहीनास्तुमृत्युहीनाजनाःकृताः
गृहद्वारेषुसर्वेषुमर्त्यानांचनरर्षभ १६
कल्पद्रुमाअनेकाश्चत्वयैवपरिकल्पिताः
येषांगृहेषुमर्त्यानांमुनयःकामधेनवः १७
त्वयैवप्रेषिताराजन्स्थिरीभूताःसदाकृताः
सुखिनःसर्वकामैश्चमानवाश्चत्वयाकृताः १८
गृहैकमध्येसाहस्रंकुलीनानांप्रदृश्यते
एवंवंशविवृद्धिश्चमानवानांत्वयाकृता १९
यमस्यापिविरोधेनइंद्रस्यचनरोत्तम
व्याधिपापविहीनस्तुमर्त्यलोकस्त्वयाकृतः २०
स्वतेजसाहंकारेणस्वर्गरूपंतुभूतलम्
दर्शितंहिमहाराजत्वत्समोनास्तिभूपतिः २१

नरोनैवप्रसूतोहिनोत्पत्स्यतिभवादृशः
भवंतमित्यहंजानेसर्वधर्मप्रभाकरम् २२
तस्मान्मयाकृतोभर्तावदस्वैवंममाग्रतः
नर्ममुक्त्वानृपेंद्रत्वंवदसत्यंममाग्रतः २३
यदितेसत्यमस्तीहधर्ममस्तिनराधिप
देवलोकेषुमेनास्तिगगनेगतिरुत्तमा २४
सत्यंत्यक्त्वायदाचत्वंनैवस्वर्गंगमिष्यसि
तदाकूटंतववचोभविष्यतिनसंशयः २५
पूर्वंकृतंहियच्छ्रेयोभस्मीभूतंभविष्यति
राजोवाच–
सत्यमुक्तंत्वयाभद्रेसाध्यासाध्यंनचास्तिमे २६
सर्वंसाध्यंसुलोकंमेसुप्रसादाज्जगत्पते
स्वर्गंदेवियतोनैमितत्रमेकारणंशृणु २७
आगंतुंतुनदास्यंतिलोकेमर्त्येचदेवताः
ततोमेमानवाःसर्वेप्रजाःसर्वावरानने २८
मृत्युयुक्ताभविष्यंतिमयाहीनानसंशयः
गंतुंस्वर्गंनवाञ्छामिसत्यमुक्तंवरानने २९
देव्युवाच–
लोकान्दृष्ट्वामहाराजआगमिष्यसिवैपुनः
पूरयस्वममाद्यत्वंजातांश्रद्धांमहातुलाम् ३०
राजोवाच–
सर्वमेवंकरिष्यामियत्त्वयोक्तंनसंशयः
समालोक्यमहातेजाययातिर्नहुषात्मजः ३१
एवमुक्त्वाप्रियांराजाचिंतयामासवैतदा
अंतर्जलचरोमत्स्यःसोपिजालेनबध्यते ३२
मरुत्समानवेगोपिमृगःप्राप्नोतिबंधनम्
योजनानांसहस्रस्थमामिषंवीक्षतेखगः ३३
सकंठलग्नपाशंचनपश्येद्दैवमोहितः
कालःसमविषमकृत्कालःसन्मानहानिदः ३४
परिभावकरःकालोयत्रकुत्रापितिष्ठतः

नरंकरोतिदातारंयाचितारंचवैपुनः ३५
भूतानिस्थावरादीनिदिविवायदिवाभुवि
सर्वंकलयतेकालःकालोह्येकइदंजगत् ३६
अनादिनिधनोधाताजगतःकारणंपरम्
लोकान्कालःसपचतिवृक्षेफलमिवाहितम् ३७
नमंत्रानतपोदानंनमित्राणिनबांधवाः
शक्नुवंतिपरित्रातुंनरंकालेनपीडितम् ३८
त्रयःकालकृताःपाशाःशक्यंतेनातिवर्तितुम्
विवाहोजन्ममरणंयदायत्रतुयेनच ३९
यथाजलधराव्योम्निभ्राम्यंतेमातरिश्वना
तथेदंकर्मयुक्तेनकालेनभ्राम्यतेजगत् ४०
सुकर्मोवाच–
कालोऽयकर्मयुक्तस्तुयोनरैःसमुपासितः
कालस्तुप्रेरयेत्कर्मनतंकालःकरोतिसः ४१
उपद्रवाघातदोषाःसर्पाश्चव्याधयस्ततः
सर्वेकर्मनियुक्तास्तेप्रचरंतिचमानुषे ४२
सुखस्यहेतवोयेचउपायाःपुण्यमिश्रिताः
तेसर्वेकर्मसंयुक्तानपश्येयुःशुभाशुभम् ४३
कर्मदायदिवालोकेकर्मसंबधिबांधवाः
कर्माणिचोदयंतीहपुरुषंसुखदुःखयोः ४४
सुवर्णंरजतंवापियथारूपंविनिश्चितम्
तथानिबध्यतेजंतुःस्वकर्मणिवशानुगः ४५
पंचैतानीहसृज्यंतेगर्भस्थस्यैवदेहिनः
आयुःकर्मचवित्तंचविद्यानिधनमेवच ४६
यथामृत्पिंडतःकर्ताकुरुतेयद्यदिच्छति
तथापूर्वकृतंकर्मकर्तारमनुगच्छति ४७
देवत्वमथमानुष्यंपशुत्वंपक्षितातथा
तिर्यक्त्वंस्थावरत्वंचप्राप्यतेचस्वकर्मभिः ४८
सएवतत्तथाभुंक्तेनित्यंविहितमात्मना
आत्मनाविहितंदुःखंचात्मनाविहितंसुखम् ४९

गर्भशय्यामुपादायभुंजतेपूर्वदैहिकम्
संत्यजंतिस्वकंकर्मनक्वचित्पुरुषाभुवि ५०
बलेनप्रज्ञयावापिसमर्थाःकर्तुमन्यथा
सुकृतान्युपभुंजंतिदुःखानिचसुखानिच ५१
हेतुंप्राप्यनरोनित्यंकर्मबंधैस्तुबध्यते
यथाधेनुसहस्रेषुवत्सोविंदतिमातरम् ५२
तथाशुभाशुभंकर्मकर्तारमनुगच्छति
उपभोगादृतेयस्यनाशएवनविद्यते ५३
प्राक्तनंबंधनंकर्मकोन्यथाकर्तुमर्हति
सुशीघ्रमपिधावंतंविधानमनुधावति ५४
शेतेसहशयानेनपुराकर्मयथाकृतम्
उपतिष्ठतितिष्ठंतंगच्छंतमनुगच्छति ५५
करोतिकुर्वतःकर्मच्छायेवानुविधीयते
यथाछायातपौनित्यंसुसंबद्धौपरस्परम् ५६
तद्वत्कर्मचकर्ताचसुसंबद्धौपरस्परम्
ग्रहारोगाविषाःसर्पाःशाकिन्योराक्षसास्तथा ५७
पीडयंतिनरंपश्चात्पीडितंपूर्वकर्मणा
येनयत्रोपभोक्तव्यंसुखंवादुःखमेववा ५८
सतत्रबद्ध्वारज्ज्वावैबलाद्दैवेननीयते
दैवःप्रभुर्हिभूतानांसुखदुःखोपपादने ५९
अन्यथाचिंत्यतेकर्मजाग्रतास्वपतापिवा
अन्यथासतथाप्राज्ञदैवएवंजिघांसति ६०
शस्त्राग्निविषदुर्गेभ्योरक्षितव्यंचरक्षति
अरक्षितंभवेत्सत्यंतदेवंदैवरक्षितम् ६१
दैवेननाशितंयत्तुतस्यरक्षानदृश्यते
यथापृथिव्यांबीजानिउप्तानिचधनानिच ६२
तथैवात्मनिकर्माणितिष्ठंतिप्रभवंतिच
तैलक्षयाद्यथादीपोनिर्वाणमधिगच्छति ६३
कर्मक्षयात्तथाजंतुःशरीरान्नाशमृच्छति
कर्मक्षयात्तथामृत्युस्तत्त्वविद्भिरुदाहृतः ६४

विविधाःप्राणिनस्तस्यमृत्योरोगाश्चहेतवः
तथाममविपाकोयंपूर्वंकृतस्यनान्यथा ६५
संप्राप्तोनात्रसंदेहःस्त्रीरूपोऽयनसंशयः
क्वमेगेहंसमायातानाटकानटनर्तकाः ६६
तेषांसंगप्रसंगेनजरादेहंसमाश्रिता
सर्वंकर्मकृतंमन्येयन्मेसंभावितंध्रुवम् ६७
तस्मात्कर्मप्रधानंचउपायाश्चनिरर्थकाः
पुरावैदेवराजेनमदर्थेदूतसत्तमः ६८
प्रेषितोमातलिर्नामनकृतंतस्यतद्वचः
तस्यकर्मविपाकोऽयदृश्यतेसांप्रतंमम ६९
इतिचिंतापरोभूत्वादुःखेनमहतान्वितः
यद्यस्याहिवचःप्रीत्यानकरोमिहिसर्वथा ७०
सत्यधर्मावुभावेतौयास्यतस्तौनसंशयः
सदृशंचसमायातंयद्दृष्टंममकर्मणा ७१
भविष्यतिनसंदेहोदैवोहिदुरतिक्रमः
एवंचिंतापरोभूत्वाययातिःपृथिवीपतिः ७२
कृष्णंक्लेशापहंदेवंजगामशरणंहरिम्
ध्यात्वानत्वाततःस्तुत्वामनसामधुसूदनम् ७३
त्राहिमांशरणंप्राप्तस्त्वामहंकमलाप्रिय ७४

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति-
चरित्रेएकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

सुकर्मोवाच-
एवंचिंतयतेयावद्राजापरमधार्मिकः
तावत्प्रोवाचसादेवीरतिपुत्रीवरानना १
किमुचिंतयसेराजंस्त्वमिहैवमहामते
प्रायेणापिस्त्रियःसर्वाश्चपलाःस्युर्नसंशयः २
नाहंचापल्यभावेनत्वामेवंप्रविचालये
नाहंहिकारयाम्यद्यभवत्पार्श्वंनृपोत्तम ३

अन्यस्त्रियोयथालोकेचपलत्वाद्वदंतिच
अकार्यंराजराजेंद्रलोभान्मोहाच्चलंपटाः ४
लोकानांदर्शनायैवजाताश्रद्धाममोरसि
देवानांदर्शनंपुण्यंदुर्लभंहिसुमानुषैः ५
तेषांचदर्शनंराजन्कारयामिवदस्वमे
दोषंपापकरंयत्तुमत्संगादिहचेद्भवेत् ६
एवंचिंतयसेदुःखंयथान्यःप्राकृतोजनः
महाभयाद्यथाभीतोमोहगर्तेगतोयथा ७
त्यजचिंतांमहाराजनगंतव्यंत्वयादिवि
येनतेजायतेदुःखंतन्नकार्यंमयाकदा ८
एवमुक्तस्तथाराजातामुवाचवराननाम्
चिंतितंयन्मयादेवितच्छृणुष्वहिसांप्रतम् ९
मानभंगोमयादृष्टोनैवस्वस्यमनःप्रिये
मयिस्वर्गंगतेकांतेप्रजादीनाभविष्यति १०
त्रासयिष्यतिदुष्टात्मायमस्तुव्याधिभिःप्रजाः
त्वयासार्धंप्रयास्यामिस्वर्गलोकंवरानने ११
एवमाभाष्यतांराजासमाहूयसुतोत्तमम्
पूरुंतंसर्वधर्मज्ञंजरायुक्तंमहामतिम् १२
एह्येहिसर्वधर्मज्ञधर्मंजानासिनिश्चितम्
ममाज्ञयाहिधर्मात्मन्धर्मःसंपालितस्त्वया १३
जरामेदीयतांतातततारुण्यंगृह्यतांपुनः
राज्यंकुरुममेदंत्वंसकोशबलवाहनम् १४
आसमुद्रांप्रभुंद्वत्वंरत्नपूर्णांवसुंधराम्
मयादत्तांमहाभागसग्रामवनपत्तनाम् १५
प्रजानांपालनंपुण्यंकर्तव्यंचसदानघ
दुष्टानांशासनंनित्यंसाधूनांपरिपालनम् १६
कर्तव्यंचत्वयावत्सधर्मशास्त्रप्रमाणतः
ब्राह्मणानांमहाभागविधिनापिस्वकर्मणा १७
भक्त्याचपालनंकार्यंयस्मात्पूज्याजगत्त्रये
पंचमेसप्तमेघस्त्रेकोशंपश्यविपश्चितः १८

बलंचनित्यंसंपूज्यंप्रसादधनभोजनैः
चारचक्षुर्भवस्वत्वंनित्यंदानपरोभव १९
भवस्वनियतोमंत्रेसदागोप्यःसुपंडितैः
नियतात्माभवस्वत्वंमागच्छमृगयांसुत २०
विश्वासःकस्यनोकार्यःस्त्रीषुकोशेमहाबले
पात्राणांत्वंतुसर्वेषांकलानांकुरुसंग्रहम् २१
यजयज्ञैर्हृषीकेशंपुण्यात्माभवसर्वदा
प्रजानांकंटकान्सर्वान्मर्दयस्वदिनेदिने २२
प्रजानांवांछितंसर्वमर्पयस्वदिनेदिने
प्रजासौख्यंप्रकर्तव्यंप्रजाःपोषयपुत्रक २३
स्वकोवंशःप्रकर्तव्यःपरदारेषुमाकृथाः
मतिंदुष्टांपरस्वेषुपूर्वानन्वेहिसर्वदा २४
वेदानांहिसदाचिंताशास्त्राणांहिचसर्वदा
कुरुष्वैवंसदावत्सशस्त्राभ्यासरतोभव २५
संतुष्टःसर्वदावत्सस्वशय्यानिरतोभव
गजस्यवाजिनोभ्यासंस्यंदनस्यचसर्वदा २६
एवमादिश्यतंपुत्रमाशीर्भिरभिनंद्यच
स्वहस्तेनचसंस्थाप्यकरेदत्तंस्वमायुधम् २७
स्वांजरांतुसमागृह्यदत्त्वातारुण्यमस्यच
गंतुकामस्ततःस्वर्गंययातिःपृथिवीपतिः २८

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति-
चरित्रेद्व्यशीतितमोऽध्यायः ८२

त्र्यशीतितमोऽध्यायः

सुकर्मोवाच-
समाहूयप्रजाःसर्वाद्वीपानांवसुधाधिपः
हर्षेणमहताविष्टइदंवचनमब्रवीत् १
इंद्रलोकंब्रह्मलोकंरुद्रलोकमतःपरम्
वैष्णवंसर्वपापघ्नंप्राणिनांगतिदायकम् २
व्रजाम्यहंनसंदेहोह्यनयासहसत्तमाः

ब्राह्मणाः क्षत्रियावैश्याःसशूद्राश्चप्रजामम ३
सुखेनापिसकुटुंबैःस्थातव्यंतुमहीतले
पूरुरेषमहाभागोभवतांपालकस्त्विह ४
स्थापितोस्तिमयालोकाराजाधीरःसदंडकः
एवमुक्तास्तुताःसर्वाःप्रजाराजानमब्रुवन् ५
श्रूयतेसर्ववेदेषुपुराणेषुनृपोत्तम
धर्मएवंयतोलोकेनदृष्टःकेनवैपुरा ६
दृष्टोस्माभिरसौधर्मोदशांगःसत्यवल्लभः
सोमवंशसमुत्पन्नोनहुषस्यमहागृहे ७
हस्तपादमुखैर्युक्तःसर्वाचारप्रचारकः
ज्ञानविज्ञानसंपन्नःपुण्यानांचमहानिधिः ८
गुणानांहिमहाराजआकरःसत्यपंडितः
कुर्वंतिचमहाधर्मंसत्यवंतोमहौजसः ९
तंधर्मंदृष्टवंतःस्मभवंतंकामरूपिणम्
भवंतंकामकर्तारमीदृशंसत्यवादिनम् १०
कर्मणात्रिविधेनापिवयंत्यक्तुंनशक्नुमः
यत्रत्वंतत्रगच्छामःसुसुखंपुण्यमेवच ११
नरकेपिभवान्यत्रवयंतत्रनसंशयः
किंदारैर्धनभोगैश्चकिंजीवैर्जीवितेनच १२
त्वांविनासुमहाराजतेननास्त्यत्रकारणम्
त्वयैवसहराजेंद्रवयंयास्यामनान्यथा १३
एवंश्रुत्वावचस्तासांप्रजानांपृथिवीपतिः
हर्षेणमहताविष्टःप्रजावाक्यमुवाचह १४
आगच्छंतुमयासार्द्धंसर्वेलोकाःसुपुण्यकाः
नृपोरथंसमारुह्यतयावैकामकन्यया १५
रथेनहंसवर्णेनचंद्रबिंबानुकारिणा
चामरैर्व्यजनैश्चापिवीज्यमानोगतव्यथः १६
केतुनातेनपुण्येनशुभ्रेणापिमहीयसा
शोभमानोयथादेवोदेवराजःपुरंदरः १७
ऋषिभिःस्तूयमानस्तुबंदिभिश्चारणैस्तथा

प्रजाभिःस्तूयमानश्चययातिर्नहुषात्मजः १८
प्रजाःसर्वास्ततोयानैःसमायातानरेश्वरम्
गजैरश्वैरथैश्चान्यैःप्रस्थिताश्चदिवंप्रति १९
ब्राह्मणाःन्नत्रियावैश्याःशूद्राश्चान्येपृथग्जनाः
सर्वेचवैष्णवालोकाविष्णुध्यानपरायणाः २०
तेषांतुकेतवःशुक्लाहेमदंडैरलंकृताः
शंखचक्रांकिताःसर्वेसदंडाःसपताकिनः २१
प्रजावृंदेषुभासंतेपताकामारुतेरिताः
दिव्यमालाधरास्सर्वेशोभितास्तुलसीदलैः २२
दिव्यचंदनदिग्धांगादिव्यगंधानुलेपनाः
दिव्यवस्त्रकृताशोभादिव्याभरणभूषिताः २३
सर्वेलोकाःसुरूपास्तेराजानमुपजग्मिरे
प्रजाशतसहस्राणिलन्नकोटिशतानिच २४
अर्वखर्वसहस्राणितेजनाःप्रतिजग्मिरे
तेतुराज्ञासमंसर्वेवैष्णवाःपुगयकारिणः २५
विष्णुध्यानपराःसर्वेजपदानपरायणाः
सुकर्मोवाच-
एवंतेप्रस्थिताःसर्वेहर्षेणमहतान्विताः २६
पूरुंपुत्रंमहाराजस्वराज्येपरिषिच्यतम्
एंद्रंलोकंजगामाथययातिःपृथिवीपतिः २७
तेजसातस्यपुगयेनधर्मेणतपसातदा
तेजनाःप्रस्थिताःसर्वेवैष्णवंलोकमुत्तमम् २८
ततोदेवाःसगंधर्वाःकिन्नराश्चारणास्तथा
सहितादेवराजेनआगताःसंमुखंतदा २९
तस्यैवापिनृपेंद्रस्यपूजयंतोनृपोत्तम
इंद्रउवाच-
स्वागतंतेमहाराजममगेहंसमाविश ३०
अत्रभोगान्प्रभुंन्वत्वंदिव्यान्कामान्मनोऽनुगान्
राजोवाच-
सहस्रान्नमहाप्राज्ञतवपादांबुजद्वयम् ३१

नमस्करोम्यहंदेवब्रह्मलोकंव्रजाम्यहम्
देवैःसंस्तूयमानश्चब्रह्मलोकंजगामह ३२
पद्मयोनिर्महातेजाःसार्धंमुनिवरैस्तदा
आतिथ्यंचचकारास्यपाद्यार्घादिसुविष्टरैः ३३
उवाचविष्णुलोकंहिप्रयाहित्वंस्वकर्मणा
एवमाभाषितेधात्राजगामशिवमंदिरम् ३४
चक्रेआतिथ्यपूजांचउमयासहशंकरः
तस्यैवापिनृपेंद्रस्यराजानमिदमब्रवीत् ३५
कृष्णभक्तोसिराजेंद्रममापिसुप्रियोभवान्
ततोययातेराजेंद्रवसत्वंममममंदिरम् ३६
सर्वान्भोगान्प्रभुंन्क्ष्वत्वंदुःखप्राप्यान्हिमानुषैः
अंतरंनास्तिराजेंद्रममविष्णोर्नसंशयः ३७
योसौविष्णुस्वरूपेणसवैरुद्रोनसंशयः
योरुद्रोविद्यतेराजन्सचविष्णुःसनातनः ३८
उभयोरंतरंनास्तितस्माच्चैववदाम्यहम्
विष्णुभक्तस्यपुण्यस्यस्थानमेवददाम्यहम् ३९
तस्मादत्रमहाराजस्थातव्यंहित्वयानघ
एवमुक्तःशिवेनापिययातिर्हरिवल्लभः ४०
भक्त्याप्रणम्यदेवेशंशंकरंनतकंधरः
एतत्सर्वंमहादेवत्वयोक्तमिहसांप्रतम् ४१
युवयोरंतरंनास्तिएकामूर्तिर्द्विधाभवत्
वैष्णवंगंतुमिच्छामिपादौतवनमाम्यहम् ४२
एवमस्तुमहाराजगच्छलोकंतुवैष्णवम्
समादिष्टःशिवेनापिप्रतस्थेवसुधाधिपः ४३
पृथ्वीशस्तैर्महापुण्यैर्वैष्णवैर्विष्णुवल्लभैः
नृत्यमानैस्ततस्तैस्तुपुरतस्तस्यभूपतेः ४४
शंखशब्दैःसुपापघ्नैःसिंहनादैःसुपुष्कलैः
जगामनिःस्वनैराजापूज्यमानःसुचारणैः ४५
सुस्वरैर्गीयमानस्तुपाठकैःशास्त्रकोविदैः
गायंतिपुरतस्तस्यगंधर्वागीतितत्पराः ४६

ऋृषिभिःस्तूयमानश्चदेववृंदैःसमन्वितैः
अप्सरोभिःसुरूपाभिःसेव्यमानःसनाहुषिः ४७
गंधर्वैःकिन्नरैःसिद्धैश्चारणैःपुरायमंगलैः
साध्यैर्विद्याधरैराजामरुद्भिर्वसुभिस्तथा ४८
रुद्रैश्चादित्यवर्गैश्चलोकपालैर्दिगीश्वरैः
स्तूयमानोमहाराजस्त्रैलोक्येनसमंततः ४९
ददृशेवैष्णवंलोकमनौपम्यमनामयम्
विमानैःकांचनैराजन्सर्वशोभासमाविलैः ५०
हंसकुंदेंदुधवलैर्विमानैरुपशोभितैः
प्रासादैःशतभौमैश्चमेरुमंदरसंनिभैः ५१
शिखरैरुल्लिखद्भिश्चस्वर्व्योमहाटकान्वितैः
जाज्वल्यमानैःकलशैःशोभतेसुपुरोत्तमम् ५२
तारागणैर्यथाकाशंतेजःश्रियाप्रकाशते
प्रज्वलत्तेजोज्वालाभिर्लोचनैरिवलोकते ५३
नानारत्नैर्हरैर्लोकःप्रहसद्दशनैरिव
समाह्वयतितान्पुरायान्वैष्णवान्विष्णुवल्लभान् ५४
ध्वजव्याजेनराजेंद्रचलिताग्रैःसुपल्लवैः
श्वसनांदोलितैस्तैश्चध्वजाग्रैश्चमनोहरैः ५५
हेमदंडैश्चघंटाभिःसर्वत्रसमलंकृतम्
सूर्यतेजःप्रकाशैश्चगोपुराट्टालकैस्ततः ५६
गवाक्षैर्जालमालैश्चवातायनमनोहरैः
प्रतोलीनांप्रकाशैश्चप्राकारैर्हेमरूपकैः ५७
तोरणैःसुपताकाभिर्नानाशब्दैःसुमंगलैः
कलशाग्रैश्चक्रबिंबैरविबिंबसमप्रभैः ५८
सुभोगैःशतकक्षैश्चनिर्जलांबुदसन्निभैः
दंडच्छत्रसमाकीर्णैःकलशैरुपशोभितैः ५९
प्रावृट्कालांबुदाकारैर्मंदिरैरुपशोभितैः
कलशैःशोभमानैस्तैर्ऋृक्षैर्द्यौरिवभूतलम् ६०
दंडजालपताकाभिर्ऋृक्षजालसमप्रभैः
तादृशैःस्फाटिकाकारैःकांतिशंखेंदुसन्निभैः ६१

हेमप्रासादसंबाधैर्नानाधातुमयैस्ततः
विमानैरर्बुदसंख्यैःशतकोटिसहस्रकैः ६२
सर्वभोगयुतैश्चैवशोभतेहरिपत्तनम्
यैःसमाराधितोदेवःशंखचक्रगदाधरः ६३
तेप्रसादात्तस्यतेषुनिवसंतिगृहेषुच
सर्वपुण्येषुदिव्येषुभोगाढ्येषुचमानवाः ६४
वैष्णवाःपुण्यकर्माणोनिर्धूताशेषकल्मषाः
एवंविधैर्गृहैःपुण्यैःशोभितंविष्णुमंदिरम् ६५
नानावृक्षैःसमाकीर्णंवनैश्चंदनशोभितैः
सर्वकामफलैराजन्सर्वत्रसमलंकृतम् ६६
वापीकुंडतडागैश्चसारसैरुपशोभितैः
हंसकारंडवाकीर्णैःकल्हारैरुपशोभितैः ६७
शतपत्रैर्महापद्मैःपद्मोत्पलविराजितैः
कनकोत्पलवर्णैश्चसरोभिश्चविराजते ६८
वैकुंठंसर्वशोभाढ्यंदेवोद्यानैरलंकृतम्
दिव्यशेभासमाकीर्णंवैष्णवैरुपशोभितम् ६९
वैकुंठंददृशोराजामोक्षस्थानमनुत्तमम्
देववृंदैःसमाकीर्णंययातिर्नहुषात्मजः ७०
प्रविवेशपुरंरम्यंसर्वदाहविवर्जितम्
ददृशेसर्वक्लेशघ्नंनारायणमनामयम् ७१
विमानैरुपशोभंतंसर्वाभरणशालिनम्
पीतवासंजगन्नाथंश्रीवत्सांकंमहाद्युतिम् ७२
वैनतेयसमारूढंश्रियायुक्तंपरात्परम्
सर्वेषांदेवलोकानांयोगतिःपरमेश्वरः ७३
परमानंदरूपेणकैवल्येनविराजते
सेव्यमानंमहालोकैःसुपुण्यैर्वैष्णवैर्हरिम् ७४
देववृंदैःसमाकीर्णंगंधर्वगणसेवितम्
अप्सरोभिर्महात्मानंदुःखक्लेशापहंहरिम् ७५
नारायणंननामाथस्वपत्न्यासहभूपतिः
प्रणेमुर्मानवाःसर्वेवैष्णवामधुसूदनम् ७६

गतायेवैष्णवाःसर्वेसहराज्ञामहामते
पादांबुजद्वयंतस्यनेमुर्भक्त्यामहामते ७७
प्रणमंतंमहात्मानंराजानंदीप्ततेजसम्
तमुवाचहृषीकेशस्तुष्टोऽहतवसुव्रत ७८
वरंवरयराजेंद्रयत्तेमनसिवर्तते
तत्तेददाम्यसंदेहंमद्भक्तोसिमहामते ७९
राजोवाच
यदित्वंदेवदेवेशतुष्टोसिमधुसूदन
दासत्वंदेहिसततमात्मनश्चजगत्पते ८०
विष्णुरुवाच–
एवमस्तुमहाभागममभक्तोनसंशयः
लोकेममहाराजस्थातव्यमनयासह ८१
एवमुक्तोमहाराजोययातिःपृथिवीपतिः
प्रसादात्तस्यदेवस्यविष्णुलोकंप्रसाधितम् ८२
निवसत्येषभूपालोवैष्णवंलोकमुत्तमम् ८३
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेपितृतीर्थवर्णनेययाति–
चरित्रेययातेःस्वर्गारोहणंनामत्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

सुकर्मोवाच–
एतत्तेसर्वमाख्यातंचरित्रंपापनाशनम्
पुत्राणांतारकंदिव्यंबहुपुण्यप्रदायकम् १
प्रत्यक्षंदृश्यतेलोकेययातिचरितंश्रुतम्
पूरुणाप्तंमहद्राज्यंदुर्गतिंगतवांस्तुरुः २
पितृप्रसादात्कोपाच्चयथाजातंतथापुनः
पुत्राणांतारकंपुण्यंयशस्यंधनधान्यदम् ३
शापयुक्ताविमौचोभौतुरुश्चयदुरेवच
पितृमातृसमंनास्तिअभीष्टफलदायकम् ४
साभिलाषेणभावेनपितापुत्रंसमाह्वयेत्
माताचपुत्रपुत्रेतितस्यपुण्यफलंशृणु ५

समाहूतोयथापुत्रःप्रयातिमातरंप्रति
योयातिहर्षसंयुक्तोगंगास्नानफलंलभेत् ६
पादप्रक्षालनंयस्तुकुरुतेचमहायशाः
सर्वतीर्थफलंभुंक्तेप्रसादात्तुतयोःसुतः ७
अंगसंवाहनाच्चान्यदश्वमेधफलंलभेत्
भोजनाच्छादनस्नानैर्गुरुंयःपोषयेत्सुतः ८
पृथ्वीदानसमंपुण्यंतत्पुत्रेहिप्रजायते
सर्वतीर्थमयीगंगातथामातानसंशयः ९
बहुपुण्यमयःसिंधुर्यथालोकेप्रतिष्ठितः
अस्मिल्लोँकेपितातद्वत्पुराणकवयोविदुः १०
सुकर्मोवाच–
भ्रंशतेक्रोशतेयस्तुपितरंमातरंपुनः
सपुत्रोनरकंयातिरौरवाख्यंनसंशयः ११
मातरंपितरंवृद्धौगृहस्थोयोनपोषयेत्
सपुत्रोनरकंयातिवेदनांप्राप्नुयाद्ध्रुवम् १२
कुत्सतेपापकर्तायोगुरुंपुत्रःसुदुर्मतिः
निष्कृतिर्नैवदृष्टावैपुराणैःकविभिःकदा १३
एवंज्ञात्वाह्यहंविप्रपूजयामिदिनेदिने
मातरंपितरंनित्यंभक्त्यानमितकंधरः १४
कृत्याकृत्यंवदेच्चैवसमाहूयगुरुर्मम
तत्करोम्यविचारेणशक्त्यास्वस्यचपिप्पल १५
तेनमेपरमंज्ञानंसंजातंगतिदायकम्
एतयोश्चप्रसादेनसंसारेपरिवर्तते १६
यच्चकिंचित्प्रकुर्वंतिमानवाभुविसंस्थिताः
गृहस्थस्तदहंजानेयच्चस्वर्गेप्रवर्तते १७
नागानांचइहस्थोपिचारंजानामिपिप्पल
एतयोश्चप्रसादाच्चत्रैलोक्यंममवश्यताम् १८
गतंविद्याधरश्रेष्ठभवानर्चतुमाधवम्
विष्णुरुवाच–
एवंसंचोदितस्तेनपिप्पलोहिस्वकर्मणा १९

अानम्यतंद्विजश्रेष्ठंलज्जितोऽपिदिवंययौ
सुकर्मासोऽपिधर्मात्मागुरुंशुश्रूषतेनृप २०
एतत्तेसर्वमाख्यातंपितृतीर्थानुगंमया
अन्यतिकतेप्रवक्ष्यामिवदवेनमहामते २१
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेमातापितृतीर्थमाहात्म्यवर्णनं-
नामचतुरशीतितमोऽध्यायः ८४

पंचाशीतितमोऽध्यायः

वेनउवाच-
भगवन्देवदेवेशप्रसादाच्चममत्वया
भार्यातीर्थंसमाख्यातंपितृतीर्थमनुत्तमम् १
मातृतीर्थंहृषीकेशबहुपुण्यप्रदायकम्
प्रसादसुमुखोभूत्वागुरुतीर्थंवदस्वमे २
श्रीभगवानुवाच-
कथयिष्याम्यहंराजन्गुरुतीर्थमनुत्तमम्
सर्वपापहरंप्रोक्तंशिष्याणांगतिदायकम् ३
शिष्याणांपरमंपुण्यंधर्मरूपंसनातनम्
परंतीर्थंपरंज्ञानंप्रत्यक्षफलदायकम् ४
यस्यप्रसादाद्राजेंद्रइहैवफलमश्नुते
परलोकेसुखंभुंक्तेयशःकीर्तिमवाप्नुयात् ५
प्रसादाद्यस्यराजेंद्रगुरोश्चैवमहात्मनः
प्रत्यक्षंदृश्यतेशिष्यैस्त्रैलोक्यंसचराचरम् ६
व्यवहारंचलोकानामाचारंनृपनंदन
विज्ञानंविंदतेशिष्योमोक्षंचैवप्रयातिच ७
सर्वेषामेवलोकानांयथासूर्यःप्रकाशकः
गुरुःप्रकाशकस्तद्वच्छिष्याणांगतिरुत्तमा ८
रात्रावेवप्रकाशेच्चसोमोराजानृपोत्तम
तेजसासाधयेत्सर्वमधिकारंचराचरम् ९
गृहेप्रकाशयेद्दीपःसमूहंनृपसत्तम
तेजसानाशयेत्सर्वमंधकारघनाविलम् १०

अज्ञानतमसाव्याप्तंशिष्यंद्योतयतेगुरुः
शिष्यप्रकाशउद्द्योतैरुपदेशैर्महामते ११
दिवाप्रकाशकःसूर्यःशशीरात्रौप्रकाशकः
गृहप्रकाशकोदीपस्तमोनाशकरःसदा १२
रात्रौदिवागृहस्यांतेगुरुःशिष्यंसदैवहि
अज्ञानाख्यंतमस्तस्यगुरुःसर्वंप्रणाशयेत् १३
तस्माद्गुरुःपरंतीर्थंशिष्याणामवनीपते
एवंज्ञात्वाततःशिष्यःसर्वदातंप्रपूजयेत् १४
गुरुंपुण्यमयंज्ञात्वात्रिविधेनापिकर्मणा
इत्यर्थेश्रूयतेविप्रइतिहासःपुरातनः १५
सर्वपापहरःप्रोक्तश्च्यवनस्यमहात्मनः
भार्गवस्यकुलेजातश्च्यवनोमुनिसत्तमः १६
तस्यचिंतासमुत्पन्नाएकदातुनृपोत्तम
कदाहंज्ञानसंपन्नोभविष्यामिमहीतले १७
दिवारात्रौप्रचिंतेत्सज्ञानार्थीमुनिसत्तमः
एवंतुचिंतमानस्यमतिरासीन्महात्मनः १८
तीर्थयात्रांप्रयास्यामिअभीष्टफलदायिनीम्
गृहक्षेत्रादिसंत्यज्यभार्यांपुत्रंधनंततः १९
तीर्थयात्राप्रसंगेनअटतेमेदिनींतदा
लोमानुलोमयात्रांसगंगायाःकृतवान्नृप २०
सतद्वन्नर्मदायाश्चसरस्वत्यामुनीश्वरः
गोदावर्यादिसर्वासांनदीनांसागरस्यच २१
अन्येषांसर्वतीर्थानांक्षेत्राणांचनृपोत्तम
देवानांपुण्यलिगानांयात्राव्याजेनसोऽभ्रमत् २२
भ्रममाणस्यतस्यापितीर्थेषुपरमेषुच
कायश्चनिर्मलोजातःसूर्यतेजःसमप्रभः २३
च्यवनःकाशतेदीप्त्यापूतात्मानेनकर्मणा
भ्रममाणःसमायातःक्षेत्राणामुत्तमंतदा २४
नर्मदादक्षिणेकूलेनाम्नाअमरकंटकम्
ददर्शसुमहालिगंसर्वेषांगतिदायकम् २५

नत्वास्तुत्वातुसंपूज्यसिद्धनाथंमहेश्वरम्
ज्वालेश्वरंततोदृष्ट्वादृष्ट्वाचाप्यमरेश्वरम् २६
ब्रह्मेशंकपिलेशंचमार्कंडेश्वरमुत्तमम्
एवंयात्रांततःकृत्वाग्रोंकारंसमुपागतः २७
वटच्छायांसमाश्रित्यशीतलांश्रमनाशिनीम्
सुखेनसंस्थितोविप्रश्च्यवनोभृगुनंदनः २८
तत्रस्वनंसशुश्रावसमुक्तंपक्षिणातदा
दिव्यभाषासमायुक्तंज्ञानविज्ञानसंयुतम् २९
शुकश्चएकस्तत्रास्तेबहुकालप्रजीवकः
कुंजलोनामधर्मात्माचतुःपुत्रःसभार्यकः ३०
ग्रासंस्तस्यहिपुत्राश्चचत्वारःपितृनंदनाः
तेषांनामानिराजेंद्रकथयिष्येतवाग्रतः ३१
ज्येष्ठस्तुउज्ज्वलोनामद्वितीयस्तुसमुज्ज्वलः
तृतीयोविज्ज्वलोनामचतुर्थश्चकपिंजलः ३२
एवंपुत्रास्तुचत्वारःकुंजलस्यमहामते
शुकस्यतस्यपुरायस्यपितृमातृपरायणाः ३३
भ्रमंतिगिरिकुंजेषुद्वीपेषुचसमाहिताः
भोजनार्थंतुसंक्षुब्धाःक्षुधयापरिपीडिताः ३४
स्वोदरस्थांक्षुधांसौम्यफलैरमृतसन्निभैः
ग्रमृतस्वादुतोयेनशमयंतिनृपोत्तम ३५
फलंपक्वंरसालंतुग्राहारार्थंसुपुत्रकाः
दत्वाफलानिदंपत्योर्निक्षिपंतिप्रयत्नतः ३६
मातुरर्थेमहाभागाभक्तिभावसमन्विताः
तुष्टाग्राहारमुत्पाद्यभक्षयंतिपठंतिच ३७
तत्रक्रीडारताःसर्वेविलसंतिरमंतिच
संध्याकालंसमाज्ञायपितुरंतिकमुत्तमम् ३८
ग्रायांतिभक्ष्यमादायगुर्वर्थंतुप्रयत्नतः
पश्यतस्तस्यविप्रस्यच्यवनस्यमहात्मनः ३९
ग्रागतास्त्वंडजाःसर्वेपितुर्नीडंसुशोभनम्
पितरंमातरंचोभौप्रणेमुस्तेमहामते ४०

ताभ्यांभद्दयंसमासाद्यउपतस्थुस्तयोःपुरः
सर्वेसंभाषिताःपित्रामानितास्तेसुतोत्तमाः ४१
मात्राचकृपयाराजन्वचनैःप्रीतिसंमितैः
पद्मवातेनशीतेनमातापित्रोश्चतेतदा ४२
तेषामाप्यायनंतौद्वौचक्रातेपक्षिणौनृप
आशीर्भिरभिनंद्यैवद्वाभ्यामपिसुपुत्रकान् ४३
तैश्चदत्तंसुसंपुष्टमाहारममृतोपमम्
तावेवहिसुसंप्रीतिंचक्रातेद्विजसत्तम ४४
पिबतोनिर्मलंतोयंतीर्थकोटिसमुद्भवम्
स्वस्थानंतुसमाश्रित्यसुखसंतुष्टमानसौ ४५
चक्रातेचकथांदिव्यांसुपुण्यांपापनाशिनीम्
विष्णुरुवाच-
पित्रातुकुंजलेनापिपृष्टउज्ज्वलआत्मजः ४६
क्वगतोऽस्यद्यपुत्रत्वंकिमपूर्वंत्वयापुनः
तत्रदृष्टंश्रुतंपुण्यंतन्मेकथयनंदन ४७
कुंजलस्यपितुर्वाक्यंसमाकर्ण्यसउज्ज्वलः
पितरंप्रत्युवाचाथभक्त्यानमितकंधरः ४८
प्रणाममकरोन्मूर्ध्नाकथांचक्रेमनोहराम्
उज्ज्वलउवाच-
प्लक्षद्वीपंमहाभागनित्यमेवव्रजाम्यहम् ४९
महताउद्यमेनापिआहारार्थंमहामते
प्लक्षेद्वीपेमहाराजसंतिदेशाअनेकशः ५०
पर्वताःसरिदुद्यानवनानिचसरांसिच
ग्रामाश्चपत्तनाश्चान्येसुप्रजाभिःप्रमोदिताः ५१
सदासुखेनसंतुष्टालोकाहृष्टावसंतिते
दानपुण्यजपोपेताःश्रद्धाभावसमन्विताः ५२
प्लक्षद्वीपेमहाराजआसीत्पुण्यमतिःसदा
दिवोदासस्तुधर्मात्मातत्सुतासीदनूपमा ५३
गुणरूपसमायुक्तासुशीलाचारुमंगला
दिव्यादेवीतिविख्यातारूपेणाप्रतिमाभुवि ५४

पित्राविलोकितासातुरूपतारुरयमंगला
प्रथमेवयसिसाचवर्त्ततेचारुमंगला ५५
सतांदृष्ट्वादिवोदासोदिव्यांदेवींसुतांतदा
कस्मैप्रदीयतेकन्यासुवरायमहात्मने ५६
इतिचिंतापरोभूत्वासमालोक्यनरोत्तमः
रूपदेशस्यराजानंसमालोक्यमहीपतिः ५७
चित्रसेनंमहात्मानंसमाहूयनरोत्तमः
कन्यांददौमहात्मासौचित्रसेनायधीमते ५८
तस्याविवाहकालेतुसंप्राप्तेसमयेनृप
मृतोसौचित्रसेनस्तुकालधर्मेणवैकिल ५९
दिवोदासस्तुधर्मात्माचिंतयामासभूपतिः
सुब्राह्मणान्समाहूयपप्रच्छनृपनंदनः ६०
अस्याविवाहकालेतुचित्रसेनोदिवंगतः
अस्यास्तुकीदृशंकर्मभविष्यतिवदंतुमे ६१
ब्राह्मणाऊचुः–
विवाहोदृश्यतेराजन्कन्यायास्तुविधानतः
पतिर्मृत्युंप्रयात्यस्यानोचेत्संगंकरोतिच ६२
महाधिव्याधिनाग्रस्तस्त्यागंकृत्वाप्रयातिच
प्रव्राजितोभवेद्राजन्धर्मशास्त्रेषुदृश्यते ६३
अनुद्वाहितायाःकन्यायाउद्वाहःक्रियतेबुधैः
नस्याद्रजस्वलायावदन्यःपतिर्विधीयते ६४
विवाहंतुविधानेनपिताकुर्यान्नसंशयः
एवंराजन्समादिष्टंधर्मशास्त्रंबुधैर्जनैः ६५
विवाहःक्रियतामस्याइत्यूचुस्तेद्विजोत्तमाः
दिवोदासस्तुधर्मात्माद्विजवाक्यप्रणोदितः ६६
विवाहार्थमहाराजउद्यमंकृतवान्नृप
पुनर्दत्तातुदानेनदिव्यादेवीद्विजोत्तम ६७
रूपसेनायपुरयायतस्मैराज्ञेमहात्मने
मृत्युधर्मंगतोराजाविवाहेतुमहीपतिः ६८
यदायदामहाभागदिव्यादेव्याश्चभूपतिः

भर्ताचम्रियतेकालेप्राप्तेलग्नस्यसर्वदा ६९
एकविंशतिभर्तारःकालेकालेमृताःपितः
ततोराजामहादुःखीसंजातःख्यातविक्रमः ७०
समालोच्यसमाहूयसमामंत्र्यसमंत्रिभिः
स्वयंवरेमहाबुद्धिंचकारपृथिवीपतिः ७१
प्लक्षद्वीपस्यराजानःसमाहूतामहात्मना
स्वयंवरार्थमाहूतास्तथातेधर्मतत्पराः ७२
तस्यास्तुरूपसंमुग्धाराजानोमृत्युनोदिताः
संग्रामंचक्रिरेमूढास्तेमृताःसमरांगणे ७३
एवंतातक्षयोजातःक्षत्रियाणांमहात्मनाम्
दिव्यादेवीसुदुःखार्तागतासावनकंदरम् ७४
रुरोदकरुणंबालादिव्यादेवीमनस्विनी
एवंतातमयादृष्टमपूर्वंतत्रवैतदा ७५
तन्मेसुविस्तरंतातस्याःकथयकारणम् ७६

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थे-
च्यवनोपाख्यानेपंचाशीतितमोऽध्यायः ८५

## षडशीतितमोऽध्यायः

कुंजलउवाच-
तस्यास्तुचेष्टितंवत्सदिव्यादेव्यावदाम्यहम्
पूर्वजन्मकृतंसर्वंतन्मेनिगदतःशृणु १
अस्तिवाराणसीपुण्यानगरीपापनाशिनी
तस्यामास्तेमहाप्राज्ञःसुवीरोनामनामतः २
वैश्यजात्यांसमुत्पन्नोधनधान्यसमाकुलः
तस्यभार्यामहाप्राज्ञचित्रानामसुविश्रुता ३
कुलाचारंपरित्यज्यअनाचारेणवर्तते
नमन्यतेहिभर्तारंस्वैरवृत्त्याप्रवर्तते ४
धर्मपुण्यविहीनातुपापमेवसमाचरेत्
भर्तारंकुत्सतेनित्यंनित्यंचकलहप्रिया ५
नित्यंपरगृहेवासोभ्रमतेसागृहेगृहे

परच्छिद्रंसमापश्येत्सदादुष्टाचप्राणिषु ६
साधुनिंदापरादुष्टासदाहास्यकराचसा
अनाचारांमहापापांज्ञात्वावीरेणनिंदिता ७
सतांत्यक्त्वामहाप्राज्ञउपयेमेमहामतिः
अन्यवैश्यस्यवैकन्यांतयासहप्रवर्तते ८
धर्माचारेणपुरयात्मासत्यधर्ममतिःसदा
निरस्तातेनसाचित्राप्रचंडाभ्रमतेमहीम् ९
दुष्टानांसंगतिंप्राप्तानराणांपापिनांसदा
दूतीकर्मचकाराथसातेषांपापनिश्चया १०
गृहभंगंचकाराथसाधूनांपापकारिणी
साध्वींनारींसमाहूयपापवाक्यैःसुलोभयेत् ११
धर्मभंगंचकाराथवाक्यैःप्रत्ययकारकैः
साधूनांसास्त्रियंचित्राअन्यस्मैप्रतिपादयेत् १२
एवंगृहशतंभग्नंचित्रयापापनिश्चयात्
संग्रामंसामहादुष्टाऽकारयत्पतिपुत्रकैः १३
मनांसिचालयेत्पापापुरुषाणांस्त्रियःप्रति
अकारयच्चसंग्रामंयमग्रामविवर्धनम् १४
एवंगृहशतंभंक्त्वापश्चात्सानिधनंगता
शासितायमराजेनबहुदंडैःसुनंदन १५
अभोजयत्सुनरकान्रौरवांस्तरणेःसुतः
पाचितारौरवेचित्राचित्राःपीडाःप्रदर्शिताः १६
यादृशंक्रियतेकर्मतादृशंपरिभुज्यते
तयागृहशतंभग्नंचित्रयापापनिश्चयात् १७
तत्तत्कर्मविपाकोऽयतयाभुक्तोद्विजोत्तम
यस्माद्गृहशतंभग्नंतस्माद्दुःखंप्रभुंजति १८
विवाहसमयेप्राप्तेदैवंचपाकतांगतम्
प्राप्तेविवाहसमयेभर्तामृत्युंप्रयातिच १९
यथागृहशतंभग्नंतथावरशतंमृतम्
स्वयंवरेतदावत्सविवाहेचैकविंशतिः २०
दिव्यादेव्यामयाख्यातंयथामेपृच्छितंत्वया

एतत्तेसर्वमाख्यातंतस्याःपूर्वविचेष्टितम् २१
उज्ज्वलउवाच-
दिव्यादेव्यास्त्वयाख्यातंयत्पूर्वंपूर्वचेष्टितम्
तथापापंकृतंघोरंगृहभंगाख्यमेवच २२
प्लक्षद्वीपस्यभूपस्यदिवोदासस्यवैसुता
केनपुण्यप्रभावेणतयाप्राप्तंमहाकुलम् २३
एतन्मेसंशयंतातत्तदेतत्प्रब्रवीतुमे
एवंपापसमाचाराकथंजातानृपात्मजा २४
कुंजलउवाच-
चित्रायाश्चेष्टितंपुण्यंतत्सर्वंप्रवदाम्यहम्
श्रूयतामुज्ज्वलसुतचित्रयायत्कृतंपुरा २५
भ्रममाणोमहाप्राज्ञःकश्चित्सिद्धःसमागतः
कुचैलोवस्त्रहीनश्चसंन्यासीसचदंडधृक् २६
कौपीनेनसमायुक्तःपाणिपात्रोदिगंबरः
गृहद्वारंसमाश्रित्यचित्रायाःपरिसंश्रितः २७
समौनीसर्वमुंडस्तुविजितात्माजितेंद्रियः
निराहारोजिताहारःसर्वतत्त्वार्थदर्शकः २८
दूराध्वानपरिश्रांतश्चातपाकुलमानसः
श्रमेणखिद्यमानश्चतृषाक्रांतःसुपुत्रक २९
चित्राद्वारंसमाश्रित्यच्छायामाश्रित्यसंस्थितः
तयादृष्टोमहात्मासचित्रयाश्रमपीडितः ३०
सेवांचक्रेचचित्रासातस्यैवसुमहात्मनः
पादप्रक्षालनंकृत्वादत्वाश्चासनमुत्तमम् ३१
आस्यतामासनेतातसुखेनापिसुकोमले
क्षुधापनोदनार्थंहिभुज्यतामन्नमुत्तमम् ३२
स्वेच्छयापरितुष्टश्चशीतलंसलिलंपिब
एवमुक्त्वातथाकृत्वादेववत्पूज्यतंसुत ३३
अंगसंवाहनंकृत्वानाशितश्रमएवच
तयोक्तोहिमहात्मासभुक्त्वापीत्वाद्विजोत्तम ३४
एवंसंतोषितःसिद्धस्तयातत्त्वार्थदर्शकः

संतुष्टःसर्वधर्मात्माकिंचित्कालंस्थिरोभवत् ३५
स्वेच्छयासगतोविप्रोमहायोगीयथागतम्
गतेतस्मिन्महाभागेसिद्धेचैवमहात्मनि ३६
साचित्रामरणंप्राप्तास्वकर्मवशमागता
शासिताधर्मराजेनमहादंडैःसुदुःखदैः ३७
साचित्रानरकंप्राप्तावेदनाव्रातदायकम्
भुंक्तेदुःखंमहाराजसावैयुगसहस्रकम्  ३८
भोगांतेतुपुनर्जन्मसंप्राप्तंमानुषस्यच
पूर्वसंपूजितःसिद्धस्तयापुरायवतांवरः ३९
तस्यकर्मविपाकोयंप्राप्तापुरायवतांकुले
क्षत्रियाणांमहाराज्ञोदिवोदासस्यवैगृहे ४०
दिव्यादेवीचतन्नामजातंतस्यानरोत्तम
साहिदत्तवतीचान्नंपानंपुरायंमहात्मने ४१
तस्यदानस्यसाभुंक्तेमहत्पुरायफलोदयम्
पिबतेशीतलंतोयंमिष्टान्नंचभुनक्तिवै ४२
दिव्यान्भोगान्प्रभुंजानावर्ततेपितृमंदिरे
सिद्धस्यास्यप्रभावाच्चराजकन्याव्यजायत ४३
पापकर्मप्रभावाच्चगृहभंगान्महीपते
विधवात्वंभुंजतेसादिव्यादेवीसुपुत्रक ४४
एतत्तेसर्वमाख्यातंदिव्यादेव्याविचेष्टितम्
अन्यत्किन्तेप्रवक्ष्यामियत्त्वंपृच्छसिमामिह ४५
उज्ज्वलउवाच–
कथंसामुच्यतेशोकान्महादुःखाद्वदस्वमे
सास्याच्चकीदृशीबालामहादुःखेनपीडिता ४६
तत्सुखंकीदृशंतस्माद्विपाकश्चभविष्यति
एतन्मेसंशयंतातसांप्रतंछेत्तुमर्हसि ४७
कथंसालभतेमोक्षंतंचोपायंवदस्वमे
एकाकिनीमहाभागामहाररायेप्ररोदिति ४८
विष्णुरुवाच–
पुत्रवाक्यंमहच्छ्रुत्वाक्षणमेकंविचिंत्यसः

प्रत्युवाचमहाप्राज्ञःकुंजलःपुत्रकंप्रति ४९
शृणुवत्समहाभागसत्यमेतद्वदाम्यहम्
पापयोनिंतुसंप्राप्यपूर्वकर्मसमुद्भवाम् ५०
तिर्यक्त्वेनचमेज्ञानंनष्टंसंप्रतिपुत्रक
अस्यवृद्धस्यसंगाच्चप्रयतस्यमहात्मनः ५१
रेवायाश्चप्रसादेनविष्णोश्चैवप्रसादतः
येनसालभतेज्ञानंमोक्षस्थानंनिवर्तते ५२
उपदेशंप्रवक्ष्यामिमोक्षमार्गमनुत्तमम्
यास्यतेकल्मषान्मुक्तायथाहेमहुताशनात् ५३
शुद्धंचजायतेवत्ससंगाद्वह्नेःस्वरूपवत्
हरेर्ध्यानान्महाप्राज्ञशीघ्रंतस्यमहात्मनः ५४
जपहोमव्रतात्पापंनाशंयातिहिपापिनाम्
मदंत्यजेद्यथानागोभयात्सिंहस्यसर्वदा ५५
नामोच्चारेणकृष्णस्यतत्प्रयातिहिकिल्बिषम्
तेजसावैनतेयस्यविषहीनाइवोरगाः ५६
ब्रह्महत्यादिकाःपापाःप्रलयंयांतिनान्यथा
नामोच्चारेणतस्यापिचक्रपाणेःप्रयांतिते ५७
यदानामशतंपुण्यमघराशिविनाशनम्
साजपेतस्थिराभूत्वाकामक्रोधविवर्जिता ५८
सर्वेंद्रियाणिसंयम्यआत्मज्ञानेनगोपयेत्
तस्यध्यानप्रविष्टासाएकभूतासमाहिता ५९
साजपेत्परमंज्ञानंतदामोक्षंप्रयातिच
तन्मनास्तत्पदेलीनायोगयुक्तायदाभवेत् ६०
उज्ज्वलउवाच-
वदतातपरंज्ञानंपरमंममसांप्रतम्
पश्चाद्ध्यानव्रतंपुण्यंनाम्नांशतमिहैवच ६१
कुंजलउवाच-
परंज्ञानंप्रवक्ष्यामियन्नदृष्टंतुकेनचित्
श्रूयतांपुत्रकैवल्यंकेवलंमलवर्जितम् ६२
सूतउवाच-

यथादीपोनिवातस्थोनिश्चलोवायुवर्जितः
प्रज्वलन्नाशयेत्सर्वमंधकारंमहामते ६३
तद्वद्दोषविहीनात्माभवत्येवनिराश्रयः
निराशोनिर्मलोवत्सनमित्रंनरिपुःकदा ६४
नशोकोनचहर्षश्चनलोभोनचमत्सरः
एकोविषादहर्षैश्चसुखदुःखैर्विमुच्यते ६५
विषयैश्चापिसर्वैश्चइंद्रियाणिससंहरेत्
तदासकेवलोजातःकेवलत्वंप्रजायते ६६
अग्निकर्मप्रसंगेनदीपस्तैलंप्रशोषयेत्
वर्त्याधारेणराजेंद्रनिःसंगोवायुवर्जितः ६७
कज्जलंवमतेपश्चात्तैलस्यापिमहामते
कृष्णासौदृश्यतेरेखादीपस्याग्रेमहामते ६८
स्वयमाकृष्यतेतैलंतेजसानिर्मलोभवेत्
कायवर्तिस्थितस्तद्वत्कर्मतैलंप्रशोषयेत् ६९
विषयान्कज्जलीकृत्यप्रत्यक्षंसंप्रदर्शयेत्
जनयेन्निर्मलोभूत्वास्वयमेवप्रकाशयेत् ७०
क्रोधादिभिःक्लेशसंज्ञैर्वायुभिःपरिवर्जितः
निःस्पृहोनिश्चलोभूत्वातेजसास्वयमुज्ज्वलेत् ७१
त्रैलोक्यंपश्यतेसर्वंस्वस्थानस्थःस्वतेजसा
केवलज्ञानरूपोऽयमयातेपरिकीर्तितः ७२
ध्यानंतस्यप्रवक्ष्यामिद्विविधंतस्यचक्रिणः
केवलज्ञानरूपेणदृश्यतेज्ञानचक्षुषा ७३
योगयुक्तामहात्मानःपरमार्थपरायणाः
यंपश्यंतिविनिद्रास्तुयत्तपःसर्वदर्शकम् ७४
हस्तपादविहीनंचसर्वत्रपरिगच्छति
सर्वंगृह्णातित्रैलोक्यंस्थावरंजंगमंसुत ७५
नासामुखविहीनस्तुघ्रातिजक्षितिपुत्रक
अकर्णःशृणुतेसर्वंसर्वसाक्षीजगत्पतिः ७६
अरूपोरूपसंबद्धःपंचवर्गवशंगतः
सर्वलोकस्ययःप्राणःपूजितःसचराचरैः ७७

अजिह्वोवदतेसर्ववेदशास्त्रानुगंसुत
अत्वचःस्पर्शनंचापिसर्वेषामेवजायते ७८
सदानंदोविरक्तात्माएकरूपोनिराश्रयः
निर्जरोनिर्ममोन्यायीसगुणोनिर्ममोमलः ७९
अवश्यःसर्ववश्यात्मासर्वदःसर्ववित्तमः
तस्यधातानचैवास्तिसवैसर्वमयोविभुः ८०
एवंसर्वमयंध्यानंपश्यतेयोमहात्मनः
सयातिपरमंस्थानममूर्तममृतोपमम् ८१
द्वितीयंतुप्रवक्ष्यामिअस्यध्यानंमहात्मनः
मूर्ताकारंतुसाकारंनिराकारंनिरामयम् ८२
ब्रह्माण्डंसर्वमतुलंवासितंयस्यवासना
सतस्माद्वासुदेवेतिउच्यतेममनंदन ८३
वर्षमाणस्यमेघस्ययद्वर्णंतस्यतद्भवेत्
सूर्यतेजःप्रतीकाशंचतुर्बाहुंसुरेश्वरम् ८४
दक्षिणेशोभतेशंखोहेमरत्नविभूषितः
सूर्यबिंबसमाकारंचक्रंपद्मप्रतिष्ठितम् ८५
कौमोदकीगदातस्यमहासुरविनाशिनी
वामेचशोभतेवत्सहस्तेतस्यमहात्मनः ८६
महापद्मंसुगंधाढ्यंतस्यदक्षिणहस्तगम्
शोभमानःसदैवास्तेसायुधःकमलाप्रियः ८७
कंबुग्रीवंवृत्तमास्यंपद्मपत्रनिभेक्षणम्
राजमानंहृषीकेशंदशनैरत्नसन्निभैः ८८
गुडाकेशाःसन्तियस्यअधरोविद्रुमाकृतिः
शोभतेपुंडरीकाक्षःकिरीटेनापिपुत्रक ८९
विशालेनापिरूपेणकेशवस्तुसुवर्चसा
कौस्तुभेनांकितेनैवराजमानोजनार्दनः ९०
सूर्यतेजःप्रतीकाशकुंडलाभ्यांप्रभातिच
श्रीवत्सांकेनपुण्येनसर्वदाराजतेहरिः ९१
केयूरकंकणैहारैर्मौक्तिकैर्ऋक्षसन्निभैः
वपुषाभ्राजमानस्तुविजयोजयतांवरः ९२

भ्राजतेसोपिगोविंदोहेमवर्णेनवाससा
मुद्रिकारत्नयुक्ताभिरंगुलीभिर्विराजते ९३
सर्वायुधैःसुसंपूर्णैर्दिव्यैराभरणैर्हरिः
वैनतेयसमारूढोलोककर्ताजगत्पतिः ९४
एवंतंध्यायतेनित्यमनन्यमनसानरः
मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ९५
एतत्तेसर्वमाख्यातंध्यानमेवजगत्पतेः
व्रतंचैवप्रवक्ष्यामिसर्वपापनिवारणम् ९६
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थवर्णने-
षडशीतितमोऽध्यायः ८६

## सप्ताशीतितमोऽध्यायः

कुंजलउवाच-
व्रतभेदान्प्रवक्ष्यामियैर्यैश्चाराधितोहरिः
जयाचविजयाचैवजयंतीपापनाशिनी १
त्रिस्पृशावंजुलीचान्यातिलदग्धातथापरा
अखंडाचारकन्याचमनोरथासुपुत्रक २
एकादश्यास्तुभेदाश्चसंतिपुत्रअनेकधा
अशून्यशयनंचान्यज्जन्माष्टमीमहाव्रतम् ३
एतैर्व्रतैर्महापुण्यैःपापंदूरंप्रयातिच
प्राणिनांनात्रसंदेहःसत्यंसत्यंवदाम्यहम् ४
कुंजलउवाच-
स्तोत्रंतस्यप्रवक्ष्यामिपापराशिविनाशनम्
सुपुत्रशतनामाख्यंनराणांगतिदायकम् ५
तस्यदेवस्यकृष्णस्यशतनामाख्यमुत्तमम्
संप्रत्येवप्रवक्ष्यामितच्छृणुष्वसुतोत्तम ६
विष्णोर्नामशतस्यापिऋषिंछंदोवदाम्यहम्
देवंचैवमहाभागसर्वपापविशोधनम् ७
विष्णोर्नामशतस्यापिऋषिर्ब्रह्माप्रकीर्तितः
ओंकारोदेवताप्रोक्तश्छंदोनुष्टुप्तथैवच ८

सर्वकामिकसंसिद्ध्यैमोक्षेचविनियोगकः
अस्यविष्णोःशतनामस्तोत्रस्य
ब्रह्माऋषिः विष्णुर्देवता अनुष्टुप्छंदः
सर्वकामसमृद्ध्यर्थंसर्वपापक्षयार्थेविनियोगः ९
नमाम्यहंहृषीकेशंकेशवंमधुसूदनम्
सूदनंसर्वदैत्यानांनारायणमनामयम् १०
जयंतंविजयंकृष्णमनंतंवामनंततः
विष्णुंविश्वेश्वरंपुण्यंविश्वाधारंसुरार्चितम् ११
अनघंत्वघहंतारंनरसिंहंश्रियःप्रियम्
श्रीपतिंश्रीधरंश्रीदंश्रीनिवासंमहोदयम् १२
श्रीरामंमाधवंमोक्षंक्षमारूपंजनार्दनम्
सर्वज्ञंसर्ववेत्तारंसर्वदंसर्वनायकम् १३
हरिंमुरारिंगोविंदंपद्मनाभंप्रजापतिम्
आनंदंज्ञानसंपन्नंज्ञानदंज्ञाननायकम् १४
अच्युतंसबलंचंद्रंचक्रपाणिंपरावरम्
युगाधारंजगद्योनिंब्रह्मरूपंमहेश्वरम् १५
मुकुंदंतंसुवैकुंठमेकरूपंजगत्पतिम्
वासुदेवंमहात्मानंब्रह्मण्यंब्राह्मणप्रियम् १६
गोप्रियंगोहितंयज्ञंयज्ञांगंयज्ञवर्द्धनम्
यज्ञस्यापिसुभोक्तारंवेदवेदांगपारगम् १७
वेदज्ञंवेदरूपंतंविद्यावासंसुरेश्वरम्
अव्यक्तंतंमहाहंसंशंखपाणिंपुरातनम् १८
पुरुषंपुष्कराक्षंतुवाराहंधरणीधरम्
प्रद्युम्नंकामपालंचव्यासंव्यालंमहेश्वरम् १९
सर्वसौख्यंमहासौख्यंमोक्षंचपरमेश्वरम्
योगरूपंमहाज्ञानंयोगिनांगतिदंप्रियम् २०
मुरारिंलोकपालंतंपद्महस्तंगदाधरम्
गुहावासंसर्ववासंपुण्यवासंमहाभुजम् २१
वृंदानाथंबृहत्कायंपावनंपापनाशनम्
गोपीनाथंगोपसखंगोपालंगोगणाश्रयम् २२

परात्मानंपराधीशंकपिलंकार्यमानुषम्
नमामिनिश्चलंनित्यंमनोवाक्कायकर्मभिः २३
नाम्नांशतेनापिसुपुरायकर्तायःस्तौतिकृष्णंमनसास्थिरेण
सयातिलोकंमधुसूदनस्यविहायलोकानिहपुरायपूतः २४
नाम्नांशतंमहापुरायंसर्वपातकशोधनम्
जपेदनन्यमनसाध्यायेद्ध्यानसमन्वितम् २५
नित्यमेवनरःपुरायैर्गंगास्नानफलंलभेत्
तस्मात्तुसुस्थिरोभूत्वासमाहितमनाजपेत् २६
त्रिकालंचजपेन्मर्त्योनियतोनियमेस्थितः
अश्वमेधफलंतस्यजायतेनात्रसंशयः २७
एकादश्यामुपोष्यैवपुरतोमाधवस्ययः
जागरेप्रजपेन्मर्त्यस्तस्यपुरायंवदाम्यहम् २८
पुंडरीकस्ययज्ञस्यफलमाप्नोतिमानवः
तुलसीसंनिधौस्थित्वामनसायोजपेन्नरः २९
राजसूयफलंभुंक्तेवर्षेणापिचमानवः
शालग्रामशिलायत्रयत्रद्वारावतीशिला ३०
उभयोःसंनिधौजाप्यंकर्तव्यंसुखमिच्छता
बहुसौख्यंप्रभुक्त्वैवकुलानांशतमेवच ३१
एकेनचाधिकंमर्त्यश्रात्मनासहतारयेत्
कार्तिकेस्नानकर्तायःपूजयेन्मधुसूदनम् ३२
यःपठेत्प्रयतःस्तोत्रंप्रयातिपरमांगतिम्
माघस्नायीहरिंपूज्यभक्त्याचमधुसूदनम् ३३
ध्यायेच्चैवहृषीकेशंजपेद्वाथशृणोतिवा
सुरापानादिकंपापंविहायपरमंपदम् ३४
विनाविघ्नंनरःपुत्रसंप्रयातिजनार्दनम्
श्राद्धकालेहियोमर्त्योविप्राणांभुंजतांपुरः ३५
योजपेच्चशतंनाम्नांस्तोत्रंपातकनाशनम्
पितरस्तुष्टिमायांतितृप्तायांतिपरांगतिं ३६
ब्राह्मणोवेदविद्वान्स्यात्क्षत्रियोविंदतेमहीम्
धनऋद्धिंप्रभुंजीतवैश्योजपतियःसदा ३७

शूद्रः सुखंप्रभुंक्तेचब्राह्मणत्वंचगच्छति
प्राप्यजन्मांतरंवत्सवेदविद्यांप्रविंदति ३८
सुखदंमोक्षदंस्तोत्रंजप्तव्यंचनसंशयः
केशवस्यप्रसादेनसर्वसिद्धोभवेन्नरः ३९
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थवर्णने-
च्यवनचरित्रेसप्ताशीतितमोऽध्यायः ८७

## अष्टाशीतितमोऽध्यायः

कुंजलउवाच-
व्रतंस्तोत्रंमहाज्ञानंध्यानंचैवसुपुत्रक
मयाख्यातंतवाग्रेवैविष्णोःपापप्रणाशनम् १
एवंचतुष्टयंसाहियदापुण्यंसमाचरेत्
प्रयातिवैष्णवंलोकंदेवानामपिदुर्लभम् २
इतोगत्वाव्रतंवत्सदिव्यांदेवींप्रबोधय
अशून्यशयनंनामव्रतराजंवदस्वताम् ३
समुद्धरमहापापाद्राजकन्यांयशस्विनीम्
त्वयापृष्टंमयाख्यातंपुण्यदंपापनाशनम् ४
गच्छगच्छमहाभागइत्युक्त्वाविररामसः
श्रीविष्णुरुवाच-
उज्ज्वलोप्येवमुक्तस्तुसपित्राकुंजलेनहि ५
प्रणम्यपादौधर्मात्मामातापित्रोर्महामतिः
जगामत्वरितोराजन्प्लक्षद्वीपंसउज्ज्वलः ६
तंगिरिंसर्वतोभद्रंनानाधातुसमाकुलम्
नानारत्नमयैस्तुंगैःशिखरैरुपशोभितम् ७
नानाप्रवाहसंपूर्णैरुदकैरुज्ज्वलैर्नृप
नद्यःसंतिस्वच्छनीरास्तस्मिन्गिरिवरोत्तमे ८
किन्नरास्तत्रगायंतिगंधर्वाःसुस्वरैर्नृप
अप्सरोभिःसमाकीर्णंदेववृंदैरुपावृतम् ९
सिद्धचारणसंघुष्टंमुनिवृंदैरलंकृतम्
नानापक्षिनिनादैश्चसर्वत्रपरिनादितम् १०

एवंगिरिंसमासाद्यउज्ज्वलोलघुविक्रमः
सुस्वरेणापिसाकन्यागिरौतस्मिन्प्ररोदिति ११
रोरूयमाणांसप्राज्ञोवचनंचेदमब्रवीत्
कात्वंभवसिकल्याणिकस्माद्रोदिषिसांप्रतम् १२
कमाश्रितामहाभागेकेनतेविप्रियंकृतम्
समाचन्त्वममाद्यैवसर्वदुःखस्यकारणम् १३
दिव्यादेव्युवाच-
विपाकोहिमहाभागकर्मणांममसांप्रतम्
इहतिष्ठामिदुःखेनवैधव्येनसमन्विता १४
भवान्कोहिमहाभागकृपयाममपीडितः
पत्तिरूपधरोवत्ससोत्सवंपरिभाषते १५
एवमाकर्ण्यतत्सर्वंभाषितंराजकन्यया
अहंपत्तीमहाभागेकृपयातवपीडितः १६
पत्तिरूपधरोभद्रेनाहंसिद्धोनज्ञानवान्
रुदमानांमहालापैर्भवतींदृष्टवानिह १७
ततःपृच्छाम्यहंदेविवदमेकारणंत्विह
पितुर्गेहेयथावृत्तमात्मवृत्तांतमेवहि १८
तयानिवेदितंसर्वंयथासंख्येनदुःखदम्
समासेनसमाकर्ण्यउज्ज्वलस्तुमहमनाः १९
तामुवाचमहापत्तीदिव्यादेवींसुदुःखिताम्
यथाविवाहकालेतेभर्तारोमरणंगताः २०
स्वयंवरनिमित्तंतेत्तयंयाताश्चत्तत्रियाः
एतत्तेचेष्टितंसर्वंमयापितरिभाषितम् २१
अन्यजन्मकृतंकर्मतवपापंसुलोचने
ममपित्राममाग्रेतुकृपयापरिभाषितम् २२
तेनदोषेणसंपुष्टालिप्ताजातावरानने
एतावत्कारणंसर्वंतातेनपरिभाषितम् २३
पूर्वकर्मविपाकंतुभुंन्त्वत्वंचसमाश्वस
एवंसाभाषितंतस्यश्रुत्वाकन्योज्ज्वलस्यतत् २४
प्रत्युवाचमहात्मानंब्रुवंतंपत्तिणंपुनः

प्रणतादीनयावाचाकुरुपद्मिन्कृपांमम २५
कथयस्वप्रसादेनतस्यपापस्यनिष्कृतिम्
प्रायश्चित्तंसुपुण्यंचममपातकशोधनम् २६
येनव्रजाम्यहंपुण्यंविशुद्धाधौतकल्मषा
प्रायश्चित्तंमहाभागवदमेत्वंप्रसादतः २७
उज्ज्वलउवाच-
तवार्थंतुमहाभागेपितरंपृष्टवानहम्
समाख्यातमतःपित्राप्रायश्चित्तमनुत्तमम् २८
तत्त्वंकुरुमहाभागेसर्वपातकशोधनम्
ध्यायस्वहिहृषीकेशंशतनामजपस्वच २९
भवज्ञानपरानित्यंकुरुव्रतमनुत्तमम्
अशून्यशयनंपुण्यंव्रतंपापप्रणाशकम् ३०
समाचष्टसधर्मात्मासर्वज्ञानप्रकाशकम्
ज्ञानंस्तोत्रंव्रतंध्यानंविष्णोश्चैवमहात्मनः ३१
विष्णुरुवाच-
तस्मात्साहिप्रजग्राहसंस्थितानिर्जनेवने
सर्वद्वंद्वविनिर्मुक्तासंजातातपसिस्थिता ३२
व्रतंचक्रेजिताहारानिराधारासुदुःखिता
कामक्रोधविहीनासावर्गंसंयम्यनित्यशः ३३
इंद्रियाणांमहाराजमहामोहंनिरस्यसा
अब्देचतुर्थकेप्राप्तेसुप्रसन्नोजनार्दनः ३४
तस्यैवरंदातुकामश्चायातोवरनायकः
तस्यैसंदर्शयामासस्वरूपंवरदःप्रभुः ३५
सूतउवाच-
इंद्रनीलघनश्यामंशंखचक्रगदाधरम्
सर्वाभरणशोभाढ्यंपद्महस्तंमहेश्वरम् ३६
बद्धांजलिपुटाभूत्वावेपमानानिराश्रया
उवाचगद्गदैर्वाक्यैःप्रणतामधुसूदनम् ३७
तेजसातवदिव्येनस्थातुंशक्नोमिनैवहि
दिव्यरूपोभवेःकस्त्वंकृपयाममचाग्रतः ३८

कथयस्वप्रसादेनकिमत्रतवकारणम्
सर्वमेवप्रसादेनप्रब्रवीहिमहामते ३९
देवमेवंविजानामितेजसाइंगितैस्तव
ज्ञानहीनाजगन्नाथनजानेरूपनामनी ४०
किंब्रह्मावाभवान्विष्णुःकिंवाशंकरएवहि
एवमुक्त्वाप्रणम्यैवंदंडवद्धरणींगता ४१
तामुवाचजगन्नाथःप्रणतांराजनंदिनीम्
श्रीभगवानुवाच-
त्रयाणामपिदेवानामंतरंनास्तिशोभने ४२
ब्रह्मासमर्चितोयेनशंकरोवावरानने
तेनाहमर्चितोनित्यंनात्रकार्याविचारणा ४३
एतौममाभिन्नतरौनित्यंचापित्रिरूपवान्
अहंहिपूजितोयैश्चतावेतौतैःसुपूजितौ ४४
अहंदेवोहृषीकेशःकृपयातवचागतः
स्तवेनानेनपुण्येनव्रतेननियमेनच ४५
संजाताकल्मषैर्हीनावरंवरयशोभने
दिव्यादेव्युवाच-
विजयस्वहृषीकेशकृष्णक्लेशापहारक ४६
नमामिचरणद्वंद्वंमामुद्धरसुरेश्वर
वरंमेदातुकामोऽसिचक्रपाणेप्रसीदमे ४७
आत्मपादयुगस्यापिभक्तिंदेहिममानघ
दर्शयस्वजगन्नाथमोक्षमार्गंनिरामयम् ४८
दासत्वंदेहिवैकुंठयदितुष्टोजनार्दन
श्रीभगवानुवाच-
एवमस्तुमहाभागेगच्छनिर्धूतकल्मषा ४९
वैष्णवंपरमंलोकंदुर्लभंयोगिभिःसदा
गच्छगच्छपरंलोकंप्रसादान्ममसांप्रतम् ५०
एवमुक्तेततोवाक्येमाधवेनमहात्मना
दिव्यादेवीअभूद्दिव्यासूर्यतेजःसमप्रभा ५१
पश्यतांसर्वलोकानांदिव्याभरणभूषिता

दिव्यमालान्वितासाचदिव्यहारविलंबिनी ५२
गतासावैष्णवंलोकंदाहप्रलयवर्जितम्
पुनःपद्मीसमायातःस्वगृहंहर्षसंयुतः ५३
तत्सर्वंकथयामासपितरंप्रतिसत्तमः ५४
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थे-
च्यवनचरित्रेऽष्टाशीतितमोऽध्यायः ८८

एकोननवतितमोऽध्यायः

विष्णुरुवाच-
कुंजलस्तुसुतंवाक्यंसमुज्ज्वलमथाब्रवीत्
भवान्कथयभोःपुत्रकिमपूर्वंतुदृष्टवान् १
तन्मेकथयसुप्रीतःश्रोतुकामोऽस्मिसांप्रतम्
एवमादिश्यतंपुत्रंविररामसकुंजलः २
पितरंप्रत्युवाचाथविनयावनतस्सुतः
समुज्ज्वलउवाच-
हिमवंतंनगश्रेष्ठंदेववृंदसमन्वितम् ३
आहारार्थंप्रगच्छामिभवतश्चात्मनःपितः
पश्यामिकौतुकंतत्रनदृष्टंनश्रुतंपुरा ४
प्रदेशमृषिगणाकीर्णमप्सरोभिःप्रशोभितम्
बहुकौतुकशोभाढ्यंमंगल्यंमंगलैर्युतम् ५
बहुपुण्यफलोपेतैर्वनैर्नानाविधैस्ततः
अनेककौतुकभरैर्मनसःपरिमोहनम् ६
तत्रदृष्टंमयातातअपूर्वंमानसांतिके
बहुहंसैःसमाकीर्णोहंसएकःसमागतः ७
एवंकृष्णामहाभागअन्येतत्रसमागताः
सितेतरैश्चंचुपादैरन्यतःशुक्लविग्रहाः ८
तादृशास्तेचनीलावैअन्येशुभ्रामहामते
चतस्रस्तत्रवैनार्योरौद्राकाराविभीषणाः ९
दंष्ट्राकरालसंक्रूराऊर्ध्वकेश्योभयानकाः
पश्चात्तास्तुसमायातास्तस्मिन्सरसिमानसे १०

कृष्णाहंसास्तुसंस्नातामानसेतातमत्पुरः
विभ्रांताःपरितश्चान्येनस्नातास्तत्रमानसे ११
जहसुस्ताःस्त्रियस्तातहास्यैरट्टाट्टदारुणैः
तस्मात्सराद्विनिष्क्रांतोहंसएकोमहातनुः १२
पश्चात्त्रयोविनिष्क्रांतास्तैश्चाहंसमुपेक्षितः
याताआकाशमार्गेणविवदंतःपरस्परम् १३
तास्तुस्त्रियोमहाभीमाःसमंतात्परिबभ्रमुः
विंध्यस्यशिखरेपुण्येवृक्षच्छायासुपक्षिणः १४
निषण्णास्तत्रतेसर्वेदग्धादुःखैःसुदारुणैः
तेषांसुवीक्षमाणानांभिल्लएकःसमागतः १५
मृगान्सपीडयित्वातुबाणपाणिर्धनुर्द्धरः
शिलातलंसमाश्रित्यनिषसादसुखेनवै १६
पश्चाद्भिल्लीसमायाताअन्नमादायसोदकम्
स्वंप्रियंवीक्षतेराज्ञामुदितैर्लक्षणैर्युतम् १७
अन्यादृशंसमावीक्ष्यस्वकांतंतेजसावृतम्
दिव्यतेजःसमाक्रांतंयथासूर्यंदिविस्थितम् १८
नरमन्यंपरिज्ञायतंपरित्यज्यसाययौ
व्याधउवाच-
एह्येहित्वंप्रियेचात्रकस्मान्मांत्वंनपश्यसि १९
क्षुधयापीड्यमानोहंत्वामहंचावलोकये
तस्यवाक्यंसमाकर्ण्यशीघ्रंव्याधीसमागता २०
भर्तुःपार्श्वंसमासाद्यविस्मितासाभवत्तदा
कोयंतेजःसमाचारोदेवोयंमांसमाह्वयेत् २१
तमुवाचततोव्याधीभर्तारंदीप्ततेजसम्
अत्रकिंतेकृतंवीरभवान्कोदिव्यलक्षणः २२
सूतउवाच-
एवमाभाषितोव्याध्याव्याधःप्रियामभाषत
अहंतेवल्लभःकांतेभवतीचममप्रिया २३
कस्मात्त्वंमांनजानासिकथंशंकाप्रवर्तते
क्षुधयापीड्यमानेनपयश्चान्नंप्रतीक्ष्यते २४

व्याध्युवाच-
बर्बरःकृष्णवर्णश्चरक्ताक्षःकृष्णकंचुकः
ईदृशश्चास्तिमेभर्तासर्वसत्वभयंकरः २५
भवान्कोदिव्यदेहस्तुप्रियेत्युक्त्वासमाह्वयेत्
एषमेसंशयोजातोवदसत्यंममाग्रतः २६
कुलंनामस्वकंग्रामंक्रीडांलिगंसुतंसुताम्
समाचष्टप्रियाग्रेतुतस्याःप्रत्ययहेतवे २७
प्रत्युवाचस्वभर्तारंसाव्याधीहृष्टमानसा
कस्मात्तेईदृशःकायःश्वेतकंचुकधारकः २८
कथंजातःसमाचक्ष्वममाश्चर्यंप्रवर्तते
एवंसंपृच्छमानस्तुभार्ययामृगघातकः २९
सूतउवाच-
प्रत्युवाचततःश्रुत्वातांप्रियांप्रश्रयान्विताम्
नर्मदाउत्तरेकूलेसंगमश्चास्तिसुव्रते ३०
आतपेनाकुलोजीवोममजातोतिसुप्रिये
अस्मिन्वैसंगमेकांतेश्रमश्रांतोहिसत्वरः ३१
गतःस्नात्वाजलंपीत्वापश्चाच्चाहंसमागतः
तदाप्रभृतिमेकायईदृशस्तेजसावृतः ३२
संजातोवस्त्रसंयुक्तःकंचुकःशुभ्रतांगतः
पूर्वोक्तलिगसंस्थानैःकुलैःस्थानेनवैतथा ३३
स्वप्रियंलक्षयित्वातुज्ञात्वापुण्यस्यसंभवम्
प्रत्युवाचाथभर्तारंसंगमंममदर्शय ३४
तवपश्चात्प्रदास्यामिभोजनंपानसंयुतम्
इत्युक्तःप्रिययाव्याधःसत्वरेणजगामह ३५
संगमोदर्शितस्तेनततोग्रेपापनाशनः
समुड्डीनामहाभागपक्षिणोलघुविक्रमाः ३६
तयासार्द्धंययुःसर्वैरेवासंगममुत्तमम्
तेषांतुवीक्षमाणानांपक्षिणांममपश्यतः ३७
तयाहिस्नापितोभर्तापुनःस्नाताहिसास्वयम्
दिव्यदेहधरौचोभौदिव्यकांतिसमन्वितौ ३८

संजातौपद्मिणांश्रेष्ठदिव्यवस्त्रानुलेपनौ
दिव्यमालांबरधरौदिव्यगंधानुलेपनौ ३९
वैष्णवंयानमासाद्यमुनिगंधर्वपूजितौ
गतौतौवैष्णवंलोकंवैष्णवैःपरिपूजितौ ४०
स्तूयमानौमहात्मानौदंपतीदृष्टवानहम्
व्रजंतौस्वर्गमार्गेणकूजंतेपद्मिणस्तथा ४१
तीर्थराजंपरंदृष्ट्वाहर्षव्यक्ताद्मरैस्तदा
चत्वारःकृष्णहंसास्तेसंगमेपापनाशने ४२
स्नात्वावैभावशुद्धास्तेप्राप्ताउज्ज्वलतांपुनः
स्नात्वापीत्वाजलंतेतुपुनर्बहिर्विनिर्गताः ४३
तावत्यस्ताःस्त्रियःकृष्णामृतास्तत्स्नानमात्रतः
क्रंदमानाविचेष्टंत्योहाहाकारविकंपिताः ४४
यमलोकंगतास्तास्तुतातदृष्टामयातदा
उड्डीनास्तुततोहंसाःस्वस्थानंप्रतिजग्मिरे ४५
एवंतातमयादृष्टंप्रत्यद्मंकथितंतव
कृष्णपद्मामहाकायाधार्तराष्ट्रास्तुताःस्त्रियः ४६
कथयस्वप्रसादेनकेभविष्यंतिवैपितः
निर्गतान्मानसान्मध्याद्धार्तराष्ट्रान्वदस्वमे ४७
केभविष्यंतितेतातकथयत्वंतुसांप्रतम्
कस्मात्सुकृष्णतांप्राप्ताहंसाःशुद्धाश्चतेपुनः ४८
संजातास्तत्द्मणात्तातकस्मान्मृतास्तुताःस्त्रियः
एवंमेसंशयस्तातसंजातोदारुणोहृदि ४९
छेत्तुमर्हसिअद्यैवभवाञ्ज्ञानविचद्मणः
प्रसादसुमुखोभूत्वाप्रणतस्यसदैवमे ५०
एवंसंभाष्यपितरंविररामसमुज्ज्वलः
ततःप्रवक्तुमारेभेसशुकःकुंजलाभिधः ५१

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थवर्णने-
च्यवनचरित्रेएकोननवतितमोऽध्यायः ८९

## नवतितमोऽध्यायः

सूतउवाच-
एवमाकर्ण्यतत्सर्वंसमुज्ज्वलस्यभाषितम्
कुंजलःसहिधर्मात्माप्रत्युवाचसुतंप्रति १
कुंजलउवाच-
संप्रवक्ष्याम्यहंतातश्रूयतांस्थिरमानसः
सर्वसंदेहविध्वंसंचरित्रंपापनाशनम् २
इंद्रलोकेप्रववृतेसंवादोदेवकौतुकः
सभायांतस्यदेवस्यइंद्रस्यापिमहात्मनः ३
देवंद्रष्टुंसहस्राक्षंनारदस्त्वरितंययौ
समागतंसहस्राक्षःसूर्यतेजःसमप्रभम् ४
तंदृष्ट्वाहर्षमायातःसमुत्थायमहामतिः
ददावर्घंचपाद्यंचभक्त्याप्रणतमानसः ५
बद्धांजलिपुटोभूत्वाप्रणाममकरोत्तदा
आसनेकोमलेपुण्येविनिवेश्यद्विजोत्तमम् ६
पप्रच्छप्रणतोभूत्वाश्रद्धयापरयायुतः
कस्माच्चागमनंतेऽद्यकारणंवदसांप्रतम् ७
इत्युक्तोदेवराजेनप्रत्युवाचमहामुनिः
भवंतंद्रष्टुमायातःपृथिव्यास्तुपुरंदरः ८
स्नात्वापुण्यप्रदेशेषुतीर्थेषुचसुश्रद्धया
देवान्पितॄन्समभ्यर्च्यदृष्ट्वातीर्थान्यनेकशः ९
एतत्तेसर्वमाख्यातंयत्त्वयापृच्छितंपुरा
देवेंद्रउवाच-
दृष्टानिपुण्यतीर्थानिसुक्षेत्राणित्वयामुने १०
किंतीर्थंप्राप्यमुच्येतब्रह्मघ्नोब्रह्महत्यया
सुरापोमुच्यतेपापाद्गोघ्नोहेमापहारकः ११
स्वामिद्रोहान्महाभागनारीहंताकथंसुखी
नारदउवाच-
यानिकानिचतीर्थानिगयादीनिसुरेश्वर १२
तेषांनैवप्रजानामिविशेषंपापनाशनम्

सुपुरायानिसुदिव्यानिपापघ्नानिसमानिच १३
सर्वारायेवसुतीर्थानिजानाम्यहंपुरंदर
अविशेषंविशेषंवैनैवजानामिसांप्रतम् १४
प्रत्ययंक्रियतांदेवतीर्थानांगतिदायकम्
एवमाकरार्यतद्वाक्यंनारदस्यमहात्मनः १५
समाहूतानिचेंद्रेणतीर्थानिभूगतानिच
मूर्तिवर्तीनिदिव्यानिसमायातानिशासनात् १६
बद्धांजलीनिदिव्यानिभूषितानिसुभूषणैः
दिव्यांबराणिस्निग्धानितेजोवंतिचसुव्रत १७
स्त्रीपुंसोश्चस्वरूपाणिकृतानिचविशेषतः
हेमचंदनकाशानिदिव्यरूपधराणिच १८
मुक्ताफलस्यवर्णेनप्रभासंतिनरेश्वर
तप्तकांचनवर्णानिसारुरायानिचतत्रवै १९
कतिशुक्लसुपीतानिप्रभावंतिसभांतरे
कानिपद्मनिभान्येवमूर्तिवर्तीनितानितु २०
सूर्यतेजःप्रकाशानितडित्तेजःसमानिच
पावकाभानिचान्यानिप्रभासंतिसभांतरे २१
सर्वाभरणशोभाढ्यैःप्रशोभंतेनरेश्वर
हारकंकणकेयूरमालाभिस्तुसुचंदनैः २२
दिव्यचंदनदिग्धानिसुरभीणिगुरूणिच
कमंडलुकरारायेवआयातानिसभांतरे २३
गंगाचनर्मदापुरायाचंद्रभागासरस्वती
देविकाबिंबिकाकुब्जाकुंजलामंजुलाश्रुता २४
रंभाभानुमतीपुरायापाराचैवसुघर्घरा
शोणाचसिंधुसौवीराकावेरीकपिलातथा २५
कुमुदावेदनदीपुरायासुपुरायाचमहेश्वरी
चर्मरावतीतथाख्यातालोपाचान्यासुकौशिकी २६
सुहंसीहंसपादाचहंसवेगामनोरथा
सुरुथास्वारुणावेणाभद्रवेणासुपद्मिनी २७
नाहलीसुमरीचान्यापुरायाचान्यापुलिंदिका

हेमामनोरथादिव्याचंद्रिकावेदसंक्रमा २८
ज्वालाहुताशनीस्वाहाकालाचैवकपिंजला
स्वधाचसुकलालिगागंभीराभीमवाहिनी २९
देवद्रीचीवीरवाहालक्षहोमाअघापहा
पाराशरीहेमगर्भासुभद्रावसुपुत्रिका ३०
एतानद्योमहापुण्यामूर्तिमत्योनरेश्वर
सर्वाभरणशोभाढ्याःकुंभहस्ताःसुपूजिताः ३१
प्रयागःपुष्करश्चैवअर्घदीर्घोमनोरथा
वाराणसीमहापुण्याब्रह्महत्याव्यपोहिनी ३२
द्वारावतीप्रभासश्चअवंतीनैमिषस्तथा
चंडकश्चमहारत्नोमहेश्वरकलेश्वरौ ३३
कलिजरोब्रह्मक्षेत्रंमाथुरोमानवाहकः
मायाकांतीतथान्यानिदिव्यानिविविधानिच ३४
अष्टषष्टिःसुतीर्थानिनदीनांशतकोटयः
गोदावरीमुखाःसर्वासमायातास्तदाज्ञया ३५
द्वीपानांतुसमस्तानिसुतीर्थानिमहांतिच
मूर्तिलिगधराण्येवसहस्राक्षंसुरेश्वरम् ३६
समाजग्मुःसमस्तानितदादेशकराणिच
प्रणेमुर्देवदेवेशंनतशीर्षाणिसर्वशः ३७
सूतउवाच–
तैःप्रोक्तंतुमहातीर्थैर्देवराजंयशस्विनम्
कस्मात्त्वयासमाहूतादेवदेववदस्वनः ३८
ब्रूहिनःकारणंसर्वंनमस्तुभ्यंसुराधिप
एवमाकर्ण्यतद्वाक्यंदेवराजोभ्यभाषत ३९
कःसमर्थोमहातीर्थोब्रह्महत्यांव्यपोहितुम्
गोवधाख्यंमहापापंस्त्रीवधाख्यमनुत्तमम् ४०
स्वामिद्रोहाच्चसंभूतंसुरापानाच्चदारुणम्
हेमस्तेयात्तथाजातंगुरुनिंदासमुद्भवम् ४१
भ्रूणहत्यांमहाघोरांनाशयेत्कःसमर्थवान्
राजद्रोहान्महापापंबहुपीडाप्रदायकम् ४२

मित्रद्रोहात्तथाचान्यदन्यद्विश्वासघातकम्
देवभेदंतथाचान्यंलिगभेदमतःपरम् ४३
वृत्तिच्छेदंचविप्राणांगोप्रचारप्रणाशनम्
आगारदहनंचान्यद्गृहदीपनकंतथा ४४
षोडशैतेमहापापाअगम्यागमनंतथा
स्वामित्यागात्समुद्भूतंरणस्थानात्पलायनात् ४५
एतानिनाशयेत्कोवैसमर्थस्तीर्थउत्तमः
समर्थोभवतांमध्येप्रायश्चित्तंविनाध्रुवम् ४६
पश्यतांदेवतानांचनारदस्यचपश्यतः
ब्रुवंतुसर्वेसंचिंत्यविचार्यैवंसुनिश्चितम् ४७
एवमुक्तेशुभेवाक्येदेवराज्ञामहात्मना
संमंत्र्यतीर्थराजेनप्रोचुःशक्रंसभागतम् ४८
तीर्थान्यूचुः -
श्रूयतामभिधास्यामोदेवराजनमोस्तुते
संतिवैसर्वतीर्थानिसर्वपापहराणिच ४९
ब्रह्महत्यादिकान्यांश्चत्वयाप्रोक्तान्सुरेश्वर
महाघोरान्सुदीप्तांश्चनाशितुंनैवशक्नुमः ५०
प्रयागःपुष्करश्चैवअर्घतीर्थमनुत्तमम्
वाराणसीमहाभागसमर्थापापनाशिनी ५१
महापातकनाशार्थेचत्वारोमितविक्रमाः
उपपातकनाशार्थंचत्वारोमितविक्रमाः ५२
सृष्टाधात्राचदेवेंद्रपुष्कराद्यामहाबलाः
एवमाकर्ण्यतद्वाक्यंतीर्थानांसुरराट्ततः ५३
हर्षेणमहताविष्टस्तेषांस्तोत्रंचकारसः ५४

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये-
च्यवनचरित्रेनवतितमोऽध्यायः ९०

## एकनवतितमोऽध्यायः

कुंजलउवाच-
ब्रह्महत्याभिभूतस्तुसहस्राक्षोयदापुरा

गौतमस्यप्रियासंगादगम्यागमनंमहत् १
संजातंपातकंतस्यत्यक्तोदेवैश्चब्राह्मणैः
सहस्राक्षस्तपस्तेपेनिरालंबोनिराश्रयः २
तपोंतेदेवताःसर्वाऋषयोयक्षकिन्नराः
देवराजस्यपूजार्थमभिषेकंप्रचक्रिरे ३
देशंमालवकंनीत्वादेवराजंसुतोत्तम
चक्रेस्नानंमहाभागकुंभैरुदकपूरितैः ४
स्नापितुंप्रथमंनीतोवाराणस्यांस्वयंततः
प्रयागेतुसहस्राक्षअर्घतीर्थेततःपुनः ५
पुष्करेणमहात्मासौस्नापितःस्वयमेवहि
ब्रह्मादिभिःसुरैःसर्वैर्मुनिवृंदैर्द्विजोत्तम ६
नागैर्वृक्षैर्नागसर्पैर्गंधर्वैस्तुसकिन्नरैः
स्नापितोदेवराजस्तुवेदमंत्रैःसुसंस्कृतः ७
मुनिभिःसर्वपापघ्नैस्तस्मिन्कालेद्विजोत्तम
शुद्धेतस्मिन्महाभागेसहस्राक्षेमहात्मनि ८
ब्रह्महत्यागतातस्यअगम्यागमनंतथा
ब्रह्महत्याततोनष्टाअगम्यागमनेनच ९
पापेनतेनघोरेणसार्द्धमिंद्रस्यभूतले
सुप्रसन्नःसहस्राक्षस्तीर्थेभ्योहिवरंददौ १०
भवंतस्तीर्थराजानोभविष्यथनसंशयः
मत्प्रसादात्पवित्राश्चयस्मादहंविमोक्षितः ११
सुघोरात्किल्बिषादत्रयुष्माभिर्विमलैरहम्
एवंतेभ्योवरंदत्वामालवायवरंददौ १२
यस्मात्त्वयामलंमेऽद्यविधृतंश्रमदायकम्
तस्मात्त्वमन्नपानैश्चधनधान्यैरलंकृतः १३
भविष्यसिनसंदेहोमत्प्रसादान्नसंशयः
सुदुःकालैर्विनात्वंतुभविष्यसिसुपुण्यवान् १४
एवंतस्मैवरंदत्वादेवराजःपुरंदरः
क्षेत्राणिसर्वतीर्थानिदेशोमालवकस्तथा १५
आखंडलेनसार्द्धंतेस्वस्थानंप्रतिजग्मिरे

सूतउवाच-
तदाप्रभृतिचत्वारःप्रयागःपुष्करस्तथा १६
वाराणसीचार्धतीर्थंप्राप्ताराजत्वमुत्तमम् १७
कुंजलउवाच-
अस्तिपंचालदेशेषुविदुरोनामक्षत्रियः
तेनमोहप्रसंगेनब्राह्मणोनिहतःपुराः १८
शिखासूत्रविहीनस्तुतिलकेनविवर्जितः
भिक्षार्थमटतेसोऽपिब्रह्मघ्नोहंसमागतः १९
ब्रह्मघ्नायसुरापायभिक्षाचान्नंप्रदीयताम्
गृहेष्वेवंसमस्तेषुभ्रमतेयाचतेपुरा २०
एवंसर्वेषुतीर्थेषुअटित्वैवसमागतः
ब्रह्महत्यानतस्यापिप्रयातिद्विजसत्तम २१
वृक्षच्छायांसमाश्रित्यदह्यमानेनचेतसा
संस्थितोविदुरःपापोदुःखशोकसमन्वितः २२
चंद्रशर्माततोविप्रोमहामोहेनपीडितः
न्यवसन्मागधेदेशेगुरुघातकरश्चसः २३
स्वजनैर्बंधुवर्गैश्चपरित्यक्तोदुरात्मवान्
सहितत्रसमायातोयत्रासौविदुरःस्थितः २४
शिखासूत्रविहीनस्तुविप्रलिगैर्विवर्जितः
तदासौपृच्छितस्तेनविदुरेणदुरात्मना २५
भवान्कोहिसमायातोःदुर्भगोदग्धमानसः
विप्रलिगविहीनस्तुकस्मात्त्वंभ्रमसेमहीम् २६
विदुरेणोक्तमात्रस्तुचंद्रशर्माद्विजाधमः
आचष्टेसर्वमेवापियथापूर्वकृतंस्वकम् २७
पातकंचमहाघोरंवसताचगुरोर्गृहे
महामोहगतेनापिक्रोधेनाकुलितेनच २८
गुरोर्घातःकृतःपूर्वंतेनदग्धोस्मिसांप्रतम्
चंद्रशर्माचवृत्तांतमुक्त्वासर्वमपृच्छत २९
भवान्कोहिसुदुःखात्मावृक्षच्छायांसमाश्रितः
विदुरेणसमासेनआत्मपापंनिवेदितम् ३०

अथकश्चिद्द्विजःप्राप्तस्तृतीयःश्रमकर्षितः
वेदशर्मेतिवैनामबहुपातकसंचयः ३१
द्वाभ्यामपिसुसंपृष्टःकोभवान्दुःखिताकृतिः
कस्माद्भ्रमसिवैपृथ्वद्यंवदभावंत्वमात्मनः ३२
वेदशर्माततःसर्वमात्मचेष्टितमेवच
कथयामासताभ्यांवैह्यगम्यागमनंकृतम् ३३
धिक्कृतःसर्वलोकैश्चअन्यैःस्वजनबाधवैः
तेनपापेनसंलिप्तोभ्रमाम्येवंमहीमिमाम् ३४
वंजुलोनामवैश्योथसुरापायीसमागतः
सगोघ्नश्चविशेषेणतैश्चपृष्टोयथापुरा ३५
तेनआवेदितंसर्वंपातकंयत्पुराकृतम्
तैराकर्णितमन्यैश्चसर्वंतस्यप्रभाषितम् ३६
एवंचत्वारःपापिष्ठाएकस्थानंसमागताः
कःकस्यापिनसंपर्कंभोजनाच्छादनेनच ३७
करोतिचमहाभागवार्ताचक्रुःपरस्परम्
नविशंत्यासनेचैकेनस्वपंत्येकसंस्तरे ३८
एवंदुःखसमाविष्टानानातीर्थेषुवैगताः
तेषांतुपापकाघोराननश्यंतिचनंदन ३९
सामर्थ्यंनास्तितीर्थानांमहापातकनाशने
विदुराद्यास्ततस्तेतुगताःकालंजरंगिरिम् ४०

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थे-
च्यवनचरित्रेएकनवतितमोऽध्यायः ९१

## द्विनवतितमोऽध्यायः

कुंजलउवाच-
कालंजरंसमासाद्यनिवसंतिसुदुःखिताः
महापापैस्तुसंदग्धाहाहाभूताविचेतनाः १
तत्रकश्चित्समायातःसिद्धश्चैवमहायशाः
तेनपृष्टाःसुदुःखार्ताभवंतःकेनदुःखिताः २
सतैःप्रोक्तोमहाप्राज्ञःसर्वज्ञानविशारदः

तेषांज्ञात्वामहापापंकृपांचक्रेसुपुरायभाक् ३
सिद्धउवाच-
अमासोमसमायोगेप्रयागःपुष्करश्चयः
अर्घतीर्थंतृतीयंतुवाराणसीचतुर्थका ४
गच्छंतुतत्रवैयूयंचत्वारःपातकाविलाः
गंगांभसियदास्नातास्तदामुक्ताभविष्यथ ५
पातकेभ्योनसंदेहोनिर्मलत्वंगमिष्यथ
आदिष्टास्तेनवैसर्वेप्रणेमुस्तंप्रयत्नतः ६
कालंजरात्ततोजग्मुःसत्वरंपापपीडिताः
वाराणसींसमासाद्यस्नात्वाचैवद्विजोत्तमाः ७
प्रयागंपुष्करंचैवअर्घतीर्थंतुसत्तम
अमासोमंसुसंप्राप्यजग्मुस्तेचमहापुरीम् ८
विदुरश्चंद्रशर्माचवेदशर्मातृतीयकः
वैश्योवंजुलकश्चैवसुरापःपापचेतनः ९
तस्मिन्पर्वणिसंप्राप्तेस्नातागंगांभसिद्विज
स्नानमात्रेणमुक्तास्तुगोवधाद्यैश्चकिल्बिषैः १०
ब्रह्महत्यागुरुहत्यासुरापानादिपातकैः
लिप्तानितानितीर्थानिपरिभ्रमंतिमेदिनीम् ११
पुष्करोअर्धतीर्थस्तुप्रयागःपापनाशनः
वाराणसीचतुर्थीतुलिप्तापापैर्द्विजोत्तम १२
कृष्णत्वंपेदिरेसर्वेहंसरूपेणबभ्रमुः
सर्वेष्वेवसुतीर्थेषुस्नानंचक्रुर्द्विजोत्तमाः १३
कृष्णत्वंनैवगच्छेततेषांपापेनचागतम्
सुतीर्थेषुमहाराजस्नाताःसर्वेषुवैपुनः १४
यंयंतीर्थंप्रयांत्येतेसर्वेतीर्थाद्विजोत्तम
हंसरूपेणवैयांतितैःसार्द्धंतुसुदुःखिताः १५
भार्याःपातकरूपाश्चभ्रमंतिपरितस्तथा
अष्टषष्टिसुतीर्थानिहंसरूपेणबभ्रमुः १६
तैःसार्द्धंसुमहाराजमहातीर्थैःसमंपुनः
मानसंचागतास्तेचपातकाकुलमानसाः १७

तत्रस्नातामहाराजनजहातिचपातकः
लज्जयाविष्टमनसामानसोहंसरूपधृक् १८
संजातःकृष्णकायस्तुयंत्वंवैदृष्टवान्पुरा
रेवातीरंततोजग्मुरुत्तरंपापनाशनम् १९
कुब्जायाःसंगमेतेतुसुरसिद्धनिषेविते
स्नानमात्रेणमुक्तास्तेपापेभ्योद्विजसत्तम २०
विहायवर्णमेवैतंसुकृतंप्रतिजग्मिरे
यंयंतीर्थंप्रयांत्येतेहंसाःस्नानंप्रचक्रमुः २१
जहसुस्ताःस्त्रियोदृष्ट्वापातकंनैवगच्छति
तोयानलेनकुब्जायाःपातकंवरमेवच २२
भस्मावशेषंसंजातंतदामृतास्तुताःस्त्रियः
ब्रह्महत्यागुरोर्हत्यासुरापानागमागमाः २३
भस्मीभूतास्तुसंजातारेवायाःकुब्जयाहताः
तास्तुहतामहाभागयामृतास्तुसरित्तटे २४
अष्टषष्टिसुतीर्थानांहंसरूपेणतानितु
सार्द्धंहंसःसमायातोविद्धितंत्वंतुमानसम् २५
चत्वारःकृष्णहंसाश्चतेषांनामानिमेशृणु
प्रयागःपुष्करश्चैवअर्घतीर्थमनुत्तमम् २६
वाराणसीचतुर्थीचचत्वारःपापनाशनाः
ब्रह्महत्याभिभूतानिचत्वारिपरिबभ्रमुः २७
तीर्थान्येतानिदुःखेनतीर्थेषुचमहामते
नगतंपातकंघोरंतेषांतुभ्रमतांसुत २८
कुब्जायाःसंगमेशुद्धाविमुक्ताःकिल्बिषात्किल
तीर्थानामेवसर्वेषांपुण्यानामिहसंमतः २९
राजाप्रयागःसंजातइंद्रस्यपुरतःकिल
तावद्गर्जंतुतीर्थानियावद्रेवानदृश्यते ३०
ब्रह्महत्यादिपापानांविनाशायप्रतिष्ठिता
कपिलासंगमेपुण्येरेवायाःसंगमेतथा ३१
मेघनादसमायोगेतथाचैवोरुसंगमे
महापुण्यामहाधन्यारेवासर्वत्रदुर्लभा ३२

साचोंकारेभृगुक्षेत्रेनर्मदाकुब्जसंगमे
दुःप्राप्यामानवैरेवामाहिष्मत्यांसुरोत्तमैः ३३
विटंकासंगमेपुरायाश्रीकंठेमंगलेश्वरे
सर्वत्रदुर्लभारेवासुरपुरायसमाकुला ३४
तीर्थमातामहादेवीअघराशिविनाशिनी
उभयोःकूलयोर्मध्येयत्रतत्रसुखीनरः ३५
अश्वमेधफलंभुंक्तेस्नानेनैकेनमानवः
एतत्तेसर्वमाख्यातंयत्त्वयापरिपृच्छितम् ३६
सर्वपापापहंपुरायंगतिदंचापिशृरावताम्
एवमुक्त्वामहाप्राज्ञतृतीयंपुत्रमब्रवीत् ३७

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थे-
च्यवनचरित्रेद्विनवतितमोऽध्यायः ९२

त्रिनवतितमोऽध्यायः

कुंजलउवाच-
किंविज्वलत्वयादृष्टमपूर्वंभ्रमतामहीम्
आश्चर्येणसमायुक्तंतन्मेकथयसुव्रत १
इतःप्रयासिकंदेशमाहारार्थंतुसोद्यमी
यद्यद्दृष्टंत्वयाचित्रंसमाख्याहिसुतोत्तम २
विज्वलउवाच-
अस्तिमेरुगिरेःपृष्ठेआनंदंनामकाननम्
दिव्यवृक्षैःसमाकीर्णंफलपुष्पमयैःसदा ३
देववृंदैःसमाकीर्णंमुनिसिद्धसमन्वितम्
अप्सरोभिःसुरूपाभिर्गंधर्वैःकिन्नरोरगैः ४
वापीकूपतडागैश्चनदीप्रस्रवणैस्तथा
आनंदकाननंपुरायंदिव्यभावैःप्रभासते ५
विमानैःकोटिसंख्याभिर्हंसकुंदेंदुसन्निभैः
गीतकोलाहलैरम्यैर्मेघध्वनिनिनादितम् ६
षट्पदानांनिनादेनसर्वत्रमधुरायते
चंदनैश्चूतवृक्षैश्चचंपकैःपुष्पितैर्वृतम् ७

नानावृक्षैःप्रभात्येवमानंदवनमुत्तमम्
नानापक्षिनिनादेनबहुकोलाहलान्वितम् ८
एवमानंदनंदृष्टंमयातत्रसुशोभनम्
विमलंचसरस्तातशोभतेसागरोपमम् ९
संपूर्णंपुण्यतोयेनपद्मसौगंधिकैःशुभैः
जलजैस्तुसमाकीर्णंहंसकारंडवान्वितम् १०
एवमासीत्सरस्तस्यसुमध्येकाननस्यहि
देवगंधर्वसंबाधैर्मुनिवृंदैरलंकृतम् ११
किंनरोरगगंधर्वैश्चारणैश्चसुशोभते
तत्राश्चर्यंमयादृष्टंवक्तुंतातनशक्यते १२
विमानेनापिदिव्येनकलशैरुपशोभते
छत्रदंडपताकाभीराजमानेनसत्तम १३
सर्वभोगाविलेनापिगीयमानेथकिन्नरैः
गंधर्वैरप्सरोभिश्चशोभमानोथसुव्रत १४
स्तूयमानोमहासिद्धऋषिभिस्तत्त्ववेदिभिः
रूपेणाप्रतिमोलोकेनदृष्टस्तादृशःक्वचित् १५
सर्वाभरणशोभांगोदिव्यमालाविशोभितः
महारत्नकृतामालायस्योरसिविराजते १६
तत्समीपेस्थिताचैकानारीदृष्टावरानना
हेमहारैश्चमुक्तानांवलयैःकंकणैर्युता १७
दिव्यवस्त्रैश्चगंधैश्चचंदनैश्चारुलेपनैः
स्तूयमानोगीयमानःपुरुषस्तत्रचागतः १८
रतिरूपावरारोहापीनश्रोणिपयोधरा
सर्वाभरणशोभांगीतादृशीरूपसंपदा १९
द्वावेतौतौमयादृष्टौविमानेनापिचागतौ
रूपलावण्यमाधुर्यौसर्वशोभासमाविलौ २०
समुत्तीर्णौविमानात्तावागतौसरसोन्तिके
स्नातौतातमहात्मानौस्त्रीपुंसौकमलेक्षणौ २१
प्रगृह्यतौमहाशस्त्रौदंपतीतुपरस्परम्
तादृशौचशवौतत्रपतितौसरसस्तटे २२

प्रभासेतेतदातौतुस्त्रीपुंसौकमलेच्चणौ
रूपेणापिमहाभागतादृशावेवतौशवौ २३
देवरूपोपमस्तातयथापुंसस्तथाशवः
यथारूपंहितस्यापितादृशस्तत्रदृश्यते २४
यथारूपंतुभार्यायास्तथाशवोद्वितीयकः
स्त्रीशवस्यतुयन्मांसंशस्त्रेणोत्कृत्यसाततः २५
भच्चतेतस्यमांसानिरक्ताप्लुतानितानितु
पुरुषोभच्चतेतद्वच्छवमांसंसमातुरः २६
च्चुधयापीड्यमानौतौभच्चेतेपिशितंतयोः
यावत्तृप्तिंसमायातौतावन्मांसंप्रभच्चितम् २७
सरस्यथजलंपीत्वासंजातौसुखितौपितः
कियत्कालंस्थितौतत्रविमानेनगतौपुनः २८
अन्येद्वेतुस्त्रियौतातमयादृष्टेचतत्रवै
रूपसौभाग्यसंपन्नेतेस्त्रियौचारुलच्चणे २९
ताभ्यांप्रभच्चितंमांसंयदातातमहावने
प्रहसेतेतदातेद्वेहास्यैरट्टाट्टकैःपुनः ३०
भच्चतेचस्वमांसानितावेतौपरिनित्यशः
कृत्वास्नानादिकंमांसंपश्यतोममतत्रहि ३१
अन्येस्त्रियौमहाभागरौद्राकारसमन्विते
दंष्ट्राकरालवदनेतत्रैवातिविभीषणे ३२
ऊचतुस्तौतदातेतुदेहिदेहीतिवैपुनः
एवंदृष्टंमयातातवसतावनसंनिधौ ३३
नित्यमुत्कीर्यभद्दयेतेतौद्वौतुमांसमेवच
जायेतेचसुसंपूर्णौकायौचशवयोःपुनः ३४
नित्यमुत्तीर्यतावेवंतेचाप्यन्येचवैपितः
कुर्वंतिसदृशींचेष्टांपूर्वोक्तांममपश्यतः ३५
एतदाश्चर्यसंजातंदृष्टंतातमयातदा
भवतापृच्छितंतातदृष्टमाश्चर्यमेवच ३६
मयाख्यातंतवाग्रेवैसर्वसंदेहकारणम्
कथयस्वप्रसादाच्चप्रीयमाणेनचेतसा ३७

विमानेनागतोयोसौस्त्रियासार्द्धंद्विजोत्तम
दिव्यरूपधरोयस्तुसकस्तुकमलेक्षणः ३८
काचनारीमहाभागमहामांसंप्रभक्षति
सकश्चाप्यागतस्तातसाचैवाभ्येत्यभक्षति ३९
प्रहसेतेतदातेद्वेस्त्रियौतातवदस्वनः
ऊचतुस्तौतथाचान्येदेहिदेहीतिवापुनः ४०
तेद्वेत्वंमेसमाचक्ष्वमहाभीषणकेस्त्रियौ
एतन्मेसंशयंतातच्छेत्तुमर्हसिसुव्रत ४१
एवमुक्त्वामहाराजविररामसचांडजः
एवंपृष्टस्तृतीयेनविज्वलेनात्मजेनसः ४२
प्रोवाचसर्ववृत्तांतंच्यवनस्यापिशृण्वतः ४३

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थेच्यवनचरित्रे त्रिनवतितमोऽध्यायः ९३

## चतुर्नवतितमोऽध्यायः

कुंजलउवाच-
श्रूयतामभिधास्यामितत्सर्वंकारणंसुत
यस्मात्तौतादृशौजातौस्वमांसपरिभक्षकौ १
सर्वत्रकारणंकर्मशुभाशुभंनसंशयः
पुण्येनकर्मणापुत्रनरःसौख्यंपभुंजति २
दुष्कृतंभुंजतेचात्रपापयुक्तेनकर्मणा
सूक्ष्मवर्त्मविचार्यैवंशास्त्रज्ञानेनचक्षुषा ३
स्थूलधर्मंप्रदृष्ट्वैवसुविचार्यपुनःपुनः
समारभेन्नरःकर्ममनसानिपुणेनच ४
समूर्तिकारकःशिल्पीरसमावर्त्तयेद्यथा
अग्नेश्चतेजसापुत्रज्वालाभिश्चसमंततः ५
द्रवीभूतोभवेद्धातुर्वह्निनातापितःशनैः
यादृशंवत्सभक्ष्यंतुरसपक्वंनिषेच्यते ६
तादृशंजायतेवत्सरूपंचैवनसंशयः
यादृशंक्रियतेकर्मतादृशंपरिभुज्यते ७

कर्मएवप्रधानंयद्वर्षारूपेणवर्त्तते
क्षेत्रेषुयादृशंबीजंवपतेकृषिकारकः ८
तादृशंभुंजतेतातफलमेवनसंशयः
यादृशंक्रियतेकर्मतादृशंपरिभुज्यते ९
विनाशहेतुःकर्मास्यसर्वेकर्मवशावयम्
कर्मदायादकालोकेकर्मसंबंधिबांधवाः १०
कर्माणिचोदयंतीहपुरुषंसुखदुःखयोः
सुवर्णंरजतंवापियथारूपंनिषिच्यते ११
तथानिषिच्यतेजंतुःपूर्वकर्मवशानुगः
पंचैतानीहदृश्यंतेगर्भस्थस्यैवदेहिनः १२
आयुःकर्मचवित्तंचविद्यानिधनमेवच
यथामृत्पिंडकंकर्त्ताकुरुतेयद्यदिच्छति १३
तथाकर्मकृतंचैवकर्त्तारंप्रतिपद्यते
देवत्वमथमानुष्यंपशुत्वंपक्षितांतथा १४
तिर्यक्त्वंस्थावरत्वंवायातिजंतुःस्वकर्मभिः
सएवतुतथाभुंक्तेनित्यंविहितमात्मनः १५
आत्मनाविहितंदुःखमात्मनाविहितंसुखम्
गर्भशय्यामुपादायभुंजतेपूर्वदेहिकम् १६
पूर्वदेहकृतंकर्मनकश्चित्पुरुषोत्तमः
बलेनप्रज्ञयावापिसमर्थःकर्तुमन्यथा १७
स्वकृतान्येवभुंजंतिदुःखानिचसुखानिच
हेतुतःकारणैर्वापिसोहंकारेणबाध्यते १८
यथाधेनुसहस्रेषुवत्सोविंदतिमातरम्
तद्वच्छुभाशुभंकर्मकर्तारमनुगच्छति १९
उपभोगादृतेयस्यनाशएवनविद्यते
प्राक्तनंबंधनंकर्मकोन्यथाकर्तुमर्हति २०
सुशीघ्रमनुधावंतंविधानमनुधावति
शोभतेसंनिपातेनयथाकर्मपुराकृतम् २१
उपतिष्ठतितिष्ठंतंगच्छंतमनुगच्छति
करोतिकुर्वतःकर्मच्छायेवानुविधीयते २२

यथाछायातपौनित्यंसुसंबद्धौपरस्परम्
उपसर्गाहिविषयाउपसर्गाजरादयः २३
पीडयंतिनरंपश्चात्पीडितंपूर्वकर्मणा
येनयत्रोपभोक्तव्यंदुःखंवासुखमेवच २४
सतत्रबद्ध्वारज्ज्वेवबलाद्दैवेननीयते
दैवंप्राहुश्चभूतानांसुखदुःखोपपादनम् २५
अन्यथाकर्मतच्चिंत्यंजाग्रतःस्वपतोपिवा
अन्यथाह्युद्यतेदैवंबध्यतेचजिघांसति २६
शस्त्राग्निविषदुर्गेभ्योरक्षितव्यंसुरक्षति
यथापृथिव्यांबीजानिवृक्षगुल्मतृणान्यपि २७
तथैवात्मनिकर्माणितिष्ठंतिप्रभवंतिच
तैलक्षयाद्यथादीपोनिर्वाणमधिगच्छति २८
कर्मक्षयात्तथाजंतोःशरीरंनाशमृच्छति
कर्मक्षयात्तथामृत्युस्तत्त्वविद्भिरुदाहृतम् २९
विविधाःप्राणिनांरोगाःस्मृतास्तेषांचहेतवः
तस्मात्तत्त्वप्रधानस्तुकर्मएवहिप्राणिनाम् ३०
यत्पुराक्रियतेकर्मतदिहैवप्रभुज्यते
यत्त्वयादृष्टमेवापिपृच्छितंतातसांप्रतम् ३१
तस्यार्थंतुमयाप्रोक्तंभुंजातेतौहिसांप्रतम्
आनंदेकाननेदृष्टंतयोःकर्मसुदारुणम् ३२
तयोश्चेष्टांप्रवक्ष्यामिशृणुवत्सप्रभाषतः
कर्मभूमिरियंतातअन्याभोगार्थभूमयः ३३
सर्गादीनांमहाप्राज्ञतासुगत्वासुभुंजति
सूतउवाच–
चौलदेशेमहाप्राज्ञःसुबाहुर्नामभूमिपः ३४
रूपवान्गुणवान्धीरः पृथिव्यांनास्तितादृशः
विष्णुभक्तोमहाप्राज्ञोवैष्णवानांचसुप्रियः ३५
कर्मणात्रिविधेनापिप्रध्यायन्मधुसूदनम्
अश्वमेधादिकान्यज्ञान्यजेतसकलान्नृप ३६
पुरोधास्तस्यचैवास्तिजैमिनिर्नामब्राह्मणः

सचाहूयसुबाहुंतमिदंवचनमब्रवीत् ३७
राजन्देहिसुदानानियैःसुखंतुप्रभुंज्यत
दानैस्तुतरतेलोकान्दुर्गान्प्रेत्यगतोनरः ३८
दानेनसुखमाप्नोतियशःप्राप्नोतिशाश्वतम्
दानेनचातुलाकीर्तिर्जायतेमृत्युमंडले ३९
यावत्कीर्तिःस्थिताचात्रतावत्कर्तादिवंवसेत्
तद्दानंदुष्करंप्राहुर्दातुंनैवप्रशक्यते ४०
तस्मात्सर्वप्रयत्नेनदातव्यंमानवैःसदा
सुबाहुरुवाच-
दानाच्चतपसोवापिद्वयोर्मध्येसुदुष्करम् ४१
किंवामहत्फलंप्रेत्यतन्मेब्रूहिद्विजोत्तम
जैमिनिरुवाच-
दानान्नदुष्करतरंपृथिव्यामस्तिकिंचन ४२
राजन्प्रत्यक्षमेवैकंदृश्यतेलोकसाक्षिकम्
परित्यज्यप्रियान्प्राणान्धनार्थंलोभमोहिताः ४३
प्रविशंतिनरालोकेसमुद्रमटवींतथा
सेवामन्येप्रपद्यंतेऽश्ववृत्तिरितियास्थिता ४४
हिंसाप्रायांबहुक्लेशांकृषिंचैवतथापुरा
तस्यदुःखार्जितस्यापिप्राणेभ्योपिगरीयसः ४५
अर्थस्यपुरुषव्याघ्रपरित्यागःसुदुष्करः
विशेषतोमहाराजतस्यन्यायार्जितस्यच ४६
श्रद्धयाविधिवत्पात्रेदत्तस्यांतोनविद्यते
श्रद्धाधर्मसुतादेवीपावनीविश्वतारिणी ४७
सावित्रीप्रसवित्रीचसंसारार्णवतारिणी
श्रद्धयासाध्यतेधर्मोमहद्भिर्नार्थराशिभिः ४८
निष्किचनास्तुमुनयःश्रद्धाधर्मादिवंगताः
संतिदानान्यनेकानिनानाभेदैर्नृपोत्तम ४९
अन्नदानात्परंनास्तिप्राणिनांगतिदाकयम्
तस्मादन्नंप्रदातव्यंपयसाचसमन्वितम् ५०
मधुरेणापिपुरयेनवचसाचसमन्वितम्

नास्त्यन्नात्तुपरंदानमिहलोकेपरत्रच ५१
तारणायहितायैवसुखसंपत्तिहेतवे
श्रद्धयाविधिवत्पात्रेनिर्मलेनापिचेतसा ५२
अन्नैकस्यप्रदानस्यफलंभुंक्तेभवेन्नरः
ग्रासाद्ग्रासंप्रदातव्यंमुष्टिप्रस्थंनसंशयः ५३
अक्षयंजायतेतस्यदानस्यापिमहाफलम्
नचप्रस्थंनवामुष्टिंनरस्यहिनसंभवेत् ५४
अनास्तिक्यप्रभावेणपर्वणिप्राप्यमानवः
श्रद्धयाब्राह्मणंचैकंभक्त्याचैवप्रभोजयेत् ५५
एकस्यापिप्रधानस्यअन्नस्यापिप्रजेश्वर
जन्मांतरंसुसंप्राप्यनित्यंचान्नंप्रभुंजति ५६
पूर्वजन्मनियद्दत्तंभक्त्यापात्रेसकृन्नरैः
जन्मांतरंसुसंप्राप्यनित्यमेवभुनक्तिच ५७
अन्नदानंप्रयच्छंतिब्राह्मणेभ्योहिनित्यशः
मिष्टान्नपानंभुंजंतितेनराअन्नदायिनः ५८
अन्नमेववदंत्येतत्रृषयोवेदपारगाः
प्राणभूतंनसंदेहममृताद्धिसमुद्भवम् ५९
प्राणास्तेनप्रदत्ताहियेनचान्नंसमर्पितम्
अन्नदानंमहाराजदेहित्वंतुप्रयत्नतः ६०
एवमाकर्ण्यवैराजाजैमिनेस्तुमहात्मनः
पुनःपप्रच्छतंविप्रंजैमिनिंज्ञानपंडितम् ६१

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये-
च्यवनचरित्रेचतुर्नवतितमोऽध्यायः ९४

## पंचनवतितमोऽध्यायः

सुबाहुरुवाच-
स्वर्गस्यमेगुणान्ब्रूहिसांप्रतंद्विजसत्तम
एतत्सर्वंद्विजश्रेष्ठकरिष्यामिस्वभाविकम् १
जैमिनिरुवाच-
नंदनादीनिरम्याणिदिव्यानिविविधानिच

तत्रोद्यानानिपुरायानिसर्वकामयुतानिच २
सर्वकामफलैर्वृत्तैःशोभनानिसमंततः
विमानानिसुदिव्यानिसेवितान्यप्सरोगरौः ३
सर्वत्रैवविचित्राणिकामगानिवशानिच
तरुणादित्यवर्णानिमुक्ताजालांतराणिच ४
चंद्रमंडलशुभ्राणिहेमशय्यासनानिच
सर्वकामसमृद्धाश्चसर्वदुःखविवर्जिताः ५
नराःसुकृतिनस्तेषुविचरंतियथाभुवि
नतत्रनास्तिकायांतिनस्तेनानाजितेंद्रियाः ६
ननृशंसानपिशुनानकृतघ्नानमानिनः
सत्यास्तपःस्थिताःशूरादयावंतःत्तमापराः ७
यज्वानोदानशीलाश्चतत्रगच्छंतितेनराः
नरोगोनजरामृत्युर्नशोकोनहिमातपौ ८
नतत्रत्तुत्पिपासाचकस्यग्लानिर्नविद्यते
एतेचान्येचबहवोगुणाःस्वर्गस्यभूपते ९
दोषास्तत्रैवयेसंतिताञ्छृणुष्वचसांप्रतम्
शुभस्यकर्मणःकृत्स्नंफलंतत्रैवभुज्यते १०
नचात्रक्रियतेभूयःसोऽत्रदोषोमहान्स्मृतः
असंतोषश्चभवतिदृष्ट्वादीप्तांपरांश्रियम् ११
सुखव्याप्तमनस्कानांसहसापतनंतथा
इहयत्क्रियतेकर्मफलंतत्रैवभुज्यते १२
कर्मभूमिरियंराजन्फलभूमिरसौस्मृता
सुबाहुरुवाच–
महांतस्तुइमेदोषास्त्वयास्वर्गस्यकीर्तिताः १३
निर्दोषाःशाश्वतायेन्येतांस्त्वंलोकान्वदद्विज
जैमिनिरुवाच–
आब्रह्मसदनादेवदोषाःसंतिचवैनृप १४
अतएवहिनेच्छंतिस्वर्गप्राप्तिंमनीषिणः
आब्रह्मसदनादूर्ध्वंतद्विष्णोःपरमंपदम् १५
शुभंसनातनंज्योतिःपरंब्रह्मेतितद्विदुः

नतत्रमूढागच्छंतिपुरुषाविषयात्मकाः १६
दंभमोहभयद्रोहक्रोधलोभैरभिद्रुताः
निर्ममानिरहंकारानिर्द्वंद्वास्संयतेंद्रियाः १७
ध्यानयोगरताश्चैवतत्रगच्छंतिसाधवः
एतत्तेसर्वमाख्यातंयन्मांत्वंपरिपृच्छसि १८
एवंस्वर्गगुणांश्रुत्वासुबाहुःपृथिवीपतिः
तमुवाचमहात्मानंजैमिनिंवदतांवरम् १९
सुबाहुरुवाच-
नाहंस्वर्गंगमिष्यामिनचैवेच्छाम्यहंमुने
यस्माच्चपतनंप्रोक्तंतत्कर्मनकरोम्यहम् २०
दानमेकंमहाभागनाहंदास्येकदाध्रुवम्
दानाच्चफललोभाच्चतस्मात्पततिवैनरः २१
इत्येवमुक्त्वाधर्मात्मासुबाहुःपृथिवीपतिः
ध्यानयोगेनदेवेशंयजिष्येकमलाप्रियम् २२
दाहप्रलयसंवर्जंविष्णुलोकंव्रजाम्यहम्
जैमिनिरुवाच-
सत्यमुक्तंत्वयाभूपसर्वश्रेयःसमाकुलम् २३
राजानोधर्मशीलाश्चमहायज्ञैर्यजंतिते
सर्वदानानिदीयंतेयज्ञेषुनृपनंदन २४
आदावन्नंतुयज्ञेषुवस्त्रंतांबूलमेवच
कांचनंभूमिदानंचगोदानंप्रददंतिच २५
सुयज्ञैर्वैष्णवंलोकंतेप्रयांतिनरोत्तमाः
दानेनतृप्तिमायांतिसंतुष्टाःसंतिभूमिपाः २६
तपस्विनोमहात्मानोनित्यमेवंयजंतिते
सुभिक्षांयाचयित्वातुस्वस्थानंतुसमागताः २७
भिक्षार्थंतस्यभागानिप्रकुर्वंतिचभूपते
ब्राह्मणायविभागैकंगोग्रासंतुमहामते २८
सुपार्श्ववर्तिनांचैकंप्रयच्छंतितपोधनाः
तस्यान्नस्यप्रदानेनफलंभुजंतिमानवाः २९
क्षुधातृषाविहीनास्तेविष्णुलोकंव्रजंतिवै

तस्मात्त्वमपिराजेंद्रदेहिन्यायार्जितंधनम् ३०
दानाज्ज्ञानंततःप्राप्यज्ञानात्सिद्धिंप्रयास्यति
यइदंशृणुयान्मर्त्यःपुरायाख्यानमनुत्तमम् ३१
तस्यसर्वार्थसिद्धिःस्यात्पापंसर्वंविलीयते
विमुक्तःसर्वपापेभ्योविष्णुलोकंसगच्छति ३२
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थे-
च्यवनचरित्रेपंचनवतितमोऽध्यायः ९५

षराणवतितमोऽध्यायः

सुबाहुरुवाच-
कीदृशैःकर्मभिःप्रेत्यगच्छंतिनरकंनराः
स्वर्गंतुकीदृशैःप्रेत्यतन्मेत्वंवक्तुमर्हसि १
जैमिनिरुवाच-
ब्राह्मरायंपुरायमुत्सृज्ययेद्विजालोभमोहिताः
कुकर्माराययुपजीवंतितेवैनिरयगामिनः २
नास्तिकाभिन्नमर्यादाःकंदर्पविषयोन्मुखाः
दांभिकाश्चकृतघ्नाश्चतेवैनिरयगामिनः ३
ब्राह्मणेभ्यःप्रतिश्रुत्यनप्रयच्छंतियेधनम्
ब्रह्मस्वानांचहर्तारोनरानिरयगामिनः ४
पुरुषाःपिशुनाश्चैवमानिनोऽनृतवादिनः
असंबद्धप्रलापाश्चतेवैनिरयगामिनः ५
येपरस्वापहर्तारःपरदूषणसूचकाः
परस्त्रीगामिनोयेचतेवैनिरयगामिनः ६
प्राणिनांप्राणहिंसायांयेनरानिरताःसदा
परनिंदारतायेवैतेवैनिरयगामिनः ७
सुकूपानांतडागानांप्रपानांचपरंतप
सरसांचैवभेत्तारोनरानिरयगामिनः ८
विपर्यस्यंतियेदाराञ्छिशून्भृत्यातिथींस्तथा
उत्सन्नपितृदेवेज्यानरानिरयगामिनः ९
प्रव्रज्यादूषकाराजन्येचैवाश्रमदूषकाः

सखीनांदूषकाश्चैवतेवैनिरयगामिनः १०
आद्यंपुरुषमीशानंसर्वलोकमहेश्वरम्
नचिंतयंतियेविष्णुंतेवैनिरयगामिनः ११
प्रयाजानांमखानांचकन्यानांसुहृदांतथा
साधूनांचगुरूणांचदूषकानिरयगामिनः १२
काष्ठैर्वाशंकुभिर्वापिशून्यैरश्मभिरेववा
येमार्गानुपरुंधंतितेवैनिरयगामिनः १३
सर्वभूतेष्वविश्वस्ताःकामेनार्तास्तथैवच
सर्वभूतेषुजिह्माश्चतेवैनिरयगामिनः १४
आगतान्भोजनार्थंतुब्राह्मणान्वृत्तिकर्शितान्
प्रतिषेधंचकुर्वंतितेवैनिरयगामिनः १५
क्षेत्रवृत्तिगृहच्छेदंप्रीतिच्छेदंचयेनराः
आशाच्छेदंप्रकुर्वंतितेवैनिरयगामिनः १६
शस्त्राणांचैवकर्त्तारःशल्यानांधनुषांतथा
विक्रेतारश्चराजेंद्रनरानिरयगामिनः १७
अनाथंविक्लवंदीनंरोगार्त्तंवृद्धमेवच
नानुकंपंतियेमूढास्तेवैनिरयगामिनः १८
नियमान्पूर्वमादाययेपश्चादजितेंद्रियाः
अतिक्रामंतिचांचल्यात्तेवैनिरयगामिनः १९
इत्येतेकथिताराजन्नरानिरयगामिनः
स्वर्गलोकस्यगंतारोयेजनास्तान्निबोधमे २०
सत्येनतपसाक्षांत्यादानेनाध्ययनेनच
येधर्ममनुवर्तंतेतेनराःस्वर्गगामिनः २१
येचहोमपराध्यानदेवतार्चनतत्पराः
आददानामहात्मानस्तेनराःस्वर्गगामिनः २२
शुचयश्चशुचौदेशेवासुदेवपरायणाः
पठंतिविष्णुंगायंतितेनराःस्वर्गगामिनः २३
मातापित्रोश्चशुश्रूषांयेकुर्वंतिसदादृताः
वर्जयंतिदिवास्वप्नंतेनराःस्वर्गगामिनः २४
सर्वहिंसानिवृत्ताश्चसाधुसंगाश्चयेनराः

सर्वस्यापिहितेयुक्तास्तेनराःस्वर्गगामिनः २५
सर्वलोभनिवृत्ताश्चसर्वसाहाश्चयेनराः
सर्वस्याश्रयभूताश्चतेनराःस्वर्गगामिनः २६
शुश्रूषाभिस्तपोभिश्चगुरूणांमानदानराः
प्रतिग्रहनिवृत्तायेतेनाराःस्वर्गगामिनः २७
सहस्रपरिवेष्टारस्तथैवचसहस्रदाः
त्रातारश्चसहस्राणांतेनराःस्वर्गगामिनः २८
भयात्पापात्तपाच्छोकाद्दारिद्र्यव्याधिकर्शितान्
विमुंचंतिचयेजंतूंस्तेनराःस्वर्गगामिनः २९
आत्मस्वरूपवंतश्चयौवनस्थाश्चभारत
येवैजितेंद्रियाधीरास्तेनराःस्वर्गगामिनः ३०
सुवर्णस्यचदातारोगवांभूमेश्चभारत
अन्नानांवाससांचैवतेनराःस्वर्गगामिनः ३१
येयाचिताःप्रहृष्यंतिप्रियंदत्वावदंतिच
त्यक्तदानफलेच्छाश्चतेनराःस्वर्गगामिनः ३२
निवेशनानांधान्यानांनराणांचपरंतप
स्वयमुत्पाद्यदातारःपुरुषाःस्वर्गगामिनः ३३
द्विषतामपियेदोषान्नवदंतिकदाचन
कीर्तयंतिगुणान्येचतेनराःस्वर्गगामिनः ३४
येपरेषांश्रियंदृष्ट्वानवितप्यंतिमत्सरात्
प्रहृष्टाश्चाभिनंदंतितेनराःस्वर्गगामिनः ३५
प्रवृत्तौचनिवृत्तौचश्रुतिशास्त्रोक्तमेवच
आचरंतिमहात्मानस्तेनराःस्वर्गगामिनः ३६
येनराणांवचोवक्तुंनजानंतिचविप्रियम्
प्रियवाक्यैकविज्ञातास्तेनराःस्वर्गगामिनः ३७
येनामभागान्कुर्वंतिक्षुत्तृष्णाश्रमपीडिताः
हंतकारस्यकर्तारस्तेनराःस्वर्गगामिनः ३८
वापीकूपतडागानांप्रपानांचैववेश्मनाम्
आरामाणांचकर्तारस्तेनराःस्वर्गगामिनः ३९
असत्येष्वपियेसत्याऋजवोनार्जवेष्वपि

रिपुष्वपिहितायेचतेनराःस्वर्गगामिनः ४०
यस्मिन्कस्मिन्कुलेजाताबहुपुत्राःशतायुषः
सानुक्रोशाःसदाचारास्तेनराःस्वर्गगामिनः ४१
कुर्वंत्यवंध्यंदिवसंधर्मेणैकेनसर्वदा
व्रतंगृह्णंतियेनित्यंतेनराःस्वर्गगामिनः ४२
आक्रोशंतंस्तुवंतंचतुल्यंपश्यंतियेनराः
शांतात्मानोजितामानस्तेनराःस्वर्गगामिनः ४३
येचापिभयसंत्रस्तान्ब्राह्मणांश्चतथास्त्रियः
सार्थान्वापरिरक्षंतितेनराःस्वर्गगामिनः ४४
गंगायांपुष्करेतीर्थेगयायांचविशेषतः
पितृपिंडप्रदातारस्तेनराःस्वर्गगामिनः ४५
नवशेचेंद्रियाणांचयेनराःसंयमस्थिताः
त्यक्तलोभभयक्रोधास्तेनराःस्वर्गगामिनः ४६
यूकामत्कुणदंशादीन्येजंतूंस्तुदतस्तनुम्
पुत्रवत्परिरक्षंतितेनराःस्वर्गगामिनः ४७
अज्ञानाद्ययथोक्तेनविधिनासंचयंतिच
सर्वद्वंद्वसहालोकेतेनराःस्वर्गगामिनः ४८
येपूताःपरदारांश्चकर्मणामनसागिरा
रमयंतिनसत्वस्थास्तेनराःस्वर्गगामिनः ४९
निंदितानिनकुर्वंतिकुर्वंतिविहितानिच
आत्मशक्तिंविजानंतितेनराःस्वर्गगामिनः ५०
एवंतेकथितंसर्वंमयातत्त्वेनपार्थिव
दुर्गतिःसद्गतिश्चैवप्राप्यतेकर्मभिर्यथा ५१
नरःपरेषांप्रतिकूलमाचरन्प्रयातिघोरंनरकंसुदारुणम्
सदानुकूलस्यनरस्यजीविनःसुखावहामुक्तिरदूरसंस्थिता ५२
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये-
च्यवनचरित्रेषण्णवतितमोऽध्यायः ९६

सप्तनवतितमोऽध्यायः

कुंजलउवाच-

एवमाकरार्यतांराजामुनिनाभाषितांतदा
धर्माधर्मगतिंसर्वांतंमुनिंसमभाषत १
सुबाहुरुवाच-
सोहंधर्मंकरिष्यामिसोहंपुरायंद्विजोत्तम
वासुदेवंजगद्योनिंयजिष्येनितरांमुने २
होमेनतुजपेनैवपूजयेन्मधुसूदनम्
यष्ट्वायज्ञंतपस्तप्त्वाविष्णुलोकंसभूपतिः ३
पूजितःसर्वकामैश्चप्राप्तवान्सत्वरंमुदा
गतेतस्मिन्महालोकेदेवदेवंनपश्यति ४
ज्ञुधाजातामहातीव्रातृष्णाचातिप्रवर्तते
तयोश्चापिमहाप्राज्ञजीवपीडाकराबहु ५
राजापिप्रिययासार्द्धंज्ञुधातृष्णाप्रपीडितः
नपश्यतिहृषीकेशंदुःखेनमहतान्वितः ६
सूतउवाच-
एवंसदुःखितोराजाप्रिययासहसत्तम
ऋाकुलव्याकुलोजातःपीडितःज्ञुधयाभृशम् ७
इतश्चेतश्चवेगैश्चधावतेवसुधाधिपः
सर्वाभरणशोभांगोवस्त्रचंदनभूषितः ८
पुष्पमालाप्रशोभांगोहारकुंडलकंकरौः
रत्नदीप्तिप्रशोभांगःप्रययौसमहीपतिः ९
एवंदुःखसमाचारःस्तूयमानश्चपाठकैः
दुःखशोकसमाविष्टःस्वप्रियांवाक्यमब्रवीत् १०
विष्णुलोकमहंप्राप्तस्त्वयासहसुशोभने
ऋृषिभिःस्तूयमानोपिविमानेनापिभामिनि ११
कर्मणाकेनमेचेयंज्ञुधातीवप्रवर्द्धते
विष्णुलोकंचसंप्राप्यनदृष्टोमधुसूदनः १२
तत्किंहिकारणंभद्रेनभुनज्मिमहत्फलम्
कर्मणाथनिजेनापिएतद्दुःखंप्रवर्त्तते १३
सैवंश्रुत्वाचतद्वाक्यंराजानमिदमब्रवीत् १४
भार्योवाच-

सत्यमुक्तंत्वयाराजन्नास्तिधर्मस्यवैफलम्
वेदशास्त्रपुराणेषुयेपठंतिचब्राह्मणाः १५
दुःखशोकौविधूयेहसर्वदोषैःप्रमुच्यते
नामोच्चारेणदेवस्यविष्णोश्चैवसुचक्रिणः १६
पुण्यात्मानोमहाभागाध्यायमानाजनार्दनम्
त्वयैवाराधितोदेवःशंखचक्रगदाधरः १७
अन्नादिदानंविप्रेभ्योनप्रदत्तंद्विजोदितम्
फलंतस्यप्रजानामिनदृष्टोमधुसूदनः १८
क्षुधामेबाधतेराजंस्तृष्णाचैवप्रशोषयेत्
कुंजलउवाच-
एवमुक्तस्तुप्रिययाराजाचिंताकुलेंद्रियः १९
ततोदृष्ट्वामहापुण्यमाश्रमंश्रमनाशनम्
दिव्यवृक्षसमाकीर्णंतडागैरुपशोभितम् २०
वापीकुंडतडागैश्चपुण्यतोयप्रपूरितैः
हंसकारंडवाकीर्णंकह्लारैरुपशोभितम् २१
आश्रमःशोभतेपुत्रमुनिभिस्तत्त्ववेदिभिः
दिव्यवृक्षसमाकीर्णंमृगव्रातैश्चशोभितम् २२
नानापुष्पसमाकीर्णंहृद्यगंधसमाकुलम्
द्विजसिद्धैःसमाकीर्णमृषिशिष्यैःसमाकुलम् २३
योगियोगेंद्रसंघुष्टंदेववृंदैरलंकृतम्
कदलीवनसंबाधैःसुफलैःपरिशोभितम् २४
नानावृक्षसमाकीर्णंसर्वकामसमन्वितम्
श्रीखंडैश्चारुगंधैश्चसुफलैःशोभितंसदा २५
एवंपुण्यंसमाकीर्णंब्रह्मलक्ष्मसमायुतम्
ससुबाहुस्ततोराजातयासुप्रिययासह २६
प्रविवेशमहापुण्यंतद्वनंसर्वकामदम्
भासमानोदिशःसर्वायत्रास्तेसूर्यसंनिभः २७
राजमानोमहादीप्त्यापरयासूर्यसंनिभः
योगासनसमारूढोयोगपट्टेनसंवृतः २८
वामदेवऋषिश्रेष्ठोवैष्णवानांवरस्तथा

ध्यायमानोहृषीकेशंभुक्तिमुक्तिप्रदायकम् २९
वामदेवंमहात्मानंतंदृष्ट्वामुनिसत्तमम्
त्वरंगत्वाप्रणम्यैवसराजाप्रिययासह ३०
वामदेवस्ततोदृष्ट्वाप्रणतंराजसत्तमम्
आशीर्भिरभिनंद्यैवराजानंप्रिययान्वितम् ३१
उपवेश्यासनेपुगयेसुबाहुंराजसत्तमम्
आसनादिततःपाद्यैरर्घपूजादिभिस्तथा ३२
मुनिनापूजितोभूपःप्रिययासहचागतः
अथपप्रच्छराजानंमहाभागवतोत्तमम् ३३
वामदेवउवाच–
त्वामहंविष्णुधर्मज्ञंविष्णुभक्तंनरोत्तमम्
जानेज्ञानेनराजेंद्रदिव्येनचोलभूमिपम् ३४
निरामयश्चागतोसितान्वर्ययाभार्ययासह
राजोवाच–
निरामयश्चागतोऽस्मिप्राप्तोविष्णोःपरंपदम् ३५
मयाहिपरयाभक्त्यादेवदेवोजनार्दनः
आराधितोजगन्नाथोभक्तिप्रीतःसुरेश्वरम् ३६
कस्मात्पश्याम्यहंतातनदेवंकमलापतिम्
क्षुधामेबाधतेताततृष्णातीवसुदारुणा ३७
ताभ्यांशांतिंनगच्छावसुखंविंदावनैवच
एतन्मेकारणंदुःखंसंजातंमुनिसत्तम ३८
तन्मेत्वंकारणंब्रूहिप्रसादात्सुमुखोभव
वामदेवउवाच–
त्वंतुभक्तोसिराजेंद्रश्रीकृष्णस्यसदैवहि ३९
आराधितस्त्वयाभक्त्यापरयामधुसूदनः
भक्त्योपचारैःस्नानाद्यैर्गंधपुष्पादिभिस्तथा ४०
नपूजितोऽथनैवेद्यैःफलैश्चजगतांपतिः
दशमींप्राप्यराजेंद्रत्वयैवचसदाकृतम् ४१
एकभक्तंनदत्तंतुब्राह्मणायसुभोजनम्
एकादशींतुसंप्राप्यनकृतंभोजनंत्वया ४२

विष्णुमुद्दिश्यविप्रायनदत्तंभोजनंत्वया
अन्नंचामृतरूपेणपृथिव्यांसंस्थितंसदा ४३
अन्नदानंविशेषेणकदादत्तंनहित्वया
ओषध्यश्चमहाराजनानाभेदास्तुताःशृणु ४४
कटुतिक्तकषायाश्चमधुराम्लाश्चक्षारकाः
हिंग्वाद्योपस्कराःसर्वेनानारूपाश्चभूपते ४५
अमृताज्जज्ञिरेसर्वाओषध्यःपुष्टिहेतवः
अन्नमेवसुसंस्कृत्यऔषधव्यंजनान्वितम् ४६
देवेभ्योविष्णुरूपेभ्यइतिसंकल्प्यदीयते
पितृभ्योविष्णुरूपेभ्योहस्तेचब्राह्मणस्यहि ४७
अतिथिभ्यस्ततोदत्वापरिजनंप्रभोजयेत्
स्वयंतुभुंजतेपश्चात्तदन्नममृतोपमम् ४८
प्रेत्यदुःखंनचैवास्तितस्यसौख्यंतुभूपते
ब्राह्मणाःपितरोदेवाःक्षत्ररूपाश्चभूपते ४९
यथाहिकर्षकःकश्चित्सुकृषिंकुरुतेसदा
तद्वन्मर्त्यःकृषिंकुर्यात्क्षेत्रेविप्रास्यकेनृप ५०
स्वभावलांगलेनापिश्रद्धाशस्त्रेणभेदयेत्
वृषभौतुमतौनित्यंबुद्धिश्चैवतपस्तथा ५१
सत्यज्ञानानुभावीशःशुद्धात्मातुप्रतोदकः
विप्रनाम्निमहाक्षेत्रेनमस्कारैर्विसर्जयेत् ५२
स्फोटयेत्कल्मषंनित्यंकृषिकोहियथानृप
क्षेत्रस्यउद्यमेयुक्तोविष्णुकामःप्रसादयेत् ५३
तद्वद्वाक्यैःशुभैःपुण्यैर्विप्रांश्चापिप्रसादयेत्
पर्वतीर्थाप्तिकालश्चघनरूपोभिवर्षणे ५४
वप्तुकामोभवेत्क्षेत्रीततःक्षेत्रेप्रवापयेत्
तद्वद्भूपप्रसन्नायविप्रायपरिदीयते ५५
क्षेत्रस्यउप्तबीजस्ययथाक्षेत्रीप्रभुंजति
फलमेवमहाराजतथादाताभुनक्तिच ५६
प्रेत्यचात्रैवनित्यंचतृप्तोभवतिनान्यथा
ब्राह्मणाःपितरोदेवाःक्षेत्ररूपानसंशयः ५७

मानवानांमहाराजवापिताःप्रददंतिच
फलमेवंनसंदेहोयादृशंतादृशंध्रुवम् ५८
कटुकाद्धिनजायेतराजन्मधुरएवच
तद्वच्चमधुराख्याच्चनजायेत्कटुकःपुनः ५९
यादृशंवपतेबीजंतादृशंफलमश्नुते
नवापयतियःक्षेत्रंनसभुंजतितत्फलम् ६०
तद्वद्विप्राश्चदेवाश्चपितरःक्षेत्ररूपिणः
दर्शयंतिफलंराजन्दत्तस्यापिनसंशयः ६१
यादृशंहिकृतंकर्मत्वयैवचशुभाशुभम्
तादृश्भुंक्ष्ववैराजन्नन्यथातन्नजायते ६२
नपुरादेवविप्रेभ्यःपितृभ्यश्चकदाचन
मिष्टान्नपानमेवापिदत्तंसुमनसातदा ६३
सुभोज्यैर्भोजनैर्मृष्टैर्मधुरैश्चोष्यपेयकैः
सुभक्ष्यैरात्मनाभुक्तंकस्मैदत्तंनचत्वया ६४
स्वशरीरंत्वयापुष्टमन्नैरमृतसन्निभैः
यस्मात्कृतंमहाराजतस्मात्क्षुधाप्रवर्तते ६५
कर्मैवकारणंराजन्नराणांसुखदुःखयोः
जन्ममृत्वोर्महाभागभुंक्ष्वतत्कर्मणःफलम् ६६
पूर्वेपिचमहात्मानोदिवंप्राप्ताःस्वकर्मणा
पुनःप्रयाताभूर्लोकंकर्मणःक्षयकालतः ६७
नलोभगीरथश्चैवविश्वामित्रोयुधिष्ठिरः
कर्मणैवहिसंप्राप्ताःस्वर्गंराजन्स्वकालतः ६८
दिष्टंहिप्राक्तनंकर्मतेनदुःखंसुखंलभेत्
तदुल्लंघयितुंराजन्कःसमर्थोपिहीश्वरः ६९
अथतस्मान्नृपश्रेष्ठस्वर्गतस्यापितेऽभवत्
क्षुत्तृष्णासंभवोवेगस्ततोदुष्टंहिकर्मते ७०
यदितेक्षुत्प्रतीकारोह्यभीष्टोनृपसत्तम
तद्गत्वाभुंक्ष्वकायंस्वमानंदारण्यसंस्थितम् ७१
तवचेयंमहाराज्ञीक्षुत्क्षामातीवदृश्यते
सुबाहुरुवाच–

कियत्कालमिदंकर्मकर्तव्यंप्रिययासह ७२
तन्मेब्रूहिमहाभागानुग्रहोदृश्यतेकदा
कस्यदानेनकिंपुरायंद्रव्यस्यमुनिसत्तम ७३
तत्प्रब्रूहिमहाप्राज्ञयदितुष्टोसिसांप्रतम्
वामदेवउवाच-
अन्नदानान्महासौख्यमुदकस्यमहामते ७४
भुंजंतिमर्त्याःस्वर्गंवैपीडयंतेनैवपातकैः
यदादानंनदत्तंतुभवेदपिहिमानवैः ७५
मृत्युकालेपिसंप्राप्तेदानंसर्वेददंतिच
आदावेवप्रदातव्यमन्नंचोदकसंयुतम् ७६
सुच्छत्रोपानहौदद्याज्जलपात्रंसुशोभनम्
भूमिंसुकांचनंधेनुमष्टौदानानियोऽपयेत् ७७
स्वर्गेनजायतेतस्यक्षुधातृष्णादिसंभवः
क्षुधानबाधतेराजन्नन्नदानात्सतृप्तिमान् ७८
तृष्णातीव्रानहिस्याद्वैतृप्तोभवतिसर्वदा
पादुकायाःप्रदानेनच्छत्रदानेनभूपते ७९
छायामाप्नोतिदातावैवाहनंचनृपोत्तम
उपानहप्रदानेनअन्यदेवंवदाम्यहम् ८०
भूमिदानान्महाभागसर्वकामानवाप्नुयात्
गोदानेनमहाराजरसैःपुष्टोभवेत्सदा ८१
सर्वान्भोगान्प्रभुंजानःस्वर्गलोकेवसेन्नरः
तृप्तोभवतिवैदातागोदानेननसंशयः ८२
नीरुजःसुखसंपन्नःसंतुष्टस्तुधनान्वितः
कांचनेनसुवर्णस्तुजायतेनात्रसंशयः ८३
श्रीमांश्चरूपवांस्त्यागीरत्नभोक्ताभवेन्नरः
मृत्युकालेतुसंप्राप्तेतिलदानंप्रयच्छति ८४
सर्वभोगपतिर्भूत्वाविष्णुलोकंप्रयातिसः
एवंदानविशेषेणप्राप्यतेपरमंसुखम् ८५
गोदानंभूमिदानंतुअन्नोदकेचवैत्वया
जीवमानेनराजेंद्रनदत्तंब्राह्मणायवै ८६

मृत्युकालेपिनोदत्तंतस्मात्क्षुधाप्रवर्तते
एतत्तेकारणंप्रोक्तंजातंकर्मवशानुगम् ८७
यादृशंतुकृतंकर्मतादृशंपरिभुज्यते
सुबाहुरुवाच-
कथंक्षुधाप्रशांतिंमेप्रयातिमुनिसत्तम ८८
अनयाशोषितःकायोह्यतीवपरिदूयते
क्षुधांप्रतिद्विजश्रेष्ठप्रायश्चित्तंवदस्वनौः ८९
कर्मणश्चास्यघोरस्ययथाशांतिर्भवेन्मम
वामदेवउवाच-
प्रायश्चित्तंनचैवास्तिऋतेभोगान्नृपोत्तम ९०
कर्मणोस्यफलंसर्वंभवान्स्वस्थःप्रभोक्ष्यति
यत्रतेपतितःकायःप्रियायाश्चैवभूपते ९१
युवाभ्यांहिप्रगंतव्यमितश्चैवनसंशयः
उभाभ्यामपिभोक्तव्यंकायमक्षयमेवतत् ९२
स्वंस्वंराजन्नसंदेहस्त्वयावैप्रिययासह
राजोवाच-
कियत्कालंप्रभोक्तव्यंमयैवंप्रिययासह ९३
तदादिशमहाभागप्रमाणंतद्वचोमम
वामदेवउवाच-
वासुदेवमहास्तोत्रंमहापातकनाशनम् ९४
यदात्वंश्रोष्यसेपुगयंतदामोक्षंप्रयास्यसि
एतत्तेसर्वमाख्यातंगच्छराजन्प्रभुंक्ष्वहि ९५
एवंश्रुत्वाततोराजाभार्ययासहवैपुनः
स्वशरीरस्यवैमांसंभक्षतेप्रिययासह ९६
नित्यमेवमहाप्राज्ञतद्वत्पूर्णंभवेद्वपुः
नित्यंप्रभक्षतेराजाराज्ञीतस्यचपुत्रक ९७
यथायथाचराजाचभक्षतेचकलेवरम्
हसेतेवैसदानार्यौतयोर्भावंवदाम्यहम् ९८
प्रज्ञासार्द्धंमहासाध्वीचरित्रंतस्यभूपतेः
हास्यंहिकुरुतेनित्यंतस्यश्रद्धानपायिनी ९९

प्रज्ञयाप्रेर्यमाणेननदत्तंश्रद्धयान्वितम्
ब्राह्मणेभ्यःसुसंकल्प्यअन्नमुद्दिश्यवैष्णवे १००
एवंसभक्षतेमांसंस्वस्यकायस्यनित्यदा
योषिदप्यात्मकायंचरसैश्चामृतसन्निभैः १०१
ततोवर्षशतांतेतुवामदेवंमहामुनिम्
स्मृत्वासगर्हयामासआत्मानंप्रतिसुव्रत १०२
नदत्तंपितृदेवेभ्योब्राह्मणेभ्यःकदामया
नदत्तमतिथिभ्योहिवृद्धेभ्यश्चविशेषतः १०३
दीनेभ्योहिनदत्तंचकृपयाचातुरायच
एवंसभुंक्तेस्वंमांसंगर्हयन्स्वीयकर्मच १०४
एवंस्वमांसंभुंजानंसुबाहुंप्रिययासह
हसेतेचतदादृष्ट्वाप्रज्ञाश्रद्धाचद्वेस्त्रियौ १०५
तस्यकर्मविपाकस्यशुभात्माहसतेनृप
ममसंगप्रसंगेननदत्तंपापचेतन १०६
प्रज्ञाचवचनैस्तैस्तुराजानंहसतेपुनः
क्वगतोसौमहामोहोयेनत्वंमोहितोनृप १०७
लोभेनमोहयुक्तेनतमोगर्तेनिपात्यते
तत्रापतित्वामामैवपतितंदुःखसंकटे १०८
दानमार्गंपरित्यज्यलोभमार्गंगतोनृप
भार्ययासहभुंक्ष्वत्वंव्यापितःक्षुधयाभृशम् १०९
एवंतंहसतेप्रज्ञासुबाहुंप्रिययान्वितम्
एतद्धिकारणंसर्वंतयोर्हासस्यपुत्रक ११०
भक्ष्यमाणस्यभूपस्यदेहंस्वंदुःखितेतदा
ऊचतुर्देहिदेहीतियाच्यमानःसदैवहि १११
क्षुधातृष्णामहाप्राज्ञभीमरूपेभयानके
पयसामिश्रितंभक्ष्यंयाचेतेनृपतीश्वरम् ११२
एतत्तेसर्वमाख्यातंयत्त्वयापरिपृच्छितम्
अन्यत्किंतेप्रवक्ष्यामितद्वदस्वमहामते ११३
विज्वलउवाच–
वासुदेवाभिधानंतत्स्तोत्रंकथयमेपितः

येनमोत्तंव्रजेद्राजातद्विष्णोःपरमंपदम् ११४
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये-
च्यवनचरित्रेसप्तनवतितमोऽध्यायः ९७

## अष्टनवतितमोऽध्यायः

सूतउवाच-
एवमुक्तेशुभेवाक्येविज्वलेनमहात्मना
कुंजलोवदतांश्रेष्ठःस्तोत्रंपुरायमुदैरयत् १
ध्यात्वानत्वाहृषीकेशंसर्वक्लेशविनाशनम्
सर्वश्रेयःप्रदातारंहरेःस्तोत्रमुदीरितम् २
वासुदेवाभिधानंतत्सर्वश्रेयःप्रदायकम्
मोत्तद्वारंसुखोपेतंशांतिदंपुष्टिवर्द्धनम् ३
सर्वकामप्रदातारंज्ञानदंज्ञानवर्द्धनम्
वासुदेवस्ययत्स्तोत्रंविज्वलायप्रकाशितम् ४
वासुदेवाभिधानंचाप्रमेयंपुरायवर्द्धनम्
सोऽवगम्यपितुःसर्वंविज्वलःपत्तिणांवरः ५
तत्रगंतुंप्रचक्रामपितुःपृष्टंतदानृप
एवंगंतुंकृतमतिंविज्वलंज्ञानपारगम् ६
उवाचपुत्रंधर्मात्माउपकारसमुद्यतम् ७
कुंजलउवाच-
पुत्रतस्यमहज्ज्ञानेपातकंभूपतेःशृणु
यतोगत्वापठस्वत्वंसुबाहोश्चोपश्रृरावतः ८
यथायथाश्रोष्यतिस्तोत्रमुत्तमंतथातथाज्ञानमयोभविष्यति
श्रीवासुदेवस्यनसंशयोवैतस्यप्रसादात्सुशिवंमयोक्तम् ९
आमंत्र्यसगुरुंपश्चादुड्डीयलघुविक्रमः
आनंदकाननंपुरायंसंप्राप्तोविज्वलस्तदा १०
वृत्तच्छायांसमाश्रित्यउपविष्टोमुदान्वितः
समालोक्यसराजानंविमानेनागतंपुनः ११
एष्यत्यसौकदाराजासुबाहुःप्रिययासह
पातकान्मोचयिष्यामिस्तोत्रेणानेनवैकदा १२

तावद्विमानःसंप्राप्तःकिंकिणीजालमंडितः
घंटारवसमाकीर्णोवीणावेणुसमन्वितः १३
गंधर्वस्वरसंघुष्टश्चाप्सरोभिःसमन्वितः
सर्वकामसमृद्धस्तुश्चन्नोदकविवर्जितः १४
तस्मिन्यानेस्थितोराजासुबाहुःप्रिययासह
समुत्तीर्णोविमानात्ससुताद्दर्यप्रिययासह १५
शस्त्रमादायतीक्ष्णंतुयावत्कृंततितच्छवम्
तावद्धिविज्वलेनापिसमाह्वानंकृतंतदा १६
भोभोःपुरुषशार्दूलदेवोपमभवानिदम्
करोतिनिर्घृणंकर्मनृशंसैर्नचशक्यते १७
कर्तुंपुरुषशार्दूलकोऽयविधिविपर्ययः
दुष्कृतंसाहसंकर्मनिंद्यंलोकेषुसर्वदा १८
वेदाचारविहीनंतुकस्मात्प्रारब्धवानिह
तन्मेत्वंकारणंसर्वंकथयस्वयथातथा १९
इत्येवंभाषितंतस्यविज्वलस्यमहात्मनः
समाकर्ण्यमहाराजःस्वप्रियांवाक्यमब्रवीत् २०
प्रियेवर्षशतंभुक्तंमयेदंपापकर्मणा
कदानभाषितंकेनयथायंपरिभाषते २१
ममैवंपीड्यमानस्यक्षुधयाहृदयंप्रिये
निर्गतंचोत्सुकंकांतेशांतिश्चित्तेप्रवर्तते २२
यावदस्यश्रुतंवाक्यंसर्वदुःखस्यशांतिदम्
तावच्चित्तेसमाह्लादोवर्ततेचारुहासिनि २३
कोयंदेवोनुगंधर्वःसहस्राक्षोभविष्यति
मुनीनांस्याद्वचःसत्यंयदुक्तंमुनिनापुरा २४
एवमाभाषितंश्रुत्वाप्रियस्यानंतरंप्रिया
राजानंप्रत्युवाचाथभार्यापतिपरायणा २५
सत्यमुक्तंत्वयानाथइदमाश्चर्यमुत्तमम्
यथातेवर्ततेकांतममचित्तेतथापुनः २६
पक्षिरूपधरःकोऽयपृच्छतेहितकारिवत्
एवमाभाषितंश्रुत्वाप्रियायाःपृथिवीपतिः २७

बद्धांजलिपुटोभूत्वापक्षिणंवाक्यमब्रवीत्
सुबाहुरुवाच-
स्वागतंतेमहाप्राज्ञपक्षिरूपधरःप्रभो २८
शिरसाभार्ययासार्द्धंतवपादांबुजद्वयम्
नमस्करोम्यहंपुण्यमस्तुनस्त्वत्प्रसादतः २९
भवान्कःपक्षिरूपेणपुण्यमेवंप्रभाषते
यादृशंक्रियतेकर्मपूर्वदेहेनसत्तम ३०
सुकृतंदुष्कृतंवापितदिहैवप्रभुज्यते
अथतेनात्मकंवृत्तंतस्याग्रेचनिवेदितम् ३१
यथोक्तंकुंजलेनापिपित्रापूर्वंश्रुतंतथा
कथयस्वात्मवृत्तांतंभवान्कोमांप्रभाषते ३२
सुबाहुंप्रत्युवाचेदंवाक्यंपक्षिवरस्तदा
विज्वलउवाच-
शुकजात्यांसम्त्पन्नःकुंजलोनाममेपिता ३३
तस्याहंविज्वलोनामतृतीयस्तुसुतेष्वहम्
नाहंदेवोनगंधर्वोनचसिद्धोमहाभुज ३४
नित्यमेवप्रपश्यामिकर्मचैवंसुदारुणम्
कियत्कालंमहत्कर्मसाहसाकारसंयुतम् ३५
करिष्यसिमहाराजतन्मेकथयसांप्रतम्
सुबाहुरुवाच-
वासुदेवाभिधानंयत्पूर्वमुक्तंहिब्राह्मणैः ३६
श्रोष्याम्यहंयदाभद्रगतिंस्वांप्राप्नुयांतदा
पुण्यात्मनाभाषितंवैमुनिनासंयतात्मना ३७
तदाहंपातकान्मुक्तोभविष्यामिनसंशयः
विज्वलउवाच-
तवार्थेपृच्छितस्तातस्तेनमेकथितंचयत् ३८
तत्तेद्याहंप्रवक्ष्यामिशाश्वतंशृणुसत्तम ३९
ॐअस्यश्रीवासुदेवाभिधानस्य स्तोत्रस्यनारदऋृषिरनुष्टुप्छंदः
ॐकारोदेवता सर्वपातकनाशनार्थेचतुर्वर्गसाधनार्थेचजपेविनियोगः
ॐनमोभगवतेवासुदेवायइतिमंत्रः

पावनंपरमंपुरायंवेदज्ञंवेदमंदिरम्
विद्याधारंभवाधारंप्रणवंवैनमाम्यहम् ४०
निरावासंनिराकारंसुप्रकाशंमहोदयम्
निर्गुणंगुणसंबद्धंनमामिप्रणवंपरम् ४१
महाकांतंमहोत्साहंमहामोहविनाशनम्
अचिन्वंतंजगत्सर्वंगुणातीतंनमाम्यहम् ४२
भातिसर्वत्रयोभूत्वाभूतानांभूतिवर्द्धनः
अभयंभिन्नुसंबद्धंनमामिप्रणवंशिवम् ४३
गायत्रीसामगायंतंगीतंगीतप्रियंशुभम्
गंधर्वगीतभोक्तारंप्रणवंप्रणमाम्यहम् ४४
विचारंवेदरूपंतंयज्ञस्थंभक्तवत्सलम्
योनिंसर्वस्यलोकस्यओंकारंप्रणमाम्यहम् ४५
तारकंसर्वभूतानांनौरूपेणविराजितम्
संसारार्णवमग्नानांनमामिप्रणवंहरिम् ४६
सर्वलोकेषुवसतेएकरूपेणनैकधा
धामकैवल्यरूपेणनमामिप्रणवंशिवम् ४७
सूक्ष्मंसूक्ष्मतरंशुद्धंनिर्गुणंगुणनायकम्
वर्जितंप्राकृतैर्भावैर्वेदस्थानंनमाम्यहम् ४८
देवदैत्यवियोगैश्चवर्जितंतुष्टिभिःसदा
दैवैश्चयोगिभिर्ध्येयंतमोंकारंनमाम्यहम् ४९
व्यापकंविश्ववेत्तारंविज्ञानंपरमंशुभम्
शिवंशिवगुणंशांतंवंदेप्रणवमीश्वरम् ५०
यस्यमायांप्रविष्टास्तुब्रह्माद्याश्चसुरासुराः
नविंदंतिपरंशुद्धंमोक्षद्वारंनमाम्यहम् ५१
आनंदकंदायविशुद्धबुद्धयेशुद्धायहंसायपरावराय
नमोऽस्तुतस्मैगणनायकायश्रीवासुदेवायमहाप्रभाय ५२
श्रीपांचजन्येनविराजमानंरविप्रभेणापिसुदर्शनेन
गदाब्जकेनापिविराजमानंप्रभुंसदैनंशरणंप्रपद्ये ५३
यंवेदगुह्यंसगुणंगुणानामाधारभूतंसचराचरस्य
यंसूर्यवैश्वानरतुल्यतेजसंतंवासुदेवंशरणंप्रपद्ये ५४

सुधानिधानंविमलंसुरूपमानंदमानेनविराजमानम्
यंप्राप्यजीवंतिसुरादिलोकास्तंवासुदेवंशरगांप्रपद्ये ५५
तमोघनानांस्वकरैर्विनाशंकरोतिनित्यंपरिकर्महेतुः
उद्द्योतमानंरविदीप्ततेजसंतंवासुदेवंशरगांप्रपद्ये ५६
योभातिसर्वत्ररविप्रभावैःकरोतिशोषंचरसंददाति
यःप्राणिनामंतरगःसवायुस्तंवासुदेवंशरगांप्रपद्ये ५७
स्वेच्छानुरूपेणसदेवदेवोबिभर्तिलोकान्सकलान्महीपान्
संतारणेनौरिववर्ततियस्तंवासुदेवंशरगांप्रपद्ये ५८
अंतर्गतोलोकमयःसदैवपचत्यसौस्थावरजंगमानाम्
स्वाहामुखोदेवगणस्यहेतुस्तंवासुदेवंशरगांप्रपद्ये ५९
रसैःसुपुरायैःसकलैःसहैवपुष्णातिसौम्योगुणदश्चलोके
अन्नानियोनिर्मलतेजसैवतंवासुदेवंशरगांप्रपद्ये ६०
अस्त्येवसर्वत्रविनाशहेतुःसर्वाश्रयःसर्वमयःससर्वः
विनाहृषीकैर्विषयान्प्रभुंक्तेतंवासुदेवंशरगांप्रपद्ये ६१
जीवस्वरूपेणबिभर्तिलोकांस्ततःस्वमूर्तान्सचराचरांश्च
निष्केवलोज्ञानमयःसुशुद्धस्तंवासुदेवंशरगांप्रपद्ये ६२
दैत्यांतकंदुःखविनाशमूलंशांतंपरंशक्तिमयंविशालम्
यंप्राप्यदेवाविनयंप्रयांतितंवासुदेवंशरगांप्रपद्ये ६३
सुखंसुखांतंसुखदंसुरेशंज्ञानार्णवंतंमुनिपंसुरेशम्
सत्याश्रयंसत्यगुणोपविष्टंतंवासुदेवंशरगांप्रपद्ये ६४
यज्ञांगरूपंपरमार्थरूपंमायान्वितंमापतिमुग्रपुरायम्
विज्ञानमेकंजगतांनिवासंतंवासुदेवंशरगांप्रपद्ये ६५
अंभोधिमध्येशयनंहितस्यनागांगभोगेशयनंविशाले
श्रीपादपद्मद्वयमेवतस्यतद्वासुदेवस्यनमामिनित्यम् ६६
पुरायान्वितंशंकरमेवनित्यंतीर्थैरनेकैःपरिसेव्यमानम्
तत्पादपद्मद्वयमेवतस्यश्रीवासुदेवस्यअघापहंतत् ६७
पादांबुजंरक्तमहोत्पलाभमंभोजसल्लिंगजयोपयुक्तम्
अलंकृतंनूपुरमुद्रिकाभिःश्रीवासुदेवस्यनमामिनित्यम् ६८
देवैःसुसिद्धैर्मुनिभिःसदैवनुतंसुभक्त्याउरगाधिपैश्च
तत्पादपंकेरुहमेवपुरायंश्रीवासुदेवस्यनमामिनित्यम् ६९

यस्यापिपादांभसिमज्जमानाःपूतादिवंयांतिविकल्मषास्ते
मोक्षंलभंतेमुनयःसुतुष्टास्तंवासुदेवंशरणंप्रपद्ये ७०
पादोदकंतिष्ठतियत्रविष्णोर्गंगादितीर्थानिसदैवतत्र
पिबंतियेह्यापिसपापदेहास्तेयांतिशुद्धाःसुगृहंमुरारेः ७१
पादोदकेनाप्यभिषिच्यमानाउग्रैश्चपापैःपरिलिप्तदेहाः
तेयांतिमुक्तिंपरमेश्वरस्यतस्यैवपादौसततंनमामि ७२
नैवेद्यमात्रेणसुभक्षितेनसुचक्रिणस्तस्यमहात्मनस्तु
श्रीवाजपेयस्यफलंलभंतेसर्वार्थयुक्ताश्चनराभवंति ७३
नारायणंतंनरकाधिनाशनंमायाविहीनंसकलंगुणज्ञम्
यंध्यायमानाःसुगतिंप्रयांतितंवासुदेवंशरणंप्रपद्ये ७४
योवंद्यस्त्वृषिसिद्धचारणगणैर्देवैःसदापूज्यते
योविश्वस्यविसृष्टिहेतुकरणेब्रह्मादिदेवप्रभुः
यःसंसारमहार्णवेनिपतितस्योद्धारकोवत्सल-
स्तस्यैवापिनमाम्यहंसुचरणौभक्त्यावरौपावनौ ७५
योदृष्टोमखमंडपेसुरगणैःश्रीवामनःसामगः
सामोद्गीतकुतूहलःसुरगणैस्त्रैलोक्यएकःप्रभुः
कुर्वंतंनयनेक्षणैःशुभकरैर्निष्पापतांतद्बले-
स्तस्याहंचरणारविंदयुगलंवंदेपरंपावनम् ७६
राजंतंद्विजमंडलेमखमुखेब्रह्मश्रियाशोभितं
दिव्येनापिसुतेजसाकरमयंयंचेंद्रनीलोपमम्
देवानांहितकाम्ययासुतनुजंवैरोचनस्यापितं-
याचंतंममदीयतांत्रिपदकंवंदेप्रभुंवामनम् ७७
तंद्रष्टुंरविमंडलेमुनिगणैःसंप्राप्तवंतंदिवं
चंद्रार्कास्तमयांतरेकिलपदासंच्छादयंतंतदा
तस्यैवापिसुचक्रिणःसुरगणाःप्रापुर्लयंसांप्रतं-
कायेविश्वविकोशकेतमतुलंनौमिप्रभोर्विक्रमम् ७८

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये-
च्यवनचरित्रेऽष्टनवतितमोऽध्यायः ९८

## नवनवतितमोऽध्यायः

विष्णुरुवाच–
स्तोत्रंपवित्रंपरमंपुराणंपापापहंपुरायमयंशिवंच
धन्यंसुसूक्तंपरमंसुजाप्यंनिशम्यराजाससुखीबभूव १
गतासुतृष्णाक्षुधयासमेतादेवोपमोभूमिपतिर्बभूव
भार्याचतस्यापिविभातिरूपैर्युक्तावुभौपापविबंधमाप्तौ २
देवःसुदेवैःपरिवारितोसौविप्रैःसुसिद्धैर्हरिभक्तियुक्तैः
आगत्यभूपंगतकल्मषंतंश्रीशंखचक्राब्जगदासिधर्ता ३
श्रीनारदोभार्गवव्यासपुरायासमागतस्तत्रमृकंडसूनुः
वाल्मीकिनामामुनिर्विष्णुभक्तःसमागतोब्रह्मसुतोवसिष्ठः ४
गर्गोमहात्माहरिभक्तियुक्तोजाबालिरैभ्यावथकश्यपश्च
आजग्मुरेतेहरिणासमेताविष्णुप्रियाभागवतांवरिष्ठाः ५
पुरयाःसुधन्यागतकल्मषास्तेहरेःसुपादांबुजभक्तियुक्ताः
श्रीवासुदेवंपरिवार्यतस्थुःस्तुवंतिभूपंविविधप्रकारैः ६
देवाश्चसर्वेहुतभुङ्मुखाश्चब्रह्माहरिश्चापिसुदिव्यदेव्यः
गायंतिदिव्यंमधुरंमनोहरंगंधर्वराजादिसुगायनाश्च ७
सुवेदयुक्तैःपरमार्थसंमितैःस्तवैःसुपुरयैर्मुनयःस्तुवंति
दृष्ट्वापतिंभूपतिमेवदेवोहरिर्बभाषेवचनंमनोहरम् ८
वरंयथेष्टंवरयस्वभूपतेददाम्यहंतेपरितोषितोयतः
हरेस्तुवाक्यंसनिशम्यराजादृष्ट्वामुरारिंवदमानमग्रे ९
नीलोत्पलाभंमुरघातिनंप्रभुंतंशंखचक्रासिगदाप्रधारिणम्
श्रियासमेतंपरमेश्वरंतंरत्नोज्ज्वलंकंकणहारभूषितम् १०
रविप्रभंदेवगणैःसुसेवितंमहार्घहाराभरणैःसुभूषितम्
सुदिव्यगंधैर्वरलेपनैर्हरिंसुभक्तिभावैरवनींगतोनृपः ११
दंडप्रणामैःसततंनमामजयेतिवाचाथमहानृपस्तदा
दासोस्मिभृत्योस्मिपुरःसतेसदाभक्तिंनजानेनचभावमुत्तमम् १२
जायान्वितंमामिहचागतंहरेप्रपाहिवैत्वांशरणंप्रपन्नम्
धन्यास्तुतेमाधवमानवाद्विजाःसदैवतेध्यानमनोविलीनाः १३
समुच्चरंतोभवमाधवेतिप्रयांतिवैकुंठमितःसुनिर्मलाः
तवैवपादांबुजनिर्गतंपयःपुरयंतथायेशिरसावहंति १४

समस्ततीर्थोद्भवतोयश्राप्लुतास्तेमानवायांतिहरेःसुधाम १५
नास्तियोगोनमेभक्तिर्ज्ञानंनास्तिनमेक्रिया
कस्यपुण्यस्यसंगेनवरंमह्यंप्रयच्छसि १६
हरिरुवाच-
वासुदेवाभिधानंयन्महापातकनाशनम्
भवताविज्वलात्पुण्याच्छ्रुतंराजन्विकल्मषः १७
तेनत्वंमुक्तिभागीचसंजातोनात्रसंशयः
ममलोकेप्रभुंक्ष्वत्वंदिव्यान्भोगान्मनोनुगान् १८
राजोवाच-
यदिदेववरोदेयोममदीनस्यवैत्वया
विज्वलायप्रयच्छत्वंप्रथमंवरमुत्तमम् १९
हरिरुवाच-
विज्वलस्यपितापुण्यःकुंजलोज्ञानमंडितः
वासुदेवमहास्तोत्रंनित्यंपठतिभूपते २०
पुत्रैःप्रियासमेतोऽसौममगेहंप्रयास्यति
एतत्तुजपतेस्तोत्रंसदादास्याम्यहंफलम् २१
एवमुक्तेशुभेवाक्येराजाकेशवमब्रवीत्
इदंस्तोत्रंमहापुण्यंसफलंकुरुकेशव २२
हरिरुवाच-
कृतेयुगेमहाराजयदास्तोष्यंतिमानवाः
तदामोक्षंप्रयास्यंतितत्क्षणान्नात्रसंशयः २३
त्रेतायांमासमात्रेणषड्भिर्मासैस्तुद्वापरे
वर्षेणैकेनचकलौयेजपंतिचमानवाः २४
स्वर्गंप्रयांतिराजेंद्रवैष्णवंगतिदायकम्
त्रिकालमेककालंवास्नातोजपतिब्राह्मणः २५
यंयंतुवांछतेकामंससतस्यभविष्यति
क्षत्रियोजयमाप्नोतिधनधान्यैरलंकृतः २६
वैश्योभविष्यतिश्रीमान्सुखीशूद्रोभविष्यति
अंत्यजंश्रावयेद्योयंपापान्मुक्तोभविष्यति २७
श्रावकोनरकंघोरंकदाचिन्नैवपश्यति

ममस्तोत्रप्रसादाच्चसर्वसिद्धोभविष्यति २८
ब्राह्मणैर्भोज्यमानैश्चश्राद्धकालेपठिष्यति
पितरोवैष्णवंलोकंतृप्तायास्यंतिभूपते २९
तर्पणांतेजपंकुर्याद्ब्राह्मणोवाथक्षत्रियः
पिबंतिचामृतंतस्यपितरोहृष्टमानसाः ३०
होमेषुयज्ञमध्येचभावाज्ञपतिमानवः
तत्रविघ्नानजायंतेसर्वसिद्धिर्भविष्यति ३१
विषमेदुर्गसंस्थानेहिंस्त्रव्याघ्रस्यसंकटे
चौराणांसंकटेप्राप्तेतत्रस्तोत्रमुदीरयेत् ३२
तत्रशांतिर्महाराजभविष्यतिनसंशयः
अन्येष्वेवसुभव्येषुराजद्वारेगतेनरे ३३
वासुदेवाभिधानस्यअयुतंजपतेनरः
ब्रह्मचर्येणसंस्नातःक्रोधलोभविवर्जितः ३४
तिलतंडुलकैर्होमंदशांशमाज्यमिश्रितम्
वासुदेवंप्रपूज्यैवदद्यात्प्रयतमानसः ३५
श्लोकंप्रतिततोदेयंहोमंध्यानेनमानवैः
तेषांसुभृत्यवन्नित्यंपार्श्वेनैवत्यजाम्यहम् ३६
कलौयुगेसुसंप्राप्तेस्तोत्रेदास्यंप्रयास्यति
वेदभंगप्रसंगेनयस्यकस्यनदीयते ३७
सर्वकामसमृद्धार्थःसचैवहिभविष्यति
एवंहिसफलंस्तोत्रंमयाभूपकृतंशृणु ३८
ब्रह्मणानिर्मितंतेनजप्तंरुद्रेणवैपुरा
ब्रह्महत्याविनिर्मुक्तइंद्रोमुक्तश्चकिल्बिषात् ३९
देवाश्चऋषयोगुह्याःसिद्धविद्याधरामराः
नागैस्तुपूजितंस्तोत्रमापुःसिद्धिंमनीप्सिताम् ४०
पुणयोधन्यःसवैदातापुत्रवान्हिभविष्यति
जपिष्यतिममस्तोत्रंनात्रकार्याविचारणा ४१
आगच्छत्वंस्त्रियासार्धंममस्थानंनृपोत्तम
हस्तावलंबनंदत्तंहरिणातस्यभूपतेः ४२
नेदुर्दुंदुभयस्तत्रगंधर्वाललितंजगुः

ननृतुश्चाप्सरःश्रेष्ठाःपुष्पवृष्टिंप्रचक्रिरे ४३
देवाश्चऋषयःसर्वेवेदस्तोत्रैःस्तुवंतिते
ततोदयितयासार्द्धंजगामनृपतिर्हरिम् ४४
तंस्तूयमानंसुरसिद्धसंघैःसविज्वलःपश्यतिहृष्टमानसः
समागतस्तिष्ठतियत्रवैपितामाताचवेगेनमहाप्रभावः ४५
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थे-
च्यवनचरित्रेनवनवतितमोऽध्यायः ९९

शततमोऽध्यायः

विष्णुरुवाच-
नर्मदायास्तटेरम्येवटेतिष्ठतिवैपिता
विज्वलोऽपिसमायातःपितरंप्रणिपत्यसः १
वासुदेवाभिधानस्यस्तोत्रस्यापिमहामतिः
समाचष्टेसधर्मात्मामहिमानंपितुःपुरः २
यथाविष्णुःसमागत्यददौतस्मैवरंशुभम्
तत्सर्वंकथयामाससुप्रसन्नेनचेतसा ३
कुंजलोपिचवृत्तांतंसमाकर्ण्यसभूपतेः
हर्षेणमहताविष्टःपुत्रमालिंग्यविज्वलम् ४
आहपुण्यंकृतंवत्सत्वयाराज्ञेमहात्मने
उपकारंमहापुण्यंवासुदेवस्यकीर्तनात् ५
एवमाभाष्यतंपुत्रमाशीर्भिरभिनंद्यच
पुत्रंदेवसमोपेतंस्तुत्वाचैवपुनःपुनः ६
स्थितःसरित्तटेरम्येच्यवनस्योपपश्यतः
एतत्तेसर्वमाख्यातंतेषांवृत्तंमहात्मनाम् ७
वैष्णवानांमहाराजअन्यत्किंतेवदाम्यहम्
वेनउवाच-
अमृतंशंखपात्रेणपानार्थंममचार्पितम् ८
तस्मात्कस्यनचश्रद्धापातुंमर्त्यस्यभूतले
उत्तमंवैष्णवंज्ञानंपानानामिहसर्वदा ९
त्वयैवंकथ्यमानस्यपानेतृप्तिर्नजायते

श्रोतुंहिदेवदेवेशममश्रद्धाविवर्द्धते १०
कथयस्वप्रसादान्मेकुंजलस्यापिचेष्टितम्
महात्मनाकिमुक्तंचचतुर्थंतनयंप्रति ११
तत्त्वंसुविस्तरादेवकृपयाकथयस्वमे
श्रीभगवानुवाच-
श्रूयतामभिधास्यामिचरित्रंकुंजलस्यच १२
बहुश्रेयःसमायुक्तंचरित्रंच्यवनस्यच
इदंपुण्यंनरश्रेष्ठआख्यानंपापनाशनम् १३
यःशृणोतिनरोभक्त्यागोसहस्रफलंलभेत् १४

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये
च्यवनचरित्रेशततमोऽध्यायः १००

## एकाधिकशततमोऽध्यायः

सूतउवाच-
देवदेवोहृषीकेशस्त्वंगपुत्रंनृपोत्तमम्
समाचष्टमहाश्रेयआख्यानंपापनाशनम् १
श्रूयतामभिधास्यामिचरित्रंश्रेयदायकम्
द्विजस्यापिचवृत्तांतंकुंजलस्यमहात्मनः २
विष्णुरुवाच-
कुंजलश्चापिधर्मात्माचतुर्थंपुत्रमेवच
समाहूयमुदायुक्तउवाचैनंकपिंजलम् ३
किंनुपुत्रत्वयादृष्टमपूर्वंकथयस्वमे
भोजनार्थंतुयासित्वमितःकस्मिन्सुतोत्तम ४
तदाचक्ष्वमहाभागयदिदृष्टंसुपुण्यदम्
कपिंजलउवाच-
यच्चतातत्वयापृष्टमपूर्वंप्रवदाम्यहम् ५
यन्नदृष्टंश्रुतंकेनकस्मान्नैवश्रुतंमया
तदिहैवप्रवक्ष्यामिश्रूयतामधुनापितः ६
शृण्वंतुभ्रातरःसर्वेमातस्त्वंशृणुसांप्रतम्
कैलासःपर्वतश्रेष्ठोधवलश्चंद्रसन्निभः ७

नानाधातुसमाकीर्णोनानावृक्षोपशोभितः
गंगाजलैःशुभैःपुण्यैःक्षालितःसर्वतःपितः ८
नदीनांतुसहस्राणिदिव्यानिविविधानिच
यस्मात्तातप्रसूतानिजलानिविविधानिच ९
तडागानिसहस्राणिसोदकानिमहागिरौ
नद्यःसंतिविशालिन्योहंससारससेविताः १०
तस्मिञ्छिखरिणांश्रेष्ठेपुण्यदाःपापनाशनाः
वनानिविविधान्येवपुष्पितानिफलानिच ११
नानावृक्षोपयुक्तानिहरितानिशुभानिच
किन्नराणांगणैर्युक्तश्चाप्सरोभिःसमाकुलः १२
गंधर्वचारणैःसिद्धैर्देववृंदैःसुशोभितः
दिव्यवृक्षवनोपेतोदिव्यभावैःसमाकुलः १३
दिव्यगंधैःसुशोभाढ्यैर्नानारत्नसमन्वितः
शिलाभिःस्फटिकस्यापिशुक्लाभिस्तुसुशोभनः १४
सूर्यतेजोमयोराजंस्तेजोभिस्तुसमाकुलः
चंदनैश्चारुगंधैश्चबकुलैर्नीलपुष्पकैः १५
नानापुष्पमयैर्वृक्षैःसर्वत्रसमलंकृतः
पक्षिणांसुनिनादैश्चदिव्यानांमधुरायते १६
षट्पदानांनिनादैश्चवृक्षौघैर्मधुरायते
रुतैश्चकोकिलानांतुशोभतेसवनोगिरिः १७
गणकोटिसमाकीर्णंतत्रास्तिशिवमंदिरम्
अंशुभिर्धवलंपुण्यंपुण्यराशिशिलोच्चयम् १८
सिंहैश्चगर्जमानैश्चसैरिभैःकुंजरैस्ततः
दिग्गजानांसुघोषैश्चशब्दितंचसमंततः १९
नानामृगैःसमाकीर्णंशाखामृगगणाकुलम्
मयूरकेकाघोषैश्चगुहासुचविनादितम् २०
कंदरैर्लेपनैःकूटैःसानुभिश्चविराजितम्
नानाप्रस्रवणोपेतमोषधीभिर्विराजितम् २१
दिव्यंदिव्यगुणंपुण्यंपुण्यधामसमाकुलम्
सेवितंपुण्यलोकैश्चपुण्यराशिंमहागिरिम् २२

पुलिदभिल्लकोलैश्चसेवितंपर्वतोत्तमम्
विकटैःशिखरैःकोटैरद्रिराजःप्रकाशते २३
अन्यैर्नानाविधैःपुण्यैःकौतुकैर्मंगलैःशुभैः
गंगोदकप्रवाहैश्चमहाशब्दंप्रसुस्रुवे २४
शंकरस्यगृहंतत्रकैलासंगतवानहम्
तत्राश्चर्यंमयादृष्टंयन्नदृष्टंकदाश्रुतम् २५
श्रूयतामभिधास्यामितातसर्वंमयोदितम्
शिखराद्गिरिराजस्यमेरोःपुण्यान्महोदयात् २६
हिमक्षीरसुवर्णस्तुप्रवाहःपततेभुवि
गंगायाश्चमहाभागरंहसाघोषभूषितः २७
कैलासस्यशिरःप्राप्यतत्रविस्तरतांगतः
दशयोजनमानेनतत्रगंगाह्रदोमहान् २८
महातोयेनपुण्येनविमलेनविराजते
सर्वतोभद्रतांप्राप्तोमहाहंसैःप्रशोभते २९
सामोच्चारेणपुण्येनदिव्येनमधुरेणच
हंसास्तत्रप्रकूजंतिसरस्तेनविराजते ३०
तस्यतीरेशिलायांवैहिमकन्यामहामते
आसीनामुक्तकेशांतारूपद्रविणशालिनी ३१
दिव्यरूपसुसंपन्नासगुणादिव्यलक्षणा
दिव्यालंकारभूषाचतस्यास्तीरेविराजते ३२
नजानेगिरिराजस्यतनयावामहोदधेः
नोवास्तिब्रह्मणःपत्नीसावास्वाहाभविष्यति ३३
इंद्राणीवामहाभागारोहिणीवाभविष्यति
ईदृशीरूपसंपत्तिर्युवतीनांनदृश्यते ३४
अन्यासांचसुदिव्यानांनारीणांतातसर्वथा
यादृशंरूपसंभावंगुणशीलंप्रदृश्यते ३५
अप्सरसांकदानास्तितादृशंरूपलक्षणम्
यादृशंतुमयादृष्टंतदंगंविश्वमोहनम् ३६
शिलापदेसमासीनादुःखेनापिसमाकुला
रुदतेसुस्वरैर्बालाअनेकैःस्वजनैर्विना ३७

अश्रूणिमुंचमानासामुक्ताभानिबहूनिच
निर्मलानिसरस्यत्रपतंत्येवमहामते ३८
बिंदवोमौक्तिकाभास्तेनिपतंतिमहोदके
तेभ्योभवंतिपद्मानिहृद्यानिसुरभीणितु ३९
पद्मानिजज्ञिरेतेभ्योनेत्राश्रुभ्योमहामते
गंगांभसितरंत्येवअसंख्यातानितानितु ४०
पतितानिसुहृद्यानिरंहसायानितानितु
गंगाप्रवाहमध्येतुहंसवृंदैःसुसेविते ४१
भागीरथ्याःप्रवाहस्तुतस्मात्स्थानाद्विनिर्गतः
कैलासशिखरंप्राप्यरत्नाख्यंचारुकंदरम् ४२
वर्ततेतोयपूर्णस्तुयोजनद्वयविस्तृतः
हंसवृंदसमाकीर्णोजलपक्षिसमाकुलः ४३
नानावर्णविशेषाणिसंतिपद्मानितत्रच
प्रवाहेनिर्मलेतातमुनिवृंदनिषेविते ४४
अश्रुभ्योयानिजातानिप्रभातेकमलानितु
गंगोदकप्लुतान्येवसौरभाणिमहांतिच ४५
प्रतरंतिप्रवाहेतुनिर्मलेजलपूरिते
मध्येमध्येसुहंसैश्चजलपक्षिनिनादिते ४६
सूतउवाच–
रत्नाख्येतुगिरौतस्मिन्रत्नेश्वरमहेश्वरः
देवदैत्यसुपूज्योपितिष्ठतेतातसर्वदा ४७
तत्रदृष्टोमयातातकश्चित्पुण्यमयोमुनिः
जटाभारसमाक्रांतोनिर्वासादंडधारकः ४८
निराधारोनिराहारस्तपसातीवदुर्बलः
कृशांगोऽप्यस्थिसंघातस्त्वचामात्रेणवेष्टितः ४९
भस्मोद्धूलितमात्राणिसर्वांगानिमहात्मनः
शुष्कपत्राणिभक्षेतशीर्णानिपतितानिच ५०
शिवभक्तिसमासीनोदुराधारोमहातपाः
अश्रुभ्योयानिजातानिपद्मानिसुरभीणिच ५१
गंगातोयात्समानीयदेवदेवंप्रपूजयेत्

रत्नेश्वरंमहाभागोगीतनृत्यविशारदः ५२
गायतेनृत्यतेतस्यद्वारस्थस्त्रिपुरद्विषः
मठमागत्यधर्मात्मारोदतेसुस्वरैरपि ५३
एतद्दृष्टंमयातातअपूर्ववदतांवर
कथयस्वप्रसादान्मेयदित्वंवेत्सिकारणम् ५४
साकानारीमहाभागाकस्मात्तातप्ररोदिति
कस्मात्सदेवपुरुषोदेवमर्चेन्महेश्वरम् ५५
तन्मेत्वंविस्तराद्ब्रूहिसर्वसंदेहकारणम्
एवमुक्तोमहाप्राज्ञःकुंजलोपिसुतेनहि ५६
कपिंजलेनप्रोवाचविस्तराच्छृणवतोमुनेः ५७

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये-
च्यवनचरित्रेएकाधिकशततमोऽध्यायः १०१

द्व्यधिकशततमोऽध्यायः

कुंजलउवाच-
सर्ववत्सप्रवक्ष्यामियत्त्वयोक्तंममाधुना
उभयोर्देवनंयत्तुयस्माज्ञातंद्विजोत्तम १
एकदातुमहादेवीपार्वतीप्रमदोत्तमा
क्रीडमानामहात्मानमीश्वरंवाक्यमब्रवीत् २
ममोरसिमहादेवजातंमहत्सुदोहदम्
दर्शयस्वममाग्रेत्वंकाननंकाननोत्तमम् ३
श्रीमहादेवउवाच-
एवमस्तुमहादेविनंदनंदेवसंकुलम्
दर्शयिष्यामितेपुरयंद्विजसिद्धनिषेवितम् ४
एवमाभाष्यतांदेवींतयासहगणैस्ततः
सगंतुमुत्सुकोदेवोनंदनंवनमेवतु ५
सर्वगंसुंदरंदिव्यपृष्ठमाभरणैर्युतम्
घंटामालाभिसंयुक्तंकिंकिणीजालमालिनम् ६
चामरैःपट्टसूत्रैश्चमुक्तामालासुशोभितम्
हंसचंद्रप्रतीकाशंवृषभंचारुलक्षणम् ७

समारूढोमहादेवोगणकोटिसमावृतः
नंदिभृंगिमहाकालस्कंदचंडमनोहराः ८
वीरभद्रोगणेशश्चपुष्पदंतोमणीश्वरः
अतिबलःसुबलोनाममेघनादोघटावहः ९
घंटाकर्णश्चकालिदःपुलिदोवीरबाहुकः
केशरीकिंकरोनामचंडहासःप्रजापतिः १०
एतेचान्येचबहवःसनकाद्यास्तपोबलाः
गणैश्चकोटिसंख्यातैःसशिवःपरिवारितः ११
नंदनंवनमेवापिसेवितंदेवकिन्नरैः
प्रविवेशमहादेवोगणैर्देव्यासमन्वितः १२
दर्शयामासदेवेशोगिरिजायैसुशोभनम्
नानापादपसंपन्नंबहुपुष्पसमाकुलम् १३
दिव्यरंभावनाकीर्णंपुष्पवद्भिस्तुचंपकैः
मल्लिकाभिःसुपुष्पाभिर्मालतीजालसंकुलम् १४
नित्यंपुष्पितशाखाभिःपाटलानांवनोत्तमैः
राजमानंमहावृक्षैश्चंदनैश्चारुगंधिभिः १५
देवदारुवनैर्जुष्टंतुंगवृक्षैःसमाकुलम्
सरलैर्नालिकेरैश्चतद्वत्पूगीफलद्रुमैः १६
खर्जूरपनसैर्दिव्यैःफलभारावनामितैः
परिमलोद्गारसंयुक्तैर्गुरुवृक्षसमाकुलम् १७
अग्नितेजःसमाभासैःसप्तपर्णैसुशोभितम्
राजवृक्षैःकदंबैश्चपुष्पशोभान्वितंसदा १८
जंबूनिंबमहावृक्षैर्मातुलिगैःसमाकुलम्
नारंगैःसिंधुवारैश्चप्रियालैःशालतिंदुकैः १९
उदुंबरैःकपित्थैश्चजंबूपादपशोभितम्
लकुचैःपुष्पसौगंधैःस्फुटनागैःसमाकुलम् २०
चूतैश्चफलराजाद्यैर्नीलैश्चैवघनोपमैः
नीलैःशालवनैर्दिव्यैर्जालानांतुवनैस्ततः २१
तमालैस्तुविशालैश्चसेवितंतपनोपमैः
शोभितंनंदनंपुण्यंशिवेनपरिदर्शितम् २२

शोभितंचद्रुमैश्चान्यैःसर्वैर्नीलवनोपमैः
सर्वकामफलोपेतैःकल्याणफलदायकैः २३
कल्पद्रुमैर्महापुरायैःशोभितंनंदनंवनम्
नानापद्मिनिनादैश्चसंकुलंमधुरस्वरैः २४
कोकिलानांरुतैःपुरायैरुद्घुष्टंमधुकारिभिः
मकरंदविलुब्धानांपद्मिणांरुतनादितम् २५
नानवृक्षैःसमाकीर्णंनानामृगगणायुतम्
वृक्षेभ्योविविधैःपुष्पैस्सौगंधैःपतितैर्भुवि २६
साचभूराजतेपुत्रपूजितेवसुगंधिभिः
तत्रवाप्योमहापुरयाःपद्मसौगंधनिर्मलाः २७
तोयैस्ताःपूरिताःपुत्रहंसकारंडसेविताः
तडागैःसागरप्रख्यैस्तोयसौगंधपूजितैः २८
नंदनंभातिसर्वत्रगणैरप्सरसांमहत्
विमानैःकलशैःशुभ्रैर्हेमदंडैःसुशोभनैः २९
नंदनोवनराजस्तुप्रासादैस्तुसुधान्वितैः
यत्रतत्रप्रभात्येवकिन्नराणांमहागणैः ३०
गंधर्वैरप्सरोभिश्चसुरूपाभिर्द्विजोत्तम
देवतानांविनोदैश्चमुनिवृंदैःसुयोगिभिः ३१
सर्वत्रशुशुभेपुरायसंस्थानंनंदनस्यच ३२
एवंसमालोक्यमहानुभावोभवःसुदेव्यासहितोमहात्मा
श्रीनंदनंपुरायवतांनिवासंसुखाकरंशांतिगुणोपपन्नम् ३३
आदित्यतेजःसमतेजसांगणैःप्रभातिवैरश्मिभिर्जातरूपः
पुष्पैःफलैःकामगुणोपपन्नःकल्पद्रुमोनंदनकाननेपि ३४
एवंविधंपादपराजमेवसंवीक्ष्यदेवीचशिवंबभाषे
अस्याभिधानंकथयस्वनाथसर्वस्यपुरायस्यनगस्यपुरायम् ३५
तेजस्विनांसूर्यवरःसमंतात्सदेवदेवींचशिवोबभाषे
शिवउवाच-
अस्यप्रतिष्ठामहतीशुभाख्यादेवेषुमुख्योमधुसूदनश्च ३६
नदीषुमुख्यासुरनिम्नगापिविसृष्टिकर्त्तापियथैवधाता
सुखावहानांचयथासुचंद्रोभूतेषुमुख्याचयथैवपृथ्वी ३७

नगेंद्रराजोहियथानगानांजलाशयेष्वेवयथासमुद्रः
महौषधीनामिवदेविचान्नंमहीधराणांहिमवान्यथैव ३८
विद्यासुमध्येचयथात्मविद्यालोकेषुसर्वेषुयथानरेंद्रः
तथैवमुख्यस्तरुराजएषसर्वातिथिर्देवपतेःप्रियोयम् ३९
श्रीपार्वत्युवाच-
गुणान्नुशंभोममकीर्त्तयस्ववृक्षाधिपस्यास्यशुभान्सुपुण्यान्
आकर्ण्यदेवोवचनंबभाषेदेव्यास्तुसर्वंसुतरोर्हितस्य ४०
यंयंकल्पयंतिसुपुण्यदेवादेवोपमादेववराश्चकांते
तंतंहितेभ्यःप्रददातिवृक्षःकल्पद्रुमोनामवरिष्ठएषः ४१
अस्माच्चसर्वेप्रभवंतिपुण्यादुःप्राप्यमत्रैवतपोधिकास्ते
जीवाधिकंरत्नमयंसुदिव्यंदेवास्तुभुंजंतिमहाप्रधानाः ४२
शुश्रावदेवीवचनंशिवस्यआश्चर्यभूतंमनसाविचिंत्य
तस्यानुमत्यापरिकल्पितंचस्त्रीरत्नमेकंसुगुणंसुरूपम् ४३
सर्वांगरूपांसगुणांसुरूपांतस्मात्सुवृक्षाद्गिरिजाप्रलेभे
विश्वस्यमोहाययथोपविष्टासाहाय्यरूपामकरध्वजस्य ४४
क्रीडानिधानंसुखसिद्धिरूपंसर्वोपपन्नाकमलायताक्षी
पद्माननापद्मकरासुपद्माचामीकरस्यापियथासुमूर्तिः ४५
प्रभासुतद्वद्विमलासुतेजालीलासुतेजाश्चसुकुंचितास्ते
प्रलंबकेशाःपरिसूक्ष्मबद्धाःपुष्पैःसुगंधैःपरिलेपिताश्च ४६
प्रबद्धकुंतादृढकेशबंधैर्विभातिसारूपवरेणबाला
सीमंतमार्गेचमुक्ताफलानांमालाविभात्येवयथातरूणाम् ४७
सीमंतमूलेतिलकंसुदेव्यायथोदितोदैत्यगुरुःसतेजाः
भालेषुपद्मेमृगनाभिपद्मसमुत्थतेजःप्रकरैर्विभाति ४८
सीमंतमूलेतिलकस्यतेजःप्रकाशयेद्रूपश्रियंसुलोके
केशेषुमुक्ताफलकेचभालेतस्याःसुशोभांविकरोतिनित्यम् ४९
यथासुचंद्रःपरिभातिभासासारम्यचेष्टेवविभातितद्वत्
संपूर्णचंद्रोपियथाविभातिज्योत्स्नावितानेनहिमांशुजालः ५०
तस्यास्तुवक्त्रंपरिभातितद्वच्छोभाकरंविश्वविशारदंच
हिमांशुरेवापिकलंकयुक्तःसंक्षीयतेनित्यकलाविहीनः ५१
संपूर्णमस्त्येवसदैवहृष्टंतस्यास्तुवक्त्रंपरिनिष्कलंकम्

गंधंविकाशंकमलेस्वकीयंततःसमालोक्यसुखंनलेभे ५२
पद्माननासर्वगुणोपपन्नामदीयभावैःपरिनिर्मितेयम्
गंधंस्वकीयंतुविपश्यपद्मंतस्यामुखाद्घ्रातिजगत्समीरः ५३
लज्जाभियुक्तःसहसाबभूवजलंसमाश्रित्यसदैवतिष्ठति
कतिमतिनियतबुद्ध्यासुधियोवदंतिसुमदननृपतेःकोशंसमुद्रकलाभिः ५४
सुवरदशनरत्नैर्हास्यलीलाभियुक्ताअरुणअधरबिंबंशोभमानस्तुआस्यः ५५
सुभ्रूःसुनासिकातस्याःसुकर्णौरत्नभूषितौ
हेमकांतिसमोपेतौकपोलौदीप्तिसंयुतौ ५६
रेखात्रयंप्रशोभेतग्रीवायांपरिसंस्थितम्
सौभाग्यशीलशृंगारैस्तिस्रोरेखाइहैवहि ५७
सुस्तनौकठिनौपीनौवर्तुलाकारसन्निभौ
तस्याःकंदर्पकलशावभिषेकायकल्पितौ ५८
अंसावतीवशोभेतेसुसमौमानसान्वितौ
सुभुजौवर्तुलौश्लक्ष्णौसुवर्णौलक्षणान्वितौ ५९
सुसमौकरपद्मौतुपद्मवर्णौसुशीतलौ
दिव्यलक्षणसंपन्नौपद्मस्वस्तिकसंयुतौ ६०
सरलाःपद्मसंयुक्ताअंगुल्यस्तुनखान्विताः
नखानिचसुतीक्ष्णानिजलबिंदुनिभानिच ६१
पद्मगर्भप्रतीकाशोवर्णस्तदंगसंभवः
पद्मगंधाचसर्वांगेपद्मेवभातिभामिनी ६२
सर्वलक्षणसंपन्नानगकन्यासुशोभना
रक्तोत्पलनिभौपादौसुश्लक्ष्णौचातिशोभनौ ६३
रत्नज्योतिःसमाकारानखाःपादाग्रसंभवाः
यथोद्दिष्टंचशास्त्रेषुतथाचांगेषुदृश्यते ६४
सर्वाभरणशोभांगीहारकंकणनूपुरा
मेखलाकटिसूत्रेणकांचीनादेनराजते ६५
नीलेनपट्टवस्त्रेणपरांशोभांगताशुभा
कंचुकेनापिदिव्येनसुरक्तेनगुणान्विता ६६
पार्वतीकल्पिताद्भावाद्गुणंप्राप्तामहोदयम्
कल्पद्रुमान्मुदंलेभेशंकरंवाक्यमब्रवीत् ६७

यथोक्तंतुत्वयादेवतथादृष्टोमयाद्रुमः
यादृशंकल्प्यतेभावस्तादृशंपरिदृश्यते ६८
सूतउवाच-
अथसाचारुसर्वांगीतयोःपार्श्वंसमेत्यच
पादांबुजंननामाथसाभक्त्याभवयोस्तदा ६९
उवाचवचनंस्निग्धंहृद्यंहारिचसातदा
कस्मात्सृष्टात्वयानाथमातर्वदस्वकारणम् ७०
श्रीदेव्युवाच-
वृक्षस्यकौतुकाद्भावान्मयावैप्रत्ययःकृतः
सद्यःप्राप्तंफलंभद्रेभवतीरूपसंपदा ७१
अशोकसुंदरीनाम्नालोकेख्यातिंप्रयास्यसि
सर्वसौभाग्यसंपन्नाममपुत्रीनसंशयः ७२
सोमवंशेषुविख्यातोयथादेवःपुरंदरः
नहुषोनामराजेंद्रस्तवनाथोभविष्यति ७३
एवंदत्वावरंतस्यैजगामगिरिजागिरिम्
कैलासंशंकरेणापिमुदापरमयायुता ७४

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये-
च्यवनचरित्रेद्व्यधिकशततमोऽध्यायः १०२

## त्र्यधिकशततमोऽध्यायः

कुंजलउवाच-
अशोकसुंदरीजातासर्वयोषिद्वरातदा
रेमेसुनंदनेपुण्येसर्वकामगुणान्विते १
सुरूपाभिःसुकन्याभिर्देवानांचारुहासिनी
सर्वान्भोगान्प्रभुंजानागीतनृत्यविचक्षणा २
विप्रचित्तेःसुतोहुंडोरौद्रस्तीव्रश्चसर्वदा
स्वेच्छाचारोमहाकामीनंदनंप्रविवेशह ३
अशोकसुंदरींदृष्ट्वासर्वालंकारसंयुताम्
तस्यास्तुदर्शनाद्दैत्योविद्धःकामस्यमार्गणैः ४
तामुवाचमहाकायःकात्वंकस्यासिवाशुभे

कस्मात्त्वंकारणाच्चात्रआगतासिवनोत्तमम् ५
अशोकसुंदर्युवाच-
शिवस्यापिसुपुरायस्यसुताहंशृणुसांप्रतम्
स्वसाहंकार्तिकेयस्यजननीगोत्रजापिमे ६
बालभावेनसंप्राप्तालीलयानंदनंवनम्
भवान्कोहिकिमर्थंतुमामेवंपरिपृच्छति ७
हुंडउवाच-
विप्रचित्तेःसुतश्चाहंगुणलक्षणसंयुतः
हुंडेतिनाम्नाविख्यातोबलवीर्यमदोद्धतः ८
दैत्यानामप्यहंश्रेष्ठोमत्समोनास्तिराक्षसः
देवेषुमर्त्यलोकेषुतपसायशसाकुले ९
अन्येषुनागलोकेषुधनभोगैर्वरानने
दर्शनात्तेविशालाक्षिहतःकंदर्पमार्गणैः १०
शरणंतेह्यहंप्राप्तःप्रसादसुमुखीभव
भवस्ववल्लभाभार्याममप्राणसमाप्रिया ११
अशोकसुंदर्युवाच-
श्रूयतामभिधास्यामिसर्वसंबंधकारणम्
भवितव्यासुजातस्यलोकेस्त्रीपुरुषस्यहि १२
भवितव्यस्तथाभर्तास्त्रियायःसदृशोगुणैः
संसारेलोकमार्गोयंशृणुहुंडयथाविधि १३
अस्त्येवकारणंचात्रयथातेनभवाम्यहम्
सुभार्यादैत्यराजेंद्रशृणुष्वयतमानसः १४
वृक्षराजादहंजातायदाकालेमहामते
शंभोर्भावंसुसंगृह्यपार्वत्याकल्पिताह्यहम् १५
देवस्यानुमतेदेव्यासृष्टोभर्ताममैवहि
सोमवंशेमहाप्राज्ञःसधर्मात्माभविष्यति १६
जिष्णुर्जिष्णुसमोवीर्येतेजसापावकोपमः
सर्वज्ञःसत्यसंधश्चत्यागेवैश्रवणोपमः १७
यज्वादानपतिःसोपिरूपेणमन्मथोपमः
नहुषोनामधर्मात्मागुणशीलमहानिधिः १८

देव्यादेवेनमेदत्तःख्यातोभर्ताभविष्यति
तस्मात्सर्वगुणोपेतंपुत्रमाप्स्यामिसुंदरम् १९
इंद्रोपेंद्रसमंलोकेययातिंजनवल्लभम्
लप्स्याम्यहंरणेधीरंतस्माच्छंभोःप्रसादतः २०
अहंपतिव्रतावीरपरभार्याविशेषतः
अतस्त्वंसर्वथाहुंडत्यजभ्रांतिमितोव्रज २१
प्रहस्यैववचोब्रूतेअशोकसुंदरींप्रति
हुंडउवाच-
नैवयुक्तंत्वयाप्रोक्तंदेव्यादेवेनचैवहि २२
नहुषोनामधर्मात्मासोमवंशेभविष्यति
भवतीवयसाश्रेष्ठाकनिष्ठोनसयुज्यते २३
कनिष्ठास्त्रीप्रशस्तातुपुरुषोनप्रशस्यते
कदासपुरुषोभद्रेतवभर्ताभविष्यति २४
तारुण्यंयौवनंचापिनाशमेवंप्रयास्यति
यौवनस्यबलेनापिरूपवत्यःसदास्त्रियः २५
पुरुषाणांवल्लभत्वंप्रयांतिवरवर्णिनि
तारुण्यंहिमहामूलंयुवतीनांवरानने २६
तस्याधारेणभुंजंतिभोगान्कामान्मनोनुगान्
कदासोभ्येष्यतेभद्रेआयोःपुत्रःशृणुष्वमे २७
यौवनंवर्ततेऽद्यैववृथाचैवभविष्यति
गर्भत्वंचशिशुत्वंचकौमारंचनिशामय २८
कदासौयौवनोपेतस्तवयोग्योभविष्यति
यौवनस्यप्रभावेनपिबस्वमधुमाधवीम् २९
मयासहविशालाद्भिरमस्वत्वंसुखेनवै
हुंडस्यवचनंश्रुत्वाशिवस्यतनयापुनः ३०
उवाचदानवेंद्रंतंसाध्वसेनसमन्विता
अष्टाविंशतिकेप्राप्तेद्वापराख्येयुगेतदा ३१
शेषावतारोधर्मात्मावसुदेवसुतोबलः
रेवतस्यसुतांदिव्यांभार्यांसचकरिष्यति ३२
सापिजातामहाभागकृताख्येहियुगोत्तमे

युगत्रयप्रमाणेनसाहिज्येष्ठाबलादपि ३३
बलस्यसाप्रियाजातारेवतीप्राणसंमिता
भविष्यद्वापरेप्राप्तइहसातुभविष्यति ३४
मायावतीपुराजातागंधर्वतनयावरा
अपहृत्यनियम्यैवशंबरोदानवोत्तमः ३५
तस्याभर्तासमाख्यातोमाधवस्यसुतोबली
प्रद्युम्नोनामवीरेशोयादवेश्वरनंदनः ३६
तस्मिन्युगेभविष्येतभाव्यंदृष्टंपुरातनैः
व्यासादिभिर्महाभागैर्ज्ञानवद्भिर्महात्मभिः ३७
एवंहिदृश्यतेदैत्यवाक्यंदेव्यातदोदितम्
मांप्रतिहिजगद्धात्र्यापुत्र्याहिमवतस्तदा ३८
त्वंतुलोभेनकामेनलुब्धोवदसिदुष्कृतम्
किल्बिषेणसमाजुष्टंवेदशास्त्रविवर्जितम् ३९
यद्यस्यदिष्टमेवास्तिशुभंवाप्यशुभंदृढम्
पूर्वकर्मानुसारेणतत्तस्यपरिजायते ४०
देवानांब्राह्मणानांचवदनेयत्सुभाषितम्
निःसरेद्यदिसत्यंतदन्यथानैवजायते ४१
मद्भाग्यादेवमाज्ञातंनहुषस्यापितस्यच
समायोगंविचार्यैवंदेव्याप्रोक्तंशिवेनच ४२
एवंज्ञात्वाशमंगच्छत्यजभ्रांतिंमनःस्थिताम्
नैवशक्तोभवान्दैत्यमेमनश्चालितुंध्रुवम् ४३
पतिव्रतादृढाचित्तेसकोमेचालितुंक्षमः
महाशापेनधक्ष्यामिइतोगच्छमहासुर ४४
एवमाकर्ण्यतद्वाक्यंहुंडोवैदानवोबली
मनसाचिंतयामासकथंभार्याभवेदियम् ४५
विचिंत्यहुंडोमायावीअंतर्धानंसमागतः
ततोनिष्क्रम्यवेगेनतस्मात्स्थानाद्विहायताम्
अन्यस्मिन्दिवसेप्राप्तेमायांकृत्वातमोमयीम् ४६
दिव्यंमायामयंरूपंकृत्वानार्यास्तुदानवः
माययाकन्यकारूपोबभूवममनंदन ४७

साकन्यापिवरारोहामायारूपागमत्ततः
हास्यलीलासमायुक्तायत्रास्तेभवनंदिनी ४८
उवाचवाक्यंस्निग्धेवअशोकसुंदरींप्रति
कासिकस्यासिसुभगेतिष्ठसित्वंतपोवने ४९
किमर्थंक्रियतेबालेकामशोषणकंतपः
तन्ममाचद्त्वसुभगेकिंनिमित्तंसुदुष्करम् ५०
तन्निशम्यशुभंवाक्यंदानवेनापिभाषितम्
मायारूपेणछन्नेनसाभिलाषेणसत्वरम् ५१
आत्मसृष्टिसुवृत्तांतंप्रवृत्तंतुयथापुरा
तपसःकारणंसर्वंसमाचष्टसुदुःखिता ५२
उपप्लवंतुतस्यापिदानवस्यदुरात्मनः
मायारूपंनजानातिसौहृदात्कथितंतया ५३
हुंडउवाच-
पतिव्रतासिहेदेविसाधुव्रतपरायणा
साधुशीलसमाचारासाधुचारामहासती ५४
अहंपतिव्रताभद्रेपतिव्रतपरायणा
तपश्चरामिसुभगेभर्तुरर्थेमहासती ५५
ममभर्ताहतस्तेनहुंडेनापिदुरात्मना
तस्यनाशायवैघोरंतपस्यामिमहत्तपः ५६
एहिमेस्वाश्रमेपुण्येगंगातीरेवसाम्यहम्
अन्यैर्मनोहरैर्वाक्यैरुक्ताप्रत्ययकारकैः ५७
हुंडेनसखिभावेनमोहिताशिवनंदिनी
समाकृष्टासुवेगेनमहामोहेनमोहिता ५८
आनीतात्मगृहंदिव्यमनौपम्यंसुशोभनम्
मेरोस्तुशिखरेपुत्रवैडूर्याख्यंपुरोत्तमम् ५९
अस्तिसर्वगुणोपेतंकांचनाख्यंमहाशिवम्
तुंगप्रासादसंबाधैःकलशैर्दंडचामरैः ६०
नानवृक्षसमोपेतैर्वनैर्नीलैर्घनोपमैः
वापीकूपतडागैश्चनदीभिस्तुजलाशयैः ६१
शोभमानंमहारत्नैःप्राकारैर्हेमसंयतैः

सर्वकामसमृद्धार्थसंपूर्णदानवस्यहि ६२
ददृशेसापुरंरम्यमशोकसुंदरीतदा
कस्यदेवस्यसंस्थानंकथयस्वसखेमम ६३
सोवाचदानवेंद्रस्यदृष्टपूर्वस्यवैत्वया
तस्यस्थानंमहाभागेसोऽहदानवपुंगवः ६४
मयात्वंतुसमानीतामाययावरवर्णिनि
तामाभाष्यगृहंनीताशातकौंभंसुशोभनम् ६५
नानावेश्मैःसमाजुष्टंकैलासशिखरोपमम्
निवेश्यसुंदरींतत्रदोलायांकामपीडितः ६६
पुनःस्वरूपीदैत्येंद्रःकामबाणप्रपीडितः
करसंपुटमाबध्यउवाचवचनंतदा ६७
यंयंत्वंवांछसेभद्रेतंतंदद्मिनसंशयः
भजमांत्वंविशालाक्षिभजंतंकामपीडितम् ६८
श्रीदेव्युवाच-
नैवचालयितुंशक्तोभवान्मांदानवेश्वरः
मनसापिनवैधार्यंममोहंसमागतम् ६९
भवादृशैर्महापापैर्देवैर्वादानवाधमैः
दुष्प्राप्याहंनसंदेहोमावदस्वपुनःपुनः ७०
स्कंदानुजासातपसाभियुक्ताजाज्वल्यमानामहतारुषाच
संहर्तुकामापरिदानवंतंकालस्यजिह्वेवयथास्फुरंती ७१
पुनरुवाचसादेवीतमेवंदानवाधमम्
उग्रंकर्मकृतंपापचात्मनाशनहेतवे ७२
ग्रात्मवंशस्यनाशायस्वजनस्यास्यवैत्वया
दीप्तास्वगृहमानीतासुशिखाकृष्णवर्त्मनः ७३
यथाऽशुभःकूटपक्षीसर्वशोकैःसमुद्गतः
गृहंतुविशतेयस्यतस्यनाशंप्रयच्छति ७४
स्वजनस्यचसर्वस्यसधनस्यकुलस्यच
सद्विजोनाशमिच्छेतविशत्येवयदागृहम् ७५
तथातेहंगृहंप्राप्तातवनाशंसमीहती
पुत्राणांधनधान्यस्यतववंशस्यसांप्रतम् ७६

जीवंकुलंधनंधान्यंपुत्रपौत्रादिकंतव
सर्वंतेनाशयित्वाहंयास्यामिचनसंशयः ७७
यथात्वयाहमानीताचरंतीपरमंतपः
पतिकामाप्रवांच्छंतीनहुषंचायुनंदनम् ७८
तथात्वांममभर्ताचनाशयिष्यतिदानव
मन्निमित्तउपायोऽयदृष्टोदेवेनवैपुरा ७९
सत्येयंलौकिकीगाथायांगायंतिविदोजनाः
प्रत्यक्षंदृश्यतेलोकेनविंदंतिकुबुद्धयः ८०
येनयत्रप्रभोक्तव्यंयस्माद्दुःखसुखादिकम्
सएवभुंजतेतत्रतस्मादेवनसंशयः ८१
कर्मणोस्यफलंभुंक्ष्वस्वकीयस्यमहीतले
यास्यसेनिरयस्थानंपरदाराभिमर्शनात् ८२
सुतीक्ष्णंहिसुधारंतुसुखड्गंचविघट्टति
अंगुल्यग्रेणकोपायतथामांविद्धिसांप्रतम् ८३
सिंहस्यसंमुखंगत्वाक्रुद्धस्यगर्जितस्यच
कोलुनातिमुखात्केशान्साहसाकारसंयुतः ८४
सत्याचारांदमोपेतांनियतांतपसिस्थिताम्
निधनंचेच्छतेयोवैसवैमांभोक्तुमिच्छति ८५
समणिंकृष्णसर्पस्यजीवमानस्यसांप्रतम्
गृहीतुमिच्छतेसोहियथाकालेनप्रेषितः ८६
भवांस्तुप्रेषितोमूढकालेनकालमोहितः
तदातेईदृशीजाताकुमतिःकिंनपश्यसि ८७
ऋतेतुआयुपुत्रेणसमालोकयतेहिकः
अन्योहिनिधनंयातिममरूपावलोकनात् ८८
एवमाभाषयित्वातंगंगातीरंगतासती
सशोकादुःखसंविग्नानियतानियमान्विता ८९
पूर्वमाचरितंघोरंपतिकामनयातपः
तवनाशार्थमिच्छंतीचरिष्येदारुणंपुनः ९०
यदात्वांनिहतंदुष्टंनहुषेणमहात्मना
निशितैर्वज्रसंकाशैर्बाणैराशीविषोपमैः ९१

रणेनिपतितंपापमुक्तकेशंसलोहितम्
गतासुंचप्रपश्यामितदायास्याम्यहंपतिम् ९२
एवंसुनियमंकृत्वागंगातीरमनुत्तमम्
संस्थिताहुंडनाशायनिश्चलाशिवनंदिनी ९३
वह्नेर्यथादीप्तिमतीशिखोज्ज्वलातेजोभियुक्ताप्रदहेत्सुलोकान्
क्रोधेनदीप्ताविबुधेशपुत्रीगंगातटेदुश्चरमाचरत्तपः ९४
कुंजलउवाच-
एवमुक्तामहाभागशिवस्यतनयागता
गंगांभसिततःस्नात्वास्वपुरेकांचनाह्वये ९५
तपश्चचारतन्वंगीहुंडस्यवधहेतवे
अशोकसुंदरीबालासत्येनचसमन्विता ९६
हुंडोपिदुःखितोभूतःशापदग्धेनचेतसा
चिंतयामाससंतप्तअतीववचनानलैः ९७
समाहूयअमात्यंतंकंपनाख्यमथाब्रवीत्
समाचष्टसवृत्तांतंतस्याःशापोद्भवंमहत् ९८
शप्तोस्म्यशोकसुंदर्याशिवस्यापिसुकन्यया
नहुषस्यापिमेभर्त्तुस्त्वंतुहस्तान्मरिष्यसि ९९
नैवजातस्त्वसौगर्भआयोर्भार्याचगुर्विणी
यथासत्याद्व्यलीकस्तुतस्याःशापस्तथाकुरु १००
कंपनउवाच-
अपहृत्यप्रियांतस्यआयोश्चापिसमानय
अनेनापिप्रकारेणतवशत्रुर्नजायते १०१
नोवाप्रपातयस्वत्वंगर्भंतस्याःप्रभीषणैः
अनेनापिप्रकारेणतवशत्रुर्नजायते १०२
जन्मकालंप्रतीक्षस्वनहुषस्यदुरात्मनः
अपहृत्यसमानीयजहित्वंपापचेतनम् १०३
एवंसंमंत्र्यतेनापिकंपनेनसदानवः
अभूत्सउद्यमोपेतोनहुषस्यप्रणाशने १०४
विष्णुरुवाच-
एलपुत्रोमहाभागआयुर्नामक्षितीश्वरः

सार्वभौमःसधर्मात्मासत्यव्रतपरायणः १०५
इंद्रोपेंद्रसमोराजातपसायशसाबलैः
दानयज्ञैःसुपुण्यैश्चसत्येननियमेनच १०६
एकच्छत्रेणवैराज्यंचक्रेभूपतिसत्तमः
पृथिव्यांसर्वधर्मज्ञःसोमवंशस्यभूषणम् १०७
पुत्रंनविंदतेराजातेनदुःखीव्यजायत
चिंतयामासधर्मात्माकथंमेजायतेसुतः १०८
इतिचिंतांसमापेदेआयुश्चपृथिवीपतिः
पुत्रार्थंपरमंयत्नमकरोत्सुसमाहितः १०९
अत्रिपुत्रोमहात्मावैदत्तात्रेयोमहामुनिः
क्रीडमानःस्त्रियासार्द्धंमदिरारुणलोचनः ११०
वारुण्यामत्तधर्मात्मास्त्रीवृंदैश्चसमावृतः
अंकेयुवतिमाधायसर्वयोषिद्वरांशुभाम् १११
गायतेनृत्यतेविप्रःसुरांचपिबतेभृशम्
विनायज्ञोपवीतेनमहायोगीश्वरोत्तमः ११२
पुष्पमालाभिर्दिव्याभिर्मुक्ताहारपरिच्छदैः
चंदनागुरुदिग्धांगोराजमानोमुनीश्वरः ११३
तस्याश्रमंनृपोगत्वातंदृष्ट्वाद्विजसत्तमम्
प्रणाममकरोन्मूर्ध्नादण्डवत्सुसमाहितः ११४
अत्रिपुत्रःसधर्मात्मासमालोक्यनृपोत्तमम्
आगतंपुरतोभक्त्याअथध्यानंसमास्थितः ११५
एवंवर्षशतंप्राप्तंतस्यभूपस्यसत्तम
निश्चलंशांतिमापन्नंमानसंभक्तितत्परम् ११६
समाहूयउवाचेदंकिमर्थंक्लिश्यसेनृप
ब्रह्माचारेणहीनोस्मिब्रह्मत्वंनास्तिमेकदा ११७
सुरामांसप्रलुब्धोऽस्मिस्त्रियासक्तःसदैवहि
वरदानेनमेशक्तिरन्यंशुश्रूषब्राह्मणम् ११८
आयुरुवाच–
भवादृशोमहाभागनास्तिब्राह्मणसत्तमः
सर्वकामप्रदातावैत्रैलोक्येपरमेश्वरः ११९

अत्रिवंशेमहाभागगोविंदःपरमेश्वरः
ब्राह्मणस्यस्वरूपेणभवान्वैगरुडध्वजः १२०
नमोऽस्तुदेवदेवेशनमोऽस्तुपरमेश्वर
त्वामहंशरणंप्राप्तःशरणागतवत्सल १२१
उद्धरस्वहृषीकेशमायांकृत्वाप्रतिष्ठसि
विश्वस्थानांप्रजानांतुविद्वांसंविश्वनायकम् १२२
जानाम्यहंजगन्नाथंभवंतंमधुसूदनम्
मामेवरक्षगोविंदविश्वरूपनमोस्तुते १२३
कुंजलउवाच-
गतेबहुतिथेकालेदत्तात्रेयोनृपोत्तमम्
उवाचमत्तरूपेणकुरुष्ववचनंमम १२४
कपालेमेसुरांदेहिपाचितंमांसभोजनम्
एवमाकर्ण्यतद्वाक्यंसचायुःपृथिवीपतिः १२५
उत्सुकस्तुकपालेनसुरामाहृत्यवेगवान्
पलंसुपाचितंचैवच्छित्त्वाहस्तेनसत्वरम् १२६
नृपेंद्रःप्रददौचापिदत्तात्रेयायसत्तम
अथप्रसन्नचेताःससंजातोमुनिपुंगवः १२७
दृष्ट्वाभक्तिंप्रभावंचगुरुशुश्रूषणंपरम्
समुवाचनृपेंद्रंतमायुंपणतमानसम् १२८
वरंवरयभद्रंतेदुर्लभंभुविभूपते
सर्वमेवप्रदास्यामियंयमिच्छसिसांप्रतम् १२९
राजोवाच-
भवान्दातावरंसत्यंकृपयामुनिसत्तम
पुत्रंदेहिगुणोपेतंसर्वज्ञंगुणसंयुतम् १३०
देववीर्यंसुतेजंचअजेयंदेवदानवैः
क्षत्रियैराक्षसैर्घोरैर्दानवैःकिन्नरैस्तथा १३१
देवब्राह्मणसंभक्तःप्रजापालोविशेषतः
यज्वादानपतिःशूरःशरणागतवत्सलः १३२
दाताभोक्तामहात्माचवेदशास्त्रेषुपंडितः
धनुर्वेदेषुनिपुणःशास्त्रेषुचपरायणः १३३

अनाहतमतिर्धीरःसंग्रामेष्वपराजितः
एवंगुणःसुरूपश्चयस्माद्वंशःप्रसूयते १३४
देहिपुत्रंमहाभागममवंशप्रधारकम्
यदिचापिवरोदेयस्त्वयामेकृपयाविभो १३५
दत्तात्रेयउवाच-
एवमस्तुमहाभागतवपुत्रोभविष्यति
गृहेवंशकरःपुण्यःसर्वजीवदयाकरः १३६
एभिर्गुणैस्तुसंयुक्तोवैष्णवांशेनसंयुतः
राजाचसार्वभौमश्चइंद्रतुल्योनरेश्वरः १३७
एवंखलुवरंदत्वाददौफलमनुत्तमम्
भूपमाहमहायोगीसुभार्यायैप्रदीयताम् १३८
एवमुक्त्वाविसृज्यैवतमायुंप्रणतंपुरः
आशीर्भिरभिनंद्यैवअंतर्द्धानमधीयत १३९
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये-
च्यवनचरित्रेत्र्यधिकशततमोऽध्यायः १०३

चतुरधिकशततमोऽध्यायः

कुंजलउवाच-
गतेतस्मिन्महाभागेदत्तात्रेयेमहामुनौ
आजगाममहाराजआयुश्चस्वपुरंप्रति १
इंदुमत्यागृहंहृष्टःप्रविवेशश्रियान्वितम्
सर्वकामसमृद्धार्थमिंद्रस्यसदनोपमम् २
राज्यंचक्रेसमेधावीयथास्वर्गेपुरंदरः
स्वर्भानुसुतयासार्द्धमिंदुमत्याद्विजोत्तम ३
साचइंदुमतीराज्ञीगर्भमापफलाशनात्
दत्तात्रेयस्यवचनाद्दिव्यतेजःसमन्वितम् ४
इंदुमत्यामहाभागस्वप्नंदृष्टमनुत्तमम्
रात्रौदिवान्वितंतातबहुमंगलदायकम् ५
गृहांतरेविशंतंचपुरुषंसूर्यसन्निभम्
मुक्तामालान्वितंविप्रंश्वेतवस्त्रेणशोभितम् ६

श्वेतपुष्पकृतामालातस्यकंठेविराजते
सर्वाभरणशोभांगोदिव्यगंधानुलेपनः ७
चतुर्भुजः शंखपाणिर्गदाचक्रासिधारकः
छत्रेणध्रियमाणेनचंद्रबिंबानुकारिणा ८
शोभमानोमहातेजादिव्याभरणभूषितः
हारकंकणकेयूरनूपुराभ्यांविराजितः ९
चंद्रबिंबानुकाराभ्यांकुंडलाभ्यांविराजितः
एवंविधोमहाप्राज्ञोनरःकश्चित्समागतः १०
इंदुमतींसमाहूयस्नापितापयसातदा
शंखेनक्षीरपूर्णेनशशिवर्णेनभामिनी ११
रत्नकांचनबद्धेनसंपूर्णेनपुनःपुनः
श्वेतंनागंसुरूपंचसहस्रशिरसंवरम् १२
महामणियुतंदीप्तंधामज्वालासमाकुलम्
क्षिप्तंतेनमुखप्रांतेदत्तंमुक्ताफलंपुनः १३
कंठेतस्याःसदेवेशइंदुमत्यामहायशाः
पद्मंहस्तेततोदत्वास्वस्थानंप्रतिजग्मिवान् १४
एवंविधंमहास्वप्नंतयादृष्टंसुतोत्तमम्
समाचष्टमहाभागाआयुंभूमिपतीश्वरम् १५
समाकर्ण्यमहाराजश्चिंतयामासवैपुनः
समाहूयगुरुंपश्चात्कथितंस्वप्नमुत्तमम् १६
शौनकंसुमहाभागंसर्वज्ञंज्ञानिनांवरम्
राजोवाच-
अद्यरात्रौमहाभागममपत्न्याद्विजोत्तम १७
विप्रोगेहंविशन्दृष्टःकिमिदंस्वप्नकारणम्
शौनकउवाच-
वरोदत्तस्तुतेपूर्वंदत्तात्रेयेणधीमता १८
आदिष्टंचफलंराज्ञांसुगुणंसुतहेतवे
तत्फलंकिंकृतंराजन्कस्मैत्वयानिवेदितम् १९
सुभार्यायैमयादत्तमितिराज्ञोदितंवचः
श्रुत्वोवाचमहाप्राज्ञःशौनकोद्विजसत्तमः २०

दत्तात्रेयप्रसादेनतवगेहेसुतोत्तमः
वैष्णवांशेनसंयुक्तोभविष्यतिनसंशयः २१
स्वप्नस्यकारणंराजन्नेतत्तेकथितंमया
इंद्रोपेंद्रसमःपुत्रोदिव्यवीर्योभविष्यति २२
पुत्रस्तेसर्वधर्मात्मासोमवंशस्यवर्द्धनः
धनुर्वेदेचवेदेचसगुणोसौभविष्यति २३
एवमुक्त्वासराजानंशौनकोगतवान्गृहम्
हर्षेणमहताविष्टोराजाभूत्प्रिययासह २४
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
चतुरधिकशततमोऽध्यायः १०४

## पंचोत्तरशततमोऽध्यायः

कुंजलउवाच-
गतासानंदनवनंसखीभिःसहक्रीडितुम्
तत्राकर्ण्यमहद्वाक्यमप्रियंतुतदापितुः १
चारणानांसुसिद्धानांभाषतांहर्षणेनतु
आयोर्गेहेमहावीर्योविष्णुतुल्यपराक्रमः २
भविष्यतिसुतश्रेष्ठोहुंडस्यांतंकरिष्यति
एवंविधंमहद्वाक्यमप्रियंदुःखदायकम् ३
समाकर्ण्यसमायातापितुरग्रेनिवेदितम्
समासेनतयातस्यपुरतोदुःखदायकम् ४
पितुरग्रेजगादाथपिताश्रुत्वासविस्मितः
शापमशोकसुंदर्याःसस्मारचपुराकृतम् ५
एतस्यार्थेतपस्तेपेसेयंचाशोकसुंदरी
गर्भस्यनाशनायैवइंदुमत्याःसदानवः ६
विचक्रेउद्यमंदुष्टःकालाकृष्टोदुरात्मवान्
छिद्रान्वेषीततोभूत्वाइंदुमत्यास्तुनित्यशः ७
यदापश्यतितांराज्ञींरूपौदार्यगुणान्विताम्
दिव्यतेजःसमायुक्तांरक्षितांविष्णुतेजसा ८
दिव्येनतेजसायुक्तांसूर्यबिंबोपमांतुताम्

तस्याःपार्श्वेमहाभागरक्षणार्थंस्थितःसदा ९
दूरात्सदानवोदुष्टस्तस्याश्चबहुदर्शयन्
नानाविद्यांमहोग्रांचभीषिकांसुविभीषिकाम् १०
गर्भस्यतेजसायुक्तारक्षिताविष्णुतेजसा
भयंनजायतेतस्यामनस्येवकदापुनः ११
विफलोदानवोजातउद्यमश्चनिरर्थकः
मनीप्सितंनैवजातंहुंडस्यापिदुरात्मनः १२
एवंवर्षशतंपूर्णंपश्यमानस्यतस्यच
प्रसूतासाहिपुत्रंचस्वर्भानोस्तनयातदा १३
रात्रावेवसुतश्रेष्ठतस्याःपुत्रोव्यजायत
तेजसातीवभात्येषयथासूर्योनभस्तले १४
सूतउवाच-
अथदासीमहादुष्टाकाचित्सूतिगृहागता
अशौचाचारसंयुक्तामहामंगलवादिनी १५
तस्याःसर्वंसमाज्ञायसहुंडोदानवाधमः
दास्याअंगंप्रविश्यैवप्रविष्टश्चायुमन्दिरे १६
महाजनेप्रसुप्तेचनिद्रयातीवमोहिते
तंपुत्रंदेवगर्भाभमपहृत्यबहिर्गतः १७
कांचनाख्यपुरेप्राप्तःस्वकीयेदानवाधमः
समाहूयप्रियांभार्यांविपुलांवाक्यमब्रवीत् १८
वधस्वैनंमहापापंबालरूपंरिपुंमम
पश्चात्सूदस्यवैहस्तेभोजनार्थंप्रदीयताम् १९
नानाभेदैर्विभेदैश्चपाचयस्वहिनिर्घृणम्
सूदहस्तान्महाभागेपश्चाद्भोक्ष्येनसंशयः २०
वाक्यमाकर्ण्यतद्भर्तुर्विपुलाविस्मिताभवत्
कस्मान्निर्घणतांयातिभर्त्तामममसुनिष्ठुरः २१
सर्वलक्षणसंपन्नंदेवगर्भोपमंसुतम्
कस्यकस्मात्प्रभक्ष्येतक्षमाहीनःसुनिर्घृणः २२
इत्येवंचिंतयामासकारुण्येनसमन्विता
पुनःपप्रच्छभर्तारंकस्माद्भक्ष्यसिबालकम् २३

कस्माद्भवसिसंक्रुद्धोऽतीवनिरपत्रपः
सर्वमेकारणंब्रूहितत्त्वेनदनुजेश्वर २४
आत्मदोषंचवृत्तांतंसमासेननिवेदितम्
शापमशोकसुंदर्याहुंडेनापिदुरात्मना २५
तयाज्ञातंतुतत्सर्वंकारणंदानवस्यवै
वध्योऽयबालकःसत्यंनोवाभर्त्तामरिष्यति २६
इत्येवंप्रविचार्यैवविपुलाक्रोधमूर्च्छिता
मेकलांतुसमाहूयसैरंध्रींवाक्यमब्रवीत् २७
जह्येनंबालकंदुष्टंमेकलेऽद्यमहानसे
सूदहस्तेप्रदेहित्वंहुण्डभोजनहेतवे २८
मेकलाबालकंगृह्यसूदमाहूयचाब्रवीत्
राजादेशंकुरुष्वाद्यपचस्वैनंहिबालकम् २९
एवमाकर्णितंतेनसूदेनापिमहात्मना
आदायबालकंहस्ताच्छस्त्रमुद्यम्यचोद्यतः ३०
एषवैदेवदेवस्यदत्तात्रेयस्यतेजसा
रक्षितस्त्वायुपुत्रश्चसजहासपुनःपुनः ३१
हसंतंतंसमालोक्यससूदःकृपयान्वितः
सैरंध्रीचकृपायुक्तासूदंतंप्रत्यभाषत ३२
नैषवध्यस्त्वयासूदशिशुरेवमहामते
दिव्यलक्षणसंपन्नःकस्यजातःसुसत्कुले ३३
सूदउवाच-
सत्यमुक्तंत्वयाभद्रेवाक्यंवैकृपयान्वितम्
राजलक्षणसंपन्नोरूपवान्कस्यबालकः ३४
कस्माद्धोक्ष्यतिदुष्टात्माहुंडोऽयदानवाधमः
येनवैरक्षितोवंशःपूर्वमेवसुकर्मणा ३५
आपत्स्वपिसजीवेतदुर्गेषुनान्यथाभवेत्
सिंधुवेगेननीतस्तुवह्निमध्येगतोऽथवा ३६
जीवतेनात्रसंदेहोयश्चकर्मसहायवान्
तस्माद्धिक्रियतेकर्मधर्मपुण्यसमन्वितम् ३७
आयुष्मंतोनरास्तेनप्रवदंतिसुखंततः

तारकंपालकंकर्मरद्गतेजाग्रतेहितत् ३८
मुक्तिदंजायतेनित्यंमैत्रस्थानप्रदायकम्
दानपुरायान्वितंकर्मप्रियवाक्यसमन्वितम् ३९
उपकारयुतंयश्चकरोतिशुभकृत्तदा
तमेवरद्गतेकर्मसर्वदैवनसंशयः ४०
अन्ययोनिंप्रयातिस्मप्रेरितःस्वेनकर्मणा
किंकरोतिपितामाताअन्येस्वजनबान्धवाः ४१
कर्मणानिहतोयस्तुनस्युस्तस्यचरद्गणे
सूतउवाच-
येनैवकर्मणाचैवरद्मितश्चायुनंदनः ४२
तस्मात्कृपान्वितोजातःसूदःकर्मवशानुगः
सैरंध्रीचतथाजाताप्रेरितातस्यकर्मणा ४३
द्वाभ्यामेवसुतश्चायोरद्मितश्चारुलद्मणः
रात्रावेवप्रणीतोऽसौतस्माद्गेहान्महाश्रमे ४४
वशिष्ठस्याश्रमेपुरायेसैरंध्र्यापुरायकर्मणा
शुभेपर्णकुटीद्वारेतस्मिन्नेवमहाश्रमे ४५
गतासास्वगृहंपश्चान्निद्मिप्यबालकोत्तमम्
एणंनिपात्यसूदेनपाचितंमांसमेवहि ४६
भोजयित्वासुदैत्येंद्रोहुंडोहृष्टोभवत्तदा
शापमशोकसुंदर्यामोघंमेनेतदासुरः ४७
हर्षेणमहताविष्टःसहुंडोदानवेश्वरः
कुंजलउवाच-
प्रभातेविमलेजातेवशिष्ठोमुनिसत्तमः ४८
बहिर्गतोहिधर्मात्माकुटीद्वारात्प्रपश्यति
संपूर्णबालकंदृष्ट्वादिव्यलद्गणसंयुतम् ४९
संपूर्णेंदुप्रतीकाशंसुंदरंचारुलोचनम्
वशिष्ठउवाच-
पश्यंतुमुनयःसर्वेयूयमागत्यबालकम् ५०
कस्यकेनसमानीतंरात्रौद्वारांगणेमम
देवगंधर्वगर्भाभंराजलद्गणसंयुतम् ५१

कंदर्पकोटिसंकाशंपश्यंतुमुनयोऽमलम्
महाकौतुकसंयुक्ताहृष्टाद्विजवरास्ततः ५२
समपश्यन्सुतंतेतुआयोश्चैवमहात्मनः
वशिष्ठःसतुधर्मात्माज्ञानेनालोक्यबालकम् ५३
आयुपुत्रंसमाज्ञातंचरित्रेणसमन्वितम्
वृत्तांतंतस्यदुष्टस्यहुण्डस्यापिदुरात्मनः ५४
कृपयाब्रह्मपुत्रस्तुसमुत्थायसुबालकम्
कराभ्यामथगृह्णातियावद्द्विजोवरोत्तमः ५५
तावत्पुष्पसुवृष्टिंचचक्रुर्देवाःसुतोपरि
ललितंसुस्वरंगीतंजगुर्गंधर्वकिन्नराः ५६
ऋषयोवेदमंत्रैस्तुस्तुवंतिनृपनंदनम्
वशिष्ठस्तंसमालोक्यवरंवैदत्तवांस्तदा ५७
नहुषेत्येवतेनामख्यातंलोकेभविष्यति
हुषितोनैवतेनापिबालभावैर्नराधिप ५८
तस्मान्नहुषतेनामदेवपूज्योभविष्यसि
जातकर्मादिकंकर्मतस्यचक्रेद्विजोत्तमः ५९
व्रतदानंविसर्गंचगुरुशिष्यादिलक्षणम्
वेदंचाधीत्यसंपूर्णंषडंगंसपदक्रमम् ६०
सर्वाण्येवचशास्त्राणिअधीत्यद्विजसत्तमात्
वशिष्ठाच्चधनुर्वेदंसरहस्यंमहामतिः ६१
शस्त्राण्यस्त्राणिदिव्यानिग्राहमोक्षयुतानिच
ज्ञानशास्त्रादिकंन्यायराजनीतिगुणादिकान् ६२
वशिष्ठादायुपुत्रश्चशिष्यरूपेणभक्तिमान्
एवंससर्वनिष्पन्नोनाहुषश्चातिसुंदरः ६३
वशिष्ठस्यप्रसादाच्चचापबाणधरोभवत् ६४

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्ये-
च्यवनचरित्रेपंचोत्तरशततमोऽध्यायः १०५

## षडधिकशततमोऽध्यायः

कुंजलउवाच-

ग्रायुभार्यामहाभागास्वर्भानोस्तनयासुतम्
ग्रपश्यंतीसुबालंतंदेवोपममनौपमम् १
हाहाकारंमहत्कृत्वारुरोदवरवर्णिनी
केनमेलक्षणोपेतोहृतोबालःसुलक्षणः २
तपसादानयज्ञैश्चनियमैर्दुष्करैःसुतः
संप्राप्तोहिमयावत्सकष्टैश्चदारुणैःपुनः ३
दत्तात्रेयेणपुरायेनसंतुष्टेनमहात्मना
दत्तःपुत्रोहृतःकेनरुरोदकरुणान्विता ४
हापुत्रवत्समेतातहाबालगुणमंदिर
क्वासिकेनापनीतोसिममशब्दःप्रदीयताम् ५
सोमवंशस्यसर्वस्यभूषणोसिनसंशयः
केनत्वमपनीतोसिममप्राणैःसमन्वितः ६
राजसुलक्षणैर्दिव्यैःसंपूर्णःकमलेक्षणः
केनाद्यापहृतोवत्सःकिंकरोमिक्वयाम्यहम् ७
स्फुटंजानाम्यहंकर्मह्यन्यजन्मनियत्कृतम्
न्यासनाशःकृतःकस्यतस्मात्पुत्रोहृतोमम ८
किंवाछलंकृतंकस्यपूर्वजन्मनिपापया
कर्मणस्तस्यवैदुःखमनुभुंजामिनान्यथा ९
रत्नापहारिणीजातापुत्ररत्नंहृतंमम
तस्माद्दैवेनमेदिव्यग्रनौपम्यगुणाकरः १०
किंवावितर्कितोविप्रःकर्मणस्तस्यवैफलम्
प्राप्तंमयानसंदेहःपुत्रशोकान्वितंभृशम् ११
किंवाशिशुविरोधश्चकृतोजन्मांतरेमया
तस्यपापस्यभुंजामिकर्मणःफलमीदृशम् १२
याचमानस्यचैवाग्रेवैश्वदेवस्यकर्मणः
किंवापिनार्पितंचान्नंव्याहृतीभिर्हुतंद्विजैः १३
एवंसुदेवमानाच्चस्वर्भानोस्तनयातदा
इंदुमतीमहाभागशोकेनकरुणाकुला १४
पतितामूर्च्छिताशोकाद्विह्वलत्वंगतासती
निःश्वासान्मुंचमानासावत्सहीनायथाहिगौः १५

आयूराजासशोकेनदुःखेनमहतान्वितः
बालंश्रुत्वाहृतंतंतुधैर्यंतत्याजपार्थिवः १६
तपसश्चफलंनास्तिनास्तिदानस्यवैफलम्
यस्मादेवंहृतःपुत्रस्तस्मान्नास्तिनसंशयः १७
दत्तात्रेयःप्रसादेनवरंमेदत्तवान्पुरा
अजेयंचजयोपेतंपुत्रंसर्वगुणान्वितम् १८
तस्यवरप्रदानस्यकथंविघ्नोह्यजायत
इतिचिंतापरोराजादुःखितःप्रारुदद्भृशम् १९
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
नाहुषाख्यानेषडधिकशततमोऽध्यायः १०६

सप्तोत्तरशततमोऽध्यायः

कुंजलउवाच-
अथासौनारदःस्वर्गादायुराजानमागतः
आगत्यकथयामासकस्माद्राजन्प्रशोचसे १
पुत्रापहरणंतेऽद्यद्येमंजातंमहामते
देवादीनांमहाराजएवंज्ञात्वातुमाशुचः २
सर्वज्ञःसगुणोभूत्वासर्वविज्ञानसंयुतः
सर्वकलाभिसंपूर्णआगमिष्यतितेसुतः ३
येनाप्यपहृतस्तेऽद्यबालोदेवगुणोपमः
आत्मगेहेमहाराजकालोनीतोनसंशयः ४
तस्याप्यंतंसवैकर्त्तामहावीर्योमहाबलः
सत्वामभ्येष्यतेभूपशिवस्यसुतयासह ५
इंद्रोपेंद्रसमःपुत्रोभविष्यतिस्वतेजसा
इंद्रत्वंभोक्ष्यतेसोऽपिनिजैश्चपुण्यकर्मभिः ६
एवमाभाष्यराजानमायुंदेवर्षिसत्तमः
जगामसहसातस्यपश्यतःसानुगस्यह ७
गतेतस्मिन्महाभागेनारदेदेवसंमिते
आयुरागत्यतांराज्ञींतत्सर्वंविन्यवेदयत् ८
दत्तात्रेयेणयोदत्तःपुत्रोदेववरोत्तमः

सवैराज्ञिकुशल्यास्तेविष्णोश्चैवप्रसादतः ९
येनाप्यसौहृतःपुत्रःसगुणोमेवरानने
शिरस्तस्यगृहीत्वातुपुनरेवागमिष्यति १०
इत्याहनारदोभद्रेमाकृथाःशोकमेवच
त्यजचैनंमहामोहंकार्यधर्मविनाशनम् ११
भर्तुर्वाक्यंनिशम्यैवंराज्ञीइंदुमतीततः
हर्षेणापिसमाविष्टापुत्रस्यागमनंप्रति १२
यथोक्तंदेवऋषिणातत्तथैवभविष्यति
दत्तात्रेयेणमेदत्तस्तनपोह्यजरामरः १३
भविष्यतिनसंदेहःप्रतिभात्येनमेवहि
इत्येवंचिंतयित्वातुननामद्विजपुंगवम् १४
नमोस्तुतस्मैपरिसिद्धिदायअत्रेःसुपुत्रायमहात्मनेच
यस्यप्रसादेनमयासुपुत्रःप्राप्तःसुधीरःसुगुणःसुपुरायः १५
एवमुक्त्वातुसादेवीविररामसुदःखिता
आगमिष्यंतमाज्ञायनहुषंतनयंपुनः १६

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
नाहुषाख्यानेसप्तोत्तरशततमोऽध्यायः १०७

## अष्टोत्तरशततमोऽध्यायः

कुंजलउवाच-
ब्रह्मपुत्रोमहातेजावशिष्ठस्तपतांवरः
नहुषंतंसमाहूयइदंवचनमब्रवीत् १
वनंगच्छस्वशीघ्रेणवन्यमानयपुष्कलम्
समाकरार्यमुनेर्वाक्यंनहुषोवनमाययौ २
तत्रकिंचित्सुवृत्तांतंशुश्रावनहुषोबलः
अयमेषसधर्मात्मानहुषोनामवीर्यवान् ३
आयोःपुत्रोमहाप्राज्ञोबाल्यान्मात्रावियोजितः
अस्यैवातिवियोगेनआयुभार्याप्ररोदिति ४
अशोकसुंदरीतेपेतपःपरमदुष्करम्
कदापश्यतिसादेवीपुत्रमिंदुमतीशुभा ५

नाहुषंनामधर्मज्ञंहृतंपूर्वंतुदानवैः
तपस्तेपेनिरालंबाशिवस्यतनयावरा ६
अशोकसुंदरीबालाआयुपुत्रस्यकारणात्
अनेनापिकदासाहिसंगतातुभविष्यति ७
एवंसांसारिकंवाक्यंदिविचारणभाषितम्
शुश्रावसहिधर्मात्मानहुषोविभ्रमान्वितः ८
सगत्वावन्यमादायवशिष्ठस्याश्रमंप्रति
वन्यंनिवेद्यधर्मात्मावशिष्ठायमहात्मने ९
बद्धांजलिपुटोभूत्वाभक्त्यानमितकंधरः
तमुवाचमहाप्राज्ञंवशिष्ठंतपतांवरम् १०
भगवञ्छ्रूयतांवाक्यमपूर्वंचारणेरितम्
एषवैनहुषोनाम्नाआयुपुत्रोवियोजितः ११
मात्रासहसुदुःखैस्तुइंदुमत्याहिदानवैः
शिवस्यतनयाबालातपस्तेपेसुदुश्चरम् १२
निमित्तमस्यधीरस्यनहुषस्येतिवैगुरो
एवमाभाषितंतैस्तुतत्सर्वंहिमयाश्रुतम् १३
कोसावायुःसधर्मात्माकासात्विंदुमतीशुभा
अशोकसुंदरीकासानहुषेतिकउच्यते १४
एतन्मेसंशयंजातंतद्भवांश्छेत्तुमर्हति
अन्यःकोपिमहाप्राज्ञःकुत्रासौनहुषेतिच १५
तत्सर्वंतातमेब्रूहिकारणांतरमेवहि
वशिष्ठउवाच–
आयुराजासधर्मात्मासप्तद्वीपाधिपोबली १६
भार्याइंदुमतीतस्यसत्यरूपायशस्विनी
तस्यामुत्पादितःपुत्रोभवान्वैगुणमंदिरम् १७
आयुनाराजराजेनसोमवंशस्यभूषणम्
हरस्यकन्यासुश्रोणीगुणरूपैरलंकृता १८
अशोकसुंदरीनाम्नासुभगाचारुहासिनी
तस्यहेतोस्तपस्तेपेनिरालंबातपोवने १९
तस्याभर्ताभवान्सृष्टोधात्रायोगेननिश्चितः

गंगायास्तीरमाश्रित्यध्यानयोगसमाश्रिता २०
हुंडश्चदानवेंद्रोयोदृष्ट्वाचैकाकिनींसतीम्
तपसाप्रज्वलंतींचसुभगांकमलेक्षणाम् २१
रूपौदार्यगुणोपेतांकामबाणैःप्रपीडितः
तांबभाषेऽन्तिकंगत्वाममभार्याभवेतिच २२
एवंसातद्वचःश्रुत्वातमुवाचतपस्विनी
माहुंडसाहसंकार्षीर्माजल्पस्वपुनःपुनः २३
अप्राप्याहंत्वयावीरपरभार्याविशेषतः
दैवेनमेपुरासृष्टआयुपुत्रोमहाबलः २४
नहुषोनाममेधावीभविष्यतिनसंशयः
देवदत्तोमहातेजाअन्यथात्वंकरिष्यसि २५
ततःशाप्रंपदास्यामियेनभस्मीभविष्यसि
एवमाकर्ण्यतद्वाक्यंकामबाणैःप्रपीडितः २६
व्याजेनापिहृतातेनप्रणीतानिजमंदिरे
ज्ञात्वातयामहाभागशप्तोऽसौदानवाधमः २७
नहुषस्यैवहस्तेनतवमृत्युर्भविष्यति
अजातेत्वयिसंजातावदसेत्वंयथैवतत् २८
सत्वमायुसुतोवीरहृतोहुंडेनपापिना
सूदेनरक्षितोदास्याप्रेषितोममचाश्रमम् २९
भवंतंवनमध्येचदृष्ट्वाचारणकिन्नरैः
यत्तुवैश्राविततंवत्समयातेकथितंपुनः ३०
जहितंपापकर्तारंहुंडाख्यंदानवाधमम्
नेत्राभ्यांहिप्रमुंचंतीमश्रूणिपरिमार्जय ३१
इतोगत्वाप्रपश्यत्वंगंगातीरंमहाबलम्
निपात्यदानवेंद्रंतंकारागृहात्समानय ३२
अशोकसुंदरीयाहितस्याभर्ताभवस्वहि
एतत्तेसर्वमाख्यातंप्रश्नस्यास्यहिकारणम् ३३
आभाष्यनहुषंविप्रोविररामहामतिः ३४
आकर्ण्यसर्वंमुनिनाप्रयुक्तमाश्चर्यभूतंसहिचिंत्यमानः
तस्यांतमेकःपरिकर्तुकामआयोःसुतःकोपमथोचकार ३५

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे नाहुषाख्यानेऽष्टोत्तरशततमोऽध्यायः १०८

## नवाधिकशततमोऽध्यायः

कुंजलउवाच-
प्रणिपत्यप्रसाद्यैववशिष्ठंतपतांवरम्
आमंत्र्यनिर्जगामाथबाणपाणिर्धनुर्धरः १
एणस्यमांसंसुविपाच्यभोजितंबालस्तयारक्षितएवबुद्ध्या
आयोःसुपुत्रःसगुणःसुरूपोदेवोपमोदेवगुणैश्चयुक्तः २
तेनैवमांसेनसुसंस्कृतेनमृष्टेनपक्वेनरसानुगेन
तमेवदैत्यंपरिभाष्यसूदोदुष्टंसुहर्षेणव्यभोजयत्तदा ३
बुभुजेदानवोमांसंरसस्वादुसमन्वितम्
हर्षेणापिसमाविष्टोजगामाशोकसुंदरीम् ४
तामुवाचततस्तूर्णंकामोपहतचेतनः
आयुपुत्रोमयाभद्रेभक्षितःपतिरेवते ५
मामेवभजचार्वंगिभुंक्ष्वभोगान्मनोनुगान्
किंकरिष्यसितेनत्वंमानुषेणगतायुषा ६
प्रत्युवाचसमाकर्ण्यशिवकन्यातपस्विनी
भर्तामेदैवतैर्दत्तोअजरोदोषवर्जितः ७
तस्यमृत्युर्नवैदृष्टोदेवैरपिमहात्मभिः
एवमाकर्ण्यतद्वाक्यंदानवोदुष्टचेष्टितः ८
तामुवाचविशालाक्षींप्रहस्यैवपुनःपुनः
अद्यैवभक्षितंमांसमायुपुत्रस्यसुंदरि ९
जातमात्रस्यबालस्यनहुषस्यदुरात्मनः
एवमाकर्ण्यसावाक्यंकोपंचक्रेसुदारुणम् १०
प्रोवाचसत्यसंस्थासातपसाभावितापुनः
तपएवमयातप्तंमनसानियमेनवै
आयुसुतश्चिरायुश्चसत्येनैवभविष्यति ११
इतोगच्छदुराचारयदिजीवितुमिच्छसि
अन्यथात्वामहंशप्स्येपुनरेवनसंशयः १२

एवमाकर्णितंतस्याःसूदेननृपतिंप्रति
परित्यज्यमहाराजएतामन्यांसमाश्रय १३
सूदेनप्रेषितोदैत्यःसहुंडःपापचेतनः
निर्जगामत्वरायुक्तःसस्वांभार्यांप्रियांप्रति १४
चेष्टितंनैवजानातिदास्यासूदेनयत्कृतम्
तस्यैनिवेदितंसर्वंप्रियायैवृत्तमेवच १५
सूतउवाच–
अशोकसुंदरीसाचमहतातपसाकिल
दुःखशोकेनसंतप्ताकृशीभूतातपस्विनी १६
चिंतयंतीप्रियंकांतंतंध्यायतिपुनःपुनः
किंनकुर्वंतिवैदैत्याउपायैर्विविधैरपि १७
उपायज्ञाःसदाबुद्ध्याउद्यमेनापिसर्वदा
वर्तंतेदनुजश्रेष्ठानानाभावैश्चसर्वदा १८
मायोपायेनयोगेनहृताहंपापिनापुरा
तथासघातितःपुत्रआयोश्चैवभविष्यति १९
यंदृष्ट्वादैवयोगेनभवितारमनामयम्
उद्यमेनापिपश्येतकिंवानश्यतिवानवा २०
किंवासउद्यमःश्रेष्ठःकिंवातत्कर्मजंफलम्
भाविभावःकथंनश्येत्ततोवेदःप्रतिष्ठति २१
विशेषोभावितोदेवैःसकथंचान्यथाभवेत्
एवमेवंमहाभागाचिंतयंतीपुनःपुनः २२
किन्नरोविद्वरोनामबृहद्वंशोमहातनुः
सनाभ्योर्धनरःकायःपद्माभ्यांहिविवर्जितः २३
द्विभुजोवंशहस्तस्तुहारकंकणशोभितः
दिव्यगंधानुलिप्तांगोभार्ययासहचागतः २४
तामुवाचनिरानंदांससुतांशंकरस्यहि
किमर्थंचिंतसेदेविविद्वरंविद्धिचागतम् २५
किन्नरंविष्णुभक्तंमांप्रेषितंदेवसत्तमैः
दुःखमेवंनकर्तव्यंभवत्यानहुषंप्रति २६
हुंडेनपापचारेणवधार्थंतस्यधीमतः

कृतमेवाखिलंकर्महृतश्चायुसुतः शुभे २७
सतुवैरक्षितोदेवैरुपायैर्विविधैरपि
हुंडएवंविजानातिश्रायुपुत्रोहृतोमया २८
भक्षितस्तुविशालाक्षिइतिजानातिवैशुभे
भवतांश्रावयित्वाहिगतोसौदानवोऽधमः २९
स्वेनकर्मविपाकेनपुरायस्यापिमहायशाः
पूर्वजन्मार्जितेनैवतवभर्त्तासजीवति ३०
पुरायस्यापिबलेनैवयेषामायुर्विनिर्मितम्
स्वर्जितस्यमहाभागेनाशमिच्छंतिघातकाः ३१
दुष्टात्मानोमहापापाःपरतेजोविदूषकाः
तेषांयशोविनाशार्थंप्रपंचंतिदिनेदिने ३२
नानाविधैरुपायैस्तेविषशस्त्रादिभिस्ततः
हंतुमिच्छंतितंपुरायंपुरायकर्माभिरक्षितम् ३३
पापिनश्चैवहुंडाद्यामोहनस्तंभनादिभिः
पीडयंतिमहापापानानाभेदैर्बलाविलैः ३४
सुकृतस्यप्रयोगेणपूर्वजन्मार्जितेनहि
पुरायस्यापिमहाभागेपुरायवंतंसुरक्षितम् ३५
वैफल्यंयांतितेषांवैउपायाःपापिनांशुभे
यंत्रतंत्राणिमंत्राश्चशस्त्राग्निविषबंधनाः ३६
रक्षयंतिमहात्मानंदेवपुरायैःसुरक्षितम्
कर्तारोभस्मतांयांतिसवैतिष्ठतिपुरायभाक् ३७
श्रायुपुत्रस्यवीरस्यरक्षकादेवताःशुभे
पुरायस्यसंचयंसर्वेतपसांनिधिमेवतु ३८
तस्माच्चरक्षितोवीरोनहुषोबलिनांवरः
सत्येनतपसातेनपुरायैश्चसंयमैर्दमैः ३९
माकृथादारुणंदुःखंमुंचशोकमकारणम्
सहिजीवतिधर्मात्मामात्रापित्राविनावने ४०
तपोवनेवसत्येकस्तपस्विपरिपालितः
वेदवेदांगतत्त्वज्ञोधनुर्वेदस्यपारगः ४१
यथाशशीविराजेतस्वकलाभिःस्वतेजसा

तथाविराजतेसोऽपिस्वकलाभिःसुमध्यमे ४२
विद्याभिस्तुमहापुगयैस्तपोभिर्यशसातथा
राजतेपरवीरघ्नोरिपुहासुरवल्लभः ४३
हुंडंनिहत्यदैत्येंद्रंत्वामेवंहिप्रलप्स्यते
त्वयासार्द्धंस्त्रियाचैवपृथिव्यामेकभूपतिः ४४
भविष्यतिमहायोगीयथास्वर्गेतुवासवः
त्वंतस्मात्प्राप्स्यसेभद्रेसुपुत्रंवासवोपमम् ४५
ययातिंनामधर्मज्ञंप्रजापालनतत्परम्
तथाकन्याशतंचापिरूपौदार्यगुणान्वितम् ४६
यासांपुगयैर्महाराजइंद्रलोकंप्रयास्यति
इंद्रत्वंभोच्यतेदेविनहुषःपुगयविक्रमः ४७
ययातिर्नामधर्मात्माग्रात्मजस्तेभविष्यति
प्रजापालोमहाराजःसर्वजीवदयापरः ४८
तस्यपुत्रास्तुचत्वारोभविष्यंतिमहौजसः
बलवीर्यसमोपेताधनुर्वेदस्यपारगाः ४९
प्रथमश्चतुरुर्नामपुरुर्नामद्वितीयकः
उरुर्नामतृतीयश्चचतुर्थोवीर्यवान्यदुः ५०
एवंपुत्रामहावीर्यास्तेजस्विनोमहाबलाः
भविष्यंतिमहात्मानःसर्वतेजःसमन्विताः ५१
यदोश्चैवसुतावीराःसिंहतुल्यपराक्रमाः
तेषांनामानिभद्रंतेगदतःशृणुसांप्रतम् ५२
भोजश्चभीमकश्चापिग्रंधकःकुञ्जरस्तथा
वृष्णिर्नामसुधर्मात्मासत्याधारोभविष्यति ५३
षष्ठस्तुश्रुतसेनश्चश्रुताधारस्तुसप्तमः
कालदंष्ट्रोमहावीर्यःसमरेकालजिद्बली ५४
यदोःपुत्रामहावीर्यायादवाख्यावरानने
तेषांतुपुत्राःपौत्रास्तेभविष्यंतिसहस्रशः ५५
एवंनहुषवंशोवैतवदेविभविष्यति
दुःखमेवंपरित्यज्यसुखेनानुप्रवर्तय ५६
समेष्यतिमहाप्राज्ञस्तवभर्ताशुभानने

निहत्यदानवंहुंडंत्वामेवंपरिणेष्यति ५७
दुःखजातानिसोष्णानिनेत्राभ्यांहिपतंतिच
अश्रूणिचेंदुमत्याश्चसंमार्जयतिमानदः ५८
आयोश्चदुःखमुद्धृत्यस्वकुलंतारयिष्यति
सुखिनंपितरंकृत्वाप्रजापालोभविष्यति ५९
एतत्तेसर्वमाख्यातंदेवानांकथनंशुभे
दुःखंशोकंपरित्यज्यसुखेनपरिवर्त्तय ६०
अशोकसुंदर्युवाच-
कदाह्येष्यतिमेभर्त्ताविहितोदैवतैर्यदि
सत्यंवदस्वधर्मज्ञममसौख्यंविवर्द्धय ६१
विद्धरउवाच-
अचिराद्द्रक्ष्यसिभर्तारंत्वमेवंशृणुसुंदरि
एवमुक्त्वाजगामाथगंधर्वोविबुधालयम् ६२
अशोकसुंदरीसाचतपस्तेपेहितत्रवै
कामंक्रोधंपरित्यज्यलोभंचापिशिवात्मजा ६३
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे नाहुषाख्यानेनवाधिकशततमोऽध्यायः १०९

## दशाधिकशततमोऽध्यायः

कुंजलउवाच-
आमंत्र्यसमुनीन्सर्वान्वशिष्ठंतपतांवरम्
समुत्सुकोगंतुकामोनहुषोदानवंप्रति १
ततस्तेमुनयःसर्वेवशिष्ठाद्यास्तपोधनाः
आशीर्भिरभिनंद्यैनमायुपुत्रंमहाबलम् २
आकाशेदेवताःसर्वाजघ्नुर्वैदुंदुभीन्मुदा
पुष्पवृष्टिंप्रचक्रुस्तेनहुषस्यचमूर्धनि ३
अथदेवःसहस्राक्षःसुरैःसार्द्धंसमागतः
ददौशस्त्राणिचास्त्राणिसूर्यतेजोपमानिच ४
देवेभ्योनृपशार्दूलोजगृहेद्विजसत्तम
तानिदिव्यानिचास्त्राणिदिव्यरूपोपमोऽभवत् ५

अथतादेवताःसर्वाःसहस्राक्षमथाब्रुवन्
स्यंदनोदीयतामस्मैनहुषायसुरेश्वर ६
देवानांमतमाज्ञायवज्रपाणिःस्वसारथिम्
आहूयमातलितंतुआदिदेशततोद्विज ७
एनंगच्छमहात्मानमुद्यतांस्यंदनेनवै
सध्वजेनमहाप्राज्ञमायुजंसमरोद्यतम् ८
सचोवाचसहस्राक्षंकरिष्येतवशासनम्
एवमुक्त्वाजगामाशुह्यायुपुत्रंरणोद्यतम् ९
राजानंप्रत्युवाचैवदेवराजस्यभाषितम्
विजयीभवधर्मज्ञरथेनानेनसंगरे १०
इत्युवाचसहस्राक्षस्त्वामेवनृपतीश्वर
जहित्वंदानवंसंख्येतंहुंडंपापचेतनम् ११
समाकरार्यसराजेंद्रःसानंदपुलकोद्गमः
प्रसादाद्देवदेवस्यवशिष्ठस्यमहात्मनः १२
दानवंसूदयिष्यामिसमरेपापचेतनम्
देवानांचविशेषेणममायापचारितम् १३
एवमुक्तेमहावाक्येनहुषेणमहात्मना
अथायातःस्वयंदेवःशंखचक्रगदाधरः १४
चक्राच्चक्रंसमुत्पाटचसूर्यबिंबोपमंमहत्
ज्वलतातेजसादीप्तंसुवृत्तारंशुभावहम् १५
नहुषायददौदेवोहर्षेणमहताकिल
तस्मैशूलंददौशंभुःसुतीक्ष्णंतेजसान्वितम् १६
तेनशूलवरेणासौशोभतेसमरोद्यतः
द्वितीयःशंकरश्चासौत्रिपुरघ्नोयथाप्रभुः १७
ब्रह्मास्त्रंदत्तवान्ब्रह्मावरुणःपाशमुत्तमम्
चंद्रतेजःप्रतीकाशंशंखंचनादमंगलम् १८
वज्रमिंद्रस्तथाशक्तिंवायुश्चापंसमार्गणम्
आग्नेयास्त्रंतथावह्निर्ददौतस्मैमहात्मने १९
शस्त्रारायस्त्राणिदिव्यानिबहूनिविविधानिच
ददुर्देवामहात्मानस्तस्मैराज्ञेमहौजसे २०

कुंजलउवाच-
अथआयुसुतोवीरोदैवतैःपरिमानितः
आशीर्भिर्नंदितश्चापिमुनिभिस्तत्त्ववेदिभिः २१
आरुरोहरथंदिव्यंभास्वरंरत्नमालिनम्
घंटारवैःप्रणदंतंक्षुद्रघंटासमाकुलम् २२
रथेनतेनदिव्येनशुशुभेनृपनदंनः
दिविमार्गेयथासूर्यस्तेजसास्वेनवैकिल २३
प्रतपंस्तेजसातद्वद्दैत्यानांमस्तकेषुसः
जगामशीघ्रंवेगेनयथावायुःसदागतिः २४
यत्रासौदानवःपापस्तिष्ठतेस्वबलैर्युतः
तेनमातलिनासार्द्धंवाहकेनमहात्मना २५
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे नहुषाख्यानेदशाधिकशततमोऽध्यायः ११०

## एकादशाधिकशततमोऽध्यायः

कुंजलउवाच-
निर्गच्छमानेसमरायवीरेनहुषेहितस्मिन्सुरराजतुल्ये
सकौतुकामंगलगीतयुक्ताःस्त्रियस्तुसर्वाःपरिजग्मुरत्र १
देवतानांवरानार्योरंभाद्यप्सरसस्तथा
किन्नर्यःकौतुकोत्सुक्योजगुःस्वरेणसत्तम २
गंधर्वाणांतथानार्योरूपालंकारसंयुताः
कौतुकायगतास्तत्रयत्रराजासतिष्ठति ३
पुरंमहोदयंनामहुंडस्यापिदुरात्मनः
नंदनोपवनैर्दिव्यैःसर्वत्रसमलंकृतम् ४
सप्तकक्षान्वितैर्गेहैःकलशैरुपशोभितः
सपताकैर्महादंडैःशोभमानंपुरोत्तमम् ५
कैलासशिखराकारैःसोन्नतैर्दिवमास्थितैः
सर्वश्रियान्वितैर्दिव्यैर्भ्राजमानंपुरोत्तमम् ६
वनैश्चोपवनैर्दिव्यैस्तडागैःसागरोपमैः
जलपूर्णैःसुशोभैस्तुपद्मैरक्तोत्पलान्वितैः ७

प्राकारैश्चमहारत्नैरट्टालकशतैरपि
परिखाभिःसुपूर्णाभिर्जलैःस्वच्छैःप्रशोभितम् ८
अन्यैश्चैवमहारत्नैर्गजाश्वैश्चविराजितम्
सुनारीभिःसमाकीर्णंपुरुषैश्चमहाप्रभैः ९
नानाप्रभावैर्दिव्यैश्चशोभमानंमहोदयम्
राजश्रेष्ठोमहावीरोनहुषोददृशेपुरम् १०
पुरप्रांतेवनंदिव्यंदिव्यवृत्तैरलंकृतम्
तद्विवेशमहावीरोनंदनंहियथाऽमरः ११
रथेनसहधर्मात्मातेनमातलिनासह
प्रविष्टःसतुराजेंद्रोवनमध्येसरित्तटे १२
तत्रतारूपसंयुक्तादिव्यानार्यःसमागताः
गंधर्वागीततत्त्वज्ञाजगुर्गीतैर्नृपोत्तमम् १३
सूताश्चमागधाःसर्वेतंस्तुवंतिनृपोत्तमम्
राजानमायुपुत्रंतंभ्राजमानंयथारविम् १४
शुश्रावगीतंमधुरंनहुषःकिन्नरेरितम् १५

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
नहुषाख्यानेएकादशाधिकशततमोऽध्यायः १११

## द्वादशाधिकशततमोऽध्यायः

कुंजलउवाच-
तदेवगानंचसुरांगनाभिर्गीतंसमाकर्ण्यचगीतकैर्ध्रुवैः
समाकुलाचापिबभूवतत्रसाशंभुपुत्रीपरिचिंतयाना १
आसनात्तूर्णमुत्थायमहोत्साहेनसंयुता
तूर्णंगतावरारोहातपोभावसमन्विता २
तंदृष्ट्वादेवसंकाशंदिव्यरूपसमप्रभम्
दिव्यगंधानुलिप्तांगंदिव्यमालाभिशोभितम् ३
दिव्यैराभरणैर्वस्त्रैःशोभितंनृपनंदनम्
दीप्तिमंतंयथासूर्यंदिव्यलक्षणसंयुतम् ४
किंवादेवोमहाप्राज्ञोगंधर्वोवाभविष्यति
किंवानागसुतःसोयंकिंवाविद्याधरोभवेत् ५

देवेषुनैवपश्यामिकुतोयन्नोषुजायते
अनयालीलयावीरःसहस्राक्षोपिजायते ६
शंभुरेषभवेत्किंवाकिंवाचायंमनोभवः
किंवापितुःसखामेस्यात्पौलस्त्योऽयधनाधिपः ७
एवंसमाचिंतयतीचयावत्तावत्त्वरंरूपगुणाधिपासा
समेत्यरंभासुमहासखीभिरुवाचतांशंभुसुतांप्रहस्य ८

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
नहुषाख्यानेद्वादशाधिकशततमोऽध्यायः ११२

## त्रयोदशाधिकशततमोऽध्यायः

रंभोवाच-
तपएतत्परित्यज्यकिंवालोकयसेशुभे
तपसःकारणंस्याद्वेपुरुषस्यापिचिंतनात् १
अशोकसुंदर्युवाच-
तपसिमेमनोलीनंनहुषस्यापिकाम्यया
नमांचालयितुंशक्तादेवासुरमहोरगाः २
एनंदृष्ट्वामहाभागेमेमनश्चलतेभृशम्
रंतुमिच्छाम्यहंगत्वाएवमुत्सुकतांगतम् ३
एवंविपर्ययश्चासीन्मनसोमेवरावने
तन्मेत्वंकारणंब्रूहियद्यस्तिज्ञानमुत्तमम् ४
आयुपुत्रस्यभार्याहंदेवैःसृष्टामहात्मभिः
कस्मान्मेधावतेचेतउत्सुकंरंतुमेवच ५
रंभोवाच-
सर्वेष्वेवमहाभागेदेहरूपेषुभामिनि
वसत्यात्मास्वयंब्रह्मज्ञानरूपःसनातनः ६
यद्यपिप्रक्रियाबद्धैरिंद्रियैरुपकारिभिः
मोहपाशमयैर्बद्धस्तथासिद्धस्तुसर्वदा ७
प्रकृतिंनैवजानातिज्ञानविज्ञानकींकलाम्
अयंशुद्धश्चधर्मज्ञआत्मावेत्तिचसुंदरि ८
गच्छंत्यपिमनस्तापमेनंदृष्ट्वामहामतिम्

पापमेवंपरित्यज्यसत्यमेवंप्रधावति ९
भर्तायमायुपुत्रस्तेएतत्सत्यंनसंशयः
अन्यंदृष्ट्वाविशंकेतपुरुषंपापलक्षणम् १०
एवंविधिःकृतोदेवैःसत्यपाशेनबंधितः
यदस्याआयुपुत्रोपिभर्तृत्वमुपयास्यति ११
एवमाकर्णितंभद्रेआत्मनातंचसुंदरि
तद्भावसत्यसंबंधंपरिगृह्यस्थितःस्वयम् १२
अन्यंभावंनजानातिआयुपुत्रंचविंदति
प्रकृतिर्नैवतेदेविपतिंजानातिचागतम् १३
एवंज्ञात्वाप्रधानात्मातवाद्यैवप्रधावति
आत्मासर्वंप्रजानातिआत्मादेवःसनातनः १४
अयमेषसवीरेंद्रोनहुषोनामवीर्यवान्
तस्माद्गच्छतिचेतस्तेसत्यंसंबंधमिच्छते १५
ज्ञात्वाचायोःसुतंभद्रेअन्यंचैवनगच्छति
एतत्तेसर्वमाख्यातंशाश्वतंत्वन्मनोगतम् १६
हुंडंहत्वामहाघोरंसमरेदानवाधमम्
त्वांनयिष्यतिस्वस्थानमायोश्चगृहमुत्तमम् १७
हृतोदैत्येनवीरेंद्रोनिजपुण्येनशेषितः
बाल्यात्प्रभृतिवीरेंद्रोवियुक्तःस्वजनेनवै १८
पितृमातृविहीनस्तुगतोवृद्धिंमहावने
यास्यत्येवपितुर्गेहंत्वयैवसहसांप्रतम् १९
एवमाभाषितंश्रुत्वारंभायाःशिवनंदिनी
हर्षेणमहताविष्टातामुवाचसमुद्रजाम् २०
अयमेवससत्यात्माममभर्तासुवीर्यवान्
मनोमेधावतेऽत्यर्थंशोकाकुलितविह्वलम् २१
नास्तिचित्तसमोदेवोजानातिसुविनिश्चितम्
सत्यमेतन्मयादृष्टंसुचित्रंचारुहासिनि २२
मनोभवसमानंतुपुरुषंदिव्यलक्षणम्
नधावतिमहाचेतएनंदृष्ट्वायथासखि २३
तथानधावतेभद्रेपुंसमन्यंनमन्यते

एनंगंतव्यमावाभ्यांसखीभिर्गृहमेवहि २४
एवमाभाष्यसारंभागमनायोपचक्रमे
गमनायोत्सुकांज्ञात्वानहुषस्यांतिकंप्रति २५
तामुवाचततोरंभाकस्माद्देविनगम्यते
सूतउवाच-
सख्याचरंभयासार्द्धंनहुषंवीरलक्षणम् २६
तस्यांतिकंसुसंप्राप्यप्रेषयामासतांसखीम्
एनंगच्छमहाभागेनहुषंदेवरूपिणम् २७
कथयस्वकथामेतांतवार्थेआगतायतः
रंभोवाच-
एवंसखिकरिष्यामिसुप्रियंतवसुव्रते २८
एवमुक्त्वागतारंभानहुषंराजनंदनम्
चापबाणधरंवीरंद्वितीयमिववासवम् २९
प्रत्युवाचगतारंभासख्यावचनमुत्तमम्
आयुपुत्रमहाभागरंभाहंसमुपागता ३०
शिवस्यकन्ययावीरतयाहंपरिप्रेषिता
तवार्थंदेवदेवेनदेव्यादेवेनवैपुरा ३१
भार्यारूपंवरंश्रेष्ठंसृष्टंलोकेषुदुर्लभम्
दुष्प्राप्यंतुनरश्रेष्ठैर्देवैसेंद्रैस्तपोधनैः ३२
गंधर्वैःपन्नगैःसिद्धैश्चारणैःपुण्यलक्षणैः
स्वयमेवसमायातंतवार्थेशृणुसांप्रतम् ३३
स्त्रीरत्नंतन्महाप्राज्ञसंपूर्णंपुण्यनिर्मितम्
अशोकसुंदरीनामतवार्थंतपसिस्थिता ३४
अत्यर्थंतुतपस्तप्तंभवंतमिच्छतेसदा
एवंज्ञात्वामहाभागभजमानांभजस्वहि ३५
त्वामृतेसावरारोहापुरुषंनैवयाचते
नहुषेणतयोक्तंतुश्रुत्वावधारितंवचः ३६
प्रत्युत्तरंददौचाथरंभेमेश्रूयतांवचः
तत्तुसर्वंविजानामियत्त्वयोक्तंममाग्रतः ३७
ममाग्रेकथितंपूर्वंवशिष्ठेनमहात्मना

सर्वमेवविजानामिअस्यास्तुतपउत्तमम् ३८
श्रूयतांकारणंभद्रेयथासौख्यंभविष्यति
अहत्वादानवंहुंडंनगच्छामिवरांगनाम् ३९
सर्वमेतत्सुवृत्तांतमहंजानेतथैवहि
ममार्थेतवसंभूतिस्तपश्चचरितंत्वया ४०
ममभार्यानसंदेहोभवतीविधिनाकृता
ममार्थेनिश्चयंकृत्वातपश्चाचरितंत्वया ४१
हृतातस्मात्सुपापेनभवतीनियमान्विता
सूतिगृहादहंतेनदानवेनाधमेनवै ४२
बालभावस्थितोदेविपितृमातृविनाकृतः
तस्मात्तंतुहनिष्यामिहुंडंवैदानवाधमम् ४३
पश्चात्त्वामुपनेष्येऽहवशिष्ठस्याश्रमंप्रति
एवंकथयभद्रंतेरंभेमत्प्रियकारिणीम् ४४
एवंविसर्जितातेनसत्वरंसागतापुनः
अशोकसुंदरींदेवींकथयामासतस्यच ४५
समासेनतथासर्वंरंभासाद्विजसत्तम
अशोकसुंदरीसातुअवधार्यसुभाषितम् ४६
नहुषस्यसुवीरस्यहर्षेणचसमन्विता
तस्थौतत्रतयासार्द्धंसुसख्यारंभयातदा ४७
भर्तुश्चकीदृशंवीर्यमितिपश्यामिवैसदा ४८

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे नहुषाख्यानेत्रयोदशाधिकशततमोऽध्यायः ११३

## चतुर्दशाधिकशततमोऽध्यायः

कुंजलउवाच-
अथतेदानवाःसर्वेहुंडस्यपरिचारकाः
नहुषस्यापिसंवादंरंभयातुयथाश्रुतम् १
आचचक्षुश्चदैत्येंद्रंहुंडंसर्वंसुभाषितम्
तमाकर्ण्यसचुक्रोधदूतंवाक्यमथाब्रवीत् २
गच्छवीरममादेशाज्ज्ञानीहिपुरुषंहितम्

संभाषतेतयासार्द्धंपुरुषःशिवकन्यया ३
स्वामिनिर्देशमाकर्ण्यजगामलघुदानवः
विविक्तेनहुषंवीरमिदंवचनमब्रवीत् ४
रथेनसाश्वसूतेनदिव्येनपरितिष्ठति
धनुषादिव्यबाणैस्तुसभायांहिभयंकरः ५
कस्यकेनतुकार्येणप्रेषितःकेनवैभवान्
अनयारंभयातेऽद्यअन्ययाशिवकन्यया ६
किमुक्तंतत्स्फुटंसर्वंकथयस्वममाग्रतः
हुंडस्यदेवमर्दस्यनबिभेतिभवान्कथम् ७
एतन्मेसर्वमाचक्ष्वयदिजीवितुमिच्छसि
सत्वरंगच्छमातिष्ठदुःसहोदानवाधिपः ८
नहुषउवाच-
योऽसावायुर्बलीराजासप्तद्वीपाधिपःप्रभुः
तस्यमांतनयंविद्धिसर्वदैत्यविनाशनम् ९
नहुषंनामविख्यातंदेवब्राह्मणपूजकम्
हुंडेनापहृतंबाल्येस्वामिनातवदानव १०
सेयंकन्याशिवस्यापिदैत्येनापहृतापुरा
घोरंतपश्चरत्येषाहुंडस्यापिवधायच ११
योहमादौहृतोबालस्त्वयायःसूतिकागृहात्
दास्याअपिकरेदत्तःसूदस्यापिदुरात्मना १२
वधार्थंश्रूयतांपापसोहमद्यसमागतः
अस्यापिहुंडदैत्यस्यदुष्टस्यपापकर्मणः १३
अन्यांश्चदानवान्घोरान्नयिष्येयमसादनम्
मामेवंविद्धिपापिष्ठएवंकथयदानवम् १४
एवमाकर्ण्यतत्सर्वंनहुषस्यमहात्मनः
गत्वाहुंडंसदुष्टात्माआचचक्षेऽस्यभाषितम् १५
निशम्यतन्मुखात्तूर्णंचुक्रोधदितिजेश्वरः
कस्मात्सूदेनपापेनतयादास्यानघातितः १६
सोयंवृद्धिंसमायातोमयाव्याधिरुपेक्षितः
अथैनंघातयिष्यामिअनयाशिवकन्यया १७

आयोःपुत्रंखलंयुद्धेबाणैरेभिःशिलाशितैः
एवंसचिंतयित्वातुसारथिंवाक्यमब्रवीत् १८
स्यंदनंयोजयस्वत्वंतुरगैःसाधुभिःशिवैः
सेनाध्यक्षंसमाहूयइत्युवाचसमातुरः १९
सज्जतांममसैन्यंत्वंशूरान्नागान्प्रकल्पय
सारोहैस्तुरगान्योधान्पताकाच्छत्रचामरैः २०
चतुरंगबलंमेऽद्ययोजयस्वहिसत्वरम्
एवमाकर्ण्यतत्तस्यहुंडस्यापिततोलघुः २१
सेनाध्यक्षोमहाप्राज्ञःसर्वंचक्रेयथाविधि
चतुरंगेनतेनासौबलेनमहतावृतः २२
जगामनहुषंवीरंचापबाणधरंरणे
इंद्रस्यस्यंदनेयुक्तंसर्वशस्त्रभृतांवरम् २३
उद्यंतंसमरेवीरंदुरापंदेवदानवैः
पश्यंतिगगनेदेवाविमानस्थामहौजसः २४
तेजोज्वालासमाकीर्णंद्वितीयमिवभास्करम्
सूतउवाच-
अथतेदानवाःसर्वेववृषुस्तंशरोत्तमैः २५
खड्गैःपाशैर्महाशूलैःशक्तिभिस्तुपरश्वधैः
युयुधुःसंयुगेतेननहुषेणमहात्मना २६
संरब्धागर्जमानास्तेयथामेघागिरौतथा
तद्विक्रमंसमालोक्यआयुपुत्रःप्रतापवान् २७
इंद्रायुधसमंचापंविस्फार्यसगुणस्वरम्
वज्रस्फोटसमःशब्दश्चापस्यापिमहात्मनः २८
नहुषेणकृतोविप्रादानवानांभयप्रदः
महतातेनघोषेणदानवाःप्रचकंपिरे २९
कश्मलाविष्टहृदयाभग्नसत्वामहाहवे ३०
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
नहुषाख्यानेचतुर्दशाधिकशततमोऽध्यायः ११४

## पंचदशाधिकशततमोऽध्यायः

कुंजलउवाच-
ततस्त्वसौसंयतिराजमानःसमुद्यतश्चापधरोमहात्मा
यथैवकालःकुपितःसलोकान्संहर्तुमैच्छत्तुतथासुदानवान् १
महास्त्रजालैरवितेजतुल्यैःसुदीप्तिमद्भिर्निजघानदानवान्
वायुर्थथोन्मूलयतीहपादपांस्तथैवराजानिजघानदानवान् २
वायुर्यथामेघचयंचदिव्यंसंचालयेत्स्वेनबलेनतेजसा
तथासराजाऽसुरान्मदोत्कटाननाशयद्बाणवरैःसुतीक्ष्णैः ३
नशेकुर्दानवाःसर्वेबाणवर्षंमहात्मनः
मृताःकेचिद्द्रुताःकेचित्केचिन्नष्टामहाहवात् ४
सूतउवाच-
महातेजंमहाप्राज्ञंमहादानवनाशनम्
चुक्रोधहुंडोदुष्टात्मादृष्ट्वातंनृपनंदनम् ५
स्थितोगत्वेदमाभाष्यतिष्ठतिष्ठेतिचाहवे
त्वामद्यचनयिष्यामिऽायुपुत्रयमांतिकम् ६
नहुषउवाच-
स्थितोस्मिसमरेपश्यत्वामहंहंतुमागतः
ऽहंत्वांतुहनिष्यामिदानवंपापचेतनम् ७
इत्युक्त्वाधनुरादायबाणानग्निशिखोपमान्
छत्रेणध्रियमाणेनशुशुभेसोऽपिसंयुगे ८
इंद्रस्यसारथिंदिव्यंमातलिवाक्यमब्रवीत्
वाहयतुरथंमेऽद्यहुंडस्यसम्मुखंभवान् ९
इत्युक्तस्तेनवीरेणमातलिर्लघुविक्रमः
तुरगांश्चोदयामासमहावातजवोपमान् १०
उत्पेतुश्चततोवाहाहंसाइवयथांबरे
छत्रेणइंदुवर्णेनरथेनापिपताकिना ११
नभस्तलंतुसंप्राप्ययथासूर्योविराजते
ऽायुपुत्रस्तथासंख्येतेजसाविक्रमेणतु १२
ऽथहुंडोरथस्थोऽपिराजमानःस्वतेजसा
सर्वायुधैश्चसंयुक्तस्तद्वद्वीरव्रतेस्थितः १३

उभयोर्वीरयोर्युद्धंदेवविस्मयकारकम्
तदाआसीन्महाप्राज्ञदारुणंभीतिदायकम् १४
सुबाणैर्निशितैस्तीक्ष्णैःकंकपत्रैःशिलीमुखैः
हुंडेनताडितोराजासुबाह्वोरंतरेतदा १५
सुभालेपंचभिर्बाणैर्विद्धःक्रुद्धोऽभवत्तदा
सविद्धस्तुतदाबाणैरधिकंशुशुभेनृपः १६
सारुणःकरमालाभिरुदयंश्चदिवाकरः
रुधिरेणतुदिग्धांगोहेमबाणैस्तनुस्थितैः १७
सूर्यवच्छोभतेराजापूर्वकालस्यचांबरे
दृष्ट्वातुपौरुषंतस्यदानवंवाक्यमब्रवीत् १८
तिष्ठतिष्ठक्षणंदैत्यपश्यमेलाघवंपुनः
इत्युक्त्वातुरणेदैत्यंजघानदशभिःशरैः १९
मुखेभालेहतस्तेनमूर्च्छितोनिपपातह
पश्यामानैःसुरैर्दिव्यैरथोपरिमहाबलः २०
देवैश्चचारणैःसिद्धैःकृतःशब्दःसुहर्षजः
जयजयेतिराजेंद्रशंखान्दध्मुःपुनःपुनः २१
सकोलाहलशब्दस्तुतुमलोदेवतेरितः
कर्णरंध्रमाविवेशहुंडस्यमूर्छितस्यच २२
श्रुत्वासधनुरादायबाणमाशीविषोपमम्
स्थीयतांस्थीयतांयुद्धेनमृतोस्मित्वयाहतः २३
इत्युक्त्वापुनरुत्थायलाघवेनसमन्वितः
एकविंशतिभिर्बाणैर्नहुषंचाहनत्पुनः २४
एकेनमुष्टिमध्येतुचतुर्भिर्बाहुमध्यतः
चतुर्भिश्चमहाश्वांश्चछत्रमेकेनतेनवै २५
पंचभिर्मातलिविद्ध्वारथनीडंतुसप्तभिः
ध्वजदंडंत्रिभिस्तीक्ष्णैर्दानवःशिखिपत्रिभिः २६
आदानंतुनिदानंतुलक्षमोक्षंदुरात्मनः
लाघवंतस्यसंदृष्ट्वादेवताविस्मयंगताः २७
तस्यपौरुषमापश्यसराजादानवोत्तमम्
शूरोसिकृतविद्योसिधीरोसिरणपंडितः २८

इत्युक्त्वादानवंतंतुधनुर्विस्फार्यभूपतिः
मार्गणैर्दशभिस्तंतुविव्याधलघुविक्रमः २९
त्रिभिर्ध्वजंप्रचिच्छेदसपपातधरातले
तुरगान्पातयामासचतुर्भिस्तस्यसायकैः ३०
एकेनछत्रंतस्यापिचकर्तलघुविक्रमः
दशभिःसारथिस्तस्यप्रेषितोयममंदिरम् ३१
दंशनंदशभिश्छित्त्वाशरैश्चविदलीकृतः
सर्वांगेषुचत्रिंशद्भिर्विव्याधदनुजेश्वरम् ३२
हताश्वोविरथोजातोबाणपाणिर्धनुर्धरः
अभ्यधावत्सवेगेनवर्षयन्निशितैःशरैः ३३
खड्गचर्मधरोदैत्योराजानंतमधावत
धावमानस्यहुंडस्यखड्गंचिच्छेदभूपतिः ३४
क्षुरप्रैर्निशितैर्बाणैश्चर्मचिच्छेदभूपतिः
अथहुंडःसदुष्टात्मासमालोक्यसमंततः ३५
जग्राहमुद्गरंतूर्णंमुमोचलघुविक्रमः
वज्रवेगंसमायांतंददृशेनृपतिस्तदा ३६
मुद्गरंस्वनवंतंचापातयदंबरात्ततः
दशभिर्निशितैर्बाणैःक्षुरप्रैश्चस्वविक्रमात् ३७
मुद्गरंपतितंदृष्ट्वादशखण्डमयंभुवि
गदामुद्यम्यवेगेनराजानमभ्यधावत ३८
खड्गेनतीक्ष्णधारेणतस्यबाहुंविचिच्छिदे
सगदंपतितंभूमौसांगदंकटकान्वितम् ३९
महारावंततःकृत्वावज्रस्फोटसमंतदा
रुधिरेणापिदिग्धांगोधावमानोमहाहवे ४०
क्रोधेनमहताविष्टोग्रस्तुमिच्छतिभूपतिम्
दुर्निवार्यःसमायातःपार्श्वंतस्यचभूपतेः ४१
नहुषेणमहाशक्त्याताडितोहृदिदानवः
पतितःसहसाभूमौवज्राहतइवाचलः ४२
तस्मिन्दैत्येगतेभूमावितरेदानवागताः
विविशुःकतिदुर्गेषुकतिपातालमाश्रिताः ४३

देवाःप्रहर्षमाजग्मुर्गंधर्वाःसिद्धचारणाः
हतेतस्मिन्महापापेनहुषेणमहात्मना ४४
तस्मिन्हतेदैत्यवरेमहाहवेदेवाश्चसर्वेप्रमुदंप्रलेभिरे
तांदेवरूपांतपसाप्रवर्द्धितांसश्रायुपुत्रःप्रतिलभ्यहर्षितः ४५
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
नहुषाख्यानेपंचदशाधिकशततमोऽध्यायः ११५

षोडशाधिकशततमोऽध्यायः

कुंजलउवाच-
अशोकसुंदरीपुण्यारंभयासहहर्षिता
नहुषंप्राप्यविक्रांतंतमुवाचतपस्विनी १
अहंतेधर्मतःपत्नीदेवैर्दिष्टातपस्विनी
उद्वाहयस्वमांवीरयदिधर्ममिहेच्छसि २
सदैवचिंत्यमानाचत्वामहंतपसिस्थिता
भवान्धर्मप्रसादेनमयाप्राप्तोनृपोत्तम ३
नहुषउवाच-
मदर्थेनियताभद्रेयदित्वंतपसिस्थिता
गुरोर्वाक्यान्मुहूर्तेनतवभर्ताभवाम्यहम् ४
अनयारंभयासार्द्धमावांगच्छावभामिनि
समारोप्यरथेतांतुतारंभांतुमनोरमाम् ५
तेनैवरथवर्येणवशिष्ठस्याश्रमंप्रति
जगामलघुवेगेनताभ्यांसहमहायशाः ६
तमाश्रमगतंविप्रंसमालोक्यप्रणम्यच
तयासार्द्धंमहातेजाहर्षेणमहतान्वितः ७
यथायुद्धंरणेजातंनिहतोदानवाधमः
निवेदयामाससर्वंवशिष्ठायमहात्मने ८
वशिष्ठोऽपिसमाकर्ण्यनहुषस्यविचेष्टितम्
हर्षेणमहताविष्टआशीर्भिरभिनंद्यतम् ९
तिथौलग्नेशुभेप्राप्तेतयोस्तुमुनिपुंगवः
विवाहंकारयामासअग्निब्राह्मणसन्निधौ १०

आशीर्भिरभिनंद्यैवमिथुनंप्रेषितंपुनः
मातरंपितरंपश्यद्रुतंगत्वामहामते ११
त्वांचदृष्ट्वाहितेमातापितासौतवसुव्रत
हर्षेणवृद्धिमाप्नोतुपर्वणीवतुसागरः १२
एवंसंप्रेषितोवीरोमुनिनाब्रह्मसूनुना
तेनैवरथवर्येणजगामलघुविक्रमः १३
नमस्कृत्यद्विजेंद्रंतंगतोमातलिनातदा
स्वपुरंपितरंद्रष्टुंतथैवचस्वमातरम् १४
सूतउवाच-
अप्सरामेनिकानामप्रेषितादैवतैस्ततः
आयोर्भार्यासुदुःखेनपतिताशोकसागरे १५
तामुवाचमहाभागांदेवीमिंदुमतींप्रति
मुंचशोकंमहाभागेतनयंपश्यसस्नुषम् १६
निहत्यदानवंपापंतवपुत्रापहारकम्
समायांतंसभायांचवीरश्रियासमन्वितम् १७
सुवृत्तंसंगरेतस्यनहुषेणयथाकृतम्
तस्यैनिवेदयामासइंदुमत्यैचमेनिका १८
मेनिकायावचःश्रुत्वाहर्षेणमहतान्विता
सखिसत्यंब्रवीषित्वमित्युवाचसगद्गदम् १९
सामृतंसुप्रियंप्रोक्तंमनःप्रोत्साहकारकम्
जीवादिकंमयादेयंत्वयिसर्वस्वमेवहि २०
एवमाभाष्यतांदेवीराजानमिदमब्रवीत्
तवपुत्रोमहाबाहुःसमायातोहिसांप्रतम् २१
आख्यातिचमहाराजएषामेवैवराप्सराः
भर्तारमेवमाभाष्यविररामसुहर्षिता २२
समाकर्ण्यनृपेंद्रस्तुतामुवाचप्रियांप्रति
पुराप्रोक्तंमहाभागेमुनिनानारदेनहि २३
पुत्रंप्रतिनकर्तव्यंदुःखंराजंस्त्वयाकदा
तंनिहत्यसुवीर्येणदानवंचैष्यतेसुतः २४
संजातंसत्यमेवंवैमुनिनाभाषितंपुरा

अन्यथावचनंतस्यकथंदेविभविष्यति २५
दत्तात्रेयोमुनिश्रेष्ठःसाक्षाद्देवोभविष्यति
शुश्रूषितस्त्वयादेविमयाचतपसापुरा २६
पुत्ररत्नंतेनदत्तंवैष्णवांशप्रधारकम्
सदाहनिष्यतिपरंदानवंपापचेतनम् २७
सर्वदैत्यप्रहर्ताचप्रजापालोमहाबलः
दत्तात्रेयेणमेदत्तोवैष्णवांशःसुतोत्तमः २८
एवंसंभाष्यतांदेवींराजाचेंदुमतींतदा
महोत्सवंततश्चक्रेपुत्रस्यागमनंप्रति २९
हर्षेणमहताविष्टोविष्णुंसस्मारवैपुनः ३०
सर्वोपपन्नंसुरवर्गयुक्तमानंदरूपंपरमार्थमेकम्
क्लेशापहंसौख्यप्रदंनराणांसद्वैष्णवानामिहमोक्षदंपरम् ३१

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
नहुषाख्यानेषोडशाधिकशततमोऽध्यायः ११६

## सप्तदशाधिकशततमोऽध्यायः

कुंजलउवाच-
नहुषःप्रिययासार्द्धंतयाचैवसरंभया
एंद्रेणापिसदिव्येनस्यंदनेनवरेणच १
नागाह्वयंपुरंप्राप्तःसर्वशोभासमन्वितम्
दिव्यैर्मंगलकैर्युक्तंभवनैरुपशोभितम् २
हेमतोरणसंयुक्तंपताकाभिरलंकृतम्
नानावादित्रनादैश्चबंदिचारणशोभितम् ३
देवरूपोपमैःपुण्यैःपुरुषैःसमलंकृतम्
नारीभिर्दिव्यरूपाभिर्गजाश्वैःस्यंदनैस्तथा ४
नानामंगलशब्दैश्चवेदध्वनिसमाकुलम्
गीतवादित्रशब्दैश्चवीणावेणुस्वनैस्ततः ५
सर्वशोभासमाकीर्णंविवेशसपुरोत्तमम्
वेदमंगलघोषैश्चब्राह्मणैश्चैवपूजितः ६
ददृशेपितरंवीरोमातरंचसुपुण्यकाम्

हर्षेणमहताविष्टःपितुःपादौननामसः ७
अशोकसुंदरीसातुतयोःपादौपुनःपुनः
ननामभक्त्याभावेनउभयोःसावरानना ८
रंभाचसाननामाथप्रीतिंचैवाप्यदर्शयत्
नमस्कृत्वासमाभाष्यस्वगुरुंनृपनंदनः ९
अनामयंचपप्रच्छमातरंपितरंप्रति
एवमुक्तोमहाभागःसानंदपुलकोद्गमः १०
आयुरुवाच-
अद्यैवव्याधयोनष्टादुःखशोकावुभौगतौ
भवतोदर्शनात्पुत्रसुतुष्ट्याहृष्यतेजगत् ११
कृतकृत्योस्मिसंजातस्त्वयिजातेमहौजसि
स्ववंशोद्धरणंकृत्वाअहमेवसमुद्धृतः १२
इंदुमत्युवाच-
पर्वणिप्राप्यइंदोस्तुतेजोदृष्ट्वामहोदधिः
वृद्धिंयातिमहाभागतथाहंतवदर्शनात् १३
वर्द्धितास्मिसुहृष्टास्मिआनंदेनसमाकुला
दर्शनात्तेमहाप्राज्ञधन्याजातास्मिमानद १४
एवंसंभाष्यतंपुत्रमालिग्यतनयोत्तमम्
शिरश्चाघ्रायतस्यापिवत्संधेनुर्यथास्वकम् १५
अभिनंद्यसुतंप्राप्तंनहुषंदेवरूपिणम्
आशीर्भिश्चार्चयद्देवीपुण्याइंदुमतीतदा १६
सूतउवाच-
अथासौमातरंपुण्यांदेवीमिंदुमतींसुतः
कथयामासवृत्तांतंयथाहरणमात्मनः १७
स्वभार्यायास्तथोत्पत्तिंप्राप्तिंचैवमहायशाः
हुंडेनापियथायुद्धंहुंडस्यापिनिपातनम् १८
समासेनसमस्तंतदाख्यातंस्वयमेवहि
मातापित्रोर्यथावृत्तंतयोरानंददायकम् १९
मातापितरावाकर्ण्यपुत्रस्यविक्रमोद्यमम्
हर्षेणमहताविष्टौसंजातौपूर्णमानसौ २०

नहुषोधनुरादायइंद्रस्यस्यंदनेनवै
जिगायपृथिवींसर्वांसप्तद्वीपांसपत्तनाम् २१
पित्रेसमर्पयामासवसुपूर्णांवसुंधराम्
पितरंहर्षयन्नित्यंदानधर्मैःसुकर्मभिः २२
पितरंयाजयामासराजसूयादिभिस्तदा
महायज्ञैश्चदानैश्चव्रतैर्नियमसंयमैः २३
सुदानैर्यशसापुगयैर्यज्ञैःपुगयमहोदयैः
सुसंपूर्णौकृतौतौतुपितरौचायुसूनुना २४
अथदेवाःसमागत्यनागाह्वयंपुरोत्तमम्
अभ्यषिंचन्महात्मानंनहुषंवीरमर्दनम् २५
मुनिभिश्चसुसिद्धैश्चआयुनातेनभूभुजा
अभिषिंच्यस्वराज्येतंसमेतंशिवकन्यया २६
भार्यायुक्तःस्वकायेनआयुराजामहायशाः
दिवंजगामधर्मात्मादेवैःसिद्धैःसुपूजितः २७
एंद्रंपदंपरित्यज्यब्रह्मलोकंगतःपुनः
हरलोकंजगामाथमुनिभिर्देवपूजितः २८
स्वकर्मभिर्महाराजःपुत्रस्यापिसुतेजसा
हरेर्लोकंगतःपुगयैर्निवसत्येषभूपतिः २९
पुरुषैःपुगयकर्माख्यैरीदृशंपुगयमुत्तमम्
जनितव्यंमहाभागकिमन्यैःशोककारकैः ३०
यथाजातःसधर्मात्मानहुषःपितृतारकः
कुलस्यधर्त्तासर्वस्यनहुषोज्ञानपंडितः ३१
एतत्तेसर्वमाख्यातंचरित्रंतस्यभूपतेः
अन्यत्किंतेप्रवक्ष्यामिवदपुत्रकपिंजल ३२
एवंविधंपुगयमयंपवित्रंचरित्रमेतद्यशसासमेतम्
आयोःसुतस्यापिशृणोतिमर्त्योभोगान्सभुक्त्वैतिपदंमुरारेः ३३

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
नहुषाख्यानेसप्तदशाधिकशततमोऽध्यायः ११७

## अष्टादशाधिकशततमोऽध्यायः

कपिंजलउवाच-
गंगामुखेपुरातातरोदमानावरांगना
नेत्राभ्यामश्रुबिंदूनिपतंतिचमहाजले १
गंगामध्येनिमज्जंतिभवंतिकमलानिच
पुष्पाणिदिव्यरूपाणिसौगंधानिमहांतिच २
तस्यास्तातसुनेत्राभ्यांकिमर्थंप्रपतंतिच
गंगोदकेमहाभागनिर्मलाअश्रुबिंदवः ३
अस्थिचर्मावशेषस्तुजटाचीरधरःपुनः
तानिसौगंधयुक्तानिपद्मानिविचिनोतिसः ४
हेमवर्णानिदिव्यानिनीत्वाशिवंसमर्चयेत्
साकानारीसमाचक्ष्वसवाकोहिमहामते ५
अर्चयित्वाशिवंसोथकस्मात्पश्चात्प्रदेवति
एतन्मेसर्वमाचक्ष्वयद्यहंवल्लभस्तव ६
कुंजलउवाच-
शृणुवत्सप्रवक्ष्यामिवृत्तांतंदेवनिर्मितम्
चरित्रंसर्वपापघ्नंविष्णोश्चैवमहात्मनः ७
योसौहुंडोमहावीर्योनहुषेणहतोरणे
तस्यपुत्रस्तुविख्यातोविहुंडस्तपआस्थितः ८
निहतंपितरंश्रुत्वासामात्यंसपरिच्छदम्
आयुपुत्रेणवीरेणनहुषेणबलीयसा ९
तपस्तपतिसक्रोधाद्देवान्हंतुंसमुद्यतः
पौरुषंतस्यदुष्टस्यतपसावर्द्धितस्यच १०
जानंतिदेवताःसर्वादुःसहंसमरांगणे
हुंडात्मजोविहुंडस्तुत्रैलोक्यंहंतुमुद्यतः ११
पितुर्वैरंकरिष्यामिहनिष्येमानवान्सुरान्
एवंसमुद्यतःपापीदेवब्राह्मणकंटकः १२
उपद्रवंसमारेभेप्रजाःपीडयतेचसः
तस्यैवतेजसादग्धादेवाश्चेंद्रपुरोगमाः १३
शरणंदेवदेवस्यजग्मुर्विष्णोर्महात्मनः

देवदेवंजगन्नाथंशंखचक्रगदाधरम् १४
ऊचुश्चपाहिनोनित्यंविहुंडस्यमहाभयात्
श्रीविष्णुरुवाच-
वर्द्धंतुदेवताःसर्वाःसुसुखेनमहेश्वराः १५
विहुंडंनाशयिष्यामिपापिष्ठंदेवकंटकम्
एवमाभाष्यतान्देवान्मायांकृत्वाजनार्दनः १६
स्वयमेवस्थितस्तत्रनंदनेसुमहायशाः
मायामयंचकाराथस्त्रीरूपंचगुणान्वितम् १७
विष्णुमायामहाभागासर्वविश्वप्रमोहिनी
चकाररूपमतुलंविष्णोर्मायाप्रमोहिनी १८
विहुंडस्यवधार्थायरूपलावरायशालिनी
कुंजलउवाच-
सदेवानांवधार्थायदिव्यमार्गंजगामह १९
नंदनांतेततोमायामपश्यद्दितिजेश्वरः
तयाविमोहितोदैत्यःकामबाणकृतांतरः २०
आत्मनाशंनजानातिकालरूपांवरस्त्रियम्
तांदृष्ट्वानवहेमाभांरूपद्रविणशालिनीम् २१
लुब्धोविहुंडःपापात्मातामुवाचवरांगनाम्
कासिकस्यवरारोहेममचित्तप्रमाथिनि २२
संगमंदेहिमेभद्रेरक्षरक्षवरानने
संगमात्तवदेवेशियद्यदिच्छसिसांप्रतम् २३
तत्तद्दद्मिमहाभागेदुर्लभंदेवदानवैः
मायोवाच-
मामेवभोक्तुमिच्छाचेद्दायंमेदेहिदानव २४
सप्तकोटिमितैश्चैवपुष्पैःपूजयशंकरम्
कामोदसंभवैर्दिव्यैःसौगंधैर्देवदुर्लभैः २५
तेषांपुष्पकृतांमालांममकंठेतुदानव
आरोपयमहाभागएतद्दायंप्रदेहिमे २६
तदाहंसुप्रियाभार्याभविष्यामिनसंशयः
विहुंडउवाच-

एवंदेविकरिष्यामिवरंदद्मिप्रयाचितम् २७
वनानियानिपुरायानिदिव्यानिदितिजेश्वरः
बभ्राममन्मथाविष्टोनचपश्यतितंद्रुमम् २८
कामोदकाख्यंपप्रच्छयत्रतत्रगतःस्वयम्
कामोदाख्यद्रुमोनास्तिवदंत्येवंमहाजनाः २९
पृच्छमानःसदुष्टात्माकामबाणैःप्रपीडितः
पप्रच्छभार्गवंगत्वाभक्त्यानमितकंधरः ३०
कामोदकंद्रुमंब्रूहिकांतंपुष्पसमन्वितम्
शुक्रउवाच-
कामोदःपादपोनास्तियोषिदेवास्तिदानव ३१
यदासाहसतेचैवप्रसंगेनप्रहर्षिता
तद्धासाज्जज्ञिरेदैत्यसुगंधीनिवराण्यपि ३२
सुमान्येतानिदिव्यानिकामोदायानसंशयः
हृद्यानिपीतपुष्पाणिसौरभेणयुतानिच ३३
तेनाप्येकेनपुष्पेणयःसमर्चतिशंकरम्
तस्येप्सितंमहाकामंसंपूरयतिशंकरः ३४
अस्याश्चरोदनाद्दैत्यप्रभवंतिनसंशयः
तादृशान्येवपुष्पाणिलोहितानिमहांतिच ३५
सौरभेणविनादैत्यतेषांस्पर्शंनकारयेत्
एवमाकर्णितंतेनवाक्यंशुक्रस्यभाषितम् ३६
उवाचसातुकुत्रास्तिकामोदाभृगुनंदन
शुक्रउवाच-
गंगाद्वारेमहापुरायेमहापातकनाशने ३७
कामोदाख्यंपुरंतत्रनिर्मितंविश्वकर्मणा
कामोदपत्तनेनारीदिव्यभोगैरलंकृता ३८
तथाचाभरणैर्भातिसर्वदेवैःसुपूजिता
त्वयातत्रैवगंतव्यंपूजितव्यावराप्सराः ३९
उपायेनापिपुरायेनतांप्रहासयदानव
एवमुक्त्वातुयोगींद्रःसशुक्रोदानवंप्रति ४०
विररामममहातेजाःस्वकार्यायोद्यतोऽभवत् ४१

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
कामोदाख्यानेऽष्टादशाधिकशततमोऽध्यायः ११८

एकोनविंशत्यधिकशततमोऽध्यायः

कपिंजलउवाच-
यस्याःप्रहसनात्तातसुहृद्यानिभवंतिवै
पुष्पाणिदिव्यगंधीनिदुर्लभानिसुरासुरैः १
कस्मात्तुदेवताःसर्वाःप्रवांछंतिमहामते
शंकरःसुखमायातिहास्यपुष्पैःसुपूजितः २
कोगुणस्तस्यपुष्पस्यतन्मेकथयविस्तरात्
कामोदासाभवेत्कातुकस्यपुत्रीवरांगना ३
हास्यात्तस्यामहाभागसुपुष्पाणिभवंतिच
कोगुणस्तत्कथांब्रूहिसकलांविस्तरेणच ४
कुंजलउवाच-
पुरादेवैर्महादैत्यैःकृत्वासौहार्दमुत्तमम्
ममंथुःसागरंक्षीरममृतार्थंसमुद्यताः ५
मथनाद्देवदैत्यानांकन्यारत्नचतुष्टयम्
वरुणेनदर्शितंपूर्वंसोमेनैवतथापुनः ६
पश्चात्संदर्शितंपुरायममृतंकलशेस्थितम्
कन्याचतुष्टयंपूर्वंदेवानांहितमिच्छति ७
सुलक्ष्मीर्नामसाचैकाद्वितीयावारुणीतथा
ज्येष्ठानामतथाख्याताकामोदान्याप्रचक्षते ८
तासांमध्येवराश्रेष्ठापूर्वंजातामहामते
तस्माज्ज्येष्ठेतिविख्यातालोकेपूज्यासदैवहि ९
वारुणीपानरूपाचपयःफेनसमुद्भवा
अमृतस्यतरंगाच्चकामोदाख्याबभूवह १०
सोमोराजातथालक्ष्मीर्जज्ञातेअमृतादपि
त्रैलोक्यभूषणःसोमःसंजातःशंकरप्रियः ११
मृत्युरोगहराजातासुराणांवारुणीतथा
ज्येष्ठासुपुरायदाजातालोकानांहितमिच्छताम् १२

अमृतादुत्थितादेवीकामोदानामपुरायदा
विष्णोःप्रीत्यैभविष्येतुवृक्षरूपंप्रयास्यति १३
विष्णुप्रीतिकरीसातुभविष्यतिसदैवहि
तुलसीनामसापुरायाभविष्यतिनसंशयः १४
तयासहजगन्नाथोरमिष्यतिनसंशयः
तुलस्याःपत्रमेकंयोनीत्वाकृष्णायदास्यति १५
मेनेतस्योपकाराणांकिमस्मैचददाम्यहम्
इत्येवंचिंतयेन्नित्यंतस्यप्रीतिकरोभवेत् १६
एवंकामोदनामासौपूर्वंजातासमुद्रजा
यदासाहसतेदेवीहर्षगद्गदभाषिणी १७
सौहृद्यानिसुगंधीनिमुखात्तस्याःपतंतिवै
अम्लानानिसुपुष्पाणियोगृह्णातिसमुद्यतः १८
पूजयेच्छंकरंदेवंब्रह्माणंमाधवंतथा
तस्यदेवाःप्रतुष्यंतियदिच्छतिददंतितत् १९
रोदित्येषायदासाचकेनदुःखेनदुःखिता
नेत्राश्रुभ्योहितस्यास्तुप्रभवंतिपतंतिच २०
तानिचैवमहाभागहृद्यानिसुमहांतिच
सौरभेणविनातैस्तुयःपूजयतिशंकरम् २१
तस्यदुःखंचसंतापोजायतेनात्रसंशयः
पुष्पैस्तुतादृशैर्देवान्सकृदर्चतिपापधीः २२
तस्यदुःखंप्रकुर्वंतिदेवास्तत्रनसंशयः
एतत्तेसर्वमाख्यातंकामोदाख्यानमुत्तमम् २३
अथकृष्णोविचिंत्यैवदृष्ट्वाविक्रमसाहसम्
विहुंडस्यापिपापस्यउद्यमंसाहसंतदा २४
नारदंप्रेषयामासमोहयैनंदुरासदम्
नारदस्त्वथसंश्रुत्यवाक्यंविष्णोर्महात्मनः २५
गच्छमानंदुरात्मानंकामोदांप्रतिदानवम्
गत्वातमाहदैत्येंद्रंनारदःप्रहसन्निव २६
क्वयासित्वंचदैत्येंद्रसत्वरंचसमातुरः
सांप्रतंकेनकार्येणकस्यार्थंकेननोदितः २७

ब्रह्मात्मजंनमस्कृत्यप्रत्युवाचकृतांजलि
कामोदपुष्पार्थमहंप्रस्थितोद्विजसत्तम २८
तमुवाचसधर्मात्मापुष्पैःकिंतेप्रयोजनम्
विप्रवर्यंपुनःप्राहकार्यकारणमात्मनः २९
नंदनस्यवनोद्देशेकाचिन्नारीवरानना
तस्यादर्शनमात्रेणगतोऽहकामवश्यताम् ३०
तयाप्रोक्तोऽस्मिविप्रेंद्रपुष्पैःकामोदसंभवैः
पूजयस्वमहादेवंपुष्पैस्तुसप्तकोटिभिः ३१
ततस्तेसुप्रियाभार्याभविष्यामिनसंशयः
तदर्थेप्रस्थितोऽस्म्यद्यकामोदाख्यंपुरंप्रति ३२
तामहंकामयिष्यामिसिंधुजांशृणुसांप्रतम्
मनोल्लासैर्महाहासैर्हासयिष्याम्यहंपुनः ३३
प्रीतासतीमहाभागाहसिष्यतिपुनःपुनः
तद्धास्यंगद्गदंविप्रममकार्यप्रवर्द्धनम् ३४
तस्माद्धास्यात्पतिष्यंतिदिव्यानिकुसुमानिच
तैस्तुदेवमुमाकांतंपूजयिष्यामिसांप्रतम् ३५
तेनपूजाप्रदानेनतुष्टोदास्यतिमेफलम्
ईश्वरःसर्वभूतेशःशंकरोलोकभावनः ३६
नारदउवाच-
तत्रदैत्यनगंतव्यंकामोदाख्येपुरोत्तमे
विष्णुरस्तिसुमेधावीसर्वदैत्यक्षयावहः ३७
येनोपायेनपुष्पाणिकामोदाख्यानिदानव
तवहस्तेप्रयास्यंतितमुपायंवदाम्यहम् ३८
गंगातोयेषुदिव्यानिपतिष्यंतिनसंशयः
वाहितानिजलैर्दिव्यैरागमिष्यंतिसांप्रतम् ३९
तानित्वंतुप्रतिगृहाणसुहृद्यानिमहांतिच
गृहीत्वातानिपुष्पाणिसाधयस्वमनीप्सितम् ४०
नारदोदानवश्रेष्ठंमोहयित्वाततःपुनः
ततश्चसतुधर्मात्माचिंतयामासवैपुनः ४१
कथमश्रूणिसामुंचेत्केनोपायेनदुःखिता

चिंतयानस्यतस्यैवंद्धर्णवैनारदस्यच ४२
ततोबुद्धिःसमुत्पन्नाकामोदाख्यंपुरंगतः ४३
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
कामोदाख्यानेएकोनविंशत्यधिकशततमोऽध्यायः ११९

## विंशाधिकशततमोऽध्यायः

कुंजलउवाच-
कामोदाख्यंपुरंदिव्यंसर्वदेवसमाकुलम्
सर्वकामसमृद्ध्यर्थमपश्यन्नारदस्ततः १
कामोदायागृहंप्राप्यप्रविवेशद्विजोत्तमः
कामोदांतुततोदृष्ट्वासर्वकामसमाकुलाम् २
तयासंपूजितोविप्रःसुवाक्यैःस्वागतादिभिः
दिव्यासनेसमारूढस्तांपप्रच्छद्विजोत्तमः ३
सुखेनस्थीयतेभद्रेविष्णुतेजःसमुद्भवे
अनामयंचपप्रच्छआशीर्भिरभिनंद्यताम् ४
कामोदोवाच-
प्रसादाद्भवतांविष्णोःसुखेनवर्तयाम्यहम्
कथयस्वमहाप्राज्ञत्वंप्रश्नोत्तरकारणम् ५
महामोहःसमुत्पन्नोममांगेमुनिपुंगव
व्यापकःसर्वलोकानांममांगेमतिनाशकः ६
तस्मान्निद्रासमुत्पन्नायथामर्त्येषुवर्तते
सुप्तयातुमयादृष्टःस्वप्नोवैदारुणोमुने ७
केनाप्युक्तंसमेत्यैवपुरतोद्विजसत्तम
अव्यक्तोऽसौहृषीकेशःसंसारंसगमिष्यति ८
तदाप्रभृतिदुःखेनव्यापिताहंमहामते
तन्मेत्वंकारणंब्रूहिभवाञ्ज्ञानवतांवरः ९
नारदउवाच-
वातिकःपैत्तिकश्चैवकफजःसान्निपातिकः
स्वप्नःप्रवर्ततेभद्रेमानवेषुनसंशयः १०
नजायतेचदेवेषुस्वप्नोनिद्राचसुंदरि

आदित्योदयवेलायांदृश्यतेस्वप्नउत्तमः ११
सत्स्वप्नोमानवानांहिपुरायस्यफलदायकः
अन्यदेवंप्रवक्ष्यामिस्वप्नस्यकारणंशुभे १२
महावातांदोलनैश्चचलंत्यापोवरानने
त्रुटंत्यंबुकणाःसूक्ष्मास्तस्मादुदकसंचयात् १३
बहिरेवपतंत्येतेनिर्मलांबुकणाःशुभे
पुनर्लयंप्रयांत्येतेदृश्यादृश्याभवंतिवै १४
तद्वत्स्वप्नस्यवैभावःकथ्यतेशृणुभामिनि
आत्माशुद्धोविरक्तस्तुरागद्वेषविवर्जितः १५
पंचभूतात्मकानांचमुषित्वैवसुनिश्चलः
षड्विंशतिसुतत्वानांमध्येचैषविराजते १६
शुद्धात्माकेवलोनित्यःप्रकृतेःसंगतिंगतः
तद्भावैर्वायुरूपैश्चचलतेस्थानतोयदा १७
आत्मनस्तेजसश्चैवप्रतितेजःप्रजायते
अंतरात्माशुभंनामतस्यएवप्रकथ्यते १८
पयसश्चयथाभिन्नाभवंत्यंबुकणाःशुभे
आत्मनस्तुतथातेजअंतरात्माप्रकथ्यते १९
सहिपृथ्वीसवैवायुःसचाप्याकाशएवहि
सवैतोयंसदीप्येतएतेपंचपुराकृताः २०
आत्मनस्तेजसोभूतामलरूपामहात्मनः
तस्यापिसंगतिंप्राप्ताएकत्वंहिप्रयांतिते २१
स्वात्मभावप्रदोषेणनाशयंतिवरानने
तत्पिंडमन्यमिच्छंतिवारंवारंवरानने २२
तेषांक्रीडाविहारोयंसृष्टिसंबंधकारणम्
उदकस्यतरंगस्तुजायतेचविलीयते २३
पुनर्भूतिःपुनर्हानिस्तादृशस्यपुनःपुनः
अपांरूपस्यदृष्टांतंतद्वदेषांनसंशयः २४
आत्माननश्यतेदेवितेजोवायुर्ननश्यति
ननश्यतोधराकाशौननश्यंत्यापएवच २५
पंचैवआत्मनासार्द्धंप्रभवंतिप्रयांतिच

आत्मादयोह्यमीभद्रेनित्यरूपानसंशयः २६
पिंडएवप्रणश्येतेतेषांसंजातएवच
विषयाणांसुदोषैःसरागद्वेषादिभिर्हतः २७
प्राणाःप्रयांतिवैपिंडात्पंचपंचात्मकाद्विज
पिंडांतेवसतेआत्माप्रतिरूपस्तुतस्यच २८
अंतरात्मायथाचाग्नेःस्फुलिंगस्तुप्रकाशते
तथाप्रकाशमायातिदृश्यादृश्यःप्रजायते २९
शुद्धात्माचपरंब्रह्मसदाजागर्तिनित्यशः
अंतरात्माप्रबद्धस्तुप्रकृतेश्चमहागुणैः ३०
अन्नाहारेणसंपुष्टैरंतरात्मासुखंव्रजेत्
सुसुखाज्ञायतेमोहस्तस्मान्मनःप्रमुह्यति ३१
पश्चात्संजायतेनिद्रातामसीलयवर्द्धिनी
नाडीमार्गेणयःसूर्योमेरुमुल्लंध्यगच्छति ३२
तदारात्रिःप्रजायेतयावन्नोदयतेरविः
विषयांधकारैर्मुक्तस्तुअंतरात्माप्रकाशते ३३
भावैस्तत्त्वात्मकानांतुपंचतत्त्वैःप्रपोषितैः
पूर्वजन्मस्थितैःपिंडैरंतरात्माप्रगृह्यते ३४
सयास्यतिचवैस्थानमुच्चावचंमहामते
संसारअंतरात्मावैदोषैर्बद्धःप्रणीयते ३५
कायंरक्षतिजीवात्मापश्चात्तिष्ठतिमध्यगः
उदानःस्फुरतेतीव्रस्तस्माच्छब्दःप्रजायते ३६
शुष्काभस्त्रायथाश्वासंकुरुतेवायुपूरिता
तद्वच्छब्दवशाच्छ्वासमुदानःकुरुतेबलात् ३७
आत्मनस्तुप्रभावेणउदानोबलवान्भवेत्
एवंकायःप्रमुग्धस्तुमृतकल्पःप्रजायते ३८
ततोनिद्रामहामायातस्यांगेषुप्रयातिसा
हृदिकंठेतथाचास्येनासिकाग्रेप्रतिष्ठति ३९
बाहूसंकुच्यसंतिष्ठेद्धृद्गतोनाभिमंडले
आत्मनस्तुप्रभावाच्चउदानोनाममारुतः ४०
प्रजायतेमहातीव्राबलरोधंकरोतिसः

यथारज्ज्वाप्रबद्धस्तुदारुकीलधरःस्थितः ४१
तथाचात्मासुसंलग्नःप्राणवायुर्नसंशयः
अंतरात्मप्रसक्तस्तुप्राणवायुःशुभानने ४२
बुद्धिवद्रोहितोभद्रेअंतरात्माप्रधावति
पूर्वजन्मार्जितान्वासान्स्मृत्वातत्रप्रधावति ४३
तत्रसंस्थोमहाप्राज्ञःस्वेच्छयारमतेपुनः
एवंनानाविधान्स्वप्नानंतरात्माप्रपश्यति ४४
उत्तमांश्चविरुद्धांश्चकर्मयुक्तान्प्रपश्यति
गिरींस्तथासुदुर्गांश्चउच्चावचान्प्रपश्यति ४५
तदेववातिकंविद्धिकफवत्तद्वदाम्यहम्
जलंनदींतडागंचपयःस्थानानिपश्यति ४६
अग्निंचपश्यतेदेविबहुकांचनमुत्तमम्
तदेवपैत्तिकंविद्धिभाव्यंचैववदाम्यहम् ४७
प्रभातेदृश्यतेस्वप्नोभव्योवाभव्यएवच
कर्मयुक्तोवरारोहेलाभालाभप्रकाशकः ४८
स्वप्नस्यापिअवस्थामेकथितावरवर्णिनि
तद्भाव्यंचवरारोहेविष्णोश्चैवभविष्यति ४९
तन्निमित्तंत्वयादृष्टोदुःस्वप्नःसतुप्रेक्षितः ५०

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे कामोदाख्यानेविंशाधिकशततमोऽध्यायः १२०

## एकविंशत्यधिकशततमोऽध्यायः

कामोदोवाच-
नविदुर्देवताःसर्वायस्यांतंरूपमेवच
यस्मिल्लींनस्तुसर्वोयंसचैकात्माप्रकथ्यते १
यस्यामायाप्रपंचस्तुसंसारःशृणुनारद
कस्मात्प्रयातिसंसारंममस्वामीजगत्पतिः २
पापैश्चापिसुपुण्यैश्चनरोबद्धस्तुकर्मभिः
संसारंसरतेविप्रहरिःकस्माद्व्रजेद्वद ३
नारदउवाच-

शृणुदेविप्रवद्यामियत्कृतंतेनचक्रिणा
भृगोरग्रेप्रतिज्ञातंयज्ञरक्षांकरोम्यहम् ४
इंद्रस्यवचनात्सद्योगतोऽसौदानवैःसह
योद्धुंविहायगोविंदोभृगोश्चैवमखोत्तमम् ५
मखंत्यक्त्वागतेदेवेपश्चात्तैर्दानवोत्तमैः
आगत्यध्वंसितःसर्वःसयज्ञःपापचेतनैः ६
हरिंक्रुद्धःसयोगींद्रःशशापभृगुरेवतम्
दशजन्मानिभुंद्ववत्वंमच्छापकलुषीकृतः ७
कर्मणःस्वस्यसंभोगंसंभोद्ययतिजनार्दनः
तन्निमित्तंत्वयादेविदुःस्वप्नःपरिवीक्षितः ८
इत्युक्त्वातांगतोविप्रोब्रह्मलोकंसनारदः
कृष्णस्यापिसुदुःखेनदुःखितासाभवत्तदा ९
रुरोदकरुणंबालाहाहेतिवदतीमुहुः
गङ्गातीरोपविष्टासाजलांतेशृणुनन्दन १०
सुनेत्राभ्यांतथाश्रूणिदुःखेनापिप्रमुंचति
तान्यश्रूणिप्रमुक्तानिगंगातोयेपतंत्यपि ११
जलेचैवनिमज्ञंतितस्याश्चाप्यश्रुबिंदवः
संभवंतिपुनस्तातपद्मरूपाणितानिच १२
गंगातोयेप्रफुल्लानिवाहितानिप्रयांतिवै
ददृशेदानवश्रेष्ठोविष्णुमायाप्रमोहितः १३
दुःखजानिनजानातिमुनिनाकथितान्यपि
हर्षेणमहताविष्टःपरिजग्राहसोऽसुरः १४
पद्मैस्तुपुष्पितैःसोपिपूजयेद्गिरिजाप्रियम्
सप्तकोटिभिर्दैत्येंद्रोविष्णुमायाप्रमोहितः १५
अथक्रुद्धाजगद्धात्रीशंकरंवाक्यमब्रवीत्
पश्यैतस्यविकर्मत्वंदानवस्यमहामते १६
शोकोत्पन्नानिपद्मानिगंगातोयगतानिवै
अयमेषप्रगृह्णातिकामाकुलितचेतनः १७
पूजयेच्चापिदुष्टात्माशोकसंतापकारकैः
दुःखजैःशोकजैःपुष्पैस्तैःसुश्रेयःकथंभवेत् १८

यादृशेनापिभावेनमामेवपरिपूजयेत्
तादृशेनापिभावेनअस्यसिद्धिर्भविष्यति १९
सत्यध्यानविहीनोयंकामोदान्यस्तमानसः
संजातःपापचारित्रोजहिदेविस्वतेजसा २०
एवमाकर्ण्यतद्वाक्यंशंभोश्चैवमहात्मनः
अस्यैवसंक्षयंशंभोकरिष्येतवशासनात् २१
एवमुक्त्वाततोदेवीतस्यापिवधकांक्षया
वर्त्ततेहिविहुंडस्यवधोपायंव्यचिंतयत् २२
कृत्वामायामयंरूपंब्राह्मणस्यमहात्मनः
पूजयेच्छंकरंनाथंसुपुष्पैःपारिजातजैः २३
समेत्यदानवःपापोदिव्यांपूजांविनाशयेत्
कामाकुलःसुदुःखार्तस्तद्गतोभावतत्परः २४
विष्णोश्चैवमहामायांपूर्वदृष्टांसदानवः
सस्मारदानवःपापःकामबाणैःप्रपीडितः २५
तस्याःस्मरणमात्रेणकंदर्पेणबलीयसा
विरहाकुलदुःखार्तोरोदतेहिमुहुर्मुहुः २६
कालाकृष्टःसदुष्टात्माशोकजातानितानिसः
परिगृह्यसमायातःपूजनार्थीमहेश्वरम् २७
देव्याकृतांहिपूजांचसुपुष्पैःपारिजातजैः
तांनिर्णाश्यसुलोभेनशोकजैःपरिपूजयेत् २८
नेत्राभ्यांतस्यदुष्टस्यबिंदवस्तेऽश्रुसंभवाः
अविरलास्ततोवत्सपतंतिलिगमस्तके २९
देवीब्राह्मणरूपेणतमुवाचमहामते
कोभवान्पूजयेद्देवंशोकाकुलमनाःसदा ३०
पतंत्यश्रूणिदेवस्यमस्तकेशोकजानिते
अपवित्राणिमेब्रूहिएतमर्थंममाग्रतः ३१
विहुंडउवाच-
पूर्वंदृष्टामयानारीसर्वसौभाग्यसंपदा
सर्वलक्षणसंपन्नाकामस्यायतनंमहत् ३२
तस्यामोहेनसंदग्धःकामेनाकुलतांगतः

तयाप्रोक्तंहिसंभोगेदेहिमेदायमुत्तमम् ३३
कामोदसंभवैःपुष्पैःपूजयस्वमहेश्वरम्
तेषांपुष्पकृतांमालांममकंठेपरिक्षिप ३४
कोटिभिःसप्तसंख्यातैःपूजयस्वमहेश्वरम्
तदर्थंपूजयाम्येवईश्वरंफलदायकम् ३५
कामोदसंभवैःपुष्पैर्दुर्लभैर्देवदानवैः
श्रीदेव्युवाच-
क्वतेभावःक्वतेध्यानंक्वतेज्ञानंदुरात्मनः ३६
ईश्वरस्यापिसंबंधोनास्तिकिंचित्त्वयैवहि
कामोदायावरंरूपंकीदृशंवदसांप्रतम् ३७
क्वलब्धानिसुपुष्पाणितस्याहास्योद्भवानिच
विहुंडउवाच-
भावंध्यानंनजानामिनदृष्टासामयाकदा ३८
गंगातोयगतान्येवपरिगृह्णामिनित्यशः
तैरहंपूजयाम्येकंशंकरंप्रवदाम्यहम् ३९
ममाग्रेकथितंविप्रशुक्रेणापिमहात्मना
वचनात्तस्यदेवेशमर्चयामिदिनदिने ४०
एतत्तेसर्वमाख्यातंयच्चपृष्टोस्मिसांप्रतम्
श्रीदेव्युवाच-
कामोदारोदनाज्ञातैःपुष्पैस्तैर्दुःखसंभवैः ४१
लिगमर्चयसेदुष्टप्रभातेनित्यमेवच
यादृशेनापिभावेनपुष्पैश्चयादृशैस्त्वया ४२
अर्चितोदेवदेवेशस्तादृशंफलमाप्नुहि
दिव्यपूजांविनाश्यैवंशोकपुष्पैःप्रपूजसि ४३
असौदोषस्तवैवाद्यसमुत्पन्नःसुदारुणः
तस्माद्दण्डंप्रदास्यामिभुंक्ष्वस्वकर्मजंफलम् ४४
तस्यावाक्यंसमाकर्ण्यकालकृष्टोबभाषताम्
रेरेदुष्टदुराचारममकर्मप्रदूषक ४५
हन्मित्वामिहखड्गेनअनेनापिनसंशयः
इत्युक्त्वाब्राह्मणंतंसनिशितंखड्गमाददे ४६

हंतुकामःसदुष्टात्माअभ्यधावतदानवः
सादेवीविप्ररूपेणसंक्रुद्धापरमेश्वरी ४७
हन्मित्वामिहखड्गेनअनेनापिनसंशयः
स्वस्थानमागतंदृष्ट्वाहुंकारंविससर्जह
तेनहुंकारनादेनपतितोदानवाधमः ४८
निश्चेष्टःकामरूपेणवज्राहतइवाचलः
पतितेदानवेतस्मिन्सर्वलोकविनाशके ४९
लोकाःस्वास्थ्यंगताःसर्वेदुःखतापविवर्जिताः
एतस्मात्कारणाद्वत्ससास्त्रीवैपरिदेवति ५०
गंगातीरेवरारोहादुःखव्याकुलमानसा
एतत्तेसर्वमाख्यातंयत्त्वयापरिपृच्छितम् ५१
विष्णुरुवाच-
एवमुक्त्वासुपुत्रंतंकुंजलोअंडजेश्वरः
विररामहाप्राज्ञःकिञ्चिन्नोवाचभूपते ५२

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
कामोदाख्यानेएकविंशत्यधिकशततमोऽध्यायः १२१

## द्वाविंशत्यधिकशततमोऽध्यायः

विष्णुरुवाच-
कुंजलोधर्मपक्षीसइत्युक्त्वातान्सुतान्प्रति
विररामहाप्राज्ञःकिंचिन्नोवाचतान्प्रति १
वटाधःस्थोद्विजश्रेष्ठस्तमुवाचमहाशुकम्
कोभवान्धर्मवक्ताहिपक्षिरूपेणवर्तते २
किंवादेवोऽथगंधर्वःकिंवाविद्याधरोभवान्
कस्यशापादिमांप्राप्तोयोनिंकीरस्यपातकीम् ३
कस्मात्तेईदृशंज्ञानंवर्ततेऽतीद्रियंशुक
सुपुण्यस्यतुकस्यापिकस्यवैतपसःफलम् ४
किंवाच्छन्नेनरूपेणअनेनापिमहामते
कस्त्वंसिद्धोऽसिदेवोवातन्मेकथयकारणम् ५
कुंजलउवाच-

भोःसिद्धत्वामहंजानेकुलंतेगोत्रमुत्तमम्
विद्यांतपःप्रभावंचयस्माद्भ्रमसिमेदिनीम् ६
सर्वंविप्रप्रवक्ष्यामिस्वागतंतवसुव्रत
उपविश्यासनेपुण्येछायामाश्रयशीतलाम् ७
अव्यक्तप्रभवोब्रह्मातस्माज्जज्ञेप्रजापतिः
ब्राह्मणस्तुगुणैर्युक्तोभृगुर्ब्रह्मसमोद्विजः ८
भार्गवोनामतस्यासीत्सर्वधर्मार्थतत्ववित्
तस्यान्वयेभवान्विप्रच्यवनःख्यातिमान्भुवि ९
नाहंदेवोनगंधर्वोनाहंविद्याधरःपुनः
योहंविप्रप्रवक्ष्यामितन्मेनिगदतःशृणु १०
कश्यपस्यकुलेजातःकश्चिद्ब्राह्मणसत्तमः
वेदवेदांगतत्त्वज्ञःसर्वकर्मप्रकाशकः ११
विद्याधरेतिविख्यातःकुलशीलगुणैर्युतः
राजमानःश्रियाविप्रआचारैस्तपसातदा १२
संबभूवुःसुतास्तस्यविद्याधरस्यतेत्रयः
वसुशर्मानामशर्माधर्मशर्माचतेत्रयः १३
तेषामहंधर्मशर्माकनिष्ठोगुणवर्जितः
वसुशर्माममभ्रातावेदशास्त्रार्थकोविदः १४
आचारेणसुसंपन्नोविद्यादिसुगुणैःपुनः
नामशर्मामहाप्राज्ञस्तद्वच्चासीद्गुणाधिकः १५
अहमेकोमहामूर्खःसंजातःशृणुसत्तम
विद्यानामुत्तमंविप्रभावमर्थंशुभंकदा १६
नशृणोमिनवैयामिगुरुगेहमनुत्तमम्
ततस्तुजनकोमेतुमामेवंपरिचिंतयेत् १७
धर्मशर्मेतिपुत्रस्यनामास्यतुनिरर्थकम्
संजातःक्षितिमध्येतुनविद्वान्मेगुणाकरः १८
इतिसंचिंत्यधर्मात्मामामुवाचसुदुःखितः
व्रजपुत्रगुरोर्गेहंविद्यार्थंपरिसाधय १९
एवमाकर्ण्यतत्तस्यपितुर्वाक्यंमयाशुभम्
नाहंतातगमिष्यामिगुरोर्गेहंसुदुःखदम् २०

यत्रवैताडनंनित्यंभ्रूभंगादिचक्रोशनम्
अन्नंनदृश्यतेतत्रकर्मणाशृणुसत्तम २१
दिवारात्रौननिद्रास्तिनास्तिसुखस्यसाधनम्
तस्माद्दुःखमयंतातनयास्येगुरुमंदिरम् २२
विद्याकार्यंकरिष्येनक्रीडार्थमहमुत्सुकः
भोन्दयेस्वप्स्येप्रसादात्तेकरिष्येक्रीडनंपितः २३
डिंभैःसार्द्धंसुखेनापिदिवारात्रमतंद्रितः
मामुवाचसधर्मात्मामूढंज्ञात्वासुदुःखितः २४
विद्याधरउवाच-
मापुत्रसाहसंकार्षीर्विद्यार्थमुद्यमंकुरु
विद्ययाप्राप्यतेसौख्यंयशःकीर्तिस्तथातुला २५
ज्ञानंस्वर्गश्चमोक्षश्चतस्माद्विद्यांप्रसाधय
पूर्वंसुदुःखमूलातुपश्चाद्विद्यासुखप्रदा २६
तस्मात्साधयपुत्रत्वंविद्यांगुरुगृहंव्रज
पितुर्वाक्यमकुर्वाणोअहमेवंदिनदिने २७
यत्रयत्रस्थितोनित्यमर्थहानिंकरोम्यहम्
उपहासःकृतोलोकैर्ममविप्रप्रकुत्सनम् २८
ममलज्ञासमुत्पन्नाजीवनाशकरीतदा
विद्यार्थमुद्यतोविप्रकंगुरुंप्रार्थयाम्यहम् २९
इतिचिंतापरोजातोदुःखशोकसमाकुलः
कथंविद्यामहंजानेकथंविंदाम्यहंगुणान् ३०
कथंमेजायतेस्वर्गःकथंमोक्षंव्रजाम्यहम्
इत्येवंचिंतयन्विप्रवार्द्धक्यमगमंपुनः ३१
देवतायतनेदुःखीउपविष्टस्त्वहंकदा
मद्भाग्यैःप्रेरितःकश्चित्सिद्धएकःसमागतः ३२
निराश्रयोजिताहारःसदानंदस्तुनिःस्पृहः
एकांतमास्थितोविप्रयोगयुक्तोजितेंद्रियः ३३
परब्रह्मणिसंलीनोज्ञानध्यानसमाधिमान्
तमहंसंश्रितोविप्रज्ञानरूपंमहामतिम् ३४
अहंशुद्धेनभावेनभक्त्यानमितकंधरः

नमस्कृत्यमहात्मानंपुरतस्तस्यसंस्थितः ३५
दीनरूपोह्यहंजातोमंदभाग्यस्तथापुनः
तेनाहंपृच्छितोविप्रकस्माद्भवान्प्रशोचति ३६
केनाभिप्रायभावेनदुःखमेवभुनक्तिवै
तेनेत्युक्तोस्मिविप्रेंद्रज्ञानिनायोगिनातदा ३७
सुमूढेनमयातस्यपूर्ववृत्तांतमेवहि
तमेवंश्रावितंसर्वंसर्वज्ञत्वंकथंव्रजेत् ३८
एतदर्थंमहादुःखीभवान्ममगतिःसदा
सचोवाचमहात्मामेसर्वज्ञानस्यकारणम् ३९

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे द्वाविंशत्यधिकशततमोऽध्यायः १२२

## त्रयोविंशत्यधिकशततमोऽध्यायः

सिद्धउवाच-
श्रूयतामभिधास्यामिज्ञानरूपंतवाग्रतः
ज्ञानस्यनास्तिवैदेहोहस्तौपादौचचक्षुषी १
नासाकर्णौनज्ञानस्यनास्तिचैवास्थिसंग्रहः
केनदृष्टंतुवैज्ञानंकानिलिगानितस्यवै २
आकारैर्वर्जितंनित्यंसर्वंवेत्तिससर्ववित्
दिवाप्रकाशकःसूर्योरात्रौप्रकाशयेच्छशी ३
गृहंप्रकाशयेद्दीपोलोकमध्येस्थिताश्रमी
तत्पदंकेनवैधाम्नादृश्यतेशृणुसत्तम ४
नविंदंतिहिमूढास्तेमोहिताविष्णुमायया
कायमध्येस्थितंज्ञानंध्यानदीप्तमनौपमम् ५
तत्पदंतेनदृश्येतचंद्रसूर्यादिभिर्नच
हस्तपादौविनाज्ञानमचक्षुःकर्णवर्जितम् ६
तस्यसर्वत्रगतिरस्तिसर्वंगृह्णातिपश्यति
सर्वमाघ्रातिविप्रेंद्रश्शृणोत्येवंनसंशयः ७
नास्तिज्ञानसमोदीपःसर्वांधकारनाशने
स्वर्गेभूमौचपातालेस्थानेस्थानेचदृश्यते ८

कायमध्येस्थितंज्ञानंनविंदंतिकुबुद्धयः
ज्ञानस्थानंप्रवद्त्यामियस्माज्ज्ञानंप्रजायते ९
प्राणिनांहृदयेनित्यंनिहितंसर्वदाद्विज
कामादीन्सुमहाभोगान्महामोहादिकांस्तथा १०
विवेकवह्निनासर्वान्दिधद्मतिसदैवयः
सर्वशांतिमयोभूत्वाइंद्रियार्थंप्रमर्द्दयेत् ११
ततस्तुजायतेज्ञानंसर्वतत्त्वार्थदर्शकम्
तत्त्वमूलमिदंज्ञानंनिर्मलंसर्वदर्शकम् १२
तस्माच्छांतिंकुरुष्वत्वंसर्वसौख्यप्रवर्द्धिनीम्
समःशत्रौचमित्रेचयथात्मनितथापरे १३
भवस्वनियतोनित्यंजिताहारोजितेंद्रियः
मैत्रंनैवप्रकर्तव्यंवैरंदूरेपरित्यजेत् १४
निःसंगोनिःस्पृहोभूत्वाएकांतस्थानमाश्रितः
सर्वप्रकाशकोज्ञानीसर्वदर्शीभविष्यसि १५
एकस्थानस्थितोवत्सत्रैलोक्येयद्भविष्यति
वृत्तांतंवेत्स्यसित्वंतुमत्प्रसादान्नसंशयः १६
कुंजलउवाच-
सिद्धेनतेनमेविप्रज्ञानरूपंप्रकाशितम्
तस्यवाक्येस्थितोनित्यंतद्भावेनापिभावितः १७
त्रैलोक्येवर्त्ततेयद्यदेकस्थानेस्थितोह्यहम्
तत्तदेवप्रजानामिप्रसादात्तस्यसद्गुरोः १८
एतत्तेसर्वमाख्यातमात्मवृत्तांतमेवहि
अन्यत्किंतेप्रवद्त्यामितद्ब्रूहिद्विजसत्तम १९
च्यवनउवाच-
कीरयोनिंकथंप्राप्तोभवाञ्ज्ञानवतांवरः
तन्मेत्वंकारणंब्रूहिसर्वसंदेहनाशनम् २०
कुंजलउवाच-
संसर्गाज्जायतेपापंसंसर्गात्पुरायमेवहि
तस्माद्विवर्जयेच्छुद्धोभव्यंविरुद्धमेवच २१
लुब्धकेनापिपापेनकेनाप्येकःशुकःशिशुः

बंधयत्विसमानीतोविक्रयार्थंसमुद्यतः २२
चाटुकारंसुरूपंतंपटुवाक्यंसमीक्ष्यच
गृहीतोब्राह्मणैकेनममप्रीत्यासमर्पितः २३
ज्ञानध्यानस्थितोनित्यमहमेवद्विजोत्तम
समेबालस्वभावेनकौतुकात्करसंस्थितः २४
तस्यकौतुकवाक्यैर्वामुग्धोऽहद्विजसत्तम
शुकस्यपुत्ररूपस्यनित्यंतत्परमानसः २५
मामेवंवदतेसोपितातततातेतिश्रास्यताम्
स्नातुंगच्छमहाभागदेवमर्चयसांप्रतम् २६
इत्यादिचाटुकैर्वाक्यैर्मामेवंपरिभाषयेत्
तस्यवाक्यविनोदेनविस्मृतंज्ञानमुत्तमम् २७
पुष्पार्थंफलभोगार्थंगतोहंवनमेवच
नीतःशुकोबिडालेनममदुःखस्यहेतवे २८
ममसंसर्गिभिःसर्वैर्वयस्यैःसाधुचारिभिः
बिडालेनहतःपक्षीतेनैवभक्षितोहिसः २९
श्रुत्वामृत्युंगतंविप्रशुकंतंचाटुकारकम्
महतादुःखभावेनअसुखेनातिदुःखितः ३०
तस्यदुःखेनमुग्धोस्मितीव्रेणापिसुपीडितः
महतामोहजालेनबद्धोऽहद्विजपुंगव ३१
प्रालपंरामचंद्रेतिशुकराजेतिपंडित
श्लोकराजेतितंविप्रमोहाच्चलितमानसः ३२
ततोऽहदुःखसंतप्तःसंजातःस्वेनकर्मणा
वियोगेनापिविप्रेंद्रशुकस्यशृणुसांप्रतम् ३३
विस्मृतंतन्मयाज्ञानंसिद्धेनापिप्रकाशितम्
संस्मरञ्छोकसंतप्तस्तंशुकंचाटुकारकम् ३४
वत्सवत्सेतिनित्यंवैप्रलपञ्छृणुभार्गव
गद्यपद्यमयैर्वाक्यैःसंस्कृताक्षरसंयुतैः ३५
त्वांविनाकश्चमांवत्सबोधयिष्यतिसांप्रतम्
कथाभिस्तुविचित्राभिःपक्षिराजप्रसाद्यमाम् ३६
अस्मिन्सुनिर्जनोद्यानेविहायक्वगतोभवान्

केनदोषेणलिप्तोस्मितन्मेकथयसांप्रतम् ३७
एवंविधैरहंवाक्यैःकरुणैस्तैस्तुमोहितः
एवमादिप्रलप्याहंशोकेनापिसुपीडितः ३८
मृतोहंतेनमोहेनतद्भावेनापिमोहितः
मरणेयादृशोभावोमतिश्चासीच्चयादृशी ३९
तादृशेनापिभावेनजातोऽहद्विजसत्तम
गर्भवासोमयाप्राप्तोज्ञानस्मृतिविधायकः ४०
स्मृतंपूर्वकृतंकर्मस्वयमेवविचेष्टितम्
मयापापेनमूढेनकिंकृतंह्यकृतात्मना ४१
गर्भयोगसमारूढःपुनस्तंचिंतयाम्यहम्
तेनमेनिर्मलंज्ञानंजातंवैसर्वदर्शकम् ४२
गुरोस्तस्यप्रसादाच्चप्राप्तंवैज्ञानमुत्तमम्
तस्यवाक्योदकैःस्वच्छैःकायस्यमलमेवच ४३
सबाह्याभ्यंतरंविप्रक्षालितंनिर्मलंकृतम्
तिर्यक्त्वंचमयाप्राप्तंशुकजातिसमुद्भवम् ४४
शुकस्यध्यानभावेनमरणेसमुपस्थिते
तस्मिन्कालेमृतोविप्रतद्भावेनापिभावितः ४५
तादृशोऽस्मिपुनर्जातःशुकरूपोमहीतले
मरणेयादृशोभावःप्राणिनांपरिजायते ४६
तादृशाःस्युस्तुसत्वास्तेतद्रूपास्तत्परायणाः
तद्गुणास्तत्स्वरूपास्तेभावभूताभवंतिहि ४७
मृत्यकालस्यविप्रेंद्रभावेनापिनसंशयः
अतुलंप्राप्तवाञ्ज्ञानमहमत्रमहामते ४८
तेनसर्वंविपश्यामियद्भूतंयद्भविष्यति
वर्तमानंमहाप्राज्ञज्ञानेनापिमहामते ४९
सर्वंविदाम्यहंह्यत्रसंस्थितोपिनसंशयः
तारणायमनुष्याणांसंसारेपरिवर्तताम् ५०
नास्तितीर्थंगुरुसमंबंधच्छेदकरंद्विज
एतत्तेसर्वमाख्यातंशृणुभार्गवनंदन ५१
यत्त्वयापृच्छितंविप्रतत्तेसर्वंप्रकाशितम्

स्थलजाच्चोदकात्सर्वंबाह्यंमलंप्रणश्यति ५२
जन्मांतरकृतान्पापान्गुरुतीर्थंप्रणाशयेत्
संसारतारणायैवजंगमंतीर्थमुत्तमम् ५३
विष्णुरुवाच-
शुकएवंमहाप्राज्ञश्च्यवनायमहात्मने
तत्त्वंप्रकाशयित्वातुविररामनृपोत्तम ५४
एतत्तेसर्वमाख्यातंजंगमंतीर्थमुत्तमम्
वरंवरयभद्रंतेयत्तेमनसिवर्त्तते ५५
वेनउवाच-
नाहंराज्यस्यकामार्थीनान्यत्किंचित्प्रकामये
सदेहोगंतुमिच्छामितवकायंजनार्दन ५६
एवंवरमहंमन्येयदिदातुमिहेच्छसि
विष्णुरुवाच-
यजत्वमश्वमेधेनराजसूयेनभूपते ५७
गोभूस्वर्णाम्बुधान्यानांकुरुदानंमहामते
दानान्नश्यतिवैपापंब्रह्मवध्यादिघोरकम् ५८
चतुर्वर्गस्तुदानेनसिद्ध्यत्येवनसंशयः
तस्माद्दानंप्रकर्तव्यंमामुद्दिश्यचभूपते ५९
यादृशेनापिभावेनमामुद्दिश्यददातियः
तादृशंतस्यवैभावंसत्यमेवंकरोम्यहम् ६०
ऋषीणांदर्शनात्स्पर्शाद्भ्रष्टस्तेपापसंचयः
आगमिष्यसियज्ञांतेममदेहंनसंशयः ६१
एवमाभाष्यतंवेनमंतर्द्धानंगतोहरिः ६२

इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेगुरुतीर्थमाहात्म्यसंपूर्तिवर्णने च्यवनचरित्रसमाप्तौचत्रयोविंशत्यधिकशततमोऽध्यायः १२३

## चतुर्विंशत्यधिकशततमोऽध्यायः

सूतउवाच-
अंतर्द्धानंगतेविष्णौवेनोराजामहामतिः
क्वगतोदेवदेवेशइतिचिंतापरोऽभवत् १

हर्षेणमहताविष्टश्चिंतयित्वानृपोत्तमः
समाहूयनृपश्रेष्ठंतंपृथुंमधुराक्षरैः २
तमुवाचमहात्मानंहर्षेणमहतातदा
त्वयापुत्रेणभूर्लोकेतारितोस्मिसुपातकात् ३
नीतउज्ज्वलतांवत्सवंशोमेसांप्रतंपृथो
मयाविनाशितोदोषैस्त्वयागुणैःप्रकाशितः ४
यजेहमश्वमेधेनदास्येदानान्यनेकशः
विष्णुलोकंव्रजाम्यद्यसकायस्तेप्रसादतः ५
संभरस्वमहाभागसंभारांस्त्वंनृपोत्तम
आमंत्रयमहाभागब्राह्मणान्वेदपारगान् ६
एवंपृथुःसमादिष्टोवेनेनापिमहात्मना
प्रत्युवाचमहात्मासवेनंपितरमादरात् ७
कुरुराज्यंमहाराजभुंक्ष्वभोगान्मनोनुगान्
दिव्यान्वामानुषान्पुण्यान्यज्ञैर्यजजनार्दनम् ८
एवमुक्त्वाप्रणम्यैवपितरंज्ञानतत्परम्
धनुरादायपृथ्वीशःसबाणंयत्नपूर्वकम् ९
आदिदेशभटान्सर्वान्घोषध्वंभूतलेमम
पापमेवनकर्तव्यंकर्मणात्रिविधेनवै १०
करिष्यंतिचयत्पापंआज्ञांवेनस्यभूपतेः
उल्लंघ्यवध्यतांसोहियास्यतेनात्रसंशयः ११
दानमेवप्रदातव्यंयज्ञैश्चैवजनार्दनम्
यजध्वंमानवाःसर्वेतन्मनस्काविमत्सराः १२
एवंशिक्षांप्रदत्वासौराज्यंभृत्येषुवेनजः
निःक्षिप्यचगतोविप्रास्तपसोर्थेतपोवनम् १३
सर्वान्दोषान्परित्यज्यसंयम्यविषयेन्द्रियान्
शतवर्षप्रमाणंवैनिराहारोबभूवह १४
तपसातस्यवैतुष्टोब्रह्मापृथुमुवाचह
तपस्तपसिकस्मात्त्वंतन्मेत्वंकारणंवद १५
पृथुरुवाच-
वेनएषमहाप्राज्ञःपितामेकीर्तिवर्द्धनः

समाचरतियःपापमस्यराज्येनराधमः १६
शिरश्छेत्ताभवत्वेषतस्यदेवोजनार्दनः
अदृष्टैश्चमहाचक्रैर्हरिःशास्ताभवेत्स्वयम् १७
मनसाकर्मणावाचाकर्तुंवांछतिपातकम्
तेषांशिरांसित्रुटयंतुफलंपक्वंयथाद्रुमात् १८
एतदेववरंमन्येत्वत्तःशृणुसुरेश्वर
प्रजानांदोषभावेननलिप्यतिपितामम १९
तथाकुरुष्वदेवेशवरंदातुंयदीच्छसि
ददस्वउत्तमंकामंचतुर्मुखनमोऽस्तुते २०
ब्रह्मोवाच-
एवमस्तुमहाभागपितातेपूततांगतः
विष्णुनाशासितोवत्सपुत्रेणापित्वयापृथो २१
एवंपृथुंसमुद्दिश्यवरंदत्वागतोविभुः
पृथुरेवसमायातोराज्यकर्मणिसंस्थितः २२
वैन्यस्यराज्येविप्रेन्द्राःपापंकश्चिन्नचाचरेत्
यस्तुचिंतयतेपापंत्रिविधेनापिकर्मणा २३
शिरश्छेदोभवेत्तस्ययथाचक्रैर्निकृंतितः
तदाप्रभृतिवैपापंनैवकोपिसमाचरेत् २४
इत्याज्ञावर्ततेतस्यवैन्यस्यापिमहात्मनः
सर्वलोकाःसमाचारैःपरिवर्तंतिनित्यशः २५
दानभोगैःप्रवर्तंतेसर्वधर्मपरायणाः
सर्वसौख्यैःप्रवर्द्धंतेप्रसादात्तस्यभूपतेः २६
इति श्रीपद्मपुराणेभूमिखंडेवेनोपाख्यानेचतुर्विंशत्यधिक-
शततमोऽध्यायः १२४

पंचविंशत्यधिकशततमोऽध्यायः

सूतउवाच-
वेनस्याज्ञांसुसंप्राप्यपृथुःपरमधार्मिकः
संबभ्रेसर्वसंभारान्नानापुण्यान्नृपात्मजः १
निमंत्र्यब्राह्मणान्सर्वान्नानादेशोद्भवानपि

अथवेनइयाजासावश्वमेधेनभूपतिः २
दानान्यदाद्ब्राह्मणेभ्योनानारूपाणयनेकशः
जगामवैष्णवंलोकंसकायोजगतीपतिः ३
विष्णुनासहधर्मात्मानित्यमेवप्रवर्तते
एतद्वःसर्वमाख्यातंचरित्रंतस्यभूपतेः ४
सर्वपापप्रशमनंसर्वदुःखविनाशनम्
पृथुरेवसधर्मात्माराजापृथ्वद्यंप्रशासति ५
त्रैलोक्येनसमंपृथ्वद्यंदुदोहनृपसत्तमः
प्रजास्तुरंजितास्तेनपुगयधर्मानुकर्मभिः ६
एतत्तेसर्वमाख्यातंभूमिखंगडमनुत्तमम्
प्रथमंसृष्टिखंडंतुद्वितीयंभूमिखंडकम् ७
भूमिखंडस्यमाहात्म्यंकथयिष्याम्यहंपुनः
अस्यखंडस्यवैश्लोकंयःशृणोतिनरोत्तमः ८
दिनस्यैकस्यवैपापंतस्यचैवप्रणश्यति
योनरोभावसंयुक्तोऽध्यायंसंशृणुतेसुधीः ९
तस्यपुगयंप्रवक्ष्यामिश्रूयतांद्विजसत्तमाः
दत्तस्यगोसहस्रस्यब्राह्मणेभ्यःसुपर्वणि १०
यत्फलंतत्प्रजायेतविष्णुस्तस्यप्रसीदति
अस्यपद्मपुराणस्यपठमानस्यनित्यशः ११
कलौयुगेतुविघ्नाश्चनजायंतेनरस्यवै
व्यासउवाच–
कस्मात्कलौनजायंतेशृगवानस्यचपद्मज १२
नरस्यपुगययुक्तस्यनानाविघ्नाःसुदारुणाः
ब्रह्मोवाच–
मखस्याप्यश्वमेधस्ययत्फलंपरिकथ्यते १३
तत्फलंदृश्यतेतातपुराणेपद्मसंज्ञके
अश्वमेधमखःपुगयःकलौनैवप्रवर्तते १४
पुराणंचापियत्तद्वदश्वमेधसमंकिल
अश्वमेधस्ययत्पुगयंस्वर्गमोक्षफलप्रदम् १५
नभुंजंतिनराःपापाःपापमार्गेषुसंस्थिताः

पुराणस्यास्यपुण्यस्यपद्मसंज्ञस्यसत्तम १६
अश्वमेधसमंपुण्यंनभुंजंतिकलौनराः
कलौयुगेनरैःपापैर्गंतव्यंनरकार्णवम् १७
कस्माच्छ्रोष्यंतितत्पुण्यंचतुर्वर्गप्रसाधनम्
येनश्रुतमिदंपुण्यंपुराणंपद्मसंज्ञकम् १८
सर्वंहिसाधितंतेनचतुर्वर्गस्यसाधनम्
अश्वमेधादयोयज्ञास्तस्मान्नष्टामहामते १९
कलौयुगेगताःस्वर्गेसवेदाःसांगसस्वराः
यःकोपिसत्वसंपन्नःश्रद्धावान्भगवत्परः २०
श्रोतुमिच्छतिधर्मात्मासपुत्रोभार्ययासह
श्रवणार्थंमहाश्रद्धापूर्वंतस्यप्रजायते २१
शृण्वानस्यनरस्यापिमहाविघ्नोनसंचरेत्
अश्रद्धाजायतेपूर्वंपाठकस्यनरस्यच २२
लोभश्चजायतेतस्यशृण्वानस्यद्विजोत्तम
प्रेषितोविष्णुदेवेनमहामोहःसदारुणः २३
अकरोत्सविनाशंतुशृण्वतश्चास्यनित्यशः
दूषकाःकुत्सकाःपापाःसंभवंतिदिनेदिने २४
ज्ञातव्यंतुसुबुद्धेनविघ्नरूपंममाधुना
संजातंदृश्यतेव्यासतथाहोमंसमाचरेत् २५
वैष्णवैश्चमहामंत्रैर्विष्णुसूक्तैःसुपुण्यदैः
विष्णोरराटमंत्रेणसहस्रशीर्षकेणच २६
इदंविष्णुसुमंत्रेणआब्रह्मेणपुनःपुनः
त्र्यंबकेनचमंत्रेणहोममेवंसमाचरेत् २७
बृहत्साम्नासुमंत्रेणद्वादशाक्षरकेणच
यस्यदेवस्ययोहोमस्तस्यमंत्रेणहोमयेत् २८
अष्टोत्तरतिलाज्यैश्चपालाशैःसमिधैरपि
ग्रहाणामपिकर्त्तव्यंस्थापनंपूजनंद्विज २९
विघ्नेशंपूजयेत्तत्रशारदांचसुरेश्वरीम्
जातवेदांमहामायांचंडिकांक्षेत्रनायकम् ३०
तिलैश्चतंदुलैराज्यैस्तेषांमंत्रसमुद्यतैः

एवंहोमःप्रकर्त्तव्योब्राह्मणेभ्योददेद्धनम् ३१
यथासंभाविकांतातदक्षिणांधेनुसंयुताम्
ततोविघ्नाःप्रणश्यंतिपुराणंसिद्धिमाप्नुयात् ३२
एवंनकुरुतेयोहितस्यविघ्नंवदाम्यहम्
तस्यांगेजायतेरोगोबहुपीडाप्रदायकः ३३
भार्याशोकःपुत्रशोकोधनहानिःप्रजायते
नानाविधान्महारोगान्भुंजतेनात्रसंशयः ३४
यस्यगेहेनास्तिवित्तमुपवासंसमाचरेत्
एकादशींसुसंप्राप्यपूजयेन्मधुसूदनम् ३५
षोडशैश्चोपचारैश्चभावयुक्तेनचेतसा
ब्राह्मणान्भोजयेत्पश्चाद्यथावित्तानुसारतः ३६
केशवायततोदत्वासंकल्पंहविषान्वितम्
स्वयंकुर्यात्ततःप्राज्ञोभोजनंसहबांधवैः ३७
पुत्रैस्तुभार्ययायुक्तस्ततःसिद्धिमवाप्नुयात्
पुराणसंहितापूर्णाश्रोतव्याधर्मतत्परैः ३८
चतुर्वर्गस्यवैसिद्धिर्जायतेतस्यनान्यथा
सपादंलक्षमेकंतुब्रह्माख्यंपुष्करंशृणु ३९
कृतेयुगेतुनिष्पापाःशृणवंतिमनुजाद्विज
लक्षस्यार्द्धंततःकृत्स्नंपुराणंपद्मसंज्ञकम् ४०
श्लोकानांतुसहस्राभ्यांद्वाभ्यामेवतथाधिकम्
त्रेतायुगेतथाप्राप्तेयदाश्रोष्यंतिमानवाः ४१
चतुर्वर्गफलंभुक्त्वातेयास्यंतिहरिंपुनः
द्वाविंशतिसहस्राणिसंहितापद्मसंज्ञिता ४२
द्वापरेकथिताविप्रब्रह्मणापरमात्मना
द्वादशैवसहस्राणांपद्माख्यासातुसंहिता ४३
कलौयुगेपठिष्यंतिमानवाविष्णुतत्पराः
एकोर्थश्चैकभावश्चचतुर्ष्वपिप्रवर्तितः ४४
संहितास्वेवविप्रेंद्रशेषाख्यानप्रविस्तरः
द्वादशैवसहस्राणिनाशंयास्यंतिसत्तम ४५
कलौयुगेतुसंप्राप्तेप्रथमंहिभविष्यति

भूमिखंडंनरःश्रुत्वासर्वपापैःप्रमुच्यते ४६
मुच्यतेसर्वदुःखेभ्यःसर्वरोगैःप्रमुच्यते
अन्यत्सर्वंपरित्यज्यजपंदानंतथाश्रुतम् ४७
श्रोतव्यंहिप्रयत्नेनपद्माख्यंपापनाशनम्
प्रथमंसृष्टिखंडंतुद्वितीयंभूमिखंडकम् ४८
तृतीयंस्वर्गखंडंचपातालंतुचतुर्थकम्
पंचमंचोत्तरंखंडंसर्वपापप्रणाशनम् ४९
यःशृणोतिनरोभक्त्यापंचखंडान्यनुक्रमात्
गोप्रदानसहस्रस्यमानवोलभतेफलम् ५०
महाभाग्येनलभ्यंतेपंचखंडानिभूसुराः
श्रुतानिमोक्षदानिस्युःसत्यंसत्यंनसंशयः ५१

इति श्रीपद्मपुराणेभूमिखंडेपंचपंचाशत्सहस्रसंहितायांवेनोपाख्याने पंचविंशत्यधिकशततमोऽध्यायः १२५

समाप्तोऽय भूमिखराडो द्वितीयः २

इति श्रीपाद्मेमहापुराणे द्वितीयं भूमिखराडं समाप्तम्

# अथ श्रीपाद्मेमहापुराणे तृतीयं स्वर्गखण्डं प्रारभ्यते

ॐनमोविघ्नहर्त्रे ॐनमःश्रीमते

## प्रथमोऽध्यायः

नमामिगोविन्दपदारविंदंसदेंदिरावंदितमुत्तमाढ्यम्
जगज्जनानांहृदिसंनिविष्टंमहाजनैकायनमुत्तमोत्तमम् १
एकदामुनयःसर्वेज्ज्वलज्ज्वलनसन्निभाः
हिमवद्वासिनःसर्वेमुनयोवेदपारगाः २
त्रिकालज्ञामहात्मानोनानापुण्यसमाश्रयाः
महेंद्राद्रिरतायेचयेचविंध्यनिवासिनः ३
येऽबुदारण्यनिरताः पुष्करारण्यवासिनः
श्रीशैलनिरतायेचकुरुक्षेत्रनिवासिनः ४
धर्म्मारण्यरतायेचदंडकारण्यवासिनः
जंबूमार्गरतायेचयेचसत्यनिवासिनः ५
एतेचान्येचबहवःसशिष्यामुनयोऽमलाः
नैमिषंसमुपायाताःशौनकंद्रष्टुमुत्सुकाः ६
तंपूजयित्वाविधिवत्तेनतेचसुपूजिताः
आसनेषुविचित्रेषुबृस्यादिषुयथाक्रमम् ७
शौनकेनप्रदत्तेषुआसीनास्तेतपोधनाः
कृष्णाश्रिताःकथाःपुण्याःपरस्परमथाब्रुवन् ८
कथांतेषुततस्तेषांमुनीनांभावितात्मनाम्
आजगाममहातेजाःसूतस्तत्रमहाद्युतिः ९
व्यासशिष्यःपुराणज्ञोरोमहर्षणसंज्ञकः
तान्प्रणम्ययथान्यायंसतैश्चैवाभिपूजितः १०
उपविष्टंयथायोग्यंशौनकाद्यामहर्षयः
व्यासशिष्यंसुखासीनंसूतंवैरोमहर्षणम् ११
तंपप्रच्छुर्महाभागाःशौनकाद्यास्तपोधनाः
ऋषयऊचुः-
पौराणिकमहाबुद्धेरोमहर्षणसुव्रत १२

त्वत्तःश्रुतामहापुरायाःपुरापौराणिकीःकथाः
सांप्रतंचप्रवृत्ताःस्मकथायांसत्त्वणाहरेः १३
सवैपुंसांपरोधर्मोयतोभक्तिरधोक्षजे
पुनःपुराणमाचक्ष्वहरिवार्तासमन्वितम् १४
हरेरन्याकथासूतश्मशानसदृशीस्मृता
हरिस्तीर्थस्वरूपेणस्वयंतिष्ठतितच्छ्रुतम् १५
तीर्थानांपुरायदातॄणांनामानिकिलकीर्तय
कुतएतत्समुत्पन्नंकेनवापरिपाल्यते १६
कस्मिन्विलयमभ्येतिजगदेतच्चराचरम्
क्षेत्राणिकानिपुरायानिकेचपूज्याःशिलोच्चयाः १७
नद्यश्चकाःपराःपुरायानृणांपापहराःशुभाः
एतत्सर्वंमहाभागकथयस्वयथाक्रमम् १८
सूतउवाच-
साधुसाधुमहाभागाःसाधुपृष्टंतपोधनाः
तंप्रणम्यप्रवक्ष्यामिपुराणंपद्मसंज्ञकम् १९
पाराशर्यंपरमपुरुषंविश्ववेद्यैकयोनिंविद्याधारंविपुलमतिदंवेदवेदांतवेद्यम्
शश्वच्छांतंस्वमतिविषयंशुद्धतेजोविशालं
वेदव्यासंविततयशसंसर्वदाहंनमामि २०
नमोभगवतेतस्मैव्यासायामिततेजसे
यस्यप्रसादाद्वक्ष्यामिनारायणकथामिमाम् २१
प्रवक्ष्यामिमहापुरायंपुराणंपद्मसंज्ञितम्
सहस्त्रंपंचपंचाशत्षड्भिःखंडैःसमन्वितम् २२
तत्रादावादिखंडंस्याद्भूमिखंडंततःपरम्
ब्रह्मखंडंचतत्पश्चात्ततःपातालखंडकम् २३
क्रियाखंडंततःख्यातमुत्तरंखंडमंतिमम्
एतदेवमहापद्ममद्भुतंयन्मयंजगत् २४
तद्वृत्तांताश्रयंतस्मात्पाद्ममित्युच्यतेबुधैः
एतत्पुराणममलंविष्णुमाहात्म्यमुत्तमम् २५
देवदेवोहरिर्यद्वैब्रह्मणेप्रोक्तवान्पुरा
ब्रह्मातन्नारदायाहनारदोऽस्मद्गुरोःपुरः २६

व्यासःसर्वपुराणानिसेतिहासानिसंहिताः
अध्यापयामासमुहुर्मामतिप्रियमात्मनः २७
तत्तेऽहसंप्रवक्ष्यामिपुराणमतिदुर्लभम्
यच्छ्रुत्वाब्रह्महत्यादिपापेभ्योमुच्यतेनरः २८
सर्वतीर्थाभिषेकंचलभतेशृणुतेहियः
श्रद्धयापरयाभक्त्याश्रुतमात्रेणमुक्तिदः २९
अश्रद्धयापिशृणुतेलभतेपुण्यसंचयम्
तस्मात्सर्वप्रयत्नेनपद्मंश्रोत्रातिथीकुरु ३०
तत्रादिखंडंवक्ष्यामिपुण्यंपापविनाशनम्
शृण्वंतुमुनयःसर्वेसशिष्यास्त्वत्रयेस्थिताः ३१
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेप्रथमोऽध्यायः १

## द्वितीयोऽध्यायः

सूतउवाच-
आदिसर्गमहंतावत्कथयामिद्विजोत्तमाः
ज्ञायतेयेनभगवान्परमात्मासनातनः १
सृष्टेषुप्रलयादूर्ध्वंनासीत्किंचिद्द्विजोत्तमाः
ब्रह्मसंज्ञमभूदेकंज्योतिर्वैसर्वकारकम् २
नित्यंनिरंजनंशांतंनिर्मलंनित्यनिर्मलम्
आनंदसागरंस्वच्छंयत्कांक्षंतिमुमुक्षवः ३
सर्वज्ञंज्ञानरूपत्वादनंतमजमव्ययम्
अविनाशिसदास्वच्छमच्युतंव्यापकंमहत् ४
सर्गकालेतुसंप्राप्तेज्ञात्वातंज्ञानरूपकम्
आत्मलीनंविकारंचतत्स्त्रष्टुमुपचक्रमे ५
तस्मात्प्रधानमुद्भूतंततश्चापिमहानभूत्
सात्विकोराजसश्चैवतामसश्चत्रिधामहान् ६
प्रधानेनावृतोह्येवत्वचाबीजमिवावृतम्
वैकारिकस्तैजसश्चभूतादिश्चैवतामसः ७
त्रिविधोयमहंकारोमहत्तत्वादजायत
यथाप्रधानेनमहान्महतासतथावृतः ८

भूतादिस्तुविकुर्वाणः शब्दतन्मात्रकंततः
ससर्जशब्दतन्मात्रादाकाशंशब्दलक्षणम् ९
शब्दमात्रंतथाकाशंभूतादिः सममावृणोत्
शब्दमात्रंतथाकाशंस्पर्शमात्रंससर्जह १०
बलवानभवद्वायुस्तस्यस्पर्शोगुणोमतः
आकाशंशब्दमात्रंतुस्पर्शमात्रंसमावृणोत् ११
ततोवायुविकुर्वाणोरूपमात्रंससर्जह
ज्योतिरुत्पद्यतेवायोस्तद्रूपगुणमुच्यते १२
स्पर्शमात्रस्तुवैवायूरूपमात्रंसमावृणोत्
ज्योतिश्चापिविकुर्वाणंरसमात्रंससर्जह १३
संभवंतिततोंभांसिरसमात्राणितानितु
रसमात्राणिचांभांसिरूपमात्रंसमावृणोत् १४
विकुर्वाणानिचांभांसिगंधमात्रंससर्जिरे
तस्माज्जातामहीचेयंसर्वभूतगुणाधिका १५
ससंघातोयतस्तस्मात्तस्यगंधोगुणोमतः
तस्मिंस्तस्मिंस्तुतन्मात्रात्तेनतन्मात्रतास्मृता १६
तन्मात्राण्यविशेषाणिविशेषाः क्रमशोपराः
भूततन्मात्रसर्गोयमहंकारात्तुतामसात् १७
कीर्तितस्तुसमासेनमुनिवर्यास्तपोधनाः
तैजसानींद्रियाण्याहुर्देवावैकारिकादश १८
एकादशंमनश्चात्रकीर्तितंतत्त्वचिंतकैः
ज्ञानेंद्रियाणिपंचात्रपंचकर्मेंद्रियाणिच १९
तानिवक्ष्यामितेषांचकर्माणिकुलपावनाः
श्रवणंत्वक्चक्षुर्जिह्वानासिकाचैवपंचमी २०
शब्दादिज्ञानसिद्ध्यर्थंबुद्धियुक्तानिपंचवै
पायूपस्थंहस्तपादौकीर्तितावाक्चपंचमी २१
विसर्गानंदनादानगत्युक्तिकर्मतत्स्मृतम्
आकाशवायुतेजांसिसलिलंपृथिवीतथा २२
शब्दादिभिर्गुणैर्विप्राः संयुक्ताउत्तरोत्तरैः
नानावीर्याः पृथग्भूतास्ततस्तेसंहतिंविना २३

नाशक्नुवन्प्रजाःस्त्रष्टुमसमागत्यकृत्स्नशः
समेत्यान्योन्यसंयोगंपरस्परमथाश्रयात् २४
एकसंघास्सलक्ष्याश्चसंप्राप्यैक्यमशेषतः
पुरुषाधिष्ठितत्वाच्चप्रधानानुग्रहेणच २५
महदादयोविशेषांताश्रंडमुत्पादयंतिते
तत्क्रमेणविवृद्धंतुजलबुद्बुदवत्सदा २६
भूतेभ्योंडंमहाप्राज्ञावृद्धंतदुदकेशयम्
प्राकृतंब्रह्मरूपस्यविष्णोःस्थानमनुत्तमम् २७
तत्राव्यक्तस्वरूपोसौविष्णुर्विश्वेश्वरःप्रभुः
ब्रह्मरूपंसमास्थायस्वयमेवव्यवस्थितः २८
स्वेदजांडमभूत्तस्यजरायुश्चमहीधराः
गर्भोदकंसमुद्राश्चतस्याभून्महदात्मनः २९
साद्रिद्वीपसमुद्राश्चसज्योतिर्लोकसंग्रहः
तस्मिन्नंडेभवत्सर्वंसदेवासुरमानुषम् ३०
अनादिनिधनस्यैवविष्णोर्नाभेःसमुत्थितम्
यत्पद्मंतद्धैममंडमभूच्छ्रीकेशवेच्छया ३१
रजोगुणधरोदेवःस्वयमेवहरिपरः
ब्रह्मरूपंसमास्थायजगत्स्त्रुष्टुंप्रवर्तते ३२
सृष्टंचपात्यनुयुगंयावत्कल्पविकल्पना
नारसिंहादिरूपेणरुद्ररुपेणसंहरेत् ३३
सब्रह्मरूपंविसृजन्महात्माजगत्समस्तंपरिपातुमिच्छन्
रामादिरूपंसतुगृह्ययातिबभूवरुद्रोजगदेतदत्तुम् ३४
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेद्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

ऋषयऊचुः-
नदीनांपर्वतानंचनामधेयानिसर्वशः
तथाजनपदानांचयेचान्येभूमिमाश्रिताः १
प्रमाणंचप्रमाणज्ञपृथिव्याःकिलसर्वतः
निखिलेनसमाचक्ष्वकाननानिचसत्तम २

सूतउवाच-
पंचेमानिमहाप्राज्ञमहाभूतानिसंग्रहात्
जगतीस्थानिसर्वाणिसमान्याहुर्मनीषिणः ३
भूमिरापस्तथावायुरग्निराकाशमेवच
गुणोत्तराणिसर्वाणितेषांभूमिःप्रधानतः ४
शब्दस्पर्शश्चरूपंचरसोगंधश्चपंचमः
भूमेरेतेगुणाःप्रोक्ताऋषिभिस्तत्त्ववेदिभिः ५
चत्वारोप्सुगुणाविप्रागंधस्तत्रनविद्यते
शब्दःस्पर्शश्चरूपंचतेजसोथगुणास्त्रयः ६
शब्दःस्पर्शश्चवायोस्तुआकाशेशब्दएवच
एतेपंचगुणाविप्रामहाभूतेषुपंचसु ७
वर्त्ततेसर्वलोकेषुयेषुभूताःप्रतिष्ठिताः
अन्योन्यंनातिवर्त्ततेसाम्यंभवतिवैतदा ८
यदातुविषमीभावमाविशंतिपरस्परम्
तदादेहैर्देहवंतोव्यतिरोहंतिनान्यथा ९
आनुपूर्व्याविनश्यंतिजायंतेचानुपूर्वशः
सर्वाण्यपरिमेयाणितदेषांरूपमैश्वरम् १०
यत्रयत्रहिदृश्यंतेधावंतिपांचभौतिकाः
तेषांमनुष्यास्तर्केणप्रमाणानिप्रचक्षते ११
अचिंत्याःखलुयेभावास्तान्नतर्केणसाधयेत्
सुदर्शनंप्रवक्ष्यामिद्वीपंतुमुनिपुंगवाः १२
परिमंडलोमहाभागाद्वीपोऽसौचक्रसंस्थितः
नदीजलपरिच्छिन्नःपर्वतैश्चाब्धिसन्निभैः १३
पुरैश्चविविधाकारैरम्यैर्जनपदैस्तथा
वृक्षैःपुष्पफलोपेतैःसंपन्नोधनधान्यवान् १४
लवणेनसमुद्रेणसमंतात्परिवारितः
यथाहिपुरुषःपश्येदादर्शेमुखमात्मनः १५
एवंसुदर्शनोद्वीपोदृश्यतेचक्रमंडलः
द्विरंशेपिप्पलस्तस्यद्विरंशेचशशोमहान् १६
सर्वौषधिंसमादायसर्वतःपरिवारितः

आपस्ततोन्याविज्ञेयाःशेषःसंक्षेपउच्यते १७
ऋषयऊचुः-
उक्तोयस्यचसंक्षेपोबुद्धिमन्विधिवत्त्वया
तत्त्वज्ञश्चासिसर्वस्यविस्तरंसूतनोवद १८
यावान्भूम्यवकाशोयंदृश्यतेशशलक्षणे
तस्यप्रमाणंप्रब्रूहिततोवक्ष्यसिपिप्पलम् १९
एवंतैःकिलपृष्टःससूतोवाक्यमथाब्रवीत्
सूतउवाच-
प्रागायतामहाप्राज्ञाःषडेतेरत्नपर्वताः २०
अवगाढाह्युभयतःसमुद्रौपूर्वपश्चिमौ
हिमवान्हिमकूटश्चनिषधश्चनगोत्तमः २१
नीलश्चवैडूर्यमयःश्वेतश्चशशिसन्निभः
सर्वधातुपिनद्धश्चशृंगवान्नामपर्वतः २२
एतेवैपर्वताविप्राःसिद्धचारणसेविताः
तेषामंतरविष्कुंभौयोजनानिसहस्रशः २३
तत्रपुण्याजनपदास्तानिवर्षाणिसत्तमाः
वसंतितेषांसत्त्वानिनानाजातीनिसर्वशः २४
इदंतुभारतंवर्षंततोहैमवतंपरम्
हेमकूटात्परंचैवहरिवर्षंप्रचक्षते २५
दक्षिणेनतुनीलस्यनिषधस्योत्तरेणच
प्रागायतोमहाभागामाल्यवान्नामपर्वतः २६
ततःपरंमाल्यवतःपर्वतोगंधमादनः
परिमंडलस्तयोर्मध्येमेरुःकनकपर्वतः २७
आदित्यतरुणाभासोविधूमइवपावकः
योजनानांसहस्राणिचतुरशीतिरुच्छ्रितः २८
अधस्ताच्चतुरशीतिर्योजनानांद्विजोत्तमाः
ऊर्ध्वमधश्चतिर्यक्चलोकानावृत्यतिष्ठति २९
तस्यपार्श्वेष्वमीद्वीपाश्चत्वारःसंस्थिताद्विजाः
भद्राश्वःकेतुमालश्चजंबूद्वीपश्चसत्तमाः ३०
उत्तराश्चैवकुरवःकृतपुण्यप्रतिश्रयाः

विहंगसुमुखोयस्तुसुपार्श्वस्यात्मजःकिल ३१
सवैविचिंतयामाससौवर्णान्प्रेन्दयवायसान्
मेरुरुत्तममध्यानामधमानांचपक्षिणाम् ३२
अविशेषकरोयस्मात्तस्मादेनंत्यजाम्यहम्
तमादित्योनुपर्येतिसततंज्योतिषांवरः ३३
चंद्रमाश्चसनक्षत्रोवायुश्चैवप्रदक्षिणः
सपर्वतोमहाप्राज्ञादिव्यपुष्पसमन्वितः ३४
भवनैरावृतैःसर्वैःर्जांबूनदमयैःशुभैः
तत्रदेवगणाविप्रागंधर्वासुरराक्षसाः ३५
अप्सरोगणसंयुक्ताःशैलेक्रीडंतिसर्वदा
तत्रब्रह्माचरुद्रश्चशक्रश्चापिसुरेश्वरः ३६
समेत्यविविधैर्यज्ञैर्यजंतेऽनेकदक्षिणैः
तुंबुरुर्नारदश्चैवविश्वावसुर्हाहाहूहूः ३७
अभिगम्यामरश्रेष्ठंस्तुवंतिविविधैःस्तवैः
सप्तर्षयोमहात्मानःकश्यपश्चप्रजापतिः ३८
तत्रगच्छंतिभद्रंवःसदापर्वणिपर्वणि
तस्यैवमूर्द्धन्युशनाकाव्योदैत्यैर्महीयते ३९
तस्यहैमानिरत्नानितस्यैतेरत्नपर्वताः
तस्मात्कुबेरोभगवांश्चतुर्थंभागमश्नुते ४०
ततःकलांशंवित्तस्यमनुष्येभ्यःप्रयच्छति
पर्वतस्यांतरेदिव्यंसर्वर्तुकुसुमैश्चितम् ४१
कर्णिकारवनंरम्यंशिलाजालसमुच्छ्रितम्
तत्रसाक्षात्पशुपतिर्दिव्यभूतैःसमावृतः ४२
उमासहायोभगवान्रमतेभूतभावनः
कर्णिकारमयींमालांबिभ्रदापादलंबिनीम् ४३
त्रिभिर्नेत्रैःकृतोद्द्योतस्त्रिभिःसूर्यैरिवोदितैः
तमुग्रतपसःसिद्धाःसुव्रताःसत्यवादिनः ४४
पश्यंतिनहिदुर्वृत्तैःशक्योद्रष्टुंमहेश्वरः
तस्यशैलस्यशिखरात्क्षीरधाराद्विजोत्तमाः ४५
विश्वरूपात्परमिताभीममनिर्घातनिस्वना

पुरायापुरायतमैर्जुष्टागंगाभागीरथीशुभा ४६
प्लवंतीचप्रवेगेनह्रदेचंद्रमसःशुभे
तयाह्युत्पादितःपुरायःसह्रदःसागरोपमः ४७
तांधारयामासतदादुर्द्धरांपर्वतैरपि
शतंवर्षसहस्राणिशिरसैवपिनाकधृक् ४८
मेरोस्तुपश्चिमेपार्श्वेकेतुमालोद्विजोत्तमाः
जंबूखंडेतुतत्रैवमहाजनपदोद्विजाः ४९
आयुर्दशसहस्राणिवर्षाणांतत्रसत्तमाः
सुवर्णवर्णाश्चनरास्त्रियश्चाप्सरसांसमाः ५०
अनामयावीतशोकानित्यंमुदितमानसाः
जायंतेमानवास्तत्रनिस्तप्तकनकप्रभाः ५१
गंधमादनशृंगेषुकुबेरःसहराक्षसैः
संवृतोप्सरसांसंघैर्मोदतेगुह्यकाधिपः ५२
गंधमादनपार्श्वेतुपरेविगतपातकाः
एकादशसहस्राणिवर्षाणांपरमायुषः ५३
तत्रकृष्णानराविप्रास्तेजोयुक्तामहाबलाः
स्त्रियश्चोत्पलपत्राभाःसर्वाःसुप्रियदर्शनाः ५४
नीलोत्पलधरंश्वेतंश्वेताद्धैररायकंवरम्
वर्षमैरावतंविप्रानानाजनपदावृतम् ५५
धनुखंडेःमहाभागाद्वेवर्षेदक्षणुत्तरे
इलावृत्तंमध्यगंतुपंचवर्षाणिचैवहि ५६
उत्तरोत्तरमेतेभ्योवर्षमुद्रिच्यतेगुणैः
आयुःप्रमाणमारोग्यंधर्मतःकामतोऽथतः ५७
समन्वितानिभूतानितेषुसर्वेषुसत्तमाः
एवमेषामहाभागाःपर्वतैःपृथिवीचिता ५८
हेमकूटस्तुसुमहान्कैलासोनामपर्वतः
तत्रवैश्रवणोदेवोगुह्यकैःसहमोदते ५९
अस्त्युत्तरेणकैलासंमैनाकंपर्वतंप्रति
हिररायशृंगःसुमहान्दिव्योमणिमयोगिरिः ६०
तस्यपार्श्वेमहद्दिव्यंशुभ्रंकांचनवालुकम्

रम्यंविष्णुसरोनामयत्रराजाभगीरथः ६१
दृष्ट्वाभागीरथींगंगामुवासबहुलाःसमाः
यूपामणिमयास्तत्रचैत्राश्चापिहिरण्मयाः ६२
तत्रेष्ट्वातुगतःसिद्धिंसहस्राक्षोमहायशाः
स्रष्टाभूतिपतिर्यत्रसर्वलोकैःसनातनः ६३
उपास्यतेतिग्मतेजायत्रभूतःसमंततः
नरनारायणौब्रह्मामनुःस्थाणुश्चपंचमः ६४
तत्रदिव्यात्रिपथगाप्रथमंतुप्रतिष्ठिता
ब्रह्मलोकादपाक्रांतासप्तधाप्रतिपद्यते ६५
वटोदकासानलिनीपार्वतीचसरस्वती
जंबूनदीचसीताचगंगासिंधुश्चसप्तमी ६६
अचिंत्यादिव्यसंज्ञासाप्रभावैश्चसमन्विता
उपास्यतेयत्रसत्रंसहस्रयुगपर्यये ६७
दृश्यादृश्याचभवतितत्रतत्रसरस्वती
एतादिव्याःसप्तगंगास्त्रिषुलोकेषुविश्रुताः ६८
रक्षांसिवैहिमवतीहेमकूटेचगुह्यकाः
सर्पानागाश्चनिषधेगोकर्णंचतपोवनम् ६९
देवासुराणांसर्वेषांश्वेतःपर्वतमुच्यते
गंधर्वानिषधेनित्यंनीलेब्रह्मर्षयस्तथा ७०
श्रृंगवांस्तुमहाभागादेवानांप्रतिसंचरः
इत्येतानिमहाभागाःसप्तवर्षाणिभागशः ७१
भूतान्युपनिविष्टानिगतिमंतिध्रुवाणिच
तेषांमृद्धिर्बहुविधादृश्यतेदेवमानुषा ७२
अशक्यंपरिसंख्यातुंश्रद्धेयातुविभूषिता
यांतुपृच्छथमांविप्रादिव्यमेनांशशाकृतिम् ७३
पार्श्वेशशस्यद्वेवर्षेउक्तेयेदक्षिणोत्तरे
कर्णेतुनागद्वीपश्चकाश्यपद्वीपएवच ७४
कर्णद्वीपशिलोविप्राःश्रीमान्मलयपर्वतः
एतद्द्वितीयंद्वीपस्यदृश्यतेशशिसंस्थितम् ७५
इतिश्रीपाद्मेमहापुराणेस्वर्गखंडेतृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

ऋषयऊचुः-
मेरोरथोत्तरंपश्चात्पूर्वमाचद्त्वसूततः
निखिलेनमहाबुद्धमाल्यवंतंचपर्वतम् १
सूतउवाच-
दद्विणेनतुनीलस्यमेरोःपार्श्वेतथोत्तरे
उत्तराःकुरवोविप्राःपुरायाःसिद्धनिषेविताः २
तत्रवृद्वामधुफलानित्यपुष्पफलोपगाः
पुष्पाणिचसुगंधीनिरसवंतिफलानिच ३
सर्वकामफलास्तत्रकेचिद्वृत्याद्विजोत्तमाः
अपरेद्वीरिणोनामवृद्वास्तत्रद्विजोत्तमाः ४
प्रद्वरंतिसदाद्वीरंतत्रसर्वेऽमृतोपमम्
वस्त्राणिचप्रसूयंतेफलेष्वाभरणानिच ५
सर्वामणिमयीभूमिःसूद्दमकांचनवालुका
सर्वर्तुसुखसंस्पर्शानिष्फलाश्चतपोधनाः ६
देवलोकच्युताःसर्वेजायंतेतत्रमानवाः
शुक्लाभिजनसंपन्नाःसर्वसुप्रियदर्शनाः ७
मिथुनानिचजायंतेस्त्रियश्चाप्सरसोपमाः
तेषांतेद्वीरिणांद्वीरंपिबंत्यमृतसंनिभम् ८
मिथुनंजायतेकालेसमंताच्चप्रवर्द्धते
तुल्यरूपगुणोपेतंसमवेशंतथैवच ९
एकमेवानुरूपंचचक्रवाकसमंद्विजाः
निरामयाश्चतेलोकानित्यंमुदितमानसाः १०
दशवर्षसहस्राणिदशवर्षशतानिच
जीवंतितेमहाभागानचान्योन्यंजहत्युत ११
भारुडानामशकुनास्तीद्दणतुंडामहाबलाः
तान्निर्हरंतीहमृतान्दरीषुप्रद्विपंतिच १२
उत्तराःकुरवोविप्राव्याख्यातास्तेसमासतः
मेरुपार्श्वमहंपूर्वंप्रवद्दयामियथातथम् १३
तस्यमूर्द्धाभिषेकस्तुभद्राश्वस्यतपोधनाः

भद्रशालवनंयत्रकालाम्राश्चमहाद्रुमाः १४
कालाम्रास्तुमहाभागानित्यंपुष्पफलाःशुभाः
द्रुमाश्चयोजनोत्सेधाःसिद्धचारणसेविताः १५
तत्रतेपुरुषाःश्वेतास्तेजोयुक्तमहाबलाः
स्त्रियःकुमुदवर्णाश्चसुंदर्यःप्रियदर्शनाः १६
चंद्रवर्णाश्चतुर्वर्णाःपूर्णचंद्रनिभाननाः
चंद्रशीतलगात्राश्चनृत्यगीतविशारदाः १७
दशवर्षसहस्राणितत्रायुर्द्विजसत्तमाः
कालाम्ररसपीतास्तेनित्यंसंस्थितयौवनाः १८
दक्षिणेनतुनीलस्यनिषधस्योत्तरेणतु
सुदर्शनोनाममहान्जंबूवृक्षःसनातनः १९
सर्वकामफलःपुण्यःसिद्धचारणसेवितः
तस्यनाम्नासमाख्यातोजंबूद्वीपःसनातनः २०
योजनानांसहस्रंचशतंचद्विजसत्तमाः
तथामाल्यवतःशृंगेपूर्वेपूर्वानुगांतकाः २१
योजनानांसहस्राणिपंचाशन्माल्यवान्द्विजाः
महारजतसंकाशाजायंतेतत्रमानवाः २२
ब्रह्मलोकच्युताःसर्वेसर्वेचब्रह्मवादिनः
तपस्तप्यंतितेदिव्यंभवंतिह्यूर्ध्वरेतसः २३
रक्षणार्थंतुभूतानांप्रविशंतिदिवाकरम्
षष्टिस्तानिसहस्राणिषष्टिरेवशतानिच २४
अरुणस्याग्रतोयांतिपरिवार्यदिवाकरम्
षष्टिवर्षसहस्राणिषष्टिरेवशतानिच २५
आदित्यतापतप्तास्तेविशंतिशशिमंडलम् २६
इतिश्रीपाद्मेमहापुराणेस्वर्गखंडेचतुर्थोऽध्यायः ४

## पंचमोऽध्यायः

ऋषयऊचुः–
वर्षाणांचैवनामानिपर्वतानांचसत्तम
आचक्ष्वनोयथातत्त्वंयेचपर्वतवासिनः १

सूतउवाच-
दक्षिणेनतुश्वेतस्यनिषधस्योत्तरेणतु
वर्षंरमणकंनामजायंतेतत्रमानवाः २
शुक्लाभिजनसंपन्नाःसर्वेतेप्रियदर्शनाः
निःसपत्नाश्चतेसर्वेजायंतेतत्रमानवाः ३
दशवर्षसहस्राणिशतानिदशपंचच
जीवंतितेमहाभागानित्यंमुदितमानसाः ४
दक्षिणेनतुनीलस्यनिषधस्योत्तरेणतु
वर्षंहिरगमयंनामयत्रहैरगवतीनदी ५
यत्रचायंमहाप्राज्ञाःपक्षिराट्पतगोत्तमः
यज्ञानुगाविप्रवराधन्विनःप्रियदर्शनाः ६
महाबलास्तत्रजनाविप्रामुदितमानसाः
एकादशसहस्राणिवर्षाणांतेतपोधनाः ७
आयुःप्रमाणंजीवंतिशतानिदशपंचच
शृंगाणिचपवित्राणित्रीरायेवद्विजपुंगवाः ८
एकंमणिमयंतत्रतथैकंरुक्ममद्भुतम्
सर्वरत्नमयंचैकंभवनैरुपशोभितम् ९
तत्रस्वयंप्रभादेवीनित्यंवसतिशंडिनी
उत्तरेणतुशृंगस्यसमुद्रांतेद्विजोत्तमाः १०
वर्षमैरावतंनामतस्माच्छृंगवतःपरम्
नतुतत्रसूर्यगतिर्जीर्यंतेनचमानवाः ११
चंद्रमाश्चसनक्षत्रोज्योतिर्भूतइवावृतः
पद्मप्रभाःपद्मवर्णाःपद्मपत्रनिभेक्षणाः १२
पद्मपत्रसुगंधाश्चजायंतेतत्रमानवाः
अनिष्पन्नानष्टगंधानिराहाराजितेंद्रियाः १३
देवलोकच्युताःसर्वेतथाविरजसोद्विजाः
त्रयोदशसहस्राणिवर्षाणांतेद्विजोत्तमाः १४
आयुःप्रमाणंजीवंतिनराधार्मिकपुंगवाः
क्षीरोदस्यसमुद्रस्यतथैवोत्तरतःप्रभुः १५
हरिस्तिष्ठतिवैकुंठःशकटेकनकामये

अष्टचक्रंहितद्यानंभूतयुक्तंमनोजवम् १६
अग्निवर्णंमहातेजोजांबूनदविभूषितम्
सप्रभुःसर्वभूतानांविभुश्चद्विजसत्तमाः १७
संक्षेपेविस्तरेचैवकर्ताकारयितातथा
पृथिव्यापस्तथाकाशंवायुस्तेजश्चसत्तमाः १८
सयज्ञःसर्वभूतानामास्यंतस्यहुताशनः १९
इतिश्रीपाद्मेमहापुराणेस्वर्गखंडेपंचमोऽध्यायः ५

षष्ठोऽध्यायः

ऋषयऊचुः–
यदिदंभारतंवर्षंपुण्यंपुण्यविधायकम्
तत्सर्वंनःसमाचक्ष्वत्वंहिनोबुद्धिमान्मतः १
सूतउवाच–
अत्रतेकीर्त्तयिष्यामिवर्षंभारतमुत्तमम्
प्रियमित्रस्यदेवस्यमनोर्वैवस्वतस्यच २
पृथोश्चप्राज्ञवैन्यस्यतथैक्ष्वाकोर्महात्मनः
ययातेरंबरीषस्यमांधातुर्नहुषस्यच ३
तथैवमुचुकुंदस्यकुबेरोशीनरस्यच
ऋषभस्यतथैलस्यनृगस्यनृपतेस्तथा ४
कुशिकस्यैवराजर्षेर्गाधेश्चैवमहात्मनः
सोमस्यचैवराजर्षेर्दिलीपस्यतथैवच ५
अन्येषांचमहाभागाःक्षत्रियाणांबलीयसाम्
सर्वेषामेवभूतानांप्रियंभारतमुत्तमम् ६
ततोवर्षंप्रवक्ष्यामियथाश्रुतमहोद्विजाः
महेंद्रोमलयःसह्यःशुक्तिमानृक्षवानपि ७
विंध्यश्चपारियात्रश्चसप्तैतेकुलपर्वताः
तेषांसहस्रशोविप्रापर्वतास्तेसमीपतः ८
अविज्ञाताःसारवंतोविपुलाश्चित्रसानवः
अन्येतुयेपरिज्ञाताह्रस्वाह्रस्वोपजीविनः ९
आर्यम्लेच्छसधर्माणस्तेमिश्राःपुरुषाद्विजाः

नदींपिबंतिविमलांगंगांसिंधुंसरस्वतीम् १०
गोदावरींनर्मदांचबहूदांचमहानदीम्
शतद्रुंचंद्रभागांचयमुनांचमहानदीम् ११
दृषद्वतींवितस्तांचविपापांस्वच्छवालुकाम्
नदींवेत्रवतींचैवकृष्णांवेणींचनिम्नगाम् १२
इरावतींवितस्तांचपयोष्णींदेविकामपि
वेदस्मृतिंवेदशिरांत्रिदिवांसिंधुलाकृमिम् १३
करीषिणींचित्रवहांत्रिसेनांचैवनिम्नगाम्
गोमतींधूतपापांचचंदनांचमहानदीम् १४
कौशिकींत्रिदिवांहृद्यांनाचितांरोहितारणीम्
रहस्यांशतकुंभांचसरयूंचद्विजोत्तमाः १५
चर्मरवतींवेत्रवतींहस्तिसोमांदिशंतथा
शरावतींपयोष्णींचभीमांभीमरथीमपि १६
कावेरीचुलुकांचापितापींशतमलामपि
नीवारांमहितांचापिसुप्रयोगांतथानदीम् १७
पवित्रांकृष्णलांसिंधुंवाजिनींपुरमालिनीम्
पूर्वाभिरामांवीरांचभीमांमालावतींतथा १८
पलाशिनींपापहरांमहेंद्रांपटलावतीम्
करीषिणीमसिक्नींचकुशचीरींमहानदीम् १९
मरुतांप्रवरांमेनांहेमांघृतवतींतथा
अनावतीमनुष्णांचसेव्यांकापींचसत्तमाः २०
सदावीरामधृष्यांचकुशचीरांमहानदीम्
रथचित्रांज्योतिरथांविश्वामित्रांकपिंजलाम् २१
चंद्रावहफलद्यंचैवकुचीरामंबुवाहिनीम्
वैनदींपिंगलांवेणांतुंगवेगांमहानदीम् २२
विदिशांकृष्णवेणांचताम्रांचकपिलामपि
धेनुंसकामांवेदस्वांहविःस्रावांमहापथाम् २३
शिप्रांचपिच्छलांचैवभारद्वाजींचनिम्नगाम्
कौर्णिकींनिम्नगांशोणांबाहुदामथचंद्रमाम् २४
दुर्गामंतःशिलांचैवब्रह्ममेध्यांदृषद्वतीम्

परोद्वामथरोहींचतथाजंबूनदीमपि २५
सुनासांतमसांदासींसामान्यांवरणामसिम्
नीलांधृतिकरींचैवपर्णाशांचमहानदीम् २६
मानवींवृषभांभासांब्रह्ममेध्यांदृषद्वतीम्
एताश्चान्याश्चबहुलामहानद्योद्विजर्षभाः २७
सदानिरामयांकृष्णांमंदगांमंदवाहिनीम्
ब्राह्मणींचमहागौरींदुर्गामपिचसत्तमाः २८
चित्रोत्पलांचित्ररथामतुलांरोहिणींतथा
मंदाकिनींवैतरणींकोकांचापिमहानदीम् २९
शुक्तिमतीमनंगांचतथैववृषसाह्वयाम्
लोहित्यांकरतोयांचतथैववृषकात्वयाम् ३०
कुमारीमृषितुल्यांचमारिषांचसरस्वतीम्
मंदाकिनींसुपुण्यांचसर्वांगंगांचसत्तमाः ३१
विश्वस्यमातरःसर्वाःसर्वाश्चैवमहाफलाः
तथानद्यःसुप्रकाशाःशतशोथसहस्रशः ३२
इत्येतासरितोविप्राःसमाख्यातायथास्मृति
अतऊर्द्ध्वजनपदान्निबोधगदतोमम ३३
तत्रेमेकुरुपांचालाःशाल्वमात्रेयजांगलाः
शूरसेनाःपुलिंदाश्चबौधामालास्तथैवच ३४
मत्स्याःकुशट्टाःसौगंध्याःकुत्सपाःकाशिकोशलाः
चेदिमत्स्यकरुषाश्चभोजाःसिंधुपुलिंदकाः ३५
उत्तमाश्चदशार्णाश्चमेकलाश्चोत्कलैःसह
पंचालाःकोशलाश्चैवनैकपृष्ठयुगंधराः ३६
बोधामद्राःकलिंगाश्चकाशयोपरकाशयः
जठराःकुकुराश्चैवसुदशार्णाःसुसत्तमाः ३७
कुंतयोऽवतयश्चैवतथैवापरकुंतयः
गोमंतामल्लकाःपुंड्राःविदर्भानृपवाहिकाः ३८
अश्मकाःसोत्तराश्चैवगोपराष्ट्राःकनीयसः
अधिराज्यकुशट्टाश्चमल्लराष्ट्राश्चकेरलाः ३९
मालवाश्चोपवास्याश्चचक्रावक्रालयाःशकाः

विदेहामगधाःसह्यामलजाविजयास्तथा ४०
अंगावंगाःकलिगाश्चयकृल्लोमानएवच
मल्लाःसुदेष्णाःप्रह्लादामहिषाःशशकास्तथा ४१
बाह्लिकावाटधानाश्चआभीराःकालतोयकाः
अपरांताःपरांताश्चपंकलाश्चर्मचंडिकाः ४२
अटवीशेखराश्चैवमेरुभूताश्चसत्तमाः
उपावृतानुपावृताःसुराष्ट्राःकेकयास्तथा ४३
कुट्टापरांतामाहेयाःकक्षाःसामुद्रनिष्कुटाः
अंधाश्चबहवोविप्राअंतर्गिर्यस्तथैवच ४४
बहिर्गिर्य्योंगमलदामगधामालवार्घटाः
सत्त्वतराःप्रावृषेयाःभार्गवाश्चद्विजर्षभाः ४५
पुंड्राभार्गाःकिराताश्चसुदेष्णाभासुरास्तथा
शकानिषादानिषधास्तथैवानर्तनैऋताः ४६
पूर्णलाःपूतिमत्स्याश्चकुंतलाकुशकास्तथा
तरिग्रहाश्शूरसेनाईजिकाःकल्पकारणाः ४७
तिलभागामसाराश्चमधुमत्ताःककुंदकाः
काश्मीराःसिंधुसौवीरागांधारादर्शकास्तथा ४८
अभीसाराःकुद्रुताश्चसौरिलाबाह्लिकास्तथा
दर्वीचमालवादर्वावातजामरथोरगाः ४९
बलरट्टास्तथाविप्राःसुदामानःमुमल्लिकाः
बंधाकरीकषाश्चैवकुलिदागंधिकास्तथा ५०
वनायवोदशाःपार्श्वरोमाणःकुशबिंदवः
काच्छागोपालकच्छाश्चजांगलाःकुरुवर्णकाः ५१
किराताबर्बराःसिद्धावैदेहास्ताम्रलिप्तिकाः
औड्रम्लेच्छाःससैरिंद्राःपार्वतीयाश्चसत्तमाः ५२
अथापरेजनपदादक्षिणामुनिपुंगवाः
द्रविडाःकेरलाःप्राच्यामूषिकाबालमूषिकाः ५३
कर्णाटकामाहिषकाविकंधामूषिकास्तथा
झल्लिकाःकुंतलाश्चैवसौहृदानलकाननाः ५४
कौक्कुटकास्तथाबोलाःकोकणामणिवालकाः

समंगाकनकाश्चैवकुंकुरांगारमारिषाः ५५
ध्वजिन्युत्सवसंकेतास्त्रिवर्गामाल्यसेनयः
व्यूढकाःकोरकाःप्रोष्टाःसंगवेगधरास्तथा ५६
तथैवविंद्यरुलिकाःपुलिदाबल्वलैःसह
मालवामलराश्चैवतथैवापरवर्तकाः ५७
कुलिदाःकालदाश्चैवचंडकाःकुरटास्तथा
मुशलास्तनवालाश्चसतीर्थापूतिसृंजयाः ५८
अनिदायाःशिवाटाश्चतपनाःसूतपास्तथा
ऋषिकाश्चविदर्भाश्चस्तंगनापरतंगकाः ५९
उत्तराश्चापरेम्लेच्छाजनाहिमुनिपुंगवाः
जवनाश्चसकांबोजादारुणाम्लेच्छजातयः ६०
सकृघृहाःकुलटयाश्चहूणापारसिकैःसह
तथैवरमणाश्चान्यास्तथाचदशमालिकाः ६१
क्षत्रियोपनिवेशाश्चवैश्यशूद्रकुलानिच
शूराभीराश्चदरदाःकाश्मीराःपशुभिःसह ६२
खांडीकाश्चतुषाराश्चपह्नगागिरिगह्वराः
आद्रेयाःसभिरादाजास्तथैवस्तनपोषकाः ६३
द्रोषकाश्चकलिगाश्चकिरातानांचजातयः
तोमराहन्यमानाश्चतथैवकरभंजकाः ६४
एतेचान्येजनपदाःप्राच्योदीच्यास्तथैवच
उद्देशमात्रेणमयादेशाःसंकीर्तिताद्विजाः
यथागुणबलंचापित्रिवर्गस्यमहाफलम् ६५
इतिश्रीपाद्मेमहापुराणेस्वर्गखंडेषष्ठोऽध्यायः ६

## सप्तमोऽध्यायः

ऋषयऊचुः–
भारतस्यास्यवर्षस्यतथाहैमवतस्यच
प्रमाणमायुषःसूतबलंचापिशुभाशुभम् १
अनागतमतिक्रांतंवर्तमानंचसत्तम
आचक्ष्वनोविस्तरेणहरिवर्षंतथैवच २

सूतउवाच-
चत्वारिभारतेवर्षेयुगानिमुनिपुंगवाः
कृतंत्रेताद्वापरंचतिष्यंचद्विजसत्तमाः ३
पूर्वेकृतयुगंनामततस्त्रेतायुगंद्विजाः
तत्पश्चाद्द्वापरंचाथततस्तिष्यःप्रवर्तते ४
चत्वारितुसहस्राणिवर्षाणांमुनिपुंगवाः
आयुःसंख्याकृतयुगेसंख्यातातहितपोधनाः ५
तथात्रीणिसहस्राणित्रेतायामायुषोविदुः
द्वेसहस्रेद्वापरेतुभुवितिष्ठंतिसांप्रतम् ६
तत्प्रमाणस्थितिर्ह्यस्तितिष्येतुमुनिपुंगवाः
गर्भस्थाश्चम्रियंतेऽत्रतथाजाताम्रियंतिच ७
महाबलामहासत्त्वाःप्रज्ञागुणसमन्विताः
प्रजायंतेचजाताश्चशतशोऽथसहस्रशः ८
द्विजाःकृतयुगेविप्राबलिनःप्रियदर्शनाः
प्रजायंतेचजाताश्चमुनयोवैतपोधनाः ९
महोत्साहामहात्मानोधार्मिकाःसत्यवादिनः
प्रियदर्शावपुष्मंतोमहावीर्य्याधनुर्धराः १०
वीराहियुधिजायंतेक्षत्रियाःशूरसंमताः
त्रेतायांक्षत्रियास्तावत्सर्वेवैचक्रवर्तिनः ११
सर्ववर्णाश्चजायंतेसदैवद्वापरेयुगे
महोत्साहावीर्यवंतःपरस्परवधैषिणः १२
तेजसांधेनसंयुक्ताःक्रोधनाःपुरुषाःकिल
लुब्धाश्चानृतकाश्चैवतिष्येजायंतिभोद्विजाः १३
ईर्ष्यामानस्तथाक्रोधोमायासूयातथैवच
तिष्येभवंतिभूतानांरागोलोभश्चसत्तमाः १४
संक्षेपोवर्त्ततेविप्राद्वापरेयुगमध्यगे
गुणोत्तरंहैमवतंहरिवर्षंततःपरम् १५
इतिश्रीपाद्मेमहापुराणेस्वर्गखंडेसप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

ऋषयऊचुः-
जंबूखंडस्त्वयाप्रोक्तोयथावदिहसत्तमः
विष्कंभस्यचप्रब्रूहिपरिमाणंहितत्त्वतः १
समुद्रस्यप्रमाणंचसम्यगच्छिद्रदर्शनः
शाकद्वीपंचनोब्रूहिकुशद्वीपंचधार्मिकम् २
शाल्मलंचैवतत्त्वेनक्रौंचद्वीपंतथैवच
सूतउवाच-
विप्राःसुबहवोद्वीपाःयैरिदंसंततंजगत्
सप्तद्वीपान्प्रवक्ष्यामिशृणुध्वंद्विजपुंगवाः ३
अष्टादशसहस्राणियोजनानिद्विजोत्तमाः
षट्शतानिचपूर्णानिविष्कंभोजंबुपर्वतः ४
लवणस्यसमुद्रस्यविष्कंभोद्विगुणःस्मृतः
नानाजनपदाकीर्णोमणिविद्रुमचित्रितः ५
नैकधातुविचित्रैश्चपर्वतैरुपशोभितः
सिद्धचारणसंकीर्णैःसागरःपरिमंडलः ६
शाकद्वीपंचवक्ष्यामियथावदिहसत्तमाः
शृणुताद्ययथान्यायंब्रुवतोममधार्मिकाः ७
जंबुद्वीपप्रमाणेनद्विगुणःसद्विजर्षभाः
विष्कंभेनमहाभागाःसागरोऽपिविभागशः ८
क्षीरोदोमुनिशार्दूलायेनसंपरिवारितः
तत्रपुण्याजनपदास्तत्रनम्रियतेजनः ९
कुतएवहिदुर्भिक्षंक्षमातेजोयुताहिते
शाकद्वीपस्यसंक्षेपोयथावन्मुनिसत्तमाः
उक्तएषमहाभागाःकिमन्यत्कथयामिवः १०
ऋषयऊचुः-
शाकद्वीपस्यसंक्षेपोयथावदिहधार्मिक
उक्तस्त्वयामहाप्राज्ञविस्तरंब्रूहितत्त्वतः ११
सूतउवाच-
तथैवपर्वताविप्राःसप्तात्रमणिपर्वताः

रत्नाकरास्तथानद्यस्तेषांनामानिवर्णये १२
अतीवगुणवत्सर्वंतत्त्वंपृच्छथधार्मिकाः
देवर्षिगंधर्वयुतःप्रथमोमेरुरुच्यते १३
प्रागायतोमहाभागामलयोनामपर्वतः
ततोमेघाःप्रवर्त्तंतेप्रभवंतिचसर्वशः १४
ततःपरेणमुनयोजलधारोमहागिरिः
ततोनित्यमुपादत्तेवासवःपरमंजलम् १५
ततोवर्षंप्रभवतिवर्षाकालेद्विजोत्तमाः
उच्चैर्गिरीरैवतकोयत्रनित्यंप्रतिष्ठितम् १६
रेवतीदिविनक्षत्रंपितामहकृतोविधिः
उत्तरेणतुविप्रेंद्राःश्यामोनाममहागिरिः १७
नवमेघप्रभःप्रांशुःश्रीमानुज्ज्वलविग्रहः
यतःश्यामत्वमापन्नाःप्रजामुदितमानसाः १८
ऋषयऊचुः–
सुमहान्संशयोऽस्माकंप्राप्तोयंसूतयत्त्वया
प्रजाःकथंसूतसम्यक्संप्राप्ताःश्यामतामिह १९
सूतउवाच–
सर्वेष्वेवमहाप्राज्ञाद्वीपेषुमुनिपुंगवाः
गौरःकृष्णश्चपतगस्तयोर्वर्णांतरेद्विजाः २०
श्यामोयस्मात्प्रवृत्तोवैतस्मात्श्यामगिरिःस्मृतः
ततःपरंमुनिश्रेष्ठादुर्गशैलोमहोदयः २१
केशरीकेशरयुतोयतोवातःप्रवर्त्तते
तेषांयोजनविष्कंभोद्विगुणःप्रविभागशः २२
वर्षाणितेषुविप्रेंद्राःसंप्रोक्तानिमनीषिभिः
महामेरुर्महाकाशोजलदःकुमुदोत्तरम् २३
जलधारोमहाप्राज्ञःसुकुमारइतिस्मृतः
रेवतस्यतुकौमारःश्यामश्चमणिकांचनः २४
केशरस्याथमौदाकीपरेणतुमहान्पुमान्
परिवार्य्यंतुविप्रेंद्रादैर्घ्यंह्रस्वत्वमेवच २५
जंबूद्वीपेनसंख्यातस्तस्यमध्येमहाद्रुमः

शाकोनाममहाप्राज्ञाःप्रजास्तस्यसहानुगाः २६
तत्रपुण्याजनपदाःपूज्यतेतत्रशंकरः
तत्रगच्छंतिसिद्धाश्चचारणादैवतानिच २७
धार्मिकाश्चप्रजाःसर्वाःचत्वारोगतमत्सराः
वर्णाःस्वकर्मनिरतानचस्तेनोऽत्रदृश्यते २८
दीर्घायुषोमहाप्राज्ञाजरामृत्युविवर्जिताः
प्रजास्तत्रविवर्द्धंतेवर्षास्विवसमुद्रगाः २९
नद्यःपुण्यजलास्तत्रगंगाचबहुधागता
सुकुमारीकुमारीचशीताशीतोदकातथा ३०
महानदीचभोविप्रास्तथामणिजलानदी
इक्षुवर्द्धनिकाचैवनदीमुनिवराःस्मृताः ३१
ततःप्रवृत्ताःपुण्योदानद्यःपरमशोभनाः
सहस्राणांशतान्येवयतोवर्षतिवासवः ३२
नतासांनामधेयानिपरिस्मर्तुंतथैवच
शक्यंतेपरिसंख्यातुंपुण्यास्ताहिसरिद्वराः ३३
ततःपुण्याजनपदाश्चत्वारोलोकविश्रुताः
मृगाश्चमशकाश्चैवमानसामल्लकास्तथा ३४
मृगाश्चब्रह्मभूयिष्ठाःस्वकर्मनिरताद्विजाः
मशकेषुतुराजन्याधार्मिकाःसर्वकामदाः ३५
मानसाश्चमहाभागावैश्यधर्मोपजीविनः
सर्वकामसमायुक्ताःशूराधर्मार्थनिश्चिताः ३६
शूद्रास्तुमल्लकानित्यंपुरुषाधर्मशीलिनः
नतत्रराजाविप्रेंद्रानदंडोनचदंडिकाः ३७
स्वधर्मेणैवधर्मज्ञास्तेरक्षंतिपरस्परम्
एतावदेवशक्यंतुतत्रद्वीपेप्रभाषितुम् ३८
एतदेवचश्रोतव्यंशाकद्वीपेमहौजसि ३९

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेऽष्टमोऽध्यायः ८

## नवमोऽध्यायः

सूतउवाच-

उत्तरेषुचभोविप्राद्वीपेषुश्रूयतेकथा
एवंतत्रमहाभागाब्रुवतस्तन्निबोधत १
घृततोयःसमुद्रोथदधिमंडोदकोपरः
सुरोदसागरश्चैवतथान्योदुग्धसागरः २
परस्परेणद्विगुणाःसर्वेद्वीपाद्विजर्षभाः
पर्वताश्चमहाप्राज्ञाःसमुद्रैःपरिवारिताः ३
गौरस्तुमध्यमेद्वीपेगिरिर्मनःशिलोमहान्
पर्वतःपश्चिमेकृष्णोनारायणसखोद्विजाः ४
तत्ररत्नानिदिव्यानिस्वयंरक्षतिकेशवः
प्रसन्नश्चाभवत्तत्रप्रजानांव्यदधात्सुखम् ५
शरद्वीपेकुशस्तंबोमध्येजनपदस्यह
संपूज्यतेशाल्मलिश्चद्वीपेशाल्मलिकेद्विजाः ६
क्रौंचद्वीपेमहाक्रौंचोगिरीरत्नचयाकरः
संपूज्यतेभोविप्रेंद्राश्चातुर्वर्ण्येननित्यदा ७
गोमंतःपर्वतोविप्राःसुमहान्सर्वधातुकः
यत्रनित्यंनिवसतिश्रीमान्कमललोचनः ८
मोक्षिभिःसंगतोनित्यंप्रभुर्नारायणोहरिः
कुशद्वीपेतुविप्रेंद्राःपर्वतोविद्रुमैश्चितः ९
सुनामाचसुदुर्धर्षोद्वितीयोहेमपर्वतः
द्युतिमान्नामविप्रेंद्रास्तृतीयःकुमुदोगिरिः १०
चतुर्थःपुष्पवान्नामपंचमस्तुकुशेशयः
षष्टोहरिगिरिर्नामषडेतेपर्वतोत्तमाः ११
तेषामंतरविष्कंभोद्विगुणःप्रविभागशः
औद्भिदंप्रथमंवर्षंद्वितीयंरेणुमंडलम् १२
तृतीयंसुरथंनामचतुर्थंलंबनंस्मृतम्
धृतिमत्पंचमंवर्षंषष्ठंवर्षंप्रभाकरम् १३
सप्तमंकापिलंवर्षंसप्तैतेवर्षलंबकाः
एतेषुदेवगंधर्वाःप्रजाश्चमुदिताद्विजाः
विहरंतिरमंतेचनतेषुम्रियतेजनः १४
नतेषुदस्यवःसंतिम्लेच्छजात्योऽपिवाद्विजाः

गौरप्रायोजनःसर्वःसुकुमारश्चसत्तमाः १५
अवशिष्टेषुसर्वेषुवक्ष्यामिद्विजपुंगवाः
यथाश्रुतंमहाप्राज्ञावर्ण्यतेशृणुतद्विजाः १६
क्रौंचद्वीपेमहाभागाःक्रौंचोनाममहागिरिः
क्रौंचात्परोवामनकोवामनादंधकारकः १७
अंधकारात्परोविप्रामैनाकःपर्वतोत्तमः
मैनाकात्परतोविप्रागोविंदोगिरिरुत्तमः १८
गोविंदात्परतश्चैवपुंडरीकोमहागिरिः
पुंडरीकात्परश्चापिप्रोच्यतेदुंदुभिस्वनः १९
पुरस्ताद्द्विगुणस्तेषांविष्कंभोमुनिपुंगवाः
देशांस्तत्रप्रवक्ष्यामितन्मेनिगदतःशृणु २०
क्रौंचस्यकुशलोदेशोवामनस्यमनोनुगः
मनोनुगात्परोदेशउष्णोनामतपोधनाः २१
उष्णात्परःप्रावरकःप्रावरादंधकारकः
अंधकारकदेशात्तुमुनिदेशःपरःस्मृतः २२
मुनिदेशात्परश्चैवप्रोच्यतेदुंदुभिस्वनः
सिद्धचारणसंकीर्णोगौरःप्रायोजनःस्मृतः २३
एतेदेशाःसमाख्यातादेवगंधर्वसेविताः
पुष्करेपुष्करोनामपर्वतोमणिरत्नवान् २४
तत्रनित्यंप्रसरतिस्वयंदेवःप्रजापतिः
पर्युपासंतितंनित्यंदेवाःसर्वेमहर्षयः २५
वाग्भिर्मनोनुकूलाभिःपूजयंतिद्विजोत्तमाः
जंबूद्वीपात्प्रवर्त्तन्तेरत्नानिविविधानिच २६
द्वीपेषुतेषुसर्वेषुप्रजानांमुनिसत्तमाः
विप्राणांब्रह्मचर्येणसत्येनचदमेनच २७
आरोग्यायुष्प्रमाणाभ्यांद्विगुणंद्विगुणंततः
एतेजनपदाविप्राद्वीपेषुतेषुसत्तमाः २८
उक्ताजनपदायेषुधर्मश्चैकःप्रवर्त्तते
ईश्वरोदंडमुद्यम्यस्वयमेवप्रजापतिः २९
द्वीपानेतान्मुनिवरारक्षंस्तिष्ठतिसर्वदा

सराजासशिवोविप्राःसपितासपितामहः ३०
गोपायतिद्विजश्रेष्ठाःप्रजाःसद्विजपंडिताः
भोजनंचात्रविप्रेंद्राःप्रजाःस्वयमुपस्थितम् ३१
सिद्धमेवमहाभागाभुंजतेतद्धिनित्यदा
ततःपरंमहाशैलोदृश्यतेलोकसंस्थितिः ३२
चतुरस्रोमहाप्राज्ञःसर्वतःपरिमंडलः
तत्रतिष्ठंतिविप्रेंद्राश्चत्वारोलोकसंमताः ३३
दिग्गजाहिमुनिश्रेष्ठावामनैरावतांजनाः
सुप्रतीकस्तथाविप्राःप्रभिन्नकरटामुखाः ३४
तस्याहंपरिमाणंनसंख्यातुमिहमुत्सहे
असंख्यातःसुनित्यंहितिर्यगूर्ध्वमधस्तथा ३५
तत्रवैवायवोवांतिदिग्भ्यःसर्वाभ्यएवच
असंबंधामुनिश्रेष्ठास्तान्निगृह्णंतितेद्विजाः ३६
पुष्करैःपद्मसंकाशैर्विकर्षंतिमहाप्रभैः
शतधापुनरेवाशुतेतान्मुंचंतिनित्यशः ३७
श्वसद्भिर्मुखनासाभ्यांदिग्गजैरिवमारुताः
आगच्छंतिद्विजश्रेष्ठास्तत्रतिष्ठंतिवैप्रजाः ३८
यथोद्दिष्टंमयाप्रोक्तंसनिर्माणमिदंजगत्
श्रुत्वेदंपृथिवीमानंपुण्यदंचमनोनुगम् ३९
श्रीमांस्तरतिविप्रेंद्राःसिद्धार्थःसाधुसंमतः
आयुर्बलंचकीर्त्तिश्चतस्यतेजश्चवर्द्धते ४०
यःशृणोतिसमाख्यातुंपर्वणीदंधृतव्रतः
प्रीयंतेपितरस्तस्यतथैवचपितामहाः ४१
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेनवमोऽध्यायः ९

## दशमोऽध्यायः

ऋषयऊचुः–
पृथिव्याहिपरीमाणंसंस्थानंसरितस्तथा
त्वत्तःश्रुत्वामहाभागअमृतंपीतमेवच १
तत्रभूमौचतीर्थानिपावनानीतिनःश्रुतम्

आचन्दवतानिसर्वाणियथाफलकराणिच
सविशेषंमहाप्राज्ञश्रोतुमिच्छामहेतव २
सूतउवाच-
धन्यंपुरायंमहाख्यानंपृष्टमेवतपोधनाः
यथामतिप्रवन्दयामियथायोगंयथाश्रुतम् ३
पुरातनंप्रवन्दयामिदेवर्षेर्नारदस्यहि
युधिष्ठिरेणसंवादंशृणुतद्विजसत्तमाः ४
हृतराज्याःपांडुपुत्रावनेतस्मिन्महारथाः
न्यवसंतिमहाभागाद्रौपद्यासहपांडवाः ५
अथापश्यन्महात्मानंदेवर्षिंतत्रनारदम्
दीप्यमानंश्रियाब्राह्म्यादीप्ताग्निसमतेजसम् ६
सतैःपरिवृतःश्रीमान्भ्रातृभिःकुरुनंदनः
दिविभातिहिदीप्तौजादेवैरिवशतक्रतुः ७
यथाचदेवान्सावित्रीयाज्ञसेनीतथापतीन्
नजहौधर्मतःपार्थान्मेरुमर्कप्रभायथा ८
प्रतिगृह्यततःपूजांनारदोभगवानृषिः
आश्वासयद्धर्म्मपुत्रंयुक्तरूपप्रियेणच ९
उवाचचमहात्मानंधर्म्मराजंयुधिष्ठिरम्
ब्रूहिधर्म्मभृतांश्रेष्ठकिंप्रार्थ्यंहिददामिते १०
अथधर्मसुतोराजाप्रणम्यभ्रातृभिःसह
उवाचप्रांजलिर्वाक्यंनारदंदेवसंमितम् ११
त्वयितुष्टेमहाभागसर्वलोकाभिपूजिते
कृतमित्येवमन्येहिप्रसादात्तवसुव्रत १२
यदित्वहमनुग्राह्योभ्रातृभिःसहितोऽनघ
संदेहंमेमुनिश्रेष्ठहृत्स्थंत्वंछेत्तुमर्हसि १३
प्रदन्तिणांयःकुरुतेपृथिवींतीर्थतत्परः
किंफलंतस्यकात्स्न्येंनतद्ब्रह्मन्वक्तुमर्हसि १४
नारदउवाच-
शृणुराजन्नवहितोदिलीपेनयथापुरा
वसिष्ठस्यसकाशाद्वैसर्वमेतदुपश्रुतम् १५

पुराभागीरथीतीरेदिलीपोराजसत्तमः
धर्म्यंव्रतंसमास्थायन्यवसन्मुनिवत्तदा १६
शुभेदेशेमहाराजपुरायेदेवर्षिपूजिते
गंगाद्वारेमहातेजादेवगंधर्वसेविते १७
सपितृंस्तर्पयामासदेवांश्चपरमद्युतिः
ऋषींश्चतर्पयामासविधिदृष्टेनकर्मणा १८
कस्यचित्त्वथकालस्यजपन्नेवमहामनाः
ददर्शभूतसंकाशंवसिष्ठमृषिमुत्तमम् १९
पुरोहितंसतंदृष्ट्वादीप्यमानमिवश्रिया
प्रहर्षमतुलंलेभेविस्मयंपरमंययौ २०
उपस्थितंमहाराजपूजयामासभारत
सहिधर्म्मभृतांश्रेष्ठोविधिदृष्टेनकर्मणा २१
शिरसाचार्घ्यमादायशुचिःप्रयतमानसः
नामसंकीर्त्तयामासतस्मिन्ब्रह्मर्षिसत्तमे २२
दिलीपोऽहतुभद्रंतेदासोस्मितवसुव्रत
तवसंदर्शनादेवमुक्तोहंसर्वकिल्बिषैः २३
एवमुक्त्वामहाराजदिलीपोद्विपदांवरः
वाग्यतःप्रांजलिर्भूत्वातूष्णीमासीद्युधिष्ठिर २४
तंदृष्ट्वानियमेनाथस्वाध्यायेनचकर्षितम्
दिलीपंनृपतिश्रेष्ठंमुनिःप्रीतमनाभवत् २५
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेदशमोऽध्यायः १०

## एकादशोऽध्यायः

वसिष्ठउवाच-
अनेनतवधर्मज्ञप्रश्रयेणदमेनच
सत्येनचमहाभागतुष्टोस्मितवसर्वशः १
यस्येदृशस्तेधर्मोयंपितरस्तारितास्त्वया
तेनपश्यसिमांपुत्रयाज्यश्चासिममानघ २
प्रीतिर्मेवर्द्धतेतेऽद्यब्रूहिकिंकरवाणिते
यद्वक्ष्यसिनरश्रेष्ठतस्यदातास्मितेनघ ३

दिलीपउवाच-
वेदवेदांगतत्त्वज्ञसर्वलोकाभिपूजित
कृतमित्येवमन्येहियदहंदृष्टवान्प्रभुम् ४
यदित्वहमनुग्राह्यस्तवधर्म्मभृतांवर
प्रच्छयामिहृत्स्थंसंदेहंतन्मेत्वंवक्तुमर्हसि ५
अस्तिमेभगवन्कश्चित्तीर्थेयोधर्मसंशयः
तदहंश्रोतुमिच्छामिपृथक्संकीर्तनंत्वया ६
प्रदक्षिणांयःपृथिवींकरोतिद्विजसत्तम
किंफलंतस्यविप्रर्षेतन्मेब्रूहितपोधन ७
वसिष्ठउवाच-
कथयिष्यामितदहमृषीणांमत्परायणम्
तदेकाग्रमनास्तातशृणुतीर्थेषुयत्फलम् ८
यस्यहस्तौचपादौचमनश्चैवसुसंयतम्
विद्यातपश्चकीर्तिश्चसतीर्थफलमश्नुते ९
प्रतिग्रहादुपावृत्तःसंतुष्टोनियतःशुचिः
अहंकारनिवृत्तश्चसतीर्थफलमश्नुते १०
अकल्किकोनिराहारोऽलब्धाहारोजितेंद्रियः
विमुक्तःसर्वदोषैर्यःसतीर्थफलमश्नुते ११
अक्रोधनश्चराजेंद्रसत्यशीलोदृढव्रतः
आत्मोपमश्चभूतेषुसतीर्थफलमश्नुते १२
ऋषिभिःक्रतवःप्रोक्तादेवेष्वपियथाक्रमम्
फलंचैवयथातत्त्वंप्रेत्यचेहचसर्वशः १३
नतेशक्यादरिद्रेणयज्ञाःप्राप्तुंमहीपते
बहूपकरणायज्ञानानासंभारविस्तराः १४
प्राप्यंतेपार्थिवैरेतेसमृद्धैर्वानरैःक्वचित्
ननिर्धनैर्नरगणैरेकात्मभिरसाधनैः १५
योदरिद्रैरपिविधिःशक्यःप्राप्तुंजनेश्वर
तुल्योयज्ञफलैःपुण्यैस्तंनिबोधमहीपते १६
ऋषीणांपरमंगुह्यमिदंधर्म्मभृतांवर
तीर्थाभिगमनंपुण्यंयज्ञैरपिविशिष्यते १७

अनुपोष्यत्रिरात्राणितीर्थाभिगमनेनच
अदत्वाकांचनंगाश्चदरिद्रोनामजायते १८
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वाविपुलदक्षिणैः
नतत्फलमवाप्नोतितीर्थाभिगमनेनयत् १९
नृलोकेदेवलोकस्यतीर्थंत्रैलोक्यविश्रुतम्
पुष्करंतीर्थमासाद्यदेवदेवसमोभवेत् २०
दशकोटिसहस्राणितीर्थानांवैमहीपते
सान्निध्यंपुष्करेयेषांत्रिसंध्यंसूर्यवंशज २१
आदित्यावसवोरुद्राःसाध्याश्चसमरुद्गणाः
गंधर्वाप्सरसश्चैवतत्रसन्निहिताःप्रभो २२
यत्रदेवास्तपस्तप्त्वादैत्याब्रह्मर्षयस्तथा
दिव्ययोगामहाराजपुरायेनमहताद्विजाः २३
मनसाप्यभिकामस्यपुष्कराणिमनीषिणः
पूयंतेसर्वपापानिनाकपृष्ठेचपूज्यते २४
अस्मिंस्तीर्थेमहाभागनित्यमेवपितामहः
उवासपरमप्रीतोदेवदानवसंमतः २५
पुष्करेषुमहाभागदेवाःसर्षिपुरोगमाः
सिद्धिंपरमिकांपाप्ताःपुरायेनमहतान्विताः २६
तत्राभिषेकंयःकुर्यात्पितृदेवार्चनेरतः
अश्वमेधाद्दशगुणंप्रवदंतिमनीषिणः २७
अप्येकंभोजयेद्विप्रंपुष्करारगयमाश्रितः
तेनैतिपूजिताँल्लोकान्ब्रह्मणःसदनेस्थितान् २८
सायंप्रातःस्मरेद्यस्तुपुष्कराणिकृतांजलि
उपस्पृष्टंभवेत्तेनसर्वतीर्थेषुपार्थिव २९
जन्मप्रभृतियत्पापंस्त्रियोवापुरुषस्यवा
पुष्करेगतमात्रस्यसर्वमेवप्रणश्यति ३०
यथासुराणांसर्वेषामादिस्तुमधुसूदनः
तथैवपुष्करोराजन्तीर्थानामादिरुच्यते ३१
उष्ट्वाद्वादशर्षाणिपुष्करेनियतःशुचिः
क्रतून्सर्वानवाप्नोतिब्रह्मलोकंचगच्छति ३२

यस्तुवर्षशतंपूर्णमग्निहोत्रमुपाश्नुते
कार्तिकींवावसेदेकांपुष्करेसममेवतत् ३३
दुष्करंपुष्करेगंतुंदुष्करंपुष्करेतपः
दुष्करंपुष्करेदानंवस्तुंचैवसुदुष्करम् ३४
त्रीणिशृंगाणिशुभ्राणित्रीणिप्रस्रवणानिच
पुष्करारण्यादितीर्थानिनविद्मस्तत्रकारणम् ३५
उष्ट्वाद्वादशवर्षाणिनियतोनियताशनः
समुक्तःसर्वपापेभ्योसर्वक्रतुफलंलभेत् ३६
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेपुष्करतीर्थमाहात्म्य-
वर्णनंनामएकादशोऽध्यायः ११

## द्वादशोऽध्यायः

वसिष्ठउवाच-
प्रदक्षिणमुपावृत्तोजंबूमार्गेसमाविशेत्
जंबूमार्गंसमाविश्यपितृदेवर्षिपूजितम् १
अश्वमेधमवाप्नोतिविष्णुलोकंचगच्छति
तत्रोष्यरजनीःपंचषष्ठकालेश्नुवन्नरः २
नदुर्गतिमवाप्नोतिसिद्धिंचाप्नोत्यनुत्तमाम्
जंबुमार्गादुपावृत्तोगच्छेत्तुदुलिकाश्रमम् ३
नदुर्गतिमवाप्नोतिस्वर्गलोकेचपूज्यते
अगस्त्याश्रममासाद्यपितृदेवार्चनेरतः ४
त्रिरात्रोपोषितोराजन्नग्निष्टोमफलंलभेत्
शाकवृत्तिःफलैर्वापिकौमारंविंदतेपरम् ५
कन्याश्रमंसमासाद्यश्रीपुष्टंलोकपूजितम्
धर्मारण्यंहितत्पुण्यमाद्यंचपार्थिवर्षभ ६
यत्रप्रविष्टमात्रोवैपापेभ्योविप्रमुच्यते
अर्चयित्वापितृन्देवान्प्रयतोनियताशनः ७
सर्वकामसमृद्धस्ययज्ञस्यफलमश्नुते
प्रादक्षिण्यंततःकृत्वाययातिपतनंव्रजेत् ८
हयमेधस्ययज्ञस्यफलमाप्नोतितित्रवै

महाकालमतोगच्छेन्नियतोनियताशनः ९
कोटितीर्थमुपस्पृश्यहयमेधफलंलभेत्
ततोगच्छेतधर्मज्ञस्थानंतीर्थमुमापतेः १०
नाम्नाभद्रवटंनामत्रिषुलोकेषुविश्रुतम्
तत्राभिगम्यचेशानंगोसहस्रफलंलभेत् ११
महादेवप्रसादाच्चगाणपत्यमवाप्नुयात्
समृद्धमसपत्नंतुश्रियायुक्तंनरोत्तम १२
नर्मदांतुसमासाद्यनदींत्रैलोक्यविश्रुताम्
तर्पयित्वापितृन्देवानग्निष्टोमफलंलभेत् १३

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेद्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

युधिष्ठिरउवाच-
वसिष्ठेनदिलीपायकथितंतीर्थमुत्तमम्
नर्मदेतिचविख्यातंपापपर्वतदारणम् १
भूयश्चश्रोतुमिच्छामितन्मेकथयनारद
नर्मदायाश्चमाहात्म्यंवसिष्ठोक्तंद्विजोत्तम २
कथमेषामहापुण्यानदीसर्वत्रविश्रुता
नर्मदानामविख्यातातन्ममब्रूहिनारद ३
नारदउवाच-
नर्मदासरितांश्रेष्ठासर्वपापप्रणाशिनी
तारयेत्सर्वभूतानिस्थावराणिचराणिच ४
नर्मदायास्तुमाहात्म्यंवसिष्ठोक्तंमयाश्रुतम्
तदेतद्धिमहाराजसर्वंहिकथयामिते ५
पुण्याकनखलेगङ्गाकुरुक्षेत्रेसरस्वती
ग्रामेवायदिवारण्येपुण्यासर्वत्रनर्म्मदा ६
त्रिभिःसारस्वतंतोयंसप्ताहेनतुयामुनम्
सद्यःपुनातिगांगेयंदर्शनादेवनार्मदम् ७
कलिगदेशेपश्चार्द्धेपर्वतेऽमरकंटके
पुण्याचत्रिषुलोकेषुरमणीयामनोरमा ८

सदेवासुरगंधर्वाऋृषयश्चतपोधनाः
तपस्तप्त्वामहाराजसिद्धिंचपरमांगताः ९
तत्रस्नात्वामहाराजनियमस्थोजितेंद्रियः
उपोष्यरजनीमेकांकुलानांतारयेच्छतम् १०
जनेश्वरेनरःस्नात्वापिंडंदत्वायथाविधि
पितरस्तस्यतृप्यंतियावदाभूतसंप्लवम् ११
पर्वतस्यसमंतात्तुरुद्रकोटिःप्रतिष्ठिता
स्नानंयःकुरुतेतत्रगंधमाल्यानुलेपनम् १२
प्रीतातस्यभवेत्सर्वारुद्रकोटिर्नसंशयः
पर्वतेपश्चिमस्यांतेस्वयंदेवोमहेश्वरः १३
तत्रस्नात्वाशुचिर्भूत्वाब्रह्मचारीजितेंद्रियः
पितृकार्यंतुकुर्वीतविधिदृष्टेनकर्मणा १४
तिलोदकेनतत्रैवतर्पयेत्पितृदेवताः
आसप्तमंकुलंतस्यस्वर्गेतिष्ठतिपांडव १५
षष्टिवर्षसहस्राणिस्वर्गलोकेमहीयते
अप्सरोगणसंकीर्णोदिव्यस्त्रीपरिवारितः १६
दिव्यगंधानुलिप्तश्चदिव्यालंकारभूषितः
ततःस्वर्गात्परिभ्रष्टोजायतेविपुलेकुले १७
धनवान्दानशीलश्चधार्मिकश्चैवजायते
पुनःस्मरतितत्तीर्थंगमनंतत्रकुर्वते १८
तारयित्वाकुलशतंरुद्रलोकंसगच्छति
योजनानांशतंसाग्रंश्रूयतेसरिदुत्तमा १९
विस्तारेणतुराजेन्द्रयोजनद्वयमंतरम्
षष्टितीर्थसहस्राणिषष्टिकोटयस्तथैवच २०
पर्वतस्यसमंतात्तुतिष्ठंत्यमरकंटके
ब्रह्मचारीशुचिर्भूत्वाजितक्रोधोजितेंद्रियः २१
सर्वहिंसानिवृत्तश्चसर्वभूतहितेरतः
एवंसर्वसमाचारःक्षेत्रपालान्परिव्रजेत् २२
तस्यपुण्यफलंराजन्शृणुष्वावहितोहिमे
शतंवर्षसहस्राणांस्वर्गेमोदेतपांडव २३

अप्सरोगणसंकीर्णेदिव्यस्त्रीपरिचारिते
दिव्यगंधानुलिप्तश्चदिव्यालंकारभूषितः २४
क्रीडतेदेवलोकेतुदैवतैःसहमोदते
ततःस्वर्गात्परिभ्रष्टोराजाभवतिवीर्यवान् २५
गृहंसलभतेचैवनानारत्नविभूषितम्
स्तंभैर्मणिमयैर्दिव्यैर्वज्रवैडूर्यभूषितैः २६
आलेख्यसहितंदिव्यंदासीदाससमन्वितम्
मत्तमातंगशब्दैश्चहयानांहेषितेनच २७
क्षुभ्यतेतस्यतद्द्वारमिंद्रस्यभवनंयथा
राजराजेश्वरःश्रीमान्सर्वस्त्रीजनवल्लभः २८
तस्मिन्गृहेउषित्वातुक्रीडाभोगसमन्वितः
जीवेद्वर्षशतंसाग्रंसर्वरोगविवर्जितः २९
एवंभोगोभवेत्तस्ययोमृतोमरकंटके
अग्निप्रवेशेऽथजलेतथाचैवअनाशने ३०
अनिवर्तिकागतिस्तस्यपर्वतस्यांबरेयथा
पतनंपततेयस्तुसनरोमानवाधिपः ३१
कन्यास्त्रीणिसहस्राणिएकैकस्यापिचापरे
तिष्ठंतिभवनेतस्यप्रेषणंप्रार्थयंतिच ३२
दिव्यभोगसमुत्पन्नःक्रीडतेकालमक्षयम्
पृथिव्यामासमुद्रायामीदृशोनैवजायते ३३
यादृशोयंनरश्रेष्ठपर्वतेऽमरकंटके
कोटितीर्थंतुविज्ञेयंपर्वतस्यतुपश्चिमे ३४
रुद्रोजालेश्वरोनामत्रिषुलोकेषुविश्रुतः
तस्यपिंडप्रदानेनसंध्योपासनकर्मणा ३५
पितरोदशवर्षाणितर्पितास्तुभवंतिते
दक्षिणेनर्मदायास्तुकपिलाख्यामहानदी ३६
सरलार्जुनसंच्छन्नानातिदूरेव्यवस्थिता
अस्तिपुण्यामहाभागात्रिषुलोकेषुविश्रुता ३७
तत्रकोटिशतंसाग्रंतीर्थानांतुयुधिष्ठिर
पुराणेश्रूयतेराजन्सर्वंकोटिगुणंभवेत् ३८

तस्यास्तीरेतुयेवृक्षाःपतिताःकालपर्ययात्
नर्मदातोयसंयुक्तास्तेपियांतिपरांगतिम् ३९
द्वितीयातुमहाभागविशल्यकरणाशुभा
तत्रतीरेनरःस्नात्वाविशल्योभवतिक्षणात् ४०
तत्रदेवगणाःसर्वेसकिन्नरमहोरगाः
यक्षराक्षसगंधर्वाऋषयश्चतपोधनाः ४१
सर्वेसमागतास्तत्रपर्वतेऽमरकंटके
तैश्चसर्वैःसमागम्यमुनिभिश्चतपोधनैः ४२
नर्मदासंश्रितापुण्याविशल्यानामनामतः
उत्पादितामहाभागासर्वपापप्रणाशिनी ४३
तत्रस्नात्वानरोराजन्ब्रह्मचारीजितेंद्रियः
उपोष्यरजनीमेकांकुलानांतारयेच्छतम् ४४
कपिलाचविशल्याचश्रूयतेराजसत्तम
ईश्वरेणपुराणोक्तालोकानांहितकाम्यया ४५
तत्रस्नात्वानरोराजन्नश्वमेधफलंलभेत्
अनशनंतुयःकुर्यात्तस्मिन्तीर्थेनराधिप ४६
सर्वपापविशुद्धात्माइंद्रलोकंसगच्छति
नर्मदायांतुराजेंद्रपुराणेयच्छ्रुतंमया ४७
तत्रतत्रनरःस्नात्वाअश्वमेधफलंलभेत्
येवसंत्युत्तरेकूलेइंद्रलोकेवसंतिते ४८
सरस्वत्यांचगंगायांनर्मदायांयुधिष्ठिर
समंदानंचस्नानंचयथामेशंकरोऽब्रवीत् ४९
परित्यजतियःप्राणान्पर्वतेऽमरकंटके
वर्षकोटिशतंसाग्रमिंद्रलोकेमहीयते ५०
नर्मदायाजलंपुण्यंफेनोर्मिसमलंकृतम्
पवित्रंशिरसावंद्यंसर्वपापैःप्रमुच्यते ५१
नर्मदासर्वपुण्याचब्रह्महत्यापहारिणी
अहोरात्रोपवासेनमुच्यतेब्रह्महत्यया ५२
एवंपुण्याचरम्याचनर्मदापांडुनंदन
त्रयाणामपिलोकानांपुनात्येषामहानदी ५३

वटेश्वरेमहापुरायेगंगाद्वारेतपोवने
एतेषुसर्वस्थानेषुयेर्दिताःसंशितव्रताः
श्रूयतेदशगुणंपुरायंनर्मदोद्वासमंगमे ५४
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेत्रयोदशोऽध्यायः १३

चतुर्दशोऽध्यायः

नारदउवाच-
नर्मदातुनदीश्रेष्ठापुरायापुरायतमात्रिषु
मुनिभिस्तुमहाभागैर्विभक्ताधर्मकांक्षिभिः १
यज्ञोपवीतमात्राणिप्रविभक्तानिपांडव
तेषुस्नात्वातुराजेंद्रसर्वपापैःप्रमुच्यते २
जलेश्वरंचयत्तीर्थंत्रिषुलोकेषुविश्रुतम्
तस्योत्पत्तिंकथयतःशृणुपांडवनंदन ३
पुरामुनिगणाःसर्वेसेन्द्राश्चैवमरुद्गणाः
स्तुवंतितेमहात्मानंदेवदेवंमहेश्वरम् ४
स्तुवमानास्तुसंप्राप्तायत्रदेवोमहेश्वरः
विज्ञापयंतिदेवेशंसेंद्राश्चैवमरुद्गणाः
भयोद्विग्नान्विरूपाक्षपरित्रायस्वनःप्रभो ५
ईश्वरउवाच-
स्वागतंतुमुनिश्रेष्ठाःकिमर्थमिहचागताः
किंदुःखंकोऽनुसंतापःकुतोवाभयमागतम् ६
कथयध्वंमहाभागाएतदिच्छामिवेदितुम्
एवमुक्तास्तुरुद्रेणाकथयन्नमितव्रताः ७
ऋषयऊचुः-
अपिघोरोमहावीर्योदानवोबलदर्पितः
बाणोनामेतिविख्यातोयस्यवैत्रिपुरंपुरम् ८
गगनेतुवसद्दिव्यंभ्रमतेतस्यतेजसा
तस्माद्भीताविरूपाक्षत्वामेवशरणंगताः ९
त्रायस्वमहतोदुःखाद्देवत्वंहिपरागतिः
एवंप्रसादंदेवेशसर्वेषांकर्तुमर्हसि १०

येनदेवाःसुप्रसन्नाःसुखमेधंतिशंकर
परांनिर्वृतिमायांतितत्प्रभोकर्तुमर्हसि ११
देवउवाच-
एतत्सर्वंकरिष्यामिमाविषादंकरिष्यथ
अचिरेणैवकालेनकुर्यांयुष्मत्सुखावहम् १२
आश्वासयित्वातान्सर्वान्नर्मदातटमास्थितः
चिंतयामाससर्वेशस्तद्वधंप्रतिपांडव १३
कथंकेनप्रकारेणहंतव्यस्त्रिपुरोमया
एवंसंचिंत्यभगवान्नारदंस्मरतेतदा
स्मरणादेवसंप्राप्तोनारदःसमुपस्थितः १४
नारदउवाच-
आज्ञापयमहादेवकिमर्थंसंस्मृतोह्यहम्
किंकार्यंतुमयादेवकर्तव्यंकथयस्वमे १५
ईश्वरउवाच-
गच्छनारदतत्रैवयत्रतत्त्रिपुरंपुरम्
बाणस्यदानवेन्द्रस्यशीघ्रंगच्छाथतत्कुरु १६
भर्तारोदेवताभाश्चस्त्रियश्चाप्सरसोपमाः
तासांवैतेजसाविप्रभ्रमतेत्रिपुरंदिवि १७
तत्रगत्वातुविप्रेंद्रमंत्रमन्यंप्रचोदय
देवस्यवचनंश्रुत्वामुनिस्त्वरितविक्रमः १८
स्त्रीणांहृदयनाशायप्रविष्टस्तंपुरंप्रति
शोभतेतत्पुरंदिव्यंनानारत्नोपशोभितम् १९
शतयोजनविस्तीर्णंततोद्विगुणमायतम्
ततःपश्यतितत्रैवबाणंतुबलदर्पितम् २०
मालाकुंडलकेयूरैर्मुकुटेनविराजितम्
हाररत्नैश्चसंछन्नंचंद्रकांतिविभूषितम् २१
ललनास्तस्यरत्नाढ्याःनराःकनकमंडिताः
उत्थितोनारदंदृष्ट्वादानवेंद्रोमहाबलः २२
बाणउवाच-
सदेवर्षिःस्वयंप्राप्तोमद्गृहंप्रतिसंप्रति

अर्घंपाद्यंयथान्यायंक्रियतांद्विजसत्तम २३
चिरात्समागतोविप्रस्थीयतामिदमासनम्
एवंसंभावयित्वातुनारदंसमुपस्थितम् २४
तस्यभार्यामहादेवीअनौपम्यातुनामतः २५
अनौपम्योवाच-
भगवन्मानुषेलोकेदेवास्तुष्यंतिकेनवै
व्रतेननियमेनापिदानेनतपसाथवा २६
नारदउवाच-
तिलधेनुंचयोदद्याद्ब्राह्मणेवेदपारगे
ससागरानवद्वीपादत्ताभवतिमेदिनी २७
सूर्यकोटिप्रतीकाशैर्विमानैःसर्वकामिकैः
मोदतेचाक्षयंकालंसुचिरंकृतशासनः २८
आम्रातककपित्थानिकदलीवनमेवच
कदंबचंपकाशोकाअनेकविविधद्रुमाः २९
अष्टमीचचतुर्थीचद्वादशीचतथाउभे
संक्रांतिर्विषुवंचैवदिनच्छिद्रमुखंतथा ३०
पुरायान्येतानिसर्वाणिउपवासंतियाःस्त्रियः
तासांतुधर्म्मयुक्तानांस्वर्गेवासोनसंशयः ३१
कलिकालात्तुनिर्मुक्ताःसर्वपापविवर्जिताः
उपवासरतानार्योनोपसर्पंतितापसाः ३२
एवंश्रुत्वातुसुश्रोणियथेष्टंकर्तुमर्हसि
नारदस्यवचःश्रुत्वाराज्ञीवचनमब्रवीत् ३३
प्रसादंकुरुविप्रेंद्रदानंगृह्णयथेप्सितम्
सुवर्णमणिरत्नानिवस्त्रारायाभरणानिच ३४
तत्तेदास्याम्यहंविप्रयच्चान्यदपिदुर्ल्लभम्
प्रतिगृह्णद्विजश्रेष्ठप्रीयेतांहरिशंकरौ ३५
नारदउवाच-
अन्यस्मैदीयतांभद्रेक्षीणवृतिश्चयोद्विजः
वयंतुशीलसंपन्नाभक्तिस्तुक्रियतेमया ३६
एवंतासांमनोहृत्वासर्वासामुपदिश्यवा

जगामभरतश्रेष्ठस्वकीयंस्थानकंपुनः ३७
अत्राकृष्टमनास्तास्तुअन्यत्रगतमानसाः
पुरिछिद्रंसमुत्पन्नंबाणस्यतुमहात्मनः ३८
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेचतुर्दशोऽध्यायः १४

पंचदशोऽध्यायः

नारदउवाच-
यन्मांपृच्छसिकौंतेयतन्निबोधचतच्छृणु
एतस्मिन्नंतरेरुद्रोनर्मदातटमास्थितः १
नाम्नाहरेश्वरंस्थानंत्रिषुलोकेषुविश्रुतम्
तस्मिन्स्थानेमहादेवश्चिंतयंस्त्रैपुरंवधम् २
गाडीवंमंदरंकृत्वागुणंकृत्वातुवासुकिम्
स्थानंकृत्वातुवैशाखंविष्णुंकृत्वाशरोत्तमम् ३
अग्रेचाग्निंप्रतिष्ठाप्यमुखेवायुःसमर्पितः
हयाश्चचतुरोवेदाःसर्वदेवमयंरथम् ४
चक्रगौचाश्विनौदेवावक्षंचक्रधरःस्वयम्
स्वयमिंद्रश्चचापांतेबाणेवैश्रवणःस्थितः ५
यमस्तुदक्षिणेहस्तेवामेकालस्तुदारुणः
चक्राणामारकेन्यस्तागंधर्वालोकविश्रुताः ६
प्रजापतीरथश्रेष्ठेब्रह्माचैवतुसारथिः
एवंकृत्वातुदेवेशःसर्वदेवमयंरथम् ७
सोतिष्ठत्स्थाणुभूतोहिसहस्रंपरिवत्सरान्
यदात्रीणिसमेतानिअंतरिक्षचराणिच ८
त्रिपुराणित्रिशल्येनतदातानिबिभेदसः
शरःप्रचोदितस्तत्ररुद्रेणत्रिपुरंप्रति ९
भ्रष्टतेजास्त्रियोजाताबलंतेषांव्यशीर्यत
उत्पाताश्चपुरेतस्मिन्प्रादुर्भूतासहस्रशः १०
त्रिपुरस्यविनाशायकालरूपोभवत्तदा
अट्टहासंप्रमुंचंतिरूपाःकाष्टमयास्तथा ११
निमेषोन्मेषणंचैवकुर्वंतिचित्रकर्मणा

स्वप्नेपश्यंतिचात्मानंरक्तांबरविभूषितम् १२
स्वप्नेपश्यंतितेचैवंविपरीतानियानितु
एतान्पश्यतिउत्पातांस्तत्रस्थानेतुयेजनाः १३
तेषांबलंचबुद्धिश्चहरक्रोधेननाशितम्
संवर्तकोनामवायुर्युगांतप्रतिमोमहान् १४
समीरितोनलश्रेष्ठउत्तमांगेषुबाधते
ज्वलंतिपादपास्तत्रपतंतिशिखराणिच १५
सर्वंतद्व्याकुलीभूतंहाहाकारमचेतनम्
भग्नोद्यानानिसर्वाणिद्विप्रंतुप्रज्वलंतिच १६
तेनैवदीपितंसर्वंज्वलतेविशिखैःशिखैः
द्रुमाश्चारामगंडानिगृहाणिविविधानिच १७
दशदिक्षुप्रवृत्तोयंसमिद्धोहव्यवाहनः
ततःशिलाःप्रमुंचंतिदिशोदशविभागशः १८
शिखासहस्त्रैरत्युग्रैःप्रज्वलंतिहुताशनैः
सर्वंकिंशुकसंप्रख्यंज्वलितंदृश्यतेपुरम् १९
गृहाद्गृहांतरेनैवगंतुंधूमैश्चशक्यते
हरकोपानलादग्धंक्रंदमानंसुदुःखितम् २०
प्रदीप्तंसर्वतोदिक्षुदह्यतेत्रिपुरंपुरम्
प्रासादशिखराग्राणिविशीर्यंतिसहस्त्रशः २१
नानारत्नविचित्राणिविमानान्यप्यनेकधा
गृहाणिचैवरम्याणिदह्यंतेदीप्तिवह्निना २२
बाधंतेद्रुमखंडेषुजनस्थानेतथैवच
देवागारेषुसर्वेषुप्रज्वलंतेज्वलंत्यपि २३
सीदंतिचानलस्पृष्टाःक्रंदंतिविविधैस्वरैः
गिरिकूटनिभास्तत्रदृश्यंतेंऽगारराशयः २४
स्तुवंतिदेवदेवेशंपरित्रायस्वमांप्रभो
अन्योन्यंचपरिष्वज्यहुताशनप्रपीडिताः २५
दह्यंतेदानवास्तत्रशतशोथसहस्त्रशः
हंसकारंडवाकीर्णानलिनीसहपंकजा २६
दह्यंतेनलदग्धानिपुरोद्यानानिदीर्घिकाः

अम्लानैःपंकजैश्छन्नाविस्तीर्णायोजनैःशतैः २७
गिरिकूटनिभास्तत्रप्रासादारत्नभूषिताः
पतंत्यनलनिर्दग्धानिस्तोयाजलदाइव २८
सहस्त्रीबालवृद्धेषुगोषुपक्षिषुवाजिषु
निर्दयोदहतेवह्निर्हरकोपेनप्रेरितः २९
सपत्नीकाश्चैवसुप्ताःसंसुप्ताबहवोजनाः
पुत्रमालिंग्यतेगाढंदह्यंतेत्रिपुरारिणा ३०
अथतस्मिन्पुरेदीप्तेस्त्रियश्चाप्सरसोपमाः
अग्निज्वालाहतास्तत्रपतंतिधरणीतले ३१
काचिद्बालाविशालाक्षीमुक्तावलिविभूषिता
धूमेनाकुलितासातुप्रतिबुद्धाशिखार्दिता ३२
सुतंसंचिंत्यमानासापतिताधरणीतले
काचित्सुवर्णवर्णाभानीलरत्नैर्विभूषिता ३३
धूमेनाकुलितासातुपतिताधरणीतले
अन्यागृहीतहस्तातुसखीदहतिबालकैः ३४
अनेनदिव्यरूपान्यादृष्टामदविमोहिता
शिरसाप्रांजलिकृत्वाविज्ञापयतिपावकम् ३५
यदित्वमिच्छसेवैरंपुरुषेष्वपकारिषु
स्त्रियःकिमपराध्यंतेगृहपंजरकोकिलाः ३६
पापनिर्दयनिर्ल्लज्जकस्तेकोपःस्त्रियोपरि
नदाक्षिण्यंनतेलज्जानसत्यंशौचवर्जितः ३७
अनेकरूपवर्णाढ्याउपलभ्यावदस्वह
किंत्वयानश्रुतंलोकेअवध्याःसर्वयोषितः ३८
किंतुतुभ्यंगुणाह्येतेदहनस्त्र्यर्दनंप्रति
नकारुण्यंदयावापिदाक्षिण्यंवास्त्रियोपरि ३९
दयांकुर्वंतिम्लेच्छापिदहनप्रेक्ष्ययोषितः
म्लेच्छानामपिकष्टोसिदुर्निवार्योह्यचेतनः ४०
एतेचैवगुणास्तुभ्यंदहनोत्सादनंप्रति
आसामपिदुराचारस्त्रीणांकिंविनिपातसे ४१
दुष्टनिर्घृणनिर्लज्जहुताशमंदभाग्यक

निराशस्त्वंदुराचारबालान्दहसिनिर्दय ४२
एवंप्रलपमानास्ताजल्पमानाबहुस्वरम्
अन्याः क्रोशंतिसंक्रुद्धाबालशोकेनमोहिताः ४३
दहतेनिर्दयोवह्निःसंक्रुद्धःसर्वशत्रुवत्
पुष्करिरयांजलेज्वालाकूपेष्वपितथैवच ४४
अस्मान्संदह्यम्लेच्छत्वंकांगतिंप्रापयिष्यसि
एवंप्रलपतांतासांवह्निर्वचनमब्रवीत् ४५
वैश्वानरउवाच-
स्ववशोनैवयुष्माकंविनाशंतुकरोम्यहम्
अहमादेशकर्तावैनाहंकर्त्तास्म्यनुग्रहम् ४६
अत्रकोधसमाविष्टोविचरामियदृच्छया
ततोबाणोमहातेजास्त्रिपुरंवीक्ष्यदीपितम् ४७
आसनस्थोऽब्रवीदेवमहंदेवैर्विनाशितः
अल्पसारैर्दुराचारैरीश्वरस्यनिवेदितः ४८
अपरीक्ष्यह्यहंदग्धःशंकरेणमहात्मना
नान्यःशत्रुस्तुमांहंतुंवर्ज्जयित्वामहेश्वरम् ४९
उत्थितःशिरसाकृत्वालिगंत्रिभुवनेश्वरम्
निर्गतःसपुरद्वारात्परित्यज्यसुहृत्स्वयम् ५०
रत्नानिसुविचित्राणिस्त्रियोनानाविधास्तथा
गृहीत्वाशिरसालिगंन्यस्तंनगरमंडले ५१
स्तुवतेदेवदेवेशंत्रैलोक्याधिपतिंशिवम्
हरत्वयाहंनिर्दग्धोयदिवध्योसिशंकर ५२
त्वत्प्रसादान्महादेवमामेलिगंविनश्यतु
अर्चितंहिमहादेवभक्त्यापरमयासदा ५३
त्वयायद्यपिवध्योहंमामेलिगंविनश्यतु
प्राप्यमेतन्महादेवत्वत्पादग्रहणंमम ५४
जन्मजन्ममहादेवत्वत्पादनिरतोह्यहम्
तोटकच्छंदसादेवंस्तुत्वातुपरमेश्वरम् ५५
ओंशिवशंकरसर्वकरायनमोभवभीममहेशशिवायनमः
कुसुमायुधदेहविनाशकरत्रिपुरांतकरांधकचूर्णकर ५६

प्रमदाप्रियकामविभक्तनमोहिनमःसुरसिद्धगणैर्नमितः
हयवानरसिंहगजेंद्रमुखैरतिह्रस्वसुदीर्घमुखैश्चगणैः ५७
उपलब्धुमशक्यतरैरसुरैर्व्यथितोनशरीरशतैर्बहुभिः
प्रणतोभगवन्बहुभक्तिमताचलचंद्रकलाधरदेवनमः ५८
सहपुत्रकलत्रकलापधनैःसततंजयदेहिग्रनुस्मरणम्
व्यथितोस्मिशरीरशतैर्बहुभिर्गमिताद्यमहानरकस्यगतिः ५९
ननिवर्ततियन्ममपापगतिःशुचिकर्म्मविशुद्धमपित्यजति
अनुकंपतिदिग्भ्रमतिभ्रमतिभ्रमएषकुबुद्धिनिवारयति ६०
यःपठेत्तोटकंदिव्यंप्रयतःशुचिमानसः
बाणस्यैवयथारुद्रस्तस्यैववरदोभवेत् ६१
इमंस्तवंमहादिव्यंश्रुत्वादेवोमहेश्वरः
प्रसन्नस्तुतदातस्यस्वयंदेवोमहेश्वरः ६२
ईश्वरउवाच-
नभेतव्यंत्वयावत्ससौवर्णेतिष्ठदानव
पुत्रपौत्रसपत्नीनांभार्याभृत्यजनैःसह ६३
अद्यप्रभृतिबाणत्वमवध्यस्त्रिदशैरपि
भूयस्तस्यवरोदत्तोदेवदेवेनपांडव ६४
अक्षयश्चाव्ययोलोकेविचचारहनिर्भयः
ततोनिवारयामासरुद्रःसप्तशिखंतथा ६५
तृतीयंरक्षितंतस्यशंकरेणमहात्मना
भ्रमतेगगनेनित्यंरुद्रतेजःप्रभावतः ६६
एवंतुत्रिपुरंदग्धंशंकरेणमहात्मना
ज्वालामालाप्रदीप्तंतुपतितंधरणीतले ६७
एकंनिपातितंतस्यश्रीशैलेत्रिपुरांतके
द्वितीयंपातितंतत्रपर्वतेऽमरकंटके ६८
दग्धेतुत्रिपुरेराजन्रुद्रकोटिःप्रतिष्ठिता
ज्वलंतंपातितंतत्रतेनज्वालेश्वरःस्मृतः ६९
ऊर्ध्वेनप्रस्थितातस्यदिव्याज्वालादिवंगता
हाहाकारस्तदाजातोसदेवासुरकिंनरान् ७०
तंशरंस्तंभयेद्रुद्रोमाहेश्वरपुरोत्तमे

एवंव्रजेतयस्तस्मिन्पर्वतेऽमरकंटके ७१
चतुर्द्दशभुवनानिसुभुक्त्वापांडुनंदन
वर्षकोटिसहस्रंतुत्रिंशत्कोटयस्तथापराः ७२
ततोमहीतलंप्राप्यराजाभवतिधार्मिकः
पृथिव्यामेकच्छत्रेणभुंक्तेनास्त्यत्रसंशयः ७३
एषपुरायोमहाराजसर्वतोऽमरकंटकः
चंद्रसूर्योपरागेषुगच्छेद्योऽमरकंटकम् ७४
अश्वमेधाद्दशगुणंप्रवदंतिमनीषिणः
स्वर्गलोकमवाप्नोतिदृष्ट्वातत्रमहेश्वरम् ७५
संनिहत्यागमिष्यंतिराहुग्रस्तेदिवाकरे
तदेवनिखिलंपुरायंपर्वतेऽमरकंटके ७६
पुंडरीकस्ययज्ञस्यफलंप्राप्नोतिमानवः
तत्रज्वालेश्वरोनामपर्वतेऽमरकंटके ७७
तत्रस्नात्वादिवंयांतियेमृतास्तेऽपुनर्भवाः
ज्वालेश्वरेमहाराजयस्तुप्राणान्परित्यजेत् ७८
चंद्रसूर्योपरागेतुभक्त्यापिशृणुतत्फलम्
अमरानामदेवास्तेपर्वतेऽमरकंटके ७९
रुद्रलोकमवाप्नोतियावदाभूतसंप्लवम्
अमरेश्वरस्यदेवस्यपर्वतस्यतटेजले ८०
कोटिशऋृषिमुख्यास्तेतपस्तप्यंतिसुव्रताः
समंताद्योजनंराजन्क्षेत्रंचामरकंटकम् ८१
अकामोवासकामोवानर्मदायांशुभेजले
स्नात्वामुच्येतपापेभ्योरुद्रलोकंसगच्छति ८२

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेपंचदशोऽध्यायः १५

## षोडशोऽध्यायः

ऋषिरुवाच-
पृच्छंतितेमहात्मानोनारदंहिमहाजनाः
युधिष्ठिरपराःसर्वेऋषयश्चतपोधनाः १
आख्याहिभगवंस्तथ्यंकावेरीसंगमेमहत्

लोकानांचहितार्थायअस्माकंचविवृद्धये २
सदापापरतायेतुनरादुष्कृतिकारिणः
मुच्यंतेसर्वपापेभ्योगच्छंतिपरमंपदम्
एतदिच्छामिविज्ञातुंभगवन्वक्तुमर्हसि ३
नारदउवाच-
शृणुध्वंसहिताःसर्वेयुधिष्ठिरपुरोगमाः
अत्रकृत्वामहायज्ञंकुबेरःसत्यविक्रमः
इदंतीर्थमनुप्राप्यसाम्राज्यादधिकोऽभवत् ४
सिद्धिंप्राप्तोमहाराजतन्मेनिगदतःशृणु
कावेरीनर्मदांयत्रसंगतालोकविश्रुताम् ५
तत्रस्नात्वाशुचिर्भूत्वाकुबेरःसत्यविक्रमः
तपस्तप्यतियक्षेंद्रोदिव्यंवर्षशतंमहत् ६
तस्यतुष्टोमहादेवःप्रदद्याद्वरमुत्तमम्
भोभोयक्षमहासत्ववरंब्रूहियथेप्सितम्
ब्रूहिकार्यंयथेष्टंतुयद्वामनसिवर्त्तते ७
कुबेरउवाच-
यदितुष्टोसिदेवेवेशयदिदेयोवरोमम
आदिकृच्चैवसर्वेषांयक्षाणामधिपोभवेत् ८
कुबेरस्यवचःश्रुत्वातुष्टोदेवोमहेश्वरः
एवमस्तुततश्चोक्त्वातत्रैवांतरधीयत ९
सोऽपिलब्धवरोयक्षःशीघ्रंयक्षकुलंगतः
पूजितः सर्वयक्षेंद्रैरभिषिक्तस्तुपार्थिवः १०
कावेरीसंगमंतत्रसर्वपापप्रणाशनम्
येनरानाभिजानंतिवंचितास्तेनसंशयः ११
तस्मात्सर्वप्रयत्नेनतत्रस्नायीतमानवः
कावेरीचमहापुण्यानर्मदाचमहानदी १२
तत्रस्नात्वातुराजेंद्रअर्चयेद्वृषभध्वजम्
अश्वमेधफलंप्राप्यरुद्रलोकेमहीयते १३
अग्निप्रवेशंयःकुर्याद्यश्चकुर्य्यादनाशनम्
अनिवर्तिकागतिस्तस्ययथामेशंकरोऽब्रवीत् १४

सेव्यमानोवरस्त्रीभिर्मोदतेदिविरुद्रवत्
षष्टिवर्षसहस्त्राणिषष्टिकोटयस्तथापरे १५
मोदतेरुद्रलोकस्थोयत्रयत्रैवगच्छति
पुगयक्षयात्परिभ्रष्टोराजाभवतिधार्मिकः १६
भोगवान्धर्मशीलश्चमहांश्चैवकुलोद्भवः
तत्रपीत्वाजलंसम्यक्चांद्रायगाफलंलभेत् १७
स्वर्गंगच्छंतितेमर्त्यायेपिबंतिजलंशुभम्
गंगायमुनयोर्मध्येयत्फलंयांतिमानवाः १८
कावेरीसंगमेस्नात्वातत्फलंतस्यजायते
एवंतुतस्यराजेंद्रकावेरीसंगमंमहत्
पत्रेश्वरेतिविख्यातंसर्वपापहरंपरम् १९

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेषोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

नारदउवाच–
उत्तरेनर्मदाकूलेतीर्थंयोजनविस्तृतम्
पत्रेश्वरेतिविख्यातंसर्वपापहरंपरम् १
तत्रस्नात्वानरोराजन्दैवतैःसहमोदते
पंचवर्षसहस्त्राणिक्रीडतेकामरूपधृक् २
गर्जनंतुततोगच्छेद्यत्रमेघउपस्थितः
इंद्रजिन्नामसंप्राप्तंतस्यतीर्थप्रभावतः ३
मेघरावंततोगच्छेद्यत्रमेघाभिगर्जितम्
मेघनादोगणस्तत्रवरसंपन्नतांगतः ४
ततोगच्छेतराजेंद्रब्रह्मावर्तमितिस्मृतम्
तत्रसंनिहितोब्रह्मानित्यमेवयुधिष्ठिर ५
तत्रस्नात्वातुराजेंद्रब्रह्मलोकेमहीयते
ततोंऽगारेश्वरेतीर्थेनियतोनियमाशनः ६
सर्वपापविशुद्धात्मारुद्रलोकंसगच्छाति
ततोगच्छेतराजेंद्रकपिलातीर्थमुत्तमम् ७
तत्रस्नात्वानरोराजन्गोप्रदानफलंलभेत्

कांचीतीर्थंततोगच्छेद्देवर्षिगणसेवितम् ८
तत्रस्नात्वानरोराजन्गोलोकंसमवाप्नुयात्
ततोगच्छेत्तुराजेंद्रकुंडलेश्वरमुत्तमम् ९
तत्रसंनिहितोरुद्रस्तिष्ठतेउमयासह
तत्रस्नात्वातुराजेंद्रअवध्यस्त्रिदशैरपि १०
पिप्पलेश्वरंततोगच्छेत्सर्वपापप्रणाशनम्
तत्रगत्वातुराजेंद्ररुद्रलोकेमहीयते ११
ततोगच्छेत्तुराजेंद्रविमलंविमलेश्वरम्
तत्रदेवशिखारम्याईश्वरेणनिपातिता १२
तत्रप्राणान्परित्यज्यरुद्रलोकमवाप्नुयाम्
ततःपुष्करिणींगच्छेत्तत्रस्नानंसमाचरेत् १३
स्नानमात्रेनरस्तत्रइंद्रस्यार्द्धासनंलभेत्
नर्मदासरितांश्रेष्ठारुद्रदेहाद्विनिःसृता १४
तारयेत्सर्वभूतानिस्थावराणिचराणिच
सर्वदेवातिदेवेनईश्वरेणमहात्मना १५
कथिताऋृषिसंघेभ्योह्यस्माकंचविशेषतः
मुनिभिःसंस्तुताह्येषानर्मदाप्रवरानदी १६
रुद्रदेहाद्विनिष्क्रांतालोकानांहितकाम्यया
सर्वपापहरानित्यंसर्वप्राणिनमस्कृता १७
संस्तुतादेवगंधर्वैरप्सरोभिस्तथैवच
नमःपुण्यजलेआद्येनमःसागरगामिनि १८
नमोस्तुतेऋृषिगणैःशंकरदेहनिःसृते
नमोस्तुतेधर्मवृतेवराननेनमोस्तुतेदेवगणैकवंदिते १९
नमोस्तुतेसर्वपवित्रपावनेनमोस्तुतेसर्वजगत्सुपूजिते
यश्चेदंपठतेस्तोत्रंनित्यंशुद्धेनमानवः २०
ब्राह्मणोवेदमाप्नोतिक्षत्रियोविजयीभवेत्
वैश्यस्तुलभतेलाभंशूद्रश्चैवशुभांगतिम् २१
अन्नार्थीलभतेह्यन्नंस्मरणादेवनित्यशः
नर्मदांसेव्यतेनित्यंस्वयंदेवोमहेश्वरः
तेनपुण्यानदीज्ञेयाब्रह्महत्यापहारिणी २२

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेसप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

नारदउवाच-
तदाप्रभृतिब्रह्माद्याऋषयश्चतपोधनाः
सेवंतेनर्मदांराजन्कामक्रोधविवर्जिताः १
तस्मिन्निपतितंदृष्ट्वाशूलंदेवस्यभूतले
तस्यपुरायंसमाख्यातंशंकरेणमहात्मना २
शूलभेदेतिविख्यातंतीर्थंपुरायतमंमहत्
तत्रस्नात्वार्चयेद्देवंगोसहस्रफलंलभेत् ३
त्रिरात्रंकारयेद्यस्तुतस्मिन्तीर्थेनराधिप
अर्चयित्वामहादेवंपुनर्जन्मनविद्यते ४
भीमेश्वरंततोगच्छेन्नर्मदेश्वरमुत्तमम्
आदित्येश्वरंमहापुरायंतथाऽज्यमधुनासह ५
मल्लिकेश्वरमभ्यर्च्यपर्याप्तंजन्मनःफलम्
वरुणेश्वरंततःपश्येन्नीराजेश्वरमुत्तमम् ६
सर्वतीर्थफलंतस्यपंचायतनदर्शनात्
ततोगच्छेतराजेंद्रयुद्धंवैयत्रसाधितम् ७
कोटितीर्थंतुविख्यातमसुरायत्रयोधिताः
यत्रतेनिहताराजन्दानवाबलदर्पिताः ८
तेषांशिरांसिगृह्यंतेनिहतास्तेसमागताः
तैस्तुसंस्थापितोदेवःशूलपाणिर्महेश्वरः ९
कोटिर्विनिहतातत्रतेनकोटीश्वरःस्मृतः
दर्शनात्तस्यतीर्थस्यसदेहःस्वर्गमावहेत् १०
तदाइंद्रेणक्षुद्रत्वाद्वज्रकीलेनयंत्रितः
तदाप्रभृतिलोकानांस्वर्गमत्वंनिवारितम् ११
सघृतंश्रीफलंदत्वादत्वाचांतेप्रदक्षिणम्
सर्वतःसहदेवेनशिरसादायधारयेत्
सर्वकामेनसंपूर्णोराजाभवतिपांडव १२
मृतोरुद्रत्वमाप्नोतिनचेहजायतेपुनः

स्वर्गंगत्वाततोराज्यंकृत्वागत्यततोदिवम् १३
महादेवंतथोपास्यत्रयोदश्यांहिमानवः
स्नातमात्रोनरस्तत्रसर्वयज्ञफलंलभेत् १४
ततोगच्छेतराजेंद्रतीर्थंपरमशोभनम्
नराणांपापनाशायअगस्त्येश्वरमुत्तमम् १५
तत्रस्नात्वानरोराजन्मुच्यतेब्रह्महत्यया
कार्तिकस्यतुमासस्यकृष्णपक्षचतुर्दशी १६
घृतेनस्नापयेद्देवंसमाधिस्थोजितेंद्रियः
एकविंशकुलोपेतोनमुच्येदैश्वरात्पदात् १७
धेनवोपानहंच्छत्रंतथादद्याच्चकंबलम्
भोजनंचैवविप्राणांसर्वंकोटिगुणंभवेत् १८
ततोगच्छेतराजेंद्ररविस्तवमनुत्तमम्
तत्रस्नात्वानरोराजन्सिंहासनगतिर्भवेत् १९
नर्मदादक्षिणेकूलेतीर्थंशक्रस्यविश्रुतम्
उपोष्यरजनीमेकांस्नानंतत्रसमाचरेत् २०
स्नानंकृत्वायथान्यायमर्च्चयेत्तुजनार्दनम्
गोसहस्रफलंतस्यविष्णुलोकंसगच्छति २१
ऋषितीर्थंततोगच्छेत्सर्वपापहरंनृणाम्
स्नातमात्रोनरस्तत्रशिवलोकेमहीयते २२
नारदस्यचतत्रैवतीर्थंपरमशोभनम्
स्नातमात्रोनरस्तत्रगोसहस्रफलंलभेत् २३
देवतीर्थंततोगच्छेद्ब्रह्मणानिर्मितंपुरा
तत्रस्नात्वानरोराजन्ब्रह्मलोकेमहीयते २४
अमरकंटकंततोगच्छेदमरस्थापितंपुरा
स्नातमात्रोनरस्तत्रगोसहस्रफलंलभेत् २५
ततोगच्छेतराजेंद्रवामनेश्वरमुत्तमम्
तत्रवामनकंदृष्ट्वामुच्यतेब्रह्महत्यया २६
ऋषितीर्थंततोगच्छेदीशानेशंपुमान्ध्रुवम्
वटेश्वरंततोदृष्ट्वापर्याप्तंजन्मनःफलम् २७
भीमेश्वरंततोगच्छेत्सर्वव्याधिविनाशनम्

स्नातमात्रोनरोराजन्सर्वदुःखात्प्रमुच्यते २८
ततोगच्छेतराजेंद्रवारणेश्वरमुत्तमम्
तत्रस्नात्वानरोराजन्सर्वदुःखात्प्रमुच्यते २९
सोमतीर्थंततोगच्छेत्पश्येच्चंद्रमनुत्तमम्
तत्रस्नात्वानरोराजन्भक्त्यापरमयायुतः ३०
तत्क्षणाद्दिव्यदेहस्थःशिववन्मोदतेचिरम्
षष्टिवर्षसहस्राणिशिवलोकेमहीयते ३१
ततोगच्छेतराजेंद्रपिंगलेश्वरमुत्तमम्
अहोरात्रोपवासेनत्रिरात्रफलमाप्नुयात् ३२
तस्मिंस्तीर्थेतुराजेंद्रकपिलांयःप्रयच्छति
यावंतितस्यारोमाणितत्प्रसूतकुलस्यच ३३
तावद्वर्षसहस्राणिरुद्रलोकेमहीयते
यस्तुप्राणपरित्यागंतत्रकुर्य्यान्नराधिप ३४
अक्षयंमोदतेकालंयावच्चंद्रदिवाकरौ
नर्मदातटमाश्रित्यतिष्ठंतियेतुमानवाः ३५
तेमृताःस्वर्गमायांतितथासुकृतिनोयथा
सुरभिकेश्वरंगछेन्नारकंकोटिकेश्वरम् ३६
गंगावतरणेतत्रदिनेपुरायोनसंशयः
नंदितीर्थंततोगच्छेत्स्नानंतत्रसमाचरेत् ३७
तुष्यतेतंतुनंदीशःसोमलोकेमहीयते
ततोद्वीपेश्वरंगच्छेद्व्यासतीर्थंतपोवनम् ३८
निवर्तितापुरातत्रव्यासभीतामहानदी
हुंकारितातुव्यासेनदक्षिणेनततोगता ३९
प्रदक्षिणंतुयःकुर्यात्तस्मिंस्तीर्थेनराधिप
व्यासस्तस्यभवेत्प्रीतोवांछितंलभतेफलम् ४०
सूत्रेणवेष्टयेद्यस्तुदीप्तंदेवंसवेदिकम्
क्रीडतेह्यक्षयंकालंयथारुद्रस्तथैवसः ४१
ततोगच्छेतराजेंद्रएरंडीतीर्थमुत्तमम्
संगमेतुनरःस्नात्वामुच्यतेसर्वपातकैः ४२
एरंडीत्रिषुलोकेषुविख्यातापापनाशिनी

अथवाश्वयुजेमासेशुक्लपक्षस्यचाष्टमी ४३
शुचिर्भूत्वानरःस्नात्वासोपवासपरायणः ४४
ब्राह्मणंभोजयेदेकंकोटिर्भवतिभोजिता
एरंडीसंगमेस्नात्वाभक्तिभावानुरंजितः ४५
शुक्तिकांशिरसिस्थाप्यअवगाह्यचवैजलम्
नर्मदोदकसंमिश्रंमुच्यतेसर्वकिल्बषैः ४६
प्रदक्षिणंतुयःकुर्यात्तस्मिंस्तीर्थेनराधिप
प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा ४७
ततःसुवर्णतिलकेस्नात्वादत्वाचकांचनम्
कांचनेनविमानेनरुद्रलोकेमहीयते ४८
ततःस्वर्गच्युतःकालाद्राजाभवतिवीर्यवान्
ततोगच्छेतराजेंद्रइक्षुनद्यास्तुसंगमम् ४९
त्रैलोक्येविश्रुतंदिव्यंतत्रसंनिहितःशिवः
तत्रस्नात्वानरोराजन्गाणपत्यमवाऽप्नुयात् ५०
स्कंदतीर्थंततोगच्छेत्सर्वपापप्रणाशनम्
आजन्मनःकृतंपापंस्नानमात्राद्व्यपोहति ५१
आंगिरसंततोगच्छेत्स्नानंतत्रसमाचरेत्
गोसहस्रफलंतस्यरुद्रलोकेमहीयते ५२
लांगलतीर्थंततोगच्छेत्सर्वपापप्रणाशनम्
तत्रगत्वातुराजेंद्रस्नानंतत्रसमाचरेत् ५३
सप्तजन्मकृतैःपापैर्मुच्यतेनात्रसंशयः
वटेश्वरंततोगच्छेत्सर्वतीर्थमनुत्तमम् ५४
तत्रस्नात्वानरोराजन्गोसहस्रफलंलभेत्
संगमेश्वरंततोगच्छेत्सर्वपापहरंपरम् ५५
तत्रस्नात्वानरोराज्यंलभतेनात्रसंशयः
भद्रतीर्थंसमासाद्यदानंदद्यात्तुयोनरः ५६
तस्यतीर्थप्रभावेणसर्वंकोटिगुणंभवेत्
अथनारीभवेत्कापितत्रस्नानंसमाचरेत् ५७
गौरीतुल्याभवेत्सातुइंद्रंयातिनसंशयः
अंगारेश्वरंततोगच्छेत्स्नानंतत्रसमाचरेत् ५८

स्नातमात्रोनरस्तत्ररुद्रलोकेमहीयते
अंगारक्यांचतुर्थ्यांतुस्नानंतत्रसमाचरेत् ५९
अक्षयंमोदतेकालंमुरारिकृतशासनः
अयोनिसंगमेस्नात्वानपश्येद्योनिमंदिरम् ६०
पांडवेश्वरकंगत्वास्नानंतत्रसमाचरेत्
अक्षयंमोदतेकालमवध्यस्तुसुरासुरैः ६१
विष्णुलोकंततोगत्वाक्रीडाभोगसमन्वितः
तत्रभुक्त्वामहाभोगान्मर्त्यैराजाभिजायते ६२
कंबोतिकेश्वरंगच्छेत्स्नानंतत्रसमाचरेत्
उत्तरायणेतुसंप्राप्तेयदिच्छेत्तस्यतद्भवेत् ६३
चंद्रभागांततोगच्छेत्स्नानंतत्रसमाचरेत्
स्नातमात्रोनरस्तत्रसोमलोकेमहीयते ६४
ततोगच्छेतराजेंद्रतीर्थंशक्रस्यविश्रुतम्
पूजितंदेवराजेनदेवैरपिनमस्कृतम् ६५
तत्रस्नात्वानरोराजन्दानंदत्वाचकांचनम्
अथवानीलवर्णाभंवृषभंयःसमुत्सृजेत् ६६
वृषभस्यतुरोमाणितत्प्रसूतिकुलेषुच
तावद्वर्षसहस्राणिनरोहरपुरेवसेत् ६७
ततःस्वर्गात्परिभ्रष्टोराजाभवतिवीर्यवान्
अश्वानांश्वेतवर्णानांसहस्रेषुनराधिप ६८
स्वामीभवतिमर्त्येषुतस्यतीर्थप्रभावतः
ततोगच्छेतराजेंद्रब्रह्मावर्त्तमनुत्तमम् ६९
तत्रस्नात्वानरोराजंस्तर्पयेत्पितृदेवताः
उपोष्यरजनीमेकांपिंडंदत्वायथाविधि ७०
कन्यागतेयथाऽदित्येअक्षयंसंचितंभवेत्
ततोगच्छेतराजेंद्रकपिलातीर्थमुत्तमम् ७१
तत्रस्नात्वानरोराजन्कपिलांयःप्रयच्छति
संपूर्णांपृथिवींदत्वायत्फलंतदवाप्नुयात् ७२
नर्मदेश्वरंपरंतीर्थंनभूतंनभविष्यति
तत्रस्नात्वानरोराजन्नश्वमेधफलंलभेत् ७३

तत्रसर्वगतोराजापृथिव्यामभिजायते
सर्वलक्षणसंपूर्णःसर्वव्याधिविवर्जितः ७४
नार्मदीयोत्तरेकूलेतीर्थंपरमशोभनम्
आदित्यायतनंरम्यमीश्वरेणतुभावितम् ७५
तत्रस्नात्वातुराजेंद्रदानंदत्वाचशक्तितः
तस्यतीर्थप्रभावेणदत्तंभवतिचाक्षयम् ७६
दरिद्राव्याधितायेतुयेचदुष्कृतकर्मणः
मुच्यंतेसर्वपापेभ्यःसूर्यलोकंप्रयांतिच ७७
माघमासेतुसंप्राप्तेशुक्लपक्षस्यसप्तमीम्
वसेदायतनेयस्तुनिरात्मायोजितेंद्रियः ७८
नजायतेव्याधितश्चकालेंधोबधिरस्तथा
सुभगोरूपसंपन्नःस्त्रीणांभवतिवल्लभः ७९
इदंतीर्थंमहापुण्यंमार्कंडेयेनभाषितम्
येप्रयांतिनराजेंद्रवंचितास्तेनसंशयः ८०
मासेश्वरंततोगच्छेत्स्नानंतत्रसमाचरेत्
स्नातमात्रोनरस्तत्रस्वर्गलोकमवाप्नुयात् ८१
मोदतेसर्वलोकस्थोयावदिंद्राश्चतुर्दश
ततःसमीपतःस्थित्वानागेश्वरंतपोवनम् ८२
तत्रस्नात्वातुराजेंद्रशुचिर्भूत्वासमाहितः
बहुभिर्नागकन्याभिःक्रीडतेकालमक्षयम् ८३
कुबेरभवनंगच्छेत्कुबेरोयत्रसंस्थितः
कालेश्वरंपरंतीर्थंकुबेरोयत्रतोषितः ८४
यत्रस्नात्वातुराजेंद्रसर्वसंपदमाप्नुयात्
ततःपश्चिमतोगच्छेन्मरुतालयमुत्तमम् ८५
तत्रस्नात्वातुराजेंद्रशुचिर्भूत्वासमाहितः
कांचनंतुततोदद्यादन्नशक्त्यातुबुद्धिमान् ८६
पुष्पकेणविमानेनवायुलोकंसगच्छति
ममतीर्थंततोगच्छेन्माघमासेयुधिष्ठिर ८७
कृष्णपक्षेचतुर्दश्यांस्नानंतत्रसमाचरेत्
नक्तंभोज्यंततःकुर्यान्नगच्छेद्योनिसंकटम् ८८

अहल्यातीर्थंततोगच्छेत्स्नानंतत्रसमाचरेत्
स्नातमात्रोनरस्तत्रअप्सरोभिःप्रमोदते ८९
पारमेश्वरेतपस्तप्त्वाअहल्यामुक्तिमागमत्
चैत्रमासेतुसंप्राप्तेशुक्लपक्षेत्रयोदशी ९०
कामदेवदिनेतस्मिन्नहल्यांतुप्रपूजयेत्
यत्रतत्रसमुत्पन्नोनरस्तत्रप्रियोभवेत् ९१
स्त्रीवल्लभोभवेच्छ्रीमान्कामदेवइवापरः
अयोध्यांतुसमासाद्यतीर्थंशक्रस्यविश्रुतम् ९२
स्नातमात्रोनरस्तत्रगोसहस्त्रफलंलभेत्
सोमतीर्थंततोगच्छेत्स्नानमात्रंसमाचरेत् ९३
स्नातमात्रोनरस्तत्रसर्वपापैःप्रमुच्यते
सोमग्रहेतुराजेंद्रपापक्षयकरंभवेत् ९४
त्रैलोक्यविश्रुतंराजन्सोमतीर्थंमहाफलम्
यस्तुचांद्रायणंकुर्यात्तस्मिंस्तीर्थेनराधिप ९५
सर्वपापविशुद्धात्मासोमलोकंसगच्छति
अग्निप्रवेशेतुजलेप्यथवापिह्यनाशने ९६
सोमतीर्थेमृतोयस्तुनासौमर्त्येभिजायते
स्तंभतीर्थंततोगच्छेत्स्नानंतत्रसमाचरेत् ९७
स्नातमात्रोनरस्तत्रसोमलोकेमहीयते
ततोगच्छेतराजेंद्रविष्णुतीर्थमनुत्तमम् ९८
योधनीपुरविख्यातंविष्णुतीर्थमनुत्तमम्
असुरायोधितास्तत्रवासुदेवेनकोटिशः ९९
तत्रतीर्थंसमुत्पन्नंविष्णुःप्रीतोभवेदिह
अहोरात्रोपवासेनब्रह्महत्यांव्यपोहति १००
ततोगच्छेत्तुराजेंद्रतापसेश्वरमुत्तमम्
अमोहकमितिख्यातंपितृन्यस्तत्रतर्पयेत् १०१
पौर्णमास्याममावास्यांश्राद्धंकुर्याद्यथाविधि
तत्रस्नात्वानरोराजन्पितृपिंडंतुदापयेत् १०२
गजरूपाःशिलास्तत्रतोयमध्येप्रतिष्ठिताः
तस्मिंस्तुदापयेत्पिंडंवैशाखेतुविशेषतः १०३

तृप्यंतिपितरस्तावद्यावत्तिष्ठतिमेदिनी
ततोगच्छेतराजेंद्रसिद्धेश्वरमनुत्तमम् १०४
तत्रगत्वातुराजेंद्रगणपत्यंतिकंव्रजेत्
ततोगच्छेतराजेंद्रलिंगोयत्रजनार्दनः १०५
तत्रस्नात्वातुराजेंद्रविष्णुलोकेमहीयते
नर्मदादक्षिणेकूलेतीर्थंपरमशोभनम् १०६
कामदेवःस्वयंतत्रतपस्तप्यत्यसौमहान्
दिव्यंवर्षसहस्रंतुशंकरंपर्युपासते १०७
समाधिपर्वदग्धस्तुशंकरेणमहात्मना
श्वेतपर्वोपमश्चैवहुताशःशुक्लपर्वणि १०८
एतेदग्धास्तुतेसर्वेकुसुमेश्वरसंस्थिताः
दिव्यवर्षसहस्रेणतुष्टस्तेषांमहेश्वरः १०९
उमयासहितोरुद्रस्तेषांतुष्टोवरप्रदः
विमोक्षयित्वातान्सर्वान्नर्म्मदातटमास्थितान् ११०
तस्यतीर्थप्रभावेणपुनर्देवत्वमागतः
त्वत्प्रसादान्महादेवतीर्थंचभवतूत्तमम् १११
अर्धयोजनविस्तीर्णंतीर्थंदिक्षुसमंततः
तस्मिंस्तीर्थेनरःस्नात्वाउपवासपरायणः ११२
कुसुमायुधरूपेणरुद्रलोकेमहीयते
वैश्वानरेयमेनैवकामदेवेनवायवे ११३
तपस्तप्त्वातुराजेंद्रतत्रैवचपुरागतैः
अंधोनस्यसमीपेतुनातिदूरेतुतस्यवै ११४
स्नानंदानंचतत्रैवभोजनंपिंडपातनम्
अग्निवेशेजलेवापिअथवापिअनाशने ११५
अनिवर्तिकागतिस्तस्यमृतस्याप्यर्द्धयोजने
त्रैयंबकेणतोयेनस्नापयेन्नरपुंगवः ११६
अंधोनमूलेदत्वातुपिंडंचैवयथाविधि
पितरस्तस्यतृप्यंतियावच्चंद्रदिवाकरौ ११७
उत्तरायणेतुसंप्राप्तेतत्रस्नानंकरोतियः
पुरुषोवापिस्त्रीवापिवसेदायतनेशुचिः ११८

सिद्धेश्वरस्यदेवस्यप्रभातेपूजनान्नरः
सतांगतिमवाप्नोतिनतांसर्वैर्महामखैः ११९
यदाचतीर्थकालेनरूपवान्सुभगोभवेत्
मर्त्येभवतिराजासावासमुद्रांतगोचरे १२०
क्षेत्रपालंनपश्येच्चदंडपालंमहाबलम्
वृथातस्यभवेद्यात्राऽदृष्ट्वाकर्णकुंडलम् १२१
एतत्तीर्थफलंज्ञात्वासर्वेदेवाःसमागताः
मुंचंतिपुष्पवृष्टिंतुस्तुवंतिकुसुमेश्वरम् १२२
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेऽष्टाशोऽध्यायः १८

ऊनविंशोऽध्यायः

नारदउवाच–
भार्गवेशंततोगच्छेद्भक्त्यायत्रचविष्णुना
हुंकारितास्तुदेवेनदानवाःप्रलयंगताः १
तत्रस्नात्वातुराजेंद्रसर्वपापैःप्रमुच्यते
शुक्लतीर्थस्यचोत्पत्तिंशृणुत्वंपांडुनंदन २
हिमवच्छिखरेरम्येनानाधातुविचित्रिते
तरुणादित्यसंकाशेतप्तकांचनसंनिभे ३
वज्रस्फटिकसोपानेचित्रपट्टशिलातले
जांबूनदमयेदिव्येनानापद्मोपशोभिते ४
तत्रासीनंमहादेवंसर्वज्ञंप्रभुमव्ययम्
लोकानुग्राहकंशांतंगणवृंदैःसमावृतम् ५
स्कंदनंदिमहाकालैर्वीरभद्रगणादिभिः
उमयासहितंदेवंमार्कंडःपरिपृच्छति ६
देवदेवमहादेवइन्द्रकामादिसंस्तुत
संसारभवभीतोहंसुखोपायंब्रवीहिमे ७
भगवन्भूतभव्येशसर्वपापप्रणाशनम्
तीर्थानांपरमंतीर्थंतद्वदस्वमेहेश्वर ८
ईश्वरउवाच–
शृणुविप्रमहाभागसर्वशास्त्रविशारद

स्नानादिकुरुगच्छत्वंऋृषिसंघैस्समावृतः ९
मन्वत्रियाज्ञवल्क्याश्चकाश्यपश्चैवअंगिराः
यमापस्तंबसंवर्ताःकात्यायनबृहस्पती १०
नारदोगौतमश्चैवपृच्छंतिधर्मकांक्षिणः
गंगाकनखलेपुरायाप्रयागंपुष्करंगया ११
कुरुक्षेत्रंतुपुरायंचराहुग्रस्तेदिवाकरे
दिवावायदिवारात्रौशुक्लतीर्थंमहाफलम् १२
दर्शनात्स्पर्शनाच्चैवस्नानाद्ध्यानात्तपोर्जनात्
होमाच्चैवोपवासाच्चशुक्लतीर्थफलंमहत् १३
शुक्लतीर्थंमहापुरायंनद्यांतुसंव्यवस्थितम्
चाणिक्योनामराजर्षिःसिद्धिंतत्रसमागतः १४
एतत्क्षेत्रंसमुत्पन्नंयोजनावृत्तिसंस्थितम्
शुक्लतीर्थंमहापुरायंसर्वपापप्रणाशनम् १५
पादपाग्रेणदृष्टेनब्रह्महत्यांव्यपोहति
अहमत्रऋृषिश्रेष्ठतिष्ठामिह्युमयासह १६
वैशाखेविमलेमासिकृष्णपक्षेचतुर्दशी
कैलासाच्चापिनिर्गत्यतत्रसंनिहितोह्यहम् १७
देवकिन्नरगंधर्वाःसिद्धविद्याधरास्तथा
गणाश्चाप्सरसोनागाःसर्वेदेवाःसमागताः १८
गगनस्थास्तुतिष्ठंतिविमानैःसर्वकामकैः
शुक्लतीर्थेतुराजेंद्रआगताधर्मकांक्षिणः १९
रजकेनयथावस्त्रंशुक्लंभवतिवारिणा
आजन्मसंचितंपापंशुक्लतीर्थेव्यपोहति २०
स्नानंदानंमहापुरायंमार्कंडऋृषिसत्तम
शुक्लतीर्थात्परंतीर्थंनभूतंनभविष्यति २१
पूर्वेवयसिकर्माणिकृत्वापापानिमानवः
अहोरात्रोपवासेनशुक्लतीर्थेव्यपोहति २२
तपसाब्रह्मचर्येणयज्ञैर्दानैनवापुनः
देवदानेनयापुष्टिर्नसाक्रतुशतैरपि २३
कार्तिकस्यचमासस्यकृष्णपक्षेचतुर्दशी

घृतेनस्नापयेद्देवमुपोष्यपरमेश्वरम् २४
एकविंशत्कुलोपेतोनच्यवेच्चैश्वरात्पदात्
शुक्लतीर्थपरंतीर्थमृषिसिद्धनिषेवितम् २५
तत्रस्नात्वाततोराजन्पुनर्जन्मनविद्यते
स्नात्वावैशुक्लतीर्थेपिअर्चयेद्वृषभध्वजम् २६
जागरंकारयेत्तत्रनृत्यगीतादिमंगलैः
प्रभातेशुक्लतीर्थेतुस्नानंवैदेवतार्चनम् २७
अाचार्यंभोजयेत्पश्चाच्छिवव्रतपरःशुचिः
भोजनंचयथाशक्त्यावित्तशाठ्यंनकारयेत् २८
प्रदक्षिणंततःकृत्वाशनैर्देवांतिकंव्रजेत्
एवंवैकुरुतेयस्तुतस्यपुरायफलंशृणु २९
दिव्ययानसमारूढस्तूयमानोऽप्सरोगणैः
शिवतुल्यबलोपेतस्तिष्ठत्याभूतसंप्लवम् ३०
शुक्लतीर्थेतुयानारीददातिकनकंशुभम्
घृतेनस्नापयेद्देवंकुमारंचाभिपूजयेत् ३१
एवंयाकुरुतेभक्त्यातस्याःपुरायफलंशृणु
मोदतेदेवलोकस्थायावदिंद्राश्चतुर्दश ३२
अयनेवाचतुर्दश्यांसंक्रांतौविषुवेतथा
स्नात्वातुसोपवासःसनिर्जितात्मासमाहितः ३३
दानंदद्याद्यथाशक्त्याप्रीयेतांहरिशंकरौ
शुक्लतीर्थप्रभावेणसर्वंभवतिचाक्षयम् ३४
अनाथंदुर्गतंविप्रंनाथवंतमथापिवा
उद्वाहयतियस्तीर्थेतस्यपुरायफलंशृणु ३५
यावत्तद्रोमसंख्यातुतत्प्रसूतिकुलेषुच
तावद्वर्षसहस्राणिशिवलोकेमहीयते ३६
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेऊनविंशोध्यायः १९

विंशतितमोध्यायः

नारदउवाच-
ततस्तुनरकंगच्छेत्स्नानंतत्रसमाचरेत्

स्नातमात्रोनरस्तत्रनरकंतत्रपश्यति १
अस्यतीर्थस्यमाहात्म्यंशृणुत्वंपांडुनंदन
तस्मिंस्तीर्थेतुराजेंद्रयान्यस्थीनिविनिक्षिपेत् २
विलयंयांतिसर्वाणिरूपवान्जायतेनरः
गोतीर्थंतुततोगच्छेद्दृष्ट्वापापात्प्रमुच्यते ३
ततोगच्छेतराजेंद्रकपिलातीर्थमुत्तमम्
तत्रस्नात्वानरोराजन्गोसहस्रफलंलभेत् ४
ज्येष्ठमासेतुसंप्राप्तेचतुर्दश्यांविशेषतः
तत्रोपोष्यनरोभक्त्याकपिलांयःप्रयच्छति ५
घृतेनदीपंप्रज्वाल्यघृतेनस्नापयेच्छिवम्
सघृतंश्रीफलंदत्वाकृत्वाचांतेप्रदक्षिणम् ६
घंटाभरणसंयुक्तांकपिलांयःप्रयच्छति
शिवतुल्योनरोभूत्वानचेहजायतेपुनः ७
अंगारकदिनेप्राप्तेचतुर्थ्यांतुविशेषतः
स्नापयित्वाशिवंभक्त्याब्राह्मणेभ्यस्तुभोजनम् ८
अंगारकनवम्यांतुअमावस्यांतथैवच
स्नापयेत्तत्रयत्नेनरूपवान्सुभगोभवेत् ९
घृतेनस्नापयेल्लिंगंपूजयेद्भक्तितोद्विजान्
पुष्पकेणविमानेनसहस्रैःपरिवारितः १०
शैवंपदमवाप्नोतिनात्रचाभिगतंभवेत्
अक्षयंमोदतेकालंयथारुद्रस्तथैवच ११
यदातुकर्मसंयोगान्मर्त्यलोकमुपागतः
राजाभवतिधर्मिष्ठोरूपवान्जायतेबली १२
ततोगच्छेतराजेंद्रऋषितीर्थमनुत्तमम्
तृणबिंदुऋषिर्नामशापदग्धोव्यवस्थितः १३
तस्यतीर्थप्रभावेणपापमुक्तोऽभवद्द्विजः
ततोगच्छेतराजेंद्रगणेश्वरमनुत्तमम् १४
श्रावणेमासिसंप्राप्तेकृष्णपक्षेचतुर्दशीम्
स्नातमात्रोनरस्तत्ररुद्रलोकेमहीयते १५
पितृणांतर्पणंकृत्वामुच्यतेचऋणत्रयात्

गणेश्वरसमीपेतुगंगावदनमुत्तमम् १६
अकामोवासकामोवातत्रस्नात्वातुमानवः
आजन्मजनितैःपापैर्मुच्यतेनात्रसंशयः १७
सर्वदापर्वदिवसेस्नानंतत्रसमाचरेत्
पितॄणांतर्पणंकृत्वामुच्यतेचऋणत्रयात् १८
प्रयागेयत्फलंदृष्टंशंकरेणमहात्मना
तदेवनिखिलंपुण्यंगंगाराह्वर्कसंगमे १९
तस्यैवंपश्चिमेस्थानेसमीपेनातिदूरतः
दशाश्वमेधिकंनामत्रिषुलोकेषुविश्रुतम् २०
उपोष्यरजनीमेकांमासिभाद्रपदेतथा
अमावस्यांनरःस्नात्वाव्रजेद्वैयत्रशंकरः २१
सर्वदापर्वदिवसेस्नानंतत्रसमाचरेत्
पितॄणांतर्पणंकृत्वाअश्वमेधफलंलभेत् २२
दशाश्वमेधात्पश्चिमतोभृगुर्ब्राह्मणसत्तमः
दिव्यंवर्षसहस्रंतुईश्वरंपर्युपासत २३
वल्मीकावस्थितश्चासौदक्षिणंचनिकेतनम्
आश्चर्यंचमहज्जातमुमायाःशंकरस्यच २४
गौरीतुपृच्छतेदेवंकोयमत्रतुसंस्थितः
देवोवादानवोवाथकथयस्वमहेश्वर २५
ईश्वरउवाच-
भृगुर्नामद्विजश्रेष्ठऋषीणांप्रवरोमुनिः
ध्यायतेमांसमाधिस्थोवरंप्रार्थयतेप्रिये २६
तत्रप्रहसितादेवीईश्वरंप्रत्यभाषत
धूमावर्तशिखाजातातताेऽद्यापिनतुष्यसि
दुराराध्योऽसितेनत्वंनात्रकार्याविचारणा २७
देवउवाच-
नज्ञायसेमहादेविअयंक्रोधेनचेष्टितः
दर्शयामियथातथ्यंप्रियंतेचकरोम्यहम् २८
स्मारितोदेवदेवेनधर्मरूपोवृषस्तदा
स्मरणादेवदेवस्यवृषःशीघ्रमुपस्थितः २९

प्राहासौमानुषींवाचमादेशोदीयतांप्रभो
वल्मीकैश्छादितोविप्रएनंभूमौनिपातय ३०
योगस्थस्तुततोध्यायंस्ततस्तेननिपातितः
तत्क्षणात्क्रोधसंतप्तोहस्तमुत्क्षिप्तवान्वृषम् ३१
एवंसंभाषमाणस्तुकुत्रगच्छसिभोवृष
अद्यत्वामथपाप्मानंप्रत्यक्षंहन्म्यहंवृष ३२
धर्षितस्तुतदाविप्रोह्यंतरिक्षंगतंवृषम्
आकाशेप्रेक्षतेभूयएतदद्भुतमुत्तमम् ३३
ततःप्रहसितेरुद्रेऋषिरग्रेव्यवस्थितः
तृतीयंलोचनंदृष्ट्वावैलक्ष्यात्पतितोभुवि ३४
प्रणम्यदंडवद्भूमौस्तुवतेपरमेश्वरम्
प्रणिपत्यभूतनाथंभवोद्भवंत्वामहंदिव्यरूपम्
भवभीतोभुवनपतेभूतंविज्ञापयेकिंचित् ३५
त्वद्गुणनिकरान्वक्तुंकःशक्तोभवतिमानुषोनाथ
वासुकिरयंहिकदाचिद्वदनसहस्रंभवेद्यस्य ३६
भक्त्यातवापिशंकरभुवनपतेत्वत्स्तुतौतुमुखरस्य
वंद्यक्षमस्वभवन्प्रसीदमेतवचरणपतितस्य ३७
सत्वंरजस्तमस्त्वंस्थित्युत्पत्तौविनाशनेदेव
त्वांमुक्त्वाभुवनपतेभुवनेश्वरनैवदैवतंकिंचित् ३८
यमनियमयज्ञदानैर्वेदाभ्यासावधारणोद्योगात्
त्वद्भक्तेःसर्वमिदंनार्हतिकलासहस्रांशेन ३९
उत्कृष्टरसरसायनखड्गांजनपादुकादिसिद्धिर्वा
चिह्नानिभवत्प्रणतानांदृश्यंतइहजन्मनिप्रकटम् ४०
शाठ्येननमतियद्यपिददासित्वंधर्ममिच्छतांदेव
भक्तिर्भवच्छेदकरीमोक्षायविनिर्मितानाथ ४१
परदारपरस्वरतंपरिभवपरिदुःखशोकसंतप्तम्
परवदनवीक्षणपरंपरमेश्वरमांपरित्राहि ४२
अलीकाभिमानदग्धंक्षणभंगुरविभवविलसितंदेव
क्रूरंकुपथाभिमुखंपतितंमांत्राहिदेवेश ४३
दीनेंद्रियगणसार्थैर्बंधुजनैरेवपूरिताआशा

तुच्छातथापिशंकरकिंमूढंमांविडंबयसि ४४
तृष्णांहरस्वशीघ्रंलक्ष्मींमांदेहिहृदयवासिनींनित्याम्
छिंधिमदमोहपाशानुत्तारयमांमहादेव ४५
करुणाभ्युदयंनामस्तोत्रमिदंसिद्धिदंदिव्यम्
यःपठतिभक्तियुक्तस्तस्यतुतुष्येद्भृगोर्यथाहिशिवः ४६
ईश्वरउवाच-
अहंतुष्टोस्मितेविप्रवरंप्रार्थयस्वेप्सितम्
उमयासहितोदेवोवरंतस्यहिदापयेत् ४७
भृगुरुवाच-
यदितुष्टोसिदेवेशयदिदेयोवरोमम
रुद्रवेदीभवेदेवमेतत्संपादयस्वमे ४८
ईश्वरउवाच-
एवंभवतुविप्रेंद्रक्रोधस्थानंभविष्यति
नपितापुत्रयोश्चैवएकवाक्यंभविष्यति ४९
तदाप्रभृतिब्रह्माद्याःसर्वेदेवाःसकिन्नराः
उपासंतोभृगोस्तीर्थंतुष्टोयत्रमहेश्वरः ५०
दर्शनात्तस्यतीर्थस्यसद्यःपापात्प्रमुच्यते
अवशाःस्ववशाश्चापिम्रियंतेतत्रजंतवः ५१
गुह्यातिगुह्यस्यगतिस्तेषांनिःसंशयाभवेत्
एतत्क्षेत्रंसुविपुलंसर्वपापप्रणाशनम् ५२
तत्रस्नात्वादिवंयांतियेमृतास्तेऽपुनर्भवाः
औपानहंतदाछत्रंदेयमन्नंचकांचनम् ५३
भोजनंचयथाशक्त्याअक्षयंतस्यतद्भवेत्
सूर्योपरागेयोदद्याद्दानंचैवयथेच्छया ५४
तीर्थस्नानंतुयद्दानमक्षयंतस्यतद्भवेत्
चंद्रसूर्योपरागेषुवृषोत्सर्गमनुत्तमम् ५५
नजानंतिनरामूढाविष्णुमायाविमोहिताः
नर्मदायांस्थितंदिव्यंवृषतीर्थंनराधिप ५६
भृगुतीर्थस्यमाहात्म्यंयःशृणोतिनरःसकृत्
विमुक्तःसर्वपापेभ्योरुद्रलोकंसगच्छति ५७

ततोगच्छेतराजेंद्रगौतमेश्वरमुत्तमम्
तत्रस्नात्वानरोराजन्नुपवासपरायणः ५८
कांचनेनविमानेनब्रह्मलोकेमहीयते
धौतपापंततोगच्छेद्धौतंयत्रवृषेणतु ५९
नर्मदायांस्थितंराजन्सर्वपातकनाशनम्
तत्रतीर्थेनरःस्नात्वाब्रह्महत्यांव्यपोहति ६०
तस्मिन्तीर्थेमहाराजप्राणत्यागंकरोतियः
चतुर्भुजस्त्रिनेत्रस्तुरुद्रतुल्यबलोभवेत् ६१
वसेत्कल्पायुतंसाग्रंरुद्रतुल्यपराक्रमः
कालेनमहताप्राप्तःपृथिव्यामेकराड्भवेत् ६२
ततोगच्छेतराजेंद्रएरंडीतीर्थमुत्तमम्
प्रयागेयत्फलंदृष्टंमार्कंडेयेनभाषितम् ६३
तत्फलंलभतेराजन्स्नातमात्रस्तुमानवः
मासिभाद्रपदेचैवशुक्लपक्षस्यचाष्टमीम् ६४
उपोष्यरजनीमेकांतत्रस्नानंसमाचरेत्
यमदूतैर्नबाध्येतइंद्रलोकंसगच्छति ६५
ततोगच्छेतराजेंद्रसिद्धोयत्रजनार्दनः
हिरण्यद्वीपविख्यातंसर्वपापप्रणाशनम् ६६
तत्रस्नात्वानरोराजन्धनवान्रूपवान्भवेत्
ततोगच्छेतराजेंद्रतीर्थंकनखलंमहत् ६७
गरुडेनतपस्तप्तंतस्मिंस्तीर्थेनराधिप
विख्यातंसर्वलोकेषुयोगिनीतत्रतिष्ठति ६८
क्रीडतेयोगिभिःसार्धंशिवेनसहनृत्यति
तत्रस्नात्वानरोराजन्रुद्रलोकेमहीयते ६९
ततोगच्छेतराजेंद्रईशतीर्थमनुत्तमम्
ईशस्तत्रविनिर्मुक्तोगतऊर्ध्वंनसंशयः ७०
ततोगच्छेतराजेंद्रसिद्धोयत्रजनार्दनः
वाराहंरूपमास्थायअचिंत्यःपरमेश्वरः ७१
वराहतीर्थेनरःस्नात्वाद्वादश्यांतुविशेषतः
विष्णुलोकमवाप्नोतिनरकंतुनगच्छति ७२

ततोगच्छेतराजेंद्रसोमतीर्थमनुत्तमम्
पौर्णिमास्यांविशेषेणतत्रस्नानंसमाचरेत् ७३
प्रणिपत्यचईशानंबलिस्तस्यप्रसीदति
हरिश्चन्द्रपुरंदिव्यमंतरिक्षेतुदृश्यते ७४
चक्रध्वजेसमावृत्तेसुप्तेनागारिकेतने
नर्मदातोयवेगेनरुरुकच्छोपसेवितम् ७५
तस्मिन्स्थानेनिवासंचविष्णुःशंकरमब्रवीत्
द्वीपेश्वरेनरःस्नात्वालभेद्बहुसुवर्णकम् ७६
ततोगच्छेतराजेंद्ररुद्रकन्यांतुसंगमे
स्नातमात्रोनरस्तत्रदेव्याःस्थानमवाप्नुयात् ७७
देवतीर्थंततोगच्छेत्सर्वदेवनमस्कृतम्
तत्रस्नात्वातुराजेंद्रदैवतैःसहमोदते ७८
ततोगच्छेतराजेंद्रशिखितीर्थमनुत्तमम्
तत्रवैदीयतेदानंसर्वंकोटिगुणंभवेत् ७९
अपरपक्षेअमावास्यांस्नानंतत्रसमाचरेत्
ब्राह्मणंभोजयेदेकंकोटिर्भवतिभोजिता ८०
भृगुतीर्थेतुराजेंद्रतीर्थकोटिर्व्यवस्थिता
अकामोवासकामोवातत्रस्नायीतमानवः ८१
अश्वमेधमवाप्नोतिदैवतैःसहमोदते
तत्रसिद्धमवाप्नोतिभृगुस्तुमुनिपुंगवः
अवतारःकृतस्तेनशंकरेणमहात्मना ८२

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेविंशतितमोऽध्यायः २०

## एकविंशोऽध्यायः

नारदउवाच-
ततोगच्छेतराजेंद्रविहगेश्वरमुत्तमम्
दर्शनात्तस्यराजेंद्रमुच्यतेसर्वपातकैः १
ततोगच्छेतराजेन्द्रनर्मदेश्वरमुत्तमम्
तत्रस्नात्वानरोराजन्स्वर्गलोकेमहीयते २
अश्वतीर्थंततोगच्छेत्स्नानंतत्रसमाचरेत्

सुभगोदर्शनीयश्चभोगवान्जायतेनरः ३
पितामहंततोगच्छेद्ब्रह्मणानिर्मितंपुरा
तत्रस्नात्वानरोभक्त्यापितृपिंडंतुदापयेत् ४
तिलदर्भविमिश्रंतुउदकंतुप्रदापयेत्
तस्यतीर्थप्रभावेणसर्वंभवतिचाक्षयम् ५
सावित्रीतीर्थमासाद्ययस्तुस्नानंसमाचरेत्
विधूयसर्वपापानिब्रह्मलोकेमहीयते ६
मनोहरंचतत्रैवतीर्थंपरमशोभनम्
तत्रस्नात्वानरोराजन्पितृलोकेमहीयते ७
ततोगच्छेतराजेंद्रमानसंतीर्थमुत्तमम्
तत्रस्नात्वानरोराजन्रुद्रलोकेमहीयते ८
ततोगच्छेतराजेंद्रक्रतुतीर्थमनुत्तमम्
विख्यातंसर्वलोकेषुसर्वपापप्रणाशनम् ९
यान्यान्प्रार्थयतेकामान्पशुपुत्रधनानिच
प्राप्नुयात्तानिसर्वाणितत्रस्नात्वानराधिप १०
ततोगच्छेतराजेंद्रत्रिदशज्योतिविश्रुतम्
तत्रताऋषिकन्यास्तुतपस्तप्यंतिसुव्रताः ११
भर्त्ताभवतुसर्वासामीश्वरःप्रभुरव्ययः
प्रीतस्तेषांमहादेवश्चंडरूपधरोहरः १२
विकृताननबीभत्सस्तच्चतीर्थमुपागतः
तत्रकन्यामहाराजवरायपरमेश्वरः १३
कन्याऋद्धिंचयःसेवेत्कन्यादानंप्रयच्छति
तीर्थंतत्रमहाराजदशकन्येतिविश्रुतम् १४
तत्रस्नात्वार्च्चयेद्देवंसर्वपापैःप्रमुच्यते
ततोगच्छेतराजेंद्रस्वर्गबिंदुरितिश्रुतम् १५
तत्रस्नात्वानरोराजन्दुर्गतिंचनपश्यति
अप्सरेशंततोगच्छेत्स्नानंतत्रसमाचरेत् १६
क्रीडतेनागलोकस्थोऽप्सरोभिःसहमोदते
ततोगच्छेतराजेंद्रनरकंतीर्थमुत्तमम् १७
तत्रस्नात्वार्च्चयेद्देवंनरकंचनगच्छति

भारभूतंततोगच्छेदुपवासपरायणः १८
एतत्तीर्थंसमासाद्यअवतारंतुशांभवम्
अर्चयित्वाविरूपाक्षंरुद्रलोकेमहीयते १९
तस्मिंस्तीर्थेनरःस्नात्वाभारभूतेमहात्मनः
यत्रतत्रमृतस्यापिध्रुवंगाणेश्वरीगतिः २०
कार्तिकस्यतुमासस्यअर्चयित्वामहेश्वरम्
अश्वमेधाच्छतगुणंप्रवदंतिमनीषिणः २१
दीपकानांशतंकृत्वाघृतपूर्णंतुदापयेत्
विमानैःसूर्यसंकाशैर्व्रजतेयत्रशंकरः २२
वृषभंयःप्रयच्छेतशंखकुंदेंदुसंनिभम्
वृषयुक्तेनयानेनरुद्रलोकंसगच्छति २३
चरुमेकंतुयोदद्यात्तस्मिंस्तीर्थेनराधिप
पायसंमधुसंयुक्तंभक्ष्याणिविविधानिच २४
यथाशक्त्यनुराजेंद्रभोजयेत्सहदक्षिणाम्
तस्यतीर्थप्रभावेणसर्वंकोटिगुणंभवेत् २५
नर्मदायाजलंसिक्त्वाअर्चयित्वावृषध्वजम्
दुर्गतिंचनपंश्यंतितस्यतीर्थप्रभावतः २६
एतत्तीर्थंसमासाद्ययस्तुप्राणान्परित्यजेत्
सर्वपापविशुद्धात्माव्रजतेयत्रशंकरः २७
जलप्रवेशंयःकुर्यात्तस्मिंस्तीर्थेनराधिप
हंसयुक्तेनयानेनरुद्रलोकंसगच्छति २८
यावच्चंद्रश्चसूर्यश्चहिमवांश्चमहोदधिः
गंगाद्याःसरितोयावत्तावत्स्वर्गेमहीयते २९
अनाशनंतुयःकुर्यात्तस्मिंस्तीर्थेनराधिप
गर्भवासेतुराजेंद्रनपुनर्जायतेनरः ३०
ततोगच्छेतराजेंद्रअटवीतीर्थमुत्तमम्
तत्रस्नात्वानरोराजन्इंद्रस्यार्द्धासनंलभेत् ३१
शृंगतीर्थंततोगच्छेत्सर्वपापप्रणाशनम्
तत्रापिस्नातमात्रस्यध्रुवंगाणेश्वरीगतिः ३२
एरंडीनर्मदायाश्चसंगमंलोकविश्रुतम्

तत्रतीर्थंमहापुरायंसर्वपापप्रणाशनम् ३३
उपवासपरोभूत्वानित्यंब्रह्मपरायणः
तत्रस्नात्वातुराजेंद्रमुच्यतेब्रह्महत्यया ३४
ततोगच्छेतराजेन्द्रनर्मदोदधिसंगमम्
जमदग्निरितिख्यातंसिद्धोयत्रजनार्दनः ३५
यत्रेष्ट्वाबहुभिर्यज्ञैरिंद्रोदेवाधिपोभवत्
तत्रस्नात्वानरोराजन्नर्मदोदधिसंगमे ३६
त्रिगुणस्याश्वमेधस्यफलंप्राप्नोतिमानवः
पश्चिमोदधिसायुज्यंमुक्तिद्वारविघाटनम् ३७
तत्रदेवाःसगंधर्वाऋषयःसिद्धचारणाः
आराधयंतिदेवेशंत्रिसंध्यंविमलेश्वरम् ३८
सर्वपापविशुद्धात्मारुद्रलोकेमहीयते
विमलेश्वरपरंतीर्थंनभूतंनभविष्यति ३९
तत्रोपवासंकृत्वायेपश्यंतिविमलेश्वरम्
सर्वपापविशुद्धात्मारुद्रलोकंव्रजंतिते ४०
ततोगच्छेतराजेंद्रकेशिनीतीर्थमुत्तमम्
तत्रस्नात्वानरोराजन्नुपवासपरायणः ४१
उपोष्यरजनीमेकांनियतोनियताशनः
तत्रतीर्थप्रभावेणमुच्यतेब्रह्महत्यया ४२
सर्वतीर्थाभिषेकंचयःपश्येत्सागरेश्वरम्
योजनाभ्यंतरेतिष्ठेदावर्तेसंस्थितःशिवः ४३
तंदृष्ट्वासर्वतीर्थानिदृष्टानिस्युर्नसंशयः
सर्वपापविनिर्मुक्तोयत्ररुद्रःसगच्छति ४४
नर्मदासंगमंयावद्यावच्चामरकंटकम्
तत्रांतरेमहाराजन्तीर्थकोटयोदकस्थिताः ४५
तीर्थात्तीर्थाटनंचर्याऋषिकोटिनिषेविता
अग्निहोत्रैश्चदिव्यांशैःसर्वैर्ज्ञानपरायणैः ४६
सेवितास्तेनराजेंद्रईप्सितार्थप्रदायिकाः
यश्चेदंवैपठेन्नित्यंशृणुयाद्वापिभक्तितः ४७
तंतुतीर्थानिसर्वाणिअभिषिंचंतिपांडव

नर्मदाचसदाप्रीताभवेद्दैनात्रसंशयः ४८
प्रीतस्तस्यभवेद्रुद्रोमार्कंडेयोमहामुनिः
वंध्याचलभतेपुत्रान्दुर्भगासुभगाभवेत् ४९
कुमारींलभतेभर्त्तायच्चयोवाञ्छतेफलम्
तदेवलभतेसर्वंनात्रकार्याविचारणा ५०
ब्राह्मणोवेदमाप्नोतिक्षत्रियोविजयीभवेत्
वैश्यस्तुलभतेधान्यंशूद्रःप्राप्नोतिसद्गतिम् ५१
मूर्खस्तुलभतेविद्यांत्रिसंध्यंयःपठेन्नरः
नरकंचनपश्येतवियोनिंचनगच्छति ५२
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेएकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

नारदउवाच–
एवंतेकथितंराजन्नर्मदातीर्थमुत्तमम्
पुरागंधर्वकन्यानांशापजंभयमुल्बणम् १
नाशितंतन्महाराजरेवाजलकणाग्निना
रेवाजलकणस्पर्शान्मुक्तोभवतिमानवः २
युधिष्ठिरउवाच–
भगवन्बहुकन्याभिःशापोलंभिकथंकुतः
कस्यापत्यानितास्तासांनामकिंकीदृशंवयः ३
कथंरेवाजलस्पर्शाद्विपाकाच्छापसंभवात्
विमुक्ताःकुत्रताःसन्तुःसर्वंमेकथयप्रभो ४
नर्मदातीर्थमाहात्म्यंचमत्कारकरंभवेत्
श्रवणादपिपापानांमलनाशनमुच्यते ५
नर्मदानर्मदाशब्दोयेनकेनचिदुच्यते
तस्यस्याच्छाश्वतीमुक्तिर्यावदाचंद्रतारकम् ६
व्याहृतंभवतापूर्वंरेवामाहात्म्यमुत्तमम्
तथापिचरितंसाधोयदेतत्तन्निगद्यताम् ७
अथचोत्तमवार्तायासेवितव्यामनीषिभिः
अतःपृच्छामिविप्रेंद्ररेवामाहात्म्यमुत्तमम्

इतिहासंवदविभोकन्यानांचरितोज्ज्वलम् ८
नारदउवाच-
श्रूयतांराजशार्दूलधर्मगर्भापराकथा
यथारणिर्वह्निगर्भाधर्म्मस्तुब्रह्मसूरिव ९
गंधर्वःशुकसंगीतिस्तस्यकन्याप्रमोहिनी
सुशीलस्यसुशीलाचसुस्वरास्वरवेदिनः १०
सुताराचंद्रकांतस्यचंद्रिकासुप्रभस्यच
इमानिवरनामानितासामप्सरसांनृप ११
कुमार्यःपंचसर्वास्तावयसासुभगाःपुनः
भाषंतेचमिथस्तास्तुभगिन्यइवसर्वदा १२
चंद्रादिवविनिष्क्रांताश्चंद्रिकाइवसोज्ज्वलाः
चंद्राननाःसुकेश्यश्चचंद्रकांताइवोज्ज्वलाः १३
देवेष्वेताविलासिन्यःकौमुद्यःकैरवेष्विव
लावण्यपिंडसंभूतादिव्यरूपामनोहराः १४
उद्भिन्नकुचपद्मिन्यःकेतक्यइवमाधवे
उत्पन्नयौवनैःकांतावल्लीवनवपल्लवैः १५
हेमगौराश्चहेमाभाहेमाभरणभूषिताः
हेमचंपकमालिन्योहेमच्छविसुवाससः १६
स्वरग्रामावलीहासुविविधामूर्च्छनासुच
तालवाद्यविनोदेषुवेणुवीणाप्रवादने १७
मृदंगनादसंभिन्नलास्यमध्यलयेषुच
चित्रादिषुविनोदेषुकलासुचविशारदाः १८
एवंभूताश्चताःकन्यामुमुहुःक्रीडनैर्वरैः
पितृभिर्लालिताःसर्वाश्चेरुश्चधनदालये १९
कौतुकादेकदापंचमिलित्वामासिमाधवे
कन्यामंदारपुष्पाणिविचिन्वंत्योवनाद्वनम् २०
गौरींसमाराधयितुंस्वरांगनाःकदाचिदच्छोदसरोवरंययुः
हेमांबुजानिप्रवराणिताःपुनस्तस्मादुपादायवरोत्पलैःसह २१
वैडूर्यशुद्धस्फुटिकप्रकुट्टिमेस्नात्वातुघट्टेपरिधायचांबरम्
मौनेनचस्थंडिलपिंडिकामयींसुवर्णमुक्ताभरणांविनिर्ममुः २२

समर्चितांचंदनगंधकुंकुमैरभ्यर्च्यगौरींवरपंकजादिभिः
नानोपहारैःशुभभक्तिभावितालास्यप्रयोगैर्ननृतुःकुमारिकाः २३
गांधर्वमाश्रित्यपरंस्वरंततोगेयंस्वभावध्वनिभिःसमूर्छनम्
एणीदृशस्ताःप्रजगुःकलाक्षरंतारप्रवृद्धंगतिभिश्चसुस्वरम् २४
तस्मिन्सुभावेरसवर्षहर्षंकन्यास्वलंनिर्भरचित्तवृत्तिषु
अच्छोदतीर्थेप्रवरेतदागतःस्नातुंमुनेर्वेदनिधेःसुतोग्रजः २५
रूपेणनिःसीमतरोवराननःप्रफुल्लपद्मायतलोचनोयुवा
विस्तीर्णवक्षाःसुभुजोऽतिसुंदरःश्यामच्छविःकामइवापरोहिसः २६
सब्रह्मचारीसुशिखोहिशोभतेदंडेनयुक्तोधनुषेवमन्मथः
एणाजिनप्रावरणःसमुद्रधृग्हेमाभमौंजीकटिमेखलःपरः २७
तंदृष्ट्वाब्राह्मणंबालास्तास्तत्रसरसस्तटे
जहृषुःकौतुकाविष्टाअयंनोभवितातिथिः २८
संत्यक्तगीतनृत्यास्तास्तस्यालोकनलालसाः
हरिण्योलुब्धकेनेवविद्धाःकामेनसायकैः २९
पश्यपश्येतिजल्पंत्योमुग्धाःपंचससंभ्रमम्
तस्मिन्विप्रवरेयूनिकामदेवभ्रमंययुः ३०
पुनःपुनस्तमभ्यर्च्यनयनैःपंकजैरिव
पश्चाद्विचारमारब्धमप्सरोभिःपरस्परम् ३१
यद्ययंकामदेवोहिरतिहीनःकथंभवेत्
अथावाह्यश्विनौदेवौतावुभौयुगचारिणौ ३२
गंधर्वःकिन्नरोवाथसिद्धोवाकामरूपधृक्
ऋषिपुत्रोऽथवाकश्चित्कश्चिद्वामनुजोत्तमः ३३
अस्तिवाकश्चिदेवायंधात्रासृष्टोहिनःकृते
यथाभाग्यवतामर्थेनिधानंपूर्वकर्मभिः ३४
तथास्माकंकुमारीणांगौर्यानीतोवरोत्तमः
करुणाजलकल्लोललब्धार्द्रीकृतचित्तया ३५
मयावृतस्त्वयाचायंत्वयावृतस्तथानया
एवंपंचसुकन्यासुवदंतीषुनृपोत्तम ३६
श्रुत्वातद्वचनंतत्रकृतमाध्याह्निकक्रियः
चिंतयामासमेधावीकिंकृत्वासुकृतंभवेत् ३७

गाधिसंभवपराशरादयःकंडुदेवलमुखाश्चयेद्विजाः
तेऽपियोगिबलिनोविमोहिताःलीलयातदबलाभिरद्भुतम् ३८
योषितांनयनतीक्ष्णसायकैर्भ्रूलतासुदृढचापनिर्गतैः
धन्विनामकरकेतुनाहतःकस्यनोपततिवामनोमृगः ३९
तावदेवनयधीर्विराजतेतावदेवजनताभयंभवेत्
तावदेवधृतचित्तताभृशंतावदेवगणनाकुलस्यच ४०
तावदेवतपसःप्रगल्भतातावदेवशमसेवनंनृणाम्
यावदेवललनेक्षणासवैर्माद्यतेद्रुतमदैर्नपूरुषः ४१
मोहयंतिमदयंतिरागिणंयोषितःस्वललितैर्मनोहरैः
मोदयंतिमदयंतिमामिमाधर्मरक्षणपरंहिस्वैर्गुणैः ४२
मांसरक्तमलमूत्रनिर्मितेयोषितांवपुषिनिर्गुणेऽशुचौ
कामिनस्तुपरिकल्प्यचारुतामाविशंतिसुविमूढचेतसः ४३
दारुणाहिपरिकीर्तितांगनासाधुभिर्विमलबुद्धिभिर्बुधैः
यावदेवनसमीपगाइमास्तावदेवहिगृहंव्रजाम्यहम् ४४
समीपंतस्ययावन्नआगच्छंतिवरस्त्रियः
वैष्णवेनप्रभावेणतावदंतर्दधेद्विजः ४५
तस्ययोगबलाद्भूपगतस्यादर्शनंतदा
दृष्ट्वातदद्भुतंकर्मवैष्णवब्रह्मचारिणः ४६
वित्रस्तनयनाबालाकुरंग्यइवकातराः
संक्रांतनयनाःशून्याददृशुस्तादिशोदश ४७
कन्याऊचुः-
इंद्रजालंस्फुटंवेत्तिमायांजानातिवापुनः
दृष्टोऽप्यदृष्टरूपोभूदित्यूचुस्ताःपरस्परम् ४८
व्याप्तंचहृदयंतासांतदैवविरहाग्निना
ज्वलद्दावानलेनेवसुस्निग्धंसर्वकाननम् ४९
त्यजेंद्रजालिकांविद्यांकांतदर्शयसत्वरम्
आत्मानंनहितेयुक्तंप्रागग्रासेमक्षिकोपमम् ५०
हाकष्टंदर्शितःकस्माद्धात्रात्वंघटितःकुतः
ज्ञातंमहानुसंतापहेतुर्नःस्वंविनिर्मितः ५१
कच्चित्तेनिर्दयंचेतःकच्चिदस्मासुनोमतिः

कच्चित्क्रूरोऽसिहेकांतकच्चिन्मुष्णासिनोमनः ५२
कच्चिन्नप्रत्ययोस्मासुकच्चिदस्मान्परीक्षसे
कच्चिन्निर्ममताशीलःकच्चिन्मायाविशारदः ५३
कच्चिच्चित्तेप्रवेष्टुंचवेत्सिविज्ञानलाघवम्
कच्चिन्निष्क्रमणोपायंनजानासिकुतःपुनः ५४
कच्चिद्विनापराधंतुकिमस्मासुप्रकुप्यसे
कच्चिद्दुःखंनजानासिपरेषांविप्रलंभनम् ५५
त्वद्दर्शनंविनानष्टाहृदयेश्वरसांप्रतम्
नजीवामोऽथजीवामःपुनस्त्वद्दर्शनाशया ५६
वयंचनीयतांतत्रशीघ्रंयत्रगतोभवान्
त्वद्दर्शनहरोधाताव्यधान्मोदांकुरच्छिदाम् ५७
सर्वथादर्शनंदेहिकारुरायंभजसर्वथा
पर्य्यंतंनप्रपश्यंतिकस्यचित्सुजनाजनाः ५८
इत्थंविलप्यताःकन्याःप्रतीक्ष्यचबहुक्षणम्
पितुर्भयाद्गृहंगंतुंशीघ्रमारेभिरेततः ५९
तत्प्रेमनिगडैर्बद्धाभृशंविरहविक्लवाः
कथंचिद्धैर्यमालंब्यताःस्वंस्वंगृहमागताः ६०
आगत्यपतिताःसर्वामातॄणांतुसमीपतः
किमेतन्मातृभिःपृष्टाःकुतःकालात्ययोऽभवत् ६१
क्रीडंत्यःकिन्नरीभिस्तुसार्द्धंसंगतकंयदा
संस्थितास्तेननज्ञातोदिवसोऽच्छोदसरोवरे ६२
पथिश्रांतावयंमातःसंतापस्तेननस्तनौ
मोहेनमहतावक्तुंनकेनाप्युत्सहामहे ६३
इत्युक्त्वालुठितास्तत्रमणिभूमौकुमारिकाः
आकारंगोपयंत्यस्तामुग्धाजल्पंतिमातृभिः ६४
काचिन्नर्तयतिक्रीडामयूरंनमुदातदा
नपाठयतितंकीरंपंजरेऽन्याकुतूहलात् ६५
लालयेन्नकुलंनान्यानोल्लापयतिसारिकाम्
अपरातीवसंमुग्धानैवखेलतिसारसैः ६६
भेजिरेनविनोदंतारेमिरेनैवमंदिरे

ऊचिरेबांधवैर्नालंवीणावाद्यंनचक्रिरे ६७
कल्पद्रुमप्रसूनंयत्सर्वंतच्चानलोपमम्
मंदारकुसुमामोदिनपपुर्मधुरंमधु ६८
योगिन्यइवताःकन्यानासाग्रन्यस्तलोचनाः
अलक्ष्यध्यानसंतानाःपुरुषोत्तममानसाः ६९
चंद्रकांतमणिच्छन्नेस्रवद्वारिणिकंदरे
क्षणंवातायनेस्थित्वाजलयंत्रगृहेक्षणम् ७०
रचयंतिक्षणंशय्यांदीर्घिकांभोजिनीदलैः
वीज्यमानाःसखीभिस्ताःशीतलैर्नलिनीदलैः ७१
इत्थंयुगसमांरात्रिमनयंस्तावरस्त्रियः
कथंचिद्धारणंकृत्वाविह्वलाःसज्वराइव ७२
प्रातर्व्योममणिंदृष्ट्वामन्यमानाःस्वजीवितम्
विज्ञाप्यमातरंस्वांस्वांगौरींपूजयितुंगताः ७३
स्नात्वातेनविधानेनपुष्पैर्धूपैस्तथापुनः
विधायपूजनंदेव्यागायंत्यस्तत्रताःस्थिताः ७४
एतस्मिन्नंतरेविप्रःस्नातुंसोऽपिसमागतः
पितुराश्रमतस्तस्मादच्छोदेऽत्रसरोवरे ७५
मित्रंदृष्ट्वैवरात्र्यंतेपद्मिन्यइवकन्यकाः
तत्फुल्लनयनाजातास्तंदृष्ट्वाब्रह्मचारिणम् ७६
गत्वातत्रैवताःकन्यासमीपंब्रह्मचारिणः
सव्यापसव्यबंधेनभुजपाशंचचक्रिरे ७७
गतोऽसिप्रियपूर्वेद्युर्गंतुमद्यनलभ्यते
वृतस्त्वंनूनमस्माभिर्नात्रतेऽस्तिविचारणा ७८
इत्युक्तोब्राह्मणःप्राहप्रहसन्बाहुपाशगः
युष्माभिरुच्यतेभद्रमनुकूलंप्रियंवचः ७९
प्रथमाश्रमनिष्ठस्यकिंतुनश्येतमेव्रतम्
विद्याभ्यसनशीलस्यनाभूत्पारंगुरोःकुले ८०
आश्रमेयत्रयोधर्मोरक्षणीयःसुपंडितैः
विवाहोऽयमतोमन्येनधर्मइतिकन्यकाः ८१
आकर्ण्यविप्रवाक्यानिविप्रमूचुर्वरस्त्रियः

सकलध्वनिसोत्कंठयोकोकिलाइवमाधवे ८२
धर्मादर्थोऽथतःकामःकामात्सुखफलोदयः
इत्येवंनिश्चयज्ञास्तेवर्णयंतिविपश्चितः ८३
सकामोधर्मबाहुल्यात्पुरतस्तेसमुत्थितः
सेव्यतांविविधैर्भोगैःस्वच्छाभूमिरियंयतः ८४
श्रुत्वातद्वचनंतासांप्राहगंभीरयागिरा
तथ्यंवोवचनंकिंतुममाप्यावश्यकंव्रतम् ८५
प्राप्यानुज्ञांगुरोःकुर्वेविवाहकर्मनान्यथा
इत्युक्ताःपुनरूचुस्ताःस्फुटंमूढोऽसिसुंदर ८६
सिद्धौषधंब्रह्मधियारसायनंसिद्धिर्निधिःसाधुकुलावरांगनाः
मंत्रस्तथासिद्धरसश्चधर्मतोमुनेनिषेव्याःसुधियासमागताः ८७
कार्यंनुदैवाद्यदिसिद्धिमागतंतस्मिन्नुपेक्षांनचयांतिनीतिगाः
यस्मादुपेक्षानपुनःफलप्रदातस्मान्नदीर्घीकरणंप्रशस्यते ८८
विषादप्यमृतंग्राह्यममेध्यादपिकांचनम्
नीचादप्युत्तमांविद्यांस्त्रीरत्नंदुष्कुलादपि ८९
सांद्रानुरागाःकुलजन्मनिर्मलाःस्नेहार्द्रचित्तासुगिरःस्वयंवराः
कन्यासुरूपाःखलुचारुयौवनाधन्यालभंतेऽत्रनरास्तुनेतरे ९०
क्ववयंसुरसुंदर्य्यःक्वभवांस्तापसोबटुः
दुर्घटस्यविधानेनमन्येधातैवपंडितः ९१
तस्मादस्मानिदानींतुस्वीकुर्य्यात्मंगलंभवान्
गांधर्वेणविवाहेनअन्यथानोपजीवनम् ९२
श्रुत्वावाक्यंततःप्राहब्राह्मणोधर्मवित्तमः
भोमृगाक्ष्यःकथंत्याज्योधर्मोधर्मधनैर्नरैः ९३
धर्मश्चार्थश्चकामश्चमोक्षश्चैतच्चतुष्टयम्
यथोक्तंफलदंज्ञेयंविपरीतंतुनिष्फलम् ९४
नाकालेऽहव्रतीकुर्यामतोदारपरिग्रहम्
नक्रियाफलमाप्नोतिक्रियाकालंनवेत्तियः ९५
यतोधर्मविचारेऽस्मिन्प्रसक्तंमममानसम्
तस्माच्छृणुतहेकन्यानसमीहेस्वयंवरम् ९६
एवंज्ञात्वाशयंतस्यसमीक्ष्यैवपरस्परम्

करात्करंविमुच्याथजग्राहांघ्रिंप्रमोहिनी ९७
भुजौजगृहतुस्तस्यसुशीलासुस्वरातथा
आलिलिगसुताराचवक्त्रंचुंबतिचंद्रिका ९८
तथापिनिर्विकारोऽसौप्रलयानलसन्निभः
शशापब्रह्मचारीताःक्रोधेनात्यंतमूर्छितः ९९
पिशाच्यइवमांलग्नातत्पिशाच्योभविष्यथ
एवंतेनाशुशप्तास्तास्तंत्यक्त्वापुरतःस्थिताः १००
किमेतच्चेष्टितंपापंह्यनागसिविचेष्टया
प्रियंकृतोऽप्रियंकृत्वाधिकत्वांधर्मकृतांतकम् १०१
अनुरक्तेषुभक्तेषुमित्रेषुद्रोहकारिणः
पुंसोलोकोभयोःसौख्यंनाशमेतीतिनःश्रुतम् १०२
तस्मात्त्वमपिनःशापात्पिशाचोभवसत्वरम्
इत्युक्त्वापिचताबालानिःश्वसंत्यःक्रुधाकुलाः १०३
तदेवान्योन्यसंरंभात्तस्मिन्सरसिपार्थिव
ताःकन्याब्रह्मचारीचसर्वेपैशाच्यमागताः १०४
सपिशाचःपिशाच्यस्ताःक्रंदमानाःसुदारुणम्
क्षपयंतिविपाकांस्तान्पूर्वोपात्तस्यकर्म्मणः १०५
स्वकालेप्रभवत्येवपूर्वोपात्तंशुभाशुभम्
स्वच्छायामिवदुर्वारंदेवानामपिपार्थिव १०६
क्रंदंतिपितरस्तासांमातरस्तत्रतत्रच
भ्रातरश्चैवबालानांदैवंहिदुरतिक्रमम् १०७
अतऊर्ध्वंपिशाचास्तेआहारार्थंसुदुःखिताः
इतस्ततश्चधावंतोवसंतिसरसस्तटे १०८
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेद्वाविंशोध्यायः २२

## त्रयोविंशोऽध्यायः

नारदउवाच–
एवंबहुतिथेकालेलोमशोमुनिसत्तमः
आगतश्चमहाभागस्तत्रयादृच्छिकोमुनि १
तंदृष्ट्वाब्राह्मणंसर्वेपिशाचाःक्षुत्समाकुलाः

धावंतोह्यत्तुकामास्तेमिलित्वायूथवर्तिनः २
दह्यमानास्तुतीव्रेणतेजसालोमशस्यतु
असमर्थाःपुरःस्थातुंतेसर्वेदूरतःस्थिताः ३
तत्रपूर्वकर्मबलात्पिशाचःसहवैद्विजः
समीक्ष्यलोमशंराजन्साष्टांगंप्रणिपत्यच ४
उवाचसूनृतांवाचंबद्ध्वाशिरसिचांजलिम्
महाभाग्योदयेविप्रसाधूनांसंगतिर्भवेत् ५
गंगादिपुणयतीर्थेषुयोनरःस्नातिसर्वथा
यःकरोतिसतांसंगंतयोःसत्संगमोवरः ६
गुरूणांसंगमोविप्रदृष्टादृष्टफलोभुवि
स्वर्गदोरोगहारीचकिंतमोपहरोमतः ७
इत्युक्त्वाकथयामासपूर्ववृत्तांतमद्भुतम्
इमागंधर्वकन्यास्तामुनेसोऽहद्विजात्मजः ८
सर्वेपिशाचरूपेणमिथःशापविमोहिताः
दीनाननास्सुतिष्ठामस्तवाग्रेमुनिसत्तम ९
त्वद्दर्शनेनबालानांनिस्तारोनोभविष्यति
सूर्योदयेतमस्तोमःकिंनुलीयेतपुष्करे १०
श्रुत्वैतल्लोमशोवाक्यंकृपार्द्रीकृतमानसः
प्रत्युवाचमहातेजादुःखितंतंमुनेःसुतम् ११
मत्प्रसादाच्चसर्वेषांस्मृतिःसपदिजायताम्
धर्मेचवर्ततांयेनमिथःशापोलयंव्रजेत् १२
पिशाचउवाच-
महर्षेकथ्यतांधर्मोमुच्येमयेनकिल्बिषात्
नायंकालोविलंबस्यशापाग्निर्दारुणोयतः १३
लोमशउवाच-
मयासार्द्धंप्रकुर्वंतुरेवास्नानंविधानतः
शापान्मोक्ष्यतिवोरेवानान्यथानिष्कृतिर्भवेत् १४
शृणुष्वावहितोविप्रपापनाशोध्रुवंनृणाम्
रेवास्नानेनजायेतइतिमेनिश्चितामतिः १५
सप्तजन्मकृतंपापंवर्तमानंचपातकम्

रेवास्नानंदहेत्सर्वंतूलराशिमिवानलः १६
प्रायाश्चित्तंनपश्यंतियस्मिन्पापेपिशाचक
तत्सर्वंनर्मदातोयेस्नानमात्रेणनश्यति १७
ज्ञानकृन्नर्म्मदास्नानमतोमोक्षफलाहिसा
हिमवत्पुण्यतीर्थानिसर्वपापहराणिवै १८
इंद्रलोकप्रदंहीदंनिर्मितंब्रह्मवादिभिः
सर्वकामफलारेवामोक्षदापरिकीर्तिता १९
पापघ्नीपापहारिणीसर्वकामफलप्रदा
विष्णुलोकदश्राप्लावोनार्मदःपापनाशनः २०
यामुनःसूर्यलोकायभवेदाप्लावउत्तमः
सारस्वतोघविध्वंसीब्रह्मलोकफलप्रदः २१
विशालफलदाप्रोक्ताविशालाहिपिशाचक
पापेंधनदवाग्निस्तुगर्भहेतुक्रियापहः २२
विष्णुलोकायमोक्षायनार्मदःपरिकीर्तितः
सरयूगंडकीसिंधुश्चंद्रभागाचकौशिकी २३
तापीगोदावरीभीमापयोष्णीकृष्णवेणिका
कावेरीतुंगभद्राचअन्याश्चापिसमुद्रगाः २४
तासुरेवापराप्रोक्ताविष्णुलोकप्रदायिनी
रेवातुप्राप्यतेपुण्यैःपूर्वजन्मकृतैर्द्विज
अपुनर्भवदंतत्रमज्जनंमुनिपुत्रक २५
गायंतिदेवाःसततंदिविष्ठारेवाकदादृष्टिगताहिनोभवेत्
स्नातानरायत्रनगर्भवेदनांपश्यंतितिष्ठंतिचविष्णुसन्निधौ २६
मज्जंतियेप्रत्यहमत्रमानवारेवासुतोयेबहुपापकंचुकाः
मज्जंतितेनोनिरयेषुधर्म्मतःस्वर्गेतुतेचारुचरंतिदेववत् २७
तीव्रैर्व्रतैर्दानतपोभिरध्वरैःसार्धंविधात्रातुलयाधृतापुरा
रेवापिशाचाशुतयोर्द्वयोरभूद्रेवावरातत्रचमोक्षसाधिका २८
नारदउवाच–
एतच्छ्रुत्वावचस्तस्यलोमशस्यपिशाचकाः
तेनसार्द्धंययुःशीघ्रंरेवामज्जनहेतवे २९
ततोदैवात्समुत्पन्नोरेवारोधसिमारुतः

तेषांप्रवाहस्पृष्टानांगात्रेजलकणप्रदः ३०
रेवाजलकणस्पर्शात्पैशाच्यात्तेविमोचिताः
तत्क्षणाद्दिव्यवपुषःप्रशशंसुश्चनर्मदाम् ३१
ततोलोमशवाक्येनताश्चगंधर्वकन्यकाः
परिणीताःसुखंतेनविप्रेणनर्मदातटे ३२
उवाससुचिरंकालंस्नानपानावगाहनैः
अर्चित्वानर्मदामत्रविष्णुलोकंगताश्चते ३३
एवंतेकथितोराजन्नर्मदागुणसंश्रयः
इतिहासोमहापुरायःश्रवणात्पापनाशनः ३४
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेत्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

युधिष्ठिरउवाच-
अथान्यानितुतीर्थानिवसिष्ठोक्तानिमेवद
श्रुत्वायानिचपापानिविलयंयांतिनारद १
नारदउवाच-
शृणुष्वात्रहितीर्थानिवसिष्ठोक्तानिपार्थिव
दक्षिणंसिंधुमासाद्यब्रह्मचारीजितेंद्रियः २
अग्निष्टोममवाप्नोतिविमानंचाधिरोहति
चर्मणवतींसमासाद्यनियतोनियताशनः ३
रंतिदेवाभ्यनुज्ञातोअग्निष्टोमफलंलभेत्
ततोगच्छेतधर्मज्ञहिमवत्सुतमर्बुदम् ४
पृथिव्यायत्रवैछिद्रंपूर्वमासीद्युधिष्ठिर
तत्राश्रमोवसिष्ठस्यत्रिषुलोकेषुविश्रुतं ५
तत्रोष्यरजनीमेकांगोसहस्रफलंलभेत्
पिंगातीर्थमुपस्पृश्यब्रह्मचारीनराधिप ६
कपिलानांनरव्याघ्रशतस्यफलमाप्नुयात्
ततोगच्छेतधर्मज्ञप्रभासंलोकविश्रुतम् ७
यत्रसन्निहितोनित्यंस्वयमेवहुताशनः
देवतानांमुखंवीरअनलोऽनिलसारथिः ८

तस्मिंस्तीर्थवरेस्नात्वाशुचिःप्रयतमानसः
अग्निष्टोमातिरात्राभ्यांफलंप्राप्नोतिमानवः ९
ततोगत्वासरस्वत्याःसागरस्यचसंगमम्
गोसहस्रफलंप्राप्यस्वर्गलोकेमहीयते १०
दीप्यमानोऽग्निवन्नित्यंप्रभयाभरतर्षभ
तीर्थेसलिलराजस्यस्नात्वाप्रयतमानसः ११
त्रिरात्रमुषितस्तत्रतर्पयेत्पितृदेवताः
विराजतियथासोमोवाजिमेधंचविंदति १२
वरदानंततोगच्छेत्तीर्थंभरतसत्तम
विष्णोर्दुर्वाससायत्रवरोदत्तोयुधिष्ठिर १३
वरदानेनरःस्नात्वागोसहस्रफलंलभेत्
ततोद्वारवतींगच्छेन्नियतोनियताशनः १४
पिंडारकेनरःस्नात्वालभेद्बहुसुवर्णकम् १५
तस्मिंस्तीर्थेमहाराजपद्मलक्षणलक्षिताः
अद्यापिमुद्रादृश्यंतेतदद्भुतमरिंदम १६
त्रिशूलांकानिपद्मानिदृश्यंतेकुरुनंदन
महादेवस्यसान्निध्यंतत्रैवभरतर्षभ १७
सागरस्यचसिंधोश्चसंगमंप्राप्यभारत
तीर्थेसलिलराजस्यस्नात्वाप्रयतमानसः १८
तर्पयित्वापितॄन्देवानृषींश्चभरतर्षभ
प्राप्नोतिवारुणंलोकंदीप्यमानःस्वतेजसा १९
शंकुकर्णेश्वरंदेवमर्चयित्वायुधिष्ठिर
अश्वमेधंदशगुणंप्रवदंतिमनीषिणः २०
प्रदक्षिणमुपावृत्यगच्छेतभरतर्षभ
तीर्थंकुरुवरश्रेष्ठत्रिषुलोकेषुविश्रुतम् २१
तिमीतिनाम्नाविख्यातंसर्वपापप्रमोचनम्
यत्रशक्रादयोदेवाउपासंतेमहेश्वरम् २२
तत्रस्नात्वार्चयित्वाचरुद्रंदेवगणैर्वृतम्
जन्मप्रभृतिपापानिकृतानिनुदतेनरः २३
तिमिरत्रनरश्रेष्ठसर्वदेवैरभिष्टुतः

तत्रस्नात्वानरश्रेष्ठहयमेधमवाप्नुयात् २४
जित्वातत्रमहाप्राज्ञविष्णुनादितिनंदनम्
पुराशौचंकृतंराजन्हत्वादैवतकंटकान् २५
ततोगच्छेतधर्मज्ञवसुधाराममभिष्टुताम्
गमनादेवतस्यांहिहयमेधमवाप्नुयात् २६
स्नात्वाकुरुवरश्रेष्ठप्रयतात्मातुमानवः
तर्पयित्वापितॄन्देवान्विष्णुलोकेमहीयते २७
तीर्थंचापिपरंतत्रवसूनांभरतर्षभ
तत्रस्नात्वाचपीत्वाचवसूनांसंमतोभवेत् २८
सिंधुतममितिख्यातंसर्वपापप्रणाशनम्
तत्रस्नात्वानरश्रेष्ठलभेद्बहुसुवर्णकम् २९
ब्रह्मतुंगंसमासाद्यशुचिःप्रयतमानसः
ब्रह्मलोकमवाप्नोतिसुकृतीविरजानरः ३०
कुमारिकाणांशक्रस्यतीर्थंसिद्धनिषेवितम्
तत्रस्नात्वानरश्रेष्ठशक्रलोकमवाप्नुयात् ३१
रेणुकायाश्चतत्रैवतीर्थंदेवनिषेवितम्
स्नात्वातत्रभवेद्विप्रोविमलश्चंद्रमाइव ३२
अथपंचनदंगत्वानियतोनियताशनः
पंचयज्ञानवाप्नोतिक्रमशोयेतुकीर्तिताः ३३
ततोगच्छेतधर्मज्ञभीमायाःस्थानमुत्तमम्
तत्रस्नात्वानयोन्यांवैनरोभरतसत्तम ३४
देव्याःपुत्रोभवेद्राजन्तत्रकुंडलविग्रहः
गवांशतसहस्रस्यफलंचैवाप्नुयान्महत् ३५
गिरिकुंजंसमासाद्यात्रिषुलोकेषुविश्रुतम्
पितामहंनमस्कृत्यगोसहस्रफलंलभेत् ३६
ततोगच्छेतधर्मज्ञविमलंतीर्थमुत्तमम्
अद्यापियत्रदृश्यंतेमत्स्याःसौवर्णराजताः ३७
तत्रस्नात्वानरश्रेष्ठवाजपेयमवाप्नुयात्
सर्वपापविशुद्धात्मागच्छेत्परमिकांगतिम् ३८
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेचतुर्विंशोऽध्यायः २४

## पंचविंशोऽध्यायः

नारदउवाच-
वितस्तांचसमासाद्यसंतर्प्यपितृदेवताः
नरःफलमवाप्नोतिवाजपेयस्यभारत १
काश्मीरेष्वेवनागस्यभवनंतक्षकस्यच
वितस्ताख्यमितिख्यातंसर्वपापप्रमोचनम् २
तत्रस्नात्वानरोनूनंवाजपेयमवाप्नुयात्
सर्वपापविशुद्धात्मागच्छेतपरमांगतिम् ३
ततोगच्छेतमलदंत्रिषुलोकेषुविश्रुतम्
पश्चिमायांतुसंध्यायामुपस्पृश्ययथाविधि ४
चरुंसप्तार्चिषेराजन्यथाशक्तिनिवेदयेत्
पितृणामक्षयंदानंप्रवदंतिमनीषिणः ५
गवांशतसहस्रेणराजसूयशतेनच
अश्वमेधसहस्रेणश्रेयान्सप्तार्चिषश्चरुः ६
ततोनिवृत्तोराजेंद्ररुद्रास्पदमथाविशेत्
अभिगम्यमहादेवमश्वमेधफलंलभेत् ७
मणिमंतंसमासाद्यब्रह्मचारीसमाहितः
एकरात्रोषितोराजन्नग्निष्टोमफलंलभेत् ८
अथगच्छेतराजेंद्रदेविकांलोकविश्रुताम्
प्रसूतिर्यत्रविप्राणांश्रूयतेभरतर्षभ ९
त्रिशूलपाणेःस्थानंयत्त्रिषुलोकेषुविश्रुतम्
देविकायांनरःस्नात्वाअभ्यर्च्यचमहेश्वरम् १०
यथाशक्तिनरस्तत्रनिवेद्यभरतर्षभ
सर्वकामसमृद्धस्ययज्ञस्यलभतेफलम् ११
कामाख्यंतत्ररुद्रस्यतीर्थंदेवर्षिसंमतम्
तत्रस्नात्वानरःक्षिप्रंसिद्धिमाप्नोतिभारत १२
यजनंयाजनंगत्वातथैवब्रह्मवालकम्
पुष्पन्यासउपस्पृश्यनशोचेन्मरणंततः १३
अर्द्धयोजनविस्तारांपंचयोजनमायताम्
एतावद्देविकामाहुःपुण्यांदेवर्षिसंमताम् १४

ततोगच्छेतधर्मज्ञदीर्घसत्रंयथाक्रमम्
यत्रब्रह्मादयोदेवाःसिद्धाश्चपरमर्षयः १५
दीर्घसत्रमुपासंतेदीक्षितानियतव्रताः
गमनादेवराजेंद्रदीर्घसत्रमरिंदम १६
राजसूयाश्वमेधाभ्यांफलंप्राप्नोतिमानवः
ततोविनाशनंगच्छेन्नियतोनियताशनः १७
गच्छंत्यंतर्हितायत्रमेरुपृष्ठेसरस्वती
चमसेचशिवोद्भेदेनागोद्भेदेचदृश्यते १८
स्नात्वातुचमसोद्भेदेअग्निष्टोमफलंलभेत्
शिवोद्भेदेनरःस्नात्वागोसहस्रफलंलभेत् १९
नागोद्भेदेनरःस्नात्वानागलोकमवाप्नुयात्
शशयानंचराजेंद्रतीर्थमासाद्यदुर्लभम् २०
शशरूपप्रतिच्छन्नापुष्करायत्रभारत
सरस्वत्यांमहाभागअनुसंवत्सरंहिते २१
स्नायंतेभरतश्रेष्ठवृत्तावैकार्त्तिकींसदा
तत्रस्नात्वानरव्याघ्रद्योततेशिववत्सदा २२
गोसहस्रफलंचैवप्राप्नुयाद्भरतर्षभ
कुमारकोटिमासाद्यनियतःकुरुनंदन २३
तत्राभिषेकंकुर्वीतपितृदेवार्चनेरतः
गवामयुतमाप्नोतिकुलंचैवसमुद्धरेत् २४
ततोगच्छेतधर्मज्ञरुद्रकोटिंसमाहिताः
पुरायत्रमहाराजऋषिकोटिःसमाहिता २५
वर्षेणचसमाविष्टादेवदर्शनकांक्षया
अहंपूर्वमहंपूर्वंद्रक्ष्यामिवृषभध्वजम् २६
एवंसंप्रस्थिताराजनृषयःकिलभारत
ततोयोगीश्वरेणापियोगमास्थायभूपते २७
तेषांमन्युप्रशांत्यर्थमृषीणांभावितात्मनाम्
सृष्टातुकोटिरुद्राणामृषीणामग्रतःस्थिता २८
मयापूर्वंहरोदृष्टोइतितेमेनिरेपृथक्
तेषांतुष्टोमहादेवऋषीणामुग्रतेजसाम् २९

भक्त्यापरमयाराजन्वरंतेषांप्रदत्तवान्
अद्यप्रभृतियुष्माकंधर्मवृद्धिर्भविष्यति ३०
तत्रस्नात्वानरव्याघ्ररुद्रकोटयांनरःशुचिः
अश्वमेधमवाप्नोतिकुलंचैवसमुद्धरेत् ३१
ततोगच्छेतराजेंद्रसंगमंलोकविश्रुतम्
सरस्वत्यांमहापुण्यमुपासीतजनार्दनम् ३२
यत्रब्रह्मादयोदेवाऋषयःसिद्धचारणाः
अभिगच्छंतिराजेंद्रचैत्रशुक्लचतुर्दशीम् ३३
तत्रस्नात्वानरव्याघ्रविंदेद्बहुसुवर्णकम्
सर्वपापविशुद्धात्माशिवलोकंचगच्छति ३४
ऋषीणांयत्रसत्राणिसमाप्तानिनराधिप
तत्रावसानमासाद्यगोसहस्रफलंलभेत् ३५

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेपंचविंशोऽध्यायः २५

षड्विंवशोऽध्यायः

नारदउवाच-
ततोगच्छेतराजेंद्रकुरुक्षेत्रमभिष्टुतम्
पापेभ्योविप्रमुच्यंतेतद्गताःसर्वजंतवः १
कुरुक्षेत्रंगमिष्यामिकुरुक्षेत्रेवसाम्यहम्
यएवंसततंब्रूयात्सर्वपापैःप्रमुच्यते २
तत्रमासंवसेद्धीरःसरस्वत्यांनराधिप
यत्रब्रह्मादयोदेवायत्रब्रह्मर्षिचारणाः ३
गंधर्वाप्सरसोयक्षाःपन्नगाश्चमहीपते
ब्रह्मक्षेत्रंमहापुण्यमभिगच्छंतिभारत ४
मनसाप्यभिकामस्यकुरुक्षेत्रेयुधिष्ठिर
पापानिविप्रणश्यंतिब्रह्मलोकंचगच्छति ५
गत्वाहिश्रद्धयायुक्तःकुरुक्षेत्रंकुरूद्वह
वाजपेयाश्वमेध्याभ्यांफलंप्राप्नोतिमानवः ६
ततोमत्तर्णकंराजन्द्वारपालंमहाबलम्
यंवैसमभिवाद्यैवगोसहस्रफलंलभेत् ७

ततोगच्छेतधर्मज्ञविष्णोःस्थानमनुत्तमम्
सततंनामराजेंद्रयत्रसन्निहितोहरिः ८
तत्रस्नात्वाचदृष्ट्वाचत्रिलोकप्रभवंहरिम्
अश्वमेधमवाप्नोतिविष्णुलोकंचगच्छति ९
ततःपारिप्लवंगच्छेत्तीर्थंत्रैलोक्यविश्रुतम्
अग्निष्टोमातिरात्राभ्यांफलंप्राप्नोतिमानवः १०
पृथिव्यांतीर्थमासाद्यगोसहस्रफलंलभेत्
ततःशाल्विकिनींगत्वातीर्थसेवीनराधिप ११
दशाश्वमेधिकेस्नात्वातदेवलभतेफलम्
सर्पनीविंसमासाद्यनागानांतीर्थमुत्तमम् १२
अग्निष्टोममवाप्नोतिनागलोकंचगच्छति
ततोगच्छेतधर्मज्ञद्वारपालमतर्णकम् १३
तत्रोष्यरजनीमेकांगोसहस्रफलंलभेत्
ततःपंचनदंगत्वानियतोनियताशनः १४
कोटितीर्थमुपस्पृश्यहयमेधफलंलभेत्
अश्विनीतीर्थमागम्यरूपवानभिजायते १५
ततोगच्छेतधर्मज्ञवाराहंतीर्थमुत्तमम्
विष्णुर्वाराहरूपेणपुरायत्रस्थितोऽभवत् १६
तत्रस्थित्वानरव्याघ्रअग्निष्टोमफलंलभेत्
ततोजयिन्यांराजेंद्रसोमतीर्थंसमाविशेत् १७
स्नात्वाफलमवाप्नोतिराजसूयस्यमानवः
एकहंसेनरःस्नात्वागोसहस्रफलंलभेत् १८
कृतशौचंसमासाद्यतीर्थसेवीकुरूद्वह
पुंडरीकमवाप्नोतिकृतशौचोभवेच्चसः १९
ततोमुंजावटंनाममहादेवस्यधीमतः
तत्रोष्यरजनीमेकांगाणपत्यमवाप्नुयात् २०
तत्रैवचमहाराजजयांलोकपरिश्रुताम्
स्नात्वाभिगम्यराजेंद्रसर्वकाममवाप्नुयात् २१
कुरुक्षेत्रस्यतद्द्वारंविश्रुतंभरतर्षभ
प्रदक्षिणमुपावृत्यतीर्थसेवीसमावृतः २२

संस्मृतेपुष्कराणांतुस्नात्वार्च्यपितृदेवताः
जामदग्न्येनरामेणआहूतेवैमहात्मना २३
कृतकृत्योभवेद्राजन्नश्वमेधंचविंदति
ततोरामह्रदंगच्छेत्तीर्थसेवीनराधिप २४
यत्ररामेणराजेंद्रतरसादीप्ततेजसा
क्षत्रमुत्सार्यवीर्येणह्रदाःपंचनिषेविताः
पूरयित्वानरव्याघ्ररुधिरेणेतिनःश्रुतम् २५
पितरस्तर्पिताःसर्वेतथैवप्रपितामहाः
ततस्तेपितरःप्रीताःराममूचुर्महीपते २६
रामराममहाभागप्रीताःस्मतवभार्गव
अनयापितृभक्त्याचविक्रमेणचतेऽनघ २७
वरंवृणीष्वभद्रंतेकिमिच्छसिमहामते
एवमुक्तःसराजेंद्ररामःप्रवदतांवरः २८
अब्रवीत्प्रांजलिर्वाक्यंपितॄन्सगगनेस्थितान्
भवंतोयदिमेप्रीतायद्यनुग्राह्यतामयि २९
पितृप्रसादादिच्छेयंतपसाप्यायनंपुनः
यच्चरोषाभिभूतेनक्षत्रमुत्सादितंमया ३०
ततश्चपापान्मुच्येयंयुष्माकंतेजसाह्यहम्
ह्रदाश्चतीर्थभूतामेभवेयुर्भुविविश्रुताः ३१
एतच्छ्रुत्वाशुभंवाक्यंरामस्यपितरस्तदा
प्रत्यूचुःपरमप्रीतारामंतोषसमन्विताः ३२
तपस्तेवर्द्धतांभूयःपितृभक्त्याविशेषतः
यच्चरोषाभिभूतेनक्षत्रमुत्सादितंत्वया ३३
ततश्चपापान्मुक्तस्त्वंनिहतास्तेस्वकर्म्मणा
ह्रदाश्चतवतीर्थत्वंगमिष्यंतिनसंशयः ३४
ह्रदेष्वेतेषुयःस्नात्वापितॄन्संतर्पयिष्यति
पितरस्तस्यवैप्रीतादास्यंतिभुविदुर्ल्लभम् ३५
ईप्सितंमनसःकामंस्वर्गलोकंसशाश्वतम्
एवंदत्त्वावरंराजन्रामस्यपितरस्तदा
आमंत्र्यभार्गवंप्रीतास्तत्रैवांतर्दधुस्ततः ३६

एवंरामह्रदाःपुगयाभार्गवस्यमहात्मनः
स्नात्वाह्रदेषुरामस्यब्रह्मचारीशुभव्रतः ३७
राममभ्यर्च्यराजेंद्रलभेद्बहुसुवर्णकम्
वंशमूलंसमासाद्यतीर्थसेवीकुरूद्वह ३८
स्ववंशमुद्धरेद्राजन्स्नात्वावैवंशमूलके
कायशोधनमासाद्यतीर्थंभरतसत्तम ३९
शरीरशुद्धिमाप्नोतिस्नातस्तस्मिन्नसंशयः
शुद्धदेहस्तुसंयातिशुभाँल्लोकाननुत्तमान् ४०
ततोगच्छेतराजेंद्रतीर्थंत्रैलोक्यदुर्लभम्
लोकायत्रोद्धृताःपूर्वंविष्णुनाप्रभविष्णुना ४१
लोकोद्धारंसमासाद्यतीर्थंत्रैलोक्यविश्रुतम्
स्नात्वातीर्थवरेराजन्लोकानुद्धरतेस्वकान् ४२
श्रीतीर्थंचसमासाद्यविंदतेश्रियमुत्तमाम्
कपिलातीर्थमासाद्यब्रह्मचारीसमाहितः ४३
तत्रस्नात्वार्चयित्वाचदेवानिहपितॄंस्तथा
कपिलानांसहस्रस्यफलंविंदतिमानवः ४४
सूर्यतीर्थंसमासाद्यस्नात्वानियतमानसः
अर्चयित्वापितॄन्देवानुपवासपरायणः ४५
अग्निष्टोममवाप्नोतिसूर्यलोकंचगच्छति
गवांभवनमासाद्यतीर्थसेवीयथाक्रमम् ४६
तत्राभिषेकंकुर्वाणोगोसहस्रफलंलभेत्
गंगातीर्थंसमासाद्यतीर्थसेवीनराधिप ४७
केव्यास्तीर्थेनरःस्नात्वालभतेवीर्यमुत्तमम्
ततोगच्छेतराजेंद्रद्वारपालंलवर्णकम् ४८
तस्यतीर्थेसरस्वत्यांयथेंद्रस्यमहात्मनः
तत्रस्नात्वानरोराजन्नग्निष्टोमफलंलभेत् ४९
ततोगच्छेतधर्मज्ञब्रह्मावर्तंनराधिप
ब्रह्मावर्तेनरःस्नात्वाब्रह्मलोकमवाप्नुयात् ५०
ततोगच्छेतधर्मज्ञसुतीर्थकमनुत्तमम्
यत्रसन्निहितानित्यंपितरोदैवतैःसह ५१

तत्राभिषेकंकुर्वीतपितृदेवार्चनेरतः
अश्वमेधमवाप्नोतिपितृलोकंचगच्छति ५२
ततोऽन्यतीर्थंधर्मज्ञसमासाद्ययथाक्रमम्
काशीश्वरस्यतीर्थेषुस्नात्वाभरतसत्तम ५३
सर्वव्याधिविनिर्मुक्तोब्रह्मलोकेमहीयते
मातृतीर्थंचतत्रैवयत्रस्नातस्यपार्थिव ५४
प्रजाविवर्द्धतेराजन्स्वर्गतिंसमवाप्नुयात्
ततःशीतवनंगच्छेन्नियतोनियताशनः ५५
तीर्थंतत्रमहाराजमहदन्यत्रदुर्लभम्
पुनातिदर्शनादेवदंडेनैकंनराधिप ५६
केशानावप्यवैतस्मिन्पूतोभवतिभारत
तत्रतीर्थवरंचान्यत्स्नातलोकार्तिहंस्मृतम् ५७
तत्रविप्रानरव्याघ्रविद्वांसस्तत्रतत्पराः
गतिंगच्छंतिपरमांस्नात्वाभरतसत्तम ५८
स्वर्णलोमापनयनेतीर्थेभरतसत्तम
प्राणायामैर्निर्हरंतिस्वलोमानिद्विजोत्तमाः ५९
पूतात्मानश्चराजेन्द्रप्रयांतिपरमांगतिम्
दशाश्वमेधिकेचैवतस्मिंस्तीर्थेमहीपते ६०
तत्रस्नात्वानरव्याघ्रगच्छंतिपरमांगतिम्
ततोगच्छेतराजेंद्रमानुषंलोकविश्रुतम् ६१
तत्रकृष्णामृगाराजन्व्याधेनशरपीडिताः
विगाह्यतस्मिन्सरसिमानुषत्वमुपागताः ६२
तस्मिंस्तीर्थेनरःस्नात्वाब्रह्मचारीसमाहितः
सर्वपापविशुद्धात्मास्वर्गलोकेमहीयते ६३
मानुषस्यतुपूर्वेणक्रोशमात्रंमहीपते
आपगानामविख्यातानदीसिद्धनिषेविता ६४
श्यामाकभोजनंतत्रयःप्रयच्छतिमानवः
देवान्पितॄन्समुद्दिश्यतस्यधर्मफलंमहत् ६५
एकस्मिन्भोजितेविप्रेकोटिर्भवतिभोजिता
तत्रस्नात्वार्चयित्वाचदैवतानिपितॄंस्तथा ६६

उषित्वारजनीमेकामग्निष्टोमफलंलभेत्
ततोगच्छेतधर्म्मज्ञब्रह्मणःस्थानमुत्तमम् ६७
ब्रह्मानुस्वरमित्येवंप्रकाशंभुविभारत
तत्रसप्तर्षिकुंडेषुस्नातस्यभरतर्षभ ६८
केदारेचैवराजेंद्रकपिलस्यमहात्मनः
ब्रह्माणमभिगम्याथशुचिःप्रयतमानसः ६९
सर्वपापविशुद्धात्माब्रह्मलोकंप्रपद्यते
कपिष्ठलस्यकेदारंसमासाद्यसुदुर्लभम् ७०
अंतर्धानमवाप्नोतितपसादग्धकिल्बिषः
ततोगच्छेतराजेंद्रसर्वकंलोकविश्रुतम् ७१
कृष्णपक्षेचतुर्दश्यामभिगम्यवृषध्वजं
लभतेसर्वकामान्हिस्वर्गलोकंचगच्छति
तिस्रःकोटयश्चतीर्थानांप्रवरंकुरुनंदन ७२
रुद्रकोटीतथाकूपेह्रदेषुचसमंतकः
इलास्पदंचतत्रैवतीर्थंभरतसत्तम ७३
तत्रस्नात्वार्चयित्वाचदैवतानिपितॄनपि
नदुर्गतिमवाप्नोतिवाजपेयंचविंदति ७४
किंदानेचनरःस्नात्वाकिंजपेचमहीपते
अप्रमेयमवाप्नोतिदानंयज्ञंतथैवच
कलश्यांवार्य्युपस्पृश्यश्रद्दधानोजितेंद्रियः ७५
अग्निष्टोमस्ययज्ञस्यफलंप्राप्नोतिमानवः
सरकस्यतुपूर्वेणनारदस्यमहात्मनः ७६
कुरुश्रेष्ठशुभंतीर्थंरामजन्मेतिविश्रुतम्
तत्रतीर्थेनरःस्नात्वाप्राणांश्चोत्सृज्यभारत ७७
नारदेनाभ्यनुज्ञातोलोकानाप्नोतिदुर्ल्लभान्
शुक्लपक्षेदशम्यांतुपुंडरीकंसमाविशेत् ७८
तत्रस्नात्वानरोराजन्पुंडरीकफलंलभेत्
ततस्त्रिविष्टपंगच्छेत्त्रिषुलोकेषुविश्रुतम् ७९
तत्रवैतरणीपुगयानदीपापप्रमोचनी
तत्रस्नात्वार्चयित्वाचशूलपाणिंवृषध्वजम् ८०

सर्वपापविशुद्धात्मागच्छेतपरमांगतिम्
ततोगच्छेतराजेंद्रफलकीवनमुत्तमम् ८१
तत्रदेवाःसदाराजन्फलकीवनमाश्रिताः
तपश्चरंतिविपुलंबहुवर्षसहस्रकम् ८२
दृषत्पानेनरःस्नात्वातर्पयित्वाचदेवताः
अग्निष्टोमातिरात्राभ्यांफलंविंदतिमानवः ८३
तीर्थेचसर्वदेवानांस्नात्वाभरतसत्तम
गोसहस्रस्यराजेंद्रफलमाप्नोतिमानवः ८४
पाणिख्यातेनरःस्नात्वातर्पयित्वाचदेवताः
अवाप्नुतेराजसूयमृषिलोकंचगच्छति ८५
ततोगच्छेतधर्मज्ञमिश्रकंलोकविश्रुतम्
तत्रतीर्थानिराजेंद्रमिश्रितानिमहात्मना ८६
व्यासेननृपशार्दूलद्विजार्थमितिनःश्रुतम्
सर्वतीर्थेषुसस्नातिमिश्रकेस्नातियोनरः ८७
ततोव्यासवनंगच्छेन्नियतोनियताशनः
मनोजवेनरःस्नात्वागोसहस्रफलंलभेत् ८८
गत्वामधुवनींचापिदेव्याःस्थानंनरःशुचिः
तत्रस्नात्वार्चयेद्देवान्पितॄंश्चनियतःशुचिः ८९
सदेव्यासमनुज्ञातोगोसहस्रफलंलभेत्
कौशिक्याःसंगमेयस्तुदृषद्वत्याश्चभारत ९०
स्नातोवैनियताहारःसर्वपापैःप्रमुच्यते
ततोव्यासस्थलीनामयत्रव्यासेनधीमता ९१
पुत्रशोकाभितप्तेनदेहत्यागायनिश्चयः
कृतोदेवैश्चराजेंद्रपुनरुत्थापितस्तथा ९२
अभिगम्यस्थलद्यंतस्यगोसहस्रफलंलभेत्
ऋणांतंकूपमासाद्यतिलप्रस्थंप्रदायच ९३
गच्छेतपरमांसिद्धिमृणैर्मुक्तोनरेश्वर
वेदीतीर्थेनरःस्नात्वागोसहस्रफलंलभेत् ९४
अहश्चसुदिनश्चैवद्वेतीर्थेनृपदुर्लभे
तयोःस्नात्वानरःश्रेष्ठसूर्यलोकमवाप्नुयात् ९५

मृगधूमंततोगच्छेत्त्रिषुलोकेषुविश्रुतम्
तत्ररुद्रपदेस्नात्वासमभ्यर्च्यचमानवः ९६
शूलपाणिंमहात्मानमश्वमेधफलंलभेत्
कोटितीर्थेनरःस्नात्वागोसहस्रफलंलभेत् ९७
अथवामनकंगत्वात्रिषुलोकेषुविश्रुतम्
तत्रविष्णुपदेस्नात्वासमभ्यर्च्यचवामनम् ९८
सर्वपापविशुद्धात्माविष्णुलोकमवाप्नुयात्
कुलंपुनेनरःस्नात्वापुनातिस्वकुलंनरः ९९
पवनस्यह्रदंगत्वामरुतांतीर्थमुत्तमम्
तत्रस्नात्वानरव्याघ्रवायुलोकेमहीयते १००
अमराणांह्रदेस्नात्वासमभ्यर्च्यामराधिपम्
अमराणांप्रभावेणस्वर्गलोकेमहीयते १०१
शालिहोत्रस्यराजेंद्रशालिसूर्येयथाविधि
स्नात्वानरवरश्रेष्ठगोसहस्रफलंलभेत् १०२
श्रीकुंजंचसरस्वत्यांतीर्थंभरतसत्तम
तत्रस्नात्वानरोराजन्नग्निष्टोमफलंलभेत् १०३
ततोनैमिषिकुंजंचसमासाद्यसुदुर्लभम्
ऋषयःकिलराजेंद्रनैमिषेयास्तपोधनाः १०४
तीर्थयात्रांपुरस्कृत्यकुरुक्षेत्रेगताःपुरा
ततःकुंजःसरस्वत्यांकृतोभरतसत्तम १०५
ऋषीणामवकाशःस्याद्यथातुष्टिकरोमहान्
तस्मिन्कुंजेनरःस्नात्वागोसहस्रफलंलभेत् १०६
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेषड्विंशोऽध्यायः २६

सप्तशोऽध्यायः

नारदउवाच–
ततोगच्छेतधर्मज्ञकन्यातीर्थमनुत्तमम्
कन्यातीर्थेनरःस्नात्वाअग्निष्टोमफलंलभेत् १
ततोगच्छेन्नरव्याघ्रब्रह्मणःस्थानमुत्तमम्
तत्रवर्णावरःस्नात्वाब्राह्मण्यंलभतेनरः २

ब्राह्मणस्तुविशुद्धात्मागच्छेतपरमांगतिम्
ततोगच्छेन्नरव्याघ्रसोमतीर्थमनुत्तमम् ३
तत्रस्नात्वानरोराजन्सोमलोकमवाप्नुयात्
सप्तसारस्वतंतीर्थंततोगच्छेन्नराधिप ४
यत्रमंकणकःसिद्धोब्रह्मर्षिर्लोकविश्रुतः
पुरामंकणकोराजन्कुशाग्रेणेतिविश्रुतम् ५
क्षतःकिलकरेराजन्तस्यशाकरसोऽस्त्रवत्
सवैशाकरसंदृष्ट्वाहर्षाविष्टोमहातपाः ६
ननर्तकिलविप्रर्षिर्विस्मयोत्फुल्ललोचनः
ततस्तस्मिन्प्रनृत्तेवैस्थावरंजंगमंचयत् ७
प्रनृत्तमुभयंवीरतेजसातस्यमोहितम्
ब्रह्मादिभिस्ततोदेवैर्ऋषिभिश्चतपोधनैः ८
विज्ञप्तोवैऋषेरर्थेमहादेवोनराधिप
नायंनृत्येद्यथादेवतथात्वंकर्तुमर्हसि ९
ततोदेवोमुनिंदृष्ट्वाहर्षाविष्टेनचेतसा
नृत्यंतमब्रवीच्चैनंस्थिराणांहितकाम्यया १०
अहोमहर्षेधर्मज्ञकिमर्थंनृत्यतेभवान्
हर्षस्थानंकिमर्थंवातवाद्यमुनिपुंगव ११
ऋषिरुवाच-
तपस्विनोधर्म्मपथस्थितस्यद्विजसत्तम
किंनपश्यसिमेब्रह्मन्क्षताच्छाकरसंसृतम् १२
यंदृष्ट्वासंप्रनृत्तोऽहहर्षेणमहतावृतः
तंप्रहस्याब्रवीद्देवऋषिंरागेणमोहितम् १३
अहंतुविस्मयंविप्रनगच्छामीहपश्यमाम्
एवमुक्त्वानरश्रेष्ठमहादेवेनवैतदा १४
अंगुल्यग्रेणराजेंद्रस्वांगुष्ठस्ताडितोऽनघ
तस्यभस्मक्षताद्राजन्निःसृतंहिमसंनिभम् १५
यंदृष्ट्वाव्रीडितोराजन्समुनिःपादयोर्गतः
नान्यंदेवादहंमन्येरुद्रात्परतरंमहत् १६
सुरासुरस्यजगतोगतिस्त्वमसिशूलधृक्

त्वयासृष्टमिदंविश्वंत्रैलोक्यंसचराचरम् १७
त्वामेवभगवन्सर्वेप्रविशंतियुगक्षये
देवैरपिनशक्यस्त्वंपरिज्ञातुंकुतोमया १८
त्वयिसर्वेशदृश्यंतेसुराःशक्रादयोऽनघ
सर्वस्त्वमसिलोकानांकर्ताकारयितान्वहम् १९
त्वत्प्रसादात्सुराःसर्वेमोदंतीहाकुतोभयाः
एवंस्तुत्वामहादेवंसऋषिःप्रणतोऽब्रवीत् २०
त्वत्प्रसादान्महादेवतपोमेनक्षरेतवै
ततोदेवःप्रहृष्टात्माब्रह्मर्षिमिदमब्रवीत् २१
तपस्तेवर्द्धतांविप्रमत्प्रसादात्सहस्रधा
आश्रमेचेहवत्स्यामित्वयासार्द्धंमहामुने २२
सप्तसारस्वतेस्नात्वाअर्चयिष्यंतियेतुमाम्
नतेषांदुर्लभंकिंचिदिहलोकेपरत्रवा २३
गच्छेत्सारस्वतंचापिलोकंनास्त्यत्रसंशयः
एवमुक्त्वामहादेवस्तत्रैवांतरधीयत २४
ततस्त्वौशनसंगच्छेत्त्रिषुलोकेषुविश्रुतम्
यत्रब्रह्मादयोदेवाऋषयश्चतपोधनाः २५
कार्तिकेयश्चभगवांस्त्रिसंध्यांकिलभारत
सान्निध्यमकरोत्तत्रभार्गवप्रियकाम्यया २६
कपालमोचनंतीर्थंसर्वपापप्रणाशनम्
तत्रस्नात्वानरव्याघ्रसर्वपापैःप्रमुच्यते २७
अग्नितीर्थंततोगच्छेत्स्नात्वाचभरतर्षभ
अग्निलोकमवाप्नोतिकुलंचैवसमुद्धरेत् २८
विश्वामित्रस्यतत्रैवतीर्थंभरतसत्तम
तत्रस्नात्वामहाराजब्राह्मणयमभिजायते २९
ब्रह्मयोनिंसमासाद्यशुचिःप्रयतमानसः
तत्रस्नात्वानरव्याघ्रब्रह्मलोकंप्रपद्यते ३०
पुनात्यासप्तमंचैवकुलंनास्त्यत्रसंशयः
ततोगच्छेतराजेंद्रतीर्थंत्रैलोक्यविश्रुतम् ३१
पृथूदकमितिख्यातंकार्तिकेयस्यव्नृप

तत्राभिषेकंकुर्वीतपितृदेवार्चनेरतः ३२
अज्ञानाज्ज्ञानतोवापिस्त्रियावापुरुषेणवा
यत्किंचिदशुभंकर्मकृतंमानुषबुद्धिना ३३
तत्सर्वंनश्यतेतत्रस्नातमात्रस्यभारत
अश्वमेधफलंचापिलभतेस्वर्गमेवच ३४
पुण्यमाहुःकुरुक्षेत्रंकुरुक्षेत्रात्सरस्वतीम्
सरस्वत्याश्चतीर्थानितीर्थेभ्यश्चपृथूदकम् ३५
उत्तमेसर्वतीर्थानांयस्त्यजेदात्मनस्तनुम्
पृथूदकेजप्यपरोनैवसंसरणंलभेत् ३६
गीतंसनत्कुमारेणव्यासेनचमहात्मना
वेदेचनियतंराजन्नभिगच्छेत्पृथूदकम् ३७
पृथूदकात्पुण्यतमंनान्यत्तीर्थंनरोत्तम
एतन्मेध्यंपवित्रंचपावनंचनसंशयः ३८
तत्रस्नात्वादिवंयांतिअपिपापकृतोजनाः
पृथूदकेनरश्रेष्ठमाहुरेवंमनीषिणः ३९
मधुस्रवंचतत्रैवतीर्थंभरतसत्तम
तत्रस्नात्वानरोराजन्गोसहस्रफलंलभेत् ४०
ततोगच्छेन्नरश्रेष्ठतीर्थंदेव्यायथाक्रमम्
सरस्वत्यारुणायाश्चसंगमंलोकविश्रुतम् ४१
त्रिरात्रोपोषितःस्नात्वामुच्यतेब्रह्महत्यया
अग्निष्टोमातिरात्राभ्यांफलंचैवसमश्नुते ४२
पुनात्यासप्तमंचैवकुलंनास्त्यत्रसंशयः
अवकीर्णंचतत्रैवतीर्थंकुरुकुलोद्वह ४३
विप्राणामनुकंपार्थंदर्भिणानिर्मितंपुरा
व्रतोपनयनाभ्यांचाप्युपवासेनवाद्विजः ४४
क्रियामंत्रैश्चसंयुक्तोब्राह्मणःस्यान्नसंशयः
क्रियामंत्रविहीनोऽपितत्रस्नात्वानरर्षभ ४५
चीर्णव्रतोभवेद्विप्रोदृष्टमेतत्पुरातनम्
समुद्राश्चापिचत्वारःसमानीताश्चदर्भिणा ४६
तत्रस्नात्वानरव्याघ्रनदुर्गतिमवाप्नुयात्

फलानिगोसहस्राणांचतुर्णांविंदतेचसः ४७
ततोगच्छेतराजेन्द्रतीर्थंशतसहस्रकम्
साहस्रकंचतत्रैवद्वेतीर्थेलोकविश्रुते ४८
उभयोर्हिनरःस्नात्वागोसहस्रफलंलभेत्
दानंवाप्युपवासोवासहस्रगुणितोभवेत् ४९
ततोगच्छेतराजेंद्ररेणुकातीर्थमुत्तमम्
तत्राभिषेकंकुर्वीतपितृदेवार्चनेरतः ५०
सर्वपापविशुद्धात्माअग्निष्टोमफलंलभेत्
विमोचनउपस्पृश्यजितमन्युर्जितेंद्रियः ५१
प्रतिग्रहकृतैःपापैःसर्वैःसंपरिमुच्यते
ततःपंचवटंगत्वाब्रह्मचारीजितेंद्रियः ५२
पुरायेनमहतायुक्तःस्वर्गलोकेमहीयते
यत्रयोगीश्वरःस्थाणुःस्वयमेववृषध्वजः ५३
तमर्चयित्वादेवेशंगमनादेवसिध्यति
तैजसंवारुणंतीर्थंदीप्यतेस्वेनतेजसा ५४
यत्रब्रह्मादिभिर्देवैर्ऋषिभिश्चतपोधनैः
सैनापत्येचदेवानामभिषिक्तोगुहस्तदा ५५
तैजसस्यतुपूर्वेणकुरुतीर्थंकुरूद्वह
कुरुतीर्थेनरःस्नात्वाब्रह्मचारीजितेंद्रियः ५६
सर्वपापविशुद्धात्मारुद्रलोकंप्रपद्यते
स्वर्गद्वारंततोगच्छेन्नियतोनियताशनः ५७
अग्निष्टोममवाप्नोतिब्रह्मलोकंचगच्छति
ततोगच्छेदनरकंतीर्थसेवीनराधिप ५८
तत्रस्नात्वानरोराजन्नदुर्गतिमवाप्नुयात्
तत्रब्रह्मास्वयंनित्यंदेवैस्सहमहीयते ५९
अध्यास्तेपुरुषव्याघ्रनारायणपरागमैः
सान्निध्यंचैवराजेंद्ररुद्रवेद्यांकुरुद्वह ६०
अभिगम्यतुतांदेवींनदुर्गतिमवाप्नुयात्
तत्रैवचमहाराजविश्वेश्वरमुमापतिम् ६१
अभिगम्यमहादेवंमुच्यतेसर्वकिल्बिषैः

नारायणंचाभिगम्यपद्मनाभमरिंदम ६२
शोभमानोमहाराजविष्णुलोकंप्रपद्यते
तीर्थेषुसर्वदेवानांस्नातमात्रोनराधिप ६३
सर्वदुःखपरित्यक्तोद्योततेशिववत्सदा
ततस्त्वस्थिपुरंगच्छेत्तीर्थसेवीनराधिप ६४
पावनंतीर्थमासाद्यतर्पयेत्पितृदेवताः
अग्निष्टोमस्ययज्ञस्यफलमाप्नोतिभारत ६५
गंगाह्रदश्चतत्रैवकूपश्चभरतर्षभ
तिस्रःकोटयस्तुतीर्थानांतस्मिन्कूपेमहीयते ६६
तत्रस्नात्वानरोराजन्ब्रह्मलोकेप्रपद्यते
आपगायांनरःस्नात्वाअर्चयित्वामहेश्वरम् ६७
गतिंपरामवाप्नोतिकुलंचैवसमुद्धरेत्
ततःस्थाणुवटंगछेत्त्रिषुलोकेषुविश्रुतम् ६८
तत्रस्नात्वास्थितोरात्रिंरुद्रलोकमवाप्नुयात्
बदरीणांवनंगच्छेद्वसिष्ठस्याश्रमंततः ६९
बदरीभक्ष्यतेयत्रत्रिरात्रोपोषितोनरः
सम्यग्द्वादशवर्षाणिबदरींभक्षयेत्तुयः ७०
त्रिरात्रोपोषितश्चैवभवेत्तुल्योनराधिप
इंद्रमार्गंसमासाद्यतीर्थसेवीनराधिप ७१
अहोरात्रोपवासेनस्वर्गलोकेमहीयते
एकरात्रंसमासाद्यएकरात्रोषितोनरः ७२
नियतःसत्यवादीचब्रह्मलोकेमहीयते
तथागछेच्चराजेंद्रतीर्थंत्रैलोक्यविश्रुतम् ७३
आदित्यस्याश्रमोयत्रतेजोराशेर्महात्मनः
तस्मिंस्तीर्थेनरःस्नात्वापूजयित्वाविभावसुम् ७४
आदित्यलोकंव्रजतिकुलंचैवसमुद्धरेत्
सोमतीर्थेनरःस्नात्वातीर्थसेवीकुरूद्वह ७५
सोमलोकमवाप्नोतिनरोनास्त्यत्रसंशयः
ततोगच्छेतधर्मज्ञदधीचस्यनराधिप ७६
तीर्थंपुण्यतमंराजन्पावनंलोकविश्रुतम्

यत्रसारस्वतोयातःसिद्धिंसतपसोनिधिः ७७
तस्मिंस्तीर्थेनरःस्नात्वावाजपेयफलंलभेत्
सारस्वतींमतिंचैवलभतेनात्रसंशयः ७८
ततःकन्याश्रमंगत्वानियतोब्रह्मचर्यया
त्रिरात्रमुषितोराजन्नुपवासपरायणः ७९
लभेत्कन्याशतंदिव्यंब्रह्मलोकंचगच्छति
ततोगच्छेतधर्मज्ञतीर्थंसंनिहितीमपि ८०
यत्रब्रह्मादयोदेवाऋषयश्चतपोधनाः
मासिमासिसमेष्यंतिपुरायेनमहतान्विताः ८१
सन्निहित्यामुपस्पृश्यराहुग्रस्तेदिवाकरे
अश्वमेधशतंतेनइष्टंभवतिशाश्वतम् ८२
पृथिव्यांयानितीर्थानिअंतरिक्षचराणिच
उदपानाश्चविप्राश्चपुरायान्यायतनानिच ८३
निःसंशयममावास्यांसमेष्यंतिनराधिप
मासिमासिनरव्याघ्रसन्निहित्यांजनेश्वर ८४
तीर्थसन्नयनादेवसन्निहितीभुविविश्रुता
तत्रस्नात्वाचपीत्वाचस्वर्गलोकेमहीयते ८५
अमावास्यांतथाचैवराहुग्रस्तेदिवाकरे
यःश्राद्धंकुरुतेमर्त्यस्तस्यपुरायफलंशृणु ८६
अश्वमेधसहस्रस्यसम्यगिष्टस्ययत्फलम्
स्नातएवतदाप्नोतिश्राद्धंकृत्वाचमानवः ८७
यत्किंचिद्दुष्कृतंकर्म्मस्त्रियावापुरुषस्यवा
स्नातमात्रस्यतत्सर्वंनश्यतेनात्रसंशयः ८८
पद्मवर्णेनयानेनब्रह्मलोकंसगच्छति
अभिवाद्यततोनाम्नाद्वारपालंमचक्रुकम् ८९
गंगाह्रदश्चतत्रैवतीर्थंभरतसत्तम
तत्रस्नायीतधर्मज्ञब्रह्मचारीसमाहितः ९०
राजसूयाश्वमेधाभ्यांफलंविंदतिमानवः
पृथिव्यांनैमिषंपुरायमंतरिक्षेचपुष्करम् ९१
त्रयाणामपिलोकानांकुरुक्षेत्रंविशिष्यते

पांसवोऽपिकुरुक्षेत्रेवायुनातिसमीरिताः ९२
अपिदुष्कृतकर्म्माणंनयंतिपरमांगतिम्
दक्षिणेनसरस्वत्यामुत्तरेणसरस्वतीम् ९३
येवसंतिकुरुक्षेत्रेतेवसंतित्रिविष्टपे
कुरुक्षेत्रंगमिष्यामिकुरुक्षेत्रेवसाम्यहम् ९४
अप्येकांवाचमुत्सृज्यस्वर्गलोकेमहीयते
ब्रह्मवेद्यांकुरुक्षेत्रंपुण्यंब्रह्मर्षिसेवितम् ९५
तस्मिन्वसंतियेराजन्नतेशोच्याःकथंचन
तरंडकारंडकयोर्यदंतरंरामह्रदानांचमचक्रुकस्यच
एतत्कुरुक्षेत्रसमंतपंचकंपितामहस्योत्तरवेदिरुच्यते ९६
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेसप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

नारदउवाच-
ततोगच्छेतधर्म्मज्ञधर्म्मतीर्थंपुरातनम्
यत्रधर्मोमहाभागस्तप्तवानुत्तमंतपः १
तेनतीर्थंकृतंपुण्यंस्वेननाम्नाचचिह्नितम्
तत्रस्नात्वानरोराजन्धर्मशीलःसमाहितः २
आसप्तमंकुलंचैवपुनीतेनात्रसंशयः
ततोगच्छेतधर्मज्ञकलापवनमुत्तमम् ३
कृच्छ्रेणमहतागत्वातत्रस्नात्वासमाहितः
अग्निष्टोममवाप्नोतिविष्णुलोकंचगच्छति ४
सौगंधिकंवनंराजंस्ततोगच्छेतमानवः
यत्रब्रह्मादयोदेवाऋषयश्चतपोधनाः ५
सिद्धचारणगंधर्वाःकिन्नराःसमहोरगाः
तद्वनंप्रविशन्नेवसर्वपापैःप्रमुच्यते ६
ततोहिसासरिच्छ्रेष्ठानदीनामुत्तमानदी
प्लक्षादेवीस्मृताराजन्महापुण्यासरस्वती ७
तत्राभिषेकंकुर्वीतवल्मीकान्निःसृतेजले
अर्चयित्वापितॄन्देवानश्वमेधफलंलभेत् ८

ईशानाध्युषितंनामतत्रतीर्थंसुदुर्लभम्
षड्गुणंयन्निपातेषुवल्मीकादितिनिश्चयः ९
कपिलानांसहस्रंचवाजिमेधंचविंदति
तत्रस्नात्वानरव्याघ्रदृष्टमेतत्पुरातनैः १०
सुगंधांशतकुंभांचपंचयज्ञांचभारत
अभिगम्यनरश्रेष्ठस्वर्गलोकेमहीयते ११
त्रिशूलपात्रंतत्रैवतीर्थमासाद्यदुर्लभम्
तत्राभिषेकंकुर्वीतपितृदेवार्चनेरतः १२
गाणपत्यंचलभतेदेहंत्यक्त्वानसंशयः
ततोराजगृहंगच्छेद्देव्याःस्थानंसुदुर्लभम् १३
शाकंभरीतिविख्यातात्रिषुलोकेषुविश्रुता
दिव्यंवर्षसहस्रंचशाकेनकिलभारत १४
आहारंसाकृतवतीमासिमासिनराधिप
ऋषयोऽभ्यागतास्तत्रदेव्याभक्तास्तपोधनाः १५
आतिथ्यंचकृतंतेषांशाकेनकिलभारत
ततःशाकंभरीत्येवंनामतस्याःप्रतिष्ठितम् १६
शाकंभरींसमासाद्यब्रह्मचारीसमाहितः
त्रिरात्रमुषितःशाकंभन्दयेन्नियतःशुचिः १७
शाकाहारस्ययत्सम्यग्वर्षैर्द्वादशभिःफलम्
तत्फलंतस्यभवतिदेव्याश्छंदेनभारत १८
ततोगच्छेत्सुवर्णाख्यंत्रिषुलोकेषुविश्रुतम्
यत्रकृष्णःप्रसादार्थंरुद्रमाराधयत्पुरा १९
वरांश्चसुबहूँल्लेभेदेवैरपिसदुर्ल्लभान्
उक्तश्चत्रिपुरघ्नेनपरितुष्टेनभारत २०
अपिचात्माप्रियतरोलोकेकृष्णभविष्यसि
त्वन्मुखंचजगत्कृत्स्नंभविष्यतिनसंशयः २१
तत्राभिगम्यराजेंद्रपूजयित्वावृषध्वजम्
अश्वमेधमवाप्नोतिगाणपत्यंचविंदति २२
धूमावतींततोगच्छेत्त्रिरात्रमुषितोनरः
मनसाप्रार्थितान्कामाँल्लभतेनात्रसंशयः २३

देव्यास्तुदक्षिणार्धेनरथावर्त्तोनराधिप
तत्रागत्यतुधर्मज्ञश्रद्दधानोजितेंद्रियः २४
महादेवप्रसादेनगच्छेतपरमांगतिम्
प्रदक्षिणमुपावृत्यगच्छेतभरतर्षभ २५
धरांनाममहाप्राज्ञसर्वपापप्रणाशिनीम्
तत्रस्नात्वानरव्याघ्रनशोचतिनराधिप २६
ततोगच्छेन्नरव्याघ्रनमस्कृत्यमहागिरिम्
स्वर्गद्वारेणतत्तुल्यंगंगाद्वारंनसंशयः २७
तत्राभिषेकंकुर्वीतकोटितीर्थेसमाहितः
लभतेपुंडरीकंतुकुलंचैवसमुद्धरेत् २८
उष्यैकांरजनींतत्रगोसहस्रफलंलभेत्
सप्तगंगेत्रिगंगेचशक्रावर्त्तेचतर्पयेत् २९
देवान्पितॄंश्चविधिवत्पुण्यलोकेमहीयते
ततःकनखलेस्नात्वात्रिरात्रोपोषितोनरः ३०
अश्वमेधमवाप्नोतिस्वर्गलोकंचगच्छति
कपिलावटंतुगच्छेततीर्थसेवीनराधिप ३१
उष्यैकांरजनींतत्रगोसहस्रफलंलभेत्
नागराजस्यराजेंद्रकपिलस्यमहात्मनः ३२
तीर्थंकुरुवरश्रेष्ठसर्वलोकेषुविश्रुतम्
तत्राभिषेकंकुर्वीतनागतीर्थेनराधिप
कपिलानांसहस्रस्यफलंप्राप्नोतिमानवः ३३
ततोललितकांगच्छेच्छंतनोस्तीर्थमुत्तमम्
तत्रस्नात्वानरोराजन्नदुर्गतिमवाप्नुयात् ३४
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेऽष्टाविंशोध्यायः २८

ऊनत्रिंशोऽध्यायः

नारदउवाच-
ततोगच्छेतराजेंद्रकालिंदीतीर्थमुत्तमम्
तत्रस्नात्वानरोराजन्नदुर्गतिमवाप्नुयात् १
पुष्करेतुकुरुक्षेत्रेब्रह्मावर्त्तेपृथूदके

अविमुक्तेसुवर्णाख्येयेयत्फलंलभतेनरः २
तत्फलंसमवाप्नोतियमुनायांनरोत्तम
स्वर्गभोगेतिरागोवैयेषांमनसिवर्तते ३
यमुनायांविशेषेणस्नानदानेनसत्तम
आयुरारोग्यसंपत्तौरूपयौवनतागुणे ४
येषांमनोरथस्तैस्तुनत्याज्यंयमुनाजलम्
येबिभ्यतिनरकादेर्दारिद्र्याद्येऽत्रसंतिच ५
सर्वथातैःप्रयत्नेनतत्रकार्यंनिमज्जनम्
दारिद्र्यपापदौर्भाग्यपंकप्रक्षालनायवै ६
ऋतेवैयामुनंतोयंनचान्योस्तियुधिष्ठिर
श्रद्धाहीनानिकर्माणिमतान्यर्धफलानिवै
फलंददातिसंपूर्णंयामुनंस्नानमात्रतः ७
अकामोवासकामोवायामुनेसलिलेनृप
इहामुत्रचदुःखानिमज्जनान्नैवपश्यति ८
पक्षद्वयेयथाचंद्रःक्षीयतेवर्द्धतेतथा
पातकंनश्यतेतत्रस्नानात्पुरयंविवर्द्धते ९
यथाब्धौसुखमायांतिरत्नानिविविधानिच
आयुर्वित्तंकलत्राणिसंपदःसंभवंतिच १०
कामधेनुर्यथाकामंचिंतामणिर्विचिंतितम्
ददातियमुनास्नानंतद्वत्सर्वंमनोरथम् ११
कृतेतपःपरंज्ञानंत्रेतायांयजनंतथा
द्वापरेचकलौदानंकालिंदीसर्वदाशुभा १२
सर्वेषांसर्ववर्णानामाश्रमाणांचभूपते
यामुनेमज्जनंधर्मंधाराभिःखलुवर्षति १३
अस्मिन्वैभारतेवर्षेकर्मभूमौविशेषतः
कालिंद्यस्नायिनांनृणांनिष्फलंजन्मकीर्त्तितम् १४
नैश्वर्यंगगनेयद्वच्चांद्रेऽमायांतुमंडले
तद्वन्नभातिसत्कर्मयमुनामज्जनंविना १५
व्रतैर्दानैस्तपोभिश्चनतथाप्रीयतेहरिः
तत्रमज्जनमात्रेणयथाप्रीणातिकेशवः १६

नसमंविद्यतेकिंचित्तेजःसौरेणतेजसा
तद्वन्नयमुनास्नानंसमानाःक्रतुजाःक्रियाः १७
प्रीतयेवासुदेवस्यसर्वपापापनुत्तये
कालिंद्यामज्जनंकुर्य्यात्स्वर्गलाभायमानवः १८
किंरक्षितेनदेहेनसुपुष्टेनबलीयसा
अध्रुवेणसुदेहेनयमुनामज्जनंविना १९
अस्थिस्तंभंस्नायुबंधंमांसक्षतजलेपनम्
चर्मावनद्धदुर्गंधंपूर्णंमूत्रपुरीषयोः २०
जराशोकविपद्व्याप्तंरोगमंदिरमातुरम्
रागमूलमनित्यंचसर्वदोषसमाश्रयम् २१
परोपकारपापार्तिपरद्रोहपरेर्षिकम्
लोलुपंपिशुनंक्रूरंकृतघ्नंक्षणिकंतथा २२
निष्ठुरंदुर्धरंदुष्टंदोषत्रयविदूषितम्
अशुचितापिदुर्गंधितापत्रयविमोहितम् २३
निसर्गतोऽधर्मरतंतृष्णाशतसमाकुलम्
कामक्रोधमहालोभनरकद्वारसंस्थितम् २४
कृमिवर्चस्तुभस्मादिपरिणामगुणावहम्
ईदृक्शरीरंव्यर्थंहियमुनामज्जनंविना २५
बुद्बुदाइवतोयेषुप्रत्यंडाइवपक्षिषु
जायंतेमरणायैवयमुनास्नानवर्जिताः २६
अवैष्णवोहतोविप्रोहतंश्राद्धमपिंडकम्
अब्रह्मण्यंहतंक्षत्रमनाचारहतंकुलम् २७
सदंभश्चहतोधर्म्मःक्रोधेनैवहतंतपः
अदृढंचहतंज्ञानंप्रमादेनहतंश्रुतम् २८
परभक्त्याहतानारीब्रह्मचारीस्त्रियाहतः
अदीप्तेऽग्नौहतोहोमोहताभक्तिःसमायिका २९
उपजीव्याहताकन्यास्वार्थेपाकक्रियाहता
शूद्रभक्षोहतोयोगःकृपणस्यहतंधनम् ३०
अनभ्यासहताविद्याहतोबोधोविरोधकृत्
जीवितार्थंहतंतीर्थंजीवनार्थंहतंव्रतम् ३१

असत्याचहतावाणीतथापैशुन्यवादिनी
षट्कर्णगोहतोमंत्रोव्यग्रचित्तोहतोजपः ३२
हतमश्रोत्रियेदानंहतोलोकश्चनास्तिकः
अश्रद्धयाहतंसर्वंयत्कृतंपारलौकिकम् ३३
इहलोकोहतोनृणांदरिद्राणांयथानृप
मनुष्याणांहतंजन्मकालिदीमज्ञनंविना ३४
उपपातकसर्वाणिपातकानिमहांतिच
भस्मीभवंतिसर्वाणियमुनामज्ञनान्नृप ३५
वेपंतेसर्वपापानियमुनायांगतेनरे
नाशकेसर्वपापानांयदिस्नास्यतिवारिणि ३६
पावकाइवदीप्यंतेयमुनायांनरोत्तमाः
विमुक्ताःसर्वपापेभ्योमेघेभ्यइवचंद्रमाः ३७
आर्द्रशुष्कलघुस्थूलंवाङ्मनःकर्मभिःकृतम्
तत्रस्नानंदहेत्पापंपावकःसमिधोयथा ३८
प्रामादिकंचयत्पापंज्ञानाज्ञानकृतंचयत्
स्नानमात्रेणनश्येतयमुनायांनृपोत्तम ३९
निष्पापास्त्रिदिवंयांतिपापिष्ठायांतिशुद्धताम्
संदेहोनात्रकर्तव्यःस्नानेवैयमुनाजले ४०
सर्वेऽधिकारिणोह्यत्रविष्णुभक्तौतथानृप
सर्वेषांसर्वदादेवीयमुनापापनाशिका ४१
एषएवपरोमंत्रएतच्चपरमंतपः
प्रायश्चित्तंपरंचैवयमुनास्नानमुत्तमम् ४२
नृणांजन्मांतराभ्यासात्कालिदीमज्ञनेमतिः
अध्यात्मज्ञानकौशल्यंजन्माभ्यासाद्यथानृप ४३
संसारकर्दमालेपप्रक्षालनविशारदम्
पावनंपावनानांचयमुनास्नानमुत्तमम् ४४
स्नातास्तत्रचयेराजन्सर्वकामफलप्रदे
शुभांश्चभुंजतेभोगांश्चंद्रसूर्यग्रहोपमान् ४५
यमुनामोक्षदाप्रोक्तामथुरासंगतायदि
मथुरायांचकालिदीपुण्याधिकविवर्द्धिनी ४६

अन्यत्रयमुनापुण्यामहापातकहारिणी
विष्णुभक्तिप्रदादेवीमथुरासंगताभवेत् ४७
भक्तिभावेनसंयुक्ताकालिन्द्यांयदिमज्जयेत्
कल्पकोटिसहस्राणिवसतेसन्निधौहरेः ४८
मुक्तिंप्रयांतिमनुजाःनूनंसांख्येनवर्जिताः
पितरस्तस्यतृप्यंतितृप्ताःकल्पशतैर्दिवि ४९
येपिबंतिनराराजन्यमुनासलिलंशुभम्
पंचगव्यसहस्रैस्तुसेवितैःकिंप्रयोजनम् ५०
कोटितीर्थसहस्रैस्तुसेवितैःकिंप्रयोजनम्
तत्रदानंचहोमश्चसर्वंकोटिगुणंभवेत् ५१
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेऊनत्रिंशोऽध्यायः २९

## त्रिंशोऽध्यायः

नारदउवाच-
अत्रतेवर्णयिष्यामिइतिहासंपुरातनम्
पुराकृतयुगेराजन्निषधेनगरेवरे १
आसीद्वैश्यःकुबेराभोनामतोहेमकुंडलः
कुलीनःसत्क्रियोदेवद्विजपावकपूजकः २
कृषिवाणिज्यकर्त्तासौविविधक्रयविक्रयी
गोघोटकमहिष्यादिपशुपोषणतत्परः ३
पयोदधीनितक्राणिगोमयानितृणानिच
काष्ठानिफलमूलानिलवणार्द्रादिपिप्पली ४
धान्यानिशाकतैलानिवस्त्राणिविविधानिच
धातूनिक्षुविकारांश्चविक्रीणीतेससर्वदा ५
इत्थंनानाविधैर्वैश्यउपायैरपरैस्तथा
उपार्जयामाससदाअष्टौहाटककोटयः ६
एवंमहाधनःसोथहाकर्णपलितोभवत्
पश्चाद्विचार्यसंसारक्षणिकत्वंस्वचेतसि ७
तद्धनस्यषडंशेनधर्मकार्यंचकारसः
विष्णोरायतनंचक्रेगृहंचक्रेशिवस्यच ८

तडागंखानयामासविपुलंसागरोपमम्
वाप्यश्चपुष्करिरायश्चबहुधातेनकारिताः ९
वटाश्वत्थाम्रकंकोलजंबूनिंबादिकाननम्
स्वसत्वेनतदाचक्रेतथापुष्पवनंशुभम् १०
उदयास्तमनंयावदन्नपानंचकारसः
पुराद्बहिश्चतुर्दिन्नुप्रपांचक्रेऽतिशोभनाम् ११
पुराणेषुप्रसिद्धानियानिदानानिभूपते
ददौतानिसधर्म्मात्मानित्यंदानपरस्तदा १२
यावज्जीवकृतेपापेप्रायाश्चित्तमथाकरोत्
देवपूजापरोनित्यंनित्यंचातिथिपूजकः १३
तस्येत्थंवर्त्तमानस्यसंजातौद्वौसुतौनृप
तौसुप्रसिद्धनामानौश्रीकुंडलविकुंडलौ १४
तयोर्मूर्ध्निगृहंत्यक्त्वाजगामतपसेवनम्
तत्राराध्यपरंदेवंगोविंदंवरदंप्रभुम् १५
तपःक्लिष्टशरीरोऽसौवासुदेवमनाःसदा
प्राप्तःसवैष्णवंलोकंयत्रगत्वानशोचति १६
अथतस्यसुतौराजन्महामानसमन्वितौ
तरुणौरूपसंपन्नौधनगर्वेणगर्वितौ १७
दुःशीलौव्यसनासक्तौधर्मकर्माद्यदर्शकौ
नवाक्यंचागतौमातुर्वृद्धानांवचनंतथा १८
कुमार्गगौदुरात्मानौपितृमित्रनिषेधकौ
अधर्मनिरतौदुष्टौपरदाराभिगामिनौ १९
गीतवादित्रनिरतौवीणावेणुविनोदिनौ
वारस्त्रीशतसंयुक्तौगायंतौचेरतुस्तदा २०
चाटुकारजनैर्युक्तौबिंबोष्ठीषुविशारदौ
सुवेषौचारुवसनौचारुचंदनरूषितौ २१
तथासुगंधिमालाढ्यौकस्तूरीलन्मलन्नितौ
नानालंकारशोभाढ्यौमौक्तिकाहारहारिणौ २२
गजवाजिरथौघेनक्रीडंतौतावितस्तदा
मधुपानसमायुक्तौपरस्त्रीरतिमोहितौ २३

नाशयंतौपितृद्रव्यंसहस्रंददतुःशतम्
तस्थतुःस्वगृहेरम्येनित्यंभोगपरायणौ २४
इत्थंतुतद्धनंताभ्यांविनियुक्तमसद्व्ययैः
वारस्त्रीविटशैलूषमल्लचारणबंदिषु २५
अपात्रेतद्धनंदत्तंक्षिप्तंबीजमिवोषरे
नसत्पात्रेचतद्दत्तंनब्राह्मणमुखेहुतम् २६
नार्चितोभूतभृद्विष्णुःसर्वपापप्रणाशनः
उभयोरेवतद्द्रव्यमचिरेणक्षयंययौ २७
ततस्तौदुःखमापन्नौकार्पण्यंपरमंगतौ
शोचमानौतुमुह्यंतौक्षुत्पीडादुःखपीडितौ २८
तयोस्तुतिष्ठतोर्गेहेनास्तियद्भुज्यतेतदा
स्वजनैर्बांधवैस्सर्वैःसेवकैरुपजीविभिः २९
द्रव्याभावेपरित्यक्तौचिंत्यमानौततःपुरे
पश्चाच्चौर्य्यंसमारब्धंताभ्यांचनगरेनृप ३०
राजतोलोकतोभीतौस्वपुरान्निःसृतौतदा
चक्रतुर्वनवासंतौसर्वेषामुपपीडितौ ३१
जघ्नतुःसततंमूढौशितैर्बाणैर्विषार्पितैः
नानापक्षिवराहांश्चहरिणान्रोहितांस्तथा ३२
शशकाञ्छल्लकान्गोधान्श्वापदांश्चेतरान्बहून्
महाबलौभिल्लसंगावाखेटकभुजौसदा ३३
एवंमांसमयाहारौपापाहारौपरंतप
कदाचिद्भूधरंप्राप्तोह्येकोऽन्यश्चवनंगतः ३४
शार्दूलेनहतोज्येष्ठःकनिष्ठःसर्पदंशितः
एकस्मिन्दिवसेराजन्पापिष्ठौनिधनंगतौ ३५
यमदूतैस्ततोबद्ध्वापापैर्नीतौयमालयम्
गत्वाभिजगदुःसर्वेतेदूताःपापिनावुभौ ३६
धर्मराजनरावेतावानीतौतवशासनात्
आज्ञांदेहिस्वभृत्येषुप्रसीदकरवामकिम् ३७
आलोच्यचित्रगुप्तेनतदादूताञ्जगौयमः
एकस्तुनीयतांवीरनिरयंतीव्रवेदनम् ३८

अपरःस्थाप्यतांस्वर्गेयत्रभोगाह्यनुत्तमाः
कृतांताज्ञांततःश्रुत्वादूतैश्चक्षिप्रकारिभिः ३९
निक्षिप्तोरौरवेघोरेयोज्येष्ठोहिनराधिप
तेषांदूतवरःकश्चिदुवाचमधुरंवचः ४०
विकुंडलमयासार्द्धमेहिस्वर्गंददामिते
भुंदवभोगान्सुदिव्यांस्त्वमर्जितान्स्वेनकर्मणा ४१
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेत्रिंशोऽध्यायः ३०

## एकत्रिंशोऽध्यायः

नारदउवाच-
ततोहृष्टमनाःसोऽथदूतंपप्रच्छतंपथि
संदेहंहृदिकृत्वातुविस्मयंपरमंगतः
विचारयन्हृदिस्वर्गःकस्यहेतोःफलंमम १
विकुंडलउवाच-
हेदूतवरपृच्छामिसंशयंत्वामहंपरम्
आवांजातौकुलेतुल्येतुल्यंकर्मतथाकृतम् २
दुर्मृत्युरपितुल्योभूत्तुल्योदृष्टोयमस्तथा
कथंसनरकेक्षिप्तस्तुल्यकर्म्मामामाग्रजः ३
ममाभवत्कथंनाकमितिमेछिंधिसंशयम्
देवदूतनपश्यामिममस्वर्गस्यकारणम् ४
देवदूतउवाच-
मातापितासुतोजायास्वसाभ्राताविकुंडल
जन्महेतोरियंसंज्ञाजंतोःकर्म्मोपभुक्तये ५
एकस्मिन्पादपेयद्वच्छकुनानांसमागमः
यद्यत्समीहितंकर्मकुरुतेपूर्वभावितः ६
तस्यतस्यफलंभुंक्तेकर्म्मणःपुरुषःसदा
सत्यंवदामितेप्रीत्यानरैःकर्म्मशुभाशुभम् ७
स्वकृतंभुज्यतेवैश्यकालेकालेपुनःपुनः
एकःकरोतिकर्माणिएकस्तत्फलमश्नुते ८
अन्योनलिप्यतेवैश्यकर्मणान्यस्यकुत्रचित्

अपतन्नरकेपापैस्तवभ्रातासुदारुणैः
त्वंचधर्मेणधर्मज्ञस्वर्गंप्राप्नोषिशाश्वतम् ९
विकुंडलउवाच-
आबाल्यान्ममपापेषुनपुण्येषुरतंमनः
अस्मिञ्जन्मनिहेदूतदुष्कृतंहिकृतंमया १०
देवदूतनजानामिसुकृतंकर्मचात्मनः
यदिजानासिमत्पुण्यंतन्मेत्वंकृपयावद ११
देवदूतउवाच-
शृणुवैश्यप्रवक्ष्यामियत्त्वयापुण्यमर्जितम्
जानामितदहंसर्वंनत्वंवेत्सिसुनिश्चितम् १२
हरिमित्रसुतोविप्रःसुमित्रोवेदपारगः
आसीत्तस्याश्रमःपुण्योयमुनादक्षिणेतटे १३
तेनसख्यंवनेतस्मिंस्तवजातंविशांवर
तत्संगेनत्वयास्नातंमाघमासद्वयंतथा १४
कालिदीपुण्यपानीयेसर्वपापहरेवरे
तत्तीर्थेलोकविख्यातेनाम्नापापप्रणाशने १५
एकेनसर्वपापेभ्योविमुक्तस्त्वंविशांपते
द्वितीयमाघपुण्येनप्राप्तःस्वर्गस्त्वयानघ १६
त्वंतत्पुण्यप्रभावेणमोदस्वसततंदिवि
नरकेषुतवभ्रातामहतींपापयातनाम् १७
छिद्यमानोऽसिपत्रैश्चभिद्यमानस्तुमुद्गरैः
चूर्ण्यमानःशिलापृष्ठेतप्तांगारेषुभर्जितः १८
इतिदूतवचःश्रुत्वाभ्रातृदुःखेनदुःखितः
पुलकांकितसर्वांगोदीनोऽसौविनयान्वितः १९
उवाचतंदेवदूतंमधुरंनिपुणंवचः
मैत्रीसप्तपदीसाधोसतांभवतिसत्फला २०
मित्रभावंविचिंत्यत्वंमामुपाकर्तुमर्हसि
ततोहिश्रोतुमिच्छामिसर्वज्ञस्त्वंमतोमम २१
यमलोकंनपश्यंतिकर्मणाकेनमानवाः
गच्छंतिनिरयंयेनतन्मेत्वंकृपयावद २२

देवदूतउवाच–
सम्यक्पृष्टंत्वयावैश्यनष्टपापोऽसिसांप्रतम्
विशुद्धेहृदयेपुंसांबुद्धिःश्रेयसिजायते २३
यद्यप्यवसरोनास्तिममसेवापरस्यवै
तथापिचतवस्नेहात्प्रवद्त्यामियथामति २४
कर्मणामनसावाचासर्वावस्थासुसर्वदा
परपीडांनकुर्वंतिनतेयांतियमालयम् २५
नवेदैर्नचदानैश्चनतपोभिर्नचाध्वरैः
कथंचित्स्वर्गतिंयांतिपुरुषाःप्राणिहिंसकाः २६
अहिंसापरमोधर्मोह्यहिंसैवपरंतपः
अहिंसापरमंदानमित्याहुर्मुनयःसदा २७
मशकान्सरीसृपान्दंशान्यूकाद्यान्मानवांस्तथा
आत्मौपम्येनपश्यंतिमानवायेदयालवः २८
तप्तांगारमयस्कीलंमादंप्रेतरंगिणीम्
दुर्गतिंनैवगच्छंतिकृतांतस्यचतेनराः २९
भूतानियेऽत्रहिंसंतिजलस्थलचराणिच
जीवनार्थंचतेयांतिकालसूत्रंचदुर्गतिम् ३०
श्वमांसभोजनास्तत्रपूयशोणितपायिनः
मज्जंतश्चवसापंकेदष्टाःकीटैरधोमुखैः ३१
परस्परंचखादंतोध्वांतेचान्योन्यघातिनः
वसंतिकल्पानेकांस्तेरुदंतोदारुणंरवम् ३२
कृमियोनिशतंगत्वास्थावराःस्युश्चिरंतुते
ततोच्छंतितेक्रूरास्तिर्यग्योनिशतेषुच ३३
पश्चाद्भवंतिजातांधाःकाणाःकुब्जाश्चपंगवः
दरिद्राश्चांगहीनाश्चमानुषाःप्राणिहिंसकाः ३४
तस्माद्वैश्यपरत्रेहकर्मणामनसागिरा
लोकद्वयसुखप्रेप्सुर्धर्मज्ञोनतदाचरेत् ३५
लोकद्वयेनविंदंतिसुखानिप्राणिहिंसकाः
येनहिंसन्तिभूतानिनतेबिभ्यतिकुत्रचित् ३६
प्रविशंतियथानद्यःसमुद्रमृजुवक्रगाः

सर्वेधर्माअहिंसायांप्रविशंतितथादृढम् ३७
सस्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः
अभयंयेनभूतेभ्योदत्तमत्रविशांवर ३८
येनियोगांश्चशास्त्रोक्तान्धर्माधर्मविमिश्रितान्
पालयंतीहयेवैश्यनतेयांतियमालयम् ३९
ब्रह्मचारीगृहस्थश्चवानप्रस्थोयतिस्तथा
स्वधर्मनिरताःसर्वेनाकपृष्ठेवसंतिते ४०
यथोक्तचारिणःसर्वेवर्णाश्रमसमन्विताः
नराजितेंद्रियायांतिब्रह्मलोकंतुशाश्वतम् ४१
इष्टापूर्तरतायेचपंचयज्ञरताश्चये
दयान्विताश्चयेनित्यंनेक्षंतेतेयमालयम् ४२
इंद्रियार्थनिवृत्तायेसमर्थावेदवादिनः
अग्निपूजारतानित्यंतेविप्राःस्वर्गगामिनः ४३
अदीनवदनाःशूराःशत्रुभिःपरिवेष्टिताः
आहवेषुविपन्नायेतेषांमार्गोदिवाकरः ४४
अनाथस्त्रीद्विजार्थेचशरणागतपालने
प्राणांस्त्यजंतियेवैश्यनच्यवंतिदिवस्तुते ४५
पंग्वंधबालवृद्धांश्चरोग्यनाथदरिद्रितान्
येपुष्णंतिसदावैश्यतेमोदंतिसदादिवि ४६
गांदृष्ट्वापंकनिर्मग्नांरोगमग्नंद्विजंतथा
उद्धरंतिनरायेचतेषांलोकोऽश्वमेधिनाम् ४७
गोग्रासंयेप्रयच्छंतियेशुश्रूषंतिगाःसदा
येनारोहंतिगोपृष्ठेतेस्वर्लोकनिवासिनः ४८
गर्तमात्रंतुयेचक्रुर्यत्रगौरतृषाभवेत्
यमलोकमदृष्ट्वैवतेयांतिस्वर्गतिंनराः ४९
अग्निपूजादेवपूजागुरुपूजारताश्चये
द्विजपूजारतानित्यंतेविप्राःस्वर्गगामिनः ५०
वापीकूपतडागादौधर्मस्यांतोनविद्यते
पिबंतिस्वेच्छयायत्रजलस्थलचरास्तदा ५१
नित्यंदानपरःसोऽत्रकथ्यतेविबुधैरपि

यथायथाचपानीयंपिबंतिप्राणिनोभृशम् ५२
तथातथाऽद्वयःस्वर्गोधर्मबुद्ध्याविशांवर
प्राणिनांजीवनंवारिप्राणावारिणिसंस्थिताः ५३
नित्यस्नानेनपूयंतेयेऽपिपातकिनोनराः
प्रातःस्नानंहरेद्वैश्यबाह्याभ्यंतरजंमलम् ५४
प्रातःस्नानेननिष्पापोनरोननिरयंव्रजेत्
स्नानंविनातुयोभुंक्तेमलाशीससदानरः ५५
अस्नायीयोनरस्तस्यविमुखापितृदेवताः
स्नानहीनोनरःपापःस्नानहीनोनरोऽशुचिः ५६
अस्नायीनरकंभुंक्तेपुंस्कीटादिषुजायते
येपुनःस्त्रोतसिस्नानमाचरंतीहपर्वणि ५७
तेनैवनरकंयांतिनजायंतेकुयोनिषु
दुःस्वप्नादुष्टचिंताश्चवंध्याभवंतिसर्वदा ५८
प्रातःस्नानेनशुद्धानांपुरुषाणांविशांवर
तिलांश्चतिलपात्रांश्चतिलप्रस्थंयथाविधि ५९
दत्त्वाप्रेतपतेर्भूमौनव्रजंतिनराःक्वचित्
पृथिवींकांचनंगांचदत्वादानानिषोडश ६०
गत्वानविनिवर्तंतेस्वर्गलोकाद्विकुंडल
पुगयासुतिथिषुप्राज्ञोव्यतीपातेचसंक्रमे ६१
स्नात्वादत्त्वाचयत्किंचिन्नैवमज्जतिदुर्गतौ
नैवाक्रामंतिदातारोदारुणंरौरवंपथम्
इहलोकेनजायंतेकुलेधनविवर्जिते ६२
सत्यवादीसदामौनीप्रियवादीचयोनरः
अक्रोधनःसमाचारोनातिवाद्यनसूयकः ६३
सदादाक्षिगयसंपन्नःसदाभूतदयान्वितः
गोप्ताचपरमर्माणांवक्तापरगुणस्यच ६४
परस्वंतृणमात्रंचमनसापिनयोहरेत्
नपश्यंतिविशांश्रेष्ठह्येतेनरकयातनाम् ६५
परापवादीपाखंडःपापेभ्योऽपिमतोऽधिकः
पच्यतेनरकेतावद्यावदाभूतसंप्लवम् ६६

वक्तापरुषवाक्यानांमंतव्योनरकागतः
संदेहोनविशांश्रेष्ठपुनर्यातिचदुर्गतिम् ६७
नतीर्थैर्नतपोभिश्चकृतघ्नस्यास्तिनिष्कृतिः
सहतेयातनांघोरांसनरोनरकेचिरम् ६८
पृथिव्यांयानितीर्थानितेषुमज्जतियोनरः
जितेंद्रियोजिताहारोनसयातियमालयम् ६९
नतीर्थेपातकंकुर्यान्नचतीर्थोपजीवनम्
तीर्थेप्रतिग्रहस्त्याज्यस्त्याज्योधर्मस्यविक्रयः ७०
दुर्जरंपातकंतीर्थेदुर्जरश्चप्रतिग्रहः
तीर्थेचदुर्जरंसर्वमेतत्किन्नरकंव्रजेत् ७१
सकृद्गंगांभसिस्नातःपूतोगांगेयवारिणा
ननरोनरकंयातिअपिपातकराशिकृत् ७२
व्रतदानतपोयज्ञाःपवित्राणीतराणिच
गंगाबिंद्वभिषिक्तस्यनसमाइतिनःश्रुतम् ७३
अन्यतीर्थसमांगंगांयोब्रवीतिनराधमः
सयातिनरकंवैश्यदारुणंरौरवंमहत् ७४
धर्मद्रवंह्यपांबीजंवैकुंठचरणच्युतम्
धृतंमूर्ध्निमहेशेनयद्गांगममलंजलम् ७५
तद्ब्रह्मैवनसंदेहोनिर्गुणंप्रकृतेःपरम्
तेनकिंसमतांगच्छेदपिब्रह्मांडगोचरे ७६
गंगागंगेतियोब्रूयाद्योजनानांशतैरपि
नरोननरकंयातिकिंतयासदृशंभवेत्
नान्येनदह्यतेसद्यःक्रियानरकदायिनी ७७
गंगांभसिप्रयत्नेनस्नातव्यंतेनमानवैः
प्रतिगृहनिवृत्तोयःप्रतिग्रहक्षमोऽपिसन्
सद्विजोद्योततेवैश्यतारारूपश्चिरंदिवि ७८
गामुद्धरंतियेपंकाद्येरक्षंतिचरोगिणः
म्रियंतेगोगृहेयेचतेषांनभसितारकाः
यमलोकंनपश्यंतिप्राणायामपरायणाः ७९
अपिदुष्कृतकर्माणस्तैरेवहतकिल्बिषाः

दिवसेदिवसेवैश्यप्राणायामास्तुषोडश
अपिब्रह्महणंसाक्षात्पुनंत्यहरहःकृताः ८०
तपांसियानितप्यंतेव्रतानिनियमाश्चये
गोसहस्रप्रदानंचप्राणायामस्तुतत्समः ८१
अब्बिंदुंयःकुशाग्रेणमासेमासेनरःपिबेत्
संवत्सरशतंसाग्रंप्राणायामस्तुतत्समः ८२
पातकंतुमहद्यच्चतथाक्षुद्रोपपातकम्
प्राणायामैःक्षणात्सर्वंभस्मसात्कुरुतेनरः ८३
मातृवत्परदारान्येमन्यंतेवैनरोत्तमाः
नतेयांतिनरश्रेष्ठकदाचिद्यमयातनाम् ८४
मनसापिपरेषांयःकलत्राणिनसेवते
सहलोकद्वयेनास्तितेनवैश्यधराधृता ८५
तस्माद्धर्म्मान्वितैस्त्याज्यंपरदारोपसेवनम्
नयंतिपरदारास्तुनरकानेकविंशतिम् ८६
लोभोनजायतेयेषांपरदारेषुमानसे
तेयांतिदेवलोकंतुनयमंवैश्यसत्तम ८७
शश्वत्क्रोधनिदानेषुयःक्रोधेननजीयते
जितस्वर्गःसमंतव्यःपुरुषोऽक्रोधनोभुवि ८८
मातरंपितरंपुत्रआराधयतिदेववत्
अप्राप्तेवार्द्धकेकालेनयातिचयमालयम् ८९
पितुश्चाधिकभावेनयेऽचयंतिगुरुंनराः
भवंत्यतिथयोलोकेब्रह्मणस्तेविशांवर ९०
इहचैवस्त्रियोधन्याःशीलस्यपरिरक्षणात्
शीलभंगेचनारीणांयमलोकःसुदारुणः ९१
शीलंरक्ष्यंसदास्त्रीभिर्दुष्टसंगविवर्जनात्
शीलेनहिपरःस्वर्गःस्त्रीणांवैश्यनसंशयः ९२
शूद्रस्यपाकयज्ञेननिषिद्धाचरणेनच
दुर्गतिर्विहितावैश्यतस्यसानारकीगतिः ९३
विचारयंतियेशास्त्रंवेदाभ्यासरताश्चये
पुराणंसंहितांयेचश्रावयंतिपठंतिच ९४

व्याकुर्वंतिस्मृतिर्येचयेधर्मप्रतिबोधकाः
वेदांतेषुनिषएणायेतैरियंजगतीधृता ९५
तत्तदभ्यासमाहात्म्यैःसर्वेतेहतकिल्बिषाः
गच्छंतिब्रह्मणोलोकंयत्रमोहोनविद्यते ९६
ज्ञानमज्ञाययोदद्याद्वेदशास्त्रसमुद्भवम्
अपिवेदास्तमर्चंतिभवबंधविदारणम् ९७
श्रूयतामद्भुतंह्येतद्रहस्यंवैश्यसत्तम
सम्मतंधर्मराजस्यसर्वलोकामृतप्रदम् ९८
नयमंयमलोकंचनभूतान्घोरदर्शनान्
पश्यंतिवैष्णवानूनंसत्यंसत्यंमयोदितम् ९९
प्राहास्मान्यमुनाभ्रातासदैवहिपुनःपुनः
भवद्भिर्वैष्णवास्त्याज्यानतेस्युर्ममगोचराः १००
स्मरंतियेसकृद्भूताःप्रसंगेनापिकेशवम्
तेविध्वस्ताखिलाघौघायांतिविष्णोःपरंपदम् १०१
दुराचारोदुष्कृतोऽपिसदाचाररतोऽपियः
भवद्भिःससदात्याज्योविष्णुंचभजतेनरः १०२
वैष्णवोयद्गृहेभुंक्तेयेषांवैष्णवसंगतिः
तेऽपिवःपरिवार्याःस्युस्तत्संगहतकिल्बिषाः १०३
इत्थंवैश्यानुशास्त्यस्मान्देवोदंडधरःसदा
अतोनोवैष्णवायांतिराजधानींयमस्यतु १०४
विष्णुभक्तिंविनानृणांपापिष्ठानांविशांवर
उपायोनास्तिनास्त्यन्यःसंतर्तुंनरकांबुधिम् १०५
श्वपाकमपिनेक्षेतलोकेष्टंवैश्यवैष्णवम्
वैष्णवोवर्णबाह्योऽपिपुनातिभुवनत्रयम् १०६
एतावतालमघनिर्हरणायपुंसांसंकीर्तनंभगवतोगुणकर्मनाम्नाम्
विक्रुश्यपुत्रमघवान्यदजामिलोऽपिनारायणेतिम्रियमाणइयायमुक्तिम् १०७
नरकेतुचिरंमग्नाःपूर्वेयेचकुलद्वये
तदैवयांतितेस्वर्गंयदार्चंतिमुदाहरिम् १०८
विष्णुभक्तस्ययेदासावैष्णवान्नभुजश्चये
तेतुक्रतुभुजांवैश्यगतिंयांतिनिराकुलाः १०९

प्रार्थयेद्वैष्णवस्यान्नंप्रयत्नेनविचक्षणः
सर्वपापविशुद्ध्यर्थंतदभावेजलंपिबेत् ११०
गोविंदेतिजपन्मंत्रंकुत्रचिन्म्रियतेयदि
सनरोनयमंपश्येत्तंचनेक्षामहेवयम् १११
सांगंसमुद्रंसध्यानंसऋषिःछंददैवतम्
दीक्षयाविधिवन्मंत्रंजपेद्वैद्वादशाक्षरम् ११२
अष्टाक्षरंचमंत्रेशंयेजपंतिनरोत्तमाः
तान्दृष्ट्वाब्रह्महाशुद्ध्येद्भ्राजतेविष्णुवत्स्वयम् ११३
शंखिनश्चक्रिणोभूत्वाब्रह्माभ्यंतरगामिनः
वसंतिवैष्णवेलोकेविष्णुरूपेणतेनराः ११४
हृदिसूर्येजलेवाथप्रतिमास्थंडिलेपिच
समभ्यर्च्यहरिंयांतिनरास्तद्वैष्णवंपदम् ११५
अथवासर्वदापूज्योवासुदेवोमुमुक्षुभिः
शालग्रामेमणौचक्रेवज्रकीटविनिर्मिते ११६
अधिष्ठानंहितद्विष्णोःसर्वपापप्रणाशनम्
सर्वपुण्यप्रदंवैश्यसर्वेषामपिमुक्तिदम् ११७
यःपूजयेद्धरिंचक्रेशालग्रामशिलोद्भवे
राजसूयसहस्रेणतेनेष्टंप्रतिवासरे ११८
सदामनंतिवेदांताब्रह्मनिर्वाणमच्युतम्
तत्प्रसादोभवेन्नृणांशालग्रामशिलार्चनात् ११९
महाकाष्ठस्थितोवह्निर्मखस्थानेप्रकाशते
यथातथाहरिर्व्यापीशालग्रामेप्रकाशते १२०
अपिपापसमाचाराःकर्म्मण्यनधिकारिणः
शालग्रामार्चकावैश्यनैवयांतियमालयम् १२१
नतथारमतेलक्ष्म्यांनतथास्वपुरेहरिः
शालग्रामशिलाचक्रेयथासरमतेसदा १२२
अग्निहोत्रंकृतंतेनदत्तापृथ्वीससागरा
येनार्चितोहरिश्चक्रेशालग्रामशिलोद्भवे १२३
शिलाद्वादशभोवैश्यशालग्रामशिलोद्भवाः
विधिवत्पूजितायेनतस्यपुण्यंवदामिते १२४

कोटिद्वादशलिंगैस्तुपूजितैःस्वर्णपंकजैः
यत्स्याद्द्वादशकालेषुदिनेनैकेनतद्भवेत् १२५
यःपुनःपूजयेद्भक्त्याशालग्रामशिलाशतम्
उषित्वासहरेर्लोकेचक्रवर्त्तीहजायते १२६
कामैःक्रोधैःप्रलोभैश्चव्याप्तोयत्रनराधमः
सोऽपियातिहरेर्लोकंशालग्रामशिलार्चनात् १२७
यःपूजयेच्चगोविंदंशालग्रामेमुदानरः
आभूतसंप्लवंयावन्नसप्रच्यवतेदिवः १२८
विनातीर्थैर्विनादानैर्विनायज्ञैर्विनामतिम्
मुक्तिंयांतिनरावैश्यशालग्रामशिलार्चनात् १२९
नरकंगर्भवासंचतिर्यक्त्वंकृमियोनिताम्
नयातिवैश्यपापोऽपिशालग्रामशिलार्चकः १३०
दीक्षाविधानमंत्रज्ञोयश्चक्रेबलिमाहरेत्
गंगागोदावरीरेवानद्योमुक्तिप्रदाश्चयाः १३१
निवसंतिहिताःसर्वाःशालग्रामशिलाजले
नैवेद्यैर्विविधैःपुष्पैर्धूपदीपैर्विलेपनैः १३२
गीतवादित्रस्तोत्राद्यैःशालग्रामशिलार्चनम्
कुरुतेमानवोयस्तुकलौभक्तिपरायणः १३३
कल्पकोटिसहस्राणिरमतेसन्निधौहरेः
लिंगैस्तुकोटिभिर्दृष्टैर्यत्फलंपूजितैस्तुतैः १३४
शालग्रामशिलायास्तुह्येकेनाह्नाहितत्फलम्
सकृदभ्यर्चितेलिंगेशालग्रामशिलोद्भवे १३५
मुक्तिंप्रयांतिमनुजानूनंसांख्येनवर्जिताः
शालग्रामशिलारूपीयत्रतिष्ठतिकेशवः १३६
तत्रदेवाःसुरायक्षाभुवनानिचतुर्दश
शालग्रामशिलायांतुयःश्राद्धंकुरुतेनरः १३७
पितरस्तस्यतिष्ठंतितृप्ताःकल्पशतंदिवि
येपिबंतिनरानित्यंशालग्रामशिलाजलम् १३८
पंचगव्यसहस्रैस्तुसेवितैःकिंप्रयोजनम्
कोटितीर्थसहस्रैस्तुसेवितैःकिंप्रयोजनम् १३९

तोयंयदिपिबेत्पुरायंशालग्रामशिलांगजम्
शालग्रामशिलायत्रतत्तीर्थंयोजनत्रयम् १४०
तत्रदानंचहोमंचसर्वंकोटिगुरांभवेत्
शालग्रामशिलातोयंयःपिबेद्बिंदुनासमम् १४१
मातृस्तन्यंपुनर्नैवसपिबेद्विष्णुभाङ्नरः
शालग्रामसमीपेतुक्रोशमात्रंसमंततः १४२
कीटकोपिमृतोयातिवैकुंठंभवनंपरम्
शालग्रामशिलाचक्रंयोदद्याद्दानमुत्तमम् १४३
भूचक्रंतेनदत्तंस्यात्सशैलवनकाननम्
शालग्रामशिलायायोमूल्यमुत्पादयेन्नरः १४४
विक्रेताचानुमंतायःपरीक्षासुचमोदते
तेसर्वेनरकंयांतियावदाभूतसंप्लवम् १४५
ततःसंवर्जयेद्वैश्यचक्रस्यक्रयविक्रयम्
बहुनोक्तेनकिंवैश्यकर्तव्यंपापभीरुणा १४६
स्मरणंवासुदेवस्यसर्वपापहरंहरेः
तपस्तप्त्वानरोघोरमरएयेनियतेंद्रियः १४७
यत्फलंसमवाप्नोतितन्नत्वागरुडध्वजम्
कृत्वापिबहुशःपापंनरोमोहसमन्वितः १४८
नयातिनरकंगत्वासर्वपापहरंहरिम्
पृथिव्यांयानितीर्थानिपुरायान्यायतनानिच १४९
तानिसर्वारयवाप्नोतिविष्णोर्नामानुकीर्तनात्
देवंशार्ङ्गधरंविष्णुंयेप्रपन्नाःपरायणाः १५०
नतेषांयमसालोक्यंनतेस्युर्नरकौकसः
वैष्णवःपुरुषोवैश्यशिवनिंदांकरोतियः १५१
नविंदेद्वैष्णवंलोकंसयातिनरकंमहत्
उपोष्यैकादशीमेकांप्रसंगेनापिमानवः १५२
नयातियातनांयामीमितिलोमशतःश्रुतम्
नेदृशंपावनंकिंचित्त्रिषुलोकेषुविद्यते १५३
उभयंपद्मनाभस्यदिनंपातकनाशनम्
तावत्पापानिदेहेऽस्मिन्वसंतीहविशांवर १५४

यावन्नोपवसेज्जंतुःपद्मनाभदिनंशुभम्
अश्वमेधसहस्राणिराजसूयशतानिच १५५
एकादश्युपवासस्यकलांनार्हंतिषोडशीम्
एकादशेंद्रियैःपापंयत्कृतंवैश्यमानवैः १५६
एकादश्युपवासेनतत्सर्वंविलयंव्रजेत्
एकादशीसमंकिंचित्पुण्यंलोकेनविद्यते १५७
व्याजेनापिकृतायैस्तुवशंयांतिनभास्करेः
स्वर्गमोक्षप्रदाह्येषाशरीरारोग्यदायिनी १५८
सुकलत्रप्रदाह्येषाजीवत्पुत्रप्रदायिनी
नगंगानगयावैश्यनकाशीनचपुष्करम् १५९
नचापिवैष्णवंक्षेत्रंतुल्यंहरिदिनेनतु
यमुनाचन्द्रभागानतुल्याहरिदिनेनतु १६०
अनायासेनयेनात्रप्राप्यतेवैष्णवंपदम्
रात्रौजागरणंकृत्वासमुपोष्यहरेर्दिने १६१
दशवैपैतृकेपक्षेमातृकेदशपूर्वजाः
प्रियायादशयेवैश्यतानुद्धरतिनिश्चितम् १६२
द्वंद्वसंगपरित्यक्तानागारिकृतकेतनाः
स्रग्विणःपीतवसनाःप्रयांतिहरिमंदिरम् १६३
बालत्वेयौवनेवापिवार्द्धकेवाविशांवर
उपोष्यैकादशींनूनंनैतिपापोऽतिदुर्गतिम् १६४
उपोष्येहत्रिरात्राणिकृत्वावातीर्थमज्जनम्
दत्वाहेमतिलान्गाश्चस्वर्गंयांतीहमानवाः १६५
तीर्थेस्नांतिनयेवैश्यनदत्तंकांचनंचयैः
नैवतप्तंतपःकिंचित्तेस्युःसर्वत्रदुःखिताः १६६
संक्षिप्यकथितंधर्म्मंनरकस्यनिरूपणम्
अद्रोहःसर्वभूतेषुवाङ्मनःकायकर्मभिः १६७
इंद्रियाणांनिरोधश्चदानंचहरिसेवनम्
वर्णाश्रमक्रियाणांचपालनंविधितःसदा १६८
स्वर्गार्थीसर्वदावैश्यतपोदानंनकीर्तयेत्
यथाशक्तितथादद्यादात्मनोहितकाम्यया १६९

उपानद्वस्त्रमन्नानिपत्रंमूलंफलंजलम्
अवंध्यंदिवसंकार्य्यंदरिद्रेणापिवैश्यक १७०
इहलोकेपरेचैवनदत्तंनोपतिष्ठते
दातारोनैवपश्यंतितांतांवैयमयातनाम् १७१
दीर्घायुषोधनाढ्याश्चभवंतीहपुनःपुनः
किमत्रबहुनोक्तेनयांत्यधर्मेणदुर्गातिम् १७२
आरोहंतिदिवंधर्म्मेनराःसर्वत्रसर्वदा १७३
तेनबालत्वमारभ्यकर्तव्योधर्मसंग्रहः
इतितेकथितंसर्वंकिमन्यच्छ्रोतुमिच्छसि १७४
विकुंडलउवाच-
श्रुत्वात्वद्वचनंसौम्यप्रसन्नंचित्तमेवमे
गंगोदंपापहंसद्यःपापहारिसतांवचः १७५
उपकर्तुंप्रियंवक्तुंगुणोनैसर्गिकःसताम्
शीतांशुःक्रियतेकेनशीतलोऽमृतमंडलः १७६
देवदूतततोब्रूहिकारुरायान्ममपृच्छतः
नरकान्निष्कृतिःसद्योभ्रातुर्मेजायतेकथम् १७७
इति तस्यवचःश्रुत्वादेवदूतोजगादह
ध्यानंदृष्ट्वाक्षणंध्यात्वातन्मैत्रीरज्जुबन्धनः १७८
यत्तेवैश्याष्टमेपुरायंत्वयाजन्मनिसंचितम्
तद्भ्रात्रेदीयतांसर्वंस्वर्गंतस्ययदीच्छसि १७९
विकुंडलउवाच-
किंतत्पुरायंकथंजातंकिंजन्मचपुरातनम्
तत्सर्वंकथ्यतांदूतततोदास्यामिसत्वरम् १८०
देवदूतउवाच-
शृणुवैश्यप्रवक्ष्यामितत्पुरायंचसहेतुकम्
पुरामधुवनेपुरायेऋषिरासीच्चशाकुनिः १८१
तपोऽध्ययनसंपन्नस्तेजसांब्रह्मणासमः
जज्ञिरेतस्यरेवत्यांनवपुत्राग्रहाइव १८२
ध्रुवःशीलोबुधस्तारोज्योतिष्मानुतपंचमः
अग्निहोत्ररताह्येतेगृहधर्मेषुरेमिरे १८३

निर्मोहोजितकामश्चध्यानकोशोगुणाधिकः
एतेगृहविरक्ताश्चचत्वारोद्विजसूनवः १८४
चतुर्थाश्रममापन्नाःसर्वकामविनिस्पृहाः
ग्रामैकवासिनःसर्वेनिःसंगानिष्परिग्रहाः १८५
निराशानिष्प्रयत्नाश्चसमलोष्टाश्मकांचनाः
येनकेनचिदाच्छन्नायेनकेनचिदाशिताः १८६
सायंग्रहास्तथानित्यंविष्णुध्यानपरायणाः
जितनिद्राजिताहारावातशीतसहिष्णवः १८७
पश्यंतोविष्णुरूपेणजगत्सर्वंचराचरम्
चरंतिलीलयापृथ्वद्यंतेऽन्योन्यंमौनमास्थिताः १८८
नकुर्वंतिक्रियांकांचिदर्थमात्रंहियोगिनः
दृष्टज्ञानाश्चसंदेहाश्चिद्विकारविशारदाः १८९
एवंतेतवविप्रस्यपूर्वमष्टमजन्मनि
तिष्ठतोमध्यदेशेषुपुत्रदारकुटुंबिनः १९०
गेहंतावकमाजग्मुर्मध्याह्ने क्षुत्पिपासिताः
वैश्वदेवांतरेकालेत्वयादृष्टागृहांगणे १९१
सगद्गदंसाश्रुनेत्रंसहर्षंचससंभ्रमम्
दंडवत्प्रणिपातेनबहुमानपुरःसरम् १९२
प्रणम्यचरणौमूर्ध्नाकृत्वापाणियुगाञ्जलिम्
तदाभिनन्दिताःसर्वेतयासूनृतयागिरा १९३
अद्यमेसफलंजन्मजीवितंसफलंतथा
अद्यविष्णुःप्रसन्नोमेसनाथोऽद्यास्मिपावनः १९४
धन्योऽस्म्यद्यगृहंधन्यंधन्याअद्यकुटुंबिनः
ममाद्यपितरोधन्याधन्यागावःश्रुतंधनम् १९५
यद्दृष्टौभवतांपादौतापत्रयहरौमया
भवतांदर्शनंयस्माद्धन्यस्यैवहरेरिव १९६
एवंसंपूज्यकृत्वातुपादप्रक्षालनंतथा
धृतंमूर्ध्निविशांश्रेष्ठश्रद्धयापरयातदा १९७
यत्रपादोदकंवैश्यश्रद्धयाशिरसाधृतम्
गंधपुष्पाक्षतैर्धूपैर्दीपैर्भावपुरःसरम् १९८

संपूज्यसुंदरान्नेनभोजितायतयस्तथा
तृप्ताःपरमहंसास्तेविश्रांतामंदिरेनिशि १९९
ध्यायंतश्चपरंब्रह्मयज्ज्योतिर्ज्योतिषांमतम्
तेषामातिथ्यजंपुरायंजातंयत्तेविशांवर २००
नतद्वक्त्रसहस्रेणवक्तुंशक्नोम्यहंखलु
भूतानांप्राणिनःश्रेष्ठाःप्राणिनांमतिजीविनः २०१
मतिमत्सुसुराःश्रेष्ठानरेषुब्रह्मजातयः
ब्राह्मणेषुचविद्वांसोविद्वत्सुकृतबुद्धयः २०२
कृतबुद्धिषुकर्तारःकर्तृषुब्रह्मवेदिनः
अतएवसुपूज्यास्तेतस्माच्छ्रेष्ठाजगत्त्रये २०३
तत्संगतिर्विशांश्रेष्ठमहापातकनाशिनी
विश्रांतागृहिणोगेहेसंतुष्टाब्रह्मवेदिनः २०४
आजन्मसंचितंपापंनाशयंतीक्षणेनवै
संचितंयद्गृहस्थस्यपापमामरणांतिकम् २०५
विनिर्दहतितत्सर्वमेकरात्रोषितोयतिः
स्वभ्रात्रेदेहितत्पुरायंनरकाद्येनमुच्यते २०६
इतिदूतवचःश्रुत्वाददौपुरायंससत्वरम्
हृष्टेनचेतसाभ्रातानिरयात्सोऽपिनिर्गतः २०७
देवैस्तुपुष्पवर्षेणपूजितौचदिवंगतौ
ताभ्यांसंपूजितःसम्यग्गतोदूतोयथागतः २०८
अखिलभुवनबोधंदेवदूतस्यवाक्यं निगमवचनतुल्यंवैश्यपुत्रोनिशम्य
स्वकृतसुकृतदानाद्भ्रातरंतारयित्वा सुरपतिवरलोकंतेनसार्द्धंजगाम २०९
इतिहासमिमंराजन्यःपठेच्छृणुयादपि
सगोसहस्रदानस्यविशोकोलभतेफलम् २१०
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेएकत्रिंशोऽध्यायः ३१

द्वात्रिंशोऽध्यायः

नारदउवाच–
ततोगच्छेतराजेंद्रसुगंधंलोकविश्रुतम्
सर्वपापविशुद्धात्माब्रह्मलोकेमहीयते १

रुद्रावर्तंततोगच्छेत्तीर्थसेवीनराधिप
तत्रस्नात्वानरोराजन्स्वर्गलोकेमहीयते २
गंगायाश्चनरश्रेष्ठसरस्वत्याश्चसंगमे
स्नातोऽश्वमेधमाप्नोतिस्वर्गलोकंचगच्छति ३
तत्रकर्णह्रदेस्नात्वादेवमभ्यर्च्यशंकरम्
नदुर्गतिमवाप्नोतिस्वर्गलोकंचगच्छति ४
ततःकुब्जाम्रकंगच्छेत्तीर्थसेवीयथाक्रमम्
गोसहस्रमवाप्नोतिस्वर्गलोकंचगच्छति ५
अरुंधतीवटंगच्छेत्तीर्थसेवीनराधिप
सामुद्रकमुपस्पृश्यत्रिरात्रोपोषितोनरः ६
गोसहस्रफलंविंद्यात्स्वर्गलोकंचगच्छति
ब्रह्मावर्त्ततोगच्छेद्ब्रह्मचारीसमाहितः ७
अश्वमेधमवाप्नोतिस्वर्गलोकंचगच्छति
यमुनाप्रभवंगच्छेत्समुपस्पृश्ययामुनम् ८
अश्वमेधफलंलब्ध्वाब्रह्मलोकेमहीयते
दर्वीसंक्रमणंप्राप्यतीर्थंत्रैलोक्यविश्रुतम् ९
अश्वमेधमवाप्नोतिस्वर्गलोकंचगच्छति
सिंधोश्चप्रभवंगत्वासिद्धगंधर्वसेवितम् १०
तत्रोष्यरजनीःपंचदद्याद्बहुसुवर्णकम्
अथदेवींसमासाद्यनरःपरमदुर्गमाम् ११
अश्वमेधमवाप्नोतिगच्छेच्चौशनसींगतिम्
ऋषिकुल्यांसमासाद्यवसिष्ठंचैवभारत १२
वसिष्ठंसमतिक्रम्यसर्वेवर्णाद्विजातयः
ऋषिकुल्यांनरःस्नात्वाऋषिलोकंप्रपद्यते १३
यदितत्रवसेन्मासंशाकाहारोनराधिप
भृगुतुंगंसमासाद्यवाजिमेधफलंलभेत् १४
गत्वावीरप्रमोक्षंचसर्वपापैःप्रमुच्यते
कार्तिकमाघयोश्चैवतीर्थमासाद्यदुर्लभम् १५
अग्निष्टोमातिरात्राभ्यांफलंप्राप्नोतिपुण्यकृत्
ततःसंध्यांसमासाद्यविद्यातीर्थमनुत्तमम् १६

उपस्पृशेत्सविद्यानांसर्वासांपारगोभवेत्
महाश्रमेवसेद्रात्रिंसर्वपापप्रमोचने १७
एककालंनिराहारोलोकान्संवसतेशुभान्
षष्ठकालोपवासेनमासमुष्यमहालये १८
तीर्णस्तारयतेजंतून्दशपूर्वान्दशापरान्
दृष्ट्वामाहेश्वरंपुरायंपरंसुरनमस्कृतम् १९
कृतार्थःसर्वकृत्येषुनशोचेन्मरणंक्वचित्
सर्वपापविशुद्धात्माविंद्याद्बहुसुवर्णकम् २०
अथवेतसिकांगच्छेत्पितामहनिषेविताम्
अश्वमेधमवाप्नोतिगतिंचपरमांव्रजेत् २१
अथसुंदरिकांतीर्थंप्राप्यसिद्धनिषेविताम्
रूपस्यभागीभवतिदृष्टमेतत्पुरातनैः २२
ततोब्राह्मणिकांगत्वाब्रह्मचारीसमाहितः
पद्मवर्णेनयानेनब्रह्मलोकंप्रपद्यते २३
ततश्चनैमिषंगच्छेत्पुरायंद्विजनिषेवितम्
तत्रनित्यंनिवसतिब्रह्मादेवगणैःसह २४
नैमिषंप्रार्थयानस्यपापस्यार्द्धंप्रणश्यति
प्रविष्टमानस्तुनरःसर्वपापात्प्रमुच्यते २५
तत्रमासंवसेद्धीरोनैमिषेतीर्थतत्परः
पृथिव्यांयानितीर्थनिनैमिषेतानिभारत २६
अभिषेकंतत्रकृत्वानियतोनियताशनः
राजसूयस्ययज्ञस्यफलंप्राप्नोतिमानवः २७
पुनात्यासप्तमंचैवकुलंभरतसत्तम
यस्त्यजेन्नैमिषेप्राणानुपवासपरायणः २८
समोदेत्स्वर्गलोकस्थएवमाहुर्मनीषिणः
नित्यंमेध्यंचपुरायंचनैमिषंनृपसत्तम २९
गंगोद्भेदंसमासाद्यत्रिरात्रोपोषितोनरः
वाजपेयमवाप्नोतिब्रह्मभूतोभवेत्सदा ३०
सरस्वतींसमासाद्यतर्पयेत्पितृदेवताः
सारस्वतेषुलोकेषुमोदतेनात्रसंशयः ३१

ततश्चबाहुदांगच्छेत्तीर्थसेवीनराधिप
तत्रोष्यरजनीमेकांस्वर्गलोकेमहीयते ३२
देवसत्रस्ययज्ञस्यफलंप्राप्नोतिमानवः
ततश्चरजनींगच्छेत्पुण्यांपुण्यजनैर्वृताम् ३३
पितृदेवार्चनरतोवाजपेयमवाप्नुयात्
विमलाशोकमासाद्यविराजतियथाशशी ३४
तत्रोष्यरजनीमेकांस्वर्गलोकेमहीयते
गोप्रतारंततोगच्छेत्सरयूतीर्थमुत्तमम् ३५
यत्ररामोगतःस्वर्गंसभृत्यबलवाहनः
गेहंत्यक्त्वापुराराजंस्तस्यतीर्थस्यतेजसा ३६
रामस्यचप्रसादेनव्यवसायाच्चभारत
तस्मिंस्तीर्थेनरःस्नात्वागोप्रतारेनराधिप ३७
सर्वपापविशुद्धात्मास्वर्गलोकेमहीयते
रामतीर्थेनरःस्नात्वागोमत्यांकुरुनंदन ३८
अश्वमेधमवाप्नोतिपुनातिस्वकुलंनरः
शतसाहस्रकंतत्रतीर्थंभरतसत्तम ३९
तत्रोपस्पर्शनंकृत्वानियतोनियताशनः
गोसहस्रफलंपुण्यमाप्नोतिभरतर्षभ ४०
ततोगच्छेतधर्मज्ञऊर्ध्वस्थानमनुत्तमम्
कोटितीर्थेनरःस्नात्वाअर्चयित्वागुहंनृप ४१
गोसहस्रफलंविंद्यात्तेजस्वीचापिजायते
ततोवाराणसींगत्वापूजयित्वावृषध्वजम् ४२
कपिलानांह्रदेस्नात्वाराजसूयफलंलभेत्
मार्कंडेयस्यराजेंद्रतीर्थमासाद्यदुर्ल्लभम् ४३
गोमतीगंगयोश्चैवसंगमेलोकविश्रुते
अग्निष्टोममवाप्नोतिकुलंचैवसमुद्धरेत् ४४

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेद्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

युधिष्ठिरउवाच-

वाराणस्याश्चमाहात्म्यंसंक्षेपात्कथितंत्वया
विस्तरेणमुनेब्रूहितदाप्रीणातिमेमनः १
नारदउवाच-
अत्रेतिहासंवक्ष्यामिवाराणस्यागुणाश्रयम्
यस्यश्रवणमात्रेणमुच्यतेब्रह्महत्यया २
मेरुशृंगेपुरादेवमीशानंत्रिपुरद्विषम्
देवासनगतादेवीमहादेवमपृच्छत ३
देव्युवाच-
देवदेवमहादेवभक्तानामार्तिनाशन
कथंत्वांपुरुषोदेवमचिरादेवपश्यति ४
सांख्ययोगस्तथाध्यानंकर्मयोगोऽथवैदिकः
आयासबहुलालोकेयानिचान्यानिशंकर ५
येनविश्रांतचित्तानांयोगिनांकर्मिणामपि
दृश्योहिभगवान्सूक्ष्मःसर्वेषामथदेहिनाम् ६
एतद्गुह्यतमंज्ञानंगूढंशक्रादिसेवितम्
हितायसर्वभूतानांब्रूहिकामाग्निनाशनम् ७
ईश्वरउवाच-
अवाच्यमत्रविज्ञानंज्ञानमज्ञैर्बहिष्कृतम्
वक्ष्येतवयथातत्त्वंयदुक्तंपरमर्षिभिः ८
परंगुह्यतमंक्षेत्रंममवाराणसीपुरी
सर्वेषामेवभूतानांसंसारार्णवतारिणी ९
तत्रभक्त्यामहादेविमदीयंव्रतमास्थिताः
निवसंतिमहात्मानःपरंनियममास्थिताः १०
उत्तमंसर्वतीर्थानांस्थानानामुत्तमंचयत्
ज्ञानानामुत्तमंज्ञानमविमुक्तंपरंमम ११
स्थानांतरपवित्राणितीर्थान्यायतनानिच
श्मशानसंस्थितान्येवदिव्यभूमिगतानिच १२
भूर्लोकेनैवसंलग्नमंतरिक्षेममालयम्
अमुक्तास्तत्रपश्यंतिमुक्ताःपश्यंतिचेतसा १३
श्मशानमेतद्विख्यातमविमुक्तमितिश्रुतम्

कालोभूत्वाजगदिदंसंहराम्यत्रसुंदरि १४
देवीदंसर्वगुह्यानांस्थानंप्रियतरंमम
मद्भक्तास्तत्रगच्छंतिमामेवप्रविशंतिच १५
दत्तंजप्तंहुतंचेष्टंतपस्तप्तंकृतंचयत्
ध्यानमध्ययनंज्ञानंसर्वंतत्राक्षयंभवेत् १६
जन्मांतरसहस्रेषुयत्पापंपूर्वसंचितम्
अविमुक्तंप्रविष्टस्यतत्सर्वंव्रजतिक्षयम् १७
ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चवर्णसंकराः
स्त्रियोम्लेच्छाश्चयेचान्येसंकीर्णाःपापयोनयः १८
कीटाःपिपीलिकाश्चैवयेचान्येमृगपक्षिणः
कालेननिधनंप्राप्ताअविमुक्तेवरानने १९
चंद्रार्द्धमौलयस्त्र्यक्षामहावृषभवाहनाः
शिवेममपुरेदेविजायंतेतत्रमानवाः २०
नाविमुक्तेमृतःकश्चिन्नरकंयातिकिल्बिषी
ईश्वरानुगृहीताहिसर्वेयांतिपरांगतिम् २१
मोक्षंसुदुर्ल्लभंमत्वासंसारंचातिभीषणम्
अश्मनाचरणौभंक्त्वावाराणस्यांवसेन्नरः २२
दुर्ल्लभातपसाचापिमृतस्यपरमेश्वरि
यत्रतत्रविपन्नस्यगतिःसंसारमोक्षणी २३
प्रसादाज्जायतेसम्यक्ममशैलेंद्रनंदिनि
अप्रवृद्धानपश्यंतिममभायाविमोहिताः २४
विण्मूत्ररेतसांमध्येतेवसंतिपुनःपुनः
हन्यमानोऽपियोविद्वान्वसेद्विघ्नशतैरपि २५
सयातिपरमंस्थानंयत्रगत्वानशोचति
जन्ममृत्युजरामुक्तंपरंयांतिशिवालयम् २६
अपुनर्मरणानांहिसागतिर्मोक्षकांक्षिणाम्
यांप्राप्यकृतकृत्यःस्यादितिमन्यंतिपंडिताः २७
नदानैर्नतपोभिश्चनयज्ञैर्नापिविद्यया
प्राप्यतेगतिरुत्कृष्टायाविमुक्तेतुलभ्यते २८
नानावर्णाविवर्णाश्चचांडालाद्याजुगुप्सिताः

किल्बिषैःपूर्णदेहाश्चविशिष्टैःपातकैस्तथा २९
भेषजंपरमंतेषामविमुक्तंविदुर्बुधाः
अविमुक्तंपरंज्ञानमविमुक्तंपरंपदम् ३०
अविमुक्तंपरंतत्त्वमविमुक्तंपरंशिवम्
कृत्वावैनैष्ठिकींदीक्षामविमुक्तेवसंतिये ३१
तेषांतत्परमंज्ञानंददाम्यंतेपरंपदम्
प्रयागंनैमिषारगयंश्रीशैलोऽथमहाबलम् ३२
केदारंभद्रकर्णंतुगयापुष्करमेवच
कुरुक्षेत्रंभद्रकोटिर्नर्मदाम्रातकेश्वरी ३३
शालग्रामंचकुब्जाम्रंकोकामुखमनुत्तमम्
प्रभासंविजयेशानंगोकर्णंभद्रकर्णकम् ३४
एतानिपुरायस्थानानित्रैलोक्येविश्रुतानिह
नयास्यंतिपरंतत्त्वंवाराणस्यांयथामृताः ३५
वाराणस्यांविशेषेणगंगात्रिपथगामिनी
प्रविष्टानाशयेत्पापंजन्मांतरशतैःकृतम् ३६
अन्यत्रसुलभागंगाश्राद्धंदानंतपोजपः
व्रतानिसर्वमेवैतद्वाराणस्यांसुदुर्ल्लभम् ३७
जपेच्चजुहुयान्नित्यंददात्यर्चयतेऽमरान्
वायुभक्षश्चसततंवाराणस्यांस्थितोनरः ३८
यदिपापोयदिशठोयदिवाधार्मिकोनरः
वाराणसींसमासाद्यपुनातिसकलंकुलम् ३९
वाराणस्यांयेऽचयंतिमहादेवंस्तुवंतिवै
सर्वपापविनिर्मुक्तास्तेविज्ञेयागणेश्वराः ४०
अन्यत्रयोगज्ञानाभ्यांसंन्यासादथवान्यतः
प्राप्यतेतत्परंस्थानंसहस्रेणैवजन्मनाम् ४१
येभक्तादेवदेवेशिवाराणस्यांवसंतिवै
तेविंदंतिपरंमोक्षमेकेनैवतुजन्मना ४२
यत्रयोगस्तथाज्ञानंमुक्तिरेकेनजन्मना
अविमुक्तंतदासाद्यनान्यदिच्छेत्तपोवनम् ४३
यतोमयाऽविमुक्तंतदविमुक्तंततःस्मृतम्

तदेवगुह्यंगुह्यानामेतद्विज्ञानमुच्यते ४४
ज्ञानाज्ञानाभिनिष्ठानांपरमानंदमिच्छताम्
यागतिर्विदितासुभ्रूःसाविमुक्तेमृतस्यतु ४५
यानिचैवाविमुक्तस्यदेहेदृष्टानिकृत्स्नशः
पुरीवाराणसीतेभ्यःस्थानेभ्योऽप्यधिकाशुभा ४६
यत्रसाक्षान्महादेवोदेहांतेस्वयमीश्वरः
व्याचष्टेतारकंब्रह्मतत्रैवह्यविमुक्तये ४७
यत्तत्परतरंतत्त्वमविमुक्तमितिश्रुतम्
एकेनजन्मनादेविवाराणस्यांतदाप्नुयात् ४८
भ्रूमध्येनाभिमध्येचहृदयेचैवमूर्धनि
यथाविमुक्तमादित्येवाराणस्यांव्यवस्थितम् ४९
वरणायास्तथाचास्यामध्येवाराणसीपुरी
तत्रैवसंस्थितंतत्त्वंनित्यमेवंविमुक्तकम् ५०
वाराणस्याःपरंस्थानंनभूतंनभविष्यति
यत्रनारायणोदेवोमहादेवोदिवीश्वरः ५१
तत्रदेवाःसगंधर्वाःसयक्षोरगराक्षसाः
उपासतेयंसततंदेवदेवःपितामहः ५२
महापातकिनोदेवियेतेभ्यःपापकृत्तमाः
वाराणसींसमासाद्यतेयांतिपरमांगतिम् ५३
तस्मान्मुमुक्षुर्नियतोवसेद्वैमरणांतकम्
वाराणस्यांमहादेवाज्ज्ञानंलब्ध्वाविमुच्यते ५४
किंतुविघ्नाभविष्यंतिपापोपहतचेतसः
ततोनैवाचरेत्पापंकायेनमनसागिरा ५५
एतद्रहस्यंदेवानांपुराणानांचसुव्रते
अविमुक्ताश्रयंज्ञानंनकश्चिद्वेत्तितत्त्वतः ५६
नारदउवाच-
देवतानामृषीणांचशृण्वतांपरमेष्ठिनाम्
देवदेवेनकथितंसर्वपापविनाशनम् ५७
यथानारायणःश्रेष्ठोदेवानांपुरुषोत्तमः
यथेश्वराणांगिरिशःस्थानानामेतदुत्तमम् ५८

यैःसमाराधितोरुद्रःपूर्वस्मिन्नेकजन्मनि
तेविदंतिपरंक्षेत्रमविमुक्तंशिवालयम् ५९
कलिकल्मषसंभूतायेषामुपहृतामतिः
नतेषांवेदितुंशक्यंस्थानंतत्परमेष्ठिनः ६०
येस्मरंतिसदाकालंवदंतिचपुरीमिमाम्
तेषांविनश्यतिक्षिप्रमिहामुत्रचपातकम् ६१
यानिचेहप्रकुर्वंतिपातकानिकृतालयाः
नाशयेत्तानिसर्वाणिदेवःकालतनुःशिवः ६२
आगच्छेत्तदिदंस्थानंसेवितंमोक्षकांक्षिभिः
मृतानांचपुनर्जन्मनभूयोभवसागरे ६३
तस्मात्सर्वप्रयत्नेनवाराणस्यांवसेन्नरः
योगीवाप्यथवायोगीपापीवापुण्यकृत्तमः ६४
नलोकवचनात्पित्रोर्नचैवगुरुवादतः
मतिर्नक्रमणीयास्यादविमुक्तगतिंप्रति ६५

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेत्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

नारदउवाच–
तत्रेदंविमलंलिंगमोंकारंनामशोभनम्
यस्यस्मरणमात्रेणमुच्यतेसर्वपातकैः १
एतत्परतरंज्ञानंपंचायतनमुत्तमम्
सेवितंमुनिभिर्नित्यंवाराणस्यांविमोक्षणम् २
तत्रसाक्षान्महादेवःपंचायतनविग्रहः
रमतेभगवान्रुद्रोजंतूनामपवर्गदः ३
एतत्पाशुपतंज्ञानंपंचायतनमुच्यते
तदेतद्विमलंलिंगमोंकारंसमुपस्थितम् ४
शांत्यतीतातथाशांतिर्विद्याचैवापरावरा
प्रतिष्ठाचनिवृत्तिश्चपंचात्मंलिंगमैश्वरम् ५
पंचानामपिलिंगानांब्रह्मादीनांसमाश्रयम्
ॐकारबोधकंलिंगंपंचायतनमुच्यते ६

संस्मरेदीश्वरंलिगंपंचायतनमव्ययम्
देहांतेपरमंज्योतिरानंदंविशतेबुधः ७
तत्रदेवर्षयःपूर्वंसिद्धाब्रह्मर्षयस्तथा
उपास्यदेवमीशानमापुरंतःपरंपदम् ८
मत्स्योदर्यास्तटेपुरायेस्थानंगुह्यतमंशुभम्
गोचर्ममात्रंराजेंद्रॐकारेश्वरमुत्तमम् ९
कृत्तिवासेश्वरंलिगंमध्यमेश्वरमुत्तमम्
विश्वेश्वरंतथोंकारंकंदर्पेश्वरमेवच १०
एतानिगुह्यलिगानिवाराणस्यांयुधिष्ठिर
नकश्चिदिहजानातिविनाशंभोरनुग्रहात् ११
कृत्तिवासेश्वरस्यैवमाहात्म्यंशृणुपार्थिव
तस्मिन्स्थानेपुरादैत्योहस्तीभूत्वाशिवांतिकम् १२
ब्राह्मणान्हंतुमायातोयत्रनित्यमुपासते
तेषांलिगान्महादेवःप्रादुरासीत्त्रिलोचनः १३
रक्षणार्थंमहादेवोभक्तानांभक्तवत्सलः
हत्वागजाकृतिंदैत्यंशूलेनावज्ञयाहरः १४
वासस्तस्याकरोत्कृत्तिंकृत्तिवासेश्वरस्ततः
तत्रसिद्धिंपरांप्राप्तामुनयोहियुधिष्ठिर १५
तेनैवचशरीरेणप्राप्तास्तत्परमंपदम्
विद्याविद्येश्वरारुद्राःशिवायेचप्रकीर्त्तिताः १६
कृत्तिवासेश्वरंलिगंनित्यमाश्रित्यसंस्थिताः
ज्ञात्वाकलियुगंघोरमधर्मबहुलंजनाः १७
कृत्तिवासंनमुंचंतिकृतार्थास्तेनसंशयः
जन्मांतरसहस्रेणमोक्षोयत्राप्यतेनवा १८
एकेनजन्मनामोक्षःकृत्तिवासेऽत्रलभ्यते
आलयंसर्वसिद्धानामेतत्स्थानंवदंतिहि १९
गोपितंदेवदेवेनमहादेवेनशंभुना
युगेयुगेह्यत्रदांताब्राह्मणावेदपारगाः २०
उपासंतेमहात्मानंजपंतिशतरुद्रियम्
स्तुवंतिसततंदेवंत्र्यंबकंकृत्तिवाससम्

ध्यायंतिहृदयेदेवंस्थाणुंसर्वांतरंशिवम् २१
गायंतिसिद्धाःकिलगीतकानिवाराणसींयेनिवसंतिविप्राः
तेषामथैकेनभवेद्विमुक्तिर्येकृत्तिवासंशरणंप्रपन्नाः २२
संप्राप्यलोकेजगतामभीष्टंसुदुर्लभंविप्रकुलेषुजन्म
ध्यानेसमाधायजपंतिरुद्रंध्यायंतिचित्तेयतयोमहेशम् २३
आराधयंतिप्रभुमीशितारंवाराणसीमध्यगतामुनींद्राः
यजंतियज्ञैरभिसंधिहीनाःस्तुवंतिरुद्रंप्रणमंतिशंभुम् २४
नमोभवायामलयोगधाम्नेस्थाणुंप्रपद्येगिरिशंपुराणम्
स्मरामिरुद्रंहृदयेनिविष्टंजानेमहादेवमनेकरूपम् २५
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेचतुस्त्रिंशोऽध्यायः ३४

## पंचत्रिंशोऽध्यायः

नारदउवाच-
अथान्यत्तत्रवैलिगंकपर्दीश्वरमुत्तमम्
स्नात्वातत्रविधानेनतर्पयित्वापितृन्नृप १
मुच्यतेसर्वपापेभ्योमुक्तिंभुक्तिंचविंदति
पिशाचमोचनंनामतीर्थमन्यत्ततःस्थितम् २
तत्राश्चर्यमयोदेवोमुक्तिदःसर्वदोषहः
कश्चिद्दैत्योजगामेदंशार्दूलोघोररूपधृक् ३
मृगीमेकांभक्षयितुंकपर्दीश्वरमुत्तमम्
तत्रसाभीतहृदयाकृत्वाकृत्वाप्रदक्षिणम् ४
धावमानासुसंभ्रांताव्याघ्रस्यवशमागता
तांविदार्यनखैस्तीक्ष्णैःशार्दूलःसमहाबलः ५
जगामचान्यंविजनंदेशंदृष्ट्वामुनीश्वरान्
मृतमात्राचसाबालाकपर्दीशाग्रतोमृगी ६
अदृश्यतमहाज्वालाव्योम्निसूर्यसमप्रभा
त्रिनेत्रानीलकंठाचशशांकांकितमूर्द्धजा ७
वृषाधिरूढापुरुषैस्तादृशैरेवसंवृता
पुष्पवृष्टिंविमुंचंतिखेचरास्तत्समंततः ८
गणेश्वरीस्वयंभूत्वानदृष्टातत्क्षणात्ततः

दृष्ट्वातदाश्चर्यवरंप्रशशंसुःसुरादयः ९
तन्महेशस्यवैलिगंकपर्दीश्वरमुत्तमम्
स्मृत्वैवाशेषपापौघात्क्षिप्रमस्यविमुंचति १०
कामक्रोधादयोदोषावाराणसीनिवासिनाम्
विघ्नाःसर्वेविनश्यंतिकपर्दीश्वरपूजनात् ११
तस्मात्सदैवद्रष्टव्यंकपर्दीश्वरमुत्तमम्
पूजितव्यंप्रयत्नेनस्तोतव्यंवैदिकैस्तवैः १२
ध्यायतांचात्रनियतंयोगिनांशांतचेतसाम्
जायतेयोगसिद्धिःस्यात्षण्मासेननसंशयः १३
ब्रह्महत्यादयःपापाविनश्यंत्यस्यपूजनात्
पिशाचमोचनेकुंडेस्नातःस्यात्प्रशमोयतः १४
तस्मिन्क्षेत्रेपुराविप्रस्तपस्वीसंशितव्रतः
शंकुकर्णइतिख्यातःपूजयामासशंकरम् १५
जजापरुद्रमनिशंप्रणवंब्रह्मरूपिणम्
पुष्पधूपादिभिस्तोत्रैःनमस्कारैःप्रदक्षिणैः १६
उपासीतात्रयोगात्माकृत्वादीक्षांतुनैष्ठिकीम्
कदाचिदागतंप्रेतंपश्यतिस्मक्षुधान्वितम् १७
अस्थिचर्मपिनद्धांगंनिश्वसंतंमुहुर्मुहुः
तंदृष्ट्वासमुनिश्रेष्ठः कृपयापरयायुतः १८
प्रोवाचकोभवान्कस्माद्देशाद्देशमिमंश्रितः
तस्मैपिशाचः क्षुधयापीड्यमानोऽब्रवीद्वचः १९
पूर्वजन्मन्यहंविप्रोधनधान्यसमन्वितः
पुत्रपौत्रादिभिर्युक्तःकुटुंबभरणोत्सुकः २०
नपूजितामहादेवागावोऽप्यतिथयस्तथा
नकदाचित्कृतंपुण्यमल्पंवानल्पमेवच २१
एकदाभगवान्देवोवृषभेश्वरवाहनः
विश्वेश्वरोवाराणस्यांदृष्टःस्पृष्टोनमस्कृतः २२
तदाचिरेणकालेनपंचत्वमहमागतः
नदृष्टंतन्महाघोरंयमस्यसदनंमुने २३
पिपासयाधुनाक्रांतोनजानामिहिताहितम्

यदिकंचित्समुद्धर्तुमुपायंपश्यसिप्रभो २४
कुरुष्वतंनमस्तुभ्यंत्वामहंशरणंगतः
इत्युक्तःशंकुकर्णोऽथपिशाचमिदमब्रवीत् २५
तादृशोनहिलोकेस्मिन्विद्यतेपुरायकृत्तमः
यत्त्वयाभगवान्पूर्वंदृष्टोविश्वेश्वरःशिवः २६
संस्पृष्टोवंदितोभूयः कोऽन्यस्त्वत्सदृशोभुवि
तेनकर्मविपाकेनदेशमेतंसमागतः २७
स्नानंकुरुष्वशीघ्रंत्वमस्मिन्कुंडेसमाहितः
येनेमांकुत्सितांयोनिंक्षिप्रमेवप्रहास्यसि २८
सएवमुक्तोमुनिनापिशाचोदयालुनादेववरंत्रिनेत्रम्
स्मृत्वाकपर्दीश्वरमीशितारंचक्रेसमाधायमनोवगाहम् २९
तदावगाढोमुनिसन्निधानेममारदिव्याभरणोपपन्नः
अदृश्यतार्कप्रतिमोविमानेशशांकचिह्नीकृतचारुमौलि ३०
विभातिरुद्रैःसहितोदिविष्ठैःसमाभृतोयोगिरिभरप्रमेयैः
सवालखिल्यादिभिरेषदेवोयथोदयेभानुरशेषदेवः ३१
स्तुवंतिसिद्धादिविदेवसंघानृत्यंतिदिव्याप्सरसोऽभिरामाः
मुंचंतिवृष्टिंकुसुमांबुमिश्रांगंधर्वविद्याधरकिन्नराद्याः ३२
संस्तूयमानोऽथमुनींद्रसंघैरवाप्यबोधंभगवत्प्रसादात्
समाविशन्मंडलमेतदग्र्यंत्रयीमयंयत्रविभातिरुद्रः ३३
दृष्ट्वाविमुक्तंसपिशाचभूतंमुनिःप्रहृष्टोमनसामहेशम्
विचिंत्यरुद्रंकविमेकमग्निंप्रणम्यतुष्टावकपर्दिनंतम् ३४
शंकुकर्णउवाच-
कपर्दिनंत्वांपरतःपरस्ताद्गोप्तारमेकंपुरुषंपुराणम्
व्रजामियोगेश्वरमीप्सितारमादित्यमग्निंकपिलाधिरूढम् ३५
त्वांब्रह्मसारंहृदिसंनिविष्टंहिरणमयंयोगिनमादिमंतम्
व्रजामिरुद्रंशरणंदिविष्ठंमहामुनिंब्रह्ममयंपवित्रम् ३६
सहस्रपादाक्षिशिरोभियुक्तंसहस्ररूपंतमसःपरस्तात्
तंब्रह्मपारंप्रणमामिशंभुंहिरण्यगर्भाधिपतिंत्रिनेत्रम् ३७
यत्रप्रसूतिर्जगतोविनाशोयेनावृतंसर्वमिदंशिवेन
तंब्रह्मपारंभगवंतमीशंप्रणम्यनित्यंशरणंप्रपद्ये ३८

अलिंगमालोकविहीनरूपंस्वयंप्रभुंचित्पतिमेकरूपम्
तंब्रह्मपारंपरमेश्वरंत्वांनमस्करिष्येनयतोऽन्यदस्ति ३९
यंयोगिनस्त्यक्तसबीजयोगालब्ध्वासमाधिंपरमात्मभूताः
पश्यंतिदेवंप्रणतोऽस्मिनित्यंतंब्रह्मपारंपरमस्वरूपम् ४०
नयत्रनामादिविशेषक्लृप्तिर्नसंदृशेतिष्ठतियत्स्वरूपम्
तंब्रह्मपारंप्रणतोऽस्मिनित्यंस्वयंभुवंत्वांशरणंप्रपद्ये ४१
यद्वेदवादाभिरताविदेहंसब्रह्मविज्ञानमभेदमेकम्
पश्यंत्यनेकंभवतःस्वरूपंतंब्रह्मपारंप्रणतोऽस्मिनित्यम् ४२
यतःप्रधानंपुरुषः पुराणोबिभर्तितेजःप्रणमंतिदेवाः
नमामितंज्योतिषिसन्निविष्टंकालंबृहंतंभवतःस्वरूपम् ४३
व्रजामिनित्यंशरणंगुहेशंस्थाणुंप्रपद्येगिरिशंपुराणम्
शिवंप्रपद्येहरिमिंदुमौलिपिनाकिनंत्वांशरणंव्रजामि ४४
स्तुत्वैवंशंकुकर्णोऽपिभगवंतंकपर्दिनम्
पपातदंडवद्भूमौप्रोच्चरन्प्रणवंपरम् ४५
तत्क्षणात्परमंलिंगंप्रादुर्भूतंशिवात्मकम्
ज्ञानमानंदमत्यंतंकोटिज्वालाग्निसन्निभम् ४६
शंकुकर्णोऽथमुक्तात्मातदात्मासर्वगोऽमलः
निलिल्येविमलेलिंगेतदद्भुतमिवाभवत् ४७
एतद्रहस्यमाख्यातंमाहात्म्यंतेकपर्द्दिनः
नकश्चिद्वेत्तितमसाविद्वानप्यत्रमुह्यति ४८
यइमांशृणुयान्नित्यंकथांपापप्रणाशिनीम्
त्यक्तपापविशुद्धात्मारुद्रसामीप्यमाप्नुयात् ४९
पठेच्चसततंशुद्धोब्रह्मपारंमहास्तवम्
प्रातर्मध्याह्नसमयेसयोगंप्राप्नुयात्परम् ५०
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेवाराणसी-
माहात्म्येपंचत्रिंशोऽध्यायः ३५

षट्त्रिंशोऽध्यायः

नारदउवाच-
वाराणस्यांमहाराजमध्यमेशंपरात्परम्

तस्मिन्स्थानेमहादेवोदेव्यासहमहेश्वरः १
रमतेभगवान्नित्यंरुद्रैश्चपरिवारितः
तत्रपूर्वंहृषीकेशोविश्वात्मादेवकीसुतः २
उवासवत्सरंकृष्णःसदापाशुपतैर्युतः
भस्मोद्धूलितसर्वांगोरुद्राध्ययनतत्परः ३
आराधयन्हरिःशंभुंकृत्वापाशुपतंव्रतम्
तस्यतेबहवःशिष्याःब्रह्मचर्यपरायणाः ४
लब्ध्वातद्वदनाज्ज्ञानंदृष्टवंतोमहेश्वरम्
तस्यदेवोमहादेवःप्रत्यक्षंनीललोहितः ५
ददौकृष्णस्यभगवान्वरदोवरमुत्तमम्
येऽर्चयंतिचगोविंदंमद्भक्ताविधिपूर्वकम् ६
तेषांतदैश्वरंज्ञानमुत्पत्स्यतिजगन्मयम्
नमस्योऽर्चयितव्यश्चध्यातव्योमत्परैर्जनैः ७
भविष्यंतिनसंदेहोमत्प्रसादाद्विजातयः
येऽत्रद्रक्ष्यंतिदेवेशंस्नात्वादेवंपिनाकिनम् ८
ब्रह्महत्यादिकंपापंतेषामाशुविनश्यति
प्राणांस्त्यक्ष्यंतियेमर्त्याःपापकर्मरताअपि ९
तेयांतितत्परंस्थानंनात्रकार्याविचारणा
धन्यास्तुखलुतेविप्रामंदाकिन्यांकृतोदकाः १०
अर्चयित्वामहादेवंमध्यमेश्वरमीश्वरम्
ज्ञानंदानंतपःश्राद्धंपिंडनिर्वपणंत्विह ११
एकैकशःकृतंकर्मपुनात्यासप्तमंकुलम्
सन्निहत्यामुपस्पृश्यराहुग्रस्तेदिवाकरे १२
यत्फलंलभतेमर्त्यस्तस्माद्दशगुणंत्विह
एवमुक्तंमहाराजमाहात्म्यंमध्यमेश्वरे
यःशृणोतिपरंभक्त्यासयातिपरमंपदम् १३

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेवाराणसी-
माहात्म्येषट्त्रिंशोऽध्यायः ३६

## सप्तत्रिंशोऽध्यायः

नारदउवाच-
अन्यानिचमहाराजतीर्थानिपावनानितु
वाराणस्यांस्थितानीहसंशृणुष्वयुधिष्ठिर १
प्रयागादधिकंतीर्थंप्रयागंपरमंशुभम्
विश्वरूपंतथातीर्थंतालतीर्थमनुत्तमम् २
आकाशाख्यंमहातीर्थंतीर्थंचैवार्षभंपरम्
सुनीलंचमहातीर्थंगौरीतीर्थमनुत्तमम् ३
प्राजापत्यंतथातीर्थंस्वर्गद्वारंतथैवच
जंबुकेश्वरमित्युक्तंधर्माख्यंतीर्थमुत्तमम् ४
गयातीर्थंपरंतीर्थंतीर्थंचैवमहानदी
नारायणपरंतीर्थंवायुतीर्थमनुत्तमम् ५
ज्ञानतीर्थंपरंगुह्यंवाराहंतीर्थमुत्तमम्
यमतीर्थंयथापुण्यंतीर्थंसंमूर्तिकंशुभम् ६
अग्नितीर्थंमहाराजकलशेश्वरमुत्तमम्
नागतीर्थंसोमतीर्थंसूर्यतीर्थंतथैवच ७
पर्वताख्यंमहागुह्यंमणिकर्ण्यमनुत्तमम्
घटोत्कचंतीर्थवरंश्रीतीर्थंचपितामहम् ८
गंगातीर्थंतुदेवेशंययातेस्तीर्थमुत्तमम्
कापिलंचैवसोमेशंब्रह्मतीर्थमनुत्तमम् ९
तत्रलिगंपुराणीयंस्थातुंब्रह्मायथागतः
तदानींस्थापयामासविष्णुस्तल्लिंगमैश्वरम् १०
तत्रस्नात्वासमागम्यब्रह्माप्रोवाचतंहरिम्
मयानीतमिदंलिगंकस्मात्स्थापितवानसि ११
तमाहविष्णुस्त्वत्तोऽपिरुद्रेभक्तिर्दृढामम
तस्मात्प्रतिष्ठितंलिगंनाम्नातवभविष्यति १२
भूतेश्वरंतथातीर्थंतीर्थंधर्मसमुद्भवम्
गंधर्वतीर्थंसुशुभंवाह्नेयंतीर्थमुत्तमम् १३
दौर्वासिकंव्योमतीर्थंचंद्रतीर्थंयुधिष्ठिर
चिंतांगदेश्वरंतीर्थंपुण्यंविद्याधरेश्वरम् १४

केदारतीर्थमुग्राख्यंकालंजरमनुत्तमम्
सारस्वतंप्रभासंचरुद्रकर्णह्रदंशुभम् १५
कोकिलाख्यंमहातीर्थंतीर्थंचैवमहालयम्
हिरगयगर्भंगोप्रेक्षंतीर्थंचैवमनुत्तमम् १६
उपशांतंशिवंचैवव्याघ्रेश्वरमनुत्तमम्
त्रिलोचनंमहातीर्थंलोकार्कंचोत्तराह्वयम् १७
कपालमोचनंतीर्थंब्रह्महत्याविनाशनम्
शुक्रेश्वरंमहापुरायमानंदपुरमुत्तमम् १८
एवमादीनितीर्थानिवाराणस्यांस्थितानिवै
नशक्यंविस्तराद्वक्तुंकल्पकोटिशतैरपि १९
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेवाराणसी-
माहात्म्येसप्तत्रिंशोऽध्यायः ३७

## अष्टत्रिंशोऽध्यायः

नारदउवाच-
वाराणस्याश्चमाहात्म्यंतस्यांतीर्थानिचप्रभो
कथितानिसमासेनतीर्थान्यन्यानिसंशृणु १
ततोगयांसमासाद्यब्रह्मचारीसमाहितः
अश्वमेधमवाप्नोतिगमनादेवभारत २
यत्राक्षय्यवटोनामत्रिषुलोकेषुविश्रुतः
पितॄणांतत्रवैदत्तमक्षयंभवतिप्रभो ३
महानद्यामुपस्पृश्यतर्पयेत्पितृदेवताः
अक्षयान्प्राप्नुयाल्लोकान्कुलंचैवसमुद्धरेत् ४
ततोब्रह्मसरोगछेद्ब्रह्मारगयोपसेवितम्
पुंडरीकमवाप्नोतिप्रभातमिवशर्वरी ५
सरसिब्रह्मणातत्रयूपश्रेष्ठःसमुच्छ्रितः
यूपंप्रदक्षिणंकृत्वावाजपेयफलंलभेत् ६
ततोगच्छेतराजेंद्रधेनुकंलोकविश्रुतम्
एकारात्रोषितोराजन्प्रयच्छेत्तिलधेनुकाम् ७
सर्वपापविशुद्धात्मासोमलोकंव्रजेद्ध्रुवम्

तत्रचिह्नंमहाराजअद्यापिहिनसंशयः ८
कपिलासहवत्सावैपर्वतेविचरत्युतः
सवत्सायाःपदान्यस्यादृश्यंतेऽद्यापिभारत ९
तेषूपस्पृश्यराजेंद्रपदेषुनृपसत्तम
यत्किंचिदशुभंपापंतत्प्रणश्यतिभारत १०
ततोगृध्रवटंगच्छेत्स्थानंदेवस्यशूलिनः
स्नायात्तुभस्मनातत्रसंगम्यवृषभध्वजम् ११
ब्राह्मणेनभवेच्चीर्णंव्रतंद्वादशवार्षिकम्
इतरेषांतुवर्णानांसर्वपापंप्रणश्यति १२
गच्छेतततउद्यंतंपर्वतंगीतनादितम्
सावित्रंतुपदंतत्रदृश्यतेभरतर्षभ १३
तत्रसंध्यामुपासीतब्राह्मणःसंशितव्रतः
उपास्ताहिभवेत्संध्यातेनद्वादशवार्षिकी १४
योनिद्वारंचतत्रैवविश्रुतंभरतर्षभ
तत्राभिगम्यमुच्येतपुरुषोयोनिसंकटात् १५
शुक्लकृष्णावुभौपक्षौगयायांयोवसेन्नरः
पुनात्यासप्तमंराजन्कुलंनास्त्यत्रसंशयः १६
एष्टव्याबहवःपुत्रायद्यप्येकोगयांव्रजेत्
यजेतवाश्वमेधेननीलंवावृषमुत्सृजेत् १७
ततःफल्गुंव्रजेद्राजंस्तीर्थसेवीनराधिप
अश्वमेधमवाप्नोतिसिद्धिंचपरमांव्रजेत् १८
ततोगच्छेतराजेंद्रधर्मपृष्ठंसमाहितः
यत्रधर्मोमहाराजनित्यमास्तेयुधिष्ठिर १९
धर्म्मंतत्राभिसंगम्यवाजिमेधफलंलभेत्
ततोगच्छेतराजेंद्रब्रह्मणस्तीर्थमुत्तमम् २०
तत्राभिगम्यब्रह्माणमर्चयेन्नियतव्रतः
राजसूयाश्वमेधाभ्यांफलंप्राप्नोतिभारत २१
ततोराजगृहंगच्छेत्तीर्थसेवीनराधिप
उपस्पृश्यततस्तत्रकक्षीवानिवमोदते २२
यक्षिण्यानैत्यकंतत्रप्रागग्निपुरुषःशुचिः

यद्धिरगयास्तुप्रसादेनमुच्यतेब्रह्महत्यया २३
मणिनागंततोगच्छेद्गोसहस्त्रफलंलभेत्
नैत्यकंभुंजतेयस्तुमणिनागस्यमानवः २४
दष्टस्याशीविषेणास्यनविषंक्रमतेनृप
तत्रोष्यरजनीमेकांसर्वपापैःप्रमुच्यते २५
ततोगच्छेतब्रह्मर्षेर्गौतमस्यवनंनृप
अहल्यायाह्रदेस्नात्वाव्रजेतपरमांगतिम् २६
अभिगम्यश्रियंराजन्विंदतेश्रियमुत्तमाम्
तत्रोदपानोधर्म्मज्ञत्रिषुलोकेषुविश्रुतः २७
तत्राभिषेकंकुर्वीतवाजिमेधमवाप्नुयात्
जनकस्यतुराजर्षेःकूपस्त्रिदशपूजितः २८
तत्राभिषेकंकृत्वाचविष्णुलोकमवाप्नुयात्
ततोऽविनाशनंगच्छेत्सर्वपापप्रमोचनम् २९
वाजिमेधमवाप्नोतिसोमलोकंचगच्छति
गंडकींचसमासाद्यसर्वतीर्थजलोद्भवाम् ३०
वाजपेयमवाप्नोतिसूर्यलोकंचगच्छति
ततोध्रुवस्यधर्मज्ञसमाविश्यतपोवनम् ३१
गुह्यकेषुमहाभागमोदतेनात्रसंशयः
कर्मदांतुसमासाद्यनदींसिद्धनिषेविताम् ३२
पुंडरीकमवाप्नोतिसोमलोकंचगच्छति
ततोविशालामासाद्यनदींत्रैलोक्यविश्रुताम् ३३
अग्निष्टोममवाप्नोतिस्वर्गलोकंचगच्छति
अथमाहेश्वरींधारांसमासाद्यनराधिप ३४
अश्वमेधमवाप्नोतिकुलंचैवसमुद्धरेत्
दिवौकसांपुष्करिणींसमासाद्यनरःशुचिः ३५
नदुर्गतिमवाप्नोतिवाजपेयंचविंदति
अथमाहेशपदंगच्छेद्ब्रह्मचारीसमाहितः ३६
माहेश्वरपदेस्नात्वावाजिमेधफलंलभेत्
तत्रकोटिस्तुतीर्थानांविश्रुताभरतर्षभ ३७
कूर्मरूपेणराजेंद्रअसुरेणदुरात्मना

ह्रियमाणाहृताराजन्विष्णुनाप्रभविष्णुना ३८
तत्राभिषेकंकुर्वीततीर्थकोट्यांनराधिप
पुंडरीकमवाप्नोतिविष्णुलोकंचगच्छति ३९
ततोगच्छेन्नरश्रेष्ठस्थानंनारायणस्यच
सदासन्निहितोयत्रहरिर्वसतिभारत ४०
यत्रब्रह्मादयोदेवाऋषयश्चतपोधनाः
आदित्यावसवोरुद्राजनार्दनमुपासते ४१
शालग्रामइतिख्यातोविष्णोरद्भुतकर्मणः
अभिगम्यत्रिलोकेशंवरदंविष्णुमच्युतम् ४२
अश्वमेधमवाप्नोतिविष्णुलोकंचगच्छति
तत्रोदपानोधर्मज्ञसर्वपापप्रमोचनः ४३
समुद्रास्तत्रचत्वारःकूपेसन्निहिताःसदा
तत्रोपस्पृश्यराजेंद्रनदुर्गतिमवाप्नुयात् ४४
अभिगम्यमहादेवंवरदंविष्णुमव्ययम्
विराजतेयथासोमऋणैर्मुक्तोयुधिष्ठिर ४५
जातिस्मरउपस्पृश्यशुचिःप्रयतमानसः
जातिस्मरत्वंप्राप्नोतिस्नात्वातत्रनसंशयः ४६
वटेश्वरपुरंगत्वाअर्चयित्वाचकेशवम्
ईप्सिताँल्लभतेलोकानुपवासान्नसंशयः ४७
ततस्तुवामनंगत्वासर्वपापप्रणाशनम्
अभिवाद्यहरिंदेवंनदुर्गतिमवाप्नुयात् ४८
भरतस्याश्रमंगत्वासर्वपापप्रमोचनम्
कौशिकींतत्रसेवेतमहापातकनाशिनीम् ४९
राजसूयस्ययज्ञस्यफलंप्राप्नोतिमानवः
ततोगच्छेतधर्मज्ञचंपकारण्यमुत्तमम् ५०
तत्रोष्यरजनीमेकांगोसहस्रफलंलभेत्
अथगोविंदमासाद्यतीर्थंपरमसम्मतम् ५१
उपोष्यरजनीमेकामग्निष्टोमफलंलभेत्
तत्रविश्वेश्वरंदृष्ट्वादेव्यासहमहाद्युतिम् ५२
मित्रावरुणयोर्लोकान्प्राप्नुयाद्भरतर्षभ

त्रिरात्रोपोषितस्तत्रअग्निष्टोमफलंलभेत् ५३
कन्यावसथमासाद्यनियतोनियताशनः
मनोःप्रजापतेर्लोकानाप्नोतिभरतर्षभ ५४
कन्यायांयेप्रयच्छंतिदानमरावपिभारत
तदच्चयमितिप्राहुर्ऋृषयःसंशितव्रताः ५५
निष्ठावासंसमासाद्यत्रिषुलोकेषुविश्रुतम्
अश्वमेधमवाप्नोतिविष्णुलोकंचगच्छति ५६
येतुदानंप्रयच्छंतिनिष्ठायाःसंगमेनराः
तेयांतिनरशार्दूलब्रह्मलोकमनामयम् ५७
तत्राश्रमोवसिष्ठस्यत्रिषुलोकेषुविश्रुतः
तत्राभिषेकंकुर्वाणोवाजपेयमवाप्नुयात् ५८
देवकूटंसमासाद्यदेवर्षिगणसेवितम्
अश्वमेधमवाप्नोतिकुलंचैवसमुद्धरेत् ५९
ततोगच्छेतराजेंद्रकौशिकस्यमुनेर्ह्रदम्
तत्रसिद्धिंपरांप्रापविश्वामित्रोऽथकौशिकः ६०
यत्रमासंवसेद्धीरःकौशिक्यांभरतर्षभ
अश्वमेधस्ययत्पुरायंतन्मासेनाधिगच्छति ६१
सर्वतीर्थवरंचैवयोवसेतमहाह्रदम्
नदुर्गतिमवाप्नोतिविंद्याद्बहुसुवर्णकम् ६२
कुमारमभिगम्याथवीराश्रमनिवासिनम्
अश्वमेधमवाप्नोतिशक्रलोकंसगच्छति ६३
नंदिन्यांचसमासाद्यकूपंत्रिदशसेवितम्
नरमेधस्ययत्पुरायंतत्प्राप्नोतिकुरूद्वह ६४
कालिकासंगमेस्नात्वाकौशिक्यारुणयोर्यतः
त्रिरात्रोपोषितोविद्वान्सर्वपापैःप्रमुच्यते ६५
उर्वशीतीर्थमासाद्यतथासोमाश्रमंबुधः
कुंभकर्णाश्रमेस्नात्वापूज्यतेभुविमानवः ६६
तथाकोकामुखेस्नात्वाब्रह्मचारीसमाहितः
जातिस्मरत्वंप्राप्नोतिदृष्टमेतत्पुरातनैः ६७
सकृन्नदींसमासाद्यकृतार्थोभवतिद्विजः

सर्वपापविशुद्धात्मास्वर्गलोकंचगच्छति ६८
ऋषभद्वीपमासाद्यसेव्यक्रौंचनिषूदनम्
सरस्वत्यामुपस्पृश्यविमानस्थोविराजते ६९
औद्यानकंमहाराजतीर्थंमुनिनिषेवितम्
तत्राभिषेकंकुर्वीतसर्वपापैःप्रमुच्यते ७०
ब्रह्मतीर्थंसमासाद्यपुण्यंब्रह्मर्षिसेवितम्
वाजपेयमवाप्नोतिनरोनास्त्यत्रसंशयः ७१
ततश्चंपांसमासाद्यभागीरथ्यांकृतोदकः
दंडार्पणंसमासाद्यगोसहस्रफलंलभेत् ७२
लाविढिकांततोगच्छेत्पुण्यांपुण्यनिषेविताम्
वाजपेयमवाप्नोतिविमानस्थश्चपूज्यते ७३

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेगयादितीर्थमाहात्म्यकथनं नामअष्टत्रिंशोऽध्यायः ३८

## नवत्रिंशोऽध्यायः

नारदउवाच-
अथसंध्यांसमासाद्यसविद्यांतीर्थमुत्तमम्
उपस्पृश्यनरोविद्वान्भवेन्नास्त्यत्रसंशयः १
रामस्यचप्रसादेनतीर्थराजंकृतंपुरा
तल्लौहित्यंसमासाद्यविंद्याद्बहुसुवर्णकम् २
करतोयांसमासाद्यत्रिरात्रोपोषितोनरः
अश्वमेधमवाप्नोतिशक्रलोकंचगच्छति ३
गंगायास्त्वथराजेंद्रसागरस्यचसंगमे
अश्वमेधंदशगुणंप्रवदंतिमनीषिणः ४
गंगायास्तुपरंद्वीपंप्राप्ययःस्नातिभारत
त्रिरात्रोपोषितोराजन्सर्वकाममवाप्नुयात् ५
ततोवैतरणींगत्वानदींपापप्रमोचनीम्
विरजंतीर्थमासाद्यविराजतियथाशशी ६
प्रभावेचकुलंपूत्वासर्वपापंव्यपोहति
गोसहस्रफलंलब्ध्वापुनातिस्वकुलंनरः ७

शोणस्यज्योतिरथ्याश्चसंगमेनिवसञ्छुचिः
तर्पयित्वापितॄन्देवानग्निष्टोमफलंलभेत् ८
शोणस्यनर्मदायाश्चप्रभवेकुरुपुंगव
वंशगुल्ममुपस्पृश्यवाजिमेधफलंलभेत् ९
ऋषभंतीर्थमासाद्यकोशलायांनराधिप
वाजिमेधमवाप्नोतित्रिरात्रोपोषितोनरः १०
कोशलायांसमासाद्यकालतीर्थमुपस्पृशेत्
वृषभैकादशगुणंलभतेनात्रसंशयः ११
पुष्पवत्यामुपस्पृश्यत्रिरात्रोपोषितोनरः
गोसहस्रफलंविंद्यात्कुलंचैवसमुद्धरेत् १२
ततोबदारिकातीर्थेस्नात्वाप्रयतमानसः
दीर्घायुष्यमवाप्नोतिस्वर्गलोकंचगच्छति १३
ततोमहेंद्रमासाद्यजामदग्न्यनिषेवितम्
रामतीर्थेनरःस्नात्वावाजिमेधफलंलभेत् १४
मतंगस्यतुकेदारंतत्रैवभरतर्षभ
तत्रस्नात्वानरोराजन्गोसहस्रफलंभेत् १५
श्रीपर्वतंसमासाद्यनदीतीरमुपस्पृशेत्
अश्वमेधमवाप्नोतिपरांसिद्धिंचगच्छति १६
श्रीपर्वतेमहादेवोदेव्यासहमहाद्युतिः
न्यवसत्परमप्रीतोब्रह्माचत्रिदशैर्वृतः १७
तत्रदेवह्रदेस्नात्वाशुचिःप्रयतमानसः
अश्वमेधमवाप्नोतिपरांसिद्धिंचगच्छति १८
ऋषभंपर्वतंगत्वाभांडेषुसुरपूजितम्
वाजपेयमवाप्नोतिनाकपृष्ठेचमोदते १९
ततोगच्छेतकावेरींवृतामृप्सरसांगणैः
तत्रस्नात्वानरोराजन्गोसहस्रफलंलभेत् २०
तत्रतीर्थेसमुद्रस्यकन्यातीर्थमुपस्पृशेत्
तत्रोपस्पृश्यराजेंद्रसर्वपापैःप्रमुच्यते २१
अथगोकमर्णमासाद्यत्रिषुलोकेषुविश्रुतम्
समुद्रमध्येराजेंद्रसर्वलोकनमस्कृतम् २२

यत्रब्रह्मादयोदेवामुनयश्चतपोधनाः
भूतयक्षाःपिशाचाश्चकिन्नराःसमहोरगाः २३
सिद्धचारणगंधर्वामानुषाःपन्नगास्तथा
सरितःसागराःशैलाउपासंतेउमापतिम् २४
तत्रेशानंसमभ्यर्च्यत्रिरात्रोपोषितोनरः
दशाश्वमेधमाप्नोतिगाणपत्यंचविंदति २५
उपोष्यद्वादशरात्रंकृतार्थोजायतेनरः
तस्मिन्नेवतुगायत्र्याःस्थानंत्रैलोक्यविश्रुतम् २६
त्रिरात्रमुषितस्तत्रगोसहस्रफलंलभेत्
निदर्शनंचप्रत्यक्षंब्राह्मणानांनराधिप २७
गायत्रींपठतेयस्तुयोनिसंकरजोद्विजः
गाथावागीतिकावाणीतस्यसंपद्यतेनृप २८
अब्राह्मणस्यपठतःसावित्रीतूपनश्यति
संवर्तस्यतुविप्रर्षेवापीमासाद्यदुर्ल्लभाम् २९
रूपस्यभागीभवतिसुभगश्चाभिजायते
ततोवेणांसमासाद्यतर्पयेत्पितृदेवताः ३०
मयूरहंससंयुक्तंविमानंलभतेनरः
ततोगोदावरींप्राप्यनित्यसिद्धनिषेविताम् ३१
गवामयमवाप्नोतिवायुलोकंचगच्छति
वेणायाःसंगमेस्नात्वावाजपेयफलंलभेत् ३२
वरदासंगमंस्नात्वागोसहस्रफलंलभेत्
ब्रह्मस्थूणांसमासाद्यत्रिरात्रोपोषितोनरः ३३
गोसहस्रफलंविंद्यात्स्वर्गलोकंचगच्छति
कुब्जावनंसमासाद्यब्रह्मचारीसमाहितः ३४
त्रिरात्रोपोषितःस्नात्वागोसहस्रफलंलभेत्
ततोदेवह्रदेस्नात्वाकृष्णवेणाजलोद्भवे ३५
ज्योतिर्मात्रह्रदेचैवतथाकन्याश्रमेनृप
यत्रक्रतुशतैरिष्ट्वादेवराजोदिवंगतः ३६
अग्निष्टोमशतंविंद्याद्गमनादेवतत्रतु
सर्वदेवह्रदेस्नात्वागोसहस्रफलंलभेत् ३७

जातिमात्रह्रदेस्नात्वाभवेज्ञातिस्मरोनरः
शरभंगाश्रमंगत्वाशुकस्यचमहात्मनः ३८
पितृदेवार्चनरतोगोसहस्रफलंलभेत्
दंडकाररायमासाद्यमहाराजउपस्पृशेत् ३९
शरभंगाश्रमंगत्वाशुकस्यचमहात्मनः
नदुर्गतिमवाप्नोतिपुनातिस्वकुलंनरः ४०
ततःसूर्यारकंगच्छेज्ञमदग्निनिषेवितम्
रामतीर्थंनरःस्नात्वाविंद्याद्बहुसुवर्णकम् ४१
सप्तगोदावरींस्नात्वानियतोनियताशनः
महापुरायमवाप्नोतिदेवलोकंचगच्छति ४२
ततोदेवपथंगच्छेन्नियतोनियताशनः
देवसत्रस्ययत्पुरायंतदवाप्नोतिमानवः ४३
तुंगकाररायमासाद्यब्रह्मचारीजितेंद्रियः
वेदानध्यापयत्तत्रमुनीन्सारस्वतःपुरा ४४
तत्रवेदान्प्रणष्टांस्तुमुनेरांगिरसःसुतः
उपविष्टोमहर्षीणामुत्तरीयेषुभारत ४५
ॐकारेणयथान्यायंसम्यगुच्चारितेनह
येनयत्पूर्वमभ्यस्तंतस्यतत्समुपस्थितम् ४६
ऋषयस्तत्रदेवाश्चवरुणोऽग्निप्रजापतिः
हरिर्नारायणोदेवोमहादेवस्तथैवच ४७
पितामहश्चभगवान्देवैस्सहमहाद्युतिः
भृगुंनियोजयामासयाजनार्थेमहाद्युतिम् ४८
ततःसचक्रेभगवानृषीणांविधिवत्तदा
सर्वेषांपुनराधानंदेवदृष्टेनकर्मणा ४९
आज्यभागेनवैतत्रतर्पितास्तुयथाविधि
देवास्त्रिभुवनंयाताऋषश्चयथासुखम् ५०
तदरारायंप्रविष्टस्यतुंगकंराजसत्तम
पापंविनश्यतेसद्यःस्त्रियावैपुरुषस्यवा ५१
तत्रमासंवसेद्धीरोनियतोनियताशनः
ब्रह्मलोकंव्रजेद्राजन्पुनीतेचकुलंपुनः ५२

मेधावनंसमासाद्यपितृदेवांश्चतर्पयेत्
अग्निष्टोममवाप्नोतिस्मृतिंमेधांचविंदति ५३
तत्रकालंजरंगत्वागोसहस्रफलंलभेत्
आत्मानंसाधयेत्तत्रगिरौकालंजरेनृप ५४
स्वर्गलोकेमहीयेतनरोनास्त्यत्रसंशयः
ततोगिरिवरश्रेष्ठेचित्रकूटेविशांपते ५५
मंदाकिनींसमासाद्यनदींपापविमोचनीम्
अत्राभिषेकंकुर्वाणःपितृदेवार्चनेरतः ५६
अश्वमेधमवाप्नोतिगतिंचपरमांव्रजेत्
ततोगच्छेतराजेंद्रगुहस्थानमनुत्तमम् ५७
यत्रदेवोमहासेनोनित्यंसन्निहितोनृप
पुमांस्तत्रनरःश्रेष्ठगमनादेवसिध्यति ५८
कोटितीर्थेनरःस्नात्वागोसहस्रफलंलभेत्
प्रदक्षिणमुपावृत्ययशःस्थानंव्रजेन्नरः ५९
अभिगम्यमहादेवंविराजतियथाशशी
तत्रकूपोमहाराजविश्रुतोभरतर्षभ ६०
समुद्रायत्रचत्वारोनिवसंतियुधिष्ठिर
ततोपस्पृश्यराजेंद्रकृत्वाचापिप्रदक्षिणम् ६१
नियतात्मानरःपूतोगच्छेतपरमांगतिम्
ततोगच्छेत्कुरुश्रेष्ठशृंगवेरपुरंमहत् ६२
यत्रतीर्णोमहाप्राज्ञोरामोदाशरथिःपुरा
गंगायांतुनरःस्नात्वाब्रह्मचारीजितेंद्रियः ६३
विधूतपाप्माभवतिवाजपेयंचविंदति
ततोमुंजवटंगछेत्स्थानंदेवस्यधीमतः ६४
अभिगम्यमहादेवमभ्यर्च्यचनराधिप
प्रदक्षिणमुपावृत्यगाणपत्यमवाप्नुयात् ६५
ततोगच्छेतराजेंद्रप्रयागमृषिसंस्तुतम्
यत्रब्रह्मादयोदेवादिशश्चसदिगीश्वराः ६६
लोकपालाश्चसिद्धाश्चनिरताःपितरस्तथा
सनत्कुमारप्रमुखास्तथैवचमहर्षयः ६७

तथानागाःसुपर्णाश्चसिद्धाःशुक्रधरास्तथा
सरितःसागराश्चैवगंधर्वाप्सरसस्तथा ६८
हरिश्चभगवानास्तेप्रजापतिपुरस्कृतः
तत्रत्रीरायपिकुंडानितयोर्मध्येनजाह्नवी ६९
प्रयागात्समतिक्रांतासर्वतीर्थपुरस्कृता
तपनस्यसुतातत्रत्रिषुलोकेषुविश्रुता ७०
यमुनागंगयासार्द्धंसंगतालोकभाविनी
गंगायमुनयोर्मध्येपृथिव्याजघनंस्मृतम् ७१
प्रयागंजघनस्यांतमुपस्थमृषयोविदुः
प्रयागंसुप्रतिष्ठानंकंबलाश्वतरावुभौ ७२
तीर्थंभोगवतीचैववेदीप्रोक्ताप्रजापतेः
तत्रवेदाश्चयज्ञाश्चमूर्त्तिमंतोयुधिष्ठिर ७३
प्रजापतिमुपासंतऋषयश्चमहानघाः
यजंतेक्रतुभिर्देवांस्तथाचक्रधरानृप ७४
ततःपुरायतमंनास्तित्रिषुलोकेषुभारत
प्रयागंसर्वतीर्थेभ्यःप्रभावेणाधिकंप्रभो ७५
श्रवणात्तस्यतीर्थस्यनामसंकीर्तनादपि
मूर्धकानमनाद्वापिसर्वपापैःप्रमुच्यते ७६
तत्राभिषेकंयःकुर्यात्संगमेसंशितव्रतः
पुरायंसुमहदाप्नोतिराजसूयाश्वमेधयोः ७७
एषायजनभूमिर्हिदेवानामपितत्कथा
दत्तंतत्रस्वल्पमपिमहद्भवतिभारत ७८
नदेववचनात्तातनलोकवचनादपि
मतिरुत्क्रमणीयातेप्रयागमरणंप्रति ७९
दशतीर्थसहस्राणिषष्टिकोटयस्तथापराः
येषांसान्निध्यमत्रैवकीर्त्तितंकुरुनंदन ८०
चतुर्विद्येचयत्पुरायंसत्यवादिषुचैवयत्
स्नातएवतदाप्नोतिगंगायामुनसंगमे ८१
ततोभोगवतीनामवासुकेस्तीर्थमुत्तमम्
तत्राभिषेकंयःकुर्यात्सोऽश्वमेधमवाप्नुयात् ८२

तत्रहंसप्रपतनंतीर्थंत्रैलोक्यविश्रुतम्
दशाश्वमेधिकंचैवगंगायांकुरुनंदन ८३
कुरुक्षेत्रसमागंगायत्रतत्रावगाहिता
विशेषोवैकनखलेप्रयागंपरमंमहत् ८४
यद्यकार्यशतंकृत्वाकृतंगंगावसेवनम्
सर्वंतत्तस्यगंगापोदहत्यग्निरिवेंधनम् ८५
सर्वंदहतिगंगापस्तूलराशिमिवानलः
सर्वंकृतयुगेपुण्यंत्रेतायांपुष्करंस्मृतम् ८६
द्वापरेतुकुरुक्षेत्रंगंगाकलियुगेस्मृता
पुष्करेतुतपस्तप्येद्दानंदद्यान्महालये ८७
मलयेत्वग्निमारोहेद्भृगुतुंगेत्वनाशनम्
पुष्करेतुकुरुक्षेत्रेगंगापोमध्यगेषुच ८८
सद्यस्तारयतेजंतुःसप्तसप्तावरांस्तथा
पुनातिकीर्त्तितापापंदृष्ट्वापुण्यंप्रयच्छति ८९
अवगाढाचपीत्वाचपुनात्यासप्तमंकुलम्
यावदस्थिमनुष्यस्यगंगायाःस्पृशतेजलम् ९०
तावत्सपुरुषोराजन्स्वर्गलोकेमहीयते
यथापुण्यानितीर्थानिपुण्यान्यायतनानिच ९१
उपास्यपुण्यंलब्ध्वाचभवतिपरलोकभाक्
नगंगासदृशंतीर्थंनदेवःकेशवात्परः ९२
ब्राह्मणेभ्यःपरंनास्तिएवमाहपितामहः
यत्रगंगामहाराजसदेशस्तत्रयोजनम् ९३
सिद्धक्षेत्रंचविज्ञेयंगंगातीरसमाश्रितम्
इदंसत्यंद्विजातीनांसाधूनांमानसेषुच ९४
मुक्तिंचैवजपेत्कर्णेशिष्टस्यानुगतस्यच
इदंधर्म्यमिदंमेध्यमिदंस्वर्ग्यमिदंसुखम् ९५
इदंपुण्यतमंरम्यंपावनंधर्ममुत्तमम्
महीशीर्षमिदंगुह्यंसर्वपापप्रमोचनम् ९६
अधीत्यद्विजमध्येचनिर्मलत्वमवाप्नुयात्
श्रीमत्स्वर्ग्यंमहापुण्यंसपत्नशमनंशिवम् ९७

मेधाजननमग्र्यंवैतीर्थवंशानुकीर्त्तनम्
अपुत्रोलभतेपुत्रमधनोधनमाप्नुयात् ९८
महींविजयतेराजावैश्योधनमवाप्नुयात्
शूद्रोयातीप्सितान्कामान्ब्राह्मणःपारगःपठन् ९९
यश्चेदंशृणुयान्नित्यंतीर्थपुगयंसदाशुचि
जातिस्मरत्वमाप्नोतिनाकपृष्ठेचमोदते १००
गम्यान्यपिचतीर्थानिकीर्तितान्यगमान्यपि
मनसाप्यभिगच्छेतसर्वतीर्थमनीषया १०१
एतानिवसुभिःसाध्यैरादित्यैर्मरुदश्विभिः
ऋषिभिर्देवकल्पैश्चकृतानिसुकृतैषिभिः १०२
एवंत्वमपिकौरव्यविधिनानेनसुव्रत
व्रजतीर्थानिनियतःपुगयंपुगयेनवर्द्धते १०३
भावितैःकरणैःपूर्वमास्तिक्याछ्रुतिदर्शनात्
प्राप्यंतेतानितीर्थानिसद्भिःशिष्टानुदर्शिभिः १०४
नाकृतोनाकृतात्माचनाशुचिर्नचतस्करः
स्नातितीर्थेषुकौरव्यनचवक्रमतिर्नरः १०५
त्वयातुसम्यग्वृत्तेननित्यंधर्मार्थदर्शिना
पितरस्तर्पितास्तातसर्वेचप्रपितामहाः
पितामहपुरोगाश्चदेवाःसर्षिगणास्तथा १०६
वसिष्ठउवाच-
त्वंचधर्मेणधर्मज्ञनित्यमेवाभितोषिताः
दिलीपकीर्तिमहतींप्राप्स्यसेभुविशाश्वतीम् १०७
नारदउवाच-
एवमुक्त्वाभ्यनुज्ञाप्यवसिष्ठोभगवानृषिः
प्रीतःप्रीतेनमनसातत्रैवांतरधीयत १०८
दिलीपःकुरुशार्दूलशास्त्रतत्त्वार्थदर्शनात्
वसिष्ठवचनाच्चैवपृथिवीमनुचक्रमे १०९
एवमेषामहाभागप्रतिष्ठानेप्रतिष्ठिता
तीर्थयात्रामहापुगयासर्वपापप्रमोचनी ११०
अनेनविधिनायस्तुपृथिवींपर्यटिष्यति

अश्वमेधशतंसाग्रंफलंप्रेत्यैषभोच्यते ११९
ततश्चाष्टगुणंपार्थप्राप्स्यसेधर्ममुत्तमम्
दिलीपःपार्थनृपतिर्यथापूर्वमवाप्तवान् ११२
नेताचत्वमृषीन्यस्मात्तस्मात्तेष्टगुणंफलम्
रक्षोगणविकीर्णानितीर्थान्येतानिभारत ११३
नगतिर्विद्यतेऽन्यस्यत्वामृतेकुरुनंदन
इदंदेवर्षिचरितंसर्वतीर्थानुसंश्रितम् ११४
यःपठेत्कल्यमुत्थायसर्वपापैःप्रमुच्यते
ऋषिमुख्याःसदायत्रवाल्मीकिस्त्वथकश्यपः ११५
आत्रेयस्त्वथकौंडिन्योविश्वामित्रोऽथगौतमः
असितोदेवलश्चैवमार्कंडेयोऽथगालवः ११६
भरद्वाजस्यशिष्यश्चमुनिरुद्दालकस्तथा
शौनकःसहपुत्रेणव्यासश्चतपतांवरः ११७
दुर्वासाश्चमुनिश्रेष्ठोजाबालिश्चमहातपाः
एतेऋषिवराःसर्वेत्वत्प्रतीक्ष्यास्तपोधनाः ११८
एभिःसहमहाभागतीर्थान्येतान्यनुव्रज
प्राप्स्यसेमहतींकीर्तिंयथाराजामहाभिषः ११९
यथाययातिर्धर्मात्मायथाराजापुरूरवाः
तथात्वंकुरुशार्दूलस्वेनधर्मेणशोभसे १२०
यथाभगीरथोराजायथारामश्चविश्रुतः
यथावैवृत्रहासर्वान्सपत्नानदहत् पुरा १२१
त्रैलोक्यंपालयामासदेवराट्विगतज्वरः
तथाशत्रुक्षयंकृत्वात्वंप्रजाःपालयिष्यसि १२२
स्वधर्मेणार्जितामुर्वींप्राप्यराजीवलोचन
ख्यातिंयास्यसिवीर्येणकार्त्तवीर्यार्जुनोयथा १२३
सूतउवाच–
एवमाभाष्यराजानंनारदोभगवानृषिः
अनुज्ञाप्यमहाराजंतत्रैवांतरधीयत १२४
युधिष्ठिरोऽपिधर्मात्माऋषिभिःसहसुव्रतः
जगामाखिलतीर्थानिसादरःपृथिवीपतिः १२५

मयोक्तामृषयः सर्वेतीर्थयात्राश्रयांकथाम्
यःपठेच्छृणुयाद्वापिसमुक्तःसर्वपातकैः १२६
मयोक्तमखिलंतत्त्वंकिंभूयःश्रोतुमिच्छथ
ऋृषीणांपुरायकीर्तीनांनावक्तव्यंममास्तिवै १२७
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेनानाविधतीर्थकथनं
नामनवत्रिंशोऽध्यायः ३९

चत्वारिंशोऽध्यायः

सूतउवाच-
एवमुक्तानितीर्थानिविष्णुदेहानिसुव्रताः
एषामन्यतमासंगान्मुक्तोभवतिमानवः १
तीर्थानुश्रवणंधन्यंधन्यंतीर्थनिषेवणम्
पापराशिनिपातायनान्योपायःकलौयुगे २
वासंकुर्यामहंतीर्थेतीर्थस्पर्शमहंतथा
एवंयोऽनुदिनंब्रूतेसयातिपरमंमहत् ३
पापानितस्यनश्यंतितीर्थालापनमात्रतः
तीर्थानिखलुधन्यानिधन्यसेव्यानिसुव्रताः ४
तीर्थानांसेवनादेवसेवितोभवतिप्रभुः
नारायणोजगत्कर्तानास्तितीर्थात्परंपदम् ५
ब्राह्मणस्तुलसीचैवअश्वत्थस्तीर्थसंचयः
विष्णुश्चपरमेशानःसेव्यएवसदानृभिः ६
ब्राह्मणानांविशेषेणसेवनंमुनिपुंगवाः
सर्वतीर्थावगाहादेरधिकंविदुरग्रजाः ७
तस्माद्द्विजपदंसाक्षात्सर्वतीर्थमयंशुभम्
भजेतानुदिनंविद्वांस्तत्रतीर्थाधिकंभवेत् ८
अश्वत्थस्यतुलस्याश्चगवांकुर्यात्प्रदक्षिणम्
सर्वतीर्थफलंप्राप्यविष्णुलोकेमहीयते ९
तस्माद्दुष्कृतकर्माणिनाशयेत्तीर्थसेवनात्
अन्यथानरकंयातिकर्म्मभोगाद्धिशाम्यति १०
पापिनांनरकेवासःसुकृतीस्वर्गमश्नुते

तस्मात्पुरायंनिषेवेततीर्थंखलुविचक्षणः ११
ऋषयऊचुः-
श्रुतानिकिलतीर्थानिसमाहात्म्यानिसुव्रत
इदानींश्रोतुमिच्छामःप्रयागस्यविशेषकम् १२
प्रयागंतुपुराप्रोक्तंसंक्षेपात्सूतयत्त्वया
विशेषाच्छ्रोतुमिच्छामःसूतनःकथ्यतामिति १३
सूतउवाच-
साधुपृष्टंमहाभागाःप्रयागंप्रतिसुव्रताः
हंताहंतत्प्रवक्ष्यामिप्रयागस्योपवर्णनम् १४
मार्कंडेयेनकथितंयत्पुरापांडुसूनवे
भारतेतुयदावृत्तेप्राप्तराज्येपृथासुते १५
एतस्मिन्नंतरेराजाकुंतीपुत्रोयुधिष्ठिरः
भ्रातृशोकेनसंतप्तःचिंतयंस्तुपुनःपुनः १६
आसीद्दुर्योधनोराजाएकादशचमूपतिः
अस्मान्संतप्यबहुशःसर्वेतेनिधनंगताः १७
वासुदेवंसमाश्रित्यपंचशेषास्तुपांडवाः
कथंद्रोणंचभीष्मंचकर्णंचैवमहाबलम् १८
दुर्योधनंचराजानंभ्रातृपुत्रसमन्वितम्
राजानोनिहताःसर्वेयेचान्येशूरमानिनः १९
विनाराज्येनकर्तव्यंकिंभोगैर्जीवितेनवा
धिक्कष्टमितिसंचिंत्यराजाविह्वलतांगतः २०
निश्चेष्टोऽथनिरुत्साहःकिंचित्तिष्ठत्यधोमुखः
लब्धसंज्ञोयदाराजाचिंतयानःपुनःपुनः २१
कंचरेविधिनायोगंनियमंतीर्थमेववा
येनाहंशीघ्रमामुच्येमहापातककिल्बिषात् २२
यत्रस्नात्वानरोयातिविष्णुलोकमनुत्तमम्
कथंपृच्छामिवैकृष्णंयेनेदंकारितंमहत् २३
धृतराष्ट्रंकथंपृच्छेयस्यपुत्रशतंहतम्
व्यासंकथमहंपृच्छेयस्यगोत्रक्षयःकृतः २४
एवंवैक्लव्यमापन्नोधर्मपुत्रोयुधिष्ठिरः

रुदंतःपांडवाःसर्वेभ्रातृशोकपरिप्लुताः २५
येचतत्रमहात्मानःसमेताःपांडवाश्रिताः
कुंतीचद्रौपदीचैवयेचतत्रसमागताः २६
भूमौनिपतिताःसर्वेरोदमानाःसमंततः
वाराणस्यांतुमार्कंडस्तेनज्ञातोयुधिष्ठरः २७
यथाविक्लवमापन्नोरोदमानःसुदुःखितः
अचिरेणैवकालेनमार्कंडस्तुमहातपाः २८
हस्तिनापुरसंप्राप्तोराजद्वारेसतिष्ठति
द्वारपालोऽपितंदृष्ट्वाराज्ञःकथितवान्द्रुतम् २९
त्वांद्रष्टुकामोमार्कंडोद्वारेतिष्ठत्यसौमुनिः
त्वरितोधर्मपुत्रस्तुद्वारमेत्याहतत्परः ३०
युधिष्ठिरउवाच-
स्वागतंतेमहाप्राज्ञस्वागतंतेमहामुने
अद्यमेसफलंजन्मअद्यमेपावितंकुलम् ३१
अद्यमेपितरस्तृप्तास्त्वयिदृष्टेमहामुने
सिंहासनउपस्थाप्यपादशौचार्चनादिभिः ३२
युधिष्ठिरोमहात्मावैपूजयामासतंमुनिम्
ततस्तमूचेमार्कराडःपूजितोऽहत्वयाविभो ३३
आख्याहित्वरितोराजन्किमर्थंत्वरितंत्वया
केनवाविक्लवीभूतःकथयस्वममाग्रतः ३४
युधिष्ठिरउवाच-
अस्माकंचैवयद्वृत्तंराज्यस्यार्थेमहामुने
एतत्सर्वंविदित्वातुभगवानिहचागतः ३५
मार्कंडेयउवाच-
शृणुराजन्महाबाहोयत्रधर्मोव्यवस्थितः
नैवदृष्टंरणेपापंयुध्यमानस्यधीमतः ३६
किंपुनाराजधर्मेणक्षत्रियस्यविशेषतः
तदेवंहृदयेकृत्वातस्मात्पापंनचिंतयेत् ३७
ततोयुधिष्ठिरोराजाप्रणम्यशिरसामुनिम्
पृच्छामित्वांमुनिश्रेष्ठसदात्रैकाल्यदर्शनम्

कथयस्वसमासेनमुच्येऽहयेनकिल्बिषात् ३८
मार्कंडेयउवाच-
शृणुराजन्महाभागयन्मांपृच्छसिभारत
एवंसांख्यंचयोगंचतीर्थंचैवयुधिष्ठिर ३९
किंपुनर्ब्राह्मणैःपुण्यैःकीर्तितंवैपुराविभो
प्रयागगमनंश्रेष्ठंनराणांपुण्यकर्मणाम् ४०
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेचत्वारिंशोऽध्यायः ४०

## एकचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
भगवञ्छ्रोतुमिच्छामिपुराकल्पेयथास्थितम्
कथंप्रयागगमनंनराणांतत्रकीदृशम् १
मृतानांकागतिस्तत्रस्नातानांचैवकिंफलम्
येवसंतिप्रयागेतुब्रूहितेषांचकिंफलम्
एतन्मेसर्वमाख्याहिपरंकौतूहलंहिमे २
मार्कंडेयउवाच-
कथयिष्यामितेवत्सनाथेष्टंयच्चयत्फलम्
पुराऋषीणांविप्राणांकथ्यमानंमयाश्रुतम् ३
आप्रयागात्प्रतिष्ठानाद्धर्मकीवासुकीह्रदात्
कंबलाश्वतरौनागौनागाश्चबहुमूलिकाः ४
एतत्प्रजापतिक्षेत्रंत्रिषुलोकेषुविश्रुतम्
अत्रस्नात्वादिवंयांतियेमृतास्तेऽपुनर्भवाः ५
तत्रब्रह्मादयोदेवारक्षांकुर्वंतिसंगताः
अन्येचबहवस्तीर्थाःसर्वपापप्रणाशनाः ६
नशक्याःकथितुंराजन्बहुवर्षशतैरपि
संक्षेपेणप्रवक्ष्यामिप्रयागस्यचकीर्त्तनम् ७
षष्टिर्धनुःसहस्राणिपरिरक्षंतिजाह्नवीम्
यमुनांरक्षतिसदासवितासप्तवाहनः ८
प्रयागंतुविशेषेणस्वयंरक्षतिवासवः
मंडलंरक्षतिहरिर्देवैःसहसुसंमतम् ९

तंवटंरक्षतेनित्यंशूलपाणिर्महेश्वरः
स्थानंरक्षतिवैदेवःसर्वपापहरंशुभम् १०
अधर्मेणवृतोलोकेनैवगच्छतितत्पदम्
स्वल्पमल्पतरंपापंयदातस्यनराधिप ११
प्रयागस्मरमाणस्यसर्वमायातिसंक्षयम्
दर्शनात्तस्यतीर्थस्यनामसंकीर्तनादपि १२
मृत्तिकालभनाद्वापिनरःपापाद्विमुच्यते
पंचकुंडानिराजेंद्रयेषांमध्येतुजाह्नवी १३
प्रयागेतुप्रविष्टस्यपापंक्षरतितत्क्षणात्
योजनानांसहस्रेषुगंगांस्मरतियोनरः १४
अपिदुष्कृतकर्मासौलभतेपरमांगतिम्
कीर्तनान्मुच्यतेपापैर्दृष्ट्वाभद्राणिपश्यति १५
अवगाह्यचपीत्वाचपुनात्यासप्तमंकुलम्
सत्यवादीजितक्रोधोअहिंसांपरमास्थितः १६
धर्मानुसारीतत्त्वज्ञोगोब्राह्मणहितेरतः
गंगायमुनयोर्मध्येस्नातोमुच्येतकिल्बिषात् १७
मनसाचिंतितान्कामान्सम्यक्प्राप्नोतिपुष्कलान्
ततोगत्त्वाप्रयागंतुसर्वदेवाभिरक्षितम् १८
ब्रह्मचारीवसेन्मासंपितृदेवांश्चतर्पयेत्
ईप्सिताँल्लभतेकामान्यत्रतत्राभिजायते १९
तपनस्यसुतादेवीत्रिषुलोकेषुविश्रुता
समागतामहाभागायमुनायत्रनिम्नगाः २०
तत्रसन्निहितोनित्यंसाक्षाद्देवोमहेश्वरः
दुष्प्रापंमानुषैःपुण्यंप्रयागंतुयुधिष्ठिर २१
देवदानवगंधर्वाऋषयःसिद्धचारणाः
तत्रोपस्पृश्यराजेंद्रस्वर्गलोकेमहीयते २२
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेएकचत्वारिंशोऽध्यायः ४२

## द्विचत्वारिंशोऽध्यायः

मार्कंडेयउवाच-

शृणुराजन्प्रयागस्यमाहात्म्यंपुनरेवतु
यंगत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः १
आर्तानांचदरिद्राणांनिश्चितव्यवसायिनाम्
स्थानंमुक्त्वाप्रयागंतुनान्यंतुकदाचन २
गंगायमुनमासाद्ययस्तुप्राणान्परित्यजेत्
दीप्तकांचनवर्णाभेविमानेसूर्यवर्चसि ३
गंधर्वाप्सरसांमध्येस्वर्गेमोदतिमानवः
ईप्सितांल्लभतेकामान्वदंतिऋषिपुंगवाः ४
सर्वरत्नमयैर्दिव्यैर्नानाध्वजसमाकुलैः
वरांगनासमाकीर्णैर्मोदतेशुभलक्षणैः ५
गीतवादित्रनिर्घोषैःप्रसुप्तःप्रतिबुध्यते
यावन्नस्मरतेजन्मतावत्स्वर्गेमहीयते ६
तत्रस्वर्गात्परिभ्रष्टःक्षीणकर्म्मादिवश्च्युतः
हिरण्यरत्नसंपूर्णेसमृद्धेजायतेकुले ७
तदेवस्मरतेतीर्थंस्मरणात्तत्रगच्छति
देशस्थोयदिवारण्येविदेशेयदिवागृहे ८
प्रयागंस्मरमात्रोपियस्तुप्राणान्परित्यजेत्
सब्रह्मलोकमाप्नोतिवदंतिऋषिपुंगवाः ९
सर्वकामफलावृत्तामहीयत्रहिरण्मयी
ऋषयोमुनयःसिद्धायत्रलोकेप्रगच्छति १०
स्त्रीसहस्राकुलेरम्येमंदाकिन्यास्तटेशुभे
मोदतेऋषिभिःसार्द्धंस्वकृतेनेहकर्मणा ११
सिद्धचारणगन्धर्वैःपूज्यतेदिविदैवतैः
ततःस्वर्गात्परिभ्रष्टोजंबुद्वीपपतिर्भवेत् १२
ततःशुभानिकर्माणिचिंतयानःपुनःपुनः
गुणवान्वित्तसंपन्नोभवतीहनसंशयः १३
कर्मणामनसावाचासत्यधर्मप्रतिष्ठितः
गंगायमुनयोर्मध्येयस्तुदानंप्रयच्छति १४
सुवर्णंमणिमुक्तांवायदिधान्यंप्रतिग्रहम्
स्वकार्येपितृकार्येवादेवताभ्यर्चनेऽपिवा १५

निष्फलंतस्यतत्तीर्थंयावत्तत्फलमश्नुते
एवंतीर्थेनगृह्णीयात् पुरायेष्वायतनेषुच १६
निमित्तेषुचसर्वेषुत्र्प्रमत्तोद्विजोभवेत्
कपिलांपाटलावर्णांप्रयागेयःप्रयच्छति १७
स्वर्णशृंगींरौप्यखुरांचैलकंठींपयस्विनीम्
प्रयागेश्रोत्रियंसाधुंग्राहयित्वायथाविधि १८
शुक्लांबरधरंशांतंधर्मज्ञंवेदपारगम्
सागौस्तस्मैचदातव्यागंगायमुनसंगमे १९
वासांसिचमहार्हाणिरत्नानिविविधानिच
यावद्रोमाणितस्यागोःसंतिगात्रेषुसत्तम २०
तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते
यत्रासौलभतेजन्मसागौस्तत्राभिजायते २१
नचपश्यत्यसौघोरंनरकंतेनकर्मणा
उत्तरान्सकुरून्प्राप्यमोदतेकालमक्षयम् २२
गवांशतसहस्रेभ्योदद्यादेकांपयस्विनीम्
पुत्रान्दारान्तथाभृत्यान्गौरेकाप्रतितारयेत् २३
तस्मात्सर्वेषुदानेषुगोदानंतुविशिष्यते
दुर्गमेविषमेघोरेमहापातकसंभवे
गौरेवरक्षांकुरुतेतस्माद्देयाद्विजातये २४
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेएकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
यथाप्रयागस्यमुनेमाहात्म्यंकथितंत्वया
तथातथाप्रमुच्येऽहसर्वपापैर्नसंशयः १
भगवन्केनविधिनागंतव्यंधर्मनिश्चयैः
प्रयागेयोविधिःप्रोक्तःतन्मेब्रूहिमहामुने २
मार्कंडेयउवाच-
कथयिष्यामितेवत्सतीर्थयात्राविधिक्रमम्
योगच्छेतकुरुश्रेष्ठप्रयागंदेवसंयुतम् ३

बलीवर्दसमारूढःशृणुतस्यापियत्फलम्
वसतेनरकेघोरेगवांक्रोधेसुदारुणे ४
सलिलंचनगृह्णंतिपितरस्तस्यदेहिनः
यस्तुपुत्रांस्तथाबालान्स्नापयेत्पाययेत्तथा ५
यथात्मनस्तथासर्वान्दानंविप्रेषुदापयेत्
एश्वर्यलोभान्मोहाद्वागच्छेद्यानेनयोनरः ६
निष्फलंतस्यतत्तीर्थंतस्माद्यानंपरित्यजेत्
गंगायमुनयोर्मध्येयस्तुकन्यांप्रयच्छति ७
आर्षेणतुविधानेनयथाविभवसंभवम्
नपश्यतियमंघोरंनरकंतेनकर्मणा ८
उत्तरान्सकुरून्गत्वामोदतेकालमव्ययम्
पुत्रांस्तुदारांल्लभतेधार्मिकान्नयसंयुतान् ९
तत्रदानंप्रदातव्यंयथाविभवसंभवम्
तेनतीर्थफलैनैववर्द्धतेनात्रसंशयः १०
स्वर्गेतिष्ठतिराजेंद्रयावदाभूतसंप्लवम्
वटमूलंसमाश्रित्ययस्तुप्राणान्परित्यजेत् ११
सर्वलोकानतिक्रम्यरुद्रलोकंचगच्छति
तत्रतेद्वादशादित्यास्तपंतेरुद्रमाश्रिताः १२
निर्दहंतिजगत्सर्वंवटमूलंनदह्यते
नष्टचंद्रार्कपवनंयदाचैकार्णवंजगत् १३
स्वपित्यत्रैववैविष्णुर्जायमानःपुनःपुनः
देवदानवगंधर्वऋषयःसिद्धचारणाः १४
सदासेवंतितत्तीर्थंगंगायमुनसंगमे
तत्रगच्छंतिराजेंद्रप्रयागेसंयुतंचयत् १५
तत्रब्रह्मादयोदेवादिशश्चैवदिगीश्वराः
लोकपालाश्चसाध्याश्चपितरोलोकसंमताः १६
सनत्कुमारप्रमुखास्तथैवपरमर्षयः
अंगिरप्रमुखाश्चैवतथाब्रह्मर्षयःपरे १७
तथानागाश्चसिद्धाश्चसुपर्णाःखेचराश्चये
सरितःसागराःशैलानागाविद्याधरास्तथा १८

हरिश्चभगवानास्तेप्रजापतिपुरस्कृतः
गंगायमुनयोर्मध्येपृथिव्याजघनंस्मृतम् १९
प्रयागंराजशार्दूलत्रिषुलोकेषुविश्रुतम्
ततःपुरायतमंनास्तित्रिषुलोकेषुभारत २०
श्रवणात्तस्यतीर्थस्यनामसंकीर्तनादपि
मृत्तिकालंभनाद्वापिनरःपापात्प्रमुच्यते २१
तत्राभिषेकंयःकुर्य्यात्संगमेसंशितव्रतः
तुल्यंफलमवाप्नोतिराजसूयाश्वमेधयोः २२
नवेदवचनात्तातनलोकवचनादपि
मतिरुत्क्रमणीयातेप्रयागगमनंप्रति २३
दशतीर्थसहस्राणिषष्टिकोटयस्तथापराः
येषांसान्निध्यमत्रैवकीर्तनात्कुरुनंदन २४
यागतिर्योगयुक्तस्यसदुत्थस्यमनीषिणः
सागतिस्त्यजतःप्राणान्गंगायमुनसंगमे २५
तेनजीवंतिलोकेऽस्मिन्यत्रयत्रयुधिष्ठिर
येप्रयागंनसंप्राप्तास्त्रिषुलोकेषुविश्रुतम् २६
एवंदृष्ट्वातुतत्तीर्थंप्रयागंपरमंपदम्
मुच्यतेसर्वपापेभ्यःशशांकइवराहुणा २७
कंबलाश्वतरौनागौयमुनादक्षिणेतटे
तत्रस्नात्वाचपीत्वाचमुच्यतेसर्वपातकैः २८
तत्रगत्वातुतत्स्थानंमहादेवस्यधीमतः
नरस्तारयतेसर्वान्दशातीतान्दशापरान् २९
कृत्वाभिषेकंतुनरःसोऽश्वमेधफलंलभेत्
स्वर्गलोकमवाप्नोतियावदाभूतसंप्लवम् ३०
पूर्वपार्श्वेतुगंगायांत्रिषुलोकेषुभारत
कूपंचैवतुसामुद्रंप्रतिष्ठानंतुविश्रुतम् ३१
ब्रह्मचारीजितक्रोधस्त्रिरात्रंयदितिष्ठति
सर्वपापविशुद्धात्मासोऽश्वमेधफलंलभेत् ३२
उत्तरेणप्रतिष्ठानाद्भागीरथ्यास्तुपूर्वतः
हंसप्रपतनंनामतीर्थंत्रैलोक्यविश्रुतम् ३३

अश्वमेधफलंतस्मिन्स्नातमात्रस्यभारत
यावच्चन्द्रश्चसूर्यश्चतावत्स्वर्गेमहीयते ३४
उर्वशीपुलिनेरम्येविपुलेहंसपांडुरे
सलिलैस्तर्प्पयेद्यस्तुपितृंस्तत्रविमत्सरः ३५
षष्टिवर्षसहस्राणिषष्टिवर्षशतानिच
सेवतेपितृभिःसार्द्धंस्वर्गलोकंनराधिप ३६
पूज्यतेसततंतत्रऋषिगंधर्वकिन्नरैः
ततःस्वर्गपरिभ्रष्टःक्षीणकर्म्मादिवश्च्युतः ३७
उर्वशीसदृशीनांतुकन्यानांलभतेशतम्
गवांशतसहस्राणांभोक्ताभवतिभूमिप ३८
कांचीनूपुरशब्देनसुप्तोऽसौप्रतिबुध्यते
भुक्त्वातुविपुलान्भोगांस्तत्तीर्थंलभतेपुनः ३९
कुशासनधरोनित्यंनियतःसंयतेंद्रियः
एककालंतुभुंजानोमासंभोगपतिर्भवेत् ४०
सुवर्णालंकृतानांतुनारीणांलभतेशतम्
पृथिव्यामासमुद्रायांमहाभोगपतिर्भवेत् ४१
दशग्रामसहस्राणांभोक्ताभवतिभूमिपः
धनधान्यसमायुक्तोदाताभवतिनित्यशः ४२
सभुक्त्वाविपुलान्भोगांस्तत्तीर्थंस्मरतेपुनः
अथतस्मिन्वटेरम्येब्रह्मचारीजितेंद्रियः ४३
उपोष्ययोगयुक्तश्चब्रह्मज्ञानमवाप्नुयात्
कोटितीर्थंसमासाद्ययस्तुप्राणान्परित्यजेत् ४४
कोटिवर्षसहस्राणिस्वर्गलोकेमहीयते
ततःस्वर्गात्परिभ्रष्टःक्षीणकर्म्मादिवश्च्युतः ४५
सुवर्णमणिमुक्ताढ्येकुलेभवतिरूपवान्
ततोभोगवतींगत्वावासुकेरुत्तरेणतु ४६
दशाश्वमेधकंतत्रतीर्थंतत्रापरंभवेत्
कृत्वाभिषेकंतुनरःसोऽश्वमेधफलंलभेत् ४७
धनाढ्योरूपवान्दक्षोदाताभवतिधार्मिकः
चतुर्वेदेषुयत्पुण्यंसत्यवादिषुयत्फलम् ४८

अहिंसायांतुयोधर्म्मोगमनादेवतद्भवेत्
कुरुक्षेत्रसमागंगायत्रतत्रावगाह्यते ४९
कुरुक्षेत्राद्दशगुणायत्रसिंध्वासमागता
यत्रगंगामहाभागाबहुतीर्थतपोधना ५०
सिद्धक्षेत्रंहितज्ज्ञेयंनात्रकार्याविचारणा
क्षितौतारयतेमर्त्यान्नागांस्तारयतेऽप्यधः ५१
दिवितारयतेदेवांस्तेनसात्रिपथास्मृता
यावदस्थीनिगंगायांतिष्ठंतितस्यदेहिनः ५२
तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते
तीर्थानांतुपरंतीर्थंनदीनामुत्तमानदी ५३
मोक्षदासर्वभूतानांमहापातकिनामपि
सर्वत्रसुलभागंगात्रिषुस्थानेषुदुर्लभा ५४
गंगाद्वारेप्रयागेचगंगासागरसंगमे
तत्रस्नात्वादिवंयांतियेमृतास्तेऽपुनर्भवाः ५५
सर्वेषांचैवभूतानांपापोपहतचेतसाम्
गतिमन्वेषमाणानांनास्तिगंगासमागतिः ५६
पवित्राणांपवित्रंयामंगलानांचमंगलम्
महेश्वरशिरोभ्रष्टासर्वपापहराशुभा ५७

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेप्रयागमाहात्म्ये
त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

मार्कंडेयउवाच-
शृणुराजन्प्रयागस्यमाहात्म्यंपुनरेवतु
यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः १
मानसंनामतत्तीर्थंगंगायामुत्तरेतटे
त्रिरात्रोपोषितोभूत्वासर्वान्कामानवाप्नुयात् २
गोभूहिरण्यदानेनयत्फलंप्राप्नुयान्नरः
एतत्फलमवाप्नोतितत्तीर्थंस्मरतेपुनः ३
अकामोवासकामोवागंगायांयोविपद्यते

मृतस्तुभवतिस्वर्गेनरकंनचपश्यति ४
अप्सरोगणसंगीतैःसुप्तोऽसौप्रतिबुध्यते
हंससारसयुक्तेनविमानेनसगच्छति ५
बहुवर्षाणिराजेन्द्रषट्सहस्राणिभुंजते
ततःस्वर्गात्परिभ्रष्टःक्षीणकर्मादिवश्च्युतः ६
सुवर्णमणिमुक्ताढ्येजायतेसमहाकुले
षष्टितीर्थसहस्राणिषष्टितीर्थशतानिच ७
माघेमासिगमिष्यंतिगंगायमुनसंगमे
गवांशतसहस्रस्यसम्यग्दत्तस्ययत्फलम् ८
प्रयागेमाघमासेतुत्र्यहंस्नानस्यतत्फलम्
गंगायमुनयोर्मध्येपंचाग्निंयस्तुसाधयेत् ९
अहीनांगोह्यरोगश्चपंचेन्द्रियसमन्वितः
यावंतिरोमकूपाणितस्यगात्रस्यदेहिनः १०
तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते
ततःस्वर्गात्परिभ्रष्टोजंबूद्वीपपतिर्भवेत् ११
सभुक्त्वाविपुलान्भोगांस्तत्तीर्थंभजतेनरः
जलप्रवेशंयःकुर्यात्संगमेलोकविश्रुते १२
राहुग्रस्तोयथासोमोविमुक्तःसर्वपातकैः
सोमलोकमवाप्नोतिसोमेनसहमोदते १३
षष्टिवर्षसहस्राणिषष्टिवर्षशतानिच
स्वर्गलोकमवाप्नोतिऋषिगंधर्वसेवितः १४
परिभ्रष्टस्तुराजेंद्रसमृद्धेजायतेकुले
अधःशिरास्तुयोज्वालामूर्ध्वपादःपिबेन्नरः १५
शतंवर्षसहस्राणिस्वर्गलोकेमहीयते
परिभ्रष्टस्तुराजेंद्रअग्निहोत्रीभवेन्नरः १६
भुक्त्वातुविपुलान्भोगांस्तत्तीर्थंभजतेनरः
यस्तुदेहंविकर्तित्वाशकुनिभ्यःप्रयच्छति १७
विहंगैरुपभुक्तस्यशृणुतस्यापियत्फलम्
शतंवर्षसहस्राणांसोमलोकेमहीयते १८
ततःस्वर्गात्परिभ्रष्टोराजाभवतिधार्मिकः

गुणवान्रूपसंपन्नोविद्वान्सुप्रियदेहवान् १९
भुक्त्वातुविपुलान्भोगांस्तत्तीर्थंभजतेपुनः
यामुनेचोत्तरेकूलेप्रयागस्यतुदक्षिणे २०
ऋणप्रमोचनंनामतीर्थंतत्परमंस्मृतम्
एकरात्रोषितोभूत्वाऋणैःसर्वैःप्रमुच्यते २१
सूर्यलोकमवाप्नोतिअनृणीचसदाभवेत् २२
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेप्रयागमाहात्म्ये
चतुश्चत्वारिंशोऽध्यायः ४४

## पंचचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
एतच्छ्रुत्वाप्रयागस्ययत्त्वयाकीर्तनंकृतम्
विशुद्धमेतद्धृदयंप्रयागगस्यचकीर्तनात्
अनाशकफलंब्रूहिभगवंस्तत्रकीदृशम् १
मार्कंडेयउवाच-
शृणुराजन्प्रयागेतुअनाशकफलंविभो
प्राप्नोतिपुरुषोधीमान्श्रद्दधानश्चयादृशम् २
अहीनांगोविरोगश्चपंचेंद्रियसमन्वितः
अश्वमेधफलंतस्यगच्छतस्तुपदेपदे ३
कुलानितारयेद्राजन्दशपूर्वान्दशापरान्
मुच्यतेसर्वपापेभ्योगच्छेतपरमंपदम् ४
युधिष्ठिरउवाच-
महाभागोसिधर्मज्ञदानंवदसिमेप्रभो
अल्पेनैवप्रधानेनबहून्धर्मानवाप्नुयात् ५
अश्वमेधस्तुबहुभिःसुकृतैःप्राप्यतेइह
एतन्मेसंशयंब्रूहिपरंकौतूहलंहिमे ६
मार्कंडेयउवाच-
शृणुराजन्महावीरयदुक्तंपद्मयोनिना
ऋषीणांसन्निधौपूर्वंकथ्यमानंमयाश्रुतम् ७
पंचयोजनविस्तीर्णंप्रयागस्यतुमंडलम्

प्रविशंस्तस्यतद्भूमावश्वमेधंपदेपदे ८
व्यतीतान्पुरुषान्सप्तभविष्यांश्चचतुर्दश
नरस्तारयतेसर्वान्यस्तुप्राणान्परित्यजेत् ९
एवंज्ञात्वातुराजेंद्रसदाश्रद्धापरोभवेत्
अश्रद्दधानाःपुरुषाःपापोपहतचेतसः
नप्राप्नुवंतितत्स्थानंप्रयागंदेवनिर्मितम् १०
युधिष्ठिरउवाच-
स्नेहाद्वाद्रव्यलोभाद्वायेतुकामवशंगताः
कथंतीर्थफलंतेषांकथंपुण्यमवाप्नुयुः ११
विक्रयंसर्वभांडानांकार्याकार्यमजानतः
प्रयागेकागतिस्तस्यएवंब्रूहिमहामुने १२
मार्कंडेयउवाच-
शृणुराजन्महागुह्यंसर्वपापप्रणाशनम्
मासंवसंस्तुराजेंद्रप्रयागेनियतेंद्रियः १३
मुच्यतेसर्वपापेभ्यःयथादिष्टंस्वयंभुवा
शुचिस्तुप्रयतोभूत्वाऽहिंसकःश्रद्धयान्वितः १४
मुच्यतेसर्वपापेभ्यःसगच्छेत्परमंपदम्
विश्रंभघातकानांतुप्रयागेशृणुतत्फलम् १५
त्रिकालमेवस्नायीतआहारंभैक्ष्यमाचरेत्
त्रिभिर्मासैःप्रमुच्येतप्रयागात्तुनसंशयः १६
प्रज्ञानेनतुयस्येहतीर्थयात्रादिकंभवेत्
सर्वकामसमृद्धस्तुस्वर्गलोकेमहीयते १७
स्थानंसलभतेनित्यंधनधान्यसमाकुलम्
एवंज्ञानेनसंपूर्णःसदाभवतिभोगवान् १८
तारिताःपितरस्तेननरकात्प्रपितामहाः
धर्मानुसारेतत्त्वज्ञपृच्छतस्तेपुनःपुनः
त्वत्प्रियार्थंसमाख्यातंगुह्यमेतत्सनातनम् १९
युधिष्ठिरउवाच-
अद्यमेसफलंजन्मअद्यमेसफलंकुलम्
प्रीतोऽस्म्यनुगृहीतोऽस्मिदर्शनादेवतेऽद्यवै

त्वद्दर्शनात्तुधर्मात्मन्मुक्तोऽहसर्वपातकैः २०
मार्कंडेयउवाच-
दिष्ट्यातेसफलंजन्मदिष्ट्याततारितंकुलम्
कीर्तनाद्वर्द्धतेपुरयंश्रुतंपापप्रणाशनम् २१
युधिष्ठिरउवाच-
यमुनायांतुकिंपुरयंकिंफलंतुमहामुने
एतन्मेसर्वमाख्याहियथादृष्टंयथाश्रुतम् २२
मार्कंडेयउवाच-
तपनस्यसुतादेवीत्रिषुलोकेषुविश्रुता
समागतामहाभागायमुनायत्रनिम्नगा २३
येनैवनिःसृतागङ्गातेनैवयमुनागता
योजनानांसहस्रेषुकीर्तनात्पापनाशिनी २४
तत्रस्नात्वाचपीत्वाचयमुनायांयुधिष्ठिर
कीर्त्तनाल्लभतेपुरयंदृष्ट्वाभद्राणिपश्यति २५
अवगाढाचपीत्वाचपुनात्यासप्तमंकुलम्
प्राणांस्त्यजतियस्तत्रसयातिपरमांगतिम् २६
अग्नितीर्थमितिख्यातंयमुनादक्षिणेतटे
पश्चिमेधर्मराजस्यतीर्थंहरवरंस्मृतम् २७
तत्रस्नात्वादिवंयांतियेमृतास्तेऽपुनर्भवाः
एवंतीर्थसहस्राणियमुनादक्षिणेतटे २८
उत्तरेणप्रवक्ष्याम्यादित्यस्यमहात्मनः
तीर्थंतुविरजंनामयत्रदेवाःसवासवाः २९
उपासतेस्मसंध्यांतुनित्यकालंयुधिष्ठिर
देवाःसेवंतितत्तीर्थंयेचान्येविदुषोजनाः ३०
श्रद्दधानपरोभूत्वाकुरुतीर्थाभिषेचनम्
अन्येचबहवस्तीर्थाःसर्वपापहराःशुभाः ३१
तेषुस्नात्वादिवंयांतियेमृतास्तेऽपुनर्भवाः
गंगाचयमुनाचैवउभेतुल्यफलेस्मृते ३२
केवलंश्रेष्ठभावेनगंगासर्वत्रपूज्यते
एवंकुरुष्वकौंतेयस्वर्गतीर्थाभिषेचनम् ३३

यावज्जीवकृतंपापंतत्क्षणादेवनश्यति
यस्त्विदंकल्यउत्थायपठतेचशृणोतिवा ३४
मुच्यतेसर्वपापेभ्यःस्वर्गलोकंचगच्छति ३५
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेयमुनामाहात्म्ये
पंचचत्वारिंशोऽध्यायः ४५

षट्चत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
श्रुतंमेब्रह्मणाप्रोक्तंपुराणेपुण्यसम्मितम्
तीर्थानांतुसहस्राणिशतानिनियुतानिच १
सर्वेपुण्याःपवित्राश्चगतिश्चपरमास्मृता
पृथिव्यांनैमिषंपुण्यमंतरिक्षेचपुष्करम् २
प्रयागमपिलोकानांकुरुक्षेत्रंविशिष्यते
सर्वाणिसंपरित्यज्यकथमेकंप्रशंससि ३
अप्रमाणमिदंप्रोक्तमश्रद्धेयमनुत्तमम्
गतिंचपरमांदिव्यांभोगांश्चैवयथेप्सितान् ४
किमर्थमल्पयोगेनबहुधर्मंप्रशंससि
एतंमेसंशयंब्रूहियथादृष्टंथाश्रुतम् ५
मार्कंडेयउवाच-
अश्रद्धेयंनवक्तव्यंप्रत्यक्षमपितद्भवेत्
नरस्यश्रद्दधानस्यपापोपहतचेतसः ६
अश्रद्दधानोह्यशुचिर्दुर्मतिस्त्यक्तमंगलः
एतेपातकिनःसर्वेतेनेदंभाषितंमया ७
शृणुप्रयागमाहात्म्यंयथादृष्टंयथाश्रुतम्
प्रत्यक्षंचपरोक्षंचयथान्यत्संभविष्यति ८
यथैवान्यन्मयादृष्टंपुराराजन्यथाश्रुतम्
शास्त्रंप्रमाणंकृत्वातुपूज्यतेयोगमात्मनः ९
क्लिश्यतेचापरस्तत्रनैवयोगमवाप्नुयात्
जन्मांतरसहस्रेभ्योयोयोगोलभ्येतमानवैः १०
यथायोगसहस्रेणयोगोलभ्येतमानवैः

यस्तुसर्वाणिरत्नानिब्राह्मणेभ्यःप्रयच्छति ११
तेनदानेनदत्तेनयोगोलभ्येतमानवैः
प्रयागेतुमृतस्येदंसर्वंभवतिनान्यथा १२
प्रधानहेतुंवद्त्यामिश्रद्दधत्सुचभारत
यथासर्वेषुभूतेषुसर्वत्रैवतुदृश्यते १३
ब्रह्मनैवास्तिवैकिंचिद्यद्वक्तुंत्विदमुच्यते
यथासर्वेषुभूतेषुब्रह्मसर्वत्रपूज्यते १४
एवंसर्वेषुलोकेषुप्रयागःपूज्यतेबुधैः
पूज्यतेतीर्थराजस्यसत्यमेतद्युधिष्ठिर १५
ब्रह्मापिस्मरतेनित्यंप्रयागंतीर्थमुत्तमम्
तीर्थराजमनुप्राप्यनैवान्यत्किंचिदिच्छति १६
कोहिदेवत्वमासाद्यमानुषत्वंचिकीर्षति
अनेनैवानुमानेनत्वंज्ञास्यसियुधिष्ठिर १७
यथापुरायमपुरायंवातथैवकथितंमया
युधिष्ठिरउवाच-
श्रुतंतद्यत्त्वयाप्रोक्तंविस्मितोऽहपुनःपुनः १८
कथंयोगेनतत्प्राप्तिःस्वर्गलोकस्तुकर्मणा
तदाचलभतेभोगान्गांचतत्कर्मणांफलम् १९
तानिकर्माणिपृच्छामिपुनर्यैःप्राप्यतेमहीम्
मार्कंडेयउवाच-
शृणुराजन्महाबाहोयथोक्तकर्म्मणामही २०
गामग्निंब्राह्मणंशास्त्रंकांचनंसलिलंस्त्रियः
मातरंपितरंचैवयोनिंदतिनराधिप २१
नैतेषामूर्ध्वगमनमेवमाहप्रजापतिः
एवंयोगस्यसंप्राप्तिःस्थानंपरमदुर्लभम् २२
गच्छंतिनरकंघोरंयेनराःपापकारिणः
हस्त्यश्वंगामनड्वाहंमणिमुक्तादिकांचनम् २३
परोत्तंहरतेयस्तुपश्चाद्दानंप्रयच्छति
नतेगच्छंतिवैस्वर्गंदातारोयत्रभोगिनः २४
अनेनकर्म्मणायुक्ताःपच्यंतेनरकेऽधमाः

एवंयोगंचधर्म्मंचदातारंचयुधिष्ठिर २५
यथासत्यमसत्यंवाअस्तिनास्तीतियत्फलम्
निरुक्तंतुप्रवक्ष्यामियथायंस्वयमाप्नुयात् २६
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेप्रयागमाहात्म्ये
षट्चत्वारिंशोऽध्यायः ४६

सप्तचत्वारिंशोऽध्यायः

मार्कंडेयउवाच-
शृणुराजन्प्रयागस्यमाहात्म्यंपुनरेवतु
नैमिषंपुष्करंचैवगोतीर्थंसिंधुसागरम् १
कुरुक्षेत्रंगयाचैवगंगासागरमेवच
एतेचान्येचबहवोयेचपुण्याःशिलोच्चयाः २
दशतीर्थसहस्राणित्रिंशत्कोटयस्तथापरे
प्रयागेसंस्थितानित्यमेवमाहुर्मनीषिणः ३
त्रीणिचाप्यग्निकुंडानियेषांमध्येतुजाह्नवी
प्रयागादभिनिष्क्रांतासर्वतीर्थपुरस्कृता ४
तपनस्यसुतादेवीत्रिषुलोकेषुविश्रुता
गंगायमुनयासार्धंसंस्थितालोकभाविनी ५
गंगायमुनयोर्मध्येपृथिव्याजघनंस्मृतम्
प्रयागंराजशार्दूलकलांनार्हंतिषोडशीम् ६
तिस्रःकोटयोऽद्धकोटीचतीर्थानांवायुरब्रवीत्
दिव्यंभुव्यंतरिक्षेचतत्सर्वंजाह्नविस्मृता ७
प्रयागंसमधिष्ठानंकंबलाश्वतरावुभौ
भोगवत्यथयाचैववेदिरेषाप्रजापतेः ८
तत्रदेवाश्चयज्ञाश्चमूर्तिमंतोयुधिष्ठिर
पूजयंतिप्रयागंतेऋषयश्चतपोधनाः ९
यजंतेक्रतुभिर्देवांस्तथाबहुधनानृपाः
ततःपुण्यतमोनास्तित्रिषुलोकेषुभारत १०
प्रभावात्सर्वतीर्थेभ्यःप्रभवत्यधिकंविभो
दशतीर्थसहस्राणितिस्रःकोटयस्तथापरे ११

यत्रगंगामहाभागासदेशस्तत्तपोवनम्
सिद्धक्षेत्रंतुतज्ज्ञेयंगंगातीरसमाश्रितम् १२
इतिसत्यंद्विजातीनांसाधूनामात्मजस्यवा
सुहृदांचजपेत्कर्णेशिष्यस्यानुगतस्यवा १३
इदंधन्यमिदंस्वर्ग्यमिदंसेव्यमिदंशुभम्
इदंपुरायमिदंरम्यंपावनंधर्ममुत्तमम् १४
महर्षीणामिदंगुह्यंसर्वपापप्रणाशनम्
अधीत्यचद्विजोध्यायन्निर्मलत्वमवाप्नुयात् १५
यश्चेदंशृणुयान्नित्यंतीर्थंपुरायंसदाशुचिः
जातिस्मरत्वंलभतेनाकपृष्ठेचमोदते १६
प्राप्यंतेतानितीर्थानिसद्भिःशिष्टार्थदर्शिभिः
स्नाहितीर्थेषुकौरव्यनचवक्रमतिर्भव १७
त्वयातुसम्यक्पृष्टेनकथितंतुमयाविभो
पितरस्तारिताःसर्वेतारिताश्चपितामहाः १८
प्रयागस्यतुसर्वेतेकलांनार्हंतिषोडशीम्
एवंज्ञानंचयोगंचतीर्थंचैवयुधिष्ठिर १९
बहुक्लेशेनयुज्यंतेततोयांतिपरांगतिम्
प्रयागस्मरणाल्लोकःस्वर्गलोकंचगच्छति २०
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेप्रयागमाहात्म्ये
सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
कथासर्वात्वियंप्रोक्ताप्रयागस्यमहामुने
एवंमेसर्वमाख्याहियथाचममतारयेत् १
मार्कंडेयउवाच-
शृणुराजन्प्रवक्ष्यामिप्रोक्तंसर्वमिदंजगत्
ब्रह्माविष्णुस्तथेशानोदेवताप्रभुरव्ययः २
ब्रह्मासृजतिभूतानिस्थावरंजंगमंचयत्
तान्येतानिपरोलोकेविष्णुःपालयतिप्रजाः ३

कल्पांतेतत्समग्रंहिरुद्रःसंहरतेजगत्
नददातिचनाध्येतिनकदाचिद्विनश्यति ४
ईश्वरःसर्वभूतानांयःपश्यतिसपश्यति
उत्तरेणप्रतिष्ठानादिदानींब्रह्मतिष्ठति ५
महेश्वरोवटेभूत्वातिष्ठतेपरमेश्वरः
ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ६
रक्षंतिपरमंनित्यंपापकर्मपरायणान्
येतुचान्येचतिष्ठंतिनयांतिपरमांगतिम् ७
युधिष्ठिरउवाच-
अप्याहमेयथातत्त्वंयथैषांतिष्ठतेश्रुतम्
केनवाकारणेनैवतिष्ठंतिलोकसंमताः ८
मार्कंडेयउवाच-
प्रयागेनिवसंत्येतेब्रह्मविष्णुमहेश्वराः
कारणंतुप्रवक्ष्यामिशृणुतत्त्वंयुधिष्ठिर ९
पंचयोजनविस्तीर्णंप्रयागस्यतुमंडलम्
तिष्ठंतिरक्षणार्थायपापकर्मनिवारणाः १०
तस्मिंस्तुस्वल्पकंपापंनरकेपातयिष्यति
एवंब्रह्माचविष्णुश्चप्रयागेसमहेश्वरः ११
सप्तद्वीपाःसमुद्राश्चपर्वताश्चमहीतले
तिष्ठंतिध्रियमाणाश्चयावदाभूतसंप्लवम् १२
येचान्येबहवःसर्वेतिष्ठंतिचयुधिष्ठिर
पृथिवीस्थानमारभ्यनिर्मितंदैवतैस्त्रिभिः १३
प्रजापतेरिदंक्षेत्रंप्रयागमितिविश्रुतम्
एतत्पुण्यंपवित्रंचप्रयागंतुयुधिष्ठिर १४
स्वराज्यंकुरुराजेंद्रभ्रातृभिःसहितोभव १५

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेप्रयागमाहात्म्ये
अष्टचत्वारिंशोऽध्यायः ४८

ऊनपंचाशत्तमोऽध्यायः

सूतउवाच-

भ्रातृभिःसहिताःसर्वेपांडवाधर्मनिश्चयाः
ब्राह्मणेभ्योनमस्कृत्वागुरुदेवांस्त्वतर्पयन् १
वासुदेवोऽपितत्रैवक्षणेनाभ्यागतस्तदा
पांडवैःसहितैःसर्वैःपूज्यमानःसमाधवः २
कृष्णेनसहितैःसर्वैःपुनरेवमहात्मभिः
अभिषिक्तःस्वराज्येतुधर्मपुत्रोयुधिष्ठिरः ३
एतस्मिन्नंतरेचैवमार्कंडेयोमहात्मवान्
ततःस्वस्तीतिचोक्त्वावैक्षणादाश्रममागतः ४
युधिष्ठिरोऽपिधर्मात्माभ्रातृभिःसहितस्तुसः
महादानंददौचाथधर्मपुत्रोयुधिष्ठिरः ५
यस्त्विदंकल्यमुत्थायपठतेवाशृणोतिवा
मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ६
वासुदेवउवाच-
ममवाक्यंतुकर्तव्यंतवस्नेहाद्ब्रवीम्यहम्
नित्यंयज्ञरतोभूत्वाप्रयागेविगतज्वरः ७
प्रयागंसंस्मरन्नित्यंसहास्माभिर्युधिष्ठिर
स्वयंप्राप्स्यसिराजेंद्रस्वर्गलोकंतुशाश्वतम् ८
प्रयागमनुगच्छेद्वावसतेवापियोनरः
सर्वपापविशुद्धात्मास्वर्गलोकंचगच्छति ९
प्रतिग्रहादुपावृत्तःसन्तुष्टोनियतःशुचिः १०
अहंकारनिवृत्तश्चसतीर्थफलमश्नुते
अकोपनश्चराजेंद्रसत्यवादीदृढव्रतः
आत्मोपमश्चभूतेषुसतीर्थफलमश्नुते ११
ऋषिभिःक्रतवःप्रोक्तादेवैश्चापियथाक्रमम्
नहिशक्यादरिद्रेणयज्ञाःप्राप्तुंमहीपते १२
बहूपकरणोयज्ञोनानासंभारसंभ्रमः
प्राप्यतेविविधैरर्थ्यैःसमृद्धैर्वानरैःक्वचित् १३
योदरिद्रैरपिबुधैःशक्यःप्राप्तुंनरेश्वर
ततोयज्ञफलैःपुण्यैस्तन्निबोधजनेश्वर १४
ऋषीणांपरमंगुह्यमिदंभरतसत्तम

तीर्थाभिगमनंपुण्यंयज्ञैरपिविशिष्यते १५
दशकोटिसहस्राणित्रिंशत्कोट्यस्तथापरे
माघमासेतुगंगायांगमिष्यंतिनरर्षभ १६
स्वस्थोभवमहाराजभुक्त्वाराज्यमकंटकम्
पुनर्द्रक्ष्यसिराजेंद्रयजमानोविशेषतः १७
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेप्रयागमाहात्म्यं
नामऊनपंचाशत्तमोऽध्यायः ४९

## पंचाशत्तमोऽध्यायः

ऋषयऊचुः-
भवताकथितंसर्वंयत्किंचित्पृष्टमेवच
इदानीमपिपृच्छामएकंवदमहामते १
एतेषांखलुतीर्थानांसेवनाद्यत्फलंलभेत्
सर्वेषांकिलकृत्वैकंकर्मकेनचलभ्यते २
एतन्नोब्रूहिसर्वज्ञकर्मैवंयदिवर्तते
सूतउवाच-
कर्मयोगःकिलप्रोक्तोवर्णानांद्विजपूर्वशः ३
नानाविधोमहाभागास्तत्रचैकंविशिष्यते
हरिभक्तिःकृतायेनमनसावचसागिरा ४
जितंतेनजितंतेनजितमेवनसंशयः
हरिरेवसमाराध्यःसर्वदेवेश्वरेश्वरः ५
हरिनाममहामंत्रैर्नश्येत्पापपिशाचकम्
हरेःप्रदक्षिणंकृत्वासकृदप्यमलाशयाः ६
सर्वतीर्थसमाप्लावंलभंतेयन्नसंशयः
प्रतिमांचहरेर्दृष्ट्वासर्वतीर्थफलंलभेत् ७
विष्णुनामपरंजप्त्वासर्वमंत्रफलंलभेत्
विष्णुप्रसादतुलसीमाघ्रायद्विजसत्तमाः ८
प्रचंडंविकरालंतद्यमस्यास्यंनपश्यति
सकृत्प्रणामीकृष्णस्यमातुःस्तन्यंपिबेन्नहि ९
हरिपादेमनोयेषांतेभ्योनित्यंनमोनमः

पुल्कसःश्वपचोवापियेचान्येम्लेच्छजातयः १०
तेऽपिवंद्यामहाभागाहरिपादैकसेवकाः
किंपुनर्ब्राह्मणाःपुरायाभक्ताराजर्षयस्तथा ११
हरौभक्तिंविधायैवगर्भवासंनपश्यति
हरेरग्रेस्वनैरुच्चैर्नृत्यंस्तन्नामकृन्नरः १२
पुनातिभुवनंविप्रागंगादिसलिलंयथा
दर्शनात्स्पर्शनात्तस्यग्रालापादपिभक्तितः १३
ब्रह्महत्यादिभिःपापैर्मुच्यतेनात्रसंशयः
हरेःप्रदच्चिणंकुर्वन्नुच्चैस्तन्नामकृन्नरः १४
करतालादिसंधानंसुस्वरंकलशब्दितम्
ब्रह्महत्यादिकंपापंतेनैवकरतालितम् १५
हरिभक्तिकथामुक्त्वाख्यायिकांशृणुयाच्चयः
तस्यसंदर्शनादेवपूतोभवतिमानवः १६
किंपुनस्तस्यपापानामाशंकामुनिपुंगवाः
तीर्थानांचपरंतीर्थंकृष्णनाममहर्षयः १७
तीर्थीकुर्वंतिजगतींगृहीतंकृष्णनामयैः
तस्मान्मुनिवराःपुरायंनातःपरतरंविदुः १८
विष्णुप्रसादनिर्माल्यंभुक्त्वाधृत्वाचमस्तके
विष्णुरेवभवेन्मर्त्योयमशोकविनाशनः १९
ग्रर्चनीयोनमस्कार्योहरिरेवनसंशयः
यिमहाविष्णुमव्यक्तंदेवंवापिमहेश्वरम् २०
एकीभावेनपश्यंतिनतेषांपुनरुद्भवः ।
तस्मादनादिनिधनंविष्णुमात्मानमव्ययम् २१
हरिंचैकंप्रपश्यध्वंपूजयध्वंतथैवहि
येसमानंप्रपश्यंतिहरिंवैदेवतांतरम् २२
तेयांतिनरकान्घोरांन्नतांस्तुगणयेद्धीरः
मूर्खंवापंडितंवापिब्राह्मणंकेशवप्रियम् २३
श्वपाकंवामोचयतिनारायणःस्वयंप्रभुः
नारायणात्परोनास्तिपापराशिदवानलः २४
कृत्वापिपातकंघोरंकृष्णनाम्नाविमुच्यते

स्वयंनारायणोदेवः स्वनाम्निजगतांगुरुः २५
आत्मनोऽभ्यधिकांशक्तिंस्थापयामाससुव्रताः
अत्रयेविवदंतेवैआयासलघुदर्शनात् २६
फलानांगौरवाच्चापितेयांतिनरकंबहु
तस्माद्धरौभक्तिमान्स्याद्धरिनामपरायणः २७
पूजकंपृष्ठतोरक्षेन्नामिनंवक्षसिप्रभुः
हरिनाममहावज्रंपापपर्वतदारणे २८
तस्यपादौतुसफलौतदर्थंगतिशालिनौ
तावेवधन्यावाख्यातौयौतुपूजाकरौकरौ २९
उत्तमांगमुत्तमांगंतद्धरौनम्रमेवयत्
साजिह्वायाहरिंस्तौतितन्मनस्तत्पदानुगम् ३०
तानिलोमानिचोच्यंतेयानितन्नाम्निचोत्थितम्
कुर्वंतितच्चनेत्रांबुयदच्युतप्रसंगतः ३१
अहोलोकाअतितरांदैवदोषेणवंचिताः
नामोच्चारणमात्रेणमुक्तिदंनभजंतिवै ३२
वंचितास्तेचकलुषाःस्त्रीणांसंगप्रसंगतः
प्रतिष्ठंतिचलोमानियेषांनोकृष्णशब्दने ३३
तेमूर्खाह्यकृतात्मानःपुत्रशोकादिविह्वलाः
रुदंतिबहुलालापैर्नकृष्णाक्षरकीर्तने ३४
जिह्वांलब्ध्वापिलोकेऽस्मिन्कृष्णनामजपेन्नहि
लब्ध्वापिमुक्तिसोपानंहेलयैवच्यवंतिते ३५
तस्माद्यत्नेनवैविष्णुंकर्मयोगेनमानवः
कर्मयोगार्च्चितोविष्णुःप्रसीदत्येवनान्यथा ३६
तीर्थादप्यधिकंतीर्थंविष्णोर्भजनमुच्यते
सर्वेषांखलुतीर्थानांस्नानपानावगाहनैः ३७
यत्फलंलभतेमर्त्यस्तत्फलंकृष्णसेवनात्
यजंतेकर्मयोगेनधन्याएवनराहरिम् ३८
तस्माद्भजध्वंमुनयःकृष्णंपरममंगलम् ३९

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेविष्णुभक्तिप्रशंसनं
नामपंचाशत्तमोऽध्यायः ५०

## एकपंचाशत्तमोऽध्यायः

ऋषयऊचु-
कर्मयोगःकथंसूतयेनचाराधितोहरिः
प्रसीदतिमहाभागवदनोवदतांवर १
येनासौभगवानीशःसमाराध्योमुमुन्नुभिः
तद्वदाखिललोकानांरन्नणंधर्मसंग्रहम् २
तंकर्मयोगंवदनःसूतमूर्तिमयस्तुयः
इतिशुश्रूषवोविप्राभवदग्रेव्यवस्थिताः ३
सूतउवाच-
एवमेवपुरापृष्टोव्यासःसत्यवतीसुतः
ऋषिभिरग्निसंकाशैर्व्यासस्तानाहतच्छृणु ४
व्यासउवाच-
शृणुध्वंमृषयःसर्वेवन्यमाणंसनातनम्
कर्मयोगंब्राह्मणानामात्यंतिकफलप्रदम् ५
ग्राम्नायसिद्धमखिलंब्राह्मणार्थंप्रदर्शितम्
ऋषीणांशृणवतांपूर्वंमनुराहप्रजापतिः ६
सर्वव्याधिहरंपुरायमृषिसंघैर्निषेवितम्
समाहितधियोयूयंशृणुध्वंगदतोमम ७
कृतोपनयनोवेदानधीयीतद्विजोत्तमः
गर्भाष्टमेऽष्टमेवाब्देस्वसूत्रोक्तविधानतः ८
दंडीचमेखलीसूत्रीकृष्णाजिनधरोमुनिः
भिन्नाहारोगुरुहितोवीन्यमाणोगुरोर्मुखम् ९
कार्पासमुपवीतार्थंनिर्मितंब्रह्मणापुरा
ब्राह्मणानांत्रिवृत्सूत्रंकौशंवावस्त्रमेववा १०
सदोपवीतीचैवस्यात्सदाबद्धशिखोद्विजः
ग्रन्यथायत्कृतंकर्म्मतद्भवत्ययथाकृतम् ११
वसेदविकृतंवासःकार्पासंवाकषायकम्
तदेवपरिधानीयंशुक्लंतांतवमुत्तमम् १२
उत्तरंतुसमाम्नातंवासःकृष्णाजिनंशुभम्
ग्रभावेगावयमपिरौरवंवाविधीयते १३

उद्धृत्यदक्षिणंबाहुंसव्यबाहौसमर्पितम्
उपवीतंभवेन्नित्यंनिवीतंकंठसज्जने १४
सव्यबाहुंसमुद्धृत्यदक्षिणेतुधृतंद्विजाः
प्राचीनावीतमित्युक्तंपित्र्येकर्मणियोजयेत् १५
अग्न्यागारेगवांगोष्ठेहोमेतप्येतथैवच
स्वाध्यायेभोजनेनित्यंब्राह्मणानांचसन्निधौ १६
उपासनेगुरूणांचसंध्ययोःसाधुसंगमे
उपवीतीभवेन्नित्यंविधिरेषसनातनः १७
मौंजीत्रिवृत्समांश्लिष्टांकुर्याद्विप्रस्यमेखलाम्
मुंजाभावेकुशेनाहुर्ग्रंथिनैकेनवात्रिभिः १८
धारयेद्वैणवपालाशौदंडौकेशांतिकौद्विजः
यज्ञार्हवृक्षजंवाथसौम्यमव्रणमेवच १९
सायंप्रातर्द्विजःसंध्यामुपासीतसमाहितः
कामाल्लोभाद्भयान्मोहात्त्यक्त्वैनांपतितोभवेत् २०
अग्निकार्यंततःकुर्यात्सायंप्रातःप्रसन्नधीः
स्नात्वासंतर्पयेद्देवानृषीन्पितृगणांस्तथा २१
देवताभ्यर्चनंकुर्यात्पुष्पैःपत्रैर्यवांबुभिः
अभिवादनशीलःस्यान्नित्यंवृद्धेषुधर्मतः २२
असावहंभोनामेतिसम्यक्प्रणतिपूर्वकम्
आयुरारोग्यसिद्ध्यर्थंतंद्रादिपरिवर्जितः २३
आयुष्मान्भवसौम्येतिवचोविप्रोऽभिवादने
आकारश्चास्यनाम्नोंऽतेवाच्यःपूर्वाक्षरप्लुतः २४
योनवेत्त्यभिवादस्यविप्रःप्रत्यभिवादनम्
नाभिवाद्यःसविदुषायथाशूद्रस्तथैवसः २५
व्यत्यस्तपाणिनाकार्यंपादसंग्रहणंगुरोः
सव्येनसव्यःस्प्रष्टव्योदक्षिणेनतुदक्षिणः २६
लौकिकंवैदिकंवापितथाध्यात्मिकमेववा
अवाप्यप्रयतोज्ञानंतंपूर्वमभिवादयेत् २७
नोदकंधारयेद्भैक्ष्यंपुष्पाणिसमिधस्तथा
एवंविधानिचान्यानिनदेवार्थेषुकर्म्मसु २८

ब्राह्मणंकुशलंपृच्छेत्क्षत्रबंधुमनामयम्
वैश्यंक्षेमंसमागम्यशूद्रमारोग्यमेवच २९
उपाध्यायःपिताज्येष्ठोभ्राताभ्राताचभीतितः
मातुलःश्वशुरश्चैवमातामहपितामहौ ३०
वर्णश्रेष्ठःपितृव्यश्चपुंसोऽत्रगुरवःस्मृताः
मातामातामहीगुर्वीपितुर्मातुश्चसोदराः ३१
श्वश्रूःपितामहीज्येष्ठाधात्रीचगुरवःस्त्रियः
ज्ञेयस्तुगुरुवर्गोऽयमातृतःपितृतोद्विजाः ३२
अनुवर्तनमेतेषांमनोवाक्कायकर्मभिः
गुरून्दृष्ट्वासमुत्तिष्ठेदभिवाद्यकृताञ्जलि ३३
नैतैरुपविशेत्सार्द्धंविवदेन्नात्मकारणात्
जीवितार्थमपिद्वेषाद्गुरुभिर्नैवभाषणम् ३४
उद्रिक्तोऽपिगुणैरन्यैर्गुरुद्वेषीपतत्यधः
गुरूणामपिसर्वेषांपंचपूज्याविशेषतः ३५
तेषामाद्यास्त्रयःश्रेष्ठास्तेषांमातासुपूजिता
योभावयतियासूतेयेनविद्योपदिश्यते ३६
ज्येष्ठोभ्राताचभर्ताचपंचैतेगुरवःस्मृताः
आत्मनःसर्वयत्नेनप्राणत्यागेनवापुनः ३७
पूजनीयाविशेषेणपंचैतेभूतिमिच्छता
यावत्पिताचमाताचद्वावेतौनिर्विकारिणौ ३८
तावत्सर्वंपरित्यज्यपुत्रःस्यात्तत्परायणः
पितामाताचसुप्रीतौस्यातांपुत्रगुणैर्यदि ३९
सपुत्रःसकलंधर्मंप्राप्नुयात्तेनकर्मणा
नास्तिमातृसमंदैवंनास्तिपितृसमोगुरुः ४०
तयोःप्रत्युपकारोऽपिनकथंचनविद्यते
तयोर्नित्यंप्रियंकुर्यात्कर्मणामनसागिरा ४१
नताभ्यामननुज्ञातोधर्ममन्यंसमाचरेत्
वर्जयित्वामुक्तिफलंनित्यंनैमित्तिकंतथा ४२
धर्मसारःसमुद्दिष्टःप्रेत्यानंतफलप्रदः
सम्यगाराध्यवक्तारंविसृष्टस्तदनुज्ञया ४३

शिष्योविद्याफलंभुंक्तेप्रेत्यचापद्यतेदिवि
योभ्रातरंपितृसमंज्येष्ठंमूढोऽवमन्यते ४४
तेनदोषेणसंप्रेत्यनिरयंघोरमृच्छति
पुंसांवर्त्मनिसृष्टेनपूज्योभर्तातुसर्वदा ४५
अपिमातरिलोकेऽस्मिन्नुपकाराद्धिगौरवम्
मातुलांश्चपितृव्यांश्चश्वशुरानृत्विजोगुरून् ४६
असावहमितिब्रूयात्प्रत्युत्थायाभिवादयेत्
अवाच्योदीक्षितोनाम्नायवीयानपियोभवेत् ४७
भोभवत्पूर्वकंत्वेनमभिभाषेतधर्मवित्
अभिवाद्यश्चपूज्यश्चशिरसानम्यएवच ४८
ब्राह्मणक्षत्रियाद्यैश्चश्रीकामैःसादरंसदा
नाभिवाद्याश्चविप्रेणक्षत्रियाद्याःकथंचन ४९
ज्ञानकर्मगुणोपेतायद्यप्येतेबहुश्रुताः
ब्राह्मणःसर्ववर्णानांस्वस्तिकुर्यादितिश्रुतिः ५०
सवर्णेनसवर्णानांकार्यमेवाभिवादनम्
गुरुरग्निर्द्विजातीनांवर्णानांब्राह्मणोगुरुः ५१
पतिरेकोगुरुःस्त्रीणांसर्वत्राभ्यागतोगुरुः
विद्याकर्मवयोबंधुर्वित्तंभवतिपंचमम् ५२
मान्यस्थानानिपंचाहुःपूर्वंपूर्वंगुरूत्तरात्
पंचानांत्रिषुवर्णेषुभूयांसिबलवंतिच ५३
यत्रस्युःसोऽत्रमानार्हःशूद्रोऽपिदशमींगतः
पंथादेयोब्राह्मणायस्त्रियैराज्ञेविचक्षुषे ५४
वृद्धायभारभग्नायरोगिणेदुर्बलायच
भिक्षामाहृत्यशिष्टानांगृहेभ्यःप्रयतोऽन्वहम् ५५
निवेद्यगुरुवेऽश्नीयाद्वाग्यतस्तदनुज्ञया
भवत्पूर्वंचरेद्भैक्ष्यमुपवीतीद्विजोत्तमः ५६
भवन्मध्यंतुराजन्योवैश्यस्तुभवदुत्तरम्
मातरंवास्वसारंवामातुर्वाभगिनींनिजाम् ५७
भिक्षेतभिक्षांप्रथमंयाचैनंनविमानयेत्
सजातीयगृहेष्वेवसार्ववर्णिकमेववा ५८

भैक्ष्यस्याचरणंप्रोक्तंपतितादिविवर्जितम्
वेदयज्ञैरहीनानांप्रशस्तानांस्वकर्म्मसु ५९
ब्रह्मचार्य्याहरेद्भैक्ष्यंगृहेभ्यःप्रयतोऽन्वहम्
गुरोःकुलेनभिक्षेतनज्ञातिकुलबंधुषु ६०
अलाभेत्वन्यगेहानांपूर्वंपूर्वंविवर्जयेत्
सर्वंवाविचरेद्ग्रामंपूर्वोक्तानामसंभवे ६१
नियम्यप्रयतोवाचंदिशस्त्वनवलोकयन्
समाहृत्यतुभैक्ष्यान्नंयावदर्थममायया ६२
भुंजीतप्रयतोनित्यंवाग्यतोऽनन्यमानसः
भैक्ष्येणवर्तयेन्नित्यंनैवेकान्नोभवेद्व्रती ६३
भैक्ष्यैणवर्त्तिनोवृत्तिरुपवाससमास्मृता
पूजयेदशनंनित्यमद्याच्चैनमकुत्सयन् ६४
दृष्ट्वाहृष्येत्प्रसीदेच्चप्रतिनंदेच्चसर्वशः
अनारोग्यमनायुष्यमस्वर्ग्यंचातिभोजनम् ६५
अपुरायंलोकविद्विष्टंतस्मात्तत्परिवर्जयेत्
प्राङ्मुखोऽन्नानिभुंजीतसूर्याभिमुखमेववा ६६
नाद्यादुदङ्मुखोनित्यंविधिरेषसनातनः
प्रक्षाल्यपाणिपादौचभुंजानोद्विरुपस्पृशेत् ६७
शुद्धेदेशेसमासीनोभुक्त्वाचद्विरुपस्पृशेत् ६८

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेकर्मयोगकथनं
नामएकपंचाशत्तमोऽध्यायः ५१

## द्विपंचाशत्तमोऽध्यायः

व्यासउवाच-
भुक्त्वापीत्वाचसुप्त्वाचस्नात्वारथ्योपसर्पणे
ओष्ठावलोमकौस्पृष्ट्वावासोविपरिधायच १
रेतोमूत्रपुरीषाणामुत्सर्गेऽनृतभाषणे
ष्ठीवित्वाऽध्ययनारंभेकासश्वासागमेतथा २
चत्वरंवाश्मशानंवासमाक्रम्यद्विजोत्तमः
संध्ययोरुभयोस्तद्वदाचांतोऽप्याचमेत्पुनः ३

चंडालम्लेच्छसंभाषेस्त्रीशूद्रोच्छिष्टभाषणे
उच्छिष्टंपुरुषंदृष्ट्वाभोज्यंचापितथाविधम् ४
आचामेदश्रुपातेवालोहितस्यतथैवच
भोजनेसंध्ययोःस्नात्वापीत्वामूत्रपुरीषयोः ५
आगतोवाचमेत्सुप्त्वासकृत्सकृदथान्यतः
अग्नेर्गवामथालंभेस्पृष्ट्वाप्रयतमेववा ६
स्त्रीणामथात्मनःस्पर्शेनीलद्यंवापरिधायच
उपस्पर्शेज्जलंवार्द्रतृणंवाभूमिमेवच ७
केशानांचात्मनःस्पर्शेवाससःस्खलितस्यच
अनुष्णाभिरकेशाभिरदुष्टाभिश्चधर्मतः ८
शौचेऽप्सुसर्वदाचामेदासीनःप्रागुदङ्मुखः
शिरःप्रावृत्यकंठंवामुक्तकेशशिखोऽपिवा ९
अकृत्वापादयोःशौचंमार्गतोनशुचिर्भवेत्
सोपानत्कोपानस्थोवानोष्णीषीचाचमेद्बुधः १०
नचैववर्षधाराभिर्नतिष्ठन्नुद्धृतोदकैः
नैकहस्तार्पितजलैर्विनासूत्रेणवापुनः ११
नपादुकासनस्थोवाबहिर्जानुरथापिवा
नजल्पन्नहसन्प्रेक्षन्शयानस्तल्पएवच १२
नाविक्षिताभिःफेनाद्यैरुपेताभिरथापिवा
शूद्राशुचिकरोन्मुक्तैर्नक्षाराभिस्तथैवच १३
नचैवांगुलिभिःशब्दंनकुर्यान्नान्यमानसः
नवर्णरसदुष्टाभिर्नचैवप्रदरोदकैः १४
नपाणिक्षुभिताभिर्वानबहिर्गंधएववा
हृद्गाभिःपूयतेविप्रःकंठ्याभिःक्षत्रियःशुचिः १५
प्राशिताभिस्तथावैश्यःस्त्रीशूद्रौस्पर्शतोंऽततः
अंगुष्ठमूलांतरतोरेखायांब्राह्ममुच्यते १६
अंतरांगुष्ठदेशिन्यैःपितृणांतीर्थमुच्यते
कनिष्ठामूलतःपश्चात्प्राजापत्यंप्रचक्षते १७
अंगुल्यग्रंस्मृतंदैवंतदेवार्षंप्रकीर्तितम्
मूलेनदैवमार्षंस्यादाग्नेयंमध्यतःस्मृतम् १८

तदेवसौमिकंतीर्थमेतज्ज्ञात्वानमुह्यति
ब्राह्मेणैवतुतीर्थेनद्विजोनित्यमुपस्पृशेत् १९
होमयेद्वाथदैवेननतुपित्र्येणवैद्विजाः
त्रिःप्राश्नीयादपःपूर्वंब्राह्मेणप्रयतस्ततः २०
संमृज्यांगुष्ठमूलेनमुखंवैसमुपस्पृशेत्
अंगुष्ठानामिकाभ्यांतुस्पृशेन्नेत्रद्वयंततः २१
तर्जन्यंगुष्ठयोगेनस्पृशेन्नासापुटद्वयम्
कनिष्ठांगुष्ठयोगेनश्रवणेसमुस्पृशेत् २२
सर्वासामथयोगेनहृदयंतुतनवा
स्पृशेद्वैशिरसस्तद्वदंगुष्ठेनांसकद्वयम् २३
त्रिःप्राश्नीयाद्यदंभस्तुप्रीतास्तेनास्यदेवताः
ब्रह्माविष्णुर्महेशश्चभवंतीत्यनुशुश्रुम २४
गंगाचयमुनाचैवप्रीयेतेपरिमार्जनात्
संस्पृष्टयोर्लोचनयोःप्रीयेतेशशिभास्करौ २५
नासत्यदस्रौप्रीयेतेस्पृशेन्नासापुटद्वयम्
कर्णयोःस्पृष्टयोस्तद्वत्प्रीयेतेचानिलानलौ २६
संस्पृष्टेहृदयेचास्यप्रीयंतेसर्वदेवताः
मूर्ध्निसंस्पर्शनादेकःप्रीतःसपुरुषोभवेत् २७
नोच्छिष्टंकुर्वतेवक्त्रेविप्रुषोंगेलगंतियाः
दंतवद्दंतलग्नेषुजिह्वास्पर्शेशुचिर्भवेत् २८
स्पृशंतिबिंदवःपादौयआचामयतःपरान्
भूमिपांशुसमाज्ञेयानतैरस्पृश्यताभवेत् २९
मधुपर्केचसोमेचतांबूलस्यचभक्षणे
फलमूलेचेक्षुदंडेनदोषंप्राहवैमनुः ३०
प्रचरंश्चान्नपानेषुद्रव्यहस्तोभवेन्नरः
भूमौनिक्षिप्यतद्द्रव्यमाचम्याभ्युक्षयेत्तुतत् ३१
तैजसंवैसमादाययद्युच्छिष्टोभवेद्दिवजः
भूमौनिक्षिप्यतद्द्रव्यमाचम्याभ्युक्षयेत्तुतत् ३२
यद्यद्द्रव्यंसमादायभवेदुच्छेषणान्वितः
अनिधायैवतद्द्रव्यंभूमौत्वशुचितामियात् ३३

वस्त्रादिषुविकल्पःस्यात्तत्संस्पृश्याचमेदिह
अरण्येनिर्जनेरात्रौचौरव्याघ्राकुलेपथि ३४
कृत्वामूत्रंपुरीषंवाद्रव्यहस्तोनदुष्यति
निधायदक्षिणेकर्णेब्रह्मसूत्रमुदङ्मुखः ३५
अह्निकुर्याच्छकृन्मूत्रंरात्रौचेद्दक्षिणामुखः
अंतर्धायमहींकाष्ठैःपत्रैर्लोष्टतृणेनवा ३६
प्रावृत्यचशिरःकुर्याद्विण्मूत्रस्यविसर्जनम्
छायाकूपनदीगोष्ठचैत्यांभःपथिभस्मसु ३७
अग्नौचैवश्मशानेचविण्मूत्रंनसमाचरेत्
नगोमयेनकाष्ठेवामहावृक्षेऽथशाद्वले ३८
नतिष्ठन्नचनिर्वासानचपर्वतमंडले
नजीर्णदेवायतनेवल्मीकेनकदाचन ३९
नससत्वेषुगर्तेषुनगच्छन्नसमाचरेत्
तुषांगारकपालेषुराजमार्गेतथैवच ४०
नक्षेत्रेनबिलेवापिनतीर्थेनचतुष्पथे
नोद्यानेऽपासमीपेवानोषरेनगराशये ४१
नसोपानत्पादुकोवाछत्रीवानांतरिक्षके
नचैवाभिमुखःस्त्रीणांगुरुब्राह्मणयोर्गवाम् ४२
नदेवदेवालययोरपामपिकदाचन
नज्योतींषिनिरीक्षन्वानवाप्रतिमुखोथवा ४३
प्रत्यादित्यंप्रत्यनलंप्रतिसोमंतथैवच
आहृत्यमृत्तिकांकूलाल्लेपगंधापकर्षणीम् ४४
कुर्यादतंद्रितःशौचंविशुद्धैरुद्धृतोदकैः
नाहरेन्मृतिकांविप्रःपांशुलांनसकर्दमाम् ४५
नमार्गान्नोषराद्देशाच्छौचशिष्टांपरस्यच
नदेवायतनात्कूपाद्ग्रामान्नोनचजलात्तथा ४६
उपस्पृशेत्ततोनित्यंपूर्वोक्तेनविधानतः ४७

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेकर्मयोगकथने
द्विपंचाशत्तमोऽध्यायः ५२

## त्रिपंचाशत्तमोऽध्यायः

व्यासउवाच-
एवंदंडादिभिर्युक्तःशौचाचारसमन्वितः
ग्राहूतोध्यापनंकुर्याद्वीन्द्यमाणोगुरोर्मुखम् १
नित्यमुद्यतपाणिःस्यात्साध्वाचारःसुसंयतः
ग्रास्यतामितिचोक्तःसन्नासीताभिमुखंगुरोः २
प्रतिश्रवणसंभाषेशयानोनसमाचरेत्
ग्रासीनोनचभुंजानोनतिष्ठेन्नपराङ्मुखः ३
नीचैःशय्यासनंचास्यसर्वदागुरुसन्निधौ
गुरोस्तुचक्षुर्विषयेनयथेष्टासनोभवेत् ४
नोदाहरेदस्यनामपरेक्षमपिकेवलम्
नचैवास्यानुकुर्वीतगतिभाषणचेष्टितम् ५
गुरोर्यत्रपरीवादोनिंदावापिप्रवर्तते
कर्णौतत्रपिधातव्यौगंतव्यंवाततोऽन्यतः ६
दूरस्थोनार्चयेदेनंनक्रुद्धोनांतिकेस्त्रियः
नचैवास्योत्तरंब्रूयात्स्थितोनासीतसन्निधौ ७
उदकुंभंकुशान्पुष्पंसमिधोऽस्याहरेत्सदा
मार्जनंलेपनंनित्यमंगानांवैसमाचरेत् ८
नास्यनिर्माल्यशयनंपादुकोपानहावपि
ग्राक्रामेदासनंचास्यच्छायादीन्वाकदाचन ९
साधयेद्दंतकाष्ठादींल्लब्धंचास्मैनिवेदयेत्
ग्रनापृच्छ्यनगंतव्यंभवेत्प्रियहितेरतः १०
नपादौसारयेदस्यसन्निधानेकदाचन
जृंभितंहसितंचैवकंठप्रावरणंतथा ११
वर्जयेत्सन्निधौनित्यमंगस्फोटनमेवच
यथाकालमधीयीतयावन्नविमनागुरुः १२
ग्रासीनोऽधोगुरोःपार्श्वेसेवांचसुसमाहितः
ग्रासनेशयनेयानेनैवतिष्ठेत्कदाचन १३
धावंतमनुधावेतगच्छंतमनुगच्छति
गोश्वोष्ट्रयानप्रासादेतथाधोविष्टरेषुच १४

आसीतगुरुणासार्द्धंशिलाफलकनौषुच
जितेंद्रियःस्यात्सततंवश्यात्माक्रोधनःशुचिः १५
प्रयुंजीतसदावाचंमधुरांहितकारिणीम्
गंधमाल्यंरसंकल्पंशुक्तिंप्राणिविहिंसनम् १६
अभ्यंजनांजनोन्मर्द्दच्छत्रधारणमेवच
कामंलोभंभयंनिद्रांगीतवादित्रनर्तनम् १७
आतर्जनंपरीवादंस्त्रीप्रेक्षालंभनंतथा
परोपघातंपैशुन्यंप्रयत्नेनविवर्जयेत् १८
उदकुंभंसुमनसोगोशकृन्मृत्तिकाकुशान्
आहरेद्यावदन्नानिभैक्ष्यंचाहरहश्चरेत् १९
घृतंचलवणंसर्वंवर्ज्यंपर्युषितंचयत्
अनृत्यदर्शीसततंभवेद्गीतादिनिस्पृहः २०
नादित्यंवैसमीहेतनाचरेद्दंतधावनम्
एकांतमशुचिस्त्रीभिःशूद्राद्यैरभिभाषणम् २१
गुरूच्छिष्टंभेषजार्थंप्रयुंजीतनकामतः
मलापकर्षणंस्नानंनाचरेद्धिकदाचन २२
नकुर्यान्मानसंविप्रोगुरोस्त्यागेकथंचन
मोहाद्वायदिवालोभात्त्यक्त्वातुपतितोभवेत् २३
लौकिकंवैदिकंवापितथाध्यात्मिकमेववा
आददीतयतोज्ञानंतंनद्रुह्येत्कदाचन २४
गुरोरप्यवलिप्तस्यकार्याकार्यमजानतः
उत्पथप्रतिपन्नस्यनमनुस्त्यागमब्रवीत् २५
गुरोर्गुरौसन्निहितेगुरुवद्वृत्तिमाचरेत्
नत्वाभिसृष्टोगुरुणास्वान्गुरूनभिवादयेत् २६
विद्यागुरुष्वेतदेवंनित्यावृत्तिषुयोगिषु
प्रतिषेधत्सुचाधर्माद्धितंचोपदिशत्सुच २७
श्रेयःस्वगुरुवद्वृत्तिंनित्यमेवसमाचरेत्
गुरुपुत्रेषुदारेषुगुरोश्चैवस्वबंधुषु २८
बालःसंमानयेन्मान्याञ्छिष्टोवायदिकर्म्मणि
अध्यापयन्गुरोःसूनुंगुरुवन्मानमर्हति २९

उत्सादनंचगात्राणांस्नापनोच्छिष्टभोजनः
नकुर्याद्गुरुपुत्रस्यपादयोःशौचमेवच ३०
गुरुवत्प्रतिपूज्याश्चसवर्णागुरुयोषितः
असवर्णाश्चसंपूज्याःप्रत्युत्थानाभिवादनैः ३१
अभ्यंजनंस्नापनंचगात्रोत्सादनमेवच
गुरुपत्न्यानकार्याणिकेशानांचप्रसाधनम् ३२
गुरुपत्नीतुयुवतीनाभिवाद्यातुपादयोः
कुर्वीतवंदनंभूम्यामसावहमितिब्रुवन् ३३
विप्रोष्यपादग्रहणपूर्वकंचाभिवादनम्
गुरुदारेषुकुर्वीतसतांधर्म्ममनुस्मरन् ३४
मातृष्वसामातुलानीश्वश्रूश्चाथपितृष्वसा
संपूज्यागुरुपत्नीवत्समास्तागुरुभार्यया ३५
भ्रातृभार्याश्चसंग्राह्यासवर्णाहन्यहन्यपि
विप्रोष्यतूपसंग्राह्याज्ञातिसंबंधियोषितः ३६
पितुर्भगिन्यामातुश्चजायस्यांचस्वसर्यपि
मातृवद्वृत्तिमातिष्ठेन्माताताभ्योगरीयसी ३७
एवमाचारसंपन्नमात्मवंतमदांभिकम्
वेदमध्यापयेद्धर्म्मंपुराणांगानिनित्यशः ३८
संवत्सरोषितेशिष्येगुरुर्ज्ञानमनिर्दिशन्
हरतेदुष्कृतंतस्यशिष्यस्यवसतोगुरुः ३९
आचार्यपुत्रःशुश्रूषुर्ज्ञानदोधार्मिकःशुचिः
शक्तोन्नदोंबुदःसाधुरध्याप्यादशधर्मतः ४०
कृतकंठस्तथाऽद्रोहःमेधावीगुरुकृन्नरः
आप्तःप्रियोऽथविधिवत्षडध्याप्याद्विजातयः ४१
एतेषुब्राह्मणेदानमन्यत्रतुयथोचितम्
आचम्यसंयतोनित्यमधीयीतउदङ्मुखः ४२
उपसंगृह्यतत्पादौवीक्ष्यमाणोगुरोर्मुखम्
अधीष्वभोइतिब्रूयाद्विरामोऽस्त्वितिचाऽरमेत् ४३
प्राक्कूलान्पर्युपासीतपवित्रैश्चैवपावकः
प्राणायामैस्त्रिभिःपूतस्ततओंकारमर्हति ४४

ब्राह्मणःप्रणवंकुर्यादंतेऽपिविधिवद्द्विजाः
कुर्यादध्यापनंनित्यंसब्रह्मांजलिपूर्वतः ४५
सर्वेषामेवभूतानांवेदश्चक्षुःसनातनः
अधीयीताप्ययंनित्यंब्राह्मण्याद्धीयतेऽन्यथा ४६
अधीयीतऋचोनित्यंक्षीराहुत्यासदेवताः
प्रीणातितर्पयन्कालंकामैर्हूताःसदैवताः ४७
यजूंष्यधीतेनियतंदध्नाप्रीणातिदेवताः
सामान्यधीतेप्रीणातिघृताहुतिभिरन्वहम् ४८
अथर्वांगिरसोनित्यंमध्वाप्रीणातिदेवताः
धर्मांगानिपुराणानिमांसैस्तर्पयतेसुरान् ४९
प्रातश्चसायंप्रयतोनैत्यकंविधिमाश्रितः
गायत्रींसमधीयीतगत्वारण्यंसमाहितः ५०
सहस्त्रपरमांदेवींशतमध्यांदशावराम्
गायत्रींवैजपेन्नित्यंजपयज्ञःप्रकीर्तितः ५१
गायत्रींचैववेदांश्चतुलयातोलयत्प्रभुः
एकतश्चतुरोवेदागायत्रींचतथैकतः ५२
ओंकारमादितःकृत्वाव्याहृतीस्तदनंतरम्
ततोऽधीयीतसावित्रीमेकाग्रःश्रद्धयान्वितः ५३
पुराकल्पेसमुत्पन्नाभूर्भुवःस्वःसनातनाः
महाव्याहृतयस्तिस्त्रःसर्वाशुभनिबर्हणाः ५४
प्रधानंपुरुषःकालोविष्णुब्रह्ममहेश्वराः
सत्वंरजस्तमस्तिस्त्रःक्रमाद्व्याहृतयःस्मृताः ५५
ॐकारस्तत्परंब्रह्मसावित्रीस्यात्तदुत्तरम्
एषमंत्रोमहायोगःसारात्सारउदाहृतः ५६
योऽधीतेऽहन्यहन्येतांगायत्रींवेदमातरम्
विज्ञायार्थंब्रह्मचारीसयातिपरमांगतिम् ५७
गायत्रीवेदजननीगायत्रीलोकपावनी
गायत्र्यानपरंजप्यमेतद्विज्ञायमुच्यते ५८
श्रावणस्यतुमासस्यपौर्णमास्यांद्विजोत्तमाः
आषाढ्यांप्रोष्ठपद्यांवावेदोपाकरणंस्मृतम् ५९

यत्सूर्ययाम्यगमनंमासान्विप्रोर्द्धपंचमान्
अधीयीतशुचौदेशेब्रह्मचारीसमाहितः ६०
पुष्येतुच्छंदसांकुर्याद्बहिरुत्सर्जनंद्विजः
मासिशुक्लस्यवाप्राप्तेपूर्वाह्णेप्रथमेऽहनि ६१
छदांसिचद्विजोऽभ्यस्येच्छुक्लपक्षेतुवैद्विजः
वेदांगानिपुराणानिकृष्णपक्षेषुमानवः ६२
इमान्नित्यमनध्यायानधीयानोविवर्जयेत्
अध्यापनंचकुर्वाणोऽभ्यस्यन्नपिप्रयत्नतः ६३
कर्णश्रवेऽनिलेरात्रौदिवापांसुसमूहने
विद्युत्स्तनितवर्षेषुमहोल्कानांचसंप्लवे ६४
अकालिकमनध्यायमेतेष्वाहप्रजापतिः
एतानभ्युदिनान्विद्याद्यदाप्रादुष्कृताग्निषु ६५
तदाविद्यादनध्यायमनृतौचाभ्रदर्शने
निर्घातेभूमिचलनेज्योतिषांचोपसर्जने ६६
एतानकालिकान्विद्यादनध्यायानृतावपि
प्रादुष्कृतेष्वग्निषुचविद्युत्स्तनितनिस्वने ६७
सज्योतिःस्यादनध्यायःशेषेरात्रौयथादिवा
नित्यानध्यायएवस्याद्ग्रामेषुनगरेषुच ६८
धर्मनैपुरायकामानांपूतिगंधेचनित्यशः
अंतःशवगतेग्रामेवृषलस्यचसन्निधौ ६९
अनध्यायोरुद्यमानेसमयेजलदस्यच
उदकेचार्धरात्रेचविरामूत्रंचविसर्जयन् ७०
उच्छिष्टःश्राद्धभुक्चैवमनसापिनचिंतयेत्
प्रतिगृह्यद्विजोविद्वानेकोद्दिष्टस्यवेतनम् ७१
त्र्यहंनकारयेद्ब्रह्मराज्ञोराहोश्चसूतके
यावदेकान्ननिष्ठास्यात्स्नेहालोपश्चतिष्ठति ७२
विप्रस्यविदुषोदेहेतावद्ब्रह्मनकीर्तयेत्
शयानःप्रौढपादश्चकृत्वाचैवावसक्थिकाम् ७३
नाधीयीतामिषंजग्ध्वाशूद्रश्राद्धान्नमेवच
नीहारेबाणशब्देचसंध्ययोरुभयोरपि ७४

अमावास्याचतुर्दश्योःपौर्णमास्यष्टमीषुच
उपाकर्मणिचोत्सर्गेत्रिरात्रंक्षपणंस्मृतम् ७५
अष्टकासुअहोरात्रमृत्वंतासुचरात्रिषु
मार्गशीर्षेतथापौषेमाघमासेतथैवच ७६
तिस्रोऽष्टकाःसमाख्याताकृष्णपक्षेषुसूरिभिः
श्लेष्मातकस्यच्छायायांशाल्मलेर्मधुकस्यच ७७
कदाचिदपिनाध्येयंकोविदारकपित्थयोः
समानविद्येचमृतेतथासब्रह्मचारिणि ७८
आचार्येसंस्थितेचापित्रिरात्रंक्षपणंस्मृतम्
छिद्राण्येतानिविप्राणामनध्यायाःप्रकीर्तिताः ७९
हिंसंतिराक्षसास्तेषुतस्मादेतान्विवर्जयेत्
नैत्यकेनास्त्यनध्यायःसंध्योपासनमेवच ८०
उपाकर्म्मणिहोमांतेहोममध्येतथैवच
एकामृचमथैकंवायजुःसामानिवापुनः ८१
नाष्टकाद्यास्वधीयीतमारुतेचाभिधावति
अनध्यायस्तुनांगेषुनेतिहासपुराणयोः ८२
नधर्मशास्त्रेष्वन्येषुसर्वाण्येतानिवर्जयेत्
एषधर्मःसमासेनकीर्तितोब्रह्मचारिणः ८३
ब्रह्मणाऽभिहितःपूर्वमृषीणांभावितात्मनाम्
योऽन्यत्रकुरुतेयत्नमनधीत्यश्रुतिंद्विजः ८४
ससंमूढोनसंभाष्योवेदबाह्योद्विजातिभिः
नवेदपाठमात्रेणसंतुष्टोवैभवेद्द्विजः ८५
पाठमात्रावसानस्तुपंकेगौरिवसीदति
योऽधीत्यविधिवद्वेदंवेदार्थंनविचारयेत् ८६
ससंमूढःशूद्रकल्पःपात्रतांनप्रपद्यते
यदित्वात्यंतिकंवासंकर्तुमिच्छतिवैगुरौ ८७
युक्तःपरिचरेदेनमाशरीरविमोक्षणम्
गत्वावनंचविधिवज्जुहुयाज्जातवेदसम् ८८
अधीयीततथानित्यंब्रह्मनिष्ठःसमाहितः
सावित्रींशतरुद्रीयंवेदांतांश्चविशेषतः

अभ्यसेत्सततंयुक्तोभिक्षाशनपरायणः ८९
एतद्विधानंपरमंपुराणंवेदागमेसम्यगिहोदितंवः
पुरामहर्षिप्रवराभिपृष्टःस्वायंभुवोयन्मनुराहदेवः ९०
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेकर्मयोगकथनं
नामत्रिपंचाशत्तमोऽध्यायः ५३

चतुःपंचाशत्तमोऽध्यायः

व्यासउवाच-
वेदंवेदौतथावेदान्वेदांगानितथाद्विजाः
अधीत्यचाधिगम्यार्थंततःस्नायाद्द्विजोत्तमः १
गुरवेतुधनंदत्वास्नायीततदनुज्ञया
तीर्णव्रतोथयुक्तात्माशक्तोवास्नातुमर्हति २
वैणवींधारयेद्यष्टिमंतर्वासस्तथोत्तरम्
यज्ञोपवीतद्वितयंसोदकंचकमंडलुम् ३
छत्रंचोष्णीषममलंपादुकेचाप्युपानहौ
रौक्मेचकुंडलेधार्येकृत्तकेशनखःशुचिः ४
अन्यत्रकांचनाद्विप्रोनरक्तांबिभृयात्स्रजम्
शुक्लांबरधरोनित्यंसुगंधःप्रियदर्शनः ५
नजीर्णमलवद्वासाभवेद्वैविभवेसति
नरक्तमुल्बणंचान्यधृतंवासोनकुंडलम् ६
नोपानहौस्रजंचाथपादुकेचप्रयोजयेत्
उपवीतमलंकारंदर्शयन्कृष्णमाजिनम् ७
नापसव्यंपरीदध्याद्वासोनविकृतंवसेत्
आहरेद्विधिवद्दारान्सदृशानात्मनःशुभान् ८
रूपलक्षणसंयुक्तान्योनिदोषविवर्जितान्
अपितृगोत्रजभवामन्यमानुषगोत्रजाम् ९
आहरेद्ब्राह्मणोभार्यांशीलशौचसमन्विताम्
ऋतुकालाभिगामीस्याद्यावत्पुत्रोभिजायते १०
वर्जयेत्प्रतिषिद्धानिप्रयत्नेनदिनानितु
षष्ठ्यष्टमींपंचदशींद्वादशींचचतुर्दशीम् ११

ब्रह्मचारीभवेन्नित्यंतद्वज्जन्मत्रयाहनि
आदधीतविवाहाग्निंजुहुयाज्जातवेदसम् १२
एतानिस्नातकोनित्यंपावनानिचपावयेत्
वेदोदितंस्वकंकर्म्मनित्यंकुर्यादतंद्रितः १३
अकुर्वाणःपतत्याशुनरकानतिभीषणान्
अभ्यसेत्प्रयतोवेदंमहायज्ञान्नहापयेत् १४
कुर्याद्गृह्याणिकार्याणिसंध्योपासनमेवच
सख्यंसमाधिकैःकुर्यादुपेयादीश्वरंसदा १५
दैवतान्यभिगच्छेतकुर्य्याद्भार्य्याभिपोषणम्
नधर्मंख्यापयेद्विद्वान्नपापंगूहयेदपि १६
कुर्वीतात्महितंनित्यंसर्वभूतानुकंपकः
वयसःकर्म्मणोऽथस्यश्रुतस्याभिजनस्यच १७
देशवाग्बुद्धिसारूप्यमाचरन्विचरेत्सदा
श्रुतिस्मृत्युदितंसम्यक्साधुभिर्यश्चसेवितः १८
तमाचारंनिषेवेतनेहेतान्यत्रकर्हिचित्
येनास्यपितरोयातायेनयाताःपितामहाः १९
तेनयायात्सतांमार्गंतेनगच्छन्नदुष्यति
नित्यंस्वाध्यायशीलःस्यान्नित्यंयज्ञोपवीतवान् २०
सत्यवादीजितक्रोधोलोभमोहविवर्जितः
सावित्रीजापनिरतःश्राद्धकृन्मुच्यतेगृही २१
मातापित्रोर्हितेयुक्तोब्राह्मणस्यहितेरतः
दातायज्वादेवभक्तोब्रह्मलोकेमहीयते २२
त्रिवर्गसेवीसततंदेवानांचसमर्चनम्
कुर्यादहरहर्नित्यंनमस्येत्प्रयतःसुरान् २३
विभागशीलःसततंक्षमायुक्तोदयालुकः
गृहस्थस्तुसमाख्यातोनगृहेणगृहीभवेत् २४
क्षमादयाचविज्ञानंसत्यंचैवदमःशमः
अध्यात्मनित्यताज्ञानमेतद्ब्राह्मणलक्षणम् २५
एतस्मान्नप्रमाद्येतविशेषेणद्विजोत्तमः
यथाशक्तिचरन्धर्म्मंनिंदितानिविवर्जयेत् २६

विधूयमोहकलिलंलब्ध्वायोगमनुत्तमम्
गृहस्थोमुच्यतेबंधान्नात्रकार्याविचारणा २७
विगर्हितजयक्षेपहिंसाबंधवधात्मनाम्
अन्यमन्युसमुत्थानांदोषाणांमर्षणंक्षमा २८
स्वदुःखेष्वेवकारुण्यंपरदुःखेषुसौहृदम्
दयेतिमुनयःप्राहुःसाक्षाद्धर्मस्यसाधनम् २९
चतुर्दशानांविद्यानांधारणाहिपरार्थतः
विज्ञानमितितद्विद्याद्येनधर्मोविवर्धते ३०
अधीत्यविधिवद्विद्यामर्थंचैवोपलभ्यते
धर्मकार्याणिकुर्वीतह्येतद्विज्ञानमुच्यते ३१
सत्येनलोकंजयतिसत्यंतत्परमंपदम्
यथाभूताप्रमादंतुसत्यमाहुर्मनीषिणः ३२
दमःशरीरोपरतिःशमःप्रज्ञाप्रसादतः
अध्यात्ममक्षरंविद्यायत्रगत्वानशोचति ३३
ययासदेवोभगवान्विद्ययाविद्यतेपरः
साक्षादेवहृषीकेशस्तज्ज्ञानमितिकीर्तितम् ३४
तन्निष्ठस्तत्परोविद्वान्नित्यमक्रोधनःशुचिः
महायज्ञपरोविप्रोलभतेतदनुत्तमम् ३५
धर्मस्यायतनंयत्नाच्छरीरंपरिपालयेत्
नहिदेहंविनाविष्णुःपुरुषैर्विद्यतेपरः ३६
नित्यंधर्मार्थकामेषुयुज्येतनियतोद्विजः
नधर्मवर्जितंकाममर्थंवामनसास्मरेत् ३७
सीदन्नपिहिधर्मेणनत्वधर्मंसमाचरेत्
धर्मोहिभगवान्देवोगतिःसर्वेषुजंतुषु ३८
भूतानांप्रियकारीस्यान्नपरद्रोहकर्मधीः
नवेददेवतानिंदांकुर्यात्तैश्चनसंवसेत् ३९
यस्त्विमंनियतोमर्त्योधर्माध्यायंपठेच्छुचिः
अध्यापयेच्छ्रावयेद्वाब्रह्मलोकेमहीयते ४०
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेचतुःपंचाशत्तमोऽध्यायः ५४

## पंचपंचाशत्तमोऽध्यायः

व्यासउवाच-
नहिंस्यात्सर्वभूतानिनानृतंवावदेत्क्वचित्
नाहितंनाप्रियंवाच्यंनस्तेनःस्यात्कदाचन १
तृणंवायदिवाशाकंमृदंवाजलमेवच
परस्यापहरञ्जंतुर्नरकंप्रतिपद्यते २
नराज्ञःप्रतिगृह्णीयान्नशूद्रात्पतितादपि
नचान्यस्मादशक्तश्चेन्निंदितान्वर्जयेद्बुधः ३
नित्यंयाचनकोनस्यात्पुनस्तंनैवयाचयेत्
प्राणानपहरत्येवंयाचकस्तस्यदुर्मतिः ४
नदेवद्रव्यहारीस्याद्विशेषेणद्विजोत्तमः
ब्रह्मस्वंवानापहरेदापत्स्वपिकदाचन ५
नविषंविषमित्याहुर्ब्रह्मस्वंविषमुच्यते
देवस्वंचापियत्नेनसदापरिहरेत्ततः ६
पुष्पंशाकोदकंकाष्ठंतथामूलंफलंतृणम्
अदत्तानिचनस्तेयंमनुःप्राहप्रजापतिः ७
गृहीतव्यानिपुष्पाणिदेवार्चनविधौद्विजः
नैकस्मादेवनियतमननुज्ञायकेवलम् ८
तृणंकाष्ठंफलंपुष्पंप्रकाशंवैहरेद्बुधः
धर्मार्थंकेवलंप्राहुरन्यथापतितोभवेत् ९
तिलमुद्गयवादीनांमुष्टिर्ग्राह्यापथिस्थितैः
क्षुधितैर्नान्यथाविप्राधर्मादिभिरितिस्थितिः १०
नधर्मस्यापदेशेनपापंकृत्वाव्रतंचरेत्
व्रतेनपापंव्यागुह्यकुर्वन्स्त्रीशूद्रदंभनम् ११
प्रेत्येहचेदृशोविप्रोगर्ह्यतेब्रह्मवादिभिः
छद्मनाचरितंयच्चव्रतंरक्षांसिगच्छति १२
अलिगीलिगिवेषेणयोवृत्तिमुपतिष्ठति
सलिगिनोहरेदेनस्तिर्यग्योनौचजायते १३
याचनंयोनिसंबंधंसहवासंचभाषणम्
कुर्वाणःपततेनित्यंतस्माद्यत्नेनवर्जयेत् १४

देवद्रोहंनकुर्वीतगुरुद्रोहंतथैवच
देवद्रोहाद्गुरुद्रोहःकोटिकोटिगुणाधिकः १५
जनापवादोनास्तिक्यंतस्मात्कोटिगुणाधिकम्
गोभिश्चदैवतैर्विप्रैःकृष्याराजोपसेवया १६
कुलान्यकुलतांयांतियानिहीनानिधर्म्मतः
कुविचारैःक्रियालोपैर्वेदानध्ययनेनच १७
कुलान्यकुलतांयांतिब्राह्मणाऽतिक्रमेणच
अनृतात्पारदार्याच्चतथाऽभक्ष्यस्यभक्षणात् १८
अगोत्रधर्म्माचरणात्क्षिप्रंनश्यतिवैकुलम्
अश्रोत्रियेषुदानाच्चावृषलेषुतथैवच १९
विहिताचारहीनेषुक्षिप्रंनश्यतिवैकुलम्
अधार्मिकैर्वृतेग्रामेनव्याधिबहुलेवसेत् २०
शूद्रराज्येचनवसेन्नपाखंडजनैर्वृते
हिमवद्विंध्ययोर्मध्यंपूर्वपश्चिमयोःशुभम् २१
मुक्त्वासमुद्रयोर्देशंनान्यत्रनिवसेद्द्विजः
कृष्णोवायत्रचरतिमृगोनित्यंस्वभावतः २२
पुरायावाविश्रुतानद्यस्तत्रवानिवसेद्द्विजः
अर्द्धकोशंनदीकूलंवर्जयित्वाद्विजोत्तमः २३
नान्यत्रनिवसेत्पुरायंनांत्यजग्रामसन्निधौ
नसंवसेच्चपतितैर्नचांडालैर्नपुल्कसैः २४
नमूर्खैर्नावलिप्तैश्चनान्यैर्जायावसायिभिः
एकशय्यासनेपंक्तिर्भांडेपक्वान्नमिश्रणम् २५
यजनाध्यापनेयोनिस्तथैवसहभोजनम्
सहाध्यायस्तुदशमःसहयाजनमेवच २६
एकादशसमुद्दिष्टादोषाःसांकर्यसंस्थिताः
समीपेचाप्यवस्थानात्पापंसंक्रमतेनृणाम् २७
तस्मात्सर्वप्रयत्नेनसांकर्य्यंपरिवर्जयेत्
एकपंक्त्युपविष्टायेनस्पृशंतिपरस्परम् २८
भस्मनाकृतमर्य्यादानतेषांसंकरोभवेत्
अग्निनाभस्मनाचैवसलिलेनविलेखतः २९

द्वारेणस्तंभमार्गेणषड्भिःपंक्तिर्विभिद्यते
नकुर्याच्छुष्कवैराणिविवादंनचपैशुनम् ३०
परक्षेत्रेगांचरंतींनचाचक्षीतकर्हिचित्
नसंवसेत्सूचकेननकंवैमर्मणिस्पृशेत् ३१
नसूर्यपरिवेषंवानेंद्रचापंपराह्निकम्
परस्मैकथयेद्विद्वान्शशिनंवाथकांचनम् ३२
नकुर्याद्बहुभिःसार्द्धंविरोधंबंधुभिस्तथा
आत्मनःप्रतिकूलानिपरेषांनसमाचरेत् ३३
तिथिंपक्षस्यनब्रूयान्नक्षत्राणिननिर्दिशेत्
नोदक्यामभिभाषेतनाशुचिंवाद्विजोत्तमः ३४
नदेवगुरुविप्राणांदीयमानंतुवारयेत्
नचात्मानंप्रशंसेद्वापरनिंदांचवर्जयेत् ३५
वेदनिंदांदेवनिंदांप्रयत्नेनविवर्जयेत्
यस्तुदेवानृषींश्चैववेदान्वानिंदतेद्विजः ३६
नतस्यनिष्कृतिर्दृष्टाशास्त्रेष्विहमुनीश्वराः
निंदयेद्वागुरुंदेवंवेदंवासोपबृंहणम् ३७
कल्पकोटिशतंसाग्रंरौरवेपच्यतेनरः
तूष्णीमासीतनिंदायांनब्रूयात्किंचिदुत्तरम् ३८
कर्णौपिधायगंतव्यंनचैनमवलोकयेत्
वर्ज्जयेद्वैरहस्यानिपरेषांगर्हणंबुधः ३९
विवादंस्वजनैःसार्द्धंनकुर्य्याद्वैकदाचन
नपापंपापिनांब्रूयादपापंवाद्विजोत्तमः ४०
सत्येनतुल्योदोषःस्यादसत्याद्दोषवान्भवेत्
नृणांमिथ्याभिशस्तानांपतंत्यश्रूणिरोदनात् ४१
तानिपुत्रान्पशून्घ्नंतितेषांमिथ्याभिशंसिनाम्
ब्रह्महत्यासुरापानेस्तेयेगुर्वंगनागमे ४२
दृष्टंवैशोधनंवृद्धैर्नास्तिमिथ्याभिशंसने
नेक्षेतोद्यंतमादित्यंशशिनंवाऽनिमित्ततः ४३
नास्तंयांतंनवारिस्थंनोपस्पृष्टंनमध्यगम्
तिरोहितंसमीक्षेतनादर्शाद्यनुगामिनम् ४४

ननग्नांस्त्रियमीक्षेतपुरुषंवाकदाचन
नचमूत्रंपुरीषंवानचसंसृष्टमैथुनम् ४५
नाशुचिःसूर्यसोमादीन्ग्रहानालोकयेद्बुधः
नाभिभाषेतचपरमुच्छिष्टोवावगुंठितः ४६
नपश्येत्प्रेतसंस्पर्शनक्रुद्धस्यगुरोर्मुखम्
नतैलोदकयोश्छायांनपंक्तिंभोजनेसति ४७
नमुक्तबंधनंपश्येन्नोन्मत्तंगजमेववा
नाश्नीयाद्भार्ययासार्द्धंनैनामीक्षेतचाश्नतीम् ४८
क्षुवतींजृंभमाणांवानासनस्थांयथासुखम्
नोदकेचात्मनोरूपंशुभंवाशुभमेववा ४९
नलंघयेच्चमतिमान्नाधितिष्ठेत्कदाचन
नशूद्रायमतिंदद्यात्कृसरंपायसंदधि ५०
नोच्छिष्टंवामधुधृतंनचकृष्णाजिनंहविः
नचैवास्मैव्रतंब्रूयान्नचधर्मंवदेद्बुधः ५१
नचक्रोधवशंगच्छेद्द्वेषंरागंचवर्जयेत्
लोभंदंभंतथाशाठ्यंह्यसूयांज्ञानकुत्सनम् ५२
ईर्ष्यांमदंतथाशोकंमोहंचपरिवर्जयेत्
नकुर्यात्कस्यचित्पीडांसुतंशिष्यंतुताडयेत् ५३
नहीनानुपसेवेतनचतृष्णामतिःक्वचित्
नात्मानंचावमन्येतदैन्यंयत्नेनवर्जयेत् ५४
नविशिष्टमसत्कुर्यान्नात्मानंवासनाद्बुधः
ननखेनलिखेद्भूमिंगांचसंवेशयन्नहि ५५
ननदीषुनदींब्रूयात्पर्वतेषुचपर्वतान्
आवासेभोजनेवापिनत्यजेत्सहयायिनम् ५६
नावगाहेदपोनग्नोवह्निंनातिव्रजेत्तथा
शिरोभ्यंगावशिष्टेनतैलेनांगंनलेपयेत् ५७
नसर्पशस्त्रैःक्रीडेतस्वानिखानिनसंस्पृशेत्
रोमाणिचरहस्यानिनाशिष्टेनसहव्रजेत् ५८
नपाणिपादवाङ्नेत्रचापल्यंसमुपाश्रयेत्
नशिश्नोदरचापल्यंनचश्रवणयोःक्वचित् ५९

नचांगनखवाद्यंवैकुर्यान्नांजलिनापिबेत्
नाभिहन्याज्जलंपद्भ्यांपाणिनावाकदाचन ६०
नशातयेदिष्टिकाभिर्मूलानिचफलानिच
नम्लेच्छभाषणंशिक्षेन्नाकर्षेच्चपदासनम् ६१
नखभेदनमास्फोटंछेदनंवाविलेखनम्
कुर्य्याद्विमर्द्दनंधीमान्नाकस्मादेवनिष्फलम् ६२
नोत्संगेभक्षयेद्भक्ष्यंवृथाचेष्टांनचाचरेत्
ननृत्येदथवागायेन्नवादित्राणिवादयेत् ६३
नसंहताभ्यांपाणिभ्यांकंडूयेदात्मनःशिरः
नलौकिकैस्तवैर्देवांस्तोषयेद्वाक्पतेरपि ६४
नाक्षैःक्रीडेन्नधावेतनाप्सुविण्मूत्रमाचरेत्
नोच्छिष्टःसंविशेन्नित्यंननग्नःस्नानमाचरेत् ६५
नगच्छंस्तुपठेद्वापिनचैवस्वशिरःस्पृशेत्
नदंतैर्नखरोमाणिच्छिंद्यात्सुप्तंनबोधयेत् ६६
नाबालातपमासेवेत्प्रेतधूमंविवर्जयेत्
नैवस्वप्याच्छून्यगेहेस्वयंनोपानहौहरेत् ६७
नाकारणाद्वानिष्ठीवेन्नबाहुभ्यांनदींतरेत्
नपादक्षालनंकुर्यात्पादेनैवकदाचन ६८
नाग्नौप्रतापयेत्पादौनकांस्येधावयेद्बुधः
नाभिप्रसारयेद्देवंब्राह्मणान्गामथापिवा ६९
वाय्वग्निनृपविप्रान्वासूर्यंवाशशिनंप्रति
अशुद्धःशयनंपानंस्वाध्यायंस्नानभोजनम् ७०
बहिर्निष्क्रमणंचैवनकुर्वीतकदाचन
स्वप्नमध्ययनंस्नानमुद्वर्तंभोजनंगतिम् ७१
उभयोःसंध्ययोर्नित्यंमध्याह्नेचैववर्जयेत्
नस्पृशेत्पाणिनोच्छिष्टोविप्रोगोब्राह्मणानलान् ७२
नचालनंपदावापिनदेवप्रतिमांस्पृशेत्
नाशुद्धोग्निंपरिचरेन्नदेवान्कीर्तयेदृषीन् ७३
नावगाहेदगाधांबुधावयेन्नाऽनिमित्ततः
नवामहस्तेनोद्धृत्यपिबेद्वक्त्रेणवाजलम् ७४

नोत्तरेदनुपस्पृश्यनाप्सुरेतःसमुत्सृजेत्
अमेध्यालिप्तमर्हंवालोहितंवाविषाणिवा ७५
व्यतिक्रामेन्नस्त्रवंतींनाप्सुमैथुनमाचरेत्
चैत्यवृक्षंनवैछिंद्यान्नाप्सुष्ठीवनमाचरेत् ७६
नास्थिभस्मकपालानिनकेशान्नचकंटकान्
तुषांगारकरीषंवानाधितिष्ठेत्कदाचन ७७
नचाग्निंलंघयेद्धीमान्नोपदध्यादधःक्वचित्
नचैनंपादतःकुर्य्याच्छूर्पेणनधमेद्बुधः ७८
नवृक्षमवरोहेतनावेक्षेताशुचिःक्वचित्
अग्नौनचक्षिपेदग्निंनाद्भिःप्रशमयेत्तथा ७९
सुहृन्मरणमात्रंवास्वयंनश्रावयेत्परान्
अपरायंकूटपरायंवाविक्रयेनप्रयोजयेत् ८०
नवह्निंमुखनिःश्वासैर्ज्वालयेन्नाशुचिर्बुधः
पुरायस्थानोदकस्थानेसीमांतंवाहयेन्नतु ८१
नभिंद्यात्पूर्वसमयमभ्युपेतंकदाचन
परस्परंपशून्व्याघ्रान्पक्षिणोनचयोधयेत् ८२
परबाधांनकुर्वीतजलवातातपादिभिः
कारयित्वासुकर्माणिगुरून्पश्चान्नवंचयेत् ८३
सायंप्रातर्गृहद्वारान्रक्षार्थंपरिघट्टयेत्
बहिर्माल्यंसुगंधिंवाभार्यायासहभोजनम् ८४
विगृह्यवादंकृत्वावाप्रवेशंचविवर्जयेत्
नखादन्ब्राह्मणस्तिष्ठेन्नजल्पेद्वाहसेद्बुधः ८५
स्वमग्निंचैवहस्तेनस्पृशेन्नाप्सुचिरंवसेत्
नपक्षकेणोपधमेन्नशूर्पेणचपाणिना ८६
मुखेनाग्निंसमिंधीतमुखादग्निरजायत
परस्त्रियंनभाषेतनायाज्यंयाजयेद्बुधः ८७
नैकश्चरेत्सदाविप्रःसमुदायंचवर्जयेत्
नदेवायतनंगच्छेत्कदाचिद्वाऽप्रदक्षिणम् ८८
नपीडयेद्वावस्त्राणिनदेवायतनेस्वपेत्
नैकोध्वानंप्रपद्येतनाधार्मिकजनैसह ८९

नव्याधिदूषितैर्वापिनशूद्रैःपतितेनवा
नोपानद्वर्जितोवाथजलादिरहितस्तथा ९०
नवर्त्मनिचितिंवाममतिक्रामेत्क्वचिद्द्विजः
ननिंदेद्योगिनःसिद्धान्व्रतिनोवायतींस्तथा ९१
देवतायतनंप्राज्ञादेवानांचैवसत्रिणाम्
नाक्रामेत्कामतश्छायांब्राह्मणानांचगोरपि ९२
स्वांतुनाक्रामयेच्छायांपतिताद्यैर्नरोगिभिः
नांगारभस्मकेशादिष्वधितिष्ठेत्कदाचन ९३
वर्जयेन्मार्जनीरेणुंस्नानवस्त्रघटोदकम्
नभक्षयेदभक्ष्याणिनापेयंचपिबेद्द्विजः ९४
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेपंचपंचाशत्तमोऽध्यायः ५५

## षट्पंचाशत्तमोऽध्यायः

व्यासउवाच-
नाद्याच्छूद्रस्यविप्रोन्नंमोहाद्वायदिकामतः
सशूद्रयोनिंव्रजतियस्तुभुंक्तेत्वनापदि १
षण्मासान्योद्विजोभुंक्तेशुद्रस्यान्नंविगर्हितम्
जीवन्नेवभवेच्छूद्रोमृतःश्वाचाभिजायते २
ब्राह्मणक्षत्रियविशांशूद्रस्यचमुनीश्वराः
यस्यान्नेनोदरस्थेनमृतस्तद्योनिमाप्नुयात् ३
राजान्नंवर्तकान्नंचषंढान्नंचर्म्मकारिणाम्
गणान्नंगणिकान्नंचषडन्नंचविवर्जयेत् ४
चक्रोपजीविरजकतस्करध्वजिनांतथा
गांधर्वलोहकारान्नंमृतकान्नंविवर्जयेत् ५
कुलालचित्रकारान्नंवार्धुषेःपतितस्यच
पौनर्भवच्छत्रिकयोरभिशप्तस्यचैवहि ६
सुवर्णकारशैलूषव्याधवंध्यातुरस्यच
चिकित्सकस्यचैवान्नंपुंश्चल्यादंडकस्यच ७
स्तेननास्तिकयोरन्नंदेवतानिंदकस्यच
सोमविक्रयिणश्चान्नंश्वपाकस्यविशेषतः ८

भार्य्याजितस्यचैवान्नंयस्यचोपपतिर्गृहे
उत्सृष्टस्यकदर्यस्यतथैवोच्छिष्टभोजिनः ९
पापीयोन्नंचसंघान्नंशस्त्राजीवस्यचैवहि
भीतस्यरुदितस्यान्नमवक्रुष्टंपरिक्षतम् १०
ब्रह्मद्विषःपापरुचेःश्राद्धान्नंमृतकस्यच
वृथापाकस्यचैवान्नंशावान्नंचातुरस्यच ११
अप्रजानांतुनारीणांकृतघ्नस्यतथैवच
कारुकान्नंविशेषेणशस्त्रविक्रयिणस्तथा १२
शौंडान्नंघांटिकान्नंचभिषजामन्नमेवच
विद्धत्प्रजननस्यान्नंपरिवेत्रन्नमेवच १३
पुनर्भुवोविशेषेणतथैवदिधिषूपतेः
अवज्ञातंचावधूतंसरोषंविस्मयान्वितम् १४
गुरोरपिनभोक्तव्यमन्नंसंस्कारवर्जितम्
दुष्कृतंहिमनुष्यस्यसर्वमन्नेव्यवस्थितम् १५
योयस्यान्नंसमश्नातिसतस्याश्नातिकिल्बिषम्
अर्द्धकाकुलंमित्रंचगोपालोवाहनापितौ १६
एतेशूद्रेषुभोज्यान्नायश्चात्मानंनिवेदयेत्
कुशीलवःकुंभकश्चक्षेत्रकर्मकएवच १७
एतेशूद्रेषुभोज्यान्नादृष्ट्वास्वल्पगुणंबुधैः
पायसंस्नेहपक्वंचगोरसश्चैवसक्तवः १८
पिण्याकंचैवतैलंचशूद्राद्ग्राह्यंद्विजातिभिः
वृंताकंनालिकाशाकंकुसुंभंभस्मकंतथा १९
पलांडुंलशुनंशुक्तंनिर्य्यासंचैववर्जयेत्
छत्राकंविड्वराहंचस्विन्नंपीयूषमेवच २०
विलयंविमुखंचैवकोरकाणिविवर्जयेत्
गृंजनंकिंशुकंचैवकूष्मांडंचतथैवच २१
उदुंबरमलाबुंचजग्ध्वापततिवैद्विजः
तथाकृसरसंयावौपायसापूपमेवच २२
अनुपाकृतमांसंचदेवान्नानिहवींषिच
यवागूंमातुलिगंचमत्स्यानप्यनुपाकृतान् २३

नीपंकपित्थंप्लत्तंचप्रयत्नेनविवर्जयेत्
पिरयाकंचोद्धृतस्नेहंदेवधान्यंतथैवच २४
रात्रौचतिलसंबंधंप्रयत्नेनदधित्यजेत्
नाश्नीयात्पयसातक्रंनाभत्त्यानुपयोजयेत् २५
कृमिदुष्टंभावदुष्टंमृत्संसर्गंचवर्जयेत्
कृमिकीटावपन्नंचसुहृत्क्लेदंचनित्यशः २६
श्वाघ्रातंचपुनःसिद्धंचंडालावेत्तितंतथा
उदक्ययाचपतितैर्गवासंघ्रातमेवच २७
असंगतंपर्य्युषितंपर्यस्तान्नंचनित्यशः
काककुक्कुटसंस्पृष्टंकृमिभिश्चैवसंगतम् २८
मनुष्यैरप्यवघ्रातंकुष्ठिनास्पृष्टमेवच
नरजस्वलयादत्तंनपुंश्चल्यासरोगया २९
मलवद्वाससावापिपरवासोथवर्जयेत्
विवत्सायाश्चगोत्तीरंमेषस्यानिर्दशस्यच ३०
आविकंसंधिनीत्तीरमपेयंमनुरब्रवीत्
बलाकंहंसदात्यूहंकलविंकंशुकंतथा ३१
कुररंचचकोरंचजालपादंचकोकिलम्
वायसान्खंजरीटांश्चश्येनंगृध्रंतथैवच ३२
उलूकंचक्रवाकंचभासंपारावतंतथा
कपोतंटिट्टिभंचैवग्रामकुक्कुटमेवच ३३
सिंहंव्याघ्रंचमार्जारंश्वानंसूकरमेवच
शृगालंमर्कटंचैवगर्द्दभंनचभत्तयेत् ३४
नभत्तयेत्सर्पमृगाञ्छिखिनोन्यान्वनेचरान्
जलेचरान्स्थलचरान्प्राणिनश्चेतिधारणा ३५
गोधाकूर्मःशशःखड्गःसल्लकश्चेतिसत्तमाः
भत्त्यान्पंचनखान्नित्यंमनुराहप्रजापतिः ३६
मत्स्यान्सशल्कान्भुंजीतमांसंरौरवमेवच
निवेद्यदेवताभ्यस्तुब्राह्मणेभ्यश्चनान्यथा ३७
मयूरंतित्तिरंचैवकपोतंचकपिंजलम्
वार्ध्रीणसंबकंभत्त्यंमीनंहंसंपराजितम् ३८

शफरीसिंहतुंडंचतथापाठीनरोहितौ
मत्स्याश्चैतेसमुद्दिष्टाभक्षणीयाद्विजोत्तमाः ३९
प्रोक्षितंभक्षयेदेषांमांसंचद्विजकाम्यया
यथाविधिप्रयुक्तंचप्राणानामपिचात्यये ४०
भक्षयेन्नैवमांसानिशेषभोजीनलिप्यते
श्रौषधार्थमशक्तोवानियोगाद्यज्ञकारणात् ४१
श्रामंत्रितश्चयःश्राद्धेदैवेवामांसमुत्सृजेत्
यावंतिपशुरोमाणितावन्नरकमृच्छति ४२
श्रदेयंवाप्यपेयंवातथैवास्पृश्यमेववा
द्विजातीनामनालोक्यंनित्यंमद्यमितिस्थितिः ४३
तस्मात्सर्वप्रयत्नेनमद्यंनित्यंविवर्जयेत्
पीत्वापततिकर्म्मभ्यस्त्वसंभाष्योभवेद्द्विजः ४४
भक्षयित्वाप्यभक्ष्याणिपीत्वाऽपेयान्यपिद्विजः
नाधिकारीभवेत्तावद्यावत्तन्नजहात्यधः ४५
तस्मात्परिहरेन्नित्यमभक्ष्याणिप्रयत्नतः
श्रपेयानिचविप्रोवैतथाचेद्यातिरौरवम् ४६
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेभक्ष्याभक्ष्यनियमो
नामषट्पंचाशत्तमोऽध्यायः ५६

सप्तपंचाशत्तमोऽध्यायः

व्यासउवाच-
श्रथातःसंप्रवक्ष्यामिदानधर्म्ममनुत्तमम्
ब्रह्मणाभिहितंपूर्वमृषीणांब्रह्मवादिनाम् १
श्रर्थानामुचितंपात्रेश्रद्धयाप्रतिपादनम्
दानमित्यभिनिर्दिष्टंभुक्तिमुक्तिफलप्रदम् २
योददातिविशिष्टेभ्यःश्रद्धयापरयायुतः
तद्वैदत्तमहंमन्येशेषंकस्यापिरक्षति ३
नित्यंनैमित्तिकंकाम्यंत्रिविधंदानमुच्यते
चतुर्थंविमलंप्रोक्तंसर्वदानोत्तमोत्तमम् ४
श्रहन्यहनियत्किंचिद्दीयतेनुपकारिणे

अनुद्दिश्यफलंतस्माद्ब्राह्मणायतुनित्यकम् ५
यत्तुपापोपशांत्यर्थंदीयतेविदुषांकरे
नैमित्तिकंतदुद्दिष्टंदानंसद्भिरनुत्तमम् ६
अपत्यविजयैश्वर्यसुखार्थंयत्प्रदीयते
दानंतत्काम्यमाख्यातमृषिभिर्धर्मचिंतकैः ७
यदीश्वरस्यप्रीत्यर्थंब्रह्मवित्सुप्रदीयते
चेतसाधर्मयुक्तेनदानंतद्विमलंशिवम् ८
दानधर्मंनिषेवेतपात्रमासाद्यशक्तितः
उपास्यतेतुतत्पात्रंयत्तारयतिसर्वतः ९
कुटुंबभुक्तिवसनाद्देयंयदतिरिच्यते
अन्यथादीयतेयद्धिनतद्दानंफलप्रदम् १०
श्रोत्रियायकुलीनायविनीतायतपस्विने
व्रतस्थायदरिद्रायप्रदेयंभक्तिपूर्वकम् ११
यस्तुदद्यान्महींभक्त्याब्राह्मणायाहिताग्नये
सयातिपरमंस्थानंयत्रगत्वानशोचति १२
इक्षुभिःसंयुतांभूमिंयवगोधूमशालिनीम्
ददातिवेदविदुषेयःसभूयोनजायते १३
गोचर्ममात्रामपिवायोभूमिंसंप्रयच्छति
ब्राह्मणायदरिद्रायसर्वपापैःप्रमुच्यते १४
भूमिदानात्परंदानंविद्यतेनेहकिंचन
अन्नदानंतेनतुल्यंविद्यादानंततोधिकम् १५
योब्राह्मणायशांतायशुचयेधर्मशीलिने
ददातिविद्यांविधिनाब्रह्मलोकेमहीयते १६
दद्यादहरहःस्वर्णंश्रद्धयाब्रह्मचारिणे
सर्वपापविनिर्मुक्तोब्रह्मणःस्थानमाप्नुयात् १७
गृहस्थायान्नदानेनफलमाप्नोतिमानवः
अन्नमेवास्यदातव्यंदत्वाप्नोतिपरांगतिम् १८
वैशाख्यांपूर्णमास्यांतुब्राह्मणान्सप्तपंचवा
उपोष्यविधिनाशांतःशुचिःप्रयतमानसः १९
पूजयित्वातिलैःकृष्णैर्मधुनाचविशेषतः

प्रीयतांधर्मराजेतियदामनसिवर्त्तते २०
यावज्जीवंतुयत्पापंतत्त्तणादेवनश्यति
कृष्णाजिनेतिलान्कृत्वाहिररायंमधुसर्पिषी २१
ददातियस्तुविप्रायसर्वंतरतिदुष्कृतम्
घृतान्नमुदकुंभंचवैशाख्यांतुविशेषतः २२
निर्द्दिश्यधर्मराजायविप्रेभ्योमुच्यतेभयात्
सुवर्णतिलयुक्तैस्तुब्राह्मणान्सप्तपंचवा २३
तर्पयेदुदपात्रैस्तुब्रह्महत्यांव्यपोहति
माघमासेतमिस्त्रेतुद्वादश्यांसमुपोषितः २४
शुक्लांबरधरःकृष्णैस्तिलैर्हुत्वाहुताशनम्
प्रदद्याद्ब्राह्मणेभ्यस्तुतिलानेवसमाहितः २५
जन्मप्रभृतियत्पापंसर्वंतरतिवैद्विजः
अमावास्यामनुप्राप्यब्राह्मणायतपस्विने २६
यत्किंचिद्देवदेवेशंदद्याच्चोद्दिश्यकेशवम्
प्रीयतामीश्वरोविष्णुर्हृषीकेशःसनातनः २७
सप्तजन्मकृतंपापंतत्त्तणादेवनश्यति
यस्तुकृष्णचतुर्दश्यांस्नात्वादेवंपिनाकिनम् २८
आराधयेद्द्विजमुखेनतस्यास्तिपुनर्भवः
कृष्णाष्टम्यांविशेषेणधार्मिकायद्विजातये २९
स्नात्वाभ्यर्च्यथान्यायंपादप्रत्तालनादिभिः
प्रीयतांमेमहादेवोदद्याद्द्रव्यंस्वकीयकम् ३०
सर्वपापविनिर्मुक्तःप्राप्नोतिपरमांगतिम्
द्विजैःकृष्णचतुर्दश्यांकृष्णाष्टम्यांविशेषतः ३१
अमावास्यांतथाभक्तैःपूजनीयस्त्रिविक्रमः
एकादश्यांनिराहारोद्वादश्यांपुरुषोत्तमम् ३२
अर्चयेद्ब्राह्मणमुखेसगच्छेत्परमंपदम्
एषातिथिर्वैष्णवीस्याद्द्वादशीशुक्लपत्ततः ३३
तस्यामाराधयेद्देवंप्रयत्नेनजनार्दनम्
यत्किंचिद्देवमीशानमुद्दिश्यब्राह्मणेशुचौ ३४
दीयतेविष्णुमेवापितदनंतफलंस्मृतम्

योहियांदेवतामिच्छेत्समाराधयितुंनरः ३५
ब्राह्मणान्पूजयेद्यत्नात्सतस्यास्तोषयेत्ततः
द्विजानांवपुरास्थायनित्यंतिष्ठंतिदेवताः ३६
पूज्यंतेब्राह्मणालाभेप्रतिमादिषुतैःक्वचित्
प्रतिमादिषुयत्नेनतस्मात्फलमभीप्सता ३७
द्विजेषुदेवतानित्यंपूजनीयाविशेषतः
विभूतिकामःसततंपूजयेद्धिपुरंदरम् ३८
ब्रह्मवर्चसकामस्तुब्रह्माणंज्ञानकामुकः
आरोग्यकामोथरविंधनकामोहुताशनम् ३९
कर्म्मणांसिद्धिकामस्तुपूजयेद्वैविनायकम्
भोगकामस्तुशशिनंबलकामःसमीरणम् ४०
मुमुक्षुःसर्वसंसारात्प्रयत्नेनार्चयेद्धरिम्
यस्तुयोगंतथामोक्षमन्विच्छेऽज्ज्ञानमैश्वरम् ४१
अर्चयेतविरूपाक्षंप्रयत्नेनसुरेश्वरम्
येवांच्छंतिमहाभोगान्ज्ञानानिचमहेश्वरम् ४२
तेपूजयंतिभूतेशंकेशवंचापिभोगिनः
वारिदस्तृप्तिमाप्नोतिजलदानंततोधिकम् ४३
तैलप्रदःप्रजामिष्टांदीपदश्चक्षुरुत्तमम्
भूमिदःसर्वमाप्नोतिदीर्घमायुर्हिरण्यदः ४४
गृहदाताग्र्यवेश्मानिरूप्यदोरूपमुत्तमम्
वासोदश्चंद्रसालोक्यमश्वदोयानमुत्तमम् ४५
अन्नदाताश्रियंस्वेष्टांगोदोब्राह्मणविष्टपम्
यानशय्याप्रदोभार्य्यामैश्वर्यमभयप्रदः ४६
धान्यदःशाश्वतंसौख्यंब्रह्मदोब्रह्मशाश्वतम्
धान्यान्यपियथाशक्तिविप्रेषुप्रतिपादयेत् ४७
वेदविद्याविशिष्टेषुप्रेत्यस्वर्गंसमश्नुते
गवांचान्नप्रदानेनसर्वपापैःप्रमुच्यते ४८
इंधनानांप्रदानेनदीप्ताग्निर्जायतेनरः
फलमूलानिपानानिशाकानिविविधानिच ४९
प्रदद्याद्ब्राह्मणेभ्यस्तुमुदायुक्तःसदाभवेत्

औषधंस्नेहमाहारंरोगिणोरोगशांतये ५०
ददानोरोगरहितः सुखीदीर्घायुरेवच
असिपत्रवनंमार्गंक्षुरधारासमन्वितम् ५१
तीक्ष्णतापंचतरतिछत्रोपानत्प्रदोनरः
यद्यदिष्टतमंलोकेयच्चास्यापेक्षितंगृहे ५२
तत्तद्गुणवतेदेयंतदेवाक्षयमिच्छता
अयनेविषुवेचैवग्रहणेचंद्रसूर्ययोः ५३
संक्रांत्यादिषुकालेषुदत्तंभवतिचाक्षयम्
प्रयागादिषुतीर्थेषुपुण्येष्वायतनेषुच ५४
दत्वाचाक्षयमाप्नोतिनदीप्रस्रवणेषुच
दानधर्मात्परोधर्मोभूतानांनेहविद्यते ५५
तस्माद्विप्रायदातव्यंश्रोत्रियायद्विजातिभिः
स्वर्गायभूतिकामेनतथापापोपशांतये ५६
मुमुक्षुणातुदातव्यंब्राह्मणेभ्यस्तथान्वहम्
दीयमानंतुयोमोहाद्गोविप्राग्निसुरेषुच ५७
निवारयत्यधर्मात्मातिर्यग्योनिंव्रजेतसः
यस्तुद्रव्यार्जनंकृत्वानार्चयेद्ब्राह्मणान्सुरान् ५८
सर्वस्वमपहृत्यैनंराजाराष्ट्रात्प्रवासयेत्
यस्तुदुर्भिक्षवेलायामन्नाद्यंनप्रयच्छति ५९
म्रियमाणेषुविप्रेषुब्राह्मणः सतुगर्हितः
नतस्मात्प्रतिगृह्णीयुःनवसेयुश्चतेनहि ६०
आज्ञापयित्वास्वकाद्राष्ट्राद्राजातंविप्रवासयेत्
पश्चात्सद्योददातीहस्वद्रव्यंधर्मसाधनम् ६१
सपूर्वाभ्यधिकः पापीनरकेपच्यतेनरः
स्वाध्यायवंतोयेविप्राविद्यावंतोजितेंद्रियाः ६२
सत्यसंयमसंयुक्तास्तेभ्योदद्याद्द्विजोत्तमाः
प्रभुक्तमपिविद्वांसंधार्मिकंभोजयेद्द्विजम् ६३
नचमूर्खमवृत्तस्थंदशरात्रमुपोषितम्
सन्निकृष्टमतिक्रम्यश्रोत्रियंयः प्रयच्छति ६४
सतेनकर्मणापापीदहत्यासप्तमंकुलम्

यदिस्यादधिकोविप्रः शीलविद्यादिभिः स्वयम् ६५
तस्मैयत्नेनदातव्यमतिक्रम्यचसन्निधिम्
योर्चितंप्रतिगृह्णीयाद्दद्यादर्चितमेवच ६६
तावुभौगच्छतः स्वर्गंनरकंतुविपर्यये
नवार्यपिप्रयच्छेतनास्तिकेहैतुकेपिच ६७
नपाखंडेषुसर्वेषुनावेदविदिधर्मवित्
रूप्यंचैवहिरण्यंचगामश्वंपृथिवींतिलान् ६८
अविद्वान्प्रतिगृह्णीयाद्भस्मीभवतिकाष्ठवत्
द्विजातिभ्योधनंलिप्सेत्प्रशस्तेभ्योद्विजोतमः ६९
अपिराजन्यवैश्याभ्यांनतुशूद्रात्कथंचन
वृत्तिसंकोचमन्विच्छेन्नेहेतधनविस्तरम् ७०
धनलोभेप्रसक्तस्तुब्राह्मण्यादेवहीयते
वेदानधीत्यसकलान्यज्ञांश्चावाप्यसर्वशः ७१
नतांगतिमवाप्नोतिसंतोषाद्यामवाप्नुयात्
प्रतिग्रहरुचिर्नस्याच्छूद्रान्नतुसमाहरेत् ७२
स्थित्यर्थादधिकंगृह्णन्ब्राह्मणोयात्यधोगतिम्
यस्तुयातिनसंतोषंनसस्वर्गस्यभाजनम् ७३
उद्वेजयतिभूतानियथाचौरस्तथैवसः
गुरुंभृत्यांश्चोज्जिहीर्षुस्तर्पयन्देवतातिथीन् ७४
सर्वतः प्रतिगृह्णीयान्नतुतृप्येत्स्वयंततः
एवंगृहस्थोयुक्तात्मादेवतातिथिपूजकः ७५
वर्तमानः संयतात्मायातितत्परमंपदम्
पुत्रेषुभार्यांनिक्षिप्यगत्वारण्यंतुतत्त्ववित् ७६
एकाकीविचरेन्नित्यमुदासीनः समाहितः
एषवः कथितोधर्म्मोगृहस्थानांद्विजोत्तमाः
ज्ञात्वातुतिष्ठेन्नियतंतथानुष्ठापयेद्द्विजान् ७७
इतिदेवमनादिमेकमीशंगृहधर्मेणसमर्चयेदजस्त्रम्
समतीत्यससर्वभूतयोनिंप्रकृतिंयातिपरंनयातिजन्म ७८
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेगृहस्थधर्मनिर्णयो
नामसप्तपंचाशत्तमोऽध्यायः ५७

## अष्टपंचाशत्तमोऽध्यायः

व्यासउवाच-
एवंगृहाश्रमेस्थित्वाद्वितीयंभागमायुषः
वानप्रस्थाश्रमंगच्छेत्सदारःसाग्निरेवच १
निक्षिप्यभार्यांपुत्रेषुगच्छेद्वनमथापिवा
दृष्ट्वापत्यस्यवापत्यंजर्जरीकृतविग्रहः २
शुक्लपक्षस्यपूर्वाह्णेप्रशस्तेचोत्तरायणे
गत्वारगयंनियमवांस्तपःकुर्यात्समाहितः ३
फलमूलानिपूतानिनित्यमाहारमाहरेत्
यदाहारोभवेत्तेनपूजयेत्पितृदेवताः ४
पूजयेदंतिथिंनित्यंस्नात्वाचाभ्यर्चयेत्सुरान्
गृहादादायचाश्नीयादष्टौग्रासान्समाहितः ५
जटाश्चबिभृयान्नित्यंनखरोमाणिनोत्सृजेत्
स्वाध्यायंसर्वथाकुर्यान्नियच्छेद्वाचमन्यतः ६
अग्निहोत्रंचजुहुयात्पंचयज्ञान्समाचरेत्
उत्पन्नैर्विविधैर्मेध्यैःशाकमूलफलेनवा ७
चीरवासाभवेन्नित्यंस्नायात्त्रिषवणंशुचिः
सर्वभूतानुकंपश्चप्रतिग्रहविवर्जितः ८
दर्शेनपौर्णमासेनयजेतनियतंद्विजः
ऋत्विष्ट्याग्रयणेचैवचातुर्मास्यानिकारयेत् ९
उत्तरायणंचक्रमशोदक्षिणायनमेवच
वासंतशारदैर्मेद्ध्यैरुत्पन्नैःस्वयमाहृतैः १०
पुरोडाशांश्चरूंश्चैवविधिवन्निर्वपेत्पृथक्
देवताभ्यःपितृभ्यश्चदत्त्वामेध्यतरंहविः ११
शेषंसमुपभुंजीतलवणंचस्वयंकृतम्
वर्ज्जयेन्मद्यमांसानिभौमानिकवकानिच १२
भूस्तृणंशष्पकंचैवश्लेष्मातकफलानिच
नफालकृष्टमश्नीयादुत्सृष्टमपिकेनचित् १३
नग्रामजातान्यार्तोपिपुष्पाणिचफलानिच
श्रावणेनैवविधिनावह्निंपरिचरेत्सदा १४

नद्रुह्येत्सर्वभूतानिनिर्द्वंद्वोनिर्भयोभवेत्
ननक्तंकिंचिदश्नीयाद्रात्रौध्यानपरोभवेत् १५
जितेंद्रियोजितक्रोधस्तत्त्वज्ञानविचिंतकः
ब्रह्मचारीभवेन्नित्यंनपत्नीमपिसंश्रयेत् १६
यस्तुपत्न्यावनंगत्वामैथुनंकामतश्चरेत्
तद्व्रतंतस्यलुप्येतप्रायश्चित्तीयतेद्विजः १७
तत्रयोजायतेगर्भोनसस्पृश्योद्विजातिभिः
नहिवेदेधिकारोस्यतद्वंशेप्येवमेवहि १८
भूमौशयीतसततंसावित्रीजप्यतत्परः
शरण्यःसर्वभूतानांसद्विभागपरःसदा १९
परिवादंमृषावादंनिद्रालस्येचवर्जयेत्
एकाग्निरनिकेतःस्यात्प्रोक्षितांभूमिमाश्रयेत् २०
मृगैःसहचरेद्दांतस्तैःसहैवचसंवसेत्
शिलायांशर्करायांवाशयीतसुसमाहितः २१
सद्यःप्रक्षालकोवास्यान्माससंचयिकोपिवा
षण्मासनिचयोवापिसमानिचयएववा २२
नक्तंचान्नंसमश्नीयाद्दिवाचाहृत्यशक्तितः
चतुर्थकालकोवास्यात्किंवाप्यष्टमकालिकः २३
चांद्रायणविधानैर्वाशुक्लेकृष्णेचवर्जयेत्
पक्षेपक्षेसमश्नीयाद्यवागूंक्वथितांसकृत् २४
पुष्पमूलफलैर्वापिकेवलैर्वर्तयेत्सदा
स्वाभाविकैःस्वयंशीर्णैर्वैखानसमतेस्थितः २५
भूमौवापरिवर्तेततिष्ठेद्वाप्रपदैर्दिनम्
स्थानासनाभ्यांविहरेन्नक्वचिद्धैर्य्यमुत्सृजेत् २६
ग्रीष्मेपंचतपाश्चस्याद्वर्षास्वभ्रावकाशिकः
आर्द्रवासाश्चहेमंतेक्रमशोवर्द्धयेत्तपः २७
उपस्पृशेत्त्रिषवणंपितृदेवांश्चतर्पयेत्
एकपादेनतिष्ठेतमरीचिंवापिबेत्सदा २८
पंचाग्निधूमगोवास्यादूष्मगःसोमपोपिवा
पयःपिबेच्छुक्लपक्षेकृष्णपक्षेतुगोमयम् २९

शीर्णपर्णाशनोवास्यात्कृच्छ्रैर्वावर्तयेत्सदा
योगाभ्यासरतश्चस्याद्रुद्राध्यायीभवेत्सदा ३०
ऋथर्वशिरसोध्येतावेदांताभ्यासतत्परः
यमान्सेवेतसततंनियमांश्चाप्यतंद्रितः ३१
ऋथचाग्नीन्समारोप्यस्वात्मनिध्यानतत्परः ३२
ऋनग्निरनिकेतोवामुनिर्मोक्षपरोभवेत्
तापसेष्वेवविप्रेषुयात्रिकंभैक्षमाहरेत् ३३
गृहमेधिषुचान्येषुद्विजेषुवनचारिषु
ग्रामादाहृत्यचाश्नीयादष्टौग्रासान्वनेवसन् ३४
प्रतिगृह्यपुटेनैवपाणिनाशकलेनवा
विविधाश्चोपनिषदऋात्मसंसिद्धयेजपेत् ३५
विद्याविशेषान्सावित्रींरुद्राध्यायंतथैवच
महाप्रस्थानिकंवासौकुर्य्यादनशनंतथा
ऋग्निप्रवेशमन्यद्वाब्रह्मार्पणविधौस्थितः ३६

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेवानप्रस्थाश्रमाचारधर्मो
नामाष्टपंचाशत्तमोऽध्यायः ५८

## एकोनषष्टितमोऽध्यायः

व्यासउवाच-
एवंवनाश्रमेस्थित्वातृतीयंभागमायुषः
चतुर्थंचायुषोभागंसंन्यासेननयेत्क्रमात् १
ऋग्नीनात्मनिसंस्थाप्यद्विजःप्रव्रजितोभवेत्
योगाभ्यासरतःशांतोब्रह्मविद्यापरायणः २
यदामनसिसंपन्नंवैराग्यंसर्ववस्तुषु
तदासंन्यासमिच्छेच्चपतितःस्याद्विपर्यये ३
प्राजापत्यांनिरूप्येष्टिमाग्नेयीमथवापुनः
दांतःशुक्लकषायोसौब्रह्माश्रममुपाश्रयेत् ४
ज्ञानसंन्यासिनःकेचिद्वेदसंन्यासिनोऽपरे
कर्मसंन्यासिनस्त्वन्येत्रिविधाःपरिकीर्तिताः ५
यःसर्वत्रविनिर्मुक्तोनिर्द्वंद्वश्चैवनिर्भयः

प्रोच्यतेज्ञानसंन्यासीश्रात्मन्येवव्यवस्थितः ६
वेदमेवाभ्यसेन्नित्यंनिराशीर्निष्परिग्रहः
प्रोच्यतेवेदसंन्यासीमुमुक्षुर्विजितेंद्रियः ७
यस्त्वग्निमात्मसाकृत्वाब्रह्मार्पणपरोद्विजः
ज्ञेयःसकर्मसंन्यासीमहायज्ञपरायणः ८
त्रयाणामपिचैतेषांज्ञानीत्वभ्यधिकोमतः
नतस्यविद्यतेकार्यंनलिगंवाविपश्चितः ९
निर्ममोनिर्भयःशांतोनिर्द्वंद्वःपर्णभोजनः
जीर्णकौपीनवासाःस्यान्नग्नोवाध्यानतत्परः १०
ब्रह्मचारीजिताहारोग्रामादन्नंसमाहरेत्
श्रध्यात्मरतिरासीतनिरपेक्षोनिराशिषः ११
श्रात्मनैवसहायेनसुखार्थंविचरेदिह
नाभिनंदेतमरणंनाभिनंदेतजीवनम् १२
कालमेवप्रतीक्षेतनिर्देशंभृतकोयथा
नाध्येतव्यंनवर्तव्यंश्रोतव्यंनकदाचन १३
एवंज्ञानपरोयोगीब्रह्मभूयायकल्पते
एकवासाथवाविद्वान्कौपीनाच्छादनोपिवा १४
मुंडीशिखीवाथभवेत्त्रिदंडीनिष्परिग्रहः
काषायवासाःसततंध्यानयोगपरायणः १५
ग्रामांतेवृक्षमूलेवावसेद्देवालयेपिवा
समःशत्रौतथामित्रेतथामानापमानयोः १६
भैक्ष्येणवर्तयेन्नित्यंनैकान्नादीभवेत्क्वचित्
यस्तुमोहेनवान्यस्मादेकान्नादीभवेद्यतिः १७
नतस्यनिष्कृतिःकाचिद्धर्मशास्त्रेषुदृश्यते
रागद्वेषवियुक्तात्मासमलोष्टाश्मकांचनः १८
प्राणिहिंसानिवृत्तश्चमौनीस्यात्सर्वनिस्पृहः
दृष्टिपूतंन्यसेत्पादंवस्त्रपूतंजलंपिबेत् १९
सत्यपूतांवदेद्वाणींमनःपूतंसमाचरेत्
नैकत्रनिवसेद्देशेवर्षाभ्योन्यत्रभिक्षुकः २०
स्नात्वाशौचयुतोनित्यंकमंडलुकरःशुचिः

ब्रह्मचर्यरतोनित्यंवनवासरतोभवेत् २१
मोक्षशास्त्रेषुनिरतोब्रह्मसूत्रीजितेंद्रियः
दंभाहंकारनिर्मुक्तोनिंदापैशुन्यवर्जितः २२
आत्मज्ञानगुणोपेतोयदिमोक्षमवाप्नुयात्
अभ्यसेत्सततंदेवंप्रणवाख्यंसनातनम् २३
स्नात्वाचम्यविधानेनशुचिर्देवालयादिषु
यज्ञोपवीतीशांतात्माकुशपाणिःसमाहितः २४
धौतकाषायवसनोतस्मिञ्छन्नतनूरुहः
अधियज्ञंब्रह्मजपेदाधिदैविकमेवच २५
आध्यात्मिकंचसततंवेदान्ताभिहितंयत्
पुत्रेषुचाथनिवसन्ब्रह्मचारीयतिर्मुनिः २६
वेदमेवाभ्यसेन्नित्यंसयातिपरमांगतिम्
अहिंसासत्यमस्तेयंब्रह्मचर्यंतपःपरम् २७
क्षमादयाचसंतोषोव्रतान्यस्यविशेषतः
वेदांतज्ञाननिष्ठोवापंचयज्ञान्समाहितः २८
कुर्य्यादहरहःस्नात्वाभिक्षार्थेनैवतेनहि
होममंत्रान्जपेन्नित्यंकालेकालेसमाहितः २९
स्वाध्यायंचान्वहंकुर्य्यात्सावित्रींसंध्ययोर्जपेत्
ध्यायीतसततंदेवमेकांतंपरमेश्वरम् ३०
एकान्नंवर्जयेन्नित्यंकामंक्रोधंपरिग्रहम्
एकवासाद्विवासावाशिखीयज्ञोपवीतवान्
कमंडलुकरोविद्वांस्त्रिदंडोयातितत्परम् ३१

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेयतिधर्मनिरूपणं
नामैकोनषष्टितमोऽध्यायः ५९

षष्टितमोऽध्यायः

व्यासउवाच-
एवंत्वाश्रमनिष्ठानांयतीनांनियतात्मनाम्
भैक्ष्येणवर्तनंप्रोक्तंफलमूलैरथापिवा १
एककालंचरेद्भैक्ष्यंनप्रसज्येतविस्तरम्

भैन्दयेप्रसक्तोहियतिर्विषयेष्वपिसज्जति २
सप्तागारंचरेद्भैन्दयमलाभेनपुनश्चरेत्
गोदोहमात्रंतिष्ठेतकालंभिन्नुरधोमुखः ३
भिन्नेत्युक्त्वासकृत्तूष्णीमादद्याद्वाग्यतःशुचिः
प्रन्दयाल्यपाणीपादौचसमाचम्ययथाविधि ४
अादित्यंदर्शयित्वान्नंभुंजीतप्राङ्मुखोनरः
हुत्वाप्राणाहुतीःपंचग्रासानष्टौसमाहितः ५
अाचम्यदेवंबह्मार्णंध्यायेतपरमेश्वरम्
अालाबुदारुपात्रेचमृरामयंवैणवंतथा ६
चत्वारियतिपात्राणिमनुराहप्रजापतिः
प्राग्रात्रेमध्यरात्रेचपररात्रेतथैवच ७
संध्यासूक्तिविशेषेणचिंतयेन्नित्यमीश्वरम्
कृत्वाहृत्पद्मनिलयेविश्वाख्यंविश्वसंभवम् ८
अात्मानंसर्वभूतानांपरस्तात्तमसःस्थितम्
सर्वस्याधारमव्यक्तमानंदंज्योतिरव्ययम् ९
प्रधानपुरुषातीतमाकाशंदहनंशिवम्
तदंतंसर्वभावानामीश्वरंब्रह्मरूपिणम् १०
अोंकारांतेथवात्मानंसमाप्यपरमात्मनि
अाकाशेदेवमीशानंध्यायीताकाशमध्यगम् ११
कारणंसर्वभावानामानंदैकसमाश्रयम्
पुराणपुरुषंविष्णुंध्यायन्मुच्येतबंधनात् १२
यद्वागुहादौप्रकृतौजगत्संमोहनालये
विचिंत्यपरमंव्योमसर्वभूतैककारणम् १३
जीवनंसर्वभूतानांयत्रलोकःप्रलीयते
अानंदंब्रह्मणःसून्दमंयत्पश्यंतिमुमुन्नवः १४
तन्मध्येनिहितंब्रह्मकेवलंज्ञानलन्नणम्
अनंतंसत्यमीशानंविचिंत्यासीतवाग्यतः १५
गुह्याद्गुह्यतमंज्ञानंयतीनामेतदीरितम्
योवतिष्ठेत्सदानेनसोश्नुतेयोगमैश्वरम् १६
तस्माज्ज्ञानरतोनित्यमात्मविद्यापरायणः

ज्ञानंसमभ्यसेद्ब्रह्मयेनमुच्येतबंधनात् १७
मत्वापृथक्त्वमात्मानंसर्वस्मादेवकेवलम्
आनंदमक्षरंज्ञानंध्यायेतचततःपरम् १८
यस्माद्भवंतिभूतानियज्ज्ञात्वानेहजायते
सतस्मादीश्वरोदेवःपरस्ताद्योधितिष्ठति १९
यदंतरेतद्गमनंशाश्वतंशिवमव्ययम्
यइदंस्वपरोक्षस्तुसदेवःस्यान्महेश्वरः २०
व्रतानियानिभिक्षूणांतथैवायंव्रतानिच
एकैकातिक्रमेणैवप्रायश्चित्तंविधीयते २१
उपेत्यचस्त्रियंकामात्प्रायश्चित्तंसमाहितः
प्राणायामसमायुक्तंकुर्य्यात्सांतपनंशुचिः २२
ततश्चरेतनियमात्कृच्छ्रंसंयतमानसः
पुनराश्रममागम्यचरेद्भिक्षुरतंद्रितः २३
नधर्मयुक्तमनृतंहिनस्तीतिमनीषिणः
तथापिचनकर्तव्यःप्रसंगोह्येषदारुणः २४
एकरात्रोपवासश्चप्राणायामशतंतथा
उक्त्वानृतंप्रकर्तव्यंयतिनाधर्मलिप्सुना २५
परमापद्गतेनापिनकार्यंस्तेयमन्यतः
स्तेयादभ्यधिकःकश्चिन्नास्त्यधर्मइतिस्मृतिः २६
हिंसाचैवापरातृष्णायाच्ञात्मज्ञाननाशिका
यदेतद्द्रविणंनामप्राणाह्येतेबहिश्चराः २७
सतस्यहरतेप्राणान्योयस्यहरतेधनम्
एवंकृत्वासदुष्टात्माभिन्नवृत्तोव्रतच्युतः २८
भूयोनिर्वेदमापन्नश्चरेद्भिक्षुरतंद्रितः
अकस्मादेवहिंसांतुयदिभिक्षुःसमाचरेत् २९
कुर्यात्कृच्छ्रातिकृच्छ्रंतुचांद्रायणमथापिवा
स्कंदेतेंद्रियदौर्बल्यात्स्त्रियंदृष्ट्वायतिर्यदि ३०
तेनधारयितव्यावैप्राणायामास्तुषोडश
दिवास्कंदेत्रिरात्रंस्यात्प्राणायामशतंबुधाः ३१
एकान्नेमधुमांसेचनवश्राद्धेतथैवच

प्रत्यक्षलवणेचोक्तंप्राजापत्यंविशोधनम् ३२
ध्याननिष्ठस्यसततंनश्यतेसर्वपातकम्
तस्मान्नारायणंध्यात्वातस्यध्यानपरोभवेत् ३३
यद्ब्रह्मणःपरंज्योतिःप्रविष्टाक्षरमव्ययम्
योंतरात्मापरंब्रह्मसविज्ञेयोमहेश्वरः ३४
एषदेवोमहादेवःकेवलःपरमंशिवः
तदेवाक्षरमद्वैतंतदानित्यंपरंपदम् ३५
तस्मान्महीयतेदेवेस्वधाम्निज्ञानसंज्ञिते
आत्मयोगात्परेतत्वेमहादेवस्ततःस्मृतः ३६
नान्यंदेवंमहादेवाद्व्यतिरिक्तंप्रपश्यति
तमेवात्मानमन्वेतियःसयातिपरंपदम् ३७
मन्यंतेयेस्वमात्मानंविभिन्नंपरमेश्वरात्
नतेपश्यंतितंदेवंवृथातेषांपरिश्रमः ३८
एकमेवपरंब्रह्मविज्ञेयंतत्त्वमव्ययम्
सदेवस्तुमहादेवोनैतद्विज्ञायबध्यते ३९
तस्माद्यतेतनियतंयतिःसंयतमानसः
ज्ञानयोगरतःशांतोमहादेवपरायणः ४०
एषवःकथितोविप्रायतीनामाश्रमःशुभः
पितामहेनमुनिनाविभुनापूर्वमीरितः ४१
नापुत्रशिष्ययोगिभ्योदद्यादेवमनुत्तमम्
ज्ञानंस्वयंभुवाप्रोक्तंयतिधर्म्माश्रयंशिवम् ४२
इतियतिनियमानामेतदुक्तंविधानंसुरवरपरितोषेयद्भवेदेकहेतुः
नभवतिपुनरेषामुद्भवोवाविनाशःप्रतिहितमनसोयेनित्यमेवाचरंति ४३
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेषष्टितमोऽध्यायः ६०

एकषष्टितमोऽध्यायः

सूतउवाच-
एवमुक्तापुराविप्राव्यासेनामिततेजसा
एतावदुक्त्वाभगवान्व्यासःसत्यवतीसुतः १
समाश्वास्यमुनीन्सर्वान्जगामचयथागतम्

भवद्भ्यस्तुमयाप्रोक्तंवर्णाश्रमविधानकम् २
एवंकृत्वाप्रियोविष्णोर्भवत्येवनचान्यथा
रहस्यंतत्रवद्दयामिशृणुतद्विजसत्तमाः ३
येचात्रकथिताधर्मावर्णाश्रमनिबंधनाः
हरिभक्तिकलांशांशसमानानहितेद्विजाः ४
पुंसामेकेहवैसाध्याहरिभक्तिःकलौयुगे
युगांतरेणधर्माहिसेवितव्यानरेणहि ५
कलौनारायणंदेवंयजतेयःसधर्म्मभाक्
दामोदरंहृषीकेशंपुरुहूतंसनातनम् ६
हृदिकृत्वापरंशांतंजितमेवजगत्त्रयम्
कलिकालोरगादंशात्किल्बिषात्कालकूटतः ७
हरिभक्तिसुधांपीत्वाउल्लंघ्योभवतिद्विजः
किंजपैःश्रीहरेर्नामगृहीतंयदिमानुषैः ८
किंस्नानैर्विष्णुपादांबुमस्तकेयेनधार्यते
किंयज्ञेनहरेःपादपद्मंयेनधृतंहृदि ९
किंदानेनहरेःकर्मसभायांवैप्रकाशितम्
हरेर्गुणगणान्श्रुत्वायःप्रहृष्येत्पुनःपुनः १०
समाधिनाप्रहृष्टस्यसागतिःकृष्णचेतसः
तत्रविघ्नकराःप्रोक्ताःपाखंडालापपेशलाः ११
नार्यस्तत्संगिनश्चापिहरिभक्तिविघातकाः
नारीणांनयनादेशःसुराणामपिदुर्जयः १२
सयेनविजितोलोकेहरिभक्तःसउच्यते
माद्यंतिमुनयोप्यत्रनारीचरितलोलुपाः १३
हरिभक्तिःकुतःपुंसांनारीभक्तिजुषांद्विजाः
राद्मस्यःकामिनीवेषाश्चरंतिजगतिद्विजाः
नराणांबुद्धिकवलंकुर्वंतिसततंहिताः १४
तावद्विद्याप्रभवतितावज्ज्ञानंप्रवर्तते
तावत्सुनिर्मलामेधासर्वशास्त्रविधारिणी १५
तावज्जपस्तपस्तावत्तावत्तीर्थनिषेवणम्
तावच्चगुरुशुश्रूषातावद्धितरणेमतिः १६

तावत्प्रबोधोभवतिविवेकस्तावदेवहि
तावत्सतांसंगरुचिस्तावत्पौराणलालसा १७
यावत्सीमंतिनीलोलनयनांदोलनंनहि
जनोपरिपतेद्विप्राःसर्वधर्मविलोपनम् १८
तत्रयेहरिपादाब्जमधुलेशप्रसादिताः
तेषांननारीलोलाचिक्षेपणंहिप्रभुर्भवेत् १९
जन्मजन्महृषीकेशसेवनंयैःकृतंद्विजाः
द्विजेदत्तंहुतंवह्नौविरतिस्तत्रतत्रहि २०
नारीणांकिलकिंनामसौंदर्य्यंपरिचक्षते
भूषणानांचवस्त्राणांचाकचक्यंतदुच्यते २१
स्नेहात्मज्ञानरहितंनारीरूपंकुतःस्मृतम्
पूयमूत्रपुरीषासृक्त्वङ्मेदोस्थिवसान्वितम् २२
कलेवरंहितन्नामकुतःसौंदर्य्यमत्रहि
तदेवंपृथगाचिंत्यस्पृष्ट्वास्नात्वाशुचिर्भवेत् २३
तैःसंहितंशरीरंहिदृश्यतेसुंदरंजनैः
अहोतिदुर्दशानृणांदुर्दैवघटिताद्विजाः २४
कुचावृतेंगेपुरुषोनारीबुद्ध्वाप्रवर्त्तते
कानारीवापुमान्कोवाविचारेसतिकिंचन २५
तस्मात्सर्वात्मनासाधुर्नारीसंगंविवर्जयेत्
कोनामनारीमासाद्यसिद्धिंप्राप्नोतिभूतले २६
कामिनीकामिनीसंगिसंगमित्यपिसंत्यजेत्
तत्संगाद्रौरवमितिसाक्षादेवप्रतीयते २७
अज्ञानाल्लोलुपालोकास्तत्रदैवेनवंचिताः
साक्षान्नरककुंडेस्मिन्नारीयोनौपचेन्नरः २८
यतएवागतःपृथ्व्यांतस्मिन्नेवपुनारमेत्
यतःप्रसरतेनित्यंमूत्रंरेतोमलोत्थितम् २९
तत्रैवरमतेलोकःकस्तस्मादशुचिर्भवेत्
तत्रातिकष्टंलोकेस्मिन्नहोदैवविडंबना ३०
पुनःपुनारमेत्तत्रअहोनिस्त्रपतानृणाम्
तस्माद्विचारयेद्धीमान्नारीदोषगणान्बहून् ३१

मैथुनाद्बलहानिःस्यान्निद्रातितरुणायते
निद्रयापहृतज्ञानःस्वल्पायुर्जायतेनरः ३२
तस्मात्प्रयत्नतोधीमान्नारींमृत्युमिवात्मनः
पश्येद्गोविंदपादाब्जेमनोवैरमयेद्बुधः ३३
इहामुत्रसुखंतद्धिगोविंदपदसेवनम्
विहायकोमहामूढोनारीपादंहिसेवते ३४
जनार्द्दनांघ्रिसेवाहिह्यपुनर्भवदायिनी
नारीणांयोनिसेवाहियोनिसंकटकारिणी ३५
पुनःपुनःपतेद्योनौयंत्रनिष्पाचितोयथा
पुनस्तामेवाभिलषेद्धिग्यादस्यविडंबनम् ३६
ऊर्ध्वबाहुरहंवच्मिशृणुमेपरमंवचः
गोविंदेधेहिहृदयंनयोनौयातनाजुषि ३७
नारीसंगंपरित्यज्ययश्चापिपरिवर्त्तते
पदेपदेश्वमेधस्यफलमाप्नोतिमानवः ३८
कुलांगनादैवयोगादूढायदिनृणांसती
पुत्रमुत्पाद्ययस्तत्रतत्संगंपरिवर्जयेत् ३९
तस्यतुष्टोजगन्नाथोभवत्येवनसंशयः
नारीसंगोहिधर्मज्ञैरसत्संगःप्रकीर्त्यते ४०
तस्मिन्सतिहरौभक्तिःसुदृढानैवजायते
सर्वसंगंपरित्यज्यहरौभक्तिंसमाचरेत् ४१
हरिभक्तिश्चलोकेत्रदुर्ल्लभाहिमतामम
हरौयस्यभवेद्भक्तिःसकृतार्थोनसंशयः ४२
तत्तदेवाचरेत्कर्महरिःप्रीणातियेनहि
तस्मिंस्तुष्टेजगत्तुष्टंप्रीणितेप्रीणितंजगत् ४३
हरौभक्तिंविनानृणांवृथाजन्मप्रकीर्तितम्
ब्रह्मेशादिसुरायस्ययजंतेप्रीतिहेतवे ४४
नारायणमनाव्यक्तंनतंसेवेतकोजनः
तस्यमातामहाभागापितातस्यमहाकृती ४५
जनार्द्दनपदद्वंद्वंहृदयेयेनधार्यते
जनार्दनजगद्वंद्यशरणागतवत्सल ४६

इतीरयंतियेमर्त्यानतेषांनिरयेगतिः
ब्राह्मणाहिविशेषेणप्रत्यक्षंहरिरूपिणः ४७
पूजयेयुर्यथायोगंहरिस्तेषांप्रसीदति
विष्णुर्ब्राह्मणरूपेणविचरेत्पृथिवीमिमाम् ४८
ब्राह्मणेनविनाकर्म्मसिद्धिंप्राप्नोतिनैवहि
द्विजपादांबुभक्त्यायैःपीत्वाशिरसिचार्पितम् ४९
तर्पितापितरस्तेनआत्मापिकिलतारितः
ब्राह्मणानांमुखेयेनदत्तंमधुरमर्चितम् ५०
साक्षात्कृष्णमुखेदत्तंतद्वैभुंक्तेहरिःस्वयम्
अहोतिदुर्ल्लभालोकाप्रत्यक्षेकेशवेद्विजे ५१
प्रतिमादिषुसेवंतेतदभावेहितत्क्रिया
ब्राह्मणानामधिष्ठानात्पृथ्वीधन्येतिगीयते ५२
तेषांपाणौचयद्दत्तंहरिपाणौतदर्पितम्
तेभ्यःकृतान्नमस्कारात्तिरस्कारोहिपाप्मताम् ५३
मुच्यतेब्रह्महत्यादिपापेभ्योविप्रवंदनात्
तस्मात्सतांसमाराध्योब्राह्मणोविष्णुबुद्धितः ५४
क्षुधितस्यद्विजस्यास्येयत्किंचिद्दीयतेयदि
प्रेत्यपीपूषधाराभिःसिंचतेकल्पकोटिकम् ५५
द्विजतुंडंमहाक्षेत्रमनूषरमकंटकम्
तत्रचेदुप्यतेकिंचित्कोटिकोटिफलंलभेत् ५६
सघृतंभोजनंचास्मैदत्त्वाकल्पंसमोदते
नानासुमिष्टमन्नंयोददातिद्विजतुष्टये ५७
तस्यलोकामहाभोगाःकोटिकल्पांतमुक्तिदाः
ब्राह्मणंचपुरस्कृत्यब्राह्मणेनानुकीर्तितम् ५८
पुराणंशृणुयान्नित्यंमहापापदवानलम्
पुराणंसर्वतीर्थेषुतीर्थंचाधिकमुच्यते ५९
यस्यैकपादश्रवणाद्धरिरेवप्रसीदति
यथासूर्यवपुर्भूत्वाप्रकाशायचरेद्धरिः ६०
सर्वेषांजगतामेवहरिरालोकहेतवे
तथैवांतःप्रकाशायपुराणावयवोहरिः ६१

विचरेदिहभूतेषुपुराणंपावनंपरम्
तस्माद्यदिहरेःप्रीतेरुत्पादेधीयतेमतिः ६२
श्रोतव्यमनिशंपुंभिःपुराणंकृष्णरूपिणम्
विष्णुभक्तेनशांतेनश्रोतव्यमपिदुर्लभम् ६३
पुराणाख्यानममलममलीकरणंपरम्
यस्मिन्वेदार्थमाहृत्यहरिणाव्यासरूपिणा ६४
पुराणंनिर्मितंविप्रतस्मात्तत्परमोभवेत्
पुराणेनिश्चितोधर्मोधर्मश्चकेशवःस्वयम् ६५
तस्मात्कृतेपुराणेहिश्रुतेविष्णुर्भवेदिति
साक्षात्स्वयंहरिर्विप्रःपुराणंचतथाविधम् ६६
एतयोःसंगमासाद्यहरिरेवभेवन्नरः
तथागंगांबुसेकेननाशयेत्किल्बिषंस्वकम् ६७
केशवोद्रवरूपेणपापात्तारयतेमहीम्
वैष्णवोविष्णुभजनस्याकांक्षीयदिवर्तते ६८
गंगांबुसेकममलममलीकरणंचरेत्
विष्णुभक्तिप्रदादेवीगंगाभुविचगीयते ६९
विष्णुरूपाहिसागंगालोकविस्तारकारिणी ७०
ब्राह्मणेषुपुराणेषुगंगायांगोषुपिप्पले
नारायणधियापुंभिर्भक्तिःकार्याह्यहैतुकी ७१
प्रत्यक्षविष्णुरूपाहितत्वज्ञैर्निश्चिताश्रमी
तस्मात्सततमभ्यर्च्याविष्णुभक्त्यभिलाषिणा ७२
विष्णौभक्तिंविनानृणांनिष्फलंजन्मउच्यते
कलिकालपयोराशिंपापग्राहसमाकुलम् ७३
विषयामज्ञनावर्तंदुर्बोधफेनिलंपरम्
महादुष्टजनव्यालमहाभीमंभयानकम् ७४
दुस्तरंचतरंत्येवहरिभक्तितरिस्थिताः
तस्माद्यतेतवैलोकोविष्णुभक्तिप्रसाधने ७५
किंसुखंलभतेजंतुरसद्वार्तावधारणे
हरेरद्भुतलीलस्यलीलाख्यानेनसज्ञते ७६
तद्विचित्रकथालोकेनानाविषयमिश्रिताः

श्रोतव्यायदिवैनृणांविषयेसज्ञतेमनः ७७
निर्वाणेयदिवाचित्तंश्रोतव्यातदपिद्विजाः
हेलयाश्रवणाच्चापितस्यतुष्टोभवेद्धरिः ७८
निष्क्रियोपिहृषीकेशोनानाकर्मचकारसः
शुश्रूषूणांहितार्थायभक्तानांभक्तवत्सलः ७९
नलभ्यतेकर्मणापिवाजपेयशतादिना
राजसूयायुतेनापियथाभक्त्यासलभ्यते ८०
यत्पदंचेतसासेव्यंसद्भिराचरितंमुहुः
भवाब्धितरणेसारमाश्रयध्वंहरेःपदम् ८१
रेरेविषयसंलुब्धाःपामरानिष्ठुरानराः
रौरवेहिकिमात्मानमात्मनापातयिष्यथ ८२
विनागोविंदसौम्यांघ्रिसेवनंमागमिष्यति
अनायासेनदुःखानांतरणंयदिवांछथ ८३
भजध्वंकृष्णचरणावपुनर्भवकारणे
कुतएवागतोमर्त्यःकुतएवपुनर्व्रजेत् ८४
एतद्विचार्यमतिमनाश्रयेद्धर्मसंग्रहम्
नानानरकसंपातादुत्थितोयदिपूरुषः ८५
स्थावरादितनुंलब्ध्वायदिभाग्यवशात्पुनः
मानुष्यंलभतेतत्रगर्भवासोतिदुःखदः ८६
ततःकर्मवशाज्जंतुर्यदिवाजायतेभुवि
बाल्यादिबहुदोषेणपीडितोभवतिद्विजाः ८७
पुनर्यौवनमासाद्यदारिद्र्येणप्रपीडयते
रोगेणगुरुणावापिअनावृष्ट्यादिनातथा ८८
वार्द्धकेनलभेत्पीडामनिर्वाच्यामितस्ततः
मनसश्चलनाद्व्याधेस्ततोमरणमाप्नुयात् ८९
नतस्मादधिकंदुःखंसंसारेप्यनुभूयते
ततःकर्म्मवशाज्जंतुर्यमलोकेप्रपीडयते ९०
तत्रातियातनांभुक्त्वापुनरेवप्रजायते
जायतेम्रियतेजंतुम्रियतेजायतेपुनः ९१
अनाराधितगोविंदचरणेत्वीदृशीदशा

अनायासेनमरणंविनायासेनजीवनम् ९२
अनाराधितगोविंदचरणस्यनजायते
धनंयदिभवेद्देहेरक्षणात्तस्यकिंफलम् ९३
यदासौकृष्यतेयाम्यैर्दूतैःकिंधनमन्वियात्
तस्माद्द्विजातिसत्कार्यंद्रविणंसर्वसौख्यदम् ९४
दानंस्वर्गस्यसोपानंदानंकिल्बिषनाशनम्
गोविंदभक्तिभजनंमहापुरायविवर्द्धनम् ९५
बलंयदिभवेन्मर्त्येनवृथातद्व्ययंचरेत्
हरेरग्रेनृत्यगीतंकुर्यादेवमतंद्रितः ९६
यत्किंचिद्विद्यतेपुंसांतच्चकृष्णेसमर्पयेत्
कृष्णार्पितंकुशलदमन्यार्पितमसौख्यदम् ९७
चक्षुर्भ्यांश्रीहरेरेवप्रतिमादिनिरूपणम्
श्रोत्राभ्यांकलयेत्कृष्णगुणनामान्यहर्निशम् ९८
जिह्वयाहरिपादांबुस्वादितव्यंविचक्षणैः
घ्राणेनाघ्रायगोविंदपादाब्जतुलसीदलम् ९९
त्वचास्पृष्ट्वाहरेर्भक्तंमनसाध्यायतत्पदम्
कृतार्थोजायतेजंतुर्नात्रकार्याविचारणा १००
तन्मनाहिभवेत्प्राज्ञस्तथास्यात्तद्गताशयः
तमेवांतेभ्येतिलोकोनात्रकार्याविचारणा १०१
चेतसाचाप्यनुध्यातःस्वपदंयःप्रयच्छति
नारायणमनाद्यंतंनतंसेवेतकोजनः १०२
सततनियतचित्तोविष्णुपादारविंदेवितरणमनुशक्तिप्रीतयेतस्यकुर्यात्
नतिमतिरतिमस्यांघ्रिद्वयेसंविदध्यात्सहिखलुनरलोकेपूज्यतामाप्नुयाच्च १०३
इति श्रीपाद्मेमहापुराणेस्वर्गखंडेएकषष्टितमोऽध्यायः ६१

द्विषष्टितमोऽध्यायः

सूतउवाच-
एवंयन्महिमालोकेलोकनिस्तारकारणम्
तस्यविष्णोःपरेशस्यनानाविग्रहधारिणः १
एकंपुराणंरूपंवैतत्रपाद्मंपरंमहत्

ब्राह्मंमूर्धाहरेरेवहृदयंपद्मसंज्ञितम् २
वैष्णवंदक्षिणोबाहुःशैवंवामोमहेशितुः
ऊरूभागवतंप्रोक्तंनाभिःस्यान्नारदीयकम् ३
मार्कंडेयंचदक्षांघ्रिर्वामोह्याग्नेयमुच्यते
भविष्यंदक्षिणोजानुर्विष्णोरेवमहात्मनः ४
ब्रह्मवैवर्तसंज्ञंतुवामजानुरुदाहृतः
लैंगंहगुल्फकंदक्षंवाराहंवामगुल्फकम् ५
स्कांदंपुराणंलोमानित्वगस्यवामनंस्मृतम्
कौर्मंपृष्ठंसमाख्यातंमात्स्यंमेदःप्रकीर्तितम् ६
मज्ञातुगारुडंप्रोक्तंब्रह्मांडमस्थिगीयते
एवमेवाभवद्विष्णुःपुराणावयवोहरिः ७
हृदयंतत्रवैपाद्मंयच्छ्रुत्वामृतमश्नुयते
पाद्ममेतत्पुराणंतुस्वयंदेवोभवद्धरिः ८
यस्यैकाध्यायमध्याप्यसर्वैःपापैःप्रमुच्यते
तत्रादिमंस्वर्गमिदंसर्वपाद्मफलप्रदम् ९
स्वर्गखंडंसमाकर्ण्यमहापातकिनोपिये
मुच्यंतेतेपिपापेभ्यस्त्वचोजीर्णाद्यथोरगाः १०
अपिचेत्सुदुराचारःसर्वधर्म्मबहिष्कृतः
आदिस्वर्गंसमाकर्ण्ययत्फलंसमवाप्नुयात् ११
आदिस्वर्गमिदंश्रुत्वातत्फलंलभतेनरः
माघेमासेप्रयागेतुस्नात्वाप्रतिदिनंनरः १२
यथापापात्प्रमुच्यतेतथाहिश्रवणाद्भवेत्
दत्तातेनस्वर्णतुलादत्ताचैवधराखिला १३
कृतंवितरणंतेनद्ररिद्रेयत्कृतमृणम्
हरेर्नामसहस्राणिपठितानिह्यभीक्ष्णशः १४
सर्वेवेदास्तथाधीतास्तत्तत्कर्मकृतंतथा
अध्यापकाश्चबहवःस्थापितावृत्तिदानतः १५
अभयंभयलोकेभ्योदत्तंतेनतथाद्विजाः
गुणवंतोज्ञानवंतोधर्मवंतोनुमानिताः १६
मेषकर्कटयोर्मध्येतोयंदत्तंसुशीतलम्

ब्राह्मणार्थेगवार्थेचप्राणास्त्यक्ताश्चतेनहि १७
अन्यानिचसुकर्माणिकृतानितेनधीमता
येनादिखंडंसदसिश्रुतंसंश्रावितंतथा १८
स्वर्गखंडंसमाधीत्यनानाभोगान्समश्नुते
अंतःपुरगनारीणांसुखसुप्तःप्रबुध्यते १९
किंकिणीरवसन्नादैस्तथामधुरभाषणैः
इंद्रस्यार्धासनंभुंक्तेइंद्रलोकेवसेच्चिरम् २०
ततःसूर्यस्यभवनंचंद्रलोकंततोव्रजेत्
सप्तर्षिभवनेभोगान्भुक्त्वायातिततोध्रुवम् २१
ततश्चब्रह्मणोलोकंप्राप्यतेजोमयंवपुः
तत्रैवज्ञानमासाद्यनिर्वाणंपरमृच्छति २२
सद्भिःसहवसेद्धीमान्सत्तीर्थेस्नानमाचरेत्
कुर्यादेवसदालापंसच्छास्त्रंशृणुयान्नरः २३
तत्रपाद्मंमहाशास्त्रंसर्वाम्नायफलप्रदम्
स्वर्गखंडंचतन्मध्येमहापुरायफलप्रदम् २४
भजध्वंगोविंदंनमतहरिमेकंसुरवरंगमिष्यध्वंलोकानतिविमलभोगानतितराम्
शृणुध्वंहेलोकावदतहरिनामैकमतुलं यदीच्छावीचीनांसुखतरणमिष्टानिलभत
२५

इति श्रीपाद्मेमहापुराणेस्वर्गखंडेद्विषष्टितमोऽध्यायः ६२
संपूर्णमिदमादिखराडापरनामकमादिस्वर्गखंडंस्वर्गखंडंवा
शुभमस्तु श्रीरस्तु

इति श्रीपाद्मे महापुराणे तृतीयं स्वर्गखराडं समाप्तम्

# अथ श्रीपाद्मे महापुराणे चुतर्थं ब्रह्मखण्डं प्रारभ्यते
श्रीवेदव्यासाय नमः

## प्रथमोऽध्यायः

शौनकउवाच-
कलौसमागतेसूतप्राणिनांकेनकर्मणा
उद्धारोवैभवेत्तस्मात्कथयस्वममाग्रतः १
सूतउवाच-
साधुसाधुमुनिश्रेष्ठपुण्यात्मनांवरोभवान्
सर्वेषांचजनानांचशुभवाञ्छोनिरंतरम् २
एतद्व्यासःपुराविप्रःसर्वज्ञःसर्वपूजितः
पृष्टोजैमिनिनातंसयदाहशृणुवैष्णव ३
दंडवत्प्रणिपत्यासौव्यासंसर्वार्थपारगम्
गुरुंसत्यवतीसूनुंपप्रच्छमुनिपुंगवः ४
जैमिनिरुवाच-
कलौनृणांभवेत्केनमोक्षोवैकथयस्वमे
अल्पेनापिचपुण्येनमर्त्याश्चाल्पायुषोयतः ५
व्यासउवाच-
साधुसंगाद्भवेद्विप्रशास्त्राणांश्रवणंप्रभो
हरिभक्तिर्भवेत्तस्मात्ततोज्ञानंततोगतिः ६
नरोचतेकथाभूमौपापिष्ठायजनायवै
वैष्णवीसतुविज्ञेयःपापिष्ठप्रवरोद्विजः ७
श्रीकृष्णस्यकथांश्रुत्वाऽनदीभवतिवैष्णवः
असत्यांतांतुयोब्रूयाज्ज्ञेयःसपापिनांगुरुः ८
यस्मिन्यस्मिन्स्थलेविप्रकृष्णस्यवर्ततेकथा
तस्मात्तस्माज्जगन्नाथोयातित्यक्त्वानकर्हिचित् ९
कृष्णस्ययःकथारंभेकुर्याद्विघ्नंनराधमः
नरकान्निष्कृतिर्नास्तिमन्वंतरशतावधि १०
येपुराणकथांश्रुत्वानिंदंत्युपहसंतिवै
तेषांकरस्थानरकाबहुक्लेशकराःसदा ११

जन्मांतरार्जितंपापंतत्क्षणादेवनश्यति
श्रीकृष्णचरितंयोवैश्रोतुमिच्छांकरोत्यपि १२
भक्त्यायोवैनरःकुर्यात्श्रीकृष्णचरितंतथा
नजानेश्रवणेतस्यकागतिर्वाभविष्यति १३
ब्रह्महत्यादिकंपापंअकालमरणंतथा
सुरापानंतथास्तेयंसर्वंनश्यतिपापिनः १४
पापंकृत्वातुयोमर्त्यःपश्चात्पापंनिवर्तयेत्
तस्यपापंव्रजेन्नाशमग्निनातूलराशिवत् १५
श्रीकृष्णचरितंविप्रतिष्ठेद्वैपुस्तकंगृहे
तस्यगृहसमीपंहिनायांतियमकिंकराः १६
जैमिनिरुवाच–
वदंतिवैष्णवान्कांश्चवांच्छाब्रूहिगुरोमम
इदानींतान्समाज्ञातुंतेषांमाहात्म्यमुत्तमम् १७
व्यासउवाच–
योनरोमस्तकेभक्त्यावैष्णवांघ्रिजलंद्विज
करोतिसेचनंपापीतीर्थस्नानेनतस्यकिम् १८
साधुसंगंतुयःकुर्य्यात्क्षणंवार्द्धक्षणंद्विज
तस्यनश्यंतिपापानिब्रह्महत्यामुखानिच १९
यत्रयत्रकुलेचैवएकोभवतिवैष्णवः
कुलंतस्ययदापापैर्युक्तंतन्मोक्षगामिवै २०
हिंसादंभकामक्रोधैर्वर्जिताश्चैवयेनराः
लोभमोहपरित्यक्ताज्ञेयास्तेवैष्णवाद्विज २१
पितृभक्तादयायुक्ताःसर्वप्राणिहितेरताः
अमत्सरावैष्णवायेविज्ञेयाःसत्यभाषिणः २२
विप्रभक्तिरतायेचपरस्त्रीषुनपुंसकाः
एकादशीव्रतरताविज्ञेयास्तेचवैष्णवाः २३
गायंतिहरिनामानितुलसीमाल्यधारकाः
हर्यंघ्रिसलिलैःसिक्ताविज्ञेयास्तेचवैष्णवाः २४
श्रोत्रयोर्मस्तकेयेषांतुलस्याःपर्णमुत्तमम्
कर्हिचिद्दृश्यतेविप्रविज्ञेयास्तेचवेष्णवाः २५

पाखंडसंगरहिताविप्रद्वेषविवर्जिताः
सिंचेयुस्तुलसींयेचज्ञातव्यावैष्णवानराः २६
पूजयंतिहरिंयेचतुलस्याचार्चयंतिये
कन्यादानरतायेचयेवैह्यतिथिपूजकाः २७
शृणवंतिविष्णुचरितंविज्ञेयावैष्णवानराः
यस्यगृहेसुप्रतिष्ठेत्शालग्रामशिलापिच २८
मार्जयंतिहरेःस्थानंपितृयज्ञप्रवर्तकाः
जनेदीनेदयायुक्ताविज्ञेयास्तेचवैष्णवाः २९
परस्वंब्राह्मणद्रव्यंपश्यंतिविषवच्चये
हरिनैवेद्यंयेय्नऽश्नन्तिविज्ञेयावैष्णवाजनाः ३०
वेदशास्त्रानुरक्तायेतुलसीवनपालकाः
राधाष्टमीव्रतरताविज्ञेयास्तेचवैष्णवाः ३१
श्रीकृष्णपुरतोयेचदीपंयच्छंतिश्रद्धया
परनिंदांनकुर्वंतिविज्ञेयास्तेचवैष्णवाः ३२
सूतउवाच–
पृष्टोजैमिनिनाव्यासइत्युक्तःसयथाक्रमम्
मयेदंकथ्यतेब्रह्मन्यत्प्रसंगाद्गुरोःश्रुतम् ३३
अध्यायंश्रद्धयायुक्तंयेशृणवंतिनरोत्तमाः
सर्वपापविनिर्मुक्तायांतिविष्णोःपरंपदम् ३४
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेव्यासजैमिनिसंवादेप्रथमोऽध्यायः १

## द्वितीयोऽध्यायः

सूतउवाच–
शृणुशौनकवक्ष्यामिचान्यधर्म्मंपुरातनम्
व्यासजैमिनिसंवादंश्रोतृणांपापनाशनम् १
जैमिनिरुवाच–
कर्म्मणाहिगुरोकेनमंदिरंजगतीपतेः
यातितत्कथयस्वाद्यनरःपापीचमेप्रभो २
व्यासउवाच–
श्रीकृष्णमंदिरेयोवैलेपनंकुरुतेनरः

सर्वपापविनिर्मुक्तःश्रांतोयातिहरेर्गृहम् ३
यश्चांबुलेपनंकुर्यात्संक्षेपाच्छृणुजैमिने
तस्यपुरायमहंवच्मिमंदिरेजगतीपतेः ४
तत्रयावंतिपश्यंतिरजांसिचद्विजोत्तम
तावत्कल्पसहस्राणिसवसेद्विष्णुमंदिरे ५
पुरासीद्दंडकोनाम्नाचौरोलोकभयप्रदः
ब्रह्मस्वहारीमित्रघ्नोयुगेद्वापरसंज्ञके ६
असत्यभाषीक्रूरश्चपरस्त्रीगमनेरतः
गोमांसाशीसुरापश्चपाखंडजनसंगभाक् ७
वृत्तिच्छेदीद्विजातीनांन्यासापहारकस्तथा
शरणागतहंताचवेश्याविभ्रमलोलुपः ८
एकदासद्विजश्रेष्ठकस्यचिद्विष्णुमंदिरम्
जगामहरणार्थायविष्णोर्द्रव्यंसमूढधीः ९
अथद्वारिप्रविश्यासावंघ्रिःकर्द्दमसंयुतः
प्रोच्छितःसकलंनिम्नेभूमौदेवगृहस्यच १०
तेनैवकर्म्मणाभूमिर्निम्नरिक्ताबभूवह
लोहस्यचशलाकाभ्यांमुद्घाटचत्वररंमुदा ११
प्रविवेशहरेर्गेहंवितानवरशोभितम्
रत्नकांचनदीपाढ्यंपरिध्वस्तमहत्तमम् १२
नानापुष्पसुगंधाढ्यंनानापात्रसमाकुलम्
सुवासितस्यतैलस्यगंधेनपरिपूरितम् १३
अनेनहारकेणाथपर्य्यंकेसुमनोहरे
शायितोराधयासार्द्धंदृष्टःपीतांबरोऽच्युतः १४
प्रणम्यराधिकानाथंनिष्पापःसोऽभवत्तदा
नेष्याम्यथननेष्यामिअनेनकिंभवेन्मम १५
सेवांकर्त्तुमशक्तोऽहयतश्चौरोऽस्मिसर्वदा
द्रव्येणकार्यमस्तीतितन्नेतुंकृतवान्मनः १६
पातयित्वांशुकंभूमौकौशेयंकमलापतेः
बबंधवस्तुजातंचपाणौकृत्वासकंपितः १७
विष्णोर्मायापतेश्चाथतानिसर्वाणिजैमिने

कृत्वाशब्दंसुघोरंचपतितान्यथतानिवै १८
परित्यज्यसुनिद्रांचधावंतइतिकिन्वहो
आगताबहुशोलोकाश्चोरोद्रव्यंजवेनच १९
त्यक्त्वाधनंचचौरोऽपित्रस्तःकिंचिन्नगामह
दंशितःकालसर्पेणमृतोऽसौगतकिल्बिषः २०
यमाज्ञयातस्यदूताःपाशमुद्गरपाणयः
आगतास्तंसमानेतुंदंष्ट्रिणश्चर्मवाससः २१
बबंधुश्चर्मपाशेननिन्युर्दुर्गमवर्त्मना
दृष्ट्वातंशमनःक्रुद्धःपप्रच्छसचिवंप्रति २२
यमउवाच-
अनेनकिंकृतंकर्मपापंवापुण्यमेववा
समूलंवदहेप्राज्ञचित्रगुप्तममाग्रतः २३
चित्रगुप्तउवाच-
सृष्टानियानिपापानिविधात्रापृथिवीतले
कृतान्यनेनमूढेनसत्यमेतन्मयोदितम् २४
किंत्वाकर्णयलोकेशसुकृतंचास्यवर्त्तते
मन्येऽहयमुनाभ्रातःसर्वपापविलोपितत् २५
धर्मराजउवाच-
किंपुण्यंवर्त्ततेऽमात्यवदसारंममांतिके
श्रुत्वैवंतद्विधास्यामियत्रयोग्योभवेदसौ २६
यमस्यवचनंश्रुत्वासभयश्चित्रगुप्तकः
कृत्वाहस्तांजलिप्राहचात्मनःस्वामिनेद्विज २७
चित्रगुप्तउवाच-
हरणार्थंहरेर्द्रव्यंगतोऽसौपापिनांवरः
प्रोज्झितःकर्दमोराजन्पादयोर्द्वारतोहरेः २८
बभूवलिप्तासाभूमिर्बिलच्छिद्रविवर्जिता
तेनपुण्यप्रभावेणनिर्गतंपातकंमहत्
वैकुंठंप्रतियोग्योऽसौनिर्गतस्तवदंडतः २९
व्यासउवाच-
श्रुत्वासवचनंतस्यपीठंकनकनिर्मितम्

ददौतस्मैचोपविष्टस्तत्रपूज्योयमेनसः ३०
ननामशिरसातंवैप्रोवाचविनयान्वितः
यमउवाच-
पवित्रंमंदिरंमेऽद्यपादयोस्तद्धिरेणुभिः ३१
कृतार्थोऽस्मिकृतार्थोऽस्मिकृतार्थोऽस्मिनसंशयः
इदानींगच्छभोसाधोहरेर्मंदिरमुत्तमम् ३२
नानाभोगसमायुक्तंजन्ममृत्युनिवारणम्
व्यासउवाच-
इत्युक्त्वाधर्मराजोऽसौस्यंदनेस्वर्णनिर्मिते ३३
राजहंसयुतेदिव्येतमारोप्यगतैनसम्
समस्तसुखदंस्थानंप्रेषयामासचक्रिणः ३४
एवंप्रविष्टोवैकुंठेतत्रतस्थौसुखंचिरम्
लेपनंयेप्रकुर्वंतिभक्त्यातुहरिमंदिरम् ३५
तेषांकिंवाभविष्यतिनजानेऽहद्विजोत्तम
यइदंशृणुयाद्भक्त्यापठेद्योवासमाहितः ३६
कोटिजन्मार्जितंपापंनश्यत्येवनसंशयः ३७
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेहरिमंदिरलेपनमाहात्म्यं
नामद्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

शौनकउवाच-
कार्त्तिकस्यचमाहात्म्यंब्रूहिसूतममाग्रतः
तद्व्रतस्यफलंकिंवादोषंकिंतदकुर्वतः १
सूतउवाच-
पुरैकदामुनिश्रेष्ठव्यासंसत्यवतीसुतम्
जैमिनिःपृष्टवानेतदारेभेकथितंमुनिः २
व्यासउवाच-
तिलतैलंमैथुनंयःशुभदेकार्त्तिकेत्यजेत्
बहुजन्मकृतैःपापैर्मुक्तोयातिहरेर्गृहम् ३
मत्स्यंचमैथुनंयोवैकार्त्तिकेनपरित्यजेत्

प्रतिजन्मनिसंमूढःशूकरश्चभवेद्ध्रुवम् ४
कार्त्तिकेतुलसीपत्रैःपूजयेद्वैजनार्दनम्
पत्रेपत्रेऽश्वमेधस्यफलंप्राप्नोतिमानवः ५
कार्त्तिकेमुनिपुष्पैर्यःपूजयेन्मधुसूदनम्
देवानांदुर्लभंमोक्षंप्राप्नोतिकृपयाहरेः ६
कार्त्तिकेमुनिशाकंवैयोऽश्नातिचनरोत्तमः
संवत्सरकृतंपापंशाकेनैकेननश्यति ७
फलंतस्यनरोऽश्नातिचोर्जेयोवैहरिप्रिये
प्रदत्त्वातुहरेर्ब्रह्मन्वृजिनंकोटिजन्मजम् ८
सुरसंसर्पिषायुक्तंदद्याद्योहरयेपिच
सर्वपापैर्विनिर्मुक्तःसगच्छेद्धरिमंदिरम् ९
कार्तिकेयोनरोदद्यादेकपद्मंहरावपि
अंतेविष्णुपदंगच्छेत्सर्वपापविवर्जितः १०
प्रातःस्नानंनरोयोवैकार्तिकेश्रीहरिप्रिये
करोतिसर्वतीर्थेषुयत्स्नात्वातत्फलंलभेत् ११
कार्तिकेयोनरोदद्यात्प्रदीपंनभसिद्विजः
विप्रहत्यादिभिःपापैर्मुक्तोगच्छेद्धरेर्गृहम् १२
मुहूर्तमपियोदद्यात्कार्त्तिकेप्रीतयेहरेः
दीपंनभसिविप्रेन्द्रतस्मिंस्तुष्टःसदाहरिः १३
योदद्याच्चगृहेदीपंकृष्णस्यसघृतंद्विजः
कार्तिकेचाश्वमेधस्यफलंस्याद्वैदिनेदिने १४
प्रदीपस्यचमाहात्म्यंविशेषमुच्यतेमया
निशामयद्विजश्रेष्ठसेतिहासंसमाहितः १५
पूर्वंत्रेतायुगेविप्रोवैकुंठोनामतःशुचिः
यस्यसंगप्रभावेणमुक्तोभवतिपातकी १६
एकदाकार्तिकेसोऽपिप्रदीपंपुरतोहरेः
दत्वागृहंगतोविप्रोघृतपूर्णंद्विजर्षभः १७
सर्पिस्तत्स्वादितुचाखुरागतोऽपिप्रदीपतः
यावत्स्वादितुमारेभेबोधितोऽसौप्रदीपकः १८
मूषकोऽग्निभयात्तत्रवेगेनापिपलायितः

आखोश्चसकलंपापंविनष्टंकृपयाहरेः १९
सर्पेणदंशितश्चाखुःप्राणत्यागंचकारह
ततोयमाज्ञयादूताःपाशमुद्गरपाणयः २०
आगतास्तंसमानेतुंबबंधुश्चर्मरज्जुभिः
यावन्नेतुंमनश्चक्रुःशंखचक्रगदाधराः २१
आगतागरुडारूढाविष्णुदूताश्चतुर्भुजाः
विमानंगगनेचैवराजहंसयुतंशुभम् २२
निर्मितंकनकैःशुद्धैःकामगंकृपयाहरेः
पाशंछित्वाततोदूताःप्रोचुस्तेयमकिंकरान् २३
विष्णुभक्तोऽप्यसौमूढाव्यर्थंतुबंधनंकृतम्
गच्छध्वंशमनप्रेष्यायदिवांछास्तिजीवितुम् २४
श्रुत्वाप्रकंपितास्तेवैपृच्छंतिविनयान्विताः
केनपुरायप्रभावेणयुष्माभिर्नीयतेपुरम् २५
असौविष्णोर्महापापीयूयंतद्वक्तुमर्हथ
विष्णुदूताऊचुः-
पुरतोवासुदेवस्यप्रदीपबोधनंकृतम् २६
तेनैवकर्मणादूतानयामोविष्णुमंदिरम्
अनिच्छयापियःकुर्याद्विष्णोर्दीपस्यबोधनम् २७
कोटिजन्मार्जितंपापंत्यक्त्वायातिहरेर्गृहम्
भक्त्याप्रदीपंयोदद्यात्कार्तिकेतुहरेर्दिनैः २८
तस्यपुरायंसमाख्यातुंनशक्तोहरिणाविना
घृतपूर्णप्रदीपंयोभक्त्यादद्याद्धरेर्गृहे २९
अश्वमेधसहस्रेणतस्यकिंवाप्रयोजनम्
अश्वमेधप्रकर्तायःस्वर्गंयातिहरेर्दिने ३०
कार्तिकेदीपदाताचसगच्छेद्धरिमंदिरम्
व्यासउवाच-
इतिश्रुत्वाततोदूतागतास्तेवैयथागताः ३१
विष्णुदूतारथेकृत्वागतास्तंविष्णुमंदिरम्
विष्णुसान्निध्यएवास्यमन्वंतरशतंगतम् ३२
ततोमर्त्येराजकन्याबभूवकृपयाहरेः

पुत्रपौत्रसमायुक्ताचिरंभोगंचकारसा ३३
इतःपुनर्गतासातुगोलोकंहरिसेवया
सूतउवाच-
भक्त्याशृणोतियोमर्त्योदीपमाहात्म्यमुत्तमम् ३४
सर्वपापविनिर्मुक्तःसयातिविष्णुमंदिरम् ३५
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेदीपदानमाहात्म्यं
नामतृतीयोऽध्यायः ३

चतुर्थोऽध्यायः

शौनकउवाच-
जयंत्याःसूतमाहात्म्यंकदासाक्रियतेजनैः
कथयस्वमयित्वंवैपोतःसंसारसागरे १
सूतउवाच-
शृणुविप्रप्रवक्ष्यामियत्पृष्टोमुनिसत्तम
पुराब्रह्मानारदेनपृष्टएतत्सुरालये २
नारदउवाच-
जयंत्याश्चैवमाहात्म्यंकथयस्वपितामह
यच्छ्रुत्वाहंगमिष्यामितद्विष्णोःपरमंपदम् ३
ब्रह्मोवाच-
शृणुष्वावहितोविप्रतवाग्रेकथयाम्यहम्
जयंत्याउपवासेनविष्णुलोकंसगच्छति ४
स्मरणात्कीर्तनात्पापंसप्तजन्मार्जितंमुने
जयंतीदहतेतच्चकिंपुनःसोपवासकृत् ५
जन्माष्टमीचनवमीचैत्रेमासिसिताशुभा
कृष्णाचतुर्दशीकुंभेमेषेशुक्लाचतुर्दशी ६
दुर्गाष्टम्याश्विनेशुक्लाद्वादशीश्रवणान्विता
महापुण्याश्चशुभदाजयंत्यःषट्प्रकीर्तिताः ७
कृष्णजन्माष्टमीपूर्वाप्रसिद्धापापनाशिनी
क्रतुकोटिसमाह्येषातीर्थानामयुतैःसमा ८
कर्तागवांसहस्त्रंतुयोददातिदिनेदिने

तत्फलंसमवाप्नोतिजयंत्यांसमुपोषणे ९
हेमभारसहस्त्रंतुकुरुक्षेत्रेरविग्रहे
तत्फलंसमवाप्नोतिजयंत्यांसमुपोषणे १०
कृष्णाजिनसहस्राणितिलधेनुशतानिच
तत्फलंसमवाप्नोतिजयंत्यांसमुपोषणे ११
कन्याकोटिसहस्राणांदानेभवतियत्फलम्
तत्फलंसमवाप्नोतिजयंत्यांसमुपोषणे १२
ससागरामिमांपृथ्वद्यंदत्वायल्लभतेफलम्
तत्फलंसमवाप्नोतिजयंत्यांसमुपोषणे १३
वापीकूपतडागदिकर्तव्यंदेवतालये
तत्फलंसमवाप्नोतिजयंत्यांसमुपोषणे १४
मातापित्रोर्गुरूणांचभक्तिंयुक्तःकरोतियः
तत्फलंसमवाप्नोतिजयंत्यांसमुपोषणे १५
आपदाहरणार्थायतीर्थसेवाकृतात्मनाम्
सत्यव्रतानांयत्पुण्यंजयंत्यांसमुपोषणे १६
गंगायांनर्मदायांयत्पुण्यंसारस्वतेजले
स्नात्वापुण्यमवाप्नोतिजयंत्यांसमुपोषणे १७
यत्पुण्यंश्राद्धकर्तॄणांपितॄणामिंदुसंक्षये
तत्फलंसमवाप्नोतिजयंत्यांसमुपोषणे १८
नारदउवाच-
केनकेनकृतापूर्वंकथयस्वपितामह
ब्रह्मोवाच-
कार्तवीर्येणकर्णेनकुमारेणचधीमता १९
सगरेणदिलीपेनकाकुस्थेनकृतापुरा
गौतमेनचगार्ग्येणजामदग्न्येनधीमता २०
वाल्मीकिनाकृतापूर्वंद्रौपदेयेनसाधुना
ददातिवांछितान्कामान्भाद्रपस्यसिताष्टमी २१
प्राजापत्यर्क्षसंयुक्ताविशेषेणमताष्टमी
वर्षेवर्षेप्रकर्तव्याप्रीत्यर्थेचक्रपाणिनः २२
कोटिजन्मार्जितंपापंमुहूर्तेनविलीयते

रात्रौजागरणंकृत्वानिष्ठापूर्वंजितेंद्रियः २३
गंधपुष्पादिनैवेद्यैःपूजनीयःपृथक्पृथक्
एवंयःकुरुतेविप्रजयंतीसमुपोषणम् २४
कोटिजन्मार्जितंपापंज्ञानतोऽज्ञानतःकृतम् २५
प्रसादाद्देवकीसूनोर्यामार्द्धेनविलीयते
जयंतीतिथिसंप्राप्तौभुंजतेयेनराधमाः २६
त्रैलोक्यसंभवंपापंभुंजतेतेनसंशयः
सागराद्यानितीर्थानिमुक्तस्थानानिसर्वशः २७
गृहेतिष्ठंतिसर्वांगेजयंतीव्रतकारिणः
तस्यसर्वाणितीर्थानिदेहेतिष्ठंतिदेवताः २८
करोतियोनरोभक्त्याजयंतींकृष्णवल्लभाम्
नवेदेनपुराणेनमयादृष्टंमहामुने २९
तत्समंनाधिकंवापिकृष्णराधाष्टमीव्रतम्
नकरोतिनरोभक्त्यासभवेत्क्रूरराक्षसः ३०
योनरोऽश्नातिमूढात्माजयंतीवासरेद्विज
महानरकमश्नातियथाचहरिवासरे ३१
अतीतमागतंयस्तुकुलमेकोत्तरंशतम्
पतेत्तुनरकेघोरेजयंत्यांभोजनेनवै ३२
जयंतीबुधवारेचरोहिण्यासहितायदा
भवेच्चमुनिशार्दूलकिंकृतैर्व्रतकोटिभिः ३३
कृतेत्रेतायुगेचैवद्वापरेचकलौयुगे
कृतासम्यग्विधानेनजयंतीपापनाशिनी ३४
जागरेपद्मनाभस्यपुराणंपाठयेत्तुयः
आजन्मोपार्जितंपापंदहतेतूलराशिवत् ३५
यःश‍ृणोतिनरोभक्त्यापुराणंहरिवासरे
कोटिजन्मार्जितंतस्यपापंनश्यतितत्क्षणात् ३६
वासरेपद्मनाभस्यपूजयेद्वाचकंमुने
कुलकोटिंसमुद्धृत्यविष्णुलोकेसपूज्यते ३७
जयंत्यामुपवासेनयोनरोऽत्रपराङ्मुखः
सर्वधर्मविनिर्मुक्तोयात्यसौनरकंध्रुवम् ३८

गंधपुष्पैश्चधूपैश्चघृतपूर्णप्रदीपकैः
पूजयेद्भक्तिभावैश्चदद्याद्विप्रायदक्षिणाम् ३९
विधिनानेनयोविप्रजयंतींप्रकरोतिच
नरोवैतारयेद्भक्त्यापुरुषानेकविंशतिम् ४०
नदौर्भाग्यंनवैधव्यंनभवेत्कलहोगृहे
संततेर्नविरोधंचनपश्यतिधनक्षयम् ४१
यान्यांश्चिकीर्षतेकामान्जयंतीसमुपोषकः
तांस्तान्प्राप्नोतिसकलान्विष्णुलोकंसगच्छति ४२
विष्णुभक्तिपरानित्यंजयंतीव्रतमानसाः
तेधन्यास्तेकुलीनास्तेईश्वरास्तेचपंडिताः ४३
यानिकानिचतीर्थानिव्रतानिनियमानिच
जयंतीवासरस्यैवकलांनार्हंतिषोडशीम् ४४
भाद्रेवैचोभयेपक्षेयःकरोतिसभार्यकः
राधाकृष्णाष्टमींवत्सप्राप्नोतिहरिसन्निधिम् ४५
व्रतंचपुरायकारंचयःकरोतिसदाहरेः
सयातिविष्णोर्वैकुंठंजयंतीसमुपोषकः ४६
आचारहीनंकुलभ्रष्टंकीर्तिहीनंकुयोनिजम्
नाशयत्याशुपापंचजयंतीहरिवल्लभा ४७
मेरुतुल्यानिपापानिब्रह्महत्यादिकानिच
सनिर्दहतिसर्वाणिजयंत्यांसमुपोषकः ४८
पुत्रार्थीलभतेपुत्रंधनार्थीलभतेधनम्
मोक्षार्थीलभतेमोक्षंजयंत्यांसमुपोषकः ४९
जयंतीकरणेचित्तंयेषांभवतितत्परम्
यमोऽपिशंकतेनित्यंतेयांतिपरमांगतिम् ५०
सूतउवाच—
कथयित्वानारदंतुययौसचयथागतः
मयापिकथितंब्रह्मन्यत्पृष्टोऽहत्वयामुने ५१
माहात्म्यंचजयंत्यायेशृरवंतिभक्तिभावतः
तेपियांतिपरंधामविमुक्ताःसर्वपातकैः ५२
पुराणवाचकंब्रह्मन्जयंतीव्रतिनंतथा

येपश्यंतिनराःपापास्तेयांतिपरमंपदम् ५३
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेब्रह्मनारदसंवादेजयंतीव्रतमाहात्म्यं नामचतुर्थोऽध्यायः ४

पंचमोऽध्यायः

शौनकउवाच-
कथयस्वमहाप्राज्ञपुत्रहीनोजनोभवेत्
कर्मणाकेनवैसूतपुत्रोभवतिकेनच १
सूतउवाच-
एतत्पृष्टःपुराब्रह्मानारदेनमहात्मना
सयदाहतदातंचशृणुष्वमुनिपुंगव २
नारदउवाच-
पितामहमहाप्राज्ञसर्वतत्त्वार्थपारग
अपुत्रोवैभवेन्मर्त्यःकर्मणाकेनपद्मज ३
वंध्यास्त्रीवाभवेत्केनवृजिनेनममाग्रतः
कथयशृण्वतोवैमेसर्वप्राणिहितेरत ४
दुहिताजायतेकेनकर्मणावानपुंसकः
मृतवत्सोभवेत्केनमृतवत्सातिदुःखिता
केनपुण्येनभोब्रह्मन्पुनःपुत्रोभवेद्वद ५
ब्रह्मोवाच-
कथयामिसमासेनसावधानेनतच्छृणु
वृत्तांतंपृच्छसित्वंवैशृण्वतांविस्मयप्रदम् ६
पूर्वजन्मनियोमर्त्योवर्तन्नंब्राह्मणस्यच
हरेद्वाहारयेदत्रपुत्रहीनोभवेत्किल ७
इहजन्मनियोमर्त्यःपुराणश्रवणंहिच
ससस्याभूमेर्दानंचकुर्याद्वैश्रद्धयान्वितः ८
धेनुंबहुगुणांहैमींबहुदुग्धांसदक्षिणाम्
सुवर्णप्रतिमांचैवतस्यपुत्रोभवेद्ध्रुवम् ९
पूर्वजन्मनियानारीपरबालकघातनम्
करोतिकपटेनैवबालहीनाभवेद्ध्रुवम् १०

सौवर्णप्रतिमादानंयानारीश्रद्धयान्विता
कुर्यात्पानंब्राह्मणस्यभक्त्यावैचरणोदकम् ११
पुराणश्रवणंचैवदद्याद्वैबहुदक्षिणाम्
बह्वपत्याजीववत्साभवेन्नास्त्यत्रसंशयः १२
जलेनिमग्नंबालंयोदृष्ट्वायानसमुद्धरेत्
इहजन्मन्यपुत्रोवैसाऽपुत्रीचभवेद्ध्रुवम् १३
वृषभंचैवकूष्मांडंससुवर्णंसवस्त्रकम्
दद्याद्दानंब्राह्मणस्यकुर्याद्बालव्रतंशुभम् १४
गौरींकन्यांतथाकुर्यात्पुराणश्रवणंहियः
पुत्रोवैजायतेतस्यसर्वपातकनाशनम् १५
पूर्वजन्मनियोमर्त्योनिराशंचातिथिंद्विज
कुर्यात्क्रोधेनदंडंचपुत्रहीनोभवेद्ध्रुवम् १६
ब्राह्मणंचातिथिंचैवकुर्याद्भक्त्याप्रपूजनम्
अन्नदानंजलंचैवतथादेवालयंशभम् १७
पूर्वजन्मनियानारीभ्रूणहत्यांचयोनरः
कुर्यात्सामृतवत्साचमृतवत्सोभवेद्ध्रुवम् १८
यानारीस्वामिसहिताकुर्याच्चहरिवासरम्
सुपुत्राभर्तृसुभगाभवेत्साप्रतिजन्मनि १९
योनरोगोधनंकुर्याच्छूद्रःकुर्याद्विमोहितः
ब्राह्मणीहरणंवापिकर्मणासनपुंसकः २०
इदंतुवृजिनंकृत्वापश्चात्पुण्यंकरोतियः
इहपुण्यप्रभावेणदुहिताजायतेद्विज २१
आसीत्त्रेतायुगेराजाश्रीधरोनामतोद्विज
अपुत्रोधनवांस्तस्यजायाहेमप्रभावती २२
व्यासंसकलशास्त्रज्ञंसर्वलोकहितैषिणम्
आगतंचैवपप्रच्छचापुत्रोऽहकथंद्विज २३
उवाचनृपतेःश्रुत्वावचनंविनयान्वितम्
राज्ञादत्तेचपीठेचनिर्मितेकनकादिभिः २४
राजाराज्ञीतस्यपादौधौतंकृत्वाचहर्षितौ
पीत्वापादोदकंद्वौचसर्वपातकनाशनम् २५

व्यासउवाच-
राजन्शृणुष्वयत्पृष्टमपुत्रोयेनकर्मणा
तवेयंराज्ञीचापुत्रीचैकपत्नीव्रतस्तथा २६
पूर्वजन्मनिचंद्रस्त्वंनाम्नावरतनुस्मृतः
भार्यातवापिशुभ्रांगीनाम्नावैशंकरीस्मृता २७
एकदापथियातौचनीचपुत्रंजलेपिच
मग्नंदृष्ट्वाहेलयाचगतौसपंचतांगतः २८
बहुपुण्यप्रभावेणराज्ञीराजागतौयुवाम्
तेनकर्मविपाकेनयुवायोर्नभवेत्सुतः २९
राजोवाच-
इदानींकेनपुण्येनसुतोवैजायतेप्रभो
अपुत्रस्यमनुष्याणांजीवनंहिनिरर्थकम् ३०
व्यासउवाच-
सवस्त्रंचैवकूष्मांडंवृषभंससुवर्णकम्
देहिदानंब्राह्मणस्यकुरुबालव्रतंतथा ३१
गौरींकन्यांतथादेहिपुराणश्रवणंकुरु
पुत्रोवैजायतेतत्रसर्वपातकनाशनम् ३२
ब्रह्मोवाच-
इतिश्रुत्वाततोराजाव्यासोक्तंदानमुत्तमम्
पुराणश्रवणंचैवचकारगतकिल्बिषः ३३
ततःपुत्रोवर्षमध्येबभूवसर्वपूजितः
अभूद्राजासार्वभौमःसुंदरःकुलनायकः ३४
सूतउवाच-
यइदंशृणुयाद्भक्त्याकरोतिदानमुत्तमम्
अपुत्रोलभतेपुत्रंसंक्षेपात्कथितंमया ३५
भक्त्याश्रुत्वातुयानारीकुर्याद्ब्राह्मणपूजनम्
सुपुत्रासाभवेन्नित्यंशास्त्रोक्तविधिनाद्विज ३६
सुवर्णंरजतंवस्त्रंपुष्पमाल्यंचचंदनम्
योदद्यात्पुस्तकेभक्त्यासर्वपापप्रणाशनम् ३७
पूर्वजन्मनियोमूढोब्रह्मबालकघातकः

तस्यक्रूरोभवेत्पुत्रःसप्तजन्मांतरैर्द्विजः ३८
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेब्रह्मनारदसंवादेकर्मविपाककथनं
नामपंचमोऽध्यायः ५

षष्ठोऽध्यायः

शौनकउवाच-
केनपुरायेनभोसूतवैकुंठंसमावाप्यते
तद्वदस्वशृरावतोमेपोतोहिभवसागरे १
सूतउवाच-
साधुसाधुमुनिश्रेष्ठसर्वमंगलकारक
कथयामिसमासेनशृरावतांपापनाशनम् २
विष्णवेब्राह्मणायैवमृदावेश्मविनिर्मितम्
योवैदद्याद्द्विजश्रेष्ठतस्यपुरायंनिशामय ३
विष्णुलोकेचसविप्रःसर्वपापविवर्जितः
सौधवासीभवेन्नित्यंविष्णुलोकेप्रपूज्यते ४
विष्णवेसौधगेहंयोदद्याद्वैब्राह्मणायच
हरेर्न्निकेतनंप्राप्यस्वर्गवासीभवेद्ध्रुवम् ५
अंतेविष्णुपुरंगत्वायुक्तःकोटिकुलैर्द्विज
स्वर्णसौधेगृहेस्थित्वाकुर्याद्भोगंयथासुखम् ६
ब्राह्मणस्थापनेपुरायंयद्वैभवतिभोमुने
संख्यांकर्तुमशक्तस्तुतद्वेधाःसर्वकारकः ७
गरायंतेरेणवश्चैवगरायंतेवृष्टिबिंदवः
नगरायंतेविधात्रापिब्रह्मसंस्थापनेफलम् ८
नारदेनपुराब्रह्मापृष्टःसंसारसंभवः
वेधास्तंकथयामासतच्छृणुष्वमहामुने ९
पुरासीद्द्वापरेब्रह्मन्वारनारीसुशोभना
सुकेशीहरिणीनेत्रासुमध्याचारुहासिनी १०
नाम्नासाचंचलापांगीययौदेशांतरंकदा
सर्वपापसमायुक्तानरकेपातयंतिच ११
संगेनसिंधुनाकांचीजनान्देवालयंगता

तत्रक्षणंसोपविष्टातांबूलभक्षणंकृतम् १२
शेषंचूर्णंसौधभित्तौदत्वानिम्नेकुतूहलात्
ततोगताजारकांक्षीधनार्थंनगरंप्रति १३
जारेणकेनचित्सार्द्धंसंकेतःसहसाकृतः
संकेतंतुगतावेश्यावनंरात्रौविमोहिता १४
संकेतंनागतोवैश्योव्यशंकिष्टविलोकिता
कथंकांतोनागतोमेसर्पव्याघ्रैश्चभक्षितः १५
संकेतनंकथंहित्वागतःकिंकामविह्वलः
अन्ययाज्ञातयासार्द्धमभिलाषीभवेत्किमु १६
परामृष्यैतद्हृद्यंतःकोटपालभयाद्द्विज
नगरंनागतासाहिरुद्धेलोकपथेतमैः १७
एतस्मिन्नंतरेव्याघ्रःकामरूपीबलात्क्षुधी
प्रेषितःकालदेवेनाग्रसदागत्यतांद्विज १८
ततस्तुयमुनाभ्रातुर्दूतास्तेभीमवर्षिणः
आगतागिरिकूटांगानेतुंतांपापकर्मणा १९
वक्रपादावक्रमुखाउन्नासाबहुदंष्ट्रिणः
चर्मरज्जूर्मुद्गरांश्चगृहीत्वापांशुलांद्विज २०
बंधयामासुरुन्मत्तागणिकांचर्म्मरज्जुभिः
शंखचक्रगदापद्मधारिणोवनमालिनः २१
प्रेषितादेवदेवेनतद्भक्तवत्सलेनच
कृष्णजीमूतसंकाशाःस्फुरद्वदनपंकजाः २२
श्रेणीधराश्चारुनासादिव्यकुंडलभूषिताः
ददृशुःपथिगच्छंतोविष्णोर्दूतामहात्मनः २३
विष्णुदूताऊचुः-
केयूयंविकृताकारालक्ष्यंतेकर्बुराइव
इमांविष्णोःप्रियतमांनीत्वाक्वव्रजथोत्तमाम्
इदंवचनमाकर्ण्यतेषांतेतुद्रुतंययुः २४
अथतेक्रोधसंपन्नाविष्णोर्दूतामहाबलाः
जघ्नुस्तेसंदेशहरान्यमस्यजगतःप्रभोः २५
चक्रादिशस्त्रसंघैश्चसूर्यकोटिसमप्रभैः

कृतांतस्यभटाःसर्वेरुदंतस्तेपलायिताः २६
यमंप्रोचुःसभीताश्चवृत्तांतंसकलंद्विज
यमोऽपितत्कथांश्रुत्वाचित्रगुप्तमुवाचह २७
धर्मउवाच-
केनपुण्येनभोमंत्रिन्वेश्यामुक्तिंसमागता
एतन्मेपृच्छतसर्वंकथयस्वयथार्हतः २८
चित्रगुप्तउवाच-
तयापापान्यर्जितानिजन्मतःसुबहून्यपि
किंत्वाकर्णयलोकेशयदिस्यात्पुण्यमस्तितत् २९
गणिकैकदाधर्म्मराजसर्वालंकारभूषिता
कांचित्पुरींजगामाशुजारकांक्षीधनार्थिनी ३०
तत्रदेवालयेतस्मिन्स्थित्वातांबूलभक्षणं
कृत्वातच्छेषचूर्णंतुददौभित्तौतुकौतुकात् ३१
तेनपुण्यप्रभावेणगणिकागतपातका
वैकुंठंप्रतिसायातिनिर्गतातवदंडतः ३२
सूतउवाच-
इतिश्रुत्वाततोदूतायमोऽपिवचनंद्विज
व्यापारेचान्यतश्चित्तंददौसागणिकापिच ३३
आरूढास्यंदनेदिव्येराजहंसयुतेतथा
विष्णुलोकंययौसाचवेष्टिताविष्णुकिंकरैः ३४
श्रीविष्णोराज्ञयासाथकुलकोटियुतापिच
तस्थौसौधगृहेविप्रनानाभोगंचकारह ३५
भक्त्यायोवैहरेर्गेहेदद्याच्चूर्णंप्रयत्नतः
पुण्यंकिंवाभवेत्तस्यनजानेद्विजपुंगव ३६
भक्त्याध्यायंपठेद्योवैशृणोतिसादरेणच
सर्वपापविनिर्मुक्तोयात्यसौहरिमंदिरम् ३७

इति श्रीपाद्मेमहापुराणेब्रह्मखंडेब्रह्मनारदसंवादेषष्ठोऽध्यायः ६

## सप्तमोऽध्यायः

शौनकउवाच-

कथयस्वमहाप्राज्ञगोलोकंयातिकर्मणा
सुमतेदुस्तरात्केनजनःसंसारसागरात्
राधायाश्चाष्टमीसूततस्यामाहात्म्यमुत्तमम् १
सूतउवाच-
ब्रह्माणंनारदोऽपृच्छत्पुराचैतन्महामुने
तच्छृणुष्वसमासेनपृष्टवान्सइतिद्विज २
नारदउवाच-
पितामहमहाप्राज्ञसर्वशास्त्रविदांवर
राधाजन्माष्टमीतातकथयस्वममाग्रतः ३
तस्याःपुण्यफलंकिंवाकृतंकेनपुराविभो
अकुर्वतांजनानांहिकिल्बिषंकिंभवेद्द्विज ४
केनैवतुविधानेनकर्त्तव्यंतद्व्रतंकदा
कस्माज्जाताचसाराधातन्मेकथयमूलतः ५
ब्रह्मोवाच-
राधाजन्माष्टमींवत्सशृणुष्वसुसमाहितः
कथयामिसमासेनसमग्रंहरिणाविना ६
कथितुंतत्फलंपुण्यंनशक्नोत्यपिनारद
कोटिजन्मार्जितंपापंब्रह्महत्यादिकंमहत् ७
कुर्वंतियेसकृद्भक्त्यातेषांनश्यतितत्क्षणात्
एकादश्याःसहस्रेणयत्फलंलभतेनरः ८
राधाजन्माष्टमीपुण्यंतस्माच्छतगुणाधिकम्
मेरुतुल्यसुवर्णानिदत्वायत्फलमाप्यते ९
सकृद्राधाष्टमींकृत्वातस्माच्छतगुणाधिकम्
कन्यादानसहस्रेणयत्पुण्यंप्राप्यतेजनैः १०
वृषभानुसुताष्टम्यातत्फलंप्राप्यतेजनैः
गंगादिषुचतीर्थेषुस्नात्वातुयत्फलंलभेत् ११
कृष्णप्राणप्रियाष्टम्याःफलंप्राप्नोतिमानवः
एतद्व्रतंतुयःपापीहेलयाश्रद्धयापिवा १२
करोतिविष्णुसदनंगच्छेत्कोटिकुलान्वितः
पुराकृतयुगेवत्सवरनारीसुशोभना १३

सुमध्याहरिणीनेत्राशुभांगीचारुहासिनी
सुकेशीचारुकर्णीचनाम्नालीलावतीस्मृता १४
तयाबहूनिपापानिकृतानिसुदृढानिच
एकदासाधनाकांक्षीनिःसृत्यपुरतःस्वतः १५
गतान्यनगरंतत्रदृष्ट्वासुज्ञजनान्बहून्
राधाष्टमीव्रतपरान्सुंदरेदेवतालये १६
गंधपुष्पैर्धूपदीपैर्वस्त्रैर्नानाविधैःफलैः
भक्तिभावैःपूजयंतोराधायामूर्तिमुत्तमाम् १७
केचिद्गायंतिनृत्यंतिपठंतिस्तवमुत्तमम्
तालवेणुमृदंगांश्चवादयंतिचकेमुदा १८
तांस्तांस्तथाविधान्दृष्ट्वाकौतूहलसमन्विता
जगामतत्समीपंसापप्रच्छविनयान्विता १९
भोभोःपुण्यात्मानोयूयंकिंकुर्वंतोमुदान्विताः
कथयध्वंपुण्यवंतोमांचैवविनयान्विताम् २०
तस्यास्तुवचनंश्रुत्वापरकार्यहितेरताः
आरेभिरेतदावक्तुंवैष्णवाव्रततत्पराः २१
राधाव्रतिनऊचुः-
भाद्रेमासिसिताष्टम्यांजाताश्रीराधिकायतः
अष्टमीसाद्यसंप्राप्तातांकुर्वामप्रयत्नतः २२
गोघातजनितंपापंस्तेयजंब्रह्मघातजम्
परस्त्रीहरणाच्चैवतथाचगुरुतल्पजम् २३
विश्वासघातजंचैवस्त्रीहत्याजनितंतथा
एतानिनाशयत्याशुकृतायाचाष्टमीनृणाम् २४
तेषांचवचनंश्रुत्वासर्वपातकनाशनम्
करिष्याम्यहमित्येवपरामृष्यपुनःपुनः २५
तत्रैवव्रतिभिःसार्द्धंकृत्वासाव्रतमुत्तमम्
दैवात्सापंचतांयातासर्पघातेननिर्मला २६
ततोयमाज्ञयादूताःपाशमुद्गरपाणयः
आगतास्तांसमानेतुंबबंधुरतिकृच्छ्रतः २७
यदानेतुंमनश्चक्रुर्यमस्यसदनंप्रति

तदागताविष्णुदूताःशंखचक्रगदाधराः २८
हिरण्मयंविमानंचराजहंसयुतंशुभम्
छेदनंचक्रधाराभिःपाशंकृत्वात्वरान्विताः २९
रथेचारोपयामासुस्तांनारींगतकिल्बिषाम्
निन्युर्विष्णुपुरंतेचगोलोकाख्यंमनोहरम् ३०
कृष्णेनराधयातत्रस्थिताव्रतप्रसादतः
राधाष्टमीव्रतंतातयोनकुर्य्याच्चमूढधीः ३१
नरकान्निष्कृतिर्नास्तिकोटिकल्पशतैरपि
स्त्रियश्चयानकुर्वंतिव्रतमेतच्छुभप्रदम् ३२
राधाविष्णोःप्रीतिकरंसर्वपापप्रणाशनम्
अंतेयमपुरींगत्वापतंतिनरकेचिरम् ३३
कदाचिज्जन्मचासाद्यपृथिव्यांविधवाध्रुवम्
एकदापृथिवीवत्सदुष्टसंघैश्चताडिता ३४
गौर्भूत्वाचभृशंदीनाचाययौसाममांतिकम्
निवेदयामासदुःखंरुदंतीचपुनःपुनः ३५
तद्वाक्यंचसमाकर्ण्यगतोऽहविष्णुसंनिधिम्
कृष्णेनिवेदितश्चाशुपृथिव्यादुःखसंचयः ३६
तेनोक्तंगच्छभोब्रह्मन्देवैःसार्द्धंचभूतले
अहंतत्रापिगच्छामिपश्चान्ममगणैःसह ३७
तच्छ्रुत्वासहितोदैवैरागतःपृथिवीतलम्
ततःकृष्णःसमाहूयराधांप्राणगरीयसीम् ३८
उवाचवचनंदेविगच्छेहंपृथिवीतलम्
पृथिवीभारनाशायगच्छत्वंमत्तर्यमंडलम् ३९
इतिश्रुत्वापिसाराधाप्यागतापृथिवींततः
भाद्रेमासिसितेपक्षेअष्टमीसंज्ञिकेतिथौ ४०
वृषभानोर्यज्ञभूमौजातासाराधिकादिवा
यज्ञार्थंशोधितायांचदृष्टासादिव्यरूपिणी ४१
राजानंदमनाभूत्वातांप्राप्यनिजमंदिरम्
दत्तवान्महिषींनीत्वासाचतांपर्यपालयत् ४२
इतितेकथितंवत्सत्वयापृष्टंचयद्वचः

गोपनीयंगोपनीयंगोपनीयंप्रयत्नतः ४३
सूतउवाच-
यइदंशृणुयाद्भक्त्याचतुर्वर्गफलप्रदम्
सर्वपापविनिर्मुक्तश्चांतेयातिहरेर्गृहम् ४४

इति श्रीपाद्मेमहापुराणेब्रह्मखंडेब्रह्मनारदसंवादेश्रीराधाष्टमीमाहात्म्यं
नामसप्तमोऽध्यायः ७

अष्टमोऽध्यायः

शौनकउवाच-
समुद्रमथनंसूतपुराकस्मात्कृतंगुरो
हृदयेकौतुकंजातंश्रोतुंमेवदचामरैः १
सूतउवाच-
ब्रह्मन्वच्मिसमासेनसिंधोर्मथनकारणम्
दुर्वाससेंद्रसंवादमितिहासंशृणुष्वतत् २
महातपामहातेजादुर्वासाईश्वरांशजः
ब्रह्मर्षिःप्रययौस्वर्गमिन्द्रंद्रष्टुंसचैकदा ३
तस्मिन्ददर्शकालेतंगजारूढंशचीपतिम्
दृष्ट्वास्त्रजंपारिजातांददौतस्मैमहामुनिः ४
गृहीत्वातांस्त्रजंचेंद्रोविन्यस्यगजमूर्द्धनि
देवराट्प्रययौब्रह्मन्ससैन्योनंदनंप्रति ५
हस्तीचादायतांमालांछित्त्वातुधरणीतले
चिक्षेपचमहाक्रुद्धस्तमित्याहमहामुनिः ६
त्रैलोक्यैकश्रियायुक्तोयस्मात्त्वमवमन्यसे
तवत्रैलोक्यश्रीर्नष्टाभवत्येवनसंशयः ७
ततःशक्रोजगामाशुसुप्तश्चस्वपुरंपुनः
ददर्शजगतांमाताचांतर्द्धानंगतास्वयम् ८
नष्टमंतर्द्धानवत्यांतदातस्यांजगत्त्रयम्
क्षुत्पिपासान्विताःसर्वेचुक्रुशुर्वैनिरंतरम् ९
नववर्षुर्वारिवाहाःशुष्काश्चैवजलाशयाः
सर्वेतेशाखिनःशुष्काःफलपुष्पविवर्जिताः १०

क्षुत्पिपासार्दिताःसर्वेब्रह्मणःसन्निधिंययुः
तंसर्वेकथयामासुःदुःखशोकंपितामहम् ११
देवानांवचनंश्रुत्वाधातादेवगणैःसह
भृग्वादिमुनिभिश्चैवप्रययौक्षीरसागरम् १२
विष्णुंसमर्चयामासक्षीराब्धेरुत्तरेतटे
मंत्रमष्टाक्षरंवेधाजपन्ध्यायन्जगत्पतिम् १३
ततःप्रसन्नोभगवान्सर्वेषांचदिवौकसाम्
वैनतेयंसमारुह्यचागतःसदयःप्रभुः १४
पीतवस्त्रंचतुर्बाहुंशंखचक्रगदाधरम्
दृष्ट्वातंजगतामीशंपुंडरीकनिभेक्षणम् १५
विष्णुंभवोदधेःपोतंवनमालाविभूषितम्
श्रीवत्सकौस्तुभोरस्कमानंदाश्रुपरिप्लुताः १६
तुष्टुवुर्जयशब्देननमश्चक्रुर्निरंतरम्
श्रीभगवानुवाच-
वरंवृणीध्वंभोदेवाःकस्माद्यूयंसमागताः
वरदोऽस्मितद्वदतवोददामिचनान्यथा १७
देवाऊचुः-
कृपालोब्रह्मशापेनसंपद्धीनंजगत्त्रयम्
क्षुत्पिपासार्दितंनाथसदेवासुरमानुषम् १८
रक्षसर्वानिमाँल्लोकान्याताःस्मशरणंतव
श्रीभगवानुवाच-
इंदिराब्रह्मशापेनचान्तर्द्धानंगतासुराः १९
यस्याःकटाक्षमात्रेणजगदैश्वर्यसंयुतम्
तदायूयंसुराःसर्वेचोत्पाट्यस्वर्णपर्वतम् २०
मंदरंघर्घरंकृत्वासर्पराजेनवेष्टितम्
कुरुध्वंमथनंदेवाःसदैत्याःक्षीरसागरम् २१
तस्मादुत्पत्स्यतेलक्ष्मीर्जगन्माताचभोःसुराः
तयाहृष्टामहाभागाभविष्यथनसंशयः २२
धारयाम्यहमेवाद्रिंकूर्मरूपेणसर्वतः
इत्युक्त्वाभगवान्विष्णुरंतर्द्धानंजगामसः

जग्मुःसुरासुराःसर्वेसमुद्रमथनंद्विज २३
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसमुद्रमथनोद्योगोनामाष्टमोऽध्यायः ८

## नवमोऽध्यायः

सूतउवाच–
ततोऽमरगणास्तेचसगंधर्वाःसदानवा
उत्पाट्यमंदरंशैलंचिक्षिपुःपयसांनिधौ १
ततःसनातनःश्रीमान्दयालुर्जगदीश्वरः
अधारयद्गिरेर्मूलंकूर्मरूपेणपृष्ठतः २
अनंतंतत्रसंवेष्ट्यममंथुर्दुग्धसागरम्
एकादश्यांमथ्यमानेचोद्भूतंप्रथमंद्विज ३
कालकूटविषंतेतुदृष्ट्वासर्वेप्रदुद्रुवुः
ततस्तान्विद्रुतान्दृष्ट्वाशंकरश्चोक्तवानिदम् ४
भोभोऽमरगणायूयंविषंकुरुतमादरम्
वारयिष्याम्यहंतूर्णंकालकूटंमहाविषम् ५
इत्युक्त्वापार्वतीनाथोध्यायन्नारायणंहृदि
महामंत्रंसमुच्चार्यविषमादद्भयंकरम् ६
महामंत्रप्रभावेणविषंजीर्णंगतंमहत्
अच्युतानंतगोविंदइतिनामत्रयंहरेः ७
योजपेत्प्रयतोभक्त्याप्रणवाद्यंनमोंऽतिकम्
विषभोगाग्निजंतस्यनास्तिमृत्योर्भयंतथा ८
ततोहृष्टमनादेवाममंथुःक्षीरसागरम्
ततोऽलक्ष्मीःसमुत्पन्नाकालास्यारक्तलोचना ९
रूक्षपिंगलकेशाचजरतींबिभ्रतीतनुम्
साचज्येष्ठाब्रवीद्देवान्किंकर्तव्यंमयेतिवै १०
देवास्तथाब्रुवंस्तांचदेवींदुःखस्यभाजनम्
येषांनृणांगृहेदेवीकलहःसंप्रवर्तते ११
तत्रस्थानंप्रयच्छामोवसज्येष्ठेशुभान्विता
निष्ठुरंवचनंयेचवदंतियेऽनृतंनराः १२
संध्यायांयेहिचाश्नंतिदुःखदातिष्ठतद्गृहे

कपालकेशभस्मास्थितुषांगाराणियत्रतु १३
स्थानंज्येष्ठेतत्रतवभविष्यतिनसंशयः
अकृत्वापादयोर्धौतंयेचाश्नंतिनराधमाः १४
तद्गृहेसर्वदातिष्ठदुःखदारिद्रदायिनी
वालुकालवणांगारैःकुर्वंतिदंतधावनम् १५
तेषांगेहेसदातिष्ठदुःखदाकलिनासह
छत्राकंश्रीफलंशिष्टंयेखादंतिनराधमाः १६
गेहेतेषांतवस्थानंज्येष्ठेकलुषदायिनि
तिलपिष्टमलाबुंयेगृंजनंपोतिकादलम् १७
कलंबुकंपलांडुंयेचाश्नंतिपापबुद्धयः
तेषांगृहेतवस्थानंभविष्यतिनसंशयः १८
गुरुदेवातिथीनांचयज्ञदानविवर्जितम्
यत्रवेदध्वनिर्नास्तितत्रतिष्ठसदाऽशुभे १९
दंपत्योःकलहोयत्रपितृदेवार्चनंनवै
दुरोदररतायत्रतत्रतिष्ठसदाशुभे २०
परदाररतायत्रपरद्रव्यापहारिणः
विप्रसज्जनवृद्धानांयत्रपूजानविद्यते
तत्रस्थानेसदातिष्ठपापदारिद्र्यदायिनी २१
इत्यादिश्यसुराज्येष्ठांसर्वेषांकलिवल्लभाम्
क्षीराब्धेर्मथनंचक्रुःपुनस्तेसुसमाहिताः २२
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादेसमुद्रमथनं नामनवमोऽध्यायः ९

दशमोऽध्यायः

सूतउवाच–
एरावतस्ततोजज्ञेतथैवोच्चैःश्रवाहयः
धन्वंतरिःपारिजातःसुरभिश्चाप्सरोदयः १
ततःप्रभातसमयेद्वादश्यामुदितेरवौ
उत्पन्नाश्रीर्महालक्ष्मीःसर्वलक्षणशोभिता २
ददृशुस्तांमहादेवींमातरंधर्मदेवताः

प्रहृष्टाःसर्वजंतूनांश्रीकृष्णहृदयालयाम् ३
लक्ष्मीभ्राताशीतरश्मिर्जातश्चसुधयाततः
उत्पन्नासाहरेर्जायातुलसीलोकपावनी ४
तंशैलंपूर्ववत्स्थाप्यपरिपूर्णमनोरथाः
समेत्यमातरंस्तुत्वाजेपुःश्रीसूक्तमुत्तमम् ५
ततःप्रसन्नासादेवीसर्वान्देवानुवाचह
वरंवृणीध्वंभद्रंवोवरदाहंसुरोत्तमाः ६
देवाऊचुः–
प्रसीदकमलेदेविसर्वमातर्हरिप्रिये
त्वयाविनाजगच्छून्यंकुरुप्राणप्ररक्षणम् ७
इत्युक्तासामहालक्ष्मीःप्राहनारायणप्रिया
इदानींसर्वजंतूनांप्राणरक्षांकरोम्यहम् ८
ततोनारायणःश्रीमाञ्छंखचक्रगदाधरः
आविर्बभूवसहसादयालुर्जगदीश्वरः ९
ततस्तेतुष्टुवुर्देवाःप्रणम्यजगतांपतिम्
कृतांजलिपुटाःप्रोचुःहर्षगद्गदभाषिणः १०
गृहाणमातरंविष्णोमहिषींवल्लभांतव
संसाररक्षणार्थायलक्ष्मीमनपगामिनीम्
यावत्प्रतिज्ञांनोचक्रेतावत्प्राहेंदिराहरिम् ११
लक्ष्मीरुवाच–
अविवाह्यकथंज्येष्ठामलक्ष्मींमधुसूदन
तस्याःकनिष्ठांमांनाथविवाहंकर्तुमिच्छसि
ज्येष्ठायांचस्थितायांवैकनिष्ठापरिणीयते १२
सूतउवाच–
इति श्रुत्वाततोविष्णुर्ददौचोद्दालकायच
वेदवाक्यानुरूपेणह्यलक्ष्मींनिजैःसह १३
ततोनारायणःश्रीमान्लक्ष्मीमंगीचकारह
ततःसुरगणाःसर्वेनमश्चक्रुःपुनःपुनः १४
अथतेचासुरान्सर्वान्जघ्नुःसर्वेबलाधिकाः
सर्वेतेक्रंदमानाश्चगताश्चैवदिशोदश १५

सुधांतत्खादितुंचक्रुर्देवाःपंक्तिंयथाक्रमम्
श्रीविष्णोराज्ञयासर्वेचोचुश्चैवपरस्परम् १६
त्वंचदेहित्वंचदेहित्वंचदेहीतिचाब्रुवन्
नशक्तोऽस्मिनशक्तोऽस्मिनशक्तोऽस्मीतिचाब्रुवन् १७
ततोविष्णुःसमुत्तस्थौस्त्रीरूपंचदधारह
चकारस्वर्णपात्रेतत्पीयूषपरिवेषणम् १८
पीयूषभक्षणंराहुर्यावत्कुर्याद्द्विजोत्तम
चंद्रसूर्यौचोक्तवंतौराक्षसोऽसौछलागतः १९
ततःक्रुद्धोजगन्नाथोजघानस्वर्णपात्रतः
शिरस्तस्यपपातोर्व्यांकेतुर्नाम्नाबभूवह २०
राहुकेतूततस्तूर्णंगतौतौभयविह्वलौ
इदानींतद्दिनेप्राप्तेचंद्रसूर्यौसयुध्यति २१
कुर्याद्ग्रासंसैंहिकेयस्तत्क्षणंदुर्लभंभवेत्
सर्वंगंगासमंतोयंवेदव्याससमाद्विजाः २२
स्नानंवायसतीर्थेयोगंगास्नानफलंलभेत्
दानमक्षयपुण्यंस्यात्कोटिजन्मार्जितंतथा २३
पापंनश्येत्समूलंचकिंपुनःक्रतुकोटिभिः
विद्यार्थीलभतेविद्यांपुत्रार्थीपुत्रमाप्यते २४
मोक्षार्थीलभतेमोक्षंमंत्रसिद्धिर्भवेद्ध्रुवम्
इतितेकथितंविप्रसमुद्रमथनंतुतत् २५
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकादिकसंवादेसमुद्रमथनं
नामदशमोऽध्यायः १०

## एकादशोऽध्यायः

शौनकउवाच-
इदानींश्रोतुमिच्छामिकथयस्वयथार्थतः
हरिस्वरूपिणासाक्षाद्वेदव्यासेनशासित १
निरहंकारहेसूतलोकानुग्रहकारक
केनस्यात्सुभगानारीपापिनीचसुदुर्भगा २
पतिप्रियांगकेनस्याद्रूपिताचक्षुषोःसुधा

केनवाजायतेलक्ष्मीस्तन्मेब्रूहितपोधन ३
सूतउवाच-
यदिपुरायमिदंविप्रवृत्तंपरमदुर्लभम्
शृणुष्वभोःसमासेनकथयामिविधानतः ४
आसीद्भद्रश्रवाराजायुगेद्वापरसंज्ञके
सौराष्ट्रदेशवासीचवेदवेदांगपारगः ५
भार्यातस्यचसंजातानाम्नासुरतिचंद्रिका
तस्यांबभूवुःश्रीराज्ञःसप्तपुत्रामनोरमाः ६
ततोऽभिजातादुहितासुंदरीसत्यवादिनी
श्यामबालाचविप्रेंद्रनाम्नाप्रीतिकरीपितुः ७
अथैकदाश्यामबालासुवर्णसिकतासुच
गूढैर्मनोहरैरत्नैःसखिभिःक्रीडितुंमुदा ८
जगामनीपवृक्षस्यतलंपरमदुर्लभम्
एतस्मिन्नंतरेविप्रलक्ष्मीःसंसारतारिणी ९
लोकानांनीतिदासाथसमायातास्वयंपुरः
धृत्वाचब्राह्मणीरूपंपलितांगीचभूसुर १०
अखिलानांचलोकानांशास्तूराज्ञःक्षयंविना
केषांक्षुद्रतराणांहिगृहेगच्छामिसांप्रतम् ११
इतिसंचिंत्यमनसागताराजनिकेतनम्
सुवर्णभित्तिभिर्युक्तंपताकाभिरलंकृतम् १२
सिंहद्वारमतिक्रम्यप्राहदौवारिकींततः
द्वारंजहिहिभोद्वारिनियुक्तेशुभलक्षणे १३
यामिवेगेनपश्यामिराज्ञींसुरतिचंद्रिकाम्
तच्छ्रुत्वावचनंतस्यारत्नदंडकराचसा
कोकिलावाक्यवन्मुक्तंपरमंहर्षमाययौ १४
द्वारनियुक्तोवाच-
किंनामवहसेवृद्धेकःपतिस्तावकःपुनः
आगतासिकथंकिंतेकार्य्यंराज्ञ्याश्चदर्शने
कस्मात्किंब्रूहिविप्रेत्वंश्रोतुंकौतुहलंहिमे १५
वृद्धोवाच-

शृणुपोष्येमहाराजपत्न्यादंडकरेयदा
श्रोतुंकौतूहलंतेऽस्तिमदागमनकारणम् १६
प्रसिद्धाकमलानाम्नाचाहंप्राणेश्वरोमम
भुवनेशइतिख्यातोनाम्नाद्वारवतीपुरी १७
तस्यांवैवर्त्ततेपोष्येममप्राणेश्वरस्ततः
आगताहंरत्नवेत्रकरेशृणुसकौतुकम् १८
ममागमनकार्यंहिवच्मीदानींतवाग्रतः
पुरासीद्वैश्यकुलजाराज्ञीतवचदुःखिनी १९
एकस्मिन्दिवसेपोष्येपतिनाकलहःकृतः
तयानार्याचदुःखिन्याततोवैभर्तृपीडिता २०
बहिर्भूयद्रुतंगेहाद्रुदंतीचपुनःपुनः
तस्याश्चरोदनंश्रुत्वाचागताहंसमीपतः २१
अपृच्छंसर्ववृत्तांतंकथितोवैयथार्थतः
तयाततोव्रतवरमुपदेशंददाम्यहम् २२
ममोपदेशतःसावैचक्रेव्रतवरंमुदा
तस्यप्रसादाद्भोद्वाःस्थेसंजातासुखिताचसा २३
कदाचिद्वैश्यकुलजापत्यामृत्योर्वशंगता
समानेतुंततस्तौतुविहिताखिलघातकौ २४
किंकरान्प्रेषयामासचंडाद्यान्धर्मराट्प्रभुः
यमाज्ञयासमायातायमदूताभयंकराः २५
बद्ध्वातौचर्मपाशेनलोहमुद्गरपाणयः
उद्यमंचक्रिरेगंतुंयमस्यशरणंप्रति २६
अत्रांतरेचलक्ष्म्यास्तेदूताविष्णुपरायणाः
समानेतुंसमायाताःशंखचक्रगदाधराः २७
दृष्ट्वातथाविधांस्तांश्चयमदूताःपलायिताः
लक्ष्मीदूतामहात्मानःस्वप्रकाशादयस्तथा २८
पाशंछित्त्वासमारोप्यराजहंसयुतेरथे
जग्मुर्लक्ष्मीपुरंसर्वेसहसाकाशवर्त्मना २९
यावद्वारंव्रतवरंकृत्वावैश्याचसातदा
तावत्कल्पसहस्राणितस्थतुःकमलापुरे ३०

पुगयशेषस्यभोगार्थंजातौराजान्वयेऽधुना
व्रतंचविस्मृतौद्वाःस्थेराजसंपत्तिगर्वितौ
तस्माच्चतवतस्यापिचोपदेशार्थमागता ३१
द्वाःस्थोवाच-
केनैवतुविधानेनवृद्धेव्रतवरंकृतम्
कस्मिन्मासेव्रतंश्रेष्ठंदेवताकाचपूज्यते ३२
एतन्मेपृच्छतोमातर्यथावद्वक्तुमर्हसि
कमलोवाच-
कार्त्तिकेचव्यतिक्रांतेमार्गशीर्षेसमागते
तस्मिन्मासेचभोपोष्येवासरेगुरुसंज्ञके ३३
ततःपूर्वाह्णसमयेसकलैर्व्रतिभिर्वृता
नारायगोनसहितांलद्त्मींसंपूजयेत्ततः ३४
मिष्टैःपायसयुक्तैश्चभुक्तैश्चखंडमिश्रितैः
लद्त्मींसंतोषयेत्प्रेष्येततःसंप्रार्थयेदिदम् ३५
त्रैलोक्यपूजितेदेविकमलेविष्णुवल्लभे
यथात्वमचलाकृष्णेतथाभवमयिस्थिता ३६
ईश्वरीकमलेदेविशरगांचभवानघे
नानोपहारद्रव्यैश्चलद्त्मीमाज्ञाप्यतोषयेत् ३७
शास्त्रैश्चपूजयेद्देवींमहोत्सवसमन्विताम्
ततोनैवेद्यशेषांश्चदत्वाब्राह्मगासत्तमम् ३८
ग्रात्मानंस्वपतिंपुत्रान्पोष्येऽन्यानपिसेवकान्
द्वितीयेतुगुरोर्वारेविशेषंशृगुसुंदरि ३९
चित्रधूलीप्रशस्तैश्चभ्राष्ट्रैर्गोधूमनिर्मितैः
तोषयेत्कमलादेव्याःकुर्य्याद्वैभक्तिभावतः ४०
तृतीयेखंडसंयुक्तंदध्योदननिवेदनम्
शामाकशालिकासारैश्चतुर्थेपूजयेन्मुदा ४१
लद्त्मीदेवींप्रयत्नेनरत्नदंडकरेततः
लद्त्मीदेवीप्रीतयेतुब्राह्मगान्पूजयेद्धनैः ४२
वस्त्रालंकारभोज्यैश्चफलैर्नानाविधैस्तथा
पोष्योवाच-

अत्रैवतिष्ठभोवृद्धेराज्ञींसुरतिचंद्रिकाम् ४३
विज्ञाप्यत्वांनयिष्यामिमाक्रोधंकुरुसत्तमे
इत्युक्त्वासातुचार्वंगीगताराज्ञीसमीपतः ४४
शिरस्यंजलिमाधायपोष्याब्रह्मन्समूलतः
आरभ्यसांगपर्यंतंयदूचेकमलालया ४५
तत्सर्वंकथयामासराज्ञींसुरतिचंद्रिकाम्
द्वारपालीवचःश्रुत्वाराज्ञीसुरतिचंद्रिका ४६
जगामब्राह्मणीपार्श्वंसगर्वाप्राहसुंदरी
राज्ञ्युवाच-
वृद्धेब्राह्मणिकिंवृत्तंचोपदेशार्थमागता ४७
कथयस्वचिरंमह्यंभयंत्यक्त्वायथासुखम्
ब्राह्मण्युवाच-
तवानीतिमहंदृष्ट्वागंतुमिच्छामिचंचला ४८
कथयिष्यामिकिंदुष्टेव्रतंपरमदुर्लभम्
इंदिरावासरेचाद्यचांडालेनकरोषियत् ४९
तद्दृष्टंमयिकादुष्टेतद्गेहेगर्विते॑ऽधुना
तच्छ्रुत्वाब्राह्मणीवाक्यंक्रोधसंरक्तलोचना ५०
जरंतींब्राह्मणींचैवप्रहारंचचकारसा
ततःसाकमलावृद्धाक्रंदमानापलायिता ५१
क्रीडमानाततःश्यामाब्राह्मणीक्रन्दनध्वनिम्
आगतास्याःसमीपंतुश्रुत्वाबालातपोधना ५२
श्यामाबालोवाच-
वृद्धेव्यथेदृशीकेनदत्तातुभ्यंवदस्वमे
तस्यावचनमाकर्ण्यशोकगद्गदयागिरा ५३
कमलाकथितंसर्वंवृत्तांतंद्विजसत्तम
श्यामाबालाततःश्रुत्वाव्रतंपरमदुर्ल्लभम् ५४
शास्त्रोक्तविधिनाचक्रेसश्रद्धंचसभक्तितः
त्रिवारेपरिपूर्णेतुतुर्यवारेसमागते ५५
विवाहकर्मसंसिद्धंद्विजलक्ष्मीप्रसादतः
श्रीसिद्धेश्वरदेवस्यनृपतेर्भूपतेजसः ५६

मालाधरोनामसुतोगृहीत्वातांगृहंगतः
अथतस्यांगतायांतुब्रह्मन्शृणुष्वकौतुकम् ५७
राज्ञीगृहेचसर्वाणिस्थितानिसुबहूनिच
द्रव्याणिकेननीतानिनज्ञातान्यपिभूसुर ५८
निर्वित्ताबुद्धिहीनासाचान्नवस्त्रविवर्जिता
उपविष्टाचकेनापिगंतुंचदुहितुर्गृहम् ५९
प्रेषयामासभर्त्तारंकिंचित्प्रार्थनहेतवे
तस्यमालाधरस्यापिग्रामेचसरसीतटे ६०
कालेनकियताविप्रप्रविवेशचकष्टतः
तस्माज्जलंसमानेतुंतस्यादास्यःसमागताः
तंदृष्ट्वादुःखिनांश्रेष्ठंपप्रच्छुःसानुकंपिताः ६१
दास्यऊचुः-
कस्त्वंकुतःसमायातोमांसरक्तविवर्ज्जितः
रूक्षांगोरूक्षकेशश्चतत्सर्वंकथयस्वनः ६२
दरिद्रउवाच-
श्यामाबालापिताचाहंसौराष्ट्रनगरागतः
कथयध्वंचभोदास्यःश्यामाबालासमीपतः ६३
तच्छ्रुत्वावचनंतस्यकौतूहलसमन्विताः
परस्परमुखाःसर्वाजहसुःस्वपुरंगताः ६४
श्यामाबालाचकथितंसर्ववृत्तंचभोद्विज
श्रुत्वैतद्वचनंतासांप्रेषयामाससेवकान् ६५
पुष्पतैलंदिव्यवस्त्रंचंदनंपर्णवीटिकाम्
घोटकंचतथादत्वापितरंप्रतिसुंदरी ६६
गत्वाथसर्वेतेभृत्याःकृत्वासुवेषमुत्तमम्
श्यामाबालागृहंनिन्युर्देवराजगृहोपमम् ६७
श्यामाबालाततश्चैवपितरंदुखिनांवरम्
श्याल्यन्नंसघृतंचैवभोजयामासयत्नतः ६८
तुर्येषुसमतीतेषुदिवसेषुतपोधन
प्रेषयामासतंदत्वागुप्तपात्रस्थितंधनम् ६९
ततःप्रविश्यस्वगृहेधनंपात्रान्तरस्थितम्

ददर्शांगारनिचयंरुरोदभृशदुःखितः ७०
दुहितुःसदनंयातुंनिःससारगृहागतः
तत्रैवसरसीकूलेप्रविवेशचदुःखिनी ७१
तथैनांचसमानीतांयथास्याःप्राणवल्लभाम्
तथैवपूजयामासमातृस्नेहात्पतिव्रता ७२
एतस्मिन्समयेविप्रलक्ष्मीवासरमुत्तमम्
श्यामाबालाकारयितुंमनश्चक्रेचमातरम् ७३
तस्यामातादरिद्राणिभुक्त्वावैकांतिकेपिच
शावकानांतुचोच्छिष्टंलक्ष्मीकोपसमन्विता ७४
इंदिरायास्तृतीयानिवासराणिगतान्यपि
चतुर्थवासरेतांतत्कारयामाससादृढम् ७५
आगतानगरंसावैराज्ञीसुरतिचंद्रिका
दृष्ट्वागृहंतथादिव्यमिंदिरायाःप्रसादतः ७६
श्यामाबालाचविप्रेंद्रकदाचित्समयेपुनः
मातुर्गृहंगताचाथएश्वर्यस्यदिदृक्षया ७७
श्यामाबालांततोदूराद्दृष्ट्वासंकुपिताचसा
नपश्यामिमुखंतस्याइत्युक्त्वालक्षितास्थिता ७८
गत्वागृहांतरालंचगृहीत्वासैंधवंचसा
आगतास्वगृहंकिंचित्तूष्णींलक्ष्मीसमाश्रितम् ७९
राजास्वामीचपप्रच्छतांसाध्वींपतिदेवताम्
किमानीतंत्वयाकांतेकथयस्वममाग्रतः ८०
कांतोवाच-
राज्यसारंसमानीतंदर्शयिष्यामिभोजने
इत्युक्त्वासातदापाकंकृत्वाचलवणंविना ८१
अन्नादिकंततोदत्वामालाधरायभूभुजे
ततोमालाधरोराजाव्यंजनंलवणवर्जितम् ८२
भुक्त्वावैगुणयतांप्राप्तोराज्यसारंददौचसा
तदाहृष्टमनाराजाभोजनंकृतवान्द्विज ८३
प्रशशंसचतांनारींधन्याधन्याइतिब्रुवन्
एतद्व्रतंचयानारीनकरोतिमहादरात् ८४

जन्मजन्मनिसानारीदरिद्रादुर्भगाभवेत्
इदंयाशृणुयाद्भक्त्यापठेद्योवासमाहितः ८५
सर्वपापैर्विनिर्मुक्तोलद्मीलोकंलभेच्चसः
इमांव्रतकथांयातुनश्रुत्वाक्रियतेव्रतम्
तस्याव्रतफलंचैवनश्यत्येवनसंशयः ८६
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादेएकादशोऽध्यायः ११

द्वादशोऽध्यायः

शौनकउवाच-
केनपुरयेनभोसूतचान्येनगतपातकः
नरोयातिहरेःस्थानंतद्वदस्वानुकंपया १
सूतउवाच-
ब्राह्मणस्यधनैःप्राणान्प्राणैर्वापिद्विजोत्तम
रद्मांकरोतियोमर्त्योविष्णुलोकंसगच्छति २
पुराराजादीननाथोद्वापरेसंज्ञकेयुगे
श्रासीदपुत्रोबलवान्वैष्णवःसतुयाजकः ३
एकदागालवंराजापप्रच्छविनयान्वितः
केनपुरयेनजायेतपुत्रोवैकरुणार्णव ४
वदस्वमुनिशार्दूलकरिष्यामितवाज्ञया
येषांनृणांनास्तिसुतोजीवनंहिनिरर्थकम् ५
गालवउवाच-
राजन्शृणुष्वावहितोयत्पृष्टोऽस्मितवाग्रतः
कथयामिसमासेनपुत्रस्योद्भवकारणम् ६
क्रतुंचनरमेधाख्यंकुरुष्वराजसत्तम
तदातेसंततिःस्याद्वैसर्वलद्मणसंयुता ७
राजोवाच-
नरमेधंमहायज्ञंयज्ञानांप्रवरंद्विज
कीदृशंनरमानीयकरिष्यामिगुरोवद ८
गालवउवाच-
सुंदरांगःसुवदनःसमस्तशास्त्रविद्भवेत्

सत्कुलेयदिजातःसतदायज्ञायकल्पते ९
अंगहीनःकृष्णवर्णोमूर्खोयोग्योभवेन्नहि
इत्युक्तेगालवेविप्रसराजामनुजेश्वरः १०
प्रेषयामासदूतांश्चकथयित्वामुनेर्वचः
द्रविणंबहुदत्वाचगालवप्रमुखान्द्विजान् ११
यज्ञार्थेवरयामाससमस्तशास्त्रपारगान्
ततोराजाज्ञयादूताःदेशंदेशंमुदागताः १२
ग्रामेग्रामेद्विजश्रेष्ठपत्तनेऽपिसमाहिताः
कुत्रापिनप्राप्तवंतोगताजनपदंततः १३
नाम्नादशपुरंविप्रप्रकीर्णंगुणिभिर्द्विजैः
यत्रनारीःसुकेशीश्चमृगशावकचक्षुषः १४
दृष्ट्वामुह्यंतिपुरुषाश्चंद्रमुख्यश्चतायतः
तस्मिन्पुरेमनोरम्येकृष्णदेवइतिद्विजः १५
आसीत्पुत्रैस्त्रिभिःसार्द्धंभार्ययाचसुशीलया
वैष्णवःप्रियवादीचविष्णुपूजारतःसदा १६
साग्निकःपितृभक्तश्चवैष्णवानांप्रियंकरः
प्रार्थनांचक्रुरथतेराज्ञोदूताद्विजोत्तमम् १७
पुत्रंदेहीतिदेहीतिवदब्राह्मणसत्तम
नास्तिराज्ञोद्विजश्रेष्ठपुत्रःसंतापनाशनः १८
तदर्थंनरमेधाख्येयज्ञेभवसदीक्षितः
नेष्यामस्तवपुत्रंवैबलिदातुंमहाक्रतौ १९
सुवर्णानांचतुर्लक्षंब्रह्मन्नयसमाहितः
सुखेनयदिदातव्योनोपुत्रःपुत्रलालसात् २०
तदाबलेननेष्यामोराजाज्ञाकारिणोवयम्
दूतानांवचनंश्रुत्वाब्राह्मणौशोकविह्वलौ २१
अभूतांविगतप्राणाविवसंशयमानसौ
किंधनेनसुवर्णेनजीवनेनापिसद्मना
प्रोवाचेदंवचःसोऽपिब्राह्मणोराजपूरुषान् २२
ब्राह्मणउवाच-
यदिदूताःसमानेतुंपुत्रंशोकतमोपहम्

आगतानिश्चितंयूयंशृणुध्वंवचनंमम २३
स्थित्वापृथिव्यांकोभ्रष्टांराजाज्ञांकर्तुमिच्छति
पुत्रंहित्वाकिंतुयूयंवृद्धंमांनयतद्विजम् २४
इतितस्यवचःश्रुत्वादूताःक्रोधसमन्विताः
बलात्कारेणतद्गेहेसुवर्णानिचतत्यजुः २५
यदानेतुंमनश्चक्रुस्तत्पुत्रंकिलतेक्रुधा
बद्धांजलिपुटोभूत्वारुदन्प्रोवोचसद्विजः २६
पुत्राणांज्येष्ठपुत्रंमेहित्वान्यंपुत्रमुत्तमम्
नयतेतिवचोवक्तुंवक्त्रेनायातिहेजनाः २७
द्विजस्यवचनंश्रुत्वाब्राह्मणींरुदतींसतीम्
प्रोचुर्दूताःकनीयांसंपुत्रंदेहीतिसत्तम २८
तेषामितिवचःश्रुत्वाब्राह्मणीभूमितस्तदा
पपातवात्ययासार्द्धंरंभेवभृशदुःखिनी २९
मुद्गरंसासमादायमौलौचाताडयद्बलात्
कनिष्ठंमत्सुतंदूतानापिदास्यामिसर्वथा ३०
एतस्मिन्समयेविप्रविप्रस्यमध्यमःसुतः
प्रोवाचविनयाविष्टःप्रणम्यपितरौरुदन् ३१
मातायदिविषंदद्यात्पित्राविक्रीयतेसुतः
राजाहरतिसर्वस्वंकस्तत्रपालकोभवेत् ३२
इत्युक्त्वातत्सुतोमूर्ध्नाप्रणम्यपितरौसह
दूतैर्जगामत्वरितैराज्ञोऽस्यदीक्षितस्यच ३३
अथतौब्राह्मणौपुत्रविच्छेदक्लिष्टमानसौ
रुदित्वाचरुदित्वाचअंधभावंप्रजग्मतुः ३४
अथतेपथ्यगच्छंतविश्वामित्रमुनेःकिल
आश्रमंशिष्ययुक्तंचसेवितंमृगशावकैः ३५
समुनीराजपुरुषान्दृष्ट्वापप्रच्छसादरम्
केयूयंहोकुत्रगतायथाकावृत्तिरुच्यताम् ३६
राजदूताऊचुः-
शृणुष्वावहितोविप्रराज्ञःपुत्रोनजायते
तदर्थंनरमेधाख्येयज्ञेराजासुदीक्षितः ३७

नयामस्तत्रबल्यर्थमिमंब्राह्मणपुत्रकम्
इतितेषांवचःश्रुत्वासविप्रःसदयोऽभवत् ३८
प्राणाममापिगच्छंतुसुखीभवतुबालकः
बालकार्थेद्विजार्थेचस्वाम्यर्थेयेजनाइह ३९
त्यजन्तितृणवत्प्राणांस्तेषांलोकाःसनातनाः
विमृश्येतिमुनिःस्वांतेसप्रोवाचद्विजर्षभः ४०
यज्ञेबलिसमादातुमिमंब्राह्मणबालकम्
हित्वामांनयथाथाशुह्ययंबालकउत्तमः ४१
संसारेजन्मसंप्राप्यनलब्धंसुखमत्रच
अनेनबालकेनापिमरिष्यतिकथंत्वयम् ४२
आगतेऽस्मिन्गृहाद्दूताःपितरावस्यदुःखितौ
हतभाग्यौगतोनूनंयमस्येवगृहंप्रति ४३
एवंतस्यवचःश्रुत्वादूताःप्रोचुरथद्विजम्
भूपालस्यविनाज्ञांवैदीननाथस्यभूसुर ४४
नेतुंत्वांपलितंप्राज्ञनेष्यामोहिकथंवयम्
एवमुक्त्वाचतेदूताजग्मूराज्ञःपुरींतदा ४५
समुनिर्दूतसंघैश्चगतवान्यज्ञमंदिरम्
राजानंकथयामासुर्दूताविप्रस्यचेष्टितम् ४६
तच्छ्रुत्वाशंकितमनाःप्रोवाचेदंवचःसतम्
मुनेयद्यपिमेयज्ञेकृतेपुत्रोभविष्यति ४७
बलिविनापिभोब्रह्मन्तदाविप्रसुतंनय ४८
मुनिरुवाच-
यज्ञेत्वयाकृतेराजन्महापुत्रोभविष्यति
अत्रतेसंशयोमाभूदमोघमपिदर्शनम् ४९
इतितस्यवचःश्रुत्वाराजात्यंतसहर्षकः
चक्रेपूर्णाहुतिंयज्ञेसमस्तैर्मुनिभिःसह ५०
अथातःसमुनिःश्रेष्ठोब्राह्मणस्यसुतंचतम्
गृह्यदशपुरंनामनगरंगतवांस्तदा ५१
भवनंतस्यगत्वाचउक्तवान्वचनंमुनिः
गृहेत्वंतिष्ठसेविप्रतिष्ठामिमृतवन्मुने ५२

राजाबलेनमेपुत्रंनीतवान्किंकरोम्यहम्
पुत्रेगतेचभोविप्रदंपत्योरावयोःपुनः ५३
गतानिचांधभावंवैक्रंदनैर्लोचनान्यपि
अथासौमुनिशार्दूलःपुत्रंपश्यनयेतिच ५४
उक्तवांस्तौयदाविप्रब्राह्मणौजातहर्षकौ
पुत्रायाकारणंकृत्वागतावेतौबहिःक्षणात् ५५
मुनेर्वचनसिद्धित्वात्तत्क्षणंलोचनंतयोः
आलोकंतुगतंतूर्णंपुत्रस्यदर्शनादपि ५६
पुत्रस्यमुखपद्मंतौलोचनैरलिसंनिभैः
पीत्वामुनिंचिरंतंचनमस्कृत्यपुनःपुनः ५७
प्रोचतुर्वचनंविप्राब्राह्मणौप्रियवादिनौ
अहोमुनेजीवदानमावयोःसुकृतंकिल ५८
तयोरेववचःश्रुत्वासमुनिःकरुणार्णवः
दत्वाशिषंचतौविप्रजगामनिजमाश्रमम् ५९
मुनिःकरगतंचैवकृत्वाविष्णोःपरंपदम्
तपस्तेपेमहाभागोदैवतैरपिदुर्ल्लभम् ६०
किंचित्कालेगतेविप्रतस्यराज्ञोऽभवत्सुतः
सुंदरोराजयोग्यश्चइंदुःक्षीरनिधाविव
पुत्रोत्सवेसोऽपिविप्रराजादत्वाधनानिवै ६१
बुभुजेदेववद्भूम्यांविशोकोजातकौतुकः
विप्रान्पालयतेयस्तुप्राणान्दत्वाधनान्यपि ६२
सयातिविष्णुभवनंपुनरावृत्तिदुर्ल्लभम्
पठंतियेऽत्रभक्त्याचशृणवंतिविप्रतःकथाम् ६३
आख्यानंश्लोकमेकंवागच्छंतिविष्णुमंदिरम् ६४

इति श्रीपाद्मेमहापुराणेसूतशौनकसंवादेब्रह्मखंडेब्राह्मणपालनं नामद्वादशोऽध्यायः १२

त्रयोदशोऽध्यायः

शौनकउवाच-
कृष्णजन्माष्टमीसूततस्यामाहात्म्यमुत्तमम्

कथयस्वमहाप्राज्ञचोद्धरस्वमहार्णवात् १
सूतउवाच-
कृष्णजन्माष्टमींब्रह्मन्भक्त्याकरोतियोनरः
अंतेविष्णुपुरंयातिकुलकोटियुतोद्विज २
अष्टमीबुधवारेचसोमेचैवद्विजोत्तम
रोहिणीऋृक्षसंयुक्ताकुलकोटिविमुक्तिदा ३
महापातकसंयुक्तःकरोतिव्रतमुत्तमम्
सर्वपापविनिर्मुक्तश्चांतेयातिहरेर्गृहम् ४
कृष्णजन्माष्टमींब्रह्मन्नकरोतिनराधमः
इहदुःखमवाप्नोतिसप्रेत्यनरकंव्रजेत् ५
नकरोतिचयानारीकृष्णजन्माष्टमीव्रतम्
वर्षेवर्षेतुसामूढानरकंयातिदारुणम् ६
जन्माष्टमीदिनेयोवैनरोऽश्नातिविमूढधीः
महानरकमश्नातिसत्यंसत्यंवदाम्यहम् ७
दिलीपेनपुरापृष्टोवसिष्ठोमुनिसत्तमः
तच्छृणुष्वमहाप्राज्ञसर्वपातकनाशनम् ८
दिलीपउवाच-
भाद्रेमास्यसिताष्टम्यांयस्यांजातोजनार्द्दनः
तदहंश्रोतुमिच्छामिकथयस्वमहामुने ९
कथंवाभगवान्जातःशंखचक्रगदाधरः
देवकीजठरेविष्णुःकिंकर्तुंकेनहेतुना १०
वसिष्ठउवाच-
शृणुराजन्प्रवक्ष्यामिकस्माज्जातोजनार्द्दनः
पृथिव्यांत्रिदिवंत्यक्त्वाभवतेकथयाम्यहम् ११
पुरावसुंधराह्यासीत्कंसादिनृपपीडिता
स्वाधिकारप्रमत्तेनकंसदूतेनताडिता १२
क्रंदतीक्रंदतीसातुययौघूर्णितलोचना
यत्रतिष्ठतिदेवेशउमाकांतोवृषध्वजः १३
कंसेनताडितानाथइतितस्मैनिवेदितुम्
बाष्पवारीणिवर्षंतिविवर्णासाविमानिता १४

क्रंदंतींतांसमालोक्यकोपेनस्फुरिताधरः
उमयासहितःसर्वैर्देववृंदैरनुव्रतः १५
आजगाममहादेवोविधातृभवनंरुषा
गत्वाचोवाचब्रह्माणंकंसध्वंसनहेतवे १६
उपायःसृज्यतांब्रह्मन्भवताविष्णुनासह
एश्वरंतद्वचःश्रुत्वागंतुंप्राहकृतात्मभूः १७
क्षीरोदेयत्रवैकुंठःसुप्तोऽस्तिभुजगोपरि
हंसपृष्ठंसमारुह्यहरेरंतिकमाययौ १८
तत्रगत्वाचतंधातादेववृंदैर्हरादिभिः
संयुक्तःस्तूयतेवाग्भिःकोमलंवाग्विदांवरः १९
नमःकमलनेत्रायहरयेपरमात्मने
जगतःपालयित्रेचलक्ष्मीकांतनमोऽस्तुते २०
इतितेभ्यःस्तुतिंश्रुत्वाप्रत्युवाचजनार्द्दनः
देवान्क्लिष्टमुखान्सर्वान्भवद्भिरागतंकथम् २१
ब्रह्मोवाच-
शृणुदेवजगन्नाथयस्मादस्माकमागतम्
कथयामिसुरश्रेष्ठतदहंलोकभावन २२
शूलिदत्तवरोन्मत्तःकंसोराजादुरासदः
वसुधाताडितातेनकरघातेनपीडिता २३
वरंदत्वापुराप्यग्रेमाययातुप्रवंचितः
भागिनेयंविनाशंभोमरणंभवितानमे २४
तस्माद्गच्छस्वयंदेवकंसंहंतुंदुरासदम्
देवकीजठरेजन्मलब्ध्वागत्वाचगोकुलम् २५
ब्रह्मणाप्रेरितोदेवःप्रत्युवाचचशूलिनम्
पार्वतींदेहिदेवेशअब्दंस्थित्वागमिष्यति २६
उमयारक्षयासार्द्धंशंखचक्रगदाधरः
उद्दिश्यमथुरांचक्रेप्रयाणंकमलासनः २७
देवकीजठरेजन्मलेभेतत्रगदाधरः
यशोदाकुक्षिमध्यास्तेशर्वाणीमृगलोचना २८
नवमासांश्चविश्रम्यकुक्षौनवदिनांतकान्

भाद्रेमास्यसितेपक्षेचाष्टमीसंज्ञकातिथिः २९
रोहिणीतारकायुक्तारजनीघनघोषिता
तस्यांजातोजगन्नाथःकंसारिर्वसुदेवजः ३०
वैराटीनंदपत्नीचयशोदाऽजीजनत्सुताम्
पुत्रंपद्मकरंपद्मनाभंपद्मदलेक्षणम् ३१
तदाहर्षितुमारेभेदृष्ट्वाह्यानकदुंदुभिः
कंसासुरभयत्रस्ताप्रोवाचदेवकीतदा ३२
वैराटींगच्छभोनाथसुतंप्रत्यर्पितंकिल
पुत्रंदत्वायशोदायैसुतांतस्याःसमानय ३३
तस्यावचःसमाकर्ण्यवसुदेवोऽपिदुःखितः
अंकेकुमारमादायवैराटयभिमुखंययौ ३४
यमुनाजलसंपूर्णातत्पथेमध्यवर्त्मनि
आसीद्घोरा महादीर्घागम्भीरोदकपूरभाक् ३५
एवंदृष्ट्वातटेस्थित्वायमुनामवलोकयन्
वसुदेवोऽपिदुःखार्तोविललापातिचिंतया ३६
किंकरोमिक्वगच्छामिविधिनापिहिवंचितः
कथमत्रगमिष्यामिवैराटींनंदमंदिरम् ३७
हरिणातत्रसानंदंमाययावंचितःपिता
क्षणमात्रंतटेस्थित्वायमुनामवलोकयन् ३८
तेनदृष्टापुनःसापिक्षणाज्जानुवहाभवत्
तांदृष्ट्वाहृष्टउत्तस्थौप्रस्थानमकरोद्यथा ३९
मायांकृत्वाजगन्नाथःपितुरंकाज्जलेऽपतत्
तंपुत्रंपतितंदृष्ट्वाहाहाकृत्वासुदुःखितः ४०
महोपायंपुनःकर्तुंविधिनातेनवंचितः
त्राहिमांजगतांनाथसुतंरक्षसुरोत्तम ४१
जनकक्रंदितंदृष्ट्वाकंसारिःकृपयामुहुः
जलक्रीडांसमाचर्यपितुःक्रोडमगात्पुनः ४२
यथातेनयदुश्रेष्ठोजगामनंदमंदिरम्
सुतंदत्त्वायशोदायैसुतांतस्याःसमानयत् ४३
निजागारंततःप्राप्यपत्न्यैप्रत्यर्पितासुता

देवकीचप्रसूतेतिवार्ताप्राप्तासुरारिणा ४४
आनेतुंप्रस्थितादूताःसुतंदुहितरंतदा
आगत्यकंसदूतास्तेसुतांनेतुंप्रचक्रमुः ४५
बलादेनांसमाकृष्यदेवकीवसुदेवयोः
कंसदूतैर्गृहीत्वासाअर्पितातुसुरारये ४६
सधृत्वातांमहाराजःसभयोऽभूद्दुरासदः
शुद्धकांचनवर्णाभांपूर्णेंदुसदृशाननाम् ४७
कंसोहसंतींतांदृष्ट्वाविद्युत्स्फुरितलोचनाम्
आदिदेशासुरश्रेष्ठोजहिनीत्वाशिलोपरि ४८
आज्ञांलब्ध्वाऽसुरास्तेवैनिष्पेष्टुंतांप्रवर्तिताः
विद्युच्छीघ्रतयागौरीजगामशंकरांतिकम् ४९
गौर्युवाच–
शृणुराजन्प्रवक्ष्यामियत्रास्तेशत्रुरुत्तमः
नंदस्यनिलयेगुप्तस्तवहंताऽसुरोत्तम ५०
वसिष्ठउवाच–
एवमुक्त्वातुसादेवीजगामनिजमंदिरम्
श्रुत्वावाक्यंततोदेव्याःकंसोराजासुदुःखितः ५१
भगिनींपूतनामाहगच्छत्वंनंदमंदिरम्
छद्मनातंसुतंहत्वागच्छतेवांच्छितंबहु ५२
दास्यामिशत्रुंहंतुंमेव्रजशीघ्रतरंशुभे
आज्ञांप्राप्यराक्षसीसागोकुलाभिमुखंगता ५३
माययासुंदरीरूपाप्रविष्टातत्रगोकुले
पयोधरेगरंसातुधृत्वाहंतुमुपागता ५४
पशुपानांगृहद्वारिप्रविष्टालक्षितेतिच
गत्वांतरुत्थाप्यशिशुंस्तनंदत्वापसद्गतिम् ५५
ततस्तुशकटंक्षिप्त्वातृणावर्तादिमर्दनम्
कालीयदमनंकृत्वागतोमधुपुरींततः ५६
गत्वाकंसोहतःक्रूरःकंसमल्लानजीजयत्
एतत्तेकथितंराजन्विष्णोर्जन्मदिनव्रतम् ५७
श्रुत्वापापानिनश्यंतिकुर्यातिंकवाभविष्यति

यइदंकुरुतेमर्त्योयाचनारीहरेर्व्रतम् ५८
एश्वर्यमतुलंप्राप्यजन्मन्यत्रयथेप्सितम्
पूर्वविद्धानकर्त्तव्यातृतीयाषष्ठिरेवच ५९
अष्टम्येकादशीभूताधर्मकामार्थवांच्छुभिः
वर्जयित्वाप्रयत्नेनसप्तमीसंयुताष्टमी ६०
विनाऋक्षेऽपिकर्तव्यानवमीसंयुताष्टमी
उदयेचाष्टमीकिंचित्सकलानवमीयदि ६१
मुहूर्तरोहिणीयुक्तासंपूर्णाचाष्टमीभवेत्
अष्टमीबुधवारेणरोहिणीसहितायदि ६२
सोमेनैवभवेद्राजन्किंकृतैर्व्रतकोटिभिः
नवम्यामुदयात्किंचित्सोमेसापिबुधेऽपिच ६३
अपिवर्षशतेनापिलभ्यतेवानलभ्यते
विनाऋक्षंनकर्तव्यानवमीसंयुताष्टमी ६४
कार्याविद्धापिसप्तम्यांरोहिणीसंयुताष्टमी
कलाकाष्ठामुहूर्तेऽपियदाकृष्णाष्टमीतिथिः ६५
नवम्यांसैववाग्राह्यासप्तमीसंयुतानहि
किंपुनर्बुधवारेणसोमेनापिविशेषतः ६६
किंपुनर्नवमीयुक्ताकुलकोटयास्तुमुक्तिदा
पलवेधेनराजेंद्रसप्तम्याअष्टमींत्यजेत् ६७
सुरायाबिंदुनास्पृष्टंगंगांभःकलशंयथा
दिलीपउवाच-
केनचादौकृतंचेदंकेनवातत्प्रकाशितम्
किंपुण्यंकिंफलंदेवकथयस्वमहामुने ६८
वसिष्ठउवाच-
चित्रसेनोमहाराजामहापापपरोमहान्
अगम्यागमनंकृत्वास्वर्णस्तेयंद्विजस्यच ६९
सुरायांचसदातृप्तोवृथामांसेसदारतः
एवंपापसमायुक्तोनित्यंप्राणिवधेरतः ७०
चांडालैःपतितैःसार्द्धमालापंसर्वदाकरोत्
एतदेवंविधोराजामृगयायांमनोदधे ७१

अरण्येद्वीपिनंज्ञात्वावेष्टयित्वाचसर्वतः
सावधानंभटान्सर्वान्वाक्यमेतदुवाचह ७२
अहमेवनिहन्म्येनंयोऽन्योस्मिन्प्रहरिष्यति
सवध्योनात्रसंदेहोव्याघ्रोराज्ञःपथाययौ ७३
सलज्ञोऽपिततोराजाव्याघ्रंपश्चाज्जगामह
अनेकक्लेशदुःखेनव्याघ्रंहंतुंसमाहितः ७४
क्षुत्पिपासाकुलक्लेशःसंध्यायांयमुनातटे
अष्टमीरोहिणीयुक्तातद्दिनंजन्मवासरम् ७५
श्वःकन्यायमुनायांवैव्रतंचक्रुर्नराधिप
नानोपहारैर्द्रव्यैश्चधूपदीपैःसुशोभनैः ७६
गंधपुष्पंतथाद्रव्यंकुंकुमादिमनोहरम्
अन्नंबहुगुणंदृष्ट्वाभोक्तुंतन्मानसंकुलम् ७७
राजोवाच-
अन्नाभावान्ममाद्याशुप्राणायास्यंतिनिश्चितम्
स्त्रियऊचुः-
जन्माष्टम्यांहरेराजन्नभोक्तव्यंत्वयानघ ७८
गृध्रमांसंखरंकाकंगोमांसमन्नमेवच
भुक्तवान्नात्रसंदेहोयोभुंक्तेकृष्णजन्मनि ७९
किंकिंछिद्रंनसंजातंसंसारेवसतांनृणाम्
येनदेहेस्थितेप्राणेजयंतीनकृतानृप ८०
तत्राकृतोपवासस्यशासनंयममंदिरम्
यद्दत्तंपितरोनित्यंनगृह्णंतियथाविधि ८१
पितरःपातिताःसर्वेजयंत्यांभोजनेकृते
इतिश्रुत्वाततोराजाव्रतंचक्रेनराधिप ८२
किंचित्पुष्पंकियद्गंधंवस्त्रंचानीयहर्षितः
एतद्व्रतंसमायुक्तंतिथिभांतेचपारणम्
व्रतस्यास्यप्रभावेणचित्रसेनोहरेर्गृहम् ८३
दिव्यंविमानमारुह्यगतवान्पितृभिःसह
यत्फलंमथुरांगत्वादृष्ट्वाकृष्णमुखांबुजम् ८४
तत्फलंप्राप्यतेपुंसाकृष्णजन्माष्टमीव्रतात्

यत्फलंद्वारकांगत्वादृष्टेविश्वेश्वरेहरौ
तत्फलंप्राप्यतेदीनैःकृत्वाजन्माष्टमीव्रतम् ८५
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेहरिजन्माष्टमीव्रतमाहात्म्यं
नामत्रयोदशोऽध्यायः १३

चतुर्दशोऽध्यायः

शौनकउवाच
कथयस्वमहाप्राज्ञब्राह्मणस्यकृपार्णव
माहात्म्यंसर्ववर्णानांश्रेष्ठस्यकृपयाचमे १
सूतउवाच
ब्राह्मणःसर्ववर्णानांगुरुरेवद्विजोत्तम
सर्वामराश्रयोज्ञेयःसाक्षान्नारायणःप्रभुः २
कुर्यात्प्रणामंयोविप्रंहरिबुद्ध्यातुभूसुरम्
भक्त्यातस्यद्विजश्रेष्ठवर्द्धतेसंपदादिकम् ३
ननमेद्ब्राह्मणंदृष्ट्वाहेलयापिचगर्वितः
छेदनंतुतस्यशिरःकर्तुमिच्छेत्सदाहरिः ४
कृतापराधंविप्रंयेद्विषंतिपापबुद्धयः
हरिंद्विषंतितेज्ञेयानिरयंयांतिदारुणम् ५
यःकर्तुंप्रार्थनांविप्रंपश्येत्क्रोधेनचागतम्
कृतांतश्चक्षुषोस्तस्यतप्तसूचींपदातिवै ६
कुरुतेभूसुरंमूढोभर्त्सनंयोनराधमः
यमदूतामुखेतस्यतप्तलोहंददतिच ७
येषांनिकेतनेभुंक्तेद्मासुरोवैतपोधनः
सुपर्वाणैःस्वयंकृष्णोभुंक्तेतेषांनिकेतने ८
नश्यंतिसर्वपापानिद्विजहत्यादिकानिच
कणमात्रंभजेद्यस्तुविप्रांघ्रिसलिलंनरः ९
योनरश्चरणौधौतंकुर्याद्धस्तेनभक्तितः
द्विजातेर्वच्मिसत्यंतेसमुक्तःसर्वपातकैः १०
पुत्रहीनाचयानारीमृतवत्साचयांगना
सपुत्राजीववत्सासाद्विजपद्मांघ्रिसेवनात् ११

ब्रह्मांडेयानितीर्थानितानितीर्थानिसागरे
उदधौयानितीर्थानितिष्ठंतिद्विजपादयोः
द्विजांघ्रिसलिलैर्नित्यंसेचितंयस्यमस्तकम् १२
सस्नातःसर्वतीर्थेषुसमुक्तःसर्वपातकैः
शृणुशौनकवक्ष्यामिमाहात्म्यंपापनाशनम् १३
विप्रपादोदकस्याहमितिहासंतपोधन
आसीत्पुराद्विजश्रेष्ठवैश्यवृत्तिपरायणः १४
शूद्रोभीमोद्वापरेचब्रह्महत्यासहस्रकृत्
निष्ठुरःसर्वदातुष्टःसमहान्वैश्ययापुनः १५
शूद्राचारपरिभ्रष्टोभीमोऽसौगुरुतल्पगः
प्रत्येकंवच्मिकिंतस्यदस्योःसंख्यानविद्यते १६
पापानांमुनिशार्दूलभीमस्यदुष्टचेतसः
एकदासगतःकश्चिद्ब्राह्मणस्यनिवेशनम् १७
गत्वातंतस्यगेहात्तुद्रव्यंनेतुंमनोदधे
तत्रोवासब्राह्मणस्यबहिर्द्वारसमीपतः १८
दैन्ययुक्तंवचःप्राहक्ष्मासुरंसतपोधनम्
भोस्वामिन्शृणुमेवाक्यंदयालुरिवमन्यते १९
क्षुधार्तोऽहदेहिचान्नंप्राणायास्यंतिमेद्रुतम् २०
ब्राह्मणउवाच
क्षुधार्त्तशृणुमेकश्चिद्वाक्यंकर्तुंनविद्यते
पाकंमेतंडुलानित्वंनीत्वाभुंक्ष्वयथासुखम् २१
नास्तिमेजनकोमातानास्तिसूनुःसहोदरः
नास्तिजायामातृबंधुर्मृताःसर्वेविहायमाम् २२
तिष्ठाम्येकोगृहेऽकर्माभाग्यहीनोतिथेहरिः
एकोमेवसतौचास्तिनजानेतद्विनाकिल २३
भीमउवाच
ममकश्चिद्द्विजश्रेष्ठनास्तिसेवांतवापिच
शूद्रोऽहनिलयेजात्याकृत्वास्थास्यामितेसदा २४
सूतउवाच
इतितस्यवचःश्रुत्वासानंदःक्ष्मासुरस्तदा

पाकंविधायतूर्णंसददावन्नंतपोधन २५
सोऽपिहर्षसमायुक्तस्तस्थौतत्रद्विजालये
सेवांकुर्वन्स्नेहयुक्तांभूसुरस्यमनोहराम् २६
अद्यश्वोवाहनिष्यामिद्रव्यमस्यममापिच
नेतुंयदाकरिष्यामिनेष्यामिनात्रसंशयः २७
परामृश्यचहृद्यंतःकृत्वातस्यक्रियांवदेत्
पादधौतादिकंचासौशिरसागतपातकः २८
आचम्यांघ्रिजलंदध्रेच्छद्मनाप्रतिदिनंद्विजः
एकदाहारकःकश्चिद्द्रव्यंनेतुंसमागतः २९
उत्पाटचरात्रावररंगतोऽसौतद्गृहांतरम्
दृष्ट्वाभीमंप्रहारार्थंदंडहस्तःसमागतः ३०
हारकोमस्तकंतस्यछित्त्वातूर्णंपलायितः
अथतस्यभटाविष्णोःशंखचक्रगदाधराः ३१
समायातास्तथानेतुंभीमंतंवीतकिल्बिषम्
स्यंदनंचागतंदिव्यंराजहंसयुतंद्विज ३२
तत्रारूढोययौविष्णोर्भवनंदुर्लभंकिल
माहात्म्यंभूमिदेवस्यमयातेतत्प्रकीर्तितम्
शृणुयाद्योनरोभक्त्यातस्यपातकनाशनम् ३३

इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादेब्राह्मणमाहात्म्यं नामचतुर्दशोऽध्यायः १४

## पंचदशोऽध्यायः

शौनकउवाच
कथयस्वमहाभागमाहात्म्यंपापनाशनम्
एकादश्याःफलंकिंवाकिल्बिषंस्यादकुर्वतः १
सूतउवाच
एकादश्यास्तुमाहात्म्यंकिमहंवच्मिसांप्रतम्
श्रुत्वाचैकादशीनामयमदूताश्चशंकिताः २
भवंतिनात्रसंदेहोसर्वप्राणिभयंकराः
व्रतानांचैवसर्वेषांश्रेष्ठांचैकादशींशुभाम् ३

उपोष्यजागृयाद्विष्णोःकुर्य्याच्चमंडनंमहत्
तुलसीदलैस्तुयोमर्त्योहरिपूजांकरोतिवै ४
दलेनैकेनलभतेकोटियज्ञफलंद्विज
अगम्यागमनेचैवयत्पापंसमुदाहृतम् ५
तत्पापंयातिविलयंचैकादश्यामुपोषणात्
घृतपूर्णंप्रदीपंयोदद्याद्विष्णुदिनेद्विज ६
अंतेविष्णुपुरंयातितमोहत्वास्वतेजसा
धन्याजनपदास्तेवैधन्यःसचमहीपतिः ७
हरेर्दिनेयस्यराज्येचैकादश्यामहोत्सवः
नारायणस्यशयनेपार्श्वस्यपरिवर्त्तने ८
विशेषेणप्रबोधिन्यानिराहाराभवंतिये
मदंतिकंनानयध्वंप्राणिनःपुण्यभागिनः ९
अहर्निशंपितृपतिःसमादिशतिदूतकान्
एकादशीजगन्नाथवल्लभापुण्यवर्धिनी १०
विष्णुर्देहंदहत्येवतस्यामन्नस्यभक्षणे
तेषांधिग्जीवनंसंपत्धिक्सौंदर्यंचवर्तनम् ११
येऽन्नमश्नंतिपापिष्ठाश्चैकादश्यांहिविड्भुजः
एकादश्यांद्विजश्रेष्ठभुक्तिमाश्रित्यकेवलम् १२
बहूनिविविधान्येवतिष्ठंतिदुरितानिच
अमावास्यांयथास्त्रीणांसंगमेकलुषंमहत् १३
एकादश्यांतथैवान्नभक्षणेवृजिनंभवेत्
रोगिणश्चतथाखंजकाससोदरकुष्ठकाः १४
भवंतिप्राणिनस्तेवैतस्यामन्नस्यभक्षणे
ग्रामशूकरतांयांतिदारिद्र्यंचप्रयांतिवै १५
राजबद्धाद्विजश्रेष्ठतस्यामन्नस्यभक्षणे
संसारेयानिपापानितानिविप्रहरेर्दिने १६
भुक्तिमाश्रित्यतिष्ठंतिजलभक्षणमाज्ञया
कुर्वतांसर्वपापानिनरकान्निष्कृतिर्भवेत् १७
ननिष्कृतिर्भवेन्नृणांभुंजतांचहरेर्दिने
नरायावंतिचान्नानिभुंजतेचहरेर्दिने १८

प्रत्यन्नंचब्रह्महत्याकोटिजंवृजिनंभवेत्
पुनर्वच्मिपुनर्वच्मिश्रूयतांश्रूयतांनराः १९
नभोक्तव्यंनभोक्तव्यंनभोक्तव्यंहरेर्दिने
गंगादिषुचतीर्थेषुस्नात्वायत्फलमाप्यते २०
चंद्रसूर्योपरागेचचैकादश्यामुपोषितः
अर्चित्वोत्पलमालाभिस्तस्यांचकमलापतिम् २१
विधिवत्पारणंकृत्वानमातुर्गर्भभाजनम्
एकादश्यांहरेर्गेहेकरोतिमंडनंद्विज २२
परमांगतिमासाद्यतिष्ठेद्विष्णुनिकेतने
एकादशींसमासाद्यनिराहाराभवंतिये २३
तेषांविष्णुपुरेशश्वन्निवासोऽपिनसंशयः
तुलसीभक्तिसंलीनंमनोयेषांविराजते २४
तेयांतिपरमंविष्णोःस्थानमेवनसंशयः
परद्रव्येष्वभिरुचिर्येषांचैवनविद्यते २५
संतुष्टमनसोयेऽपितेषांविष्णुपुरंध्रुवम्
दुर्भिक्षकालमासाद्यप्राणिभ्योयेनरोत्तमाः २६
ददत्यन्नंहरेःसद्मतेषांचैवनसंशयः
गवांद्विजानांत्राणायस्वामिनोयोषितस्तथा २७
प्राणान्मुंचंतियेमर्त्यास्तेषांविष्णुपुरंध्रुवम्
प्राणिभिर्दशमीविद्धानचोपोष्याकदाचन २८
परिहार्यद्विजश्रेष्ठदुर्जनस्यांतिकंयथा
अरुणोदयवेलायांदशमीसंगतायदि २९
तत्रोपोष्याद्वादशीस्यात्त्रयोदश्यांतुपारणम्
दशमीशेषसंयुक्तोयदिस्यादरुणोदयः ३०
वैष्णवेननकर्त्तव्यंतद्दिनैकादशीव्रतम्
चतस्रोघटिकाःप्रातररुणोदयउच्यते ३१
यतीनांस्नानकालोयंगंगांभःसदृशःस्मृतः
अरुणोदयकालेतुदशमीयदिदृश्यते ३२
नतत्रैकादशीकार्याधर्मकामार्थनाशिनी
स्वल्पांचदशमीविद्धांत्यजेदेकादशींबुधः ३३

सुराबिंदोस्तुसंपर्कात्घृतकुंभंत्यजेद्यथा
संपूर्णैकादशीयत्रद्वादश्यांपुनरेवसा ३४
उत्तरायतिभिःकार्यापूर्वामुपवसेद्गृही
एकादशीकलायत्रद्वादशीपरतोनचेत् ३५
तत्रक्रतुशतंपुरायंत्रयोदश्यांतुपारणम्
एकादशीविलुप्ताचेत्परतोद्वादशीयुता ३६
उपोष्याद्वादशीपूर्णायदीच्छेत्परमांगतिम्
संपूर्णैऽकादशीयत्रप्रभातेपुनरेवसा ३७
सर्वैरेवोत्तराकार्यापरतोद्वादशीयदि
एकादशीव्रतेयेषांमनःसंलीयतेनृणाम् ३८
तेषांस्वर्गोहिवासोऽथयांतितेसदनंहरेः
एकादश्याःपरंनास्तिपरलोकस्यसाधनम् ३९
बहुपापसमायुक्तःकरोतिहरिवासरम्
सर्वपापविनिर्मुक्तःसयातिहरिमंदिरम् ४०
पतिसहितायायोषित्करोतिहरिवासरम्
सुपुत्रास्वामिसुभगायातिप्रेत्यहरेर्गृहम् ४१
योयच्छतिहरेरग्रेप्रदीपंभक्तिभावतः
हरेर्द्दिनेर्द्विजश्रेष्ठपुरायसंख्यानविद्यते ४२
यांगनाभर्तृसहिताकुरुतेजागरंहरेः
हरेर्निकेतनेतिष्ठेच्चिरंपत्यासहद्विज ४३
यत्किञ्चिद्धरयेवस्तुभक्त्यायच्छतियोद्विज
हरेर्दिनेतस्यपुरायमक्षयंचैवसर्वदा ४४
पुरासीद्वल्लभोनाम्नानगरेकांचनाह्वये
धनेनपुष्कलेनापिराजतेसधनेश्वरः ४५
तस्यप्रियामहारूपानाम्नाहेमप्रभाद्विज
गरीयान्मुखरस्तत्रबाधतेचकलेर्गुणः ४६
सासदाकलहंकुर्यात्पत्यासहतपोधन
शश्वद्गुरुजनान्कामंभर्त्सनान्नीचभाषया ४७
पाकपात्रेसदाश्नीयात्गुप्तासैकांतिकेमला
उच्छिष्टंगुरुजनेभ्यश्चदद्याद्वैप्रतिवासरम् ४८

जारेसदास्थितंचित्तमहंसाध्वीतिसावदेत्
स्वामिनःकलहैर्ब्रह्मन्मनोद्वेगकरासदा ४९
एकदाचागतांदृष्ट्वाचकारभर्त्सनांचताम्
भर्त्तातस्याःप्रहारंचसर्वपापयुतांद्विज ५०
सैवरोषसमायुक्तागताशून्यगृहेतुवै
सुप्ताऽज्ञातास्थिताकस्मिन्जलान्नंनचखादह ५१
दैवात्तत्रदिनेविष्णोःपार्श्वस्यपरिवर्त्तनम्
एकादशीव्रतंविप्रसर्वपापप्रणाशनम् ५२
ततःप्रभातेरजनीद्वादशीश्रवणान्विता
आगतातत्रसानारीरोषनिर्भरमानसा ५३
निराहारौकृतौद्वौचनिर्मलासाबभूवह
रात्रौचपंचतांयाताजयंतीवासरेद्विज ५४
यमाज्ञयाततोदूताआगतास्तांतथाविधाम्
नेतुंभयंकरास्तेचपाशमुद्गरपाणयः ५५
बद्ध्वानेतुंमनश्चक्रेकृतांतसदनंयदा
तदागताविष्णुदूताःशंखचक्रगदाधराः ५६
छित्त्वापाशंततोदिव्येस्यंदनेतांगतैनसम्
तेवैचारोहयामासुनिर्मलांभवनंहरेः ५७
गतातैर्वेष्टितासाथदुर्ल्लभंनिर्जरैःशुभम्
विष्णोर्दिवसमाहात्म्यंकथितंतेद्विजर्षभ ५८
अनिच्छयापियःकुर्यात्सयातिहरिमंदिरम्
एकादश्यादिनेमर्त्योदीपंदातुंहरेर्गृहे ५९
गच्छेत्प्रतिपदंसोऽपिचाश्वमेधफलाधिकम्
शृणवंतिचपुराणानिपठंतिचहरेर्दिने
प्रत्यक्षरंलभंतेतेकपिलादानजंफलम् ६०

इति श्रीपाद्मेमहापुराणेसूतशौनकसंवादेब्रह्मखंडेहरिवासरमाहात्म्यकथनं नामपंचदशोऽध्यायः १५

## षोडशोऽध्यायः

शौनकउवाच

कर्मणाकेनभोःसूतचैनसांसंक्षयोभवेत्
श्रीहरेश्चकृपाभूयात्तद्वदस्वानुकंपया १
सूतउवाच
शृणुशौनकवक्ष्यामिशृरावतांपापनाशनम्
येनविष्णोःकृपास्याद्वैवृजिनक्षयकारिणी २
पौर्णमास्यांतुयोविप्रभक्तिभावसमन्वितः
कुर्य्यान्नानाविधानेनसपर्य्यांश्रीजगद्विभोः ३
कलुषंतस्यनश्येतकोटिजन्मार्जितंमुने
तस्मिन्श्रीरमणस्यास्यकृपाजाताभवेद्ध्रुवम् ४
द्वादश्यामन्नदानंयोभक्त्याकुर्याद्द्विजातये
तस्यनश्यंतिपापानितमांसीवारुणोदये ५
योनरःश्रीहरिंकुर्यात्स्नपनंपयसाद्विज
तत्प्रीतिःश्रीहरेःसद्योद्वादश्यांशर्करादिभिः ६
मंत्रंविनातुयोविप्रदद्याच्छ्रीहरयेकिल
पाषाणसदृशंपुष्पंदातायातिग्रधोगतिम् ७
क्ष्मासुरायचमूर्खायपाषाणसदृशंतुयत्
दद्याद्दानंनरोयोवैतस्यपुरायंनविद्यते ८
विद्याहीनोद्विजोमोहाद्दानंगृह्णातिमूढधीः
कालानलंयथाजीर्णंतेनसनिरयंव्रजेत् ९
यथादारुमयोहस्तीमृगश्चित्रमयोयथा
विद्याहीनोद्विजोविप्रत्रयस्तेनामधारकाः १०
यथाध्वनिस्थितंवारिपवनार्केणशुद्ध्यति
भक्त्यातुपार्षदंदृष्ट्वातस्यनश्यतिकल्मषम् ११
योनरश्चाश्विनेमासिसघृतान्पूर्णिमादिने
दद्याच्छ्रीहरयेलाजान्क्रीडार्थंतुवराटिकाम् १२
भक्त्यायातिहरेःस्थानंपुनरावृत्तिवर्जितः
नदद्याद्योनरोमोहात्तस्मिन्नतुष्टिदोहरिः १३
वराटिकांयावतींयोहरयेपौर्णिमादिने
तावद्दिनंहरेःस्थानंचाश्विनेसंवसेद्ध्रुवम् १४
करवीरपुरेह्यासीत्पुराशूद्रोऽपिनिर्द्दयः

कालद्विजोद्विजश्रेष्ठनाम्नापापीभयंकरः १५
स्वकार्यनिरतःसोऽपिस्वामिकार्यप्रणाशकः
एकदापंचतांयातोयमदूताभयंकराः १६
आगतास्तंसमानेतुंयमस्यतुनिकेतनम्
बद्ध्वानिन्युश्चतंदृष्ट्वापृष्टवान्सचिवंयमः १७
यमउवाच
अस्यकिंविद्यतेऽमात्यकर्मापिचशुभाशुभम्
कथयस्वसमूलंतुचित्रगुप्तविचक्षण १८
चित्रगुप्तउवाच
असौपापीदुराचारःस्वामिकार्यप्रणाशकः
नास्तिपुण्यंचाणुमात्रंनरकेपरिपच्यताम् १९
शतमन्वन्तरंराजन्नागयोनौचनिष्ठुरः
पाषाणेजन्मचासाद्यगृहेस्थातुंनिरंतरम् २०
सूतउवाच
तावत्कालंततोविप्रनिरयेसपपातह
ततोऽप्यश्मगृहेनागयोनौजातःसुदुःखितः २१
एकदाचाश्विनेमासिपौर्णमासीदिनेद्विज
लाजान्वराटिकानागोबिलात्प्राक्षेपयद्बहिः २२
पतितासाहरेरग्रेपापमस्यस्वयंहरिः
तूर्णंतुनाशयामासदयालुर्दुःखनाशकः २३
कदाचित्प्राप्तकालस्तुपंचत्वंसजगामह
यमदूतास्तमानेतुंचागताबहुशोद्विज २४
बद्ध्वानेतुंयदाचक्रुर्यमस्यसदनंप्रति
तदागताविष्णुदूताःशंखचक्रगदाधराः २५
पाशंछित्त्वारथेदिव्येतमाशुगतकिल्बिषम्
तत्रचारोपयामासुःयमदूताःपलायिताः २६
ततोनिकेतनंविष्णोर्नागस्तैर्वेष्टितोययौ
तत्रतस्थौहरेरग्रेपुनरावर्त्तिवर्जितः २७
भक्त्यायोहरयेदद्याल्लाजांश्चसघृतान्द्विज
वराटिकांतस्यपुण्यंनजानेकिंभवेद्ध्रुवम् २८

यइमंशृणुयाद्विप्रचाध्यायंपापनाशनम्
तस्यनश्यंतिपापानिश्रीहरेःकृपयापिच २९
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादेषोडशोऽध्यायः १६

सप्तदशोऽध्यायः

शौनकउवाच
विष्णुपादोदकस्यापिमाहात्म्यंपापनाशनम्
कथयस्वमहाप्राज्ञसमूलंमेकृपार्णव १
सूतउवाच
समस्तपातकध्वंसिविष्णुपादोदकंशुभम्
कणमात्रंवहेद्यस्तुसर्वतीर्थफलंलभेत् २
विष्णुपादोदकंब्रह्मन्स्पर्शतःपापनाशनम्
अकालमरणंनास्तिगंगास्नानफलंलभेत् ३
विष्णुपादोदकंपापीयःपिबेत्तस्यकिल्बिषम्
शरीरस्थंक्षयंयातिकृतंब्रह्मन्नसंशयः ४
तुलसीपर्णसंयुक्तंविष्णुपादोदकंद्विज
योवहेच्छिरसाभक्त्याचांतेयातिहरेर्गृहम् ५
मेरुतुल्यसुवर्णानिदत्त्वायत्फलमाप्यते
हरिपादोदकंस्पृष्ट्वाप्राप्यतेतत्फलंनरैः ६
धेनुकोटिसहस्राणियत्फलंलभतेनरैः
दत्वापादोदकंस्पृष्ट्वातत्फलंप्राप्यतेध्रुवम् ७
यज्ञकोटिसहस्राणिकृत्वायत्फलमाप्यते
हरिपादोदकंस्पृष्ट्वातस्मात्कोटिगुणंनरैः ८
कोटिकन्याप्रदानेनयत्फलंलभ्यतेजनैः
विष्णुपादोदकंस्पृष्ट्वाफलंतस्माद्द्विजाधिकम् ९
दंतिकोटिप्रदानेनसप्तिकोटिप्रदानतः
यत्फलंलभतेमर्त्यःस्पृष्ट्वापादोदकंहरेः १०
दत्वामर्त्यःसप्तद्वीपांससस्यांयत्फलंलभेत्
विष्णुपादोदकंस्पृष्ट्वातस्माद्विप्राधिकंलभेत् ११
शृणुविप्रप्रवक्ष्यामिसंक्षेपेणाधिकंकिमु

विष्णुपादोदकंस्पृष्ट्वापापीयातिहरेर्गृहम् १२
शौनकउवाच
स्पृष्ट्वापीत्वापुराकेनप्राणिनाप्रापिवैगृहम्
कथयस्वहरेःसूतममत्वंचानुकंपया १३
सूतउवाच
पुरात्रेतायुगेपापीनाम्नाविप्रःसुदर्शनः
जनार्द्दनदिनेनित्यमश्नीयात्सद्विजोत्तम १४
शास्त्रनिंदाकरोनित्यंव्रतनिंदाकरःसदा
असावन्यंनजानातिकेवलंस्वोदरंविना १५
एकदाप्राप्तकालस्तुनिधनंप्राप्तवान्द्विज
यमदूताःसमायाताबद्ध्वानीतोयमालयम् १६
तंदृष्ट्वायमुनाभ्रातापप्रच्छसचिवंरुषा
भोऽमात्यचास्ययत्पुण्यंपापंवदसमूलतः १७
असौविप्रोमहापापीक्रूरकर्म्मैवदृश्यते १८
चित्रगुप्तउवाच
आकर्णयचास्यपापंपुण्यंनास्त्यणुमात्रकम्
वासरेऽपिहरेर्नित्यमकरोद्भोजनंविभो १९
वासरेकमलाभर्तुश्चाश्नीयाद्योनराधमः
पुरीषंसोऽश्नीयाद्राजन्निरयंयातिदारुणम् २०
मन्वंतरशतंदेहिस्थानंतुनिरयेऽप्यमुम्
ग्रामक्रोडस्ययोनौहिततोजन्मभविष्यति २१
सूतउवाच
यमाज्ञयाततोविप्रतस्यदूतैर्भयंकरैः
पातितस्तुपुरीषेवैमन्वंतरशताधिकम् २२
ततोमुक्तोऽभवच्चासौपृथिव्यांग्रामसूकरः
चिरंनरकमश्नीयाद्धरिवासरभोजनात् २३
ततोविप्रप्राप्तकालःपंचत्वंसजगामह
काकयोनौपुनर्जन्मलेभेऽसौविड्भुजःसदा २४
एकस्मिन्दिवसेविप्रश्रीहरेश्चरणोदकम्
द्वारदेशेस्थितंपीत्वासर्वपापविवर्जितः २५

तस्मिन्नेवदिनेकाकःपतितःशबरस्यच
कालेमृत्युदशांप्राप्तोव्याधेनवायसोपिच २६
आगतेस्यंदनेदिव्येराजहंसयुतेशुभे
आरुह्यबलिभुग्विप्रययौसहरिमंदिरम् २७
पादोदकस्यमाहात्म्यंकथितंपापनाशनम्
यःशृणोतिनरःपापीतस्यपापंविनश्यति २८

इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादेचरणोदक-
माहात्म्येसप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

शौनकउवाच
अगम्यागमनंसूतकुर्याद्योवैविमोहितः
तस्यशुद्धिर्भवेत्केनकथयस्वसमूलतः १
सूतउवाच
अभिगच्छतिचांडालह्यंश्वपाकींयोद्विजोत्तमः
उपवासत्रयंकुर्यात्प्राजापत्यंचरेत्ततः २
सशिखंवपनंचैवदद्याद्गोद्वयमेवच
यथार्थदक्षिणांदत्वाशुद्धिमाप्नोतिसद्विजः ३
क्षत्रियोवापिचांडालह्यंवैश्योवायदिगच्छति
प्राजापत्यंसकृच्छ्रंचदद्याद्गोमिथुनद्वयम् ४
अनुगच्छतिशूद्रोहिश्वपाकींचतपोधन
चतुर्गोमिथुनंदद्यात्प्राजापत्यंव्रतंचरेत् ५
मातरंयदिवागच्छेद्भगिनींस्वसुतामपि
वधूंचमोहितोगच्छंस्त्रीणिकृच्छ्राण्यथाचरेत् ६
चांद्रायणत्रयंकृत्वादद्याद्गोमिथुनत्रयम्
सशिखंवपनंकृत्वापंचगव्यंपिबेत्ततः ७
हुतेह्यग्नौतथाप्यत्रशुद्ध्यत्येवंतपोधन
पितृदारान्द्विजश्रेष्ठमातुश्चभगिनींतथा ८
गुरुपत्नींमातुलानींभ्रातुर्भार्यांस्वगोत्रजाम्
यदिगच्छतिमोहेनप्राजापत्यद्वयंचरेत् ९

चांद्रायणत्रयंब्रह्मन्पंचगोमिथुनानिच
विप्रेभ्योदक्षिणांदद्याच्छुध्यतेनात्रसंशयः १०
गांचगच्छतियोमूढउपवासत्रयंचरेत्
धेनुंदत्त्वातथाचान्नंशुद्ध्यत्यत्रनसंशयः ११
वेश्यांखरींशूकरींचकपिंतुंमहिषींद्विज
आकंठतःसमाक्षिप्यगोमयोदककर्दमे १२
तत्रतिष्ठेन्निराहारोत्रिरात्रेणैवशुद्ध्यति
सशिखंवपनंकृत्वात्रिरात्रमुपवासयेत् १३
एकरात्रंजलेस्थित्वाशुद्ध्यत्येवनसंशयः
ब्राह्मणींतुयदागच्छेत्योनरःकाममोहितः १४
प्राजापत्यत्रयंकुर्य्याच्चांद्रायणत्रयंतथा
गोत्रयंतुतथादद्याच्छुद्ध्यत्येवतपोधन १५
ब्राह्मणीपंचगव्यंतुपंचरात्रंपिबेद्द्विज
गोद्वयंदक्षिणांदद्याच्छुध्यत्यत्रनसंशयः १६
परांगनांयदागच्छेत्कृच्छ्रंसांतपनंचरेत्
यथार्गलातथायोषित्तस्मात्तांपरिवर्जयेत् १७
वर्णबाह्यांतथानीचामनुगच्छेत्सकृन्नरः
प्राजापत्यंचरेत्कृच्छ्रंशुद्ध्यत्येवनसंशयः १८
अंगारसदृशीयोषित्सर्पिःकुंभसमःपुमान्
तस्याःपरिसरेब्रह्मन्नस्थातव्यंकदाचन १९
जारेणजनयेद्गर्भंयाचनारीकुलांतका
त्याज्यासासर्वथाब्रंह्मस्तत्रदोषोनविद्यते २०
याचनारीगृहाद्गच्छेत्त्यक्त्वाबंधून्स्वकानपि
नष्टासाचकुलभ्रष्टानतस्याःसंगमःपुनः २१
याचनारीयदागच्छेन्मोहितापरपूरुषम्
प्राजापत्यंचरेत्कृच्छ्रंपंचगव्यंपिबेत्ततः २२
गोद्वयंतुततोदद्याच्छुध्यत्येवनसंशयः
ब्राह्मणीबालिशाब्रह्मन्मोहितापरपूरुषम् २३
यदागच्छेत्तदात्याज्याजनैर्दोषोनविद्यते
योगच्छेद्ब्राह्मणींविप्रभूसुरःकाममोहितः

गोतिलांश्चतदादद्याच्छुद्ध्यत्यत्रनसंशयः २४
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादेअष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

शौनकउवाच
अज्ञानात्प्राश्यविरामूत्रंसुरांसंस्पृश्यवापुनः
यथाशुद्धिर्भवेत्तेषांकथयामिशृणुद्विज १
प्राजापत्यद्वयंकुर्य्यात्तीर्थाभिगमनंमुने
वृषैकादशगोदानंसशिखंवपनंततः २
गत्वाचतुष्पथंसर्वंप्राजापत्यव्रतंतथा
गोद्वयंतुततोदद्यात्पंचगव्यंपिबेत्ततः ३
ब्राह्मणान्भोजयित्वातुशुद्ध्यत्यत्रनसंशयः
चांडालान्नंजलंचैवज्ञानतोऽपिविपत्तिषु ४
यदिभुङ्क्तेनरःकश्चित्कृच्छ्रंचांद्रायणंचरेत्
सशिखंवपनंकृत्वापंचगव्यंततःपिबेत् ५
एकद्वित्रिचतुर्गावोदेयाद्विप्रेष्वनुक्रमात्
वृषलान्नंसूतकान्नंअभोज्यान्नंजलंचवै ६
शूद्रोच्छिष्टंयदाभुंक्तेज्ञानतोवाविपत्तिषु
प्राजापत्यद्वयंकुर्याच्चांद्रायणत्रयंतथा ७
गोद्वयंतुततोदद्यात्पंचगव्यंपिबेद्विज
हुत्वाह्यग्नौबहून्विप्रान्भोज्यशुद्धोभवेद्ध्रुवम् ८
आखुनकुलमार्जारैरन्नंचेद्भक्षितंद्विज
तिलदर्भोदकैःप्रोक्ष्यशुद्ध्यत्येवनसंशयः ९
पलांडुंलशुनंशिग्रुमलाबुंगृंजनंपलम्
भुंक्तेयोवैनरोब्रह्मन्व्रतंचांद्रायणंचरेत् १०
मद्यमांसप्रियंशूद्रंनीचकर्म्मानुवर्त्तनैः
तंशूद्रंवर्जयेद्विप्रश्श्वपाकमिवदूरतः ११
द्विजसेवानुरक्तायेमद्यमांसविवर्जिताः
दानस्वकर्म्मनिरतास्तेज्ञेयावृषलोत्तमाः १२
अज्ञानाद्भुंजतेविप्रसूतकेमृतकेयदि

गायत्रीदशभिर्विप्रःसहस्रैश्चशुचिर्भवेत् १३
सहस्रैःक्षत्रियश्चैववैश्यःपंचसहस्रकैः
पंचगव्यैर्भवेच्छुद्धोवृषलोऽपितपोधन १४
आज्यंतुतोयंनीचस्यभांडस्थंदधियःपिबेत्
अज्ञानतोऽपियोवर्णःप्राजापत्यव्रतंचरेत् १५
दानंबहुतरंदद्याच्छुद्धोह्यग्नौयथाविधि
शूद्राणांनोपवासोऽपिदानेनैवविशुद्ध्यति १६
सशिखंवपनंकुर्यादहोरात्रोपवासतः
नीचैर्दंडादिभिश्चैवताडितोयोनरोद्विज १७
प्राज्ञापत्यव्रतंकुर्य्याच्चांद्रायणव्रतंतुवा
सशिखंवपनंचैवपंचगव्यंपिबेत्ततः १८
गोद्वयंतुततोदद्यादग्नौचान्नादिकंहुतम्
मद्यपानंगृहेविप्रज्ञानतोऽपियदृच्छया १९
यदिभुंक्तेनरःकश्चित्पात्यःसोऽपिकुलान्नरः
गोबीजहंतायोविप्रच्छेदकश्चदलस्यच २०
स्वर्णस्तेयीभवेत्कृच्छ्रंप्राजापत्यत्रयंचरेत्
सशिखंवपनंकृत्वापंचगव्यंतथापिबेत् २१
यथाविधिहुतंचाग्नौदद्याद्धेनुत्रयंतथा
तस्यभुक्तंजलंचैवग्राह्यंस्याद्वैतपोधन २२
प्रातस्त्र्यहंतुचाश्नीयात्त्र्यहंसायमयाचितम्
त्र्यहंचैवतुनाश्नीयात्प्राजापत्यमिदंव्रतम् २३
गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम्
दिनद्वयंपिबेद्विप्रचैकरात्रमुपोषितः
सर्वपापहरंकृच्छ्रंमुनेसांतपनंस्मृतम् २४
ग्रासंत्र्यहंतुचैकैकंप्रातःसायमयाचितम्
अद्यात्त्र्यहंचोपवसेदतिकृच्छ्रमिदंव्रतम् २५
प्रतित्र्यहंपिबेदुष्णंजलंक्षीरंघृतंद्विज
सकृत्स्नायीतप्तकृच्छ्रंस्मृतंपापहरंमुने २६
अभोजनंद्वादशाहंकृच्छ्रोऽयपापनाशनः
पराकोनामविज्ञेयःप्रसिद्धश्चतपोधन २७

एकैकंवर्द्धयेत्पिंडंशुक्लेकृष्णेचह्रासयेत्
इंदुक्षयेनभुंजीतचांद्रायणव्रतंस्मृतम् २८
अश्नीयाच्चतुरःप्रातःपिंडान्विप्रसमाहितः
चतुरोऽस्तमितेचार्केशिशुचांद्रायणंस्मृतम् २९
कूष्मांडघातीयानारीपंचगव्यंपिबेत्त्र्यहम्
कूष्मांडपंचकंदद्यात्ससुवर्णंसवस्त्रकम्
तस्यावारितथाभक्तंग्राह्यंस्याद्वैतपोधन ३०
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादेएकोनविंशोऽध्यायः १९

## विंशतितमोऽध्यायः

शौनकउवाच
सुकृतंकिंतथाप्राहकृत्वासंसारसागरात्
तरिष्यंतिकलौसूततमोन्धकूपमंडुकाः १
सूतउवाच
राधाकृष्णप्रियेचौर्जेप्रातःस्नानंसमाचरेत्
राधादामोदरंभक्त्याकुर्यात्पूजांसमाहिता २
त्यक्त्वामिषादिकंब्रह्मन्पतिसेवापरायणा
सायातिश्रीहरेःस्थानंगोलोकाख्यंसुदुर्ल्लभम् ३
राधादामोदराभ्यांयाधूपदीपंतुकार्तिके
दद्यात्साभवनंविष्णोर्यातिवैत्यक्तपातकाः ४
योषिद्याकार्त्तिकेविप्रदद्याद्वस्त्रंनिकेतने
राधादामोदराभ्यांतुवसेत्साश्रीहरेश्चिरम् ५
राधादामोदराभ्यांसापुष्पंमाल्यंसुवासितम्
कार्तिकेमासिसादद्याद्यातिवैकुंठमंदिरम् ६
गंधंयाचापिनैवेद्यंदद्याद्वैशर्करादिकम्
राधादामोदराभ्यांसागच्छेद्वैविष्णुमंदिरम् ७
यत्किंचिद्यच्छतिब्रह्मन्कार्तिकेचद्विजातये
राधादामोदरप्रीत्यैतस्याःपुण्याक्षयंभवेत् ८
यानारीकार्तिकेभक्त्याराधादामोदरंद्विज
प्रातःसपर्यांसायातिनकुर्य्यान्निरयंचिरम् ९

कदाचिज्जन्मभूमौसाविधवाप्रतिजन्मनि
भवेच्चासाद्यपूर्व्वंवैचाप्रियास्वामिनोऽपिच १०
पुरात्रेतायुगेविप्रवृषलोनामशंकरः
सौराष्ट्रदेशवासीचतस्यजायाकलिप्रिया ११
जाराकांक्षीसदानाम्नातृणवन्मन्यतेपतिम्
असौपतिर्नमेयोग्योमेस्वामीपरपूरुषः १२
इतिमत्वासदातस्मैचोच्छिष्टंतुददातिवै
नीचसंगान्महामूढामद्यमांसंचखादह १३
स्वामिनोभर्त्सनांनित्यंकुर्यात्कामंतुनिष्ठुरा
पादरज्जुर्भवेच्चासौकस्माद्दैनमृतोऽपिच १४
मृतेतस्मिन्नहंभोगंकरिष्यामियदृच्छया
विचार्येतिहृदामूढाजारेणैकेनसातदा १५
अन्यदेशंगमिष्यावःसंकेतमकरोद्द्विज
सुप्तस्यस्वामिनोरात्रौचासिनातद्गलंद्विज १६
छित्त्वाजारकृतेसापिसंकेतस्यस्थलंगता
आगतंजारपुरुषंद्वीपिनाभक्षितंद्विज १७
दृष्ट्वासारोदनंकृत्वामूर्च्छितानिपपातह
चिरादाश्वस्यसामूढाकरुणंविललापह १८
कलिप्रियोवाच
स्वकीयंस्वामिनंहत्वाचागतापरपूरुषम्
तंजारंस्वामिनंदैवात्शार्दूलोभक्षयन्मम
किंकरोमिक्वगच्छामिविधात्रावंचितास्म्यहम् १९
सूतउवाच
ततःकलिप्रियाब्रह्मन्आगतास्वगृहंप्रति
लपनेस्वामिनोदत्वामुखंचविललापसा २०
कलिप्रियोवाच
हानाथकिंकृतंकर्म्ममयाहंतातिदारुणम्
कंलोकंवागमिष्यामिवदस्वामिन्मनाग्गिरम् २१
भर्त्सनांतुयथाकामंकुर्य्याश्चाहंसुनिंदिता
किंचिन्नवदसिस्वामिन्नेनोयन्मेनविद्यते २२

सूतउवाच
ननामचरणेतस्यगतान्यनगरंप्रति
तत्रप्रविष्टासायोषिद्दृष्ट्वापुरायजनान्बहून् २३
ऊर्जेस्नानपरान्प्रातर्नर्मदायांचवैष्णवान्
तत्रनद्यांस्त्रियश्चापिराधादामोदरंद्विज २४
सपर्यांचकृतांचैवशंखनादैर्महोत्सवैः
गंधपुष्पैर्धूपदीपैर्वस्त्रैर्नानाविधैःफलैः २५
मुखवासैर्भक्तियुक्तादृष्ट्वासाविनयान्विता
पप्रच्छब्रूतयूयंमेकिमेतत्क्रियतेस्त्रियः २६
स्त्रियऊचुः -
सर्वमासोत्तमेचोर्जेराधादामोदरौशुभौ
पूजांकृत्वावयंमातःसर्वपापहरांशुभाम् २७
कोटिजन्मार्जितंपापंनष्टंप्राप्तंनिकेतनम्
सपर्य्यामामिषंत्यक्त्वाकृत्वासाचहरेर्द्दिने २८
निधनत्वंपौर्णमास्यांगतासानिर्मलाद्विज
किंकराश्चागतास्तूर्णंयमस्यनिलयंप्रति २९
नेतुंतांक्रोधसंयुक्ताबबंधुश्चर्मरज्जुमिः
तदागताविष्णुदूताविमानंस्वर्णनिर्मितम् ३०
शंखचक्रगदापद्मधारिणोवनमालिनः
निजघ्नुश्चक्रधाराभिर्यमदूताःपलायिताः ३१
राजहंसयुतेविप्रविमानेस्वर्णनिर्मिते
आरूढासागतातैस्तुवेष्टिताविष्णुमंदिरम् ३२
तत्रतस्थौचिरंभोगंकृत्वासावैयथेप्सितम्
याकुर्यात्कार्त्तिकेविप्रराधादामोदरार्चनम् ३३
यातिपूजात्यक्तपापाद्गोलोकाख्यंमनोहरम्
यइदंशृणुयाद्भक्त्यायाचनारीसमाहिता
कोटिजन्मार्जितंपापंतस्यतस्याविनश्यति ३४

इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादेराधादामोदरपूजा-
माहात्म्यकथनंनामविंशतितमोऽध्यायः २०

## एकविंशोऽध्यायः

शौनकउवाच
कथयस्वमुनेसूतसर्वमासोत्तमस्यच
कार्तिकस्यविधिंसम्यङ्नियमान्वक्तुमर्हसि १
सूतउवाच
आश्विनस्यद्विजश्रेष्ठपौर्णमास्यांसमाहितः
कार्तिकस्यव्रतंकुर्याद्यावदुद्बोधिनीभवेत् २
दिवाविप्रनरःकुर्यान्मलमूत्रमुदङ्मुखः
भवेन्मौनीचसर्वज्ञरात्रौचेद्दक्षिणामुखः ३
पथ्यंभसिचगोष्ठेषुश्मशानेवल्मिकेद्विज
कुर्यादुत्सर्जनंनैवव्रतीमूत्रपुरीषयोः ४
अत्युत्तमेषुस्थानेषुमलमूत्रंनकारयेत्
शिद्धांमृदंगृहीत्वाथवामंप्रक्षालयेत्करम् ५
अद्भिर्मृदापिशुद्ध्यर्थंपूर्वंविंशतिसंख्याा
एकालिगेगुदेपंचतथावामकरेदश ६
उभयोर्दशदातव्यापादयोश्चत्रिभिस्त्रिभिः
मुखशुद्धिंततःकुर्य्यात्संकल्पंस्नपनस्यच ७
हृदिदामोदरंध्यात्वाइमंमंत्रंततोवदेत्
कार्तिकेहंकरिष्यामिप्रातःस्नानंजनार्द्दन ८
दामोदरस्यप्रीत्यर्थंराधयापापनाशनं
नमःपंकजनाभायश्रीकृष्णजलशायिने ९
नमस्तेराधयासार्द्धंगृहाणार्घंप्रसीदमे
स्नानंकुर्य्यात्ततोविप्रतिलकंतुयथाविधि १०
ऊर्ध्वपुंड्रविहीनस्तुकिंचित्कर्मकरोतियः
निष्फलंकर्मतत्सर्वंसत्यमेतन्मयोच्यते ११
यच्छरीरंमनुष्याणामूर्ध्वपुंड्रंविनाकृतम्
तद्दर्शनंनकर्तव्यंदृष्ट्वासूर्यंनिरीक्षयेत् १२
ऊर्ध्वपुंड्रंमृदाशुभ्रंललाटेयस्यदृश्यते
चांडालोऽपिविशुद्धात्मापूज्यएवनसंशयः
अच्छिद्रमूर्ध्वपुंड्रंतुयेकुर्वंतिनराधमाः १३

तेषांललाटेसततंशुनःपादोनसंशयः
प्रातःकालोदितंकर्म्मसमाप्यहरिवल्लभाम् १४
पूजयेद्भक्तितोविप्रतुलसींपापनाशिनीम्
पौराणींतुकथांश्रुत्वाश्रीहरेःस्थिरमानसः १५
ततोविप्रंव्रतीभक्त्यापूजयेत्तंयथाविधि
परासनंपरान्नंचपरशय्यांपरांगनाम् १६
सर्वदावर्जयेद्विप्रकार्त्तिकेचविशेषतः
सौवीरकंतथामाषानामिषंचतथामधु १७
राजमाषादिकंनित्यंवर्जयेत्कार्तिकेव्रती
जंबीरमामिषंचूर्णमन्नंपर्य्युषितंद्विज १८
धान्येमसूरिकाप्रोक्तागवांदुग्धमनामिषम्
लवणंभूमिजंविप्रप्राण्यङ्गमामिषंखलु १९
द्विजक्रीतारसाःसर्वेजलंचाल्पसरःस्थितम्
ब्रह्मचर्यंतुर्यकालेपत्रावल्यांचभोजनम् २०
कुर्याद्वैद्विजशार्दूलतैलाभ्यंगंचवर्जयेत्
छत्राकंनालिकंहिंगुंपलांडुंपूतिकादलम् २१
लशुनंमूलकंशिग्रुंतथैवतुंबिकाफलम्
कपित्थंचैववृंताकंकूष्मांडंकांस्यभोजनम् २२
द्विपाचितंसूतिकान्नंमत्स्यंशय्यांरजस्वलाम्
द्विस्त्रिश्चान्नंस्त्रियःसंगंवर्जयेत्कार्तिकव्रती २३
धात्रीफलंगृहीविप्रखौतत्सर्वदात्यजेत्
कूष्मांडेधनहानिःस्यात्बृहत्यांनस्मरेद्धरिम् २४
पटोलेतुनवृद्धिःस्याद्बलहानिश्चमूलके
कलंकीजायतेविल्वेतिर्यग्योनिश्चनिंबुके २५
तालेशरीरनाशःस्यान्नारिकेलेचमूर्खता
तुंबीगोमांसतुल्यास्याद्गोवधंस्यात्कलिदके २६
शिंबीपापकराप्रोक्तापूतिकाब्रह्मघातिका
वार्ताक्यांसुतनाशःस्याच्चिररोगीचमाषके २७
मांसेचबहुपापंस्याद्वर्जयेत्प्रतिपदादिषु
यतिंकचिद्वर्जयेद्योऽन्नश्रीहरेप्रीतयेद्विज २८

तत्पुनर्भूसुरेदत्वाव्रतांतेतस्यभोजनम्
कार्तिकव्रतिनंविप्रयथोक्तकारिणंनरम् २९
यमदूताःपलायंतेसिंहंदृष्ट्वायथागजाः
श्रेष्ठंविष्णुव्रतंविप्रतत्तुल्यानशतंमखाः ३०
कृत्वाक्रतुंव्रजेत्स्वर्गंवैकुंठंकार्तिकव्रती
यतिंकचिद्दुष्कृतंविप्रमनोवाक्कायकर्मजम् ३१
दृष्ट्वातुविलयंयातिकार्तिकव्रतिनंक्षणात्
कार्त्तिकव्रतिनःपुण्यंब्रह्माचैवचतुर्मुखः ३२
नसमर्थोभवेद्वक्तुंयथोक्तव्रतकारिणः
यत्कृत्वाकलुषंसर्वंव्रजेद्विप्रदशोदिशः ३३
क्वगच्छामिक्वतिष्ठामिकार्त्तिकव्रतिनोभयात्
पौर्णमास्यांयथाशक्तिचान्नवस्त्रादिकंद्विज ३४
दद्याद्वैश्रीहरेःप्रीत्यैब्राह्मणानपिभोजयेत्
रात्रौजागरणंकुर्यान्नृत्यगीतादिभिर्व्रती
यइदंशृणुयाद्भक्त्यातस्यपापंप्रणश्यति ३५
इति श्रीपाद्मेमहापुराणेसूतशौनकसंवादेब्रह्मखंडेएकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

शौनकउवाच
माहात्म्यंब्रूहिसर्वज्ञशृण्वतांपापनाशनम्
सर्वप्राणिहितार्थायतुलस्याश्रनुकंपया १
सूतउवाच
तुलस्याःपरिसरेयस्यकाननंतिष्ठतिद्विज
गृहस्यतीर्थरूपत्वान्नायांतियमकिंकराः २
तुलस्याःकाननंविप्रसर्वपापहरंशुभम्
रोपयंतिनराःश्रेष्ठास्तेनपश्यंतिभास्करिम् ३
रोपणंपालनंसेवांदर्शनंस्पर्शनंतुयः
कुर्य्यात्तस्यप्रणष्टंस्यात्सर्वपापंद्विजोत्तम ४
कोमलैस्तुलसीपत्रैरर्चयंतिहरिंतुये
कालस्यसदनंविप्रतेनयांतिमहाशयाः ५

गंगाद्याः सरितः श्रेष्ठा विष्णुब्रह्ममहेश्वराः
देवैस्तीर्थैः पुष्कराद्यैस्तिष्ठंतितुलसीदले ६
योयुक्तस्तुलसीपत्रैः पापीप्राणान्विमुञ्चति
विष्णोर्निकेतनंयातिसत्यमेतन्मयोदितम् ७
तुलसीमृत्तिकालिप्तोयुक्तः पापशतैरपि
विमुंचतिनरः प्राणान्सयातिहरिमन्दिरम् ८
योनरोधारयेद्विप्रतुलसीकाष्ठचंदनम्
तस्याङ्गंनस्पृशेत्पापंसयातिपरमंपदम् ९
तुलसीकाष्ठमालांतुकगठस्थांवहतेतुयः
अप्यशौचोप्यनाचारोभक्त्यायातिहरेर्गृहम् १०
धात्रीफलकृतामालातुलसीकाष्ठसंभवा
दृश्यतेयस्यदेहेतुसवैभागवतोनरः ११
तुलसीदलजांमालांकगठस्थांवहतेतुयः
विष्णूच्छिष्टांविशेषेणसनमस्योदिवौकसाम् १२
यः पुनस्तुलसीमालांकगठेकृत्वाजनार्दनम्
पूजयेत्पुगयमाप्नोतिप्रतिपुष्पंगवायुतम् १३
धारयन्तिनयेमालांहैतुकाः पापबुद्धयः
नरकान्ननिवर्तंतेदग्धाः कोपाग्निनाहरेः १४
नजह्यात्तुलसीमालांधात्रीमालांविशेषतः
महापातकसंहर्त्रींधर्मकामार्थदायिनीम् १५
स्पृशेद्ययानिलोमानिधात्रीमालाकलौनृणाम्
तावद्वर्षसहस्राणिवसतेकेशवालये १६
निवेद्यकेशवेमालांतुलसीकाष्ठसंभवाम्
वहतेयोनरोभक्त्यातस्यवैनास्तिपातकम् १७
तुलसीकाष्ठमालांतुप्रेतराजस्यदूतकाः
दृष्ट्वानश्यन्तिदूरेणवातोद्धूतंयथादलम् १८
तुलस्याविपिनेधात्र्याश्छायासुयोनरोत्तमः
पिगडंददातिपितरोमुक्तिंयान्तिद्विजोत्तम १९
पाणौमूर्ध्निगलेचैवकर्णयोश्चमुखेद्विज
धात्रीफलंयस्तुधत्तेसविज्ञेयोहरिः स्वयम् २०

धात्रीपत्रैःफलैर्विप्रश्रीहरिंचार्चयेद्द्विज
कोटिजन्मार्जितंपापंपूजयानश्यतिसकृत् २१
यज्ञादेवाश्चमुनयस्तीर्थानिकार्तिकेद्विज
धात्रीवृक्षंसमाश्रित्यतिष्ठन्तिकार्तिकेसदा २२
धात्रीपत्रंकार्तिकेचद्वादश्यांतुलसीदलम्
चिनोतियोनरोगच्छेन्निरयंयातनामयम् २३
धात्रीछायासुयोविप्रचान्नंभुनक्तिकार्तिके
अन्नसंसर्गजंपापमावर्षंतस्यनश्यति २४
तुलसीवनमध्येचधात्रीमूलेचकार्तिके
कुर्याद्धर्यर्चनंविप्रवैकुण्ठंयातिसध्रुवम् २५
तुलसीमूलदेशेऽपिस्थितंवारिद्विजोत्तम
गृह्णातिमस्तकेभक्त्यापापीयातिहरेर्गृहम् २६
तुलसीपत्रगलितंयस्तोयंशिरसावहेत्
सर्वतीर्थेषुसस्नातश्चांतेयातिहरेर्गृहम् २७
पुराकश्चिद्द्विजश्रेष्ठोद्वापरेऽभून्महामुने
स्नात्वैकदातुलस्यैसवनंदत्वागृहंगतः २८
आदित्योवर्चसानाम्नामार्त्तंडइवपुण्यतः
तृषार्तोभक्षकःकश्चिदागतोबहुकल्मषः २९
तुलस्यामूलतस्तोयंपीत्वाचासौहतांहसः
त्वरयाप्यागतोव्याधोनाम्नायश्चासिमर्दनः ३०
उवाचभुक्तंचान्नंचभुक्त्वाभग्नंगतःकिमु
कृत्वामेपाकभांडस्थंचागतोहिंसकस्यते ३१
विव्याधतंगतप्राणंनेतुंवैशमनाज्ञया
आगताःकिंकराःक्रुद्धाःपाशमुद्गरपाणयः ३२
बद्ध्वानेतुंमनश्चक्रुरागताविष्णुकिंकराः
तदाछित्त्वाचर्मपाशंस्यंदनेतंमनोहरे ३३
तूर्णमारोहयामासुःपप्रच्छुर्विनयान्विताः
तेऽपिपुण्येनभोःसंतःकेनवैनीयतेऽप्यसौ ३४
ऊचुस्तेऽसौपुराराजापुण्यंबहुतरंकृतम्
अकरोद्धरणांकांचित्सुंदरींचांगनामयम् ३५

अनेनचांहसाराजागतोवैशमनक्षयम्
तत्रक्लेशंतुयुष्माभिर्दत्तंवैशमनाज्ञया ३६
ताम्रमय्यास्त्रियासार्द्धंक्रीडांसुप्त्वाचकारसः
तप्तायांलोहशय्यायांवैक्लव्यंकर्मणानृप ३७
तप्तायोभीषणंतप्तंलोहस्तंभंयमाज्ञया
ततःस्थितःसमालिंग्यभुक्त्वादुःखंचिरंनृपः ३८
सिक्तःक्षारांबुधाराभिरन्यैर्वैशमनालये
ततोनरकशेषेचपापयोनौमुहुर्मुहुः ३९
जन्मासाद्यचिरंदुःखमनुभूतंस्वकर्मणा
तुलसीमूलकंवारिपीत्वायातिहरेर्गृहम् ४०
इदानींतद्वचःश्रुत्वागतादूतायथागताः
तेनसार्द्धंविष्णुदूतागतावैकुंठमंदिरम् ४१
माहात्म्यंकथितंब्रह्मन्तुलस्याःपापनाशनम्
कुर्वंतिसेवांयेभक्त्यानजानेकिंभवेन्मुने ४२
इति श्रीपाद्मेमहापुराणेब्रह्मखण्डेसूतशौनकसंवादेतुलस्या
माहात्म्यंनामद्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

शौनकउवाच
कथयस्वमुनेसूतमाहात्म्यंकलुषक्षयम्
शेषपंचदिनस्यापिकार्त्तिकस्यानुकंपया १
सूतउवाच
शृणुशौनकयत्पृष्टंमाहात्म्यंपापनाशनम्
वक्ष्याम्यहंवैचोर्जस्यशेषपंचदिनस्यच २
व्रतानांमुनिशार्दूलप्रवरंविष्णुपंचकम्
तस्मिन्यःपूजयेद्भक्त्याश्रीहरिंराधयासह ३
गंधपुष्पैर्धूपदीपैर्वस्त्रैर्नानाविधैःफलैः
सयातिविष्णुसदनंसर्वपापविवर्जितः ४
ब्रह्मचारीगृहस्थोवावानप्रस्थोऽथवायतिः
नप्राप्नोतिपरंस्थानमकृत्वाविष्णुपंचकम् ५

सर्वपापहरंपुरायंविख्यातंविष्णुपंचकम्
तत्रस्नानंतुयःकुर्यात्सर्वतीर्थफलंलभेत् ६
श्रीहरेःपुरतोविप्रतुलस्याश्चसमीपतः
प्रदीपंसर्पिषापूर्णंदद्याद्योभक्तिभावतः ७
नभसिश्रीहरेःप्रीत्यैयातिसविष्णुमंदिरम्
पापीयातिहरेर्धामसत्यमेतन्मयोदितम् ८
स्नापयेच्चाच्युतंभक्त्यामधुक्षीरघृतादिभिः
दद्यातिंकनोहरिःप्रीतस्तस्मैसाधुजनायवै ९
नैवेद्यंदेवदेवेशंपरमान्नंनिवेदयेत्
तस्यपुरायंप्रसंख्यातुंनशक्तोवैचतुर्मुखः १०
अर्चयित्वाहृषीकेशमेकादश्यांसमाहितः
निष्प्राप्यगोमयंसम्यक्मंत्रवत्समुपासते ११
गोमूत्रंमंत्रवद्भूयोद्वादश्यांप्राशयेद्व्रती
क्षीरंतथात्रयोदश्यांचतुर्दश्यांतथादधि १२
संप्राप्यपापशुद्ध्यर्थंलंघयित्वाचतुर्दिनम्
पंचमेतुदिनेस्नात्वाविधिवत्पूज्यकेशवम् १३
भोजयेद्ब्राह्मणान्भक्त्यातेभ्योदद्याच्चदक्षिणाम्
ततोनक्तंसमश्नीयात्पंचगव्यंसुमंत्रितम् १४
एवंकर्तुमशक्तोयःफलमूलंचभोजनम्
कुर्याद्धविष्यंवाविप्रयथोक्तविधिनाहवै १५
श्रीहरेःपंचकंविप्रकुर्याद्यस्तुलसीदलैः
पूजयेत्तंसविज्ञेयःस्वयंनारायणःप्रभुः १६
पुरात्रेतायुगेशूद्रोदस्युवृत्तिपरायणः
नाम्नादंडकरोनित्यंधर्मनिंदांकरोतियः १७
असत्यभाषीमित्रघ्नोवेश्याविभ्रमलोलुपः
ब्रह्मस्वहारीक्रूरश्चपरस्त्रीगमनेरतः १८
शरणागतहंताचपाखंडजनसंगभाक्
गोमांसाशीसुरापश्चपरनिंदाकरःसदा १९
विश्वासघातीज्ञातीनांवृत्तिच्छेदीद्विजोत्तम
दुष्टंसर्वेसमालोक्यतादृशंतद्गृहेद्विजः २०

आगताज्ञातयःक्रुद्धास्तस्यपापपरायणम्
ज्ञातयऊचुः
रेरेमूढदुराचारविनाशंप्रतिनीयते
याप्रतिष्ठार्जितापूर्वैरस्माकंनिर्मलेऽन्वये २१
इतिक्रुद्धाद्विजश्रेष्ठअपकीर्तिभयादपि
पापिनांप्रवरंसर्वेतत्यजुस्तंकुलादरम् २२
ततोगतोमहारण्यंविनष्टाखिलवैभवः
कुर्यात्सदस्युभिःसार्द्धंदस्युकर्मनिरंतरम् २३
पथिप्रगच्छतांतेषांभयाद्विप्रनखादितुम्
प्राप्तंकिंचित्क्षुधार्त्तास्तेगताश्चान्यस्थलंप्रति २४
तत्रप्रविष्टास्तेसर्वेदृष्ट्वापुण्यजनान्बहून्
धात्रीमूलेस्थितान्ब्रह्मन्वैष्णवान्द्विजसत्तमान् २५
सर्वेतेदस्यवोविप्रगतादंडकरोऽपिसः
तेषांपरिसरंगत्वाप्रणामंवैचकारह २६
दंडकरउवाच
क्षुधार्तोऽहद्विजश्रेष्ठाःप्राणायास्यंतिमेध्रुवम्
ददध्वंखादितुंकिंचिद्युष्माकंशरणंगतः २७
आकर्ण्यवचनंतस्यचोचुस्तेधर्मतत्पराः
सर्वपापहरेत्वंचविख्यातेविष्णुपंचके २८
कथमन्नंखादितुंतेवांछात्वद्यहरेर्दिने
विशेषंतेब्रूहिसंज्ञाकातेभवतिसांप्रतम् २९
सउवाचमुदाविप्रानाम्नादंडकरोप्यहम्
सर्वपापसमायुक्तश्चोद्धारोमेकथंभवेत् ३०
ऊचुस्तेवैव्रतंश्रेष्ठंकुरुष्वविष्णुपंचकम्
विप्राणामाज्ञयाविप्रचकारविष्णुपंचकम् ३१
सप्रेत्यचहरेःस्थानमारुह्यस्यंदनेवरे
आसाद्यश्रीहरेरूपंतस्थौजन्मविवर्जितः ३२
यइदंशृणुयाद्भक्त्याचाख्यानंपापनाशनम्
कोटिजन्मार्जितंपापंतस्यनश्यतितत्क्षणात् ३३
इति श्रीपाद्मेमहापुराणेब्रह्मखण्डेसूतशौनकसंवादेविष्णुपंचक-

माहात्म्यंनामत्रयोविंशोऽध्यायः २३

## चतुर्विंशतितमोऽध्यायः

शौनकउवाच
विदुषांवरतत्त्वज्ञकथयस्वमहामते
इदानींममदानानांमाहात्म्यंक्रमतोमुने १
सूतउवाच
क्षितिदानंमुनिश्रेष्ठदानानामुत्तमंमतम्
येनकृतंवैतद्दानंसर्वदानफलंमतम् २
क्षितिंससस्यांयोदद्याद्ब्राह्मणायद्विजोत्तम
विष्णुलोकेसुखंभुंक्तेयावदिंद्राश्चतुर्दश ३
पृथिव्यांजन्मचासाद्यसार्वभौमस्ततोनृपः
महींसर्वांचिरंभुक्त्वाव्रजेद्वैश्रीहरेर्गृहम् ४
गोचर्ममात्रांभूमिंयःप्रयच्छतिद्विजातये
सगच्छतिहरेर्गेहंसर्वपापविवर्जितः ५
शतंगावोवृषश्चैकोयत्रतिष्ठंत्ययंत्रिताः
गोचर्ममात्रांतांभूमिंप्रवदंतिमहर्षयः ६
भूमिनेताभूमिदाताद्वौचापिस्वर्गगामिनौ
ग्राह्याभूमिर्द्विजैःप्राज्ञैस्त्यक्त्वादानशतान्यपि ७
अज्ञानीभूसुरोयस्तुत्यजेद्भूमिंविमोहितः
प्रतिजन्मन्यसौविप्रोभवेच्चात्यंतदुःखभाक् ८
अन्यतोयःसमासाद्यदद्याद्भूमिंद्विजातये
तस्मैविप्रजगन्नाथोददातिपरमंपदम् ९
स्वदत्तांपरदत्तांचमेदिनींयोहरेद्द्विज
युक्तःकोटिकुलैर्यातिनरकंचातिदारुणम् १०
हरेद्योवैमहींविप्रदेवब्राह्मणयोरपि
नदृष्टानिष्कृतिस्तस्यकोटिकल्पशतैर्मुने ११
भूमिंयोपरदत्तांचरक्षतिक्ष्मापतिर्द्विज
पुण्यंकोटिगुणंस्याद्वैतस्यदानंजनादपि १२
सप्तद्वीपांमहींदत्त्वायत्पुण्यंप्राप्यतेद्विज

तत्पुण्यंप्राप्नुयान्मर्त्योधेनुंयच्छन्द्विजातये १३
ददातिवृषभंयस्तुदरिद्रायकुटुंबिने
सर्वपापविनिर्मुक्तोशिवलोकंसगच्छति १४
तिलप्रमाणंस्वर्णंयोब्राह्मणायप्रयच्छति
हरेर्निकेतनंयातियुक्तःकोटिकुलैरपि १५
योदद्याद्रजतंविप्रसाधवेभूसुरायवै
प्राप्नोतिचंद्रलोकंचपिबेत्तत्रामृतंसदा १६
प्रवालंमौक्तिकंचैवहीरकंचमणिंतथा
योददातिद्विजश्रेष्ठस्वर्गलोकंसगच्छति १७
तुलापुरुषदानेनयत्पुण्यंलभतेजनः
शालग्रामशिलांदत्त्वातस्मात्कोटिगुणंलभेत् १८
सप्तद्वीपांक्षितिंदत्वासशैलवनकाननाम्
यत्पुण्यंलभतेतद्वैशालग्रामशिलाप्रदः १९
शालग्रामशिलांयोवैदद्याद्भूमिसुरायच
तेनविप्रप्रदत्तानिभुवनानिचतुर्दश २०
तुलापुरुषदानंयःकरोतिद्विजपुंगव
जनन्याश्चोदरेतस्यपुनर्जन्मनविद्यते २१
सालंकारांद्विजश्रेष्ठकन्यांयच्छतियोनरः
सगच्छेद्ब्रह्मसदनंपुनर्जन्मनविद्यते २२
कन्याविक्रयिणोनास्तिनरकान्निष्कृतिःपुनः
कन्यादानकृतोनास्तिस्वर्गादागमनंपुनः २३
उपानहौवातपत्रंयोददातिद्विजातये
प्रेत्यचेंद्रपुरंगत्वावसेत्कल्पचतुष्टयम् २४
वस्त्रंयच्छतियोदिव्यंसाधवेवैद्विजायते
स्वर्गेदिव्यांबरधरश्चिरंतिष्ठेद्द्विजोत्तम २५
धेनुंपुरातनींयच्छेद्वस्त्रंचजरितंद्विज
नूत्नांरजोवतींकन्यांसगच्छेन्निरयंतथा २६
कन्याविक्रयिणोब्रह्मन्नपश्येल्लपनंबुधः
दृष्ट्वाचाज्ञानतोवापिकुर्य्यान्मार्तंडदर्शनम् २७
फलदातानरोगच्छेत्त्रिदिवंचद्विजोत्तम

भुंक्तेकल्पसहस्राणिफलंतत्रामृतोपमम् २८
शाकंयच्छतियोमर्त्योशिवस्यभवनंद्विज
यातिकल्पद्वयंभुंक्तेदुर्ल्लभंपायसंसुरैः २९
घृतदोदधिदश्चैवतक्रदोदुग्धदस्तथा
विष्णोर्निकेतनंगत्वासुधापानंकरोतिसः ३०
गंधदःपुष्पदश्चैवमर्त्योयातिसुरालयम्
तिष्ठेद्युगसहस्राणिगंधपुष्पविभूषितः ३१
शय्यादानंदानसारंब्राह्मणायददातियः
सयातिब्रह्मसदनंपर्य्यंकेशेरतेचिरम् ३२
पीठदातादीपदातासर्वदुष्कृतवर्जितः
स्वर्गेसिंहासनेतिष्ठेज्ज्वलद्दीपावलीवृतः ३३
तांबूलंयोनरोदद्याद्भूमिंभुंक्तेऽखिलांसुखम्
स्वर्गेदेवांगनाक्रोडेसुप्तस्तांबूलमत्तिवै ३४
विद्यादानंदानवरंकरोतियोनरोत्तमः
प्रेत्यससन्निधिंविष्णोस्तिष्ठेद्युगशतत्रयम् ३५
प्राप्यज्ञानंततस्तत्रदुर्ल्लभंवैद्विजर्षभ
दुर्ल्लभंमोक्षमाप्नोतिश्रीहरेःकृपयाद्विज ३६
अनाथंदुःखितंविप्रंपाठयेद्वैनरोत्तमः
श्रीहरेर्भवनंयातिपुनर्जन्मविवर्जितः ३७
योनरःपुस्तकंदद्याद्भक्तिश्रद्धासमन्वितः
प्रतिवर्णंलभेत्पुण्यंकपिलाकोटिदानजम् ३८
मधुदोगुडदश्चैवमर्त्योयातीक्षुसागरम्
लवणप्रदोनरोयातिवारुणंलोकमेवच ३९
सर्वेषामेवदानानामन्नंवारिद्विजोत्तम
तत्त्वज्ञैर्मुनिभिःसर्वैःप्रवरंवैप्रकीर्त्तितम् ४०
अन्नंवारिद्विजश्रेष्ठयेनदत्तंमहीतले
तेनदत्तानिदानानिसर्वाणिचद्विजर्षभ ४१
अन्नदोयोनरोविप्रप्राणदश्चप्रकीर्त्तितः
तस्मात्समस्तदानानामन्नदोलभतेफलम् ४२
यथाचान्नंतथावारिद्वेतुल्येचप्रकीर्त्तिते

वारिणाचविनाचान्नंसिद्धंनस्याद्द्विजोत्तम ४३
क्षुधातृषाद्विजव्याघ्रद्वेचतुल्येप्रकीर्त्तिते
अतश्चान्नंचतोयंचश्रेष्ठंप्रोक्तंबुधैरपि ४४
अन्नदानंक्षितौब्रह्मन्येकुर्वंतिनरोत्तमाः
सर्वपापविनिर्मुक्तागच्छंतिहरिमंदिरम् ४५
यावंत्यन्नानिभोविप्रयच्छतिक्षितिमंडले
ब्रह्महत्याश्चतावंत्योनश्यंत्येवतपोधन ४६
यच्छतांचान्नदानानिशरीराणिचपातकम्
गात्राणिगृह्णतांत्यक्त्वासहसायांतिशौनक ४७
अतःपापिष्ठचान्नानिनगृह्णंतिमनीषिणः
गृह्णंतिमोहाद्येमूढाभवंतिपापभागिनः ४८
कुर्याद्भूमिष्ठमुदकंचैकंभोद्विजसत्तम
सर्वपापैर्विनिर्मुक्तोव्रजेत्सहरिमंदिरम् ४९
प्रयत्नेनद्विजश्रेष्ठकर्त्तव्योधनसंचयः
संचितंचधनंब्रह्मन्दानकर्मणिविक्षिपेत् ५०
रणंतियेचकार्पण्याद्धनंतेचातिदुःखिनः
अंतेसर्वधनंत्यक्त्वानिःस्वागच्छंतिभोमुने ५१
मानवायेसदादानंदत्त्वादत्त्वादरिद्रति
दरिद्रास्तेनविज्ञेयानरलोकेमहेश्वराः ५२
परलोकेद्विजव्याघ्रसाधुसंयमवर्जिते
निर्दयेबंधुहीनेचनदत्तंनोपतिष्ठते ५३
स्थितेधनेनरोयोवैनाश्नातिनददातिसः
दरिद्रइवविज्ञेयःप्रेत्यनिश्वासमुत्सृजेत् ५४
तपसोऽपिवरंदानंप्रोक्तंचतत्त्वदर्शिभिः
अतोयत्नाद्द्विजश्रेष्ठदानकर्मसमाचरेत् ५५
दातादानंनदद्याद्वैसमुत्सृज्यद्विजातये
सयातिनिरयंघोरंसर्वजंतुभयावहम् ५६
दानंदाताप्रतिग्राहीनस्मरेच्चनयाचते
निरयेचोभयोर्वासोयावच्चंद्रदिवाकरौ ५७
ब्रह्महत्यादिपापानियानिवैद्विजसत्तम

तानिदानेनहन्यंतेतस्माद्दानंसमाचरेत् ५८
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादे
चतुर्विंशतितमोऽध्यायः २४

पंचविंशतितमोऽध्यायः

शौनकउवाच
श्रीपदंविष्णुचरितंसर्वोपद्रवनाशनम्
सर्वपापक्षयकरंदुष्टग्रहनिवारणम् १
विष्णुसान्निध्यदंचैवचतुर्वर्गफलप्रदम्
यःशृणोतिनरोभक्त्याचांतेयातिहरेर्गृहम् २
नामोच्चारणमाहात्म्यंश्रूयतेमहदद्भुतम्
यदुच्चारणमात्रेणनरोयायात्परंपदम् ३
तद्वदस्वाधुनासूतविधानंनामकीर्तने
सूतउवाच
शृणुशौनकवक्ष्यामिसंवादंमोक्षसाधनम् ४
नारदःपृष्टवान्पूर्वंकुमारंतद्वदामिते
एकदायमुनातीरेनिविष्टंशांतमानसम् ५
सनत्कुमारंपप्रच्छनारदोरचिताञ्जलि
श्रुत्वानानाविधान्धर्मान्धर्मव्यतिकरांस्तथा ६
श्रीनारदउवाच
योऽसौभगवताप्रोक्तोधर्मव्यतिकरोनृणाम्
कथंतस्यविनाशःस्यादुच्यतांभगवत्प्रिय ७
श्रीसनत्कुमारउवाच
शृणुनारदगोविंदप्रियगोविंदधर्मवित्
यत्पृष्टंलोकनिर्मुक्तिकारणंतमसःपरम् ८
सर्वाचारविवर्जिताःशठधियोव्रात्याजगद्वञ्चकाः
दंभाहंकृतिपानपैशुनपराःपापाश्चयेनिष्ठुराः ९
येचान्येधनदारपुत्रनिरताःसर्वेऽधमास्तेऽपिहि
श्रीगोविंदपदारविंदशरणाःशुद्धाभवंतिद्विज १०
तमपिदेवकरंकरुणाकरस्थविरजंगममुक्तिकरंपरम्

अतिचरंत्यपराधपराजनायइहतान्वपतिध्रुवनामहि ११
सर्वापराधकृदपिमुच्यतेहरिसंश्रयः
हरेरप्यपराधान्यःकुर्याद्द्विपदपांसनः १२
नामाश्रयःकदाचित्स्यात्तरत्येवसनामतः
नाम्नोहिसर्वसुहृदोऽह्यपराधात्पतत्यधः १३
श्रीनारदउवाच
केतेऽपराधाविप्रेंद्रनाम्नोभगवतःकृताः
विनिघ्नंतिनृणांकृत्यंप्राकृतंह्यानयंतिच १४
श्रीसनत्कुमारउवाच
सतांनिंदानाम्नःपरममपराधंवितनुते
यतःख्यातिंयांतंकथमुसहतेतद्विगरहाम्
शुभस्यश्रीविष्णोर्यइहगुणनामादिसकलं
धियाभिन्नंपश्येत्सखलुहरिनामाहितकरः १५
गुरोरवज्ञाश्रुतिशास्त्रनिंदनंतथार्थवादोहरिनाम्निकल्पनम्
नामापराधस्यहिपापबुद्धिर्नविद्यतेतस्ययमैर्हिशुद्धिः १६
धर्मव्रतत्यागहुतादिसर्वशुभक्रियासाम्यमपिप्रमादः
अश्रद्दधानोविमुखोऽप्यशृणवन्यश्चोपदेशःशिवनामापराधः १७
श्रुत्वापिनाममाहात्म्यंयःप्रीतिरहितोऽधमः
अहंममादिपरमोनाम्निसोऽप्यपराधकृत् १८
एवंनारदशंकरेणकृपयामह्यंमुनीनांपरं
प्रोक्तंनामसुखावहंभगवतोवर्ज्यंसदायत्नतः
येज्ञात्वापिनवर्जयंतिसहसानाम्नोऽपराधान्दश
क्रुद्धामातरमप्यभोजनपराःखिद्यंतितेबालवत् १९
अपराधविमुक्तोहिनाम्निजप्तंसदाचर
नाम्नैवतवदेवर्षेसर्वंसेत्स्यतिनान्यतः २०
श्रीनारदउवाच
सनत्कुमारप्रियसाहसानांविवेकवैराग्यविवर्जितानाम्
देहप्रियार्थात्मपरायणानांमुक्तापराधाःप्रभवंतिनःकथम् २१
श्रीसनत्कुमारउवाच
जातेनामापराधेतुप्रमादेतुकथंचन

सदासंकीर्तयन्नामतदेकशरणोभवेत् २२
नामापराधयुक्तानांनामान्येवहरंत्यघम्
अविश्रांतिप्रयुक्तानितान्येवार्थकराणियत् २३
नामैकंयस्यचिह्नंस्मरणपथगतंश्रोत्रमूलंगतंवा
शुद्धंवाऽशुद्धवर्णंव्यवहितरहितंतारयत्येवसत्यम्
तच्चेद्देहद्रविणजनितालोभपाखण्डमध्ये
निक्षप्तंस्यान्नफलजनकंशीघ्रमेवात्रविप्र २४
इदंरहस्यंपरमंपुरानारदशंकरात्
श्रुतंसर्वाशुभहरमपराधनिवारकम् २५
विदुर्विष्णवभिधानंयेह्यपराधपरानराः
तेषामपिभवेन्मुक्तिःपठनादेवनारद २६
नाम्नोमाहात्म्यमखिलंपुराणेपरिगीयते
ततःपुराणमखिलंश्रोतुमर्हसिमानद २७
पुराणश्रवणेश्रद्धायस्यस्याद्भ्रातरन्वहम्
तस्यसाक्षात्प्रसन्नःस्याच्छिवोविष्णुश्चसानुगः २८
यत्स्नात्वापुष्करेतीर्थेप्रयागेसिंधुसंगमे
तत्फलंद्विगुणंतस्यश्रद्धयावैशृणोतियः २९
येपठंतिपुराणानिशृण्वंतिचसमाहिताः
प्रत्यक्षरंलभंत्येतेकपिलादानजंफलम् ३०
अपुत्रोलभतेपुत्रंधनार्थीलभतेधनम्
विद्यार्थीलभतेविद्यांमोक्षार्थीमोक्षमाप्नुयात् ३१
येशृण्वंतिपुराणानिकोटिजन्मार्जितंखलु
पापजालंतुतेहत्वागच्छंतिहरिमंदिरम् ३२
पुराणवाचकंविप्रंपूजयेद्भक्तिभावतः
गोभूहिरण्यवस्त्रैश्चगंधपुष्पादिभिर्मुने ३३
कांस्यैर्विनिर्मितंपात्रंजलपात्रंमुदान्वितः
कर्णकुंडलकंचैवमुद्रिकांस्वर्णनिर्मिताम् ३४
आसनंतुतथादद्यात्पुष्पमाल्यंतपोधन
वित्तशाठ्यंनकुर्वीतदानंहीनफलंयतः ३५
पुराणंवाचयेद्विप्रसर्वकामार्थसिद्धये

सुवर्णरजतंवस्त्रंपुष्पमाल्यंतुचंदनम् ३६
दद्याद्योपुस्तकंभक्त्यासगच्छेद्धरिमंदिरम्
कुर्वंतिविधिनानेनसंपूर्णंपुस्तकंचये
तेषांनामानिलिपेतचित्रगुप्तोऽचनाद्द्विज ३७
इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादे
पंचविंशतितमोऽध्यायः २५

## षड्विंशतितमोऽध्यायः

शौनकउवाच
श्रोतुमिच्छामितेप्राज्ञकथयस्वसमूलकम्
प्रतिज्ञापालनेपुरायंखंडनेकिंचकिल्बिषम् १
अनृतेशपथेकिंवासत्येकिंचिद्भवेन्मुने
दक्षिणांकिंकरंदत्वाकृपांकृत्वाकृपार्णव २
सूतउवाच
शृणुष्वमुनिशार्दूलकथयामिसमूलतः
वैष्णवानांत्वमग्रयोऽसिसर्वलोकहितेरतः ३
धेनूनांतुशतंदत्त्वायत्फलंलभतेनरः
तस्मात्कोटिगुणंपुरायंप्रतिज्ञापालनेद्विज ४
प्रतिज्ञाखंडनान्मूढोनिरयंयातिदारुणम्
शतमन्वंतरंयावत्पच्यतेनात्रसंशयः ५
ततोऽत्रजन्मचासाद्यनिर्धनस्यनिकेतने
अन्नवस्त्रैर्विहीनःस्याक्लेशीचापिस्वकर्मणा ६
सत्येनशपथंकुर्याद्देवाग्निगुरुसन्निधौ
तावद्दहतिवैगात्रंविष्णोर्वंशोनलुप्यते ७
मिथ्यायांशपथेविप्रकिमहंवच्मिसांप्रतम्
शतमन्वंतरंविप्रनिरयंमिथ्ययाकिमु ८
निर्माल्यंश्रीहरेःस्पृष्ट्वासत्येनमुनिपुंगव
गृहीत्वापुरुषान्सप्तपच्यतेनिरयेचिरम् ९
कदाचिज्जन्मसंप्राप्यकुष्ठीचप्रतिजन्मनि
सत्येनैवंभवेद्विप्रअनृतेवैकिमुच्यते १०

योमर्त्योदक्षिणांदत्वाकरंतत्प्रतिपाल्यते
तस्यप्राप्तिर्भवेत्कृष्णःसत्यंसत्यंवदाम्यहम् ११
करंदत्त्वातुयोमर्त्योवचनस्यचपालनम्
तावन्नकुर्यात्पितरःप्राप्नुवंतिचयातनाम् १२
स्वयंतुमुनिशार्दूलनिरयंचातिदारुणम्
उद्धारंकोटिपुरुषैर्मृतोयातिनसंशयः १३
शौनकउवाच
कृष्णप्राप्तिःपुराकस्यकरस्यप्रतिपालनात्
दक्षिणस्यमुनेब्रूहिश्रोतुमिच्छामिसादरात् १४
सूतउवाच
पुराकिंचित्पुरेशूद्रोनाम्नासीद्वीरविक्रमः
बह्वाशीपृथुलांगश्चबहुवक्तातिसुंदरः १५
धनवान्पुत्रवान्सभ्योविद्वान्सर्वजनप्रियः
विप्राणामतिथीनांचपूजकःसर्वदैवतु १६
पितृभक्तोद्विजश्रेष्ठप्रतिज्ञापालकःसदा
वाचांगुरुजनानांचपालकोहरिसेवकः १७
एकदासुंदरोगेहंश्वपचस्तस्यछद्मना
प्राप्तोधृत्वाब्राह्मणस्यरूपंवैतरुणःसुधीः १८
ब्राह्मणउवाच
शृणुमेवचनंधीरममजायामृताशुभा
किंकरोमिक्वगच्छामिकथयाद्यानुकंपया १९
विवाहंयोजनःकुर्याद्ब्राह्मणंचविशेषतः
किंचदानैःकिंचतीर्थैःकिंयज्ञैर्व्रतकोटिभिः २०
इतिश्रुत्वात्वसौविप्रंचोक्तवान्वीरविक्रमः
शृणुमेवचनंब्रह्मन्बालास्तिममकन्यका २१
यदिच्छातेभवेद्विप्रदास्यामिविधिपूर्वकम्
नयमेदक्षिणंहस्तंदास्यामिचान्यथानहि २२
तस्यैतद्वचनंश्रुत्वाजग्राहदक्षिणंकरम्
श्वपचोहर्षयुक्तोवैप्रोवाचवचनंत्विति २३
ब्राह्मणउवाच

कृत्वाशुभक्षणंमह्यंदेहिकन्यांशुभान्विताम्
विलंबेबहुविघ्नंस्यादितिशास्त्रेषुनिश्चितम् २४
वीरविक्रमउवाच
तुभ्यंश्वःकन्यकांब्रह्मन्दास्यामिनास्तिचान्यथा
दक्षिणंचकरंदत्वानकुर्यात्पुरुषाधमः २५
सूतउवाच
ब्राह्मणंकृष्णशर्माणंचाहूयाकथयन्मुने
पुरोहितमिदंसर्वंप्रोवाचसंविदंद्विज २६
कथंविप्रायतेकन्यांशूद्रायदातुमिच्छसि
अज्ञातायाकुलीनायनददस्वविशेषतः २७
ऊचुस्तज्ज्ञातयःसर्वेजनकाद्यास्तपोधन
अस्माकंवचनंतातशृणुष्ववीरविक्रम २८
नज्ञायतेकुलंयस्यदेशगोत्रधनंतथा
शीलंवयस्तस्यकन्यास्वजनैर्नचदीयते २९
सउवाचद्विजश्रेष्ठदत्तंमेदक्षिणंकरम्
कदाचिदन्यथाकर्तुंनशक्नोमिचसर्वथा ३०
इत्युक्त्वातान्सविप्रायकन्यांदातुंप्रचक्रमे
दृष्ट्वेतिज्ञातयःसर्वेविस्मयमद्भुतंययुः ३१
सत्यंतद्वचनंश्रुत्वाशंखचक्रगदाधरः
आविर्बभूवसहसाचारुह्यगरुडंमुने ३२
श्रीभगवानुवाच
धन्यंतेचकुलंधर्मोधन्यस्तेजननीपिता
धन्यंतेवचनंसत्यंधन्यंतेदक्षिणंकरम् ३३
धन्यंकर्म्मचतेजन्मत्रैलोक्येनैवविद्यते
एवंतेकर्मणासाधोचोद्धारंकुरुषेकुलम् ३४
सूतउवाच
एवंब्रुवतिश्रीकृष्णेविमानंस्वर्णनिर्मितम्
आगतंहरिगणैर्युक्तंसर्वत्रगरुडध्वजम् ३५
सर्वंतस्यकुलंब्रह्मन्सश्वपाकपुरोहितम्
रथेचारोपयामासशंखपद्मधरःस्वयं ३६

गृहीत्वातान्हरिःसर्वान्गतोवैकुंठमंदिरम्
तत्रतस्थौचिरंतेचकृत्वाभोगंसुदुर्ल्लभम् ३७
वचनंलंघयेद्यस्तुयस्तुवादद्विणंकरम्
सकुलोनिरयंयातिसत्यंसत्यंवदाम्यहम् ३८
तस्यान्नंतुजलंब्रह्मन्नग्राह्यंपितृदैवतैः
त्यक्त्वाधर्मोगृहंतस्यभीत्यायातिद्विजोत्तम ३९
दत्वाशांयोजनःकुर्यान्नैराश्यंचैवमूढधीः
सस्वकान्कोटिपुरुषान्गृहीत्वानरकंव्रजेत् ४०
वचनंलंघयेद्यस्तुधर्मस्तस्यविलंघति
नृपाग्नितस्करैर्विप्रसत्यंसत्यंसुनिश्चितम् ४१
स्वर्गोत्तरमिमंसम्यक्श्रुत्वास्वर्गोत्तरंव्रजेत्
जीवन्मुक्तस्त्विहामुत्रकृष्णाख्यंधामचोत्तमम् ४२

इति श्रीपाद्मेमहापुराणेब्रह्मखंडेसूतशौनकसंवादे
षडिंवशतितमोऽध्यायः २६

इति स्वर्गोत्तरापरनामकं ब्रह्मखराडं संपूर्णम्
इति श्री पाद्मे महापुराणे चतुर्थं ब्रह्मखराडं समाप्तम्

# अथ श्रीपाद्मे महापुराणे पञ्चमं पातालखण्डं प्रारभ्यते

## प्रथमोऽध्यायः

श्रीगणेशाय नमःश्रीकुलदेवतायै नमः
श्रीगुरुचरणारविंदाभ्यां नमः

नारायणंनमस्कृत्यनरंचैवनरोत्तमम्
देवींसरस्वतींव्यासंततोजयमुदीरयेत् १
ऋषयऊचुः
श्रुतंसर्वंमहाभागस्वर्गखंडंमनोहरम्
त्वत्तोऽधुनावदायुष्मञ्छ्रीरामचरितंहिनः २
सूतउवाच
अथैकदाधराधारंपृष्टवान्भुजगेश्वरम्
वात्स्यायनोमुनिवरःकथामेतांसुनिर्मलाम् ३
श्रीवात्स्यायनउवाच
शेषाशेषकथास्त्वत्तोजगत्सर्गलयादिकाः
भूगोलश्चखगोलश्चज्योतिश्चक्रविनिर्णयः ४
महत्तत्त्वादिसृष्टीनांपृथक्तत्त्वविनिर्णयः
नानाराजचरित्राणिकथितानित्वयानघ ५
सूर्यवंशभवानांचराज्ञांचारित्रमद्भुतम्
तत्रानेकमहापापहरारामकृताकथा ६
तस्यवीरस्यरामस्यहयमेधकथाश्रुता
संक्षेपतोमयात्वत्तस्तामिच्छामिसविस्तराम् ७
याश्रुतासंस्मृताचोक्तामहापातकहारिणी
चिंतितार्थप्रदात्रीचभक्तचित्तप्रतोषदा ८
शेषउवाच
धन्योसिद्विजवर्यत्वंयस्यतेमतिरीदृशी
रघुवीरपदद्वंद्वमकरंदस्पृहावती ९
वदंतिमुनयःसर्वेसाधूनांसंगमंवरम्
यस्मात्पापक्षयकरीरघुनाथकथाभवेत् १०
त्वयामेऽनुग्रहःसृष्टोयद्रामःस्मारितःपुनः

सुरासुरकिरीटौघमणिनीराजितांघ्रिकः ११
रावणारिकथावार्द्धौमशकोमादृशःकियान्
यत्रब्रह्मादयोदेवामोहितानविदंत्यपि १२
तथापिभोमयातुभ्यंवक्तव्यंस्वीयशक्तितः
पक्षिणःस्वगतिंश्रित्वाखेगच्छंतिसुविस्तरे १३
चरितंरघुनाथस्यशतकोटिप्रविस्तरम्
येषांवैयादृशीबुद्धिस्तेवदंत्येवतादृशम् १४
रघुनाथसतीकीर्तिर्मद्बुद्धिंनिर्मलीमसाम्
करिष्यतिस्वसंपर्कात्कनकंत्वनलोयथा १५
सूतउवाच
इत्युक्त्वातंमुनिवरंध्यानस्तिमितलोचनः
ज्ञानेनालोकयांचक्रेकथांलोकोत्तरांशुभाम् १६
गद्गदस्वरसंयुक्तोमहाहर्षांकितांगकः
कथयामासविशदांकथांदाशरथेःपुनः १७
शेषउवाच
लंकेश्वरेविनिहतेदेवदानवदुःखदे
अप्सरोगणवक्त्राब्जचंद्रमःकांतिहर्तरि १८
सुराःसर्वेसुखंप्रापुरिंद्रप्रभृतयस्तदा
सुखंप्राप्ताःस्तुतिंचक्रुर्दासवत्प्रणतिंगताः १९
लंकायांचप्रतिष्ठाप्यधर्मयुक्तंबिभीषणम्
सीतयासहितोरामःपुष्पकंसमुपाश्रितः २०
सुग्रीवहनुमत्सीतालक्ष्मणैःसंयुतस्तदा
बिभीषणोऽपिसचिवैरन्वगाद्विरहोत्सुकः २१
लंकांसपश्यन्बहुधाभग्नप्राकारतोरणाम्
दृष्ट्वाऽशोकवनंतत्रसीतास्थानंमुमूर्च्छह २२
शिंशपांस्तत्रवृक्षांश्चपुष्पितान्कोरकैर्युतान्
राक्षसीभिःसमाकीर्णान्मृताभिर्हनुमद्भयात् २३
इत्थंसर्वंविलोक्याशुरामःप्रायात्पुरींप्रति
ब्रह्मादिदेवैःसहितःस्वीयस्वीयविमानकैः २४
देवदुंदुभिनिर्घोषाञ्छृण्वञ्छ्रोत्रसुखावहान्

तथैवाप्सरसांनृत्यैःपूज्यमानोरघूत्तमः २५
सीतायैदर्शयन्मार्गेतीर्थान्याश्रमवंतिच
मुनींश्चमुनिपुत्रांश्चमुनिपत्नीःपतिव्रताः २६
यत्रयत्रकृतावासाःपूर्वंरामेणधीमता
तान्सर्वान्दर्शयामासलक्ष्मणेनसमन्वितः २७
इत्येवंदर्शयंस्तस्यैरामोऽद्राक्षीत्स्वकांपुरीम्
तस्याःपुनःसमीपेतुनंदिग्रामंददर्शह २८
यत्रवैभरतोराजापालयन्धर्ममास्थितः
भ्रातुर्वियोगजनितंदुःखचिह्नंवहन्बहु २९
गर्तशायीब्रह्मचारीजटावल्कलसंयुतः
कृशांगयष्टिर्दुःखार्तःकुर्वन्रामकथांमुहुः ३०
यवान्नमपिनोभुंक्तेजलंपिबतिनोमुहुः
उद्यंतंसवितारंयोनमस्कृत्यब्रवीतिच ३१
जगन्नेत्रसुरस्वामिन्हरमेदुष्कृतंमहत्
मदर्थेरामचंद्रोऽपिजगत्पूज्योवनंययौ ३२
सीतयासुकुमारांग्यासेव्यमानोऽटवींगतः
यासीतापुष्पपर्यंकेवृंतमासाद्यदुःखिता ३३
यासीतारविसंतापंकदापिप्रापनोसती
मदर्थेजानकीसाचप्रत्यरण्यंभ्रमत्यहो ३४
यासीताराजवृंदैश्चनदृष्टानयनैःकदा
सासीतादृश्यतेनूनंकिरातैःकालरूपिभिः ३५
यासीतामधुरंत्वन्नंभोजितानबुभुक्षति
सासीताद्यवनस्थानिफलानिप्रार्थयत्यहो ३६
इत्येवमन्वहंसूर्यमुपस्थायवदत्यदः
प्रातःप्रातर्महाराजोभरतोरामवल्लभः ३७
यश्चोच्यमानःसचिवैःसमदुःखसुखैर्बुधैः
नीतिज्ञैःशास्त्रनिपुणैरितिप्रोवाचतान्नृपः ३८
अमात्यादुर्भगंमांकिंप्रब्रूतपुरुषाधमम्
मदर्थेमेऽग्रजोरामोवनंप्राप्यावसीदति ३९
दुर्भगस्यममप्रस्वाःपापमार्जनमादरात्

करोमिरामचंद्रांघ्रिंस्मारंस्मारंसुमंत्रिणः ४०
धन्यासुमित्रासुतरांवीरसूःस्वपतिप्रिया
यस्यास्तनूजोरामस्यचरणौसेवतेऽन्वहम् ४१
यत्रग्रामेस्थितोनूनंभरतोभ्रातृवत्सलः
विलापंप्रकरोत्युच्चैस्तंग्रामंसददर्शह ४२
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेरघुनाथस्य भरतावासनंदिग्रामदर्शनोनामप्रथमोऽध्यायः १

द्वितीयोऽध्यायः

शेषउवाच
अथतद्दर्शनोत्कण्ठाविह्वलीकृतचेतसा
पुनःपुनःस्मृतोभ्राताभरतोधार्मिकाग्रणीः १
उवाचचहनूमंतंबलवंतंसमीरजम्
प्रस्फुरद्दशनव्याजचन्द्रकांतिहतांधकः २
शृणुवीरहनूमंस्त्वंमद्गिरंभ्रातृनोदिताम्
चिरंतनवियोगेनगद्गदीकृतविह्वलाम् ३
गच्छतंभ्रातरंवीरसमीरणतनूद्भव
मद्वियोगकृशांयष्टिंवपुषोबिभ्रतंहठात् ४
योवल्कलंपरीधत्तेजटांधत्तेशिरोरुहे
फलानांभक्षणमपिनकुर्याद्विरहातुरः ५
परस्त्रीयस्यमातेवलोष्टवत्कांचनंपुनः
प्रजाःपुत्रानिवोद्रक्षेद्बांधवोममधर्मवित् ६
मद्वियोगजदुःखाग्निज्वालादग्धकलेवरम्
मदागमनसंदेशपयोवृष्ट्याशुसिंचतम् ७
सीतयासहितंरामंलक्ष्मणेनसमन्वितम्
सुग्रीवादिकपींद्रैश्चरक्षोभिःसबिभीषणैः ८
प्राप्तंनिवेदयसुखात्पुष्पकासनसंस्थितम्
येनमेसोऽनुजःशीघ्रंसुखमेतिमदागमात् ९
इतिश्रुत्वाततोवाक्यंरघुवीरस्यधीमतः
जगामभरतावासंनंदिग्रामंनिदेशकृत् १०

गत्वासनंदिग्रामंतुमंत्रिवृद्धैःसुसंयतम्
भरतंभ्रातृविरहक्लिन्नंधीमान्ददर्शह ११
कथयंतंमंत्रिवृद्धान्रामचंद्रकथानकम्
तदीयपदापाथोजमकरंदसुनिर्भरः १२
नमश्चकारभरतंधर्ममूर्तियुतंकिल
विधात्रासकलांशेनसत्त्वेनैवविनिर्मितम् १३
तंदृष्ट्वाभरतःशीघ्रंप्रत्युत्थायकृतांजलि
स्वागतंचेतिहोवाचरामस्यकुशलंवद १४
इत्येवंवदतस्तस्यभुजोदक्षिणतोऽस्फुरत्
हृदयाच्चगतःशोकोहर्षास्त्रैःपूरिताननः १५
विलोक्यतादृशंभूपंप्रत्युवाचकपीश्वरः
निकटेहिपुरःप्राप्तंविद्धिरामंसलक्ष्मणम् १६
रामागमनसंदेशामृतसिक्तकलेवरः
प्रापयद्धर्षपूरंहिसहस्त्रास्योनवेद्म्यहम् १७
जगादममतन्नास्तियत्तुभ्यंदीयतेमया
दासोऽस्मिजन्मपर्यंतंरामसंदेशहारकः १८
वसिष्ठोऽपिगृहीत्वार्घ्यंमंत्रिवृद्धाःसुहर्षिताः
जग्मुस्तेरामचंद्रंचहनुमद्दर्शिताध्वना १९
दृष्ट्वादूरात्समायांतंरामचंद्रंमनोरमम्
पुष्पकासनमध्यस्थंससीतंसहलक्ष्मणम् २०
रामोऽपिदृष्ट्वाभरतंपादचारेणसंगतम्
जटावल्कलकौपीनपरिधानसमन्वितम् २१
अमात्यान्भ्रातृवेषेणसमवेषाञ्जटाधरान्
नित्यंतपःक्लिष्टतयाकृशरूपान्ददर्शह २२
रामोऽपिचिंतयामासदृष्ट्वावैतादृशंनृपम्
अहोदशरथस्यायंराजराजस्यधीमतः २३
पुत्रःपदातिरायातिजटावल्कलवेषभृत्
नदुःखंतादृशंमेऽन्यद्वनमध्यगतस्यहि २४
यादृशंमद्वियोगेनचैतस्यपरिवर्त्तते
अहोपश्यतमेभ्राताप्राणात्प्रियतमःसखा २५

श्रुत्वामांनिकटेप्राप्तंमंत्रिवृद्धैःसुहर्षितैः
द्रष्टुंमांभरतोऽभ्येतिवसिष्ठेनसमन्वितः २६
इतिब्रुवन्नरपतिःपुष्पकान्नभसोंऽगणात्
बिभीषणहनूमद्भ्यांलक्ष्मणेनकृतादरः २७
यानादवतताराशुविरहात्क्लिन्नमानसः
भ्रातर्भ्रातःपुनर्भ्रातर्भ्रातर्भ्रातर्वदन्मुहुः २८
दृष्ट्वासमुत्तीर्णमिमंरामचंद्रंसुरैर्युतम्
भरतोभ्रातृविरहक्लिन्नंधीमान्ददर्शह
हर्षाश्रूणिप्रमुंचंश्चदंडवत्प्रणनामह २९
रघुनाथोऽपितंदृष्ट्वादंडवत्पतितंभुवि
उत्थाप्यजगृहेदोर्भ्यांहर्षालोकसमन्वितः ३०
उत्थापितोऽपिहिभृशंनोदतिष्ठद्रुदन्मुहुः
रामचंद्रपदांभोजग्रहणासक्तबाहुभृत् ३१
भरतउवाच
दुराचारस्यदुष्टस्यपापिनोमेकृपांकुरु
रामचंद्रमहाबाहोकारुण्यात्करुणानिधे ३२
यस्तेविदेहजापाणिस्पर्शंक्रूरममन्यत
सएवचरणोरामवनेबभ्राममत्कृते ३३
इत्युक्त्वाश्रुमुखोदीनःपरिरभ्यपुनःपुनः
प्रांजलिपुरतस्तस्थौहर्षविह्वलिताननः ३४
रघुनाथस्तमनुजंपरिष्वज्यकृपानिधिः
प्रणम्यचमहामंत्रिमुख्यानापृच्छ्यसादरम् ३५
भरतेनसमंभ्रात्रापुष्पकासनमास्थितः
सीतांददर्शभरतोभ्रातृपत्नीमनिंदिताम् ३६
अनसूयामिवात्रेःकिंलोपामुद्रांघटोद्भवः
पतिव्रतांजनकजाममन्यतननामच ३७
मातःक्षमस्वयदघंमयाकृतमबुद्धिना
त्वत्सदृश्यःपतिपराःसर्वेषांसाधुकारिकाः ३८
जानक्यापिमहाभागादेवरंवीक्ष्यसादरम्
आशीर्भिरभियुज्याथसमपृच्छदनामयम् ३९

विमानवरमारूढास्तेसर्वेनभसोंऽगणे
क्षणादालोकयांचक्रेनिकटेस्वपितुःपुरीम् ४०
इति श्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादे
रामराजधानीदर्शनोनामद्वितीयोऽध्यायः २

तृतीयोऽध्यायः

शेषउवाच
दृष्ट्वारामोराजधानींनिजलोकनिवासिनीम्
जहर्षमतिमान्वीरश्चिरदर्शनलालसः १
भरतोऽपिस्वकंमित्रंसुमुखंनगरंप्रति
प्रेषयामाससचिवंनगरोत्सवसिद्धये २
भरतउवाच
कुर्वंतुलोकास्त्वरितंरघुनाथागमोत्सवम्
मंदिरेमंदिरेरम्यंकृतकौतुकचित्रकम् ३
विपांसुकाराजमार्गाश्चंदनद्रवसिंचिताः
प्रसूनभरसंक्लृप्ताहृष्टपुष्टजनावृताः ४
विचित्रवर्णध्वजभाचित्रिताखिलस्वांगणाः
मेघागमेधनुरिवपश्यंत्वेववलीमुखाः ५
प्रतिगेहंतुलोकानांकारयंत्वगरूक्षणम्
यद्धूमंवीक्ष्यशिखिनोनृत्यंकुर्वंतुलीलया ६
हस्तिनोममशैलाभानाधोरणसुयंत्रितान्
विचित्रयंतुबहुशोगैरिकाद्युपधातुभिः ७
वाजिनश्चित्रिताभूयःसुशोभंतुमनोजवाः
यद्वेगवीक्षणादेवगर्वंत्यजतिस्वर्हयः ८
कन्याःसहस्रशोरम्याःसर्वाभरणभूषिताः
गजोपरिसमारूढामुक्ताभिर्विकिरंतुच ९
ब्राह्मण्यःपात्रहस्ताश्चदूर्वाहारिद्रसंयुताः
सुवासिन्योमहाराजंरामंनीराजयंतुताः १०
कौसल्यापुत्रसंयोगसंदेशविधुरासती
हर्षंप्राप्नोतुसुकृशातदीक्षणसुलालसा ११

इत्येवमादिरचनाःपुरशोभाविधायिकाः
करोतुजनताहृष्टारामस्यागमनंप्रति १२
शेषउवाच
इतिश्रुत्वाततोवाक्यंसुमुखोमंत्रवित्तमः
प्रययौनगरींकर्तुंकृतकौतुकतोरणाम् १३
गत्वाथनगरींतांवैमंत्रीतुसुमुखाभिधः
ख्यापयामासलोकानांरामागममहोत्सवम् १४
लोकाःश्रुत्वापुरींप्राप्तंरघुनाथंसुहर्षिताः
पूर्वंतदीयविरहत्यक्तभोगसुखादयः १५
ब्राह्मणावेदसंपन्नाःपवित्रादर्भपाणयः
धौतोत्तरीयवलिताजग्मुःश्रीरघुनायकम् १६
क्षत्रियायेशूरतमाधनुर्बाणधरावराः
संग्रामेबहुशोवीराजेतारोययुरप्यमुम् १७
वैश्याधनसमृद्धाश्चमुद्राशोभितपाणयः
शुभ्रवस्त्रपरीधानाअभिजग्मुर्नरेश्वरम् १८
शूद्राद्विजेषुयेभक्ताःस्वीयाचारसुनिष्ठिताः
वेदाचाररतायेवैतेऽपिजग्मुःपुरीपतिम् १९
येयेवृत्तिकरालोकाःस्वेस्वेकर्मण्यधिष्ठिताः
स्वकंवस्तुसमादायययुःश्रीरामभूपतिम् २०
इत्थंभूपतिसंदेशात्प्रमोदाप्लवसंयुताः
नानाकौतुकसंयुक्ताआजग्मुर्मनुजेश्वरम् २१
शेषउवाच
रघुनाथोऽपिसकलैर्दैवतैःस्वस्वयानगैः
परीतःप्रविवेशोच्चैःपुरींरचितमोहनाम् २२
प्लवंगाःप्लवनैर्युक्ताआकाशपथचारिणः
स्वस्वशोभापरीतांगाश्चानुजग्मुःपुरोत्तमम् २३
पुष्पकादवरुह्याशुनरयानमथारुहत्
सीतयासहितोरामःपरिवारसमावृतः २४
अयोध्यांप्रविवेशाथकृतकौतुकतोरणाम्
हृष्टपुष्टजनाकीर्णामुत्सवैःपरीभूषिताम् २५

वीणापणवभेर्यादिवादित्रैराहतैर्भृशम्
शोभमानःस्तूयमानःसूतमागधबंदिभिः २६
जयराघवरामेतिजयसूर्यकुलांगद
जयदाशरथेदेवजयताल्लोकनायकः २७
इतिशृणवञ्छुभांवाचंपौराणांहर्षितांगिनाम्
रामदर्शनसंजातपुलकोद्भेदशोभिनाम् २८
प्रविवेशवरंमार्गंरथ्याचत्वरभूषितम्
चंदनोदकसंसिक्तंपुष्पपल्लवसंयुतम् २९
तदापौरांगनाःकाश्चिद्गवाक्षबिलमाश्रिताः
रघुनाथस्वरूपेक्षाजातकामाअ्थाब्रुवन् ३०
पौरांगनाऊचुः
धन्याअ्भूवन्बतभिल्लकन्यावनेषुयाराममुखारविंदम्
स्वलोचनेंदीवरकैरथापिबन्स्वभाग्यसंजातमहोदयाइमाः ३१
धन्यंमुखंपश्यतवीरधाम्नःश्रीरामदेवस्यसरोजनेत्रम्
यद्दर्शनंधातृमुखाःसुराअ्पिप्रापुर्महद्भाग्ययुतावयंत्वहो ३२
एतन्मुखंपश्यतचारुहासंकिरीटसंशोभिनिजोत्तमांगम्
बंधूकधिक्कारलसच्छविप्रदंदंतच्छदंबिभ्रतमुच्चनासम् ३३
इतिगदितवतीस्ताःस्नेहभारेणरामानलिनदलसदृक्षैर्नेत्रपातैर्निरीक्ष्य
निखिलगुरुरनूनप्रेमभारंनृलोकंजननिगृहमियेषप्रोषितांगेनहृष्टः ३४
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
रघुनाथस्यपुरप्रवेशनंनामतृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

वात्स्यायनउवाच
भुजगाधीश्वरेशानधराभारधरक्षम
शृणवेकंसंशयंमह्यंकृपयाकथयस्वतम् १
रघुनाथस्यगमनंवनंप्रतियदाह्यभूत्
तदाप्रभृतिदेहेनस्थिताशून्येनचेतसा २
तद्विप्रयोगविधुराकृशदेहातिदुःखिता
सुमुखान्मंत्रिणःश्रुत्वारघुनाथंसमागतम् ३

कथंजहर्षकिमभूत्कीदृशंतत्रचिह्नितम्
रामचंद्रस्यसंदेशहर्तारंकिमुवाचसा ४
एतन्मेसंशयंछिंधिरघुनाथगुणोदयम्
यथावच्छृरावतेमह्यंकथयस्वप्रसादतः ५
शेषउवाच
साधुपृष्टंमहाभागद्विजवर्यपुरस्कृत
तन्मेनिगदतःसाक्षाच्छृणुष्वैकमनाःकिल ६
सावैतद्वदनांभोजच्युतंरामागमामृतम्
पीत्वापीत्वाबभूवाहोस्थगितांगेनविह्वला ७
किंमेस्वप्नोविमूढायाःकिंवाभ्रमकरंवचः
ममवैमंदभाग्यायाःकथंरामेक्षणंपुनः ८
बहुनातपसाकृत्वाप्राप्तोऽयवैसुतःशिशुः
केनचिन्ममपापेनविप्रयोगंगतःपुनः ९
सुमंत्रिन्कुशलीरामःसीतालक्ष्मणसंयुतः
कथंमांस्मरतेवीरोवनचारीसुदुःखिताम् १०
इतिसाविललापोच्चैरघुनाथस्मृतिंगता
ननिवेदनिजंकिंचित्परकीयंविमोहिता
सुमुखोऽपितथादृष्ट्वादुःखितांमातरंभृशम् ११
वीजयामासवासोग्रैःसंज्ञामापचसापुनः
उवाचजननींसौम्यंवचोहर्षकरंमुहुः १२
रघुनाथागमस्मारहृष्टांतांव्यदधात्पुनः
मातर्विद्धिगृहंप्राप्तंरघुनाथंसलक्ष्मणम् १३
सीतयासहितंपश्यचाशीर्भिरभियुंक्ष्वच
इतितथ्यंवचःश्रुत्वासुमुखेनप्रभाषितम् १४
यादृशंहर्षमापेदेतादृशंवेद्म्यहंनहि
उत्थायचाजिरेप्राप्तारोमांचिततनूरुहा १५
हर्षविह्वलितांग्यश्रुमुंचंतीराममैक्षत
तावत्सरामोराजेंद्रोनरयानमधिश्रितः १६
प्राप्तःस्वमातुर्भवनंकैकेय्याःसुनयःपुरः
कैकेय्यपित्रपाभारनम्रारामंपुरःस्थितम् १७

नोवाचकिंचिन्महतींचिंतांप्राप्तवतीमुहुः
सूर्यवंशध्वजोरामोमातरंवीद्व्यलज्जिताम् १८
उवाचसांत्वयंस्तांचवाक्यैर्विनयमिश्रितैः
श्रीरामउवाच
मातर्मयावनंगत्वासर्वमाचरितंतथा १९
अधुनाकरवैकिंवात्वदाज्ञातोजनन्यहो
मयान्यूनंकृतंनास्तिकथंमांनेद्व्यसेपुनः २०
आशीर्भिरभिनंद्यैनंभरतंमांचवीद्वय
इतिश्रुत्वापितद्वाक्यंसानम्रवदनानघ २१
शनैःशनैःप्रत्युवाचरामगच्छस्वमालयम्
रामोऽपिश्रुत्वावचनंजनन्याःपुरुषोत्तमः २२
नमस्कृत्यययौगेहंसुमित्रायाःकृपानिधिः
सुमित्रापुत्रसहितंरामंदृष्ट्वामहामनाः २३
चिरंजीवचिरंजीवह्याशीर्भिरितिचाभ्यधात्
मातुश्चरामभद्रोऽपिचरणौप्रणिपत्यच २४
परिष्वज्यमुदायुक्तोजगादवचनंपुनः
रत्नगर्भेममभ्रात्राकेनापिनकृतंतथा २५
यथायमकरोद्धीमान्ममदुःखापनोदनम् २६
रावणेनहृतासीतामयायत्प्राप्यतेपुनः
मातस्तत्सर्वमाविद्धिलक्ष्मणस्यविचेष्टितम् २७
दत्तामाशिषमागृह्यशिरसायंसुमित्रया
निजमातुश्चभवनंप्रययौविबुधैर्वृतः २८
मातरंवीक्ष्यहृषितांनिजदर्शनलालसाम्
स्वयानादवरुह्याशुचरणावग्रहीद्धरिः २९
मातातद्दर्शनोत्कंठाविह्वलीकृतमानसा
परिष्वज्यपरिष्वज्यरामंमुदमवापसा ३०
शरीरेरोमहर्षोऽभूद्गद्गदावागभूत्तदा
हर्षाश्रूणितुसोष्णानिप्रवाहंप्रापुरापदात् ३१
जननींवीक्ष्यविनयीताटंकद्वयवर्जिताम्
कराकल्पपदाकल्परहितांबिभ्रतींतनुम् ३२

किंचित्स्वदर्शनाद्धृष्टांकृशांगीतांसशोकभाक्
दुःखस्यसमयोनायमितिमत्वाजगादताम् ३३
श्रीरामउवाच
मातर्मयात्वच्चरणौचिरकालंनसेवितौ
ततःक्षमस्वापराधंभाग्यहीनस्यवैमम ३४
येपुत्रामातापित्रोर्नशुश्रूषायांसमुत्सुकाः
तेमंतव्याःपरामातःकीटकारेतसोभवाः ३५
किंकुर्वेजनकाज्ञातोगतोवैदंडकंवनम्
तत्रापित्वत्कृपापांगात्तीर्णोऽस्मिदुःखसागरम् ३६
रावणेनहृतासीतालंकायांगमितापुनः
त्वत्कृपातोमयालब्धातंहत्वाराक्षसेश्वरम् ३७
सीतेयंत्वच्चरणयोःपतितावैपतिव्रता
संभावयाशुचकितांत्वत्पादार्पितमानसाम् ३८
इतिश्रुत्वातुतद्वाक्यंपादयोःपतितांस्नुषाम्
आशीर्भिरभियुज्यैनांबभाषेतांपतिव्रताम् ३९
सीतेस्वपतिनासार्द्धंचिरंविलसभामिनि
पुत्रौप्रसूयचकुलंस्वकंपावयपावने ४०
त्वत्सदृश्यःपतिपराःपतिदुःखसुखानुगाः
भवंतिदुःखभागिन्योनहिसत्यंजगत्त्रये ४१
विदेहपुत्रिस्वकुलंत्वयापावितमात्मना
रामपादाब्जयुगुलमनुयांत्यामहावनम् ४२
किंचित्रंयत्पुमांसस्तुवैरिकोटिप्रभंजनाः
येषांगेहेसतीभार्यास्वपतिप्रियवाञ्छिका ४३
इत्युक्त्वारघुनाथस्यभार्यामंचितलोचनाम्
तूष्णींबभूवहृषिताप्रहृष्टस्वतनूरुहा ४४
अथभ्रातास्यभरतःपित्रादत्तंनिजंमहत्
राज्यंनिवेदयामासरामचंद्रायधीमते ४५
मंत्रिणस्तेप्रहृष्टांगादैवज्ञान्मंत्रकोविदान्
आहूयसुमुहूर्तंतेपप्रच्छुःपरमादरात् ४६
शुभेमुहूर्तेसुदिनेशुभनक्षत्रसंयुते

अभिषेकंमहाराज्येकारयामासुरुद्यताः ४७
सप्तद्वीपवतींपृथ्वद्यंव्याघ्रचर्मणिसुंदरे
लिखित्वोपरिराजेंद्रोमहाराजोधितस्थिवान् ४८
तद्दिनादेवसाधूनांमनांसिप्रमुदंययुः
दुष्टानांचेतसोग्लानिरभवत्परतापिनाम् ४९
स्त्रियस्तुपतिभक्त्याचपतिव्रतपरायणाः
मनसापिकदापापंनाचरंतिजनामुने ५०
दैत्यादेवास्तथानागायक्षासुरमहोरगाः
सर्वेन्यायपथेस्थित्वारामाज्ञांशिरसादधुः ५१
परोपकरणेयुक्ताःस्वधर्मसुखनिर्वृताः
विद्याविनोदगमितादिनरात्रिक्षणाःशुभाः ५२
वातोऽपिमार्गसंस्थानांबलान्नाहरतेमहान्
वासांस्यपितुसूक्ष्माणितत्रचौरकथानहि ५३
धनदोह्यर्थिनांरामःकारुण्यश्चकृपानिधिः
भ्रातृभिःसहितोनित्यंगुरुदेवस्तुतिंव्यधात् ५४

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
रघुवरस्यराज्याभिषेकोनामचतुर्थोऽध्यायः ४

## पंचमोऽध्यायः

शेषउवाच
अथाभिषिक्तंरामंतुतुष्टुवुःप्रणताःसुराः
रावणाभिधदैत्येंद्रवधहर्षितमानसाः १
देवाऊचुः
जयदाशरथेसुरार्तिहञ्जयजयदानववंशदाहक
जयदेववरांगनागणग्रहणव्यग्रकरारिदारक २
तवयद्दनुजेंद्रनाशनंकवयोवर्णयितुंसमुत्सुकाः
प्रलयेजगतांततीःपुनर्ग्रससेत्वंभुवनेशलीलया ३
जयजन्मजरादिदुःखकैःपरिमुक्तप्रबलोद्धरोद्धर
जयधर्मकरान्वयांबुधौकृतजन्मन्नजरामराच्युत ४
तवदेववरस्यनामभिर्बहुपापाअपितेपवित्रिताः

किमुसाधुद्विजवर्यपूर्वकाःसुतनुंमानुषतामुपागताः ५
हरविरिंचिनुतंतवपादयोर्युगलमीप्सितकामसमृद्धिदम्
हृदिपवित्रयवादिकचिह्नितैःसुरचितंमनसास्पृहयामहे ६
यदिभवान्नदधात्यभयंभुवोमदनमूर्तितिरस्करकांतिभृत्
सुरगणाहिकथंसुखिनःपुनर्ननुभवंतिघृणामयपावन ७
यदायदास्मान्दनुजाहिदुःखदास्तदातदात्वंभुविजन्मभाग्भवेः
अजोऽव्ययोऽपीशवरोऽपिसन्विभोस्वभावमास्थायनिजंनिजार्चितः ८
मृतसुधासदृशैरघनाशनैःसुचरितैरवकीर्यमहीतलम्
अमनुजैर्गुणशंसिभिरीडितःप्रविशचाशुपुनर्हिस्वकंपदम् ९
अनादिराद्योजररूपधारीहारीकिरीटीमकरध्वजाभः
जयंकरोतुप्रसभंहतारिःस्मरारिसंसेवितपादपद्मः १०
इत्युक्त्वातेसुराःसर्वेब्रह्मेंद्रप्रमुखामुहुः
प्रणेमुररिनाशेनप्रीणितारघुनायकम् ११
इतिस्तुत्यातिसंहृष्टोरघुनाथोमहायशाः
प्रोवाचतान्सुरान्वीक्ष्यप्रणतान्नतकंधरान् १२
श्रीरामउवाच
सुरावृणुतमेयूयंवरंकिंचित्सुदुर्ल्लभम्
यंकोऽपिदेवोदनुजोनयक्षःप्रापसादरः १३
सुराऊचुः
स्वामिन्भगवतःसर्वंप्राप्तमस्माभिरुत्तमम्
यदयंनिहतःशत्रुरस्माकंतुदशाननः १४
यदायदाऽसुरोऽस्माकंबाधांपरिदधातिभोः
तदातदेतिकर्तव्यमेतावद्वैरिनाशनम् १५
तथेत्युक्त्वापुनर्वीरःप्रोवाचरघुनंदनः
श्रीरामउवाच
सुराःशृणुतमद्वाक्यमादरेणसमन्विताः १६
भवत्कृतंमदीयैर्वैगुणैर्ग्रथितमद्भुतम्
स्तोत्रंपठिष्यतिमुहुःप्रातर्निशिसकृन्नरः १७
तस्यवैरिपराभूतिर्नभविष्यतिदारुणा
नचदारिद्र्यसंयोगोनचव्याधिपराभवौ १८

मदीयचरणद्वंद्वेभक्तिस्तेषांतुभूयसी
भविष्यतिमुदायुक्तेस्वांतेपुंसांतुपाठतः १९
इत्युक्त्वासोऽभवत्तूष्णींनरदेवशिरोमणिः
सुराःसर्वेप्रहृष्टास्तेययुर्लोकंस्वकंस्वकम् २०
रघुनाथोऽपिभ्रातृंस्तान्पालयंस्तातवद्बुधान्
प्रजाःपुत्रानिवस्वीयाल्लाँलयँल्लोकनायकः २१
यस्मिञ्छासतिलोकानांनाकालमरणंनृणाम्
नरोगादिपराभूतिर्गृहेषुचमहीयसी २२
नेतिःकदापिदृश्येतवैरिजंभयमेवच
वृक्षाःसदैवफलिनोमहीभूयिष्ठधान्यका २३
पुत्रपौत्रपरीवारसनाथीकृतजीवनाः
कांतासंयोगजसुखैर्निरस्तविरहक्लमाः २४
नित्यंश्रीरघुनाथस्यपादपद्मकथोत्सुकाः
कदापिपरनिंदासुवाचस्तेषांभवंतिन २५
कारवोऽपिकदापापंनाचरंतिमनस्यहो
रघुनाथकराघातदुःखशंकाभिशंसिनः २६
सीतापतिमुखालोकनिश्चलीभूतलोचनाः
लोकाबभूवुःसततंकारुण्यपरिपूरिताः २७
राज्यंप्राप्तमसापत्नंसमृद्धबलवाहनम्
ऋषिभिर्हृष्टपुष्टैश्चरम्यंहाटकभूषणैः २८
संपुष्टमिष्टापूर्तानांधर्माणांनित्यकर्तृभिः
सदासंपन्नसस्यंचसुवसुक्षेत्रसंयुतम् २९
सुदेशंसुप्रजंस्वस्थंसुतृणंबहुगोधनम्
देवतायतनानांचराजिभिःपरिराजितम् ३०
सुपूर्णायत्रवैग्रामाःसुवित्तर्द्धिविराजिताः
सुपुष्पकृत्रिमोद्यानाःसुस्वादुफलपादपाः ३१
सपद्मिनीककासारायत्रराजंतिभूमयः
सदंभानिम्नगायत्रनयत्रजनताक्वचित् ३२
कुलान्येवकुलीनानांवर्णानांनाधनानिच
विभ्रमोयत्रनारीषुनविद्वत्सुचकर्हिचित् ३३

नद्यःकुटिलगामिन्योनयत्रविषयेप्रजाः
तमोयुक्ताःक्षपायत्रबहुलेषुनमानवाः ३४
रजोयुजःस्त्रियोयत्रनाधर्मबहुलानराः
धनैरनंधोयत्रास्तिजनोनैवचभोजने ३५
अनयःस्यंदनोयत्रनचवैराजपूरुषः
दंडःपरशुकुद्दालवालव्यजनराजिषु ३६
आतपत्रेषुनान्यत्रक्वचित्क्रोधोपरोधजः
अन्यत्राक्षिकवृंदेभ्यःक्वचिन्नपरिदेवनम् ३७
आक्षिकाएवदृश्यंतेयत्रपाशकपाणयः
जाड्यवार्ताजलेष्वेवस्त्रीमध्याएवदुर्बलाः ३८
कठोरहृदयायत्रसीमंतिन्योनमानवाः
औषधेष्वेवयत्रास्तिकुष्ठयोगोनमानवे ३९
वेधोयत्रसुरत्नेषुशूलंमूर्तिकरेषुवै
कंपःसात्विकभावोत्थोनभयात्क्वापिकस्यचित् ४०
संज्वरःकामजोयत्रदारिद्र्यंकलुषस्यच
दुर्ल्लभत्वंसदैवस्यसुकृतेनचवस्तुनः ४१
इभाएवप्रमत्तावैयुद्धेवीच्योजलाशये
दानहानिर्गजेष्वेवतीक्ष्णाएवहिकंटकाः ४२
बाणेषुगुणविश्लेषोबंधोक्तिःपुस्तकेदृढा
स्नेहत्यागःखलेष्वेवनचवैस्वजनेजने ४३
तंदेशंपालयामासलालयँल्लालिताःप्रजाः
धर्मसंस्थापयन्देशेदुष्टेदंडधरोपमः ४४
एवंपालयतोदेशंधर्मेणधरणीतलम्
सहस्रंचव्यतीयुर्वैवर्षाणयेकादशप्रभोः ४५
तत्रनीचजनाच्छ्रुत्वासीतायाअपमानताम्
स्वांचनिंदांरजकतस्तांतत्याजरघूद्वहः ४६
पृथ्वद्यंपालयमानस्यधर्मेणनृपतेस्तदा
सीतांविरहितामेकांनिदेशेनसुरक्षिताम् ४७
कदाचित्संसदोमध्येह्यासीनस्यमहामतेः
आजगाममुनिश्रेष्ठःकुंभोत्पत्तिर्मुनिर्महान् ४८

गृहीत्वार्घ्यंसमुत्तस्थौवसिष्ठेनसमन्वितः
जनताभिर्महाराजोवार्धिशोषकमागतम् ४९
स्वागतेनसुसंभाव्यपप्रच्छतमनामयम्
सुखोपविष्टंविश्रांतंबभाषेरघुनंदनः ५०

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
अगस्त्यसमागमोनामपंचमोऽध्यायः ५

षष्ठोऽध्यायः

शेषउवाच
इत्थंस्वागतसंतुष्टंब्रह्मचर्यतपोनिधिम्
उवाचमतिमान्वीरःसर्वलोकगुरुर्मुनिम् १
स्वागतंतेमहाभागकुंभयोनेतपोनिधे
त्वद्दर्शनेनसर्वेवैपाविताःसकुटुंबकाः २
कच्चिन्मतिस्तेवेदेषुशास्त्रेषुपरिवर्तते
त्वत्तपोविघ्नकर्तावैनास्तिभूमंडलेक्वचित् ३
लोपामुद्रामहाभागयाचतेधर्मचारिणी
यस्याःपतिव्रताधर्मात्सर्वंभवतिशोभनम् ४
अपिशंसमहाभागधर्ममूर्तेकृपानिधे
अलोलुपस्यकिंकार्यंकरवाणिमुनीश्वर ५
त्वत्तपोयोगतःसर्वंभवतिस्वेच्छयाबहु
तथापिमयिकृत्वैवकृपांशंशमुनीश्वरः ६
शेषउवाच
इत्युक्तोलोकगुरुणाराजराजेनधीमता
उवाचरामंलोकेशंविनीततरभाषया ७
अगस्त्यउवाच
स्वामिंस्तवसुदुर्दर्शंदर्शनंदैवतैरपि
मत्वासमागतंविद्धिराजराजकृपानिधे ८
हतस्त्वयारावणाख्यस्त्वसुरोलोककंटकः
दिष्ट्याद्यदेवाःसुखिनोदिष्ट्याराजाबिभीषणः ९
रामत्वद्दर्शनान्मेऽद्यगतंवैदुष्कृतंकिल

संपूर्णोमेमनःकोशश्चानंदेनसुरोत्तम १०
इत्युक्त्वासबभूवाशुतूष्णींकुंभसमुद्भवः
रामसंदर्शनाह्लादविह्वलीकृतमानसः ११
रामःपप्रच्छतंभूयोमुनिंज्ञानविशारदम्
लोकातीतंभवद्भाविसर्वंजानासिसर्वतः १२
मुनेकथयमेसर्वंपृच्छतोहिसुविस्तरम्
कोऽसौमयाहतोयोहिरावणोविबुधार्दनः १३
कुंभकर्णोऽपिकस्त्वेषकाजातिर्वैदुरात्मनः
देवोदैत्यःपिशाचोवाराक्षसोवामहामुने १४
सर्वमाख्याहिसर्वज्ञसर्वंजानासिविस्तरात्
अतःकथयमेसर्वंकृपांकृत्वाममोपरि १५
इतिश्रुत्वाततोवाक्यंकुंभजन्मातपोनिधिः
यत्पृष्टंरघुराजेनप्रवक्तुंतत्प्रचक्रमे १६
राजन्सृष्टिकरोब्रह्मापुलस्त्यस्तत्सुतोऽभवत्
ततस्तुविश्रवाजज्ञेवेदविद्याविशारदः १७
तस्यपत्नीद्वयंजातंपातिव्रत्यचरित्रभृत्
एकामंदाकिनीनाम्नीद्वितीयाकैकसीस्मृता १८
पूर्वस्यांधनदोजज्ञेलोकपालविलासभृत्
योऽसौशिवप्रसादेनलंकावासमचीकरत् १९
विद्युन्मालिसुतायांतुपुत्रत्रयमभून्महत्
रावणःकुंभकर्णश्चतथापुण्योबिभीषणः २०
राक्षस्युदरजन्मत्वात्संध्यासमयसंभवात्
द्वयोरधर्मनिपुणामतिरासीन्महामते २१
एकदातुविमानेनपुष्पकेणसुशोभिना
कांचनीयोपकल्पेनकिंकिणीजालमालिना २२
आरुह्यपितरौद्रष्टुंप्रायाच्छोभासमन्वितः
स्वगणैःसंस्तुतोभूत्वानानारत्नविभूषणैः २३
आगत्यपित्रोश्चरणेपतित्वाचिरमात्मजः
हर्षविह्वलितात्माचरोमांचिततनूरुहः २४
उवाचमेऽद्यसुदिनंमहाभाग्यफलोदयः

यन्मेयुष्मत्पदौदृष्टौमहापुरायददर्शनौ २५
इत्यादिभिःस्तुतिपदैःस्तुत्वागान्मंदिरंस्वकम्
पितरावपिसंहृष्टौपुत्रस्नेहाद्बभूवतुः २६
तंदृष्ट्वारावणोधीमाञ्जगादनिजमातरम्
कोऽयपुमान्सुरोवाथयद्मोवाथनरोत्तमः २७
योऽसौममपितुःपादौसन्निषेव्यगतःपुनः
महाभाग्यनिधिःस्वीयैर्गणैःसुपरिवारितः २८
केनेदंतपसालब्धंविमानंवायुवेगधृक्
उद्यानाराम लीलादिविलासस्थानमुत्तमम् २९
शेषउवाच
इतिवाक्यंसमाकरार्यजननीरोषविक्लवा
उवाचपुत्रंविमनाःकिंचिन्नेत्रविकारिणी ३०
रेपुत्रशृणुमद्वाक्यंबहुशिद्मासमन्वितम्
एतस्यजन्मकर्मादिविचारचतुराधिकम् ३१
सपत्न्याममकुद्मिस्थंविधानंसमुपस्थितम्
येनस्वमातुर्विमलंकुलमुज्ज्वलितंमहत् ३२
त्वंतुमत्कुद्मिजःकीटःपापःस्वोदरपूरकः
यथाखरःस्वकंभारंजानातिनचतद्गुणम् ३३
तथात्वंलद्मयसेऽज्ञानीशयनासनभोगवान्
सुप्तोगतःक्वचिद्भ्रष्टइत्येवतवसंभवः ३४
अनेनतपसालब्धंशिवसंतोषकारिणा
लंकावासोमनोवेगंविमानंराज्यसंपदः ३५
सुधन्याजननीत्वस्यसुभाग्यासुमहोदया
यस्याःपुत्रोनिजगुणैर्लब्धवान्महतांपदम् ३६
इतिक्रुधाभाषितमार्तयातयामात्रास्वयाऽकरार्यदुरात्मसत्तमः
रोषंविधायात्मगतंपुनर्वचोजगादतांनिश्चयभृत्तपःप्रति ३७
रावणउवाच
जनन्याकर्णयवचोममगर्वसमन्वितम्
रत्नगर्भात्वमेवासियस्याःपुत्रास्त्रयोवयम् ३८
कोऽसौकीटःसधनदःक्वतपःस्वल्पकंपुनः

कालंकाकिंतुतद्राज्यंस्वल्पसेवकसंयुतम् ३९
मातःशृणुममोत्साहात्प्रतिज्ञांकरुणान्विते
नकेनापिकृतांकर्त्रामहाभाग्येहिकैकसि ४०
यद्यहंभुवनंसर्वंवशेनस्थापयामिवै
तपोभिर्दुष्कृतैःकृत्वाब्रह्मसंतोषकारकैः ४१
अन्नोदकेसदात्यक्त्वानिद्रांक्रीडांतथापुनः
चेत्तदापितृलोकस्यघातात्पापंभवेन्मम ४२
कुंभकर्णोऽपिकृतवान्विभीषणसमन्वितः
रावणेनसहभ्रात्रेत्युक्त्वागाद्गिरिकाननम् ४३
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
रावणोत्पत्तिर्नामषष्ठोऽध्यायः ६

सप्तमोऽध्यायः

अगस्त्यउवाच
अथोग्रंसतपोदैत्योदशवर्षसहस्रकम्
चकारभानुमद्दणाचपश्यन्नूर्ध्वपदेस्थितः १
कुंभकर्णोऽपिकृतवांस्तपःपरमदुश्चरम्
विभीषणस्तुधर्मात्माचचारपरमंतपः २
तदाप्रसन्नोभगवान्देवदेवःप्रजापतिः
देवदानवयक्षादिमुकुटैःपरिसेवितः ३
ददौराज्यंचसुमहद्भुवनत्रयभास्वरम्
वपुश्चकृतवान्रम्यंदेवदानवसेवितम् ४
तदासंतापितोभ्राताधनदोधर्मबुद्धिमान्
विमानंतुततोनीतंलंकाचनगरीहठात् ५
भुवनंतापितंसर्वंदेवाश्चैवदिवोगताः
हतवान्ब्राह्मणकुलंमुनीनांमूलकृंतनः ६
तदातिदुःखितादेवाःसेंद्राब्रह्माणमाययुः
स्तुतिंचक्रुर्महात्मानोदंडवत्प्रणतिंगताः ७
तेतुष्टुवुःसुराःसर्वेवाग्भिरर्थ्याभिरादृताः
ततःप्रसन्नोभगवान्किंकरोमीतिचाब्रवीत् ८

ततोनिवेदयांचक्रुर्ब्रह्मणेविबुधाःपुरः
दशग्रीवाच्चसंकष्टंतथानिजपराभवम् ९
न्नणंध्यात्वाययौब्रह्माकैलासंत्रिदशैःसह
तस्यशैलस्यपार्श्वेतुवैचित्र्येणसमाकुलाः १०
स्थिताःसंतुष्टुवुर्देवाःशंभुंशक्रपुरोगमाः
नमोभवायशर्वायनीलग्रीवायतेनमः ११
नमःस्थूलायसून्नमायबहुरूपायतेनमः
इतिसर्वमुखेनोक्तांवाणीमाकर्ण्यशंकरः १२
प्रोवाचनंदिनंदेवानानयेतिममांतिकम्
एतस्मिन्नंतरेदेवाश्राहूतानंदिनाचते १३
प्रविश्यांतःपुरेदेवाददृशुर्विस्मितेन्नणाः
ब्रह्मागत्यददर्शाथशंकरंलोकशंकरम् १४
गणकोटिसहस्रैस्तुसेवितंमोदशालिभिः
नग्नैर्विरूपैःकुटिलैर्धूसरैर्विकटैस्तथा १५
प्रणिपत्याग्रतःस्थित्वासहदेवैःपितामहः
उवाचदेवदेवेशंपश्यावस्थांदिवौकसाम् १६
कृपांकुरुमहादेवशरणागतवत्सल
दुष्टदैत्यवधार्थंत्वंसमुद्योगंविधेहिभोः १७
सोऽपितद्वचनंश्रुत्वादैन्यशोकसमन्वितम्
त्रिदशैःसहितैःसर्वैराजगामहरेःपदम् १८
तुष्टुवुर्मुनयःसर्वेससुरोरगकिन्नराः
जयमाधवदेवेशजयभक्तजनार्तिहन् १९
विलोकयमहादेवलोकयस्वस्वसेवकान्
इत्युच्चैर्जगदुःसर्वेदेवाःशर्वपुरोगमाः २०
इत्युक्तमाकर्ण्यसुराधिनाथोदृष्ट्वासुरार्तिंपरिचिंत्यविष्णुः
जगाददेवाञ्जलदोच्चयागिरादुःखंतुतेषांप्रशमंनयन्निव २१
भोब्रह्मशर्वेंद्रपुरोगमामराःशृणवंतुवाचंभवतांहितेरताम्
जानेदशग्रीवकृतंभयंवस्तन्नाशयाम्यद्यकृतावतारः २२
पुरीत्वयोध्यारविवंशजातैर्नृपैर्महादानमखादिसत्क्रियैः
प्रपालिताभूतलमंडनीयाविराजतेराजतभूमिभागैः २३

तस्यांदशरथोराजानिरपत्यःश्रियान्वितः
पालयत्यधुनाराज्यंदिक्चक्रजयवान्विभुः २४
सतुवंद्यादृष्यशृंगात्प्रार्थितात्पुत्रकाम्यया
पुत्रेष्ट्यांविधिनायज्वामहाबलसमन्वितः २५
ततोऽहप्रार्थितःपूर्वंतपसातेनभोःसुराः
पत्नीषुतिसृषुप्रीत्याचतुर्धापिभवत्कृते २६
रामलक्ष्मणशत्रुघ्नभरताख्यासमन्वितः
कर्तास्मिरावणोद्धारंसमूलबलवाहनम् २७
भवंतोऽपिस्वकैरंशैरवतीर्यचरंत्विह
ऋक्षवानररूपेणसर्वत्रपृथिवीतले २८
इत्युक्त्वाविररामाशुनभसीरितवाङ्मुने
देवाःश्रुत्वामहद्वाक्यंसर्वेसंहृष्टमानसाः २९
तेचक्रुर्गदितंयादृग्देवदेवेनधीमता
स्वैःस्वैरंशैर्महीपूर्णाऋक्षवानररूपिभिः ३०
योऽसौविष्णुर्महादेवोदेवानांदुःखनाशकः
सत्वमेवमहाराजभगवान्कृतविग्रहः ३१
भरतोऽयलक्ष्मणश्चशत्रुघ्नश्चमहामते
तावकांशाद्दशग्रीवोजनितश्चसुरार्दनः ३२
पूर्ववैरानुबंधेनजानकींहृतवान्पुनः
सत्वयानिहतोदैत्योब्रह्मराक्षसजातिमान् ३३
पुलस्त्यपुत्रोदैत्येंद्रःसर्वलोकैककंटकः
पातितःपृथिवीसर्वासुखमापमहेश्वर ३४
ब्राह्मणानांसुखंत्वद्यमुनीनांतापसंबलम्
शिवानिसर्वतीर्थानिसर्वेयज्ञाःसुसंहिताः ३५
त्वयिराज्ञिजगत्सर्वंसदेवासुरमानुषम्
सुखंप्रपेदेविश्वात्मञ्जगद्योनेनरोत्तम ३६
एतत्तेसर्वमाख्यातंयत्पृष्टोऽहत्वयानघ
उत्पत्तिश्चविपत्तिश्चमयामत्यनुसारतः ३७
इत्थंनिशम्यदितिजेंद्रकुलानुकारिवार्तांमहापुरुषईश्वरईशिताच
संरुद्धबाष्पगलदश्रुमुखारविंदोभूमौपपातसदसिप्रथितप्रभावः ३८

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
रावणोत्पत्तिविपत्तिकथनंनामसप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

शेषउवाच
वात्स्यायनमुनिश्रेष्ठकथापापप्रणाशिनी
ब्रह्मगयदेवदेवस्यसर्वधर्मैकरत्तितुः १
राजानंमूर्च्छितंदृष्ट्वाकुंभजन्मातपोनिधिः
शनैःशनैःकरेणाशुपस्पर्शाश्रुजगादच २
भोरामाश्वसिहित्तिप्रंकिमर्थमवसीदसि
भवान्दैत्यकुलच्छेत्तामहाविष्णुःसनातनः ३
भूतंभव्यंभवच्चैवजगत्स्थास्नुचरिष्णुच
त्वदृतेनास्तिसंचारीकिमर्थमिहमूर्च्छितः ४
श्रुत्वावाक्यंमहाराजःकुंभजन्मसमीरितम्
उत्तस्थौविगलन्नेत्रबाष्पपूरितसन्मुखः ५
उवाचदीनदीनंचविस्पष्टात्तरविस्तरम्
त्रपाभरनमन्मूर्तिर्ब्रह्मद्रोहपराङ्मुखः ६
श्रीरामउवाच
अहोमेपश्यताज्ञानंविमूढस्यदुरात्मनः
यद्ब्राह्मणकुलेरूढंहतवान्कामलोलुपः ७
महिलार्थेत्वहंविप्रंवेदशास्त्रविवेकवान्
हतवान्वाडवकुलंबुद्धिहीनोतिदुर्मतिः ८
इत्त्वाकूणांकुलेजातुब्राह्मणोनदुरुक्तिभाक्
ईदृशंकुर्वताकर्ममयैतत्सुकलंकितम् ९
येब्राह्मणास्तुपूजार्हादानसम्मानभोजनैः
तेमयानिहताविप्राःशरसंघातसंहितैः १०
काँल्लोकान्नुगमिष्यामिकुंभीपाकोऽपिदुःसहः
नतादृशंतीर्थमस्तियन्मांपावयितुंत्तमम् ११
नयज्ञोनतपोदानंनवाचैवव्रतादिकम्
यत्तुवैब्राह्मणद्रोग्धुर्ममपावनतारकम् १२

यैःकोपितंब्रह्मकुलंनरैर्निरयगामिभिः
तेनराबहुशोदुःखंभोद्त्यंतिनिरयंगताः १३
वेदामूलंतुधर्माणांवर्णाश्रमविवेकिनाम्
तन्मूलंब्राह्मणकुलंसर्ववेदैकशाखिनः १४
मूलच्छेत्तुर्ममौद्धत्यात्कोलोकोनुभविष्यति
किमद्यकरणीयंवैयेनमेहिशिवंभवेत् १५
शेषउवाच
विलपंतंभृशंरामंराजेंद्रंरघुपुंगवम्
मायामनुष्यवपुषंकुंभजन्माब्रवीद्वचः १६
अगस्त्यउवाच
माविषादंमहाधीरकुरुराजन्महामते
नतेब्राह्मणहत्यास्याद्दुष्टानांनाशमिच्छतः १७
त्वंपुराणःपुमान्साक्षादीश्वरःप्रकृतेःपरः
कर्ताहर्ताऽवितासाक्षीनिर्गुणःस्वेच्छयागुणी १८
सुरापोब्रह्महत्याकृत्स्वर्णस्तेयीमहाघकृत्
सर्वेत्वन्नामवादेनपूताःशीघ्रंभवंतिहि १९
इयंदेवीजनकजामहाविद्यामहामते
यस्याःस्मरणमात्रेणमुक्तायास्यंतिसद्गतिम् २०
रावणोऽपिनवैदैत्योवैकुंठेतवसेवकः
ऋषीणांशापतोऽवाप्तोदैत्यत्वंदनुजांतक २१
तस्यानुग्रहकर्तात्वंनतुहंताद्विजन्मनः
एवंसंचिंत्यमाभूयोनिजंशोचितुमर्हसि २२
इतिश्रुत्वाततोवाक्यंरामःपरपुरंजयः
उवाचमधुरंवाक्यंगद्गदस्वरभाषितम् २३
श्रीरामउवाच
पातकंद्विविधंपोक्तंज्ञाताज्ञातविभेदतः
ज्ञातंयद्बुद्धिपूर्वंहिअज्ञातंतद्विवर्जितम् २४
बुद्धिपूर्वंकृतंकर्मभोगेनैवविनश्यति
नश्येदनुशयादन्यदिदंशास्त्रविनिश्चितम् २५
कुर्वतोबुद्धिपूर्वंमेब्रह्महत्यांसुनिंदिताम्

नमेदुःखापनोदायसाधुवादःसुसंमतः २६
प्रब्रूहितादृशंमह्यंयादृशंपापदाहकम्
व्रतंदानंमखंकिंचित्तीर्थमाराधनंमहत् २७
येनमेविमलाकीर्तिर्लोकान्वैपावयिष्यति
पापाचाराप्तकालुष्यान्ब्रह्महत्याहतप्रभान् २८
शेषउवाच
इत्युक्तवंतंतंरामंजगादसतपोनिधिः
सुरासुरनमन्मौलिमणिनीराजितांघ्रिकम् २९
शृणुराममहावीरलोकानुग्रहकारक
विप्रहत्यापनोदायतवयद्वचनंब्रुवे ३०
सर्वंसपापंतरतियोऽश्वमेधंयजेतवै
तस्मात्त्वंयजविश्वात्मन्वाजिमेधेनशोभिना ३१
सप्ततंतुर्महीभर्त्रात्वयासाध्योमनीषिणा
महासमृद्धियुक्तेनमहाबलसुशालिना ३२
सवाजिमेधोविप्राणांहत्यायाःपापनोदनः
कृतवान्यंमहाराजोदिलीपस्तवपूर्वजः ३३
शतक्रतुःशतंकृत्वाक्रतूनांपुरुषर्षभः
पदमापामरावत्यांदेवदैत्यसुसेवितम् ३४
मनुश्चसगरोराजामरुत्तोनहुषात्मजः
एतेतेपूर्वजाःसर्वेयज्ञंकृत्वापदंगताः ३५
तस्मात्त्वंकुरुराजेंद्रसमर्थोऽसिसमंततः
भ्रातरोलोकपालाभावर्तंतेतवभावुकाः ३६
इत्युक्तमाकर्ण्यमुनेःसभाग्यवानरघूत्तमोब्राह्मणघातभीतः
पप्रच्छयागेसुमतिंचिकीर्षन्विधिंपुरावित्परिगीयमानः ३७

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेरघु-
नाथस्यागस्त्योपदेशोनामाष्टमोऽध्यायः ८

## नवमोऽध्यायः

श्रीरामउवाच
कीदृशोऽश्वस्तत्रभाव्यःकोविधिस्तत्रपूजने

कथंवाशक्यतेकर्तुंकेजेयास्तत्रवैरिणः १
अगस्त्यउवाच
गंगाजलसमानेनवर्णेनवपुषाशुभः
कर्णेश्यामोमुखेरक्तःपीतःपुच्छेसुलक्षितः २
मनोवेगःसर्वगतिरुच्चैःश्रवस्समप्रभः
वाजिमेधेहयःप्रोक्तःशुभलक्षणलक्षितः ३
वैशाखपूर्णमास्यांतुपूजयित्वायथाविधि
पत्रंलिखित्वाभालेतुस्वनामबलचिह्नितम् ४
मोचनीयःप्रयत्नेनरक्षकैःपरिरक्षितः
यत्रगच्छतियज्ञाश्वस्तत्रगच्छेत्सुरक्षकः ५
यस्तंबलान्निबध्नातिस्ववीर्यबलदर्पितः
तस्मात्प्रसभमानेयःपरिरक्षाकरैर्हयः ६
कर्त्रातावत्सुविधिनास्थातव्यंनियमादिह
मृगशृंगधरोभूत्वाब्रह्मचर्यसमन्वितः ७
व्रतंपालयमानस्ययावद्वर्षमतिक्रमेत्
तावद्दीनांधकृपणाःपरितोष्याधनादिभिः ८
अन्नंतुबहुशोदेयंधनंवाभूरिमारिष
यद्यत्प्रार्थयतेधीमांस्तत्तदेवददातिहि ९
एवंप्रकुर्वतःकर्मयज्ञःसंपूर्णतांगतः
करोतिसर्वपापानांनाशनंरिपुनाशन १०
तस्माद्भवान्समर्थोऽस्तिकरणेपालनेऽचने
कृत्वाकीर्तिंसुविमलांपावयान्याञ्जनान्नृप ११
श्रीरामउवाच
विलोकयद्विजश्रेष्ठवाजिशालांममाधुना
तादृशाःसंतिनोवाश्वाःशुभलक्षणलक्षिताः १२
इतिश्रुत्वातुतद्वाक्यमगस्त्यःकरुणाकरः
उत्तस्थौवीक्षमाणोऽययागार्हान्वाजिनःशुभान् १३
गत्वाथतत्रशालायांरामचंद्रसमन्वितः
ददर्शाश्वान्विचित्रांगान्मनोवेगान्महाबलान् १४
अवनितलगताःकिंवाजिराजस्यवंश्याःकिमथरघुपतीनामेकतःकीर्तिपिंडाः

किमिदममृतराशिर्वाहरूपेणसिंधोर्मुनिरितिमनसोंतर्विस्मयंप्रापपश्यन् १५
एकतःशोणदेहानांवाजिनांपंक्तिरुत्तमा
एकतःश्यामकर्णाश्चकस्तूरीकांतिसप्रभाः १६
एकतःकनकाभाश्चत्वन्यतोनीलवर्णिनः
एकतःशबलैर्वर्णैर्विशिष्टैर्वाजिभिर्वृताः १७
एवंपश्यन्मुनिःसर्वान्कौतुकाविष्टमानसः
ययावन्यत्रतान्द्रष्टुंयागयोग्यान्हयान्मुनिः १८
ददर्शतत्रशतशोबद्धांस्तादृशवर्णकान्
दृष्ट्वाविस्मयमापेदेसमुनिर्हर्षितांगकः १९
एकतःश्यामकर्णाश्चसर्वांगैःक्षीरसन्निभान्
पीतपुच्छान्मुखेरक्ताञ्छुभलक्षणलक्षितान् २०
निरीक्ष्यपरितोऽनघान्विमलनीरधारानिभान्मनोजवनशोभितान्विमलकीर्तिपुंज
प्रभान्
पयोनिधिविशोषकोमुनिरुवाचसीतापतिंविचित्रहयदर्शनाद्धृषितनेत्रवक्त्रप्रभः
२१
अगस्त्यउवाच
हयमेधक्रतौयोग्यान्वाहांस्तेबहुशःशुभान्
पश्यतोनेत्रयोर्मेऽद्यतृप्तिर्नास्तिरघूत्तम २२
रामचंद्रमहाभागसुरासुरनमस्कृत
यज्ञंकुरुमहाराजहयमेधंसुविस्तरम् २३
सुरपतिरिवसर्वान्यज्ञसंघान्करिष्यंस्तपनइवसुपर्वारातितोयंविशोष्यन्
हतरिपुगणमुख्यंसांपरायंविजित्यक्षितितलसुखभोगंकुर्विदंभूरिभाग २४
इत्येवंवाक्यवादेनपरितुष्टाखिलेंद्रियः
सर्वान्वैयज्ञसंभारानाजहारमनोहरान् २५
मुन्यन्वितोमहाराजःसरयूतीरमागतः
सुवर्णलांगलैर्भूमिंविचकर्षमहीयसीम् २६
विलिख्यभूमिंबहुशश्चतुर्योजनसंमिताम्
मंडपान्रचयामासयज्ञार्थंसनरोत्तमः २७
कुंडंतुविधिवत्कृत्वायोनिमेखलयान्वितम्
अनेकरत्नरचितंसर्वशोभासमन्वितम् २८

मुनीश्वरोमहाभागोवसिष्ठःसुमहातपाः
सर्वंतत्कारयामासवेदशास्त्रविधिश्रितम् २९
प्रेषितास्तेनमुनिनाशिष्यामुनिवराश्रमान्
कथयामासुरुद्युक्तंहयमेधेरघूत्तमम् ३०
स्राकारितास्तदासर्वेऋषयस्तपतांवराः
स्राजग्मुःपरमेशस्यदर्शनेत्वतिलालसाः ३१
नारदोसितनामाचपर्वतःकपिलोमुनिः
जातूकर्ण्योऽगिराव्यासस्राष्टिंषेणोऽत्रिरासुरिः ३२
हारीतोयाज्ञवल्क्यश्चसंवर्तःशुकसंज्ञितः
इत्येवमादयोरामहयमेधवरंययुः ३३
तान्सर्वान्पूजयामासरघुराजोमहामनाः
प्रत्युत्थानाभिवादाभ्यामर्घ्यविष्टरकादिभिः ३४
गांहिरण्यंददौतेभ्यःप्रायशोदृष्टविक्रमः
महद्भाग्यंत्वद्यमेऽस्तियद्यूयंदर्शनंगताः ३५
शेषउवाच
एवंसमाकुलेब्रह्मन्नृषिवर्यसमागमे
धर्मवार्ताबभूवाहोवर्णाश्रमसुसंमता ३६
वात्स्यायनउवाच
काधर्मवार्तातत्रासीत्किंवाकथितमद्भुतम्
साधवःसर्वलोकानांकारुण्यात्किमुताब्रुवन् ३७
शेषउवाच
तान्समेतान्मुनीन्दृष्ट्वारामोदाशरथिर्महान्
पप्रच्छसर्वधर्मांश्चसर्ववर्णाश्रमोचितान् ३८
तेतुपृष्टाहिरामेणधर्मान्प्रोचुर्महागुणान्
तान्प्रवक्ष्यामितेसर्वान्यथाविधिशृणुष्वतान् ३९
स्रृषयऊचुः
ब्राह्मणेनसदाकार्यंयजनाध्ययनादिकम्
वेदान्पठित्वाविरजोनैवगार्हस्थ्यमाविशेत् ४०
ब्राह्मणेनसदात्याज्यंनीचसेवानुजीवनम्
स्रापद्गतोऽपिजीवेतनश्ववृत्त्याकदाचन ४१

ऋतुकालाभिगमनंधर्मोऽयगृहिणःपरः
स्त्रीणांवरमनुस्मृत्याऽपत्यकामोथवाभवेत् ४२
दिवाभिगमनंपुंसामनायुष्यकरंमतम्
श्राद्धाहःसर्वपर्वाणियतस्त्याज्यानिधीमता ४३
तत्रगच्छेत्स्त्रियंमोहाद्धर्मात्प्रच्यवतेपरात्
ऋतुकालाभिगामीयःस्वदारनिरतश्चयः ४४
सर्वदाब्रह्मचारीहविज्ञेयःसगृहाश्रमी
ऋतुःषोडशयामिन्यश्चतस्रस्तासुगर्हिताः ४५
पुत्रदास्तासुयायुग्माश्रयुग्माःकन्यकाप्रदाः
त्यक्त्वाचंद्रमसंदुष्टंमघांमूलंविहायच ४६
शुचिःसन्निर्विशेत्पत्नींपुंनामर्क्षेविशेषतः
शुचिंपुत्रंप्रसूयेतपुरुषार्थप्रसाधनम् ४७
आर्षेविवाहेगोद्वंद्वंयदुक्तंतत्प्रशस्यते
शुल्कमण्वपिकन्यायाःकन्याक्रेतुस्तुपापकृत् ४८
वाणिज्यंनृपतेःसेवावेदानध्ययनंतथा
कुविवाहःक्रियालोपःकुलपातनहेतवः ४९
अन्नोदकपयोमूलफलैर्वापिगृहाश्रमी
गोदानेनतुयत्पुण्यंपात्रायविधिपूर्वकम् ५०
अनर्चितोऽतिथिर्गेहाद्भग्नाशोयस्यगच्छति
आजन्मसंचितात्पुण्यात्क्षणात्सहिबहिर्भवेत् ५१
पितृदेवमनुष्येभ्योदत्त्वाश्नीतामृतंगृही
स्वार्थंपचत्यघंभुंक्तेकेवलंस्वोदरंभरिः ५२
षष्ठ्यष्टम्योर्विशेत्पापंतैलेमांसेसदैवहि
चतुर्दश्यांतथामायांत्यजेत्क्षुरमंगनाम् ५३
रजस्वलांनसेवेतनाश्नीयात्सहभार्यया
एकवासानभुंजीतनभुंजीतोत्कटासने ५४
नाश्नंतींस्त्रियमीक्षेततेजःकामोनरोत्तमः
मुखेनोपधमेन्नाग्निंनग्नांनेक्षेतयोषितम् ५५
नांघ्रीप्रतापयेदग्नौनवस्त्वशुचिनिक्षिपेत्
प्राणिहिंसांनकुर्वीतनाश्नीयात्संध्ययोर्द्वयोः ५६

नाचक्षीतधयंतींगांनेंद्रचापंप्रदर्शयेत्
नदिवोद्धृतसारंचभक्षयेद्दधिनोनिशि ५७
स्त्रींधर्मिणींनाभिवादेन्नाद्यादातृप्तिरात्रिषु
तौर्यत्रिकप्रियोनस्यात्कांस्येपादौनधावयेत् ५८
नधारयेदन्यभुक्तंवासश्चोपानहावपि
नभिन्नभाजनेऽश्नीयान्नाश्नीतान्नंविदूषितम् ५९
संविशेन्नार्द्रचरणोनोच्छिष्टःक्वचिदाव्रजेत्
शयानोवानचाश्नीयान्नोच्छिष्टःसंस्पृशेच्छिरः ६०
नमनुष्यस्तुतिंकुर्यान्नात्मानमवमानयेत्
अभ्युद्यतंनप्रणमेत्परमर्माणिनोवदेत् ६१
एवंगार्हस्थ्यमाश्रित्यवानप्रस्थाश्रमंव्रजेत्
सस्त्रीकोवागतस्त्रीकोविरज्येतततःपरम् ६२
इत्येवमादयोधर्मागदिताऋृषिभिस्तदा
श्रुतारामेणमहतासर्वलोकहितैषिणा ६३

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेसर्व-
धर्मोपदेशोनामनवमोऽध्यायः ९

## दशमोऽध्यायः

शेषउवाच
इत्थंसंश्रृण्वतोधर्मान्वसंतःसमुपस्थितः
यत्रयज्ञक्रियादीनांप्रारंभःसुमहात्मनाम् १
दृष्ट्वातंसमयंधीमान्वसिष्ठःकलशोद्भवः
रामचंद्रंमहाराजंप्रत्युवाचयथोचितम् २
वसिष्ठउवाच
रामचंद्रमहाबाहोसमयःपर्यभूत्तव
हयोयत्रप्रमुच्येतयज्ञार्थंपरिपूजितः ३
सामग्रीक्रियतांतत्रआहूयंतांद्विजोत्तमाः
करोतुपूजांभगवान्ब्राह्मणानांयथोचिताम् ४
दीनांधकृपणानांचदानंस्वांतेसमुत्थितम्
ददातुविधिवत्तेषांप्रतिपूज्याधिमान्यच ५

भवान्कनकसत्पत्न्यादीक्षितोऽत्रव्रतंचर
भूमिशायीब्रह्मचारीवसुभोगविवर्जितः ६
मृगशृंगधरःकटयांमेखलाजिनदंडभृत्
करोतुयज्ञसंभारंसर्वद्रव्यसमन्वितम् ७
इतिश्रुत्वामहद्वाक्यंवसिष्ठस्ययथार्थकम्
उवाचलक्ष्मणंधीमान्नानार्थपरिबृंहितम् ८
श्रीरामउवाच
शृणुलक्ष्मणमद्वाक्यंश्रुत्वातत्कुरुसत्वरम्
हयमानययत्नेनवाजिमेधक्रियोचितम् ९
शेषउवाच
श्रुत्वावाक्यंरघुपतेःशत्रुजिल्लक्ष्मणस्तदा
सेनापतिमुवाचेदंवचोविविधवर्णनम् १०
लक्ष्मणउवाच
वीराकर्णयमेवचःसुमधुरंश्रुत्वात्वरातःपुनः
कार्यंतत्क्षितिपालमौलिमुकुटैर्घृष्टांघ्रिरामाज्ञया
सेनांकालबलप्रभंजनबलप्रोद्यत्समर्थांगिनीं
सज्जांसद्रथहस्तिपत्तिसुहयारोहैर्विधेह्यन्विताम् ११
सज्जीयतांवायुजवास्तुरंगास्तरंगमालालालितांघ्रिपाताः
सदश्वचारैर्बहुशस्त्रधारिभिःसंरोहितावैरिबलप्रहारिभिः १२
संलक्ष्यतांहस्तिनःपर्वताभाश्राधोरणैःप्रासकुंताग्रहस्तैः
शूरैःसास्त्रैर्भूरिदानोपहाराःक्षीबाणस्तेसर्वशस्त्रास्त्रपूर्णाः १३
विततबहुसमृद्धिभ्राजमानारथामेपवनजवनवेगैर्वाजिभिर्युज्यमानाः
विविधरिपुविनाशस्मारकैरायुधास्त्रैर्भृतवलभिविभागानीयतांसूतवृंदैः १४
पत्तयःशतशोमह्यमायांत्वस्त्राग्न्यपाणयः
हयमेधार्हवाहस्यरक्षणेविततोद्यमाः १५
इत्याकरार्यवचस्तस्यलक्ष्मणस्यमहात्मनः
सेनानीकालजिन्नामाकारयामाससज्जताम् १६
दशध्रुवकमंडितोलघुसुरोमशोभान्वितोविविक्तगलशुक्तिभृद्विततकंठकोश-
मणिः
मुखेविशदकांतिधृत्त्वसितकांतिभृत्कर्णयोर्व्यराजततदाहयोधृतकराग्ररश्मिच्छ

टः १७
कलासंशोभितमुखःस्फुरद्रत्नविशोभितः
मुक्ताफलानांमालाभिःशोभितोनिर्ययौहयः १८
श्वेतातपत्ररचितःसितचामरशोभितः
बहुशोभापरीतांगोनिर्ययौहयराट्ततः १९
अग्रतोमध्यतश्चैकेपृष्ठतःसैनिकास्तथा
देवाहरिंयथापूर्वंसेवंतेसेवनोचितम् २०
अथसैन्यंसमाहूयसर्वमाज्ञापयत्तदा
हस्त्यश्वरथपादातवृन्दैःसुबहुसंकुलम् २१
ततस्ततःसमेतानांसैन्यानांश्रूयतेध्वनिः
ततोदुंदुभिनादोऽभूत्तस्मिन्पुरवरेतदा २२
तन्निनादेनशूराणांप्रियेणमहतातदा
कंपंतिगिरिशृंगाणिप्रासादाविचलंतिच २३
हेषारवोमहानासीद्वाजिनांमुह्यतांनृप
रथांगघातसंघुष्टाधरासंचलतीवसा २४
चलितैर्गजयूथैश्चपृथ्वीरुद्धासमंततः
रजस्तुप्रचलत्तत्रजनांतर्द्धानमादधात् २५
निर्जगाममहासैन्यंछत्रैःसंछाद्यभास्करम्
सेनान्याकालजिन्नाम्नाप्रेरितंजनसंकुलम् २६
गर्जंतस्तलवीराग्र्याःकुर्वंतोरणसंभ्रमम्
रघुनाथस्ययागायसज्ञास्तेप्रययुर्मुदा २७
मृगमदमयमंगेष्वंगरागंदधानाःकुसुमविमलमालाशोभितस्वोत्तमांगाः
मुकुटकटकभूषाभूषितांगाःसमस्ताःप्रययुरवनिनाथप्रेरितास्तेऽपिसर्वे २८
इत्येवंतेमहाराजंययुःसेनाचरावराः
धनुर्धराःपाशधराःखड्गधाराःस्फुटक्रमाः २९
एवंशनैःशनैःप्राप्तोमंडपंयागचिह्नितम्
हयःखुरक्षततलांभूमिंकुर्वन्नभःप्लवन् ३०
रामोदृष्ट्वाहरिंप्राप्तंबहुसंतुष्टमानसः
वसिष्ठंप्रेरयामासक्रियाकर्तव्यतांप्रति ३१
वसिष्ठोराममाहूयस्वर्णपत्नीसमन्वितम्

प्रयोगंकारयामासब्रह्महत्यापनोदनम् ३२
ब्रह्मचर्यव्रतधरोमृगशृंगपरिग्रहः
तत्कर्मकारयामासरामःपरपुरंजयः ३३
प्रारेभेयागकर्मार्थंकुंडंमराडपसंमितम्
तत्राचार्योभवद्धीमान्वेदशास्त्रविचारवित् ३४
वसिष्ठोरघुनाथस्यकुलपूर्वगुरुर्मुनिः
ब्रह्मंस्तत्राचरद्ब्रह्मकर्मागस्त्यस्तपोनिधिः ३५
वाल्मीकिर्मुनिरध्वर्युर्मुनिःकरावस्तुद्वारपः
अ्रष्टौद्वाराणितत्रासन्सतोरणशुभानिवै ३६
द्वारिद्वारिद्वयंविप्रब्राह्मणस्याधिमंत्रवित्
पूर्वद्वारिमुनिश्रेष्ठौदेवलासितसंज्ञितौ ३७
दक्षिणद्वारिभूमानौकश्यपात्रीतपोनिधी
पश्चिमद्वारिऋृषभौजातूकर्ण्योऽथजाजलि ३८
उत्तरद्वारितुमुनीद्वौद्वितैकततापसौ
एवंद्वारविधिंकृत्वावसिष्ठःकलशोद्भवः ३९
हयवर्यस्यसत्पूजांकर्तुमारभतद्विज
सुवासिन्यःस्त्रियस्तत्रवासोलंकारभूषिताः ४०
हरिद्राक्षतगंधाद्यैःपूजयामासुरर्चितम्
नीराजनंततःकृत्वाधूपयित्वागुरूक्षणैः ४१
वर्धापनंततोवेश्याश्चक्रुस्तावाडवाज्ञया
एवंसंपूज्यविमलेभालेचंदनचर्चिते ४२
कुंकुमादिकगंधाढ्येसर्वशोभासमन्विते
बबंधभास्वरंपत्रंतप्तहाटकनिर्मितम् ४३
तत्रालिखद्दाशरथेःप्रतापबलमूर्जितम्
सूर्यवंशध्वजोधन्वीधनुर्दीक्षागुरुर्गुरुः ४४
यंदेवाःसासुराःसर्वेनमंतिमणिमौलिभिः
तस्यात्मजोवीरबलदर्पहारीरघूद्वहः ४५
रामचंद्रोमहाभागःसर्वशूरशिरोमणिः
तन्माताकोसलनृपपत्नीगर्भसमुद्भवा ४६
तस्याःकुक्षिभवंरत्नंरामःशत्रुक्षयंकरः

करोतिहयमेधंवैब्राह्मणेनसुशिक्षितः ४७
रावणाभिधविप्रेंद्रवधपापापनुत्तये
मोचितस्तेनवाहानांमुख्योऽसौवाजिनांवरः ४८
महाबलपरीवारपरिखाभिःसुरक्षितः
तद्रक्षकोऽस्तितद्भ्राताशत्रुघ्नोलवणांतकः ४९
हस्त्यश्वरथपादातसेनासंघसमन्वितः
यस्यराज्ञइतिश्रेष्ठोमानःस्यात्स्वबलोन्मदात् ५०
वयंधनुर्धराःशूराःश्रेष्ठावयमिहोत्कटाः
तेगृह्णंतुबलाद्वाहंरत्नमालाविभूषितम् ५१
मनोवेगंकामजवंसर्वगत्यधिभास्वरम्
ततोमोचयिताभ्राताशत्रुघ्नोलीलयाहयम् ५२
शरासनविनिर्मुक्तवत्सदंतैःशिखाशितैः ५३
इत्येवमादिविलिलेखमहामुनींद्रः
श्रीरामचंद्रभुजवीर्यलसत्प्रतापम्
शोभानिधानमतिचंचलवायुवेगं
पातालभूतलविशेषगतिंमुमोच ५४
शत्रुघ्नमादिदेशाथरामःशस्त्रभृतांवरः
याहिवाहस्यरक्षार्थंपृष्ठतःस्वैरगामिनः ५५
शत्रुघ्नगच्छवाहस्यमार्गंभद्रंभवेत्तव
भवेतांशत्रुविजयौरिपुकर्षणतेभुजौ ५६
येयोद्धारःप्रतिरणगतास्तेत्वयावारणीया-
वाहंरक्षस्वकगुणगणैःसंयुतःसन्महोर्व्याम्
सुप्तान्भ्रष्टान्विगतवसनान्भीतभीतांस्तुनम्रां-
स्तान्माहन्याःसुकृतकृतिनोयेनशंसंतिकर्म ५७
विरथाभयसंत्रस्तायेवदंतिवयंतव
तेत्वयानहिहंतव्याःशत्रुघ्नसुकृतैषिणा ५८
योहन्याद्विमदंमत्तंसुप्तंमग्नंभयातुरम्
तावकोऽहब्रुवाणंचसव्रजत्यधमांगतिम् ५९
परस्वेचित्तवृत्तिंत्वंमाकृथाःपारदारिके
नीचेरतिंनकुर्वीथाःसर्वसद्गुणपूरितः ६०

वृद्धानांप्रेरणंपूर्वंमाकुर्वीथारणंजय
पूज्यपूजातिक्रमंत्वंमाविधेहिदयान्वितः ६१
गांविप्रंचनमस्कुर्यावैष्णवंधर्मसंयुतम्
अभिवाद्ययतोगच्छेस्तत्रसिद्धिमवाप्नुयाः ६२
विष्णुःसर्वेश्वरःसाक्षीसर्वव्यापकदेहभृत्
येतदीयामहाबाहोतद्रूपाविचरंतिहि ६३
येस्मरंतिमहाविष्णुंसर्वभूतहृदिस्थितम्
तेमंतव्यामहाविष्णुसमरूपारघूद्वह ६४
यस्यस्वीयोनपारक्योयस्यमित्रसमोरिपुः
तेवैष्णवाःक्षणादेवपापिनंपावयंतिहि ६५
येषांप्रियंभागवतंयेषांवैब्राह्मणाःप्रियाः
वैकुंठात्प्रेषितास्तेऽत्रलोकपावनहेतवे ६६
येषांवक्त्रेहरेर्नामहृदिविष्णुःसनातनः
उदरेविष्णुनैवेद्यःसश्वपाकोऽपिवैष्णवः ६७
येषांवेदाःप्रियतमानचसंसारजंसुखम्
स्वधर्मनिरतायेचतान्नमस्कुर्विहान्वितान् ६८
शिवेविष्णौनवाभेदोनचब्रह्ममहेशयोः
तेषांपादरजःपूतंवहाम्यघविनाशनम् ६९
गौरीगंगामहालक्ष्मीर्यस्यनास्तिपृथक्तया
तेमंतव्यानराःसर्वेस्वर्गलोकादिहागताः ७०
शरणागतरक्षीचमानदानपरायणः
यथाशक्तिहरेःप्रीत्यैसज्ञेयोवैष्णवोत्तमः ७१
यस्यनाममहापापराशिंदहतिसत्वरम्
तदीयचरणद्वंद्वेभक्तिर्यस्यसवैष्णवः ७२
इंद्रियाणिवशेयेषांमनोऽपिहरिचिंतकम्
तान्नमस्कृत्यपूयात्सद्याजन्ममरणांतिकात् ७३
परस्त्रियंत्वंकरवालवत्त्यजन्भवेर्यशोभूषणभूतिभूमिः
एवंममादेशमथाचरंश्चलभेःपरंधामसुयोगमीड्यम् ७४

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
शत्रुघ्नशिक्षाकथनंनामदशमोऽध्यायः १०

## एकादशोऽध्यायः

शेषउवाच
एवमाज्ञाप्यभगवान्रामश्चामित्रकर्षणः
वीरानालोकयन्भूयोजगादशुभयागिरा १
शत्रुघ्नस्यममभ्रातुर्वाजिरक्षाकरस्यवै
कोगंतापृष्ठतोरक्षंस्तन्निदेशप्रपालकः २
यःसर्ववीरान्प्रतिमुख्यमागतान्विनिर्जयेन्मर्मभिदस्त्रसंघैः
गृह्णात्वसौमेकरवीटकंतद्भूमौयशःस्वंप्रथयन्सुविस्तरम् ३
इत्युक्तवतिरामेतुपुष्कलोभरतात्मजः
जग्राहवीटकंतस्माद्रघुराजकरांबुजात् ४
स्वामिन्गच्छामिशत्रुघ्नपृष्ठरक्षाकरोऽन्वहम्
सन्नद्धःसर्वशस्त्रास्त्रचापबाणधरःप्रभो ५
सर्वमद्यक्षितितलंत्वत्प्रतापोविजेष्यते
एतेनिमित्तभूतावैरामचंद्रमहामते ६
भवत्कृपातःसकलंससुरासुरमानुषम्
उपस्थितंप्रयुद्धायतन्निषेधेक्षमोह्यहम् ७
सर्वंस्वामीज्ञास्यतियन्ममविक्रमदर्शनात्
एषगंतास्मिशत्रुघ्नपृष्ठरक्षाप्रकारकः ८
एवंब्रुवंतंभरतात्मजंसप्रस्तूयसाध्वित्यनुमोदमानः
शशंससर्वान्कपिवीरमुख्यान्प्रभंजनोद्भूतमुखान्हरिःप्रभुः ९
भोहनूमन्महावीरशृणुमद्वाक्यमादृतः
त्वत्प्रसादान्मयाप्राप्तमिदंराज्यमकंटकम् १०
सीतयाममसंयोगेयोभवाञ्जलधिंतरेः
चरितंतद्धरेवेद्मिसर्वंतवकपीश्वर ११
त्वंगच्छममसैन्यस्यपालकःसन्ममाज्ञया
शत्रुघ्नःसोदरोमह्यंपालनीयस्त्वहंयथा १२
यत्रयत्रमतिभ्रंशःशत्रुघ्नस्यप्रजायते
तत्रतत्रप्रबोद्धव्योभ्रातामममहामते १३
इतिश्रुत्वामहद्वाक्यंरामचंद्रस्यधीमतः
शिरसातत्समाधायप्रणाममकरोत्तदा १४

अथादिशन्महाराजोजांबवंतंकपीश्वरम्
रघुनाथस्यसेवायैकपिषूत्तमतेजसम् १५
अंगदोगवयोमैंदस्तथादधिमुखःकपिः
सुग्रीवःप्लवगाधीशःशतवल्यन्विकौकपी १६
नीलोनलोमनोवेगोऽधिगंतावानरांगजः
इत्येवमादयोयूयंसज्जीभूताभवंतुभोः १७
सर्वैर्गजैःसदश्वैश्वतप्तहाटकभूषणैः
कवचैःसशिरस्त्राणैर्भूषितायांतुसत्वराः १८
शेषउवाच
सुमंत्रमाहूयसुमंत्रिणंतदाजगादरामोबलवीर्यशोभनः
अमात्यमौलेवदकेऽत्रयोज्यानराहयंपालयितुंसमर्थाः १९
तदुक्तमेवमाकर्ण्यजगादपरवीरहा
हयस्यरक्षणेयोग्यान्बलिनोऽत्रनराधिपान् २०
रघुनाथशृणुष्वैतान्नववीरान्सुसंहितान्
धनुर्धरान्महाविद्यान्सर्वशस्त्रास्त्रकोविदान् २१
प्रतापाग्र्यंनीलरत्नंतथालक्ष्मीनिधिंनृपम्
रिपुतापंचोग्रहयंतथाशस्त्रविदंनृपम् २२
राजन्योऽसौनीलरत्नोमहावीरोरथाग्रणीः
सएवलक्षंरक्षेतलक्षंयुध्येतनिर्भयः २३
अक्षौहिणीभिर्दशभिर्यातुवाहस्यरक्षणे
दंशितैस्सशिरस्त्राणैर्ममबाहुभिरुद्धतैः २४
प्रतापाग्र्योयोह्ययंचरिपुगर्वमशातयत्
सव्यापसव्यबाणानांमोक्तासर्वास्त्रवित्तमः २५
एषोऽक्षौहिणिविंशत्यायातुयज्ञहयावने
सन्नद्धोरिपुनाशाययुवाकोदंडदंडभृत् २६
तथालक्ष्मीनिधिस्त्वेषयातुराजन्यसत्तमः
यस्तपोभिःशतधृतिंप्रसाद्यास्त्राणिचाभ्यसत् २७
ब्रह्मास्त्रंपाशुपत्यास्त्रंगारुडंनागसंज्ञितम्
मायूरंनाकुलंरौद्रंवैष्णवंमेघसंज्ञितम् २८
वज्रंपार्वतसंज्ञंचतथावायव्यसंज्ञितम्

इत्यादिकानामस्त्राणांसंप्रयोगविसर्गवित् २९
सएषनिजसैन्यानामक्षौहिण्यैकयायुतः
प्रयातुशूरमुकुटःसर्ववैरिप्रभंजनः ३०
रिपुतापोऽयमेवाद्यगच्छत्वग्रयोधनुर्भृताम्
सर्वशस्त्रास्त्रकुशलोरिपुवंशदवानलः ३१
गच्छतात्सेनयाबह्व्याचतुरंगसमेतया
शत्रुघ्नाज्ञांशिरस्येतेदधत्वद्यबलोत्कटाः ३२
उग्राश्वोऽपिमहाराजातथाशस्त्रविदेषच
सर्वेयांतुसुसंनद्धास्तववाहस्यपालकाः ३३
इतिभाषितमाकर्ण्यमंत्रिणःप्रजहर्षच
आज्ञापयामासचतान्सुमंत्रकथितान्भटान् ३४
तेऽनुज्ञांरघुनाथस्यप्राप्यमोदंप्रपेदिरे
चिरकालंसांपरायंवांच्छंतोयुद्धदुर्मदाः ३५
सन्नद्धाःकवचाद्यैश्चतथाशस्त्रास्त्रवर्तनैः
ययुःशत्रुघ्नसंवासंसीतापतिप्रणोदिताः ३६
शेषउवाच
अथोक्तऋषिणारामोविधिनापूजयत्क्रमात्
आचार्यादीनृषीन्सर्वान्यथोक्तवरदक्षिणैः ३७
आचार्यायददौरामोहस्तिनंषष्टिहायनम्
हयमेकंमनोवेगंरत्नमालाविभूषितम् ३८
पौरटंरथमेकंचमणिरत्नविभूषितम्
चतुर्भिर्वाजिभिर्युक्तंसर्वोपस्करसंयुतम् ३९
मणिलक्षंतुप्रत्यक्षंमुक्ताफलतुलाशतम्
विद्रुमस्यतुलानांतुसहस्रंस्फुटतेजसाम् ४०
ग्राममेकंसुसंपन्नंनानाजनसमाकुलम्
विचित्रसस्यनिष्पन्नंविविधैर्मंदिरैर्वृतम् ४१
ब्रह्मणेऽपितथैवादाद्धोत्रेऽप्यध्वर्यवेददौ
ऋत्विग्भ्योभूरिशोदत्त्वाप्रणनामरघूत्तमः ४२
सर्वेतेविविधावाग्भिराशीर्भिरभिपूजिताः
चिरंजीवमहाराजरामचन्द्ररघूद्वह ४३

कन्यादानंभूमिदानंगजदानंतथैवच
अश्वदानंस्वर्णदानंतिलदानंसमौक्तिकम् ४४
अन्नदानंपयोदानमभयंदांनमुत्तमम्
रत्नदानानिसर्वाणिविप्रेभ्यश्चादिशन्महान् ४५
देहिदेहिधनंदेहिमानेतिब्रूहिकस्यचित्
ददात्वन्नंददात्वन्नंसर्वभोगसमन्वितम् ४६
इत्थंप्रावर्ततमखोरघुनाथस्यधीमतः
सदक्षिणोद्विजवरैःपूर्णःसर्वशुभक्रियः ४७
अथरामानुजोगत्वामातरंप्रणनामह
आज्ञापयाश्वरक्षार्थमेषगच्छामिशोभने ४८
त्वत्कृपातोरिपुकुलंजित्वाशोभासमन्वितः
आयास्यामिमहाराजैर्हयवर्यसमन्वितः ४९
मातोवाच
पुत्रगच्छमहावीरशिवाःपंथानएवते
सर्वान्रिपुगणाञ्जित्वापुनरागच्छसन्मते ५०
पुष्कलंपालयनिजभ्रातृजंधर्मवित्तमम्
महाबलिनमद्यापिबालकंलीलयायुतम् ५१
पुत्रागच्छसिचेद्युक्तःपुष्कलेनशुभान्वितः
तदाममप्रमोदःस्यादन्यथाशोकभागहम् ५२
इतिसंभाष्यमाणांस्वांमातरंप्रत्युवाचसः
त्वदीयचरणद्वंद्वंस्मरन्प्राप्स्यामिशोभनम् ५३
पुष्कलंपालयित्वाहंनिजांगमिवशोभने
स्वनामसदृशंकृत्वापुनरेष्यामिमोदवान् ५४
इत्युक्त्वाप्रययौवीरोरामंसमखमंडपे
आसीनंमुनिवर्याग्र्यैर्यज्ञवेषधरंवरम् ५५
उवाचमतिमान्वीरःसर्वशोभासमन्वितः
रामाज्ञापयरक्षार्थंहयस्यानुज्ञयातव ५६
रघुनाथोऽपितच्छ्रुत्वाभद्रमस्त्वितिचाब्रवीत्
बालंस्त्रियंप्रमत्तंत्वंमाहन्याःशस्त्रवर्जितम् ५७
तदालक्ष्मीनिधिर्भ्राताजानक्याजनकात्मजः

प्रहस्यकिंचिन्नयनेनर्तयन्राममब्रवीत् ५८
लक्ष्मीनिधिरुवाच
रामचंद्रमहाबाहोसर्वधर्मपरायण
शत्रुघ्नंशिक्षयतथायथालोकोत्तरोभवेत् ५९
कुलोचितंकर्मकुर्वन्नग्रजाचरितंतथा
गच्छेत्सपरमंधामतेजोबलसमन्वितम् ६०
त्वयाप्रोक्तंमहाराजब्राह्मणंनावमानयेत्
पित्रातवहतोविप्रःपितृभक्तिपरायणः ६१
त्वयापिसुमहत्कर्मकृतंलोकविगर्हितम्
अवध्यांमहिलांयस्त्वंहतवान्नियतंततः ६२
अग्रजोऽस्यमहाराजकृतवान्यंपराक्रमम्
सनकेनकृतःपूर्वंराक्षस्याःकर्णकर्तनम् ६३
एवंकरिष्यतिनृपःशत्रुघ्नःशिक्षयातव
यदिनायंतथाकुर्यात्कुलस्यासदृशंभवेत् ६४
इत्युक्तवंतंतंरामःप्रत्युवाचहसन्निव
मेघगंभीरयावाचासर्ववाक्यविशारदः ६५
शृणवंतुयोगिनःशांताःसमदुःखसुखाःपुनः
जानंत्यपारसंसारनिस्तारतरणादिकम् ६६
येशूराःसमहेष्वासाःसर्वशस्त्रास्त्रकोविदाः
तेचजानंतियुद्धस्यवार्त्तांनतुभवादृशाः ६७
परोपतापिनोयेवैयेचोत्पथविसारिणः
तेहंतव्यानृपैःसर्वैःसर्वलोकहितैषिभिः ६८
इत्युक्तमाकर्ण्यसभासदस्तेसर्वेस्मितंचक्रुररिंदमस्य
कुंभोद्भवःपूजितमेनमश्वंविमोचयामाससुशोभितंहि ६९
इमंमंत्रंसमुच्चार्यवसिष्ठःकलशोद्भवः
कराग्रेणस्पृशन्नश्वंमुमोचजयकांक्षया ७०
वाजिन्गच्छयथालीलंसर्वत्रधरणीतले
यागार्थेमोचितोयेनपुनरागच्छसत्वरः ७१
अश्वस्तुमोचितःसर्वैर्भटैःशस्त्रास्त्रकोविदैः
परीतःप्रययौप्राचींदिशंवायुजवान्वितः ७२

प्रचचारबलंसर्वंकंपयद्धरणीतलम्
शेषोऽपिकिंचिन्नतयाफणयाधृतवान्भुवम् ७३
दिशःप्रसेदुःपरितःक्ष्मातलंशोभयान्वितम्
वायवस्तंतुशत्रुघ्नंपृष्ठतोमंदगामिनः ७४
शत्रुघ्नस्यप्रयाणायाभ्युद्यतस्यभुजोऽस्फुरत्
दक्षिणःशुभमाशंसीजयायचबभूवह ७५
पुष्कलःस्वगृहंरम्यंप्रविवेशसमृद्धिमत्
वितर्दिभिर्वलक्षाभिःशोभितंरत्नवेदिकम् ७६
तत्रापश्यन्निजांभार्यांपतिव्रतपरायणाम्
किंचित्स्वदर्शनाद्धृष्टांभर्तृदर्शनलालसाम् ७७
मुखारविंदेनचनागवल्लीदलंसुकर्पूरयुतंचचर्वती
नासाफलंतोयभवंमहाधनंबाह्वोर्मृणालीसदृशोःसुकंकणे ७८
कुचौतुमालूरफलोपमौवरौनितंबबिंबंवरनीविशोभितम्
पादौतुलाकोटिधरौसुकोमलौदधत्यहोएक्षतसत्पतिंस्वकम् ७९
परिरभ्यप्रियांधीरोगद्गदस्वरभाषिणीम्
तदुरोजपरीरंभनिर्भरीकृतदेहकाम् ८०
उवाचभद्रेगच्छामिशत्रुघ्नपृष्ठरक्षकः
रामाज्ञयायाज्ञमश्वंपालयन्रथसंयुतः ८१
त्वयामेमातरःपूज्याःपादसंवाहनादिमिः
तदुच्छिष्टंहिभुंजानातत्कर्मकरणादरा ८२
सर्वाःपतिव्रतानार्योलोपामुद्रादिकाःशुभाः
नावमान्यास्त्वयाभीरुस्वतपोबलशोभिताः ८३

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेहयमोचन-
पुष्कलभार्यासमागमोनामएकादशोऽध्यायः ११

## द्वादशोऽध्यायः

शेषउवाच
इत्युक्तवंतंस्वपतिंवीक्ष्यप्रेम्णासुनिर्भरम्
प्रत्युवाचहसंतीवकिंचिद्गद्गदभाषिणी १
नाथतेविजयोभूयात्सर्वत्ररणमंडले

शत्रुघ्नाज्ञाप्रकर्तव्याहयरक्षायथाभवेत् २
स्मरणीयाहिसर्वत्रसेविकात्वत्पदानुगा
कदापिमानसंनाथत्वत्तोनान्यत्रगच्छति ३
परमायोधनेकांतस्मर्तव्याहंनजातुचित्
सत्यांमयितवस्वांतेयुद्धेविजयसंशयः ४
पद्मनेत्रतथाकार्यमूर्मिलाद्यायथामम
हास्यंनैवप्रकुर्वंतिमांवीक्ष्यकरताडनैः ५
इयंपत्नीमहाभीरोःसंग्रामेप्रपलायितुः
कातरायर्हियुद्ध्यंतिशूराणांसमयःकुतः ६
इत्येवंनहसंत्युच्चैर्यथामेदेवरांगनाः
तथाकार्यंमहाबाहोरामस्यहयरक्षणे ७
योद्धात्वमादौसर्वत्रपरेयेतवपृष्ठतः
धनुष्टंकारबधिराःक्रियंतांबलिनःपरे ८
तवप्रोद्यत्करांभोजकरवालभियाबलम्
परेषांभवतात्क्षिप्रमन्योन्यभयव्याकुलम् ९
कुलंमहदलंकार्यंपरान्विजयतात्वया
गच्छस्वामिन्महाबाहोतवश्रेयोभवत्विह १०
इदंधनुर्गृहाणाशुमहद्गुणविभूषितम्
यस्यगर्जितमाकर्ण्यवैरिवृंदंभयातुरम् ११
इमौतेत्विषुधीवीरबध्येतांशंयथाभवेत्
वैरिकोटिविनिष्पेषबाणकोटिसुपूरितौ १२
कवचंत्विदमाधेहिशरीरेकामसुंदरे
वज्रप्रभामहादीप्तिहतसंतमसंदृढम् १३
शिरस्त्राणंनिजोत्तंसेकुरुकांतमनोरमम्
इमेवतंसेविशदेमणिरत्नविभूषिते १४
इतिसुविमलवाचंवीरपुत्रींप्रपश्यन्
नयनकमलदृष्ट्यावीक्षमाणस्तदंगम्
अधिगतपरिमोदोभारतिःशत्रुजेता
रणकरणसमर्थस्तांजगादातिधीरः १५
पुष्कलउवाच

कांतेयत्त्वंवदसिमांतथासर्वंचराम्यहम्
वीरपत्नीभवेत्कीर्तिस्तवकांतिमतीप्सिता १६
इतिकांतिमतीदत्तंकवचंमुकुटंवरम्
धनुर्महेषुधीखड्गंसर्वंजग्राहवीर्यवान् १७
परिधायचतत्सर्वंबहुशोभासमन्वितः
शुशुभेऽतीवसुभटःसर्वशस्त्रास्त्रकोविदः १८
तमस्त्रशस्त्रशोभाढ्यंवीरमालाविभूषितम्
कुंकुमागुरुकस्तूरीचंदनादिकचर्चितम् १९
नानाकुसुममालाभिराजानुपरिशोभितम्
नीराजयामासमुहुस्तत्रकांतिमतीसती २०
नीराजयित्वाबहुशःकिरंतीमौक्तिकैर्मुहुः
गलदश्रुचलन्नेत्रापरिरेभेपतिंनिजम् २१
दृढंसपरिरभ्यैतांचिरमाश्वासयत्तदा
वीरपत्निकांतिमतिविरहंमाकृथामम २२
एषगच्छामिसविधेतवभामेपतिव्रते
इत्युक्त्वातांनिजांपत्नींरथमारुरुहेवरम् २३
तंप्रयांतंपतिंश्रेष्ठंनयनैर्निमिषोज्झितैः
विलोकयामासतदापतिव्रतपरायणा २४
सययौजनकंद्रष्टुंजननींप्रेमविह्वलाम्
गत्वापितरमंबांचववंदेशिरसामुदा २५
मातापुत्रंपरिष्वज्यस्वांकमारोपयत्तदा
मुंचंतीबाष्पनिचयंस्वस्त्यस्त्वितिजगादसा २६
पितरंप्राहभरतंरामोयज्ञकरःपरः
पालनीयोलक्ष्मणेनभवद्भिश्चमहात्मभिः २७
आज्ञप्तोऽसौजनन्याचपित्राहृषितयागिरा
ययौशत्रुघ्नकटकंमहावीरविभूषितम् २८
रथिभिःपत्तिभिर्वीरैःसदश्वैःसादिभिर्वृतः
ययौमुदारयुक्तंसमहायज्ञहयाग्रणीः २९
गच्छन्पांचालदेशांश्चकुरूंश्चैवोत्तरान्कुरून्
दशार्णाञ्छ्रीविशालांश्चसर्वशोभासमन्वितः ३०

तत्रतत्रोपशृणवानोरघुवीरयशोऽखिलम्
रावणासुरघातेनभक्तरक्षाविधायकम् ३१
पुनश्चहयमेधादिकार्यमारभ्यपावनम्
यशोवितन्वन्भुवनेलोकान्रामोऽविताभयात् ३२
तेभ्यस्तुष्टोददौहारान्रत्नानिविविधानिच
महाधनानिवासांसिशत्रुघ्नःप्रवरोमहान् ३३
सुमतिर्नामतेजस्वीसर्वविद्याविशारदः
रघुनाथस्यसचिवःशत्रुघ्नानुचरोवरः ३४
ययौतेनमहावीरोग्रामाञ्जनपदान्बहून्
रघुनाथप्रतापेननकोपिहृतवान्हयम् ३५
देशाधिपायेबहवोमहाबलपराक्रमाः
हस्त्यश्वरथपादातचतुरंगसमन्विताः ३६
संपदोबहुशोनीत्वामुक्तामाणिक्यसंयुताः
शत्रुघ्नंहयरक्षार्थमागतंप्रणतामुहुः ३७
इदंराज्यंधनंसर्वंसपुत्रपशुबांधवम्
रामचंद्रस्यसर्वंहिनमदीयंरघूद्वह ३८
एवंतदुक्तमाकर्ण्यशत्रुघ्नःपरवीरहा
आज्ञांस्वांतत्रसंज्ञाप्यययौतैःसहितःपथि ३९
एवंक्रमेणसंप्राप्तःशत्रुघ्नोहयसंयुतः
अहिच्छत्रांपुरींब्रह्मन्नानाजनसमाकुलाम् ४०
ब्रह्मद्विजसमाकीर्णांनानारत्नविभूषिताम्
सौवर्णैःस्फाटिकैर्हर्म्यैर्गोपुरैःसमलंकृताम् ४१
यत्ररंभातिरस्कारकारिण्यःकमलाननाः
दृश्यंतेसर्वहर्म्येषुललनालीलयान्विताः ४२
यत्रस्वाचारललिताःसर्वभोगैकभोगिनः
धनदानुचरायद्वत्तथालीलासमन्विताः ४३
यत्रवीराधनुर्हस्ताःशरसंधानकोविदाः
कुर्वंतितत्रराजानंसुहृष्टंसुमदाभिधम् ४४
एवंविधंददर्शासौनगरंदूरतःप्रभुः
पार्श्वेतस्यपुरश्रेष्ठमुद्यानंशोभयान्वितम् ४५

पुन्नागैर्नागचंपैश्चतिलकैर्देवदारुभिः
अशोकैःपाटलैश्चूतैर्मंदारैःकोविदारकैः ४६
आम्रजंबुकदंबैश्चप्रियालपनसैस्तथा
शालैस्तालैस्तमालैश्चमल्लिकाजातियूथिभिः ४७
नीपैःकदंबैर्बकुलैश्चंपकैर्मदनादिभिः
शोभितंसददर्शाथशत्रुघ्नःपरवीरहा ४८
हयोगतस्तद्वनमध्यदेशे
तमालतालादिसुशोभितेवै
ययौततःपृष्ठतएववीरो
धनुर्धरैःसेवितपादपद्मः ४९
ददर्शतत्ररचितंदेवायतनमद्भुतम्
इंद्रनीलैश्चवैडूर्यैस्तथामारकतैरपि ५०
शोभितंसुरसेवार्हंकैलासप्रस्थसन्निभम्
जातरूपमयैःस्तंभैःशोभितंसद्मनांवरम् ५१
दृष्ट्वातद्रघुनाथस्यभ्रातादेवालयंवरम्
पप्रच्छसुमतिंस्वीयंमंत्रिणंवदतांवरम् ५२
शत्रुघ्नउवाच
वदामात्यवरेदंकिंकस्यदेवस्यकेतनम्
कादेवतापूज्यतेऽत्रकस्यहेतोःस्थितानघ ५३
एवमाकर्ण्यसर्वज्ञोमंत्रविन्निजगादह
शृणुष्वैकमनावीरयथावदिहसर्वशः ५४
कामाक्षायाःपरंस्थानंविद्धिविश्वैकशर्मदम्
यस्यादर्शनमात्रेणसर्वसिद्धिःप्रजापते ५५
देवासुरास्तुयांस्तुत्वानत्वाप्राप्ताखिलांश्रियम्
धर्मार्थकाममोक्षाणांदात्रीभक्तानुकंपिनी ५६
याचितासुमदेनात्राहिच्छत्रापतिनापुरा
स्थिताकरोतिसकलंभक्तानांदुःखहारिणी ५७
तांनमस्कुरुशत्रुघ्नसर्ववीरशिरोमणे
नत्वाशुसिद्धिंप्राप्नोषिससुरासुरदुर्ल्लभाम् ५८
इतिश्रुत्वाथतद्वाक्यंशत्रुघ्नःशत्रुतापनः

पप्रच्छसकलांवार्तांभवान्याःपुरुषर्षभः ५९
शत्रुघ्नउवाच
कोऽहिच्छत्रापतीराजासुमदःकिंतपःकृतम्
येनेयंसर्वलोकानांमातातुष्टात्रसंस्थिता ६०
वदसर्वंमहामात्यनानार्थपरिबृंहितम्
यथावत्त्वंहिजानासितस्माद्वदमहामते ६१
सुमतिरुवाच
हेमकूटोगिरिःपूतःसर्वदेवोपशोभितः
तत्रास्तितीर्थंविमलमृषिवृंदसुसेवितम् ६२
सुमदोहितपस्तेपेहतमातृपितृप्रजः
अरिभिःसर्वसामंतैर्जगामातपसेहितम् ६३
वर्षाणित्रीणिसपदात्वेकेनमनसास्मरन्
जगतांमातरंदध्यौनासाग्रस्तिमितेक्षणः ६४
वर्षाणित्रीणिशुष्काणांपर्णानांभक्षणंचरन्
चकारपरमुग्रंसतपःपरमदुश्चरम् ६५
अब्दानित्रीणिसलिलेशीतकालेममज्जसः
ग्रीष्मेचचारपंचाग्नीन्प्रावृट्सुजलदोन्मुखः ६६
त्रीणिवर्षाणिपवनंसंरुध्यस्वांतगोचरम्
भवानींसंस्मरन्धीरोनचकिंचनपश्यति ६७
वर्षेतुद्वादशेऽतीतेदृष्ट्वैतत्परमंतपः
विभाव्यमनसातीवशक्रःपस्पर्धतंभयात् ६८
आदिदेशसकामंतुपरिवारपरीवृतम्
अप्सरोभिःसुसंयुक्तंब्रह्मेंद्रादिजयोद्यतम् ६९
गच्छकामसखेमह्यंप्रियमाचरमोहन
सुमदस्यतपोविघ्नंसमाचरयथाभवेत् ७०
इतिश्रुत्वामहद्वाक्यंतुरासाहःस्वयंप्रभुः
उवाचविश्वविजयेप्रौढगर्वोरघूद्वह ७१
कामउवाच
स्वामिन्कोऽसौहिसुमदःकिंतपःस्वल्पकंपुनः
ब्रह्मादीनांतपोभंगंकरोम्यस्यतुकाकथा ७२

मद्बाणबलनिर्भिन्नश्चंद्रस्तारांगतःपुरा
त्वमप्यहल्यांगतवान्विश्वामित्रस्तुमेनिकाम् ७३
चिंतांमाकुरुदेवेंद्रसेवकेमयिसंस्थिते
एषगच्छामिसुमदंदेवान्पालयमारिष ७४
एवमुक्त्वाकामदेवोहेमकूटंगिरिंययौ
वसंतेनयुतःसख्यातथैवाप्सरसांगणैः ७५
वसंतस्तत्रसकलान्वृक्षान्पुष्पफलैर्युतान्
कोकिलान्षट्पदश्रेण्याघुष्टानाशुचकारह ७६
वायुःसुशीतलोवातिदक्षिणांदिशमाश्रितः
कृतमालासरित्तीरलवंगकुसुमान्वितः ७७
एवंविधेवनेवृत्तेरंभानामाप्सरोवरा
सखीभिःसंवृतातत्रजगामसुमदांतिकम् ७८
तत्रारभतगानंसाकिन्नरस्वरशोभना
मृदंगपणवानेकवाद्यभेदविशारदा ७९
तद्गानमाकर्ण्यनराधिपोऽसौ
वसंतमालोक्यमनोहरंच
तथान्यपुष्टारटितंमनोरमं
चकारचक्षुःपरिवर्तनंबुधः ८०
तंप्रबुद्धंनृपंवीक्ष्यकामःपुष्पायुधस्त्वरन्
चकारसत्वरंसज्यंधनुस्तत्पृष्ठतोऽनघ ८१
एकाप्सरास्तत्रनृपस्यपादयोः
संवाहनंनर्तितनेत्रपल्लवा
चकारचान्यातुकटाक्षमोक्षणं
चकारकाचिद्भृशमंगचेष्टितम् ८२
अप्सरोभिस्तथाकीर्णःकामविह्वलमानसः
चिंतयामासमतिमाञ्जितेंद्रियशिरोमणिः ८३
एतामेतपसोविघ्नकारिण्योऽप्सरसांवराः
शक्रेणप्रेषिताःसर्वाःकरिष्यंतियथातथम् ८४
इतिसंचिंत्यसुतपास्ताउवाचवरांगनाः
कायूयंकुत्रसंस्थाःकिंभवतीनांचिकीर्षितम् ८५

अत्यद्भुतंजातमहोयद्भवत्योऽद्विगोचराः
यास्तपोभिःसुदुष्प्राप्यास्तामेतपसआगताः ८६
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेकामाद्वो-
पाख्यानंनामद्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

शेषउवाच
इतिवाक्यंसमाकर्ण्यसुमदस्यतपोनिधेः
जगदुःकामसेनास्तंरंभाद्यप्सरसोमुदा १
त्वत्तपोभिर्वयंकांतप्राप्ताःसर्ववरांगनाः
तासांयौवनसर्वस्वंभुंक्ष्वत्यजतपःफलम् २
इयंघृताचीसुभगाचंपकाभशरीरभृत्
कर्पूरगंधललितंभुनक्तुत्वन्मुखामृतम् ३
एतांमहाभागसुशोभिविभ्रमां
मनोहरांगींघनपीनसत्कुचाम्
कांतोपभुंक्ष्वाशुनिजोग्रपुण्यतः
प्राप्तांपुनस्त्वंत्यजदुःखजातम् ४
मामप्यनर्घ्याभरणोपशोभितां
मंदारमालापरिशोभिवक्षसम्
नानारताख्यानविचारचंचुरां
दृढंयथास्यात्परिरंभणंकुरु ५
पिबामृतंमामकवक्त्रनिर्गतं
विमानमारुह्यवरंमयासह
सुमेरुशृंगंबहुपुण्यसेवितं
संप्राप्यभोगंकुरुसत्तपःफलम् ६
तिलोत्तमायौवनरूपशोभिता
गृह्णातुतेमूर्धनितापवारणम्
सुचामरौसंततधारयांकितौ
गंगाप्रवाहाविवसुंदरोत्तम ७
शृणुष्वभोःकामकथांमनोहरां

पिबामृतंदेवगणादिवांछितम्
उद्यानमासाद्यचनंदनाभिधं
वरांगनाभिर्विहरंकुरुप्रभो ८
इत्युक्तमाकरार्यमहामतिर्नृपो
विचारयामासकुतोह्युपस्थिताः
मयासुसृष्टास्तपसासुरांगनाः
प्रत्यूहएवात्रविधेयमेषकिम् ९
इतिचिंतातुरोराजास्वांतेसंचिंतयन्सुधीः
जगादमतिमान्वीरःसुमदोदेवताङ्गनाः १०
यूयंतुममचित्तस्थाजगन्मातृस्वरूपकाः
मयासंचिंत्यतेयाहिसापित्वद्रूपिणीमता ११
इदंतुच्छंस्वर्गसुखंत्वयोक्तंसविकल्पकम्
मत्स्वामिनीमयाभक्त्यासेवितादास्यतेवरम् १२
यत्कृपातोविधिःसत्यलोकंप्राप्तोमहानभूत्
सामेदास्यतिसर्वंहिभक्तदुःखांतकारिणी १३
किंनंदनंकिंतुगिरिःकनकेनसुमरिडतः
किंसुधास्वल्पपुरायेनप्राप्यादानवदुःखदा १४
इतिवाक्यंसमाकरार्यकामस्तुविविधैःशरैः
प्राहरन्नरदेवस्यकर्तुंकिंचिन्नवैप्रभुः १५
कटाक्षैर्नूपुरारावैःपरिरंभैर्विलोकनैः
नतस्यचित्तंविभ्रांतंकर्तुंशक्तावरांगनाः १६
गत्वायथागतंशक्रंजगदुर्धीरधीर्नृपः
तच्छ्रुत्वामघवाभीतःसेवामारभतात्मनः १७
अथनिश्चितमालोक्यपादपद्मेस्वकेंऽबिका
जितेंद्रियंमहाराजंप्रत्यक्षाभूत्सुतोषिता १८
पंचास्यपृष्ठललितापाशांकुशधरावरा
धनुर्बाणधरामाताजगत्पावनपावनी १९
तांवीक्ष्यमातरंधीमान्सूर्यकोटिसमप्रभाम्
धनुर्बाणसृणीपाशान्दधानांहर्षमाप्तवान् २०
शिरसाबहुशोनत्वामातरंभक्तिभाविताम्

हसंतींनिजदेहेषुस्पृशंतींपाणिनामुहुः २१
तुष्टावभक्त्युत्कलितचित्तवृत्तिर्महामतिः
गद्गदस्वरसंयुक्तःकंटकांगोपशोभितः २२
जयदेविमहादेविभक्तवृंदैकसेविते
ब्रह्मरुद्रादिदेवेंद्रसेवितांघ्रियुगेऽनघे २३
मातस्तवकलाविद्धमेतद्भातिचराचरम्
त्वदृतेनास्तिसर्वंतन्मातर्भद्रेनमोस्तुते २४
महीत्वयाऽधारशक्त्यास्थापिताचलतीहन
सपर्वतवनोद्यानदिग्गजैरुपशोभिता २५
सूर्यस्तपतिखेतीक्ष्णैरंशुभिःप्रतपन्महीम्
त्वच्छक्त्यावसुधासंस्थंरसंगृह्णन्विमुंचति २६
अंतर्बहिःस्थितोवह्निर्लोकानांप्रकरोतुशम्
त्वत्प्रतापान्महादेविसुरासुरनमस्कृते २७
त्वंविद्यात्वंमहामायाविष्णोर्लोकैकपालिनः
स्वशक्त्यासृजसीदंत्वंपालयस्यपिमोहिनि २८
त्वत्तःसर्वेसुराःप्राप्यसिद्धिंसुखमयंतिवै
मांपालयकृपानाथेवंदितेभक्तवल्लभे २९
रत्नमांसेवकंमातस्त्वदीयचरणारणम्
कुरुमेवांछितांसिद्धिंमहापुरुषपूर्वजे ३०
सुमतिरुवाच
एवंतुष्टाजगन्मातावृणीष्ववरमुत्तमम्
उवाचभक्तंसुमदंतपसाकृशदेहिनम् ३१
इत्येतद्वाक्यमाकर्ण्यप्रहृष्टःसुमदोनृपः
वव्रेनिजंहृतंराज्यंहतदुर्जनकंटकम् ३२
महेशीचरणद्वंद्वेभक्तिमव्यभिचारिणीम्
प्रांतेमुक्तिंतुसंसारवारिधेस्तारिणींपुनः ३३
कामाक्ष्युवाच
राज्यंप्राप्नुहिसुमदसर्वत्रहतकंटकम्
महिलारत्नसंजुष्टपादपद्मद्वयोभव ३४
ततवैरिपराभूतिर्माभूयात्सुमदाभिध

यदातुरावणंहत्वारघुनाथोमहायशाः ३५
करिष्यत्यश्वमेधंहिसर्वसंभारशोभितम्
तस्यभ्रातामहावीरःशत्रुघ्नःपरवीरहा ३६
पालयन्हयमायास्यत्यत्रवीरादिभिर्वृतः
तस्मैसर्वंसमर्प्यत्वंराज्यमृद्धंधनादिकम् ३७
पालयिष्यसियोधैःस्वैर्धनुर्धारिभिरुद्भटैः
ततःपृथिव्यांसर्वत्रभ्रमिष्यसिमहामते ३८
ततोरामंनमस्कृत्यब्रह्मेंद्रेशादिसेवितम्
मुक्तिंप्राप्स्यसिदुष्प्रापांयोगिभिर्यमसाधनैः ३९
तावत्कालमिहस्थास्येयावद्रामहयागमः
पश्चात्त्वांतुसमुद्धृत्यगंतास्मिपरमंपदम् ४०
इत्युक्त्वांतर्दधेदेवीसुरासुरनमस्कृता
सुमदोऽप्यहिच्छत्रायांशत्रून्हत्वानृपोऽभवत् ४१
एषराजासमर्थोऽपिबलवाहनसंयुतः
नग्रहीष्यतितेवाहंमहामायासुशिक्षितः ४२
श्रुत्वाप्राप्तंपुरीपार्श्वेहयमेधहयोत्तमम्
त्वांचसर्वैर्महाराजैःसेवितांघ्रिंमहामतिम् ४३
सर्वंदास्यतिसर्वज्ञराजासुमदनामधृक्
अधुनातन्महाराजरामचंद्रप्रतापतः ४४
शेषउवाच
इतिवृत्तंसमाकर्ण्यसुमदस्यमहायशाः
साधुसाध्वितिचोवाचजहर्षमतिमान्बली ४५
अहिच्छत्रापतिःसर्वैःस्वगणैःपरिवारितः
सभायांसुखमास्तेयोबहुराजन्यसेवितः ४६
ब्राह्मणावेदविदुषोवैश्याधनसमृद्धयः
राजानंपर्युपासंतेसुमदंशोभयान्वितम् ४७
वेदविद्याविनोदेनन्यायिनोब्राह्मणावराः
आशीर्वदंतितंभूपंसर्वलोकैकरक्षकम् ४८
एतस्मिन्समयेकश्चिदागत्यनृपतिंजगौ
स्वामिन्नजानेकस्यास्तिहयःपत्रधरोंऽतिके ४९

तच्छ्रुत्वासेवकंश्रेष्ठंप्रेषयामाससत्वरः
जानीहिकस्यराज्ञोऽयमश्वोममपुरांतिके ५०
गत्वाथसेवकस्तत्रज्ञात्वावृत्तांतमादितः
निवेदयामासनृपंमहाराजन्यसेवितम् ५१
सश्रुत्वारघुनाथस्यहयंनित्यमनुस्मरन्
आज्ञापयामासजनंसर्वंराजाविशारदः ५२
लोकामदीयाःसर्वेयेधनधान्यसमाकुलाः
तोरणादीनिगेहेषुमंगलानिसृजंत्विह ५३
कन्याःसहस्रशोरम्याःसर्वाभरणभूषिताः
गजोपरिसमारूढायांतुशत्रुघ्नसंमुखम् ५४
इत्यादिसर्वमाज्ञाप्ययययौराजास्वयंततः
पुत्रपौत्रमहिष्यादिपरिवारसमावृतः ५५
शत्रुघ्नःसुमहामात्यैःसुभटैःपुष्कलादिभिः
संयुतोभूपतिंवीरंददर्शसुमदाभिधम् ५६
हस्तिभिःसादिसंयुक्तैःपत्तिभिःपरतापनैः
वाजिभिर्भूषितैर्वीरैःसंयुतंवीरशोभितम् ५७
अथागत्यमहाराजःशत्रुघ्नंनतवान्मुदा
धन्योऽस्मिकृतकृत्योऽस्मिसत्कृतंचकृतंवपुः ५८
इदंराज्यंगृहाणाशुमहाराजोपशोभितम्
महामाणिक्यमुक्तादिमहाधनसुपूरितम् ५९
स्वामिंश्चिरंप्रतीक्षेऽहहयस्यागमनंप्रति
कामाक्षाकथितंपूर्वंजातंसंप्रतितत्तथा ६०
विलोकयपुरंमह्यंकृतार्थान्कुरुमानवान्
पावयास्मत्कुलंसर्वंरामानुजमहीपते ६१
इत्युक्त्वारोहयामासकुंजरंचंद्रसुप्रभम्
पुष्कलंचमहावीरंतथास्वयमथारुहत् ६२
भेरीपणवतूर्याणांवीणादीनांस्वनस्तदा
व्याप्नोतिस्ममहाराजसुमदेनप्रणोदितः ६३
कन्याःसमागत्यमहानरेंद्रं-
शत्रुघ्नमिंद्रादिकसेवितांघ्रिम्

करिस्थितामौक्तिकवृंदसंघै-
र्वर्धापयामासुरिनप्रयुक्ताः ६४
शनैःशनैःसमागत्यपुरीमध्येजनैर्मुदा
वर्धापितोगृहंप्रापतोरणादिकभूषितम् ६५
हयरत्नेनसंयुक्तस्तथावीरैःसुशोभितः
राज्ञापुरस्कृतोराजाशत्रुघ्नःप्रापमंदिरम् ६६
अर्घादिभिःपूजयित्वारघुनाथानुजंतदा
सर्वंसमर्पयामासरामचंद्रायधीमते ६७

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
शत्रुघ्नाहिच्छत्रापुरीप्रवेशोनामत्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

शेषउवाच
अथस्वागतसंतुष्टंशत्रुघ्नंप्राहभूमिपः
रघुनाथकथांश्रेष्ठांशुश्रूषुःपुरुषर्षभः १
सुमदउवाच
कच्चिदास्तेसुखंरामःसर्वलोकशिरोमणिः
भक्तरक्षावतारोऽयममानुग्रहकारकः २
धन्यालोकाइमेपुर्यांरघुनाथमुखांबुजम्
येपिबंत्यनिशंचाक्षिपुटकैःपरिमोदिताः ३
अर्थजातंमदीयंचनितरांपुरुषर्षभ
कृतार्थंकुलभूम्यादिवस्तुजातंमहामते ४
कामाक्षयाप्रसादोमेकृतःपूर्वंदयार्द्रया
रघुनाथमुखांभोजंद्रक्ष्येद्यसकुटुंबकः ५
इत्युक्तवतिवीरेतुसुमदेपार्थिवोत्तमे
सर्वंतत्कथयामासरघुनाथगुणोदयम् ६
त्रिरात्रंतत्रसंस्थित्यरघुनाथानुजःपरम्
गंतुंचकारधिषणांराज्ञासहमहामतिः ७
तज्ज्ञात्वासुमदःशीघ्रंपुत्रंराज्येऽभ्यषेचयत्
शत्रुघ्नेनमहाराज्ञापुष्कलेनानुमोदितः ८

वासांसिबहुरत्नानिधनानिविविधानिच
शत्रुघ्नसेवकेभ्योऽसौप्रादात्तत्रमहामतिः ९
ततोगमनमारेभेमंत्रिभिर्बहुवित्तमैः
पत्तिभिर्वाजिभिर्नागैःसदश्वैरथकोटिभिः १०
शत्रुघ्नःसहितस्तेनसुमदेनधनुर्भृता
जगाममार्गेविहसन्रघुनाथप्रतापभृत् ११
पयोष्णीतीरमासाद्यजगामसहयोत्तमः
पृष्ठतोऽनुययुःसर्वेयोधावैहयरक्षिणः १२
आश्रमान्विविधान्पश्यन्नृषीणांसुतपोभृताम्
तत्रतत्रविशृण्वानोरघुनाथगुणोदयम् १३
एषधीमान्हरिर्यातिहरिणापरिरक्षितः
हरिभिर्हरिभक्तैश्चहरिवर्यानुगैर्मुहुः १४
इतिशृण्वञ्छुभावाचोमुनीनांपरितःप्रभुः
तुतोषभक्त्युत्कलितचित्तवृत्तिभृतांमहान् १५
ददर्शचाश्रमंशुद्धंजनजंतुसमाकुलम्
वेदध्वनिहताशेषामंगलंशृण्वतांनृणाम् १६
अग्निहोत्रहविर्धूमपवित्रितनभोखिलम्
मुनिवर्यकृतानेकयागयूपसुशोभितम् १७
यत्रगावस्तुहरिणापाल्यंतेपालनोचिताः
मूषकानखनंत्यस्मिन्बिडालस्यभयाद्बिलम् १८
मयूरैर्नकुलैःसार्द्धंक्रीडंतिफणिनोनिशम्
गजैःसिंहैर्नित्यमत्रस्थीयतेमित्रतांगतैः १९
एणास्तत्रत्यनीवारभक्षणेषुकृतादराः
नभयंकुर्वतेकालाद्रक्षितामुनिवृंदकैः २०
गावःकुंभसमोधस्कानंदिनीसमविग्रहाः
कुर्वंतिचरणोत्थेनरजसेलांपवित्रिताम् २१
मुनिवर्याःसमित्पाणिपद्मैर्धर्मक्रियोचिताम्
दृष्ट्वापप्रच्छसुमतिंसर्वज्ञंराममंत्रिणम् २२
शत्रुघ्नउवाच
सुमतेकस्यसंस्थानंमुनेर्भातिपुरोगतम्

निर्वैरिजंतुसंसेव्यंमुनिवृंदसमाकुलम् २३
श्रोष्यामिमुनिवार्तांचविदधामिपवित्रताम्
निजंवपुस्तदीयाभिर्वार्ताभिर्वर्णनादिभिः २४
इतिश्रुत्वामहद्वाक्यंशत्रुघ्नस्यमहात्मनः
कथयामाससचिवोरघुनाथस्यधीमतः २५
सुमतिरुवाच
च्यवनस्याश्रमंविद्धिमहातापसशोभितम्
निर्वैरिजंतुसंकीर्णंमुनिपत्नीभिरावृतम् २६
योऽसौमहामुनिःस्वर्गवैद्ययोर्भागमादधात्
स्वायंभुवमहायज्ञेशक्रमानविभेदनः २७
महामुनेःप्रभावोऽयनकेनापिसमाप्यते
तपोबलसमृद्धस्यवेदमूर्तिधरस्यह २८
श्रुत्वारामानुजोवार्तांच्यवनस्यमहामुनेः
सर्वंपप्रच्छसुमतिंशक्रमानादिभंजनम् २९
शत्रुघ्नउवाच
कदासौदस्त्रयोर्भागंचकारसुरपंक्तिषु
किंकृतंदेवराजेनस्वायंभुवमहामखे ३०
सुमतिरुवाच
ब्रह्मवंशेऽतिविख्यातोमुनिर्भृगुरितिश्रुतः
कदाचिद्गतवान्सायंसमिदाहरणंप्रति ३१
तदामखविनाशायदमनोराक्षसोबली
आगत्योच्चैर्जगादेदंमहाभयकरंवचः ३२
कुत्रास्तिमुनिबंधुःसकुत्रतन्महिलानघा
पुनःपुनरुवाचेदंवचोरोषसमाकुलः ३३
तदाहुतवहोज्ञात्वाराक्षसाद्भयमागतम्
दर्शयामासतज्जायामंतर्वत्नीमनिंदिताम् ३४
जहारराक्षसस्तांतुरुदंतींकुररीमिव
भृगोरक्षपतेरक्षरक्षनाथतपोनिधे ३५
एवंवदंतीमार्तांतांगृहीत्वानिरगाद्बहिः
दुष्टोवाक्यप्रहारेणबोधयन्सभृगोःसतीम् ३६

ततोमहाभयत्रस्तोगर्भश्चोदरमध्यतः
पपातप्रज्वलन्नेत्रोवैश्वानरइवांगजः ३७
तेनोक्तंमाव्रजाशुत्वंभस्मीभवसुदुर्मते
नहिसाध्वीपरामर्शंकृत्वाश्रेयोऽधियास्यसि ३८
इत्युक्तःसपपाताशुभस्मीभूतकलेवरः
मातातदार्भकंनीत्वाजगामाश्रममुन्मनाः ३९
भृगुर्वह्निकृतंसर्वंज्ञात्वाकोपसमाकुलः
शशापसर्वभक्षस्त्वंभवदुष्टारिसूचक ४०
तदाशप्तोऽतिदुःखार्तोजग्राहांघ्र्याशुशुक्षणिः
कुरुमेऽनुग्रहंस्वामिन्कृपार्णवमहामते ४१
मयानृतंवचोभीत्याकथितंनगुरुद्रुहा
तस्मान्ममोपरिकृपांकुरुधर्मशिरोमणे ४२
तदानुग्रहमाधाच्चसर्वभक्षोभवाञ्छुचिः
इत्युक्तवान्हुतभुजंदयार्द्रोमुनितापसः ४३
गर्भाच्च्युतस्यपुत्रस्यजातकर्मादिकंशुचिः
चकारविधिवद्विप्रोदर्भपाणिःसुमंगलः ४४
च्यवनाच्च्यवनंप्राहुःपुत्रंसर्वेतपस्विनः
शनैःशनैःसववृधेशुक्लेप्रतिपदिंदुवत् ४५
सजगामतपःकर्तुं रेवांलोकैकपावनीम्
शिष्यैःपरिवृतःसर्वैस्तपोबलसमन्वितैः ४६
गत्वातत्रतपस्तेपेवर्षाणामयुतंमहान्
अंसयोःकिंशुकौजातौवल्मीकोपरिशोभितौ ४७
मृगाश्चागत्यतस्यांगेकंडूंविदधुरुत्सुकाः
नकिंचित्सहिजानातिदुर्वारतपसावृतः ४८
कदाचिन्मनुरुद्युक्तस्तीर्थयात्रांप्रतिप्रभुः
सकुटुंबोययौरेवांमहाबलसमावृतः ४९
तत्रस्नात्वामहानद्यांसंतर्प्यपितृदेवताः
दानानिब्राह्मणेभ्यश्चप्रादाद्विष्णुप्रतुष्टये ५०
तत्कन्याविचरंतीसावनमध्येइतस्ततः
सखीभिःसहितारम्यातप्तहाटकभूषणा ५१

तत्रदृष्ट्वाथवल्मीकंमहातरुसुशोभितम्
निमेषोन्मेषरहितंतेजः किंचिद्ददर्शसा ५२
गत्वातत्रशलाकाभिरतुदद्रुधिरंस्रवत्
दृष्ट्वाराज्ञोंगजाखेदंप्राप्तवत्यतिदुःखिता ५३
नजनन्यैतथापित्रेशशंसाघेनविप्लुता
स्वयमेवात्मनात्मानंसाशुशोचभयातुरा ५४
तदाभूश्चलिताराजन्दिवश्चोल्कापपातह
धूम्रादिशोभवन्सर्वाः सूर्यश्चपरिवेषितः ५५
तदाराज्ञोहयानष्टाहस्तिनोबहवोमृताः
धनंनष्टंरत्नयुतंकलहोभून्मिथस्तदा ५६
तदालोक्यनृपोभीतः किंचिदुद्विग्नमानसः
जनानपृच्छत्केनापिमुनयेत्वपराधितम् ५७
पारंपर्येणतज्ज्ञात्वास्वपुत्र्याःपरिचेष्टितम्
ययौसुदुःखितस्तत्रसमृद्धबलवाहनः ५८
तंवैतपोनिधिंवीक्ष्यमहतातपसायुतम्
स्तुत्वाप्रसादयामासमुनिवर्यदयांकुरु ५९
तस्मैतुष्टोजगादायंमुनिवर्योमहातपाः
तवात्मजाकृतंसर्वमुत्पाताद्यमवेहितत् ६०
तवपुत्र्यामहाराजचक्षुर्विस्फोटनंकृतम्
बहुसुस्त्रावरुधिरंजानतीत्वामुवाचन ६१
तस्मादियंमहाभूपमह्यंदेयायथाविधि
ततश्चोत्पातशमनंभविष्यतिनसंशयः ६२
तच्छ्रुत्वादुःखितोराजाप्रज्ञाचाक्षुषआत्मजाम्
ददौकुलवयोरूपशीललक्षणसंयुताम् ६३
दत्तायदानृपेणेयंकन्याकमललोचना
तदोत्पाताःशमंयाताःसर्वेमुनिरुषोद्गताः ६४
राजादत्त्वात्मजांतस्मैमुनयेतपसांनिधे
प्रापस्वांनगरींभूयोदुःखितोऽयदयायुतः ६५
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
च्यवनोपाख्यानंनामचतुर्दशोऽध्यायः १४

पंचदशोऽध्यायः

सुमतिरुवाच
अथर्षिःस्वाश्रमंगत्वामानव्यासहभार्यया
मुदंप्रापहताशेषपातकोयोगयुक्तया १
सामानवीतंवरमात्मनःपतिं
नेत्रेणहीनंजरसागतौजसम्
सिषेवएनंहरिमेधसोत्तमं
निजेष्टदात्रींकुलदेवतांयथा २
शूश्रूषतीस्वंपतिमिंगितज्ञा
महानुभावंतपसांनिधिंप्रियम्
परांमुदंप्रापसतीमनोहरा
शचीयथाशक्रनिषेवणोद्यता ३
चरणौसेवतेतन्वीसर्वलक्षणलक्षिता
राजपुत्रीसुंदरांगीफलमूलोदकाशना ४
नित्यंतद्वाक्यकरणेतत्परापूजनेरता
कालक्षेपंप्रकुरुतेसर्वभूतहितेरता ५
विसृज्यकामंदंभंचद्वेषंलोभमघंमदम्
अप्रमत्तोद्यतानित्यंच्यवनंसमतोषयत् ६
एवंतस्यप्रकुर्वाणासेवांवाक्कायकर्मभिः
सहस्राब्दंमहाराजसाचकामंमनस्यधात् ७
कदाचिद्देवभिषजावागतावाश्रमेमुनेः
स्वागतेनसुसंभाव्यतयोःपूजांचकारसा ८
शर्यातिकन्याकृतपूजनार्घ-
पाद्यादिनातोषितचित्तवृत्ती
तावूचतुःस्नेहवशेनसुंदरौ
वरंवृणुष्वेतिमनोहरांगीम् ९
तुष्टौतौवीक्ष्यभिषजौदेवानांवरयाचने
मतिंचकारनृपतेःपुत्रीमतिमतांवरा १०
पत्यभिप्रायमालक्ष्यवाचमूचेनृपात्मजा
दत्तंमेचक्षुषीपत्युर्यदितुष्टौयुवांसुरौ ११

इत्येतद्वचनंश्रुत्वासुकन्यायामनोहरम्
सतीत्वंचविलोक्येदमूचतुर्भिषजांवरौ १२
त्वत्पतिर्यदिदेवानांभागंयज्ञेदधात्यसौ
आवयोरधुनाकुर्वश्चक्षुषोःस्फुटदर्शनम् १३
च्यवनोऽप्योमितिप्राहभागदानेवरौजसोः
तदाहृष्टावश्विनौतमूचतुस्तपतांवरम् १४
निमज्जतांभवानस्मिन्ह्रदेसिद्धविनिर्मिते
इत्युक्तोजरयाग्रस्तदेहोधमनिसंततः १५
ह्रदंप्रवेशितोऽश्विभ्यांस्वयंचामज्जतांह्रदे
पुरुषास्त्रयउत्तस्थुरपीच्यावनिताप्रियाः १६
रुक्मस्त्रजःकुंडलिनस्तुल्यरूपाःसुवाससः
तान्निरीक्ष्यवरारोहासुरूपान्सूर्यवर्चसः १७
अजानतीपतिंसाध्वीह्यश्विनौशरणंययौ
दर्शयित्वापतिंतस्यैपातिव्रत्येनतोषितौ १८
ऋषिमामंत्र्ययययतुर्विमानेनत्रिविष्टपम्
यक्ष्यमाणेक्रतौस्वीयभागकार्याशयायुतौ १९
कालेनभूयसाक्षामांकर्शितांव्रतचर्यया
प्रेमगद्गदयावाचापीडितःकृपयाब्रवीत् २०
तुष्टोऽहमद्यतवभामिनिमानदायाः
शुश्रूषयापरमयाहृदिचैकभक्त्या
योदेहिनामयमतीवसुहृत्स्वदेहो
नावेक्षितःसमुचितःक्षपितुंमदर्थे २१
येमेस्वधर्मनिरतस्यतपःसमाधि-
विद्यात्मयोगविजिताभगवत्प्रसादाः
तानेवतेमदनुसेवनयाऽविरुद्धान्
दृष्टिंप्रपश्यवितराम्यभयानशोकान् २२
अन्येपुनर्भगवतोभ्रुवउद्विजृंभ-
विस्त्रंसितार्थरचनाःकिमुरुक्रमस्य
सिद्धासिभुंक्ष्वविभवान्निजधर्मदोहान्
दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः २३

एवंब्रुवाणमबलाखिलयोगमाया
विद्याविचक्षणमवेक्ष्यगताधिरासीत्
संप्रश्रयप्रणयविह्वलयागिरेषद्
व्रीडाविलोकविलसद्धसिताननाह २४
सुकन्योवाच
राद्धंबतद्विजवृषैतदमोघयोग-
मायाधिपेत्वयिविभोतदवैमिभर्तः
यस्तेऽभ्यधायिसमयःसकृदंगसंगो
भूयाद्गरीयसिगुणःप्रसवःसतीनाम् २५
तत्रेतिकृत्यमुपशिक्षययथोपदेशं
येनैषकर्शिततमोतिरिरंसयात्मा
सिध्येततेकृतमनोभवधर्षिताया
दीनस्तदीशभवनंसदृशंविचक्ष्व २६
सुमतिरुवाच
प्रियायाःप्रियमन्विच्छंश्च्यवनोयोगमास्थितः
विमानंकामगंराजंस्तर्ह्येवाविरचीकरत् २७
सर्वकामदुघंरम्यंसर्वरत्नसमन्वितम्
सर्वार्थोपचयोदर्कंमणिस्तंभैरुपस्कृतम् २८
दिव्योपस्तरणोपेतंसर्वकालसुखावहम्
पट्टिकाभिःपताकाभिर्विचित्राभिरलंकृतम् २९
स्रग्भिर्विचित्रमालाभिर्मंजुसिंजत्षडंघ्रिभिः
दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ३०
उपर्युपरिविन्यस्तनिलयेषुपृथक्पृथक्
क्लृप्तैःकशिपुभिःकांतंपर्यंकव्यजनादिभिः ३१
तत्रतत्रविनिक्षिप्तनानाशिल्पोपशोभितम्
महामरकतस्थल्याजुष्टंविद्रुमवेदिभिः ३२
द्वाःसुविद्रुमदेहल्याभातंवज्रकपाटकम्
शिखरेष्विंद्रनीलेषुहेमकुंभैरधिश्रितम् ३३
चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषुनिर्मितैः
जुष्टंविचित्रवैतानैर्मुक्ताहारावलंबितैः ३४

हंसपारावतव्रातैस्तत्रतत्रनिकूजितम्
कृत्रिमान्मन्यमानैस्तानधिरुह्याधिरुह्यच ३५
विहारस्थानविश्रामसंवेशप्रांगणाजिरैः
यथोपजोषंरचितैर्विस्मापनमिवात्मनः ३६
एवंगृहंप्रपश्यंतींनातिप्रीतेनचेतसा
सर्वभूताशयाभिज्ञःस्वयंप्रोवाचतांप्रति ३७
निमज्ज्यास्मिन्ह्रदेभीरुविमानमिदमारुह
सुभ्रूर्भर्तुःसमादायवचःकुवलयेक्षणा ३८
सरजोबिभ्रतीवासोवेणीभूतांश्चमूर्द्धजान्
अंगंचमलपंकेनसंछन्नंशबलस्तनम् ३९
आविवेशसरस्तत्रमुदाशिवजलाशयम्
सांतःसरसिवेश्मस्थाःशतानिदशकन्यकाः ४०
सर्वाःकिशोरवयसोददर्शोत्पलगंधयः
तांदृष्ट्वाशीघ्रमुत्थायप्रोचुःप्रांजलयःस्त्रियः ४१
वयंकर्मकरीस्तुभ्यंशाधिनःकरवामकिम्
स्नानेनतामहार्हेणस्नापयित्वामनस्विनीम् ४२
दुकूलेनिर्मलेनूत्नेददुरस्यैचमानद
भूषणानिपरार्घ्यानिवरीयांसिद्युमंतिच ४३
अन्नंसर्वगुणोपेतंपानंचैवामृतासवम्
अथादर्शेस्वमात्मानंस्रग्विणंविरजोंबरम् ४४
ताभिःकृतस्वस्त्ययनंकन्याभिर्बहुमानितम्
हारेणचमहार्हेणरुचकेनचभूषितम् ४५
निष्कग्रीवंवलयिनंक्वणत्कांचननूपुरम्
श्रोणयोरध्यस्तयाकांच्याकांचन्याबहुरत्नया ४६
सुभ्रुवासुदताशुक्लस्निग्धापांगेनचक्षुषा
पद्मकोशस्पृधानीलैरलकैश्चलसन्मुखम् ४७
यदासस्मारदयितमृषीणांवल्लभंपतिम्
तत्रचास्तेसहस्त्रीभिर्यत्रास्तेसमुनीश्वरः ४८
भर्तुःपुरस्तादात्मानंस्त्रीसहस्रवृतंतदा
निशाम्यतद्योगगतिंसंशयंप्रत्यपद्यत ४९

सतांकृतमलस्नानांविभ्राजंतीमपूर्ववत्
आत्मनोबिभ्रतींरूपंसंवीतरुचिरस्तनीम् ५०
विद्याधरीसहस्रेणसेव्यमानांसुवाससम्
जातभावोविमानंतदारोहयदमित्रहन् ५१
तस्मिन्नलुप्तमहिमाप्रिययानुषक्तो
विद्याधरीभिरुपचीर्णवपुर्विमाने
बभ्राजउत्कचकुमुद्गणवानपीच्य
स्ताराभिरावृतइवोडुपतिर्नभःस्थः ५२
तेनाष्टलोकपविहारकुलाचलेंद्र-
द्रोणीष्वनंगसखमारुतसौभगासु
सिद्धैर्नुतोद्युधुनिपातशिवस्वनासु
रेमेचिरंधनदवल्ललनावरूथी ५३
वैश्रंभकेसुरवनेनंदनेपुष्पभद्रके
मानसेचैत्ररथ्येचसरेमेरामयारतः ५४
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
च्यवनस्यतपोभोगवर्णनंनामपंचदशोऽध्यायः १५

## षोडशोऽध्यायः

सुमतिरुवाच
एवंतयाक्रीडमानःसर्वत्रधरणीतले
नाबुध्यतगतानब्दाञ्छतसंख्यापरीमितान् १
ततोज्ञात्वाथतद्विप्रःस्वकालपरिवर्तिनीम्
मनोरथैश्चसंपूर्णांस्वस्यप्रियतमांवराम् २
न्यवर्तताश्रमंश्रेष्ठंपयोष्णीतीरसंस्थितम्
निर्वैरजंतुजनतासंकुलंमृगसेवितम् ३
तत्रावसत्ससुतपाःशिष्यैर्वेदसमन्वितैः
सेवितांघ्रियुगोनित्यंततापपरमंतपः ४
कदाचिदथशर्यातिर्यष्टुमैच्छतदेवताः
तदाच्यवनमानेतुंप्रेषयामाससेवकान् ५
तैराहूतोद्विजवरस्तत्रागच्छन्महातपाः

सुकन्ययाधर्मपत्न्यास्वाचारपरिनिष्ठया ६
ग्रागतंतंमुनिवरंपत्न्यापुत्र्यामहायशाः
ददर्शदुहितुःपार्श्वेपुरुषंसूर्यवर्चसम् ७
राजादुहितरंप्राहकृतपादाभिवंदनाम्
ग्राशिषोनप्रयुंजानोनातिप्रीतमनाइव ८
चिकीर्षितंतेकिमिदंपतिस्त्वया
प्रलंभितोलोकनमस्कृतोमुनिः
त्वयाजराग्रस्तमसंमतंपतिं
विहायजारंभजसेऽमुमध्वगम् ६
कथंमतिस्तेऽवगतान्यथासतांकुलप्रसूतेःकुलदूषणंत्विदम्
बिभर्षिजारंयदपत्रपाकुलंपितुःस्वभर्तुश्चनयस्यधस्तमाम् १०
एवंब्रुवाणंपितरंस्मयमानाशुचिस्मिता
उवाचतातजामातातवैषभृगुनंदनः ११
शशंसपित्रेतत्सर्वंवयोरूपाभिलंभनम्
विस्मितःपरमप्रीतस्तनयांपरिषस्वजे १२
सोमेनायाजयद्वीरंग्रहंसोमस्यचाग्रहीत्
ग्रसोमपोरप्यश्विनोश्च्यवनःस्वेनतेजसा १३
ग्रहंतुग्राहयामासतपोबलसमन्वितः
वज्रंगृहीत्वाशक्रस्तुहंतुंब्राह्मणसत्तमम् १४
ग्रपंक्तिपावनौदेवौकुर्वाणंपंक्तिगोचरौ
शक्रंवज्रधरंदृष्ट्वामुनिःस्वहननोद्यतम् १५
हुंकारमकरोद्धीमान्स्तंभयामासतद्भुजम्
इंद्रःस्तब्धभुजस्तत्रदृष्टःसर्वैश्चमानवैः १६
कोपेनश्वसमानोऽहिर्यथामंत्रनियंत्रितः
तुष्टावसमुनिंशक्रःस्तब्धबाहुस्तपोनिधिम् १७
ग्रश्विभ्यांभागदानंचकुर्वंतंनिर्भयांतरम्
कथयामासभोःस्वामिन्दीयतामश्विनोर्बलि १८
मयानवार्यतेतातज्ञमस्वाघंमहत्कृतम्
इत्युक्तःसमुनिःकोपंजहौतूर्णंकृपानिधिः १९
इंद्रोमुक्तभुजोऽप्यासीत्तदानींपुरुषर्षभ

एतद्वीक्ष्यजनाःसर्वेकौतुकाविष्टमानसाः २०
शशंसुर्ब्राह्मणबलंतेतुदेवादिदुर्ल्लभम्
ततोराजाबहुधनंब्राह्मणेभ्योऽददन्महान् २१
चक्रेचावभृथस्नानंयागांतेशत्रुतापनः
त्वयापृष्टंयदाचक्ष्वच्यवनस्यमहोदयम् २२
समयाकथितःसर्वस्तपोयोगसमन्वितः
नमस्कृत्वातपोमूर्तिमिमंप्राप्यजयाशिषः २३
प्रेषयत्वंसपत्नीकंरामयज्ञेमनोरमे
शेषउवाच
एवंतुकुर्वतोर्वार्ताहयःप्रापाश्रमंप्रति २४
विदधद्वायुवेगेनपृथ्वद्यंखुरविलङ्घिताम्
दूर्वांकुरान्मुखाग्रेणचरंस्तत्रमहाश्रमे २५
मुनयोयावदादायदर्भान्स्नातुंगतानदीम्
शत्रुघ्नःशत्रुसेनायास्तापनःशूरसंमतः २६
तावत्प्रापमुनेर्वासंच्यवनस्यातिशोभितम्
गत्वातदाश्रमेवीरोददर्शच्यवनंमुनिम् २७
सुकन्यायाःसमीपस्थंतपोमूर्तिमिवस्थितम्
ववंदेचरणौतस्यस्वाभिधांसमुदाहरन् २८
शत्रुघ्नोहंरघुपतेर्भ्रातावाहस्यपालकः २९
नमस्करोमियुष्मभ्यंमहापापोपशांतये
इतिवाक्यंसमाकर्ण्यजगादमुनिसत्तमः ३०
शत्रुघ्नतवकल्याणंभूयान्नरवरर्षभ
यज्ञंपालयमानस्यकीर्तिस्तेविपुलाभवेत् ३१
चित्रंपश्यतभोविप्रारामोऽपिमखकारकः
यन्नामस्मरणादीनिकुर्वंतिपापनाशनम् ३२
महापातकसंयुक्ताःपरदाररतानराः
यन्नामस्मरणोद्युक्तामुक्तायांतिपरांगतिम् ३३
पादपद्मसमुत्थेनरेणुनाग्रावमूर्तिभृत्
तत्क्षणाद्गौतमार्धांगीजातामोहनरूपधृक् ३४
मामकीयस्यरूपस्यध्यानेनप्रेमनिर्भरा

सर्वपातकराशिंसादग्ध्वाप्राप्तासुरूपताम् ३५
दैत्यायस्यमनोहारिरूपंप्रधनमण्डले
पश्यंतःप्रापुरेतस्यरूपंविकृतिवर्जितम् ३६
योगिनोध्याननिष्ठायेयंध्यात्वायोगमास्थिताः
संसारभयनिर्मुक्ताःप्रयाताःपरमंपदम् ३७
धन्योऽहमद्यरामस्यमुखंद्रक्ष्यामिशोभनम्
पयोजदलनेत्रांतंसुनसंसुभ्रुसून्नतम् ३८
साजिह्वारघुनाथस्यनामकीर्तनमादरात्
करोतिविपरीतायाफणिनोरसनासमा ३९
अद्यप्राप्तंतपःपुण्यमद्यपूर्णामनोरथाः
यद्द्रक्ष्येरामचंद्रस्यमुखंब्रह्मादिदुर्ल्लभम् ४०
तत्पादरेणुनास्वांगंपवित्रंविदधाम्यहम्
विचित्रतरवार्ताभिःपावयेरसनांस्वकाम् ४१
इत्यादिरामचरणस्मरणप्रबुद्ध-
प्रेमव्रजप्रसृतगद्गदवागुदश्रुः
श्रीरामचंद्ररघुपुंगवधर्ममूर्ते
भक्तानुकंपकसमुद्धरसंसृतेर्माम् ४२
जल्पन्नश्रुकलापूर्णोमुनीनांपुरतस्तदा
नाज्ञासीत्तत्रपारक्यंनिजंध्यानेनसंस्थितः ४३
शत्रुघ्नस्तंमुनिंप्राहस्वामिन्नोमखसत्तमः
क्रियतांभवतापादरजसासुपवित्रितः ४४
महद्भाग्यंरघुपतेर्यद्युष्मन्मानसांतरे
तिष्ठत्यसौमहाबाहुःसर्वलोकसुपूजितः ४५
इत्युक्तःसपरीवारःसर्वाग्निपरिसंवृतः
जगामच्यवनस्तत्रप्रमोदह्रदसंप्लुतः ४६
हनूमांस्तंपदायांतंरामभक्तमवेक्ष्यह
शत्रुघ्नंनिजगादासौवचोविनयसंयुतः ४७
स्वामिन्कथयसित्वंचेन्महापुरुषसुंदरम्
रामभक्तंमुनिवरंनयामिस्वपुरीमहम् ४८
इतिश्रुत्वामहद्वाक्यंकपिवीरस्यशत्रुहा

आदिदेशहनूमंतंगच्छप्रापयतंमुनिम् ४९
हनूमांस्तंमुनिंस्वीयेपृष्ठआरोप्यवेगवान्
सकुटुंबंनिनायाशुवायुःखइवसर्वगः ५०
आगतंतंमुनिंदृष्ट्वारामोमतिमतांवरः
अर्घ्यपाद्यादिकंचक्रेप्रीतःप्रणयविह्वलः ५१
धन्योऽस्मिमुनिवर्यस्यदर्शनेनतवाधुना
पवित्रितोमखोमह्यंसर्वसंभारसंभृतः ५२
इतिवाक्यंसमाकर्ण्यच्यवनोमुनिसत्तमः
उवाचप्रेमनिर्भिन्नपुलकांगोऽतिनिर्वृतः ५३
स्वामिन्ब्रह्मण्यदेवस्यतववाडवपूजनम्
युक्तमेवमहाराजधर्ममार्गप्ररक्षितुः ५४

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
च्यवनाश्रमेहयगमनोनामषोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

शेषउवाच
शत्रुघ्नश्च्यवनस्याथदृष्ट्वाऽचित्यंतपोबलम्
प्रशशंसतपोब्राह्मंसर्वलोकैकवंदितम् १
अहोपश्यतयोगस्यसिद्धिंब्राह्मणसत्तमे
यःक्षणादेवदुष्प्रापंतद्विमानमचीकरत् २
क्वभोगसिद्धिर्महतीमुनीनाममलात्मनाम्
क्वतपोबलहीनानांभोगेच्छामनुजात्मनाम् ३
इतिस्वगतमाशंसञ्छत्रुघ्नश्च्यवनाश्रमे
क्षणंस्थित्वाजलंपीत्वासुखसंभोगमाप्तवान् ४
हयस्तस्याःपयोष्ण्याख्यानद्याःपुण्यजलात्मनः
पयःपीत्वाययौमार्गेवायुवेगगतिर्महान् ५
योधास्तन्निर्गमंदृष्ट्वापृष्ठतोऽनुययुस्तदा
हस्तिभिःपत्तिभिःकेचिद्रथैःकेचनवाजिभिः ६
शत्रुघ्नोऽमात्यवर्येणसुमत्याख्येनसंयुतः
पृष्ठतोऽनुजगामाशुरथेनहयशोभिना ७

गच्छन्वाजीपुरंप्राप्तोविमलाख्यस्यभूपतेः
रत्नातटाख्यंचजनैर्हृष्टपुष्टैःसमाकुलम् ८
ससेवकादुपश्रुत्यरघुनाथहयोत्तमम्
पुरोंतिकेहिसंप्राप्तंसर्वयोधसमन्वितम् ९
तदागजानांसप्तत्याचंद्रवर्णसमानया
अश्वानामयुतैःसार्धंरथानांकांचनत्विषाम् १०
सहस्रेणचसंयुक्तःशत्रुघ्नंप्रतिजग्मिवान्
शत्रुघ्नंसनमस्कृत्यसर्वान्प्राप्तान्महारथान् ११
वसुकोशंधनंसर्वंराज्यंतस्मैनिवेद्यच
किंकरोमीतिराजातंजगादपुरतःस्थितः १२
राजापितंस्वीयपदेप्रणम्रं
दोर्भ्यांदृढंसंपरिषस्वजेमहान्
जगामसाकंतनयेस्वराज्यं
निक्षिप्यसर्वंबहुधन्विभिर्वृतः १३
रामचंद्राभिधांश्रुत्वासर्वश्रुतिमनोहराम्
सर्वेप्रणम्यतंवाहंददुर्वसुमहाधनम् १४
राजानंपूजयित्वातुशत्रुघ्नःपरयामुदा
सेनयासहितोऽगच्छद्वाजिनःपृष्ठतस्तदा १५
एवंसगच्छंस्तन्मार्गेपर्वताग्रचंददर्शह
स्फाटिकैःकानकैरौप्यैराजितंप्रस्थराजिभिः १६
जलनिर्झरसंह्लादंनानाधातुकभूतलम्
गैरिकादिकसद्धातुलाक्षारंगविराजितम् १७
यत्रसिद्धांगनाःसिद्धैःसंक्रीडंत्यकुतोभयाः
गंधर्वाप्सरसोनागायत्रक्रीडंतिलीलया १८
गंगातरंगसंस्पर्शशीतवायुनिषेवितम्
वीणारणद्धंसशुकक्वणसुंदरशोभितम् १९
पर्वतंवीक्ष्यशत्रुघ्नउवाचसुमतिंत्विदम्
तद्दर्शनसमुद्भूतविस्मयाविष्टमानसः २०
कोऽयमहागिरिवरोविस्मापयतिमेमनः
महारजतसत्प्रस्थोमार्गेराजतिमेऽद्भुतः २१

अत्रकिंदेवतावासोदेवानांक्रीडनस्थलम्
यदेतन्मनसःक्षोभंकरोतिश्रीसमुच्चयैः २२
इतिवाक्यंसमाकर्ण्यजगादसुमतिस्तदा
वक्ष्यमाणगुणागाररामचंद्रपदाब्जधीः २३
नीलोऽयपर्वतोराजन्पुरतोभातिभूमिप
मनोहरैर्महाशृङ्गैःस्फाटिकाग्रैःसमंततः २४
एनंपश्यंतिनोपापाःपरदाररतानराः
विष्णोर्गुणगणान्येवैनमन्यंतेनराधमाः २५
श्रुतिस्मृतिसमुत्थंयेधर्मंसद्भिःसुसाधितम्
नमन्यंतेस्वबुद्धिस्थहेतुवादविचारणाः २६
नीलीविक्रयकर्तारोलाक्षाविक्रयकारकाः
योब्राह्मणोघृतादीनिविक्रीणातिसुरापकः २७
कन्यांरूपेणसंपन्नांनदद्यात्कुलशीलिने
विक्रीणातिद्रव्यलोभात्पितापापेनमोहितः २८
पत्नींदूषयतेयस्तुकुलशीलवतींनरः
स्वयमेवात्तिमधुरंबंधुभ्योनददातियः २९
भोजनेब्राह्मणार्थेचपाकभेदंकरोतियः
कृसरंपायसंवापिनार्थिनंदापयेत्कुधीः ३०
अतिथीनवमन्यंतेसूर्यतापादितापितान्
अंतरिक्षभुजोयेचयेचविश्वासघातकाः ३१
नपश्यंतिमहाराजरघुनाथपराङ्मुखाः
असौपुण्योगिरिवरःपुरुषोत्तमशोभितः ३२
पवित्रयतिसर्वान्नोदर्शनेनमनोहरः
अत्रतिष्ठतिदेवानांमुकुटैरर्चितांघ्रिकः ३३
पुण्यवद्भिर्दर्शनार्हःपुण्यदःपुरुषोत्तमः
श्रुतयोनेतिनेतीतिब्रुवाणानविदंतियम् ३४
यत्पादरजइंद्रादिदेवैर्मृग्यंसुदुर्ल्लभम्
वेदांतादिभिरन्यूनैर्वाक्यैर्विदंतियंबुधाः ३५
सोऽत्रश्रीमान्नीलशैलेवसतेपुरुषोत्तमः
आरुह्यतंनमस्कृत्यसंपूज्यसुकृतादिना ३६

नैवेद्यंभक्षयित्वावैभूपभूयाच्चतुर्भुजः
अत्राप्युदाहरंतीममितिहासंपुरातनम् ३७
तंशृणुष्वमहाराजसर्वाश्चर्यसमन्वितम्
रत्नग्रीवस्यनृपतेर्यद्वृत्तंसकुटुंबिनः ३८
चतुर्भुजादिकंप्राप्तंदेवदानवदुर्लभम्
आसीत्कांचीमहाराजपुरीलोकेषुविश्रुता ३९
महाजनपरीवारसमृद्धबलवाहना
यस्यांवसंतिविप्राग्र्याःषट्कर्मनिरताभृशम् ४०
सर्वभूतहितेयुक्तारामभक्तिषुलालसाः
क्षत्रियारणकर्तारःसंग्रामेऽप्यपलायिनः ४१
परदारपरद्रव्यपरद्रोहपराङ्मुखाः
वैश्याःकुसीदकृष्यादिवाणिज्यशुभवृत्तयः ४२
कुर्वन्तिरघुनाथस्यपदाम्भोजेरतिंसदा
शूद्राब्राह्मणसेवाभिर्गतरात्रिदिनान्तराः ४३
कुर्वंतिकथनंरामरामेतिरसनाग्रतः
प्राकृताःकेऽपिनोपापंकुर्वंतिमनसात्रवै ४४
दानंदयादमःसत्यंतत्रतिष्ठंतिनित्यशः
वदतेनपराबाधंवाक्यंकोऽपिनरोऽनघः ४५
नपारक्येधनेलोभंकुर्वंतिनहिपातकम्
एवंप्रजामहाराजरत्नग्रीवेणपाल्यते ४६
षष्ठांशंतत्रगृह्णातिनान्यंलोभविवर्जितः
एवंपालयमानस्यप्रजाधर्मेणभूपतेः ४७
गतानिबहुवर्षाणिसर्वभोगविलासिनः
विशालाक्षींमहाराजएकदाह्यूचिवानिदम् ४८
पतिव्रतांधर्मपत्नींपतिव्रतपरायणाम्
पुत्राजाताविशालाक्षिप्रजारक्षाधुरंधराः ४९
परीवारोमहान्मह्यंवर्ततेविगतज्वरः
हस्तिनोममशैलाभावाजिनःपवनोपमाः ५०
रथाश्चसुहयैर्युक्तावर्तंतेममनित्यशः
महाविष्णुप्रसादेनकिंचिन्न्यूनंममास्तिन ५१

एवंमनोरथस्त्वेकस्तिष्ठतेमानसेमम
परंतीर्थंमयानाद्यकृतंपरमशोभने ५२
गर्भवासविरामायक्षमंगोविंदशोभितम्
वृद्धोजातोऽस्म्यहंतावद्वलीपलितदेहवान् ५३
करिष्यामिमनोहारितीर्थसेवनमादृतः
योनरोजन्मपर्यंतंस्वोदरस्यप्रपूरकः ५४
नकरोतिहरेःपूजांसनरोगोवृषःस्मृतः
तस्माद्गच्छामिभोभद्रेतीर्थयात्रांप्रतिप्रिये ५५
सकुटुंबःसुतेन्यस्यधुरंराज्यस्यनिर्भृताम्
इतिव्यवस्यसंध्यायांहरिंध्यायन्निशांतरे ५६
अद्राक्षीत्स्वप्नमप्येकंब्राह्मणंतापसंवरम्
प्रातरुत्थायराजासौकृत्वासंध्यादिकाःक्रियाः ५७
सभांमंत्रिजनैःसार्द्धंसुखमासेदिवान्महान्
तावद्विप्रंददर्शाथतापसंकृशदेहिनम् ५८
जटावल्कलकौपीनधारिणंदंडपाणिनम्
अनेकतीर्थसेवाभिःकृतपुण्यकलेवरम् ५९
राजातंवीक्ष्यशिरसाप्रणनाममहाभुजः
अर्घ्यपाद्यादिकंचक्रेप्रहृष्टात्मामहीपतिः ६०
सुखोपविष्टंविश्रांतंपप्रच्छविदितंद्विजम्
स्वामिंस्त्वद्दर्शनान्मेऽद्यगतंदेहस्यपातकम् ६१
महांतःकृपणान्पातुंयांतितद्गेहमादरात्
तस्मात्कथयभोविप्रवृद्धस्यममसंप्रति ६२
कोदेवोगर्भनाशायकिंतीर्थंचक्षमंभवेत्
यूयंसर्वगताःश्रेष्ठाःसमाधिध्यानतत्पराः ६३
सर्वतीर्थावगाहेनकृतपुण्यात्मनोऽमलाः
यथावच्छृणवतेमह्यंश्रद्दधानायविस्तरात् ६४
कथयस्वप्रसादेनसर्वतीर्थविचक्षण
ब्राह्मणउवाच
शृणुराजेंद्रवक्ष्यामियत्पृष्टंतीर्थसेवनम् ६५
कस्यदेवस्यकृपयागर्भनिर्वारणंभवेत्

सेव्यःश्रीरामचंद्रोऽसौसंसारज्वरनाशकः ६६
पूज्यःसएवभगवान्पुरुषोत्तमसंज्ञकः
नानापुर्योमयादृष्टाःसर्वपापक्षयंकराः ६७
अयोध्यासरयूस्तापीतथाद्वारंहरेःपरम्
अवंतीविमलाकांचीरेवासागरगामिनी ६८
गोकर्णंहाटकाख्यंचहत्याकोटिविनाशनम्
मल्लिकाख्योमहाशैलोमोक्षदःपश्यतांनृणाम् ६९
यत्रांगेषुनृणांतोयंश्यामंवानिर्मलंभवेत्
पातकस्यापहारीदंमयादृष्टंतुतीर्थकम् ७०
मयाद्वारवतीदृष्टासुरासुरनिषेविता
गोमतीयत्रवहतिसाक्षाद्ब्रह्मजलाशुभा ७१
यत्रस्वापोलयःप्रोक्तोमृतिर्मोक्षइतिश्रुतिः
यस्यांसंवसतांनृणांनकलिप्रभवेत्क्वचित् ७२
चक्रांकायत्रपाषाणामानवाअपिचक्रिणः
पशवःकीटपक्ष्याद्याःसर्वेचक्रशरीरिणः ७३
त्रिविक्रमोवसेद्यस्यांसर्वलोकैकपालकः
सापुरीतुमहापुरायैर्मयादृग्गोचरीकृता ७४
कुरुक्षेत्रंमयादृष्टंसर्वहत्यापनोदनम्
स्यमंतपंचकंयत्रमहापातकनाशनम् ७५
वाराणसीमयादृष्टाविश्वनाथकृतालया
यत्रोपदिशतेमंत्रंतारकंब्रह्मसंज्ञितम् ७६
यस्यांमृताःकीटपतंगभृंगाः
पश्वादयोवासुरयोनयोवा
स्वकर्मसंभोगसुखंविहाय
गच्छंतिकैलासमतीतदुःखाः ७७
मणिकर्णियत्रतीर्थंयस्यामुत्तरवाहिनी
करोतिसंसृतेर्बंधच्छेदंपापकृतामपि ७८
कपर्दिनःकुंडलिनःसर्पभूषाधरावराः
गजचर्मपरीधानावसंतिगतदुःखकाः ७९
कालभैरवनामात्रकरोतियमशासनम्

नकरोतिनृणांवार्तांयमोदंडधरःप्रभुः ८०
एतादृशीमयादृष्टाकाशीविश्वेश्वरांकिता
अनेकान्यपितीर्थानिमयादृष्टानिभूमिप ८१
परमेकंमहच्चित्रंयद्दृष्टंनीलपर्वते
पुरुषोत्तमसान्निध्येतन्नक्वाप्यन्निगोचरम् ८२
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
ब्राह्मणसमागमोनामसप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

ब्राह्मणउवाच
राजंस्त्वंशृणुयद्वृत्तंनीलेपर्वतसत्तमे
यच्छ्रद्दधानाःपुरुषायांतिब्रह्मसनातनम् १
मयापर्यटतातत्रगतंनीलाभिधेगिरौ
गंगासागरतोयेनक्षालितप्रांगणेमुहुः २
तत्रभिल्लामयादृष्टाःपर्वताग्रेधनुर्भृतः
चतुर्भुजामूलफलैर्भक्ष्यैर्निर्वाहितक्लमाः ३
तदामेमनसिच्चिप्रंसंशयःसुमहानभूत्
चतुर्भुजाःकिमेतेवैधनुर्बाणधरानराः ४
वैकुंठवासिनांरूपंदृश्यतेविजितात्मनाम्
कथमेतैरुपालब्धंब्रह्माद्यैरपिदुर्ल्लभम् ५
शंखचक्रगदाशार्ङ्गपद्मोल्लसितपाणयः
वनमालापरीतांगाविष्णुभक्ताइवांतिके ६
संशयाविष्टचित्तेनमयापृष्टंतदानृप
यूयंकेबतयुष्माभिर्लब्धंचातुर्भुजंकथम् ७
तदातैर्बहुहास्यंतुकृत्वामांप्रतिभाषितम्
ब्राह्मणोऽयनजानातिपिंडमाहात्म्यमद्भुतम् ८
इतिश्रुत्वाऽवदंचाहंकःपिंडःकस्यदीयते
तन्ममब्रूतधर्मिष्ठाश्चतुर्भुजशरीरिणः ९
तदामद्वाक्यमाकर्ण्यकथितंतैर्महात्मभिः
सर्वंतत्रतुयद्वृत्तंचतुर्भुजभवादिकम् १०

किराताऊचुः
शृणुब्राह्मणवृत्तांतमस्माकंपृथुकःशिशुः
नित्यंजंबूफलादीनिभक्षयन्क्रीडयाचरन् ११
एकदारममाणस्तुगिरिशृंगंमनोरमम्
समारुरोहशिशुभिःसमंतात्परिवारितः १२
तदातत्रददर्शाहंदेवायतनमद्भुतम्
गारुत्मतादिमणिभिःखचितंस्वर्णभित्तिकम् १३
स्वकांत्यातिमिरश्रेणींदारयद्रविवद्भृशम्
दृष्ट्वाविस्मयमापेदेकिमिदंकस्यवैगृहम् १४
गत्वाविलोकयामीतिकिमिदंमहतांपदम्
इतिसंचिंत्यगेहांतर्जगामबहुभाग्यतः १५
ददर्शतत्रदेवेशंसुरासुरनमस्कृतम्
किरीटहारकेयूरग्रैवेयाद्यैर्विराजितम् १६
मनोहरावतंसौचधारयंतंसुनिर्मलौ
पादपद्मेतुलसिकागंधमत्तषडंघ्रिके १७
शंखचक्रगदाशार्ङ्गपद्माद्यैर्मूर्तिसंयुतैः
उपासितांघ्रिंश्रीमूर्तिंनारदाद्यैःसुसेवितम् १८
केचिद्गायंतिनृत्यंतिहसंतिपरमाद्भुतम्
प्रीणयंतिमहाराजंसर्वलोकैकवंदितम् १९
हरिंवीक्ष्यमदीयोर्भस्तत्रसंजग्मिवान्मुने
देवास्तत्रविधायोच्चैःपूजांधूपादिसंयताम् २०
नैवेद्यंश्रीप्रियस्यार्थेकृत्वानीराजनंततः
जग्मुःस्वंस्वंगृहंराजन्कृपांपश्यंतआदरात् २१
महाभाग्यवशात्तेनप्राप्तंनैवेद्यसिक्थकम्
पतितंब्रह्मदेवाद्यैर्दुर्ल्लभंसुरमानुषैः २२
तद्भक्षणंचकृत्वाथोश्रीमूर्तिमवलोक्यच
चतुर्भुजत्वमाप्तंवैपृथुकेनसुशोभिना २३
तदास्माभिर्गृहंप्राप्तोबालकोवीक्षितोमुहुः
चतुर्भुजत्वंसंप्राप्तःशंखचक्रादिधारकः २४
अस्माभिःपृष्टमेतस्यकिमेतज्जातमद्भुतम्

तदाप्रोवाचनःसर्वान्बालकःपरमाद्भुतम् २५
शिखराग्रेगतःपूर्वंतत्रदृष्टःसुरेश्वरः
तत्रनैवेद्यसिक्थंतुमयाप्राप्तंमनोहरम् २६
तस्यभक्षणमात्रेणकारणेनतुसांप्रतम्
चतुर्भुजत्वंसंप्राप्तोविस्मयेनसमन्वितः २७
तच्छ्रुत्वातुवचस्तस्यसद्यःसंप्राप्तविस्मयैः
अस्माभिरप्यसौदृष्टोदेवःपरमदुर्ल्लभः २८
अन्नादिकंतत्रभुक्तंसर्वस्वादसमन्वितम्
वयंचतुर्भुजाजातादेवस्यकृपयापुनः
गत्वात्वमपिदेवस्यदर्शनंकुरुसत्तम २९
भुक्त्वातत्रान्नसिक्थंतुभवविप्रचतुर्भुजः
त्वयापृष्टंयदाश्चर्यंतदुक्तंवाडवर्षभ ३०

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे ब्राह्मणोपदेशोनामाष्टादशोऽध्यायः १८

## ऊनविंशोऽध्यायः

ब्राह्मणउवाच
इतिश्रुत्वातुतद्वाक्यंभिल्लानामहमद्भुतम्
अत्याश्चर्यमिदंमत्वाप्रहृष्टोऽभवमित्युत १
गंगासागरसंयोगेस्नात्वापुण्यकलेवरः
शृंगमारुरुहेतत्रमणिमाणिक्यचित्रितम् २
तत्रापश्यंमहाराजदेवंदेवादिवंदितम्
नमस्कृत्वाकृतार्थोऽहजातोन्नप्राशनेनच ३
चतुर्भुजत्वंसंप्राप्तःशंखचक्रादिचिह्नितम्
पुरुषोत्तमदर्शनेननपुनर्गर्भमाविशम् ४
राजंस्त्वमपितत्राशुगच्छनीलाभिधंगिरिम्
कृतार्थंकुरुचात्मानंगर्भदुःखविवर्जितम् ५
इत्याकर्ण्यवचस्तस्यवाडवाग्र्यस्यधीमतः
पप्रच्छहृष्टगात्रस्तुतीर्थयात्राविधिंमुनिम् ६
राजोवाच

साधुविप्राग्र्यहेसाधोत्वयाप्रोक्तंममानघ
पुरुषोत्तममाहात्म्यंशृगवतांपापनाशनम् ७
ब्रूहितत्तीर्थयात्रायांविधिंश्रुतिसमन्वितम्
विधिनाकेनसंपूर्णफलप्राप्तिर्नृणांभवेत् ८
ब्राह्मणउवाच
शृणुराजन्प्रवक्ष्यामितीर्थयात्राविधिंशुभम्
येनसंप्राप्यतेदेवः सुरासुरनमस्कृतः ९
वलीपलितदेहोवायौवनेनान्वितोऽपिवा
ज्ञात्वामृत्युमनिस्तीर्यंहरिंशरणमाव्रजेत् १०
तत्कीर्तनेतच्छ्रवणेवंदनेतस्यपूजने
मतिरेवप्रकर्तव्यानान्यत्रवनितादिषु ११
सर्वंनश्वरमालोक्यक्षणस्थायिसुदुःखदम्
जन्ममृत्युजरातीतंभक्तिवल्लभमच्युतम् १२
क्रोधात्कामाद्भयाद्द्वेषाल्लोभाद्दंभान्नरः पुनः
यथाकथंचिद्विभजन्नसदुःखंसमश्नुते १३
सहरिर्जायतेसाधुसंगमात्पापवर्जितात्
येषांकृपातः पुरुषाभवंत्यसुखवर्जिताः १४
तेसाधवः शांतरागाः कामलोभविवर्जिताः
ब्रुवंतियन्महाराजतत्संसारनिवर्तकम् १५
तीर्थेषुलभ्यतेसाधूरामचंद्रपरायणः
यद्दर्शनंनृणांपापराशिदाहाशुशुक्षणिः १६
तस्मात्तीर्थेषुगंतव्यंनरैः संसारभीरुभिः
पुगयोदकेषुसततंसाधुश्रेणिविराजिषु १७
तानितीर्थानिविधिनादृष्टानिप्रहरंत्यघम्
तंविधिंनृपशार्दूलकुरुष्वश्रुतिगोचरम् १८
विरागंजनयेत्पूर्वंकलत्रादिकुटुंबके
असत्यभूतंतज्ज्ञात्वाहरिंतुमनसास्मरेत् १९
क्रोशमात्रंततोगत्वारामरामेतिचब्रुवन्
तत्रतीर्थादिषुस्नात्वाक्षौरंकुर्याद्विधानवित् २०
मनुष्याणांचपापानितीर्थानिप्रतिगच्छताम्

केशानाश्रित्यतिष्ठंतितस्माद्वपनमाचरेत् २१
ततोदंडंतुनिर्ग्रन्थिंकमंडलुमथाजिनम्
बिभृयाल्लोभनिर्मुक्तस्तीर्थवेषधरोनरः २२
विधिनागच्छतांनृणांफलावाप्तिर्विशेषतः
तस्मात्सर्वप्रयत्नेनतीर्थयात्राविधिंचरेत् २३
यस्यहस्तौचपादौचमनश्चैवसुसंहितम्
विद्यातपश्चकीर्तिश्चसतीर्थफलमश्नुते २४
हरेकृष्णहरेकृष्णभक्तवत्सलगोपते
शरण्यभगवन्विष्णोमांपाहिबहुसंसृतेः २५
इतिब्रुवन्रसनयामनसाचहरिंस्मरन्
पादचारीगतिंकुर्यात्तीर्थंप्रतिमहोदयः २६
यानेनगच्छन्पुरुषःसमभागफलंलभेत्
उपानद्भ्यांचतुर्थांशंगोयानेगोवधादिकम् २७
व्यवहर्तातृतीयांशंसेवयाष्टमभागभाक्
अनिच्छयाव्रजंस्तत्रतीर्थमर्धफलंलभेत् २८
यथायथंप्रकर्तव्यातीर्थानामभियात्रिका
पापक्षयोभवत्येवविधिदृष्ट्याविशेषतः २९
तत्रसाधून्नमस्कुर्यात्पादवंदनसेवनैः
तद्द्वाराहरिभक्तिर्हिप्राप्यतेपुरुषोत्तमे ३०
इतितीर्थविधिःप्रोक्तःसमासेननविस्तरात्
एवंविधिंसमाश्रित्यगच्छत्वंपुरुषोत्तमम् ३१
तुभ्यंतुष्टोमहाराजदास्यतेभक्तिमच्युतः
यथासंसारनिर्वाहःक्षणादेवभविष्यति ३२
तीर्थयात्राविधिंश्रुत्वासर्वपातकनाशनम्
मुच्यतेसर्वपापेभ्यउग्रेभ्यःपुरुषर्षभ ३३
सुमतिरुवाच
इतिवाक्यंसमाकर्ण्यववंदेचरणौमहान्
तत्तीर्थदर्शनौत्सुक्यविह्वलीकृतमानसः ३४
आदिदेशनिजामात्यंमंत्रवित्तममुत्तमम्
तीर्थयात्रेच्छयासर्वान्सहनेतुंमनोदधत् ३५

मंत्रिन्पौरजनान्सर्वानादिशत्वंममाज्ञया
पुरुषोत्तमपादाब्जदर्शनप्रीतिहेतवे ३६
येमदीयेपुरेलोकायेचमद्वाक्यकारकाः
सर्वेनिर्यांतुमत्पुर्यामयासहनरोत्तमाः ३७
येतुमद्वाक्यमुल्लंघ्यस्थास्यंतिपुरुषागृहे
तेदंडचायमदंडेनपापिनोऽधर्महेतवः ३८
किंतेनसुतवृंदेनबांधवैःकिंसुदुर्नयैः
यैर्नदृष्टःस्वचक्षुर्भ्यांपुरायदःपुरुषोत्तमः ३९
सूकरीयूथवत्तेषांप्रसूतिर्विट्प्रभक्षिका
येषांपुत्राश्चपौत्रावाहरिंनशरणंगताः ४०
योदेवोनाममात्रेणसर्वान्पावयितुंक्षमः
तंनमस्कुरुतक्षिप्रंमदीयाःप्रकृतिव्रजाः ४१
इतिवाक्यंमनोहारिभगवद्गुणगुंफितम्
प्रजहर्षमहामात्यउत्तमःसत्यनामधृक् ४२
हस्तिनंवरमारोप्यपटहेनव्यघोषयत्
यदादिष्टंनृपेणेहतीर्थयात्रांसमिच्छता ४३
गच्छंतुत्वरितालोकाराज्ञासहमहागिरिम्
दृश्यतांपापसंहारीपुरुषोत्तमनामधृक् ४४
क्रियतांसर्वसंसारसागरोगोष्पदंपुनः
भूष्यतांशंखचक्रादिचिह्नैःस्वस्वतनुर्नरैः ४५
इत्यादिघोषयामासराज्ञादिष्टंयदद्भुतम्
सचिवोरघुनाथांघ्रिध्याननिर्वारितश्रमः ४६
तच्छ्रुत्वाताःप्रजाःसर्वाश्चानंदरससंप्लुताः
मनोदधुःस्वनिस्तारेपुरुषोत्तमदर्शनात् ४७
निर्ययुर्ब्राह्मणास्तत्रशिष्यैःसहसुवेषिणः
आशिषंवरदानाढ्यांददतोभूमिपंप्रति ४८
क्षत्रियाधन्विनोवीरावैश्यावस्तुक्रयाश्चिताः
शूद्राःसंसारनिस्तारहर्षितस्वीयविग्रहाः ४९
रजकाश्चर्मकाःक्षौद्राःकिराताभित्तिकारकाः
सूचीवृत्त्याचजीवंतस्तांबूलक्रयकारकाः ५०

तालवाद्यधरायेचयेचरंगोपजीविनः
तैलविक्रयिणश्चैववस्त्रविक्रयिणस्तथा ५१
सूतावदंतःपौराणींवार्ताहर्षसमन्विताः
मागधाबंदिनस्तत्रनिर्गताभूमिपाज्ञया ५२
भिषग्वृत्त्याचजीवंतस्तथापाशककोविदाः
पाकस्वादुरसाभिज्ञाहास्यवाक्यानुरंजकाः ५३
एंद्रजालिकविद्याध्यास्तथावार्तासुकोविदाः
प्रशंसंतोमहाराजंनिर्ययुःपुरमध्यतः ५४
राजापितत्रनिर्वर्त्यप्रातःसंध्यादिकाःक्रियाः
ब्राह्मणंतापसश्रेष्ठमानिनायसुनिर्मलम् ५५
तदाज्ञयामहाराजोनिर्जगामपुराद्बहिः
लोकैरनुगतोराजाबभौचंद्रइवोडुभिः ५६
क्रोशमात्रंसगत्वाथक्षौरंकृत्वाविधानतः
दंडंकमंडलुंबिभ्रन्मृगचर्मतथाशुभम् ५७
शुभवेषेणसंयुक्तोहरिध्यानपरायणः
कामक्रोधादिरहितंमनोबिभ्रन्महायशाः ५८
तदादुंदुभयोभेर्यश्चानकाःपणवास्तथा
शंखवीणादिकाश्चैवाध्मातास्तद्वादकैर्मुहुः ५९
जयदेवेशदुःखघ्नपुरुषोत्तमसंज्ञित
दर्शयस्वतनुंमह्यंवदंतोनिर्ययुर्जनाः ६०

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
रत्नग्रीवस्यतीर्थप्रयाणंनामैकोनविंशोऽध्यायः १९

## विंशोऽध्यायः

सुमतिरुवाच
अथप्रयातेभूपालेसर्वलोकसमन्विते
महाभागैर्वैष्णवैश्चगायकैःकृष्णकीर्तनम् १
शुश्रावासौमहाराजोमार्गेगोविंदकीर्तनम्
जयमाधवभक्तानांशरण्यपुरुषोत्तम २
मार्गेतीर्थान्यनेकानिकुर्वन्पश्यन्महोदयम्

तापसब्राह्मणात्तेषांमहिमानमथाशृणोत् ३
विचित्रविष्णुवार्ताभिर्विनोदितमनानृपः
मार्गेमार्गेमहाविष्णुंगापयामासगायकान् ४
दीनांधकृपणानांचपंगूनांवासनोचितम्
दानंददौमहाराजोबुद्धिमान्विजितेंद्रियः ५
अनेकतीर्थविरजमात्मानंभव्यतांगतम्
कुर्वन्ययौस्वीयलोकैर्हरिध्यानपरायणः ६
नृपोगच्छन्ददर्शाग्रेनदींपापप्रणाशिनीम्
चक्रांकितग्रावयुतांमुनिमानसनिर्मलाम् ७
अनेकमुनिवृंदानांबहुश्रेणिविराजिताम्
सारसादिपतत्रीणांकूजितैरुपशोभिताम् ८
दृष्ट्वापप्रच्छविप्राग्र्यंतापसंधर्मकोविदम्
अनेकतीर्थमाहात्म्यविशेषज्ञानजृंभितम् ९
स्वामिन्केयंनदीपुण्यामुनिवृन्दनिषेविता
करोतिममचित्तस्यप्रमोदभरनिर्भरम् १०
इतिश्रुत्वावचस्तस्यराजराजस्यधीमतः
वक्तुंप्रचक्रमेविद्वांस्तीर्थमाहात्म्यमुत्तमम् ११
ब्राह्मणउवाच
गंडकीयंनदीराजन्सुरासुरनिषेविता
पुण्योदकपरीवाहहतपातकसंचया १२
दर्शनान्मानसंपापंस्पर्शनात्कर्मजंदहेत्
वाचिकंस्वीयतोयस्यपानतःपापसंचयम् १३
पुरादृष्ट्वाप्रजानाथःप्रजाःसर्वाविपावनीः
स्वगंडविप्रुषोनेकपापघ्नींसृष्टवानिमाम् १४
एनांनदींयेपुण्योदांस्पृशंतिसुतरंगिणीम्
तेगर्भभाजोनैवस्युरपिपापकृतोनराः १५
अस्यांभवायेचाश्मानश्चक्रचिह्नैरलंकृताः
तेसाक्षाद्भगवंतोहिस्वस्वरूपधराःपराः १६
शिलांसंपूजयेद्यस्तुनित्यंचक्रयुतांनरः
नजातुसजनन्यावैजठरंसमुपाविशेत् १७

पूजयेद्योनरोधीमाञ्छालग्रामशिलांवराम्
तेनाचारवताभाव्यंदंभलोभवियोगिना १८
परदारपरद्रव्यविमुखेननरेणहि
पूजनीयःप्रयत्नेनशालग्रामःसचक्रकः १९
द्वारवत्यांभवंचक्रंशिलावैगंडकीभवा
पुंसांक्षणाद्धरत्येवपापंजन्मशतार्जितम् २०
अपिपापसहस्राणांकर्तातावन्नरोभवेत्
शालग्रामशिलातोयंपीत्वापूतोभवेत्क्षणात् २१
ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवेदपथिस्थितः
शालग्रामंपूजयित्वागृहस्थोमोक्षमाप्नुयात् २२
नजातुचित्स्त्रियाकार्यंशालग्रामस्यपूजनम्
भर्तृहीनाथसुभगास्वर्गलोकहितैषिणी २३
मोहात्स्पृष्ट्वापिमहिलाजन्मशीलगुणान्विता
हित्वापुण्यसमूहंसासत्वरंनरकंव्रजेत् २४
स्त्रीपाणिमुक्तपुष्पाणिशालग्रामशिलोपरि
पवेरधिकपातानिवदंतिब्राह्मणोत्तमाः २५
चंदनंविषसंकाशंकुसुमंवज्रसंनिभम्
नैवेद्यंकालकूटाभंभवेद्भगवतःकृतम् २६
तस्मात्सर्वात्मनात्याज्यंस्त्रियास्पर्शःशिलोपरि
कुर्वतीयातिनरकंयावदिंद्राश्चतुर्दश २७
अपिपापसमाचारोब्रह्महत्यायुतोऽपिवा
शालग्रामशिलातोयंपीत्वायातिपरांगतिम् २८
तुलसीचंदनंवारिशंखोघंटाथचक्रकम्
शिलाताम्रस्यपात्रंतुविष्णोर्नामपदामृतम् २९
पदामृतंतुनवभिःपापराशिप्रदाहकम्
वदंतिमुनयःशांताःसर्वशास्त्रार्थकोविदाः ३०
सर्वतीर्थपरिस्नानात्सर्वक्रतुसमर्चनात्
पुण्यंभवतियद्राजन्बिंदौबिंदौतदद्भुतम् ३१
शालग्रामशिलायत्रपूज्यतेपुरुषोत्तमैः
तत्रयोजनमात्रंतुतीर्थकोटिसमन्वितम् ३२

शालग्रामाःसमाःपूज्याःसमेषुद्वितयंनहि
विषमाएवसंपूज्याविषमेषुत्रयंनहि ३३
द्वारावतीभवंचक्रंतथावैगंडकीभवम्
उभयोःसंगमोयत्रतत्रगंगासमुद्रगा ३४
रूक्षाःकुर्वंतिपुरुषानायुःश्रीबलवर्जितान्
तस्मात्स्निग्धामनोहारिरूपिरायोददतिश्रियम् ३५
आयुष्कामोनरोयस्तुधनकामोहियःपुमान्
पूजयन्सर्वमाप्नोतिपारलौकिकमैहिकम् ३६
प्राणांतकालेपुंसस्तुभवेद्भाग्यवतोनृप
वाचिनामहरेःपुरायंशिलाहृदितदंतिके ३७
गच्छत्सुप्राणमार्गेषुयस्यविश्रंभतोऽपिचेत्
शालग्रामशिलास्फूर्तिस्तस्यमुक्तिर्नसंशयः ३८
पुराभगवताप्रोक्तमंबरीषायधीमते
ब्राह्मणान्यासिनःस्निग्धाःशालग्रामशिलास्तथा ३९
स्वरूपत्रितयंमह्यमेतद्धिक्षितिमंडले
पापिनांपापनिर्हारंकर्तुंधृतमुदंचता ४०
निंदंतिपापिनोयेवाशालग्रामशिलांसकृत्
कुंभीपाकेपचंत्याशुयावदाभूतसंप्लवम् ४१
पूजांसमुद्यतंकर्तुंयोवारयतिमूढधीः
तस्यमातापिताबंधुवर्गानरकभागिनः ४२
योवाकथयतिप्रेष्ठंशालग्रामार्चनंकुरु
सकृतार्थोनयत्याशुवैकुंठंस्वस्यपूर्वजान् ४३
अत्रैवोदाहरंतीममितिहासंपुरातनम्
मुनयोवीतरागाश्चकामक्रोधविवर्जिताः ४४
पुराकीकटसंज्ञेवैदेशेधर्मविवर्जिते
आसीत्पुल्कसजातीयोनरःशबरसंज्ञितः ४५
नित्यंजंतुवधोद्युक्तःशरासनधरोमुहुः
तीर्थंप्रतियियासूनांबलाद्धरतिजीवितम् ४६
अनेकप्राणिहत्याकृत्परस्वेनिरतःसदा
सदारागादिसंयुक्तःकामक्रोधादिसंयुतः ४७

विचरत्यनिशंभीमेवनेप्राणिवधंकरः
विषसंसक्तबाणाग्ररूढचापगुणोद्धुरः ४८
सकदापर्यटन्व्याधःप्राणिमात्रभयंकरः
कालंप्राप्तंनजानातिसमीपेऽप्युग्रमानसः ४९
यमदूतास्तुसंप्राप्ताःपाशमुद्गरपाणयः
ताम्रकेशादीर्घनखालंबदंष्ट्राभयानकाः ५०
श्यामालोहस्यनिगडान्बिभ्रतोमोहकारकाः
बध्नंतुपापिनंह्येनंप्राणिमात्रभयंकरम् ५१
कदाचिन्मनसानायंप्राणिमात्रोपकारकः
परदारपरद्रव्यपरद्रोहपरायणः ५२
एतस्यजिह्वांमहतीमहंनिष्कासयाम्यतः
एकोवदतिचैतस्यचक्षुरुत्पाटयाम्यहम् ५३
एकोवदतिचैतस्यकरौकृंतामिपापिनः
अन्योवदत्यहंकर्णौकर्तयामिदुरात्मनः ५४
एवंवदंतःसुभृशंदन्तैर्दन्तनिपीडकाः
आगत्यतंदुरात्मानंसायुधास्तस्थुरुन्मदाः ५५
एकोदूतस्तदासर्परूपंधृत्वादशत्पदे
सदष्टमात्रःसहसागतासुःपर्यजायत ५६
तदातंलोहपाशेनबद्धातेयमकिंकराः
कशाभिस्ताडयामासुर्मुद्गरैःप्राहरन्क्रुधा ५७
अहोदुष्टदुरात्मंस्त्वंकदाचिन्नाचरःशुभम्
मनसापियतस्त्वांवैक्षेप्स्यामोरौरवेषुच ५८
त्वङ्मांसंवायसारौद्राभक्षयिष्यंतिवैक्रुधा
आजन्मतस्तुभवतानकृतंहरिसेवनम् ५९
त्वयाकलत्रपुत्राद्याद्रोहंकृत्वासुपोषिताः
नकदाचित्स्मृतोदेवःपापहारीजनार्दनः ६०
तस्मात्त्वांलोहशंकौवाकुंभीपाकेचरौरवे
धर्मराजाज्ञयासर्वेनेष्यामोबहुताडनैः ६१
एवमुक्त्वायदानेतुंसमैच्छन्यमकिंकराः
तावत्प्राप्तोमहाविष्णुचरणाब्जपरायणः ६२

यमदूतास्तदादृष्टावैष्णवेनमहात्मना
पाशमुद्गरदंडादिदुष्टायुधधरागणाः ६३
पुल्कसंलोहनिगडैर्बद्ध्वायातुंसमुद्यताः
बन्धबन्धग्रसच्छिन्धिभिन्धिभिन्धीतिवादिनः ६४
तदाकृपालुस्तंप्रेक्ष्यपद्मनाभपरायणः
अत्यंतकृपयायुक्तंचेतस्तत्रतदाकरोत् ६५
असौमहादुष्टपीडांमायातुममसन्निधौ
मोचयाम्यहमद्यैवयमदूतेभ्यएवच ६६
इतिकृत्वामतिंतस्मिन्कृपायुक्तोमुनीश्वरः
शालग्रामशिलांहस्तेगृहीत्वास्यगतोऽतिके ६७
तस्यपादोदकंपुरायंतुलसीदलमिश्रितम्
मुखेविनिक्षिपन्कर्णेरामनामजजापह ६८
तुलसींमस्तकेतस्यधारयामासवैष्णवः
शिलांहृदिमहाविष्णोर्धृत्वाप्राहसवैष्णवः ६९
गच्छंतुयमदूतावैयातनासुपरायणाः
शालग्रामशिलास्पर्शोदहतात्पातकंमहत् ७०
इत्युक्तवतितस्मिन्वैगणाविष्णोर्महाद्भुताः
आययुस्तस्यसविधेशिलास्पर्शाद्गतांहसः ७१
पीतवस्त्राःशंखचक्रगदापद्मविराजिताः
आगत्यमोचयामासुर्लोहपाशाद्दुरासदात् ७२
मोचयित्वामहापापकारकंपुल्कसंनरम्
ऊचुःकिमर्थंबद्धोऽयवैष्णवःपूज्यदेहभृत् ७३
कस्याज्ञाकारकायूयंयदधर्मप्रकारकाः
मुंचंतुवैष्णवंत्वेनंकिमर्थंविधृतोह्ययम् ७४
इतिवाक्यंसमाकरार्यजगदुर्यमकिंकराः
धर्मराजाज्ञयाप्राप्तानेतुंपापिनमुद्यताः ७५
नासौकदाचिन्मनसाप्राणिमात्रोपकारकः
प्राणिहत्यामहापापकारीदुष्टशरीरभृत् ७६
नृन्बहूंस्तीर्थयात्रायांगच्छतोऽसौव्यलुंठयत्
परदाररतोनित्यंसर्वपापाधिकारकः ७७

तस्मान्नेतुंवयंप्राप्ताःपापिनंपुल्कसंनरम्
भवद्भिर्मोचितःकस्मादकस्मादागतैर्भटैः ७८
विष्णुदूताऊचुः
ब्रह्महत्यादिकंपापंप्राणिकोटिवधोद्भवम्
शालग्रामशिलास्पर्शःसर्वंदहतितत्क्षणात् ७९
रामेतिनामयच्छ्रोत्रेविश्रंभादागतंयदि
करोतिपापसंदाहंतूलंवह्निकणोयथा ८०
तुलसीमस्तकेयस्यशिलाहृदिमनोहरा
मुखेकर्णेऽथवारामनाममुक्तस्तदैवसः ८१
तस्मादनेनतुलसीमस्तकेविधृतापुरा
श्रावितंरामनामाशुशिलाहृदिसुधारिता ८२
तस्मात्पापसमूहोऽस्यदग्धःपुण्यकलेवरः
यास्यतेपरमंस्थानंपापिनांयत्सुदुर्ल्लभम् ८३
वर्षायुतंतत्रभुक्त्वाभोगान्सर्वमनोहरान्
भारतेजन्मसंप्राप्यसमाराध्यजगद्गुरुम् ८४
प्राप्स्यतेपरमंस्थानंसुरासुरसुदुर्ल्लभम्
नज्ञातोमहिमासम्यक्छिलायाःपरमेष्ठिनः ८५
दृष्टास्पृष्टार्चितावापिसर्वपापहराक्षणात्
इत्युक्त्वाविरताःसर्वेमहाविष्णोर्गणामुदा ८६
याम्यास्तेकिंकराराज्ञेकथयामासुरद्भुतम्
वैष्णवोहर्षमापेदेरघुनाथपरायणः ८७
मुक्तोऽसौयमपाशाच्चगमिष्यतिपरंपदम्
तदाजगामविमलंकिंकिणीजालमंडितम् ८८
विमानंदेवलोकात्तुमनोहारिमहाद्भुतम्
तत्रारुह्यगतःस्वर्गंमहापुण्यैर्निषेवितम् ८९
भोगान्भुक्त्वासविपुलानाजगाममहीतलम्
काश्यांजन्मसमासाद्यशुचिवाडवसत्कुले ९०
आराध्यजगतामीशंगतवान्परमंपदम्
सपापीसाधुसंगत्याशालग्रामशिलांस्पृशन् ९१
महापीडाविनिर्मुक्तोगतवान्परमंपदम्

मयातेऽभिहितंराजन्गंडकीचरितंमहत् ९२
श्रुत्वाविमुच्यतेपापैर्भुक्तिंमुक्तिंचविंदति ९३
इति श्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादे
गंडकीमाहात्म्यंनामविंशोऽध्यायः २०

## एकविंशोऽध्यायः

सुमतिरुवाच
एतन्माहात्म्यमतुलंगंडक्याःकर्णगोचरम्
कृत्वाकृतार्थमात्मानममन्यतनृपोत्तमः १
स्नात्वातीर्थेपितॄन्सर्वान्संतर्प्यजहृषेमहान्
शालग्रामशिलापूजांकुर्वन्वाडववाक्यतः २
चतुर्विंशच्छिलास्तत्रगृहीत्वासनृपोत्तमः
पूजयामासप्रेम्णाचचंदनाद्युपचारकैः ३
तत्रदानानिदत्त्वाचदीनांधेभ्योविशेषतः
गंतुंप्रचक्रमेराजापुरुषोत्तममंदिरम् ४
एवंक्रमेणसंप्राप्तोगंगासागरसंगमम्
कृत्वाक्षिगोचरंतंचब्राह्मणंपृष्टवान्मुदा ५
स्वामिन्वदकियद्दूरेनीलाख्यःपर्वतोमहान्
पुरुषोत्तमसंवासःसुरासुरनमस्कृतः ६
तदाश्रुत्वामहद्वाक्यंरत्नग्रीवस्यभूपतेः
उवाचविस्मयाविष्टोराजानंप्रतिसादरम् ७
राजन्नेतत्स्थलंनीलपर्वतस्यनमस्कृतम्
किमर्थंदृश्यतेनैवमहापुण्यफलप्रदम् ८
पुनःपुनरुवाचेदंस्थलंनीलस्यभूभृतः
कथंनदृश्यतेराजन्पुरुषोत्तमवासभृत् ९
अत्रस्नातंमयासम्यगत्रभिल्लाक्षिगोचराः
अनेनैवपथाराजन्नारूढंपर्वतोपरि १०
इतितद्वाक्यमाकर्ण्यविव्यथेमानसेनृपः
नीलभूधरदर्शायकुर्वन्नुत्कंठितंमनः ११
उवाचतत्कथंविप्रदृश्येतपुरुषोत्तमः

कथंवादृश्यतेनीलस्तदुपायंवदस्वनः १२
तदावाक्यंसमाकर्ण्यरत्नग्रीवस्यभूपतेः
तापसोब्राह्मणोवाक्यमुवाचनृपविस्मितः १३
गंगासागरसंयोगेस्नात्वास्माभिर्महीपते
स्थातव्यंतावदेवात्रयावन्नीलोनदृश्यते १४
गीयतेपापहादेवःपुरुषोत्तमसंज्ञितः
करिष्यतेकृपामाशुभक्तवत्सलनामधृक् १५
त्यजत्यसौनवैभक्तान्देवदेवशिरोमणिः
अनेकेरक्षिताभक्तास्तद्ध्यायस्वमहामते १६
इतिवाक्यंसमाकर्ण्यराजाव्यथितचेतसा
स्नात्वागंगाब्धिसंयोगेततोनशनमादधात् १७
करिष्यतिकृपांयर्हिदर्शनेपुरुषोत्तमः
पूजांकृत्वाशनंकुर्यामन्यथानशनंव्रतम् १८
इतिकृत्वासनियमंगंगासागररोधसि
गायन्हरिगुणग्राममुपवासमथाचरत् १९
राजोवाच
जयदीनदयाकरप्रभोजयदुःखापहमङ्गलाह्वय
जयभक्तजनार्तिनाशनकृतवर्ष्मञ्जयदुष्टघातक २०
अंबरीषमथवीक्ष्यदुःखितंविप्रशापहतसर्वमङ्गलम्
धारयन्निजकरेसुदर्शनंसंररक्षजठराधिवासतः २१
दैत्यराजपितृकारितव्यथःशूलपाशजलवह्निपातनैः
श्रीनृसिंहतनुधारिणात्वयारक्षितःसपदिपश्यतःपितुः २२
ग्राहवक्त्रपतितांघ्रिमुद्भटंवारणेंद्रमतिदुःखपीडितम्
वीक्ष्यसाधुकरुणार्द्रमानसस्त्वंगरुत्मतिकृतारुहक्रियः २३
त्यक्तपक्षिपतिरात्तचक्रकोवेगकंपयुतमालिकांबरः
गीयसेसुभिरमुष्यनक्रतोमोचकःसपदितद्विनाशकः २४
यत्रयत्रतवसेवकार्दनंतत्रतत्रबतदेहधारिणा
पाल्यतेचभवतानिजःप्रभोपापहारिचरितैर्मनोहरैः २५
दीननाथसुरमौलिहीरकाघृष्टपादतलभक्तवल्लभ
पापकोटिपरिदाहकप्रभोदर्शयस्वनिजदर्शनंमम २६

पापकृद्यदिजनोयमागतोमानसेतवतथाहिदर्शय
तावकावयमघौघनाशनंविस्मृतंनहिसुरासुरार्चित २७
येवदंतितवनामनिर्मलंतेतरंतिसकलाघसागरम्
संस्मृतिर्यदिकृतातदामयाप्राप्यतांसकलदुःखवारक २८
सुमतिरुवाच
एवंगायन्गुणान्रात्रौदिवावापिमहीपतिः
ज्ञणमात्रंनविश्रांतोनिद्रामापनवैसुखम् २९
गायन्गच्छन्गृणंस्तिष्ठन्वदत्येतदहर्निशम्
दर्शयस्वकृपानाथस्वतनुंपुरुषोत्तम ३०
एवंराज्ञःपंचदिनंगतंगंगाब्धिसंगमे
तदाकृपाब्धिःकृपयाचिंतयामासगोपतिः ३१
असौराजामदीयेनगानेनविगताघकः
पश्यतान्मामकींप्रेष्ठांसुरासुरनमस्कृताम् ३२
इतिसंचिंत्यभगवान्कृपापूरितमानसः
संन्यासिवेषमास्थाययौराज्ञोंऽतिकंविभुः ३३
तत्रगत्वामहाराजत्रिदंडियतिवेषधृक्
भक्तानुकंपयाप्राप्तोवीच्ितस्तापसेनहि ३४
ॐनमोविष्णवेत्युक्त्वानमश्चक्रेनृपोत्तमः
अर्घ्यपाद्यासनैःपूजांचकारहरिमानसः ३५
उवाचभाग्यमतुलंयद्भवानच्तिगोचरः
अतःपरंदास्यतेमेगोविंदोनिजदर्शनम् ३६
इतिश्रुत्वातुतद्वाक्यंसंन्यासीनिजगादतम्
राजञ्छृणुष्वकथितंममवाक्यविनिःसृतम् ३७
अहंज्ञानेनजानामिभूतंभव्यंभवच्चयत्
तस्मादहंब्रुवेकिंचिच्छृणुष्वैकाग्रमानसः ३८
श्वोमध्याह्नेहरिर्दातादर्शनंब्रह्मदुर्ल्लभम्
पंचभिःस्वजनैःसाकंयास्यसेपरमंपदम् ३९
त्वममात्यश्चमहिलातवतापसवाडवः
पुरेतवकरंबाख्यःसाधुश्चतंतुवायकः ४०
एतैःपंचभिरेतस्मिन्नीलेपर्वतसत्तमे

यास्यसेब्रह्मदेवेंद्रवंदितंसुरपूजितम् ४१
इत्युक्त्वाऽदृश्यतांप्राप्तोयतिःक्वापिनदृश्यते
तदाकर्ण्यनृपोहर्षंप्रापचाशुसविस्मयम् ४२
राजोवाच
स्वामिन्कोऽसौसमागत्यसंन्यसीमांयदूचिवान्
नदृश्यतेपुनःकुत्रगतोऽसौचित्तहर्षदः ४३
तापसउवाच
राजंस्तवमहाप्रेम्णाकृष्टचित्तःसमभ्यगात्
पुरुषोत्तमनामायंसर्वपापप्रणाशनः ४४
श्वोमध्याह्नेतवपुरोभविष्यतिमहान्गिरिः
तमारुह्यहरिंदृष्ट्वाकृतार्थस्त्वंभविष्यसि ४५
इतिवाक्यसुधापूरनाशितस्वांतसंज्वरः
हर्षंयमापसनृपोब्रह्मापिनहिवेत्तितम् ४६
तदादुंदुभयोनेदुर्वीणापणवगोमुखाः
महानंदस्तदाह्यासीद्राजराजस्यचेतसि ४७
गायन्हरिंक्षणंतिष्ठन्हसञ्जल्पन्ब्रुवन्नमन्
आनंदंप्रापसुघनंसर्वसंतापनाशनम् ४८
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
संन्यासिदर्शनंनामएकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

सुमतिरुवाच
अथसर्वंदिनंनीत्वाहरिस्मरणकीर्तनैः
रात्रौसुष्वापगंगायारोधस्युरुफलप्रदे १
ददर्शस्वप्नमध्येतुसस्वात्मानंचतुर्भुजम्
शंखचक्रगदापद्मशार्ङ्गकोदंडधारिणम् २
नृत्यंतंपुरुषोत्तमस्यपुरतःशर्वादिदेवैःसह
श्रीमद्भिःस्वतनूयुतैररिगदांबूत्थाब्जहेत्यादिभिः
विष्वक्सेनवरैर्गणैःसुतनुभिःश्रीशंसदोपासितं
दृष्ट्वाविस्मयमापलोकविषयंहर्षंतथात्यद्भुतम् ३

ददतंमनसोऽभीष्टंपुरुषोत्तमसंज्ञितम्
आत्मानंचकृपापात्रममन्यतमहामतिः ४
इत्येवंस्वप्नविषयेददर्शनृपसत्तमः
प्रातःप्रबुद्धोविप्रायजगादस्वप्नमीक्षितम् ५
तच्छ्रुत्वावाडवोधीमान्कथयामासविस्मितः
राजंस्त्वयासौदृष्टोयःपुरुषोत्तमसंज्ञितः ६
दास्यतेशंखचक्रादिचिह्नितांस्वतनुंहरिः
इतिश्रुत्वातुतद्वाक्यंरत्नग्रीवोमहामनाः ७
दापयामासदानानिदीनानांमानसोचितम्
स्नात्वागंगाब्धिसंयोगेतर्पयित्वापितृन्सुरान् ८
गायन्हरिगुणग्रामंप्रत्यैक्षतचदर्शनम्
ततोमध्याह्नसमयेदिविदुंदुभयोमुहुः ९
जघ्नुःसुरकराघातबहुशब्दसुशब्दिताः
अकस्मात्पुष्पवृष्टिश्चबभूवनृपमस्तके १०
धन्योसिनृपवर्यस्त्वंनीलंपश्याक्षिगोचरम् ११
शृणोतीतियदावाक्यंनृपोदेवप्रणोदितम्
तदाससूर्यकोटीनामधिकांतिधरोद्भुतः १२
राज्ञोऽक्षिगोचरोजातोनीलनामामहागिरिः
राजतैःकानकैःशृंगैःसमंतात्परिराजितः १३
किमग्निःप्रज्वलत्येषद्वितीयःकिमुभास्करः
किमयंवैद्युतःपुंजोह्यकस्मात्स्थिरकांतिधृक् १४
तापसब्राह्मणोदृष्ट्वानीलप्रस्थंसुशोभितम्
राज्ञेनिवेदयामासएषपुण्योमहागिरिः १५
तच्छ्रुत्वानृपतिश्रेष्ठःशिरसाप्रणनामह
धन्योऽस्मिकृतकृत्योऽस्मिनीलोमेदृष्टिगोचरः १६
अमात्योराजपत्नीचकरम्बस्तंतुवायकः
नीलदर्शनसंहृष्टाबभूवुःपुरुषर्षभ १७
पंचैतेविजयेकालेनीलपर्वतमारुहन्
महादुंदुभिनिर्घोषाञ्छृण्वन्तोह्यमरैःकृतान् १८
तस्योपरितनेशृंगेचित्रपादपराजिते

ददर्शहाटकाबद्धंदेवालयमनुत्तमम् १९
ब्रह्मागत्यसदापूजांकरोतिपरमेष्ठिनः
नैवेद्यंकुरुतेयत्रहरिसंतोषकारकम् २०
दृष्ट्वाथतत्रविमलंदेवायतनमुत्तमम्
प्रविवेशपरीवारैःपंचभिःसहसंवृतः २१
तत्रदृष्ट्वाजातरूपेमहामणिविचित्रिते
सिंहासनेविराजंतंचतुर्भुजमनोहरम् २२
चंडप्रचंडविजयजयादिभिरुपासितम्
प्रणनामसपत्नीकोराजासेवकसंयुतः २३
प्रणम्यपरमात्मानंमहाराजःसुरोत्तमम्
स्नापयामासविधिवद्वेदोक्तैःस्नानमंत्रकैः २४
अर्घ्यपाद्यादिकंचक्रेप्रीतेनमनसानृपः
चंदनेनविलिप्यैनंसुवस्त्रेविनिवेद्यच २५
धूपमारार्तिकंकृत्वासर्वस्वादुमनोहरम्
नैवेद्यंभगवन्मूर्त्यैन्यवेदयदथोनृपः २६
प्रणम्यचस्तुतिंचक्रेतापसब्राह्मणेनच
यथामतिगुणग्रामगुंफितस्तोत्रसंचयैः २७
राजोवाच
एकस्त्वंपुरुषःसाक्षाद्भगवान्प्रकृतेःपरः
कार्यकारणतोभिन्नोमहत्तत्त्वादिपूजितः २८
त्वन्नाभिकमलाज्जज्ञेब्रह्मासृष्टिविचक्षणः
तथासंहारकर्ताचरुद्रस्त्वन्नेत्रसंभवः २९
त्वयाज्ञप्तःकरोत्यस्यविश्वस्यपरिचेष्टितम्
त्वत्तोजातंपुराणाद्यज्जगत्स्थास्नुचरिष्णुच ३०
चेतनाशक्तिमाविश्यत्वमेनंचेतयस्यहो
तवजन्मतुनास्त्येवनांतस्तवजगत्पते
वृद्धिक्षयपरीणामास्त्वयिसंत्येवनोविभो ३१
तथापिभक्तरक्षार्थंधर्मस्थापनहेतवे
करोषिजन्मकर्माणिह्यनुरूपगुणानिच ३२
त्वयामात्स्यंवपुर्धृत्वाशंखस्तुनिहतोसुरः

वेदाःसुरद्मिताब्रह्मन्महापुरुषपूर्वज ३३
शेषोनवेत्तिमहितेभारत्यपिमहेश्वरी
किमुतान्येमहाविष्णोमादृशास्तुकुबुद्धयः ३४
मनसात्वांनचाप्नोतिवागियंपरमेश्वरी
तस्मादहंकथंत्वांवैस्तोतुंस्यामीश्वरःप्रभो ३५
इतिस्तुत्वासशिरसाप्रणाममकरोन्मुहुः
गद्गदस्वरसंयुक्तोरोमहर्षांकितांगकः ३६
इतिस्तुत्याप्रहृष्टात्माभगवान्पुरुषोत्तमः
उवाचवचनंसत्यंराजानंप्रतिसार्थकम् ३७
श्रीभगवानुवाच
तवस्तुत्याप्रहर्षोऽभून्ममराजन्महामते
जानीहित्वंमहाराजमांचप्रकृतितःपरम् ३८
नैवेद्यभद्मणंत्वंहिशीघ्रंकुरुमनोहरम्
चतुर्भुजत्वमाप्तःसन्गंतासिपरमंपदम् ३९
त्वत्कृतस्तुतिरत्नेनयोमांस्तोष्यतिमानवः
तस्यापिदर्शनंदास्येभुक्तिमुक्तिवरप्रदम् ४०
इत्येवंवचनंराजाश्रुत्वाभगवतोदितम्
नैवेद्यभद्मणंचक्रेचतुर्भिःसहसेवकैः ४१
ततोविमानंसंप्राप्तंकिंकिणीजालमंडितम्
ग्रप्सरोवृंदसंसेव्यंसर्वभोगसमन्वितम् ४२
पुरुषोत्तमसंज्ञंचपश्यन्राजासधार्मिकः
ववंदेचरणौतस्यकृपापात्रकृतात्मकः ४३
तदाज्ञयाविमानेसग्रारुह्यमहिलायुतः
जगामपश्यतस्तस्यदिविवैकुंठमद्भुतम् ४४
मंत्रीधर्मपरोराज्ञःसर्वधर्मविदुत्तमः
ययौसाकंविमानेनललनावृन्दसेवितः ४५
तापसब्राह्मणस्तत्रसर्वतीर्थावगाहकः
चतुर्भुजत्वंसंप्राप्तोययौदेवैर्विमानिभिः ४६
करंबोऽपिमहाराजगानपुरायेनदर्शनम्
प्राप्तोययौसुरावासंसर्वदेवादिदुर्ल्लभम् ४७

सर्वेप्रचलिताविष्णुलोकंपरममद्भुतम्
चतुर्भुजाःशंखचक्रगदापाथोजधारिणः ४८
सर्वेमेघश्रियःशुद्धालसदंभोजपाणयः
हारकेयूरकटकैर्भूषितांगाययुर्दिवम् ४९
तद्विमानावलीर्दृष्ट्वालोकैःप्रकृतिभिस्तदा
दुंदुभीनांतुनिर्घोषस्तैःकृतःकर्णगोचरः ५०
तदैकोब्राह्मणोह्यासीद्विष्णुपादाब्जवल्लभः
गतस्तद्विरहाकृष्टचेताजातश्चतुर्भुजः ५१
तच्चित्रंवीक्ष्यलोकास्तेप्रशंसंतोमहोदयम्
गंगासागरसंयोगेस्नात्वाऽगुस्तंपुरंप्रति ५२
अहोभाग्यंभूमिपतेरत्नग्रीवस्यसन्मतेः
जगामानेनदेहेनतद्विष्णोःपरमंपदम् ५३
राजन्नसौनीलगिरिःपुरुषोत्तमसत्कृतः
यंवीक्ष्यैवव्रजंत्यद्धावैकुंठंपरमायनम् ५४
एतन्नीलस्यमाहात्म्यंयःशृणोतिसभाग्यवान्
यःश्रावयतिलोकान्वैतौगच्छेतांपरंपदम् ५५
एतच्छ्रुत्वातुदुःस्वप्नोनश्यतिस्मृतिमात्रतः
प्रांतेसंसारनिस्तारंददातिपुरुषोत्तमः ५६
योऽसौनीलाधिवासीचसरामःपुरुषोत्तमः
सीतासाक्षान्महालक्ष्मीःसर्वकारणकारणम् ५७
हयमेधंचरित्वासलोकान्वैपावयिष्यति
यन्नामब्रह्महत्यायाःप्रायश्चित्तेप्रदिश्यते ५८
इदानींत्वद्धयःप्राप्तोनीलेपर्वतसत्तमे
पुरुषोत्तमदेवंत्वंनमस्कुरुमहामते ५९
तत्रनिष्पापिनोभूत्वायास्यामःपरमंपदम्
यस्यप्रसादाद्बहवोनिस्तीर्णाभवसागरात् ६०
एवंप्रवदतस्तस्यप्राप्तोऽश्वोनीलपर्वतम्
वायुवेगेनपृथिवींकुर्वन्संक्षुण्णमंडलाम् ६१
तदाराजापितत्पृष्ठचारीनीलाभिधंगिरिम्
प्राप्तोगंगाब्धिसंयोगेस्नात्वागात्पुरुषोत्तमम् ६२

स्तुत्वानत्वाचदेवेशंसुरासुरनमस्कृतम्
जातंकृतार्थमात्मानममन्यतसशत्रुहा ६३
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
नीलगिरिमहिमवर्णनंनामद्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

शेषउवाच
क्षणंस्थित्वातृणान्यत्त्वाययौवाजीमनोजवः
वीरश्रेणीवृतःपत्रंभालेधृत्वासचामरः १
शत्रुघ्नेनसुवीरेणलक्ष्मीनिधिनृपेणच
पुष्कलेनोग्रवाहेनप्रतापाग्र्येणरक्षितः २
ययौपुरींसचक्रांकांसुबाहुपरिरक्षिताम्
अनेकवीरकोटीभीरक्षितोऽनुगतःप्रभो ३
तदापुत्रोस्यदमनोमृगयामास्थितोमहान्
ददर्शाश्वंभालपत्रंचंदनादिकचर्चितम् ४
विलोक्यसेवकंप्राहकस्याश्वोमेऽक्षिगोचरः
भालेपत्रंधृतंकिंनुचामरंकिंतुशोभनम् ५
इतिराज्ञोवचःश्रुत्वासेवकःप्रययौततः
यत्रासौवर्ततेवाजीभालपत्रःसुशोभनः ६
गृहीत्वातंकेशसंघेरत्नमालाविभूषितम्
निनायचाग्रेभूपस्यसुबाहुकुलधारिणः ७
सपत्रंवाचयामाससुंदराक्षरशोभितम्
अयोध्याधिपतिश्चासीद्राजादशरथोबली ८
तस्यात्मजोरामभद्रःसर्वशूरशिरोमणिः
नान्योस्तितत्समःपृथ्व्यांधनुर्धरणविक्रमः ९
तेनासौमोचितोवाजीचंदनादिकचर्चितः
तंपालयतिधर्मात्माशत्रुघ्नःपरवीरहा १०
येचशूरावयंवीराधनुर्हस्ताइमेवयम्
तेगृह्णंतुबलाद्वाहंरत्नमालाविभूषितम् ११
तंचमोक्षयतिशत्रुघ्नःसर्ववीरशिरोमणिः

अन्यथापादयोस्तस्यप्रणतिंयांतुधन्विनः १२
इत्यभिप्रायमालोक्यजगादनृपनंदनः
रामएवधनुर्धारीनवयंक्षत्रियाःस्मृताः १३
तातेमेऽवस्थितेपृथ्व्यांकोऽयगर्वोमहान्भुवि
प्राप्नोतुगर्वस्यफलंममनिर्मुक्तसायकैः १४
अद्यमेनिशिताबाणाःशत्रुघ्नंकिंशुकंयथा
पुष्पितंविदधत्वद्धाक्षतावृतशरीरकम् १५
दारयंतुकपोलांश्चसायकाममदंतिनाम्
अश्वान्पश्यंतुशतशोरुधिरौघपरिप्लुतान् १६
पिबंतुयोगिनीसंघारुधिराणिनृमस्तकैः
शिवाभवंतुसंतुष्टामद्वैरिक्रव्यभक्षणैः १७
पश्यंतुसुभटास्तस्यममबाहुबलंमहत्
कोदंडदंडनिर्मुक्ताःशरकोटीर्विमुंचतः १८
इत्थमुक्त्वामहीपस्यतनुजोदमनाभिधः
स्वपुरंप्रेषयित्वातंप्रहृष्टोऽभवदुद्भटः १९
सेनापतिमुवाचेदंसज्जीकुरुमहामते
सेनांपरिमितांमह्यंवैरिवृंदनिवारणे २०
सज्ञांसेनांविधायाशुसंमुखोरणमंडले
स्थितवान्यावदत्युग्रस्तावत्प्राप्ताहयानुगाः २१
क्वासौहयोमहाराज्ञोभालपत्रेणचिह्नितः
पप्रच्छुस्तेतुचान्योन्यमतिव्याकुलितामुहुः २२
तावद्ददर्शपुरतःप्रतापाग्र्यःपरंतपः
सज्जीभूतंतुकटकंवीरशब्दनिनादितम् २३
तत्रावदञ्जनाःकेचिन्नीतोऽश्वोऽनेनभूपते
अन्यथासंमुखस्तिष्ठेत्कथंवीरोबलानुगः २४
इत्याकर्ण्यप्रतापाग्र्यःप्रेषयामाससेवकम्
सगत्वातत्रपप्रच्छकुत्राश्वोरामभूपतेः २५
केननीतःकुतोनीतोरामंजानातिनोकुधीः
यंशक्रप्रमुखादेवाबलिमादायसन्नताः २६
तस्यवैधर्मराजस्यकुपितंतुबलंमहत्

सर्वथाहिग्रसिष्येतप्रणतिंचेन्नयास्यति २७
इत्थमुक्तंसमाकरार्यतदाराजसुतोबली
तंवैधिक्कारयामासवाग्जालेनसुदुर्मनाः २८
मयानीतोयज्ञहयःपत्रचिह्नाद्यलंकृतः
येशूरास्तेतुमांजित्वामोचयंतुबलादिह २९
सेवकस्तद्वचःश्रुत्वारोषपूर्णोहसन्ययौ
राज्ञेनिवेदयामासयथावदुपवर्णितम् ३०
तच्छ्रुत्वारोषताम्राक्षःप्रतापाग्र्योमहाबलः
ययौयोद्धुंराजपुत्रंमहावीरपुरस्कृतम् ३१
रथेनकनकांगेनचतुर्वाजिसुशोभिना
सुकूबरेणसर्वास्त्रपूरितेनययौबली ३२
धनुष्टंकारयामासमहाबलसमन्वितः
पुनःपुनर्जहासोच्चैःकोपादुद्गमिताश्रुकः ३३
अश्ववाहागजारूढाःखड्गोल्लसितपाणयः
अन्वयुस्तेप्रतापाग्र्यंरोषपूर्णाकुलेक्षणम् ३४
हस्तिनःपत्तयश्चैवकोटिशःप्रधनोद्यताः
चिरकालमभीप्संतोरणंवीरेणकारितम् ३५
तदोद्यतंसमाज्ञायरिपुसैन्यंनृपात्मजः
प्रत्युज्जगामवीराग्र्योमहाबलपरीवृतः ३६
सन्नद्धःकवचीखड्गीशरासनधरोयुवा
लीलयैवययौयोद्धुंमृगराड्गजतामिव ३७
तदायोधाःप्रकुपिताःपरस्परवधैषिणः
छिंधिभिंधीतिभाषंतोरणकार्यविशारदाः ३८
पत्तयःपत्तिसंघेनगजारूढाश्चसादिभिः
रथारूढारथस्थैश्चवाहारूढाश्वसंस्थितैः ३९
गजाभिन्नाद्विधाजाताहयाश्चद्विदलीकृताः
अनेकनरमस्तिष्कैर्मेदिनीपूरिताह्यभूत् ४०
तदाप्रकुपितोराजाप्रतापाग्र्योमहाबलः
स्वसैन्यकदनोद्युक्तंराजपुत्रंसमीक्ष्यच ४१
उवाचसारथिंतत्रप्रापयाश्वान्यतोमम

सैन्यस्यकदनासक्तोराजपुत्रोमहारथः ४२
अथवीरशिरोरत्ननमितांघ्रिर्नृपात्मजः
ययौसंमुखमेवास्यप्रतापाग्र्यस्यवीर्यवान् ४३
सारथिःप्रापयामासप्रतापाग्र्यस्यवाजिनः
यत्रासौदमनोवीरःसर्वशूरशिरोमणिः ४४
गत्वातमाह्वयामासराजपुत्रंरणोद्यतम्
रथेपुरटनिर्णिक्तेतिष्ठन्कोदंडदंडभृत् ४५
रेराजपुत्रकशिशोत्वयाबद्धोऽश्वसत्तमः
नज्ञातोसिमहाराजःसर्ववीरेंद्रसेवितः ४६
यस्यप्रतापंदैत्येंद्रोनशक्तःसोढुमद्भुतम्
तस्यत्वंवाजिनंनीत्वागतोऽसिपुटभेदनम् ४७
मांजानीहिपुरःप्राप्तंकालरूपंतुवैरिणाम्
मुंचाश्वमर्भगच्छाशुबालक्रीडनकंकुरु ४८
कस्यात्मजस्त्वंकुत्रत्यःकथंनोऽदीर्घदर्शिना
धृतोऽश्वस्त्वथसंजाताघृणाममशिशोत्वयि ४९
इत्थमाकर्ण्यदमनःस्मितंचक्रेमहामनाः
उवाचचप्रतापाग्र्यंतृणीकुर्वंश्चतद्बलम् ५०
दमनउवाच
मयाबद्धोबलादश्वोनीतःस्वपुटभेदनम्
नार्पयिष्येऽद्यसप्राणःकुरुयुद्धंमहाबल ५१
त्वयायदुक्तंबालस्त्वंगत्वाक्रीडनकंकुरु
तन्मेपश्यमहाराजक्रीडनंरणमूर्धनि ५२
शेषउवाच
इत्युक्त्वासगुणंचापंविधायसुभुजांगजः
शराणांशतमाधत्तप्रतापाग्र्यस्यवक्षसि ५३
संधायबाणशतकंशंखंदध्मौप्रतापवान्
तेनशंखनिनादेनकातराणांभयंह्यभूत् ५४
ताडयामासहृदयेबाणानांशतकेनसः
प्रतापाग्र्यःप्रचिच्छेदलघुहस्तःसुपर्वणः ५५
सबाणच्छेदनंदृष्ट्वाकुपितोव्यसृजच्छरान्

कंकपद्मान्वितांस्तीक्ष्णभल्लान्राजात्मजोबली ५६
आकाशेभुविमध्येचबाणाददृशिरेऽञ्चिताः
स्वनामचिह्नितास्तीक्ष्णधारापातसुशोभिताः ५७
शरास्तद्बाहुहृदयेलग्नावह्निकणान्बहून्
सृजंतःकुर्वतेसैन्यदाहनंतदभून्महत् ५८
प्रतापाग्र्यःप्रकुपितस्तिष्ठतिष्ठेतिचब्रुवन्
शरेणदशसंख्येनताडयामासमूर्धनि ५९
तेबाणाराजपुत्रस्यललाटेपरिनिष्ठिताः
विराजंतेस्मचमुनेदशशाखास्तरोरिव ६०
तेनबाणप्रहारेणविव्यथेनमहामनाः
यष्टिकाप्रहतोयद्वत्कुंजरःसप्तवर्षकः ६१
बाणान्धनुषिसंधायमुमोचत्रिशताञ्छुभान्
सुवर्णपुंखरचितान्महाकालानलोपमान् ६२
तेबाणास्तुप्रतापाग्र्यवक्षोभित्त्वागताह्यधः
शोणिताक्तायथारामचंद्रभक्तिपराङ्मुखाः ६३
प्रतापाग्र्यःप्रकुपितःशरान्मुंचन्सहस्रशः
अकरोद्विरथंसूनुंसुबाहोस्तत्क्षणाद्द्रुतम् ६४
चतुर्भिश्चतुरोवाहान्द्वाभ्यांध्वजमशातयत्
एकेनसारथेःकायाच्छिरोमह्यामपातयत् ६५
चतुर्भिस्ताडयामासतंसूनुंनृपतेःपुनः
तत्क्षणाच्चापमेकेनगुणयुक्तंतुचिच्छिदे ६६
सोऽन्यरथंसमारुह्यहयरत्नसुशोभितम्
धनुःकरेसमादायसज्यंचक्रेमहामनाः ६७
प्रत्युवाचप्रतापाग्र्यंत्वयाविक्रांतमद्भुतम्
पश्येदानींपराक्रांतिंधनुषोममसद्भट ६८
एवमुक्त्वातुदमनोबाणान्दशसमाददे
चतुर्भिश्चतुरोवाहान्निनाययमसादनम् ६९
चतुर्भिस्तिलशःकृत्तोरथश्चक्रसमन्वितः
एकेनहृदिविव्याधबाणेनैकेनसारथिम् ७०
जगर्जशंखमापूर्यशंखशब्दसमन्वितः

तत्कर्मपूजयामाससाधुवीरमहाबल ७१
इतिविक्रांतमालोक्यप्रतापाग्र्योरुषान्वितः
अन्यंरथंसमास्थाययौयोद्धुंनृपात्मजम् ७२
उवाचवीरपश्यत्वंममविक्रांतमद्भुतम्
इत्युक्त्वाशुमुमोचौघाञ्छराणांशितपर्वणाम् ७३
शराःसर्वत्रदृश्यंतेकुंजरेषुहयेषुच
परब्रह्मेवसर्वत्रव्याप्ताश्चांतरगोचराः ७४
तंराजपुत्रंशितबाणकोटिभि –
र्व्याप्तंविधायाशुजगर्जविक्रमी
संहर्षयन्स्वीयगणान्परान्महान्
कुर्वन्हृदाशून्यतमान्गतासुकान् ७५
सराजपुत्रःशितसायकव्रजैः
संपूर्णमात्मानमवेक्ष्यरोषितः
जग्राहशस्त्राणिदुरंतविक्रमो
धनुश्चधुन्वन्भुजदंडयोर्महान् ७६
चकर्तसर्वाण्यस्त्राणिशस्त्राणिचमहाबलः
रोषताम्रेक्षणोमुंचञ्छरान्वैरिविदारिणः ७७
तच्छस्त्रजालंनिर्धूयराजपुत्रोजगादतम्
क्षमस्वैकंप्रहारंमेयदिशूरोसिमारिष ७८
यद्यनेनभवंतंवैरथाच्चेत्पातयामिन
प्रतिज्ञांशृणुमेवीरममगर्वेणनिर्मिताम् ७९
वेदंनिंदंतियेमत्ताहेतुवादविचक्षणाः
तेषांपापंममैवास्तुनरकार्णवमज्जकम् ८०
इत्युक्त्वाबाणमासाद्यकोदंडेकालसन्निभम्
ज्वालामालाकुलंतीक्ष्णंनिषंगादुद्धृतंवरम् ८१
समुक्तोनृपवर्येणहृदिलक्ष्यीकृतःशरः
जगामतरसातंवैकालानलसमप्रभः ८२
प्रतापाग्र्यःशरंदृष्ट्वास्वपातनसमुद्यतम्
बाणान्धनुष्यथाधत्तशरच्छेदायवैशितान् ८३
सबाणःसर्वबाणांस्तांश्छिंदन्मध्यतएवहि

जगामवैप्रतापाग्र्यहृदयंधैर्यसंयुतम् ८४
संलग्नोहृदिनालीकःप्रविवेशतदंतरम्
राजाकृतप्रहारस्तुपपातधरणीतले ८५
मूर्च्छितंचेतनाहीनंरथोपस्थाद्गतंभुवि
सारथिस्तंसमादायापोवाहरणमंडलात् ८६
हाहाकारोमहानासीद्बलंभग्नंगतंततः
यत्रशत्रुघ्ननामासौवीरकोटिपरीवृतः ८७
राजात्मजोजयंप्राप्यप्रतापाग्र्यंविजित्यसः
प्रतीक्षांतुचकारास्यशत्रुघ्नस्यचभूपतेः ८८

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
राजपुत्रयुद्धकथनंनामत्रयोविंशोऽध्यायः २३

## चतुर्विंशतितमोऽध्यायः

शेषउवाच
शत्रुघ्नस्तुक्रुधाविष्टोदंतान्दंतैर्विनिष्पिषन्
हस्तौधुन्वंल्लेलिहानमधरंजिह्वयासकृत् १
पुनःपुनस्तान्पप्रच्छकेनाश्वोनीयतेमम
प्रतापाग्र्यःकेनजितःसर्वशूरशिरोमणिः २
सेवकास्तेतदाप्रोचुर्दमनोनामशत्रुहन्
सुबाहुजःप्रतापाग्र्यंजितवान्हयमाहरत् ३
इतिश्रुत्वाहयंनीतंदमनेनस्ववैरिणा
आजगामसवेगेनयत्राभूद्रणमंडलम् ४
तत्रापश्यत्सशत्रुघ्नोगजान्दीर्णकपोलकान्
पर्वतानिवरक्तोदेमज्जमानान्मदोद्धतान् ५
हयास्तत्रनिजारोहकर्तृभिःसहिताःक्षताः
मृतावीरणददृशेशत्रुघ्नेनसुकोपिना ६
नरान्रथान्गजान्भग्नान्वीक्षमाणःसशत्रुहा
अतीवचुक्रुधेयद्वत्प्रलयेप्रलयार्णवः ७
पुरतोदमनंवीक्ष्यहयनेतारमुद्भटम्
प्रतापाग्र्यस्यजेतारंतृणीकृत्यनिजंबलम् ८

तदाराजाप्रत्युवाचयोधान्कोपाकुलेक्षणः
कोऽसौदमनजेताऽत्रसर्वशस्त्रास्त्रधारकः ९
योवैराजसुतंवीरंरणकर्मविशारदम्
जेष्यत्यस्त्रेणनिर्भीतःसज्जीभूतोभवत्वयम् १०
इतिवाक्यंसमाकर्ण्यपुष्कलःपरवीरहा
दमनंजेतुमुद्युक्तोजगादवचनंत्विदम् ११
स्वामिन्क्वायंदमनकःक्वतेऽपरिमितंबलम्
जेष्येऽहत्वत्प्रतापेनगच्छाम्येषमहामते १२
सेवकेमयियुद्धायस्थितेकैर्नीयतेहयः
रघुनाथप्रतापोऽयसर्वंकृत्यंकरिष्यति १३
स्वामिञ्छृणुप्रतिज्ञांमेतवमोदप्रदायिनीम्
विजेष्येदमनंयुद्धेरणकर्मविचक्षणम् १४
रामचंद्रपदांभोजमध्वास्वादवियोगिनाम्
यदघंतुभवेत्तन्मेदमनंनजयेयदि १५
पुत्रोयोमातृपादान्यत्तीर्थंमत्वातयासह
विरुद्ध्येत्तत्तमोमह्यंनजयेदमनंयदि १६
अद्यमद्बाणनिर्भिन्नमहोरस्कोनृपांगजः
अलंकरोतुप्रधनेभूतलंशयनेनहि १७
शेषउवाच
इतिप्रतिज्ञामाकर्ण्यपुष्कलस्यरघूद्वहः
जहर्षचित्तेतेजस्वीनिदिदेशरणंप्रति १८
आज्ञप्तोऽसौययौसैन्यैर्बहुभिःपरिवारितः
यत्रास्तेदमनोराजपुत्रःशूरकुलोद्भवः १९
दमनोऽपितमाज्ञायह्यागतंरणमंडले
प्रत्युज्जगामवीराग्र्यःस्वसैन्यपरिवारितः २०
अन्योन्यंतौसंमिलितौरथस्थौरथशोभिनौ
समरेशक्रदैत्यौकिंयुद्धार्थंरणमागतौ २१
उवाचपुष्कलस्तंवैराजपुत्रंमहाबलम्
राजपुत्रदमनकमांजानीहिसमागतम् २२
सप्रतिज्ञंतुयुद्धायभरतात्मजमुद्भटम्

पुष्कलेनस्वनाम्नाचलन्तितंविद्धिसत्तम २३
रघुनाथपदांभोजनित्यसेवामधुव्रतम्
त्वांजेष्येशस्त्रसंघेनसज्जीभवमहामते २४
इतिवाक्यंसमाकरार्यदमनःपरवीरहा
प्रत्युवाचहसन्वाग्मीनिर्भयोदृष्टविक्रमः २५
सुबाहुपुत्रंदमनंपितृभक्तिहृताघकम्
विद्धिमामश्वनेतारंशत्रुघ्नस्यमहीपतेः २६
जयोदैवविसृष्टोऽययस्यचालंकरिष्यति
सप्राप्नोतिनिरीन्तस्वबलंमेरणमूर्धनि २७
इत्युक्त्वासशरंचापंविधायाकर्णपूरितम्
मुमोचबाणान्निशितान्वैरिप्राणापहारिणः २८
तेबाणास्त्वाविलीभूताश्छादयामासुरंबरम्
सूर्यभानुप्रभायत्रबाणच्छायानिवारिता २९
गजानांकटभित्त्योघेलग्नासायकसंततिः
अलंकरोतिधातूनांरागाइवविचित्रिताः ३०
पतितास्तत्रदृश्यंतेनरावाहागजारथाः
शरव्रातेननृपतेःसुतेनपरिताडिताः ३१
तद्विक्रांतंसमालोक्यपुष्कलःपरवीरहा
शराणांछाययाव्याप्तंरणमंडलमीन्दयच ३२
शरासनेसमाधत्तबाणंवह्न्यभिमंत्रितम्
आचम्यसम्यग्विधिवन्मोचयामाससायकम् ३३
ततोऽग्निप्रादुरभवत्तत्रसंग्राममूर्धनि
ज्वालाभिर्विलिहन्व्योमप्रलयाग्निरिवोत्थितः ३४
ततोऽस्यसैन्यंनिर्दग्धंत्रासंप्राप्तंरणांगणे
पलायनपरंजातंवह्निज्वालाभिपीडितम् ३५
छत्राणितुप्रदग्धानिचंद्राकाराणिधन्विनाम्
दृश्यंतेजातरूपाभकांतिधारीणितत्रह ३६
हयादग्धाःपलायंतेकेसरेषुचवैरिणाम्
रथाअपिगतादाहंसुकूबरसमन्विताः ३७
मणिमाणिक्यरत्नानिवहंतःकरभास्ततः

पलायंतेदहनभूज्वालामालाभिपीडिताः ३८
कुत्रचिद्दंतिनोनष्टाःकुत्रचिद्धयसादिनः
कुत्रचित्पत्तयोनष्टावह्निदग्धकलेवराः ३९
शराःसर्वेनृपसुतप्रमुक्ताःप्रलयंगताः
आशुशुक्षणिकीलाभिर्भस्मीभूताःसमंततः ४०
तदास्वसैन्येदग्धेचदमनोरोषपूरितः
सर्वास्त्रवित्तच्छांत्यर्थंवारुणास्त्रमथाददे ४१
वारुणंवह्निशांत्यर्थंमुक्तंतेनमहीभृता
आप्लावयद्बलंतस्यरथवाजिसमाकुलम् ४२
रथाविप्लावितास्तोयेदृश्यंतेपरिपंथिनाम्
गजाश्चापिपरिप्लुष्टाःस्वीयाःशांतिमुपागताः ४३
वह्निश्चशांतिमगमदग्न्यस्त्रपरिमोचितः
शांतिमापबलंस्वीयंवह्निज्वालाभिपीडितम् ४४
कंपिताःशीततोयेनसीत्कुर्वंतिचवैरिणः
करकावृष्टिभिःक्षिप्तावायुनाचप्रपीडिताः ४५
तदास्वबलमालोक्यतोयपूरेणपीडितम्
कंपितंक्षुभितंनष्टंवारुणेनविनिर्हतम् ४६
तदातिकोपताम्राक्षःपुष्कलोभरतात्मजः
वायव्यास्त्रंसमाधत्तधनुष्येकंमहाशरम् ४७
ततोवायुर्महानासीद्वायव्यास्त्रप्रचोदितः
नाशयामासवेगेनघनानीकमुपस्थितम् ४८
वायुनास्फालितानागाःपरस्परसमाहताः
अश्वाश्चसंहतान्योन्यंस्वस्वारोहसमन्विताः ४९
नराःप्रभंजनोद्धूतामुक्तकेशानिरोजसः
पतंतोऽत्रसमीक्ष्यंतेवेतालाइवभूगताः ५०
वायुनास्वबलंसर्वंपरिभूतंविलोक्यसः
राजपुत्रःपर्वतास्त्रंधनुष्येवंसमादधे ५१
तदातुपर्वताःपेतुर्मस्तकोपरियुध्यताम्
वायुःसंच्छादितस्तैस्तुनप्रचक्रामकुत्रचित् ५२
पुष्कलोवज्रसंज्ञंतुसमाधत्तशरासने

वज्रेणकृत्तास्तेसर्वेजाताश्चतिलशः क्षणात् ५३
वज्रंनगान्नजः शेषान्कृत्वाबाणाभिमंत्रितम्
राजपुत्रोरसिप्रोच्चैः पपातस्वनवद्भृशम् ५४
सत्वाकुलितचेतस्कोहृदिविद्धः क्षतोभृशम्
विव्यथेबलवान्वीरः कश्मलंपरमापसः ५५
तंवैकश्मलितंदृष्ट्वासारथिर्नयकोविदः
अपोवाहरणात्तस्मात्क्रोशमात्रंनरेंद्रजम् ५६
ततोयोधाराजसूनोः प्रणष्टाः प्रपलायिताः
गत्वापुरींसमाचख्युः कश्मलस्थंनृपात्मजम् ५७
पुष्कलोजयमाप्यैवंरणमूर्धनिधर्मवित्
नप्रहर्तुंपुनः शक्तोरघुनाथवचः स्मरन् ५८
ततोदुंदुभिनिर्घोषोजयशब्दोमहानभूत्
साधुसाध्वितिवाचश्चप्रावर्तंतमनोहराः ५९
हर्षंप्रापसशत्रुघ्नोजयिनंवीक्ष्यपुष्कलम्
प्रशशंससुमत्यादिमंत्रिभिः परिवारितः ६०

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
पुष्कलविजयोनामचतुर्विंशतितमोऽध्यायः २४

## पंचविंशोऽध्यायः

शेषउवाच
अथवीक्ष्यभटान्निजान्नृपोरुधिरौघेणपरिप्लुतांगकान्
सुखमापनवैशुशोचतान्परिपप्रच्छसुतस्यचेष्टितम् १
गदताखिलकर्मतस्यवैसकथंचाहरदश्ववर्यकम्
कथयंतुपुनः कियद्बलंबतवीराः कतियोद्धुमागताः २
अथशत्रुबलोन्मुखः कथंममवीरोदमनोरणंव्यधात्
विजयंचविधायदुर्जयंकिलवीरंबतकोऽप्यशातयत् ३
इत्याकर्ण्यवचोराज्ञः प्रत्यूचुस्तेऽस्यसेवकाः
क्षतजेनपरिक्लिन्नगात्रवस्त्रादिधारिणः ४
राजन्नश्वंसमालोक्यपत्रचिह्नाद्यलंकृतम्
ग्राहयामासगर्वेणतृणीकृत्यरघूत्तमम् ५

ततोहयानुगःप्राप्तःस्वल्पसैन्यसमावृतः
तेनसाकमभूद्युद्धंतुमुलंरोमहर्षणम् ६
तंमूर्च्छितंततःकृत्वातवपुत्रःस्वसायकैः
यावत्तिष्ठत्यथायातःशत्रुघ्नःस्वबलैर्वृतः ७
ततोयुद्धंमहदभूच्छस्त्रास्त्रपरिबृंहितम्
बहुशोजयमापेदेतवपुत्रोमहाबलः ८
इदानींतेनमुक्त्वास्त्रंशत्रुघ्नभ्रातृसूनुना
मूर्च्छितःप्रधनेराजन्कृतोवीरःसुतस्तव ९
इतिवाक्यंसमाकर्ण्यरोषशोकसमन्वितः
स्थगितांगइवासीत्ससमुद्रइवपर्वणि १०
उवाचसेनाधिपतिंरोषप्रस्फुरिताधरः
दन्तैर्दताँल्लिहन्नोष्ठंजिह्वयाशोककर्शितः ११
सेनापतेकुरुष्वारान्ममसेनांतुसज्जिताम्
योत्स्येरामस्यसुभटैर्ममपुत्रोपघातकैः १२
अद्याहंममपुत्रस्यदुःखदंनिशितैःशरैः
पातयिष्येयदिह्येनंरक्षितापिमहेश्वरः १३
सेनापतिरिदंवाक्यंप्रोक्तंसुभुजभूपतेः
निशम्यचतथाकृत्वासज्जीभूतोभवत्स्वयम् १४
राज्ञेनिवेदयामाससससज्जांचतुरंगिणीम्
सेनांकालबलप्रख्यांहतदुर्जनकोटिकाम् १५
श्रुत्वासेनापतेर्वाक्यंसुबाहुःपरवीरहा
निर्जगामततोयत्रशत्रुघ्नःस्वसुतार्दनः १६
कुंजरैश्चमदोन्मत्तैर्हयैश्चापिमनोजवैः
रथैश्चसर्वशस्त्रास्त्रपूरितैरिपुजेतृभिः १७
भूश्चकंपेतदातत्रसैन्यभारेणभूरिणा
संमर्दःसुमहानासीत्तत्रसैन्येविसर्पति १८
राजानंनिर्गतंदृष्ट्वारथेनकनकांगिना
शत्रुघ्नबलमुद्युक्तंसर्ववैरिप्रहारकम् १९
सुकेतुस्तस्यवैभ्रातागदायुद्धविशारदः
रथेनाश्वाजगामायंसर्वशस्त्रास्त्रपूरितः २०

चित्रांगस्तुसुतोराज्ञः सर्वयुद्धविचक्षणः
जगामस्वरथेनाशुशत्रुघ्नबलमुन्मदम् २१
तस्यानुजोविचित्राख्योविचित्ररणकोविदः
ययौरथेनहैमेनभ्रातृदुःखेनपीडितः २२
अन्येशूरामहेष्वासाः सर्वशस्त्रास्त्रकोविदाः
ययुर्नृपसमादिष्टाः प्रधनंवीरपूरितम् २३
राजासुबाहुः संरोषादागतः प्रधनांगणे
विलोकयामाससुतंमूर्च्छितंशरपीडितम् २४
रथोपस्थस्थितंमूढंस्वसुतंदमनाभिधम्
वीक्ष्यदुःखंमुहुः प्रापवीजयामासपल्लवैः २५
जलेनसिक्तः संस्पृष्टोराज्ञाकोमलपाणिना
संज्ञामापशनैर्वीरोदमनः परमास्त्रवित् २६
उत्थितः क्वधनुर्मेऽस्तिक्वपुष्कलइतोगतः
संसज्यसमरंत्यक्त्वामद्बाणव्रणपीडितः २७
इतिवाक्यंसमाकर्ण्यसुबाहुः पुत्रभाषितम्
परमंहर्षमापेदेपरिरभ्यसुतंस्वकम् २८
दमनोवीक्ष्यजनकंनृपंनम्रशिरोधरः
पपातपादयोर्भक्त्याक्षतदेहोऽस्त्रराजिभिः २९
स्वसुतंरथसंस्थंतुविधायनृपतिः पुनः
जगादसेनाधिपतिंरणकर्मविशारदः ३०
व्यूहंरचयसंग्रामेक्रौंचाख्यंरिपुदुर्जयम्
यमाविश्यजयेसैन्यंशत्रुघ्नस्यमहीपतेः ३१
तद्वाक्यमाकर्ण्यसुबाहुभूपतेः
क्रौंचाख्यसद्व्यूहविशेषमादधात्
यन्नोविशंतेसहसारिपोर्गणा
महाबलाः शस्त्रसमूहधारिणः ३२
मुखेसुकेतुस्तस्यासीद्गलेचित्रांगसंज्ञकः
पक्षयोराजपुत्रौद्वौपुच्छेराजाप्रतिष्ठितः ३३
मध्येसैन्यंमहत्तस्यचतुरंगैस्तुशोभितम्
कृत्वान्यवेदयद्राज्ञेक्रौंचव्यूहंविचित्रितम् ३४

राजादृष्ट्वासुसन्नद्धंक्रौंचव्यूहंसुनिर्मितम्
रणायस्वमतिंचक्रेशत्रुघ्नकटकेस्थितैः ३५
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
सुबाहुसैन्यसमागमोनामपंचविंशोऽध्यायः २५

षड्विंशतितमोऽध्यायः

शेषउवाच
शत्रुघ्नस्तद्बलंदृष्ट्वाभीषणाकृतिमेघवत्
हस्त्यश्वरथपादातैर्बहुभिःपरिवारितम् १
सुमतिप्रत्युवाचेदंवचोगंभीरशब्दयुक्
नानावाक्यविचारज्ञैःपंडितैःपरिसेवितः २
शत्रुघ्नउवाच
सुमतेकस्यनगरंप्राप्तोमेहयसत्तमः
बलमेतन्निरीक्षेहंपयोदधितरंगवत् ३
कस्यैतद्बलमुद्धर्षंचतुरंगसमन्वितम्
पुरतोभातियुद्धायसमुपस्थितमादरात् ४
एतत्सर्वंसमाचक्ष्वयथावत्पृच्छतोमम
यज्ज्ञात्वायुद्धसंस्थायैनिर्दिशामिस्वकान्भटान् ५
इतिवाक्यंसमाकर्ण्यसुमतिःशुभबुद्धिमान्
उवाचवचनंप्रीतःशत्रुघ्नंवैरितापनम् ६
सुमतिरुवाच
चक्रांकानगरीराजन्वर्ततेसविधेशुभा
यस्यांसंतिनराःपापरहिताविष्णुभक्तितः ७
तस्याःपुर्याःपतिरयंसुबाहुर्धर्मवित्तमः
तवायंपुरतोभातिपुत्रपौत्रसमावृतः ८
स्वदारनिरतोनित्यंपरदारपराङ्मुखः
विष्णोःकथास्यकर्णस्थानापरार्थप्रकाशिनी ९
परस्वंनसमादत्तेषष्ठांशादधिकंनृपः
ब्राह्मणाविष्णुभक्त्यैवपूज्यंतेतेनधर्मिणा १०
नित्यंसेवारतोविष्णुपादपद्ममधुव्रतः

एषस्वधर्मनिरतःपरधर्मपराङ्मुखः ११
एतस्यबलतुल्यंहिनवीराणांबलंक्वचित्
पुत्रस्यपतनंश्रुत्वारोषशोकसमाकुलः १२
चतुरंगसमेतोऽययुद्धायसमुपस्थितः
तवापिवीराबहवोलक्ष्मीनिधिमुखाश्रमून् १३
जेष्यंतिशस्त्रसंघेननिर्दिशाशुपरंहितान्
शत्रुघ्नस्तद्वचःश्रुत्वाप्रोवाचस्वभटान्वरान् १४
रणप्राप्तिभवोद्धर्षपूरपूरितमानसान्
क्रौंचव्यूहोऽद्यरचितःसुबाहुपरिसैनिकैः १५
मुखपक्षस्थितायोधास्तान्कोभेत्स्यतिशस्त्रवित्
यस्यभेदेनिजाशक्तिर्योवीरविजयोद्यतः १६
सगृह्णातुमदीयाद्धिपाणिपद्माच्चवीटकम्
तदालक्ष्मीनिधिर्वीरोजग्राहक्रौंचभेदने १७
सर्वशस्त्रास्त्रविद्वीरैर्बहुभिःपरिवारितः
उवाचवचनंराजन्यास्येऽहक्रौंचभेदने १८
भार्गवःपूर्वमेवासीत्क्रौंचभेत्तातथाह्यहम्
तथान्यंवीरमावोचत्कोऽस्यसार्धंगमिष्यति १९
पुष्कलःपृष्ठतस्तस्ययातुंचक्रेमतिंततः
रिपुतापोनीलरत्नउग्राश्वोवीरमर्दनः २०
सर्वेशत्रुघ्नसंदेशाद्ययुस्तत्क्रौंचभेदने
शत्रुघ्नोऽपिरथस्थश्चसर्वायुधधरःपरः २१
पृष्ठतोऽस्यपरीयायबहुभिःसैनिकैर्वृतः
तदाप्रचलितौदृष्टावन्योन्यबलवारिधी २२
प्रलयंकर्तुमुद्युक्तौजगतःसुतरंगिणौ
तदाभेर्यःसमाजघ्नुरुभयोःसेनयोर्दृढाः २३
रणभेर्यःशंखनादाःश्रूयंतेतत्रतत्रह
हेषंतेवाजिनस्तत्रगर्जंतिद्विरदाभृशम् २४
हुंहुंकुर्वंतिवीराग्र्यानदंतिरथनेमयः
तत्रप्रकुपिताःशूराःसुबाहुबलदर्पिताः २५
छिंधिभिंधीतिभाषंतोदृश्यंतेबहवोरणे

एवंभूतेरणोद्युक्तेसैन्येशत्रुघ्नवैरिणोः २६
मुखसंस्थंसुकेतुंतंलक्ष्मीनिधिरुवाचह
लक्ष्मीनिधिरुवाच
जनकस्यसुतंविद्धिलक्ष्मीनिधिरितिस्मृतम् २७
सर्वशस्त्रास्त्रकुशलंसर्वयुद्धविशारदम्
मुंचाश्वंरामचंद्रस्यसर्वदानवदंशितुः २८
नोचेन्मद्बाणनिर्भिन्नोयास्यसेयमसादनम्
इतिब्रुवंतंवीराग्र्यंसुकेतुःसहसात्वरन् २९
सज्यंचापंविधायाशुबाणान्मुंचन्स्थिरोऽभवत्
तेबाणाःशितपर्वाणःस्वर्णपुंखाःसमंततः ३०
दृश्यंतेव्यापिनस्तत्ररणमध्येसुदुर्भराः
तद्बाणजालंतरसानिहत्य
लक्ष्मीनिधिश्चापमथाततज्यम्
विधायतस्योरसिबाणषट्कं
मुमोचतीक्ष्णंशितपर्वशोभितम् ३१
तद्बाणाःसुभुजभ्रातुर्हृदयंसंविदार्यच
गतास्तेभुविदृश्यंतेरुधिराक्तामलीमसाः ३२
तद्बाणभिन्नहृदयःसुकेतुःकोपपूरितः
जघानशरविंशत्यातीक्ष्णयानतपर्वया ३३
उभौबाणविभिन्नांगावुभौक्षतजविप्लुतौ
सैनिकैःपरिदृश्यंतेकिंशुकाविवपुष्पितौ ३४
मुंचंतौबाणकोटीश्चसंदधंतौत्वराशरान्
नकेनापिविलक्ष्येतेलघुहस्तौमहाबलौ ३५
कुंडलीकृतसच्चापौवर्षंतौबाणधारया
नवांबुदाविवदिविशक्रनिर्देशकारिणौ ३६
तयोर्बाणागजान्वाहान्नराञ्छूरान्विमस्तकान्
कुर्वंतःकेवलंदृष्टानचसंधानमोक्षयोः ३७
पृथिवीसुभटैःपूर्णासकिरीटैःसकुंडलैः
धनुर्बाणकरैरोषसंदष्टाधरयुग्मकैः ३८
तयोःप्रयुद्ध्यतोर्दर्पात्सर्वशस्त्रास्त्रवेदिनोः

युद्धंसमभवद्घोरंदेवविस्मापनंमहत् ३९
संमर्दोऽभवदत्यंतंवीरकोटिविदारणः
नकेनचित्क्वचिद्दृष्टंशरजालांतरेंऽबरम् ४०
तस्मिंस्तुसमयेलक्ष्मीनिधिर्वीरोऽरिमर्दनः
बाणांश्चापेसमाधत्तवसुसंख्यान्दृढाञ्छितान् ४१
चतुर्भिस्तुरगान्वीरःसुकेतोरनयत्क्षयम्
एकेनध्वजमत्युग्रंचिच्छेदतरसाहसन् ४२
एकेनसारथेःकायाच्छिरोभूमावपातयत्
एकेनचापंसगुणमच्छिनद्रोषपूरितः ४३
एकेनहृदिविव्याधसुकेतोर्वेगवान्नृपः
तत्कर्माद्भुतमुद्वीक्ष्यवीराविस्मयमाययुः ४४
सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः
महतींसगदांधृत्वायोद्घुकामोऽभ्युपेयिवान् ४५
तमायांतंसमालक्ष्यगदायुद्धविशारदम्
महत्यागदयायुक्तंरथादवततारसः ४६
गदामादायमहतींसर्वायसविनिर्मिताम्
जातरूपविचित्रांगींसर्वशोभापुरस्कृताम् ४७
लक्ष्मीनिधिर्भृशंक्रुद्धःसुकेतोर्वक्षसित्वरन्
ताडयामासहृदयेगदांवज्राग्निसन्निभाम् ४८
गदयाताडितोवीरोनाकंपतमहामुने
मदोन्मत्तोयथादंतीबालेनस्त्रग्भिराहतः ४९
उवाचतंसवीराग्र्योनृपंलक्ष्मीनिधिंतदा
सहस्वैकंप्रहारंमेयदिशूरःपरंतप ५०
इत्युक्त्वाताडयामासललाटेगदयाभृशम्
गदयाताडितोभालेऽसृग्वमन्कुपितोभृशम् ५१
मूर्ध्नितंताडयामासगदयाकालरूपया
सुकेतुरपितंस्कंधेताडयामासधर्मवित् ५२
एवंभृशंप्रकुपितौगदायुद्धविशारदौ
गदायुद्धंप्रकुर्वाणौपरस्परजयैषिणौ ५३
अन्योन्याघातविमतौपरस्परवधोद्यतौ

नकोपितत्रहीयेतनकोजीयेतसंयुगे ५४
मूर्ध्निभालेतथास्कंधेहृदिगात्रेषुसर्वतः
रुधिरौघपरिक्लिन्नौमहाबलपराक्रमौ ५५
तदालक्ष्मीनिधिःक्रुद्धोगदामुद्यम्यवेगवान्
जगामप्रबलंहंतुंहृदिराजानुजंबली ५६
तमायांतमथालोक्यस्वगदांमहतींदधत्
ययौतंतरसाहंतुंराजभ्राताबलाद्बलम् ५७
गदांतेनविनिक्षिप्तांस्वकरेधृतवानयम्
तयैवगदयातस्यहृदिजघ्नेमहाबलः ५८
स्वगदांतेनवैनीतांदृष्ट्वालक्ष्मीनिधिर्नृपः
बाहुयुद्धेनतंयोद्धुमियेषबलवत्तमम् ५९
तदाराजानुजःक्रुद्धोबाहुभ्यामुपगृह्यतम्
युयुधेसर्वयुद्धस्यज्ञातावीरेषुसत्तमः ६०
तदालक्ष्मीनिधिस्तस्यहृदिजघ्नेस्वमुष्टिना
तदासोपिशिरस्येनंमुष्टिमुद्यम्यचाहनत् ६१
मुष्टिभिर्वज्रसंकाशैस्तलस्फोटैश्चदारुणैः
अन्योन्यंजघ्नतुःक्रुद्धौसंदष्टाधरपल्लवौ ६२
मुष्टीमुष्टिदंतादंतिकचाकचिनखानखि
उभयोरभवद्युद्धंतुमुलंरोमहर्षणम् ६३
तदाप्रकुपितोभ्रातानृपतेश्चरणेनृपम्
गृहीत्वाभ्रामयित्वाथपातयामासभूतले ६४
लक्ष्मीनिधिःकरेगृह्यतंनृपानुजमुच्चकैः
भ्रामयित्वाशतगुणंगजोपस्थेजघानतम् ६५
सतदापतितोभूमौसंज्ञांप्राप्यक्षणादनु
तथैवभ्रामयामासव्योम्निवेगेनविक्रमी ६६
एवंप्रयुध्यमानौतौबाहुयुद्धंगतौपुनः
पादेपादंकरेपाणिंहृदिहृद्वदनेमुखम् ६७
एवंपरस्परंश्लिष्टौपरस्परवधैषिणौ
उभावपिपराक्रांतावुभावपिमुमूर्च्छतुः ६८
तद्दृष्ट्वाविस्मयंप्राप्ताःप्रशशंसुःसहस्रशः

धन्योलक्ष्मीनिधिर्भूपोधन्योराजानुजोबली ६९
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
गदायुद्धंनामषड्विंशतितमोऽध्यायः २६

सप्तविंशतितमोऽध्यायः

शेषउवाच
चित्रांगःक्रौंचकंठस्थोरथस्थोवीरशोभितः
गाहयामासतत्सैन्यंवाराहइववारिधिम् १
धनुर्विस्फार्यसुदृढंमेघनादनिनादितम्
मुमोचबाणान्निशितान्वैरिकोटिविदाहकान् २
तद्बाणभिन्नसर्वांगाःशेरतेसुभटाभृशम्
सकिरीटतनुत्राणाःसन्दष्टदशनच्छदाः ३
एवंप्रवृत्तेसंग्रामेययौयोद्धुंसपुष्कलः
मणिचित्रितमादायचापंवैरिप्रतापनम् ४
तयोःसंगतयोरूपंदृश्यतेऽतिमनोहरम्
पुरातारकसंग्रामेस्कंदतारकयोर्यथा ५
विस्फारयन्धनुःशीघ्रंसव्यसाचीतुपुष्कलः
ताडयामासतंक्षिप्रंशरैःसन्नतपर्वभिः ६
चित्रांगोऽपिरुषाक्रांतःशरासनइषूञ्छितान्
दधद्व्यमुंचद्बहुशोरणमंडलमूर्धनि ७
नादानंनचसंधानंनमोचनमथापिवा
दृष्टंतावेवसंदृष्टौकुंडलीकृतचापिनौ ८
तदासौपुष्कलःक्रुद्धःशराणांशतकेनतम्
विव्याधवक्षःस्थलकेमहायोद्धारमुद्भटम् ९
चित्रांगस्ताञ्शरान्सर्वांश्चिच्छेदतिलशःक्षणात्
ताडयामासचांगेषुपुष्कलंशितसायकैः १०
पुष्कलस्तद्रथंदिव्यंभ्रामकास्त्रेणशोभिना
नभसिभ्रामयामासतदद्भुतमिवाभवत् ११
भ्रांत्वामुहूर्तमात्रंतुसरथोहयसंयुतः
स्थितिर्लेभेतिकष्टेनसंधृतोरणमंडले १२

सचास्यविक्रमंदृष्ट्वाचित्रांगःकुपितोभृशम्
उवाचपुष्कलंधीमान्सर्वास्त्रेषुविशारदः १३
चित्रांगउवाच
त्वयासाधुकृतंकर्मसुभटैर्युधिसंमतम्
मद्रथोवाजिसंयुक्तोभ्रामितोनभसिक्षणम् १४
पराक्रमंसमीक्षस्वममापिसुभटेरितम्
आकाशचारीतुभवान्भवत्वमरपूजितः १५
इत्युक्त्वासमुमोचास्त्रंरणेपरमदारुणम्
धनुषापरमास्त्रज्ञःसर्वधर्मविदुत्तमः १६
तेनबाणेनसंविद्धःखेबभ्रामपतंगवत्
सरथःसहयःसंख्येसध्वजश्चससारथिः १७
भ्रांत्वासरथवर्यस्तुनभसित्वरयान्वितः
यावत्स्थितिंनलभतेतावन्मुक्तोऽपरःशरः १८
पुनश्चपरिबभ्रामरथःसूतसमन्वितः
तत्कर्मवीक्ष्यपुत्रस्यराज्ञोविस्मयमापसः १९
कथंचित्स्थितिमप्यापपुष्कलःपरवीरहा
रथंजघानबाणैश्चससूतहयमस्यच २०
सभग्नस्यंदनोवीरःपुनरन्यंसमाश्रितः
सोऽपिभग्नःशरैराशुपुष्कलेनरणांगणे २१
पुनरन्यंसमास्थाययावदायातिसंमुखम्
तावद्बभंजनिशितैःसायकैस्तद्रथंपुनः २२
एवंदशरथाभग्नानृपतेरात्मजस्यहि
पुष्कलेनतुवीरेणमहासंयुगशालिना २३
तदाचित्रांगकःसंख्येरथेस्थित्वाविचित्रिते
आजगामहवेगेनपुष्कलंप्रतियोधितुम् २४
पुष्कलंपंचभिर्बाणैस्ताडयामाससंयुगे
तैर्बाणैर्निहतोऽत्यतंविव्यथेभरतात्मजः २५
सक्रुद्धश्चापमुद्यम्यबाणान्दशशितान्महान्
मुमोचहृदयेतस्यस्वर्णपुंखसुशोभितान् २६
तेबाणाःपपुरेतस्यरुधिरंबहुदारुणाः

पीत्वापेतुः चितौकूटसाचिणः पूर्वजाइव २७
तदाचित्रांगकःक्रुद्धोभल्लान्पंचसमाददे
मुमोचभालेपुत्रस्यभरतस्यमहौजसः २८
तैर्भल्लैराहतःक्रुद्धःशरासनवरेशरम्
दधत्प्रतिज्ञामकरोच्चित्रांगनिधनंप्रति २९
शृणुवीरममचिप्रंप्रतिज्ञांत्वद्वधाश्रिताम्
तज्ज्ञात्वासावधानेनयोद्धव्यंचत्वयात्रहि ३०
बाणेनानेनचेत्त्वांवैनकुर्यांप्राणवर्जितम्
सतींसंदूष्यवनितांशीलाचारसुशोभिताम् ३१
योलोकःप्राप्यतेलोकैर्यमस्यवशवर्तिभिः
सलोकोममवैभूयात्सत्यंममप्रतिश्रुतम् ३२
इतिश्रेष्ठंवचःश्रुत्वाजहासपरवीरहा
उवाचमतिमान्वीरःपुष्कलंवचनंशुभम् ३३
मृत्युर्वैप्राणिनांभाव्यःसर्वत्रैवचसर्वदा
तस्मान्मेनिधनेदुःखंनास्तिशूरशिरोमणे ३४
प्रतिज्ञायाकृतावीरत्वयावीरत्वशालिना
सासत्यैवपुनर्मेऽद्यश्रूयतांव्याहृतंमहत् ३५
त्वद्बाणंमद्वधोद्युक्तंनच्छिंद्यांयदिचेदहम्
तदाप्रतिज्ञांशृणुमेसर्ववीराभिमानिनः ३६
तीर्थंजिगमिषोर्योवैकुर्यात्स्वांतविखंडनम्
एकादशीव्रतादन्यज्ञानातिव्रतमुच्चकैः ३७
तस्यपापंममैवास्तुप्रतिज्ञापरिघातिनः
इतिवाक्यमुदीर्यैवतूष्णींभूतोधनुर्दधे ३८
तदानेननिषंगात्स्वादुद्धृत्यसायकंवरम्
कथयामासविशदंवाक्यंशत्रुवधावहम् ३९
पुष्कलउवाच
यदिरामांघ्रियुगुलंनिष्कापटयेनचेतसा
उपासितंमयातर्हिममवाक्यमृतंभवेत् ४०
यदिस्वमहिलांभुक्त्वानान्यांजानामिचेतसा
तेनसत्येनमेवाक्यंसत्यंभवतुसंगरे ४१

इतिवाक्यमुदीर्याशुबाणंधनुषिसंधितम्
कालानलोपमंवीरशिरश्छेदनमाक्षिपत् ४२
तंबाणंमुक्तमालोक्यसतुराजसुतोबली
बाणंशरासनेधत्ततीक्ष्णंकालानलोपमम् ४३
तेनबाणेनसंछिन्नोबाणःस्ववधउद्यतः
हाहाकारोमहानासीच्छिन्नेतस्मिञ्छरेतदा ४४
परार्धंपतितंभूमौपूर्वार्धंफलसंयुतम्
शिरोधरांचकर्ताशुपद्मनालमिवक्षणात् ४५
तदाभूमौपतंतंतुदृष्ट्वातत्तस्यसैनिकाः
हाहाकृत्वाभृशंसर्वेपलायनपरागताः ४६
पृथ्व्यांतन्मस्तकंश्रेष्ठंसकिरीटंसकुंडलम्
शुशुभेऽतीवपतितंचंद्रबिंबंदिवोयथा ४७
तंवीक्ष्यपतितंवीरःपुष्कलोभरतात्मजः
व्यगाहतव्यूहमिमंसर्ववीरैकशोभितम् ४८

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
चित्रांगवधोनामसप्तविंशतितमोऽध्यायः २७

## अष्टाविंशतितमोऽध्यायः

शेषउवाच
अथपुत्रंसमालोक्यपतितंव्यसुमुद्धतम्
विललापभृशंराजासुतदुःखेनदुःखितः १
मूर्ध्निसंताडयामासपाणिभ्यामतिदुःखितः
कम्पमानोभृशंचाश्रूण्यमुञ्चन्नयनाब्जयोः २
गृहीत्वापतितंवक्त्रंचंद्रबिंबमनोरमम्
पुष्कलेषुक्षतासृग्भिःक्लिन्नंकुंडलशोभितम् ३
कुटिलभ्रूयुगंश्रेष्ठंसंदष्टाधरपल्लवम्
सचुंबन्मुखपद्मेनविलपन्निदमब्रवीत् ४
हापुत्रवीरकथमुत्सुकचेतसंमां
किंनेक्षसेविशदनेत्रयुगेनशूर
किंमद्विनोदकथयारहितस्त्वमेव

रोषोदधिप्लुतमनाःकिललद्त्यसेच ५
वदपुत्रकथंमांत्वंप्रब्रूषेनहसन्पुनः
अमृतैर्मधुरास्वादैर्विनोदयसिपुत्रक ६
शत्रुघ्नाश्वंगृहाणत्वंसितचामरशोभितम्
स्वर्णपत्रेणशोभाढ्यंत्यजनिद्रांमहामते ७
एषप्रतापविशदःप्रतापाग्र्यःपरंतपः
धनुर्बिभ्रत्पुरोभातिपुष्कलःपरवीरहा ८
एनंवारयसत्तीद्त्णैर्बाणैःकोदंडनिर्गतैः
कथंत्वंरणमध्येवैशेतेवीरविमोहितः ९
हस्तिनःपत्तयश्चैवरथारूढाभयार्दिताः
शरणंत्वांसमायांतितानीत्तस्वमहामते १०
पुत्रत्वयाविनासोढुंकथंशक्तोरणांगणे
शत्रुघ्नसायकांस्तीद्त्णांश्चंडकोदंडनिर्गतान् ११
अतोमांतुत्वयाहीनंकोवापालयितुंत्तमः
यदित्यद्त्यसिनिद्रांत्वंजयायाहंत्तमस्तदा १२
इत्थंविलप्यसुभृशंतताडहृदयंस्वकम्
बहुशःपाणिनाराजापुत्रदुःखेनदुःखितः १३
तदाविचित्रदमनौस्वस्वस्यंदनसंस्थितौ
पितुश्चरणयोर्नत्वाऊचतुःसमयोचितम् १४
राजन्नस्मासुजीवत्सुकिंदुःखंहृदितद्वद
वीराणांप्रधनेमृत्युर्वांच्छितोजायतेमहान् १५
धन्योऽयबतचित्रांगोयोवीरभुविशोभते
सकिरीटस्तुसंदष्टदंतच्छदयुगःप्रभुः १६
कथयाशुकिमद्यैवकुर्वस्तेकार्यमीप्सितम्
शत्रुघ्नवाहिनींसर्वांहन्वआवामनाथिनीम् १७
अद्यैवपुष्कलंभ्रातुर्वधकारिणमाहवे
पातयावोरथाच्छित्त्वाशिरोमुकुटमंडितम् १८
त्यजशोकंसुदुःखार्तःकथंभासिमहामते
आज्ञापयावांमानार्हकुरुयुद्धेमतिंतथा १९
इतिवाक्यंसमाकर्ण्यपुत्रयोर्वीरमानिनोः

शोकंत्यक्त्वामहाराजोयुद्धायमतिमादधात् २०
तावपिप्रतियोद्धारंवांच्छंतौरणदुर्मदौ
जग्मतुःकटकेशत्रोरनंतभटपूरिते २१
रिपुतापेनदमनोनीलरत्नेनचेतरः
युयुधातेरणेवीरौप्रावृषीवबलाहकौ २२
राजाकनकसन्नद्धेरथेमणिविचित्रिते
रत्नकूबरशोभाढ्येतिष्ठंश्चापधरोबली २३
ययौयोद्धुंतुशत्रुघ्नंवीरकोटभिरावृतम्
तृणीकुर्वन्महावीरान्धनुर्विद्याविशारदान् २४
तंयोद्धुमागतंदृष्ट्वासुबाहुंरोषपूरितम्
पुत्रनाशेनकुर्वंतंसर्वसैन्यवधादिकम् २५
शत्रुघ्नपार्श्वसंचारीहनूमांस्तमुपाद्रवत्
नखायुधोमहानादंकुर्वन्मेघइवाहवे २६
सुबाहुस्तंहनूमंतमागच्छंतंमहारवम्
उवाचप्रहसन्वाक्यंरोषपूरितलोचनः २७
क्वगतःपुष्कलोहत्वामत्पुत्रंरणमंडले
पातयाम्यद्यतस्याशुशिरोज्वलितकुंडलम् २८
क्वशत्रुघ्नोवाहपालःक्वचरामःकुतोभटाः
प्राणहंतारमायांतंपश्यंतुप्रधनेतुमाम् २९
इतितद्वाक्यमाकर्ण्यहनूमान्निजगादतम्
शत्रुघ्नोलवणच्छेत्तावर्ततेसैन्यपालकः ३०
सकथंप्रधनेयुध्येत्सेवकेऽग्रेस्थितेनृप
मांविजित्यरणेतंचत्वंगंतासिनरर्षभ ३१
इत्युक्तवंतंतरसाविव्याधदशसायकैः
हृदिवानरमत्युग्रंपर्वताग्रचयमिवस्थितम् ३२
सबाणानागतांस्तांश्चगृहीत्वाकरसंपुटे
चूर्णयामासतिलशःशितान्वैरिविदारणान् ३३
चूर्णयित्वाशरांस्तांस्तुनिनदन्घनगर्जितैः
पुच्छेनावेष्ट्यतस्योच्चैरथंनिन्येमहाबलः ३४
तदातंनृपवर्योऽसावाकाशेस्थितएवसः

लांगूलंताडयामासशिताग्रैःसायकैर्मुहुः ३५
सताडितस्तुपुच्छाग्रेशरैःसन्नतपर्वभिः
मुमोचतद्रथंदिव्यंकनकेनविचित्रितम् ३६
समुक्तस्तेनतरसाशरैस्तीक्ष्णैर्जघानतम्
हनूमंतंकपिवरंरोषसंपूरितेक्षणः ३७
हनूमान्बाणविच्छिन्नःसर्वत्ररुधिराप्लुतः
महारोषंसमाधत्तनृपोपरिकपीश्वरः ३८
गृहीत्वातस्यदंष्ट्राभीरथंहयसमन्वितम्
चूर्णयामसवेगेनतदद्भुतमिवाभवत् ३९
स्वरथंभज्यमानंतुदृष्ट्वाराजात्वरन्बली
अन्यंरथंसमास्थाययुयुधेतंमहाबलम् ४०
पुच्छेमुखेऽथोरसिचभुजेचरणयोर्नृपः
जघानशरसंधानकोविदःपरमास्त्रवित् ४१
तदाक्रुद्धःकपिवरस्ताडयामासवक्षसि
पादेनोत्प्लुत्यवेगेनराज्ञःसुभटशोभिनः ४२
सपदाप्रहतोभूमौपपातकिलमूर्च्छितः
मुखाद्वमन्नसृक्चोष्णंश्वासपूरप्रवेपितः ४३
तदाप्रकुपितोऽत्यतंहनूमान्प्रधनांगणे
अश्वान्वीरान्गजांश्चापिचूर्णयामासवेगतः ४४
तदासुकेतुस्तद्भ्रातातथालक्ष्मीनिधिर्नृपः
उभावपिसुसन्नद्धौयुद्धायसमुपस्थितौ ४५
राजानंमूर्च्छितंदृष्ट्वाप्रपलाय्यगतानराः
इतस्ततोबाणसंघैःक्षताःपुष्कलवर्षितैः ४६
तद्भज्यमानंस्वबलंवीक्ष्यराजात्मजोबली
दमनःस्तंभयामससेतुर्वार्धिमिवोच्चलम् ४७
तदातुमूर्च्छितोराजास्वप्नमेकंददर्शह
रणमध्येकपिवरप्रपदाघातताडितः ४८
रामचंद्रस्त्वयोध्यायांसरयूतीरमंडपे
ब्राह्मणैर्याज्ञिकश्रेष्ठैर्बहुभिःपरिवारितः ४९
तत्रब्रह्मादयोदेवास्तत्रब्रह्मांडकोटयः

कृतप्राञ्जलयस्तंवैस्तुवंतिस्तुतिभिर्मुहुः ५०
रामंश्यामंसुनयनंमृगशृंगपरिग्रहम्
गायंतिनारदाद्याश्चवीणोल्लसितपाणयः ५१
नृत्यंत्यप्सरसस्तत्रघृताचीमेनकादयः
वेदामूर्तिधराभूत्वाउपतिष्ठंतिराघवम् ५२
यच्चकिंचिद्वस्तुजातंसर्वशोभासमन्वितम्
तस्यदातारमखिलंभक्तानांभोगदायकम् ५३
इत्येवमादिसंपश्यञ्जाग्रत्संज्ञामवापसः
ब्रह्मशापहतज्ञानःकिंदृष्टमितिवैवदन् ५४
उत्थायप्रययौपद्मांशत्रुघ्नचरणंप्रति
भृत्यकोटिपरीवारोरथकोटिपरीवृतः ५५
सुकेतुंतुसमाहूयविचित्रंदमनंतथा
युद्धंकर्तुंसमुद्युक्तान्वारयामासधर्मवित् ५६
उवाचतान्महाराजोधर्मात्माधर्मसंयुतः
भ्रातःपुत्रौशृणुतमेवाक्यंधर्मसमन्वितम् ५७
मायुद्धंकुरुतह्विप्रमनयस्तुमहानभूत्
यद्रामचंद्रवाहंत्वमगृह्णादमनोर्ज्जितम् ५८
एषरामःपरंब्रह्मकार्यकारणतःपरम्
चराचरजगत्स्वामीनमानुषवपुर्धरः ५९
एतद्धिब्रह्मविज्ञानमधुनाज्ञातवानहम्
पुरासितांगशापेनहृतज्ञानधनोऽनघाः ६०
अहंपुरातीर्थयात्रांगतस्तत्त्वविवित्सया
तत्रानेकेमयादृष्टामुनयोधर्मवित्तमाः ६१
असितांगंमुनिमहंगतवाञ्ज्ञातुमिच्छया
तदाप्रोवाचमांविप्रःकृपांकृत्वाममोपरि ६२
योऽसावयोध्याधिपतिःसपरब्रह्मशब्दितः
तस्ययाजानकीदेवीसाक्षात्साचिन्मयीस्मृता ६३
एनंतुयोगिनःसाक्षादुपासतेयमादिभिः
दुस्तरापारसंसारवारिधिंसंतितीर्षवः ६४
स्मृतमात्रोमहापापहारीसगरुडध्वजः

यएनंसेवतेविद्वान्ससंसारंतरिष्यति ६५
तदाहमहसंविप्रंकोऽयरामस्तुमानुषः
केयंसाजानकीदेवीहर्षशोकसमाकुला ६६
अजन्मनःकथंजन्मअकर्तुःकृत्यमत्रकिम्
जन्मदुःखजरातीतंकथयस्वमुनेमम ६७
इत्युक्तवंतंमांक्रुद्धःशशापसमुनीश्वरः
अज्ञात्वातत्स्वरूपंत्वंप्रतिब्रूषेममाधम ६८
एनंनिंदसिरामंत्वंमानुषोऽयमिदंहसन्
तस्मात्त्वंतत्त्वसंमूढोभविष्यस्युदरंभरिः ६९
तदाहंतस्यचरणावगृह्णंसदयायुतः
दृष्ट्वामेविनयंमांतुप्रावोचत्करुणानिधिः ७०
त्वंरामस्यमखेविघ्नंकरिष्यसियदानृप
तदाहनूमानंघ्रिंत्वांताडयिष्यतिवेगतः ७१
तदात्वंज्ञास्यसेराजन्नान्यथास्वमनीषया
पुराहमुक्तस्तेनैवंतद्दृष्टमधुनामया ७२
यदामांहनुमान्क्रुद्धस्ताडयामासवक्षसि
तदाऽदर्शंरमानाथंपूर्णब्रह्मस्वरूपिणम् ७३
तस्मादश्वंतुशोभाढ्यमानयंतुमहाबलाः
धनानिचैववासांसिराज्यंचेदंसमर्पये ७४
रामंदृष्ट्वाकृतार्थःस्यामहंयज्ञेतिपुरायदे
आनयंतुहयंमह्यंरोचतेतुतदर्पणम् ७५

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
सुबाहुपराजयोनामअष्टाविंशतितमोऽध्यायः२८

## एकोनत्रिंशत्तमोऽध्यायः

शेषउवाच
तेतुतातवचःश्रुत्वाहर्षिताःसंप्रहारिणः
तथेत्यूचुर्महाराजंरामदर्शनलालसम् १
पुत्राऊचुः
राजन्भवत्पदांभोजान्नान्यंजानीमहेवयम्

यत्तवस्वांततोजातंतद्भवत्वद्यवेगतः २
अश्वोऽयनीयतांतत्रसितचामरभूषितः
रत्नमालातिशोभाढ्यश्चंदनादिकचर्चितः ३
राज्यमाज्ञाफलंस्वामिन्कोशाबहुसमृद्धयः
वासांसिसुमहार्हाणिसूक्ष्माणिसुगुणानिच ४
चंदनंचंद्रकंचैववाजिनःसुमनोहराः
हस्तिनस्तुमदोद्धूतारथाःकांचनकूबराः ५
विचित्रतरवर्णादिनानाभूषणभूषिताः
दास्यःशतसहस्रंचदासाश्चसुमनोरमाः ६
मणयःसूर्यसंकाशारत्नानिविविधानिच
मुक्ताफलानिशुभ्राणिगजकुंभभवानिच ७
विद्रुमाःशतसाहस्रायद्यद्वस्तुमहोदयम्
तत्सर्वंरामचंद्रायदेहिराजन्महामते ८
सुतानस्मान्किंकरान्नःसर्वानर्पयभूपते
कथंनकुरुषेराजंस्तदधीनंनृपासनम् ९
शेषउवाच
इतिपुत्रवचःश्रुत्वाहर्षितोऽभून्महीपतिः
उवाचचसुतान्वीरान्स्ववाक्यकरणोद्यतान् १०
राजोवाच
आनयंतुहयंसर्वेसन्नद्धाःशस्त्रपाणयः
नानारथपरीवारास्ततोयास्येनृपंप्रति ११
शेषउवाच
इतिराज्ञोवचश्रुत्वाविचित्रोदमनस्तथा
सुकेतुःसमरेशूराजग्मुस्तस्याज्ञयोद्यताः १२
तेगत्वाथपुरींशूरावाजिनंसुमनोरमम्
सितचामरसंयुक्तंस्वर्णपत्राद्यलंकृतम् १३
रत्नमालाविभूषाढ्यंचित्रपत्रेणशोभितम्
विचित्रमणिभूषाढ्यंमुक्ताजालस्वलंकृतम् १४
रज्ज्वाधृतंमहावीरैःपूर्वतःपृष्ठतोभटैः
महाशस्त्रास्त्रसंयुक्तैःसर्वशोभासमन्वितैः १५

सितातपत्रमस्योच्चैर्भातिमूर्धनिवाजिनः
सुचामरद्वयंयस्यध्रियतेपुरतोमुहुः १६
कृष्णागर्वादिधूपैश्चधूपितंवायुवेगिनम्
राज्ञःपुरोनिनायाश्वंहयमेधस्यसत्क्रतोः १७
तमानीतंहयंदृष्ट्वारत्नमालाविभूषितम्
मनोजवंकामरूपंजहर्षमतिमान्नृपः १८
जगामपद्मांशत्रुघ्नंराजचिह्नाद्यलंकृतः
स्वपुत्रपौत्रैःसंयुक्तोराजापरमधार्मिकः १९
ययौकर्तुंधनानांससद्व्ययंचलगामिनाम्
एतद्विनश्वरंमत्वादुःखदंसक्तचेतसाम् २०
शत्रुघ्नंसददर्शाथसितच्छत्रेणशोभितम्
चामरैर्वीज्यमानञ्चसेवकैःपुरतःस्थितैः २१
सुमतिंपरिपृच्छंतंरामचंद्रकथानकम्
भयवार्ताविनिर्मुक्तंवीरशोभास्वलंकृतम् २२
वीरैःकोटिभिराकीर्णंवाजिपालनकांक्षिभिः
वानराणांसहस्रैश्चसमंतात्परिवारितम् २३
दृष्ट्वाशत्रुघ्नचरणौप्रणनामसपुत्रकः
धन्योऽहमितिसंहृष्टोवदन्रामैकमानसः २४
शत्रुघ्नस्तंप्रणयिनंदृष्ट्वाराजानमुद्भटम्
उत्थायासनतःसर्वैर्भटैर्दोर्भ्यांसमस्वजे २५
दृढंसंपूज्यराजातंशत्रुघ्नंपरवीरहा
उवाचहर्षमापन्नोगद्गदस्वरयागिरा २६
सुबाहुरुवाच
अद्यधन्योस्मिससुतःसकुटुंबःसवाहनः
यद्युष्मच्चरणौद्रक्ष्येनृपकोटिभिरीडितौ २७
अज्ञानिनासुतेनायंगृहीतोवाजिनांवरः
दमनेनानयंत्वस्यक्षमस्वकरुणानिधे २८
नजानातिरघूत्तंसंसर्वदेवाधिदैवतम्
लीलयाविश्वस्रष्टारंहंतारमपिपालकम् २९
इदंराज्यंसमृद्धांगंसमृद्धबलवाहनम्

इमेकोशाधनैःपूर्णाइमेपुत्राइमेवयम् ३०
सर्वेवयंरामनाथास्त्वदाज्ञाप्रतिपालकाः
गृहाणसर्वंसफलंनमेऽस्तिक्वचिदुन्मतम् ३१
क्वासौहनूमान्नामस्यचरणांभोजषट्पदः
यत्प्रसादादहंप्राप्स्येराजराजस्यदर्शनम् ३२
साधूनांसंगमेकिंकिंप्राप्यतेनमहीतले
यत्प्रसादादहंमूढोब्रह्मशापमतीतरम् ३३
दृष्ट्वात्वद्यमहाराजंपद्मपत्रनिभेक्षणम्
प्राप्स्यामिजन्मनःसर्वंफलंदुर्लभमत्रच ३४
ममतावद्गतंचायुर्बहुरामवियोगिनः
स्वल्पमुर्वरितंतत्रकथंद्रक्ष्येरघूत्तमम् ३५
मह्यंदर्शयतंरामंयज्ञकर्मविचक्षणम्
यदंघ्रिरजसापूताशिलाभूतामुनिप्रिया ३६
काकःपरंपदंप्राप्तोयद्बाणस्पर्शनात्खगः
अनेकेयस्यवक्त्राब्जंवीक्ष्यसंख्येपदंगताः ३७
येत्वस्यरघुनाथस्यनामगृह्णंतिसादराः
तेयांतिपरमंस्थानंयोगिभिर्यद्विचिंत्यते ३८
धन्यायोध्याभवालोकायेराममुखपंजम्
स्वलोचनपुटैःपीत्वासुखंयांतिमहोदयम् ३९
इतिसंभाष्यनृपतिंवाहंराज्यंधनानिच
सर्वंसमर्प्यचावोचत्किंकरोस्मिमहीपते ४०
इतिवाक्यंसमाकर्ण्यराज्ञःपरपुरंजयः
प्रत्युवाचेतितंभूपंवाग्मीवाक्यविशारदः ४१
शत्रुघ्नउवाच
कथंराजन्निदंब्रूषेत्वंवृद्धोममपूजितः
सर्वंत्वदीयंत्वद्राज्यंदमनोविदधात्वयम् ४२
क्षत्रियाणामिदंकृत्यंयत्संग्रामविधायकम्
सर्वंराज्यंधनंचेदंप्रतियातुममाज्ञया ४३
यथामेरघुनाथस्तुपूज्योवाङ्मनसासदा
तथात्वमपिमत्पूज्योभविष्यसिमहीपते ४४

भवान्सज्ञोभवत्वद्यहयस्यानुगमंप्रति
सन्नद्धःकवचीखड्गीगजाश्वरथसंयुतः ४५
इतिवाक्यंसमाकरार्यशत्रुघ्नस्यमहीपतिः
पुत्रंराज्येऽभिषेच्यैवशत्रुघ्नेनसुपूजितः ४६
महारथैःपरिवृतोनिजंपुत्रंरणांगरो
पुष्कलेनहतंभूपःसंस्कृत्यविधिपूर्वकम् ४७
त्तणंशुशोचतत्त्वज्ञोलोकदृष्ट्यामहारथः
ज्ञानेनानाशयच्छोकंरघुनाथमनुस्मरन् ४८
सज्जीभूतोरथेतिष्ठन्महासैन्यसमावृतः
आजगामसशत्रुघ्नंमहारथिपुरस्कृतः ४९
राजातमागतंदृष्ट्वासर्वसैन्यसमन्वितम्
गंतुंचकारधिषणांहयवर्यस्यपालने ५०
सोऽश्वोविमोचितस्तेनभालेपत्रेणचिह्नितः
वामावर्तंभ्रमन्प्रायात्पौर्वाञ्जनपदान्बहून् ५१
तत्रतत्रत्यभूपालैर्महाशूराभिपूजितैः
प्रणतिःक्रियतेतस्यनकोपितमगृह्णत ५२
केचिद्वासांसिचित्राणिकेचिद्राज्यंस्वकंमहत्
केचिद्धनंजनंकेचिदानीयप्रणमंतितम् ५३

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेशत्रुघ्नस्य
सुबाहुनासहनिर्याणंनामएकोनत्रिंशत्तमोऽध्यायः २९

## त्रिंशोऽध्यायः

शेषउवाच
अथतेजःपुरंप्राप्तस्तुरगःपत्रशोभितः
यस्यांपालयतेराजाप्रजाःसत्येनसत्यवान् १
अथकोटिपरीवारोरघुनाथानुजस्ततः
हयानुगोययौतस्यपुरतःपुरधर्षणः २
तद्दृष्ट्वानगरंरम्यंचित्रप्राकारशोभितम्
कांचनैःकलशैस्तत्रपरितःप्रतिभासितम् ३
देवायतनसाहस्रैःसर्वतश्चविराजितम्

यतीनांतुमठास्तत्रशोभंतेयतिपूरिताः ४
वहत्यत्रमहादेवीशिखिलोचनमूर्धगा
हंसकारंडवाकीर्णामुनिवृंदनिषेविता ५
ब्राह्मणानांप्रत्यगारमग्निहोत्रभवःपुनः
धूमस्तत्रपुनात्यंगपातकाप्लुतमानसान् ६
उवाचसुमतिंराजाशत्रुघ्नःशत्रुतापनः
तत्पुरप्रेक्षणोद्भूतहर्षविस्मितमानसः ७
शत्रुघ्नउवाच
मंत्रिन्कथयकस्येदंपुरंमेदृष्टिगोचरम्
करोतिमानसाह्लादंधर्मेणप्रतिपालितम् ८
शेषउवाच
इतिवाक्यंसमाकर्ण्यशत्रुघ्नस्यमहीपतेः
उवाचसुमतिःसर्वंयथातथमनुद्धतम् ९
सुमतिरुवाच
शृणुष्वावहितःस्वामिन्वैष्णवस्यकथाःशुभाः
याःश्रुत्वामुच्यतेपापाद्ब्रह्महत्यासमादपि १०
जीवन्मुक्तोवरीवर्तिरामांघ्र्यंबुजषट्पदः
सत्यवान्यज्ञयज्ञांगज्ञाताकर्ताऽवितामहान् ११
धेनुंप्रसाद्यबहुभिर्व्रतैर्यंप्रापतत्पिता
ऋतंभराख्योजगतिख्यातःपरमधार्मिकः १२
गौःप्रसन्नाददौपुत्रमनेकगुणसंस्कृतम्
सत्यवंतंसुशोभाढ्यंतंजानीहिनृपोत्तमम् १३
शत्रुघ्नउवाच
कोवाऋतंभरोराजाकिमर्थंधेनुपूजनम्
कथंप्राप्तःसुतस्तस्यवैष्णवोविष्णुसेवकः १४
सर्वमेतत्समाचक्ष्ववैष्णवस्यकथानकम्
श्रुतंहरतिजंतूनांमहापातकपर्वतम् १५
शेषउवाच
इतिवाक्यंसमाकर्ण्यशत्रुघ्नस्यमहार्थकम्
कथयामासविशदंतदुत्पत्तिकथानकम् १६

ऋतंभरोनरपतिरनपत्यःपुराऽभवत्
कलत्राणिबहून्यस्यनपुत्रंप्रापतेषुवै १७
तदाजाबालिनामानंमुनिंदैवादुपागतम्
प्रपच्छकुशलोद्युक्तःसपुत्रोत्पत्तिकारणम् १८
ऋतंभरउवाच
स्वामिन्वंध्यस्यमेब्रूहिपुत्रोत्पत्तिकरंवचः
यत्कृत्वाजायतेऽपत्यंममवंशधरंवरम् १९
तज्ज्ञात्वाभवतोभव्यंप्रकुर्यांनिश्चितंवचः
दानंव्रतंवातीर्थंवामखंवामुनिसत्तम २०
इतिराज्ञोवचःश्रुत्वाजगादमुनिसत्तमः
सुतोत्पत्तिकरंवाक्यंप्रणतस्यसुतार्थिनः २१
अपत्यप्राप्तिकामस्यसंत्युपायास्त्रयःप्रभो
विष्णोःप्रसादोगोश्चापिशिवस्याप्यथवापुनः २२
तस्मात्त्वंकुरुवैपूजांधेनोर्देवतनोर्नृप
यस्याःपुच्छेमुखेशृंगेपृष्ठेदेवाःप्रतिष्ठिताः २३
सातुष्टादास्यतिह्निप्रंवांछितंधर्मसंयुतम्
एवंविदित्वागोपूजांविधेहित्वमृतंभर २४
योवैनित्यंपूजयतिगांगेहेयवसादिभिः
तस्यदेवाश्चपितरोनित्यंतृप्ताभवंतिहि २५
योवैगवाह्निकंदद्यान्नियमेनशुभव्रतः
तेनसत्येनतस्यस्युःसर्वेपूर्णामनोरथाः २६
तृषितागौर्गृहेबद्धागेहेकन्यारजस्वला
देवताचसनिर्माल्याहंतिपुरायंपुराकृतम् २७
योवैगांप्रतिषिद्ध्येतचरंतींस्वंतृणंनरः
तस्यपूर्वेचपितरःकंपंतेपतनोन्मुखाः २८
योवैयष्ट्याताडयतिधेनुंमर्त्योविमूढधीः
धर्मराजस्यनगरंसयातिकरवर्जितः २९
योवैदंशान्वारयतितस्यपूर्वेह्यधोगताः
नृत्यंतिमत्सुतोह्यस्मांस्तारयिष्यतिभाग्यवान् ३०
अत्रैवोदाहरंतीममितिहासंपुरातनम्

जनकस्यपुरावृत्तंधर्मराजपुरेऽद्भुतम् ३१
एकदाजनकोराजायोगेनासूनसमत्यजत्
तदाविमानंसंप्राप्तंकिंकिणीजालभूषितम् ३२
तदारुह्यगतोराजासेवकैरूढदेहवान्
मार्गेजगामधर्मस्यसंयमिन्याःपुरोंऽतिके ३३
तदानरककोटीषुपीड्यंतेपापकारिणः
जनकस्यांगपवनंप्राप्यसौख्यंप्रपेदिरे ३४
निरयेदाहजापीडाजातैषांसुखकारिणी
महादुःखंतदानष्टंजनकस्यांगवायुना ३५
तदातंनिर्गतंदृष्ट्वाजंतवःपापपीडिताः
अत्यंतंचुक्रुशुर्भीतास्तद्वियोगमनिच्छवः ३६
ऊचुस्तेकरुणांवाचंमागच्छसुकृतिन्नितः
त्वदंगवायुसंस्पर्शात्सुखिनःस्यामपीडिताः ३७
इतिवाक्यंसमाकर्ण्यराजापरमधार्मिकः
मानसेचिंतयामासकरुणापूरपूरितः ३८
चेन्मत्तःप्राणिनांसौख्यंभवेदिहतदापुनः
अत्रैवचपुरेस्थास्येस्वर्गएषमनोरमः ३९
एवंकृत्वानृपस्तस्थौतत्रैवनिरयाग्रतः
विदधत्प्राणिनांसौख्यमनुकंपितमानसः ४०
तत्रधर्मस्तुसंप्राप्तोनिरयद्वारिदुःखदे
कारयन्यातनास्तीव्रानानापातककारिणाम् ४१
तदाददर्शराजानंजनकंद्वारिसंस्थितम्
विमानेनमहापुण्यकारिणंदययायुतम् ४२
तमुवाचप्रेतपतिर्जनकंसहसन्गिरा
राजन्कुतस्त्वंसंप्राप्तःसर्वधर्मशिरोमणिः ४३
एतत्स्थानंपातकिनांदुष्टानांप्राणघातिनाम्
नायांतिपुरुषाभूपत्वादृशाःपुण्यकारिणः ४४
अत्रायांतिनरास्तेवैयेपरद्रोहतत्पराः
परापवादनिरताः परद्रव्यपरायणाः ४५
योवैकलत्रंधर्मिष्ठंनिजसेवापरायणम्

अपराधादृतेजह्यात्सनरोऽत्रसमाव्रजेत् ४६
मित्रंवञ्चयतेयस्तुधनलोभेनलोभितः
आगत्यात्रनरःपीडांमत्तःप्राप्नोतिदारुणाम् ४७
योरामंमनसावाचाकर्मणादंभतोऽपिवा
द्वेषाद्वाचोपहासाद्वानस्मरत्येवमूढधीः ४८
तंबध्नामिपुनस्त्वेषुनिक्षिप्यश्रपयामिच
यैःस्मृतोनरमानाथोनरकक्लेशवारकः ४९
तावत्पापंमनुष्याणामंगेषुनृपतिष्ठति
यावद्रामंनरसनागृणातिकलिदुर्मतेः ५०
महापापकराराजन्येभवंतिमहामते
तानानयंतिमद्भृत्यास्त्वादृशान्द्रष्टुमक्षमाः ५१
तस्माद्गच्छमहाराजभुंक्ष्वभोगाननेकशः
विमानवरमारुह्यभुंक्ष्वपुरायमुपार्जितम् ५२
इतिवाक्यंसमाकर्ण्यधर्मराजस्यतत्पतेः
उवाचधर्मराजानंकरुणापूरपूरितः ५३
जनकउवाच
अहंगच्छामिनोनाथजीवानामनुकम्पया
मदंगवायुनाह्येतेसुखंप्राप्ताःस्मसंस्थिताः ५४
एतान्मुंचसिचेद्राजन्सर्वान्वैनिरयस्थितान्
ततोगच्छामिसुखितःस्वर्गंपुरायजनाश्रितम् ५५
जाबालिरुवाच
इतिवाक्यमथाश्रुत्यजनकंप्रत्युवाचसः
प्रत्येकंनिर्दिशञ्जीवान्निरयस्थाननेकशः ५६
धर्मउवाच
अयंमित्रकलत्रंवैविश्वस्तमनुजग्मिवान्
तस्मादेनंलोहशंकौवर्षायुतमपीपचम् ५७
पश्चादेनंसूकराणांयोनौनिक्षिप्यदोषिणम्
मानुषेष्ववतार्योऽयषंढचिह्नेनचिह्नितः ५८
अनेनपरदाराश्चबलादालिगितामुहुः
तस्मादयंपच्यतेऽत्ररौरवेशतहायनम् ५९

अयंतुपरकीयंस्वंमुषित्वाबुभुजेकुधीः
तस्मादस्यकरौछित्त्वापचेयंपूयशोणिते ६०
अयंसायंतनेप्राप्तमतिथिंक्षुधयार्दितम्
वाण्यापिनाकरोत्तस्यपूजनंस्वागतंनच ६१
तस्मादयंपातनीयस्तामिस्रेंधनपूरिते
भ्रमरैःपीडितोयातुयातनांशतहायनम् ६२
अयंतावत्परस्योच्चैर्निंदांकुर्वन्नलज्जितः
अयमप्यशृणोत्कर्णौप्रेरयन्बहुशस्तुताम् ६३
तस्मादिमावंधकूपेपतितौदुःखदुःखितौ
अयंमित्रध्रुगुद्विग्नःपच्यतेरौरवेभृशम् ६४
तस्मादेतान्पापभोगान्कारयित्वाविमोचये
त्वंगच्छनरशार्दूलपुण्यराशिविधायकः ६५
जाबालिरुवाच
एवंसनिर्दिशञ्जीवांस्तूष्णीमासाघकारिणः
प्रोवाचरामभक्तोऽसौकरुणापूरितेक्षणः ६६
जनकउवाच
कथंनिरयनिर्मुक्तिर्जीवानांदुःखिनांभवेत्
तदाशुकथयत्वंवैयत्कृत्वासुखमाप्नुयुः ६७
धर्मउवाच
नैभिराराधितोविष्णुर्नैभिस्तस्यकथाःश्रुताः
कथंनिरयनिर्मुक्तिर्भवेद्वैपापकारिणाम् ६८
यदित्वंमोचयस्येतान्महापापकरानपि
तर्ह्यर्पयमहाराजपुण्यंतत्कथयामियत् ६९
एकदाप्रातरुत्थायशुद्धभावेनचेतसा
ध्यातःश्रीरघुनाथोऽसौमहापापहराभिधः ७०
रामरामेतियच्चोक्तंत्वयाशुद्धेनचेतसा
तत्पुण्यमर्पयैतेभ्योयेनस्यान्निरयाच्च्युतिः ७१
जाबालिरुवाच
एतच्छ्रुत्वावचस्तस्यधर्मराजस्यधीमतः
पुण्यंददौमहाराजआजन्मसमुपार्जितम् ७२

यदाजन्मकृतैःपुरयैरघुनाथार्चनोद्भवैः
एतेषांनिरयान्मुक्तिर्भवत्वत्रमनोरमा ७३
एवंकथयतस्तस्यजीवानिरयसंस्थिताः
तत्त्वरणान्निरयान्मुक्ताजातादिव्यवपुर्धराः ७४
ऊचुस्तेजनकंराजंस्त्वत्प्रसादाद्वयंत्तणात्
दुःखदान्निरयान्मुक्तायास्यामःपरमंपदम् ७५
तान्दृष्ट्वासूर्यसंकाशान्नरान्निरयनिःसृतान्
तुतोषचित्तेसुभृशंसर्वभूतदयापरः ७६
तेसर्वेप्रययुर्लोकंदिवंदेवैरलंकृतम्
जनकंतुप्रशंसंतोमहाराजंदयानिधिम् ७७
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेसत्यवदा-
ख्यानेजनकेननरकस्थप्राणिमोचनंनामत्रिंशोऽध्यायः ३०

## एकत्रिंशोऽध्यायः

जाबालिरुवाच
अथतेषुप्रयातेषुनरकस्थेषुवैनृषु
राजापप्रच्छकीनाशंसर्वधर्मविदांवरम् १
राजोवाच
धर्मराजत्वयाप्रोक्तंयत्पातककरानराः
आयांतितवसंस्थानंनचधर्मकथारताः २
मदागमनमत्राभूत्केनपापेनधार्मिक
तद्वैकथयसर्वंमेपापकारणमादितः ३
इति श्रुत्वातुतद्वाक्यंधर्मराजःपरंतप
कथयामासतस्यैवंयमपुर्यागमंतदा ४
धर्मराजउवाच
राजंस्तवमहत्पुरयंनैतादृक्कस्यभूतले
रघुनाथपदद्वंद्वमकरंदमधुव्रत ५
त्वत्कीर्तिस्वर्धुनीसर्वान्पापिनोमलसंयुतान्
पुनातिपरमाह्लादकारिणीदुष्टतारिणी ६
तथापिपापलेशस्तेवर्ततेनृपसत्तम

येनसंयमिनीपार्श्वमागतःपुरायपूरितः ७
एकदातुचरंतींगांवारयामासवैभवान्
तेनपापविपाकेननिरयद्वारदर्शनम् ८
इदानींपापनिर्मुक्तोबहुपुरायसमन्वितः
भुंद्वभोगान्सुविपुलान्निजपुरयार्जितान्बहून् ९
एतेषांकरुणावार्धीरघुनाथोसुखंहरन्
संयमिन्यामहामार्गेप्रेरयामासवैष्णवम् १०
नागमिष्योयदित्वंवैमार्गेणानेनसुव्रत
अभविष्यत्कथंतेषांनिरयात्परिमोचनम् ११
त्वादृशाःपरदुःखेनदुःखिताःकरुणालयाः
प्राणिनांदुःखविच्छेदंकुर्वंत्येवमहामते १२
जाबालिरुवाच
एवंवदंतंशमनंप्रणम्यसदिवंगतः
दिव्येनसुविमानेनअप्सरोगणशोभिना १३
तस्माद्गावोऽनिशंपूज्यामनसापिनगर्हयेत्
गर्हयन्निरयंयातियावदिंद्राश्चतुर्दश १४
तस्मात्त्वंनृपतिश्रेष्ठगोपूजांवैसमाचर
सातुष्टादास्यतिह्निप्रंपुत्रंधर्मपरायणम् १५
सुमतिरुवाच
तच्छ्रुत्वाधेनुपूजांसपप्रच्छकथमादरात्
पूजनीयाप्रयत्नेनकीदृशंकुरुतेनरम् १६
जाबालिकथयामासधेनुपूजांयथाविधि
प्रत्यहंविपिनंगच्छेच्चारणार्थंव्रतीतुगोः १७
गवेयवांस्तुसंभोज्यगोमयस्थान्समाहरेत्
भद्मणीयायवास्तेतुपुत्रकामेनभूपते १८
सायदापिबतेतोयंतदापेयंजलंशुचि
सोच्चैःस्थानेयदातिष्ठेत्तदानींचासनस्थितः १९
दंशान्निवारयेन्नित्यंयवसंस्वयमाहरेत्
एवंप्रकुर्वतःपुत्रंदास्यतेधर्मतत्परम् २०
सुमतिरुवाच

इतिवाक्यंसमाकर्ण्यपुत्रकामऋतंभरः
व्रतंचकारधर्मात्माधेनुपूजांसमाचरन् २१
प्रत्यहंकुरुतेगांवैयवसाद्येनतोषिताम्
दंशान्न्यवारयद्धीमान्यवभक्षकृतादरः २२
एवंधेनुंपूजयतोगतास्तुदिवसाघनाः
वनमध्येतृणादींश्चचरंतीमकुतोभयाम् २३
एकदानृपतिस्तस्यवनस्यश्रीनिरीक्षणे
न्यस्तदृष्टिःसपरितोबभ्रामसकुतूहली २४
तदागत्याहनद्गांवैपंचास्यःकाननांतरात्
क्रोशंतींबहुधादीनांसिंहभारेणदुःखिताम् २५
तदानृपःसमागत्यविलोक्यनिजमातरम्
सिंहेननिहतांपश्यन्रुरोदातीवविह्वलः २६
सदुःखितःसमागत्यजाबालिमुनिसत्तमम्
निष्कृतिंतस्यपप्रच्छगोवधस्यप्रमादतः २७
ऋतंभरउवाच
स्वामिंस्त्वदाज्ञयाधेनुंपालयन्वनमास्थितः
कुतोप्यागत्यतांसिंहोजघानादृष्टिगोचरः २८
तस्यपापस्यनिष्कृत्यैकिंकरोमित्वदाज्ञया
कथंवाव्रतसंपूर्तिर्ममपुत्रप्रदायिनी २९
इत्युक्तवंतंतंभूपंजगादमुनिसत्तमः
संत्युपायामहीपालपापस्यास्यापनुत्तये ३०
ब्रह्मघ्नस्यकृतघ्नस्यसुरापस्यमहामते
प्रायश्चित्तानिवर्तंतेसर्वपापहराणिच ३१
कृच्छ्रैश्चांद्रायणैर्दानैर्व्रतैःसनियमैर्यमैः
पापानिप्रलयंयांतिनियमादनुतिष्ठतः ३२
द्वयोश्चनिष्कृतिर्नास्तिपापपुंजकृतोस्तयोः
मत्यागोवधकर्तुश्चनारायणविनिंदितुः ३३
गवांयोमनसादुःखंवांच्छत्यधमसत्तमः
सयातिनिरयस्थानंयावदिंद्राश्चतुर्दश ३४
योऽपिदेवंहरिंनिंदेत्सकृद्दुर्भाग्यवान्नरः

सचापिनरकंपश्येत्पुत्रपौत्रपरीवृतः ३५
तस्माज्ज्ञात्वाहरिंनिंदन्गोषुदुःखंसमाचरन्
कदापिनरकान्मुक्तिंनप्राप्नोतिनरेश्वर ३६
अज्ञानप्राप्तगोहत्याप्रायश्चित्तंतुविद्यते
रामभक्तंतुधीमंतंयाहित्वमृतुपर्णकम् ३७
सवैसमदृशःसर्वाञ्छत्रून्मित्राणिपश्यति
तुभ्यंकथिष्यतिद्विप्रंगोवधस्यास्यनिष्कृतिम् ३८
तस्यदेशांस्त्वमाक्रामंस्तेननिर्वासितःपुरा
वैरिभावंपरित्यज्यगच्छत्वमृतुपर्णकम् ३९
सयद्वदिष्यतिद्विप्रंतत्कुरुष्वसमाहितः
यथात्वत्कृतपापस्यनिष्कृतिर्हिभविष्यति ४०
सतुतद्वचनंश्रुत्वाजगामऋृतुपर्णकम्
रामभक्तंरिपौमित्रेसमदृष्ट्यासमंजसम् ४१
सतस्मैकथयामासयज्ञातंगोवधादिकम्
तस्यपापस्यनिष्कृत्यैह्युपायंसोऽप्यचिंतयत् ४२
क्षणंध्यात्वाथतंराजाऋृतुपर्णऋृतंभरम्
उवाचप्रहसन्वाक्यंबुद्धिमान्धर्मकोविदः ४३
कोऽहराजन्मुनीनांवैपुरतःशास्त्रवेदिनाम्
तान्हित्वाकिंतुमांप्राप्तोमूर्खंपंडितमानिनम् ४४
तवमय्यस्तिचेच्छ्रद्धातदाकिंचिद्ब्रवीम्यहम्
शृणुष्वनरशार्दूलगदितंममसादरः ४५
भजश्रीरघुनाथंत्वंकर्मणामनसागिरा
नैष्कापट्येनलोकेशंतोषयस्वमहामते ४६
सतुष्टोदास्यतेसर्वंत्वद्धृदिस्थंमनोरथम्
अज्ञानकृतगोहत्यापापनाशंकरिष्यति ४७
रामंस्मरंस्त्वंधर्मात्मन्धेनुंपालयसत्तम
दत्त्वाद्विजायकनकंपापनिष्कृतिमाप्स्यसि ४८
सुमतिरुवाच
एतच्छ्रुत्वातुतद्वाक्यमृतंभरनृपस्तदा
विधायरामस्मरणंपूतात्माव्रतमाचरत् ४९

पूर्ववत्पालयन्धेनुंजगामविपिनंमहत्
रामनामस्मरन्नित्यंसर्वभूतहितेरतः ५०
तस्मैतुष्टातुसुरभिःप्रोवाचपरितोषिता
राजन्वरयमत्तोवैवरंहृत्स्थंमनोरथम् ५१
तदाप्रोवाचवैराजापुत्रंदेहिमनोरमम्
रामभक्तंपितृरतंस्वधर्मप्रतिपालकम् ५२
तुष्टादत्त्वावरंसापितस्मैराज्ञेसुतार्थिने
जगामादर्शनंदेवीकामधेनुःकृपावती ५३
सकालेप्राप्तवान्पुत्रंवैष्णवंरामसेवकम्
सत्यवत्संज्ञयायुक्तमकरोत्तत्रतत्पिता ५४
सत्यवंतंसुतंलब्ध्वापितृभक्तिपरंमहान्
परमंहर्षमापेदेशक्रतुल्यपराक्रमम् ५५
सराजाधार्मिकंपुत्रंप्राप्यहर्षेणनिर्भरः
राज्यंतस्मिन्महन्यस्यजगामतपसेवनम् ५६
तत्राराध्यहृषीकेशंभक्तियुक्तेनचेतसा
निर्धूतपापःसतनुरगाद्धरिपदंनृपः ५७

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेसत्यवदा-
ख्यानेधेनुव्रतवर्णनंनामएकत्रिंशोऽध्यायः ३१

## द्वात्रिंशोऽध्यायः

सुमतिरुवाच
असावपिनृपःसौम्यसत्यवान्नामविश्रुतः
निजधर्मेणलोकेशंरघुनाथमतोषयत् १
अस्मैतुष्टोरमानाथोददौभक्तिमचंचलाम्
निजांघ्रिपद्मेयजतांदुर्लभांपुण्यकोटिभिः २
नित्यंश्रीरघुनाथस्यकथानकमनातुरः
कुरुतेसर्वलोकानांपावनंकृपयायुतः ३
योनपूजयतेदेवंरघुनाथंरमापतिम्
सतेनताड्यतेदंडैर्यमस्यापिभयावहैः ४
अष्टमाद्वत्सरादूर्ध्वमशीतिवत्सरोभवेत्

तावदेकादशीसर्वैर्मानुषैःकारिताऽमुना ५
तुलसीवल्लभायस्यकदाचिद्यच्छिरोधराम्
नमुंचतिरमानाथपादपद्मस्रगुत्तमा ६
ऋषीणामपिपूज्योयमितरेषांकथंनहि
रघुनाथस्मृतिप्रीतिर्धूतपाप्माहताशुभः ७
ज्ञात्वायंरामचंद्रस्यवाजिनंपरमाद्भुतम्
आगत्यतुभ्यंसंदास्यत्येतद्राज्यमकंटकम् ८
त्वयायद्गदितंराजंस्तत्तेकथितमुत्तमम्
पुनःकिंपृच्छसेस्वामिन्नाज्ञापयकरोमितत् ९
शेषउवाच
गतोऽश्वस्तत्पुरांतस्तुनानाश्चर्यसमन्वितः
तंदृष्ट्वाजनताःसर्वाराज्ञेगत्वान्यवेदयन् १०
जनताऊचुः
कोऽप्यश्वःसितवर्णेनगंगाजलसमेनवै
भालेसौवर्णपत्रेणराजमानःसमागतः ११
तच्छ्रुत्वावचनंरम्यंजनानांहृद्यमीरितम्
ताःप्रत्याहहसन्भूपोज्ञायतांकस्यवैहयः १२
ताश्चैनंकथयामासुःशत्रुघ्नेनप्रपालितः
आयात्यश्वोमहीभर्तूरामस्यपुरमध्यतः १३
रामस्यनामसश्रुत्वाद्व्यक्षरंसुमनोरमम्
जहर्षचित्तेसुभृशंगद्गदस्वरचिन्हितः १४
मयायोध्यापतिर्नित्यंयोरामश्चिन्त्यतेहृदि
तस्याश्वःसहशत्रुघ्नःसमायातःपुरंमम १५
हनूमांस्तत्ररामांघ्रिसेवाकर्ताभविष्यति
कदाचिदपियोरामंनविस्मरतिमानसे १६
गच्छामियत्रशत्रुघ्नोयत्रमारुतनंदनः
अन्येऽपियत्रपुरुषारामपादाब्जसेवकाः १७
अमात्यमादिदेशाथसर्वंराजधनंमहत्
गृहीत्वातुमयासार्द्धमागच्छत्वरयायुतः १८
यास्येऽहरघुनाथस्यहयंपालयितुंवरम्

कर्तुंचरामपादाब्जपरिचर्यांसुदुर्लभाम् १९
इत्युक्त्वानिर्जगामाथशत्रुघ्नंप्रतिसैनिकैः
तावत्पुरीमथप्राप्तोरामभ्रातासप्तसैनिकः २०
वीरागर्जंतिप्रबलारथाःसुनिनदंतिच
जयशंखस्वनास्तत्रवेणुनादाश्चसर्वतः २१
आगत्यसत्यवान्राजामंत्रिभिःसुसमन्वितः
चरणेप्रणिपत्यास्मैराज्यंप्रादान्महाधनम् २२
शत्रुघ्नस्तंतुराजानंज्ञात्वाराममनुव्रतम्
तद्राज्यंतस्यपुत्रायरुक्मनाम्नेददौमहत् २३
हनूमंतंपरीरभ्यसुबाहुंरामसेवकम्
अन्यान्वैरामभक्तांश्चपरिरभ्यमहायशाः २४
कृतार्थमिवचात्मानंमेनेसत्यसमन्वितः
ननंदचेतसितदाशत्रुघ्नेनसमन्वितः २५
हयस्तावद्गतोदूरंवीरैःसुपरिरक्षितः
शत्रुघ्नस्तेनभूपेनययौवीरसमन्वितः २६
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेसत्य-
वत्समागमोनामद्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशत्तमोऽध्यायः

शेषउवाच
गच्छत्सुरथिवर्येषुशत्रुघ्नादिषुभूरिषु
महाराजेषुसर्वेषुरथकोटियुतेषुच १
अकस्मादभवन्मार्गेतमःपरमदारुणम्
यस्मिन्स्वीयोनपारक्योलक्ष्यतेज्ञातिभिर्नरैः २
रजसाव्यावृतंव्योमविद्युत्स्तनितसंकुलम्
एतादृशेतुसंमर्देमहाभयकरेततः ३
मेघावर्षंतिरुधिरंपूयामेध्यादिकंबहु
अत्याकुलाबभूवुस्तेवीराःपरमवैरिणः ४
आकुलीकृतलोकेतुकिमिदंकिमितिस्थितिः
तमोव्याप्तानिलोकानांचक्षूंषिप्रथितौजसाम् ५

जहाराश्वंरावणस्यसुहृत्पातालसंस्थितः
विद्युन्मालीतिविख्यातोराक्षसश्रेणिसंवृतः ६
कामगेसुविमानेतुसर्वायसनिषेविणि
आरूढोऽश्वतुवीराणांभयंकुर्वञ्जहारह ७
मुहूर्तात्ततमोनष्टमाकाशंविमलंबभौ
वीराःशत्रुघ्नमुख्यास्तेप्रोचुःकुत्रहयोऽस्तिसः ८
तेसर्वेहयराजंतुलोकयंतःपरस्परम्
ददृशुर्नयदावाहंहाहाकारस्तदाभवत् ९
कुत्राश्वोहयमेधस्यकेननीतःकुबुद्धिना
इतिवाचमवोचंस्तेतावत्सदनुजेश्वरः १०
ददृशेसुभटैःसर्वैरथस्थैःशौर्यशोभितैः
विमानवरमारूढैराक्षसाग्र्यैःसमावृतः ११
दुमुर्खाविकरालास्यालंबदंष्ट्राभयानकाः
राक्षसास्तत्रदृश्यंतेसैन्यग्रासायचोद्यताः १२
तदातंवेदयामासुःशत्रुघ्नंनृवरोत्तमम्
हयोनीतोनजानीमःखेविमानविलासिना १३
तमसाव्याकुलान्कृत्वावीरानस्मान्समाययौ
जग्राहनृपशार्दूलहयंकुरुयथोचितम् १४
शत्रुघ्नस्तद्वचःश्रुत्वामहारोषसमावृतः
कोऽस्त्येषराक्षसोयोमेहयंजग्राहवीर्यवान् १५
विमानंतत्पतत्वद्यमद्बाणव्रजनिर्हतम्
पतत्वद्यशिरस्तस्यक्षुरप्रैर्ममवैरिणः १६
सज्जीयंतांरथाःसर्वैर्महाशस्त्रास्त्रपूरिताः
यांतुतंप्रतिसंहर्तुंयोद्धारोवाजिहारिणम् १७
इत्युक्त्वारोषताम्राक्षउवाचनिजमंत्रिणम्
नयानयविदंशूरंयुद्धकार्यविशारदम् १८
शत्रुघ्नउवाच
मंत्रिन्कथयकेयोज्याराक्षसस्यवधोद्यताः
महाशस्त्रामहाशूराःपरमास्त्रविदुत्तमाः १९
कथयाशुविचार्यैवंतत्करोमिभवद्वचः

वीरान्कथयतस्यैवंयोग्यान्सर्वास्त्रकोविदान् २०
एतच्छ्रुत्वातुसचिवःप्राहवाक्यंयथोचितम्
वीरान्रणवरेयोग्यान्दर्शयंस्तरसानतान् २१
सुमतिरुवाच
जेतुंगच्छतुतद्रक्षःसमरेविजयोद्यतः
महाशस्त्रास्त्रसंयुक्तःपुष्कलःपरतापनः २२
तथालक्ष्मीनिधिर्यातुशस्त्रसंघसमन्वितः
करोतुतस्ययानस्यभंगंतीक्ष्णैःस्वसायकैः २३
हनूमान्धृष्टकर्मात्रराक्षसैर्योधितुंक्षमः
करोतुमुखपुच्छाभ्यांताडनंरक्षसांप्रभो २४
वानराश्चपियेवीरारणकर्मविशारदाः
गच्छंतुतेऽखिलायोद्धुंतववाक्यप्रणोदिताः २५
सुमदश्चसुबाहुश्चप्रतापाग्र्यश्चसत्तमाः
गच्छंतुसायकैस्तीक्ष्णैस्तान्योद्धुंराक्षसाधमान् २६
भवानपिमहाशस्त्रपरिवारोरथेस्थितः
करोतुयुद्धेविजयंराक्षसंहंतुमुद्यतः २७
एतन्ममतंराजन्येयोधास्तत्प्रमर्दनाः
तेगच्छंतुरणेशूराःकिमन्यैर्बहुभिर्भटैः २८
इत्युक्तवतिवीराग्र्येऽमात्येसुमतिसंज्ञिके
शत्रुघ्नःकथयामासवीरान्संग्रामकोविदान् २९
भोवीराःपुष्कलाद्यायेसर्वशस्त्रास्त्रकोविदाः
तेवदंतुप्रतिज्ञांवैमत्पुरोराक्षसार्दने ३०
कृत्वाप्रतिज्ञांविपुलांस्वपराक्रमशोभिनीम्
गच्छंतुरणमध्येहिभवंतोबलसंयुताः ३१
इतिवाक्यंसमाकर्ण्यशत्रुघ्नस्यमहाबलाः
स्वांस्वांप्रतिज्ञांमहतींचक्रुस्तेतेजसान्विताः ३२
तत्रादौपुष्कलोवीरःश्रुत्वावाक्यंमहीपतेः
परमोत्साहसंपन्नःप्रतिज्ञामूचिवानिमाम् ३३
पुष्कलउवाच
शृणुष्वनृपशार्दूलमत्प्रतिज्ञांपराक्रमात्

विहितांसर्वलोकानांशृरावतांपरमाद्भुताम् ३४
चेन्नकुर्यांक्षुरप्राग्रैस्तीक्ष्णैःकोदंडनिर्गतैः
दैत्यंमूर्च्छासमाक्रांतंकीर्णकेशाकुलाननम् ३५
कन्यास्वभोक्तुर्यत्पापंयत्पापंदेवनिंदने
तत्पापंममवैभूयाच्चेत्कुर्यांस्ववचोऽनृतम् ३६
यदिमद्बाणनिर्भिन्नाःसैनिकाःसुमहाबलाः
नपतंतिमहाराजप्रतिज्ञांतत्रमेशृणु ३७
विष्णवीशयोर्विभेदंयःशिवशक्त्योःकरोत्यपि
तत्पापंममवैभूयाच्चेन्नकुर्यामृतंवचः ३८
सर्वंमद्वाक्यमित्युक्तंरघुनाथपदांबुजे
भक्तिर्मेनिश्चलायास्तिसैवसत्यंकरिष्यति ३९
पुष्कलस्यप्रतिज्ञांतांश्रुत्वालक्ष्मीनिधिर्नृपः
प्रतिज्ञांव्यदधात्सत्यांस्वपराक्रमशोभिताम् ४०
लक्ष्मीनिधिरुवाच
वेदानांनिंदनंश्रुत्वाश्रास्तेयोमौनिवन्नरः
मानसेरोचयेद्यस्तुसर्वधर्मबहिष्कृतः ४१
ब्राह्मणोयोदुराचारोरसलाक्षादिविक्रयी
विक्रीणातिचगांमूढोधनलोभेनमोहितः ४२
म्लेच्छकूपोदकंपीत्वाप्रायश्चित्तंतुनाचरेत्
तत्पापंममवैभूयाद्विमुखश्चेद्भवाम्यहम् ४३
तत्प्रतिज्ञामथाश्रुत्यहनूमान्रणकोविदः
रामांघ्रिस्मरणंकृत्वाप्रोवाचवचनंशुभम् ४४
मत्स्वामीहृदयेनित्यंध्येयोवैयोगिभिर्मुहुः
यंदेवाःसासुराःसर्वेनमंतिमणिमौलिभिः ४५
रामःश्रीमानयोध्यायाःपतिर्लोकेशपूजितः
तंस्मृत्वायद्ब्रुवेवाक्यंतद्वैसत्यंभवष्यिति ४६
राजन्कोयंलघुर्दैत्योदुर्बलःकामगेस्थितः
कथयाशुमयाकार्यमेकेनविनिपातनम् ४७
मेरुंदेवेंद्रसहितंलांगूलाग्रेणतोलये
जलधिंशोषयेसर्वंसांवर्तंवापिबाम्यहम् ४८

राज्ञःश्रीरघुनाथस्यजानक्याःकृपयामम
तन्नास्तिभूतलेराजन्यदसाध्यंकदाभवेत् ४९
एतद्वाक्यंमयाप्रोक्तमनृतंस्याद्यदिप्रभो
तदैवरघुनाथस्यभक्तिदूरोभवाम्यहम् ५०
यःशूद्रःकपिलांगांवैपयोबुद्ध्यानुपालयेत्
तस्यपापंममैवास्तुचेत्कुर्यामनृतंवचः ५१
ब्राह्मणींगच्छतेमोहाच्छूद्रःकामविमोहितः
तस्यपापंममैवास्तुचेत्कुर्यामनृतंवचः ५२
यद्घ्राणान्नरकंगच्छेत्स्पर्शनाच्चापिरौरवम्
तांपिबेन्मदिरांयोवाजिह्वास्वादेनलोलुपः ५३
तस्ययज्जायतेपापंतन्ममैवास्तुनिश्चितम्
चेन्नकुर्यांप्रतिज्ञातंसत्यंरामकृपाबलात् ५४
एवमुक्तेमहावीरैर्योद्धारस्तरसायुताः
चक्रुःप्रतिज्ञांमहतींस्वपराक्रमशालिनीम् ५५
शत्रुघ्नोऽपिव्यधात्तत्रप्रतिज्ञांपश्यतांनृणाम्
साधुसाधुप्रशंसन्वैतान्वीरान्युद्धकोविदान् ५६
कथयामिपुरोवःस्वांप्रतिज्ञांसत्त्वशोभिताम्
तच्छृणवंतुमहाभागायुद्धोत्साहसमन्विताः ५७
चेत्तस्यशिरश्चाहत्यपातयामिनसायकैः
विमानाच्चकबंधाच्चभिन्नंछिन्नंचभूतले ५८
यत्पापंकूटसाक्ष्येणयत्पापंस्वर्णचौर्यतः
यत्पापंब्रह्मनिंदायांतन्ममास्त्वद्यनिश्चयात् ५९
इतिशत्रुघ्नसद्वाक्यंश्रुत्वातेवीरपूजिताः
धन्योसिराघवभ्रातःकस्त्वदन्योपरोभवेत् ६०
त्वयावैनिहतोदैत्योदेवदानवदुःखदः
लवणोनामलोकेशमधुपुत्रोमहाबलः ६१
कोयंवैराक्षसोदुष्टःक्वचास्यबलमल्पकम्
करिष्यसिक्षणादेवतस्यनाशंमहामते ६२
इत्युक्त्वातेमहावीराःसज्जीभूतारणांगणे
प्रतिज्ञांस्वामृतांकर्तुंययुस्तेराक्षसंमुदा ६३

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे वीरप्रतिज्ञाकथनंनामत्रयस्त्रिंशत्तमोऽध्यायः ३३

## चतुस्त्रिंशत्तमोऽध्यायः

शेषउवाच
रथैःसदश्वैःशोभाढ्यैःसर्वशस्त्रास्त्रपूरितैः
नानारत्नसमायुक्तैर्ययुस्तेराक्षसाधमम् १
तान्दृष्ट्वाकामगेयानेस्थितःप्रोवाचराक्षसः
मेघगंभीरयावाचातर्जयन्निवभूरिशः २
मायांतुसुभटायोद्धुंगच्छंतुनिजमंदिरम्
मात्यजंतुस्वकान्प्राणान्नमोक्ष्येवाजिनंवरम् ३
विद्युन्मालीतिविख्यातोरावणस्यसुहृत्सखा
मत्सख्युःप्रेतभूतस्यनिष्कृतिंकर्तुमेयिवान् ४
क्वासौरामोयश्चाहत्यसखायंरावणंगतः
तस्यभ्रातापिकुत्रास्तेसर्वशूरशिरोमणिः ५
तंहत्वानिष्कृतिंतस्यप्राप्स्येरामस्यचानुजम्
पिबन्रुधिरमुद्भूतंकंठनालस्यबुद्बुदैः ६
इतिवाक्यंसमाकर्ण्ययोधानांप्रवरोत्तमः
पुष्कलोनिजगादैनंवीर्यशौर्यसमन्वितम् ७
पुष्कलउवाच
विकत्थनंनकुर्वंतिसंग्रामेसुभटानराः
पराक्रमंदर्शयंतिनिजशस्त्रास्त्रवर्षणैः ८
रावणोनिहतोयेनससुहृत्स्वजनैर्वृतः
तस्यवाजिनमाहृत्यकुत्रगंतासिदुर्मद ९
पतिष्यसित्वंशत्रुघ्नबाणैःकोदंडनिर्गतैः
त्वामत्स्यंतिशिवाभूमौपतितंप्राणवर्जितम् १०
मागर्जदुष्टरामस्यसेवकेमयिसंस्थिते
गर्जंतिसुभटायुद्धेशत्रुंजित्वामहोदयात् ११
शेषउवाच
एवंब्रुवंतंतंवीरंपुष्कलंरणदुर्मदम्

जघानशक्त्यासुभृशंहृदिराक्षससत्तमः १२
आयांतींतांमहाशक्तिमायसींकांचनाश्रिताम्
चिच्छेदत्रिभिरत्युग्रैःशितैर्बाणैःसपुष्कलः १३
सात्रिधाह्यपतद्भूमौविशिखैर्निष्प्रभीकृता
पतंतीविरराजासौविष्णोःशक्तित्रयीवकिम् १४
तांछिन्नांशक्तिकांदृष्ट्वाराक्षसःपरतापनः
जग्राहशूलंतरसात्रिशिखंलोहनिर्मितम् १५
तीक्ष्णाग्रंज्वलनप्रख्यंराक्षसेंद्रोव्यमोचयत्
आयांतंतिलशश्चक्रेबाणैःपुष्कलसंज्ञितः १६
छित्त्वात्रिशूलंतरसाराघवस्यहिसेवकः
पुष्कलश्चापआधत्तबाणांस्तीक्ष्णान्मनोजवान् १७
तेबाणाहृदितस्याशुलग्नारागंबतासृजन्
वैष्णवस्ययथास्वांतेगुणाविष्णोर्मनोहराः १८
तद्बाणवेधदुःखार्तोविद्युन्मालीसुदुर्मदः
जग्राहमुद्गरंघोरंपुष्कलंहंतुमुद्यतः १९
मुद्गरःप्रहितस्तेनविद्युन्माल्यभिधेनहि
हृदिलग्नोसृजच्छीघ्रंकश्मलंतदकारयत् २०
मुद्गरप्रहतोवीरःकंपमानःसवेपथुः
पपातस्यंदनोपस्थेपुष्कलःशत्रुतापनः २१
उग्रदंष्ट्रोऽथतद्भ्रातालक्ष्मीनिधिमयोधयत्
शस्त्रास्त्रैर्बहुधामुक्तैर्वीरप्राणहृतिंकरैः २२
पुष्कलस्तत्क्षणात्प्राप्यसंज्ञांराक्षसमब्रवीत्
धन्योसिराक्षसश्रेष्ठमहीयांस्तेपराक्रमः २३
पश्येदानींममाप्युच्चैःप्रतिज्ञांशूरमानिताम्
विमानात्पातयाम्यद्यभूमौत्वांशितसायकैः २४
इत्युक्त्वानिशितंबाणंसमगृह्णाद्दुरासदम्
ज्वलंतमग्नितेजस्कंमहौदार्यसमन्वितम् २५
सयावत्तत्प्रतीकर्तुंविधत्तेस्वपराक्रमम्
तावद्धृदिगतोऽत्युग्रस्तीक्ष्णधारःससायकः २६
तेनबाणेनविभ्रांतोभ्रमच्चित्तःसराक्षसः

पपातकामगोपस्थाद्भूमौविगतचेतनः २७
उग्रदंष्ट्रेणवैदृष्टःपतमानोनिजाग्रजः
गृहीत्वातंविमानांतर्निनायरिपुशंकितः २८
प्राहचारिंमहारोषात्पुष्कलंबलिनांवरम्
मद्भ्रातरंपातयित्वाकुत्रयास्यसिदुर्मते २९
मांवैयुधिविनिर्जित्यगंतासिजयमुत्तमम्
स्थितेमयितवस्वांतेजयाशाविनिवर्त्यताम् ३०
एवंब्रुवंतंतरसाजघानदशभिःशरैः
हृदयेतस्यदुष्टस्यरोषपूरितलोचनः ३१
सताडितोदशशरैःपुष्कलेनमहात्मना
चुक्रोधहृदिदुर्बुद्धिस्तंहंतुमुपचक्रमे ३२
दंतान्निष्पिष्यसक्रोधोमुष्टिमुद्यम्यचाहनत्
व्यनदद्वज्रनिर्घातपातशंकांसृजन्हृदि ३३
मुष्टिनाभिहतोवीरःपुष्कलःपरमास्त्रवित्
नाकंपतविनिष्पेषंवांछंस्तस्यदुरात्मनः ३४
वत्सदंतान्महातीक्ष्णान्मुमोचहृदिसायकान्
तैर्बाणैर्व्यथितोदैत्यस्त्रिशूलंतुसमाददे ३५
जाज्वल्यमानंत्रिशिखंज्वालामालातिभीषणम्
लग्नंहृदिमहावीरपुष्कलस्यतुदारुणम् ३६
मूर्च्छितस्तेनशूलेननिहतोधन्विसत्तमः
कश्मलंपरमंप्राप्तःपपातस्यंदनोपरि ३७
मूर्च्छांप्राप्तंतमाज्ञायहनूमान्पवनात्मजः
कोपव्याकुलितस्वांतोबभाषेतंतुराक्षसम् ३८
कुत्रगच्छसिदुर्बुद्धेमयियोद्धरिसंस्थिते
त्वांहन्मिचरणाघातैर्वाजिहर्तारमागतम् ३९
एवमुक्त्वामहादैत्याञ्जघानपरसैनिकान्
विमानस्थान्नखाग्रेणदारयन्नभसिस्थितः ४०
लांगूलेनाहताःकेचित्केचित्पादतलाहताः
बाहुभ्यांदारिताःकेचित्पवनस्यतनूभुवा ४१
नश्यंतिकेचिन्निहताःकेचिन्मूर्च्छंतिसंहताः

पलायंतेपदाघातभयपीडाहतास्ततः ४२
अनेकेनिहतास्तत्रराक्षसाश्चातिदारुणाः
छिन्नाभिन्नाद्विधाजाताःपवनस्यसुतेनवै ४३
कामगंतुविमानंतद्भिन्नप्राकारतोरणम्
हाहाकुर्वद्भिरसुरैःसमंतात्परिवारितम् ४४
हनूमतिमहाशूरेक्षणंभूमौक्षणंदिवि
इतस्ततःप्रदृश्येतकामयानंदुरासदम् ४५
यत्रयत्रविमानंतत्तत्रतत्रसमीरजः
प्रहरन्नेवदृश्येतकामरूपधरःकपिः ४६
एवंतदाकुलीभूतेविमानस्थेमहाजने
उग्रदंष्ट्रस्तुदैत्येंद्रोहनूमंतमुपेयिवान् ४७
कपेत्वयामहत्कर्मकृतंयद्धटपातनम्
क्षणंतिष्ठसिचेत्कुर्वेतवप्राणवियोजनम् ४८
एवमुक्त्वाहनूमंतंप्रजघानसदुर्मतिः
त्रिशूलेनसुतीक्ष्णेनज्वलत्पावककांतिना ४९
तदागतंत्रिशूलंचमुखेजग्राहवीर्यवान्
चूर्णयामाससकलंसर्वलोहविनिर्मितम् ५०
चूर्णयित्वात्रिशूलंतदायसंदैत्यमोचितम्
जघानतंचपेटाभिर्बह्वीभिर्हनुमान्बली ५१
सआहतःकपीन्द्रेणचपेटाभिरितस्ततः
व्यथितोव्यसृजन्मायांसर्वलोकभयंकरीम् ५२
तदातमोभवत्तीव्रंयत्रकोवानलक्ष्यते
यत्रस्वीयोनपारक्योविदामासजनान्बहून् ५३
शिलाःपर्वतशृंगाभाःपतंतिसुभटोपरि
ताभिर्हतास्तुतेसर्वेव्याकुलाअथजज्ञिरे ५४
विद्युतोविलसंत्यत्रगर्जंतिजलदाघनम्
वर्षंतिपूयरुधिरंमुंचंतिसमलंजलम् ५५
आकाशात्पतमानानिकबंधानिबहूनिच
दृश्यंतेछिन्नशीर्षाणिसकुंडलयुतानिच ५६
नग्नाविरूपाःसुभृशंकीर्णकेशाःसुदुर्मुखाः

दृश्यंतेसर्वतोदैत्यादारुणाभयकारिणः ५७
तदाव्याकुलितालोकाःपरस्परभयाकुलाः
पलायनपराजातामहोत्पातममंसत ५८
तदाशत्रुघ्नश्रायातोरथेस्थित्वामहायशाः
श्रीरामस्मरणंकृत्वाचापेसंधायसायकान् ५९
तांमायांसविधूयाथमोहनास्त्रेणवीर्यवान्
शरधाराःकिरन्व्योम्निववर्षसमरेसुरम् ६०
तदादिशःप्रसेदुस्तारविस्त्वपरिवेषवान्
मेघायथागतंयाताविद्युतःशांतिमागताः ६१
तदाविमानंपुरतोदृश्यतेराक्षसैर्युतम्
छिंधिभिंधीतिभाषाभिर्व्याकुलंसुतरांमहत् ६२
बाणाश्चशतसाहस्राःस्वर्णपुंखैश्चशोभिताः
पेतुर्विमानेनभसिस्थितेकामगमेमुहुः ६३
तदाभग्नंविमानंहिदृश्यतेनतदुच्चकैः
स्वपुरीखण्डमेकत्रभग्नांगमिवभूतले ६४
तदाप्रकुपितोदैत्योबाणान्धनुषिसंदधे
तैर्बाणैर्विकिरन्रामभ्रातरंचाभिगर्जितः ६५
तेबाणाःशतशस्तस्यलग्नावपुषिभूरिशः
शोभामापुःशोणितौघान्वहंतस्तीक्ष्णवक्त्रिणः ६६
शत्रुघ्नःपरयाशक्त्यासंयुक्तोवायुदैवतम्
अस्त्रंधनुषिचाधत्तराक्षसानांप्रकम्पनम् ६७
तेनास्त्रेणविमानात्खात्पतन्तोमुक्तमूर्धजाः
दृश्यंतेभूतवेतालसंघाइवनभश्चराः ६८
तदस्त्रंरघुनाथस्यभ्रात्रामुक्तंविलोक्यसः
अस्त्रंचपाशुपत्यंसचापेधाद्दनुजात्मजः ६९
ततःप्रवृत्तावेतालाभूताःप्रेतनिशाचराः
कपालकर्तरीयुक्ताःपिबन्तःशोणितंबहु ७०
तेवैशत्रुघ्नवीराणांरुधिराणिपपुर्मुदा
जीवतामपिदुर्वाराःकर्तरीपाणिशोभिताः ७१
तदस्त्रंव्याप्नुवद्दृष्ट्वासर्ववीरप्रभंजनम्

मुमोचतन्निरासायचास्त्रंनारायणाभिधम् ७२
नारायणास्त्रंतान्सर्वान्वारयामासतत्क्षणात्
तेसर्वेविलयंप्रापुर्निशाचरप्रणोदिताः ७३
तदाक्रुद्धोनिशाचारीविद्युन्मालीसमाददे
त्रिशूलंनिशितंघोरंशत्रुघ्नंहंतुमुल्बणम् ७४
शूलहस्तंसमायांतंविद्युन्मालिनमाहवे
सायकैःप्राहारत्तस्यभुजेत्वर्धशशिप्रभैः ७५
तैर्बाणैश्छिन्नहस्तःसशिरसाहंतुमुद्यतः
हतोसियाहिशत्रुघ्नकस्त्वांत्राताभविष्यति ७६
इतिब्रुवाणंतरसाचिच्छेदशितसायकैः
मस्तकंतस्यबलिनःशूरस्यसहकुंडलम् ७७
तंछिन्नशिरसंदृष्ट्वाउग्रदंष्ट्रःप्रतापवान्
मुष्टिनाहंतुमारेभेशत्रुघ्नंशूरसेवितम् ७८
शत्रुघ्नस्तुक्षुरप्रेणसायकेनाच्छिनच्छिरः
प्रधावतोरणेवीरान्सर्वशस्त्रास्त्रकोविदान् ७९
हतशेषाययुःसर्वेराक्षसानाथवर्जिताः
शत्रुघ्नंप्रणिपत्याथददुर्वाजिनमाहृतम् ८०
ततोवीणानिनादाश्चशंखनादाःसमंततः
श्रूयंतेशूरवीराणांजयनादामनोहराः ८१
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेविद्युन्मा-
लिनामराक्षसपराजयोनामचतुस्त्रिंशत्तमोऽध्यायः ३४

## पंचत्रिंशत्तमोऽध्यायः

शेषउवाच
प्राप्यतंवाजिनंराजाशत्रुघ्नोराक्षसैर्हृतम्
अत्यंतंहर्षमापेदेपुष्कलेनसमन्वितः १
रुधिरैःसिक्तगात्रास्तेयोधालक्ष्मीनिधिस्तथा
रणोत्साहेनसंयुक्तंप्रशशंसुर्महानृपम् २
हतेतस्मिन्महादैत्येविद्युन्मालिनिदुर्जये
सुराःसर्वेभयंत्यक्त्वासुखमापुर्मुनेमहत् ३

नद्यस्तुविमलाजातारविस्तुविमलोऽभवत्
वाताववुःसुगंधोदसिक्ताविमलशुष्मिणः ४
सन्नद्धास्तेमहावीरारथस्थाविमलांगकाः
राजानमूचुस्तेसर्वेजयलक्ष्म्यासमन्विताः ५
वीराऊचुः
दिष्ट्याहतस्त्वयादैत्योविद्युन्मालीमहामते
यद्भयात्त्रासमापन्नाःसुराःस्वर्गान्निराकृताः ६
दिष्ट्याप्राप्तोमहावाजीरघुनाथस्यशोभनः
दिष्ट्यागंतासिसर्वत्रजयंतुक्षितिमंडले ७
स्वामिन्मुंचत्विमंवाहंमनोवेगंमनोरमम्
समयस्यविलंबोमाभवत्वत्रमहामते ८
शेषउवाच
इतिश्रुत्वातुतद्वाक्यंवीराणांसमयोचितम्
साधुसाधुप्रशस्यैतान्मुमोचहयसत्तमम् ९
समुक्तश्चोत्तरामाशांबभ्रामाथसुरक्षितः
रथपत्तिहयश्रेष्ठैःसर्वशस्त्रास्त्रकोविदैः १०
तत्रयद्वृत्तमेतस्यशत्रुघ्नस्यमनोहरम्
वात्स्यायनशृणुष्वैतत्पापराशिप्रदाहकम् ११
रेवातीरमथप्राप्तोमुनिवृंदनिषेवितम्
नीलरत्नसमूहस्यरसःकिंतुपयोमिषात् १२
तांस्तान्मुनिवरान्सर्वान्प्रणमञ्छूरसेवितः
जगामहयरत्नस्यपृष्ठतःकामगामिनः १३
गच्छंस्तत्राश्रमंजीर्णपलाशपर्णनिर्मितम्
रेवायाजलकल्लोलैःसिक्तंपापहराश्रयम् १४
तंदृष्ट्वासुमतिंप्राहसर्वज्ञंनयकोविदम्
शत्रुघ्नःसर्वधर्मार्थकर्मकर्तव्यकोविदः १५
राजोवाच
मंत्रिन्कथयकस्यायमाश्रमःपुण्यदर्शनः
विचारचतुरश्रेष्ठवदैतन्ममपृच्छतः १६
शेषउवाच

इतिवाक्यंसमाकर्ण्यसुमतिःप्राहतंनृपम्
विशदस्मेरयावाचादर्शयन्नात्मसौहृदम् १७
सुमतिरुवाच
एनंदृष्ट्वामहाराजधूतपापावयंखलु
भविष्यामोमुनिश्रेष्ठंसर्वशास्त्रपरायणम् १८
तस्मान्नत्वातमापृच्छसर्वंतेकथयिष्यति
रघुनाथपदांभोजमकरंदातिलोलुपः १९
नाम्नात्वारण्यकंख्यातंरघुनाथांघ्रिसेवकम्
अत्युग्रतपसापूर्णंसर्वशास्त्रार्थकोविदम् २०
इतिश्रुत्वातुतद्वाक्यंधर्मार्थपरिबृंहितम्
जगामतमथोद्रष्टुंस्वल्पसेवकसंयुतः २१
हनूमान्पुष्कलोवीरःसुमतिर्मंत्रिसत्तमः
लक्ष्मीनिधिःप्रतापाग्र्यःसुबाहुःसुमदस्तथा २२
एतैःपरिवृतोराजाशत्रुघ्नःप्रापदाश्रमम्
नमस्कर्तुंद्विजवरमारण्यकमुदारधीः २३
गत्वातंतापसश्रेष्ठंनमस्कारमथाकरोत्
सर्वैस्तैःसहितोवीरैर्विनयानतकंधरैः २४
तान्दृष्ट्वासन्नतान्सर्वाञ्छत्रुघ्नप्रमुखान्नृपान्
अर्घ्यपाद्यादिकंचक्रेफलमूलादिभिस्तदा २५
उवाचतान्नृपान्सर्वान्भवंतःकुत्रसंगताः
कथमत्रसमायातास्तत्सर्वंवदतानघाः २६
तच्छ्रुत्वावाक्यमेतस्यमुनिवर्यस्यवाडव
सुमतिःकथयामासवाक्यंवादविचक्षणः २७
सुमतिरुवाच
रघुवंशनृपस्यायमश्वोवैपाल्यतेऽखिलैः
यागंकरिष्यतेवीरःसर्वसंभारसंभृतम् २८
तच्छ्रुत्वावचनंतेषांजगादमुनिसत्तमः
दंतकांत्याखिलंघोरंतमोनिर्वारयन्निव २९
आरण्यकउवाच
किंयागैर्विविधैरन्यैःसर्वसंभारसंभृतैः

स्वल्पपुण्यप्रदैर्नूनंह्ययिष्णुपददातृभिः ३०
मूढोलोकोहरिंत्यक्त्वाकरोत्यन्यसमर्चनम्
रघुवीरंरमानाथंस्थिरैश्वर्यपदप्रदम् ३१
योनरैःस्मृतमात्रोपिहरतेपापपर्वतम्
तंमुक्त्वाक्लिश्यतेमूढोयागयोगव्रतादिभिः ३२
अहोपश्यतमूढत्वंलोकानामतिवंचितम्
सुलभंरामभजनंमुक्त्वादुर्ल्लभमाचरेत् ३३
सकामैर्योगिभिर्वापिचिंत्यतेकामवर्जितैः
अपवर्गप्रदंनृणांस्मृतमात्राखिलाघहम् ३४
पुराहंतत्त्ववित्सायांज्ञानिनंसुविचारयन्
अगमंबहुतीर्थानितत्त्वंकोपिनमेऽदिशत् ३५
तदैकंहिमहद्भाग्यात्प्राप्तंवैलोमशंमुनिम्
स्वर्गलोकात्समायातंतीर्थयात्राचिकीर्षया ३६
तमहंप्रणिपत्याथपर्यपृच्छंमहामुनिम्
महायुषंमहायोगिसंसेवितपदद्वयम् ३७
स्वामिन्मयाद्यमानुष्यंप्राप्तमद्भुतदुर्ल्लभम्
संसारघोरजलधिंकिंकर्तव्यंतितीर्षुणा ३८
विचार्यकथयत्वंतद्व्रतंदानंजपोमखः
देवोवाविद्यतेयोवैसंसृत्यंभोधितारकः ३९
यज्ज्ञात्वासंसृतिंघोरांतरामित्वत्कृपाब्धितः
तन्मेकथययोगेशसर्वशास्त्रार्थपारग ४०
इतिमद्वाक्यमाकर्ण्यजगादमुनिसत्तमः
शृणुष्वैकमनाविप्रश्रद्धयापरयायुतः ४१
संतिदानानितीर्थानिव्रतानिनियमायमाः
योगायज्ञास्तथानेकेवर्ततेस्वर्गदायकाः ४२
परंगुह्यंप्रवक्ष्यामिसर्वपापप्रणाशनम्
तच्छृणुष्वमहाभागसंसारांभोधितारकम् ४३
नास्तिकायनवक्तव्यंनचाऽश्रद्धालवेपुनः
निंदकायशठायापिनदेयंभक्तिवैरिणे ४४
रामभक्तायशांतायकामक्रोधवियोगिने

वक्तव्यंसर्वदुःखस्यनाशकारकमुत्तमम् ४५
रामान्नास्तिपरोदेवोरामान्नास्तिपरंव्रतम्
नहिरामात्परोयोगोनहिरामात्परोमखः ४६
तंस्मृत्वाचैवजप्त्वाचपूजयित्वानरःपरम्
प्राप्नोतिपरमामृद्धिमैहिकामुष्मिकींतथा ४७
संस्मृतोमनसाध्यातःसर्वकामफलप्रदः
ददातिपरमांभक्तिंसंसारांभोधितारिणीम् ४८
श्वपाकोपिहिसंस्मृत्यरामंयातिपरांगतिम्
येवेदशास्त्रनिरतास्त्वादृशास्तत्रकिंपुनः ४९
सर्वेषांवेदशास्त्राणांरहस्यंतेप्रकाशितम्
समाचरतथात्वंवैयथास्यात्तेमनीषितम् ५०
एकोदेवोरामचंद्रोव्रतमेकंतदर्चनम्
मंत्रोऽप्येकश्चतन्नामशास्त्रंतद्ध्येवतत्स्तुतिः ५१
तस्मात्सर्वात्मनारामचंद्रंभजमनोहरम्
यथागोष्पदवत्तुच्छोभवेत्संसारसागरः ५२
श्रुत्वामयातुतद्वाक्यंपुनःप्रश्नमकारिषम्
कथंवाध्यायतेदेवःकथंवापूज्यतेनरैः ५३
कथयस्वमहाबुद्धेसर्वज्ञममविस्तरात्
यज्ज्ञात्वाहंकृतार्थःस्यांत्रिलोक्यांमुनिसत्तम ५४
एतच्छ्रुत्वातुमद्वाक्यंविचार्यसतुलोमशः
कथयामासमेसर्वंरामध्यानपुरःसरम् ५५
शृणुविप्रेंद्रवक्ष्यामियत्पृष्टंतुत्वयानघ
यथातुष्येद्रमानाथःसंसारज्वरदाहकः ५६
अयोध्यानगरेरम्येचित्रमंडपशोभिते
ध्यायेत्कल्पतरोर्मूलेसर्वकामसमृद्धिदे ५७
महामरकतस्वर्णनीलरत्नादिशोभितम्
सिंहासनंचित्तहरंकांत्यातामिस्रनाशनम् ५८
तस्योपरिसमासीनंरघुराजंमनोरमम्
दूर्वादलश्यामतनुंदेवदेवेंद्रपूजितम् ५९
राकायांपूर्णशीतांशुकांतिधिक्कारिवक्त्रिणम्

अष्टमीचंद्रशकलसमभालाधिधारिणम् ६०
नीलकुंतलशोभाढ्यंकिरीटमणिरंजितम्
मकराकारसौंदर्यकुंडलाभ्यांविराजितम् ६१
विद्रुमच्छविसत्कांतिरदच्छदविराजितम्
तारापतिकराकारद्विजराजिसुशोभितम् ६२
जपापुष्पाभयामाध्व्याजिह्वयाशोभिताननम्
यस्यांवसंतिनिगमाऋगाद्याःशास्त्रसंयुताः ६३
कंबुकांतिधरग्रीवाशोभयासमलंकृतम्
सिंहवदुच्चकौस्कन्धौमांसलौबिभ्रतंवरम् ६४
बाहूदधानंदीर्घांगौकेयूरकटकांकितौ
मुद्रिकाहीरशोभाभिर्भूषितौजानुलंबिनौ ६५
वक्षोदधानंविपुलंलक्ष्मीवासेनशोभितम्
श्रीवत्सादिविचित्रांकैरंकितंसुमनोहरम् ६६
महोदरंमहानाभिंशुभकट्याविराजितम्
कांच्यावैमणिमत्याचविशेषेणश्रियान्वितम् ६७
ऊरुभ्यांविमलाभ्यांवैजानुभ्यांशोभितंश्रिया
चरणाभ्यांवज्ररेखायवांकुशसुरेखया ६८
युताभ्यांयोगिध्येयाभ्यांकोमलाभ्यांविराजितम्
ध्यात्वास्मृत्वाचसंसारसागरंत्वंतरिष्यसि ६९
तमेवपूजयन्नित्यंचंदनादिभिरिच्छया
प्राप्नोतिपरमामृद्धिमैहिकामुष्मिकींपराम् ७०
त्वयापृष्टंमहाराजरामस्यध्यानमुत्तमम्
तत्तेकथितमेतद्वैसंसारजलधिंतर ७१

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेआरण्यको
पाख्यानेलोमशारण्यकसंवादोनामपंचत्रिंशत्तमोऽध्यायः ३५

## षट्त्रिंशत्तमोऽध्यायः

शेषउवाच
एतच्छ्रुत्वातुविप्रेन्द्रोलोमशात्परमंमहत्
पुनःपप्रच्छतमृषिंसर्वज्ञंयोगिनांवरम् १

आरगयकउवाच
मुनिश्रेष्ठवदैतन्मेपृच्छामित्वांमहामते
गुरवःकृपयायुक्ताभाषंतेसेवकेऽखिलम् २
कोऽसौरामोमहाभागयोनित्यंध्यायतेत्वया
तस्यकानिचरित्राणिवदस्वत्वंद्विजर्षभ ३
किमर्थमवतीर्णोऽसौकस्मान्मानुषतांगतः
तत्सर्वंकथयाशुत्वंममसंशयनुत्तये ४
शेषउवाच
इतिवाक्यंसमाकरार्यमुनेःपरमशोभनम्
लोमशःकथयामासरामचारित्रमद्भुतम् ५
लोकान्निरयसंमग्नाञ्ज्ञात्वायोगेश्वरेश्वरः
कीर्तिंप्रथयितुंलोकेययाघोरंतरिष्यति ६
एवंज्ञात्वादयावार्धिःपरमेशोमनोहरः
अवतारंचकारात्रचतुर्धासश्रियान्वितः ७
पुरात्रेतायुगेप्राप्तेपूर्णांशोरघुनन्दनः
सूर्यवंशेसमुत्पन्नोरामोराजीवलोचनः ८
सरामोलद्मणसखःकाकपद्मधरोयुवा
तातस्यवचनात्तौतुविश्वामित्रमनुव्रतौ ९
यज्ञसंरद्मणार्थायराज्ञादत्तौकुमारकौ
दांतौधनुर्धरौवीरौविश्वामित्रमनुव्रतौ १०
पथिप्रव्रजतोस्तत्रताटकानामराद्मसी
संगताचवनेघोरेतयोर्वैविघ्नकारणात् ११
ऋषेरनुज्ञयारामस्ताटकांयमयातनाम्
प्रावेशयद्धनुर्वेदविद्याभ्यासेनराघवः १२
यस्यपादतलस्पर्शाच्छिलावासवयोगजा
अहल्यागौतमवधूःपुनर्जातास्वरूपिणी १३
विश्वामित्रस्ययज्ञेतुसुप्रवृत्तेरघूत्तमः
मारीचंचसुबाहुंचजघानपरमेषुभिः १४
ईश्वरस्यधनुर्भग्नंजनकस्यगृहेस्थितम्
रामःपंचदशेवर्षेषड्वर्षामथमैथिलीम् १५

उपयेमेविवाहेनरम्यांसीतामयोनिजाम्
कृतकृत्यस्तदाजातःसीतांसंप्राप्यराघवः १६
ततोद्वादशवर्षाणिरेमेरामस्तयासह
सप्तविंशतिमेवर्षेयौवराज्यमकल्पयत् १७
राजानमथकैकेयीवरद्वयमयाचत
तयोरेकेनरामस्तुससीतःसहलक्ष्मणः १८
जटाधरःप्रव्रजतुवर्षाणीहचतुर्दश
भरतस्तुद्वितीयेनयौवराज्याधिपोऽस्तुमे १९
जानकीलक्ष्मणसखंरामंप्राव्राजयन्नृपः
त्रिरात्रमुदकाहारश्चतुर्थेऽह्निफलाशनः २०
पंचमेचित्रकूटेतुरामस्थानमकल्पयत्
अथत्रयोदशेवर्षेपंचवट्यांमहामुने २१
रामोविरूपयामासशूर्पणखांनिशाचरीम्
वनेविचरतस्तस्यजानक्यासहितस्यच २२
आगतोराक्षसस्तांतुहर्तुंपापविपाकतः
ततोमाघासिताष्टम्यांमुहूर्तेवृंदसंज्ञिते २३
राघवाभ्यांविनासीतांजहारदशकंधरः
तेनैवंह्रियमाणासाचक्रंदकुररीयथा २४
रामरामेतिमांरक्षरक्षमांरक्षसाहृताम्
यथाश्येनःक्षुधाक्रांतःक्रंदंतींवर्तिकांनयेत् २५
तथाकामवशंप्राप्तोरावणोजनकात्मजाम्
नयत्येवंजनकजांजटायुःपक्षिराट्तदा २६
युयुधेराक्षसेंद्रेणसरावणहतोऽपतत्
मार्गशुक्लनवम्यांतुवसंतींरावणालये २७
संपातिर्दशमेमासआचख्यौवानरेषुताम्
एकादश्यांमहेंद्राद्रेःपुप्लुवेशतयोजनम् २८
हनूमान्निशितस्यांतुलंकायांपर्यकालयत्
तद्रात्रिशेषेसीतायादर्शनंहिहनूमतः २९
द्वादश्यांशिंशपावृक्षेहनूमान्पर्यवस्थितः
तस्यांनिशायांजानक्याविश्वासायचसंकथा ३०

अन्नादिभिस्त्रयोदश्यांततोयुद्धमवर्तत
ब्रह्मास्त्रेणचतुर्दश्यांबद्धःशक्रजिताकपिः ३१
वह्निनापुच्छयुक्तेनलंकायादहनंकृतम्
पूर्णिमायांमहेंद्राद्रौपुनरागमनंकपेः ३२
मार्गासितप्रतिपदःपंचभिःपथिवासरैः
पुनरागत्यषष्ठेऽह्निध्वस्तंमधुवनंकिल ३३
सप्तम्यांप्रत्यभिज्ञानदानंसर्वनिवेदनम्
अष्टम्युत्तरफल्गुन्यांमुहूर्तेविजयाभिधे ३४
मध्यंप्राप्तेसहस्रांशौप्रस्थानंराघवस्यच
रामःकृत्वाप्रतिज्ञांतुप्रयातोदक्षिणांदिशम् ३५
तीर्त्वाहंसागरमपिहनिष्येराक्षसेश्वरम्
दक्षिणाशांप्रयातस्यसुग्रीवोऽप्यभवत्सखा ३६
वासरैःसप्तभिःसिंधोःस्कंधावारनिवेशनम्
पौषशुक्लप्रतिपदस्तृतीयायावदंबुधेः ३७
उपस्थानंससैन्यस्यराघवस्यबभूवह
बिभीषणश्चतुर्थ्यांतुरामेणसहसंगतः ३८
समुद्रतरणार्थायपंचम्यांमंत्रउद्यतः
प्रायोपवेशनंचक्रेरामोदिनचतुष्टयम् ३९
समुद्रवरलाभश्चसहोपायप्रदर्शनम्
ततोदशम्यामारंभस्त्रयोदश्यांसमापनम् ४०
चतुर्दश्यांसुवेलाद्रौरामःसैन्यंन्यवेशयत्
पौर्णमास्यांद्वितीयांतंत्रिदिनैःसैन्यतारणम् ४१
तीर्त्वातोयनिधिंरामोवानरेश्वरसैन्यवान्
रुरोधचपुरींलंकांसीतार्थंसहलक्ष्मणः ४२
तृतीयादिदशम्यंतंनिवेशश्चदिनाष्टकम्
शुकसारणयोस्तत्रप्राप्तिरेकादशेदिने ४३
पौषासिताख्यद्वादश्यांसैन्यसंख्यानमेवच
शार्दूलेनकपींद्राणांसहसारोपवर्णनम् ४४
त्रयोदश्याअमावास्यांलंकायांदिवसैस्त्रिभिः
रावणःसैन्यसंख्यानंरणोत्साहंतदाकरोत् ४५

प्रययावंगदोदौत्यंमाघशुक्लाद्यवासरे
सीतायाश्चततोभर्तुर्मायामूर्द्धादिदर्शनम् ४६
माघद्वितीयादिदिनैःसप्तभिर्यावदष्टमी
रक्षसांवानराणांचयुद्धमासीच्चसंकुलम् ४७
माघशुक्लनवम्यांतुरात्राविंद्रजितारणे
रामलक्ष्मणयोर्नागपाशबंधःकृतःकिल ४८
आकुलेषुकपीशेषुनिरुत्साहेषुसर्वशः
नागपाशविमोक्षार्थंदशम्यांपवनोऽजपत् ४९
कर्णेस्वरूपंरामस्यगरुडागमनंततः
एकादश्यांचद्वादश्यांधूम्राक्षस्यवधःकृतः ५०
त्रयोदश्यांतुतेनैवनिहतःकंपनोरणे
माघशुक्लचतुर्दश्यायावत्कृष्णादिवासरम् ५१
त्रिदिनेनप्रहस्तस्यनीलेनविहितोवधः
माघकृष्णद्वितीयायाश्चतुर्थ्यंतंत्रिभिर्दिनैः ५२
रामेणतुमुलेयुद्धेरावणोद्रावितोरणात्
पंचम्याअष्टमीयावद्रावणेनप्रबोधितः ५३
कुंभकर्णस्तदाचक्रेऽभ्यवहारंचतुर्दिनम्
कुंभकर्णोदिनैःषड्भिर्नवम्यास्तुचतुर्दशीम् ५४
रामेणनिहतोयुद्धेबहुवानरभक्षकः
अमावास्यादिनेशोकादवहारोबभूवह ५५
फाल्गुनादिप्रतिपदश्चतुर्थ्यंतंचतुर्दिनैः
बिसतंतुप्रभृतयोनिहताःपंचराक्षसाः ५६
पंचम्याःसप्तमीयावदतिकायवधस्तथा
अष्टम्याद्वादशीयावन्निहतौदिनपंचकात् ५७
निकुंभकुंभावूर्ध्वंतुमकराक्षस्त्रिभिर्दिनैः
फाल्गुनासितद्वितीयायांदिनेशक्रजिताजितम् ५८
तृतीयादिसप्तम्यंतंदिनपंचकमेवच
ओषध्यानयनव्यग्रादवहारोबभूवह ५९
ततस्त्रयोदशीयावद्दिनैःपंचभिरिंद्रजित्
लक्ष्मणेनहतोयुद्धेविख्यातबलपौरुषः ६०

चतुर्दश्यांदशग्रीवोदीक्षांप्रापावहारतः
अमावास्यादिनेप्रायाद्युद्धायदशकंधरः ६१
चैत्रशुक्लप्रतिपदःपंचमीदिनपंचकैः
रावणेयुद्ध्यमानेतुप्रचुरोरक्षसांवधः ६२
चैत्रषष्ठ्याष्टमीयावन्महापार्श्वादिमारणम्
चैत्रशुक्लनवम्यांतुसौमित्रेःशक्तिभेदनम् ६३
कोपाविष्टेनरामेणद्रावितोदशकंधरः
द्रोणाद्रिरांजनेयेनलक्ष्मणार्थमुपाहृतः ६४
दशम्यामवहारोभूद्रात्रौयुद्धेतुरक्षसाम्
एकादश्यांतुरामायरथंमातलिसारथिः ६५
प्रेरितोवासवेनाजावर्पयामासभक्तितः
कोपवानथद्वादश्यायावत्कृष्णचतुर्दशी ६६
अष्टादशदिनैरामोरावणंद्वैरथेऽवधीत्
संग्रामेतुमुलेजातेरामोजयमवाप्तवान् ६७
माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्दशीम्
सप्providedाशीतिदिनेष्वेवमध्यंपंचदशाहकम् ६८
युद्धावहारःसंग्रामोद्वासप्ततिदिनान्यभूत्
संस्कारोरावणादीनाममावस्यादिनेऽभवत् ६९
वैशाखादितिथौरामउवासरणभूमिषु
अभिषिक्तोद्वितीयायांलंकाराज्येविभीषणः ७०
सीताशुद्धिस्तृतीयायांदेवेभ्योवरलंभनम्
हत्वाचिरेणलंकेशंलक्ष्मणाग्रजएवसः ७१
गृहीत्वाजानकींपुण्यांदुःखितांराक्षसेनतु
आदायपरयाप्रीत्याजानकींसन्यवर्तत ७२
वैशाखस्यचतुर्थ्यांतुरामःपुष्पकमाश्रितः
विहायसानिवृत्तस्तुभूयोऽयोध्यांपुरींप्रति ७३
पूर्णेचतुर्दशेवर्षेपंचम्यांमाधवस्यतु
भरद्वाजाश्रमेरामःसगणःसमुपाविशत् ७४
नंदिग्रामेतुषष्ठ्यांसभरतेनसमागतः
सप्तम्यामभिषिक्तोऽसावयोध्यायांरघूद्वहः ७५

दशैकाधिकमासांस्तुचतुर्दशाहानिमैथिली
उवासरामरहितारावणस्यनिवेशने ७६
द्विचत्वारिंशकवर्षैरामोराज्यमकारयत्
सीतायाश्चत्रयस्त्रिंशद्वत्सराश्चतदाभवन् ७७
सचतुर्दशवर्षांतिप्रविश्यचपुरींप्रभुः
अयोध्यांमुदितोरामोहत्वारावणमाहवे ७८
भ्रातृभिःसहितस्तत्ररामोराज्यमथाकरोत्
राज्यंप्रकुर्वतस्तस्यपुरोधावदतांवरः ७९
अगस्त्यःकुंभसंभूतिस्तमागंतारघोःपतिम्
तद्वाक्याद्रघुनाथोऽसौकरिष्यतिहयक्रतुम् ८०
तस्यागमिष्यतिहयोह्याश्रमेतवसुव्रत
तस्ययोधाःप्रमुदिताआयास्यंतितवाश्रमम् ८१
तेषामग्रेरामकथाःकरिष्यसिमनोहराः
तैःसाकंत्वमयोध्यायांगंतासिवैद्विजर्षभ ८२
दृष्ट्वाराममयोध्यायांपद्मपत्रनिभेक्षणम्
तत्क्षणादेवसंसारवार्धिनिस्तारवान्भव ८३
इत्युक्त्वामांमुनिवरोलोमशःसर्वबुद्धिमान्
उवाचतेकिंप्रष्टव्यंतदाहमवदंहितम् ८४
ज्ञातंत्वत्कृपयासर्वंरामचारित्रमद्भुतम्
त्वत्प्रसादादवाप्स्येऽहरामस्यचरणांबुजम् ८५
मयानमस्कृतःपश्चाज्जगामसमुनीश्वरः
तत्प्रसादान्मयावाप्तंरामस्यचरणार्चनम् ८६
सोऽहस्मरामिरामस्यचरणावन्वहंमुहुः
गायामितस्यचरितंमुहुर्मुहुरतंद्रितः ८७
पावयामिजनानन्यान्गानेनस्वांतहारिणा
हृष्यामितन्मुनेर्वाक्यंस्मारंस्मारंतदीक्षया ८८
धन्योऽहकृतकृत्योऽहसभाग्योऽहमहीतले
रामचंद्रपदांभोजदिदृक्षामेभविष्यति ८९
तस्मात्सर्वात्मनारामोभजनीयोमनोहरः
वंदनीयोहिसर्वेषांसंसाराब्धितितीर्षया ९०

तस्माद्यूयंकिमर्थंवैप्राप्ताःकोवानराधिपः
यागंकरोतिधर्मात्माहयमेधंमहाक्रतुम् ६१
तत्सर्वंकथयंत्वत्रयांतुवाहस्यपालने
स्मरंतुरघुनाथांघ्रिंस्मृत्वास्मृत्वापुनःपुनः ६२
इतिवाक्यंसमाकर्ण्यमुनेर्विस्मयमागताः
रघुनाथंस्मरंतस्तेप्रोचुरारण्यकंमुनिम् ६३

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेलोम-
शारण्यकसंवादेरामचरित्रकथनंनामषट्त्रिंशत्तमोऽध्यायः ३६

## सप्तत्रिंशत्तमोऽध्यायः

शेषउवाच
तेपृष्टामुनिवर्येणरामचारित्रमद्भुतम्
धन्यंसभाग्यंमन्वानाःप्रोचुरात्मानमादरात् १
जनाऊचुः
पवित्रितावयंसर्वेदर्शनेनतवाधुना
यद्रामकथयास्मान्वैपावयस्यधुनाजनान् २
शृणुष्ववचनंतथ्यंभवान्ब्रह्मर्षिसत्तमः
त्वयापृष्टंयदस्मभ्यंसर्वंतत्कथयामवै ३
अगस्त्यवाक्याच्छ्रीरामोविप्रहत्यापनुत्तये
यागंकरोतिसुमहान्सर्वसंभारसंभृतम् ४
तंपालयानाःसर्वेवैत्वदाश्रममुपागताः
अश्वेनसहिताविप्रतज्ञानीहिमहामते ५
इतिवाक्यंसमाकर्ण्यमनोहारिरसायनम्
अत्यंतंहर्षमापेदेब्राह्मणोरामभक्तिमान् ६
अद्यमेफलितोवृक्षोमनोरथश्रियान्वितः
अद्यमेजननीधन्याजातंमांसुषुवेतुया ७
अद्यराज्यंमयाप्राप्तंकंटकेनविवर्जितम्
अद्यकोशाःसुसंपन्नाअद्यदेवाःसुतोषिताः ८
अग्निहोत्रफलंत्वद्यप्राप्तंमेहविषाहुतम्
यद्द्रक्ष्येरामचंद्रस्यचरणांभोरुहोर्युगम् ९

योनित्यंध्यायतेस्वांतेअयोध्यायाःपतिःप्रभुः
समेदृग्गोचरोनूनंभविष्यतिमनोहरः १०
हनूमान्मांसमालिंग्यप्रद्दयतेकुशलंमम
भक्तिंमेमहतींदृष्ट्वातोषंप्राप्स्यतिसत्तमः ११
इतिवाक्यंसमाकर्ण्यहनूमान्कपिसत्तमः
जग्राहपादयुगलंमुनेरारण्यकस्यहि १२
स्वामिन्हनूमान्विप्रर्षेसेवकोऽहपुरःस्थितः
जानीहिरामदासस्यरेणुकल्पंमुनीश्वर १३
इत्युक्तवतितस्मिन्वैमुनिःपरमहर्षितः
आलिलिंगहनूमंतंरामभक्त्यासुशोभितम् १४
उभौप्रेमविनिर्भिन्नावुभावपिसुधाप्लुतौ
स्थगितौचित्रलिखिताविवतत्रबभूवतुः १५
उपविष्टौकथास्तत्रचक्रतुःसुमनोहराः
रघुनाथपदांभोजप्रीतिनिर्भरमानसौ १६
हनूमांस्तमुवाचेदंवचोविविधशोभनम्
आरण्यकंमुनिवरंरामांघ्रिध्याननिर्भृतम् १७
स्वामिन्नयंदशरथकुलहीरांकुरोमहान्
रामभ्रातामहाशूरःशत्रुघ्नःप्रणमत्यसौ १८
लवणोयेननिहतःसर्वलोकभयंकरः
कृताश्चसुखिनःसर्वेमुनयःसुतपोधनाः १९
एषपुष्कलनामात्वांनमत्युद्भटसेवितः
येनाधुनामहावीराजिताःसमरमंडले २०
जानीह्येनंबहुगुणंरामामात्यंमहाबलम्
प्राणप्रियंरघुपतेःसर्वज्ञंधर्मकोविदम् २१
सुबाहुरयमत्युग्रोवैरिवंशदवानलः
रामपादाब्जरोलंबोनमतित्वांमहायशाः २२
सुमदोऽप्येषपार्वत्यादत्तरामांघ्रिसेवया
प्राप्तोऽधुनासौसंसारवार्धिनिस्तरणंमहत् २३
सत्यवानयमश्वंयःप्राप्तमाश्रुत्यसेवकात्
राज्यंनिवेदयामाससत्वांप्रणमतिद्विजौ २४

इतिवाक्यंसमाकर्ण्यसमालिग्यसमादरात्
चकारारण्यकऋृषिःस्वागतंफलकादिना २५
तेहृष्टास्तत्रवसतिंचक्रुर्मुनिवराश्रमे
प्रातर्नित्यक्रियांकृत्वारेवायांतेमहोद्यमाः २६
नरयानमथारोप्यसेवकैःसहितंमुनिम्
शत्रुघ्नःप्रापयामासायोध्यांरामकृतालयाम् २७
सदूरान्नगरींदृष्ट्वासूर्यवंशनृपोषिताम्
पदातिरभवद्वेगाद्रघुनाथदिदृक्षया २८
संप्राप्यनगरींरम्यामयोध्यांजनशोभिताम्
मनोरथसहस्रेणसंरूढोरामदर्शने २९
ददर्शतत्रसरयूतीरेमंडपशोभिते
रामंदूर्वादलश्यामंकंजकांतिविलोचनम् ३०
मृगशृंगंकटौरम्यंधारयंतंश्रियान्वितम्
ऋृषिवृंदैर्व्यासमुख्यैर्वृतंशूरैःसुसेवितम् ३१
भरतेनसुमित्रायास्तनूजेनपरीवृतम्
ददतंदीनसंधेभ्योदानानिप्रार्थितानितम् ३२
विलोक्यारण्यकाख्योऽसौकृतार्थइत्यमन्यत
मल्लोचनेपद्मदलसमानेरामलोकके ३३
अद्यमेसर्वशास्त्रस्यज्ञातृत्वंबहुसार्थकम्
येनश्रीराममाज्ञायप्राप्तोऽयोध्यापुरीमिमाम् ३४
इत्येवमादिवचनानिबहूनिहृष्टो
रामांघ्रिदर्शनसुहर्षितगात्रशोभी
प्रायाद्रमेश्वरसमीपमगम्यमन्यै-
र्योगेश्वरैरपिविचारपरैःसुदूरम् ३५
धन्योऽहमद्यरामस्यचरणावक्षिगोचरौ
करिष्यामिवचोरम्यंवदन्राममवेक्षयन् ३६
रामोऽपिवाडवश्रेष्ठंज्वलंतंस्वेनतेजसा
तपोमूर्तिधरंवीक्ष्यप्रत्युत्थानमथाकरोत् ३७
रामचंद्रस्तस्यपादौसुचिरंनतवान्महान्
ब्रह्मण्यदेवपावित्र्यंकृतमद्यतनोर्मम ३८

इतिवाक्यंवदंस्तस्यपादयोःपतितःप्रभुः
सुरासुरनमन्मौलिमणिनीराजितांघ्रिकः ३९
प्रणतंतंनृपश्रेष्ठंवाडवेंद्रोमहातपाः
गृहीत्वाभुजयोर्मध्यमालिलिगप्रियंप्रभुम् ४०
कौसल्यातनयस्तंवाउच्चैर्मणिमयासने
संस्थाप्यचपदोर्युग्मंजलेनाक्षालयत्प्रभुः ४१
पादावनेजनोदंतुमस्तकेऽधाद्धरिःस्वयम्
पवित्रितोऽद्यसगणःसकुटुंबइतिब्रुवन् ४२
चंदनेनविलिप्याथगांचप्रादात्पयस्विनीम्
उवाचचवचोरम्यंदेवदेवेंद्रसेवितः ४३
स्वामिन्मखोमयावाजिमेधसंज्ञःक्रियेतह
सोयंत्वच्चरणायातादद्यपूर्णोभविष्यति ४४
अद्यमेब्रह्महत्योत्थपापहानिंकरिष्यति
अश्वमेधःक्रतुर्युष्मच्चरणेनपवित्रितः ४५
इतिवाक्यंब्रुवाणंतंराजराजेंद्रसेवितम्
आरण्यकउवाचेदंहसन्माध्व्यागिरामुनिः ४६
स्वामिंस्तवतुयुक्तंहिवचोब्रह्मण्यभूमिप
त्वन्मूर्तयोमहाराजब्राह्मणावेदपारगाः ४७
त्वंयदाब्रह्मपूजादिशुभंकर्मकरिष्यसि
ततोऽखिलानृपाविप्रंपूजयिष्यंतिभूमिप ४८
त्वयोक्तंयन्महाराजविप्रहत्यापनुत्तये
यागंकरोमिविमलंतत्तुहास्यकरंवचः ४९
त्वन्नामस्मरणान्मूढःसर्वशास्त्रविवर्जितः
सर्वपापाब्धिमुत्तीर्यसगच्छेत्परमंपदम् ५०
सर्ववेदेतिहासानांसारार्थोऽयमितिस्फुटम्
यद्रामनामस्मरणंक्रियतेपापतारकम् ५१
तावद्गर्जंतिपापानिब्रह्महत्यासमानिच
नयावत्प्रोच्यतेनामरामचंद्रतवस्फुटम् ५२
त्वन्नामगर्जनंश्रुत्वामहापातककुंजराः
पलायंतेमहाराजकुत्रचित्स्थानलिप्सया ५३

तस्मात्तवकथंहत्यामहापुरायददर्शन
रामत्वत्सुकथांश्रुत्वापूतःसद्योभविष्यति ५४
मयापूर्वंकृतयुगेगंगायास्तीरवासिनाम्
ऋषीणांमुखतोवाक्यंश्रुतमेतत्पुराविदाम् ५५
तावत्पापभियःपुंसांकातराणांसुपापिनाम्
यावन्नवदतेवाचारामनाममनोहरम् ५६
तस्माद्धन्योऽहमधुनाममसंसृतिनाशनम्
सांप्रतंसुलभंरामचंद्रत्वद्दर्शनादभूत् ५७
इत्युक्तवंतंसमुनिंपूजयामासतत्रवै
सर्वेमुनिजनाःसाधुसाधुवाक्यमितिब्रुवन् ५८
शेषउवाच
अत्याश्चर्यमभूत्तत्रतन्मेनिगदतःशृणु
वात्स्यायनमुनिश्रेष्ठरामभक्तिपरायण ५९
रामंदृष्ट्वामहाराजंयादृशंध्यानगोचरम्
अत्यंतंहर्षमापन्नोजगादसमुनीश्वरान् ६०
मुनीश्वराःसंशृणुतमद्वाक्यंसुमनोहरम्
मादृशःकोनभूलोकेभविष्यतिसुभाग्यवान् ६१
नास्तिमत्सदृशःकोपिनजातोनभविष्यति
यद्रामभद्रोमांनत्वास्वागतंपरिपृष्टवान् ६२
यत्पादपंकजरजःश्रुतिमृग्यंसदैवहि
सोऽद्यमत्पादयोःपाथःपीत्वापूतममन्यत ६३
एवंप्रवदतस्तस्यब्रह्मस्फोटोऽभवत्तदा
निर्गतंतद्भवंतेजोविवेशरघुनायके ६४
पश्यतांसर्वलोकानांसरयूतीरमंडपे
सायुज्यमुक्तिंसंप्रापदुर्ल्लभांयोगिभिर्जनैः ६५
दिवितूर्यनिनादोऽभूद्वीणानादोऽभवत्तदा
पुष्पवृष्टिःपपाताग्रेपश्यतांचित्रमद्भुतम् ६६
मुनयोऽप्येतदीक्षित्वाप्रशंसंतोमुनीश्वरम्
कृतार्थोयंमुनिश्रेष्ठोयद्रामवपुषीक्षितः ६७
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेआरराय-

कमुनेर्विष्णुलोकगमनंनामसप्तत्रिंशत्तमोऽध्यायः ३७

अष्टत्रिंशत्तमोऽध्यायः

सूतउवाच
एतदाख्यानकंश्रुत्वावात्स्यायनउदारधीः
परमंहर्षमापेदेजगादचफणीश्वरम् १
वात्स्यायनउवाच
कथांसंशृणवतेमह्यंतृप्तिर्नास्तिफणीश्वर
रघुनाथस्यभक्तार्तिहारिकीर्तिकरस्यवै २
धन्यआरण्यकोनाममुनिर्वेदधरःपरः
रघुनाथंसमालोक्यदेहंतत्याजनश्वरम् ३
ततोराज्ञोहयःकुत्रगतःकेननियंत्रितः
कथंतत्ररमानाथकीर्तिर्जाताफणीश्वर ४
सर्वंकथयमेतथ्यंसर्वज्ञोऽस्तियतोभवान्
धराधरवपुर्धारीसाक्षात्तस्यस्वरूपधृक् ५
व्यासउवाच
इतिवाक्यंसमाकर्ण्यप्रहृष्टेनांतरात्मना
उवाचरामचारित्रंतत्तद्गुणकथोदयम् ६
शेषउवाच
साधुपृच्छसिविप्रर्षेरघुनाथगुणान्मुहुः
श्रुतानश्रुतवत्कृत्वातेषुलोलुपतांदधत् ७
ततोनिरगमद्वाहःसैनिकैर्बहुभिर्वृतः
रेवातीरेमनोज्ञेतुमुनिवृंदनिषेविते ८
सेनाचरास्ततःसर्वेयत्रवाहस्ततस्ततः
प्रसर्पंतिनिरीक्षंतस्तन्मार्गरणकोविदाः ९
वाजीगतोऽथरेवायाह्रदेऽगाधजलान्विते
भालेस्वर्णभवंपत्रंधारयन्पूजितांगकः १०
ततोजलेममज्जासौरामचंद्रहयोवरः
तदासर्वेमहाशूरास्तत्रविस्मयमागताः ११
तैःपरस्परमेवोचेकथंहयसमागमः

कोऽत्रगंताजलेवाहमानेतुंतंमहोदयम् १२
इतियावत्समुद्विग्नामंत्रयंतेपरस्परम्
तावद्वीरशतैःसार्धमाजगामरघोःपतिः १३
तान्सर्वान्विमनस्कान्सदृष्ट्वाशत्रुघ्नसंज्ञितः
पप्रच्छमेघगंभीरवाचावीरशिरोमणिः १४
किंस्थितंनिखिलैरद्ययुष्माभिःसंघशोजले
कुत्राश्वोरघुनाथस्यस्वर्णपत्रेणशोभितः १५
जलेकिंविनिमग्नोऽसौहृतोवाकेनमानिना
तन्मेकथयतद्विप्रंकथंयूयंविमोहिताः १६
शेषउवाच
इतिवाक्यंसमाकर्ण्यराज्ञोरघुवरस्यहि
कथयामासुस्तेसर्वेवीराःशूरशिरोमणिम् १७
जनाऊचुः
स्वामिन्वयंनजानीमोमुहूर्तमभवज्जले
निममज्जततोनायाद्धयस्तवमनोहरः १८
त्वमेवतत्रगत्वेमंवाहमानयवेगतः
अस्माभिस्तत्रगंतव्यंत्वयासार्द्धंमहामते १९
इतिश्रुत्वावचस्तेषांसैनिकानांरघूद्वहः
खेदंप्रापजनान्पश्यञ्जलसंतरणोद्यतान् २०
उवाचमंत्रिमुख्यंसकिंकर्तव्यमतःपरम्
कथंवाहस्यसंप्राप्तिर्भविष्यतिवदस्वतत् २१
केतत्रशूराःसंयोज्याजलेऽन्वेषयितुंहयम्
कोवानयिष्यतेवाहंकेनोपायेनतद्वद २२
इतिराज्ञोवचःश्रुत्वासुमतिर्मंत्रिसत्तमः
उवाचसमयेयोग्यंशत्रुघ्नंहर्षयन्निव २३
स्वामिन्नस्तितवश्रीमञ्छक्तिरद्भुतकर्मणः
पातालगमनेशक्तिर्जलमध्यादिहस्फुटम् २४
अन्यच्चपुष्कलस्यापिशक्तिरस्तिमहात्मनः
हनूमतोऽपिरामस्यपादसेवापरस्यच २५
तस्माद्यूयंत्रयोगत्वाहयमानयतध्रुवम्

यतोभवेद्वाहमेधोरघुनाथस्यधीमतः २६
शेषउवाच
इतिवाक्यंसमाश्रुत्यशत्रुघ्नःपरवीरहा
स्वयंविवेशतोयांतर्हनुमत्पुष्कलान्वितः २७
यावज्जलंविवेशासौतावत्पुरमदृश्यत
अनेकोद्यानशोभाढ्यममेयंपुटभेदनम् २८
तत्रमाणिक्यरचितेस्तंभेस्वर्णमयेहयम्
बद्धंददर्शरामस्यस्वर्णपत्रसुशोभितम् २९
स्त्रियस्तत्रमनोहारिरूपधारिण्यउत्तमाः
सेवंतेसुंदरीमेकांपर्यंकेसुखमास्थिताम् ३०
तान्दृष्ट्वाताःस्त्रियःसर्वाःप्रावोचन्स्वामिनींप्रति
एतेऽल्पवर्ष्मवयसोमांसपुष्टकलेवराः ३१
भविष्यंतितवश्रेष्ठमाहारस्यफलंमहत्
एतेषांशोणितंस्वादुपुरुषाणांगतायुषाम् ३२
एतद्वचःसमाकर्ण्यसेवकीनांवरांगना
जहासकिंचिद्वदनंनर्तयंतीभ्रुवानघा ३३
तावत्त्रयस्तेसंप्राप्ताःसन्नाहश्रीविशोभिताः
शिरस्त्राणानिदधतःशौर्यवीर्यसमन्विताः ३४
तादृष्ट्वामहिलास्तत्रसौंदर्यश्रीसमन्विताः
प्रोचुस्तेविस्मयंविप्रकिमिदंदृश्यतेमहत् ३५
नमश्चक्रुर्महात्मानःसर्वेदेववरांगनाः
किरीटमणिविद्योतद्योतितांघ्रियुगास्ततः ३६
सातान्पप्रच्छपुरुषान्सर्वश्रेष्ठातुभामिनी
केयूयमत्रसंप्राप्ताःकथंचापधरानराः ३७
मत्स्थलंसर्वदेवानामगम्यंमोहनंमहत्
अत्रप्राप्तस्यतुक्वापिनिवृत्तिर्नभवत्युत ३८
अश्वोऽयकस्यराज्ञोवैकथंचामरवीजितः
स्वर्णपत्रेणशोभाढ्यःकथयंतुममाग्रतः ३९
शेषउवाच
इतितस्यावचःश्रुत्वामोहनाचारसंयुतम्

हनूमांस्तांप्रत्युवाचगतभीःप्रहसन्निव ४०
वयंवैकिंकराराज्ञस्त्रैलोक्यस्यशिखामरोः
त्रिलोकीयंप्रणमतेसर्वदेवशिरोमणिम् ४१
रामभद्रस्यजानीहिहयमेधप्रवर्तितुः
प्रमुंचवाहमस्माकंकथंबद्धोवराङ्गने ४२
वयंसर्वास्त्रकुशलाःसर्वशस्त्रास्त्रकोविदाः
नयिष्यामोबलाद्वाहंहत्वातत्प्रतिरोधकान् ४३
इतिवाक्यंसमाकरार्यप्लवङ्गस्यवराङ्गना
विवरस्थाप्रत्युवाचहसंतीवाक्यकोविदा ४४
मयानीतमिमंवाहंनकोमोचयितुंक्षमः
वर्षायुतेननिशितैर्बाणकोटिभिरुच्छिखैः ४५
परंरामस्यपादाब्जसेवकीकर्मकारिणी
नग्रहीष्यामितद्वाहंराजराजस्यधीमतः ४६
महानविनयोजातोममनेत्र्याःसुवाजिनः
क्षमताद्रामचंद्रस्तच्छरगयोभक्तवत्सलः ४७
यूयंक्लिष्टास्तत्पुरुषाहयार्थंतस्यरक्षितुः
याचध्वंवरमप्राप्यंदेवानामपिसत्तमाः ४८
यथामेमीवमत्युग्रंक्षमेतपुरुषोत्तमः
व्रीडांत्यक्त्वाखिलांयूयंवृणुध्वंवरमुत्तमम् ४९
तस्यावचःपरंश्रुत्वाहनूमान्निजगादताम्
रघुनाथप्रसादेनसर्वमस्माकमूर्जितम् ५०
तथापियाचेवरमेकमुत्तमं
विधेहितन्मेमनसःसमीहितम्
भवेभवेनोरघुनायकःपति –
र्वयंचतत्कर्मकराश्चकिंकराः ५१
एतद्वचनमाकरार्यप्लवगस्यतदांगना
उवाचवाक्यंमधुरंप्रहस्यगुणपूजितम् ५२
भवद्भिःप्रार्थितंयद्वैदुर्ल्लभंसर्वदैवतैः
तद्भविष्यत्यसंदेहःसेवकास्तद्रघोःपतेः ५३
अथापिवरमेकंवैदास्यामिकृतहेलना

रघुनाथस्यतुष्ट्यर्थंतदृतंमेभवेद्वचः ५४
अग्रेवीरमणिर्भूपोमहावीरसमन्वितः
ग्रहीष्यतिभवद्वाहंशिवेनपरिरक्षितः ५५
तज्जयार्थेमहास्त्रंमेगृह्णीतसुमहाबलाः
द्वैरथेसतुयोद्धव्यःशत्रुघ्नेनत्वयामहान् ५६
इदमस्त्रंयदात्वंतुक्षेपयिष्यसिसंगरे
अनेनपूतोरामस्यस्वरूपंज्ञास्यतेपुनः ५७
ज्ञात्वातंवाजिनंदत्वाचरणेप्रपतिष्यति
तस्माद्गृह्णीध्वमस्त्रंतन्ममवैरिविदारणम् ५८
तच्छ्रुत्वारघुनाथस्यभ्राताजग्राहचास्त्रकम्
उदङ्मुखःपवित्रांगोयोगिन्यादत्तमद्भुतम् ५९
तत्प्राप्यास्त्रंमहातेजाबभूवरिपुकर्शनः
दुष्प्रधर्ष्योदुराराध्योवैरिवारणसत्सृणिः ६०
तांनत्वाराघवश्रेष्ठःशत्रुघ्नोहयसत्तमम्
गृहीत्वागाज्जलात्तस्माद्रेवातीरेसुखोचिते ६१
तंदृष्ट्वासैनिकाःसर्वेप्रहृष्टांगामुदान्विताः
साधुसाधुप्रशंसंतःपप्रच्छुर्हयनिर्गमम् ६२
हनूमान्कथयामासहयस्यागमनंमहत्
वरप्राप्तिंचताभ्योवैतेऽपिश्रुत्वामुदंगताः ६३

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेशत्रुघ्नस्ययो-
गिनीदर्शनजलमध्याद्वाहप्राप्तिर्नामअष्टत्रिंशत्तमोऽध्यायः ३८

## एकोनचत्वारिंशत्तमोऽध्यायः

शेषउवाच
निनदत्सुमृदंगेषुवीणानादेषुसर्वतः
मुक्तोवाहस्ततोदेवपुरंदेवविनिर्मितम् १
यत्रस्फाटिककुड्यानांरचनाभिर्गृहानृणाम्
हसंतिविंध्यंविमलंपर्वतंनागसेवितम् २
राजतानिगृहाण्यत्रदृश्यंतेप्रकृतेरपि
विचित्रमणिसन्नद्धानानामाणिक्यगोपुराः ३

पद्मिन्योयत्रलोकानांगेहेगेहेमनोहराः
हरंतिचित्तानिनृणांमुखपद्मकलेद्भिताः ४
पद्मरागमणिर्यत्रगेहेगेहेसुभूमिषु
बद्धःसंलन्दयतेविप्रतदोष्ठस्पर्धयानुकिम् ५
क्रीडाशैलाःप्रत्यगारंनीलरत्नविनिर्मिताः
कुर्वंतिशंकांमेघस्यमयूराणांकलापिनाम् ६
हंसायत्रनृणांगेहेस्फाटिकेषुनियंत्रिताः
कुर्वंतिमेघान्नोभीतिंमानसंनस्मरंतिच ७
निरंतरंशिवस्थानेध्वस्तंचंद्रिकयातमः
शुक्लकृष्णविभेदोनपद्मयोस्तत्रवैनृणाम् ८
तत्रवीरमणीराजाधार्मिकेष्वग्रणीर्महान्
राज्यंकरोतिविपुलंसर्वभोगसमन्वितम् ९
तस्यपुत्रोमहाशूरोनाम्नारुक्मांगदोबली
वनिताभिर्गतोरम्यदेहाभिःक्रीडितुंवनम् १०
तासांमंजीरसंरावःकंकणानांरवस्तथा
मनोहरतिकामस्यकिमन्यस्यकथात्रभोः ११
वनंजगामसुमहत्सुपुष्पनगसंयुतम्
सदाशिवकृतस्थानमृतुषट्कैर्विराजितम् १२
चंपकायत्रबहुशःफुल्लकोरकशोभिताः
कुर्वंतिकामिनांतत्रहृच्छयार्तिंविलोकिताः १३
चूताःफलादिभिर्नम्रामंजरीकोटिसंयुताः
नागाःपुन्नागवृन्ताश्चशालास्तालास्तमालकाः १४
कोकिलानांसमारावायत्रचश्रुतिगोचराः
सदामधुपझंकारगतनिद्राःसुमल्लिकाः १५
दाडिमानांसमूहाश्चकर्णिकारैःसमन्विताः
केतकीकानकीवन्यवृन्नराजिविराजिताः १६
तस्मिन्वनेप्रमदसंयुतचित्तवृत्तिर्गायन्कलंमधुरवाग्विचिकीर्षयोच्चैः
उद्यत्कुचाभिरभितोवनिताभिरागाच्छोभानिधानवपुरुद्गतभीर्विवेश १७
काश्चित्तंनृत्यविद्याभिस्तोषयंतिस्मशोभनम्
काश्चिद्गानकलाभिश्चकाश्चिद्वाक्चतुरोचितैः १८

भ्रूसंज्ञयापराःकाश्चित्तोषयामासुरुन्मदाः
परिरंभणचातुर्यैस्तंहृष्टंविदधुःस्त्रियः १९
ताभिःपुष्पोच्चयंकृत्वाभूषयामासताःस्त्रियः
वाणयाकोमलयाशंसन्रेमेकामवपुर्धरः २०
एवंप्रवृत्तेसमयेराजराजस्यधीमतः
प्रायात्तद्वनदेशंसहयःपरमशोभनः २१
तंस्वर्णपत्ररचितैकललाटदेशं
गंगासमंघुसृणकुंकुमपिंजरांगम्
गत्यासमंपवनवेगतिरस्करिणया
दृष्ट्वास्त्रियःपरमकौतुकधामदेहम् २२
ऊचुःपतिंकमलमध्यपिशंगवर्णा -
स्ताम्राधरप्रतिभयाहतविद्रुमाभाः
दंतव्रजप्रमितहास्यसुशोभिवक्त्राः
कामस्यबाणनयनादिविमोहनाभाः २३
स्त्रियऊचुः
कांतकोयंमहानर्वास्वर्णपत्रैकशोभितः
कस्यवाभातिशोभाढ्योगृहाणस्वबलादिमम् २४
शेषउवाच
तदुक्तंवचश्राकर्ण्यलीलाललितलोचनः
जग्राहहयमेकेनकरपद्मेनलीलया २५
वाचयित्वास्वर्णपत्रंस्पष्टवर्णसमन्वितम्
जहासमहिलामध्येजगादवचनंपुनः २६
रुक्मांगदउवाच
पृथिव्यांनास्तिमेपित्रासमःशौर्येणचश्रिया
तस्मिन्कथंविधत्तेसउत्सेकंरामभूमिपः २७
यस्यरक्षांप्रकुरुतेसदारुद्रःपिनाकधृक्
यंदेवादानवायक्षानमंतिमणिमौलिभिः २८
कुरुताद्वाजिमेधंवैजनकोमेमहाबलः
यात्वेषवाजिशालायांबध्नंतुममवैभटाः २९
इतिवाक्यंसमाकर्ण्यमहिलास्तामनोहराः

प्रहर्षवदनाजाताःकांतंतुपरिरेभिरे ३०
गृहीत्वाचहयंपुत्रोराज्ञोवीरमणेर्महान्
पुरंपत्नीसमायुक्तोमहोत्साहमवीविशत् ३१
मृदंगध्वनिषुप्रोच्चैराहतेषुसमंततः
बंदिभिःसंस्तुतःप्रागात्स्वपितुर्मंदिरंमहत् ३२
तस्मैसकथयामासहयंनीतंरघोःपतेः
वाजिमेधायनिर्मुक्तंस्वच्छंदगतिमद्भुतम् ३३
रक्षितंशत्रुसूदेनमहाबलसमेतिना
तच्छ्रुत्वावचनंतस्यनृपोवीरमणिर्महान् ३४
नातिप्रशंसयामासतत्कर्मसुमहामतिः
नीत्वापुनःसमायांतंचौरस्येवविचेष्टितम् ३५
कथयामासजामात्रेशिवायाद्भुतकर्मणे
अर्धांगनाधरायांगभूषायचंद्रधारिणे ३६
तेनसंमंत्रयामासनृपोवीरमणिर्महान्
पुत्रसृष्टंमहत्कर्मविनिंद्यंमहतांमतः ३७
शिवउवाच
राजन्पुत्रेणभवतःकृतंकर्ममहाद्भुतम्
योजहारमहावाहंरामचंद्रस्यधीमतः ३८
अद्ययुद्धंमहद्भातिसुरासुरविमोहनम्
शत्रुघ्नेनमहाराज्ञावीरकोटयेकरक्षिणा ३९
मयायोध्रियतेस्वांतेजिह्वयाप्रोच्यतेहियः
तस्यरामस्ययज्ञांगंजहारतवपुत्रकः ४०
परमत्रमहाँल्लाभोभविष्यतितरांरणे
यद्रामचरणांभोजंद्रक्ष्यामःस्वीयसेवितम् ४१
अत्रयत्नोमहान्कार्योहयस्यपरिरक्षणे
नयिष्यंतिबलाद्वाहंमयारक्षितमप्यमुम् ४२
तस्मादिमंमहाराजराज्येनसहसन्नतः
वाजिनंभोजनंदत्वाप्रेक्षस्वांघ्रियुगंततः ४३
इतिवाक्यंसमाकर्ण्यशिवस्यसनृपोत्तमः
उवाचतंसुरेंद्रादिवंद्यपादांबुजद्वयम् ४४

वीरमणिरुवाच
क्षत्रियाणामयंधर्मोयत्प्रतापस्यरक्षणम्
तदसौक्रांतुमुद्युक्तःक्रतुनाहयसंज्ञिना ४५
तस्माद्रक्ष्यःस्वप्रतापोयेनकेनापिमानिना
यावच्छक्यंकर्मकृत्वाशरीरव्ययकारिणा ४६
सर्वंकृतंसुतेनेदंगृहीतोऽश्वपुनर्यतः
कोपितंरामभूपालंसमयार्हंकुरुप्रभो ४७
क्षत्रियाणामिदंकर्मकर्तव्यार्हंभवेन्नहि
यदकस्माद्रिपोःपादौप्रणमेद्भयविह्वलः ४८
रिपवोविहसंत्येनंकातरोऽयनृपाधमः
क्षुद्रःप्राकृतवन्नीचोनतवान्भयविह्वलः ४९
तस्माद्भवान्यथायोग्यंयोद्धव्येसमुपस्थिते
यद्विधेयंविचार्यैवकर्तव्यंभक्तरक्षणम् ५०
शेषउवाच
इतिवाक्यंसमाकर्ण्यचंद्रचूडोवदद्वचः
प्रहसन्मेघगंभीरवाण्यासंमोहयन्मनः ५१
यदिदेवास्त्रयस्त्रिंशत्कोटयःसमुपस्थिताः
तथापित्वत्तःकेनाश्वोगृह्यतेममरक्षितुः ५२
यदिरामःसमागत्यस्वात्मानंदर्शयिष्यति
तदाहंचरणौतस्यप्रणमामिसुकोमलौ ५३
स्वामिनानहियोद्धव्यंमहाननयउच्यते
अन्येवीरास्तृणप्रायाःकिंचित्कर्तुंनवैक्षमाः ५४
तस्माद्युद्ध्यस्वराजेंद्ररक्षकेमयिसुस्थिते
कोगृह्णातिबलाद्वाहंत्रिलोकीयदिसंगता ५५
शेषउवाच
एतद्वचःपरंश्रुत्वाचंद्रचूडस्यभूमिपः
जहर्षमानसेऽत्यतंयुद्धकर्मणिकौतुकी ५६
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेवीर-
मणिपुत्रेणहयग्रहणंनामएकोनचत्वारिंशत्तमोऽध्यायः ३९

## चत्वारिंशत्तमोऽध्यायः

शेषउवाच
सेनाचरामहाराज्ञोमहाबलसमन्विताः
समागतास्तंपश्यंतोहयंरामस्यभूपतेः १
क्वासावश्वःकेननीतःकथंवादृश्यतेनसः
कोगंतायमपुर्यांवैवाहंहृत्वासुमंदधीः २
विलोकयंतस्तन्मार्गंयावत्सेनाचरारघोः
तावत्प्राप्तोमहाराजोमहासैन्यपरीवृतः ३
पप्रच्छसेवकान्सर्वान्कुत्राश्वोममसांप्रतम्
नदृश्यतेकथंवाहःस्वर्णपत्रसुशोभितः ४
इतितद्वचनंश्रुत्वासेवकास्तेहयानुगाः
प्रोचुर्नाथमनोवेगोवाहःकेनापिकानने ५
हृतोनलक्ष्यतेतस्मादस्माभिर्मार्गकोविदैः
तदत्रयत्नःकर्तव्योहयप्राप्तिंप्रतिप्रभो ६
तेषांवचनमाकर्ण्यपप्रच्छसुमतिंनृपः
शत्रुघ्नःशत्रुसंहारकारीमोहनरूपधृक् ७
शत्रुघ्नउवाच
कोऽत्रराजानिवसतिकथंवाहस्यसंगमः
कियद्बलंभूमिपतेर्येनमेऽद्यहृतोहयः ८
सुमतिरुवाच
राजन्देवपुरंह्येतद्देवेनैवविनिर्मितम्
कैलासमिवदुर्गम्यंवैरिसंघैःसुसंहतैः ९
अस्मिन्वीरमणीराजामहाशूरःप्रतापवान्
राज्यंकरोतिधर्मेणशिवेनपरिरक्षितः १०
योऽसौप्रलयकारीसत्रास्तेभक्त्यावशीकृतः
चंद्रचूडःस्वभक्तस्यपक्षपातंसृजन्सदा ११
तस्मादत्रमहद्युद्धंगृहीतश्चेद्भविष्यति
यत्ताःसंतःप्रकुर्वंतुरक्षणंकटकस्यहि १२
एवंश्रुत्वासशत्रुघ्नःसर्वभूपशिरोमणिः
सैन्यव्यूहंरचित्वासौतिष्ठतिस्ममहायशाः १३

अथतंसुखमासीनंमंत्रयंतंसुमंत्रिणा
आजगामसदेवर्षिर्युद्धकौतुकसंयुतः १४
तमागतंमुनिंदृष्ट्वाशत्रुघ्नस्तपसांनिधिम्
अभ्युत्थायासनेस्थाप्यमधुपर्कमथार्पयत् १५
स्वागतेनचसंतुष्टंनारदंमुनिसत्तमम्
उवाचप्रीणयन्वाचावाक्यवादविशारदः १६
शत्रुघ्नउवाच
मदीयोऽश्वकुत्रविप्रकथयस्वमहामते
नलक्ष्यतेगतिस्तस्यसेवकैर्ममकोविदैः १७
शंसतंयेनवानीतंक्षत्रियेणचमानिना
कथमत्रहयप्राप्तिर्भविष्यतितपोधन १८
इतिवाक्यंसमाकर्ण्यशत्रुघ्नस्यसनारदः
उवाचवीणांरणयन्गायन्रामकथांमुहुः १९
नारदउवाच
एतद्देवपुरंराजन्भूपोवीरमणिर्महान्
तत्पुत्रेणवनस्थेनगृहीतस्तववाजिराट् २०
तत्रयुद्धंमहत्तेऽद्यभविष्यतिसुदारुणम्
अत्रवीराःपतिष्यंतिबलशौर्यसमन्विताः २१
तस्मादत्रमहायत्नात्स्थातव्यंतेमहाबल
रचयव्यूहरचनांदुर्गमांपरसैनिकैः २२
जयस्तेभविताराजन्कृच्छ्रेणास्मान्नृपोत्तमात्
रामंकोनुपराजीयाद्भुवनेसकलेह्यपि २३
इत्युक्त्वांतर्दधेविप्रोनभसिस्थितवांस्ततः
युद्धंसुदारुणंद्रक्ष्यन्देवदानवयोरिव २४
शेषउवाच
अथराजावीरमणिःसर्वशूरशिरोमणिः
पटहंघोषितुंस्वीयेपुरमध्येमहारवम् २५
आह्वयामाससेनान्यंरिपुवीरंमहोन्नतम्
कथयामासचद्विप्रंमेघगंभीरयागिरा २६
वीरमणिरुवाच

सेनानीःपटहस्याज्ञांदेहिमेशोभनेपुरे
तच्छ्रुत्वामेसुसन्नद्धाःशत्रुघ्नंप्रतियांतुते २७
इतिवाक्यंसमाकरार्यराज्ञोवीरमरोस्तदा
कारयामासपटहंमहारवनिनादितम् २८
गेहेगेहेचरथ्यायांश्रूयतेपटहध्वनिः
शत्रुघ्नंयांतुयेसर्वेवीराराजपुरेस्थिताः २९
येवैराज्ञःसमुल्लंध्यशासनंवीरमानिनः
पुत्रावाभ्रातरोवापितेवध्याःस्युर्नृपाज्ञया ३०
शृरावंतुवीराःपुनरप्याहतेपटहेरवम्
श्रुत्वाविधीयतामाशुकर्तव्यंमाविलंबितम् ३१
शेषउवाच
इतिपटहरवंस्वकर्णगोचरं
नरवरवीरवरराययुर्नृपोत्तमम्
कनककवचभूषितस्वदेहाः
समरमहोत्सवहृष्टचित्तकोशाः ३२
केचिद्ययुःशिरस्त्राणंधृत्वाशिरसिशोभनम्
कवचेनसुशोभाढ्याःशतकोटिसुशोभिताः ३३
रथेनहययुग्मेनमणिकांचनशोभिना
ययुस्तेराजसंदेशान्नृवरालयमुन्मदाः ३४
केचिन्मतंगजैर्मत्तैःकेचिद्वाहैःसुशोभनैः
ययुर्नपगृहंसर्वेराजसंदेशकारकाः ३५
विविक्तस्वर्णकवचशिरस्त्राणसुशोभितः
रुक्मांगदोऽपिचनिजेरथेतिष्ठन्मनोजवे ३६
शुभांगदोऽनुजस्तस्यमहारत्नमयंदधत्
कवचंवपुषिश्रेष्ठंनिजंप्रायाद्रणोत्सवे ३७
राजभ्रातावीरसिंहःसर्वशस्त्रास्त्रकोविदः
ययौनृपाज्ञयातत्रशासनंभूमिपस्यहि ३८
जामेयस्तस्यराज्ञोऽपिबलमित्रइतिस्मृतः
सन्नद्धःकवचीखड्गीजगामनृपमंदिरम् ३९
सेनानीरिपुवारोऽपिसेनांतांचतुरंगिणीम्

सञ्ज्ञांविधायभूपायन्यवेदयदथोमहान् ४०
अथराजावीरमणिःसर्वशस्त्रास्त्रपूरितम्
मणिसृष्टोच्चचक्रोच्चमारोहत्स्यंदनोत्तमम् ४१
ततोवीरार्णवेशंखनिनादश्चसमंततः
श्रूयतेकातरान्वीरान्प्रेरयन्निवसंगरे ४२
भेर्यःसमंततोजघ्नुःशुभवादकवादिताः
अनीकान्यत्रतस्यासन्संग्रामायप्रतस्थुषः ४३
सर्वेकृतस्वस्त्ययनाःसर्वाभरणभूषिताः
सर्वशस्त्रास्त्रसंपूर्णाययुःसमरमण्डलम् ४४
भेरीशंखनिनादेनपूरिताश्चनगागुहाः
आकारितुंगतःकिंनुतद्रवःस्वर्गसंस्थितान् ४५
तस्मिन्कोलाहलेवृत्तेराजावीरमणिर्महान्
रणोत्साहेनसंयुक्तोययौप्रधनमंडलम् ४६
आगत्यसंस्थितस्तावद्रथपत्तिसमाकुलम्
समुद्रइवतत्स्थानात्प्लावितुंपुरुषानयात् ४७
तदागतंबलंदृष्ट्वारथिभिःशस्त्रकोविदैः
कोलाहलीकृतंसर्वमुवाचसुमतिंनृपः ४८
शत्रुघ्नउवाच
समागतोवीरमणिर्ममवाजिधरोबली
योद्धुंमांमहताभूयःसैन्येनचतुरंगिणा ४९
कथंयुद्धंप्रकर्तव्यंकेयोत्स्यंतिबलोत्कटाः
तान्सर्वान्दिशमेवीरान्यथास्याज्जयईप्सितः ५०
सुमतिरुवाच
स्वामिन्नसौमहाराजोमहासैन्यपरीवृतः
समागतःसयुद्धार्थंशिवभक्तिसमन्वितः ५१
सांप्रतंयुद्ध्यतांवीरःपुष्कलःपरमास्त्रवित्
अन्येपिनीलरत्नाद्यायोद्धारोयुद्धकोविदाः ५२
शिवेनसहयोद्धव्यंराज्ञावाभवतानघ
द्वंद्वयुद्धेनजेतव्योमहाबलपराक्रमः ५३
अनेनविधिनाराजञ्जयस्तेऽत्रभविष्यति

पश्चाद्यद्रोचतेस्वामिंस्तत्कुरुष्वमहामते ५४
शेषउवाच
इतिवाक्यंसमाकरार्यशत्रुघ्नःपरवीरहा
सुभटानादिदेशाथयुद्धायकृतनिश्चयः ५५
सर्वैःससैन्यैर्युद्धार्थंराजभिःशस्त्रकोविदैः
यथास्यान्मेजयःक्षिप्रंयतितव्यंतथापुनः ५६
जयार्थंराघवस्यैवश्रुत्वातेरणकोविदाः
महोत्साहेनसंयुक्तcraययुर्योद्धुंतुसैनिकैः ५७

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेवीर-
मणिनासहयुद्धनिश्चयोनामचत्वारिंशत्तमोऽध्यायः ४०

## एकचत्वारिंशत्तमोऽध्यायः

शेषउवाच
युद्धायतेसुसंनद्धाःशत्रुघ्नस्यमहाबलाः
ययुर्वीरमणेःसैन्यमध्येशौर्यसमन्विताः १
शरान्विमुंचमानास्तेभिंदंतःसैनिकान्बहून्
व्यदृश्यंतरणांतःस्थाःशरासनधरानराः २
अनेकेनिहतास्तत्रगजामणिमयारथाः
भग्नावाहसमेताश्चदृश्यंतेरणमंडले ३
विहितंकदनंतेषांश्रुत्वारुक्मांगदोबली
रथेमणिमयेतिष्ठन्ययौयोद्धुंससैनिकान् ४
शरासनेशरान्धास्यन्निषुधीअक्षयौदधत्
शोणनेत्रांतरोभीमोमहाकोपसमन्वितः ५
अनेकबाणसंविग्नान्कुर्वञ्छूरान्सहस्रशः
हाहाकारंकारयंस्तद्ययौरुक्मांगदोबली ६
राजपुत्रःस्वसदृशंबलेनयशसाश्रिया
आह्वयामासशत्रुघ्नंभारतिंपुष्कलंबली ७
रुक्मांगदउवाच
आगच्छवीरकर्मात्वंमहाबलपराक्रम
मयायोद्धुंतुबलिनाराजपुत्रेणभास्वता ८

किमन्यैस्त्रासितैर्वीरनिहतैःकोटिभिर्नरैः
मयासमंमहायुद्धंविधायजयमाप्नुहि ९
इत्युक्तवंतंतरसाप्रहसन्पुष्कलोबली
जघानविपुलेमध्येवक्षसस्तीक्ष्णपर्वभिः १०
तदमृष्यन्राजपुत्रोमहाचापेदधच्छरान्
जघानदशभिर्वीरंपुष्कलंवक्षसोंऽतरे ११
उभौसमरसंरब्धावुभावपिजयैषिणौ
रेजातेसमरेतौहिकुमारतारकौयथा १२
बाणान्धनुषिसंधायदशसंख्यान्महाशितान्
अकरोत्पुष्कलोवीरोविरथंराजपुत्रकम् १३
चतुर्भिश्चतुरोवाहान्द्वाभ्यांसूतमपातयत्
एकेनध्वजमेतस्यद्वाभ्यांस्यंदनरक्षकौ १४
एकेनहृदिविव्याधराजपुत्रस्यवेगवान्
तदद्भुतंकर्मदृष्ट्वासर्वेवीराःप्रतोषिताः १५
सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः
अत्यंतंकोपमापन्नःस्यंदनंपरमाविशत् १६
सस्थित्वास्यंदनवरेहयरत्नेनभूषिते
शरासनंमहद्धृत्वासुदृढंगुणपूरितम् १७
उवाचपुष्कलंवीरंरुक्मांगदइदंवचः
महत्पराक्रमंकृत्वाक्वयास्यसिपरंतप १८
पश्यमेऽद्यपराक्रांतिंयद्बलेनविनिर्मिताम्
यत्नात्तिष्ठस्वभोवीरनयामित्वद्रथंनभः १९
इत्युक्त्वाशरमत्युग्रंदधारस्वशरासने
मंत्रयित्वाततश्चास्त्रंभ्रामकंपौष्कलेरथे २०
मुमोचनिशितंबाणंस्वर्णपंखैकशोभितम्
तेनबाणेननीतोऽस्यरथोयोजनमात्रकम् २१
धृतःकृच्छ्रेणसूतेनरथोबभ्रामभूतले
कृच्छ्रेणप्राप्यस्वस्थानंपुष्कलःपरमास्त्रवित् २२
जगादवचनंतंवैबाणंबिभ्रच्छरासने
स्वर्गंप्राप्नुहिवीराग्र्यसर्वदेवैश्चसेवितम् २३

त्वादृशाःपृथिवीयोग्यानभवंतिनृपोत्तम
शतक्रतुसभायोग्यास्तद्गच्छत्वंसुरालयम् २४
इत्युक्त्वासमुमोचास्त्रमाकाशप्रापकंमहत्
तेनबाणेनसरथोययौखमनुलोमतः २५
सर्वाल्लोँकानतिक्रामन्ययौसूर्यस्यमंडलम्
तज्ज्वालयारथोदग्धोहयसूतसमन्वितः २६
तत्करैर्दग्धभूयिष्ठकलेवरःसुदुःखितः
पपातचंद्रचूडंसधृत्वाहृद्यसुखार्दनम् २७
भूमौनिपतितस्तत्रकरदग्धकलेवरः
अत्यंतंदुःखमापन्नोमुमूर्च्छरणमंडले २८
तस्मिन्निपतितेभूमौमूर्च्छितेराजपुत्रके
हाहाकारोमहानासीत्तत्रसंग्राममूर्धनि २९
वैरिणोजयलक्ष्मींतेप्रापुःपुष्कलमुख्यकाः
पलायनपराजातावैरिणोहयरक्षकाः ३०
तदापुत्रस्यवैमूर्च्छांदृष्ट्वावीरमणिर्नृपः
प्रायात्समरमध्यस्थंपुष्कलंकोपपूरितः ३१
तदाभूमिश्चचालेयंसपर्वतवनोत्तमा
शूरावैहर्षमापन्नाःकातराभयपीडिताः ३२
चापंमहद्दधानःसइषुधीअक्षयावपि
रोषान्निःश्वासमामुंचन्नाह्वयामासवैरिणम् ३३

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेरुक्मांगद-
पराजयपुष्कलविजयोनामएकचत्वारिंशत्तमोऽध्यायः ४१

## द्विचत्वारिंशत्तमोऽध्यायः

शेषउवाच
आह्वयंतंमहासैन्यवारिधौपुष्कलंनृपम्
समालक्ष्यकपींद्रोऽपिहनूमांस्तमधावत १
लांगूलमुद्यम्यविशालदेहं
सरावमातत्यपयोदघोषम्
रणस्थितान्वीरवरान्कपींद्रो

जगामतंवीरमणिंनृपेन्द्रम् २
आयांतंतंहनूमतंवीक्ष्यपुष्कलउद्भटः
विलोकयामासदृशावैरिक्रोधसुशोणया ३
जगादतंहनूमंतंपुष्कलःपरमास्त्रवित्
मेघगंभीरयावाचानादयन्रणमंडलम् ४
पुष्कलउवाच
कथंत्वंसमरेयोद्धुमागतोसिमहाकपे
कियद्बलंस्वल्पमेतद्राज्ञोवीरमणेर्महत् ५
यत्रत्रिजगतीसर्वासंमुखेसमुपागता
तत्रत्वंलीलयायोद्धुंयातुमिच्छसिवानवा ६
कोयंराजावीरमणिःकियद्बलमथाल्पकम्
अत्रागमनमत्युग्रंतववीरनभाव्यते ७
रघुनाथकृपापांगादहंनिस्तीर्यदुस्तरम्
क्षणान्निर्यामिकीशेंद्रमाचित्तंकुरुसंगरे ८
त्वयाराक्षसपाथोधिस्तीर्णोरामकृपाव्रजात्
तथारामंसुसंस्मृत्यनिस्तरिष्यामिदुस्तरम् ९
येकेचिद्दुस्तरंप्राप्यरघुनाथंस्मरंतिच
तेषांदुःखोदधिःशुष्कोभविष्यतिनसंशयः १०
तस्माद्व्रजमहावीरशत्रुघ्नसविधेबलिन्
एषआयामिनिर्जित्यभूपंवीरमणिंक्षणात् ११
शेषउवाच
इतिधीरांसमाकर्ण्यवाणींपुष्कलभाषिताम्
जगादवचनंभूयःपुष्कलंपरवीरहा १२
हनुमानुवाच
पुत्रमासाहसंकार्षीर्भूपंवीरमणिंप्रति
एषदाताशरण्यश्चबलशौर्यसमन्वितः १३
त्वंबालःस्थविरोभूपोऽखिलशस्त्रास्त्रवित्तमः
अनेकेविजिताःसंख्येवीराःशौर्यसुशोभिनः १४
जानीहिपार्श्वेतस्यत्वंरक्षितारंसदाशिवम्
भक्त्यावशीकृतंस्थाणुंसोमंचैतत्पुरिस्थितम् १५

तस्मादहमनेनैवयोत्स्येभूपेनपुष्कल
अन्यान्वीरान्विजित्वात्वंकीर्तिमाप्नुहिपुष्कलाम् १६
पुष्कलउवाच
शिवोभक्त्यावशीकृत्यस्वपुरेस्थापितोऽमुना
परमस्याशुहृदयेनतिष्ठतिमहेश्वरः १७
सदाशिवोयमाराध्यपरमंस्थानमागतः
सरामोमन्मनस्त्यक्त्वानक्वापिपरिगच्छति १८
यत्ररामस्तत्रविश्वंसर्वंस्थास्नुचरिष्णुच
तस्मादहंजयिष्यामिरणेवीरमणिंनृपम् १९
व्रजत्वंसमरेयोद्धुमन्यान्मानिवरान्नृपान्
वीरसिंहमुखान्कीशमच्चिंतांमाकुरुप्रभो २०
वाचमित्थंसमाकर्ण्यहनूमान्धीरसेविताम्
जगामसमरेयोद्धुंवीरसिंहंनृपानुजम् २१
लक्ष्मीनिधिःसुतेनास्यशुभांगदसुसंज्ञिना
द्वैरथेनप्रयुयुधेमहाशस्त्रास्त्रवेदिना २२
बलमित्रेणसुमदःस्वप्रतापबलोर्जितः
योद्धुंसशस्त्रःसंग्रामंविचचारनृपात्मजः २३
आह्वयंतंनृपंदृष्ट्वाद्वैरथेयुद्धकोविदः
पुष्कलोरुक्मखचितेरथेतिष्ठन्ययौहितम् २४
राजातमागतंदृष्ट्वापुष्कलंयुद्धकोविदम्
उवाचनिर्भियावाण्यारणमध्येसुभाषितः २५
वीरमणिरुवाच
बालमायाहिमांक्रुद्धंसंग्रामेचंडकोपनम्
गच्छप्राणपरीप्सायैमायुद्धंकुरुमेसह २६
त्वादृशान्बालकान्भूपामादृशाःकृपयंतिहि
प्रहरंतिनचैतान्वैतस्माद्गच्छरणाद्बहिः २७
यावत्त्वंनमयादृष्टश्चक्षुर्भ्यांतावदुन्मनाः
सांप्रतंत्वांप्रहर्तुंनमनःसमभिकांक्षति २८
यत्त्वयामत्सुतोबाणैर्भिन्नोमूर्च्छीकृतःपुनः
सर्वंमयाक्षांतमद्यतवबालधियोमहत् २९

इतिवाक्यंसमाकर्ण्यपुष्कलोनिजगादतम्
पुष्कलउवाच
बालोऽहत्वंमहावृद्धःसर्वशस्त्रास्त्रकोविदः ३०
क्षत्रियाणांमतंचैवयेबलाधिक्यसंयुताः
तएववृद्धाभूपाग्र्यनवयोवृद्धतांगताः ३१
मयातेमूर्च्छितःपुत्रःसशौर्यबलदर्पितः
इदानींत्वामहंशस्त्रैःपातयिष्यामिसंगरे ३२
तस्मात्त्वंयत्नतस्तिष्ठराजन्संग्राममूर्धनि
रामभक्तंनमांकश्चिज्जयतींद्रपदेस्थितः ३३
इत्थंभाषितमाश्रुत्यपुष्कलस्यनृपाग्रणीः
जहासबालंसंवीक्ष्यकोपंचव्यदधात्पुनः ३४
तंवैकुपितमालक्ष्यभरतात्मजउन्मदः
जघानशरविंशत्याराजानंहृदितीक्ष्णया ३५
राजातानागतान्दृष्ट्वाबाणांस्तेनविमोचितान्
चिच्छेदपरमक्रुद्धःशरैस्तीक्ष्णैरनेकधा ३६
तद्बाणच्छेदनंदृष्ट्वाभारतिःपरवीरहा
चुकोपहृदयेऽत्यतंराजानंचत्रिभिःशरैः ३७
विव्याधभालेभूपालपुत्रःपुष्कलसंज्ञकः
तत्रलग्नाविरेजुस्तेत्रिकूटशिखराणिकिम् ३८
तैर्बाणैर्व्यथितोराजाजघाननवभिःशरैः
हृदयेपुष्कलंवीरंमहाकोपसमन्वितः
तैर्वत्सदन्तैर्बहुस्त्रंपीतंरामानुजाङ्गजम् ३९
सर्पाश्चाशीविषायद्वत्क्रुद्धास्तद्वपुषिस्थिताः
परमंकोपमापन्नःपुष्कलोभूमिपंपुनः ४०
बाणानांशतकेनाशुबिभेदशितपर्वणाम्
तैर्बाणैःकवचंभिन्नंकिरीटःसशिरस्त्रकः ४१
रथोधनुर्महत्सज्यंछिन्नंकोपपरिप्लवात्
क्षतजेनपरिप्लुष्टोबाणभिन्नकलेवरः ४२
अन्यंस्यंदनमारुह्यजगामभरतात्मजम्
धन्योसिवीररामस्यचरणाब्जमधुव्रत ४३

महत्कृतंकर्मतेऽद्ययदहंविरथीकृतः
प्राणान्रक्षस्वभोवीरसांप्रतंमयियुद्ध्यति ४४
सुलभानतवप्राणाःकालरूपेमयिस्थिते
इत्युक्त्वाव्यहनद्बाणैरसंख्यैःशस्त्रकोविदः ४५
भूमौदिशिचतद्बाणानान्यद्दृश्येततत्रह
अनेकेगजसाहस्राभिन्नाअश्वाःसमंततः ४६
रथारथियुतास्तेनछिन्नाभिन्नाद्विधाकृताः
शोणितौघासरित्तत्रप्रसुस्रावरणांगणे ४७
यत्रोन्मदाहिमातंगादृश्यंतेशैलशृंगवत्
केशाःशैवाललक्ष्यास्तेमुहुःप्राणिशिरःस्थिताः ४८
अनेकेपाणयश्छिन्नावीराणांमुद्रिकाश्रियः
दृश्यंतेअहिवत्तत्रचंदनादिकरूषिताः ४९
शिरांसिचभटाग्र्याणांकच्छपाभांवहंतिवै
मांसानिपंकायत्रासन्वीराणांमहतांततः ५०
एवंव्यतिकरेवृत्तेयोगिन्यःशतशोरणे
पपुःपात्रेणरुधिरंप्राणिनांरणपातिनाम् ५१
मांसानिबुभुजुस्तावैहर्षकौतुकसंयुताः
पीत्वातुशोणितंतत्रभक्षित्वामांसमुन्मदाः ५२
ननृतुर्जहसुःप्रोच्चैरुज्जगुःप्रधनांगणे
पिशाचास्तत्रसमरेप्राणिनांमस्तकानिवै ५३
धृत्वाकराभ्यांमत्तांगास्तालवद्वादनोद्यताः
शिवास्तत्रमहामांसंपतितानांरणांगणे ५४
भक्षित्वाव्यनदन्मत्ताःकातराणांभयप्रदाः
कातरास्त्राःसमापन्नागताःकुंजरकोटरे ५५
भक्षितायोगिनीभिस्तेपापिनांक्वापिनस्थितिः
एतत्कदनमालक्ष्यस्वसैन्यस्यरथाग्रणीः ५६
पुष्कलोऽपिचकारात्रकदनंरणमंडले
भिद्यंतेगजशीर्षाणिपतंतिमौक्तिकानितु ५७
दृश्यतेलोमभिःपूर्णाताम्रपर्णीवतन्नदी
पुष्कलप्रहिताबाणानृणामंगेषुसंगताः

कुर्वंतिप्राणविच्छेदंवीराणामपिसर्वतः ५८
सर्वेरुधिरसिक्तांगाःसर्वेच्छिन्ननिजांगकाः
दृश्यंतेकिंशुकायद्वत्सुभटाःप्रधनांगणे ५९
एतस्मिन्समयेक्रुद्धःसमाभाष्यमहीपतिम्
जघानबहुबाणैस्तंरोषपूरपरिप्लुतः ६०
तद्बाणवेधभिन्नांगोविशीर्णकवचोनृपः
महाबलंतंमन्वानःप्राहरच्छरकोटिभिः ६१
तैर्बाणैःकवचान्मुक्तंसुस्रावबहुशोणितम्
वपुर्बभूवरुचिरंशरपंजरगोचरम् ६२
शरपंजरमध्यस्थोविह्वलीकृतमानसः
शरान्नेतुंचसंधातुंनक्षमःसचभारतिः ६३
रामंस्मृत्वाधनुर्धृत्वाकरेसज्जंमहद्दृढम्
मुमोचबाणान्निशितान्वैरिवृंदनिवारणान् ६४
तैर्बाणैःशरजालंतद्विधूयमुनिपुंगव
शंखंप्रध्मायसमरेजगादगतभीर्नृपम् ६५
पुष्कलउवाच
त्वयाकृतंमहत्कर्मयन्मांबाणस्यपंजरे
गोचरंकृतवान्वीरवीरतापनमुद्भटम् ६६
वृद्धत्वान्ममान्योसिसांप्रतंरणमंडले
पश्यमेऽद्यपराक्रांतंराजन्वीरमरणेमहत् ६७
बाणत्रयेणभोवीरमूर्च्छितंकरवैनहि
तर्हिप्रतिज्ञांशृणुवैसर्ववीरविमोहिनीम् ६८
गंगांप्राप्यापियोवैतांनिंदित्वापापहारिणीम्
नमज्जतिमहापापोमहामूढविचेष्टितः ६९
तस्यपापंममैवास्तुचेन्नत्वांरणमंडले
पातयेमूर्च्छयावीरसन्नद्धोभवभूपते ७०
इतिवाक्यंसमाकर्ण्यपुष्कलस्यनृपोत्तमः
चुकोपभृशमुद्विग्नःसंदधेनिशिताञ्छरान् ७१
तेशराहृदयंभित्त्वागतास्तेभारतेर्महत्
पेतुःक्षितावधोयद्वद्रामभक्तिपराङ्मुखाः ७२

ततःशरंमुमोचास्मैनिशितंवह्निसप्रभम्
लक्षीकृत्यमहद्वक्षःकपाटतटविस्तृतम् ७३
सबाणोभूमिपतिनाद्विधाछिन्नःशरेणहि
पपातरथमध्येसरविमंडलवज्ज्वलन् ७४
अपरंबाणमाधत्तमातृभक्तिभवंततः
निधायपुरायंसोऽप्येषचिच्छेदमहतापुनः ७५
तदाखिन्नःसहृदयेकिंकर्तव्यमितिस्मरन्
रामंहृदिनिजार्तिघ्नंमुमोचपरमास्त्रवित् ७६
सबाणस्तस्यहृदयेलग्नआशीविषोपमः
मूर्च्छामप्रापयत्तंवैज्वलन्सूर्यसमप्रभः ७७
ततोहाहाकृतंसर्वंपलायनपरायणम्
राज्ञिसंमूर्च्छितेजातेपुष्कलोजयमाप्तवान् ७८

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेवीरमणेः
पराभवोनामद्विचत्वारिंशत्तमोऽध्यायः ४२

त्रिचत्वारिंशत्तमोऽध्यायः

शेषउवाच
हनूमान्वीरसिंहंतुसमागत्याब्रवीद्वचः
तिष्ठयासिकुतोवीरजेष्यामित्वांक्षणादिह १
एवमुक्तंसमाकरार्यप्लवगस्यवचोमहत्
कोपपूरपरिप्लुष्टःकार्मुकंजलदस्वनम् २
विनद्यघोरान्निशितान्बाणान्मुंचन्बभौरणे
आषाढेजलदस्येवधारासारेमनोहरः ३
तान्दृष्ट्वानिशितान्बाणान्स्वदेहेसुविलग्नकान्
चुकोपहृदयेऽत्यतंहनूमानंजनीसुतः ४
मुष्टिनाताडयामासहृदयेवज्रसारिणा
समुष्टिनाहतोवीरःपपातधरणीतले ५
मूर्च्छितंतंसमालोक्यपितृव्यंसशुभांगदः
रुक्मांगदोऽपिसंमूर्च्छांत्यक्त्वागाद्रणमंडलम् ६
बाणान्समभिवर्षंतौमेघाविवमहास्वनौ

कुर्वंतौकदनंघोरंप्लवंगंप्रतिजग्मतुः ७
तौदृष्ट्वासमरेवीरौसमायातौकपीश्वरः
लांगूलेनचसंवेष्ट्यसरथौचापधारकौ ८
स्फोटयामसभूदेशेतत्क्षणान्मूर्च्छितावुभौ
निश्चेष्टौसमभूतांतौरुधिरारक्तदेहकौ ९
बलमित्रश्चिरंयुद्धंविधायसुमदेनहि
मूर्च्छामप्रापयत्तंवैबाणैःसुशितपर्वभिः १०
पुष्कलेनक्षणान्नीतोमूर्च्छांचैतन्यवर्जिताम्
जयमाप्तंतुकटकंशत्रुघ्नस्यभटार्दनम् ११
एतस्मिन्समयेसांबःस्यंदनंवरमास्थितः
विस्फारयन्धनुर्दिव्यमुपाधावद्भटानिमान् १२
जटाजूटांतरगतांचंद्ररेखांवहन्महान्
सर्पाभूषांमनःस्पर्शांदधदाजगवंधनुः १३
मूर्च्छितान्स्वजनान्दृष्ट्वाभक्तार्तिघ्नोमहेश्वरः
योद्धुंप्रायान्महासैन्यैःशत्रुघ्नस्यभटानिमान् १४
सगणःसपरीवारःकंपयन्पृथिवीतलम्
भक्तरक्षार्थमागच्छंस्त्रिपुरंतुपुरायथा १५
कोपाच्छोणतरेनेत्रेवहन्प्रलयकारकः
पश्यन्वीरान्बहुमतीन्पिनाकीदेववंदितः १६
तमागतंमहेशानंवीक्ष्यरामानुजोबली
जगामसमरेयोद्धुंसर्वदेवशिरोमणिम् १७
अथागतंतुशत्रुघ्नंरुद्रोवीक्ष्यपिनाकधृक्
उवाचपरमापन्नःकोपंसगुणचापधृक् १८
पुष्कलेनमहत्कर्मकृतंरामांघ्रिसेविना
मद्भक्तंयोरणेहत्वागतःसमरमंडलम् १९
अद्यक्वास्तिपरोवीरःपुष्कलःपरमास्त्रवित्
तंहत्वासुखमाप्स्यामिसमरेभक्तपीडनम् २०
शेषउवाच
इत्युक्त्वावीरभद्रंसप्रेषयामासपुष्कलम्
याहित्वंसमरेयोद्धुंपुष्कलंसेवकार्दनम् २१

नंदिनंप्रेषयामासहनूमंतंमहाबलम्
कुशध्वजंप्रचंडंतुभृंगिणंचसुबाहुकम् २२
सुमदंचंडनामानंगणंस्वीयंसमादिशत्
पुष्कलस्तुसमायांतंवीरभद्रंमहागणम् २३
महारुद्रस्यसंवीक्ष्ययोद्धुंप्रायान्महामनाः
पुष्कलःपंचभिर्बाणैस्ताडयामाससंयुगे २४
तैर्बाणैःक्षतगात्रस्तुत्रिशूलंससमादिशत्
सत्रिशूलंक्षणाच्छित्त्वाव्यगर्जतमहाबलः २५
छिन्नंस्वीयंत्रिशूलंवैवीक्ष्यरुद्रानुगोबली
खट्वांगेनजघानाशुमस्तकेभारतिंद्विज २६
खट्वांगाभिहतःसोऽथमुमूर्च्छक्षणमुद्भटः
विहायमूर्च्छांसद्वीरःपुष्कलःपरमास्त्रवित् २७
शरैश्चिच्छेदखट्वांगंकरस्थंतस्यतत्क्षणात्
वीरभद्रःस्वकेच्छिन्नेखट्वांगेकरसंस्थिते २८
परमक्रोधमापन्नोबभंजरथिनोरथम्
भंक्त्वारथंतुवीरस्यपदातिंचविधायसः २९
बाहुयुद्धेनयुयुधेपुष्कलेनमहात्मना
सपुष्कलोरथंत्यक्त्वाचूर्णितंतेनवेगतः ३०
मुष्टिनाताडयामासवीरभद्रंमहाबलः
अन्योन्यंमुष्टिभिर्घ्नंतावूरुभिर्जानुभिस्तथा ३१
परस्परवधोद्युक्तौपरस्परजयैषिणौ
एवंचतुर्दिनमभूद्रात्रिंदिवमपीशयोः ३२
नकोपितत्रहीयेतनजीयेतमहाबलः
पंचमेतुदिनेवृत्तेवीरभद्रोमहाबलः ३३
गृहीत्वानभउड्डीनोमहावीरंतुपुष्कलम्
तत्रयुद्धंतयोरासीद्देवासुरविमोहनम् ३४
मुष्टिनाचरणाघातैर्बाहुभिःसुखुरैर्महत्
तदात्यंतंप्रकुपितःपुष्कलोवीरभद्रकम् ३५
गृहीत्वाकंठदेशेतुताडयामासभूतले
तत्प्रहारेणव्यथितोवीरभद्रोमहाबलः ३६

गृहीत्वापुष्कलंपादेजघानास्फालयन्मुहुः
ताडयित्वामहीदेशेपुष्कलंसुमहाबलः ३७
त्रिशूलेनचकर्ताशुशिरोज्वलितकुंडलम्
जगर्जपुष्कलंहत्वावीरभद्रोमहाबलः ३८
गर्जतातेनशार्वेणप्रापितास्त्रासमुद्भटाः
हाहाकारोमहानासीत्पुष्कलेपतितेरणे ३९
त्रासंप्रापुर्जनाःसर्वेरणमध्येसुकोविदाः
तेशशंशुश्चशत्रुघ्नंपुष्कलंपतितंरणे ४०
निहतंवीरभद्रेणमहेश्वरगणेनवै
इत्याश्रुत्यमहावीरःपुष्कलस्यवधंतदा ४१
दुःखंप्राप्तोरणेऽत्यतंकंपमानःशुचामहान्
तंदुःखितंचशत्रुघ्नंज्ञात्वारुद्रोऽब्रवीद्वचः ४२
शत्रुघ्नंसमरेवीरंशोचंतंपुष्कलेहते
रेशत्रुघ्नरणेशोकंमाकृथाःसुमहाबल ४३
वीराणांरणमध्येतुपातनंकीर्तयेस्मृतम्
धन्योवीरःपुष्कलाख्योयश्चवैदिनपंचकम् ४४
युयुधेवीरभद्रेणमहाप्रलयकारिणा
येनक्षणाद्विनिहतोदक्षोमदपमानकृत् ४५
क्षणाद्विनिहतायेनदैत्यास्त्रिपुरसैनिकाः
तस्माद्युद्ध्यस्वराजेंद्रशोकंत्यक्त्वामहाबल ४६
यत्नात्तिष्ठाद्यवीराग्र्यमयियोद्धरिसंस्थिते
शोकंसंत्यज्यशत्रुघ्नोवीरश्चुक्रोधशंकरम् ४७
आत्तसज्जधनुर्बाणैःप्रचच्छादमहेश्वरम्
तेबाणाःसुरशीर्षण्यवपुषंक्षतविक्षतम् ४८
अकुर्वतमहच्चित्रंभक्तरक्षार्थमागतम्
तेबाणाःशंकरस्यापिबाणानभसिसंस्थिताः ४९
व्याप्यैतत्सकलंविश्वंचित्रकारिमुनेरपि
तद्बाणयोर्युद्धबलंवीक्ष्यसर्वत्रमेनिरे ५०
प्रलयंलोकसंहारकारकंसर्वमोहकम्
आकाशेतुविमानानिसंश्रित्यस्वपुरस्थिताः ५१

विलोकयितुमागत्यप्रशंसंतितयोर्भृशम्
अयंलोकत्रयस्यास्यप्रलयोत्पत्तिकारकः ५२
असावपिमहाराजरामचंद्रस्यचानुजः
किमिदंभविताकोवाजेष्यतिक्षितिमंडले ५३
पराजयंवाकोवीरःप्राप्स्यतेरणमूर्धनि
एवमेकादशाहानिवृत्तंयुद्धंपरस्परम् ५४
द्वादशेदिवसेप्राप्तेमुमोचास्त्रंनराधिपः
ब्रह्मसंज्ञंमहादेवंहंतुंक्रोधसमन्वितः ५५
सविज्ञायमहास्त्रंतन्मुक्तंशत्रुघ्नवैरिणा
हसन्नप्यपिबत्तेनमुक्तंब्रह्मशिरोमहत् ५६
अत्यंतंविस्मयंप्राप्यकिंकर्तव्यमतःपरम्
एवंविचारयुक्तस्यहृदयेज्वलनोपमम् ५७
शरंवैनिचखानाशुदेवदेवशिरोमणिः
तेनबाणेनशत्रुघ्नोमूर्च्छितोरणमंडले ५८
हाहाभूतमभूत्सर्वंकटकंभटसेवितम्
वीराःसर्वेरुद्रगणैःपातिताःपृथिवीतले ५९
सुबाहुसुमदोन्मुख्याःस्वबाहुबलदर्पिताः
पतितंमूर्च्छयावीक्ष्यशत्रुघ्नंशरपीडितम् ६०
पुष्कलंतुरथेस्थाप्यसेवकैःपरिरक्षितुम्
हनूमानागतोयोद्धुंशिवंसंहारकारकम् ६१
श्रीरामस्मरणंयोधान्स्वीयान्विप्रप्रहर्षितान्
प्रकुर्वन्रोषितस्तीव्रंलांगूलंचप्रकंपयन् ६२

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेपुष्कल-
शत्रुघ्नपराजयोनामत्रिचत्वारिंशत्तमोऽध्यायः ४३

## चतुश्चत्वारिंशत्तमोऽध्यायः

शेषउवाच
आगत्यसविधेरुद्रंसमरांगणमूर्धनि
जगादहनुमान्वीरःसंजिहीर्षुःसुराधिपम् १
हनूमानुवाच

त्वंयदाचरसेरुद्रधर्मस्यप्रतिकूलनम्
तस्मात्त्वांशास्तुमिच्छामिरामभक्तवधोद्यतम् २
मयापुराश्रुतंदेवऋषिभिर्बहुधोदितम्
रघुनाथपदस्मारीनित्यंरुद्रःपिनाकभृत् ३
तत्सर्वंतुमृषाजातंशत्रुघ्नंप्रतियुध्यतः
पुष्कलोमेहतःशूरःशत्रुघ्नोऽपिविमूर्च्छितः ४
तस्मात्त्वांपातयाम्यद्यत्रैलोक्यप्रलयोद्यतम्
यत्नात्तिष्ठस्वभोःशर्वरामभक्तिपराङ्मुखः ५
शेषउवाच
इत्युक्तवंतंप्लवगंप्रोवाचसमहेश्वरः
धन्योऽसिवीरवर्यस्त्वंभवान्वदतिनोमृषा ६
मत्स्वामीरामचंद्रोऽयसुरासुरनमस्कृतः
तदश्वमानयामासशुत्रुघ्नःपरवीरहा ७
तद्रक्षार्थंसमायातस्तद्भक्त्यातुवशीकृतः
यथाकथंचिद्भक्तोऽसौरक्ष्यःस्वात्माइतिस्थितिः ८
रघुनाथःकृपांकृत्वाविलोकयतुनिस्त्रपम्
मांस्वभक्तसुदुःखेनकिंचित्कोपंदधन्महान् ९
शेषउवाच
एवंवदतिचंडीशेहनूमान्कुपितोभृशम्
शिलामादायमहतींताडयामासतद्रथम् १०
शिलयाताडितस्तस्यरथःशकलतांगतः
ससूतःसहयःकेतुपताकाभिःसमन्वितः ११
नभःस्थादेवताःसर्वाःप्रशशंसुःकपीश्वरम्
धन्योसिप्लवगाधीशमहत्कर्मत्वयाकृतम् १२
श्रीशिवंविरथंदृष्ट्वानंदीतंसमुपाद्रवत्
उवाचश्रीमहादेवंमत्पृष्ठंगम्यतामिति १३
वृषस्थितंतुभूतेशंहनूमान्कुपितोभृशम्
शिलामुत्पाट्यतरसाप्राहनद्धृदयेतदा १४
तदाहतोभूतपतिःशूलंतीक्ष्णंसमाददे
जाज्वल्यमानंत्रिशिखंवह्निज्वालासमप्रभम् १५

ग्रायातंतन्महद्दृष्ट्वाशूलंप्रज्वलनप्रभम्
हस्तेगृहीत्वातरसाबभंजतिलशः त्तरणात् १६
भग्नेत्रिशूलेतरसाकपीन्द्रेरण त्तरणाच्छिवः
शक्तिंकरेसमाधत्तसर्वलोहविनिर्मिताम् १७
साशक्तिःशिवनिर्मुक्ताहृदयेतस्यधीमतः
लग्नात्तरणादभूत्तत्रविक्लवःप्लवगाधिपः १८
त्तरणाच्चतद्व्यथांतीर्त्वागृहीत्वावृत्तमुल्बरणम्
ताडयामासहृदयेमहाव्यालविभूषिते १९
ताडितास्तेनवीरेरणफरणीन्द्रास्त्रासमागताः
इतस्ततस्तेतंमुक्त्वागताःपातालमुज्ञवाः २०
शिवस्तस्मिन्नगेमुक्तेवत्तसिस्वेनिरीत्त्यच
कुपितोव्यदधाद्घोरंमुसलंकरयुग्मके २१
हतोसिगच्छसंग्रामात्पलाय्यप्लवगाधम
एषतेप्राणहंताहंमुसलेनत्तरणादिह २२
मुसलंवीत्त्यनिर्मुक्तंशिवेनकुपितेनवै
कीशस्तद्वंचयामासमहावेगाद्धरिंस्मरन् २३
मुसलंतत्पपाताधःशिवमुक्तंमहायसम्
विदार्यपृथिवींसर्वांजगामचरसातलम् २४
तदाप्रकुपितोऽत्यतंहनूमान्रामसेवकः
गृहीत्वापर्वतंहस्तेताडयामासवत्तसि २५
सयावत्पर्वतंछेत्तुंमतिंचक्रेसतीपतिः
तावद्धतःकपींद्रेणशालेनबहुशाखिना २६
तमपिच्छेत्तुमुद्युक्तोयावत्तावच्छिलाहतः
शिलास्ताभेदितुंस्वांतंचकारमृडउद्यतः २७
तावद्वृष्टिंचकारायंशिलाभिर्नगपर्वतैः
लांगूलेनचसंवेष्ट्यताडयत्येषभूतपम् २८
शिलाभिःपर्वतैर्वृत्तैःपुच्छास्फोटेनभूरिशः
नंदीप्राप्तोमहात्रासंचंद्रोऽपिशकलीकृतः २९
ग्रत्यंतंविह्वलोजातोमहेशानःप्रकोपनः
त्तरणेत्तरणेप्रहारेणविह्वलंकुर्वतंभृशम् ३०

जगादप्लवगाधीशंधन्योसिरघुपानुग
महत्कर्मकृतंतेऽद्ययत्तेहंसुप्रतोषितः ३१
नदानेननयज्ञेननाल्पेनतपसाह्यहम्
सुलभोऽस्मिमहावेगतस्मात्प्रार्थयमेवरम् ३२
शेषउवाच
एवंब्रुवंतंतंदृष्ट्वाहनूमान्निजगादतम्
प्रहसन्निर्भियावारायामहेशानंसुतोषितम् ३३
हनूमानुवाच
रघुनाथप्रसादेनसर्वंमेऽस्तिमहेश्वर
तथापियाचेहिवरंत्वत्तःसमरतोषितात् ३४
एषपुष्कलसंज्ञोनःसमरेपतितोहतः
तथैवरामावरजःशत्रुघ्नोमूर्च्छितोरणे ३५
अन्येचवीराबहवःपतिताःशरविक्षताः
मूर्च्छिताःपतिताःकेचित्तान्रक्षस्वगणैःसह ३६
यथाचैतान्महाभूतावेतालाश्चपिशाचकाः
नहरंतिनखादंतिश्वशृगालादयस्तथा ३७
एतेषांवपुषोभेदोनभवेत्त्वंतथाचर
यावदिंद्रगणंजित्वानयामिद्रोणपर्वतम् ३८
तत्रस्थाओषधीर्वापिनीत्वासंस्थापितान्भटान्
जीवयामिबलात्सर्वांस्तावत्त्वंरक्षसर्वशः ३९
एषगच्छामितंनेतुंद्रोणंपर्वतसत्तमम्
यस्मिन्वसंत्योषधयःप्राणिसंजीवनंकराः ४०
एतद्वचःसमाकर्ण्यतथेतिनिजगादतम्
याहिशीघ्रंनगंतंतुरक्षामित्वद्भटान्मृतान् ४१
तच्छ्रुत्वावाक्यमीशस्यजगामद्रोणपर्वतम्
द्वीपान्सर्वानतिक्रम्यजगामक्षीरसागरम् ४२
अत्रतुस्वगणैश्चायंरक्षतिस्मशिवोमहान्
श्मशानंतद्गणैःस्वीयैर्महाबलपराक्रमैः ४३
हनूमान्द्रोणमासाद्यद्रोणंनाममहागिरिम्
लांगूलेतंनिधायाशुप्रतस्थेरणमंडलम् ४४

तंनेतुमुद्यतेविप्रचकंपेसचपर्वतः
कंपमानंतुतंदृष्ट्वातत्पालादेवतागणाः ४५
हाहेतिकृत्वाप्रोचुस्तेकिमिदंभवितागिरौ
कोह्येनंनयतेवीरोमहाबलपराक्रमः ४६
एवंकृत्वासुराःसर्वेसंहताददृशुःकपिम्
मुंचैनमितितंप्रोच्यजघ्नुःशस्त्रास्त्रकोटिभिः ४७
तान्सर्वान्निघ्नतोदृष्ट्वाहनूमान्कुपितोभृशम्
जघानतान्चणाद्वीरःशक्रःसर्वासुरान्यथा ४८
केचित्पदाहतास्तत्रकेचित्करविमर्दिताः
लांगूलेनहताःकेचित्केचिच्छृंगेणचाहताः ४९
सर्वेतेनाशमापन्नाःचणात्कीशेनताडिताः
केचिन्निपतिताभूमौरुधिरेणपरिप्लुताः ५०
केचित्कीशभयात्त्रस्ताजग्मुःशक्रंसुराधिपम्
चतेनचपरिप्लुष्टारुधिरचतदेहिनः ५१
तान्दृष्ट्वाभयसंविग्नान्रुधिरेणपरिप्लुतान्
सुराञ्जगादविमनाःशक्रःसर्वसुरोत्तमः ५२
कथंयूयंभयत्रस्ताःकथंरुधिरविप्लुताः
केनदैत्येननिहताराचसेनाधमेनवा ५३
सर्वंशंसतमेतथ्यंयथाज्ञात्वाव्रजामितम्
निहत्यबद्ध्वाचायामियुष्मद्घातकमुन्मदम् ५४
इतिवाक्यंसमाकर्ण्यतुरासाहंसुरोत्तमाः
जगदुर्दीनयावाचासुरासुरनमस्कृतम् ५५
देवाऊचुः
इहागत्यनजानीमःकश्चिद्वानररूपधृक्
नेतुंद्रोणंसमुद्युक्तोलांगूलेवेष्टयतंगिरिम् ५६
गंतुंकृतमतिस्तावद्वयंसर्वेसुसंहताः
युद्धंचक्रुःसुसंनद्धाःसर्वशस्त्रास्त्रवर्षिणः ५७
तेनसर्वेवयंयुद्धेनिर्जिताबलशालिना
अनेकेनिहतास्तत्रभूमौपेतुःसुरोत्तमाः ५८
वयंतुबहुभिःपुण्यैर्जीविताइहचागताः

शोणितेनसुसिक्तांगाः क्षतपीडासमन्विताः ५९
एतद्वाक्यंसमाकर्ण्यसुराणांसपुरंदरः
आदिदेशसुरान्सर्वान्महाबलसमन्वितान् ६०
यातमहाद्रोणगिरिंकपिंबद्धुंमहाबलम्
बद्ध्वानयतयूयंवैसुराणांरणपातकम् ६१
इत्याज्ञप्तायपुस्तेवैद्रोणंपर्वतसत्तमम्
यत्रास्तेबलवान्वीरोहनूमान्कपिसत्तमः ६२
गत्वातेप्राहरन्सर्वेहनूमंतंमहाबलम्
हनूमतातेनिहतामुष्टिभिःकरताडनैः ६३
पतितास्तेक्षणात्तत्ररुधिरक्षतविग्रहाः
अन्येपलायनपराजग्मुस्तेत्रिदिवेश्वरम् ६४
तच्छ्रुत्वाकुपितःशक्रःसर्वानमरसत्तमान्
आदिदेशमहावीरंवानरेंद्रंसुरोत्तमः ६५
तदाज्ञप्तायपुस्तेवैयत्रकीशेश्वरोबली
तान्सर्वानागतान्दृष्ट्वाजगादकपिसत्तमः ६६
मायांतुवीराःसमरेसंहर्तारंहिमांबलात्
नेष्यामियुष्मानधुनासंयमिन्याःपुरोंऽतिके ६७
इत्युक्ताअपितेसर्वेसन्नद्धाःप्राहरन्कपिम्
शस्त्रास्त्रैर्बहुधामुक्तैर्महाबलसमन्विताः ६८
केचिच्छूलैःपरशुभिःकेचित्खड्गैश्चपट्टिशैः
मुसलैःशक्तिभिःकेचित्क्रोधेनकलुषीकृताः ६९
सआहतोऽमरवरैर्विविधैरायुधैर्बली
शिलाभिस्ताञ्जघानाशुसर्वानमरसत्तमान् ७०
केचित्पलाय्यआहुस्तेगताःशक्रसमीपकम्
तदुक्तंवाक्यमाकर्ण्यभयंप्रापसुराधिपः ७१
बृहस्पतिंसुराध्यक्षंमंत्रिणंस्वर्गवासिनाम्
पप्रच्छसविधेगत्वानत्वासुरगुरुंवरम् ७२
इंद्रउवाच
कोऽसौयोवानरोद्रोणंनेतुंस्वामिन्समागतः
येनमेनिहतावीराअमराःशस्त्रधारिणः ७३

शेषउवाच
एतच्छ्रुत्वातुतद्वाक्यमुक्तमांगिरसोमहान्
जगादभयसंविग्नंतुरासाहंसुराधिपम् ७४
बृहस्पतिरुवाच
योरावणमहन्संख्येकुंभकर्णमदीदहत्
येनतेवैरिणःसर्वेहतास्तस्यैवसेवकः ७५
येनलंकासत्रिकूटानिर्दग्धापुच्छवह्निना
अक्षश्चनिहतोयेनहनूमंतमवेहितम् ७६
तेनसर्वेविनिहताद्रोणार्थमयमुद्यतः
हयमेधंमहाराजःकरोतिबलिसत्तमः ७७
तस्याश्वंशिवभक्तस्तुनृपोवीरमणिर्महान्
जहारतत्रसमभूद्रणंसुरविमोहनम् ७८
शिवेननिहताःसंख्येवीरारामस्यभूरिशः
तान्वैजीवयितुंद्रोणंनेष्यत्येवमहाबलः ७९
नायंवर्षशतैर्जेयोभवताबलसंयुतः
तस्मात्प्रसादयकपिंदेहितत्रत्यमौषधम् ८०
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेद्रोणगिरौ
देवानांपराजयोनामचतुश्चत्वारिंशत्तमोऽध्यायः ४४

## पंचचत्वारिंशत्तमोऽध्यायः

शेषउवाच
गुरुभाषितमाकर्ण्यवृषपर्वरिपुःस्वराट्
ज्ञात्वारामस्यकार्यार्थमागतंपवनात्मजम् १
भयंतत्याजमनसिवानरात्समुपस्थितम्
जहर्षचित्तेचभृशंवाचस्पतिमुवाचह २
इंद्रउवाच
कथंकार्यंसुराधीशद्रोणोऽयनीयतेयदि
देवानांजीवनंभूयःकथंस्यादितिमेवद ३
इदानींपवनोद्भूतंप्रसादययथातथम्
रामःप्रीतिंपरांयातिदेवानांचसुखंभवेत् ४

देवाधिपस्यवचनंश्रुत्वावाचस्पतिस्तदा
शक्रंतुपुरतःकृत्वासर्वदेवैःपरीवृतम् ५
जगामतत्रयत्रास्तेहनूमान्निर्भयःकपिः
गर्जतिप्रसभंजित्वासुरान्सर्वान्सुखासिनः ६
तेगत्वासन्निधौतस्यबृहस्पतिपुरोगमाः
पेतुस्तेचरणौनत्वासमीरतनुजस्यहि ७
बृहस्पतिश्चतंवीरंजगादप्रेरितोऽमुना
सुराधीशेनलोकस्यगुरुणावदतांवरः ८
अजानद्भिःकृतंकर्मदेवैस्तवपराक्रमम्
श्रीरामचरणस्यत्वंसेवकोऽसिमहामते ९
किमर्थमयमारंभःकथमत्रसमागमः
तत्करिष्यामहेसर्वेसन्नतास्तवभाषितम् १०
रोषंत्यक्त्वाकृपांकृत्वादेवाधीशंविलोकय
पवनात्मजदैत्यानांभयंकरवपुर्दधत् ११
शेषउवाच
इत्थंभाषितमाकर्ण्यदेवानांसगुरोर्वचः
उवाचदेवान्सकलान्गुरुंचैवमहयशाः १२
राज्ञोवीरमणेःसंख्येहताःशर्वेणभूरिशः
भटास्तान्वैजीवयितुंद्रोणंनेष्यामिपर्वतम् १३
तंयेनिवारयिष्यंतिस्ववीर्यबलदर्पिताः
तान्नेष्यामिक्षणादेवयमस्यसदनंप्रति १४
तस्माद्वदतमेयूयंद्रोणंवाथतदौषधम्
येनसंजीवयिष्यामिमृतान्वीरान्रणांगणे १५
शेषउवाच
इतिवाक्यंसमाकर्ण्यवायुसूनोर्महात्मनः
तेसर्वेप्रणतिंगत्वाददुःसंजीवनौषधम् १६
तेप्रहृष्टाभयंत्यक्त्वासुराःस्वर्गौकसःस्वयम्
ययुःसुरपतिंकृत्वापुरःसौख्यसमन्विताः १७
हनुमान्भेषजंतत्तुसमादायागतोरणम्
स्तुतःसर्वैःसुरगणैर्महाकर्मसमुत्सुकैः १८

तमागतंहनूमंतंवीन्दयसर्वेऽपिवैरिणः
साधुसाधुप्रशंसंतमद्भुतंमेनिरेकपिम् १९
कपिःसमागत्यमहामुदायुतः
पुरोभटंपुष्कलमागतंमृतम्
शिवेनसंरन्नितमुग्रमंडले
श्रीरामचित्तंसविधेजगामह २०
सुमतिंचसमाहूयमंत्रिणंमहतांमतम्
उवाचजीवयाम्यद्यसर्वान्वीरान्रणेमृतान् २१
एवमुक्त्वाभेषजंतत्पुष्कलस्यमहोरसि
शिरःकायेनसंधायजगादवचनंशुभम् २२
यद्यहंमनसावाचाकर्मणाराघवंपतिम्
जानामितर्हिएतेनभेषजेनाशुजीवतु २३
इतिवाक्यंयदावक्तितावत्पुष्कलउत्थितः
रणांगणेऽदशद्रोषाद्दंतान्वीरशिरोमणिः २४
क्वगतोवीरभद्रोऽसौमांसंमूच्छ्र्यरणांगणे
सद्योऽहपातयाम्येनंक्वास्तिमेधनुरुत्तमम् २५
इतितंभाषमाणंवैप्राहवीरंकपींद्रकः
धन्योऽसिवीरयद्ब्रूयोवदस्येनंरणांगणे २६
त्वंहतोवीरभद्रेणरघुनाथप्रसादतः
पुनःसंजीवितोऽस्येहिशत्रुघ्नंयाममूर्च्छितम् २७
इत्युक्त्वाप्रययौतत्रसंग्रामवरमूर्धनि
श्वसन्नास्तेसशत्रुघ्नःशिवबाणप्रपीडितः २८
तत्रगत्वासमीपंतच्छत्रुघ्नस्यमहात्मनः
निधायभेषजंतस्यवन्नसिश्वासमागते २९
उवाचहनुमांस्तंवैजीवशत्रुघ्नसत्तम
मूर्च्छितोऽसिरणेकस्मान्महाबलपराक्रम ३०
यद्यहंब्रह्मचर्यंचजन्मपर्यंतमुद्यतः
पालयामितदावीरःशत्रुघ्नोजीवतुन्नणात् ३१
उक्तमात्रेणतेनेदंजीवितःन्नणमात्रतः
क्वशिवःक्वशिवोयातोविहायरणमंडलम् ३२

अनेकेनिहताःसंख्येश्रीरुद्रेणपिनाकिना
तेसर्वेजीवितावीराःकपीन्द्रेणमहात्मना ३३
तदासर्वेसुसन्नद्धारोषपूरितमानसाः
स्वेस्वेरथेस्थिताःशत्रून्प्रययुःक्षतविग्रहाः ३४
पुष्कलोवीरभद्रंतुचंडंचैवकुशध्वजः
नंदिनंहनुमान्वीरःशत्रुघ्नःसंगरेशिवम् ३५
धनुर्विस्फारयंतंतंशत्रुघ्नंबलिनांवरम्
संग्रामेशिवमाहूयतिष्ठंतंप्रययौनृपः ३६
राजावीरमणिर्वीरःशत्रुघ्नःसमरेबली
अन्योन्यंचक्रतुर्युद्धंमुनिविस्मयकारकम् ३७
राज्ञाचवीरमणिनारथाभग्नाःशताधिकाः
शत्रुघ्नस्यनरेंद्रस्यतिलशःक्षणतोद्विज ३८
तदाप्रकुपितोऽत्यतंशत्रुघ्नोरणमंडले
आग्नेयास्त्रंमुमोचामुंदग्धुंसैन्यसमन्वितम् ३९
दाहकंतन्महद्दृष्ट्वामहास्त्रंशत्रुमोचितम्
अत्यंतंकुपितोराजावारुणास्त्रंसमाददे ४०
वारुणास्त्रेणशीतार्तंवीक्ष्यरामानुजोबली
वायव्यास्त्रंमुमोचास्मैतेनवायुर्महानभूत् ४१
वायुनासंहतामेघाययुस्तेसर्वतोदिशम्
इतस्ततोगताःसर्वेसैन्यंतत्सुखितंबभौ ४२
सैन्येपवनपीडार्तेनृपोवीरमतिर्महान्
पर्वतास्त्रंरिपूद्धारिजग्राहचशरासने ४३
पर्वतैःस्तंभितोवायुर्नचासर्पतसंगरे
तद्वीक्ष्यरामावरजोवज्रास्त्रंतुसमाददे ४४
वज्रास्त्रेणहताःसर्वेनगास्तुतिलशःकृताः
चूर्णतांप्रापुरेतस्मिन्रणेवीरवरार्चिते ४५
वज्रास्त्रेणविदीर्णांगावीराःशोणितशोभिताः
बभूवुःसमरप्रांतेचित्रंसमभवद्रणम् ४६
तदाप्रकुपितोऽत्यतंराजावीरमणिर्महान्
ब्रह्मास्त्रंचापआधत्तवैरिदाहकमद्भुतम् ४७

शत्रुघ्नः शरमादायसस्मारसुमनोहरम्
अस्त्रंतद्योगिनीदत्तंसर्ववैरिविमोहनम् ४८
ब्रह्मास्त्रंतत्करभ्रष्टमागतंवैरिणंप्रति
तावच्छत्रुघ्ननाम्नातुतन्मुक्तंमोहनास्त्रकम् ४९
मोहनास्त्रेणतद्ब्राह्मंद्विधाछिन्नंक्षणादिह
लग्नंराज्ञोहृदिक्षिप्रंमूर्च्छांसंप्रापयन्नृपम् ५०
तेबाणाःशतशोमुक्ताःशत्रुघ्नेनमहीभृता
सर्वेपिमूर्च्छितावीरागणारुद्रस्ययेपुनः ५१
शिवस्यचरणोपस्थेमूढाःपेतुर्महीतले
तदाशिवःप्रकुपितोरथेतिष्ठन्ययौनृपम् ५२
शिवेनसहसायोद्धुंसमायातोरणांगणे
शत्रुघ्नःसज्जमात्तज्यंधनुःकृत्वाव्ययुद्ध्यत ५३
तयोःसमभवद्युद्धंघोरंवैरिविदारणम्
शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगंतरम् ५४
अस्त्रप्रत्यस्त्रसंघातैस्ताडनप्रतिताडनैः
देवानामपिदैत्यानांनैतादृग्रणमंडलम् ५५
तदाव्याकुलितोऽत्यतंशत्रुघ्नःशिवसंगरे
सस्मारस्वामिनंतत्रपावनेरुपदेशतः ५६
हानाथभ्रातरत्युग्रःशिवःप्राणापहारणम्
करोतिधनुरुद्यम्यत्रायस्वरणमंडले ५७
अनेकेदुःखपाथोधिंतीर्णारामतवाख्यया
मामप्युद्धरदुःखस्थंरामरामकृपानिधे ५८
इत्थंवक्तियदातावद्दीप्तितोरणमंडले
नीलोत्पलदलश्यामोरामोराजीवलोचनः ५९
मृगशृंगकटौधृत्वादीप्तितंवपुरुद्वहन्
तंदृष्ट्वाविस्मयंप्रापशत्रुघ्नःसमरांगणे ६०
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
श्रीरामसमागमोनामपंचचत्वारिंशत्तमोऽध्यायः ४५

## षट्चत्वारिंशत्तमोऽध्यायः

शेषउवाच
आगतंवीक्ष्यश्रीरामंशत्रुघ्नःप्रणतार्तिहम्
भ्रातरंसकलाद्दुःखान्मुक्तोऽभूद्द्विजसत्तम १
हनूमान्वीक्ष्यविभ्रांतोरामस्यचरणौमुदा
ववंदेभक्तरक्षार्थमागतंनिजगादच २
स्वामिंस्तवैतद्युक्तंतुस्वभक्तपरिपालनम्
यत्संग्रामेजितंसर्वंपाशबद्धममोचयः ३
वयंत्विदानींधन्यावैयद्द्रक्ष्यामोभवत्पदे
जेष्यामोऽरीन्क्षणादेवत्वत्कृपातोरघूद्वह ४
शेषउवाच
स्थाणुस्तदागतंरामंयोगिनांध्यानगोचरम्
पतित्वापादयोर्विप्रजगादप्रणताभयम् ५
एकस्त्वंपुरुषःसाक्षात्प्रकृतेःपरईर्यसे
यःस्वांशकलयाविश्वंसृजस्यवसिहंसिच ६
अरूपस्त्वमशेषस्यजगतःकारणंपरम्
एकएवत्रिधारूपंगृह्णासिकुहकान्वितः ७
सृष्टौविधातृरूपेणपालनेस्वयमासच
प्रलयेजगतःसाक्षादहंशर्वाख्यतांगतः ८
तवयत्परमेशस्यहयमेधक्रतुक्रिया
ब्रह्महत्यापनोदायतद्विडंबनमद्भुतम् ९
यत्पादशौचममलंगंगाख्यंशिरसोऽतरा
वहामिपापशांत्यर्थंतस्यतेपातकंकुतः १०
मयाबह्वपकारायकृतंकर्मतवस्फुटम्
क्षम्यतांतत्कृपालोहिभवतोव्यवधायकम् ११
किंकरोमिमयासत्यपालनार्थमिदंकृतम्
जानन्प्रभावंभवतोभक्तरक्षार्थमागतः १२
असौपुराउज्जयिन्यांमहाकालनिकेतने
स्नात्वाशिप्राख्यसरितितपस्तेपेमहाद्भुतम् १३
ततःप्रसन्नोजातोऽहजगादभूमिपंप्रति

याचस्वेतिमहाराजसवव्रेराज्यमद्भुतम् १४
मयाप्रोक्तंदेवपुरेतवराज्यंभविष्यति
यावद्रामहयःपुर्यामागमिष्यतियाज्ञिकः १५
तावत्प्रभृत्यहंस्थास्येतवरत्नार्थमुद्यतः
एतद्दत्तवरोरामकिंकरोमिस्वसत्यतः १६
घृणितोऽस्म्यधुनाराज्ञासपुत्रपशुबांधवः
हयंसमर्प्यतेपादसेवांराजाविधास्यति १७
शेषउवाच
इतिवाक्यंसमाकर्ण्यमहेशस्यरघूत्तमः
उवाचधीरयावाचाकृपयापूर्णलोचनः १८
रामउवाच
देवानामयमेवास्तिधर्मोभक्तस्यपालनम्
त्वयासाधुकृतंकर्मयद्भक्तोरक्षितोऽधुना १९
ममासिहृदयेशर्वभवतोहृदयेत्वहम्
आवयोरंतरंनास्तिमूढाःपश्यंतिदुर्धियः २०
येभेदंविदधत्यद्धाआवयोरेकरूपयोः
कुंभीपाकेषुपच्यंतेनराःकल्पसहस्रकम् २१
येत्वद्भक्तास्तएवासन्मद्भक्ताधर्मसंयुताः
मद्भक्ताअपिभूयस्याभक्त्यातवनतिंकराः २२
शेषउवाच
इत्थंभाषितमाकर्ण्यशर्वोवीरमणिंनृपम्
मूर्च्छितंजीवयामासकरस्पर्शादिनाप्रभुः २३
अन्यानपिसुतानस्यमूर्च्छिताञ्छरपीडितान्
जीवयामाससमृडःसमर्थःप्रभुरीश्वरः २४
सज्ञंविधायतंभूपंश्रीरामपदयोर्नतिम्
कारयामासभूतेशःपुत्रपौत्रैःपरीवृतम् २५
धन्योराजावीरमणिर्योददर्शरघूत्तमम्
योगिभिर्योगनिष्ठाभिर्दुष्प्रापमयुतायुतैः २६
तेनत्वारघुनाथंतंकृतार्थीकृतविग्रहाः
ब्रह्मादिभिःपूज्यतमाअभूवन्द्विजसत्तम २७

शत्रुघ्नहनुमद्भ्यांचपुष्कलादिभिरुद्भटैः
परिष्टुतायरामायददौराजाहयोत्तमम् २८
राज्येनसहितंसर्वंसपुत्रपशुबांधवम्
शर्वेणप्रेरितःप्रादाद्भूपोवीरमणिस्तदा २९
ततोरामोनुतःसर्वैर्वैरिभिर्निजसेवकैः
शत्रुघ्नादिभिरत्यंतमुत्सुकैश्चविशेषतः ३०
रथेमणिमयेतिष्ठन्बभूवसतिरोहितः
अंतर्हितेरामभद्रेसर्वेप्रापुःसुविस्मयम् ३१
माजानीहिमनुष्यंतंरामंलोकैकवंदितम्
जलेस्थलेचसर्वत्रवर्ततेसंस्थितःसदा ३२
ततोवीराअलंहृष्टाअन्योन्यंपरिरेभिरे
तूर्यमंगलवादित्रैःसुमहानुत्सवोऽभवत् ३३
ततोमुक्तोहयःसर्वैर्वीरैःशस्त्रास्त्रकोविदैः
सर्वैरनुगतःप्रीतैर्विस्मयेनसमन्वितैः ३४
शर्वःसत्यप्रतिज्ञश्चतमनुज्ञाप्यसेवकम्
श्रीरामंशरणंप्रोच्ययाहिलोकैकदुर्ल्लभम् ३५
स्वयमंतर्हितस्तत्रप्रलयोत्पत्तिकारकः
कैलासमगमच्छर्वःसेवकैःपरिशोभितः ३६
भूपोवीरमणिर्ध्यायञ्छ्रीरामचरणोदजम्
शत्रुघ्नेनययौसाकंबलिनाबलसंयुतः ३७
एतद्रामस्यचरितंयेशृण्वंतिनरोत्तमाः
तेषांसंसारजंदुःखंनभविष्यतिकर्हिचित् ३८

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
हयप्रस्थानंनामषट्चत्वारिंशत्तमोऽध्यायः ४६

## सप्तचत्वारिंशत्तमोऽध्यायः

शेषउवाच
हयोगतोहेमकूटंभारतांतेततोद्विज
अनेकभटसाहस्रैरक्षितोबद्धचामरः १
योवैविस्तरतोदैर्घ्याद्योजनानांसमंततः

अयुतेनसुशृङ्गैश्चराजतैःकांचनादिभिः २
तत्रोद्यानंमहच्छ्रेष्ठंपादपैःपरिशोभितम्
शालैस्तालैस्तमालैश्चकर्णिकारैःसमन्ततः ३
हिंतालैर्नागपुन्नागैःकोविदारैःसबिल्वकैः
चम्पकैर्बकुलैर्मेघैर्मदनैःकुटजादिभिः ४
जातिकाभिर्यूथिकाभिर्नवमालिकयातथा
आम्रैर्माधवद्राक्षाभिर्दाडिमैःशोभितंवनम् ५
अनेकपक्षिसंघुष्टंभ्रमरैर्निनदीकृतम्
मयूरकेकारवितंसर्वर्तुसुखदंहयः ६
प्रविवेशसशत्रुघ्नोमनोवेगसमन्वितः
स्वर्णपत्रंविशालेस्वेभालेबिभ्रन्मनोहरम् ७
गच्छतस्तस्यवाहस्यहयमेधक्रतोस्तदा
अकस्मादभवच्चित्रंतच्छृणुष्वद्विजोत्तम ८
गात्रस्तंभोऽभवत्तस्यनचचालपथिस्थितः
हेमकूटइवाचाल्योबभूवहयसत्तमः ९
तदातद्रक्षकाःसर्वेकशाघातान्वितेनिरे
तदाहतेऽपिनययौस्तब्धगात्रोहयोत्तमः १०
शत्रुघ्नंसविधेगत्वाचुक्रुशुर्वाहरक्षकाः
स्वामिन्वयंनजानीमःकिमभूद्धयसत्तमे ११
गच्छतोवाहवर्यस्यमनोवेगस्यभूपते
आकस्मिकोऽभवत्तस्यगात्रस्तंभोमहामते १२
कशाभिस्ताडिंतोऽस्माभिःपरंतत्रचचालन
एवंविचार्ययत्कर्मतत्कुरुष्वनृपोत्तम १३
तदाविस्मयमापन्नोभूपतिःसहसैनिकैः
जगामसहितःसर्वैर्हयस्यमहतोऽन्तिके १४
पुष्कलोबाहुनाधृत्वाचरणौतस्यभूतलात्
उत्पाटयामासतदापरंनोचेलतुस्ततः १५
बलेनबलिनाक्रांतोनाकम्पतहयस्तदा
हनूमांस्तंसमुद्धर्तुंमतिंचक्रेमहामनाः १६
लांगूलेनसमावेष्ट्यबलेनबलिनांवरः

आचकर्षबलाद्वाहंनचचालतथापिसः १७
तदोवाचकपिश्रेष्ठोहनूमान्विस्मयान्वितः
शत्रुघ्नंबलिनांश्रेष्ठंवीराणांपरिशृणवताम् १८
मयाद्रोणोलांगुलेनलीलयोत्पाटितोऽधुना
परमत्रमहाश्चर्यंकम्पतेनहयोऽल्पकः १९
दृष्टमत्रनिदानंहिवीरैर्बलिभिरुद्धतैः
आकृष्टोऽपिनचस्थानाच्चचालतिलमात्रतः २०
कपिभाषितमाकर्ण्यशत्रुघ्नोविस्मयान्वितः
सुमतिंमंत्रिणांश्रेष्ठमुवाचवदतांवरः २१
शत्रुघ्नउवाच
मंत्रिन्किमभवद्वाहेस्तंभनंवपुषोऽनघ
कोऽत्रोपायोविधेयःस्याद्येनवाहगतिर्भवेत् २२
सुमतिरुवाच
स्वामिन्कश्चिन्मुनिर्मृग्योऽखिलज्ञानविचक्षणः
देशोद्भवमहंजानेप्रत्यक्षंनपरोक्षजम् २३
शेषउवाच
इतिवाक्यंसमाकर्ण्यसुमतेर्धर्मकोविदः
अन्वेषयामासमुनिंसेवकैःसहशोभनम् २४
तेसर्वेसर्वतोगत्वामुनिंधर्मविदंभटाः
व्यालोकयंतःसर्वत्रनचापश्यन्मुनीश्वरम् २५
एकस्त्वनुचरोविप्रगतोयोजनमात्रतः
पूर्वस्यांदिशिचोद्युक्तःपश्यतिस्ममहाश्रमम् २६
यत्रनिर्वैरिणःसर्वेपशवोजनतास्तथा
गंगास्नानहताशेषकिल्बिषाःसुमनोहराः २७
यत्रकेचित्तपःश्रेष्ठंकुर्वंतिस्महुताशनैः
धूमैरधोमुखाःपत्रैर्वायुभिःस्वोदरंभराः २८
यत्राग्निहोत्रजोधूमःपवित्रयतिसर्वदा
अनेकमुनिसंहृष्टोमुक्तपत्रलतोत्तमः २९
तमाश्रमंमुनेर्ज्ञात्वाशौनकस्यमनोहरम्
न्यवेदयन्नृपायासौविस्मयाविष्टचेतसे ३०

तच्छ्रुत्वाहर्षितोऽत्यतंशत्रुघ्नःसहसेवकैः
हनूमत्पुष्कलाद्यैश्चसयुतोऽगात्तदाश्रमम् ३१
तत्रवीद्त्यमुनिश्रेष्ठंसम्यग्घुतहुताशनम्
प्रणम्यदंडवत्तस्यचरणौपापहारिणौ ३२
तमागतंनृपंज्ञात्वाशत्रुघ्नंबलिनांवरम्
अर्घ्यपाद्यादिकंचक्रेप्रीतस्तद्दर्शनादभूत् ३३
सुखोपविष्टंविश्रान्तंनृपंप्राहमुनीश्वरः
किमर्थमटनंदेवमहत्पर्यटनंतव ३४
त्वादृशाःपृथिवींसर्वांनृपावैनभ्रमंतिचेत्
तदादुष्टजनाःसाधून्बाधंतेविगतज्वरान् ३५
कथयस्वमहीपालशत्रुघ्नबलिनांवर
सर्वंशुभायनोभूयात्तवपर्यटनादिकम् ३६
शेषउवाच
इत्युक्तवंतंभूदेवंप्रत्युवाचमहीश्वरः
गद्गदस्वरयावाण्याहर्षितस्वीयविग्रहः ३७
शत्रुघ्नउवाच
अकस्मादभवच्चित्रंरामाश्वस्यमनोहृतः
नातिदूरेत्वदावासात्तच्छृणुष्वविदांवर ३८
उद्यानेतवशोभाढ्येयदृच्छातोहयोगतः
तत्प्रांतेतस्यवाहस्यगात्रस्तंभोऽभवत्क्षणात् ३९
तदामेबलिनोवीराःपुष्कलाद्यामदोत्कटाः
बलादाचकृषुर्वाहंनचचालतथाप्यसौ ४०
अस्मानपारदुःखाब्धौमग्नान्प्रतितरिःस्मृतः
दैवाद्दृष्टःसुभाग्यैस्त्वंकथयस्वनिदानकम् ४१
शेषउवाच
एवंपृष्टोमुनिवरःक्षणंदध्यौमहामतिः
ततःकारणसंयुक्तंविचारेणदधद्धयम् ४२
क्षणात्तज्ज्ञानतांप्राप्यविस्मयोत्फुल्ललोचनः
जगादसमहीपालंदुःखितंसंशयान्वितम् ४३
शौनकउवाच

शृणुराजन्प्रवक्ष्यामिहयस्तंभस्यकारणम्
यच्छ्रुत्वामुच्यतेदुःखादतिचित्रकथानकम् ४४
गौडदेशेमहारण्येकावेरीतीरभूषिते
वाडवःसात्वकोनाम्नाचचारपरमंतपः ४५
एकाहंपयसःप्राशीदिनैकंवायुभक्षकः
दिनैकंतुनिराहारएवंत्रिदिनमुन्नयेत् ४६
एवंव्रतेप्रवृत्तस्यकालःसर्वक्षयंकरः
जग्राहस्वस्यदंष्ट्रायांमृतिंप्रापमहाव्रती ४७
विमानेसर्वशोभाढ्येसर्वरत्नविभूषिते
अप्सरोभिःसहक्रीडन्ययौमेरोःशिखास्थितौ ४८
जंबूनाममहावृक्षस्तत्रसेव्यरसोऽभवत्
नदीजांबवतीसंज्ञास्वर्णद्रवसमन्विता ४९
तस्यांमुनयइच्छाभिःक्रीडंतेकुतुकान्विताः
अनेकतपसापुण्याःसर्वसौख्यसमन्विताः ५०
तत्रासौस्वेच्छयाक्रीडन्नप्सरोभिर्मुदान्वितः
प्रतीपमाचरत्तेषांस्वाभिमानमदोद्धतः ५१
ततःशप्तःसमुनिभीराक्षसोभवदुर्मुखः
ततोऽतिदुःखितःप्राहमुनीन्विद्यातपोधनान् ५२
अनुगृह्णंतुमांसर्वेविप्रायूयंकृपालवः
तदातैरनुगृहीतोयदारामहयंभवान् ५३
स्तंभयिष्यतिवेगेनततोरामकथाश्रुतिः
पश्चान्मुक्तिर्भवित्रीतेशापादस्मात्सुदारुणात् ५४
सप्रोक्तोमुनिभिर्देवोराक्षसत्वमितःप्रभो
स्तंभयामासरामाश्वंमोचयानघकीर्तनैः ५५

इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
शापकीर्तनंनामसप्तचत्वारिंशत्तमोऽध्यायः ४७

## अष्टचत्वारिंशत्तमोऽध्यायः

शेषउवाच
इतिप्रोक्तंतुमुनिनासंश्रुत्यपरवीरहा

विस्मयंमानयामासहृदिशौनकमब्रवीत् १
शत्रुघ्नउवाच
कर्मणोगहनावार्तायया सात्वकनामधृत्
दिवंप्राप्तोऽपिमहताकर्मणाराक्षसीकृतः २
स्वामिन्वदमहर्षेत्वंकर्मणांस्वगतिर्यथा
येनकर्मविपाकेनयादृशंनरकंभवेत् ३
शौनकउवाच
धन्योसिराघवश्रेष्ठयत्तेमतिरियंशुभा
जानन्नपिहितार्थायलोकानांत्वंब्रवीषिभोः ४
कथयामिविचित्राणांकर्मणांविविधागतीः
ताःशृणुष्वमहाराजयच्छ्रुत्वामोक्षमाप्नुयात् ५
परवित्तंपरापत्यंकलत्रंपारकंचयः
बलात्कारेणगृह्णातिभोगबुद्ध्याचदुर्मतिः ६
कालपाशेनसंबद्धोयमदूतैर्महाबलैः
तामिस्रेपात्यतेतावद्यावद्वर्षसहस्रकम् ७
तत्रताडनमुद्भूताःकुर्वंतियमकिंकराः
पापभोगेनसंतप्तस्ततोयोनिंतुशौकरीम् ८
तत्रभुक्त्वामहादुःखंमानुषत्वंगमिष्यति
रोगादिचिह्नितंतत्रदुर्यशोज्ञापकंस्वकम् ९
भूतद्रोहंविधायैवकेवलंस्वकुटुंबकम्
पुष्णातिपापनिरतःसोंऽधतामिस्रकेपतेत् १०
येनराइहजंतूनांवधंकुर्वंतिवैमृषा
तेरौरवेनिपात्यंतेभिद्यंतेरुरुभीरुषा ११
यःस्वोदरार्थेभूतानांवधमाचरतिस्फुटम्
महारौरवसंज्ञेतुपात्यतेसयमाज्ञया १२
योवैनिजंतुजनकंब्राह्मणंद्वेष्टिपापकृत्
कालसूत्रेमहादुष्टेयोजनायुतविस्तृते १३
यावंतिपशुरोमाणिगवांद्वेषंकरोतियः
तावद्वर्षसहस्राणिपच्यतेयमकिंकरैः १४
योभूमौभूपतिर्भूत्वादंडायोग्यंतुदंडयेत्

करोतिब्राह्मणस्यापिदेहदंडंचलोलुपः १५
ससूकरमुखैर्दुष्टैःपीड्यतेयमकिंकरैः
पश्चाद्दुष्टासुयोनीषुजायतेपापमुक्तये १६
ब्राह्मणानांगवांयेतुद्रव्यंवृत्तंतथाल्पकम्
वृत्तिंवागृह्णतेमोहाल्लुंपंतिस्वबलान्नराः १७
तेपरत्रांधकूपेचपात्यंतेचमहार्दिताः
योऽन्नस्वयमुपाहृत्यमधुरंचात्तिलोलुपः १८
नदेवायनसुहृदेददातिरसनापरः
सपतत्येवनरकेकृमिभोजनसंज्ञिते १९
अनापदिनरोयस्तुहिरण्यादीन्यपाहरेत्
ब्रह्मस्वंवामहादुष्टेसंदंशेनरकेपतेत् २०
यःस्वदेहंप्रपुष्णातिनान्यंजानातिमूढधीः
सपात्यतेतैलतप्तेकुंभीपाकेऽतिदारुणे २१
योनागम्यांस्त्रियंमोहाद्योषिद्धावाच्चकामयेत्
तंतयाकिंकराःसूर्म्यापरिरंभंचकुर्वते २२
येबलाद्वेदमर्यादांलुंपंतिस्वबलोद्धताः
तेवैतरण्यांपतितामांसशोणितभक्षकाः २३
वृषलद्यंयःस्त्रियंकृत्वातयागार्हस्थ्यमाचरेत्
पूयोदेनिपतत्येवमहादुःखसमन्वितः २४
येदंभमाश्रयंतेवैधूर्तालोकस्यवंचने
वैशसेनरकेमूढाःपतंतियमताडिताः २५
येसवर्णांस्त्रियंमूढारेतःस्वंपाययंतिच
रेतःकुल्यासुतेपापारेतःपानेषुतत्पराः २६
येचौरावह्निदादुष्टागरदाग्रामलुंठकाः
सारमेयादनेतेवैपात्यंतेपातकान्विताः २७
कूटसाक्ष्यंवदत्यद्धापुरुषःपापसंभृतः
परकीयंतुद्रव्यंयोहरतिप्रसभंबली २८
सोऽवीचिनरकेपापीअवाग्वक्त्रःपतत्यधः
तत्रदुःखंमहद्भुक्त्वापापिष्ठांयोनिमाव्रजेत् २९
योनरोरसनास्वादात्सुरांपिबतिमूढधीः

तंपाययंतिलोहस्यरसंधर्मस्यकिंकराः ३०
योगुरूनवमन्येतस्वविद्याचारदर्पितः
समृतःपात्यतेक्षारनरकेऽधोमुखःपुमान् ३१
विश्वासघातंकुर्वंतियेनराधर्मनिष्कृताः
शूलप्रोतेचनरकेपात्यंतेबहुयातने ३२
पिशुनोयोनरान्सर्वानुद्वेजयतिवाक्यतः
दंदशूकेचपतितोदंदशूकैःसदश्यते ३३
एवंराजन्ननेकेवैनरकाःपापकारिणाम्
पापंकृत्वाप्रयांत्येतेपीडांयांतिसुदारुणाम् ३४
यैर्नश्रुतारामकथानपरोपकृतिःकृता
तेषांसर्वाणिदुःखानिभवंतिनरकांतरे ३५
अत्रयस्यसुखंस्वर्गेभूयात्तस्यइतीर्यते
येदुःखिनोरोगयुतानरकादागताश्चते ३६
शेषउवाच
एतच्छ्रुत्वामहीपालःकंपमानःक्षणेक्षणे
पप्रच्छभूयस्तंविप्रंसर्वसंशयनुत्तये ३७
तत्तत्पापस्यचिह्नानिकथयस्वमहामुने
केनपापेनकिंचिह्नंभूलोकेउपजायते ३८
इतिश्रुत्वातुतद्वाक्यंमुनिःप्रोवाचभूपतिम्
शृणुराजन्प्रवक्ष्यामिचिह्नानिपापकारिणाम् ३९
शौनकउवाच
सुरापःश्यामदंतश्चनरकांतेप्रजायते
अभक्ष्यभक्षकारीचजायतेगुल्मकोदरः ४०
उदक्यावीक्षितंभुक्त्वाजायतेकृमिलोदरः
श्वमार्जारादिसंस्पृष्टंभुक्त्वादुर्गंधिमान्भवेत् ४१
अनिवेद्यसुरादिभ्योभुंजानोजायतेनरः
उदरेरोगवान्दुःखीमहारोगप्रपीडितः ४२
परान्नविघ्नकरणादजीर्णमभिजायते
मंदोदराग्निर्भवतिसतिद्रव्येकदन्नदः ४३
विषदश्छर्दिरोगीस्यान्मार्गहापादरोगवान्

पिशुनोनरकस्यांतेजायतेश्वासकासवान् ४४
धूर्तोऽपस्माररोगीस्याच्छूलीचपरतापनः
दावाग्निदायकश्चैवरक्तातीसारवान्भवेत् ४५
सुरालयेजलेवापिशकृत्क्षेपंकरोतियः
गुदरोगोभवेत्तस्यपापरूपःसुदारुणः ४६
गर्भपातनजारोगाःक्षयमेहजलोदराः
प्रतिमाभंगकारीचअप्रतिष्ठश्चजायते ४७
दुष्टवादीखंडितःस्यात्खल्वाटःपरनिंदकः
सभायांपक्षपातीचजायतेपक्षघातवान् ४८
परोक्तहास्यकृत्काणःकुनखीविप्रहेमहृत्
तुंदीवरीताम्रचौरःकांस्यहृत्पुंडरीकिकः ४९
त्रपुहारीचपुरुषोजायतेपिंगमूर्द्धजः
शीसहारीचपुरुषोजायतेशीर्षरोगवान् ५०
घृतचौरस्तुपुरुषोजायतेनेत्ररोगवान्
लोहहारीचपुरुषोबर्बरांगःप्रजायते ५१
चर्महारीचपुरुषोजायतेमेदसावृतः
मधुचौरस्तुपुरुषोजायतेबस्तिगंधवान् ५२
तैलचौर्येणभवतिनरःकराड्वातिपीडितः
आमान्नहरणाच्चैवदंतहीनःप्रजायते ५३
पक्वान्नहरणाच्चैवजिह्वारोगयुतोभवेत्
मातृगामीचपुरुषोजायतेलिगवर्जितः ५४
गुरुजायाभिगमनान्मूत्रकृच्छ्रःप्रजायते
भगिनींचैवगमनेपीतकुष्ठःप्रजायते ५५
स्वसुतागमनेचैवरक्तकुष्ठःप्रजायते
भ्रातृभार्याभिगमनेगुल्मकुष्ठःप्रजायते ५६
स्वामिगम्यादिगमनेजायतेदद्रुमंडलम्
विश्वस्तभार्यागमनेगजचर्माप्रजायते ५७
पितृष्वस्रभिगमनेदक्षिणांगेव्रणीभवेत्
मातुलान्यास्तुगमनेवामांगेव्रणवान्भवेत् ५८
पितृव्यपत्नीगमनेकटौकुष्ठःप्रजायते

मित्रभार्याभिगमनेमृतभार्यःप्रजायते ५९
स्वगोत्रस्त्रीप्रसंगेनजायतेचभगंदरः
तपस्विनीप्रसंगेनप्रमेहोजायतेनरे ६०
श्रोत्रियस्त्रीप्रसंगेनजायतेनासिकाव्रणी
दीक्षितस्त्रीप्रसंगेनजायतेदुष्टरक्तसृक् ६१
स्वजातिजायागमनेजायतेहृदयव्रणी
जात्युन्नतस्त्रीगमनेजायतेमस्तकव्रणी ६२
पशुयोनौचगमनान्मूत्रघातःप्रजायते
एतेदोषानराणांस्युर्नरकांतेनसंशयः ६३
स्त्रीणामपिभवंत्येतेतत्तत्पुरुषसंगमात्
एवंराजन्हिचिह्नानिकीर्तितानिसुपापिनाम् ६४
दानपुरायप्रसंगेनतीर्थादिक्रिययातथा
रामस्यचरितंश्रुत्वातपसावाक्षयंव्रजेत् ६५
सर्वेषामेवपापानांहरिकीर्तिधुनीनृणाम्
क्षालयेत्पापिनांपंकंनात्रकार्याविचारणा ६६
योनावमन्येतहरिंतस्ययागाविधिश्रुताः
तीर्थान्यपिसुपुरायानिपावितुंनक्षमाणितम् ६७
हसतेकीर्त्यमानंयश्चरित्रंज्ञानदुर्बलः
नतस्यनरकान्मुक्तिःकल्पांतेऽपिभविष्यति ६८
याहिराजन्विमोक्षार्थंहयस्यानुचरैःसह
श्रावयश्रीशचरितंयतोवाहगतिर्भवेत् ६९
शेषउवाच
इतिश्रुत्वाप्रहृष्टोऽभूच्छत्रुघ्नःपरवीरहा
प्रणम्यतंपरिक्रम्यययौसेवकसंयुतः ७०
तत्रगत्वासहनुमान्हयवर्यस्यपार्श्वतः
उवाचरामचरितंमहादुर्गतिनाशकम् ७१
याहिदेवविमानंस्वंरामकीर्तनपुरायतः
स्वैरंचरस्वलोकेत्वंमुक्तोभवकुयोनितः ७२
इतिवाक्यंसमाकरार्यशत्रुघ्नोयावदास्थितः
तावद्ददर्शविमलंदेवंवैमानिकंवरम् ७३

सउवाचविमुक्तोऽहरामकीर्तनसंश्रुतेः
यामिस्वंभवनंराजन्नाज्ञापयमहामते ७४
इत्युक्त्वाप्रययौदेवोविमानेस्वेपरिस्थितः
तदाविस्मयमापुस्तेशत्रुघ्नेनसहानुगाः ७५
ततोवाहोविनिर्मुक्तोगात्रस्तंभाच्चभूतलात्
ययौतद्विपिनंसर्वंभ्रमन्पद्मिसमाकुलम् ७६
इति श्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेहय-
निर्मुक्तिर्नामाष्टचत्वारिंशत्तमोऽध्यायः ४८

## एकोनपंचाशत्तमोऽध्यायः

शेषउवाच
मासाःसप्ताभवंस्तस्यहयवर्यस्यहेलया
चरतोभारतंवर्षमनेकनृपपूरितम् १
सपूजितोभूपवरैःपरीत्यवरभारतम्
परीवृतोवीरवरैःशत्रुघ्नादिभिरुद्भटैः २
सबभ्रामबहून्देशान्हिमालयसमीपतः
नकोपितंनिजग्राहहयंरामबलंस्मरन् ३
अंगवंगकलिंगानांराजभिःसंस्तुतोहयः
जगामराज्ञोनगरेसुरथस्यमनोहरे ४
कुंडलंनामनगरमदितेर्यत्रकुंडलम्
कर्णयोःपतितंभूमौहर्षभयसुकंपयोः ५
यत्रधर्मव्यतिक्रांतिंनकरोतिकदापिना
श्रीरामस्मरणंप्रेम्णाकरोतिजनतान्वहम् ६
अश्वत्थानांतुयत्रार्चातुलस्याःप्रत्यहंनृभिः
क्रियतेरघुनाथस्यसेवकैःपापवर्जितैः ७
यत्रदेवालयारम्याराघवप्रतिमायुताः
पूज्यंतेप्रत्यहंशुद्धचित्तैःकपटवर्जितैः ८
वाचिनामहरेर्यत्रनवैकलहसंकथा
हृदिध्यानंतुतस्यैवनचकामफलस्मृतिः ९
देवनंयत्ररामस्यवार्त्ताभिःपूतदेहिनाम्

नजातुचिन्नृणामस्तिसत्यव्यसनमानिनाम् १०
तस्मिन्वसतिधर्मात्मासुरथःसत्यवान्बली
रघुनाथपदस्मारहृष्टचित्तःपरोन्मदः ११
किंवर्णयामिरामस्यसेवकंसुरथंवरम्
यस्याशेषगुणाभूमौविस्तृताःपावयंत्यघम् १२
सेवकास्तस्यभूपस्यपर्यटंतःकदाचन
अपश्यन्हयमेधस्यहयंचंदनचर्चितम् १३
तेदृष्ट्वाविस्मयंप्राप्ताहयपत्रमलोकयन्
स्पष्टाक्षरसमायुक्तंचंदनादिकचर्चितम् १४
ज्ञात्वारामेणसंमुक्तंहयंनेत्रमनोहरम्
हृष्टाराज्ञेसभास्थायकथयामासुरुत्सुकाः १५
स्वामिन्नयोध्यानगरीपतिस्तस्यास्तुराघवः
हयमेधक्रतोर्योग्योहयोमुक्तःपरिभ्रमन् १६
सतेपुरस्यनिकटेप्राप्तःसेवकसंयुतः
गृहाणत्वंमहाराजहयंतंसुमनोहरम् १७
शेषउवाच
इतिश्रुत्वानिजप्रोक्तंवाक्यंहर्षपरिप्लुतः
उवाचवीरान्बलिनोमेघगंभरियागिरा १८
सुरथउवाच
धन्यावयंराममुखंपश्यामःसहसेवकाः
ग्रहीष्यामिहयंतस्यभटकोटिपरीवृतम् १९
तदामोक्ष्यामिवाहंतंयदारामःसमाव्रजेत्
कृतार्थंममभक्तस्यचिरंध्यानरतस्यवै २०
शेषउवाच
इत्थमुक्त्वामहीपालःसेवकान्स्वयमादिशत्
गृह्णंतुवाहंप्रसभंमोच्योनाश्वोऽक्षिगोचरः २१
अनेनसुमहाँल्लाभोभविष्यतितुमेमतम्
यद्रामचरणौप्रेक्षेब्रह्मशक्रादिदुर्ल्लभौ २२
सएवधन्यःस्वजनःपुत्रोवाबांधवोऽथवा
पशुर्वावाहनंवापिरामाप्तिर्येनसंभवेत् २३

तस्माद्गृहीत्वाक्रत्वश्वंस्वर्णपत्रेणशोभितम्
बध्नंतुवाजिशालायांकामवेगंमनोरमम् २४
इत्युक्तास्तेततोगत्वावाहंरामस्यशोभितम्
गृहीत्वातरसाराज्ञेददुःसर्वंशुभांगिनम् २५
राजाप्राप्यमुदाचाश्वंरामस्यदनुजार्दनः
सेवकान्प्राहबलिनोधर्मकृत्यविचक्षणः २६
वात्स्यायनमहाबुद्धेशृणुष्वैकाग्रमानसः
नतस्यविषयेकश्चित्परदाररतोनरः २७
नपरद्रव्यनिरतोनचकामेषुलंपटः
नजिह्वाभिरतोन्मार्गेकीर्त्तयेद्रामकीर्तनात् २८
यःसेवकान्नृपोवक्तियूयंसेवार्थमागताः
कथयंतुभवच्चेष्टांधर्मकर्मविशारदाः २९
एकपत्नीव्रतधरानपरद्रव्यलोलुपाः
परापवादानिरतानचवेदोत्पथंगताः ३०
श्रीरामस्मरणादीनिकुर्वंतिप्रत्यहंभटाः
तानहंरामसेवार्थंरक्षाम्यंतककोपवान् ३१
एतद्विरुद्धधर्माणोयेनराःपापसंयुताः
तानहंविषयेमह्यंवासयामिनदुर्मतीन् ३२
तस्यदेशेनपापिष्ठाःपापंकुर्वंतिमानसे
हरिध्यानहताशेषपातकामोदसंयुताः ३३
यदैवमभवद्देशोराजाधर्मेणसंयुतः
तदातत्स्थानराःसर्वेमृतागच्छंतिनिर्वृतिम् ३४
यमानुचरनिर्वेशोनाभवत्सौरथेपुरे
तदायमोमुनेरूपंधृत्वाप्रागान्महीश्वरम् ३५
वल्कलांबरधारीचजटाशोभितशीर्षकः
सुरथंतुसभामध्येददर्शहरिसेवकम् ३६
तुलसीमस्तकेयस्यवाचिनामहरेःपरम्
धर्मकर्मरतांवार्त्तांश्रावयंतंनिजाञ्जनान् ३७
तदामुनिंनृपोदृष्ट्वातपोमूर्तिमिवस्थितम्
ववंदेचरणौतस्यपाद्याद्यादिकमथाकरोत् ३८

सुखोपविष्टंविश्रांतंमुनिंप्राहनृपाग्रणीः
धन्यमद्यजनुर्मह्यंधन्यमद्यगृहंमम ३९
कथाःकथयतान्मह्यंरामस्यविविधावराः
याःशृरावतांपापहानिर्भविष्यतिपदेपदे ४०
इत्थमुक्तंसमाकरार्यजहाससमुनिर्भृशम्
दंतान्प्रदर्शयन्सर्वांस्तालास्फालितपाणिकः ४१
हसंतंतंमुनिंप्राहहसनेकारणंकिमु
कथयस्वप्रसादेनयथास्यान्मनसःसुखम् ४२
ततोमुनिर्नृपंप्राहशृणुराजन्धियायुतः
यदहंतेऽभिधास्यामिस्मितेकारणमुत्तमम् ४३
त्वयाप्रोक्तंहरेःकीर्तिंकथयस्वममाग्रतः
कोहरिःकस्यवाकीर्तिःसर्वेकर्मवशानराः ४४
कर्मणाप्राप्यतेस्वर्गःकर्मणानरकंव्रजेत्
कर्मणैवभवेत्सर्वंपुत्रपौत्रादिकंबहु ४५
शक्रःशतंक्रतूनांतुकृत्वागात्परमंपदम्
ब्रह्मापिकर्मणालोकंप्राप्यसत्याख्यमद्भुतम् ४६
अनेकेकर्मणासिद्धामरुदादयईशिनः
कुर्वन्तिभोगसौख्यंचअप्सरोगणसेविताः ४७
तस्मात्कुरुष्वयज्ञादीन्यजस्वकिलदेवताः
यथातेविमलाकीर्तिर्भविष्यतिमहीतले ४८
इतिश्रुत्वातुतद्वाक्यंकोपक्षुभितमानसः
उवाचरामैकमनाविप्रंकर्मविशारदम् ४९
माब्रूहिकर्मणोवार्तांक्षयिष्णुफलदायिनीम्
गच्छमन्नगरोपांताद्बहिर्लोकविगर्हितः ५०
इंद्रःपतिष्यतिक्षिप्रंपतिष्यत्यपिपद्मजः
नपतिष्यंतिमनुजारामस्यभजनोत्सुकाः ५१
पश्यध्रुवंचप्रह्लादंबिभीषणमथाद्भुतम्
येचान्येरामभक्तावैकदापिनपतंतिते ५२
येरामनिंदकादुष्टास्तानिमेयमकिंकराः
ताडयिष्यंतिलोहस्यमुद्गरैःपाशबन्धनैः ५३

ब्राह्मणत्वाद्देहदंडंनकुर्यांतिद्विजाधम
गच्छगच्छमदालोकात्ताडयिष्यामिचान्यथा ५४
इत्थमुक्तवतिश्रेष्ठेभूपेसुरथसंज्ञिते
सेवकाबाहुनाधृत्वानिष्कासयितुमुद्यताः ५५
तदायमोनिजंरूपंधृत्वालोकैकवंदितम्
प्राहभूपंप्रतुष्टोऽस्मियाचस्वहरिसेवक ५६
मयाप्रलोभितोवाग्भिर्बह्वीभिरपिसुव्रत
चलितोसिनरामस्यसेवायाःसाधुसेवितः ५७
तदाप्रोवाचभूमीशोयमंदृष्ट्वासुतोषितम्
उवाचयदितुष्टोसिदेहिमेवरमुत्तमम् ५८
तावन्ममनवैमृत्युर्यावद्रामसमागमः
नभयंमेभवत्तोहिकदाचनहिधर्मराट् ५९
तदोवाचयमोभूपमिदंतवभविष्यति
सर्वंत्वदीप्सितंतथ्यंकरिष्यतिरघोःपतिः ६०
इत्युक्त्वांतर्हितोधर्मोजगामस्वपुरंप्रति
प्रशस्यतस्यचरितंहरिभक्तिपरात्मनः ६१
सराजाधार्मिकोरामसेवकःपरयामुदा
गृहीत्वाश्वंप्रत्युवाचसेवकान्हरिसेवकान् ६२
मयागृहीतोवाहोऽसौराघवस्यमहीपतेः
सज्जीभवंतुसर्वत्रयूयंरणविशारदाः ६३
इतिप्रोक्तास्तुतेसर्वेभटाराज्ञोमहाबलाः
सज्जीभूताःक्षणादेवसभायांजग्मुरुत्सुकाः ६४
राज्ञोवीरादशसुताश्चंपकोमोहकस्तथा
रिपुंजयोऽतिदुर्वारःप्रतापीबलमोदकः ६५
हर्यक्षःसहदेवश्चभूरिदेवःसुतापनः
इतिराज्ञोदशसुताःसज्जीभूतारणांगणे ६६
यातुमिच्छामकुर्वंस्तेमहोत्साहसमन्विताः
राजापिस्वरथंचित्रंहेमशोभाविनिर्मितम् ६७
आह्वयामाससुजवैर्वाजिभिःसमलंकृतम्
रणोत्साहेनसंयुक्तः सर्वसैन्यपरीवृतः ६८

सभायांसेवकान्सर्वान्दिशन्नास्तेमहीपतिः ६९
इति श्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेसुरथ-
राज्ञाहयग्रहणंनामएकोनपंचाशत्तमोऽध्यायः ४९

## पंचाशत्तमोऽध्यायः

शेषउवाच
अथरामानुजोवेगात्समागत्यस्वसेवकान्
पप्रच्छकुत्रवाहोऽसौयाज्ञिकःसुमनोहरः १
तदातेवचनंप्रोचुःशत्रुघ्नंसुमहाबलाः
नजानीमोभटाःकेचिद्धयंनीत्वागताःपुरे २
वयंचधिक्कृताःसर्वेबलिभीराजसेवकैः
अत्रप्रमाणंभगवानितिकर्तव्यतांप्रति ३
तच्छ्रुत्वावचनंतेषांशत्रुघ्नःकुपितोभृशम्
दशन्रोषात्स्वदशनाञ्जिह्वयालेलिहन्मुहुः ४
उवाचवीरोमद्वाहंहृत्वाकुत्रगमिष्यसि
इदानींपातयेबाणैःपुरंजनसमन्वितम् ५
इत्युक्त्वासुमतिंप्राहकस्येदंपुटभेदनम्
कोवर्ततेऽस्याधिपतिर्योमेवाहमजीहरत् ६
शेषउवाच
इतिवाक्यंसमाकर्ण्यभूपतेःकोपसंयुतम्
जगादमंत्रीसुगिरास्फुटाक्षरसमन्वितम् ७
विद्धीदंकुंडलंनामनगरंसुमनोहरम्
अस्मिन्वसतिधर्मात्मासुरथःक्षत्रियोबली ८
नित्यंधर्मपरोरामचरणद्वंद्वसेवकः
मनसाकर्मणावाचाहनूमानिवसेवकः ९
चरितान्यस्यशतशोवर्ततेधर्मकारिणः
महाबलपरीवारःसुरथःसर्वशोभनः १०
महद्युद्धंभवेदत्रहृतश्चेद्वाहसत्तमः
अनेकेप्रपतिष्यंतिवीरारणविशारदाः ११
एवमुक्तंसमाश्रुत्यशत्रुघ्नःसचिवंप्रति

उवाचपुनरप्येवंवचनंवदतांवरः १२
शत्रुघ्नउवाच
कथमत्रप्रकर्तव्यंरामाश्वोऽनेनचेद्धृतः
नायातियोद्धुंप्रबलंकटकंवीरसेवितम् १३
सुमतिरुवाच
दूतःप्रेष्योमहाराजराजानंप्रतिवाग्मिकः
यद्वाक्येनसमायातिबलेनबलिनांवरः १४
नोचेदज्ञानतोवाहोधृतःकेनापिमानिना
अर्पयिष्यतिनःसाधुमश्वंक्रतुवरंशुभम् १५
इतिश्रुत्वातुतद्वाक्यंशत्रुघ्नोबुद्धिमान्बली
अंगदंप्रत्युवाचेदंवचनंविनयान्वितम् १६
शत्रुघ्नउवाच
याहित्वंनिकटस्थेवैसुरथस्यमहापुरे
दूतत्वेनततोगत्वाप्रब्रूहिनृपतिंप्रति १७
त्वयाधृतोरामवाहोज्ञानतोऽज्ञानतोपिवा
अर्पयतुनवायातुप्रधनंवीरसंयुतम् १८
रामस्यदौत्यंलंकायांरावणंप्रतियत्कृतम्
तथैवकुरुभूयिष्ठबलसंयुतबुद्धिमन् १९
शेषउवाच
एतच्छ्रुत्वांगदोवीरओमितिप्रोच्यभूमिपम्
जगामसंसदोमध्येवीरश्रेणिसमन्विते २०
ददर्शसुरथंभूपंतुलसीमंजरीधरम्
रामभद्रंरसनयाब्रुवंतंसेवकान्निजान् २१
राजापिदृष्ट्वाप्लवगंमनोहरवपुर्धरम्
शत्रुघ्नदूतंमत्वापिवालिजंप्रत्यभाषत २२
सुरथउवाच
प्लवगाधिपकस्मात्त्वमागतोऽत्रकथंभवान्
ब्रूहिमेकारणंसर्वंयथाज्ञात्वाकरोमितत् २३
शेषउवाच
इतिसंभाषमाणंतंप्रत्युवाचकपीश्वरः

विस्मयंश्चेतसिभृशंरामसेवाकरंनृपम् २४
जानीहिमांनृपश्रेष्ठवालिपुत्रंहरीश्वरम्
शत्रुघ्नेनचदूतत्वेप्रेषितोभवतोंऽतिकम् २५
सेवकैःकैश्चिदागत्यधृतोऽश्वोममसांप्रतम्
अज्ञानतोमहान्याय्यंकुर्वद्भिःसहसानृप २६
तमश्वंसहराज्येनसहपुत्रैर्मुदान्वितः
शत्रुघ्नंयाहिचरणेपतित्वाशुप्रदेहिच २७
नोचेच्छत्रुघ्ननिर्मुक्तनाराचैःक्षतविग्रहः
पृथ्वीतलमलंकुर्वञ्छयिष्यसिविशीर्षकः २८
येनलंकापतिर्नाशंप्रापितोलीलयाक्षणात्
तस्याश्वंयागयोग्यंतुहृत्वाकुत्रगमिष्यसि २९
शेषउवाच
इत्यादिभाषमाणंतंप्रत्युवाचमहीश्वरः
सर्वंतथ्यंब्रवीषित्वंनानृतंतवभाषितम् ३०
परंशृणुष्वमद्वाक्यंशत्रुघ्नपदसेवक
मयाधृतोमहानश्वोरामचंद्रस्यधीमतः ३१
नमोक्ष्येसर्वथावाहंशत्रुघ्नादिभयादहम्
चेद्रामःस्वयमागत्यदर्शनंदास्यतेमम ३२
तदाहंचरणौनत्वादास्यामिसुतसंयुतः
सर्वंराज्यंकुटुंबंचधनंधान्यंबलंबहु ३३
क्षत्रियाणामयंधर्मःस्वामिनापिविरुद्ध्यते
धर्मेणयुद्धंतत्रापिरामदर्शनमिच्छता ३४
शत्रुघ्नादीन्प्रवीरांस्तानधुनाहंक्षणादपि
जित्वाबध्नामिमद्गेहेनोचेद्रामःसमाव्रजेत् ३५
शेषउवाच
इतिश्रुत्वांगदोधीमाञ्जहासनृपतिंतदा
उवाचचमहद्वाक्यंमहाधैर्यसमन्वितम् ३६
अंगदउवाच
बुद्धिहीनःप्रवदसिवृद्धत्वात्सागतातव
यत्त्वंशत्रुघ्ननृपतिंधिक्करोषिधियाबली ३७

योमांधातृरिपुंदैत्यंलवणंलीलयावधीत्
येनानेकेजिताःसंख्येवैरिणःप्रबलोद्धताः ३८
विद्युन्मालीहतोयेनराक्षसःकामगेस्थितः
त्वंतंबध्नासिवीरेंद्रंमतिहीनःप्रभासिमे ३९
भ्रातृजोयस्यसुबलीपुष्कलःपरमास्त्रवित्
येनरुद्रगणःसंख्येवीरभद्रःसुतोषितः ४०
वर्णयामिकिमेतस्यपराक्रांतिंबलोर्जिताम्
येननास्तिसमःपृथ्व्यांबलेनयशसाश्रिया ४१
हनूमान्यस्यनिकटेरघुनाथपदाब्जधीः
यस्यानेकानिकर्माणिभविष्यंतिश्रुतानिते ४२
सत्रिकूटाराक्षसपूर्दग्धायेनक्षणाद्बलात्
अक्षोयेनहतःपुत्रोराक्षसेंद्रस्यदुर्मतेः ४३
द्रोणोनामगिरिर्येनपुच्छाग्रेणसदैवतः
आनीतोजीवनार्थंतुसैनिकानांमुहुर्मुहुः ४४
जानातिरामश्चारित्रंनान्योजानातिमूढधीः
यंकपींद्रंमनाक्स्वान्तान्नविस्मरतिसेवकम् ४५
सुग्रीवाद्याःकपींद्रायेपृथ्वद्यंसर्वांग्रसंतिये
तेशत्रुघ्नंनृपंसर्वेसेवंतेप्रेक्षणोत्सुकाः ४६
कुशध्वजोनीलरत्नोरिपुतापोमहास्त्रवित्
प्रतापाग्र्यःसुबाहुश्चविमलःसुमदस्तथा ४७
राजावीरमणिःसत्ययुतोरामस्यसेवकः
एतेऽन्येपिनृपाभूमेःपतयःपर्युपासते ४८
तत्रत्वंवीरजलधौमशकःकोभवानिति
तज्ज्ञात्वागच्छशत्रुघ्नंकृपालुंपुत्रकैर्युतः ४९
वाहंसमर्प्यगंतासिरामंराजीवलोचनम्
दृष्ट्वाकृतार्थीकुरुषेस्वांगानिजनुषासह ५०
शेषउवाच
राजाप्रोवाचतंदूतंप्रब्रुवंतमनेकधा
एतान्दर्शयसिक्षिप्रंसर्वेनममगोचराः ५१
यादृशंमद्बलंदूततादृशंनहनूमतः

योरामंपृष्ठतःकृत्वाप्रागाद्यागस्यपालने ५२
यद्यहंमनसावाचाकर्मणाकुतुकान्वितः
भजामिरामंतर्ह्याशुदर्शयिष्यतिस्वांतनुम् ५३
अन्यथाहनुमन्मुख्यावीराबध्नंतुमांबलात्
गृह्णंतुवाहंतरसारामभक्तिसमन्विताः ५४
गच्छत्वंनृपशत्रुघ्नंकथयस्वममोदितम्
सज्जीभवंतुसुभटाएषयामिरणेबली ५५
सविचार्ययथायुक्तंकरिष्यतिरणांगणे
मोचयंतुमहावाहंनवामामाददंतुते ५६
शेषउवाच
इतिश्रुत्वास्मितंकृत्वाययौवीरोयतोनृपः
गत्वानिवेदयामासयथोक्तंसुरथेनवै ५७

इति श्रीपद्मपुराणेपातालखगडेशेषवात्स्यायनसंवादेरामाश्वमेधे
सुरथदूतयोःसंवादोनामपंचाशत्तमोऽध्यायः ५०

## एकपंचाशत्तमोऽध्यायः

शेषउवाच
तच्छ्रुत्वाभाषितंतस्यसुरथस्यांगदाननात्
सज्जीभूतारणेसर्वैरथस्थारणकोविदाः १
पटहानांनिनादोऽभूद्भेरीनादस्तथैवच
वीराणांगर्जनानादाःप्रादुर्भूतारणांगणे २
रथचीत्कारशब्देनगजानांबृंहितेनच
व्याप्तंतत्सकलंविश्वंदिवंयातोमहारवः ३
रणोत्साहेनसंयुक्तावीरारणविशारदाः
कुर्वंतिविविधान्नादान्कातरस्यभयंकरान् ४
एवंकोलाहलेवृत्तेसुरथोनामभूमिपः
स्वसुतैःसैनिकैश्चाथवृतःप्रायाद्रणांगणे ५
गजैरथैर्हयैःपत्तिव्रजैःपूर्णांतुमेदिनीम्
कुर्वन्समुद्रइवतांप्लावयन्ददृशेभटैः ६
शंखनादेनसंघुष्टंजयनादैस्तथैवच

वीक्ष्यतंप्रधनोद्युक्तंसुमतिंप्राहभूमिपः ७
शत्रुघ्नउवाच
एषराजासमायातोमहासैन्यपरीवृतः
अत्रयत्कृत्यमस्माकंतद्वदस्वमहामते ८
सुमतिरुवाच
योद्धव्यमत्रबहुभिर्वीरैरणविशारदैः
पुष्कलादिभिरत्युग्रैःसर्वशस्त्रास्त्रकोविदैः ९
राज्ञासहसमीरस्यपुत्रःपरमशौर्यवान्
युद्धंकरोतुसुबलःपरयुद्धविशारदः १०
शेषउवाच
इतिब्रूतेमहामात्योयावत्तावन्नृपात्मजाः
रणांगणेधनूंष्युद्धास्फारयामासुरुद्धताः ११
तान्वीक्ष्ययोधाःसुबलाःपुष्कलाद्यारणोत्कटाः
अभिजग्मुःस्यंदनैःस्वैर्धनुर्बाणकरामताः १२
चंपकेनमहावीरःपुष्कलःपरमास्त्रवित्
द्वैरथेनैवयुयुधेमहावीरेणशालिना १३
मोहकंयोधयामासजानकिःसकुशध्वजः
रिपुंजयेनविमलोदुर्वारेणसुबाहुकः १४
प्रतापिनाप्रतापाग्र्योबलमोदेनचांगदः
हर्यक्षेणनीलरत्नःसहदेवेनसत्यवान् १५
राजावीरमणिर्भूरिदेवेनयुयुधेबली
असुतापेनचोग्राश्वोयुयुधेबलसंयुतः १६
द्वैरथंतुमहद्युद्धमकुर्वन्युद्धकोविदाः
सर्वेशस्त्रास्त्रकुशलाःसर्वेयुद्धविशारदाः १७
एवंप्रवृत्तेसंग्रामेसुरथस्यसुतैस्तदा
अत्यंतंकदनंतत्रबभूवमुनिसत्तम १८
पुष्कलश्चंपकंप्राहकिंनामासिनृपात्मज
धन्योसियोमयासार्धंरणमध्यमुपेयिवान् १९
इदानींतिष्ठकिंयासिकथंतेजीवितंभवेत्
एहियुद्धंमयासार्धंसर्वशस्त्रास्त्रकोविद २०

इत्यभिव्याहृतंतस्यश्रुत्वाराजात्मजोबली
जगादपुष्कलंवीरोमेघगंभीरयागिरा २१
चंपकउवाच
ननाम्नानकुलेनेदंयुद्धमत्रभविष्यति
तथापितववक्ष्येऽहस्वनामबलपूर्वकम् २२
ममपाताराघवेशोमत्पिताराघवःस्मृतः
ममबंधूरामचंद्रःस्वजनोममराघवः २३
मन्नामरामदासश्चसदारामस्यसेवकः
तारयिष्यतिमांयुद्धेरामोभक्तकृपाकरः २४
लोकानांमतमास्थायप्रब्रवीमितवाधुना
सुरथस्यसुतश्चाहंमातावीरवतीमम २५
मन्नामयोमधौसर्वाञ्छोभनान्विदधातिवै
मधुपायंरसावासंत्यजंतिमधुमोहिताः २६
वर्णेनस्वर्णसदृशोमध्येलिगवपुर्धरः
तदाख्ययाभिधांवीरजानीहिममोहिनीम् २७
युध्यस्वबाणैःप्रधनेनकोजेतुंहिमांक्षमः
इदानींदर्शयिष्यामिस्वपराक्रममद्भुतम् २८
शेषउवाच
इतिश्रुत्वामहद्वाक्यंपुष्कलोहृदितोषितः
तंदुर्जयंमन्यमानःशरान्मुंचन्रणेऽभवत् २९
शरसंघंप्रमुंचंतंकोटिधापुष्कलंययौ
चंपकःकोपसंयुक्तोधनुःसज्यमथाकरोत् ३०
मुमोचनिशितान्बाणान्वैरिवृंदविदारणान्
स्वनामचिह्नितान्स्वर्णपुंखभागसमन्वितान् ३१
तांश्चिच्छेदमहावीरःपुष्कलःप्रधनांगणे
शरांधकारंसर्वत्रमुंचन्बाणाञ्छिलाशितान् ३२
स्वबाणच्छेदनंदृष्ट्वाकृतंवीरेणचंपकः
आह्वयामासबलिनंपुष्कलंकोपपूरितः ३३
माप्रयाहिरणंत्यक्त्वेतिब्रुवन्समरेपुनः
पुष्कलंहृदयेबाणैर्विव्याधदशभिस्त्वरन् ३४

तेबाणाःपुष्कलस्याहोहृदयेतीव्रवेगिनः
आगत्यसुभृशंलग्नाःशोणितंपपुरूर्जितम् ३५
तैर्बाणैर्व्यथितोवीरःशरान्पंचसमाददे
सुतीक्ष्णाग्रान्महाकोपाद्वारयन्पर्वतानिव ३६
तेबाणास्तस्यबाणाश्चपरस्परमथोर्जिताः
आकाशेरचिताश्छिन्नाःशतधाराजसूनुना ३७
छित्त्वाबाणान्सुतीक्ष्णाग्रान्सुरथांगोद्भवोबली
बाणाञ्छतंसमाधत्तपुष्कलंताडितुंहृदि ३८
तेबाणाःशतधाच्छिन्नाःपुष्कलेनमहात्मना
अपतन्समरोपांतेशरवेगप्रपीडिताः ३९
तदातत्सुमहत्कर्मदृष्ट्वाराज्ञःसुतोबली
सहस्रेणशराणांचताडयन्वक्षसिस्फुटम् ४०
तानप्याशुप्रचिच्छेदपुष्कलःपरमास्त्रवित्
पुनरप्याशुस्वेचापेसमाधत्तायुतंशरान् ४१
तानप्याशुप्रचिच्छेदपुष्कलःपरमास्त्रवित्
ततोऽत्यतंप्रकुपितःशरवृष्टिमथाकरोत् ४२
शरवृष्टिंसमायांतींमत्वाचंपकवीरहा
साधुसाधुप्रशंसंतंपुष्कलंसमताडयत् ४३
पुष्कलश्चंपकंदृष्ट्वामहावीर्यसमन्वितम्
ब्रह्मणोऽस्त्रसमाधत्तस्वेचापेसर्वशस्त्रवित् ४४
तेनमुक्तंमहाशस्त्रंप्रजज्वालदिशोदश
खंरोदसीव्याप्यविश्वंप्रलयंकर्तुमुद्यतम् ४५
चंपकोमुक्तमस्त्रंतद्दृष्ट्वासर्वास्त्रकोविदः
तत्संहर्तुंतदेवास्त्रंमुमोचरिपुमुद्यतम् ४६
द्वयोरेकतमंतेजःप्रलयंमेनिरेजनाः
संजहारतदास्त्रास्त्रमेकीभूतंपरास्त्रकम् ४७
तत्कर्मचाद्भुतंदृष्ट्वापुष्कलस्तिष्ठतिष्ठच
ब्रुवञ्छरानमोघांस्तुचंपकंसक्रुधाहनत् ४८
चंपकस्ताञ्छरान्मुक्तानगणय्यमहामनाः
रामास्त्रंप्रमुमोचाथपुष्कलंप्रतिदारुणम् ४९

तन्मुक्तमस्त्रमालोक्यचंपकेनमहात्मना
छेत्तुंयावन्मनश्चक्रेतावद्ग्रस्तःशरेणसः ५०
बद्धश्चंपकवीरेणरथेस्वेस्थापितःपुनः
पुरंप्रेषयितुंतावन्मनश्चक्रेमहामनाः ५१
हाहाकारोमहानासीद्बद्धेपुष्कलसंज्ञिके
शत्रुघ्नंप्रययुर्योधाःपलायनपरायणाः ५२
भग्नांस्तान्वीक्ष्यशत्रुघ्नोहनूमंतमुवाचह
केनवीरेणमेभग्नंबलंवीरैरलंकृतम् ५३
तदोवाचमहीनाथपुष्कलंपरवीरहा
बद्ध्वानयतिवीरोऽसौचंपकःस्वपदोद्धुरः ५४
तस्येदृग्वाक्यमाकर्ण्यशत्रुघ्नःकोपसंयुतः
उवाचपवनोद्भूतंमोचयाशुनृपात्मजात् ५५
महाबलःसुतश्चास्यबद्ध्वायःपुष्कलंभटम्
तस्मान्मोचयवीराग्र्यकथंतिष्ठसिचाहवे ५६
एतद्वाक्यंसमाकर्ण्यहनूमानोमितिब्रुवन्
जगामतंमोचयितुंपुष्कलंचंपकाद्भटात् ५७
हनूमंतमथालोक्यतंमोचयितुमागतम्
बाणैःशतैश्चसाहस्रैर्जघानपरकोपनः ५८
बाणांस्तान्सबभंजाशुमुक्तांस्तेनमहात्मना
पुनरप्येनमेवाशुबाणान्मुंचन्महानभूत् ५९
तान्सर्वांश्चूर्णयामासनाराचान्वैरिमोचितान्
शालंकरेसमाधृत्यजघाननृपनंदनम् ६०
शालंतेनविनिर्मुक्तंतिलशःकृतवान्बली
गजोहनूमतामुक्तोनृपनंदनमस्तके ६१
सोऽप्याहतश्चंपकेनमृतोभूमौपपातसः
शिलाःसंमोचयामासहनूमान्परमास्त्रवित् ६२
चंपकस्ताःशिलाःसर्वाःक्षणाच्चूर्णितवान्भृशम्
बाणयंत्रिकयाब्रह्मन्महच्चित्रमभूदिदम् ६३
स्वमुक्तास्ताःशिलाःसर्वाश्चूर्णितावीक्ष्यमारुतिः
चुकोपहृदयेऽत्यंतंबहुवीर्यमितिस्मरन् ६४

आगत्यचकरेधृत्वानभस्युत्पतितःकपिः
तावद्ययौनेत्रपथादुपरिद्धिप्रवेगवान् ६५
चंपकस्तंहनूमंतंयुयुधेनभसिस्थितः
बाहुयुद्धेनमहताताडितःकपिपुंगवः ६६
चुकोपमानसेवीरोगर्वपर्वतदारुणः
पदाधृत्वाचंपकंतंताडयामासभूतले ६७
ताडितोऽसौकपींद्रेणक्षणादुत्थायवेगवान्
हनूमंतंतुलांगूलेधृत्वाबभ्रामसर्वतः ६८
कपींद्रस्तद्बलंवीक्ष्यहसन्पादेऽग्रहीत्पुनः
भ्रामयित्वाशतगुणंगजोपस्थेह्यपातयत् ६९
पपातभूमौसुबलोराजसूनुःसचंपकः
मूर्च्छितोवीरभूषाढ्यमलंकुर्वन्रणांगणम् ७०
तदाहाहेतिवैलोकाश्चुक्रुशुश्चंपकानुगाः
पुष्कलंमोचयामासबद्धंचंपकपाशतः ७१
इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरामाश्वमेधे
पुष्कलमोचनंनामैकपंचाशत्तमोऽध्यायः ५१

द्विपंचाशत्तमोऽध्यायः

शेषउवाच
चंपकंपतितंदृष्ट्वासुरथःक्षत्रियोबली
पुत्रदुःखपरीतांगोजगामस्यंदनेस्थितः १
कपींद्रमाजुहावाथसुरथःकोपसंयुतः
निःश्वासवेगंसंमुंचन्महाबलसमन्वितः २
आह्वयानंनृपंदृष्ट्वानिजंवीरःकपीश्वरः
जगामतंमहावीरोमहावेगसमन्वितः ३
तमागतंहनूमंतंतृणीकुर्वंतमुद्भटान्
उवाचसुरथोराजामेघगंभीरसुस्वरः ४
सुरथउवाच
धन्योसिकपिवर्यत्वंमहाबलपराक्रमः
येनराममहत्कृत्यंकृतंराक्षसकेपुरे ५

त्वंरामचरणस्यासिसेवकोभक्तिसंयुतः
त्वयावीरेणमत्पुत्रःपातितश्चंपकोबली ६
इदानींत्वांतुसंबध्यगंतास्मिनगरेमम
यत्नात्तिष्ठकपीशेशसत्यमुक्तंमयास्मृतम् ७
इतिभाषितमाकर्ण्यसुरथस्यकपीश्वरः
उवाचधीरयावाण्यारणेवीरैकभूषिते ८
हनूमानुवाच
त्वंरामचरणस्मारीवयंरामस्यसेवकाः
बध्नासिचेन्मांप्रसभंमोचयिष्यतिमत्प्रभुः ९
कुरुवीरभवत्स्वांतस्थितंसत्यंप्रतिश्रुतम्
रामंस्मरन्वैदुःखांतंयातिवेदावदंत्यदः १०
शेषउवाच
इतिब्रुवंतंसुरथःप्रशस्यपवनात्मजम्
विव्याधबाणैर्बहुभिःशितैःशाणेनदारुणैः ११
तान्मुक्तानगणय्याथबाणाञ्छोणितपातिनः
करेजग्राहकोदंडंसज्यंशरसमन्वितम् १२
गृहीत्वाकरयोश्चापंबभंजकुपितःकपिः
चीत्कुर्वंस्त्रासयन्वीरान्नखैर्दीर्णान्सृजन्भटान् १३
तेनभग्नंधनुर्दृष्ट्वास्वकीयंगुणसंयुतम्
अपरंधनुरादत्तमहद्गुणविशोभितम् १४
तच्चापिजगृहेरोषात्कपिश्चापंबभंजतत्
अन्यच्चापंसमादत्ततद्बभंजमहाबलः १५
तस्मिंश्चापेप्रभग्नेऽपिसोऽन्यद्धनुरुपाददत्
सोपिचापंबभंजाशुमहावेगसमन्वितः १६
एवंराज्ञस्तुचापानामशीतिर्विदलीकृता
क्षणेक्षणेमहारोषात्कुर्वन्नादाननेकधा १७
तदात्यंतंप्रकुपितःशक्तिमुग्रामथाददे
शक्त्यासताडितोवीरःपपातक्षणमुत्सुकः १८
उत्थायस्यंदनंराज्ञोजग्राहकुपितोभृशम्
उड्डीनस्तंगृहीत्वातुसमुद्रमतिवेगतः १९

तमुड्डीनंसमालद्त्यसुरथःपरवीरहा
ताडयामासपरिघैर्हृदिमारुतिमुद्यतम् २०
मुक्तस्तेनरथोदूराच्चूर्णीभूतोऽभवत्द्मणात्
सोऽन्यरथंसमारुह्यययौवेगात्समीरजम् २१
हनूमांस्तद्रथंपुच्छेसंवेष्टयप्रधनांगणे
हयसारथिसंयुक्तंबभंजसपताकिनम् २२
अन्यंरथंसमास्थायययौराजामहाबलः
बभंजतंरथंवेगान्मारुतिःकुपितांगकः २३
भग्नंतंस्यंदनंवीद्त्यसुरथोऽन्यसमाश्रितः
भग्नःसतेनसहसाहयसारथिसंयुतः २४
एवमेकोनपंचाशद्रथाभग्नाहनूमता
तत्कर्मवीद्त्यराजापिविसिस्मायससैनिकः २५
कुपितःप्राहकीशेंद्रंधन्योसिपवनात्मज
पराक्रमन्निदंकर्मनकर्तानकरिष्यति २६
द्मणमेकंप्रतीद्मस्वयावत्सज्यंधनुस्त्वहम्
करोमिपवनोद्भूतरामपादाब्जषट्पद २७
इत्युक्त्वाचापमात्तज्यंकृत्वारोषपरिप्लुतः
अस्त्रंपाशुपतंनामसंदधेशरउल्बणे २८
ततोभूताश्चवेतालाःपिशाचायोगिनीमुखाः
प्रादुर्बभूवुःसहसाभीषयंतःसमीरजम् २९
कपिःपाशुपतैरस्त्रैर्बद्धोलोकैरभीद्मितः
हाहेतिचवदंत्येतेयावत्तावत्समीरजः ३०
स्मृत्वारामंस्वमनसात्रोटयामासतत्द्मणात्
समुक्तगात्रःसहसायुयुधेसुरथंनृपम् ३१
तंमुक्तगात्रंसंवीद्त्यसुरथःपरमास्त्रवित्
महाबलंमन्यमानोब्राह्ममस्त्रंसमाददे ३२
मारुतिर्ब्राह्ममस्त्रंतुनिजगालहसन्बली
तन्निगीर्णंनृपोदृष्ट्वारामंसस्मारभूमिपः ३३
स्मृत्वादाशरथिंरामंरामास्त्रंस्वशरासने
संधायतंजगादेदंबद्धोसिकपिपुंगव ३४

श्रुत्वातत्प्रक्रमेद्यावत्तावद्बद्धोरणांगणे
राज्ञारामास्त्रतोवीरोहनूमान्रामसेवकः ३५
उवाचभूपंहनुमान्किंकरोमिमहीभुज
मत्स्वाम्यस्त्रेणसंबद्धोनान्येनप्राकृतेनवै ३६
तन्मानयामिभूपालनयस्वस्वपुरंप्रति
मोचयिष्यतिमत्स्वामीआगत्यसदयानिधिः ३७
बद्धेसमीरजेक्रुद्धःपुष्कलोभूमिपंययौ
तंपुष्कलंसमायांतंविव्याधवसुभिःशरैः ३८
अनेकबाणसाहस्रैर्निजघाननृपंबली
राज्ञानेकेशरास्तस्यच्छिन्नाःप्रधनमंडले ३९
एवंसमरसंक्रुद्धेसुरथेपुष्कलेतथा
बाणैर्व्याप्तंजगत्सर्वंस्थास्नुभूयश्चरिष्णुच ४०
तेषांरणोद्यमंवीक्ष्यमुमुहुःसुरसैनिकाः
मानवानांतुकावार्ताक्षणात्त्रासंसमीयुषाम् ४१
अस्त्रप्रत्यस्त्रविगमैर्महामंत्रपरिस्तुतैः
बभूवतुमुलंयुद्धंवीराणांरोमहर्षणम् ४२
तदाप्रकुपितोराजानाराचंतुसमाददे
छिन्नःसतुक्रुधामुक्तैर्वत्सदंतैःसभारतैः ४३
छिन्नेतस्मिञ्छरेराजाकोपादन्यंसमाददे
छिनत्तियावत्सशरंतावल्लग्नोहृदिक्षतः ४४
मूर्च्छांप्रापमहातेजाःपुष्कलोमहदद्भुतम्
युद्धंविधायसुमहद्राज्ञासहमहामतिः ४५
पुष्कलेपतितेराजाशत्रुघ्नःशत्रुतापनः
सुरथंप्रतिसंक्रुद्धोजगामस्यंदनस्थितः ४६
उवाचसुरथंभूपंरामभ्रातामहाबलः
त्वयामहत्कृतंकर्मयद्बद्धःपवनात्मजः ४७
पुष्कलोऽपिमहावीरस्तथान्येममसैनिकाः
पातिताःप्रधनेघोरेमहाबलपराक्रमाः ४८
इदानींतिष्ठमद्वीरान्पातयित्वारणांगणे
कुत्रयास्यसिभूमीशसहस्वममसायकान् ४९

इत्थमाश्रुत्यवीरस्यभाषितंसुरथोबली
जगादरामपादाब्जंदधच्चेतसिशोभनम् ५०
मयातेपातिताःसंख्येवीरामारुतजोन्मुखाः
इदानींपातयिष्यामित्वामपिप्रधनांगणे ५१
स्मरस्वरामंयोवीरःस्वमागत्यप्ररक्षति
अन्यथाजीवितंनास्तिमत्पुरःशत्रुतापन ५२
इत्युक्त्वाबाणसाहस्रैस्तंजघानमहीपतिः
शत्रुघ्नंशरसंघातपंजरेन्यदधात्परम् ५३
शत्रुघ्नःशरसंघातंमुंचंतंवह्निदैवतम्
अस्त्रंमुमोचदाहार्थंशराणांनतपर्वणाम् ५४
तदस्त्रंमुक्तमालोक्यराजावैसुरथोमहान्
वारुणास्त्रेणशमयन्विव्याधशरकोटिभिः ५५
तदातद्योगिनीदत्तमस्त्रंधनुषिसंदधे
मोहनंसर्ववीराणांनिद्राप्रापकमद्भुतम् ५६
तन्मोहनंमहास्त्रंसवीक्ष्यराजाहरिंस्मरन्
जगादशत्रुघ्नमयंसर्वशस्त्रास्त्रकोविदः ५७
मोहितस्यममश्रीमद्रामस्यस्मरणेनह
नान्यन्मोहनमाभातिममापिभयतापदम् ५८
इत्युक्तवतिवीरेतुमुमोचसमहास्त्रकम्
तेनबाणेनसंछिन्नंपपातरणमंडले ५९
तन्मोहनंमहास्त्रंतुनिष्फलंवीक्ष्यभूमिपे
अत्यंतंविस्मयंप्राप्यबाणंधनुषिसंदधे ६०
लवणोयेननिहतोमहासुरविमर्दनः
तंबाणंचापआधत्तघोरंकान्त्यानलप्रभम् ६१
तंवीक्ष्यराजाप्रोवाचबाणोऽयमसतांहृदि
लगतेरामभक्तस्यसंमुखेऽपिनभात्यसौ ६२
इत्येवंभाषमाणंतुबाणेनानेनशत्रुहा
विव्याधहृदयेक्षिप्रंवह्निज्वालासमप्रभम् ६३
तेनबाणेनदुःखार्तोमहापीडासमन्वितः
रथोपस्थेक्षणंमूर्च्छामवापपरतापनः ६४

सद्मणात्तांव्यथांतीत्वाजगादरिपुमग्रतः
सहस्वैकंप्रहारंमेकुत्रयासिममाग्रतः ६५
एवमुक्त्वामहासंख्येबाणमाधत्तसायके
ज्वालामालापरीतांगंस्वर्णपुंखसमन्वितम् ६६
सबाणोधनुषोमुक्तःशत्रुघ्नेनपथिस्थितः
छिन्नोऽप्यग्रफलेनाशुहृदयेसमपद्यत ६७
तेनबाणेनसंमूछ्र्यपपातस्यंदनोपरि
ततोहाहाकृतंसैन्यंभग्नंसर्वंपराद्रवत् ६८
सुरथोजयमापेदेसंग्रामेरामसेवकः
दशवीरादशसुतैर्मूर्च्छिताःपतिताःक्वचित् ६९

इति श्रीपद्मपुराणेपातालखरडेशेषवात्स्यायनसंवादेरामाश्वमेधे
सुरथविजयोनामद्विपंचाशत्तमोऽध्यायः ५२

## त्रिपंचाशत्तमोऽध्यायः

शेषउवाच
सुग्रीवस्तुतत्कटकंभग्नंवीन्द्यरणांगणे
स्वामिनंमूर्च्छितंवापियर्योयोद्धुंनृपंप्रति १
आगच्छभूपसर्वान्नोमूर्च्छयित्वाकुतोभवान्
गच्छतिद्विप्रंमांदेहियुद्धंरणविशारद २
एवमुक्त्वानगंकंचिद्विशालंशाखयायुतम्
उत्पाटयप्राहरत्तस्यमस्तकेबलसंयुतः ३
तेनप्रहारेणमहाबलोनृपः
संवीन्द्यसुग्रीवमथोस्वचापे
बाणान्समाधायशितान्सरोषा
ज्ञघानवन्नस्यतिपौरुषोबली ४
तान्बाणान्व्यधमत्सर्वान्सुग्रीवःसहसाहसन्
ताडयामासहृदयेसुरथंसुमहाबलः ५
पर्वतैःशिखरैश्चैवनगैर्द्विरदवर्ष्मभिः
वेगात्संताडयामासदारयन्सुरथंनखैः ६
तमप्याशुबबंधास्त्राद्रामसंज्ञात्सुदारुणात्

बद्धःकपिवरोमेनेसुरथंरामसेवकम् ७
गजोयथायसमयींशृंखलांपादलंबिताम्
प्राप्यकिंचिन्नवैकर्तुंशक्नोतिसतथाह्यभूत् ८
जितंतेनमहाराज्ञासुरथेनसुपुत्रिणा
सर्वान्वीरान्रथेस्थाप्यययौस्वनगरंप्रति ९
गत्वासभायांसुमहान्बद्धंमारुतिमब्रवीत्
स्मरश्रीरघुनाथंत्वंदयालुंभक्तपालकम् १०
यथात्वांबंधनात्सद्योमोचयिष्यतिसुष्ठुधीः
नान्यथायुतवर्षेणमोचयिष्यामिबंधनात् ११
इत्युक्तमाकर्ण्यसमीरजस्तदा
सुबद्धमात्मानमवेक्ष्यवीरान्
संमूर्च्छिताञ्छत्रुशराभिघात –
पीडायुतान्बंधनमुक्तयेस्मरत् १२
श्रीरामचंद्रंरघुवंशजातंसीतापतिंपंकजपत्रनेत्रम्
स्वमुक्तयेबंधनतःकृपालुंसस्मारसर्वैःकरणैर्विशोकैः १३
हनूमानुवाच
हानाथहानरवरोत्तमहादयालो
सीतापतेरुचिरकुंतलशोभिवक्त्र
भक्तार्तिदाहकमनोहररूपधारिन्
मांबंधनात्सपदिमोचयमाविलंबम् १४
संमोचितास्तुभवतागजपुंगवाद्याः
देवाश्चदानवकुलाग्निसुदह्यमानाः
तत्सुंदरीशिरसिसंस्थितकेशबंधः
संमोचितस्तुकरुणालयमांस्मरस्व १५
त्वंयागकर्मनिरतोऽसिमुनीश्वरेंद्रै
र्धर्मंविचारयसिभूमिपतीड्यपाद
अत्राहमद्यसुरथेनविगाढपाश –
बद्धोस्मिमोचयमहापुरुषाशुदेव १६
नोमोचयस्यथयदिस्मरणातिरेकात्
त्वंसर्वदेववरपूजितपादपद्म

लोकोभवंतमिदमुल्लसितोऽहसिष्य –
त्तस्माद्विलंबमिहमाचरमोचयाशु १७
इतिश्रुत्वाजगन्नाथोरघुवीरःकृपानिधिः
भक्तंमोचयितुंप्रागात्पुष्पकेणाशुवेगिना १८
लक्ष्मणेनानुगेनाथभरतेनसुशोभितम्
मुनिवृंदैर्व्यासमुख्यैःसमेतंददृशेकपिः १९
तमागतंनिजंनाथंवीक्ष्यभूपंसमब्रवीत्
पश्यराजन्निजंमोक्तुमायातंकृपयाहरिम् २०
अनेकेमोचिताःपूर्वंस्मरणात्सेवकानिजाः
तथामांपाशतोबद्धंसंमोचयितुमागतः २१
श्रीरामभद्रमायांतंवीक्ष्यासौसुरथःक्षणात्
नतीश्चशतशश्चक्रेभक्तिपूरपरिप्लुतः २२
श्रीरामस्तंनिजैर्दोर्भिःपरिरेभेचतुर्भुजः
मूर्ध्निसिंचन्नश्रुजलैर्हर्षाद्भक्तंस्वकंमुहुः २३
उवाचधन्यदेहोऽसिमहत्कर्मकृतंत्वया
कपीश्वरस्त्वयाबद्धोहनूमान्सर्वतोबलः २४
श्रीरामःकपिवर्यंतंमोचयामासबंधनात्
मूर्छितांस्तान्भटान्सर्वान्वीक्ष्यदृष्ट्यास्वजीवयत् २५
तेमूर्च्छांतत्यजुर्दृष्टारामेणसुरसेविना
उत्थितादद्दृशुःश्रीमद्रामचंद्रंमनोरमम् २६
प्रणतास्तेरघुपतिंतेनपृष्टाअनामयम्
सुखीभूतानृपंप्रोचुःसर्वंस्वकुशलंनृपाः २७
सुरथोवीक्ष्यरामंचकृपार्थंसेवकात्मनः
आगतंसकलंराज्यंसहयंसुमुदार्पयत् २८
अनेकवरिवस्याभिःश्रीरामंसमतोषयत्
कथयामासमेऽन्याय्यंकृतंतेक्षमराघव
श्रीरामस्तमुवाचाथकृतंतेवाहरक्षणम् २९
क्षत्रियाणामयंधर्मःस्वामिनासहयुद्ध्यते
त्वयासाधुकृतंकर्मरणेवीराःप्रतोषिताः ३०
इत्युक्तवंतंनृहरिंपूजयन्ससुतोऽभवत्

श्रीरामस्त्रिदिनंस्थित्वाययौतमनुमंत्र्यच ३१
कामगेनविमानेनमुनिभिःसहितोमहान्
तंदृष्ट्वाविस्मितास्तस्यकथाश्चक्रुर्मनोहराः ३२
चंपकंस्वपुरेस्थाप्यसुरथःक्षत्रियोबली
शत्रुघ्नेनसमंयातुंमनश्चक्रेमहाबलः ३३
शत्रुघ्नःस्वहयंप्राप्यभेरीनादानकारयत्
शंखनादान्बहुविधान्सर्वत्रसमवादयत् ३४
सुरथेनसमंवीरोयज्ञवाहममूमुचत्
सबभ्रामापरान्देशान्नकोपिजगृहेबली ३५
यत्रयत्रगतोवाहस्तत्रतत्रपरिभ्रमन्
सैन्येनमहतायातःशत्रुघ्नःसुरथेनच ३६
कदाचिज्जाह्नवीतीरेवाल्मीकेराश्रमंवरम्
गतोमुनिवरैर्जुष्टंप्रातर्धूमेनचिह्नितम् ३७

इति श्रीपद्मपुराणेपातालखरडेशेषवात्स्यायनसंवादेरामाश्वमेधे रघुनाथसमागमोनामत्रिपंचाशत्तमोऽध्यायः ५३

## चतुःपंचाशत्तमोऽध्यायः

शेषउवाच
गतःप्रातःक्रियांकर्तुंसमिधस्तत्क्रियार्हकाः
आनेतुंजानकीसूनुर्वृतोमुनिसुतैर्लवः १
ददर्शतत्रयज्ञाश्वंस्वर्णपत्रेणचिह्नितम्
कुंकुमागरुकस्तूरीदिव्यगंधेनवासितम् २
विलोक्यजातकुतुकोमुनिपुत्रानुवाचसः
अर्वाकस्यमनोवेगःप्राप्तोदैवान्मदाश्रमम् ३
आगच्छंतुमयासार्धंप्रेक्षंतांमाभयंकृथाः
इत्युक्त्वासलवस्तूर्णंवाहस्यनिकटेगतः ४
सरराजसमीपस्थोवाहस्यरघुवंशजः
धनुर्बाणधरःस्कंधेजयंतइवदुर्जयः ५
गत्वामुनिसुतैःसार्धंवाचयामासपत्रकम्
भालस्थितंस्पष्टवर्णराजिराजितमुत्तमम् ६

विवस्वतोमहान्वंशः सर्वलोकेषुविश्रुतः
यत्रकोपिपराबाधीनपरद्रव्यलंपटः ७
सूर्यवंशध्वजोधन्वीधनुर्दीक्षागुरुर्गुरुः
यंदेवाःसामराःसर्वेनमंतिमणिमौलिभिः ८
तस्यात्मजोवीरबलदर्पहारीरघूद्वहः
रामचंद्रोमहाभागःसर्वशूरशिरोमणिः ९
तन्माताकोशलनृपपुत्रीरत्नसमुद्भवा
तस्याःकुक्षिभवंरत्नंरामःशत्रुक्षयंकरः १०
करोतिहयमेधंसब्राह्मणेनसुशिक्षितः
रावणाभिधविप्रेंद्रवधपापापनुत्तये ११
मोचितस्तेनवाहानांमुख्योऽसौयाज्ञिकोहयः
महाबलपरीवारोपरिखाभिःसुरक्षितः १२
तद्रक्षकोऽस्तिमद्भ्राताशत्रुघ्नोलवणांतकः
हस्त्यश्वरथपादातसंघसेनासमन्वितः १३
यस्यराज्ञइतिश्रेष्ठोमानोजायेत्स्वकान्मदात्
शूरावयंधनुर्धारिश्रेष्ठावयमिहोत्कटाः १४
तेगृह्णंतुबलाद्वाहंरत्नमालाविभूषितम्
मनोवेगंकामजवंसर्वगत्याधिभास्वरम् १५
ततोमोचयिताभ्राताशत्रुघ्नोलीलयाहठात्
शरासनविनिर्मुक्तवत्सदंतकृतव्यथात् १६
येक्षत्रियाःक्षत्रियकन्यकायां
जाताश्चसत्क्षेत्रकुलेषुसत्सु
गृह्णंतुतेतद्विपरीतदेहा
नमंतुराज्यंरघवेनिवेद्य १७
इतिसंवाच्यकुपितोलवःशस्त्रधनुर्धरः
उवाचमुनिपुत्रांस्तान्रोषगद्गदभाषितः १८
पश्यतक्षिप्रमेतस्यधृष्टत्वंक्षत्रियस्यवै
लिलेखयोभालपत्रेस्वप्रतापबलंनृपः १९
कोऽसौरामःकःशत्रुघ्नःकीटाःस्वल्पबलाश्रिताः
क्षत्रियाणांकुलेजाताएतेनवयमुत्तमाः २०

एतस्यवीरसूर्माताजानकीनकुशप्रसूः
यारत्नंकुशसंज्ञंतुदधाराग्निमिवारणिः २१
इदानींक्षत्रियत्वादिदर्शयिष्यामिसर्वतः
यदिक्षत्रियभूरेषभविष्यतिचशत्रुहा २२
गृहीष्यतिमयाबद्धंवाहंयज्ञक्रियोचितम्
नोचेत्क्षत्रत्वमुन्मुच्यकुशस्यचरणार्चकः २३
अधुनामद्धनुर्मुक्तैःशरैःसुप्तोभविष्यति
अन्येयेचमहावीरारणमंडलभूषणाः २४
इत्यादिवाक्यमुच्चार्यलवोजग्राहतंहयम्
तृणीकृत्यनृपान्सर्वांश्चापबाणधरोवरः २५
तदामुनिसुताःप्रोचुर्लवंहयजिहीर्षकम्
अयोध्यानृपतीरामोमहाबलपराक्रमः २६
तस्यवाहंनगृह्णातिशक्रोऽपिस्वबलोद्धतः
मागृहाणशृणुष्वेदंमद्वाक्यंहितसंयुतम् २७
इत्युक्तंसश्रुतौधृत्वाजगादसद्द्विजात्मजान्
यूयंबलंनजानीथक्षत्रियाणांद्विजोत्तमाः २८
क्षत्रियावीर्यशौंडीर्याद्द्विजाभोजनशालिनः
तस्माद्यूयंगृहेगत्वाभुंजंतुजननीहृतम् २९
इत्युक्तास्तेऽभवंस्तूष्णींप्रेक्षंतस्तत्पराक्रमम्
लवस्यमुनिपुत्रास्तेसंतस्थुर्दूरतोबहिः ३०
एवंव्यतिकरेवृत्तेसेवकास्तस्यभूपतेः
आयातास्तंहयंबद्धंदृष्ट्वाप्रोचुस्तदालवम् ३१
बबंधकोहयमहोरुष्टःकस्यचधर्मराट्
कोबाणव्रजमध्यस्थःप्राप्स्यतेपरमांव्यथाम् ३२
तदालवोजगादाशुमयाबद्धोऽश्वउत्तमः
योमोचयतितस्याशुरुष्टोभ्राताकुशोमहान् ३३
यमःकरिष्यतिकिमुह्यागतोऽपिस्वयंप्रभुः
नत्वागमिष्यतिद्विप्रंशरवृष्ट्यासुतोषितः ३४
शेषउवाच
इतिवाक्यंसमाकर्ण्यबालोयमितितेब्रुवन्

समागतामोचयितुंहयंबद्धंतुयेहरेः ३५
तान्वैमोचयितुंप्राप्ताञ्छत्रुघ्नस्यचसेवकान्
कोदंडंकरयोर्धृत्वाक्षुरप्रान्सममूमुचत् ३६
तेछिन्नबाहवःशोकाच्छत्रुघ्नंप्रतिसंगताः
पृष्टास्तेजगदुःसर्वेलवात्स्वभुजकृंतनम् ३७
इति श्रीपद्मपुराणेपातालखराडेशेषवात्स्यायनसंवादेरामाश्वमेधे
लवेनहयबंधनंनामचतुःपंचाशत्तमोऽध्यायः ५४

पंचपंचाशत्तमोऽध्यायः

व्यासउवाच
एतांश्रुत्वाकथांरम्यांलवस्यबलिनोमुनिः
संशयानःपर्यपृच्छन्नागंदशशताननम् १
श्रीवात्स्यायनउवाच
त्वयोक्तंतुपुरारामःसीतामेकाकिनींवने
रजकस्यदुरुक्त्यासौतत्याजमहिलोलुपः २
जानक्यांक्वसुतौजातौक्वधनुर्धरतांगतौ
कथंचशिक्षिताविद्यायोरामहयमाहरत् ३
व्यासउवाच
इतिश्रुत्वामुनेर्वाक्यंशेषोनागोमहामतिः
प्रशस्यविप्रंजगदेरामचारित्रमद्भुतम् ४
शेषउवाच
रामोराज्यमयोध्यायांभ्रातृभिःसहितोऽकरोत्
धर्मेणपालयन्सर्वंक्षितिखंडंस्वयास्त्रिया ५
सीतादधारतद्वीर्यंमासाःपंचाभवंस्तदा
अत्यंतंशुशुभेदेवीत्रयीवपुरुषंधरा ६
कदाचित्समयेरामःपप्रच्छचविदेहजाम्
कदृशोदोहदःसाध्विमयातेसाध्यतेहिसः ७
रहस्येवतुसापृष्टात्रपमाणापतिंसती
लज्जागद्गदवाग्रामंनिजगादवचोऽमृतम् ८
सीतोवाच

त्वत्कृपातोमयासर्वंभुक्तंभोच्यामिशोभनम्
नकश्चिन्मानसेकांतविषयोह्यतिरिच्यते ९
यस्याभवादृशःस्वामीदेवसंस्तुतसत्पदः
तस्याःसर्ववरीवर्तिनकिंचिदवशिष्यते १०
त्वमाग्रहात्पृच्छसिमांदोहदंमनसिस्थितम्
ब्रवीमिपुरतःसत्यंतवस्वामिन्मनोहर ११
चिरंजातंमयासत्योलोपामुद्रादिकाःस्त्रियः
दृष्टास्वामिन्मनोद्रष्टुंताउत्सुकतिसुंदरीः १२
राज्यंप्राप्तात्वयासार्द्धमनेकसुखमास्थिता
कृतघ्नाहंकदापीहतानमस्कर्तुमानसा १३
तत्रगत्वातपःकोशान्वस्त्राद्यैःपरिपूजये
रत्नानिचैवभास्वंतिभूषाश्चपिसमर्पये १४
यथामेतोषिताःसत्योददत्याशीर्मनोहराः
एषमेदोहदःकांतपरिपूरयमानसः १५
इत्थमाकर्ण्यवचनंसीतायाःसुमनोहरम्
जगादपरमप्रीतोरामचंद्रःप्रियांप्रति १६
धन्यासिजानकीप्रातर्गमिष्यसितपोधनाः
प्रेक्ष्यतास्तुकृतार्थात्वमागमिष्यसिमेंऽतिकम् १७
इतिरामवचःश्रुत्वापरमांप्रीतिमापसा
प्रातर्ममभवत्यद्धातापसीनांसमीक्षणम् १८
अथतन्निशिरामेणचाराःकीर्तिंनिजांश्रुताम्
प्रेक्षितुंप्रेषितास्तेतुनिशीथेह्यगमनञ्छनैः १९
तेप्रत्यहंरामकथाःशृणवंतःसुमनोहराः
तद्दिनेगतवंतस्तुधनाढ्यस्यगृहंमहत् २०
दीपंवीक्ष्यप्रज्वलंतंवचनंवीक्ष्यमानुषम्
स्थितास्तत्रक्षणंचाराःसमशृणवन्यशोभृशम् २१
तत्रकाचनवामाक्षीबालकंप्रतिहर्षिता
स्तनंधयंतंनिजगौवाक्यंतुसुमनोहरम् २२
पिबपुत्रयथेष्टंत्वंस्तन्यंममनोहरम्
पश्चात्तवसुदुष्प्रापंभविष्यतिममात्मज २३

एतत्पुर्याःपतीरामोनीलोत्पलदलप्रभः
तत्पुरीस्थजनानांतुनभविष्यतिवैजनुः २४
जन्माभावात्कथंपानंस्तन्यस्यभुविजायते
तस्मात्पिबमुहुःस्तन्यंदुर्ल्लभंहृदिमन्यच २५
येश्रीरामंस्मरिष्यंतिध्यायंतिचवदंतिये
तेषामपिपयःपानंनभविष्यतिजातुचित् २६
इत्यादिवाक्यंसंश्रुत्यश्रीरामयशसोऽमृतम्
हर्षिताःप्रययुर्गेहमन्यद्भाग्यवतोमहत् २७
तावदन्यश्चरस्तत्रमनोरममिदंगृहम्
मत्वातिष्ठन्हिरामस्यद्तणंशुश्रूषयायशः २८
तत्रकाचिन्निजंकांतंपर्यंकोपरिसुस्थितम्
तांबूलंचर्वतीदत्तंभर्त्तास्नेहेनसुंदरी २९
कंकणस्वरशोभाढ्याकर्पूरागरुधूपिता
कांतंवीद्त्यचलन्नेत्राकामरूपमवोचत ३०
नाथत्वंतादृशोमह्यंभासियादृग्रघोःपतिः
अत्यंतंसुंदरतरंवपुर्बिभ्रत्सुकोमलम् ३१
पद्मप्रांतंनेत्रयुग्मंवद्तोमोहनविस्तृतम्
भुजौचसांगदौबिभ्रत्साद्ताद्रामइवासिमे ३२
इतिवाक्यंसमाकर्ण्यकांतायाःसुमनोहरम्
उवाचनेत्रयोःप्रांतंनर्तयन्कामसुंदरः ३३
शृणुकांतेत्वयाप्रोक्तंसाध्व्यातुसुमनोहरम्
पतिव्रतानांतद्योग्यंस्वकांतोरामएवहि ३४
परंक्वाहंमंदभाग्यःक्वरामोभाग्यवान्महान्
क्वचाहंकीटवत्तुच्छःक्वब्रह्मादिसुरार्चितः ३५
खद्योतःक्वनभोरत्नंशलभःक्वनुपामरः
गजारिःक्वमृगेंद्रोऽसौशशकःक्वनुमंदधीः ३६
क्वचसाजाह्नवीदेवीक्वरथ्याजलमुत्पथम्
क्वमेरुःसुरसंवासःक्वगुंजापुंजकोल्पकः ३७
तथाहंक्वक्वरामोऽसौयत्पादरजसांगना
शिलीभूताद्तणाज्ञाताब्रह्ममोहनरूपधृक् ३८

इतिवाक्यंप्रब्रुवाणंपरिरेभेनिजंपतिम्
जातकामाहृतप्रेम्णानर्तितभ्रूधनुर्धरा ३९
इत्यादिवाक्यंसंश्रुत्यगतश्चान्यनिवेशनम्
तावदन्यश्चरोवाक्यंशुश्रावयशसान्वितम् ४०
काचित्पुष्पमयींशय्यांचंदनंसहचंद्रकम्
सर्वंविधायकामार्हंजगादवचनंपतिम् ४१
पतेकुरुष्वभोगार्हेशयनंपुष्पमंचके
चंदनादिकलेपंचतथाभोगमनेकधा ४२
त्वादृशाएवभोगार्हानचरामपराङ्मुखाः
सर्वंरामकृपाप्राप्तमुपभुंक्ष्वयथातथम् ४३
मत्सदृशीकामिनीतेचंदनंतापहारकम्
पर्यंकःपुष्परचितःसर्वंरामकृपाभवम् ४४
येरामंनभजिष्यंतितेनराजठरंस्वयम्
नभर्तुंशक्नुवंत्येववस्त्रभोगादिवर्जिताः ४५
इतिब्रुवंतींमहिलांहर्षितःपतिरब्रवीत्
सर्वंतथ्यंब्रवीषित्वंममरामकृपाभवम् ४६
इत्येवंरामभद्रस्ययशःश्रुत्वागतश्चरः
तावदन्यस्यवेश्मस्थश्चरोऽन्यशुश्रुवेवचः ४७
काचित्कांतेनपर्यंकेवीणावादनतत्परा
कांतेनरामसत्कीर्तिंगायमानापतिंजगौ ४८
स्वामिन्वयंधन्यतमायेषांपुर्याःपतिःप्रभुः
श्रीरामःस्वप्रजाःपुत्रानिवपातिचरक्षकः ४९
योमहत्कर्मदुःसाध्यंकृतवान्सुलभंनतत्
समुद्रंयोनिजग्राहसेतुंतत्रबबंधच ५०
रावणंयोरिपुंहत्वालंकांसंभज्यवानरैः
जानकीमाजहारात्रमहदाचारमाचरत् ५१
इतिप्रोक्तंसमाकर्ण्यवचःसुमधुराक्षरम्
पतिःस्मितंचकारेमांवाक्यंपुनरथाब्रवीत् ५२
मुग्धेनेदंमहत्कर्मरामचंद्रस्यभामिनी
दशाननवधादीनिसमुद्रदमनानिच ५३

लीलयायोऽवनिंप्राप्तोब्रह्मादिप्रार्थितोमहान्
करोतिसच्चरित्राणिमहापापहराणिच ५४
माजानीहिनरंरामंकौसल्यानंददायकम्
सृजत्यवतिहंत्येतद्विश्वंलीलात्तमानुषः ५५
धन्यावयंयेरामस्यपश्यामोमुखपंकजम्
ब्रह्मादिसुरदुर्दर्शंमहत्पुरायकृतोवयम् ५६
अशृणोद्रामचंद्रस्यचरित्रंश्रुतिसौख्यदम्
इत्यादिवाक्यंशुश्रावचारोद्वारिस्थितोमुहुः ५७
अन्योह्यन्यंगृहंगत्वातस्थौश्रोतुंहरेर्यशः
तत्रापिरामभद्रस्ययशःशुश्रावशोभनम् ५८
खेलंतीस्वामिनासार्धंद्यूतेनसुमनोहरा
उवाचवाक्यंमधुरंनर्तयंतीवकंकणे ५९
जितंमयाकांतजवेनसर्वं
करिष्यसित्वंकिमुहारिमानसः
इत्यादिवाक्यंपरिहासपूर्वकं
कृत्वास्वकांतंपरिषस्वजेमुदा ६०
उवाचकांतश्चार्वंगिजितमेवसुशोभने
रामंमेस्मरतोनित्यंनकुत्रापिपराजयः ६१
इदानींत्वांतुजेष्यामिरामंस्मृत्वामनोहरम्
देवायथापुरास्मृत्वादितिजानजयन्क्षणात् ६२
एवमुक्त्वापाशकानांपरिवर्तनमाकरोत्
तावज्जयंप्रपेदेऽसौहर्षितोवाक्यमब्रवीत् ६३
ममप्रोक्तमृतंजातंजितात्वंनवयौवना
रामस्मारीकदाप्येवनभवेद्रिपुतोभयी ६४
इत्येवंतौवदंतौचपरस्परमथोत्सुकौ
परिरभ्यदृढंप्रेम्णाततश्चारोगतोगृहम् ६५
एवंपंचमहाचाराराज्ञःसंश्रुत्यवैयशः
परस्परंप्रशंसंतोगेहंस्वंस्वंययुर्मुदा ६६
एकःषष्ठश्चरःकारुगेहानालोक्यतत्रह
जगामश्रोतुकामोऽसौयशोराज्ञोमहीपतेः ६७

रजकः क्रोधसंस्पृष्टोभार्यामन्यगृहोषिताम्
पदासंताडयामासधिक्कुर्वञ्छोणनेत्रवान् ६८
गच्छत्वंमद्गृहात्तस्यगेहंयत्रोषितादिनम्
नाहंगृह्णामिभवतींदुष्टांवचनलंघिनीम् ६९
तदास्यमाताप्रोवाचमात्यजैनांगृहागताम्
अपराधेनरहितांदुष्टकर्मविवर्जिताम् ७०
मातरंप्रत्युवाचाथरजकः क्रोधसंयुतः
नाहंरामइवप्रेष्ठांगृह्णाम्यन्यगृहोषिताम् ७१
सराजायत्करोत्येवतत्सर्वंनीतिमद्भवेत्
अहंगृह्णामिनोभार्यांपरवेश्मनिसंस्थिताम् ७२
पुनः पुनरुवाचेदंनाहंरामोमहीश्वरः
यः परस्यगृहेसंस्थांजानकींवैररक्षसः ७३
इतिवाक्यंसमाश्रुत्यचारः क्रोधपरिप्लुतः
खड्गंगृहीत्वास्वकरेतंहंतुंविदधेमनः ७४
सरामोक्तंचसस्मारनवध्यः कोपिमेजनः
इतिज्ञात्वासरोषंतुसंजहारमहामनाः ७५
तदाश्रुत्वासुदुःखार्तः पंचचारायतः स्थिताः
ततोगतः प्रकुपितोनिःश्वसन्मुहुरुच्छ्वसन् ७६
तेवैपरस्परंतत्रमिलितास्तुसमब्रुवन्
स्वश्रुतंरामचरितंसर्वलोकैकपूजितम् ७७
तेतद्भाषितमाकर्ण्यपरस्परममंत्रयन्
नवाच्यंरघुनाथायावाच्यंदुष्टजनोदितम् ७८
इतिसंमंत्र्यतेगेहंगत्वासुषुपुरुत्सुकाः
प्राताराज्ञेप्रशंसामइतिबुद्ध्याव्यवस्थिताः ७९

इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरामाश्वमेधे
चारनिरीक्षणंनामपंचपंचाशत्तमोऽध्यायः ५५

## षट्पंचाशत्तमोऽध्यायः

शेषउवाच
प्रातर्नित्यंविधायासौब्राह्मणान्वेदवित्तमान्

हिरगयदानैःसंतर्प्यविधिवत्संसदंययौ १
लोकाःसर्वेनमस्कर्तुंरघुनाथंमहीपतिम्
पुत्रवत्स्वप्रजाःसर्वाःपालयंतंययुःसभाम् २
लद्मणेनातपत्रंतुधृतंमूर्धनिभूपतेः
तदाभरतशत्रुघ्नौचामरद्वंद्वधारिणौ ३
वसिष्ठप्रमुखास्तत्रमुनयःपर्युपासत
सुमंत्रप्रमुखास्तत्रमंत्रिणोन्यायकर्तृकाः ४
एवंप्रवृत्तेसमयेषट्चारास्तेस्वलंकृताः
समाजग्मुर्नरपतिंनमस्कर्तुंसभास्थितम् ५
तान्वक्तुकामान्संवीद्त्यचारान्नृपतिसत्तमः
सभायामंतरावेश्मरहःप्राविशदुत्सुकः ६
एकांतेतांश्चरान्सर्वान्पप्रच्छसुमतिर्नृपः
कथयंतुचरामह्यंयथातथ्यमरिंदमाः ७
लोकाब्रुवंतिमांकीदृग्भार्यायाममकीदृशम्
मंत्रिणांकीदृशंलोकावदंतिचरितंकथम् ८
इतिवाक्यंसमाकगर्यचारारामममथाब्रुवन्
मेघगंभीरयावाचापृच्छंतंरघुनायकम् ९
चाराऊचुः
नाथकीर्तिर्जनान्सर्वान्पावयत्यधुनाभुवि
गृहेगृहेश्रुतास्माभिःपुरुषैःस्त्रीभिरीडिता १०
विवस्वतोमहान्वंशोभवतापरमेष्ठिना
अलंकर्तुंगतंभूमौकीर्तिर्विस्तारिताबहुः ११
अनेकेसगराद्याश्चकीर्तिमंतोमहाबलाः
अभवंस्तादृशीकीर्तिस्तेषांनाभूद्यथातव १२
त्वयानाथेनसकलाःकृतार्थाश्चप्रजाःकृताः
यासांनाकालमरणंनचरागाद्युपद्रुतिः १३
यादृशश्चंद्रमालोकेयादृशीजाह्नवीसरित्
तादृक्तवचसत्कीर्तिःप्रकाशयतिभूतलम् १४
ब्रह्मादिकाभवत्कीर्तिमाकगर्यत्रपिताभृशम्
नाथसर्वत्रतेकीर्तिःपावयत्यधुनाजनान् १५

वयंधन्यतमाःसर्वेयेचारास्तवभूपते
क्षणेक्षणेतवमुखंलोकयाममनोहरम् १६
इत्यादिवाक्यंचाराणांपंचानांवीक्ष्यराघवः
षष्ठंपप्रच्छचारंतंविलक्षणमुखांकितम् १७
रामउवाच
सत्यंवदमहाबुद्धेयच्छ्रुतंलोकसंकरे
तादृक्प्रशंसमेसर्वमन्यथापातकादिकृत् १८
पुनःपुनश्चतंरामःपप्रच्छाशुसविस्तरम्
तथापिनब्रवीत्येवरामंलौकिकभाषितम् १९
तदारामःप्रत्यवोचच्चारंमुखविलक्षितम्
शपामित्वांतुसत्येनशंससर्वंयथातथम् २०
तदारामंप्रत्युवाचचारोवाक्यंशनैःशनैः
अकथ्यमपितेवाच्यंवाक्यंकारुजनोदितम् २१
चारउवाच
स्वामिन्सर्वत्रतेकीर्तिर्दशाननवधादिका
अन्यत्रराक्षसगृहेस्थितायास्तेस्त्रियाअहो २२
कारुरेकस्तुरजकोनिशीथेमहिलांस्वकाम्
अन्यगेहोषितांदृष्ट्वाधिक्कुर्वन्समताडयत् २३
तन्माताप्रत्युवाचेमांकथंताडयसेऽनघाम्
गृहाणमाकृथानिंदांस्त्रियंमद्वाक्यमाचर २४
तदावोचत्सरजकोनाहंरामोमहीपतिः
यद्राक्षसगृहेध्युष्टांसीतामंगीचकारसः २५
सर्वंराज्ञःकृतंकर्मनीतिमद्भवतिप्रभो
अन्येषांपुण्यकर्तॄणामपिकृत्यमनीतिमत् २६
पुनःपुनरुवाचासौनाहंरामोमहीपतिः
चुक्रुधेसमयेराजन्मयावाक्यंतवस्मृतम् २७
तदानींशिरआच्छिद्यपातयामिमहीतले
कृतःपुनर्विचारोमेक्वरामोरजकःक्वनु २८
अयंदुष्टोऽनृतंवक्तिनहीदंतथ्यमुच्यते
आज्ञापयसिचेद्रामसांप्रतंमारयामितम् २९

अवाच्यमपितेप्रोक्तंत्वदाग्रहतउन्नयम्
राजाप्रमाणमत्रेदंविचारयतुसंगतम् ३०
शेषउवाच
इतिवाक्यंसमाकर्ण्यमहावज्रनिभाक्षरम्
निःश्वसन्मुहुरुच्छ्वासमाचरन्मूर्च्छितोऽपतत् ३१
तंमूर्च्छितंनृपंदृष्ट्वाचारादुःखसमन्विताः
वीजयामासुर्वासोग्रैर्दुःखापनयहेतवे ३२
सलब्धसंज्ञोनृपतिर्मुहूर्तेनजगादतान्
गच्छंतुभरतंशीघ्रंप्रेषयंतुचमांप्रति ३३
तेदुःखिताश्चरास्तूर्णंभरतस्यगृहंगताः
कथयामासुरामस्यसंदेशंनयहारकाः ३४
भरतोरामसंदेशंश्रुत्वाधीमान्ययौसदः
रामंप्रतिरहःसंस्थंश्रुत्वातंत्वरयायुतः ३५
आगत्यतंप्रतीहारंप्रत्युवाचमहामनाः
कुत्रास्तेरामभद्रोऽसौममभ्राताकृपानिधिः ३६
तन्निर्दिष्टंगृहंवीरोययौरत्नमनोहरम्
रामंविलोक्यविक्लांतंभयमापसमानसे ३७
किंवासौकुपितोरामःकिंवादुःखमिदंविभोः
तदाप्रोवाचनृपतिंनिःश्वसंतंमुहुर्मुहुः ३८
स्वामिन्सुखसमाराध्यंवक्त्रंतेकथमानतम्
अश्रुभिर्लक्ष्यतेराहुग्रस्तदेहःशशीवते ३९
सर्वमेकारणंतथ्यंब्रूहिमांकिंकरोमिते
त्यजदुःखंमहाराजकथंदुःखस्यभाजनम् ४०
एवंभ्रात्राप्रोच्यमानोगद्गदस्वरयागिरा
प्रोवाचभ्रातरंवीरोरामचंद्रश्चधार्मिकः ४१
शृणुभ्रातर्वचोमह्यंममदुःखस्यकारणम्
तन्मार्जनंकुरुष्वाद्यभ्रातःप्रातर्महामते ४२
वंशेवैवस्वतेराजानकश्चिदयशःक्षतः
मत्कीर्तिरद्यकलुषागंगायमुनयागता ४३
येषांयशोनृणांभूमौतेषामेवसुजीवितम्

अपकीर्तिक्षतानांतुजीवितंमृतकैःसमम् ४४
येषांयशोभवेद्भूमौतेषांलोकाःसनातनाः
अपकीर्त्युरगीदष्टास्तेषांभूयादधोगतिः ४५
अद्यमेकलुषाकीर्तिःस्वर्धुनीलोकविश्रुता
तच्छृणुष्ववचोमेऽद्यरजकेनयथोदितम् ४६
अस्मिन्पुरेऽद्यरजकउक्तवाञ्जानकीभवम्
किंचिद्वाच्यंततोभ्रातःकिंकरोमिमहीतले ४७
किमात्मानंजहाम्यद्यकिमेनांजानकींस्त्रियम्
उभयोःकिंमयाकार्यंतत्तथ्यंब्रूहिमेभवान् ४८
इत्युक्त्वानिर्गलद्बाष्पोवेपथुक्षुभितांगकः
पपातभूमौविरजोधार्मिकाणांशिरोमणिः ४९
भ्रातरंपतितंदृष्ट्वाभरतोःदुःखसंयुतः
संवीज्यशनकैरामंप्राप्तसंज्ञंचकारसः ५०
संज्ञांप्राप्तंतुसंवीज्यरामचंद्रंसुदुःखितम्
उवाचदुःखनाशायवाक्यंतुसुमनोहरम् ५१
कोऽयवैरजकःकिंतुवाच्यंवाक्यंयथाब्रवीत्
जिह्वाच्छेदंकरिष्यामिजानकीवाच्यकारिणः ५२
तदारामोऽब्रवीद्वाक्यंरजकस्यमुखोद्गतम्
श्रुतंचारेणतत्सर्वंभरतायमहात्मने ५३
तच्छ्रुत्वाभरतःप्राहभ्रातरंदुःखशोकिनम्
जानकीवह्निशुद्धाभूल्लंकायांवीरपूजिता ५४
ब्रह्माब्रवीदियंशुद्धापितादशरथस्तव
कथंसारजकोक्तित्वाद्धातव्यालोकपूजिता ५५
ब्रह्मादिसंस्तुताकीर्तिस्तवलोकान्पुनातिहि
साकथंरजकोक्त्यावैकलुषाद्यभविष्यति ५६
तस्मात्त्यजमहादुःखंसीतावाच्यसमुद्भवम्
कुरुराज्यंतयासार्धमंतर्वत्न्यासुभाग्यया ५७
त्वंकथंस्वशरीरंतुहातुमिच्छसिशोभनम्
वयंहताःस्मसर्वेऽद्यत्वांविनादुःखनाशकम् ५८
क्षणंसीतानजीवेतत्वांविनासुमहोदया

तस्मात्पतिव्रतासाकंभुनक्तुविपुलांश्रियम् ५९
इतिवाक्यंसमाकर्ग्यभरतस्यचधार्मिकः
पुनरेवजगादेमंवाक्यंवाक्यविदांवरः ६०
यत्त्वंकथयसिभ्रातस्तत्सर्वंधर्मसंयुतम्
परंयद्वच्म्यहंवाक्यंतत्कुरुष्वममाज्ञया ६१
जानाम्येनांवह्निशुद्धांपवित्रांलोकपूजिताम्
लोकापवादाद्भीतोऽहत्यजामिस्वांतुजानकीम् ६२
तस्मात्करेशितंधृत्वाकरवालंसुदारुगाम्
शिरश्छिंध्यथवाजायांजानकींमुंचवैवने ६३
इतिवाक्यंसमाकर्ग्यरामस्यभरतोऽपतत्
मूर्च्छितःसन्धितौदेहेकंपयुक्तःसबाष्पकः ६४

इति श्रीपद्मपुराणेपातालखरडेशेषवात्स्यायनसंवादेरामाश्वमेधे
भरतवाक्यंनामषट्पंचाशत्तमोऽध्यायः ५६

## सप्तपंचाशत्तमोऽध्यायः

वात्स्यायनउवाच
जगत्पवित्रसत्कीर्तिजानक्यावाच्यवाचनम्
कथंसमकरोत्स्वामीतन्मेकथयसुव्रत १
यथामेमनसःसौख्यंभविष्यतिसुशोभनम्
तथाकुरुष्वशेषाद्यत्वन्मुखान्निःसृतामृतम्
पिबतस्तृप्तिरेवस्याद्ययासंसृतिकृंतनम् २
शेषउवाच
मिथिलायांमहापुर्यांजनकोनामभूपतिः
तस्यांकरोतिसद्राज्यंधर्मेणाराधयन्प्रजाः ३
तस्यसंकर्षतोभूमिंसीतयादीर्घमुख्यया
सीरध्वजस्यनिरगात्कुमारीह्यतिसुंदरी ४
तदात्यंतंमुदंप्राप्तःसीरकेतुर्महीपतिः
सीतानामाकरोत्तस्यामोहिन्याजगतःश्रियः ५
सैकदोद्यानविपिनेखेलंतीसुमनोहरा
अपश्यत्स्वमनःकांतंशुकशुक्योर्युगंवदत् ६

अत्यंतंहर्षमापन्नमत्यंतंकामलोलुपम्
परस्परंभाषमाणंस्नेहेनशुभयागिरा ७
रममाणंतदायुग्मंनभसिद्विप्रवेगतः
समुत्पतन्नगोपस्थेस्थितंशब्दंचकारतत् ८
रामोमहीपतिर्भूमौभविष्यतिमनोहरः
तस्यसीतेतिनाम्नातुभविष्यतिमहेलिका ९
सतयासहवर्षाणांसहस्राण्येकयुग्दश
राज्यंकरिष्यतेधीमान्कर्षन्भूमिपतीन्बली १०
धन्यासाजानकीदेवीधन्योऽसौरामसंज्ञितः
यौपरस्परमापन्नौपृथिव्यांरंस्यतोमुदा ११
इतिसंभाष्यमाणंतुशुकयुग्मंतुमैथिली
ज्ञात्वेदंदेवतायुग्मंवाणींतस्यविलोक्यच १२
मदीयास्तुकथारम्याःकुरुतेशुकयोर्युगम्
एतद्गृहीत्वापृच्छामिसर्वंवाक्यंगतार्थकम् १३
एवंविचार्यसास्वीयाःसखीःप्रतिजगादह
गृह्णंतुशनकैरेतत्पक्षियुग्मंमनोहरम् १४
सख्यस्तास्तद्गिरिंगत्वागृह्णन्पक्षियुगंवरम्
निवेदयामासुरिदंस्वसख्याःप्रियकाम्यया १५
बहुधाविविधाञ्छब्दान्कुर्वद्वीद्यमनोहरम्
आश्वासयामासतदापप्रच्छतदिदंवचः १६
सीतोवाच
माभैषातांयुवांरम्यौकौवांकुत्रसमागतौ
कोरामःकाचसासीतातज्ज्ञानंतुकुतःस्मृतम् १७
तत्सर्वंशंसतंद्विप्रंमत्तोवांव्येतुयद्भयम्
इतिपृष्टंतयापक्षियुगंसर्वमशंसत १८
पक्षियुग्ममुवाच
वाल्मीकिरास्तेसुमहानृषिर्धर्मविदुत्तमः
आवांतदाश्रमस्थानेसर्वदासुमनोहरे १९
सशिष्यान्गापयामासभाविरामायणंमुनिः
प्रत्यहंतत्पदस्मारीसर्वभूतहितेरतः २०

तदावाभ्यांश्रुतंसर्वंभाविरामायणंमहत्
मुहुर्मुहुर्गीयमानमायातंपरिपाठतः २१
शृणवावांतेऽभिधास्यावोयोरामोयाचजानकी
यद्यद्भविष्यतेतस्यारामेणक्रीडितात्मना २२
ऋृष्यशृंगकृतेष्टयांचचतुर्धात्वंगतोहरिः
प्रादुर्भविष्यतिश्रीमान्सुरस्त्रीगीतसत्कथः २३
सकौशिकेनमिथिलांप्राप्स्यतेभ्रातृसंयुतः
धनुष्पाणिस्तदादृष्ट्वादुर्ग्राह्यमन्यभूभुजाम् २४
धनुर्भंक्त्वाजनकजांप्राप्स्यतेसुमनोहराम्
तयासहमहद्राज्यंकरिष्यतिश्रुतंवरे २५
एतदन्यच्चतत्रस्थैःश्रुतमस्माभिरुद्गतैः
कथितंतवचार्वंगिमुंचावांगंतुकामुकौ २६
इतिवाक्यंतयोर्धृत्वाश्रोत्रयोःसुमनोहरम्
पुनरेवजगादेदंवाक्यंपक्षियुगंप्रति २७
सरामःकुत्रवर्तेतकस्यपुत्रःकथंतुताम्
परिग्रहीष्यतिवरःकीदृग्रूपधरोनरः २८
मयापृष्टमिदंसर्वंकथयंतुयथातथम्
पश्चात्सर्वंकरिष्यामिप्रियंयुष्मन्मनोहरम् २९
तच्छ्रुत्वातांतुकामेनपीडितांवीक्ष्यसाशुकी
जानकींहृदयेज्ञात्वापपाठपुरतस्ततः ३०
सूर्यवंशध्वजोधीमान्राजापंक्तिरथोबली
यंदेवाःश्रित्यसर्वारीन्विजेष्यंतिचसर्वशः ३१
तस्यभार्यात्रयंभाविशक्रमोहनरूपधृक्
तस्मिन्नपत्यचातुष्कंभविष्यतिबलोन्नतम् ३२
सर्वेषामग्रजोरामोभरतस्तदनुस्मृतः
लक्ष्मणस्तदनुश्रीमाञ्छत्रुघ्नःसर्वतोबली ३३
रघुनाथइतिख्यातिंगमिष्यतिमहामनाः
तेषामनंतनामानिरामस्यबलिनःसखि ३४
पद्मकोशइवशोभनंमुखं
पंकजाभनयनेसुदीर्घके

उन्नतापृथुमनोहरानसा
वल्गुसंगतमनोहरेभ्रुवौ ३५
जानुलंबितमनोहरौभुजौ
कंबुशोभिगलकोऽतिह्रस्वकः
सत्कपाटतलविस्तृतश्रिकं
वक्षएतदमलंसलक्ष्मकम् ३६
शोभनोरुकटिशोभयायुतं
जानुयुग्ममममलंस्वसेवितम्
पादपद्ममखिलैर्निजैःसदा
सेवितंरघुपतिंसुशोभनम् ३७
एतद्रूपधरोरामोमयाकिंतुसवर्ण्यते
शताननोपिनोयातिपक्षिणःकिमुमादृशाः ३८
यद्रूपंवीक्ष्यललितामनोहरवपुर्धरा
लक्ष्मीर्मुमोहभुविकावर्ततेयानमोहति ३९
महाबलोमहावीर्योमहामोहनरूपधृक्
किंवर्णयामिश्रीरामंसर्वैश्वर्यगुणान्वितम् ४०
धन्यासाजानकीदेवीमहामोहनरूपधृक्
रंस्यतेयेनसहितावर्षाणामयुतंमुदा ४१
त्वंकासिकिंतुनामासिबतसुंदरियत्तुमाम्
परिपृच्छसिवैदग्ध्याद्रामकीर्तनमादरात् ४२
एतद्वाक्यंसमाकर्ण्यजानकीपक्षिणोर्युगम्
उवाचजन्मललितंशंसंतीस्वस्यमोहनम् ४३
यात्वयाजानकीप्रोक्तासाहंजनकपुत्रिका
सरामोमांयदाभ्येत्यप्राप्स्यतेसुमनोहरः ४४
तदावांमोचयाम्यद्धानान्यथावाक्यलोभिता
लालयामिसुखेनास्तांमद्गेहेमधुराक्षरौ ४५
इत्युक्तंतत्समाकर्ण्यवेपतुर्भयतांगतौ
परस्परंप्रक्षुभितौजानकीमित्यवोचताम् ४६
वयंवैपक्षिणःसाध्विवनस्थावृक्षगोचराः
परिभ्रमामसर्वत्रनोसुखंनोभवेद्गृहे ४७

अंतर्वत्नीस्वकेस्थानेगत्वासंसूयपुत्रकान्
त्वत्स्थानमागमिष्यामिसत्यंमेह्युदितंवचः ४८
एवंप्रोक्तातयासातुनमुमोचशुकींस्वयम्
तदापतिस्तांप्रोवाचविनीतवदनुत्सुकः ४९
सीतेमुंचकथंभार्यांरक्षसेमेमनोहरीम्
आवांगच्छावविपिनेविचरावःसुखंवने ५०
अंतर्वत्नीतुवर्तेतभार्याममममनोरमा
तस्याःप्रसूतिंकृत्वात्वामागमिष्यामिशोभने ५१
इत्युक्तानिजगादेमंसुखंगच्छमहामते
एतांरक्षामिसुखिनींमत्पार्श्वेप्रियकारिणीम् ५२
इत्युक्तोदुःखितःपक्षीतामूचेकरुणान्वितः
योगिभिःप्रोच्यतेयद्वैतद्वचस्तथ्यमेवहि ५३
नवक्तव्यंनवक्तव्यंमौनमाश्रित्यतिष्ठताम्
नोचेत्सवाक्यदोषेणप्राप्नोत्यालानमुन्मदः ५४
वयंचेदत्रवाक्यंनाकरिष्यामनगोपरि
बंधनंकथमावांस्यात्तस्मान्मौनंसमाचरेत् ५५
इत्युक्त्वातांप्रत्युवाचनाहंजीवामिसुंदरि
एतयाभार्ययासीतेतस्मान्मुंचमनोहरे ५६
अनेकविधवाक्यैःसाबोधितानामुचत्तदा
कुपितादुःखिताभार्याशशापजनकात्मजाम् ५७
यथात्वंपतिनासार्धंवियोजयसिमामितः
तथात्वमपिरामेणवियुक्ताभवगर्भिणी ५८
इत्युक्तवत्यांतस्यांतुदुःखितायांपुनःपुनः
प्राणानिरगमन्दुःखात्पतिदुःखेनपूरितात् ५९
रामंरामंस्मरंत्याश्चवदंत्यांश्चपुनःपुनः
विमानमागतंसुष्ठुपक्षिणीस्वर्गताबभौ ६०
तस्यांमृतायांदुःखार्तोभर्तातस्याःसपक्षिराट्
परमंक्रोधमापन्नोजाह्नव्यांदुःखितोऽपतत् ६१
तथाभवामिरामस्यनगरेजनपूरिते
मद्वाक्यादियमुद्विग्नावियोगेनसुदुःखिता ६२

इत्युक्त्वासपपातोदेजाह्नव्याश्रमशोभिते
दुःखितःकुपितोभीतस्तद्वियोगेनकंपितः ६३
क्रुद्धत्वाद्दुःखितत्वाच्चसीतायाश्रपमाननात्
अंत्यजत्वंपरंप्राप्तोरजकःक्रोधनाभिधः ६४
यःक्रोधाच्चस्वकान्प्राणान्महतांदुष्टमाचरन्
संत्यजेत्समृतोयातिअंत्यजत्वंद्विजोत्तमः ६५
तज्ञातंरजकोक्त्यासौनिंदिताचवियोगिता
रजकस्यचशापेनवियुक्तासावनंगता ६६
एतत्तेकथितंविप्रयत्तेपृष्टंविदेहजाम्
पुनरत्रपरंवृत्तंशृणुष्वनिगदामितत् ६७

इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरामाश्वमेधे रजकप्राग्जन्मकथनंनामसप्तपंचाशत्तमोऽध्यायः ५७

## अष्टपंचाशत्तमोऽध्यायः

शेषउवाच
भरतंमूर्च्छितंदृष्ट्वारघुनाथःसुदुःखितः
प्रतीहारमुवाचेदंशत्रुघ्नंप्रापयाशुमाम् १
तद्वाक्यंप्रोक्तमाकर्ण्यक्षणाच्छत्रुघ्नमानयत्
यत्ररामोनिजभ्राताभरतेनसहस्थितः २
भरतंमूर्च्छितंदृष्ट्वारघुनाथंचदुःखितम्
प्रणम्यदुःखितोऽवोचत्किमिदंदारुणंमहत् ३
तदारामोऽत्यजप्रोक्तंवाक्यंलोकविगर्हितम्
तंप्रत्युवाचरामोऽसौशत्रुघ्नंपदसेवकम् ४
अधोमुखोदीनरवोगद्गदाक्षरवेपथुः
शृणुभ्रातर्वचोमेऽद्यकुरुतत्क्षिप्रमादरात् ५
यथास्याद्विमलाकीर्तिर्गंगेवपृथिवींगता
सीतायावाच्यमतुलंलोकेश्रुत्वांत्यजोदितम् ६
हातुमिच्छामिदेहंस्वमेनांवाजानकींकिल
इतिवाक्यंसमाकर्ण्यरामस्यकिलशत्रुहा ७
सवेपथुःपपातोर्व्यांदुःखितःपरदारणः

संज्ञांप्राप्यमुहूर्तेनरघुनाथमवोचत ८
शत्रुघ्नउवाच
किमेतदुच्यतेस्वामिञ्ज्ञानकींप्रतिदारुणम्
पाखंडैर्दुष्टचित्तैश्चसर्वधर्मबहिष्कृतैः ९
निंदिताश्रुतिरग्राह्याभवतित्वग्रयजन्मनाम्
जाह्नवीसर्वलोकानांपापघ्नीदुरितापहा १०
निस्पृष्टापापिभिःपुंभिःसास्पर्शेनार्हितासताम्
सूर्योजगत्प्रकाशायसमुदेतिजगत्यहो ११
उलूकानांरुचिकरोनभवेत्तत्रकाक्षतिः
तस्मात्त्वमेनांगृह्णीष्वमात्यजानिंदितांस्त्रियम् १२
श्रीरामभद्रकृपयाकुरुष्ववचनंमम
एतच्छ्रुत्वावचस्तस्यशत्रुघ्नस्यमहात्मनः १३
पुनःपुनर्जगादेदंयदुक्तंभरतंप्रति
तन्निशम्यवचोभ्रातुर्दुःखपूरपरिप्लुतः १४
पपातमूर्च्छितोभूमौछिन्नमूलइवद्रुमः
भ्रातरंपतितंवीक्ष्यशत्रुघ्नंदुःखितोभृशम् १५
प्रतीहारमुवाचेदंलक्ष्मणंत्वानयांतिकम्
सलक्ष्मणगृहंगत्वान्यवेदयदिदंवचः १६
प्रतीहारउवाच
स्वामिन्रामोभवंतंतुसमाह्वयतिवेगतः
सतच्छ्रुत्वासमाह्वानंरामचंद्रेणवेगतः १७
जगामतरसातत्रयत्रसभ्रातृकोऽनघः
भरतंमूर्च्छितंदृष्ट्वाशत्रुघ्नमपिमूर्च्छितम् १८
श्रीरामचंद्रंदुःखार्तंदुःखितोवाक्यमब्रवीत्
किमेतद्दारुणंराजन्दृश्यतेमूर्च्छनादिकम् १९
तदाशुशंसमांसर्वंकारणंमुख्यतोऽनघ
एवंवदंतंनृपतिर्वृत्तांतंसर्वमादितः २०
शशंसलक्ष्मणंक्षिप्रंदुःखपूरपरिप्लुतम्
लक्ष्मणस्तद्वचःश्रुत्वासीतायास्त्यागसंभवम् २१
निःश्वसन्मुहुरुच्छ्वासंस्तब्धगात्रइवाभवत्

भ्रातरंस्तब्धगात्रंचकंपमानंमुहुर्मुहुः २२
नकिंचनवदन्तंतंवीद्त्यशोकार्दितोऽब्रवीत्
किंकरिष्याम्यहंभूमौस्थित्वादुर्यशसांकितः २३
त्यजामीदंवपुःश्रीमल्लोकभीत्याचशोकवान्
सर्वदाभ्रातरोमह्यंमद्वाक्यकरणोत्सुकाः २४
इदानींतेपिदैवेनप्रतिकूलवचःकराः
कुत्रगच्छामिकंयामिहसिष्यंतिनृपाभुवि २५
दुर्यशोलांछितंमांवैकुष्ठिनंरूपवन्नराः
मनोर्वंशेपुराभूपाजाताजातागुणाधिकाः २६
इदानींमयिजातेतुविपरीतंबभूवतत्
इतिसंभाषमाणंतंरामभद्रंसमीद्त्यसः २७
संस्तभ्याश्रूणिविपुलान्युवाचविकलस्वरः
स्वामिन्विषादंमाकार्षीःकथंतवमतिर्हता २८
सीतामनिंदितांकोनुत्यजतिश्रुतवान्भवान्
आकारयामिरजकंपरिपृच्छामितंप्रति २९
कथंत्वयानिंदितासाजानकीयोषितांवरा
तवदेशेबलात्कश्चिद्बाध्यतेनजनोऽल्पकः ३०
तस्मात्तस्ययथास्वांतेप्रतीतिःस्यात्तथाचर
किमर्थंत्यज्यतेभीरुःपतिव्रतपरायणा ३१
मनसावचसानान्यंजानातिजनकात्मजा
तस्मादेनांगृहाणत्वमेतांमात्यजजानकीम् ३२
ममोपरिकृपांकृत्वामदुक्तंसंश्रयाशुतत्
एवंवदंतंप्रत्यूचेरामःशोकेनकर्षितः ३३
लद्त्मणंधर्मवाक्येनबोधयंस्त्यजनोद्यमः ३४
रामउवाच
कथंतुमांब्रवीषित्वंमात्यजैनामनिंदिताम्
लोकापवादात्त्यद्त्येऽहजानन्नपिविपापिनीम् ३५
स्वयशःकारणेऽहस्वंदेहंत्यद्त्याम्यशोभनम्
त्वामपिभ्रातरंत्यद्त्येलोकवादाद्विगर्हितम् ३६
किमुतान्येगृहाःपुत्रामित्राणिवसुशोभनम्

स्वयशःकारणेसर्वंत्यजामिकिमुमैथिलीम् ३७
नतथामेप्रियोभ्रातानकलत्रंनबांधवाः
यथामेविमलाकीर्तिर्वल्लभालोकविश्रुता ३८
इदानींरजकोनैवप्रष्टव्योभवतिध्रुवम्
कालेनसर्वंभवितालोकचित्तस्यरंजनम् ३९
आमयोयद्वदामस्तुनचिकित्स्योभवेत्द्विंतौ
सकालेनपरीपाकाद्भेषजादेवनश्यति ४०
तथाकालेनसंभाविसांप्रतंमाविलंबय
त्यजैनांविपिनेसाध्वींमांवाखड्गेनघातय ४१
इत्युक्तंवाक्यमाकर्ण्यदुःखितोऽभूत्तदामहान्
चिंतयामासचस्वांतेलक्ष्मणःशोककर्षितः ४२
पित्राज्ञप्तोजामदग्न्योमातरंचाप्यघातयत्
गुरोराज्ञानैवलंघ्यायुक्ताऽयुक्तापिसर्वथा ४३
तस्मादेनांत्यजाम्येवरामस्यप्रियकाम्यया
इतिसंचिंत्यमनसिभ्रातरंप्रत्युवाचसः ४४
लक्ष्मणउवाच
अकृत्यमपिकार्यंवैगुर्वाज्ञांनैवलंघयेत्
तस्मात्कुर्वेभवद्वाक्यंयत्त्वंवदसिसुव्रत ४५
इत्येवंभाषमाणंतंलक्ष्मणंप्रत्युवाचसः
साधुसाधुमहाप्राज्ञत्वयामेतोषितंमनः ४६
अद्यैवरात्रौजानक्यादोहदस्तापसीक्षणे
तन्मिषेणरथेस्थाप्यमोचयैनांमहावने ४७
इत्थंभाषितमाकर्ण्यविशुष्यद्वदनोऽभितः
रुदन्बाष्पकलांमुंचञ्जगामस्वंनिवेशनम् ४८
सुमंत्रंतुसमाहूयवचनंतमथाब्रवीत्
रथंमेकुरुसज्जंवैसदश्ववरभूषितम् ४९
सतद्वाक्यंसमाकर्ण्यरथमानीतवांस्तदा
आनीतंतंरथंदृष्ट्वालक्ष्मणःशोककर्षितः ५०
परमंदुःखमापन्नःसंरुह्यस्यंदनंवरम्
निःश्वसञ्जानकीगेहंप्रतस्थेभ्रातृसेवकः ५१

गत्वाचांतःपुरेभ्रातारामस्यमिथिलात्मजाम्
प्रत्यूचेनिःश्वसन्वाक्यंदुःखपूरपरिप्लुतः ५२
मातर्जानकिरामेणप्रेषितोभवनंतव
तापसीःप्रतियाहित्वंदोहदप्राप्तिहेतवे ५३
इतिवाक्यंसमाकर्ण्यलक्ष्मणस्यविदेहजा
परमंहर्षमापन्नालक्ष्मणंप्रत्यभाषत ५४
जानक्युवाच
धन्याहंमैथिलीराज्ञीरामस्यचरणस्मरा
यस्यादोहदपूर्त्यर्थंप्रेषयामासलक्ष्मणम् ५५
अद्याहंतावनचरीस्तापसीःपतिदेवताः
नमस्कुर्यांचवासोभिःपूजयामिमनोहराः ५६
इत्युक्त्वारम्यवस्त्राणिमहार्हाभरणानिच
मणीन्विमलमुक्ताश्चकर्पूरादिसुगंधिमत् ५७
चंदनादिकवस्तूनिविचित्राणिसहस्रधा
जग्राहरघुनाथस्यपत्नीस्वप्रियकाम्यया ५८
सीतागृहीत्वासर्वाणिदासीनांकरयोर्मुहुः
लक्ष्मणंप्रतिगच्छंतीदेहल्यांचास्खलत्तदा ५९
अविचार्यतदौत्सुक्याल्लक्ष्मणंप्रियकारिणम्
उवाचकुत्रसरथोयेनमांप्रापयिष्यसि ६०
सनिःश्वसन्रथंहैमंजानक्यासहनिर्विशत्
सुमंत्रंप्रत्युवाचासौचालयाश्वान्मनोजवान् ६१
ससुयुक्तंरथंवाक्याल्लक्ष्मणस्यतुचाह्वयत्
अश्रुपूर्णमुखंपश्यँल्लक्ष्मणंसमुहुर्मुहुः ६२
आहतास्तेनकशयावाहास्तस्यापतन्पथि
नचलंतियदावाहास्तदालक्ष्मणमब्रवीत् ६३
सुमंत्रउवाच
स्वामिंश्चलंतिनोवाहायत्नेनपरिचालिताः
किंकरोमिनजानेऽत्रकारणंवाहपातने ६४
एवंब्रुवंतंप्रत्यूचेलक्ष्मणोगद्गदस्वरः
सारथिंधैर्यमास्थायताडयैतान्कशादिभिः ६५

एतच्छ्रुत्वोदितंयंताकथंचित्समचालयत्
तदास्फुरद्दत्तनेत्रंजानक्यादुःखशंसकम् ६६
तदैवहृदयेशोकःसमभूद्दुःखशंसकः
तदैवपत्तिणःपुरयाःकुर्वंतिपरिवर्तनम् ६७
एवंवीन्त्यैववैदेहीप्रत्युवाचाथदेवरम्
कथंमेतापसीन्नायैयातुमिच्छारघूद्वह ६८
रामेभूयाद्धिकल्याणंभरतेवातथानुजे
तत्प्रजासुचसर्वत्रमाभवंतुविपर्ययाः ६९
एवंब्रुवंतींसंवीन्त्यजानकींचसलन्मणः
नकिंचिदुक्तवान्रुद्धकंठोबाष्पप्रपूरितः ७०
सागच्छंतीमृगान्वामंपरिवर्तनकारकान्
अपश्यद्दुःखसंघातकारकान्समभाषत ७१
अद्ययन्मेमृगावामंवर्तयंतितदिष्यते
श्रीरामचरणौमुक्त्वागच्छंत्यायुक्तमेवतत् ७२
महिलानांपरोधर्मःस्वभर्तृचरणार्चनम्
तन्मुक्त्वान्यत्रयांत्यामेयद्भवेद्युक्तमेवतत् ७३
एवंपथिविचारंतुकुर्वंत्यापरमार्थतः
जाह्नवीददृशेदेव्यामुनिवृंदैकसेविता ७४
यस्यांजलस्यकल्लोलादृश्यंतेदुग्धसंनिभाः
तरंगोदृश्यतेयत्रस्वर्गसोपानमूर्तिभृत् ७५
यस्यावारिकणस्पर्शान्महापातकसंचयः
पलायतेनकुत्रापिस्थानमीन्नन्समंततः ७६
गंगांप्राप्याथसौमित्रिर्जानकींस्यंदनेस्थिताम्
उवाचनिर्गलद्बाष्पएहिसीतेरथाद्भुवि ७७
सीतातद्वाक्यमाकर्ण्यन्नणादवततारसा
लन्मणेनधृताबाहौस्खलंतीपथिकंटकैः ७८

इति श्रीपद्मपुराणेपातालखराडेशेषवात्स्यायनसंवादेरामाश्वमेधे
जानक्यागंगादर्शनंनामअष्टपंचाशत्तमोऽध्यायः ५८

## एकोनषष्टितमोऽध्यायः

शेषउवाच
अथनावासमुत्तीर्यजाह्नवींलक्ष्मणस्तदा
जानकींपरतस्तीरेहस्तेधृत्वावनंययौ १
साचलंतीपथितदाशुष्यद्वदनलक्षिता
कंटकक्षतसत्पादास्खलंतीचपदेपदे २
लक्ष्मणस्तांमहाघोरेविपिनेदुःखदायिनि
प्रवेशयामासतदाराघवाज्ञाविधायकः ३
यत्रवृक्षामहाघोराबर्बूलाःखदिराघनाः
श्लेष्मातकाश्चिंचिणीकाःशुष्कादावेनवह्निना ४
कोटरस्थामहासर्पाःफूत्कुर्वंतिसुकोपिताः
घूकाघूत्कुर्वतेयत्रलोकचित्तभयंकराः ५
व्याघ्राःसिंहाःसृगालाश्चद्वीपिनोऽतिभयंकराः
दृश्यंतेयत्रसरलामनुष्यादाःसुकोपनाः ६
महिषाःसूकरादुष्टादंष्ट्राद्वयविलक्षिताः
कुर्वंतिप्राणिनांतापंमानसस्यमदोद्धुराः ७
ईदृग्वनंप्रपश्यंतीभयेनोपगतज्वरा
कंटकैर्दष्टचरणालक्ष्मणंवाक्यमब्रवीत् ८
जानक्युवाच
वीरर्षिमुनिसंसेव्यानाश्रमान्नेत्रसौख्यदान्
नाहंपश्यामिनोतेषांपत्नीश्चसुतपोधनाः ९
पश्यामिकेवलंघोरान्पक्षिणःशुष्कवृक्षकान्
दावानलेनतत्सर्वंदह्यमानमिदंवनम् १०
त्वांचपश्यामिदुःखार्तमश्रुपूर्णाकुलेक्षणम्
शकुनेतरसाहस्रंभवेन्ममपदेपदे ११
तन्मेकथयवीराग्र्यकथंमुक्तामहात्मना
रामेणदुष्टहृदयाक्षिप्रंकथयमेहितत् १२
इतिवाक्यंसमाकर्ण्यलक्ष्मणःशोककर्शितः
संरुद्धबाष्पवदनोनकिंचित्प्रोक्तवांस्तदा १३
तदेवविपिनंघोरंगच्छंतीलक्ष्मणान्विता

पुनरप्याहतंवीरंदुःखार्तापश्यतीमुखम् १४
तदापिसनतांवक्तिकिमपिप्रेन्नुलोलुपः
तदासात्यंतनिर्बंधंचकारपरिपृच्छती १५
आग्रहेणयदापृष्टोलक्ष्मणःसीतयातदा
रुद्धकंठोमुहुःशोचन्नवदत्त्यागसंभवम् १६
तद्वाक्यंपविनातुल्यंनिशम्यमुनिसत्तम
सुलताकृत्तमूलेवबभूवाकल्पवर्जिता १७
तदैवपृथिवीतांनजग्राहतनयामिमाम्
रामोविपापिनींसीतांनजह्यादितिशंकिनी १८
पतितांतांतुवैदेहींदृष्ट्वासौमित्रिरुत्सुकः
पल्लवाग्र्यसमीरेणसंज्ञितांतुचकारसः १९
संज्ञांप्राप्ताह्युवाचेदंमाहास्यंकुरुदेवर
कथंमांपापरहितांत्यजतेसरघूद्वहः २०
एवंबहुविलप्याथलक्ष्मणंदुःखसंयुतम्
संवीक्ष्यमूर्च्छिताभूमौपपातपरिदुःखिता २१
मुहूर्तेनापिसंज्ञांसाप्राप्यदुःखपरिप्लुता
जगादरामचरणौस्मंरतीशोकविह्वता २२
रघुनाथोमहाबुद्धिस्त्यजतेमांकथंमहान्
योमदर्थेपयोराशिंबद्धवान्वानरैर्युतः २३
सकथंमांमहावीरोनिष्पापांरजकोक्तितः
त्यजिष्यतिममैवात्रदैवंतुप्रतिकूलितम् २४
एवंवदन्तीपुनरपिमूर्च्छांप्राप्ताविदेहजा
मूर्च्छितांतांसमीक्ष्याथरुरोदविकृतस्वरः २५
पुनःसंज्ञामवाप्यैवंसौमित्रिंनिजगादसा
दुःखातुरंवीक्षमाणारुद्धकंठंसुदुःखिता २६
सौमित्रेगच्छरामंत्वंधर्ममूर्तिंयशोनिधिम्
मद्वाक्यमेवैतद्ब्रूयाःसमक्षंतपसांनिधेः २७
मांतत्याजभवान्यद्वैजानन्नपिविपापिनीम्
कुलस्यसदृशंकिंवाशास्त्रज्ञानस्यतत्फलम् २८
नित्यंतवपदेरक्तांत्वदुच्छिष्टभुजंहिमाम्

भवांस्तत्याजतत्सर्वंममदैवंतुकारणम् २९
कल्याणंतवसर्वत्रभूयाद्वीरवरोत्तम
अहंतावद्वनेत्वांहिस्मरंतीप्राणधारिका ३०
मनसाकर्मणावाचाभवानेवममोत्तमः
अन्येतुच्छीकृताःसर्वेमनसारघुवंशज ३१
भवेभवेभवानेवपतिर्भूयान्महीश्वर
त्वत्पदस्मरणानेकहतपापासतीश्वरी ३२
श्वश्रूजनंब्रूहिसर्वंमत्संदेशंरघूत्तम
त्यक्तावनेमहाघोरेरामेणनिरघासती ३३
स्मरामिचरणौयुष्मद्वनेमृगगणैर्युते
अंतर्वत्नीवनेत्यक्तारामेणसुमहात्मना ३४
सौमित्रेशृणुमद्वाक्यंभद्रंभूयाद्रघूत्तमे
इदानींसंत्यजेप्राणान्रामवीर्यंसुरक्षती ३५
त्वंरामवचनंतथ्यंयत्करोषिशुभंतव
परतंत्रेणतत्कार्यंरामपादाब्जसेविना ३६
गच्छत्वंरामसविधेशिवाःपंथानएवते
ममोपरिकृपाकार्यास्मर्तव्याहंकदाकदा ३७
इत्युक्त्वामूर्च्छिताभूमौपपातपुरतस्तदा
लक्ष्मणोदुःखमापेदेवीक्ष्यमूर्च्छितजानकीम् ३८
वीजयामासवासोग्रैःसंज्ञांप्राप्तांप्रकृत्यच
सौमित्रिःसांत्वयामासवचनैर्मधुरैर्मुहुः ३९
लक्ष्मणउवाच
एषगच्छामिरामंवैगत्वाशंसामिसर्वशः
समीपेतेमुनेरस्तिवाल्मीकेराश्रमोमहान् ४०
इत्युक्त्वातांपरिक्रम्यदुःखितोबाष्पपूरितः
मुंचन्नश्रुकलांदुःखाद्ययौरामंमहीपतिम् ४१
जानकीदेवरंयांतंवीक्ष्यविस्मितलोचना
हसत्ययंमहाभागोलक्ष्मणोदेवरोमम ४२
कथंमांप्राणतःप्रेष्ठांविपापांराघवोऽत्यजत्
इतिसंचिंतयंतीसातमैक्षदनिमेषणा ४३

जाह्नवींसर्वथोत्तीर्णांज्ञात्वासत्यंस्वहापनम्
पतिताप्राणसंदेहंप्राप्तामूर्च्छांगतातदा ४४
तदाहंसाःस्वपक्षाभ्यांजलमानीयसर्वतः
सिषिचुर्मधुरोवायुर्ववौपुष्पसुगंधिमान् ४५
करिणःपुष्करैःस्वीयैर्जलपूर्णैःसमंततः
व्याप्तंशरीरंरजसाक्षालयंतइवागताः ४६
मृगास्तदंतिकंप्राप्यसंतस्थुर्विस्मितेक्षणाः
नगाःपुष्पयुताश्चासंस्तत्कालंमधुनाविना ४७
एतस्मिन्समयेवृत्तेसंज्ञांप्राप्यतदासती
विललापसुदुःखार्तारामरामेतिजल्पती ४८
हानाथदीनबंधोहेकरुणामयसंनिधे
अपराधादृतेमांत्वंकथंत्यजसिवैवने ४९
इत्येवमादिभाषंतीविलपंतीमुहुर्मुहुः
इतस्ततःप्रपश्यंतीसंमूर्च्छंतीपुनःपुनः ५०
तदास्वशिष्यैर्भगवान्वाल्मीकिःसंगतोवनम्
शुश्रावरुदितंतत्रकरुणास्वरभाषितम् ५१
शिष्यान्प्रतिजगादाथपश्यंतुवनमध्यतः
कोरोदितिमहाघोरेविपिनेदुःखितस्वरः ५२
तेप्रयुक्ताश्चमुनिनासंजग्मुर्यत्रजानकी
रामरामेतिभाषंतीबाष्पपूरपरिप्लुता ५३
तांदृष्ट्वास्त्रियमौत्सुक्याद्वाल्मीकिंप्रत्यगुर्मुनिम्
श्रुत्वातदीरितंवाक्यंजगामासौततोमुनिः ५४
दृष्ट्वातंतपसांराशिंजानकीपतिदेवता
नमोस्तुमुनयेवेदमूर्तयेव्रतवार्धये ५५
इत्युक्तवंतींतांसीतामाशीर्भिरभ्यनंदयत्
भर्त्रासहचिरंजीवपुत्रौप्राप्नुहिशोभनौ ५६
कासित्वंकिंवनेघोरेसंगतासिकिमीदृशी
सर्वंमेशंसजानीयांतवदुःखस्यकारणम् ५७
सातदाप्रत्युवाचेमंरामस्यमहिलामुनिम्
निःश्वसंतीकरुणयागिरासंजातवेपथुः ५८

शृणुमेवाक्यमर्थोक्तंसर्वदुःखस्यकारणम्
जानीहिमांभूमिपतेरघुनाथस्यसेवकीम् ५९
अपराधंविनात्यक्तानजानेतत्रकारणम्
लक्ष्मणोमांविमुच्यात्रगतवान्राघवाज्ञया ६०
इत्युक्त्वाश्रुकलापूर्णंबिभ्रतींमुखपंकजम्
वाल्मीकिःसांत्वयन्प्राहजानकींकमलेक्षणाम् ६१
वाल्मीकिंमांविजानीहिपितुस्तवगुरुंमुनिम्
दुःखंमाकुरुवैदेहिह्यागच्छममचाश्रमम् ६२
भिन्नस्थानेपितुर्गेहंजानीहिपतिदेवते
ईदृशेकर्मणिममरोषोस्त्वेवमहीपतेः ६३
एवंवचःसमाकर्ण्यजानकीपतिदेवता
दुःखपूर्णाश्रुवदनाकिंचित्सुखमवापसा ६४
शेषउवाच
वाल्मीकिःसांत्वयित्वैनांदुःखपूराकुलेक्षणाम्
निनायस्वाश्रमंपुण्यंतापसीवृन्दपूरितम् ६५
सागच्छंतीपृष्ठतोऽस्यवाल्मीकेस्तपसांनिधेः
रराजेंदोःपृष्ठतोवैतारकेवमनोहरा ६६
वाल्मीकिःप्राप्यचस्वीयमाश्रमंमुनिपूरितम्
तापसीःप्रतिसंचख्यौजानकींस्वाश्रमंगताम् ६७
वैदेहीतापसीःसर्वानमश्चक्रेमहामनाः
परस्परंप्रहृषिताःपरिरंभंसमाचरन् ६८
वाल्मीकिर्निजशिष्यान्सप्रत्युवाचतपोनिधिः
रच्यतांबतजानक्याःपर्णशालामनोरमा ६९
इत्युक्तंवाक्यमाकर्ण्यवाल्मीकेःसुमनोरमम्
व्यरचन्पत्रकैःशालांदारुभिःसुमनोहराम् ७०
तत्रावसद्धिवैदेहीपतिव्रतपरायणा
वाल्मीकेःपरिचर्यांचकुर्वंतीफलभक्षिका ७१
जपंतीरामरामेतिमनसावचसास्वयम्
निनायदिवसांस्तत्रजानकीपतिदेवता ७२
कालेसासूतपुत्रौद्वौमनोहरवपुर्धरौ

रामचंद्रप्रतिनिधीह्यश्विनाविवजानकी ७३
तच्छ्रुत्वातुमुनिर्हृष्टोजानक्याःपुत्रसंभवम्
चकारजातकर्मादिसंस्कारान्मंत्रवित्तमः ७४
कुशैर्लवैश्चवाल्मीकिर्मुनिःकर्माणिचाचरत्
तन्नाम्नापुत्रयोराख्याकुशोलवइतिस्फुटा ७५
वाल्मीकिर्यत्रविरजामंगलंतद्यथाचरत्
अत्यंतंहृष्टचित्तासाबभूवकमलेक्षणा ७६
तद्दिनेलवणंहत्वाशत्रुघ्नःस्वल्पसैनिकः
आगमच्चाश्रमेचास्यवाल्मीकेर्निशिशोभने ७७
तदावाल्मीकिनाशिष्टःशत्रुघ्नोरघुनायकम्
माशंसजानकीपुत्रौकथयिष्याम्यहंपुरः ७८
जानकीपुत्रकौतत्रववृधातेमनोरमौ
कंदमूलफलैःपुष्टौव्यदधादुन्मदौवरौ ७९
शुक्लप्रतिपदायाश्चशशीवसुमनोहरौ
कालेनसंस्कृतौजातावुपनीतौमनोहरौ ८०
उपनीयमुनिर्वेदंसांगमध्यापयत्सुतौ
सरहस्यंधनुर्वेदंरामायणमपाठयत् ८१
वाल्मीकिनाचधनुषीदत्तेस्वर्णसुभूषिते
अभेद्येसगुणेश्रेष्ठेवैरिवृंदविदारणे ८२
इषुधीबाणसंपूर्णौअक्षयेकरवालके
चर्माण्यभेद्यानिददौजानक्यात्मजयोस्तदा ८३
धनुर्धरौधनुर्वेदपारगावाश्रमेमुदा
चरंतौतत्ररेजातेअश्विनाविवशोभनौ ८४
जानकीवीक्ष्यपुत्रौद्वौखड्गचर्मधरौवरौ
परमंहर्षमापन्नाविरहोद्भवमत्यजत् ८५
एषतेकथितोविप्रजानक्याःपुत्रसंभवः
अतःशृणुष्वयद्वृत्तंवीरबाहुविकृंतनम् ८६

इति श्रीपद्मपुराणेपातालखराडेशेषवात्स्यायनसंवादेरामाश्वमेधे
कुशलवोत्पत्तिकथानकंनामैकोनषष्टितमोऽध्यायः ५९

## षष्टितमोऽध्यायः

शेषउवाच
शत्रुघ्नोनिजवीराणांछिन्नान्बाहून्निरीक्ष्यन्
उवाचतान्सुकुपितोरोषसंदंशिताधरः १
केनवीरेणवोबाहुकृंतंनसमकारिभोः
तस्याहंबाहूकृंतामिदेवगुप्तस्यवैभटाः २
नजानातिमहामूढोरामचंद्रबलंमहत्
इदानींदर्शयिष्यामिपराक्रांत्याबलंस्वकम् ३
सकुत्रवर्ततेवीरोहयःकुत्रमनोरमः
कोवाऽगृह्णात्सुप्तसर्पान्मूढोज्ञात्वापराक्रमम् ४
इतितेकथितावीराविस्मितादुःखिताभृशम्
रामचंद्रप्रतिनिधिंबालकंसमशंसत ५
सश्रुत्वारोषताम्राक्षोबालकेनहयग्रहम्
सेनान्यंवैकालजितमाज्ञापयद्युयुत्सुकः ६
सेनानीःसकलांसेनांव्यूहयस्वममाज्ञया
रिपुःसंप्रतिगंतव्योमहाबलपराक्रमः ७
नायंबालोहरिर्नूनंभविष्यतिहयंधरः
अथवात्रिपुरारिःस्यान्नान्यथामद्धयापहृत् ८
अवश्यंकदनंभाविसैन्यस्यबलिनोमहत्
स्वच्छंदचरितैःखेलन्नास्तेनिर्भयधीःशिशुः ९
तत्रगंतव्यमस्माभिःसन्नद्धैरिपुदुर्जयैः
एतन्निशम्यवचनंशत्रुघ्नस्यससैन्यपः १०
सज्जीचकारसेनांतांदुर्व्यूढांचतुरंगिणीम्
सज्जांतांशत्रुजिद्दृष्ट्वाचतुरंगयुतांवराम् ११
आज्ञापयत्ततोगंतुंयत्रबालोहयंधरः
साचचालतदासेनाचतुरंगसमन्विता १२
कंपयंतीमहीभागंत्रासयंतीरिपून्बलात्
सेनानीस्तंददर्शाथबालकंरामरूपिणम् १३
विचार्यरामप्रतिममब्रवीद्वचनंहितम्
बालमुंचहयश्रेष्ठंरामस्यबलशालिनः १४

सेनानीःकालजिन्नामतस्यभूपस्यदुर्मदः
त्वांरामप्रतिमंदृष्ट्वाकृपामेहृदिजायते १५
अन्यथातवमेदौस्थ्याज्जीवितंनभविष्यति
एतद्वाक्यंसमाकर्ण्यशत्रुघ्नस्यभटस्यहि १६
जहासकिंचिदाकोपादुवाचचवचोद्धतम्
गच्छमुक्तोसितंरामंकथयस्वहयग्रहम् १७
त्वत्तोबिभेमिनोशूरवाक्येननयशालिना
ममात्रगणनानास्तित्वादृशाःकोटयोयदि १८
मातृपादप्रसादेनतूलीभूतानसंशयः
कालजित्तवयन्नाममात्राकारिमनोज्ञया १९
पक्वबिंबफलस्येववर्णतोनचवीर्यतः
दर्शयस्वाधुनावीर्यंस्वनामबलचिह्नितः २०
मांकालंतवसंजित्यसत्यनामाभविष्यसि
शेषउवाच
सवाक्यैःपविनातुल्यैर्भिन्नःसुभटशेखरः २१
चुकोपहृदयेऽत्यंतंजगादवचनंपुनः
कस्मिन्कुलेसमुत्पत्तिःकिंनामासिचबालक
त्वन्नामनाभिजानामिकुलंशीलंवयस्तथा २२
पादचारंरथस्थोऽहमधर्मेणकथंजये
तदात्यंतंप्रकुपितोजगादवचनंपुनः २३
कुलेनकिंचशीलेननाम्नावासुमनोहृदा
लवोऽहलवतःसर्वाञ्जेष्यामिरिपुसैनिकान् २४
इदानींत्वामपिभटंकरिष्येपादचारिणम्
इत्थमुक्त्वाधनुःसज्यंचकारसलवोबली २५
टंकारयामासतदावीरानाकंपयन्हृदि
वाल्मीकिंप्रथमंस्मृत्वाजानकींमातरंलवः २६
मुमोचबाणान्निशितान्सद्यःप्राणापहारिणः
कालजित्स्वधनुःकृत्वासज्यंकोपसमन्वितः २७
ताडयामासजवनोलवंरणविशारदः
तद्बाणाञ्छतधाछित्त्वाद्बाणाद्वेगात्कुशानुजः २८

सेनान्यंविरथंचक्रेवसुभिःस्वशरोत्तमैः
विरथोगजमानीतमारुरोहभटैर्निजैः २९
मदोन्मत्तंमहावेगंसप्तधाप्रस्रवान्वितम्
गजारूढंतुतंदृष्ट्वादशभिर्धनुषोगतैः ३०
बाणैर्विव्याधविहसन्सर्वान्रिपुगणाञ्जयी
कालजित्तस्यवीर्यंतुदृष्ट्वाविस्मितमानसः ३१
गदांमुमोचमहतींमहायसविनिर्मिताम्
आपतंतींगदांवेगाद्भारायुतविनिर्मिताम् ३२
त्रिधाचिच्छेदतरसाक्षुरप्रैःसकुशानुजः
परिघंनिशितंघोरंवैरिप्राणहरोदितम् ३३
मुक्तंपुनस्तेनलवश्चिच्छेदतरसान्वितः
छित्त्वातत्परिघंघोरंकोपादारक्तलोचनः ३४
गजोपस्थेसमारूढंमन्यमानश्चुकोपह
तत्क्षणादच्छिनत्तस्यशुंडांखड्गेनदंतिनः ३५
दंतयोश्चरणौधृत्वारुरोहगजमस्तके
मुकुटंशतधाकृत्वाकवचंतुसहस्रधा ३६
केशेष्वाकृष्यसेनान्यंपातयामासभूतले
पातितःसगजोपस्थात्सेनानीःकुपितःपुनः ३७
हृदयेताडयामासमुष्टिनावज्रमुष्टिना
सआहतोमुष्टिभिस्तुक्षुरप्रान्निशिताञ्छरान् ३८
मुमोचहृदयेक्षिप्रंकुंडलीकृतधन्ववान्
सरराजरणोपांतेकुंडलीकृतचापवान् ३९
शिरस्त्रंकवचंबिभ्रदभेद्यंशरकोटिभिः
सविद्धःसायकैस्तीक्ष्णैस्तंहंतुंखड्गमाददे ४०
दशन्रोषात्स्वदशनान्निःश्वसन्नुच्छ्वसन्मुहुः
खड्गहस्तंसमायांतंशूरंसेनापतिंलवः ४१
चिच्छेदभुजमध्यंतुसखड्गःपाणिरापतत्
छिन्नंखड्गधरंहस्तंवीक्ष्यकोपाच्चमूपतिः ४२
वामेनगदयाहंतुंप्रचक्रामभुजेनतम्
सोऽपिच्छिन्नोभुजस्तस्यसांगदस्तीक्ष्णसायकैः ४३

तदाप्रकुपितोवीरःपादाभ्यामहनल्लवम्
लवःपादाहतस्तस्यनचचालरणांगणे ४४
स्त्रजाहतोद्विपइवचरणच्छेदनंव्यधात्
तदापितंमौलिनासौप्रहर्तुमुपचक्रमे ४५
तदालवश्चमूनाथंमन्यमानोऽधिपौरुषम्
करवालंसमादायकरेकालानलोपमम् ४६
अच्छिनच्छिरएतस्यमहामुकुटशोभितम्
हाहाकारोमहानासीच्चमूनाथेनिपातिते ४७
सैनिकाःपरिसंक्रुद्धालवंहंतुंसमागताः
लवस्तान्स्वशराघातैःपलायनपरान्व्यधात् ४८
छिन्नाभिन्नांगकाःकेचिद्गताकेचिद्रणांगणात्
सनिवार्याखिलान्योधान्विजगाहचमूंमुदा ४९
वाराहइवनिःश्वस्यप्रलयेसुमहार्णवम्
गजाभिन्नाद्विधाजातामौक्तिकैःपूरितामही ५०
दुर्गमाभूद्घटाग्र्याणांपर्वतैर्व्यापृतायथा
अश्वाःकनकपल्याणारुचिरारत्नराजिताः ५१
अपतन्रुधिराप्लुष्टेह्रदेबलसुशोभिताः
रथिनःकरमध्यस्थधनुर्दंडसुशोभिनः ५२
रथोपस्थेनिपतिताःस्वर्गगाइववैसुराः
संदष्टौष्ठपुटावक्त्रभ्रमल्लक्ष्मीविलक्षिताः ५३
पतितास्तत्रदृश्यंतेवीरारणविशारदाः
सुस्त्रावशोणितसरिद्धयमस्तककच्छपा ५४
महाप्रवाहललितावैरिणांभयकारिका
केषांचिद्बाहविश्छिन्नाःकेषांपादाविकर्तिता ५५
केषांकर्णाश्चनासाश्चकेषांकवचकुंडले
एवंतुकदनंजातंसेनान्यांपतितेरणे ५६
सर्वेनिपतितावीरानकेचिज्जीवितास्ततः
लवोजयंरणेप्राप्यवैरिवृंदंविजित्यच ५७
अन्यागमनशंकायांमनःकुर्वन्नवैक्षत
केचिदुर्वरितायुद्धाद्भाग्येननरणेमृताः ५८

शत्रुघ्नंसविधेजग्मुःशंसितुंवृत्तमद्भुतम्
गत्वातेकथयामासुर्यथावृत्तंरणांगणे ५९
कालजिन्निधनंबालाच्चित्रकारिरणोद्यमम्
तच्छ्रुत्वाविस्मयंप्राप्तःशत्रुघ्नस्तानुवाचह ६०
हसन्रोषाद्दशन्दंतान्बालग्राहहयंस्मरन्
रेवीराःकिंमदोन्मत्तायूयंकिंवाछलग्रहाः ६१
किंवावैकल्यमायातंकालजिन्मरणंकथम्
यःसंख्येवैरिवृंदानांदारुणःसमितिंजयः ६२
तंकथंबालकोजीयाद्यमस्यापिदुरासदम्
शत्रुघ्नवाक्यंसंश्रुत्यवीराःप्रोचुरसृक्प्लुताः ६३
नास्माकंमदमत्तादिनच्छलोनचदेवनम्
कालजिन्मरणंसत्यंलवाज्ञानीहिभूपते ६४
बलंचकृत्स्नंमथितंबालेनातुलशौंडिना
अतःपरंतुयत्कार्यंयेप्रेष्यानृवरोत्तमाः ६५
बालंज्ञात्वाभवान्नात्रकरोतुबलसाहसम्
इतिश्रुत्वावचस्तेषांवीराणांशत्रुहातदा ६६
सुमतिंचमतिश्रेष्ठमुवाचरणकारणे ६७
इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरामाश्वमेधेकुशलवयुद्धे सैन्यपराजयकालजित्सेनानीमरणंनामषष्टितमोऽध्यायः ६०

## एकषष्टितमोऽध्यायः

शत्रुघ्नउवाच
जानासिकिंमहामंत्रिन्कोबालोहयमाहरत्
येनमेक्षपितंसर्वबलंवारिधिसन्निभम् १
सुमतिरुवाच
स्वामिन्नयंमुनिश्रेष्ठवाल्मीकेराश्रमोमहान्
क्षत्रियाणामत्रवासोनास्त्येवपरतापन २
इंद्रोभविष्यतिपरममर्षीहयमाहरत्
पुरारिर्वान्यथावाहंतवकःसमुपाहरेत् ३
कालजिद्येननाशंवैप्राप्तःपरमदारुणः

तंप्रतिश्रीमहाराजगंताकःपुष्कलान्यतः ४
त्वंचवीरैर्भटैःसर्वैराजभिःपरिवारितः
तत्रगच्छस्वसैन्येनमहताशत्रुकृंतन ५
गत्वासजीवितंवीरंबद्ध्वातुकुतुकार्थिने
दर्शयिष्यामिरामायमतंमेत्विदमादृतम् ६
इतिवाक्यंसमाकर्ण्यवीरान्सर्वान्समादिशत्
सैन्येनमहतायातयूयमायामिपृष्ठतः ७
निर्दिष्टास्तेक्षणाद्वीराजग्मुर्यत्रलवोबली
धनुर्विस्फारयंस्तत्रसुदृढंगुणपूरितम् ८
आयातंतन्महद्दृष्ट्वाबलंवीरप्रपूरितम्
नकिंचिन्मनसाबिभ्येलवेनबलशालिना ९
लवःसिंहइवोत्तस्थौमृगान्मत्वाऽखिलान्भटान्
धनुर्विस्फारयन्रोषाच्छरान्मुंचन्सहस्रशः १०
तेशरैःपीड्यमानास्तुमहारोषेणपूरिताः
वीरंबालंमन्यमानाःसंमुखंप्राद्रवंस्तदा ११
वीरान्सहस्रशोदृष्ट्वाभ्रमिभिःपर्यवस्थितान्
लवोजवेनसंधायशरान्रोषप्रपूरितः १२
भ्रमिराद्यासहस्रेणद्वितीयायुतसंख्यया
तृतीयायुतयुग्मेनतुरीयायुतपंचभिः १३
पंचमीलक्षयोधानांषष्ठीयोधायुताधिकैः
सप्तमीलक्षयुग्मेनसप्तभिर्भ्रमिभिर्वृतः १४
मध्येलवोभ्रमिव्याप्तःसचरन्वह्निवत्तदा
दाहयामाससर्वान्वैसैनिकान्भ्रमिकारकान् १५
काचित्खड्गैःशरैःकाचित्काचित्प्रासैश्चकुंतलैः
पट्टिशैःपरिघैःसर्वाभ्रमिर्भग्नामहात्मना १६
सप्तभिर्भ्रमिभिर्मुक्तोरराजसकुशानुजः
मेघवृंदविनिर्मुक्तःशशीवशरदागमे १७
प्राहरत्सर्वथायोधान्भिंदन्गजकरान्बहून्
छिंदञ्छिरांसिवीराणांचक्रभ्रूणिमहांतिच १८
अनेकेपतितावीरालवबाणप्रपीडिताः

मुमुहुःसमरेऽथान्येनष्टाश्चान्येसुकातराः १९
पलायनपरंसैन्यंलवबाणप्रपीडितम्
वीक्ष्यवीरोरणेयोद्धुंप्रायात्पुष्कलसंज्ञकः २०
तिष्ठतिष्ठेतिचवदन्रोषपूरितलोचनः
रथेसुहयशोभाढ्येतिष्ठन्प्रायाल्लवंबली २१
सलवंप्रत्युवाचाथपुष्कलःपरमास्त्रवित्
तिष्ठदत्तेमयासंख्येरथेसुहयशोभिते २२
पदातिनात्वयायुद्धंकरोमिकिमथाहवे
तस्मात्तिष्ठरथेपश्चाद्युद्ध्येऽहभवतासह
एतद्वाक्यंनिशम्यासौलवःपुष्कलमब्रवीत् २३
त्वयादत्तेरथेस्थित्वायुद्धंकुर्यामहंरणे
तदामेपापमेवस्याज्जयःसंदिग्धएवहि २४
नवयंब्राह्मणावीरप्रतिग्रहपरायणाः
वयंतुक्षत्रियानित्यंदानकर्मक्रियारताः २५
इदानींत्वद्रथंकोपाद्भनज्मिप्रत्यहंभवान्
पादचारीभवत्येवपश्चाद्युद्धंकरिष्यति २६
पुष्कलोवाक्यमाकर्ण्यधर्मधैर्यसमन्वितम्
विसिस्मायचिरंचित्तेधनुःसज्यमथाकरोत् २७
तमात्तधनुषंदृष्ट्वालवःकोपसमन्वितः
चापंचिच्छेदपाणिस्थंशरसंधानमाचरन् २८
सयावत्सगुणंचापंकुरुतेतावदुद्धतः
रथभंगंचकारास्यसमरेप्रहसन्बली २९
भग्नंरथंस्वकंवीक्ष्यधनुश्छिन्नंमहात्मना
महावीरंमन्यमानःपदातिःप्राद्रवद्रणे ३०
उभौधनुर्धरौवीरावुभावपिशरोद्धतौ
उभौक्षतजविप्लुष्टौछिन्नसन्नाहितावुभौ ३१
परस्परंबाणघातविशीर्णावपुलक्षितौ
जयाकांक्षांप्रकुर्वंतौपरस्परवधैषिणौ ३२
जयंतकार्तिकेयौवापुरारिःपुरभिद्यथा
एवंपरस्परंयुद्धंप्रकुर्वाणौरणांगणे ३३

पुष्कलःप्रत्युवाचाथबालंशूरशिरोमणे
त्वादृशोनमयादृष्टःकश्चिद्वीरशिरोमणिः ३४
शिरस्तेपातयाम्यद्यबाणैःशितसुपर्वभिः
मापलायस्वसमरेप्राणान्रक्षस्वसंयतः ३५
एवमुक्त्वालवंवीरंचकारशरपंजरे
पुष्कलस्यशराभूमौनभसिव्याप्यसंस्थिताः ३६
शरपंजरमध्यस्थोलवःपुष्कलमब्रवीत्
महत्कर्मकृतंवीरयन्मांबाणैरपीडयत् ३७
इत्युक्त्वाबाणसंघातंप्रच्छिद्यवचनंपुनः
जगादपुष्कलंवीरःशरसंधानकोविदः ३८
पालयात्मानमाजिस्थंमच्छराघातपीडितः
पतिष्यसिमहीपृष्ठेरुधिरेणपरिप्लुतः ३९
एवमुक्तंसमाकर्ण्यपुष्कलःकोपसंयुतः
रणेसंयोधयामासलवंवीरंमहाबलम् ४०
लवःप्रकुपितोबाणंतीक्ष्णंवैरिविदारणम्
जग्राहलवतःकोशादाशीविषमिवक्रुधा ४१
जाज्वल्यमानःसशरश्चापमुक्तोलवस्यच
हृदयंभेत्तुमुद्युक्तश्छिन्नोभारतिनाशुसः ४२
छिन्नेभारतिनासंख्येशरेणप्राणहारिणा
अत्यंतंकुपितोघोरंशरमन्यंसमाददे ४३
आकर्णाकृष्टचापेनसमुक्तोनिशितःशरः
बिभेदहृदयंतस्यपुष्कलस्यमहारणे ४४
भिन्नोवक्षसिवीरेणसायकेनाशुगामिना
पपातधरणीपृष्ठेमहाशूरशिरोमणिः ४५
पतितंतंसमालोक्यपुष्कलंपवनात्मजः
गृहीत्वाराघवभ्रात्रेददौमूर्च्छासमन्वितम् ४६
मूर्च्छितंतंसमालोक्यशोकविह्वलमानसः
हनूमंतंलवंहंतुंनिदिदेशक्रुधान्वितः ४७
हनूमान्क्रोधसंप्लुष्टोलवंसंख्येमहाबलम्
विजेतुंतरसाप्रागाद्वृक्षमुद्यम्यशाल्मलिम् ४८

वृक्षेणहतवान्मूर्ध्निलवस्यहनुमान्बली
तमापतंतंतरसाचिच्छेदशतधालवः ४६
छिन्नेनगेपुनःकोपाद्वृक्षानुत्पाट्यमूलतः
ताडयामासहृदयेमस्तकेचमहाबलः ५०
यान्यान्वृक्षान्समाहृत्याताडयत्पवनात्मजः
तांस्तांश्चिच्छेदतरसाबलवान्नतपर्वभिः ५१
तदाशिलाःसमुत्पाट्यगंडशैलोपमाःकपिः
पातयामासशिरसिक्षिप्रवेगेनमारुतिः ५२
सम्राहतःशिलासंघैःसंख्येकोदंडमुन्नयन्
बाणैस्ताश्चूर्णयामासयंत्रिकाभिर्यथाकणाः ५३
तदात्यंतंप्रकुपितोमारुतिःपुच्छवेष्टनम्
चकारसमरोपांतेलवस्यबलिनःकृती ५४
स्वंपुच्छेनसमाविद्धंवीक्ष्यस्वांबांहृदिस्मरन्
मुष्टिनाताडयामासलांगूलंमारुतेर्बली ५५
तन्मुष्टिघातव्यथितोमारुतिस्तममूमुचत्
समुक्तःपुच्छतोयुद्धेशरान्मुंचन्नभूद्बली ५६
दुर्वारशरघातेनसंपीडिततनुःकपिः
बाणवर्षंमन्यमानोदुःसहंसमरेबहु ५७
किंकर्तव्यमितोऽस्माभिःपलाय्ययदिगम्यते
तदामेस्वामिनोलज्जाताडयेद्बालकोऽत्रमाम् ५८
ब्रह्मदत्तवरत्वात्तुमूर्च्छानमरणंनहि
दुःसहाबाणपीडात्रकिंकर्तव्यंमयाधुना ५९
शत्रुघ्नःसमरेगत्वाजयंप्राप्नोतुबालकात्
अहंतावज्जयाकांक्षीशयेकपटमूर्च्छया ६०
इत्येवंमानसेकृत्वापपातरणमंडले
पश्यतांसर्ववीराणांकपटेनविमूर्च्छितः ६१
तंमूर्च्छितंसमाज्ञायहनूमंतंमहाबलम्
जघानसर्वान्नृपतीञ्छरमोक्षविचक्षणः ६२

इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरामाश्वमेधे
हनुमत्पतनंनामैकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

शेषउवाच
मूर्च्छितंमारुतिंश्रुत्वाशत्रुघ्नःशोकमाययौ
किंकर्तव्यंमयासंख्येबालकोऽयमहाबलः १
स्वयंरथेहेममयेतिष्ठन्वीरवरैःसह
योद्धुंप्रागाल्लवोयत्रविचित्ररणकोविदः २
लवंददर्शशिशुतांप्राप्तंराममिवक्षितौ
धनुर्बाणकरंवीरान्क्षिपंतंरणमूर्धनि ३
विचारयामासतदाकोऽयरामस्वरूपधृक्
नीलोत्पलदलश्यामंवपुर्बिभ्रन्मनोहरम् ४
एषवैदेहतनुजासुतोभवतिनान्यथा
अस्मान्विजित्यसमरेयास्यतेमृगराडिव ५
अस्माकंनोजयोभाव्यःशक्त्याविरहितात्मनाम्
अशक्ताःकिंकरिष्यामःसमरेरणकोविदाः ६
इत्येवंसविचार्याथबालकंतुवचोऽब्रवीत्
रणेकुतुककर्तारंवीरकोटिनिपातकम् ७
कस्त्वंबालरणेऽस्माकंवीरान्पातयसिक्षितौ
नजानीषेबलंराज्ञोरामस्यदनुजार्दिनः ८
कातेमातापिताकस्तेसुभाग्योजयमाप्तवान्
नामकिंविश्रुतंलोकेजानीयांतेमहाबल ९
मुञ्चवाहःकथंबद्धःशिशुत्वात्तत्क्षमामिते
आयाहिरामंवीक्षस्वदास्यतेबहुलंतव १०
इत्युक्तोबालकोवीरोवचःशत्रुघ्नमावदत्
किंतेनाम्नाथपित्रावाकुलेनवयसातथा ११
युध्यस्वसमरेवीरचेत्त्वंबलयुतोभवेः
कुशंवीरंनमस्कृत्यपादयोर्याहिनान्यथा १२
भ्रातारामस्यवीरोभूर्नावयोर्बलिनांवरः
वाहंविमोचयबलाच्छक्तिस्तेविद्यतेयदि १३
इत्युक्त्वाशरसंधानंकृत्वाप्राहरदुद्भटः
हृदयेमस्तकेचैवभुजयोरणमंडले १४

तदाप्रकुपितोराजाधनुःसज्यमथाकरोत्
नादयन्मेघगंभीरंत्रासयन्निवबालकम् १५
बाणानपरिसंख्यातान्मुमोचबलिनांवरः
बालोबलेनचिच्छेदसर्वांस्तान्सायकव्रजान् १६
लवस्यानेकधामुक्तैर्बाणैर्व्याप्तंमहीतलम्
व्यतीपातेप्रदत्तस्यदानस्येवाक्षयंगताः १७
तेबाणाव्योमसकलंव्याप्नुवँल्लवसंधिताः
सूर्यमंडलमासाद्यप्रवर्ततेसमंततः १८
मारुतोनाविशद्यत्रबाणपंजरगोचरे
मनुष्याणांतुकावार्ताक्षणजीवितशंसिनाम् १९
तद्बाणान्विस्तृतान्दृष्ट्वाशत्रुघ्नोविस्मयंगतः
अच्छिनच्छतसाहस्रंबाणमोचनकोविदः २०
ताञ्छिन्नान्सायकान्सर्वान्स्वीयान्दृष्ट्वाकुशानुजः
धनुश्चिच्छेदतरसाशत्रुघ्नस्यमहीपतेः २१
सोऽन्यद्धनुरुपादाययावन्मुंचतिसायकान्
तावद्बभंजसरथंसायकैःशितपर्वभिः २२
करस्थमच्छिनच्चापंसुदृढंगुणपूरितम्
तत्कर्मापूजयन्वीरारणमंडलवर्तिनः २३
सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः
अन्यंरथंसमास्थायययौयोद्धुंलवंबलात् २४
अनेकबाणनिर्भिन्नःस्रवद्रक्तकलेवरः
पुष्पितःकिंशुकइवशुशुभेरणमध्यगः २५
शत्रुघ्नबाणप्रहतःपरंकोपमुपागमत्
बाणसंधानचतुरःकुंडलीकृतचापवान् २६
विशीर्णकवचंदेहंशिरोमुकुटवर्जितम्
स्रवद्रक्तपरिप्लुष्टंशत्रुघ्नस्यचकारसः २७
तदारामानुजःक्रुद्धोदशबाणाञ्छिताग्रकान्
मुमोचप्राणसंहारकारकान्कुपितोभृशम् २८
सतांस्तांस्तिलशःकृत्वाबाणैर्निशितपर्वभिः
ताडयामासहृदयेशत्रुघ्नस्याष्टभिःशरैः २९

अत्यंतंबाणपीडार्तोलवंबलिनमुत्स्मरन्
दुःसहंमन्यमानस्तंशरान्मुंचन्नभूत्तदा ३०
तदालवेनतीक्ष्णेनहृदिभिन्नोविशालके
अर्धचंद्रसमानेनतीक्ष्णपर्वसुशोभिना ३१
सविद्धोहृदिबाणेनपीडांप्राप्तःसुदारुणाम्
पपातस्यंदनोपस्थेधनुःपाणिःसुशोभितः ३२
शत्रुघ्नंमूर्छितंदृष्ट्वानृपाश्चसुरथादयः
दुद्रुवुर्लवमुद्युक्ताजयप्राप्त्यैरणेतदा ३३
सुरथोविमलोवीरोराजावीरमणिस्तथा
सुमदोरिपुतापाद्याःपरिवव्रुश्चसंयुगे ३४
केचित्क्षुरप्रैर्मुसलैःकेचिद्बाणैःसुदारुणैः
प्रासैःपरशुभिःकेचित्सर्वतःप्राहरन्नृपाः ३५
तानधर्मेणयुद्धोत्कान्दृष्ट्वावीरशिरोमणिः
दशभिर्दशभिर्बाणैस्ताडयामाससंयुगे ३६
तेबाणवर्षविहतारणमध्येसुकोपनाः
केचित्पलायिताःकेचिन्मुमुहुर्युद्धमंडले ३७
तावत्सराजाशत्रुघ्नोमूर्च्छांसंत्यज्यसंगरे
लवंप्रायान्महावीरंयोद्धुंबलसमन्वितः ३८
आगत्यतंलवंप्राहधन्योसिशिशुसन्निभः
नबालस्त्वंसुरःकश्चिच्छलितुंमांसमागतः ३९
केनापिनहिवीरेणपातितोरणमंडले
त्वयाहंप्रापितोमूर्च्छांसमक्षंममपश्यतः ४०
इदानींपश्यमेवीर्यंत्वांसंख्येपातयाम्यहम्
सहस्वबाणमेकंत्वंमापलायस्वबालक ४१
इत्युक्त्वासमरेबालंशरमेकंसमाददे
यमवक्त्रसमंघोरंलवणोयेनघातितः ४२
संधायबाणंजाज्वल्यंहृदिभेत्तुंमनोदधत्
लवंवीरसहस्राणांवह्निवत्सर्वदाहकम् ४३
तंबाणंप्रज्वलंतंसद्योतयंतंदिशोदश
दृष्ट्वासस्मारबलिनंकुशंवैरिनिपातिनम् ४४

यद्यस्मिन्समयेवीरोभ्रातास्याद्बलवान्मम
तदाशत्रुघ्नवशतानमेस्याद्भयमुल्बणम् ४५
एवंतर्कयतस्तस्यलवस्यचमहात्मनः
हृदिलग्नोमहाबाणोघोरःकालानलोपमः ४६
मूर्च्छांप्रापतदावीरोभूपसायकसंहतः
संगरेसर्ववीराणांशिरोभिःसमलंकृते ४७
इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरामाश्वमेधे
लवमूर्च्छानामद्विषष्टितमोऽध्यायः ६२

त्रिषष्टितमोऽध्यायः

शेषउवाच
लवंविमूर्च्छितंदृष्ट्वाबलिवैरिविदारणम्
शत्रुघ्नोजयमापेदेरणमूर्ध्निमहाबलः १
लवंबालंरथेस्थाप्यशिरस्त्राणाद्यलंकृतम्
रामप्रतिनिधिंमूर्त्याततोगंतुमियेषसः २
स्वमित्रंशत्रुणाग्रस्तमितिदुःखसमन्विताः
बालामात्रेऽस्यसीतायैत्वरिताःसंन्यवेदयन् ३
बालाऊचुः
मातर्जानकितेपुत्रोबलाद्वाहमपाहरत्
कस्यचिद्भूपवर्यस्यबलयुक्तस्यमानिनः ४
ततोयुद्धमभूद्घोरंतस्यसैन्येनजानकि
तदावीरेणपुत्रेणतवसर्वंनिपातितम् ५
पश्चादपिजयंप्राप्तःसुतस्तवमनोहरः
तंभूपंमूर्छितंकृत्वाजयमापरणांगणे ६
ततोमूर्च्छांविहायैषराजापरमदारुणः
संकुप्यपातयामासतवपुत्रंरणांगणे ७
अस्माभिर्वारितःपूर्वंमागृहाणहयोत्तमम्
अस्मान्सर्वांश्चधिक्कृत्यब्राह्मणान्वेदपारगान् ८
इतिवाक्यंशिशूनांसासमाकर्ण्यसुदारुणम्
पपातभूतलोपस्थेदुःखयुक्तारुरोदह ९

सीतोवाच
कथंनृपोदयाहीनोबालेनसहयुध्यति
अधर्मकृतदुर्बुद्धिर्योमद्बालंन्यपातयत् १०
लववीरभवान्कुत्रवर्ततेऽतिबलान्वितः
कथंत्वंनिष्कृपस्याहोराज्ञोऽहार्षीद्धयोत्तमम् ११
त्वंबालस्तेदुराक्रांताःसर्वशस्त्रविशारदाः
रथस्थाविरथस्त्वंवैकथंयुद्धंसमंभवेत् १२
ताताहंतुत्वयासार्द्धंरामत्यागासुखंजहौ
इदानींरहितायुष्मत्कथंजीवामिकानने १३
एहिमांमुंचयज्ञाश्वंगच्छत्वेषमहीपतिः
मद्दुःखंनाभिजानासिममदुःखप्रमार्जकः १४
कुशोयद्यभविष्यत्सरणेवीरशिरोमणिः
अमोचयिष्यदधुनाभवंतंभूपपार्श्वतः १५
सोऽपिमद्दैवतोनास्तिसमीपेकिंकरोम्यतः
दैवमेवममाप्यत्रकारणंदुःखसंभवे १६
एवमादिबहुश्रीमत्येषावैविललापह
पादांगुष्ठेनलिखतीभूमिंनेत्रद्वयाश्रुभिः १७
बालान्प्रतिजगादासौपृथुकःसचभूपतिः
कथंमत्सुतमापात्यरणेकुत्रगमिष्यति १८
इतिवाक्यंवदत्येषाजानकीपतिदेवता
तावत्कुशस्तुसंप्राप्तउज्जयिन्यामहर्षिभिः १९
माघासितचतुर्दश्यांमहाकालंसमर्च्यच
प्राप्यभूरिवरांस्तस्मादागमन्मातृसन्निधौ २०
जानकींविह्वलांदृष्ट्वानेत्रोद्भूताश्रुविक्लवाम्
शोकविह्वलदीनांगींबभाषेयावदुत्सुकः २१
तदास्वबाहुरवदत्स्फुरद्युद्धाभिशंसनः
हृदयेचरणोत्साहोबभूवातिरथस्यहि २२
सप्रत्युवाचजननींदीनगद्गदभाषिणीम्
मातस्तवगतंदुःखंमयिपुत्रउपस्थिते २३
मयिजीवतितेनेत्रादश्रूणिभुविनोपतन्

प्रसूमुवाचाश्रुखिन्नांदीनगद्गदभाषिणीम् २४
कुशोदुःखमितःसद्योदुःखितांधीरमानसः
ममभ्रातालवःकुत्रवर्ततेवैरिमर्दनः २५
सदामामागतंज्ञात्वाप्रहर्षन्सन्निधावियात्
नदृश्यतेकथंवीरःकुत्ररंतुंगतोबली २६
केनवासहबालत्वाद्गतोमांवैनिरीक्षितुम्
किंत्वंरोदिषिमेमातर्लवःकुत्रसवर्तते २७
तन्मेकथयसर्वंयत्तवदुःखस्यकारणम्
तच्छ्रुत्वापुत्रवाक्यंसादुःखिताकुशमब्रवीत् २८
लवोधृतोनृपेणात्रकेनचिद्धयरक्षिणा
बबंधबालकोमेत्रहयंयागक्रियोचितम् २९
तद्रक्षकान्बहूञ्जिग्येएकोऽनेकान्रिपून्बली
राजातंमूर्च्छितंकृत्वाबबंधरणमूर्धनि ३०
बालकाइतिमामूचुःसहगंतारएवहि
ततोऽहदुःखिताजातानिशम्यलवमाधृतम् ३१
त्वंमोचयबलात्तस्मात्कालेप्राप्तोनृपोत्तमात्
निशम्यमातुर्वचनंकुशःकोपसमन्वितः
जगादतांदशन्नोष्ठंदंतैर्दंतान्विनिष्पिषन् ३२
कुशउवाच
मातर्जानीहितंमुक्तंलवंपाशस्यबंधनात्
इदानींहन्मितंबाणैःसमग्रबलवाहनम् ३३
यदिदेवोऽमरोवापियदिशर्वःसमागतः
तथापिमोचयेतस्माद्बाणैर्निशितपर्वभिः ३४
मारोदिषिमातरिहवीराणांरणमूर्छितम्
कीर्तयेऽत्रभवत्येवपलायनमकीर्तये ३५
देहिमेकवचंदिव्यंधनुर्गुणसमन्वितम्
शिरस्त्राणंचमेमातःकरवालंतथाशितम् ३६
इदानींयामिसमरेपातयामिबलंमहत्
मोचयामिभ्रातरंस्वंरणमध्याद्विमूर्छितम् ३७
नमोचयाम्यद्यपुत्रंतवमातर्महारणात्

तदातौमेभवत्पादौसंरुष्टौभवतांक्षितौ ३८
शेषउवाच
इतिवाक्येनसंतुष्टाजानकीशुभलक्षणा
सर्वंप्रादादस्त्रवृंदंजयाशीर्भिर्नियुज्यतम् ३९
प्रयाहिपुत्रसंग्रामंलवंमोचयमूर्च्छितम्
इत्याज्ञप्तःकुशःसंख्येकवचीकुंडलीबली ४०
मुकुटीकरवालीचचर्मधारीधनुर्धरः
अक्षयाविषुधीकृत्वास्कंधयोःसिंहवीर्ययोः ४१
जगामतरसानत्वामातृपादौरथाग्रणीः
वेगेनयावद्युद्धायगच्छतिक्षिप्रमाहवे ४२
तावद्ददर्शस्वलवंवैरिवृंदनिपातकम्
आयांतंतंकुशंवीराददृशुःसुमहाभटाः ४३
कृतांतमिवसंहर्तुंसर्वंविश्वमुपस्थितम्
लवोमहाबलंदृष्ट्वाकुशंभ्रातरमागतम् ४४
अत्यंतंवह्निवद्युद्धेदिदीपेवायुनासमम्
रथादुन्मुच्यचात्मानंयुद्धायसविनिर्गतः ४५
कुशःसर्वान्रणस्थान्वैवीरान्पूर्वदिशिक्षिपत्
पश्चिमायांदिशिलवःकोपात्सर्वान्समैरयत् ४६
कुशबाणव्यथाव्याप्तालवसायकपीडिताः
सैन्येजनामुनेसर्वेउत्कल्लोलांबुधिभ्रमाः ४७
कुशेनचलवेनाथशरव्रातैःप्रपीडितम्
नशर्मलेभेसकलंसैन्यंवीरप्रपूरितम् ४८
इतस्ततःप्रभग्नंतद्बलंत्रस्तंपुनःपुनः
नकुत्रचिद्रणेस्थित्वायुद्धमैच्छद्बलान्वितः ४९
एतस्मिन्समयेराजाशत्रुघ्नःपरतापनः
कुशंवीरंययौयोद्धुंतादृशंलवसन्निभम् ५०
कुशंदृष्ट्वाबलाक्रांतंराममूर्तिसमप्रभम्
रथेतिष्ठन्हेममयेजगादपरवीरहा ५१
शत्रुघ्नउवाच
कोऽसित्वंसन्निभोभ्रात्रालवेनसुमहाबलः

किंनामासिमहावीरकस्तेतातःक्वतेप्रसूः ५२
कथंवनेद्विजैर्जुष्टेतिष्ठसित्वंनरर्षभ
सर्वंशंसयथायुध्येत्वयासहमहाबल ५३
इतिवाक्यंसमाकर्ण्यकुशःप्रोवाचभूमिपम्
मेघगंभीरयावाचानादयन्रणमंडलम् ५४
केवलंसुषुवेसीतापतिव्रतपरायणा
वनेवसावोवाल्मीकेश्चरणार्चनतत्परौ ५५
मातृसेवासमुद्युक्तौसर्वविद्याविशारदौ
कुशोलवइतिप्रख्यामागतौभूपतेऽनघ ५६
कस्त्वंवीरोरणश्लाघीकिमर्थंहयसत्तमः
मुक्तोऽस्तिसमरेत्वद्यजेतासिबलसंयुतः ५७
युध्यस्वत्वंमयासार्द्धंयदिवीरोऽसिभूमिप
इदानींपातयिष्यामिभवंतंरणमूर्धनि ५८
शत्रुघ्नस्तंसुतंज्ञात्वासीतायारामसंभवम्
विसिष्मायस्वयंचित्तेकोपाद्धनुरुपाददत् ५९
तमात्तधनुषंदृष्ट्वाकुशःकोपसमन्वितः
विस्फारयामासधनुःस्वीयंसुदृढमुत्तमम् ६०
मुमोचबाणान्निशिताञ्छत्रुघ्नःसर्वशस्त्रवित्
तांश्चिच्छेदकुशःसर्वाल्लीलयाप्रहसन्रणे ६१
बाणाश्चशतसाहस्राःकुशस्यचनृपस्यच
भुवनंव्याप्नुवन्सर्वंतच्चित्रमभवन्मुने ६२
अग्न्यस्त्रेणकुशःसर्वान्ददाहतरसाबली
शमयामासतंभूपःपर्जन्यास्त्रेणवीर्यवान् ६३
शमयामासतंभूपोवायव्येनातिविक्रमः
तदावायुरभूत्तीव्रःसर्वतोरणमंडले
पर्वतास्त्रेणतंवायुंक्षोभयंतंसमावृणोत् ६४
वज्रास्त्रेणनृपःसंख्येचिच्छेदसनगोपलान्
तदानारायणास्त्रंसमुमोचकुशउद्भटः
नारायणंतदाभूपंनाशकत्परिबाधितुम् ६५
तदाप्रकुपितोऽत्यतंकुशःकोपपरायणः

उवाचभूपंशत्रुघ्नंमहाबलपराक्रमम् ६६
जानामित्वांमहावीरंसंग्रामेजयकारिणम्
यत्त्वांनारायणास्त्रंमेनबबाधेभयानकम् ६७
इदानींपातयाम्यद्यभूमौत्वांनृपतेशरैः
त्रिभिश्चेन्नकरोम्येतत्प्रतिज्ञांतर्हिमेशृणु ६८
योमनुष्यवपुःप्राप्यदुर्लभंपुरायकोटिभिः
तन्नाद्रियेतसंमोहात्तस्यमेस्त्वत्रपातकम् ६९
सावधानोभवानत्रभवतुप्रधनांगणे
पातयामिक्षितौसद्यइत्युक्त्वास्वशरासने ७०
शरंसंरोपयामासघोरंकालानलप्रभम्
लक्षीकृत्यरिपोर्वक्षोविपुलंकठिनंमहत् ७१
तंसंधितंशरंदृष्ट्वाशत्रुघ्नःकोपमूर्च्छितः
मुमोचबाणान्निशितान्कुशत्वग्भेदकारकान् ७२
सबाणोहृदयंतस्यभेत्तुंतत्प्रचचालवै
घोररूपोवह्निसमश्राशीविषवदुच्छ्वसन् ७३
सबाणोनृपवर्येणरामंस्मृत्वाशुलक्षितः
चिच्छेदकुशमुक्तंससायकंशितपर्वकम् ७४
तदात्यंतंप्रकुपितःकुशोबाणस्यकृंतनात्
अपरंसायकंचापेदधारशितपर्वकम् ७५
सयावत्तदुरोभेत्तुंकरोतिचबलोद्धुरः
तंतावदच्छिनत्तस्यशरंकालानलप्रभम् ७६
तदाकुशोमातृपादौस्मृत्वारोषसमन्वितः
तृतीयंचापकेस्वीयेदधारशरमद्भुतम् ७७
शत्रुघ्नस्तमपिक्षिप्रंच्छेत्तुंबाणंसमाददे
तावद्विद्धःशरेणासौपपातधरणीतले ७८
हाहाकारोमहानासीच्छत्रुघ्नेविनिपातिते
जयमापकुशस्तत्रस्वबाहुबलदर्पितः ७९
इति श्रीपद्मपुराणेपातालखराडेशेषवात्स्यायनसंवादेरामाश्वमेधे
शत्रुघ्नमूर्च्छनेकुशजयोनामत्रिषष्टितमोऽध्यायः ६३

## चतुःषष्टितमोऽध्यायः

शेषउवाच
शत्रुघ्नंपतितंवीक्ष्यसुरथःप्रवरोनृपः
प्रययौमणिनासृष्टेरथेतिष्ठन्महाद्भुते १
पुष्कलस्तुरणेपूर्वंपातितःसविचारयन्
लवंययौतदायोद्धुंमहावीरबलोन्नतम् २
सुरथःकुशमासाद्यबाणान्मुंचन्ननेकधा
व्यथयामाससमरेमहावीरशिरोमणिः ३
सुरथंविरथंचक्रेबाणैर्दशभिरुच्छिखैः
धनुश्चिच्छेदतरसासुदृढंगुणपूरितम् ४
अस्त्रप्रत्यस्त्रसंहारैःक्षेपणैःप्रतिक्षेपणैः
अभवत्तुमुलंयुद्धंवीराणांरोमहर्षणम् ५
अत्यंतंसमरोद्युक्तेसुरथेदुर्जयेनृपे
कुशःसंचिंतयामासकिंकर्तव्यंरणेमया ६
विचार्यनिशितंघोरंसायकंसमुपाददे
हननायनृपस्यास्यमहाबलसमन्वितः ७
तमागतंशरंदृष्ट्वाकालानलसमप्रभम्
छेत्तुंमतिंचकाराशुतावल्लग्नोमहाशरः ८
मुमूर्च्छसमरेवीरोमहावीरबलस्ततः
पपातस्यंदनोपस्थेसारथिस्तमुपाहरत् ९
सुरथेपतितेदृष्ट्वाकुशंजयसमन्वितम्
त्रासयंतंवीरगणानियायपवनात्मजः १०
समीरसूनुंप्रबलमायांतंवीक्ष्यवानरम्
जहासदर्शयन्दंतान्कोपयन्निवतंक्रुधा ११
उवाचचहनूमंतमेहित्वंममसंमुखम्
भेत्स्येबाणसहस्रेणमृतोयास्यसियामिनीम् १२
इत्युक्तोहनुमाञ्ज्ञात्वारामसूनुंमहाबलम्
स्वामिकार्यंप्रकर्तव्यमितिकृत्वाप्रधावितः १३
शालमुत्पाटयतरसाविशालंशतशाखिनम्
कुशंवक्षसिसंलक्ष्यययौयोद्धुंमहाबलः १४

शालहस्तंसमायांतंहनूमंतंमहाबलम्
त्रिभिःक्षुरप्रैर्विव्याधहृदिचंद्रोपमैर्बली १५
सबाणविद्धस्तरसाकुशेनबलशालिना
शालेनहृदिसंजघ्नेदंतान्निष्पिष्यमारुतिः १६
शालाहतस्तदाबालःकिंचिन्नाकंपतस्मयात्
तदावीराःप्रशंसांतुप्रचक्रुस्तस्यबाल्यतः १७
सशालेनहतोवीरःसंहारास्त्रंसमाददे
संहन्तुंवैरिणंकोपात्कुशःसपरमास्त्रवित् १८
संहारास्त्रंसमालोक्यदुर्जयंकुशमोचितम्
दध्यौरामंस्वमनसाभक्तविघ्नविनाशकम् १९
तदामुक्तंकुशेनाशुतदस्त्रंहृदिमारुतेः
लग्नंमहाव्यथाकारितेनमूर्च्छामितःपुनः २०
मूर्च्छांप्राप्तंतुतंदृष्ट्वाप्लवंगंबलसंयुतः
विव्याधसायकैस्तीक्ष्णैःसैन्यंतत्सकलंमहत् २१
तस्यबाणायुतैर्भग्नंबलंसर्वंरणांगणे
पलायनपरंजातंचतुरंगसमन्वितम् २२
तदाकपिपतिःकोपात्सुग्रीवोरक्षकोमहान्
अभ्यधावन्नगान्नैकानुत्पाट्यकुशमुद्भटम् २३
कुशःसर्वान्प्रचिच्छेदलीलयाप्रहसन्नगान्
पुनरप्यागतान्वृक्षांश्चिच्छेदतरसाबली २४
अनेकबाणव्यथितःसुग्रीवःसमरांगणे
जग्राहपर्वतंघोरंकुशमस्तकमध्यतः २५
कुशस्तंनगमायांतंवीक्ष्यबाणैरनेकधा
निष्पिपेषचकाराशुमहारुद्रांगयोग्यताम् २६
सुग्रीवस्तन्महत्कर्मदृष्ट्वाबालेननिर्मितम्
जयाशाप्रतिनिर्वृत्तोबभूवसमरांगणे २७
रणमध्येदुराक्रांतंकुशंलांगूलताडकम्
अत्यमर्षीरुषाक्रांतस्तंहंतुंनगमाददे २८
आत्मानंहंतुमुद्युक्तंवीक्ष्यसुग्रीवमादरात्
ताडयामासबहुभिःसायकैःशितपर्वभिः २९

सताडितोबहुविधैःशरैःपीडासमन्वितः
कुशंहंतुंसमारब्धोययौशालंसमाददे ३०
तदापिचकुशोवीरोवारुणास्त्रंसमाददे
बबंधतंचपाशेनदृढेनसलवाग्रजः ३१
सबद्धःपाशकैःस्निग्धैःकुशेनबलशालिना
पपातरणमध्येवैमहावीरैरलंकृते ३२
सुग्रीवंपतितंदृष्ट्वावीराःसर्वत्रदुद्रुवुः
जयमापलवभ्रातामहावीरशिरोमणिः ३३
तावल्लवोभटाञ्जित्वापुष्कलंचांगदंतथा
प्रतापाग्र्यंवीरमणिंतथान्यानपिभूभुजः ३४
जयंप्राप्यरणेवीरोलवोभ्रातरमागमत्
संग्रामेजयकर्तारंवैरिकोटिनिपातकम् ३५
परस्परंप्रहृषितौपरिरंभंप्रकुर्वतः
जयंप्राप्तौतदावार्तांमुनेचक्रतुरुन्मदौ ३६
लवउवाच
भ्रातस्तवप्रसादेननिस्तीर्णोरणतोयधिः
इदानींवीररणकंशोधयावःसुशोभितम् ३७
इत्युक्त्वात्वरितंवीरोजग्मतुस्तौकुशीलवौ
राज्ञोमौलिमणिंचित्रंजग्राहकनकाचितम् ३८
पुष्कलस्यलवोवीरोजग्राहमुकुटंशुभम्
अंगदेचमहानर्घ्येशत्रुघ्नस्यापरस्यच ३९
गृहीत्वाशस्त्रसंघातंहनूमंतंकपीश्वरम्
सुग्रीवंसविधेगत्वाउभावपिबबंधतुः ४०
पुच्छेवायुसुतस्यायंगृहीत्वातुकुशानुजः
भ्रातरंप्रत्युवाचेदंनेष्यामिस्वकमंदिरम् ४१
आवयोर्जननीप्रीत्यैगृहीत्वापुच्छकेत्वहम्
क्रीडार्थमृषिपुत्राणांकौतुकार्थंममैवच ४२
एतच्छ्रुत्वाततोवाक्यमुवाचचकुशोलवम्
अहमेनंग्रहीष्यामिवानरंबलिनंदृढम् ४३
इत्येवंभाषमाणौतौबद्धातौबलिनांवरौ

पुच्छयोर्बलिनौधृत्वाजग्मतुःस्वाश्रमंप्रति ४४
स्वाश्रमायप्रगच्छंतौवीच्यतौकपिसत्तमौ
कंपमानौजगदतुरन्योन्यंभीतयागिरा ४५
हनूमान्कपिराजानंप्रत्युवाचभयार्द्रधीः
एतौरामसुतावस्मान्नेष्यतःस्वाश्रमंप्रति ४६
मयापूर्वंकृतंकर्मजानकींप्रतिगच्छता
तत्रमेजानकीदेवीसंमुखाभून्मनोहरा ४७
सामांद्रच्यतिवैदेहीबद्धंपाशेनवैरिणा
तदाहसिष्यतिवरात्रपामेऽत्रभविष्यति ४८
मयाकिमत्रकर्तव्यंप्राणत्यागोभविष्यति
महद्दुःखंचापतितंसरामःकिंकरिष्यति ४९
सुग्रीवस्तद्वचःश्रुत्वाममाप्येवंमहाकपे
नेष्यतेयदिमामेवंनिधनंतुभविष्यति ५०
एवंकथयतोरेवह्यन्योन्यंभयभीतयोः
कुशोलवश्चभवनंमातुःप्रापतुरोजसा ५१
तावायातौसमीच्यैवजहर्षजननीतयोः
अन्योन्यंपरमप्रीत्यापरिरेभेनिजौसुतौ ५२
ताभ्यांपुच्छगृहीतौतौवानरौवीच्यजानकी
हनूमंतंचसुग्रीवंसर्ववीरंकपीश्वरम् ५३
जहासपाशबद्धौतौवीचमाणावरांगना
उवाचचविमोचार्थंवदंतीवचनंवरम् ५४
पुत्रौप्रमुंचतंकीशौमहावीरौमहाबलौ
ईचंतौमांयदिस्फीतौप्राणत्यागंकरिष्यतः ५५
अयंवैहनुमान्वीरोयोददाहदनोःपुरीम्
अयमप्यृचराजोहिसर्ववानरभूमिपः ५६
किमर्थंविधृतौकुत्रकिंवाकृतमनादरात्
पुच्छेयुवाभ्यांविधृतौसमहान्विस्मयोऽस्तिमे ५७
इतिमातुर्वचःश्लच्णंवीच्यतांपुत्रकौतदा
ऊचतुर्विनयश्रेष्ठौमहाबलसमन्वितौ ५८
मातःकश्चनभूपालोरामोदाशरथिर्बली

तेनमुक्तोहयःस्वर्णभालपत्रःसुशोभितः ५९
तत्रैवंलिखितंमातरेकवीराप्रसूर्मम
येक्षत्रियास्तेगृह्णन्तुनोचेत्पादतलार्चकाः ६०
तदामयाविचारोवैकृतःस्वांतेपतिव्रते
भवतीक्षत्रियाकिंनवीरसूःकिंनवाभवेत् ६१
धाष्टर्यंतद्वीक्ष्यभूपस्यगृहीतोऽश्वोमयाबलात्
जितंकुशेनवीरेणसैन्यंतत्पातितंरणे ६२
मुकुटोऽयभूमिपतेर्जानीहिपतिदेवते
अयमप्यन्यवीरस्यपुष्कलस्यमहात्मनः ६३
जानीहिमुकुटंत्वन्यंमणिमुक्ताविराजितम्
अश्वोऽयमेमनोहारीकामयानोहिभूपतेः ६४
आरोहणायमद्भ्रातुर्जानीहिबलिनोवरे
इमौकीशौमयारंतुमानीतौबलिनांवरौ ६५
कौतुकार्थंतवैवैतौसंग्रामेयुद्धकारकौ
इतिवाक्यंसमाकर्ण्यजानकीपतिदेवता ६६
जगादपुत्रौतौवीरौमोचयेथांपुनःपुनः
सीतोवाच
युवाभ्यामनयःसृष्टोहृतोरामहयोमहान् ६७
अनेकेपातितावीराइमौबद्धौकपीश्वरौ
पितुस्तवहयोवीरोयागार्थंमोचितोऽमुना ६८
तस्यापिहृतवंतौकिंवाजिनंमखसत्तमे
मुंचतंप्लवगावेतौमुंचतंवाजिनांवरम् ६९
क्षाम्यतांभूपतेर्भ्राताशत्रुघ्नःपरकोपनः
जनन्यास्तद्वचःश्रुत्वाऊचतुस्तांबलान्वितौ ७०
क्षात्रधर्मेणतंभूपंजितवंतौबलान्वितम्
नास्माकमनयोर्भाविक्षात्रधर्मेणयुध्यताम् ७१
वाल्मीकिनापुराप्रोक्तमस्माकंपठतांपुरः ७२
कण्वस्याश्रमकेवाहंधृत्वायागक्रियोचितम्
तस्मात्सुतःस्वपित्रापियुध्येद्भ्रात्रापिचानुजः ७३
गुरुणाशिष्यएवापितस्मान्नोपापसंभवः

त्वदाज्ञातोऽधुनाचावांदास्यावोहयमुत्तमम् ७४
मोद्दयावःकीशावेतौहिकरिष्यावोवचस्तव
इत्युक्त्वामातरंवीरौगतौरणेकपीश्वरौ ७५
अमुंचतांहयंचापिहयमेधक्रियोचितम्
सीतादेवीस्वपुत्राभ्यांश्रुत्वासैन्यंनिपातितम् ७६
श्रीरामंमनसाध्यात्वाभानुमैक्षतसाक्षिणम्
यद्यहंमनसावाचाकर्मणारघुनायकम् ७७
भजामिनान्यंमनसातर्हिजीवेदयंनृपः
सैन्यंचापिमहत्सर्वंयन्नाशितमिदंबलात् ७८
पुत्राभ्यांतत्तुजीवेतमत्सत्याज्जगतांपते
इतियावद्वचोब्रूतेजानकीपतिदेवता ७९
तावद्बलंचतत्सर्वंजीवितंरणमूर्द्धनि ८०
इति श्रीपद्मपुराणेपातालखरडेशेषवात्स्यायनसंवादेरामाश्वमेधे
सैन्यजीवनंनामचतुःषष्टितमोऽध्यायः ६४

## पंचषष्टितमोऽध्यायः

शेषउवाच
क्षणान्मूर्च्छांजहौवीरःशत्रुघ्नःसमरांगणे
अन्येऽपिवीराबलिनोमूर्च्छांप्राप्ताःसुजीविताः १
शत्रुघ्नोवाजिनांश्रेष्ठंददर्शपुरतःस्थितम्
आत्मानंचशिरस्त्राणरहितंसैन्यजीवितम् २
वीक्ष्यचित्रमिदंस्वांतेचकारचजगादह
सुमतिंमंत्रिणांश्रेष्ठंमूर्च्छाविरहितंतदा ३
कृपांकृत्वाहयंप्रादाद्बालोयज्ञस्यपूर्तये
गच्छामरामंतरसाहयागमनकांक्षिणम् ४
इत्युक्त्वासरथेस्थित्वाहयमादायवेगतः
ययौतदाश्रमाद्दूरंभेरीशंखविवर्जितः ५
तत्पृष्ठतोमहासैन्यंचतुरंगसमन्वितम्
चचालकुर्वन्संभग्नंस्वभारेणफणीश्वरम् ६
जवेनजाह्नवींतीर्त्वाकल्लोलजलशालिनीम्

जगामविषयेस्वीयेस्वकीयजनशोभिते ७
पुष्कलेनयुतोराजासुरथेनसमन्वितः
रथेमणिमयेतिष्ठन्महत्कोदंडधारकः ८
हयंतंपुरतःकृत्वारत्नमालाविभूषितम्
श्वेतातपत्रंतस्यैवमूर्ध्निचामरभूषितम् ९
अनेकरथसाहस्रैःपरितोबलिभिर्नृपैः
उद्यत्कोदंडललितैर्वीरनादविभूषितैः १०
क्रमेणनगरींप्रापसूर्यवंशविभूषिताम्
अनेकैःकेतुभिःश्रेष्ठैर्भूषितांदुर्गराजिताम् ११
रामःश्रुत्वाहयंप्राप्तंशत्रुघ्नेनसहामुना
पुष्कलेनचवीरेणययौहर्षमनेकधा १२
कटकंनिर्दिदेशासौचतुरंगंमहाबलम्
लक्ष्मणंप्रेषयामासभ्रातरंबलिनांवरम् १३
लक्ष्मणःसैन्यसहितोगत्वाभ्रातरमागतम्
परिरेभेमुदाक्रांतःक्षतशोभितगात्रकम् १४
सर्वत्रकुशलंपृष्टोवार्तांचात्रचकारसः
परमंहर्षमापन्नःशत्रुघ्नःसंगतोमुदा १५
सौमित्रिःस्वरथेस्थित्वाभ्रात्रासहमहामनाः
सैन्येनमहतावीरोययौस्वनगरींप्रति १६
सरयूःपुण्यसलिलापवित्रितजगत्त्रया
रामपादरजःपूताशरच्चंद्रसमप्रभा १७
हंसकारंडवाकीर्णाचक्रवाकोपशोभिता
विचित्रतरवर्णैश्चपक्षिभिर्नादिताभृशम् १८
मंडपास्तत्रबहुशोरामचंद्रेणकारिताः
ब्राह्मणानांवेदविदांपृथक्पाठनिनादकाः १९
क्षत्रियास्तत्रबहवोधनुःपाणिसुशोभिताः
ज्याटंकारेणबहुनानादयंतोमहीतलम् २०
भुंजतेब्राह्मणायत्रविचित्रान्नैर्मनोहरैः
परस्परंप्रपश्यंतोवार्तांचक्रुर्मनोहराम् २१
पायसान्नानिशुभ्राणिचंद्रकांतिसमानिच

क्षीराज्यबहुयुक्तानिशर्करामिश्रितानिच २२
अपूपास्तत्रबहुलाश्चंद्रबिंबसमाःश्रिया
कर्पूरादिसुगंधेनवासिताःसुमनोहराः २३
फेनिकाघटकाःस्निग्धाःशतच्छिद्राविरंध्रकाः
शष्कुल्योमंडकामृष्टामधुरान्नसमन्विताः २४
भक्तंकुमुदसंकाशंमुद्गदालिविमिश्रितम्
सुगंधेनसमायुक्तमत्यंतंप्रीतिदायकम् २५
ओदनोदधिनायुक्तोभीमसेनसमन्वितः
स्वादुपाककरैःसृष्टःपात्रेमुक्तःप्रवेषकैः २६
तत्रकेचिद्द्विजाःपात्रेनिक्षिप्तंवीक्ष्यपायसम्
परस्परंतेप्रत्यूचुःकिमिदंदृश्यतेऽद्भुतम् २७
किंचंद्रबिंबंनभसःपतितंतमसोभयात्
अमृतंतुभवत्यत्रमृत्युनाशकमद्भुतम् २८
तच्छ्रुत्वारोषताम्राक्षःप्रोवाचान्योद्विजोत्तमः
नभवत्येवचंद्रस्यबिंबंत्वमृतविप्लुतम् २९
एकमिंदोर्वपुस्त्वेतद्दृश्यतेसदृशंकथम्
ब्राह्मणानांसहस्रस्यपात्रेपात्रेपृथक्पृथक् ३०
ततोजानीहिकुमुदंकर्पूरंवाभविष्यति
माजानीहिमृगांकस्यबिंबंशुभ्रश्रियान्वितम् ३१
तावदन्योरुषाक्रांतोधुन्वन्स्वंमस्तकंतथा
नजानंतिद्विजामूढाःस्वादुज्ञानाविचक्षणाः ३२
इदंतुक्षौद्रकंदस्यरसेनपरिपाचितम्
जानीहिशतपत्रस्यपुष्पाणिमधुराणिच ३३
एवंपरस्परंविप्राःकंदमूलफलाशिनः
तर्कयंतिमुनेप्रीतारसज्ञानेऽतिलोलुपाः ३४
तावदन्योद्विजःप्राहक्षत्रियाणांवरंजनुः
भोक्ष्यंतेतादृशंत्वन्नंमहत्पुण्यैरुपस्कृतम् ३५
तदातंप्राब्रवीद्विप्रोदत्तस्यफलमीदृशम्
येददत्यग्रजन्मभ्यःप्राप्नुवंतितईप्सितम् ३६
यैरर्चितोनैवहरिर्नैवेद्यैर्विविधैर्मुहुः

तेषामेतादृशंभोज्यंनभवेदक्षिगोचरम् ३७
यैर्नरैरग्रजन्मानोभोजिताविविधैरसैः
भुंजतेतेस्वादुरसंपापिनांचक्षुरुज्झितम् ३८
एवंविधैरसैर्मिष्टैर्भोजिताद्विजसत्तमाः
मंडपेविपठंतस्तेशब्दब्रह्मविचक्षणाः ३९
नृत्यंत्येकेहसन्त्येकेनदन्त्येकेप्रहर्षिताः
उत्सवोबहुरुद्धातितत्रशत्रुघ्नआगमत् ४०
रामःशत्रुघ्नमायांतंपुष्कलेनसमन्वितम्
निरीक्ष्यमुदमुद्भूतांरक्षितुंनाशकत्तदा ४१
यावदुत्तिष्ठतेरामोभ्रातरंहयपालकम्
तावद्रामपदेलग्नःशत्रुघ्नोभ्रातृवत्सलः ४२
पादयोःपतितंवीक्ष्यभ्रातरंविनयान्वितम्
परिरेभेदृढंप्रीतःक्षतसंशोभितांगकम् ४३
अश्रूणिबहुधामुंचन्हर्षाच्छिरसिराघवः
अत्यंतंपरमांप्रापमुदंवचनदूरगाम् ४४
पुष्कलंस्वीयपदयोर्नम्रंविनयविह्वलः
सुदृढंभुजयोर्मध्येविनीयापीडयद्भृशम् ४५
हनूमंतंतथावीरंसुग्रीवंचांगदंतथा
लक्ष्मीनिधिंजनकजंप्रतापाग्र्यंरिपुंजयम् ४६
सुबाहुंसुमदंवीरंविमलंनीलरत्नकम्
सत्यवंतंवीरमणिंसुरथंरामसेवकम् ४७
अन्यानपिमहाभागान्रघुनाथःस्वयंतदा
परिरेभेदृढंस्निग्धान्पादयोःप्रणतान्नृपान् ४८
सुमतिःश्रीरघुपतिंभक्तानुग्रहकारकम्
परिरभ्यदृढंप्रीतःसंमुखेतिष्ठदुन्नतः ४९
तदारामोनिजामात्यंवीक्ष्यसान्निध्यमागतम्
उवाचपरमप्रीत्यामंत्रिणंवदतांवरः ५०
सुमतेमंत्रिणांश्रेष्ठशंशमेवाग्मिनांवर
कएतेभूमिपाःसर्वेकथमत्रसमागताः ५१
कुत्रकुत्रहयःप्राप्तःकेनकेननियंत्रितः

कथंवैमोचितोभ्रात्रामहाबलसुशालिना ५२
शेषउवाच
इत्युक्तोमंत्रिणांश्रेष्ठःसुमतिःप्राहराघवम्
प्रहसन्मेघगंभीरनादेनचसुबुद्धिमान् ५३
सुमतिरुवाच
सर्वज्ञस्यपुरस्तेऽद्यमयाकथमुदीर्यते
पृच्छसित्वंलोकरीत्यासर्वंजानासिसर्वदृक् ५४
तथापितवनिर्देशंशिरस्याधायसर्वदा
ब्रवीमितच्छृणुष्वाद्यसर्वराजशिरोमणे ५५
त्वत्प्रसादादहोस्वामिन्सर्वत्रजगतीतले
परिबभ्रामतेवाहोभालपत्रसुशोभितः ५६
नकश्चित्तंनिजग्राहस्वनामबलदर्पितः
स्वंस्वंराज्यंसमर्प्याथप्रणेमुस्तेपदांबुजम् ५७
कोवारावणदैत्येंद्रनिहंतुर्वाजिसत्तमम्
गृह्णातिविजयाकांक्षीजरामरणवर्जितः ५८
अहिच्छत्रांगतस्तावत्तववाजीमनोरमः
तद्राजासुमदःश्रुत्वाहयंप्राप्तंतवप्रभो ५९
सपुत्रःप्रबलःसर्वसैन्येनबलिनावृतः
सर्वंसमर्पयामासराज्यंनिहतकंटकम् ६०
योराजाजगतांनेत्रींमातरंजगदंबिकाम्
प्रसाद्यचिरमायुष्यंलेभेराज्यमकंटकम् ६१
सएषत्वांप्रणमतिसुमदःप्रभुसेवितम्
तंगृहाणकृपादृष्ट्याचिराद्दर्शनकांक्षकम् ६२
ततःसुबाहुभूपस्यनगरेबलपूरिते
दमनस्तस्यवैपुत्रःप्रजग्राहहयोत्तमम् ६३
तेनसाकंमहद्युद्धंबभूवदमनेनच
पुष्कलोजयमापेदेसंमूर्छ्यसुभुजात्मजम् ६४
ततःसुबाहुःसंक्रुद्धोरणेपवनजंबलात्
युयुधेतवपादाब्जसेवकंबलिनांवरम् ६५
तस्यपादाहतोज्ञानंप्राप्यशापतिरस्कृतम्

तुभ्यंसमर्प्यसकलंवाजिनःपालकोऽभवत् ६६
एषत्वांसुभुजोराजाप्रणमत्युन्नतांगकः
कृपादृष्ट्याभिषिंचत्वंसुबाहुंनयकोविदम् ६७
ततोमुक्तोहयोरेवाह्वदेसनिममज्जह
तत्रप्राप्तंमोहनास्त्रंशत्रुघ्नेनबलीयसा ६८
ततोदेवपुरेप्रागाच्छिववासविभूषिते
तत्रत्यंतुविजानासियतस्त्वंतत्रचागतः ६९
विद्युन्मालीहतोदैत्यःसत्यवान्संगतस्ततः
सुरथेनसमंयुद्धंजानासित्वंमहामते ७०
ततःकुंडलकान्मुक्तोहयोबभ्रामसर्वतः
नकश्चित्तंनिजग्राहस्ववीर्यबलदर्पितः ७१
वाल्मीकेराश्रमेरम्येहयःप्राप्तोमनोरमः
तत्रयत्कुतुकंजातंतच्छृणुष्वनरोत्तम ७२
तत्रार्भस्तवसारूप्यंबिभ्रत्षोडशवार्षिकः
जग्राहवीन्द्यपत्रांकंवाजिनंबलवत्तमः ७३
तत्रकालजितायुद्धंमहज्जातंनरोत्तम
निहतस्तेनवीरेणशितधारेणहेतिना ७४
अनेकेनिहताःसंख्येपुष्कलाद्यामहाबलाः
मूर्च्छितंचापिशत्रुघ्नंचक्रेवीरशिरोमणिः ७५
तदाराजामहद्दुःखंविचार्यहृदिसंयुगे
कोपेनमूर्च्छितंचक्रेवीरोहिबलिनांवरः ७६
सयावन्मूर्च्छितोराज्ञातावदन्यःसमागतः
तेनैतेनचसंजीव्यनाशितंकटकंतव ७७
सर्वेषांमूर्च्छितानांतुशस्त्राण्याभरणानिच
गृहीत्वावानरौबद्धौजग्मतुःस्वाश्रमंप्रति ७८
कृपांकृत्वापुनस्तेनदत्तोऽश्वोयज्ञियोमहान्
जीवनंप्रापितंसर्वंकटकंनष्टजीवितम् ७९
वयंगृहीत्वातंवाहंप्राप्तास्तवसमीपतः
एतदेवमयाज्ञातंतदुक्तंतेपुरोवचः ८०
इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरामाश्वमेधे

सुमतिनिवेदनंनामपंचषष्टितमोऽध्यायः ६५

षट्षष्टितमोऽध्यायः

शेषउवाच
कथितौवैसुमतिनावाल्मीकेराश्रमेशिशू
पुत्रौस्वीयावितिज्ञात्वावाल्मीकिंप्रतिसंजगौ १
श्रीरामउवाच
कौशिशूममसारूप्यधारकौबलिनांवरौ
किमर्थंतिष्ठतस्तत्रधनुर्विद्याविशारदौ २
अमात्यकथितौश्रुत्वाविस्मयोममजायते
यौशत्रुघ्नंहनूमंतंलीलयांगबबंधतुः ३
तस्माच्छंसमुनेसर्वंबालयोश्चविचेष्टितम्
यथामेपरमाप्रीतिर्भवत्येवमभीप्सिता ४
इतितत्कथितंश्रुत्वाराजराजस्यधीमतः
उवाचपरमंवाक्यंस्पष्टाक्षरसमन्वितम् ५
वाल्मीकिरुवाच
तवांतर्यामिणोनृणांकथंज्ञानंचनोभवेत्
तथापिकथयाम्यत्रतवसंतोषहेतवे ६
राजन्यौबालकौमह्यमाश्रमेबलिनांवरौ
त्वत्सारूप्यधरौस्वांगमनोहरवपुर्धरौ ७
त्वयायदावनेत्यक्ताजानकीवैनिरागसी
अंतर्वत्नीवनेघोरेविलपंतीमुहुर्मुहुः ८
कुररीमिवदुःखार्तांवीक्ष्याहंतववल्लभाम्
जनकस्यसुतांपुण्यामाश्रमेत्वानयंतदा ९
तस्याःपर्णकुटीरम्यारचितामुनिपुत्रकैः
तस्यामसूतपुत्रौद्वौभासयंतौदिशोदश १०
तयोरकरवंनामकुशोलवइतिस्फुटम्
ववृधातेऽनिशंतत्रशुक्लपक्षेयथाशशी ११
कालेनोपनयाद्यानिसर्वाणिकृतवानहम्
वेदान्सांगानहंसर्वान्ग्राहयामासभूपते १२

सर्वाणिसरहस्यानिशृणुष्वमुखतोमम
आयुर्वेदंधनुर्विद्यांशस्त्रविद्यांतथैवच १३
विद्यांजालंधरींचाथसंगीतकुशलौकृतौ
गंगाकूलेगायमानौलताकुंजवनेषुच १४
चंचलौचलचित्तौतौसर्वविद्याविशारदौ
तदाहमतिसंतोषंप्राप्तश्चाहंरघूत्तम १५
दत्त्वासर्वाणिचास्त्राणिमस्तकेनिहितःकरः
अतीवगानकुशलौदृष्ट्वालोकाविसिष्मिरे
षड्जमध्यमगांधारस्वरभेदविशारदौ १६
तथाविधौविलोक्याहंगापयामिमनोहरम्
भविष्यज्ञानयोगाच्चकृतंरामायणंशुभम् १७
मृदंगपणवाद्यादियंत्रवीणाविशारदौ
वनेवनेचगायंतौमृगपक्षिविमोहकौ १८
अद्भुतंगीतमाधुर्यंतवरामकुमारयोः
श्रोतुंतौवरुणोबालावानिनायविभावरीम् १९
मनोहरवयोरूपौगानविद्याब्धिपारगौ
कुमारौजगदुस्तत्रलोकेशादेशतःकलम् २०
परमंमधुरंरम्यंपवित्रंचरितंतव
शुश्राववरुणःसार्द्धंकुटुंबेनचगायकैः २१
शृण्वन्नैवगतस्तृप्तिंमित्रेणवरुणःसह
सुधातोऽपिपरंस्वादुचरितंरघुनंदन २२
गानानंदमहालोभहृतप्राणेंद्रियक्रियः
प्रत्यागंतुंदिदेशासौकुमारौनहितावकौ २३
रमणीयमहाभोगैर्लोभितावपिबालकौ
चलितौनगुरोश्चात्ममातुःपादांबुजस्मृतेः २४
अहंचापिगतःपश्चाद्वरुणालयमुत्तमम्
वरुणःप्रेमसहितःपूजांचक्रेममप्रभो २५
पृच्छतेजन्मकर्मादिसर्वज्ञायापिबालयोः
वरुणायाब्रुवंसर्वंजन्मविद्याद्युपागमम् २६
श्रुत्वासीतासुतौदेवःसचक्रेंबरभूषणैः

देवदत्तमितिग्राह्यमितिमद्वाक्यगौरवात् २७
स्राहृतंराजपुत्राभ्यांयद्दत्तंवरुणेनतत्
प्रसन्नेनतयोर्वाद्यगानविद्यावयोगुणैः
ततोमामब्रवीत्सीतामुद्दिश्यवरुणःकृती २८
सीतापतिव्रताधुर्यारूपशीलवयोन्विता
वीरपुत्रामहाभागात्यागंनार्हतिकर्हिचित् २९
महतीहानिरेतस्यास्त्यागेहिरघुनंदन
सिद्धीनांपरमासिद्धिरेषातेह्यनपायिनी ३०
पामरैर्महिमानास्याज्ञायतेयदिदूषितैः
काहानिस्तावतारामपुरायश्रवराकीर्तन ३१
स्रस्मत्साच्चिकमेतस्याःपावनंचरितंसदा
सद्यस्तेसिद्धिमायांतियेसीतापदचिंतकाः ३२
यस्याःसंकल्पमात्रेणजन्मस्थितिलयादिकाः
भवंतिजगतांनित्यंव्यापाराएश्वराश्रमी ३३
सीतामृत्युःसुधाचेयंतपत्येषाचवर्षति
स्वर्गोमोच्चस्तपोयोगोदानंचतवजानकी ३४
ब्रह्माणंशिवमन्यांश्चलोकपालान्मदादिकान्
करोत्येषाकरोत्येवनान्यासीतातवप्रिया ३५
त्वंपितासर्वलोकानांसीताचजननीत्यतः
कुदृष्टिरत्रतुच्चेमयोग्यानतवकर्हिचित् ३६
वेत्तिसीतांसदाशुद्धांसर्वज्ञोभगवान्स्वयम्
भवानपिसुतांभूमेःप्राणादपिगरीयसीम् ३७
स्रादर्तव्यात्वयातस्मात्प्रियाशुद्धेतिजानकी
नचशापपराभूतिःसीतायांत्वयिवाविभो ३८
इमानिममवाक्यानिवाच्यानिजगतांपतिम्
रामंप्रतित्वयासाच्चाद्वाल्मीकेमुनिसत्तम ३९
इत्युक्तोवरुणेनाहंसीतासंग्रहकारणात्
एवमेवहिसर्वैश्चलोकपालैरपिप्रभो ४०
श्रुतंरामायणोद्गानंपुत्राभ्यांतेसुरासुरैः
गंधर्वैरपिसर्वैश्चकौतुकाविष्टमानसैः ४१

प्रसन्नाएवसर्वेऽपिप्रशशंसुःसुतौचते
त्रैलोक्यंमोहितंताभ्यांरूपगानवयोगुणैः ४२
दत्तंयल्लोकपालैस्तुसुताभ्यांस्वीकृतंहितत्
ऋषिभिश्चवराश्चाभ्यामन्येभ्यःकीर्तिरिवच ४३
एकरामंजगत्सर्वंपूर्वंमुनिविलोकितम्
त्रिराममधुनाजातंसुताभ्यांतेखिलेन्वितम् ४४
एककामपरामूर्तिर्लोकेपूर्वमवेन्विता
कामैश्चतुर्भिरद्यायंजायतेचयतस्ततः ४५
सर्वत्रान्यत्रराजेंद्ररामपुत्रौकुशीलवौ
गीयतेअत्रसंकोचःकिंकृतोविदुषित्वयि ४६
कृतेषुतवसर्वेषुश्रूयतेमहतीस्तुतिः
त्यागादन्यत्रसीतायाःपुरायश्लोकशिरोमणे ४७
त्वयात्रैलोक्यनाथेनगार्हस्थ्यमनुकुर्वता
अंगीकार्यौसुतौरामविद्याशीलगुणान्वितौ ४८
नतौस्वांमातरंहित्वास्थास्यतोऽभवदंतिके
जनन्यासहितौतस्मादाकार्यौभवतासुतौ ४९
दत्तएवतयेदानींसेनासंजीवनात्पुनः
प्रत्ययःसर्वलोकानांपावनःपततामपि ५०
नाज्ञातंतेनचास्माकंनामराणांचमानद
शुद्धौतस्यास्तुलोकानांयन्नष्टंतदिहध्रुवम् ५१
शेषउवाच
इतिवाल्मीकिनारामःसर्वज्ञोऽप्यवबोधितः
स्तुत्वानत्वाचवाल्मीकिंप्रत्युवाचसलक्ष्मणम् ५२
गच्छताताधुनासीतामानेतुंधर्मचारिणीम्
सपुत्रांरथमास्थायसुमंत्रसहितःसखे ५३
श्रावयित्वाममेमानिमुनेश्चवचनान्यपि
संबोध्यचपुरीमेतांसीतांप्रत्यानयाशुताम् ५४
लक्ष्मणउवाच
यास्यामितवसंदेशात्सर्वेषांनःप्रभोर्विभो
देव्यायास्यतिचेद्देवयात्रामेसफलाततः ५५

मयिसामाभ्यसूयैवपूर्वदोषवशात्सती
अनागतायांतस्यांतुलमस्वागंतुकंमम ५६
इत्युक्त्वालक्ष्मणोरामंरथेस्थित्वानृपाज्ञया
सुमित्रमुनिशिष्याभ्यांयुतोऽगाद्भूमिजाश्रमम् ५७
कथंप्रसादनीयास्यात्सीताभगवतीमया
पूर्वदोषंविजानंतीरामाधीनस्यमेसदा ५८
एवंसंचिंतयन्नंतर्हर्षसंकोचमध्यगः
लक्ष्मणःप्रापसीतायाआश्रमंश्रमनाशनम् ५९
रथात्सोथावरुह्यारादश्रुरुद्धविलोचनः
आर्येपूज्येभगवतिशुभेइतिवदन्मुहुः ६०
पपातपादयोस्तस्यावेपमानाखिलांगकः
उत्थापितस्तयादेव्याप्रीतिविह्वलयासच ६१
किमर्थमागतःसौम्यवनंमुनिजनप्रियम्
आस्तेसकुशलीदेवःकौसल्याशुक्तिमौक्तिकः ६२
अरोषोमयिकश्चित्सकीर्त्याकेवलयादृतः
कीर्त्यतेसर्वलोकैश्चकल्याणगुणसागरः ६३
अकीर्तिभीतिमापन्नस्त्यक्तुंमांत्वांनियुक्तवान्
यदिततश्चलोकेषुकीर्तिस्तस्यामलाभवत् ६४
मृत्वापिपतिसत्कीर्तिंकुर्वंत्यामेहिसुस्थिरा
पतिसामीप्यमेवाशुभूयादेवहिदेवर ६५
त्यक्तयापिमयातेननासौत्यक्तोमनागपि
फलंहिसाधनायत्तंहेतुःफलवशोनतु ६६
कौसल्याशल्यशून्यासौकृपापूर्णासदामयि
आस्तेकुशलिनीयस्याःपुत्रस्त्रैलोक्यपालकः ६७
सर्वेकुशलिनःसंतिभरताद्याश्चबांधवाः
सुमित्राचमहाभागायस्याःप्राणादहंप्रिया ६८
मद्वत्किंत्वमपित्यक्तःसर्वलोकेषुकीर्तये
राज्ञःकिंदुस्त्यजंतस्यस्वात्मापियस्यनप्रियः ६९
इत्येवंबहुधापृष्टस्तयारामानुजःसताम्
उवाचकुशलीदेवःकुशलंत्वयिपृच्छति ७०

कौसल्याचसुमित्राचयाश्चान्याराजयोषितः
पप्रच्छुःकुशलंदेविप्रीत्यात्वामाशिषासह ७१
कुशलप्रश्नपूर्वंहितवपादाभिवंदनम्
निवेदयामिशत्रुघ्नभरताभ्यांकृतंशुभे ७२
गुरुभिर्गुरुपत्नीभिःसर्वाभिरपितेशुभे
दत्ताशीःकुशलप्रश्नःकृतश्चत्वयिजानकि ७३
आकारयतिदेवस्त्वांनिर्व्यलीकेनचात्मवान्
अलभ्यान्यरतिस्त्वत्तोऽन्यत्रसर्वत्रभामिनि ७४
शून्याएवदिशःसर्वास्त्वांविनाजनकात्मजे
पश्यन्नोदितिनाथोनोरोदयन्नितरानपि ७५
यत्रदेविस्थितासित्वंनित्यंस्मरतिराघवः
अशून्यंतुतमेवासौमन्यमानोविदेहजे ७६
धन्योऽयमाश्रमोजातोवाल्मीकेर्यत्रजानकी
कालंक्षपतिवार्ताभिर्मदीयाभिर्वदन्निति ७७
उक्तवान्यद्रुदन्किंचित्स्वामीनस्त्वयितच्छृणु
व्यक्तीभवतिवक्तुर्यद्धृद्गतंतदसंशयम् ७८
लोकावदंतिमामेवसर्वेषामीश्वरेश्वरम्
अहंत्वदृष्टमेवैषांस्वतंत्रंकारणंब्रुवे ७९
अदृष्टमेवकार्येषुसर्वेशोऽप्यनुगच्छति
ईशनीयाःकुतोनैतदन्वीयुःसुखदुःखयोः ८०
धनुर्भंगेमतिभ्रंशेकैकय्यामरणेपितुः
अरण्यगमनेतत्रहरणेतववारिधेः ८१
तरणेरक्षसांभर्तुर्मारणेऽपिरणेरणे
सहायीभवनेमह्यमृक्षवानररक्षसाम् ८२
लाभेतवप्रतिज्ञायाःसत्यत्वेचसतीमणे
पुनःस्वबंधुसंबंधेराज्यप्राप्तौचभामिनि ८३
पुनःप्रियावियोगेचकारणंयदवारणम्
प्रसीदतितदेवाद्यसंयोगेपुनरावयोः ८४
वेदोऽन्यथाकृतोयेनलोकोत्पत्तिलयौयतः
लोकाननुगतस्तस्मात्कारणंप्रथमंत्वहम् ८५

अदृष्टमनुवर्ततेलोकाःसंप्रतिबोधकाः
भोगेनजीर्यतेऽदृष्टंतत्तद्भुक्तंत्वयावने ८६
स्नेहोऽकारणकःसीतेवर्धमानोममत्वयि
लोकादृष्टेतिरस्कृत्यत्वामाह्वयतश्रादरात् ८७
शङ्कितेनापिदोषेणस्नेहनैर्मल्यमञ्जनम्
भवतीतिसवैशुद्धश्रास्वाद्योविबुधैःसदा ८८
स्नेहशुद्धिरियंभद्रेकृतामेत्वयिनान्यथा
मंतव्यंरक्षितोऽप्येषलोकःशिष्टानुवर्तिना ८९
श्रावयोर्निंदयादेविसर्वावस्थासुशुद्धये
लोकोनश्येद्धिसंमूढश्चरितैर्महतामयम् ९०
श्रावयोरुज्ज्वलाकीर्तिरावयोरुज्ज्वलोरसः
श्रावयोरुज्ज्वलौवंशावावयोरुज्ज्वलाःक्रियाः ९१
भवेयुरावयोःकीर्तिर्गायकाउज्ज्वलाभुवि
श्रावयोर्भक्तिमंतोयेतेयांत्यंतेभवांबुधेः ९२
इत्युक्ताभवतीतेनप्रीयमाणेनतेगुणैः
पत्युःपादांबुजेद्रष्टुंकरोतुसदयंमनः ९३
वासांसिरमणीयानिभूषणानिमहांतिच
श्रंगरागस्तथागंधामनोज्ञास्त्वयियोजिताः ९४
रथोदास्यश्चरामेणप्रेषिताउत्सवायते
छत्रंचचामरेशुभ्रेगजाश्रश्वाश्चशोभने ९५
स्तूयमानाद्विजश्रेष्ठैःसूतमागधबंदिभिः
वंद्यमानापुरस्त्रीभिःसेव्यमानाचयोद्धृभिः ९६
पुष्पैःसंछाद्यमानाचदेवीदेवांगनादिभिः
धनानिददतीतेभ्योद्विजातिभ्योयथेप्सितम् ९७
गजारूढौकुमारौचपुरस्कृत्यजनेश्वरी
मयानुगम्यमानाचगच्छायोध्यांनिजांपुरीम् ९८
त्वयितत्रगतायांतुसंगतायांप्रियेणते
सर्वासांराजनारीणामागतानांचसर्वशः ९९
सर्वासामृषिपत्नीनांकौसलानांतथैवच
मंगलैर्वाद्यगीताद्यैर्भवत्वद्यमहोत्सवः १००

शेषउवाच-
इतिविज्ञापनांदेवीश्रुत्वासीतातमाहसा
नाहंकीर्तिकरीराज्ञोह्यपकीर्तिःस्वयंत्वहम् १०१
किंमयातस्यसाध्यंस्याद्धर्मकामार्थशून्यया
सत्येवंभवतांभूपेकोविश्वासोनिरंकुशे १०२
प्रत्यक्षावापरोक्षावाभर्तुर्दोषामनःस्थिताः
नवाच्याजातुमादृश्याकल्याणकुलजातया १०३
पाणिग्रहणकालेमेयद्रूपोहृदयेस्थितः
तद्रूपोहृदयान्नासौकदाचिदपसर्पति १०४
लक्ष्मणेमौकुमारौमेतत्तेजोंशसमुद्भवौ
वंशांकुरौमहाशूरौधनुर्विद्याविशारदौ १०५
नीत्वापितुःसमीपंतुलालनीयौप्रयत्नतः
तपसाराधयिष्यामिरामंकाममिहस्थिता १०६
वाच्यंत्वयामहाभागपूज्यपादाभिवंदनम्
सर्वेभ्यःकुशलंचापिगत्वेतोमदपेक्षया १०७
पुत्रौसमादिशत्सीतागच्छतंपितुरंतिकम्
शुश्रूषणीयएवासौभवद्भ्यांस्वपदप्रदः १०८
आज्ञप्तावप्यनिच्छंतौतौकुमारौकुशीलवौ
वाल्मीकिवचनात्तत्रजग्मतुश्चसलक्ष्मणौ १०९
वाल्मीकेरेवपादाब्जसमीपंतत्सुतौगतौ
लक्ष्मणोऽपिववंदेतंगत्वाबालकसंयुतः ११०
वाल्मीकिर्लक्ष्मणस्तौतुकुमारौमिलिताश्रमी
सभायांसंस्थितंरामंज्ञात्वातेजग्मुरुत्सुकाः १११
लक्ष्मणःप्रणिपत्याथसीतावाक्यादिसर्वशः
कथयामासरामायहर्षशोकयुतःसुधीः ११२
सीतासंदेशवाक्येभ्योरामोमूर्च्छांसमन्वभूत्
संज्ञामवाप्यचोवाचलक्ष्मणंनयकोविदम् ११३
गच्छमित्रपुनस्तत्रयत्नेनमहताचताम्
शीघ्रमानयभद्रंतेमद्वाक्यानिनिवेद्यच ११४
अरण्येकिंतपस्यंत्यागतिरन्याविचिंतिता

श्रुतादृष्टाथवामत्तोयन्नागच्छसिजानकि ११५
त्वदिच्छयात्वमेवेतोगतारगयंमुनिप्रियम्
पूजितामुनिपत्न्यस्तादृष्टामुनिगणास्त्वया ११६
पूर्णोमनोरथस्तेऽद्यकिंनागच्छसिभामिनि
नदोषंमयिपश्येस्त्वंस्वात्मेच्छायाविलोकनात् ११७
गत्वागत्वाथवामोरुपतिरेवगतिःस्त्रियाः
निर्गुणोपिगुणांभोधिःकिंपुनर्मनसेप्सितः ११८
यायाक्रियाकुलस्त्रीणांसासापत्युःप्रतुष्टये
पूर्वमेवप्रतुष्टोऽहमिदानींसुतरांत्वयि ११९
यागोजपस्तपोदानंव्रतंतीर्थंदयादिकम्
देवाश्चमयिसंतुष्टेतुष्टमेतदसंशयम् १२०
शेषउवाच-
इतिसंदेशमादायसीतांप्रतिजगत्पतेः
आहलक्ष्मणआत्मेशमानतःप्रणयाद्धरौ १२१
सीतानयनमुद्दिश्यप्रसन्नस्त्वंयदूचिवान्
कथयिष्यामितद्वाक्यंविनयेनसमन्वितम् १२२
इत्युक्त्वापादयोर्नत्वारघुनाथस्यलक्ष्मणः
जगामत्वरितःसीतांरथेतिष्ठन्महाजवे १२३
वाल्मीकिःश्रीयुतौवीक्ष्यरामपुत्रौमहौजसौ
उवाचस्मितमाधायमुखंकृत्वामनोहरम् १२४
युवांप्रगायतांपुत्रौरामचारित्रमद्भुतम्
वीणांप्रवादयंतौचकलगानेनशोभितम् १२५
इत्यक्तौतौसुतौरामचारित्रंबहुपुगयदम्
अगायतांमहाभागौसुवाक्यपदचित्रितम् १२६
यस्मिन्धर्मविधिःसाक्षात्पातिव्रत्यंतुयत्स्थितम्
भ्रातृस्नेहोमहान्यत्रगुरुभक्तिस्तथैवच १२७
स्वामिसेवकयोर्यत्रनीतिर्मूर्तिमतीकिल
अधर्मकरशास्तिंवैयत्रसाक्षाद्रघूद्वहात् १२८
तद्गानेनजगद्व्याप्तंदिविदेवाअपिस्थिताः
किन्नराअपियद्गानंश्रुत्वामूर्च्छामिताःक्षणात् १२९

वीणायारणितंश्रुत्वातालमानेनशोभितम्
निखिलापरिषत्तत्रशालभंजीवचित्रिता १३०
हर्षादश्रूणिमुंचंतोरामाद्याभूमिपास्तथा
तद्गानपंचमालापमोहिताश्चित्रितोपमाः १३१
तत्ररामःसुतौदृष्ट्वामहागानविमोहकौ
अदात्ताभ्यांसुवर्णस्यलक्षंलक्षंपृथक्पृथक् १३२
तदादानपरंदृष्ट्वावाल्मीकिंमुनिसत्तमम्
अब्रूतांप्रहसंतौतौकिंचिद्वक्रभ्रुवौततः १३३
मुनेमहानयोनेनक्रियतेभूमिपेनवै
यदावाभ्यांसुवर्णानिदातुमिच्छतिलोभयन् १३४
प्रतिग्रहोब्राह्मणानांशस्यतेनेतरेषुवै
प्रतिग्रहपरोराजानरकायैवकल्पते १३५
आवयोःकृपयामुक्तंराज्यंभुंक्तेमहीपतिः
कथंदातुंसुवर्णानिवांछतिश्रेयसांचितः १३६
इत्युक्तवंतौतौदृष्ट्वावाल्मीकिःकृपयायुतः
अशंसद्युष्मत्पितरंजानीथांनीतिवित्तमौ १३७
इतिश्रुत्वामुनेर्वाक्यंबालकौनृपपादयोः
लग्नौविनयसंयुक्तौमातृभक्त्यातिनिर्मलौ १३८
रामोबालौदृढंस्वांगेपरिरभ्यमुदान्वितः
मेनेस्त्रियास्तदाधर्मौमूर्तिमंतावुपस्थितौ १३९
सभापिरामसुतयोर्वीक्ष्यवक्त्रेमनोरमे
जानकीपतिभक्तित्वंसत्यंमेनेमुनीश्वर १४०
इतिशेषमुखप्रोक्तंश्रुत्वावात्स्यायनोऽब्रवीत्
रामायणंश्रोतुमनाःसर्वधर्मसमन्वितम् १४१
वात्स्यायनउवाच
कस्मिन्कालेकृतंस्वामिन्रामायणमिदंमहत्
कस्माच्चकारकिन्तत्रवर्णनंतद्वदस्वमे १४२
शेषउवाच-
एकदागतवान्विप्रोवाल्मीकिर्विपिनंमहत्
यत्रतालास्तमालाश्चकिंशुकायत्रपुष्पिताः १४३

केतकीयत्ररजसाकुर्वतीसौरभंवनम्
शशिप्रभेवमहतीदृश्यतेशुभ्रकर्णभृत्
चंपकोबकुलश्चापिकोविदारःकुरंटकः १४४
अनेकेपुष्पितायत्रपादपाःशोभनेवने
कोकिलानांविरावेणषट्पदानांचशब्दितैः १४५
संघुष्टंसर्वतोरम्यंमनोहरवयोन्वितम्
तत्रक्रौंचयुगंरम्यंकामबाणप्रपीडितम् १४६
परस्परंप्रहृषितैरेमेस्निग्धतयास्थितम्
तदाव्याधःसमागत्यतयोरेकंमनोहरम् १४७
अवधीन्निर्दयःकश्चिन्मांसास्वादनलोलुपः
तदाक्रौंचीव्याधहतंस्वपतिंवीक्ष्यदुःखिता १४८
विललापभृशंदुःखान्मुंचंतीरावमुच्चकैः
तदामुनिःप्रकुपितोनिषादंक्रौंचघातकम् १४९
शशापवार्युपस्पृश्यसरितःपावनंशुभम्
मानिषादप्रतिष्ठांत्वमगमःशाश्वतीःसमाः १५०
यत्क्रौंचपक्षिणोरेकमवधीःकाममोहितम्
तदाप्रबंधंश्लोकस्यजातंमत्वाह्यनुद्विजाः १५१
ऊचुर्मुनिंप्रहृष्टास्तेशंसंतःसाधुसाध्विति
स्वामिञ्छापोदितेवाक्येभारतीश्लोकमातनोत् १५२
अत्यंतंमोहनोजातःश्लोकोऽयमुनिसत्तम
तदामुनिःप्रहृष्टात्माबभूववाडवर्षभ
तस्मिन्कालेसमागत्यब्रह्मापुत्रैःसमन्वितः १५३
वचोजगादवाल्मीकिंधन्योसित्वंमुनीश्वर
भारतीत्वन्मुखेस्थित्वाश्लोकत्वंसमपद्यत १५४
तस्माद्रामायणंरम्यंकुरुष्वमधुराक्षरम्
येनतेविमलाकीर्तिराकल्पांतंभविष्यति १५५
धन्यासैवमुखेवाणीरामनाम्नासमन्विता
अन्याकामकथानृणांजनयत्येवपातकम् १५६
तस्मात्कुरुष्वरामस्यचरितंलोकविश्रुतम्
येनस्यात्पापिनांपापहानिरेवपदेपदे १५७

इत्युक्त्वांतर्दधेस्त्रष्टासर्वदेवैःसमन्वितः
ततःसचिंतयामासकथंरामायणंभवेत् १५८
तदाध्यानपरोजातोनदीतीरेमनोरमे
तस्यचेतस्यथोरामःप्रादुर्भूतोमनोहरः १५९
नीलोत्पलदलश्यामंरामंराजीवलोचनम्
निरीक्ष्यतस्यचरितंभूतंभाविभवच्चयत् १६०
तदात्यंतंमुदंप्राप्तोरामायणमथासृजत्
मनोरमपदैर्युक्तंवृत्तैर्बहुविधैरपि १६१
षट्कांडानिसुरम्याणियत्ररामायणेऽनघ
बालमारण्यकंचान्यत्किष्किंधासुंदरंतथा १६२
युद्धमुत्तरमन्यच्चषडेतानिमहामते
शृणुयाद्योनरःपुण्यात्सर्वपापैःप्रमुच्यते १६३
तत्रबालेतुसंतुष्टःपुत्रेष्ट्याचतुरस्सुतान्
प्रापपंक्तिरथःसाक्षाद्धरिंब्रह्मसनातनम् १६४
सकौशिकमखंगत्वासीतामुद्वाह्यभार्गवम्
आगत्यपुरमुत्कृष्टोयौवराज्यप्रकल्पनम् १६५
मातृवाक्याद्वनंप्रागाद्गंगामुत्तीर्यपर्वतम्
चित्रकूटंमहिलयालक्ष्मणेनसमन्वितः १६६
भरतस्तंवनेश्रुत्वाजगामभ्रातरंनयी
तमप्राप्यस्वयंनंदिग्रामेवासमचीकरत् १६७
बालमेतच्छृणुष्वान्यदारण्यकसमुद्भवम्
मुनीनामाश्रमेवासस्तत्रतत्रोपवर्णनम् १६८
नासाच्छेदःशूर्पणख्याःखरदूषणनाशनम्
मायामारीचहननंदैत्याद्रामापहारणम् १६९
वनेविरहिणाभ्रांतंमनुष्यचरितंभृतम्
कबंधप्रेक्षणंतत्रपम्पायांगमनंतथा १७०
हनूमतासंगमनमित्येतद्वनसंज्ञितम्
अपरंचशृणुमुनेसंक्षिप्यकथयाम्यहम् १७१
सप्ततालप्रभेदश्चवालेर्मारणमद्भुतम्
सुग्रीवेराज्यदानंचनगवर्णनमित्युत १७२

लन्द्मणात्कर्मसंदेशःसुग्रीवस्यविवासनम्
तथासैन्यसमुद्देशःसीतान्वेषणमप्युत १७३
संपातिप्रेन्नणंतत्रवारिधेर्लंघनंतथा
परतीरेकपिप्राप्तिःकैष्किंधंकांडमद्भुतम् १७४
सुंदरंशृणुकांडंवैयत्ररामकथाद्भुता
प्रतिगेहेप्रतिभ्रांतिःकपेश्चित्रस्यदर्शनम् १७५
सीतासंदर्शनंतत्रजानक्याभाषणंतथा
वनभंगःप्रकुपितैर्बंधनंवानरस्यच १७६
ततोलंकाप्रज्वलनंवानरैःसंगतिस्ततः
रामाभिज्ञानदानंचसैन्यप्रस्थानमेवच १७७
समुद्रेसेतुकरणंशुकसारणसंगतिः
इतिसुंदरमाख्यातंयुद्धेसीतासमागमः १७८
उत्तरेऋषिसंवादोयज्ञप्रारंभएवच
तत्रानेकारामकथाःशृरावतांपापनाशकाः १७९
इतिषट्कांडमाख्यातंब्रह्महत्यापनोदनम्
संन्नेपतोमयातुभ्यमाख्यातंसुमनोहरम् १८०
चतुर्विंशतिसाहस्त्रंषट्कांडपरिचिह्नितम्
तद्वैरामायणंप्रोक्तंमहापातकनाशनम् १८१
तच्छ्रुत्वाराघवःप्रीतःपुत्रावाधायचासने
दृढंतौपरिरभ्याथसीतांसस्मारवल्लभाम् १८२
इति श्रीपद्मपुराणेपातालखराडेशेषवात्स्यायनसंवादेरामाश्वमेधे
रामायणगानंनामषट्षष्टितमोऽध्यायः ६६

## सप्तषष्टितमोऽध्यायः

शेषउवाच
अथसौमित्रिरागत्यजानकींनतवान्मुहुः
प्रेमगद्गदयाशंसन्वाचंरामप्रणोदिताम् १
सीतासमागतंदृष्ट्वालन्द्मणंविनयान्वितम्
तन्मुखाद्रामसंदेशंश्रुत्वोवाचविलज्जिता २
सौमित्रेकथमागच्छेरामत्यक्तामहावने

तिष्ठामिरामंस्मरन्तीवाल्मीकेराश्रमेत्वहम् ३
तस्यामुखोदितंवाक्यंश्रुत्वासौमित्रिरब्रवीत्
मातःपतिव्रतेरामस्त्वामाकारयतेमुहुः ४
पतिव्रतापतिकृतंदोषंनानयतेहृदि
तस्मादागच्छहिमयास्थित्वास्यंदनउत्तमे ५
इत्यादिवचनंश्रुत्वाजानकीपतिदेवता
मनोरोषंपरित्यज्यतस्थौसौमित्रिणारथे ६
तापसीःसकलानत्वामुनींश्चनिगमोज्ज्वलान्
रामंस्मरंतीमनसारथेस्थित्वागमत्पुरीम् ७
क्रमेणनगरींप्राप्तामहार्हाभरणान्विता
सरयूंसरितंप्रापयत्ररामःस्वयंस्थितः ८
रथादुत्तीर्यललितालक्ष्मणेनसमन्विता
रामस्यपादयोर्लग्नापतिव्रतपरायणा ९
रामस्तामागतांदृष्ट्वाजानकींप्रेमविह्वलाम्
साध्वित्वयासहेदानींकुर्वेयज्ञसमापनम् १०
वाल्मीकिंसानमस्कृत्यतथान्यान्विप्रसत्तमान्
जगाममातृपदयोःसन्नतिंकर्तुमुत्सुका ११
कौशल्यातामथायांतींवीरसूंजानकींप्रियाम्
आशीर्भिरभिसंयुज्ययौहर्षमनेकधा १२
कैकेयीपदयोर्नम्रांवीक्ष्यवैदेहपुत्रिकाम्
भर्त्रासहचिरंजीवसपुत्रेत्याशिषंव्यधात् १३
सुमित्रास्वपदेनम्रांवीक्ष्यवैदेहपुत्रिकाम्
आशिषंव्यदधात्तस्याःपुत्रपौत्रप्रदायिनीम् १४
सीताताःसर्वतोनत्वारामचंद्रप्रियासती
परमंहर्षमापन्नाबभूवकिलवाडव १५
समागतांवीक्ष्यपत्नींरामचंद्रस्यकुंभजः
सुवर्णपत्नींधिक्कृत्यतामधाद्धर्मचारिणीम् १६
रामस्तदायज्ञमध्येशुशुभेसीतयासह
तारयानुगतोयद्वच्छशीवशरदुत्प्रभः १७
प्रयोगमकरोत्तत्रकालेप्राप्तेमनोरमे

वैदेह्याधर्मचारिरयासर्वपापापनोदनम् १८
सीतयासहितंरामंप्रसक्तंयज्ञकर्मणि
निरीक्ष्यजहृषुस्तत्रकौतुकेनसमन्विताः १९
वसिष्ठंप्राहसुमतिंरामस्तत्रक्रतौवरे
किंकर्तव्यंमयास्वामिन्नतःपरमवश्यकम् २०
रामस्यवचनंश्रुत्वागुरुःप्राहमहामतिः
ब्राह्मणानांप्रकर्तव्यापूजासंतोषकारिका २१
मरुत्तेनक्रतुःसृष्टःपूर्वसंभारसंभृतः
ब्राह्मणास्तत्रवित्ताद्यैस्तोषिताश्रभवंस्तदा २२
अत्यंतंवित्तसंभारंनेतुंविप्राशकन्नहि
प्राक्षिपन्हिमवद्देशेवित्तभारासहाद्विजाः २३
तस्मात्त्वमपिराजाग्र्यलक्ष्मीवान्नृपसत्तम
देहिदानादिविप्रेभ्योयथास्यात्प्रीतिरुत्तमा २४
एतच्छ्रुत्वासराजाग्र्यःपूज्यंमत्वाघटोद्भवम्
प्रथमंपूजयामासब्रह्मपुत्रंतपोधनम् २५
अनेकरत्नसंभारैःस्वर्णभारैरनेकधा
देशैर्जनैःपरिवृतैरत्यंतप्रीतिदायकैः २६
अगस्त्यंपूजयामाससपत्नीकंमनोरमम्
तथैवरत्नैःस्वर्णैश्चदेशैश्चविविधैरपि २७
व्यासंसत्यवतीपुत्रंतथैवसमपूजयत्
च्यवनंभार्ययासाकंसुरत्नैःसमपूजयत् २८
अन्यानपिमुनीन्सर्वानृत्विजस्तपसांनिधीन्
पूजयामासरत्नौघैःस्वर्णभारैरनेकधा २९
अदात्तदाक्रतौरामोविप्रेभ्योभूरिदक्षिणाम्
लक्षंलक्षंसुवर्णस्यप्रत्येकंत्वग्रजन्मने ३०
दीनांधकृपणेभ्यश्चददौदानमनेकधा
यथासंतोषविहितैर्वित्तैरत्नैर्मनोहरैः ३१
वासांसिचविचित्राणिभोजनानिमृदूनिच
तत्रप्रादाद्यथाशास्त्रंसर्वेषांप्रीतिदायकम् ३२
हृष्टपुष्टजनाकीर्णंसर्वसत्त्वोपबृंहितम्

अत्यंतमभवद्धृष्टंपुरंपुंस्त्रीसमावृतम् ३३
दानंददंतंसर्वेषांवीक्ष्यकुंभोद्भवोमुनिः
अत्यंतपरमप्रीतिंययौक्रतुवरेद्विजः ३४
तदाभिषेकस्नानार्थंपानीयममृतोपमम्
आनेतुंचचतुःषष्टिनृपान्सस्त्रीन्समाह्वयत् ३५
रामस्तुसीतयासार्द्धमानेतुमुदकंययौ
घटेनस्वर्णवर्णेनसर्वालंकारशोभया ३६
सौमित्रिरप्यूर्मिलयामांडव्याभरतोनृपः
शत्रुघ्नःश्रुतकीर्त्याचकांतिमत्याचपुष्कलः ३७
सुबाहुःसत्यवत्याचसत्यवान्वीरभूषया
सुमदस्तत्रसत्कीर्त्याराज्ञ्याचविमलोनृपः ३८
राजावीरमणिस्तत्रश्रुतवत्यामनोज्ञया
लक्ष्मीनिधिःकोमलयारिपुतापोंऽगसेनया ३९
विभीषणोमहामूर्त्याप्रतापाग्र्यःप्रतीतया
उग्राश्वःकामगमयानीलरत्नोधिरम्यया ४०
सुरथःसुमनोहार्यातथामोहनयाकपिः
इत्यादीन्नृपतीन्विप्रोवसिष्ठःप्राहिणोन्मुनिः ४१
वसिष्ठःसरयूंगत्वाशिवपुण्यजलाप्लुताम्
उदकंमंत्रयामासवेदमंत्रेणमंत्रवित् ४२
पयःपुनीह्यमुंवाहमुदकेनमनोहृता
यज्ञार्थंरामचंद्रस्यसर्वलोकैकरक्षितुः ४३
उदकंतन्मुनिस्पृष्टंसर्वेरामादयोनृपाः
आजह्रुर्मंडपतलेविप्रवर्यैरुपस्तुते ४४
पयोभिर्निर्मलैःस्नाप्यवाजिनंक्षीरसन्निभम्
मंत्रेणमंत्रयामासरामहस्तेनकुंभजः ४५
पुनीहिमांमहावाहअस्मिन्ब्रह्मसमाकुले
त्वन्मेधेनाखिलादेवाःप्रीणंतुपरितोषिताः ४६
इत्युक्त्वासनृपोरामःसीतयासममस्पृशत्
तदासर्वेद्विजाश्चित्रममन्यंतकुतूहलात् ४७
परस्परमवोचंस्तेयन्नामस्मरणान्नराः

महापापात्प्रमुच्यंतेसरामःकिंवदत्यहो ४८
इत्युक्तवतिभूमीशेरामेकुंभोद्भवोमुनिः
करवालंचाभिमंत्र्यददौरामकरेमुनिः ४९
करवालेधृतेस्पृष्टेरामेणसहयःक्रतौ
पशुत्वंतुविहायाशुदिव्यरूपमपद्यत ५०
विमानवरमारूढश्चाप्सरोभिःसमंततः
चामरैर्वीज्यमानश्चवैजयंत्याविभूषितः ५१
तदातंवाजितांत्यक्त्वादिव्यरूपधरंवरम्
वीक्ष्यलोकाःक्रतौसर्वेविस्मयंप्राप्नुवंस्तदा ५२
तदारामःस्वयंजानञ्ज्ञापयन्सर्वतोनरान्
पप्रच्छदिव्यरूपंतंसुरंपरमधार्मिकः ५३
कस्त्वंदिव्यवपुःप्राप्तःकस्मात्त्वंवाजितांगतः
कथंसुरस्त्रीसहितःकिंचिकीर्षसितद्वद ५४
रामस्यवचनंश्रुत्वादेवःप्रोवाचभूमिपम्
हसन्मेघरवांवाणीमवदत्सुमनोहराम् ५५
तवाज्ञातंनसर्वत्रबाह्याभ्यंतरचारिणः
तथापिपृच्छतेतुभ्यंकथयामियथातथम् ५६
अहंपुराभवेरामद्विजःपरमधार्मिकः
अचरंप्रतिकूलंवैवेदस्यरिपुतापन ५७
कदाचिद्धुतपापायास्तीरेऽहगतवान्पुरा
अनेकवृक्षललितेसर्वत्रसुमनोरमे ५८
तत्रस्नात्वापितॄंस्तृप्त्वादानंदत्त्वायथाविधि
ध्यानंतवमहाबाहोकृतवान्वेदसंमितम् ५९
तदाजनाःसमायाताबहवस्तत्रभूपते
तेषांप्रवंचनार्थायदंभमेनमकारिषम् ६०
अनेकक्रतुसंभारैःपूर्णमजिरमुत्तमम्
वासोभिश्छादितंरम्यंचषालादियुतंमहत् ६१
अग्निहोत्रोद्भवोधूमःसर्वतोनभसोंगणम्
चकाररम्यमतुलंचित्रकारिवपुर्धरः ६२
अनेकतिलकश्रीभिःशोभितांगोमहत्तपाः

दर्भशोभःसमित्पाणिर्दंभोमूर्तिधरःकिमु ६३
दुर्वासास्तत्रस्वच्छंदंपर्यटञ्जगतीतलम्
प्रापतत्रमहातेजाधूतपापसरित्तटे ६४
ददर्शमांदंभकरंमौनधारिणमग्रतः
अनर्घ्यकरमुन्मत्तमस्वागतवचःकरम् ६५
दृष्ट्वातीवक्रुधाक्रांतःसमुद्रइवपर्वणि
शशापासौमुनिस्तीव्रोदंभिनंमांमहामतिः ६६
दंभंकरोषिचेत्तीरेसरितस्त्वंसुदुर्मते
तस्मात्प्राप्नुहिनिर्वाच्यंपशुत्वंतापसाधम ६७
शापंप्रदत्तंसंश्रुत्यदुःखितोऽहतदाभवम्
अग्राहिषंपदेतस्यमुनेर्दुर्वाससःकिल ६८
तदामेकृतवान्रामद्विजोऽनुग्रहमुत्तमम्
वाजितांप्राप्नुहिमखेराजराजस्यतापस ६९
पश्चात्तद्धस्तसंपर्काद्याहितत्परमंपदम्
दिव्यंवपुर्मनोहारिधृत्वादंभविवर्जितम् ७०
तेनशापोपिसंदिष्टोममानुग्रहतांगतः
यदहंतवहस्तस्यस्पर्शंप्राप्तोमनोरमम् ७१
यदेवरामदेवादिदुर्लभंबहुजन्मभिः
तत्तेऽहकरजस्पर्शंप्राप्तवानिहदुर्लभम् ७२
आज्ञापयमहाराजत्वत्प्रसादादहंमहत्
गच्छामिशाश्वतंस्थानंतवदुःखादिवर्जितम् ७३
नयत्रशोकोनजरानमृत्युःकालविभ्रमः
तत्स्थानंदेवगच्छामित्वत्प्रसादान्नराधिप ७४
इत्युक्त्वातंपरिक्रम्यविमानवरमारुहत्
अनेकरत्नखचितंसर्वदेवाधिवंदितम् ७५
गतोऽसौशाश्वतस्थानंरामपादप्रसादतः
पुनरावृत्तिरहितंशोकमोहविवर्जितम् ७६
तेनतत्कथितंश्रुत्वारामंज्ञात्वेतरेजनाः
विस्मयंप्रापिरेसर्वेपरस्परमुदुन्मदाः ७७
शृणुद्विजमहाबुद्धेदंभेनापिस्मृतोहरिः

ददातिमोक्षंसुतरांकिंपुनर्दंभवर्जनात् ७८
यथाकथंचिद्रामस्यकर्तव्यंस्मरणंपरम्
येनप्राप्नोतिपरमंपदंदेवादिदुर्लभम् ७९
तच्चित्रंवीक्ष्यमुनयःकृतार्थंमेनिरेनिजम्
यद्रामचरणप्रेक्षाकरस्पर्शपवित्रितम् ८०
गतेतस्मिन्सुरेस्वर्गंहयरूपधरेपुरा
उवाचरामस्तपसांनिधीन्वेदविदुत्तमान् ८१
किंकर्तव्यंमयाब्रह्मन्हयोनष्टोगतःसुखम्
होमःकथंपुरोभावीसर्वदैवततर्पकः ८२
यथास्यात्सुरसंतृप्तिर्यथामेमखउत्तमः
तथाकुर्वंतुमुनयोयथामेस्याद्विधिश्रुतम् ८३
इतिवाक्यंसमाश्रुत्यजगादमुनिसत्तमः
वसिष्ठःसर्वदेवानांचित्ताभिज्ञानकोविदः ८४
कर्पूरमाहरक्षिप्रंयेनदेवाःस्वयंपुरा
प्राप्यहव्यंग्रहीष्यंतिमद्वाक्यप्रेरिताधुना ८५
इतिवाक्यंसमाकर्ण्यरामःक्षिप्रमुपाहरत्
कर्पूरंबहुदेवानांप्रीत्यर्थंबहुशोभनम् ८६
तदामुनिःप्रहृष्टात्मादेवानाह्वयदद्भुतान्
तेसर्वेतत्क्षणात्प्राप्ताःस्वपरीवारसंवृताः ८७

इति श्रीपद्मपुराणेपातालखराडेशेषवात्स्यायनसंवादेरामाश्वमेधे
यज्ञप्रारंभोनामसप्तषष्टितमोऽध्यायः ६७

## अष्टषष्टितमोऽध्यायः

शेषउवाच-
इन्द्रस्तत्रहविर्मृष्टंरामचन्द्रेणवीक्षितम्
परिस्वादन्क्रतौतृप्तिंनप्रापसुरसंयुतः १
नारायणोमहादेवोब्रह्मातत्रचतुर्मुखः
वरुणश्चकुबेरश्चतथान्येलोकपालकाः २
तत्रास्वाद्यहविःस्निग्धंवसिष्ठेनपरिष्कृतम्
तत्रपुनर्हिविप्रेंद्राःक्षुधार्ताइवभोजनात् ३

सर्वान्देवांश्चसंतर्प्यहविषाकरुणानिधिः
वसिष्ठप्रेरितःसर्वमितिकर्तव्यमाचरत् ४
ब्राह्मणादानसंतुष्टाहविस्तुष्टाःसुरावराः
तृप्ताःसर्वेस्वकंभागंगृहीत्वास्वालयंययुः ५
ऋषिभ्योहोतृमुख्येभ्यःप्रादाद्राज्यंचतुर्दिशम्
संतुष्टास्तेद्विजाराममाशीर्भिरददुःशुभम् ६
पूर्णाहुतिंततःकृत्वावसिष्ठःप्राहसुस्त्रियः
वर्धापयंतुभूमीशंयागपूर्तिकरंपरम् ७
तद्वाक्यंताःस्त्रियःश्रुत्वालाजैरवाकिरन्मुदा
लावण्यजितकंदर्पंमहामणिविभूषितम् ८
ततोऽवभृथस्नानार्थंप्रेरयामासभूमिपम्
ययौरामःसहस्वीयैःसरयूतीरमुत्तमम् ९
अनेकराजकोटीभिःपरीतःपादचारिभिः
जगामससरिच्छ्रेष्ठांपक्षिवृंदसमाकुलाम् १०
तारापतिरिवस्वाभिर्भार्याभिर्वृतउत्प्रभः
विरोचतेतथातद्वद्रामोराजगणैर्वृतः ११
तदुत्सवंसमाज्ञायययुर्लोकास्त्वरायुताः
सीतापतिमुखालोकनिश्चलीभूतलोचनाः १२
राजेंद्रंसीतयासाकंगच्छंतंसरितंप्रति
विलोक्यमुदितालोकाश्चिरंदर्शनलालसाः १३
अनेकनटगंधर्वागायंतोयशउज्ज्वलम्
अनुजग्मुर्महीशानंसर्वलोकनमस्कृतम् १४
नर्तक्यस्तत्रनृत्यंत्यःक्षोभयंत्यःपतेर्मनः
जलयंत्रैश्चसिंचंत्योययुःश्रीरामसेवनम् १५
महाराजंविलिपंत्योहरिद्राकुंकुमादिभिः
परस्परंप्रलिपंत्योमुदंप्रापुर्महत्तराम् १६
कुचयुग्मोपरिन्यस्तमुक्ताहारसुशोभिताः
श्रवणद्वंद्वसंमृष्टस्वर्णकुंडललक्षिताः १७
अनेकनरनारीभिःसंकीर्णमार्गमाचरन्
यथावत्सरितंप्रापशिवपुण्यजलाप्लुताम् १८

तत्रगत्वासवैदेह्यारामःकमललोचनः
प्रविवेशजलंपुरयंवसिष्ठादिभिरन्वितः १६
ऋनुप्रविविविशुःसर्वेराजानोजनतास्तथा
तत्पादरजसापूतजलंलोकैकवंदितम् २०
परस्परंप्रसिंचंतोजलयंत्रैर्मनोरमैः
सुशोरानयनाःसर्वेहर्षंप्रापुर्मनोधिकम् २१
सरामःसीतयासार्धंचिरंपुरयजलप्लवे
क्रीडित्वाजलकल्लोलैर्निरगाद्धर्मसंयुतः २२
दुकूलवासाःसकिरीटकुंडलःकेयूरशोभावरकंकरणान्वितः
कंदर्पकोटिश्रियमुद्वहन्नृपोराजाग्रयवर्यैरुपसंस्तुतोबभौ २३
सयागयूपंवरवर्णशोभितंकृत्वासरित्तीरवरेमहामनाः
त्रैलोक्यलोकश्रियमापह्यद्भुतामन्यैर्दुरापांनृपतिर्भुजैर्निजैः २४
एवंजनकपुत्र्यासौहयमेधत्रयंचरन्
त्रैलोक्येकीर्तिमतुलांप्रापदेवैःसुदुर्लभाम् २५
एवंतेवर्णितंतातयत्पृष्टोरामसत्कथाम्
विस्तृतःकथितोमेधोभूयःकिंपृच्छसेद्विज २६
यःशृणोतिहरेर्भक्त्यारामचंद्रस्यसन्मखम्
ब्रह्महत्यांत्ररणात्तीर्त्वाब्रह्मशाश्वतमाप्नुयात् २७
ऋपुत्रोलभतेपुत्रान्निर्धनोधनमाप्नुयात्
रोगार्तोमुच्यतेरोगाद्बद्धोमुच्येतबंधनात् २८
यत्कथाश्रवराद्दुष्टःश्वपचोऽपिपरंपदम्
प्राप्नोतिकिमुविप्राग्रयोरामभक्तिपरायणः २६
रामंस्मृत्वामहाभागंपापिनःपरमंपदम्
प्राप्नुयुःपरमंस्वर्गंशक्रदेवादिदुर्लभम् ३०
तेधन्यामानवालोकेयेस्मरंतिरघूत्तमम्
तेत्तरणात्संसृतिंतीर्त्वागच्छंतिसुखमव्ययम् ३१
प्रत्येकमत्तरंब्रह्महत्यावंशदवानलः
तंयःश्रावयतेधीमांस्तंगुरुंसंप्रपूजयेत् ३२
श्रुत्वाकथांवाचकायगवांद्वंद्वंप्रदापयेत्
सपत्नीकायसंपूज्यवस्त्रालंकारभोजनैः ३३

कुंडलाभ्यांविराजंत्यौमुद्रिकाभिरलंकृते
रामसीतेस्वर्णमय्यौप्रतिमेशोभनेवरे ३४
कृत्वातुवाचकायैवदीयतेभोद्विजोत्तम
तस्यदेवाश्चपितरोवैकुंठंप्राप्नुयुस्तदा ३५
त्वयापृष्टारामकथामयातेकथितापुरा
किमन्यत्कथ्यतांब्रह्मन्पुरतस्तवधीमतः ३६
शृणवंतियेकथामेतांब्रह्महत्यौघनाशिनीम्
तेयांतिपरमंस्थानंयच्चदेवैःसुदुर्लभम् ३७
गोघ्नश्चापिसुतघ्नश्चसुरापोगुरुतल्पगः
च्चणात्पूतोभवत्येवनात्रसंशयितुंच्चमम् ३८

इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरामाश्वमेधे श्रवणपठनपुण्यवर्णनंनामाष्टषष्टितमोऽध्यायः ६८
इति रामाश्वमेधप्रकरणं समाप्तम्

## एकोनसप्ततितमोऽध्यायः

ऋषयऊचुः –
सम्यक्छ्रुतोमहाभागत्वत्तोरामाश्वमेधकः
इदानींवदमाहात्म्यंश्रीकृष्णस्यमहात्मनः १
सूतउवाच–
शृणवंतुमुनिशार्दूलाःश्रीकृष्णचरितामृतम्
शिवापप्रच्छभूतेशंयत्तद्वःकीर्तयाम्यहम् २
एकदापार्वतीदेवीशिवंसंस्निग्धमानसा
प्रणयेननमस्कृत्यप्रोवाचवचनंत्विदम् ३
पार्वत्युवाच–
अनंतकोटिब्रह्मांडतद्बाह्याभ्यंतरस्थितेः
विष्णोःस्थानंपरंतेषांप्रधानंवरमुत्तमम् ४
यत्परंनास्तिकृष्णस्यप्रियंस्थानंमनोरमम्
तत्सर्वंश्रोतुमिच्छामिकथयस्वमहाप्रभो ५
ईश्वरउवाच–
गुह्याद्गुह्यतरंगुह्यंपरमानंदकारकम्

अत्यद्भुतंरहःस्थानमानंदंपरमंपरम् ६
दुर्लभानांचपरमंदुर्लभंमोहनंपरम्
सर्वशक्तिमयंदेविसर्वस्थानेषुगोपितम् ७
सात्वतांस्थानमूर्द्धन्यंविष्णोरत्यंतदुर्लभम्
नित्यंवृंदावनंनामब्रह्मांडोपरिसंस्थितम् ८
पूर्णब्रह्मसुखैश्वर्यंनित्यमानंदमव्ययम्
वैकुंठादितदंशांशंस्वयंवृंदावनंभुवि ९
गोलोकैश्वर्यंयत्किंचिद्गोकुलेतत्प्रतिष्ठितम्
वैकुंठवैभवंयद्वैद्वारिकायांप्रतिष्ठितम् १०
यद्ब्रह्मपरमैश्वर्यंनित्यंवृंदावनाश्रयम्
कृष्णधामपरंतेषांवनमध्येविशेषतः ११
तस्मात्त्रैलोक्यमध्येतुपृथ्वीधन्येतिविश्रुता
यस्मान्माथुरकंनामविष्णोरेकांतवल्लभम् १२
स्वस्थानमधिकंनामधेयंमाथुरमंडलम्
निगूढंविविधंस्थानंपुर्यभ्यंतरसंस्थितम् १३
सहस्रपत्रकमलाकारंमाथुरमंडलम्
विष्णुचक्रपरिभ्रामाद्धामवैष्णवमद्भुतम् १४
कर्णिकापर्णविस्तारंरहस्यद्रुममीरितम्
प्रधानंद्वादशारण्यंमाहात्म्यंकथितंक्रमात् १५
भद्रश्रीलोहभांडीरमहातालखदीरकाः
बकुलंकुमुदंकाम्यंमधुवृंदावनंतथा १६
द्वादशैतावतीसंख्याकालिद्याःसप्तपश्चिमे
पूर्वेपंचवनंप्रोक्तंतत्रास्तिगुह्यमुत्तमम् १७
महारण्यंगोकुलाख्यंमधुवृंदावनंतथा
अन्यच्चोपवनंप्रोक्तंकृष्णक्रीडारसस्थलम् १८
कदंबखंडनंनंदवनंनंदीश्वरंतथा
नंदनंदनखंडंचपलाशाशोककेतकी १९
सुगंधमानसंकैलममृतंभोजनस्थलम्
सुखप्रसाधनंवत्सहरणंशेषशायिकम् २०
श्यामपूर्वोदधिग्रामश्चक्रभानुपुरंतथा

संकेतंद्विपदंचैवबालक्रीडनधूसरम् २१
कामद्रुमंसुललितमुत्सुकंचापिकाननम्
नानाविधरसक्रीडानानालीलारसस्थलम् २२
नागविस्तारविष्टंभंरहस्यद्रुममीरितम्
सहस्रपत्रकमलंगोकुलाख्यंमहत्पदम् २३
कर्णिकातन्महद्धामगोविंदस्थानमुत्तमम्
तत्रोपरिस्वर्णपीठेमणिमंडपमंडितम् २४
कर्णिकायांक्रमाद्दिन्तुविदिन्तुदलमीरितम्
यद्दलंदन्तिणेप्रोक्तंपरंगुह्योत्तमोत्तमम् २५
तस्मिन्दलेमहापीठंनिगमागमदुर्गमम्
योगींद्रैरपिदुष्प्रापंसर्वात्मायच्चगोकुलम् २६
द्वितीयंदलमाग्नेय्यांतद्रहस्यदलंतथा
संकेतंद्विपदंचैवकुटीद्वौतत्कुलेस्थितौ २७
पूर्वंदलंतृतीयंचप्रधानस्थानमुत्तमम्
गंगादिसर्वतीर्थानांस्पर्शाच्छतगुणंस्मृतम् २८
चतुर्थंदलमैशान्यांसिद्धपीठेऽपितत्पदम्
व्यायामनूतनागोपीतत्रकृष्णंपतिंलभेत् २९
वस्त्रालंकारहरणंतद्दलेसमुदाहृतम्
उत्तरेपंचमंप्रोक्तंदलंसर्वदलोत्तमम् ३०
द्वादशादित्यमत्रैवदलंचकर्णिकासमम्
वायव्यांतुदलंषष्ठंतत्रकालीह्रदःस्मृतः ३१
दलोत्तमोत्तमंचैवप्रधानंस्थानमुच्यते
सर्वोत्तमदलंचैवपश्चिमेसप्तमंस्मृतम् ३२
यज्ञपत्नीगणानांचतदीप्सितवरप्रदम्
अत्रासुरोऽपिनिर्वाणंप्रापत्रिदशदुर्लभम् ३३
ब्रह्ममोहनमत्रैवदलंब्रह्मह्रदावहम्
नैर्ऋत्यांतुदलंप्रोक्तमष्टमंव्योमघातनम् ३४
शंखचूडवधस्तत्रनानाकेलिरसस्थलम्
श्रुतमष्टदलंप्रोक्तंवृंदारण्यांतरस्थितम् ३५
श्रीमद्वृंदावनंरम्यंयमुनायाःप्रदन्तिणम्

शिवलिंगमधिष्ठानंदृष्टंगोपीश्वराभिधम् ३६
तद्बाह्येषोडशदलंश्रियापूर्णंतमीश्वरम्
सर्वासुदिक्षुयत्प्रोक्तंप्रादक्षिरयाद्यथाक्रमम् ३७
महत्पदंमहद्धामस्वधामाधावसंज्ञकम्
प्रथमैकदलंश्रेष्ठंमाहात्म्यंकर्णिकासमम् ३८
तत्रगोवर्द्धनगिरौरम्येनित्यरसाश्रये
कर्णिकायांमहालीलातल्लीलारसगह्वरौ ३९
यत्रकृष्णोनित्यवृंदाकाननस्यपतिर्भवेत्
कृष्णोगोविंदतांप्राप्तःकिमन्यैर्बहुभाषितैः ४०
दलंतृतीयमाख्यातंसर्वश्रेष्ठोत्तमोत्तमम्
चतुर्थंदलमाख्यातंमहाद्भुतरसस्थलम् ४१
नंदीश्वरवनंरम्यंतत्रनंदालयःस्मृतः
कर्णिकादलमाहात्म्यंपंचमंदलमुच्यते ४२
अधिष्ठाताऽत्रगोपालोधेनुपालनतत्परः
षष्ठंदलंयदाख्यातंतत्रनंदवनंस्मृतम् ४३
सप्तमंबकुलाररायंदलंरम्यंप्रकीर्तितम्
तत्राष्टमंतालवनंतत्रधेनुवधःस्मृतः ४४
नवमंकुमुदाररायंदलंरम्यंप्रकीर्तितम्
कामाररायंचदशमंप्रधानंसर्वकारणम् ४५
ब्रह्मप्रसाधनंतत्रविष्णुच्छद्मप्रदर्शनम्
कृष्णक्रीडारसस्थानंप्रधानंदलमुच्यते ४६
दलमेकादशंप्रोक्तंभक्तानुग्रहकारणम्
निर्माणंसेतुबंधस्यनानावनमयस्थलम् ४७
भांडीरंद्वादशदलंवनंरम्यंमनोहरम्
कृष्णःक्रीडारतस्तत्रश्रीदामादिभिरावृतः ४८
त्रयोदशंदलंश्रेष्ठंतत्रभद्रवरंस्मृतम्
चतुर्दशदलंप्रोक्तंसर्वसिद्धिप्रदस्थलम् ४९
श्रीवनंतत्ररुचिरंसर्वैश्वर्यस्यकारणम्
कृष्णक्रीडादलमयंश्रीकांतिकीर्तिवर्द्धनम् ५०
दलंपंचदशंश्रेष्ठंतत्रलोहवनंस्मृतम्

कथितंषोडशदलंमाहात्म्यंकर्णिकासमम् ५१
महावनंतत्रगीतंतत्रास्तिगुह्यमुत्तमम्
बालक्रीडारतस्तत्रवत्सपालैःसमावृतः ५२
पूतनादिवधस्तत्रयमलार्जुनभंजनम्
अधिष्ठातातत्रबालगोपालःपंचमाब्दिकः ५३
नाम्नादामोदरःप्रोक्तःप्रेमानंदरसार्णवः
दलंप्रसिद्धमाख्यातंसर्वश्रेष्ठदलोत्तमम् ५४
कृष्णक्रीडाचकिंजल्कीविहारदलमुच्यते
सिद्धप्रधानकिंजल्कदलंचसमुदाहृतम् ५५
पार्वत्युवाच–
वृंदारण्यस्यमाहात्म्यंरहस्यंवाकिमद्भुतम्
तदहंश्रोतुमिच्छामिकथयस्वमहाप्रभो ५६
ईश्वरउवाच–
कथितंतेप्रियतमेगुह्याद्गुह्योत्तमोत्तमम्
रहस्यानांरहस्यंयद्दुर्लभानांचदुर्लभम् ५७
त्रैलोक्यगोपितंदेविदेवेश्वरसुपूजितम्
ब्रह्मादिवांछितंस्थानंसुरसिद्धादिसेवितम् ५८
योगींद्राहिसदाभक्त्यातस्यध्यानैकतत्पराः
अप्सरोभिश्चगंधर्वैर्नृत्यगीतनिरंतरम् ५९
श्रीमद्वृंदावनंरम्यंपूर्णानंदरसाश्रयम्
भूरिचिंतामणिस्तोयममृतंरसपूरितम् ६०
वृक्षंगुरुद्रुमंतत्रसुरभीवृंदसेवितम्
स्त्रींलक्ष्मींपुरुषंविष्णुंतद्दशांशसमुद्भवम् ६१
तत्रकैशोरवयसंनित्यमानंदविग्रहम्
गतिनाटयंकलालापस्मितवक्त्रंनिरंतरम् ६२
शुद्धसत्वैःप्रेमपूर्णैर्वैष्णवैस्तद्वनाश्रितम्
पूर्णब्रह्मसुखेमग्नंस्फुरत्तन्मूर्तितन्मयम् ६३
मत्तकोकिलभृंगाद्यैःकूजत्कलमनोहरम्
कपोलशुकसंगीतमुन्मत्तालिसहस्रकम् ६४
भुजंगशत्रुनृत्याढयंसकलामोदविभ्रमम्

नानावर्णैश्चकुसुमैस्तद्रेणुपरिपूरितम् ६५
पूर्णेंदुनित्याभ्युदयंसूर्यमंदांशुसेवितम्
अदुःखंदुःखविच्छेदंजरामरणवर्जितम् ६६
अक्रोधंगतमात्सर्यमभिन्नमनहंकृतम्
पूर्णानंदामृतरसंपूर्णप्रेमसुखार्णवम् ६७
गुणातीतंमहद्धामपूर्णप्रेमस्वरूपकम्
वृक्षादिपुलकैर्यत्रप्रेमानंदाश्रुवर्षितम् ६८
किंपुनश्चेतनायुक्तैर्विष्णुभक्तैः किमुच्यते
गोविंदांघ्रिरजःस्पर्शान्नित्यंवृंदावनंभुवि ६९
सहस्रदलपद्मस्यवृंदारण्यंवराटकम्
यस्यस्पर्शनमात्रेणपृथ्वीधन्याजगत्त्रये ७०
गुह्याद्गुह्यतरंरम्यंमध्येवृंदावनंभुवि
अक्षरंपरमानंदंगोविंदस्थानमव्ययम् ७१
गोविंददेहतोऽभिन्नंपूर्णब्रह्मसुखाश्रयम्
मुक्तिस्तत्ररजःस्पर्शात्तन्माहात्म्यंकिमुच्यते ७२
तस्मात्सर्वात्मनादेविहृदिस्थंतद्वनंकुरु
वृंदावनविहारेषुकृष्णंकैशोरविग्रहम् ७३
कालिंदीचाकरोद्यस्यकर्णिकायांप्रदक्षिणाम्
लीलानिर्वाणगंभीरंजलंसौरभमोहनम् ७४
आनंदामृततन्मिश्रमकरंदघनालयम्
पद्मोत्पलाद्यैःकुसुमैर्नानावर्णसमुज्ज्वलम् ७५
चक्रवाकादिविहगैर्मंजुनानाकलस्वनैः
शोभमानंजलंरम्यंतरंगातिमनोरमम् ७६
तस्योभयतटीरम्याशुद्धकांचननिर्मिता
गंगाकोटिगुणाप्रोक्तायत्रस्पर्शवराटकः ७७
कर्णिकायांकोटिगुणोयत्रक्रीडारतोहरिः
कालिंदीकर्णिकाकृष्णमभिन्नमेकविग्रहम् ७८
पार्वत्युवाच
गोविंदस्यकिमाश्चर्यंसौंदर्याकृतविग्रह
तदहंश्रोतुमिच्छामिकथयस्वदयानिधे ७९

ईश्वरउवाच
मध्येवृंदावनेरम्येमंजुमंजीरशोभिते
योजनाश्रितसद्वृक्षशाखापल्लवमंडिते ८०
तन्मध्येमंजुभवनेयोगपीठंसमुज्ज्वलम्
तदष्टकोणनिर्माणंनानादीप्तिमनोहरम् ८१
तस्योपरिचमाणिक्यरत्नसिंहासनंशुभम्
तस्मिन्नष्टदलंपद्मंकर्णिकायांसुखाश्रयम् ८२
गोविंदस्यपरंस्थानंकिमस्यमहिमोच्यते
श्रीमद्गोविंदमंत्रस्थबल्लवीवृंदसेवितम् ८३
दिव्यव्रजवयोरूपंकृष्णंवृंदावनेश्वरम्
व्रजेंद्रंसंततैश्वर्यंव्रजबालैकवल्लभम् ८४
यौवनोद्भिन्नकैशोरंवयसाद्भुतविग्रहम्
अनादिमादिंसर्वेषांनंदगोपप्रियात्मजम् ८५
श्रुतिमृग्यमजंनित्यंगोपीजनमनोहरम्
परंधामपरंरूपंद्विभुजंगोकुलेश्वरम् ८६
बल्लवीनंदनंध्यायेन्निर्गुणस्यैककारणम्
सुश्रीमंतंनवंस्वच्छंश्यामधाममनोहरम् ८७
नवीननीरदश्रेणीसुस्निग्धंमंजुकुंडलम्
फुल्लेंदीवरसत्कांतिसुखस्पर्शसुखावहम् ८८
दलितांजनपुंजाभचिक्कणंश्याममोहनम्
सुस्निग्धनीलकुटिलाशेषसौरभकुंतलम् ८९
तदूर्ध्वंदक्षिणेकालेश्यामचूडामनोहरम्
नानावर्णोज्ज्वलंराजच्छिखंडिदलमंडितम् ९०
मंदारमंजुगोपुच्छाचूडंचारुविभूषणम्
क्वचिद्बृहद्दलश्रेणीमुकुटेनाभिमंडितम् ९१
अनेकमणिमाणिक्यकिरीटभूषणंक्वचित्
लोलालकवृतंराजत्कोटिचंद्रसमाननम् ९२
कस्तूरीतिलकंभ्राजन्मंजुगोरोचनान्वितम्
नीलेंदीवरसुस्निग्धसुदीर्घदललोचनम् ९३
आनृत्यद्भ्रूलताश्लेषस्मितंसाचिनिरीक्षणम्

सुचारून्नतसौंदर्यनासाग्रातिमनोहरम् ९४
नासाग्रगजमुक्तांशुमुग्धीकृतजगत्त्रयम्
सिंदूरारुणसुस्निग्धाधरौष्ठसुमनोहरम् ९५
नानावर्णोल्लसत्स्वर्णमकराकृतिकुंडलम्
तद्रश्मिपुंजसद्गंडमुकुराभलसद्द्युतिम् ९६
कर्णोत्पलसुमंदारमकरोत्तंसभूषितम्
श्रीवत्सकौस्तुभोरस्कंमुक्ताहारस्फुरद्गलम् ९७
विलसद्दिव्यमाणिक्यंमंजुकांचनमिश्रितम्
करेकंकणकेयूरंकिंकिणीकटिशोभितम् ९८
मंजुमंजीरसौंदर्य्यश्रीमदंघ्रिविराजितम्
कर्पूरागुरुकस्तूरीविलसच्चंदनादिकम् ९९
गोरोचनादिसंमिश्रदिव्यांगरागचित्रितम्
स्निग्धपीतपटीराजत्प्रपदांदोलितांजनम् १००
गंभीरनाभिकमलंरोमराजीनतस्त्रजम्
सुवृत्तजानुयुगलंपादपद्ममनोहरम् १०१
ध्वजवज्रांकुशांभोजकरांघ्रितलशोभितम्
नखेंदुकिरणश्रेणीपूर्णब्रह्मैककारणम् १०२
केचिद्वदंतितस्यांशंब्रह्मचिद्रूपमद्वयम्
तद्दशांशंमहाविष्णुंप्रवदंतिमनीषिणः १०३
योगींद्रैःसनकाद्यैश्चतदेवहृदिचिंत्यते
त्रिभंगंललिताशेषनिर्माणसारनिर्मितम् १०४
तिर्यग्ग्रीवजितानंतकोटिकंदर्पसुंदरम्
वामांसार्पितसद्गराडस्फुरत्कांचनकुंडलम् १०५
सहापांगेद्मणस्मेरंकोटिमन्मथसुंदरम्
कुंचिताधरविन्यस्तवंशीमंजुकलस्वनैः १०६
जगत्त्रयंमोहयंतंमग्नंप्रेमसुधार्णवे
श्रीपार्वत्युवाच–
परमंकारणंकृष्णंगोविंदाख्यंमहत्पदम् १०७
वृंदावनेश्वरंनित्यंनिर्गुणस्यैककारणम्
तत्तद्रहस्यमाहात्म्यंकिमाश्चर्यंचसुंदरम् १०८

तद्ब्रूहिदेवदेवेशश्रोतुमिच्छाम्यहंप्रभो
ईश्वरउवाच-
यदंघ्रिनखचंद्रांशुमहिमांतोनगम्यते १०९
तन्माहात्म्यंकियद्देविप्रोच्यतेत्वंमुदाशृणु
अनंतकोटिब्रह्मांडेअनंतत्रिगुणोच्छ्रये ११०
तत्कलाकोटिकोटयंशाब्रह्मविष्णुमहेश्वराः
सृष्टिस्थित्यादिनायुक्तास्तिष्ठंतितस्यवैभवाः १११
तद्रूपकोटिकोटयंशाःकलाःकंदर्पविग्रहाः
जगन्मोहंप्रकुर्वंतितदंडांतरसंस्थिताः ११२
तद्देहविलसत्कांतिकोटिकोटयंशकोविभुः
तत्प्रकाशस्यकोटयंशरश्मयोरविविग्रहाः ११३
तस्यस्वदेहकिरणैःपरानंदरसामृतैः
परमामोदचिद्रूपैर्निर्गुणस्यैककारणैः ११४
तदंशकोटिकोटयंशाजीवंतिकिरणात्मकाः
तदंघ्रिपंकजद्वंद्वनखचंद्रमणिप्रभाः ११५
आहुःपूर्णब्रह्मणोऽपिकारणंवेददुर्गमम्
तदंशसौरभानंतकोटयंशोविश्वमोहनः ११६
तत्स्पर्शपुष्पगंधादिनानासौरभसंभवः
तत्प्रियाप्रकृतिस्त्वाद्याराधिकाकृष्णवल्लभा ११७
तत्कलाकोटिकोटयंशादुर्गाद्यास्त्रिगुणात्मिकाः
तस्याअंघ्रिरजःस्पर्शात्कोटिविष्णुःप्रजायते ११८

इति श्रीपद्मपुराणेपातालखंडेवृंदावनमाहात्म्येकृष्णचरित्रे
एकोनसप्ततितमोऽध्यायः ६९

सप्ततितमोऽध्यायः

पार्वत्युवाच-
यदाकर्णनमेतस्ययेवापारिषदाःप्रभोः
तदहंश्रोतुमिच्छामिकथयस्वदयानिधे १
ईश्वरउवाच
राधयासहगोविंदंस्वर्णसिंहासनेस्थितम्

पूर्वोक्तरूपलावरायंदिव्यभूषांबरस्त्रजम् २
त्रिभंगीमंजुसुस्निग्धंगोपीलोचनतारकम्
तद्वाह्येयोगपीठेचस्वर्णसिंहासनावृते ३
प्रत्यंगरभसावेशाःप्रधानाःकृष्णवल्लभाः
ललिताद्याःप्रकृत्यंशामूलप्रकृतिराधिका ४
संमुखेललितादेवीश्यामलावायुकोणके
उत्तरेश्रीमतीधन्याएशान्यांश्रीहरिप्रिया ५
विशाखाचतथापूर्वेशैब्याचाग्नौततःपरम्
पद्माचदक्षिणेपश्चान्नैर्ऋतिक्रमशःस्थिताः ६
योगपीठेकेसराग्रेचारुचंद्रावतीप्रिया
अष्टौप्रकृतयःपुरायाःप्रधानाःकृष्णवल्लभाः ७
प्रधानप्रकृतिस्त्वाद्याराधाचंद्रावतीसमा
चंद्रावलीचित्ररेखाचंद्रामदनसुंदरी ८
प्रियाचश्रीमधुमतीचंद्ररेखाहरिप्रिया
षोडशाद्याःप्रकृतयःप्रधानाःकृष्णवल्लभाः ९
वृंदावनेश्वरीराधातथाचंद्रावलीप्रिया
अभिन्नगुणलावरायसौंदर्याश्चारुलोचनाः १०
मनोहरामुग्धवेषाःकिशोरीवयसोज्ज्वलाः
अग्रेतनास्तथाचान्यागोपकन्याःसहस्रशः ११
शुद्धकांचनपुंजाभाःसुप्रसन्नाःसुलोचनाः
तद्रूपहृदयारूढास्तदाश्लेषसमुत्सुकाः १२
श्यामामृतरसेमग्नाःस्फुरत्तद्भावमानसाः
नेत्रोत्पलार्चितेकृष्णपादाब्जेऽपितचेतसः १३
श्रुतिकन्यास्ततोदक्षेसहस्रायुतसंयुताः
जगन्मुग्धीकृताकाराहृद्वर्तिकृष्णलालसाः १४
नानासत्वस्वरालापमुग्धीकृतजगत्त्रयाः
तत्रगूढरहस्यानिगायंत्यःप्रेमविह्वलाः १५
देवकन्यास्ततःसव्येदिव्यवेषारसोज्ज्वलाः
नानावैदिग्ध्यनिपुणादिव्यभावभरान्विताः १६
सौंदर्यातिशयेनाढ्याःकटाक्षातिमनोहराः

निर्लज्जास्तत्रगोविंदेतदंगस्पर्शनोद्यताः १७
तद्भावमग्नमनसः स्मितसाचिनिरीक्षणाः
मंदिरस्यततोबाह्येप्रिययाविशदावृते १८
समानवेषवयसः समानबलपौरुषाः
समानगुणकर्माणः समानाभरणप्रियाः १९
समानस्वरसंगीतवेणुवादनतत्पराः
श्रीदामापश्चिमेद्वारेवसुदामातथोत्तरे २०
सुदामाचतथापूर्वेकिंकिणीचापिदक्षिणे
तद्बाह्येस्वर्णपीठेचसुवर्णमंदिरावृते २१
स्वर्णवेद्यंतरस्थेतुस्वर्णाभरणभूषिते
स्तोककृष्णांसुभद्राद्यैर्गोपालैरयुतायुतैः २२
शृंगवीणावेणुवेत्रवयोवेषाकृतिस्वरैः
तद्गुणध्यानसंयुक्तैर्गायद्भिरपिविह्वलैः २३
चित्रार्पितैश्चित्ररूपैः सदानंदाश्रुवर्षिभिः
पुलकाकुलसर्वांगैर्योगींद्रैरिवविस्मितैः २४
क्षरत्ययोभिर्गोविंदैरसंख्यातैरुपावृतम्
तद्बाह्येस्वर्णप्राकारेकोटिसूर्यसमुज्ज्वले २५
चतुर्दिक्षुमहोद्यानंमंजुसौरभमोहिते
पश्चिमेसंमुखेश्रीमत्पारिजातद्रुमाश्रये २६
तदधस्तुस्वर्णपीठेस्वर्णमंडनमंडिते
तन्मध्येमणिमाणिक्यदिव्यसिंहासनोज्ज्वले २७
तत्रोपरिपरानंदंवासुदेवंजगत्प्रभुम्
त्रिगुणातीतचिद्रूपंसर्वकारणकारणम् २८
इंद्रनीलघनश्यामंनीलकुंचितकुंतलम्
पद्मपत्रविशालाक्षंमकराकृतिकुंडलम् २९
चतुर्भुजंतुचक्रासिगदाशंखांबुजायुधम्
आद्यंतरहितंनित्यंप्रधानंपुरुषोत्तमम् ३०
ज्योतीरूपंमहद्धामपुराणंवनमालिनम्
पीतांबरधरंस्निग्धंदिव्यभूषणभूषितम् ३१
दिव्यानुलेपनंराजच्चित्रितांगमनोहरम्

रुक्मिणीसत्यभामाचनाग्नजितीसुलक्षणा ३२
मित्रविंदानुविंदासुनंदाजांबवतीप्रिया
सुशीलाचाष्टमहिलावासुदेवप्रियास्ततः ३३
उद्भ्राजिताःपारिषदावृतयोर्भक्तितत्पराः
उत्तरेसुमहोद्यानेहरिचंदनसंश्रये ३४
तत्राधस्तुस्वर्णपीठेमणिमंडपमंडिते
तन्मध्येहेमनिर्माणदलेसिंहासनोज्ञवले ३५
तत्रैवसहरेवत्यासंकर्षणहलायुधम्
ईश्वरस्यप्रियानंतमभिन्नगुणरूपिणम् ३६
शुद्धस्फटिकसंकाशंरक्तांबुजदलेक्षणम्
नीलपट्टधरंस्निग्धंदिव्यभूषास्त्रगंबरम् ३७
मधुपानेसदासक्तंमधुघूर्णितलोचनम्
प्रवीरदक्षिणेभागेमंजुनाभ्यंतरस्थिते ३८
संतानवृक्षमूलेतुमणिमंदिरमंडितम्
तन्मध्येमणिमाणिक्यदिव्यसिंहासनोज्ज्वले ३९
प्रद्युम्नंचरतीदेवंतत्रोपरिसुखस्थितम्
जगन्मोहनसौंदर्य्यसारश्रेणीरसात्मकम् ४०
असितांभोजपुंजाभमरविंददलेक्षणम्
दिव्यालंकारभूषाभिर्दिव्यगंधानुलेपनम् ४१
जगन्मुग्धीकृताशेषसौंदर्याश्चर्यविग्रहम्
पूर्वोद्यानेमहारगयेसुरद्रुमसमाश्रये ४२
तत्राधस्तुस्वर्णपीठेहेममंडपमंडिते
तस्यमध्येस्थिरेराजद्दिव्यसिंहासनोज्ज्वले ४३
दिव्योषयासमंश्रीमदनिरुद्धंजगत्पतिम्
सांद्रानंदघनश्यामंसुस्निग्धंनीलकुंतलम् ४४
सुभ्रून्नतलताभंगींसुकपोलंसुनासिकम्
सुग्रीवंसुंदरंवक्षोमनोहरमनोहरम् ४५
किरीटिनंकुंडलिनंकंठभूषाविभूषितम्
मंजुमंजीरमाधुर्यादतिसौंदर्यविग्रहम् ४६
प्रियभृत्यगणाराध्यंयत्रसंगीतकप्रियम्

पूर्णब्रह्मसदानंदंशुद्धसत्वस्वरूपकम् ४७
तस्योद्ध्र्वेचांतरिक्षेचविष्णुंसर्वेश्वरेश्वरम्
अनादिमादिचिद्रूपंचिदानंदंपरंविभुम् ४८
त्रिगुणातीतमव्यक्तंनित्यमक्षयमव्ययम्
समेघपुंजमाधुर्यसौंदर्यश्यामविग्रहम् ४९
नीलकुंचितसुस्निग्धकेशपाशातिसुंदरम्
अरविंददलस्निग्धसुदीर्घचारुलोचनम् ५०
किरीटकुंडलोद्दंडशुद्धसत्वात्मभिर्वृतम्
आत्मारामैश्चचिद्रूपैस्तन्मूर्तिध्यानतत्परैः ५१
हृदयारूढतद्ध्यानैर्नासाग्रन्यस्तलोचनैः
क्रियतेऽहैतुकीभक्तिःकायहृद्वृत्तिभाषितैः ५२
तत्सव्येयक्षगंधर्वसिद्धविद्याधरादिभिः
सुकांतैरप्सरःसंघैर्नृत्यसंगीततत्परैः ५३
तदंगभजनंकामंवांछद्भिःकृष्णलालसैः
तदग्रेवैष्णवैःसर्वैश्चांतरिक्षेसुखासने ५४
प्रह्लादनारदाद्यैश्चकुमारशुकवैष्णवैः
जनकाद्यैर्लसद्भावैर्हृद्बाह्यस्फूर्तितत्परैः ५५
पुलकाकुलसर्वांगैःस्फुरत्प्रेमसमाकुलैः
रहस्यामृतसंसिक्तैरर्द्धयुग्माक्षरोमनुः ५६
मंत्रचूडामणिः प्रोक्तःसर्वमंत्रैककारणम्
सर्वदेवस्यमंत्राणांकैशोरंमंत्रहेतुकम् ५७
सर्वकैशोरमंत्राणांहेतुश्चूडामणिर्मनुः
जपंकुर्वंतिमनसापूर्णप्रेमसुखाश्रयाः ५८
वांछंतितत्पदांभोजेनिश्चलंप्रेमसाधनम्
तद्बाह्येस्फटिकाद्युच्चप्रावारेसुमनोहरे ५९
कुंकुमैःसितरक्ताद्यैश्चतुर्दिक्षुसमाकुलैः
शुक्लंचतुर्भुजंविष्णुंपश्चिमेद्वारपालकम् ६०
शंखचक्रगदापद्मकिरीटादिविभूषितम्
रक्तंचतुर्भुजंपद्मशंखचक्रगदायुधम् ६१
किरीटकुंडलोद्दीप्तद्वारपालकमुत्तरे

गौरंचतुर्भुजंविष्णुंशुंखचक्रगदायुधम् ६२
किरीटकुंडलाद्यैश्चशोभितंवनमालिनम्
पूर्वद्वारेद्वारपालंगौरंविष्णुंप्रकीर्तितम् ६३
कृष्णवर्णंचतुर्बाहुंशंखचक्रादिभूषणम्
दक्षिणद्वारपालंतुश्रीविष्णुंकृष्णवर्णकम् ६४
श्रीकृष्णचरितंह्येतद्यःपठेत्प्रयतःशुचिः
शृणुयाद्वापियोभक्त्यागोविंदेलभतेरतिम् ६५
इति श्रीपद्मपुराणेपातालखंडेकृष्णचरितेसप्ततितमोऽध्यायः ७०

## एकसप्ततितमोऽध्यायः

श्रीदेव्युवाच-
भगवन्सर्वभूतेशसर्वात्मन्सर्वसंभव
देवेश्वरमहादेवसर्वज्ञकरुणाकर १
त्वयानुकंपितैवाहंभूयोऽप्याहानुकंपया
त्रैलोक्यमोहनामंत्रास्त्वयामेकथिताःप्रभो २
तेनदेवेनगोपीभिर्महामोहनरूपिणा
केनकेनविशेषणचिक्रीडेतद्वदस्वमे ३
महादेवउवाच
एकदावादयन्वीणांनारदोमुनिपुंगवः
कृष्णावतारमाज्ञायप्रययौनंदगोकुलम् ४
गत्वातत्रमहायोगमयेशंविभुमच्युतम्
बालनाट्यधरंदेवदर्शनंनंदवेश्मनि ५
सुकोमलपटास्तीर्णहेमपर्यंकिकोपरि
शयानंगोपकन्याभिःप्रेक्षमाणंसदामुदम् ६
अतीवसुकुमारांगंमुग्धंमुग्धविलोकनम्
विस्रस्तनीलकुटिलकुंतलावनिमंडलम् ७
किंचित्स्मितांकुरव्यंजदेकद्विरदकुड्मलम्
स्वप्रभाभिर्भासयंतंसमंताद्भवनोदरम् ८
दिग्वाससंसमालोक्यसोऽतिहर्षमवापह
संभाष्यगोपतिंनंदमाहसर्वप्रभुप्रियः ९

नारायणपराणांतुजीवनंह्यतिदुर्लभम्
अस्यप्रभावमतुलंनजानंतीहकेचन १०
भवब्रह्मादयोऽप्यस्मिन्रतिंवांच्छन्तिशाश्वतीम्
चरितंचास्यबालस्यसर्वेषामेवहर्षणम् ११
मुदागायंतिशृणवंतिचाभिनंदंतितादृशाः
अस्मिंस्तवसुतेऽचित्यप्रभावेस्निग्धमानसाः १२
नराःसंतिनतेषांवैभवबाधाभविष्यति
मुंचेहपरलोकेच्छाःसर्वाबल्लवसत्तम १३
एकांतेनैकभावेनबालेऽस्मिन्प्रीतिमाचर
इत्युक्त्वानंदभवनान्निष्क्रांतोमुनिपुंगवः १४
तेनार्चितोविष्णुबुद्ध्याप्रणम्यचविसर्जितः
अथासौचिंतयामासमहाभागवतोमुनिः १५
अस्यकांताभगवतीलक्ष्मीर्नारायणेहरौ
विधायगोपिकारूपंक्रीडार्थंशार्ङ्गधन्वनः १६
अवश्यमवतीर्णासाभविष्यतिनसंशयः
तामहंविचिनोम्यद्यगेहेगेहेव्रजौकसाम् १७
विमृश्यैवंमुनिवरोगेहानिव्रजवासिनाम्
प्रविवेशातिथिर्भूत्वाविष्णुबुद्ध्यासुपूजितः १८
सर्वेषांबल्लवादीनांरतिंनंदसुतेपराम्
दृष्ट्वामुनिवरःसर्वान्मनसाप्रणनामह १९
गोपालानांगृहेबालांददर्शश्वेतरूपिणीम्
सदृष्ट्वातर्कयामासरमाह्येषानसंशयः २०
प्रविवेशततोधीमान्नंदसख्युर्महात्मनः
कस्यचिद्गोपवर्य्यस्यभानुनाम्नोगृहंमहत् २१
अर्चितोविधिवत्तेनसोऽप्यपृच्छन्महामनाः
साधोत्वमसिविख्यातोधर्मनिष्ठतयाभुवि २२
तवाहंधनधान्यादिसमृद्धिंसंविभावये
कच्चित्तेयोग्यःपुत्रोऽस्तिकन्यावाशुभलक्षणा २३
यतस्तेकीर्तिरखिलंलोकंव्याप्यभविष्यति
इत्युक्तोमुनिवर्य्येणभानुरानीयपुत्रकम् २४

महातेजस्विनंदृष्ट्वानारदायाभ्यवादयत्
दृष्ट्वामुनिवरस्तंतुरूपेणाप्रतिमंभुवि २५
पद्मपत्रविशालाक्षंसुग्रीवंसुंदरभ्रुवम्
चारुदंतंचारुकर्णंसर्वावयवसुंदरम् २६
तंसमाश्लिष्यबाहुभ्यांस्नेहाश्रूणिविमुच्यच
ततःसगद्गदप्राहप्रणयेनमहामुनिः २७
नारदउवाच-
अयंशिशुस्तेभवितासुसखारामकृष्णयोः
विहरिष्यतिताभ्यांचरात्रिंदिवमतंद्रितः २८
ततआभाष्यतंगोपप्रवरंमुनिपुंगवः
यदागंतुंमनश्चक्रेतत्रैवंभानुरब्रवीत् २९
एकास्तिपुत्रिकादेवदेवपत्न्युपमामम
कनीयसीशिशोरस्यजडांधबधिराकृतिः ३०
उत्साहाद्वृद्धयेयाचेत्वांवरंभगवत्तम
प्रसन्नदृष्टिमात्रेणसुस्थिरांकुरुबालिकाम् ३१
श्रुत्वैवंनारदोवाक्यंकौतुकाकृष्टमानसः
अथप्रविश्यभवनंलुठंतींभूतलेसुताम् ३२
उत्थाप्यांकेनिधायातिस्नेहविह्वलमानसः
भानुरप्यायचौभक्तिनम्रोमुनिवरांतिकम् ३३
अथभागवतश्रेष्ठःकृष्णस्यातिप्रियोमुनिः
दृष्ट्वातस्याःपरंरूपमदृष्टाश्रुतमद्भुतम् ३४
अभूत्पूर्वसमंमुग्धोहरिप्रेमामहामुनिः
विगाह्यपरमानंदसिंधुमेकरसायनम् ३५
मुहूर्त्तद्वितयंतत्रमुनिरासीच्छिलोपमः
मुनींद्रःप्रतिबुद्धस्तुशनैरुन्मील्यलोचने ३६
महाविस्मयमापन्नस्तूष्णीमेवस्थितोऽभवत्
अंतर्हृदिमहाबुद्धिरेवमेवंव्यचिंतयत् ३७
भ्रांतंसर्वेषुलोकेषुमयास्वच्छंदचारिणा
अस्यारूपेणसदृशीदृष्टानैवचकुत्रचित् ३८
ब्रह्मलोकेरुद्रलोकइंद्रलोकेचमेगतिः

नकोपिशोभाकोटचंशःकुत्राप्यस्याविलोकितः ३९
महामायाभगवतीदृष्टाशैलेंद्रनंदिनी
यस्यारूपेणसकलंमुह्यतेसचराचरम् ४०
साप्यस्याःसुकुमारांगीलक्ष्मींनाप्नोतिकर्हिचित्
लक्ष्मीःसरस्वतीकांतिविद्याद्याश्चवरस्त्रियः ४१
छायामपिस्पृशंत्यस्याःकदाचिन्नैवदृश्यते
विष्णोर्यन्मोहिनीरूपंहरोयेनविमोहितः ४२
मयादृष्टंचतदपिकुतोऽस्यासदृशंभवेत्
ततोऽस्यास्तत्त्वमाज्ञातुंनमेशक्तिःकथंचन ४३
अन्येचापिनजानंतिप्रायेणैनांहरेःप्रियाम्
अस्याःसंदर्शनादेवगोविंदचरणांबुजे ४४
याप्रेमर्द्धिरभूत्सामेभूतपूर्वानकर्हिचित्
एकांतेनौमिभवतींदर्शयित्वातिवैभवम् ४५
कृष्णस्यसंभवत्यस्यारूपंपरमतुष्टये
विमृश्यैवंमुनिर्गोपप्रवरंप्रेष्यकुत्रचित् ४६
निभृतेपरितुष्टावबालिकांदिव्यरूपिणीम्
अपिदेविमहायोगमायेश्वरिमहाप्रभे ४७
महामोहनदिव्यांगिमहामाधुर्यवर्षिणि
महाद्भुतरसानंदशिथिलीकृतमानसे ४८
महाभाग्येनकेनापिगतासिममदृक्पथम्
नित्यमंतर्मुखादृष्टिस्तवदेविविभाव्यते ४९
अंतरेवमहानंदपरितृप्तेवलक्ष्यसे
प्रसन्नंमधुरंसौम्यमिदंसुमुखमंडनम् ५०
व्यनक्तिपरमाश्चर्यंकमप्यंतःसुखोदयम्
रजःसंबंधिकलिकाशक्तिस्तत्वातिशोभने ५१
सृष्टिस्थितिसमाहाररूपिणीत्वमधिष्ठिता
तत्त्वंविशुद्धसत्वाशुशक्तिर्विद्यात्मिकापरा ५२
परमानंदसंदोहंदधतीवैष्णवंपरम्
कात्वयाश्चर्यविभवेब्रह्मरुद्रादिदुर्गमे ५३
योगींद्राणांध्यानपथंनत्वंस्पृशसिकर्हिचित्

इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिस्तवेशितुः ५४
तवांशमात्रमित्येवंमनीषामेप्रवर्त्तते
मायाविभूतयोऽचित्यास्तन्मायार्भकमायिनः ५५
परेशस्यमहाविष्णोस्ताः सर्वास्तेकलाकलाः
आनंदरूपिणीशक्तिस्त्वमीश्वरिनसंशयः ५६
त्वयाचक्रीडतेकृष्णोनूनंवृंदावनेवने
कौमारेणैवरूपेणत्वंविश्वस्यचमोहिनी ५७
तारुण्यवयसास्पृष्टंकीदृक्तेरूपमद्भुतम्
कीदृशंतवलावण्यंलीलाहासेक्षणान्वितम् ५८
हरिमानुषलोभेनवपुराश्चर्यमंडितम्
द्रष्टुंतदहमिच्छामिरूपंतेहरिवल्लभे ५९
येननंदसुतः कृष्णोमोहंसमुपयास्यति
इदानींममकारुण्यान्निजंरूपंमहेश्वरि ६०
प्रणतायप्रपन्नायप्रकाशयितुमर्हसि
इत्युक्तामुनिवर्य्येणतदनुव्रतचेतसा ६१
महामाहेश्वरींनत्वामहानंदमयींपराम्
महाप्रेमतरोत्कंठाव्याकुलांगींशुभेक्षणाम् ६२
ईक्षमाणेनगोविंदमेवंवर्णयतास्थितम्
जयकृष्णमनोहारिञ्जयवृंदावनप्रिय ६३
जयभ्रूभंगललितजयवेणुरवाकुल
जयबर्हकृतोत्तंसजयगोपीविमोहन ६४
जयकुंकुमलिप्तांगजयरत्नविभूषण
कदाहंत्वत्प्रसादेनअनयादिव्यरूपया ६५
सहितंनवतारुण्यमनोहारिवपुःश्रिया
विलोकयिष्येकैशोरेमोहनंत्वांजगत्पते ६६
एवंकीर्त्तयतस्तस्यतत्क्षणादेवसापुनः
बभूवदधतीदिव्यंरूपमत्यंतमोहनम् ६७
चतुर्दशाब्दवयसासंमितंललितंपरम्
समानवयसश्चान्यास्तदैवव्रजबालिकाः ६८
आगत्यवेष्टयामासुर्दिव्यभूषांबरस्रजः

मुनींद्रःसतुनिश्चेष्टोबभूवाश्चर्यमोहितः ६९
बालायास्तास्तदासख्यश्चरणांबुकणैर्मुनिम्
निषिच्यबोधयामासुरूचुश्चकृपयान्विताः ७०
मुनिवर्यमहाभागमहायोगेश्वरेश्वर
त्वयैवपरयाभक्त्याभगवान्हरिरीश्वरः ७१
नूनमाराधितोदेवोभक्तानांकामपूरकः
यदियंब्रह्मरुद्राद्यैर्देवैःसिद्धमुनीश्वरैः ७२
महाभागवतैश्चान्यैर्दुर्दर्शादुर्गमापिच
अत्यद्भुतवयोरूपमोहिनीहरिवल्लभा ७३
केनाप्यचिंत्यभाग्येनतवदृष्टिपथंगता
उत्तिष्ठोत्तिष्ठविप्रर्षेधैर्यमालंब्यसत्वरम् ७४
एनांप्रदक्षिणीकृत्यनमस्कुरुपुनःपुनः
किंनपश्यसिचार्वंगीमत्यंतव्याकुलामिव ७५
अस्मिन्नेवक्षणेनूनमंतर्धानंगमिष्यति
नानयासहसंलापःकथंचित्तेभविष्यति ७६
दर्शनंचपुनर्नास्याःप्राप्स्यसिब्रह्मवित्तम
किंतुवृंदावनेकापिभात्यशोकलताशुभा ७७
सर्वकालेऽपिपुष्पाढ्यासर्वदिग्व्यापिसौरभा
गोवर्द्धनाददूरेणकुसुमाख्यसरस्तटे ७८
तन्मूलेह्यर्द्धरात्रेचद्रक्ष्यस्यस्मानशेषतः
श्रुत्वैवंवचनंतासांस्नेहविह्वलचेतसाम् ७९
यावत्प्रदक्षिणीकृत्यप्रणमेद्दंडवन्मुनिः
मुहूर्त्तद्वितयंबालांनानानिर्माणशोभनाम् ८०
आहूयभानुंप्रोवाचनारदःसर्वशोभनाम्
एवंप्रभावाबालेयंनसाध्यादैवतैरपि ८१
किंतुयद्गृहमेतस्याःपदचिह्नविभूषितम्
तत्रनारायणोदेवःस्वयंवसतिमाधवः ८२
लक्ष्मीश्चवसतेनित्यंसर्वाभिःसर्वसिद्धिभिः
अद्यएनांवरारोहांसर्वाभरणभूषणाम् ८३
देवीमिवपरांगेहेरक्षयत्नेनसत्तम

इत्युक्त्वामनसैवैनांमहाभागवतोत्तमः ८४
तद्रूपमेवसंस्मृत्यप्रविष्टोगहनंवनम्
अशोकलतिकामूलमासाद्यमुनिसत्तमः ८५
प्रतीक्षमाणोदेवींतांतत्रैवागमनंनिशि
स्थितोऽत्रप्रेमविकलश्चिंतयन्कृष्णवल्लभाम् ८६
अथमध्यनिशाभागेयुवत्यःपरमाद्भुताः
पूर्वंदृष्टास्तथान्याश्चविचित्राभरणस्रजः ८७
दृष्ट्वामनसिसंभ्रांतोदंडवत्पतितोभुवि
परिवार्यमुनिंसर्वास्ताःप्रविविशुःशुभाः ८८
प्रष्टुकामोऽपिसमुनिःकिंचित्स्वाभिमतंप्रियम्
नाशकत्प्रेमलावण्यप्रियभाषाप्रधर्षितः ८९
अथागतामुनिश्रेष्ठंकृतांजलिमवस्थितम्
भक्तिभारानतग्रीवंसविस्मयंससंभ्रमम् ९०
सुविनीततमंप्राहतत्रैवकरुणान्विता
अशोकमालिनीनाम्नाअशोकवनदेवता ९१
अशोकमालिन्युवाच
अशोककलिकायांतुवसाम्यस्यांमहामुने
रक्तांबरधरानित्यंरक्तमालानुलेपना ९२
रक्तसिंदूरकलिकारक्तोत्पलवतंसिनी
रक्तमाणिक्यकेयूरमुकुटादिविभूषिता ९३
एकदाप्रिययासार्द्धंविहरंत्योमधूत्सवे
तत्रैवमिलितागोपबालिकाश्चित्रवाससः ९४
अहंचाशोकमालाभिर्गोपवेषधरंहरिम्
रमारूपाश्चताःसर्वाभक्त्यासम्यगपूजयम् ९५
ततःप्रभृतिचैतासांमध्येतिष्ठामिसर्वदा
भूषाभिर्विविधाभिश्चतोषयित्वारमापतिम् ९६
परात्परमहंसर्वंविजानामीहसर्वतः
गोगोपगोपिकादीनांरहस्यंचापिवेद्म्यहम् ९७
तवजिज्ञासितंसर्वंहृदिप्रत्यभिभाषितम्
तांदेवीमद्भुताकारामद्भुतानंददायिनीम् ९८

हरेः प्रियांहिरण्याभांहीरकोज्ज्वलमुद्रिकाम्
कथंपश्यामिलोलाक्षींकथंवातत्पदांबुजम् ९९
आराध्यतेऽतिभक्त्येतित्वयाब्रह्मन्विमर्शितम्
तत्रतेकथयिष्यामिवृत्तांतंसुमहात्मनाम् १००
मानसेसरसिस्थित्वातपस्तीव्रमुपेयुषाम्
जपतांसिद्धमंत्रांश्चध्यायतांहरिमीश्वरम् १०१
मुनीनांकांक्षतांनित्यंतस्याएवपदांबुजम्
एकसप्ततिसाहस्त्रंसंख्यातानांमहौजसाम् १०२
तत्तेऽहकथयाम्यद्यतद्रहस्यंपरंवने १०३

इति श्रीपद्मपुराणेपातालखंडेश्रीराधाकृष्ण-
माहात्म्येएकसप्ततितमोऽध्यायः ७१

## द्विसप्ततितमोऽध्यायः

ईश्वरउवाच-
तदेकाग्रमनाभूत्वाशृणुदेविवरानने
आसीदुग्रतपानाममुनिरेकोदृढव्रतः १
साग्निकोह्यग्निभक्षश्चचचारात्यद्भुतंतपः
जजापपरमंजाप्यंमंत्रंपंचदशाक्षरम् २
काममंत्रेणपुटितंकामंकामवरप्रदात्
कृष्णायेतिपदंस्वाहासहितंसिद्धिदंपरम् ३
दध्यौचश्यामलंकृष्णंरासोन्मत्तंवरोत्सुकम्
पीतपट्टधरंवेणुंकरेणाधरमर्पितम् ४
नवयौवनसंपन्नंकर्षंतंपाणिनाप्रियाम्
एवंध्यानपरःकल्पशतांतेदेहमुत्सृजन् ५
सुनंदनामगोपस्यकन्याभूत्समहामुनिः
सुनंदेतिसमाख्यातायावीणांबिभ्रतीकरे ६
मुनिरन्यःसत्यतपाइतिख्यातोमहाव्रतः
सशुष्कपत्रंभुंक्तेयःप्रजजापपरंमनुम् ७
रत्यंतंकामबीजेनपुटितंचदशाक्षरम्
सप्रदध्यौमुनिवरश्चित्रवेषधरंहरिम् ८

धृत्वारमायादोर्वल्लीद्वितयंकंकणोज्ज्वलम्
नृत्यंतमुन्मदंतंचसंश्लिष्यंतंमुहुर्मुहुः ९
हसंतमुच्चैरानंदतरंगंजठरांबरे
दधतंवेणुमाजानुवैजयंत्याविराजितम् १०
स्वेदांभःकणसंसिक्तललाटवलिताननम्
त्यक्त्वात्यक्त्वासवैदेहंतपसाचमहामुनिः ११
दशकल्पांतरेजातोह्ययंनंदवनादिह
सुभद्रनाम्नोगोपस्यकन्याभद्रेतिविश्रुता १२
यस्याःपृष्ठतलेदिव्यंव्यजनंपरिदृश्यते
हरिधामाभिधानस्तुकश्चिदासीन्महामुनिः १३
सोऽप्यतप्यत्तपःकृछ्रंनित्यंपत्रैकभोजनम्
आशुसिद्धिकरंमंत्रंविंशत्यर्णंप्रजप्तवान् १४
अनंतरंकामबीजादध्यारूढंतदेवतु
मायातत्पुरतोव्योमहंसासृग्द्युतिचंद्रकम् १५
ततोदशाक्षरंपश्चान्नमोयुक्तंस्मरादिकम्
दध्यौवृंदावनेरम्येमाधवीमंडपेप्रभुम् १६
उत्तानशायिनंचारुपल्लवास्तरणोपरि
कयाचिदतिकामार्त्तबल्लव्यारक्तनेत्रया १७
वक्षोजयुगमाच्छाद्यविपुलोरःस्थलंमुहुः
संचुंब्यमानगंडांतंतृप्यमानरदच्छदम् १८
कलयंतंप्रियांदोर्भ्यांसहासंसमुदाद्भुतम्
समुनिश्चबहून्देहांस्त्यक्त्वाकल्पत्रयांतरे १९
सारंगनाम्नोगोपस्यकन्याभूच्छुभलक्षणा
रंगवेणीतिविख्यातानिपुणाचित्रकर्मणि २०
यस्यादंतेषुदृश्यंतेचित्रिताःशोणबिंदवः
ब्रह्मवादीमुनिःकश्चिज्जाबालिरितिविश्रुतः २१
सतपःसुरतोयोगीविचरन्पृथिवीमिमाम्
सएकस्मिन्महारण्येयोजनायुतविस्तृते २२
यदृच्छयागतोऽपश्यदेकांवापींसुशोभनाम्
सर्वतःस्फाटिकाबंधतटांस्वादुजलान्विताम् २३

विकासिकमलामोदवायुनापरिशीलिताम्
तस्याःपश्चिमदिग्भागेमूलेवटमहीरुहः २४
अपश्यत्तापसींकांचित्कुर्वंतींदारुणंतपः
तारुण्यवयसायुक्तांरूपेणातिमनोहराम् २५
चंद्रांशुसदृशाभासांसर्वावयवशोभनाम्
कृत्वाकटितटेवामपाणिंदक्षिणतस्तदा २६
ज्ञानमुद्रांचबिभ्राणामनिमेषविलोचनाम्
त्यक्ताहारविहारांचसुनिश्चलतयास्थिताम् २७
जिज्ञासुस्तांमुनिवरस्तस्थौतत्रशतंसमाः
तदंतेतांसमुत्थाप्यचलितांविनयान्मुनिः २८
अपृच्छत्कात्वमाश्चर्यरूपेकिंवाचरिष्यसि
यदियोग्यंभवेत्तर्हिकृपयावक्तुमर्हसि २९
अथाब्रवीच्छनैर्बालातपसातीवकर्शिता
ब्रह्मविद्याहमतुलायोगींद्रैर्याविमृग्यते ३०
साहंहरिपदाम्भोजकाम्ययासुचिरंतपः
चराम्यस्मिन्वनेघोरेध्यायंतीपुरुषोत्तमम् ३१
ब्रह्मानंदेनपूर्णाहंतेनानंदेनतृप्तधीः
तथापिशून्यमात्मानंमन्येकृष्णरतिंविना ३२
इदानीमतिनिर्विण्णादेहस्यास्यविसर्जनम्
कर्त्तुमिच्छामिपुण्यायांवापिकायामिहैवतु ३३
तच्छ्रुत्वावचनंतस्यामुनिरत्यंतविस्मितः
पतित्वाचरणेतस्याःकृष्णोपासाविधिंशुभम् ३४
पप्रच्छपरमप्रीतस्त्यक्त्वाध्यात्मविरोचनम्
तयोक्तंमंत्रमाज्ञायजगाममानसंसरः ३५
ततोऽतिदुश्चरंचक्रेतपोविस्मयकारकम्
एकपादस्थितःसूर्यंनिर्निमेषंविलोकयन् ३६
मंत्रंजजापपरमंपंचविंशतिवर्णकम्
दध्यौपरमभावेनकृष्णमानंदरूपिणम् ३७
चरंतंव्रजवीथीषुविचित्रगतिलीलया
ललितैःपादविन्यासैःक्वणयंतंचनूपुरम् ३८

चित्रकंदर्पचेष्टाभिःसस्मितापांगवीक्षितैः
संमोहनाख्ययावंश्यापंचमारुणचित्रया ३९
बिंबौष्ठपुटचुंबिन्याकलालापैर्मनोज्ञया
हरंतंव्रजरामाणांमनांसिचवपूंषिच ४०
श्लथन्नीवीभिरागत्यसहसालिगितांगकम्
दिव्यमाल्यांबरधरंदिव्यगंधानुलेपनम् ४१
श्यामलांगप्रभापूरैर्मोहयंतंजगत्त्रयम्
सएवंबहुदेवेनसमुपास्यजगत्पतिम् ४२
नवकल्पांतरेजातागोकुलेदिव्यरूपिणी
कन्याप्रचंडनाम्नस्तुगोपस्यातियशस्विनः ४३
चित्रगंधेतिविख्याताकुमारीचशुभानना
निजांगगंधैर्विविधैर्मोदयंतीदिशोदश ४४
तामेनांपश्यकल्याणींवृंदशोमधुपायिनीम्
अंगेषुस्वपतिंकृत्वारसावेशसमाकुलाम् ४५
अस्याःस्तनपरिष्वंगेहारैःसर्वैर्विहन्यते
वक्षःस्थलात्प्रच्यवद्भिश्चित्रगंधादिसौरभैः ४६
अपरेमुनिवर्यास्तुसततंपूतमानसाः
वायुभक्षास्तपस्तेपुर्जपंतःपरमंमनुम् ४७
स्मरःकृष्णायकामार्तिकलादिवृत्तिशालिने
आग्नेयीसहितंकृत्वामंत्रंपंचदशाक्षरम् ४८
दध्युर्मुनिवराःकष्णमूर्तिंदिव्यविभूषणाम्
दिव्यचित्रदुकूलेनपूर्णपीनकटिस्थलाम् ४९
मयूरपिच्छकैःक्लृप्तचूडामुज्ज्वलकुंडलाम्
सव्यजंघांतआदायदक्षिणांचरणांबुजम् ५०
भ्रमंतींसंपुटीकृत्यचारुहस्तांबुजद्वयम्
कक्षदेशविनिक्षिप्तवेणुंपरिचलत्पुटीम् ५१
आनंदयंतींगोपीनांनयनानिमनांसिच
परमाश्चर्यरूपेणप्रविष्टांरंगमंडपे ५२
प्रसूनवर्षगोंपीभिःपूर्यमाणांचसर्वतः
अथकल्पांतरेदेहंत्यक्त्वाजाताइहाधुना ५३

यासांकर्णेषुदृश्यंतेताटंकारश्मिदीपिताः
रत्नमाल्यानिकंठेषुरत्नपुष्पाणिवेणिषु ५४
मुनिःशुचिश्रवानामसुवर्णोनामचापरः
कुशध्वजस्यब्रह्मर्षेःपुत्रौतौवेदपारगौ ५५
ऊर्ध्वपादौतपोघोरंतेपतुस्त्र्यक्षरंमनुम्
ह्रींहंसइतिकृत्वैवजपंतौयतमानसौ ५६
ध्यायंतौगोकुलेकृष्णंबालकंदशवार्षिकम्
कंदर्पसमरूपेणतारुण्यललितेनच ५७
पश्यंतीर्व्रजबिंबोष्ठीर्मोहयंतमनारतम्
तौकल्पांतेतनूत्यक्त्वालब्धवंतौजनिंव्रजे ५८
सुवीरनामगोपस्यसुतेपरमशोभने
ययोर्हस्तेप्रदृश्येतेसारिकेशुभराविणी ५९
जटिलोजंघपूतश्चघृताशीकर्बुरेवच
चत्वारोमुनयोधन्याइहामुत्रचनिःस्पृहाः ६०
केवलेनैकभावेनप्रपन्नाबल्लवीपतिम्
तेपुस्तेसलिलेमग्नाजपंतोमनुमेवच ६१
रमात्रयेणपुटितंस्मराद्यंतदशाक्षरम्
दध्युश्चगाढभावेनबल्लवीभिर्वनेवने ६२
भ्रमंतंनृत्यगीताद्यैर्मानयंतंमनोहरम्
चंदनालिप्तसर्वांगंजपापुष्पावतंसकम् ६३
कल्हारमालयावीतंनीलपीतपटावृतम्
कल्पत्रयांतेजातास्तेगोकुलेशुभलक्षणाः ६४
इमास्ताःपुरतोरम्याउपविष्टानतभ्रुवः
यासांधर्मकृतान्येववलयानिप्रकोष्ठके ६५
विचित्राणिचरत्नाद्यैर्दिव्यमुक्ताफलादिभिः
मुनिर्दीर्घतपानामव्यासोऽभूत्पूर्वकल्पके ६६
तत्पुत्रःशुकइत्येवमुनिःख्यातोवरःसुधीः
सोऽपिबालोमहाप्राज्ञःसदैवानुस्मरन्पदम् ६७
विहायपितृमात्रादिकृष्णंध्यात्वावनंगतः
सतत्रमानसैर्दिव्यैरुपचारैरहर्निशम् ६८

ग्रनाहारोऽचयद्विष्णुंगोपरूपिणमीश्वरम्
रमयापुटितंमंत्रंजपन्नष्टादशाद्मरम् ६९
दध्यौपरमभावेनहरिंहैमतरोरधः
हैममंडपिकायांचहेमसिंहासनोपरि ७०
ग्रासीनंहेमहस्ताग्रैर्दधानंहेमवंशिकाम्
दद्मिणेनभ्रामयंतंपाणिनाहेमपंकजम् ७१
हेमवर्णेष्टप्रियया परिक्लृप्तांगचित्रकम्
हसंतमतिहर्षेणपश्यंतंनिजमाश्रमम् ७२
हर्षाश्रुपूर्णःपुलकाचितांगःप्रसीदनाथेतिवदन्नथोच्चैः
दंडप्रणामायपपातभूमौसंवेपमानस्त्रिजगद्विधातुः ७३
तंभक्तिकामंपतितंधरगयामायासितोस्मीतिवदंतमुच्चैः
दंडप्रणामस्यभुजौगृहीत्वापस्पर्शहर्षोपचितेद्मरणेन ७४
उवाचचप्रियारूपंलब्धवंतंशुकंहरिः
त्वंमेप्रियतमाभद्रेसदातिष्ठममांतिके ७५
मद्रूपंचिंतयंतीचप्रेमास्पदमुपागता
द्वेचमुख्यतमेगोप्यौसमानवयसीशुभे ७६
एकव्रतेएकनिष्ठेएकनद्मत्रनामनी
तप्तजांबूनदप्रख्यातत्रैवान्यातडित्प्रभा ७७
एकानिद्रायमाणाद्मीपरासौम्यायतेद्मणा
सोऽचयत्परयाभक्त्यातेहरेःसव्यदद्मिणे ७८
सकल्पांतेतनुंत्यक्त्वागोकुलेऽभून्महात्मनः
उपनंदस्यदुहितानीलोत्पलदलच्छविः ७९
सेयंश्रीकृष्णवनितापीतशाटीपरिच्छदा
रक्तचोलिकयापूर्णाशातकुंभघटस्तनी ८०
दधानारक्तसिंदूरंसर्वांगस्यावगुंठनम्
स्वर्णकुंडलविभ्राजद्गंडदेशासुशोभनाम् ८१
स्वर्णपंकजमालाढ्याकुंकुमालिप्तसुस्तनी
यस्याहस्तेचर्वणीयंदृश्यतेहरिणार्पितम् ८२
वेणुवाद्यातिनिपुणाकेशवस्यनिषेवणी
कृष्णेनपरितुष्टेनकदाचिद्गीतकर्मणि ८३

विन्यस्ताकंबुकंठेऽस्याभातिगुंजावलिशुभा
परोन्नेपिचकृष्णस्यकांतिभिश्चस्मरार्दिता ८४
सखीभिर्वादयंतीभिर्गायंतीसुस्वरंपरम्
नर्त्तयेत्प्रियवेषेणवेषयित्वावधूमिमाम् ८५
वारंवारंचगोविंदंभावेनालिग्यचुंबति
प्रियासौसर्वगोपीनांकृष्णस्याप्यतिवल्लभा ८६
श्वेतकेतोःसुतःकश्चिद्वेदवेदांगपारगः
सर्वमेवपरित्यज्यप्रचंडंतपआस्थितः ८७
मुरारेःसेवितपदांसुधामधुरनादिनीम्
गोविंदस्यप्रियांशक्तिंब्रह्मरुद्रादिदुर्गमाम् ८८
भजंतीमेकभावेनश्रियमेवमनोहराम्
ध्यायञ्जजापसततंमंत्रमेकादशाक्षरम् ८९
हसितंसकलंकृत्वाबतमायेषुयोजयन्
कांत्यादिभिर्हसंतीभिर्वासयंत्यभितोजगत् ९०
वसंतेवसतेत्येवंमंत्रार्थंचिंतयन्सदा
सोऽपिकल्पद्वयेनैवसिद्धोऽत्रजनिमाप्तवान् ९१
सेयंबालायतेपुत्रीकृशांगीकुड्मलस्तनी
मुक्तावलिलसत्कंठीशुद्धकौशेयवासिनी ९२
मुक्ताच्छुरितमंजीरकंकणांगदमुद्रिका
बिभ्रतीकुंडलेदिव्येअमृतस्राविणीशुभे ९३
वृत्तकस्तूरिकावेणीमध्येसिंदूरबिंदुवत्
दधानाचित्रकंभालेसार्द्धंचंदनचित्रकैः ९४
यासैवदृश्यतेशांताजपंतीपरमंपदम्
आसीच्चंद्रप्रभोनामराजर्षिःप्रियदर्शनः ९५
तस्यकृष्णप्रसादेनपुत्रोऽभून्मधुराकृतिः
चित्रध्वजइतिख्यातःकौमारावधिवैष्णवः ९६
सराजासुसुतंसौम्यंसुस्थिरंद्वादशाब्दिकम्
आदेशयद्द्विजान्मंत्रंपरमष्टादशाक्षरम् ९७
अभिषिच्यमानःसशिशुर्मंत्रामृतमयैर्जलैः
तत्क्षणेभूपतिंप्रेम्णानत्वोदश्रुप्रकल्पितः ९८

तस्मिन्दिनेसवैबालःशुचिवस्त्रधरःशुचिः
हारनूपुरसूत्राद्यैर्ग्रैवेयांगदकंकणैः ९९
विभूषितोहरेर्भक्तिमुपस्पृश्यामलाशयः
विष्णोरायतनंगत्वास्थित्वैकाकीव्यचिंतयत् १००
कथंभजामितंभक्तंमोहनंगोपयोषिताम्
विक्रीडंतंसदाताभिःकालिंदीपुलिनेवने १०१
इत्थमत्याकुलमतिश्चिंतयन्नेवबालकः
अथापपरमांविद्यांस्वप्नंचसमवाप्यत १०२
आसीत्कृष्णप्रतिकृतिःपुरतस्तस्यशोभना
शिलामयीस्वर्णपीठेसर्वलक्षणलक्षिता १०३
साभूदिंदीवरश्यामास्निग्धलावरायशालिनी
त्रिभंगललिताकारशिखंडीपिच्छभूषणा १०४
कूजयंतीमुदावेणुंकांचनीमधरेऽपिताम्
दक्षसव्यगताभ्यांचसुंदरीभ्यांनिषेविताम् १०५
वर्द्धयंतींतयोःकामंचुंबनाश्लेषणादिभिः
दृष्ट्वाचित्रध्वजःकृष्णंतादृग्वेषविलासिनम् १०६
अवनम्यशिरस्तस्मैपुरोलज्जितमानसः
अथोवाचहरिर्दक्षपार्श्वगांप्रेयसींहसन् १०७
सलज्जंपरमंचैनंस्वशरीरासनागतम्
निर्मायात्मसमंदिव्यंयुवतीरूपमद्भुतम् १०८
चिंतयस्वशरीरेणह्यभेदंमृगलोचने
अथोत्वदंगतेजोभिःस्पृष्टस्त्वद्रूपमाप्स्यति १०९
ततःसापद्मपत्राक्षीगत्वाचित्रध्वजांतिकम्
निजांगकैस्तदंगानामभेदंध्यायतीस्थिता ११०
अथास्यास्त्वंगतेजांसितदंगंपर्यपूरयन्
स्तनयोर्ज्योतिषाजातौपीनौचारुपयोधरौ १११
नितंबज्योतिषाजातंश्रोणिबिंबंमनोहरम्
कुंतलज्योतिषाकेशपाशोऽभूत्करयोःकरौ ११२
सर्वमेवंसुसंपन्नंभूषावासःस्त्रगादिकम्
कलासुकुशलाजातासौरभेनांतरात्मनि ११३

दीपाद्दीपमिवालोक्यसुभगांभुविकन्यकाम्
चित्रध्वजांत्रपाभंगिस्मितशोभांमनोहराम् ११४
प्रेम्णागृहीत्वाकरयोःसातामपहरन्मुदा
गोविंदवामपार्श्वस्थांप्रेयसींपरिरभ्यच ११५
उवाचतवदासीयंनामचास्याश्चकारय
सेवांचास्यैवदप्रीत्यायथाभिरुचितांप्रियाम् ११६
अथचित्रकलेत्येतन्नामचात्ममतेनसा
चकारचाहसेवार्थंधृत्वाचापिविपंचिकाम् ११७
सदात्वंनिकटेतिष्ठगायस्वविविधैःस्वरैः
गुणात्मन्प्राणनाथस्यतवायंविहितोविधिः ११८
अथचित्रकलात्वाज्ञांगृहीत्वानम्यमाधवम्
तत्प्रेयस्याश्चचरणंगृहीत्वापादयोरजः ११९
जगौसुमधुरंगीतंतयोरानंदकारणम्
अथप्रीत्योपगूढासाकृष्णेनानंदमूर्तिना १२०
यावत्सुखांबुधौपूर्णातावदेवाप्यबुध्यत
चित्रध्वजोमहाप्रेमविह्वलःस्मरतत्परः १२१
तमेवपरमानंदंमुक्तकंठोरुरोदह
तदारभ्यरुदन्नेवमुक्त्वाहरिविचारकम् १२२
आभाषितोऽपिपित्राद्यैर्नैवावोचद्वचःक्वचित्
मासमात्रंगृहेस्थित्वानिशीथेकृष्णसंश्रयः १२३
निर्गत्यारण्यमचरत्तपोवैमुनिदुष्करम्
कल्पांतेदेहमुत्सृज्यतपसैवमहामुनिः १२४
वीरगुप्ताभिधानस्यगोपस्यदुहिताशुभा
जाताचित्रकलेत्येवयस्याःस्कंधेमनोहरा १२५
विपंचीदृश्यतेनित्यंसप्तस्वरविभूषिता
उपतिष्ठतिवैवामेरत्नभृंगारमद्भुतम् १२६
दधानादक्षिणेहस्तेसावैरत्नपतद्ग्रहम्
अयमासीत्पुरासर्वतापसैरभिवंदितः १२७
मुनिःपुण्यश्रवानामकाश्यपःसर्वधर्मवित्
पितातस्याभवच्छैवःशतरुद्रीयमन्वहम् १२८

प्रस्तुवन्देवदेवेशंविश्वेशंभक्तवत्सलम्
प्रसन्नोभगवांस्तस्यपार्वत्यासहशंकरः १२९
चतुर्दश्यामर्द्धरात्रेःप्रत्यक्षःप्रददौवरम्
त्वत्पुत्रोभविताकृष्णेभक्तिमान्बालएवहि १३०
उपनीयाष्टमेवर्षेतस्मैसिद्धमनुस्त्वयम्
उपदिशैकविंशत्यायोमयातेनिगद्यते १३१
गोपालविद्यानामायंमंत्रोवाक्सिद्धिदायकः
एतत्साधकजिह्वाग्रेलीलाचरितमद्भुतम् १३२
अनंतमूर्तिरायातिस्वयमेववरप्रदः
काममायारमाकंठसेंद्रादामोदरोज्ज्वलाः १३३
मध्येदशाक्षरींप्रोच्यपुनस्ताएवनिर्दिशेत्
दशाक्षरोक्तऋष्यादिध्यानंचास्यब्रवीम्यहम् १३४
पूर्णामृतनिधेर्मध्येद्वीपंज्योतिर्मयंस्मरेत्
कालिद्यावेष्टितंतत्रध्यायेद्वृंदावनेवने १३५
सर्वर्तुकुसुमस्त्राविद्रुमवल्लीभिरावृतम्
नटन्मत्तशिखिस्वानंगायत्कोकिलषट्पदम् १३६
तस्यमध्येवसत्येकःपारिजाततरुर्महान्
शाखोपशाखाविस्तारैःशतयोजनमुच्छ्रितः १३७
तलेतस्याथविमलेपरितोधेनुमंडलम्
तदंतर्मंडलंगोपबालानांवेणुशृंगिणाम् १३८
तदंतरेतुरुचिरंमंडलंव्रजसुभ्रुवाम्
नानोपायनपाणीनांमदविह्वलचेतसाम् १३९
कृतांजलिपुटानांचमंडलंशुक्लवाससाम्
शुक्लाभरणभूषाणांप्रेमविह्वलितात्मनाम् १४०
चिंतयेच्छ्रुतिकन्यानांगृह्णतीनांवचःप्रियम्
रत्नवेद्यांततोध्यायेद्दुकूलावरणंहरिम् १४१
ऊरौशयानंराधायाःकदलीकांडकोपरि
तद्वक्त्रंचंद्रसुस्मेरंवीक्षमाणंमनोहरम् १४२
किंचित्कुंचितवामांघ्रिंवेणुयुक्तेनपाणिना
वामेनालिंग्यदयितांदक्षेणचिबुकंस्पृशन् १४३

महामारकताभासंमौक्तिकच्छायमेवच
पुंडरीकविशालाक्षंपीतनिर्मलवाससम् १४४
बर्हभारलसच्छीर्षंमुक्ताहारमनोहरम्
गंडप्रांतलसच्चारुमकराकृतिकुंडलम् १४५
आपादतुलसीमालंकंकणांगदभूषणम्
नूपुरैर्मुद्रिकाभिश्चकांच्याचपरिमंडितम् १४६
सुकुमारतरंध्यायेत्किशोरवयसान्वितम्
पूजादशाक्षरोक्तैववेदलक्षंपुरस्क्रिया १४७
इत्युक्त्वांतर्दधेदेवोदेवीचगिरिजासती
मुनिरागत्यपुत्रायतथैवोपदिदेशह १४८
पुण्यश्रवास्तुतन्मंत्रग्रहणादेवकेशवम्
वर्णयामासविविधैर्जित्वासर्वान्मुनीन्स्वयम् १४९
रूपलावण्यवैदग्ध्यसौंदर्याश्चर्यलक्षणम्
तदाहृष्टमनाबालोनिर्गत्यस्वगृहात्ततः १५०
वायुभक्षस्तपस्तेपेकल्पानामयुतत्रयम्
तदंतेगोकुलेजातानंदभ्रातुर्गृहेस्वयम् १५१
लवंगाइतितन्नामकृष्णोंगितनिरीक्षणा
यस्याहस्तेप्रदृश्येतमुखमार्जनयंत्रकम् १५२
इतितेकथिताःकाश्चित्प्रधानाःकृष्णवल्लभाः १५३
हरिविविधरसाद्यैर्युक्तमध्यायमेतद्व्रजवरतनयाभिश्चारुहासेक्षणाभिः
पठतियइहभक्त्यापाठयेद्वामनुष्योव्रजतिभगवतःश्रीवासुदेवस्यधाम १५४
इति श्रीपद्मपुराणेपातालखंडेश्रीकृष्णमाहात्म्येद्विसप्ततितमोऽध्यायः ७२

## त्रिसप्ततितमोऽध्यायः

ईश्वरउवाच–
यत्त्वयापृष्टमाश्चर्यंतन्मयाभाषितंक्रमात्
यत्रमुह्यंतिब्रह्माद्यास्तत्रकोवानमुह्यति १
तथापितेप्रवक्ष्यामियदुक्तंपरमर्षिणा
महाराजमंबरीषंविष्णुभक्तंशिवान्वितम् २
बदर्याश्रममासाद्यसमासीनंजितेंद्रियम्

राजाप्रणम्यतुष्टावविष्णुधर्मविवित्सया ३
वेदव्यासंमहाभागंसर्वज्ञंपुरुषोत्तमम्
मांत्वंसंसारदुष्पारेपरित्रातुमिहार्हसि ४
विषयेषुविरक्तोऽस्मिनमस्तेभ्योनमोखिलम्
यत्तत्पदमनुद्विग्नंसच्चिदानंदविग्रहम् ५
परंब्रह्मपराकाशमनाकाशमनामयम्
यत्साक्षात्कृत्यमुनयोभवांभोधिंतरंतिहि ६
तत्राहंमनसोनित्यंकथंगतिमवाप्नुयाम्
व्यासउवाच-
अतिगोप्यंत्वयापृष्टंयन्मयानशुकंप्रति ७
गदितंस्वसुतंकिंतुत्वांवक्ष्यामिहरिप्रियम्
आसीदिदंपरंविश्वंयद्रूपंयत्प्रतिष्ठितम् ८
अव्याकृतमव्यथितंतदीश्वरमयंशृणु
मयाकृतंतपःपूर्वंबहुवर्षसहस्रकम् ९
फलमूलपलाशांबुवाय्वाहारनिषेविणा
ततोमामाहभगवान्स्वध्याननिरतंहरिः १०
कस्मिन्नर्थेचिकीर्षातिविवित्सावामहामते
प्रसन्नोऽस्मिवृणुष्वत्वंवरंचवरदर्षभात् ११
मद्दर्शनांतःसंसारइतिसत्यंब्रवीमिते
ततोऽहमब्रुवंकृष्णंपुलकोत्फुल्लविग्रहः १२
त्वामहंद्रष्टुमिच्छामिचक्षुर्भ्यांमधुसूदन
यत्तत्सत्यंपरंब्रह्मजगज्ज्योतिंजगत्पतिम् १३
वदंतिवेदशिरसश्चाक्षुषंनाथमद्भुतम्
श्रीभगवानुवाच-
ब्रह्मणैवंपुरापृष्टःप्रार्थितश्चयथापुरा १४
यदवोचमहंतस्मैतत्तुभ्यमपिकथ्यते
मामेकेप्रकृतिंप्राहुःपुरुषंचतथेश्वरम् १५
धर्ममेकेधनंचैकेमोक्षमेकेऽकुतोभयम्
शून्यमेकेभावमेकेशिवमेकेसदाशिवम् १६
अपरेवेदशिरसिस्थितमेकंसनातनम्

सद्भावंविक्रियाहीनंसच्चिदानंदविग्रहम् १७
पश्याद्यदर्शयिष्यामिस्वरूपंवेदगोपितम्
ततोऽपश्यंभूपबालमहंकालांबुदप्रभम् १८
गोपकन्यावृतंगोपंहसंतंगोपबालकैः
कदंबमूलआसीनंपीतवाससमद्भुतम् १९
वनंवृंदावनंनामनवपल्लवमंडितम्
कोकिलभ्रमरारावंमनोभवमनोहरम् २०
नदीमपश्यंकालिंदीमिंदीवरदलप्रभाम्
गोवर्द्धनमथापश्यंकृष्णरामकरोद्धृतम् २१
महेंद्रदर्पनाशायगोगोपालसुखावहम्
गोपालमबलासंगमुदितंवेणुवादिनम् २२
दृष्ट्वातिहृष्टोह्यभवंसर्वभूषणभूषणम्
ततोमामाहभगवान्वृंदावनचरःस्वयम् २३
यदिदंमेत्वयादृष्टंरूपंदिव्यंसनातनम्
निष्कलंनिष्क्रियंशांतंसच्चिदानंदविग्रहम् २४
पूर्णंपद्मपलाशाक्षंनातःपरतरंमम
इदमेववदंत्येतेवेदाःकारणकारणम् २५
सत्यंनित्यंपरानंदंचिद्घनंशाश्वतंशिवम्
नित्यांमेमथुरांविद्धिवनंवृंदावनंतथा २६
यमुनांगोपकन्याश्चतथागोपालबालकाः
ममावतारोनित्योऽयमत्रमासंशयंकृथाः २७
ममेष्टाहिसदाराधासर्वज्ञोऽहपरात्परः
सर्वकामश्चसर्वेशःसर्वानंदःपरात्परः २८
मयिसर्वमिदंविश्वंभातिमायाविजृंभितम्
ततोऽहमब्रुवंदेवंजगत्कारणकारणम् २९
काश्चगोप्यस्तुकेगोपावृक्षोऽयकीदृशोमतः
वनंकिंकोकिलाद्याश्चनदीकेयंगिरिश्चकः ३०
कोऽसौवेणुर्महाभागोलोकानंदैकभाजनम्
भगवानाहमांप्रीतःप्रसन्नवदनांबुजः ३१
गोप्यस्तुश्रुतयोज्ञेयाऋचोवैगोपकन्यकाः

देवकन्याश्चराजेंद्रतपोयुक्तामुमुक्षवः ३२
गोपालामुनयःसर्वेवैकुंठानंदमूर्त्तयः
कल्पवृक्षःकदंबोऽयपरानंदैकभाजनम् ३३
वनमानंदकाख्यंहिमहापातकनाशनम्
सिद्धाश्चसाध्यागंधर्वाःकोकिलाद्यानसंशयः ३४
केचिदानंदहृदयंसाक्षाद्यमुनयातनुम्
अनादिर्हरिदासोऽयभूधरोनात्रसंशयः ३५
वेणुर्यःशृणुतंविप्रंतवापिविदितंतथा
द्विजआसीच्छांतमनास्तपःशांतिपरायणः ३६
नाम्नादेवव्रतोदांतःकर्मकांडविशारदः
सवैष्णवजनव्रातमध्यवर्त्तीक्रियापरः ३७
सकदाचनशुश्रावयज्ञेशोऽस्तीतिभूपते
तस्यगेहमथाभ्यागाद्द्विजोमद्गतनिश्चयः ३८
समद्भक्तःक्वचित्पूजांतुलसीदलवारिणा
कृतवांस्तद्गृहेकिंचित्फलंमूलंन्यवेदयत् ३९
स्नानवारिफलंकिंचित्तस्मैमत्याददौसुधीः
अश्रद्धयास्मितंकृत्वासोऽप्यगृह्णाद्द्विजन्मनः ४०
तेनपापेनसंजातंवेणुत्वमतिदारुणम्
तेनपुरायेनतस्याथमदीयप्रियतांगतः ४१
अमुनासोपिराजेंद्रकेतुमानिवराजते
युगांतेतद्विष्णुपरोभूत्वाब्रह्मसमाप्स्यति ४२
अहोनजानंतिनरादुराशयाःपुरींमदीयांपरमांसनातनीम्
सुरेंद्रनागेंद्रमुनींद्रसंस्तुतांमनोरमांतांमथुरांपुरातनीम् ४३
काश्यादयोयद्यपिसंतिपुर्यस्तासांतुमध्येमथुरैवधन्या
यज्जन्ममौंजीव्रतमृत्युदाहैर्नृणांचतुर्द्धाविदधातिमुक्तिम् ४४
यदाविशुद्धास्तपआदिनाजनाःशुभाशयाध्यानधनानिरंतरम्
तदैवपश्यंतिममोत्तमांपुरींनचान्यथाकल्पशतैर्द्विजोत्तमाः ४५
मथुरावासिनोधन्यामान्याअपिदिवौकसाम्
अगरायमहिमानस्तेसर्वएवचतुर्भुजाः ४६
मथुरावासिनोयेतुदोषान्पश्यंतिमानवाः

तेषुदोषंनपश्यंतिजन्ममृत्युसहस्रजम् ४७
अधनाअपितेधन्यामथुरांयेस्मरंतिते
यत्रभूतेश्वरोदेवोमोक्षदःपापिनामपि ४८
ममप्रियतमोनित्यंदेवोभूतेश्वरःपरः
यःकदापिममप्रीत्यैनसंत्यजतितांपुरीम् ४९
भूतेश्वरंयोननमेन्नपूजयेन्नवास्मरेद्दुश्चरितोमनुष्यः
नैनांसपश्येन्मथुरांमदीयांस्वयंप्रकाशांपरदेवताख्याम् ५०
नकथंमयिभक्तिंसलभतेपापपूरुषः
योमदीयंपरंभक्तंशिवंसंपूजयेन्नहि ५१
मन्मायामोहितधियःप्रायस्तेमानवाधमाः
भूतेश्वरंननमंतिनस्मरंतिस्तुवंतिये ५२
बालकोऽपिध्रुवोयत्रममाराधनतत्परः
प्रापस्थानंपरंशुद्धंयन्नयुक्तंपितामहैः ५३
तांपुरींप्राप्यमथुरांमदीयांसुरदुर्लभाम्
खंजोभूत्वांधकोवापिप्राणानेवपरित्यजेत् ५४
वेदव्यासमहाभागमाकृथाःसंशयंक्वचित्
रहस्यंवेदशिरसांयन्मयातेप्रकाशितम् ५५
इमंभगवताप्रोक्तमध्यायंयःपठेच्छुचिः
शृणुयाद्वापियोभक्त्यामुक्तिस्तस्यापिशाश्वती ५६

इति श्रीपद्मपुराणेपातालखंडेवृंदावनादिमथुरामाहात्म्य-
कथनंनामत्रिसप्ततितमोऽध्यायः ७३

## चतुःसप्ततितमोऽध्यायः

ईश्वरउवाच-
एकदारहसिश्रीमानुद्धवोभगवित्प्रियः
सनत्कुमारमेकांतेह्यपृच्छत्पार्षदःप्रभो १
यत्रक्रीडतिगोविंदोनित्यंनित्यसुरास्पदे
गोपांगनाभिर्यत्स्थानंकुत्रवाकीदृशंपरम् २
तत्तत्क्रीडनवृत्तांतमन्यद्यद्यत्तदद्भुतम्
ज्ञातंचेत्तवतत्कथ्यंस्नेहोमेयदिवर्त्तते ३

सनत्कुमारउवाच–
कदाचिद्यमुनाकूलेकस्यापिचतरोस्तले
सुवृत्तेनोपविष्टेनभगवत्पार्षदेनवै ४
यद्रहोऽनुभवस्तस्यपार्थेनापिमहात्मना
दृष्टंकृतंचयद्यत्तत्प्रसंगात्कथितंमयि ५
तत्तेऽहकथयाम्येतच्छृणुष्वावहितःपरम्
किंत्वेतद्यत्रकुत्रापिनप्रकाश्यंकदाचन ६
अर्जुनउवाच–
शंकराद्यैर्विरिंच्याद्यैरदृष्टमश्रुतंचयत्
सर्वमेतत्कृपांभोधेकृपयाकथयप्रभो ७
किंत्वयाकथितंपूर्वमाभीर्यस्तववल्लभाः
तास्ताःकतिविधादेवकतिवासंख्ययापुनः ८
नामानिकतिवातासांकावाकुत्रव्यवस्थिताः
तासांवाकतिकर्माणिवयोवेषश्चकःप्रभो ९
काभिःसार्द्धंक्ववादेवविहरिष्यसिभोरहः
नित्येनित्यसुखेनित्यविभवेचवनेवने १०
तत्स्थानंकीदृशंकुत्रशाश्वतंपरमंमहत्
कृपाचेत्तादृशीतन्मेसर्वंवक्तुमिहार्हसि ११
यदपृष्टंमयाप्येवमज्ञातंयद्रहस्तव
आर्तार्तिघ्नमहाभागसर्वंतत्कथयिष्यसि १२
श्रीभगवानुवाच–
तत्स्थानंवल्लभास्तामेविहारस्तादृशोमम
अपिप्राणसमानानांसत्यंपुंसामगोचरः १३
कथितेदृष्टमुत्कंठातववत्सभविष्यति
ब्रह्मादीनामदृश्यंयत्किंतदन्यजनस्यवै १४
तस्माद्विरमवत्सैतत्किंनुतेनविनातव
एवंभगवतस्तस्यश्रुत्वावाक्यंसुदारुणम् १५
दीनःपादांबुजद्वंद्वेदंडवत्पतितोऽजुनः
ततोविहस्यभगवान्दोर्भ्यामुत्थाप्यतंविभुः १६
उवाचपरमप्रेम्णाभक्तायभक्तवत्सलः

तत्किंतत्कथनेनात्रद्रष्टव्यंचेत्त्वयाहियत् १७
यस्यांसर्वंसमुत्पन्नंयस्यामद्यापितिष्ठति
लयमेष्यतितांदेवींश्रीमत्त्रिपुरसुंदरीम् १८
आराध्यपरयाभक्त्यातस्यैस्वंचनिवेदय
तांविनैतत्पदंदातुंनशक्नोमिकदाचन १९
श्रुत्वैतद्भगवद्वाक्यंपार्थोहर्षाकुलेक्षणः
श्रीमत्यास्त्रिपुरादेव्यायथौश्रीपादुकातलम् २०
तत्रगत्वाददर्शैनांश्रीचिंतामणिवेदिकाम्
नानारत्नैर्विरचितैःसोपानैरतिशोभिताम् २१
तत्रकल्पतरुंनानापुष्पैःफलभवैर्नतम्
सर्वर्त्तुकोमलदलैःस्रवन्माध्वीकशीकरैः २२
वर्षद्भिर्वायुनालोलैःपल्लवैरुज्ज्वलीकृतम्
शुकैश्चकोकिलगणैःसारिकाभिःकपोतकैः २३
लीलाचकोरकैरम्यैःपक्षिभिश्चनिनादितम्
यत्रगुंजद्भृंगराजकोलाहलसमाकुलम् २४
मणिभिर्भास्वरैरुद्यद्दावानलमनोहरम्
श्रीरत्नमंदिरंदिव्यंतलेतस्यमहाद्भुतम् २५
रत्नसिंहासनंतत्रमहाहैमाभिमोहनम्
तत्रबालार्कसंकाशांनानालंकारभूषिताम् २६
नवयौवनसंपन्नांसृणिपाशधनुःशरैः
राजच्चतुर्भुजलतांसुप्रसन्नांमनोहराम् २७
ब्रह्मविष्णुमहेशादिकिरीटमणिरश्मिभिः
विराजितपदांभोजामणिमादिभिरावृताम् २८
प्रसन्नवदनांदेवींवरदांभक्तवत्सलाम्
अर्जुनोऽहमितिज्ञातःप्रणम्यचपुनःपुनः २९
विहितांजलिरेकांतेस्थितोभक्तिभरान्वितः
सातस्योपासितंज्ञात्वाप्रसादंचकृपानिधिः ३०
उवाचकृपयादेवीतस्यस्मरणविह्वला
भगवत्युवाच–
किंवादानंत्वयावत्सकृतंपात्रायदुर्लभम् ३१

इष्टंयज्ञेनकेनात्रतपोवाकिमनुष्ठितम्
भगवत्यमलाभक्तिःकावाप्राक्समुपार्ज्जिता ३२
किंवास्मिन्दुर्लभंलोकेकिंवाकर्मशुभंमहत्
प्रसादस्त्वयियेनायंप्रपन्नेचमुदाकिल ३३
गूढातिगूढश्चानन्यलभ्योभगवताकृतः
नैतादृङ्मर्त्यलोकानांनचभूतलवासिनाम् ३४
स्वर्गिणांदेवतादीनांतपस्वीश्वरयोगिनाम्
भक्तानांनैवसर्वेषांनैवनैवचनैवच ३५
प्रसादस्तुकृतोवत्सतवविश्वात्मनायथा
तदेहिभजबुद्ध्वैवकुलकुंडंसरोमम ३६
सर्वकामप्रदादेवीत्वनयासहगम्यताम्
तत्रैवविधिवत्स्नात्वाद्रुतमागम्यतामिह ३७
तदैवतत्रगत्वासस्नात्वापार्थस्तथागतः
आगतंतंकृतस्नानंन्यासमुद्रार्पणादिकम् ३८
कारयित्वाततोदेव्यातस्यवैदक्षिणश्रुतौ
सद्यःसिद्धिकरीबालाविद्यानिगदितापरा ३९
हकारार्द्धपराद्वीपाद्वितीयाविश्वभूषिता
अनुष्ठानंचपूजांचजपंचलक्षसंख्यकम् ४०
कोरकैःकरवीराणांप्रयोगंचयथातथम्
निर्वर्त्यतमुवाचेदंकृपयापरमेश्वरी ४१
अनेनैवविधानेनक्रियतांमदुपासनम्
ततोमयिप्रसन्नायांतवानुग्रहकारणात् ४२
ततस्तुतत्रपर्य्यंतेष्वधिकारोभविष्यति
इत्ययंनियमःपूर्वंस्वयंभगवताकृतः ४३
श्रुत्वैवमर्जुनस्तेनवर्मणातांसमर्चयत्
ततःपूजांजपंचैवकृत्वादेवीप्रसादिता ४४
कृत्वाततःशुभंहोमंस्नानंचविधिनाततः
कृतकृत्यमिवात्मानंप्राप्तप्रायमनोरथम् ४५
करस्थांसर्वसिद्धिंचसपार्थःसममन्यत
अस्मिन्नवसरेदेवीतमागत्यस्मितानना ४६

उवाचगच्छवत्सत्वमधुनातद्गृहांतरे
ततःससंभ्रमःपार्थःसमुत्थायमुदान्वितः ४७
असंख्यहर्षपूर्णात्मादंडवत्तांननामह
आज्ञप्तस्तुतयासार्द्धंदेवीवयस्ययार्जुनः ४८
गतोराधापतिस्थानंयत्सिद्धैरप्यगोचरम्
ततश्चसउपादिष्टोगोलोकादुपरिस्थितम् ४९
स्थिरंवायुधृतंनित्यंसत्यंसर्वसुखास्पदम्
नित्यंवृंदावनंनामनित्यरासमहोत्सवम् ५०
अपश्यत्परमंगुह्यंपूर्णप्रेमरसात्मकम्
तस्याहिवचनादेवलोचनैर्वीक्ष्यतद्रहः ५१
विवशःपतितस्तत्रविवृद्धप्रेमविह्वलः
ततःकृच्छ्राल्लब्धसंज्ञोदोर्भ्यामुत्थापितस्तया ५२
सांत्वनावचनैस्तस्याःकथंचित्स्थैर्यमागतः
ततस्तपःकिमन्यन्मेकर्त्तव्यंविद्यतेवद ५३
इतितद्दर्शनोत्कंठाभरेणतरलोऽभवत्
ततस्तयाकरेतस्यधृत्वातत्पददक्षिणे ५४
प्रतिपेदेसुदेशेनगत्वाचोक्तमिदंवचः
स्नानायैतच्छुभंपार्थविशत्वंजलविस्तरम् ५५
सहस्रदलपद्मस्थसंस्थानंमध्यकोरकम्
चतुःसरश्चतुर्धारमाश्चर्यकुलसंकुलम् ५६
अस्यांतरेप्रविश्याथविशेषमिहपश्यसि
एतस्यदक्षिणेदेशएषचात्रसरोवरः ५७
मधुमाध्वीकपानंयन्नाम्नामलयनिर्झरः
एतच्चफुल्लमुद्यानंवसंतेमदनोत्सवम् ५८
कुरुतेयत्रगोविंदोवसंतकुसुमोचितम्
यत्रावतारंकृष्णस्यस्तुवंत्येवदिवानिशम् ५९
भवेद्यत्स्मरणादेवमुनेःस्वांतेस्मरांकुरः
ततोऽस्मिन्सरसिस्नात्वागत्वापूर्वसरस्तटम् ६०
उपस्पृश्यजलंतस्यसाधयस्वमनोरथम्
ततस्तद्वचनंश्रुत्वातस्मिन्सरसितज्जले ६१

कल्हारकुमुदांभोजरक्तनीलोत्पलच्युतैः
परागैरंजितेमंजुवासितेमधुबिंदुभिः ६२
तुंदिलेकलहंसादिनादैरांदोलितेततः
रत्नाबद्धचतुस्तीरेमंदानिलतरंगिते ६३
मग्नेजलांतःपार्थेतुतत्रैवांतर्दधेऽथसा
उत्थायपरितोवीक्ष्यसंभ्रांताचारुहासिनी ६४
सद्यःशुद्धस्वर्णरश्मिगौरकांततनूलताम्
स्फुरत्किशोरवर्षीयांशारदेंदुनिभाननाम् ६५
सुनीलकुटिलस्निग्धविलसद्रत्नकुंतलाम्
सिंदूरबिंदुकिरणप्रोज्ज्वलालकपट्टिकाम् ६६
उन्मीलद्भ्रूलताभंगिजितस्मरशरासनाम्
घनश्यामलसल्लोलखेलल्लोचनखंजनाम् ६७
मणिकुंडलतेजोंशुविस्फुरद्गंडमण्डलाम्
मृणालकोमलभ्राजदाश्चर्यभुजवल्लरीम् ६८
शरदंबुरुहांसर्वश्रीचौरपाणिपल्लवाम्
विदग्धरचितस्वर्णकटिसूत्रकृतांतराम् ६९
कूजत्कांचीकलापांतविभ्राजज्जघनस्थलाम्
भ्राजद्दुकूलसंवीतनितंबोरुसुमंदिराम् ७०
शिंजानमणिमंजीरसुचारुपदपंकजाम्
स्फुरद्विविधकंदर्पकलाकौशलशालिनीम् ७१
सर्वलक्षणसंपन्नांसर्वाभरणभूषिताम्
आश्चर्यललनाश्रेष्ठामात्मानंसव्यलोकयत् ७२
विसस्मारचयत्किंचित्पौर्वदेहिकमेवच
माययागोपिकाप्राणनाथस्यतदनंतरम् ७३
इतिकर्त्तव्यतामूढातस्थौतत्रसुविस्मिता
अत्रांतरेंऽबरेधीरध्वनिराकस्मिकोऽभवत् ७४
अनेनैवपथासुभ्रुगच्छपूर्वसरोवरम्
उपस्पृश्यजलंतस्यसाधयस्वमनोरथम् ७५
तत्रसंतिहिसख्यस्तेमासीदवरवर्णिनि
ताहिसंपादयिष्यंतितत्रैववरमीप्सितम् ७६

इतिदैवींगिरंश्रुत्वागत्वापूर्वसरोऽथसा
नानापूर्वप्रवाहंचनानापद्मिसमाकुलम् ७७
स्फुरत्कैरवकह्लारकमलेंदीवरादिभिः
भ्राजितंपद्मरागैश्चपद्मसोपानसत्तटम् ७८
विविधैःकुसुमोद्दामैर्मंजुकुंजलताद्रुमैः
विराजितचतुस्तीरमुपस्पृश्यस्थिताक्षणम् ७९
तत्रांतरेक्वणत्कांचीमंजुमंजीररंजितम्
किंकिणीनांझणत्कारंशुश्रावोत्कर्णसंपुटे ८०
ततश्चप्रमदावृंदमाश्चर्ययुतयौवनम्
आश्चर्यालंकृतिन्यासमाश्चर्याकृतिभाषितम् ८१
अद्भुतांगमपूर्वंसापृथगाश्चर्यविभ्रमम्
चित्रसंभाषणंचित्रहसितालोकनादिकम् ८२
मधुराद्भुतलावण्यंसर्वमाधुर्यसेवितम्
चिल्लावण्यगतानंतमाश्चर्याकुलसुंदरम् ८३
आश्चर्यस्निग्धसौंदर्यमाश्चर्यानुग्रहादिकम्
सर्वाश्चर्यसमुदयमाश्चर्यालोकनादिकम् ८४
दृष्ट्वातत्परमाश्चर्यंचिंतयंतीहृदाकियत्
पादांगुष्ठेनालिखंतीभुवंनम्राननास्थिता ८५
ततस्तासांसंभ्रमोऽभूद्दृष्टीनांचपरस्परम्
केयंमदीयजातीयाचिरेणानस्तकौतुका ८६
इतिसर्वाःसमालोक्यज्ञातव्येयमितिक्षणम्
आमंत्र्यमंत्रणाभिज्ञाःकौतुकाद्द्रष्टुमागताः ८७
आगत्यतासामेकाथनाम्नाप्रियमुदामता
गिरामधुरयाप्रीत्यातामुवाचमनस्विनी ८८
प्रियमुदोवाच-
कासित्वंकस्यकन्यासिकस्यत्वंप्राणवल्लभा
जाताकुत्रासिकेनास्मिन्नानीतावागतास्वयम् ८९
एतच्चसर्वमस्माकंकथ्यतांचिंतयाकिमु
स्थानेऽस्मिन्परमानंदेकस्यापिदुःखमस्तिकिम् ९०
इतिपृष्टातयासातुविनयावनतिंगता

उवाचसुस्वरंतासांमोहयंतीमनांसिच ९१
अर्जुनउवाच-
कावास्मिकस्यकन्यावाप्रजाताकस्यवल्लभा
आनीताकेनवाचात्रकिंवाथस्वयमागता ९२
एतत्किंचिन्नजानामिदेवीजानातुतत्पुनः
कथितंश्रूयतांतन्मेमद्वाक्येप्रत्ययोयदि ९३
अस्यैवदक्षिणेपार्श्वेएकमस्तिसरोवरम्
तत्राहंस्नातुमायाताजातातत्रैवसंस्थिता ९४
विषमोत्कंठितापश्चात्पश्यंतीपरितोदिशम्
एकमाकाशसंभूतंध्वनिमश्रौषमद्भुतम् ९५
अनेनैवपथासुभ्रुगच्छपूर्वसरोवरम्
उपस्पृश्यजलंतस्यसाधयस्वमनोरथम् ९६
तत्रसंतिहिसख्यस्तेमासीदवरवर्णिनि
ताहिसंपादयिष्यंतितत्रतेवरमीप्सितम् ९७
इत्याकरार्यवचस्तस्यतस्मादत्रसमागता
विषादहर्षपूर्णात्माचिंताकुलसमाकुला ९८
आगतास्यजलंस्पृष्ट्वानानाविधशुभध्वनिम्
अश्रौषंचततःपश्चादपश्यंभवतीःपराः ९९
एतन्मात्रंविजानामिकायेनमनसागिरा
एतदेवमयादेव्यःकथितंयदिरोचते १००
कायूयंतनुजाःकेषांक्वजाताःकस्यवल्लभाः
तच्छ्रुत्वावचनंतस्याःसावैप्रियमुदाब्रवीत् १०१
अस्त्वेवंप्राणसख्यःस्मतस्यैवचवयंशुभे
वृंदावनकलानाथविहारदारिकाःसुखम् १०२
ताआत्ममुदितास्तेनव्रजबालाइहागताः
एताःश्रुतिगणाःख्याताएताश्चमुनयस्तथा १०३
वयंबल्लवबालाहिकथितास्तेस्वरूपतः
अत्रराधापतेरंगात्पूर्वायाःप्रेयसीतमाः १०४
नित्यानित्यविहारिरायोनित्यकेलिभुवश्चराः
एषापूर्णरसादेवीएषाचरसमंथरा १०५

एषारसालयानामएषाचरसवल्लरी
रसपीयूषधारेयमेषारसतरंगिणी १०६
रसकल्लोलिनीचैषाइयंचरसवापिका
अनंगसेनाएषैवइयंचानंगमालिनी १०७
मदयंतीइयंबालाएषाचरसविह्वला
इयंचललितानामइयंललितयौवना १०८
अनंगकुसुमाचैषाइयंमदनमंजरी
एषाकलावतीनामइयंरतिकलास्मृता १०९
इयंकामकलानामइयंहिकामदायिनी
रतिलोलाइयंबालाइयंबालारतोत्सुका ११०
एषाचरतिसर्वस्वरतिचिंतामणिस्त्वसौ
नित्यानंदाःकाश्चिदेतानित्यप्रेमरसप्रदाः १११
अतःपरंश्रुतिगणास्तासांकाश्चिदिमाःशृणु
उद्गीतैषासुगीतेयंकलगीतात्वियंप्रिया ११२
एषाकलसुराख्याताबालेयंकलकंठिका
विपंचीयंक्रमपदाएषाबहुहुतामता ११३
एषाबहुप्रयोगेयंख्याताबहुकलाबला
इयंकलावतीख्यातामताचैषाक्रियावती ११४
अतःपरंमुनिगणास्तासांकतिपयाइह
इयमुग्रतपानामएषाबहुगुणास्मृता ११५
एषाप्रियव्रतानामसुव्रताचइयंमता
सुरेखेयंमताबालासुपर्वेयंबहुप्रदा ११६
रत्नरेखात्वियंख्यातामणिग्रीवात्वसौमता
सुपर्णाचेयमाकल्पासुकल्पारत्नमालिका ११७
इयंसौदामिनीसुभ्रूरियंचकामदायिनी
एषाचभोगदाख्याताइयंविश्वमतासती ११८
एषाचधारिणीधात्रीसुमेधाकांतिरप्यसौ
अपर्णेयंसुपर्णैषामतैषाचसुलक्षणा ११९
सुदतीयंगुणवतीचैषासौकलिनीमता
एषासुलोचनाख्याताइयंचसुमनाःस्मृता १२०

अश्रुताचसुशीलाचरतिसुखप्रदायिनी
अतःपरंगोपबालावयमत्रागतास्तुयाः १२१
तासांचपरिचीयंतांकाश्चिदंबुरुहानने
असौचंद्रावलीचैषाचंद्रिकेयंशुभामता १२२
एषाचंद्रावलीचंद्ररेखेयंचंद्रिकाप्यसौ
एषाख्याताचंद्रमालामताचंद्रालिकात्वियम् १२३
एषाचंद्रप्रभाचंद्रकलेयमबलास्मृता
एषावर्णावलीवर्णमालेयंमणिमालिका १२४
वर्णप्रभासमाख्यातासुप्रभेयंमणिप्रभा
इयंहारावलीतारामालिनीयंशुभामता १२५
मालतीयमियंयूथीवासंतीनवमल्लिका
मल्लीयंनवमल्लीयमसौशेफालिकामता १२६
सौगंधिकेयंकस्तूरीपद्मिनीयंकुमुद्वती
एषैवहिरसोल्लासाचित्रवृंदासमात्वियम् १२७
रंभेयमुर्वशीचैषासुरेखास्वर्णरेखिका
एषाकांचनमालेयंसत्यसंततिकापरा १२८
एताःपरिकृताःसर्वाःपरिचेयाःपराअपि
सहितास्माभिरेताभिर्विहरिष्यसिभामिनि १२९
एहिपूर्वसरस्तीरेतत्रत्वांविधिवत्सखि
स्नापयित्वाथदास्यामिमंत्रंसिद्धिप्रदायकम् १३०
इतितांसहसानीत्वास्नापयित्वाविधानतः
वृंदावनकलानाथप्रेयस्यामंत्रमुत्तमम् १३१
ग्राहयामाससंक्षेपाद्दीक्षाविधिपुरस्सरम्
परंवरुणबीजस्यवह्निबीजपुरस्कृतम् १३२
चतुर्थस्वरसंयुक्तंनादबिंदुविभूषितम्
पुटितंप्रणवाभ्यांचत्रैलोक्येचातिदुर्ल्लभम् १३३
मंत्रग्रहणमात्रेणसिद्धिःसर्वाप्रजायते
पुरश्चर्याविधिर्ध्यानंहोमसंख्याजपस्यच १३४
तप्तकांचनगौरांगींनानालंकारभूषिताम्
आश्चर्यरूपलावण्यांसुप्रसन्नांवरप्रदाम् १३५

कल्हारैःकरवीराद्यैश्चंपकैःसरसीरुहैः
सुगंधकुसुमैरन्यैःसौगंधिकसमन्वितैः १३६
पाद्यार्घ्याचमनीयैश्चधूपदीपैर्मनोहरैः
नैवेद्यैर्विविधैर्दिव्यैःसखीवृंदाहृतैर्मुदा १३७
संपूज्यविधिवद्देवींजप्त्वालक्षमनुंततः
हुत्वाचविधिनास्तुत्वाप्रणम्यदंडवद्भुवि १३८
ततःसासंस्तुतादेवीनिमेषरहितांतरा
परिकल्प्यनिजांछायांमाययात्मसमीहया १३९
पार्श्वेऽथप्रेयसींतत्रस्थापयित्वाबलादिव
सखीभिरावृताहृष्टाशुद्धैःपूजाजपादिभिः १४०
स्तवैर्भक्त्याप्रणामैश्चकृपयाविरभूत्तदा
हेमचंपकवर्णाभाविचित्राभरणोज्ज्वला १४१
अंगप्रत्यंगलावण्यलालित्यमधुराकृतिः
निष्कलंकशरत्पूर्णकलानाथशुभानना १४२
स्निग्धमुग्धस्मितालोकजगत्त्रयमनोहरा
निजयाप्रभयात्यंतंद्योतयंतीदिशोदश १४३
अब्रवीदथसादेवीवरदाभक्तवत्सला
देव्युवाच-
मत्सखीनांवचःसत्यंतेनत्वंमेप्रियासखी १४४
समुत्तिष्ठसमागच्छकामंतेसाधयाम्यहम्
अर्जुनीसावचोदेव्याःश्रुत्वाचात्ममनीषितम् १४५
पुलकांकुरमुग्धांगीबाष्पाकुलविलोचना
पपातचरणेदेव्याःपुनश्चप्रेमविह्वला १४६
ततःप्रियंवदांदेवींसमुवाचसखीमिमाम्
पाणौगृहीत्वामत्संगेसमाश्वास्यसमानय १४७
ततःप्रियंवदादेव्याआज्ञयाजातसंभ्रमा
तांतथैवसमादायसंगेदेव्याजगामह १४८
गत्वोत्तरसरस्तीरेस्नापयित्वाविधानतः
संकल्पादिकपूर्वंतुपूजयित्वायथाविधि १४९
श्रीगोकुलकलानाथमंत्रंतच्चसुसिद्धिदम्

ग्राहयामासतांदेवीकृपयाहरिवल्लभा १५०
व्रतंगोकुलनाथाख्यंपूर्वंमोहनभूषितम्
सर्वसिद्धिप्रदंमंत्रंसर्वतंत्रेषुगोपितम् १५१
गोविंदेरितविज्ञासौददौभक्तिमचंचलाम्
ध्यानंचकथितंतस्यैमंत्रराजंचमोहनम् १५२
उक्तंचमोहनेतंत्रेस्मृतिरप्यस्यसिद्धिदा
नीलोत्पलदलश्यामंनानालंकारभूषितम् १५३
कोटिकंदर्पलावरायंध्यायेद्रासरसाकुलम्
प्रियंवदामुवाचेदंरहस्यंपावनेच्छया १५४
श्रीराधिकोवाच–
अस्यायावद्भवेत्पूर्णंपुरश्चरणमुत्तमम्
तावद्धिपालयैनांत्वंसावधानासहालिभिः १५५
इत्युक्त्वासाययौकृष्णपादांबुरुहसन्निधिम्
छायामात्मभवामात्मप्रेयसीनांनिधायच १५६
तस्थौतत्रयथापूर्वंराधिकाकृष्णवल्लभा
अत्रप्रियंवदादेशात्पद्ममष्टदलंशुभम् १५७
गोरोचनाभिर्निर्मायकुंकुमेनापिचंदनैः
एभिर्नानाविधैर्द्रव्यैःसंमिश्रैःसिद्धिदायकम् १५८
लिखित्वायंत्रराजंचशुद्धंमंत्रंतमद्भुतम्
कृत्वान्यासादिकंपाद्यमर्घ्यंचापियथाविधि १५९
नानर्तुसंभवैःपुष्पैःकुंकुमैरपिचंदनैः
धूपदीपैश्चनैवेद्यैस्तांबूलैर्मुखवासनैः १६०
वासोलंकारमाल्यैश्चसंपूज्यनंदनंदनम्
परिवारैःसमंसर्वैःसायुधंचसवाहनम् १६१
स्तुत्वाप्रणम्यविधिवच्चेतसास्मरणंययौ
ततोभक्तिवशोदेवोयशोदानंदनःप्रभुः १६२
स्मितावलोकितापांगतरंगिततरेंगितम्
उवाचराधिकांदेवींतामानयइहाशुच १६३
आज्ञप्ताचैवसादेवीप्रस्थाप्यशारदांसखीम्
तामानिनायसहसापुरोवासुरसात्मनः १६४

श्रीकृष्णस्यपुरस्तात्सासमेत्यप्रेमविह्वला
पपातकांचनीभूमौपश्यंतीसर्वमद्भुतम् १६५
कृच्छ्रात्कथंचिदुत्थायशनैरुन्मील्यलोचने
स्वेदांभःपुलकोत्कंपभावभाराकुलासती १६६
ददर्शप्रथमंतत्रस्थलंचित्रंमनोरमम्
ततःकल्पतरुस्तत्रलसन्मरकतच्छदः १६७
प्रवालपल्लवैर्युक्तःकोमलोहेमदंडकः
स्फटिकप्रवालमूलश्चकामदःकामसंपदाम् १६८
प्रार्थकाभीष्टफलदस्तस्याधोरत्नमंदिरम्
रत्नसिंहासनंतत्रतत्राष्टदलपद्मकम् १६९
शंखपद्मनिधीतत्रसव्यापसव्यसंस्थितौ
चतुर्दिक्षुयथास्थानंसहिताःकामधेनवः १७०
परितोनंदनोद्यानंमलयानिलसेवितम्
ऋतूनांचैवसर्वेषांकुसुमानांमनोहरैः १७१
आमोदैर्वासितंसर्वंकालागुरुपराजितम्
मकरंदकणावृष्टिशीतलंसुमनोहरम् १७२
मकरंदरसास्वादमत्तानांभृंगयोषिताम्
वृंदशोभ्ंकृतैःशश्वच्चैवंमुखरितांतरम् १७३
कलकंठीकपोतानांसारिकाशुकयोषिताम्
अन्यासांपत्रिकांतानांकलनादैर्निनादितम् १७४
नृत्यैर्मत्तमयूराणामाकुलंस्मरवर्द्धनम्
रसांबुसेकसंसृष्टतमांजनतनुद्युतिम् १७५
सुस्निग्धनीलकुटिलकषायावासिकुंतलम्
मदमत्तमयूराद्यशिखंडाबद्धचूडकम् १७६
भृंगसेवितसव्योपक्रमपुष्पावतंसकम्
लोलालकालिविलसत्कपोलादर्शकाशितम् १७७
विचित्रतिलकोद्दामभालशोभाविराजितम्
तिलपुष्पपतंगेशचंचुमंजुलनासिकम् १७८
चारुबिंबाधरंमंदस्मितदीपितमन्मथम्
वन्यप्रसूनसंकाशग्रैवेयकमनोहरम् १७९

मदोन्मत्तभ्रमद्भृंगीसहस्त्रकृतसेवया
सुरद्रुमस्त्रजाराजन्मुग्धपीनांसकद्वयम् १८०
मुक्ताहारस्फुरद्वक्षःस्थलकौस्तुभभूषितम्
श्रीवत्सलक्षणंजानुलंबिबाहुमनोहरम् १८१
गंभीरनाभिपंचास्यमध्यमध्यातिसुंदरम्
सुजातद्रुमसद्वृत्तमदूरजानुमंजुलम् १८२
कंकणांगदमञ्जीरैर्भूषितंभूषणैःपरैः
पीतांशुकलयाविष्टनितंबघटनायकम् १८३
लावण्यैरपिसौंदर्यजितकोटिमनोभवम्
वेणुप्रवर्त्तितैर्गीतरागैरपिमनोहरैः १८४
मोहयंतंसुखांभोधौमज्जयंतंजगत्त्रयम्
प्रत्यंगमदनावेशधरंरासरसालसम् १८५
चामरंव्यजनंमाल्यंगंधंचंदनमेवच
तांबूलंदर्पणंपानपात्रंचर्वितपात्रकम् १८६
अन्यत्क्रीडाभवंयद्यत्तत्सर्वंचपृथक्पृथक्
रसालंविविधंयंत्रंकलयंतीभिरादरात् १८७
यथास्थाननियुक्ताभिःपश्यंतीभिस्तदिंगितम्
तन्मुखांभोजदत्ताक्षिचंचलाभिरनुक्रमात् १८८
श्रीमत्याराधिकादेव्यावामभागेससंभ्रमम्
आराधयंत्यातांबूलमर्पयंत्याशुचिस्मितम् १८९
समालोक्यार्जुनीयासौमदनावेशविह्वला
ततस्तांचतथाज्ञात्वाहृषीकेशोऽपिसर्ववित् १९०
तस्याःपाणिंगृहीत्वैवसर्वक्रीडावनांतरे
यथाकामंरहोरेमेमहायोगेश्वरोविभुः १९१
ततस्तस्याःस्कंधदेशेप्रदत्तभुजपल्लवः
आगत्यशारदांप्राहपश्चिमेऽस्मिन्सरोवरे १९२
शीघ्रंस्नापयतन्वंगींक्रीडाश्रांतांमृदुस्मिताम्
ततस्तांशारदादेवीतस्मिन्क्रीडासरोवरे १९३
स्नानंकुर्वित्युवाचैनांसाचश्रांतातथाकरोत्
जलाभ्यंतरमाप्तासौपुनरर्जुनतांगतः १९४

उत्तस्थौयत्रदेवेशःश्रीमद्वैकुंठनायकः
दृष्ट्वातमर्जुनंकृष्णोविषरणंभग्नमानसम् १९५
माययापाणिनास्पृष्ट्वाप्रकृतंविदधेपुनः
श्रीकृष्णउवाच-
धनंजयत्वामाशंसेभवान्प्रियसखोमम १९६
त्वत्समोनास्तिमेकोपिरहोवेत्ताजगत्त्रये
यद्रहस्यंत्वयापृष्टमनुभूतंचतत्पुनः १९७
कथ्यतेयदितत्कस्मैशपसेमांतदार्जुन
सनत्कुमारउवाच-
इतिप्रसादमासाद्यशपथैर्जातनिर्णयः १९८
ययौहृष्टमनास्तस्मात्स्वधामाद्भुतसंस्मृतिः
इतितेकथितंसर्वंरहोयद्गोचरंमम १९९
गोविंदस्यतथाचास्मैकथनेशपथस्तव
ईश्वरउवाच-
इतिश्रुत्वावचस्तस्यसिद्धिमौपगविर्गतः २००
नरनारायणावासंवृंदारण्यमुपाव्रजत्
तत्रास्तेऽद्यापिकृष्णस्यनित्यलीलाविहारवित् २०१
नारदेनापिपृष्टोऽहनाब्रवंतद्रहस्यकम्
प्राप्तंतथापितेनेदंप्रकृतित्वमुपेत्यच २०२
तुभ्यंयत्तुमयाप्रोक्तंरहस्यंस्नेहकारणात्
तन्नकस्मैचिदाख्येयंत्वयाभद्रेस्वयोनिवत् २०३
इमंश्रीभगवद्भक्तमहिमाध्यायमद्भुतम्
यःपठेच्छृणुयाद्वापिसरतिंविंदतेहरौ २०४
इति श्रीपद्मपुराणेपातालखंडेअर्जुन्यनुनयोनामचतुःसप्ततितमोऽध्यायः ७४

## पंचसप्ततितमोऽध्यायः

पार्वत्युवाच-
वृंदावनरहस्यंचबहुधाकथितंविभो
केनपुण्यविशेषेणनारदःप्रकृतिंगतः १
ईश्वरउवाच-

एकदाश्चर्यवृत्तांतंमयाजिज्ञासितंपुरा
ब्रह्मणाकथितंगुह्यंश्रुतंकृष्णमुखांबुजात् २
नारदःपृष्टवान्मह्यंतदाहंप्राप्तवानिदम्
अहंवक्तुंनशक्नोमितन्माहात्म्यंकथंचन ३
किंकुर्वेशपनंतस्यस्मृत्वासीदामिमानसे
इतिश्रुत्वाममवचोदुर्मनाःसोऽभवद्यदा ४
तदाब्रह्माणमाहूयअहमादिष्टवान्प्रिये
त्वयायत्कथितंमह्यंनारदायवदस्वतत् ५
ब्रह्मातदाममवचोनिशम्यसहनारदः
जगामकृष्णसविधंनत्वापृच्छत्तदेवतु ६
ब्रह्मोवाच–
किमिदंद्वात्रिंशद्वनंवृंदारण्यंविशांपते
श्रोतुमिच्छामिभगवन्यदियोग्योऽस्मिमेवद ७
श्रीभगवानुवाच–
इदंवृंदावनंरम्यंममधामैवकेवलम्
यत्रेमेपशवःसाक्षाद्वृक्षाःकीटानरामराः ८
येवसंतिममांत्येतेमृतायांतिममांतिकम्
अत्रयागोपपत्न्यश्चनिवसंतिममालये ९
योगिन्यस्तास्तुएवंहिममदेवाःपरायणाः
पंचयोजनमेवंहिवनंमेदेवरूपकम् १०
कालिंदीयंसुषुम्नाख्यापरमामृतवाहिनी
यत्रदेवाश्चभूतानिवर्त्तंतेसूक्ष्मरूपतः ११
सर्वतोव्यापकश्चाहंनत्यक्ष्यामिवनंक्वचित्
आविर्भावस्तिरोभावोभवेदत्रयुगेयुगे १२
तेजोमयमिदंस्थानमदृश्यंचर्मचक्षुषाम्
रहस्यंमेप्रभावंचपश्यवृंदावनंयुगे १३
ब्रह्मादीनांदेवतानांनदृश्यंतत्कथंचन
ईश्वरउवाच–
तच्छ्रुत्वानारदोनत्वाकृष्णंब्रह्माणमेवच १४
आजगामहभूर्लोकेमिश्रकंनैमिषंवनम्

तत्रासौसत्कृतश्चापिशौनकाद्यैर्मुनीश्वरैः १५
पृष्टश्चाप्यागतोब्रह्मन्कुतस्त्वमधुनावद
तच्छ्रुत्वानारदःप्राहगोलोकादागतोऽस्म्यहम् १६
श्रुत्वाकृष्णमुखांभोजाद्वृंदावनरहस्यकम्
नारदउवाच-
तत्रनानाविधाःप्रश्नाःकृताश्चैवपुनःपुनः १७
समस्तामनवस्तत्रयोगाश्चैवमयाश्रुताः
तानेवकथयिष्यामियथाप्रश्नंचतत्त्वतः १८
शौनकादयऊचुः -
वृंदारण्यरहस्यंहियदुक्तंब्रह्मणात्वयि
तदस्माकंसमाचक्ष्वयद्यस्मासुकृपातव १९
नारदउवाच-
कदाचित्सरयूतीरेदृष्टोऽस्माभिश्चगौतमः
मनस्वीचमहादुःखीचिंताकुलितचेतनः २०
मांदृष्ट्वागौतमोदेवःपपातधरणीतले
उत्तिष्ठवत्सवत्सेतितमुवाचाहमेवहि २१
कथंभवान्मनस्वीतिप्रोच्यतांयदिरोचते
गौतमउवाच-
श्रुतंतवमुखादेवकृष्णतत्त्वंचतादृशम् २२
द्वारकाख्यंमाथुराख्यंरहस्यंबहुशोमया
वृंदावनरहस्यंतुनश्रुतंत्वन्मुखांबुजात् २३
यतोमेमनसःस्थैर्य्यंभविष्यतिचसद्गुरो
नारदउवाच-
इदंतुपरमंगुह्यंरहस्यातिरहस्यकम् २४
पुरामेब्रह्मणाप्रोक्तंतादृग्वृंदावनोद्भवम्
रहस्यंवददेवेशवृंदारण्यस्यमेपितः २५
इतिजिज्ञासितंश्रुत्वाक्षणंमौनीसचाभवत्
ततोमाऽहमहाविष्णुंगच्छवत्सप्रभुंमम २६
मयापितत्रगंतव्यंत्वयासहनसंशयः
इत्युक्त्वामांगृहीत्वाचगतोविष्णोश्चधामनि २७

महाविष्णौचकथितंमयोक्तंयत्तदेवहि
तच्छ्रुत्वाचमहाविष्णुःस्वयंभुवमथादिशत् २८
त्वमेवादेशतोमह्यंनीत्वावैनारदंमुनिम्
स्नानायविनियुंक्ष्वामुंसरस्यमृतसंज्ञके २९
महाविष्णुसमादिष्टःस्वयंभूर्मांतथाकरोत्
तत्रामृतसरश्चाहंप्रविश्यस्नानमाचरम् ३०
तत्क्षणात्तत्सरःपारेयोषितांसविधेऽभवम्
सर्वलक्षणसपन्नायोषिद्रूपातिविस्मिता ३१
मांदृष्ट्वाताःसमायांतीमपृच्छंश्चमुहुर्मुहुः
स्त्रियऊचुः -
कात्वंकुतःसमायाताकथयात्मविचेष्टितम् ३२
तासांप्रियकथांश्रुत्वामयोक्तंतन्निशामय
कुतःकोऽहसमायातःकथंवायोषिदाकृतिः ३३
स्वप्नवद्दृश्यतेसर्वंकिंवामुग्धोऽस्मिभूतले
तच्छ्रुत्वामद्वचोदेवीप्रोवाचमधुरस्वनैः ३४
वृंदानाम्नीपुरीचेयंकृष्णचंद्रप्रियासदा
अहंचललितादेवीतुर्यातीताचनिष्कला ३५
इत्युक्त्वाचमहादेवीकरुणासांद्रमानसा
मांप्रत्याहपुनर्देवीसमागच्छमयासह ३६
अन्याश्चयोषितःसर्वाःकृष्णपादपरायणाः
ताश्चमांप्रवदंत्येवंसमागच्छानयासह ३७
ततोनुकृष्णचंद्रस्यचतुर्दशाक्षरोमनुः
कृपयाकथितस्तस्यादेव्याश्चापिमहात्मनः ३८
तत्क्षणादेवतत्साम्यमलभंविविधोपमा
ताभिःसहगतास्तत्रयत्रकृष्णःसनातनः ३९
केवलंसच्चिदानंदःस्वयंयोषिन्मयःप्रभुः
योषिदानंदहृदयोदृष्ट्वामांप्राब्रवीन्मुहुः ४०
समागच्छप्रियेकांतेभक्त्यामांपरिरंभय
रेमेवर्षप्रमाणेनतत्रचैवद्विजोत्तम ४१
तदोक्तंरमणेशेनतांदेवींराधिकांप्रति

इयंमेप्रकृतिस्तत्रचासीन्नारदरूपधृक् ४२
नीत्वामृतसरोरम्यंस्नानार्थंसंनियोजय
तयामेरमणस्यांतेगदितंप्रियभाषितम् ४३
अहंचललितादेवीराधिकायाचगीयते
अहंचवासुदेवाख्योनित्यंकामकलात्मकः ४४
सत्यंयोषित्स्वरूपोऽहयोषिच्चाहंसनातनी
अहंचललितादेवीपुंरूपाकृष्णविग्रहा ४५
आवयोरंतरंनास्तिसत्यंसत्यंहिनारद
एवंयोवेत्तिमेतत्त्वंसमयंचतथामनुम् ४६
ससमाचारसंकेतंललितावत्समेप्रियः
इदंवृंदावनंनामरहस्यंममवैगृहम् ४७
नप्रकाश्यंकदाकुत्रवक्तव्यंनपशौक्वचित्
ततोऽनुराधिकादेवीमांनीत्वातत्सरोवरे ४८
स्थित्वासाकृष्णचंद्रस्यचरणांतेगतापुनः
ततोनिमज्जनादेवनारदोऽहमुपागतः ४९
वीणाहस्तोगानपरस्तद्रहस्यंमुहुर्मुदा
स्वयंभुवंनमस्कृत्यतत्रागांविष्णुपार्षदम् ५०
स्वयंभुवातथादृष्टंनोक्तंकिंचित्तदापुनः
इतितेकथितंवत्ससुगोप्यंचमयात्वयि ५१
त्वयापिकृष्णचंद्रस्यकेवलंधामचित्कलम्
गोपनीयंप्रयत्नेनमातुर्जारइवप्रियम् ५२
यथाप्रोक्तंमयाशिष्येगौतमेसरहस्यकम्
तथाभवत्सुकात्स्न्येंनकथितंचातिगोपितम् ५३
यत्रकुत्रकदाचित्तुप्रकाश्यंमुनिपुंगवाः
तदाशापोभवेद्विप्राःकृष्णचंद्रस्यनिश्चितम् ५४
इमंकृष्णस्यलीलाभिर्युतमध्यायमुत्तमम्
यःपठेच्छृणुयाद्वापिसयातिपरमंपदम् ५५

इति श्रीपद्मपुराणेपातालखंडेवृंदावनमाहात्म्ये
नारदीयानुनयेपंचसप्तिततमोऽध्यायः ७५

षट्सप्ततितमोऽध्यायः

ईश्वरउवाच-

अत्रशिशुपालंनिहतंश्रुत्वादंतवक्त्रःकृष्णेनयोद्धुंमथुरामाजगाम १

कृष्णस्तुतच्छ्रुत्वारथमारुह्यतेनसहमथुरामाययौ २

अथतंहत्वायमुनामुत्तीर्यनंदव्रजंगत्वापितरावभिवाद्याश्वास्यताभ्यामालिगितः सकल
गोपवृद्धान्परिष्वज्यतानाश्वास्यबहुवस्त्राभरणादिभिस्तत्रस्थान्सर्वान्संतर्पयामास ३

कालिद्याःपुलिनेरम्येपुरायवृत्तसमाकीर्णेगोपस्त्रीभिरहर्निशंक्रीडासुखेनत्रिरात्रंतत्रसमुवास ४

तत्रस्थलेनंदगोपादयःसर्वेजनाःपुत्रदारसहिताःपशुपत्तिमृगादयोऽपिवासुदे-
वप्रसादेन-
दिव्यरूपधराविमानसमारूढाःपरमंलोकंवैकुंठमवापुः ५

श्रीकृष्णस्तुनंदगोपव्रजौकसांसर्वेषांनिरामयंस्वपदंदत्वादेवगणैःस्तूयमानः
श्रीमतींद्वारावतींविवेश ६

तत्रवसुदेवोग्रसेनसंकर्षणप्रद्युम्नानिरुद्धाक्रूरादिभिः
प्रत्यहंसंपूजितःषोडशसहस्राष्टाधिकमहिषीभिश्चविश्वरूपधरोदिव्यरत्नमयलतागृहांतरे-
षुसुरतरुकुसुमाचितश्लक्ष्णतरपर्यंकेषुरमयामास ७

एवंहितार्थायसर्वदेवानांसमस्तभूभारविनाशाययदुवंशेऽवतीर्यसकलरात्तसविनाशंकृतमहांतमुर्वीभारंनाशयित्वानंदव्रजद्वारिकावासिनःस्थावरजंगमान्भवबंधनान्मोचयित्वा-
परमेशाश्वतेयोगिध्येयेरम्येधाम्निसंस्थाप्यनित्यंदिव्यमहिष्यादिभिःसंसेव्यमानोवासुदेवोऽखिलेषूवाच ८

असीदव्याकृतंब्रह्मकरकाघृतयोरिव
प्रकृतिस्थोगुणान्मुक्तोद्रवीभूत्वादिवंगतः ९

इति श्रीपद्मपुराणेपातालखंडेवृंदावनमहात्म्येपार्वती-
शिवसंवादेषट्सप्ततितमोऽध्यायः ७६

सप्तसप्ततितमोऽध्यायः

पार्वत्युवाच-

विस्तरेणसमाचक्ष्वनामार्थपदगौरवम्

ईश्वरस्यस्वरूपंचतत्स्थानानांविभूतयः १

तद्विष्णोःपरमंधामव्यूहभेदास्तथाहरेः

निर्वाणाख्याहितत्त्वेनममसर्वंसुरेश्वर २

ईश्वरउवाच-

सारेवृंदावनेकृष्णंगोपीकोटिभिरावृतम्

तत्रगंगापराशक्तिस्तत्स्थमानंदकाननम् ३

नानासुकुसुमामोदसमीरसुरभीकृतम्

कलिदतनयादिव्यतरंगरागशीतलम् ४

सनकाद्यैर्भागवतैःसंसृष्टंमुनिपुंगवैः

आह्लादिमधुरारावैर्गोवृंदैरभिमंडितम् ५

रम्यस्त्रग्भूषणोपेतैर्नृत्यद्भिर्बालकैर्वृतम्

तत्रश्रीमान्कल्पतरुर्जांबूनदपरिच्छदः ६

नानारत्नप्रवालाढ्योनानामणिफलोज्ज्वलः

तस्यमूलेरत्नवेदीरत्नदीधितिदीपिता ७

तत्रत्रयीमयंरत्नसिंहासनमनुत्तमम्

तत्रासीनंजगन्नाथंत्रिगुणातीतमव्ययम् ८

कोटिचंद्रप्रतीकाशंकोटिभास्करभास्वरम्

कोटिकंदर्पलावण्यंभासयन्तंदिशोदश ९

त्रिनेत्रंद्विभुजंगौरंतप्तजांबूनदप्रभम्

श्लिष्यमाणमंगनाभिःसदामानंचसर्वशः १०

ब्रह्माद्यैःसनकाद्यैश्चध्येयंभक्तवशीकृतम्

सदाघूर्णितनेत्राभिर्नृत्यंतीभिर्महोत्सवैः ११

चुंबंतीभिर्हसंतीभिःश्लिष्यंतीभिर्मुहुर्मुहुः

अवाप्तगोपीदेहाभिःश्रुतिभिःकोटिकोटिभिः १२

तत्पादांबुजमाध्वीकचित्ताभिःपरितोवृतम्

तासांतुमध्येयादेवीतप्तचामीकरप्रभा १३

द्योतमानादिशःसर्वाःकुर्वतीविद्युदुज्ज्वलाः

प्रधानंयाभगवतीययासर्वमिदंततम् १४
सृष्टिस्थित्यंतरूपायाविद्याविद्यात्रयीपरा
स्वरूपाशक्तिरुपाचमायारूपाचचिन्मयी १५
ब्रह्मविष्णुशिवादीनांदेहकारणकारणम्
चराचरंजगत्सर्वंयन्मायापरिरंभितम् १६
वृंदावनेश्वरीनाम्नाराधाधात्रानुकारणात्
तामालिंग्यवसंतंतंमुदावृंदावनेश्वरम् १७
अन्योन्यचुंबनाश्लेषमदावेशविघूर्णितम्
ध्यायेदेवंकृष्णदेवंसचसिद्धिमवाप्नुयात् १८
मंत्रराजमिमंगुह्यंतस्यमंत्रंचमंत्रवित्
योजपेच्छृणुयाद्वापिसमहात्मासुदुर्ल्लभः १९
राधिंकाचित्ररेखाचचंद्रामदनसुंदरी
श्रीप्रियाश्रीमधुमतीशशिरेखाहरिप्रिया २०
सुवर्णशोभासंमोहाप्रेमरोमांचराजिता
वैवर्ण्यस्वेदसंयुक्ताभावासक्ताप्रियंवदा २१
सुवर्णमालिनीशांतासुरासरसिकातथा
सर्वस्त्रीजीवनादीनवत्सलाविमलाशया २२
निपीतनामपीयूषासाराधापरिकीर्तिता
सुदीर्घस्मितसंयुक्तातप्तचामीकरप्रभा २३
मूर्च्छत्प्रेमनदीराधावरणालोचनांजना
मायामात्सर्यसंयुक्तादानसाम्राज्यजीवना २४
सुरतोत्सवसंग्रामाचित्ररेखाप्रकीर्तिता
गौरांगीनातिदीर्घाचसदावादनतत्परा २५
दैन्यानुरागनटनामूर्च्छारोमांचविह्वला
हरिदक्षिणपार्श्वस्थासर्वमंत्रप्रियातथा २६
अनंगलोभमाधुर्याचंद्रासापरिकीर्तिता
सलीलमंथरगतिर्मंजुमुद्रितलोचना २७
प्रेमधारोज्ज्वलाकीर्णादलितांजनशोभना
कृष्णानुरागरसिकारासध्वनिसमुत्सुका २८
अहंकारसमायुक्तामुखनिंदितचंद्रमाः

मधुरालापचतुराजितेंद्रियशिरोमणिः २९
सुंदरस्मितसंयुक्तासावैमदनसुंदरी
विविक्तरासरसिकाश्यामाश्याममनोहरा ३०
प्रेम्णाप्रेमकटाक्षेणहरेश्चित्तविमोहनी
जितेंद्रियाजितक्रोधासाप्रियापरिकीर्तिता ३१
सुतप्तस्वर्णगौरांगीलीलागमनसुंदरी
स्मरोत्थप्रेमरोमांचवैचित्रमधुराकृतिः ३२
सुंदरस्मितसंयुक्तमुखनिंदितचंद्रमाः
मधुरालापचतुराजितेंद्रियशिरोमणिः ३३
कीर्तितासामधुमतीप्रेमसाधनतत्परा
संमोहज्वररोमांचप्रेमधारासमन्विता ३४
दानधूलिविनोदाचरासध्वनिमहानटी
शशिरेखाचविज्ञेयागोपालप्रेयसीसदा ३५
कृष्णात्मासोत्तमाश्यामामधुपिंगललोचना
तत्पादप्रेमसंमोहात्क्वचित्पुलकचुंबिता ३६
शिवकुंडेशिवानंदानंदिनीदेहिकातटे
रुक्मिणीद्वारवत्यांतुराधावृंदावनेवने ३७
देवकीमथुरायांतुजातामेपरमेश्वरी
चंद्रकूटेतथासीताविंध्येविंध्यनिवासिनी ३८
वाराणस्यांविशालाक्षीविमलापुरुषोत्तमे
वृंदावनाधिपत्यंचदत्तंतस्यैप्रसीदता ३९
कृष्णेनान्यत्रदेवीतुराधावृंदावनेवने
नित्यानंदतनुःशौरिर्योऽशरीरीतिभाष्यते ४०
वाय्वग्निनाकभूमीनामंगाधिष्ठितदेवता
निरूप्यतेब्रह्मणोऽपितथागोविंदविग्रहः ४१
सेंद्रियोऽपियथासूर्यस्तेजसानोपलक्ष्यते
तथाकांतियुतःकृष्णःकालंमोहयतिध्रुवम् ४२
नतस्यप्राकृतीमूर्तिर्मेदोमांसास्थिसंभवा
योगीचैवेश्वरश्चान्यःसर्वात्मानित्यविग्रहः ४३
काठिन्यंदेवयोगेनकरकाघृतयोरिव

कृष्णस्यामिततत्त्वस्यपादपृष्ठंनदेवता ४४
वृंदावनरजोवृंदेतत्रस्युर्विष्णुकोटयः
आनंदकिरणेवृंदव्याप्तविश्वकलानिधिः ४५
गुणात्मतात्मनियथाजीवास्तत्किरणांगकाः
भुजद्वयवृतःकृष्णोनकदाचिच्चतुर्भुजः ४६
गोप्यैकयावृतस्तत्रपरिक्रीडतिसर्वदा
गोविंदएवपुरुषोब्रह्माद्याःस्त्रियएवच ४७
ततएवस्वभावोयंऽप्रकृतेर्भावईश्वरः
पुरुषःप्रकृतिश्चाद्यौराधावृंदावनेश्वरौ ४८
प्रकृतेर्विकृतंसर्वंविनावृंदावनेश्वरम् ४९
समुद्भवेनैवसमुद्भवेदिदंभेदंगतंतस्यविनाशतोहि
स्वर्णस्यनाशोनहिविद्यतेतथामत्स्यादिनाशेऽपिनकृष्णविच्युतिः ५०
त्रिगुणादिप्रपंचोऽयवृंदावनविहारिणः
ऊर्म्मीवाब्धेस्तरंगस्ययथाब्धिर्नैवजायते ५१
नराधिकासमानारीनकृष्णसदृशःपुमान्
वयःपरंनकैशोरात्स्वभावःप्रकृतेःपरः ५२
ध्येयंकैशोरकंध्येयंवनंवृंदावनंवनम्
श्याममेवपरंरूपमादिदेवंपरोरसः ५३
बाल्यंपंचमवर्षांतंपौगंडंदशमावधि
अष्टपंचककैशोरंसीमापंचदशावधि ५४
यौवनोद्भिन्नकैशोरंनवयौवनमुच्यते
तद्वयस्तस्यसर्वस्वंप्रपंचमितरद्वयः ५५
बाल्यपौगंडकैशोरंवयोवंदेमनोहरम्
बालगोपालगोपालंस्मरगोपालरूपिणम् ५६
वंदेमदनगोपालंकैशोराकारमद्भुतम्
यमाहुर्यौवनोद्भिन्नश्रीमन्मदनमोहनम् ५७
अखंडातुलपीयूषरसानंदमहार्णवम्
जयतिश्रीपतेर्गूढंवपुःकैशोररूपिणः ५८
एकमप्यव्ययंपूर्वंबल्लवीवृंदमध्यगम्
ध्यानगम्यंप्रपश्यंतिरुचिभेदात्पृथग्धियः ५९

यन्नखेंदुरुचिर्ब्रह्मध्येयंब्रह्मादिभिःसुरैः
गुणत्रयमतीतंतंवंदेवृंदावनेश्वरम् ६०
वृंदावनपरित्यागोगोविंदस्यनविद्यते
अन्यत्रयद्वपुस्तत्तुकृत्रिमंतन्नसंशयः ६१
सुलभंव्रजनारीणांदुर्ल्लभंतन्मुमुक्षुणाम्
तंभजेनंदसूनुंयन्नखतेजःपरंमनुः ६२
पार्वत्युवाच
भुक्तिमुक्तिस्पृहायावत्पिशाचीहृदिवर्त्तते
तावत्प्रेमसुखस्यात्रकथमभ्युदयोभवेत् ६३
ईश्वरउवाच-
साधुपृष्टंत्वयाभद्रेयन्मेमनसिवर्त्तते
तत्सर्वंकथयिष्यामिसावधानानिशामय ६४
स्मृत्वागुणान्स्मरन्नामगानंवामनरंजनम्
बोधयत्यात्मनात्मानंसततंप्रेम्णिलीयते ६५

इति श्रीपद्मपुराणेपातालखंडेवृंदावनमाहात्म्येपार्वतीशिवसंवादे श्रीकृष्णरूपवर्णनंनामसप्तसप्ततितमोऽध्यायः ७७

## अष्टसप्ततितमोऽध्यायः

पार्वत्युवाच-
वैष्णवानांचयद्धर्मंसर्वंतथ्यंचमेवद
यत्कृत्वामानवाःसर्वेभवांभोधिंतरंतिहि १
ईश्वरउवाच-
अथद्वादशधाशुद्धिर्वैष्णवानामिहोच्यते
गृहोपलेपनंचैवतथानुगमनंहरेः २
भक्त्याप्रदक्षिणाचैवपादयोःशोधनंपुनः
पूजार्थंपत्रपुष्पाणांभक्त्यैवोत्तोलनंहरेः ३
करयोःसर्वशुद्धीनामियंशुद्धिर्विशिष्यते
तन्नामकीर्तनंचैवगुणानामपिकीर्त्तनम् ४
भक्त्याश्रीकृष्णदेवस्यवचसःशुद्धिरिष्यते
तत्कथाश्रवणंचैवतस्योत्सवनिरीक्षणम् ५

श्रोत्रयोर्नेत्रयोश्चैवशुद्धिःसम्यगिहोच्यते
पादोदकंचनिर्माल्यंमालानामपिधारणम् ६
उच्यतेशिरसःशुद्धिःप्रणतस्यहरेःपुरः
आघ्राणंतस्यपुष्पादेर्निर्माल्यस्यतथाप्रिये ७
विशुद्धिःस्यादंतरस्यघ्राणस्यापिविधीयते
यत्रपुष्पादिकंयच्चकृष्णपादयुगार्पितम् ८
तदेकंपावनंलोकेतद्धिसर्वंविशोधयेत्
पूजाचपंचधाप्रोक्तातासांभेदंशृणुष्वमे ९
अभिगमनमुपादानंयोगःस्वाध्यायएवच
इज्यापंचप्रकारार्चाक्रमेणकथयामिते १०
तत्वाभिगमनंनामदेवतास्थानमार्जनम्
उपलेपंचनिर्माल्यदूरीकरणमेवच ११
उपादानंनामगंधपुष्पादिचयनंतथा
योगोनामस्वदेवस्यस्वात्मनैवात्मभावना १२
स्वाध्यायोनाममंत्रार्थानुसंधापूर्वकोजपः
सूक्तस्तोत्रादिपाठश्चहरेःसंकीर्त्तनंतथा १३
तत्त्वादिशास्त्राभ्यासश्चस्वाध्यायःपरिकीर्तितः
इज्यानामस्वदेवस्यपूजनंचयथार्थतः १४
इतिपंचप्रकारार्चाकथितातवसुव्रते
सार्ष्टिसामीप्यसालोक्यसायुज्यसारूप्यदाक्रमात् १५
प्रसंगात्कथयिष्यामिशालग्रामशिलार्चनम्
केशवादेश्चतुर्बाहोर्दक्षिणोर्ध्वकरक्रमात् १६
शंखचक्रगदापद्मीकेशवाख्योगदाधरः
नारायणःपद्मगदाचक्रशंखायुधैःक्रमात् १७
माधवश्चक्रशंखाभ्यांपद्मेनगदयाभवेत्
गदाब्जशंखचक्रीचगोविंदाख्योगदाधरः १८
पद्मशंखारिगदिनेविष्णुरूपायतेनमः
सशंखाब्जगदाचक्रमधुसूदनमूर्तये १९
नमोगदारिशंखाब्जयुक्तत्रिविक्रमायच
सारिकौमोदकीपद्मशंखवामनमूर्त्तये २०

चक्राब्जशंखगदिनेनमःश्रीधरमूर्त्तये
हृषीकेशसारिगदाशंखपद्मिन्नमोस्तुते २१
साब्जशंखगदाचक्रपद्मनाभस्वमूर्त्तये
दामोदरशंखगदाचक्रपद्मिन्नमोस्तुते २२
शंखाब्जचक्रगदिनेनमःसंकर्षणायच
सारिशंखगदाब्जायवासुदेवनमोस्तुते २३
शंखचक्रगदाब्जायधृतप्रद्युम्नमूर्त्तये
नमोऽनिरुद्धायगदाशंखाब्जारिविधारिणे २४
साब्जशंखगदाचक्रपुरुषोत्तममूर्त्तये
नमोऽधोक्षजरूपायगदाशंखारिपद्मिने २५
नृसिंहमूर्त्तयेपद्मगदाशंखारिधारिणे
पद्मारिशंखगदिनेनमोस्त्वच्युतमूर्त्तये २६
सगदाब्जारिशंखायनमःश्रीकृष्णमूर्त्तये
शालग्रामशिलाद्वारगतलग्नद्विचक्रधृक् २७
शुक्लाभरेखःशोभाढ्यःसदेवःश्रीगदाधरः
लग्नद्विचक्रोरक्ताभःपूर्वभागस्तुपुष्कलः २८
संकर्षणोऽथप्रद्युम्नःसूक्ष्मचक्रस्तुपीतकः
सुदीर्घसुषिरच्छिद्रोह्यनिरुद्धस्तुवर्त्तुलः २९
नीलोद्वारेत्रिरेखश्चअथनारायणोऽसितः
मध्येगदाकृतीरेखानाभिपद्मंमहोन्नतम् ३०
पृथुचक्रोनृसिंहोयःकपिलोयस्त्रिबिंदुकः
अथवापंचबिंदोस्तुपूजनंब्रह्मचारिणः ३१
वराहःसत्रिलिगोयोविषमद्वयचक्रकः
नीलस्त्रिरेखःस्थूलोऽथकूर्ममूर्तिःसबिंदुकः ३२
कृष्णःसवर्तुलावर्त्तपांडुरोधृतपृष्ठकः
श्रीधरःपंचरेखश्चवनमालीगदांकितः ३३
वामनोवर्तुलोनाममध्यचक्रःसनीलकः
नानावर्णानेकमूर्तिनागभोगीत्वनंतकः ३४
स्थूलोदामोदरोनीलोमध्येचक्रःसनीलकः
संकर्षणद्वारकोव्यादथब्रह्मासुलोहितः ३५

सुदीर्घरेखासुषिरएकचक्रांबुजःपृथुः
पृथुचक्रःस्थूलछिद्रःकृष्णोबिंदुश्चबिंदुमान् ३६
हयग्रीवोंऽकुशाकारःपंचरेखःसकौस्तुभः
वैकुंठोमल्लवद्भातिएकचक्रमयोसितः ३७
मत्स्योदीर्घांबुजाकारोदीर्घरेखश्चपांडुरः
रामचक्रोदक्षरेखोयःश्यामःसत्रिविक्रमः ३८
शालग्रामद्वारकायांस्थितायगदिनेनमः
एकेनलक्षितोयोव्याद्गदाधारीसुदर्शनः ३९
लक्ष्मीनारायणोद्वाभ्यांत्रिभिश्चैवत्रिविक्रमः
चतुर्भिश्चचतुर्व्यूहोवासुदेवश्चपंचभिः ४०
प्रद्युम्नःषड्भिरेवाव्यात्संकर्षणश्चसप्तभिः
पुरुषोत्तमोऽष्टभिश्चस्यान्नवव्यूहोनवोहितः ४१
दशावतारोदशभिरनिरुद्धोऽवतादथ
द्वादशात्माद्वादशभिरतऊद्ध्वंमनंतकः ४२
ब्रह्माचतुर्मुखोदंडीकमंडलुस्त्रगुन्नतः
महेश्वरःपंचवक्त्रोदशबाहुर्वृषध्वजः ४३
यथायुधस्तथागौरीचंडिकाचसरस्वती
महालक्ष्मीर्मातरश्चपद्महस्तोदिवाकरः ४४
गजास्यश्चगजस्कंधःषरामुखोनेकधागणाः
एतेस्थिताःस्थापितास्युःप्रसादेवाथपूजिताः ४५
धर्मार्थकाममोक्षाहिप्राप्यंतेपुरुषेणच ४६

इति श्रीपद्मपुराणेपातालखंडेशालग्रामनिर्णयो-
नामाष्टसप्ततितमोऽध्यायः ७८

## नवसप्ततितमोऽध्यायः

ईश्वरउवाच-
शालग्रामेमणौयंत्रेमंडलेप्रतिमासुच
नित्यंतुश्रीहरेःपूजाकेवलेभवनेनतु १
गंडक्यामेकदेशेतुशालग्रामस्थलंमहत्
पाषाणंतद्भवंपातुशालग्राममितिस्थितम् २

शालग्रामशिलास्पर्शात्कोटिजन्माघनाशनम्
किंपुनःपूजनंतत्रहरेःसांनिध्यकारणम् ३
शालग्रामैकयजनाच्छतलिंगीफलंलभेत्
बहुभिर्जन्मभिःपुण्यैर्यदिकृष्णशिलांलभेत् ४
गोष्पदेनचचिह्नेनजनुस्तेनसमाप्यते
आदौशिलांपरीक्षेतस्निग्धांश्रेष्ठांचमेचकाम् ५
आकृष्णामध्यमाप्रोक्तामिश्रामिश्रफलप्रदा
सदाकाष्ठेस्थितोवह्निर्मथनेनप्रकाश्यते ६
यथातथाहरिर्व्यापीशालग्रामेप्रतीयते
प्रत्यहंद्वादशशिलाःशालग्रामस्ययोऽचयेत् ७
द्वारवत्याःशिलायुक्ताःसवैकुंठेमहीयते
शालग्रामशिलायांतुगह्वरंलक्षतेनरः ८
पितरस्तस्यतिष्ठंतितृप्ताःकल्पांतकंदिवि
वैकुंठभवनंतत्रयत्रद्वारावतीशिला ९
मृतोविष्णुपुरंयातितत्तीर्थंयोजनत्रयम्
जपःपूजाचहोमश्चसर्वंकोटिगुणंभवेत् १०
मनस्कामसमाभीष्टंक्रोशमात्रंनसंशयः
कीटकोऽपिमृतिंयातिवैकुंठभवनंयतः ११
शालग्रामशिलायांयोमूल्यमुद्घाटयेन्नरः
विक्रेताचानुमंताचयःपरीक्षानुमोदकः १२
सर्वेतेनरकंयांतियावत्सूर्यश्चसंप्लवः
अतस्तद्वर्जयेद्देविचक्रक्रयणविक्रयम् १३
शालग्रामोद्भवोदेवोयोदेवोद्वारकोद्भवः
उभयोःसंगमोयत्रमुक्तिस्तत्रनसंशयः १४
द्वारकोद्भवचक्राढ्योबहुचक्रेणचिह्नितः
चक्रासनशिलाकारचित्स्वरूपोनिरंजनः १५
नमोऽस्त्वोंकाररूपायसदानंदस्वरूपिणे
शालग्राममहाभागभक्तस्यानुग्रहंकुरु १६
तवानुग्रहकामस्यऋणग्रस्तस्यमेप्रभो
अतःपरंप्रवक्ष्यामितिलकस्यविधिंमुदा १७

यच्छ्रुत्वामानवाःसर्वेविष्णुसारूप्यमाप्नुयुः
ललाटेकेशवंविद्यात्कंठेश्रीपुरुषोत्तमम् १८
नाभौनारायणंदेवंवैकुंठंहृदयेतथा
दामोदरंवामपार्श्वेदक्षिणेचत्रिविक्रमम् १९
मूर्ध्निचैवहृषीकेशंपद्मनाभंचपृष्ठतः
कर्णयोर्यमुनांगंगांबाह्वोःकृष्णंहरिंतथा २०
यथास्थानेषुतुष्यंतिदेवताद्वादशस्मृताः
द्वादशैतानिनामानिकर्तव्येतिलकेपठेत् २१
सर्वपापविशुद्धात्माविष्णुलोकंसगच्छति
ऊर्द्ध्वपुंड्रमूर्द्ध्वरेखंललाटेयस्यदृश्यते २२
चांडालोऽपिसशुद्धात्मापूज्यएवनसंशयः
यस्योर्द्ध्वपुंड्रंदृश्येतनललाटेनरस्यहि २३
तद्दर्शनंनकर्त्तव्यंदृष्ट्वासूर्यंनिरीक्षयेत्
त्रिपुंड्रंयस्यविप्रस्यऊर्द्ध्वपुंड्रंनदृश्यते २४
तंदृष्ट्वाप्यथवास्पृष्ट्वासचैलंस्नानमाचरेत्
सांतरालंप्रकर्त्तव्यंपुंड्रंहरिपदाकृति २५
निरंतरालंयःकुर्यादूर्द्ध्वपुंड्रंद्विजाधमः
ललाटेतस्यसततंशुनःपादोनसंशयः २६
नासादिकेशपर्यंतमूर्द्ध्वपुंड्रंसुशोभनम्
मध्येछिद्रसमायुक्तंतंविद्याद्धरिमंदिरम् २७
वामभागेस्थितोब्रह्मादक्षिणेतुसदाशिवः
मध्येविष्णुंविजानीयात्तस्मान्मध्यंनलेपयेत् २८
वीक्ष्यादर्शेजलेवापियोविदध्यात्प्रयत्नतः
ऊर्द्ध्वपुंड्रंमहाभागःसयातिपरमांगतिम् २९
अग्निरापश्चवेदाश्चचंद्रादित्यौतथानिलः
विप्राणांनित्यमेतेहिकर्णेतिष्ठंतिदक्षिणे ३०
गंगाचदक्षिणेश्रोत्रेनासिकायांहुताशनः
उभयोरपिसंस्पर्शात्तत्क्षणादेवशुध्यति ३१
कृत्वाचैवोदकंशंखेवैष्णवानांमहात्मनाम्
तुलसीमिश्रितंदद्यात्पिबेन्मूर्ध्नाभिवंदयेत् ३२

प्राश्नीयात्प्रोक्षयेद्देहंपुत्रमित्रपरिग्रहम्
विष्णोःपादोदकंपीतंकोटिजन्माघनाशनम् ३३
तदेवाष्टगुणंपापंभूमौबिंदुनिपातनात्
जलशंखंकरेकृत्वास्तुत्वानत्वाप्रदक्षिणम् ३४
सततंधार्यतेवारितेनाप्तंजन्मनःफलम्
शंखोयस्यगृहेनास्तिघंटावागरुडान्विता ३५
पुरतोवासुदेवस्यनसभागवतःकलौ
यानैर्वापादुकाभिर्वायानंभगवतोगृहे ३६
देवोत्सवेष्वसेवाचअप्रणामस्तदग्रतः
उच्छिष्टेचैवचाशौचेभगवद्वंदनादिकम् ३७
एकहस्तप्रणामश्चतत्पुरस्तात्प्रदक्षिणम्
पादप्रसारणंचाग्रेतथापर्यंकसेवनम् ३८
शयनंभक्षणंचापिमिथ्याभाषणमेवच
उच्चैर्भाषामिथोजल्पोरोदनानिचविग्रहः ३९
निग्रहानुग्रहौचैवस्त्रीषुचक्रूरभाषणम्
केवलावरणंचैवपरनिंदापरस्तुतिः ४०
अश्लीलभाषणंचैवअधोवायुविमोक्षणम्
शक्तौगौणोपचारश्चअनिवेदितभक्षणम् ४१
तत्तत्कालोद्भवानांचफलादीनामनर्पणम्
विनियुक्तावशिष्टस्यप्रदानंव्यंजनस्ययत् ४२
स्पष्टीकृत्याशनंचैवपरनिंदापरस्तुतिः
गुरौमौनंनिजस्तोत्रंदेवतानिंदनंतथा ४३
अपराधास्तथाविष्णोर्द्वात्रिंशत्परिकीर्तिताः ४४
अपराधसहस्राणिक्रियंतेऽहर्निशंमया
तवाहमितिमांमत्वाक्षमस्वमधुसूदन ४५
इतिमंत्रंसमुच्चार्यप्रणमेद्दंडवद्भुवि
अपराधसहस्राणिक्षमतेसर्वदाहरिः ४६
सायंप्रातर्द्विजातीनांश्रुत्युक्तमशनंतथा
विष्णुभक्तावशिष्टस्यदिनपापात्प्रमुच्यते ४७
अन्नंब्रह्मारसोविष्णुःखादयेन्मांसमुच्चरन्

एवंज्ञात्वातुयोभुंक्तेसोऽन्नदोषैर्नलिप्यते ४८
अलाबुंवर्त्तुलाकारंमसूरंचसवल्कलम्
तालंशुक्लंचवृंताकंनखादेद्वैष्णवोनरः ४९
वटाश्वत्थार्कपत्रेषुकुंभीतिंदुकपत्रयोः
कोविदारेकदंबेचनखादेद्वैष्णनोनरः ५०
श्रावणेवर्जयेच्छाकंदधिभाद्रपदेत्यजेत्
आश्विनेमासिदुग्धंचकार्त्तिकेचामिषंत्यजेत् ५१
दग्धमन्नंतुजंबीरंयद्विष्णोरनिवेदितम्
बीजपूरंचशाकंचप्रत्यक्षलवणंतथा ५२
यदिदैवाच्चभुंजीततदातन्नामसंस्मरेत्
हैमंतिकंसितास्विन्नंधान्यंमुद्गास्तिलायवाः ५३
कलापकंगुनीवाराःशाकंचहिलमोचिका
कालशाकंचवास्तूकंमूलकंरक्तकेतरत् ५४
लवणेसिंधुसामुद्रेगव्येचदधिसर्पिषी
पयोनुद्धृतसारंचपनसाम्रहरीतकी ५५
पिप्पलीजीरकंचैवनागरंगकतिंतिडी
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ५६
अतैलपक्वंमुनयोहविष्यान्नंप्रचक्षते
तुलसीपत्रपुष्पाद्यैर्माल्यंवहतियोनरः ५७
विष्णुंतमपिजानीयात्सत्यंसत्यंनसंशयः
धात्रीवृक्षंसमारोप्यविष्णुतुल्योभवेन्नरः ५८
कुरुक्षेत्रंविजानीयात्सार्द्धंहस्तशतत्रयम्
तुलसीकाष्ठघटितैरुद्राक्षाकारकारितैः ५९
निर्मितांमालिकांकंठेनिधायार्चनमारभेत्
तथामलकमालांचसम्यक्पुष्करमालिकाम् ६०
कंठेमालांचयत्नेनधारयेद्विष्णुपूजकः
निर्माल्यंतुलसीमालांशिरस्यपिचधारयेत् ६१
निर्माल्यचंदनेनांगमंकयेत्तस्यनामभिः
ललाटेचगदाधार्यामूर्ध्निचापंशरस्तथा ६२
नंदकंचैवहृन्मध्येशंखंचक्रंभुजद्वये

शंखचक्रान्वितोविप्रःश्मशानेम्रियतेयदि ६३
प्रयागेयागतिःप्रोक्तासागतिस्तस्यनिश्चिता
योधृत्वातुलसीपत्रंशिरसाविष्णुतत्परः ६४
करोतिसर्वकार्याणिफलमाप्नोतिचाक्षयम्
तुलसीकाष्ठमालाभिर्भूषितःकर्मआचरन् ६५
पितॄणांदेवतानांचकृतंकोटिगुणंभवेत्
निवेद्यकेशवेमालांतुलसीकाष्ठनिर्मिताम् ६६
वहतेयोनरोभक्त्यातस्यनश्यतिपातकम्
पाद्यादिभिरथाभ्यर्च्यइमंमंत्रमुदीरयेत् ६७
यादृष्टानिखिलाघसंघशमनीस्पृष्टावपुःपावनी
रोगाणामभिवंदितानिरसनीसिक्तांतकत्रासिनी
प्रत्यासत्तिविधायिनीभगवतःकृष्णस्यसंरोपिता
न्यस्तातच्चरणेविमुक्तिफलदातस्यैतुलस्यैनमः ६८

इति श्रीपद्मपुराणेपातालखंडेवृंदावनमाहात्म्येदेवीश्वरसंवादे
तिलकादिनिर्णयोनामनवसप्ततितमोऽध्यायः ७९

## अशीतितमोऽध्यायः

पार्वत्युवाच-
घोरेकलियुगेप्राप्तेविषयग्राहसंकुले
पुत्रदारधनाद्यार्तैस्तत्कथंधार्यतेविभो १
तदुपायंमहादेवकथयस्वकृपानिधे
ईश्वरउवाच-
हरेर्नामहरेर्नामहरेर्नामैवकेवलम् २
हरेरामहरेकृष्णकृष्णकृष्णेतिमंगलम्
एवंवदंतियेनित्यंनहितान्बाधतेकलि ३
अंतरांतरकर्माणिकृत्वानामानिचस्मरेत्
कृष्णकृष्णेतिकृष्णेतिकृष्णेत्याहपुनःपुनः ४
मन्नामचैवत्वन्नामयोजयित्वाव्यतिक्रमात्
सोऽपिपापात्प्रमुच्येततूलराशेरिवानलः ५
जयाद्येतत्त्वयावाप्यथवाश्रीशब्दपूर्वकम्

तच्चमेमंगलंनामजपन्पापात्प्रमुच्यते ६
दिवानिशिचसंध्यायांसर्वकालेषुसंस्मरेत्
अहर्निशंस्मरन्रामंकृष्णंपश्यतिचक्षुषा ७
अशुचिर्वाशुचिर्वापिसर्वकालेषुसर्वदा
नामसंस्मरणादेवसंसारान्मुच्यतेक्षणात् ८
नानापराधयुक्तस्यनामापिचहरत्यघम्
यज्ञव्रततपोदानंसांगंनैवकलौयुगे ९
गंगास्नानंहरेर्नामनिरपायमिदंद्वयम् १०
हत्यायुतंपापसहस्रमुग्रंगुर्वंगनाकोटिनिषेवणंच
स्तेयान्यथान्यानिहरेःप्रियेणगोविंदनाम्नानचसंतिभद्रे ११
अपवित्रःपवित्रोवासर्वावस्थांगतोऽपिवा
यःस्मरेत्पुंडीकाक्षंसबाह्याभ्यंतरःशुचिः १२
नामसंस्मरणादेवतथातस्यार्थचिंतनात्
सौवर्णींराजतींवापितथापैष्टींस्त्रगाकृतिम् १३
पादयोश्चिह्नितांकृत्वापूजांचैवसमारभेत्
दक्षिणस्यपदोंगुष्ठमूलेचक्रंबिभर्तियः १४
तत्रनम्रजनस्यापिसंसारच्छेदनायच
मध्यमांगुलिमूलेतुधत्तेकमलमच्युतः १५
ध्यातृचित्तद्विरेफाणांलोभनायातिशोभनम्
पद्मस्याधोध्वजंधत्तेसर्वानर्थजयध्वजम् १६
कनिष्ठामूलतोवज्रंभक्तपापौघभेदनम्
पार्श्वमध्येंऽकुशंभक्तचित्तेरभसकारणम् १७
भोगसंपन्मयंधत्तेयवमंगुष्ठपर्वणि
मूलेगदांचपापाद्रिभेदनींसर्वदेहिनाम् १८
सर्वविद्याप्रकाशायधत्तेसभगवानजः
पद्मादीन्यपिचिह्नानितत्रदक्षेणयत्पुनः १९
वामपादेवसेत्सोऽयबिभर्त्तिकरुणानिधिः
तस्माद्गोविंदमाहात्म्यमानंदरससुंदरम् २०
शृणुयात्कीर्त्तयेन्नित्यंसनिर्मुक्तोनसंशयः
मासकृत्यंप्रवक्ष्यामिविष्णोःप्रीतिकरंपरम् २१

ज्येष्ठेतुस्नापनंकुर्याच्छ्रीविष्णोर्यत्नतःशुचिः
दैनंदिनंतुदुरितंपक्षमासर्त्तुवर्षजम् २२
ब्रह्महत्यासहस्राणिज्ञाताज्ञातकृतानिच
स्वर्णस्तेयसुरापानगुरुतल्पायुतानिच २३
कोटिकोटिसहस्राणिह्युपपापानियानिच
सर्वाण्यथप्रणश्यंतिपौर्णमास्यांतुवासरे २४
आसिंचेदच्युतंमूर्ध्नितदैतत्कलशोदकम्
पुरुषसूक्तेनमंत्रेणपावमानीभिरेवच २५
नालिकेरोदकेनाथतथातालफलांबुना
रत्नोदकेनगंधेनतथापुष्पोदकेनच २६
पंचोपचारैराराध्ययथाविभवविस्तरैः
घंघंटायैनमइतिघंटावाद्यंप्रदापयेत् २७
पतितस्यमहाध्वानन्यस्तपातकसंचये
पाहिमांपापिनंघोरसंसारार्णवपातिनम् २८
यएवंकुरुतेविद्वान्ब्राह्मणःश्रोत्रियःशुचिः
सर्वपापैःप्रमुच्येतविष्णुलोकंसगच्छति २९
आषाढशुक्लैकादश्यांकुर्यात्स्वापमहोत्सवम्
आषाढेचरथंकुर्याच्छ्रावणेश्रवणाविधिम् ३०
भाद्रेचजन्मदिवसउपवासपरोभवेत्
प्रसुप्तस्यपरीवर्तमाश्विनेमासिकारयेत् ३१
उत्थानंश्रीहरेःकुर्यादन्यथाविष्णुद्रोहकृत्
शुभेचैवाश्विनेमासिमहामायांचपूजयेत् ३२
सौवर्णींराजतींवापिविष्णुरूपांबलिविना
हिंसाद्वेषौनकर्तव्यौधर्मात्माविष्णुपूजकः ३३
कार्तिकेपुष्यमासेचकामतःपुण्यमाचरेत्
दामोदरायदीपंचप्रांशुस्थानेप्रदापयेत् ३४
सप्तवर्तिप्रमाणेनदीपःस्याच्चतुरंगुलः
पक्षांतेचप्रकर्तव्यादीपमालावलिशुभा ३५
मार्गशीर्षेसितेपक्षेषष्ठ्यांचसितवस्त्रकैः
पूजयेज्जगदीशंचब्रह्माणंचविशेषतः ३६

पौषेपुष्पाभिषेकंचवर्जयेच्चंदनंश्लथम्
संक्रांत्यांमाघमासेचसाधिवासिततंडुलात् ३७
नैवेद्यंविष्णवेदद्यादिमंमंत्रमुदीरयेत्
ब्राह्मणान्भोजयेद्भक्त्यादेवदेवपुरःस्थितान् ३८
अभ्यर्च्यभगवद्भक्तान्द्विजांश्चभगवद्धिया
एकस्मिन्भोजितेभक्तेकोटिर्भवतिभोजिता ३९
विप्रभोजनमात्रेणव्यंगंसांगंध्रुवंभवेत्
पंचम्यांशुक्लपक्षेतुस्नापयित्वाचकेशवम् ४०
पूजयित्वाविधानेनचूतपल्लवसंयुतैः
फलचूर्णैश्चविविधैर्वासितैःपटसाधितैः ४१
काननंरमणीयंचप्रदीप्तंदीपदीपितम्
द्राक्षेक्षुरंभाजंबीरनागरंगंचपूगकम् ४२
नालिकेरंचधात्रींचपनसंचहरीतकीम्
अन्यैश्चवृक्षखंडैश्चसर्वर्तुकुसुमान्वितैः ४३
अन्यैश्चविविधैश्चैवफलपुष्पसमन्वितैः
वितानैःकुसुमोद्दामैर्वारिपूर्णघटैस्तथा ४४
चूतशाखोपशाखाभिःशोभितंछत्रचामरैः
जयकृष्णेतिसंस्मृत्यप्रदक्षिणपुरस्सरम् ४५
विशेषतःकलियुगेदोलोत्सवोविधीयते
फाल्गुनेचचतुर्दश्यामष्टमेयामसंज्ञके ४६
अथवापौर्णमास्यांतुप्रतिपत्संधिसंज्ञके
पूजयेद्विधिवद्भक्त्याफल्गुचूर्णैश्चतुर्विधैः ४७
सितरक्तैर्गौरपीतैःकर्पूरादिविमिश्रितैः
हरिद्रारागयोगाच्चरंगरूपैर्मनोहरैः ४८
अन्यैर्वारंगरूपैश्चप्रीणयेत्परमेश्वरम्
एकादश्यांसमारभ्यपंचम्यांतंसमापयेत् ४९
पंचाहानित्र्यहानिवादोलोत्सवोविधीयते
दक्षिणाभिमुखंकृष्णंदोलमानंसकृन्नराः ५०
दृष्ट्वापराधनिचयैर्मुक्तास्तेनात्रसंशयः
निक्षिप्यजलपात्रेचमासिमाधवसंज्ञके ५१

सौवर्णपात्रेरौप्येवाताम्रेवाप्यथमृरामये
तोयस्थंयोऽचयेद्देवंशालग्रामसमुद्भवम् ५२
प्रतिमांवामहाभागेतस्यपुरायंनगरायते
दमनारोपणंकृत्वाश्रीविष्णौचसमर्पयेत् ५३
वैशाखेश्रावणेभाद्रेकर्तव्यंवातदर्पणम्
पूर्वेपूर्वेतुवातस्थेदमनादिषुकर्मसु ५४
प्रकर्तव्यंविधानेनअन्यथानिष्फलंभवेत्
वैशाखेचतृतीयायांजलमध्येविशेषतः ५५
अथवामंडलेकुर्यान्मंडपेवाबृहद्वने
सुगंधचंदनेनांगंसुपुष्टंचदिनेदिने ५६
यथाप्रयत्नतःकुर्यात्कृशांगस्येवपुष्टिदम्
चंदनागुरुह्रीबेरकृष्णकुंकुमरोचना ५७
जटामांसीमुराचैवविष्णोर्गंधाष्टकंविदुः
तैस्तैर्गंधयुतैश्चापिविष्णोरंगानिलेपयेत् ५८
धृष्टंचतुलसीकाष्ठंकर्पूरागुरुयोगतः
अथवाकेसरैर्योज्यंहरिचंदनमुच्यते ५९
यात्राकालेचयेकृष्णंभक्त्यापश्यंतिमानवाः
नतेषांपुनरावृत्तिःकल्पकोटिशतैरपि ६०
सुगंधमिश्रितैस्तोयैर्देवदेवंगलंतिये
अथवापुष्पमध्येतुस्थापयेज्जगदीश्वरम् ६१
वृंदावनंतत्रगत्वाउपस्कृत्यफलानिच
विष्णुभक्तेनयोग्येनभोजयेत्तदशेषतः ६२
नारिकेलफलंबीजकोशंचोद्धृत्यदापयेत्
घोंटाफलंचपनसंकोशमुद्धृत्यदापयेत् ६३
दध्नाविमिश्रितंचान्नंघृतेनाप्लुत्यदापयेत्
पाचितंपिष्टकंपूपमष्टादशघृतेनच ६४
तैलैश्चैतिलसंमिश्रैःफलंपक्वंप्रदापयेत्
यद्यदेवात्मनःप्रीतंतत्तदीशायदापयेत् ६५
दत्वानैवेद्यवस्त्रादिनाददीतकथंचन
त्यक्तंचविष्णुमुद्दिश्यतद्भक्तेभ्योविशेषतः ६६

इतितेकथितंकिंचित्समासेनमहेश्वरि
गोपनीयंप्रयत्नेनस्वयोनिरिवपार्वति ६७
श्रीकृष्णरूपगुणवर्णनशास्त्रवर्गबोधाधिकारइहचेदलमन्यपाठैः
तत्प्रेमभावरसभक्तिविलासनामहारेषुचेत्खलुमनःकिमुकामिनीभिः ६८
तच्चेतसाप्रभजतांव्रजबालकेंद्रंवृंदावनक्षितितलंयमुनाजलंच
तल्लोकनाथपदपंकजधूलिमिश्रलिप्तंवपुःकिलवृथागरुचंदनाद्यैः ६९
इति श्रीपद्मपुराणेपातालखंडेउमामहेश्वरसंवादेवृंदावन-
माहात्म्येऽशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

ऋषयऊचु-
सूतजीवचिरंसाधोश्रीकृष्णचरितामृतम्
त्वयाप्रकाशितंसर्वंभक्तानांभवतारणम् १
श्रीकृष्णलीलांनिखिलांब्रूहिदैनंदिनींप्रभो
ययाकर्णितयासाधोकृष्णेभक्तिर्विवर्द्धते २
गुरोःशिष्यस्यमंत्रस्यविधानंलक्षणंपृथक्
वदास्माकंमहाभागत्वंहिनःपरमःसुहृत् ३
सूतउवाच-
एकदायमुनातीरेसमासीनंजगद्गुरुम्
नारदःप्रणिपत्याहदेवदेवंसदाशिवम् ४
नारदउवाच-
देवदेवमहादेवसर्वज्ञजगदीश्वर
भगवद्धर्मतत्त्वज्ञकृष्णमंत्रविदांवर ५
कृष्णमंत्रामयालब्धास्त्वत्तोयेचपितुःपरे
तेसर्वेसाधितास्तत्वान्मंत्रराजादयोमया ६
बहुवर्षसहस्रैस्तुशाकमूलफलाशिना
शुष्कपर्णांबुवाय्वादिभोजिनाचनिराशिना ७
स्त्रीणांसंदर्शनालापवर्जिनाभूमिशायिना
कामादिषड्गुणंजित्वाबाह्येंद्रियनियम्यता ८
एवंकृतेऽपिनैवात्मासंतुष्टोममशंकर

तद्ब्रूहियत्प्रसिध्येतसंस्काराद्यैर्विनाप्रभो ९
सकृदुच्चारणादेवददातिफलमुत्तमम्
यदियोग्योऽस्मिदेवेशतदामेकृपयावद १०
शिवउवाच-
साधुपृष्टंमहाभागत्वयालोकहितैषिणा
सुगोप्यमपिवक्ष्यामिमंत्रचिंतामणिंतव ११
रहस्यानांरहस्यंयद्गुह्यानांगुह्यमुत्तमम्
नमयाकथितंदेव्यैनाग्रजेभ्यःपुरातव १२
वक्ष्यामियुगलंतुभ्यंकृष्णमंत्रमनुत्तमम्
मंत्रचिंतामणिर्नामयुगलंद्वयमेवच १३
पर्यायाअस्यमंत्रस्यतथापंचपदीतिच
गोपीजनपदंवल्लभांतंतुचरणानिति १४
शरणंचप्रपद्येचएषपंचपदात्मकः
मंत्रचिंतामणिःप्रोक्तःषोडशार्णोमहामनुः १५
नमोगोपीजनेत्युक्त्वावल्लभाभ्यांवदेत्ततः
पदद्वयात्मकोमंत्रोदशार्णःखलुकथ्यते १६
एतांपंचपदींजप्त्वाश्रद्धयाश्रद्धयासकृत्
कृष्णप्रियाणांसान्निध्यंगच्छत्येवनसंशयः १७
नपुरश्चरणप्रेक्षानास्यन्यासविधिक्रमः
नदेशकालनियमोनारिमित्रादिशोधनम् १८
सर्वेऽधिकारिणश्चात्रचंडालांतामुनीश्वर
स्त्रियःशूद्रादयश्चापिजडमूकादिपंगवः १९
अन्येहूणाःकिराताश्चपुलिंदाःपुष्कसास्तथा
आभीरायवनाःकंकाःखसाद्याःपापयोनयः २०
दंभाहंकारपरमाःपापाःपैशुन्यतत्पराः
गोब्राह्मणादिहंतारोमहोपपातकान्विताः २१
ज्ञानवैराग्यरहिताःश्रवणादिविवर्जिताः
एतेचान्येचसर्वेस्युर्मनोरस्याधिकारिणः २२
यदिभक्तिर्भवेदेषांकृष्णेसर्वेश्वरेश्वरे
तदाधिकारिणःसर्वेनान्यथामुनिसत्तम २३

याज्ञिकोदाननिरतःसर्वतंत्रोपसेवकः
सत्यवादीयतिर्वापिवेदवेदांगपारगः २४
ब्रह्मनिष्ठःकुलीनोवातपस्वीव्रततत्परः
अत्राधिकारीनभवेत्कृष्णभक्तिविवर्जितः २५
तस्मादकृष्णभक्तायकृतघ्नायनमानिने
नचश्रद्धाविहीनायवक्तव्यंनास्तिकायच २६
नचाशुश्रूषवेवाच्यंनासंवत्सरसेविने
श्रीकृष्णेऽनन्यभक्तायदंभलोभविवर्जिने २७
कामक्रोधविमुक्तायदेयमेतत्प्रयत्नतः
ऋषिश्चैवाहमेतस्यगायत्रीछंदउच्यते २८
देवताबल्लवीकांतोमंत्रस्यपरिकीर्तितः
सप्रियस्यहरेर्दास्येविनियोगउदाहृतः २९
आचक्राद्यैस्तथामंत्रैःपंचांगानिप्रकल्पयेत्
अथवापिस्वबीजेनकरांगन्यासकौचरेत् ३०
मंत्रस्यप्रथमोवर्णोबिंदुनामूर्ध्निभूषितः
गमित्येवंभवेद्बीजंनमःशक्तिरिहोदिता ३१
अंतिमार्णैर्दशांगानितैरेवचतथार्चनम्
गंधपुष्पादिभिस्तच्चजलैरेवाप्यसंभवे ३२
न्यासपूर्वविधानेनकर्तव्यंहरितुष्टये
अतएवास्यमंत्रस्यन्यासाद्यन्येवदंतिच ३३
सकृदुच्चारणादेवकृतकृत्यत्वदायिनः
तथापिदशधानित्यंजपाद्यर्थंप्रविन्यसेत् ३४
अथध्यानंप्रवक्ष्यामिमंत्रस्यास्यद्विजोत्तम
पीतांबरंघनश्यामंद्विभुजंवनमालिनम् ३५
बर्हिबर्हकृतोत्तंसंशशिकोटिनिभाननम्
घूर्णायमाननयनंकर्णिकारावतंसिनम् ३६
अभितश्चंदनेनाथमध्येकुंकुमबिंदुना
रचितंतिलकंभालेबिभ्रतंमंडलाकृतिम् ३७
तरुणादित्यसंकाशंकुंडलाभ्यांविराजितम्
घर्माम्बुकणिकाराजद्दर्पणाभकपोलकम् ३८

प्रियास्यन्यस्तनयनंलीलापांगोन्नतभ्रुवम्
अग्रभागन्यस्तमुक्ताविस्फुरत्प्रोच्चनासिकम् ३९
दशनज्योत्स्नयाराजत्पक्वबिंबफलाधरम्
केयूरांगदसद्रत्नमुद्रिकाभिर्लसत्करम् ४०
बिभ्रतंमुरलद्यंवामेपाणौपद्मंतथैवच
कांचीदामस्फुरन्मध्यंनूपुराभ्यांलसत्पदम् ४१
रतिकेलिरसावेशचपलंचपलेक्षणम्
हसंतंप्रिययासार्द्धंहासयंतंचतांमुहुः ४२
इत्थंकल्पतरोर्मूलेरत्नसिंहासनोपरि
वृंदारण्येस्मरेत्कृष्णंसंस्थितंप्रिययासह ४३
वामपार्श्वेस्थितांतस्यराधिकांचस्मरेत्ततः
नीलचोलकसंवीतांतप्तहेमसमप्रभाम् ४४
पट्टांचलेनावृतार्द्धसुस्मेराननपंकजाम्
कांतवक्त्रेन्यस्तनेत्रांचकोरीचंचलेक्षणाम् ४५
अंगुष्ठतर्जनीभ्यांचनिजकांतमुखांबुजे
अर्पयंतींपूगफलंपर्णचूर्णसमन्वितम् ४६
मुक्ताहारस्फुरच्चारुपीनोन्नतपयोधराम्
क्षीणमध्यांपृथुश्रोणींकिंकिणीजालमंडिताम् ४७
रत्नताटंककेयूरमुद्रावलयधारिणीम्
रणत्कटकमंजीररत्नपादांगुलीयकाम् ४८
लावण्यसारमुग्धांगींसर्वावयवसुंदरीम्
आनंदरससंमग्नांप्रसन्नांनवयौवनाम् ४९
सख्यश्चतस्याविप्रेंद्रतत्समानवयोगुणाः
तत्सेवनपराभाव्याश्चामरव्यजनादिभिः ५०
अथतुभ्यंप्रवक्ष्यामिमंत्रार्थंशृणुनारद
बहिरंगैःप्रपंचस्यस्वांशैर्मायादिशक्तिभिः ५१
अंतरंगैस्तथानित्यविभूतैस्तैश्चिदादिभिः
गोपनादुच्यतेगोपीराधिकाकृष्णवल्लभा
देवीकृष्णमयीप्रोक्ताराधिकापरदेवता ५२
सर्वलक्ष्मीस्वरूपासाकृष्णाह्लादस्वरूपिणी

ततःसाप्रोच्यतेविप्रह्लादिनीतिमनीषिभिः ५३
तत्कलाकोटिकोट्यंशदुर्गाद्यास्त्रिगुणात्मिकाः
सातुसाक्षान्महालक्ष्मीःकृष्णोनारायणःप्रभुः ५४
नैतयोर्विद्यतेभेदःस्वल्पोऽपिमुनिसत्तम
इयंदुर्गाहरीरुद्रःकृष्णःशक्रइयंशची ५५
सावित्रीयंहरिर्ब्रह्माधूमोर्णासौयमोहरिः
बहुनाकिंमुनिश्रेष्ठविनाताभ्यांनकिंचन ५६
चिदचिल्लक्षणंसर्वंराधाकृष्णमयंजगत्
इत्थंसर्वंतयोरेवविभूतिंविद्धिनारद ५७
नशक्यतेमयावक्तुंवर्षकोटिशतैरपि
त्रैलोक्येपृथिवीमान्याजंबूद्वीपंततोवरम् ५८
तत्रापिभारतंवर्षंतत्रापिमथुरापुरी
तत्रवृंदावनंनामतत्रगोपीकदंबकम् ५९
तत्रराधासखीवर्गस्तत्रापिराधिकावरा
सांनिध्याधिक्यतस्तस्याआधिक्यंस्याद्यथोत्तरम् ६०
पृथिवीप्रभृतीनांतुनान्यत्किंचिदिहोदितम्
सैषाहिराधिकागोपीजनस्तस्याःसखीगणः ६१
तस्याःसखीसमूहस्यवल्लभौप्राणनायकौ
राधाकृष्णौतयोःपादाःशरणंस्यादिहाश्रये ६२
प्रपद्येगतवानस्मिजीवोऽहभृशदुःखितः
सोऽहयःशरणंप्राप्तोममतस्ययदस्तिच ६३
सर्वंताभ्यांतदर्थंहितद्भोग्यंनह्यहंमम
इत्यसौकथितोविप्रमंत्रस्यार्थःसमासतः ६४
युगलार्थस्तथान्यासःप्रपत्तिःशरणागतिः
आत्मार्पणमिमेपंचपर्यायास्तेमयोदिताः ६५
अयमेवचिंतनीयोदिवानक्तमतंद्रितैः ६६

इति श्रीपद्मपुराणेपातालखंडेवृंदावनमाहात्म्ये
एकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

शिवउवाच-
अथदीक्षाविधिंवक्ष्येशृणुनारदतत्त्वतः
श्रवणादेवमुच्येतविनातस्यविधानतः १
आविरंच्याज्जगत्सर्वंविज्ञायनश्वरंबुधः
आध्यात्मिकादित्रिविधदुःखमेवानुभूयच २
अनित्यत्वाच्चसर्वेषांसुखानांमुनिसत्तम
दुःखपक्षेविनिक्षिप्यतानितेभ्योविवर्जितः ३
विरज्यसंसृतेर्हानौसाधनानिविचिंतयेत्
अनुत्तमसुखस्यापिसंप्राप्तौभृशनिर्वृतः ४
नराणांदुष्करत्वंहिविज्ञायचमहामतिः
भृशमार्त्तस्ततोविप्रमांगुरुंशरणंव्रजेत् ५
शांतोविमत्सरःकृष्णेभक्तोऽनन्यप्रयोजनः
अनन्यसाधनःश्रीमान्कामलोभविवर्जितः ६
श्रीकृष्णरसतत्त्वज्ञःकृष्णमंत्रविदांवरः
कृष्णमंत्राश्रयोनित्यंमंत्रभक्तःसदाशुचिः ७
सद्धर्मशासकोनित्यंसदाचारनियोजकः
संप्रदायीकृपापूर्णोविरागीगुरुरुच्यते ८
एवमादिगुणःप्रायःशुश्रूषुर्गुरुपादयोः
गुरौनितांतभक्तश्चमुमुक्षुःशिष्यउच्यते ९
यत्साक्षात्सेवनंतस्यप्रेम्णाभागवतोभवेत्
समोक्षःप्रोच्यतेप्राज्ञैर्वेदवेदांगवेदिभिः १०
आश्रित्यस्वगुरोःपादौनिजवृत्तंनिवेदयेत्
ससंदेहानपाकृत्यबोधयित्वापुनःपुनः ११
स्वपादप्रणतंशांतंशुश्रूषुंनिजपादयोः
अतिहृष्टमनाःशिष्यंमनुमध्यापयेत्परम् १२
चंदनेनमृदावापिविलिखेद्बाहुमूलयोः
वामदक्षिणयोर्विप्रशंखचक्रेयथाक्रमम् १३
ऊर्ध्वपुंड्रंततःकुर्याद्भालादिषुविधानतः
ततोमंत्रद्वयंतस्यदक्षकर्णेविनिर्दिशेत् १४

मंत्रार्थंचवदेत्तस्मैयथावदनुपूर्वशः
दासशब्दयुतंनामधार्यंतस्यप्रयत्नतः १५
ततोऽतिभक्त्यासस्नेहंवैष्णवान्भोजयेद्बुधः
श्रीगुरुंपूजयेच्चापिवस्त्रालंकरणादिभिः १६
सर्वस्वंगुरवेदद्यात्तदर्द्धंवामहामुने
स्वदेहमपिनिक्षिप्यगुरौस्थेयमकिंचनैः १७
यएतैःपंचभिर्विद्वान्संस्कारैःसंस्कृतोभवेत्
दास्यभागीसकृष्णस्यनान्यथाकल्पकोटिभिः १८
अंकनंचोद्ध्र्वपुंड्रश्चमंत्रोनामविधारणम्
पंचमोयागइत्युक्ताःसंस्काराःपूर्वसूरिभिः १९
अंकनंशंखचक्राद्यैःसच्छिद्रंपुंड्रमुच्यते
दासशब्दयुतंनाममंत्रोयुगलसंज्ञकः २०
गुरुवैष्णवयोःपूजायागइत्यभिधीयते
एतेपरमसंस्कारामयातेपरिकीर्तिताः २१
अथतुभ्यंप्रपन्नानांधर्मान्वक्ष्यामिनारद
यानास्थायगमिष्यंतिहरिधामनराःकलौ २२
इत्थंगुरोर्लब्धमंत्रोगुरुभक्तिपरायणः
सेवमानोगुरुंनित्यंतत्कृपांभावयेत्सुधीः २३
सतांधर्मास्ततःशिक्षेत्प्रपन्नानांविशेषतः
स्वेष्टदेवधियानित्यंवैष्णवान्परितोषयेत् २४
ताडनंभर्त्सनंकामिभोग्यत्वेनयथास्त्रियः
गृह्णंतिवैष्णवानांचतत्तद्ग्राह्यंतथाबुधैः २५
एहिक्यामुष्मिकीचिंतानैवकार्याकदाचन
एहिकंतुसदाभाव्यंपूर्वाचरितकर्मणा २६
आमुष्मिकंतथाकृष्णःस्वयमेवकरिष्यति
अतोहितत्कृतेत्याज्यःप्रयत्नःसर्वथानरैः २७
सर्वोपायपरित्यागःकृष्णीयात्मतयार्चनम्
सुचिरंप्रोषितेकांतेयथापतिपरायणा २८
प्रियानुरागिणीदीनातस्यसंगैककांक्षिणी
तद्गुणान्भावयेन्नित्यंगायत्यपिशृणोतिच २९

श्रीकृष्णगुणलीलादिस्मरणादितथाचरेत्
नपुनःसाधनत्वेनकार्यंतत्तुकदाचन ३०
चिरंप्रोष्यागतंकांतंप्राप्यकांतधियायथा
चुंबंतीवाश्लिष्यंतीवनेत्रांतेनपिबंत्यपि ३१
ब्रह्मानंदगतेवाशुसेवतेपरयामुदा
श्रीमदर्चावतारेणतथापरिचरेद्धरिम् ३२
अनन्यशरणोनित्यंतथैवानन्यसाधनः
अनन्यसाधनार्थत्वात्स्यादनन्यप्रयोजनः ३३
नान्यंचपूजयेद्देवंननमेत्तंस्मरेन्नच
नचपश्येन्नगायेच्चनचनिंदेत्कदाचन ३४
नान्योच्छिष्टंचभुंजीतनान्यशेषंचधारयेत्
अवैष्णवानांसंभाषावंदनादिविवर्जयेत् ३५
ईशवैष्णवयोर्निंदांशृणुयान्नकदाचन
कर्णौपिधायगंतव्यंशक्तौदंडंसमाचरेत् ३६
आश्रित्यचातकींवृत्तिंदेहपातावधिद्विज
द्वयस्यार्थंभावयित्वास्थेयमित्येवमेमतिः ३७
सरःसमुद्रनद्यादीन्विहायचातकोयथा
तृषितोम्रियतेवापियाचतेवापयोधरम् ३८
एवमेवप्रयत्नेनसाधनानिविचिंतयेत्
स्वेष्टदेवःसदायाच्योगतिस्त्वंमेभवेरिति ३९
स्वेष्टदेवतदीयानांगुरोरपिविशेषतः
आनुकूल्येसदास्थेयंप्रातिकूल्यंविवर्जयेत् ४०
सकृत्प्रपन्नोवद्त्यामिकल्याणगुणतांतयोः
विचिंत्यविश्वसेदेतौमामिमावुद्धरिष्यतः ४१
संसारसागरान्नाथमित्रपुत्रगृहाकुलात्
गोप्तारौमेयुवामेवप्रपन्नभयभंजनौ ४२
योहंममास्तियत्किंचिदिहलोकेपरत्रच
तत्सर्वंभवतोरद्यचरणेषुसमर्चितम् ४३
अहमस्म्यपराधानामालयस्त्यक्तसाधनः
अगतिश्चततोनाथौभवंतावेवमेगतिः ४४

तवास्मिराधिकाकांतकर्मणामनसागिरा
कृष्णकांतेतवैवास्मियुवामेवगतिर्मम ४५
शरणंवांप्रपन्नोऽस्मिकरुणानिकराकरौ
प्रसादंकुरुतंदास्यंमयिदुष्टेऽपराधिनि ४६
इत्येवंजपतानित्यंस्थातव्यंपद्यपंचकम्
अचिरादेवतद्दास्यमिच्छतामुनिसत्तम ४७
बाह्यधर्मामयाह्येतेसंक्षेपेणोपवर्णिताः
आंतरःपरमोधर्मःप्रपन्नानामथोच्यते ४८
कृष्णप्रियासखीभावंसमाश्रित्यप्रयत्नतः
तयोःसेवांप्रकुर्वीतदिवानक्तमतंद्रितः ४९
उक्तोमंत्रस्तदंगानितथातस्याधिकारिणः
तद्धर्माश्चतथातेभ्यःफलंमंत्रस्यनारद ५०
अनुतिष्ठत्वमप्येतत्तयोर्दास्यमवाप्स्यसि
स्वाधिकारक्षयेविप्रसंदेहोनात्रकश्चन ५१
सकृन्मात्रप्रपन्नायतवास्मीतिचयाचते
निजदास्यंहरिर्दद्यान्नमेऽत्रास्तिविचारणा ५२
अत्रतेवर्णयिष्यामिरहस्यंपरमाद्भुतम्
श्रुतपूर्वंमयाकृष्णात्साक्षाद्भगवतःपरम् ५३
एषतेकथितोधर्मआंतरोमुनिसत्तम
गुह्यादेषगुह्यतमोगोपनीयःप्रयत्नतः ५४
मंत्ररत्नमहंपूर्वंजपन्कैलासमूर्द्धनि
ध्यायन्नारायणंदेवमवसंगहनेवने ५५
ततस्तुभगवांस्तुष्टःप्रादुरासममाग्रतः
व्रियतांवरइत्युक्तेमयाप्युद्घाट्यलोचने ५६
दृष्टोदेवःप्रियासार्द्धंसंस्थितोगरुडोपरि
प्रणिपत्यावोचमहंवरदंकमलापतिम् ५७
यद्रूपंतेकृपासिंधोपरमानंददायकम्
सर्वानंदाश्रयंनित्यंमूर्तिमत्सर्वतोऽधिकम् ५८
निर्गुणंनिष्क्रियंशांतंयद्ब्रह्मेतिविदुर्बुधाः
तदहंद्रष्टुमिच्छामिचक्षुर्भ्यांपरमेश्वर ५९

ततोमामाहभगवान्प्रपन्नंकमलापतिः
तदद्यद्रष्टयसेरूपंयत्तेमनसिकांक्षितम् ६०
यमुनापश्चिमेतीरेगच्छवृंदावनंमम
इत्युक्त्वांतर्दधेदेवःप्रियासार्द्धंजगत्पतिः ६१
अहमप्यागतस्तर्हियमुनायास्तटंशुभम्
तत्रकृष्णमपश्यंचसर्वदेवेश्वरेश्वरम् ६२
गोपवेषधरंकांतंकिशोरवयसान्वितम्
प्रियास्कंधेसुविन्यस्तवामहस्तंमनोहरम् ६३
हसंतंहासयतंतांमध्येगोपीकदंबके
स्निग्धमेघसमाभासंकल्याणगुणमंदिरम् ६४
प्रहस्यचततःकृष्णोमामाहामृतभाषणः
अहंतेदर्शनंयातोज्ञात्वारुद्रतवेप्सितम् ६५
यदद्यमेत्वयादृष्टमिदंरूपमलौकिकम्
घनीभूतामलप्रेमसच्चिदानंदविग्रहम् ६६
नीरूपंनिर्गुणंव्यापिक्रियाहीनंपरात्परम्
वदंत्युपनिषत्संघाइदमेवममानघम् ६७
प्रकृत्युत्थगुणाभावादनंतत्वात्तथेश्वरम्
असिद्धत्वान्मद्गुणानांनिर्गुणंमांवदंतिहि ६८
अदृश्यत्वान्ममैतस्यरूपस्यचर्मचक्षुषा
अरूपंमांवदंत्येतेवेदाःसर्वेमहेश्वर ६९
व्यापकत्वाच्चिदंशेनब्रह्मेतिचविदुर्बुधाः
अकर्तृत्वात्प्रपंचस्यनिष्क्रियंमांवदंतिहि ७०
मायागुणैर्यतोमेंऽशाकुर्वंतिसर्जनादिकम्
नकरोमिस्वयंकिंचित्सृष्ट्यादिकमहंशिव ७१
अहमासांमहादेवगोपीनांप्रेमविह्वलः
क्रियांतरंनजानामिनात्मानमपिनारद ७२
विहराम्यनयानित्यमस्याःप्रेमवशीकृतः
इमांतुमत्प्रियांविद्धिराधिकांपरदेवताम् ७३
अस्याश्चपरितःपश्यसख्यःशतसहस्रशः
नित्याःसर्वाइमारुद्रयथाहंनित्यविग्रहः ७४

गोपागावोगोपिकाश्चसदावृंदावनंमम
सर्वमेतन्नित्यमेवचिदानंदरसात्मकम् ७५
इदमानंदकंदाख्यंविद्धिवृंदावनंमम
यस्मिन्प्रवेशमात्रेणनपुनःसंसृतिंविशेत् ७६
मद्वनंप्राप्ययोमूढःपुनरन्यत्रगच्छति
सग्रात्महाभवेदेवसत्यंसत्यंमयोदितम् ७७
वृंदावनंपरित्यज्यनैवगच्छाम्यहंक्वचित्
निवसाम्यनयासार्द्धमहमत्रैवसर्वदा ७८
इत्येवंसर्वमाख्यातंयत्तेरुद्रहृदिस्थितम्
कथयस्वममेदानींकिमन्यच्छ्रोतुमिच्छसि ७९
ततस्तमब्रवंदेवमहंचमुनिसत्तम
ईदृशस्त्वंकथंलभ्यस्तमुपायंवदस्वमे ८०
ततोमामाहभगवान्साधुरुद्रतवोदितम्
अतिगुह्यतमंह्येतद्गोपनीयंप्रयत्नतः ८१
सकृदावांप्रपन्नोयस्त्यक्तोपायउपासते
गोपीभावेनदेवेशसमामेतिनचेतरः ८२
सकृदावांप्रपन्नोवामत्प्रियामेकिकामुत
सेवतेनन्यभावेनसमामेतिनसंशयः ८३
योमामेवप्रपन्नश्चमत्प्रियांनमहेश्वर
नकदापिसचाप्नोतिमामेवंतेमयोदितम् ८४
सकृदेवप्रपन्नोयस्तवास्मीतिवदेदपि
साधनेनविनाप्येवमामाप्नोतिनसंशयः ८५
तस्मात्सर्वप्रयत्नेनमत्प्रियांशरणंव्रजेत्
आश्रित्यमत्प्रियांरुद्रमांवशीकर्त्तुमर्हसि ८६
इदंरहस्यंपरमंमयातेपरिकीर्तितम्
त्वयाप्येतन्महादेवगोपनीयंप्रयत्नतः ८७
त्वमप्येनांसमाश्रित्यराधिकांममवल्लभाम्
जपन्मेयुगलंमंत्रंसदातिष्ठमदालये ८८
शिवउवाच−
इत्युक्त्वादक्षिणेकर्णेममकृष्णोदयानिधिः

उपदिश्यपरंमंत्रंसंस्कारांश्चविधायहि ८९
सगणोंऽतर्दधेविप्रतत्रैवममपश्यतः
अहमप्यत्रतिष्ठामितदारभ्यनिरंतरम् ९०
सर्वमेतन्मयातुभ्यंसांगमेवप्रकीर्त्तितम्
अधुनावदविप्रेंद्रकिंभूयःश्रोतुमिच्छसि ९१
इति श्रीपद्मपुराणेपातालखंडेवृंदावनमाहात्म्ये
द्व्यशीतितमोऽध्यायः ८२

त्र्यशीतितमोऽध्यायः

नारदउवाच-
भगवन्सर्वमाख्यातंयद्यत्पृष्टंमयागुरो
अधुनाश्रोतुमिच्छामिभावमार्गमनुत्तमम् १
शिवउवाच-
साधुविप्रत्वयापृष्टंसर्वलोकहितैषिणा
रहस्यमपिवक्ष्यामितन्मेनिगदतःशृणु २
दास्यःसखायःपितरौप्रेयस्यश्चहरेरिह
सर्वेनित्यामुनिश्रेष्ठवसंतिगुणशालिनः ३
यथाप्रकटलीलायांपुराणेषुप्रकीर्तिताः
तथातेनित्यलीलायांसंतिवृंदावनेभुवि ४
गमनागमनेनित्यंकरोतिवनगोष्ठयोः
गोचारणंवयस्यैश्चविनाऽसुरविघातनम् ५
करकीयाभिमानिन्यस्तथातस्यप्रियाजनाः
प्रच्छन्नेनैवभावेनरमयंतिनिजप्रियम् ६
आत्मानंचिंतयेत्तत्रतासांमध्येमनोरमाम्
रूपयौवनसंपन्नांकिशोरींप्रमदाकृतिम् ७
नानाशिल्पकलाभिज्ञांकृष्णभोगानुरूपिणीम्
प्रार्थितामपिकृष्णेनतत्रभोगपराङ्मुखीम् ८
राधिकानुचरींतत्रतत्सेवनपरायणाम्
कृष्णादप्यधिकंप्रेमराधिकायांप्रकुर्वतीम् ९
प्रीत्यानुदिवसंयत्नात्तयोःसंगमकारिणीम्

तत्सेवनसुखाह्लादभावेनातिसुनिर्वृताम् १०
इत्यात्मानंविचिंत्यैवतत्रसेवांसमाचरेत्
ब्राह्मंमुहूर्त्तमारभ्ययावत्स्यात्तुमहानिशा ११
नारदउवाच-
हरेर्दैनंदिनींलीलांश्रोतुमिच्छामितत्त्वतः
लीलामजानतासेव्योमनसातुकथंहरिः १२
शिवउवाच-
नाहंजानामितांलीलांहरेर्नारदतत्त्वतः
वृंदादेवीमितोगच्छसातेलीलांप्रवक्ष्यति १३
अविदूरइतःस्थानात्केशीतीर्थसमीपतः
सखीसंघवृतासास्तेगोविंदपरिचारिका १४
सूतउवाच-
इत्युक्तस्तंपरिक्रम्यहृष्टोनत्वापुनःपुनः
वृंदाश्रमंजगामाथनारदोमुनिसत्तमः १५
वृंदापिनारदंदृष्ट्वाप्रणम्यचपुनःपुनः
उवाचचमुनिश्रेष्ठकथमत्रागतिस्तव १६
नारदउवाच-
त्वत्तोवेदितुमिच्छामिनैत्यकंचरितंहरेः
तदादितोममब्रूहियदियोग्योऽस्मिशोभने १७
वृंदोवाच-
रहस्यमपिवक्ष्यामिकृष्णभक्तोसिनारद
नप्रकाश्यंत्वयाप्येतद्गुह्याद्गुह्यतरंमहत् १८
मध्येवृंदावनेरम्येपंचाशत्कुंजमंडिते
कल्पवृक्षनिकुंजेतुदिव्यरत्नमयेगृहे १९
निद्रितौतिष्ठतस्तल्पेनिबिडालिगितौमिथः
मदाज्ञाकारिभिःपश्चात्पक्षिभिर्बोधितावपि २०
गाढालिगनजानंदमाप्तौतद्भंगकातरौ
नमनःकुरुतस्तल्पात्समुत्थातुंमनागपि २१
ततश्चसारिकासंघैःशुकाद्यैःपरितोमुहुः
बोधितौविविधैर्वाक्यैःस्वतल्पादुदतिष्ठताम् २२

उपविष्टौततोदृष्ट्वासख्यस्तल्पेमुदान्वितौ
प्रविश्यसेवांकुर्वंतितत्कालेह्युचितांतयोः २३
पुनश्चसारिकावाक्यैस्तावुत्थायस्वतल्पतः
गच्छतःस्वस्वभवनंभीत्युत्कंठाकुलौततः २४
प्रातश्चबोधितोमात्रातल्पादुत्थायसत्वरः
कृत्वाकृष्णोदंतकाष्ठंबलदेवसमन्वितः २५
मात्रानुमोदितोयातिगोशालांसखिभिर्वृतः
राधापिबोधिताविप्रवयस्याभिःस्वतल्पतः २६
उत्थायदंतकाष्ठादिकृत्वाभ्यंगंसमाचरेत्
स्नानवेदींततोगत्वास्नापितासानिजालिभिः २७
भूषागृहेव्रजेत्तत्रवयस्याभूषयंत्यपि
भूषणैर्विविधैर्दिव्यैर्गंधमाल्यानुलेपनैः २८
ततःसखीजनैस्तस्याःश्वश्रूंसंप्रार्थ्ययत्नतः
कर्तुमाहूयतेस्वन्नंससखीसायशोदया २९
नारदउवाच-
कथमाहूयतेदेविपाकार्थंतुयशोदया
सतीषुपाककर्त्रीषुरोहिणीप्रमुखास्वपि ३०
वृंदोवाच-
पूर्वंदुर्वाससादत्तोवरस्तस्यैमहामुने
इतिकात्यायनीवक्त्राच्छ्रुतमासीन्मयापुरा ३१
त्वयायत्पच्यतेदेवितदन्नंमदनुग्रहात्
मिष्टंस्यादमृतस्पर्द्धिभोक्तुरायुष्करंतथा ३२
इत्याह्वयतितांनित्यंयशोदापुत्रवत्सला
आयुष्मान्मेभवेत्पुत्रःस्वादुलोभात्तथासती ३३
श्रुत्वानुमोदिताहृष्टासापिनंदालयंव्रजेत्
ससखीप्रकरातत्रगत्वापाकंकरोतिच ३४
कृष्णोऽपिदुग्ध्वागाःकाश्चिद्दोहयित्वाजनैःपराः
आगच्छतिपितुर्वाक्यात्स्वगृहंसखिभिर्वृतः ३५
अभ्यंगमर्दनंकृत्वादासैःसंस्नापितोमुदा
धौतवस्त्रधरःस्त्रग्वीचंदनाक्तकलेवरः ३६

द्विफालबद्धचिकुरैर्ग्रीवाभालोपरिस्फुरन्
चंद्राकारस्फुरद्भालतिलकालकरंजितः ३७
कंकणांगदकेयूररत्नमुद्रालसत्करः
मुक्ताहारस्फुरद्दृत्तामकराकृतिकुंडलः ३८
मुहुराकारितोमात्राप्रविशेद्भोजनालयम्
अवलंब्यकरंसख्युर्बलदेवमनुव्रतः ३९
भुंक्तेऽथविविधान्नानिभ्रात्राचसखिभिर्वृतः
हासयन्विविधैर्हास्यैःसखींस्तैर्हसतिस्वयम् ४०
इत्थंभुक्त्वातथाचम्यदिव्यखट्वोपरिक्षणम्
विश्रम्यसेवकैर्दत्तंतांबूलंविभजन्नदन् ४१
गोपवेषधरःकृष्णोधेनुवृंदपुरस्सरः
व्रजवासिजनैःप्रीत्यासर्वैरनुगतःपथि ४२
पितरंमातरंनत्वानेत्रांतेनापितंगणम्
यथायोग्यंतथाचान्यान्विनिवर्त्यवनंव्रजेत् ४३
वनंप्रविश्यसखिभिःक्रीडयित्वाक्षणंततः
विहारैर्विविधैस्तत्रवनेविक्रीडतेमुदा ४४
वंचयित्वाततःसर्वान्द्वित्रैःप्रियसखैर्वृतः
संकेतकंव्रजेद्धर्षात्प्रियासंदर्शनोत्सुकः ४५
सापिकृष्णंवनंयातंदृष्ट्वास्वंगृहमागता
सूर्यादिपूजाव्याजेनकुसुमाहृतयेतथा ४६
वंचयित्वागुरून्यातिप्रियसंगेच्छयावनम्
इत्थंतौबहुयत्नेनमिलित्वाकाननेततः ४७
विहारैर्विविधैस्तत्रदिनंविक्रीडतोमुदा
दोलायांचसमारूढौसखिभिर्दोलितौक्वचित् ४८
क्वापिवेणुंकरस्त्रस्तंप्रिययापह्नुतंहरिः
अन्वेषयन्नुपालब्धोविप्रलब्धप्रियागणैः ४९
हसितैर्बहुधाताभिर्हासितस्तत्रतिष्ठति
वसंतवायुनाजुष्टंवनखरडंमुदाक्वचित् ५०
प्रविश्यचंदनांभोभिःकुंकुमादिजलैरपि
निषिंचतोयंत्रमुक्तैस्तत्पंकैर्लिंपतोमिथः ५१

सख्योऽप्येवंनिषिंचंतिताश्चतौसिंचतःपुनः
वसंतवायुजुष्टेषुवनखडेषुसर्वतः ५२
तत्तत्कालोचितैर्नानाविहारैःसगणौद्विज
श्रांतौक्वचिद्वृक्षमूलमासाद्यमुनिसत्तम ५३
उपविश्यासनेदिव्येमधुपानंप्रचक्रतुः
ततोमधुमदोन्मत्तौनिद्रयामीलितेक्षणौ ५४
मिथःपाणीसमालंब्यकामबाणवशंगतौ
रिरंसूविशतःकुञ्जंस्खलद्वाङ्मनसौपथि ५५
क्रीडतश्चततस्तत्रकरिणीयूथपौयथा
सख्योऽपिमधुभिर्मत्तानिद्रयापीडितेक्षणाः ५६
अभितोमंजुकुंजेषुसर्वाएवापिशिश्यिरे
पृथगेकेनवपुषाकृष्णोऽपियुगपद्विभुः ५७
सर्वासांसंनिधिंगच्छेत्प्रियययाप्रेरितोमुहुः
रमयित्वाचताःसर्वाःकरिणीर्गजराडिव ५८
प्रिययाचतथाताभिःक्रीडार्थंचसरोव्रजेत्
जलसेकैर्मिथस्तत्रक्रीडतःसगणौततः ५९
वासःस्रक्चंदनैर्दिव्यैर्भूषणैरपिभूषितौ
तत्रैवसरसस्तीरेदिव्यरत्नमयेगृहे ६०
प्रागेवफलमूलानिकल्पितानिमयामुने
हरिस्तुप्रथमंभुक्त्वाकांतयापरिवेष्टितः ६१
द्वित्राभिःसेवितोगच्छेच्छय्यांपुष्पविनिर्मिताम्
तांबूलैर्व्यजनैस्तत्रपादसंवाहनादिभिः ६२
सेव्यमानोहसंस्ताभिर्मोदतेप्रेयसींस्मरन्
राधिकापिहरौसुप्तेसगणामुदितांतरा ६३
अपितत्रगतप्राणातदुच्छिष्टंभुनक्तिच
किंचिदेवततोभुक्त्वाव्रजेच्छय्यानिकेतनम् ६४
द्रष्टुंकांतमुखांभोजंचकोरीवनिशाकरम्
तांबूलचर्वितंतस्यतत्रत्याभिर्निवेदितम् ६५
तांबूलान्यपिचाश्नातिविभजंतीप्रियालिषु
कृष्णोऽपितासांशुश्रूषुःस्वच्छंदंभाषितंमिथः ६६

प्राप्तनिद्रइवाभातिविनिद्रोऽपिपटावृतः
ताश्चद्वेलीक्षणंकृत्वाकुतश्चिदनुमानतः ६७
विदश्यरसनांदद्भिःपश्यंत्योऽन्योन्यमाननम्
विलीनाइवलज्जाब्धौक्षणमूचुर्नकिंचन ६८
क्षणादेवततोवस्त्रंदूरीकृत्यतदंगतः
साधुनिद्रांगतोऽसीतिहासयंत्योहसंतिच ६९
एवंतैर्विविधैर्हास्यैरममाणौगणैःसह
अनुभूयक्षणंनिद्रासुखंचमुनिसत्तम ७०
उपविश्यासनेदिव्येसगणौविस्तृतेमुदा
पणीकृत्यमिथोहारचुंबाश्लेषपरिच्छदान् ७१
अक्षैर्विक्रीडतःप्रेम्णानर्मालापपुरस्सरम्
पराजितोऽपिप्रिययाजितोहमितिवैब्रुवन् ७२
हारादिग्रहणेतस्याःप्रवृत्तस्ताड्यतेतया
तयैवंताडितःकृष्णःकरेणास्यसरोरुहे ७३
विषण्णमानसोभूत्वागंतुंप्रकुरुतेमतिम्
जितोऽस्मिचेत्त्वयादेविगृह्यतांयत्पणीकृतम् ७४
चुंबनादिमयादत्तमित्युक्त्वासातथाचरेत्
कौटिल्यंतद्भ्रुवोर्द्रष्टुंश्रोतुंतद्भर्त्सनंवचः ७५
ततःसारीशुकानांचश्रुत्वावागाहवंमिथः
निर्गच्छतस्ततःस्थानाद्गंतुकामौगृहंप्रति ७६
कृष्णःकांतामनुज्ञाप्यगवामभिमुखंव्रजेत्
सातुसूर्यगृहंगच्छेत्सखीमंडलसंयुता ७७
कियद्दूरंततोगत्वापरावृत्यहरिंपुनः
विप्रवेषंसमास्थाययातिसूर्यगृहंप्रति ७८
सूर्यंप्रपूजयेत्तत्रप्रार्थितस्तत्सखीजनैः
तदैवकल्पितैर्वेदैःपरिहासविगर्भितैः ७९
ततस्ताज्ञापितंकांतंपरिज्ञायविचक्षणाः
आनंदसागरेमग्नानविदुःस्वंनचापरम् ८०
विहारैर्विविधैरेवंसार्द्धयामद्वयंमुने
नीत्वागृहंव्रजेयुस्ताःसचकृष्णोगवांव्रजेत् ८१

संगम्यस्वसखीन्कृष्णोगृहीत्वागाःसमंततः
आगच्छतिव्रजंहर्षान्नादयन्मुरलद्यंमुने ८२
ततोनंदादयःसर्वेश्रुत्वावेणुरवंहरेः
गोधूलिपटलव्याप्तंदृष्ट्वाचापिनभस्तलम् ८३
विसृज्यसर्वकर्माणिस्त्रियोबालादयोऽपिच
कृष्णस्याभिमुखंयांतितद्दर्शनसमुत्सुकाः ८४
राजमार्गेव्रजद्वारियत्रसर्वेव्रजौकसः
कृष्णोऽपितान्समागम्ययथावदनुपूर्वशः ८५
दर्शनस्पर्शनैर्वाचास्मितपूर्वावलोकनैः
गोपवृद्धान्नमस्कारैःकायिकैर्वाचिकैरपि ८६
अष्टांगपातैःपितरौरोहिणीमपिनारद
नेत्रांतसूचितेनैवविनयेनप्रियांतथा ८७
एवंतैस्तद्यथायोग्यंव्रजौकोभिःप्रपूजितः
गवालयेतथागाश्चसंप्रवेश्यसमंततः ८८
पितृभ्यामर्थितोयातिभ्रात्रासहनिजालयम्
स्नात्वापीत्वातत्रकिंचिद्भुक्त्वामात्रानुमोदितः ८९
गवालयंपुनर्यातिदोग्धुकामोगवांपयः
ताश्चदुग्ध्वादोहयित्वापाययित्वाचकाश्चन ९०
पित्रासार्द्धंगृहंयातितत्रभावशतानुगः
तत्रपित्रापितृव्यैश्चतत्पुत्रैश्चबलेनच ९१
भुनक्तिविविधान्नानिचर्व्यचोष्यादिकानिच
तन्मतिःप्रार्थनात्पूर्वंराधिकाचतदैवह ९२
प्रस्थापयेत्सखीद्वारापक्वान्नानितदालयम्
श्लाघयंश्चहरिस्तानिभुक्त्वापित्रादिभिःसह ९३
सभागृहंव्रजेत्तैश्चजुष्टंबंदिजनादिभिः
पक्वान्नानिगृहीत्वायाःसख्यस्तत्रपुरागताः ९४
बहूनिचपुनस्तानिप्रदत्तानियशोदया
सख्यस्तत्रतयादत्तंकृष्णोच्छिष्टंनयंतिच ९५
सर्वंताभिःसमानीयराधिकायैनिवेद्यते
सापिभुक्त्वासखीवर्गयुतातदनुपूर्वशः ९६

सखीभिर्मंडितातिष्ठेदभिसर्त्तुंसमुद्यता
प्रस्थाप्यतेमयाकाचिदितएवततःसखी ९७
तयाभिसारितासाथयमुनायाःसमीपतः
कल्पवृक्षनिकुंजेऽस्मिन्दिव्यरत्नमयेगृहे ९८
सितकृष्णनिशायोग्यवेषायातिसखीवृता
कृष्णोऽपिविविधंतत्रदृष्ट्वाकौतूहलंततः ९९
कात्यायन्यामनोज्ञानिश्रुत्वासंगीतकान्यपि
धनधान्यादिभिस्ताश्चप्रीणयित्वाविधानतः १००
जनैराराधितोमात्रायातिसख्यानिकेतनम्
मातरिप्रस्थितायांचभोजयित्वाततोगृहम् १०१
संकेतकंकांतयात्रसमागच्छेदलक्षितः
मिलित्वातावुभावत्रक्रीडतोवनराजिषु १०२
विहारैर्विविधैरासलास्यहासपुरस्सरैः
सार्द्धयामद्वयंनीत्वारात्रेरेवंविहारतः १०३
सुषुप्सूविशतःकुंजंपक्षिणीभिरलक्षितौ
एकांतेकुसुमैःक्लृप्तेकेलितल्पेमनोहरे १०४
सुप्तावातिष्ठतस्तत्रसेव्यमानौनिजालिभिः
इतितेसर्वमाख्यातंनैत्यकंचरितंहरेः १०५
पापिनोऽपिविमुच्यंतेश्रवणादस्यनारद
नारदउवाच-
धन्योऽस्म्यनुगृहीतोऽस्मित्वयादेविनसंशयः १०६
हरेर्दैनंदिनीलीलायतोमेऽद्यप्रकाशिता
सूतउवाच-
इत्युक्त्वातांपरिक्रम्यतयाचापिप्रपूजितः १०७
अंतर्धानंगतोब्रह्मन्नारदोमुनिसत्तमः
मयाप्येतच्चानुपूर्व्यात्सर्वमेवप्रकीर्तितम् १०८
जपेन्नित्यंप्रयत्नेनमंत्रयुग्ममनुत्तमम्
कृष्णवक्त्रादिदंलब्धंपुरारुद्रेणयत्नतः १०९
तेनोक्तंनारदायापिनारदेनममोदितम्
संस्कारांश्चविधायैवमयाप्येतत्तवोदितम् ११०

त्वयाप्येतद्गोपनीयंरहस्यंपरमाद्भुतम्
शौनकउवाच-
कृतकृत्योभवंसाक्षात्त्वत्प्रसादादहंगुरो १११
रहस्यानांरहस्यंयत्त्वयामह्यंप्रकाशितम्
सूतउवाच-
धर्मानेतानुपातिष्ठञ्जल्पन्मंत्रमहर्निशम् ११२
अचिरादेवतद्दास्यमवाप्स्यसिनसंशयः
मयापिगम्यतेब्रह्मन्नित्यमायतनंविभोः ११३
गुरोर्गुरोर्भानुजायाःकूलेगोपीश्वरस्यच ११४
इदंचरित्रंपरमंपवित्रंप्रोक्तंमहेशेनमहानुभावम्
शृणवंतियेभक्तियुतामनुष्यास्तेयांतिनित्यंपदमच्युतस्य ११५
धन्यंयशस्यमायुष्यमारोग्याभीष्टसिद्धिदम्
स्वर्गापवर्गसंपत्तिकारणंपापनाशनम् ११६
भक्त्यापठंतियेनित्यंमानवाविष्णुतत्पराः
नतेषांपुनरावृत्तिर्विष्णुलोकात्कथंचन ११७

इति श्रीपद्मपुराणेपातालखंडेवृंदावनमाहात्म्ये त्र्यशीतितमोऽध्यायः ८३

समाप्तं वृंदानमाहात्म्यम्

## चतुरशीतितमोऽध्यायः

ऋषयऊचुः -
सूतसूतमहाभागरोमहर्षणनंदन
कथारम्यात्वयाप्रोक्तालोकस्यानंददायिनी १
श्रीकृष्णस्यमहाभागचरितंमहदद्भुतम्
श्रुतंसर्वंत्वयाप्रोक्तंनिर्वृतिस्तेनचाभवत् २
अहोश्रीकृष्णमाहात्म्यंभक्तानांगतिदायकम्
यतस्तेनमहाभागनिर्वृतिंकोनचाप्नुयात् ३
अतःपुनरपिश्रीमत्कृष्णस्यचरितंमहत्
श्रोतुमिच्छामहेचान्यद्व्रतदानार्हणादिकम् ४
स्नानंवापिमहाभागयथायेनकृतंपुरा
तत्सर्वंविस्तराद्ब्रूहियथानोनिर्वृतिर्भवेत् ५

सूतउवाच-
साधुपृष्टंद्विजश्रेष्ठालोकानांतारणंपरम्
यूयंकृतार्थाःकृष्णस्यभक्त्यासंपूर्णमानसाः ६
श्रीकृष्णचरितंपुरयंसाधूनांहर्षदंपरम्
प्रवद्त्यामिद्विजश्रेष्ठामहदाख्यानमुत्तमम् ७
एकदानारदोलोकान्पर्यटन्भगवत्प्रियः
मथुरायामंबरीषंकृष्णाराधनतत्परम् ८
महाभागंव्रतपरंददर्शमुनिसत्तमः
सत्र्यागतंमुनिवरंसत्कृत्यमुनिसत्तमः ९
भवंतइवपप्रच्छश्रद्धयाहृष्टमानसः
अंबरीषउवाच-
यन्मुनेपरमंब्रह्मवेदवादिभिरुच्यते १०
सदेवःपुंडरीकाद्तःस्वयंनारायणःपरः
योऽमूर्तोमूर्तिमानीशोव्यक्तोऽव्यक्तःसनातनः ११
सर्वभूतमयोऽचित्योध्यातव्यःसकथंहरिः
यस्मिन्सर्वमिदंविश्वमोतंप्रोतंप्रतिष्ठितम् १२
अव्यक्तमेकंपरमंपरमात्मेतिविश्रुतम्
यतोजन्मादिजगतोयोनिर्मायस्वयंभुवम् १३
ददौतस्मैचनिगमानात्मन्येवव्यवस्थितान्
कथमाराध्यतेसोऽयसमग्रपुरुषार्थदः १४
योगिनामपिदुर्गम्यस्तदेतत्कृपयावद
अनाराधितगोविंदानविदंतिहितोदयम् १५
नतपोयज्ञदानानांलभतेफलमुत्तमम्
अनास्वादितगोविंदपदांबुजरसश्चयः १६
मनोरथपथातीतंस्फीतंनाकलयेत्फलम्
हरेराराधनंहित्वादुरितौघनिवारणम् १७
नान्यत्पश्यामिजंतूनांप्रायश्चित्तंपरंमुने
यद्भ्रूनर्तनवर्तिन्यःश्रूयंतेसिद्धयोऽखिलाः १८
कथमाराध्यतेसोऽयकेशवःक्लेशनाशनः
उपास्यतेसभगवान्कथंनारायणोनरैः १९

प्रीतश्चसर्वमेतन्मेहितायजगतोवद
भक्तिप्रियोऽसौभगवान्कयाभक्त्याप्रसीदति २०
कथंतस्मिन्भवेद्भक्तिः सर्वैराराध्यतेकथम्
वैष्णवोसिहरेस्तस्यप्रियोऽसिपरमार्थवित् २१
तेनत्वामेवपृच्छामिब्रह्मन्ब्रह्मविदुत्तम
श्रोतारमथवक्तारंप्रष्टारंपुरुषंहरेः २२
प्रश्नः पुनातिकृष्णस्यतदंघ्रिसलिलंयथा
दुर्ल्लभोमानुषोदेहोदेहिनांक्षणभंगुरः २३
तत्रापिदुर्ल्लभंमन्येवैकुंठप्रियदर्शनम्
संसारेस्मिन्क्षणार्धोऽपिसत्संगः शेवधिर्नृणाम् २४
यस्मादवाप्यतेसर्वंपुरुषार्थचतुष्टयम्
भगवन्भवतोयात्रास्वस्तयेसर्वदेहिनाम् २५
बालानांतुयथापित्रोरुत्तमश्लोकवर्त्मनाम्
भूतानांदेवचरितंदुःखायचसुखायच २६
सुखायैवहिसाधूनांत्वादृशामच्युतात्मनाम्
भजंतियेयथादेवान्देवाअपितथैवतान् २७
छायेवकर्मसचिवाः साधवोदीनवत्सलाः
तस्मात्त्वंभगवन्मह्यंवैष्णवंधर्ममादिश २८
यस्योपदेशदानेनलभतेवेदजंफलम्
नारदउवाच-
साधुपृष्टंमहीपालविष्णुभक्तिमतात्वया २९
जानतापरमंधर्ममेकंमाधवसेवनम्
यस्मिन्नाराधितेविष्णौविश्वमाराधितंभवेत् ३०
तुष्टेचराचरंतुष्टंसर्वदेवमयेहरौ
यस्यस्मरणमात्रेणमहापातकसंहतिः ३१
तत्क्षणान्नाशमायातिससेव्योहरिरेवहि
कोऽनुराजन्निंद्रियवान्मुकुंदचरणांबुजम् ३२
नभजेत्सर्वतोमृत्युरुपास्यमृषिदैवतैः
श्रुतोऽनुपठितोध्यातआदृतश्चानुमोदितः ३३
सद्यः पुनातिसद्धर्मोवीरोविश्वद्रुहोऽपिहि

योयंकारणकार्यादिकारणस्यापिकारणम् ३४
अनन्यकारणंयोगीजगज्जीवोजगन्मयः
अणुर्बृहत्कृशःस्थूलोनिर्गुणोगुणभृन्महान् ३५
अजोजन्मलयातीतोध्यातव्यःसहरिःसदा
सम्यगेतद्व्यवसितंभवतापुरुषर्षभ ३६
यत्पृच्छसेभागवतान्धर्मांस्त्वंविश्वभावनान्
प्रसंगेनसतामात्ममनःश्रुतिरसायनाः ३७
भवंतिकीर्तनीयस्यकथाःकृष्णस्यनिर्मलाः
भावसाध्योह्ययंदेवःस्वयंजानातितद्भवान् ३८
तथापिवद्येजगतोहितायतवगौरवात्
यदाहुःपरमंब्रह्मप्रधानपुरुषात्परम् ३९
यन्माययाततंसर्वंसर्वंयच्छतिसोऽच्युतः
पुत्रान्कलत्रंदीर्घायूराज्यंस्वर्गापवर्गकम् ४०
सदद्यादीप्सितंसर्वंभक्त्यासंपूजितोऽजितः
कर्मणामनसावाचातत्परायेहिमानवाः ४१
तेषांव्रतानिवद्यामिप्रीतयेभूपसत्तम
अहिंसासत्यमस्तेयंब्रह्मचर्यमकल्पता ४२
एतानिमानसान्याहुर्व्रतानिहरितुष्टये
एकभक्तंतथानक्तमुपवासमयाचितम् ४३
इत्येवंकायिकंपुंसांव्रतमुक्तंनरेश्वर
वेदस्याध्ययनंविष्णोःकीर्तनंसत्यभाषणम् ४४
अपैशुन्यमिदंराजन्वाचिकंव्रतमुत्तमम्
चक्रायुधस्यनामानिसदासर्वत्रकीर्तयेत् ४५
नाशौचंकीर्तनेतस्यसपवित्रकरोयतः
वर्णाश्रमाचारवतापुरुषेणपरःपुमान् ४६
विष्णुराराध्यतेपंथानान्यःसंतोषकारणम्
पतिप्रियहिताभिश्चमनोवाक्कायसंयमैः ४७
व्रतैराराध्यतेस्त्रीभिर्वासुदेवोदयानिधिः
आगमोक्तेनमार्गेणस्त्रीशूद्रैरपिपूजनम् ४८
कर्तव्यंकृष्णचंद्रस्यद्विजातिवररूपिणः

त्रयोवर्णास्तुवेदोक्तमार्गाराधनतत्पराः ४९
स्त्रीशूद्रादयएवस्युर्नाम्नाऽराधनतत्पराः
नपूजनैर्नयजनैर्नव्रतैरपिमाधवः ५०
तुष्यतेकेवलंभक्तिप्रियोऽसौसमुदाहृतः
स्त्रीणांपतिव्रतानांतुपतिरेवहिदैवतम् ५१
सतुपूज्योविष्णुभक्त्यामनोवाक्कायकर्मभिः
कर्तव्यंश्रद्धयाविष्णोश्चिंतयित्वापतिंहृदि ५२
शूद्राणांचैवभवतिनाम्नावैदेवतार्चनम्
सर्वेऽप्यागममार्गेणकुर्युर्वेदानुकारिणा ५३
स्त्रीणामप्यधिकारोऽस्तिविष्णोराराधनादिषु
पतिप्रियरतानांचश्रुतिरेषासनातनी ५४
स्वकुलोचितधर्मेणयद्यस्यविहितंव्रतम्
तत्तदेवाचरेद्यस्तुतेनतुष्यतिकेशवः ५५
हविषाग्नौजलेपुष्पैर्ध्यानेनहृदयेहरिम्
यजंतिसूरयोनित्यंजपेनरविमंडले ५६
अहिंसाप्रथमंपुष्पंद्वितीयंकरणग्रहः
तृतीयकंभूतदयाचतुर्थंक्षांतिरेवच ५७
शमस्तुपंचमंपुष्पंदमःषष्ठंचसप्तमम्
ध्यानंसत्यंचाष्टमंचह्येतैस्तुष्यतिकेशवः ५८
एतैरेवाष्टभिःपुष्पैस्तुष्यत्येवार्चितोहरिः
पुष्पांतराणिसंत्येवबाह्यानिमनुजोत्तम ५९
भक्त्याकृतानियैर्विष्णुःपूजितःपरितुष्यति
वारुणंसलिलंपुष्पंसौम्यंघृतपयोदधि ६०
प्राजापत्यंतथान्नादिआग्नेयंधूपदीपकम्
फलपुष्पादिकंचैववानस्पत्यंतुपंचमम् ६१
पार्थिवंकुशमूलाद्यंवायव्यंगंधचंदनम्
श्रद्धाख्यंविष्णुपुष्पंचवाद्यंविष्णुपदंस्मृतम् ६२
एभिस्तुपूजितःपुष्पैरपिविष्णुःप्रसीदति
सूर्योऽग्निर्ब्राह्मणोगावोवैष्णवःखंमरुज्जलम् ६३
भूरात्मासर्वभूतानिपूजास्थानानिवाहरेः

सूर्य्येतुमंत्रजाप्येनहविषाग्नौयजेत्ततः ६४
ग्रातिथ्येनतुविप्राग्र्येगोषुग्रासरसादिना
वैष्णवेबंधुसत्कृत्याहृदयेध्यानिनिष्ठया ६५
वायौमुख्यधियातोयेद्रव्यैस्तोयपुरस्कृतैः
स्थंडिलेमंत्रहृदयैर्भोगैरात्मानमात्मनि ६६
क्षेत्रज्ञंसर्वभूतेषुसमत्वेनार्चयेद्विभुम्
धिष्ण्येष्वेतेषुतद्रूपंशंखचक्रगदांबुजैः ६७
युक्तंचतुर्भुजंशांतंध्यायन्नर्चेत्समाहितः
ब्राह्मणैःपूजितैरेवपूजितोऽयनसंशयः ६८
निर्भर्त्सितैश्चतैर्भूपभवेन्निर्भर्तिसतोविभुः
निगमोधर्मशास्त्रंचयदाधारेप्रवर्तते ६९
विप्रास्तेवैष्णवीमूर्तिःपावनीपरमामता ७०
सर्वंशुभंजगतिधर्मतएवलभ्यंधर्मोगतिर्निगमतोनृपधर्मशास्त्रात्
नूनंतयोरपिगतिर्भुविभूमिदेवास्तैरर्चितैरिहजगत्पतिरर्चितःस्यात् ७१
नयज्ञयोगैर्नतपोभिरन्यैर्नयोगयुक्त्यानसमर्चनेन
तथाविभुस्तुष्यतिदेवदेवोयथामहीदैवततोषणेन ७२
ब्रह्मण्योब्रह्मविद्ब्रह्माब्रह्मवेदप्रवर्तकः
ब्राह्मणैरेवतुष्येततोषितंब्रह्मदैवतम् ७३
नरकेऽपिचिरंमग्नाःपूर्वजायेकुलद्वये
तदैवयांतितेस्वर्गंयदार्चतिसुतोहरिम् ७४
किंतेषांजीवितेनेहपशुवच्चेष्टितेनकिम्
येषांनप्रवणंचित्तंवासुदेवेजगन्मये ७५
ध्यानंतस्यप्रवक्ष्यामियन्नदृष्टंतुकेनचित्
श्रूयतांभूपकैवल्यंकेवलंमलवर्जितम् ७६
यथादीपोनिवातस्थोनिश्चलोवायुवर्जितः
प्रज्वलन्नाशयेत्सर्वमंधकारंमहामते ७७
तद्वद्दोषविहीनात्माभवत्येवनिरामयः
निराशोनिश्चलोवीरोनमित्रंनरिपुस्तथा ७८
शौकहर्षौविषादश्चनलोभोमत्सरोभ्रमः
संभ्रमालापमोहैश्चसुखदुःखैर्विमुच्यते ७९

विषयैश्चापिसर्वैश्चइंद्रियाणांप्रमुच्यते
तदासकेवलज्ञानीकैवल्यत्वंप्रजायते ८०
ज्वालाकर्मप्रसंगेनदीपस्तैलंप्रशोषयेत्
वर्त्याधारेणराजेंद्रनिर्द्वन्द्वोवायुवर्जितः ८१
कज्ञलंवमतेपश्चात्तैलस्यापिमहामते
कृष्णासंदृश्यतेरेखादीपस्याग्रेमहामते ८२
स्वयमाकृष्यतत्तैलंतेजसानिर्मलोभवेत्
कायेचांतःस्थितस्तद्वत्कर्मतैलंप्रशोषयेत् ८३
विषयान्कज्ञलंकृत्वाप्रत्यत्तान्संप्रदर्शयेत्
ज्वालावन्निर्मलोभूत्वास्वयमेवप्रकाशयेत् ८४
क्रोधलोभादिभिःसंज्ञैर्वायुभिःपरिवर्जितः
निःस्पृहोनिश्चलोभूत्वातेजश्चस्वयमुज्ज्वलेत् ८५
त्रैलोक्यंपश्यतेसर्वंस्वस्थानस्थंस्वतेजसा
केवलज्ञानरूपोऽयमयातेपरिकीर्तितः ८६
ध्यानंचैवप्रवत्त्यामिद्विविधंतस्यचक्रिणः
केवलज्ञानरूपेणदृश्यतेपरचत्तुषा ८७
योगयुक्तामहात्मानःपरमार्थपरायणाः
यंनपश्यंतिमुग्धास्तुसर्वज्ञंसर्वदर्शकम् ८८
हस्तपादविहीनश्चसर्वत्रपरिगच्छति
सर्वंगृह्णातित्रैलोक्यंस्थावरंजंगमंपुनः ८९
नासामुखविहीनस्तुघ्रातिभत्ततिभूपते
अकर्णःशृणुतेसर्वंसर्वसात्तीजगत्पतिः ९०
अरूपोरूपसंबद्धःपंचवर्गवशंगतः
सर्वलोकस्ययःप्राणःपूज्यतेसचराचरैः ९१
अजिह्वोवदतेसर्वंवेदशास्त्रानुगंतथा
अत्वचःस्पर्शमेवापिसर्वेषामेवविंदति ९२
सदानंदोविविक्तात्तएकरूपोनिराश्रयः
निर्गुणोनिर्ममोव्यापीसगुणोनिर्मलोऽनघः ९३
अवश्यःसर्ववश्यात्मासर्वदःसर्ववित्तमः
तस्यमातानचैवास्तिसवैसर्वमयोविभुः ९४

एवंसर्वमयंध्यानंयश्चपश्यत्यनन्यधीः
सयातिपरमंस्थानममूर्त्तममृतोपमम् ९५
द्वितीयंतुप्रवक्ष्यामितच्छृणुष्वमहामते
मूर्त्ताकारंतुसाकारंनिराकारंनिरामयम् ९६
ब्रह्मांडंसर्वमतुलंवासितंयस्यवासनात्
सतस्माद्वासुदेवस्तुप्रोच्यतेनृपनंदन ९७
वर्षमाणस्यमेघस्ययद्भासातस्यतद्भवेत्
सूर्यतेजःप्रतीकाशंचतुर्बाहुंसुरेश्वरम् ९८
दक्षिणेशोभतेशंखोहेमरत्नविभूषितः
कौमोदकीगदातस्यमहासुरविनाशिनी ९९
वामेचशोभतेवीरहस्तेतस्यमहात्मनः
महापद्मंसुगंधाढ्यंतस्यदक्षिणहस्तगम् १००
शोभमानंसदैवास्तेसायुधंकमलश्रियम्
कंबुग्रीवंसुवृत्तास्यंपद्मपत्रनिभेक्षणम् १०१
राजमानंहृषीकेशंदशनैःकुंदसंनिभैः
गुडाकेशस्ययस्यास्तेग्रधरोविद्रुमाकृतिः १०२
शोभतेपुंडरीकाक्षःकिरीटेनापिभास्वता
विशालेनापिरूपेणकेशवस्तुसुवक्षसा १०३
कौस्तुभेनांकितेनैवराजमानोजनार्दनः
सूर्यतेजःप्रतीकाशकुंडलाभ्यांप्रभातिच १०४
श्रीवत्सांकेनपुण्येनसर्वदाराजतेहरिः
केयूरकंकणैहरिर्मौक्तिकैर्ऋक्षसन्निभैः १०५
वपुषाभ्राजमानस्तुविजयोजयतांवरः
भ्राजतेसोऽपिगोविंदोहेमवर्णेनवाससा १०६
मुद्रिकाभिस्तुयुक्ताभिरंगुलीषुविराजते
सर्वायुधैःसुसंपूर्णैर्दिव्यैराभरणैर्हरिः १०७
वैनतेयसमारूढोलोककर्त्ताजगत्पतिः
एवंयोध्यायतेनित्यमनन्यमनसानरः १०८
मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति
एतत्तेसर्वमाख्यातंध्यानभेदंजगत्पतेः १०९

इति श्रीपद्मपुराणेपातालखंडेनारदांबरीषसंवादेवैशाखमाससमाहात्म्ये
भगवद्ध्यानवर्णनंनामचतुरशीतितमोऽध्यायः ८३

पंचाशीतितमोऽध्यायः

अंबरीषउवाच-
साधुसाधुमुनिश्रेष्ठलोकानुग्रहकारक
विष्णोर्ध्यानंत्वयाप्रोक्तंसगुणंनिर्गुणंचयत् १
अधुनालक्षणंब्रूहिभक्तेःसाधुकृपाकर
यादृशीक्रियतेयेनयथायत्रयदातथा २
सूतउवाच-
इत्युक्तमाकर्ण्यनृपोत्तमस्यमुनिःप्रहृष्टोनिजगादभूपम्
शृणुष्वराजन्निखिलाघहारिणींभक्तिंहरेस्तेप्रवदामिसम्यक् ३
अथभक्तिंप्रवक्ष्यामिविविधांपापनाशिनीम्
विविधाभक्तिरुद्दिष्टामनोवाक्कायसंभवा ४
लौकिकीवैदिकीचापिभवेदाध्यात्मिकीतथा
ध्यानधारणयाबुद्ध्यावेदानांस्मरणंहियत् ५
विष्णुप्रीतिकरीचैषामानसीभक्तिरुच्यते
मंत्रवेदसमुच्चारैरविश्रांतविचिंतनैः ६
जाप्यैश्चारण्यकैश्चैववाचिकीभक्तिरुच्यते
व्रतोपवासनियमैःपञ्चेंद्रियजयेनच ७
कायिकीसैवनिर्दिष्टाभक्तिःसर्वार्थसाधिनी
भूषणैर्हेमरत्नांकैश्चित्राभिर्वाग्भिरेवच ८
वासःप्रतिसरैःसूत्रैःपावकव्यजनोच्छ्रितैः
नृत्यवादित्रगीतैश्चसर्वबल्युपहारकैः ९
भक्ष्यभोज्यान्नपानैश्चयापूजाक्रियतेनरैः
नारायणंसमुद्दिश्यभक्तिःसालौकिकीमता १०
कायिकीसैवनिर्दिष्टाभक्तिःसर्वार्थसाधिकी
ऋग्यजुःसामजाप्यानिसंहिताध्ययनानिच ११
क्रियंतेविष्णुमुद्दिश्यसाभक्तिर्वैदिकोच्यते
वेदमंत्रहविर्यागैःक्रियायावैदकीमता १२

दर्शेचपौर्णमास्यांचकर्त्तव्यंचाग्निहोत्रकम्
प्राशनंदक्षिणादानंपुरोडाशंचरुक्रिया १३
इष्टिर्धृतिःसोमपानंयाज्ञियंकर्मसर्वशः
अग्निभूम्यनिलाकाशद्युतिशंकरभास्करम् १४
तमुद्दिश्यकृतंकर्मतत्सर्वंविष्णुदैवतम्
आध्यात्मिकीतिविविधाब्रह्मभक्तिस्थितानृप १५
सांख्याख्यांयोगसंजातांशृणुभूपयथोदिताम्
चतुर्विंशतितत्त्वानिप्रधानादीनिसंख्यया १६
अचेतनानिभोग्यानिपुरुषःपंचविंशकः
चेतनःससमुद्दिष्टोकर्ताभोक्ताचकर्मणाम् १७
आत्मानित्योव्ययश्चैवअधिष्ठाताप्रयोजकः
पुरुषोऽव्यक्तनित्यःस्यात्कारणंचमहेश्वरः १८
तत्त्वसर्गोभावसर्गोभूतसर्गश्चतत्त्वतः
संख्यायाःपरिसंख्यायाः प्रधानंचगुणात्मकम् १९
ज्ञात्वासाधर्म्यवैधर्म्यंप्रधानंचविधर्मिच
कारणंब्रह्मणश्चैवकामित्वमिदमुच्यते २०
प्रयोज्यत्वंप्रधानस्यवैधर्म्यमिदमुच्यते
सर्वत्रकर्तृताब्रह्मपुरुषस्याप्यकर्तृता २१
अचेतनप्रधानेनसमत्वमिदमुच्यते
तत्त्वांतरंचतत्त्वानांकार्यकारणमेवच २२
प्रयोजनंप्रयोज्यत्वंज्ञात्वातत्त्वप्रसंख्यया
संख्यातमुच्यतेप्राज्ञैर्विजयार्थविचिंतकैः २३
इतिमत्वास्यसद्भावंतत्त्वंसंख्यांचतत्त्वतः
ब्रह्मतत्त्वाधिकंचापिभूततत्त्वंविदुर्बुधाः २४
सांख्यैःकृताभक्तिरेषाभक्तिराध्यात्मिकीस्मृता
योगजामपितेभूपशृणुभक्तिंवदाम्यहम् २५
प्राणायामपरोनित्यंध्यानवान्नियतेंद्रियः
भैक्ष्यभक्षव्रतीचापिसर्वप्रत्याहृतेन्द्रियः २६
धारणंहृदयेकृत्वाध्यायमानोमहेश्वरम्
हृत्पद्मकर्णिकासीनंपीतवस्त्रंसुलोचनम् २७

पश्यन्नुद्योतितमुखंब्रह्मसूत्रकटीतटम्
श्वेतवर्णंचतुर्बाहुंवरदाभयहस्तकम् २८
योगजामानसीसिद्धिर्विष्णुभक्तिःपरास्मृता
यएवंभक्तिमान्देवंविष्णुभक्तिःसउच्यते २९
एवंभक्तिःसमुद्दिष्टाविविधानृपनंदन
सात्विकीराजसीचैवतामसीभेदतस्त्विमाः ३०
नानाप्रकाराविज्ञेयाविष्णोरमिततेजसः
यथाग्निःसुसमृद्धार्च्चिःकरोत्येधांसिभस्मसात् ३१
पापानिभगवद्भक्तिस्तथादहतितत्क्षणात् ३२
यावज्जनोनशृणुतेभुविविष्णुभक्तिंसाक्षात्सुधारसमशेषरसैकसारम्
तावज्जरामरणजन्मशताभिघातदुःखानितानिलभतेबहुदेहजानि ३३
संकीर्तितश्चिंतितकीर्तिरंतःश्रुतानुभावोभगवाननंतः
समंततोऽघविनिहंतिमेघंवायुर्यथाभानुरिवांधकारम् ३४
नदानदेवार्चनयागतीर्थस्नानश्रुताचारतपःक्रियाभिः
तथाविशुद्धिंलभतेंऽतरात्मायथाहृदिस्थेभगवत्यनंते ३५
कथाविशुद्धानरनाथतथ्यास्ताएवपथ्याहरिनाथतथ्याः
संकीर्तितायत्रपवित्रमूर्तेःसंश्रूयतेचश्रुतसाधुकीर्तिः ३६
धन्योसिधीरधरणीधरधर्मधुर्य्यध्यानैकतानहृदयःपुरुषोत्तमस्य
यन्नैष्ठिकीमतिरसौतवसौभगश्रीःश्रीकृष्णनाथसुकृतःश्रवणेप्रवृत्ता ३७
अनाराध्यहरिंभक्त्यावरदंविष्णुमव्ययम्
कुतःश्रेयोभवेद्भूपपुरुषस्यात्ममानिनः ३८
मायाजनिरमायोऽसौभक्त्याराजन्नमायया
साध्यतेसाधुपुरुषःस्वयंजानातितद्भवान् ३९
नविद्यतेतेनृपधर्मतत्त्वमज्ञातमेतद्विमलंपुनर्माम्
त्वंपृच्छसेतीर्थपदंप्रसंगात्कथारसंवैष्णवगौरवेण ४०
नातःपरंपरमतोषविशेषपोषंपश्यामिपुण्यमुचितंचपरस्परेण
संतःप्रसह्यदनंतगुणाननंतश्रेयोनिधीनधिकभावभुजोभुजंति ४१
ब्राह्मणाःसुरभीसत्यश्रद्धायागतपांसिच
श्रुतिस्मृतिदयादीक्षाशांतयस्तनवोहरेः ४२
आदित्यश्चंद्रमावायुर्भूमिरापोंऽबरंदिशः

ब्रह्माविष्णुश्चरुद्रश्चसर्वभूतमयोविभुः ४३
विश्वरूपःस्वयंचक्रेजगदेतच्चराचरम्
स्वयंब्राह्मणमाविश्यसदान्नमुपभुंजते ४४
ततस्तुतीर्थास्पदपादरेणून्धराधरात्मालयभूमिदेवान्
परात्मनःपूजयपुरयलन्दमीसर्वस्वभूतानखिलात्मभूतान् ४५
ब्राह्मणंविष्णुबुद्ध्यायोविद्वांसंसाधुपश्यति
सएववैष्णवोयश्चस्वस्वकर्मैकनिष्ठितः ४६
किंचिदेतन्मयाप्रोक्तंरहस्यंसमयोहिमे
स्नातुंगंतुंचगंगायांनकथावसरोऽधिकः ४७
प्राप्तोऽयमाधवोमासःपुरयोमाधववल्लभः
तस्यापिसप्तमीशुक्लागंगायामतिदुर्ल्लभा ४८
वैशाखशुक्लसप्तम्यांजाह्नवीजह्नुनापुरा
क्रोधात्पीतापुनस्त्यक्ताकर्णरंध्रात्तुदक्षिणात् ४९
तस्यांसमर्चयेद्देवींगंगांगगनमेखलाम्
स्नात्वासम्यग्विधानेनसधन्यःसुकृतीनरः ५०
तस्यांयस्तर्पयेद्देवान्पितृन्मर्त्योयथाविधि
साक्षात्पश्यतितंगंगास्नातकंगतपापकम् ५१
नमाधवसमोमासोनगंगासदृशीनदी
दुर्ल्लभःखलुयोगोऽयहरिभक्त्यैवलभ्यते ५२
विष्णुपादोदकोद्भूताब्रह्मलोकादुपागता
त्रिभिःस्त्रोतोभिरश्रांतायापुनातिजगत्त्रयम् ५३
स्वर्गारोहणनिःश्रेणीसततानंदकारिणी
अनेकदुरितोद्गारहारिणीदुर्गतारिणी ५४
श्रीमहेशजटाजूटवासिनीदुःखनाशिनी
भजमानजनस्वांतकान्तकेलिविनाशिनी ५५
सगरान्वयनिर्वाणकारिणीधर्मधारिणी
त्रिमार्गचारिणीदेवीलोकालंकृतिकारिणी ५६
दर्शनस्पर्शनस्नानकीर्त्तनध्यानसेवनैः
पुरयानपुरयान्पुरुषान्पावयंतीसहस्त्रशः ५७
गंगागंगेतिगंगेतियैस्त्रिसंध्यमितीरितम्

सुदूरस्थैश्चतत्पापंहंतिजन्मत्रयार्जितम् ५८
योजनानांसहस्रेषुगंगांयःस्मरतेनरः
अपिदुष्कृतकर्मासौलभतेपरमांगतिम् ५९
वैशाखेशुक्लसप्तम्यांदुर्ल्लभासाविशेषतः
प्राप्यतेजगतीपालहरिविप्रप्रसादतः ६०
नमाधवसमोमासोनमाधवसमोविभुः
गतोहिदुरितांभोधौमज्जमानजनस्ययः ६१
दत्तंजप्तंहुतंस्नातंयद्भक्त्यामासिमाधवे
तदक्षयंभवेद्भूपपुण्यंकोटिशताधिकम् ६२
यथादेवेषुविश्वात्मादेवोनारायणोहरिः
यथाजप्येषुगायत्रीसरितांजाह्नवीतथा ६३
यथोमासर्वनारीणांतपतांभास्करोयथा
आरोग्यलाभोलाभानांद्विपदांब्राह्मणोयथा ६४
परोपकारःपुण्यानांविद्यानांनिगमोयथा
मंत्राणांप्रणवोयद्वद्ध्यानानामात्मचिंतनम् ६५
सत्यंस्वधर्मवर्तित्वंतपसांचयथावरम्
शौचानामर्थशौचंचदानानामभयंयथा ६६
गुणानांचयथालोभक्षयोमुख्योगुणःस्मृतः
मासानांप्रवरोमासस्तथासौमाधवोमतः ६७
तत्रयत्क्रियतेश्राद्धंयज्ञदानमुपोषणम्
तपोऽध्ययनपूजादितदक्षयफलंस्मृतम् ६८
वैशाखांतानिपापानिसूर्यांतानितमांसिच
परापकारपैशुन्यप्रांतानिसुकृतानिच ६९
कार्तिकेमासियत्किंचित्तुलासंस्थेदिवाकरे
स्नानदानादिकंराजंस्तत्परार्धगुणंभवेत् ७०
तस्मात्सहस्रगुणितंमाघेमकरगेरवौ
ततोऽपिशतसंख्यातंवैशाखेमेषगेरवौ ७१
तेधन्यास्तेसुकृतिनोनरावैशाखमासिये
प्रातःस्नात्वाविधानेनपूजयंतिमधुद्विषम् ७२
प्रातःस्नानंचवैशाखेयज्ञदानमुपोषणम्

हविष्यंब्रह्मचर्यंचमहापातकनाशनम् ७३
पुनःकलियुगेराजन्नेतद्गोप्यंभविष्यति
अश्वमेधादिकंयस्मान्माहात्म्यंमाधवस्ययत् ७४
अश्वमेधमखःपुगयःकलौनैवप्रवर्तते
एषमाधवमासस्यहयमेधसमोविधिः ७५
अश्वमेधस्ययत्पुगयंस्वर्गमोत्तफलप्रदम्
नवेत्स्यंतिकलौपापाजनादुरितबुद्धयः ७६
तस्मिन्भवैर्नरैःपापैर्गतव्यंनरकार्णवे
अतस्तुविरलस्तस्यप्रचारोयेननिर्मितः ७७
इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्येपंचाशीतितमोऽध्यायः ८५

## षडशीतितमोऽध्यायः

सूतउवाच–
इतितस्यवचःश्रुत्वानारदस्यमहात्मनः
अंबरीषश्चराजर्षिर्विस्मितोवाक्यमब्रवीत् १
अंबरीषउवाच–
मार्गशीर्षादिकान्मासान्हित्वापुगयान्महामुने
सर्वमासाधिकंमासंवैशाखंकिंप्रशंससि २
सर्वेभ्योऽप्यधिकःकस्मान्माधवोमाधवप्रियः
कोविधिस्तत्रकिंदानंकिंतपःकाचदेवता ३
त्वत्पादांभोजरजसापावितस्यचमेमुने
उपदेशप्रसादेनप्रसादंकर्तुमर्हसि ४
धर्मज्ञोधर्ममार्गाणामुद्धर्तासिमहामुने
त्वमेकोऽखिलतत्त्वार्थवेत्ताधर्मोपदेशकः ५
कर्तोपदेष्टामंतावानुमंतापिप्रयोजकः
शास्त्रविद्भिर्मुनिवरस्मर्यंतेसमभागिनः ६
व्रतसत्रतपोदानैर्यत्फलंसमवाप्यते
धर्मोपदेशनेनैवतत्सर्वमुपलभ्यते ७
तीर्थस्नानंतपोयज्ञकर्मयत्कुरुतेमुने
अपितत्फलभागीस्याद्यःप्रवर्तयिताभवेत् ८

यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनः
सयत्प्रमाणंकुरुतेलोकस्तदनुवर्तते ९
तदर्हतिभवान्धर्ममुपदेष्टुंतदद्भुतम्
दुर्ल्लभोगुरुसंबोधोदेशकालोपपत्तयः १०
नकेचनतथाभावाश्चेतःशीतलयंतिनः
राज्यलाभादयोऽप्येतेयथातवसमागमः ११
सूतउवाच-
अथमंदमृदुस्मेरस्फुरद्दंतप्रभानुगः
अंबरीषंप्रत्युवाचनारदोमुनिसत्तमः १२
नारदउवाच-
शृणुराजन्प्रवक्ष्यामिहितायजगतस्तव
विधिर्माधवमासस्ययच्छ्रुतोब्रह्मणःपुरा १३
दुर्ल्लभंभारतेवर्षेजन्मतस्मान्मनुष्यता
मानुष्येदुर्ल्लभेलोकेस्वस्वधर्मप्रवर्त्तनम् १४
ततोऽपिभक्तिर्भूपालवासुदेवेऽतिदुर्ल्लभा
तत्रापिदुर्ल्लभोमासोमाधवोमाधवप्रियः १५
तमवाप्यततोमासंस्नानदानजपादिकम्
कुर्वंतिविधिनायेतुधन्यास्तेकृतिनोनराः १६
तेषांदर्शनमात्रेणपापिनोऽपिविकिल्बिषाः
भवंतिभगवद्भावभाविताधर्मकांक्षिणः १७
माधवेमासियैःस्नातंप्रातर्नियमसंयुतैः
तेकोटिवर्षपर्यंतंक्रीडंतेनंदनेवने १८
यथानवारिधिसमोलोकेकोऽपिजलाशयः
तथामासोनवैशाखसदृशोमाधवप्रियः १९
तावत्पापानितिष्ठंतिमनुष्याणांकलेवरे
यावत्किलमलध्वंसीमासोनायातिमाधवः २०
अवशिष्टदिनान्येवपंचमासस्यतस्यवै
एकादशींसमारभ्यसर्वमाससमानिवै २१
वैशाखेपूजितोदेवोमाधवोमधुहातुयैः
नानोपचारैराजेंद्रतैःप्राप्तंजन्मनःफलम् २२

किंकिंनदुर्ल्लभतरंप्राप्यतेमासिमाधवे
स्नानेनपरमेशस्यपूजनेनयथाविधि २३
नदत्तंनहुतंजप्तंनतीर्थेमरणंकृतम्
यैर्हिनारायणोनैवध्यातोनिखिलपापहा २४
तेषांजन्मनृणांलोकेज्ञातव्यंनिष्फलंनृप
द्रव्येषुविद्यमानेषुकृपणोयोभवेन्नरः २५
अदत्वाम्रियतेयोहितस्यद्रव्यंनिरर्थकम्
तीर्थस्नानादितपसासत्कुलेजन्मलभ्यते २६
नदानेनविनाभूपकिंचिदप्युपतिष्ठति
वैशाखस्नानमाहात्म्यादपिपंचदिनात्मकात् २७
सत्कुलेप्राप्यतेजन्मवैभवंविविधंतथा
सुपुत्रःसुकुलंभूपधनधान्यंवरस्त्रियः २८
सुजन्ममरणंचापिसुभोगाःसुखमेवच
सदादानेऽधिकाप्रीतिरौदार्यंधैर्यमुत्तमम् २९
प्रसादात्तस्यदेवस्यविष्णोश्चैवमहात्मनः
नारायणस्यजायंतेसिद्धयोभूपवांच्छिताः ३०
ऊर्जेमासितपोमासिमाधवेमाधवप्रिये
स्नात्वादामोदरंभक्त्यामाधवंमधुसूदनम् ३१
विशेषेणसमभ्यर्च्यदत्वादानानिशक्तितः
एहिकंसुखमासाद्यनरोहरिपदंव्रजेत् ३२
अनेकजन्मार्जितपातकावलीविलीयतेमाधवमज्ञनेन
सूर्योदयेभूपयथातमिस्त्रंवचःस्वयंभूरिदमादिशन्मे ३३
चकारविष्णुर्विपुलप्रचारंमासस्यवैमाधवसंज्ञकस्य
यमस्यगुप्तंवचसाविचिंत्यमनुष्यलोकंगमितंचकार ३४
तस्मादस्मिन्समायातेमाधवेमासिवैष्णवैः
स्नात्वापुरायजलेतीर्थेगंगायाःपावनेनृणाम् ३५
रेवायावामहाराजयामुनेशारदेऽथवा
प्रातस्त्वनुदितेभानौविधानेननृपोत्तम ३६
पूजयित्वाचदेवेशंमुकुंदंमधुसूदनम्
पुत्रपौत्रधनैःश्रेयोवांच्छितानिसुखानिच ३७

अनुभूयतपस्त्वंतेस्वर्गमक्षयमाप्नुयात्
एवंज्ञात्वामहाभागमधुसूदनमर्चय ३८
स्नात्वासम्यग्विधानेनवैशाखेतुविशेषतः
देवमाराध्यगोविन्दंनारायणमनामयम् ३९
प्राप्स्यसित्वंसुखंपुत्रंधनानिचहरेःपदम्
देवदेवंनमस्कृत्यमाधवंपापनाशनम् ४०
प्रारभेतव्रतमिदंपौर्णमास्यांमधोर्नृप
यमैश्चनियमैर्युक्तःशक्त्याकिंचित्प्रदायच ४१
हविष्यभुग्भूमिशायीब्रह्मचर्यव्रतेस्थितः
कृच्छ्रादितपसाक्षामोध्यायन्नारायणंहृदि ४२
एवंप्राप्यचवैशाखींदद्यान्मधुतिलादिकम्
भोजनंद्विजमुख्येभ्योभक्त्याधेनुंसदक्षिणाम् ४३
अच्छिद्रंप्रार्थयेच्चापितस्यस्नानस्यभूसुरान्
यथालक्ष्मीःप्रियाभूपमाधवस्यजगत्पतेः ४४
तथैवमाधवोमासोमधुसूदनवल्लभः
एवंविधियुतोमर्त्यःस्नात्वाद्वादशवत्सरम् ४५
उद्यापनंचरेच्छक्त्यामधुसूदनतुष्टये
इदंमाधवमासस्यमाहात्म्यंकथितंतव ४६
यत्पुराब्रह्मणोवक्त्राच्छ्रुतमासीन्मयानृप ४७

इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्ये
षडशीतितमोऽध्यायः ८६

## सप्ताशीतितमोऽध्यायः

सूतउवाच-
इतितस्यवचःश्रुत्वानारदस्यसभूपतिः
प्रणम्यविस्मितःप्राहचिन्तयन्मनसाहरिम् १
अंबरीषउवाच-
कथमेतद्विमुह्यामःस्वल्पायासेनवैमुने
प्राप्यतेस्नानमात्रेणफलंचैवातिदुर्ल्लभम् २
नारदउवाच-

सत्यमुक्तंत्वयाराजन्नल्पायासेनयन्महत्
फलंसंप्राप्यतेतत्रश्रद्धत्स्वविधिभाषितम् ३
धर्मस्यगतयःसूक्ष्मादुर्ज्ञेयाहीश्वरैरपि
मुह्यंतेचात्रविद्वांसोऽचित्यशक्तिहरेःकृतौ ४
विश्वामित्रादयोराजन्धर्माधिक्येनबाहुजाः
ब्राह्मरायंसमुपायाताःसूक्ष्माधर्मगतिस्त्वतः ५
अजामिलोऽपिभूपालदासीपतिरितिश्रुतः
धर्मपत्नीपरित्यागीनित्यंपापपथिस्थितः ६
म्रियमाणःसुतस्नेहात्प्रोच्यनारायणेतिच
तद्ध्याननामग्रहणात्पदंलेभेसुदुर्ल्लभम् ७
अनिच्छयापिदहतिस्पृष्टोहुतवहोयथा
तथादहतिगोविंदनामव्याजादपीरितम् ८
कानीनस्यमुनेःपौत्राभ्रातृजायाभिगामिनः
गोलकस्यचवैपंडोःपुत्राःकुंडाःस्वयंतथा ९
तेपंचापिचभूपालपांडवाद्रौपदीरताः
तेषांचपुरायश्लोकत्वंसूक्ष्माधर्मगतिस्ततः १०
विचित्राणिचकर्माणिविचित्राभूतभावनाः
विचित्राणिचभूतानिविचित्राःकर्मशक्तयः ११
कदाचित्सुकृतंकर्मकूटस्थंयदवस्थितम्
केनचित्कर्मणाभूपशुभेनपरिवर्धते १२
फलंददातिसुमहत्कस्मिन्नपिचजन्मनि
सूक्ष्मोधर्मोऽतिगहनोमीयतेनयथातथा १३
नैतस्यफलदानस्यश्रूयतेभूपनिश्चयः
यत्किंचित्सुकृतंकर्मच्छन्नंपापांतरैरपि १४
तदागत्यकुतःक्वापिस्वंफलंचप्रयच्छति
कृतस्यनेहनाशोऽस्तिपुरायस्यःदुरितस्यच १५
तथापिबहुभिःपुरायैर्दुरितंयातिदारुणम्
यदुक्तंभवताराजन्नायासाधिक्यतोभवेत् १६
महत्पुरायंचतत्रापिकारणंमेनिशामय
स्वल्पायासमहायासौयद्यल्पत्वमहत्त्वयोः १७

महापुण्यास्ततस्तेस्युःसंततंकर्षकादयः
मंत्रोच्चारंचसिंहादेरायासंबहुलंत्वतः १८
पंचगव्यंप्रशस्तंहिव्रतांगत्वेननोभवेत्
इतिकर्तव्यबाहुल्यंमहत्त्वंचतदल्पता १९
जलाग्न्यादिप्रवेशस्यप्रसज्येतव्रतांतरात्
इदमल्पंमहच्चैतदितिनैवनियामकम् २०
फलंयच्चोदितंशास्त्रेतदेवस्यान्महन्नृप
यथाल्पनाशोमहतामहन्नाशस्तथाल्पतः २१
किंत्वल्पविस्फुलिगेनतृणराशिःप्रदह्यते २२
हत्यायुतंपापसहस्रमुग्रंगुर्वंगनाकोटिनिषेवणंच
स्तेयादिपापानिचकृष्णभक्तैरज्ञानजातानिलयंह्रियंते २३
विष्णुभक्तिमतावीरयत्किंचित्क्रियतेऽल्पकम्
सुकृतंसाधुविदुषातदक्षयफलंलभेत् २४
संदेहोनात्रकर्त्तव्योमाधवेमासिमाधवम्
समाराध्यनरोभक्त्यातत्तद्वांच्छितमाप्नुयात् २५
अपत्यंद्रविणंरत्नंदाराहर्म्यंहयागजाः
सुखानिस्वर्गमोक्षौचनदूरेहरिभक्तितः २६
एवंशास्त्रोक्तविधिनास्वल्पेनापिनसंशयः
पापस्यमहतोऽपिस्यात्क्षयोवृद्धिःसुकर्मणः २७
फलाधिक्यंभवेद्भूपत्वाधिक्याद्भावकर्मणोः
सूक्ष्माधर्मस्यविज्ञेयागतिस्तुविविधैरपि २८
प्रियोमाधवमासोऽयमाधवस्यमहात्मनः
एकोप्यनुष्ठितोलोकैःसमग्रेप्सितदायकः २९
पुण्येनगांगेनजलेनकालेदेशेऽपियःस्नानपरोऽपिभूप
आजन्मतोभावहतोऽपिदातानशुद्धिमेतीतिमतंममैतत् ३०
गंगादितीर्थेषुवसंतिजीवादेवालयेपक्षिगणाश्चनित्यम्
विनाशमायांतिकृतोपवासाभावोज्झितानैवगतिंलभंते ३१
भावंततोहृत्कमलेनिधायश्रीमाधवंमाधवमासिभक्त्या
यजेतयःस्नानपरोविशुद्धःपुण्यंनशक्तावयमस्यवक्तुम् ३२
प्रज्वाल्यवह्निंघृततैलसिक्तंप्रदक्षिणावर्तशिखंस्वकाले

प्रविश्यदग्धःकिलभावदुष्टोनस्वर्गमाप्नोतिफलंनचान्यत् ३३
श्रद्धत्स्वभूपतस्मात्त्वंमाधवस्यफलंप्रति
स्वल्पंचापिशुभंकर्मविकर्मशतनाशनम् ३४
यथाहरेर्नामभयेनभूपनश्यंतिसर्वेदुरितस्यवृंदाः
नूनंरवौमेषगतेविभातेस्नानेनतीर्थेचहरिस्तवेन ३५
तेजसावैनतेयस्यपाप्मानःपन्नगाइव
विद्रवंतिचवैशाखस्नानेनोषसिनिश्चितम् ३६
गंगायांनर्मदायांवास्नात्वामेषगतेरवौ
पापप्रशमनस्तोत्रंयःपठेद्भक्तिभावतः ३७
एककालंद्विकालंवात्रिसंध्यमपिभूपते
सयातिपरमंस्थानंसर्वपापविवर्जितः ३८
अंबरीषमहत्पुरायप्राप्तयेकुरुवीक्षणम्
माधवेमासिवैस्नानंप्रातर्नियमसंस्थितः ३९
यदानर्त्तपुरेप्रोक्तंवसतांवर्षकोटिभिः
तत्प्रातर्माधवेमासिस्नानेनैकेनलभ्यते ४०
इहार्थेयत्पुरावृत्तंतदाकर्णयभूपते
भार्ययासहसंवादंदेवशर्मद्विजन्मनः ४१
रेवातीरेसुपुरायेचतीर्थेचामरकंटके
कौशिकस्यसुतोजातोदेवशर्माद्विजोत्तमः ४२
धनपुत्रविहीनस्तुबहुदुःखसमन्वितः
दारिद्रेरासुदुःखेनसर्वदैवप्रपीडितः ४३
पुत्रोपायंधनस्यापिदिवारात्रौप्रचिंतयेत्
एकदातुप्रियातस्यसुमनानामसुव्रता ४४
भर्तारंचिंतयोपेतमधोमुखमलक्षयत्
समालोक्यतदाकांतंतमुवाचयशस्विनी ४५
दुःखजालैरसंख्यैस्तुतवचित्तंप्रकर्षितम्
व्यामोहेनप्रमूढोसित्यजचिंतांमहामते ४६
ममदुःखंसमाचक्ष्वस्वस्थोभवसुखंव्रज
नास्तिचिंतासमंदुःखंकायशोषरामेवहि ४७
तांसंत्यज्यप्रवर्तेतससुखेनप्रमोदते

चिंतायाःकारणंविप्रकथयस्वममप्रभो ४८
नारदउवाच-
प्रियावाक्यंससंश्रुत्यदेवशर्मामहामतिः
उवाचवचनंप्रीतोदुःखितोऽपिसतीसखः ४९
देवशर्मोवाच-
यत्त्वयाचिंतितंभद्रेकिंचिद्दुःखस्यकारणम्
तत्सर्वंतुप्रवक्ष्यामिश्रुत्वाचैवावधार्यताम् ५०
नजानेकेनपापेनधनहीनोऽस्मिसुव्रते
तथापुत्रविहीनोऽस्मिएतद्दुःखस्यकारणम् ५१
सुमनोवाच-
श्रूयतामभिधास्यामिसर्वसंदेहनाशनम्
स्वरूपमुपदेशस्यसर्वविज्ञानदर्शनम् ५२
संतोषएवपरमंपुण्यंसौख्यादिकारणम्
असंतोषःपरंपापमित्याहभगवान्हरिः ५३
लोभःपापस्यबीजोऽयमोहोमूलंचतस्यवै
असत्यंतस्यहिस्कंधोमहाशाखासुविस्तरात् ५४
मदकौटिल्यपत्राणिकुबुद्ध्यापुष्पितःसदा
अनृतंतस्यसौगंध्यमज्ञानंफलमेवच ५५
कुडयंपाषंडचौराश्चक्रूराःकूटाश्चपापिनः
पक्षिणोमोहवृक्षस्यमहाशाखासमाश्रिताः ५६
अज्ञानंसुफलंतस्यरसोधर्मफलस्यहि
भावोदकेनसंवृद्धिस्तस्यश्रद्धाक्रतुप्रिया ५७
अधर्मेषुरसस्तस्यउत्क्लेदैर्मधुरायते
तादृशैश्चफलैश्चैवसफलोलोभपादपः ५८
तस्यच्छायांसमाश्रित्ययोनरःपरिवर्तते
फलानितस्यसोऽश्नातिस्वपक्वानिदिनेदिने ५९
फलानांचरसेनापिअधर्मेणतुपोषितः
ससंपुष्टोभवेन्मर्त्यःपतनायप्रयच्छति ६०
तस्माच्चिंतांपरिश्रित्यस्वामिलोभंनकारयेत्
धनपुत्रकलत्राणांचिंतामेतांनकारयेत् ६१

योहिविद्वान्नचेत्कांतमूर्खाणांपथमेवहि
मृषचिंतयतेनित्यंदिवारात्रौविमोहितः ६२
शुभार्थंचप्रविंदामिकथंपुत्रानहंलभे
एवंचिंतयतेनित्यंदिवारात्रौविमोहितः ६३
क्षणमेकंप्रपश्येत्सचिंतामध्येमहत्सुखम्
पुनश्चैतन्यमायातिमहादुःखेनपीड्यते ६४
चिंतामोहौपरित्यज्यअनुवर्तस्वतंद्विज
संसारेनास्तिसंबंधःकेनसार्धंमहामते ६५
मित्राश्चबांधवाःपुत्राःपितामातासुतास्तथा
स्वसंबंधाभवंत्येतेकलत्रादितथैवच ६६
देवशर्मोवाच-
संबंधःकीदृशोभद्रेतन्मेविस्तरतोवद
येनजायंतितेसर्वेधनपुत्रादिबांधवाः ६७
सुमनोवाच-
भर्तःपंचविधाःपुत्राजायंतेतान्वदाम्यहम्
न्यासापहारकंचैकमृणसंबंधिनंपरम् ६८
रिपुंलभ्यमुदासीनमितिकांतभवंतिते
लक्षणानिप्रवक्ष्यामितेषामीशपृथक्पृथक् ६९
पुत्रामित्राःप्रियाभार्यापितामाताचबांधवाः
स्वेनस्वेनहिजायंतेसंबंधेनमहीतले ७०
न्यासापहारभावेनयस्ययेनहृतंभुवि
न्यासस्वामीभवेत्पुत्रोगुणवान्रूपवान्भुवि ७१
येनह्यपहृतंन्यासंतस्यगेहेनसंशयः
न्यासापहारणंदुःखंसदत्त्वादारुणंगतः ७२
न्यासस्वामीसुपुत्रोऽभून्न्यासापहारकस्यच
गुणवान्रूपवांश्चैवसर्वलक्षणसंयुतः ७३
भक्तिंचदर्शयेत्तस्यपुत्रोभूत्वादिनेदिने
प्रियवाङ्मधुरोवाग्मीबहुस्नेहंविदर्शयेत् ७४
स्वीयंद्रव्यंसमुद्ग्राह्यप्रीतिमुत्पाद्यचातुलाम्
यथातेनप्रदत्तंतन्न्यासापहरणात्परम् ७५

दुःखमेवंमहाभागदारुणंप्राणनाशनम्
तादृशंतस्यसोदद्यात्पुत्रोभूत्वामहागुणः ७६
अल्पायुषस्तथाभूत्वामरणंचोपगच्छति
दुःखंदत्वाप्रयात्येवंप्रहृत्यैवंपुनःपुनः ७७
यदाहपुत्रपुत्रेतिप्रलापंहिकरोतियः
तदाहास्यंकरोत्येषकस्तुपुत्रोहिकस्यच ७८
अनेनापहृतंन्यासंमदीयंपापचारिणा
द्रव्यापहारणेनापिममप्राणागताःकिल ७९
दुःखेनमहताचैवअसह्येनचवैपुरा
तदादुःखंमयादत्वाद्रव्यमुद्ग्राह्यमुत्तमम् ८०
इति श्रीपद्मपुराणेपातालखंडेवैशाखमाहात्म्ये
सप्ताशीतितमोऽध्यायः ८७

## अष्टाशीतितमोऽध्यायः

सुमनोवाच–
ऋणसंबंधिनंपुत्रंप्रवक्ष्यामितवाग्रतः
ऋणंयस्यगृहीत्वायःप्रयातिमरणंकिल १
अर्थदातासुतोभूत्वाभ्रातावाथपिताप्रिया
मित्ररूपेणवर्तेतअंतर्दुष्टःसदैवसः २
गुणंनैवप्रपश्येतसक्रूरोनिष्ठुराकृतिः
जल्पतेनिष्ठुरंवाक्यंसदैवस्वजनेषुच ३
मिष्टंमिष्टंसमश्नातिभोगान्भुंजतिनित्यशः
द्यूतकर्मरतोनित्यंचौरकर्मणिसस्पृहः ४
गृहाद्द्रव्यंचोरयतिवार्यमाणःसकुप्यति
पितरंमातरंचैवकुत्सतेचदिनेदिने ७
एवंसंक्षीयतेद्रव्यमेवमेतद्वदत्यपि
गृहंक्षेत्रादिकंसर्वंममैवहिनसंशयः ८
पितरंमातरंचैवहिनस्त्येवदिनेदिने
सुदंडैर्मुशलैश्चैवकेशोत्पाटैश्चदारुणैः ९
मृतेतुतस्मिन्पितरिमातरिचातिनिष्ठुरः

निःस्नेहोनिष्ठुरश्चैवजायतेनात्रसंशयः १०
श्राद्धकार्याणिदानानिनकरोतिसदैवसः
एवंविधाःप्रियाःपुत्राभवंतिचमहीपते ११
रिपुंपुत्रंप्रवक्ष्यामितवाग्रेद्विजसत्तम
बाल्येवयसिसंप्राप्तेपुत्रत्वेवर्ततेसदा १२
पितरंमातरंचैवक्रीडमानोहिताडयेत्
ताडयित्वाप्रयात्येवंप्रहस्यैवंपुनःपुनः १३
पुनरायातितंतत्रपितरंमातरंपुनः
सक्रोधोवर्ततेनित्यंकुत्सतेचदिनेदिने १४
एवंसंवर्ततेनित्यंवैरकर्मणिसंपदा
पितरंताडयित्वाचमातरंचततःपुनः १५
प्रयात्येवंसदुष्टात्मापूर्ववैरानुभावतः
अथातःसंप्रवक्ष्यामियथालभ्यंभवेत्प्रियम् १६
जातमात्रंप्रियंकुर्याद्बाल्येक्रीडनताडनैः
वयःप्राप्यप्रियंकुर्यान्मातृपित्रोरनंतरम् १७
भक्त्यासंतोषयेन्नित्यंतावुभौपरितोषयेत्
स्नेहेनवचसाचैवप्रियसंभाषणेनच १८
मृतौगुरूसमाज्ञायस्नेहेनरुदतेपुनः
श्राद्धकर्माणिसर्वाणिपिंडदानादिकांक्रियाम् १९
करोत्येवसुदुःखार्तस्तेभ्योयात्रांप्रयच्छति
ऋणत्रयान्वितःस्नेहान्मोचयेद्यस्तुनिश्चितः २०
यस्माल्लभ्यंभवेत्कांतप्रयच्छतिनसंशयः
पुत्रोभूत्वामहाप्राज्ञअनेनविधिनाकिल २१
उदासीनंप्रवक्ष्यामितवाग्रेप्रियसांप्रतम्
उदासीनेनभावेनसदैवपरिवर्तते २२
ददातिनैवगृह्णातिनचकुप्यतितुष्यति
नोवप्रयातिसंत्यज्यउदासीनोद्विजोत्तम २३
भृत्याश्चापिसमाख्याताःपशवस्तुरगास्तथा
गजामहिष्योदास्यश्चऋणसंबंधिनस्त्वमी २४
गृहीतमाययैकेनआवाभ्यांतुनकस्यहि

न्यासमेवंनकस्यापिकृतंवैपूर्वजन्मनि २५
राधयामिनकस्यापिद्यणंकांतशृणुष्वहि
नवैरमस्तिकेनापिपूर्वजन्मनिवैकृतम् २६
आबाल्येनतुविप्रेंद्रनचत्यक्तोमयापतिः
एवंज्ञात्वाशमंगच्छत्यजचिंतामनर्थिकीम् २७
हृतंनैवचकस्यापिनैवदत्तंत्वयापुनः
कथंतेधनमायातिविस्मयंव्रजमाविभो २८
प्राप्तमेवहियत्रैवरद्मितुश्चनतिष्ठति
एवंज्ञात्वाशमंगच्छत्यजचिंतामनर्थिकीम् २९
कस्यपुत्राःप्रियाभार्याकस्यस्वजनबांधवाः
कःकस्यनास्तिसंसारेनसंबंधोद्विजोत्तम ३०
मायामोहेनसंमूढामानवाःपापचेतनाः
इदंगृहमयंपुत्रइयंभार्याममैवहि ३१
अनृतंदृश्यतेकांतसंसारस्यहिबंधनम् ३२

इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्ये
अष्टाशीतितमोऽध्यायः ८८

## एकोननवतितमोऽध्यायः

नारदउवाच–
एवंसंबोधितोविप्रोदेवशर्माद्विजोत्तमः
पुनःप्राहप्रियांभार्यांसहितांज्ञानवादिनीम् १
सत्यमुक्तंत्वयाभद्रेसर्वसंदेहनाशनम्
तथाहिवंशमिच्छंतिसाधवःसत्यपंडिताः २
यथापुत्रस्यचिंतामेनधनस्यतथाप्रिये
येनकेनाप्युपायेनपुत्रमुत्पादयाम्यहम् ३
सुमनोवाच–
पुत्रेणलोकाञ्जयतिपुत्रस्तारयतेकुलम्
सुपुत्रेणमहाभागपितामाताप्रजीवतः ४
एकःपुत्रोवरःकांतबहुभिर्निर्गुणैस्तुकिम्
एकस्तारयतेवंशमन्येसंतापकारकाः ५

पूर्वमेवमयाप्रोक्तमन्येसंबंधभागिनः
पुगयेनप्राप्यतेपुत्रःपुगयेनप्राप्यतेकुलम् ६
सुगर्भःप्राप्यतेपुगयैर्दुर्मृत्युःपातकैस्तथा
सुखानांनिचयंकांतसत्यमेववदाम्यहम् ७
ब्रह्मचर्येगसत्येनतपसानित्यवर्तनैः
दानेननियमैश्चापिच्चमाशौचेनवल्लभ ८
ग्रहिंसयाचशक्त्यावाऽस्तेयेनापिप्रवर्तते
एतैर्दशभिरंगैश्चधर्ममेवंप्रसूयते ९
संपूर्णोजायतेधर्मग्रंगैर्गर्भोयथोदरे
धर्मंसृजतिधर्मात्मात्रिविधेनैवकर्मगा १०
तस्यधर्मःप्रसन्नात्मापुगयसौख्यंप्रयच्छति
यंयंचिंतयतेप्राज्ञस्तंतंप्राप्नोतिदुर्लभम् ११
देवशर्म्मोवाच-
सर्वंदेविसमाख्यातंधर्माख्यंज्ञानमुत्तमम्
कथंपुत्रमहंविंद्यांवैष्णवंगुगसंयुतम् १२
वदत्वंमेमहाभागेयदिजानासिसुव्रते
धर्ममार्गस्त्वयासर्व्वःपितुःप्राप्तःपुरानघे १३
ममैतद्विदितंकांतेभवतीब्रह्मवादिनी
च्यवनस्यप्रसादेनविष्णोस्तुष्टस्यतेपुरा १४
सुमनोवाच-
वसिष्ठंगच्छधर्मज्ञतंप्रार्थयमहामुनिम्
तस्मात्प्राप्स्यसितंपुत्रंधर्मज्ञंधर्मवत्सलम् १५
एवमुक्तेतयावाक्येदेवशर्माद्विजोत्तमः
करिष्येतवकल्यागिमतमेवंनसंशयः १६
एवमुक्त्वाजगामासौदेवशर्माद्विजोत्तमः
वसिष्ठंसर्ववेत्तारंदीप्यंतंतपतांवरम् १७
गंगातीरेस्थितंपुगयमासनस्थंद्विजोत्तमम्
तेजोज्वालासमाकीर्गंद्वितीयमिवभास्करम् १८
राजमानंमहात्मानंब्रह्मसिंहंद्विजोत्तमम्
भक्त्याप्रगम्यसमुनिंदंडवत्तंपुनःपुनः १९

तमुवाचमहातेजाब्रह्मसूनुरकल्मषम्
उपविशासनेपुण्येसुखेनसुमहामते २०
नारदउवाच-
उपविष्टःसयोगींद्रःपुनःप्राहतपोधनम्
गृहेपुरुषतेवत्सदारभृत्येषुसर्वदा २१
क्षेममस्तिमहाभागपुण्यकर्मसुचाग्निषु
निरामयोऽसिचांगेषुधर्मंपालयसेसदा २२
एवमुक्त्वामहाप्राज्ञःपुनःप्राहमहीसुरम्
किंकरोमिप्रियंकामंसुप्रियंतेद्विजोत्तम २३
नारदउवाच-
एवंसंभाष्यतंविप्रंविरराम शुभंवचः
ततोविप्रोमहाभागोवसिष्ठंमुनिपुंगवम् २४
सहोवाचमहात्मानंवसिष्ठंतपतांवरम्
भगवञ्छ्रूयतांवाक्यंविच्छेदयद्विजोत्तम २५
दारिद्र्यंकेनभावेनपुत्रसौख्यंकथंनहि
एतन्मेसंशयंतातकस्मात्पापाद्वदस्वमे २६
महामोहेनसंमुग्धःप्रिययाबोधितोद्विज
तयाहंप्रेषितस्तातत्तवपार्श्वंसमागतः २७
तत्सर्वंहिसमाचक्ष्वसर्वसंदेहनाशकम्
मुक्तिदाताभवस्वत्वंममसंसारबंधनात् २८
वसिष्ठउवाच-
पुत्रामित्रास्तथाभ्राताअन्येस्वजनबांधवाः
पंचभेदास्तुसंबंधाःपुरुषस्यभवंतिते २९
तेतेसुमनसाप्रोक्ताःपूर्वमेवतवाग्रतः
ऋणसंबंधिनःसर्वेतेकुपुत्राद्विजोत्तम ३०
पुत्रस्यलक्षणंपुण्यंतवाग्रेप्रवदाम्यहम्
पुण्यप्रसक्तोयस्यात्मासत्यधर्मरतःसदा ३१
शुद्धिमाञ्ज्ञानसंपन्नस्तपस्वीवाग्विदांवरः
सर्वकर्मसुसंवीतोवेदाध्ययनतत्परः ३२
सर्वशास्त्रप्रवेदीचदेवब्राह्मणपूजकः

याज्ञिकःसर्वयज्ञानांदातात्यागीप्रियंवदः ३३
विष्णुध्यानपरोनित्यंशांतोदांतःसुहृत्सदा
पितृमातृपरोनित्यंसर्वस्वजनवत्सलः ३४
कुलस्यतारकोविद्वान्स्वकुलंपरिपोषकः
एवंगुणैस्तुसंयुक्तःसुपुत्रःसुखदायकः ३५
अन्येसंबंधयुक्ताश्चशोकसंतापकारकाः
उदासीनेनकिंकार्यंफलहीनेनतेऽनघ ३६
आयांतियांतितेसर्वेदुःखंदत्वासुदारुणम्
पुत्ररूपेणतेसर्वेसंसारेद्विजसत्तम ३७
पूर्वजन्मकृतंकर्मयत्त्वयापरिपालितम्
तत्सर्वंहिप्रवक्ष्यामिश्रूयतामद्भुतंपुनः ३८
भवाञ्छूद्रोमहाप्राज्ञपूर्वजन्मनिनान्यथा
कृषिकर्त्ताज्ञानहीनोमहालोभेनसंयुतः ३९
एकभार्यःसदाद्वेषीबहुपुत्रोह्यदत्तवान्
धर्मंनैवविजानासिसत्यंचपरिनिष्ठितम् ४०
दानंनैवत्वयादत्तंशास्त्रंनैवपरिश्रुतम्
कृतंनैवत्वयातीर्थंनचयात्रामहामते ४१
एवंकृतस्त्वयाविप्रकृषिमार्गःपुनःपुनः
पशूनांपालनंपूर्वंगच्छंश्चैवद्विजोत्तम ४२
महिषीणांतथाश्वीनांपालनंचपुनःपुनः
एवंपूर्वंकृतंकर्मत्वयैवचद्विजोत्तम ४३
विपुलंतुधनंतद्वल्लोभेनपरिसंचितम्
तस्यव्ययस्तुपुण्येननकृतस्तुत्वयाकदा ४४
पात्रेदानंनदत्तंहिदृष्ट्वावादुर्बलंचतत्
कृषिंकृत्वानदत्तंतुभवताधनमेवहि ४५
गोमयंहित्विदंसर्वंपशूनांसंचयंचवै
विक्रयित्वाधनंविप्रसंचितंविपुलंत्वया ४६
तक्रंघृतंतथाक्षीरंविक्रीतंसततंदधि
दुष्कालश्चिंतितोविप्रमोहितोविष्णुमायया ४७
कृत्वामहार्घमेवैतद्धनंब्राह्मणसत्तम

निर्दयेनत्वयादानंनदत्तंतुतदाकिल ४८
देवानांपूजनंविप्रभवतानकृतंसदा
पर्वाणिप्राप्यविप्रेभ्योद्रव्यंनैवसमर्पितम् ४९
श्राद्धकालंचसंप्राप्यश्रद्धयानकृतंत्वया
भार्यावदतितेसाध्वीदिनमध्येसमागते ५०
श्वशुरश्राद्धकालश्चश्वश्र्वाश्चैवमहामते
तच्छ्रुत्वातद्वचस्तेषांगृहंत्यक्त्वापलायसे ५१
धर्ममार्गोनदृष्टोहिश्रुतोनैवकदात्वया
लोभोमातापिताभ्रातालोभःस्वजनबांधवाः ५२
पालितोलोभएवैकस्त्यक्त्वाधर्मंसदैवहि
तस्माद्दुःखीभवाञ्जातोदारिद्रेणातिपीडितः ५३
दिनेदिनेमहातृष्णाहृदयेतेप्रवर्त्तते
यदायदागृहेद्रव्यंवृद्धिमायातितेसदा ५४
तृष्णयादह्यमानस्तुतदात्वंवह्निरूपया
रात्रौवात्वंप्रसुप्तस्तुलोभंचिंतयसेऽधिकम् ५५
दिनंप्राप्यमहामोहैर्व्यापितोहिसदैवहि
सहस्रंलक्षतःकोटिःकदावार्बुदमेवच ५६
भविष्यतिकदाखर्वोनिखर्वश्चाथमेगृहे
एवंसहस्रलक्षंचकोटिरर्बुदमेवच ५७
खर्वोनिखर्वःसंजातस्तृष्णानैवप्रगच्छति
एवंकालंपरित्यज्यवृद्धिमायातिसर्वदा ५८
नैवदत्तंहुतंविप्रभुक्तंनैवकदात्वया
निश्चितंभूमिमध्येतत्क्षिप्तंपुत्रानजानते ५९
अन्यमेवमुपायंतुद्रव्यागमनकारणात्
कुरुषेसर्वदाविप्रलोकान्पृच्छसिबुद्धिमान् ६०
खनित्रमंजनंवादंधातुवादमतःपरम्
पृच्छमानोभ्रमस्येकस्तृष्णयापरिमोहितः ६१
सर्वांश्चिंतयसेनित्यंकल्पान्सिद्धिप्रदायकान्
प्रवेशंचित्रवर्णानांचिंतामणिंचपृच्छसि ६२
तृष्णानलेनदग्धोसिसुखंनैवप्रगच्छसि

तृष्णानलप्रदीप्तोसिहाहाभूतोऽप्रचेतनः ६३
एवंभूतोसिविप्रेंद्रगतस्त्वंकालवश्यताम्
दारपुत्रेषुतद्द्रव्यंपृच्छमानेषुवैत्वया ६४
कथितंनैवतद्वत्तंप्राणांस्त्यक्त्वागतोयमम्
एवंसर्वंमयाख्यातंवृत्तांतंतवपूर्वकम् ६५
अनेनकर्मणाविप्रनिर्धनोसिदरिद्रवान्
संसारेयस्यसत्पुत्राभक्तिमंतःसदैवहि ६६
सुशीलाज्ञानसंपन्नाःसत्यधर्मरताःसदा
संभवंतिगृहेतस्ययस्यविष्णुःप्रसीदति ६७
धनंधान्यंकलत्रंतुपुत्रपौत्रमनंतकम्
सभुंक्तेमर्त्यलोकेवैयस्यविष्णुःप्रसन्नवान् ६८
विनाविष्णोःप्रसादेनदाराःपुत्राभवंतिन
सुजन्मचकुलेविप्रतद्विष्णोःपरमंपदम् ६९
इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्येदेवशर्मो-
पाख्यानेएकोननवतितमोऽध्यायः ८९

नवतितमोऽध्यायः

देवशर्मोवाच-
पूर्वजन्मकृतंपापंत्वयाख्यातंममैवतत्
शूद्रत्वेनहिविप्रेंद्रमयैवंधनमर्जितम् १
विप्रत्वंहिमयाप्राप्तंतत्कथंद्विजसत्तम
तत्सर्वंकारणंब्रूहिज्ञानविज्ञानपंडित २
दुर्ल्लभंभारतेवर्षेजन्मतस्मान्मनुष्यता
मानुष्येब्राह्मणत्वंचसुतरांसत्कुलोदितम् ३
तत्रापीदृग्विधाभार्यासर्वज्ञाप्रियवादिनी
सतीसर्वगुणोपेतादुर्लभासाकुतोऽभवत् ४
वसिष्ठउवाच-
यत्त्वयाचेष्टितंपूर्वंधर्मकर्मकृतंद्विज
तदहंसंप्रवक्ष्यामिश्रूयतांयदिमन्यसे ५
ब्राह्मणैकःसुधर्मात्मासदाचारःसुपंडितः

विष्णुभक्तस्तुधर्मात्मानित्यंविष्णुपरायणः ६
स्नानार्थमपितीर्थानांभ्रमत्येकःसमेदिनीम्
अटमानःसमायातस्तवगेहेमहामतिः ७
तस्यदर्शनमात्रेणसमुत्पन्नसुधीस्तव
यतोधर्मगतेगेहेसतामागमनंभवेत् ८
किंकिंनलभ्यतेविप्रविप्रवैष्णवसेवया
दुर्ल्लभंयच्चलोकेस्यान्मोक्षस्थानमपिस्थिरम् ९
याचितंस्थानमेकंवैवासार्थंतेनसत्तम
तवैवभार्ययादत्तंत्वयाचसहपुत्रकैः १०
एयतामेयतांब्रह्मन्सुखेनचगृहेमम
वैष्णवंब्राह्मणंपुण्यमित्युवाचपुनःपुनः ११
सुखेनस्थीयतामत्रगृहोऽयतवसुव्रत
अद्यधन्योऽस्म्यहंपुण्योअद्यतीर्थमहंगतः १२
अद्यतीर्थफलंप्राप्तंमयातेविप्रदर्शनात्
गवांस्थानंपरंपुण्यंवासस्थानंप्रदर्शितम् १३
अंगसंवाहनंसम्यक्पादौचैवप्रमर्दितौ
क्षालितौचपुनस्तोयैःस्नातःपादोदकेनहि १४
सद्योघृतंदधिक्षीरमन्यमन्यंप्रदत्तवान्
ब्राह्मणायतदातस्मैत्वंतथाऽदृष्टनोदितः १५
एवंसंतोषितोविप्रस्त्वयैवसहभार्यया
पुत्रैःसार्धंमहाभागोवैष्णवोज्ञानपंडितः १६
अथप्रभातेविमलेस्नानार्थंमासिमाधवे
गंगायांगच्छतातेनतुष्टेनदययाधिपम् १७
वैशाखस्नानमाहात्म्यमुपदिष्टंतवाग्रतः
कारितस्तुयथान्यायंसभार्यातनयोभवान् १८
यथानवारिधिसमोलोकेकोपिजलाशयः
तथामासोनवैशाखसदृशोमाधवप्रियः १९
तावत्पापानितिष्ठंतिनिष्प्रत्यूहंकलेवरे
यावत्किलमलध्वंसीमासोनैतिसमाधवः २०
तस्यवाक्यंसमाकर्ण्यवैशाखेसेवनंकृतम्

तुष्टेनमनसाविप्रपूजितोमधुसूदनः २१
अवशिष्टदिनान्येवपंचमासस्यतस्यवै
एकादशींसमारभ्यस्नानंचविधिवत्कृतम् २२
ब्राह्मणस्यप्रसंगेनरेवांचानुदिनेत्वया
प्रातःस्नानंकृतंविप्रवैशाखेमासितावता २३
पूजितोदेवदेवेशोमधुहापरमेश्वरः
नैवाप्तःसकलोमासःस्नानार्थंतवपूर्वतः २४
एवंस्नानंत्वयाचीर्णमपिपंचदिनात्मकम्
तेनपुरायेनसंगत्याब्राह्मणस्यविशेषतः २५
गोविंदस्यप्रसादेनत्वंतुब्राह्मणतांगतः
त्वयातन्मासयोगेनप्राप्तमेतन्महत्कुलम् २६
दुर्ल्लभंभूमिदेवानांसत्यधर्मसमन्वितम्
भार्यापिसुसतीप्राप्तासाध्वीसर्वगुणान्विता २७
च्यवनस्यगृहोत्पन्नासर्वज्ञाब्रह्मवादिनी
रूपमेवपरंस्त्रीणांभूषणंचमहामुने २८
शीलमेवद्वितीयंचतृतीयंसत्यमेवच
सदार्यत्वंचतुर्थंतुपंचमंपुरायमुत्तमम् २९
मधुरत्वंतथाषष्ठंशुद्धत्वंसप्तमंमहत्
बाह्यांतःसततंस्त्रीणांसर्वाभरणसप्तमम् ३०
अष्टमंतुपतौभावःशुश्रूषानवमंकिल
सहिष्णुताचदशमंरतिरेकादशंतथा ३१
पतिव्रतत्वंविप्रेंद्रद्वादशंयोषितांस्मृतम्
एतैःसंभूषिताभार्यासाध्वीतेब्रह्मवादिनी ३२
वैशाखस्नानयोगेनलब्धापुरायेनसादरम्
किंकिंनदुर्ल्लभतरंप्राप्यतेमासिमाधवे ३३
स्नानेनपरमेशस्यपूजनेनयथाविधि
अथमोहप्रमुग्धोसितृष्णयाव्यापितंमंनः ३४
पूर्वजन्मनितेविप्रद्रव्यमेवप्रसंचितम्
नदत्तंब्राह्मणेभ्योहिदीनेष्वन्येषुवैत्वया ३५
नबंधुवर्गोनोपुत्रदारेषुचकथंचन

म्रियमाणेनभवतालोभएवहिचिंतितः ३६
नदत्तंनहुतंजप्तंनतीर्थेमरणंकृतम्
नहिनारायणोदेवोध्यानेनाखिलपापहा ३७
द्रव्येषुविद्यमानेषुकृपणोजायतेनरः
अदत्वाम्रियतेयस्तुततोदुःखतरंनुकिम् ३८
तीर्थस्नानादितपसाकुलेजन्मैवलभ्यते
नोदत्तेनविनाविप्रकिंचिदेवोपतिष्ठति ३९
तस्यपापस्यभावेनदरिद्रत्वमुपागतम्
अपुत्रवान्भवाञ्जातःसततंदुःखपीडितः ४०
वैशाखस्नानमाहात्म्यादपिपंचदिनात्मकात्
तदैवहरिपूजायाःसंगत्याब्राह्मणस्यच ४१
लब्धंजन्मकुलेविप्रविप्रत्वमपिदुर्ल्लभम्
सुपुत्रश्चकुलंविप्रंधनंधान्यंवरस्त्रियः ४२
सुजन्ममरणंचैवसुभोगःसुखमेवच
सदादानेऽधिकाबुद्धिरौदार्यंधैर्यमुत्तमम् ४३
प्रसादात्तस्यदेवस्यविष्णोश्चैवमहात्मनः
नारायणस्यजायंतेसिद्धयोविप्रवाञ्छिताः ४४
ऊर्ज्जेमासितपोमासिमाधवेमाधवप्रिये
स्नात्वादामोदरंभक्त्यामाधवंमधुसूदनम् ४५
विशेषेणसमभ्यर्च्यदत्वादानानिभक्तितः
एहिकंसुखमासाद्यजनोयातिततोहरिम् ४६
अनेकजन्मार्जितपातकावलीविलीयतेमाधवमज्जनेन
सूर्योदयेविप्रयथातमिस्त्रावचःस्वयंभूरिदमादिदेश ४७
चकारविष्णुर्विमलंविचारंमासंविधिंमाधवमेकमादौ
यमस्यगुप्तंमनसाविचिंत्यमनुष्यलोकैर्गमितुंचनाके ४८
तस्मादस्मिन्समायातेमाधवेमासिमाधवे
स्नात्वापुण्यजलेतीर्थेरवावनुदितेऽधुना ४९
पूजयित्वाविधानेनमुकुंदंमधुसूदनम्
पुत्रपौत्रधनंश्रेयोवांछितानिसुखानिच ५०
अनुभूयततस्त्वंतेस्वर्गमक्षयमाप्स्यसि

पूर्वजन्मकृतंसर्वंयत्त्वयापरिचेष्टितम् ५१
तन्मयाकथितंविप्रतवाग्रेपरिचेष्टितम्
एवंज्ञात्वामहाभागवैशाखेचविशेषतः ५२
स्नात्वासम्यग्विधानेनमधुसूदनमर्चय
देवमाराध्यगोविंदंनारायणमनामयम् ५३
प्राप्स्यसित्वंसुखंपुत्रंधनानिहरिमव्ययम् ५४
नारदउवाच-
ब्रह्मात्मजेनापिमहानुभावःसविप्रवर्यःपरिबोधितोहि
हर्षेणयुक्तःसमहानुभावोभक्त्यावसिष्ठंप्रणिपत्यतत्र ५५
आमंत्र्यविप्रंसजगामगेहंतांप्राहभार्यांसुमनांमहर्षिः
सर्वंहिवृत्तंममपूर्वचेष्टितंतेनैवविप्रेणतवप्रसादात् ५६
भद्रेवसिष्ठेनविकाशनीतमद्यैवमोहःपरिनाशितोमे
आराधयिष्येमधुसूदनंतुश्रीमाधवेमासिनिमज्ज्यभक्त्या ५७
नारदउवाच-
आकर्ण्यवाक्यंपरमंपवित्रंसुमंगलंमंगलहेतुमुच्चैः
हर्षेणयुक्तातमुवाचकांतंधन्योसिविप्रेणविबोधितस्त्वम् ५८
इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्येदेवशर्मो-
पाख्यानेनवतितमोऽध्यायः ९०

## एकनवतितमोऽध्यायः

नारदउवाच-
देवशर्मामहाप्राज्ञःसमंसुमनसातया
तीर्थेकनखलेपुण्येगंगायामतिविश्रुते १
वैशाखेविधिनास्नानंचक्रेमेषस्थितेरवौ
पूजयामासविधिवन्मधुसूदनमच्युतम् २
यमैःसनियमैर्युक्तःशक्त्याकिंचिद्ददौततः
हविष्यभुग्भूमिशायीब्रह्मचर्यव्रतस्थितः ३
कृच्छ्रादितपसाक्षामोध्यायन्नारायणंहृदि
तत्रप्राप्यसवैशाखींदत्वामधुतिलादिकम् ४
विप्रेभ्योभोजनंदत्वाभक्त्याधेनुंसदक्षिणाम्

अच्छिद्रंप्रार्थयामासतत्रस्नानस्यभूसुरान् ५
सापिसाध्वीचसुश्रोणीपतिभक्तिपरायणा
पतिंशुश्रूषतेनित्यंस्नात्वासंपूज्यकेशवम् ६
तौदंपतीततोयातौस्वगेहंसाधुहर्षितम्
कृतकृत्यावथात्मानौमन्यमानावसंशयम् ७
तेनपुण्यप्रभावेणकालेनकियताकिल
बभूवुरमितास्तस्यधनधान्यानिसंपदः ८
तनयाविनयोपेताश्चत्वारःश्रुतिकोविदाः
धर्मज्ञावैष्णवानित्यंपितृमातृपरायणाः ९
बभूवुरमितप्रज्ञाःपुरुषार्थायबोधिताः
विख्याताविधितत्त्वज्ञाब्रह्मज्ञाब्रह्मतत्पराः १०
समग्रगुणसंपन्नाःसंप्रतिष्ठंतिकीर्तयः ११
तौदंपतीसुतसमग्रसमृद्धसौख्यंपुण्योदयंसमुपयुज्यततश्चिरेण
स्थानंपरंपरममीयतुरस्यभक्त्याश्रीमाधवेचसुकृतस्यनृपप्रसादात् १२
यथैवमाधवःसाक्षाद्विद्यालक्ष्मीधवःस्मृतः
तथैवमाधवोमासोमधुसूदनवल्लभः १३
इदंमाधवमाहात्म्यंकिंचित्संक्षेपतोऽनघ
मयातेकथितंवीरयत्पुराचपितुःश्रुतम् १४

इति श्रीपद्मपुराणेपातालखंडेनारदांबरीषसंवादेवैशाखमासमाहात्म्ये एकनवतितमोऽध्यायः ९१

## द्विनवतितमोऽध्यायः

सूतउवाच-
इतितस्यवचःश्रुत्वानारदस्यसभूपतिः
प्रणम्यविस्मितःप्राहचिंतयन्मनसाहरिम् १
अंबरीषउवाच-
कथमेतद्विमुह्यामःस्वल्पायासेनयन्मुने
शूद्रःपापसमाचारोलेभेब्राह्मण्यमुत्तमम् २
ब्राह्मण्यंदुर्लभंतातसुकृतैर्विविधैरपि
कथंमाधवमासस्यस्नानेनैवापसोऽधमः ३

नयज्ञदानैर्नतपोभिरुग्रैर्नपुगयसंज्ञैरपरैरपीश
ग्रस्मादृशोभूपतयोऽथवंतोनतेलभंतेऽवनिदैवतत्वम् ४
सगाधिसूनुर्विविधंतपोऽपिचिरंविधायानिशमेवघोरम्
कृच्छ्रेगलेभेशतवर्षपूर्गैरहोकथंचिद्बहुभिःप्रयत्नैः ५
कथंसवर्गाधमएषपापःस्वधर्महीनोधनवानदाता
पुगयादनायासकृतादमुष्मादल्पादिहावापसरामतत्त्वम् ६
नारदउवाच–
सत्यमुक्तंत्वयाराजन्ब्राह्मगयमतिदुर्ल्लभम्
तथापिगतयःसूद्मादुर्ज्ञेयाधर्मतत्त्वतः ७
विचित्रागिचकर्मागिविचित्राभूतभावना
विचित्रागिचभूतानिविचित्राःकर्मशक्तयः ८
कदाचित्सुकृतंकर्मकूटस्थंयदवापितम्
केनचित्कर्मगाभूपशुभेनपरिवर्धते ९
फलंददातिसुमहत्तस्मिन्नपिचजन्मनि
धर्मोगहनसूद्मोऽयनीयतेनयथातथा १०
नतस्यफलदानस्यश्रूयतेकालनिश्चयः
यत्किंचित्सुकृतंकर्मच्छन्नंपापांतरैरपि ११
तदागत्यकुतःक्वापिसुफलंचप्रयच्छति
कृतस्यनेहनाशोस्तिपुगयस्यदुरितस्यच १२
तथापिबहुभिःपुगयैर्दुरितंयातिदारुगम्
यदुक्तंभवताराजन्नायासाधिक्यतोभवेत् १३
तत्फलंतत्रतत्रापिश्रृगुसत्यंमयोदितम्
ग्रनायासमहायासौयद्यल्पत्वमहत्त्वयोः १४
महाव्रतास्ततस्तेस्युःसततंकर्मकादयः
सिंहव्याघ्रादिमूत्रादौप्रयासाबहुलास्ततः १५
पंचगव्यप्रशस्तत्वंव्रतमध्येततोभवेत्
इतिकर्तव्यबाहुल्यंमहत्त्वंचेत्तदल्पता १६
जलाग्न्यादिप्रवेशस्यप्रसज्येतव्रतांतरात्
इदमल्पंमहत्त्वंतदितिनैवनियामकः १७
फलंयथोदितंशास्त्रेतदेवस्यान्महोदयम्

यथाल्पनाशोमहतामहन्नाशस्तथाल्पतः १८
किंत्वल्पविस्फुलिगेनतृणनाशःप्रदृश्यते
अजामिलोऽपिभूपालदास्याःपतिरितिस्मृतः १९
धर्मपत्नीपरित्यागीनित्यंपापपथिस्थितः
म्रियमाणःसुताह्वानंचक्रेनारायणेतिच २०
तथायन्नामग्रहणात्पदंलेभेसुदुर्ल्लभम्
अनिच्छयापिदहतिस्पृष्टोहुतवहोयथा २१
तथादहतिगोविंदनामव्याजादपीरितम् २२
हत्यायुतंशपनहासहस्रमुग्रंगुर्वंगनाकोटिनिषेवणंच
स्तेयान्यशेषाणिहरेःप्रियेणगोविंदनाम्नानिहतानिसद्यः २३
विष्णुभक्तिमयंवीरयत्किंचित्क्रियतेऽल्पकम्
सुकृतंसाधुविदुषातदक्षयफलंभवेत् २४
संदेहोनचकर्तव्योमाधवेमासिमाधवम्
समाराध्यजनोभक्त्यातत्तद्वांछितमाप्नुयात् २५
अपत्यंद्रविणंदाराधराहर्म्यंहयागजाः
सुखानिस्वर्गमोक्षौचनदूरेहरिभक्तितः २६
एवंशास्त्रोक्तविधिनास्वल्पेनापिनसंशयः
पापस्यमहतोऽपिस्यात्क्षयःसम्यग्विधानतः २७
फलाधिक्यंभवेद्बिद्वन्नाधिक्याद्भावकर्मणोः
सूक्ष्माधर्मस्यगतयोदुर्ज्ञेयाविबुधैरपि २८
प्रियोमाधवमासोऽयमाधवस्यमहात्मनः
एकोऽपित्रिषुलोकेषुसमग्रेप्सितदायकः २९
पुण्येनगांगेनजलेनकालेदेशेबुधःस्नानपरःकथंचित्
आजन्मनोभावहतोऽपिदातानशुध्यतीत्येवमतंममैतत् ३०
प्रज्वाल्यवह्निंघृततैलसिक्तंप्रदक्षिणावर्तशिखंस्वकाले
प्रविश्यदग्धःकिलभावदुष्टोनस्वर्गमाप्नोतिफलंनचान्यत् ३१
गंगादितीर्थेषुवसंतिदेवादेवालयेयक्षगणाश्चनित्यम्
विनाशनंयांतिकृतोपवासाभावोज्झितास्तेनफलंलभंते ३२
भावंततोहृत्कमलेनिधायश्रीमाधवंमाधवमासिभक्त्या
यजेतयःस्नानपरोविशुद्धःपुण्यंनशक्तावयमस्यवक्तुम् ३३

इहार्थेऽपिपुरावृत्तमाकर्णयमहीपते
विचित्रंकथयिष्यामिफलंकिमपिकर्मणाम् ३४
तस्यमाधवमासस्यप्रसादान्माधवस्यच
यथापिब्राह्मणीकाचित्स्वैरिरायापशुभंफलम् ३५
दिवोदासेतिविख्यातःपुराकांतीश्वरोऽभवत्
तस्यापत्यंमहारत्नंनारीणामुत्तमंसदा ३६
गुणरूपसमायुक्तासुशीलाचारुमंगला
दिव्यादेवीतिविख्यातारूपेणाप्रतिमाभुवि ३७
पित्रात्वालोकितासातुरूपलावरायसंयुता
सतांदृष्ट्वादिवोदासोदिव्यांदेवींसुतांतदा ३८
कस्मैचदीयतेकन्यासुवरायमहात्मने
इतिचिंतापरोभूत्वासमालोक्यनरोत्तमः ३९
रूपदेशस्यराजानंसम्यग्ज्ञात्वामहीपतिः
चित्रसेनंमहात्मानंसमाहूयततोनृपः ४०
कन्यांददौदिवोदासश्चित्रसेनायधीमते
तस्याविवाहकालस्यसंप्राप्तेसमयेनृप ४१
मृतोऽसौचित्रसेनस्तुकालधर्मेणवैकिल
दिवोदासश्चधर्मात्माचिंतयामासभूपतिः ४२
ब्राह्मणांश्चसमाहूयपप्रच्छनृपनंदन
अस्याविवाहकालेतुचित्रसेनोदिवंगतः ४३
अस्यास्तुकीदृशंकर्मभविष्यतिब्रुवंतुमे
ब्राह्मणउवाच-
विवाहोजायतेराजन्कन्यायास्तुविधानतः ४४
पतिर्मृत्युंप्रयात्येवयोवात्यागंकरोतिच
महाधिव्याधिनाभीतस्त्यागंकृत्वाप्रयातिच ४५
प्रव्राजितोभवेद्राजन्धर्मशास्त्रेषुदृश्यते
तस्यांरजस्वलायांचअन्यःपतिर्विधीयते ४६
विवाहंतुप्रधानेनपिताकुर्यान्नसंशयः
एवंराजन्समादिष्टंधर्मशास्त्रेशुभैर्जनैः ४७
विवाहःक्रियतामस्याइत्यूचुस्तेद्विजोत्तमाः

दिवोदासश्चधर्मात्माब्राह्मणैस्तुप्रणोदितः ४८
विवाहार्थंमहाराजमानसंकृतवान्नृप
पुनर्दत्ताप्रदानेनदिव्यादेवीनृपोत्तम ४९
पुष्पसेनायपुण्यायतस्मैराज्ञेमहात्मने
मृत्युधर्मंगतोराजाविवाहसमयेऽपिसः ५०
यदायदामहाभागोदिव्यादेव्याश्चभूपतिः
करोतिसपितोद्योगंविवाहस्यातिदुःखितः ५१
भर्तापिम्रियतेकालेप्राप्तलग्नस्तदातदा
एकविंशतिभर्तारःकालेकालेमृतास्ततः ५२
ततोराजामहादुःखीसंजातःख्यातविक्रमः
समालोक्यतमाहूयमंत्रिभिःसहनिश्चलः ५३
स्वयंवरेमहाबुद्धिंचकारपृथिवीपतिः
अथतेनसमाहूताराजानोविविधानृपाः ५४
स्वयंवरार्थंवैतस्याबहवोधर्मतत्पराः
तस्यास्तुरूपसंक्षुब्धामृत्युनाप्रेषितानृपाः ५५
संग्रामंचक्रिरेमूढामृतास्तेऽथपरस्परम्
एवंतेषांक्षयोजातःक्षत्रियाणांनरेश्वर ५६
दिव्यादेवीचदुःखार्तारुरोदकरुणंततः
बालामालोक्यतांराजारुदंतींचातिदुःखिताम् ५७
पुरोधसंचधर्मज्ञंज्ञानवंतंतपस्विनम्
जातूकर्णंप्रणम्यादौविनयान्वितकंधरः ५८
दिवोदासउवाच-
कथयस्वप्रसादेनकिमेतस्याहिपातकम्
दिव्यादेव्यास्तुमेपुत्र्यायदेतच्चेष्टितंकृतम् ५९
जातूकर्णउवाच-
तस्यास्तुचेष्टितंवीरदिव्यादेव्यावदाम्यहम्
पूर्वजन्मकृतंसर्वंतन्मेनिगदतःशृणु ६०
आस्तेवाराणसीपुण्यानगरीपापनाशिनी
तस्यामास्तेमहाप्राज्ञःसुवीरोनामनामतः ६१
वैश्यजात्यांसमुत्पन्नोधनधान्यसमाकुलः

तस्यभार्यामहाप्राज्ञचित्रानामसुविस्मृता ६२
कुलाचारंपरित्यज्यदुराचारेणवर्तते
नमन्यतेहिभर्तारंरौद्रकृत्येचवर्तते ६३
पुरायकार्यविहीनातुपापंचरतिदुर्मतिः
भर्तारंभर्त्सतेनित्यंस्वैरिणीकलहप्रिया ६४
नित्यंपरगृहेवासनिरताभ्रमतेऽधिकम्
परच्छिद्रंसमापश्येदुष्टाभूतेषुसर्वदा ६५
साधुनिंदारतापापाबहुहास्यकरीसदा
कुसंगतिरतावाचादुराचारजनप्रिया ६६
धूर्ताधर्मजनद्वेषकरीचानृतभाषिणी
विज्ञायैवंसुवीरोऽस्याउपयेमेततोऽपराम् ६७
तयानवीनयावीरोभार्ययासहितोऽनिशम्
यथासुखंसबुभुजेविषयान्मनसःप्रियान् ६८
धर्माचारेणपुरायात्मासत्यपुरायमतिःसदा
सत्ययामितयासत्यासुमत्याराधितोबभौ ६९
निरस्तातेनसाचित्राविचित्रावरवर्णिनी
स्वैरिणीगुणसंसर्गधर्मविद्वेषिणीततः ७०
भ्रमतेजारसंयुक्तामुक्ताचारागतत्रपा
सापापरतसंयुक्तारक्तादूतीविकर्मणि ७१
कुशलाकुट्टिनीकर्मकलासुत्वन्ययोषिताम्
गृहभंगमसौचक्रेवक्रेणमनसाहिता ७२
साध्वींनारींसमाहूयपापवाक्यैश्चनोदयेत्
नर्मलोभकथाकेलिप्रत्ययोत्पत्तिहेतुभिः ७३
मनांसिचालयेत्पापापुरुषाणांचयोषिताम्
साधूनांसास्त्रियोभव्याःपरेभ्यःप्रतिपादयेत् ७४
कारयत्येवकपटंधर्मग्रामविवर्जनम्
एवंवर्षशतंभुक्त्वापश्चाद्वेश्याविधिस्थिता ७५
कालेननिधनंप्राप्तासततंपापनिश्चया
जातातवगृहेपुत्रीदिव्यादेवीतिसासुता ७६
सुंदरीरूपसंपन्नापुरादृष्टेननोदिता

नारदउवाच-
इतितस्यवचःश्रुत्वादिवोदासोऽतिविस्मितः
उवाचराजामधुरंजातूकर्णमुनिंवचः ७७
दिवोदासउवाच-
यदीदृशीसादुरितप्रचारासदादुराचाररताप्रयाता
कथंममश्रीपतिदैवतस्यमहाकुलीनस्यसुतानुरूपा ७८
सुदुर्ल्लभंराजकुलेविशालेलेभेचसाश्रीमतिजन्मधन्यम्
पुण्येनकेनापिमुनेपवित्रेचित्राविचित्रेणचकर्मकर्त्री ७९
नारदउवाच-
इतितस्यवचःश्रुत्वाभूमिपस्यमुनिस्ततः
किञ्चिद्विहस्यतुप्राज्ञोवचःसूनृतमब्रवीत् ८०
जातूकर्णउवाच-
चित्राविचित्रसुरतैरथवंचयंतीप्रच्छन्नकामुकविटान्धनधीविहीनान्
वेश्याबभूवविषपानमितश्चरित्वाकालेननागनगरेमहतिप्रसिद्धे ८१
कोऽपितत्रसमायातःसायंविप्रःसमार्दितः
अर्दमानोविशुद्धात्मानगरेनागसंज्ञके ८२
अपश्यन्नपरंस्थानंमूढश्चित्रागृहंययौ
तयासंमोहितोऽत्यर्थंवेश्ययादृष्टियोगतः ८३
पादसंवाहनस्नानतांबूलासनभोजनैः
विलासैस्तोषितःसोऽपिखेदहीनोऽभवत्तदा ८४
ततोविचित्रैःसुरतोपचारैरदृष्टबुद्ध्यैवतयासविप्रः
संसेवितोऽयरजनीमशेषामवाहयद्भावविशेषलुब्धः ८५
प्रातःप्रयाणाभिमुखःकथंचिदुवाचचित्रामनुरक्तचित्तः
संतोषितःस्वैश्चरितैःस्वकृत्यैर्वचस्तयाचैकधियातदानीम् ८६
ब्राह्मणउवाच-
कार्यःप्रत्युपकारस्तेतोषितेनमयाप्रिये
स्वदृढंचनिजंदुःखंकथयाम्यविशेषतः ८७
पुराकथांहिवदतांविप्राणांनर्मदातटे
शुभंयत्सर्वपापघ्नंतदाकर्णयसादरम् ८८
योदिनत्रयमपिप्रयत्नतःस्नातिमेषउपयादिभास्करे

भास्करेऽनुदितएवमाधवेमासिसोऽघनिचयैर्विमुच्यते ८९
संपूर्णमपिवैशाखेयोबहिःस्नानमाचरेत्
विधिनामाधवंदेवमर्चयेत्सोपिपापहा ९०
पुण्यतीर्थेविशेषेणस्नानदानक्रियादिभिः
महापापैर्विमुच्येतमानवोमासिमाधवे ९१
तावन्महापापचयःशरीरेशरीरिणस्तिष्ठतिनिर्विशंकः
यावन्मुदाचोषसिमेषराशिमुपागतेमज्जतिनोदिनेशे ९२
एवमाकर्णितस्तेषांविप्राणांवदतांमया
अनेकदुरितांभोधितरणेपोतउत्तमः ९३
अदूरेशिवदेहाचवर्ततेऽसौसरिद्वरा
तत्रस्नातुंगमिष्येऽहतदाघौघवधायच ९४
यदितेरोचतेकांतेविरक्तंवामनोभवेत्
तन्मयात्वंसमागच्छवैशाखस्नानहेतवे ९५
अनित्यंजीवितमिदंयौवनंचातिसुंदरम्
हेतुर्नरकवासस्यदुर्वारश्चसनोभवेत् ९६
आराधितस्त्वयाहंचपातितोदुरितार्णवे
महतामपियत्सत्यंदुष्टस्थितशरीरिणाम् ९७
किमत्रबहुनोक्तेननविलंबोचितःक्षणः
उद्धरिष्येऽपिभवतींविरक्तिर्यदितेहृदि ९८
चित्रोवाच-
स्वामिन्नदृष्टयोगेनतवसंगतिधर्मतः
ध्रुवंविरक्तंमच्चेतोनिंद्यमेतद्भवंप्रति ९९
नूनमेवंमयाशास्त्रेश्रुतंयत्साधुसंगमः
अचिंत्यायैनमस्तस्यैततोनियतायैपुनः १००
जातूकर्णउवाच-
इतिभाष्यततस्तेनसमंचित्राययौतदा
विद्यमानंधनंकिंचिदादायमुनिनोदिता १०१
ततःपरंसोऽपिपुनर्द्विजन्मावैशाखमासेशिवदेहदेहम्
अवापसस्नौचदिनेशमस्यैस्नानायसद्योऽथददौदयालुः १०२
हृदयालुरयंविप्रःस्नापयामासतांतदा

यथोचितविधानेनचित्रामुच्चित्रभाषिणीम् १०३
वैशाखस्नानमाहात्म्यंतत्रशुश्रावसामुदा
पठमानेषुविप्रेषुपुराणानिपृथक्पृथक् १०४
यस्यश्रवणमात्रेणक्षीयतेदुरितांधकः
यथासूर्योदयेनैवतिमिरौघःप्रणश्यति १०५
साशिवेशिवतनूजलेपुनःस्नानतोऽजनिकरेविधानतः
स्नानतोविमलमानसोदयासूर्यकांतिरिवनिर्मलाबभौ १०६
तत्रमज्जंतिरेवायांसेवायांनिरताहरेः
वैशाखेविविधालोकालोकानंत्यमभीप्सवः १०७
येनर्मदायामिहशर्मदायामशुद्धकायानपिशोधयंति
विशेषतोमाधवमासिमर्त्याभवंतिमर्त्याधिपलोकलीलाः १०८
आजन्मनोऽघस्मरणेनरेवानिहंतिदृष्टादशजन्मजंपुनः
स्नाताकथंचिच्छतयोनिजातंसंसेवितायच्छतिरुद्रलोकम् १०९
सकलंमाधवंमासंसाचित्रानर्मदाजले
सस्नौकिंचिद्ददौदानंशक्त्याविप्रेषुनित्यशः ११०
सर्वपापहरंस्तोत्रंशृणोतिश्रद्धयाहरेः
विप्राणांतत्रपठतांसंगादस्यद्विजन्मनः १११
निमज्ज्यसामाधवमासिपूर्णेरेवाजलेतत्रमहीसुरेभ्यः
अच्छिद्रमासाद्ययथाविधानंतत्रापिचित्रापिचकारमासम् ११२
कुटीरकंतंतुनवंविधायसुदेवनामापिसभूमिदेवः
उवासरेवासलिलेनिमज्जंश्चित्रोपरोधादनिशंदयातः ११३
अथकालेनकियताकालधर्ममुपेयिवान्
विप्रस्तदनुसाचित्राचिरेणैवमृतानृप ११४
तेनमाधवमासस्यसुकृतेनतदैवसा
पुत्रीतवाभवन्नूनमदृष्ट्वायमयातनाम् ११५
तस्यकर्मविपाकोऽययदाप्तंभूपतेःकुलम्
वैष्णवंविशदंवीरदुष्प्राप्यंपापकर्मभिः ११६
दिव्यादेवीवरंनामजातंचास्यांनरोत्तम
यच्चदत्तवतीचान्नंभोग्यसौख्यसुखानिच ११७
ब्राह्मणायपुरातस्मैगणिकात्वेऽपिसंगता

स्नात्वाचमाधवेमासिकिंचित्तत्रापियद्ददौ ११८
तस्यदानस्यसाभुंक्तेस्नानस्यचफलोदयम्
पिबतेशीतलंतोयंमिष्टान्नंचतथानिशम् ११९
दिव्यान्भोगान्प्रभुंजानावर्ततेचप्रभोर्गृहे
भुंजतेविधिदत्तंचदुःखशोकादिपीडिता १२०
यत्पुरानरनारीणांगृहभंगरताऽभवत्
तस्यकर्मविपाकोऽयमस्याःकिंचिदुपस्थितः १२१
माधवस्नानमाहात्म्याद्विनैवयमयातनाम्
महापापापितेवीरसुंदरीसासुताभवत् १२२
एतत्तेसर्वमाख्यातंतवपुत्र्याविचेष्टितम्
सर्वजन्मभवंवीरकर्मदुष्कर्मसंभवम् १२३

इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्येचित्रोपाख्याने
द्विनवतितमोऽध्यायः ९२

## त्रिनवतितमोऽध्यायः

नारदउवाच-
जातूकर्णवचश्चित्रमेवमाकर्ण्यभूपतिः
तमुवाचनमस्कृत्यज्ञानिनंमुनिमादरात् १
दिवोदासउवाच-
कथमेषाविमुच्येतदुःखादस्मान्मुनेधुना
जातूकर्णउवाच-
कथयामिमहत्पुण्यंयेनेयंसुखिताभवेत् २
अप्रकाशमपिप्रायःप्रवक्ष्यामितवाग्रतः
स्वल्पमप्यद्भुतंकर्मविकर्मशतनाशनम् ३
यथाहरेर्ध्यानबलेनपापंविनाशमायातिमहत्समग्रम्
प्रातस्तदामाधवमासदानस्नानेनघोरंविलयंप्रयाति ४
यथाहरेर्भीतिभयेननागानश्यंतिसर्वेनिचयास्तथैव
नूनंरवौमेषगतेविभातिस्नानेनतीर्थेचहरिस्तवेन ५
तेजसावैनतेयस्यपन्नगाइवपातकाः
विद्रवंतिचवैशाखस्नानेनोषसिनिश्चितम् ६

तस्माद्द्येयापिभूपालदिव्यादेवीपुनःस्वयम्
कृत्वावैशाखश्रवणंश्रुत्वापापहरंस्तवम् ७
भवित्रीभर्तुःसंयोगसुखसंभोगभागिनी
सुदेवोऽपिसजातोस्तिपांड्यदेशाधिपोबली ८
वैशाखमासिरेवायांस्नानपुण्येनभूपते
तस्माएवसुतांदेहिविशुद्धांस्नानतस्तथा ९
माधवस्यपुनःस्तोत्रंश्रवणान्माधवस्यच
संदेहोनात्रकर्तव्योविचित्रंपश्यभूपते १०
इहामुत्रफलंतस्यसमाख्यंपुण्यकर्मणः
नारदउवाच-
इत्याकर्ण्यैवमुदितोराजातमखिलंततः ११
कारयामासतांपुत्रींजातूकर्णोदितंविधिम्
वीरसेनेनतेनैवपांड्यदेशाधिपेनसा १२
पुराजन्मैकसुहृदादिव्यादेवीविवाहिता
बुभुजेभूरिविषयांश्चिरंसुचरितव्रता १३
वीरसेनेनसुहृदापूर्वजन्मकृतेनच
एतत्तेकिंचिदाख्यातमंबरीषसमासतः १४
वैशाखस्नानमाहात्म्यंकिमन्यच्छ्रोतुमर्हसि १५
इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्येचित्रोपाख्याने
त्रिनवतितमोऽध्यायः ९३

## चतुर्नवतितमोऽध्यायः

अंबरीषउवाच-
पापप्रशमनंस्तोत्रंश्रोतुमिच्छामितद्विभो
यस्यश्रवणमात्रेणपापराशिर्विलीयते १
धन्योऽस्म्यनुगृहीतोऽस्मिश्राविर्तोऽस्मिशुभंविधिम्
विकर्मोपार्जितंयस्यश्रवणादेवहीयते २
चित्रंकिमत्रमधुसूदनदैवतस्यमासस्यपुण्यसवनैरिहमाधवस्य
स्नानैरवश्यविहितैरघराशिनाशःस्याद्यस्यनामपठनादपितस्यलोकः ३
तदेवपुण्यंपरमंपवित्रंहृद्यंचलोकेसुकृतैकलभ्यम्

यदुच्यतेकेशवनामधेयंमन्येमुनेमाधवमासिभव्यम् ४
धन्यास्तुतेमाधवमासिनामस्मरंतियेऽहोमधुसूदनस्य
तस्यैवमेकिंचिदहोचरित्रंपुनःपवित्रंवदविश्वजन्यम् ५
सूतउवाच–
वचःसमाकरार्यहरिप्रियस्यप्रीतोमुनिस्तस्यनृपोत्तमस्य
समाधवस्नानसमुत्सुकोऽपिकथारसेनाहसमाधवस्य ६
नारदउवाच–
सत्यंमहीपालमिथोमुकुंदकथारसालापविधिर्विशुद्धः
त्वयासमंमाधवमासधर्मस्नानाधिकोऽयहरिदैवतेन ७
जीवितंयस्यधर्मार्थंधर्मोहर्यर्थमेवच
अहोरात्राणिपुरयार्थंतंमन्येवैष्णवंभुवि ८
किंचिद्वन्दयामितेराजन्वैशाखस्नानजंफलम्
अस्मत्पितापिनोवक्तुमलंविस्तरतोऽखिलम् ९
यत्रमज्ञनमात्रेणप्रेतामुक्तिमुपागताः
माधवेमासितेपापानर्मदासलिलेपरे १०
पुरातीर्थप्रसंगेनभ्रमन्कोपिमहीसुरः
मुनिशर्मेतिविख्यातोधर्मात्मासत्यवाञ्छुचिः ११
युक्तःशमदमाभ्यांचक्षांतिसंतोषसंयुतः
युक्तःसपितृकार्येषुश्रुतिस्मृतिविधानवान् १२
युक्तोमधुरवाक्येषुसंयुक्तोहरिपूजने
युक्तोवैष्णवसंसर्गेत्रिकालज्ञानवान्मुनिः १३
स्वकर्मणिरतोधीरोहृदयालुःप्रियाप्रियः
दयालुरतिमेधावीतत्त्वविद्ब्राह्मणप्रियः १४
माधवेमासिरेवायांस्नानार्थंप्रतिसंचरन्
अग्रतःपंचपुरुषान्ददर्शातीवदुःखितान् १५
परस्परमसंसर्गकारिणःकृष्णविग्रहान्
वटच्छायामुपाश्रित्यसमासीनानवस्थितान् १६
पश्यंतोदिक्षुसर्वासुदुरितोद्विग्नचेतसः
तानालोक्यद्विजश्रेष्ठश्चिंतयामासविस्मितः १७
अत्रैतेकेनराभीताविपिनेदीनचेष्टिताः

चौरावाविकृताकारादृश्यंतेसंगभागिनः १८
परस्परंचभाषंतःकृशाःकृष्णवपुःश्रियः
यावदेवंसविप्राग्र्योविचारयतिधीरधीः १९
तावदागम्यतेसर्वेदूरस्थामुनिमादरात्
बद्धांजलिपुटाभूत्वाप्रणम्योचुरितिस्फुटम् २०
पंचपुरुषाऊचुः -
भव्यंभवंतंपुरुषोत्तमंवैविभ्राजमानंचरितेनमान्यम्
मन्यामहेविप्रदयालुमुख्यंवाचंसमाकर्णयनोसिमैत्रः २१
संतःप्रतिष्ठादीनानांदैवादुद्भूतपापिनाम्
आर्तानामार्तिहंतारोदर्शनादेवसाधवः २२
अहंपांचालदेशीयःक्षत्रियोवीरवाहनः
ब्राह्मणंहतवान्मोहाच्छरेणशब्दवेधिना २३
शिखासूत्रविहीनस्तुतिलकेनविवर्जितः
अटामिजगतीमेनांब्रह्मघ्नोऽहमितिब्रुवन् २४
ब्रह्मघ्नायातिपापायभिक्षामह्यंप्रदीयताम्
एवंसर्वेषुतीर्थेषुभ्रमन्नत्रास्मिचागतः २५
ब्रह्महत्यानमेद्यापिप्रयातिमुनिसत्तम
एवंमेवर्षमेकंहिव्यतीतंकुर्वतोविभो २६
दह्यमानस्यपापेनशोकाकुलितचेतसः
चंद्रशर्मापरोविप्रोयोयंसंलक्ष्यतेद्विज २७
गुरुघातीसतुब्रह्मन्मोहाकुलितमानसः
मोहाकुलितचित्तत्वाद्गुरुघातकउच्यते २८
निवसन्मागधेदेशेसंत्यक्तःस्वजनैस्ततः
दैवादसावपिमुनेभ्रमन्निहसमागतः २९
शिखासूत्रविहीनस्तुविप्रलिंगविवर्जितः
मयापृष्टस्तुवृत्तांतंसत्यमेवावदद्द्विजः ३०
वसतायद्गुरोर्गेहेक्रोधाकुलितचेतसा
महामोहगतेनापियथावैघातितोगुरुः ३१
तेनपापेनदग्धोऽसौवर्ततेशोकपीडितः
तृतीयोऽयपुनःस्वामिन्वेदशर्मासमाहितः ३२

सुरापोब्राह्मणोजातोमोहाद्वेश्याप्रसंगतः
पृष्टोमयायमपिमेयथावृत्तंतथाब्रवीत् ३३
आत्मनश्चेष्टितंसर्वंमनस्तापेनपीडितः
निरस्तःसर्वलोकैश्चभार्याबंधुजनैरपि ३४
तेनपापेनसंलिप्तोभ्रमन्नत्रायमागतः
चतुर्थोविधुरोनामवैश्योऽयगुरुतल्पगः ३५
मोहान्मासत्रयंयावद्वेश्याभूतांचमातरम्
बुभुजेसविदेहस्थांज्ञाततत्त्वस्ततश्चरन् ३६
दुःखितोऽभ्यागमद्भूमिंभ्रमन्निहमुनेपुनः
पंचमोऽयमहापापीपापिसंसर्गकारकः ३७
प्रत्यहंधनलोभेनस्तेयादिकृतवानघम्
वैश्योतिपातकैःक्रांतस्ततस्त्यक्तोजनैःस्वयम् ३८
निर्विराणमानसोदैवान्नंदनामेहसंगतः
एवंपंचापिपापिष्ठाःस्थानमेकमुपागताः ३९
कःकस्यापिनसंपर्कंभोजनाच्छादनादिभिः
नकारोतिमहाभागविनावार्तांद्विजोत्तम ४०
विशंत्येकासनेनैवनस्वपंत्येकसंस्तरे
एवंदुःखसमाक्रांतानानातीर्थेषुवैगताः ४१
नास्माकंपातकंघोरंप्रयातिमुनिसत्तम
दृष्ट्वाभवंतंदीप्यंतंप्रसन्नानिमनांसिनः ४२
वदंतिदुरितप्रांतंसाधोस्तेपुरायदर्शनात्
उपायंवदनःस्वामिन्यथापापक्षयोहिनः ४३
ज्ञायतेकरुणोऽस्माभिर्विप्रवेदार्थवित्प्रभो
आर्तानांमार्गमाणानांपश्चात्तापमुपेयुषाम् ४४
मोहादवाप्तपापानांत्वमुद्धर्तासिनिश्चितम्
नारदउवाच-
तेषामितिवचःश्रुत्वामुनिशर्मामुनिस्ततः ४५
इदमाहविचार्येतिकरुणावरुणालयः
मुनिशर्मोवाच-
यूयमज्ञानतःप्राप्तपातकाःसत्यभाषिणः ४६

अनुतापयुतास्तस्मादनुग्राह्यामयाधुना
शृणुध्वंमेवचःसत्यमूर्ध्वबाहुर्वदाम्यहम् ४७
यन्मयांगिरसःपूर्वंश्रुतंमुनिसमागमे
दृष्टंवेदेषुशास्त्रेषुश्रुतंगुरुमुखात्तथा ४८
विष्णुनाराधितेनादौस्वयमुक्तंचतत्त्वतः
नतृप्तिरशनादन्यानगुरुर्जनकादपि ४९
नपात्रमन्यद्विप्रेभ्योनदेवःकेशवात्परः
नगंगयासमंतीर्थंनदानंसुरभीसमम् ५०
नगायत्र्यासमंजाप्यंनद्वादश्यासमंव्रतम्
नभार्ययासमंमित्रंनधर्मोदययासमः ५१
नस्वातंत्र्यसमंसौख्यंगार्हस्थ्यान्नाश्रमोवरः
नसत्यात्परआचारोनसंतोषात्परंसुखम् ५२
नमाधवसमोमासोमहापापहरःपरः
विधिनानुष्ठितोभक्त्यामधुसूदनवल्लभः ५३
गंगादिषुचतीर्थेषुविशेषेणसुदुर्लभः
प्रायश्चित्तानिसर्वाणिद्वादशाब्दमुखानिच ५४
तावद्गर्जंतिपापानियावन्नायातिमाधवः
वैशाखमखिलंमासंयःस्नातिहरितत्परः ५५
हरिपादसमुद्भूतेसलिलेविमलाशयः
सएवसर्वपापानांहंतादृष्टस्तुपापिभिः ५६
निजपापौघनिष्कृत्यैवक्तव्यंतस्यकिन्नरैः ५७
मासेतुवैमाधवसंज्ञकेऽस्मिन्यःस्नातिपापैःसविमुच्यतेहि
मेषस्थितेसंप्रतिनर्मदायाःशर्मप्रदेवारिणिवारिताघे ५८
दुर्लभाहिमहानद्योमाधवेमासिसर्वशः
ततोऽपिदुर्लभागंगारेवाचयमुनातथा ५९
एतासुतिसृषुप्रायःप्राप्यैकामपिसादरम्
यःस्नातिमाधवेमासिविपापःसहरिंव्रजेत् ६०
तस्मादहोसहमयासुकृतैकसारेवैशाखमासिचभवंतउपेत्यरेवाम्
मज्जंतुपातककृतोमुनिवृंदजुष्टेरेवाजलेनिखिलपापभयापहत्यै ६१
एवमुक्तास्ततःसर्वेमुदितामुनिनासह

जग्मुस्तेपापिनोरेवांशंसंतोऽद्भुतकारिणीम् ६२
मुनिशर्माततोगच्छंस्तैस्तथानुगतोनरैः
ददर्शपथिसंत्रस्तान्पिशाचानष्टभीषणान् ६३
कुर्वंतोविविधाञ्छब्दान्भ्रमंतोऽपिततस्ततः
ऊद्ध्र्वकेशोद्ध्र्वरक्तांश्चकृष्णदंतकृशोदरान् ६४
अरण्येकंटकाक्रांतेवृक्षपानीयवर्जिते
सम्मुखंधावतोदृष्ट्वाभयसंविग्नमानसः ६५
नमोनारायणायेतिरक्षरक्षेतिचाब्रवीत् ६६
नारायणायेतिनमोभिधानमाकर्ण्यधर्मैकनिधानमुच्चैः
भवांतरेतेमनसापिशाचाययुर्निजादृष्टवशेनलब्धाः ६७
विनयान्वितमनसोमुनिशर्माविलोक्यतान्
उवाचमधुराभाषीकेयूयंविकृतानराः ६८
किंवाकेनकृतंकर्मयेनप्राप्ताचवैकृतिः
कथमेवंविधाःसर्वेदुःखिनोऽतीवभीषणाः ६९
प्रेताऊचुः –
क्षुत्पिपासार्दितानित्यंनानादुःखचयाकुलाः
कृतबुद्धेहृदिक्रूरानष्टसंज्ञाविचेतसः ७०
नजानीमोदिशःक्वापिमूढामानवघातिनः
तदेतद्दुःखमाख्यातमेतदेवासुखंपुनः ७१
प्रभातमिवसंभातिभास्करोदयदर्शनात्
श्रुत्वानारायणेत्युच्चैर्भाषितंतवकोमलम् ७२
दृष्ट्वाचदर्शनंविप्रशुद्धभावंगतावयम्
दर्शनेनैवतेविप्रनामश्रवणतोहरेः ७३
भवांतरमनुप्राप्तावयंप्राप्तादयालवः
विनाशयत्यपयशोबुद्धिंविशदयत्यपि ७४
प्रतिष्ठापयतिप्रायोनृणांवैष्णवदर्शनम्
अहंपर्युषितोनामसूचकोऽयद्वितीयकः ७५
शीघ्रगोरोधकश्चान्यःपंचमोयंचलेखकः
षष्ठोयमितिवाग्दुष्टःसप्तमोयंविदैवतः ७६
नित्यंयाजनकश्चायमष्टमःकष्टदायकः

मुनिशर्मोवाच-
प्रेतानांकर्मजातानांनामानिभवतांकुतः ७७
किंतत्कारणमुद्दिश्ययेनयूयंसनामकाः
प्रेताऊचुः -
मयास्वादुसदाभुक्तंदत्तंपर्युषितंद्विजे ७८
श्राज्येसतिनिराज्यंचतेनपर्य्युषितोऽस्म्यहम्
मिथ्यामिथ्यापरच्छिद्रमर्म्मान्वेषीस्वभावतः ७९
सूचयामासतेनासौसूचकोऽशुचिरातुरः
शीघ्रंनश्यतिविप्रेणयाचितःक्षुभितेनवै ८०
एतत्कारणमुद्दिश्यशीघ्रगोद्विजसत्तम
गृहोपरिसदास्वादुभुक्तमेतेनपापिना ८१
एकाकिनाकुमनसातेनासौरोधकःस्मृतः
मौनेनापिस्थितोनित्यंपादेनलिखतेमहीम् ८२
श्रस्माकमपिपापिष्ठोलेखकोलोकसंगतः
गुणिनोयंगुणान्द्वेष्टिनिर्गुणेचगुणज्ञताम् ८३
श्रसंज्ञेज्ञानयोगीचवाग्दुष्टोसौततःस्मृतः
नास्तिक्यभावादनिशंपितृदैवतमानवान् ८४
नमन्यतेचसत्कर्मपापस्तेनविदैवतः
सदायाचनकोमिथ्यामिथ्यादौर्गत्यदर्शकः ८५
सभूतोद्वेजकोलुब्धस्तेनयाचनकस्त्वयम्
एभिःपूर्वकृतैःपापैर्भुक्त्वानरकयातनाम् ८६
प्रेतास्तेदर्शनादद्यपुनर्जाताःस्मसुस्थिताः
एतत्तेसर्वमाख्यातमात्मवृत्तांतसंभवम् ८७
प्रश्नंचयदितेश्रद्धापृच्छान्यत्कथयामिते
ब्राह्मणउवाच-
येजीवाभुवितिष्ठंतिसर्वश्राहारमूलकाः ८८
युष्माकमपिश्राहारंश्रोतुमिच्छामित्त्वतः
प्रेताऊचुः -
शृणुष्वाहारमस्माकंसर्वसत्वविगर्हितम् ८९
यंश्रुत्वानिंदसेब्रह्मन्भूयोभूयश्चनित्यशः

श्लेष्ममूत्रपुरीषेणयोषिदंगमलेनच ९०
गृहाणित्यक्तशौचानितानिभुंजंतितत्रवै
स्त्रीदग्धानिप्रकीर्णानिप्रकीर्णायस्कराणिच ९१
कुत्सितानिमलेनापिप्रेतावैतत्रभुंजते
माधवंयत्रनार्चंतिस्त्रीजितानिगृहाणिच ९२
दयाक्षांतिविहीनानिप्रेतास्तत्रैवभुंजते
यत्राभद्रागृहेवाचःशौचहीनाश्चयोषितः ९३
कलहोयत्रसततंप्रेतास्तेतत्रभुंजते
नयत्रजामयोगेहेपूज्यंतेनवराःस्त्रियः ९४
यत्रदुर्जनसंसर्गस्तत्रभोद्व्यामहेवयम्
नयत्रहरिसेवावानकथायत्रवैष्णवी ९५
नयत्रवैष्णवीप्रीतिःप्रेतावैतत्रभुंजते
येषामेवंगृहेप्रीताभुंजतेतेऽपिसत्वरम् ९६
प्रेताभवंतिपापेननिजवंशविनाशकाः
तस्यमेजायतेब्रह्मन्वदतोभोजनंनिजम् ९७
अस्मात्पापतरंचान्यत्किंचिद्वक्तुंनशक्यते
निर्विरणःप्रेतभावेनपृच्छामित्वांदृढव्रतम् ९८
यथानजायतेप्रेतोमुक्तिःप्रेतत्वतोयथा
ब्राह्मणउवाच-
एकादश्यादिभिःपुरयैर्व्रतैरच्युतकीर्तनैः ९९
देवतातिथिपूजाभिर्गुरुपूजादिभिस्तथा
आचारैःसाधुचरितैःश्रुतिस्मृत्युदितैर्दिनैः १००
एवंश्राद्धक्रियादानैर्यथाविधिविनिर्मितैः
दयादानदमक्षांतिशीलशिष्टाभिवादनैः १०१
इत्येवमादिभिर्धर्मैःप्रेतानस्युःकुलेऽपिवै
गोविप्रतीर्थामरपर्वताग्र्यनदीनदाश्वत्थतरूननेकशः १०२
योवंदतेबंधुजनेविनीतःप्रेतोनलोकेभवतीहनूनम्
क्रमादर्च्चयतेयुक्तोविशेषादपिमानवः १०३
गंगादिपुरयतीर्थेषुतस्यपुरयमनंतकम्
नाहंवर्षसहस्रेषुवक्तुंशक्तःस्वयंविभुः १०४

दर्शनादेवतस्यापिमुक्तःप्रेतत्वतोभवेत्
ऊर्जमूर्जस्वलंमासमथदामोदरप्रियम् १०५
तपसामुत्तमंमासंतपोमाधववल्लभम्
वैशाखंमाधवंमासंमधुसूदनदैवतम् १०६
उत्तमंसर्वमासानांयमेकंमुनयोविदुः
येनैवसाधनेनस्यात्सर्वंकृत्यंहिसाधितम् १०७
ब्रह्मविद्यामताभ्येतिसालक्ष्मीर्विश्वकारिणी
तस्यावासोयतोमासोमाधवोऽसौततःस्मृतः १०८
नमाधवसमोदेवोयथादेवेषुनिश्चितम्
तथामासेषुसर्वेषुनमासोमाधवप्रियः १०९
तस्यमाधवमासस्यमाहात्म्यमपिभक्तितः
श्रुत्वाविमुच्यतेप्रेतयोनितःकिंविधानतः ११०
सतांसंभाषणादेवपुण्यतीर्थनिषेवणात्
नारायणेतिपठनात्तन्नामश्रवणादपि १११
मुच्यतेपातकैःसर्वैर्जनोभक्तिपरायणः
यतिष्येतदहंप्रेताभवतामपिमुक्तये ११२
परोपकारजंपुण्यंयतोनस्यान्मखैरपि
प्रेतायामिततःस्नातुंरेवावारिणिमाधवे ११३
मासिमेषस्थितेभानावेतैरनुगतोनरैः
पंचैवतेपुनर्मोहाज्ञातपातकसंचयाः ११४
स्नातुमायांतिवचसाममैवकरुणावतः ११५
तावद्भवंतस्तुनिदेशतोमेतिष्ठंतुतत्रैववनेविशोकाः
श्रीनर्मदावारिणियावदेवगत्वानिजस्नानविधिंविहाय ११६
निर्मायपुरुषानपिनामतस्मात्कुशस्वरूपानिहनर्मदाके
विधानतोमाधवमासिदीनान्निमज्जयामीतिदयानिबद्धः ११७
एवंदिनत्रयेणैवमुक्तिर्वःप्रेतयोनितः
नदर्भबटुकस्नानमात्रेणैवनसंशयः ११८
नारदउवाच–
एवमुक्तस्ततस्तैस्तुप्रतीतैरपिपूजितः
मुनिशर्माययावेतैरनुयातस्तुपंचभिः ११९

तत्रगत्वाततःप्रातःस्नात्वाकृत्वातथाविधिम्
स्नापयामासतान्प्रेतान्नामतोदर्भनिर्मितान् १२०
स्मृताश्चमुनिनातीर्थेस्नापितानामतस्तथा
प्रेताःपुरायवतातेनसद्योमुक्तादिवंययुः १२१
तेपापिनःपंचयदैवरेवाजलेनिमग्नावचसैवतस्य
श्रीमाधवेमासिविवर्णदेहाःसद्यःसुवर्णैकरुचोबभूवुः १२२
पापप्रशमनंस्तोत्रंश्राविताम्मुनिशर्मणा
समक्षंसर्वलोकानांजातास्तेवरकांतयः १२३
तत्रस्थामानवास्तांस्तुविरजान्स्नानमात्रतः
नस्पृशंतिचराजेंद्रपापिसंसर्गशंकथा १२४
मुनिशर्मानुरोधेनततोधर्मप्रमाणतः
सद्योदिव्याभवद्वाणीयदेतेविगतैनसः १२५
स्नातानांमाधवेमासिमुकुंदहृदयात्मनाम्
पापप्रशमनंस्तोत्रंशृरावतामिहसादरम् १२६
चित्रंकिमत्रयाशुद्धिर्जायतेपापसंचयात्
सर्वेषामेवपापानांप्रायश्चित्तमिदंपरम् १२७
यत्प्रातर्माधवेमासिभक्त्यातीर्थेऽवगाहनम्
यतःप्रेतास्तुतेपापाःस्नापितानाममात्रतः १२८
स्मृताःपुरायवतातेनमोचितामुनिशर्मणा १२९
इत्येवमाकरार्यगिरंनभःस्थामत्यद्भुतामाशुततोमनुष्याः
शशंसुरेतानपिपंचपुरायान्वैशाखमासंचमुनिंचरेवाम् १३०
अथचाकरार्यभूपालःस्तवंदुरितनाशनम्
यदाकरार्यनरोभक्त्यामुच्यतेपापराशिभिः १३१
यस्यश्रवणमात्रेणपापिनःशुद्धिमागताः
अन्येऽपिबहवोमुक्ताःपापादज्ञानसंभवात् १३२
परदारपरद्रव्यजीवहिंसादिकेयदा
प्रवर्ततेनृणांचित्तंप्रायश्चित्तंस्तुतिस्तदा १३३
विष्णवेविष्णवेनित्यंविष्णवेविष्णवेनमः
नमामिविष्णुंचित्तस्थमहंकारगतंहरिम् १३४
चित्तस्थमीशमव्यक्तमनंतमपराजितम्

विष्णुमीड्यमशेषाणामनादिनिधनंविभुम् १३५
विष्णुश्चित्तगतोयन्मेविष्णुर्बुद्धिगतश्चयत्
यच्चाहंकारकोविष्णुर्योविष्णुर्मयिसंस्थितः १३६
करोतिकर्तृभूतोऽसौस्थावरस्यचरस्यच
तत्पापंनाशमायातितस्मिन्नेवहिचिंतिते १३७
ध्यातोहरतियत्पापंस्वप्नेदृष्टस्तुभावनात्
तमुपेंद्रमहंविष्णुंप्रणमामिनतिप्रियम् १३८
जगत्यस्मिन्निरालंबेमधुसूदनमच्युतम्
हस्तावलंबनंस्तोत्रंविष्णुंवंदेपरात्परम् १३९
सर्वेश्वरेश्वरविभोपरमात्मन्नधोक्षज
हृषीकेशहृषीकेशहृषीकेशनमोस्तुते १४०
नृसिंहानंतगोविंदभूतभावनकेशव
दुरुक्तंदुष्कृतंध्यातंशमपापंनमोस्तुते १४१
यन्मयाचिंतितंदुष्टंस्वचित्तवशवर्तिना
अकार्य्यमघमत्युग्रंतच्छमंनयकेशव १४२
ब्रह्मण्यदेवगोविंदपरमार्थपरायण
जगन्नाथजगद्धातःपापंशमयमेऽच्युत १४३
यच्चापराह्णेसायाह्नेमध्याह्नेचतथानिशि
कायेनमनसावाचाकृतंपापमजानता १४४
जानताचहृषीकेशपुंडरीकाक्षमाधव
नामत्रयोच्चारणतःसर्वेयांतुममक्षयम् १४५
शारीरंमेहृषीकेशपुंडरीकाक्षमानसम्
पापंप्रशममायातुवाक्कृतंमममाधव १४६
यद्भुंजानःपिबंस्तिष्ठन्स्वपञ्जाग्रद्यदास्थितः
अकार्षंपापमर्थार्थंकायेनमनसागिरा १४७
महदल्पमपिप्रायोदुर्योनिनरकावहम्
तत्पापंप्रशमंयातुवासुदेवस्यकीर्तनात् १४८
परंब्रह्मपरंधामपवित्रंपरमंचयत्
तस्मिन्प्रकीर्तितेविष्णौयत्पापंतत्प्रणश्यतु १४९
यत्प्राप्यननिवर्त्ततेगंधस्पर्शादिवर्जिताः

सूरयस्तत्पदंविष्णोस्तत्सर्वंशमयत्वयम् १५०
पापप्रशमनंस्तोत्रंयःपठेच्छृणुयान्नरः
शारीरैर्मानसैर्वाग्जैःकृतैःपापैःसमुच्यते १५१
मुक्तःपापग्रहादिभ्योयातिविष्णोःपरंपदम्
तस्मात्पापेकृतंजप्यंस्तोत्रंसर्वाघमर्दनम् १५२
प्रायश्चित्तमघौघानांपठितव्यंनरोत्तमैः
प्रायश्चित्तैःस्तोत्रवरैर्व्रतैर्नश्यतिपातकम् १५३
ततःकार्याणिसंसिद्ध्यैतानिवैभुक्तिमुक्तये
पूर्वजन्मार्जितंपापमैहिकंचनरेश्वर १५४
स्तवस्यश्रवणादस्यसद्यएवविलीयते
पापद्रुमकुठारोऽयंपापेंधनदवानलः १५५
पापराशितमःस्तोमभानुरेषस्तवोनृप
मयाप्रकाशितस्तुभ्यंतथालोकानुकंपया १५६
स्तवोयोऽयमयाप्राप्तोरहस्यंपितुरादरात्
इतिहासमिमंपुण्यंयःशृणोतिनराधिप १५७
तस्यापिपुण्यमाहात्म्यंवक्तुंशक्तःस्वयंहरिः
स्वस्तितेस्तुमहाराजगंगायामथसत्वरम् १५८
स्नातुंयामिसमायातोमासोऽयमाधवोमहान् १५९

इति श्रीपद्मपुराणेपातालखंडेनारदांबरीषसंवादेवैशाखमाहात्म्येप्रेतो –
पाख्यानेपापप्रशमनंनामचतुर्नवतितमोऽध्यायः ९४

## पंचनवतितमोऽध्यायः

सूतउवाच–
यातुंतमुद्यतंनत्वामुनिंराजाततोमुदा
विधिंपप्रच्छसंक्षिप्तंस्नानदानक्रियोचितम् १
अंबरीषउवाच–
मुनेवैशाखमासेऽस्मिन्कोविधिःकिंतपोऽधिकम्
किंचदानंकथंस्नानंकथंकेशवपूजनम् २
कृपयावदविप्रर्षेसर्वज्ञस्त्वंहरिप्रियः
विशेषतोऽपिपूजायाविधिंतीर्थपदेवद ३

नारदउवाच-
मेषसंक्रमणेभानोर्माधवेमासिसत्तम
महानद्यांनदीतीरेनदेसरसिनिर्झरे ४
देवखातेऽथवास्नायाद्यथाप्राप्तेजलाशये
दीर्घिकाकूपवापीषुनियतात्माहरिंस्मरन् ५
मधुमासस्यशुक्लायामेकादश्यामुपोषितः
पंचदश्यांचवावीरमेषसंक्रमणेऽपिवा ६
वैशाखस्नाननियमंब्राह्मणानामनुज्ञया
मधुसूदनमभ्यर्च्यकुर्यात्सुस्नानपूर्वकम् ७
वैशाखंसकलंमासंमेषसंक्रमणेरवेः
प्रातःसनियमःस्नास्येप्रीयतांमधुसूदनः ८
मधुहंतुःप्रसादेनब्राह्मणानामनुग्रहात्
निर्विघ्नमस्तुमेपुण्यंवैशाखस्नानमन्वहम् ९
माधवेमेषगेभानौमुरारेमधुसूदन
प्रातःस्नानेनमेनाथयथोक्तफलदोभव १०
यथातेमाधवोमासोवल्लभोमधुसूदन
प्रातःस्नानेनमेतस्मिन्फलदःपापहाभव ११
एवमुच्चार्यतत्तीर्थेपादौप्रक्षाल्यवाग्यतः
स्मरन्नारायणंदेवंस्नानंकुर्याद्विधानतः १२
तीर्थंप्रकल्पयेद्धीमान्मूलमंत्रमिमंपठन्
ॐनमोनारायणायमूलमंत्रउदाहृतः १३
दर्भपाणिस्तुविधिवदाचांतःप्रणतोभुवि
चतुर्हस्तसमायुक्तंचतुरस्त्रंसमंततः १४
प्रकल्प्यावाहयेद्गंगांमंत्रेणानेनमानवः
विष्णुपादप्रसूतासिवैष्णवीविष्णुदेवता १५
त्राहिनस्त्वेनसस्तस्मादाजन्ममरणांतिकात्
तिस्त्रःकोटयोर्द्धकोटीचतीर्थानांवायुरब्रवीत् १६
दिविभुव्यंतरिक्षेचतानितेसंतिजाह्नवि
नंदिनीत्येवतेनामवेदेषुनलिनीतिच १७
दक्षापृथ्वीचविहगाविश्वगाथाशिवप्रिया

विद्याधरीमहादेवीतथालोकप्रसादिनी १८
क्षेमंकरीजाह्नवीचशांताशांतिप्रदायिनी
एतानिपुण्यनामानिस्नानकालेप्रकीर्तयेत् १९
भवेत्संनिहितातत्रगंगात्रिपथगामिनी
सप्तवाराभिजप्तेनकरसंपुटयोजिते २०
मूर्ध्निकृत्वाजलंभूपश्चतुर्वापंचसप्तवा
स्नानंकृत्वामृदातद्वदामंत्र्यतुविधानतः २१
अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे
मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् २२
उद्धृतासिवराहेणविष्णुनाशतबाहुना
नमस्तेसर्वलोकानांप्रभवारणिसुव्रते २३
एवंस्नात्वाततःपश्चादाचम्यतुविधानतः
उत्थायवाससीशुक्लेशुद्धेतुपरिधापयेत् २४
ततस्तुतर्प्पणंकुर्य्यात्त्रैलोक्याप्यायनायवै
ब्रह्माणंतर्प्पयेत्पूर्वंविष्णुंरुद्रंप्रजापतिम् २५
देवान्यक्षांस्तथानागान्गंधर्वाप्सरसोसुरान्
क्रूरान्सर्पान्सुपर्णांश्चतरून्वैजंतुकान्खगान् २६
विद्याधराञ्जलधरांस्तथैवाकाशगामिनः
निराधाराश्चयेजीवाःपापकर्मरताश्चये २७
तेषामाप्यायनार्थायदीयतेसलिलंमया
कृतोपवीतीदेवेषुनिवीतीचभवेन्नरः २८
मनुष्यांस्तर्प्पयेद्भक्त्याब्रह्मपुत्रानृषींस्तथा
सनकःसनंदनश्चैवतृतीयश्चसनातनः २९
कपिलश्चासुरिश्चैववोढुःपंचशिखस्तथा
तेसर्वेतृप्तिमायांतुमद्दत्तेनांबुनासदा ३०
मरीचिमत्र्यंगिरसौपुलस्त्यंपुलहंक्रतुम्
प्रचेतसंवसिष्ठंचभृगुंनारदमेवच ३१
देवब्रह्मऋषीन्सर्वांस्तर्पयेदक्षतोदकैः
अपसव्यंततःकुर्यात्सव्यंजान्वाच्यभूतले ३२
अग्निष्वात्तास्तथासौम्याहविष्मंतस्तथोष्मपाः

कव्यानलान्बर्हिषदस्तथावैचाज्यपाःपुनः ३३
संतर्पयेत्पितॄन्भक्त्यासतिलोदकचंदनैः
यमायधर्मराजायमृत्यवेचांतकायच ३४
वैवस्वतायकालायसर्वभूतक्षयायच
उदुंबरायदध्नायनीलायपरमेष्ठिने ३५
वृकोदरायचित्रायचित्रगुप्तायवैनमः
दर्भपाणिस्तुविधिवत्पितॄन्संतर्पयेत्ततः ३६
पित्रादीन्नामगोत्रेणतथामातामहानपि
संतर्प्यविधिनासर्वानिमंमंत्रमुदीरयेत् ३७
येबांधवाबांधवायेयेऽन्यजन्मनिबांधवाः
तेतृप्तिमखिलांयांतुयेऽस्मत्तस्तोयकांक्षिणः ३८
आचम्यविधिवत्सम्यगालिखेत्पद्ममग्रतः
साक्षतैश्चसपुष्पैश्चसलिलारुणचंदनैः ३९
अर्घंदद्यात्प्रयत्नेनसूर्य्यनामानुकीर्त्तनैः
नमस्तेविष्णुरूपायनमस्तेब्रह्मरूपिणे ४०
सहस्त्ररश्मयेसूर्यनमस्तेसर्वतेजसे
नमस्तेरुद्रवपुषेनमस्तेभक्तवत्सल ४१
पद्मनाभनमस्तेऽस्तुकुंडलांगदभूषित
नमस्तेसर्वलोकेशसुप्तानामुपबोधन ४२
सुकृतंदुष्कृतंचैवसर्वंपश्यसिसर्वदा
सत्यदेवनमस्तेऽस्तुप्रसीदममभास्कर ४३
दिवाकरनमस्तेस्तुप्रभाकरनमोस्तुते
एवंसूर्यंनमस्कृत्यसप्तकृत्वाप्रदक्षिणम् ४४
द्विजंगांकांचनंस्पृष्ट्वापश्चाच्चस्वगृहंव्रजेत्
आश्रमस्थांस्ततःपूज्यप्रतिमांचापिपूजयेत् ४५
पूर्वंभक्त्यैवगोविंदंगृहीचनियतात्मवान्
पूजयेद्भक्तितोराजन्नुभयत्रयथाविधि ४६
विशेषादपिवैशाखेयोऽर्चयेन्मधुसूदनम्
सर्वंसंवत्सरंयावदर्चितस्तेनमाधवः ४७
माधवेमासिसंप्राप्तेमेषस्थेकर्मसाक्षिणि

केशवप्रीतयेकुर्यात्केशवव्रतसंचयम् ४८
दद्यादनेकदानानितिलाज्यप्रभृतीन्यपि
जन्मकोटिसमुद्भूतपातकांतकराणिच ४९
जलान्नशर्कराधेनुतिलधेनुमुखानिच
वित्तमानेनदेयानिदानानीप्सितसिद्धये ५०
वैशाखंसकलंमासंनित्यस्नायीजितेंद्रियः
जपन्हविष्यंभुंजानःसर्वपापैःप्रमुच्यते ५१
एकभुक्तमथोनक्तमयाचितमतंद्रितः
माधवेमासियःकुर्याल्लभतेसर्वमीप्सितम् ५२
वैशाखेविधिनास्नानद्वयंनद्यादिकेबहिः
हविष्यंब्रह्मचर्यंचभूशय्यानियमस्थितिः ५३
व्रतंदानंजपोहोमोमधुसूदनपूजनम्
अपिजन्मसहस्रोत्थंपापंदहतिदारुणम् ५४
यथैवमाधवोध्यातोविनाशयतिकिल्बिषम्
तथैवमाधवेस्नानंनियमेनविनिर्मितम् ५५
तीर्थेचानुदिनंस्नानंतिलैश्चपितृतर्पणम्
दानंधर्मघटादीनांमधुसूदनपूजनम् ५६
माधवेमासिकुर्वीतमधुसूदनतुष्टिदम्
तिलोदकसुवर्णान्नशर्करांबरभूषणम् ५७
पादत्राणातपत्रांबुकुंभान्दद्याद्द्विजातिषु
त्रिसंध्यंपूजयेदीशंभक्तितोमधुसूदनम् ५८
साक्षाद्विमलयालक्ष्म्यासमुपेतंसमाहितः
सुवर्णतिलपात्रैश्चब्राह्मणाञ्छक्तितोबहून् ५९
तर्पयेदुदपात्रैर्योब्रह्महत्यांव्यपोहति
वैशाखेमासियःस्नात्वाप्रातर्नद्यांसमाहितः ६०
पूजयित्वाहरिंभक्त्यापुष्पैःकालोद्भवैःफलैः
पूजयेद्ब्राह्मणांशक्त्यापाखंडालापवर्जितः ६१
तर्पयेद्वस्त्रगोदानैरन्नाद्यैर्धनसंचयैः
अन्यद्वित्तंयथाशक्तिस्तोकंस्तोकंसमाचरेत् ६२
पश्चाद्विनिःस्वःपुरुषोमाधवेमासिमाधवम्

पुष्पार्चनविधानेनपूजयेन्मधुसूदनम् ६३
सर्वपापविनिर्मुक्तःपितॄणांतारयेच्छतम्
सजन्मशतसाहस्रंनशोकफलभाग्भवेत् ६४
नचव्याधिभयंतस्यनदारिद्र्यंनबंधनम्
सविष्णुभक्तोजायेतधन्योजन्मनिजन्मनि ६५
यावद्युगसहस्राणिशतमष्टोत्तरंभवेत्
तावत्स्वर्गेवसेद्वीरभूपतिश्चपुनर्भवेत् ६६
भूपतेर्विविधान्भोगान्भुक्त्वाचैवयथासुखम्
माधवस्यप्रसादेनमाधवेलीयतेततः ६७
शृणुराजन्प्रवक्ष्यामिसमासान्माधवार्चनम्
वैदिकंतांत्रिकंवापिमिश्रकंपापनाशनम् ६८
नह्यंतोऽनतपारस्यनांतःपूजाविधेर्नृप
अथसंक्षिप्यचोच्येतयथावदनुपूर्वशः ६९
वैदिकस्तांत्रिकोमिश्रःश्रीविष्णोस्त्रिविधोमखः
त्रयाणामीप्सितेनैवविधिनाहरिमर्चयेत् ७०
वैदिकोमिश्रकोवापिविप्रादीनांविधीयते
तांत्रिकोविष्णुभक्तस्यशूद्रस्यापिप्रकीर्तितः ७१
यथास्वनिगमेनोक्तंद्विजत्वंप्राप्यपूरुषः
यजेच्चविधिवद्विष्णुंब्रह्मचारीसमाहितः ७२
अर्चयेत्स्थंडिलेऽग्नौवासूर्येऽप्सुहृदिवाद्विजे
द्रव्येणभक्तियुक्तेनस्वगुरुंतदनुज्ञया ७३
पूर्वंस्नानंप्रकुर्वीतधौतदंतोंऽगशुद्धये
उभयोरपिचस्नानंमंत्रैर्मृद्ग्रहणादिना ७४
संध्योपास्त्यादिकर्माणिवेदतंत्रोदितानिवै
पूजांतेकल्पयेत्सम्यक्संकल्पंकर्मपावनम् ७५
शैलीदारुमयीलौहीलेप्यालेख्याचसैकती
मनोमयीमणिमयीप्रतिमाष्टविधास्मृता ७६
चलाचलेतिद्विविधाप्रतिष्ठाजीवमंदिरम्
उद्वासावाहनेनस्तःस्थिरायांमाधवार्चने ७७
अस्थिरायांविकल्पःस्यात्स्थंडिलेतुभवेद्द्वयम्

स्नापनंत्वविलेप्यायामन्यत्रपरिमार्जनम् ७८
द्रव्यैःप्रसिद्धैर्देवेज्याप्रतिमादिष्वमायिनः
भक्तस्यचयथालब्धैर्भक्तिभावेनचैवहि ७९
स्नानालंकरणंश्रेष्ठमर्चायामेवभूपते
स्थंडिलेष्वपिविन्यासोवह्नावाज्यहुतंहविः ८०
सूर्येचाभ्यर्हणंश्रेष्ठंस्थंडिलेसलिलादिभिः
श्रद्धयोपहृतंश्रेष्ठंहरौभक्तेनवार्यपि ८१
गंधोधूपःसुमनसोदीपोथ्नऽनाद्यंचकिंपुनः
शुचिःसंभृतसंभारःप्राग्दर्भैःकल्पितासनः ८२
आसीनःप्रागुदग्वक्त्रोह्यर्चायामथसम्मुखः
कृतन्यासःकृतन्यासांहर्यर्चांपाणिनास्पृशेत् ८३
कलशंप्रोक्षणीयंचयथावदुपसाधयेत्
तदद्भिर्देवयजनंद्रव्याणयात्मानमेवच ८४
प्रोक्ष्यपात्राणित्रीणयद्भिस्तैस्तैर्द्रव्यैस्तुसादयेत्
पाद्यार्घ्याचमनीयार्थंत्रीणिपात्राणिदापयेत् ८५
हृतशीर्ष्णाचशिखयागायत्र्याचाभिमंत्रयेत्
पिंडेवाय्वग्निसंसिद्धेहृत्पद्मस्थांपरांविभोः ८६
अणवींजीवकलांध्यायेन्नादांतेसिद्धिभाविताम्
तयात्मभूतयापिंडेव्याप्तेसंपूज्यतन्मयः ८७
आवाह्यार्चादिषुस्थाप्यन्यस्तांगांतांप्रपूजयेत्
पाद्यार्घ्यस्नानार्हणादीनुपचारान्प्रकल्पयेत् ८८
धर्मादिभिश्चनवभिःकल्पयित्वासनंहरेः
पद्ममष्टदलंतत्रकर्णिकाकेसरोज्ज्वलम् ८९
उभाभ्यांवेदतंत्राभ्यांहरेरुभयसिद्धये
सुदर्शनंपांचजन्यंगदासीषुधनुर्हलम् ९०
मुशलंकौस्तुभंमालांश्रीवत्संचानुपूजयेत्
नंदंसुनंदंगरुडंप्रचंडंचंडमेवच ९१
महाबलंबलंचैवकुमुदंकुमुदेक्षणम्
दुर्गांविनायकंव्यासंविष्वक्सेनंगुरून्सुरान् ९२
स्वेस्वेस्थानेष्वभिमुखान्पूजयेत्प्रोक्षणादिभिः

चंदनोशीरकर्पूरकुंकुमागुरुवासितैः ९३
सलिलैस्नापयेन्मंत्रैर्नित्यंवाविभवेसति
स्वर्णघर्मानुवाकेनमहापुरुषविद्यया ९४
पौरुषेणापिसूक्तेनसामनीराजनादिभिः
वस्त्रोपवीताभरणपत्रस्रग्गंधलेपनैः ९५
अलंकुर्वीतसप्रेमविष्णुभक्तोयथोचितम्
पाद्यमाचमनीयंचगंधंसुमनसोक्षतान् ९६
गंधधूपोपहार्याणिदद्याद्वैश्रद्धयार्चकः
गुडपायससर्पींषिशष्कुल्यापूपमोदकान् ९७
पायसंदधिसर्पिश्चनैवेद्यंसविकल्पयेत्
अभ्यंगोन्मर्दनादर्शदंतधावाभिषेचनम् ९८
अन्नाद्यंनृत्यगीतानिसर्वाणिस्युरथान्वहम्
विधिनाविहितेकुंडेमेखलावर्तवेदिभिः ९९
अग्निमाधायपरितःसमूहेत्पाणिनोदकम्
परिस्तीर्याथपर्युक्ष्यदत्वाइध्मंयथाविधि १००
प्रोक्षणयासाद्यद्रव्याणिप्रोक्षणयैवाज्यसेचनम्
तप्तजांबूनदप्रख्यंशंखचक्रगदांबुजैः १०१
लसच्चतुर्भुजंशांतंपद्मकिंजल्कवाससम्
स्फुरत्किरीटकटककटिसूत्रवरांगदम् १०२
श्रीवत्सवक्षसंभ्राजत्कौस्तुभंवनमालिनम्
ध्यायन्नभ्यर्च्यदारूणिहविषासघृतानिच १०३
प्रास्याज्यभागावाघारौदत्वाचाज्यप्लुतंहविः
अभ्यर्च्याथनमस्कृत्यपार्षदेभ्योबलिहरेत् १०४
मूलमंत्रंजपेद्ब्रह्मन्स्मरन्नारायणात्मकम्
दत्वाचमनमुच्छिष्टंविष्वक्सेनायकल्पयेत् १०५
मुखवासंतुसुरभिंतांबूलाद्यमुपाहरेत्
उपगायन्गृणन्नित्यंकर्माण्यभिरवाक्षरैः १०६
सत्कथांश्रावयञ्छृण्वन्मुहूर्तंक्षणिकोभवेत्
स्तवैरुच्चावचैःस्तोत्रैःपौराणैःप्राकृतैरपि १०७
स्तुत्वाप्रसीदभगवन्नितिवंदेतदंडवत्

शिरस्तत्पादयोःकृत्वाबाहुभ्यांचपरस्परम् १०८
प्रपन्नंपाहिमामीशभीतंमृत्युग्रहार्णवात्
इतिशेषान्हरेर्दत्ताञ्छिरस्याधायसादरम् १०९
उद्वासयेच्चेदुद्वास्यंज्योतिर्ज्योतिषिचात्मनः
अर्चादिषुपदंयत्रश्रद्धावांस्तत्रचार्चयेत् ११०
सर्वभूतेष्वात्मनिचसर्वात्मानमवस्थितम्
एवंक्रियायोगपथैःपुमान्वैदिकतांत्रिकैः १११
अर्चयेच्चयतःसिद्धिंहरेर्विंदत्यभीप्सिताम्
तामर्चांसंप्रतिष्ठाप्यमंदिरंकारयेद्दृढम् ११२
पुष्पोद्यानानिरम्याणिपूजायात्रोत्सवादिकम्
पूजादीनांप्रवाहार्थंमहापर्वस्वथान्वहम् ११३
क्षेत्रापणपुरग्रामान्दत्वासायुज्यतामियात्
प्रतिष्ठयासार्वभौमंसद्मनाभुवनत्रयम् ११४
पूजादिनाब्रह्मलोकंत्रिभिस्तत्साम्यतामियात्
तमेवनैरपेक्षेणभक्तियोगेनविंदते ११५
भक्तियोगंसलभतेएवंयःपूजयेद्धरिम् ११६
यत्कृष्णप्रणिपातधूलिधवलंतद्वर्ष्मतद्वच्छुभं
तेनेत्रेतपसार्जितेसुरुचिरेयाभ्यांहरिर्दृश्यते
साबुद्धिर्विमलेंदुशंखधवलायामाधवव्यापिनी
साजिह्वामृदुभाषिणीनृपमुहुर्यास्तौतिनारायणम् ११७
मूलमंत्रेणकर्तव्यंस्त्रीशूद्रैरपिपूजनम्
श्रद्धयास्वगुरूद्दिष्टमार्गेणान्यैश्चवैष्णवः ११८
इदंतेसर्वमाख्यातंपावनंमाधवार्चनम्
विशेषान्माधवेमासित्वमेतत्कुरुभूपते ११९
सूतउवाच–
इत्येवमाकर्ण्यवचोविचित्रंपुण्यंपवित्रंविधिनंदनस्य
प्रणम्यबद्धांजलिराहराजासकौतुकीभागवतप्रधानः १२०
अंबरीषउवाच–
समस्तभूमीवलयेश्वरोऽहमव्याहताज्ञोविबुधप्रसेवी
गोविंदपादांबुजदत्तचित्तःस्वचित्तसंतोषितभूमिदेवः १२१

विख्यातराजोचितवंशरत्नंनिरंतरंधर्मरुचिर्यशस्वी
सौंदर्यशौर्योदयदानशीलःसुपुत्रवानस्मिजितारिवर्गः १२२
केनापिपुण्येनपवित्रबुद्धिर्जातोगहमीदृग्गुणसंतश्रीः
इयंपुनःश्रीरिवपुण्यमूर्तिर्लब्धाकुतःकांतिमतीचकांता १२३
इदंमेसुकृतंसर्वंपुराजन्मनिचेष्टितम्
समादिशमुनेसम्यक्सर्वज्ञोसिदयानिधे १२४
नारदउवाच-
इयंरूपवतीनामवेश्यासीदन्यजन्मनि
सांप्रतंतवभार्यायासत्याचारातिसुंदरी १२५
वेश्याधर्मेणवर्तेतयथोद्दिष्टेनभाविनी
कुर्वतीकिलकर्माणिशुभानिद्विजशासनात् १२६
देवदासइतिख्यातोहेमकारोभवानभूत्
पूर्वजन्मनिवैतस्यारुचेर्भर्ताभुजंगमः १२७
इयंभवंतंभजतेरुचीरूपवतीपुनः
व्ययार्थमयनंधर्मंस्थिताविज्ञानमुत्तमम् १२८
आकर्ण्यचैकदाधर्मंवैशाखस्नानसंभवम्
चक्रेधर्मवतीतोयेस्नानंमेषगतेरवौ १२९
दानंदत्तवतीदत्त्वावेश्यारूपवतीसदा
ब्राह्मणायनमस्कारंभक्त्यादरपुरःसरम् १३०
सतयादेवदासस्त्वंबोधितःस्नेहयंत्रितः
कृतवान्बुद्धितःस्नानंमाधवेमासिसादरम् १३१
तत्रत्रेतायुगस्यादौतृतीयामाप्यनिर्मलाम्
सुवर्णकारंसोवाचदेवदासंतमादरात् १३२
वेश्योवाच-
उत्तमंकुरुसौवर्णंमधुसूदनमच्युतम्
पूजयित्वायवैर्देवमेतैःसंतर्प्यचानलम् १३३
ब्राह्मणायचदास्यामिब्राह्मणानामनुज्ञया
दानमेतत्पुराणेषुकथ्यतेतत्रचाक्षयम् १३४
अक्षयेतितृतीयासौब्राह्मणेभ्यःश्रुतंमया
शुक्लावैशाखमासस्यतदक्षयफलप्रदम् १३५

अस्यांदास्यामितंहैमंमधुसूदनमव्ययम्
नारदउवाच-
इतितस्यवचःश्रुत्वामधुरंहेमकारकः १३६
चक्रेसुवर्णप्रतिमामच्युतस्यापिसुंदरीम्
सत्यभावेनधर्मार्थमितिचौर्यविवर्जितः १३७
यथोद्दिष्टस्यचंद्रस्यप्रतिमांलक्षणान्विताम्
ददौसाचविधानेनस्नात्वाविप्रायसुंदरीम् १३८
पूजयित्वाततस्तस्यामक्षयायांतिथौनृप १३९
कालेनकियतावेश्यासामृताधर्मनिष्ठिता
देवदासोऽपिसततोमृतःस्वीयायुषक्षये १४०
तेनपुण्येनभूपालहेमकारोऽन्यजन्मनि
सत्वंप्राप्तोमहींराजन्नशेषगुणसंयुतः १४१
सापिरूपवतीवेश्यातेनधर्मेणतेऽभवत्
नाम्नाकांतिमतीकांताप्रणयेनपरिप्लुता १४२
विविधावासनावीरकर्मणांपूर्वसंभवाः
विचित्रागतयस्तातज्ञायंतेनबुधैरपि १४३
तमेनंमाधवंमासंप्रतिकार्यंनसंशयः
गोपितंतेनदेवेनब्रह्मणामाधवेनच १४४
असाधुसंगैरनवाप्तविद्यैरसंयतैराश्रमधर्महीनैः
अभूततीर्थैरकृतव्रतैस्तैर्नलभ्यतेमाधवमासधर्मः १४५
गोविंदकेशवमुकुंदहरेमुरारेलक्ष्मीनिवासमधुसूदनकृष्णविष्णो
वाणीवरानवदनेवसतीतियेषांवैशाखमासनियमोभवतेनतेषाम् १४६
येसाधुसाधुवचनानिहिताधिकानिनाकर्णयंतिचहरेश्चरितामृतानि
पश्यंतियेनकमलापतिकेतनानिवैशाखमासनियमंनहितेलभंते १४७
शुश्रूषितानगुरवोनवरायकन्यादत्तासमायसमयेसमलंकृतायैः
अध्यापितानतनयाविनयादिधर्मंवैशाखमासनियमंनहितेलभंते १४८
सूतउवाच-
इत्येवमादिश्यमुनिर्नरेशमामंत्र्यतंमंत्रविदग्रगण्यः
स्नातुंययौमाधवमासिगंगामभ्यर्चितस्तेनतदासविप्राः १४९
विधिंसराजापिततश्चकारवैशाखमासस्यमुनिप्रणीतम्

पत्न्यासमंपुरायधियातमेवसंचिंतयँल्लोकपवित्रकीर्तिः १५०
इति श्रीपद्मपुराणेपातालखंडेवैशाखमाहात्म्येनारदांबरीष -
संवादेपंचनवतितमोऽध्यायः ९५

## षरगणवतितमोऽध्यायः

ऋषयऊचुः -
सूतसूतमहाप्राज्ञजीवजीवशतंसमाः
यद्वयंपुरायसमयंश्राविताजगतोहितम् १
वदभूयोऽपिभूयिष्ठंपिबामस्तावकंवचः
पायंपायंनतृप्यामोवयंसूततदुत्तमम् २
सूतउवाच-
अत्राप्युदाहरंतीममितिहासंपुरातनम्
संवादमादिलोकस्यजगतांजगदीशितुः ३
षट्सहस्राणिचोच्छ्रायोविस्तारेणपुनस्त्रयम्
एवंनवसहस्राणियोजनानांविधायच ४
वामयादंष्ट्रयागृह्यउद्धृतादौवसुंधरा
दिव्यवर्षसहस्रंवैदंष्ट्रयाधारितामही ५
धर्माख्यानप्रसंगेनसोवाचविनयाद्विभुम्
पृथिव्युवाच-
एतेद्वादशमासावैषष्टिर्दिनशतत्रयम् ६
एषांकिमुत्तमंपुरायंप्रियंचतवकेशव
पवित्रःकार्तिकोमासस्तुलासंस्थेदिवाकरे ७
मकरस्थेरवौमासःपुराणेपावनःस्मृतः
मेषस्थेमाधवोमासोभास्करेपठ्यतेबुधैः ८
मार्गशीर्षोऽपिमासानांपावनःपरिकीर्तितः
एवंमासाःपवित्रास्तेवासराःकेइऽपकीर्तिताः ९
युगादयोयुगांताश्चतथाकल्पादयोऽपिच
सर्वेभ्योऽप्यधिकंमासमेतेभ्योवदपावनम् १०
सर्वयज्ञमयश्रीमन्नेकंनिश्चित्यमेवद
वराहउवाच-

विधिनाविधिनाचैवयेयजंतिनराधमाः ११
माधवेमासिमांभक्त्यातैश्चपूज्योऽस्म्यहंसदा
हिरण्याक्षोवरारोहेमाधवेतुमधुर्हत १२
आदिदैत्यावुभावेतौहत्वात्वंतुसमुद्धृता
त्रेतायुगेत्रयीधर्मोज्ञानवर्णव्यवस्थितिः १३
माधवेमासिसंभूतातेनमेमाधवःप्रियः
त्रेतायुगंतृतीयायांशुक्लायांमासिमाधवे १४
प्रवृत्तंचत्रयीधर्माःप्रवृत्तास्तेप्रवर्द्धिताः
अक्षयासोच्यतेलोकेतृतीयाहरिवल्लभा १५
स्नानेदानार्चनेश्राद्धेजपेपूर्वजतर्प्पणे
येऽचयंतियवैर्विष्णुंश्राद्धंकुर्वंतियत्नतः १६
तेषांददाम्यहंसर्वंयन्मनोऽभीष्टमुत्तमम्
येददंत्यपिदानानिधन्यास्तेधार्मिकानराः १७
येयजंतिहरेर्नित्यमध्वरैर्विविधैरपि
माधवेयजतेयोमांतेभ्यस्तदधिकंफलम् १८
स्नानंदानंजपोहोमस्तपोयज्ञव्रतादिकम्
वैशाखेयत्कृतंदेवितस्यपुण्यफलंशृणु १९
मन्वंतराणांकोटयस्तुदशपंचचसप्तच
मत्सान्निध्यगतास्तेपितिष्ठंतिभयवर्जिताः २०
यद्यपिस्युर्ग्रहाःसर्वेक्रूराजन्मव्ययाष्टकाः
प्रातःस्नानेनवैशाखेसर्वेसौम्याभवंतिते २१
वैशाखेमासियोविप्रान्भोजयेद्भक्तितत्परः
सिक्थेसिक्थेभवेत्तृप्तिःपितृणांयुगसंख्यया २२
यच्छंतितत्रमधुराधिकभोजनानियेवायवाशनतिलोदकभोजनानि
छत्रांबराणिचरणोचितरक्षणानिधन्यास्तएवपरितोषकराहिविष्णोः २३
विशेषादिहदातव्यास्तिलामधुसमन्विताः
धर्मायबृहतेदीर्घदुरितक्षयहेतवे २४
एवंकृतेतुयत्पुण्यंप्राप्यतेमनुजैश्चतैः
तत्कैर्गणयितुंशक्यंवर्षकोटिशतैरपि २५
पुत्रपौत्रादिसंपत्तिदीर्घायूंषियथेप्सितम्

इहाप्नोतिपरत्रापिमामेवप्रतिपद्यते २६
अनेकजन्मार्जितपातकावलीविलीयतेमाधवमज्ञनेन
जनस्यतत्रोषसिपुण्यतीर्थेयथाविधानंश्रयतेतथावा २७
यःपरित्यज्यवैशाखंव्रतमन्यदुपाचरेत्
सकरस्थंमहारत्नंहित्वालोष्टंहियाचते २८
सूतउवाच-
एवंसभगवान्पूर्वमादिदेवोवदद्विभुः
माधवंमासमुद्दिश्यजगत्यांजगतीधरः २९
किमत्रबहुनोक्तेननतदस्तिमहीसुराः
यदप्राप्यंभवेन्मासिमाधवेमाधवार्चनात् ३०
शृणुध्वंचपुरावृत्तमिहार्थेपरमाद्भुतम्
ब्राह्मणस्यचसंवादंयमस्यचमहात्मनः ३१
मध्यदेशेमहाग्रामोब्राह्मणानांबभूवह
गंगायमुनयोर्मध्येयामुनस्यगिरेरधः ३२
विद्वांसस्तत्रभूयिष्ठाब्राह्मणाश्चावसंस्तदा
अथप्राहयमःकंचित्पुरुषंकृष्णपिंगलम् ३३
रक्ताक्षमूद्ध्वरोमाणंकाकजंघाक्षिनासिकम्
गच्छत्वंभोमहाग्रामंगत्वाब्राह्मणमानय ३४
वसिष्ठगोत्रसंभूतंनामतोयज्ञदत्तकम्
शमेनिविष्टंविद्वांसंयज्ञकर्मविशारदम् ३५
नचान्यमानयेथास्त्वंसगोत्रंतस्यपार्श्वतः
सहितादृग्गुणस्तेनतुल्योऽध्ययनजन्मना ३६
आकृत्याचतथाचिह्नैःसमस्तैनैवसत्तमः
तमानययथोद्दिष्टापूजाकार्याहितस्यमे ३७
सगत्वाप्रतिकूलंतुचकारयमशासनम्
तमेवमानयामासप्रतिषिद्धोयमेनयः ३८
तस्मैयमःसमुत्थायपूजांकृत्वाचधर्मवित्
प्रोवाचनीयतामेषसोऽन्यआनीयतामिति ३९
सूतउवाच-
एवमुक्तेतुवचनेधर्मराजेनसद्विजः

उवाचधर्मराजंतंनिर्विरागोगमनायवै ४०
ब्राह्मणउवाच-
कस्मादहमिहानीतःकस्मात्प्रेरयसेपुनः
गंतुंनैवोत्सहेतत्रमर्त्यलोकंपुनःप्रभो ४१
यमउवाच-
इहक्षीणायुषांपुंसांवासःपुरायवतांभवेत्
अयंवैधर्मराजस्यलोकोधर्मःप्रकीर्तितः ४२
सौख्यभूमिरियंसर्वाधर्मराजोऽहमीश्वरः
पुरायापुरायानुसारेणजंतूनांसुखदुःखदः ४३
पापिनांयमरूपोऽस्मिनृणांनिरयदायकः
तथापुरायवतांसौख्यस्वर्गदोधर्ममूर्तिमान् ४४
गच्छविप्रत्वमद्यैवनिलयंस्वंयथागतः
अद्यापिदशवर्षाणामायुस्तेपरिवर्तते ४५
क्षयेतवायुषःप्राप्तिर्लोकस्यास्यभविष्यति
प्रष्टव्यंचत्वयाह्यन्यत्पृच्छस्वप्रब्रवीमिते ४६
ब्राह्मणउवाच-
यत्कृत्वासुमहत्पुरायंस्वर्गःस्याद्ब्रूहितन्मम
सर्वस्यहिप्रमाणंत्वंधर्माधर्मविनिश्चये ४७
यदिदेवमयासम्यग्गंतव्यंनिजमंदिरे
तद्ब्रूहिकर्मणाकेनपतंतिनरकेनराः ४८
व्रजंतिकेनवैस्वर्गंतत्सर्वंकृपयावद
यमउवाच-
कर्मणामनसावाचायेधर्मविमुखानराः ४९
विष्णुभक्तिविहीनायेतेवैनिरयगामिनः
पश्यंतिभेदबुद्ध्यायेब्रह्माणंशंकरंहरिम् ५०
विरक्ताविष्णुविद्यासुनरानिरयगामिनः
कुलदेशोचितंकर्मयस्त्यक्त्वान्यत्समाचरेत् ५१
कामाद्वायदिवामोहात्सयातिनरकंनरः
अयाज्ययाजकश्चैवयाज्यानांचविवर्जकः ५२
विरतोविष्णुविद्यासुसभुंक्तेनरकान्बहून्

अदत्वापितृदेवेभ्योविप्रेभ्योमर्त्यबंधुषु ५३
सधनोम्रियतेपापःसयातिनरकान्बहून्
सर्वाण्यन्नानिसिद्धानिपाकभेदंकरोतियः ५४
अवैश्वदेवंभुंजीतसयातिनरकंचिरम्
बहुद्रोहेणभूतानांयेऽजयंतिधनंद्विज ५५
धनवंतोनिरयगादांभिकादुःखभागिनः
नास्तिक्यादथवालोभान्मोहात्कालेयथोदिते ५६
भक्त्यानश्राद्धदायेस्युःपच्यंतेनरकेषुते
दीयमानस्यवित्तस्यब्राह्मणेभ्यस्तुपापकृत् ५७
विघ्नमाचरतेयोऽसौनरोनिरयगोभवेत्
सामान्यदक्षिणांलब्ध्वागृह्णात्येकोविमोहतः ५८
नास्तिक्यभावनिरतोनरःस्यान्नरकालये
असहिष्णुतयातस्यगुणानांकारणंभवेत् ५९
महत्पापंसमुत्पन्नंकारणंनरकस्यतत्
निर्दोषांसुहृदांभार्यांत्यजन्कालेनयातियः ६०
नवहेतयशस्तेषांसनरोनरकेपतेत्
अधर्मंधर्ममितियोवदन्मोहवशंगतः ६१
हैतुकोनास्तिकोयस्तुसनरोनिरयालयः
मनसायोऽन्यभावेनवचसाचान्यथावदेत् ६२
हृदयंकलुषंकुर्यात्सनरोनरकेवसेत्
अवमन्यचयेयांतिभगवत्कीर्तनंनराः ६३
तेयांतिनरकंघोरंतेनपापेनकर्मणा
पश्यंतोभगवद्द्वारंनामशास्त्रपरिच्छदम् ६४
अकृत्वातत्प्रणामादितेयांतिनरकौकसः
विनापराधेननराःकृत्वापत्न्यधिवेदनम् ६५
त्यजंतिसुकलत्रंयेतेयांतिनरकेनराः
नशृणोतिगुरोर्वाक्यंधर्मशास्त्रंचयोनरः ६६
परेषांचेतसःक्लेशकारीनिरयगोभवेत्
पश्यतांबंधुबालानांप्रकर्षीमिष्टमश्नुते ६७
सयातिनरकंघोरंकेवलोदरपूरकः

तुलामकरमेषेषुप्रातःस्नानंनयश्चरेत् ६८
नद्यादिषुचनास्तिक्यस्तस्यस्यान्नरकालयः
वैष्णवंजनमालोक्यनाभ्युत्थानंकरोतियः ६९
प्रणयादरतोविप्रसनरोनरकातिथिः
काष्ठैर्वाशंकुभिर्वापिशूलैरश्मभिरेवच ७०
येमार्गांश्चैवरुंधंतितेवैनिरयगामिनः
आद्यंपुरुषमीशानंसर्वलोकमहेश्वरम् ७१
नचिन्तयंतियेविष्णुंतेवैनिरयगामिनः
क्षेत्रवृत्तिगृहच्छेदंप्रीतिच्छेदंचयेनराः ७२
आशाच्छेदंचकुर्वंतितेनरानरकौकसः
आगतान्भोजनार्थंचब्राह्मणान्वृत्तिकर्शितान् ७३
यःपरीक्षेतमूढात्मासज्ञेयोनरकातिथिः
अनाथंवैष्णवंदीनंरोगार्तंवृद्धमेवच ७४
नानुकंपंतियेमूढास्तेवैनिरयगामिनः
नियमांस्तुसमादाययेपश्चादजितेंद्रियाः ७५
विलोपयंतितान्भूयस्तेवैनिरयगामिनः
शृणुविप्रयथायांतिनराःस्वर्गंदयालवः ७६
समासेनैववक्ष्यामिकिंचित्तेगौरवादहम्
येऽचयंतिहरिंदेवंजिष्णुंविष्णुंसनातनम् ७७
नारायणमजंकृष्णंविष्वक्सेनंचतुर्भुजम्
ध्यायंतिपुरुषंदिव्यमच्युतंयेस्मरंतिच ७८
लभंतेतेऽच्युतस्थानंश्रुतिरेषापुरातनी
इदमेवहिमांगल्यमिदमेवधनार्जनम् ७९
जीवितस्यफलंचैतद्यद्दामोदरकीर्तनम्
कीर्तनाद्देवदेवस्यविष्णोरमिततेजसः ८०
दुरतानिविलीयंतेतमांसीवदिनोदये
गाथांगायंतियेनित्यंवैष्णवींश्रद्धयान्विताः ८१
स्वाध्यायनिरतानित्यंतेनराःस्वर्गगामिनः
सर्वान्क्लेशान्परित्यज्यविष्णुमेवस्तुवंतिये ८२
स्वधर्मनिरताधीरास्तेनराःस्वर्गगामिनः

वासुदेवजपासक्तानपिपापकृतोजनान् ८३
नोपसर्पन्तितान्विप्रयमदूताश्चदारुणाः
नान्यत्पश्यन्तिजंतूनांविहायहरिकीर्तनम् ८४
सर्वपापप्रशमनंप्रायश्चित्तंद्विजोत्तम
येयाचिताःप्रहृष्यंतिप्रियंदत्वावदंतिच ८५
त्यक्तदानफलायेचतेनराःस्वर्गगामिनः
वर्जयंतिदिवास्वापंनराःसर्वसहाश्चये ८६
पर्वरायाश्रयभूतायेतेमर्त्याःस्वर्गगामिनः
द्विषतामपियेदोषान्नवदंतिकदाचन ८७
कीर्तयंतिगुणांश्चैवतेनराःस्वर्गगामिनः
येपरेषांश्रियंदृष्ट्वानवितप्यंतिमत्सरात् ८८
प्रहृष्टाश्चाभिनंदंतितेनराःस्वर्गगामिनः
प्रवृत्तौचनिवृत्तौचश्रुतिशास्त्रोक्तमेवच ८९
आदरंतिप्रतीतायेतेनराःस्वर्गगामिनः
यस्मिन्कस्मिन्कुलेजातादयावंतोयशस्विनः ९०
सानुक्रोशाःसदाचारास्तेनराःस्वर्गगामिनः
येपूताःपरदारांश्चकर्मणामनसागिरा ९१
रमयंतिनसत्वस्थास्तेनराःस्वर्गगामिनः
सदाकर्मयथोक्तेनकुर्वंतिविहितानिच ९२
आत्मशक्तिंचविज्ञायतेनराःस्वर्गगामिनः
मनोवाक्कायिकेधर्मेश्रद्धांयःकुरुतेसदा ९३
साधूनांसंमतोयश्चसभवेद्देवतातिथिः
वचोवेगंमनोवेगंयोवेगमुदरोद्भवम् ९४
उपस्थवेगंसहतेसस्वर्गीजायतेनरः
येषांगुणेषुसंतोषोवाणीयेषांश्रुतंप्रति ९५
परमार्थेमतिर्येषांतेशिष्टाःस्वर्गगामिनः
व्रतंरक्षंतियेकोपाच्छ्रियंरक्षंतिमत्सरात् ९६
विद्यांमानापमानाभ्यामात्मानंतुप्रमादतः
मतिंरक्षंतियेलोभान्मनोरक्षंतिकामतः ९७
धर्मंरक्षंतिदुःसंगात्तेनराःस्वर्गगामिनः

एकादश्यांचविधिवदुपवासपरायणाः ९८
शुक्लेऽसितेचयेविप्रतेनराःस्वर्गगामिनः
मातेवसर्वबालानामौषधंरोगिणामिव ९९
रक्षार्थंसर्वलोकानांनिर्मितैकादशीतिथिः
एकादशीसमंकिंचित्पादत्राणंनविद्यते १००
तामुपोष्यविधानेनपुरुषाःस्वर्गगामिनः
एकादशेन्द्रियैःपापंयत्कृतंभवतिद्विज १०१
नरोनिर्द्धूयतत्तूर्णंप्रीतःस्वर्गतिमान्भवेत्
अश्वमेधसहस्राणिराजसूयशतानिच १०२
एकादश्युपवासस्यकलांनार्हंतिषोडशीम्
एकतःक्रतवःसर्वेसर्वतीर्थतपांसिच १०३
महादानादिदानानिव्रतंवैष्णवमेकतः
वैष्णवव्रतजोधर्मोधर्मोयज्ञादिसंभवः १०४
एकत्रतुलितौधात्रातत्रपूर्वोभवेद्गुरुः
हरिवासरभक्तानामच्युतानंतभाषिणाम् १०५
नाहंशास्ताविशेषेणतेभ्योविप्रबिभेम्यहम्
येषांपुत्रश्चपौत्रश्चएकादश्यामुपोषितः १०६
सहात्मनासपुरुषाञ्छतमुद्धरतेबलात्
उपोषणंततःकुर्यात्पक्षयोरुभयोरपि १०७
एकादश्यांसपुरुषोभुक्तिमुक्त्येकभाजनम्
जयाचविजयाचैवजयंतीपापनाशिनी १०८
त्रिस्पृशावंजुलीचैवपक्षसंवर्धिनीवरा
तिलदुग्धापराज्ञेयाअखंडद्वादशीतथा १०९
मनोरथाख्याचपराभीमद्वादशिकातथा
इत्येवमादयोभेदाद्वादश्याःसंत्यनेकशः ११०
व्रतेष्वेतेषुयेशक्ताज्ञेयास्तेब्रह्मणिस्थिताः
श्रोतारोधर्मशास्त्राणांधर्मप्रत्ययसंगताः १११
प्रियंकराश्चबालानांस्वर्गलोकंव्रजंतिते
मासिमास्येकदिवसेदर्शेश्राद्धव्रतानराः ११२
तृप्यंतिपितरोयेषांतेधन्याःस्वर्गगामिनः

भोजनेषूपपन्नेषुभोज्यंयच्छंतिसादरात् ११३
अभिन्नमुखरागेणशिष्टास्तेस्वर्गगामिनः ११४
येभक्तिमंतोमधुसूदनस्यनारायणस्याखिलनायकस्य
सत्येनहीनारजसापियुक्तागच्छंतितेनाकमनंतपुण्याः ११५
वितस्तांयमुनांसीतांपुण्यांगोदावरींनदीम्
सेवंतेयेशुभाचाराःस्नानदानपरायणाः ११६
नतेपश्यंतिपंथानंनरकस्यकदाचन
येनर्मदायामिहशर्मदायांमज्जंतितुष्यंत्यपिदर्शनेन ११७
विधूयपापानिमहेशलोकंगच्छंतितेतत्रचिरंरमंते ११८
स्नाताश्चर्मनदीतीरेत्रिरात्रंनियतानराः
व्यासाश्रमेविशेषेणतेनरानाकिनःस्मृताः ११९
गंगाजलेप्रयागेचकेदारेषुष्करेतथा
व्यासाश्रमेप्रभासेचमृतास्तेविष्णुगामिनः १२०
द्वारवत्यांकुरुक्षेत्रेयोगाभ्यासेनवामृताः
हरिरित्यक्षरंवक्त्रेयेषांतेनपुनर्भवाः १२१
त्रिरात्रमपियेविप्रद्वारवत्यांपुरिस्थिताः
मज्जंतिगोमतीतीरेधन्यास्तेकेशवप्रियाः १२२
नरनारायणावासेत्रिरात्रंयेसमाश्रिताः
मर्त्यलोकेचनंदायांधन्यास्तेकेशवप्रियाः १२३
षण्मासमुषिताविप्रपुरुषोत्तमसंनिधौ
तेनूनमच्युतात्मानोदृष्ट्वास्युरघहारिणः १२४
अनेकजन्मार्जितपुण्यतोयेमज्जंतितोयेमणिकर्णिकायाः
नमंतिविश्वेशमवाप्यकाशींतेवैमयापीहभवंतिवंद्याः १२५
पूजयित्वाहरिंयेतुभूमौदर्भतिलैःसह
तिलान्विकीर्यलोहंचदत्वाधेनुंपयस्विनीम् १२६
येमृताविधिवद्विप्रतेनराःस्वर्गगामिनः
उत्पाद्यपुत्रान्संस्थाप्यपितृपैतामहेपदे १२७
निर्ममानिरहंकारायेमृतास्तेऽपिनाकिनः
स्तैन्यान्निवृत्ताःसततंसंतुष्टाःस्वधनेनच १२८
स्वभाग्येनोपजीवंतितेनराःस्वर्गगामिनः

श्लद्दणांवाणींनिराबाधांमधुरोपायवर्जिताम् १२९
स्वागतेनाभिभाषंतेतेनराःस्वर्गगामिनः
शुभानामशुभानांचकर्मणांफलसंचये १३०
विपाकज्ञाश्चयेविप्रतेनराःस्वर्गगामिनः
धनधर्मप्रवृत्तानांधर्ममार्गानुयायिनाम् १३१
प्रोत्साहंवर्धयंतेयेमोदंतेदिवितेनराः
हेमंतेवह्निदोयश्चतथाग्रीष्मेजलप्रदः १३२
वर्षास्वाश्रमदाताचसस्वर्गेमोदतेचिरम्
पुरायकालेषुसर्वेषुनित्यनैमित्तिकादिषु १३३
भक्त्यायःकुरुतेश्राद्धंसनूनंसुरलोकभाक् १३४
दानंदरिद्रस्यविभोःद्वमित्वंयूनांतपोज्ञानवतांचमौनम्
इच्छानिवृत्तिश्चसुखोचितानांदयाचभूतेषुदिवंनयंति १३५
द्विविधःकर्मसंबंधःपापपुरायसमुद्भवः
सत्यमेवसमाश्रित्यक्रियतेह्यत्रनिर्णयः १३६
तपोध्यानसमायुक्तंतारणायभवांबुधेः
पापंतुपतनायोक्तंसत्यमेवनसंशयः १३७
बलेनपरिचारेणशौर्येणाभियुतस्यच
पुरायहीनस्यवैपुंसस्तद्बलादिवलीयते १३८
उन्नतागिरिदुर्गेषुवृद्माःसंतिसुपुष्टकाः
पतंतिवातवेगेनसमूलास्तुघनाश्रपि १३९
सत्यधर्मविहीनास्तेतथायांतियमालयम्
सामान्यंसर्वजंतूनांबलंधर्मस्तुकेवलः १४०
येनसंतरतेजंतुरिहलोकेपरत्रच
मयासर्वमिदंसम्यक्स्वर्गमार्गप्रदायकम् १४१
समासेनसमाख्यातंकिंभूयःश्रोतुमिच्छसि १४२

इति श्रीपद्मपुराणेपातालखंडेवैशाखमाहात्म्ये
षराणवतितमोऽध्यायः ९६

सप्तनवतितमोऽध्यायः

ब्राह्मणउवाच-

एतन्मूर्खोऽपिजानातिशुभकर्मकरःपुमान्
नयातिनरकंस्वर्गंतथापापक्रियारतः १
क्रतुभिर्विविधैरिष्टैर्व्रतदानजपादिभिः
सत्येनाचारकुशलैःस्वर्गसौख्यमवाप्यते २
विद्याचारधनोपेतैर्ऋषिभिर्वेदपारगैः
प्राप्यतेपुण्ययोगेनयज्ञैर्नाकस्ततःक्वचित् ३
वित्तेनचविनादानंबहुदातुंनशक्यते
विद्यमानधनेनापिकुटुंबासक्तचेतसा ४
अग्निहोत्रादयोधर्माविशेषेणकलौयुगे
दुष्करादानधर्मोऽपिदुष्करोभगवन्मतः ५
अल्पायासेनधर्मेणलभ्यतेधर्मसंचयः
तन्मेविशेषतोब्रूहिधर्माधर्मप्रदर्शक ६
तदेकंकथ्यतांधर्मंसर्वधर्मोत्तमोत्तमम्
कृतेनैकेनयेनेहसर्वपापक्षयोभवेत् ७
धनंधान्यंयशोधर्ममायुर्येनाभिवर्त्तते
मर्त्यलोकेऽपिसख्यंस्यात्स्वर्गोयेनाक्षयोभवेत् ८
साक्षान्नारायणोयेनभक्तानामभयप्रदः
तुष्येदस्यप्रसादेनकामःकरतलेस्थितः ९
सर्वयज्ञतपोदानतीर्थसेवाधिकंफलम्
लभ्यतेयेनयद्यस्तिवैवस्वततदादिश १०
अनुग्राह्योह्यहंदेवयदिधर्मोपदेशतः
सर्वधर्मक्रियासारंतदेकंकृपयावद ११
पापानामनुरूपाणिप्रायश्चित्तानियद्यथा
तथातथैवसंस्मृत्यकथितानिमनीषिभिः १२
कर्तुंतानिनशक्यंतेदेवप्रत्येकशोनरैः
सर्वपापहरंपुण्यमेकंचेदस्तितद्वद १३
सूतउवाच-
इत्युक्त्वाब्राह्मणश्रेष्ठोयमंधर्मस्वरूपिणम्
तुष्टावप्रयतोभूत्वासूक्ष्मधर्माभिकामुकः १४
ब्राह्मणउवाच-

नमस्तेसर्वशमननमस्तेजगतांपते
नमोऽस्तुदेवरूपायस्वर्गमार्गप्रदायिने १५
धर्मशास्त्रस्वरूपायधर्मराजनमोस्तुते
त्वयाभूःपाल्यतेदेवाप्यंतरिक्षंचद्यौर्महः १६
जनस्तपस्तथासत्यंसर्वस्वंपाल्यतेत्वया
नत्वयारहितंकिंचिज्जगत्स्थावरजंगमम् १७
विद्यतेत्वद्गृहीतंतुसद्योनश्यतिवैजगत्
त्वमात्मासर्वभूतानांसतांसत्वस्वरूपवान् १८
राजसानांरजस्त्वंचतामसानांतमस्तथा
चतुष्पदांभवान्देवचतुःशृंगस्त्रिलोचनः १९
सप्तहस्तस्त्रिधाबद्धोवृषरूपनमोस्तुते
सर्वयज्ञमयोधर्मस्त्वयिविग्रहविग्रहः २०
साक्षाद्दृष्टोसिलोकेशदेवतुभ्यंनमोनमः
हृदिस्थःसर्वभूतानांपुरायपापेक्षिताभवान् २१
तेनशास्ताचभूतानांदातादेवप्रशासिता
प्रवर्त्तकोहिधर्मस्यदेवदंडधरोभुवि २२
सर्वधर्ममयंसारमेकंवदसुनिश्चितम्
यमउवाच–
परितुष्टोऽस्मितेविप्रस्तोत्रेणचविशेषतः २३
तथाप्यागमधर्मेणमान्योसिममसत्तम
यन्नकस्यचिदाख्यातंतद्गोप्यंपरमंमम २४
सारमुद्धृत्यसर्वेषांयदेकंनिश्चितंमया
महानिरयसंघातान्निर्वासनकरंपरम् २५
अनाख्येयमपिब्रह्मन्वक्ष्येविनयतोषितः २६
स्युर्मोहायचराचरस्यजगतस्तेतेपुराणागमा–
स्तांतामेवहिदेवतांपरमिकांजल्पंतुकल्पेविधौ
सिद्धांतेपुनरेकएवभगवान्विष्णुःसमस्तागम–
व्यापारेषुविवेकिनांव्यतिकरंनीतेषुनिश्चीयते २७
भवोब्रह्माचविष्णुश्चत्रयमेवत्रयीमता
दीपोऽग्निर्वर्तिस्नेहैस्तुयथाविप्रतथाहरिः २८

समाराध्यहरिंभक्त्यागोलोकान्प्राप्नुयाच्छुभान्
आराधितेहरौकामाःसर्वेकरतलेस्थिताः २९
दानमेवपरंश्रेष्ठंसर्वपुण्येषुवैद्विज
दानेननश्यतेपापंसर्वंदानेनलभ्यते ३०
नित्यंनैमित्तिकंकाम्यमन्यदभ्युदयात्मकम्
अन्यंचपरमंदानमितिपंचविधंस्मृतम् ३१
प्रातर्मध्यापराह्णेषुत्रिषुकालेषुयत्नतः
यत्किंचिदपिदातव्यंनित्यमेवप्रकीर्तितम् ३२
शून्यंदिनंनकर्तव्यमात्मार्थंहितमिच्छताम्
यस्मिन्कुलेतुदत्तंयत्तत्रतत्रोपतिष्ठति ३३
यःस्वयंभक्षयेन्मोहाददत्वाबुद्धिवर्जितः
उत्पादयाम्यहंरोगंतस्यभोगनिवारणम् ३४
तेषुकार्येषुसंतुष्टंबहुपीडाप्रदायकम्
मंदानलेनसंयुक्तंद्वारंसंतापकारकम् ३५
त्रिषुकालेषुनोदत्तंब्राह्मणेषुसुरेषुयैः
स्वयंतुभुंजतेमिष्टंपापंतैस्तुमहत्कृतम् ३६
प्रायश्चित्तेनरौद्रेणतानहंपरिशोधये
उपवासैर्महीदेवकायशोषकरादिकैः ३७
चर्मकारोयथाचर्मकुंडस्योपरिनिर्घृणे
शोधयेच्चकशाद्यैश्चकुद्रव्यंस्फोटयेद्यथा ३८
तथाहंपापकर्तारंशोधयामिनसंशयः
औषधीनांसुयोगैश्चकषायैःकटुकैर्ध्रुवम् ३९
उष्णोदकैश्चसंतापैर्वैद्यरूपेणनान्यथा
अन्येभुंजंतितस्याग्रेभोगानन्यान्मनोगतान् ४०
किंकरोमिसमर्थश्चनदत्तंदानमुत्तमम्
महतारोगरूपेणतमेनंपरिवारयेत् ४१
नित्यकालस्ययद्दानमात्मानंपापिभिर्यथा
नदत्तंचमहीदेवश्रद्धयानिजशक्तितः ४२
तथायातान्प्रधक्ष्येतानुपायैर्दारुणैःकिल
नैमित्तिकंप्रवक्ष्यामिदानकालंतवाग्रतः ४३

महापर्वणिसंप्राप्तेतीर्थप्राप्तौतथैवच
पितुःक्षयाहदिवसेवैशाखादिषुयत्नतः ४४
मासेषुपुरयकालेषुदानंनैमित्तिकंस्मृतम्
काम्यकालंप्रवक्ष्यामियद्दानंफलदायकम् ४५
व्रतादिकंसमुद्दिश्यकामनाफलकल्पितम्
यत्कामंकथितंसम्यक्सर्वांगैरेवसंगतम् ४६
तस्यदानप्रभावेणभावनापरिभावितः
तादृक्फलंसमश्नातिमानुषस्तत्प्रसादनात् ४७
ग्राभ्युदयंप्रवक्ष्यामियच्चयज्ञादिषुस्मृतम्
जातकर्मादिकार्येषुमौञ्ज्याद्युद्वाहकर्मसु ४८
प्रासादध्वजदेवानांप्रतिष्ठासुप्रयत्नतः
इत्यादिकंमहीदेवदानमभ्युदयात्मकम् ४९
प्रजावृद्धिकरंभोगयशःस्वर्गसुखप्रदम्
ग्रंत्यंचैवप्रवक्ष्यामिशृणुदानंद्विजोत्तम ५०
कामस्यसंक्षयंज्ञात्वाजरयापरिपीडितः
दद्याद्दानानियत्नेनकुर्यादाशांनकस्यचित् ५१
मृतेचमयिमेपुत्राजायाबांधवसोदराः
कथमेतेभविष्यंतिमांविनासुहृदोमम ५२
ग्रहंवित्तविहीनोवाकथंजीवन्पुनस्तथा
भविष्यामीतिविज्ञायनददातिहिकिंचन ५३
ग्राशापाशशतैर्बद्धोभाग्यादेवकुमायया
मृत्युंप्रयातिमूढात्मारुदंतिचततःसुताः ५४
दुःखेनपीडिताःकिंचिंन्मोहेनाकुलचेतसः
स्वल्पमल्पंचवादानंकथंचित्कल्पयंतिते ५५
नतत्रास्मिन्गतेकालेमहादुःखगतेसति
विस्मरंतितदादानंलोभाद्दानददत्यपि ५६
मृतोऽयचपिताज्ञात्वास्नेहपाशोनिवर्त्तते
योऽसौमृतोमहीदेवममपाशैर्नियंत्रितः ५७
तृष्णाक्षुधासमाक्रांतोबहुदुःखैःप्रपीडितः
पच्यतेनरकेघोरेचिरकालंनसंशयः ५८

तस्माद्दानंप्रदातव्यंस्वयमेवनसंशयः
कस्यपुत्राश्चपौत्राश्चकस्यभार्याधनंचवा ५९
संसारेनास्तिकःकस्यस्वयंतस्मात्प्रदीयते
पानमन्नंचतांबूलमुदकंकांचनंतथा ६०
वसनंगांचभूमिंचच्छत्रपात्राण्यनेकधा
फलानिभूमिदानानिविविधानिस्वशक्तितः ६१
दातव्यानिमहीदेवनात्रकार्याविचारणा
तीर्थानांलक्षणंविप्रप्रवक्ष्यामितवाग्रतः ६२
सुतीर्थानिइयंगंगाभातिपुण्यासरस्वती
रेवाचयमुनातापीनदीचर्मण्वतीतथा ६३
सरयूचवरावेणीपूर्णापापप्रणाशिनी
कावेरीकपिलाचान्याविशल्याविश्वतारिणी ६४
गोदावरीसमाख्यातातुंगभद्राचगंडकी
पापानांभीतिदानित्यंनदीभीमरथीस्मृता ६५
देविकाकृष्णगंगाचअन्यायाःसरितांवराः
एतास्तुपुण्यकालेषुसंतितीर्थान्यनेकशः ६६
ग्रामेवायदिवारण्येनद्यःसर्वत्रपावनाः
तत्रतत्रैवकर्त्तव्याःस्नानदानादिकाःक्रियाः ६७
यदानज्ञायतेनामतस्यतीर्थस्यभोद्विज
तत्रेत्युच्चारणंकार्यंविष्णुतीर्थमिदंमहत् ६८
तीर्थस्यदेवताविष्णुःसर्वत्रापिनसंशयः
नारायणेतियन्नामस्मरेत्तीर्थेषुसाधकः ६९
तस्यतीर्थफलंसम्यग्विष्णुनाम्नैवजायते
अज्ञातानांचतीर्थानांदेवतानांनसंशयः ७०
विष्णुनाम्नैवनामानिमानवःपरिकीर्तयेत्
सर्वास्तुसिद्धयःपुण्यास्तीर्थभूतास्तुसागरः ७१
सरांसिमानसादीनिनिर्झराःपल्वलादयः
स्वल्पानद्योऽपिसर्वास्तास्तीर्थानिहरिनामतः ७२
पर्वतास्तीर्थरूपाश्चयज्ञोयज्ञमहीतथा
ब्राह्मणायत्रविद्वांसःकौतुकेनाप्यवस्थिताः ७३

तदेवतीर्थंसुमहत्सर्वपापहरंस्मृतम्
श्राद्धंचश्राद्धभूमिश्चदेवशालाचहोमभूः ७४
यत्रवेदध्वनिःसम्यग्यत्रविष्णुकथाःशुभाः
स्वगृहंपुरायसंयुक्तंगोस्थानमपिपावनम् ७५
यत्राश्वत्थतरुवनेयत्रागारोपिपावनः
एवमादीनितीर्थानिपितामातातथैवच ७६
पच्यतेयत्रधर्मार्थंस्वयंतत्रगुरुःस्थितः
साध्वीयत्रास्तिवैभार्यातत्रतीर्थंनसंशयः ७७
यत्रधर्मरतिर्नित्यंविद्वान्पुत्रःप्रवर्तते
तत्रतस्यहितत्तीर्थंतारणायप्रतिष्ठितम् ७८
इत्येवमादितीर्थानिराजवेश्मतथैवच
एवमादिषुतीर्थेषुपर्वयोगाद्विशेषतः ७९
अनाराध्यहृषीकेशंसर्वदंसर्वदेहिनाम्
कोपिक्वापिकिमप्यत्रनलभेतेतिनिश्चितम् ८०
अपत्यंद्रविणंदारास्तारहर्म्यंहयागजाः
सुखानिस्वर्गमोक्षौचनदूरेहरिभक्तितः ८१
नारायणःपरोदेवःसत्यरूपोजनार्दनः
त्रिधात्मानंसभगवान्ससर्जपरमेश्वरः ८२
रजस्तमोभ्यांयुक्तोऽभूद्रजःसत्वाधिकंविभुः
ससर्जनाभिकमलेब्रह्माणंकमलासनम् ८३
रजसातमसाजुष्टंसरुद्रमसृजद्विभुः
सत्वंरजस्तमश्चैवत्रितयंचैतदुच्यते ८४
सत्वेनमुच्यतेजंतुःसत्वंनारायणात्मकम्
रजसासत्वयुक्तेनभवेच्छ्रीमान्यशोधिकः ८५
यद्वेदवाक्यंधर्मस्यसमुद्दिश्योपसेवते
तद्ब्रुद्रमितिविख्यातंविशिष्टंगदितंनृणाम् ८६
तेनराजाभवेल्लोकेरजसातमसापुनः
यद्धीनंरजसाधर्मंकेवलंतामसंचयत् ८७
तच्चदुर्गतिदंनृणामिहलोकेपरत्रच
योविष्णुःसस्वयंब्रह्मायोब्रह्मासस्वयंहरः ८८

देवास्त्रयोपियज्ञेऽस्मिन्निज्यादेवेषुनित्यशः
योभेदंकुरुतेतेषांत्रयाणांद्विजसत्तमः ८९
सपापकारीपापात्माऽनिष्टांगतिमाप्नुयात्
विष्णुरेवपरंब्रह्मविष्णुरेवजगद्द्विज ९०
तस्यायंमाधवोमासःप्रियःसर्वेषुकर्मसु
कीर्त्यतेहयमेधादिमहाक्रतुफलप्रदः ९१
तीर्थस्नानतपोदानजपयज्ञफलाधिकः ९२
स्नानंविभातेनियमेननद्यामनारतंमेषगतेरवौये
कुर्वंतियेऽस्मिन्नपिविप्रपूजांमद्दंडभाजोनहितेभवंति ९३
हत्वाहत्वाकिंकरौघंपुरोमेलुप्त्वालुप्त्वाचित्रगुप्तस्यलेख्यम्
स्नात्वास्नात्वामाधवेमासितीर्थेपूर्वान्पूर्वानुद्धरंतीहपापात् ९४
इदंभयच्छेदकरंनतस्मात्प्रकाशनीयंपरमंरहस्यम्
निर्वासहेतुर्नरकालयस्यममाधिकारक्षयकारणंतत् ९५
भागीरथीनर्मदाचयमुनाचसरस्वती
विशोकाचवितस्ताचविंध्यस्योत्तरतःस्थिताः ९६
गोदावरीभीमरथीतुंगभद्राचदेविका
तापीपयोष्णीविंध्यस्यदक्षिणास्तुप्रकीर्तिताः ९७
द्वादशैतामहानद्योनित्यंतेनावगाहिताः
वैशाखेविधिनास्नानंनद्यांयःप्रातराचरेत् ९८
सर्वाःसमुद्रगाःपुण्याःसर्वेपुण्यानगोत्तमाः
सर्वेचायतनाःपुण्याःसर्वेपुण्यावनाश्रयाः ९९
तेनावगाहितादृष्टाःप्रणताबहुसेविताः
स्नानमर्द्धोदितेसूर्येवैशाखेनियतश्चरेत् १००
तस्यपुण्यंमहीदेवकश्चिद्वक्तुंनशक्यते
यदिवक्त्रसहस्राणांसहस्राणिभवंतिहि १०१
आयुश्चब्रह्मणास्वल्पंयदिस्याद्द्विजसत्तम
तदामाधवमासस्यफलंकथयितुंभवेत् १०२
महानिरयकर्षाग्निमाधवोमाधवोयथा
ब्रह्महत्यादिकंपापमगम्यागमनादिकम् १०३
कामाकामकृतंपापमेतिपातकमेवच

उपपापरहस्यंचसंकरीकरणंपरम् १०४
जातिभ्रंशकरंघोरमपात्रीकरणंतथा
मलावहंप्रकीर्णंचवाङ्मनःकायसंभवम् १०५
माधवोनिर्दहेन्मासोविधिनासमुपासितः
कल्पकोटिसहस्राणिकल्पकोटिशतानिच १०६
वसेद्विष्णुपुरेश्रीमान्माधवेयोऽचयेद्धरिम् १०७
इति श्रीपद्मपुराणेपातालखंडेवैशाखमाहात्म्ये
सप्तनवतितमोऽध्यायः ९७

अष्टनवतितमोऽध्यायः

सूतउवाच-
एतच्छ्रुत्वावचस्तस्यधर्मराजस्यभूसुरः
पुनःपप्रच्छमासस्यमाधवस्यविधिंशुभम् १
ब्राह्मणउवाच-
धर्मराजमहाभागसम्यग्गुह्यंप्रकाशितम्
माधवस्नानजंपुरायंनराणांमुक्तिदंपरम् २
माधवंमाधवेमासिस्नात्वाप्रातःसमाहितः
कथंसंपूजयेद्देवंकैःपुष्पैस्तद्विधिंवद ३
धर्मराजउवाच-
सर्वेषांपत्रजातीनांतुलसीकेशवप्रिया
पुष्करादीनितीर्थानिगंगाद्याःसरितस्तथा ४
वासुदेवादयोदेवावसंतितुलसीदले
सर्वदासर्वकालेषुतुलसीविष्णुवल्लभा ५
त्यक्त्वातुमालतीपुष्पंमुक्त्वाचसरसीरुहम्
गृहीत्वातुलसीपत्रंभक्त्यामाधवमर्चयेत् ६
तस्यपुरायफलंवक्तुमलंशेषोऽपिनोभवेत्
अस्नात्वातुलसींछित्त्वादेवार्थंपितृकर्मणि ७
तत्सर्वंनिष्फलंयातिपंचगव्येनशुध्यति
दारिद्र्यदुःखभोगादिपापानिसुबहून्यपि ८
तुलसीहरतेक्षिप्रंरोगानिवहरीतकी

तुलसीकृष्णगौराख्यातयाभ्यर्च्यमधुद्विषम् ९
विशेषेणहरेर्भक्तोनरोनारायणोभवेत्
माधवंसकलंमासंतुलस्यायोऽर्चयेद्यतः १०
त्रिसंध्यंमधुहंतारंनास्तितस्यपुनर्भवः
अलाभेपुष्पपत्राणामन्नाद्येनापिपूजयेत् ११
शालितंडुलगोधूमैर्यवैर्वापिहरिंसदा
प्रातःस्नात्वाविधानेनमाधवेमाधवप्रिये १२
पितृदेवमनुष्यांश्चतर्प्पयेत्सचराचरम्
योऽश्वत्थमूलंवैसिंचेत्तोयेनबहुनासदा १३
कुर्यात्प्रदक्षिणांतंतुसर्वदेवमयंततः
योऽश्वत्थमर्चयेद्देवमुदकेनसमंततः
कुलानामयुतंतेनतारितंस्यान्नसंशयः १४
अलक्ष्मीःकालकर्णीचदुःस्वप्नोदुर्विचिंतितम्
अश्वत्थतर्प्पणात्तातसर्वदुःखंविलीयते १५
तर्पिताःपितरस्तेनतेनविष्णुःसमर्चितः
योऽश्वत्थमर्चयेद्वीरोग्रहास्तेनैवपूजिताः १६
श्वेताश्वपुष्पाणितथाशमींचहुताशनंचंदनमर्कबिंबम्
अश्वत्थवृक्षंचसमालभेतततश्चकुर्यान्निजजातिधर्मान् १७
कंडूयनंचगोग्रासंस्नात्वापिप्पलतर्प्पणम्
कृत्वागोविंदपूजांचनसदुर्गतिमाप्नुयात् १८
त्रयोदश्यांचतुर्दश्यांवैशाख्यांचदिनत्रयम्
सर्वाशक्तोपिविधिनानारीवापुरुषोपिवा १९
पूर्वोक्तनियमैर्युक्तःप्रातःस्नात्वाचशक्तितः
विमुक्तःपातकैःसर्वैःस्वर्गमक्षयमश्नुते २०
वैशाख्यामपिशक्त्यावाभोजयेद्ब्राह्मणान्दश
त्रिरात्रमुत्थितःस्नात्वासकृच्चप्रयतःशुचिः २१
गौरान्वायदिवाकृष्णांस्तिलान्क्षौद्रेणसंयुतान्
दत्वाद्वादशविप्रेभ्यस्तेनैवस्वस्तिवाचयेत् २२
प्रीयतांधर्मराजोमेपितृन्देवांश्चतर्प्पयेत्
यावज्जीवकृतंपापंतत्क्षणादेवनश्यति २३

अयुतायुतंचतिष्ठेत्सस्वर्गलोकेयथासुखम्
मामेवतुनपश्येत्सपूजितोऽखिलदैवतैः २४
पाकान्नोदककुंभादिपितृदैवततुष्टये
त्रयोदश्यांचतुर्दश्यांपूर्णायांचदिनत्रयम् २५
योदद्याद्भक्तितोविप्रमहापापैःप्रमुच्यते
सुवर्णतिलपात्रैस्तुब्राह्मणाञ्छक्तितोऽन्वहम् २६
तर्प्पयेदुदपात्रैस्तुब्रह्महत्यांव्यपोहति
वैशाख्यांपौर्णमास्यांचसृष्टाःकमलयोनिना २७
तिलादेयाश्चभक्त्याचश्रेयःसंततिहेतवे
इहार्थेचपुरावृत्तंतदाकर्णयसुव्रत २८
फलंमाधवमासस्यपूर्णायांपरमाद्भुतम्
मेषसंक्रममारभ्यतिथयस्त्रिंशदुत्तमाः २९
सर्वयज्ञाधिकाःपुरायाःपुराणेषुप्रकीर्तिताः
विशेषतोऽपितास्तिस्त्रःपवित्राःपापिदुर्लभाः ३०
ततोपिपूर्णिमापुरयामाधवीमाधवप्रिया
एषावाराहकल्पादितिथिराद्यामहाफला ३१
पुरानारायणेनास्यामादिदैत्यौविमोहितौ
हिरण्याक्षमधूविप्रपृथिवीचसमुद्धृता ३२
त्रयोदश्यांचतुर्दश्यांपौर्णमास्यामयंविभुः
क्रमादेतत्त्रयंचक्रेशुक्लेऽस्मिन्मासिमाधवे ३३
ततःप्रभृतिविप्रेंद्रविशेषादेवपूर्णिमा
कल्पादिःपावनाख्याताकर्मणःकल्पसाक्षिणी ३४
येनस्नानंनवैशाखेप्रातर्नियमशालिना
किंतस्यजन्मनाविप्रनूनमात्मापकारिणा ३५
त्रयोदश्यांचतुर्दश्यांपौर्णमास्यांविशेषतः
अपिसम्यग्विधानेननारीवापुरुषोऽपिच ३६
प्रातःस्नातःसनियमःसर्वपापैःप्रमुच्यते
स्नानदानार्चनश्राद्धक्रियापुरयादिवर्जिता ३७
यस्यातीताचवैशाखीसनूनंनिरयालयः
नवेदेनसमंशास्त्रंनतीर्थंगंगयासमम् ३८

नदानंजलगोतुल्यंनवैशाखीसमातिथिः
जलधेनुंचयोदद्याद्वैशाख्यांविष्णुतत्परः ३९
त्रयाणामपिदेवानांचतुर्थोऽयविशेषतः
मातृहापितृहाचैवभ्रूणहागुरुतल्पगः ४०
जलधेनुंसमालोक्यमुच्यतेसर्वपातकैः
दशपूर्वान्परान्वंश्यान्नरकात्तारयंतिते ४१
जलधेनुंप्रयच्छंतिवैशाख्यांविधिनात्रये
शर्कराफलतांबूलमुपानत्करपत्रिकाः ४२
प्रयच्छंतिद्विजाग्र्येभ्योधन्यास्तेचात्रकीर्तिताः
मणिकोदककुंभांश्चपक्वान्नंहैमदक्षिणाम् ४३
यःप्रयच्छतिवैशाख्यांसोऽश्वमेधफलंलभेत्
अत्राप्युदाहरंतीममितिहासंपुरातनम् ४४
ब्राह्मणस्यचसंवादंप्रेतैःसार्द्धंमहावने
ब्राह्मणोधनशर्मासीन्मध्यदेशेपुरानघ ४५
कुशाद्यर्थंवनंयातोददर्शेदमथाद्भुतम्
भीतोऽपश्यदसौप्रेतान्दुष्टांस्त्रीनतिदारुणान् ४६
ऊर्ध्वकेशान्सरक्ताक्षान्कृष्णदंतान्कृशोदरान्
कुर्वतोविविधारावान्धावतोपियतस्ततः ४७
तान्दृष्ट्वाभयसंत्रस्तोब्राह्मणोविद्रुतोजवात्
क्रंदमानास्ततस्तेपितमेवानुययुस्तदा ४८
सधर्ष्यमाणस्तैःप्रेतैरुवाचमधुरंवचः
धनशर्मोवाच-
केयूयंवःकुतोऽवस्थाजातेतिनिरयोचिता ४९
भयार्त्तमनुकंप्यंमांदुःखितंत्रातुमर्हथ
वैष्णवंबहुभृत्यंचनिःस्वंविप्रंवनागतम् ५०
भवतामपिसश्रेयोनूनंदास्यतिकेशवः
ब्रह्मण्योभगवान्विष्णुस्तुष्टोमय्यनुकंपया ५१
अतसीपुष्पसंकाशोविष्णुःपीतांबरोहरिः
यस्यश्रवणमात्रेणनाम्नोयातिमहातमः ५२
अनादिनिधनोदेवःशंखचक्रगदाधरः

अक्षयःपुंडरीकाक्षःप्रेतमोक्षप्रदायकः ५३
यमउवाच-
नामश्रवणमात्रेणविष्णोस्तेपरितोषिताः
पिशाचाःपुण्यभावस्थादयादाक्षिण्ययंत्रिताः ५४
प्रीणितास्तस्यवचसातदादिष्टेननोदिताः
इदमूचुर्द्विजंप्रेताःक्षुत्तृष्णापूरपीडिताः ५५
प्रेताऊचु-
दर्शनेनैवतेविप्रनामश्रवणतोहरेः
भावमन्यमनुप्राप्तावयंजातादयालवः ५६
अपाकरोतिदुरितंश्रेयश्चयोजयत्यपि
यशोविस्तारयत्याशुनूनंवैष्णवसंगमः ५७
रसायनमयीशीतापरमानंददायिनी
नानंदयतिकंनामवैष्णवामृतचंद्रिका ५८
अयंकृतघ्ननामास्तिद्वितीयोऽयविदैवतः
अवैशाखस्तृतीयोऽयत्रयाणामपिपापकृत् ५९
सदैवानुष्ठितानेनपापेनातिकृतघ्नता
तेनास्यकर्मजंनामकृतघ्नाख्यंव्यवस्थितम् ६०
सुदासइतिनाम्नायंशूद्रोऽभूत्पूर्वजन्मनि
कृतघ्नस्तेनपापेनप्राप्तोऽवस्थामिमांद्विज ६१
अतिपापिनिधूर्तेचगुरुस्वाम्यहितेऽपिच
निष्कृतिर्विद्यतेविप्रकृतघ्नेनास्तिनिष्कृतिः ६२
नानानिरयसंघातंशरीरैर्यातनाक्षमैः
अनुभूयतांत्ववस्थामंत्यामेतांगतोद्विज ६३
अनेनान्नंसदाभुक्तमकृत्वादेवतार्चनम्
अदत्वागुरुविप्रेभ्यस्तेनैवायंविदैवतः ६४
अयंदशसहस्राणांग्रामाणामीश्वरोनृपः
हरिवीरइतिख्यातोनाम्नासीत्पूर्वजन्मनि ६५
रोषाहंकारनास्तिक्यैर्गुर्वाज्ञालंघनोद्यतः
अकृत्वैवमहायज्ञान्भुक्तवान्विप्रनिंदकः ६६
कर्मणातेनपापेनमहानरकसंकटम्

अनुभूयततःप्रेतोजातोनाम्नाविदैवतः ६७
अवैशाखस्तृतीयोऽहत्रयाणामपिपापकृत्
तेनमेकर्मजंनामब्राह्मणोऽहव्यवस्थितः ६८
मध्यदेशेभवंनाम्नागौतमोगोत्रतोऽप्यहम्
विप्रोवासपुरेवासीयज्वाऽसपूर्वजन्मनि ६९
मयाकेवलमेवैकंश्रौतमार्गानुसारिणा
उद्दिश्यमाधवंदेवंनस्नातंमासिमाधवे ७०
नदत्तंनहुतंकिंचिद्वैशाख्यांचाविशेषतः
नार्चितोमधुहातत्रतोषितानमनीषिणः ७१
मणिकोदककुंभैश्चनदानैःपितृदेवताः
तर्पितानतिलादत्ताःसक्षौद्राःश्रोत्रियेषुच ७२
नपुष्पफलतांबूलचंदनव्यजनांबरैः
विद्वांसोनार्चितास्तत्रपितृदैवततुष्टये ७३
मयानैकापिवैशाखीपूर्णापूर्णफलप्रदा
स्नानदानक्रियापूजासुकृतैःपरिपालिता ७४
तनेमेवैदिकंकर्मसर्वंचैवतुनिष्फलम्
ततोऽवैशाखनामाहंप्रेतोजातोऽस्मिसर्वतः ७५
एतत्तेसर्वमाख्यातंत्रयाणामपिकारणम्
त्वंनोभवसमुद्धर्तापापाद्विप्रोसिवैयतः ७६
विमुक्तंब्रह्मतीर्थंचसाधवःपरमंयतः
तारयंतिमहापापान्निरयेभ्योऽपिसंश्रितान् ७७
गंगादिपुण्यतीर्थेषुयोनरःस्नातिसर्वदा
यःकरोतिसतांसंगंतयोःसत्संगमोवरः ७८
अथवाममपुत्रोऽस्तिधनशर्मेतिविश्रुतः
तंगत्वाबोधयस्वामिन्नस्मदर्थेकृतोद्यमः ७९
कार्येसमुद्यमंकृत्वापरेषांसमुपस्थिते
पुष्कलंफलमाप्नोतियज्ञदानक्रियाधिकम् ८०
यमउवाच-
प्रेतवाक्यंतदाकर्ण्यधनशर्मातिदुःखितः
सतंजनकमाज्ञायपतितंनिरयेनिजम् ८१

ग्रात्मानमभितोनिंदन्निदंवचनमब्रवीत्
धनशर्मोवाच-
ग्रहंतवसुतःस्वामिन्गौतमस्यनिरर्थकः ८२
यस्तुपुत्रोननिस्तारंपितुःकुर्यादतंद्रितः
ग्रात्मानंपावयेन्नासावदाताद्रव्यवानिति ८३
धर्मोहिगहनोज्ञेयःप्रयत्नेनापिधीमता
यथाममपिताचत्वमिमांप्राप्तोसिदुर्गतिम् ८४
यदाचसुखसंतानंनमत्तःप्राप्तवानसि
लोकयोःसुखसंतानेतथासतनयोमतः ८५
द्वौगुरूपुरुषस्येहपितामाताचधर्मतः
तयोरपिपिताश्रेयान्बीजप्राधान्यदर्शनात् ८६
किंकरोमिक्वगच्छामिकथंतातगतिस्तव
धर्मतत्त्वंनजानामिसंश्रयामिभवद्वचः ८७
प्रेतउवाच-
शृणुपुत्रवचःसत्यंभाविनोऽथस्यमेबलात्
ग्रथपुरायेनकेनापिभवित्रीसुगतिर्मम ८८
मयाश्रौतानिकर्माणिकुर्वताकिलगर्वतः
ग्रनादृतंगुरुवचोगुरुस्तत्रावमानितः ८९
गुरूणामपमानेनप्रहर्षक्रोधविस्मयैः
पुरायानिक्षयमायांतियशांसीवहिदुर्नयैः ९०
पौराणिकविधानेनकर्मश्रौताविरोधियत्
केवलंवैदिकंकर्मकृतमज्ञानतोमया ९१
पापेंधनदवज्वालापापद्रुमकुठारिका
कृतानैकापिवैशाखीविधिनापुत्रपूर्णिमा ९२
ग्रव्रतायस्यवैशाखीसोऽवैशाखोभवेन्नरः
दशजन्मानिचततस्तिर्यग्योनिषुजायते ९३
चिरंभुक्त्वादुःखमंतेप्रेतःपर्यायतोभवेत्
लभतेमानुषंजन्मकथंचिदपिदुर्लभम् ९४
उपायंतेवदिष्यामिप्रेतमोक्षकरंपरम्
श्रुतवान्यदहंपूर्वजन्मनिस्वगुरोर्मुखात् ९५

गच्छपुत्रगृहंस्नात्वायमुनायांविधानतः
अद्यतःसर्वगतिदाकल्पाद्यासाप्युपागता
पश्चिमेऽहनिवैशाखीपितृदेवार्चनेहिता ९६
पानीयमप्यत्रतिलैर्विमिश्रंसहोदकुंभान्नफलानिभक्त्या
दद्यात्पितृभ्योभवतीहदत्तंश्राद्धंसदातेनसमासहस्रम् ९७
वैशाख्यांपौर्णमास्यांयोभोजयेद्भूमिदेवताः
सिक्थेसिक्थेभवेत्तृप्तिःपितृणांयुगसंख्यया ९८
वैशाख्यांविधिनास्नात्वाभोजयेद्ब्राह्मणान्दश
पायसंसर्वपापेभ्योमुच्यतेनात्रसंशयः ९९
गौरान्वायदिवाकृष्णांस्तिलान्क्षौद्रेणसंयुतान्
दत्वादशभ्योविप्रेभ्यस्तेनैवस्वस्तिवाचयेत् १००
प्रीयतांधर्मराजेतिपितॄन्देवांश्चतर्पयेत्
यावज्जीवकृतंपापंतत्क्षणादेवनश्यति १०१
वैशाख्यांपौर्णमास्यांचसृष्टाःकमलयोनिना
तिलादेयाश्चभक्त्याचस्पृश्याःसर्वांगतोद्विज १०२
यस्तिलैर्यवसम्मिश्रैःस्नातिसर्वांगतस्तदा
तस्यब्रह्माचधर्मोऽत्रददातिवरमीप्सितम् १०३
प्रीतयेधर्मराजस्ययोदद्यादुदकुंभकान्
सप्तसप्तकुलंतेनतारितंस्यान्नसंशयः १०४
त्रयोदश्यांचतुर्दश्यांपूर्णायांभक्तितत्परः
स्नात्वाजप्त्वातथाहुत्वादत्वासंपूज्यमाधवम् १०५
यत्फलंजायतेपुत्रतदस्माकंप्रयच्छभोः
नैतौपरिचितौप्रेतौहित्वास्वर्गतिमाश्रये १०६
एतयोरपिपापस्यह्यंतोयंसमुपस्थितः
यमउवाच-
तथेत्युक्त्वागतःसर्वंततश्चक्रेसवैद्विजः १०७
प्रीतःपरमयाभक्त्यावैशाख्यांस्नानदानकृत्
स्नातःसमुदितोभक्त्याप्राप्यमाधवपूर्णिमाम् १०८
दत्वाबहूनिदानानितेभ्यःपुण्यंददौपृथक्
तत्क्षणादेवतेसर्वेविमानस्थादिवंययुः १०९

तत्पुरायदानयोगेनमुदिताद्विजसत्तम
धनशर्मापिविप्रेंद्रःश्रुतिस्मृतिपुराणवित् ११०
भुक्त्वाभोगांश्चिरंकालंब्रह्मलोकमवाप्तवान्
एषापुरायतमातस्माद्वैशाखीविश्वपावनी १११
कथ्यतेतुमयाविप्रसमासेनातिगौरवात् ११२
धन्यास्तएवकृतिनश्चतएवजातालोकेतएवपुरुषाःपुरुषार्थभाजः
येमाधवेमधुनिषूदनमर्चयंतिप्रातर्निमज्ज्यनियमेनविशुद्धचित्ताः ११३
योमाधवेमासिनरःप्रभातेस्नातःसमाराधयतेरमेशम्
यमैरुपेतोनियमैरशेषैर्वृतोऽपिनूनंसनिहंतिपापम् ११४
तैरेवकालोविजितस्तएवनरेषुधन्याविगतैनसस्ते
तएवगर्भेनविशंतिभूयोमज्ञंतियेमाधवमासियुक्ताः ११५
समाधवोगर्जतियज्ञयोगात्तपःक्रियादानविधानयोगात्
यस्मिन्कृतंमासिकथंचिदल्पंपुरायंपुनःस्यादिहकल्पतुल्यम् ११६
मज्ञतोहिमनुजस्यमाधवेमाधवार्चनकृतेदिनोदये
तामसोपिजलबिंदुसंगमादंगमावहतिपावनंयतः ११७
तानिदेहमधिरुह्यदेहिनस्तावदेवविचरंत्यघानिच
यावदेतिनसमाधवाह्वयःश्रीरमारमणवल्लभोविराट् ११९
मेरुमंदरतुल्यानिपापान्युग्रारायनेकशः
दहतेमाधवोमासःस्नातोमाधववल्लभः १२०
इदंसंक्षेपतःप्रोक्तंमयातेऽनुग्रहाद्द्विज
वैशाखस्नानमाहात्म्यंश्रोतुःपापक्षयंकरम् १२१
यस्तुश्रोष्यतिभक्त्यैनमितिहासंमयोदितम्
सोऽपिपापविनिर्मुक्तोनमामालोकयिष्यति १२२
ब्रह्महत्यादिपापानिबहुशोऽपिकृतान्यपि
वैशाखस्यविधानेनतानिनश्यंतिनिश्चितम् १२३
त्रिंशत्पूर्वान्परांस्त्रिंशत्त्रिंशच्चैवपरावरान्
वैशाखेविधिनास्नातोनरकादुद्धरेत्पितॄन् १२४
एकतःसर्वतीर्थानिसर्वेयज्ञाःसदक्षिणाः
एकतोमाधवोमासोनियमादनुपालितः १२५
यतोभगवतस्तस्यहरेरुत्कृष्टकर्मणः

प्रियोऽसौमाधवोमासःसर्वेभ्यःप्रवरोऽधिकः १२६
संशयंनोविधेहीतिमहीदेवकथंचन
वैशाखंप्रतिवैमासंसमासाद्यन्मयोदितम् १२७
इहार्थेयत्पुरावृत्तंतदाकर्णयचाद्भुतम्
अनाख्येयमपीदंतेकथयिष्येकथानकम् १२८
इति श्रीपद्मपुराणेपातालखंडेवैशाखमाहात्म्ये
अष्टनवतितमोऽध्यायः ९८

नवनवतितमोऽध्यायः

यमउवाच-
बभूवभूपतिःपूर्वंख्यातोनाम्नामहीरथः
पूर्वपुण्यफलावाप्तप्रभूतैश्वर्यसंपदः १
केवलंकामकलनाललनाललितस्थितः
तदेकव्यसनासक्तिर्नधर्मार्थव्यवस्थितः २
मंत्रिणिन्यस्यराज्यश्रीर्बुभुजेविषयान्नृपः
सकामिनीसहचरोराज्यकार्यपराङ्मुखः ३
नप्रजानधनंधर्मंनार्थंकार्यंचपश्यति
केवलंकामिनीकेलिकलनोचितवासनः ४
अथकालेनमहतापुरोधास्तस्यकश्यपः
वचःप्रोवाचतंधर्म्यमितिचेतस्यचिंतयत् ५
नवारयतियोमोहादधर्मान्नृपतिंगुरुः
सोपितत्पापभुक्तस्माद्बोधनीयःपुरोधसा ६
बोधितोऽप्यवजानातिसचेद्वाक्यंपुरोधसः
पुरोधास्तत्रनिर्दोषोराजास्यात्सर्वदोषभाक् ७
शृणुराजन्ममगुरोर्वचोधर्मार्थसंहितम्
अभिन्नार्थमुपेतार्थमिच्छारागादिवर्जितम् ८
अयमेवपरोधर्मोयद्गुरोर्वचसिस्थितिः
गुर्वाज्ञायालवोराज्ञामायुःश्रीसौख्यवर्द्धनः ९
नविप्रास्तर्पितादानैर्विष्णुर्नाराधितस्त्वया
नव्रतंनतपःकिंचिन्नतीर्थंहिकृतंत्वया १०

हरिनामत्वयाकामवशगेननचिंतितम्
हात्वयाभीरुसंगत्यानविद्वत्संगतिःकृता ११
स्मरचामरवाहिन्योवल्लभाःकस्यनप्रियाः
किंतुताःपवनोल्लोलकदलीदलवच्चलाः १२
तरंगतरलैरर्थैर्भोगैर्भ्रूभंगभंगुरैः
मुहूर्तपेयैस्तारुरायैर्नतृप्यंतेमहाशयाः १३
किंविद्ययाचतपसाकिंत्यागेननयेनवा
किंविविक्तेनमनसास्त्रीभिर्यस्यहृतंमनः १४
एकएवसुहृद्धर्मोनिधनेष्वनुयातियः
सर्वमन्यच्छरीरेणसमंनाशंगमिष्यति १५
धर्मंशनैःसंचिनुयाद्वल्मीकमिवपुत्तिकाः
धर्मेणहिसहायेनतमस्तरतिदुस्तरम् १६
अनिलोल्लासितोत्तालजलकल्लोलचंचलम्
किंनजानासिराजेंद्रनृणांजीवितविभ्रमम् १७
विनयोरत्नमुकुटःसत्यधर्मौचकुंडले
त्यागश्चकंकणोयेषांकिंतेषांजडमंडनैः १८
मृतंशरीरमुत्सृज्यकाष्ठलोष्टसमंभुवि
विमुखाबांधवायांतिधर्मस्तमनुगच्छति १९
गम्यमानेषुसर्वेषुक्षीयमाणेतथायुषि
जीवितेलुप्यमानेचकिमुत्थायनधावसि २०
कुटुंबंपुत्रदारादिशरीरंद्रव्यसंचयः
पारक्यमध्रुवंकिंतुस्वीयेसुकृतदुष्कृते २१
यदासर्वंपरित्यज्यगंतव्यमवशेनते
अनर्थेकिंप्रसक्तस्त्वंस्वधर्मंनानुतिष्ठसि २२
अविश्राममनालंबमपाथेयमदेशिकम्
मृतःकांतारमध्वानंकथमेकोगमिष्यसि २३
नहित्वांप्रस्थितंकश्चित्पृष्ठतोऽनुगमिष्यति
सुकृतंदुष्कृतंचत्वांयास्यंतमनुयास्यति २४
श्रुतिस्मृत्युदितंकर्मकुलदेशोचितंहितम्
धर्ममूलंनिषेवस्वसदाचारमतंद्रितः २५

परित्यजेदर्थकामौस्यातांचेद्धर्मवर्जितौ
धर्मेणप्राप्यतेसर्वमर्थकामादिकंसुखम् २६
इंद्रियाणांजयंयोगंसमातिष्ठेद्दिवानिशम्
जितेंद्रियोहिशक्नोतिपथिस्थापयितुंप्रजाः २७
अतिप्रगल्भललनाकटाक्षचपलाश्रियः
विनयेप्रणिधानेनचिरंतिष्ठंतिभूभुजाम् २८
कामदर्पादिशीलानामविचारितकारिणाम्
आयुषासहनश्यंतिसंपदोमूढचेतसाम् २९
भूतिभिर्नष्टदृष्टाभिर्नृत्यंतेनमहाशयाः
नागताभिर्नयाताभिर्नदीभिश्चीयतेंबुधिः ३०
व्यसनस्यचमृत्योश्चव्यसनंकष्टमुच्यते
व्यसन्यधोधोव्रजतिस्वर्गाम्यव्यसनीनृपः ३१
व्यसनानिदुरंतानिकामजानिविशेषतः
त्यजतस्मान्महाराजकामंधर्मविरोधिनम् ३२
जडानामविवेकानामसुराणांदुरात्मनाम्
भाग्यभोग्यानिराज्यानिसंत्यनीतिमतामपि ३३
नैवस्थिराणितानीहदुरितैरनुसेवितैः
विलीयंतेयथावह्निसंसर्गेर्णधनानिच ३४
गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतोऽपिवा
नविचारपरंचेतोयस्यासौमृतएवसः ३५
उपदेष्टाश्रुतवतांगुरुरित्युच्यतेयतः
किंतुत्वासन्नविपदामुपदेशाःशिरोरुहाः ३६
विषयज्वरमुत्सृज्यसमयास्वस्थयाधिया
युक्त्याचव्यवहारिरयास्वार्थःप्राज्ञेनसाध्यते ३७
अशुभाच्चलितंयातिशुभंतस्मादपीतरम्
जंतोश्चित्तंचशिशुवत्तस्मात्तच्चालयेद्बलात् ३८
उपधार्यमतिंराजन्वृद्धानांधर्मदर्शिनाम्
नियच्छेत्परयाबुद्ध्याचित्तमुत्पथगामियत् ३९
नधनान्युपकुर्वंतिनमित्राणिनबांधवाः
नहस्तपादचलनंनदेशांतरसंगतम् ४०

नकायक्लेशवैधुर्यंनतीर्थायतनाश्रयः
केवलंतन्मनस्कस्यजपेनासाद्यतेपदम् ४१
विषयेवर्तमानस्यतस्माच्चित्तस्यसंयमे
यत्नंकुर्याद्बुधोराजन्ध्रुवंयंतेववाजिनाम् ४२
तत्तत्कुर्याद्यतोराजन्भवतायेनवंचितः
मुनिभिश्चफलैस्तैस्तैरतोप्याकर्णयाधुना ४३
मुह्यतापिमनुष्येणप्रष्टव्याःसुहृदोबुधाः
तेचपृष्टायथाब्रूयुस्तत्कर्त्तव्यंयथोचितम् ४४
सर्वोपायेनकर्त्तव्योनिग्रहःकामकोपयोः
श्रेयोऽथिनायतस्तौहिश्रेयोघातार्थमुद्यतौ ४५
कामोहिबलवान्राजञ्छरीरस्थोरिपुर्महान्
नतस्यवशगोभूयाज्जनःश्रेयोभिलाषुकः ४६
यःकामोदेवदेवेनपुरातेनैवशूलिना
ललाटवह्निनादग्धःकृतोनंगइतिस्थितिः ४७
यदावांछत्यसौनारींनिहंतुंसमनोभवः
पुंसांकायंसमाश्रित्यस्वरूपंदर्शयत्यसौ ४८
चिंत्यमानस्यवैपुंसोनार्यारूपंपुनःपुनः
तमदृष्टंसमाश्रित्यनरमुन्मादयत्यसौ ४९
तथैवोन्मादयत्येषयोषिदंगंनसंशयः
स्मरःसंस्मरणान्नामजातंतस्यततोनृप ५०
यादृशस्तादृशोरंगोवस्त्रंवीरसमाश्रयेत्
आत्मतेजःप्रकाशात्सोऽश्रुधारापेयतांव्रजेत् ५१
नार्यारूपंसमारुह्यधीरंतमपिमोहयेत्
पुरुषंतुसमाश्रित्यद्रावयत्येषयोषितम् ५२
सएवसहजोराजन्नशरीरीशरीरगः
शरीरकस्यापिविभोकथंपापंविधीयते ५३
यंप्राप्यातिपवित्राणिपंचगव्यहवींषिच
अशुचित्वंक्षणांयांतिकोऽन्यस्यादशुचिस्ततः ५४
जिघ्रन्नपिस्वदुर्गंधंपश्यन्नपिमलंस्वकम्
नविरज्यतिलोकोऽयपीडयन्नपिनासिकाम् ५५

हृद्यान्नमन्नपानानियंप्राप्यसुरभीणिच
अशुचित्वंप्रयांत्याशुकोऽन्यस्यादशुचिस्ततः ५६
यस्योदरगतंचान्नंस्वंहिरूपंपरित्यजेत्
कृमिमिश्रममेध्यत्वंशीघ्रंप्रज्ञायतेकिल ५७
तथापिदेहेभूपालनिजरूपंपरित्यजेत्
शुनतांयातिवैपश्चात्कृमिदुर्गंधिसंकुले ५८
जायंतेतत्रवैयूकाःकृमयोवानसंशयः
सकृमिःकुरुतेस्फोटंकंडूश्चपरिदारुणः ५९
व्यथामुत्पादयेद्भूयःसर्वांगंपरिचालयेत्
नखाग्रैर्घृष्यमाणासाकंडूःशांताप्रजायते ६०
तद्वत्सुखंभवत्येवसुरतस्यनसंशयः
भुंजत्येवंरसान्मर्त्यःसुभक्ष्यान्पिबतेपुनः ६१
तत्रस्थंपचतेवह्निरपानेपातयेन्मलम्
सारभूतोरसस्तत्रउद्रिक्तस्तुप्रजायते ६२
निर्मलःशुद्धवीर्यस्तुब्रह्मस्थानंप्रयातिच
आकृष्टःससमानेननीतस्तेनापिवायुना ६३
स्थानंनलभतेवीर्यंचंचलत्वेनवर्तते
प्राणिनांहिकपालेषुकृमयःसंतिपंचवै ६४
द्वावेतौकर्णमूलेतुनेत्रस्थानेततःपुनः
कनिष्ठांगुलिमानेनरक्तपुच्छाश्चभूपते ६५
नवनीतस्यवर्णेनकृष्णपुच्छानसंशयः
तेषांनामानिभद्रंतेमत्तोनिगदतःशृणु ६६
पिङ्गलीशृंगलीनामद्वौकृमीकर्णमूलयोः
शृंगलीजंगलीचान्यौनेत्रयोरंतरस्थितौ ६७
कृमीणांशतपंचाशत्तादृग्भूतानसंशयः
ललाटांतःस्थिताःसर्वेराजिकायाःप्रमाणतः ६८
कपालरोगिणःसर्वेविकुर्वंतिनसंशयः
अन्यमेवंप्रवक्ष्यामिप्राजापत्योमहाकृमिः ६९
सतंडुलप्रमाणेनतद्वद्वर्णेनसंशयः
केशद्वयंमुखेतस्यविद्यतेशृणुभूपते ७०

प्राणिनांसन्चयाबुद्धिस्तत्न्नणाद्धिनसंशयः
स्वस्थानेसंस्थितस्यापिप्राजापत्यस्यवैमुखे ७१
तद्वीर्यंरसरूपेणपततेनात्रसंशयः
सुखेनपिबतेवीर्यंतेनमत्तःप्रजायते ७२
तालुस्थानंप्रभेद्यैवचंचलत्वेनवर्त्तते
इडाचपिंगलानाडीसुषुम्नातत्रसंस्थिताः ७३
स्वबलेनापितस्यैवकंपितानाडिकान्नणम्
कामकंडूर्भवेद्राजन्सर्वेषांप्राणिनांकिल ७४
नरस्यस्फुटतेलिगंनार्यायोनिश्चभूपते
स्त्रीनरौचप्रमत्तौतौगच्छतःसंगमंततः ७५
कायेनकायंसंघृष्यमैथुनेनहिजायते
न्नणमात्रंसुखंतत्रपुनःकंडूश्चतादृशी ७६
सर्वत्रदृश्यतेवीरभावएवंविधःकिल
विरसःपरिपाकोऽयविषयस्यनसंशयः ७७
धर्मएवपुनःश्रेयान्विधिनासमनुष्ठितः
धैर्यमालंब्यचततोधर्ममेवसमाचर ७८
श्वासएषचपलःन्नणमध्येयोगतागतशतानिविधत्ते
जीवितंतनुभृतांतदधीनंकःसमाचरतिधर्मविलंबम् ७९
दशमीमपियातस्यचेतोनाद्यापिभूपते
विषयेभ्योनिषिद्धेभ्योहाहानविरमेच्चलम् ८०
नजातुकामःकामानामुपभोगेनशाम्यति
हविषाकृष्णवर्त्मेवभूयएवाभिवर्द्धते ८१
पुंश्चल्यापहृतंचित्तंकश्चान्योमोचितुंन्नमः
ग्रात्मारामेश्वरमृतेभगवंतंचमाधवम् ८२
तस्मात्सर्वंनिष्फलत्वंप्रयातंकामकश्मलात्
वयस्तेऽप्यधुनाभूपसमाचरहितंनिजम् ८३
वदाम्यहंतवनृपहितंसर्वोत्तमोत्तमम्
पुरोहितोयतस्तेऽहसदसत्कर्मभागपि ८४
एकतःसर्वपुरयानिपापनाशायपापिनाम्
एकतोमाधवेमासोमाधवस्यप्रियःसदा ८५

ब्रह्महत्यासुरापानंस्तेयंगुर्वंगनागमः
महांतिपातकान्येवकीर्तितानिमुनीश्वरैः ८६
तत्रयन्मनसाकायेव्रतेनापिकृतंनरैः
नाशयेन्माधवोमासःसर्वंपापतमोमहत् ८७
दिवाकरइवध्वांतंनाशयेन्नृपसर्वशः
तथाश्रीमाधवोमासस्तमाचरविधानतः ८८
आजन्मनोऽपिविहितानिमहांतिराजन्घोराणितानिदुरितानिविहायमर्त्याः
वैशाखमासविहिताचरणप्रभावपुण्येनतेहरिपुरंमुदितालभंते ८९
यद्येकमपिवैशाखमाचरंतिविधानतः
भावतःपापिनोऽप्यतेप्रयांतिहरिमंदिरम् ९०
तस्मात्त्वमपिराजेंद्रमासेऽस्मिन्माधवेधुना
प्रातःस्नात्वाविधानेनसमर्चयमधुद्विषम् ९१
तंडुलस्ययथाचर्मयथाताम्रस्यकालिमा
नश्यंतिक्रिययावीरपुरुषस्यतथामलः ९२
जीवस्यतंडुलस्येवसहजोऽपिमलोमहान्
नश्यत्येवनसंदेहस्तस्मात्कर्मोदितंकुरु ९३

इति श्रीपद्मपुराणेपातालखंडेवैशाखमाहात्म्ये
नवनवतितमोऽध्यायः ९९

## शततमोऽध्यायः

श्रीराजोवाच-
क्षीरोदजलतुल्याभिःशीतलामलदृष्टिभिः
तथ्याभिश्चविचित्राभिस्त्वयागीर्भिःप्रबोधितः १
असागरोत्थंपीयूषमद्रव्यंव्यसनौषधम्
त्वयाहंपायितःसौम्यभवरोगनिवारणम् २
हर्षप्रदोनृणांपापहानिकृज्जीवनौषधम्
जरामृत्युहरोविप्रसद्भिःकिलसमागमः ३
यानियानिदुरापानिवांछितानिमहीतले
प्राप्यंतेतानितान्येवसाधूनामेवसंगमात् ४
यःस्नातःपापहरयासाधुसंगमगंगया

किंतस्यदानैःकिंतीर्थैःकिंतपोभिःकिमध्वरैः ५
निमज्ज्योन्मज्जतान्नृणांभवाब्धौपरमायनम्
संतोधर्मविदःशांतानौर्दृढेवाप्सुमज्जताम् ६
योमेभावःपुराह्यासीत्कामैकसुखलालसः
दर्शनाद्वचनात्तेऽद्यविपरीतोऽभवद्विभो ७
एकजन्मसुखस्यार्थेसहस्राणिविलोपयेत्
प्राज्ञोजन्मसहस्राणिसंचिनोत्येकजन्मना ८
हाहाकामरसास्वादसुखलालसचेतसा
मयामूढेननकृतंकिंचिदात्महितंद्विज ९
अहोमेमनसोमोहोयेनात्मायोषितांकृते
पातितोव्यसनेघोरेदुःखोदर्केदुरत्यये १०
भगवन्परितुष्टोऽस्मिबोधितोवचनेनते
उपदेशप्रदानेनमामुद्धर्तुमिहार्हसि ११
पुराचरितपुरयोऽहभवताबोधितोऽस्मियत्
त्वत्पादरजसावापिविशेषादपिपावितः १२
विधिंमाधवमासस्यब्रूहिमेवदतांवर
सर्वपापक्षयकरोयस्त्वयापरिकीर्तितः १३
किंदानंतत्रकिंस्नानंकोदेवोनियमास्तुके
एतदाचक्ष्वविप्रर्षेदुरितोत्तारणायमे १४
यमउवाच-
इत्येवमुक्तोभगवान्कश्यपःसदयानिधिः
प्रोवाचवचनंविप्रधर्म्यंविश्वहितंशुभम् १५
कश्यपउवाच-
पूर्वापरसमाधानक्षमबुद्ध्याचतेनृप
पृष्टंप्राज्ञेनवक्तव्यंनाधमेपापमानसे १६
पापप्रवृत्तस्यतथादत्वाभूपशुभांमतिम्
विद्यादानफलंसम्यक्प्राप्यतेनात्रसंशयः १७
नापृष्टःकस्यचिद्ब्रूयान्नचान्यायेनपृच्छतः
जानन्नपिहिमेधावीजडवल्लोकमाचरेत् १८
विदुषामपिशिष्याणांपुत्राणांचक्रियावताम्

अपृष्टमपिवक्तव्यंश्रेयःश्रद्धावतांहितम् १९
सांप्रतंशुद्धहृदयोजातस्त्वंवचनान्मम
पुराचरितपुण्येनकेनापिचमहीपते २०
पापावस्थंशरीरंतद्गतंतवममाश्रयात्
श्रवणाद्धर्मशास्त्रस्यधर्मावस्थंतुतेऽभवत् २१
पापावस्थमधर्माख्यंधर्मज्ञानविवर्जितम्
अपरंसद्व्रतंयद्धिविज्ञेयंतद्धिधार्मिकम् २२
धर्माधर्मोपभोगायतत्तृतीयमतींद्रियम्
तत्त्रिभेदंशरीरंहिधर्म्मविद्भिरिहोच्यते २३
यावताधर्मभोगश्चमुक्तिश्चैतत्त्रिभेदकम्
पापावस्थंशरीरंतत्पापसंज्ञंतदुच्यते २४
इदानींगुरुभक्तिंचकुर्वतश्चवचोमम
शृण्वतोधर्मरूपंतुशरीरंतेव्यवस्थितम् २५
तेनैवशुद्धिरमलाजाताधर्मक्रियोचिता
दैवेनदेहिनांनामचेतांसिचरितानिच २६
शरीराणिचपुष्यंतिकालेकालेविपर्ययम्
सांप्रतंभवतश्चेतोनूनंधर्मेप्रवर्तते २७
तेनत्वांकारयिष्यामिमाधवस्नानमुत्तमम्
यमउवाच–
ततस्तुकारितस्तेनकश्यपेनपुरोधसा २८
सनृपोमाधवेमासिस्नानंदानंचपूजनम्
यथादृष्टंपुराशास्त्रेवैशाखस्नानजंविधिम् २९
समुनिःप्रत्युवाचासौभूपायचयथोदितम्
श्रावितःस्तोत्रसारंचपाठितोहरिमेधसः ३०
श्रुतेयस्मिन्नधीतेचससम्यक्फलमाप्नुयात् ३१
सकारितस्तेनविशुद्धभावोराजापिचक्रेविधिवत्तदानीम्
श्रीमाधवेमासिविधानमीड्यंततोयथाकर्णितमादरेण ३२
प्रातःस्नानंचपाद्यंचह्यर्घंचहरिपूजनम्
नैवेद्यंभक्तिभावेनचकारसनृपोत्तमः ३३
दानंयथानियमपालनमादरेणवैशाखमादिविदधातिविधानमेवम्

योभक्तितोऽन्वहमसौप्रतिवर्षमेवंकृत्वाप्रयातिहरिधाममहीसुराग्र्यः ३४
अथेतरेषुमासेषुकामिनीकुचकेलिवान्
भोगैकलालसोभूयोभवत्येवंयथारुचि ३५
नधर्मनियमंराजकार्येषुनविचारणम्
करोतिकामवशगोहित्वामासंसमाधवम् ३६
महतामपिविप्राग्र्यदुर्निवार्योमनोभवः
शरीरसहजोनूनमनादिर्वासनाक्रमः ३७
केशकज्जलशालिन्योदुःस्पर्शालोचनप्रियाः
यस्मादग्निशिखानार्योदहंतितृणवन्नरम् ३८
घोरःशत्रुःशरीरस्थःपुंसांकामोयथोचितम्
मोहधूममयःपापोनकेषामंधकारितम् ३९
इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्येशततमोऽध्यायः १००

## एकोत्तरशततमोऽध्यायः

यमउवाच–
अथकालकटाक्षेणलक्षितोनृपतिस्तदा
मृतोऽतिरतिसेवोत्थक्षयक्षीणकलेवरः १
नीयमानोयमगणैस्ताडयमानोमुहुर्मुहुः
क्रन्दमानोमहारावान्सस्मरन्निजपातकम् २
विष्णुदूतैःसमागम्यताडयित्वाममानुगान्
धर्मवानयमित्युक्त्वाविमानमथरोपितः ३
नीतोहरिपुरंभूपःस्तूयमानोऽप्सरोगणैः
प्रातःस्नानेनवैशाखमासस्यक्षीणपातकः ४
अथधर्मविहीनोऽयमितिमत्वाचतैःपुनः
देवदूतैर्निदेशेनविष्णोर्भूमिपतिस्तदा
अदूरादेवनिरयवर्त्मनाससमाहितः ५
सगच्छन्नपिशुश्रावजीवानांक्रंदतांपुनः
निरयेपच्यमानानामारावंविविधंतदा ६
पापिनांक्वथ्यमानानामाक्रंदमतिदारुणम्
श्रुत्वाविस्मयवान्विप्रराजाभूदतिदुःखितः ७

प्रोवाचदूताःकिमयमाक्रंदोदारुणःश्रुतः
पुनर्नश्रूयतेतन्मेकारणंवक्तुमर्हथ ८
दूताऊचु-
जंतवस्त्यक्तमर्यादाःपापास्त्वाचारवर्जिताः
निरयेषुचघोरेषुतामिस्त्रादिषुपातिताः ९
कृतपातकिनस्त्वत्रप्राणत्यागादनंतरम्
याम्यंपंथानमाश्रित्यदुःखमश्नंतिदारुणम् १०
यमस्यपुरुषैर्घोरैःकृष्यमाणाइतस्ततः
अंधकारेनिपतिताभक्ष्यंतेह्यतिदारुणैः ११
श्वभिःशृगालैःक्रव्यादैःकाककंकबकादिभिः
अग्नितुंडैर्वृकव्याघ्रैर्भुजगैर्वृश्चिकादिभिः १२
अग्निनादाह्यमानाश्चतुद्यमानाश्चकंटकैः
क्रकचैःपाटयमानाश्चपीडयमानाश्चतृष्णया १३
क्षुधयाबाध्यमानाश्चघोरैर्व्याधिगणैस्तथा
पूयशोणितगंधेनमूर्छ्यमानाःपदेपदे १४
क्वाथ्यंतेचक्वचित्तैलैस्ताडयन्तेमुशलैःक्वचित्
आयसीषुप्रपच्यंतेशिलासुक्वचिदेवच १५
क्वचिद्वांतमथाश्नंतिक्वचित्पूयमसृक्क्वचित्
क्वचिद्विष्ठांक्वचिन्मांसंपूतिगंधिषुदारुणम् १६
कृमिभिर्भक्ष्यमाणाश्चवह्नितुंडैःक्वचित्क्वचित्
केशशोणितमांसासृग्वसास्थिनिकरेषुच १७
अस्थिताःकुणपाःकीर्णाःकृमिभिर्भक्षिताःस्फुटम्
काककंकमहागृध्रवदनैर्ध्वंसितेषुच १८
शिवदुर्गंधनीरंध्रसंघट्टशतकोटिषु
करपत्रशिलापत्रतप्तनिस्तैलकेषुच १९
लोहतैलवसास्तंभकूटशाल्मलसद्मसु
क्षुरकंटककीलोग्रज्वालास्तंभविभातिषु २०
तप्तवैतरणीपूयपूरितेषुपृथक्पृथक्
असिपत्रवनोत्कृत्तनरनारीस्तनेषुच २१
घोरांधकारग्रहणदारुणेषुमुहुर्मुहुः

पापच्यमानाःक्रंदंतोदारुणैर्विविधैर्वधैः २२
कंठेषुबद्धपाशाश्चभुजगावेष्टिताःक्वचित्
पीड्यमानास्तथायंत्रैःकृष्यमाणाश्चजानुभिः २३
भग्नपृष्ठशिरोग्रीवाःस्तब्धकंठाःसुदारुणाः
कूटागारेभ्राम्यमाणाःशरीरैर्यातनाक्षमैः २४
पीड्यंतेपापिनोराजन्क्रंदमानाविकर्मिणः
सहितंविषयास्वादैःक्रंदनैतैर्विधीयते २५
भुज्यतेचकृतंपूर्वमेतत्सर्वैश्चजंतुभिः
परस्त्रीषुकृतःसंगःप्रीतयेदुःखदोहिसः २६
मुहूर्तविषयास्वादोजातोऽनेकाब्ददुःखदः
वपुषस्तवराजेंद्रप्रातःस्नानस्यमाधवे २७
विधिनापावनस्यैतेप्राप्यस्पर्शंचमारुतः
लब्धसौख्याःक्षणंजातामहसाप्यायितास्तव २८
आक्रंदरहितास्तेनजातास्तेनिरयेस्थिताः
नामापिपुण्यशीलानांश्रुतंसौख्यायकीर्तितम् २९
जायतेतद्वपुस्पर्शवायुस्पर्शःसुखावहः
यमउवाच-
इतिदूतवचःश्रुत्वासराजाकरुणानिधिः ३०
प्रत्युवाचहतान्दूतान्विष्णोरद्भुतकर्मणः
कोमलंहृदयंनूनंसाधूनांनवनीतवत् ३१
वह्निसंतापसंतप्तंतद्यथाद्रवतिस्फुटम्
राजोवाच-
नार्तंजंतुमहंहित्वापीडितुंगंतुमुत्सहे ३२
तंपापिष्ठंधिगार्तानामार्तिंशक्तोनहंतियः
मदंगसंगमोच्छिष्टवायुस्पर्शेनतेयदि ३३
जंतवःसुखिनोजातास्तस्मात्तत्रनयंतुमाम्
पवित्रयंतिजननीमवनीमपितेनराः ३४
परतापच्छिदोयेतुचंदनाइवचंदनम्
परोपकृतयेयेतुपीड्यंतेकृतिनोहिते ३५
संतस्तएवयेलोकेपरदुःखविदारणाः

आर्तानामार्तिनाशार्थंप्राणायेषांतृणोपमाः ३६
तैरियंधार्यतेभूमिर्नरैःपरहितोद्यतैः
मनसोयत्सुखंनित्यंतत्स्वर्गोनरकोपमः ३७
तस्मात्परसुखेनैवसुखिनःसाधवःसदा
वरंनिरयपातोऽत्रवरंप्राणवियोजनम् ३८
नपुनःक्षणमार्तानामार्तिनाशमृतेसुखम्
दूताऊचु-
जंतवोनिरयेघोरेपच्यंतेतेत्रपापिनः ३९
स्वकर्मैवोपजीवंतिमोहस्थानंनविद्यते
यैर्नदत्तंनचहुतंतीर्थेस्नानंनवाकृतम् ४०
पुनर्नोपकृतंभक्त्यासुकृतंनकृतंपरम्
नेष्टंनतप्तंनोजप्तंयैर्नहृष्टतयानृप ४१
परस्मिन्निहघोरेषुपच्यंतेनिरयेषुते
दुःशीलायेदुराचाराविहाराहारनिंदिताः ४२
परापकारिणःपापकारिणोदुर्विहारिणः
विदारिणोहिमर्मोक्त्यापापाःपरहृदांहिये ४३
निरयेतेविपच्यंतेयेपरस्त्रीविहारिणः
एहिनूनंमहीपालगच्छामोहरिमंदिरम् ४४
नतेपुण्यवतायुक्तमिहस्थातुमतःपरम्
राजोवाच-
यद्यहंसुकृतीदूताःकस्मादस्मिन्महाभये ४५
नारकेपथिवानीतःकिंवामेसुकृतंपरम्
मयापिनकृतंतादृक्सुकृतंकामशालिना ४६
कथंपुरिहरेर्गंतासंशयानोऽहमस्मिवै
दूताऊचु-
सुकृतंनकृतंसत्यंत्वयाकामवशात्मना ४७
नेष्टंयज्ञैर्नवायज्ञावशिष्टंभवताशितम्
किंतुमाधवमासेयद्विधिनावत्सरत्रयम् ४८
प्रातःस्नात्वागुरुवचःप्रेरितेनपुरात्वया
भक्त्यासंपूजितोविष्णुर्विश्वेशोमधुसूदनः ४९

महापापातिपापौघनिहंताभक्तवत्सलः
सर्वधर्मैकसारेणतेनैकेननरेश्वर ५०
नीयतेपुरायभवनंपूज्यमानोमरुद्गणैः
महतामपिपापानांनिहंतामाधवोऽचितः ५१
तथैवमाधवोमासोमर्त्यानांविधिनोदितः
यथैवविस्फुलिगेनज्वाल्यतेतृणसंचयः ५२
प्रातःस्नानेनवैशाखेतथाघौघोऽपिदह्यते
तावद्वपुषिपापानिप्रभवंतिमहान्त्यपि ५३
यावन्नमाधवेमासितीर्थेमज्जतिचोषसि
वैशाखेमासियोयुक्तोयथोक्तनियमैर्नरः ५४
हरिभक्त्यैवपापौघैर्मुक्तोऽच्युतगृहंव्रजेत्
आजन्मनोहिसुकृतंयत्त्वयानपुराकृतम् ५५
तेनत्वंनिरयस्थानमार्गंनीतोनरेश्वर
अथभूमिपतेतूर्णमस्माभिस्तुमरुद्गणैः ५६
स्तूयमानोविमानेनगच्छगोविंदमंदिरम् ५७

इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्ये

एकोत्तरशततमोऽध्यायः १०१

द्व्युत्तरशततमोऽध्यायः

यमउवाच–

ततस्तुकरुणावार्धिस्तेषांशोकेनपीडितः
भूपतिःश्रीहरेर्दूतान्विनयेनाहवाडव १
एश्वर्यस्याभिजात्यस्यगुणानांसुकृतस्यच
संतःफलंहिगरायंतेयद्भीतपरिरक्षणम् २
यद्यस्तिसुकृतंकिंचिन्ममतेनैवजंतवः
स्वर्गेगच्छंतुमुक्तौघाःस्थानेतेषांवसाम्यहम् ३
एवंभूपवचःश्रुत्वातस्यसत्यवतोहिते
ध्यायंतःसत्यमौदार्यमब्रुवंस्तेवचोनृपम् ४

दूताऊचु–

अनेनतवकारुरायकर्मणावचसानृप

बभूववृद्धिर्धर्मस्यसंचितस्यविशेषतः ५
स्नानंदानंजपोहोमस्तपोदेवार्चनादिकम्
कृतंयन्माधवेमासितदनंतफलंविदुः ६
स्वर्गेयज्वाचदाताचक्रीडतेत्रिदशैःसह
वापीषुहेमपद्मासुकल्पवृक्षतलेऽपिच ७
गीयमानोमुदंयातिगीर्वाणरमणीगणैः
जलान्नदानतोलोकंलभतेवारुणंशुभम् ८
कुलानिहेलयासप्तसंतारयतिगोप्रदः
हयंदत्वारवेर्लोकंयातिविद्याप्रदोनरः ९
ब्रह्मलोकंतथाहेमदानाद्यातिसुरालये
योददातितथाकन्यांविष्णुलोकंसगच्छति १०
माधवेमासियःस्नात्वादत्वासंपूज्यमाधवम्
अवाप्यसकलान्कामान्प्रयातिपदमव्ययम् ११
एकतोऽपितपोदानक्रतुसुत्यादिकाःक्रियाः
एकतोविधिवन्मासोमाधवश्चरितोमहान् १२
तस्यमाधवमासस्यदिनैकस्यापिभूपते
कृतंयत्सुकृतंतत्तेसर्वदानाधिकंपुरा १३
कारुण्येनदिनैकस्यपुण्यंदेहिधरापते
निरयेपच्यमानेभ्योदुःखितेभ्योदयानिधे १४
नदयासदृशोधर्मोनदयासदृशंतपः
नदयासदृशंदानंनदयासदृशःसखा १५
पुण्यदःपुण्यमाप्नोतिनरोलक्षगुणंसदा
कारुण्येनविशेषात्तेधर्मवृद्धिस्ततोभवेत् १६
दुःखितानांहिभूतानांदुःखोद्धर्त्तानरोहियः
सएवसुकृतीलोकेज्ञेयोनारायणांशजः १७
वैशाखेमासिपूर्णायांस्नानदानादिकंत्वया
यत्तीर्थेविहितंवीरसर्वाघविनिषूदनम् १८
तदेभ्योदेहिविधिवत्कृत्वासाक्ष्येहरिंप्रभुम्
त्रिवाचिकंचनिरयाद्येनामीस्वर्गमाप्नुयुः १९
कपोतार्थंस्वमांसानिकारुण्येनपुराशिबिः

दत्वादयानिधिःस्वर्गेराजतेकीर्तिवारिधिः २०
दधीचिरपिराजर्षिर्दत्वास्थिचयमात्मनः
त्रैलोक्यकौमुदींकीर्तिंलब्धवान्स्वर्गमव्ययम् २१
सहस्रजिच्चराजर्षिःप्राणानिष्टान्महायशाः
ब्राह्मणार्थेपरित्यज्यगतोलोकाननुत्तमान् २२
नस्वर्गेनापवर्गेऽपितत्सुखंलभतेनरः
यदार्तजंतुनिर्व्वाणदानोत्थमितिनोमतिः २३
सर्वेषुदातृजातेषुपुराजातोसिभूपते
कर्मणानेनसंख्यासुधीरधैर्येनियोज्यच २४
दृष्ट्वातवधियंधर्मदयादानंसुनिश्चलम्
अस्माभिरपितूत्साहःक्रियतेधर्म्मवादिभिः २५
यदितेरोचतेराजन्नविलंबतयाततः
तदेभ्योदेहितत्पुण्यंयातनादुःखदाहकम् २६
इत्युक्तःसतदादेवंकृत्वासान्द्येगदाधरम्
तेभ्यस्त्रिवाचिकंपुण्यंदयावान्विधिनाददौ २७
दत्तेमाधवमासस्यतस्मिन्नेकदिनोद्भवे
स्वकृतेजंतवोयाम्ययातनापरिवर्जिताः २८
विमानवरमारूढाःसर्वेतेत्रिदिवंययुः
प्रणमंतःस्तुवंतश्चपश्यंतस्तंप्रहर्षिताः २९
नृपेणदत्तंतदवाप्यपुण्यंवैशाखमासैकदिनाभिजातम्
सर्वेययुस्तेनरकाद्विमुक्तादिवंविमानाधिगताहिचित्रम् ३०
नूनंविचित्रोभुविभूतवर्गःसंभूतभावोबहुधाविचित्रः
तथाविचित्रोऽखिलकर्मयोगस्तत्कर्मशक्तिप्रचयोविचित्रः ३१
संस्तूयमानोमुनिदेवसंघैर्यस्तद्विशेषाधिकलब्धपुण्यः
परंपदंयोगिवरैरलभ्यंययौजगन्नाथगणाभिवंद्यः ३२

इति श्रीपद्मपुराणेपातालखंडेवैशाखमासमाहात्म्ये
द्व्युत्तरशततमोऽध्यायः १०२

त्र्युत्तरशततमोऽध्यायः

यमउवाच-

एतन्माधवमासस्यसमासात्किंचिदीरितम्
माहात्म्यंपूर्णिमायाश्चविशेषाद्द्विजसत्तम १
वैशाखमासेमधुसूदनस्यप्रियंयएनंपठतीतिहासम्
सयातिकृष्णालयमाशुपूतःकल्पाननेकानिहमोदतेच २
धन्यंयशस्यमायुष्यमिदंस्वस्त्ययनंमहत्
स्वर्ग्यंश्रीदंसौमनस्यंप्रशस्यमघमर्षणम् ३
इदंमाधवमासस्यमाहात्म्यंमाधवप्रियम्
चरित्रंभूपतेस्तस्यसंवादंचावयोरपि ४
श्रुत्वापठित्वाविधिवदनुमोद्यमनःप्रियम्
भवेद्भक्तिर्भगवतिययास्यात्पापसंक्षयः ५
अथगच्छमहीदेवदेवलोकाद्यथेच्छया
निपात्यभुविवैदेहंरुदंत्यद्यापिबांधवाः ६
विलप्यमानैरपिबंधुभिस्तैर्नयावदग्नौतवतच्छरीरम्
प्रक्षिप्यतेहंतजवैर्नतावद्याहिस्वयंसुप्तइवप्रबुद्धः ७
ममप्रसादादिहपुण्ययोगःश्रुतोयथावत्तमिमंविधेहि
विधानतोवैसमयेसमंतेसमागमोऽतेभवितासुरैश्च ८
सूतउवाच–
इतिदेववचःश्रुत्वानत्वाधर्माधिपंततः
पुनःपपातसइहपरितुष्टमनाद्विजः ९
धर्मराजप्रसादेनततस्तत्रमहीतले
संसुप्तइवचोत्तस्थौबंधुवर्गसमन्वितः १०
विधिमेनंद्विजोभूमौवर्षेवर्षेचसस्वयम्
स्वयंचकारयामासमाधवस्नापनंजनम् ११
यमब्राह्मणसंवादोमयायंपरिकीर्तितः
तस्यमाधवमासस्यपुण्यस्नानप्रसङ्गतः १२
वैशाखमासेसततंहरिप्रियेस्नानंविदध्याच्चददातिभक्त्या
दानंचहोमंसुकृतंतथाबुधोहरेःपदंतस्यनदुर्ल्लभंकदा १३
यःशृणोत्येकचित्तेनमाहात्म्यंमेषसूर्यजम्
सर्वपापविनिर्मुक्तोयातिविष्णोःपरंपदम् १४
ऋषयऊचुः –

सूतसूतमहाप्राज्ञत्वयाऽतिकरुणात्मना
वैशाखमासमाहात्म्यंकीर्तितंपापनाशनम् १५
नियमामधुहन्तुर्यैमाधवेकथितास्त्वया
पूजनंस्नानदानाद्यंश्रौतस्मार्तविधानतः १६
यथाचमाधवोदेवःप्रीयतेपापनाशनः
अधुनाश्रोतुमिच्छामोद्ध्यानंतस्यमहात्मनः १७
कृष्णस्यभक्तवृन्दानांप्रियस्यभवतारणम् १८
सूतउवाच-
शृणुध्वंमुनयःसर्वेकृष्णस्यजगदात्मनः
गोगोपगोपीप्राणस्यवृन्दावनचरस्यच १९
एकदानारदःपृष्टोगौतमेनद्विजोत्तमाः
सतस्मैप्राहयद्ध्यानंतद्वन्दयेपापनाशनम् २०
नारदउवाच-
सुमप्रकरसौरभोद्गलितमाध्विकाद्युल्लसत्सुशाखिनवपल्लवप्रकरनम्रशोभायु
तम्
प्रफुल्लनवमञ्जरीललितवल्लरीवेष्टितंस्मरेतसततंशिवंशितमतिःसुवृन्दावन
म् २१
विकाशिसुमनोरसास्वदनमंजुलैःसंचरच्छिलीमुखमुखोद्गतैर्मुखरितान्तरंझंकृतै
:
कपोतशुकसारिकापरभृतादिभिःपत्रिभिर्विराणितमितस्ततोभुजगशत्रुनृत्याकुल
म् २२
कलिन्ददुहितुश्चलल्लहरिविप्लुषांवाहिभिर्विनिद्रसरसीरुहोदररजश्चयोद्धूसरैः
प्रदीपितमनोभवव्रजविलासिनीवाससांविलोलनपरैर्निषेवितमनारतंमारुतैः
२३
प्रवालनवपल्लवंमरकतच्छदंमौक्तिकप्रभाप्रकरकोरकंकमलरागनानाफलम्
स्थविष्ठमखिलर्तुभिःसततसेवितंकामदंतदन्तरपिकल्पकाङ्घ्रिपमुदञ्चितं-
चिन्तयेत् २४
सुहेमशिखराचलेउदितभानुवद्भासुरामधोऽस्यकनकस्थलीममृतशीकरासारि
णः
प्रदीप्तमणिकुट्टिमांकुसुमरेणुपुञ्जोज्ज्वलांस्मरेत्पुनरतन्द्रितोविगतषट्तरङ्गांबुधः

२५
तद्रत्नकुट्टिमनिविष्टमहिष्ठयोगपीठेऽष्टपत्रमरुणंकमलंविचिन्त्य
उद्यद्विरोचनसरोचिरमुष्यमध्येसंचिन्तयेत्सुखनिविष्टमथोमुकुन्दम् २६
सुत्रामहेतिदलिताञ्जनमेघपुञ्जप्रत्यग्रनीलजलजन्मसमानभासम्
सुस्निग्धनीलघनकुञ्चितकेशजालंराजन्मनोज्ञशितिकण्ठशिखण्डचूडम् २७
रोलम्बलालितसुरद्रुमसूनुसंपद्युक्तंसमुत्कचनवोत्पलकर्णपूरम्
लोलालिभिःस्फुरितभालतलप्रदीप्तगोरोचनातिलकमुज्ज्वलचिल्लिचापम्
२८
आपूर्णशारदगताङ्कशशाङ्कबिम्बकान्ताननंकमलपत्रविशालनेत्रम्
रत्नस्फुरन्मकरकुण्डलरश्मिदीप्तगण्डस्थलीमुकुरमुन्नतचारुनासम् २९
सिन्दूरसुन्दरतराधरमिन्दुकुन्दमन्दारमन्दहसितद्युतिदीपिताशम्
वन्यप्रवालकुसुमप्रचयावक्लृप्तग्रैवेयकोज्ज्वलमनोहरकम्बुकण्ठम् ३०
मत्तभ्रमद्भ्रमरघुष्टविलम्बमानंसंतानकप्रसरदामपरिष्कृतांसम्
हारावलीभगणराजितपीवरोरुव्योमस्थलीलसितकौस्तुभभानुमन्तम् ३१
श्रीवत्सलक्षणसुलक्षितमुन्नतांसमाजानुपीनपरिवृत्तसुजातबाहुम्
आबन्धुरोदरमुदारगभीरनाभिंभृङ्गाङ्गनानिकरमंजुलरोमराजिम् ३२
नानामणिप्रघटिताङ्गदकङ्कणोर्मिग्रैवेयसारसननूपुरतुन्दबन्धम्
दिव्याङ्गरागपरिपिञ्जरिताङ्गयष्टिमापीतवस्त्रपरिवीतनितम्बबिम्बम् ३३
चारूरुजानुमनुवृत्तमनोज्ञजङ्घंकान्तोन्नतप्रपदनिन्दितकूर्मकान्तिम्
माणिक्यदर्पणलसन्नखराजराजद्रक्ताङ्गुलिच्छदनुसुन्दरपादपद्मम् ३४
मत्स्याङ्कुशारिदरकेतुयवाब्जवज्रैःसंलक्षितारुणकराङ्घ्रितलाभिरामम्
लावण्यसारसमुदायविनिर्मिताङ्गंसौन्दर्यनिन्दितमनोभवदेहकान्तिम् ३५
आस्यारविन्दपरिपूरितवेणुरन्ध्रलोलत्कराङ्गुलिसमीरितदिव्यरागैः
शश्वद्द्रवैःकृतनिविष्टसमस्तजन्तुसंतानसंनतिमनन्तसुखाम्बुराशिम् ३६
गोभिर्मुखाम्बुजविलीनविलोचनाभिरूधोभरस्खलितमन्थरमन्दगाभिः
दन्ताग्रदष्टपरिशिष्टतृणाङ्कुराभिरालम्बिवालधिलताभिरथाभिवीतम् ३७
संप्रस्नुतस्तनविभूषणपूर्णनिश्चलास्याद्दृढक्षरितफेनिलदुग्धमुग्धैः
वेणुप्रवर्तितमनोहरमन्दगीतदत्तोच्चकर्णयुगलैरपितर्णकैश्च ३८
प्रत्यग्रशृङ्गमृदुमस्तकसंप्रहारसंरम्भभावनविलोलखुराग्रपातैः
आमेदुरैर्बहुलसास्नगलैरुदग्रपुच्छैश्चवत्सतरवत्सतरीनिकायैः ३९

हम्भारवक्षुभितदिग्वलयैर्महद्भिरध्युक्षभिः पृथुककुद्भरभारखिन्नैः
उत्तम्भितश्रुतिपुटीपरिपीतवंशध्वानामृतोद्धतविकासिविशालघोणैः ४०
गोपैः समानगुणशीलवयोविलासवेशैश्चमूर्छितकलस्वनवेणुवीणैः
मन्दोच्चतारपटुगानपरैर्विलोलदोर्वल्लरीललितलास्यविधानदक्षैः ४१
जङ्घान्तपीवरकटीरतटीनिबद्धव्यालोलकिङ्किणिघटारणितैरटद्भिः
मुग्धैस्तरक्षुनखकल्पितकान्तभूषैरव्यक्तमंजुवचनैः पृथुकैः परीतम् ४२
अथसुललितगोपसुन्दरीणांपृथुकबरीषनितम्बमन्थराणाम्
गुरुकुचभरभंगुरावलग्नत्रिवलिविजृम्भितरोमराजिभाजाम् ४३
तदतिरुचिरचारुवेणुवाद्यामृतरसपल्लविताङ्गजाङ्घ्रिपस्य
मुकुलविमलरम्यरूढरोमोद्गमसमलंकृतगात्रवल्लरीणाम् ४४
तदतिरुचिरमन्दहासचन्द्रातपपरिजृम्भितरागवारिराशेः
तरलतरतरङ्गभङ्गविप्रुट्प्रकरघनश्रमबिन्दुसंततानाम् ४५
तदतिललितमन्दचिल्लिचापच्युतनिशितेक्षणमारबाणवृष्ट्या
दलितसकलमर्मविह्वलाङ्गप्रविसृतदुःसहवेपथुव्यथानाम् ४६
तदतिरुचिरवेषरूपशोभामृतरसपानविधानलालसानाम्
प्रणयसलिलपूरवाहिनीनामलसविलोलविलोचनाम्बुजानाम् ४७
विस्रंसत्कबरीकलापविगलत्फुल्लत्प्रसूनास्रवन्
माध्वीलम्पटचञ्चरीकघटयासंसेवितानांमुहुः
मारोन्मादमदस्खलन्मृदुगिरामालोलकाञ्च्युल्लस-
न्नीवीविश्लथमानचीनसिचयान्तार्चि-र्नितम्बत्विषाम् ४८
स्खलितलसितपादाम्भोजमन्दाभिघात-
च्छुरितमणितुलाकोटयाकुलाशामुखानाम्
चलदधरदलानांकुड्मलापद्मलाक्षि-
द्वयसरसिरुहाणामुल्लसत्कुण्डलानाम् ४९
द्राघिष्ठश्वसनसमीरणाभितापप्रम्लानीभवदरुणोष्ठपल्लवानाम्
नानोपायनविलसत्कराम्बुजानामालीभिः सततनिषेवितंसमन्तात् ५०
तासामायतलोलनीलनयनव्याकोशलीनाम्बुज-
स्रग्भिः संपरिपूजिताखिलतनुंनानाविलासास्पदम्
तन्मुग्धाननपङ्कजप्रविगलन्माध्वीरसास्वादिनीं-
बिभ्राणंप्रणयान्मदाक्षिमधुहृन्मालांमनोहारिणीम् ५१

गोपीगोपपशूनांबहिःस्मरेदग्रतोऽस्यगीर्वाणघटांवित्तार्थिनींविरिञ्चित्रिनयनशत
मन्युपूर्विकांस्तोत्रपराम् ५२
तद्वद्दक्षिणतोमुनिनिकरंदृढधर्मवाञ्छयासमाम्नायपरम्
योगीन्द्रानथपृष्ठेमुमुक्षमाणान्समाधिनातुसनकाद्यान् ५३
सव्येसकान्तानथयक्षसिद्धगन्धर्वविद्याधरचारणांश्च
सकिन्नरानप्सरसश्चमुख्याःकामार्थिनीर्नर्तनगीतवाद्यैः ५४
शङ्खेन्दुकुन्दधवलंसकलागमज्ञंसौदामिनीततिपिशङ्गजटाकलापम्
तत्पादपङ्कजगताममलांचभक्तिंवाञ्छन्तमुज्झिततरान्यसमस्तसङ्गम् ५५
नानाविधश्रुतिगुणान्वितसप्तरागग्रामत्रयीगतमनोहरमूर्छनाभिः
संप्रीणयन्तमुदिताभिरपिप्रभक्त्यासंचिन्तयन्नभसिमांद्रुहिणप्रसूतम् ५६
इतिध्यात्वाऽत्मानंपटुविशदधीर्नन्दतनयंनरोबुद्ध्वैवाऽघप्रभृतिभिरनिन्द्योपहृ
तिभिः
यजेद्भूयोभक्त्यास्ववपुषिबहिष्ठैश्चविभवैरितिप्रोक्तंसर्वंयदभिलषितंभूसुरवराः
५७

इति श्रीपद्मपुराणेपातालखंडेवैशाखमाहात्म्ये त्र्युत्तरशततमोऽध्यायः १०३

## चतुरुत्तरशततमोऽध्यायः

ऋषयऊचुः -
भूयोवदमहाभागरामचारित्रमद्भुतम्
राममाहात्म्यसर्वस्वंभक्तानांप्रीतिदायकम् १
सूतउवाच-
अश्वमेधंक्रतुवरंकृत्वादाशरथिर्यथा २
प्रवृत्तोलोककृत्येषुशास्त्रकृत्येषुकोविदः
अयोध्यांगंतुकामेनशंकरेणमहात्मना ३
पार्वत्यासहदेवेनउषितःसरयूतटे
मुनयस्तंसमभ्येत्यशंकरंविश्वरूपिणम् ४
कश्यपाद्यामहात्मानःपप्रच्छुरमितौजसम्
स्वागतंतेमुनिश्रेष्ठसभार्यःकुतआगतः ५
किमागमनकृत्यंतेकंदेशंगंतुमुद्यतः
शंकरउवाच-

अहंशंभुरितिख्यातोविप्रोहिमगिरिस्थितः ६
द्रष्टुंचराघवंगच्छेममकार्यंमहत्ततः
मामाह्वयतिराजासौपुराणश्रवणेरतः ७
आगच्छंतुभवंतोऽपिराघवःपरितुष्यति
ततस्तेमुनयःशंभुर्ययूरामदिदृक्षया ८
तानागतान्वसिष्ठस्तुज्ञात्वारामायचोक्तवान्
ततःसत्वरमुत्थायनिर्ययौसपुरोहितः ९
अर्घ्यपाद्यादिकैस्सर्वान्पूजयामासतानृषीन्
गृहराजंततःसर्वान्प्रावेशयदरिंदमः १०
प्रत्येकमासनंदत्वास्वागतोक्त्यासनस्थितान्
क्रमेणरघुशार्दूलःपूजयामासतानृषीन् ११
वाचामधुरयाप्रीणन्निदमाहासनस्थितान्
श्रीरामउवाच-
अद्यमेसफलंजन्मप्राप्तमद्यतपःफलम् १२
अद्याभ्यासस्यविद्यानांफलकालोऽयमागतः
अद्यमेपितरस्तुष्टाराज्यंचसफलंमम १३
अद्यमेसफलंवृत्तमद्यमेसफलंश्रुतम्
एवंवदंतंराजानंब्राह्मणाःकश्यपादयः १४
ऊचुःप्रियतरंवाक्यंरामंराजीवलोचनम्
ऋषयऊचुः
अयंशंभुर्द्विजःप्राप्तःसर्वशास्त्रविशारदः १५
वेदवेदांगतत्त्वज्ञःसर्वभूतहितेरतः
कैलासवासीसततंतपसेकृतनिश्चयः १६
ब्रह्मणाब्रह्मवर्चस्केतुल्योब्रह्मविदांवरः
हरिणाब्रह्मवात्सल्येप्रसादेशंकरोपमः १७
एवंविधोमहातेजाःशंभुर्ब्राह्मणपुंगवः
अष्टादशपुराणज्ञोमीमांसान्यायकोविदः १८
त्वद्भाग्यगौरवादेवप्राप्तोऽयमुनिसत्तमः
त्वयाहूतोमुनिवरःकैलासादागतःप्रभो १९
अतःपृच्छमहाभागपुराणाख्यानमुत्तमम्

श्रोतुकामावयंप्राप्तास्त्वामद्यरघुनंदन २०
अंतंगतस्यवेदानांसर्वशास्त्रार्थवेदिनः
पुंसोऽश्रुतपुराणस्यनसम्यग्यातिदर्शनम् २१
सूतउवाच-
एवमुक्तोरघुश्रेष्ठोमुनिभिस्तत्त्वदर्शिभिः
प्रहर्षमतुलंलेभेपुराणश्रवणोत्सुकः २२
श्रीरामउवाच-
लिगार्चनप्रकारंचलिगमाहात्म्यमेवच
महेशनाममाहात्म्यंपूजामाहात्म्यमेवच २३
नमस्कारस्यमाहात्म्यंदृष्टिमाहात्म्यमेवच
जलदानस्यमाहात्म्यंधूपदानस्यसत्तम २४
दीपगंधादिदानस्यपुष्पमाहात्म्यमेवच
नानाख्यानेतिहासानांकथांपापप्रणाशिनीम् २५
धर्मार्थकाममोक्षांश्चतदुपायांश्चसुव्रत
तत्सर्वंश्रोतुमिच्छामित्वत्तोमुनिवरोत्तम २६
शंभुरुवाच-
रामराममहाबाहोपुण्यवानसिराघव
राज्यासक्तस्यतेजातापुराणश्रवणेरतिः २७
स्यान्महत्सेवयारामपुण्यतीर्थनिषेवणात्
साजिह्वायाशिवंगायेत्तच्चित्तंयत्तदर्प्पितम् २८
तावेवकेवलौश्लाघ्यौयौतत्पूजाकरौकरौ
सुजन्मदेहमत्यर्थंतदेवाशेषजन्मसु २९
यदेवोत्पुलकोभासिहरनामानुकीर्तनात्
कृतार्थोऽसिमहाराजतत्प्रश्नानुगतामतिः ३०
अनंतरंसमाजग्मुर्जांघिकाःसत्वरश्रमाः
तत्करात्पत्रिकांगृह्यपपाठरघुसत्तमः ३१
मनसाऽचितयद्रामःकथमेतदभूदिति
रामंशंभुस्तदाप्राहदेव्याब्राह्मणवेषवान् ३२
किंचिंतयसिकाकुत्स्थमुनिष्वग्रेवसत्स्वपि
तद्वाक्यंराघवःश्रुत्वापप्रच्छमुनिपुंगवान् ३३

श्रीरामउवाच–
बिभीषणःकथमसौबद्धःशृंखलयानृभिः
मत्स्थापितंशिवंलिगंदृष्ट्वारामेश्वरंत्वहो ३४
द्राविडैःकुटिलैर्दुष्टैरात्मनातद्विचार्यताम्
विचार्यमुनिवर्यास्तेनेशास्तज्ज्ञातुमल्पतः ३५
नजानीमइतिप्राहूरामंरामस्तदाब्रवीत्
पुराणंवीद्त्यविधिनातत्सर्वंब्रूतसत्तमाः ३६
भवदज्ञानहेतुश्चविचार्यस्तदनंतरम्
किंकिंपुराणंप्रेद्त्यंस्याद्वर्जनीयंतथैवकिम् ३७
प्रशस्तःकीदृशःश्लोकस्तदन्यःकीदृशोभवेत्
कीदृशेषुचकार्येषुकीदृशःपूजकस्तथा ३८
पूजाचकीदृशैर्भक्तैःकार्यानिर्णयदर्शने
इतिरामस्यवचनंश्रुत्वातेद्विजसत्तमाः ३९
प्रत्यूचुस्तंरघुश्रेष्ठंचिंताव्याकुलमानसम्
नवक्तारोवरंरामवीद्त्ततांतुपुराणवित् ४०
तच्छ्रुत्वाराघवःशंभुंपप्रच्छविनयान्वितः
सोपितद्वाक्यमाकर्ण्यप्रत्युवाचमहामतिः ४१
शंभुरुवाच–
पुराणजीवीपूजार्हःस्वशाखाध्ययनःशुचिः
मीमांसातत्त्वविज्ञानःश्रोत्रियोऽनृतदूषकः ४२
देवेषुचसमस्तेषुसमदृष्टिःशिवेरतः
शतरुद्रियजापीचसाग्निकश्चातिवाचकः ४३
यजुर्वेदीविशेषेणपूजयेत्पुस्तकंसुधीः
श्रीतालपत्रलिखितंदेवलिप्यन्वितंशुभम् ४४
बंधाद्यतिप्रपंचंयद्युगपत्प्रणवाद्त्तरम्
प्रागूद्ध्र्वंरेखयोःप्रांतेप्रणवस्याग्रयोजिका ४५
रेखाभवेदेवमेकाग्रकारस्तस्यपार्श्वतः
शिरोभागमुपक्रम्यसकोणाधःप्रलंबिनी ४६
ग्राकारःसहिविज्ञेयःपट्टिकादद्त्तरेखया
वामेषड्वक्रबिंदूद्वाविकारइतिकीर्तितः ४७

तस्यवामशिरोरेखालंबिन्याईउदाहृतः
सर्वाक्षरेशिरोरेखाश्रवक्राप्रणवंविना ४८
तस्यांतुलंबरेखान्यातदंतेचलवित्रवत्
उकारःसहिविख्यातोलवित्रद्वयतस्तदू ४९
एवमन्यानिसर्वाणिअक्षराणयाहभारती
लिप्यानयैवलिखितंपुराणंतुप्रशस्यस्ते ५०
ब्राह्मंपाद्मंवैष्णवंचमार्तंडंनारदेरितम्
मार्कंडेयमथाग्नेयंकौर्मंवामनमेवच ५१
गारुडंलैंगमाख्यातंस्कांदंमात्स्यंनृसिंहकम्
तथैवगदितंरामपुराणंकापिलंतथा ५२
वाराहंब्रह्मवैवर्तंशकुनेषुप्रशस्यते
शैवंभागवतंदौर्गंभविष्योत्तरमेवच ५३
भविष्यंचोपसंज्ञानित्वन्यानिचविवर्जयेत्
विमुच्यपुस्तकंरत्नपीठेनिक्षिप्यसंस्कृतम् ५४
धौतवस्त्रधरःस्नात्वाशुचिरक्रोधनोऽज्वरः
आदावात्मानमभ्यर्च्यकृत्वासंकल्पमेवच ५५
अंकुशंचाक्षसूत्रंचपाशंपुस्तकमेवच
धारयंतींसितांध्यायेत्प्रसन्नास्यांसरस्वतीम् ५६
गोक्षीरसदृशाकारंत्रिनेत्रंवृषवाहनम्
सहासवदनंशांतंशुक्लांबरधरंशिवम् ५७
हरिणंचाभयंचोद्ध्र्वबाहुयुग्मंकिरीटिनम्
व्याख्यामुद्रांचदक्षेधोवामहस्तेवरप्रदम् ५८
नानारत्नविभूषाढ्यंगिरिजार्द्धांबुजासनम्
बहुभिर्मुनिमुख्यैस्तुध्यायमानपदांबुजम् ५९
मूर्तिमद्भिस्तथावेदैःस्तूयमानंपुराणकैः
अन्यैःसमस्तलोकैश्चसंसेवितपदांबुजम् ६०
ध्यात्वैवंपूजकःसम्यगादौपूजांसमारभेत्
आपोवाइदमित्येतत्कलशस्याभिमंत्रणम् ६१
तज्जलंचगृहीत्वाचपात्रस्थमभिमंत्रयेत्
तत्सद्ब्रह्मेतिमंत्रेणप्रशस्यप्रणवेनतु ६२

अात्मानंसर्वपात्राणिततअावाहयेदिति
यद्वागितितृचेनैवभारतीषोडशार्चनम् ६३
पुरुषसूक्तेनवाकुर्याद्गायत्र्यावासमर्चयेत्
अोंनमोभगवतेअमुकपुराणेतिपुराणमर्चयेत् ६४
कांडादितिहिमंत्रेणदूर्वामानीयपूजयेत्
अोंनमोभगवत्यैदूर्वायैइति ६५
सलोकपालपूजास्यादथकन्यासमर्चनम्
वत्सरात्पंचकादूद्ध्र्वंदशवर्षादधःशुभाः ६६
अनुत्पन्नऋतुर्वापितांप्रयत्नेनपूजयेत्
गंधपुष्पाक्षतैर्धूपैर्दीपतांबूलभूषणैः ६७
पाठयेदप्यमुंमंत्रंपूजकःकन्यकामिमाम् ६८
सत्यंब्रूहिप्रियंब्रूहिभगवतिसरस्वतिनमस्तेनमस्तइति ६९
गायत्र्यानुक्रमार्थात्तुदूर्वायुग्मंतुकारयेत्
सन्निधौपुस्तकस्याधःसहस्रपरमेत्यृचा ७०
दूर्वायुग्मत्रयंदद्यात्तस्याहस्तेविचक्षणः
साप्रक्षिपेत्पुस्तसंधौशलाकात्रयमन्वनु ७१
विसृज्यतांपुनर्दद्याच्छिवाभ्यांनमइत्यथ
पत्रयोर्मध्यमःश्लोकःकार्यसिद्धेर्हिसूचकः ७२
पूर्वपत्रेसमाप्तिःस्याच्छ्लोकस्ययदिराघव
परपत्रेपठेच्छ्लोकंविविच्यार्थमुदीरयेत् ७३
शनैःशनैःपठेत्प्राज्ञोव्याख्यासेच्चशनैःशनैः
त्वरेहनहिकर्तव्याकुप्यतित्वरयातुगीः ७४
घटिकायास्तुपादःस्यादत्वरास्यात्ततोधिका
त्वरयेन्नचवक्तारंज्ञातव्यांशमनुद्विजम् ७५
विविच्यपाठंश्लोकस्यनिश्चित्यार्थंचमानसे
प्रतीपंतन्नवक्तव्यंविविच्यरघुनंदन ७६
यदियुक्तमयुक्तंवाश्लोकमन्यंपठेदसौ
पुस्तकस्थंचहित्वैवपूजकःसद्विजोयदि ७७
तत्तथैवहिविज्ञेयंविसंवादोनशस्यते
दैवागतोहिसश्लोकोदैवंहिबलवत्तरम् ७८

उपश्रुतिषुयद्वच्चनापराधोद्विजस्यतु
विस्मयोनचकर्तव्योदैवस्यकुटिलागतिः ७९
यत्तत्पदविपर्यासेपत्रेचोपरिवारिणि
तमादेशंतिरस्कृत्यद्वितीयंतुपठेदतः ८०
ततस्तृतीयंपाठचंस्यात्ततःकार्यंविवेचनम्
अविसर्गांतपूर्वास्तेपवर्गेतरपंचमाः ८१
स्तुतिलिङ्वर्जितःश्लोकःशकुनेषुप्रशस्यते
अध्यायादिःसमाप्तिश्चवृथापत्रंवृथालिपिः ८२
उक्तानुवचनंचैवद्व्युपस्तुतमथैवच
दग्धपत्रंनष्टलिपिःसंदिग्धाक्षरमेवच ८३
एतानिशकुनेनित्यंवर्जनीयानिपंडितैः
प्रश्नोहिद्विविधोज्ञेयोदीप्तशांतप्रभेदतः ८४
शांतंचद्विविधंज्ञेयमुत्पत्तिस्थितिवृद्धितः
तत्रशांतंप्रशस्तंस्याल्लक्षितंपूर्वलक्षणैः ८५
कार्यभेदास्तुवर्ण्यंतेकेचिन्मर्त्योपयोगिनः
कस्यचित्कार्यमादायकश्चित्प्रष्टाभवत्यपि ८६
सकरोतितदाप्रश्नंसमेत्यस्मरतेऽत्रकिम्
सपुनर्धार्यपत्रंतत्तस्मिन्पत्रंप्रशस्यते ८७
अथवातत्क्षमोपेतंवैराग्यंपरमेवच
यतःकुतश्चिद्दृष्टस्तुस्तुतिपादकमेवच ८८
परिहृत्यपरंचापितस्मिन्नर्थेशुभावहम्
मृतोगृह्णातिवागर्थमितिप्रश्नोऽशुभप्रदः ८९
विवादेविजयप्रश्नेजयद्योतकमिष्यते
सृष्टिरप्यत्रशस्तास्यात्क्रूरायांक्लेशतोजयः ९०
प्रशांतायामुपायैस्तुमिश्रायांविड्वरोभवेत्
पुरादिवर्णनंयत्तुमध्यमंयदिचोत्तमम् ९१
कलिसंभावनायास्तुशृंगारस्योपवर्णने
राज्यनिर्वाहचिंतायांराज्यलिगंशुभावहम् ९२
यस्यापियादृशंयोग्यंविचार्यतादृशंबुधैः
स्तुतिवैराग्ययोःकार्यंविलयःपरिकीर्तितः ९३

कार्याल्पसिद्धिःस्खलितेनचनिर्वाहमृच्छति
तस्यान्यार्थस्यान्यभावोरामशांतिविचारणे ९४
विसर्गांतश्चपूर्वार्द्धविपर्यासोभविष्यतः
संकल्पितान्यथाभावोह्यध्यायस्यसमापने ९५
कांडादेस्तुसमाप्तौतुस्यात्तत्कार्यविनाशनम्
तस्मादेतादृशेदोषेशकुनस्यविपर्ययः ९६
ज्ञुतेपुस्तकपातेचत्वाहतेमस्तकादिषु
वक्तावैमाननंयातिततःशकुननाशनम् ९७
तस्मादेतादृशेदोषेशकुनंपरिवर्जयेत्
उपमायांभवेद्रामकार्याभासोनवस्तुतः ९८
संतानंभोन्यत्रचोक्तासृष्टिर्मध्यफलप्रदा
स्तुतिःप्रशस्ताकुत्रापिगुणवत्कार्यनिर्णये ९९
विवाहेचौषधेदानेव्यवहारेकृषौतथा
यथार्थाचस्तुतीरामनिर्वाहेऽपिनदूषणम् १००
अयथार्थास्तुतिर्याहितत्रकार्यंनसिध्यति
अबुद्धार्थेतथापद्येपुराणादिष्वनादृते १०१
पलायनेदेशभावेव्याधिसंभवएवच
चौराद्यभिभवेतस्मिन्घोरकार्यविनाशनम् १०२
शांतःस्याद्यदिचप्रश्नइतिप्राहुःपुराविदः
रामउवाच-
अबुद्धार्थंकथंपद्यंपुराणज्ञोवदिष्यति १०३
अनुक्तोनश्रुतःसम्यच्छ्रोतृणामितिनिश्चयः
तदुदाह्रियतांमह्यमर्थश्चापिविचार्यताम् १०४
भागाबोधकमप्यत्रवक्तुमर्हसिपंडित
शंभुरुवाच-
मधूनिचमधून्यत्रमधुर्मधुभुजंमधुः १०५
मधुनामधुनाद्यर्थंविषाणिचविषाणिच
अबुद्धार्थस्त्वयंश्लोकःशकुनेनहिशस्यते १०६
रुतीरुतेरुतेरोरौरीरीरारंररीररम्
एवंकरोतिशुद्धात्माब्राह्मणोब्रह्मणोऽतिथिः १०७

भागाबुद्धस्त्वयंश्लोकःशकुनेनप्रशस्यते
एवमादीनिपद्यानिपुराणेषुरघूत्तम १०८
संतितेषांनचव्याख्यातत्पाठस्तुपरंभवेत्
वक्तुःश्रोतुरवैगुण्यंव्रतेषुनियमेषुच १०९
वेदवच्चपुराणानिनचिंत्यानिकथंन्विति
त्रिरुक्तादिवशादर्थधीरप्यस्तुविचारतः ११०
श्लोकार्थंप्रक्रियांचैवविचार्यपरमार्थतः
बलवांस्तत्रहिश्लोकःप्रक्रियातुततोलघु १११
वृथापत्रेवृथायासेदग्धपत्रेविनाशनम्
स्यादंतरितनिर्वाहपत्रेकार्यविसूत्रता ११२
शीर्णपत्रेव्ययःप्रोक्तःप्रणष्टलिपिकेतथा
वृथाक्षरेवृथायासःपुनरुक्तेविसंविदे ११३
उपमानेतुतत्कार्यंसिध्यतीवनसिध्यति
विलंबेनाथवासिद्धिरस्पष्टाक्षरकेपुनः ११४
कार्यसंशयमाप्नोतिनिर्दिष्टदिवसेष्वपि
नप्रत्यहंनिरीक्षेतपुराणशकुनंनृप ११५
भुक्त्वोत्तिष्ठंस्तथानैवनिरीक्षेतपुराणकम्
पूर्वस्यदिवसस्याथरात्रौपूजांविधायच ११६
प्रातःकालेपरेद्युश्चशकुनेरघुनंदन
पश्चान्निरीक्षणंकार्यंसद्यःकालमथापिवा ११७
प्रक्रियादिविशेषेणविशेषंशकुनंवदेत्
शुभकार्येषुसर्वेषुप्रेतश्राद्धादिवर्जनम् ११८
दंडप्रणयनंशापोदेशानांचविपर्ययः
रक्षसांदुष्टसत्वानांशुद्धंप्राणिविहिंसनम् ११९
दहनादेवनिर्माणंष्ठीवनंवमनंरुदिः
हासोबीभत्सतादुःखदुःस्वप्नभ्रमपापकाः १२०
पटादिपूर्णनंपीडाकलहोमरणंतथा
क्रूराणामागमश्चापिमहतांभयमेवच १२१
एवमाद्यास्तथाचान्याःप्रक्रियास्तुविवर्जयेत्
श्रियःप्राप्तिविचारेचराजसृष्टिःसुखावहा १२२

ग्रहाणामुदयोरोगशांतिरप्यत्रशस्यते
किमत्रबहुनोक्तेनतत्तद्योगंविचारयेत् १२३
सर्वेषुचपुराणेषुस्कांदमत्रप्रशस्यते
वैष्णवंकेचिदिच्छंतिरामायणमथापरे १२४
सत्यादिसर्वदोषाणांवैष्णवेनैवदोषता
स्कांदेरामायणेचैवदोषत्वमपिचाल्पता १२५
किंतुपूजयितुंशक्यंवैष्णवंनैवकेनचित्
सदाचारविहीनेनपूजितंयदिचेद्भवेत् १२६
तदाशुभमिवायातिशकुनंनैवसिध्यति
सर्वाचारसमोपेतेशाखाबंधेयथावृषः १२७
सूतउवाच-
इत्थंशंभुद्विजेनाथबोधितोराघवस्तदा
विभीषणपरीक्षायांशकुनायोपचक्रमे १२८
वसिष्ठंसर्वतत्त्वज्ञंपुराणेषुविशारदम्
बभाषेराघवोवाक्यंपुराणंवीक्ष्यतामिति १२९
वसिष्ठोऽप्याहरामंतंमुनेश्चामुष्यसन्निधौ
वक्तुंनिरीक्षितुंरामनशक्तिर्ममविद्यते १३०
शंभुंप्राहततोरामोमुनिसंप्रेक्षिताननम्
भवंतोऽपिहितत्त्वज्ञाःपुराणेषुविशारदाः १३१
तद्वदंतुपुराणस्थंशकुनंममकार्यतः
तथेतिशंभुरुक्त्वातुशुचिर्भूत्वार्चकोऽभवत् १३२
स्कांदमभ्यर्च्यविधिवत्प्रश्नंकृत्वेतितत्त्वतः
सकिंशृंखलयाबद्धोममभक्तोविभीषणः १३३
अमीदृष्टास्तदाश्लोकास्त्रयआदेशकास्त्रिधा १३४
बद्ध्वासमुद्रंसतुराघवेंद्रोरुरोधपुर्यांक्षणदाचरेंद्रान्
योद्धुंविनिर्गत्यसमाययुस्तेलंकापुरश्चाप्यतिकायमुख्याः १३५
अट्टशूलाजनपदाःशिवशूलाद्विजातयः
प्रमदाःकेशशूलिन्योभविष्यंतिकलौयुगे १३६
एवंस्तुतोमहेशस्तुदेवताःप्राहवःशिवः
मोचयिष्येभवत्पत्नीर्मल्लासुरनिरोधिताः १३७

श्लोकत्रयंनिरीक्ष्याथबंधनिश्चयमुक्तवान्
मोचनंत्वरयारामभविष्यतिनसंशयः १३८
इतिश्रुत्वामुनेर्वाक्यंरामःसमुनिवानरः
कर्तुंविनिर्ययौशीघ्रंविभीषणगवेषणम् १३९
श्रीरंगनामनगरंत्वरयाप्रविवेशह
रामंतेपूजयामासुःपार्थिवास्तत्रयेस्थिताः १४०
पूजितस्तानुवाचाथक्वस्थितोऽसौविभीषणः
देवश्रीरामनवयंजानीमस्तुकथामिमाम् १४१
प्रेषयामासकाकुत्स्थोवानरान्सर्वतोदिशः
ततोगत्वाकपिवरादृष्टवंतोनचैवतम् १४२
अथरामोमुनिंप्राहशंभुंपश्चाद्वदस्वमे
तथेतिरामसहितोमुनिःशंभुर्द्विजान्वितः १४३
दर्शयेतितथैवेतिविप्रघोषंजगामसः
पृष्टास्तेऽपिद्विजास्तत्रदर्शयामासुरर्चिताः १४४
अंतर्भूमिगृहेबद्धंराक्षसंबहुशृंखलैः
अथाहराघवोविप्राःकिमनेनकृतंत्विति १४५
तैरुक्तंब्रह्महत्येतिवृद्धोब्राह्मणसत्तमः
द्विजोऽतिधार्मिकःकश्चिदेकांतेप्रवयाःकृशः १४६
ध्यानायोपवनेतस्थौतत्रगत्वाविभीषणः
पादेनाधर्षयद्विप्रंसविप्रोऽप्यतिचूर्णितः १४७
पदमेकमतोगंतुंनशशाकविभीषणः
अस्माभिस्ताडितोदुष्टोनममारवधैरपि १४८
अतोरामवधित्वैनंपापात्मानंवृषीभव
रामःसंशयमापन्नोविप्रानिदमुवाचह १४९
वरंममैवमरणंमद्भक्तोहन्यतेकथम्
राज्यमायुर्मयादत्तंतथैवसभविष्यति १५०
भृत्यापराधेसर्वत्रस्वामिनांदंडइष्यते
रामवाक्यंद्विजाःश्रुत्वाविस्मयादिदमब्रुवन् १५१
द्विजाऊचुः
नपट्टबद्धमरणंभोराममुनिसंमतम्

वसिष्ठादिमुनींद्रैस्तुविचारंकुरुयद्धितम् १५२
रामपृष्टामुनिवराःप्रायश्चित्तमथोचिरे
अज्ञानब्रह्महत्यातुप्रायश्चित्तैरपोह्यते १५३
इयमज्ञानतोहत्याप्रायश्चित्तमपेक्षते
गवांचत्रिशतंषष्टिंददातुसविभीषणः १५४
बंधकाश्चापितेविप्रास्तथेत्यूचुःपरस्परम्
मोचयिष्यामतद्रक्षःप्रायश्चित्तंकरोतुसः १५५
विमुच्यराक्षसंविप्राराघवायन्यवेदयन्
रामोऽपिनाभिभाषेत्तंप्रासंगिकमभाषत १५६
स्नात्वापृष्ट्वामुनीन्वृद्धान्प्रायश्चित्तमतःपरम्
द्विजानुमतितःपापीमामुपैक्षतुराक्षसः १५७
श्रुत्वेतिराघववचोराक्षसःपापसंयुतः
प्रायश्चित्तमृषिप्रोक्तंकृत्वाराममथाभ्यगात् १५८
प्रायश्चित्तविशुद्धात्माननामरघुनंदनम्
रामस्तंप्रहसन्वाक्यमिदमाहसभान्तरे १५९
श्रीरामउवाच–
अद्यप्रभृतिपौलस्त्यविमृश्यकुरुयद्धितम्
अस्माकंत्वत्कृतेरक्षःप्रयासोऽयमभूद्यतः १६०
कृपालुर्भवसर्वत्रभृत्योममयतोभवान्
अथतेमुनयःसर्वेनिश्चितार्थेरघूत्तमे १६१
ऊचुरस्माकमज्ञानंकथंशीघ्रमुपागतम्
शंभुरुवाच–
विप्रावज्ञानतोविप्राअज्ञानंनाशमेष्यति १६२
ऋषयऊचुः
त्रेतायुगेऽभिरामोऽसौपुराणानिचकृत्स्नशः
द्वापरांतेभारतंचकथमेतद्धियुज्यते १६३
सूतउवाच–
पुराणानितथाप्येवंसंतितन्नामकानितु
व्यासेरितानित्वद्यैवपुराणानिनचान्यथा १६४
अद्यापिचविधानंतत्पुराणश्रवणेफलम्

महाभारतमप्यत्रशकुनायविशिष्यते १६५
आदिपर्वैकमभ्यर्च्यनिरीक्षतविनिश्चयम्
अथवासर्वपर्वाणिप्रशस्तान्यर्थनिर्णये १६६
श्लोकादिलक्षणंसर्वंपूर्वोक्तंतदिहापितु
श्लोकानामन्वयादेकस्तात्पर्यादथवापरः १६७
अर्थःसंप्रतिपद्येततात्पर्यंतत्रगृह्यते
अर्थादेवहिसर्वत्रवस्त्वादेस्तुनिरूपणम् १६८
यत्रार्थोदृश्यतेतत्रधातुःससमुदाहृतः
अत्रार्थादेवशब्दानांनमिथ्यैवनिरूपणम् १६९
तस्मात्सर्वत्रनान्योऽर्थोगृहीतव्योमनीषिभिः १७०
इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादे
चतुरुत्तरशततमोऽध्यायः १०४

## पंचोत्तरशततमोऽध्यायः

मुनयऊचुः -
अतःपरंमहाभागःकिंचकारसराघवः
मुनयश्चमहात्मानःकिमकुर्वंस्ततःपरम् १
सूतउवाच-
रामचंद्रेसुखासीनेविभीषणेकपीश्वरे
शंभुमूचुर्मुनिवराःकथांपुण्यांवदस्वनः २
तेषामाकर्ण्यवचनंपार्वतीमाहशंकरः
इदंकस्यापिविप्रस्यगृहंपरमशोभनम् ३
रम्योपवनवापीभिर्वीरुद्भिरुपशोभितम्
कूजन्मधुकरश्रेण्याआहूतकुसुमायुधम् ४
मध्याह्नसंध्यामारोढुमिवसूर्यःप्रवर्त्तते
छायावापीजलस्नातौपरिधायसुवाससी ५
मृगनाभिसमुद्घृष्टघनसारसुचंदनम्
आलिप्यसल्लकीदामदृढधम्मिल्लसंयुतौ ६
अनल्पघनसारंतुतांबूलंप्रतिखादितम्
आस्वाद्यमाद्यन्मुदितौयत्रधारागृहेशुभे ७

मयूरनादबहुलेबर्हिर्मधुरगीतकैः
शय्यायामास्तृतायांचपरस्परसुखस्थितौ ८
विशालस्मितरक्तोष्ठमाननंचुंबितंयदि
संसारफलमाघ्रातमावयोस्तुभविष्यति ९
इतीरितमथश्रुत्वाकुपितामुनयस्तुते
उक्तंवासुशुभंवाक्यमस्मासुकिमिदंत्वया १०
विप्रलापःप्रियासक्तेःकृतोनोस्मद्वचःकृतम्
अथकोपपराच्छंभोराननात्परमाद्भुता ११
ज्वालाविनिर्गतासापिकरालवदनाभवत्
कस्यचित्तुमुनेर्भार्यामाससादाथसत्वरम् १२
पलायनपराचासीद्रामंदृष्ट्वाचबिभ्यती
रामोऽपिब्राह्मणींशुद्धांमोचयामीत्यभाषत १३
जगामपुष्पकेणैवब्रुवन्मुक्तिंपुनःपुनः
बाणंचधनुषायोक्तुंनचसस्माररराघवः १४
शंभुरप्यतिपुण्यानिवनान्यायतनानिच
पुराणिचविचित्राणिदृष्ट्वारामंनचास्मरत् १५
क्षणेनचतदाप्राप्तोलोकालोकंमहागिरिम्
दृष्ट्वाथराघवःशैलंगृहमार्गसमाकुलम् १६
विप्रयोषिन्महाभागाक्वगतावदतद्विजाः
इतोगतेतितेप्रोचुस्तमोभागंगिरेरिति १७
रामोविवर्णवदनःकष्टमित्यभिचिंतयन्
अथशंभुर्महातेजाःप्रकाशमतुलंददौ १८
तत्प्रकाशप्रभावेणरामःकृत्यांययावनु
तमोमयीमहाभूमिःसर्वजंतुविवर्जिता १९
आब्रह्मांडकटाहांताशतयोजनकोटितः
महारजतभूमिश्चतमोमध्येव्यवस्थिता २०
तत्रनारायणपुरंसूर्यकोटिसमप्रभम्
सराममुनिवर्यास्तुतंदृष्ट्वाविस्मयंययुः २१
किमेतदितिचाचिंत्यनःप्रवेशःकथंभवेत्
किमेषप्रलयाग्निःस्यान्माययापरमात्मनः २२

किंवानोमरणंत्वद्यउतश्रेयोभविष्यति
इतिचिंताकुलेष्वेवसरामेषुमुनिष्वथ २३
शंभुराहशृणुष्वाद्यराघवैतद्वदामिते
प्रकल्पितामयामायात्वत्कृतेनैतदद्भुतम् २४
नारायणीयमेतत्तुपरमंधामभास्वरम्
उष्णशीताद्यविच्छेद्यंज्ञानगम्यंनचाक्षुषम् २५
तत्तुपूजयतश्चोर्ध्वंपश्यब्रह्मपुरोगमान्
दिक्षुसर्वासुचमुनीन्पश्यपूजयतोऽमलान् २६
चतुरोनिगमान्पश्यस्तुवतःपरमंपदम्
योगिनःसनकाद्यास्तुयोगमास्थाययत्नतः २७
ध्यायंतिपरमंतेजस्तदिदंपश्यराघव
अमुंचरोमशंपश्यप्रदक्षिणनमस्क्रियाः २८
कुर्वाणंकोटिकोटीश्चवालखिल्यान्मुनीश्वरान्
लक्ष्म्यादिसर्ववनितापूज्यमानंपरंपदम् २९
साकारंचनिराकारंब्रह्मयत्परिकीर्तितम्
अज्ञानिनोनपश्यंतिपश्यंतिज्ञानचक्षुषः ३०
शंभुवाक्यादतःसर्वेपूजयामासुरच्युतम्
गिरिकर्णींचतुलसींमल्लिकांमारुतंतथा ३१
नीलोत्पलैरंबुजैश्चकृष्णास्फुटजलैरपि
पूजयंतोमहात्मानोमहात्मानंजनार्दनम् ३२
नारदंखेऽथददृशुर्जटिलंसविपंचिकम्
नारायणपदाघोषंलंबकूर्चोपवीतिनम् ३३
सचापिमनसादध्यौकएषइतिनारदः
सपपातप्रभोःपादेशंभोरानंदनिर्भरः ३४
शैवींपंचाक्षरींविद्यांजजापमनसामुनिः
धन्योऽस्म्यनुगृहीतोऽस्मिजन्माद्यसफलंमम ३५
ब्रह्मादिवंद्यंचागम्यंज्ञातवानस्मितेपदम्
नारदंतमथप्राहशंभुर्मैवंवदेतिहि ३६
यथाचमांनजानंतितथामेकुरुवर्तनम्
गच्छशीघ्रंहरिंब्रूहिममागमनमल्पतः ३७

अथसत्वरयागत्वासर्वंव्यज्ञापयद्धरिम्
अथसत्वरयाविष्णोरादायार्घोदकंशुभम् ३८
कमलासहितोयोगीकोटिकोटिसमावृतः
निर्ययौनारदंहस्तेगृहीत्वागरुडध्वजः ३९
नमोनमोनमोस्त्वस्मैशंकरायेत्युदीरयन्
अर्घपाद्यादिनासर्वान्पूजयामासकेशवः ४०
प्रावेशयदमेयात्मानारायणपुरंशुभम्
गृहराजेततःस्थित्वानारायणउवाचह ४१
कथमेतेसमायाताःकोऽयराजामहायशाः
अमानुषप्रवेशोऽयब्रह्माद्यैरप्यगोचरः ४२
शंभुरुवाच–
मुनिवेषायथाप्राप्तावयमेतेनृपस्तथा
तवांशोनृपतिश्चायंरामचंद्रःप्रतापवान् ४३
एनांसंवीक्षितुंपत्नींतवकेशवकांक्षति
नारायणस्तथेत्युक्त्वाप्रविशेत्याहराघवम् ४४
अथप्रविश्यभवनंलक्ष्मींवीक्ष्यनमस्यच
विनयावनतोभूत्वावाचमाहसुचारिणीम् ४५
कृतार्थोऽस्मिनसंदेहोवदत्वंकिंतुमन्यसे
श्रीदेव्युवाच–
त्वंयुवाकामकृष्टश्चरूपवानसिराघव ४६
सीतासाचारुसर्वांगीतवपत्नीतयाभवान्
वियुक्तोऽस्तिपुराचासीदतीवविरहाकुलः ४७
ममापिवदसर्वंतदथवानचलप्स्यसि
सहासान्यथवाक्यानियूनांचित्तहराणिच ४८
श्रुत्वातुतानिसर्वाणिरामभद्रोयतात्मवान्
निर्गंतुंकांक्षतेतत्रआनम्यतन्मुखांबुजम् ४९
स्मरबाणेनपद्मेनसंपीड्यरघुशेखरम्
अन्वेवनिर्ययौदेवीपद्मापद्मवनप्रिया ५०
एकपत्नीव्रतंज्ञात्वारामंतेसमुपागमन्
अथवेपितसर्वांगंस्खलत्पदगतिंनृपम् ५१

शिवनारायणौदृष्ट्वाविस्मयंपरमंगतौ
अहोऽस्यदृढिमाचित्तेमायिनोऽप्यवशात्मनः ५२
धैर्यंपश्येहनियतंतेनरामःसुकीर्तिमान्
सर्वतःशिवमेवास्यनाशिवंविद्यतेक्वचित् ५३
अथरामोवचःप्राहगच्छेहंभगवन्प्रभो
अनुज्ञातोऽथहरिणापुष्पकेणसराघवः ५४
समुनिःसहशंभुश्चसहनारायणोययौ
लोकालोकंगतःशीघ्रंततःस्वादूदधिंगतः ५५
ततोद्वीपसमुद्रांश्चजंबूद्वीपंपुनर्गतः
भरद्वाजाश्रमपदेतस्थिवान्गौतमीतटे ५६
अथस्नात्वामहानद्यांभरद्वाजोमुनीश्वरः
शिष्यैःश्रीमान्परिवृतःपुष्पकंदृष्टवान्मुनिः ५७
तत्ररामंमहाबाहुंशिवनारायणावृषीन्
यथावत्पूजयित्वातुतानुवाचमहामुनिः ५८
ममाश्रमपदेयूयंभोक्तुमर्हथसत्तमाः
रामस्तुमन्वाक्येनतथेत्याहकथंचन ५९
अथस्नात्वामहानद्यांकृत्वादेवादितर्पणम्
भोक्तुकामंतदारामंवसिष्ठोवाक्यमुक्तवान् ६०
धर्मत्यागोभवेद्रामनश्राद्धंक्रियतेयदि
श्रीरामउवाच-
अमायांग्रहणेतीर्थेव्यतीपातेऽथसंक्रमे ६१
व्यतीतंयदिचेच्छ्राद्धंभगवन्क्रियतेपुनः
नित्यश्राद्धंपुनर्नैवकुर्यादितिवचस्तव ६२
यथाममैवमातृणांमरणेसमुपस्थिते
अशौचेचसमायातेनित्यश्राद्धंनवैकृतम् ६३
व्यतीपातादिकालेषुकृतंतुवचनात्तव
वसिष्ठउवाच-
एतेहिमुनयःसर्वेतथाशंभुरयंद्विजः ६४
एतन्मुखादशेषेणनिर्णयस्तुभविष्यति
सहसर्वेविनिश्चित्यमुनयःशंभुमब्रुवन् ६५

वदास्माकमशेषंत्वंद्विजवर्यमहानसि
शंभुरुवाच-
त्यक्तव्यंयच्चवैश्राद्धंपुनःकर्तव्यमेवच ६६
सूतकेसमनुप्राप्तेविघ्नेषुचवदाम्यहम्
मासिकान्युदकुंभानिश्राद्धानिसकलानिच ६७
प्रतिसांवत्सरंश्राद्धंसूतकानंतरंविदुः
त्यक्तान्यन्यानियावंतिसूतकेविघ्नसंभवे ६८
अनंतरंहिकार्याणिसर्वाणीतिनसंशयः
मासिकानिसमस्तानिश्राद्धंप्रात्यब्दिकंतथा ६९
सूतकानंतरंकार्यंविघ्नेऽन्यस्मिन्यतोन्यथा
एकादश्यांकृष्णपक्षेकर्तव्यंशुभमिच्छता ७०
तत्रव्यतिक्रमेहेतावमायांक्रियतेतुतत्
यथोत्तरदिनेष्वेवकर्तव्यंयद्यविघ्नतः ७१
कृष्णपक्षेत्वमायांतुकर्तव्यंरामनोकृतम्
मृताहस्ययदामासोनज्ञायेतकथंचन ७२
मार्गशीर्षेऽथवामाघेश्राद्धंतद्दिवसेस्मृतम्
यदातुवासराज्ञानंमासस्यज्ञानमेवच ७३
अमायामेवतन्मासेश्राद्धंसांवत्सरंभवेत्
दिनमासापरिज्ञानेप्रोषितस्यमृतस्यच ७४
तत्तिथ्यांतद्दिनंग्राह्यंतत्रज्ञानंयदाभवेत्
आश्विनामाचमार्गामामाघामाचदिनत्रयम् ७५
तत्रवान्यतमंग्राह्यंदिनमासाप्रतीतितः
वृद्धिसप्तमसीमंतप्रेतश्राद्धानुमासिकम् ७६
नित्योदकुंभश्राद्धंचमासेस्युरधिकेऽपिच
ग्रहणेपुत्रजन्मादौकर्मरायपिचशांतिके ७७
संकल्पितेचसर्वस्मिन्नधिमासोनदुष्यति
रोगीयदामनुष्यःस्याच्छ्राद्धकर्मरार्युपस्थिते ७८
भार्यांवाभ्रातरंवापिशिष्यंवापिनियोजयेत्
तस्याभावेनहानिःस्यात्कर्मणःश्राद्धसंज्ञिनः ७९
नित्यश्राद्धेयथाशक्तिभोक्तारंतुनियोजयेत्

अमावास्यामासिकंचमृताहव्यतिरेकियत् ८०
स्वयंकर्मण्यशक्तश्चेत्सुतंविप्रंनियोजयेत्
राजकार्यनियुक्तस्यदासग्रहणवर्तिनः ८१
व्यसनेषुसमस्तेषुश्राद्धंविप्रेणकारयेत्
प्रातःकालेतुनश्राद्धंप्रकुर्वीतद्विजोत्तमाः ८२
नैमित्तिकेषुश्राद्धेषुनकालनियमःस्मृतः ८३
गृहादिव्यतिरिक्तस्यप्रक्रमःकुतुपःस्मृतः
कुतुपादथवाप्यर्वागासन्नकुतुपोभवेत् ८४
मासेमासेयथाश्राद्धेऽपराह्णस्पृग्विधीयते
अपराह्णव्यापिनीस्यादुभयत्रयदात्वमा ८५
क्षयेपूर्वातुकर्तव्यावृद्धौसाम्येपरास्मृता
अमावास्यातुयाहिस्यादपराह्णद्वयेसमा ८६
क्षयेपूर्वापरावृद्धौसाम्येऽपिचपराभवेत्
क्षीणस्तुचंद्रमायत्रतत्रश्राद्धंतुपार्वणम् ८७
अमाष्टभागेसूक्ष्मोऽसौभूताष्टांशेसनास्तिचेत्
मध्याह्नव्यापिनीसास्यादेकोद्दिष्टेतिथिर्भवेत् ८८
सायाह्नव्यापिनीयास्यात्पार्वणेसातिथिर्भवेत्
अल्पापराह्णगायामाग्राह्याश्राद्धादिकेभवेत् ८९
मृताहेत्रिमुहूर्ताचसायंकालेतिथिर्भवेत्
परेह्यस्तंगतायत्रत्रिमुहूर्ततुपूर्ववत् ९०
तत्रापरेद्युःश्राद्धंस्याज्ज्येष्ठपुत्रस्यनाशनम्
अमाश्राद्धंयथाकुर्यान्मृताहेसमुपस्थिते ९१
मध्याह्नव्यापिनीतत्रह्यद्विजस्यविधीयते
रामउवाच-
श्राद्धक्रममशेषेणमर्त्यकर्मक्रमंतथा ९२
प्रासंगिकानांधर्माणांनिर्णयंवक्तुमर्हसि
शंभुरुवाच-
श्राद्धस्यदिवसेप्राप्तेपूर्वेद्युर्नियमान्वितः ९३
निमंत्रयीतविप्रेंद्रान्विप्रलक्षणसंयुतान्
एकभुक्तंब्रह्मचर्यमंत्यजाद्यैरभाषणम् ९४

दंतधावनमभ्यंगनखकेशनिकृंतनम्
कर्ताकुर्वीतपूर्वेद्युस्त्यक्त्वाचैवपरेऽहनि ९५
गृह्णीतनियमानुक्तान्सर्वमेतत्परित्यजेत्
त्रिकालंचैवपूजाचेत्प्रातर्देवंयजेत्स्वकम् ९६
अरुणोदयवेलायांकरोतियदिपूजनम्
अधःशायीतथाभूतःप्रातरुत्थायकर्मवित् ९७
प्रातस्त्यमपियत्कर्मतत्कृत्वास्नानपूर्वकम्
ऋणत्रयविनिर्मुक्तोयास्यतिब्रह्मतत्परम् ९८
सूर्यस्योदयवेलायांशिवपूजांकरोतियः
सूर्येणसमतेजस्वीशिवलोकेमहीयते ९९
उदितेभास्करेपश्चाद्घटिकांतरपूजनम्
रुद्रेणसमतेजस्वीशिवलोकेमहीयते १००
तृतीयघटिकायांतुशिवपूजांसमाचरेत्
कुबेरसमतेजस्वीशिवलोकेमहीयते १०१
तृतीयघटिकायांतुशिवपूजांसमाचरेत्
कुबेरसमतेजस्वीशिवलोकेमहीयते १०२
चतुर्थीपंचमीषष्ठीसप्तमीघटिकासुयः
शिवंपूजयतेभक्त्याशिवलोकेमरुत्समः १०३
तत्कालएवक्रियतेपूजायत्कालनोदिता
यथाप्रतिज्ञमथवागृहीतनियमोयजेत् १०४
उपचारेषुशक्त्यावैनियमंपरिपालयेत्
नियमातिक्रमेवापियागश्चस्याद्विभोर्यदि १०५
श्रीरामउवाच–
क्वपूजादेवदेवस्यशंकरस्यामितौजसः
स्मरणात्पापनाशस्यस्मरणान्मोक्षदस्यच १०६
शिवस्यशिवरूपस्यशिवतत्त्वार्थवेदिनः
सोमस्यसोमभूषस्यसोमनेत्रस्यराजितुः १०७
वेदमूर्तेरमूर्तेश्चवेदसारस्यवेदिनः
वेदवेदांगवित्तस्यवेद्यावेद्यस्ययोगिनः १०८
गोक्षीरसमदेहस्यगोक्षीरस्नानमोदिनः

गोपालिनस्त्रिनेत्रस्यत्रयीनेत्रस्यमायिनः १०९
प्रश्नमध्येतथारामंशिवज्ञानमथादिशत्
स्थाणुभूतइवासीनोनासाग्रन्यस्तलोचनः ११०
आनंदनिष्यंदविलोचनाश्रुप्रवाहसंस्पृष्टकपोलदेशः
दधारदेवंगिरिशंहृदंबुजेगोक्षीरसुस्निग्धसुचारुगात्रम् १११
प्रतिबिंबमथोगात्रेरामस्यसमदृश्यत
दृष्ट्वैवबिंबितंशंभुंचतुर्बाहुंत्रिलोचनम् ११२
विस्मयंपरमंयाताःसर्वेमुनिहरीश्वराः
शंभोर्वक्षःस्थितंरामंदृष्ट्वादीप्ताकृतिंशुभम् ११३
तूष्णींबभूवुर्यामार्द्धमथराममुदैक्षत
स्वप्रश्नमनुसंधायप्राहसर्वंवदेतिच ११४
शंभुरुवाच-
अचलेयासदापूजाचलेवापियथेच्छया
लिगसंपूजनंमुख्यमलाभेप्रतिमादिषु ११५
अधिकारविशेषेणतत्रतत्रापिपूजनम्
विगुणंसगुणंवापिसफलंलिगपूजनम् ११६
प्रतिमादिकृतापूजाविगुणासफलानहि
अचलेवाचलेवापिपूजालिगेप्रशस्यते ११७
चलस्यपूजनंवक्ष्येस्थापनोद्वासनेतथा
तेउभेनविजानातिकश्चिन्मुनिरपिक्वचित् ११८
स्थापयंतिहृदब्जेवैगोपयंतियजंतिच
उद्वासयंतिदेवेशंशंकरंयोगिनःसदा ११९
क्रियाचातीवहोतृणांवह्नौदेवंत्रियंबकम्
पूजकानामशेषाणांशिवलिगेमहेश्वरम् १२०
लिगस्यस्थापनंपूजाउद्वासनमथैवच
धारणंशंकरस्यैवलिगमेवमहेश्वरम् १२१
सन्निकंपरमोत्कृष्टंस्वर्णंचैवविनिर्मितम्
राजतैर्वादलैःकार्यंराजतैर्वैणवैस्तुयत् १२२
लतासूत्रैरथोवापिरचितंदारुणाथवा
वस्त्रेणवाथरचितंमृदाविरचितंभवेत् १२३

तत्रसंवेष्टयवस्त्रेणसुगंधेनसमन्विते
धौतवस्त्रयुगेशुद्धेमृद्वासनसमन्विते १२४
शीतोष्णरहितेपादचतुष्टयसमन्विते
प्रावृतिच्छेदनोपेतेक्रिमिकीटविवर्जिते १२५
धौतेनमृदुवस्त्रेणसर्वतोवेष्टयतंशिवम्
विन्यस्यसज्ञिकामध्येप्रावृत्यचपुनर्विभुम् १२६
एषाहिसज्ञिकारामदेवस्याग्रेतिकीर्तिता
तस्यचस्थापनंपाठोरहस्येचमहेशितुः १२७
अथवाभित्तिमूलेस्याद्देववेद्यामथापिवा
सुरक्षितेतथादेशेरक्षकंचनियोजयेत् १२८
प्राणादेरविनाभावंकुर्वीतनियमैःसह
एतद्धिराजसंप्रोक्तंस्थापनंपरमात्मनः १२९
सात्विकंस्वसमीपस्थंधारणंतामसंपुनः
धारणंगात्रसंस्पर्शमशेषदेहगोपनम् १३०
मस्तकेधारणंमुख्यंब्रह्मणाचतथाकृतम्
विन्यस्यमुकुटस्यांतेधारणंशुभमुच्यते १३१
ललाटेधारणंशस्तंयथालक्ष्म्याधृतंशुभम्
बाणेनचधृतंमूर्ध्निदक्षिणोरसिवापुनः १३२
कर्णेचहरकर्णेनमुनिनापरमर्षिणा
विनिर्भिद्यतथागात्रंलोहस्थानंप्रकल्प्यच १३३
धारयंतितथालिगंराक्षसाःकेचिदुत्तमाः
अनिकेतनमर्त्यानामशक्तानांशिरोधृतिः १३४
अधमाधममाख्यातंनीवीबंधादिधारणम्
तेषुतूच्छिष्टसंप्राप्तौमस्तकेधारणंभवेत् १३५
अधमाधमवृत्तीनांसदावैलिगधारणम्
पापिनामपिचाश्चर्यंयमलोकेनविद्यते १३६
श्रीरामउवाच-
चित्रगुप्तेनलिखिताललाटेयालिपिर्दृढा
तयातुलिप्यानियतंनरकंकथमन्यथा १३७
करोतिपूजनंशंभोःपापंनाशयतेकथम्

शंभुरुवाच-
पापंनाशयतेकृत्स्नमपिजन्मशतार्जितम् १३८
भर्त्सनात्सर्वपापानांस्मरणाच्चमहेशितुः
भस्मेतिपदमाख्यातंतस्यधारणमुत्तमम् १३९
यथाविधिललाटेवैवह्निवीर्यप्रधारणात्
नाशयेल्लिखितांयामींपटस्थामिवहव्यभुक् १४०
कर्णोपरिकृतंपापंनष्टंस्यान्मुखधारणे
कंठेचधारणात्कंठभोगादिकृतपातकम् १४१
बाह्वोर्बाहुकृतंपापंवक्षसिमनसाकृतम्
नाभ्यांशिश्नकृतंपापंपृष्ठेगुदकृतंतथा १४२
पार्श्वयोर्धारणाद्रामपरस्त्र्यालिगनादिजम्
तद्भस्मधारणंशस्तंसर्वत्रैवत्रिपुंड्रकम् १४३
ब्रह्मविष्णुमहेशानांत्र्यग्नीनांचधारणम्
गुप्त्यैलोकत्रयाणांचधारणंतेनवैकृतम् १४४
धृतंपंचदशस्थानेशुद्धंभस्माभिमंत्रितम्
कोष्ठयुग्मेबाहुयुग्मेकोष्ठोपरियुगेतथा १४५
धारणंसर्वदेहानांपूजायैधर्मसंमतम्
भस्माशनाभस्मशय्याभस्मोद्धूलितविग्रहाः १४६
भस्मस्नानाःसदापापैर्मुच्यंतेनात्रसंशयः
आदौब्राह्मणदीक्षायांत्रियायुषमितिस्मृतम् १४७
प्रसवेचमनुष्याणांभूतावेशेऽपिरक्षकम्
सर्पादिविषहान्यर्थंसर्वेषांसाधनंत्विदम् १४८
अपिवावैष्णवोमर्त्यअथवापीतरोजनः
भस्मस्नायीभस्मयुक्तःकर्मस्वधिकरोतिवै १४९
श्रीरामउवाच-
भस्ममाहात्म्यमादौमेभस्मायुष्यंहिकस्यवै
कथंहिरक्षतेह्येतत्सर्वमेतद्वदस्वमे १५०
शंभुरुवाच-
आयुष्यवर्द्धनेहेतुस्त्रिविधस्यापिदेहिनः
पापघ्नंशीतमुष्णंचस्पर्शाच्छिवपदप्रदम् १५१

अत्रतेकीर्तयिष्यामिचेतिहासंपुरातनम्
आसीद्वासिष्ठवंश्यस्तुधनंजयइतिद्विजः १५२
तस्यभार्याशतंचासीद्रूपलावरायसंयुतम्
तासामेकातुसुषुवेशामाकाकरुणंमुने १५३
भार्याणांसंख्ययारामसुताश्चासंस्तपस्विनः
पित्राविभागस्तेषांचविषमःपरिकल्पितः १५४
भ्रातॄणांचतदाह्येववैरबंधोमहानभूत्
नराणामेकजातीनांवैरंनियतमेवतु १५५
अथासौकरुणोगत्वाभवनाशिनिकातटे
नानामुनिगणैःसार्द्धंनरसिंहदिदृक्षया १५६
नृसिंहदर्शनार्थंतुब्राह्मणेनतुकेनचित्
उत्कृष्टफलजंवीरमानीतंरूपगंधवत् १५७
करुणस्तुतदादायव्यजिघ्रत्फलमुत्तमम्
तत्रस्थिताद्विजगणाःशापेनतमयोजयन् १५८
मक्षिकाभवपापात्मन्वर्षाणांशतमप्यतः
शापावसानंभवितादधीचेनमहात्मना १५९
अथमक्षिकतांप्राप्तोभार्यामिदमभाषत
मक्षिकात्वमहंप्राप्तोमांशुभेपालयस्वभोः १६०
इत्युक्त्वासतथाभूतोबभ्रामचततस्ततः
अथैवंविधमाज्ञायज्ञातयःपापनिश्चयाः १६१
तद्वधेयत्नमास्थायतैलमध्येह्यपातयन्
मृतंपतिमथादायदुःखितासाकृशोदरी १६२
तद्दुःखशमनार्थायप्राहदेवीत्वरुंधती
अमुंसंजीवयाम्यद्यभस्मनैवशुचिस्मिते १६३
अथाग्निहोत्रजंभस्मअरुंधत्यैन्यवेदयत्
मृत्युंजयेनमंत्रेणमृतजंतौतथाक्षिपत् १६४
मंदवायुंतथाचक्रेव्यजनेनशुचिस्मिता
उदतिष्ठत्ततोजंतुर्भस्मनोऽस्यप्रभावतः १६५
ततोवर्षशतेपूर्णेज्ञातिरेकोह्यमारयत्
मृतेभर्तरिसासाध्वीदुःखिताचशुचिस्मिता १६६

दधीचंनामविप्रेंद्रंमहामाहेश्वरंमुनिम्
जगामशरणंसाध्वीप्राहविप्रस्तपोधनः १६७
त्रियायुषाविहीनंतुजमदग्निंतपोनिधिम्
भस्मैवजीवयामासकश्यपंचतथाविधम् १६८
देवानपितथाभूतान्मामप्येतादृशंपुरा
तस्मात्तुभस्मनाजंतुंजीवयामितवानघे १६९
इत्येवमुक्त्वाभगवान्दधीचोमहेश्वरंवैशरणंजगाम
भस्माभिमंत्र्याथकरेगृहीत्वासंजीवयामासधवंसुसाध्व्याः १७०
महेशस्यकरस्पर्शाद्विशापःकरुणोऽभवत्
स्वरूपंचततोगत्वास्वमाश्रमपदंययौ १७१
दधीचमपिसासाध्वीगृहमानीयभोजने
प्रार्थयामासविप्रर्षिंभुक्तवानथसद्विजः १७२
भुक्तवत्यथविप्रेंद्रेकोटिशिष्याःसमागताः
अथदेवाःसमायाताभस्मोद्धूलितविग्रहाः १७३
नमस्कृत्यदधीचंतुपप्रच्छुःशिवकांक्षया
देवाऊचुः -
अस्माकंतुपराज्ञानंनष्टमासीन्महामते १७४
गौतमस्यतुभार्यांवैदृष्ट्वाकामातुरावयम्
तथाचधर्षितादेवीविवाहकृतमंगला १७५
तांवैकामयमानानांनष्टंज्ञानमभूच्चनः
ततःसर्वेवयंभूतागतादुर्वाससंमुनिम् १७६
सउवाचाधुनासर्वमपनेष्यामिवोमलम्
शतरुद्रियमंत्रेणमंत्रितंशंभुनास्वयम् १७७
ममापिदत्तंतेनैवब्रह्महत्यादिशांतये
इत्येवमुक्त्वादुर्वासादत्तवान्भस्मचोत्तमम् १७८
अथतद्वचनात्सर्वेवयंविकृतचेतनाः
शतरुद्रियमंत्रेणभस्मोद्धूलितविग्रहाः १७९
निर्धूतपातकाःसर्वेसंवृत्तास्तत्क्षणेनहि
आश्चर्यमेतज्जानीमोभस्मसामर्थ्यमीदृशम् १८०
दधीचउवाच-

शैवस्यभस्मनःशक्तिंसंक्षेपेणवदामिवः
विस्तरेणनशक्येतवक्तुंवर्षशतैरपि १८१
अत्रवःकीर्तयिष्यामिपुरावृत्तंतुदेवयोः
हरिशंकरयोःसर्वेब्रह्महत्यादिनाशनम् १८२
पुराचैकार्णवेघोरेब्रह्मणःप्रलयेसति
महाविष्णुस्तुभगवाञ्छेतेस्मप्रलयांभसि १८३
तस्यपार्श्वद्वयंप्राप्यब्रह्मांडानांशतद्वयम्
विंशतिःपादयोःपार्श्वेविंशतिर्मस्तकांतरे १८४
नासामौक्तिकभावेनब्रह्मांडमदधात्प्रभुः
तन्नाभिमंडलेकेचिल्लोमशाद्यामुनीश्वराः १८५
तपस्तपंतःसुमहदीश्वरंपर्युपासते
अथविष्णुर्महातेजाश्चिंतामापसिसृक्षया १८६
ध्यानयोगपरोभूत्वानकिंचित्पर्यपश्यत
अथदुःखेनमहतारुरोदोच्चैःपुनःपुनः १८७
एतस्मिन्नंतरेदीप्तिःकाचिल्लोकविलक्षणा
दृष्ट्वाचहरिणाभीत्यालोचनेचनिमीलिते १८८
आगम्यमानोगोक्षीरसमतेजाःसगात्रवान्
संग्रथ्यकोटिब्रह्मांडदामयुग्मंकरद्वये १८९
दधानमुरसाधामकोटिब्रह्मांडकल्पितम्
ब्रह्मांडमेकंनिपतदुत्पतच्चकरद्वये १९०
सर्वाभरणसंयुक्तंतथाभूतंतमव्ययम्
विष्णुस्तुष्टावचादृष्ट्वादर्शनायचतस्यवै १९१
विष्णुरुवाच-
नमस्तेदेवदेवेशनमस्तेशाश्वताव्यय
नजानेऽहभवंतंभोस्त्वंचवेत्सिनमोनमः १९२
जानामिनचतेभावंदुर्निरीक्ष्याचतेद्युतिः
माणिक्यकुंडलंहेमदामजालविभूषितम् १९३
रत्नांगुलीयंसुभगंबाहुकोष्ठविभूषणम्
तनुरक्तोत्तमाकीर्णदीप्तायतविलोचनम् १९४
बाणलोचनसंकाशंभाललोचनमव्ययम्

कंदर्पकार्मुकभ्रांतिजनकभ्रुवमीश्वरम् १९५
स्निग्धाधोन्नतचार्वंगनासमच्छकपोलकम्
मंदस्मितंप्रसन्नास्यंविभुंबालेंदुदर्शनम् १९६
विज्ञानरक्तवसनंवेदकल्पितभूषणम्
शरणंत्वांप्रपन्नोऽस्मिचक्षुर्मेदीयतांविभो १९७
दीनांधकृपणाज्ञाननष्टस्यशरणंभव
अथदिव्यंददौचक्षुःस्वात्मदर्शनशक्तिमत् १९८
अथदृष्ट्वाहरिःशंभुंत्रिनेत्रंपुरतःस्थितम्
कोभवानित्युवाचाथनजानेत्वांमहायशः १९९
प्रणामंकेवलंकर्तुंशक्तोऽस्मिनहिवेदितुम्
सदाशिवउवाच-
तवज्ञानंप्रदास्यामिकुरुस्नानंचवारुणम् २००
भस्मस्नानंततःपश्चात्ततोज्ञानंवदाम्यहम्
श्रीभगवानुवाच-
मत्स्नानयोग्यंसलिलंनचतिष्ठतिकुत्रचित् २०१
इत्युक्तोथनिषण्णस्तुब्रह्मांडासक्तविग्रहः
ऊरुदघ्नजलेस्नातुंनयोग्यमभवद्धरेः २०२
शंभुर्जहासस्नानायजलमत्यधिकंत्वहो
दधीचउवाच-
अथदेवःशिवोविष्णुंभालाक्षेणव्यलोकयत् २०३
विलीनसूक्ष्मावयवंवामाक्षेणव्यलोकयत्
ततःसूक्ष्मतनुर्विष्णुःशीतदेहश्चशंभुना २०४
उक्तश्चस्नाहिभोविष्णोह्रदएषविकल्पितः
ततोह्रदेहरिःस्नातुंहरांकेकल्पितेतदा २०५
प्रवेष्टुंनशशाकाथगंभीरेतद्ध्रदस्यतु
हरिराहचनोपंथाह्रदस्यास्यप्रवेशने २०६
मार्गोमेदीयतांदेवतमथोशंभुरब्रवीत्
कोटियोजनगंभीरंजलमेतन्महत्पुरा २०७
निविष्टस्यैवभवतऊरुदघ्नंजलंविभो
इदानींतिष्ठतश्चापिनप्रवेशोह्रदेकथम् २०८

अष्टांगुलप्रमाणोऽयमूरुस्तस्मिन्ह्रदेचमे
पश्यामिप्रविशत्वंचपादस्पर्शंददामिते २०९
वाक्यमेकंतुसोपानंवेदंमद्वाक्यनिस्सृतम्
हरिरुवाच-
शब्दारोहणसामर्थ्यंकस्यापीहनविद्यते २१०
मूर्तस्यग्रहणंशक्यंग्रहणंवाकथंश्रुतेः
शंभुरुवाच-
पुंसःशक्तिर्नवस्तूनांधारणारोहणादिषु २११
गृहाणेमंमहावेदंजग्राहहरिरप्यथ
नम्रकरश्चाशक्तेर्हिपतन्निवजनार्द्दनः २१२
नचशक्यंमयाधर्तुमितिप्राहशिवंहरिः
शिवःप्रहस्यनिपतीपात्यतीवमहाह्रदे २१३
तत्सोपानमथारुह्यस्नातुमर्हसिकेशव
दधीचउवाच-
वेदेसोपानभूतेहिऊरुदघ्नोपलब्धिनि २१४
तत्रस्नात्वासविधिनाबहिरुत्तीर्यचोक्तवान्
स्नातोऽस्मिकिमतःकार्यंशंभुराहहरिंततः २१५
ध्यायसेहृदयेकिंत्वंनचकिंचिद्वदस्वमे
हरिर्नकिंचिदित्याहतमथोशंभुरुक्तवान् २१६
भस्मस्नानेनसंशुद्धोवेत्स्यसेपरमंशुभम्
दीक्षितस्यहितच्छस्तंतद्रक्षांकरवाणयहम् २१७
दधीचउवाच-
स्ववक्षःस्थितभस्मैकंनखेनादायशंकरः
प्रणवेनाभिमंत्र्याथगायत्र्याब्रह्मभूतया २१८
अंगुलिभ्यामुपादायशिवःपंचाक्षरेणवै
हरिमस्तकगात्रेषुसर्वेष्वपिसमाक्षिपत् २१९
शांतदृष्ट्यानिरीक्ष्याथजीवेत्याहहरिंहरः
ध्यायस्वकिंतेहृदयेसचध्यानपरोऽभवत् २२०
अपश्यद्धृदयेदीपंदीर्घाकारमतिप्रभम्
हरिराहशिवंसाक्षाद्दीपोदृष्टोमयेतिच २२१

शिवःप्राहनतेज्ञानंपरिपक्वमथोहरे
भस्मभक्षयतेज्ञानंसमग्रंसंभविष्यति २२२
हरिरुवाच-
भक्षयिष्येशुभंभस्मस्नातोऽहभस्मनापुरा
दृष्ट्वेश्वरंभक्तिगम्यंभस्माभक्षयदच्युतः २२३
तत्राश्चर्यमतीवासीत्पक्वबिंबसमद्युतिः
वासुदेवःशुद्धमुक्ताफलवर्णोऽभवत्क्षणात् २२४
ततःप्रभृतिशुक्लोऽसौवासुदेवःप्रसन्नवान्
पुनर्ध्यानपरोभूत्वादीपमध्येचपूरुषम् २२५
शुद्धस्फटिकसंकाशंत्रिनेत्रंद्विभुजंशिवम्
वरदंदक्षिणेहस्तेवामेचाभयदंविभुम् २२६
पंचवर्षीयवपुषंशरच्चंद्रायुतद्युतिम्
माणिक्यकुंडलंहेमदामजालविभूषितम् २२७
रत्नांगुलीयसुभगंबाहुकोष्ठसुभूषणम्
तनुरक्तोष्ठमाकर्णदीर्घायतविलोचनम् २२८
बाणलोचनसंकाशंभाललोचनमव्ययम्
कंदर्पकार्मुकभ्रांतिजनकभ्रुवमीश्वरम् २२९
स्निग्धोन्नतसुचार्वंगनासमच्छकपोलकम्
मंदस्मितंप्रसन्नास्यंबालेंदुदर्शनंविभुम् २३०
विज्ञानरक्तवसनंवेदकल्पितनूपुरम्
वामांगुलीयमध्यस्थमतिप्रणवमव्ययम् २३१
दृष्टवानथतंविष्णुःकृतकृत्योऽभवत्तदा
अथाहशंभुर्भोविष्णोहृदिदृष्टंत्वयाकिमु २३२
हरिराहपुरादृष्टःपुरुषःशांतविग्रहः
इत्युदीर्यमहाविष्णुःशिवपादेपपातह २३३
हरिरुवाच-
नशक्तिंभस्मनोजानेप्रभावंवाकुतस्तव
नमस्तेऽस्तुनमस्तेऽस्तुत्वामेवशरणंगतः २३४
सदाशिवउवाच-
वरंवृणुमहाभागमनसायंत्वमिच्छसि

शिववाचमथाकर्ण्यहरिर्वव्रेवरोत्तमम् २३५
हरिरुवाच-
त्वत्पादयुगलेशंभोभक्तिरस्तुसदामम
अथदत्वावरंशंभुरिदमाहवचोहरिम् २३६
भस्मधारणसंपन्नोममभक्तोभविष्यसि
दधीचउवाच-
इत्थमुक्तंमहाज्ञानंभस्मसंभवमादितः २३७
तस्माद्यूयंसुराःसर्वेधारयध्वंतदादरात्
विस्मयोत्फुल्लनयनादेवाश्चासंस्तदस्त्विति २३८
यइदंशृणुयान्नित्यंपुण्याख्यानमनुत्तमम्
विमुक्तःसर्वपापेभ्योयात्यसौशांकरंपदम् २३९

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादेभस्ममाहात्म्ये
पंचोत्तरशततमोऽध्यायः १०५

षडुत्तरशततमोऽध्यायः

शुचिस्मितोवाच-
आयुष्यवर्द्धनंभस्माशनंदृष्टंमहामुने
परलोकगतिंदातुंशक्तमेतंवदस्वमे १
दधीचउवाच-
अत्रतेकथयिष्यामिइतिहासंपुरातनम्
चित्रगुप्तयमाभ्यांचयद्विख्यातंबभूवह २
मिथिलायांपुराकश्चिच्छुनःपर्यटतेक्षुधा
पुराजन्मशतात्पूर्वंब्राह्मणःपापनिश्चयः ३
पूर्वेवयसिवेदाढ्यःशास्त्राढ्यश्चसुबुद्धिमान्
सस्नातुंजाह्नवींगत्वास्नानंकृत्वापितृनपि ४
देवानृषीन्समभ्यर्च्ययौप्रात्तलिकापुरम्
प्रतिश्रयमथोचक्रेब्राह्मणस्यनिवेशने ५
तत्रैकाक्षत्रियसुतायौवनस्थाहतप्रिया
भ्रष्टराज्याचषट्कोटिनिष्कद्रव्येणसंयुता ६
भुक्त्वाथशयितंविप्रंसर्वावयवसुंदरम्

रात्रौचंद्रोदयेशुद्धेज्योत्स्नाहसितदिङ्मुखे ७
ब्राह्मणाभ्याशमागत्यतमुदीक्ष्येदमब्रवीत्
कुतस्त्वमागतोविप्रकंवादेशंगमिष्यसि ८
ब्राह्मणउवाच-
अकालचर्यासर्वेषांशंकामुत्पादयेद्ध्रुवम्
वयःस्थयोर्मिथोवादोरहस्येहास्यमंदिरे ९
क्षत्रियोवाच-
कथाप्रसंगेयात्रायांतीर्थेदेशादिविप्लवे
दुर्भिक्षेग्रामदहनेरहोवादोनदूषितः १०
प्रतिश्रयस्तुमद्गेहेभवतैवपुराकृतः
मद्गेहवासिनीचाहंनशंकात्विहकस्यचित् ११
ब्राह्मणउवाच-
तूष्णींभावोमयाकार्योगच्छत्वंशीघ्रमग्रतः
इत्युक्ताब्राह्मणेनासौमनसेदमचिंतयत् १२
अनेनसंगमोमह्यंयथाभूयात्तथाविधि
रोदनंतुकरिष्यामितथायास्यतिसांत्वितुम् १३
मांचसांत्वयितुंप्राप्तोमांसमुत्थापयिष्यति
अहमुत्तिष्ठमानैवदोर्लताकंठसंगिनी १४
कुचयुग्मेनतद्गात्रंस्पर्शयंतीविमूर्च्छिता
गतभानांहिमांदृष्ट्वानिषण्णःस्वयमेवसः १५
उत्संगेमामकंदेहंनिधास्यतिद्विजाग्रणीः
अचेतनेववसनमपास्यरुदतीवच १६
सुस्निग्धंरोमरहितंपक्वाश्वत्थदलाकृति
दर्शयिष्यामितत्स्थानंकामगेहंसुगंधिच १७
मयैवविलुठंत्यांगेतस्यवस्त्रमपास्यते
विलुप्यमानसंतस्यकरिष्येस्ववशंद्विजम् १८
अदृष्टौयादृशंचित्तंदृष्टौनैतादृशंभवेत्
दर्शनेयादृशंचित्तंसंलापेनैवतादृशम् १९
संलापेयादृशंचित्तंहास्योक्तौनैवतादृशम्
हास्योक्तौयादृशंचित्तंस्पर्शनेनैवतादृशम् २०

स्पर्शनेयादृशंचित्तंयोनिदृष्टौनतादृशम्
तद्दृष्टौयादृशंचित्तंयोनिस्पर्शेनतादृशम् २१
बाहुमूलकुचद्वंद्वस्वयोनिस्पर्शदर्शनात्
कस्यनस्खलतेचेतोरेतःस्कन्नंचनोभवेत् २२
दधीचउवाच-
इतिसंचिंत्यमनसाक्षत्रियागृहमभ्यगात्
स्वगृहद्वारमासाद्यमंदंमंदंरुरोदवै २३
चिरंकालंचरुदितंब्राह्मणःकरुणानिधिः २४
स्त्रीबालवृद्धातुरराजयोगिनांविषाग्नितोयाद्रिनिपातनादिना
दुःखस्यचैवोद्धरणंप्रशस्यतेकूपस्यदानेनसमंवदंति २५
इत्थंविचार्यविप्रोऽसौशुचिर्भूतःप्रसन्नधीः
तस्याःसमीपमगमत्तामुवाचततोद्विजः २६
अलंशोकेनमहताइहामुत्रविरोधिना
शरीरशोषणंह्येतच्चित्तविध्वंसनंतथा २७
त्यजशोकमिमंबालेनचार्थःशोचितेनवै
शोकस्यकारणंकिंवायेनेत्थंरुद्यतेत्वया २८
दधीचउवाच-
एवमुक्ताद्विजेनाथनसाकिंचिदुवाचह
मूर्च्छितेवापतद्भूमौतमदृष्ट्वेववीक्षते २९
तामथोत्थापयामासब्राह्मणःपरमार्थवित्
उत्थितोत्थापितातेननिपपातपुनःपुनः ३०
पतितांपतितांविप्रोनिषद्योत्थाप्यतांपुनः
अंकमारोपयामासप्रममार्जविलोचने ३१
अथसामूर्च्छितेवाशुवसनंपरिमुच्यतम्
दर्शयंतीस्तनौगुह्यंबाहुमूलेविलोचने ३२
आलंब्यकंठेबाहुभ्यांस्तनाभ्यामस्पृशद्द्विजम्
चंद्रातपश्चविशदोमंदमारुतसंभवः ३३
अथचिंतापरोविप्रोनैवकार्यमिदंमम
पितुर्वामातुरुचितंपत्युर्वाथगुरोस्तथा ३४
असंबुद्धस्यमेसर्वंविपरीतंविभातिवै

अथकामःसमायातोरहस्येस्थितयोस्तयोः ३५
विव्याधनिशितैर्बाणैर्द्विजंकामोदुरात्मवान्
स्मरबाणातुरोविप्रश्चिंतयामासकामुकः ३६
इयंसुचारुसर्वांगीकामिनीवप्रदृश्यते
नोचेद्योनिमुखेह्यस्याःकथंरोमांचसंभवः ३७
तदेतस्याःकुचस्पर्शात्सर्वंव्यक्तंभविष्यति
इतिसंचिंत्यमनसाकुचौयोनिंद्विजोऽस्पृशत् ३८
सापिमूर्च्छितरूपेवमंदस्मितमुखाभवत्
आलिलिगद्विजंगाढमाननंचचुचुंबह ३९
तयोरथसमायोगोवर्षाणांशतमप्यभूत्
गतेवर्षशतेपश्चादेकस्मिन्दिवसेद्विजः ४०
स्नातुंययौनदींप्रातःसापिविप्रप्रसंगतः
स्नानंतत्रतथाचक्रेपुराणंश्रुतवानथ ४१
कौर्मंसमस्तपापानांनाशनंशिवभक्तिदम्
इदंचपद्मंशुश्रावपुराणज्ञेनभाषितम् ४२
ब्रह्महामद्यपःस्तेनस्तथैवगुरुतल्पगः
कौर्मंपुराणंश्रुत्वैवमुच्यतेपातकात्ततः ४३
श्रुत्वैतद्वचनंविप्रःपौराणिकमभाषत
मयाकृतानांपापानांनचसंख्यास्तिकाचन ४४
अशेषपापसंदोहनाशनंतदिहोच्यताम्
पौराणिकउवाच-
आराधयस्वदेवेशंशंकरंत्रिदशेश्वरम् ४५
तस्यसंपूजनाद्विप्रसर्वंपापंविनश्यति
पापमेवतमःप्रोक्तंज्ञानदीपेननश्यति ४६
अथवापूजयाविप्रसमस्ताघविनाशनम्
ज्ञानपूजाविहीनानांनरकेपतनंध्रुवम् ४७
दधीचउवाच-
अथद्विजोह्यभिगतःशिवालयमनुत्तमम्
द्रोणपुष्पसहस्त्रेणपूजयामासशंकरम् ४८
गृहंजगामचततोभोजनंकृतवानथ

विहायद्यत्रियांविप्रोजगामेष्टांभुवंततः ४९
हविष्यमन्नमादायभुक्त्यशक्तेःशिवालयम्
गत्वादीपस्थिताज्येनभोजनंकृतवान्बहिः ५०
अथमृत्युवशंप्राप्तोयमलोकंजगामवै
यमउवाच-
त्वयाकृतानांपापानांकेषांचिन्नाशनंपुरा ५१
त्वयैकदिवसेपूजाशंकरस्ययतःकृता
तवपापसहस्रंचप्रणष्टंभवतोद्विज ५२
स्थितानामपिपापानांफलंनरकपातनम्
वर्षकोटिद्वयंविप्रश्वानजन्मशतंपुनः ५३
शिवदीपाज्यहरणात्फलंनरकसेवनम्
नरकेचस्थितिस्तस्यशतवर्षंसुभीषणम् ५४
कुंभीपाकेचकाष्ठत्वंभस्मभूत्वापुनःपुनः
वर्षाणांदशकंत्वेवंकृमिभुक्तिःपरंदश ५५
पुनश्चदीपवर्तित्वंवर्षाणांचतथादश
श्लेष्मामेध्यपुरीषेषुमूत्ररेतोह्रदेषुच ५६
उन्मज्ज्यचनिमज्ज्याथश्लेष्मविरामलभोजनम्
ततोनरकशेषेणश्वानजन्मशतंपरम् ५७
यमवाक्यमितिश्रुत्वाब्राह्मणोनिपपातच
अथतस्यप्रियाभार्यापतिचिंतापराभवत् ५८
एतस्मिन्नंतरेतस्याःसमीपंनारदोऽभ्यगात्
नारदस्यपपातासौपादयोरतिदुःखिता ५९
तामुत्थाप्यमुनिःशुद्धांगतायुषमभाषत
अयिमुग्धेविशालाद्विभर्तारंगंतुमर्हसि ६०
भर्तातेहिविशालाद्विमृतोबंधुविवर्जितः
नरोदितव्यंतेभद्रेज्वलनंप्रविशस्वभोः ६१
ब्राह्मण्युवाच-
अशक्यंयदिवाशक्यंमयागंतुंमुनेवद
अग्निप्रवेशकालोवैव्यतीतोनभवेद्यथा ६२
नारदउवाच-

योजनानांशतंत्वेकमितःस्थानात्पुरंहितत्
श्वोदाहःकिलविप्रस्यभवितागंतुमर्हसि ६३
अव्ययोवाच-
दूरस्थितंकायनाथंगंतुमर्हामिहेमुने
तद्वचस्तुसमाकर्ण्यनारदस्तामभाषत ६४
विपंचीनालसंस्थात्वंभवगच्छाम्यहंक्षणात्
इत्युदीर्यतदागत्वात्वरांचक्रेगतंचतत् ६५
देशंनष्टद्विजस्थानंतामुवाचाव्ययांमुनिः
रोदनंनेहकर्तव्यंयदितत्राग्निमेष्यसि ६६
पापंयदिकृतंभद्रेपरपूरुषसेवनम्
एतद्विशुद्धयेपुत्रिप्रायश्चित्तंसमाचर ६७
तवोपपातकव्रातनाशोवह्निप्रवेशनात्
नान्यत्पश्यामिनारीणांसर्वपापोपशांतये ६८
अग्निप्रवेशंमुक्त्वैकंप्रायश्चित्तंजगत्त्रये
दधीचउवाच-
अथनारदवाक्येननोदितासावचोऽब्रवीत् ६९
अग्निप्रवेशेनारीणांकिंकर्तव्यंमहामुने
नारदउवाच-
स्नानंमंगलसंस्कारोभूषणांजनधारणम् ७०
गंधपुष्पंतथाधूपंहरिद्राक्षतधारणम्
मंगलंचतथासूत्रंपादालक्तकमेवच ७१
शक्त्यादानंप्रियोक्तिश्चप्रसन्नास्यत्वमेवच
नानामंगलवाद्यानांश्रवणंगीतकस्यच ७२
व्यभिचारकृतेपापेतत्पापस्यप्रशांतये
अतीतंपातकंस्पृष्ट्वाप्रायश्चित्तंतदीरितम् ७३
कुर्यादथस्वकांभूषांविप्रायप्रतिपादयेत्
भूषाभावेस्वकीयेनप्रायश्चित्तंतुकारयेत् ७४
नान्यथातस्यपापस्यनाशनंवेतिकुत्रचित्
अव्ययोवाच-
सर्वमेतत्करिष्यामिहरिद्रामेनविद्यते ७५

भूषणंकिमुतब्रह्मन्सर्वमेतत्प्रदीयताम्
नारदउवाच-
नह्यस्तिकिंचित्सौभाग्यद्रव्यमन्यत्त्वपेक्षया ७६
दधीचउवाच-
अथक्षणेनाभ्यगमत्कैलासंशिवमंदिरम्
गिरिजामथदृष्ट्वासौप्रणिपत्येदमब्रवीत् ७७
हरिद्रादीयतांमातर्भूषणानिचसूत्रकम्
पार्वत्युवाच-
विधवायैमयाकिंचिद्भूषणंदीयतांकथम् ७८
मयादत्तेहितस्मिन्वैवैधव्यंनोपपद्यते
नारदउवाच-
मातर्नविधवायावद्धवांगंवर्ततेस्त्रियः ७९
आदाहात्सूतकंनास्तितिष्ठेत्सौभाग्यमुत्तमम्
पार्वत्युवाच-
नचान्यदेहोमद्भूषांहरिद्रांधर्तुमर्हति ८०
भूषणादौमयादत्तेचिरंजीवितमिष्यते
दीयतेहिजयंत्यैवसर्वमेतत्त्वयोदितम् ८१
जयंतींसजगामाथतयादत्तमथाहरत्
स्नपंत्याअव्ययायास्तुहरिद्रांदत्तवान्मुनिः ८२
ततःससूक्ष्मवसनभूषणानिमुनिर्ददौ
आहचैनांतवांतेष्टिंकःकरोतिनियुंक्ष्वतम् ८३
अव्ययोवाच-
त्वयैवमेसमस्तानांक्रियाणांकारणंमुने
पितासिसर्वंकुर्वद्यनमस्तेमुनिसत्तम ८४
दधीचउवाच-
अथतंब्राह्मणंदग्ध्वानारदस्तामुवाचह
अव्ययेगच्छदहनंप्रविशत्वंयदीच्छसि ८५
अथसाभूषितासाध्वीत्रिःप्रदक्षिणपूर्वकम्
नारदंतुनमस्कृत्यगौरांगीमर्पयन्मनः ८६
सुसूक्ष्मंमंगलंसूत्रंहरिद्रामक्षतांस्तथा

कुसुमानिचवासांसिकस्तूरीचंदनंतथा ८७
सौवर्णकंकतिकांचफलानिविविधानिच
स्वदक्षिणादिवस्त्रांतंस्पर्शयित्वापृथक्पृथक् ८८
पार्वतीप्रीतिकामासापुरंध्रीभ्योऽखिलंददौ
ज्वालामालाभिराकाशंदहंतमिवचानलम् ८९
त्रिःप्रदक्षिणमागत्यस्थित्वाग्नेःपुरतःसती
इदंप्राहतदावाक्यंप्रांजलि प्रहसन्मुखी ९०
अव्ययोवाच-
इंद्रादयोदिशांपालामातर्मेदिनिभास्कर
धर्मादयःसुराःसर्वेशृणुध्वंममभाषितम् ९१
पाणिपीडनमारभ्यचैतदंतमहर्निशम्
वाङ्मनःकर्मभिर्भर्तासेवितोयदिभक्तितः ९२
व्यभिचारोयथानस्यादवस्थात्रितयेमम
तेनसत्येनमेपत्यासार्द्धंयानंप्रयच्छत ९३
इत्युक्त्वाथस्वहस्ताग्रपुष्पकंद्रुतमाक्षिपत्
प्रविष्टाज्वलनंदीप्तमथापश्यद्विमानकम् ९४
सूर्येणसममुत्कृष्टमप्सरोगीतशोभितम्
आरुरोहविमानंसाभर्त्रासाकंदिवंययौ ९५
यमःप्राहाथसंपूज्यवनितांतांपतिव्रताम्
अक्षयःस्वर्गएवेहनचपापंतवास्तिवै ९६
कोटिद्वयसमास्तत्रनरकेहंतपातकम्
मृष्टमेवनसंदेहःकिंतुपातकमेवच ९७
एकंशिवस्यदीपाज्यभक्षणेनसमर्जितम्
नवापिनरकेपातःश्वानजन्मशतंभवेत् ९८
अव्ययोवाच-
अग्निप्रवेशशुद्धानांपुनश्चनरकःकथम्
अग्निप्रवेशात्सर्वेषांपापानांनाशनंभवेत् ९९
यमउवाच-
शिवद्रव्यापहारस्यपातकंनैवनश्यति
इत्थमाहपुराशंभुरन्येषांनाशनंभवेत् १००

अथसश्वानतामाप्यशताब्दंस्यात्ततःपरम्
दधीचमंदिरंप्राप्तोमृत्योरास्यगतोहिसः १०१
तस्यभित्तिसमीपेतुभस्मास्तेह्यभिमंत्रितम्
भस्मनिश्वापपाताथममारचगतोयमम् १०२
यमःसंपूज्यावनतोभवान्पुगयतमोमुनिः
मद्गेहेभवतःस्थानंनयोग्यंगम्यतांबहिः १०३
अथगत्वाबहिस्तस्थौसारमेयोयमोदितः
संतापावस्थितंतंचनारदोदृष्टवानमुम् १०४
पप्रच्छचकिमर्थंत्वमिहतिष्ठसिदीप्तिमान्
शिवभस्मस्थितमृतंशैवंजानेमहामते १०५
शैवानांपापिनांचापिसाहसेनतनुत्यजाम्
यमलोकोनचास्तीतिशिवाज्ञाशिवनोदिता १०६
दधीचउवाच-
इत्थमाभाष्यतंश्वानंकैलासमगमन्मुनिः
दंडवत्प्रणिपत्येशंव्यज्ञापयदथोहरम् १०७
देवकश्चिद्यमपुराद्बहिरास्तेसकुक्कुरः
भस्मन्येवमृतस्तद्वद्धवलोकंसचार्हति १०८
अथमुख्यगणाविष्टोवीरभद्रःशिवेरितः
आनयामासतंश्वानंदिव्यरूपधरंतदा १०९
महेशपादप्रणतंदेवायाथव्यजिज्ञपत्
आहमाहेश्वरोदेवंगणमेनंकुरुष्वमे ११०
तथेतिचशिवःप्राहगणःश्वानमुखोऽभवत्
दधीचउवाच-
अतुल्यंभस्ममाहात्म्यंमयोक्तंतेशुचिस्मिते १११
इतःपरंहिकिंभूयःश्रोतुमिच्छसिसुव्रते ११२

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादेविभूतिमाहात्म्ये
षडुत्तरशततमोऽध्यायः १०६

सप्तोत्तरशततमोऽध्यायः

शुचिस्मितोवाच-

कश्यपंजमदग्निंचदेवानांचपुराकथम्
ररक्षभस्मतद्ब्रह्मन्समाचक्ष्वमुनेमम १
दधीचउवाच-
कश्यपादियुतादेवाःपूर्वमभ्यागमन्गिरिम्
शोकरंनामविख्यातंगिरिमध्येसुशोभनम् २
नानाविहंगसंकीर्णंनानामुनिगणाश्रयम्
वासुदेवाश्रयंरम्यमप्सरोगणसेवितम् ३
विचित्रवृक्षसंवीतंसर्वर्तुकुसुमोज्ज्वलम्
तथाविधंप्रविश्यैतेगिरिंवयमथापरे ४
स्तुवंतःकेशवंतत्रगताःस्मगिरिशेश्वरम्
दृष्ट्वातत्रमहाज्वालांप्रविष्टाश्चवयंचताम् ५
मामेकंतुतिरस्कृत्यह्यदहद्देवतामुनीन्
मांददाहततःपश्चाद्भस्मीभूतावयंशुभे ६
अस्मानेतादृशान्दृष्ट्वावीरभद्रः प्रतापवान्
केनापिकारणेनासौगतवान्पर्वतंचतम् ७
भस्मोद्धूलितसर्वांगोमस्तकस्थशिवःशुचिः
एकाकीनिःस्पृहःशान्तोहाहाशब्दमथाशृणोत् ८
अथचिंतापरश्चासीन्म्रियमाणशवध्वनिः
शवानामिवगंधश्चदृश्यतेतन्निरीक्षणे ९
इतिनिश्चित्यमनसाजगामाग्निमतिप्रभम्
सवह्निर्वीरभद्रंचदग्धुमारब्धवानथ १०
तृणाग्निरिवशांतोऽभूदासाद्यसलिलंयथा
ततोऽपरांमहाज्वालांवीरभद्रस्तुदृष्टवान् ११
खंगच्छंतींमहाकालोज्वालांनिपतितामपि
मनसाचिंतयच्चापिवीरभद्रःप्रतापवान् १२
सर्वेषांनाशिनीज्वालाप्राणिनांशतकोटिशः
तत्सर्वंरक्षणार्थंहिपिपासुश्चाप्यहंत्विमाम् १३
प्राश्नामिमहतींज्वालांसलिलंतृषितोयथा
एतस्मिन्नंतरेवीरंवागाहचाशरीरिणी १४
भारत्युवाच-

वीरमासाहसंकार्षीःक्वतृषाक्वाशुशुत्त्रणिः
तृषितानांजलेनार्थोविपरीतोवनाग्निना १५
निकामंयोजनशिराःप्रणष्टोरात्तसेश्वरः
शतयोजनवक्त्रश्चशतबाहुस्तथापरः १६
अगस्त्यश्चमहाभागोनिःशेषंपीतसागरः
एतानन्यानसंख्याताञ्ज्वालेयंतानमारयत् १७
वीरभद्रउवाच-
भीषिकेयंमहाज्वालात्वदुक्तानहिजायते
सरस्वतिभवत्यांचममरोषश्चजायते १८
सर्वदेवार्चितपदंवीरभद्रमवेहिमाम्
भारत्युवाच-
मयोक्तंहितभावेननद्वेषान्नान्यतोमुने १९
कोपमुत्सृजवीरत्वमात्मनोहितमाचर
इत्युक्त्वांतर्दधेदेवीभारतीवीरभीतितः २०
अथवीरोमहाज्वालामपासील्लीलयैवतु
त्तणेनमहतीज्वालाशतयोजनविस्तृता २१
एकेनवीरभद्रेणपीतापरमदुःसहा
अथचेंद्रमुखानांचमुनीनांभस्मराशयः २२
दृष्टावैवीरभद्रेणआहूताश्चमहात्मना
नचाब्रुवन्प्रतिवचोमृतामुनिदिवौकसः २३
वीरभद्रस्तुविज्ञायनाशंमुनिदिवौकसाम्
दध्यावमून्कथंसर्वाञ्जीवयाम्यद्यकोविदः २४
ध्यानेनदृष्टवांश्चापिजीवितंभस्मदेहिनाम्
अथाचम्यमृतानांतुभस्मान्यथचभस्मना २५
मृत्युंजयेनमंत्रेणमंत्रितेनह्यमंत्रयत्
अथोत्थितामुनिवराःस्वंस्वंरूपमुपाश्रिताः २६
अथतेगतवंतश्चगिरिपार्श्वंमहाप्रभम्
तत्रापिभत्तिताःसर्वेसर्पेणातिशरीरिणा २७
अथवीरोमहासर्पसमीपमगमत्प्रभुः
वीरमागतमालोक्यभुजगोयोद्धुमारभत् २८

युयुधेवर्षमेकंतुनानारूपधरःफणी
अथवीरःप्रगृह्यौष्ठयुगंकरयुगेनच २९
द्विधाचक्रेसमस्तांगंदेवांस्तत्रगतायुषः
दृष्ट्वाथभस्मनैवैताञ्जीवयामासशंकरः ३०
अथदेवाःसमुनयोवीरभद्रंप्रणम्यतु
गतवंतोयथामार्गंददृशूरक्षआगतम् ३१
पंचमेढ्रंमहाकायंदोर्भिश्चदशभिर्युतम्
पंचपादसमोपेतंशिरोभिर्युतमष्टभिः ३२
कांक्षमाणंमहाहारंयुध्यमानोहिवालिना
महावराहवपुषोवासुदेवस्ययद्बलम् ३३
तादृशंद्विगुणीभूतंकपौवालिनिनिश्चितम्
तादृशंवानरश्रेष्ठंससुग्रीवंसराक्षसः ३४
मुष्टियुद्धेपंचपादैःसहसाहत्यवालिनम्
सुग्रीवंचकराभ्यांसहंतुमेवप्रचक्रमे ३५
आस्येनिक्षिप्यसुग्रीवमग्रसत्कवलंयथा
वालिसुग्रीवग्रसनंदृष्ट्वाचिंतामवापह ३६
कथमेनंहनिष्यामिरक्षयिष्येकथंकपिम्
एवंहिचिंतयानंतंवानरंराक्षसेश्वरः ३७
अग्रसीदेकयत्नेनतथाभूतंचराक्षसम्
दृष्ट्वादेवर्षयःसर्वेपलायनपरास्तथा ३८
पलायमानांस्तान्दृष्ट्वापंचमेढ्रःसराक्षसः
हस्तैःसमस्तैस्तान्सर्वानादायाभक्षयत्तदा ३९
वीरभद्रस्ततोदृष्ट्वावानरर्षिसुरादनम्
पंचाशद्योजनशिलांकरेणादायतंरुषा ४०
निजघानशिरोमध्येमध्यमंपतितंशिरः
ततआदायशैलस्यशृंगंतच्छतयोजनम् ४१
स्थापयित्वादृढतरंराक्षसेंद्रंतथाहरत्
राक्षसोऽथबभाषेतंवीरभद्रंत्रिलोचनम् ४२
ममबाहुबलंपश्यवीक्षितंत्वद्बलंमया
असिद्वयंतैलधौतंपंचाशद्योजनोन्नतम् ४३

एकयोजनविस्तारंसुदृढंलक्षणान्वितम्
एकंगृहाणाभिमतंविशिष्टंतन्ममप्रियम् ४४
वीरभद्रस्तथेत्युक्त्वागृहीत्वासिंमहाबलः
करेणाचालयत्तीक्ष्णंक्ष्वेलघ्नंचक्रेततःक्रुधा ४५
गृहीतासिस्तथाक्ष्वेलघ्नंचक्रेराक्षसपुंगवः
वीरभद्रंसमभ्येत्यकंठंप्रतिसमर्पयत् ४६
तद्गात्रंभिन्नमभवच्छोणितंनिर्गतंबहु
राक्षसस्त्वेकहस्तेनपपौतच्छोणितंततः ४७
वीरभद्रःकंठदेशेराक्षसंप्राहरद्रुषा
शिरोद्वयंतथाच्छिन्नंपतमानंततोऽग्रहीत् ४८
न्यभक्षयदमेयात्मासिंहनादंचकारह
तेननादेनमहताक्षुब्धमासीज्जगत्त्रयम् ४९
अन्योन्यमसिघातेनभिन्नगात्रौविकस्वरौ
किंशुकाविवदृश्येतेपुष्पितौरुधिरोक्षितौ ५०
वर्षमेकंतुसंयुध्यसासीदेवासुरौतदा
अतःपरंवर्षमेकंगदायुद्धमभूत्तयोः ५१
असिपुत्रिकयापश्चाद्वर्षमेकमभूद्रणः
पुनर्गृहीत्वासियुगंयुयुधातेपरस्परम् ५२
शंभ्रुवाणोमहाखड्गंदंष्ट्राकारोगणेश्वरः
सरोषरक्तनयनश्चालयित्वासिमग्रतः ५३
तस्यकंठवनंसर्वंचिच्छेदकदलघ्नंयथा
शिरांसिसर्वाण्यादायबभक्षभगनेत्रहा ५४
तस्यगात्रंकररुहैर्विदार्याहृत्यदेवताः
कपींद्रौचतथाचान्याश्रद्राक्षीत्परमेश्वरीम् ५५
एतद्युद्धंमहाघोरंनारदोवीक्ष्यचाभ्यगात्
ब्रह्मणेवासुदेवायशंकरायव्यजिज्ञपत् ५६
मुनयोरक्षितादेवावालिसुग्रीववानरौ
एतौसंजीवयामासब्रह्मविष्णुशिवात्मकः ५७
रक्षसेशंभुनादत्तोवरःपरमदारुणः
हिरण्यकशिपोराज्येबलवानेकराक्षसः ५८

देवैःसार्द्धंतुयुयुधेवर्षाणांशतमद्भुतम्
पलायिताश्चबहुधामृताश्चशतशोसुराः ५९
शुक्रेणरक्षितःसोऽथगुरुणाचिंतयत्त्विदम्
मृतोऽस्मिशतशःशुक्रजीवितोऽस्मित्वयैवहि ६०
अमृत्यवेत्वमेतस्मादुदरस्थमृतायच
अन्यथामरणंमह्यंभविष्यतिनसंशयः ६१
गुरोयमेनसाकंमेयुद्धमासीत्सुदारुणम्
मयासौग्रसितोयुद्धेयमराजःप्रतापवान् ६२
ममोदरंप्रविश्यासौबिभेदचननादच
अहंमृतस्तदाचासंत्वयासंजीवितःपुनः ६३
तस्मादुदरसंस्थानांमरणायतपेतपः
शुक्रउवाच-
एवमेतन्नसंदेहोयथावत्त्वंसमाचर ६४
स्यमंतपंचकंतीर्थंतत्रत्वंतप्तुमर्हसि
राक्षसउवाच-
तपेमहत्तपोघोरंयन्नचीर्णंसुरासुरैः ६५
गुल्फप्रदेशेपादान्तेत्वयःपाशैःप्रबध्यच
अयःस्तंभयुगंकृत्वाअयःपट्टिकयान्वितम् ६६
पट्टिकायांपादबंधंकृत्वाधःशीर्षतांतथा
विवृतास्यंतथाकल्पंकृत्वाधोमुखमुच्चकैः ६७
स्तंभोत्तरेणज्वालायांचक्रिकायामितस्ततः
अधःशिरास्तथातिष्ठन्नुन्मील्यैवविलोचने ६८
एवंतपश्चरिष्यामिवरदःकोपिमेभवेत्
ब्रह्मावावरदःसोऽस्तुशंकरोविष्णुरेवच ६९
वरदेनतुमेभाव्यंयोवाकोवावरप्रदः
इत्थमाभाष्यमुनिनागुरुणाभार्गवेणसः ७०
तथातपश्चषरमासंपुनरन्यच्चकारह
नखाभ्यांस्वशिरश्छित्त्वाजुहावाग्नौसमंत्रकम् ७१
नमोभद्रायमंत्रेणचत्वारिचशिरांसिसः
पंचमंतुशिरोहातुंयतमानेचराक्षसे ७२

वह्निमध्यात्समुत्तस्थौभगवानंबिकापतिः
शुद्धस्फटिकसंकाशोबालचन्द्रविभूषणः ७३
अधःशिरस्कंतद्रक्षइदमाहमहेश्वरः
मासाहसंकृथारक्षोवरदोऽस्मिवरंवृणु ७४
राक्षसउवाच−
बहूनांचवराणांत्वंदातानूनंमहेश्वरः
हतशीर्षसमुत्पत्तिंग्रस्तजीवमृतिंतथा ७५
वराहवपुषोविष्णोरस्तुशक्तिश्चतुर्गुणा
मयितेनहिरोषःस्यात्संनिधिस्तुसदामम ७६
त्वज्जटोत्पाटनेनैकःपुरुषःसंभविष्यति
तेनैवमरणंनान्यैरिदमस्तुवृतंमम ७७
भविष्यत्येवमेवैतदित्युक्त्वांतर्हितोहरः
एवंलब्धवरःपापीराक्षसोनिहतस्त्वया ७८
अथालिग्यहरिर्वीरंशंकरश्चपितामहः
यथागतमथोजग्मुरथदेवादियोषितः ७९
निपत्यदंडवद्भूमौवीरभद्रमथाब्रुवन्
नमस्तेदेवदेवेशनमस्तेकरुणाकर ८०
नमस्तेशाश्वतानंतनमस्तेवरदोभव
वीरभद्रउवाच−
भस्मनाजीवयिष्यामिसुरान्समुनिवानरान् ८१
भवतीभिःप्रतोष्टव्यंशोकःकार्योनचाधुना
इत्युक्त्वावीरभद्रस्तुभस्मनाजीवयत्सतान् ८२
उत्थितामुनिदेवाश्चवानरौचोत्थितौततः
इदमूचुर्वचोहृष्टाःशिरःस्थांजलयोनमन् ८३
त्वयात्रजीवितास्तातपितात्वंधर्मतोहिनः
अस्माकंशरणंनित्यंभवशंकरसंभव ८४
शिशूनांदुष्टचरितंदृष्ट्वाशिक्षेस्तथाचतान्
रक्षेःपरकृताबाधाव्याधिभ्यश्चयथौरसान् ८५
दक्षाध्वरेकृतागस्काःशिक्षिताभवतानघ
इदानींरक्षितास्तातवयंशिशुवदेवते ८६

वीरभद्रउवाच-
सत्यमेतन्नसंदेहोयत्रबाधाभवेत्तुवः
तत्रमांस्मरतद्विप्रंबाधानाशंगमिष्यति ८७
वीरभद्रंपदंयेपिपठंत्यष्टशतंततः
प्रणवादिनमोऽतचचतुर्थीसहितंतथा ८८
तेषांराक्षसपीडानांनाशनंचभविष्यति
ब्रह्मराक्षसपीडासुपिशाचादिभयेषुच ८९
नामानुस्मरणात्सर्वबाधानांचविनाशनम् ९०
विद्युत्प्रभालोचनमुग्रमीशंबालेंदुदंष्ट्रारुणशोभिताधरम्
सुनीलगात्रंचजटाकृतस्रजंदधानमंगेभसितत्रिपुंड्रकम् ९१
ब्रह्मराक्षसमुक्त्यर्थंस्मरणंत्विदमीरितम्
मंत्रेचवीरभद्रस्यसर्वमेतदुदीरितम् ९२
दधीचउवाच-
अथैवंविदधेवीरोमुनिदेवास्तथागताः
एतत्त्रियायुषंप्रोक्तंभस्ममाहात्म्यमुत्तमम् ९३
पठतःशृण्वतोवापिस्मरतोऽघविनाशनम्
शिवभक्तिप्रदंपुण्यमायुरारोग्यवर्द्धनम् ९४
शुचिस्मितोवाच-
अहंकृतार्थाधन्याचनारीणामुत्तमास्म्यहम्
हतपापातथाचास्मिनमस्तेमुनिपुंगव ९५

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादे
सप्तोत्तरशततमोऽध्यायः १०७

अष्टोत्तरशततमोऽध्यायः

श्रीरामउवाच-
भस्मोत्पत्तिंमहाभागभस्ममाहात्म्यमेवच
भस्मसंधारणेपुण्यंभस्मदानेचतद्वद १
शंभुरुवाच-
भस्मोत्पत्तिंप्रवक्ष्यामिसर्वपापप्रणाशिनीम्
स्मरणात्कीर्तनाद्रामतांशृणुष्वनराधिप २

यएकः शाश्वतोदेवोब्रह्मवंद्यः सदाशिवः
त्रिलोचनोगुणाधारोगुणातीतोऽक्षरोव्ययः ३
सिसृक्षातस्यजाताथवीक्ष्यात्मस्थंगुणत्रयम्
वेदत्रयमिदंज्ञेयंगुणत्रयमिदंहियत् ४
पृथक्कृत्वात्मनस्तातत्रस्थानंविभज्यच
दक्षिणांगेसृजत्पुत्रंब्रह्माणंवामतोहरिम् ५
पृष्ठदेशेमहेशानंत्रीन्पुत्रानसृजद्विभुः
जातमात्रास्त्रयोदेवाब्रह्मविष्णुमहेश्वराः ६
इदमूचुर्वचःस्पष्टंकोभवान्केवयंत्विति
तानाहचशिवःपुत्रान्यूयंपुत्राअहंपिता ७
इदंगुणत्रयंपुत्राभजध्वंकर्महेतुकम्
पुत्राऊचुः –
कंवागुणंकोभजतांकियंतंकालमीश्वर ८
कथंगुणनिवृत्तिश्चभवेदेतद्वदस्वनः
शिवउवाच–
यावज्ज्ञानंहिभवतांयावदायुरथापिवा ९
धारणंतावदेवस्यादेकैकस्यगुणस्यच
सत्वंब्रह्मारजोविष्णुर्भजेन्महेश्वरस्तमः १०
इत्युक्तमात्रेदेवेशेब्रह्मासत्वमथाग्रहीत्
नचचालयितुंशक्तोधारणेकिमुशक्तिमान् ११
तंगुणंतुतिरस्कृत्यरजोगुणमथाग्रहीत्
नचचालयितुंशक्तोजग्राहाथतमोगुणम् १२
नचचालयितुंशक्तोनिपपातरुरोदच
विष्णुश्चवामहस्तेनरजोगुणमधारयत् १३
अंगुलीभ्यांमहेशोऽपितमोगुणमधारयत्
सत्वमेकोंगुलीभ्यांचसत्वंविष्णुमथादधात् १४
ब्रह्माणंपादपीठेचदधारचननर्तच १५
नृत्यंतमत्यंतविलासरूपंगोक्षीररूपंतरुणंत्रिनेत्रम्
सर्वंदधानंकृतकौतुकंशिवंसमीक्ष्यपुत्रान्वरदोबभाषे १६
शिवउवाच–

प्रीतोऽस्मितवपुत्राहंवरंवृणुयथेप्सितम्
अथाहपितरंपुत्रोवरमेनंददस्वमे १७
मामुद्दिश्यकृतापूजातवपूजाभवेच्छिव
तिष्ठेर्मयिसदात्वंचत्वमेवाहंचवाव्ययः १८
शिवउवाच-
एवमेतन्महाभागभविष्यतिनसंशयः
रक्तगौराविमौपुत्रौब्रह्मविष्णूममैवतु १९
बाहुमूलस्थरोमौचममाकारौतथानघौ
अथब्रह्माणमाहेदंभजत्वेकंगुणंभवान् २०
ब्रह्मोवाच-
त्वन्निर्दिष्टंगुणमहंधर्तुंशक्तोनहीश्वर
धारयिष्येरजोदेवसत्वंभजतुवैहरिः २१
अवशिष्टंगुणंचायमीश्वरोधारयिष्यति
शंभुरुवाच-
गुणानादायतेदेवानशेकुर्नित्यधारणम् २२
कर्तुंभरणशक्त्यर्थंशिवमित्यवदत्पुनः
गुणान्वयंसर्वकालंनचधारयितुंक्षमाः २३
दीयतांभगवञ्छक्तिर्यदिभोस्त्वंवरप्रदः
अथतद्वचनंश्रुत्वाशिवोवाक्यमभाषत २४
शिवउवाच-
विद्याशक्तिःसमस्तानांशक्तिरित्यभिधीयते
गुणत्रयाश्रयाविद्याअविद्याचतदाश्रया २५
गुणत्रयंचदग्ध्वैवतत्सारंधर्तुमर्हथ
यच्चकिंचिद्भवेत्तत्रभवद्भिर्ध्रियतांहितत् २६
अथाहुस्तत्सुतावाक्यंनदाहोज्वलनंविना
शिवःप्राहमहेशस्यलोचनेवह्निरस्तिवै २७
गुणत्रयमिदंधेनुर्विद्यास्याद्धोमयंशुभम्
मूत्रंचोपनिषत्प्रोक्तंकुर्याद्भस्मततःपरम् २८
वत्सास्तुस्मृतयोयस्यास्तत्संभूतंतुगोमयम्
आगावइतिमंत्रेणधेनुंतत्राभिमंत्रयेत् २९

गावोगावोगावइतिप्राशयेत्तुतृणंजलम्
उपोष्यचचतुर्द्दश्यांशुक्लेकृष्णेऽथवाव्रती ३०
परेद्युःप्रातरुत्थायशुचिर्भूत्वासमाहितः
कृतस्नानोधौतवस्त्रोगोमयार्थंव्रजेत्तुगाम् ३१
उत्थाप्यतांप्रयत्नेनगायत्र्यामूत्रमाहरेत्
सौवर्णेराजतेताम्रेधारयेन्मृन्मयेघटे ३२
पौष्करेवापलाशेवापात्रेगोशृंगएववा
आदधीतहिगोमूत्रंगंधद्वारेतिगोमयम् ३३
अभूमिपातंगृह्णीयात्पात्रेपूर्वोदितेऽधिके
गोमयंशोधयेद्विद्वाञ्छ्रीर्मेभजतुमंत्रतः ३४
अलक्ष्मीर्मयीतिमंत्रेणगोमयस्यापमार्जनम्
संत्वासिंचामिमंत्रेणगोमूत्रंगोमयेक्षिपेत् ३५
पंचानांत्वेतिमंत्रेणपिंडांश्चैवचतुर्द्दश
कुर्यात्संशोष्यकिरणैस्तरणेराहरेत्तुतान् ३६
निदध्यादथपूर्वोक्तपात्रेगोमयपिंडकान्
स्वगृह्योक्तविधानेनप्रतिष्ठाप्याग्निमिंधयेत् ३७
पिंडान्विनिक्षिपेत्तत्तदर्णदेवायपिंडकान्
आघारावाज्यभागौचप्रक्षिप्यद्वौहुनेत्सुधीः ३८
ततोनिधनपतयेत्रयोदशजयादयः
होतव्याःपंचब्रह्माणिनमोहिरण्यबाहवे ३९
इतिसर्वाहुतीर्हुत्वाचतुर्थ्यंतैस्तुमंत्रकैः
ततःशर्वायरुद्राययस्यवैकंकतीतिच ४०
एतैस्तुजुहुयाद्विद्वाननाज्ञातत्रयंतथा
व्याहृतीरथहुत्वातुततःस्विष्टकृतंहुनेत् ४१
इध्मशेषंतुनिर्वर्त्यपूर्णपात्रोदकंततः
पूर्णमासांतयजुषाजलेनान्येनबृंहयेत् ४२
ब्राह्मणेष्वमृतमितितज्जलंशिरसिक्षिपेत्
प्राच्यामितिदिशांलिगैर्दिक्षुतोयंविनिक्षिपेत् ४३
ब्रह्मणेदक्षिणांदत्वाशांतेपुलकमाहरेत्
आहरिष्यामिदेवानांसर्वेषांकर्मगुप्तये ४४

जातवेदसमेनेत्वांपुलाकंच्छादयाद्यमे
मंत्रेणानेनतंवह्निंपुलाकेछादयेदथ ४५
त्रिदिनंज्वलनस्थित्यैछादनंपुलकैःस्मृतम्
ब्राह्मणान्भोजयेद्भक्त्यास्वयंभुंजीतवाग्यतः ४६
भस्माधिकमभीप्संस्तुह्यधिकंगोमयंहरेत्
दिनत्रयेणयदिवाएकस्मिन्दिवसेबहु ४७
तृतीयेवाचतुर्थेवाप्रातःस्नात्वासितांबरः
शुक्लयज्ञोपवीतीचशुक्लमाल्यानुलेपनः ४८
शुक्लदंतोभस्मदिग्धोमंत्रेणानेनमंत्रवित्
तद्वेतिचोच्चारयित्वाभस्मसत्यंनसंत्यजेत् ४९
ततश्चावाहनमुखाउपचारास्तुषोडश
कर्तव्याहुतदानेनततोऽग्निमुपसंहरेत् ५०
अग्नेभस्मेतिमंत्रेणगृह्णीयाद्भस्मचोद्भवम्
अग्निरस्मीतिमंत्रेणप्रमृज्यचततःपरम् ५१
संयोज्यगंगासलिलैःकपिलापयसाथवा
चंद्रंकुंकुमकाश्मीरमुशीरंचंदनंतथा ५२
अगुरुद्वितयंचैवचूर्णयित्वातुसूक्ष्मतः
क्षिपेद्भस्मनितच्चूर्णमोमितिब्रह्ममंत्रतः ५३
ततःपयःसेचनेचगदितःकपिलामनुः
अमृतंदेवितेक्षीरंपवित्रमिहवर्द्धितम् ५४
तवप्रसादान्मुच्यंतेमनुजाःसर्वपाप्मनः
प्रणवेनावहेद्विद्वान्भस्मनोवटकानथ ५५
अणोरणीयानितिहिमंत्रेणतुविचक्षणम्
शंभुरुवाच-
इत्थंतुभस्मसंपाद्यशुष्कमादायमंत्रवित् ५६
प्रणवेनविमृज्याथसप्तप्रणवमंत्रितम्
ईशानेनशिरोदेशंमुखंतत्पुरुषेणच ५७
उरोदेशमघोरेणगुह्यंवामेनमंत्रयेत्
सद्योजातेनवैपादौसर्वांगंप्रणवेनतु ५८
ततउद्धूल्यसर्वांगमापादतलमस्तकम्

ततश्राचम्यवसनंधौतंश्वेतंप्रधारयेत् ५९
पुनराचम्यकर्मस्वंकर्तुमर्हतिसर्वतः
ततोभस्मसमादायप्रमृज्यप्रणवेनतु ६०
त्रिनेत्रंत्रिगुणाधारंत्रयाणांजनकंविभुम्
स्मरन्नमःशिवायेतिललाटेतुत्रिपुंड्रकम् ६१
नमःशिवाभ्यामित्युक्त्वाबाह्वोर्वापित्रिपुंड्रकम्
ग्रघोरायनमइतिउभाभ्यांचप्रकोष्ठयोः ६२
भीमायेतिततःपृष्ठेशिरोधिपश्चिमेतथा
नीलकंठायशिरसिन्निपेत्सर्वात्मनेनमः ६३
प्रन्नाल्याथततोहस्तौकर्मानुष्ठानमाचरेत्
शिवउवाच-
यूयमेवंप्रकारेणभस्मकृत्वाप्रघृष्यच ६४
गुणान्धारयितुंशक्तास्ततःस्रन्दयथवैप्रजाः
शंभुरुवाच-
इत्थंशिवोदितादेवाब्रह्मविष्णुमहेश्वराः ६५
तथाकृत्वाचविधिनाहमहमिकयातदा
ग्रन्योन्यबोधनाशक्ताःप्रणम्यशिवमूचिरे ६६
कंगुणंधारयेत्कोवाशिवःप्राहसुतानथ
कर्मशक्तिंतथाज्ञानंमुखरेणवैवनश्यति ६७
ग्रल्पायुर्दृश्यतेब्रह्मामनुभिश्चास्यजीवितम्
योऽहब्रह्मांडमालाभिर्भूषितोब्रह्मगोपनम् ६८
रजोगुणमवष्टभ्यनचजानासिमांतदा
ब्रह्माधिकबलोविष्णुरायुषिब्रह्मणोऽधिकः ६९
ब्रह्मांडमालाभरणेमहेशस्यममैवतु
चतुर्निःश्वासमात्रेणविष्णोरायुरुदाहृतम् ७०
ब्रह्मणोऽधिकसत्वत्वात्सत्वमालंबतांहरिः
जानातिसर्वकालंमांक्वचिदेवनविस्मरेत् ७१
सात्विकैकैवपूजास्यराजसीतामसीनतु
शांतंशिवंसत्वगुणंरजवक्त्रावमानतः ७२
नभोनीलंतथाचैवगुणंशंभुस्तथाभजत्

सत्वंरजस्तमश्चापिदधारचपुराकिल ७३
अतोऽस्यविविधापूजाशंकरस्यविधीयते
रजश्चतमसायुक्तंदारुणंपरिकीर्तितम् ७४
दारुणापिततःपूजाशंकरेगतिदामता
रजश्चतमसायुक्तमलंशास्त्रप्रवर्तकम् ७५
विच्छिन्नापिततःपूजाशंकरेफलदामता
तमश्चसत्वसंयुक्तंमिश्रकंचप्रवर्तकम् ७६
मिश्रपूजाविफलदाशंकरेलोकशंकरे
यादृशंतादृशंवापिनियमेनार्चनंविभोः ७७
शंकरस्याशुफलदंयादृशस्यापिदेहिनः
शंभुरुवाच-
एतत्संक्षेपतःप्रोक्तंविधानंभस्मनोऽनघ ७८
वक्तृश्रोतृजनानांचसमस्ताघविनाशनम् ७९

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादेभस्मोत्पत्ति-
विधानंनामाष्टोत्तरशततमोऽध्यायः १०८

## नवोत्तरशततमोऽध्यायः

शंभुरुवाच-
अत्रतेकीर्तयिष्यामिकथांपापप्रणाशिनीम्
श्रुत्वायांप्रापधर्मात्माशिवभक्तिमनुत्तमाम् १
इक्ष्वाकुर्नामविप्रेंद्रोमहाविद्योमहामतिः
बहुशास्त्रप्रवीणश्चनीतिशास्त्रविशारदः २
नयष्टानचदाताचनदेवानांचपूजकः
नचाध्यापयितावेदंनव्याख्याताश्रुतस्यच ३
नपुराणेतिहासानांश्रुतीनामागमस्यवा
यत्नाद्धोक्तातथादेहसंस्कारैकप्रवर्तकः ४
तादृशस्यद्विजस्याथसमालक्ष्यायुरत्यगात्
लक्षांतरेतथैकस्मिन्वत्सरेमासिपंचमे ५
तृतीयदिवसेरात्र्यांपुराणंश्रुतवानिदम्
स्वसंपादितवित्तस्ययेनदानंनवैकृतम् ६

दिनेदिनेभुज्यमानंनिःसारंस्यात्क्रमेणहि
वर्षाणयेवचतावंतिनरकेपच्यतेध्रुवम् ७
कृमियोनिसहस्रंचअनुभूयततःपरम्
दरिद्रोव्याधितोऽबधुर्दुष्टभार्योबहुप्रजः ८
दिनेदिनेभिक्षितेनयाचितेनचजीवनम्
यन्नक्वापिचबीजानांमग्नानामथमार्गणात् ९
लब्धेनजीवनंकर्मभृत्यानामथजीवनम्
मध्येश्रोत्रविहीनश्चनेत्रहीनःस्खलन्मलः १०
एवंपुराणंश्रुत्वासाविद्वाकुर्भृशदुःखितः
मनसाचिंतयच्चेदंस्मारंस्मारंद्विजाधमः ११
रूपपुष्पैर्माहिष्मयीदुर्गापिफलवर्जिता
तथापुराणरहिताविद्यानोगतिदर्शनी १२
बहुशास्त्रंसमभ्यस्यबहुवेदान्सविस्तरान्
पुंसोश्रुतपुराणस्यसम्यग्यातिनदर्शनम् १३
शंभुरुवाच–
एवंचिंतयतस्तस्यअकालमरणंत्वभूत्
यमलोकंगतश्चाथयमेनपरिभाषितः १४
यमउवाच–
अनेकपापयुक्तोसिपुणयंनैवमहत्तव
नवेदाध्यापनात्प्राप्तंपापंचविदितंतव १५
कोटिवर्षाणिनरकेतवस्थितिरितिद्विज
आयुरस्तितवात्यल्पंगम्यतांपौर्विकींतनुम् १६
कुरुपुणयंहितंदानंदेवतापूजनंजपम्
सांगमध्यापनंविप्रभोजनंभस्मधारणम् १७
भजविश्वेश्वरंदेवंदेवदेवमुमापतिम्
तस्यप्रयत्नमात्रेणममलोकंनगच्छसि १८
यत्किंचित्प्रत्यहंपापिन्पुराणंशृणुसादरम्
ततस्तच्छ्रवणादेवनेक्षसेममयातनाः १९
यमस्यवचनंश्रुत्वाब्राह्मणःस्वांययौतनुम्
अथेशपूजनकृतेयत्नमास्थायसद्विजः २०

अगमन्मुनिवर्यंतुजाबालिशिवपूजकम्
तपःस्वाध्यायसंपन्नंश्रुतिस्मृतिविवेचकम् २१
पुराणतत्त्ववेत्तारंलक्षशिष्यसमावृतम्
जराशिथिलसर्वांगंवेदवेदांगपारगम् २२
द्रष्टुकामोययौशैलंमंदरंचारुकंदरम्
नानाविहंगसंपूर्णंनानापुष्पलतावृतम् २३
सर्वर्तुकुसुमोपेतंनानागंधोपशोभितम्
किन्नराणांचमिथुनैर्गीतपूर्णमहागुहम् २४
अनेकरूपलावण्यवनितोषितपादपम्
लंबमानविचित्राभिस्ताभिःशोभितपादपम् २५
रतिश्रमप्रसुप्तानांबोधनादितषट्पदम्
कूजंतिचपिकाःकामंवियुक्तानांयुजेकिल २६
नानामुनिगणाकीर्णंप्रशांतमृगचारिणम्
अप्सरोगणसंकीर्णंगंधर्वगणसेवितम् २७
नानासिद्धमुखोद्भूतगीतपूर्णवनांतरम्
विचित्रफलसंपूर्णंनानादेवालयान्वितम् २८
प्रासादशतसंबाधंनानागृहसमन्वितम्
सिंहाननैर्गजमुखैरुलूकवदनैरथ २९
अमुखैर्विमुखैरुग्रैरर्द्धवक्त्रैर्मृगीमुखैः
रुरुजंतुकगोधाहिवानरर्क्षमुखैरपि ३०
व्याघ्रवृश्चिकभल्लूष्ट्रश्वानगर्दभतुंडकैः
समस्तजीववदनसदृशास्यैर्गणेश्वरैः
वल्लीमुखैर्वृक्षमुखैःशिलावक्त्रैरयोमुखैः ३१
शंखमुक्तादिजलजवदनैरुपशोभितम्
अधिकांगैरनंगैश्चजटिलैःशिखिमुंडितैः ३२
पत्रिवक्त्रैर्द्विषड्वक्त्रैस्त्रिविग्रहमुखैरपि
घंटास्यैःशूर्पवदनकर्णपादमुखैरपि ३३
घंटामुखैर्वेणुमुखैःकिंकिणीवदनैरपि
यादृग्वस्तुजगत्यस्तितादृशास्यैरयोमुखैः ३४
कैश्चिन्निभृतकंदर्परूपलावण्यकोमलैः

कोटिसूर्यप्रतीकाशैश्चंद्रकोटिसमप्रभैः ३५
नानावर्णैर्विश्वमुखैर्विश्वरूपैश्चतुर्मुखैः
द्विमुखैःपंचवक्त्रैश्चत्रिमुखैःषरामुखैरपि ३६
एकानेकमुखैःशांतैःसर्वदासुखिभिर्युतम्
नानाभोगसमृद्धैश्चरतिकामसमैरपि ३७
लक्ष्मीनारायणमुखैरुमेशसमविग्रहैः
नानारूपधरैश्चान्यैःसेवितंमंदराचलम् ३८
धेनवोयत्रवेदाश्चमीमांसावत्ससंयुताः
धर्मादयःसवर्ष्माणःपुराणानिचकर्मणा ३९
स्मृतीतिहासजातानिश्रागमाश्चशरीरिणः
स्थिताश्चमंदरेयत्रसशैलःपापनाशनः ४०
तस्यमध्येमहापुरायंपुरंपरमशोभितम्
वापीतडागोपवनप्रासादशतशोभितम् ४१
सप्तप्राकारपरिखंरत्नाट्टालकसंयुतम्
गोपुरैर्नवभिर्युक्तंविचित्रगृहसंयुतम् ४२
यस्यचाप्रतिमंतेजउष्णशीतादिवर्जितम्
तन्मध्येनगरीपुरायातन्मध्येचसभाशुभा ४३
तस्यांभद्रासनंमध्येवेदपादविचित्रितम्
सर्वोपनिषदाक्लृप्तंपादपीठंसुशोभनम् ४४
पुराणान्यागमास्तस्यस्वस्तीतिशिवपादयोः
तत्रासीनोमहायोगीगोक्षीरसदृशाकृतिः ४५
मंदस्मितसुचार्वास्योद्व्यष्टवर्षवयाःप्रभुः
दधानउरसामालांमणिरुद्राक्षकल्पिताम् ४६
बिभ्राणउपवीतंचकर्णिकारसमद्युतिः
सुरत्नकुंडलोदेवःकिरीटकनकांबरः ४७
नानाभूषणसंयुक्तोनानागंधविलेपनः
वामांकन्यस्तगिरिजोवीक्षमाणस्तदाननम् ४८
मुग्धांचसुमुखींबालांनवयौवनशोभिताम्
भूषितांचारुसर्वांगींबिभ्रतींकनकांबुजम् ४९
श्रालिंग्यवामेनकरेणदेवींदक्षेणतस्यामुखमुन्नमय्य

स्पृष्ट्वाशिरोवामकरेणतस्यादक्षेणकुर्वंस्तिलकंचदेवः ५०
भक्तिर्वीजयतेदेवंप्रणवव्यजनेनच
पूजाकांतापिकुसुमैर्मालांदेवायबिभ्रती ५१
ज्ञप्तिर्विरक्तिर्वनितेविभ्रत्यौयोगचामरे
समाधिःकार्यकर्तास्यधारणायोषिदस्यच ५२
यमाश्चनियमाश्चैवकिंकरास्तस्यकीर्तिताः
प्राणायामःपुरोधास्तुप्रत्याहारःसुवर्णधृक् ५३
ध्यानंचद्रविणाध्यक्षःसत्यंसेनापतिस्तथा
ब्रह्मप्रभृतिकीटांताःपशवस्तत्पतिःशिवः ५४
पशूनांपालकोधर्मःस्यादधर्मश्चतस्करः
मायापाशेनतेबद्धामोचनीकाशिकामृतिः ५५
नानाविधाश्चप्रमदादेवदेवमुमापतिम्
एतादृशमुमानाथंकोटिजंतुरनुस्मरेत् ५६
इष्टान्भोगानवाप्याथशिवलोकेमहीयते
ब्रह्मविष्णुहेंद्राद्यास्तत्पुरद्वारपालकाः ५७
लक्ष्मीसरस्वतीदेव्यौदेहल्याद्यर्च्चनेक्षितेः
नियुक्तेदेवदेवस्यदेवाश्चसुरयोषितः ५८
दास्योदेवाःसमस्ताश्चदासायस्यमहात्मनः
एतादृशमहाशैलमिक्ष्वाकुःसंददर्शह ५९
मुनिंप्रणम्यजाबालिमिदमाहवचस्तदा
गंतुकामोमहाशैलंशक्तोस्यस्मिन्नवामुने ६०
ममायुरल्पंकथितंयमेनज्ञानिनापुरा ६१
नरकश्चबहुःप्रोक्तःकथंश्रेयोभविष्यति
जाबालिरुवाच-
मयापिसर्वमेतत्तेज्ञातंदिव्येनचक्षुषा ६२
आयुर्दशदिनंब्रह्मन्विद्वानपिनधर्मकृत्
नतपस्तेह्यनभ्यासान्नचयोगोऽल्पकालतः ६३
नदानंद्रविणाभावादसामर्थ्यात्तथार्हणा
नयज्ञोनव्रतंपूर्तंनचपुण्यमनायुषः ६४
नचाध्यापनतीर्थादिसेवाकालविरोधतः

तस्मात्तत्पापनाशायप्रायश्चित्तंनविद्यते ६५
गतिप्रदंतथाधर्मंगच्छवातिष्ठवामुने
इक्ष्वाकुरुवाच-
यावज्जीवंप्रतिज्ञायक्रियतेयोवृषोद्विज ६६
तेनपापपरीहारोभविष्यतिसुनिश्चितम्
तंब्रूहियेनधर्मेणममपापंप्रणश्यति ६७
केनवापुरायगेनस्वर्गतिश्चभविष्यति
शरणंभवविप्रर्षेनरकादतिबिभ्यतः ६८
सर्वधर्मफलंप्राहुःशरणागतपालनम्
जाबालिरुवाच-
सत्यंस्वल्पेनकालेननतादृग्लभ्यतेवृषः ६९
अमृतेत्वनृतेशक्यंवक्तुंस्वप्नांतरेष्वपि
रहस्यमेकंकिंचित्तुयस्यकस्यापिनोच्यते ७०
इक्ष्वाकुरुवाच-
शरणंपालयमुनेकालोमेनिर्गमिष्यति
जाबालिरुवाच-
ममप्राणाधिकंविप्ररहस्यंश्रुतिचोदितम् ७१
शिवलिगार्चनंनामब्रह्मादिभिरनुष्ठितम्
समस्तपापशमनंसर्वोपद्रवनाशनम् ७२
भुक्तिमुक्तिप्रदंतस्माच्छिवपूजांसमाचर
नातिक्रामेद्यदिमुनेशिवलिगार्चनंशुभम् ७३
यःशंभुपूजांविच्छिंद्यात्तेनच्छिन्नंहिमेशिरः
वरंशूलविनिक्षेपोवरंशाल्मलिकर्षणम् ७४
वरंप्राणपरित्यागोनैवपूजाव्यतिक्रमः
वरंवह्निप्रपतनंवरंचाधःशिरःकृतम् ७५
वरंस्वमलभुक्तिर्वानेशपूजाव्यतिक्रमः
अपूजयित्वाचेशानंयोहिभुंक्तेनराधमः ७६
पापानामन्नरूपाणांतस्यभोजनमुच्यते
अनुच्चार्यपदंशंभोर्भुङ्क्तेयदिचखादति ७७
शिवेतिमंगलंनामयस्यवाचिप्रवर्तते

भस्मीभवंतितस्याशुमहापातककोटयः ७८
शिवंप्रदक्षिणीकृत्ययोनमस्यतिमानवः
भूमेःप्रदक्षिणंकृत्वायत्तत्पुरायमवाप्नुयात् ७९
प्रदक्षिणत्रयंकृत्वानमस्कारंचपंचधा
पुनःप्रदक्षिणंकृत्वानत्वामुच्येतपातकैः ८०
सर्ववाद्यानियःकुर्यात्कारयेद्वाशिवालये
बलेनमहतायुक्तोवेदसेव्यत्रजायते ८१
श्रावयेद्यःपुराणानिदेवदेवंत्रिलोचनम्
सर्वपापविनिर्मुक्तोवसेच्छिवपुरेकृती ८२
तंनित्यमादरेणेशोवक्तिवाक्यंप्रियंसदा
एतत्संक्षेपतःप्रोक्तमीशपूजनमुत्तमम् ८३
अल्पायुश्चभवान्विप्रशिवपूजनमाचर
त्रिकालंवाद्विकालंवाएककालमथापिवा ८४
यामंयामार्धथवाशिवपूजनमाचर
वानप्रस्थाश्रमोभूत्वावानप्रस्थकृताश्रयः ८५
वानप्रस्थप्रसूनैश्चप्रातःपूजयशंकरम्
श्रीफलैःशतपत्रैश्चपद्मसौगंधिकैरपि ८६
नीपैर्जपाभिःपुन्नागैःकरवीरैश्चपाटलैः
तुलस्याचरविदलैरपराजितयातथा ८७
अपामार्गदलैरुद्रजटादमनकेनच
सर्वैरभिःसमफलैर्बिल्वपत्रैश्चधूर्तकैः ८८
द्रोणैःशिरीषैःशक्तैश्चदूर्वयाकोरकैरपि
नंद्यावर्तैरक्षतैश्चतिलमिश्रैश्चकेवलैः ८९
अन्यैरपियथाशक्तिप्रातःसंपूजयेच्छिवम्
कर्णिकारैश्चसौवर्णर्दूवर्ययापिशिवार्चनम् ९०
मुकुलैर्नार्चयेद्देवंचंपकैर्जलजंविना
जलजानांचसर्वेषांपत्राणामक्षतस्यच ९१
कुशपुष्पस्यरजतसुवर्णकृतयोरपि
अन्यत्कृत्वायथायत्तुतैलपक्वंभवेन्नृप ९२
नतत्पर्युषितंप्रोक्तमपूपादिगमिष्यति

उद्धितंयत्फलायुक्तंतैलद्धाराम्लजीरकैः ९३
जलेतत्प्रोद्धितंमूलफलशाकादिकंनृप
नचपर्युषितंप्रोक्तंगंगातोयंचसागरम् ९४
महानदीजलंसर्वंकेदारजलमेवच
ह्लदरूपेणयत्तीर्थंकूपतीर्थेनराघव ९५
तडागवापीसरसांकूपेनापांचयद्भवेत्
तत्तीर्थतोयंसर्वंचनचपर्युषितंभवेत् ९६
नरात्रौजलमाहार्यंदिवासंपादयेज्जलम्
ससैकतंतथाधार्यंनचपर्युषितंहितत् ९७
एवंविदित्वापूजांत्वंशिवलिंगेसमाचर
शंभुरुवाच-
एवमुक्तोथमुनिनाइक्ष्वाकुर्ब्राह्मणप्रियः ९८
शिवपूजापरोभूत्वादिनाष्टकमतिष्ठत
नवमेऽथदिनेप्राप्तेप्रातःकालेकृतार्चनः ९९
मरणावसरेप्राप्तेशिवपूजांविधायसः
स्वान्प्राणानुपहारायतत्याजैवमहेशितुः १००
मृतंतमथविज्ञाययमदूताःसमागताः
यमलोकप्रापकायेयतमास्थायतस्थिरे १०१
शैवाश्चापिसमायातादूतावह्निमुखादयः
तेषामन्योन्यवादोभून्मामकोमामकस्त्विति १०२
अथयामःपाशपाणिःशिवदूतमथार्दयत्
अथवह्निमुखःक्रुद्धोयमदूतशतंततः १०३
महाकायस्तथाभूत्वागृहीत्वाचकरेणतत्
शिरांसिचतथैकेनापीड्यचिच्छेदशष्पवत् १०४
मारयित्वाततोदूतानादायेक्ष्वाकुमभ्यगात्
निवेदयामासचतंवीरभद्रायधीमते १०५
सचापिशंकरायाथतंप्राहचमहेश्वरः
त्वयाष्टदिनपूजैवकृताकृष्णादिनेदिने १०६
त्वमनिंदःपुरामांचलिंगंशिश्नाग्रमित्युत
तेनैवपापयोगेनशिश्नवक्त्रोभविष्यसि १०७

शिश्नाग्रेविवरंचक्रंजिह्वानासादिवर्जितः
पूर्वंमन्नामवक्तृत्वाद्वक्ताचापिभविष्यसि १०८
अथेशवचनात्सोपितथाभूतोभवत्क्षणात्
शंभुरुवाच-
यइदंशृणुयान्नित्यंपुराणाख्यानमुत्तमम् १०९
विमुक्तपापबंधश्चशिवभक्तोभविष्यति
सयातिचशिवस्थानेवक्ताचापितथाभवेत् ११०
यश्चवक्तिकथामेनांहरेणसदृशोभवेत्
उक्त्वाकथामिमांपूर्वमधीरोनामभूमिपः १११
स्वर्गंसगतवान्राजाकृतपापोथभार्यया ११२

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादेविभूतिमाहात्म्येन नवोत्तरशततमोऽध्यायः १०९

## दशोत्तरशततमोऽध्यायः

श्रीरामउवाच-
अयमग्निशिखोनामवह्निःशिवगणश्चवै
सकथंतादृशोभूतस्तन्मेवदनमस्तव १
शंभुरुवाच-
अयमासीत्पुराकश्चित्क्षत्रियःक्रोधनःसदा
नष्टभार्योनष्टसेनोनष्टराष्ट्रोतिदुःखितः २
लब्ध्वालुलायद्वितयंकृषिंचक्रेसहात्मजैः
ऋणेनमहतायुक्तःपुनश्चातीवदुःखितः ३
पुनश्चदुःखितोराजासर्पेणसुतनाशनात्
तथाभूतोमहीपालस्तत्याजकृषिमप्युत ४
परित्यज्यसुतौचापित्यक्ताहारोरुरोदह
सुतावथसमागम्यप्राहतुःपितरंत्विदम् ५
किमर्थंरुद्यतेतातनष्टोनायातिरोदनात्
शरीरशोषणायाथशोकस्तेऽद्यभविष्यति ६
शोकेनचक्षुषीनष्टेकंठोनष्टस्तथातव
अनुष्ठानंतथानष्टंकिमर्थंपरितप्यसे ७

एकोनष्टोनचायातिरक्षपंचस्थितानसून्
बहूनांरक्षणंपुरायमाश्रितानांविशेषतः ८
अन्याश्रितममुंशत्रुंकथंशोचितुमर्हसि
पितोवाच-
पुत्रःशत्रुःकथंपुत्रौयुवांशत्रूतथाचमे ९
अत्यंतसुखिनंपुत्रंकथंशत्रुमभाषतम्
सुतावूचतुः
जायमानोहरेद्भार्यांबर्द्धमानोहरेद्धनम् १०
म्रियमाणस्तथाप्राणाञ्छत्रुत्वंकिमतःपरम्
यत्सुखंचत्वयाप्रोक्तंस्पर्शनालिगनादिभिः ११
दुःखोदर्कमिदंराजन्सर्वमेतद्वदामिते
प्रसूतिकालेपुत्रस्यभार्यानाशविचारणा १२
जीवितायामथोपत्यामात्मनःसुखनाशनम्
योन्यशुद्धौतुजातायांसंयोगोनोपपद्यते १३
आलिगनपरेगाढंस्तन्येनांगंपरिप्लुते
तथापियदिसंयोगःशिशुरोदनताःस्त्रियाः १४
दृढंशिशुगतंचित्तंततोवैरस्यमेवच
अथचेत्पतितोडिंभोमध्येमैथुनमुद्गतिः १५
रतिमध्येतुविच्छेदेदुःखंकिंचिदसन्निभम्
सर्वकालेपरिमितेकदाचिद्रतिसंभवः १६
तत्कालेभोजनंनास्तिस्वापोनास्तिचभार्यया
शिशूनांरक्षणेदुःखंव्याधितर्षग्रहादिभिः १७
तन्मतंयत्सुखंचित्रंयथांकारोहणंपितुः
आलिगनकृतंतातचुंबनादिकृतंतथा १८
अत्यन्तमधुरोक्त्यादियत्सुखानिनरेश्वर
रतिमध्येविरामस्यकलांनार्हतिषोडशीम् १९
अन्यान्यपिचदुःखानिसंतिपुत्रेसहस्रशः
अनेनत्वंकिंक्रियसेइहामुत्रविरोधिना २०
त्यजशोकमिदंतस्मादावांपुत्रौस्थिताविह
श्रीराजोवाच-

त्यजामिशोकंदुर्वारंसर्वकार्यविरोधिनम् २१
आत्मनश्चहितंकार्यमिहामुत्रसुतौमम
पुरोधसंतुगच्छामिममपूर्वंमहागुरुम् २२
वसिष्ठंमुनिवर्यंचसदास्यतिगतिंमम
एवमुक्त्वागतोविप्रंवाराणस्यांस्थितंगुरुम् २३
दंडवत्प्रणनामाथमुनिनापरिपूजितः
आलिगितःशिरोघ्रातोदत्तासनपरिग्रहः २४
उक्तश्चागमनंकिंतेकिंकार्य्यंकरवाणिवै
राजोवाच-
गतिंप्रयच्छमेविप्रसंसारतणायहि २५
खिन्नोहंकर्मणाशश्वद्भवंतंशरणंगतः
वसिष्ठउवाच-
गतिंपश्यमहालिगंविश्वेश्वरमितिस्थितम् २६
एनंपूजयराजेंद्रदेवदेवंपिनाकिनम्
यमाराध्यपुराशक्तिररुंधत्याःसुतोमुनिः २७
रक्षसाभक्षितश्चापियमलोकंगतोनसः
किंचित्कालंगतःस्वर्गंब्रह्मलोकमगादतः २८
ब्रह्मलोकाद्विष्णुलोकेक्रीडन्नास्तेसुतोमम
अमुंपश्यमहाराजलुब्धकंवनचारिणम् २९
पूजयंतंहिविश्वेशंपत्रमात्रैस्स्वसंभृतैः
शमीवृक्षस्यसंभूतैस्तथापूगप्रसूनकैः ३०
कदंबकुसुमैरर्ककुसुमैर्यूथिकाभवैः
एतैरन्यैर्महेशानंपूजयंतंविलोकय ३१
इतोर्द्धयाममात्रेणमरिष्यतितदद्भुतम्
अंतकालेसमायातेलुब्धकोपिशिवायवै ३२
उपहारप्रदानायदृष्टवान्पार्श्वतोघटम्
तंचूतफलसंपूर्णंशुनोच्छिष्टंविगर्हितम् ३३
संकल्पितोपहारस्यह्यभावाल्लुब्धकस्तथा
इदंजगौशुभंवाक्यंलोकानांभक्तिसूचकम् ३४
पुष्पाभावेहरिनेंत्रंफलाभावेंगुलंरविः

लिगविस्त्रंसनेकंचजमदग्निऋृषिस्तथा ३५
लिगपीठविभेदेचगात्रंनिर्भिद्यदत्तवान्
अन्यैर्माहैश्वरैरन्यत्साहसंपरमंकृतम् ३६
ममापितत्तथाकार्य्यमन्यथादोषभागहम्
एतस्मिन्नंतरेकश्चिदुन्मत्तःशिवमभ्यगात् ३७
अथलुब्धकृतांपूजामाहत्याभक्षयत्क्षणात्
वमनंचतथाचक्रेशिवपीठेथलुब्धकः ३८
शिवापकारिणंचैनंहन्मिनोवेत्यचिंतयत्
अथस्वात्मवधायैवयत्नमास्थायशंकरः ३९
उन्मत्तेनयथोद्धृक्ताशिवपूजामयाकृता
लिगप्रावरणेह्येषातदहंममदेहिनः ४०
प्रावृतिस्त्वगियंत्वद्यनिर्म्मोक्तव्यामयाद्भुतम्
पूजाविमोचनायैतत्फलहानेर्गलंत्यजेत् ४१
इत्थंसंकल्प्यसतथातीक्ष्णस्वधितिनाद्धुतम्
चक्रेत्वचंदक्षपादंत्वचंच्छित्वाकटेरधः ४२
वामपादंतथाचक्रेकटिपर्यंतमाशुच
हृष्टश्चावेपितश्चैवततऊर्ध्वमथाच्छिनत् ४३
करांसोदरहृत्कंठत्वचंनिर्भिद्यलुब्धकः
मस्तकस्यत्वचंचापिनिर्बिभेदप्रहृष्टवान् ४४
तयोरंतरतस्तस्माद्गात्रंनिर्भिद्यवर्तुलम्
छित्त्वांगुलिसमादायदेवायार्पितवांस्त्वचम् ४५
आरादेवतथादिव्यरूपःस्वक्षश्चतुर्भुजः
नानाभूषणसंयुक्तःस्थितोवियतिशाङ्करः ४६
अथशैवाःसमायातादूताःशतसहस्त्रशः
विचित्रमुकुटाकाराःसर्वाभरणभूषिताः ४७
त्रिशूलपाणयःसर्वेशुद्धस्फटिकसंनिभाः
चतुर्भुजाःसुरूपाश्चविमानवरसंस्थिताः ४८
सर्वेसूर्यसमाःशांतारंभावत्प्रियययायुताः
सूनुपत्नीबलोत्साहविलासस्त्रीशतान्विताः ४९
तेजसासूर्यसदृशाःपुष्पवृष्टिमवाकिरन्

तैराहूतोलुब्धकश्चनागच्छदवदच्चतान् ५०
भार्याबंधुजनोपेतोगच्छेहमथवानवा
शैवास्तद्वचनंश्रुत्वावाक्यमेतदथोचिरे ५१
येनपुरायंकृतंपापंतेनभोग्यंहितत्फलम्
लुब्धकउवाच-
अशौचानांचसर्वेषांधर्माणामेककर्तृकम् ५२
माहेश्वराणांधर्माणांफलंचद्विबहुष्वपि
एतस्मिन्नंतरेप्राप्तोवीरभद्रःशतार्भकः ५३
नानाकोटिगणोपेतोएहिलुब्धकबंधुयुक्
सर्वंत्वयोक्तंचतथासभार्योज्ञातिबंयुयुक् ५४
आरुह्येदंविमानंचशिवंगच्छशिवंतुवः
अथतद्वचनात्प्राप्तःशिवलोकंविमानगः ५५
वसिष्ठउवाच-
दृष्टवानसिसर्वंत्वमीशपूजांसमाचर
विमुक्तपापबंधस्त्वंशिवलोकंगमिष्यसि ५६
यदिराज्यंत्वयाप्राथ्यंमार्जयेशांगणंनृप
गोमयोदकलेपंचनित्यमेवसमाचर ५७
एतावताभूमिराज्यंध्रुवंतवभविष्यति
यावदायुश्चतेराज्यमंतेशिवपदंभवेत् ५८
नैतस्मिंस्तुभवेद्राज्यसंसिद्धिरनुमृत्युतः
अतोदेहांतरंप्राप्यशिवसेवाप्रभावतः ५९
भविष्यतिचतेराज्यंशिवभक्तिःस्थिरातथा
शंभुरुवाच-
अथकृत्वातथापूजांमृतःस्वर्गंगतस्ततः ६०
राजजन्मपुनःप्राप्यराज्यंचक्रेशिवेरतः
कदाचिदथदेवस्यगृहमभ्यगमन्नृपः ६१
नानादीपसमोपेतंमणिभिर्नागराडिव
भटानामथसंमर्दएकोदीपोपतन्नृपे ६२
तदासौकुपितोराजादीपमादायसत्वरम्
देवालयपुरेरम्येन्यद्विपत्कोपसंयुतः ६३

दग्धंदेवगृहंतेनएनश्चसमपद्यत
अथतेनपुनस्तत्रदग्धंवेश्मगृहादिकम् ६४
निर्मापयामासनृपोमहेशानमथायजत्
अथमृत्युदिनेप्राप्तेराजाराधितशंकरः ६५
भस्मस्नायीभस्मशायीजपन्रुद्रंममारह
शिवलोकंगतःसोयंवीरभद्रेणभाषितः ६६
भवत्वंगणशार्दूलोममवैपरिचारकः
शाङ्करान्ममनिर्देशादानयस्वममांतिकम् ६७
शिरोहीनोभवांश्चापिज्वालावक्त्रोभविष्यति
सतूवाचमहात्मानंवीरभद्रंगणेश्वरम् ६८
चक्षुःश्रोत्रंतथाजिह्वानासिकास्यंशिरोगणः
एतैर्विनाव्यवहृतिःकथंमेसंभविष्यति ६९
अभावेशिरसःकिंवामयापापंकृतंविभो
वीरभद्रउवाच-
त्वयैवस्वीकृतापूर्वंदेवीपरमसुंदरी ७०
महेशभवनंनित्यंचार्तुवर्णकरंगकैः
स्वस्तिकंसर्वतोभद्रंनंद्यावर्तादिकंशुभम् ७१
पद्ममुत्पलमांदोलपादोव्यजनचामरे
त्रिशूलंशंखचक्रेचगदाधनुरथैवच ७२
त्रिशूलंडमरुंखड्गंवृषंभृंगिरिटिंशिवम्
तथाष्टपत्रंकमलमन्यद्यंत्रादिकंतथा ७३
कल्पयंतीप्रतिदिनंसेवतेवृषभध्वजम्
कदाचिदथसावेश्यादेवसद्मन्युपस्थिता ७४
राज्ञःकारांकिकःकश्चिद्देववेश्मसमाविशत्
अथतांदृष्टवांस्तत्रसइदंवाक्यमुक्तवान् ७५
काराङ्किकउवाच-
एकांतसंस्थितावेश्यायुवाहंस्थविरश्चन
स्थविरंव्याधितंषंढमशक्तंधनवर्जितम् ७६
अदीर्घमेहनंदीनंपुरुषंयोषिदुत्सृजेत्
अश्मश्रुलंमलच्छन्नंजडंदुर्गंधिदूषितम् ७७

स्वल्पमव्यसनंनारीदूरतःपरिवर्ज्जयेत्
तस्मान्मेदीयतांवेश्येमैथुनंजीवयाशुमाम् ७८
वेश्योवाच-
नियतःसर्वजातीनामिहामुत्रसुखप्रदः
पातिव्रत्यंपरोधर्म्मःस्त्रीणामितिहिशुश्रुम ७९
यदधीनायदावेश्यातदानान्येनसंगता
पतिव्रतेतिविख्यातातस्मात्तंपरिपालयेत् ८०
कारांकिकउवाच-
यदिचैवंमृतिःशीघ्रंभविष्यतिनसंशयः
अथराजांतिकंगत्वाराजानमिदमुक्तवान् ८१
वेश्यावेश्यैवनोभार्यानेतिवक्तुंचनोचितम्
इत्थंराजानमुक्त्वाथमंडंचैवारनालजम् ८२
किंचिदादायतस्यास्तुमंदिरंगतवानयम्
निद्रावसरमालोक्यप्रसृज्यचकरंततः ८३
वस्त्रस्यविवरेतत्रमंडंचिक्षेपदुष्टधीः
एवंकृत्वाततोगत्वाराजानमिदमुक्तवान् ८४
राजन्निर्गत्यगत्वाथवेश्याग्र्यांतवयोषितः
उत्थापयित्वावेश्यांतांसर्वांगंद्रष्टुमर्हसि ८५
उन्मुक्तबंधमथवावसनंपश्ययत्नतः
वेश्यावेश्माथगतवान्राजाकारांकिकंवचः ८६
इदमाहसनिद्रेयंपश्येमांयामिपश्यसि
सतूवाचनृपंतत्रनमेयुक्तमिदंनृप ८७
तन्मातरंवापितरंदर्शनायनियोजय
तद्दृष्टौसर्वमेवेदंव्यक्तमाशुभविष्यति ८८
आनीताह्यथराज्ञातुमातावीक्षितुमुद्यता
वचनात्तुनृपस्यैववस्त्रंशोधयतीवसा ८९
तत्रस्थितंमंडमथविज्ञायांबाह्यमर्दयत्
मर्दनाद्वसनंक्लिन्नंकिंतदित्याहपार्थिवः ९०
नकिंचिद्देवनोकिंचिदितिवेश्याप्रसूरपि
बहुवाक्येनराजाथवसनंवीक्ष्यशंकया ९१

शुक्रक्लिन्नमिदंवासःप्राहैतत्पश्यतामिति
अथदृष्ट्वासमीपस्थास्तथेत्यूचुर्वचोनृपम् ६२
राजाथस्वगृहंगत्वादंडाध्यक्षमभाषत
इदानीमेववेश्यायाःशिरश्छिंध्यविचारयन् ६३
दर्शनीयंशिरस्तस्याघटिकाभ्यंतरेमम
दंडकश्चनृपोक्त्यास्यास्तथाकृत्वाह्यदर्शयत् ६४
वीरभद्रउवाच-
एवंकृतंत्वयापूर्वंप्राप्तंचफलमद्यते
ज्वालयैवहिवक्तात्वंश्रोताद्रष्टाचजिघ्रसि ६५
रसंजानासिमतिमानतिक्रोधीभविष्यसि
शंभुरुवाच-
एवंज्वालामुखोजातोराजामाहेश्वरोऽक्षमी ६६
तस्मात्तुक्षमिणाभाव्यंपरत्रेहसुखेप्सुना
यइदंशृणुयान्नित्यंपुण्याख्यानमनुत्तमम् ६७
विमुक्तपापबंधश्चशिवलोकेभविष्यति ६८

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादेशिवपूजामाहात्म्यकथनं नामदशोत्तरशततमोऽध्यायः ११०

## एकादशोत्तरशततमोऽध्यायः

श्रीरामउवाच-
महेशनाममाहात्म्यंपूजामाहात्म्यमेवच
नमस्कारस्यमाहात्म्यंदृष्टिमाहात्म्यमेवच १
जलदानस्यमाहात्म्यंधूपदानस्यसत्तम
दीपगंधादिदानस्यमाहात्म्यंवदमेगुरो २
शंभुरुवाच-
एकैकनाममाहात्म्यंविस्तरान्नहिशक्यते
संक्षेपेणचतेवच्मिशृणुराघवसादरम् ३
पुरात्रेतायुगेराजाविधृतोनामवीर्यवान्
मृतेपितरिबालोसौभूमिराज्येभिषेचितः ४
समानवयसःसर्वान्समीपस्थांश्चकारसः

येवृद्धायेचविद्वांसस्तेचतस्यनसंमताः ५
युवानःसंमतादुष्टाअकार्यकरणास्तथा
सुस्त्र्यानयनदक्षाश्चचोरकर्मविशारदाः ६
भांडवार्तारतालास्यनिपुणास्तस्यसंमताः
वशीकरणमंत्रज्ञावस्त्रौषधविदस्तथा ७
गीतनर्तनशीलाश्चधूर्त्ताद्यूतविदःप्रियाः
पितृसंमतकर्तॄणांत्यागंचक्रेसपार्थिवः ८
विचार्यसचतैःसार्द्धंदुष्टैःकार्यमकारयत्
एतादृशांस्तथाचान्यान्दुष्टान्सहयुयोजह ९
एतदुक्तिमुपालंब्यशिष्टंसुहृदमत्यजत्
उरोमुष्टिंचफेत्कारंयेकुर्युस्तस्यतेप्रियाः १०
भगलक्षणतत्त्वज्ञारतितंत्रविशारदाः
राजनीतिविहीनंतद्राज्यंसमभवत्तदा ११
गजाश्वरथमुष्ट्राजंगोमहिष्यादिकंचयत्
तत्सर्वंनाशमापन्नमपहारायतस्ततः १२
रत्नानिवसुधान्यानिनदृश्यंतेपुरेतदा
अथभूपांतरेणासौनिर्जितःप्रपलायितः १३
महारण्यमथोगत्वागिरिदुर्गमकल्पयत्
तत्रचाल्पपरीवारश्चोरवृत्तिंसमाश्रितः १४
सुवर्णवस्त्रधान्यादिरत्नगंधादिकंतथा
तत्रतत्रविनिर्दिश्यचोरानायानवंचकान् १५
बंधाद्यकारयत्तैस्तुद्रव्याहरणकर्मणि
यदाहारोनविद्येततदाहारमकल्पयत् १६
गोमहिष्यादिमांसेनयद्यन्नंनोपलभ्यते
अश्वीयनरमांसेनभोजनंपर्य्यकल्पयत् १७
एतादृशमभूद्वृत्तंसंध्योपासादिवर्जितम्
एकस्तुसचिवस्तस्यसुरापोनामराक्षसः १८
नियुंक्तेसर्वकालंतमाहरप्रहरेतिच
एवंरक्षोमतेस्थित्वानानादेशगतान्नरान् १९
नृसहस्रपरीवारोह्यादद्यादकृपालयः

स्वस्याभिमतयोषास्तुज्ञात्वाज्ञात्वासमाहरत् २०
किंचित्कालंचताभुक्त्वातासांमांसमभक्षयत्
एवंहत्वानरान्नारीराज्यंचक्रेसुदुःसहम् २१
एवंवर्षसहस्रंतुराज्यंकृत्वानराधमः
जराशिथिलसर्वांगोवलीपलितदूषितः २२
निर्जीवमभवत्स्थानंसमंताद्दशयोजनम्
अथमृत्युदिनंप्राप्तंराज्ञस्तस्यमहात्मनः २३
मृत्युकालेथसंप्राप्तेस्नातंभूमिगतंनृपम्
तस्यचानुचराःसर्वेपरिवार्योपतस्थिरे २४
सुरापःसचिवःप्राहकिंकार्यंममचादिश
अथराजातथाशक्तोनिर्गतायुस्तदार्दितः २५
नाभेरधस्तुक्षीणासुःकथंचिद्वाक्यमुक्तवान्
त्वंसर्वकालेदैत्येंद्रप्रहरप्राहराहर २६
इत्यथोक्त्वाममारासौयमदूताःसमाययुः
विचित्रंबंधनेयत्नंचक्रुस्ताडनतत्पराः २७
चूर्णिताबंधपाशाश्चहेतिदंडाश्चचूर्णिताः
तद्गात्रस्पर्शमात्रेचतदद्भुतमिवाभवत् २८
अथायातःस्वयंमृत्युःपाशेनैनमयोजयत्
मृत्युपाशमपिच्छिन्नंवीक्ष्यमृत्युरचिंतयत् २९
सर्वमर्त्यमृतिर्दृष्टादृष्टानैतादृशीक्वचित्
इतिचिंतापरेमृत्यौज्वालावक्त्रःप्रतापवान् ३०
वीरभद्रेणनिर्दिष्टःसहसायाच्चशूलभृत्
ज्वालावक्त्रमथालोक्यमृत्युस्तूर्णंपलाययौ ३१
पलायमानंतंदृष्ट्वामृत्युंवह्निमुखस्तदा
अरेरेचोरचोरत्वंतिष्ठतिष्ठक्वयास्यसि ३२
एनसोमुच्यतेचोरःशूलारोपणमात्रतः
एवमाभाष्यमृत्युंतंशूलप्रोतमकल्पयत् ३३
शूलंस्कंधगतंकृत्वादूतान्संग्रथ्यरज्जुना
पादशृंखलविन्यस्तानादायनृपमध्यगात् ३४
विमानवरमारोप्यगीतवाद्यसुशोभितम्

वीरांतिकमथोगत्वासर्वमस्मैन्यवेदयत् ३५
वीरभद्रोपितत्सर्वंशंकरायामितात्मने
नानामुनिगणैर्देवैर्ब्रह्मविष्णुपुरःसुरैः ३६
सेव्यमानायदेवायपार्वतीसहितायच
प्रणिपत्यनिवेद्याथशूलस्थंमृत्युमेवच ३७
तूष्णींबभूवविश्वात्मावीरभद्रःप्रतापवान्
अग्न्याननंवीक्ष्यशिवोविगर्हयन्कथंत्वयैतद्गणसाहसंकृतम्
बिभेषिमृत्योर्नकथंयमाधिकाद्वदस्वसर्वंपरमार्थतोमे ३९
प्रणम्यतंवह्निमुखोऽतिरोषोमृत्युंसमालोक्यननर्तहर्षात्
उवाचचौर्यंकृतमेवमृत्युनातदेषशूलेऽपिमयाप्ररोहितः ४०
विमोचयामासशिवोपिमृत्युंदूतानशेषान्निरुजश्चकार
मृत्युंसमालोक्यशिवोबभाषेमन्नामएषांमरणेसमास्ते ४१
मच्चेतसामन्यधियांचनामहीनाक्षरंवाधिकवर्णयुक्तम्
ममैवलोकंप्रददामिसत्यंह्यनेननामप्रहरेतिभाषितम् ४२
प्रशब्दमात्रंत्वधिकंहरेतिपदप्रदंवैपदमीरयंति
आरादमूंस्त्वंजपतोनमस्वमदीयवाक्यंचयमंवदस्व ४३
नतिंयतिंकीर्तिमुपास्तिमाश्रितादास्यंचकैंकर्य्यमथश्रुतिंवदाः
पंचाक्षरोक्तिंशतरुद्रियोक्तिंशिवस्यकुर्वंतिनतेविचार्याः ४४
मन्नामरुद्राक्षविभूतिधारणोममाग्रतोयस्तुपुराणवक्ता
सर्वेषुपापेष्वपितेषुसत्सुप्रशास्म्यहंनैवयमाधिकारः ४५
येचापिपापान्वितमायिनोनराःपरान्नवस्त्रादिवधूभुजश्च
वाराणसीमृत्युपराश्चयेवैश्रीशैलमर्त्याश्चनतेविचार्याः ४६
यूकाश्चदंशाअपिमत्कुणाश्चमृगादयःकीटपिपीलिकाश्च
सरीसृपावृश्चिकशूकराश्चकाशीमृताःशंकरमाप्नुवंति ४७
इदंनामगृणन्ध्यायेद्योवैहृत्पद्ममंदिरे
त्रियंबकंविरूपाक्षंसोमंसोमार्द्धभूषणम् ४८
त्रिनेत्रकंत्रयीनेत्रंसोमसूर्याग्निलोचनम्
तंनमस्कृत्यदूरस्थोभवमृत्योममाज्ञया ४९
अथाकर्ण्यशिवप्रोक्तंमृत्युस्तुष्टावशंकरम्
नमस्तेदेवतानाथनमस्तेदेवमूर्तये ५०

सर्वज्ञायनमस्तुभ्यंपशूनांपतयेनमः
अथदेवोमहादेवोमृत्युंप्राहवरंवृणु ५१
स्तोत्रेणानेनतुष्टोस्मिमृत्युर्वरमयाचत
त्वदीयंपालयविभोमांचशंकरपापिनम् ५२
तथेत्युक्त्वामृत्युमीशोगच्छवत्सेतिचाब्रवीत्
यमलोकंगतःसोपियमायाशेषमुक्तवान् ५३
शंभुरुवाच-
यइदंशृणुयान्नित्यंपुरयारव्यानमनुत्तमम्
विमुक्तःसर्वपापेभ्योयातिशंकरसन्निधिम् ५४

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादे
एकादशोत्तरशततमोऽध्यायः १११

द्वादशोत्तरशततमोऽध्यायः

शंभुरुवाच-
अथान्यदपिनिर्वच्मिप्रमदारव्यानमुत्तमम्
सुतयादेवरातस्ययत्प्राप्तंनामकीर्तनात् १
देवरातसुताबालाकलानामातिरूपिणी
धनंजयसुतस्यासीद्भार्याशोणस्यधीमतः २
तावुभौनियतौनित्यंधर्म्मैकप्रवणौशुभौ
लब्धवंतौनिधिमथोगंगास्नानायतौगतौ ३
प्रवाहपतितेकूलेमृत्तिकानयनायतौ
कूलादादायमृल्लोष्टंदृष्टवंतौमहाघटम् ४
राजतंचोद्ध्र्वपाषाणमथशोणःप्रियांवचः
इदमाहकथंकार्यंकिंकर्तव्यंहिनोहितम् ५
भार्योवाच-
ननारीमतमालंब्यकिंचित्कार्यंसमाचरेत्
नचनार्याचरेद्गुह्यमप्रियंवाथकिंचन ६
यदिनारीसमक्षंतुद्रविणंदृष्टिमापतेत्
वंचयीततथानारीईदृशैर्वाक्यसंचयैः ७
अस्माभिर्नहिसंप्रेद्दयंकिंवातत्रहितिष्ठति

द्रविणंचेन्नसंप्रेद्त्यंबाधोदर्कंभविष्यति ८
अन्याज्ञातंतुयदिचेत्कुतोज्ञानविनिश्चयः
अप्रदृष्टस्त्विदानींचेन्निभृतःकोपितिष्ठति ९
तिरोधानंनकिंचिच्चेन्माययाकोपितिष्ठति
नचेन्मायामनुष्याणांक्षेत्रपालस्तुतिष्ठति १०
नहिचेद्भैरवश्चेहतिष्ठतितिब्रह्मराक्षसः
नसोपिचेन्महाविद्याराज्ञांतत्रभविष्यति ११
नचजानातिचेद्राजाव्यवहारादिसंभवः
सचेद्गूढप्रकारेणचोरबाधाभविष्यति १२
अप्रमत्तस्यभवतोमहानर्थोभविष्यति
प्रायेणार्थवतांनृणांभोगलिप्साप्रजायते १३
भोगाद्भोगांतरेच्छाचसर्वानुष्ठाननाशिनी
जानातियदिनारीस्वंभावयोगगतंतथा १४
नारीस्वतंत्रतामेतिरोषाल्लब्धप्रकाशिनी
रोषेविश्वासतांयातितदादोषःपुरोदितः १५
विश्वासिनिचविश्रंभःप्रवासोवान्यचित्तता
विश्रम्भाज्जायतेस्त्रीणांनानाविधविचेष्टिता १६
यंकंचित्पुरुषंदृष्ट्वायुवानंप्रीतिरापतेत्
प्रीत्यासंजायतेयोगोयोगान्मैथुनसंगतिः १७
सततंमैथुनेजातेविश्रंभांतरमापतेत्
भवतावातथापूर्वंभुक्तेदानींचभुज्यते १८
काप्रतीच्छातवेदानींप्रीतिःकस्यामथापिवा
काविदग्धासुसंस्निग्धापुरुषादन्यतश्चरेत् १९
योब्रवीदथवाक्यंतांयदिब्रूयास्त्वमद्यमे
सर्वमेवतथावच्मिनान्यथावाक्यमुच्यते २०
इत्थंचधृष्टतांयातातथारूपांतरेणच
द्रव्यमादाययत्किंचिदनुवर्तेत्स्वतंत्रतः २१
समारयित्वातांद्रव्यंगृहीत्वापातयिष्यति
अथपूर्वंपतिमृतौप्रविशेन्नाशुशुक्षणिम् २२
वैधव्येद्रविणंसर्वंधर्मार्थंमेभविष्यति

इतिनिश्चित्यमनसावैधव्येसमुपस्थिते २३
योनिकुंडंसमासाद्यदिवावायदिवानिशि
एकांतस्थानमभ्येत्यविवृत्यवसनंभगम् २४
इदमूचेवचोदुःखादुपस्थस्थकरासती
किंत्वयावैकृतंयोनेकिंवापापमुपाश्रिता २५
शिश्नस्यवाथवापापंयत्त्वदंतरवेशनात्
यच्चकर्तृकृतंपापंमादृक्सेवाविवर्जनात् २६
अतोपिकंडूसंभूतौप्रवेशयेदथांगुलीम्
विचित्रचेष्टांकृत्वातुकंडूबुद्धेरतःपरम् २७
मर्दयित्वाकराभ्यांतत्संताड्यचविवृत्यतु
असकृद्धुन्वतीपादौविवृतास्यातिदुःखिता २८
खट्वाकाष्ठमथालिंग्यस्तनपीडंयथाप्रियम्
अथोविचित्रचित्तत्वेततःप्रद्युष्टतीभवेत् २९
अथवाह्निपुरेस्थित्वाशाकंव्यवहृतंचयत्
आलंब्यवेश्मनिनिशिसंध्यायांविशिखासुच ३०
कृत्वान्यवेषमात्मानंयैःकैरप्युपभुज्यते
अथवाच्यप्रभावेणशंकितायोग्यमाहरेत् ३१
अज्ञातंचगृहंगत्वारमयेदेवनिश्चितम्
नारीसमक्षंलब्धेतुद्रविणेह्येतदिष्यते ३२
तस्मान्मयापिभवतोनविचारप्रयोजनम्
शोणउवाच-
एवमेतन्नसंदेहोगच्छत्वंतिष्ठदूरतः ३३
मलमूत्रविसर्गार्थंस्थित्वागच्छाम्यतःपरम्
तस्यांगतायांशोणोपिवस्त्रखंडंत्वकल्पयत् ३४
एकैकस्मिंस्ततःखंडेत्वग्रहीद्द्रविणंबहु
सैकतेत्ववरंजानुदघ्नंकृत्वाततस्ततः ३५
क्षिप्त्वाधनंपूरयित्वाविष्ठांचक्रेततोपरि
वस्त्राधारंघटंतंचप्रतिचिक्षेपकुत्रचित् ३६
सर्वमज्ञातवत्कृत्वास्नानायप्रययौमुनिः
तस्यभार्याततःस्नानंकृत्वासंपूज्यपार्वतीम् ३७

गच्छेतिभर्त्रासाप्रोक्तास्ववेश्माभ्यागमत्सती
एतामेकाकिनींज्ञात्वामारीचोनामराक्षसः ३८
भर्तृरूपमथास्थायकलामेतदुवाचह
मारीचउवाच-
सप्तगोदावरीतीरेपवित्रंपापनाशनम् ३९
द्राक्षाराममितिप्रोक्तंयत्रभीमःस्वयंस्थितः
भुक्तिमुक्तिप्रदोनृणांस्मरणात्पापनाशनः ४०
तत्रगच्छावहेशीघ्रंत्वंतुनिर्गच्छसुंदरि
कलोवाच-
इदानीमभिषेकायप्रवृत्तोनाभिषिक्तवान् ४१
कथमेतादृशंत्वंहिपूर्वानुक्तंवदिष्यसि
प्रकृतेरन्यथाभावमुत्पातंविदुरुत्तमाः ४२
मारीचउवाच-
भर्तुरप्रतिकूलत्वंनारीणांधर्मउच्यते
प्रतिकूलानुकूलावाममशीघ्रंवदस्वतत् ४३
तूष्णींभूत्वाथसासाध्वीभर्तेत्येवविचार्यतम्
निर्ययौतेनसाबालावनमध्येगतासती ४४
अथमध्याह्नकालोसौक्रियतामाह्निकक्रियाः
राक्षसोथवचःश्रुत्वानानुष्ठानस्थलंत्विह ४५
यत्रतत्रास्तिगंतव्यमितोगच्छावहेततः
किंचित्प्रदेशंगत्वातुगुहांवीक्ष्यसरस्तथा ४६
इहस्थानंहिमेस्थातुंकार्यंस्नानमथप्रिये
इत्युक्त्वासरसिस्नात्वाफलाहारंप्रकल्प्यच ४७
भोजनावसरेप्राप्तेकलादध्यावुमांशिवम्
अयंधवोममनवाइतिध्यानपराभवत् ४८
अथध्यानेनतंचोरंनिश्चित्यचपतिव्रता
भीतातिनम्रवदनाअश्रुपूर्णमुखीतदा ४९
कष्टमापतितंपापमित्युक्त्वानिपापतच
रुदतींतामथोदृष्ट्वाराक्षसःपापनिश्चयः ५०
धर्षितुंतामथारेभेनचैतद्धर्षणंप्रति

बलात्कारमथोकर्तुंयतमानेतुराक्षसे ५१
आजानुनाभिपर्यंतंशैलस्थानमकल्पयत्
शिलासमभवद्वस्त्रंराक्षसोवीक्ष्यतामथ ५२
इत्येवंतांहनिष्यामिखादयिष्याम्यतःपरम्
इत्युक्त्वाभ्रामयित्वासिंशिरश्छेत्तुंप्रचक्रमे ५३
कलाहंमत्पतिर्ज्ञात्वाशापंदास्यतिमाहर
इत्युक्तमात्रेवचसिशिरश्चिच्छेदराक्षसः ५४
प्राप्तायांदुर्मृतिंतस्यामथशैवाःसमागताः
दूताविचित्राभरणाःसर्वायुधधराःशुभाः ५५
एतांविमानमारोप्यशिवालोकमुपागमन्
तामागतांगिरिसुताहर्षेणप्रतिपूज्यच ५६
स्वपादप्रणतांशुद्धामुमावाक्यमभाषत
पातिव्रत्येनतेतुष्टाअभीष्टंप्रददामिते ५७
कलोवाच-
दासीभावंप्रयच्छत्वंत्वत्पादाब्जंममप्रियम्
प्रार्थ्यैःकिमन्यैर्बहुभिस्तथास्त्वितिशिवाब्रवीत् ५८
इंद्रादिवनिताभिःसापूजिताथकलानिधिः
एतस्मिन्नंतरेप्राप्तःशोणोमुनिरथोगृहम् ५९
नतत्रदृष्ट्वातांभार्यांध्यानयोगपरोभवत्
रक्षोहतांमृतांप्राप्तांशिवालोकमुमांप्रति ६०
उमादत्तवरांचापिदृष्टवाञ्ज्ञानचक्षुषा
किंचिद्दुःखश्चिरंध्यात्वापरावृत्यमुनिस्तदा ६१
श्वशुरंगतवान्सोऽथदेवरातंमुनीश्वरः
निवेद्यसर्वंसहितोविश्वामित्रमगान्मुनिम् ६२
निवेद्यतद्वसिष्ठस्यवसिष्ठोऽप्याहतान्मुनीन्
गत्वाकैलासमादौतुदृष्ट्वादेवंमहेश्वरम् ६३
अनुज्ञांशिवतोलब्ध्वापार्वतीमंदिरेगताः
देव्यैविज्ञाप्यतत्सर्वंयथार्थंप्रवदामतत् ६४
तथेत्युक्त्वामुनिवराःकैलासंशंकरालयम्
गत्वाप्रणम्यदेवेशंवीरभद्रेणपूजिताः ६५

विज्ञापयामासुरिदंशोणभार्य्याहृतेतिच
शिवःप्राहमुनींद्रांस्ताञ्ज्ञातमेवमयात्विदम् ६६
अकालमरणंत्वस्याआयुर्वर्षशतंस्थितम्
अकालमृत्युयुक्तानांपुनर्जीवनमस्तिच ६७
दशपुत्रप्रसूर्वीरारूपसौभाग्यवत्यपि
भवद्भिरितिनिश्चित्यसमागतमिहद्विजाः ६८
यमलोकगतानांतुसर्वमेतद्विनिश्चितम्
ममलोकगतानांचगतिरन्यानविद्यते ६९
अनयाकीर्तितंनामप्राणनिर्गमनेपुरा
तयायमलिपिर्मृष्टाकथमायुष्यनिर्णयः ७०
अथवागिरिजायैचनिवेदयतकृत्स्नशः
अथतेपार्वतीपाददर्शनायगताद्विजाः ७१
प्रणम्यमातरंसर्वेविश्वामित्रोऽब्रवीदिदम्
दीनानाथाकृशाभार्याप्रणष्टपितृकाञ्छिशून् ७२
रक्षयित्वापुरामातरिष्टदात्वंसदाह्यभूः
कलापौत्रीममैवेयंत्वामाराध्यपतिंत्वमुम् ७३
शोणंलब्धवतीमातस्त्वत्पूजायाःफलंत्विदम्
तपसालभ्यतेपर्णेदानेनयदिवापिच ७४
व्रतोपवासैरथवाकलासालभ्यतेमया
एतयापरिविष्टान्नंभोक्तुमिच्छामितत्कथम् ७५
पार्वत्युवाच-
यादृशीचेष्यतेभार्य्यातादृशीदीयतेमया
नैनांत्यक्तुमहंशक्ताकिंवात्वंमन्यसेमुने ७६
विश्वामित्रउवाच-
मातात्वमित्येवमयाअविशंकितमीरितम्
शोणोमुनिरयंमातस्तवविज्ञापयिष्यति ७७
शोणउवाच-
तामेवभार्य्यांप्रतिमेप्रीतिरत्युक्तत्कटाति
सैवमेदीयतांभार्य्याचान्यथामरणंभवेत् ७८
पार्वत्युवाच-

भार्यापतीसमावेवविषमौतुविगर्हितौ
तवचासदृशीचेयंसदृशींप्रददाम्यहम् ७९
नचमन्मंदिरेप्राप्तांत्यद्ध्येदेहविवर्जिताम्
शोणउवाच-
यदिनोदीयतेचेयंभार्य्यामन्यांममप्रियाम् ८०
राज्यंमहेश्वरेभक्तिंप्रयच्छवरमुत्तमम्
भविष्यत्येवमेवैतदित्युक्त्वाचाब्रवीन्मुनीन् ८१
भोक्तव्यमिहयुष्माभिर्ममास्मिन्दिवसत्रयम्
प्रतींदुवारेदेवस्यमहेशस्यैवतुष्टये ८२
भोजनीयाःसदाकालमष्टौविप्रामुनीश्वराः
इच्छयायत्रकुत्रापिव्रतमेतदुपक्रमेत् ८३
वत्सरेपरिपूर्णेतुमहाराजतमीश्वरम्
चतुर्निष्कप्रमाणेनतदर्द्धेनैवकारयेत् ८४
श्वेतवस्त्रयुगंसूक्ष्मंचामरेव्यजनेतथा
पादुकोपानहंच्छत्रंसर्वंविप्रेनियोजयेत् ८५
स्वशक्त्यादक्षिणांदत्वाब्राह्मणांश्चविसर्जयेत्
एतदुद्यापनेकुर्यादादौमध्येतथासुधीः ८६
दिनेदिनेतथापूजासोमस्यपरमात्मनः ८७
तत्पुरुषस्यविद्महेमहादेवस्यधीमहि
तन्नोरुद्रःप्रचोदयात् ८८
इतिपूजामंत्रः -
स्थंडिलेपूजयेद्देवंप्रतिमायामथापिवा
एकभक्तंस्वयंकुर्याद्ब्रह्मचर्यसमन्वितम् ८९
एतत्सोमव्रतंप्रोक्तंशिवतुष्टिप्रदंशुभम्
यएवंकुरुतेभक्त्यानारीवापुरुषोपिवा ९०
छायेवशंकरस्यासौनित्यमेवानुवर्तते
अद्यसोमदिनंप्राप्तंमध्याह्नात्परतोभुजिः ९१
यूयंचसर्वेमुनयःकृतपौर्वाह्णिकक्रियाः
माध्याह्निकींक्रियांकृत्वाभोक्तुमर्हथसत्तमाः ९२
मातुर्वचनमाकर्ण्यतथेत्युक्त्वानमस्यच

अनुष्ठानायतेसर्वेगताभागीरथींनदीम् ९३
संगमेमध्यतोवृत्तेकृत्वामाध्याह्निकींक्रियाम्
विश्वेशपूजांकृत्वाचषोडशैरुपचारकैः ९४
अथतेपार्वतीगेहंगत्वादेवींप्रणम्यच
लोकमातुर्नियोगेनशालंकायनकात्मजः ९५
पादप्रक्षालनमुखानुपचारानकल्पयत्
पंचगंधकमादायतान्मुनीनभ्यलेपयत् ९६
राज्यंचमहदाप्नोतियोदद्यात्पंचगंधकम्
पंचबाणसमोभूत्वास्त्रीणांवल्लभतामियात् ९७
विष्णवेयोहिदद्यात्तुसोपिमारसमोभवेत्
कामीत्वकामीयःकुर्यात्कैलासेपंचवत्सरान् ९८
सर्वगंधसमोपेतोभोगीचेष्टार्थसंयुतः
यथेष्टवर्तनोभूत्वाततोजायेतभूमिपः ९९
कस्तूरीचंदनंचंद्रमगरुद्वितयंतथा
पंचगंधंसमाख्यातंसर्वकार्येषुशोभनम् १००
विलिप्तपंचगंधेषुब्राह्मणेषुमहात्मसु
आसीनेषुतदाभ्यागाद्ब्राह्मणःस्थविरःकृशः १०१
उन्मत्तवेषोदिग्वासाजराजर्जरितस्त्वरी
खल्वाटःश्वासकासीचबहुहिक्कीक्षुधान्वितः १०२
लालास्रुतःश्मश्रुकूर्चश्लेष्मानम्रःस्खलत्पदः
द्व्यष्टवर्षातथानारीसर्वाभरणभूषिता १०३
रूपलावण्यसंयुक्तालोकोत्कृष्टस्वरूपिणी
पुरुषान्रूपसंयुक्तान्वीक्षंतीचततस्ततः १०४
गायंतीत्वथनृत्यंतीतंदृष्ट्वाहसतीपतिम्
प्रबाधतेवृद्धधवंशीघ्रमेहिकृशाधम १०५
आलंब्यत्वत्करंवृद्धदुःखितानित्यमस्म्यहम्
भूषणंवसनंघ्राणंस्त्रग्विलेपनमेवच १०६
हासोगीतिस्तथापानंमंडनंशोभनंगृहम्
सर्वत्रऋतुसमृद्धिश्चकामस्यैवाभिवृद्धये १०७
सर्वेषामेवकामानांरतिरेकाप्रयोजनम्

सुखानिसर्वाग्येकत्ररतिरेकत्रचस्थिता १०८
तुलयातुलितंसर्वंरतिःशतगुणाधिका
तन्मादृशीसमासाद्यभवंतंकिंकरिष्यति १०९
इतिचान्यानिवाक्यानिब्रुवाणागृह्यवैकरे
तदुत्तरमुवाचेदंकिंकुर्म्मोभाग्यमीदृशम् ११०
मामारयदुरुक्त्यात्वंमांविज्ञायाथचेदृशम्
एतादृशोद्विजःप्रायात्पार्वतीमंदिरंतदा १११
अविज्ञायैवगिरिजामिदंवचनमब्रवीत्
द्विजउवाच-
अन्नार्थिनमिहप्राप्तंविद्धिमामतिथिंमुने ११२
भोजनावसरेप्राप्तंब्राह्मणान्नहिभोजय
तद्भार्यावचनंप्राहक्वमुनिर्योषिदेवहि ११३
अंधस्यवचनंसर्वमेवमेतादृशंदृढम्
पार्वत्युवाच-
प्रक्षाल्यचरणावेतमासनेउपवेशय ११४
जांबूनदकृतेतीवभोज्येनातर्पयद्द्विजम्
सुरत्नचषकोपेतममृतंब्रह्मवादिनीम् ११५
अरुंधतीमथाहूयपर्य्यवेषयदंबिका
कलाचारुंधतीचैवअनसूयापतिव्रता ११६
परिवेषंपदार्थानांस्रग्गंधाक्षतभूषणाः
अकुर्वन्नंबिकावाक्यात्षड्रसानांपृथक्पृथक् ११७
भुंजानेषुतुविप्रेषुदिग्वासाब्राह्मणाकृतिः
क्षणेनबुभुजेसर्वंदातुंनोशेकुरंगनाः ११८
अथसागिरिजादेवीस्वयंदातुंप्रचक्रमे
यथादत्तमशेषंतुक्षणेनाश्नातिसद्विजः ११९
भांडस्थितमशेषंचभोक्तुमैच्छत्प्रियासह
तथांबिकासमादायप्रादादक्षय्यमस्त्विति १२०
अथवामकरेणासौभोक्तुमैच्छत्ततःसती
तत्राप्यक्षय्यमेवास्तुतवान्नमितिचार्पयत् १२१
करांतरमथोत्पाद्यभोक्तुमैच्छद्द्विजोत्तमः

एवंकरसहस्रंचकृत्वैच्छद्भोजनंद्विजः १२२
दत्त्वादत्त्वापुनर्देवीसंतुष्टानचकोपना
नचित्तमन्यथाकर्तुंशक्यमस्याइतिद्विजः १२३
प्रक्षाल्यहस्तौचरणौहस्तार्पितसुगंधवान्
पार्वतींवाक्यमाहेदंतोषितोहंवरंवृणु १२४
पार्वत्युवाच-
ममदातुंवरंशक्तोयदित्वंब्राह्मणोत्तम
वरेणममकिंकार्य्यंशंकरोमेयतःपतिः १२५
तदाहब्राह्मणोदेवींशंकरःकीदृशस्त्विति
सदृशोऽसौत्वयानोवात्वद्योग्योनान्यथाभवेत् १२६
स्त्रीवल्लभत्वमप्येवरूपंदाह्यंशुभांगना
नोचेदेतादृशीभार्य्यामदधीनाकथंभवेत् १२७
पार्वत्युवाच-
त्वद्भार्य्यावचनंश्रुत्वातववाक्यंतथाद्विज
अपलापस्त्वयंब्रह्मञ्च्छ्रुतंकिंवातथाविषम् १२८
ब्राह्मणउवाच-
धम्मिल्लंतेकरिष्यामिममांकंत्वंसमारुह
प्रचलेद्यदितेचित्तंपातिव्रत्यंकुतस्तव १२९
पार्वत्युवाच-
ममव्रतंद्विजश्रेष्ठशंकरांकैकरोहणम्
अथतच्चित्तमाज्ञायभवान्याःपरमेश्वरः १३०
द्व्यष्टवर्षवयाभूत्वासुस्निग्धकचबंधनः
सुस्निग्धचारुनयनोगोक्षीरसमविग्रहः १३१
कोटिकंदर्पलावण्यःसर्वाभरणभूषितः
स्वपार्श्वस्थितनार्यंसेप्रसारितभुजद्वयः १३२
गायन्मंदतयासाकमुमयापटुतायथा
अथतांपार्वतींशंभुःकरेणाकृष्यचस्मयन् १३३
विन्यस्यहस्तौवनिताद्वयांसेगायन्समस्ताभरणःप्रसन्नदृक्
ननर्तचानंदसमृद्धगात्रोमुनींद्रगीतश्चसकालवेलम् १३४
एतादृशंशिवंध्यात्वाजन्मकोटिशतेष्वपि

नदुःखंजायतेतस्यसदाहर्षश्चजायते १३५
अथस्तुतोमुनिवरैर्नारींकृत्वाहरिंततः
अथसापार्वतीतुष्टादेवंप्राहपिनाकिनम् १३६
पार्वत्युवाच-
किमित्येतादृशंभावमास्थायत्वमिहागतः
नारींकृत्वातथाविष्णुंकिंप्रकृत्यानचागतौ १३७
शिवःप्राहव्रतेचात्रह्यतिथेर्भोजनंशुभम्
जानेसिद्धिमथोयेषांविषादोनाभिजायते १३८
जातेविषादेतुव्रतमसम्यगितिनिश्चयः
सोमवाराःसमायांतियावंतोब्दशतानितु १३९
तावंतिमत्पुरेदेविसर्वभोगसमन्वितः
सभार्य्यपुत्रबंधुश्चवेदोक्तायुष्यजीवितः १४०
पश्चाद्वाराणसींगत्वामृतोमुक्तिमवाप्स्यति
शंभुरुवाच-
अथदेवेस्थितेतत्रमुनयस्त्रिःप्रदक्षिणम् १४१
कृत्वापंचनमस्कारान्पुनःकृत्वाप्रदक्षिणम्
पुनश्चदंडवद्भूत्वाविसृष्टानिर्ययुस्ततः १४२
अथशोणःशोभितांगींभार्यामापद्यनिंदिताम्
राज्यंचभारतेवर्षेधर्मेणापालयद्द्विजः १४३
मानुषानखिलान्भोगान्बुभुजेशिवभक्तिमान्
नित्यंदेवार्चनपरोनित्यंब्राह्मणपूजकः १४४
नित्यदातानित्ययाजीनित्यश्रोतापुराणकम्
मृतःसगतवांल्लोकंशंकरस्यविभोःशुभम् १४५
शंभुरुवाच-
नामकीर्तनमाहात्म्यंप्रसंगात्परिकीर्तितम्
शृणवतांसर्वपापघ्नंभक्तानांचतथानृप १४६
सर्वकल्याणदंनित्यंसुभार्य्याराज्यदंशिवम्
शिवभक्तिप्रदंगोप्यंयस्यकस्यापिनेरयेत् १४७

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादेशिवनाममाहात्म्ये
द्वादशोत्तरशततमोऽध्यायः ११२

## त्रयोदशोत्तरशततमोऽध्यायः

श्रीरामउवाच-
खेदृश्यंतेविमानस्थानानारूपधराः शुभाः
सर्वकामफलोपेताः सुभार्य्याः शतयोषितः १
सहस्रनरनारीभिः पूज्यमानाः पदेपदे
गायंतिविंशतिर्योषारूपलावरायकोमलाः २
करंकवाहिनीचैकाचामरासक्तबाहवः
तालवृंतद्वयंनार्य्योवीजयंतिप्रगृह्यवै ३
सचक्रेचांकमध्येस्याउपधानंतथापरः
एकस्याः करयोर्हस्तः स्तावकानेकसंयुतः ४
नानाविधपरीहासकृतोत्फुल्लमुखांबुजः
एकैकत्रविमानेतुदृश्यतेचंद्रदीधितिः ५
स्त्रीशतेषुविमानेषुदृश्यतेईश्वरः शुभः
एतेकिंपुरायकर्तारोविष्णुमायाथवामुने ६
शंभुरुवाच-
एतेहिब्राह्मणाः पुरायागृहस्थाश्रमवासिनः
येषामेवचसग्रासोदत्तोदशरथेनते ७
तेषांतुममचित्तानांकदाचिदभवन्मतिः
यथेहसुखिनः सर्वेवयंचान्योपजीविनः ८
अस्मानेवानुजीवंतिशतशोमनुजाइह
येनपुरायेनचवयंसर्वेकामानुमोदिनः ९
सुस्त्रीकृतोपचाराश्चसर्वेराज्यसुखान्विताः
जरामरणहीनाश्चयुवानः सर्वदैवहि १०
विचार्यैवंद्विजाः सर्वेवसिष्ठस्याश्रमंययुः
आगतानथसंपूज्यवसिष्ठोवाक्यमुक्तवान् ११
किमर्थमागतायूयंशीघ्रंब्रूतद्विजोत्तमाः
द्विजाऊचुः -
वयमिच्छामहेसर्वेसर्वसंपत्समन्विते १२
विमानेकामगेरोढूंतत्संपादयनोगुरो
तत्तेषांचिंतितंश्रुत्वावसिष्ठोवाक्यमब्रवीत् १३

पुराणंसर्वदाविप्राःश्रोतव्यंपापनाशनम्
धर्मश्चार्थश्चकामश्चमोक्षस्तत्रैवदृश्यते १४
तथेत्युक्त्वाथसुनयःपुराणकुशलंमुनिम्
जग्मुरंगिरसंश्रेष्ठंसर्वशास्त्रविशारदम् १५
सर्वागमपुराणज्ञंसदासत्कर्म्मचारिणम्
इदमूचुर्नमस्कृत्यवयंसफलजीविनः १६
कृतकृत्यावयंब्रह्मन्साक्षाद्दृष्टोऽसियन्मुने
अंगिराउवाच-
यत्कार्यमागतायूयंतत्कार्यंकरवाण्यहम् १७
पुराणंश्रोतुकामास्तुयूयमत्रसमागताः
कीर्तयिष्येविधानंवःसमस्ताघविनाशनम् १८
सर्वज्ञानप्रदंदेवंतत्वविज्ञानसंभवम्
शिवभक्तिप्रदंहृद्यंविष्णुभक्तिप्रदंशुभम् १९
विचित्रस्वगतिप्राप्तिज्ञानदंरमणीप्रदम्
नानाविधशुभज्ञानंरतितंत्रप्रकाशकम् २०
भुक्तिमुक्तिप्रधानंचविधिदर्शनदीपकम्
विचित्रभक्तिकथनंभक्तिसाहसकीर्तनम् २१
व्रतप्रतिष्ठादानादिभस्मपूजाविधिप्रद्रम्
पुराणंपाद्ममुदितंब्रह्मपद्मोपनिर्वृतम् २२
मेहश्वरेणकथितंप्रमथाकृतिवर्णनम्
एतदन्यत्रकथितंपुराणेपाद्मएवतु २३
दिलीपेनपुरापृष्टोवसिष्ठःप्रोक्तवानिदम्
तच्छृणुध्वंमुनिवराज्ञानंसर्वंभविष्यति २४
अथतद्वचनाद्विप्राःपुराणश्रवणेरताः
कथंश्रोतव्यमधुनाकिंकृत्वेत्यब्रुवन्मुनिम् २५
सोऽपिसर्वंसमाचष्टशृणुधर्मंसनातनम्
नमस्कृत्यपुराणज्ञंदद्याच्चार्घासनंततः २६
निषीदतत्रचेत्युक्त्वागंधपुष्पैःसमर्चयेत्
आत्मयोगंचतांबूलमधिकंवासमर्पयेत् २७
ब्रूहिपुण्यकथांब्रह्मन्पौराणिकीमितीरयेत्

नखट्वासनमारुह्यनोच्चासनमथापिवा २८
नीचासनोवैशृणुयाद्धर्म्मकामार्थसिद्धये
शृणिवत्युक्त्वापुराणज्ञइमंमंत्रमुदीरयेत् २९
नमोहरिंहरमथोगणेशंभारतीमतः
इष्टदेवंनमस्कृत्वापुराणंवक्तुमर्हति ३०
अर्द्धयामंप्रतिदिनंयदिवापीच्छयाभवेत्
एवंपाठसमाप्तिंचश्रुत्वाकृत्यंसमाचरेत् ३१
श्रोतुश्चतूष्णींमननंतूष्णींश्रवणमेववा
अन्यथाभारतीक्रुद्ध्येत्तत्क्रोधान्मूकताभवेत् ३२
तस्मात्पुराणश्रोताचतांबूलादिसमर्पणम्
वक्तुश्चजीविकाकार्यास्वसामर्थ्यानुसारतः ३३
पुराणप्रक्रमेदेयंसचेलोद्गमनीयकम्
सूक्ष्मांबरमथोवापिवस्त्रद्वितयमर्पयेत् ३४
आसनंतुमहच्चित्रंरम्यमूर्जस्वलंमृदु
सुवर्णंवातथादद्याद्गोभूगेहादिकंतथा ३५
एतत्समस्तंविप्रेंद्रादक्षिणामूर्तिनापुरा
शंकरेणमुनीनांहिभाषितंचदिवौकसाम् ३६
अथतेमुनयःसर्वेतंप्रणम्यासनस्थितम्
पृथक्पृथक्चतांबुलंदत्वाशुश्रूषवःस्थिताः ३७
तेनापिकथितंसर्वंपुराणंसर्वसंप्रदम्
उपांताध्यायपर्य्यंतंश्रुतवंतोद्विजोत्तमाः ३८
दिलीपउवाच-
कामगेनविमानेनसर्वसंपत्समृद्धिना
सर्वतःसुखयुक्तेनपुण्यस्थानमुपस्थितम् ३९
वसिष्ठउवाच-
नालंपृष्टंत्वयाराजन्नितोप्यतिशयांतरैः
क्रीडमानाभविष्यंतियेनतत्पुण्यमुच्यते ४०
सुधाधवलितंकृत्वाशिववेश्मसमंततः
स्त्रियोरूपविलासाढ्याःसर्वालंकारभूषिताः ४१
नानासुगीतकुशलानानानृत्यविशारदाः

चतस्रोऽष्टौषडथवामर्द्दलध्वनिकाःस्त्रियः ४२
वशिन्यौद्वेश्रावजिक्यौकोणिकाधमनेउभे
लासिक्यस्तुचतस्रःस्युःसंतुष्टैकाथगायिका ४३
एकाद्वेवासुगीतज्ञेऽमुखरेहिप्रकीर्तिते
कोणवाद्यकृतेद्वेतुतूष्णींभूताःषडष्टवा ४४
सर्वारूपविलासिन्यःसर्वाश्चापतितस्तनाः
रतितंत्राधिकुशलास्ततएवाविशंकिताः ४५
सुसूक्ष्मावस्त्रवेषाश्चविद्युच्चंचलदृष्टयः
एतादृशीभिर्योषाभिर्येननृत्यंहिकारितम् ४६
एकस्मिन्दिवसेराजन्वत्सरान्सविमानगः
शतस्त्रीवीक्षितमुखोयुवाबहुभिरर्चितः ४७
आनंदपोषसंपूर्णःक्रोधेर्ष्यादिविवर्जितः
पंचगंधविलिप्तांगःसचंद्राहिदलाननः ४८
सूर्योपमस्तुयोषाश्चसर्वास्तादशनान्विताः
सद्योविकसितामोदिपारिजातकृतस्रजः ४९
सर्वाविकसितारोहिरक्तसंधिकृतस्रजः
धम्मिल्लेवक्षसितथाबिभ्रत्यःसुस्मिताधराः ५०
चरत्येतादृशीभिस्तुनृत्यगीतानुमोदितः
एवंविमानगोभूत्वाउषित्वाकालमक्षयम् ५१
पश्चाज्ञायेतनृपतिरेवंकृत्वापुनस्तथा
राज्यंस्वर्गफलंभुक्त्वाशिवभक्तोभविष्यति ५२
शंभुरुवाच–
दिलीपायवसिष्ठोक्तंमुनीनामंगिरोब्रवीत्
तेतथाकृतवंतश्चतौर्य्यत्रिकमुमापतेः ५३
श्रुत्वापुराणंपाद्मंचसमग्रंसुखिनोभवन्
तएतेब्राह्मणारामविमानवरमास्थिताः ५४
दृश्यंतेखेचसुखिनःसदामुदितमानसाः
एतत्तेसर्वमाख्यातंपुराणेषुविनिश्चितम् ५५
इतःपरंचकिंभूयःश्रोतुमिच्छसिराघव ५६
इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादे

त्रयोदशोत्तरशततमोऽध्यायः ११३

## चतुर्दशोत्तरशततमोऽध्यायः

रामउवाच-
कएषदृश्यतेव्योम्निसर्वाभरणभूषितः
विमानस्थोमहादीप्तमध्याह्नार्कइवापरः १
दुष्प्रेक्ष्यःसर्वमर्त्यानांतस्यांकेचारुहासिनी
अपराश्रीरिवब्रह्मंस्तथापंचसुयोषितः २
गायंतिमधुरांगीतिंसुभ्रूभंगनिरीक्षणैः
मंदस्मितैःकरतलशब्दास्फोटिकयातथा ३
क्वचिद्गलकृतैर्गीतैरन्योन्यकरताडनैः
अन्योन्यमुखमालोक्यप्रलोभैर्गीतपूर्वकैः ४
क्रीडन्नास्तेमहायोगीपद्मकिंजल्कसन्निभः
एवंचरितपुण्येनकेनवातद्वदस्वमे ५
शंभुरुवाच-
एषविप्रःपुरारामसर्वसंपत्समन्वितः
नानाविधसुखोपेतोभार्य्यापोषणतत्परः ६
अपुत्रोदानहीनश्चदेवतार्चनवर्जितः
पंचयज्ञविहीनश्चस्वाध्यायपरिवर्जितः ७
प्रातर्म्मध्याह्नसायाह्नभोजनप्रवणोऽशुचिः
कदाचिदगमद्गेहंगौतमस्यमहात्मनः ८
त्र्यंबकस्यगिरौपुण्येनानामुनिगणाश्रिते
तत्रापिशोभितगृहंस्फटिकस्तंभकल्पितम् ९
अगुरुद्रवकस्तूरीचंद्रकुंकुमचर्चिता
भित्तिर्यस्यचसंतानकुसुमामोदसौष्ठवम् १०
कस्तूरिकापुष्परससमुत्सेचितभूतलम्
सूक्ष्मसुश्वेतविविधवितानपरिशोभितम् ११
अंगणंशोभितमहाकदलीपूगशोभितम्
समीपसरसीजातमंजुकूजन्मधुव्रतम् १२
पाटीरतरुसंभूतगंधपूरितदिङ्मुखम्

शिन्नागीतकृताल्हादगीतपूरितदिङ्मुखम् १३
निदाघजनितातापनाशयंत्रविनिर्मितम्
कदलीदलसंच्छादिपावकाकल्पितच्छदम् १४
पाटीरतरुसुस्निग्धसांद्रद्वारकपाटकम्
सौगंधिकमहामोदिकल्पितांतरभित्तिकम् १५
ईशानभागसुभगरतिकल्पितवेदिकम्
हाटिकाकल्पितपदंविचित्रवेदिकायुतम् १६
सुस्निग्धनिबिडच्छायंवटमूलोपकल्पितम्
प्रसूनकदलीखंडसरोभिःप्रांतशोभितम् १७
महावटाग्रसंलग्नतुषारितपयोधरम्
नाकोपवनसंपन्नविचित्रारामशोभितम् १८
वापीकूपतडागाद्यमनेकवनशोभितम्
मंदंमंदंववौवायुर्यत्रगेहेसुखप्रदः १९
वादिन्यश्चारुसर्वांग्योवाद्यानिस्मरसंपदः
वीणांवेणुंत्रिवेणुंचवादयंतिवरांगनाः २०
तौर्य्यत्रिककृतोनार्य्यश्चतुर्दिन्नुतथोद्ध्र्वतः
सुवर्णादिकपात्रेषुवटकाभस्मनःशुभाः २१
वासिताःसर्वगंधैश्चसुधूपैरपिधूपिताः
कुशग्रथितसंघाश्चग्रन्नमालाश्चकोटिशः २२
कृष्णाजिनसहस्राणिबहिःप्रांतेस्थितानिच
एतादृशेगृहवरेदेववंद्योमुनीश्वरः २३
कर्पूरादींश्चसंस्थाप्यचतुर्दिन्नुमुनीश्वरः
पाटीरपीठेकर्पूरसिंहासनमकल्पयत् २४
सून्मंश्वेतंचसुस्निग्धमावृत्तंघनसारकैः
सुगंधवासितजलैःस्नाप्यन्नीरेणशंकरम् २५
अन्यैश्चवैदिकैर्मंत्रैःस्नापयित्वासदाशिवम्
दारुचंद्रोपपीठेतुवस्त्रपीठंनिधायच
पात्रिकामग्रतःस्थाप्यस्थापयित्वादलेष्वमून् २६
एकस्मिन्नन्नताःपात्रेअन्यस्मिन्सतिलान्नताः
पंचगंधकमेकस्मिन्नन्यस्मिन्नष्टगंधकम् २७

काश्मीरंमृगनाभिंतुकर्पूरंचंदनंतथा
पात्रेष्वन्येषुविन्यस्यपूजास्थानेप्रकल्प्यच २८
नानावरणमार्गेणपूजातत्रविधीयते
लिगमध्येस्थितोदेवःपंचवक्त्रःसदाशिवः २९
तस्यप्रावरणंलिगंशक्तिस्तस्यविधीयते
शक्तेरावरणंविष्णुर्विष्णोरावरणंविधिः ३०
ब्रह्मप्रावरणंचंद्रस्तस्यसूर्यस्ततःश्रुतिः
दिग्देवतासुतद्गुप्तिस्तासामावरणंदिशः ३१
दिशामावरणंशंभुस्तस्यचावरणंगुणाः
दशप्रावरणंह्येतच्छिवलिगार्चनंशुभम् ३२
केषांचिन्मतमेतत्स्यादथप्रावरणांतरम्
विद्यावरणमाख्यातंतदुमावरणंस्मृतम् ३३
विष्णुरावरणंतस्याविष्णोश्चावरणंविधिः
ब्रह्मप्रावरणंचंद्रस्तस्यभानुरथावृतिः ३४
भानोरावरणंचेशइतिषोढावृतिःस्मृता
विधिंविनासमाख्यातंपंचावरणमुत्तमम् ३५
शशांकविष्णुशक्तीनामेतदावरणत्रयम्
अंबिकावरणंप्रोक्तमेकावरणमुत्तमम् ३६
अथवालोकपालाःस्युरावृतिःसोमपूजने
अनावरणमथवापूजनंशस्यतेशिवे ३७
पत्रिकाष्टदलेष्वेवस्थितद्रव्यैर्यजेच्छिवम्
पत्रिकालक्षणंवक्ष्येसर्वकर्मोपयोगितम् ३८
स्वर्णेनराजतेनाथताम्रेणाथप्रकल्पितम्
मुक्ताशुक्तिनिभंकुर्यात्पत्रिकाष्टदलंशुभम् ३९
पद्मपत्रसमानाष्टकोणाकारंप्रकल्पयेत्
पलमात्रंततःशस्तंनिर्वृतंविस्तृतंपदम् ४०
अस्थूलमध्यमुपरिपद्माकृतिदलाष्टकम्
अथवाशक्तिमार्गेणपंचपत्रंप्रकल्पयेत् ४१
त्रिपत्रमथवाकुर्याच्छक्तिभावेमतेनच
यथास्याच्छोभनंपात्रंतथाकुर्य्याद्विचक्षणः ४२

शक्त्यांतरितरुद्राक्षैः कल्पिताष्टशतैः शुभा
मालोपवीतंत्रिंशत्याअष्टकेनप्रकल्पितम् ४३
प्रगंडयोरथैकैकंबद्धातुद्वेप्रकोष्ठयोः
शिरस्येकाधृतातेनकंठेचपरमर्षिणा ४४
रुद्राक्षैः स्फटिकैरत्नैः कल्पिताह्यक्षमालिका
व्याघ्रचर्मासनंकृत्वापद्मासनगतोमुनिः ४५
आवाहनासनंचार्घ्यंपाद्यंवाचमनीयकम्
निर्वर्त्यगंगासलिलैः स्नापयामासशंकरम् ४६
अष्टगंधकसंयुक्तैः पुष्पैर्बकुलपाटलैः
स्वर्णभांडस्थितैर्वस्त्रशोधितैर्वासितैर्दृढम् ४७
द्वारेताम्रकटाहश्चप्रबंधद्रोणिनाशुभम्
गोशृंगेणविषाणेनगवयस्यतथाक्वचित् ४८
दक्षिणावर्तशंखेनरत्नपात्रैरथापिवा
स्वर्णैर्वाराजतैर्वापिताम्रैः कांस्यैरथापिवा ४९
स्वर्णैश्चसूक्ष्मकलशैः स्नापयामासचेच्छया
अथवामृणमयैः कुर्य्यात्पद्मपत्रैरथापिवा ५०
पालाशैश्चूतजंब्वाद्यैः पात्रैः संस्नापयेद्विभुम्
स्नानानामथसर्वेषांधारास्नानंविशिष्यते ५१
नमस्तेत्यादिमंत्रेणशतरुद्रियसंज्ञिना
शंचेत्याद्यनुवाकेनशांतिरूपेणचेश्वरम् ५२
आवृत्यचयथाशक्तिपश्चाद्गधादिविन्यसेत्
ततश्चशोभनैः पुष्पैः पत्रैर्बिल्वैः समर्चयेत् ५३
तुलसीमारुवदलैः कल्हारैश्चमहोत्पलैः
नीलोत्पलैरुत्पलैश्चशेषैश्चकरवीरकैः ५४
कर्णिकारैः सितांभोजैरपराजितयातथा
तिलाक्षतैरक्षतैश्चश्रीपत्रैस्तिलमिश्रकैः ५५
एवंमहेशमीशानंपूजयामासगौतमः
कर्पूरागरुकस्तूरीसर्ज्जागरुकचंदनैः ५६
अन्यैश्चधूपयामासषोडशाथप्रदीपिकाः
कर्पूरवर्त्तिसंयुक्तादीपयंत्रोपरिस्थिताः ५७

निवेदितंमहेशायअथनैवेद्यमुत्तमम्
सुपक्वशालिपिष्टान्नंभक्ष्यंलेह्यंचचोष्यकम् ५८
मधुरादिसमोपेतंपंचभक्ष्यसमन्वितम्
अनेकपक्वशाकाढ्यमनेकपक्वमिश्रितम् ५९
पानंविंशतिसंयुक्तंद्राक्षारंभाफलान्वितम्
सूपाष्टकादिसंयुक्तंयुक्तंमूलफलादिना ६०
यथासंभवसंयुक्तैरन्यैरप्युपकल्पितम्
अग्रपुष्पसमोपेतंनैवेद्यंप्रददौमुनिः ६१
सौवर्णपात्रिकान्यस्तनीराजनसहस्रकम्
सोपहारायदेवायदत्वाचैवनमस्यच ६२
पूगखंडानथोघृष्टान्पत्राणिक्षालितानिच
अपृष्ठाग्राणिसुश्वेतच्छदयावृतिकानिच ६३
घनसारकचूर्णंचन्यस्तपत्रत्रयंशुभम्
सौवर्णपात्रविन्यस्तमिदंतांबूलमीश्वरे ६४
अथप्रदक्षिणंकृत्वानमस्कारानन्तरम्
अष्टयोषास्ततःप्राप्तास्तंत्रीवेणवादिधारिकाः ६५
विचित्रवाद्यवादिन्यःसंप्राप्तामुनिसन्निधिम्
क्षुद्रतालयुगंगृह्यस्वयंगातुंप्रचक्रमे ६६
गौतमेगातुमुद्युक्तेतानंकुर्युरथांगनाः
मंदंमंदंचवाद्यानिवादयंतितथापराः ६७
मधुरंगायतिमुनौस्वरामूर्तिभृतस्तथा
प्रानृत्यंतमहेशाग्रेतदद्भुतमिवाभवत् ६८
एतस्मिन्नंतरेप्राप्तोभगवान्नारदोमुनिः
तमागतंगौतमोपिसंपूज्यप्रणिपत्यच ६९
आहचैनंकृतार्थोस्मिनचकश्चिन्मयासमः
तवागमनकृत्यंकिंकुतआगमनंतथा ७०
श्रीनारदउवाच-
पातालादागतोस्मीहभुक्त्वावैबाणमंदिरे
आयास्यंतिमहात्मानोबाणशुक्रादयोगृहम् ७१
अथक्षणादभ्यगाच्चबाणःपरपुरंजयः

विंशत्यत्नौहिणीयुक्तोगजमारुह्यसोसुरः ७२
अपरंहिगजंशुक्रःप्रह्लादोरथमुत्तमम्
वृषपर्वारथवरंबलिस्तुरगमुत्तमम् ७३
आगतानथतान्सर्वानाज्ञायसतुगौतमः
सशिष्योनिर्जगामाथह्यादायार्घ्यादिकंत्वरा ७४
गौतमंचापितेवीन्दयावरुह्यचगजादिकात्
नमश्चक्रुरथोदैत्यास्तंनमस्कृत्यभार्गवम् ७५
आलिग्यरात्तसान्सर्वान्पूजयित्वायथाविधि
सेनायाःसन्निवेशंचचकारमुनिपुंगवः ७६
पादौप्रत्ताल्यशुक्रस्यजलंमूर्ध्निधृतंतथा
विचित्रफलसंयुक्तंदत्तवानर्हणंमुनिः ७७
वापीतडागसरसीस्नानपूर्वकृतक्रियाः
संगमेवर्तमानेतुगौतमस्याश्रमेशुभे ७८
तद्गेहंतुप्रविश्याथरात्तसास्सपुरोहिताः
देवपूजाप्रपत्तिंचचक्रुःसर्वेद्विजालये ७९
सद्यःप्रकल्पितायांचवेद्यांशुक्रोयजच्छिवम्
तस्यैववामभागेतुप्रह्लादोयजदच्युतम् ८०
सोमंचबलिरप्येवमन्येचासुरपुंगवाः
अथबाणोयजद्देवमेकमेवत्रियंबकम् ८१
शुक्रोपिभगवन्तन्तमुमानाथमपूजयत्
गौतमोप्यथमध्याह्नेपूजयामासशंकरम् ८२
सर्वेशुक्लांबरधराभस्मोद्धूलितविग्रहाः
सितेनभस्मनाकृत्वासर्वस्थानेत्रिपुंड्रकम् ८३
नत्वातुभार्गवंसर्वेभूतशुद्धिंप्रचक्रमुः
हृत्पद्ममध्येसुषिरंतत्रैवभूतपंचकम् ८४
तेषांमध्येमहाकाशमाकाशेनिर्मलानलम्
तन्मध्येचमहेशानंध्यायेद्दीप्तिमयंशुभम् ८५
अज्ञानसंयुतंभूतंशमलंसर्वसंगतम्
तद्देहमाकाशदीपेप्रदहेज्ज्ञानवह्निना ८६
आकाशस्यावृतंचाहंदग्ध्वाकाशमथोदहेत्

दग्ध्वाकाशमयोवायुमग्निभूतंतदादहेत् ८७
अब्भूतंचततोदग्ध्वापृथिवीभूतमेवच
तदाश्रितान्गुणान्दग्ध्वाततोदेहंप्रदाहयेत् ८८
एवंदहित्वाभूतानिदेहीतज्ज्ञानवह्निना
शिखामध्यस्थितंविष्णुमानंदरसनिर्भरम् ८९
निष्पन्नचंद्रकिरणसंकाशकिरणंशिवम्
शिवांगोत्पन्नकिरणैरमृतद्रवसंयुतैः ९०
सुशीतलाततोज्वालाप्रशांताचन्द्ररश्मिवत्
प्रसारितसुधारुग्भिःसांद्रीभूतश्चसंप्लवः ९१
क्रमेणप्लावितंभूतग्रामंसंचिंतयेत्परम् ९२
इत्थंकृत्वाभूतशुद्धिंक्रियार्होमर्त्यःशुद्धोजायतेएवशुद्धः
पूजांकर्तुंजाप्यकर्म्मापिपश्चाद्देवध्यानेब्रह्महत्यादिहानिः ९३
एवंध्यात्वाचंद्रदीप्तिप्रकाशंध्यानेनारोप्याशुलिंगेशिवस्य
सदाशिवंदीपमध्येविचिंत्यपंचाक्षरेणार्चनमव्ययंतु ९४
आवाहनादीनुपचारांस्तथापिकृत्वास्नानंपूर्ववच्छंकरस्य
उदुंबरंराजतंस्वर्णपीठंवस्त्रादिछन्नंसर्वमेवेहपीठम् ९५
अंतेकृत्वाबुद्बुदानांचवृष्टिंपीठेपीठेनागमेकंपुरस्तात्
कुर्यात्पीठेचोर्ध्वकेनागयुग्मंदेवाभ्याशेदक्षिणेवामतश्च ९६
जपापुष्पंनागमध्येनिधायमध्येवस्त्रंद्वादशप्रातिगुणये
सुश्वेतेनतस्यमध्येमहेशंलिंगाकारंपीठयुक्तंप्रपूज्यम् ९७
एवंकृत्वाबाणमुख्यादितीशादत्त्वादत्त्वापंचगंधाष्टगंधम्
पुष्पैःपत्रैःश्रीतिलैरक्षतैश्चतिलोन्मिश्रैःकेवलैश्चप्रपूज्य ९८
धूपंदत्त्वाविधिवत्संप्रयुक्तंदीपंदत्त्वाचोक्तमेवोपहारम्
पूजाशेषंतेसमाप्याथसर्वेगीतंनृत्यंतत्रतत्रापिचक्रुः ९९
अथास्मिन्नंतरेगौतमस्यप्राप्तःशिष्यःशंकरात्मेतिनाम्ना १००
उन्मत्तवेशोदिग्वासाअनेकावृतिमाश्रितः
क्वचिद्द्विजातिप्रवरःक्वचिच्चंडालसन्निभः १०१
क्वचिच्छूद्रसमोयोगीतापसःक्वचिदप्युत
गर्जत्युत्पततेचैवनृत्यतिस्तौतिगायति १०२
रोदितिशृणुतेव्यक्तंपतत्युत्तिष्ठतिक्वचित्

शिवज्ञानैकसंपन्नःपरमानंदनिर्भरः १०३
संप्राप्तोभोज्यवेलायांगौतमस्यांतिकंययौ
बुभुजेगुरुणासाकंक्वचिदुच्छिष्टमेवच १०४
क्वचिल्लेहतितत्पात्रंतूष्णीमेवाभ्यगात्क्वचित्
हस्तंगृहीत्वैवगुरोःस्वयमेवाभुनक्क्वचित् १०५
क्वचिद्गृहांतरेमूत्रंक्वचित्कर्दमलेपनम्
सर्वदातंगुरुर्दृष्ट्वाकरमालंब्यमंदिरम् १०६
प्रवेश्यस्वीयपीठेतमुपवेश्याभ्यभोजयत्
स्वयंतदस्यपात्रेणबुभुजेगौतमोमुनिः १०७
तस्यचित्तंपरिज्ञातुंकदाचिदथसुंदरी
अहल्याशिष्यमाहूयभुंक्ष्वेत्युक्त्वाथसाशुभा १०८
सौवर्णेभाजनेचान्नंनिधायचषकांतरे
पानादिकमथोदत्वाएकस्मिन्पावकंपुनः १०९
निधायांगारनिचयंकंटकानांचयंपरे
निधायभुंक्ष्वभुंक्ष्वेतिसचापिबुभुजेमुनिः ११०
यथापपौहिपानीयंतथावह्निमपिद्विजः
कंटकानपिभुक्त्वासयथापूर्वमतिष्ठत १११
पुराहिमुनिकन्याभिराहूतोभोजनायच
दिनेदिनेतत्प्रदत्तंलोष्ठमंबुचगोमयम् ११२
कर्दमंकाष्ठदंडंचभुक्तवाप्रीत्याथहर्षितः
एतादृशोमुनिरसौचंडालसदृशाकृतिः ११३
सुजीर्णोपानहौहस्तेगृहीत्वातुतथाकरे
अंत्यजोचितभाषाभिर्वृषपर्वाणमभ्यगात् ११४
वृषपर्वेशयोर्मध्येदिग्वासाःसमतिष्ठत
वृषपर्वातमज्ञात्वापीडयित्वाशिरोऽच्छिनत् ११५
हतेतस्मिन्द्विजश्रेष्ठेजगदेतच्चराचरम्
अतीवकलुषमभवत्तत्रस्थामुनयस्तथा ११६
गौतमस्यमहाशोकःसंजातःसुमहात्मनः
निर्ययौचक्षुषोर्वारिशोकंसंदर्शयन्निव ११७
गौतमःसर्वदैत्यानांसंनिधौवाक्यमुक्तवान्

किमनेनकृतंपापंयेनच्छिन्नमिदंशिरः ११८
ममप्राणाधिकस्येहसर्वदाशिवयोगिनः
ममापिमरणंसत्यंशिष्यरूपीयतोगुरुः ११९
शैवानांधर्मयुक्तानांसर्वदाशिववर्तिनाम्
मरणंयत्रदृष्टंस्यात्तत्रनोमरणंध्रुवम् १२०
शुक्रउवाच-
एनंसंजीवयिष्यामिममगोत्रंशिवप्रियम्
किमसौम्रियतेब्रह्मन्पश्यमेतपसोबलम् १२१
इतिवादिनिविप्रेंद्रेगौतमोऽपिममारह
तस्मिन्मृतेऽथशुक्रोऽपिप्राणांस्तत्याजयोगतः १२२
तस्यापिहतमाज्ञायप्रह्लादाद्दानवेश्वराः
सर्वेमृताःक्षणेनैवतदद्भुतमिवाभवत् १२३
मृतमासीदथबलंतस्यबाणस्यधीमतः
अहल्याशोकसंतप्तारुरोदोच्चैःपुनःपुनः १२४
गौतमेनमहेशस्यपूजयापूजितोविभुः
वीरभद्रोमहायोगीसर्वंदृष्ट्वाचुकोपह १२५
अहोकष्टमहोकष्टंमाहेशाबहवोमृताः
शिवंविज्ञापयिष्यामितेनोक्तंकरवाण्यहम् १२६
इतिनिश्चित्यगतवान्मंदराचलमव्ययम्
नमस्कृत्वाविरूपाक्षमिदंसर्वमथोक्तवान् १२७
ब्रह्महरीस्थितौतत्रदृष्ट्वाप्राहशिवोवचः
मद्भक्तैःसाहसंकर्मकृतंदृष्ट्वावरप्रदः १२८
गत्वापश्यामहेविष्णोयुवामप्यागमिष्यथ
अथेशोवृषमारुह्यवायुनाधूतचामरः १२९
नंदिकेनसुवेषेणधृतेछत्रेतिशोभने
सुश्वेतहेमदंडेचनान्ययोगेधृतेविभोः १३०
महेशानुमतिंलब्ध्वाहरिर्नागांतकेस्थितः
आरक्तनीलछत्राभ्यांशुशुभेलक्ष्यकौस्तुभः १३१
शिवानुमत्याब्रह्मापिहंसारूढोभवत्तदा
इंद्रगोपप्रभाकारच्छत्राभ्यांशुशुभेविधिः १३२

इंद्रादिसर्वदेवाश्चस्वस्ववाहनसंयुताः
अथतेनिर्ययुःसर्वेनानावाद्यानुमोदिताः १३३
कोटिकोटिगणाकीर्णागौतमस्याश्रमंगताः
ब्रह्मविष्णुमहेशानादृष्ट्वातत्परमाद्भुतम् १३४
स्वभक्तंजीवयामासवामकोणनिरीक्षणात्
शंकरोगौतमंप्राहतुष्टोऽहतेवरंवृणु १३५
गौतमउवाच-
यदिप्रसन्नोदेवेशयदिदेयोवरोमम
त्वल्लिंगार्चनसामर्थ्यंनित्यमस्तुमहेश्वर १३६
वृतमेतन्मयादेवशृणुष्वैतत्त्रिलोचन
ममशिष्योमहाभागोहेयाहेयादिवर्जितः १३७
प्रेक्षणीयंममत्वेननचपश्यतिचक्षुषा
नचघ्राणेनघ्रातव्यंनदातव्यंनचेतरत् १३८
इतिबुद्ध्वातथाकुर्वन्सहियोगीमहायशाः
उन्मत्तविकृताकारःशंकरात्मेतिकीर्तितः १३९
नकश्चित्तंप्रतिद्विष्यान्नचतंहिंसयेदिति
एतन्मेदीयतांदेवएतेषाममृतिस्तथा १४०
श्रीभगवानुवाच-
आकल्पमेतेजीवंतुततोमुक्तिंभजंतुच
त्वयाकृतमिदंवेश्मविस्तृतंविकृतंशुभम् १४१
तिष्ठामःक्षणमात्रंतुततोयास्याममंदिरम्
गौतमउवाच-
अयोग्यंप्रार्थयामीशह्यर्थीदोषंनपश्यति १४२
ब्रह्माद्यलभ्यंदेवेशदीयतांयदिरोचते
अथेशोविष्णुमालोक्यगृहीत्वातुकरंहरेः १४३
प्रहसन्नंबुजाभाक्षमित्युवाचसदाशिवः
म्लानोदरोसिगोविंददेयंतेभोजनंकिमु १४४
स्वयंप्रविश्ययदिवास्वयंभुंक्ष्वस्वगेहवत्
गच्छवापार्वतीगेहंयाकुक्षिंपूरयिष्यति १४५
इत्युक्त्वातत्करालंबीएकांतमगमद्विभुः

आदिश्यनंदिनंदेवोद्वाराध्यत्तंयथोक्तवत् १४६
गौतमंसमुवाचायमुत्तरंविष्णुभाषणम्
सदाशिवउवाच-
संपादयान्नंसर्वेषांभोक्तुकामावयंमुने १४७
इत्युक्त्वैकांतमगमद्वासुदेवेनशंकरः
मृदुशय्यांसमारुह्यशयितौदेवतोत्तमौ १४८
अन्योन्यंभाषणंकृत्त्वाप्रोत्तस्थतुरुभावपि
गत्वातटाकंगंभीरंस्नास्यंतौदेवसत्तमौ १४९
करांबुपानमन्योन्यंपृथक्कृत्वोभयत्रच
मुनयोरात्तसाश्चैवजलक्रीडांप्रचक्रिरे १५०
अथविष्णुर्महेशश्चजलपातानिशीघ्रतः
चक्रतुःशंकरःपद्मकिंजल्कांजलिनाहरेः १५१
अवाकिरन्मुखेतस्यपद्मोत्फुल्लविलोचने
नेत्रेकेशरसंपातान्यमीलयतकेशवः १५२
अत्रांतरेहरेःस्कंधमारुरोहमहेश्वरः
हर्युत्तमांगंबाहुभ्यांगृहीत्वासंन्यमज्जयत् १५३
उन्मज्जयित्वाचपुनःपुनश्चापिपुनःपुनः
पीडितःसहरिःसूत्तमंपातयामासशंकरम् १५४
अथपादौगृहीत्वातुआचकर्षचभ्रामयत्
अताडयद्धरेर्वत्तःपातयामासचाच्युतम् १५५
अथोत्थितोहरिस्तोयमादायंजलिनाततः
अवाकिरदथोशंभुमथविष्णुमथोहरः १५६
जलक्रीडैवमभवदथचर्षिगणांतरे
जलक्रीडासंभ्रमेणविस्त्रस्तजटबंधनाः १५७
अथसंभ्रमतस्तेषामन्योन्यजटबंधनम्
इतरेतरबद्धासुजटासुचमुनीश्वराः १५८
शक्तिमंतोऽशक्तिमतःआकर्षंतिचसव्यथम्
पातयंतोन्यतश्चापिक्रोशतोरुदतस्तथा १५९
एवंप्रवृत्तेतुमुलेसंभूतेतोयकर्म्मणि
आकाशेनारदोहृष्टोननर्तचननादच १६०

विपंचींनादयन्वाद्यंललितांगीतिमुञ्जगौ
सुगीत्याललितायास्तुत्र्रगायतविधादश १६१
शुश्रावगीतंमधुरंशंकरोलोकभावनः
स्वयंगातुंहिललितंमंदंमंदंप्रचक्रमे १६२
स्वयंगायतिदेवेशेमिश्रामंगलकैशिकी
नारदेनृत्यमानेतुगायतिस्वरभेदिनि १६३
स्वरंध्रुवंसमादायसर्वलक्षणसंयुतम्
स्वधारामृतसंयुक्तंगानेनैवमथोजयत् १६४
वासुदेवोमर्दलंचकराभ्यामिदमाहनत्
ग्रवगाहंश्चतुर्वक्त्रस्तुंबुरुर्मुखरोबभौ १६५
तानकागौतमाद्यास्तुतूष्णींगातुंचवायुतः
गायकेमधुरंगीतंहनूमतिकपीश्वरे १६६
म्लानमम्लानमभवत्कृशाःपुष्टास्तदाभवन्
स्वांस्वांगीतिमतःसर्वेतिरस्कृत्यैवमूर्च्छिताः १६७
तूष्णींसर्वेसमभवन्देवर्षिगणदानवाः
एकःसहनुमान्गाताश्रोतारःसर्वएवते १६८
मध्याह्नकालवितर्तेभोजनावसरेसति
दुकूलयुगमाधत्तशृणवन्गीतिंमहेश्वरः १६९
पीतवस्त्रद्वयंविष्णुरारक्तंचतुराननः
स्वस्वाहार्णयथसर्वेऽपिकृत्यंकृत्वापिकालिकम् १७०
स्वंस्वंवाहनमारुह्यनिर्गताःसर्वदेवताः
गानप्रियोमहेशस्तुजगादप्लवगेश्वरम् १७१
प्लवगत्वंमयाज्ञप्तोनिःशंकंवृषमारुह
ममचाभिमुखोभूत्वागायस्वाशेषगायनम् १७२
ग्रथाहकपिशार्दूलोभगवंतंमहेश्वरम्
वृषभारोहसामर्थ्यंतवनान्यस्यविद्यते १७३
तववाहनमारुह्यपातकीस्यामहंविभो
मामेवारुहदेवेशविहंगःशिववाहनः १७४
तवचाभिमुखंगानंकरिष्यामिविलोकय
ग्रथेश्वरोहनूमंतमारुरोहवृषंयथा १७५

आरूढेशंकरेदेवेहनूमान्कंधराशिरः
छित्त्वात्वचंपरावृत्यमुखंगायतिपूर्ववत् १७६
शृण्वन्गीतिसुधांशंभुर्गौतमस्यगृहंगतः
सर्वेचाप्यागतास्तत्रदेवर्षिगणदानवाः १७७
पूजितागौतमेनाथभोजनावसरेसति
यच्छुष्कदारुसंभूतंगृहोपकरणादिकम् १७८
प्ररूढमभवत्सर्वंगायमानेहनूमति
तस्मिन्गानेसमस्तानांचित्रदृष्टिरतिष्ठत १७९
द्विबाहुरीशस्यपदाभिवंदनःसमस्तगात्राभरणोपपन्नः
प्रसन्नमूर्तिस्तरुणःसुमध्येविन्यस्तमूर्द्धांजलिभिःसुरैःस्तुतः १८०
शिरःकराभ्यांपरिगृह्यशंकरोहनूमतःपूर्वमुखंचकार
पद्मासनासीनहनूमतांजलौनिधायपादंत्वपरंमुखेच १८१
पादांगुलीभ्यामथनासिकांविभुःस्नेहेनजग्राहचमंदमंदम्
स्कंधेमुखेत्वंसतलेचकंठेवक्षःस्थलेचस्तनमध्यमेहृदि १८२
ततश्चकुक्षावथनाभिमंडलेततोद्वितीयंनिदधातिचांजलौ
शिरोगृहीत्वावनमय्यशंकरःपस्पर्शपृष्ठंचिबुकेनसध्वनि १८३
हारंचमुक्तापरिकल्पितंशिवोहनूमतःकंठगतंचकारह
अथविष्णुर्महेशानमिदंवचनमुक्तवान् १८४
हनूमतासमोनास्तिकृत्स्नब्रह्मांडमंडले
श्रुतिदेवाद्यगम्यंहिपदंतवकिलस्थितम् १८५
सर्वोपनिषदव्यक्तंत्वत्पदंकपिसर्वयुक्
यमादिसाधनैर्योगैर्नक्षणंतेपदंस्थितम् १८६
महायोगिहृदंभोजेबलंस्वच्छंहनूमति
वर्षकोटिसहस्रेषुतपःकृत्वातुदुष्करम् १८७
त्वद्रूपंनाभिजानातिकुतःपादंमुनीश्वराः
अहोभाग्यंविचित्रंहिचपलोवानरोमृगः १८८
धत्तेपादयुगंचांगेयोगिहृद्यपिनक्षमम्
मयावर्षसहस्रंतुसहस्राब्दंतथान्वहम् १८९
भक्त्यासंपूजितोऽपीशपादोनोदर्शितस्त्वया
लोकेवादोहिसुमहाञ्छंभुर्नारायणप्रियः १९०

हरिःप्रियस्तथाशंभोर्नतादृग्भाग्यमस्तिमे
सदाशिवउवाच-
नत्वयासदृशोमह्यंप्रियोस्तिभगवन्हरे १९१
पार्वतीवात्वयातुल्यानचान्योविद्यतेमम
अथदेवायमहतेगौतमःप्रणिपत्यच १९२
व्यज्ञापयदमेयात्मन्देवैहिकरुणानिधे
मध्याह्नोऽयव्यतिक्रांतोभुक्तिवेलाखिलस्यच १९३
अथाचम्यमहादेवोविष्णुनासहितोविभुः
प्रविश्यगौतमगृहंभोजनायोपचक्रमे १९४
रत्नांगुलीयैरथनूपुराभ्यांदुकूलबंधेनतडित्सुकांच्या
हारैरनेकैरथकंठनिष्कयज्ञोपवीतोत्तरवाससीच १९५
विलंबिचंचन्मणिकुंडलेनसुपुष्पिधम्मिल्लवरेणदेवः
पंचांगगंधस्यविलेपनेनबाह्वंगदैःकंकणकांगुलीयकैः १९६
इत्थंविभूषितःशिवोनिविष्टउत्तमासनेस्वसंमुखंहरिंतथान्यवेशयद्वरासने
अन्योन्यसंमुखौस्थितौहरीशौदेवसत्तमौसुवर्णभाजनान्यथोददौसचापिगौतमः
१९७
त्रिंशत्प्रभेदभक्ष्यकंसुपायसंचतुर्विधंसुपक्वपाकजातकंशतद्वयंप्रकल्पितम्
अपक्वपक्वमिश्रकंशतत्रयंप्रकल्पितंशतंशतंतथासुकंदशाककंतथामुनिः १९८
शाकादिसर्पिषान्वितंददौचपंचविंशतिंसुशर्करादिकंतथासुचूनदाडिमादिकम्
मोचाफलंतुगोस्तनींसुखर्जुनागरंगकंजंबूफलंप्रियालुकंविकंकतंफलंतथा १९९
एवमादीनिचान्यानिद्रव्याण्यर्प्ययथाविधि
दत्वाचापोशनंविप्रोभुंजध्वमितिचाब्रवीत् २००
भुंजानेषुचसर्वेषुव्यजनंसूक्ष्मवस्त्रजम्
गौतमःस्वयमादायशिवविष्णूअवीजयत् २०१
परिहासमथोकर्तुमियेषपरमेश्वरः
पश्यविष्णोहनूमंतंकथंभुंक्तेसवानरः २०२
वानरंपश्यतिहरौमंडकंविष्णुभाजने
चिक्षेपमुनिसंघेषुपश्यत्स्वपिमहेश्वरः २०३
हनूमतेदत्तवांश्चस्वोच्छिष्टंपायसादिकम्
त्वदुच्छिष्टमभोज्यंतुतवैववचनाद्विभो २०४

अनर्हममनैवेद्यंपत्रंपुष्पंफलंतथा
मह्यंनिवेद्यसकलंकूपएवविनिक्षिपेत् २०५
अभुक्तेत्वद्वचोनूनंभुक्तेचापिकृपातव
सदाशिवउवाच-
बाणलिंगेस्वयंभूतेचंद्रकांतेह्यवस्थिते २०६
चांद्रायणसमंज्ञेयंशंभोर्नैवेद्यभक्षणम्
भुक्तिवेलेयमधुनातद्वैरस्यंकथांतरात् २०७
भुक्त्वातुकथयिष्यामिनिर्विशंकंविभुंक्ष्वतत्
अथासौजलसंस्कारंकृतवान्गौतमोमुनिः २०८
आरक्तसुस्निग्धसुसूक्ष्मगात्राननेकधाधौतसुशोषितांगान्
तडागतोयैःकृतवीजघर्षितैर्विशोधितैस्तैःकरकानपूरयत् २०९
नद्याःसैकतवेदिकांनवतरांसंच्छाद्यसूक्ष्मांबरैःशुद्धैःश्वेततरैरथोपरिघटांस्तोयेनपूर्णान्क्षिपेत्
क्षिप्त्वानालकजातिमास्तपुटकंकंकोलकस्तूरिकाचूर्णंचन्दनचंद्ररश्मिविशदां मालांपुटांतंक्षिपेत् २१०
यामस्यापिपुनश्चवारिवसनेनाशोध्यकुंभेक्षिपेच्चंद्रग्रंथिमथोनिधायबकुलंक्षिप्त्वातथापाटलाम् २११
शेफालीस्तबकमथोजलंचतत्रविन्यस्यप्रथमतएवतोयशुद्धिम्
कृत्वाथोमृदुतरसूक्ष्मवस्त्रखंडेनावेष्टेत्सृणिकमुखंचसूक्ष्मचंद्रम् २१२
अनातपप्रदेशेतुनिधायकरकानथ
मंदवातसमोपेतेसूक्ष्मव्यजनवीजिते २१३
अथउर्वीशसलिलैःसिंचयेत्सृणिकामपि
संस्कृत्वास्वायतास्तत्रनरानार्योथवानृप २१४
तत्कन्यावाक्षालितांगाधौतवस्त्राश्चवासह
मधुपिंगलनिर्य्यासमसांद्रमगुरुद्रवम् २१५
बाहुमूलेचकंठेचविलिप्यसांद्रमेवच
मस्तकेजाप्यकंन्यस्यपंचगंधविलेपनम् २१६
पुष्पनद्धसुकेशास्तुताःशुभास्याःसुनिर्मलाः
एवमेवोचितानार्यआत्तकुंकुमविग्रहाः २१७
युवत्यश्चारुसर्वांग्योनितरांभूषणैरपि

एतादृग्वनिताभिर्वानिरैर्वादापयेज्जलम् २१८
तेऽपिप्रदानसमयेसूक्ष्मवस्त्राल्पवेष्टनम्
अथवामकरेन्यस्यकरकंतत्रपश्यहि २१९
दोरिकान्यस्तमुन्मुच्यततस्तोयंप्रदापयेत्
एवंसत्कारयामासगौतमोभगवान्मुनिः २२०
महेशादिषुसर्वेषुभुक्तवत्सुमहात्मसु
प्रक्षालितांघ्रिहस्तेषुगंधोद्वर्तितपाणिषु २२१
तदासनसमासीनेदेवदेवेमहेश्वरे
अथनीचसमासीनादेवाःसर्षिगणास्तथा २२२
मणिपात्रेषुसंवेष्ट्यपूगखंडान्सुधूपितान्
अकोणवर्तुलान्स्थूलानसूक्ष्मानकृशानपि २२३
श्वेतपत्राणिसंशोध्यक्षिप्त्वाकर्पूरखंडकम्
चूर्णंचशंकरायाथनिवेदयतिगौतमे २२४
गृहाणदेवतांबूलमित्युक्तवचनेमुनौ
कपेगृहाणतांबूलंप्रयच्छममखंडकान् २२५
उवाचवानरोनास्तिममशुद्धिर्महेश्वर
अनेकफलभुक्तत्वाद्वानरस्तुशुचिःकथम् २२६
सदाशिउवाच–
मद्वाक्यादखिलंशुद्ध्येन्मद्वाक्यादमृतंविषम्
मद्वाक्यादखिलावेदामद्वाक्याद्देवतादयः २२७
मद्वाक्याद्धर्मविज्ञानंमद्वाक्यान्मोक्षउच्यते
पुराणान्यागमाश्चैवस्मृतयोममवाक्यतः २२८
अतोगृहाणतांबूलंममदद्याःसुखंडकान्
हरिर्वामकरेणादात्तांबूलंपूगखंडकम् २२९
ततःपत्राणिसंगृह्यततःखंडान्समर्पयत्
कर्पूरमग्रतोदत्तंगृहीत्वाभक्षयच्छिवः २३०
देवेतुकृततांबूलेपार्वतीमंदराचलात्
जयाविजययोर्हस्तंगृहीत्वायान्मुनेर्गृहम् २३१
देवपादौततोनत्वाविनम्रवदनाभवत्
उन्नमय्यमुखंतस्याइदमाहत्रिलोचनः २३२

त्वदर्थंदेवदेवेशिअपराधःकृतोमया
यत्त्वांविहायभुक्तंहितथान्यच्छृणुसुंदरि २३३
अथस्वमंदिरेस्थाप्यदेवदेवविवर्जिते
सर्वबंधविमुक्तेचमहदेनोमयाकृतम् २३४
क्षंतुमर्हसिदेवेशित्यक्तकोपाविलोकय
नबभाषैवमुक्त्वासाअरुंधत्याहिनिर्ययौ २३५
निर्गच्छंतींमुनिर्ज्ञात्वादंडवत्प्रणनामच
तदारभ्यमहेशायदंडप्रणतिसंस्तुतिम् २३६
कुर्यादुवाचचशिवागौतमत्वंकिमिच्छसि
गौतमउवाच-
कृतकृत्योस्मिदेवेशियदिदेयोवरोमम २३७
मन्मंदिरेमहाभागेभोक्तुमर्हसितांप्रतम्
देव्युवाच-
भोक्ष्यामितवगेहेहंशंकरानुमतामुने २३८
गत्वेशंगौतमोविप्रोलब्धानुज्ञःपुनर्गतः
भोजयामासगिरिजांदेवींचारुंधतींतथा २३९
भुक्त्वाथपार्वतीसर्वगंधपुष्पसभूषणा
सहानुचरकन्याभिःसहस्राभिर्हरंययौ २४०
अथाहशंकरोदेवींगच्छगौतममंदिरम्
संध्योपास्तिमहंकृत्वाआगच्छामिपुनर्गृहम् २४१
इत्युक्ताप्रययौदेवीगौतमस्यैवमंदिरम्
संध्यावंदनकामाश्चसर्वएवविनिर्गताः २४२
कृतसंध्यास्तटाकेतुमहेशाद्यास्तुकृत्स्नशः
अथोत्तरमुखःशंभुर्न्यासंकृत्वाजजापह २४३
अथविष्णुर्महातेजामहेशमिदमब्रवीत्
सर्वैर्नमस्यतेयस्तुसर्वै रेवसमर्च्यते २४४
हूयतेसर्वयज्ञेषुसभवान्किंजपिष्यति
रचितांजलयःसर्वेत्वामेवैकमुपासते २४५
सभवान्देवदेवेशकस्मैवारचितांजलि
नमस्कारादिपुण्यानांफलदस्त्वंमहेश्वर २४६

तवकःफलदोवंद्यःकोवात्वत्तोधिकोवद
शंकरउवाच-
ध्यायेनकिंचिद्गोविंदननमस्येहकिंचन २४७
नोपास्येकंचनहरेनजपिष्येहकिंचन
किंतुनास्तिकजंतूनांप्रवृत्त्यर्थमिदंमया २४८
दर्शनीयंहरेतेस्युरन्यथापापकारिणः
तस्माल्लोकोपकारार्थमिदंसर्वंकृतंमया २४९
ओमित्युक्त्वाहरिरथतंनत्वासमतिष्ठत
अथतेगौतमगृहंप्राप्तादेवगणर्षयः २५०
सर्वेपूजामथोचक्रुर्देवदेवेपिनाकिने
देवोहनूमतासार्द्धंगायन्नास्तेरघूत्तम २५१
पश्चात्त्वरींमहाविद्यांसर्वएवतदाजपन्
हनूमत्करमालंब्यदेव्यभ्याशंगतोहरः २५२
एकशय्यासमासीनौतावुभौदेवदंपती
गायन्नास्तेसहनुमांस्तुंबुरुर्नारदस्तथा २५३
नानाविधिविलासांश्चचकारपरमेश्वरः
आहूयपार्वतीमीशइदंवाक्यमुवाचह २५४
श्रीसदाशिवउवाच-
रचयिष्यामिधम्मिल्लमेहिमत्पुरतःशुभे
देव्याहनचयुक्तंतद्भर्त्राशुश्रुषणंस्त्रियः २५५
केशप्रसाधनकृतावनर्थांतरमापतेत्
केशप्रसाधनेदेवतत्वंसर्वंनचेप्सितम् २५६
अथबंधेकृतेपश्चादंसप्रांतप्रमार्जनम्
तनोश्चरमसंलग्नकेशपुष्पादिमार्जनम् २५७
एतस्मिन्वर्तमानेतुमहात्मानोयदागमन्
तपदाकिमुत्तरंवाच्यंतवदेवादिवंदिनः २५८
नायांतिचेदथविभोभीतिर्नाशमुपेष्यति
एवंहिभाषमाणांतांकरेणाकृष्यशंकरः २५९
स्वोर्वोस्तांस्थापयित्वैवविस्रस्यकचबंधनम्
विभज्यचकराभ्यांसप्रससारनखैरपि २६०

विष्णुदत्तांपारिजातस्रजंकचगतामपि
कृत्वाधम्मिल्लमकरोदथमालांकरागताम् २६१
मल्लिकास्रजमादायबबंधकचबंधने
कल्पप्रसूनमालांचब्रह्मदत्तांमहेश्वरः २६२
पार्वतीवसनेगूढगंधाढ्येचसमादधात्
अथांसपृष्ठसंलग्नमार्जनंकृतवान्विभुः २६३
श्लथनीवेरधोदेव्यावस्त्रवेष्टेरधोगतः
देवःकिमिदमित्युक्त्वानीवीबंधंचकारह २६४
नासाभूषणमेतत्तेपश्यामिसमदात्ततः
इत्युक्त्वास्वयमादायविच्छायंमौक्तिकंसती २६५
हरिद्रायाःसमायोगेमुक्ताफलमदीप्तिमत्
इदंहिध्रियतांमुक्ताफलंममतवप्रियम् २६६
पार्वत्युवाच–
अहोत्वन्मंदिरंशंभोसर्ववस्तुसमृद्धिमत्
पूर्वमेवमयासर्ववस्तुज्ञातंविभूषणैः २६७
अहोद्रविणसंपत्तिर्भूषणैरवगम्यते
शिरोविभूषितंदेवब्रह्मशीर्षस्यमालया २६८
नरकस्यतथामालावक्षःस्थलविभूषणम्
शेषश्चवासुकिश्चैवसविषौतवकंकणे २६९
दिशोंऽबरेजटाकेशाभसितंचांगरागकम्
महोक्षोवाहनंगोत्रंकुलंचाज्ञातमेवच २७०
ज्ञायेतेपितरौनैवविरूपाक्षंतथावपुः
एवंवदंतींगिरिजांविष्णुःप्राहातिकोपनः २७१
किमर्थंनिंदसेदेविदेवदेवंजगत्पतिम्
त्यक्ष्येप्राणान्प्रियान्भद्रेतवनूनमसंयमम् २७२
यत्रेशनिंदनंभद्रेतत्रनोमरणंव्रतम्
इत्युक्त्वाथनखाभ्यांहिहरिश्छेत्तुंशिरोगतः २७३
महेशस्तुकरंगृह्यप्राहमासाहसंकृथाः
पार्वतीवचनंसर्वंप्रियंममतवाप्रियम् २७४
ममाप्रियंहृषीकेशकर्तुंयत्किंचिदिष्यते

ओमित्युक्त्वाथभगवांस्तूष्णींभूतोऽभवद्धरिः २७५
हनुमानथदेवायव्यज्ञापयदिदंवचः
अर्थयामिविनिष्कामंममपूजाव्रतंतथा २७६
पूजार्थमप्यहंगच्छेममानुज्ञातुमर्हसि
शंकरउवाच-
कस्यपूजाक्ववापूजाकिंपुष्पंकिंदलंवद २७७
कोगुरुःकश्चमंत्रस्तेकीदृशंपूजनंतथा
एवंवदतिदेवेशेहनूमानतिकंपितः २७८
वेपमानसमस्तांगःस्तोतुमेवप्रचक्रमे
हनूमानुवाच-
नमोदेवायमहतेशंकरायामितात्मने २७९
योगिनेयोगधात्रेचयोगिनांगुरवेनमः
योगिगम्यायदेवायज्ञानिनांपतयेनमः २८०
वेदानांपतयेतुभ्यंदेवानांपतयेनमः
ध्यानायध्यनगम्यायधातृणांगुरवेनमः २८१
शिष्टायशिष्टगम्यायभूम्यादिपतयेनमः
नमस्तेत्यादिनावेदवाक्यानांनिधयेनमः २८२
आतनुष्वेतिवाक्यैश्चप्रतिपाद्यायतेनमः
अष्टमूर्तेनमस्तुभ्यंपशूनांपतयेनमः २८३
त्र्यंबकायत्रिनेत्रायसोमसूर्याग्निलोचन
सुभृंगराजधत्तूरद्रोणपुष्पप्रियायते २८४
बृहतीपूगपुंनागचंपकादिप्रियायच
नमस्तेस्तुनमस्तेस्तुभूयएवनमोनमः २८५
शिवोहरिमथप्राहमाभैषीर्वदमेखिलम्
हनुमानुवाच-
शिवलिगार्चनंकार्यंभस्मोद्धूलितदेहिना २८६
दिवासंपादितैस्तोयैःपुष्पाद्यैरपितादृशैः
देवविज्ञापयिष्यामिशिवपूजाविधिंशुभम् २८७
सायंकालेतुसंप्राप्तेअशिरःस्नानमाचरेत्
क्षालितंवसनंशुष्कंधृत्वाचम्यद्विरग्रधीः २८८

अथभस्मसमादायआग्नेयंस्नानमाचरेत्
प्रणवेनसमामंत्र्याप्यष्टवारमथापिवा २८९
पंचाक्षरेणमंत्रेणनाम्नावायेनकेनचित्
सप्ताभिमंत्रितंभस्मदर्भपाणिःसमाहरेत् २९०
ईशानःसर्वविद्यानामुक्त्वाशिरसिपातयेत्
तत्पुरुषायविद्महेमुखेभस्मप्रसेचयेत् २९१
अघोरेभ्योऽथघोरेभ्योभस्मवक्षसिनिक्षिपेत्
वामदेवायनमइतिगुह्यस्थानेविनिक्षिपेत् २९२
सद्योजातंप्रपद्यामिनिक्षिपेदथपादयोः
उद्धूलयेत्समस्तांगेप्रणवेनविचक्षणः २९३
त्रैवर्णिकानामुदितःस्नानादिविधिरुत्तमः
शूद्रादीनांप्रवक्ष्यामियदुक्तंगुरुणातथा २९४
शिवेतिपदमुच्चार्यभस्मसंमंत्रयेत्सुधीः
सप्तवारमथादायशिवायेतिशिरःक्षिपेत् २९५
शंकरायमुखेप्रोक्तंसर्वज्ञायहृदिक्षिपेत्
स्थाणवेनमइत्युक्त्वागुह्येचापिस्वयंभुवे २९८
उच्चार्यपादयोःक्षिप्त्वाभस्मशुद्धमतःपरम्
नमःशिवायेत्युच्चार्यसर्वांगोद्धूलनंस्मृतम् २९७
प्रक्षाल्यहस्तावाचम्यदर्भपाणिःसमाहितः
दर्भाभावेसुवर्णंस्यात्तदभावेगवालकः २९८
तदभावेतुदूर्वाःस्युस्तदभावेतुराजतम्
संध्योपास्तिंजपंदेव्याःकृत्वादेवगृहंव्रजेत् २९९
देववेदिमथोवापिकल्पितंस्थंडिलंतुवा
मृण्मयंकल्पितंशुद्धंपद्मादिरचनायुतम् ३००
चातुर्वर्णकरंगैश्चश्वेतेनैकेनवापुनः
विचित्राणिचपद्मानिस्वस्तिकादितथैवच ३०१
उत्पलादिगदाशंखत्रिशूलंडमरुंतथा
सरोक्तपंचप्रासादंशिवलिगमथैवच ३०२
सर्वकामफलंवृक्षंकुलकंकोलकंतथा
षट्कोणंचत्रिकोणंचनवकोणमथापिवा ३०३

कोणद्वादशकांदोलांपादुकाव्यजनानिच
चामरच्छत्रयुगलंविष्णुब्रह्मादिकंतथा ३०४
चूर्णैर्विरचयेद्वेद्यांधीमान्देवालयेऽपिवा
यत्रापिदेवपूजास्यात्तत्रैवंकल्पयेद्बुधः ३०५
स्वहस्तरचितंमुख्यंक्रीतंचैवतुमध्यमम्
याचितंतुकनिष्ठंस्याद्बलात्कारमथाधमम् ३०६
अर्हेषुयत्त्वनर्हेषुबलात्कारात्तुनिष्फलम्
रक्तशालिजपास्थाणकलमासितरक्तकैः ३०७
तंदुलैर्व्रीहिमात्रोत्थैःकर्णैश्चैवयथाक्रमम्
उत्तमैर्मध्यमैश्चैवकथितैरधमैस्तथा ३०८
पद्मादिस्थापनैरेवतत्सम्यग्यागमाचरेत्
प्रागुत्तरमुखोवापियदिवाप्राङ्मुखोभवेत् ३०९
आसनंचप्रवक्ष्यामियथादृष्टंयथाश्रुतम्
कौशंचार्म्मचैलतुल्यंदारवंताडपत्रकम् ३१०
कांबलंकांचनंचैवराजतंताम्रमेवच
गोकरीषार्कजैर्वापिआसनंपरिकल्पयेत् ३११
वैयाघ्रंरौरवंचैवहारिणंमार्गमेवच
चार्मंचतुर्विधंज्ञेयमथबंधुकमेवच ३१२
यथासंभवमेतेषुह्यासनंपरिकल्पयेत्
कृतपद्मासनोवापिस्वास्तिकासनएवच ३१३
दर्भभस्मसमासीनःप्राणानायम्यवाग्यतः
तावत्सदेवतारूपोध्यानंचान्तःसमाचरेत् ३१४
शिखांतेद्वादशांगुल्येस्थितंसूक्ष्मतनुंशिवम्
अंतश्चरंतंभूतेषुगुहायांविश्वमूर्तिषु ३१५
सर्वाभरणसंयुक्तमणिमादिगुणान्वितम्
ध्यात्वातंधारयेच्चित्तेतद्व्याप्त्यापूरयेत्तनूम् ३१६
तयादीप्त्याशरीरस्थंपापंनाशमुपागतम्
स्वर्णंपारदसंपर्काद्रक्तंश्वेतंयथाभवेत् ३१७
तद्द्वादशदलावृत्तमष्टपंचत्रिरेववा
परिकल्प्यासनंशुद्धंतत्रलिगंनिधायच ३१८

गुहास्थितंमहेशानंलिंगेसंचिंतयेत्तथा
शोधितेकलशेतोयंशोधितंगंधवासितम् ३१९
सुगंधपुष्पंनिक्षिप्यप्रणवेनाभिमंत्रितम्
प्राणायामश्चप्रणवःशूद्रेषुनविधीयते ३२०
प्राणायामपदेध्यानंशिवेत्योङ्कारमंत्रणम्
गंधपुष्पाक्षतादीनिपूजाद्रव्याणियानिच ३२१
तानिस्थाप्यसमीपेतुततःसंकल्पयिष्यते
शिवपूजांकरिष्यामिशिवतुष्ट्यर्थमेवच ३२२
इतिसंकल्पयित्वातुततश्चावाहनादिकम्
कृत्वातुस्नानपर्यंतंततःस्नानंप्रकल्पयेत् ३२३
नमस्तेत्यादिमंत्रेणशतरुद्रियविधानतः
अविच्छिन्नातुयाधारामुक्तिधारेतिकीर्तिता ३२४
तयायःस्नापयेन्मासंजपन्रुद्रमुपांशुवा
एकवारंत्रिवारंचपंचसप्तनवापिवा ३२५
एकादशमथोवारमथैकादशचान्वितम्
मुक्तिस्नानमिदंज्ञेयंमासंमोक्षप्रदायकम् ३२६
शैवयाविद्ययास्नानंकेवलंप्रणवेनच
मृण्मयैर्नालिकेरस्यशकलैश्चोर्मिभिस्तथा ३२७
कांस्येनमुक्ताभुक्त्याचपुष्पादिकसरेणवा
स्नापयेद्देवदेवेशंयथासंभवमीरितैः ३२८
शृंगस्यचविधिंवक्ष्येस्नानयोग्यंयथाभवेत्
पूर्वमंतस्तुसंशोध्यबहिरंतस्तुशोधयेत् ३२९
सुस्निग्धंलघुकृत्वाथनागंछिंद्यात्कथंचन
नीचैकदेशविन्यस्तद्वारद्रोण्यासुवृत्तयोः ३३०
कुशानुयुतयास्नानंदेवायपरिकल्पयेत्
एवंगवयशृंगस्यजलमूर्तिरथोच्यते ३३१
द्वारेनिषिद्धलोहार्द्धंसंधिद्वारासमन्विते
योगवक्रंनागदंडंनागाकारंप्रकल्पयेत् ३३२
फलस्थानेतुचषकंदंडेनसमरंध्रकम्
तत्रैवपातयेत्तोयमूर्द्ध्वयंत्रघटेस्थितम् ३३३

पातयेदथचान्येनवामेनैवकरेणवा
मुक्तिधाराकृतातेनपवित्रंपापनाशनम् ३३४
एवंसंस्थाप्यदेवेशंपंचगव्यैस्तथैवच
पंचामृतैरथस्नाप्यमधुरत्रितयेनच ३३५
विभूष्यभूषकैर्देवंपुनःस्नाप्यमहेश्वरम्
शीतोपचारंकृत्वाथततश्राचमनादिकम् ३३६
वस्त्रंतथोपवीतंचपंचगंधकमेवच
कर्पूरमरुवंचापिपाटीरमथवाभवेत् ३३७
उभयंमिश्रितंवापिशवलिगंप्रपूजयेत्
कृत्स्नपीठंगंधपूर्णंयद्वाविभवसारतः ३३८
तूष्णीमथोपचारंवाकालियंपुष्पमर्पयेत्
श्रीपत्रमरुचित्याजंयथाशक्त्याखिलंयथा ३३९
अनेकद्रव्यधूपंचगुग्गुलंकेवलंतथा
कपिलाघृतसंयुक्तंसर्वधूपायशस्यते ३४०
धूपंदत्वायथाशक्तिकपिलाघृतदीपकान्
अथवाप्याज्यमात्रेणदीपान्दत्वोपहारकम् ३४१
यथाशक्त्युपपन्नंचदत्वापुष्पसमन्वितम्
मुखशुद्धिंततोदत्वादत्वातांबूलमादरात् ३४२
प्रदक्षिणनमस्कारौपूजैवंहिसमाप्यते
गीतांगपंचकंपश्चात्तानिविज्ञापयामिते ३४३
गीतंवाद्यंपुराणंचनृत्यंहासोक्तिरेवच
नीराजनंचपुष्पाणामंजलिश्चाखिलार्पणम् ३४४
क्षमाचोद्वासनंचैवकीर्तितंचोपचारकम्
भूषणंचतथाछत्रंचामरंव्यजनंतथा ३४५
शिवोपवीतंकैङ्कर्यंषडीशानोपचारकम्
द्वात्रिंशदुपचारैस्तुयःसमाराधयेच्छिवम् ३४६
एकेनाह्नासमस्तानांपापानांनाशनंध्रुवम्
द्वात्रिंशदुपचारंस्यात्पूजनंतूत्तमोत्तमम् ३४७
सदाशिवउवाच–
एवमेतत्कपिश्रेष्ठतवपूजांवदाम्यहम्

मत्पादयुगलंपूज्यसर्वपूजाकरोभव ३४८
आराध्येत्थंयथालिगेतन्ममाराधनंकुरु
हनूमानुवाच-
गुरुणालिगपूजैवनियताकल्पितामम ३४९
तांकरोमिपुरादेवपश्चात्त्वत्पादपूजनम्
इत्युक्त्वैवनमस्येशंशिवलिगार्चनेभवत् ३५०
सरस्तीरमथोगत्वाकृत्वासैकतवेदिकाम्
तालपत्रैर्विरचितमासनंपरिकल्पयेत् ३५१
प्रक्षाल्यपादहस्तौतुसमाचम्यसमाहितः
भस्मस्नानमथोचक्रेपुनराचम्यवाग्यतः ३५२
देववेद्यामथोचक्रेपद्मानिसुमनोहरम्
अनंतरंतालपत्रंपद्मासनगतःकपिः ३५३
प्राणानायम्यसन्यासंशुक्लध्यानसमन्वितः
प्रणम्यगुरुमीशानंजपन्नासीदतःपरम् ३५४
अथदेवार्चनंकर्तुंयत्नमास्थितवानपि
पलाशपत्रपुटकद्वयानीतजलंशुचि ३५५
शिरःकमंडलुगतंनिधायाग्निंत्रिमंत्रितम्
आवाहनादिकृत्वाथस्नानपर्यन्तमेवच ३५६
अथस्नापयितुंदेवमादायकरसंपुटे
कृत्वानिरीक्षणंदेवंपीठंनोदृष्टवान्कपिः ३५७
लिगमात्रंकरगतंदृष्ट्वाभीतिसमन्वितः
इदमाहमहायोगीकिंवापापंमयाकृतम् ३५८
यदेतत्पीठरहितंशिवलिगंकरस्थितम्
ममाद्यमरणंसिद्धंपीठंचेन्नागमिष्यति ३५९
अथरुद्रंजपिष्यामितदायातिमहेश्वरः
इतिनिश्चित्यमनसाजजापशतरुद्रियम् ३६०
अथापिनसमायातोमहेशोऽथकपीश्वरः
रुद्रंन्यपातयद्भूम्यांवीरभद्रःसमागतः ३६१
किमर्थंरुद्यतेभक्तरुदिहेतुंवदस्वमे
हनूमानुवाच-

पीठहीनमिदंलिगंपश्यमेपापसंचयम् ३६२
वीरभद्रउवाच–
यदिनायातिपीठंतेलिगेमासाहसंकृथाः
दाहयिष्याम्यहंलोकंयदिनायातिपीठकम् ३६३
पश्यदर्शयमेलिगंपीठंयद्यागतंनवा
अथदृष्ट्वावीरभद्रोलिगंपीठमनागतम् ३६४
दग्धुकामोखिलाँल्लोकान्वीरभद्रःप्रतापवान्
अनलंभुविचिक्षेपक्षणाद्दग्धामहीतदा ३६५
अथसप्ततलान्दग्ध्वापुनरूर्द्ध्वमवर्तत
पंचोर्द्ध्वलोकानदहज्जनलोकनिवासिनः ३६६
ललाटनेत्रसंभूतंनखेनादायचानलम्
जंबीरफलसंकाशंकृत्वाकरतलेविभुः ३६७
यदिनायातिपीठंतेदग्धालोकानसंशयः
अनायातमथोदृष्ट्वावीरभद्रःप्रतापवान् ३६८
सनकादयोमहात्मानोज्ञात्वायोगेनचागमन्
गौतमस्याश्रमवरंसमागम्यहेश्वरम् ३६९
नदृष्टवंतोदेवादिंविद्यमानमपिद्विजाः
अस्तुवन्नथचस्तोत्रैःसर्ववेदसमुद्भवैः ३७०
ॐनमोदेवदेवायतस्मैशुद्धप्रभाचिंत्यरूपायतस्मै
नमःसुराणामधीशायतस्मैनमोवेदगुह्यायशुद्धायतस्मै ३७१
नमःशिवायादिदेवायतस्मैनमोव्यालयज्ञोपवीतायतस्मै
नमःसुरानंदसंदोहवर्षत्रयीबिंदुविश्वंभरायतस्मै ३७२
पृथिव्यथोवायुराकाशमापःपुनःशशीवह्निसूर्य्यौतथात्मा
यस्याष्टैतामूर्तयःशंकरस्यतस्मैनमोज्ञानगम्यायशश्वत् ३७३
एतांस्तुतिमथाकर्ण्यभगनेत्रप्रदःशिवः
विष्णुमाहचगच्छत्वंसमानयचतान्द्विजान् ३७४
आनीतास्तेनहरिणादेवायप्रणतास्तुते
तानाहशंकरोवाक्यंकिमर्थंयूयमागताः ३७५
मुनयऊचुः –
देवद्वादशलोकानांदृश्यंतेभस्मराशयः

स्थितमेकंवनमिदंपश्यत्वंलोकसंक्षयम् ३७६
सदाशिवउवाच-
ऊद्ध्र्वस्थपंचलोकानांदाहेसंदेहएवनः
कथमंगारवृष्टिश्चकथंनोवामहाध्वनिः ३७७
मुनयऊचुः -
भीतिरस्माकमधुनावर्ततेवीरभद्रतः
सएवांगारवृष्टिंचपिपासुरिवतामपात् ३७८
देवोथवीरमाहूयकिंवीरेत्यब्रवीद्भवः
वीरोहनूमतोलिगपीठाभावादिदंकृतम् ३७९
कपेश्चित्तंपरिज्ञातुंमयाकृतमिदंबृहत्
कृपानिधिरथोदेवोयथापूर्वमकल्पयत् ३८०
दग्धानप्यखिलाँल्लोकान्पूर्वतःशोभनान्विभुः
कल्पयामासविश्वात्मावीरभद्रमथाब्रवीत् ३८१
आलिग्याघ्रायशिरसितांबूलंदत्तवान्हरः
अथासौहनुमानीशपूजनंकृतवानथ ३८२
एकंवनचरंतत्रगंधर्वंसविपंचिकम्
इदमाहमहावीणाममवैदीयतामिति ३८३
गंधर्वोनमयात्याज्यावीणाप्राणसमामम
ममापिप्राणसदृशीवीणेत्याहकपीश्वरः ३८४
अथमुष्टिनिपातेनगंधर्वेपतितेकपिः
आदायवीणांमहतींस्वरतंतुसमन्विताम् ३८५
अलाबुसंयुतांकृत्वाराजवृक्षफलाकृतिम्
तस्योरसिविनिक्षिप्यगायन्नागाच्छिवांतिकम् ३८६
बृहतीकुसुमैःशुद्धैर्देवपादावपूजयत्
तस्मैवरमथप्रादादाकल्पंजीवितंपुनः ३८७
समुद्रलंघनेशक्तिंवरंप्रादादथापरम् ३८८
समस्तभूषासुविभूषितांगःस्वदीप्तिमंदीकृतदेवदीप्तिः
प्रसन्नमूर्तिस्तरुणःशिवाङ्कःसंभावयामाससमस्तदेवान् ३८९
पीतमुद्गमनीयंचसमादायमहेश्वरः
पीतवस्त्रमिदंदेवत्वंगृहाणहरेशुभम् ३९०

ब्रह्मणेरक्तवसनंसर्वेषांवसुदस्तथा
देवर्षिदानवादीनांदत्तवान्वसुयुग्मकम् ३९१
रामोपिचैतदाकर्ण्यशंभवेयुग्ममर्पयत्
सुसूक्ष्मंबहुमूल्यंचस्वर्णभूषणमेवच ३९२
अथभुक्त्वासुखासीनःसामात्यःसपुरोहितः
नानामुनिगणैर्भूपैर्वानरैर्गौतमीतटे ३९३
शंभुंपुराणतत्त्वज्ञंराघवोवाक्यमब्रवीत्
त्वमेवसर्वंजानीषेसर्वधर्मगुहाशयम् ३९४
कस्मिन्कस्मिन्युगेब्रह्मन्किंविशिष्टंवदस्वमे
शंभुरुवाच–
ध्यानमेवकृतेश्रेष्ठंत्रेतायांयज्ञएवच ३९५
द्वापरेचार्चनंतिष्येदानंचहरिकीर्तनम्
सर्वंचशस्तंसर्वत्रध्यानंनचकलौयुगे ३९६
नराणांमुग्धचित्तत्वात्कृच्छ्रस्थानांविशांपते
नधर्मेनियताबुद्धिर्नवेदेनैवचस्मृतौ ३९७
नक्रतौनस्वधाकारेपुराणानांचनश्रुतौ
नयज्ञेनचतीर्थेषुनचशुश्रूषणेसताम् ३९८
नेज्यायांदेवतानांचनस्वजातीयकर्म्मणि
नदेवस्मरणेनापिनचक्वापिवृषेनृप ३९९
अतश्चदीर्घकालानांपुण्यानामक्षमानराः
दानंतुस्वल्पकालत्वात्कर्तुंशक्नोतिमानवः ४००
अतश्चकलिदुष्टानांप्रायश्चितंनविद्यते
केषांचित्पापनाशःस्यात्प्रायश्चित्तैस्तुनान्यथा ४०१
ब्रह्मज्ञानीगयाश्राद्धीकाशीगंताश्रुतौरतः
पुराणज्ञावमाश्चैतेश्रोतातस्यचराघव ४०२
युगानामनुसारेणतथार्थस्यविवेचनात्
स्वपरप्रत्ययोत्पादात्परब्रह्मप्रकाशनात् ४०३
पुराणवक्तासर्वस्माद्ब्राह्मणस्तुविशिष्यते
तेनापिचकृतंपापंनसज्येत्किमुतान्यतः ४०४
अन्येषामपिकेषांचित्पुराणंपापनाशनम्

यःपुराणेषुविश्वासीवक्तारंमन्यतेगुरुम् ४०५
ब्रह्मविद्याप्रदातारंविशेषंज्ञातिबंधुतः
तस्यपापानिसर्वाणिविलयंयान्त्यसंशयम् ४०६
अथश्रीशैलगमनंपूजकस्यमहेशितुः
अतःकलौमनुष्याणांपुराणंपापनाशनम् ४०७
पुराकलियुगेरामवृत्तंसंकीर्तयेशृणु
आसीत्तुगौतमोनामब्राह्मणोवेदवर्जितः ४०८
तस्यपुष्टिःपशुश्चास्तांभ्रातरौवेदवर्जितौ
ताभ्यांसहकृषिंचक्रेततत्रवृद्धिमवापच ४०९
धनधान्यादिकंकिंचिद्राजानंदत्तवानथ
उवाचवचनंकिंचिदधिकारंनिरूपय ४१०
अर्थंनगमयिष्यामितौशक्तौभ्रातरौमम
राजोवाच-
ब्राह्मणस्याधिकारोहिवैदिकेधर्मकर्मणि ४११
तदन्यत्रनियुक्तस्यब्राह्मण्यंविप्रणश्यति
गौतमउवाच-
युगेष्वन्येषुधर्मोयंकलिधर्मोनतादृशः ४१२
भूपतित्वंहिभूपालनृपाणांधर्मउच्यते
ब्राह्मणश्चपरिक्षीणस्तंकुर्वन्नैवदुष्यति ४१३
शूद्राणांतुकृषिर्द्धर्मोनापद्यप्यग्रजन्मनः
तस्मात्क्षत्रेणवर्तिष्येग्रामान्ममसमादिश ४१४
अन्यत्रचात्रक्षत्रेणवर्तनंममरोचते
अन्यन्नतुतथेत्युक्तोददौग्रामान्द्विजन्मनः ४१५
ग्रामाधिकारदुष्टस्यवर्तनंत्वन्यथाभवत्
अभक्षिमांसंचापायिसुराचाभाषिदुर्वचः ४१६
परयोषातथागामिपरस्वंप्रत्यहारिच
अक्रीडिद्यूतमसकृत्कलंजंचादिदुर्भुजा ४१७
नापूजिजगतामीशःशिवोवाविष्णुरेववा
एवंकालेनदुर्वृत्तंराजावाक्यमभाषत ४१८
विप्रविप्रत्वमुत्सृज्यशूद्रत्वंप्राप्तवानसि

तस्मान्नियोगधर्मेणभवंतंभ्रंशयामिच ४१९
मास्तुविप्रत्वमद्यैवशूद्रतैववरंमम
तदृतेयदिविप्रास्तेनभोद्त्यंतिवरंमम ४२०
नहिसर्वमिदंत्यक्तुंशक्तोहंपृथिवीपते
शंभुरुवाच-
एवंवदतिदुर्विप्रेराजातूष्णीमतिष्ठत ४२१
सतुवैशूद्रतुल्यश्चबुभुजेन्नंसहामिषम्
कदाचिदथदुर्वृत्तःप्रतोलीमंडपस्थितः ४२२
द्विजेनपठ्यमानंतुपद्यंतुश्रुतवानिदम्
हृदयेपद्यमेतत्तुद्विजेरितमतिष्ठत ४२३
परात्परतरंयांतिनारायणपरायणाः
नतेतत्रगमिष्यंतियेद्विषंतिमहेश्वरम् ४२४
व्याख्यानमपिचश्रुत्वापौराणिकमभाषत
कीदृङ्नारायणःप्रोक्तःकीदृशोपिमहेश्वरः ४२५
किंपरंत्वयनंप्रोक्तंद्वेषःकीदृगुदाहृतः
किंतत्परमितिख्यातंततःपरतरंचकिम् ४२६
पौराणिकउवाच-
परंतद्ब्रह्मणःस्थानंसुखव्यक्तैकलक्षणम्
ततःपरतरंविष्णोर्द्धामतद्ब्रह्मणोधिकम् ४२७
अविनाशितयातत्तुकीर्तितंपरमंपदम्
तन्मध्येपुरुषोविष्णुस्तदंगपरमंविभुः ४२८
आपोहिनरजन्मत्वान्नाराःप्रोक्तामनीषिभिः
नाराश्चास्यायनंयस्मात्तेननारायणःस्मृतः ४२९
तत्परंवर्तनंयेषांतेप्रोक्तास्तत्परायणाः
महदादीनितत्वानियानितेषांयईश्वरः ४३०
सूर्याग्निशशिनेत्रोऽसौमहेशःस्यादुमापतिः
द्वेषोहिवैरंविज्ञेयमीश्वरेपरमात्मनि ४३१
शंभुरुवाच-
एवंपुराणभट्टेनसमीरितमिदंवचः
चिंतयन्पुनरप्याहमादृशस्यकथंगतिः ४३२

पौराणिकोऽथतंप्राहशृणुवक्ष्यामितेगतिम्
कुरुसर्वेणयत्नेनप्रायश्चित्तंयथाविधि ४३३
धर्मंचरयथाशक्तियथाकालंयथाविधि
विमुक्तपापःपश्चात्त्वमुत्तमांगतिमेष्यसि ४३४
पुराणमथवानित्यंशृणुष्वावहितश्चसन्
निराशोवामहेशानंपूजयस्वपिनाकिनम् ४३५
देवंवापुंडरीकाक्षंकेशवंक्लेशनाशनम्
संन्यासमथवानित्यंब्रह्मज्ञानपरोभव ४३६
अथवागच्छकाशींशंमुक्तौवामृतिमाप्नुहि
गयांवागच्छतत्रत्वंश्राद्धंकर्तुंप्रयत्नतः ४३७
अथवासर्ववेदानांसारंपातकनाशनम्
रुद्रंरुद्रप्रियकरंजपप्रत्यहमादरात् ४३८
श्रीशैलमथवागच्छकेदारमथवेच्छया
अथवाप्रतिवर्षेतुमाघस्नानंप्रवर्तय ४३९
किमत्रबहुनोक्तेनधर्मभक्तःसदाभव
नैवंनरकवासस्तेभवितातुद्विजाधम ४४०
गौतमउवाच-
श्रुत्वासर्वंकरिष्यामिपुराणंभवतोमुखात्
शास्त्रंविश्वासहेतुंचवर्जंचापिवदस्वमे ४४१
पौराणिकउवाच-
वर्ज्यंमांसंसुरान्यस्त्रीभोगोद्यूतंविकत्थनम्
पारुष्यमनृतंमायादेवदेवविनिंदनम् ४४२
गुरूणांसुरवृद्धानांपुराणस्मृतिभाषिणाम्
निंदनंश्वेतवृंताकंकृतकालाबुवर्तनम् ४४३
बीजपूरंकुसुंभंचलोहितंशृंगमेवच
अररुंनालिकेरंचकूष्मांडकंतथैवच ४४४
कोविदारफलंतैलपक्वंमानवजंपयः
वार्ध्रीणसखरीदुग्धंसूतिकाक्षीरमाविकम् ४४५
औष्ट्रमेकशफक्षीरंमार्गमाजंनृसंभवम्
विवत्सासंधिनीक्षीरंलवणंचैवयोगियत् ४४६

नालिकेररसंकांस्येताम्रेमधुचसीसके
काचेतक्रंकरंभांश्चघृताक्तान्नैवकारयेत् ४४७
होमंतुमृराम येपात्रेपुरोडाशंतुराजते
नसेवेतपरंलोकेशुभार्थीतुविचत्तराः ४४८
पात्रांतश्चूर्णलेपोपितत्रभत्तरामेवच
क्रमुकस्यतथाभत्तश्चूर्णपत्रस्यचैवहि ४४९
क्रमुकस्यापिपक्वस्यभत्तरांक्रमियोगिनः
पायसेलवरांचैवकेवलंचकरार्पितम् ४५०
सिंधुसौराष्ट्रकांबोजमागधेषुचसिंहले
नदोषायभवेत्तत्रत्तीरंचलवरणान्वितम् ४५१
त्तीरारिणचसमस्तानिलवरणानिचयोगतः
देशेष्वन्येषुदोषायपानेचैवेहसंशयः ४५२
किमत्रबहुनोक्तेनसद्भिर्निंद्यंविवर्जयेत्
शंभुरुवाच-
एवंतस्यवचःश्रुत्वाब्राह्मरणस्यमहात्मनः ४५३
स्वमेवभवनंगत्वाचिंतयामासदुःखितः
रात्रौमृत्युर्दिवाचेतिनजानातिमहानपि ४५४
परलोकेसुखंदुःखमिहभोगविनोदनम्
क्रिमिकीटमनुष्याद्यैःसुखदुःखैःपृथक्पृथक् ४५५
प्रतिजीवंतुहेतूनांभेदोऽपिसुविनिश्चयः
एकस्यापिहिजीवस्यनास्तिचैकविधास्थितिः ४५६
जन्मकालेमहाज्ञानंशैशवेत्यल्पबोधनम्
स्खलत्पदेल्पविज्ञानंबाल्येचाल्पंतथैवच ४५७
कौमारेक्रीडनरतिर्यौवनेविषयोषितम्
यौवनेविनिवृत्तेतुद्रव्यसंपादनेषरणा ४५८
वार्द्धकेभोगलिप्साचनभोक्तुंत्तमतेपिच
दूषिकाश्लेष्मलालाभिर्वलीपलितकंपनैः ४५९
श्वासकासानिलात्तिप्तैर्हृषीकैर्विकलैर्युतः
किंचिद्धर्तुंनशक्नोतिनचजानातिकिंचन ४६०
तिष्ठंतीषुपरस्त्रीषुगुह्यस्थानंप्रदर्शयेत्

कोशकंडूयनपरःक्रूरोजीवितलक्षणैः ४६१
कंडूयतेस्फिचौवस्त्रमुद्धृत्यचविचालयन्
भुंजानःश्लेष्मणाग्रासंग्रसितुंनचशक्नुयात् ४६२
यदाकासस्तदाजज्ञेपायुवायुश्चशब्दवान्
निःसृतिश्चमलस्यापिश्लेष्मनिर्गमएवच ४६३
स्नुषादिभर्त्सनंबालतालहास्यनिदर्शनम्
गुरुनिर्गमनादीनिसंचिंत्यचपुनःपुनः ४६४
आहूतोभोजनाद्यर्थंभोज्यान्नादिविनिंदयन्
चिरमुष्णंचनिर्भर्त्स्यपुनश्चिंतामवापसः ४६५
अतिदुष्कृतिकर्म्माहंकथंभोक्ष्येकथंस्वपे
कथंतिष्ठेकथंगच्छेपरलोकःकथंभवेत् ४६६
इतिचिंताकुलोनित्यंननमत्यपरान्वितः
द्विजस्यसदनंगत्वापुराणज्ञस्यराघव ४६७
लज्जावाकृतवक्त्रश्चकिंकरोमीत्यभाषत
नकिंचिदप्युवाचासौद्विजःपौराणिकस्तदा ४६८
पापोयमितिविज्ञायशिष्येणनिरगामयत्
गौतमोपिविनिर्गम्यद्वार्यैवचबहिःस्थितः ४६९
भुव्यासीनंतुविज्ञायपुराणार्थविचारकम्
कथंकथमपिप्राप्यपीठंदत्तंचनाभजत् ४७०
निषण्णोभूतलेरामपुराणज्ञमभाषत
प्रायश्चित्तंकरिष्यामितदत्रैवविधीयताम् ४७१
ब्राह्मणउवाच-
पापानिकीर्तयस्वत्वंसर्वथैवकृतानितु
सचापिनाकृतंकिंचिन्मयापापमितीरयन् ४७२
रुदन्पपातभूम्यांचकथंतातेतिपीडितः
ब्राह्मणस्तमथप्राहप्रायश्चित्तंनविद्यते ४७३
महापापंत्रिरावृत्तेपुनश्चयदिचेत्कृतम्
गौतमउवाच-
पौराणिकमहाभागप्राप्यापित्वामहंकथम् ४७४
पापयुक्तोद्विजश्रेष्ठसंगतिर्विफलाभवेत्

पौराणिकउवाच-
शास्त्रंप्रमाणंसर्वेषांप्रायश्चित्तविनिर्णये ४७५
तद्विनायोहितंब्रूयात्प्रायाश्चित्तंनतद्भवेत्
सकृत्कृतेसकृत्प्रोक्तंद्वितीयेद्विगुणंभवेत् ४७६
तृतीयेत्रिगुणंप्रोक्तंचतुर्थेनास्तिनिष्कृतिः
त्वयाकृतंतुबहुधाचतुर्विधमपीच्छया ४७७
कथंवक्तुमहंशक्तःप्रायश्चित्तंभवादृशे
गौतमोऽपिपुनःप्राहक्वगंतव्यंमयेतिच
उपवासत्रयंकृत्वाशिवरात्रिमविंदत ४८०
चतुर्थमुपवासंचचकारातीवदुःखितः
पारणंचाप्यमायांसकृतवान्फलवल्कलैः ४८१
अथप्रदक्षिणंचक्रेश्रीशैलस्यचसद्विजः
गतवान्मंदिरंपश्चाच्चिंतयातिकृशःश्वसन् ४८२
कथंपापनिवृत्तिर्मेतूष्णींभूतस्यसेत्स्यति
अनंतमविचार्यंकिंपापंचसुमहत्तरम् ४८३
श्रुत्वानकोपिमेब्रूयात्प्रायश्चित्तंविधीयताम्
किंतुकस्मिन्पुराणेतुश्रुतेज्ञातंभविष्यति ४८४
इतिकृत्वामतिंसोथपुराणज्ञमभाषत
पुराणमेकंमेतातव्याख्यातुभगवानिति ४८५
जातकर्मादिसंस्कारान्कारयस्वममाशुवै
द्विजोभूत्वाशृणोम्यद्यप्रायश्चित्तंकरोम्यतः ४८६
विधायकंपुराणंमेभविष्यतिचकीर्तितम्
अतःशक्यंकरिष्यामिपुराणार्थंविनिश्चयन् ४८७
पौराणिकउवाच-
यथावत्कीर्तयिष्यामिपुराणंपापनाशनम्
यथाज्ञानंयथाशक्तियथाशुद्धंयथाविधि ४८८
किंवांच्छसिपुराणंतुकीर्तयिष्येतदेवतु
गौतमउवाच-
सर्वंरुचिपुराणंमेवक्तव्यंकिंहितंवद ४८९
श्रुतेयस्मिन्भिदानैवजायतेतुहरीशयोः

पौराणिकउवाच-
कौर्मोक्तंयत्पुराणंतद्देवयोरभिदाभिधम् ४६०
शृणोतियस्तत्प्रथमंतस्यपापंविनश्यति
तस्यवक्तातुयोविप्रस्तस्यविघ्नांतरंभवेत् ४६१
श्रोतव्यंमन्यतेपापोयदिभार्याविनश्यति
किंचैकंदुष्करंवद्म्येश्रोतुर्वक्तुरनिंदकम् ४६२
व्याख्यातरियदिप्रीतिर्द्धर्मादिवप्रकाशिनी
आचारदर्शनेपुण्येकर्ममोक्षादिदर्शके ४६३
तदातुष्टोमहेशःस्याद्विष्णुरिष्टफलप्रदः
पितरस्तारितास्तेनयांतितेपरमांगतिम् ४६४

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादे
चतुर्दशोत्तरशततमोऽध्यायः ११४

## पंचदशोत्तरशततमोऽध्यायः

श्रीरामउवाच-
कथंपातकसंघातसंक्रमेब्राह्मणाधमे
पुराणज्ञःकथंव्याख्यांचकारद्विजसत्तम १
शंभुरुवाच-
अध्यापनेचाध्ययनेजायतेचाथसंगमः
संगतौवत्सरंरामयातिपातकिपातकम् २
पुराणज्ञेतुकाकुत्स्थसर्वतत्वार्थवेदिनि
अपिपातकसंदोहचीर्णपापंप्रणश्यति ३
प्रभूतवह्निनाशेहिधूमराशिर्यथैवहि
शलभोदीपनाशायवह्निनाशायनप्रभुः ४
कृतंपापंतथान्येषांनाशनायपुराणिकः
भूतादिग्रस्तमर्त्यानांभूतादिभयमोचकः ५
समंत्रवानपनयेद्यथानस्वयमातुरः
पौराणिकस्तथापापंनकिंचित्प्राप्तुमर्हति ६
आत्मनाचकृतंपापमन्यैरपिचयत्कृतम्
पुराणज्ञोनाशयतित्वतिदुष्टंस्वकर्म्मवा ७

भवानीशेहृषीकेशेसमवृत्तिर्विवेकवान्
लोकवेदक्रियावेत्तारुद्रजाप्यतिनिःस्पृहः ८
तुष्टःशांतःक्रियादक्षःप्रभूतोयोगकृद्वशी
यथैवतेपुराणज्ञोवसिष्ठोभगवानृषिः ९
नियोगात्तवभूपालअयोध्यायामतिष्ठत
अपालयद्भवंकृत्स्नांत्वांचरक्षःसमापतत् १०
सचशुक्रोपदेशेनराक्षसस्त्वामथाभ्यगात्
निद्रासक्तंहनिष्यामिनान्यथावसरस्त्विति ११
अथविप्रोविदित्वैतद्वसिष्ठस्त्वद्धितप्रियः
सुप्तंप्रमत्तंकाकुत्स्थंरक्षोहंतिनसंशयः १२
ब्रह्मावाप्तवरंतद्धिमयाकार्यंनिवारणम्
इतिसंचिंत्यविप्रर्षिःसेनामादायनिर्गतः १३
रक्षोहंतुमशक्तस्तुमृत्युहीनंततोमुनिः
स्वयंचराक्षसोभूत्वावाक्यमाहमहामुनिः १४
किमर्थमागतोसीहवनंमुनिनिषेवितम्
सआहराजारक्षोघ्नस्तमहंहंतुमागतः १५
मुनिरप्याहकिंतेनजीवितेनमृतेनवा
भुक्त्वामिषंमदीयंतुयुद्धंकृत्वाजयंव्रज १६
राक्षसउवाच-
कथंत्वंराक्षसोमह्यंभक्षणायभविष्यसि
वसिष्ठोऽप्यथमानुष्यमास्थायवियतिस्थितः १७
निष्ठीव्यमस्तकेतस्यमुष्टिनातमताडयत्
ताडितोराक्षसस्तेनव्यद्रावयदृषिश्चतम् १८
पलायमानावन्योन्यंजलधिंतुगतावुभौ
तत्रस्थेनग्रहेणासौगृहीतोराक्षसस्तदा १९
मुनिःपुनरयोध्यायांपूर्ववत्समतिष्ठत
शंभुरुवाच-
तस्मात्स्वाभिमतंकुर्यात्पुराणज्ञोविमत्सरः २०
श्रवणस्यविधानंचकथयामिशुभंशृणु
शुक्लपक्षेदिनेशुद्धेवारनक्षत्रयोगतः २१

करणेचापिलग्नेचग्रहताराबलान्विते
अमूढेनग्रहेबालेनचवृद्धौगुरौस्थिते २२
नकृष्णपक्षेग्रहणेनचनास्तिकसंनिधौ
पूर्वोक्तलक्षणोपेतंपुराणंशृणुयादिति २३
शुद्धगेहेऽथवाशुद्धवेदिकायांमठेथवा
नदीतीरेदेवगेहेसभामंडपएवच २४
रथ्यामठेथवारम्येपुण्यशालासुराघव
स्वयंनमस्यविप्रेंद्रान्पुराणज्ञंविशेषतः २५
आसनंकल्पितंकुर्य्यादूर्ध्वंसर्वविशेषितम्
एहिधर्म्मासनमितिवक्तव्यंस्यादनिष्ठुरम् २६
पुराणप्रक्रमदिनेयत्कार्यंतदुदीरयेत्
व्याख्यातारंपुराणस्यवस्त्राद्यैःपरिपूजयेत् २७
शुभानिदत्वावस्त्राणिसूक्ष्माणिचनवानिच
करकंठविभूषादिपात्रमासनमेवच २८
गंधपुष्पाक्षतैःपूज्यतांबूलंविनिवेद्यच
शुक्लांबरधरंविष्णुंशशिवर्णंचतुर्भुजम् २९
प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये
सभासदश्चसंपूज्यगणेशंपार्थयेत्ततः ३०
ॐनमेत्यादिमंत्रेणपूजनंभारतीनुतिः
प्रातःकालेपुराणस्यप्रक्रमंप्रारभेदिति ३१
उपक्रमदिनेरामत्रिपंचदशवाशुभाः
श्लोकाद्वितीयेदिवसेततोद्विगुणिताःशुभाः ३२
तृतीयेदिवसेरामततश्चाधिकमिष्यते
दिनानामव्यवच्छेदाद्व्याख्यानंश्रवणंतथा ३३
व्यवस्थितिर्यदाजातातदापौराणिकंगुरुम्
तांबूलादिप्रदायाथपरेद्युःशृणुयादपि ३४
पुराणमेवंश्रोतव्यंदैनंदिनमितिश्रुतिः
व्रतरूपेणयःकश्चित्पुराणंशृणुयान्नरः ३५
यदैवंतत्पुराणंतुतत्रयातिनसंशयः
पुराणंश्रोतुकामेनश्लोकश्चैकोपिचेच्छ्रुतः ३६

तद्दिनेतुकृतंपापंनाशयेत्तुनसंशयः ३७
एवंपुराणंशृणुयाद्धयस्तुसब्रह्महत्याकृतपापबंधात्
सुरापीतिःस्वर्णहरश्चरामगुर्वंगनागश्चविमुक्तिमेति ३८
पापानिचान्यानिकृतानिपुंभिःसर्वाणिनश्यंतिपुराकृतानि
इहापियान्यब्दशतार्जितानिश्रोतुर्विनश्यंतितथाचवक्तुः ३९
कलौसमस्तविप्राणांसर्वज्ञत्वंनविद्यते
विगुणापिततोव्याख्याफलदादानकर्मवत् ४०
पुराणानामभिप्रायंव्यासोवेदनचापरः
अहंवेद्मिविशेषेणव्यासादपिविधेरपि ४१
नस्वाध्यायस्तपोवापिनमंत्रोनजुहोतयः
फलंतिनतथातिष्येपुराणश्रवणंयथा ४२
एकैकश्रवणादेवपातकंमहदेवतु
नाशमाप्नोत्यसंदेहःश्रीशैलेवर्तनादिव ४३
अतोगुरुःपुराणज्ञःश्रोतृवंद्योऽघनाशनः
नतस्मादधिकःकश्चिद्गुरुरस्तिगतिप्रदः ४४
मंत्रेषुगुरवोयेचवेदशास्त्रेषुयेमताः
नेशतेसर्वविज्ञानंदातुंतस्मान्नबोधकाः ४५
पिशाचाःप्रायशोरामब्रह्मराक्षसनामिनः
वेदमंत्रस्यवेत्तारोदृश्यंतेनपुराणवित् ४६
पुराणविमुखोनैवसर्वःसर्वंहिपश्यति
पुराणज्ञोहितस्तस्मात्पापनाशकरःप्रभुः ४७
तत्पूजासर्वपूजास्यात्सर्वद्रोहोस्यपीडनम्
यथासमस्तदानानांविद्यादानंप्रशस्यते ४८
पौराणिकस्तथाधन्यस्तत्रदानंमहत्फलम्
रामउवाच-
किंवापौराणिकेदेयंकियत्कीदृशमेवच ४९
पुराणंकीदृशंवर्ज्यंवर्ज्यःकीदृक्पुराणवित्
शंभुरुवाच-
षड्रसानन्नपानानिस्नेहद्रव्याणियानिच ५०
गृहंसोपस्करंरामपुराणज्ञायदापयेत्

पर्याप्तान्येवसर्वाणिअधिकानिफलाधिकात् ५१
दद्याद्द्रव्यमतोभूयःसचैलंशोभितंमृदु
भूषणानियथार्हाणिस्वशक्त्याप्रतिपादयेत् ५२
गंधपुष्पंप्रतिदिनंकेवलंगंधमेवच
केवलंचतथापुष्पंफलकालेफलान्यपि ५३
तांबूलंचतथादद्यान्नमस्कुर्याच्चभक्तितः
पुराणस्यसमाप्तौतुदद्याद्दानादिकंतथा ५४
अधिकंतुतथादेयंभूहिरण्यादिकंनृप
नचतूष्णीमुपक्रम्यश्रोतुमर्हतिकश्चन ५५
सभासद्भिःकृताचैवयापूजैकेनवाकृता
देवस्थानेयथाशक्तिसर्वैःपूजनमिष्यते ५६
तीर्थेपिचयथारामपुण्येष्वायतनेषुच
स्वशक्त्यापूजनंकुर्यात्पुराणज्ञायराघव ५७
श्रोतुस्तुलक्षणंपूर्वंमयोक्तंतुभवेन्नृप
पौराणिकस्यसर्वस्यलक्षणंकथयामिते ५८
कुलहीनोमहाव्याधिर्महापापीतिरस्कृतः
शौचाचारविहीनश्चवेदस्मृतिविवर्जितः ५९
अन्यदेवःपूतिवचोव्यंगश्चाप्यधिकांगवान्
परपूर्वापतिःस्तेनःप्राणिहंतानिराकृतिः ६०
अथवर्ज्यंपुराणंतेकथयामिनृपोत्तम
पूर्वज्ञैरुच्यमानंचयत्प्रोक्तंमुनिभिःपरैः ६१
व्यासादयोमुनिवरायत्प्रोचुस्तदुदीरयेत्
पुराणस्थंपठेद्ग्रन्थंव्याख्यायेतविचारयन् ६२
ययाकयापिवारामभाषयादेशभाषतः
नदेशभाषारचितंग्रंथंश्रुत्वाफलंलभेत् ६३
व्याख्यायाकापिकाकुत्स्थपुराणस्यहिताहिसा
तस्मात्त्वंदेवयाचस्वव्याख्यास्येयत्पुराणकम् ६४
शंभुरुवाच-
एवंपौराणिकेनोक्तंश्रुतवानपिगौतमः
स्वयंवस्त्रत्रयंप्रादाद्ब्राह्मणायमहात्मने ६५

कौर्मंपुराणंप्रथमंश्रुतवानितिनःश्रुतम्
दत्तवान्स्वर्णमधिकंवस्त्राणिचशुभानिच ६६
अथलैंगंचशुश्राववैष्णवंवामनंतथा
पाद्मंचगारुडंचैवसौरंब्राह्ममथैवच ६७
एवमष्टसशुश्रावपुराणानिसगौतमः
अथरामायणंचैवकौर्ममेवपुनश्चसः ६८
शिवनारायणेत्येवंजपंचक्रेसदैवहि
अवापनिधनंचापिसगतोब्रह्मणःपदम् ६९
ब्रह्मासंपूज्यतंविप्रंविष्णुलोकमथागमत्
विष्णुनापूजितःसोऽथजगामशिवमंदिरम् ७०
सर्वेषामेववंद्योऽसौगौतमोमुनिसत्तमः
भारतश्रवणेचापिनियमायेमयेरिताः ७१
पुराव्यासेनमुनिनात्रिवर्षाद्यत्कृतंशुभम्
श्रवणात्तस्यकृत्स्नस्यव्याकर्ताभारतस्ययः ७२
नकिंचित्प्रणमेद्विप्रंमुक्त्वायोगिनमुत्तमम्
सर्वेषामेववंद्योसौभारतंव्याकरोतियः ७३
योमहाभारतंनित्यंव्याख्यास्यतिपठेच्चवा
ससर्वेभ्योधिकोविप्रस्तारयेच्चैवमानवान् ७४
व्याकरोतिचपर्वैकंसर्वाणिकतिचित्तुवा
सर्वपापविनिर्मुक्तोहव्येकव्येविशिष्यते ७५
तमेवप्रणमेद्विप्रंतमेवार्हंचपूजयेत्
तमेवभोजयेन्नित्यंसर्वंतस्मैनिवेदयेत् ७६
तस्यपूजाविधिःप्रोक्तोव्याख्यानसमयेद्विजः
प्रतिपूज्योऽथवस्त्राद्यैःपूजयेद्विधिमार्गतः ७७
आदिपर्वसमाप्तौचसूक्ष्मवस्त्रयंददेत्
सुवर्णंचयथाशक्तिसभापर्वणिवाससी ७८
आनुशासनिकारण्यस्वर्गारोहेषुपर्वसु
आदिपर्वणिपूजायासापूजानृपपुंगव ७९
कर्णाश्वमेधवैराटशल्यद्रोणेषुपर्वसु
सूक्ष्मवस्त्रत्रयंशुद्धंनिष्कद्वयमथापिवा ८०

ज्ञुद्रपर्वस्वथान्येषुनिष्कावथसमानयेत्
हरिवंशेसनिष्कंतुवस्त्रत्रितयमेवतु ८१
भारतस्याखिलस्यैवसमाप्तौज्ञेत्रदोभवेत्
रामायणस्यश्रवणेकांडेकांडेप्रपूजयेत् ८२
ज्ञेत्रंपर्याप्तमथवासुवर्णमपिदापयेत्
व्याख्यातुर्गरुवाक्यस्यसर्वकल्मषनाशनः ८३
अर्थोधर्म्मश्चकामश्चमोज्ञश्चनृपसत्तम
व्याख्याश्रवणतःसर्वेसिद्धयंतिचसुबुद्धयः ८४
ब्रह्महत्यादिपापानांसर्वेषामपिनाशनम्
एकेनश्रवणेनास्यकिंनरैर्नश्रुतंभुवि ८५
यानवसुसुवर्णाद्यैर्नित्यमेनंप्रपूजयेत्
व्याख्यातारंयतःपापसंदोहस्यविनाशनम् ८६
अन्यान्यपिपुराणानिमुनिप्रोक्तानितान्यपि
श्रोतृणांपापनाशायवक्तुश्चापिविशेषतः ८७
यश्चसर्वपुराणानिषट्त्रिंशत्तुप्रकीर्तयेत्
शृणोतिवानतस्यास्तिचित्तच्छेदःकदाचन ८८
ब्राह्मंपुराणंप्रथमंद्वितीयंपाद्ममुच्यते
तृतीयंवैष्णवंचैवचतुर्थंशैवमुच्यते ८९
अथभागवतंप्रोक्तंपंचमंषष्ठमुच्यते
भविष्यंनारदीयंचसप्तमंपरिकीर्तितम् ९०
मार्कंडेयमितिप्रोक्तमष्टमंनवमंतथा
आग्नेयंब्रह्मवैवर्तंदशमंपरिकीर्तितम् ९१
लैंगंचवामनंचैवस्कांदंमात्स्यमथैवच
कौर्मंवाराहमुदितंगारुडंवाथकीर्तितम् ९२
ब्रह्मांडमित्यष्टादशपुराणानिविदुर्बुधाः
तथाचोपपुराणानिकथयिष्याम्यतःपरम् ९३
आद्यंसनत्कुमाराख्यंनारसिंहमतःपरम्
तृतीयमांडमुद्दिष्टंदौर्वाससमथैवच ९४
नारदीयमथान्यंचकापिलंमानवंतथा
तद्वदौशनसप्रोक्तंब्रह्मांडंचततःपरम् ९५

वारुणंकालिकाह्वानंमाहेशंसांबमेवच
सौरंपाराशरंचैवमारीचंभार्गवाह्वयम् ९६
कौमारंचपुराणानिकीर्तितान्यष्टवैदश
अष्टादशपुराणानांव्याकर्तातुभवेन्मनुः ९७

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादेपुराणमाहात्म्यकथनं नामपंचदशोत्तरशततमोऽध्यायः ११५

## षोडशोत्तरशततमोऽध्यायः

सूतउवाच-
संध्यावंदनकर्मक्रियतामितिरामोमुनिमाचष्टायम्
उष्णद्युतिरप्यस्तमुपैतिद्विजकुलमेतन्नीडमुपैति १
स्वयमपिसंध्यावंदनकामोऽव्रजदुत्तरदिशमुज्झितयानः
हाहाहूहूकृतसंगीतिर्बंदीप्रमुखप्रस्तुतकीर्तिः २
गौतमीतटमुपेत्यराघवोवायुनंदनसुधौतपद्युगः
जांबवत्कृतकरावलंबनःप्रापदुत्तमनदींतुगौतमीम् ३
करद्वयेधृतकुशःसराघवःप्रागमद्वरुणदिशामथोत्तमाम्
दत्वाततोऽघत्रितयंयथाविधिप्रहृष्टरोमाथजजापसोंऽतरे ४
संप्रार्थयित्वावरुणंयथाक्रमंशंभुंवसिष्ठंप्रणनामराघवः
ताभ्यांकृताशीरगमन्मनःपदंहनूमताक्षालितपादपंकजः
जुहाववह्नीनथबंदिमागधैःसंस्तूयमानोऽथविनिर्ययौबहिः ५
प्रहसच्चंद्रकिरणैःसुधालिप्तमिवांबरम्
प्रसन्नताराकुसुमंवितानमिवसर्वतः ६
अथागच्छत्सौधतलंवृद्धामात्येनकल्पितम्
नानासनसमोपेतंसभास्थानंययौनृपः ७
अथमुनिंह्युपवेश्यसराघवःस्वयमपिप्रथमासनमाभजत्
कपिगणाःपरितःपृथुविग्रहारचनयास्थितिमाप्रतिपेदिरे ८
सुखस्थितंनृपमभिवीक्ष्यसद्विजोवचस्तदासमुचितमाहशंभुः
इहस्थितोभवतिसमस्तपूजितःकथंकथानृपवरवर्ततेगुहायाम् ९
आकर्णाथरघूद्वहोद्विजवचःशुश्रूषुरासीत्कथां
तत्रस्थोनिपुणंनिवार्यवचनंसर्वैःश्रुतंतत्क्षणात्

शुश्रूषामिकथंमहाद्भुततयास्वात्माश्रयामन्यथा
रक्षोबाधनवादिनीमथनृपः किंत्वेतदित्याहच १०
कुंभश्रोत्रवधःपुरासमजनिप्राप्तोदशास्योवधं
पश्चादित्ययमन्यथाविरचितंरामायणंभाषते
कोऽयविप्रवरःसमस्तजनतानास्तिक्यसंपादको
राज्ञांस्थानमुपेत्यवक्तिसमयादंड्योऽथपूज्योऽथवा ११
अथाहजांबवानमुंरघूत्तमंकथांप्रति
रामायणंनतावकंत्विदंहिकल्पितंमतम्
समस्तमत्रविस्तराद्वदामिदेवतच्छृणु
पंकेरुहस्यसूनुतोमयाश्रुतंपुराह्यभूत् १२
जांबवंतंविज्ञाप्यरामचंद्रोवचनमाह १३
श्रीरामउवाच-
कीर्तयपुराणंमेशुश्रूषुःकुतूहलादहंप्रणीतंतत्केनचविज्ञातम् १४
जांबवानथबभाषेहिविधात्रेनमोनमस्तथैवविधुभूषणकेशवाभ्याम् १५
अथपुरातनंरामायणंकथयामि १६
यस्यश्रवणेनाखिलजन्मसंपादितपापक्षयोजायते १७
अथतथापिदशरथोदशरथसमानरथीमहीयसाबलेनसुमानसनामनगरजिगीष
यापंकेरुहसुतसुतंवसिष्ठमाहूयनमस्कृत्वामुनिदत्तानुज्ञःशताक्षौहिणीसेनयासह
ारुह्यतुरंगमंचंद्रसमानशरीरमतिरोषसमाविष्टोविष्टरश्रवसमाराध्यदंडयात्रांचक
ार १८
साध्योनामस्वीययासेनयावृतोदशरथाभिमुखमाययौयोद्धुंयुद्धंचान्योन्यमभूत्
१९
मासमेकंयुद्धंकृत्वादशरथस्तंसाध्यंजग्राह २०
अथसाध्यसूनुर्भूषणोनामाल्पपरिवारोयुयुधेदशरथेन २१
दशरथोऽपिसाध्यसूनुंभुवोभूषणमवलोक्ययोद्धुमेवनैच्छत् २२
कथमेतादृशंहन्मिचास्मिन्हतेऽस्यकथंपिताभविष्यतिकथंतन्माताकथमप्रौढयौ
वनाप्रिया-र्या २३
अमुष्यहिदेहेसमालिगनचुंबनपरिवर्तननवीनतरदलारविंदपदानिकुसुमानीव
दृश्यंते २४
एतत्समानवर्णवयाएतादृशःसुभगःपरमप्रीतिवर्द्धनोनामपुत्रोभल्लूकभक्षितोमृ

तःस्मृति-
पथंप्राप्यापिमांरक्षयितुमिच्छतीवममहृदयमन्यथाकरोतिइतिमनसावितर्क्याति
बालकंग्रहीतुमारभत् २५
सचसाध्योपिपराधीनोबभूव २६
सचकुमारेणसहपराजयखेदमपिमत्वासुखमध्युवासच २७
दशरथोऽपितत्रमासंस्थित्वातत्पुत्रसंदर्शनसुखमवलोक्याचिंतयत् २८
अहोसर्वदुःखापनोदनक्षममेतन्मुखावलोकनंपुत्रसंवर्द्धनंनामसर्वराष्ट्रिकोम-
मजयःपुत्रवियो-गमनुस्मरतोदुःखायकेवलंभवति २९
तदस्यपृच्छांकरोमिकथमीदृशोजायतेपुत्रइतिवितर्क्यतमपृच्छत् ३०
साध्योऽपिसकलमोक्षमार्गंक्षितीशायादिशत् ३१
हरीशानौसहाराध्यसर्वैकादशीरुपोष्यद्वादशीषुब्राह्मणानाराध्यतत्तत्कालभवंफ
लपूर्वमन्नाद्यंव्यंजनंपुष्पंचन्यायेनसंपाद्यकपिलाघृतेनकेशवंस्नापयित्वामुद्गचूर्णे
नसंलिप्यस्वादूदकेनस्नापयित्वासुरभिपाटीरंस्वयमुद्घृष्टंमृगनाभ्यागुरुसारेण
वासमेतंदेवांगंसर्वमुपलिप्यतुल-सी-
दलैर्यूथिकाकरवीरनीलोत्पलकमलकोकनदद्रोणकुसुममरुवदमनकगिरिकि
र्णकाकेतकीदलपूर्वैर्यथासंभवमभ्यर्च्य द्वादशाक्षरेणपुरुषसूक्तेनवानाम्ना
षोडशोपचारेणवाराध्यप्रणम्यनृत्यंकृत्वादेवंक्षमापयेत् ३२
तथाव्रतानिविचित्राणिनारायणप्रीणनायकुर्य्यात् ३३
प्रसन्नोभगवान्मुनिरीप्सितंपुत्रंयच्छतितदमुमाराधयस्वेतिदशरथमुक्तवान् ३४
सचापिसाध्यंतत्रस्थाप्यगत्वायोध्यांतथासर्वंकृतवान् ३५
अथपुत्रकामेष्टौसमाप्तायामाहवनीयाद्यज्ञमूर्तिःशंखचक्रगदापाणिरुदतिष्ठत्
राजानंचवरंवृणीष्वेत्युक्तवान् ३६
सचराजाववेपुत्रानतिधार्म्मिकान्दीर्घायुषश्चतुरोलोकोपकारकान्देहीति ३७
अथराजमहिष्यश्चतस्त्रःकौशल्यासुमित्रासुरूपासुवेषाचेति ३८
राजानमब्रुवन्देवप्रतियोषमेकेनपुत्रेणभवितव्यम् ३९
अथकौशल्योवाचएषयदिप्रसन्नोदेवस्तदायमुत्पद्यतांमम ४०
राजोवाच-
ममयदिष्टंतदयंप्रार्थ्यतेहरिः
विष्णोप्रसीददेवेशकमलापतेशंखचक्रगदाधरविभीषणसृष्टिसमस्तलोकपाला
दिपूजितपा-दयुगलशाश्वतहरेनमस्तेनमस्तेएवंस्तुतोभगवानथराजानमाह ४१

माधवउवाच-
तवपुत्रोभविष्यामिकौशल्यायाम्
अथचरुंप्राविशद्धरिः
तंचरुंहिचतुर्धाविभज्यभार्य्याभ्योदत्तवान् ४२
अथकौशल्यायांरामो लक्ष्मणः सुमित्रायां सुरूपायांभरतः
सुवेषायांशत्रुघ्नोजज्ञेखात्पुष्पवृष्टिश्चपपात ४३
अथचतुराननःस्वयमुपेत्यजातकर्मादिकाःक्रियाश्चक्रे ४४
त्रिभुवनाभिरामतयारामइतिनामचक्रेरूपशौर्य्यादिलक्ष्मीयोग्यतयालक्ष्मणइत्य
परस्यभुवंभा-
रात्तारयतीतिभरतःशत्रून्हंतीतिशत्रुघ्नइतिनामानिकृत्वाब्रह्मास्वभवनंजगामशि
शवश्च-
वृद्धिमीयुः ४५
अथपादसंचारिणंबालचंद्रसंकाशदर्शनंबिंबाधरमुन्नततिलप्रसूननासंपुरश्चूलिक
ालंबमान-
रत्नपत्रकंश्रवणलोललंबमानकुंडलंवक्षःस्थलविचलितस्थूलमुक्ताहारंविलसत
कार्तस्वरोब-
ह्वलयंसिंजन्मणिकंकणरत्नांगुलीयकंहेममणिरचितश्रोणिसूत्रंसिंजन्ननूपुरोपशो
भितपादमंगुलीयोपशोभितपादमध्यांगुलीयकंवज्रांकुशसरोजलांछनशोभितोरु
पादतलंतूणीरसदृशजंघंकरिकरसदृशोरुंविस्तृतजघनंसूक्ष्ममध्यंवर्तुलावर्तकं
गंभीरनाभिमिंद्रनीलशिलाविशा-
लवक्षःस्थलंकंबुग्रीवंचंद्रबिंबसदृशवदनमर्द्धचंद्रसदृशललाटंनीलकुटिलकुं
तलंक्रीडासक्तधूलिभिरापांडुरंफुल्लपद्मदलारक्तविलोललोचनंमहेश्वरमिवोद्धू
लतभूतिंमहेश्वरमिवदिगंबररंरामंकुमारंराजादशरथोदृष्ट्वा
हर्षपरिपूर्णहृदयःपुत्रमालिग्य चुंबित्वावक्षस्यालिलिगदृढम् ४६
अथकुमारोपिपार्श्वेनास्यांकमारोप्यकलकलितलोचनोयत्किंचिदुवाच ४७
याचमानमितस्ततोवीक्षमाणःतातगच्छेशयेतातक्रीडामितातेत्यादिपुत्रसुखमनु
भूयानुभूय-निर्वृतिंययौ ४८
अथकदाचिद्भोक्तुमागतेराजनिरामचंद्रोबालक्रीडासक्तहृदयोबहुक्रीडनकरकम
लउत्प्लुत्यधावमानोनरपतिपुरःस्थितमणिखचितसुवर्णभाजनस्थमन्नंवामकरे
णगृहीत्वाराजनिचिक्षेप

इदमपिराजासुखायमेने
एतादृशान्यन्यानिचकाररामचंद्रः ४९
अथकदाचित्क्रीडमानेरामेवात्यारामममपातयद्रामश्चरुदन्नपतत् ५०
एतस्मिन्नंतरेब्रह्मराक्षसोराममगृह्णाद्रामश्चमूर्च्छामाप ५१
अथसहचरोबालइतस्ततोरोरूयमाणोरामंतथाविधंराज्ञेव्यज्ञापयत् ५२
अथराजाराममादायवसिष्ठमाहकिमिदंरामस्येतिपप्रच्छ ५३
अथवसिष्ठोभस्मादायाभिमंत्र्यब्रह्मराक्षसंमोचयामास ५४
पप्रच्छकोभवानितिसचाहाहंवेदगर्वितोब्राह्मणोबहुशःपरधनमपहृत्यब्रह्मराक्ष
सोजातोमेनि-ष्कृतिंविचारय ५५
वसिष्ठउवाच-
इदानीमितःपरमेकवर्षशतोपभोग्यंराक्षसत्वंनरकं
भागीरथीस्नानमेकंशिवायबिल्वपत्रशतंसमर्प्यततः
स्नात्वापापाद्विमुक्तोभवसीति ५६
कदाचित्तादृशंकृतपुरायंतवपदंप्रयच्छामितदुपरिशिष्टांगतिंभजेतिवसिष्ठवाक्य
माकरार्यब्र-
ह्मराक्षसोवसिष्ठोपदिष्टपुरायवशाद्दिव्यशरीरोभूत्वानमस्कृत्वास्वर्गंजगाम ५७
अथरामंप्राप्तेकालेउपनीयवसिष्ठोवेदानध्यापयामासषडंगानिमीमांसाद्वयंनीति
शास्त्रंचा-ध्यापयामास ५८
अथधनुर्वेदमायुर्वेदंभरतगांधर्ववास्तुशाकुनविविधयुद्धशास्त्राणिच ५९
अथविवाहंकर्तुकामेनराज्ञादशरथेनानानादेशजनपतीन्प्रतिदूताःप्रेरिताः ६०
अथकश्चिच्छीघ्रमागत्यराजानमिदमब्रवीत् ६१
राजन्विदर्भदेशाधिपतिर्विदेहोनामराजातस्यपुत्रीवैदेहीहोमलब्धारूपेणलक्ष्म
ीसमासर्वल-
क्षणसंपन्नारामयोग्याविद्यतेसचतांदातुंराजारामायोद्यतःतद्गम्यतांशीघ्रमिति ६२
अथवसिष्ठादीन्प्रेषयामासतेचतत्रगत्वातांचनिरीक्ष्यलग्नंनिश्चित्यायोध्यामेत्यरा
जानमुक्त्वारामसहिताःपृथिवीपतिसमेताःशीघ्रंविविधकरितुरगशकटशिबि
कांदोलिकाभिरतिसुभगरूपभोगविलासक्रियानिपुणा-
विदितविविधचेष्टागंधर्वाःकामशास्त्रसुकुशलाःमृदुकठि-
नपृथुपयोधरासन्नकंठाः
स्थूलसूक्ष्मललाटबिंबदशनच्छदमुखपंकजाःकुटिलकुंतलदीर्घकेशधम्मिल

लाःकनकपत्रकर्णाःस्नानचेष्टयोत्थितरोमशोभितजपाकुसुमरक्तदशनाविशदा
वस्फुरच्छफरीलोचनाः
शुक्तिकासदृशश्रवणाःनक्षत्रसदृशस्थूलमुक्ताफलोपशोभितनासापुटामुकुरसदृ
शकपोलास्तिलप्रसूननासिकाश्चानम्रमध्यप्रदेशचूचुकाइंद्रगोपप्रतीकाशाधरपु
टदशनक्षताःसमदीर्घकांगप्रदर्शनास्थितसर्वप्रदेशवर्तुला
नातिमांसलाःपिंडकाग्रंथिनीव्योवलितबाहुमूला
अनतिचिरकालोत्थितरोमतयाहरिद्रावर्णतयाचकर्णिकारदलसदृशबाहुमूलामृ
दुस्निग्धव-
र्तुलसूक्ष्ममध्यप्रदेशाःकठिनस्थूलवर्तुलामग्नचूचुकपरस्परस्थानाक्रमणस्पर्द्धि
पयोधरमध्यलब्धपदकपयोधरोपरिचंचलविविधमणिमयहारोपशोभितवक्षःस
थलाःपयोधरपरितोलब्धपदतयातरुणदृष्टिपरम्परतया
असमानयानाभिकूपोपरितनरोमराज्योपशोभितोदरप्रदेशाभज्यमानमध्यस्थली
करणएवव-
लीत्रयोपशोभितमुष्टिग्राह्यमध्याःकरिकरोपमजघनप्रदेशाअरोमसदृशमृदुस्निग
धामलासमजान्व्यःकदलीस्तंभसंनिभोरुयुगलाश्चामग्नजानुकृशकुशवर्तुलपिं
डकारहितजंघाश्चामग्नगुल्फाश्चासूक्ष्मस्निग्धादीर्घदीर्घांगुलीपादानूपुररवाह्वयम
ानमदनाहंसमतंगजगमना
दक्षिणांगुष्ठस्पर्शिकच्छाग्राउपरिकच्छंनीवींकृत्वाकरद्वययुतावस्त्रप्रदेशकंठम
प्रावृत्यापरवसनपरिभागावृतस्तनवसनापरभागेवामांसएवदक्षिणपार्श्वगतेनद
शाभागेननाभिप्रांतेनप्रवेशितोपशोभितगात्रयष्टयोयोषितोविवाहमंगलकर्मकर
णायानेकशश्चागच्छन् ६३
बालिकाश्चविद्युल्लतांशुशोधितगात्रयष्टयउद्भिन्नकुचकमलकुड्मलविविधहा
रोपशोभिव-क्षसोयत्किंचिद्भाषिण्योऽतिचपलमृदुगतयोवृद्धवनिताश्चागच्छन्
६४
अथविदेहेपुरतःक्रोशमात्रेचूतवनिकायांविविधविटपविस्तरप्रदेशविविधविहं
गकूजिता-कर्णनदत्तकर्णवनहरिणशाववत्यां
महारजतनिर्मितोच्चनीचप्रासादोपशोभितप्रदेशविविधविहंगायांहेमवल्कलसं
वीतभसितो-द्धूलितशरीरजटिलमुनिगणध्यानोपासनोपशोभितवृक्षमालायां
विविधविद्यधारवधूपयोधरभाराभिभूतविचरिततरंगसरसीयुतायां
सरस्तीरमिलितसैरंध्रीयुवतिभिराहूयमानतरुणजनायां

नानावर्णकुसुमसौरभवासिताशेषप्रदेशायामितस्ततोरिरंसयाप्रदर्शितस्फारश
फरीविलोच-
नतरलचन्नुषाप्रभाविलसितशरीरवेश्याजनायांविविधाश्चर्ययुतायां दशरथः
सामात्यपुरोहिताभिरामरामादिपुत्रसहितः सुखमुवास ६५
ऋथवैदेहोऽपिमिथिलांनानापताकोपशोभितां
विविधप्रासादगोपुरोद्यानदेवतायतनोपशोभितामन्योन्यकेलिचतुरयु-
वतिजनानुकीर्णामुशीरविरचितमहाप्रपांसुकेलीजनोपशोभितविशिखां
विविधपरायोपशोभितरथ्यांतत्रतत्रब्रह्मघोषशोभितमठांप्रतिमंदिरंमीमांसादि०
याख्यानसंप-ऋादिसामाध्ययनां
सुपुरायहविर्गंधसामादिस्वरपदक्रमश्रुतिब्राह्मणवाटिकामनेकपरिवृढमंदिरप्र
वेशनिष्क्री-
तागुरुकुंकुमाध्वर्य्युवेषांमृदुलवसनतांबूलरक्तदंतच्छदकामिनीमृदुवचनकठि
नवचनकरसंज्ञानिद्धराररितप्रतिवचनविविधोपायनाहरणकरजनोपशोभितांमृदु
धवलजघनपरिवीतवस्त्रोपरिभागेनस्निग्धवर्तुलपरस्परसंघर्षपयोधरमध्यप्रदेश
ोपशोभितवामांसकंदोपशोभितवइ-नतां
विविधमुक्ताहारजपासंकाशदशनच्छदमंदहासमालाकारसहस्त्रोपशोभितां
पुरायासवसाधनमंदिरां तत्रतत्रविचित्रतोरणां विशुद्धवीथिकां
तत्रतत्रस्थापितकल्पपादपां रंभाविभूषितद्वारांपुरींशोभितांशोभयामास ६६
ऋथाभिकलनार्थंविलासिन्योनिशादूर्वान्ततामंत्रमंगलकज्ञलितकैशिकधमिल
ललताग्रंथि-
तजटोपशोभितसीमंतशीर्षशोभितनासामुखविचित्राभरणार्हणहेमपात्रावस्थित
ाज्यगुग्ग-
लुफलादिसौभाग्यद्रव्यमुद्वहंतीभिःस्त्रीभिरन्यैरपिशोभितजनैःसराजानिर्जगाम
६७
तदानींमंगलतुर्यघोषादेवदुंदुभिभेरीनिःसाणमर्दलशंखादिनादाःप्रादुर्बभूवुः ६८
गायकाश्चमंगलानिजगुः ६९
मंगलवेदवाक्यानुपाठेनवैदिकाः ब्राह्मणाः
कुलपाठकाभेरीघोषेणकृत्स्नमाकाशमापूरयन् ७०
ऋथान्योन्यान्नतपूर्वमंगीकुर्वंतःसूतबंदिजनादिभिःस्तूयमानाः पुरंप्रविविशुः
७१

विदेहनगरात्पश्चिमभागेनिर्मितंमंदिरंदशरथःप्रविवेश ७२
अवशिष्टाश्चयथायोग्यंभवनंविविशुः ७३
अथनारदोमिथिलांतदानीमेवागच्छत् ७४
विदेहोऽपिदेवर्षिमभिपूज्यस्वागतंदृष्ट्वाभोजनंकारयित्वा
सुखासीनायमुनयेसघनसारंतांबूलंदत्वाव्यज्ञापयत् ७५
श्वोविवाहेभवान्स्थातुमर्हतिकारयितुंविवाहम् ७६
नारदउवाच ७७
श्वोहिनक्षत्रंसूर्यनक्षत्रदर्शनंतत्रविवाहोनकर्तव्यइति ७८
अथमौहूर्तिकंवृद्धगार्ग्यमाहूयराजापप्रच्छक्वविवाहमुहूर्तः ७९
श्वइतिगार्ग्यउवाच ८०
राजाचनारदंगार्ग्यंचोदीक्ष्यभोइदमित्थमितिपप्रच्छ ८१
अथनारदोगार्ग्यमुवाच ८२
कथमुक्तंलग्नंदास्यसि ८३
अथगार्ग्योविषघटिकाश्चविहायलग्नंदास्यामिइत्युवाच ८४
नारदोपिब्रह्मवचनानिकिंनजानासीत्युक्तवान्गार्ग्यम् ८५
गार्ग्यस्तुष्टस्तान्दोषानपठत् ८६
उल्काचब्रह्मदंडश्चमोघःकंपस्तथैवच
सर्वकार्यविनाशायदृष्टावैब्रह्मणापुरा ८७
प्रतिष्ठासुविवाहेषुमौंजीबंधाभिषेकतः
अन्येषुसर्वकार्येषुविषनाडीर्विवर्जयेत् ८८
अतःपरंतुकार्य्याणांकरणेनचदोषभाक्
विवाहादिषुकार्येषुदोषमेववदाम्यतः ८९
उल्कादहेत्कुलंसर्वंब्रह्मदंडोविनाशयेत्
मोघस्तुमरणायस्यात्कंपःकंपायकर्म्मणः ९०
इतिनारदोक्तमाकर्ण्यगार्ग्योमुनिर्मौनपरोऽभवत् ९१
दध्यौरविंग्रहपतिं विहायविषनाडीर्विवाहःक्रियतमिति ९२
नारदउवाच–
कथंब्रह्मवचनम् ९३
सूर्यउवाच–
देशभेदेनव्यवस्थोदिता तदस्मिन्देशेविवाहोविषघटिकां विहायकर्तव्यएव

९४
नारदोप्यनुमेने ९५
उवाचश्वः पराह्णेच ह्यत्रविवाहश्चभवेदतः स्वयंवरार्थंनृपाश्रागच्छंतु
तन्नृपदूतान्प्रेषय ९६
अथराजादशरथानुमतेनसर्वानेवनृपानागमय्याचिंतयत्
कथंसर्वानेवतिरस्कृत्यवैदेहीरामायदेयेति ९७
अथरात्रौमुहुर्मुहुर्निःश्वस्यनिद्रालुरपिननिद्रामाप ९८
अथमध्येनिशंराजाशुचिर्भूत्वात्र्यंबकंसांबिकंमंगलदुकूलधारिणंकमलभवपुरु
षोत्तमशक्र-
प्रमुखनिखिलदेवैर्भृगुप्रमुखमुनिवरैर्हाहाप्रमुखगंधर्वैस्तुंबुरुप्रमुखैश्चश्रुतिस्मृतीति
तहासपुराणैर्मूर्तिमद्भिश्चसिद्धविद्याधरादिमातृकागणैश्चनंदीप्रमुखगणैश्चसेव्यमा
नपादकमलंसर्वामंगलपरिमोचकमतिपुण्यसलिलयागंगयानिष्कलंकेनचंद्रम
सासेव्यमानशिरोभागं वामांकारूढयागिरिजयाप्रदीयमानवीटिंसहा-
संसकामंसहावेक्षणमाददानंगोक्षीरसदृशंप्रतिकूलकस्तूरिकासदृशकंठंमृदुसू
क्ष्मस्निग्धजटाभिर्विरचितकपर्दंविशुद्धकार्तस्वरकुंडलोपशोभितगंडभागंद्विर
ष्टवर्षवयसंगोक्षीरसदृशस-थूलमुक्ताफलकौसुंभवर्णांचलेनावेष्टितशिरोभागं
विविधरत्नविरचितकार्तस्वरभूषितवक्षःस्थलमतिधवलोपवीतेनोपशोभितशर
ीरमंबिकानुलग्नकुंकुमारुणसुगंधिशरीरमीक्षमाणंतर्जमानकाममार्गणंकोटिकंद
र्पसदृशंमनसाचिंतयत् ९९
जजापशतरुद्रियंजुहावचतेनैवकामाहुतीःप्रास्तुवच्चपुरुषसूक्तेन १००
अथतादृशएवमहेश्वरस्तत्रप्रादुरभूत् १०१
अथराजानमस्कृत्यास्तुवीत १०२
राजोवाच-
क्षितिसलिलगगनपवनदहनरविशशियजमानमूर्तिभिरष्टमूर्ते
विश्वमूर्तेलोकमूर्त्तेत्रिभुवनमूर्तेवेदपुराणमूर्त्ते
यज्ञमूर्तेस्तोत्रमूर्त्तेशास्त्रमूर्त्तेस्वधामूर्त्तेनारायणमूर्त्तेसर्वदेवतामूर्त्तेत्रयीमयत्रयीप्रमा
णत्रयीनेत्रसा-
मप्रियवसुधाराप्रियभक्तिप्रियभक्तसुलभाभक्तविदूरस्तुतिप्रियधूपप्रियदीपप्रिय
घृतक्षीरप्रि-
यद्रोणकरवीरप्रियश्रीपत्रप्रियकमलकह्लारप्रियनंद्यावर्तप्रियबकुलप्रिययूथिका

प्रयकोकनदप्रियग्रीष्मजलावासप्रिययमनियमप्रियनियतेंद्रियप्रियजपप्रियश्रा
द्धप्रियगायनप्रियगाय-
त्रीप्रियपंचब्रह्मप्रियसदाचारप्रियगोत्रोत्सादिकमलभवहरिहरनयनसमर्चितपाद
कमलज-
यप्रदहरिप्रार्थितजलोत्पादितचक्रप्रदर्शकृत्स्मृतियुक्तिप्रदस्मृतमंगलप्रदमृत्युञ्ज
यनमस्ते
-नमस्ते १०३
इतिस्तोत्रमाकर्ण्यभगवान्भवोराजानमुवाचवरदोऽहवरंवृणु १०४
राजोवाचश्रीमन्ममकन्यावैदेहीरामायदित्सितास्वयंवरेकुलरूपबलोत्साहसं-
पन्नानेकभूपराक्षसविप्रादिसर्वप्राणिसमागमेरामाधिकबलोयदितामग्रहीष्यत्
तदावचनमनृतंममपापंचभविष्यति १०५
प्रत्युतदशरथोऽपिसर्वानिवागतान्विजेतुमलंक्षत्रकदनश्चरामोयद्यायास्यतित-
र्हिममसुतांकिंकरिष्यतिवाकिंकिंवाप्रेषयिष्यतिकीदृशंकारयिष्यतिममकिंवा-
करिष्यतिसर्वथाहिप्रभूतबलवाहनोनर-पतिरशेषमपित्रिभुवनंहन्यात् किमुत-
मामल्पसत्वंकिमुतबहुनाभवानेवशरणंममोपायंवदयथाविवाहेश्रेयोभविष्य-
तिरामश्चजामाताभविष्यति १०६
शंभुरपितथाकरोमीत्युवाच १०७
रामएवनाथःसीतायाभविष्यति
रामंचकृत्वास्वस्त्यद्यैवकरिष्यामिगृहाणाजगवंधनुरिदम् १०८
राजोवाच-
किमेतेनाजगवेनधनुषास्वयंवरेसीतांरामंप्रापय १०९
शंकरउवाच-
इदंधनुरसज्यंमेयस्तुसज्यंकरिष्यति
तस्मैदेयामयासीताप्रतिज्ञामेवमाचर ११०
इत्येवमुक्त्वाभगवान्गणैरंतर्दधेहरः
अथादातुंधनूराजानशशाकातियत्नतः १११
अथोज्ज्वलंशतसहस्रगजबलंसमाहूयगृहाणेत्युवाच ११२
सचापिमातुलंनत्वाट्टहासंकृत्वोत्प्लुत्यधनुर्द्वाभ्यांकराभ्यामुद्धारजानुपर्यंतंमा
तुलो
मारीचःश्रुत्वाएकाकीविप्रवेषंकृत्वाविदेहमयाचत

वैश्वदेवांतेप्राप्तमतिथिंमामवैहि ११३
राजोवाच-
स्वागतंभोइदंब्रह्मन्नासनंतत्रनिषीदेति ११४
सचातिथिस्तथेत्युक्त्वानिषसाद ११५
अथराजाजलमादायपादौप्रक्षाल्यगंधपुष्पाक्षतैरभ्यर्च्यमहाजंतस्मैनिवेद्यभोजन
ायप्रार्थ
-यामास ११६
सचापितदन्नंषड्रसोपेतंसौवर्णभाजनगतमीक्षमाणइवेतस्ततोविलोकयामास
११७
तस्मिन्नेवावसरेसीतापद्मकिंजल्कप्रभेषदरुणवसनंबिभ्रतीनीलकुटिलकुंतल-
ैश्चलद्भिर्यूनांम-
नांस्याकर्षयद्भिःप्रेक्षमाणदृष्टिभग्नकलैरिवस्त्रीणांचित्तमीदृशमितिदर्शयद्भिरि
वोपशोभित-
ललाटानंगचापसुभ्रूपद्मपत्रारुणविलोचनातिलप्रसूननासामृदुस्निग्धरोमशकपो
लानंतरार-
क्तोष्ठराक्तासनमाणिक्यनिभदाडिमीदशनाजपाकुसुमारुणाधरातिशोभितचिबु
काशुक्ति-
कर्णासमदीर्घकंठातिमांसलवक्षाःपीनोद्भिन्नकुचकुड्मलानेकहारोपशोभितासु
भगाका-
रानतिमांसलबाहुलतामुग्धायतसमानांगुलिशिखापद्मारुणपल्लवाविविधबहु
रत्नांगुलिभूषणामुष्टिग्राह्यमध्यासुरोमराजिगंभीरनाभिःपृथुजघनाकरिकरोरुस्तू
णीरजंघासुपादकमला-
नूपुरादिपादविभूषणापादांगुलीभूषिताविकसितसौगंधिकंविदधतीभुंजानमारी
चस्यपुर-तश्चागता ११८
वीक्ष्यासावचिंतयदेनांकथमपहरामिकथमालिगामिकथमन्यत्किंचित्करोमीत
येवमवसर-मलभमानस्तूष्णीमेवविनिर्गतः ११९
अथदेवाधनुःसज्जीकरणाययतमानाअहंपूर्विकयाविद्यमानाअन्योन्यतिरस्कारेण
महेंद्रःप्रापधनुरुत्तमंप्रांतद्व्यात्परंनावनमयितुंशशाक १२०
अथसूर्योधनुरादायनमयन्नेवनिपपात १२१
वायुर्बलवतांश्रेष्ठोजग्राहाजगवमथस्वेनैवकरेणोत्कर्षयन्नधः पपात

धनुश्चवायोरुपरिपपातग्रहसंस्तदासर्वे १२२
एतस्मिन्नंतरेतुरगवरमारुह्यबाणासुरःसहस्रबाहुरनेकानेकशिरोभिर्दैत्यैःपरिवृतः
प्रह्लादसमे-तोविदेहपुरीमाजगाम १२३
अथस्वविभूषणोद्भासितांदिशंकुर्वन्स्वतेजसापयशसोदेवताःकुर्वन्नाना-
विधगीतंशृण्वन्द्व्यंगुलमात्रेणशक्तोविरराम १२४
प्रह्लादोबलिश्चैवधावातेऽथविरेमतुः १२५
अथराक्षसेषुतूष्णींभूतेषुराजानोऽतिबलिनःसमागताज्यांबंधाशक्ताअपसृत्यतस्
थुः१२६
अथब्राह्मणाःसमागताः १२७
अथविश्वामित्रोधनुरादायएकांगुलपर्यंतंसज्यंकृत्वाविरराम
निवृत्ताश्चापरे १२८
अथदिनमात्रेधनुषितूष्णींभूतेषुराघवःसहानुजैरागत्यधनुर्निरीक्ष्यास्पृशत् १२९
अथराजकुमाराःशतशःसमागताः
सर्वाभरणभूषिताधनुर्दृष्ट्वापस्पृशुर्नचालनक्षमाः १३०
अथदाशरथिप्रमुखाःकुमाराःसमागताः १३१
अथवेत्रझर्झरपाणयःसमागमन्सर्वानिवापसारयामासुः १३२
अथरामोलक्ष्मणहस्तंगृहीत्वासर्वाभरणभूषितोधनुरासाद्यस्पृष्ट्वानत्वाप्रदक्षिणी
कृत्यधनुरा-दायोद्दधार १३३
तदादानसमयेसर्वएवैत्यसहासमूचुःअत्रभग्नामहारथाइति १३४
अथसरामोधनुर्ज्यास्थानमवनमय्यधनुषिजानुंकृत्वासज्यमेककरेणोत्पादयन्क
ोटयाम
-नामयत् १३५
अथसज्जीकृतंदृष्ट्वासर्वएवनासाग्रन्यस्तांगुलयोऽभवन् १३६
रामोऽपिज्यामन्वनादयत्
तेननादेनसर्वेषांमनांसिक्षुभितान्यासन् १३७
रामेणसज्यितंधनुरितिसर्वत्रवादःसंजातः १३८
जनकोऽपिसीतांरामायददौराजभिश्चयुद्धंकृत्वातान्निर्जित्यस्वपुरीमागात् १३९
अथैकदादशरथोरामंयौवराज्येभिषिच्यसुखीबभूवसर्वप्रजारंजनाच्चरामोराजानु
मतइति-
सर्वप्रजावादोऽभूत् १४०

अथकैकयदेशाधिपतितनयासुवेषारामंराजानमसहमानाराजानमुवाचममवर
दानावसर-
इतिराजाचिंतयत्किंदेयमिति १४१
देव्युवाच-
चतुर्दशवर्षाणिरामोवनंविशतुपालयतुराज्यंभरतः १४२
राजानृतवचनदोषभयात्कथंकथमपिस्वीचकार १४३
अथवसिष्ठंभावितयावोचतरामोवनायनिर्गच्छतिअस्यकिंवाभवेदितिविचार्य
शुभाशुभं
ब्रूहि १४४
वसिष्ठोविचार्यसहर्षंराजानमुवाच १४५
गत्वावनंनिखिलदानववीरहंताशंभोरनेकविधपूजनमातनोति
सीतावियोगरुषितःकपिसेनयाचतीर्त्वोदधिंदशमुखंचनिहंतिरामः १४६
आगम्यराज्यंरघुनंदनोऽपिबहूनिवर्षाणिसमातनोति
प्रशस्तकीर्तिर्निखिलेपिलोकेशर्वेणदेवेनचिरंन्यवात्सीत् १४७
सुपुत्रयुक्तोबहुयज्ञयाजीपरिवृढःसर्वगुणाधिकश्च १४८
इतिवसिष्ठवचनंश्रुत्वादशरथोरामगुणाननुस्मरन्नित्युवाचश्रेयोमेमरणंरामस्यनि
र्गमनेइति  १४९
अथरामोमातरंपितरंगुरुंचवसिष्ठंपितृपत्नीर्नमस्कृत्यवनायजगाम १५०
अथोपवनेदिनमेकंस्थित्वाजटाःकारयित्वावल्कलंवासोधृत्वैकोपवीतीकृतदं
तशुद्धिरेके-
नोपवीतेनजटांबद्ध्वाभस्मोद्धूलितसर्वांगोभसितनिष्ठुरकायोमुक्ताफलदाममर्मा
णव्यत्यस्त-
रुद्राक्षमालामुरसिदधानोऽल्पभूषणाधिभूषितसीतासहायोलक्ष्मणानुचरोविवे
शव
-नांतरम् १५१
अथानेकराक्षसांस्तस्मिन्निजघानभवानिवनिखिलंचकारसीतापहरणादिनिखि
लमपिभव-
तायथातथास्याथसुग्रीवाश्रममृष्यमूकपर्वतंरामोजगामनिबिडच्छायाचूतवृक्ष
मासाद्यलक्ष्मणसहायःपरिश्रयमकल्पयत्
वृक्षेतुधनुषीआरोप्यासीनलक्ष्मणांकेशिरःकृत्वाहरिचर्मशय्याशयनोलक्षितांग

ीतिंशृरावन्वृ-
त्तफलंनिरीक्षमाणोवानरमेकंमणिकुंडलंहेमपिंगलंसदृढबद्धमौंजीकौपीनमच्छ
ोपवीतिनमतिचंचलंफलमादायात्मनिविक्षिपंतंपुष्पमंजरीश्चकिरंतंगानमनुकुर्वं
तंव्यजनेनरामंवीजयं-
तमारुह्यशाखामपितथावीजयंतमाबद्धचूतफलमात्रंरामोवीक्ष्यलक्ष्मणमभाषत
१५२
लक्ष्मणकोऽयकपिरिति १५३
लक्ष्मणोऽपिनजानइत्युवाच
अथरामःसमाहूयकस्यत्वंकिंनामत्येपृच्छत् १५४
सचसुग्रीवस्यहनूमानित्युवाच १५५
रामंनत्वासुग्रीवमेत्यनत्वादेवनारायणइवापरःपुरुषोयुवामेघश्यामोजटीआजा
नुबाहुरतिय-शस्वीसूर्यसंकाशेनसहापरेणनरेणइहास्ते १५६
अथतरुच्छायाधःसंस्थितौसर्वलक्षणसंपन्नौराजपुत्रौदृष्ट्वाउक्तश्चताभ्यांसुग्रीवार्या
नवेदयेतितत्त्वयिनिवेदितम् १५७
अथसुग्रीवःसत्वरमुत्थायपुष्पसलिलादिद्रव्यमादायपादप्रक्षालनादिकंकृत्वा
फला-
निसमर्प्यव्यज्ञापयत् १५८
कौयुवांकिमर्थमागतौराजपुत्रौतपस्विनाविितिसुग्रीववचनमाकर्ण्यलक्ष्मणेना
भाषतरामः १५९
दशरथतनयावावांरामलक्ष्मणौदुष्टनिग्रहशिष्टपरिपालनायवनंगताविति १६०
अथसुग्रीवआहयुवयोरुपकारमपकारंकार्यमस्तीतिलक्ष्यते १६१
अन्यथासेनासमेतावागमिष्यतःलक्ष्मणआहअस्तिकार्यांतरम्
अमुष्यभार्याकेनापहृतानज्ञायतेतामन्वेष्टुमागतौतदेवावयोःकार्य्यमन्यदानुषंगि
कम्
तदर्थमपिजलधिंतरावअपिपातालंप्रविशावअपिनाकंसाधयावःअपिमहेंद्रंपात
यावः अपिबलिनंहनावःकिमपिकुर्वहे १६२
सुग्रीवउवाच-
रावणेनापहृतयाकयाचिद्ध्रियमाणागतयाविभूषणानिकानिचित्परित्यक्तानिग
तानिमयासंगृहीतानितानिदर्शयामीत्याभाष्यरामंमंदिरमागमय्यदर्शयामास
१६३

रामोऽपिनिरीन्दयनिश्चित्यप्ररुद्यक्वगतोऽसौरावणइतिपप्रच्छसचदन्निणामाशांग
तइतिबभाषे १६४
अथरामस्तेनसख्यमकरोत्
अपृच्छच्चकिमर्थमिहभार्य्याहीनःस्थितइति १६५
सुग्रीवउवाच-
ममभ्रातावालीमहाबलोममभार्य्यांराज्यंचापहृत्यकिष्किन्धायामास्तेयुद्धेनचा
हंपराजितः
तद्वधायसर्वथाममचिंतायथासौत्वयानिहन्यतेतथाहमपिसागरंबद्ध्वापरतीरे
लंकायांस्थि-
तांसीतांरावणेनापहृतांतवसमर्पयामीत्याभाष्यशपथंकृत्वासुग्रीवोवालिनाति
बलिना-
युद्धायाहूतेनयुयुधे १६६
रामोप्यनंतरमनिश्चयाद्वालिनंनाहनत् १६७
अथसुग्रीवःपलायितोराममिदमभाषत १६८
तवचित्तमविज्ञायप्रवृत्तोऽहमरणाय १६९
रामोपियुवयोर्विशेषाज्ञानान्मयातूष्णींभूतंचिह्नितंत्वानिरीन्दयतंहन्मि १७०
अथसुग्रीवश्चिह्नंकृत्वावालिनंयुद्धायाहूयसमतिष्ठत १७१
ताराबभाषेवालिनम् १७२
सहायवानिवलन्दयतेसुग्रीवोनोचेदेवंनाह्वयतिज्ञातंमयारामलन्दमणौदशरथत-
नयौनारायणां-शौभूभारावतरणायसमागतौतावस्यसहायभूतौ १७३
वाल्युवाच-
नीतिमान्रामइतिमयाश्रुतः
नहिबलवंतंविहायदुर्बलंभजतेतादृशःसमायातुवारामःप्रतिपन्नमधिकंकृत्वाबि
भेतिवीरो-
यदिरामःस्वयंयुद्धाययातस्तदायुद्धंकर्तव्यमित्याभाष्यतारांसंभाव्यसुग्रीवयुद्धा
यनिर्य्यातः १७४
अथमुष्टियुद्धमन्योन्यमभूत् १७५
रामोऽपिवालिनंजघान १७६
पपातचवाल्याहचाशस्त्रयुद्धेवाबाणघातोऽथशोणितसर्वांगोबभूव १७७
अथताराचांगदश्चसमागत्यव्यथितौबभूवतुः १७८

अथराघवंवानराःसमायातावाल्युपांतेनिपेतूरुरुदुश्च १७९
अथताराराममंबभाषेशास्त्रकुशलाःशूराधार्मिकाराघवाःपुराचापिरामकथंपापम कार्षीः १८०
नक्षत्रधर्म्मंजानीषेराजगणसेवितम् १८१
अन्योन्यंयुद्ध्यतोर्युद्धेजयोवामरणंभवेत्
अन्योयदितयोर्हन्याद्ब्रह्महासनिगद्यते १८२
किंवैरेणवालिनमाहनः किंवानरमांसाशया १८३
अभोज्यंवानरमांसंयद्यात्मनोऽप्रियात्सुखाभावादपरेषामपितथाभावंमन्यसेअहो विमोहाद्यदिमामादातुमिदंकृतमेकपत्नीव्रतंतव १८४
यदिरावणहृतांसीतामानेतुंसुग्रीवसहायायकृतमेवमेवहामहदंतरंबलवृद्धेनमह ाबलेन-
वालिनासद्भावेनदिनकरावर्तितांतरेसीतामानेतुंसमर्थेनस्मरणागतरावणदानस मर्थेनवानर-
राजेनपंचाशत्परार्द्धवानरभल्लूकसेनावताआत्मकार्येणसिद्ध्यतइतिकिंसुग्री वेणाल्पवी-र्येणसप्तपरार्द्धसेनापतिनाकपिनाकिंसिद्ध्यतिकार्यवचनवतः १८५
अहोज्ञातंसर्वदेवभद्रंयदुक्तोसि १८६
वक्तिचरामःपृथिवीपतिनामयादुष्टनिग्रहणंकार्यंशिष्टपरिपालनंचवालिनासुग्री वमहिषीरुमापहृताराज्यंच अतश्चनतादृग्वधेदोषः १८७
तारोवाच-
सुग्रीवोऽपितर्हिवध्योदुंदुभिनायुद्ध्यतावालिनाबिलेप्रविष्टेनवत्सरंतत्रोषितंत दंतरेचमामप-हृत्यराज्यंचकृतंसुग्रीवेणतंपूर्वमपिपश्चात्तंहंतु १८८
रामउवाच-
कियत्कालात्पूर्वमिदंचवद १८९
तारोवाच-
षष्टिवर्षसहस्रादर्वाक्अशीतितमेवर्षेरक्षोयुद्धेसुग्रीवेणराज्यमपहृतम् १९०
पुनश्चवर्षांतरेप्राप्तेनवालिनासुग्रीवःपलायितः १९१
अपहृतातस्यभार्याराज्यंचापहृतम् १९२
तस्मिन्नेवदिनेभवतःपितुर्दशरथस्याभिषेकः १९३
राघवउवाच-

मयापितुरनुशासनाद्राज्यगतदुष्टनिग्रहणंकृतम्
गुरुवचनस्यानुल्लंघनीयत्वात्तदपहरणवेलायांयोराजासनाचरत् १९४
अथवास्वतंत्रौमृगौमृगयोर्हतश्चवालीमृगाणामन्योन्यंदारणाद्यजगुप्साच १९५
यतोममममृगयावदाथवामृगाणाम्
चलितस्थितबद्धानांचलद्भ्रांतपलायिनाम्
अथावसृजतासंगमुज्झितामृगयातथा १९६
मृगयाशास्त्रविधितोमृगयेयंमयाकृता
दर्शनादर्शनाभ्यांचधावताधावतातथा १९७
अवरोहात्परंस्थानंसात्विकानांप्रभिद्यते
राज्ञश्चमृगयाधर्मोविनाआमिषभोजनम् १९८
अथरामवचनमाकरार्यसर्वएवप्राकंपयञ्छिरांसि १९९
वालीबभाषेराममंजलिमस्तकेनिधायनमस्तेरामशृणुवचनंमम २००
शंखचक्रगदापाणिःपीतवासाजगद्गुरुः
नारायणःस्वयंसाक्षाद्भवानितिमयाश्रुतम् २०१
त्वांयोगिनश्चिंतयंतित्वांयजंतिचयज्विनः
हव्यकव्यभुगेकस्त्वंपितृदेवस्वरूपधृक् २०२
मरणेचिंतयानस्यत्वांविमुक्तिरदूरतः
सत्वंमेदर्शनंप्राप्तोराममेपापसंक्षयः २०३
गृहाणबाणंकाकुत्स्थव्यथितोभृशमस्म्यहम् २०४
अथरामस्तथेतिबाणमादायवालिनमुवाचकिमिष्टंदीयतांवद २०५
कपिरुवाच-
यदिप्रसन्नोभगवान्ममसद्गतिंदेहि २०६
अयंसुग्रीवस्तथारक्षणीयोंऽगदोऽथताराचमयापापिनापराधःकृतस्तत्फलमनुभूतम् २०७
अथरामंपश्यन्नेववालीममारस्वर्गंचगतः २०८
अथसुग्रीवंराज्येऽभिषिच्यस्वयंवनंविवेश २०९
अथतेनसहायेनजलधिसमीपंगत्वाक्वलंकाक्वसीताक्वचारातिरितिसुग्रीवमाहरामः २१०
अथहनुमानाहप्रविश्यलंकांविचित्यसीतांसर्वतत्त्वमवगत्ययुद्धंसंधिर्वाकर्तव्यः तदुदधिलंघनायकिंचित्समादिशतुभगवान् २११

अथसुग्रीवमाहरामः
कथमेतद्घटतइति २१२
कपिरुवाच-
ममवानराभल्लूप्रमुखाःकोटिशःसंति २१३
एकंनियुज्यसर्वमाकलय्ययथायुक्तंतथाकरणीयम् २१४
अथजांबवानाह
हनूमानेकोगच्छतुबुध्यतुलंकाम् २१५
अथहनूमानगमल्लंकापुरंविचित्यसीतामशोकवनिकायामासीनांतथाचसंभाष
यविश्वासंकृत्वावनंबभंजवनरक्षकांश्च २१६
बद्धोरक्षसालंकांदग्ध्वाउत्तरकूलंगत्वारामंदृष्ट्वावृत्तांतंकथयित्वातूष्णीमतिष्ठत्
२१७
अथरामःसर्वैर्विचारयामासजांबवानुवाचरामेणलंकाकपिभिर्विनश्यतीतिनार
देनममोक्तम् २१८
अथसागरोत्तरणेयत्नतयास्थेयम् २१९
अथरामःशंकरमाराध्यसर्वंनिवेदयित्वात्वदुक्तंकरोमीतिवचनमुक्त्वाशिवमभ
यर्च्यप्रणतोभू-त्वाव्यजिज्ञपत् २२०
हेमहादेवमहाभूतग्रासमहाप्रलयकारणमहाहिभूषणमहारुद्रशंकरपरमेश्वर
विरूपाक्षनागयज्ञोपवीतकरिकृत्तिवसनब्रह्मशिरःकपालमालाभरभूषण -
नरकास्थिभूषणभसितपरनारायणप्रियशुभचरितपंचब्रह्मादिदेवपंचाननचतुर्वद
नवेदवेद्यभक्तसुलभाभक्तदुर्लभपरमानंदविज्ञानपरपूषदंतपातनदक्षशिरश्छेदन
ब्रह्मपंचमशिरोहरणपार्वतीवल्लभ नारदोपगीयमानशुभचरितशर्वत्रिनेत्र
त्रिशूलधरपिनाकपाणेकपर्दिन्ननेकरूपधरवृषभवाहनशुद्धस्फटिकसंकाशचतु
र्भुजनानायु-
धदक्षिणामूर्तेईश्वरदेवपतेगंगाधरत्रिपुरहरश्रीशैलनिवासकाशीनाथकेदारेश्वरभू
षणसिद्धेश्व-
रगोकर्णेश्वरकनखलेश्वरपर्वतेश्वरचक्रप्रदबाणचिंतापादकमुरहरपूजितचरणकम
लसोमसोमभूषणसर्व-
ज्ञज्योतिर्मयजगन्मयनमस्तेनमस्ते २२१
एवंस्तुवतोरामस्यपुरतोलिगमध्यकोपेतस्तेजोमयमूर्तिराविर्बभूव २२२
अभयवानथपुनःपद्मासनासीनमुमाधिष्ठितांकमीशमामुक्तसर्वाभरणंसुकांतिकि

रीटिनंहैमवतीकटिस्पर्शंकरद्वयेनाभयवरप्रदंतरंगितानेकदिशाभिः
पूर्णतेजस्विनंहासमुखंप्रसन्नवदनंददर्शरामः २२३
परमेशितारंननामबद्धांजलिपुनश्चदंडवत्पपात २२४
अथरामंपरमेश्वरोऽपिवरंवृणुत्वंवरदोऽहमित्युक्तवान् २२५
रामउवाच-
लंकांगमिष्यामिसमुद्रतरणेउपायमेकंममदेहिशंभो २२६
शंभुरुवाच-
ममाजगवंधनुरस्तितत्कालरूपमविकल्पंवाभवति
तदारुह्यसमुद्रंतीर्त्वालंकामाप्नुहि २२७
रामस्तथेतिनिश्चित्यसस्माराजगवम् २२८
आगतंधनुस्ततश्चरामोऽपूजयत् २२९
अथहरोधनुरादायरामायदत्तवान् २३०
रामोऽपिजलधावपातयत् २३१
आरुरुहुःसर्वेवानरारामलक्ष्मणौचषष्टिपरार्द्धंतेषामसंख्येषुवानरेषुधनुरारूढेषु
नकामंययौ २३२
धनुस्तटंवानराश्चततस्ततोगत्वानिरीक्षयामासुः २३३
अथातिकायोनामरक्षःकपिबलमालोक्यरावणायोक्तवान् २३४
रावणोऽपिकिंकपिभिःशाखामृगैःकिंवामानुषाभ्यांरामलक्ष्मणाभ्यांकिमायातं
-दैवागतमसकंभोजनमित्युवाच २३५
अथसुग्रीवःपश्चिमावलंबिनिभास्वतिहनूमज्जांबवदादिमहाबलैश्चातिकायैरसं
ख्यातैर्लंका-पार्श्वंगत्वाउपवनंप्रवश्यिनानाफलानिखादित्वा
पयःपीत्वोपवनरक्षिराक्षसान्विद्राव्य
सर्वविपिनमेकैकशोगृहीत्वाप्राद्रवन्लंकांगोपुरंचगत्वासमारुह्यप्रासादंचविश
ीर्यैकैकशःकेचित्स्तंभमादायरक्षोभिर्युयुधुः २३६
एकेचशालांबभंजुर्गृहाणिचूर्णयामासुर्बालवृद्धस्त्रीजनादिकंसर्वमेवनिजघ्नुः
२३७
अथैकंप्राकारंनिर्जितमाज्ञायरावण इंद्रजितंसंदिदेश २३८
इंद्रजिताचयुद्धंवानराःकृत्वाभीताःपलायिताश्च २३९
अथहनूमानखिलंनिर्गतमाज्ञायरावणंज्ञात्वावानरानाहूयनिर्भर्त्स्यसेनांमहतींका
रयित्वा-

दशमुखंकल्पयित्वामोदयामास २४०
अथखस्थएवेंद्रजिद्युयुधेनचवानरास्तंदृष्टवंतः २४१
अथहनूमज्जांबवंतौखमुत्पत्यपर्वतशिखराभ्यामिन्द्रजितंनिजघ्नतुः २४२
अथभुविपपाततंलक्ष्मणश्चयमलोकगामिनंचकार २४३
अथातिकायमहाकायौवानरसैन्यंबहुशोहत्वालक्ष्मणंपीडयित्वारामेणसंयुध्य सुग्रीवंकृत्वाहनूमज्जांबवद्भ्यांयुयुधातेपराजितौगृहीत्वातौचयोद्धारावादायराम समीपंगत्वारामायन्यवे-दयताम् २४४
अतिकायमभाषतरामः २४५
रावणस्यममयुद्धंब्रूहिसचिवानामन्येषांमहाभयानांच २४६
अतिकायउवाच-
निश्चितमिदंपुरास्माभिःकार्यंसेनांविभागशःकृत्वा
विद्युन्मालीनामराक्षसोमहाबलोविचित्रयोधीदर्शनादर्शनयोधीवानरैःसर्वैरेक एवयुध्यते २४७
अपरेचबलिनोमहांतःशिक्षितास्त्राश्चागताश्चावांचयुवाभ्यांयुध्यावोरावणःपुष्प कमारुह्याप-रभागेनत्वामेवनिहनिष्यति २४८
अन्येचराक्षसाःकुंभकर्णमुखाश्चात्मरूपंकृत्वात्वांपरिवार्यगृहीत्वासीतायैदर्शि यत्वातत्सं-निधावेवहनिष्यति २४९
रामःप्राहअहोबलवतांकिमसाध्यमेवंभवतिदैवगतिःकुटिलासुग्रीवोऽतिकोपन :
सक्रोधंदृष्ट्वा राममुवाच २५०
वध्यावेतौनमोचनीयौ २५१
रामःप्राहावध्यौमोचनीयावेतौवसनानिभूषणान्यानयेत्युक्तमात्रेहनूमतातान्यानी तानिराम-स्ताभ्यांदत्तवान् २५२
नत्वायदेतल्लंकाद्वारेदृश्यतेदारुपंचवक्त्रंशुक्रेणोक्तमेतेनच्छिन्नेनरावणोहन्यते २५३
अथचदारुच्छेदनसमनंतरंपातालंगंतव्यमितिभार्गवभाषितंशासनंलिखितम् २५४
तस्मात्त्वमिदंदार्वेकप्रयत्नैकबाणनिपातेनपंचधाच्छिंधिततस्तवशक्तिंज्ञात्वायुद्ध मतिदृढंकुर्वीमहि २५५
अथभार्गववचोविज्ञायरामःपूर्वकोटयांस्पर्शमात्रेणसज्यंकृत्वाधनुषिबाणंसंयो

ज्यरक्षोभ्यांहनूमताश्रावयन्नेवबाणंमुमोच २५६
बाणंधनुषश्चलितंतौराक्षसौबाणमार्गंनिरीक्षमाणौदारुबाणेनपंचधाच्छिन्नंनिरीक्ष
यरामंव्यज्ञाप-यतामावयोःशिशवोरक्षणीयास्त्वयेतितथेत्याहरामः
राक्षसौलंकांप्रविष्टौ २५७
अथप्राकारयुद्धंकर्तुंवानरागत्वासर्वतोवरणमात्रंहिपार्ष्णिभिःपादैर्जानुभिःकरैःपृ
ष्ठैश्चतलसमंकृत्वाद्वितीयप्राकारंगतास्तदाचरावणःसमागत्यसर्वानिवेषुभिर्द्रावि
यत्वातदनुगच्छन्राम-मगात् २५८
अथराममपिपंचभिर्बाणैर्विव्याध २५९
अथरामोदशभिर्बाणैरावणंसव्रणंचकार २६०
अनयोरतिदारुणमन्योन्यं युद्धं बभूव २६१
रावणोदशभिर्बाणैर्विव्याध २६२
अथ रामबाणैश्च क्षतशरीरो राक्षसःपलायनपरोऽभवत् २६३
वानरा लक्ष्मणश्च कोटिकोटिराक्षसानघ्नन् २६४
अथ परस्मिन्नहनि विभीषणो रावणं विचार्येदमुवाच २६५
तृतीयोपायकालोऽय चतुर्थं न विचारय
चतुर्थो विपरीतो न शस्तःशस्तार्थकारिणः २६६
परस्य चाऽत्मनः शक्तिं विदित्वा चाऽत्मनोऽधिकाम्
तदा युद्धं प्रशस्तं स्याद्विपरीतं विनाशकम् २६७
रामेण बलिनानैव युद्धं ते दुर्बलस्य च
एकेषुवालिहन्ताऽसौ वालिर्ज्ञातस्त्वया पुरा २६८
मारीचमेकबाणेन भवानपि पलायितः
निहता राक्षसाः शूरा इन्द्रजिच्च सुतो हतः २६९
वरेणयत्रितयं भग्नं तेन युद्धं च नैव ते
दासभावमथो वाऽपि दत्त्वा सीतामथाऽप्नुहि २७०
गोपुरस्थं तथा दारु पञ्चवक्त्रमथेषुणा
चिच्छेद पञ्चधा तेन रामस्त्वां मारयिष्यति २७१
त्वदर्थं बहवो नष्टा नाशमेष्यंति चापरे
एको न्यायः सुखार्थाय न च मौढ्यं सहोदर २७२
मानुषीं मृत्युसंयुक्तामनिच्छन्तीं पतिव्रताम्
पत्नीं बलवतश्चापि पूजयित्वा विसर्जय २७३

अनिच्छन्त्याः समायोगे भवेद्दुःखपरंपरा
दुर्गन्धमलसंयुक्तो नारीसङ्गो जुगुप्सितः २७४
विरक्तिरथ चेज्जाता दुःखायाकार्यवर्तनम्
अनुरागोयदि भवेन्मरणं नरकं ततः २७५
आत्मनो मरणं व्यर्थं तस्याश्चाद्य समागमे
त्यागो वा मरणं तात धर्मपत्न्यास्तथा भवेत् २७६
एवमादि तथाऽन्यच्च कश्मलं संभविष्यति
अन्यदाख्यामि ते वाक्यं सर्वेषां च प्रियं हितम् २७७
गत्वा रामान्तिकं नत्वा स्तुत्वा विज्ञाप्य राघवम्
क्षम राम महावीर शरणागतवत्सल २७८
तामसा राक्षसाः सर्वे वयमेते सुपापिनः
सीतापहारजं दोषं त्यक्त्वा पुत्रानवेहि नः २७९
त्वदधीना वयं राम रक्ष वा मारयेच्छया
इत्युदीर्य पुरस्तस्य राघवस्य स्थिता वयम् २८०
स्थिरायुषो भविष्यामः स्थिरराज्या दशानन
अथाऽह रावणो वाक्यमहो नो राक्षसो भवान् २८१
न शूरो राजधर्मं च न च जानासि शाश्वतम्
परनारीपरद्रव्यपरराज्यनिषेवया २८२
शूराणामुत्तमो धर्मो न षण्ढानां भवादृशाम्
शत्रुपक्षं समालिग्य निर्गच्छेच्छा हि चेन्नृप २८३
अथ बिभीषणो मन्दिरं गत्वा रामान्तिकं गत्वा तं शरणमभजत् २८४
अथ रावणः पुरान्निर्गत्य रामेण लक्ष्मणवानरै राक्षसा अपि युयुधिरे २८५
अथ रावणं महाबलं हन्तुमशक्तोरामो विभीषणमुखमवलोक्य तदुक्तचिह्नपदं बाणेन निर्भिद्यामारयत् २८६
अथ कुम्भकर्णो महागदामादाय सर्वं निष्पाद्य वानराननेकशो भक्षयित्वा रामोत्तमाङ्गं गदयाऽहन् २८७
अथ रामो निशितबाणशतेन तमहन्ममार कुम्भकर्णः २८८
अथ विभीषणेन रावणादेः श्राद्धादिकं कारयित्वा शिवालयं तन्नाम्ना कारयित्वा तमेव लङ्काराज्ये विभीषणमभिषिच्य
सीतामग्निप्रवेशशुद्धामुमामहेश्वराभ्यां नमयित्वा पुरहरेण

दत्ताखिलामृतबलायुष्यः सुपुष्पकमारुह्य जलधिमुत्तर्यी पारावारतटे सेनां समवस्थाप्य शिवप्रतिष्ठां तत्र कृत्वा मुनिभिर्देवैरभ्यर्चितोऽयोध्यामगमत् २८९
अथ भरतादिसमुपेतो नागरैर्वसिष्ठेन मुनिभिश्चाभ्यर्चितःस्वगृहमगमत् २९०
आत्मनाऽगतानिन्द्रादिदेवानासनादिनाऽभ्यर्च्य
वानरान्संपूज्यमुक्तजटोऽभिषिक्तो राज्ये रावणवधहर्षिता देवा राममूचुः २९१
त्वयाऽत्मराज्ये स्थापिता वयं नःसर्वदा परिपालय त्वमादिनारायणो
देवोनिखिलदुष्टनिग्रहार्थमवतीर्णो रावणं सबान्धवं हत्वा
लोकत्रयरक्षकोऽसि श्रिया सह सुखी भवेत्युदीर्य स्वर्गं गताः २९२
अथायोध्यावासिनो रामंप्रहर्षिता ऊचुः २९३
हत्वा शत्रून्समायातो दृष्ट्वा प्राप्तोऽसि वै शिवम्
दिष्टया त्वं राजसे राम दिष्टया पालयसे प्रजाः २९४
त्वयायज्ञाः करिष्यंते त्वया धर्मोविवर्धते
इतिपौरवचःश्रुत्वारामो राजीवलोचनः २९५
वस्त्रादिभिरथोसर्वान्नागरान्समपूजयत्
मुनीनुवाचधर्म्मात्मापूजयित्वाखिलैर्जनैः २९६
कच्चित्तपःसमृद्धंवःकच्चिद्यज्ञःस्वनुष्ठितः
कच्चित्स्वदारनिरताःकच्चिदीशोभिपूज्यते २९७
कच्चित्सुप्रजसोभार्याःकच्चित्सर्वसुखोत्तरम् २९८
मुनय ऊचुः -
त्वयिराजनिकाकुत्स्थसर्वंस्वस्थंतपस्विनाम्
गच्छामहेपदमितःकिंवात्वंमन्यसेनृप २९९
रामउवाच-
यस्यविप्राःप्रसीदंतितस्यशंभुःप्रसीदति
यस्यप्रसीदतीशानस्तस्यभद्रंभविष्यति ३००
तत्कृत्वाभोजनमिहगंतुमर्हाथनंतरम्
अथेत्युक्त्वामुनिगणाःकृत्वाभोजनमुत्तमम् ३०१
अभिवर्ध्यतमाशीर्भिर्हृष्टाःस्वंस्वंपदंययुः
रामोऽपिपरमप्रीतःसभार्यश्चसहानुजः ३०२
अकंटकंसकृतवान्राज्यंसर्वजनप्रियः

शृणोत्येतदुपाख्यानंयःकश्चिदपिपातकी ३०३
सर्वपापविनिर्मुक्तःपरंब्रह्माधिगच्छति
नदुर्गतिर्भवेत्तस्ययश्चेदंस्मरतेनरः ३०४
यश्चापिकीर्तयेत्तस्यएवमेतदुदीरितम् ३०५

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादेपुराकल्पीयरामायण-
कथनंनामषोडशोत्तरशततमोऽध्यायः ११६

सप्तदशाधिकशततमोऽध्यायः

सूतउवाच-
भारद्वाजगृहेभुक्त्वारामचंद्रःप्रसन्नधीः
मुनींद्रविष्णुसहितोवानरर्क्षसमन्वितः १
मेघच्छन्नेतथाकाशेमंदंचरतिमारुते
तद्वनाभ्यंतरेक्वापिसुदेवगृहमुत्तमम् २
अष्टापदस्तंभयुतंहेमपट्टिककल्पितम्
मणिमौक्तिकसंयुक्तंराजतैःकलशैर्युतम् ३
पाटीरचंद्रकस्तूरीकुंकुमैःसुरभीकृतम्
कर्द्दमैर्जालकयुतंशकलोपरिसंवृति ४
चंद्रजोत्स्नागमंसूर्य्यानिरीक्ष्यमध्यभित्तिकम्
गृहांतर्भूतलंकृत्स्नंचंद्रपुष्परसोक्षितम् ५
दिगुदीचीतथाकृत्स्नाभित्तिकल्पनवर्जिता
स्तंभेस्तंभेचित्रकारीस्वपादीपरिकल्पितम् ६
शतहस्तांगणंतस्यस्फटिकोपरिकल्पितम्
गृहांगणाधिकच्छायःपारिजातमहीरुहः ७
कृत्स्नप्रावृतिकंतत्रनिबिडंकदलीवनम्
कदलीवनसंयुक्तंकेतकीवनसंवृतम् ८
मयूरनादबहुलंमंजुकूजन्मधुव्रतम्
पारावतगणध्वानंनानोपवनशोभितम् ९
प्रासादशतसंबाधंमत्तकोकिलनादितम्
शाखालंबिमहारत्नशोभितानेकपादपम् १०
किन्नरीवनितागीतनादपूरितदिङ्मुखम्

अनेकारामसुभगंगौतमीतटमुत्तमम् ११
भारद्वाजगृहंपुरयमनंतगुणसेवितम्
रतिकंदर्पसंकाशदासीदासशतान्वितम् १२
नानोपकरणोपेतंभारद्वाजगृहंशुभम्
तस्यचांतर्गतःसौधस्तत्रांतर्गृहवाटिकाः १३
अष्टौतन्मध्यतोह्येकंगृहंपरमशोभनम्
चतुर्दिन्नुमहादेवगृहप्रासादशोभितम् १४
प्रतिदेवगृहंश्यामातौर्य्यत्रिकसुशोभितम्
स्वर्गस्थितवरस्त्रीणांविश्रामायैवकल्पितम् १५
भारद्वाजगृहाद्रामोनिर्गत्याशेषसंयुतः
तस्यैवचमहागेहंवनमध्यगतंत्वगात् १६
तदंतराच्छादितकंबलंतदापृथक्स्थवस्त्रासनसंयुतंच
सिंहासनंमध्यगतंतथैकंमुन्यासनानेकगतंविवेश १७
पौराणिकस्यानुपमासनांतरंभूपालहर्यृत्तवरासनंच
पौराणिकंपूर्वमथोपवेश्यततोवसिष्ठंमुनिपुंगवांश्च १८
नारायणंभूमिपतीन्कपींश्चनीचासनंचस्वयमाससाद
मेघावृतंव्योमदिशःप्रसन्नाःसुपुष्पमुर्वीतलमुप्तबीजम् १९
तदंगणंनोष्णमहोनशीतलंसंतानपुष्पंदमपुष्पगंधि
शंभुंविलोक्याथवचोबभाषेरामःकथांकीर्तयशंकरस्य २०
तृप्तिर्नजातामुनिवर्य्यश्रृणवतोमाहेशमाख्यानमघौघनाशनम्
चकारकिंवाननुगौतमाश्रमेमहेश्वरोदेवगणाधिसंवृतः २१
शिवउवाच–
महाविपंचीमवलंब्यनिष्ठितःसवायुसूनुःशिवमन्वपृच्छत्
न्यायार्जितैरेवहिपूजनेविभोःकीदृग्भवेच्चानयजैःफलंवद २२
चौर्य्यैरथोकिंफलमर्पितार्पणेउपाहृतद्रव्यसमर्पणेषु
एकैकशोमेभगवन्वदेशप्रश्नोत्तरंकिंकथयाशुशंभो २३
अथेश्वरोवानरमाबभाषेवदामिसर्वंतवध्यानतःश्रृणु
न्यायार्जितैःपूज्यसदाशिवंत्वजंसंप्रापचैश्वर्यमिदंहिगौतमः २४
पुराद्विजोमंकणसूनुराकथःसुशोभनामापसतींद्विजन्मा
द्ररिद्रएकःकरुणासमन्वितःषष्ठाहभोजीपितृवर्जितश्च २५

उपोष्यपंचाहमथापिभोक्तुंप्रवृत्तएवाथसमापतद्यतिः
यतिर्बभाषेमधुरंतदाकथंमासोपवासीतवभोक्तुमागतः २६
तिष्ठामिभुंजेयदिचास्तितेमुनेनमेबुभुक्षान्यगृहाद्विभोक्तुम्
आकथउवाच-
नमेभुजिःपंचदिनंद्विजेंद्रषष्ठेदिनेमेभुजिरागतश्च २७
तदामयाकार्यमचिंतनीयंप्रक्षालयाम्येहितवाद्यपादौ
ओमित्यथक्षालितपादयुग्मःसभोजनंकर्तुमियेषयोगी २८
रंभादलांसेबुभुजेतदन्नंविपाच्यसंपादितमाज्ययुक्तम्
वन्यैःसुसंयुक्तमथादरेणनकिंचिदुच्छेषितमन्नमस्य २९
अथाकथोवीक्ष्यमुनिंसुतुष्टंतुतोषभार्य्यासहितस्तपस्वी
गतोऽथभुक्त्वापियतिःसचाकथःसंतुष्टचित्तोऽथजपंचकार ३०
कपोतवृत्तिंसचकारपत्न्यातपोवितानायससज्जनोमुनिः
पीठेऽथकृत्वातमुमापतिंशिवंलिगेसमाराध्यसमन्वितंगणैः ३१
लिगंनिधायाथनिरीक्षमाणोददर्शचाज्ञातकृशाकृतिंद्विजम्
दिगंबरंपादविहीनमेतंकाणंकुणिंकर्णविहीनकंप्रभुम् ३२
सामोद्गिरंतंबहुशास्त्रपारगंगृहंसमायांतमथोददर्श ३३
अथाकथोभार्यांसुशोभनामिदमुवाच ३४
अयंहिविकृतवेषोब्राह्मणःसमायाति ३५
अर्द्धंदेयमेतस्मैभोजनंरक्षार्द्धमन्नंचास्मिन्नपिदिनेगतेषष्ठेह्निभोजनाभावात्तवजीवितंनतिष्ठती तिममप्रतीयतेकिंतुत्वंमन्यसेवद ३६
साशोभनोवाच-
आयुर्ललाटेलिखितंनांतरानश्यति ३७
आकथआह
यथाबद्धायुषोऽपियज्ञस्यवीरभद्रेणच्छिन्नंशिरअजस्त्रात्मनः
किमुतनुयाणांपापात्मनामितितदेनंपरिहृत्यत्वयाभुज्यते
यदित्वेतस्मैमयान्नंदीयते
तवेच्छानुसारतोममकर्तव्यम् ३८
भार्य्याप्राहकथमहंभोक्ष्येत्वय्यभुक्तेमयाकिंपूर्वंभुक्तमिदमपरंशृणु ३९
अन्नंहिप्राणिनांप्राणाःप्रत्यक्षंसर्वदेहिनाम्
तस्मादन्नप्रदोयस्तुप्राणदःसनिगद्यते ४०

अन्नाद्भूतानिजायंतेवर्द्धंतेतानिवैयतः
तस्मादन्नाधिकंकिंचिन्नास्यदानंमहाफलम् ४१
अश्वत्थचलपत्राग्रलीनतोयद्रवास्तिके
जीवितेनहियोदद्यात्तस्यजन्मनिरर्थकम् ४२
परलोकसहायोहिधर्मोभार्यानबांधवाः
भार्य्यावापितरौपुत्रायावदायुर्नबांधवाः ४३
संपद्वयःसुहृदिहइहामुत्रहितंस्थितम्
धर्मंधर्मभृतांश्रेष्ठंभुंक्तेचान्येकिमावयोः ४४
इतिभार्य्यावचःश्रुत्वाश्राकथःकरुणानिधिः
अविशंकितमेवास्मैदत्तवानन्नमूर्ज्जितम्
अयंसशंकरोदेवोनानाकरणमागतः ४५
इतिनिश्चित्यमनसातस्यांगंपापनाशनम् ४६
आजानुपादंप्रक्षाल्यपराजंघमतःपरम्
गुल्फंचतदधस्तस्यप्रक्षाल्याचामयद्द्विजम् ४७
अथाकथोऽपिपत्संधिंगृहांगणमुपानयत्
उन्मुच्यपादसंधिंसनिषसादार्पितासने ४८
समभ्यर्च्याकथःसम्यग्भोजयामासतंमुनिम्
एतस्मिन्नंतरेकश्चिदुन्मत्तोगृहमागतः ४९
पादसंधिमथादायगृहबाह्यमुपानयत्
अथादहच्चतद्गेहंदंपतीचाप्यताडयत् ५०
आकथस्ताडितोविप्रोदह्यमानंगृहंतदा
विवेशदेवमीशानमादातुंतूर्णमेववा ५१
अथादायमहेशानंदग्धपूजंद्विजोत्तमः
निर्गत्यचततोदृष्ट्वामुखसंतापमेवच ५२
दग्धपूजांतिरस्कृत्यवीक्ष्यदग्धांगमप्युत
भार्यामुवाचधर्मात्मायथापूजामहेशितुः ५३
तथाममसमस्तांगंकर्त्तव्यमविशंकितम्
व्यंगउवाच-
पश्चादपिकृतापूजासफलातेभविष्यति ५४
यथान्यद्रव्यदहनेतादृशंदीयतेजनैः

पूजायादहनेतद्वत्पूजास्यक्रियतामिति ५५
आकथउवाच-
चौर्येणाप्यर्जितैर्द्रव्यैःपूजयानहितंभवेत्
नचान्यायार्ज्जितैर्विप्रशंभोःपूजाशुभप्रदा ५६
इत्युक्त्वाचाकथस्तूर्णंस्वांगंदग्धुमुपाक्रमत्
दग्धंलिगंतदोन्मत्तोगृहीत्वांतर्दधेक्षणात् ५७
अथव्यंगोहरोभूत्वावारयामासचाकथम्
किमर्थंखिद्यतेविप्रवरदोऽहवरंवृणु ५८
आकथोऽपिविभोःपादेभक्तिंवव्रेसुनिश्चलाम्
सूतउवाच-
एतांश्रुत्वाकथांरामःप्रहृष्टोमुनिभिर्वृतः ५९
भारद्वाजंनमस्कृत्यप्रयाणाज्ञामयाचत ६०
अथोभरद्वाजमुनिःप्रसन्नःशंभुंवसिष्ठंमुनिपुंगवंच
नारायणंचर्षिगणांश्चनत्वाव्यसर्जयत्तेऽपिययुःप्रणम्य ६१
नैमिषीयाऊचुः -
गत्वायोध्यांमहातेजाःसमस्तमुनिसंयुतः
किंचकारततोरामःसचशंभुर्महायशाः ६२
सूतउवाच-
कौसल्यामासिकश्राद्धमपरेऽहनिराघवः
चिकीर्षुर्द्विजप्रवरानृषिकल्पान्न्यमंत्रयत् ६३
शंभुंसमस्तत्त्वज्ञंनारदंरोमशंभृगुम्
विश्वामित्रमथोरामएकभक्तव्रतीततः ६४
भूमौसुखास्तृतायांचसुष्वापाव्याकुलेंद्रियः
परेद्युरथसंप्राप्तेप्रातःस्नात्वाविधानवित् ६५
अन्नंशाकादिकंशुद्धंजनैरेवान्वकारयत्
नानान्नानिविचित्राणिचोष्याद्यानितथैवच ६६
वटकादींस्तथाभक्ष्यानष्टत्रिंशदकल्पयत्
पायसंषड्विधंचैवपक्वशाकशतद्वयम् ६७
अपक्वमिश्रकाणांचशतत्रयमकल्पयत्
कालशाकादिकंशाकंफलानिविविधानिच ६८

मूलानिचैककंदानिवल्कलानिचराघवः
कारयित्वानदींगत्वासहभ्रातृपुरोहितः ६९
सरयूसलिलेस्नात्वाहुत्वाग्निंस्वागतान्द्विजान्
उक्त्वातुस्वागतंतांस्तुकृतदेवार्चनोनृपः ७०
प्राणानायम्यसंकल्प्यद्मणंचैवप्रदत्तवान्
रोमशंनारदंरामोवैश्वदेवेन्यमंत्रयत् ७१
शंभुंभृगुंकौशिकंचमातृस्थानेन्यमंत्रयत्
गोमयेनततःकृत्वामंडलंपूज्यचार्हतः ७२
पादप्रद्मालनंचक्रेसीतादत्तोदकेनच
आचामयित्वातान्विप्रान्गृहंगंतुमथोद्यतः ७३
अभ्यागतःसमायातःस्थविरोविकृताकृतिः
कृशःसंप्रचलद्गात्रोवेपितांघ्रिशिरास्तथा ७४
लंबमानत्वगुत्कर्षच्छ्वासकासादिपीडितः
दूषिकाक्लिन्नगंडश्चलालासंपृक्तकूर्चकः ७५
उवाचरामंराजानमहमेकोद्विजःस्थितः
ममापिभोजनंदेयंस्थविरस्यकृशस्यच ७६
रामोऽपितद्वचःश्रुत्वालद्मणंवाक्यमब्रवीत्
पादौप्रद्मालयास्यत्वमहमभ्यर्चयेद्विजम् ७७
अभ्यागतोऽपिवचनमाहराममथाकुलम्
त्वयाप्रद्मालितेपादेममभोजनमिष्यते ७८
मत्तोऽधिकाद्विजाःकिंतेयेनमामवमन्यसे
श्राद्धधर्मंनजानीषेमहर्षिगणसेवितम् ७९
ममावमानतःसर्वविप्राणामवमाननम्
श्राद्धंविहन्यतेचापिनरकंचगमिष्यसि ८०
अथरामःस्वयंविप्रपादौप्राद्मालयत्तदा
आचामयित्वातंविप्रंगृहंप्रावेशयत्ततः ८१
आचान्तश्चस्वयंरामोविष्टरंदत्तवानथ
आसीनेषुचविप्रेषुप्राणवायुंनिरुध्यच ८२
स्वकर्मकरणानुज्ञांलब्ध्वाऽथसतिलंजलम्
अपहतेतिमन्त्रेणद्वारदेशेविचिद्मिपेत् ८३

उदीरतामितितथापितृपात्रस्थलेक्षिपेत्
गायत्र्याचाक्षतजलंदेवपात्रस्थलेक्षिपेत्
पाकजातंतथाऽभ्युदयमन्त्रमेतदुदीरयेत् ८४
श्राद्धभूमिंगयांध्यात्वाध्यात्वादेवंजनार्दनम्
वस्वादींश्चपितृन्ध्यात्वाततःश्राद्धंप्रवर्तयेत् ८५
विश्वेदेवार्चनंकुर्याद्यवैर्वातण्डुलैरथ
मूलाग्रयोजितौदर्भौगृहीत्वासाक्षतावथ ८६
भूस्पृष्टदक्षजानुस्तुद्विजहस्तेजलार्पणम्
पुरूरवार्द्रवाणांवैदेवानामिदमासनम् ८७
इतिदत्त्वाऽसनंतेषांश्राद्धदःप्रार्थयेत्क्षणम् ८८
अर्घंकृत्वाततःपश्चादुत्तराग्रकुशेष्वथ
न्युब्जंपात्रंततःकृत्वाकुशग्रन्थिमथोपरि ८९
उत्तानंतुततःकृत्वाजलैरभ्युदयरौक्मकैः
पवित्रान्तर्हितेपात्रेशंनोदेव्याजलंक्षिपेत् ९०
वैश्वदेव्याऽखिलंकर्मयावत्तद्विधिचोदितम्
यवोऽसिधान्यराजोवाइतिपात्रेक्षिपेद्यवान् ९१
मधुमिश्रांस्तुकरकान्गन्धपुष्पैस्ततोददेत्
द्विजतेऽस्त्वर्घइत्युक्त्वात्वस्त्वर्घोत्तरतस्ततः ९२
आवाहयिष्येतान्देवानितिपृष्ट्वातदुत्तरम्
विश्वेदेवासइत्युक्त्वाविप्रमूर्ध्निकुशान्क्षिपेत् ९३
विश्वेदेवाःशृणुतेममागच्छन्त्वितिसंजपेत्
समागतोनिषण्णोऽथसदर्भंपात्रमाहरेत् ९४
दक्षिणेचरणेक्षिप्त्वामुख्यपात्रोदकंततः
विप्रस्यदक्षिणेहस्तेप्रागग्रेऽथपवित्रके ९५
यादिव्याइतिमंत्रेणनिक्षिपेत्पात्रवारितत्
इदंभोअर्घमित्युक्त्वाह्यस्त्वर्घोत्तरतस्ततः ९६
पात्रेधृत्वाऽघतोयंचतत्पात्रंस्थापयेत्क्वचित्
अथदत्त्वाकरेतोयंयवैरेतानथार्चयेत् ९७
अर्चतप्रार्चतइतिपृष्ट्वाचोत्तरतस्ततः
पादादिमूर्धपर्यन्तमभ्यर्च्यजलदस्ततः ९८

गन्धद्वारेतिमन्त्रेणतथेत्युक्त्वोत्तरस्ततः
पितॄणामर्चनंकुर्यादेवमेवापसव्यकम् ९९
उपवीतंद्विजंकृत्वाकुशान्भग्नांस्तिलान्वितान्
वामजानुंभूमिगतंकृत्वादद्यात्तदासनम् १००
दक्षिणाभिमुखोभूत्वाक्षणप्रश्नमथोवदेत्
दक्षिणाग्रेषुदर्भेषुन्युब्जंपात्रत्रयंन्यसेत् १०१
त्रिकुशग्रन्थिसंयुक्तमुत्तानमथकल्पयेत्
ततःसंप्रोक्ष्यपात्रेषुसपवित्रतिलेषुच १०२
शंनोदेव्याजलंक्षिप्त्वातिलोऽसीतितिलान्क्षिपेत्
गन्धपुष्पमथोदत्त्वास्वधार्घइतिपृच्छति १०३
दत्तोत्तरोऽस्त्वर्घइतिपितॄनावाहयेत्ततः
तिलपुष्पकुशैस्तिष्ठन्कल्पितार्घंकरेदधत् १०४
उशन्तस्त्वेतिमन्त्रेणत्रिरर्घोदकमर्पयेत्
अर्चनंतुतदातेषामपसव्यंतुपूर्ववत् १०५
प्रक्षाल्यभाजनंस्वर्णंदेवानांपरिकल्पयेत्
पितॄणांराजतंकुर्याद्यथासंभवमेववा १०६
तदभावेतुकांस्यंस्यादनन्याशितमुत्तमम्
पात्राणितदभावेस्युःपालाशानिनमध्यमम् १०७
रम्भाणिचूतपत्राणिजम्बूपुंनागकानिच
पराकान्यथचाम्पानिमधूककुटजान्यपि १०८
मातुलुङ्गस्यपत्राणिश्राद्धेदेयानिवैनृभिः
दर्व्यामन्नमथाऽदायकराभ्यामाज्यमेवच १०९
प्रवेषणंततःपृच्छेत्प्राचीनावीतवान्द्विजम्
करिष्येऽग्नौकरणमितिकुरुष्वेतितदुत्तरम् ११०
परिविष्योपवीतीस्यादभिघार्यसमाहरेत्
हुनेत्सोमायपितृमतेस्वधानमइतीरयन् १११
यमायाङ्गिरसेपितृमतेस्वधानमइति
द्वितीयामाहुतिंहुत्वाचाभिघार्याक्षतंततः ११२
अग्नयेकव्यवाहनायस्वधानमस्ततःपरम्
हुत्वाऽपसव्यंकृत्वातुपरिविष्यद्विजान्व्रजेत् ११३

मेन्नणेनततोऽभीन्त्रणंपातयेत्पितृपात्रके
पिण्डपात्रमतःशेषंदर्वीप्रन्नालनंततः ११४
मेन्नणस्याग्निनिन्नेपंततःपात्राण्युपस्तरेत्
पात्रदन्निणभागेतुदद्यादन्नमनन्तरम् ११५
भन्त्याणिभोज्यशाकानिसर्वाण्येवसदत्तवान्
ग्रथातिथिर्महावृद्धोवीन्नमाणस्ततस्ततः ११६
उवाचराघवंशान्तंशीघ्रमेवनमस्कुरु
बुभुन्नावर्ततेऽस्माकंभोन्त्येऽहवातवाऽज्ञया ११७
रामोबभाषेवचनंविलम्बयन्नणंमुने
देवताःपितरोमङ्न्नुनमस्यन्तेऽधुनामया ११८
इत्युक्त्वाराघवःप्रादादन्नंपात्रगतंतदा
प्राक्सौम्याग्रान्कुशान्दैवेप्रतीचीदन्निणाग्रकान् ११९
पित्र्येपवित्रेयेदर्भायवानथतिलानपि
ग्रन्नप्रदानंकुर्वन्तिपृथिवीइतिमन्त्रतः १२०
इदंविष्णुरितिस्पृष्टमङ्गुष्ठेनद्विजस्यतु
देवेभ्यःप्रथमंदद्याद्येदेवाइतिवैपठन् १२१
पितृणांचततोदद्याद्द्यादतिथयेततः
देवताभ्यइतिमुखानुच्चार्याऽपोशनंददेत् १२२
त्रिर्जपित्वातुगायत्रीमुपवीतीपुरोमुखः
प्राचीनावीतवान्ब्रूयान्मधुत्रयमतःपरम् १२३
भुञ्जध्वमितितानुक्त्वाभुञ्जानेषुद्विजातिषु
रन्नोघ्नमन्त्रपठनंभन्त्यभोज्यादिदापयन् १२४
एतस्मिन्नन्तरेविप्रोयोऽतिथिस्तदिदंतथा
कृतवान्महदाश्चर्यंतद्वदामिसमासतः १२५
पात्रस्थितमशेषंचग्रासेनैकेनचाग्रसत्
प्राणाहुतीनांपर्याप्तंदीयतामितिचाब्रवीत् १२६
एतावद्दातुमशक्तःकथंश्राद्धक्रियोद्यतः
ममैकस्यप्रदानेत्वमशक्तोरामकिंवृथा १२७
बहूनांभोजनंदातुमुद्युक्तोरामकिंवृथा
सहसा कृतकर्माणिनसमाप्तिंप्रयान्तिच १२८

त्वयाकृतमशेषाणांनालंप्राणाहुतिर्मम
कथंमेदीयतेभुक्तिःकथमेषांतथावद १२९
रामस्तमब्रवीद्वीरोभुंदवत्वंहियथासुखम्
इत्युदीर्यनिरीदयास्यकर्मतत्परमाद्भुतम् १३०
अथशंभुंसमाहूयप्राहत्वंपरिवेषय
त्वंपितापार्वतीमाताशिवादेवीतिमेमतिः १३१
अन्नपूर्णेश्वरीदेवीभवान्येवेतिमेमतिः
साशांभवीवचःप्राहतत्पर्याप्तंददाम्यहम् १३२
अथोमाकांस्यमादायभिस्सापूर्णमलंकृतम्
स्वर्णदर्व्यासमादायपायसंगन्धकान्तिमत् १३३
अस्याद्मयमिदंभूयादितिप्रादात्तुपायसम्
द्विजस्यदद्मिणेहस्तेसाऽददात्सत्कृतंमुदा १३४
सशिरःकम्पमानस्तुऊर्ध्वदृष्टिरथाभवत्
प्रसारितकरश्चाऽसीद्गृहीत्वापायसंकरे १३५
दीयतांपायसंस्वादुसुष्ठुपक्वमिदंतुकिम्
शंभुपत्नीबभाषेतंकरेभुंदवततोददे १३६
अभद्मयत्ततोविप्रःपुनःकरतलेस्थितम्
तदद्मयमथज्ञात्वाप्रासारयदथेतरम् १३७
तस्मिन्करतलेदेवीपायसंदत्तवत्युत
अन्येषामपिविप्राणांपक्वाद्मय्यमदात्सती १३८
अथपाणिद्वयगतंविज्ञायाद्मय्यपायसम्
दृष्ट्वाकरान्तरमथोप्रासारयतसद्विजः १३९
उवाचान्नंप्रदातव्यंससूपघृतमुत्तमम्
शिवादेवीतथाप्रादादद्मय्यंशंभुवल्लभा १४०
यद्यत्प्रादात्तदासाध्वीसर्वमेवतदद्मयम्
करान्तरमथोसृष्टंपरिपूर्णंपुनःपुनः १४१
एवंकरसहस्रंतुकृत्वासविरराम ह
उवाचवचनंविप्रोदेहिगराडूषवारिमे
तर्पितोऽस्मित्वयाभद्रेनरामेणनसीतया १४२
शंभुरुवाच–

रामेणसीतयादत्तंमयादत्तंहियत्रच
इतःपरंहिकिंदेयंपूर्णंवात्वंवदस्वमे १४३
द्विजउवाच-
तृप्तोऽस्मिनचमेदेयमधिकंचकरस्थितम्
विद्धन्नतःकरगतंनपपातकथंचन १४४
निषण्णोहिचिरंदध्यौकथंमेकेवलःकरः
भुक्त्यैकृतमिदंसर्वंनान्यस्मैकर्मणेमम १४५
तस्मादन्यकृतेरेतत्सर्वंरिक्तंभविष्यति
इतिनिश्चित्यमनसालिप्ताङ्गोऽतिथिराभवत् १४६
पश्यत्सुसर्वदेवेषुतदद्भुतमिवाभवत्
तृप्तानथद्विजाञ्ज्ञात्वाराघवःपरमार्थवित् १४७
दर्वीकरोऽथतृप्ताःस्थइतिपृष्ट्वायथाविधि
तृप्ताःस्मइतिविप्रेन्द्राविकीर्यान्नंसमन्त्रकम् १४८
पात्रस्ययाम्याभिमुखःसंनिधौपिण्डमर्पयेत्
गण्डूषमपिविप्राणांतत्रैवपरिकल्पयेत् १४९
उच्छिष्टपर्णपात्रेषुतेगण्डूषमकुर्वत
गृहान्तरेचतेविप्राविविशुस्त्वतिथिंविना १५०
आहातिथिर्बहिःकार्यंमयाऽचमनंविट्पते
उत्थातुंनैवशक्नोमिकरंमेदेहिराघव १५१
अथरामःकरंप्रादान्नोत्थितस्तुद्विजोत्तमः
हनूमानथचाप्यस्यदत्तवान्बलवत्करम् १५२
इतरेणगृहीत्वातुकरेणद्विजपुंगवम्
आचकर्षकपीन्द्रस्तुद्विजःसाक्रोशमुक्तवान् १५३
द्विजउवाच-
छिद्यतेमेकरोव्यक्तमुत्थापयततोऽन्यतः
लांगूलेनसपीठंतमावृत्याऽमस्तकंबलात् १५४
अथाधावत्ततःपृथ्वय्यांद्विजस्तुनचचालह
अथवानरवीरस्तुपद्भ्यांचकृन्ततांमहीम् १५५
पादौविन्यस्यसुदृढौद्विजमूर्धानमाक्षिपत्
विशीर्णमभवद्वेश्मद्विजाःसर्वेबहिस्तथा १५६

सहवृद्धद्विजःसोऽथहनूमान्बहिरभ्यगात्
पीठेचस्थापयामासब्राह्मणंस्थविरंकृशम् १५७
द्विजायजलमादायजाम्बवान्मृणमयेघटे
आहस्वच्छंजलंविप्रत्वयाऽदेयंसभाजनम् १५८
सीताप्रक्षालयेदङ्गंलक्ष्मणोजलदोभवेत्
जाम्बवानाहतंरामंब्राह्मणोक्तमशेषतः १५९
द्विजप्रक्षालनेरामोव्यादिदेशानुजंप्रियाम्
सौमित्रिर्जलमादायद्विजाङ्गक्षालनेतथा १६०
प्राक्षालयदशेषाङ्गंप्रतिमामिवभूभुजः
अथरामोपदेशेनचक्रतुस्तौतथैवच १६१
अथातिथिःस्वगण्डूषंसीतावक्त्रेव्यमुञ्चत
सालंकाराऽम्बुभिर्व्याप्ताप्राक्षालयदथोसती १६२
श्लेष्मलालासुप्रचुरंमुखंविप्रस्यसासती
प्रममार्जपुनःक्षाल्यनासाश्लेष्माणमत्यजत् १६३
आचामयित्वासौमित्रिरुत्तिष्ठेत्यब्रवीद्द्विजम्
द्विजोनशक्यमित्याहहनूमानप्यथाऽगतः १६४
अतिथिःप्राहतंविप्रःपीडितोऽहहनूमता
गृहीत्वोद्धरतापूर्वंपातितोवानरेणच १६५
जांबवानथतंप्राहलोमांगंममवैमृदु
मयाथध्रियसेविप्रनचपीडाभविष्यति १६६
इत्युक्त्वाजांबवान्विप्रंदोर्भ्यामालंब्यचोद्धरत्
द्विजप्रांतमथादायस्थापयामासतंमुनिम् १६७
अथरामोद्विजेंद्राणांप्रदक्षिणमवर्तत
दत्ताशीरपिविप्रेंद्रैर्दत्वातांबूलमग्रतः १६८
पादावलंबकृद्रामोभ्रातृभिःसहचाब्रवीत्
अयिसीतेऽतिथेरस्यत्वयानक्षालितंवपुः १६९
जंघायुगेऽतिथेरस्यमलंचास्यंमलान्वितम्
सम्यक्प्रक्षालयमुखंद्विजोनसहतेमलम् १७०
सीतोवाच–
अथप्रक्षालितंसम्यगिदानींनिर्गतंपुनः

रामउवाच-
पुनःप्रक्षालयमलंदोषःस्यादन्यथामम १७१
अथसीतातथाकृत्वातूष्णीमेवबभूवह
आहरामंचसीतांचद्विजःपरमकोपवान् १७२
पादौयौममराजेंद्रतौसीतालंबयेदिति
भवान्करौचभरतोममवीजंप्रयच्छतु १७३
लक्ष्मणःकेशनिचयप्रसाधनकरोभवेत्
शत्रुघ्नःश्लेष्मनिर्मुक्तिंस्ववस्त्रेणकरोतुमे १७४
सूतउवाच-
अथतेचक्रुरतिथेरशेषमुदितंतथा
तथापुर्विस्मयंविप्रानरवानरराक्षसाः १७५
शिवादेवीचशंभुश्चसभ्रूभंगमुदैक्षताम्
मनसाचाप्यभाषेतामतिथिःशंभुरेवच १७६
अतिथिश्चप्रसन्नोऽभूच्छंखचक्रगदाधरः
पीतांबरःसमस्तांगभूषितोऽतीवदीप्तिमान् १७७
यःपुराराधितःशंभुःप्रसन्नोऽभूत्त्रिलोचनः
शुद्धस्फटिकसंकाशःसर्वाभरणभूषितः १७८
कोटिसूर्य्यप्रतीकाशःकिरीटीकरुणानिधिः
आलंब्यचक्रिणःपाणिमातिष्ठतसदाशिवः १७९
रामःपरमधर्म्मात्मापुलकांचितविग्रहः
दंडवन्निपपातोर्व्यामानंदप्लावितेक्षणः १८०
अनमन्भ्रातरस्तस्यदंडवद्भूतलेस्थिताः
शिवउत्थाप्यकाकुत्स्थमालिंग्याघ्रायमस्तकम् १८१
उवाचमधुरंवाक्यंरामंराजीवलोचनम्
शिवउवाच-
वरंवृणुप्रसन्नोऽस्मिब्रह्मादेरपिदुर्लभम् १८२
तवादेयंनमेकिंचिद्वृणुत्वंनचिरायवै
श्रीरामउवाच-
नयाच्यंमेजगन्नाथभूराज्यंममसांप्रतम् १८३
स्वर्गश्चकर्म्मभिःप्राप्तोभक्तिस्त्वत्पाददर्शनात्

आरोग्यंपश्यभुंजेऽहसासीतायोषितांवरा १८४
वशीकृताःसर्वनृपाःप्रजाधर्मसमन्विताः
हर्षएवममापन्नस्त्वदागमनतोऽच्युत १८५
तथापिवरयेकिंचिद्भक्तिरस्तुस्थिरात्वयि
तथाममगृहेदेवत्रिवर्षंतिष्ठहेप्रभो १८६
ब्रुवन्समस्तधर्मांश्चरूपेणानेनशंकर
शिवउवाच-
एवमस्तुतथारामसर्वंतेसंभविष्यति १८७
अथाहचक्रीराजानंरामंराजीवलोचनम्
वरंवृणुमहाभागप्रसन्नोऽहयमिच्छसि १८८
श्रीरामआहवचनंममप्राथ्यंनचास्तिहि
यत्प्राप्यंशंभुतःप्राप्तमन्यत्सर्वमुदीरितम् १८९
किंचैकंवरयेविष्णोप्रसन्नःसर्वदाभव
अथसीतांहरिःप्राहप्रसन्नोऽहतवाधुना १९०
वरंवृणुप्रयच्छामिततःसीताब्रवीदिदम्
वरोवृतःपुराभर्त्रानचान्योमेवरोवरः १९१
यदिकामंप्रयच्छेथामनश्चपरपूरुषात्
संनिवृत्तंचभवतान्नमस्तेऽस्तुद्विजप्रभो १९२
अथतेमुनयःसर्वेप्रणेमुर्देवतोत्तमौ
अथासौराघवंप्राहभुंक्ष्वत्वंबंधुभिःसह १९३
एकांतमंदिरेरम्येदेव्यासहवसामिते
विष्णुःसमस्तकरणःसमुद्रतनयान्वितः १९४
एकस्मिन्मंदिरेरामतिष्ठतांलोलुपोहिसः
अथशुद्धमहागारेपीठाढ्येबहुभाजने १९५
अग्रेवसिष्ठोभगवानुपविष्टस्तयोर्मुनिः
अपरेऋषयःसर्वेयथावृद्धंनृपास्तथा १९६
तेषामभिमुखोरामोभ्रातृभिःसहितोनृपः
तरुणेसमभागेचआसनेतानवेशयत् १९७
हनूमत्प्रमुखान्भृत्यानाहरामोऽनुसांत्वयन्
भवंतःपरितिष्ठंतुपश्चाद्भुंजेनचान्यथा १९८

ततस्तेप्रददुःसर्वेपादार्घाननुपूर्वशः
बुभुजुश्चापितेसर्वेयेरामस्योपसेविनः १९९
तेषांदत्वाथतांबूलंकपींद्रादीनभोजयत्
भुक्तवत्सुसमस्तेषुरामोराजीवलोचनः २००
दीनांधकृपणादीनांपशुपक्षिमृगस्यच
दत्वाहिभोजनंसंध्यांवंदितुंहिसमारभत् २०१
संध्याजपादिकंकृत्वानत्वातेषांनृपस्ततः
सिंहासनगतोरामःपौरजानपदादिभिः २०२
सेव्यमानःसभास्थानगतोरेजेसराघवः
सर्वदेवपरीवारोयथादेवःशचीपतिः २०३
राजकार्यमशेषंचकृतवान्भ्रातृभिःसह
नाम्नाचैकैकशःसर्वान्विससर्जसराघवः २०४
भ्रातॄन्विसर्जयामासवानरादींस्तथापरान्
अथरामंमहातेजावसिष्ठोवाक्यमुक्तवान् २०५
तवप्रातर्हियत्कार्यंनचविस्मरराघव
आस्तेशंभुर्जगन्नाथोभगवानंबिकापतिः २०६
स्मर्तव्योवन्दनीयश्चभगवानथयत्नतः
तथेत्युक्त्वागुरुंराजानत्वातंचव्यसर्जयत् २०७
स्वयंचभार्यामभजद्देवदेवंविचिंतयन्
ऋषयऊचुः -
प्रातःसमुत्थायगुरोरामोमतिमतांवरः
किंचकारतदाख्याहिश्रोतुंकौतूहलंहिनः २०८
सूतउवाच-
शंभुंविलोक्याथततोबभाषेरामःकथांकीर्त्तयशंकरस्य
तृप्तिर्नजातामुनिवर्यशृणवतोमहेशमाहात्म्यमघौघनाशनम् २०९
शंभुरुवाच-
अथप्रश्नशेषस्योत्तरमीशभाषितंतेकीर्तयिष्यामि
अन्यायोपार्जितद्रव्यैरीश्वरंयउपासतेतेव्यंगाजायंते २१०
तद्यथाकश्चिद्रूपकोनामराक्षसोऽन्यायार्जितेनद्रव्येणशंकरमाराध्यतेनैवद्रव्येणघंटामीश्वरप्रीत-येकृतवान् २११

तस्यपुत्रःसंपातिरितिख्यातः
चौर्य्यार्जितैःशंकरंपूजयामास २१२
तावुभावेकस्मिन्दिवसेमम्रतुःगतौशिवलोकंवीरभद्रेणभाषितौच २१३
भोरूपकअन्यायार्जितेनद्रव्येणभवतापूजाकृताघंटादिकंचतेनभावेनव्यंगोभूत्वा चौरगणोभ–विष्यसि २१४
शिवपदवचनाद्व्यक्तंनामाश्रवणात्
श्रोत्रंतस्यस्वनेनध्वस्तंभवतिनोदर्शनमेतावतादेवत्वयेश्वरपूजासम्यक्कृता २१५
अतोभक्तिश्चभविष्यतिवीरभद्रस्त्वनशनंनामगणंक्वचिद्विचरंतमित्यादिदेश २१६
तौचतथाभूतौशिवलोकेऽतिष्ठताम् २१७
शंभुरुवाच–
अथोपहतद्रव्यपूजाकथांहनूमतेमहेशभाषितांकथयिष्यामि २१८
शृणुराघवप्रमथानांचरित्रमेकैकस्यकर्मविपाकंकथयिष्यामि २१९
उपहतांगगणव्याख्याक्रियतामितिहनूमत्पृष्टः  शिवउवाच २२०
तदुपहतद्रव्यंज्ञानतोयईश्वरेऽपयिष्यतिएतदुक्तंज्ञानिनोऽतश्शृणुः २२१
एषसर्वांगस्वेदिलःसर्वकालंसर्वांगस्वेदिलःस्वेदार्द्रवसनःस्वेदसंपादिताल्पप्रवाहशरीरोनासाग्रनिपतितस्वेदबिंदुःस्पर्शायोग्योदृश्यते २२२
सपुरास्वेदकरणेश्वरार्चनंकृतवान्
अत्रेतिहासंकीर्तयिष्यामि २२३
चेकितानिरितिख्यातोब्राह्मणःकर्षकोभवत्
सनित्यंकृषिमुत्पाद्यप्रातःस्नात्वाचनित्यशः २२४
मध्याह्नकालेसंप्राप्तेसंजपन्ब्राह्मणस्त्वसौ
अन्नमानयमेक्षिप्रमितिभार्यामभाषत २२५
तयानीतेनचान्नेनवेगेनशिवपूजनम्
कृतवानर्कसंतप्तःस्वेदिलःसर्वदैवतु २२६
गंधपुष्पाक्षताद्यैश्चस्वेदबिंदुसमन्वितैः
अथसायंदिनेप्राप्तेक्षालितांगःसुशोभनः २२७
पूजयामासदेवेशंकालसंभवसाधनैः
ममाराथमहाबुद्धिःशिवलोकंगतश्चसः २२८

वीरभद्रेणचाप्युक्तोभवत्वंस्वेदिलोगणः
स्वेदस्पृष्टपदार्थैश्चपुराशंभुःप्रपूजितः २२९
नित्यंस्वेदसमायुक्तस्तेनस्वेदगणोभव
शंभुरुवाच-
वीरेणाथसमादिष्टःप्राप्तोरामगणस्त्वयम् २३०
अमुंघंटामुखंपश्यायंपुरावैश्योविभावसोनामधार्मिकोमहादानकर्त्तानित्यंब्राह्म
णभोजनंकारयित्वाकृतानुष्ठानः प्रातःकालेशिवंनमस्कृत्यकुसुमैःसंपूज्य
किंचित्प्रदेशंगोमयेनोपलिप्यपद्मादिकमर्जयित्वादेवायसमर्प्यउपहतघंटानादं
कृतवान् २३१
रामउवाच-
कथमुपहतघंटा २३२
शंभुरुवाच-
आसीत्पुराबलःकश्चित्सोमइत्यभिविश्रुतः
तस्यपुत्रश्चमंदाख्योदशवर्षवयाअभूत् २३३
सचाग्निपक्वकुल्माषान्घंटायांप्राक्षिपन्नृप
तानभक्षयदप्येषतेनचोपहताभवत् २३४
गृहीतुमथतंवैश्यंयतमानोऽब्रवीदिदम्
अथवैश्यःस्वयंतत्रनिश्चित्यद्रव्यशोधनम् २३५
लौकिकेकृतवाँल्लोकेव्यवहारपदश्चताम्
एतेनपापयोगेनगणोघंटामुखोऽभवत् २३६
रामउवाच-
द्रव्यशुद्धेर्विशुद्धासाकथंपापस्यकारणम्
सम्यगुक्तंद्रव्यशुद्ध्यैकथंनद्रव्यशोधिनी २३७
शंभुरुवाच-
नलौकिकव्यवहृतौतवाभक्तोभविष्यति
सयातिचशिवस्थानंवक्ताचापितथाभवेत् २३८
सूतउवाच-
यश्चवक्तिकथामेतांसतेनसदृशोभुवि
गुह्याद्गुह्यतमंविप्राःशिवज्ञानप्रदंभवेत् २३९
एतद्वःकथितंविप्राःपुण्यायुष्यतमंमहत्

यइदंशृणुयाद्भक्त्याशिवलोकेमहीयते २४०
पुराणवक्त्रेदातव्यंवस्त्रंगोहेमभूषणम्
भूमिःसस्यफलोपेतादेयाशक्त्यनुसारतः २४१
शिवराघवसंवादंसर्वाघौघनिकृंतनम्
यःपठेच्छृणुयाद्वापिसयातिपरमंपदम् २४२

इति श्रीपद्मपुराणेपातालखंडेशिवराघवसंवादेउपरिभागेराममोक्षो-
नामसप्तदशाधिकशततमोऽध्यायः ११७
समाप्तं पञ्चमं पातालखराडम् ५
इति श्रीपद्मपुराणे पञ्चमं पातालखराडं समाप्तम्

# श्रीपद्म पुराणम्

## उत्तरखण्डं

### प्रथमोऽध्यायः

ॐ श्रीविष्णवे नमः

ॐ श्रीवेदव्यासाय नमः

ॐ नारायणंनमस्कृत्यनरंचैवनरोत्तमम्
देवींसरस्वतींव्यासंततोजयमुदीरयेत् १
अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया
चक्षुरुन्मीलितंयेनतस्मै श्रीगुरवेनमः २
ऋषयऊचुः -
श्रुतंपातालखंडंचत्वयाख्यातंविदांवर
नानाख्यानसमायुक्तंपरमानंद दायकम् ३
अधुना श्रोतुमिच्छामोभगवद्भक्तिवर्द्धनम्
पाद्मेयच्छेषमस्तीहतद्ब्रूहिकृपयागुरो ४
सूतउवाच-
शृणुध्वंमुनयः सर्वेयदुक्तं शंकरेणहि
पृच्छतेनारदायैवविज्ञानंपापनाशनम् ५
एकादानारदोलोकान्पर्यटन्भगवत्प्रियः
गतोऽद्रिमंदरंशंभुंप्रष्टुंकिंचिन्मनोगतम् ६
तत्रासीनमुमानाथंप्रणिपत्यशिवाज्ञया
उपविष्टः समादिष्टआसनेऽभिमुखोविभोः ७
नारदउवाच
पप्रच्छइदमेवेशंयन्मांपृच्छथसत्तमाः
भगवन्देवदेवेशपार्वतीशजगद्गुरो ८
भगवत्तत्वविज्ञानंयेनस्यात्तन्ममादिश
शिवउवाच
शृणुनारदवक्ष्यामिपुराणंवेदसंमितम् ९
यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः
प्रथमोत्तरकीर्तिः स्यात्पर्वताख्यानमेवच १०

जालंधरंतथाख्यानं श्रीशैलाख्यंततः परम्
हरिद्वारस्यव्याख्यानं विष्णुपादोद्भवांतथा ११
प्रयागतीर्थंतेवक्ष्येदशाश्वमेधिकंचतत्
तुलसीमहिमाचैवशंखचक्रगदादिकम् १२
द्वारकायास्तथाख्यानंमहोत्सव विधिस्ततः
तडाकजंतथापुण्यंवापीकूपप्रपादिकम् १३
गाणपत्यंततोवक्ष्येवैष्णवागममेवच
जीर्णोद्धारस्यमाहात्म्यंमंदाकिनीसमागमम् १४
साभ्रमत्यास्तुमाहात्म्यंमाहात्म्यंतीरजंतथा
स्त्रीशूद्राणांतथाधर्मंतथात्याज्यैश्चधारणम् १५
उमामहेशसंवादेप्रोक्तंनामसहस्त्रकम्
कैलासात्तत्समानीतं नारदेनाग्रजन्मना १६
लोकानांब्राह्मणानांचक्षत्रियाणांविशेषतः
स्त्रीशूद्राणांविशेषेणपठितव्यंसमाहितैः १७
इदंपवित्रंपरमंपुण्यमायुष्यवर्धनम्
पठितव्यंविशेषेणविष्णोः सायुज्यमाप्नुयात् १८
विष्णोर्नामसहस्त्रंतत्पावनंभुविविश्रुतम्
चतुर्विंशतिमूर्तीनांस्थानकानीहसंवदेत् १९
तेषांचमातापितरावंतरंचब्रवीम्यहम्
गोत्रंवेदांश्चतेषां वै कर्माणीहतथैव च २०
स्त्रियस्तेषांप्रवक्ष्यामियथाविज्ञानदर्शनात्
चतुर्विंशत्येकादशीनां द्वादशीनांप्रभावताम् २१
गोदावर्याश्चमाहात्म्यंशंखचक्रादिधारणम्
ब्राह्मणानांविशेषेणधारणंविधिपूर्वकम् २२
यमुनायाश्चमाहात्म्यंगंडिकायास्तथामुने
वेत्रवत्यास्तुमाहात्म्यंवक्ष्म्यहंतेनसंशयः २३
गिल्लितीर्थोद्भवंपुण्यंशिलाक्षेत्रंमहच्चयत्
तत्सर्वंसंप्रवक्ष्यामिखंडेउत्तरसंज्ञके २४
अर्बुदेश्वरमाहात्म्यंतत्रतीर्थादिकंचयत्
सरस्वत्याश्चमाहात्म्यंसिद्धक्षेत्रादिकंचयत् २५

पद्मनाभसमुत्पत्तिंतुलस्याश्चैवधारणम्
गोपीचंदनमाहात्म्यंपट्टपूजांतथैवच २६
निरंजनस्यमाहात्म्यंतथाविज्ञानदर्शनम्
तत्रदीपप्रदानंचधूपदानंविशेषतः २७
कार्तिकस्याथमाहात्म्यंमाहात्म्यंमाघजंतथा
सर्वेषांचव्रतानांचमाहात्म्यंविधिपूर्वकम् २८
शृणुनारदवक्ष्यामिजगन्नाथाख्यमुत्तमम्
यंदृष्ट्वामुच्यतेलोकोब्रह्महत्यादिपातकात् २९
यत्रसिद्धंतथाभुक्तंपारलौकिकदायकम्
ब्राह्मणायत्र भुंजन्ति वेदशास्त्र विशारदः ३०
अन्येषांचैवलोकानांकाकथाचैवसुव्रत
पंचविंशत्यत्रनागानर्तक्योविविधास्तथा ३१
ब्रह्महत्याबालहत्यागवांहत्यातथैवच
ताः सर्वाविलयंयांतिजगन्नाथस्यदर्शनात् ३२
जगन्नाथेत्युच्चरञ्जतुर्महापापैः प्रमुच्यते
विष्णोःपूजनकंपुष्पैस्तन्माहात्म्यमपिब्रुवे ३३
पर्वतानांवर्णनंचदेशानांवर्णनंतथा
गोपूजनादिमाहात्म्यं सिद्धानांचैवपूजनम् ३४
सिक्थेदत्तेतुयत्पुण्यंतत्सर्वंप्रवदाम्यहम्
कदलीगर्भदानंचवृक्षदानंततः परम् ३५
अश्वदानंहस्तिदानंजपमाहात्म्य मुत्तमम्
मंत्रदीक्षागमंचैवगुरोर्लक्षणमेवच ३६
शिष्यस्यलक्षणंप्रोक्तंयथापौराणिकाविदुः
चरणोदकमाहात्म्यंपितृश्राद्धादिकंचयत् ३७
पितृक्षयाहदानंचनीलोत्सर्गविधिस्ततः
ग्रहणंचंद्रसूर्यस्यतत्रदानंचयद्भवेत् ३८
शालग्रामस्यदानस्यमाहात्म्यंमाल्यगंधयोः
दशम्यैकादशीवेधंद्वादशीहरिवासरम् ३९
तेषांचैवतुमाहात्म्यंरुद्रनामादिकंचयत्
मथुरायाश्चमाहात्म्यंकुरुक्षेत्रादिकंतथा ४०

सेतुबंधस्यचाख्यानंश्रीरामेश्वरजंतथा
त्र्यंबकस्यचमाहात्म्यंपंचवट्याश्चयत्फलम् ४१
दंडकारण्यमाहात्म्यंशृणुवाडवसत्तम
दंडकारण्यमाहात्म्यंनृसिंहोत्पत्तिकारणम् ४२
गीतायाश्चैवमाहात्म्यंतथाभागवतस्यच
कालिंद्याश्चैवमाहात्म्यमिन्द्रप्रस्थस्यवर्णनम् ४३
रुक्मांगदचरित्रंतुमहिमावैष्णवस्यच
वैष्णवेह्येकभुक्तेतुशृणुवाडवसत्तम ४४
ससागरांचपृथिवींदत्त्वाचैवतुयत्फलम्
तत्फलंसमवाप्नोतिभुक्तेह्येकेतुवैष्णवे ४५
सात्त्विकाः सत्त्वसंपन्नाराजसाः कामुकाः स्मृताः
तामसाअधमाःप्रोक्तावैष्णवानांतुलक्षणम् ४६
ब्राह्मणावैष्णवायेतुवेदधर्मपरायणाः
तेषांमाहात्म्यंवक्ष्यामियथोक्तंचैवनारद ४७
विष्णुनिंदारतायेवैद्रव्यलोभेनसत्तम
तेषांपापंतुवक्ष्यामिसांप्रतंऋषिसत्तम ४८
ज्वालामुख्यास्तथाख्यानंहिमशैलेक्षणंतथा
ब्रह्मोत्पत्तिस्तुवैयत्रतंप्रदेशंवदाम्यहम् ४९
कायस्थानांसमुत्पत्तिर्गयाव्याख्यानमेवच
गदाधरस्वरूपंचफल्गुवर्णनमेवच ५०
एतेषांचैवमाहात्म्यंपाद्मेदृष्टंतथाश्रुतम्
महाबोधस्वरूपंचसकल्केर्यशएवच ५१
रामगयायामाहात्म्यंतथाप्रेतशिलाभवम्
ब्रह्मणश्चतथाख्यानंशिलाख्यानंवदाम्यहम् ५२
ब्रह्मयोनेस्तथाख्यानमक्षयाख्यवटस्यच
श्राद्धेतत्रमहत्पुण्यंयत्तत्सर्वंवदाम्यहम् ५३
महेश्वरकृतांभक्तिंविष्णुनाचमहात्मना
अद्यापिकाश्यांजपतिमहारुद्रोह्यनामयम् ५४
माहात्म्यंचततोवक्ष्येसागरस्यहिनारद
तिलतर्पणजंपुण्यंयवजंपुण्यमेवच ५५

तुलसीदलसंयुक्तंतर्पणंदेवजंतथा
तन्माहात्म्यंप्रवक्ष्यामियथोक्तंब्रह्मणामम ५६
शंखनादस्यमाहात्म्यंपुण्यंचासंख्यसंज्ञकम् ५७
रवेर्वारस्यमाहात्म्यंयोगस्यविष्णुसंज्ञिनः
वैधृतस्यचमाहात्म्यंव्यतीपातस्यवैतथा ५८
एतत्सर्वंप्रवक्ष्यामियथोक्तंचैवनारद
अन्नदानं वस्त्रदानंभूमिदानंतथैवच ५९
शय्यादानंचगोदानंतथावृषभमेवच
जन्माष्टम्याश्चमाहात्म्यंमत्स्यमाहात्म्यमेवच ६०
कूर्ममाहात्म्यंतत्प्रोक्तंवाराहस्यतथैवच
माहात्म्यंचगवादीनांदानांनांप्रवदाम्यहम् ६१
प्रह्लादमुखभक्तायेयेकेचिद्भुविविश्रुताः
तन्माहात्म्यंततोवक्ष्येशृणुदेवर्षिसत्तम ६२
जागरेमहिमाचैवदीपदानेकृतेचयत्
प्रहरेषुपृथक्पूजाफलंदेवर्षिसत्तम ६३
पर्शुरामस्यचाख्यानं रेणुकायावधस्तथा
ब्राह्मणानांभूमिदानंरामेणैवचयत्कृतम् ६४
रामस्याश्रमजंपुण्यंवदाम्यहमशेषतः
नर्मदायास्तथाख्यानंपुण्यपूजनयोस्तथा ६५
दानंवेदपुराणानामाश्रमाणांनिरूपणम्
हिरण्यदानपुण्यंचब्रह्मांडदानमेवच ६६
पद्मपुराणदानंचखंडानांव्यक्तयस्तथा
प्रथमंसृष्टिखंडंचद्वितीयंभूमिखंडकम् ६७
स्वर्गखंडंतृतीयंचतुर्यंपातालसंज्ञकम्
उत्तरंपंचमंप्रोक्तंखंडान्यनुक्रमेणवै ६८
एतत्पद्मपुराणंतुव्यासेनतुमहात्मना
कृतंलोकहितार्थायब्राह्मणश्रेयसेतथा ६९
शूद्राणांपुण्यजननंतीव्रदारिद्र्यनाशनम्
मोक्षदंसुखदंचाशुकल्याणप्रदमव्ययम्
श्रुत्वादानंतथाकुर्याद्विधिनातत्रनारद ७०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहिता
यामुत्तरखंडेमहेशनारदसंवादेबीजसमुच्चयो नामप्रथमोऽध्यायः १

द्वितीयोऽध्यायः

महेशउवाच-
एकलक्षंपंचविंशत्सहस्रा पर्वतास्तथा
तेषांमध्येमहत्पुण्यंबद्रिकाश्रममुत्तमम् १
नरनारायणोदेवोयत्रतिष्ठतिनारद
तस्यस्वरूपंतेजश्चवक्ष्यामीहचसत्तांपतम् २
हिमपर्वतशृंगेचकृष्णाकारतयाद्विज
द्वौपुरुषौतत्रवर्तेतेनरनारायणावुभौ ३
श्वेतएकस्तुपुरुषः कृष्णोह्येकतमःपुनः
तेनमार्गेणयेयांतिहिमाचलकृतोद्यमाः ४
पिंगलश्वेतवर्णश्चजटाधारीमहाप्रभुः
कृष्णोनारायणोह्येषजगदादिर्महाप्रभुः ५
चतुर्बाहुर्महान्श्रीमान्व्यक्तोऽव्यक्तःसनातनः
उत्तरायणेमहापूजाजायतेतत्रसुव्रत ६
षण्मासादिकपर्यंतंपूजानैवचजायते
हिमव्याप्तंतदाजातंयावद्वैदक्षिणंभवेत् ७
अतएतादृशोदेवोनभूतोनभविष्यति
तत्रदेवावसंतीहऋषीणांचाश्रमास्तथा ८
अग्निहोत्राणिवेदाश्चध्वनिःप्रश्रूयतेसदा
तस्यवैदर्शनंकार्यंकोटिहत्याविनाशनम् ९
अलकनंदायत्रगंगातत्रस्नानंसमाचरेत्
कृत्वास्नानंतुवैतत्रमहापापात्प्रमुच्यते १०
यत्रविश्वेश्वरोदेवस्तिष्ठत्येवनसंशयः
एकस्मिन्नवसरेब्रह्मन्सुतपस्तप्तवानहम् ११
तदानारायणोदेवोभक्तानांहिकृपाकरः
अव्ययःपुरुषःसाक्षादीश्वरोगरुडध्वजः
सुप्रसन्नोऽब्रवीन्मांवैवरंवरयसुव्रत १२

श्रीनारायणउवाच-
यद्यदीप्ससिदेवत्वंतंतंकामंददाम्यहम्
त्वंकैलासविभुःसाक्षाद्रुद्रोवैविश्वपालकः १३
रुद्रउवाच-
अलंगृह्णामिभोदेवसुप्रसन्नोजनार्दन
द्वौवरौममदीयेतांयदिदातुंत्वमिच्छसि १४
तवभक्तिःसदैवास्तुभक्तराजोभवाम्यहम्
सर्वेलोकाब्रुवंत्वेवमयंभक्तःसदैवहि १५
तवप्रसादाद्देवेशमुक्तिदाताभवाम्यहम्
येलोकामांभजिष्यंतितेषांदातानसंशयः १६
विष्णुभक्तइतिख्यातोलोकेचैवभवाम्यहम्
यस्याहंवरदातातुतस्यमुक्तिर्भवेत्प्रभो १७
जटिलोभस्मलिप्तांगोह्यहंवैतवसंनिधौ
तवचरणप्रसादेनलोकेख्यातोभवाम्यहम् १८

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांनारदोमापतिसंवादेबदरीनारायणमाहात्म्येरुद्रप्रसादोनामद्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

सूतउवाच-
एकदानारदोद्रष्टुंपांडवान्दुःखकर्शितान्
ययौकाम्यवनंविप्रःसत्कृतस्तैर्यथाविधि १
अथनत्वामुनिश्रेष्ठंयुधिष्ठिरउवाचह
भगवन्कर्मणाकेनदुःखाब्धौपतितावयम् २
तमुवाचऋषिर्दुःखंत्यजत्वंपांडुनंदन
सुखदुःखसमाहारेसंसारेकःसुखीनरः ३
ईश्वरोपिहिनस्थायीपीड्यतेदेहसंचयैः
नदुःखरहितः कश्चिद्देहीदुःखसहोयतः ४
शरीरंसवितुर्यस्माद्राहुस्तद्ग्रसतेबली
राहोरपिशिरश्छिन्नंशौरिणामृतभोजने ५
सोऽपिशार्ङ्गधरोदेवःक्षिप्तःसागरगह्वरे

जालंधरेणवीरेणनिहतःसोऽपिशंभुना ६
युधिष्ठिरउवाच-
कोऽसौजालंधरोवीरःकस्यपुत्रःकुतोबली
कथंजालंधरंसंख्येहतवान्वृषभध्वजः ७
एतत्सर्वंसमाचक्ष्वविस्तरेणतपोधन
राज्ञासएवमुक्तस्तुकथयामासनारदः ८
नारदउवाच-
शृणुभूपकथांदिव्यामशेषाघौघनाशिनीम्
ईशानसिंधुसून्वोश्चसंग्रामंपरमाद्भुतम् ९
एकदागिरिशंस्तोतुंप्रययौपाकशासनः
अप्सरोगणसंकीर्णोदेवैर्बहुभिरावृतः १०
गंधर्वैरावृतोदेवस्तंत्रीशिक्षासुकोविदैः
रंभातिलोत्तमारामाकर्पूराकदलीतथा ११
मदनाभारतीकामासर्वाभरणभूषिताः
नर्तक्यश्चतथाचान्याःसमाजग्मुःसुरांतिकम् १२
गंधर्वयक्षसिद्धास्तुनारदस्तुंबुरुस्तथा
किन्नरामुहुराजग्मुस्तथाकिंनरयोषितः १३
वायुश्चवरुणश्चैवकुबेरोधनदस्तथा
यमश्चाग्निर्निर्ऋतिश्चयेचान्येदेवतागणाः १४
विमानसंस्थोमघवाविमानस्थाःसुरांगनाः
स्ववाहनगतादेवाः कैलासंप्रययुर्जवात् १५
ददृशुस्तेततोदेवाःकैलासंपर्वतोत्तमम्
महीधराणांसर्वेषांपृथिव्याइवमंडनम् १६
सर्वतः सुखदंशुद्धंसिद्धिराशिमिवस्थितम्
यत्रवृक्षाः कल्पवृक्षाःपाषाणाश्चिंतितप्रदाः १७
पुन्नागैर्नागचंपैश्चतिलकैर्देवदारुभिः
अशोकैःपाटलैश्चूतैर्मंदारैः शोभितोगिरिः १८
पर्यंतकवनामोदवाहकायत्रवायवः
पंगुत्वंबहुचारेणयांतितेमलयानिलाः १९
वाप्यःस्फटिकसोपानाह्यगाधविमलोदकाः

वैडूर्यनालसंसक्तसौवर्णनिभपंकजाः २०
कुमुदानांद्युतिर्यत्रराजतेसर्वतोदिशम्
कह्लारैःशौभितावाप्यःपिनद्धाःपद्मरागवत् २१
हरिन्मणिनिबद्धाश्चगोमेदैःसर्वतोवृताः
पद्मरागशिलाबद्धानानाधातुविचित्रिताः २२
ददृशुःसुंदरतरंनाकाधिककविनिर्मितम्
कैलासंपर्वतश्रेष्ठंदृष्ट्वातेविस्मयंगताः २३
विमानादवतीर्णाश्चमघवादेवताश्चताः
द्वारपालमथागम्यनंदिनंवाक्यमब्रुवन् २४
भोभोगणवरश्रेष्ठशृणुमेवाक्यमुत्तमम्
समाज्ञापयशीघ्रंत्वंनृत्यार्थमिहमागतम् २५
ईश्वरंप्रतिदेवेशंसर्वदेवैःसमावृतम्
इंद्रस्यवचनंश्रुत्वागिरिशंनंदिरब्रवीत् २६
प्रभोऽयमागतःसर्वैर्देवराजःपुरंदरः
नृत्यार्थमथतंप्राहानयशीघ्रंशचीपतिम् २७
प्रवेशयामासतदानंदीतैःसहवासवम्
सदृष्ट्वागिरिशंदेवंतुष्टाववृषभध्वजम् २८
रंभाद्यास्तास्तदासर्वानर्त्तक्योहरसन्निधौ
मृदंगवीणावादित्रैः मुदानाटयंप्रचक्रिरे २९
कांस्यवाद्यान्प्रगृह्यान्यावंशतालान्सकाहलान्
चक्रुस्तानृत्यसंरंभंस्वयंदेवः पुरंदरः ३०
अतीवनर्तनंचक्रेसुंदरंदेवदुर्ल्लभम्
ईश्वरस्तोषमापन्नोवासवंवाक्यमब्रवीत् ३१
प्रसन्नोऽहसुरश्रेष्ठजातस्तेव्रियतांवरः
इत्युक्तवतिदेवेशेस्वबाहुबलगर्वितः ३२
प्रत्युवाचहरंवाक्यंसंग्रामःसवृतोमया
यत्रत्वत्सदृशोयोद्धातद्युद्धंदेहिमेप्रभो ३३
इत्युक्त्वानिर्गतोजिष्णुर्लब्ध्वाशंभोर्वरंप्रभोः
तस्मिन्गतेतदाशक्रेगिरिशोवाक्यमब्रवीत् ३४
गणामेश्रूयतांवाक्यंदेवराजोऽतिगर्वितः

इत्युक्त्वाक्रोधसंयुक्तोबभूवचततोहरः ३५
आविरासीत्ततःक्रोधोमूर्त्तिमान्पुरतःस्थितः
घनान्धकारसदृशोमृडंक्रोधस्ततोऽब्रवीत् ३६
देहिमेत्वंहिसन्देशंकिंकरोमितवप्रभो
उमापतिस्तदोवाचगच्छत्वंवासवंजय ३७
स्वर्गसिंधुंसमासाद्यसागरस्यचवीर्यवान्
इत्युक्तोंतर्दधेक्रोधोगणास्तेविस्मयंययुः ३८
ईशानकल्पेजातेतुकामेनार्णवसंगमे
नाकसिंधुस्तदामत्तास्वयौवनभरोष्मणा ३९
तांदृष्ट्वासिंधुराजश्चजलकल्लोलवानभूत्
तदाबभूवराजेंद्रगंगासागरसंगमः ४०
महानदीतदाप्राप्यरेमेचात्मबलेनच
अत्रांतरेसमुद्रस्यबभूवसुभटस्ततः ४१
सूनुस्तस्यांमहानद्यांसमुद्रादभवद्बली
महार्णवतनूजेनजातमात्रेणपार्थिव ४२
रुदतोत्कंपितापृथ्वीत्रिलोकीनादिताभवत्
समाधिबद्धमुद्रांचसंतत्याजचतुर्मुखः ४३
अत्रांतरेपरित्रस्तांतांसंवीक्ष्यजगत्त्रयीम्
धातासुरेंद्रवाक्येनप्रजगाममहार्णवम् ४४
आश्चर्यमितिसंचिंत्यहंसारूढोजवाद्ययौ
ब्रह्माणमागतंवीक्ष्यसपर्याविदधेऽर्णवः
तमुवाचततोब्रह्माकिंगर्जसिवृथांबुधे ४५
समुद्रउवाच-
नाहंगर्जामिदेवेशमत्सुतोबलवान्प्रभो
शिशोर्वैकुरुरक्षांचदुर्ल्लभंतवदर्शनम् ४६
संदृश्यतांचतनयोभार्यांप्राहातिशोभनाम्
ययौसाभर्तुरादेशात्सपुत्राब्रह्मणोंतिके ४७
उत्संगदेशेचतुराननस्यविधायपुत्रंचरणौननाम
तदासमुद्रात्मजमद्भुतंतंदृष्ट्वाविधातुः किलविस्मयोऽभूत् ४८
गृहीतकूर्चस्यशिशोः करंचयदाविरिंचिर्नशशाकमोचितुम्

तदासमुद्रःप्रहसन्प्रयातः कूर्चंप्रगृह्यार्भकरंविमोचयन् ४९
तादृशंतस्यबालस्यदृष्ट्वाविक्रममात्मभूः
प्रीत्याजालंधरेत्याहनाम्नाजालंधरोऽभवत् ५०
वरंददावथोतस्यप्रणयेनप्रजापतिः
अयंजालंधरोदेवैरजेयश्चभविष्यति ५१
पातालसहितंनाकंमत्प्रसादेनभोक्ष्यति
इत्युक्त्वांतर्दधेब्रह्माहंसमारुह्यसत्वरः ५२
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांयुधिष्ठिरनारदसंवादेउत्तर
खंडेजालंधरोत्पत्तिब्रह्मागमोनामतृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

नारदउवाच-
क्रमेणवर्द्धमानोऽसौबाल्यभावेसबालकः
निपत्यमारुतोत्संगेसागरंप्रतिधावति १
आनीयचक्रेसचपंजरस्थान्क्रीडापरःकेसरिणांकिशोरान्
सिंहादिनेभादिनियुद्धमेवंयुधोपयोगीवतदीयवीर्यम् २
तस्मादाकाशमुत्पत्यखेचरान्पातयेद्भुवि
गर्जितैर्भीषयामासस्वर्गंहिसहसागरम् ३
समुद्रांतर्गतंसर्वंसत्वजातंतुपार्थिव
ग्रस्तंसिंधुसुतेनेतितद्भयाच्छन्नतांगतम् ४
दृष्ट्वानिःसत्वकंतोयंतद्भयाद्वडवानलः
निजदेशंपरित्यज्यप्रविवेशहिमालयम् ५
सबालत्वंपरित्यज्यक्रमेणार्णवनंदनः
ततोनवंवयःप्राप्यविक्रमेणाक्रमद्दिवम् ६
एकदापितरंप्राहसमुद्रंसिंधुनंदनः
मन्निवासोचितंस्थानंदेहितातातिविस्तृतम् ७
संबुद्ध्यवचनंसूनोःसजगादमहार्णवः
पुत्रदास्याम्यहंराज्यंतववाभुविदुर्ल्लभम् ८
अनंतरंदैत्यगुरुःसमुद्रंभार्गवोगतः
तमागतंविलोक्याब्धिर्विधिनासमपूजयत् ९

अथनदिपतिदत्तेप्राप्तसौंदर्यनिर्यन्मणिमहसिसतस्मिन्नासनेसन्निविष्टः
रुचिररुचिसुमेरोःसुंदरेशृंगभागेकमलजइवकांतिंकिंचिदुच्चैर्जहार १०
कृतांजलिपुटोभूत्वाव्याजहारार्णवःकविम्
दिष्ट्यातवात्रागमनंवदकिंकरवाणयहम् ११
तदादैत्यकुलाचार्यः प्राहतंसागरंकविः
किंतेनजातुजातेनमातुर्यौवनहारिणा १२
प्ररोहतिनयःस्वस्यवंशस्याग्रेध्वजोयथा
तवात्मजोविक्रमेणत्रैलोक्यंभोक्ष्यतिध्रुवम् १३
जंबूद्वीपेमहापीठंयोगिनीगणसेवितम्
आप्लावितंत्वयेदानींमुंचजालंधरालयम् १४
तत्रराज्यंप्रयच्छास्मैतनयायमहार्णव
अजयश्चाप्यवध्यश्चतत्रस्थोऽयभविष्यति १५
एवमुक्तोऽणवःप्रीत्याभार्गवेणाथलीलया
अपासर्पत्सुतप्रीत्यै जलेस्थलमदर्शयत् १६
शतयोजनविस्तीर्णमायतंचशतत्रयम्
देशंजालंधरंपुण्यंतस्यनाम्नैवविश्रुतम् १७
दैत्यवर्यंसमाहूयमयंप्रोवाचसागरः
पुरंजालंधरेपीठेकुरुजालंधरायवै १८
अंभोधिनैवमुक्तस्तुचक्रेरत्नमयंपुरम्
प्राकारगोपुरद्वारंसोपानगृहभूमिकम् १९
यत्रेंद्रनीलसंबद्धप्रासादतलसंस्थिताः
मेनिरेजलदोद्योगंतांडवस्थाः शिखंडिनः २०
यत्रप्रवालमाणिक्यभवनोत्थामरीचयः
सेव्यंतेशकुनैश्चूतरुचिरांकुरशंकया २१
यत्रकांचनहर्म्येषुत्विषोवह्निषुकातराः
विलोक्यप्रपलायंतेदावशंकाः शिखंडिनः २२
यत्रस्फटिकशालोत्थप्रभासंमिश्रितादिशः
विभांतिमंदरोद्भ्रांताःसफेनार्णवसंनिभाः २३
यत्रमोहंस्वहर्म्येषुविभातालोकसंस्थिताः
चक्रिरेललनाः पूर्णसांध्यचंद्रोपमाननाः २४

यत्रेन्द्रनीपकादंबपवनोद्यानमोदिताः
चित्तंविशंत्योनारीणांचक्रिरेमोहनज्वरम् २५
यत्रलेख्यगतंनृणांविलोक्यसुरतंजनः
संयातिद्विगुणंनूनंनिजकांतारतोद्यमः २६
यत्रवातायनोद्धूतधूपधूमस्यलेखयः
नभोबभूवतद्गंगाकालिंदीसंगमोपमम् २७
यत्रानेकगृहोद्भूतप्रभयासकलंनभः
विभातींद्रायुधाकीर्णशरन्मेघइवोन्नतः २८
यत्रानिशंभ्रमभ्रांताःसूर्यवाहाः प्रपीडिताः
विश्रामंयांतिमध्याह्नेप्रासादशिरसिस्थिताः २९
यत्रकुत्रचहर्म्येषुबिभ्रत्योमालतीस्रजः
रात्रौसंभूतनक्षत्राइवरेजुर्वरांगनाः ३०
यत्रहाटकहिंदोलशृंखलाघर्षणोद्भवः
चकारसुंदरींशब्दःस्फुटंमेरुभुवोभुवम् ३१
साकंसरिद्भिः पुत्रस्योशनसासहसागरः
तत्राभिषेकमकरोद्वादित्रैर्निजगर्जितैः ३२
याः स्कंदस्यजगादतारकजयेदेवः स्वयंभूः स्वयंस्वः
साम्राज्यमहोत्सवेऽपिचशचीकांतस्यवाचस्पतिः
ताभिश्चित्रविरिंचिवक्त्रसरसीहंसीभिराशास्महेवाणीभिर्वसुधा
विवाहसमयेमंत्रोत्सवैर्मंगलम् ३३
महापद्मसहस्रंतुसैन्यमात्मोदरोद्भवम्
जालंधरायपुत्रायददौभीमंमहोदधिः ३४
जालंधरायशुक्रोऽपिप्रीत्याविद्यांनिजांददौ
मृतसंजीवनींनाम्नामायांरुद्रविमोहिनीम् ३५
शस्त्रास्त्रविद्याश्चान्याश्चविधिनाश्चब्धिसूनवे
यदन्यत्सकलंतस्मैव्याख्यातंकविनातदा ३६
ततोजालंधरंपुत्रमभिषिच्यार्णवोययौ
स्वस्थानंदिव्यदेहेननदीभिःपरिवारितः ३७
दृष्ट्वाजालंधरोदिव्यपुरंगोपुरमंडितम्
व्यचरत्सहशुक्रेणद्विजसंघैःसुपूजितः ३८

एतस्मिन्नंतरेदैत्याःपातालस्थामहाबलाः
प्राप्ताजालंधरंसर्वेकालनेमिपुरोगमाः ३९
ततोमहाबलावीराबलंक्षीरोदसंनिभम्
तस्यशुंभासुरंदैत्यंसेनापतिमकल्पयन् ४०
बलंस्ववशगंकृत्वाकृत्वाभुविस्थिरंजलम्
जालंधरस्तदाराज्यंपितृदत्तंचकारसः ४१
अत्रांतरेऽप्सराःकाचित्स्वर्णोत्यासीत्पुरादिवि
तस्याःक्रौंचप्रसादेनवृंदानामसुताभवत् ४२
धात्राविभवसंयुक्तंसौंदर्यंयत्कृतंपृथक्
तत्तदेकगतंद्रष्टुंवृंदागात्रंविनिर्मितम् ४३
तांवृंदामतिचार्वंगींप्रमदांजनमोहिनीम्
स्वर्णाजालंधरस्यार्थेददौशुक्राययाचते ४४
शुक्रउवाच–
कंदर्पस्यजगन्नेत्रशस्त्रेणाश्चर्यकारिणा
रूपेणानेनरंभोरुदीर्घायुः सुखिनीभव ४५
निर्मायस्वयमेवविस्मितमनाःसौंदर्यसारेण यं
स्वव्यापारपरिश्रमस्यकलशंवेधाः समारोपयत्
कंदर्पंपुरुषंस्त्रियोविदधतेयस्मिन्नदृष्टेसतिद्रष्टव्यावधि
रूपमाप्नुहिपतिंतंदीर्घनेत्रंभटम् ४६
उपयेमेविवाहेनगांधर्वेणार्णवात्मजः
वृंदांतौदंपतीजातौजनानंदकरौनृप ४७
चंचलत्वंपरित्यक्तंतयाजालंधरोऽपिहि
वृत्तेनवृद्धकार्येणचकमेनपरस्त्रियम् ४८
कदाचित्ससभासीनोदृष्ट्वाराहुंशिरोहृतम्
कस्मात्कायार्द्धशेषोऽयइतिपप्रच्छभार्गवम् ४९
सतस्यकथयामासपूर्ववृत्तां तमादितः
यथानिर्मथितोदेवैःक्षीरोदोऽमृतकारणात् ५०
तच्छ्रुत्वाविस्मितोवाक्यंप्राहजालंधरोऽसुरः
प्रसादसुमुखोराहुंकामरूपोभवाधुना ५१
इतिशुक्रस्यमंत्रेणसिंधुसूनुःप्रतापवान्

पितृव्यंसंस्मरन्वीरविग्रहंत्वकरोत्सुरैः ५२

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेनारद
युधिष्ठिरसंवादेजालंधरोपाख्यानेवृंदाविवाहोजालंधराभिषेकोनाम
चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

युधिष्ठिरउवाच–
कः पितृव्यः सिंधुसूनोः किंवृत्तंतस्यविग्रहे
युयुधेसकथंदैत्यस्तन्मेकथयनारद १
नारदउवाच–
शृणुत्वंनृपशार्दूलपितृव्यःक्षीरसागरः
जालंधरस्यतंदेवैःप्रमथ्यधनमाहृतम् २
श्रीचंद्रामृतनागाश्वपूर्वंतस्यसुरासुरैः
तच्छ्रुत्वाविग्रहंचक्रेदेवैर्जालंधरोऽसुरः ३
कदाचित्प्रेषयामासदूतंदुर्वारणंबली
शिक्षयित्वातुवक्तव्यंदेवेंद्रभवनंप्रति ४
अथस्यंदनमारुह्यययौदुर्वारणोदिवि
प्रवेष्टुकामोभवनंद्वारस्थैर्द्वारिनिवारितः ५
दूतउवाच–
जालंधरस्यदूतोऽहमागतःशक्रसंनिधौ
गत्वातत्रभवंतोमांविज्ञापयितुमर्हथ ६
इतितस्यवचः श्रुत्वातदैवतुशचीपतिम्
गत्वाचप्रणिपत्याहदूतोदेवागतोभुवः ७
दौवारिकोमहेंद्रेणप्रत्युक्तोदूतमानय
हस्तेगृहीत्वातंदूतंवासवांतिकमानयत् ८
दुर्वारणोदेवसभांप्रविष्टःप्रव्यलोकयत्
हरिंदेवैस्तुयस्त्रिंशत्कोटिभिः परिवेष्टितम् ९
स्वर्णसिंहासनंदिव्यंचामरानिलसेवितम्
शचीप्रेमरसोत्फुल्लनयनाब्जसहस्रकम् १०
दुर्वारणोऽथदेवेशंविलोक्यगुरुणासह

प्रणानामात्मगर्वेणप्रहसन्नयनश्रियम् ११
निर्दिष्टमासनंभेजेदूतोजालंधरस्यसः
कस्यत्वंकेनकार्येणप्राप्तःप्राहेतितंहरिः १२
दूतोजालंधरस्याहंसजगादपुरंदरम्
सराजासर्वलोकानांतस्याज्ञांशृणुमन्मुखात् १३
पितृव्योममदुग्धाब्धिस्त्वयाकस्माद्विलोडितः
मंदराद्रिविधानेनहृतंकोशंमहाधनम् १४
श्रीचंद्रामृतनागाश्वंतन्मणिंविद्रुमादिकम्
देहिसर्वंतथास्वर्गंशीघ्रंत्यजपुरंदर १५
सत्वंमद्वचनात्तूर्णंकुरुसर्वंयथोचितम्
तंक्षमापयभूपालयदिजीवितुमिच्छसि १६
अथप्रहस्यमघवाप्राहदुर्वारणंप्रति
शृणुदूतसमासेनसिंधोर्मथनकारणम् १७
पुराहिमवतः सूनुर्मैनाकोनाममेरिपुः
सकुक्षौविधृतस्तेनसागरेणजडेनच १८
दग्धंचराचरंयेनवह्निनाहयरूपिणा
सचापिविधृतस्तेनसागरेणदुरात्मना १९
धर्मद्विषांदानवानामसौवैआश्रयः प्रभुः
नित्यंदधिघृतंक्षीरंदानवेभ्यः प्रयच्छति २०
अतएवायमस्माभिःदुर्वारणविलोडितः
दंडितश्चगतश्रीकोदेवैरथपुरातनैः २१
शृणुदूतसबंधेनममविप्रेणशोषितः
कुंभोद्भवेन किंचैषदुःसंगेनैवबाध्यते २२
सोऽपियुद्धार्थमस्माभिः सर्वसैन्येनसंवृतः
आगमिष्यतिवैनाशंगमिष्यतितदैवहि २३
इतीरयित्वाविररामवृत्रहासरित्पतेरात्मजदूतमुच्चकैः
शशंसचागत्यसमुद्रसूनोर्देवेश्वरेणोक्तमशेषमादितः २४
नारदउवाच–
महेंद्रवचनं श्रुत्वानिजदूतमुखेनच
समुद्रसूनुःसंक्रुद्धःसर्वसैन्यंसमाह्वयत् २५

रसातलस्थितादैत्याः येचभूतलवासिनः
आययुःसबलास्तत्रजालंधरमथाज्ञया २६
प्रयाणप्रक्रमेसिंधुसूनोःसैन्यस्यगर्जितैः
स्फुटंतिनभसोराजन्पातालमखिलादिशः २७
हयनागोष्ट्रवदनाबिडालमुखभीषणाः
व्याघ्रसिंहाखुवदनाविद्युत्सदृशलोचनाः २८
सर्पकेशामहादेहाः केचित्खड्गतनूरुहाः
अन्येचपरिधावंतिगर्जंतिजलदस्वनैः २९
रथगजहयपत्तिसंकुलंसमरविनोदकदंबभासुरम्
अब्जशतसहस्रकोटिनायकंबलमखिलंचतदारराजराजन् ३०
शतयोजनविस्तीर्णविमानंहंसकोटिभिः
युक्तंभूतिसहस्रौघंसर्ववस्तुप्रपूरितम् ३१
तद्विमानंसमारुह्यसद्योजालंधरोययौ
मध्याह्नेमंदरंप्राप्तःप्रथमेऽह्निबलैःसह ३२
खंडितंशिबिकावाहैर्दलितंभूरिकुंजरैः
द्वितीयेदिवसेमेरुंसंप्राप्तोबलसंयुतः ३३
इलावृत्तेतुशिखरेतस्थौतत्कटकंमहत्
अथदैत्याधिपैर्भग्नंखांडवंनंदनंवनम् ३४
शिखराणिविशीर्णानिमेरोर्दानवपुंगवैः
संतानकेषुवृक्षेषुबद्धाहिंदोलमंचकान् ३५
सिद्धांगनाभिः सहितारेमिरेदैत्यपुंगवाः
कुचकुंकुमतांबूलचंदनागरुभूषणैः ३६
केशपाशच्युतैः पुष्पैः मेरोः संपूरितानदी
सुमेरोःपूर्वदिग्भागोगजैस्तस्यविघट्टितः ३७
दक्षिणंचरथैश्चेरुरुत्तरंपश्चिमंभटैः
अथप्रस्थापयामासदैत्याञ्जालधरोऽसुरः ३८
महेंद्रशिखरंचान्येययुर्दुंदुभिनिःस्वनैः
राजराजपुरींभंक्त्वायमस्यवरुणस्यच ३९
अन्येषांलोकपालानामाययुस्तेऽमरावतीम्
अथोत्पाताभवन्नाकेदिव्यभौमांतरिक्षगाः ४०

रजः पपातबहुलंतमस्तोमोविजृंभते
तदापपातकुलिशंकरादिंद्रस्यनिष्प्रभम् ४१
दृष्ट्वानिमित्तानिभयावहानिनाकेमहेंद्रोगुरुमित्युवाच
किंकुर्महेकंशरणंचयामस्तंपश्ययुद्धंसमुपस्थितंच ४२
ततोवाचस्पतिर्वाक्यमुवाचत्रिदशाधिपम्
चरणौपाहिशरणंविष्णोर्वैकुंठवासिनः ४३
इत्युक्तोगुरुणादेवैःसाकंवैकुंठमंदिरम्
जगामाखंडलःशीघ्रंशरणंकैटभद्विषः ४४
शशंसवासुदेवायविजयोद्वारपालकः
जालंधरभयत्रस्ताःसर्वेदेवाःसमागताः ४५
श्रीरुवाच-
नवध्योऽसौममभ्रातादेवार्थेयुध्यतात्वया
शापितोदेवमत्प्रीत्या वधार्होनभविष्यति ४६
इतिश्रीवचनंश्रुत्वाविष्णुस्त्रैलोक्यपालकः
अथारुरोहगरुडंपद्मपत्रोपावृतांबरम् ४७
वैकुंठभवनात्तूर्णंनिर्गतस्त्रिदशान्हरिः
जालंधरभयत्रस्तान्गतकांतीनथैक्षत ४८
ददृशुस्तेसुराःसर्वेहरिंसांद्रघनोपमम्
शार्ङ्गशंखगदापद्मविभूषितचतुर्भुजम् ४९
स्तोत्रंपठित्वापुरतःप्राहेंद्रःसरितांपतेः
जालंधरेणात्मजेनभग्नंदेवत्रिविष्टपम् ५०
तदिंद्रवचनंश्रुत्वाऽभयंदत्वादिवौकसाम्
विजेतुमसुरंदेवैः सहरेजेसुरांतकृत् ५१
अथानीतंमातलिनारथमारुह्यवासवः
वासुदेवस्यपुरतःप्रययौविधृताशनिः ५२
वामतस्त्रिदशाःसर्वेसव्यतश्चसमाययौ
स्वाहाप्रियोदक्षिणतःसचमेषंसमास्थितः ५३
आरुह्यैरावतंनागंजयंतः शक्रनंदनः
उच्चैः श्रवसमिंद्रश्चउभौभगवतःपुरः ५४
धातार्यमाचमित्रश्चवरुणोंशोभगस्तथा

इंद्रोविवस्वान्पूषाचपर्जन्योदशमःस्मृतः ५५
ततस्त्वष्टाततोविष्णूरेजेधन्योजघन्यजः
इत्येते द्वादशादित्याइंद्रस्यपुरतःस्थिताः ५६
वीरभद्रश्चशंभुश्चगिरिशश्चमहायशाः
अजैकपादहिर्बुध्न्यःपिनाकीचापराजितः ५७
भुवनाधीश्वरश्चैवकपालीचविशांपते
स्थाणुर्भगश्चभगवान्रुद्राएकादशस्मृताः ५८
श्वसनःस्पर्शनोवायुरनिलोमारुतस्तथा
प्राणापानौसजीवौचमरुतोऽष्टौतदग्रतः ५९
विवस्वानपितन्मध्येययौद्वादशमूर्तिभिः
धनदःशिबिकारूढःकिंनरेशोययौतदा ६०
रुद्राश्चवृषभारूढामारुतोमृगवाहनः
ययुःसैन्यस्यपुरतःत्रिशूलपरिघायुधाः ६१
गंधर्वाश्चारणायक्षाः पिशाचोरगगुह्यकाः
सर्वसैन्यस्यपुरतःसर्वशस्त्रभृतोययुः ६२
पूर्वापरौतोयराशीसमाक्रांतौचसैनिकैः
तस्मिन्ससारभूमिराट्वराहवपुषाहरिः ६३
स्वर्गादागत्यवेगेनदैत्यसैन्यजिघांसया
सुमेरोरुत्तरोभागःसुरसैन्येनसंवृतः ६४
सेनाभारोद्धुतकरस्तस्थौजालंधरस्यच
आश्रित्यदक्षिणंभागंतूर्णंकनकशृंगतः ६५
अहोरात्रेणविहितावर्षेतस्मिन्निलावृते
मेरुमंदरयोर्मध्येयुद्धभूमिःप्रतिष्ठिता ६६
तत्रात्मजयदांभूमिंकविप्रोक्तांमुदायुताः
जग्मुस्तेदानवास्तूर्णंगुरुप्रोक्तांययुःसुराः ६७
रथप्रवीरैःपरितश्चसंप्लवैर्गजैर्घनाकारमदप्रवाहिभिः
अश्वैरनंतैर्गरुडाग्रगामिभिःपदातिभिःसारणभूर्भृताबभौ ६८
ततोवादित्रनिर्घोषःसेनयोरुभयोरभूत्
कोलाहलश्चवीराणामन्योन्यमभिगर्जताम् ६९
अथदानवदेवानांसंग्रामोऽभूद्भयावहः

सर्वसैन्यस्यसंमर्दोयथात्रिभुवनक्षयः ७०
भयक्रांतामहाश्रांताश्रुतिर्विलपतीमुहुः
स्वरथाकाररहितंशरैःसंपूरितंतदा ७१
रोमांचिताबभौद्यौश्चरजोवस्त्रंविधुन्वती
रौद्रैर्विहंगमारावैस्त्रासादाक्रंदतीवहि ७२
देवेंद्रेणतदाज्ञप्तामेघाःसंवर्तकादयः
गजानुच्चैःसमारुह्यतेऽसुरान्युयुधुर्मृधे ७३
देवानामश्वारोहाश्चजातागंधर्वकिन्नराः
रथिनःसाध्यसिद्धाश्चगजिनोयक्षचारणाः ७४
पदातिनःकिंपुरुषाःपन्नगाःपवनाशनाः
रोगाणामधिपोराजन्यक्ष्माचयमनायकः ७५
तत्रदानवरोगाणांसंग्रामोऽभूत्सुदारुणः
पतितालुलुठुर्भूमौदैत्याःशूलज्वरामयैः ७६
दानवैर्निहतारोगाःपेतुःसमरमूर्द्धनि
पलायांचक्रिरेकेचित्व्याधयोभूधरान्प्रति ७७
औषध्यस्तत्रसहजावैशल्यकरणीमुखाः
ताभिर्विशल्याःसैन्येषुयुयुधुर्यमकिंकराः ७८
दानवैर्निहताः सर्वेशरमुद्गरपट्टिशैः
पदातयःपत्तिगणैःखड्गैस्तीक्ष्णैः परश्वधैः ७९
कोटिशोजघ्नुरन्योन्यंरुधिरारुणविग्रहाः
अश्वचाराहयैस्तूर्णैश्छिन्दिपुर्गगने तदा ८०
संश्लिष्यजघ्नुरन्योन्यंरुधिरारुणविग्रहाः
समूहोरथिनांभीमोरथौघैश्छाद्यमेदिनीम् ८१
विव्यधुर्निशितैर्बाणैर्धनुर्मुक्तैर्महारथान्
मदक्षीणकपोलांगाःकरैर्बद्धाकरान्दृढम् ८२
गजान्प्रतिगजाःक्रुद्धाःपातयंतिमहीतले
कोपिदैत्योरथंदोर्भ्यामुत्क्षिप्योत्थायखंययौ ८३
अश्वचारान्हयान्नागान्पातयामासभूतले
स्कंधेगृहीत्वातरसाययौजालंधरंप्रति ८४
कक्षयोर्वैगजौगृह्यतृतीयंजठरोपरि

चतुर्थंमस्तकेगृह्यरणेधावतिकश्चन ८५
उत्पाट्यकोशतःखड्गंविधूयविमलांबरम्
ययौसहस्रशोदेवान्पातयित्वारणेऽसुरः ८६
काचित्पीनस्तनीतन्वीखेचरीरतिलंपटा
आगत्यगगनात्तूर्णंनिन्येदैत्यंरणांगणात् ८७
चुचुंबसातद्वदनंतीक्ष्णनाराचकीलितम्
देवसैन्यंततोबद्धवाकालनेमिर्ननर्त्तह ८८
ततोजनार्दनःक्रुद्धोनिर्ययौकालनेमिनम्
यमोदुर्वारणंवीरंस्वर्भानुश्चंद्रभास्करौ ८९
केतुंवैश्वानरोदेवोययौशुक्रंबृहस्पतिः
आश्विनौसंयतौतत्रदैत्यमंगारपर्णकम् ९०
संह्लादंशक्रपुत्रश्चनिर्ह्लादंधनदोययौ
निशुंभश्चावृतोरुद्रैःशुंभोवसुभिराहवे ९१
मेघाकारंस्थितंजंभंविश्वेदेवाःसमाययौ
वायवोवज्ररोमाणमथमृत्युर्मयंययौ ९२
नमुचिंवासवोव्यग्रंशक्तिहस्तोऽभ्यधावत
अन्यैरपिसुरैर्दैत्याःस्वस्ववीर्यसमैर्वृताः ९३

इति श्रीपद्मपुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडे
युधिष्ठिरनारदसंवादेदेवदानवयुद्धंनामपंचमोध्यायः ५

## षष्ठोऽध्यायः

नारदउवाच-
एवंद्वंद्वेषुयुद्धेषुसंप्रवृत्तेष्वनेकशः
जघानाथहरिःक्रुद्धोगदयाकालनेमिनम् १
विहायमूर्च्छांसंचित्यविष्णुंबाणैर्जघानसः
ततःक्रुद्धेनहरिणासच्छितौपातितोव्यसुः २
राजन्जघानसंचिंत्यराहुंखड्गेनचंद्रमाः
राहुस्तुतंपरित्यज्यतदासूर्यमधावत ३
सहस्रांशुंरणेजित्वाराहुश्चंद्रमधावत
जघानतंचखड्गेनसमरेरजनीपतिः ४

सैंहिकेयांगकाठिन्यात्खड्गंचूर्णमभूत्तदा
जघानमुष्टिनागाढंकठिनेनविधुंतुदः ५
चंद्रमुत्थाप्यतंकंठेधृत्वावेगान्महामृधे
गिलित्वाराहुणाचंद्रोप्युद्गीर्णश्चततःपुनः ६
मृगंस्वचिह्नमुरसिनिधायविससर्जह
सउच्चैःश्रवसंगृह्यहयरत्नंविधुंतुदः ७
जालंधरांतिकंनीत्वाभक्त्यातस्मैन्यवेदयत्
दुर्वारणोरणेक्रुद्धस्तंयमंगदयाहनत् ८
निशितैर्मार्गणैर्भिन्नःशक्रपुत्रेणचाहवे
धृत्वाजयंतंसंह्रादःपरिघाघातमूर्च्छितम् ९
एरावतंसमारुह्यययौजालंधरंप्रति
हतवांश्चैवगदयानिह्लादंधनदोरणे १०
रुद्रास्त्रिशूलनिर्घातैर्निशुंभंजघ्नुरोजसा
निशुंभोबाणजालैश्चपीडयामासतानति ११
शुंभासुरोदेवगणान्पूरयामासमार्गणैः
मृत्युंमायामयमयोबद्ध्वापाशैर्निनायतम् १२
ददौजालंधरायासौपौलोम्नेसोऽपिसिंधवे
अब्धिनाचमुखेक्षिप्तोलोकोजीवतुनिर्भयः १३
बद्ध्वाचनमुचिंपाशैर्वासवोऽपिरसातलम्
निन्येविश्वस्यहंतारंअथजालंधरोययौ १४
अथेंद्रबलयोर्युद्धमभूद्राजन्सुदारुणम्
बलांगरोचिषोभांतिदिशोदशरवेरिव १५
सर्वाण्यस्त्राणिशक्रस्यशीर्णान्यंगेबलस्यच
बलीयसाबलेनेंद्रोमुद्गरेणहतोहृदि १६
ननादेंद्रस्ततोभीमंतच्छ्रुत्वासबलोहसत्
हसतस्तस्यनिश्चेरुर्मुखतोमौक्तिकानिच १७
तस्यांगस्याभिलाषेणनयुद्धमकरोत्तदा
तुष्टाववासवोऽत्यर्थंतंबलंबलसागरम् १८
वरंवृणुसुरश्रेष्ठेत्युक्तःप्राहबलंप्रति
यदितुष्टोऽसिदैत्येशस्त्वंवपुर्दातुमर्हसि १९

तदिंद्रवचनंश्रुत्वाभित्त्वाशस्त्रैर्गृहाणमाम्
इत्युवाचबलंसोऽपिकिमदेयं महात्मनाम् २०
गीरिवश्रोत्रहीनस्यलोलाद्मीवविचक्षुषः
परेषुपुष्पमालेवश्रीःकदर्यस्यनिष्फला १
महात्मानोनगृह्णंतिहिंसमानान्रिपूनपि
सपत्नीःप्रापयंत्यब्धिंसिंधवोनगनिम्नगाः २
सुजनोनयातिविकृतिंपरहितनिरतोविनाशकालेऽपि
छिन्नोऽपिचंदनतरुःसुरभयतिमुखंकुठारस्य ३
देवंपरंविनश्यतितनुरपिनश्रीर्निवेदितासत्सु
अवशिष्यतेहिमांशोः सैवकलाशिरसियाशंभोः ४
तेसाधवोभुवनमंडलमौलिभूतायेसाधुतामनुपकारिषु दर्शयंति
आत्मप्रयोजनवशात्कृतछिन्नदेहाःपूर्वापकारिषुखलोपिहितानुरक्तः ५f
तथेत्युक्त्वासहस्राक्षोमुद्गरेणाहनद्बलम्
नबिभेदतदादेहःशक्रश्चिंतामवापह २०
सस्मारितोमातलिनावज्रेणांगंजघानतत्
तेनवज्रप्रहारेणबलांगंतद्व्यशीर्यत २१
बलांगस्यैकभागस्तुपपातकनकाचले
तुहिनाद्रौद्वितीयस्तुतृतीयोगोनगेऽपतत् २२
चतुर्थोदेवनद्यांचपंचमोमंदरेतथा
वज्राकरेपपातांशःषष्ठश्चविजयांगजः २३
तस्यजातिविशुद्धस्यपरिशुद्धेन कर्मणा
कायस्यावयवाः सर्वेरत्नबीजत्वमागताः २४
वज्रादस्थिकणाःकीर्णाःषट्कोणमणयोऽभवन्
अक्षिभ्यामिन्द्रनीलावैमाणिक्यंश्रुतिसंभवम् २५
क्षतजात्पद्मरागाःस्युःमेदसोमरकतास्तथा
प्रवालानिचजिह्वातोदंतामुक्तास्तथाभवन् २६
मज्जोद्भवंमरकतंगारुत्मतमभून्नसा
कांस्यंपुरीषंरजतंवीर्यं ताम्रंचमूत्रजम् २७
अंगस्योद्वर्तनाज्जातंपित्तलंब्रह्मवीतिकाः
नादाद्वैदूर्यमुत्पन्नंरत्नंचारुतरंतथा २८

नखेभ्यःकनकोत्पत्तीरुधिराच्चरसोद्भवः
मेदसः स्फटिकंजातंप्रवालंमांससंभवम् २९
बलदेहोद्भवान्यासन्रत्नानिपृथिवीतले
पुरायोपचयसंपत्त्याभोद्यंतेविमलैर्जनैः ३०
अत्रांतरेहतंश्रुत्वाबलंमघवतामृधे
प्रभावतीनामराज्ञीययौतच्चरणांतिकम् ३१
विललापपतिंदृष्ट्वाविकीर्णावयवंरणे
प्रभावत्यश्रुपूर्णाक्षीमुक्तकेशीघनस्तनी ३२
हानाथबलविक्रांतकांतदेहजगत्प्रिय
मांत्वंविहायकिंचात्रकैवल्यंगतवानसि ३३
जराकुष्ठादिभिर्व्याप्तंबुद्ध्वादेहंत्यजंतिन
देहिनोऽन्येपरंकांतंत्वयादेहोवृथोज्झितः ३४
तवदेहेनदिव्येनहारकंभूष्यतेप्रिय
रणोत्सुकेनभवतायावेणीग्रथितामम ३५
तामुद्ग्रथयवैधव्यदुःखार्त्तायाःस्वयंप्रिय
एवंविलपतींवीक्ष्यबलराज्ञींसमुद्रजः
दुःखितःशुक्रमित्याहबलंजीवयभार्गव ३६
शुक्रउवाच-
इच्छयामरणंप्राप्तंतंकथंजीवयाम्यहम्
तथापिमंत्रसामर्थ्याद्वाचमुच्चारयिष्यति ३७
जालंधरउवाच-
बलस्यरूपवचनंश्रोतुमिच्छामिभार्गव
जालंधरेणैवमुक्तःक्षणंध्यानपरोऽभवत् ३८
अथोदतिष्ठद्वदनात्स्वनःश्रोत्रमनोरमः
प्रभावतींप्रतिव्यक्तंवाद्यभांडादिवोत्थितः ३९
प्रभावतिस्वदेहंत्वंममांगेषुलयंनय
इतितस्यवचः श्रुत्वानदीजाताप्रभावती ४०
बलाङ्गेष्वेवलीनासासुमेरोःपूर्ववाहिनी
यस्यास्तोयेनसंजातारत्नानांकांतिरुत्तमा ४१
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहिता

यामुत्तरखंडेजालंधरोपाख्यानेबलदैत्यस्वर्गारोहणंनामषष्ठोऽध्यायः ६
सप्तमोऽध्यायः
नारदउवाच-
ततोजालधरःक्रुद्धःप्राहतंदैत्यसूदनम्
कपटेनबलंहत्वाक्वयास्यसिबलाधम १
इत्युक्त्वातंशतमखंसिंधुसूनुःप्रतापवान्
ससूताश्वध्वजरथंछादयामासमार्गणैः २
पपातमूर्च्छितःशक्रोरथोपरिशरैःक्षतः
दृष्ट्वातंपतितंशक्रंजगर्जार्णवनंदनः ३
मूर्च्छांत्यक्त्वामुमोचेंद्रोवज्रंजालंधरंप्रति
तदाद्रिदलनंहस्तेगृहीत्वासिंधुसंभवः ४
वज्रंकक्षापुटेधृत्वारथादुत्तीर्यसत्वरम्
अभ्यधावतदैत्येंद्रोदेवेंद्रंधर्तुमाहवे ५
ततोदुद्रावमघवारथंत्यक्त्वाहरिंस्मरन्
रथमिंद्रस्यमदवानारुह्यार्णवनंदनः ६
यंतारंमातलिकृत्वाययौप्राप्तमनोरथः
रथमिंद्रस्यतरसायत्रयत्रययौबले ७
जालंधरोमहाबाहुःस्वयंचांबुधरोयथा
ततःसकोपात्पुरुषोत्तमः स्वयंखड्गंसमुद्यम्यचनंदकंरणे ८
संप्रेरयित्वागरुडंमनोजवंजघानकोपेनचदैत्यवाहिनीम्
रथान्हयान्कुंजरपत्तिसंघान्सपातयामासबलात्सहस्रशः ९
जनार्दनःकश्यपसूनुसंवृतश्चकारसंख्येचरितंभयावहम्
केशास्थिमज्जारुधिरौघवाहिनींपिशाचवेतालविहंगसेविताम् १०
करोरुजंघायुधशस्त्रपूरितांसुदुस्तरांव्याघ्रगजेंद्रसेविताम्
रक्तांत्रहारांगदभूषितांतांविघूर्णनेत्रोत्सवकांतिवाससम् ११
विष्णुनानिहतंसैन्यंदृष्ट्वादानवपुंगवाः
जालंधराज्ञयासर्वेरुरुधुःपरितोहरिम् १२
दैत्यास्तेतत्रबाणौघान्वर्षमाणायथांबुदाः
यथाद्विरेफाःकमलंपर्वतंजलदाइव १३
चूतंयथापक्षिगणागगनंधूपसंचयः

नदृश्योऽभूत्तदाविष्णुर्नतार्क्ष्योरणसंकटे १४
सर्वेतेरथमारूढासर्वशस्त्रैर्महासुराः
वैकुंठाधिपतिंजघ्नुर्गर्जंतोभीमनिस्वनैः १५
तान्सर्वान्भीमरूपेणदैत्यारिःकुपितस्तदा
रणेनिपातयामासवायुःपर्णचयंयथा १६
शैलरोमाततोविष्णुंदैत्यःकोपादधावत
हरेरपिशरास्तस्यशरीरेशीर्णतांगताः १७
शैलरोमाचदैत्यारिशरीरंचाहनच्छरैः
हरिःखड्गंविनिर्धूयशिरस्तस्यजहारह १८
छिन्नेशिरसिदैत्यस्यकबंधोविक्रमन्रणे
शैलरोमाभुजाभ्यांचतार्क्ष्यंजग्राहपक्षयोः १९
शिरश्चोत्पत्यतरसाविलग्नंस्कंधयोर्दृढम्
ततस्तत्रास्ययुद्धेनहृषीकेशोऽपिविस्मितः २०
शिरःसंलग्नमालोक्यगरुडोन्यपतद्भुवि
पुनश्चोत्पत्यवेगेनशिरःस्थानंसमाश्रयत् २१
शैलरोमाततोविष्णुंजहारगरुडाद्बली
हरिर्जघ्नेतलेनाशुगतायुश्चापतद्भुवि २२
ततोजालंधरःसूतंखड्गरोमाणमब्रवीत्
संप्रेषयरथंतत्रयत्रदेवोजनार्दनः २३
जालंधरस्यवचनात्खड्गरोमानयद्रथम्
दृष्ट्वातंपुरतोविष्णुमुवाचार्णवनंदनः २४
निःशंकंजहिमांविष्णोनाहंत्वाहन्मिमाधव
तस्यतद्वचनंश्रुत्वाक्रोधसंरक्तलोचनः २५
नारायणःप्राणहरैःशरैरेनमपूरयत्
विष्णुनाचविभिन्नांगोऽणवसूनुःप्रतापवान् २६
हरिंसंपूरयामासमार्गणौघैर्निरंतरम्
नारायणःप्राणहरैःशरैरेनमपूरयत् २७
गरुडंपतितंदृष्ट्वासिंधुसूनोःशरैर्भुवि
रथंसंस्मारयामासवैकुंठस्थंजनार्दनः २८
सरथस्तस्यसंप्राप्तःसूतहीनोहयैर्वृतः

अश्वैर्युतंरथंदृष्ट्वाविस्मितोभगवान्रणे २९
संबोधयित्वागरुडंसारथ्येसमयोजयत्
सधृत्वामुकुटंमूर्ध्निकौस्तुभंहृदयेमणिम् ३०
पुरुषार्थान्हयान्कृत्वाययौजालंधरंहरिः
मेदिनींरथचक्रेणदारयंश्चसुरैःसह ३१
जघानतरसाबाणैर्दानवानांचवाहिनीम्
देवराजेनसंदिष्टोवीतिहोत्रोरणांगणे ३२
ददाहदानवानीकंसमीरणसमन्वितम्
तदाहतंभगवतादैत्यसैन्यंसुरैःसह ३३
जालंधरःस्वल्पशेषंदध्यौदृष्ट्वाबलंस्वकम्
अथाहभार्गवंराजामत्सैन्यंनिहतंसुरैः ३४
त्वयितिष्ठतिमंत्रज्ञेविख्यातोविद्ययाभवान्
किंतयाविद्ययाब्रह्मन्क्षत्रेणाथबलेनच ३५
यानरक्षतिरोगार्तान्यद्बलंशरणागतान्
जालंधरवचःश्रुत्वाभार्गवस्तमभाषत ३६
पश्यराजन्ममबलंब्राह्मणस्यरणांगणे
इत्युक्त्वावारिणास्पृष्टाहुंकारेणप्रबोधिताः ३७
उत्थापितास्तेकविनाशरौघैः प्राणहारकैः
देवाहतारणेपेतुःसमंतात्सिंधुसूनुना ३८
बाणैर्जर्जरदेहास्तेधृतप्राणानराधिप
नमृतास्त्वमरत्वाच्चबाणैर्भिन्नाश्चसत्तम ३९
ततोनारायणोदेवोबृहस्पतिमभाषत
धिग्बलंदैवतगुरोयोनजीवयसेसुरान् ४०
धिषणस्तुजगन्नाथमुवाचत्वरितंतदा
ओषधीभिरहंस्वामिन्जीवयिष्यामिनिर्जरान् ४१
इत्युक्त्वाधिषणःसोऽपिययौक्षीरार्णवस्थितम्
द्रोणमद्रिंतदागत्वासुखंगृह्यौषधीःस्वयम् ४२
गुरुस्तासांचयोगेनजीवयामासनिर्जरान्
उत्थितास्तेततोदेवाजघ्नुर्दानववाहिनीम् ४३
देवान्समुत्थितान्दृष्ट्वाबभाषेसिंधुजःकविम्

विनात्वद्विद्ययाकाव्यकथमेतेसमुत्थिताः ४४
इतिदैत्योक्तमाकर्ण्यशुक्रःप्राहार्णवात्मजम्
क्षीरसागरमध्यस्थोद्रोणोनाममहागिरिः ४५
औषध्यस्तत्रतिष्ठंतिजीवयंतिचयामृतान्
तत्रगत्वासुराचार्योगृहीत्वोषधिसंचयम् ४६
रणेविनिहतान्देवानुत्थापयतिमंत्रतः
भार्गवोक्तमथाकर्ण्यसैन्यभारंमहाबलः ४७
शुंभेनिक्षिप्यतरसाययौजालंधरोऽर्णवम्
अथप्रविष्टःक्षीराब्धौवेश्मदिव्यंमहाप्रभम् ४८
प्रविश्यतत्रक्षीराब्धेःक्रीडास्थानंददर्शसः
नोष्णोनशीतलोवायुर्नतमोयत्रदृश्यते ४९
यत्रगायंतिनृत्यंतिक्रीडंतिचवरस्त्रियः
सुपीनस्तनभाराढ्याःकृशोदर्यःसुदंतिकाः ५०
नेत्रविभ्रमविक्षेपैर्नितंबपरिवर्त्तनैः
अंगैःसंमोहनैरम्यैर्बाहुवल्लीविचालनैः ५१
पादविन्यासरणितैर्मधुरैर्वचनस्तवैः
सौगंध्यसौख्यदैर्वासैर्नेत्रभ्रमरहुंकृतैः ५२
चामरांदोललीलाभिःस्रग्भिःस्मितविलोकितैः
सेवांचक्रुर्विलासिन्यस्तत्रगत्वोदधेःसुतः ५३
क्रीडंतंतत्रदुग्धाब्धिंसंवीक्ष्यसमरोत्सुकः
अथाहप्रणिपत्यासौक्षीराब्धिंतातहंसिमाम्
द्रोणाचलौषधीर्व्याजादंबुभिःप्लावयस्वतः ५४
क्षीरसागरउवाच-
तंप्राप्तंशरणंपुत्रप्लावयाम्यूर्मिभिःकथम्
मुनींद्रास्तंनशंसंतियस्त्यजेच्छरणागतम् ५५
पितृव्यवचनंश्रुत्वासंक्रोधात्संततंगिरिम्
तलप्रहरणेनैवताडयामासदैत्यराट् ५६
ततोद्रोणगिरीराजन्भीतोजालंधराद्भृशम्
अथाजगामरूपेणप्राहजालंधरंप्रति ५७
तवाहमभवंदासोरक्षमांशरणागतम्

रसातलंमहाबाहोयास्यामितवशासनात् ५८
यावत्त्वंकुरुषेराज्यंतावत्स्थास्याम्यहंप्रभो
ओषधीनांविरावेणसिद्धानांरोदनेनच ५९
रसातलंजगामाद्रिःसिंधुसूनोःप्रपश्यतः
ततोजालंधरोवीरआजगाममहारणम् ६०
पूर्वकल्पितमारुह्यरथस्थंकेशवंययौ
रथस्थंमाधवंदृष्ट्वाजहासोच्चैर्नदीसुतः ६१
तावत्त्वंतिष्ठशकटेयावद्धन्यामरीनहम्
एवमुक्त्वाजघानाशुशरैस्तांदेववाहिनीम् ६२
बाणैर्विदारितादेवास्त्राहीत्यूचुर्बृहस्पतिम्
ततोबृहस्पतिःशीघ्रमगमत्क्षीरसागरम् ६३
अदृष्ट्वातंततोद्रोणमभूच्चिन्तापरोनृप
अथागत्यरणंतूर्णममरान्प्राहगीष्पतिः ६४
पलायध्वंसुराःसर्वेद्रोणाद्रिःक्षयमागतः
एवमुक्तवतस्तस्यगुरोश्चिच्छेदसिंधुजः ६५
यज्ञोपवीतंकेशांश्चबाणैस्तीक्ष्णैर्हसन्सुरान्
ततोदुद्राववेगेनगुरुः प्राणभयार्दितः ६६
देवाःसर्वेरणंहित्वापलायांचक्रिरेनृप
एवंविद्राव्यदेवान्वैजनार्द्दनमधावत ६७
हृषीकेशोऽपिदैत्येशमन्वधावद्रणोत्सुकः
ततोयुद्धमभूद्धोरंविष्णोर्जालंधरस्यच ६८
दुर्द्धर्षणोबाणजालैःप्लावयामासकेशवम्
तान्बाणान्खंडशःकृत्वापूरयित्वाशरैर्महान् ६९
वासुदेवोसुरंबाणैर्जालंधरमपीडयत्
जालंधरोरथंत्यक्त्वाशरपीडितविग्रहः ७०
विष्णुंविजेतुंदुद्रावसंयतिस्थमथद्रुतम्
तमायांतंरणेदृष्ट्वाहरिर्विव्याधसायकैः ७१
बाणानंगेसहद्विष्णोःप्राप्तोऽसौरथसंनिधौ
हस्तेनैकेनगरुडंद्वितीयेनरथंहरेः ७२
भ्रामयित्वांबरेशश्वत्श्वेतद्वीपेन्यपातयत्

जालंधरकरक्षिप्तोगरुडोऽपिपपातह ७३
क्रौंचद्वीपेसतत्रैवविश्राममकरोच्चिरम्
अच्युतः प्रच्युतस्तस्माद्भ्रमतोरथमंडलात् ७४
रणमागत्यदैत्येशंतिष्ठतिष्ठेत्यभाषत
दृष्ट्वातमागतंभूयःकेशवंसमरप्रियः ७५
पूरयन्मार्गणैर्भूमिंजगर्जार्णवनंदनः ७६
विव्याधदैत्यंहरिराशुशक्त्याहृदिस्फुरंत्यासततः पपात
सूतोनयत्तंसमरान्निवासंतंप्राहरेकेनकृतोस्म्यलज्जः ७७
दैत्यारिजालंधरयोर्महत्तदाबभूवयुद्धं धरणीतलस्थयोः
प्रेम्णाश्रियस्तंनजघानदानवंस्वयंहरिस्तस्यशरैःपपात ७८
ततोनिरीक्ष्यगोविंदंपतितंधरणीतले
प्रगृह्यार्णवजोदैत्यआरुरोहनिजंरथम्
ततस्तमिंदिराप्राप्तारुदंतीविष्णुवल्लभा ७९
संस्थिताकमलातत्रपतिंकमललोचनम्
पतितंतुपतिंवीक्ष्यलक्ष्मीःप्राहार्णवात्मजम् ८०
शृणुष्ववचनंभ्रातर्जितोविष्णुर्धृतस्त्वया
भगिन्यानचवैधव्यंदातुंयुक्तंमहाबल ८१
श्रुत्वातुवचनंतस्यामुमोचजगतःपतिम्
जालंधरोमहाबाहुःस्वस्रेभक्त्याननामच ८२
ववंदेचरणौविष्णोःस्वसुःस्नेहात्तदांजसा
विष्णुर्जालंधरंप्राहतुष्टोऽस्मितवकर्मणा
वरंवरयदैत्येशकिंप्रयच्छामितेवरम् ८३
जालंधरउवाच-
यदित्वंममतुष्टोऽसिशौर्येणानेनकेशव
स्थातव्यंमत्पितुःस्थानेत्वयाकमलयासह ८४
तथेत्युक्त्वाचसंस्मृत्यगरुडंधरणीधरः
आरुह्यचजगन्नाथःक्षीराब्धिंप्रिययासह ८५
तदाप्रभृतिकृष्णस्यवासःश्वशुरमंदिरे
अब्धौवसतिदेवेशोलक्ष्म्याःप्रियचिकीर्षया ८६
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहिता-

यामुत्तरखंडेयुधिष्ठिरनारदसंवादेसप्तमोऽध्यायः ७
अष्टमोऽध्यायः
युधिष्ठिरउवाच-
देवान्विक्लाव्यसमरेविष्णुंस्थाप्यात्ममंदिरे
जालंधरेणाब्धिजेनयत्कृतंब्रूहिनारद १
नारदउवाच-
शुंभादीनांतुवीराणांदत्त्वादानंप्रसादजम्
जालंधरोजगामाथस्वर्गंप्राप्यावलोकयत् २
हिरण्यवर्षेणजनान्भूषयंतंदिनेदिने
फलंतितरवोऽजस्रंवाजिमेधक्रतोःफलम् ३
गजवस्त्रसुवर्णानिधेनुकन्यातिलानिच
पुष्पकर्पूरतांबूलकस्तूरीकुंकुमानिच ४
येयच्छंतिमहात्मानस्तेपश्यंत्यमरावतीम्
वर्षासुगृहदानेनशिशिरेऽग्निप्रदानतः ५
वादित्राणिचसर्वाणिवादयंतिशिवालये
प्रपांकुर्वंतियेचैत्रेदध्योदनसमन्विताम् ६
यत्रहिंदोलपर्यंकंस्वयमांदोलयंतिच
सारिकाशुकहंसाश्चभ्रमद्भ्रमरकोकिलाः ७
कुर्वंतोदूतकार्याणियच्छंतेप्रियसंगमम्
रंभायत्रपुरेराममेनकाचतिलोत्तमा ८
सुषमासुंदरीयत्रघृताचीपुंजिकस्थली
सुकेशीसुमुखीरामामंजुघोषाचमालिनी ९
मृगोद्भवाचसुखदाधनदंष्ट्रातिलप्रभा
वाजिमेधफलग्राहाराजसूयफलंतियाः १०
कोटिशोयत्रनिःष्पापाःक्रीडंत्यप्सरसोनृप
एवंभूरिसुखेस्वर्गेस्थापयामाससिंधुजः ११
शुंभंप्राण समंदैत्यंनिशुंभंयुवराजके
स्वयंजालंधरेपीठेस्वर्गादागत्यसिंधुराट्
वर्षार्बुदद्वयंराज्यंचकारात्मबलेनच १२
युधिष्ठिरउवाच-

युयुधेऽसुरसंग्रामेससुरैरपराजितः १३
ततःकिमकरोद्राजासिंधुसूनुःप्रतापवान्
तन्ममाचक्ष्वदेवर्षेश्रोतुकामस्यविस्तरात् १४
नारदउवाच-
शृणुराजन्यथातथ्यंकृतसागरसूनुना
सदेवान्समरेजित्वाराज्यंचक्रेह्यकंटकम् १५
गंधर्वाश्चित्रसेनाद्याःसेवंतेचासुरेश्वरम्
यज्ञभागांश्चयोभुंक्तेसर्वेषामसुरेश्वरः १६
क्षीरसागरतोदेवैर्हृतंरत्नादिकंचयत्
तत्सर्वंचतथान्यच्चनिर्जित्यहृतवान्बली १७
समुद्रतनये राज्यंभुवोराजन्प्रशासति
नकश्चिन्म्रियतेमर्त्योनरकंकोऽपिनव्रजेत् १८
नकलिप्रणयादन्योनभोगादपरःक्षयः
नवंध्यादुर्भगानारीनालंकारैर्विवर्जिता १९
कुरूपादुर्गतादुष्टाऽयशस्यानचदृश्यते
नतत्रविधवानारीनकश्चिन्निर्द्धनोजनः २०
दातारःसंतिसर्वत्रनप्रतिग्राहिणःक्वचित्
पुण्याजनाःप्रयच्छंतिद्विजेभ्योह्यात्मनोधनम् २१
रूपयौवनशालिन्यःसीमंतिन्योगृहेगृहे
गोक्षीरंदधिसर्पिश्चयत्रनिर्जरसोजनाः २२
मंगलंतत्रसर्वेषांनक्वचिद्वधबंधनम्
शरेणनचहिंसास्तिनकश्चित्केनबाध्यते २३
ऋणंनदृश्यतेराजन्धनिनःसंतिसर्वतः
संतुष्टाःसर्वसस्याढ्याःप्रजाःसर्वत्रपार्थिव २४
केलीक्षुदंडप्रभवश्चदुग्धरसोऽतिसुस्वादुतरोगृहेनृणाम्
शुश्रावनारीनरयोर्हितंवचोनचापहर्ताध्वनिगच्छतांसदा २५
पतंत्यखंडानभसोयतस्ततोधाराश्चकर्मारविमिश्रसर्पिषः
संमिश्रिताःशर्करयापरिश्रुताःसमुद्रसूनोःस्मरणान्मुखेनृणाम् २६
इति श्रीपाद्मेमहापुराणेउत्तरखंडेपंचपंचाशत्सहस्र-
संहितायांयुधिष्ठिरनारदसम्वादेजालंधरसौराज्यवर्णनंनामाष्टमोऽध्यायः ८

## नवमोऽध्यायः

युधिष्ठिरउवाच-
इंद्रादिभिस्तदादेवैःकिंकृतंद्विजसत्तम
जालंधरेणविजितैःस्वर्गराज्येहृतेसति १
नारदउवाच-
अथत्यक्त्वादिवंदेवाःप्रापुस्तेदुर्दशांचिरम्
नपीयूषंनैवयज्ञाःययुःस्थानंस्वयंभुवः २
ददृशुर्ब्राह्मभुवनेब्रह्माणंपरमेष्ठिनम्
प्राणायामेनयुंजानंमनःस्वंपरमात्मनि ३
तेतुष्टुवुःसुराःसर्वेवाग्भिस्तथ्याभिरादृताः
ततःप्रसन्नोभगवान्किंकरोमीतिचाब्रवीत् ४
ततोनिवेदयांचक्रुःब्रह्मणेविबुधाः पुनः
जालंधरस्यसकलंतथानिजपराभवम् ५
क्षणंध्यात्वाययौब्रह्माकैलासंत्रिदशैः सह
तस्यशैलस्यपार्श्वेतेवैचित्र्येणसमाकुलाः
स्थिताःसंतुष्टुवुर्देवाब्रह्मशक्रपुरोगमाः ६
नमोभवायशर्वायनीलग्रीवायतेनमः
नमःस्थूलायसूक्ष्मायबहुरूपायतेनमः ७
इतिसर्वमुखोभूत्वावाणीमाकर्ण्यशंकरः
प्रोवाचनंदिनंदेवानानयस्वेतिसत्वरम् ८
श्रुत्वाशंभोर्वचोदेवाआहूतानंदिनाद्रुतम्
प्रविश्यांतःपुरेदेवाददृशुर्विस्मितेक्षणाः ९
तत्रासनेसमासीनंशंकरंलोकशंकरम्
गणैःकोटिसहस्रैस्तुसेवितंभक्तिशालिभिः १०
नग्नैर्विरूपैःकुटिलैर्जटिलैर्धूलिधूसरैः
प्रणिपत्याग्रतःप्राहसहदेवैःपितामहः ११
सुखरोगोयथास्यासीच्छक्रःसोऽयवृथागतः
कृपांकुरुमहादेवशरणागतवत्सल १२
ततउच्चैर्विभोर्हास्यंश्रुत्वाब्रह्मापिनाकिनः
उवाचदेवदेवेशंपश्यावस्थांदिवौकसाम् १३

ततःसर्वेश्वरोज्ञात्वाब्रह्मणोमनसेप्सितम्
शक्रस्यमानभंगंचदेवार्थेपरमेश्वरः १४
प्रेम्णाभवान्याविज्ञप्तोनृपप्राहवचोहरः
विष्णुनानहतोयोऽरि सकथंहन्यतेमया १५
पूर्वसृष्टान्यायुधानिवज्रादीनिपितामह
तैःशस्त्रैर्नैववध्योऽसौबलीजालंधरोऽसुरः १६
हेतिभिःपूर्वसंसृष्टैःसमयापिनहन्यते
देवाःकुर्वंतुशस्त्रंहिममप्राणसहंदृढम् १७
शंभोरित्युत्तरंश्रुत्वाब्रह्मोवाचाथशंकरम्
स्वयंकुरुमहाशस्त्रंत्वंवेत्थस्वात्मनोबलम् १८
इतितस्यवचःश्रुत्वाप्रत्युवाचमहेश्वरः
ब्रह्मन्विमुंचतेजस्त्वंक्रोधयुक्तंसुरैःसह १९
ततस्तेजोमुमोचाथब्रह्माब्रह्मास्त्रसूचकः
रुद्रस्त्रिनेत्रजंतेजस्ततोनिर्मुक्तवान्स्वयम् २०
देवाश्चमुमुचुःसर्वेसक्रोधंतेजसांचयम्
अत्रांतरेस्मृतःप्राप्तोहरेणमधुसूदनः २१
किंकरोमीतितेनोक्तःशिवःप्राहजनार्दनम्
विष्णोजालंधरःकस्मान्नहतःसंगरेत्वया २२
कथंसुरान्परित्यज्यक्षीराब्धिंशयितुंगतः २३
श्रीविष्णुरुवाच-
यदितंहन्मिदेवेशश्रीःकथंममवल्लभा
तस्मात्त्वंपार्वतीकांतजहिजालंधरंरणे २४
तेजस्त्वंक्रोधजंमुंचेत्यक्तःशर्वेणकेशवः
मुमोचवैष्णवंतेजःतत्सर्वंसमवर्द्धत
तेजःप्रवृद्धंतदृष्ट्वाव्यापकंप्राहकेशवम् २५
शंकरउवाच-
एतेनतेजसाशीघ्रंममास्त्रंकर्तुमर्हथ
विश्वकर्मादयस्तच्चश्रुत्वाशंकरभाषितम् २६
निरीक्ष्यचतदाऽन्योऽन्यकिंकुर्मइतिशंकिताः
दृष्ट्वातूष्णींस्थितांस्तांश्चज्ञात्वातन्मनसिस्थितम् २७

तदाहभगवान्ब्रह्माश्रनालोक्यंहिदैवतैः
सोढुंनशक्तास्तेतेजोधर्तुंकेनचशक्यते २८
ततःप्रहस्यभगवानुत्पत्योपरितेजसः
वामांघ्रिपाष्णिनाशंभुर्ननर्तभ्रमरीचयम् २९
ततोदेवामहेंद्राद्यास्तेजसोपरिशंकरम्
नृत्यमानंतदादृष्ट्वामुदावाद्यान्यवादयन् ३०
तदाप्रभृतिनृत्येषुभ्राम्यतेभ्रमरीचयम्
अथचक्रंसमुत्पन्नंशंभोर्नर्तनमर्दनात् ३१
आरलक्षत्रयोपेतंअस्थिकोटिसमाकुलम्
शर्वांघ्रिकषणात्तस्यतेजसोनिसृताःकणाः ३२
विश्वकर्माचतेनास्त्रंविमानानिचनिर्ममे
ततस्तेनिर्जराभीत्यादृष्ट्वाचक्रंसुदर्शनम् ३३
त्राहित्राहीतिदेवेशंप्रत्यूचुस्तेसुरान्नृप
पृथ्वीकाठिन्यमादायलोहानामपितेजसाम् ३४
यद्विश्वकर्मणाकोशंकृतंभस्मीकृतंचतत्
सृष्टेनतेनचक्रेणदग्धःकालोऽपतत्क्षितौ ३५
ततस्तद्ब्रह्मणोहस्तेददौचक्रंसधूर्जटिः
चक्रार्चिर्निचयैःकूर्चंदृष्ट्वादग्धमुमापतिः ३६
हसित्वाब्रह्मणोहस्ताद्गृहीत्वासत्वरंशिवः
दधौकक्षापुटेचक्रंनिधानंनिर्धनोयथा ३७
ततोनदृश्यतेचक्रंशिवकक्षापुटेस्थितम्
महामूर्खस्य यद्दत्तंदानंतस्यफलंयथा ३८

इति श्रीपाद्मेमहापुराणेउत्तरखंडेपंचपंचाशत्सहस्र
संहितायांयुधिष्ठिरनारदसंवादेजालंधरोपाख्यानेसर्व
देवतेजोमयचक्रोत्पत्तिर्नामनवमोऽध्यायः ९

दशमोऽध्यायः

नारदउवाच–
अत्रोत्तरेमयागत्वाकथितंसिंधुसूनवे
त्वांहंतुसर्ववीरेशप्रतिज्ञाशंभुनाकृता

श्रुत्वेत्थंमद्वचोराजंस्ततःपप्रच्छसोऽसुरः १
जालंधरउवाच-
किमस्तिशूलिनोगेहेरत्नजातंमहामुने
तन्ममाचद्दवसकलंनास्तियुद्धंनिरामिषम् २
नारदउवाच-
भूतिगार्त्रिवृषोजीर्णःफणिनोंऽगेगलेविषम्
भिक्षापात्रंकरेपुत्रौगजाननषडाननौ ३
इत्यादिविभवस्तस्ययदन्यत्तन्निबोधमे
तनयागिरिराजस्यविशालाह्युन्नतस्तनी ४
दग्धस्मरोऽपिभगवान्यस्यारूपेणमोहितः
महेशोयद्विनोदायकुरुतेनित्यकौतुकम् ५
नृत्यान्गायंश्चताञ्छंभुःस्वयंभवतिहासकः
सापार्वतीतिविख्यातासौंदर्यावधिदैवतम् ६
वृंदावरांगनाराजन्निमाश्चाप्सरसःशुभाः
नचाप्नुवंतिपार्वत्याःषोडशीमपितांकलाम् ७
इत्युक्त्वाहंमहीपालजालंधरममर्षणम्
पश्यतांसर्वदैत्यानामंतर्धानंगतःक्षणात् ८
अथसप्रेषयद्दूतंसिंधुजःसिंहिकासुतम्
क्षणेनासाद्यकैलासंदेवावासमपश्यत ९
अत्रांतरेहरिर्भीममापृच्छ्यतुतदाहरम्
जगामालक्षितस्तूर्णंक्षीराब्धिंभेदशंकया १०
ददर्शराहुर्भवनंशंकरस्यातिदीप्तिमत्
आत्मानमात्मनावीक्ष्यकिमित्याहासुविस्मितः ११
प्रवेष्टुकामोबलिभिर्द्वारिद्वास्थैर्निरोधितः
यत्नवान्सनिषिद्धोऽपितदातेप्रोद्यतायुधाः १२
तान्निवार्यगणान्नंदीव्याजहारविधुंतुदम्
कस्त्वंकस्मादिहायातःकिंकार्यंतवबर्बर
ब्रूहिकार्यंगणायावत्त्वांनहन्युर्भयावहाः १३
राहुरुवाच-
दूतोजालंधरस्याहंत्वंमांशर्वांतिकेनय

नवाच्यमंतरेद्वास्थमहाराजप्रयोजनम् १४
नंदीदूतोक्तमाकरार्यनीललोहितमाययौ
दंडवत्प्रणिपत्याग्रेस्थित्वाशंकरमब्रवीत् १५
सैंहिकेयोमहाराजद्वारेतिष्ठतिकार्यतः
सप्रयात्वथवायातुभवानाज्ञप्तुमर्हति १६
नंदिनोक्तमथाकरार्यत्वरन्निवमहेश्वरः
सुप्तामंतःपुराद्देवींप्रस्थाप्यचसखीवृताम् १७
पश्चाद्द्वास्थंजगादाथनंदिन्दूतंप्रवेशय
ततोहस्तेप्रगृह्यामुंदूतंनंदीमहाबलः १८
आनयामासदेवानांमध्येशंभुमदर्शयत्
तंददर्शतदाराहुर्जटिलंनीलमात्मनि १९
पंचवक्त्रंदशभुजंनागयज्ञोपवीतिनम्
देवीविरहितंमूर्ध्निचंद्रलेखाविभूषितम् २०
उच्छ्वासोच्छ्वासनिर्मुंचत्पृदाकुगणसेवितम्
सर्वदेवगणोपेतंसेवितंगणकोटिभिः २१
प्राप्तंज्ञात्वाततोदूतंशंभुरालोक्यचाग्रतः
प्राहब्रूहितदाराहुर्वक्तुंसमुपचक्रमे २२
राहुरुवाच-
देवजालंधरेणाहंप्रेषितस्तवसन्निधौ
तस्यशिववचःश्रुत्वामन्मुखेनद्रुतंकुरु २३
गिरिशत्वंतपोनिष्ठोनिर्गुणोधर्मवर्जितः
तवनास्तिपितामातावसुगोत्रादिवर्जितः २४
जालंधरोमहाबाहुर्भुंक्तेऽसौभुवनत्रयम्
तस्यैववश्यस्त्वमपिततश्चोक्तंसमाचर २५
पुराणपुरुषःकामीवृषारूढःकथंभवान्
एवंवदतिसंप्राप्तौसुतौस्कंदविनायकौ २६
तस्मिन्कालेदेवदेवोयतवागंगमर्दनम्
चकारचकरैर्व्यस्तैर्वासुकिर्भूतलेऽपतत् २७
हेरंबवाहनस्याखोःपुच्छंग्रस्तमथाहिना
स्वपत्रंग्रस्तमालोक्यमुंचमुंचेत्युवाचह २८

अत्रांतरेस्कंदवाहंक्षुब्धंवीक्ष्यमहास्वरम्
तद्भयाद्वासुकिर्ग्रस्तमाखुपुच्छमथोद्गिरत् २९
अथारुह्यहरस्यांगंगलमावेष्ट्यसंस्थितः
तस्यनिश्वासपवनैरथजातोहुताशनः ३०
तस्योष्मणाचंद्रलेखाजटाजूटाटवीस्थिता
सार्द्रतांतुतदासायात्प्लावितंतद्वपुर्यथा ३१
तस्याह्यमृतधाराभिर्ब्रह्ममस्तकमालिका
हरमौलिकपालानामभूत्संजीवितातदा ३२
पपाठपूर्वमभ्यस्तंसर्वयोगश्रुतिक्रमम्
श्रुत्वापरस्पराधीतंविवदंतिशिरांस्यथ ३३
अहमादिरहंपूर्वमहमेवपरात्परः
अहंस्त्रष्टाअहंपातेत्युत्सुकानिपरस्परम् ३४
शोचंत्येतानिनोदत्तंनोभुक्तंनहुतंमया
लोभग्रस्तेनमनसानोवित्तंब्रह्मणेऽपितम् ३५
अथेश्वरजटाजूटादाविरासीद्गणोमहान्
त्र्याननस्त्रिचरणस्त्रिपुच्छःसप्तहस्तवान् ३६
सचकीर्तिमुखोनामपिंगलोजटिलोमहान्
तंदृष्ट्वासाकपालालीभयात्तस्थौमृतेवसा ३७
पुरतःप्राहसगणस्ततःकीर्तिमुखःप्रभुम्
प्रणिपत्यशिवंदेवमत्यर्थंक्षुधितःप्रभो ३८
तदोक्तःशंकरेणाहोभक्षयत्वंरणेहतान्
क्षणंविचार्यसगणःक्वाप्यदृष्ट्वारणंतदा ३९
ब्रह्माणंभक्षितुंप्राप्तःशंकरेणनिवारितः
ततःकीर्तिमुखेनाथस्वांगंसर्वंचभक्षितम् ४०
बुभुक्षितेन चात्यंतंनिषिद्धेनचसर्वतः
तत्साहसंतदादृष्ट्वाभक्तिंकीर्त्तिमुखस्यच ४१
तमुवाचेश्वरःप्रीतप्रासादेतिष्ठमेसदा
त्वच्चित्तरहितोयश्चभविष्यतिममालये ४२
सपतिष्यतिशीघ्रंहीत्युक्तःसोंऽतर्हितोऽभवत्
शंभोर्मूर्ध्नितदादेवाववृषुः पुष्पवृष्टिभिः ४३

एवमत्यद्भुतंदृष्ट्वासभायांतुत्रिशूलिनः
स्वर्भानुरपिदेवेशंपुनःप्रोवाचविस्मितः ४४
स्पृशंतित्वांकथंभावंस्वाधीनंयोगिनंबलात्
इंद्रियैःपूज्यसेत्वंहिप्राप्योऽयविषयैःकथम् ४५
ब्राह्मादिलोकपालानांपूजांगृह्णासिसर्वतः
नत्वंपश्यसिकंदेवंत्वंपूजयसिकंचन ४६
ईश्वरोऽसिकथंलोकेभिक्षाभोजीप्रतिष्ठितः
संगोपयसियोगीन्द्रगौरीरम्यांप्रयच्छमे ४७
स्कंदलंबोदराभ्यांत्वंपुत्राभ्यांसहितोऽधुना
भिक्षापात्रंगृहीत्वातुभ्रमनित्यंगृहेगृहे ४८
एवंबहुविधंतत्रराहुराहेश्वरंप्रति
भगवानपितच्छ्रुत्वानोत्तरंकिंचिदब्रवीत् ४९
अथेशंमौनिनंत्यक्त्वाराहुर्नंदिनमब्रवीत्
त्वमंत्रीह्यसिसेनानीर्विकटाननबिंबधृक् ५०
एवमाचरितभ्रष्टंत्वंशिक्षयितुमर्हसि
नोचेद्रोषेणेंद्रइवपतिष्यतिरणेहतः ५१
इत्याकर्ण्यवचस्तस्यनंदीविज्ञाप्यचेश्वरम्
भ्रूसंज्ञयैवसतदामतमाज्ञायशूलिनः ५२
संपूज्यप्रेषयामासराहुंनंदीगणाग्रणीः
अथजालंधरंगत्वाकथयामासविस्तरात्
स्वर्भानुस्तस्यवृत्तांतंगौरीरूपंमनोहरम् ५३
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखण्डेयुधिष्ठरनारद-
सम्वादेजालंधरोपाख्यानेकैलासाद्राहुप्रत्यागमनंनामदशमोऽध्यायः १०

## एकादशोऽध्यायः

नारद उवाच-
अथजालंधरोदूतवचःश्रुत्वाप्रतापवान्
सर्वसैन्यंसमाहूयप्रयाणमकरोत्तदा
ततस्ततः समेतानांसैन्यानांश्रूयतेध्वनिः १
सस्त्रीन्मन्दरकंदरेषुशयितानुत्थायपन्किन्नरान्

मेरोर्मंदरकंदरेप्रतिरवानुत्थापयन्वारणान्
सिहानांचततीर्व्यमुंचतपुरःपंथानमेवंविधस्त्रै
लोक्यंबधिरीचकारमहतःसैन्यस्यकोलाहलः २
ततोदुंदुभिनादोऽभूत्पीठेजालंधरनृप
तन्निनादेनशूराणांप्रियेणमहतातदा ३
कंपंतिगिरयस्तुंगांप्रासादाविचलंतिच
सप्तसागरगर्भेभ्योनिःसृतादैत्यदानवाः ४
सन्नद्धाश्चातिगर्जंतिनानावाहनसंयुताः
हेषाययौमहानादावाजिनांबाह्यतःपुरः ५
रथांगेनाथसंहृष्टाधरांसंचलतेऽथवा
चालितैर्गजयूथैश्चपृथ्वीरुद्धासकानना ६
जालंधरेरितैर्भीमैरयुतैःस्यंदनस्थितैः
अश्वार्बुदसहस्रेद्वेअर्बुदंदंतिनामपि ७
रराज सैन्यलक्षैकंरथिनांसपताकिनाम्
परार्द्धनवतिःकोटयःदृश्यंतेमुख्यनायकाः
निर्जगाममहासैन्यंछत्रैःसंछाद्यभास्करम् ८
आसीत्पिंजरपांडुपंकजवनंश्वेतातपत्रैःक्वचित्
मायूरातपवारणैःक्वचिदभूतदुन्नीलनीलोत्पलम्
उन्मेघंक्वचिदूर्ध्वधूलिपटलैर्यस्यप्रयाणेऽभवत्
सद्वीचिक्वचिदंबरंसरइवोत्सर्पत्पताकापटैः ९
गजवाजीमयीभूमिर्ध्वजच्छत्रमयंनभः
दिक्चक्रंचामरमयंदैत्यसैन्येप्रसर्पति १०
ततोजालंधरोदैत्यःप्रयाणायसमुत्सुकः
स्कंधेचारोपयन्शक्तिंनानारत्नविभूषिताम् ११
आजगाममहाविष्णुप्रष्टुंसागरवासिनम्
अभिवाद्यजगादाथहरिंजालंधरस्त्विदम् १२
भोगार्थांकिंप्रयच्छामितुभ्यंभावुककथ्यताम्
श्रुत्वानारायणोवाक्यमब्धिजस्यमुदान्वितः १३
उवाचकिंकरोमीतिप्रियंसिंधुसुतेप्सितम्
इत्युक्तःसप्रहृष्टोऽथहरिंप्रोवाचसत्वरः १४

यामियोद्धुंरणेऽहत्वंसुखीतिष्ठेहसागरे
लक्ष्म्यादत्ताक्षतस्तत्रकेशवेनाथपूजितः १५
सनिर्गत्यहरेःस्थानात्समुद्रंप्रष्टुमागतः
सोऽरणवंप्रणिपत्याहतातयास्यामिदूरतः १६
नीलकंठंरणेजेतुमनुज्ञांदातुमर्हसि
प्रुत्रस्यवचनंश्रुत्वायियासोःशंकरंप्रति १७
सिंधुराजेनसोऽप्युक्तःपुत्रतंतापसंत्यज
भुंक्ष्वराज्यंमयादत्तंतापसंत्यजदूरतः १८
अत्यद्भुतःप्रतापस्तेत्वत्तुल्योनास्तिभूमिपः
स्वर्गादाधिक्यतांनीतंत्वयावत्सधरातलम् १९
तवराज्येवसुमतीवैकुंठइवराजते
योदेवोदुर्जयोदैत्यैरानीतःसहसश्रिया २०
ममांतिकंवत्सवसशंकरंभिक्षुकंत्यज
एवमुक्तोह्यर्णवेनगिरिजांप्रतिरागवान् २१
पितृवाक्यमविज्ञायआगत्यस्वभटान्स्वकान्
सज्जीभूतंतुयुद्धायवृंदाजालंधरंजगौ २२
वृंदोवाच
नाथयुद्धंनकर्तव्यंराजेंद्रकुत्सयोगिना
मनोनिवर्त्यतांपश्यप्रवृत्तंपार्वतींप्रति २३
गौरींत्वंवांछसिकस्मात्पार्वतीकिंममाधिका
तपस्विनीनिरालंबासंसक्तास्थाणवेसदा २४
सुतानुरागिणीवंध्याततःकृत्रिमपुत्रिका
वृथास्तुतानारदेनतांत्यजस्वभजस्वमाम् २५
इतिवृंदावचःश्रुत्वाप्रत्युवाचार्णवात्मजः
अदृष्ट्वापार्वतीरूपंमच्चेतोननिवर्तते २६
वृंदेत्वयाजनपदोराजधानीप्रपाल्यताम्
स्मर्तव्योऽहसदाचंडियदिमांहंतिशंकरः २७
इतिभर्तृवचःश्रुत्वावृंदाहाससमन्विता
जगामशिबिकारूढापीठंजालंधरंतदा २८
नारदउवाच–

अथप्रतस्थेकैलासंसिंधुसूनुर्महाबलः
महापद्मसहस्राणांषष्ट्यासैन्येनसंवृतः २९
अत्रांतरेपरित्यज्यकैलासंशंकरोगतः
गणपुत्रप्रियायुक्तःकैलासंमानसोत्तरम् ३०
जालंधरस्ततःप्राप्तःकैलासंप्रथमेऽहनि
सेनाःसंस्थाप्यकैलासआलोकनकुतूहली ३१
दिव्यकेसरमंदाररजःपुंजपरिश्रिताः
शीतांबुशीकरासारैःप्रभुग्नावांतिवायवः ३२
यत्रसिद्धांगनापीनस्तनोत्तुंगतरंगिणः
मंदारमकरंदाढ्याःसुंदरावांतिवायवः ३३
यत्राशोकरुचिस्निग्धपादन्यासंचयोषिताम्
विलोक्यदानवेंद्रोभून्मनोरथसमाकुलः ३४
प्राप्नुवंतिसुराःप्रीतिंस्वबिंबालोकहर्षिताः
यत्रकिन्नरकांतानांसुरतव्यंजितप्रभाः ३५
विभांतिसर्वतस्तत्रमंदाराःशीर्णपल्लवाः
यत्रशंभुगणाक्रांतानानावेलाकुलद्रुमाः ३६
भांतिमन्मथभूपालयशसासुधृताइव
यत्रचंदनकस्तूरीगंधोन्मत्तालिसंचयाः
विभांतिदग्धकंदर्प्पनिर्वाणांगारसन्निभाः ३७
यत्रांगनानांसकलंविलोक्यसौरभ्यमत्युत्तमकांतिमित्रम्
मन्येपरिष्वक्तमनोविनोदाकस्तूरिकागाहतिकालिमानम् ३८
क्वचित्प्रवरगैरिकासमसमुल्लसत्
पंकजंलवंगदलसन्निभासनचलच्चकोरंक्वचित्
क्वचिद्गिरिसरित्तटीतरणिवत्स्फुरत्कुंडलंचलन्निचुलमंजरीविनयनम्रभृंगंक्वचित् ३९
क्वचिद्दलितकोकिलाकुलितनूत्नचूतांकुरंकुरंगकुलसेवितंप्रबलशालिमूलंक्वचित्
क्वचित्प्रवरसुंदरैःसुरवधूपदैःपावनंवनंनयतिविक्रियामिहमनोमुनीनामपि ४०
एवंगुणसमायुक्तंविलोक्यहरमंदिरम्
विचित्रंचापिकैलासंसर्वरत्नसमाश्रयम् ४१

अत्यंतविस्मितोदैत्यःप्रोवाचभृगुनंदनम्
कस्मात्तंतापसंतातप्रवदंतिभवादृशाः ४२
तादृशीयस्यसाभार्यागृहमीदृङ्मनोहरम्
तत्रादृष्ट्वावदच्छंभुंहरःकुत्रगतःकवे ४३
कथंममभयाच्चेतिपृष्टःप्रोवाचभार्गवः
देवशंभुर्महाशैलमगम्यंमानसोत्तरम् ४४
ययौतत्रमहादेवोगंतुंचान्यैर्नशक्यते
इतिकाव्यवचःश्रुत्वाप्राहदैत्योमहाबलः ४५
जालंधरउवाच-
अहंयास्यामिदेवेशंत्वंपुरागच्छभार्गव
इत्युक्त्वाप्रययौतत्रयत्रास्तेशंकरःस्वयम् ४६
अपश्यत्तंगिरिवरंसिंधुजोमानसोत्तरम्
तस्यषष्टिसहस्राणियोजनानांसमुच्छ्रयः ४७
सशैलोमानसोराजन्दैत्यसैन्यैःसमावृतः
बहवोदैत्यराजानःशैलमारुरुहुर्द्रुतम् ४८
छत्रांधकारंपर्यासीत्वाद्यनादेनवेपथुः
सैन्यकोलाहलस्तेषांपूरयामासरोदसी ४९
नारदउवाच-
अथैवमागतंदृष्ट्वादैत्यसैन्यंमहत्तदा
अत्युच्चेसगिरेःशृंगेस्थाप्यगौरींसखीवृताम् ५०
भगवांश्चगणैःसर्वैःसन्नद्धैर्युद्धदुर्मदैः
त्रिंशन्महाब्जसाहस्त्रैःप्रमथानांवृतःशिवः ५१
उवाचनंदिनंशंभुर्गणानामधिपंत्वया
प्रहर्तव्योमहादैत्योवीरोजालंधरोरणे ५२
महाकालादिभिःशूरैर्याहित्वंपरिवारितः
तावदाजौत्वयातस्माद्योद्धव्यमतिपौरुषात् ५३
यावद्युद्धेनारिजयोममवीरभविष्यति
इतिशंभोर्वचःश्रुत्वासचसारथिमब्रवीत् ५४
काकतुंडरथंमेऽद्यसमानयमहामते
नंदिनोवचनंश्रुत्वासोपिस्यंदनमाहरत् ५५

द्वात्रिंशदश्वसंयुक्तंचक्रषोडशसंयुतम्
षष्टिध्वजसमोपेतंद्वात्रिंशद्योजनायुतम् ५६
सर्वशस्त्रैश्चसंपूर्णंप्राप्तंसांग्रामिकंरथम्
नंदिनश्चक्ररत्नार्थंपुत्रौस्कंदविनायकौ ५७
समादिष्टौशंकरेणसन्नद्धौतौस्ववाहनौ
गणैःपरिवृतोनंदीवाग्भिःसंपूज्यं चेश्वरम् ५८
नंदीरथंसमारुह्यनिर्ययौदानवान्प्रति
विराजतेतस्यमूर्ध्निछत्रंद्वादशयोजनम् ५९
यावत्सनिर्ययौनंदीतावत्तेदानवाःपुरः
शैलोपरिसमारूढादानवाघोरदर्शनाः ६०
गणानामायुधैस्तीक्ष्णैःनिहताःपतिताभुवि
हन्यमानागणैर्दैत्यास्तत्यजुर्दूरतोगिरिम् ६१
ततोधूमसमंतस्मादवरुह्यशिलोच्चयात्
जघ्नुर्दैत्यान्शितैःशस्त्रैर्गणाराजन्महाबलान् ६२
अमरैराचितंदृष्ट्वारुरुधुर्दैत्यसैनिकाः
ततःसमभवद्युद्धंगणानांदानवैःसह ६३
शरवर्षमथात्युग्रंदानवानांदिवौकसाम्
ततःसमस्तान्मातंगाञ्जघ्नुःशिखिमुखारणे ६४
रथान्हयान्पदातींश्चकाकतुंडामहाबलाः
हतानांदैत्यसंघानांसंगरेभृशमायिनाम् ६५
शिरोभिर्गगनंव्याप्तंप्रहसद्भिर्भयावहैः
मुक्तकेशारुणमुखैर्भीमदंष्ट्राविलोचनैः ६६
सिंहैःकबंधजंघोरुकटिपृष्ठनिकृंतनैः
चितासर्वत्रवसुधाकबंधैरुधिरारुणैः ६७
ततोविरावःसुमहान्बभूवदैत्येश्वराणांध्वजिनीषुधावताम्
शंभोर्गणैःपातितसैनिकानांयथार्णवानांनदतांयुगक्षये ६८

इतिश्रीपाद्मेमहापुराणेपंचाशत्सहस्रसंहितायामुत्तरखंडेनारदयुधिष्ठिर-
संवादेजालंधरोपाख्यानेदैत्यसैन्यपराजयोनामएकादशोऽध्यायः ११

द्वादशोऽध्यायः

नारदउवाच-

दैत्यसैन्यंहतंदृष्ट्वागर्णैर्नंदिपुरोगमैः
क्रुद्धाःशुंभादयोदैत्याःसमाजग्मुर्गणान्प्रति १
ततःशुंभोमहादैत्योनंदिनंप्रत्ययुध्यत
महाकालंनिशुंभोऽथकालोलोकेश्वरंरणे २
पुष्पदंतंशैलरोमामाल्यवंतंमहाबलः
कोलाहलोरणेराजन्प्राप्तोमायाबलेनच ३
चंडंभयानकोनामराहुःस्कंदमधावत
कूष्मांडंसर्परोमाचघर्घरोमदनंतथा ४
शुभंकेतुमुखोहंतुंययौजंभोविनायकम्
हासंपातालकेतुश्चभृंगीशंरोमकंटकः ५
युयुधुःकोटिशोरुद्रगणदैत्याःपरस्परम्
पश्यतोरुभयोस्तत्रस्वामिनोरितितेयुधि ६
दृढप्रहारिणोजघ्नुर्गणादैत्याःशरैरथ
नंदीमुमोचतान्बाणान्महासारोयथानगे ७
ततःसंपूरयामासमुखंशुंभस्यपत्रिभिः
यथापर्णचयैर्वातोमंदरस्येवकंदरम् ८
शुंभोऽथकार्मुकंत्यक्त्वारथात्तंप्रत्यधावत
उत्पाट्यचगिरिंतेनजघानहृदिनंदिनः ९
नंदिनोहृदयंभित्त्वाचूर्णयित्वारथंरणे
पपातभूमौसगिरिर्वज्रंप्राप्यगिरिंयथा १०
मूर्च्छांप्राप्यक्षणात्संज्ञांवेगवान्सपलायितः
महाकालोनिशुंभेनमुद्गरेणहतोहृदि ११
आगत्यदैत्यंगदयाजघानमुकुटोपरि
तत्प्रहारमचिंत्याथनिशुंभोऽपिमहाबलः १२
तंगृहीत्वाचरणयोर्महाकालंमहाबलः
भ्रामयित्वाकरतलाच्चिक्षेपचननादच १३
सतद्वक्त्रानिलंपीत्वाननादरुधिरारुणः
पुष्पदंतःशैलरोम्णाचाहतोमुष्टिनामुखे १४

गदयाशैलरोमाणंहत्वाभूमौन्यपातयत्
तंदृष्ट्वापतितंभूमौगिरिकेतुर्महाबलः १५
पुष्पदंतंमहाभीमंमुद्गरेणाव्यपोथयत्
पुष्पंदंतोऽथखड्गेनगिरिकेतोःशिरोऽछिनत् १६
गृहीत्वाचर्मखड्गंचगिरिकेतोरधावत
शिरस्तंप्राहकिंयासिमांत्यक्त्वासमरार्थिनम् १७
शिरोहीनेचकायेऽस्मिन्किंतुधावन्नलज्जसे
इत्युक्तेशिरसातेनकबंधेनतुपादयोः १८
विधृतःपुष्पदंतश्चकुद्धौतीद्दणासिनाच्छित्
निश्चक्रामासुरःकुद्धःशतशीर्षोमहाबलः १९
द्विशताद्मिसमायुक्तःशतद्वयभुजाकुलः
भ्रमत्तस्यशिरोराजन्कबंधोपांतमागमत् २०
तच्छिरःप्राप्तमालोक्यपुष्पदंतोऽसिनाच्छिनत्
ततोभूकंपनोनामज्वरोदैत्योभयावहः २१
पुष्पंदंतस्तदातत्रद्वाभ्यांराजन्विमर्दितः
ज्वरेणतेनचक्लिष्टोदुःसहेनातिवेगिना २२
त्यक्त्वाशिवगणःसंख्यंकंपमानोगिरिंययौ
कोलाहलोमहाधन्वीमाल्यवंतंशरैस्त्रिभिः २३
विव्याधस्कंधयोर्भालेमाल्यवांश्चततोऽसुरम्
बाणाहतोमाल्यवताशस्त्रैर्नानाविधैःशितैः २४
कोलाहलःप्रहृतवान्दर्शयन्नात्मलाघवम्
सोऽपिहेतिव्यथांत्यक्त्वामाल्यवांश्चगणाग्रणीः २५
गिरिंगृहीत्वातेनाजौकोलाहलमथाहनत्
निश्चक्रामज्वरस्तस्माज्ज्वलनोनामभीषणः २६
त्रिशीर्षोनवहस्तश्चनवपादोऽतिपिंगलः
सज्वरोमोहयामासमाल्यवंतंस्वतेजसा २७
माल्यवान्समरंत्यक्त्वापराक्रांतोगिरिंययौ
चंडिर्भयानकेनाजौपाशेनहृदयेहतः २८
हयोविनिर्गतस्तस्मात्द्विप्तःसोऽपिचसागरे
कार्त्तिकेयोरणेराहुंशितैर्बाणैःसमाहनत् २९

आच्छाद्यशरजालैश्चशीघ्रंशक्तिंमुमोचह
आपतंतींमहाशक्तिंज्वलंतीमिवतेजसा ३०
दृष्ट्वाराहुःखमुत्पत्यकराभ्यांजगृहेद्रुतम्
सतांशक्तिंगृहीत्वातुविनद्योच्चैः पुनः पुनः ३१
स्वर्भानुःशिरसोनोपितस्यशक्त्याजघानतम्
वक्षस्यभिहतेशक्त्यातद्देहान्निर्गतासरित् ३२
तयासंप्लावितःपुत्रोमहादेवस्यसंयुगे
कथंचित्सानदीरुद्धासमंपूरोगिरिंययौ ३३
श्रुत्वार्णवजोज्वरतःकटककदंबस्यकर्कशंविरुतम्
सुस्वरवचनविदग्धंतमपिचकोकिलापतिंनसस्मार ३४
शरैःकिरंतंदहनमसिनाबर्बरोऽवधीत्
कूष्मांडोनिहतोमूर्ध्निसर्परोम्णाथमुष्टिना ३५
पातालकेतुनाहासोमुद्गरेणसमाहतः
तस्यदेहाद्विनिष्क्रम्यहस्तीमुद्गरमाभुनक् ३६
शुंडायांमुष्टिघातेनहतःपातालकेतुना
आयुधैर्जर्जरंचक्रेभृंगीशंरोमकंटकः ३७
भृंगीशोऽपिरणाद्भीतस्त्वरन्नेवगिरिंययौ
सहसाधूम्रवर्णश्चशुभ्रःकेतुमुखेऽपतत् ३८
गणंगिलितवान्दैत्योमहाकायोमहाननः
हाहाकारोमहानासीद्गिलितेकेतुनारणे ३९
जृंभस्यनिशितैर्बाणैश्छिन्नांगोऽथविनायकः
शुंडादंडंपरशुनातस्यचिच्छेददंतिनः ४०
जृंभासुरोजघानाथशक्त्यालंबोदरोदरम्
मूषकोऽपिशरैर्भिन्नःप्रविवेशगुहामुखम् ४१
विनायकःप्रहारार्त्तोविललापाकुलोरणे
हामातस्तातहाभ्रातर्हामूषकममप्रिय ४२
गणेशक्रंदितंश्रुत्वाभगवत्यातयातदा
समेत्यकूटादन्यस्मात्पार्वत्योक्तःशिवस्तदा ४३
हेरंबोवध्यतेदैत्यैःस्कंदोऽपिविनिपातितः
शिवकिंक्रीडसेशैलेरक्षपुत्रौगणानपि ४४

सदाशूलादिशस्त्राणांधृतानामद्यवैक्षणः
अथगौर्यावचःश्रुत्वावीरभद्रंशिवोऽब्रवीत् ४५
वृषःसज्जीयतांशीघ्रमित्युक्तेसतदाकरोत्
बबंधमुकुटंतस्यशृंगयोर्भास्करप्रभम् ४६
कंठेघंटाशतंबद्धवाकर्णयोर्दर्पणौधृतौ
स्कंधेचकिंकिणीजालंचरणेनूपुरंमहत् ४७
पुच्छेचामरसाहस्रंतस्यपाशाष्टकंमुखे
कल्याणीचतदादेवीशर्वपार्श्वेव्यस्थिता ४८
पाशाष्टकेनसंयुक्तातत्रखड्गधरांबिका
न्यस्तानिसर्वशस्त्राणिसवृषःसज्जितोबभौ ४९
पार्वत्याभूषितःसोऽथनिजयाघंटमालया
कृतंचतिलकंदेव्याप्रोक्तःसत्कृतिपूर्वकम् ५०
हरस्त्वयानमोक्तव्योवृषेन्द्ररणसंकटे
आगंतव्यमरीन्जित्वाशंभुनासहसंगरे ५१
इतिश्रुत्वावचोदेव्याहरोवृषमथारुहत्
धृत्वायुधसहस्रंतुनिजालंकारभूषितः
रणंगच्छामितांप्राहपार्वतींप्रतिसादरम् ५२
ईश्वरउवाच–
त्वंतिष्ठसिस्वरूपाणिएकाकिन्यपिसस्पृहा
भामिनीदुरभिप्रायादानवाहिसमागताः ५३
तस्मात्त्वयात्मनैवात्मारक्षणीयोवरानने
इत्युक्त्वावृषभारूढोययौरुद्रोरणांगणम् ५४
त्रिंशन्महाब्जसाहस्रैःप्रमथानांवृतःशिवः
वीरभद्रोरथेनाशुसिंहयुक्तेनसत्वरः ५५
वामपार्श्वंमहेशस्यशूरोरक्षतिपार्थिव
मणिभद्रोऽश्वयुक्तेनरथेनपरवीरहा ५६
दक्षिणंधूर्जटेःपार्श्वंसंरक्षतिधनुर्द्धरः
तुंगादुत्तीर्यशैलेंद्राद्रणंप्राप्तोगणैःसह ५७
दृष्ट्वाजगर्जुस्तेदैत्यामहेशानंवृषस्थितम्
ततोमहान्निनादोऽभूद्दैत्यप्रमथसेनयोः ५८

तयोरभून्मिथोराजन्संप्रमर्दोऽथदारुणः
ततोनंदीमहाकालःकालस्कंदौमहाबलः ५६
माल्यवान्पुष्पदंतश्चवृषलीस्वर्णदंतिकः
चंडीशोमदनश्चंडःकूष्मांडोगुप्तलोमकः ६०
येयेपूर्वंरणेभग्नाःप्राप्तास्तेरणसंकटम्
शिवस्यपुरतोदैत्यायुयुधुस्तेमहाबलाः ६१
गणदानवयोधानांसंग्रामोऽभूद्भयावहः
ततोगणानांविद्राव्यसैन्यंतेचमहाबलाः ६२
रणेसंबेष्टयामासुःशरौघैःसर्वतः शिवम्
शूलैःकुंतैर्गदाभिश्चमुद्गरैःपरिघैरपि ६३
इंद्रियाणियथात्मानंविषयैःपंचपंचभिः
जघानाथरणेदैत्याञ्छंभुर्बाणैःसुदारुणैः
यथाशुमाघःपापानिहंतिस्नानेनतत्क्षणात् ६४

इतिश्रीपाद्मेमहापुराणेपंचपंचात्सहस्रसंहितायामुत्तरखराडेनारदयुधिष्ठिर-सम्वादे जालंधरोपाख्यानेश्रीमहादेवरणमागमनंनामद्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

नारदउवाच-
ततोजालंधरःश्रुत्वादैत्यकोलाहलंरणे
आजगामरथारूढोयत्रदेवःसदाशिवः १
सारथिंखड्गरोमाणंकोपात्सत्वरमब्रवीत्
संप्रेषयरथंशीघ्रंसहस्रहययोजितम् २
हन्मितंतापसंशौर्याज्जटाभस्मास्थिभूषितम्
वृषारूढस्यकाशक्तिःपंगोर्युद्धेमयासह ३
नारदउवाच-
इत्युक्त्वाखड्गरोमाणमाभाष्यचतथोद्धतः
गृहीत्वाकार्मुकंघोरंरथेनाधावतद्द्रुतम् ४
तंरुरोधतदायांतंवीरभद्रःशितैःशरैः
निरुच्छ्वासीकृतेनापिसकायेनशरैर्वृतः ५
देवैर्यद्यपितुल्योऽभूद्धूतेशस्यपरिग्रहः

तथापिकिंकपालानितुलांयांतिकलानिधेः ६
विव्याधमणिभद्रोऽपिशरैःसागरनंदनम्
पाशेनमणिभद्रंतुहत्वोवाचेश्वरंवचः ७
एहियोद्धुंमहादेवशस्त्राभ्यासोऽस्तितेयदि
त्वंमांप्रहरनत्वाहमादौहन्मिजटाधरम् ८
इतिब्रुवंतंतंगर्वाद्वीरभद्रोऽथसायकैः
पूरयामाससंक्रुद्धोयथापद्मंरविःकरैः ९
मणिभद्रोऽथगदयासैन्यंतस्यसमाहनत्
रथोपरिरथंवीरतुरगंतुरगोपरि १०
गजोपरिगजंहत्वापातयामासभूतले
रक्तपंकारुणाभूमिःसंजातादुर्गमाक्षणात् ११
शैलाद्यगणमुख्याश्चदानवाञ्जघ्नुराहवे
पतंतिदानवाःशूरागतप्राणामहीतले १२
रुंडदोर्दंडमुंडैश्चकरिपृष्ठकरोरुभिः
पतंतिदानवाःशूरापूरितावसुधानृप १३
नारदउवाच-
एवंविधंरणेदृष्ट्वाहरमत्यंतदुर्जयम्
भुवनेचतथान्यानिदृष्टवाँल्लक्षणानिसः १४
तेजोऽन्यदेवनक्षत्रशशांकसकलादिषु
उद्धाटितजगत्कोशमन्यदेवरवेर्महः १५
भग्नःपुनश्चिंतितवांस्ततोजालंधरोनृप
नदृष्टासामयागौरीयांमामाहातिनारदः १६
सांप्रतंशाश्वतेस्थानेकथंद्रक्ष्याम्युमांस्थिताम्
तांहिद्रष्टुंव्रजाम्यादौपश्चाद्योत्स्यामिशंभुना १७
चिंतयित्वेतिमनसादैत्यंप्राहार्णवात्मजः
शुंभंचंडजयेवीरममतुल्यपराक्रम १८
धृत्वामत्सदृशंरूपंसंग्रामंकर्तुमर्हसि
तवयुद्धस्यभारोऽयशिबिरस्यबलस्यच १९
अहंयास्यामितांद्रष्टुंगौरींमच्चित्तहारिणीम्
इत्युक्त्वाथददौतस्मैस्वांगादुत्तार्यमंडनम् २०

वर्मशस्त्रादिकंदत्वारथंसारथिसंयुतम्
दुर्वारणेनसहितःसैन्यंमुक्त्वोदधेःसुतः २१
अलक्षितस्ततोगत्वागुहांगुप्तांतुपार्थिव
मानसोत्तरशैलस्यहररूपंदधारसः २२
धृत्वादुर्वारणेरूपंनंदिनःसदृशंतथा
अथारुरुहतुःशैलंछद्मशंकरनंदिनौ २३
यत्रास्तिशिखरेगौरीसखिभिःसहितानृप
तमायांतंशरैर्भिन्नंस्कंधमालम्ब्यनंदिनः २४
रक्ताक्तमंबरंदृष्ट्वाभवानीविस्मिताभवत्
सख्यस्तस्याजयाद्यास्ताःजग्मुस्तंसंभ्रमान्विताः २५
शंकरस्यांतिकंगत्वापप्रच्छुस्तंसुदुःखिताः
किंजातंतवदेवेशकेनत्वंसंगरेजितः २६
सशल्यस्त्वंकथंनाथसंसारीवप्ररोदिषि
इत्युक्तःप्रददौताभ्योभूषणानिपृथक्पृथक् २७
उत्तार्यशनकैरंगात् वासुकिप्रभृतीनिच
गणेशस्कंदशिरसीच्छिन्नेकुक्षौविलोक्यच २८
हास्कंदहागणेशेतिहारुद्रेत्यंबिकारुदत्
तस्याःसख्यस्ततःसर्वारुरुदुःशोककर्शिताः २९
अत्राब्रवीज्जयांनंदीत्वमेनंपरिपालय
मणिभद्रोवीरभद्रःपुष्पदंतश्चवीर्यवान् ३०
दंभनोधूमतिमिरः कूष्मांडाद्यारणेहताः
चंडीभृंगीकिरीटिश्चमहाकालश्चशृंखली ३१
चंडीशोगुप्तनेत्रश्चकालाद्याश्चहतारणे
विनायकस्यस्कंदस्यशिरसीभ्रमतामया ३२
दृष्टेमहारणेदेविइत्युक्त्वाथपुरोक्षिपत्
तच्छ्रुत्वानंदिनोवाक्यंशिरसीगृह्यपुत्रयोः ३३
पार्वतीविललापोच्चैःपुत्रपुत्रेतिजल्पती
तारकारेकथंयुद्धेहतस्त्वंसिंधुसूनुना ३४
त्वंहित्रिवासरोदेवैःसेनापत्योऽभिषेचितः
तदात्वयाकथंवीरतारकाख्योनिपातितः ३५

नीलकंठेनकिंत्यक्तोयतस्त्वंपतितोभुवि
स्नुषामुखंनदृष्टंचमयापुत्रावभाग्यया ३६
नभोगावत्सतेभुक्तासंसारस्यापियेभवन्
तातहेरंबविघ्नेशलंबोदरगजानन ३७
रणांगणेकेनपुत्रसिद्धैःपूज्योनिपातितः
वाहनोऽसौकुतोवत्समूषकःकेनहिंसितः ३८
एवंविलपतीगौरीशिवंप्राहसुदुःखितम्
साक्षाद्रुद्रोऽसिदेवेशहरस्त्वंमाभयंकुरु ३९
वृषभःक्वगतोदेवहतोजालंधरेणवै
शरजर्जरदेहस्यकिंकरोमिप्रियंतव ४०
ततःश्रुत्वावचोदेव्यानिश्वस्योवाचशंकरः
दीर्घंविनिहतौपुत्रौवृथाशोचसिकिंप्रिये ४१
अधुनातेंगसंगेनदेविमांत्रातुमर्हसि
शंकरस्यवचःश्रुत्वाऽसमयोचितमातुरम्
प्रत्युवाचांबिकादेवंबभाषेनोचितंवचः ४२
महाविषादेपतितेभयेचकृतेसमाधौवमनेमहाज्वरे
श्राद्धेप्रयाणेगुरुवृद्धसन्निधौरतिंबुधाःशंकरवर्जयंति ४३
कथंमांदुःखदुःखार्तांपुत्रशोकेनपीडिताम्
म्लानांबाष्पपरिम्लानांसंप्रार्थयसिचातुराम् ४४
भवान्याइतिवाक्यानिश्रुत्वामायामहेश्वरः
उवाचस्वार्थमुद्दिश्यगौर्यारूपेणमोहितः ४५
पुरुषस्यार्तियुक्तस्यनयच्छंतिरतिंस्त्रियः
तथैवरौरवेघोरेपतिष्यतिनसंशयः ४६
गणशून्यःपुत्रशून्योधीशून्योऽहवरानने
सांप्रतंगृह्यशून्योऽहसर्वशून्योऽस्मिभामिनि ४७
सुजीवितंविहीनोऽहत्वांपष्टुमिहचागतः
स्वंगृहंतुप्रविश्याशुत्यजामिप्रकृतिंस्वकाम् ४८
उत्तिष्ठनंदिन्संयावस्तीर्थेभवपुरःसरः
त्वंयाहिस्वेच्छयाकांतेप्रकृतिंस्वांपरित्यज ४९
इतिमायामहेशस्यवचःश्रुत्वांबिकाततः

दीर्घंदध्योमहाश्वासंशोकेनचजडीकृता ५०
तस्यैवंपरमेक्षोभेकिंचिन्नोवाचसाक्षणम्
ययासंमोहितंसर्वंजगत्स्थावरजंगमम्
सैवसंमोहितातेननजानेदुःखमात्मनः ५१
इतिश्रीपाद्मेमहापुराणेपंचपंचाशतसहस्रसंहितायांउत्तरखण्डेयुधिष्ठिरनारद-
सम्वादेजालंधरमायामहेशागमनंनामत्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

युधिष्ठिरउवाच-
इतिमायामहेशेनमोहितागिरिजायदा
अतः किंसमभूद्ब्रह्मन्तन्ममाख्यातुमर्हसि १
नारदउवाच-
क्षीराब्धौतुशयानस्यचुक्षोभहृदयंहरेः
अकस्मादेवराजेंद्रनयनेऽश्रुपरिप्लुते २
दृष्ट्वातन्महदुत्पातलक्षणंभगवांस्ततः
उत्थायशेषपर्यंकान्मांचवायुंविलोक्यच ३
किंकार्यमितिगोविंदस्तन्नागारिमथास्मरत्
सचाग्रेस्मृतिमात्रेणतस्थौबद्धांजलिप्रभोः ४
विनतानंदनंदृष्ट्वापुरतःप्राहकेशवः
सुपर्णतत्रगच्छत्वंयत्रयुद्धंप्रवर्तते ५
हतोजालंधरोवीरोहरोवातेनमोहितः
दृष्ट्वातंशीघ्रमागत्यकथयस्वममाखिलम् ६
जालंधरेशयोर्युद्धंद्रष्टुंशक्तस्त्वमेवहि
कोऽन्योमहाहवेतस्मिन्ज्ञात्वायातिशरीरवान् ७
कदाचिद्दुर्गमंतत्रयुद्धंशस्त्रास्त्रवृष्टिभिः
अथत्वंबाणसंचारंगत्वापिहितविग्रहः ८
संदृष्ट्वापार्वतीवृत्तिंशीघ्रमायातुमर्हसि
दैत्यमायानिरासार्थंविचिंत्यभगवांस्त्वरन् ९
गुटिकांसर्वसिद्धांचगरुडायददौहरिः
अनयानभ्रमोवीरतथेत्युक्त्वामुखेक्षिपत् १०

एवंसंप्रेरितःपत्रीहरिंकृत्वाप्रदक्षिणम्
निश्चक्रामखमाविश्यजगामाद्भुतवेगवान् ११
तत्रगत्वारणंघोरंदैत्यसंघैःसदुःसहम्
दृष्टवानखिलेनासौनकिंचिज्ज्ञातवान्किल १२
तस्मादुत्पत्यवेगेनगतोऽसौमानसोत्तरम्
शैलंतुंगतरंदुर्गमगम्यंमरुतामपि १३
विलोकयन्नददृशेगौरीस्थानंपतंगराट्
तत्रागत्यभुजंगारिर्ध्वनिंसंश्रुतवान्किल १४
गत्वासमीपेददृशेमायापशुपतिंततः
गरुडोगुटिकांक्षिप्यमुखेनभ्रममापसः १५
ज्ञात्वाबुद्ध्वाथदैत्योऽयमितिनायंवृषध्वजः
हाकष्टमितिचोक्त्वाचरुदन्नागत्यचार्णवम् १६
कथयामासवृत्तांतंपुरतःकैटभद्विषः
देवजालंधरेणायंहरोदेवोविडंबितः १७
उमाप्रतारितातेनपापेनछद्मरूपिणा
सुरस्त्वंयदिगोविंदसमरंप्रतियाह्यतः १८
मायायुद्धंतुदेवेशकुरुजालंधरंप्रति
तस्यराज्ञीमयादृष्टापीठेजालंधरेशुभे १९
प्रासादभूम्यांक्रीडंतीवाद्यगीतादिवर्त्तनैः
सासुंदरतरागौर्यारंभोर्वश्योःशतादपि २०
नेदानींमानुषेलोकेनपातालेषुतत्समा
भार्यातेनसमावेश्यानारीणांकाकथाहरे २१
यस्तांस्पृशतिदेहेनसकृतार्थःपुमान्भवेत्
तवश्यालकपत्नीचहरत्वंतांरमप्रियाम्
शंकरस्योपकारंचकुरुचैवात्मनः सुखम् २२
नारदउवाच–
श्रुत्वाताद्र्यस्यवचनंतंनिर्भत्स्र्यरमाप्रियः
सम्यग्व्यवस्यचोपायंविससर्जद्रुतंद्विजम् २३
श्रियंपताार्य्यसंछाद्यमंचकेपीतवाससा
निर्गतोऽन्येनरूपेणयोगिमायाबलेनच २४

वृंदारिकानुरागेणमोहितोमधुसूदनः
दृष्ट्वाहरिंतुगच्छंतंप्रतिछन्नंयुधिष्ठिर २५
शेषोप्यन्यतमेनासौरूपेणागत्यकेशवम्
जगादभक्त्यात्वंतिष्ठममानुज्ञातुमर्हसि २६
किंकरोमिक्वगच्छामिब्रूहिकार्यंजनार्दन
सदातवमुखंदृष्ट्वाभोक्ष्यामीतिभवेत्सुखम् २७
श्रीभगवानुवाच-
जालंधरस्त्रियंरम्यांहरिष्येहरकारणात्
पार्वत्याश्चोपकारायसंछाद्यस्वात्मनस्तनुम् २८
एहियामोवयंबंधोकांतारंदुरतिक्रमम्
वृंदाकर्षणसिद्ध्यर्थमित्युक्त्वातौवनंगतौ २९
ततोविष्णुश्चशेषश्चजटावल्कलधारिणौ
आश्रमंचक्रतुःपुरायंसर्वकामफलप्रदम् ३०
तयोःशिष्याःप्रशिष्याश्चबभूवुःकामरूपिणः
सिंहव्याघ्रवराहाश्चऋक्षवानरमर्कटाः ३१
अथतस्मिन्वनेवृंदांमंत्रेणाकर्षयद्धरिः
तस्याहृदयसंतापंचकारमधुसूदनः ३२
एतस्मिन्नंतरेराज्ञीतापमुग्रमुपागता
चामरांश्चालयामासदिव्यस्त्रीकरचालितान् ३३
प्रियस्यागमनंतन्वींचिंतयंतीमुहुर्मुहुः
चंदनागुरुलिप्तांगीमूर्च्छांयातिहिसत्वरम् ३४
तुर्ययामेविभावर्यांश्चतुर्दश्यांनृपांगना
स्वप्नंददर्शभयदंवैधव्यभयसूचकम् ३५
जालंधरशिरःशुष्कंमर्दितंपांडुभस्मना
गृध्रेणकृष्टनयनंछिन्नकर्णाग्रनासिकम् ३६
मुक्तकेशीकरालास्याकृष्णवर्णारुणांबरा
चखादकालीरक्तास्याहस्तेविधृतखर्परा ३७
ईदृशंददृशेस्वप्नंतथात्मानंविडंबितम्
दैत्यक्षयगुणोपेतंसाददर्शनृपांगना ३८
ततःप्रबुद्धाऽसुरराजपत्नीगीतेनवाद्येनचमागधानाम्

गेयप्रबंधैःस्तवनैर्वचोभिर्वंशस्तवैः किंपुरुषप्रपाठितैः ३९
ततस्तान्सकलान्श्रांतान्धनं दत्वाप्रसादजम्
निवार्यविप्रानाहूयस्वप्नंदृष्टंन्यवेदयत्
तंस्वप्नंब्राह्मणाःश्रुत्वातामूचुःशास्त्रपारगाः ४०
द्विजाऊचुः –
देविदुःस्वप्नमत्युग्रमचिंत्यंभयदायकम्
देहिदानंद्विजातिभ्योह्यचिंत्यभयनाशकम् ४१
धेनुर्वासांसिरत्नानिगजांश्चाभरणानिच
ब्राह्मणाःपरिसंतुष्टाःसिषिचुस्तांनृपस्त्रियम् ४२
अभिषिक्तापिसावृंदाज्वरेणपरितप्यते
विसृज्यविप्रप्रवरान्प्रासादमगमत्तदा ४३
तत्रस्थितापिस्वपुरंददृशेदीप्तमंगला
ततःस्वकर्मणाराजन्नाकृष्टाहरिणातुसा ४४
नशशाकगृहेस्थातुंततोराज्ञीवनंययौ
रथमश्वतरीयुक्तंस्मरदूतीसखीवहम् ४५
समारुह्यक्षणात्तन्वीप्राप्तासौभाग्यकाननम्
नानावृक्षसमायुक्तंनानापक्षिगणान्वितम् ४६
पुष्पप्रस्रवणोपेतंस्वर्गनारीविभूषितम्
मंदानिलप्रवेशोऽस्तियत्रनान्यस्यकस्यचित् ४७
वनंवृंदारिकादृष्ट्वासस्मारपतिमात्मनः
कथंजालंधरंवीरंद्रक्ष्यामिप्राप्तमग्रतः ४८
सातत्रनसुखंलेभेविवेशान्यतमंवनम्
सखीरथसमायुक्ताविष्णुमायाविमोहिता ४९
ततोविलोकयामासविपिनंतरुसंकुलम्
उरुपाषाणसंरुद्धंकुरंगाक्षीभयावहम् ५०
सिंहव्याघ्रभयाकीर्णंशृगालव्यालसेवितम्
द्रुमैःस्पृशच्छिखाकाशैर्गुहासुध्वांतपूरितम् ५१
वनंविलोक्यसाभीमंचकिताचपलेक्षणा
स्मरदूतींसखींवृंदाजगादरथवाहिनीम्
रथंप्रेषयमेशीघ्रंस्मरदूतिगृहंप्रति ५२

स्मरदूतिरुवाच-
नाहंजानामिदिग्भागंनयामिक्वरथंसखि
श्रांताश्रश्व्यःप्रवर्ततेमार्गश्चात्रनविद्यते ५३
प्रेरितोदैवकेनापिस्यंदनोयातुयत्रच
अत्रकोपिचमांसादोभक्षयिष्यतिनान्यथा ५४
इत्युक्तासाद्रुततरारथंशीघ्रमवाहयत्
सरथोवेगतःप्राप्तोयत्रसिद्धामुदान्विताः ५५
तत्रसिद्धाश्चदृश्यंतेकाननंचभयावहम्
नयत्रप्रबलोवायुर्नशब्दःपक्षिणामपि ५६
नचतेजःप्रकाशोऽस्तिनजलंप्रदिशोदिशः
तत्रप्राप्तरथस्यापिलक्षणेऽभूद्विपर्ययः ५७
अश्वतर्योनहेषंतेनचशब्दश्चनेमिजः
नचलंतिपताकास्ताघंटिकानक्वणंतिच ५८
नस्वनंतिमहाघंटाध्वजस्तंभेनिवेशिताः
विलोक्यैवंविधंप्राहतत्रवृंदासखींप्रति ५९
स्मरदूतिक्वयास्यामोव्याघ्रसिंहभयंवनम्
नगृहेनसुखंराज्येममजातंवनेसखि ६०
स्मरदूतिरुवाच-
शृणुष्वदेविपश्यत्वंपुरःशैलोऽतिदारुणः
दृष्ट्वाग्रतोनगच्छंतितुरंग्योभयविह्वलाः ६१
तस्यास्तद्वचनंश्रुत्वासंत्रस्तासानृपांगना
दृष्ट्वाहारंस्वकंठस्थंस्यंदनाच्छीघ्रमुत्थिता ६२
एतस्मिन्नंतरेप्राप्तोराक्षसोभीषणाकृतिः
त्रिपादःपंचहस्तश्चसप्तनेत्रोऽतिदारुणः ६३
पिंगलोव्याघ्रकर्णश्चसिंहस्कंधस्तथाननः
विहंगेशसमाःकेशालंबंतेरुधिरारुणाः ६४
तंदृष्ट्वापद्मकोशांगीसहसासभयाभवत्
नेत्रेकराभ्यामाच्छाद्यचकंपेकदलीवसा ६५
प्रतिहारीप्रतोदंतुत्यक्त्वाराज्ञीमभाषत
भीतांमांत्राहिदेवित्वमयंधावतिभक्षितुम् ६६

एतस्मिन्नंतरेप्राप्तोराक्षसोरथसंनिधौ
रथमुत्क्षिप्यहस्तेनभ्रामयंश्चाश्विनीयुतम् ६७
साराज्ञीपतिताभूमौमृगीव्याघ्रभयादिव
स्मरदूतीतरोर्मूलेछिन्नाशोकलतायथा ६८
ततस्ताश्चाश्विनीः सर्वाः भक्षयामासराक्षसः
तेनराज्ञीधृताहस्तेसिंहेनैणवधूरिव ६९
तामुवाचततोरक्षः प्राणैस्तेकारणंयदि
तवभर्ताहतः संख्येहरेणेतिश्रुतंमया ७०
मामासाद्याद्यभर्तारंचिरंजीवाकुतोभया
पिबाथवारुणींस्वाद्वींमहामांससमन्विताम्
शृणवंतीतिवचोराज्ञीगतसत्वाइवाभवत् ७१
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तर
खंडेजालंधरोपाख्यानेश्रीमन्माधवमायाकथनंनामचतुर्दशोऽध्यायः १४

## पञ्चदशोऽध्यायः

नारदउवाच-
नारायणस्तदादेवोजटावल्कलधार्यथ
द्वितीयोऽनुचरस्तस्यह्यायऽयौफलहस्तवान् १
तौदृष्ट्वास्मरदूतीसाविललापमृगेक्षणा
तच्छ्रुत्वावचनंतस्याः प्रोचतुस्तांचतावुभौ २
भयंमागच्छकल्याणित्वामावांत्रातुमागतौ
वनेघोरेप्रविष्टासिकथंदुष्टनिषेविते ३
एवमाश्वास्यतांतन्वींराक्षसंप्राहमाधवः
मुंचेमामधमाचारमृद्वंगींचारुहासिनीम् ४
रेरेमूर्खदुराचारकिंकर्तुंत्वंव्यवस्थितः
सर्वस्वंलोकनेत्राणामाहारंकर्तुमुद्यतः ५
भवपुण्यप्रभावेयंहंस्येतांमंडनंभुवः
अद्यलोकंनिरालोकंकंदर्पदर्पवर्जितम् ६
करिष्यस्यधुनात्वंचहत्वावृंदारिकांवने
तस्मादिमांविमुंचाशुसुखप्रासाददेवताम् ७

इतिश्रुत्वाहरेर्वाक्यंराक्षसःकुपितोऽब्रवीत्
समर्थस्त्वंयदितदामोचयाद्यैवमत्करात् ८
इत्युक्तमात्रेवचनेमाधवेनक्रुधेक्षितः
पपातभस्मसाद्भूतस्त्यक्त्वावृंदांसुदूरतः ९
अथोवाचप्रमुग्धासामाययाजगदीशितुः
कस्त्वंकारुरायजलधिर्येनाहमिहरक्षिता १०
शारीरंमानसंदुःखंसतापंतपसांनिधे
त्वयामधुरयावाचाहृतंराक्षसनाशनात् ११
तवाश्रमेतपःसौम्यकरिष्यामितपोधन १२
तापस उवाच-
भरद्वाजात्मजश्चाहंदेवशर्मेतिविश्रुतः
विहायभोगानखिलान्वनंघोरमुपागतः १३
अनेनबटुनासार्धंममशिष्येणकामगाः
बहुशःसंतिचान्येऽपिमच्छिष्याःकामरूपिणः १४
त्वंचेन्ममाश्रमेस्थित्वाचिकीर्षसितपःशुभे
एहिराज्ञ्यपरंयामोवनंदूरस्थितंयतः १५
इत्युक्त्वाराजपत्नींतांययौप्राचींदिशंहरिः
वनंप्रेतपिशाचाढ्यंमंदगत्यानराधिप १६
वृंदारिकाश्रुपूर्णाक्षीतस्यपृष्ठानुगाययौ
स्मरदूतीचतत्पृष्ठेमांप्रतीक्षेतिवादिनी १७
अत्रांतरेदुराचारःकोपिपापाकृतिर्वने
जालंप्रसारयामासतद्यदाजीवपूरितम् १८
ततःसंकोचयामासतज्जालंपापनायकः
जालस्थांस्तुतदाजीवानुपाहृत्यमुमोचह १९
सचव्याधःस्त्रियौदृष्ट्वास्मरदूतीजगादताम्
देविमामत्तुमायातिकरेगृह्णातुमांसखी २०
वृंदातयोक्तंश्रुत्वैनंविकृतास्यंव्यलोकयत्
वीक्ष्यतंभयवातेननिर्धूतासिंधुजप्रिया २१
दुद्रावविकलंशुभ्रंस्मरदूत्यासमंवने
विद्रवंतीसमंसख्यातापसाश्रममागता २२

सातापसवनेतस्मिन्ददर्शात्यंतमद्भुतम्
पक्षिणःकांचनीयांगान्नानाशब्दसमाकुलान् २३
सापश्यद्धेमपद्माढ्यांवापींतुस्वर्णभूमिकाम्
क्षीरंवहंतिसरितःस्रवंतिमधुभूरुहः २४
शर्कराराशयस्तत्रमोदकानांचसंचयाः
भक्ष्याणिस्वादुसर्वाणिबहून्याभरणानिच २५
बहुशस्त्राणिदिव्यानिनभसःसंपतंतिच
क्रीडंतिहरयस्तृप्ताउत्पतंतिपतंतिच २६
मठेतिसुंदरंवृंदातंददर्शतपस्विनम्
व्याघ्रचर्मासनगतंभासयंतंजगत्त्रयम् २७
तमुवाचविभोपाहिपाहिपापर्द्धिकादथ
तपसाकिंचधर्मेणमौनेनचजपेनच २८
भीतत्राणात्परंनान्यत्पुण्यमस्तितपोधन
एवमुक्तवतीभीतासालसांगीतपस्विनम् २९
तावत्प्राप्तःसदुष्टात्मासर्वजीवप्रबंधकः
वृंदादेवीभयत्रस्ताहरिकंठेसमाश्लिषत् ३०
सुखस्पर्शभुजाभ्यांसाशोकवल्लीवलिगिता
तवालिगनभावेनपुनरेवभविष्यति ३१
शिरःसर्वांगसंपन्नंत्वद्भर्तुरधिकंगुणैः
अथत्वंप्रमदेगच्छपत्यर्थेचित्रशालिकाम् ३२
साचित्रशालामित्युक्ताविवेशमुनिनातदा
दिव्यपर्यंकमारूढागृह्यकांतस्यतच्छिरः ३३
चकाराधरपानंसामीलिताक्ष्यतिलोलुपा
यावत्तावदभूद्राजन्रूपंजालंधराकृति ३४
तत्कांतसदृशाकारस्तद्वक्षस्तद्वदुन्नतिः
तद्वाक्यस्तन्मनोभावस्तदासीज्जगदीश्वरः ३५
अथसंपूर्णकायंतंप्रियंवीक्ष्यजगादसा
तवकुर्वेप्रियंस्वामिन्ब्रूहित्वंस्वरणंचमे ३६
वृंदावचनमाकर्ण्यप्राहमायासमुद्रजः
शृणुदेवियथायुद्धंवृत्तंशंभोर्मयासह ३७

प्रियेरुद्रेणरौद्रेणछिन्नंचक्रेणमेशिरः
तावत्वत्सिद्धियोगाच्चत्वद्गतेनममात्मना ३८
छिन्नंतदत्रचानीतंजीवितंतेंगसंगतः
प्रियेत्वंमद्वियोगेनबालेजातासिदुःखिता ३९
त्तंतव्यंविप्रियंमह्यंयत्त्वांत्यक्त्वारणंगतः
इत्यादिवचनैस्तेनवृंदासंस्मारितातदा ४०
तांबूलैश्चविनोदैश्चवस्त्रालंकरणैःशुभैः
अथवृंदारिकादेवीसर्वभोगसमन्विता ४१
प्रियंगाढंसमालिग्यचुचुंबरतिलोलुपा
मोत्तादप्यधिकंसौख्यंवृंदामोहनसंभवम् ४२
मेनेनारायणोदेवोलत्त्मीप्रेमरसाधिकम्
वृंदांवियोगजंदुःखंविनोदयतिमाधवे ४३
तत्क्रीडाचारुविलसद्वापिकाराजहंसके
तद्रूपभावात्कृष्णोऽसौपद्मायांविगतस्पृहः ४४
अभूद्वृंदावनेतस्मिंस्तुलसीरूपधारिणी
वृंदांगस्वेदतोभूम्यांप्रादुर्भूतातिपावनी ४५
वृंदांगसंगजंचेदमनुभूयसुखंहरिः
दिनानिकतिचिन्मेनेशिवकार्यंजगत्पतिः ४६
एकदासुरतस्यांतेसास्वकंठेतपस्विनम्
वृंदाददर्शसंलग्नंद्विभुजंपुरुषोत्तमम् ४७
तंदृष्ट्वाप्राहसाकंठाद्विमुच्यभुजबंधनम्
कथंतापसरूपेणत्वंमांमोहितुमागतः ४८
निशम्यवचनंतस्याःसांत्वयन्प्राहतांहरिः
शृणुवृंदारिकेत्वंमांविद्धिलत्त्मीमनोहरम् ४९
तवभर्ताहरंजेतुंगौरीमानयितुंगतः
अहंशिवःशिवश्चाहंपृथक्त्वेनव्यवस्थितौ ५०
जालंधरोहतःसंख्येभजमामधुनानघे
नारदउवाच–
इतिविष्णोर्वचःश्रुत्वाविषराणवदनाभवत्
ततोवृंदारिकारजन्कुपिताप्रत्युवाचह ५१

रणेबद्धोऽसियेनत्वंजीवन्मुक्तःपितुर्गिरा
विविधैःसत्कृतोरत्नैर्युक्तंतस्यहृतावधूः ५२
पतिर्धर्मस्ययोनित्यंपरदाररतःकथम्
ईश्वरोऽपिकृतंभुंक्तेकर्मेत्याहुर्मनीषिणः ५३
अहंमोहंयथानीतात्वयामायातपस्विना
तथातववधूंमायातपस्वीकोऽपिनेष्यति ५४
इतिशप्तस्तथाविष्णुर्जगामादृश्यतांक्षणात्
साचित्रशालापर्यंकःसचतेऽथप्लवंगमाः ५५
नष्टंसर्वंहरौयातेवनंशून्यंविलोक्यसा
वृंदाप्राहसखींप्राप्यजिह्मंतद्विष्णुनाकृतम् ५६
त्यक्तंपुरंगतंराज्यंकांतःसंदेहतांगतः
अहंवनेविदित्वैतत्क्वयामिविधिनिर्मिता ५७
मनोरथानांविषयमभून्मेप्रियदर्शनम्
प्राहनिःश्वस्यचैवोष्णंराज्ञीवृंदातिदुःखिता ५८
ममप्राप्तंहिमरणंत्वयाहिस्मरदूतिके
इत्युक्तासातयाप्राहममत्वंप्राणरूपिणी ५९
तस्यास्तथोक्तमाकर्ण्यइतिकर्त्तव्यतांततः
वनेनिश्चित्यसावृंदागत्वातत्रमहत्सरः ६०
विहायदुःखमकरोद्गात्रक्षालनमंबुना
तीरेपद्मासनंबद्ध्वाकृत्वानिर्विषयंमनः ६१
शोषयामासदेहंस्वंविष्णुसंगेनदूषितम्
तपश्चचारसात्युग्रंनिराहारासखीसमम् ६२
गंधर्वलोकतोवृंदामथागत्याप्सरोगणः
प्राहयाहीतिकल्याणिस्वर्गंमात्यजविग्रहम् ६३
गांधर्वंशस्त्रमेतत्त्रिभुवनविजयंश्रीपतिस्तोषमग्र्यं
नीतोयेनेहवृंदेत्यजसिकथमिदंतद्वपुःप्राप्तकामम्
कांतंतेविद्धिशूलिप्रवरशरहतंपुण्यलाभस्यभूषास्वर्गस्यत्वं
भवाद्यद्रुतममरवनंचंडिभद्रेभजत्वम् ६४
श्रुत्वाशास्त्रंवधूनांजलधिजदयितावाक्यमाहप्रहस्य
स्वर्गादाहृत्यमुक्तात्रिदशपतिवधूश्चातिवीरेणपत्या

आदौपात्रंसुखानामहममरजिताप्रेयसातद्वियुक्तानिर्दुष्टातद्य
तिष्येप्रियममृतगतंप्राप्नुयांयेनचैव ६५
इत्युक्त्वाससखीवृंदाविससर्जाप्सरोगणान्
तत्प्रीतिपाशबद्धास्तानित्यमायांतियांतिच ६६
योगाभ्यासेनवृंदाथदग्ध्वाज्ञानाग्निनागुणान्
विषयेभ्यःसमाहृत्यमनःप्रापततःपरम् ६७
दृष्ट्वावृंदारिकांतत्रमहांतश्चाप्सरोगणाः
तुष्टुवुर्नभसस्तुष्टाबवृषुःपुष्पवृष्टिभिः ६८
शुष्ककाष्ठचयंकृत्वातत्रवृंदाकलेवरम्
निधायाग्निंचप्रज्वाल्यस्मरदूतीविवेशतम् ६९
दग्धंवृंदांगरजसांबिंबंतद्गोलकात्मकम्
कृत्वातद्भस्मनःशेषंमंदाकिन्यांविचिक्षिपुः ७०
यत्रवृंदापरित्यज्यदेहंब्रह्मपथंगता
आसीद्वृंदावनंतत्रगोवर्द्धनसमीपतः ७१
देव्योऽथस्वर्गमेत्यत्रिदशपतिवधूसत्त्वसंपत्तिमा
हुर्देवीभ्यस्तन्निशम्यप्रमुदितमनसोनिर्जराद्याश्चसर्वे
शर्त्रोर्दैत्यस्यहित्वाप्रबलतरभयंभीमभेर्योनिजघ्नुःश्रुत्वातत्रासनस्थः
परिजननिवहोवापशोभांशुभस्य ७२
इति श्रीपाद्मेमहापुराणेउत्तरखंडेपंचपंचाशतसहस्रसंहितायांजालंधरोपाख्याने
वृंदायाब्रह्मपदप्राप्तिर्नामपंचदशोऽध्यायः १५

## षोडशोऽध्यायः

युधिष्ठिर उवाच
कथंजालंधरोगौरींहररूपधरोमुने
दृष्ट्वाचकारकिंतत्रतन्मेकथयविस्तरात् १
नारदउवाच-
यदामायाशिवस्तत्रप्रार्थयद्गिरिजांप्रति
ततःसाचुक्षुभेराजन्किंचिन्नोवाचतंप्रति २
अनातुरस्यदेवस्यप्राप्तस्यतपसामया
नयुक्तमितिनिश्चित्यपार्वतीनाहतंनृप ३

सानतत्रप्रतीकारंदृष्ट्वातस्यचपश्यतः
निर्गताततउत्थायददर्शाकाशवाहिनीम् ४
गंगांवासोचितांमत्वाभवानीतपसेययौ
पुरापितपसालब्धोमयेशःसांप्रतंतथा ५
इत्यव्रजच्चिंतयतीसखीभिःसहितातातः
पुरःक्षीरनिभांराजन्पार्वतीगगनात्परम् ६
मंदाकिनींददर्शाथपतंतींमानसोत्तरे
हारमालामिवायांतींविविक्तांगगनस्रजः ७
मंदाकिन्याःपयःपूरोह्याकृष्टःस्वर्गतोयथा
श्रुतीनांपूरधारेवब्रह्मणोवदनच्युता ८
दृष्ट्वामुमोदतांगंगांस्नात्वाचालिसमन्विता
संपूज्यस्वतनुंपश्चान्निविष्टास्वर्णदीतटे ९
परस्परमथालोक्यगौरीप्राहसखींजयाम्
त्वंगच्छमद्वपुःकृत्वातत्समीपंसखीत्वरा १०
जानीहितत्त्वंकिंशंभुर्यदिवान्योभविष्यति
यद्यसौत्वांसमालिंग्यकुरुतेचुंबनादिकम् ११
तदामायांसमास्थायजानीह्यसुरमागतम्
यदिचेत्त्वांप्रतिब्रूयान्मन्निमित्तंशुभाशुभम् १२
असंशयंपिनाकीस्यादत्रागत्यब्रवीहिमाम्
इत्यादिष्टाजयादेव्यागतागंगाधरांतिकम् १३
तामायांतींसदृष्ट्वाचभृशंमन्मथपीडितः
चकारालिगनंतस्यागौरीरूपेणभावयन् १४
ततोजालंधरःसद्योवीर्यंस्वंप्रमुमोचह
अल्पेंद्रियश्चसंजातोवेगतःकुरुनंदन १५
तयासप्रोदितोदैत्यनत्वंरुद्रोभविष्यसि
अल्पवीर्योऽधमाचारोनाहंगौरीहितत्सखी १६
इत्युक्त्वानिजमास्थायरूपंसाप्राहतंपुनः
अनेनबतपापेनहतस्त्वंहिपिनाकिना १७
इतिज्ञात्वाचसाप्राप्तातत्रगत्वाब्रवीदुमाम्
देविजालंधरोह्येषनशंभुस्तववल्लभः १८

ततोभयार्ताहरवल्लभाभूद्द्रुतंविवेशाथसरोजमध्ये
सख्योभ्रमर्यःकमलेषुजाताभयेनजालंधरजेनराजन् १९
अत्रांतरेवनगतामदृष्ट्वातांनृपांगनाम्
भीतास्तुरक्षकास्तस्याःसत्वरंरणमाययुः २०
ततःशुंभेनतेपृष्टास्तंनत्वोचुःससाध्वसाः
आत्मनःपरिहारार्थोविष्णुमित्यसुरेश्वरम् २१
श्रुत्वावृंदांहृतांत्रस्तोरुद्रात्त्यक्त्वाथसंगरम्
शुंभेनप्रेषितौचंडमुंडौजालंधरंप्रति २२
मानसोत्तरमागत्यदानवौवेगवत्तरौ
हररूपधरंदैत्यंऊचतुर्विटपान्तरे २३
किंतयानृपशार्दूलविदेशगतयाश्रिया
अरयोयांनपश्यंतिबंधुभिर्यानभुज्यते २४
जितःशुंभोहतंसैन्यंदेवरुद्रेणतेरणे
एह्येहिकुरुसंग्रामंनत्वंप्राप्नोषिपार्वतीम् २५
पंचाननस्यमहिषींकथंप्राप्नोतिजंबुकः
अंधकारःकथंराजन्प्राप्नोतिसवितुःप्रभाम् २६
तवजालंधरात्पीठाद्धृताराज्ञीमुरारिणा
इतिसंश्रूयतेवार्तातस्मात्त्वंकुरुसंगरम् २७
रणेशर्वंविजित्याशुभवसर्वेश्वरेश्वरः
अथवाशिवनाराचैःखंडितोयासितत्पदम् २८
इतिजालंधरःश्रुत्वाभाषितंचंडमुंडयोः
निःससारगिरेस्तस्मात्सक्रोधंरक्तलोचनः २९
चंडमुंडौसमाश्वास्यत्यक्त्वारूपंहरस्यच
गच्छञ्जालंधरोमार्गेदुर्वारणमुवाचह ३०
पश्यदुर्वारणेदानींतत्रयद्विष्णुनाकृतम्
मायामाश्रित्यसाराज्ञीवृंदानीतात्मनःपदम् ३१
गृहेस्थितस्यजामातुर्विश्वसेन्नैवबुद्धिमान्
नूनंतस्मैप्रदत्वाचकन्यकांविसृजेद्बुधः ३२
जामातरंगृहेनैवस्थापयेत्सर्वथानरः
धनदारादिकंसर्वंसगृह्णातिशनैःशनैः ३३

दुर्वारणउवाच-
राजन्यत्क्रियतेकर्मतत्तथैवतुभुज्यते
त्वंहर्तुमागतोगौरींहरिणातेहृतावधूः
तस्यस्पष्टंवचःश्रुत्वाक्षणंमौनीव्यचिंतयत् ३४
जालंधरउवाच-
किंप्रयामिहरंजेतुमथवाहरिमुल्बणम्
कार्यद्वयेसमुत्पन्नेयत्परंतत्प्रकथ्यताम् ३५
दुर्वारणउवाच-
यदियासिहरिंजेतुंहरःपृष्ठेहनिष्यति
हनिष्यंतिरणेशूरायातुंरुद्रोनदास्यति ३६
तस्मात्पशुपतिंजित्वाकृत्वात्वंवश्यमात्मनः
पश्चात्प्रयाहिगोविंदंयदिजानासितत्पदम् ३७
अधुनासत्वरंवीरयाहिदैत्यान्महाबलान्
रणंकुरुमहाघोरंयथास्वर्गेसुपच्यते ३८
देशकालोचितंश्रुत्वादुर्वारणवचस्तदा
ययौजालंधरोयोद्धुंसहरुद्रेणयोगिना ३९

इति श्रीपाद्मेमहापुराणेउत्तरखंडेपंचपंचाशत्सहस्रसंहिता यांजालंधरोपाख्यानेजालंधरस्यमायारूपपरित्यागोनामषोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

नारदउवाच-
अथजालंधरोऽपश्यत्कबंधचयभीषणम्
रणंरुधिरमांसौघमज्जामेदोऽस्थिदुर्गमम् १
तत्रजालंधरोदैत्यःप्रियाहरणदुखितः
रणेविलोकयामासवृषस्थंपार्वतीपतिम् २
घोराहिभोगेनविभूषितांगंजटाकलापेशशिभूषणांकितम्
नेत्राग्निकीलोपरिशोभितांगंविनारणंसंप्रददर्शसिंधुजः ३
शीघ्रंस्वरथमारुह्यसमुद्रतनयस्तदा
संरुष्टःप्राहतंशुंभंतापसोनहतस्त्वया ४
प्राहजालंधरंशुंभस्तपस्तेनमहत्कृतम्

हंतुंनशक्यतेऽस्माभिर्हरःसंग्रामदुर्जयः ५
इतिशुंभोक्तमाकर्ण्यसिंधुजःक्रोधमूर्च्छितः
हरंपद्मसहस्रेणदैत्यसैन्येनसंवृतम् ६
गृहीत्वाकालकेदारंधनुर्जालंधरोययौ
बाणांस्तीक्ष्णानतिस्थूलान्लोहस्तंभान्तथाबहून् ७
मुमोचयुधिदुर्धर्षोवर्षन्मेघइवागमे
आयांतंरुरुधुःसिंधुसूनुंशंभुगणायुधि ८
ततोरुद्रेणरौद्रैश्चशरौघैस्ताडितोरुषा
रुद्रबाणैस्तदातस्यकवचंभुविपातितम् ९
विवर्मापिबभौसोऽथमेघमुक्तोयथाचलः
पुनर्जालंधरस्यांगंशंभुनाकीलितंशरैः १०
रुधिरंबहुसुस्रावजालंधरशरीरतः
तेनाशुरुधिरौघेणप्लाविताप्सकलामही ११
ततोदेवाभयंजग्मुर्दानवाश्चचकंपिरे
त्यक्त्वातेप्रमथावीरारणभूमिंप्रदुद्रुवुः १२
नद्याइवपरामूर्त्तिःप्रसृतासर्वतोऽपिच
अथाहार्णवजोरुद्रंधनुर्धरवरोह्यसि १३
इदानींतत्करिष्यामियेनगच्छसिसंक्षयम्
इत्युक्त्वाकालकेदारंसशरंप्रतिगृह्यतत् १४
शीघ्रंसंपूरयामासशरैर्नानाविधैःशिवम्
शिवःसहस्रकोटीभिःपूरितांगोरणेबभौ १५
विहंगमैर्यथाकाशंवृक्षैरिवमहागिरिः
दैत्यमुक्तैस्तुतैर्बाणैर्दृष्ट्वाव्याप्तंमहेश्वरम् १६
वीरभद्रस्तथाकोपाज्जालंधरमधावत
अपीडयदमेयात्मासमुद्रतनयंबली १७
जालंधरोऽथसंक्रुद्धोविध्यन्बाणैः सहस्रशः
धनुःशरान्रथंछत्रंसारथिंतिलशःशरैः १८
चकारवीरभद्रस्यसिंधुसूनुःप्रतापवान्
वीरभद्रोऽथविरथोहतवान्गदयाब्धिजम् १९
तथैवगदयासोऽपितंहत्वापातयद्भुवि

गदाप्रहारपतितमालोक्यातिविमूर्च्छितम् २०
मणिभद्रोऽथसमरेजालंधरमधावत
अतिक्रुद्धंतमायांतंदृष्ट्वादैत्योमहारणे २१
शरैर्व्यस्तोपकरणंसचकारनदीसुतः
अथमूर्च्छांपरित्यज्यउत्तस्थौसिंहवन्नदन् २२
वीरभद्रस्ततःकोपान्मणिभद्रःप्रतापवान्
जघ्नतुःपर्वताभ्यांतौव्योमस्थंतटिनीसुतम् २३
तदंगेपतितौदृष्ट्वापर्वतौविनिनद्यच
जघानमुष्टिपातेनवीरभद्रोनदीसुतम् २४
मणिभद्रश्चरणयोर्धृत्वासागरनंदनम्
स्यंदनाद्भ्रामयामासतदद्भुतमिवाभवत् २५
मणिभद्रगृहीतोऽपिदैत्यराट्समहाबलः
हत्वाचरणघातेनमणिभद्रमपातयत् २६
जालंधरोमहाबाहुर्वीरभद्रंचमुष्टिना
अथागतःपरव्तोगणैर्वैनंदिकेश्वरः २७
शुंभस्तमागतंदृष्ट्वारुरोधसहसैनिकैः
द्वंद्वयुद्धैरथाजग्मुर्गणादैत्यैःपरस्परम् २८
शुंभःशिलादजंराहुर्महाकालंरणेययौ
कोलाहलंनिशुंभोऽथकेतुःकालमधावत २९
शैलोदरोगुहंजंभोमाल्यवंतंमहाबलः
महापार्श्वोययौचंडंचंडीशोरोमकंटकम् ३०
विकटास्योऽथवैभृंगिमुरुनेत्रोविनायकम्
एवंदैत्येश्वरैःसार्द्धंगणानामधिपाययुः ३१
अथशुंभायुधैर्बाणैःप्रहतश्चशिलादजः
चूर्णीचकाराद्रिशृंगैःकपितुंडोमहत्तरैः ३२
शुंभस्तेनार्दितःशक्त्याशिलादंचजघानतम्
महाकालोजघानाथतंराहुंरणमूर्द्धनि ३३
शक्त्याथतस्यहतवान्स्यंदनंसमहाद्रिणा
कोलाहलोहतःशक्त्यानिशुंभेनप्रतापवान् ३४
शक्तिंगृहीत्वाह्यहनद्रथंसारथिनासह

विरथेनाथदैत्येनभृशंक्रुद्धेनसंयुगे ३५
कोलाहलोसुरेंद्रेणसहस्रफणिनाहतः
तंहत्वाचातिवेगेनरथंचान्यमुपागतः ३६
फणिचक्रहतःसंख्येक्षणान्मूर्च्छांविहायच
स्वरथात्शीघ्रमुत्तीर्यगृहीत्वाखड्गचर्मणी ३७
सर्वंचक्रेनिशुंभस्यसरथाद्यसिनापृथक्
पुनःस्वरथमारुह्यदैत्यंबाणैरताडयत् ३८
निशुंभोऽप्यतिरोषाच्चतत्पराक्रमविस्मितः
शक्त्यामहाबलस्तस्यरथंसाश्वंन्यषूदयत् ३९
कोलाहलोरणेधावन्निशुंभंविरथोबली
गतःससरथंचक्रेविरथंभुजबंधनात् ४०
केतुपुच्छंगृहीत्वाचभ्रामयामासचांबरे
कालश्चिक्षेपसोऽप्यद्रिंसचिच्छेदगिरिंजवात् ४१
तंनगंचूर्णितंदृष्ट्वाताडयामासमुष्टिना
कालश्चूर्णितसर्वांगःकेतुनाप्राद्रवद्भयात् ४२
शैलोदरस्तथास्कंदंजघानगदयोरसि
षडाननोऽपितंशक्त्याहत्वाभूमावपातयत् ४३
शक्तिप्रहारेणमृतंदानवंवीक्ष्यषरामुखः
जगर्जतत्रवैचित्र्यंयथाक्रौंचेविदारिते ४४
माल्यवानथबाणौघैर्जंभमभ्यर्दयद्रणे
जंभोऽपिसायकैस्तीक्ष्णैर्भित्त्वातंमूर्च्छितंजहौ ४५
महापार्श्वोरथंधृत्वाबाणौघैर्वाजिवर्जितम्
लीलयैवचखेनीत्वाव्यश्वंचंडमपातयत् ४६
व्यश्वंरथंविलोक्याथततश्चंडोऽग्रहीद्गजम्
आपतंतंमहापार्श्वंचंडस्तंगदयाहनत् ४७
अचिंत्यैवगदापातंसोऽसुरोभृशदारुणः
प्रहत्यमुष्टिनाचंडंपातयामासभूतले ४८
चंडीशशस्त्राभिहतोरोमकंठोमहासुरः
चंडीशंपादयोर्धृत्वारथमूर्ध्निन्यपातयत् ४९
पपातसहसाभूमौययौतंभीषणेक्षणः

उरुनेत्रेणसमरेहतोलंबोदरःशरैः ५०
दंतेनोरसितंहत्वापातयामासभूतले
ऊरुनेत्रःक्षणाच्छांतिमागत्याशुरथंक्षणात् ५१
जघानमुद्गरेणासौमूर्ध्निसिंदूरमंडिते
गणेश्वरःपट्टिशेनजघानोरसिदानवम् ५२
तन्मुखादथनिष्क्रांतोनवशीर्षोऽसुरोमहान्
अष्टादशभुजोराजन्सोऽप्यधावतशांकरिम् ५३
नवशीर्षोरुनेत्राभ्यांरणेरुद्धोविनायकः
जर्जरीकृतदेहोऽपिजग्राहपरशुंरुषा ५४
तेनचिच्छेदशस्त्राणितयोराजौगणेश्वरः
रुद्धंगणेश्वरंदृष्ट्वाताभ्यांसंख्येऽथषण्मुखः ५५
शीघ्रमागत्यसेनानीर्जघाननवशीर्षकम्
नवशीर्षंरणेहत्वाउरुनेत्रमधावत ५६
स्कंदःस्वशक्तिघातेनपातयामासतंनृप
पश्यञ्जालंधरःस्कंदंययोसैन्येनसंवृतः ५७
पुत्रप्रीत्यासुरान्हंतुंसगणःशंकरोऽपिच
ततोघोरतरंयुद्धमभूदद्भुतसैन्ययोः ५८
हरसिंधुजयोर्युद्धेगतप्राणेवरोदसी
अथजालंधरःक्रुद्धोबाणंसंधायदारुणम् ५९
सहस्रशतसंख्याकैःपत्रैःसर्वत्रभूषितम्
दैत्येंद्रस्तेनबाणेनललाटेताडयच्छिवम् ६०
ममज्जापुंखमर्यादंललाटेशंकरस्यच
भालेशशांकवच्छंभोःसरराजमहाप्रभः ६१
यथादित्योहिघर्मांतेसंध्याकालेंबुदागमे
अथरुद्रोमहाबाणंजग्राहज्वलनोपमम् ६२
यस्यवेगेतुपवनःफलेयस्याग्निभास्करौ
कालोग्रंथिषुसर्वेषुशरेदेवीधरास्थिता ६३
हरस्तेनशरेणाशुविव्याधहृदिसिंधुजम्
तेनबाणप्रहारेणरुधिरौघपरिप्लुतः ६४
पपातशरभिन्नांगोवज्राहतइवाचलः

तदादैत्याःसमाक्रंदन्जगर्जुःप्रमथास्तथा ६५
सिंधुजंमूर्छितंदृष्ट्वारुरुधुर्दानवाःशिवम्
रक्षार्थमुद्यताःकेचित्केचित्तंपरितःस्थिताः ६६
यावज्जालंधरोमूर्छांप्राप्तोवारिधिनंदनः
तावद्रुद्रेणनाराचैर्हताजालंधरीचमूः ६७
चिराज्जालंधरस्त्यक्त्वामूर्छांसैन्यंहतंनृप
दृष्ट्वाभयान्वितःसेनांविकीर्णांचतथारणे ६८
ततःकाव्यंससस्मारमनसापरमंगुरुम्
स्मृतस्तेनत्वरन्प्राप्तःकविर्जालंधरंप्रति ६९
स्वस्तिकृत्वाजगादाथभार्गवःसिंधुनंदनम्
किंकरोमिमहाराजतवकार्यंमहाबल ७०
नारदउवाच-
इतिकाव्यवचःश्रुत्वाभार्गवंबहुमानयन्
नत्वागुरुमुवाचाथराजाजालंधरस्तथा ७१
राजोवाच-
जीवयैतान्मृताञ्छक्रदैत्यान्सर्वान्समंततः
इत्युक्तःसिंधुजेनाजौसैन्यंतत्रव्यलोकयत् ७२
पंचविंशत्सहस्राणियोजनानांप्रमाणतः
दैत्यांगरथसंकीर्णमुपर्युपरिपार्थिव ७३
उच्छ्रयेपंचनवतियोजनानांमहींचिताम्
योधवाहनदेहाद्यैरिवपूर्णांधरांततः ७४
मंत्रोदकेनचाभ्युक्ष्यदैत्यानुत्थापयत्कविः
यावद्रुद्रोजटाजूटंबबंधभुजगैर्दृढम् ७५
तावत्काव्येनतत्सैन्यंमंत्रेणोत्थापितंनृप
व्याघ्रान्यथाकेसरिणोगजेंद्राःशूकरान्यथा ७६
आगतान्दानवान्दृष्ट्वाचिंतयामासशंकरः
किमेतदिहसंजातंमृतान्सृजतिकुत्रचित् ७७
ददर्शचिंतयन्काव्यइतितस्मिन्रणेभवः
जीवयंतंरणेदैत्यान्धावंतंवेगवत्तरम् ७८
ततःक्रुद्धोमहादेवःशुक्रंहंतुंमनोदधे

त्रिशूलिनमनुज्ञायरहश्चोवाचतंकविः ७९
ब्राह्मणोऽहकथंहंसिसर्वविद्याविशारदम्
ब्रह्महत्यामयिहतेतवरुद्रभविष्यति ८०
इतिश्रुत्वाकवेर्वाक्यंशूलंतत्याजशंकरः
स्मृत्वातत्पूर्ववृत्तांतंयल्लग्नंब्रह्मणःशिरः ८१
ब्राह्मणोनहिहंतव्योहरन्प्राणानपिप्रियान्
अयंतुजीवयन्दैत्यान्निग्राह्यःसर्वथामया ८२
तस्मादेनंक्षिपाम्याशुस्त्रीयोनौदैत्यजीवनम्
एवमुक्तवतःशंभोस्तृतीयनयनाद्द्रुतम् ८३
कृत्याविवासाचात्युग्रामुक्तकेशीमहोदरा
स्थूललंबस्तनीयोनीदंष्ट्रालोचनभीषणा ८४
आज्ञापयेतिसतयाप्रोक्तस्तामब्रवीच्छिवः
कृत्येत्वंदानवाचार्यंस्वयोनौक्षिपदुर्मतिम् ८५
यावज्जालंधरंहन्मितावदेनंभगेवह
हतेजालंधरेदैत्येपश्चान्निस्तीर्यमोचय ८६
हरेणोक्तेतिसाकृत्याभार्गवंसमधावत
पपातभूमौतांदृष्ट्वाकविर्दैत्याःप्रदुद्रुवुः ८७
केशेष्वाकृष्यधुन्वानानग्नमालिग्यभार्गवम्
योनौदधारसाकृत्याहसंतीजयनंदन ८८
भगेक्षिप्तंगुरुंदृष्ट्वायावज्जालंधरोऽसुरः
संदधेमार्गणांस्तावत्साकृत्यादृश्यतांगता ८९

इति श्रीपाद्मेमहापुराणेपंचपंचाशतसहस्रसंहितायांयुधिष्ठिरनारद सम्वादे जालंधरोपाख्याने शुक्रयोनिप्रवेशोनामसप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

श्रीनारदउवाच–
अथजालंधरःप्राहरक्षात्मानमितःशिवम्
शिवाद्यत्वांक्षिपाम्याशुयत्रास्तेमधुसूदनः १
पश्चाद्ब्रह्माणमाकृष्यपातयिष्यामिसागरे
धृतेषुयुष्मासुयदातदासर्वेश्वरोह्यहम् २

इत्युक्त्वासैन्यसंभारंन्यस्यशुंभासुरादिषु
भटैर्गुप्तंनिशुंभाद्यैश्चतुरंगमनंतकम् ३
शुंभोनिशुंभःफेंकारोफेरुंडोधूम्रलोचनः
केतुर्बिडालजंघश्चराहुर्दुर्वारणोयमः ४
कालासुरोऽथलवणोभूमिरेतोंधकासुरः
रक्तवीर्यादयश्चंडीचामुंडीदैत्यपुंगवाः ५
सर्वानिवोद्यतान्दृष्ट्वासंख्येदानवपुंगवान्
रुरुधुःसमरेराजन्वीरभद्रादयोगणाः ६
ततोयुद्धमभूद्घोरंतुमुलंलोमहर्षणम्
पतंतिप्रथमायत्रदैत्याश्चापिक्षतातुराः ७
अथशुंभादिभिर्दैत्यैःसर्वशस्त्रैर्महामृधे
हताःपेतुर्गणाश्चान्येपलायांचक्रिरेनृप ८
गणान्विजित्यसमरेरुरुधुर्दानवाःशिवम्
वर्षंतःशरधाराभिर्घनामेरुगिरिंयथा ९
ततःपिनाकमाकृष्यवृषभोपरिभैरवः
जघानबाणनिवहैर्दानवान्समरांगणे
तीक्ष्णाग्रैस्तुक्षुरप्रौघैर्दानवानहनद्बली १०
केचिन्नंदिप्रहारेणपेतुःसंग्राममूर्धनि
बाणैश्चजर्जरान्कृत्वाशुंभादीन्वृषभध्वजः ११
शेषंसैन्यंजघानाशुशस्त्रास्त्रैःसमरांगणे
गजैर्नरैर्हयैर्व्याप्तंपतितैःसमरांगणम् १२
बभूववज्रनिर्भिन्नैःपर्वतैरिवभूतलम्
अथमायामयींगौरींविदधेसिंधुनंदनः १३
सौंदर्यगुणसंपन्नांसर्वालंकारभूषिताम्
जयांमायामयींकृत्वासमुवाचाब्धिनंदनः १४
गच्छत्वंपुरतोरुद्रंविमोहयरणेद्रुतम्
इत्युक्त्वादैत्यपतिनाययौमायामयीजया १५
रणेगत्वाशिवस्याग्रेमुक्तकेशीरुरोदह
पृष्टाहरेणसाप्राहमानसोत्तरपर्वतात् १६
हृतातवप्रियादेवपार्वतीसिंधुसूनुना

श्रुत्वेतिवचनंतस्यास्तामुवाचवृषध्वजः १७
जयेत्वमेहिवृषभंत्वांहरिष्यंतिदानवाः
ततोवृषभमारुह्यजयाचालिंग्यशंकरम् १८
प्राहप्रयामिपार्वत्यानजीवामिविनाहर
चंद्रंशंभुजटाविष्टंगृहीत्वावृषभाद्द्रुतम् १९
अवारोहतसामायामायाष्वक्तोरणंययौ
ततोगौरींहृतांश्रुत्वाचिंतयामासशंकरः २०
दैत्यमायापरिष्वक्तोनात्मानंबुबुधेनृप
एतस्मिन्नंतरेप्राप्तःसैन्येनमहतावृतः २१
मायामृडानींस्वरथेनिधायार्णवजःशिवम्
जालंधरजयेतद्वदासीद्वादित्रनिस्वनः २२
चचालवसुधायेनप्रतिनेदुर्महीधराः
हरस्यदर्शयामासपार्वतींसिंधुनंदनः २३
रुद्रोऽप्यरिरथस्थांतांददर्शनिजवल्लभाम्
वियोगविधुरांदीनांतन्वीमातुरलोचनाम् २४
हानाथप्रियरुद्रेतिप्रजल्पंतींपुनःपुनः
प्रौढवैरिरथेदृष्ट्वापाखंडिस्थांयथाश्रुतिम् २५
गौरींदध्यौतथास्थाणुःकथंप्राप्याप्रियामया
विललापततःशंभुर्दैत्यमायाविमोहितः २६
मोहोमेदानवैःकांतेहृतासित्वांकथंप्रिये
शोकमोहप्लुतंदृष्ट्वाशंकरंसागरात्मजः २७
जगादप्रहसन्वाक्यंकश्चित्कारुण्यवान्यथा
सर्वप्रमाणशून्योऽसिस्मरशृंगारवर्जितः २८
ईश्वरोऽपिवराकस्त्वंसंजातोंबिकयाविना
मारोदीर्हिविरूपाक्षददामितववल्लभाम् २९
रक्षितोऽसिमयारुद्रगृहीत्वापार्वतींरणात्
इत्युक्त्वागिरिशंतूर्णमुत्तार्यस्वरथादुमाम् ३०
सैन्यंसंप्रेषयामासशंकराभिमुखंकिल
हरोऽपिवृषभेणाशुतत्सैन्यंसमधावत ३१
गृहीतुंपार्वतींपाहित्राहित्राहीतिजल्पतीम्

यावद्गृह्णातितांगौरींकरेणवृषभध्वजः ३२
तावच्छुंभासुरःशीघ्रंगृहीत्वाचांबरेस्थितः
शूलंमुमोचबलवान्हंतुंशुंभासुरंहरः ३३
शुंभेनसापरित्यक्ताशूलोपरिपपातह
रुदंतीचारुसर्वांगीत्यक्ताशूलेनसंयुता ३४
पतिताशंकरस्याग्रेतथेत्युक्त्वाममारच
मायागौरींमृतांदृष्ट्वाशोकमोहपरिप्लुतः ३५
हाप्रियेतिरुदन्रुद्रःपपातभुविमूर्च्छितः
क्षणंसंज्ञामवाप्याथरणभूमावुमापतिः
शशापशुंभप्रमुखान्गौरीयुष्मान्हनिष्यति ३६
नारदउवाच–
अथशुंभादयोदैत्यारणेदेव्यानिपातिताः
महेश्वरस्यशापेनगतेमंन्वतरेनृप ३७
शपित्वातान्रुरोदाथजल्पन्निर्गत्यशंकरः
क्वगतासिप्रियेत्युक्त्वादुःखितंमांरणांगणे ३८
रतिंत्यक्त्वावियोगार्तःश्रीकंठोऽहत्वयाकृतः
वासुदेवोऽपिमांत्यक्तंनजानातित्वयाप्रिये ३९
यज्ञेदक्षस्याग्निकुंडेशिरोदेविहुतंत्वया
भूयोहिभवतीलब्धाकथंत्यजसिमांपुनः ४०
उतिष्ठोतिष्ठचार्वंगिगिरिजेमांप्रबोधय
अत्रांतरेशिवंज्ञात्वादैत्यमायाविमोहितम् ४१
देवतागणमध्यस्थोह्यंतरिक्षादुपागमत्
विलपंतमुवाचेदमदृश्यःकमलासनः ४२
ब्रह्मोवाच–
त्वंशोकमोहपितृमातृविवर्जितोऽसिदुःखंसुखंसुतकलत्ररिपुर्नचास्ति
जातोऽसिनैवजनकेनजनिष्यमाणस्त्वंमन्यसेऋषिगणैश्चकुतोविमोहः ४३
एकोऽसिनाथबहुधाकृतविग्रहोऽसिसूर्योयथाजलधिवीचिषुदृश्यमानः
ध्यानेनयांतियमिनस्तवपादमूलंरूपंपरंदुरवबोधमवाच्यमेव ४४
नैषाप्रियातवसमानतयाविपन्नाजालंधरेणरचितांजहिदेवमायाम्
सापार्वतीकमलकोशगताहिशंभोयुद्धस्ववैरिनिवहंजहिपाहिचास्मान् ४५

श्रुत्वेतिब्रह्मणोवाक्यमवबुद्धोमहेश्वरः
ज्ञात्वातांदानवीमायांमुमोचमहतीशिलाम् ४६
तयाजघानसमरेदैत्यकोटिशतत्रयम्
ततोवृषभमारुह्यक्रोधेनमहतानृप ४७
धनुःपिनाकंयुद्धायधूर्जटिर्जगृहेशरान्
अथमायापरित्यक्तंशर्वमालोक्यसिंधुजः ४८
सुरेशमोहनंमायाजालमत्यद्भुतंनृप
अन्यदाविश्वकाराशुभृशंमायामहाबलम् ४९
जालंधरःकोटिभुजोबभूववृक्षास्त्रशस्त्रैर्युयुधेवृषांकम्
अथांतरालेपृथिवींचकारसमुद्रसूनुर्गिरिधातुमंडिताम् ५०
देवतायतनैरम्यैर्नानापुष्पसमाकुलैः
मंडितांनृपभूमिंचचकारोदधिनंदनः
नृत्यंतियत्राप्सरसोमेनकायामनोहरा ५१
विस्मृत्यशंभुस्तदपास्यकार्मुकंसद्यःप्रतस्थेवृषभोपरिस्थितः
वादित्रगीतैर्भुविमोहितोभृशंदैत्येंद्रमायामयतांडवेनसः ५२
विमोहितंवीक्ष्यवृषस्थितंहरंनित्यंसमुद्रःसहतांडवेन
गीतेनवाद्येनचनृत्यलीलयाननादरूपीतरसाविमोहितुम् ५३
जंतून्क्षिप्त्वोदधौतांश्चसहस्रंसततोत्सवः
क्वचतादेवताःसर्वाःक्वनंदिप्रमुखागणाः ५४
अपित्वंमाननीयोऽसिमोहितोदैत्यमायया
किमद्यशंभोभगवन्नुपेक्ष्यतेउदीर्यचक्रंजठरस्थितंच ५५
वधायचास्यैवकृतंमहेशजालंधरंसंहरतेनचाजौ
इतिकृष्णस्यवचनात्तत्स्मृत्वात्मानमीश्वरम् ५६
आरुह्यवृषभंशीघ्रमाजगाममहारणम्
तमागतंशिवंदृष्ट्वासर्वसैन्यसमावृतः ५७
रुरोधसमरेराजन्क्रुद्धोजालंधरोऽसुरः
हरस्यकुपितस्यासीत्सृष्टिसंहारकारकम् ५८
रूपंतृतीयनेत्राग्नौदानवाःशलभायथा
रुपंदृष्ट्वाभगवतोरौद्रज्वालामयंनृप ५९
शुंभादयस्तदादैत्याराहुप्रभृतयश्चये

रुद्रंनिरीक्ष्यसंत्रस्ताःपातालंविविशुर्भयात् ६०
सेनाभटाननेकांश्चहतान्दृष्ट्वामहामृधे
शुंभादीन्हतशेषांस्तान्दृष्ट्वात्मानंपलायितान् ६१
तदाजालंधरःसंख्येएकोगिरिरिवस्थितः
परमार्थंरुद्ररूपंहृष्टःसाक्षाद्विलोकयन् ६२
ततोजालंधरःप्राहमहादेवंप्रहस्यच
रूपंसंहरयेनत्वंदहसेसचराचरम् ६३
शस्त्रेणकुरुसंग्रामंत्यक्त्वायोगबलंनिजम्
इतिजालंधरवचःश्रुत्वोवाचततःशिवः ६४
वरंवरयदैत्येशप्रीतोऽस्मितवकर्मणा
ईदृक्षमपिमद्रूपंदृष्ट्वायन्निर्भयोऽधुना ६५
अपिब्रह्मांडमखिलंमद्रूपस्यास्यदानव
तेजसोवीक्षणेनालंतत्रत्वमसिनिर्भयः ६६
नारदउवाच-
इतिशंभोःप्रसादंचमत्वासंसारनिस्पृहः
जालंधरोहराद्वव्रेमुक्तिंसायुज्यतांपराम् ६७
श्रीमहादेवउवाच-
दिव्यंदेहमिदंदैत्यभोगसिद्धियुतंतव
वृंदामनोहरंरम्यमिहस्थंकालमश्नुते ६८
मुहूर्तंपरमात्मानंतमेकाकिनमव्ययम्
अबुद्ध्वात्यजसेमूर्खकथंत्वंमुक्तिमिच्छसि ६९
वृंदातवप्रियाराज्ञीहृतासायोगमायया
ब्रह्मस्वरूपंविज्ञायप्राप्तातत्परमंपदम् ७०
इदानींदुर्ल्लभासाचतत्पदंचैवदुर्ल्लभम्
स्वर्गापवर्गयोर्मध्येसंसारेवरमाप्नुहि ७१
जालंधरउवाच-
देवमुक्तपदंलभ्यंकृतकृत्येनकेनचित्
इदानींकृतकृत्योऽस्मियत्त्वांपश्येत्वयाहतः ७२
शिवउवाच-
मत्स्थानंपरमंक्षेत्रंयदित्वंगंतुमुत्सुकः

तर्हिमांकोपयस्वाशुदैत्यंहत्वादृढैःशरैः ७३
ततोऽहत्वांहनिष्यामिमत्स्थानंयास्यसेऽनघ
महेश्वरवचःश्रुत्वाप्राहजालंधरःशिवम् ७४
त्वयिसर्वजगत्पूज्येपूर्वंनप्रहराम्यहम् ७५
नारदउवाच-
एवमुक्तोजघानाशुसिंधुजंविशिखैःशिवः
तेशराःसिंधुपुत्रस्यदेहलग्नाविभांतिच ७६
यथालोहगिरिप्रांतेवेणवोवह्निदीपिताः
जालंधरोहरस्यांगंपूरयामासमार्गणैः ७७
तैः शरैः शुशुभेरुद्रोयथाखंखेचराकुलम्
जालंधरेशयोर्युद्धंतथाद्वंद्वमभून्नृप ७८
हरादन्येनहंतास्तिनसोढान्योऽणवात्मजात्
गिरिकोटिसहस्रैस्तुतदापृथ्वीपुटोद्धृतैः ७९
पूरयामाससमरेसिंधुजःपार्वतीपतिम्
ततःशूलेननिहतोरुद्रेणोरसिदानवः ८०
निःससारमुखात्तस्यज्वरोजंभोभयंकरः
सचवीरज्वरोनामसिंहवक्त्रोनराकृतिः ८१
दैत्यदेहाद्विनिष्क्रांतंदृष्ट्वासिंहमुखंज्वरम्
हुंकारमकरोद्घोरंशरभस्तत्रनिर्ययौ ८२
शिवस्यनिःसृतेनासौशरभेणनिपातितः
अजेयंशंकरंदृष्ट्वावृषभेंद्रेणसंयुतम् ८३
आययौवृषभाभ्याशेतरसासागरात्मजः
वृषंपुच्छेगृहीत्वाचभ्रामयामासचांबरे ८४
जालंधरोमहाबाहुश्चिक्षेपहिमवद्गिरौ
ततस्त्रिशूलमत्युग्रंमुमोचगिरिजापतिः ८५
तद्धस्तेनगृहीत्वाचदैत्येशःशिवसन्निधौ
रथारूढोधनुर्गृह्यकालकेदारमब्धिजः ८६
पूरयामासविशिखैःशिवमुर्वीतलेस्थितम्
उग्रःशस्त्राञ्छरान्छित्वाबाणैरथमचूर्णयत् ८७
दशयोजनविस्तीर्णंसारथ्यश्वसमन्वितम्

जालंरोऽपिविरथोऽभ्यधावन्मृधेशिवम् ८८
तयोर्युद्धमभूद्घोरमद्भुतंलोमहर्षणम्
तदृष्ट्वाऽकाडकल्पांतशंकयातत्रसुःसुराः ८९
सवास्त्रैस्तावदन्योन्यंजघ्नतुर्भीमविक्रमौ
पद्भिःपृथ्वद्यंचालयंतौकंपयंतौनभःस्वनैः ९०
अथोत्कटंबलंदृष्ट्वादानवेंद्रस्यशंकरः
शस्त्रजालंजहाराशुयोगमायाबलेनसः ९१
ततःकोटिभुजोदैत्योदंष्ट्राभीषणलोचनः
शस्त्रहीनोऽपितरसाधावमानोहरंययौ ९२
विशालकरबंधेनबबंधसमरेशिवम्
ततस्तस्यकृपाणेनचिच्छेदकरकाननम् ९३
सिंधुजेनभुजाक्रांतोरुद्रोभून्नीललोहितः
लीलयायोधयामासरणेऽसौसिंधुनंदनः ९४
छिन्नहस्तोऽपियुयुधेस्वर्भानुःशिरसायथा
नियुद्धेननदीसूनुस्तोषयामासशंकरम् ९५
परितुष्टोऽब्रवीच्छंभुर्वरंवरयदुर्लभम्
जालंधरेणसोऽप्युक्तस्त्वंमेदेह्यात्मनःपदम् ९६
ममदोःशस्त्रहीनस्यनावज्ञांकर्तुमर्हसि
शीघ्रंप्रयच्छमेसिद्धिंनोचेत्त्वांसंहराम्यहम् ९७
इत्युक्त्वासभुजोभूत्वाजघ्नेतंमुष्टिनोरसि
ततःसुदर्शनंचक्रंपुरायन्निर्मितंस्वयम् ९८
मुखादुद्गीर्यतद्धस्तेगृहीत्वातोलयद्रुषा
सूर्यकोटिसहस्राभंग्रसंतंसचराचरम् ९९
तेनचक्रेणचिच्छेदशिरोजालंधरस्यच
ततस्तच्छीर्षमुत्प्लुत्यगगनेशतयोजनम् १००
दंष्ट्राशतकरालास्यंस्वर्भूमिनयनंचयत्
व्याघ्रगत्याततोयातंसदनंब्रह्मणोनृप १०१
भूयःस्वर्गेततोदृष्ट्वामृडःशीर्षमधावत
स्रवत्तद्रुधिरंभूरिप्रकुर्वद्भैरवस्वनम् १०२
ततोदिशःप्रणष्टास्तागगनंविलयंगतम्

नतेजसांप्रकाशोऽस्तिचचालवसुधाभयात् १०३
आपतंतंजघानाशुरुद्रश्चक्रेणतच्छिरः
द्विधाभूत्वाथराजेंद्रपपातहिमवद्गिरौ १०४
ततोजालंधरस्याशुशिरसःशकलेकिल
विशतःसर्वभूतानांपश्यतांस्मवृषाकपौ १०५
तस्यकंठात्समुद्भूतादैत्याःशतसहस्रशः
तेहतास्तेनचक्रेणकपर्दिकरशालिना १०६
जालंधरकबंधंतन्ननर्तरुधिरारुणम्
पुनःपुन समुद्भूतास्तस्यकंठात्तुदानवाः १०७
पुनः पुनर्बलवताछिन्नाश्चक्रेणशंभुना
मेदसासिंधुपुत्रस्युपूरितासकलामही १०८
मेदिनीमेदसैवैषाख्यातिंप्राप्तातुपार्थिव
यत्रदैत्यवरस्यास्यशोणितंशैलतांगतम् १०९
कैलासस्योत्तरेभागेतत्राभूच्छोणितंपुरम्
अथमांसचयान्दृष्ट्वासर्वतोव्याप्यतिष्ठतः ११०
तदासस्मारदेवेशश्चतुःषष्टिगणांरणे
विज्ञानस्मरणाद्देव्यःसंप्राप्ताःशंकरांतिकम् १११
कृतांजलिपुटाःप्रोचुःशिवकिंकरवामहे ११२
महादेवउवाच-
यएतेदैत्यमांसस्यराशयोगिरिसन्निभाः
भक्षयध्वंयुताःशीघ्रंदत्तानुज्ञामयातुवः ११३
ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा
वाराहीचैवमाहेंद्रीसर्वाःस्वगणशोभिताः ११४
एवंशंकरनिर्दिष्टादेव्यस्तामांससंचयान्
क्रूरेणचक्षुषालोक्यनिन्युश्चादर्शनंक्षणात् ११५
अथजालंधरवपुःक्षीणंक्रांतंतुशक्तिभिः
ताभिर्ग्रस्तेशरीरेतुतस्यदेहाद्विनिःसृता ११६
प्रभासाशंकरंप्राप्ताजगामादर्शनंक्षणात्
तत्तेजःसूर्यसंकाशंलयंप्राप्तंमहेश्वरे ११७
एवंसविलयंप्राप्तःत्रिदिशारिस्त्रिलोचनात्

वृणुध्वंचवरंसर्वाःप्रीतःप्राहमहेश्वरः ११८
तदाताःसर्वयोगिन्यःपप्रच्छुर्जगदीश्वरम्
मर्त्यलोकेषुयेलोकाभोगमोक्षवरेप्सवः ११९
पूजयिष्यंतितेनित्यंस्वगृहेयोगिनीगणम्
तत्तेषांवांछितंसर्वंसिध्यतांत्वत्प्रसादतः १२०
महादेवउवाच-
यःकश्चित्पूजयेन्नित्यंभक्तिभावसमन्वितः
युष्मद्गणंचतस्याहंवरदोऽस्मिधरातले १२१
मद्भक्तःकेशवस्यापिद्वेष्टियोयोगिनीगणम्
भैरवोऽहतदातस्यहरिष्येसुकृतंकृतम् १२२
इतिदत्तवराहृष्टायोगिन्योविभुनामृधे
अत्रांतरेभवानींतांसस्मारवृषभंहरः १२३
स्मृतमात्रापार्वतीसावृषभश्चागमत्क्षणात्
सखीगणसमायुक्तासंप्राप्ताहरवल्लभा १२४
संत्यक्त्वाभ्रामरींमूर्तिंहरस्यार्द्धंसमारुहत्
गिरिजासहितोराजन्महेशोमुमुदेततः १२५
योगिनींप्रत्युवाचेदंपिबध्वंरुधिरंनृप
जालंधरकबंधस्थंताःश्रुत्वाजहृषुर्भृशम् १२६
मांसमेदोह्यसृक्पीत्वायोगिन्योननृतुर्मुदा
ततोहरःप्रसन्नोऽभूत्तासांक्रीडनवीक्षणात् १२७
स्वयंचभैरवंरूपंकृत्वातन्मध्यगःपपौ
तीक्ष्णदंष्ट्रामहाकायास्तदासन्योगिनीगणाः १२८
ग्रसंतोऽद्यापिमांसानिकालेचापिपिबंत्यसृक्
तेनजालंधरोदैत्योनोत्तिष्ठतिरणेहतः १२९
ततस्तत्रसमाजग्मुर्ब्रह्माद्यादेवतागणाः
ऋषयोमरुतोदेवास्तुवंतिस्ममहेश्वरम् १३०
दिशःप्रसेदुःसुरभिर्ववौमरुद्दिवःप्रपेतुर्भुविपुष्पवृष्टयः
कृताभिषेकस्यचतस्यनिःस्वनान्संनादितादुंदुभयोऽपिचक्रिरे १३१
उपरिपरिमलांधैःसुस्वरंसंपतद्भिर्मधुकरनिकुरंबैरुह्यमाणाभरेण
अविरलमधुधारासारसंसिक्तभूमिःसदसिसुरविमुक्ताप्रापतत्पुष्पवृष्टिः १३२

हतेतदासिंधुसुतेहरेणनाराचघातैस्त्रिजगत्तदाबभौ
प्रसूनवृष्टिर्ननृतुस्तदांगनाजगुश्चयक्षाःसुरकिन्नराद्याः १३३
शंभुर्वैरिजयोत्थितेनयशसास्फारांगकीर्तिर्गिरिं
स्वंभेजेसुरसिद्धचारणगणैःसंस्तूयमानःसदा
गौरीचापिजगामचाशुगिरितःश्वेतः
सखीसंवृतासंचक्रुस्त्वभिसेवनंसुमनसांवर्षेणदेवांगना १३४
देवोऽसौकरुणामयःसुरगणान्स्वेस्वेपदेस्थापयन्
प्रादादन्यदपिस्वकंवसुततोज्ञात्वापतिंशंकरः
किंवक्तव्यमतःपरंयदिभवेदीशानुकंपापरा
कोऽयवात्रिदिवोधरातलमिदंस्यादात्मसात्सर्वतः १३५
देवाःस्वराज्यमासाद्ययथापूर्वंचकाशिरे
बुभुजुर्यज्ञभागांस्तेलोकपालत्वमाश्रिताः १३६
नारदउवाच-
इतिजालंधरस्योक्तंयथावदनुपूर्वशः
चरितंलोकवीरस्यराजन्नत्यद्भुतंतव १३७
विष्णुस्त्यजतिनाद्यापिक्षीराब्धिंयद्वशोनृप
सर्वोऽपिभुंक्तेस्वंकर्मकर्मतद्विद्ध्यसंशयम् १३८
तुभ्यंदुःखनिरासायप्रोक्तमाख्यानमुत्तमम्
यावद्देहोस्तिकर्माणिसुखदुःखानिकर्मतः १३९
देहीभुंक्तेवशोराजन्त्राणंनज्ञानतःपरम्
कृष्णादीनांदेहबंधेसुखदुःखादिवर्तते १४०
तत्रेतरेषांकिंवाच्यंयेवैराग्यपराङ्मुखाः
ज्ञात्वेदृशींकर्मगतिंसर्वेभ्योबलवत्तमाम् १४१
धीरोभवप्रतीक्षस्वशुभकर्मागमंपुनः
शत्रून्जित्वातुसमयेस्वंराज्यंपुनराप्स्यसि १४२
इतिहासमिमंश्रुत्वानदुःखैपरिभूयते
धर्मार्थकाममोक्षाश्चयथावच्चात्रकीर्त्तिताः १४३
स्वर्ग्यंपापहरंपुण्यंशोकमोहविनाशनम्
ब्राह्मणोज्ञानमाप्नोतिराज्यंप्राप्नोतिक्षत्रियः १४४
वैश्यश्चबह्वींसंपत्तिंश्रुत्वाशूद्रःसुखंलभेत्

योराजाभ्रष्टराज्योऽपिरतःसन्नेवसत्पथि १४५
सराज्यंपुनराप्नोतिश्रवणान्नित्यमस्यतु
श्राकर्ण्यैतत्सतांराजन्श्राव्यमन्यन्नरोचते १४६
कलंचकोकिलालापंरूक्षंध्वांक्षरुतंयथा
श्राख्यानमेतदनघंश्रुत्वासज्जनहृत्प्रियः १४७
हिरण्यतिलवस्त्राद्यैर्धेनुभूमिप्रदानतः
संतोषयेद्वाचकंतुतस्मिंस्तुष्टेफलंलभेत् १४८
देवताश्चप्रसीदेयुरर्चितेवाचकेगुरौ
श्रन्नदानानिदद्याच्चब्राह्मणेभ्यःप्रपूजयेत् १४९
जायतेविजयीनित्यंपुत्रपौत्रसमृद्धिमान्
जायतेविष्णुलोकेयःशृणोत्याख्यानमुत्तमम् १५०
इतिव्याजेनभोभूपतुलस्युत्पत्तिकारणम्
येशृण्वंतिनरश्रेष्ठानतेषांपातकंक्वचित् १५१
तुलसीमाहात्म्यमिदंपवित्रंपापनाशनम्
श्रुत्वातुलभतेमोक्षमुक्त्वाचैवनसंशयः १५२
स्वगृहेरोपिताचैवतुलसीपापनाशिनी
दर्शनाद्ब्रह्महत्यापिनश्यतेनात्रसंशयः १५३
कार्तिकेचैवमाघेतुतुलस्यापूजयेद्धरिम्
वैशाखेतुविशेषेणपूजनंचहरेःस्मृतम् १५४
एकेनैवप्रदक्षिणेनसकलंपापंगतंवैसदायेशूद्रा
भुविसंतिदाननिरताःकालेनशुद्धिंगताः
तेपिस्युःसुरपूजनार्हतनवःपापाच्चदूरंगताःयेवै
विष्णुजनाश्चदुर्लभतराह्यस्मिन्कलौसांप्रतम् १५५
इति श्रीपाद्मेमहापुराणेपंचपंचाशतसहस्रसंहितायांउत्तरखंडेजालंधरोपाख्याने
श्रीजालंधरवधमहोत्सवोनामाष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

युधिष्ठिरउवाच−
श्रीशैलःपर्वतोरम्यःकुत्रतिष्ठतिनारद
किंतत्रवर्त्ततेतीर्थंकस्यदेवस्यपूजनम्

कस्यांदिशिसमाख्यातोलोकेषुचवदाधुना १
नारदउवाच-
शृणुराजन्प्रवक्ष्यामिश्रीशैलंपर्वतोत्तमम्
यंश्रुत्वामुच्यतेलोकोबालहत्यादिपातकात् २
तत्पर्वतवनंरम्यंमुनिभिश्चोपसेवितम्
नानाद्रुमलताकीर्णंनानापुष्पोपशोभितम् ३
हंसकोकिलनादैश्चमयूरध्वनिनादितम्
श्रीवृक्षैश्चकपित्थैश्चशिरीषैराजवृक्षकैः ४
पारिजातकपुष्पैश्चकदंबोदुंबरैस्तथा
नानापुष्पैःसुगंधाढ्यैर्वासितंतद्वनंगिरौ ५
सर्वाभिर्ऋषिपत्नीभिःसशिष्याभिःसुसेवितम्
केचिदभ्यासयुक्ताश्चकेचिद्व्याख्यानतत्पराः ६
केचिदूर्ध्वभुजास्तत्रअंगुष्ठाग्रैःस्थिताःपरे
शिवध्यानरताःकेचित्केचिद्विष्णुपरायणाः ७
निराहाराश्चकेप्यत्रकेचित्पर्णाशनेरताः
कंदमूलफलाहाराःकेचिन्मौनव्रताःस्थिताः ८
एकपादाःस्थिताःकेचित्केचित्पद्मासनेस्थिताः
केचिच्चैवनिराहारास्तपस्तेपुःसुदुष्करम् ९
आश्रमाणिचपुण्यानिनद्यश्चविविधाःशुभाः
देवखातान्यनेकानितडागानिबहूनिच १०
पर्वतोऽयमहाराजदृश्यतेकिलसर्वतः
मल्लिकार्जुनकोराजन्यत्रतिष्ठतिनित्यशः ११
तच्चैवशिखरंरम्यंपर्वतोपरिसेवितम्
शृंगदर्शनमात्रेणमुक्तिरेवनसंशयः १२
दक्षिणांदिशमाश्रित्यवर्त्ततेपर्वतोत्तमः
अत्रगंगामहद्रम्यापातालेतिसमाश्रिता १३
तत्रचस्नानमात्रेणमहापापैःप्रमुच्यते
श्रीशैलशिखरंदृष्ट्वावाराणस्यांमृतौध्रुवम् १४
केदारेह्युदकंपीत्वापुनर्जन्मनविद्यते
तापसानांमहत्स्थानंयोगिनांचतथैवच १५

तस्मात्सर्वप्रयत्नेनदर्शनंतस्यकारयेत्
अयंविज्ञानदेवोऽसौमहापातकनाशनः १६
सिद्धपुरंचनगरंरम्यंस्वर्गसुखावहम्
नित्यमप्सरसोयत्रगायंतिचरमंतिच १७
अतःपर्वताराजोऽयदर्शनेसौख्यकारकः
तस्यतैर्दर्शनंकार्यंमुक्तिमिच्छंतियेनराः १८
इति श्रीपाद्मेमहापुराणेपंचपंचाशतसहस्रसंहितायांउत्तरखंडे
श्रीशैलोपाख्यानेएकोनविंशोऽध्यायः१९

विंशोऽध्यायः

श्रीमहादेवउवाच-
हरिद्वारंमहापुरायंशृणुदेवर्षिसत्तम
यत्रगंगावहत्येवतत्रोक्तंतीर्थमुत्तमम् १
यत्रदेवावसंतीहऋषयोमनवस्तथा
यत्रदेवःस्वयंसाक्षात्केशवोनित्यमाश्रितः २
पुरापूर्वंतुभोवत्सतीर्थंजातंमहत्तदा
यस्यदर्शनमात्रेणदूरतोयातिपातकम् ३
यत्रगंगामहारम्याजातापुरायविशेषतः
विष्णुपादोदकीजातातच्चरणस्पर्शनात्ततः ४
भगीरथेनभोविद्वन्नानीतातत्रमार्गतः
उद्धारःपूर्वजानांतुकृतस्तेनमहात्मना ५
नारदउवाच-
कोऽयदेवसमाख्यातोभगीरथमहातपाः
येनतीर्थंसमानीतंलोकानांहितकारणात् ६
गंगातीर्थंमहत्पुरायंसर्वपापप्रणाशनम्
लोकाःसर्वेवदंत्येवमेतत्तीर्थोत्तमोत्तमम् ७
गंगागंगेतियोब्रूयाद्योजनानांशतैरपि
मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ८
कथंतेनसमानीताकिंकार्यंवदसुव्रत
महादेवउवाच-

येनगंगायथानीतागंगाद्वारेऽतिशोभने ९
तत्सर्वंसंप्रवक्ष्यामिक्रमानुक्रमयोगतः
पूर्वमासीद्धरिश्चंद्रस्त्रैलोक्येसत्यपालकः १०
रोहितस्तस्यपुत्रोऽभूदेकोविष्णुपरायणः
तस्यापिचवृकःपुत्रोधर्मिष्ठःसत्पथिस्थितः ११
तस्यपुत्रःसुबाहुश्चजातोस्मिन्वैकुलेतदा
तस्यपुत्रोगरोनामनात्यंतंधार्मिकोऽभवत् १२
कदाचित्कालयोगेनदुःखीजातोऽत्रकारणात्
राजातुतत्रदेशेनतर्जितोधर्मकारणात् १३
स्वकुटुंबंगृहीत्वातुगतोऽसौभार्गवाश्रमे
रक्षितोभार्गवेणाथकृपयातत्रवैतदा १४
तत्रपुत्रोह्यभूत्तस्यसगरोनामवैद्विज
ववृधेचाश्रमेपुण्येभार्गवेणाभिरक्षितः १५
उपवीतादिकंसर्वंक्षत्रियस्यतदाकृतम्
शस्त्राणांचतथाभ्यासोवेदानांतुतथैवच १६
आग्नेयास्त्रंततोलब्ध्वाभार्गवात्सगरोनृपः
जघानपृथिवींगत्वातालजंघान्सहैहयान् १७
सशकान् पारदांश्चैवजघानसमहातपाः
नारदउवाच-
माहात्म्यंसगरस्याथवदशंकरविस्तरात् १८
महादेवउवाच-
सूर्यवंशीमहाराजोविख्यातःसमहाबली
गरस्यव्यसनेतातहृतंराज्यमभूत्किल १९
हैहयैस्तालजंघाद्यैःशकैःसार्द्धंचनारद
यवनाः पारदाश्चैवकांबोजाः पह्लवास्तथा २०
एतेपंचगणाब्रह्मन्हैहयार्थेपराक्रमान्
हृतराज्यस्ततोराजासगरोऽथवनंययौ २१
पत्न्याचानुगतोदुःखीसवैप्राणानवासृजत्
तस्यपत्नीतुकल्याणीसगर्भाचव्रतान्विता २२
सपत्न्याभार्गवस्तस्यवृतःपूर्वंसुतेप्सया

सातुभर्तृचितांकृत्वावनेतंप्ररुरोदह २३
श्रौर्वस्तांवारयित्वाचगरपत्नींतुनारद
न्यवेदयततत्पुत्रंधर्मिष्ठंसात्विकंप्रियम् २४
निवेदितेततोबालेमरणात्सान्यवर्त्तत
ततोमासद्वयेजातेववर्द्धौर्वस्यचाश्रमे २५
जातकर्मादियोगश्चश्रौर्वेणचतथाकृतः
उपवीतादिकंसर्वंजातंतत्रमहामुनेः २६
तत्रवेदादिकंसर्वंपठितंचौर्वयोगतः
श्रध्याप्यवेदशास्त्राणिततोऽस्त्रप्रत्यपादयत् २७
श्राग्नेयंतंमहाभागश्रमरैरपिदुःसहम्
सतेनासुबलेनाजौबलेनचसमन्वितः २८
हैहयान्वैजघानाशुसंक्रुद्धःस्वबलेनच
श्राजहारचलोकेषुसचकीर्तिमवापसः २९
ततःशकाःसयवनाःकांबोजाःपल्लवास्तथा
हन्यमानास्तदातेतुवसिष्ठंशरणंययुः ३०
वसिष्ठोऽपिचतान्कृत्वासमयेनमहाद्युतिः
सगरंवारयामासतेषांदत्त्वाऽभयंनृपः ३१
सगरःस्वांप्रतिज्ञांतुगुरोर्वाक्यंनिशम्यच
धर्मैर्जघानतांश्चैषांविकृतत्वंचकारह ३२
श्रर्द्धंशकनांशिरसोमुंडंकृत्वाविसर्जयत्
यवनानांशिरःसर्वंकांबोजानांतथैवच ३३
पारदामुंडकेशाश्चपल्ल्वाःश्मश्रुरक्षकाः
एवंविजित्यसर्वान्वैकृतवान्धर्मसंग्रहम् ३४
सर्वधर्मजयीराजाविजित्येमांवसुंधराम्
श्राशुसंस्कारयामासवाजिमेधायपार्थिवः ३५
तस्यचारयतःसोऽश्वसमुद्रेपूर्वदक्षिणे
वेलासमीपेऽपहृतोभूमिंचैवप्रवेशितः ३६
सतंदेशंतदापुत्रैःखानयामाससर्वतः
नाश्वंप्रापुस्तदातेवैखन्यमानेमहार्णवे ३७
तत्रैकमादिपुरुषंददृशुस्तेत्वरान्विताः

तमादिपुरुषंदेवंकपिलंजगतांप्रभुम् ३८
तस्यचक्षुःसमुत्पन्नवह्निनाप्रतिबुध्यतः
दग्धाःषष्टिसहस्राणिचत्वारस्तेऽवशेषिताः ३९
हृषीकेतुःसुकेतुश्चतथाधर्मरथोपरः
शूरःपंचजनश्चैवतस्यवंशकराद्विज ४०
प्रादाच्चतस्मैभगवान्हरिःपंचवरान्स्वयम्
वंशंमोक्षंसुकीर्तिंचसमुद्रंतनयंविभुः ४१
सागरत्वंचलेभेथकर्मणातेनतस्यवै
तमाश्वमेधिकंसोऽश्वसमुद्रादुपलब्धवान्
आजहाराश्वमेधानांशतंसचमहायशाः ४२

इति श्रीपाद्मेमहापुराणेपंचपंचाशतसहस्रसंहितायां
उत्तरखण्डेविंशोऽध्यायः २०

## एकविंशोऽध्याय

नारदउवाच–
सगरस्यात्मजावीराःकथंजातामहाबलाः
विक्रांताःषष्टिसाहस्राविज्ञानेश्वरतद्वद १
श्रीपार्वतीपतिरुवाच–
द्वेपत्न्यौसगरस्यास्तांतपसादग्धकिल्बिषे
और्वस्ताभ्यांवरंप्रादात्तोषितोमुनिसत्तमः २
षष्टिंपुत्रसहस्राणिएकाववव्रेतरस्विनाम्
एकावंशधरंत्वेकंयथेष्टंवरशालिनी ३
तत्रैकासुषुवेतुंब्यांपुत्रान्शूरान्बहूनथ
तेतुसर्वेऽपिधात्रीभिर्वर्द्धितास्तुयथाक्रमम् ४
घृतपूर्णेषुकुंभेषुकुमाराःप्रीतिवर्द्धनाः
कपिलानांतुदुग्धानांतेषां तत्रमहात्मनाम् ५
तेनैवदुग्धयोगेनववृधुस्तेमहात्मनः
एकःपंचजनोनामपुत्रोराजाबभूवह ६
ततःपंचजनस्यासीदंशुमान्नामवीर्यवान्
दिलीपस्तनयस्तस्यपुत्रोयस्यभगीरथः ७

यस्तुगंगासरिच्छ्रेष्ठामानयामाससुव्रतः
समुद्रमानयित्वैनांदुहितृत्वमकल्पयत् ८
नारदउवाच-
कथंगंगासमानीताकिंतपस्तेनवैकृतम्
तत्सर्वंमेसमाचन्दवसुव्रतोऽसिदयानिधे ९
महादेवउवाच-
पूर्वजानांहितार्थायगतोऽसौहैमकेगिरौ
तत्रगत्वातपस्तप्तंवर्षाणामयुतंतदा १०
आदिदेवःप्रसन्नोऽभूद्योऽसौदेवोनिरंजनः
तेनदत्ताइयंगंगाआकाशात्समुपस्थिता ११
तत्रविश्वेश्वरोदेवोयत्रतिष्ठतिनित्यशः
गंगादृष्ट्वाऽगतांतेनगृहीताजाह्नवीतदा १२
जटाजूटेचसंधार्यवर्षाणामयुतंस्थितम्
ननिःसृतातदागंगाईशस्यैवप्रभावतः १३
विचारितंतदातेनक्वगताममातृका
सध्यानेनविचार्यैवंगृहीताचेश्वरेणतु १४
ततःकैलासमगमत्सतुभगीरथोनृपः
तत्रगत्वामुनिश्रेष्ठह्यकरोदुल्बणंतपः १५
आराधितस्तदातेनदत्तवानहमापगाम्
एकंकेशंपरित्यज्यदत्तात्रिपथगातदा १६
सगृहीत्वागतोगंगांपातालेयत्रपूर्वजाः
अलकनंदातदानामगंगायाःप्रथमंस्मृतम् १७
हरिद्वारेयदायाताविष्णुपादोदकीतदा
तदेवतीर्थंप्रवरंदेवानामपिदुर्ल्लभम् १८
तत्तीर्थेचनरःस्नात्वाहरिंदृष्ट्वाविशेषतः
प्रदक्षिणंयेकुर्वंतिनचैतेदुःखभागिनः १९
ब्रह्महत्यादिपापानांराशयःसंत्यनेकशः
विलयंयांतितेसर्वेहरेर्दर्शनतःसदा २०
एकदाकेशवस्थानेहरिद्वारेह्यहंगतः
तस्मात्तीर्थप्रभावाच्चजातोऽहविष्णुरूपवान् २१

येगच्छंतिनरश्रेष्ठास्तेवैयांतिह्यनामयम्
चतुर्भुजास्तुतेलोकाःनरानार्यश्चसर्वशः २२
वैकुंठंयांतितेसर्वेहरेर्दर्शनमात्रतः
ममाप्यधिकतीर्थंतुहरिद्वारंसुशोभनम् २३
तीर्थानांप्रवरंतीर्थंचतुर्वर्गप्रदायकम्
कलौधर्मकरंपुंसांमोक्षदंचार्थदंतथा २४
यत्रगंगामहारम्यानित्यंवहतिनिर्मला
एतत्कथानकंपुण्यंहरिद्वाराख्यमुत्तमम् २५
उक्तंचशृणवतांपुंसांफलंभवतिशाश्वतम्
अश्वमेधेकृतेयागेगोसहस्रेतथैवच २६
तत्पुण्यंलभतेविद्वान्हरेर्दर्शनमात्रतः
गोहंताब्रह्महाचैवयेचान्येपितृघातकाः २७
एवंविधानिपापानिबहून्यपिचवैद्विज
विलयंयांतिसर्वाणिहरेर्दर्शनमात्रतः २८

इति श्रीपाद्मेमहापुराणेपंचपंचाशतसहस्रसंहितायांउत्तरखण्डेउमापतिनारद संवादेहरिद्वारमाहात्म्येगंगोत्पत्तिपूर्वकंहरिद्वारमाहात्म्यंनाम एकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

महादेवउवाच-
गांगंवक्ष्यामिमाहात्म्यंयथोक्तंमुनिसत्तम
यस्यश्रवणमात्रेणअघंनश्यतितत्क्षणात् १
गंगागंगेतियोब्रूयाद्योजनानांशतैरपि
मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति २
चरणाब्जसमुद्भूतागंगानामेतिविश्रुता
पापानांस्थूलराशीनांनाशिनीचेतिनारद ३
नर्मदासरयूश्चैवतथावेत्रवतीनदी
तापीपयोष्णीचंद्राचविपाशाकर्मनाशिनीम् ४
पुष्यापूर्णातथादीपाविदीपासूर्यतेजसा
सहस्रवृषदानात्तुयत्फलंलभतेध्रुवम् ५

तत्फलंसमवाप्नोतिगंगादर्शनतः क्षणात्
इयंगंगामहापुरायाब्रह्मघ्नानांविशेषतः ६
तेषांनिरययुक्तानांगंगापापप्रहारिणी
चंद्रसूर्योपरागेचयत्फलंविद्यतेऽनघ ७
तत्फलंसमवाप्नोतिगंगादर्शनमात्रतः
यथासूर्योदयेताततमोगच्छतिदूरतः ८
तथागंगाप्रभावेनविलयंयातिपातकम्
मान्येयंसर्वदालोकेपवित्रापापनाशिनी ९
कल्याणरूपासततंविष्णुनानिर्मितापुरा
दिव्यरूपातुजननीदीनानांपावनीस्मृता १०
देवानांचयथाविष्णुस्तथागंगोत्तमानदी
येकुर्वंतिनराःस्नानंमाघमासेनिरंतरम् ११
नतेषांविद्यतेदुःखंकल्पानांचशतत्रयम्
यत्रगंगाचयमुनायत्रचैवसरस्वती
तत्रस्नात्वाचपीत्वाचमुक्तिभागीनसंशयः १२
महादेवउवाच–
त्वद्वार्तांप्रियतोब्रवीमियदहंसास्तुस्तुतिस्तेप्रभोयद्धुंजेतवतन्निवेदनमथोयद्यामि
साप्रेष्यता
यच्छांतःस्वपिमित्वदंघ्रियुगलेदंडप्रणामोऽस्तुनः
स्वामिन्यच्चकरोमितेनसभवान्विश्वेश्वरःप्रीयताम् १३
दृष्टेनवंदितेनापिस्पृष्टेनचधृतेनके
नरायेनविमुच्यंतेतदेतद्यामुनंजलम् १४
तावद्भ्रमंतिभुवनेमनुजाभवोत्थदारिद्र्यरोगमरणव्यसनाभिभूताः
यावज्जलंतवमहानदिनीलनीलंपश्यंतिनोदधतिमूर्धसुसूर्यपुत्रि १५
यत्संस्मृतिःसपदिकृंततिदुष्कृतौघंपापावलद्यंजयतियोजनलक्षतोऽपि
यन्नामनामजगदुच्चरितंपुनातिदिष्ट्याहिसापथिदृशोभवितायगंगा १६
आलोकोत्कंठितेनप्रमुदितमनसावर्त्मयस्याःप्रयातंसद्यस्मिन्कृत्यमेतामथप्रथ
मकृतीज
ज्ञिवान्स्वर्गसिंधुम्
स्नानंसंध्यानिवापःसुरयजनमपिश्राद्धविप्राशनाद्यंसर्वंसंपूर्णमेतत्भवतिभगवत

ःप्रीतिदंनातिचित्रम् १७
देवीभूतपरंब्रह्मपरमानंददायिनी
अर्घंगृहाणमेगंगेपापंहरनमोस्तुते १८
साक्षाद्धर्मद्रवौघंमुररिपुचरणांभोजपीयूषसारं
दुःखस्याब्धेस्तरित्रंसुरमनुजनुतंस्वर्गसोपानमार्गम्
सर्वांहोहारिवारिप्रवरगुणगणंभासियासंवहंतीतस्यै
भागीरथिश्रीमतिमुदितमनादेविकुर्वेनमस्ते १९
स्वःसिंधोदुरिताब्धिमग्नजनतासंतारणिप्रोल्लसत्कल्लोला
मलकांतिनाशिततमस्तोमेजगत्पावनि
गंगेदेविपुनीहिदुष्कृतभयक्रांतंकृपाभाजनंमातर्मांशरणा
गतंशरणदेरक्षाथभोभीषितम् २०
हंहोमानसकंपसेकिमुसखेत्रस्तोभयान्नारकात्किंते
भीतिरितिश्रुतिर्दुरितकृत्संजायतेनारकी
माभैषीःशृणुमेगतिंयदिमयापापाचल
स्पर्द्धिनीप्राप्तातेनिरयंकथःकिमपरंकिंमेनधर्मंधनम् २१
सर्वेशादिप्रशंसामुदमनुभवनंमज्जनंयत्रचोक्तंस्वर्नार्योवीक्ष्यहृष्टा
विबुधसुरपतिःप्राप्तिसंभावनेन
नीरेश्रीजह्नुकन्येयमनियमरताःस्नांतियेतावकीने
देवत्वंतेलभंतेस्फुटमशुभकृतोप्यत्रवेदाःप्रमाणम् २२
बुद्धेसद्बुद्धिरेवंभवतुतवसखेमानसस्वस्तितेऽस्तु
आस्तांपादौपदस्थौसततमिहयुवांसाधुदृष्टीचदृष्टी
वाणिप्राणप्रियेधिप्रकटगुणवपुःप्राप्नुहिप्राणिपुष्टिंयस्मात्सर्वैर्भवद्भिः
सुखमतुलमहंप्राप्नुवंतीर्थपुण्यम् २३
श्रीजाह्नवीरविसुतापरमेष्ठिपुत्रीसिंधुत्रयाभरणतीर्थवरप्रयाग
सर्वेशमामनुगृहाणनयस्वचोर्ध्वमंतस्तमोदशविधंदलयस्वधाम्ना २४
वागीशविष्णवीशपुरंदराद्याःपापप्रणाशायविदांविदोऽपि
भजंतियत्तीरमनीलनीलंसतीर्थराजोजयतिप्रयागः २५
कलिंदजासंगमवाप्ययत्रप्रत्यग्गतास्वर्गधुनीधुनोति
अध्यात्मतापत्रितयंजनस्यसतीर्थराजोजयतिप्रयागः २६
श्यामोवटःश्यामगुणोवृणोतिस्वच्छाययाश्यामलयाजनानाम्

श्यामश्रमंकृंततियत्रदृष्टःसतीर्थराजोजयतिप्रयागः २७
ब्रह्मादयोप्यात्मकृतिंविहायभजंतिपुरायात्मकभागधेयम्
यत्रोज्झितादंडधरःस्वदंडंसतीर्थराजोजयतिप्रयागः २८
यत्सेवयादेवनृदेवतादिदेवर्षयःप्रत्यहमामनंति
स्वर्गंचसर्वोत्तमभूमिराज्यंसतीर्थराजोजयतिप्रयागः २९
एनांसिहंतीतिप्रसिद्धवार्तानामप्रतापेनदृशोभवंति
यस्यत्रिलोकींप्रततापगोभिःसतीर्थराजोजयतिप्रयागः ३०
धत्तेऽभितश्चामरचारुकांतिंसितासितेयत्रसरिद्वरेराये
ग्राद्योवटश्छत्रमिवातिभातिसतीर्थराजोजयतिप्रयागः ३१
ब्राह्मीनपुत्रीत्रिपथास्त्रिवेणीसमागमेसाक्षतयागमात्रात्
यत्राप्नुतान्ब्रह्मपदंनयंतिसतीर्थराजोजयतिप्रयागः ३२
केषांचिज्जन्मकोटिर्व्रजतिसुवचसांयामियामीतियस्मिन्केषां
चित्प्रेप्सतांयंनियतमतियतेद्वर्षवृंदंवरिष्ठम्
यत्प्राप्तंभाग्यलक्षैर्भवतिभवतिनोवासवाचामवाच्यो
दिष्ट्यावेणीविशिष्टोभवतिदृगतिथिःकंप्रयागप्रयागः ३३
लोकानामक्षमाणांमखकृतिषुकलौस्वर्गकामैर्जयस्तुत्यादिस्तोत्रैर्वचोभिः
कथममरपदप्राप्तिचिंतातुराणाम्
ग्रग्निष्टोमाश्वमेधप्रमुखमखफलंसम्यगालोच्यसांगं
ब्रह्माद्यैस्तीर्थराजोऽभिमतदउपदिष्टोऽयमेवप्रयागः ३४
मयाप्रमादातुरतादिदोषतःसंध्याविधिर्नोसमुपासितोऽभूत्
चेदत्रसंध्यांचरतेप्रसादतःसंध्यास्तुपूर्णाखिलजन्मनोऽपिमे ३५
ग्रन्यत्रापिप्रगर्जन्महिमनितपसिप्रेमभिर्विप्रकृष्टैर्ध्यातः
संकीर्तितोयोऽभिमतपदविधातानिशंनिर्व्यपेक्षम्
श्रीमत्पांशुंत्रिवेणीपरिवृढमतुलंतीर्थराजंप्रयागंगो
लंकारप्रकाशंस्वयममरवरंचेतनंतंनमामि ३६
ग्रस्माभिःसुतपोन्वतप्तकिमहोएज्यंतकिंवाध्वराः
पात्रेदानमदायिकिंबहुविधंकिंवासुराश्चार्चिताः
किंसत्तीर्थमसेविकिंद्विजकुलंपूजादिभिःसत्कृतंयेनप्रापिसदा
शिवस्यशिवदासाराजधानीस्वयम् ३७
भाग्यैर्मेऽधिगताह्यनेकजनुषांसर्वाघविध्वंसिनी

सर्वाश्चर्यमयीशिवपुरीसंसारसिंधोस्तरी
लब्धंसज्ञनुषःफलंकुलमलंचक्रेपवित्रीकृतः
स्वात्माचाप्यखिलंकृतंकिमपरंसर्वोपरिष्टात्स्थितम् ३८
जीवन्नरःपश्यतिभद्रलक्षमेवंवदंतीतिमृषानयस्मात्
तस्मान्मयावैवपुषेदृशेनप्राप्तापिकाशीक्षणभंगुरेण ३९
काश्यांविधातुममरैरपिदिव्यभूमौसत्तीर्थलिंगगणनार्चनतानशक्या
यानीहगुप्तविवृतानिपुरातनानिसिद्धानियोजितकरःप्रणमामितेभ्यः ४०
किंभीत्यादुरितव्रजात्किमुमुदापुण्यैरगण्यैःकृतैः
किंविद्याभ्यसनान्मदेनजडतादोषाद्विषादेनकिम्
किंगर्वेणधनोदयादधनतातापेनकिंभोजनाः
स्नात्वाश्रीमणिकर्णिकापयसिचेद्विश्वेश्वरोदृश्यते ४१
अल्पस्फीतिनिरामयापितनुताप्रव्यक्तशक्यात्मताप्रोत्साहाढ्यबलेनकेव
लमनोरागद्वितीयेनयत्
अप्राप्यापिमनोरथैरविषयास्वप्नप्रवृत्तेरपिप्राप्तासा
पिगदाधरस्यनगरीसद्योपवर्गप्रदा ४२
मन्येनात्मकृतिर्नपूर्वपुरुषप्राप्तेर्बलंचात्रयन्नापीदंस्वजन
प्रमाणमचलंकिंस्वापतापादिकम्
यादुष्प्रापगयाप्रयागयमुनाकाशीसुपर्वागमात्प्राप्तिस्तत्र
महाफलोविजयतेश्रीशारदानुग्रहः ४३
यःश्राद्धसमयेदूरात्स्मृतोऽपिपितृमुक्तिदः
तंगयायांस्थितंसाक्षान्नमामिश्रीगदाधरम् ४४
पंथानंसमतीत्यदुस्तरमिमंदूरादवीयस्तरंक्षुद्रव्याघ्रतरक्षुकंटकफणिप्रत्यार्थिभिः
संकुलम्
आगत्यप्रथमव्ययंकृपणवाग्याचेज्जनः
कर्परीश्रीमद्वारिगदाधरप्रतिदिनंत्वांद्रष्टुमुत्कंठते ४५
सर्वात्मन्निजदर्शनेनचगयाश्राद्धेनवैदेवताः
प्रीणन्विश्वमनीहवत्कथमिहौदासीन्यमालंबसे
किंतेसर्वदनिर्दयत्वमधुनाकिंवाप्रभुत्वंकलेःकिंवासत्व
निरीक्षणंनृषुचिरंकिंवास्यसेवारुचिः ४६
गदाधरमयाश्राद्धंसंचीर्णंत्वत्प्रसादतः

अनुजानीहिमांदेवगमनायगृहंप्रति ४७
चतुर्णांदेवतानांचस्तोत्रंस्वर्गार्थदायकम्
श्राद्धकालेपठेन्नित्यंस्नानकालेतुयःपठेत् ४८
सर्वतीर्थसमंस्नानंश्रवणात्पठनाज्जपात्
प्रयागस्यचगंगायायमुनायाःस्तुतेर्द्विज
श्रवणेनविनश्यंतिदोषाश्चैवतुकर्मजाः ४९
इति श्रीपाद्मेमहापुराणेपंचपंचाशतसहस्त्रसंहितायांउत्तरखराडे
उमापतिनारदसंवादेगंगाप्रयागयमुनास्तुतिर्नामद्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

महादेवउवाच–
शृणुनारदवक्ष्यामिमाहात्म्यंतुलसीभवम्
यच्छ्रुत्वामुच्यतेपापादाजन्ममरणांतिकात् १
पत्रंपुष्पंफलंमूलंशाखात्वक्स्कंधसंज्ञितम्
तुलसीसंभवंसर्वंपावनंमृत्तिकादिकम् २
शरीरंदह्यतेयेषांतुलसीकाष्ठवह्निना
दत्वाचतुलसीकाष्ठंसर्वांगेषुमृतस्यवै ३
पश्चाद्यःकुरुतेदाहंसोऽपिपापात्प्रमुच्यते
मरणेयस्यसंप्राप्तंकीर्तनंस्मरणंहरेः ४
तुलसीदारुणादाहोनतस्यपुनरावृतिः
यद्येकंतुलसीकाष्ठंमध्येकाष्ठशतस्यहि ५
दाहकालेभवेन्मुक्तिःकोटिपापायुतस्यच
गंगांभसाभिषेकेणयांतिपुरायानिपुरायताम् ६
तुलसीकाष्ठमिश्राणियांतिदारूणिपुरायताम्
तुलसीकाष्ठसंमिश्रायावत्प्रज्वलतेचिता ७
दह्यंतितस्यपापानिकल्पकोटिकृतानिवै
दह्यमानंनरंदृष्ट्वातुलसीकाष्ठवह्निना ८
नयंतितंविष्णुदूतानचवैयमकिंकराः
जन्मकोटिसहस्त्रैस्तुमुक्तोयातिजनार्दनम् ९
दह्यंतेयेनरालोकेतुलसीकाष्ठवह्निना

तान्विमानस्थितान्देवाः क्षिपंतिकुसुमांजलिम् १०
नृत्यंत्यप्सरसः सर्वा गीतंगायंतिगायकाः
जायंतेवीक्ष्यतंविष्णुः संतुष्टः शंभुनासह ११
गृहीत्वातंकरेशौरिर्गृहंनीत्वास्यचांगतः
मार्जयेत्सर्वपापानिपश्यतांत्रिदिवौकसाम् १२
महोत्सवंकारयित्वाजयशब्दपुरःसरम्
ज्वलतेयत्रचाज्येनतुलसीकाष्ठपावकः १३
अग्न्यगारेश्मशानेवादह्यतेपातकंनृणाम्
होमंकुर्वंति येविप्रास्तुलसीकाष्ठवह्निना
सिक्तेसिक्तेतिलेवापिअग्निष्टोमफलंलभेत् १४
योददातिहरेर्धूपंतुलसीकाष्ठसंभवम्
शतक्रतुसमंपुण्यंलभतेगोशतंफलम् १५
नैवेद्यंपच्यतेयस्तुतुलसीकाष्ठवह्निना
मेरुतुल्यंभवेद्दत्तंतदन्नंकेशवस्यहि १६
तुलसीपावकेनाथयोदीपंकुरुतेहरेः
दीपलक्षसहस्राणांपुण्यंसलभतेफलम् १७
नतेनसदृशोलोकेवैष्णवोभुविदृश्यते
यःप्रयच्छतिकृष्णस्यतुलसीकाष्ठचंदनम् १८
सजायतेकृपापात्रंविष्णोर्वाडवसत्तम १९
तुलसीदारुजातेनचंदनेनकलौहरिम्
विलिप्यभक्तितोनित्यंरमतेहरिसन्निधौ २०
तुलसीपंकलिप्तांगः कुरुतेविष्णुपूजनम्
पूजाशतदिनैकाह्नालभ्यतेगोशतंफलम् २१
विलेपार्थेतुकृष्णस्यतुलसीकाष्ठचंदनम्
मंदिरेतिष्ठतेयावत्तावत्पुण्यफलंशृणु २२
तिलप्रस्थाष्टकंदत्वायत्पुण्यंप्राप्नुयान्नरः
तत्फलंजायतेपुंसांप्रसादाच्चक्रपाणिनः २३
योददातिपितॄणांतुपिंडेतुलसिसंभवम्
दलंसंजायतेतृप्तिः पत्रेपत्रेशताब्दिका २४
तुलसीमूलमृत्स्नैवस्नानंकुर्याद्विशेषतः

तेनतीर्थेकृतंस्नानंयावद्गांगेचमृत्तिका २५
तदीययातुमंजर्यापूजनंचकरोतियः
नानापुष्पैःकृतापूजायावच्चंद्रदिवाकरौ २६
यस्मिन्गृहेऽवतिष्ठेततुलसीवृक्षवाटिका
दर्शनात्स्पर्शनाच्चैवब्रह्महत्यादिपातकम्
तत्सर्वंविलयंयातिदर्शनेनैवनारद २७
महादेवउवाच–
अथान्यत्तेप्रवक्ष्यामिशृणुष्वैकाग्रमानसः
नकस्यापिचकथितंशृणुदेवर्षिसत्तम २८
यत्रयत्रगृहेग्रामेवनेवातुलसीभवेत्
तत्रतत्रजगत्स्वामीप्रीतात्माचवसेद्धरिः २९
गृहेतस्मिन्नदारिद्र्यंनायोगोबंधुसंभवः
नदुःखंनभयंरोगस्तुलसीयत्रतिष्ठति ३०
सर्वत्रतुलसीपुरायापुरायक्षेत्रेविशेषतः
संनिधौतस्यदेवस्यरोपणात्पृथिवीतले ३१
तेषांविष्णुपदंनित्यंतुलस्यारोपणेकृते
उत्पादान्दारुणान्रोगान्दुर्निमित्तान्यनेकशः
तुलस्याभ्यर्चितेभक्त्याहंतशांतिकरोहरिः ३२
तुलसीगंधमाघ्राययत्रगच्छतिमारुतः
दिशोदशचताःपूताभूतग्रामश्चतुर्विधः ३३
यस्मिन्गृहेमुनिश्रेष्ठतुलसीमूलमृत्तिका
सर्वदातत्रतिष्ठंतिदेवताश्चशिवोहरिः ३४
तुलसीवनजाछायायत्रयत्रभवेद्द्विज
तर्पणंकुरुतेतत्रपितृणांदत्तमक्षयम् ३५
तस्यमूलेस्थितोब्रह्मामध्येदेवोजनार्दनः
मंजर्यांवसतेरुद्रःतुलसीतेनपावनी ३६
विनायस्तुलसींकुर्यात्संध्याकालेतुमार्जनम्
तत्सर्वंराक्षसहतंनरकंचप्रयच्छति ३७
तुलसीपत्रगलितंतोयंयःशिरसावहेत्
गंगाफलमवाप्नोतिशतधेनुफलंलभेत् ३८

शिवालयेविशेषेणरोपयेत्तुलसींयदि
बीजसंख्यावसेत्स्वर्गेप्रत्येकंयुगसंख्यया ३९
उमयातुपुरादेविशंकरार्थंहिमालये
रोपिताःशतवृक्षास्तुतुलस्याःप्रणतोऽस्म्यहम् ४०
पर्वणयवसरेयस्तुश्रावणेचाथरोपयेत्
संक्रांतिदिवसेचैवतुलसीचातिपुण्यदा ४१
तुलसींपूजयेन्नित्यंदरिद्रईश्वरोभवेत्
सर्वसिद्धिकरामूर्तिःकृष्णःकीर्तिंददातिच ४२
शालग्रामशिलायत्रतत्रसंनिहितोहरिः
तत्रस्नानंचदानंचवाराणस्यांशताधिकम् ४३
कुरुक्षेत्रंप्रयागंचनैमिषारण्यमेवच
तस्यकोटिगुणंपुण्यंशालग्रामशिलार्चनात् ४४
शालग्राममयीमुद्रासंस्थितायत्रहिक्वचित्
वाराणस्यांचयत्पुण्यंसर्वंतत्रैवतद्भवेत् ४५
ब्रह्महत्यादिकंपापंयत्किंचित्कुरुतेनरः
तत्सर्वंनाशयेदाशुशालग्रामशिलार्चनात् ४६

इति श्रीपाद्मेमहापुराणेपंचपंचाशतसहस्रसंहितायांउत्तरखण्डे
उमापतिनारदसंवादेतुलसीशालग्राममाहात्म्यंनामत्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

महादेवउवाच-
प्रयागतीर्थमाहात्म्यंप्रवक्ष्यामियथाश्रुतम्
महादानपराःपुण्यकर्माणोयत्रसंतिहि १
यत्रगंगाचयमुनायत्रचैवसरस्वती
तंदेवतीर्थप्रवरंदेवानामपिदुर्लभम् २
ईदृशंत्रिषुलोकेषुभूतंनचभविष्यति
ग्रहाणांचयथासूर्योनक्षत्राणांयथाशशी ३
तीर्थानामुत्तमंतीर्थंप्रयागाख्यमनुत्तमम्
प्रातःकालेतुभोविद्वन्प्रयागेस्नानमाचरेत् ४
महापापाद्विनिर्मुक्तःसयातिपरमंपदम्

देयंकिंचिद्यथाशक्तिदारिद्र्याभावमिच्छता ५
योनरस्तत्रगत्वावैप्रयागेस्नानमाचरेत्
धनिकोदीर्घजीवीचजायतेनात्रसंशयः ६
यत्रवटस्याद्मयस्यदर्शनंकुरुतेनरः
तेनदर्शनमात्रेणब्रह्महत्याविनश्यति ७
सचाद्मयवटःख्यातःकल्पांतेपिचदृश्यते
शेतेविष्णुर्यस्यपत्रेअतोयमव्ययःस्मृतः ८
तत्रपूजांप्रकुर्वंतिमानवाविष्णुवल्लभाः
सूत्रेणाच्छादितंकृत्वापूजांचैवतुकारयेत् ९
माधवाख्यस्तत्रदेवःसुखंतिष्ठतिनित्यशः
तस्यवैदर्शनंकार्यंमहापापैःप्रमुच्यते १०
यत्रदेवाश्चऋषयोमनुष्याश्चापिसर्वशः
स्वस्वस्थानंसमाश्रित्यतत्रतिष्ठंतिनित्यशः ११
गोघ्नोवापिचचांडालोदुष्टोवादुष्टचेतनः
बालघातीतथाऽविद्वान्म्रियतेतत्रवैतदा १२
सवैचतुर्भुजोभूत्वावैकुंठेवसतेचिरम्
प्रयागेतुनरोयस्तुमाघस्नानंकरोतिच १३
नतस्यफलसंख्यास्तिशृणुदेवर्षिसत्तम
आपोनाराइतिप्रोक्तासर्वलोकेषुशुश्रुम १४
तेननारायणःप्रोक्तःस्नातानांभुक्तिमुक्तिदः
ग्रहाणांचयथासूर्योनद्मत्राणांयथाशशी १५
मासानांहितथामाघःश्रेष्ठःसर्वेषुकर्मसु
मकरस्थेरवौमाघेप्रातःकालेतथामले १६
गोःपदेऽपिजलेस्नानंस्वर्गदंपापिनामपि
योगोऽयदुर्लभोविद्वन्त्रैलोक्येसचराचरे १७
अस्मिन्योयत्नमापन्नःस्नायादपिदिनत्रयम्
पंचवासप्तवाप्यत्रस्नानंकुर्वन्प्रयागजम् १८
चंद्रवद्वर्द्धतेसोऽपिकुलेवाडवसत्तम
चराचराश्चयेजीवास्तथैवमनुजादयः १९
प्रयागंतीर्थमाश्रित्यवैकुंठंयांतितेऽचिरात्

येवसिष्ठादयस्तत्रऋषयःसनकादयः २०
तेऽपिप्रयागजंतीर्थंसेवंतेचपुनःपुनः
यत्रविष्णुश्चरुद्रश्चयत्रेंद्रश्चतथापुनः २१
तेऽपिसर्वेवसंतीहप्रयागेतीर्थसत्तमे
दानंतत्रप्रशंसंतिनियमांश्चतथैवच २२
तत्रस्नात्वाचपीत्वाचपुनर्जन्मनविद्यते २३

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांउत्तरखण्डे
उमापतिनारदसंवादेप्रयागमाहात्म्येचतुर्विंशोऽध्यायः २४

## पञ्चविंशोऽध्यायः

नारदउवाच–
एवंतुलस्यामाहात्म्यंत्वत्प्रसादाच्छ्रुतंमया
सांप्रतंतुसमाचक्ष्वत्रिरात्रंतुलसीव्रतम् १
सदाशिवउवाच–
शृणुविप्रमहाबुद्धेव्रतमेतत्पुरातनम्
यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः २
पुरारैभ्यंतरेकल्पेराजाह्यासीत्प्रजापतिः
तस्यभार्याचविख्याताचंद्ररूपामहासती ३
सावैव्रतमिदंचक्रेसर्वकामफलप्रदम्
त्रिरात्रंतुव्रतंतस्याधर्मकामार्थमोक्षदम् ४
सफलंजीवितंतेषांयैःश्रुतंतुलसीव्रतम्
कार्तिकेशुक्लपक्षेतुनवम्यांचैवनारद ५
नियमस्थोव्रतीतिष्ठेद्भूमिशायीजितेंद्रियः
व्रतंत्रिरात्रमुद्दिश्यशुचिःसंयतमानसः ६
स्वपेन्नियमपूर्वंतुतुलसीवनसंनिधौ
ततोमध्याह्नसमयेनद्यादौविमलेजले ७
स्नानंकृत्वापितृन्देवांस्तर्पयेद्विधिपूर्वकम्
सुवर्णंकारयेद्देवंलक्ष्म्यासहजनार्दनम् ८
वित्तशाठ्यंनकर्तव्यमात्मनःश्रेयमिच्छता
वस्त्रयुग्मंततःकार्यंपीतेशुक्लेऽपिवाससी

नवग्रहाणामारंभंशांतिकंविधिपूर्वकम् ९
श्रपयित्वाचरुंतत्रवैष्णवंहोममाचरेत्
द्वादश्यांदेवदेवेशंपूजयित्वाप्रयत्नतः १०
अव्रणंशुद्धकलशंस्थापयेद्विधिपूर्वकम्
पंचरत्नसमोपेतंपल्लवैश्चोषधीयुतम् ११
तस्योपरिन्यसेत्पात्रेलक्ष्म्यासहजनार्दनम्
स्थापयेत्तुलसीमूलेमंत्रैर्वेदपुराणकैः १२
पयसाकेवलेनैवसिंचयेत्तुलसीवनम्
पंचामृतेनसंस्नाप्यदेवदेवंजगद्गुरुम् १३
योऽनतरूपोऽखिलविश्वरूपोगर्भोदकेलोकविधिंबिभर्त्ति
प्रसीदतामेषसदेवदेवोयोमाययाविश्वकृदेषदेवी १४
प्रार्थनामंत्रः  आगच्छाच्युतदेवेशतेजोराशेजगत्पते
सदैवतिमिरध्वंसीपाहिमांभवसागरात् १५
आवाहनमंत्रः  पंचामृतेनसुस्नानंतथागंधोदकेनच
गंगादीनांचतोयेनस्नातोऽनतःप्रसीदतु १६
स्नानमंत्रः  श्रीखंडागुरुकर्पूरंकुंकुमादिविलेपनम्
भक्त्यादत्तंमयादेवलक्ष्म्यासहगृहाणवै १७
विलेपनमंत्रः
नारायणनमस्तेऽस्तुनरकार्णवतारण
त्रैलोक्याधिपतेतुभ्यंददामिवसनेशुभे १८
वस्त्रमंत्रः
दामोदरनमस्तेस्तुत्राहिमांभवसागरात्
ब्रह्मसूत्रंमयादत्तंगृहाणपुरुषोत्तम १९
उपवीतमंत्रः
पुष्पाणिचसुगंधीनिमालत्यादीनिवैप्रभो
मयादत्तानिदेवेशप्रीतितःप्रतिगृह्यताम् २०
पुष्पमंत्रः
नैवेद्यंगृह्यतांनाथभक्ष्यभोज्यैःसमन्वितम्
सर्वैरसैःसुसंपन्नंगृहाणपरमेश्वर २१
नैवेद्यमंत्रः

पूगानिनागपत्राणिकर्पूरसहितानिच
मयादत्तानिदेवेशतांबूलंप्रतिगृह्यताम् २२
तांबूलमंत्रः
धूपंदत्वागुरुंभक्त्यागुग्गुलंघृतमिश्रितम्
एवंपूजाप्रकर्त्तव्याघृतेनदीपमाचरेत् २३
विविधंमुनिशार्दूलदीपंकृत्वासमाहितः
लक्ष्मीनारायणस्याग्रेतुलसीवनसन्निधौ २४
अर्घंतत्रप्रदातव्यंदेवदेवायचक्रिणे
नवम्यांनालिकेरेणपुत्रार्थमर्घमुत्तमम् २५
दशम्यांबीजपूरंतुधर्मकामार्थसिद्धये
एकादश्यांदाडिमेनदारिद्र्यंनाशयेत्सदा २६
सप्तधान्येनसंयुक्तंवंशपात्रेणनारद
फलसप्तकसंयुक्तंपत्रंपूगसमन्वितम् २७
वस्त्रेणाच्छादितंकृत्वादेवस्याग्रेनिवेदयेत्
मंत्रेणानेनविपेंद्रशृणुष्वैकाग्रमानसः २८
तुलसीसहितोदेवसदाशंखेनसंयुतम्
गृहाणार्घंमहायादत्तंदेवदेवनमोस्तुते २९
अर्घमंत्रः –
एवंसंपूज्यदेवेशंलक्ष्म्यासहजनार्दनम्
प्रार्थयेद्देवदेवेशंव्रतसंपूर्तिसिद्धये ३०
उपोषितोऽहदेवेशकामक्रोधविवर्जितः
व्रतेनानेनदेवेशत्वमेवशरणंमम ३१
गृहीतेऽस्मिन्व्रतेदेवयदपूर्णंकृतंमया
सर्वंतदस्तुसंपूर्णंत्वत्प्रसादाज्जनार्दन ३२
नमःकमलपत्राक्षनमस्तेजलशायिने
इदंव्रतंमयाचीर्णंप्रसादात्तवकेशव ३३
अज्ञानतिमिरध्वंसिन्व्रतेनानेनकेशव
प्रसादसुमुखोभूत्वाज्ञानदृष्टिप्रदोभव ३४
ततोजागरणंरात्रौगीतपुस्तकवाचनम्
नादनृत्यकलाभिज्ञैःपुण्याख्यानैःसुभोभनैः ३५

विभातायांतुशर्वर्यामुदितेविमलेरवौ
निमंत्र्यब्राह्मणान्भक्त्याश्राद्धंकुर्याच्चवैष्णवम् ३६
भोजयित्वायथाकामंपायसेनघृतेनच
तांबूलपुष्पगंधादिदक्षिणाभिःसमन्वितम् ३७
उपवीतानिवासांसिदत्वामालांचचंदनम्
दांपत्यत्रितयंभोज्यंवस्त्रभूषणकुंकुमैः ३८
वंशपात्राणिशक्त्याचविरूढैःपरिपूरयेत्
नालिकेरैश्चपक्वान्नैर्वस्त्रैश्चविविधैःफलैः ३९
सपत्नीकंगुरुंतत्रवस्त्राणिपरिधापयेत्
विभूषणानिदिव्यानिगंधमाल्यैःप्रपूजयेत् ४०
सर्वोपस्करसंयुक्तांगांदद्याच्चपयस्विनीम्
सदक्षिणांसवस्त्रांचतन्मेनिगदतःशृणु ४१
सर्वतीर्थेषुयत्पुरायंस्नातानांजायतेनृणाम्
तत्फलंसलभेत्सर्वंदेवदेवप्रसादतः ४२
भुक्त्वाचविपुलान्भोगान्सर्वकामान्मनोरमान्
वैष्णवंपदमाप्नोतिअंतेविष्णोःप्रसादतः ४३
इति श्रीपाद्मेमहापुराणेपंचपंचशत्सहस्रसंहितायांउत्तरखगडे
उमापतिनारदसंवादेतुलसीत्रिरात्रव्रतवर्णनंनामपंचविंशोऽध्यायः २५

## षड्विंशोऽध्यायः

नारदउवाच-
गुणाधिकेभ्योविप्रेभ्योदातुकामोऽपिमानवः
कानिकानिचलोकेऽस्मिन्दद्यात्सर्वंतथावद १
महादेवउवाच-
लोकेतत्वंहिसंज्ञायशृणुदेवर्षिसत्तम
अन्नमेवंप्रशंसंतिसर्वमन्नेप्रतिष्ठितम् २
तस्मादन्नंविशेषेणदातुमिच्छंतिमानवाः
अन्नेनसदृशंदानंनभूतंनभविष्यति ३
अन्नेनधार्यतेविश्वंजगत्स्थावरजंगमम्
अन्नमूर्जस्करंलोकेप्राणाह्यन्नेप्रतिष्ठिताः ४

दातव्यंभक्ष्यमेवान्नंब्राह्मणायमहात्मने
कुटुंबंपीडयित्वापिआत्मनोभूतिमिच्छता ५
नारदासौविदांश्रेष्ठोयोदद्यादन्नमर्थिने
ब्राह्मणायार्तरूपायपारलौकिकमात्मनः ६
आत्मीयभूतिमन्विच्छेत्कालेद्विजमुपस्थितम्
श्रांतमध्वनिवर्त्तंतंगृहस्थंगृहमागतम् ७
अन्नदःप्राप्नुतेविद्वान्सुशीलोवीतमत्सरः
क्रोधमुत्पतितंहित्वादिविचेहचयत्सुखम् ८
नाभिनिंदेच्चअतिथिंनद्रुह्याच्चकथंचन
ब्रह्मविदेऽपयेदन्नंतच्चदानंविशिष्यते ९
श्रांतायादृष्टपूर्वायअन्नमध्वनिवर्तिने
योदद्याच्चपरिक्लिष्टंसर्वधर्ममवाप्नुयात् १०
पितृदेवांस्तथाविप्रातिथींश्चमहामुने
योनरःप्रीणयेतान्नैस्तस्यपुण्यमनंतकम् ११
कृत्वापिसुमहत्पापंयोदद्यादन्नमर्थिने
ब्राह्मणायविशेषेणसतुपापैःप्रमुच्यते १२
ब्राह्मणेष्वक्षयंदानमन्नंशूद्रेमहत्फलम्
अन्नदानंचशूद्रेचब्राह्मणेचावशिष्यते १३
नपृच्छेद्गोत्रचरणंचस्वाध्यायमेवच
भिक्षुकोब्राह्मणोह्यत्रदद्यादन्नंप्रयातिच १४
अन्नदस्यशुभावृक्षाःसर्वकामफलान्विताः
संभवंतीहलोकेचहर्षयुक्तास्त्रिविष्टपे १५
अन्नदानेनयेलोकास्तान्शृणुष्वमहामुने
विमानानिप्रकाशंतेदिवितेषांमहात्मनाम् १६
नानासंस्थानरूपाणिनानाकामान्वितानिच
सर्वकामफलाश्चापिवृक्षाभुवनसंस्थिताः १७
हेमवाप्यःशुभाःसर्वादीर्घिकाश्चैवसर्वशः
घोषवंतिचयानानिमुक्तान्यथसहस्रशः १८
भक्ष्यभोज्यमयाःशैलावासांस्याभरणानिच
क्षीरंस्रवंत्यःसरितस्तथैवाज्यस्यपर्वताः १९

प्रासादाःशुभ्रवर्णाभाःशय्याश्चकनकोज्वलाः
तदन्नंदातुमिच्छंतितस्मादन्नप्रदोभवेत् २०
एतेलोकाःपुण्यकृतामन्नदानंमहत्फलम्
तस्मादन्नंविशेषेणदातव्यंमानवैर्भुवि २१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांउत्तरखण्डे
उमापतिनारदसंवादेअन्नदानप्रशं
सानामषड्विंशोऽध्यायः २६

सप्तविंशोऽध्यायः

महादेवउवाच-
पानीयदानंपरमंदानानामुत्तमंसदा
तस्माद्वापीश्चकूपांश्चतडागानिचकारयेत् १
अर्द्धंपापंसंहरंतिपुरुषस्यविकर्मणः
कूपाःप्रवृत्तपानीयाःसुप्रवृत्तस्यनित्यशः २
सचतारयतेवंशंयस्यखातजलाशये
गावःपिबंतिविप्राश्चसाधवश्चनराःसदा ३
निदाघकालेपानीयंयस्यतिष्ठतिनारद
दुर्गेविषमकृच्छ्रेचनकदाचिदवाप्यते ४
तडागानांचवक्ष्यामिकृतानांयेगुणाःस्मृताः
त्रिषुलोकेषुसर्वत्रपूजितोयस्तडागवान् ५
अथवामित्रसदनंमित्रमैत्रीविवर्द्धनम्
कीर्तिसंजननंश्रेष्ठंतडागस्योपलक्षयेत् ६
धर्म्यस्यार्थस्यकामस्यफलमाहुर्मनीषिणः
तडागंसुकृतंदेशेक्षेत्रमध्येमहाश्रयम् ७
चतुर्विधानांभूतानांतडागस्योपलक्षयेत्
तडागानिचसर्वाणिदिशंतिश्रेयमुत्तमम् ८
देवामनुष्यागंधर्वाःपितरोनागराक्षसाः
स्थावराणिचभूतानिसंश्रयंतिजलाशयम् ९
वर्षास्रृतौतडागेतुसलिलंयत्रतिष्ठति
अग्निहोत्रफलंतस्यजायतेनात्रसंशयः १०

हेमंतेशिशिरेचैवसलिलंयस्यतिष्ठति
गोसहस्रफलंतस्यलभतेनात्रसंशयः ११
वसंतेऽपितथाग्रीष्मेसलिलंतिष्ठतेयदि
अतिरात्राश्वमेधाभ्यांफलमाहुर्मनीषिणः १२
अथैतेषांतुवृक्षाणांरोपणेचगुणाञ्छृणु
अतीतानागतौचोभौपितृवंशौमहाऋषे १३
तारयेद्वृक्षरोपीचतस्माद्वृक्षांस्तुरोपयेत्
पुत्रपौत्राभवंत्येतेपादपानात्रसंशयः १४
परलोकंगतःसोऽपिलोकानाप्नोतिचाक्षयान्
पुष्पैःसुरगणान्सर्वान्पत्रैश्चापितथापितॄन् १५
छाययाचातिथीन्सर्वान्पूजयंतिमहीरुहाः
किन्नरोरगरक्षांसिदेवगंधर्वमानवाः १६
तथाऋषिगणाश्चैवसंश्रयंतिमहीरुहान्
पुष्पिताःफलवंतश्चतर्पयंतीहमानवान् १७
इहलोकेपरेचैवपुत्रास्तेधर्मतःस्मृताः
तडागवृक्षरोपाश्चइष्टयज्ञाश्चयेद्विजाः १८
एतेस्वर्गान्नहीयंतेयेचान्येसत्यवादिनः
सत्यमेवपरंब्रह्मसत्यमेवपरंतपः १९
सत्यमेवपरोयज्ञःसत्यमेवपरंश्रुतम्
सत्यंदेवेषुजागर्तिसत्यंचपरमंपदम् २०
तपोयज्ञाश्चपुण्यंचतथादेवर्षिपूजनम्
आद्योविधिश्चविद्याचसर्वंसत्येप्रतिष्ठितम् २१
सत्यंयज्ञस्तथादानंमंत्रादेवीसरस्वती
व्रतचर्यातथासत्यमोङ्कारःसत्यमेवच २२
सत्येनवायुरभ्येतिसत्येनतपतेरविः
सत्येनचाग्निर्दहतिस्वर्गःसत्येनतिष्ठति २३
पूजनंसर्वदेवानांसर्वतीर्थावगाहनम्
सत्यंचवदतेलोकेसर्वमाप्नोत्यसंशयः २४
अश्वमेधसहस्रंचसत्यंचतुलयाधृतम्
सर्वेषांसर्वयज्ञानांसत्यमेवविशिष्यते २५

सत्येनदेवाःप्रीयंतेपितरोऋषयस्तथा
सत्यमाहुःपरंधर्मंसत्यमाहुःपरंपदम् २६
सत्यमाहुःपरंब्रह्मतस्मात्सत्यंवदामिते
मुनयःसत्यनिरताःतपस्तप्त्वासुदुष्करम् २७
सत्यधर्मरताःसिद्धास्ततःस्वर्गमितोगताः
अप्सरोगणसंघुष्टैर्विमानैःपरितोवृताः २८
वक्तव्यंचसदासत्यंनसत्याद्विद्यतेपरम्
अगाधेविपुलेसिद्धेसत्तीर्थेचशुचौहृदि २६
स्नातव्यंमनसायुक्तैःस्नानंतत्परमंस्मृतम्
आत्मार्थेवापरार्थेवापुत्रार्थेवापिमानवाः
अनृतंयेनभाषंतेतेनराःस्वर्गगामिनः ३०
वेदायज्ञास्तथामंत्राःसंतिविप्रेषुनित्यशः
नभांत्युज्झितसत्येषुतस्मात्सत्यंसमाचरेत् ३१
नारदउवाच–
तपसांमेफलंब्रूहिपुनरेवविशेषतः
सर्वेषांचैववर्णानांब्राह्मणानांतपोबलम् ३२
प्रवक्ष्यामितपोध्यानंसर्वकामार्थसाधकम्
सुदुश्चरंद्विजातीनांतन्मेनिगदतःशृणु ३३
तपोहिपरमंप्रोक्तंतपसाविंदतेफलम्
तपोरतोहियोनित्यंमोदतेसहदैवतैः ३४
तपसाप्राप्यतेस्वर्गस्तपसाप्राप्यतेयशः
तपसामोक्षमाप्नोतितपसाविंदतेमहत् ३५
ज्ञानविज्ञानसंपत्तिःसौभाग्यंरूपमेवच
तपसालभतेसर्वंमनसायद्यदिच्छति ३६
नातप्ततपसोयांतिब्रह्मलोकंकदाचन
यत्कार्यंकिंचिदास्थायपुरुषस्तप्यतेतपः ३७
तत्सर्वंसमवाप्नोतिपरत्रेहचमानवः
सुरापःपरदारीचब्रह्महागुरुतल्पगः
तपसातरतेसर्वंसर्वतश्चविमुच्यते ३८
अपिसर्वेश्वरःस्थाणुर्विष्णुश्चैवसनातनः

ब्रह्माहुताशनःशक्रोयेचान्येतपसान्विताः ३९
षडशीतिसहस्राणिमुनीनामूर्द्ध्वरेतसाम्
तपसादिविमोदंतेसमेतादैवतैःसह ४०
तपसाप्राप्यतेराज्यंशक्रःसर्वेपुरासुराः
तपसापालयन्सर्वानहन्यहनिवृत्तिदाः ४१
सूर्याचंद्रमसौदेवौसर्वलोकहितेरतौ
तपसैवप्रकाशंतेनक्षत्राणिग्रहास्तथा ४२
सर्वंचतपसाभ्येतिसर्वंचसुखमश्नुते
तपस्तपतियोऽरण्येवनमूलफलाशनः ४३
योऽधीतेश्रुतिमेवादौसमंस्यात्तपसामुने
श्रुतेरध्यापनात्पुण्यंयदाप्नोतिद्विजोत्तमः ४४
तदध्यायस्यजप्याच्चद्विगुणंफलमश्नुते
जगद्यथानिरालोकंजायतेशशिभास्करौ ४५
विनातथापुराणंहिध्येयमस्मान्महामुने
तप्यमानस्तपोज्ञानंयोधारयतिशास्त्रतः ४६
संबोधयतिलोकंचतस्मात्पूज्यतमोगुरुः
सर्वेषांचैवपात्राणांश्रेष्ठपात्रंपुराणवित् ४७
पतनात्त्रायतेयस्मात्तस्मात्पात्रमुदाहृतम्
धनंधान्यंहिरण्यंवावासांसिविविधानिच ४८
येयच्छंतिसुपात्रायतेयांतिचपरांगतिम्
गाश्चैवमहिषीर्वापिगजानश्वांश्चशोभनान् ४९
यःप्रयच्छतिमुख्यायतत्पुण्यस्यफलंशृणु
अक्षयंसर्वलोकानांसोऽश्वमेधफलंलभेत् ५०
महींददातियस्तस्मैकृष्टांफलवतींशुभाम्
सतारयतिवैवंशान्दशपूर्वान्दशापरान् ५१
विमानेनचदिव्येनविष्णुलोकंसगच्छति
नयज्ञैस्तुष्टिमायांतिदेवाःप्रोक्षणकैरपि ५२
बलिभिःपुष्पपूजाभिर्यथापुस्तकवाचनैः
विष्णोरायतनेयस्तुकारयेद्धर्मपुस्तकम् ५३
देव्याःशंभोर्गणेशस्यअर्कस्यचतथापुनः

राजसूयाश्वमेधाभ्यांफलंप्राप्नोतिमानवः ५४
इतिहासपुराणाभ्यांपुगयंपुस्तकवाचनम्
सर्वान्कामानवाप्नोतिसूर्यलोकंभिनत्तिसः ५५
सूर्यलोकंचभित्त्वासौब्रह्मलोकंसगच्छति
स्थित्वाकल्पशतान्यत्रराजाभवतिभूतले ५६
अश्वमेधसहस्रस्ययत्फलंसमुदाहृतम्
तत्फलंसमवाप्नोतिदेवाग्रेयोजयंपठेत् ५७
तस्मात्सर्वप्रयत्नेनकार्यंपुस्तकवाचनम्
इतिहासपुराणाभ्यांविष्णोरायतनेशुभम्
नान्यत्प्रीतिकरंविष्णोस्तथान्येषांदिवौकसाम् ५८

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांउत्तरखगडे
उमापतिनारदसंवादेवृन्नप्रपासरोवरतपोऽध्ययन
धर्मव्याख्यानमाहात्म्यंनामसप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

महादेवउवाच-
अत्राप्युदाहरंतीममितिहासंपुरातनम्
पुराणंपरमंपुगयंसर्वपापहरंशुभम् १
कुमारेणचलोकानांनमस्कृत्यपितामहम्
प्रोक्तंचेदंममाख्यानंदेवर्षेब्रह्मसूनुना २
सनत्कुमारउवाच-
गतोऽहधर्मराजानंद्रष्टुंसंपूजितोमुदा
श्रुतिभिःपरयाभक्त्यातेनोक्तोऽस्मिसुखासने ३
मयातत्रोपविष्टेनदृष्टंकिंचिन्महाद्भुतम्
कांचनेनविमानेनवैडूर्यकृतवेदिना ४
मणिमुक्तविचित्रेणकिंकिणीजालशोभिना
आगतंपुरुषंतत्रआसनाद्देवसत्तम ५
ससंभ्रमंसमुत्थायदृष्ट्वाधर्मःस्वयंविभुः
गृहीत्वादक्षिणेपाणौपूजितोऽर्घेणवैततः ६
शिरस्याघ्रायदेवेशःपुरःस्थाप्यततःपरम्

पूजयित्वातुतंधर्मइदंवाक्यमुवाचह ७
सुस्वागतंधर्मदर्शिन्प्रीतोऽस्मिदर्शनात्तव
समीपेममतिष्ठस्वकिंचिज्ज्ञानंवदस्वमे ८
पुनर्यास्यसितत्स्थानंयत्रब्रह्माव्यवस्थितः
इत्युक्तेचततश्चान्योविमानवरमास्थितः ९
आगतःपुरुषोदेवोयत्रतिष्ठतिधर्मराट्
सपूजितोविमानस्थःप्रश्रयावनतेनच १०
सामपूर्वंतथोक्त्वातुयथापूर्वंनरःस्वयम्
किमनेनकृतंकर्मयस्यतुष्टोभवान्भृशम् ११
अत्रमेकौतुकंजातंकृताहिस्वयमेवतु
यदस्यभवतापूजासविस्मयमनंतरम् १२
तथैवास्यकृतापूजाद्वितीयस्यनरस्यतु
मेनेऽहशुभकर्माणौविमानंवरसत्तमौ १३
यस्त्वमाभ्यांस्वयंपूजांकुरुषेधर्मकारणात्
ब्रह्माविष्णुशिवाद्यैस्तुपूज्यसेत्वंसदानिशम् १४
यस्येदृक्परमंपुण्यंकिमेतौकर्मचक्रतुः
कथ्यतांममसर्वज्ञफलंदिव्यमवापतुः १५
तच्छ्रुत्वासतुमांप्राहशृणुकर्मानयोःकृतम्
यत्कृत्वार्हमिहायातौतच्छृणुष्वमहामते १६
धर्मउवाच-
वैदिशंनामनगरंपृथिव्यामस्तिविश्रुतम्
तत्राभूत्पृथिवीपालोधरापालइतिश्रुतः १७
कस्मिन्कालेपुरादेवीशशापस्वगणंक्रुधा
मदृतेनपरानारीभर्त्तुर्यन्मेनिवेशिता १८
तस्माद्द्वादशवर्षाणिजंबुकस्त्वंभविष्यसि
इत्युक्तःसचबभ्रामजंबुकोमेदिनीतलम् १९
वेतसीवेत्रवत्योस्तुसंगमेलोकविश्रुते
शापांतोभवितापुत्रइत्युक्तंगिरिकन्यया २०
तत्रचानशनंकृत्वातत्रेप्राणांस्ततोऽत्यजत्
दिव्यरूपवपुर्भूत्वाजगामविष्णुसन्निधौ २१

तत्राश्चर्यंमहद्दृष्ट्वाधरापालोमहीपतिः
विष्णोरायतनंकृत्वाद्क्षेत्रेप्राणांस्ततोऽत्यजत् २२
दिव्यरूपवपुर्भूत्वास्थापयामासतंप्रभुम्
तस्मिन्पुरेनरान्सर्वासन्नियोज्यास्यवीक्षणे २३
शुभमायतनंविष्णोस्तस्मिन्ग्रामेसदाजनैः
पूर्णंतुब्राह्मणादीनांपूजयित्वाकदंबकम् २४
इतिहासपुराणज्ञंवाचकंतुविशेषतः
पूजयित्वाद्विजश्रेष्ठंविद्याश्रेष्ठंमहामतिः २५
पुस्तकंचापिसंपूज्यगंधपुष्पादिभिःक्रमात्
ततस्तमाहराजासौवाचकंविनयान्वितः २६
एतदायतनंविष्णोःकारितंचतवाग्रतः
चातुर्वर्ण्यमिदंचापिश्रोतुकामंकदंबकम् २७
तिष्ठतीहद्विजश्रेष्ठकुरुपुस्तकवाचनम्
यावत्संवत्सरंविप्रगृह्यवृत्तिंत्वनुत्तमाम् २८
स्वर्णनिष्कशतंचात्रततोदास्येतथापरम्
पूर्णेवर्षेद्विजश्रेष्ठश्रेयोऽथमहमात्मनः २९
एवंप्रवर्तितंतत्रपुण्यंपुस्तकवाचनम्
वर्षसंगतमात्रेतुतथाचमुनिसत्तम ३०
अथायुषःक्षयाच्चायंकालधर्ममुपेयिवान्
मयाचास्यविमानंहिविष्णुनाप्रेरितंदिवः ३१
इत्येषाकर्मणांव्युष्टिःपुण्यमाख्यानसंज्ञकम्
श्रुतंपाद्मंमहत्पुण्यंपवित्रंपापनाशनम् ३२
गंधपुष्पोपहारैस्तुनतुष्टिर्जायतेतथा
देवानामिहसर्वेषांपुराणश्रवणाद्यथा ३३
स्वर्णरत्नादिवस्तूनांवस्त्राणांचापिकृत्स्नशः
ग्रामाणांनगराणांचदानात्तुष्टिर्भवेन्नहि ३४
यथास्याद्धर्मश्रवणात्प्रीतिःसर्वदिवौकसाम्
इतिहासपुराणानांश्रवणेमुनिसत्तम ३५
तथास्यान्मेमहाप्रीतिःसाध्येसर्वार्थकामिके
कन्यादानेमहाप्रीतिर्ममस्यान्मुनिसत्तम ३६

नतथारोचतेसाचयथापुस्तकवाचनात्
अथकिंबहुनोक्तेननान्यत्प्रीतिकरंमम ३७
पुण्याख्यानमृतेविप्रगुह्यमेतत्प्रकीर्तितम्
यश्चायमपरोविप्रइहायातोनरोत्तमः ३८
संगत्यानुगतश्चायंधर्मश्रवणमुत्तमम्
श्रुत्वाभक्तिरभूदस्यश्रद्धयापरमात्मनः ३९
कृत्वाप्रदक्षिणंतस्यवाचकस्यमहात्मनः
एषविप्रोमुनिश्रेष्ठददौस्वर्णस्यमाषकम् ४०
नान्यद्दानंकदाचक्रेलोभाविष्टेनचेतसा
पात्रदानात्फलप्राप्तिस्त्वस्यजातानसंशयः ४१
इत्येतत्कथितंकर्मआभ्यांचैवमहामुने ४२
महादेवउवाच-
एतत्पुण्यस्यमाहात्म्यंयेशृण्वंतिमनीषिणः
नतेषांदुर्गतिःकच्चिज्जन्मजन्मनिजायते ४३

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांउत्तरखण्डे
उमापतिनारदसंवादेशास्त्रव्याख्यामहिमानामा
ष्टाविंशोऽध्यायः २८

एकोनत्रिंशोऽध्यायः

महादेवउवाच-
अथान्यत्संप्रवक्ष्यामिशृणुदेवर्षिसत्तम
गोपीचंदनमाहात्म्यंयथादृष्टंश्रुतंमया १
ब्राह्मणोवाथवैश्योवाशूद्रोवाप्यथवाद्विजः
गोपीचंदनलिप्तांगोमुच्यतेब्रह्महत्यया २
तिलकंकुरुतेयस्तुगोपीचंदनसंभवम्
मद्यपानादिदोषैस्तुमुच्यतेनात्रसंशयः ३
गोपीचंदनलिप्तांगोवैष्णवोविष्णुतत्परः
सर्वदोषैःप्रमुच्येतयथागंगांभसापुनः ४
ब्रह्महामद्यपानीचस्वर्णस्तेयीतथैवच
गुरुतल्पगमोवाथशूद्रोवाप्यथवैद्विजः ५

ससद्योमुच्यतेपापादाजन्मशतकारणात्
द्वादशतिलकंप्रोक्तंसर्वेषांवैविशेषतः ६
वैष्णवानांब्राह्मणानांकर्तव्यंभूतिमिच्छताम्
दंडाकारंललाटेस्यात्पद्माकारंतुवक्षसि ७
वेणुपत्रनिभंबाहुमूलेऽन्यद्दीपकाकृति
उच्चैश्चक्राणिचत्वारिबाहुमूलेतुदक्षिणे ८
नाममुद्राद्वयंनीचैःशंखमेकंतयोरपि
मध्येततःपार्श्वयोस्तुद्वेद्वेपद्मेचधारयेत् ९
वामऽएपिचतुरःशंखान्नाममुद्रेचपूर्ववत्
चक्रमेकंगदेद्वेद्वेतयोरितिविभेदतः १०
ललाटेचगदामेकांनाममुद्रांतथाहृदि
त्रीणित्रीणिविचित्राणिमध्येशाखावुभावुभौ ११
हृदिपार्श्वेस्तनादूर्ध्वंगदापद्मानिबाहुवत्
त्रीणिचत्वारिचक्राणिकर्णमूलेद्वयोरधः १२
एकमेकंतदन्येषुतिलकेषुचधारयेत्
संप्रदायजमुद्रांतुधार्याशिष्टानुसारतः १३
यथारुच्यथवाधार्यानतत्रनियमायतः
आचांडालाद्विशुद्ध्यंतितिलकस्यैवधारणात् १४
चांडालादधिकंमन्येवैष्णवानांहिनिंदकम्
सचविष्णुसमोज्ञेयोनात्रकार्याविचारणा १५
वैष्णवोब्राह्मणोयस्तुविष्णुध्यानेषुतत्परः
नांतरस्तस्यवैज्ञेयःसवैविष्णुर्भवेदिह १६
शंखचक्रधरोविप्रोवेदाध्ययनतत्परः
सवैनारायणइतिवेदेचैवतुपठ्यते १७
तप्तचक्रधरोविप्रःपंक्तिपावनपावनः
तस्यभक्तियुतोब्रह्मन्महापापैःप्रमुच्यते १८
तुलसीपत्रमालांवातुलसीकाष्ठसंभवाम्
धृत्वावैब्राह्मणोभूयान्मुक्तिभागीनसंशयः १९
विष्णुरूपोयतोविप्रोवैष्णवःसइहस्मृतः
पंचत्वेयस्यतिलकंगोपीचंदनसंभवम् २०

विमानंससमारुह्ययातिविष्णोः परंपदम्
कलौनारदवद्मयामितिलकंगोपिचंदनम् २१
येकुर्वंतिनरश्रेष्ठानतेषांदुर्गतिःक्वचित्
शंखंचैवतथाचक्रंदक्षिणेचापिसव्यके २२
हस्तेधृत्वाविशेषेणमहापापैःप्रमुच्यते
मद्यपानरतायेचयेचस्त्रीबालघातकाः २३
अगम्यागमकायेवैदृश्यंतेभुविवाडव
भक्तानांदर्शनादेवमुक्तिस्तेषांनसंशयः २४
संसारेतुच्छसारेस्मिन्कुतोवैवैष्णवाजनाः
अहंहिवैष्णवोजातोविष्णोर्भक्तिप्रसादतः २५
काश्यांनिवसतांह्यत्ररामरामेतिसंजपन्
तेनपुण्यादियोगेनशिवोवैनात्रसंशयः २६

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांउत्तरखण्डे
उमापतिनारदसंवादेगोपीचंदनमाहात्म्यं
नामैकोनत्रिंशोऽध्यायः २९

त्रिंशोऽध्यायः

नारदउवाच-
ब्रह्मन्संवत्सराख्यस्यदीपस्यविधिमुत्तमम्
सर्वव्रतप्रधानस्यमाहात्म्यंप्रवदस्वमे १
येनव्रतानिसर्वाणिकृतान्येवनसंशयः
सर्वकामसमृद्धिश्चसर्वपापक्षयोभवेत् २
महादेवउवाच -
वदामितवदेवर्षेरहस्यंपापनाशनम्
यच्छ्रुत्वाब्रह्महागोघ्नोमित्रघ्नोगुरुतल्पगः ३
विश्वासघातीक्रूरात्मामुक्तिमाप्नोतिशाश्वतीम्
शतंकुलानामुद्धृत्यविष्णोर्लोकंसगच्छति ४
तदहंकथयिष्यामिदीपव्रतमनुत्तमम्
संवत्सरप्रमाणस्यविधिंमाहात्म्यमेवच ५
हेमंतेप्रथमेमासिप्राप्यह्येकादशींशुभाम्

ब्राह्मेमुहूर्त्तेचोत्थायकामक्रोधविवर्जितः ६
नदीसंगमतीर्थेषुतडागेषुसरित्सुच
स्नानंसमाचरेत्तत्रगृहेवानियतात्मवान् ७
स्नातोऽहसर्वतीर्थेतत्स्नानंदेहिमेसदा ८
स्नानमंत्रः
देवान्पितृंश्चसंतर्प्यकृतजप्योजितेंद्रियः
ततःसंपूजयेद्देवंलक्ष्मीनारायणंप्रभुम्
पंचामृतेनसंस्नाप्यततोगंधोदकेनच ९
स्नातोऽसिलक्ष्म्यासहितोदेवदेवजगत्पते
मांसमुद्धरदेवेशघोरात्संसारबंधनात् १०
ततःसंपूजयेद्देवंलक्ष्म्यासहजनार्दनम्
मंत्रैस्तुवैदिकैर्भक्त्यातथापौराणिकैरपि ११
अतोदेवेतिगंधादिपौरुषेणापिवापुनः
नमोमत्स्यायदेवायकूर्मदेवायवैनमः १२
नमोवाराहदेवायनरसिंहायवैनमः
नमोऽस्तुबुद्धदेवायकल्किनेचनमोनमः १३
नमोऽस्तुरामदेवायविष्णुदेवायतेनमः
नमःसर्वात्मनेतुभ्यंशिरइत्यभिपूजयेत्
केशवादीनिनामानितैर्वासंपूजयेद्धरिम् १४
वनस्पतिरसोदिव्यःसुरभिर्गंधवाञ्छुचिः
धूपोऽयदेवदेवेशनमस्तेप्रतिगृह्यताम् १५
धूपमंत्रः -
दीपस्तमोनाशयतिदीपःकांतिंप्रयच्छति
तस्माद्दीपप्रदानेनप्रीयतांमेजनार्दनः १६
दीपमंत्रः -
नैवेद्यमिदमन्नाद्यंदेवदेवजगत्पते
लक्ष्म्यासहगृहाणत्वंपरमामृतमुत्तमम् १७
नैवेद्यमंत्रः -
अर्घ्यंदद्यात्ततोभक्त्याएवंध्यात्वाजनार्दनम्
फलेनचैवहस्तेनशंखेनादायचोदकम् १८

जन्मांतरसहस्रेणयन्मयापातकंकृतम्
तत्सर्वंनाशमायातुप्रसादात्तवकेशव १९
इतिअर्घमंत्रः -
ततःकुंभंनवंशुभ्रंघृतपूर्णंसमानयेत्
लक्ष्मीनारायणस्याग्रेतैलपूर्णमथापिवा २०
तस्योपरिन्यसेत्पात्रंताम्रंमृन्मयमेवच
नवतंतुसमांवर्तिंतस्मिन्पात्रेतुनिर्वपेत् २१
ततः प्रबोधयेद्दीपंस्थाप्यकुंभंसुनिश्चलम्
पुष्पगंधादिभिःपूज्यततःसंकल्पयेच्छुचिः २२
मंत्रेणानेनदेवर्षेअसमीरेषुधामसु
कामोभूतस्यभव्यस्यसम्राडेकोविराजते २३
दीपःसंवत्सरंयावत्मयायंपरिकल्पितः
अग्निहोत्रमविच्छिन्नंप्रीयतांममकेशव २४
ततोजितेंद्रियोभूत्वाश्रुतिज्ञानपरायणः
नालपेत्पतितान्पापांस्तथापाखण्डिनोनरान् २५
रात्रौजागरणंगीतंनृत्यवाद्यादिकैस्तथा
पुण्यपाठैश्चविविधैर्धर्माख्यानैरुपोषणैः २६
ततःप्रभातसमयेकृतपूर्वाह्निकक्रियः
ब्राह्मणान्भोजयेद्भक्त्यायथाशक्त्याप्रपूजयेत् २७
स्वयंचपारणंकृत्वाप्रणिपत्यविसर्जयेत्
एवंसंवत्सरंयावत्अहोरात्रंदृढव्रतः २८
दीपंपलसुवर्णेनतदर्द्धार्द्धेनवापुनः
वर्तिस्तुराजतीप्रोक्ताद्विपलार्द्धार्द्धिकापिवा २९
घृतपूर्णंतथाकुंभंताम्रपात्रसमन्वितम्
लक्ष्मीनारायणोदेवोयथाशक्त्याहिरण्मयः ३०
कार्योभक्तिमतापुंसामुक्तिद्वारमभीप्सता
ततोनिमंत्रयेद्विद्वान्ब्रह्मणान्साधुसत्तमान् ३१
द्वादशोत्तमपक्षेतुविप्रान्षण्मध्यमेतथा
अन्यथाकारयेत्त्रीन्वाएकंकर्मकरंद्विजम् ३२
सपत्नीकंद्विजंशांतंक्रियावंतंविशेषतः

इतिहासपुराणज्ञंधर्मज्ञंमृदुमेवच ३३
पितृभक्तंगुरुपरंदेवब्राह्मणपूजकम्
पादार्घदानविधिनावस्त्रालंकारभूषणैः ३४
संपूज्यपत्न्यासहितमेकंभक्त्याचपूर्ववत्
लक्ष्मीनारायणंदेवंदीपवर्तियुतंतथा ३५
ताम्रपात्रोपरिस्थाप्यघृतकुंभेनसंयुतम्
ब्राह्मणायततोदद्याद्ध्यात्वानारायणंपरम्
मंत्रेणानेनदेवर्षेतमहंकथयामिते ३६
अविद्यातमसाव्याप्तेसंसारेपापनाशनः
ज्ञानप्रदोमोक्षदश्चतस्माद्दत्तोमयानघ ३७
इतिदीपमंत्रः –
दक्षिणांचयथाशक्त्यादत्त्वाविप्रायभक्तितः
भोजयेद्ब्राह्मणान्पश्चाद्घृतपायसमोदकैः ३८
वस्त्रैराच्छादयेत्पश्चात्सपत्नीकंतथाद्विजम्
शय्यांसोपस्करांदद्याद्धेनुंचैवसवत्सकाम् ३९
तेभ्यस्तुदक्षिणांदद्याद्यथावित्तानुसारतः
सुहृत्स्वजनबंधूंश्चभोजयेत्पूजयेत्तथा ४०
एवंमहोत्सवंकुर्याद्दीपव्रतसमापने
ततोविसर्जयेत्पश्चात्प्रणिपत्यक्षमापयेत् ४१
एवंकृतेतुयत्पुरयंतथासांक्रांतिकैश्चयत्
संवत्सराख्यदीपस्यतत्फलंप्राप्यतेनरैः ४२
मासव्रतैश्चयत्पुरयंतत्पुरयंप्राप्यतेनरैः
संवत्सरस्यदीपस्यव्रतेनचरितेनच ४३
दानव्रतैर्यथासंख्यैर्यश्चयोगव्रतैस्तथा
तत्फलंसमवाप्नोतिदीपेसांवत्सरेकृते ४४
गोभूहिररयदानानिगृहादीनांविशेषतः
यत्फलंलभतेविद्वान्तत्फलंदीपदोभवेत् ४५
दीपदःकांतिमाप्नोतिदीपदोधनमक्षयम्
दीपदोज्ञानमाप्नोतिदीपदःपरमंसुखम् ४६
दीपदानाच्चसौभाग्यंविद्यामत्यंतनिर्मलाम्

आरोग्यंपरमामृद्धिंलभतेनात्रसंशयः ४७
दीपदःसुभगांभार्यांसर्वलक्षणसंयुताम्
पुत्रान्पौत्रान्प्रपौत्रांश्चसंततिंचाक्षयालभेत् ४८
ब्राह्मणःपरमंज्ञानंक्षत्रियोराज्यमुत्तमम्
वैश्योधनपशून्सर्वाञ्छूद्रःसुखमवाप्नुयात् ४९
कुमारीचापिभर्तारंसर्वलक्षणसंयुतम्
प्राप्नोतिपरमायुश्चपुत्रान्पौत्रांश्चपुष्कलान् ५०
वैधव्यंनैवयुवतीकदाचिदपिपश्यति
नवियोगमवाप्नोतिदीपदानप्रभावतः ५१
नाधयोव्याधयश्चैवजायंतेदीपदानतः
भयात्प्रमुच्यतेभीतोबद्धोमुच्येतबंधनात् ५२
ब्रह्महत्यादिभिःपापैर्दीपव्रतपरायणः
मुच्यतेनात्रसंदेहोब्रह्मणोवचनंयथा ५४
चांद्रायणानिकृच्छ्राणिचरितानिनसंशयः
येनसांवत्सरोदीपोबोधितःशाश्वतोहरेः ५५
तेधन्यास्तेमहात्मानस्तैःप्राप्तंजन्मनःफलम्
यैःसंपूज्यहरिंभक्त्यादीपःसांवत्सरःकृतः ५६
येऽपिसंवर्त्तयंतीहदीपवर्तिविलोकनाः
तेयांतिपरमंस्थानंयत्सुरैरपिदुर्लभम् ५७
येनतैलंचवर्तिंचयथाशक्त्याप्रदीपके
प्रक्षेपयंतिसततंतेयांतिपरमांगतिम् ५८
गच्छंतंदीपकंशांतिंनशक्नोतिप्रबोधितुम्
कथयत्यन्यलोकानांतेऽपितत्फलभागिनः ५९
स्तोकंस्तोकंचभिक्षित्वातैलंदीपार्थमेवच
करोतिदीपकंविष्णोःपुण्यंतेनापिलभ्यते ६०
दीपंप्रज्वाल्यमानंतुयःपश्यत्यधमोनरः
कृतांजलिपुटोविष्णोर्विष्णुलोकमवाप्नुयात् ६१
दीपप्रज्वालनेबुद्धिंयोदद्यात्कुरुतेस्वयम्
सर्वपापविनिर्मुक्तोविष्णुलोकमवाप्नुयात् ६२
अत्राप्युदाहरंतीममितिहासंपुरातनम्

यस्यश्रवणमात्रेणमुच्यतेसर्वकिल्बिषैः ६३
सरस्वत्यास्तटेरम्येसिद्धाश्रमइतिश्रुतः
तत्रोवासद्विजःपूर्वंकपिलोनामवेदवित् ६४
व्रतोपवासनिरतोदरिद्रःश्रोत्रियस्तथा
भिक्षावृत्त्याचकुरुतेकुटुंबपरिपालनम् ६५
व्रतोपवासनियमैर्विष्णुमाराधयत्यसौ
विष्णुंसंपूज्यविधिवद्दीपंबोधयतेसदा ६६
समादायचतत्तैलंस्वगृहेपूज्यकेशवम्
दीपंभक्त्याचपरयाबोधयेद्धरितुष्टये ६७
एवंप्रवर्त्तमानस्यकपिलस्यमहात्मनः
मार्जारस्तीक्ष्णदंष्ट्रस्तुमूषकान्भक्षयेत्सदा ६८
तत्रागच्छतिभक्ष्यार्थंमूषकानामहर्निशम्
कृत्वाध्यानंसभक्ष्यार्थंनित्यंनारायणाग्रतः ६९
भक्षिताबहवस्तेनमूषकाद्विजवेश्मनि
येयेतैलार्थमायांतिवर्त्यपाहरणायच ७०
तांस्तांस्तुभक्षयत्येवमूषकान्ध्यानतत्परः
एवंप्रवर्तमानस्यकदाचित्कालपर्ययात् ७१
एकादश्यांसकपिलोब्राह्मणःस्वगृहेशुचिः
सोपवासःसपत्नीकःपूजयामासचाच्युतम् ७२
ततोजागरणंचक्रेस्तुतिनृत्यपरायणः
अर्द्धरात्रेतुसंप्राप्तेनिद्रयामोहितोद्विजः ७३
मार्जारश्चागतस्तत्रतीक्ष्णदंष्ट्रोलघुक्रमः
लक्षयामासनैवेद्यंगृहकोणेस्थितःसदा ७४
अद्राक्षीन्मूषिकांक्षुद्रांतैलपानार्थमागताम्
मंदतेजसिदीपेतुवर्त्यपाहरणोचिताम् ७५
समुत्पत्यपदाक्रम्यतदासाबिलमाविशत्
तस्याःपादेनवैवर्त्यादीपःसंबोधितोभृशम् ७६
तैलपात्रंचनमितंसुप्रकाशोऽभवत्तदा
ब्राह्मणोऽपिजजागारत्यक्त्वानिद्रांविमोहिनीम् ७७
मार्जारोऽपिचतांरात्रीमजाग्रच्चाखुभक्षकः

ततःप्रभातेविमलेकृत्वानित्यक्रियांद्विजः ७८
ततश्चपारणंचक्रेविप्रोबंधुजनैःसह
एवंप्रवर्त्तमानस्यकपिलस्यमहात्मनः ७९
बभूवुःपुत्रपौत्राश्चधनधान्यमनुत्तमम्
आरोग्यंपरमामृद्धिमवापमहतींश्रियम् ८०
दीपव्रतप्रभावेनकपिलोमोक्षमागतः
संभेद्यमंडलंपुण्यंसवितुःशशिनस्तथा ८१
दीपज्योतिःस्वरूपेणपरमात्मानियुक्तवान्
मूषिकापिचकालेनममारबिलमध्यतः ८२
विमानवरमासाद्यविष्णुलोकंजगामसा
मार्जारोऽपिचकालांतेमृतःस्वर्गंजगामसः ८२
विमानवरमारुह्यदेवगंधर्वसेवितम्
अप्सरोभिःपरिवृतोविद्याधरगणैर्युतः ८३
स्तूयमानोमहातेजाजयशब्दादिमंगलैः
स्तूयमानःसवैनागैर्विष्णुलोकंजगामसः ८४
कल्पकोटिसहस्राणिकल्पकोटिशतानिच
भुक्त्वाचविपुलान्भोगान्ततोराजाभवद्भुवि ८५
सुधर्मानामधर्मात्मादेवब्राह्मणपूजकः
रूपवान्सुभगश्चैवमहाबलपराक्रमः ८६
तस्यप्रियतमाभार्यासर्वलक्षणसंयुता
भर्तृभक्तातथाशीलानाम्नासारूपसुंदरी ८७
सर्वासांचैवनारीणांमध्येसासुभगाभवत्
पुत्राश्चबहवोजातास्तथादुहितरोघनाः ८८
एवंविहरतोस्तद्वद्दंपत्योःप्रीतिपूर्वकम्
आगतःकार्त्तिकोमासोहरिनेत्रावबोधकृत् ८९
तस्मिन्दीपाःप्रबोध्यंतेनारायणपरायणैः
कृच्छ्रचांद्रायणादीनिव्रतानिनियमास्तथा ९०
क्रियंतेविष्णुभक्तैश्चसंसारभयभीरुभिः
अथप्रबोधिनींप्राप्यराजाराज्ञीमथाब्रवीत् ९१
भद्रेप्रबोधिनीपुण्याविष्णोर्नाभिसरोरुहे

करिष्याम्यद्यपूजांचसोपवासोजितेंद्रियः ९२
स्नात्वाचपुष्करेतीर्थेपुंडरीकाक्षमच्युतम्
पूजयिष्यामिदेवेशंलक्ष्म्यासहजनार्दनम् ९३
इतिसावांछितंश्रुत्वाभर्तुःप्रियहितेरता
उवाचवचनंगुह्यंभर्त्तारंचारुहासिनी ९४
रूपसुंदर्युवाच-
ममापिहृदयेकामःसमुत्पन्नोनराधिप
रूपसौंदर्यवांछाचहृदयेममवर्त्तते ९५
पुष्करंप्रथमंतीर्थंगंतुमिच्छेत्वयासह
ततोराजातयासार्द्धमागतःपुष्करंतदा ९६
हस्त्यश्वरथवृंदैश्चसमागत्यपुरोहितैः
ततःस्नात्वातथाध्यायन्तर्पयन्पितृदेवताः ९७
पूजयामासदेवेशंपुंडरीकाक्षमच्युतम्
दीपमालाकुलेतत्रसर्वतःसुमनोहरे ९८
ददर्शलिखितंतत्रमार्जारंदेवतालये
तंदृष्ट्वाप्राकृतंकर्मजन्मस्मृत्वानृपस्तदा ९९
मुखपंकजमालोक्यप्रियायाःप्रजहासच
रूपसुंदर्युवाच-
ममसन्मुखमालोक्यभर्तःकिंस्मितकारणम् १००
कथयामासहृष्टात्माप्राक्तनंकर्मणःफलम्
राजोवाच-
अहमासंपुरादेविमार्जारोब्राह्मणालये १०१
भक्षितामूषकास्तत्रमयाशतसहस्रशः
ततोनारायणस्याग्रेदीपःसंरक्षितोयतः १०२
व्याजेनापिमयादेविप्राप्तंतत्कर्मणःफलम्
विष्णुलोकमनुप्राप्यराज्यंप्राप्तंमयाधुना १०३
रूपसुंदर्युवाच-
ममापिस्मरणंजातंप्राकृतस्यचजन्मनः
मूषिकाचाहमप्यासंक्षुद्राब्राह्मणवेश्मनि १०४
कार्तिकेचप्रबोधिन्यांमंदीभूतेचदीपके

वर्त्यग्राहरणार्थायनिर्गताहंतदाबिलात् १०५
दृष्ट्वानारायणंदेवंपूजितंकुसुमैस्तथा
निद्राभिभूतंविप्रंचवर्त्तिःकृष्टामयातदा १०६
उत्थितस्त्वंयदातत्रमांगृहीतुंकृतक्षणः
दृष्ट्वात्वंचप्रणष्टाहंप्रविष्टाबिलमध्यतः १०७
विशंत्याममपादेनदीपवर्त्तिर्विजृंभिता
तैलपात्रंचनमितंतेनाहंसुखभागिनी १०८
तन्मयाराजराजेंद्रदीपंचैवप्रकाशितम्
इदानींचमयाप्राप्तंरूपलावण्यमुत्तमम् १०९
त्वंचभर्त्तातथाराज्यंपुत्राश्चैवंविधंसुखम्
दीपप्रबोधनाज्ञातंज्ञानमत्यंतदुर्ल्लभम् ११०
तस्मात्सर्वप्रयत्नेनदीपव्रतमनुत्तमम्
आवांहिपरयाभक्त्याकुर्वश्चैवविशेषतः १११
तदेतत्कर्मणःप्राप्तंफलंराज्यादिसंपदः
पूर्वजन्मस्मृतंचापिसर्वपापक्षयस्तथा ११२
तस्मात्सर्वप्रयत्नेनविधिमंत्रादिपूर्वकम्
दीपव्रतंकृतंपुंभिःपुण्यंचंद्रार्कतारकम् ११३
इतिश्रुत्वावचोराजाचक्रेदीपव्रतंतदा
प्रिययासहदेवर्षेसम्यक्श्रद्धासमन्वितः ११४
तस्मिंस्तुपुष्करेतीर्थेकृत्वादीपव्रतंतुतौ
अवापतुःपरांमुक्तिंदेवदानवदुर्ल्लभाम् ११५
एतद्दीपस्यमाहात्म्यंयेशृण्वंतिनराभुवि
सर्वपापविनिर्मुक्ताःप्रयांतिहरिमंदिरम् ११६
येचकुर्वंतिपुरुषाःस्त्रियोवाभक्तितत्पराः
तेसर्वेपापनिर्मुक्तायांतिब्रह्मसनातनम् ११७
दीपव्रतमिदंविद्वन्कथितंतेविमुक्तिदम्
सर्वसौख्यप्रदंधन्यंमहाव्रतमिदंतव ११७
नेत्ररोगाविनश्यंतियथापापप्रभावजाः
आधयोव्याधयःसर्वेनश्यंतेहिकृतेक्षणात् ११८
नदारिद्र्यंनशोकंचनमोहोनचविभ्रमः

गृहेलक्ष्मीःसमायातिजन्मजन्मनिवाडव ११९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांउत्तरखराडे
उमापतिनारदसंवादेदीपव्रतमाहात्म्यं
नामत्रिंशोऽध्यायः ३०

एकत्रिंशोऽध्यायः

नारदउवाच-
देवदेवजगन्नाथभक्तानामभयप्रद
व्रतंब्रूहिमहादेवकृपांकृत्वाममोपरि १
श्रीमहादेवउवाच-
सार्वभौमःपुराह्यासीद्धरिश्चंद्रोमहीपतिः
तस्यतुष्टोऽददद्ब्रह्मापुरींकामदुघांशुभाम् २
सर्वरत्नमयींदिव्यांबालार्कसदृशप्रभाम्
तत्रस्थितोमहीपालोसप्तद्वीपांवसुंधराम् ३
पालयामासधर्मेणपितापुत्रमिवौरसम्
प्रभूतधनधान्यस्तुपुत्रदौहित्रवान्नृपः ४
सपालयन्शुभंराज्यंपरंविस्मयमागतः
नतादृशमभूत्पूर्वंराज्यंकस्यहिकर्हिचित् ५
नचेदृशंनरैरन्यैर्विमानमधिरोहितम्
कस्येहकर्मणोव्यष्टिर्येनाहंसुरराडिव ६
इतिचिंतापरोभूत्वाविमानवरमास्थितः
ददर्शपार्थिववरोमेरुंशिखरिणांवरम् ७
तत्रास्तेचमाहात्मासौद्वितीयइवभास्करः
आसीनंपर्वतवरेशैलपट्टेहिरएमये ८
सनत्कुमारंब्रह्मर्षिंज्ञानयोगपरायणम्
दृष्ट्वाह्यवातरद्राजाप्रष्टुकामोऽथविस्मयम् ९
ववंदेचरणौहृष्टस्तेनापिसचनंदितः
सुखोपविष्टस्तुनृपःपप्रच्छमुनिपुंगवम् १०
भगवन्दुर्ल्लभालोकेसंपच्चेयंयथामम
कर्मणाकेनलभ्येतकश्चाहंपूर्वजन्मनि ११

तत्त्वंकथयमेसर्वमनुग्राह्योऽस्मितेयदि
सनत्कुमारउवाच-
शृणुराजन्प्रवक्ष्यामिपूर्ववृत्तस्यकारणम् १२
येनकृत्वाविशेषेणतवचानुग्रहोऽभवत्
त्वमासीःपूर्वजनुषिसुवैश्यःसत्यवाक्शुचिः १३
स्वंकर्मतेपरित्यक्तंततस्त्यक्तस्तुबांधवैः
सत्वंवृत्तिपरिक्षीणोभार्ययानुगतस्तथा १४
निर्गतःस्वजनास्त्यक्त्वापरप्रेषणलिप्सया
नचप्रेषणदोह्यासीत्कालेदुर्भिक्षपीडितः १५
ततःकदाचिद्गहनेसरश्चोत्फुल्लपंकजम्
दृष्ट्वातत्रकृतोभावोगृह्णीवःपंकजानिवै १६
एतावदुक्त्वापुष्पाणितान्यादायपदेपदे
आस्थितौनगरींपुण्यांनाम्नावाराणसींशुभाम् १७
ततोविक्रयतःकश्चिनैवगृह्णातिपंकजम्
तन्मठान्निर्गतःकश्चित्तत्रैवप्रांगणेस्थितः १८
तत्रस्थानेप्रविशताश्रुतोवादित्रनिस्वनः
कस्मिंश्चश्रूयतेह्येषवादित्रस्यचनिस्वनः १९
इति पृष्टेतदातूर्येतेनोक्तेप्रस्थितोंतरम्
काशिराजस्तुविख्याइंद्रद्युम्नस्तुपार्थिवः २०
तस्यास्तिदुहिताख्यातानाम्नाचंद्रावतीसती
उपोषितामहाभागाजयंतीमष्टमींशुभाम् २१
तत्रागतोऽसौवैश्यस्तुयत्रतिष्ठतिसाशुभा
संतुष्टचित्तःसतदाहर्षस्तत्रागतोमहान् २२
तत्रस्थानेत्वयादृष्टोदेववैतानिकोविधिः
आदित्यसहितोयत्रपूज्यतेभगवान्हरिः २३
तद्भक्त्याचत्वयापत्न्यासहपुष्पार्चनंकृतम्
शेषैस्तुप्रकरस्तत्रकृतःपुष्पमयस्तथा २४
तंदृष्ट्वाविस्मितासाहकेनेहाभ्यर्चनंकृतम्
ज्ञात्वातत्कर्मतत्सर्वंकृतंसंरक्षणंतथा २५
ततस्तुष्टातुसातुभ्यंददौवित्तंबहुस्वयम्

त्वयावित्तंनोगृहीतंभोजनायानुमंत्रितः २६
नगृहीतंभोजनंचनचवित्तंत्वयातदा
आदित्योविष्णुसंयुक्तःपूजितोऽसौयथाविधि २७
ततःप्रभातसमयेरन्नमाणस्तयासदा
विश्रंभयित्वातान्सर्वान्निर्गतोऽसियथेच्छया २८
तदेतदन्यजनुषिसुकृतंचार्जितंत्वया
पंचत्वंचत्वयाप्राप्तंस्वीयकर्मानुयोगतः २९
तेनपुरायेनमहताविमानमागमत्तदा
तत्फलंभुज्यतेभूपपूर्वजन्मकृतंचयत् ३०
हरिश्चंद्रउवाच-
केनैवचविधानेनकस्मिन्मासेचसातिथिः
कर्त्तव्यातन्ममाचन्वअनुग्राह्योऽस्मितेयदि ३१
सनत्कुमारउवाच-
शृणुष्वावहितोराजन्कथ्यमानंमयातव
श्रावणस्यतुमासस्यकृष्णाष्टम्यांनराधिप ३२
रोहिणीयदिलभ्येतजयंतीनामसातिथिः
भूयोभूयोमहाराजभवेज्जन्मनिकारणम् ३३
विधानमस्यावन्यामियथोक्तंब्रह्मणामम
यत्कृत्वामुक्तपापस्तुविष्णुलोकंप्रगच्छति ३४
उपोषितस्ततःकृत्वास्नानंकृष्णतिलैःसह
स्थापयेदव्रणंकुंभंपंचरत्नसमन्वितम् ३५
वज्रमौक्तिकवैडूर्यपुष्परागेंद्रनीलकम्
पंचरत्नंप्रशस्तंतुइतिकात्यायनोऽब्रवीत् ३६
तस्योपरिन्यसेत्पात्रंसौवर्णंलन्नणान्वितम्
सौवर्णांविन्यसेत्तत्रयशोदांनंदगेहिनीम् ३७
ददमानांतुपुत्रस्यस्तनंवैविस्मिताननाम्
पिबमानंस्तनंमातुरपरंपाणिनास्पृशत् ३८
आलोक्यमातरंप्रेम्णासुखयंतंमुहुर्मुहुः
सौवर्णंकारयेद्देवंयावच्छक्तिश्चविद्यते ३९
द्विनिष्कमात्रंकर्तव्यंयदिशक्तिश्चविद्यते

त्रिलोहेनैवकर्तव्यंसौवर्णेनाथवापुनः ४०
तद्वच्चरोहिणींकुर्यात्सौवर्णीराजतःशशी
अंगुष्ठमात्रस्तुशशीरोहिणीचतुरंगुला ४१
कर्णयोःकुंडलेदद्यात्कंठाभरणकंगले
एवंकृत्वातुगोविंदंमात्रासार्द्धंजगत्पतिम् ४२
क्षीरादिस्नपनंकृत्वाचंदनेनानुलेपयेत्
श्वेतवस्त्रयुगच्छत्रंपुष्पमालोपशोभितम् ४३
नैवेद्यैर्विविधैर्भक्ष्यैःफलैर्नानाविधैरपि
दीपंचकारयेत्तत्रपुष्पमंडपशोभितम् ४४
गीतंनृत्यंचवाद्यंचकारयेद्भक्तिमान्बुधैः
एवंकृत्वाविधानंतुयथाविभवसारतः
गुरुं संपूजयेत् पश्चात्पूजांतत्रसमापयेत् ४५

इति श्रीपाद्मेमहापुराणेपंचपचाशत्सहस्रसंहितायांउत्तरखण्डेउमापति-
नारदसंवादेजन्माष्टमीव्रतंनामएकत्रिंशोऽध्यायः ३१

## द्वात्रिंशोऽध्यायः

महादेवउवाच-
दृष्ट्वाशतक्रतुंसिद्धंसमाप्तवरदक्षिणम्
मघवाजातसंकल्पःपर्यपृच्छद्बृहस्पतिम् १
भगवन्केनदानेनसर्वतःसुखमेधते
यदक्षयंमहार्घंचतन्मेब्रूहिमहातपः २
एवमिंद्रेणचोक्तोऽसौदेवदेवःपुरोहितः
प्रहस्यतंमहाप्राज्ञोबृहस्पतिरुवाचह ३
हिरण्यदानंगोदानंभूमिदानंचवासव
एतत्प्रयच्छमानस्तुसर्वपापैःप्रमुच्यते ४
सुवर्णंरजतंवस्त्रंमणिरत्नंचवासव
सर्वमेवभवेद्दत्तंवसुधांयःप्रयच्छति ५
फालकृष्टांमहींदत्वासबीजांसस्यमालिनीम्
यावत्सूर्यकृतालोकस्तावत्स्वर्गेमहीयते ६
यत्किंचित्कुरुतेपापंपुरुषोवृत्तिकर्षितः

अपिगोचर्ममात्रेणभूमिदानेनशुध्यति ७
दशहस्तेनदंडोऽत्रत्रिंशद्दंडानिवर्तनम्
दशतान्येवगोचर्म्मब्रह्मगोचर्मलक्षणम् ८
सवृषंगोसहस्त्रंतुयत्रतिष्ठत्ययंत्रितम्
बालवत्सप्रसूतानांतद्गोचर्मइतिस्मृतम् ९
विप्रायदद्याच्चगुणान्वितायतपोयुतायप्रजितेंद्रियाय
यावन्महीतिष्ठतिसागरांतातावत्फलंतस्यभवेदनंतम् १०
यथाप्सुपतितःशक्रतैलबिंदुःप्रसर्पति
एवंभूमिकृतंदानंसस्येसस्येप्रसर्पति ११
यथाबीजानिरोहंतिप्रचीर्णानिमहीतले
एवंकामान्प्ररोहंतिभूमिदानसमन्विताः १२
अन्नदाःसुखिनोनित्यंवस्त्रदोरूपवान्भवेत्
सनरःसर्वदोभूयोयोददातिवसुंधराम् १३
यथागौर्भरतेवत्संक्षीरमुत्सृज्यक्षीरिणी
एवंदत्तासहस्राक्षभूमिर्भरतिभूमिदम् १४
शंखोभद्रासनंछत्रंवराश्ववरवारणाः
भूमिदानस्यपुरायस्यफलंस्वर्गःपुरंदर १५
आदित्योवरुणोवह्निर्ब्रह्मासोमोहुताशनः
शूलपाणिश्चभगवानभिनंदंतिभूमिदम् १६
आस्फोटयंतिपितरोवर्णयंतिपितामहाः
भूमिदाताकुलेजातःसनस्त्राताभविष्यति १७
त्रीरायाहुरतिदानानिगावःपृथ्वीसरस्वती
नरकादुद्धरंत्येतेजपवापनदोहनात् १८
दुर्गतिंतारयंत्येतेविद्वद्भिर्विप्रधारणैः
प्रावृतावस्त्रदायांतिनग्नायान्तित्ववस्त्रदाः १९
तृप्तायांत्यन्नदातारःक्षुधितायांत्यनन्नदाः
कांक्षंतिपितरःसर्वेनरकाद्भयभीरवः २०
गयांयास्यतियःपुत्रःसनस्त्राताभविष्यति
एष्टव्याबहवःपुत्रायद्येकोऽपिगयांव्रजेत् २१
यजेतवाश्वमेधेननीलंवावृषमुत्सृजेत्

लोहितोयस्तुवर्णेनपुच्छाग्रेयस्तुपांडुरः २२
श्वेतःखुरविषाणाभ्यांसनीलोवृषउच्यते
नीलःपांडुरलांगूलस्तोयमुद्धरतेतुयः २३
षष्टिंवर्षसहस्राणिपितरस्तेनतर्पिताः
यच्चशृंगगतंपंकंकुलंतिष्ठतिचोद्धृतम् २४
पितरस्तस्यचाश्नंतिसोमलोकंमहाद्युतिम्
आसीद्राज्ञोदिलीपस्यनृगस्यनहुषस्यच २५
अन्येषांतुनरेंद्राणांपुनरन्योनगच्छति
बहुभिर्वसुधादत्ताराजभिःसगरादिभिः २६
यस्ययस्ययदाभूमिस्तस्यतस्यतदाफलम्
ब्रह्मघ्नोवाथस्त्रीहंताबालघ्नःपतितोऽथवा २७
गवांशतसहस्राणिहंतातत्तस्यदुःष्कृतम्
स्वदत्तांपरदत्तांवायोहरेत्तुवसुंधराम् २८
सचविष्ठाकृमिर्भूत्वापितृभिःसहपच्यते
षष्टिवर्षसहस्राणिस्वर्गेतिष्ठतिभूमिदः २९
प्रहर्ताचानुमंता च तावद्वैनरकंव्रजेत्
भूमिदाद्भूमिहर्तुश्चनापरःपुण्यपापवान् ३०
उद्धर्वाधस्तौचतिष्ठेतेयावदाभूतसंप्लवम् ३१
अग्नेरपत्यंप्रथमंसुवर्णंभूर्वैष्णवीसूर्यसुतास्तुगावः
तेषांमनंतंफलमश्नुवीतयःकांचनंगांचमहींचदद्यात् ३२
भूमिंयःप्रतिगृह्णातियश्चभूमिंप्रयच्छति
उभौतौपुण्यकर्माणौनियतौस्वर्गगामिनौ ३३
अन्यायेनहृताभूमिर्यैर्नरैरपहारिता
हरंतोहारयंतश्चहन्युस्तेसप्तमंकुलम् ३४
हरेद्धारयतेयस्तुमंदबुद्धिस्तमोवृतः
सबद्धोवारुणैःपाशैस्तिर्यग्योनिषुजायते ३५
अश्रुभिःपतितैस्तेषांदानानामवकीर्त्तनम्
ब्राह्मणस्य हृते क्षेत्रे हतंत्रिपुरुषं कुलम् ३६
वापीकूपसहस्रेणअश्वमेधशतेनच
गवांकोटिप्रदानेनभूमिहर्तानशुद्ध्यति ३७

कृतंदत्तंतपोऽधीतंयत्किंचिद्धर्मसंस्थितम्
अर्द्धांगुलस्यसीमायाहरणेनप्रणश्यति ३८
गोतीर्थंग्रामरथ्यांचश्मशानग्राममेवच
संपीडयनरकंयातियावदाभूतसंप्लवम् ३९
पंचकन्यानृतेहंतिदशहंतिगवानृते
शतमश्वानृतेहंतिसहस्रंपुरुषानृते ४०
हंतिजातानजातांश्चहिरण्यार्थेऽनृतंवदन्
सर्वंभूम्यनृतेहंतिमास्मभूम्यनृतंवद ४१
ब्रह्मस्वेनोरतिंकुर्यात्प्राणैःकंठगतैरपि
अग्निदग्धाःप्ररोहंतिब्रह्मदग्धोनरोहति ४२
अग्निदग्धाःप्ररोहंतिसूर्यदग्धास्तथैवच
राजदंडहताश्चैवब्रह्मशापहताहताः ४३
ब्रह्मस्वेनचपुष्टानिअंगानिचमुहुर्महुः
कार्यकालेविशीर्यंतेसिकताभितपोयथा ४४
ब्रह्मस्वहरणंकुर्वन्नरोयातीहरौरवम्
नविषंविषमित्याहुर्ब्रह्मस्वंविषमुच्यते ४५
विषमेकाकिनंहंतिब्रह्मस्वंपुत्रपौत्रिकम्
लोहचूर्णंचाश्मचूर्णंविषंसंजरयेन्नरः ४६
ब्रह्मस्वंत्रिषुलोकेषुकःपुमान्जरयिष्यति
ब्रह्मस्वेनतुयत्सौख्यंदेवस्वेनतुयारतिः ४७
तद्धनंकुलनाशायभवत्यात्मविनाशनम्
ब्रह्मस्वंब्रह्महत्याचदरिद्रस्यतुयद्धनम् ४८
गुरुमित्रहिरण्यंचस्वर्गस्थमपिपीडयेत्
श्रोत्रियायकुलीनायदरिद्रायचवासव ४९
संतुष्टायविनीतायसर्वस्वसहितायच
वेदाभ्यासतपोज्ञानेंद्रियसंयमशालिने ५०
ईदृशायसुरश्रेष्ठयद्दत्तंहितदक्षयम्
आमपात्रेयथान्यस्तंक्षीरंदधिघृतंमधु ५१
भिनत्तिपात्रंदौर्बल्यान्नचपात्रंविनश्यति
एवंगांचहिरण्यंचवस्त्रमन्नंमहीतिलान् ५२

अविद्वान्प्रतिगृह्णातिभस्मीभवतिकाष्ठवत्
यस्तडागंनवंकुर्यात्पुराणंवापिखानयेत् ५३
सर्वंकुलंसमुद्धृत्यस्वर्गलोकेमहीयते
वापीकूपतडागानिउद्यानप्रभवानिच ५४
पुनर्नीतानिसंस्कारंददतेमौक्तिकंफलम्
निदाघकालेपानीययस्यतिष्ठतिवासव ५५
सदुर्गंविषमंकृच्छ्रंनकदाचिदवाप्नुयात्
एकाहंतुस्थितंतोयंपृथिव्यांदेवसत्तम ५६
कुलानितारयेत्तस्यसप्तसप्तपरानपि
दीपालोकप्रदानेनवपुष्मान्सभवेन्नरः ५७
दक्षिणायाःप्रदानेनस्मृतिंमेधांचविंदति
कृत्वापिपातकंकर्मयोदद्यादनुसंधिने ५८
ब्राह्मणायविशेषेणनसपापैर्हिलिप्यते
भूमेर्गावस्तथादासःप्रसह्यप्रहृतायदा ५९
ननिवेदयतेयस्तुतमाहुर्ब्रह्मघातकम्
उपस्थितेविवाहेचयज्ञेदानेचवासव ६०
मोहाच्चरतिविघ्नंयःसमृतोजायतेकृमिः
धनंफलतिदानेनजीवितंजीवरक्षणात् ६१
रूपमैस्वर्यमारोग्यमहिंसाफलमश्नुते
फलमूलाशनात्पूजांस्वर्गःसत्येनलभ्यते ६२
प्रायोपवेशनाद्राज्यंसर्वत्रसुखमश्नुते
सुखाट्यःशक्रदीक्षायांसुगामीचतृणाशनः ६३
रूपीत्रिषवणस्नायीवायुंपीत्वाक्रतुंलभेत्
नित्यस्नायीभवेद्दक्षःसंध्यावेदजपान्वितः ६४
अहिंस्रोयातिवैराज्यंनाकपृष्ठमनाशकम्
अग्निप्रवेशीनियतंब्रह्मलोकेमहीयते ६५
रसानांप्रतिसंहारेपशून्पुत्रांश्चविंदति
नाकेचिरंसवसतिउपवासीचयोभवेत् ६६
सततंभूमिशायीयःसलभेदीप्सितांगतिम्
वीरासनंवीरशयंवीरस्थानमुपासतः ६७

अन्नयास्तस्यलोकाः स्युः सर्वकामगमास्तथा
उपवासंचदीक्षांचअभिषेकंचवासव ६८
कृत्वाद्वादशवर्षाणिवीरस्थानाद्विशिष्यते
पावनंचरतेधर्मंस्वर्गलोकेमहीयते ६९
बृहस्पतिमतंपुण्यंयेपठंतिद्विजोत्तमाः
तेषांचत्वारिवर्द्धंतेआयुर्विद्यायशोबलम् ७०
नारदउवाच–
इतींद्रायबृहस्पतिप्रणीतंधर्मशास्त्रकम्
मह्यंभक्तायसंप्रोक्तंमहेशेनाखिलंनृप ७१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांउत्तरखण्डे
उमापतिनारदसंवादेधर्मकथनेद्वात्रिंशोऽध्यायः
३२

त्रयस्त्रिंशोऽध्यायः

नारदउवाच–
शनिपीडाकथंयातितन्मेवदसुरोत्तम
त्वन्मुखाच्छ्रुयतेयद्वैतेनजंतुःप्रमुच्यते १
महादेवउवाच–
देवर्षेशृणुवृत्तांतंतेनमुच्येतबंधनात्
ग्रहाणांग्रहराजोऽयसौरिःसर्वमहेश्वरः २
अयंतुदेवोविख्यातःकालरूपीमहाग्रहः
जटिलोवज्ररोमाचदानवानांभयंकरः ३
तस्याख्यानंचलोकेऽस्मिन्प्रथितंनास्तिवैप्रभो
मयागुप्तंविशेषेणनोक्तंहिकस्यचित्कदा ४
रघुवंशेऽतिविख्यातोराजादशरथःपुरा
चक्रवर्तीमहावीरःसप्तद्वीपाधिपोऽभवत् ५
कृत्तिकांतेशनिंज्ञात्वादैवज्ञैर्ज्ञापितोहिसः
रोहिणींभेदयित्वाचशनिर्यास्यतिसांप्रतम् ६
शाकटंभेदमत्युग्रंसुरासुरभयंकरम्
द्वादशाब्दंतुदुर्भिक्षंभविष्यतिसुदारुणम् ७

एतच्छ्रुत्वाततोवाक्यंमंत्रिभिःसहपार्थिवः
मंत्रयामासकिमिदंभयंकरमुपस्थितम् ८
आकुलंचजगद्दृष्ट्वापौरजानपदादिकम्
ब्रुवंतिसर्वतोलोकाःक्षयएषसमागतः ९
देशाःसनगराग्रामाभयभीताःसमंततः
पप्रच्छप्रयतोराजावसिष्ठप्रमुखान्द्विजान् १०
संविधानंकिमत्रास्तिब्रूतमांहिद्विजोत्तमाः ११
वसिष्ठउवाच-
प्राजापत्यमृक्षमिदंतस्मिन्भिन्नेकुतःप्रजाः
अयंयोगोह्यसाध्यस्तुब्रह्मशक्रादिभिस्तथा १२
इतिसंचिंत्यमनसासाहसंपरमंमहत्
समादायधनुर्दिव्यंदिव्यायुधसमन्वितम् १३
रथमारुह्यवेगेनगतोनक्षत्रमंडलम्
सपादंयोजनंलक्षंसूर्यस्योपरिसंस्थितम् १४
रोहिणीपृष्ठमास्थायराजादशरथःपुरा
रथेतुकांचनेदिव्येमणिरत्नविभूषिते १५
हंसवर्णहयैर्युक्तेमहाकेतुसमुच्छ्रये
दीप्यमानोमहारत्नैःकिरीटमुकुटोज्ज्वलः १६
बभ्राजसतदाकाशेद्वितीयइवभास्करः
आकर्णपूर्णाचापेतुसंहारास्त्रंन्ययोजयत् १७
संहारास्त्रंशनिर्दृष्ट्वासुरासुरभयंकरम्
हसित्वातद्भयात्सौरिरिदंवचनमब्रवीत् १८
शनिरुवाच -
पौरुषंतवराजेंद्रपरंरिपुभयंकरम्
देवासुरमनुष्याश्चसिद्धिविद्याधरोरगाः १९
मयाविलोकिताराजन्भस्मसाच्चभवंतिते
तुष्टोऽहतवराजेंद्रतपसापौरुषेणच
वरंब्रूहिप्रदास्यामिमनसायत्किमिच्छसि २०
दशरथउवाच-
रोहिणींभेदयित्वातुनगंतव्यंकदाचन

सरितःसागरायावत्यावच्चंद्रार्कमेदिनी २१
याचितंतुमयासौरेनान्यमिच्छामितेवरम्
एवमस्तुशनिःप्राहवरंदत्त्वातुशाश्वतम् २२
पुनरेवाब्रवीत्तुष्टोवरंवरयसुव्रत
प्रार्थयामासहृष्टात्मावरमन्यंशनेस्तदा २३
नभेत्तव्यंहिशकटंत्वयाभास्करनंदन

द्वादशाब्दंतुदुर्भिक्षंनकर्तव्यंकदाचन २४
शनिरुवाच–
द्वादशाब्दंतुदुर्भिक्षंनकदाचिद्भविष्यति
कीर्तिरेषात्वदीयाचत्रैलोक्येविचरिष्यति २५
वरद्वयंतुसंप्राप्यहृष्टरोमाचपार्थिवः
रथोपरिधनुर्मुक्त्वाभूत्वाचैवकृताञ्जलि २६
ध्यात्वासरस्वतींदेवींगणनाथंविनायकम्
राजादशरथःस्तोत्रंसौरेरिदमथाब्रवीत् २७
दशरथउवाच–
नमःकृष्णायनीलायशितिकंठनिभायच
नमःकालाग्निरूपायकृतांतायचवैनमः २८
नमोनिर्मांसदेहायदीर्घश्मश्रुजटायच
नमोविशालनेत्रायशुष्कोदरभयाकृते २९
नमःपुष्कलगात्रायस्थूलरोम्णेऽथवैनमः
नमोदीर्घायशुष्कायकालदंष्ट्रनमोस्तुते ३०
नमस्तेकोटराक्षायदुर्निरीक्ष्यायवैनमः
नमोघोरायरौद्रायभीषणायकपालिने ३१
नमस्तेसर्वभक्षायवलीमुखनमोस्तुते
सूर्यपुत्रनमस्तेस्तुभास्करेभयदायच ३२
अधोदृष्टेनमस्तेस्तुसंवर्तकनमोस्तुते
नमोमंदगतेतुभ्यंनिस्त्रिंशायनमोस्तुते ३३
तपसादग्धदेहायनित्यंयोगरतायच
नमोनित्यंक्षुधार्तायअतृप्तायचवैनमः ३४

ज्ञानचक्षुर्नमस्तेस्तुकश्यपात्मजसूनवे
तुष्टोददासिवैराज्यंरुष्टोहरसितत्क्षणात् ३५
देवासुरमनुष्याश्चसिद्धविद्याधरोरगाः
त्वयाविलोकिताःसर्वेनाशंयांतिसमूलतः ३६
प्रसादंकुरुमेदेववरार्होऽहमुपागतः
एवंस्तुतस्तदासौरिर्ग्रहराजोमहाबलः ३७
अब्रवीच्चपुनर्वाक्यंहृष्टरोमातुभास्करिः
तुष्टोऽहतवराजेंद्रस्तवेनानेनसुव्रत
वरंब्रूहिप्रदास्यामिस्वेच्छयारघुनंदन ३८
दशरथउवाच-
अद्यप्रभृतितेसौरेपीडाकार्यानकस्यचित्
देवासुरमनुष्याणांपशुपक्षिसरीसृपाम् ३९
शनिरुवाच-
गृह्णंतीतिग्रहाःसर्वेग्रहाःपीडाकराःस्मृताः
अदेयंयाचितंराजन्किंचिद्युक्तंवदाम्यहम् ४०
त्वयाप्रोक्तमिदंस्तोत्रंयःपठिष्यतिमानवः
एककालंद्विकालंवापीडामुक्तोभवेत्क्षणात् ४१
देवासुरमनुष्याणांसिद्धविद्याध्ररक्षसाम्
मृत्युंमृत्युगतोदद्यांजन्मन्यंतेचतुर्थके ४२
यःपुनःश्रद्धयायुक्तःशुचिर्भूत्वासमाहितः
शमीपत्रैःसमभ्यर्च्यप्रतिमांलोहजांमम ४३
माषौदनतिलैर्मिश्रंदद्याल्लोहंचदक्षिणाम्
कृष्णांगांवृषभंवापियोवैदद्याद्द्विजातये ४४
मद्दिनेतुविशेषेणस्तोत्रेणानेनपूजयेत्
पूजयित्वाजपेत्स्तोत्रंभूत्वाचैवकृतांजलि ४५
तस्यपीडानचैवाहंकरिष्यामिकदाचन
गोचरेजन्मलग्नेवादशास्वंतर्दशासुच ४६
रक्षामिसततंतस्यपीडांचापिग्रहस्यच
अनेनैवविधानेनपीडामुक्तंजगद्भवेत् ४७
एवंयुक्त्यामयादत्तोवरस्तेरघुनंदन

वरत्रयंतुसंप्राप्यराजादशरथस्तदा ४८
मेनेकृतार्थमात्मानंनमस्कृत्यशनैश्चरम्
शनिनाचाभ्यनुज्ञातोरथमारुह्यवेगवान् ४९
स्वस्थानंगतवान्राजाप्राप्तःश्रेयोऽभवत्तदा
यइदंप्रातरुत्थायशनिवारेस्तवंपठेत् ५०
पठ्यमानमिदंस्तोत्रंश्रद्धयायःशृणोतिच
नरःसमुच्यतेपापात्स्वर्गलोकेमहीयते ५१

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांउत्तरखराडे-
उमापतिनारदसंवादेदशरथकृतशनिस्तोत्रंनाम
त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽधयायः

नारदउवाच-
त्रिस्पृशाख्यंव्रतंब्रूहिसर्वेश्वरविशेषतः
यच्छ्रुत्वामुच्यतेलोकःकर्मबंधनतःक्षणात् १
महादेवउवाच-
सर्वपापौघशमनंमहादुःखविनाशनम्
शृणुकृष्णावतारंत्वंत्रिस्पृशाख्यंमहाव्रतम् २
कामदंसस्पृहाणांतुनिस्पृहाणांतुमोक्षदम्
त्रिस्पृशाख्यंव्रतंविप्रशृणुष्वगदतोमम ३
प्रत्यक्षमर्चितस्तेनकलिकालेचकेशवः
त्रिस्पृशाकीर्तनंनित्यंयःकरोतिमहामुने ४
नपुरश्चरणेचीर्णेसर्वपापक्षयोभवेत्
त्रिस्पृशानाममात्रेणक्षीयतेनात्रसंशयः ५
नागमैर्नपुराणाद्यैर्नमखैस्तीर्थकोटिभिः
बहुभिर्व्रतसंघैश्चपूजितैस्त्रिदशैरपि ६
मोक्षोभवतिविप्रेन्द्रत्रिस्पृशानकृतायदि
मोक्षार्थेदेवदेवेनदृष्टावैवैष्णवीतिथिः ७
द्विजानांदुर्विदंसांख्यंकलिकालेविशेषतः
अनिग्रहश्चेंद्रियाणांस्थिरत्वंमनसोनहि ८

विषयैर्विप्रयुक्तानांध्यानधारणवर्जिनाम्
कामभोगप्रसक्तानांत्रिस्पृशामोक्षदायिनी ९
मह्यंचैवपुराप्रोक्ताचतुर्वक्त्रस्यसागरे
क्षीरोदेप्रणतानांतुमत्स्यरूपेणचक्रिणा १०
त्रिस्पृशांयेकरिष्यंतिविषयैरपिसंयुताः
तेषामपिमयादत्तोमोक्षःसांख्यविवर्जिनाम् ११
कामभोगप्रसक्तानांत्रिस्पृशामोक्षदायिनी
बहुभिर्मुनिसंघैश्चकृतेयंचमहामुने १२
कार्त्तिकेशुक्लपक्षेतुत्रिस्पृशाजायतेयदि
सोमेनसोमजेनापिपापकोटिविनाशिनी १३
यस्याउपोषणकृतोहत्यायुक्तमहेशितुः
हस्ताद्ब्रह्मकपालंतुतत्क्षणात्पतितंभुवि १४
कलिकल्मषकोटयौघैर्मुक्तादेवीत्रिमार्गगा
उपदेशान्माधवस्यत्रिस्पृशासमुपोषणात् १५
हत्याष्टौबाहुवीर्यस्यपूर्वजातामहामुने
गताभृगूपदेशेनत्रिस्पृशासमुपोषणात् १६
शतायुधेनविप्रेंद्रनिहतोब्राह्मणोवने
ब्रह्महत्याविनिर्मुक्तःत्रिस्पृशासमुपोषणात् १७
जीवोपदेशाच्छक्रस्यहत्यानमुचिसंभवा
विनष्टामुनिमुख्येन्द्रत्रिस्पृशासमुपोषणात् १८
ब्रह्महत्यादिपापानित्रिस्पृशासमुपोषणात्
विलयंयातिविप्रेंद्रपापेष्वन्येषुकाकथा १९
नप्रयागेनकाश्यांतुगोमत्यांकृष्णसंनिधौ
मोक्षोभवतिविप्रेंद्रत्रिस्पृशायदिनोकृता २०
मरणाच्चप्रयागेतुगोमत्यांकृष्णसन्निधौ
स्नानमात्रेणगोमत्यांमुक्तिर्भवतिशाश्वती २१
गृहेपिजायतेमुक्तिस्त्रिस्पृशासमुपोषणात्
विषयेवर्त्तमानस्यकामभोगान्वितस्यच २२
निवृत्तविषयस्यापिमुक्तिःसांख्येनदुर्ल्लभा
तस्मात्कुरुष्वविप्रेंद्रत्रिस्पृशांमोक्षदायिनीम् २३

नारदउवाच-
कीदृशंतत्सुरश्रेष्ठत्रिस्पृशाख्यंमहाव्रतम्
मुक्तिदंयद्द्विजातीनांत्वयाप्रोक्तंममाधुना २४
महादेवउवाच-
जाह्नव्यैसापुराविप्रत्रिस्पृशामाधवेनतु
प्राचीसरस्वतीतीरेकथितात्वनुकंपया २५
जाह्नव्युवाच-
कलिकल्मषकोटयौघैर्ब्रह्महत्यादिकैर्युताः
कलिकालेहृषीकेशस्नानंकुर्वंतिमज्जले २६
तेषांपापशतैर्दोषैर्देहोमेकलुषीकृतः
कथंयास्यतिमेदेवपातकंगरुडध्वज २७
प्राचीमाधवउवाच-
कथयामिनसंदेहोमापुत्रिरोदनंकुरु
श्यामोवटस्तुमेस्थानंप्राचीदेवीममाग्रतः २८
वहतेब्रह्मतनयादृष्ट्वाग्रेचसुरेश्वरीम्
स्नानंकुरुष्वनित्यंत्वंत्वत्रपूताभविष्यसि २९
यत्रब्रह्मसुताप्राचीतत्राहंनात्रसंशयः
तीर्थकोटिशतैर्युक्तःसुरैःसहवसाम्यहम् ३०
पवित्रंमत्प्रियंस्थानंहत्याकोटिविनाशनम्
संतुष्टेनमयादत्तंयस्मात्प्राणाधिकासिमे ३१
तीर्थकोटिसहस्राणिनित्यंतिष्ठंतिजाह्नवि
प्राचीसरस्वतीतोयेसर्वदैवममाज्ञया ३२
ब्रह्मवधात्सुरापानात्गोधवाद्वृषलीवधात्
ब्रह्मस्वहरणादेवमातापित्रोस्त्वपूजनात् ३३
चक्रियानाद्गुरुद्रोहादभक्ष्यस्यचभक्षणात्
सर्वपापस्यकरणात्प्राचीब्रह्मसुतासुते ३४
व्यपोहयतिपापानिसकृत्स्नानेनमेऽग्रतः
कुरुस्नानंसरिच्छ्रेष्ठेविपापात्वंभविष्यसि ३५
जाह्नव्युवाच-
नाहंशक्नोमिदेवेशश्चागंतुंनित्यमेवहि

कथंनश्यंतिपापानिकथयस्वेहमाधव ३६
प्राचीमाधवउवाच-
नशक्नोषियदागंतुंनित्यमेवहिजाह्नवि
तदान्यत्संप्रवक्ष्यामियस्मान्मत्पादसंभवा ३७
सरस्वत्यधिकायाचतीर्थकोटिशताधिका
मखकोटयधिकावापिव्रतदानाधिकाचया ३८
जपहोमाधिकायाचचतुर्वर्गफलप्रदा
सांख्ययोगाधिकायाचत्रिस्पृशाक्रियतांशुभा ३९
यस्मिन्मासेसमायातिसिताचयदिवासिता
कर्तव्यासासरिच्छ्रेष्ठेकृतेपापात्प्रमुच्यते ४०
जाह्नव्युवाच-
कीदृशीत्रिस्पृशादेवममाख्याहिसुमाधव
ईदृशोमहिमायस्यास्त्वयाप्रोक्तोममाधुना ४१
दशम्येकादशीभद्रादिनैकस्मिन्यदाभवेत्
त्रिस्पृशासाभवेद्देववान्यथावदमेप्रभो ४२
कृष्णउवाच-
आसुरीत्रिस्पृशादेवीयात्वयापरिकीर्तिता
वर्जनीयाप्रयत्नेनवृत्तिहीनोयथापतिः ४३
असुराणांतुसाप्रोक्ताआयुर्बलविनाशिनी
वर्जनीयाप्रयत्नेनयथानारीरजस्वला ४४
स्वजातिंचपरित्यज्ययागताधमजातिषु
सैवत्याज्यंविशेषेणदशमीयुक्तंहिमद्दिनम् ४५
यथारजस्वलासंगाद्दूष्यंतेज्ञानवर्जिताः
तथैवदशमीयुक्तंमद्दिनंदूषितंनृणाम् ४६
हत्यायुतशतंहंतित्रिस्पृशासमुपोषिता
एकादशीद्वादशीचरात्रिशेषेत्रयोदशी ४७
त्रिस्पृशासातुविज्ञेयादशमीसहितानहि
कृत्वापराधंमुच्येतप्रायश्चित्तेकृतेनरः ४८
दशमीवेधजंदोषंनक्षमामिसुरापगे
भुक्तंहालाहलंतेनविषस्यभक्षणंकृतम् ४९

दशमीमिश्रितंयेनकृतमेकादशीव्रतम्
इतिमत्वानकर्त्तव्यंमद्दिनंदशमीयुतम् ५०
जन्मकोटिकृतंपुरायंसंतानंयातिसंक्षयम्
पातयेत्स्वकुलंस्वर्गान्नयतेरौरवादिकम् ५१
स्वदेहंशोधयित्वातुकर्त्तव्योममवासरः
वृद्धौत्याज्याविनावेधाच्छ्रवणादिषुसंयुता ५२
जन्मपुरायंक्षयंयातिएकादश्युपवासिनाम्
संवृद्धौतुविशेषेणसंदेहेसमुपस्थिते ५३
ममाज्ञयाचकर्त्तव्याद्वादशीवल्लभामम ५४
जाह्नव्युवाच–
करिष्यऽहेजगन्नाथत्रिस्पृशांवचनात्तव
सर्वपापविनिर्मुक्ताभविष्यामितवाज्ञया ५५
श्रीकृष्णउवाच–
स्वस्थानंगच्छभद्रंतेनभीःकार्याकदाचन
तवदेविसरिच्छ्रेष्ठेनपापंसंक्रमिष्यति ५६
स्नात्वासरस्वतीतोयेयेऽचयित्वाचमाधवम्
प्रणमंतिजगन्नाथंतेयांतिपरमांगतिम् ५७
जाह्नव्युवाच–
विधानंब्रूहिमेब्रह्मन्सर्वस्वेनकरोम्यहम्
प्रसादयामिदेवेशंदामोदरमनामयम् ५८
प्राचीमाधवउवाच–
शृणुदेविप्रवक्ष्यामित्रिस्पृशायाविधानकम्
यंश्रुत्वापिसरिच्छ्रेष्ठेमुच्यतेपातकैर्नरः ५९
पलेनचपलार्धेनतदर्द्धेनापिवापगे
प्रतिमाममसौवर्णाकार्याविभवसारतः ६०
पात्रंताम्रमयंकार्यंतिलैस्तुपरिपूरितम्
सजलंतुघटंशुभ्रंपंचरत्नसमन्वितम् ६१
वेष्टितंपुष्पमालाभिःकर्पूरागुरुवासितम्
न्यसेद्दामोदरंपश्चात्स्नापयित्वाविलिप्यच ६२
परिधानंततःकार्यंवस्त्रयुग्मेनचान्वितम्

मंत्रैस्तुपूजनंकार्यंपुराणैःसमुदीरितैः
पुष्पैःकालोद्भवैःशुभ्रैस्तुलसीपत्रैश्चकोमलैः ६३
छत्रंतुविष्णवेदद्यात्पादुकाभ्यांसुसंयुतम्
निवेद्यानिमनोज्ञानिफलानिसुबहून्यपि ६४
उपवीतंतुदातव्यंसोत्तरीयंनवंदृढम्
वैणवंदापयेद्दंडंसुरूपोंसोन्नतंदृढम् ६५
दामोदरायवैपादौजानुनीमाधवायच
गुह्यंकामप्रदायेतिकटिंवामनमूर्तये ६६
पद्मनाभायनाभिंतुजठरंविश्वयोनये
हृदयंज्ञानगम्यायकंठंवैकुंठगामिने ६७
सहस्रबाहवेबाहूचक्षुषीयोगरूपिणे
संपूज्यविधिवद्भक्त्यादद्यादर्घंविधानतः ६८
शुभ्रेणनालिकेरेणशंखोपरिस्थितेनहि
सूत्रेणावेष्टितेनैवहस्तयोरुभयोरपि ६९
स्मृतोहरसिपापानियदिनित्यंजनार्दन
दुःस्वप्नंदुर्निमित्तानिमनसादुर्विचिन्विता ७०
नारकंतुभयंदेवभयदुर्गतिसंभवम्
यन्ममस्यान्महादेवएहिकंपारलौकिकम् ७१
तेनदेवेशमांरक्षगृहाणार्घंनमोस्तुते
कृपादृष्टिःसदैवास्तुदामोदरममोपरि ७२
धूपंदीपंचनैवेद्यंकुर्यान्नीराजनंततः
शीर्षोपरिसरिच्छ्रेष्ठेभ्रामयेद्वारिजंहरेः ७३
कृत्वाविधानमेतद्धिपूजयेत्स्वगुरुंततः
दद्यात्सुवर्णंवस्त्राणिसोष्णीषंचैवकंचुकम् ७४
उपानहोऽपिछत्रंचमुद्रिकांचकमंडलुम्
भोजनंचैवतांबूलंसप्तधान्यंचदक्षिणाम् ७५
गुरुंसंपूज्यदेवेशंकुर्याज्जागरणंहरेः
गीतनृत्यसमायुक्तंतथाशास्त्रसमन्वितम् ७६
निशांतेचैवदेवायदत्वाचार्घंविधानतः
स्नानादिकांक्रियांकृत्वाभुंजीयाद्वाडवैःसह ७७

शिवउवाच-
द्विजैतत्रिस्पृशाख्यानमद्भुतंरोमहर्षणम्
श्रुत्वातुलभतेपुगयंगंगांस्नानसमुद्भवम् ७८
अश्वमेधसहस्राणिवाजपेयशतानिच
तत्फलंसमवाप्नोतित्रिस्पृशासमुपोषणात् ७९
पितृपक्षोमातृपक्षस्तथाचैवात्मपक्षकः
तैःसर्वैःसहसंमुक्तोविष्णुलोकेमहीयते ८०
तीर्थकोटिषुयत्पुगयंक्षेत्रकोटिषुयत्फलम्
तत्फलंसमवाप्नोतित्रिस्पृशासमुपोषणात् ८१
ब्राह्मणायेऽपिकुर्वंतिक्षत्रियाःकृष्णमानसाः
वैश्यावाशूद्रजन्मानोयेतथाचान्यजातयः ८२
तेसर्वेमुक्तिमायांतिभुवंत्यक्त्वाद्विजोत्तम
मंत्राणांमंत्रराजोऽथयथास्याद्द्वादशाक्षरः ८३
व्रतानांचयथाचैषायेनवैत्रिस्पृशाकृता
ब्रह्मणाचकृतापूर्वंपश्चाद्राजर्षिभिःकृता ८४
अन्येषांकाकथावत्सत्रिस्पृशामुक्तिदायिनी
अनेनविधिनाब्रह्मंस्त्रिस्पृशासंभवंव्रतम् ८५
यःकरोतिनरोभक्त्याशृणुवक्ष्यामितत्फलम्
गंगावगाहनेब्रह्मन्वाराणस्यांतुयत्फलम् ८६
मन्वंतरसहस्रैस्तुत्रिस्पृशाकारकोहितत्
प्राचीचयमुनास्नानेवर्षैर्यत्कोटिभिःफलम् ८७
तत्फलंसमवाप्नोतित्रिस्पृशाव्रतकृन्नरः
तत्फलंतुकुरुक्षेत्रेसूर्यग्रहणकोटिभिः ८८
हेमभारशतैर्दानैस्त्रिस्पृशाकरणेनतत्
पापकोटिसहस्राणिहत्याकोटिशतानिच ८९
एकेनैवोपवासेनक्रियतेभस्मसाद्द्रुतम्
त्रिस्पृशायाव्रतंयत्तुअगतीनांगतिप्रदम् ९०
गतिमिच्छंतिविप्रर्षेमहत्पापशतानिच
स्वयंकृष्णेनकथितंपाराशर्यस्यचाग्रतः ९१
प्रकाशयतियश्चेदंलिखित्वावैष्णवंद्विजे

पापोघैर्ग्रथितस्यापितस्यमुक्तिर्भविष्यति ९२
पुरायैरवाप्यतेविद्वन्मन्वंतरशतैरपि
त्रिस्पृशादुर्लभालोकेप्राप्यतेनैवमानवैः ९३
कलौयेत्रिस्पृशांलब्ध्वानकुर्वंतिनराधमाः
तेषांजन्मफलंचैवजीवितंविफलंभवेत् ९४
प्रेतत्वंतैःसमुत्तीर्णंविनाश्राद्धैर्विनासुतैः
कृतायैस्त्रिस्पृशाविद्वन्सकृतत्प्राप्यकलौयुगे ९५

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांउत्तरखराडे-
उमापतिनारदसंवादेत्रिस्पृशाख्यानंनामचतुस्त्रिंशोऽध्यायः ३४

## पञ्चत्रिंशोऽधयायः

महादेवउवाच-
अतस्त्वांसंप्रवक्ष्यामिउन्मीलनीमनुत्तमाम्
यस्याःश्रवणमात्रेणजन्मसंसारबंधनात् १
पापात्मामुच्यतेपापैःस्वर्गलोकेमहीयते
देवताःपितरश्चैवतस्यागतिमवाप्नुयुः २
विद्यार्थीलभतेविद्यांसर्वकामानवाप्नुयात्
तस्याव्रतान्नसंदेहःस्वर्गलोकेमहीयते ३
स्वस्थानंतत्रवैप्राप्तःशिवलोकेमहीयते
अतस्त्वंकुरुषेराजन्वैष्णवानांतुपूजनम् ४
वैष्णवानांतुयेराजन्सेवाकुर्वंतिनित्यशः
तेषांदंडंचकुरुषेनोवातेषांनराधिपः ५
भोजनानंतरंतेषांभोजनंकुरुतेनृप
तैरेवपूजितोविष्णुर्यैर्भक्त्यातुप्रपूजितः ६
शालग्रामशिलाभूतांदत्त्वामूर्द्धनिप्रत्यहम्
त्वंधारयसिभूपालकंठेनित्यंसुभक्तितः ७
धूपशेषंतुवैविष्णोर्भक्त्याभजसिभूपते
आरार्तिकंसदाकृत्वाभक्तानांवेदयेर्नृप ८
शंखोदकंहरेर्मूर्ध्निभ्रामयित्वातुभक्तितः
नित्यंविभर्षिशिरसिशेषंयच्छसिवैष्णवान् ९

नैवेद्यंप्रत्यहंकृत्वासर्वोपस्करसंयुतम्
विष्वक्सेनायदत्वावैस्वयंभुनक्षिवाडव १०
विष्णोर्निवेदितंचान्नंवैष्णवैःसहभुज्यते
नित्यंनामसहस्रेणभक्तयास्तौषिजनार्दनम् ११
दीपार्घदानंवैविष्णोःकुरुषेगीतनर्तनम्
श्यामांकुरैःपूजयसेपूज्यंतेनृपसत्तम १२
श्यामांकुरैःसदावत्सपूजनंचातिदुर्ल्लभम्
पृथ्वीदानसमंपुगयंदूर्वयापूजनेकृते १३
अतोवैनास्तिलोकेऽस्मिन्दूर्वायाःसदृशंभुवि
तयावैपूजनंकार्यंविष्णुसायुज्यमिच्छता १४
अतस्त्वंकुरुषेनित्यंपूजनंदूर्वयासह
यवाक्षतैर्विशेषेणपूजनंकुरुषेनवा १५
पक्षेपक्षेनृपश्रेष्ठविधिवद्द्वादशीव्रतम्
यत्कृतंतुमहाराजमहापापप्रणाशनम् १६
मोक्षदंसुखदंचैवतथायुष्यप्रदंसदा
एतद्विष्णुव्रतंप्रोक्तंवैष्णवानांतुमोक्षदम् १७
गृहस्थानांतुसुखदंयतीनांमुक्तिदायकम्
सर्वरोगादिशमनंपवित्रंकायशोधनम् १८
व्रतमेतच्चकुरुषेनोवाचैवनराधिप
दशमीवेधरहितंकुरुषेजागरान्वितम् १९
तुलसीपत्रनिकरैर्नित्यंपूजयसेहरिम्
गोपीचंदनजंपत्रंभालेवानृपसत्तम २०
धारितंसर्वलोकानांपवित्रीकरणंनृप
अतस्त्वंचधारयसेगोपीचंदनसंभवम् २१
ब्रह्महाहेमहारीचमद्यपानीतथैवच
अगम्यगोमहापापीतथाह्यनृतभाषितः २२
तेसर्वेमुक्तिमायांतितिलकंधारणादृताः
बिभर्षिकंठेनित्यंत्वंधात्रीफलसमुद्भवाम् २३
मालांमुख्यायुतसमांतुलसीपत्रसंभवाम्
शालग्रामशिलायुक्तांद्वारकायांसमुद्भवाम् २४

नित्यंपूजयसेभूपभुक्तिमुक्तिफलप्रदाम्
पद्मसंज्ञंपुराणंवैपठसेपुरतोहरेः २५
चरितंदैत्यराज्यस्यप्रह्लादस्यचभूपते
वासरंवासुदेवस्यसवेधंकुर्वतोनरान् २६
निवारयसिभूपालशास्त्रंदृष्ट्वाप्रयत्नतः
सवेधंवासरंविष्णोर्यस्मिन्राष्ट्रेप्रवर्तते २७
लिप्यतेतेनपापेनराजाभवतिनारकी
वेधंचतुर्विधंत्यक्त्वासमुपोष्यहरेर्दिनम्
कुलकोटिंसमुद्धृत्यविष्णुलोकेमहीयते २८
गौतमउवाच-
शृणुभूपालवक्ष्यामिवैष्णवाख्यंमहाव्रतम्
यंश्रुत्वापापिनःसर्वेमुक्तिमायांतितत्क्षणात् २९
द्वादशीसंभवंपुण्यंमयाख्यातंनकस्यचित् ३०
वैष्णवोऽसिमहाराजभक्तोभागवतेनृणाम्
वैष्णवंतुमहागुह्यंतद्व्रतंत्वंनिशामय ३१
उन्मीलनीनामपुराभक्त्यामेमाधवेनतु
कथितासुप्रसन्नेनतांतेभूपवदाम्यहम् ३२
एकादशीअहोरात्रंप्रभातेघटिकाभवेत्
उन्मीलनीतुसाज्ञेयाविशेषेणहरिप्रिया ३३
त्रैलोक्येयानितीर्थानिपुण्यान्यायतनानिच
कोटयंशेनैवतुल्यानिमखावेदास्तपांसिच ३४
उन्मीलनीसमंकिंचित्नभूतंनभविष्यति
प्रयागोनकुरुक्षेत्रंनकाशीनचपुष्करः ३५
शैलोहिमाचलोनैवनमेरुर्गंधमादनः
शैलोननीलनिषधोनविंध्योनैवनैमिषम् ३६
गोदावरीनकावेरीचंद्रभागानवेदिका
नतापीनपयोष्णीचनक्षिप्रानैवचंदना ३७
चर्मण्वतीचसरयूश्चंद्रभागानगंडिका
गोमतीचविपाशाचशोणाख्यश्चमहानदः ३८
किमत्रबहुनोक्तेनभूयोभूयोनराधिप

उन्मीलनीसमंकिंचिन्नदेवःकेशवात्परः ३९
उन्मीलनीमनुप्राप्ययैःकृतंकेशवार्चनम्
पापचक्रसमूहस्यराशयःपतिताःक्षणात् ४०
यस्मिन्मासेमहीपालतिथिरुन्मीलनीभवेत्
तन्मासनाम्नागोविंदःपूजनीयःप्रयत्नतः ४१
जातरूपमयःकार्यमासनाम्नातुमाधवः
स्वशक्त्याविश्वरूपस्तुश्रद्धाभक्तिसमन्वितः ४२
पवित्रोदकसंयुक्तंपंचरत्नसमन्वितम्
गंधपुष्पाक्षतैर्युक्तंकुंभंस्त्रग्दामभूषितम् ४३
पात्रंचसोदकंकार्यंगोधूमैश्चापिपूरितम्
नानारत्नैश्चसंयुक्तंनानागंधैःप्रपूजितम् ४४
मल्लिकामोदसंयुक्तंजातीपुष्पैःप्रपूजितम्
श्वेताख्यैस्तंदुलैश्चैवपूरणीयःप्रयत्नतः ४५
प्रदद्याद्वस्त्रयुग्मंतुउपवीतंतुसोत्तरम्
उपानहौतुराजर्षेश्छातपत्रंशिरोपरि ४६
भोजनंजलपात्रंचसप्तधान्यंतिलैःसह
रूप्यंचैवतुकार्पासंपायसंमुद्रिकाहरेः ४७
धेनुर्वात्रतुदातव्यावत्सालंकारसंयुता
सुवर्णशृंगीरौप्यखुरीताम्रपृष्ठीतथैवच ४८
कांस्यदोहींरत्नपुच्छींदद्याद्वैगुरवेतदा
शय्यांसोपस्करांदद्यात्साधवेभक्तिपूर्वकम् ४९
धूपंदीपंतुनैवेद्यंफलपत्रंनिवेदयेत्
पूजनीयोमहाभक्तैर्मंत्रैरेभिस्तुकेशवः ५०
तुलसीपत्रसंयुक्तैःपुष्पैःकालोद्भवैस्तथा
मासनाम्नेवचरणौजानुनीविष्णुरूपिणे ५१
गुह्येतुगुह्यपतयेकटेवैपीतवाससे
ब्रह्ममूर्तिभृतेनाभावुदरेविश्वयोनये ५२
हृदयेज्ञानगम्यायकंठेवैकुंठमूर्तये
ऊर्द्ध्वगायललाटेतुबाहौदक्षांतकारिणे ५३
उत्तमांगेसुरेशायसर्वांगेसर्वमूर्तये

स्वनाम्नाचायुधादीनिपूजनीयानिभक्तितः ५४
अर्घदानंप्रकर्तव्यंनालिकेरादिभिःसमम्
शंखोपरिजलेकृत्वागंधपुष्पाक्षतान्वितम् ५५
सूत्रेणावेष्टितंकृत्वादद्यादर्घंविधानतः
देवदेवमहादेवश्रीकेशवजनार्दन ५६
सुब्रह्मरायनमस्तेऽस्तुपुरायराशिविवर्धन
शोकमोहमहापापान्मामुद्धरभवार्णवात् ५७
सुकृतंनकृतंकिंचिज्जन्मकोटिशतैरपि
तथापिमांमहास्वामिन्मामुद्धरभवार्णवात् ५८
व्रतेनानेनदेवेशयेचान्येममपूर्वजाः
वियोनिंचगताश्चान्येपापमृत्युवशंगताः ५९
येभविष्यंतियेऽतीताःप्रेतलोकान्समुद्धर
श्रांतोस्म्यहमधीनस्यभक्तिरव्यभिचारिणी ६०
दत्तमर्घंमयातुभ्यंभक्त्यागृह्णगदाधर
दत्वार्घंधूपदीपाद्यैर्नैवेद्यैर्विष्णुसंभवैः ६१
स्तोत्रैर्नीराजनैर्गीतैर्भृत्यैःसंतोषयेद्धरिम्
वस्त्रैर्दानैश्चगोदानैर्भोजनैस्तोषयेद्गुरुम् ६२
तथातथाविधातव्यंगुरुर्वैप्रीतिमाप्नुयात्
लोकानांतारणार्थायधात्रासृष्टोगुरुर्यतः ६३
अतोवैगुरुपूजाचकर्त्तव्यावैप्रयत्नतः
अहितंयोनाशयतिस्वहितंदर्शयेत्सदा ६४
सगुरुःसचविज्ञेयःसर्वधर्मार्थकोविदः
अकुर्वन्वित्तशाठ्यंतुगुरवेतंनिवेदयेत् ६५
गुरोर्निवेदितेभूपपरिपूर्णंभवेद्व्रतम्
कृत्वादिवातनंकर्मभोजनंब्राह्मणैःसह ६६
कर्त्तव्यंनृपशार्दूलदिनंनेयंकथानकैः
अनेनविधिनायस्तुकुर्यादुन्मीलनीव्रतम् ६७
कल्पकोटिसहस्राणिवसतेविष्णुसन्निधौ ६८

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे-
उमापतिनारदसंवादेउन्मीलनीव्रतंनामपंचत्रिंशोऽध्यायः ३५

## षट्त्रिंशोऽध्यायः

नारदउवाच-
कीदृशीस्यान्महादेवपक्षवर्द्धनिसंज्ञका
ययावैकृतयाजंतुर्महपापात्प्रमुच्यते १
श्रीमहादेवउवाच-
अमावायदिवापूर्णासंपूर्णाजायतेतदा
भूत्वावैनाडिकाषष्ठिर्जायतेप्रतिपद्दिने
अश्वमेधायुतैस्तुल्यासाभवेत्पक्षवर्द्धिनी २
नारदउवाच-
पूजाविधिंतुपृच्छामिसांप्रतंदेवसत्तम
यत्कृतेतुमहादेवमहाफलमवाप्नुयात् ३
महादेवउवाच-
पूजाविधिंप्रवक्ष्यामिसांप्रतंद्विजनंदन
पूजितेचार्चितेविष्णौफलंप्राप्नोत्यसंशयः ४
येनपूजाविधानेनतुष्टिंप्राप्नोतिमाधवः
अव्रणंजलपूर्णंचकुंभंचंदनचर्चितम् ५
पंचरत्नसमायुक्तंपुष्पमालाभिवेष्टितम्
स्थाप्यंताम्रमयंपात्रंसगोधूमंघटोपरि ६
सौवर्णंकारयेद्देवंमाससंज्ञाभिनामकम्
पंचामृतेनविधिनास्नपनंसुमनोरमम् ७
कारयेद्देवदेवेशंजगन्नाथंजगत्पतिम्
विलेपनंतुकर्त्तव्यंकुंकुमागरुचंदनैः ८
वस्त्रयुग्मंचदातव्यंछत्रोपानहसंयुतम्
पूजयेद्देवताधीशंकुंभपात्रोपरिस्थितम् ९
पद्मनाभायवैपादौजानुनीविश्वमूर्त्तये
ऊरूवैज्ञानगम्यायकटीदानप्रदायच १०
उदरंविश्वनाथायहृदयंश्रीधरायच
कंठंकौस्तुभकंठायबाहूक्षत्रांतकारिणे ११
ललाटंव्योममूर्ध्नेतुशिरोवैसर्वरूपिणे
स्वनाम्नाचैवकमलांसर्वांगींदिव्यरूपिणीम् १२

एवंविधिवत्संपूज्यततोऽघदापयेत्सुधीः
नालिकेरेणशुभ्रेणदेवदेवस्यचक्रिणः १३
अनेनैवार्घदानेनसंपूर्णंजायतेव्रतम्
संसारार्णवमग्नंमांसमुद्धरजगत्पते १४
त्वमीशःसर्वलोकानांत्वंसाक्षाच्चजगत्पतिः
गृहाणार्घंमयादत्तंपद्मनाभनमोस्तुते १५
नैवेद्यानिसुहृद्यानिषड्रसानिविशेषतः
देयानितुविशेषेणकेशवायसुभक्तितः १६
नागपत्रंसकर्पूरंदद्याद्देवस्यभक्तितः
घृतेनदीपकंकुर्यात्तिलतैलेनवापुनः १७
कृत्वासम्यग्विधानेनगुरोःपूजांप्रकारयेत्
वस्त्राणिचैवचोष्णीषंकंचुकंचप्रदापयेत् १८
दक्षिणांचयथाशक्त्यागुरुवेसंप्रदापयेत्
भोजनंचैवतांबूलंदत्त्वाचार्घंप्रदापयेत् १९
स्ववित्तस्यानुमानेनयथाशक्त्यातुनिर्द्धनैः
कार्यासम्यक्प्रयत्नेनद्वादशीपक्षवर्द्धिनी २०
ततोजागरणंकुर्याद्गीतनृत्यसमन्वितम्
पुराणपाठसहितंहास्याह्लादसमन्वितम् २१
स्तुवंतिचप्रशंसंतिजागरंचक्रपाणिनः
नित्योत्सवोभवेत्तेषांगृहेवैदशजन्मसु २२
अतोधन्यतमाचेयंकर्त्तव्यापक्षवर्द्धनी
कृत्वातुसकलंपुण्यंफलंप्राप्नोत्यसंशयम् २३
पक्षवर्द्धनीमाहात्म्यंयेशृण्वंतिमनीषिणः
तैःकृतंसत्कृतंसर्वंयावदाभूतसंप्लवम् २४
पंचाग्निसाधनेपुण्यंयच्चस्यात्तीर्थसाधने
तत्पुण्यंसमवाप्नोतिविष्णोर्जागरकारणात् २५
पक्षवर्द्धनिकापुण्यापवित्रापापनाशिनी
उपवासकृताविप्रहत्याकोटिविनाशिनी २६
वसिष्ठेनकृतापूर्वंभारद्वाजेनवैमुने
ध्रुवेणचांबरीषेणकृतेयंविष्णुवल्लभा २७

इयंकाशीसमापुरायाइयंवैद्वारकासमा
उपोषिताचभक्तेनवांछितंचददात्यसौ २८
इयंधन्याधन्यतमाहत्यायुतविनाशिनी
कर्त्तव्यातुविशेषेणवैष्णवैर्ज्ञानतत्परैः २९
ऋहोसर्वेश्वरोदेवःसंसेव्योव्रततत्परैः
किमन्यद्बहुनोक्तेनकर्तव्यंव्रतमुत्तमम् ३०
यथाचवर्द्धतेचंद्रःसितेपक्षेविशेषतः
तथावैवर्द्धतेभक्तकारणात्पक्षवर्द्धिनी ३१
सूर्योदयेयथाध्वांतंनश्यतेतत्क्षणादपि
तथाघंनाशमाप्नोतिकरणात्पक्षवर्द्धिनी ३२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे-
उमापतिनारदसंवादेपक्षवर्द्धनीएकादशीमाहात्म्यंनाम

षट्त्रिंशोऽध्यायः ३६

सप्तत्रिंशोऽध्यायः
महादेवउवाच-
शृणुनारदवक्ष्यामिमाहात्म्यंजागरस्यच
यच्छ्रुत्वामुक्तिमाप्नोतिमहापापीनसंशयः १
नारदउवाच-
ऋहोविश्वेश्वरोविष्णुःपवित्रीकरणःसदा
तस्योपवासमाहात्म्यंश्रुतंहित्वन्मुखाच्छिव २
तथापिश्रोतुमिच्छामिमाहात्म्यंजागरस्यतु
कीदृक्जागरमाहात्म्यंरात्रोभक्तिस्तुकीदृशी ३
प्रहरेषुचयापूजावदविश्वेश्वरप्रभो
त्वंलोकेषुसदापूज्यस्त्वंहिदेवोजनार्दनः
त्वंहिविश्वेश्वरोदेवोयतोभक्तिर्जनार्दने ४
सर्वेषांचैवभक्तानांत्वंचश्रेष्ठउमापतिः
लोकेस्मिन्सर्वदाभक्त्यातवाख्यावर्त्ततेसदा ५
ऋतोयेनप्रकारेणलोकानांमुक्तिरेवच
विश्वेश्वरवदत्वंतुमाहात्म्यंजागरस्यतु ६

महादेवउवाच-
एकादश्यांजनोविष्णुंरात्रौसंपूज्यभक्तितः
कुर्याज्जागरणंविष्णोःपुरतोवैष्णवैःसह ७
गीतंवाद्यंतथानृत्यंपुराणपठनंतथा
धूपंदीपंचनैवेद्यंपुष्पंगंधानुलेपनम् ८
फलमर्घंतथाश्रद्धादानमिंद्रियसंयमम्
सत्यान्वितंचविप्रेंद्रवचोयुक्तंक्रियान्वितम् ९
विनिद्रंचमुदायुक्तोयःकरोतिनरःसदा
सर्वपापविनिर्मुक्तोजायतेविष्णुवल्लभः १०
रात्रौजागरणेप्राप्तेनिद्रांकुर्वंतिवैष्णवाः
हारितंचोपवासंतैर्व्रतंवैविष्णुसंज्ञकम् ११
येकुर्वंतिनराःप्राज्ञजागरेविष्णुसंज्ञके
जागरंकृष्णभावेननस्वपंतिकदाचन १२
कृष्णस्यनाममनसावदंतिचपुनःपुनः
तेतुधन्यतमाज्ञेयाअस्यांरात्रौविशेषतः १३
क्षणेक्षणेतुगोदानंघट्यांचैवचतुर्गुणम्
प्रहरेकोटिगुणितंचतुर्यामेष्वसंख्यकम् १४
जागरेनिमिषार्द्धेतुकेशवाग्रेविशेषतः
तत्फलंकोटिगुणितंतस्यसंख्यानविद्यते १५
नर्त्तनंकुरुतेयस्तुकेशवाग्रेनरोत्तमः
नफलंहीयतेतस्यआजन्ममरणांतिकम् १६
साश्चर्यंचैवसोत्साहंपापालापादिवर्जितम्
प्रदक्षिणसमायुक्तंनमस्कारपुरःसरम् १७
नीराजनसमायुक्तमनिर्विण्णेनचेतसा
यामेयामेमहाभागकुर्यादारार्तिकंहरेः १८
षडिंवशगुणसंयुक्तमेकादश्यांचजागरम्
यःकरोतिनरोभक्त्यानपुनर्जायतेभुवि १९
यएवंकुरुतेभक्त्यावित्तशाठ्यविवर्जितः
जागरंवासरेविष्णोर्लीयतेपरमात्मनि २०
धनवान्वित्तशाठ्येनयःकरोतिप्रजागरम्

तेनात्माहारितोनूनंकितवेनदुरात्मना २१
विष्णुजागरणेप्राप्तेउपहासंकरोतियः
षष्टिवर्षसहस्राणिविष्ठायांजायतेकृमिः २२
वेदविद्ब्राह्मणोयस्तुनर्त्तनेनविशेषतः
उपहासपरःप्राप्तःसवैचांडालउच्यते २३
निमिषंनिमिषार्द्धंवायःकरोतिप्रजागरम्
धर्मार्थकाममोक्षाणांप्राप्नोतिपदमव्ययम् २४
वेदशास्त्ररतोनित्यंनित्यंवैयज्ञयाजकः
रात्रौजागरणेप्राप्तेनिंदांकुर्वन्व्रजत्यधः २५
ममपूजांप्रकुर्वाणोविष्णुनिंदासुतत्परः
एकविंशत्कुलेनैवनरकंप्रतिपद्यते २६
ाविष्णुःशिवःशिवोविष्णुरेकमूर्तिर्द्विधास्थिताःा
तस्मात्सर्वप्रकारेणनैवनिंदांप्रकारयेत्
दष्टाःकलिभुजंगेनस्वपंतिमधुहाहनि २७
कुर्वंतिजागरंनैवमाययातेचमोहिताः
प्राप्ताएकादशीयेषांकलौजागरणंविना २८
तेविनष्टानसंदेहोयस्माज्जीवितमध्रुवम्
उद्धृतंनेत्रयुग्मंतुदत्त्वावैवैष्णवंपदम् २९
कृतंयेनैवपश्यंतिपापिनोहरिजागरम्
अभावेवाचकस्याथगीतंनृत्यंतुकारयेत् ३०
वाचकेसतिदेवर्षेपुराणंप्रथमंपठेत्
अश्वमेधसहस्रस्यवाजपेयायुतस्यच ३१
पुरायंकोटिगुणंवत्सविष्णोर्जागरणेकृते
पितृपक्षेमातृपक्षेभार्यापक्षेतुवाडव ३२
कुलानुद्धरतेचैतान्कृत्वाजागरणंहरेः
उपोषणदिनेविद्धेजागरंपूजनंहरेः ३३
वृथादानादिकंसर्वंकृतघ्नेषुकृतंयथा
उपोषणदिनेविद्धेप्रारब्धेजागरेस्थितिम् ३४
विहायस्थानंतद्विष्णुःशापंदत्वाप्रगच्छति
अविद्धेवासरेविष्णोर्येकुर्वंतिप्रजागरम् ३५

तेषांमध्येतुतुष्टः सन्नृत्यंतुकुरुतेहरिः
यावद्दिनानिकुरुतेजागरंकेशवाग्रतः ३६
युगानितानितावंतिविष्णुलोकेमहीयते
यावद्दिनानिवसतेविनाजागरणंहरेः ३७
तावद्वर्षसहस्राणिरौरवान्ननिवर्तते
एकदश्यांशयानस्तुविनाजागरणंहरेः ३८
मूकवत्तिष्ठतेयोवैगानंपाठंनवाचरेत्
सप्तजन्मानिमूकत्वंजायतेऽजागरेहरेः ३९
योननृत्यतिमूढात्मापुरतोजागरेहरेः
पंगुत्वंतस्यजानीयात्सप्तजन्मानिवाडव ४०
यःपुनःकुरुतेगीतंनृत्यंजागरणंहरेः
ब्राह्मंपदंमदीयंचसत्यंवैतस्यवैष्णवम् ४१
यःप्रबोधयतेलोकान्विष्णोर्जागरणेरतः
वसेच्चिरंतुवैकुंठेपितृभिःसहवैष्णवः ४२
मतिंप्रयच्छतेयस्तुहरेर्जागरणंप्रति
षष्टिवर्षसहस्राणिश्वेतद्वीपेवसेन्नरः ४३
यत्किंचित्क्रियतेपापंकोटिजन्मनिमानवैः
श्रीकृष्णजागरेसर्वंरात्रौनश्यतिवाडव ४४
शालग्रामशिलाग्रेयेकुर्वंतिप्रतिजागरम्
यामेयामेफलंप्रोक्तंकोटचैंदवसमुद्भवम् ४५
संप्राप्तेवासरेविष्णोर्येनकुर्वंतिजागरम्
वृथास्यात्तत्कृतंतेषांवैष्णवानांचनिंदया ४६
कामार्थौसंपदःपुत्राःकीर्तिर्लोकाश्चशाश्वताः
यज्ञायुतैर्नलभ्यंतेद्वादशीजागरंविना ४७
मतिर्नजायतेयस्यद्वादश्यांजागरंप्रति
नहितस्याधिकारोऽस्तिपूजनेकेशवस्यहि ४८
यावत्पदानिचलतिकेशवायतनंप्रति
अश्वमेधसमानिस्युःजागरार्थंप्रगच्छतः ४९
पादयोःपतितंयावद्धरण्यांपांशुगच्छताम्
तावद्वर्षसहस्राणिजागरोवसतेदिवि ५०

तस्माद्गृहात्प्रगंतव्यंजागरेकेशवालये
कलौमलविनाशायद्वादशीद्वादशीषुच ५१
परापवादसंयुक्तंमनःप्रासादवर्जितम्
शास्त्रहीनमगांधर्वंतथादीपविवर्जितम् ५२
शक्त्योपचाररहितमुदासीनंसनिंदनम्
कलियुक्तंविशेषेणजागरंनवधामतम् ५३
सशास्त्रंजागरंयच्चनृत्यगांधर्वसंयुतम्
सवाद्यंतालासंयुक्तंसदीपंमधुभिर्युतम् ५४
उच्चारैस्तुसमायुक्तंयथोक्तैर्भक्तिभावितैः
प्रसन्नंतुष्टिजननंसंमूढंलोकरंजनम् ५५
गुणैर्द्वादशभिर्युक्तंजागरंमाधवप्रियम्
कर्त्तव्यंतत्प्रयत्नेनपक्षयोःशुक्लकृष्णयोः ५६
किंव्रतैर्बहुभिश्चीर्णैस्तीर्थवासेनतस्यकिम्
द्वादशीवासरेप्राप्तेनकुर्याज्जागरंहरेः ५७
प्रवासेनत्यजेद्यस्तुपथिस्विन्नोऽपिवाडव
जागरंवासुदेवस्यद्वादश्यांतुसमेप्रियः ५८
मद्भक्तोनहरेःकुर्याज्जागरंपापमोहितः
व्यर्थंमत्पूजनंतस्यमत्पूज्यंयोनपूजयेत् ५९
नशैवोनचसौरोऽसौनशाक्तोगणसेवकः
योभुंक्तेवासरेविष्णोर्ज्ञेयःपश्वधिकोहिसः ६०
विप्रियंचकृतंतेनदुष्टेनैवचपापिना
मद्भक्तिबलमाश्रित्ययोभुंक्तेवैहरेर्दिने ६१
सबाह्याभ्यंतरंदेहंवेष्टितंपापकोटिभिः
मुच्यंतेवासरेविष्णोर्येकुर्वंतिप्रजागरम् ६२
कूर्परंयमदूतानांदत्तंतेनयमस्यच
कृत्वाजागरणंविष्णोरविद्धंद्वादशीव्रतम् ६३
स्वर्गापिक्षामुनिश्रेष्ठमुक्तातेनैवसंशयः
वांछितंनारकंसौख्यंविद्धंकृत्वाहरेर्दिनम् ६४
निहताःपितरस्तेनदेवानांवैवधःकृतः
दत्तंराज्यंतुदैत्यानांकृत्वाविद्धंहरेर्दिनम् ६५

योनृत्यतिप्रहृष्टात्माकृत्वावैकरताडनम्
गीतंकुर्वन्मुखेनापिदर्शयन्कौतुकान्बहून् ६६
पुरतोवासुदेवस्यरात्रौजागरणेस्थितः
पठन्कृष्णचरित्राणिरंजयन्वैष्णवान्गणान् ६७
मुखेनकुरुतेवाद्यंसंप्रहृष्टतनूरुहः
दर्शयन्विविधान्भृत्यान्स्वेच्छालापान्प्रकारयन् ६८
भावैरेतैर्नरोयस्तुकुरुतेजागरेहरेः
निमिषेनिमिषेपुण्यंतीर्थकोटिफलंस्मृतम् ६९
अनुद्विग्नमनायस्तुधूपनीराजनंहरेः
कुरुतेजागरेरात्रौसप्तद्वीपाधिपोभवेत् ७०
यानिकानिचपापानिब्रह्महत्यासमानिच
कृष्णाहजागरात्तानिविलयंयांतिखंडशः ७१
एकतःक्रतवःसर्वेसमाप्तवरदक्षिणाः
एकतोदेवदेवस्यजागरःकृष्णवल्लभः ७२
तत्रकाशीपुष्करंचप्रयागंनैमिषंगया
शालग्राममहाक्षेत्रमर्बुदारण्यमेवच ७३
पौष्करंमथुरातत्रसर्वतीर्थानिचैवहि
यज्ञावेदाश्चचत्वारोव्रजंतिहरिजागरम् ७४
गंगासरस्वतीतापीयमुनाचशतद्रुका
चंद्रभागावितस्ताचनद्यःसर्वास्तुतत्रवै ७५
सरांसिचह्रदाःसर्वेसमुद्राःसर्वएवहि
एकादश्यांद्विजश्रेष्ठगच्छंतिकृष्णजागरम् ७६
स्पृहणीयाहिदेवानांयेनराःकृष्णजागरे
नृत्यंतिगीतंकुर्वंतिवीणावाद्यप्रहर्षिताः ७७
एवंजागरणंकृत्वासंपूज्यचमहाहरिम्
द्वादश्यांपारणंकृत्वास्वशक्त्यावैष्णवैःसह ७८
महादेवउवाच-
शृणुब्रह्मन्प्रवक्ष्यामिद्वादशीमाहात्म्यमुत्तमम्
द्वादशीतुसदाज्ञेयापुत्रदामोक्षदायिनी ७९
प्रातःस्नात्वाहरिंपूज्यउपवासंसमर्पयेत्

अज्ञानतिमिरांधस्यव्रतेनानेनकेशव ८०
प्रसीदसुमुखोभूत्वाज्ञानदृष्टिप्रदोभव
पारणंचततःकुर्याद्यथासंभवमग्रतः ८१
अतऊर्ध्वंयथेष्टंतुकारयेच्चयथाविधि
यदातुद्वादशीस्वल्पापारणेनभवेद्द्विज ८२
तदारात्रौतुकर्त्तव्यंपारणंमुक्तिमिच्छता
तदानरात्रिदोषःस्यान्निषिद्धंनभवेत्क्वचित् ८३
यदुक्तंनिशिनस्नायान्महानिशिनभोजयेत्
तत्पूर्वपरयामाभ्यांदिनवत्कर्मकारयेत् ८४
यदाभवतिस्वल्पातुद्वादशीपारणेदिने
उषःकालेद्वयंकुर्यात्प्रातर्मध्याह्निकंतथा ८५
द्वादशीसाधितायेननरेणभुविसर्वदा
तस्यपुरायमहंवक्तुंनसमर्थोविशेषतः ८६
साधयित्वाखिलान्कामान्प्राप्नुयुश्चमहाजनाः
अंबरीषादयःसर्वेयेभक्ताभुविविश्रुताः ८७
द्वादशींसाधयित्वातुतेगताविष्णुसद्मनि
सत्यंसत्यंपुनःसत्यंयदुक्तंतुमयातव ८८
नास्तिविष्णुसमोदेवोनतिथिर्द्वादशीसमा
अत्रदत्तंचभुक्तंचतथापूजादिकंचयत् ८९
तत्सर्वंपूर्णतांयातिपूजितेमाधवेसति
किंपुनर्बहुनोक्तेनभक्तानांवल्लभोहरिः ९०
प्रददात्यखिलान्कामान्यावदाभूतसंप्लवम्
द्वादश्यांचैवयद्दत्तंतत्सर्वंसफलंभवेत् ९१
कुरुक्षेत्रेषुयद्दत्तंनिष्फलंनैवजायते
तद्वच्चद्वादशीदत्तंभवेद्देवर्षिसत्तम ९२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे-
उमापतिनारदसंवादेद्वादशीएकादशीजागरणमहिमानाम
सप्तत्रिंशोऽध्यायः ३७

## अष्टत्रिंशोऽध्यायः

महादेवउवाच-
एकस्मिन्समयेपुत्रगतोऽहविष्णुसन्निधौ
तत्रपृष्टंमयापूर्वंमाहात्म्यंद्वादशीभवम् १
नारदउवाच
कीदृशीस्यान्महादेवमहाद्वादशिकापरा
तस्याव्रतेफलंकीदृग्वदसर्वेश्वरप्रभो २
शिवउवाच-
इयमेकादशीब्रह्मन्महापुण्यफलप्रदा
ऋृक्षयोगैश्चसंयुक्ताकर्त्तव्यामुनिसत्तमैः ३
जयाचविजयाचैवजयंतीपापनाशिनी
सर्वपापहराश्चैताःकर्त्तव्याःफलकांक्षिभिः ४
एकादश्यांयदाऋृक्षंशुक्लपक्षेपुनर्वसुः
नाम्नासाचजयाख्यातातिथीनामुत्तमातिथिः ५
तामुपोष्यनरःपापान्मुच्यतेनात्रसंशयः
यदाचशुक्लद्वादश्यांनक्षत्रंश्रवणंभवेत् ६
विजयासासमाख्यातातिथीनामुत्तमातिथिः
सहस्रगुणितंदानंयस्यांवैविप्रभोजनम् ७
होमस्तथोपवासश्चसहस्राधिफलप्रदः
यदाचशुक्लद्वादश्यांप्राजापत्यंहिजायते ८
जयंतीनामसाप्रोक्तासर्वपापहरातिथिः
सप्तजन्मकृतंपापंस्वल्पंवायदिवाबहु ९
प्रक्षालयतिगोविंदस्तस्यामभ्यर्चितोध्रुवम्
यदावैशुक्लद्वादश्यांपुष्यंभवतिकर्हिचित् १०
तदातुसामहापुण्याभवितापापनाशिनी
योददातितिलप्रस्थंनित्यंसंवत्सरंप्रति ११
उपवासंचयस्तस्यांकरोत्येतत्समंस्मृतम्
तस्यांजगत्पतिर्देवस्तुष्टःसर्वेश्वरोहरिः १२
प्रत्यक्षतांप्रयात्येवतत्रानंतफलंस्मृतम्
सगरेणककुत्स्थेननहुषेणचसाधितः १३

तस्यामाराधितःकृष्णोदत्तवानखिलंभुवि
वाचिकान्मानसाद्वापिकायजाच्चविशेषतः १४
सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः
तामेकांसमुपोष्याथपुरायनक्षत्रसंयुताम् १५
एकादशीसहस्रस्यफलंप्राप्नोतिमानवः
स्नानंदानंजपोहोमःस्वाध्यायोदेवतार्चनम् १६
यत्तस्यांक्रियतेकिंचित्तदक्षयफलंस्मृतम्
तस्मादेषाप्रकर्तव्यायत्नेनफलकांक्षिभिः १७
पंचमेनाश्वमेधेनयदिस्नातोयुधिष्ठिरः
पर्यपृच्छतधर्मात्माकृष्णंयदुकुलोद्वहम् १८
युधिष्ठिरउवाच-
उपवासस्यनक्तस्यत्वेकभुक्तस्यमेप्रभो
किंपुरायंकिंफलंतस्यब्रूहिसर्वंजनार्दन १९
श्रीभगवानुवाच-
हेमंतेचैवसंप्राप्तेमासेमार्गेचशोभने
कृष्णपक्षेचयापार्थद्वादशीतामुपोषयेत्
दशम्यांचैकभक्तश्चशुद्धचित्तोदृढव्रतः २०
नक्तंचैवतथाज्ञात्वादशम्यांनियतःसदा
दिवसस्याष्टमेभागेमंदीभूतेदिवाकरे २१
नक्तंचतद्विजानीयान्ननक्तंनिशिभोजनम्
नक्षत्रदर्शनान्नक्तंगृहस्थस्यविधीयते २२
यतेर्दिनाष्टमेभागेरात्रौतस्यनिषेधनम्
ततःप्रभातसमयेकृत्वाचनियमंव्रती २३
मध्याह्नेचतथापार्थस्नानंशुचिःसमाचरेत्
अधमंकूपकेस्नानंवाप्यांस्नानंचमध्यमम् २४
तडागेचोत्तमंस्नानंनद्यांस्नानंततःपरम्
पीडयंतेजंतवोयत्रजलमध्येव्यवस्थिते २५
तत्रस्नानेकृतेपार्थपापंपुरायंसमंभवेत्
गृहेचैवोत्तमंस्नानंजलंचैवविशोधयेत् २६
तस्मात्तुपांडवश्रेष्ठगृहेस्नानंसमाचरेत्

अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे २७
मृत्तिकेहरमेपापंयन्मयापूर्वसंचितम्
क्रोधलोभौपरित्यज्यचैकचित्तोदृढव्रतः २८
नालापेतांत्यजंचैवतथापाखंडिनोनरान्
मिथ्यावादरतांश्चैवतथाब्राह्मणनिंदकान् २९
अन्यांश्चैवदुराचारानगम्यागमनेरतान्
परद्रव्यापहारांश्चपरदाराभिगामिनः ३०
केशवंपूजयित्वातुनैवेद्यंतत्रकारयेत्
दीपंदद्याद्गृहेतत्रभक्तियुक्तेनचेतसा ३१
तद्दिनेवर्जयेत्पार्थनिद्रांचैवतुमैथुनम्
धर्मशास्त्रविनोदेनदिनंसर्वंनिवारयेत् ३२
रात्रौजागरणंकृत्वाभक्तियुक्तोनृपोत्तम
विप्रेभ्योदक्षिणांदद्यात्प्रणिपत्यक्षमापयेत् ३३
यथाकृष्णातथाशुक्लाविधिनैवंप्रकारयेत्
एकादशींद्विजःपार्थविभेदंनैवकारयेत् ३४
एवंहिकुरुते यस्तुशृणुतस्यहियत्फलम्
शंखोद्धारेनरःस्नात्वादृष्ट्वादेवंगदाधरम् ३५
एकादश्युपवासस्यकलांनार्हतिषोडशीम्
संक्रांतिषुचतुर्लक्षंयोददातिनृपोत्तम ३६
एकादश्युपवासस्यकलांनार्हतिषोडशीम्
प्रभासक्षेत्रेयत्पुण्यंग्रहणेचंद्रसूर्ययोः ३७
तत्फलंजायतेनूनमेकादश्युपवासिनः
केदारेचोदकंपीत्वापुनर्जन्मनविद्यते ३८
तथाचैकादशीपार्थगर्भवासक्षयंकरी
अश्वमेधस्ययज्ञस्यपृथिव्यांयत्फलंलभेत् ३९
तस्माच्छतगुणंपुण्यमेकादश्युपवासिनः
तपस्विनोगृहेयस्यभुंजतेचद्विजोत्तमाः ४०
तत्फलंजायतेनूनमेकादश्युपवासिनः
गोसहस्रेणयत्पुण्यंदत्वावेदांतपारगे ४१
तस्माच्छतगुणंपुण्यमेकादश्युपवासिनः

येषांदेहेत्रयोदेवाब्रह्मविष्णुमहेश्वराः ४२
वसंतितेषांतेतुल्याएकादश्युपवासिनः
तेनराःपुरायकर्माणोयेभक्ताहरिपूजकाः ४३
एकादशीव्रतस्यापिपुरायसंख्यानविद्यते
एतत्पुरायंभवेत्तस्ययत्सुरैरपिदुर्ल्लभम् ४४
एतस्मादर्द्धपुरायंतुप्राप्यतेनक्तभोजनात्
नक्तस्यार्द्धंभवेत्पुरायमेकभक्तेनदेहिनाम् ४५
तावद्गर्जंतितीर्थानिदानानिनियमानिच
यावन्नोपोषयेज्जंतुर्वासरंविष्णुवल्लभम् ४६
तस्मात्त्वंपांडवश्रेष्ठव्रतमेतत्समाचर
पुरायसंख्यांनजानामियत्त्वंपृच्छसिपांडव ४७
एतद्धिकथितंपार्थयद्गोप्यंव्रतमुत्तमम्
एकादशीसमंनास्तिकृत्वायज्ञसहस्रकम् ४८
युधिष्ठिरउवाच-
उत्पन्नासाकथंदेवपुरायाचैकादशीतिथिः
कथंपवित्राविश्वेऽस्मिन्कथंवैदेवताप्रिया ४९
श्रीभगवानुवाच -
पुराकृतयुगेपार्थमुरनामेतिदानवः
अत्यद्भुतोमहारौद्रःसर्वदेवभयंकरः ५०
इंद्रोऽपिनिर्जितस्तेनसर्वदेवास्तथानृप
महासुरेणतेनैवमृत्युनाचदुरात्मना ५१
स्वर्गान्निराकृतास्तेनविचरंतिमहीतले
सशंकाभयभीताश्चसर्वेगत्वामहेश्वरम् ५२
इंद्रेणकथितंसर्वमीश्वरस्यापिचाग्रतः
स्वर्गलोकपरिभ्रष्टाविचरंतिमहीतले ५३
मर्त्येषुसंस्थितादेवानशोभंतेमहेश्वर
उपायंब्रूहिमेदेवह्यमरायांतिकांगतिम् ५४
महादेवउवाच-
देवराजसुरश्रेष्ठयत्रास्तेगरुडध्वजः
शररायश्चजगन्नाथःपरित्रातापरायणः ५५

तत्रगच्छसुरश्रेष्ठसवोरक्षांविधास्यति
ईश्वरस्यवचःश्रुत्वादेवराजोमहामतिः ५६
त्रिदशैःसहितोयत्रगतस्तत्रयुधिष्ठिर
जलमध्येप्रसुप्तंतंदृष्ट्वादेवंगदाधरम् ५७
कृतांजलिपुटोभूत्वाइंद्रःस्तोत्रमुदीरयत् ५८
इंद्रउवाच-
ॐनमोदेवदेवेशदेवदानववंदित
दैत्यारेपुंडरीकाक्षत्राहिनोमधुसूदन ५९
सुराःसर्वेसमायाताभयभीताश्चदानवात्
शरणंत्वांजगन्नाथत्राहिमांभक्तवत्सल ६०
त्राहिनोदेवदेवेशत्राहित्राहिजनार्दन
त्राहिवैपुंडरीकाक्षदानवानांविनाशक ६१
त्वत्समीपंगताःसर्वेत्वमेवशरणंप्रभो
शरणागतानांदेवानांसहायंकुरुवैप्रभो ६२
त्वंपतिस्त्वंमतिर्देवत्वंकर्तात्वंचकारणम्
त्वंमातासर्वलोकानांत्वमेवजगतःपिता ६३
भगवन्देवदेवेशशरणागतवत्सल
शरणंतवचायाताभयभीताश्चदेवताः ६४
देवतानिर्जिताःसर्वाःस्वर्गभ्रष्टाःकृताःप्रभो
अत्युग्रेणहिदैत्येनमुरनाम्नामहौजसा
इंद्रस्यवचनंश्रुत्वाविष्णुर्वचनमब्रवीत् ६५
श्रीभगवानुवाच-
कीदृशोदानवःशक्रकिंरूपंकीदृशंबलम्
क्वस्थानंतस्यदुष्टस्यकिंवीर्यंकःपराक्रमः
किंवरंतस्यदुष्टस्यममाख्याहिमहामते ६६
इंद्रउवाच-
पूर्वंबभूवदेवेशब्रह्मवंशसमुद्भवः
तालजंघस्तुनाम्नाचअत्युग्रोऽपिमहासुरः ६७
तस्यपुत्रोहिविख्यातोमुरनामेतिदानवः
अत्युत्कटोमहावीर्योदेवतानांभयंकरः ६८

पुरीचंद्रावतीनाम्नातत्रस्थानेवसत्यसौ
निर्जितादेवताःसर्वास्वर्गात्तेनविवासिताः ६९
इंद्रोऽन्योरोपितस्तेनवातश्चैवहुताशनः
चंद्रसूर्यौकृतौचान्यौवायुर्वरुणएवच ७०
सर्वमात्मकृतंतेनसत्यंसत्यंजनार्दन
देवलोकःकृतस्तेनसर्वस्थानविवर्जितः ७१
तस्यतद्वचनंश्रुत्वाकोपमानोजनार्दनः
हनिष्येदानवंदुष्टंदेवतानांभयंकरम् ७२
त्रिदशैःसहितोदेवोगतश्चंद्रावतींपुरीम्
दृष्टोदेवैस्तुदैत्येंद्रोगर्जमानःपुनःपुनः ७३
तेनसर्वेजितादेवगताश्चैवदिशोदश
हरिंनिरीक्ष्यप्रोवाचतिष्ठतिष्ठेतिदानवः ७४
भगवानब्रवीत्तंचक्रोधसंरक्तलोचनः
श्रीभगवानुवाच–
रेदानवदुराचारममबाहुंनिरीक्षय ७५
ततस्तेसम्मुखाःसर्वेविष्णुनादुष्टदानवाः
हताबाणैःपुनर्दिव्यैर्जाताश्चभयविह्वलाः ७६
चक्रंमुक्तंचकृष्णेनदैत्यसैन्येषुपांडव
तेनच्छिन्नास्तुशतशोबहवोनिधनंगताः ७७
एकोपिदानवस्तत्रयुध्यमानोमुहुर्मुहुः
नष्टाःसर्वेसुरास्तेननिर्जितोमधुसूदनः ७८
निर्जितंतेनदैत्येनबाहुयुद्धमजायत
बाहुयुद्धंकृतंतेनदिव्यंवर्षसहस्रकम् ७९
विष्णुश्चिंतांप्रपन्नश्चनष्टाःसर्वाश्चदेवताः
विष्णुश्चनिर्जितस्तेनगतोबदरिकाश्रमम् ८०
गुहासिंहावतीनामतत्रसुप्तोजनार्दनः
योजनद्वादशवतीएकद्वाराचपांडव ८१
तस्यांविष्टःप्रसुप्तश्चदानवोहंतुमुद्यतः
महायुद्धेनतेनैवश्रांतोऽसौयोगमायया ८२
दानवःपृष्ठतोलग्नोप्रविष्टःसतदागुहाम्

प्रसुप्तंतत्रमांदृष्ट्वादानवोहर्षमागतः ८३
इत्थंमांनिर्जितंमत्वाप्रविष्टंशंकयाहरिम्
निःसंदेहंहनिष्यामिदानवानांभयंकरम् ८४
निर्गताकन्यकातत्रविष्णुदेहाद्युधिष्ठिर
रूपवतीसुसौभाग्यादिव्यप्रहरणायुधा ८५
तस्यतेजोंऽशसंभूतामहाबलपराक्रमा
दृष्टासादानवेंद्रेणमुरनाम्नाधनंजय ८६
युद्धंसमाहितंतेनस्त्रियाचैवप्रयाचितम्
कन्यकायुध्यतेतत्रसर्वयुद्धविशारदा ८७
हुंकारैर्भस्मसाज्ञातोमुरनामामहासुरः
निहतेदानवेतस्मिंस्तत्रदेवस्त्वबुध्यत ८८
पतितंदानवंदृष्ट्वाततोविस्मयमागतः
केनायंचहतोरौद्रोह्यत्युग्रोममशात्रवः ८९
अत्युग्रंचकृतंकर्मममकारुण्यतःकृतम्
कन्योवाच-
तेनदेवाश्चगंधर्वासयक्षोरगराक्षसाः ९०
इंद्राद्याःसकलाजित्वास्वर्गाच्चैवनिराकृताः
हरिःसुप्तोमयादृष्टोमुरःपृष्ठेसमागतः ९१
संहरिष्यतित्रैलोक्यंसुप्तेचैवजर्नादने
तस्यास्तद्वचनंश्रुत्वाविष्णुर्वचनमब्रवीत् ९२
अहंचनिर्जितोयेनकथंसोऽपित्वयाजितः
एकादश्युवाच-
त्वत्प्रसादाच्चभोस्वामिन्महादैत्योमयाहतः ९३
श्रीभगवानुवाच-
आनंदंत्रिषुलोकेषुमुनयोदेवतागताः
ब्रूहित्वंचमयाभद्रेयत्तेमनसिरोचते
ददामिचनसंदेहोयत्सुरैरपिदुर्ल्लभम् ९४
एकादश्युवाच-
यदितुष्टोऽसिमेदेवसत्यमुक्तंजनार्दन
वरमेकंतुवांच्छामिहृदयेचजगत्पते ९५

प्रार्थयामिचदेवेशईप्सितंचमयाप्रभो
यदिसत्यंजगन्नाथतिस्त्रोवाचोददासिमे ९६
श्रीभगवानुवाच-
सत्यंसत्यंमयाप्रोक्तंअवश्यंतवसुव्रते
तिस्त्रोवाचोमयादत्तानचावाक्यंभवेदिह ९७
एकादश्युवाच-
त्रिभुवनेषुचदेवेशचतुर्युगेषुसांप्रतम्
त्रिषुलोकेषुसर्वत्रतादृशंकुरुमेप्रभो ९८
सर्वतीर्थप्रधानंहिसर्वविघ्नविनाशिनी
सर्वसिद्धिकरीदेवीत्वत्प्रसादाद्भवाम्यहम् ९९
मामुपोष्यंतियेभक्त्यातवभक्त्याजनार्दन
सर्वसिद्धिर्भवेत्तेषांयदितुष्टोऽसिमेप्रभो १००
उपवासंचनक्तंचएकभक्तंकरोतिच
तस्यवित्तंचधर्मंचमोक्षंवैदेहिमाधव १०१
विष्णुरुवाच-
यत्त्वंवदसिकल्याणितत्सर्वंचभविष्यति
सर्वान्मनोरथान्भद्रेदास्यसित्वंचनान्यथा १०२
ममभक्ताश्चयेलोकेयेचभक्तास्तुकार्त्तिके
चतुर्युगेषुविख्यातास्त्रिषुलोकेषुवैप्रभो १०३
त्वांचशक्तिमहंमन्येएकादशीव्रतस्थिताः
ममपूजांकरिष्यंतिमोक्षगास्तेनसंशयः १०४
तृतीयाचाष्टमीचैवनवमीचचतुर्दशी
एकादशीविशेषेणतिथिरेषाहरिप्रिया
सर्वतीर्थाधिकंपुगयंसत्यंसत्यंनसंशयः १०५
इदंदत्त्वावरंतस्यैतिस्त्रोवाचोनसंशयः
हृष्टापुष्टाचसंजाताएकादशीमहाव्रता १०६
शत्रुंहंसिपरांतस्यददासिपरमांगतिम्
त्वंहंसिसर्वविघ्नानिसर्वसिद्धिवरप्रदा १०७
उभयोःपक्षयोःपार्थतुल्याएकादशीशुभा
नशुक्लानैवकृष्णाचविभेदंनैवकारयेत् १०८

विभेदोनैवकर्त्तव्यःसमस्तव्रतकारिभिः
दिवावायदिवारात्रौशृणोतिभक्तितत्परः १०९
तिथिरेकाभवेत्सर्वापक्षयोरुभयोरपि
उभयैकादशीस्वल्पाह्यंतेचैवत्रयोदशी ११०
मध्येतुद्वादशीपूर्णात्रिस्पृशासाहरिप्रिया
एकामुपोषयेत्तांवैसहस्रैकादशीफलम् १११
सहस्रगुणितंह्येवंद्वादश्यांपारणेकृते
अष्टम्येकादशीषष्ठीतृतीयाचचतुर्दशी ११२
पूर्वविद्धानकर्तव्यापरविद्धामुपोषयेत्
एकादशीह्यहोरात्रंप्रभातेघटिकाभवेत् ११३
सातिथिःपरिहर्तव्याउपोष्याद्वादशीयुता
एवंविधामयाप्रोक्तापक्षयोरुभयोरपि ११४
एकादश्यांप्रकुर्वीतह्युपवासंनसंशयः
तेयांतिवैष्णवंस्थानंयत्रास्तेगरुडध्वजः ११५
धन्यास्तेमानवालोकेविष्णुभक्तिपरायणाः
एकादश्याश्चमाहात्म्यंसर्वकालेषुयःपठेत् ११६
गोसहस्रफलंसोऽपिपुण्यंप्राप्नोतिमानवः
दिवावायदिवारात्रौयेवैशृण्वंतिभक्तितः ११७
ब्रह्महत्यादिपापेभ्योमुच्यंतेनात्रसंशयः
विष्णुधर्मसमंनास्तिगीतार्थंचनृपोत्तम
एकादशीसमंनास्तिव्रतंपापप्रणाशनम् ११८

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे-
उमामहेश्वरसंवादेएकादश्युत्पत्तिमुरवधोनामाष्टत्रिंशोऽध्यायः३८

## एकोनचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
वंदेविष्णुंविभुंसाक्षाल्लोकत्रयसुखावहम्
विश्वेशंविश्वकर्तारंपुराणंपुरुषोत्तमम् १
पृच्छामिदेवदेवेशसंशयोऽस्तिमहान्मम
लोकानांचहितार्थायपापानांक्षयहेतवे २

मार्गशीर्षेसितेपन्नेभवेदेकादशीतुया
किंनामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते
एतदाचन्दवमेस्वामिन्विस्तरेणयथातथम् ३
श्रीकृष्णउवाच-
साधुपृष्टंत्वयाराजन्साधुतेविमलंयशः
कथयिष्यामिराजेंद्रहरिवासरमुत्तमम् ४
उत्पन्नाचासितेपन्नेद्वादशीममवल्लभा
मार्गशीर्षोत्पत्तिरितिममदेहसमुद्भवा ५
सुरासुरवधार्थायह्युत्पन्नाभरतर्षभ
कथिताचमयासावैतवाग्रेराजसत्तम ६
पूर्वाचैकादशीराजंस्त्रैलोक्येसचराचरे
मार्गशीर्षेसितेपन्नेउत्पत्तिरितिनामतः ७
अतःपरंप्रवन्दयामिमार्गशीर्षेसितातुया
यस्याःश्रवणमात्रेणवाजपेयफलंलभेत् ८
मोन्नानामेतिसाप्रोक्तासर्वपापहरापरा
देवंदामोदरंराजन्पूजयेच्चप्रयत्नतः ९
तुलस्यामंजरीभिश्चधूपैर्दीपैःप्रयत्नतः
पूर्वेणविधिनाचैवदशम्येकादशीतथा १०
मोन्नाचैकादशीनाम्नामहापातकनाशिनी
रात्रौजागरणंकार्यंनृत्यगीतस्तवैर्मम ११
शृणुराजन्प्रवन्दयामिदिव्यांपौराणिकीकथाम्
यस्याःश्रवणमात्रेणसर्वपापन्नयोभवेत् १२
अधोयोनिगतश्चैवपितरोयस्यपापतः
अस्याश्चपुगयदानेनमोन्नंयांतिनसंशयः १३
चंपकेनगरेरम्येवैष्णवैश्चविभूषिते
वैखानसोनामनृपःपुत्रवत्पालयेत्प्रजाः १४
वसंतिबहवोविप्रावेदवेदांगपारगाः
ऋद्धिमत्यःप्रजास्तस्यराज्ञोवैखानसस्यहि १५
एवंराज्यंप्रकुर्वाणोरात्रौस्वप्नस्यमध्यतः
स्वकीयपितरोदृष्ट्वाअधोयोनिगतानृप १६

एवंदृष्ट्वाचतान्सर्वान्विस्मयाविष्टमानसः
कथयामासवृत्तांतंस्वप्नजातंद्विजान्प्रति १७
राजोवाच-
मयास्वपितरोदृष्ट्वानरकोपगताद्विजाः
तारयेतितनूजत्वमस्मान्निरयसागरात् १८
एवंब्रुवाणास्तेनूनंरोदमानामुहुर्मुहुः

मयादृष्टाद्विजश्रेष्ठाएतस्माच्चनमेसुखम् १९
एतद्राज्यंममहत्सुखदायिनविद्यते
अश्वागजास्तथासर्वेरोचंतेमेनभोद्विजाः २०
नदारानसुतामह्यंरोचंतेद्विजसत्तमाः
किंकरोमिक्वगच्छामिहृदयंमेऽवरुध्यते २१
तद्व्रतंतंतपोयोगंयेनैवममपूर्वजाः
मोक्षंप्रयांतिसद्योवैकथ्यतांचद्विजोत्तमाः २२
पुत्रेतुजीवितप्रायेबलीयसिमहात्मनि
पितास्तिनरकेघोरेतस्यपुत्रस्यकिंफलम् २३
ब्राह्मणाऊचुः -
पर्वतस्यमुनेराजन्निकटेचाश्रमोमहान्
गम्यतांराजशार्दूलभूतंभव्यंविजानतः २४
तेषांश्रुत्वाततोवाक्यंराजावैखानसोमहान्
जगामचाशुतत्रैवचाश्रमंपर्वतस्यच २५
ब्राह्मणैर्वेष्टितोराजाराजभिश्चसमन्वितः
आश्रमंविपुलंतस्यसंप्राप्तोराजसत्तमः २६
तत्रर्ग्वेदयजुर्वेदसामाध्ययनकोविदैः
वेष्टितंमुनिभिश्चैवद्वितीयंब्रह्मणोयथा २७
दृष्ट्वातंमुनिशार्दूलंराजावैखानसस्तथा
दंडवत्प्रणतिंकृत्वापस्पर्शचरणौमुनेः २८
पप्रच्छकुशलंतस्यसप्तस्वंगेष्वसौमुनिः
राज्येनिष्कंटकत्वंचराज्ञःसौख्यसमन्वितम् २९
राजोवाच -

तवप्रसादाद्भोस्वामिन्कुशलंमेऽङ्गसप्तसु
भक्तायेविष्णुविप्रेषुकथंतेषांचविघ्नता ३०
मयास्वपितरोदृष्टाःस्वप्नेचनरकेस्थिताः
कस्यपुरायस्यसामर्थ्यान्मोक्षंयांतिद्विजोत्तम ३१
अयंमेसंशयःस्वामिन्प्रष्टुंतंत्वामुपागतः
उपायःकश्चिदेवात्रकर्तव्योमुनिसत्तम ३२
एतद्वाक्यंततःश्रुत्वापर्वतोसुनिसत्तमः
ध्यानस्तिमितनेत्रोऽभूत्तपस्वीब्रह्मसंनिभः ३३
मुहूर्तमेकंध्यानस्थोभूपतिंप्रत्युवाचह
ज्ञातंहितवराजेंद्रपितॄणांपूर्वचेष्टितम् ३४
पूर्वजन्मनितातस्तेक्षत्रियोराज्यगर्वितः
सपत्न्याऋतुकालेतुराजधर्मप्रवर्तितः ३५
गतोग्रामेतुतांत्यक्त्वाकार्यार्थीनिजयोषितम्
तवपित्रातुतस्याश्चनदत्तमृतुदानकम् ३६
तेनपापप्रभावेननरकेपितृभिःसह
पतितोराजशार्दूलतवतातःसुदारुणे ३७
ततःपुनरुवाचेदंराजावैखानसोमुनिम्
केनव्रतप्रभावेनमोक्षस्तेषांभवेन्मुने ३८
मुनिरुवाच–
मार्गशीर्षेसितेपक्षेमोक्षानामेतिनामतः
सर्वैश्चेतद्व्रतंकार्यंपित्रेपुरायंप्रदीयताम् ३९
तेनपुरायप्रभावेनमोक्षस्तेषांभविष्यति
सत्यमेतन्महाभागब्रह्मणोवचनंयथा ४०
मुनेर्वाक्यंततःश्रुत्वास्वगृहंपुनरागतः
मार्गशीर्षस्तथामासःप्राप्तःकष्टेनतेनवै ४१
मुनेर्वाक्येनतत्कृत्वाव्रतंवैखानसोनृपः
अददत्पुरायमखिलैःसार्द्धंपित्रेसभूमिपः ४२
दत्तेपुरायक्षणेनैवपुष्पवृष्टिरभूद्दिवि
वैखानसस्यतातोवैपितृभिर्मोक्षमाविशत् ४३
राजानंचांतरिक्षेसगिरंपुरायामुवाचह

स्वस्तिस्वस्तीतितेपुत्रप्रोच्यचैवंदिवंगतः ४४
एवंयःकुरुतेराजन्मोक्षामेकादशींशुभाम्
तस्यपापानिनश्यंतिमृतोमोक्षमवाप्नुयात् ४५
नातःपरतराकाचित्मोक्षदैकादशीभवेत्
पुरायसंख्यांनजानामिराजन्मेप्रियकृद्ब्रतम् ४६
चिंतामणिसमाह्येषानृणांमोक्षप्रदायिनी
पठनाच्छ्रवणादस्यावाजपेयफलंलभेत् ४७

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तरखंडे-
उमापतिनारदसंवादेमार्गशीर्षशुक्लमोक्षदा
एकादशीनामैकोनचत्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
पौषस्यकृष्णपक्षेतुकिंनामैकादशीभवेत्
किंनामकोविधिस्तस्याएतद्विस्तरतोवद
एतदाख्याहिभोस्वामिन्कोदेवस्तत्रपूज्यते १
श्रीकृष्णउवाच-
कथयिष्यामिराजेंद्रभवतःस्नेहबंधनात्
तुष्टिर्मेनतथाराजन्यज्ञैर्बहुलदक्षिणैः २
यथामेतुष्टिरायातिह्येकादशीव्रतेनवै
तस्मात्सर्वप्रयत्नेनकर्त्तव्योहरिवासरः ३
सत्यमेतन्नवैमिथ्याधर्मिष्ठानांविशारद
पौषस्यकृष्णपक्षेयासफलानामनामतः ४
तस्यांनारायणंदेवंपूजयेच्चयथाविधि
पूर्वेणैवविधानेनकर्त्तव्यैकादशीशुभा ५
नागानांचयथाशेषोपक्षिणांपन्नगाशनः
देवानांचयथाविष्णुर्द्विपदानांयथाद्विजः ६
व्रतानांचयथाराजन्श्रेष्ठाचैकादशीतिथिः
तेजनाश्चैवभोराजन्पूज्यावैसर्वदामम ७
हरिवासरसंलीनाःकुर्वंत्येकादशीव्रतम्

इहैवधनसंयुक्तामृतामोत्तंलभंतिते ८
सफलायांफलैराजन्पूजयेन्नामतोहरिम्
नारिकेलफलैश्चैवक्रमुकैर्बीजपूरकैः ९
जंबीरैर्दाडिमैश्चैवतथाधात्रीफलैःशुभैः
लवंगैर्बदरीभिश्चतथाम्रैश्चविशेषतः १०
पूजयेद्देवदेवेशंधूपदीपैस्तथैवच
सफलायांविशेषेणदीपदानंतुकारयेत् ११
रात्रौजागरणंचैवकर्त्तव्यंसहवैष्णवैः
यावन्निमेषोनेत्रस्यतावज्जागर्तियोनिशि १२
एकाग्रमनसोराजन्तस्यपुरायंशृणुष्वहि
तत्समोनास्तियज्ञोवैतीर्थंवातत्समंनहि १३
सर्वव्रतानिराजेंद्रकलांनार्हंतिषोडशीम्
एवंवर्षसहस्त्राणितपसानैवयत्फलम् १४
तत्फलंसमवाप्नोतियःकरोतिहिजागरम्
श्रूयतांराजशार्दूलसफलायाःकथाशुभा १५
चंपावतीतिविख्यातापुरीमाहिष्मतस्यच
बभूवुस्तस्यराजर्षेःपुत्राःपंचकुमारकाः १६
तेषांमध्येतुज्येष्ठोवैमहापापरतःसदा
परदाराभिचारीचवेश्यासक्तश्चमद्यपः १७
पितुर्द्रव्यंतुतेनैवगमितंपापकर्मणा
असद्वृत्तिरतोनित्यंभूसुराणांतुनिंदकः १८
वैष्णवानांचदेवानांनित्यंनिंदांकरोतिसः
ईदृशंतुततोदृष्ट्वापुत्रंमाहिष्मतोनृपः १९
नाम्नातुलुंपकइतिराजपुत्रेषुचापठत्
राज्यान्निष्कासितस्तेनपित्राचैवतुबंधुभिः २०
सचैवंपरिवारैस्तुत्यक्तश्चपरिपंथिवत्
लुंपकोऽपितथात्यक्तश्चिंतयामासवैतदा २१
त्यक्तोऽहबांधवैःपित्राराज्यान्निष्कासितःकिल
इतिसंचिंत्यमानोऽसौमतिंपापेतदाकरोत् २२
मयागंतव्यमेवास्तुदारुणेगहनेवने

तस्माच्चैवपुरंसर्वंलुंपयिष्यामिवैपितुः २३
इत्येवंसमतिंकृत्वालुंपकोदैवयोगतः
निर्जगामपुरात्तस्माद्गतोऽसौगहनेवने २४
जीवघातरतोनित्यंस्तेयद्यूतकलानिधिः
सर्वंचनगरंतेनमुषितंपापकर्मणा २५
स्तेयाभिगामीनगरेगृहीतःसनिशाचरैः
उवाचतान्सुतोऽहवैराज्ञोमाहिष्मतस्यच २६
सतैर्मुक्तःपापकर्माचागतोविपिनंपुनः
आमिषाभिरतोनित्यंतरोर्वैफलभक्षणे २७
आश्रमस्तस्यदुष्टस्यवासुदेवस्यसंनिधौ
अश्वत्थोवर्त्ततेतत्रजीर्णश्चबहुवार्षिकः २८
देवत्वंतस्यवृक्षस्यविपिनेवर्ततेमहत्
तत्रैवनिवसंश्चैवलुंपकःपापबुद्धिमान् २९
गतेबहुतिथेकालेकस्यचित्पुण्यसंचयात्
पौषस्यकृष्णपक्षेतुदशम्यांदिवसेतथा ३०
फलानिभुक्त्वावृक्षाणांरात्रौशीतेनपीडितः
लुंपकोनामपापिष्ठोवस्त्रहीनोगतेक्षणः ३१
पीड्यमानोऽतिशीतेनहरिवृक्षसमीपतः
ननिद्रानसुखंतस्यगतप्राणइवाभवत् ३२
आछाद्यदशनैरास्यमेवंनीतानिशाखिला
भानूदयेऽपिपापिष्ठोनलेभेचेतनांतदा ३३
लुंपकोगतसंज्ञस्तुसफलायादिनेतथा
रवौमध्यंगतेचैवसंज्ञांलेभेसलुंपकः ३४
इतस्ततोविलोक्याथव्यथितश्चतदासनात्
स्खलत्पद्भ्यांप्रचलितःखंजन्निवमुहुर्मुहुः ३५
वनमध्येगतस्तत्रक्षुत्क्षामःपीडितोऽभवत्
नशक्तिर्जीवघातेतुलुंपकस्यदुरात्मनः ३६
फलानिचतदाराजन्नाजहारसलुंपकः
यावत्समागतस्तत्रतावदस्तंगतोरविः ३७
किंभविष्यतितातेतिसविलापंचकारह

फलानितत्रभूरीणिवृक्षमूलेन्यवेशयत् ३८
इत्युवाचफलैरेभिःश्रीपतिस्तुष्यतांहरिः
इत्युक्तालुंपकश्चैवनिद्रांलेभेनवैनिशि ३९
रात्रौजागरणंमेनेविष्णुस्तस्यदुरात्मनः
फलैस्तुपूजनंमेनेसफलायास्तथानघ ४०
अकस्माद्व्रतमेवैतत्कृतवान्वैसलुंपकः
तेनपुरायप्रभावेनप्राप्तंराज्यमकंटकम् ४१
सूर्यस्योदयनंयावत्तावद्विष्णुर्जगामह
दिवितत्कालमुत्पन्नावागुवाचाशरीरिणी ४२
राज्यंप्राप्स्यसिपुत्रत्वंसफलायाःप्रसादतः
तथेत्युक्तेतुवचसिदिव्यरूपधरोऽभवत् ४३
मतिरासीत्ततस्तस्यपरमावैष्णवीनृप
दिव्याभरणशोभाढ्योलेभेराज्यमकंटकम् ४४
कृतंराज्यंतुतेनैवंवर्षाणिदशपंचच
मनोदास्तस्यपुत्रास्तुदाराःकृष्णप्रसादतः ४५
आशुराज्यंपरित्यज्यपुत्रेचैवसमर्प्यच
गतःकृष्णस्यसांनिध्यंयत्रगत्वानशोचति ४६
एवंयःकुरुतेराजन्सफलाव्रतमुत्तमम्
इहलोकेसुखंप्राप्यमृतोमोक्षमवाप्नुयात् ४७
धन्यास्तेमानवालोकेसफलायांचयेरताः
तेषांचसफलंजन्मनात्रकार्याविचारणा ४८
पठनाच्छ्रवणाच्चैवकरणाच्चविशांपते
राजसूयस्ययज्ञस्यफलमाप्नोतिमानवः ४९

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायां-
मुत्तरखंडेउमापतिनारदसंवादेपौषकृष्णासफलैकादशीनाम
चत्वारिंशोऽध्यायः ४०

## एकचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
कथितावैत्वयाकृष्णसफलैकादशीशुभा

कथयस्वप्रसादेनशुक्लपक्षस्ययाभवेत् १
किन्नामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते
कस्मैतुष्टोहृषीकेशस्त्वमेवपुरुषोत्तमः २
श्रीकृष्णउवाच-
शृणुराजन्प्रवक्ष्यामिशुक्लापौषस्ययाभवेत्
कथयामिमहाराजलोकानांहितकाम्यया ३
पूर्वेणविधिनाराजन्कर्त्तव्यैषाप्रयत्नतः
पुत्रदानामनाम्नासासर्वपापहरापरा ४
नारायणोऽधिदेवोऽस्याकामदःसिद्धिदायकः
नातःपरतराकाचित्त्रैलोक्येसचराचरे ५
विद्यावंतंयशस्वंतंकरोतिचनरंहरिः
शृणुराजन्प्रवक्ष्यामिकथांपापहरांपराम् ६
भद्रावत्यांपुराह्यासीत्पुर्यांराजासुकेतुमान्
तस्यराज्ञस्तथाराज्ञीचंपकानामवर्त्तते ७
पुत्रहीनेनराज्ञाचकालेनीतोमनोरथैः
नैवात्मजंनृपोलेभेवंशकर्त्तारमेवच ८
तेनैवराज्ञाधर्मेणचिंतितंबहुकालतः
किंकरोमिक्वगच्छामिसुतप्राप्तिःकथंभवेत् ९
नराष्ट्रेनपुरेसौख्यंलेभेराजासुकेतुमान्
साध्व्यस्वकांतयासार्द्धंप्रत्यहंदुःखितोऽभवत् १०
तावुभौदंपतीनित्यंचिंताशोकपरायणौ
पितरोऽस्यजलंदत्तंकवोष्णमुपभुंजते ११
राज्ञःपश्चान्नपश्यामोयोऽस्मान्संतर्पयिष्यति
इत्येवंसंस्मरंतोऽस्यदुःखिताःपितरोऽभवन् १२
नबांधवानमित्राणिनामात्याःसुहृदस्तथा
रोचयंत्यस्यभूपस्यनगजाश्वाःपदातयः १३
नैराश्यंभूपतेस्तस्यनित्यंमनसिवर्त्तते
नरस्यपुत्रहीनस्यनास्तिवैजन्मनःफलम् १४
अपुत्रस्यगृहंशून्यंहृदयंदुःखितंसदा
पितृदेवमनुष्याणांनानृणत्वंसुतंविना १५

तस्मात्सर्वप्रयत्नेनसुतमुत्पादयेन्नरः
इहलोकेयशस्तेषांपरलोकेशुभागतिः १६
येषांतुपुगयकर्तॄणांपुत्रजन्मगृहेभवेत्
आयुरारोग्यसंपत्तिस्तेषांगेहेप्रवर्तते १७
पुत्रजन्मगृहेयेषांलोकानांपुगयकारिणाम्
पुगयंविनानचप्राप्तिर्विष्णुभक्तिंविनानृप १८
पुत्राश्चसंपदोवापिनिश्चयादितिमेमतिः
एवंविचिंत्यमानोऽसौनशर्मलभतेनृपः १९
प्रत्यूषेचिंतयद्राजानिशीथेचिंतयत्ततः
स्वयमात्मविनाशंचचिंतयामासकेतुमान् २०
आत्मघातेदुर्गतिंचचिंतयित्वातदानृपः
दृष्ट्वात्मदेहंपतितमपुत्रत्वंतथैवच २१
पुनर्विचार्यात्मबुद्ध्याआत्मनोहितकारणम्
अश्वारूढस्ततोराजाजगामगहनंवनम् २२
पुरोहितादयःसर्वेनजानंतिगतंनृपम्
गंभीरेविपिनेराजामृगपक्षिनिषेविते २३
विचचारतदाराजावनवृक्षान्विलोकयन्
वटानश्वत्थबिल्वांश्चखर्जूरान्पनसांस्तथा २४
बकुलान्सप्तपर्णांश्चतिंदुकांस्तिलकानपि
शालांस्तालांस्तमालांश्चददर्शसरलान्नृपः २५
इंगुदीककुभांश्चैवश्लेष्मातकनगांस्तथा
शल्लकान्करमर्दांश्चपाटलान्बदरानपि २६
अशोकांश्चपलाशांश्चशृगालाञ्शशकानपि
वनमार्जारमहिषान्शल्लकांश्चमरानपि २७
ददर्शभुजगान्राजावल्मीकादर्द्धनिःसृतान्
तथा वनगजान् मत्तान् कलभैःसहसंगतान् २८
यूथपांश्चचतुर्दंतान्करिणीयूथमध्यगान्
तान्दृष्ट्वाचिंतयामासआत्मनःसगजान्नृपः २९
तेषांसविचरन्मध्येराजाशोभामवापह
महदाश्चर्यसंयुक्तंददृशेविपिनंनृपः ३०

मार्गेशिवारुतान्शृण्वन्नुलूकविरुतंतथा
तांस्तानृक्षमृगान्पश्यन्बभ्रामवनमध्यतः ३१
एवंददर्शगहनंनृपोमध्यगतेरवौ
क्षुत्तृड्भ्यांपीडितोराजाइतश्चेतश्चधावति ३२
नृपतिश्चिंतयामाससंशुष्कगलकंधरः
मयातुकिंकृतंकर्मप्राप्तंदुःखंयदीदृशम् ३३
मयावैतोषितादेवायज्ञैःपूजाभिरेवच
तथैवब्राह्मणादानैस्तोषितामिष्टभोजनैः ३४
प्रजाश्चैवसदाकालंपुत्रवत्पालिताभृशम्
कस्माद्दुःखंमयाप्राप्तमीदृशंदारुणंमहत् ३५
इतिचिंतापरोराजाजगामैवाग्रतोवनम्
सुकृतस्यप्रभावेनसरोदृष्टमनुत्तमम् ३६
मीनसंस्पर्शमानंचपद्मैश्चापरशोभितम्
कारंडैश्चक्रवाकैश्चराजहंसैश्चशोभितम् ३७
मकरैर्बहुभिर्मत्स्यैरन्यैर्जलचरैर्युतम्
समीपेसरसस्तस्यमुनीनामाश्रमान्बहून् ३८
ददर्शराजालक्ष्मीवान्शकुनैःशुभशंसिभिः
दक्षिणंप्रास्फुरन्नेत्रमथसव्येतरःकरः ३९
प्रास्फुरन्नृपतेस्तस्यकथयञ्शोभनंफलम्
तस्यतीरेमुनीन्दृष्ट्वाकुर्वाणान्नैगमंजपम् ४०
हर्षेणमहताविष्टोबभूवनृपनंदनः
अवतीर्यहयात्तस्मान्मुनीनामग्रतःस्थितः ४१
पृथक्पृथग्ववंदेऽसौमुनींस्तान्शंसितव्रतान्
कृतांजलिपुटोभूत्वादंडवच्चपुनःपुनः ४२
प्रत्यूचुस्तेऽपिमुनयःप्रसन्नानृपतेवयम्
राजोवाच-
केभवंतोऽत्रकथ्यंतांकाचाख्याभवतामपि
किमर्थंसंगतायूयंसत्यंवदतमेऽग्रतः ४३
मुनयऊचुः-
विश्वेदेवावयंराजन्स्नानार्थमिहचागताः

माघोनिकटमायातएतस्मात्पंचमेऽहनि ४४
अद्यचैकादशीराजन्पुत्रदानामनामतः
पुत्रंददात्यसौविष्णुःपुत्रदाकारिणांनृणाम् ४५
राजोवाच-
एषवैसंशयोमह्यंपुत्रस्योत्पादनेमहान्
यदितुष्टाभवंतोवैपुत्रंमेदीयतांतदा ४६
मुनिरुवाच-
अद्यैवदिवसेराजन्पुत्रदानामवर्तते
एकादशीतिविख्यातंक्रियतांव्रतमुत्तमम् ४७
अभिषेकात्ततोऽस्माकंकेशवस्यप्रसादतः
अवश्यंतवराजेंद्रपुत्रप्राप्तिर्भविष्यति ४८
इत्येवंवचनात्तेषांकृतंराज्ञाव्रतोत्तमम्
मुनीनामुपदेशेनपुत्रदायाविधानतः ४९
द्वादश्यांपारणंकृत्वामुनीन्नत्वापुनःपुनः
आजगामगृहंराजाराज्ञीगर्भमथादधौ ५०
पुत्रोजातःसूतिकालेतेजस्वीपुण्यकर्मणा
पितरंतोषयामासप्रजापालोबभूवसः ५१
तस्माद्राजन्प्रकर्त्तव्यंपुत्रदाव्रतमुत्तमम्
लोकानांतुहितार्थायतवाग्रेकथितंमया ५२
एकचित्तास्तुयेमर्त्याःकुर्वंतिपुत्रदाव्रतम्
पुत्रान्प्राप्येहलोकेतुमृतास्तेस्वर्गगामिनः
पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलंलभेत् ५३

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे-
उमापतिनारदसंवादेपौषशुक्लपुत्रदैकादशीनाम
एकचत्वारिंशोऽध्यायः ४१

द्विचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
साधुकृष्णजगन्नाथआदिदेवजगत्पते
कथयस्वप्रसादेनकृपांकुरुममोपरि १

माघस्यकृष्णपक्षेतुकावाचैकादशीभवेत्
किंनामकोविधिस्तस्याएतद्विस्तरतोवद २
श्रीभगवानुवाच-
शृणुत्वंनृपशार्दूलकृष्णमाघस्ययाभवेत्
षट्तिलानामविख्यातासर्वपापप्रणाशिनी १
षट्तिलायाःशृणुष्वत्वंकथांपापहरांशुभाम्
यांपुलस्त्योमुनिश्रेष्ठोदालभ्यंप्रतिचोक्तवान् २
दालभ्यउवाच-
मर्त्यलोकमनुप्राप्ताःपापंकुर्वंतिजंतवः
ब्रह्महत्यादिपापैश्चयुक्तायेविविधादिभिः ३
परद्रव्यापहाराश्चपरव्यसनमोहिताः
कथंनयांतिनरकंब्रह्मंस्तद्ब्रूहितत्त्वतः ४
अनायासेनभगवन्दानेनाल्पेनकेनचित्
पापंप्रशमनंयातिएतन्मेवक्तुमर्हसि ५
पुलस्त्यउवाच-
साधुसाधुमहाभागगुह्यमेतत्सुदुर्ल्लभम्
यन्नकस्यचिदाख्यातंविष्णुब्रह्मेंद्रदैवतैः ६
तदहंकथयिकष्यामित्वयापृष्टोद्विजोत्तम
माघमासेतुसंप्राप्तेशुचिस्नातोजितेंद्रियः ७
कामक्रोधाभिमानेर्ष्यालोभपैशुन्यवर्जितः
देवदेवंचसंस्मृत्यपादौप्रक्षाल्यवारिभिः ८
भूमावपतितंगृह्यगोमयंतत्रमानवः
तिलान्प्रक्षिप्यकार्पासंपिंडिकाश्चैवकारयेत् ९
अष्टोत्तरशतंचैवनात्रकार्याविचारणा
ततोमाघेचसंप्राप्तेह्याषाढर्क्षंभवेद्यदि १०
मूलंवाकृष्णपक्षस्यैकादशीनियमांस्ततः
गृह्णीयात्पुण्यकालेचविधानंतत्रमेशृणु ११
देवदेवंसमभ्यर्च्यसुस्नातःप्रयतःशुचिः
कृष्णनामानिसंकीर्त्यपुनःप्रस्खलितादिषु १२
रात्रौजागरणंकुर्यादादौहोमंचकारयेत्

अर्चयेद्देवदेवेशंद्वितीयेऽह्निपुनर्हरिम् १३
चंदनागुरुकर्पूरैर्नैवेद्यंकृसरंतथा
संस्मृत्यनाम्नाचततःकृष्णाख्येनपुनःपुनः १४
कूष्मांडैर्नारिकेरैश्चह्यथवाबीजपूरकैः
सर्वाभावेऽपिविप्रेंद्रशस्तपूगफलैर्वृतम्
अर्घंदद्याद्विधानेनपूजयित्वाजनार्दनम् १५
कृष्णकृष्णकृपालुस्त्वमगतीनांगतिर्भव
संसारार्णवमग्नानांप्रसीदपुरुषोत्तम १६
नमस्तेपुंडरीकाक्षनमस्तेविश्वभावन
सुब्रह्मण्यनमस्तेऽस्तुमहापुरुषपूर्वज
गृहाणार्घ्यंमयादत्तंलक्ष्म्यासहजगत्पते १७
इत्यर्घमंत्रः
ततस्तुपूजयेद्विप्रमुदकुंभंप्रदापयेत्
छत्रोपानहवस्त्रैश्चकृष्णोमेप्रीयतामिति १८
कृष्णाधेनुःप्रदातव्यायथाशक्तिद्विजोत्तमे
तिलपात्रंद्विजश्रेष्ठदद्यात्पात्रविचक्षणः १९
स्नानेप्राशनकेशस्तास्तथाकृष्णतिलामुने
तान्प्रदद्यात्प्रयत्नेनयथाशक्तिद्विजोत्तमे
तिलप्ररोहजाःक्षेत्रेयावत्संख्यास्तिलाद्विज २०
तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते
तिलस्नायीतिलोद्वर्तीतिलहोमीतिलोदकी २१
तिलदाताचभोक्ताचषट्तिलाःपापनाशनाः
नारदउवाच-
कृष्णकृष्णमहाबाहोनमस्तेविश्वभावन २२
षट्तिलैकादशीभूतंकीदृशंफलमस्तिवै
सोपाख्यानंममब्रूहियदितुष्टोऽसियादव
श्रीकृष्णउवाच
शृणुराजन्यथावृत्तंदृष्टंतत्कथयामिते
मर्त्यलोकेपुराह्यासीद्ब्राह्मण्येकाचनारद
व्रतचर्यारतानित्यंदेवपूजारतासदा २३

मासोपवासनिरताममभक्ताचसर्वदा
कृष्णोपवाससंयुक्ताममपूजापरायणा २४
शरीरंक्लेशितंचैवउपवासैर्द्विजोत्तम
देवानांब्राह्मणानांचकुमारीणांचभक्तितः २५
गृहादिकंप्रयच्छंतीसर्वकालंमहासती
अतिकृच्छ्ररतासातुसर्वकालंतुवैद्विज २६
नदत्ताभिक्षुकेभिक्षाब्राह्मणानचतर्पिताः २७
ततःकालेनमहतामयावैचिंतितंद्विज
शुद्धमस्याःशरीरंहिव्रतैःकृच्छ्रैर्नसंशयः २८
अर्चितोवैष्णवोलोकःकायक्लेशेनवैतया
नदत्तमन्नदानंहियेनतृप्तिःपराभवेत् २९
एवंज्ञात्वाअहंब्रह्मन्मर्त्यलोकमुपागतः
कापालंरूपमास्थायभिक्षापात्रेचयाचिता ३०
कस्मात्त्वमागतोब्रह्मन्क्वयासिवदमेऽग्रतः
पुनरेवमयाप्रोक्तंदेहिभिक्षांचसुंदरि ३१
तयाकोपेनमहतामृत्पिंडस्ताम्रभाजने
क्षिप्तोयावदहंब्रह्मन्पुनःस्वर्गंगतोद्विज ३२
ततःकालेनमहतातापसीसुमहाव्रता
सदेहास्वर्गमायाताव्रतचर्याप्रभावतः ३३
मृत्पिंडिकाप्रदानेनगृहंप्राप्तंमनोरमम्
संजातंचैवविप्रर्षेधान्यराशिविवर्जितम् ३४
गृहंयावन्निरीक्षेतनकिंचित्तत्रपश्यति
तावद्गृहाद्विनिष्क्रांताममांतेचागताद्विज ३५
क्रोधेनमहताविष्टमिदंवचनमब्रवीत्
मयाव्रतैश्चकृच्छ्रैश्चउपवासैरनेकशः ३६
पूजयाराधितोदेवःसर्वलोकस्यपालकः
नतत्रदृश्यतेकिंचिद्गृहेममजनार्दन ३७
ततश्चोक्तंमयातस्यैगृहंगच्छमहाव्रते
आगमिष्यंतिसुतरांकौतूहलसमन्विताः ३८
देवपत्न्योहिद्रष्टुंत्वांविस्मयाभिसमन्विताः

द्वारंनोद्घाटयविनाषट्तिलापुरायवाचनात् ३९
एवमुक्तामयासातुगतावैमानुषीतदा
अत्रांतरेसमायातादेवपत्न्यश्चवाडव ४०
ताभिश्चकथितंतत्रत्वांद्रष्टुंहिसमागताः
द्वारमुद्घाटयस्वाद्यत्वांप्रपश्यामशोभने ४१
मानुष्युवाच-
यदिमद्दर्शनंकार्यंसत्यंवाच्यंविशेषतः
षट्तिलायाव्रतंपुरायंद्वारोद्घाटनकारणात् ४२
श्रीकृष्णउवाच-
एकापिनावदत्तत्रषट्तिलैकादशीव्रतम्
अन्ययाकथितंतत्रद्रष्टव्यामानुषीमया ४३
ततोद्वारंसमुद्घाटयदृष्टाताभिश्चमानुषी
नदेवीनचगंधर्वीनासुरीनचपन्नगी ४४
दृष्टापूर्वंतथानारीयादृशीयंद्विजर्षभ
देवीनामुपदेशेनषट्तिलायाव्रतंकृतम् ४५
मानुष्यासत्यव्रतयाभुक्तिमुक्तिफलप्रदम्
रूपकांतिसमायुक्ताक्षणेनसमवापसा ४६
धनंधान्यंचवस्त्रादिसुवर्णंरौप्यमेवच
भवनंसर्वसंपन्नंषट्तिलायाःप्रभावतः ४७
रूपकांतिसमायुक्ताक्षणेनसमपद्यत ४८
अतितृष्णानकर्त्तव्यावित्तशाठ्यंविवर्जयेत्
आत्मवित्तानुसारेणतिलान्वस्त्राणिदापयेत् ४९
लभतेचैवमारोग्यंनरोजन्मनिजन्मनि
नदारिद्र्यंनकष्टत्वंनचदौर्भाग्यमेवच ५०
संभवेद्वैद्विजश्रेष्ठषट्तिलासमुपोषणात्
अनेनविधिनाभूपतिलदातानसंशयः ५१
मुच्यतेपातकैःसर्वैरनायासेनमानवः
दानंचविधिवत्पात्रेसर्वपातकनाशनम्
नानर्थःकश्चिन्नायासःशरीरेनृपसत्तम ५२
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमा

पतिनारदसंवादेमाघकृष्णाषट्तिलैकादशीनामद्विचत्वारिंशोऽध्यायः४२

## त्रिचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
साधुकृष्णत्वयाप्रोक्तमादिदेवोभवान्प्रभो
स्वेदजाश्चांडजाश्चैवउद्भिज्जाश्चजरायुजाः १
तेषांकर्त्ताविकर्त्तात्वंपालकःक्षयकारकः
माघस्यकृष्णपक्षेतुषट्तिलाकथितात्वया २
शुक्लेचकाभवेद्देवकथयस्वप्रसादतः
किंनामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते ३
श्रीकृष्णउवाच-
कथयिष्यामिराजेंद्रशुक्लेमाघस्ययाभवेत्
जयानामेतिविख्यातासर्वपापहरापरा ४
पवित्रापापहंत्रीचकामदामोक्षदानृणाम्
ब्रह्महत्यापहंत्रीचपिशाचत्वविनाशिनी ५
नैवतस्याव्रतेचीर्णेप्रेतत्वंजायतेनृणाम्
नातःपरतराकाचित्पापघ्नीमोक्षदायिनी ६
एतस्मात्कारणाद्राजन्कर्त्तव्यासाप्रयत्नतः
श्रूयतांराजशार्दूलकथापौराणिकीशुभा ७
पंकजेचपुराणेऽस्यामहिमाकथितोमया
एकदानाकलोकेवैइंद्रोराज्यंचकारह ८
देवास्तत्रसुखेनैवनिवसंतिमनोरमे
पीयूषपाननिरताश्चप्सरोगणसेविताः ९
नंदनंतुवनंतत्रपारिजातोपसेवितम्
रमयंतिरमंतेऽत्रअप्सरोभिर्दिवौकसः १०
एकदारममाणोऽसौदेवेंद्रःस्वेच्छयानृप
नर्त्तयामासवैहर्षात्पंचाशत्कोटिनायकः ११
गंधर्वास्तत्रगायंतिगंधर्वःपुष्पदंतकः
चित्रसेनस्तुतत्रैवचित्रसेनसुतातथा १२
मालिनीतिचनाम्नातुचित्रसेनस्ययोषिता

मालिन्यास्तुसमुत्पन्नापुष्पदंतीचनामतः १३
पुष्पदंतस्यपुत्रोऽसौमाल्यवान्नामनामतः
पुष्पदंत्याश्चरूपेणमाल्यवानतिमोहितः १४
तयाह्येवंकटाक्षैश्चमाल्यवांश्चवशीकृतः
लावरायंरूपसंपन्नंतस्यारूपंनिशामय १५
बाहूतस्याश्चकामेनकंठपाशौकृताविव
कर्णायतेतुनयनेरक्तांतेघूर्णितेतथा १६
कर्णौतुशोभनौतस्याःकुराडलाभ्यांनृपोत्तम
कंबुग्रीवायुतासैवदिव्याभरणभूषिता १७
पीनोन्नतौकुचौतस्यास्तौहेमकलशाविव
मध्यंत्वामंचचार्वंग्यामुष्टिग्राह्यमनुत्तमम् १८
नितंबौविस्तृतौचास्याविस्तीर्णाजघनस्थली
चरणौशोभमानौचरक्तोत्पलसमद्युती १९
ईदृश्यापुष्पवत्यासमाल्यवानतिमोहितः
शक्रस्यपरितोषायनृत्यार्थंतौसमागतौ २०
गायमानौतुतौतत्रअप्सरोगणसेवितौ
मदनाभिपरीतांगौपुष्पदंतीचमाल्यवान् २१
परस्परानुरागेणव्यामोहवशमागतौ
नशुद्धगानंगायेतांचित्तभ्रमसमन्वितौ २२
बद्धदृष्टीतथान्योन्यंकामबाणवशंगतौ
ज्ञात्वालेखर्षभस्तत्रसंगतंमानसंतयोः २३
तालक्रियामानलोपात्तथागीतविसर्जनात्
चिंतयित्वातुमघवाह्यवमानंतथात्मनः २४
कुपितश्चतयोरर्थेशापंदास्यन्निदंजगौ
धिग्धिग्वांपतितौमूढावाज्ञाभंगकृतौमम २५
युवांपिशाचौभवतांदंपतीभावधारिणौ
मर्त्यलोकमनुप्राप्तौभुंजानौकर्मणःफलम् २६
एवंमघवताशप्तावुभौदुःखितमानसौ
हिमवंतंगिरिंप्राप्ताविंद्रशापाद्विमोहितौ २७
उभौपिशाचतांप्राप्तौदारुणंदुःखमेवच

संतप्तमानसौतत्रहिमकृच्छ्रगतावुभौ २८
गंधर्वत्वमप्सरस्त्वंनजानीतोविमोहितौ
पीड्यमानौनिदाघेनदेहपातकजेनच २९
ननिशायांसुखंशांतिंलभेतेकर्मपीडितौ
परस्परंवादमानौचेरतुर्गिरिगह्वरे ३०
पीड्यमानौतुशीतेनतुषारप्रभवेनतौ
दंतघर्षंप्रकुर्वाणौरोमांचितवपुर्द्धरौ ३१
ऊचेपिशाचःसतदातांपत्नींस्वांपिशाचिकाम्
किमनल्पकृतंपापंदारुणंरोमहर्षणम् ३२
येनप्राप्तंपिशाचत्वंस्वेनदुष्कृतकर्मणा
नरकंदारुणंमत्वापिशाचत्वंचदुःखदम् ३३
तस्मात्सर्वप्रयत्नेनपातकंनसमाचरेत्
इतिचिंतापरौतत्रतावास्तांदुःखकर्षितौ ३४
दैवयोगात्तयोःप्राप्तामाघस्यैकादशीतिथिः
जयानामेतिविख्यातातिथीनामुत्तमातिथिः ३५
तस्मिन्दिनेतुसंप्राप्तेतावाहारविवर्जितौ
आसातेतत्रनृपतेजलपानविवर्जितौ ३६
नकृतोजीवघातश्चनपत्रफलभक्षणम्
अश्वत्थस्यसमीपेतौसर्वदादुःखसंयुतौ ३७
रविरस्तंगतोराजंस्तथैवस्थितयोस्तयोः
प्राप्ताचैवनिशाघोरादारुणाप्राणहारिणी ३८
वेपमानौततस्तौतुततःसुषुपतःक्षितौ
परस्परेणसंलग्नौगात्रयोर्भुजयोरपि ३९
ननिद्रानरतंतत्रनतौसौख्यमविंदताम्
एवंतौराजशार्दूलशापेनेंद्रस्यपीडितौ ४०
इत्थंतयोर्दुःखितयोर्निर्जगामनिशीथिनी
मार्तंडउदयंप्राप्तोद्वादशीदिवसागमे ४१
मयातुराजशार्दूलतयोर्मुक्तिर्धृताहृदि
जयायाःसुव्रतंचीर्णंरात्रौजागरणंकृतम् ४२
तस्माद्व्रतप्रभावाच्चयथाजातंतथाशृणु

द्वादशीदिवसेप्राप्तेतथाचीर्णेजयाव्रते ४३
विष्णोःप्रभावान्नृपतेपिशाचत्वंतयोर्गतम्
पुष्पदंतीमाल्यवतौपूर्वरूपौबभूवतुः ४४
पुरातनस्नेहयुतौपूर्वालंकारधारिणौ
विमानमधिरूढौतौगतौनाकेमनोरमे ४५
देवेंद्रस्याग्रतोगत्वाप्रणामंचक्रतुर्मुदा
तथाविधौतुतौदृष्ट्वामघवाविस्मितोऽब्रवीत् ४६
इंद्रउवाच-
वदतंकेनपुण्येनपिशाचत्वंहिवांगतौ
ममशापंचसंप्राप्तौकेनदेवेनमोचितौ ४७
माल्यवानुवाच-
वासुदेवप्रसादेनजयायास्तुव्रतेनच
पिशाचत्वंगतंस्वामिंस्तवभक्तिप्रभावतः ४८
इतिश्रुत्वातुमघवाप्रत्युवाचपुनस्तथा
पवित्रौपावनौजातौवंदनीयौममापिच ४९
हरिवासरकर्तारौविष्णुभक्तिपरायणौ
हरिवासरसँल्लीनायेचकृष्णपरायणाः ५०
अस्माकमपिमर्त्यास्तेपूज्याश्चैवनसंशयः
विहरस्वयथासौख्यंपुष्पदंत्यासुरालये ५१
कृष्णउवाच-
एतस्मात्कारणाद्राजन्कर्त्तव्योहरिवासरः
जयातुराजशार्दूलब्रह्महत्यापहारिणी ५२
सर्वदानानितेनैवसर्वयज्ञाश्रशेषतः
दत्तानिकारिताश्चैवजयायास्तुव्रतंकृतम् ५३
कल्पकोटिर्भवेत्तावद्वैकुंठेमोदतेध्रुवम्
पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलंलभेत् ५४

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमापतिनारदसंवादेमाघशुक्लजयैकादशीमाहात्म्यंनाम-
त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
फाल्गुनस्यासितेपक्षेकिंनामैकादशीभवेत्
कथयस्वप्रसादेनवासुदेवममाग्रतः १
श्रीकृष्णउवाच-
नारदःपरिपप्रच्छब्रह्माणंकमलासनम्
फाल्गुनस्यासितेपक्षेविजयानामनामतः
तस्याःपुण्यंद्विजश्रेष्ठकथयस्वप्रसादतः २
ब्रह्मोवाच-
शृणुनारदवक्ष्यामिकथांपापहराम्पराम्
यन्नकस्यचिदाख्यातंमयैतद्विजयाव्रतम् ३
पुरातनंव्रतंह्येतत्पवित्रंपापनाशनम्
जयंददातिविजयानृपाणांवैनसंशयः ४
पुरारामोवनंयातोवर्षाण्येवचतुर्दश
न्यवसत्पंचवट्यांतुसहसीतःसलक्ष्मणः ५
तत्रैववसतस्तस्यरामस्यविजयात्मनः
रावणेनहृतालौल्याद्भार्यासीतायशस्विनी ६
तेनदुःखेनरामोऽपिमोहमभ्यागतस्तदा
भ्रमन्जटायुषमथोददर्शविगतायुषम् ७
कबंधोनिहतःपश्चाद्भ्रमतारण्यमध्यतः
सुग्रीवेणसमंतस्यसखित्वंसमपद्यत ८
वानराणामनीकानिरामार्थंसंगतानिच
ततोहनुमतादृष्टालंकोद्यानेतुजानकी ९
रामसंज्ञापनंतस्यैदत्तंकर्ममहत्कृतम्
पुनःसमेत्यरामेणसर्वंतत्रनिवेदितम् १०
अथश्रुत्वारामचंद्रोवाक्यंचैवहनूमतः
सुग्रीवानुमतेनैवप्रस्थानंसमरोचयत् ११
सौमित्रेकेनपुण्येनतीर्यतेवरुणालयः
अगाधोनितरामेषयादोभिश्चसमाकुलः
उपायंनैवपश्यामियेनासौसुतरोभवेत् १२

लक्ष्मणउवाच-
आदिदेवस्त्वमेवासिपुराणपुरुषोत्तमः
बकदाल्भ्योमुनिश्चात्रवर्ततेद्वीपमध्यतः १३
अस्मात्स्थानाद्योजनार्द्धमाश्रमस्तस्यराघव
अन्येचब्राह्मणास्तत्रबहवोरघुनंदन १४
तंपृच्छगत्वाराजेंद्रपुराणमृषिपुंगवम्
इतिवाक्यंततःश्रुत्वालक्ष्मणस्यातिशोभनम् १५
जगामराघवोद्रष्टुंबकदाल्भ्यंमहामुनिम्
प्रणनाममुनिंमूर्ध्नारामोविष्णुमिवामरः १६
ज्ञात्वामुनिस्ततोरामंपुराणंपुरुषोत्तमम्
केनापिकारणेनैवप्रविष्टोमानुषींतनुम् १७
उवाचसऋषिस्तुष्टःकुतोरामतवागमः १८
रामउवाच-
त्वत्प्रसादादहंविप्रतीरंनदनदीपतेः
आगतोऽस्मिससैन्योऽत्रलंकांजेतुंसराक्षसाम् १९
भवतश्चानुकूलत्वात्तीर्यतेऽब्धिर्यथामया
तमुपायंवदमुनेप्रसादंकुरुसांप्रतम् २०
एतस्मात्कारणादेवद्रष्टुंत्वाहमिहागतः
रामस्यवचनंश्रुत्वाबकदाल्भ्योमहामुनिः २१
उवाचसुप्रसन्नात्मारामंराजीवलोचनम्
कर्तव्यमद्यतेरामव्रतानांव्रतमुत्तमम् २२
कृतेनयेनसहसाविजयस्तेभविष्यति
लंकांजित्वाराक्षसांश्चस्वच्छांकीर्तिमवाप्स्यसि २३
एकाग्रमानसोभूत्वाव्रतमेतत्समाचर
फाल्गुनस्यासितेपक्षेविजयैकादशीभवेत् २४
तस्याव्रतेनहेरामविजयस्तेभविष्यति
निःसंशयंसमुद्रंत्वंतरिष्यसिसवानरः २५
विधिस्तुश्रूयतांराजन्व्रतस्यास्यफलप्रदः
दशम्यांदिवसेप्राप्तेकुंभमेकंतुकारयेत् २६
हैमंवाराजतंवापिताम्रंवाप्यथमृन्मयम्

स्थापयेच्छोभितंचैवजलपूर्णंसपल्लवम् २७
सप्तधान्यान्यधस्तस्ययवानुपरिविन्यसेत्
तस्योपरिन्यसेद्देवंहैमंनारायणंप्रभुम् २८
एकादशीदिनेप्राप्तेप्रातःस्नानंसमाचरेत्
निश्चलंस्थापयेत्कुंभंकंठमाल्यानुलेपनैः २९
पूगीफलैर्नालिकेरैःपूजयेच्चविशेषतः
गंधैर्धूपैश्चदीपैश्चनैवेद्यैर्विविधैरपि ३०
कुंभाग्रेतद्दिनंरामनीयतेसत्कथादिभिः
रात्रौजागरणंचैवतस्याग्रेकारयेद्बुधः ३१
प्रकाशयेद्घृतदीपमखंडव्रतहेतवे
द्वादशीदिवसेप्राप्तेमार्तंडस्योदयेसति ३२
नीत्वाकुंभंजलोद्देशेनद्याःप्रस्रवणेतथा
तडागेस्थापयित्वातंपूजयित्वायथाविधि ३३
दद्यात्सदेवंतंकुंभंब्राह्मणेवेदपारगे
कुंभेनसहराजेंद्रमहादानानिदापयेत् ३४
अनेनविधिनारामयूथपैःसहसंगतः
कुरुव्रतंप्रयत्नेनविजयस्तेभविष्यति ३५
इतिश्रुत्वाततोरामोयथोक्तमकरोत्तदा
कृतेव्रतेसविजयीबभूवरघुनंदनः ३६
प्राप्तासीताजितालंकापौलस्त्योनिहतोरणे
अनेनविधिनापुत्रयेकुर्वंतिनराव्रतम् ३७
इहलोकजयप्राप्तिःपरलोकस्तथाक्षयः
एतस्मात्कारणात्पुत्रकर्तव्यंविजयाव्रतम् ३८
विजयायाश्चमाहात्म्यंसर्वकिल्बिषनाशनम्
पठनाच्छ्रवणाच्चैववाजपेयफलंलभेत् ३९
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेफाल्गुनकृष्णाविजयामाहात्म्यंनामचतुश्चत्वारिंशोऽध्यायः ४४

पञ्चचत्वारिंशोऽध्यायः

श्रीकृष्णउवाच–

माहात्म्यंविजयायाश्चश्रुतंकृष्णमहत्फलम्
फाल्गुनस्यार्जुनेपद्मेयन्नाम्नीतांवदाधुना १
श्रीकृष्णउवाच–
धर्मपुत्रमहाभागशृणुवद्त्यामितेऽधुना
योक्तापृष्टेनमांधात्रावसिष्ठेनमहात्मना २
फाल्गुनस्यविशेषेणविशेषःकथितोनृप
श्रामलकीव्रतंपुरायंविष्णुलोकफलप्रदम् ३
श्रामलक्यास्तलेगत्वाजागरंतत्रकारयेत्
कृत्वाजागरणंरात्रौगोसहस्रफलंलभेत् ४
मांधातोवाच –
श्रामलकीकदाह्येषाउत्पन्नाद्विजसत्तम
एतत्सर्वंममाचद्त्वपरंकौतूहलंहिमे ५
कस्मादियंपवित्राचकस्मात्पापप्रणाशिनी
कस्माज्जागरणंकृत्वागोसहस्रफलंलभेत् ६
वसिष्ठउवाच–
कथयामिमहाभागयथेयमभवत्चितौ
श्रामलकीमहावृद्तःसर्वपापप्रणाशनः ७
एकार्णवेपुराजातेनष्टेस्थावरजंगमे
नष्टेदेवासुरगणेप्रणष्टोरगराद्तसे ८
तत्रदेवादिदेवेशःपरमात्मासनातनः
जगामब्रह्मपरममात्मनःपदमव्ययम् ९
ततोऽस्यजाग्रतोब्रह्ममुखाच्छशिसमप्रभः
ष्ठीवनाद्बिंदुरुत्पन्नःसभूमौनिपपातह १०
तस्माद्बिंदोःसमुत्पन्नःस्वयंधात्रीनगोमहान्
शाखाप्रशाखाबहुलःफलभारेणनामितः ११
सर्वेषांचैववृद्ताणामादिरोहःप्रकीर्तितः
ब्रह्मणाथततःपश्चात्संसृष्टाश्चइमाःप्रजाः १२
देवदानवगंधर्वयद्तराद्तसपन्नगान्
श्रसृजद्भगवान्देवोमहर्षींश्चतथामलान् १३
श्राजग्मुस्तत्रदेवास्तेयत्रधात्रीहरिप्रिया

तांदृष्ट्वातेमहाभागपरंविस्मयमागताः १४
नजानीमइमंवृक्षंचिंतयंतोऽभिसंस्थिताः
एवंचिंतयतांतेषांवागुवाचाशरीरिणी १५
आमलकीनगोह्येषप्रवरोवैष्णवोमतः
अस्यसंस्मरणादेवलभेद्गोदानजंफलम् १६
स्पर्शनाद्द्विगुणंपुण्यंत्रिगुणंधारणात्तथा
तस्मात्सर्वप्रयत्नेनसेव्याआमलकीसदा १७
सर्वपापहराप्रोक्तावैष्णवीपापनाशिनी
तस्यामूलेस्थितोविष्णुस्तदूर्ध्वेचपितामहः १८
स्कंधेचभगवान्रुद्रःसंस्थितःपरमेश्वरः
शाखासुमुनयःसर्वेप्रशाखासुचदेवताः १९
पर्णेषुचासतेदेवाःपुष्पेषुमरुतस्तथा
प्रजानांपतयःसर्वेफलेष्वेवव्यवस्थिताः २०
सर्वदेवमयीह्येषाधात्रीचकथितामया
तस्मात्पूज्यतमाह्येषाविष्णुभक्तिपरायणैः २१
ऋषयऊचुः -
कोभवान्नहिजानीमःकस्मात्कारणतांगतः
देवोवायदिवाचान्यःकथयस्वयथातथम् २२
वागुवाच -
यःकर्तासर्वभूतानांभुवनानांचसर्वशः
विस्मितान्विदुषःप्रेक्ष्यसोऽहविष्णुःसनातनः २३
तच्छ्रुत्वादेवदेवस्यभाषितंब्रह्मणःसुताः
अनादिनिधनंदेवंस्तोतुंतत्रप्रचक्रमुः २४
नमोभूतात्मभूतायआत्मनेपरमात्मने
अच्युतायनमोनित्यमनंतायनमोनमः २५
दामोदरायकवयेयज्ञेशायनमोनमः
एवंस्तुतस्तुऋषिभिस्तुतोषभगवान्हरिः २६
प्रत्युवाचमहर्षींस्तानभीष्टंकिंददामिवः
ऋषयऊचुः
यदितुष्टोऽसिभगवन्नस्माकंहितकाम्यया २७

व्रतंकिंचित्समाख्याहिस्वर्गमोक्षफलप्रदम्
धनधान्यप्रदंपुरायमात्मनस्तुष्टिकारकम् २८
अल्पायासंबहुफलंव्रतानामुत्तमंव्रतम्
कृतेनयेनदेवेशविष्णुलोकेमहीयते २९
विष्णुरुवाच–
फाल्गुनेशुक्लपक्षेतुपुष्येणद्वादशीयदि
भवेत्साचमहापुरायामहापातकनाशिनी ३०
विशेषस्तत्रकर्त्तव्यःशृणुध्वंद्विजसत्तमाः
आमलकींचसंप्राप्यजागरंतत्रकारयेत् ३१
सर्वपापविनिर्मुक्तोगोसहस्रफलंलभेत्
एतद्वःकथितंविप्राव्रतानांव्रतमुत्तमम्
अर्चयित्वाच्युतंतस्यांविष्णुलोकान्नमुच्यते ३२
ऋषयऊचुः –
व्रतस्यास्यविधिंब्रूहिपरिपूर्णंकथंभवेत्
केमंत्राःकेनमस्काराःदेवताकाप्रकीर्तिता ३३
कथंदानंकथंस्नानंकश्चपूजाविधिःस्मृतः
अर्घार्चनस्यमंत्रंतुकथयस्वयथातथम् ३४
विष्णुरुवाच–
श्रूयतांयोविधिःसम्यग्व्रतस्यास्यद्विजर्षभाः
एकादश्यांनिराहारःस्थित्वाचैवपरेऽहनि ३५
भोक्ष्येऽहपुंडरीकाक्षशरणंमेभवाच्युत
इतिकृत्वातुनियमंदंतधावनपूर्वकम् ३६
नालपेत्पतितांश्चौरांस्तथापाषंडिनोनरान्
दुर्वृत्तान्भिन्नमर्यादान्गुरुदारप्रधर्षकान् ३७
अपराह्णेततःस्नानंविधिनाकारयेद्बुधः
नद्यांतडागेकूपेवागृहेवानियतात्मवान् ३८
मृत्तिकालंभनंपूर्वंततःस्नानंचकारयेत्
अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ३९
मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ४०
इतिमृत्तिकामंत्रः –

त्वमंबुसर्वभूतानांजीवनंतनुरक्षकम्
स्वेदजोद्भिज्जजातीनांरसानांपतयेनमः ४१
स्नातोऽहसर्वतीर्थेषुह्रदप्रस्रवणेषुच
नदीषुदेवखातेषुइदंस्नानंतुमेभवेत् ४२
इतिस्नानमंत्रः
जामदग्न्यंमुनिंचैवकारयित्वाहिरण्मयम्
माषकस्यसुवर्णस्यतदर्द्धार्द्धेनवापुनः ४३
गृहमागत्यपूजायाःपूजाहोमंतुकारयेत्
ततश्चामलकींगच्छेत्सर्वोपस्करसंयुतः ४४
आमलकींततोगत्वापरिशोध्यसमंततः
स्थापयेत्सततंकुंभमव्रणंमंत्रपूर्वकम् ४५
पंचरत्नसमोपेतंदिव्यगंधाधिवासितम्
छत्रोपानद्युगोपेतंसितचंदनचर्चितम् ४६
स्रग्दामलंबितग्रीवंसर्वधूपविधूपितम्
दीपमालाकुलंकुर्यात्सर्वतःसुमनोहरम् ४७
तस्योपरिन्यसेत्पात्रंदिव्यलाजैःप्रपूरितम्
पात्रोपरिन्यसेद्देवंजामदग्न्यंमहाप्रभम् ४८
विशोकायनमःपादौजानुनीविश्वरूपिणे
उग्रायचततोऽप्यूरूकटीदामोदरायच ४९
उदरंपद्मनाभायउरःश्रीवत्सधारिणे
चक्रिणेवामबाहुंचदक्षिणंगदिनेनमः ५०
वैकुंठायनमःकंठमास्यंयज्ञमुखायवै
नासांविशोकनिधयेवासुदेवायचाक्षिणी ५१
ललाटंवामनायेतिरामायेतिभ्रुवौनमः
सर्वात्मनेतुतच्छीर्षंनमइत्यभिपूजयेत् ५२
इतिपूजामंत्रः
ततोदेवाधिदेवायअर्घंचैवप्रदापयेत्
फलेनचैवशुभ्रेणभक्तियुक्तेनचेतसा ५३
ततोजागरणंकुर्याद्भक्तियुक्तेनचेतसा
नृत्यैर्गीतैश्चवादित्रैर्द्धर्माख्यानैःस्तवैरपि ५४

वैष्णवैश्चतथाख्यानैः त्क्षपयेत्सर्वशर्वरीम्
प्रदक्षिणांततःकुर्याद्धात्र्यावैविष्णुनामभिः ५५
अष्टाधिकंशतंचैवअष्टाविंशतिरेववा
ततःप्रभातेसमयेकृत्वानीराजनंहरेः ५६
ब्राह्मणंपूजयित्वातुसर्वंतस्मैनिवेदयेत्
जामदग्न्यघटेतत्रवस्त्रयुग्ममुपानहौ ५७
जामदग्न्यस्वरूपेणप्रीयतांममकेशवः
ततश्चामलकींस्पृष्ट्वाकृत्वाचैवप्रदक्षिणाम् ५८
स्नानंकृत्वाविधानेनब्राह्मणान्भोजयेत्ततः
ततश्चस्वयमश्नीयात्कुटुंबेनसमावृतः ५९
एवंकृतेनयत्पुण्यंतत्सर्वंकथयामिते
सर्वतीर्थेषुयत्पुण्यंसर्वदानेषुयत्फलम् ६०
सर्वयज्ञाधिकंचैवलभतेनात्रसंशयः
एतद्वःसर्वमाख्यातंव्रतानामुत्तमंव्रतम् ६१
एतावदुक्त्वादेवेशस्तत्रैवांतरधीयत
तेचापिऋषयःसर्वेचक्रुःसर्वमशेषतः ६२
तथात्वमपिराजेन्द्रकर्तुमर्हसिसत्तम
व्रतमेतद्दुराधर्षंसर्वपापप्रमोचनम् ६३

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापतिनारदसंवादेफाल्गुनशुक्लामलक्येकादशीनामपंचचत्वारिंशोऽध्यायः४५

## षट्चत्वारिंशोऽध्यायः-

युधिष्ठिरउवाच-
फाल्गुनस्यसितेपक्षेश्रुताचामलकीतथा
चैत्रस्यकृष्णपक्षेतुकिंनामैकादशीभवेत् १
श्रीकृष्णउवाच-
शृणुराजेंद्रवक्ष्यामिआख्यानंपापनाशनम्
यल्लोमशोऽब्रवीत्पृष्टोमांधात्राचक्रवर्तिना २
मांधातोवाच -
भगवन्श्रोतुमिच्छामिलोकानांहितकाम्यया

चैत्रस्यप्रथमेपक्षेकानामैकादशीभवेत्
कोविधिःकिंफलंतस्याःकथयस्वप्रसादतः ३
लोमशउवाच-
चैत्रमास्यसितेपक्षेनाम्नावैपापमोचनी
एकादशीसमाख्यातापिशाचत्वविनाशिनी ४
शृणुतस्याःप्रवक्ष्यामिकामदांसिद्धिदांनृप
कथांविचित्रांशुभदांपापघ्नींधर्मदायिनीम् ५
पुराचैत्ररथोद्देशेअप्सरोगणसेविते
वसंतसमयेप्राप्तेषट्पदाकुलितेवने ६
गंधर्वकन्यावादित्रैरमंतिसहकिंनरैः
पाकशासनमुख्याश्चक्रीडांतेत्रिदिवौकसः ७
नापरंसुखदंकिंचिद्विनाचैत्ररथाद्वनम्
तस्मिन्वनेतुमुनयस्तपंतिबहुलंतपः ८
मेधाविनामानमृषिंतत्रस्थंब्रह्मचारिणम्
अप्सरास्तंमुनिवरंमोहनायोपचक्रमे ९
मंजुघोषेतिविख्याताभावंतस्यवितन्वती
क्रोशमात्रंस्थितातस्यभयादाश्रमसन्निधौ १०
गायंतीमधुरंसाधुपीडयंतीविपंचिकाम्
गायंतीतामथालोक्यपुष्पचंदनसेविताम् ११
कामोऽपिविजयाकांक्षीशिवभक्तान्मुनीश्वरान्
तस्याःशरीरेसंवासमकरोन्मनसःसुतः १२
कृत्वाभ्रुवौधनुष्कोटिंगुणंकृत्वाकटाक्षकम्
मार्गणौनयनेकृत्वापक्ष्मयुक्तेयथाक्रमम् १३
कुचौकृत्वापटकुटींविजयायोपचक्रमे
मंजुघोषाभवत्तस्यकामस्यैववरूथिनी १४
मेधाविनंमुनिंदृष्ट्वासापिकामेनपीडिता
यौवनोद्भिन्नदेहोऽसौमेधाव्यपिविराजते १५
सितोपवीतसहितोदृष्टःस्मरइवापरः
मेधावीवसतेचासौच्यवनस्याश्रमेशुभे १६
मंजुघोषास्थितंतत्रदृष्ट्वासामुनिपुंगवम्

मदनस्यवशंप्राप्तामंदंमंदमगायत १७
रणद्वलयसंयुक्तांशिंजन्नूपुरमेखलाम्
गायंतींतांतथाभूतांविलोक्यमुनिपुंगवः १८
मदनेनससैन्येननीतोमोहवशंबलात्
मंजुघोषासमागम्यमुनिंदृष्ट्वातथाविधम् १९
हावभावकटाक्षैस्तंमोहयामासचांगना
अधःसंस्थाप्यवीणांसासस्वजेतंमुनीश्वरम् २०
वलितेवलतावृक्षंवातवेगेनकंपितम्
सोऽपिरेमेतयासार्द्धंमेधावीमुनिपुंगवः २१
तस्मिन्नेवततोदृष्ट्वातस्यास्तंदेहमुत्तमम्
शिवतत्वंगतंतस्यकामतत्त्ववशंगतः २२
ननिशांनदिनंसोऽपिरमन्जानातिकामुकः
बहुवर्षंगतःकालोमुनेराचारलोपतः २३
मंजुघोषादेवलोकगमनायोपचक्रमे
गच्छंतीतंप्रत्युवाचरमंतंमुनिसत्तमम्
आदेशोदीयतांब्रह्मन्स्वदेशगमनायमे २४
मेधाव्युवाच-
अद्यैवत्वंसमायाताप्रदोषादौवरानने
यावत्प्रभातसंध्यास्यात्तावत्तिष्ठममांतिके
इतिश्रुत्वामुनेर्वाक्यंभयभीताबभूवसा २५
पुनर्वैरमयामासतमृषिंनृपसत्तम
मुनेःशापभयाद्भीताबहुलान्परिवत्सरान् २६
वर्षाणांपंचपंचाशन्नवमासदिनत्रयम्
सारेमेमुनिनातस्यनिशार्द्धमिवचाभवत् २७
सातंपुनरुवाचाथतस्मिन्कालेगतेमुनिम्
आदेशोदीयतांब्रह्मन्गंतव्यंस्वगृहेमया २८
मेधाव्युवाच-
प्रभातमधुनाचास्तेश्रूयतांवचनंमम
संध्यायावच्चकुर्वेऽहतावत्त्वंवैस्थिराभव २९
इतिवाक्यंमुनेःश्रुत्वाजातानंदसमाकुला

स्मितंकृत्वातुसाकिंचित्प्रत्युवाचशुचिस्मिता ३०
अप्सराउवाच-
कियत्प्रमाणाविप्रेंद्रतवसंध्यागतानघ
मयिप्रसादंकृत्वातुगतकालोविचार्यताम् ३१
इतितस्यावचःश्रुत्वाविस्मयोत्फुल्ललोचनः
गतकालस्यविप्रेंद्रःप्रमाणमकरोत्तदा ३२
समाश्चसप्तपंचाशद्गतास्तस्यतयासह
चुक्रोधसततस्तस्यैज्वालामालीबभूवह ३३
नेत्राभ्यांविस्फुलिगान्समुंचमानोऽतिकोपनः
कालरूपांतुतांदृष्ट्वातपसःक्षयकारिणीम् ३४
दुःखार्जितंक्षयंनीतंतपोदृष्ट्वातयासह
सकंपोष्ठोमुनिस्तत्रप्रत्युवाचाकुलेंद्रियः ३५
तांशशापाथमेधावीत्वंपिशाचीभवेतिच
धिक्त्वांपापेदुराचारेकुलटेपातकप्रिये ३६
तस्यशापेनसादग्धाविनयावनतास्थिता
उवाचवचनंसुभ्रूःप्रसादंवांछतीमुनिम्
प्रसादंकुरुविप्रेंद्रशापस्यानुग्रहंकुरु ३७
सतांसंगोहिभवतिवचोभिःसप्तभिःपदैः
त्वयासहममब्रह्मन्नीतावैबहुवत्सराः
एतस्मात्कारणात्स्वामिन्प्रसादंकुरुसुव्रत ३८
मुनिरुवाच-
शृणुमेवचनंभद्रेशापानुग्रहकारकम्
किंकरोमित्वयापापेक्षयंनीतंमहत्तपः ३९
चैत्रस्यकृष्णपक्षेतुभवेदेकादशीशुभा
पापमोचनिकानामसर्वपापक्षयंकरी ४०
तस्याव्रतेकृतेशुभ्रेपिशाचत्वंप्रयास्यति
इत्युक्त्वासोऽपिमेधावीजगामपितुराश्रमम् ४१
तमागतंसमालोक्यच्यवनःप्रत्युवाचतम्
किमेतद्विहितंपुत्रत्वयापुण्यंक्षयंकृतम् ४२
मेधाव्युवाच-

पातकंवैकृतंतातरमिताचाप्सरामया
प्रायश्चित्तंब्रूहितातयेनपापक्षयोभवेत् ४३
च्यवनउवाच-
चैत्रस्यचासितेपक्षेनाम्नावैपापमोचनी
अस्याव्रतेकृतेपुत्रपापराशिःक्षयंव्रजेत् ४४
इतिश्रुत्वापितुर्वाक्यंकृतंतेनव्रतोत्तमम्
गतंपापंक्षयंतस्यतपोयुक्तोबभूवसः ४५
साप्येवंमंजुघोषाचकृत्वैतद्व्रतमुत्तमम्
पिशाचत्वाद्विनिर्मुक्तापापमोचनिकाव्रतात्
दिव्यरूपधरासावैगतानाकेवराप्सराः ४६
लोमशउवाच-
पापमोचनिकांराजन्येकुर्वंतिनरोत्तमाः
तेषांपापंचयत्किंचित्तत्सर्वंचक्षयंव्रजेत् ४७
पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत्
ब्रह्महाहेमहारीचसुरापोगुरुतल्पगः ४८
व्रतस्यचास्यकरणात्पापमुक्ताभवंतिते
बहुपुगयप्रदंह्येतत्करणाद्व्रतमुत्तमम् ४९
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापतिनारदसंवादेचैत्रकृष्णैकादशीपापमोचनीनामषट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
वासुदेवनमस्तुभ्यंकथयस्वममाग्रतः
चैत्रस्यशुक्लपक्षेतुकिंनामैकादशीभवेत् १
श्रीकृष्णउवाच-
शृणुष्वैकमनाराजन्कथांपुगयांपुरातनीम्
वसिष्ठोयामकथयत्प्राग्दिलीपायपृच्छते २
दिलीपउवाच-
भगवञ्छ्रोतुमिच्छामिकथयस्वप्रसादतः
चैत्रमासिसितेपक्षेकिंनामैकादशीभवेत् ३

वसिष्ठउवाच-
साधुपृष्टंत्वयाराजन्कथयामितवाग्रतः
चैत्रस्यशुक्लपक्षेतुकामदानामनामतः ४
एकादशीपुण्यतमापापेंधनदवानलः
शृणुराजन्कथामेतांपापघ्नींपुण्यदायिनीम् ५
पुरानागपुरेरम्येहेमरत्नविभूषिते
पुंडरीकमुखानागानिवसंतिमहोत्कटाः ६
तस्मिन्पुरेपुंडरीकोराजाराज्यंचकारसः
गन्धर्वैःकिन्नरैश्चैवअप्सरोभिश्चसेव्यते ७
वराप्सरास्तुललितागंधर्वोललितस्तथा
उभौरागेणसंरक्तौदंपतीकामपीडितौ ८
रेमातेस्वगृहेरम्येधनधान्ययुतेतदा
ललितायाश्चहृदयेपतिर्वसतिसर्वदा ९
हृदयेतस्यललितानित्यंवसतिभामिनी
एकदापुंडरीकोऽथक्रीडतेसदसिस्थितः १०
गीतंगानंप्रकुरुतेललितोदयितांविना
पदबंधस्खलज्जिह्वोबभूवललितांस्मरन् ११
मनोभावंविदित्वास्यकर्कटोनागसत्तमः
पदबंधच्युतिंतस्यपुंडरीकेन्यवेदयत् १२
श्रुत्वाकर्कोटकवचःपुंडरीकोभुजंगराट्
क्रोधसंरक्तनयनोबभूवातिभयंकरः १३
शशापललितंतत्रगायंतंमदनातुरम्
राक्षसोभवदुर्बुद्धेक्रव्यादःपुरुषादकः १४
यतःपत्नीवशोपेतोगायमानोममाग्रतः
वचनात्तस्यराजेंद्ररक्षोरूपोबभूवसः १५
रौद्राननोविरूपाक्षोदृष्टमात्रोभयंकरः
बाहूयोजनविस्तीर्णौमुखंकंदरसन्निभम् १६
चंद्रसूर्यनिभेनेत्रेग्रीवापर्वतसंनिभा
नासारंध्रेतुविवरेअधरौयोजनायतौ १७
शरीरंतस्यराजेंद्रउत्थितंयोजनाष्टकम्

ईदृशोराक्षसोभूत्वाभुंजानःकर्मणःफलम् १८
ललितातुतथालोक्यस्वपतिंविकृताकृतिम्
चिंतयामासमनसादुःखेनमहतार्दिता १९
किंकरोमिक्वगच्छामिपतिःशापेनपीडितः
इतिसंस्मृत्यसंस्मृत्यमनसाशर्मनालभत् २०
चचारपतिनासार्द्धंललितागहनेवने
बभ्रामविपिनेदुर्गेकामरूपीसराक्षसः २१
निर्घृणःपापनिरतोविरूपःपुरुषादकः
नसुखंलभतेरात्रौनदिवापापपीडितः २२
ललितादुःखितातीवपतिंदृष्ट्वातथाविधम्
बभ्रामतेनसार्द्धंसारुदतीगहनेवने २३
दृष्ट्वाश्रमपदंरम्यंमुनिंसंशांतविग्रहम्
शीघ्रंजगामललितानमस्कृत्याग्रतःस्थिता २४
तांदृष्ट्वासमुनिःप्राहदुःखितांहिदयापरः
कात्वंकस्मादिहायातासत्यंवदममाग्रतः २५
ललितोवाच-
वीरधन्वेतिगंधर्वःसुतातस्यमहात्मनः
ललितांनाममांविद्धिपत्यर्थमिहचागताम् २६
भर्तामेपापदोषेणराक्षसोऽभून्महामुने
रौद्ररूपोदुराचारस्तंदृष्ट्वानास्तिमेसुखम् २७
सांप्रतंशाधिमांब्रह्मन्यत्कृत्यंतद्वदप्रभो
कुरुष्वतद्व्रतंभद्रेविधिपूर्वंमयोदितम् २८
ऋषिरुवाच-
चैत्रमासस्यरंभोरुशुक्लपक्षोऽस्तिसांप्रतम्
कामदैकादशीनामपापघ्नीललितेपरा २९
कुरुष्वतद्व्रतंभद्रेविधिपूर्वंमयोदितम्
अस्यव्रतस्ययत्पुरायंतत्स्वभर्त्रेप्रदीयताम् ३०
दत्तेपुरायेक्षणात्तस्यशापदोषःप्रयास्यति
इतिश्रुत्वामुनेर्वाक्यंललिताहर्षिताभवत् ३१
उपोष्यैकादशींराजन्द्वादशीदिवसेतथा

विप्रस्यैवसमीपेतद्वासुदेवस्यचाग्रतः ३२
वाक्यमुवाचललितास्वपत्युस्तारणायवै
मयातुतद्व्रतंचीर्णंकामदायाउपोषणम् ३३
तस्यपुण्यप्रभावेनगच्छत्वस्यपिशाचता
ललितावचनादेववर्त्तमानोऽपितत्क्षणे ३४
गतपापःसललितोदिव्यदेहोबभूवह
राक्षसत्वंगतंतस्यप्राप्तागंधर्वतापुनः ३५
हेमरत्नसमाकीर्णोरेमेललितयासह
विमानवरमारूढौपूर्वरूपाधिकौचतौ ३६
दंपतीअत्यशोभेतांकामदायाःप्रभावतः
इतिज्ञात्वानृपश्रेष्ठकर्तव्यैषाप्रयत्नतः ३७
लोकानांतुहितार्थायतवाग्रेकथितामया
ब्रह्महत्यादिपापघ्नीपिशाचत्वविनाशनी ३८
नातःपरतराकाचित्त्रैलोक्येसचराचरे
पठनाच्छ्रवणाद्राजन्वाजपेयफलंलभेत् ३९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापति नारदसंवादेचैत्रशुक्लाकामदानामसप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

युधिष्ठिरउवाच-
वैशाखस्यासितेपक्षेकिंनामैकादशीभवेत्
महिमानंकथयमेवासुदेवनमोऽस्तुते १
श्रीकृष्णउवाच-
सौभाग्यदायिनीराजन्निहलोकेपरत्रच
वैशाखकृष्णपक्षेतुनाम्नाचैववरूथिनी २
वरूथिन्याव्रतेनैवसौख्यंभवतिसर्वदा
पापहानिश्चभवतिसौभाग्यप्राप्तिरेवच ३
दुर्भगायाकरोत्येनांसास्त्रीसौभाग्यमाप्नुयात्
लोकानांचैवसर्वेषांभुक्तिमुक्तिप्रदायिनी ४
सर्वपापहरानृणांगर्भवासनिकृंतनी

वरूथिन्याव्रतेनैवमांधातास्वर्गतिंगतः ५
धुंधुमारादयश्चान्येराजानोबहवस्तथा
ब्रह्मकपालनिर्मुक्तोबभूवभगवान्भवः ६
दशवर्षसहस्राणितपस्तप्यतियोनरः
कुरुक्षेत्रेरविग्रहेस्वर्णभारंददातियः
तत्तुल्यंफलमाप्नोतिवरूथिन्याव्रतंचरन् ७
श्रद्धावान्यस्तुकुरुतेवरूथिन्याव्रतंनरः
वांछितंलभतेसोऽपिइहलोकेपरत्रच ८
पवित्रापावनीह्येषामहापातकनाशिनी
भुक्तिमुक्तिप्रदाचैवकर्तॄणांनृपसत्तम ९
अश्वदानान्नृपश्रेष्ठगजदानंविशिष्यते
गजदानाद्भूमिदानंतिलदानंततोऽधिकम् १०
तस्माच्चस्वर्णदानंवैअन्नदानंततोऽधिकम्
अन्नदानात्परंदानंनभूतंनभविष्यति ११
पितृदेवमनुष्याणांतृप्तिरन्नेनजायते
तत्समंकविभिःप्रोक्तंकन्यादानंनृपोत्तम १२
धेनुदानंचतत्तुल्यमित्याहभगवान्स्वयम्
प्रोक्तेभ्यःसर्वदानेभ्योविद्यादानंविशिष्यते १३
तत्फलंसमवाप्नोतिनरःकृत्वावरूथिनीम्
कन्यावित्तेनजीवंतियेनराःपापमोहिताः १४
पुणयक्षयंतेगच्छंतिनिरयंयातनामयम्
तस्मात्सर्वप्रयत्नेननग्राह्यंकन्यकाधनम् १५
यश्चगृह्णातिलोभेनकन्यांक्रीत्वाचतद्धनम्
सोऽन्यजन्मनिराजेंद्रश्रोतुर्भवतिनिश्चितम् १६
कन्यांपुणयेनयोदद्याद्यथाशक्तिस्वलंकृताम्
तत्पुणयसंख्यांनृपतेचित्रगुप्तोनशक्नुयात् १७
तत्तुल्यंफलमाप्नोतिनरःकृत्वावरूथिनीम्
कांस्यंमांसंमसूरांश्चचणकान्कोद्रवांस्तथा १८
शाकंमधुपरान्नंचपुनर्भोजनमैथुने
वैष्णवोव्रतकर्ताचदशम्यांदशवर्जयेत् १९

द्यूतंक्रीडांचनिद्रांचतांबूलंदंतधावनम्
परापवादंपैशुन्यंस्तेयंहिंसांतथारतिम् २०
क्रोधंचैवानृतंवाक्यमेकादश्यांविवर्जयेत्
कांस्यंमांसंसुरांक्षौद्रं तैलंपतितभाषणम् २१
व्यायामंचप्रवासंचपुनर्भोजनमैथुनम्
वृषपृष्ठंमसूरान्नंद्वादश्यांपरिवर्जयेत् २२
अनेनविधिनाराजन्विहितायैर्वरूथिनी
सर्वपापक्षयंकृत्वादद्यात्प्रांतेऽक्षयांगतिम्
रात्रौजागरणंकृत्वापूजितोमधुसूदनः २३
सर्वपापविनिर्मुक्तास्तेयांतिपरमांगतिम्
तस्मात्सर्वप्रयत्नेनकर्तव्यापापभीरुभिः २४
क्षपारितनयाद्भीतोनरःकुर्याद्वरूथिनीम्
पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत्
सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते २५
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुमापतिनारदसंवादेवैशाखकृष्णवरूथिनीएकादशीनामअष्टचत्वारिंशोऽध्यायः ४८

## एकोनपञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच-
वैशाखशुक्लपक्षेतुकिन्नामैकादशीभवेत्
किंफलंकोविधिस्तत्रकथयस्वजनार्दन १
श्रीकृष्णउवाच-
इदमेवपुरापृष्टंरामचंद्रेणधीमता
वसिष्ठंप्रतिराजेंद्रयत्त्वंमामनुपृच्छसि २
रामउवाच-
भगवञ्छ्रोतुमिच्छामिव्रतानामुत्तमंव्रतम्
सर्वपापक्षयकरंसर्वदुःखनिकृंतनम् ३
मयादुःखानिभुक्तानिसीताविरहजानितु
ततोऽहभयभीतोऽस्मिपृच्छामित्वांमहामुने ४
वसिष्ठउवाच-

साधुपृष्टंत्वयारामतवैषानैष्ठिकीमतिः
त्वन्नामग्रहणेनैवपूतोभवतिमानवः ५
तथापिकथयिष्यामिलोकानांहितकाम्यया
पवित्रंपावनानांचव्रतानामुत्तमंव्रतम् ६
वैशाखस्यसितेपक्षेरामचैकादशीभवेत्
मोहिनीनामसाप्रोक्तासर्वपापहरापराः ७
मोहजालात्प्रमुच्यंतेपातकानांसमूहतः
अस्याव्रतप्रभावेनसत्यंसत्यंवदाम्यहम् ८
अतःकारणतोरामकर्तव्यैषाभवादृशैः
पातकानांक्षयकरीमहादुःखविनाशिनी ९
शृणुष्वैकमनारामकथांपापहरांपराम्
यस्याःश्रवणमात्रेणमहापापंप्रणश्यति १०
सरस्वत्यास्तटेरम्येपुरीभद्रावतीशुभा
द्युतिमान्नामनृपतिस्तत्रराज्यंकरोतिवै ११
चंद्रवंशोद्भवोनामधृतिमान्सत्यसंगरः
तत्रवैश्योनिवसतिधनधान्यसमृद्धिमान् १२
धनपालइतिख्यातःपुगयकर्मप्रवर्त्तकः
प्रपाकूपमठारामतडागगृहकारकः १३
विष्णुभक्तिरतःशांतस्तस्यासन्पंचपुत्रकाः
सुमनाद्युतिमांश्चैवमेधावीसुकृतस्तथा १४
पंचमोधृष्टबुद्धिश्चमहापापरतःसदा
परस्त्रीसंगनिरतोविटगोष्ठीविशारदः १५
द्यूतादिव्यसनासक्तःपरस्त्रीरतिलालसः
नचदेवार्चनेबुद्धिर्नपितृन्नद्विजान्प्रति १६
अन्यायवर्तीदुष्टात्मापितुर्द्रव्यक्षयंकरः
अभक्ष्यभक्षकःपापीसुरापानेरतःसदा १७
वेश्याकंठेक्षिप्तबाहुर्भ्रमन्दुष्टश्चतुष्पथे
पित्रानिष्कासितोगेहात्परित्यक्तश्चबांधवैः १८
स्वदेहभूषणान्येवक्षयंनीतानितेनवै
गणिकाभिःपरित्यक्तोनिंदितश्चधनक्षयात् १९

ततश्चिंतापरोजातोवस्त्रहीनः क्षुधार्दितः
किंकरोमिक्वगच्छामिकेनोपायेनजीव्यते २०
तस्करत्वंसमारब्धंतत्रैवनगरेपितुः
गृहीतोराजपुरुषैर्मुक्तश्चपितृगौरवात् २१
पुनर्बद्धःपुनस्त्यक्तःपुनर्बद्धःससंभ्रमैः
धृष्टबुद्धिर्दुराचारोनिबध्यनिगडैर्दृढैः २२
कशाघातैस्ताडितश्चपीडितश्चपुनःपुनः
नस्थातव्यंहिमंदात्मंस्त्वयामद्देशगोचरे २३
एवमुक्त्वाततोराज्ञामोचितोदृढबंधनात्
निर्जगामभयात्तस्यगतोऽसौगहनंवनम् २४
क्षुत्तृषापीडितश्चायमितश्चेतश्चधावति
सिंहवन्निजघानासौमृगशूकरचित्रलान् २५
आमिषाहारनिरतोवनेतिष्ठतिसर्वदा
करेशरासनंकृत्वानिषंगंपृष्ठसंगतम् २६
अरण्यचारिणोहंतिपक्षिणश्चपदाचरन्
चकोरांश्चमयूरांश्चकंकतित्तिरमूषिकान् २७
एतानन्यान्हिनस्त्यंधोधृष्टबुद्धिस्तुनिर्घृणः
पूर्वजन्मकृतैःपापैर्निमग्नःपापकर्दमे २८
दुःखशोकसमाविष्टःपीड्यमानोदिवानिशम्
कौंडिन्यस्याश्रमपदंप्राप्तःपुण्यागमात्क्वचित् २९
माधवेमासिजाह्नव्याःकृतस्नानंतपोधनम्
आससादधृष्टबुद्धिःशोकभारेणपीडितः ३०
तद्वस्त्रबिंदुस्पर्शेनगतपापोहताशुभः
कौंडिन्यस्याग्रतःस्थित्वाप्रत्युवाचकृतांजलि ३१
धृष्टबुद्धिरुवाच-
भोभोब्रह्मन्द्विजश्रेष्ठदयांकृत्वाममोपरि
येनपुण्यप्रभावेनमुक्तिर्भवतितद्वद ३२
कौंडिन्यउवाच-
शृणुष्वैकमनाभूत्वायेनपापक्षयस्तव
वैशाखस्यसितेपक्षेमोहिनीनामविश्रुता ३३

एकादशीव्रतंतस्याःकुरुमद्वाक्यनोदितः
मेरुतुल्यानिपापानिक्षयंगच्छंतिदेहिनाम् ३४
बहुजन्मार्जितान्येषामोहिनीसमुपोषिता
इतिवाक्यंमुनेःश्रुत्वाधृष्टबुद्धिःप्रसन्नधीः ३५
व्रतंचकारविधिवत्कौंडिन्यस्योपदेशतः
कृतेव्रतेनृपश्रेष्ठगतपापोबभूवसः ३६
दिव्यदेहस्ततोभूत्वागरुडोपरिसंस्थितः
जगामवैष्णवंलोकंसर्वोपद्रववर्जितम् ३७
इतीदृशंरामचंद्रउत्तमंमोहिनीव्रतम्
नातःपरतरंकिंचित्त्रैलोक्येसचराचरे ३८
यज्ञादितीर्थदानानिकलांनार्हंतिषोडशीम्
पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत् ३९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसहितायामुत्तरखंडेउमापति
नारदसंवादेवैशाखशुक्लेमोहन्येकादशीनामएकोनपंचाशत्तमोऽध्यायः४९

## पञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच-
ज्येष्ठस्यकृष्णपक्षेतुकिंनामैकादशीभवेत्
श्रोतुमिच्छामिमाहात्म्यंतद्वदस्वजनार्दन १
श्रीकृष्णउवाच-
साधुपृष्टंत्वयाराजन्लोकानांहितकाम्यया
बहुपुण्यप्रदाह्येषामहापातकनाशिनी २
अपरानामराजेंद्रअपरापुत्रदायिनी
लोकेप्रसिद्धितांयातिअपरांयस्तुसेवते ३
ब्रह्महत्याभिभूतोऽपिगोत्रहाभ्रूणहातथा
परापवादवादीचपरस्त्रीरसिकोऽपिच ४
अपरासेवनाद्राजन्विपाप्माभवतिध्रुवम्
कूटसाक्ष्यंकूटमानंतुलाकूटंकरोतियः ५
कूटवेदंपठेद्यस्तुकूटशास्त्रंतथैवच
ज्योतिषीगणकःकूटःकूटायुर्वैदिकोभिषक् ६

कूटसाद्त्यसमायुक्तोविज्ञेयानरकौकसः
अपरासेवनाद्राजन्पापैर्मुक्ताभवंतिते ७
क्षत्रियःक्षात्रधर्मंयस्त्यक्त्वायुद्धात्पलायते
सयातिनरकंघोरंस्वीयधर्मबहिष्कृतः ८
अपरासेवनात्सोऽपिपापंत्यक्त्वादिवंव्रजेत्
विद्यावान्यःस्वयंशिष्योगुरुनिंदांकरोतिच ९
समहापातकैर्युक्तोनिरयंयातिदारुणम्
अपरासेवनात्सोऽपिसद्गतिंप्राप्नुयान्नरः १०
महिमानमपरायाःशृणुराजन्वदाम्यहम्
मकरस्थेरवौमाघेप्रयागेयत्फलंनृणाम् ११
काश्यांयत्प्राप्यतेपुण्यमुपरागेनिमज्जनात्
गयायांपिंडदानेनपितॄणांतृप्तिदोयथा १२
सिंहस्थितेदेवगुरौगौतम्यांस्नातकोनरः
कन्यागतेगुरौराजन्कृष्णवेणीनिमज्जनात् १३
यत्फलंसमवाप्नोतिकुंभकेदारदर्शनात्
बदर्याश्रमयात्रायांतत्तीर्थसेवनादपि १४
यत्फलंसमवाप्नोतिकुरुक्षेत्रेरविग्रहे
गजाश्वहेमदानेनयज्ञंकृत्वासदक्षिणम् १५
तादृशंफलमाप्नोतिअपराव्रतसेवनात्
अर्धप्रसूतांगांदत्वासुवर्णंवसुधांतथा १६
नरोयत्फलमाप्नोतिअपरायाव्रतेनतत्
पापद्रुमकुठारीयंपापेंधनदवानलः १७
पापांधकारतरणिःपापसारंगकेसरी
बुद्बुदाइवतोयेषुपुत्तिकाइवजंतुषु १८
जायंतेमरणायैवएकादश्याव्रतंविना
अपरांसमुपोष्यैवपूजयित्वात्रिविक्रमम् १९
सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते
लोकानांचहितार्थायतवाग्रेकथितंमया
पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत् २०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसहितायामुत्तरखंडेउमापति

नारदसंवादेज्येष्ठकृष्णापरैकादशीनामपंचाशत्तमोऽध्यायः ५०

## एकपञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच-
अपरायाश्चमाहात्म्यंश्रुतंसर्वंजनार्दन
ज्येष्ठस्यशुक्लपक्षेतुस्याद्यातांवदमानद १
श्रीकृष्णउवाच-
एनांवक्ष्यतिधर्मात्माव्यासःसत्यवतीसुतः
सर्वशास्त्रार्थतत्त्वज्ञोवेदवेदांगपारगः २
युधिष्ठिरउवाच-
श्रुतामेमानवाधर्मावासिष्ठाश्चश्रुतामया
द्वैपायनयथावत्त्वंवैष्णवान्वक्तुमर्हसि ३
श्रीवेदव्यासउवाच -
श्रुतास्तुमानवाधर्मावैदिकाश्चश्रुतास्त्वया
कलौयुगेनशक्यंतेतेवैकर्तुंनराधिप ४
सुखोपायमल्पधनमल्पक्लेशंमहाफलम्
पुराणानांचसर्वेषांसारभूतंमहामते ५
एकादश्यांनभुंजीतपक्षयोरुभयोरपि
द्वादश्यांतुशुचिर्भूत्वापुष्पैःसंपूज्यकेशवम् ६
अन्नंभुंजीतसत्कृत्यपश्चाद्विप्रपुरःसरम्
सूतकेऽपिनभोक्तव्यंनाशौचेचजनाधिप ७
यावज्जीवंव्रतमिदंकर्त्तव्यंपुरुषर्षभ
स्वर्गतिंप्राप्तुमिच्छद्भिरत्रनैवास्तिसंशयः ८
आपपापादुराचाराःपापिष्ठाधर्मवर्जिताः
एकादश्यांनभुंजानानतेयांतियमांतिकम् ९
इतितद्वचनंश्रुत्वाकंपितोऽश्वत्थपत्रवत्
भीमसेनोमहाबाहुर्नत्वोवाचगुरुंप्रति १०
भीमसेनउवाच-
पितामहमहाबुद्धेशृणुमेपरमंवचः
युधिष्ठिरश्चकुंतीचतथाद्रुपदनंदिनी ११

अर्जुनोनकुलश्चैवसहदेवस्तथैवच
एकादश्यांनभुंजंतिकदाचिदपिसुव्रताः १२
तेमांब्रुवंतिवैनित्यंमाभुंद्भवत्वंवृकोदर
अहंतानब्रुवंतातबुभुक्षादुःसहामम १३
दानंदास्यामिविधिवत्पूजयिष्यामिकेशवम्
भीमसेनवचःश्रुत्वाव्यासोवचनमब्रवीत् १४
व्यासउवाच-
यदिस्वर्गमभीष्टंतेनरकंदुष्टमेवच
एकादश्यांनभोक्तव्यंपक्षयोरुभयोरपि १५
भीमसेनउवाच-
पितामहमहाबुद्धेकथयामितवाग्रतः
एकभक्तेनशक्नोमिउपवासेकुतःप्रभो १६
वृकोऽपिनामयोवह्निःससदाजठरेमम
अतिवेलंयदाश्नामितदासमुपशाम्यति १७
नैकंशक्नोम्यहंकर्तुमुपवासंमहामुने
येनैवप्राप्यतेस्वर्गस्तत्कर्त्तास्मियथातथम्
तदेकंवदनिश्चित्ययेनश्रेयोऽहमाप्नुयाम् १८
व्यासउवाच-
वृषस्थेमिथुनस्थेवायदाचैकादशीभवेत्
ज्येष्ठमासेप्रयत्नेनसोपोष्योदकवर्जिता १९
गंडूषाचमनंवारिवर्जयित्वोदकंबुधः
उपभुंजीतनैवेहव्रतभंगोऽन्यथाभवेत् २०
उदयादुदयंयावद्वर्जयित्वोदकंनरः
श्रूयतांसमवाप्नोतिद्वादशद्वादशीफलम् २१
ततःप्रभातेविमलेद्वादश्यांस्नानमाचरेत्
जलंसुवर्णंदत्त्वाचद्विजातिभ्योयथाविधि २२
भुंजीतकृतकृत्यस्तुब्राह्मणैःसहितोवशी
एवंकृतेचयत्पुण्यंभीमसेनशृणुष्वतत् २३
संवत्सरेतुयाश्चैवएकादश्योभवंतिहि
तासांफलमवाप्नोतिह्यत्रमेनास्तिसंशयः २४

इतिमांकेशवःप्राहशंखचक्रगदाधरः
सर्वान्परित्यज्यपुमान्मामेकंशरणंव्रजेत् २५
एकादश्यांनिराहारस्ततःपापात्प्रमुच्यते
द्रव्यशुद्धिःकलौनास्तिसंस्कारःस्मार्त्तएवच २६
वैदिकस्तुकुतश्चापिप्राप्तेदुष्टेकलौयुगे
किंनुतेबहुनोक्तेनवायुपुत्रपुनःपुनः २७
एकादश्यांनभुंजीतपक्षयोरुभयोरपि
एकादश्यांसितेपक्षेज्येष्ठेमास्युदकंविना २८
पुरयंफलमवाप्नोतितच्छृणुष्ववृकोदर
संवत्सरेतुयाप्रोक्ताःशुक्लःकृष्णावृकोदर २९
उपोषिताहिसर्वाःस्युरेकादश्योनसंशयः
धनधान्यप्रदापुरयापुत्रारोग्यशुभप्रदा ३०
उपोषितानरव्याघ्रइतिसत्यंब्रवीमिते
यमदूतामहाकायाःकरालाःकृष्णरूपिणः ३१
दंडपाशधरारौद्रानोपसर्पंतितंनरम्
पीतांबरधरासौम्याश्चक्रहस्तामनोजवाः ३२
अंतकालेनयंत्येतेवैष्णवान्वैष्णवीपुरीम्
तस्मात्सर्वप्रयत्नेनउपोष्योदकवर्जिता ३३
जलधेनुंतदादत्त्वासर्वपापैःप्रमुच्यते
ततस्त्वमस्यांकौंतेयसोपवासोऽचनंहरेः ३४
कुरुसर्वप्रयत्नेनसर्वपापप्रशांतये
स्वप्नेनमेऽपराधोस्तिदंतरागतयापिवा ३५
भोक्ष्येपरेऽह्निदेवेशह्यशनंवासराद्धरेः
इत्युच्चार्यततोमंत्रउपवासपरोभवेत् ३६
सर्वपापविनाशायश्रद्धादमसमन्वितः
मेरुमंदरमात्राघंस्त्रियापुंसाचयत्कृतम् ३७
सर्वंतद्भस्मतांयातिएकादश्याःप्रभावतः
नशक्नुवंतियेदातुंजलधेनुंनराधिप ३८
सकांचनःप्रदातव्योघटकोवस्त्रसंयुतः
तोयस्यनियमंयोऽस्याकुरुतेवैसपुरयभाक् ३९

फलंकोटिसुवर्णस्ययामेयामेश्रुतंफलम्
स्नानंदानंजपंहोमंयदस्यांकुरुतेनरः ४०
तत्सर्वंचाक्षयंप्राप्तमेतत्कृष्णप्रभाषितम्
किंवापरेणधर्मेणनिर्जलैकादशींविना ४१
उपोष्यसम्यक्विधिवद्वैष्णवंपदमाप्नुयात्
सुवर्णमन्नंवासोवायदस्यांसंप्रदीयते ४२
तदस्यकुरुशार्दूलसर्वंचाप्यक्षयंभवेत्
एकादश्यांदिनेयोऽन्नंभुंक्तेपापंभुनक्तिसः ४३
इहलोकेसचांडालोमृतःप्राप्नोतिदुर्गतिम्
येचदास्यंतिदानानिद्वादश्यांसमुपोषिताः ४४
ज्येष्ठमासेसितेपक्षेप्राप्स्यंतिपरमंपदम्
ब्रह्महामद्यपःस्तेनोगुरुद्वेषीसदानृती ४५
मुच्यंतेपातकैःसर्वैर्निर्जलायैरुपोषिता
विशेषंशृणुकौंतेयनिर्जलैकादशीदिने ४६
यत्कर्त्तव्यंनरैःस्त्रीभिर्दानंश्रद्धासमन्वितैः
जलशायीचसंपूज्योदेयाधेनुस्तथाम्मयी ४७
प्रत्यक्षावानृपश्रेष्ठघृतधेनुरथापिवा
दक्षिणाभिःसुपुष्टाभिर्मिष्टान्नैश्चपृथग्विधैः ४८
तोषणीयाःप्रयत्नेनद्विजाधर्मभृतांवर
तुष्टाभवंतिवैविप्रास्तैस्तुष्टैर्मोक्षदोहरिः ४९
आत्मद्रोहःकृतस्तैर्हियैरेषानह्युपोषिता
पापात्मानोदुराचारामुष्टास्तेनात्रसंशयः ५०
कुलानांशतमागामिअतीतानांतथाशतम्
आत्मनासहतैर्नीतंवासुदेवस्यमंदिरम् ५१
शांतैर्दांतैर्दानपरैरर्चयद्भिस्तथाहरिम्
कुर्वद्भिर्जागरंरात्रौयैरेषासमुपोषिता ५२
अन्नंवस्त्रंतथागावोजलंशय्यासनंशुभम्
कमंडलुंतथाछत्रंदातव्यंनिर्जलादिने ५३
उपानहौयोददातिपात्रभूतेद्विजोत्तमे
ससौवर्णेनयानेनस्वर्गलोकेमहीयते ५४

यश्चेमांशृणुयाद्भक्त्यायश्चापिपरिकीर्तयेत्
उभौतौस्वर्गमाप्नोतिनात्रकार्याविचारणा ५५
यत्फलंसंनिहत्यायांराहुग्रस्तेदिवाकरे
कृत्वाश्राद्धंलभेन्मर्त्यस्तदस्याःश्रवणादपि ५६
नियमंचप्रकर्त्तव्यंदंतधावनपूर्वकम्
एकादश्यांनिराहारोवर्जयिष्यामिवैजलम् ५७
केशवप्रीणनार्थायअन्यदाचमनादृते
द्वादश्यांदेवदेवेशःपूजनीयस्त्रिविक्रमः ५८
गंधैर्धूपैस्तथापुष्पैर्वासोभिःप्रियदर्शनैः
पूजयित्वाविधानेनमंत्रमेतमुदीरयेत् ५९
देवदेवहृषीकेशसंसारार्णवतारक
उदकुंभप्रदानेननयमांपरमांगतिम् ६०
ज्येष्ठेमासितुवैभीमयाशुक्लैकादशीशुभा
निर्जलासमुपोष्यात्रजलकुंभान्सशर्करान् ६१
प्रदायविप्रमुख्येभ्योमोदतेविष्णुसन्निधौ
ततःकुंभाःप्रदातव्याब्राह्मणानांचभक्तितः ६२
भोजयित्वाततोबिप्रान्स्वयंभुंजीततत्परः
एवंयःकुरुतेपूर्णांद्वादशींपापनाशिनीम् ६३
सर्वपापविनिर्मुक्तोपदंगच्छत्यनामयम्
ततःप्रभृतिभीमेनकृताह्येकादशीशुभा
पांडवद्वादशीनाम्नालोकेख्याताबभूवह ६४
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितयामुत्तरखंडेउमापतिनारदसंवादेज्येष्ठशुक्लानिर्जलैकादशीनामैकपंचाशत्तमोऽध्यायः ५१

## द्विपञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच-
आषाढकृष्णपक्षेतुकिंवैएकादशीभवेत्
कथयस्वप्रसादेनवासुदेवममाग्रतः १
श्रीकृष्णउवाच-
व्रतानामुत्तमंराजन्कथयामितवाग्रतः

सर्वपापक्षयकरंसर्वमुक्तिप्रदायकम् २
आषाढस्यासितेपक्षेयोगिनीनामनामतः
एकादशीनृपश्रेष्ठमहापातकनाशिनी ३
संसारार्णवमग्नानांपोतभूतासनातनी
जगत्रयेसारभूतायोगिनीव्रतकारिणाम् ४
कथयामितवाग्रेऽहकथांपौराणिकींशुभाम्
अलकायांराजराजःशिवभक्तिपरायणः ५
तस्यासीत्पुष्पबटुकोहेममालीतिनामतः
तस्यपत्नीसुरूपाचविशालाक्षीतिनामतः ६
सतस्यांचासक्तमनाकामपाशवशंगतः
मानसात्पुष्पनिचयमानीयस्वगृहेस्थितः ७
पत्नीप्रेमरसासक्तोनकुबेरालयंगतः
कुबेरोदेवसदनेकरोतिशिवपूजनम् ८
मध्याह्नसमयेराजन्पुष्पागमसमीक्षकः
हेममालीस्वभवनेरमतेकांतयासह ९
यक्षराट्प्रत्युवाचाथकालातिक्रमकोपितः
कस्मान्नायातिभोयक्षाहेममालीदुरात्मवान्
निश्चयःक्रियतामस्यइत्युवाचपुनःपुनः १०
यक्षाऊचुः –
वनिताकामुकोगेहेरमतेस्वेच्छयानृप
तेषांवाक्यंसमाकर्ण्यकुबेरःकोपपूरितः ११
आह्वयामासतंतूर्णंबटुकंहेममालिनम्
ज्ञात्वाकालात्ययंसोऽपिभयव्याकुललोचनः १२
अस्नातएवआगत्यकुबेरस्याग्रतःस्थितः
तंदृष्ट्वाधनदःक्रुद्धःक्रोधसंरक्तलोचनः १३
प्रत्युवाचरुषाविष्टःकोपप्रस्फुरिताधरः
धनदउवाच–
आःपापदुष्टदुर्वृत्तकृतवान्देवहेलनम् १४
अष्टादशकुष्ठवृतोवियुक्तःकांतयातया
अस्मात्स्थानादपध्वस्तोगच्छस्वप्नमथाधम १५

इत्युक्तेवचनेतस्यतस्मात्स्थानात्पपातसः
महादुःखाभिभूतश्चकुष्ठैःपीडितविग्रहः १६
नसुखंदिवसेतस्यननिद्रांलभतेनिशि
छायायांपीडिततनुर्निदाघेऽत्यतपीडितः १७
शिवपूजाप्रभावेनस्मृतिस्तस्यनलुप्यते
पातकेनाभिभूतोऽपिपूर्वंकर्मस्मरत्यसौ १८
भ्रममाणस्ततोगच्छन्हिमाद्रिंपर्वतोत्तमम्
तत्रापश्यन्मुनिवरंमार्कंडेयंतपोनिधिम् १९
यस्यायुर्विद्यतेराजन्ब्रह्मणोवयसासमम्
ववंदेचरणौतस्यदूरतःपापकर्मकृत् २०
मार्कंडेयोमुनिवरोदृष्ट्वातंकंपितंतथा
परोपकरणार्थायसमाहूयेदमब्रवीत् २१
कस्मात्कुष्ठाभिभूतस्त्वंकुतोनिंद्यतरोह्यसि
इत्युक्तःसप्रत्युवाचमार्कंडेयंमहामुनिम् २२
हेममाल्युवाच-
राजराजस्यानुचरोहेममालीतिनामतः
मानसात्पद्मनिचयमानीयप्रत्यहंमुने २३
शिवपूजनवेलायांकुबेरायसमर्पये
एकस्मिन्दिवसेचैवकालश्चाविदितोमया २४
पत्नीसौख्यप्रसक्तेनशोकव्याकुलचेतसा
ततःक्रुद्धेनशप्तोऽस्मिराजराजेनवैमुने २५
कुष्ठाभिभूतःसंजातोवियुक्तःकांतयातया
अधुनातवसान्निध्यंप्राप्तोऽस्मिशुभकर्मणा २६
सतांस्वभावतश्चित्तंपरोपकरणेक्षमम्
इतिज्ञात्वामुनिश्रेष्ठमांप्रशाधिकृतागसम् २७
मार्कंडेयउवाच-
त्वयासत्यमिहप्रोक्तंनासत्यंभाषितंयतः
अतोव्रतोपदेशंतेकथयामिशुभप्रदम् २८
आषाढेकृष्णपक्षेतुयोगिनीव्रतमाचर
अस्यव्रतस्यपुरायेनकुष्ठंयास्यतिवैध्रुवम् २९

इतिवाक्यमृषेःश्रुत्वादंडवत्पतितोभुवि
उत्थापितःसमुनिनाबभूवातीवहर्षितः ३०
मार्कंडेयोपदेशेनव्रतंतेनकृतंयथा
अष्टादशेवकुष्ठानिगतानितस्यसर्वशः ३१
मुनेर्वाचाततःसम्यग्व्रतेचीर्णेऽभवत्सुखी
ईदृग्विधंनृपश्रेष्ठकथितंयोगिनीव्रतम् ३२
अष्टाशीतिसहस्राणिद्विजान्भोजयतेतुयः
तत्समंफलमाप्नोतियोगिनीव्रतकृन्नरः ३३
महापापप्रशमनंमहापुण्यफलप्रदम्
पठनाच्छ्रवणान्मर्त्यःसर्वपापैःप्रमुच्यते ३४

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापति
नारदसंवादेआषाढकृष्णयोगिन्येकादशीमाहात्म्यंनाम-
द्विपंचाशत्तमोऽध्यायः ५२

## त्रिपञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच-
आषाढस्यसितेपक्षेकाचएकादशीभवेत्
किंनामकोविधिस्तस्याएतद्विस्तरतोवद १
श्रीकृष्णउवाच-
कथयामिमहापुण्यांस्वर्गमोक्षप्रदायिनीम्
शयनींनामनामेतिसर्वपापहरांपराम् २
यस्याःश्रवणमात्रेणवाजपेयफलंलभेत्
सत्यंसत्यंमयाप्रोक्तंनातःपरतरंनृणाम् ३
पापिनांपापनाशायसृष्टाधात्रामहोत्तमा
अतःपरानराजेंद्रवर्त्ततेमोक्षदायिनी ४
एतस्मात्कारणाद्राजन्श्रूयतांगतिरुत्तमा
भवेन्नराणांश्रोतॄणांकथायाःश्रवणादपि ५
तेसदावैष्णवाराजन्ममभक्तिपरायणाः
आषाढेवामनश्चैवपूज्यतेपरमेश्वरः ६
वामनःपूजितोयेनकमलैःकमलेक्षणः

आषाढस्यसितेपक्षेकामिकायादिनेतथा ७
तेनार्चितंजगत्सर्वंत्रयोदेवाःसनातनाः
कृताचैकादशीयेनहरिवासरमुत्तमम् ८
युधिष्ठिरउवाच-
संशयोऽस्तिमहान्मेऽत्रश्रूयतांपुरुषोत्तम
कथंसुप्तोऽसिदेवेशकथंचबलिमाश्रितः ९
कथंचभूमौसंवेशःकिंकुर्वंतिजनाःपरे
एतद्वदमहाप्राज्ञसंशयोऽस्तिमहान्मम १०
श्रीकृष्णउवाच -
श्रूयतांराजशार्दूलकथांपापहरांपराम्
यस्याःश्रवणमात्रेणसर्वपापक्षयोभवेत् ११
बलिनामापूर्वमासीद्दैत्यस्त्रेतायुगेनृप
पूजयंश्चैवमांनित्यंमद्भक्तोमत्परायणः १२
यज्ञैस्तुविधिवद्दैत्योयजतेमांसनातनम्
भक्त्याचपरयाराजन्यज्ञकृद्व्रतकृत्तथा १३
परंविचार्यबहुधामघोनाचैवसूक्तिभिः
गुरुणादैवतैःसार्द्धंबहुधापूजितोऽप्यहम् १४
ततोवामनरूपेणअवतारेचपंचमे
अत्युग्ररूपेणतदासर्वब्रह्मांडरूपिणा १५
वाक्छलेनजितादैत्याःसत्यमाश्रित्यसंस्थितः
शुक्रस्तंवारयामासयन्नारायणइत्ययम् १६
याचितावसुधाराजन्सार्द्धत्रयपदीमया
संकल्पोदकमात्रेतुकरेतेनैवचार्पिते १७
रूपमीदृग्विधंराजंस्तदाशृणुमयाकृतम्
भूर्लोकेचरणौन्यस्यभुवर्लोकेतुजानुनी १८
स्वर्लोकेचकटिंन्यस्यमहर्लोकेतथोदरम्
जनलोकेचहृदयंतपोलोकेतुकंठकम् १९
सत्यलोकेमुखंस्थाप्यमस्तकंचतदूर्द्ध्वकम्
चंद्रसूर्यग्रहाश्चैवनक्षत्राणितथैवच २०
देवाःसेंद्राश्चनागाश्चयक्षगंधर्वकिन्नराः

स्तुवंतोवेदसंभूतैःसूक्तैश्चविविधैस्तथा २१
करेगृहीत्वाचबलिस्त्रिपदैःपूरितामही
अर्द्धंचतस्यपृष्ठेचपदंन्यस्तंमयातदा २२
गतोरसातलंराजन्दानवोममपूजकः
क्षिप्तोऽधोदानवश्चैवकिमकुर्वंततःपरम् २३
विनयेनानतोसौवैसुप्रसन्नोजनार्दनः
आषाढशुक्लपक्षेतुकामिकाहरिवासरः २४
तस्यामेकाचमूर्तिर्मेबलिमाश्रित्यतिष्ठति
द्वितीयाशेषपृष्ठेवैक्षीरसागरमध्यतः २५
स्वपित्येवमहाराजयावदागामिकार्तिकी
तावद्भवेत्सुधर्मात्मासर्वधर्मोत्तमोत्तमः २६
व्रतंचकुरुतेमर्त्यःसयातिपरमांगतिम्
एतस्मात्कारणाद्राजन्कर्त्तव्याचप्रयत्नतः २७
नातःपरतराकाचित्पवित्रापापनाशिनी
यस्यांस्वपितिदेवेशःशंखचक्रगदाधरः २८
तस्यांचपूजयेद्देवंशंखचक्रगदाधरम्
रात्रौजागरणंकृत्वाभक्त्याचैवविशेषतः २९
नास्याःपुण्यस्यसंख्यानंकर्तुंशक्तश्चतुर्मुखः
एवंयःकुरुतेराजन्नेकादश्याव्रतोत्तमम् ३०
सर्वपापहरंचैवभुक्तिमुक्तिप्रदायकम्
सचलोकेममसदाश्वपचोऽपिप्रियंकरः ३१
दीपदानेनपालाशपत्रेभुक्ताव्रतेनच
चातुर्मास्यंनयंतीहतेनराममवल्लभाः ३२
चातुर्मास्येहरौसुप्तेभूमिशायीभवेन्नरः
श्रावणेवर्जयेच्छाकंदधिभाद्रपदेतथा ३३
दुग्धमाश्वयुजित्याज्यंकार्तिकेद्विदलंत्यजेत्
अथवाब्रह्मचर्यस्थःसयातिपरमांगतिम् ३४
एकादश्याव्रतेनैवपुमान्पापैर्विमुच्यते
कर्तव्यासर्वदाराजन्विस्मर्तव्यानकर्हिचित् ३५
शयनीबोधिनीमध्येयाकृष्णैकादशीभवेत्

सैवोपोष्यागृहस्थस्यनान्याकृष्णाकदाचन ३६
शृणुयाञ्चैवयोराजन्कथांपापहरांपराम्
अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः ३७
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेउमामहेश्वरसंवादेदेवशयन्येकादशीनामत्रिपंचाशत्तमोऽध्यायः ५३

## चतुष्पञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच-
श्रावणस्यसितेपक्षेकिंनामैकादशीभवेत्
तन्नःकथयगोविंदवासुदेवनमोऽस्तुते १
श्रीकृष्णउवाच-
शृणुराजन्प्रवक्ष्यामिआख्यानंपापनाशनम्
यत्प्रोक्तंब्रह्मणापूर्वंपृच्छतेनारदायवै २
नारदउवाच-
भगवन्श्रोतुमिच्छामित्वत्तोऽहकमलासन
श्रावणस्यासितेपक्षेकिंनामैकादशीभेत् ३
कोदेवःकोविधिस्तस्याःकिंपुरायंकथयप्रभो
इतितस्यवचःश्रुत्वाब्रह्मावचनमब्रवीत् ४
ब्रह्मोवाच-
शृणुनारदतेवच्मिलोकानांहितकाम्यया
श्रावणैकादशीकृष्णाकामिकानामनामतः ५
अस्याःश्रवणमात्रेणवाजपेयफलंलभेत्
अस्यांयजतिदेवेशंशंखचक्रगदाधरम् ६
श्रीधराख्यंहरिंविष्णुंमाधवंमधुसूदनम्
पूजयेद्ध्यायतेयोवैतस्यपुरायंफलंशृणु ७
नगंगायांनकाश्यांचनैमिषेनचपुष्करे
तत्फलंसमवाप्नोतियत्फलंकृष्णपूजनात् ८
गोदावर्यांगुरौसिंहेव्यतीपातेचदंडके
यत्फलंसमवाप्नोतितत्फलंकृष्णपूजनात् ९
ससागरवनोपेतांयोददातिवसुंधराम्

कामिकाव्रतकारीचह्युभौसमफलौस्मृतौ १०
प्रसूयमानांयोधेनुंदद्यात्सोपस्करांनरः
तत्फलंसमवाप्नोतिकामिकाव्रतकारकः ११
श्रावणेश्रीधरंदेवंपूजयेद्योनरोत्तमः
तेनैवपूजितादेवागंधर्वोरगपन्नगाः १२
तस्मात्सर्वप्रयत्नेनकामिकादिवसेहरिः
पूजनीयोयथाशक्तिमानुषैःपापभीरुभिः १३
येसंसारार्णवेमग्नाःपापपंकसमाकुले
तेषामुद्धरणार्थायकामिकाव्रतमुत्तमम् १४
नातःपरतराकाचित्पवित्रापापहारिणी
एवंनारदजानीहिस्वयमाहपरोहरिः १५
अध्यात्मविद्यानिरतैर्यत्फलंप्राप्यतेनरैः
ततोबहुतरंविद्धिकामिकाव्रतसेविनाम् १६
रात्रौजागरणंकृत्वाकामिकाव्रतकृन्नरः
नपश्यतियमंरौद्रंनैवगच्छतिदुर्गतिम् १७
नपश्यतिकुयोनिंचकामिकाव्रतसेवनात्
कामिकायाव्रतेचीर्णेकैवल्यंयोगिनोगताः १८
तस्मात्सर्वप्रयत्नेनकर्तव्यानियतात्मभिः
तुलसीप्रभवैःपत्रैःयोनरःपूजयेद्धरिम् १९
नलिप्यतेसपापेनपद्मपत्रमिवांभसा
सुवर्णभारमेकंतुरजतंचचतुर्गुणम् २०
तत्फलंसमवाप्नोतितुलसीदलपूजनात्
रत्नमौक्तिकवैडूर्यप्रवालादिभिरर्चितः २१
नतुष्यतितथाविष्णुस्तुलसीदलतोयथा
तुलसीमंजरीभिश्चपूजितोयेनकेशवः २२
यादृष्टानिखिलाघसंघशमनीस्पृष्टावपुःपावनी
रोगाणामभिवंदितानिरसिनीसिक्तांतकत्रासिनी
प्रत्यासत्तिविधायिनीभगवतःकृष्णस्यसंरोपिता
न्यस्तातच्चरणेविमुक्तिफलदातस्यैतुलस्यैनमः २३
दीपंददातियोमर्त्योदिवारात्रंहरेर्दिने

तस्यपुरायस्यसंख्यातुंचित्रगुप्तोनवेत्त्यलम् २४
कृष्णाग्रेदीपकोयस्यज्वलत्येकादशीदिने
पितरस्तस्यतृप्यंतिश्रमृतेनदिविस्थिताः २५
घृतेनदीपंप्रज्वाल्यतिलतैलेनवापुनः
प्रयातिसूर्यलोकंचदीपकोटिशतार्चितः २६
श्रयंतवाग्रेकथितःकामिकामहिमामया
श्रतोनरैःप्रकर्त्तव्यासर्वपातकहारिणी २७
ब्रह्महत्यापहरणीभ्रूणहत्याविनाशिनी
वैष्णवस्थानदात्रीचमहापुरायफलप्रदा २८
श्रुत्वामाहात्म्यमेतस्यानरःश्रद्धासमन्वितः
विष्णुलोकमवाप्नोतिसर्वपापैःप्रमुच्यते २९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे उमामहेश्वरसंवादेश्रावणकृष्णैकादशीनामचतुष्पंचाशत्तमोऽध्यायः ५४

## पञ्चपञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच
श्रावणस्यसितेपक्षेकिंनामैकादशीभवेत्
कथयस्वप्रसादेनममाग्रेमधुसूदन १
श्रीकृष्णउवाच-
शृणुष्वावहितोराजन्कथांपापहरांपराम्
यस्याःश्रवणमात्रेणवाजपेयफलंभवेत् २
द्वापरस्ययुगस्यादौपुरामाहिष्मतीपुरे
राजामहीजिदाख्यातोराज्यंपालयतिस्वकम् ३
पुत्रहीनस्यतस्यैवनतद्राज्यंसुखप्रदम्
श्रपुत्रस्यसुखंनास्तिइहलोकेपरत्रच ४
चिंतयास्यसुतस्यैवंकालोबहुतरोगतः
नप्राप्तश्चसुतोराज्ञासर्वसौख्यप्रदोनृणाम् ५
दृष्ट्वात्मानंप्रवयसंराजाचिंतापरोऽभवत्
तदागतःप्रजामध्येइदंवचनमब्रवीत् ६
इहजन्मनिभोलोकानमयापातकंकृतम्

अन्यायोपार्जितंवित्तंक्षिप्तंकोशेमयानहि ७
ब्रह्मस्वंदेवद्रविणंनगृहीतंमयाक्वचित्
न्यासापहारोनकृतःपरस्यबहुपापदः
पुत्रवत्पालितोलोकोधर्मेणविजितामही ८
दुष्टेषुपातितोदंडोबंधुपुत्रोपमेष्वपि
शिष्टास्तुपूजितानित्यंनद्वेष्याश्चमयाजनाः ९
इत्येवंब्रुवतोमार्गंधर्मयुक्तंद्विजोत्तमाः
कस्मान्ममगृहेपुत्रोनजातस्तद्विमृश्यताम् १०
इतिवाक्यंद्विजाःश्रुत्वासप्रजाःसपुरोहिताः
मंत्रयित्वानृपहितंजग्मुस्तेगहनंवनम् ११
इतस्ततश्चपश्यंतआश्रमानृषिसेवितान्
नृपतेर्हितमिच्छंतोददृशुर्मुनिसत्तमम् १२
तप्यमानंतपोघोरंनिरालंबंनिरामयम्
निराहारंजितात्मानंजितक्रोधंसनातनम् १३
लोमशंधर्मतत्वज्ञंसर्वशास्त्रविशारदम्
दीर्घायुषंमहात्मानंसकेशंब्रह्मसंमितम् १४
कल्पेकल्पेगतेतस्यएकंलोमविशीर्यते
अतोलोमशनामायंत्रिकालज्ञोमहामुनिः १५
तंदृष्ट्वाहर्षिताःसर्वेआजग्मुस्तस्यसन्निधिम्
यथान्यायंयथार्हंतेनमश्चक्रुर्यथोदितम् १६
विनयावनताःसर्वेऊचुस्तेचपरस्परम्
अस्मद्भाग्यवशादेवप्राप्तोऽयमुनिसत्तमः
तास्तथासप्रजावीक्ष्यउवाचऋषिसत्तमः १७
लोमशउवाच–
किमर्थमिहसंप्राप्तःकथयध्वंसकारणम्
दर्शनाद्धृष्टमनसःस्तुवंतश्चैवमांकिमु १८
असंशयंकरिष्यामिभवतांयद्धितंभवेत्
परोपकृतयेजन्ममादृशानांनसंशयः १९
जनाऊचुः –
श्रूयतामभिधास्यामोवयंस्वागमकारणम्

संशयच्छेदनार्थायतवसान्निध्यमागताः २०
पद्मयोनेःपरतरस्त्वत्तःश्रेष्ठोनविद्यते
अतःकार्यवशात्प्राप्ताःसमीपंभवतोवयम् २१
महीजिन्नामराजासौपुत्रहीनोऽस्तिसांप्रतम्
वयंतस्यप्रजाब्रह्मन्पुत्रवत्तेनपालिताः २२
तंपुत्ररहितंदृष्ट्वातस्यदुःखेनदुःखिताः
तपःकर्तुमिहायातामतिंकृत्वातुनैष्ठिकीम् २३
तस्यभाग्येनदृष्टोऽसिह्यस्माभिस्त्वंद्विजोत्तम
महतांदर्शनेनैवकार्यसिद्धिर्भवेन्नृणाम् २४
उपदेशंवदमुनेराज्ञःपुत्रोयथाभवेत्
इतितेषांवचःश्रुत्वामुहूर्त्तंध्यानमास्थितः
प्रत्युवाचमुनिर्ज्ञात्वातस्यजन्मपुरातनम् २५
लोमशउवाच-
पुराजन्मनिवैश्योऽयधनहीनोनृशंसकृत्
वाणिज्यकर्मनिरतोग्रामाद्ग्रामांतरंभ्रमन् २६
ज्येष्ठेमासिसितेपक्षेदशमीदिवसेतथा
मध्यगेद्युमणौप्राप्तेग्रामसीम्निजलाशयम् २७
कूपिकांसजलांदृष्ट्वाजलपानेमनोदधे
सद्यस्ततःसवत्साचधेनुस्तत्रसमागता २८
तृष्णातुरानिदाघार्तातस्यामंबुपपौतुसा
पिबंतींवारयित्वातामसौतोयंपपौस्वयम् २९
कर्मणातेनपापेनपुत्रहीनोनृपोभवेत्
कस्यापिजन्मनःपुण्यात्प्राप्तंराज्यमकंटकम् ३०
लोकाऊचुः -
पुण्यात्पापंक्षयंयातिपुराणेश्रूयतेमुने
पुण्योपदेशंकथययेनपापक्षयोभवेत्
यथाभवत्प्रसादेनपुत्रोभवतिभूपतेः ३१
लोमशउवाच-
श्रावणेशुक्लपक्षेतुपुत्रदानामविश्रुता
एकादशीवांछितदाकुरुध्वंतद्व्रतंजनाः ३२

इतिश्रुत्वानमस्कृत्यमुनिमेत्यपुरंव्रतम्
यथाविधियथान्यायंकृतंतैर्जागरान्वितम् ३३
तस्यपुण्यंसुविमलंदत्तंनृपतयेजनैः
दत्तेपुण्येऽथसाराज्ञीगर्भमाधत्तशोभनम् ३४
प्राप्तोप्रसवकालेसासुषुवेपुत्रमूर्जितम्
श्रावणस्यसितेपक्षेकर्कटस्थेदिवाकरे ३५
द्वादश्यांवासुदेवायपवित्रारोपणंस्मृतम्
हेमरौप्यताम्रक्षौमैःसूत्रैःकौशेयपद्मजैः ३६
कुशैःकाशैश्चकार्पासैर्ब्राह्मण्याकर्तितैःशुभैः
स्नात्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यशोधयेत् ३७
गोदोहांतरितेकालेपूर्वेद्युरधिवासनम्
ब्राह्मणेभ्योनमस्कृत्यगुरुपादौप्रणम्यच ३८
गीतमंगलनिर्घोषैःकुर्याज्जागरणंततः
ब्राह्मणाःक्षत्रियावैश्याभिल्लाःशूद्रास्तथैवच ३९
स्वधर्मावस्थिताःसर्वेभक्त्याकुर्युःपवित्रकम्
ततःपवित्रंगुरवेदद्याद्वैविधिपूर्वकम् ४०
ब्राह्मणान्वैष्णवांश्चैवगंधपुष्पादिनार्चयेत्
अतोदेवेतिमंत्रेणद्विजोविष्णौनिवेदयेत् ४१
शूद्रस्तुमूलमंत्रेणयथाविष्णौतथाशिवे
वर्षेवर्षेप्रकर्त्तव्यंपवित्रारोपणंनरैः ४२
भुक्तिंमुक्तिंचइच्छद्भिःसंसारेशोकसागरे
नकरोतिविधानेनपवित्रारोपणंतुयः ४३
तस्यसांवत्सरीपूजानिष्फलावैष्णवस्यतु
श्रुत्वामाहात्म्यमेतस्यानरःपापात्प्रमुच्यते
इहपुत्रसुखंप्राप्यपरत्रस्वर्गतिंभवेत् ४४

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहिता
यामुत्तरखंडेउमापतिनारदसंवादेश्रावणशुक्लापवित्रारोपणीपुत्रदैकादशी
नामपंचपंचाशत्तमोऽध्यायः ५५

## षट्पञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच-
भाद्रस्यकृष्णपक्षेतुकिंनामैकादशीभवेत्
एतदिच्छाम्यहंश्रोतुंकथयस्वजनार्दन १
श्रीकृष्णउवाच-
शृणुष्वैकमनाराजन्कथयिष्यामिविस्तरात्
अजेतिनामतःप्रोक्तासर्वपापप्रणाशिनी २
पूजयित्वाहृषीकेशंव्रतमस्यांकरोतियः
पापानितस्यनश्यंतिव्रतस्यश्रवणादपि ३
नातःपरतराराजन्लोकद्वयहितायवै
सत्यमुक्तंमयाह्येतन्नासत्यंममभाषितम् ४
हरिश्चन्द्रइतिख्यातोबभूवनृपतिःपुरा
चक्रवर्तीसत्यसंधःसमस्तायाभुवःपतिः ५
कस्यापिकर्मणःप्राप्तौराज्यभ्रष्टोबभूवसः
विक्रीतौवनितापुत्रौसचकारात्मविक्रयम् ६
पुल्कसस्यचदासत्वंगतोराजासपुण्यकृत्
सत्यमालंब्यराजेंद्रमृतचैलापहारकः ७
सोऽभवन्नृपतिश्रेष्ठोनसत्याच्चलितस्तथा
एवंचतस्यनृपतेर्बहवोवत्सरागताः ८
ततश्चिंतापरोराजासबभूवातिदुःखितः
किंकरोमिक्वगच्छामिनिष्कृतिर्मेकथंभवेत् ९
इतिचिंतयतस्तस्यमग्नस्यवृजिनार्णवे
आजगाममुनिःकश्चिज्ज्ञात्वाराजानमातुरम् १०
परोपकारणार्थायनिर्मिताब्रह्मणाद्विजाः
सतंदृष्ट्वाद्विजवरंननामनृपसत्तमः ११
कृतांजलिपुटोभूत्वागौतमस्याग्रतःस्थितः
कथयामासवृत्तांतमात्मनोदुःखसंयुतम् १२
श्रुत्वानृपतिवाक्यानिगौतमोविस्मयान्वितः
उपदेशंनृपतयेव्रतस्यास्यददौमुनिः १३
मासिभाद्रपदेराजन्कृष्णपक्षेतिशोभना

एकादशीसमायाताअजानामेतिपुरायदा १४
अस्याःकुरुव्रतंराजन्पापस्यांतोभविष्यति
तवभाग्यवशादेषासप्तमेऽह्निसमागता १५
उपवासपरोभूत्वारात्रौजागरणंकुरु
एवमस्याव्रतेचीर्णेतवपापक्षयोध्रुवम् १६
तवपुण्यप्रभावेणचागतोऽहनृपोत्तम
इत्येवंकथयित्वाचमुनिरंतरधीयत १७
मुनिवाक्यंनृपःश्रुत्वाचकारव्रतमुत्तमम्
कृतेतस्मिन्व्रतेराज्ञःपापस्यांतोऽभवत्क्षणात् १८
श्रूयतांराजशार्दूलप्रभावोऽस्यव्रतस्यच
यद्दुःखंबहुभिर्वर्षैर्भोक्तव्यंतत्क्षयोभवेत् १९
निस्तीर्णदुःखोराजासीद्व्रतस्यास्यप्रभावतः
पत्न्यासहसमायोगंपुत्रजीवनमापसः २०
दिविदुंदुभयोनेदुःपुष्पवर्षमभूद्दिवः
एकादश्याःप्रभावेनप्राप्यराज्यमकंटकम् २१
स्वर्गंलेभेहरिश्चंद्रःसपुरःसपरिच्छदः
ईदृग्विधंव्रतंराजन्येकुर्वंतिचमानवाः २२
सर्वपापविनिर्मुक्तास्त्रिदिवंयांतितेनृप
पठनाच्छ्रवणाद्वापिअश्वमेधफलंलभेत् २३

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापति-
नारदसंवादेभाद्रपदकृष्णाजैकादशीनामषट्पंचाशत्तमोऽध्यायः५६

## सप्तपञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच -
नभस्यस्यसितेपक्षेकिंनामैकादशीभवेत्
कोदेवःकोविधिस्तस्यएतदाख्याहिकेशव १
श्रीकृष्णउवाच-
कथयामिमहीपालकथामाश्चर्यकारिणीम्
कथयामासयांब्रह्मानारदायमहात्मने २
नारदउवाच-

कथयस्वप्रसादेनचतुर्मुखनमोऽस्तुते
नभस्यशुक्लपक्षेतुकिंनामैकादशीभवेत्
एतदिच्छाम्यहंश्रोतुंविष्णोराराधनायवै ३
ब्रह्मोवाच-
वैष्णवोऽसिमुनिश्रेष्ठसाधुपृष्टंकिलत्वया
नातःपरतरालोकेपवित्राहरिवासरात् ४
पद्मानामेतिविख्यातानभस्यैकादशीसिता
हृषीकेशःपूज्यतेऽस्याकर्त्तव्यंव्रतमुत्तमम् ५
कथयामितवाग्रेऽहकथांपौराणिकींशुभाम्
यस्याःश्रवणमात्रेणमहापापंप्रणश्यति ६
मांधातानामराजर्षिर्विवस्वद्वंशसंभवः
बभूवचक्रवर्तीससत्यसंधःप्रतापवान् ७
धर्मतःपालयामासप्रजाःपुत्रानिवौरसान्
नतस्यराज्येदुर्भिक्षंनाधयोव्याधयस्तथा ८
निरातंकाःप्रजास्तस्यधनधान्यसमेधिताः
न्यायेनोपार्जितंवित्तंतस्यकोशेमहीपते ९
स्वस्वधर्मेप्रवर्त्तंतेसर्वेवर्णाश्रमास्तथा
कामधेनुसमाभूमिस्तस्यराज्येमहीपतेः १०
तस्यैवंकुर्वतोराज्यंबहुवर्षगणागताः
अथैकस्मिंश्चसंप्राप्तेविपाकःकर्मणःखलु ११
वर्षत्रयंतद्विषयेनववर्षबलाहकः
तेनभग्नाःप्रजास्तस्यबभूवुःक्षुधयार्दिताः १२
स्वाहास्वधावषट्कारवेदाध्ययनवर्जिताः
बभूवविषयस्तस्याभाग्येनदैवपीडितः
अथप्रजाःसमागम्यराजानमिदमब्रुवन् १३
प्रजाऊचुः -
श्रोतव्यंनृपशार्दूलप्रजानांवचनंत्वया
आपोनाराइतिप्रोक्ताःपुराणेषुमनीषिभिः १४
अयनंभगवतस्तस्मान्नारायणइतिस्मृतः
पर्जन्यरूपोभगवान्विष्णुःसर्वगतःस्थितः १५

सएवंकुरुतेवृष्टिंवृष्टेरन्नंततःप्रजाः
तदभावेनृपश्रेष्ठक्षयंगच्छंतिवैप्रजाः
तथाकुरुनृपश्रेष्ठयोगःक्षेमोयथाभवेत् १६
राजोवाच-
सत्यमुक्तंभवद्भिश्चनमिथ्याभिहितंक्वचित्
अन्नंब्रह्मयतःप्रोक्तमन्नेसर्वंप्रतिष्ठितम् १७
अन्नाद्भवंतिभूतानिजगदन्नेनवर्तते
इत्येवंश्रूयतेलोकेपुराणेबहुविस्तरे १८
नृपाणामपचारेणप्रजानांपीडनंभवेत्
नाहंपश्याम्यात्मकृतमेवंबुद्ध्याविचारयन् १९
तथापिप्रयतिष्यामिप्रजानांहितकाम्यया
इतिकृत्वामतिंराजापरिमेयपरिच्छदः २०
नमस्कृत्यविधातारंजगामगहनंवनम्
चचारमुनिमुख्यांश्चआश्रमान्तापसैःश्रितान् २१
ददर्शाथब्रह्मसुतमृषिमांगिरसंनृपः
तेजसाद्योतितदिशंद्वितीयमिवपद्मजम् २२
तंदृष्ट्वाहर्षितोराजाअवतीर्यस्ववाहनात्
नमश्चक्रेऽस्यचरणौकृतांजलिपुटोवशी २३
मुनिस्तमभिनंद्याथस्वस्तिवाचनपूर्वकम्
पप्रच्छकुशलंराज्येसप्तस्वंगेषुभूपतेः २४
निवेदयित्वाकुशलं पप्रच्छानामयंनृपः
दत्तासनोगृहीतार्घ्यउपविष्टोऽस्यसंनिधौ २५
प्रत्युवाचमुनिंराजापृष्टोह्यागमकारणम् २६
राजोवाच-
भगवन्धर्मविधिनाममपालयतोमहीम्
अनावृष्टिश्चसंवृत्तानाहंवेद्म्यत्रकारणम् २७
संशयच्छेदनायात्रआगतोऽहतवांतिके
योगक्षेमविधानेनप्रजानांकुरुनिर्वृतिम् २८
ऋषिरुवाच-
एतत्कृतयुगंराजन्युगानामुत्तमंमतम्

अत्रब्रह्मपरालोकाधर्मश्चात्रचतुष्पदः २९
अस्मिन्युगेतपोयुक्ताब्राह्मणानेतराजनाः
विषयेतवराजेंद्रवृषलोऽयतपस्यति ३०
एतस्मात्कारणाच्चैवनवर्षतिबलाहकः
कुरुतस्यवधेयत्नंयेनदोषःप्रशाम्यति ३१
राजोवाच-
नाहमेनंवधिष्यामितपस्यंतमनागसम्
धर्मोपदेशंकथयउपसर्गविनाशनम् ३२
ऋषिरुवाच-
यद्येवंतर्हिनृपतेकुरुष्वैकादशीव्रतम्
नभस्यस्यसितेपक्षेपद्मानामेतिविश्रुता ३३
तस्याव्रतप्रभावेनसुवृष्टिर्भविताध्रुवम्
सर्वसिद्धिप्रदाह्येषासर्वोपद्रवनाशिनी ३४
अस्याव्रतंकुरुनृपसप्रजःसपरिच्छदः
इतिवाक्यमृषेःश्रुत्वाराजास्वगृहमागतः ३५
भाद्रमासेसितेपक्षेपद्माव्रतमथाकरोत्
प्रजाभिःसहसर्वाभिश्चातुर्वर्ण्यसमन्वितः ३६
एवंव्रतेकृतेराजन्प्रववर्षबलाहकः
जलेनप्लाविताभूमिरभवत्सस्यशालिनी ३७
ऋषीश्वरप्रभावेनलोकाःसौख्यंप्रपेदिरे
एतस्मात्कारणादेवंकर्त्तव्यंव्रतमुत्तमम् ३८
दध्योदनयुतंतस्यांजलपूर्णंघटंद्विजे
वस्त्रसंवेष्टितंदत्त्वाछत्रोपानहमेवच ३९
नमोनमस्तेगोविंदबुधश्रवणसंज्ञक
अघौघसंक्षयंकृत्वासर्वसौख्यप्रदोभव ४०
भुक्तिमुक्तिप्रदश्चैवलोकानांसुखदायकः
पठनाच्छ्रवणाद्राजन्सर्वपापैःप्रमुच्यते ४१

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमापतिनारदसंवादेभाद्रपदशुक्लापद्मैकादशीनाम-
सप्तपंचाशत्तमोऽध्यायः५७

अष्ट पञ्चाशत्तमोऽध्यायः

युधिष्ठिरउवाच-
कथयस्वप्रसादेनममाग्रेमधुसूदन
इषस्यकृष्णपक्षेतुकिंनामैकादशीभवेत् १
श्रीकृष्णउवाच-
आश्विनेकृष्णपक्षेतुइंदिरानामनामतः
तस्याव्रतप्रभावेनमहापापंप्रणश्यति २
अधोयोनिगतानांचपितृणांगतिदायिनी
शृणुष्वावहितोराजन्कथांपापहरांपराम् ३
यस्याःश्रवणमात्रेणवाजपेयफलंलभेत्
पुराकृतयुगेराजन्बभूवनृपनंदनः ४
इंद्रसेनइतिख्यातःपुरामाहिष्मतीपतिः
सराजापालयामासधर्मेणयशसान्वितः ५
पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः
माहिष्मत्यधिपोराजाविष्णुभक्तिपरायणः ६
जपन्गोविंदनामानिमुक्तिदानिनराधिपः
कालंनयतिविधिवदध्यात्मध्यानचिंतकः ७
एकस्मिन्दिवसेराज्ञिसुखासीनेसदोगते
अवतीर्यागमत्तत्रह्यंबरान्नारदोमुनिः ८
तमागतमभिप्रेक्ष्यप्रत्युत्थायकृतांजलि
पूजयित्वाथविधिनाचासनेसंन्यवेशयत् ९
सुखोपविष्टंसमुनिंप्रत्युवाचनृपोत्तमः
राजोवाच-
त्वत्प्रसादान्मुनिश्रेष्ठसर्वंचकुशलंमम १०
अद्यक्रतुक्रियाःसर्वाःसफलास्तवदर्शनात्
प्रसादंकुरुदेवर्षेब्रूह्यागमनकारणम् ११
नारदउवाच-
श्रूयतांनृपशार्दूलमद्वचोविस्मयप्रदम्
ब्रह्मलोकादहंप्राप्तोयमलोकंनृपोत्तम १२
शमनेनार्चितोभक्त्याउपविष्टोवरासने

धर्मशीलःसत्यवांस्तुभास्करिंसमुपासते १३
बहुपुगयप्रकर्त्ताचव्रतवैकल्यदोषतः
सभायांश्राद्धदेवस्यमयादृष्टःपितातव १४
कथितस्तेनसंदेशस्तंनिबोधजनेश्वर
इंद्रसेनइतिख्यातोराजामाहिष्मतीपतिः १५
तस्याग्रेकथयब्रह्मन्स्थितंमांयमसंनिधौ
केनापिचांतरायेणपूर्वजन्मोद्भवेनच १६
स्वर्गंप्रेषयमांपुत्रइंदिरापुगयदानतः
इत्युक्तोऽहसमायातःसमीपंतवपार्थिव १७
पितुःस्वर्गकृतेराजन्निंदिराव्रतमाचर
तेनव्रतप्रभावेनस्वर्गंयास्यतितेपिता १८
राजोवाच-
कथयस्वप्रसादेनभगवन्निंदिराव्रतम्
विधिनाकेनकर्त्तव्यंकस्मिन्पक्षेतिथौतथा १९
नारदउवाच-
शृणुराजेंद्रतेवच्मिव्रतस्यास्यविधिंशुभम्
ग्राश्विनस्यासितेपक्षेदशमीदिवसेशुभे २०
प्रातःस्नानंप्रकुर्वीतश्रद्धायुक्तेनचेतसा
ततोमध्याह्नसमयेस्नानंकृत्वासमाहितः २१
पितृणांप्रीतयेश्राद्धंकुर्याच्छ्रद्धासमन्वितः
एकभक्तंततःकृत्वारात्रौभूमौशयीतच
प्रभातेविमलेजातेप्राप्तेचैकादशीदिने २२
मुखप्रक्षालनंकुर्याद्दंतधावनवर्जितम्
उपवासस्यनियमंगृह्णीयाद्भक्तिभावतः २३
ग्रद्यस्थित्वानिराहारःसर्वभोगविवर्जितः
श्वोभोक्ष्येपुंडरीकाक्षशरणंमेभवाच्युत २४
इत्येवंनियमंकृत्वामध्याह्नसमयेतथा
शालग्रामशिलाग्रेतुस्नानंकुर्याद्यथाविधि २५
पूजयित्वाहृषीकेशंधूपगंधादिभिस्तथा
रात्रौजागरणंकुर्यात्केशवस्यसमीपतः २६

ततःप्रभातसमयेप्राप्तेवैद्वादशीदिने
अर्चयित्वाहरिंभक्त्याश्राद्धंकुर्याद्यथाविधि २७
पितृणांप्रीतयेश्राद्धंकुर्याच्छ्रद्धासमन्वितः
गोधूमचूर्णैर्यच्छ्राद्धंकृतंमेध्यकृतंभवेत् २८
यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा
ब्राह्मणान्भोजयेद्राजन्दक्षिणाभिःप्रपूजितान् २९
बंधुदौहित्रपुत्राद्यैःस्वयंभुंजीतवाग्यतः
अनेनविधिनाराजन्कुरुव्रतमतंद्रितः ३०
विष्णुलोकंप्रयास्यंतिपितरस्तवभूपते
इत्युक्त्वानृपतिंराजन्मुनिरंतरधीयत ३१
यथोक्तविधिनाराजाचकारव्रतमुत्तमम्
अंतःपुरेणसहितःपुत्रभृत्यसमन्वितः ३२
कृतेव्रतेतुकौंतेयपुष्पवृष्टिरभूद्दिवः
तत्पितागरुडारूढोजगामहरिमंदिरम् ३३
इंद्रसेनोऽपिराजर्षिःकृत्वाराज्यमकंटकम्
राज्येनिवेश्यतनयंजगामत्रिदिवंस्वयम् ३४
इंदिराव्रतमाहात्म्यंतवाग्रेकथितंमया
पठनाच्छ्रवणाद्राजन्सर्वपापैःप्रमुच्यते ३५
भुक्त्वेहनिखिलान्भोगान्विष्णुलोकेवसेच्चिरम् ३६

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे उमापतिनारदसंवादेआश्विनकृष्णेंदिरैकादशीनामाष्टपंचाशत्तमोऽध्यायः ५८

## एकोनिषष्टितमोऽध्यायः

युधिष्ठिरउवाच-
कथयस्वप्रसादेनममाग्रेमधुसूदन
इषस्यशुक्लपक्षेतुकिंनामैकादशीभवेत् १
श्रीकृष्णउवाच-
शृणुराजेंद्रवक्ष्यामिमाहात्म्यंपापनाशनम्
शुक्लपक्षेचाश्विनस्यभवेदेकादशीतुया २
पापांकुशेतिविख्यातासर्वपापहरापरा

पद्मनाभाभिधानंमांपूजयेत्तत्रमानवः ३
सर्वाभीष्टफलंप्राप्तौस्वर्गमोक्षप्रदंनृणाम्
तपस्तप्त्वापुनस्तीव्रंचिरंसुनियतेन्द्रियः ४
यत्फलंसमवाप्नोतितन्नत्वागरुडध्वजम्
कृत्वापिबहुशःपापंनरोमोहसमन्वितः ५
नयातिनरकंनत्वासर्वपापहरंहरिम्
पृथिव्यांयानितीर्थानिपुण्यान्यायतनानिच ६
तानिसर्वाण्यवाप्नोतिविष्णोर्नामानुकीर्त्तनात्
देवंशार्ङ्गधरंविष्णुंयेप्रपन्नाजनार्दनम् ७
नतेषांयमलोकस्ययातनाजायतेक्वचित्
उपोष्यैकादशीमेकांप्रसंगेनापिमानवः
नयातियातनांयामींपापंकृत्वापिदारुणम् ८
वैष्णवःपुरुषोभूत्वाशिवनिंदांकरोतियः
नविंदेद्वैष्णवंलोकंसयातिनरकंध्रुवम् ९
शैवःपाशुपतोभूत्वाविष्णुनिंदांकरोतिचेत्
रौरवेपच्यतेघोरेयावदिन्द्राश्चतुर्दश १०
नेदृशंपावनंकिंचित्त्रिषुलोकेषुविद्यते
यादृशंपद्मनाभस्यव्रतंपातकनाशनम् ११
तावत्पापानिदेहेऽस्मिन्तिष्ठंतिमनुजाधिपम्
यावन्नोपवसेज्जंतुःपद्मनाभदिनंशुभम् १२
अश्वमेधसहस्राणिराजसूयशतानिच
एकादश्युपवासस्यकलांनार्हंतिषोडशीम् १३
एकादशीसमंकिंचिद्व्रतंलोकेनविद्यते
व्याजेनापिकृतायैश्चनतेयांतिहिभास्करिम् १४
स्वर्गमोक्षप्रदाह्येषाशरीरारोग्यदायिनी
कलत्रसुतदाह्येषाधनमित्रप्रदायिनी १५
नगंगानगयाराजन्नचकाशीचपुष्करम्
नचापिकौरवंक्षेत्रंपुण्यंभूपहरेर्दिनात् १६
रात्रौजागरणंकृत्वासमुपोष्यहरेर्दिनम्
अनायासेनभूपालप्राप्यतेवैष्णवंपदम् १७

दशैवमातृकेपक्षेराजेंद्रदशपैतृके
प्रियायादशपक्षेतुपुरुषानुद्धरेन्नरः १८
चतुर्भुजादिव्यरूपानागारिकृतकेतनाः
स्रग्विणःपीतवस्त्राश्चप्रयांतिहरिमंदिरम् १९
बालत्वेयौवनत्वेचवृद्धत्वेचनृपोत्तम
उपोष्यैकादशींनूनंनैवप्राप्नोतिदुर्गतिम् २०
पापांकुशामुपोष्यैवआश्विनस्यसितेनरः
सर्वपापबिनिर्मुक्तोहरिलोकंसगच्छति २१
दत्त्वाहेमतिलान्भूमिंगामन्नमुदकंतथा
उपानच्छत्रवस्त्रादीन्नपश्यतियमंनरः २२
यस्यपुण्यविहीनानिदिनान्यायांतियांतिच
सलोहकारभस्त्रेवश्वसन्नपिनजीवति २३
अवंध्यंदिवसंकुर्याद्दरिद्रोऽपिनृपोत्तम
सदाचरन्यथाक्तिस्नानदानादिकाःक्रियाः २४
होमस्नानजपध्यानसत्रादिपुण्यकर्मणाम्
कर्त्तारोनैवपश्यंतिघोरांतांयमयातनाम् २५
दीर्घायुषोधनाढ्याश्चकुलीनारोगवर्जिताः
दृश्यंतेमानवालोकेपुण्यकर्त्तारईदृशाः २६
किमत्रबहुनोक्तेनयांत्यधर्मेणदुर्गतिम्
आरोहंतिदिवंधर्मैर्नात्रकार्याविचारणा २७
इतितेकथितंराजन्यत्पृष्टोऽहत्वयानघ
पापांकुशायामाहात्म्यंकिमन्यच्छ्रोतुमिच्छसि २८

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापति नारदसंवादेआश्विनशुक्लपापांकुशैकादशीमाहात्म्यनामैकोनषष्टितमोऽध्यायः ५९

## षष्टितमोऽध्यायः

युधिष्ठिरउवाच-
कथयस्वप्रसादेनमयिस्नेहाज्जनार्दन
कार्त्तिकस्यासितेपक्षेकिंनामैकादशीभवेत् १

श्रीकृष्णउवाच–
श्रूयतांराजशार्दूलकथयामितवाग्रतः
कार्त्तिकेकृष्णपक्षेतुरमानामसुशोभना २
एकादशीसमाख्यातामहापापहरापरा
अस्याःप्रसंगतोराजन्माहात्म्यंप्रवदामिते ३
मुचुकुंदइतिख्यातोबभूवनृपतिःपुरा
देवेंद्रेणसमंतस्यमित्रत्वमभवन्नृप ४
यमेनवरुणेनैवकुबेरेणापिसर्वथा
बिभीषणेनयस्यैवसखित्वमभवन्नृप ५
विष्णुभक्तःसत्यसंधोबभूवनृपतिःपरः
तस्यैवंशासतोराजन्राज्यंनिहतकंटकम् ६
बभूवदुहितागेहेचंद्रभागासरिद्वरा
शोभनायचसादत्ताचंद्रसेनसुतायवै ७
सकदाचित्समायातःश्वशुरस्यगृहेनृप
एकादशीव्रतदिनंसमायातंसुपुण्यदम् ८
समागतेव्रतदिनेचंद्रभागात्वचिंतयत्
किंभविष्यतिदेवेशममभर्त्तातिदुर्बलः ९
क्षुधांनक्षमतेसोढुंपिताचैवोग्रशासनः
पटहस्ताड्यतेयस्यसंप्राप्तेदशमीदिने १०
नभोक्तव्यंनभोक्तव्यंनभोक्तव्यंहरेर्दिने
श्रुत्वापटहनिर्घोषंसोभनस्त्वब्रवीत्प्रियाम् ११
किंकर्त्तव्यंमयाकांतेदेहिशिक्षांवरानने
चंद्रभागोवाच –
मत्पितुर्वेश्मनिप्रभोभोक्तव्यंनाद्यकेनचित् १२
गजैरश्वैश्चकलभैरन्यैःपशुभिरेव च
तृणमन्नंतथावारिनभोक्तव्यंहरेर्दिने १३
मानवैश्चकुतःकांतभुज्यतेहरिवासरे
यदित्वंभोक्ष्यसेकांतततोगर्हांप्रयास्यसि १४
एवंविचार्यमनसासुदृढंमानसंकुरु
शोभनउवाच–

सत्यमेतत्प्रियेवाक्यंकरिष्येऽहमुपोषणम् १५
दैवेनविहितंयद्धितत्तथैवभविष्यति
इतिदृढांमतिंकृत्वाचकारनियमंव्रते १६
क्षुधयापीडिततनुःसबभूवातिदुःखितः
इतिचिंतयतस्तस्यआदित्योऽस्तमगाद्गिरिम् १७
वैष्णवानांनराणांसानिशाहर्षविवर्द्धनी
हरिपूजारतानांचजागरासक्तचेतसाम् १८
बभूवनृपशार्दूलशोभनस्यातिदुःखदा
रवेरुदयवेलायांशोभनःपंचतांगतः १९
दाहयामासराजातंराजयोग्यैश्चदारुभिः
चंद्रभागानात्मदेहंददाहपतिनासह २०
कृत्वौर्द्ध्वदैहिकंतस्यतस्थौजनकवेश्मनि
शोभनश्चनृपश्रेष्ठरमाव्रतप्रभावतः २१
प्राप्तोदेवपुरंरम्यंमंदराचलसानुनि
अनुत्तममनाधृष्यमसंख्येयगुणान्वितम् २२
हेमस्तंभमयैसौधैरत्नवैडूर्यमंडितैः
स्फाटिकैर्विविधाकारैर्विचित्रैरुपशोभितैः २३
सिंहासनसमारूढःसुश्वेतच्छत्रचामरः
किरीटकुंडलयुतोहारकेयूरभूषितः
स्तूयमानश्चगंधर्वैरप्सरोगणसेवितः २४
शोभनःशोभतेयत्रराजराजोपरोयथा
सोमशर्मेतिविख्यातोमुचुकुंदपुरेऽभवत् २५
तीर्थयात्राप्रसंगेनभ्रमन्विप्रोददर्शतम्
नृपजामातरंज्ञात्वातत्समीपंजगामसः २६
शोभनोऽपितदाज्ञात्वासोमशर्माणमागतम्
आसनादुत्थितःशीघ्रंनमश्चक्रेद्विजोत्तमम् २७
चकारकुशलप्रश्नंश्वशुरस्यनृपस्यच
कांतायाश्चंद्रभागायास्तथैवनगरस्यच २८
सोमशर्मोवाच-
कुशलंवर्त्ततेराजन्श्वशुरस्यगृहेतव

चंद्रभागाकुशलिनीसर्वतःकुशलंपुरे २९
स्ववृत्तंकथ्यतांराजन्नाश्चर्यंविद्यतेऽद्भुतम्
पुरंविचित्रंरुचिरंनदृष्टंकेनचित्क्वचित् ३०
एतदाचद्त्वनृपतेकुतःप्राप्तमिदंत्वया
शोभनउवाच-
कार्तिकस्यासितेपद्तेयानामैकादशीरमा ३१
तामुपोष्यमयाप्राप्तंद्विजेंद्रपुरमध्रुवम्
ध्रुवंभवतियेनैवतत्कुरुष्वद्विजोत्तमः ३२
द्विजउवाच-
कथमध्रुवमेतद्धिकथंहिभवतिध्रुवम्
तत्त्वंकथयराजेंद्रतत्करिष्यामिनान्यथा ३३
शोभनउवाच-
मयैतद्विहितंविप्रश्रद्धाहीनंव्रतोत्तमम्
तेनाहमध्रुवंमन्येध्रुवंभवतितच्छृणु ३४
मुचुकुंदस्यदुहिताचंद्रभागासुशोभना
तस्यैकथयवृत्तांतंध्रुवमेतद्भविष्यति ३५
कृष्णउवाच-
सश्रुत्वावचनंतस्यमुचुकुंदपुरंगतः
उवाचसर्ववृत्तांत्तंचंद्रभागाग्रतोद्विजः ३६
सोमशर्मोवाच -
प्रत्यद्तंदयितःकांतस्तवदृष्टोमयाशुभे
इंद्रतुल्यमनाधृष्यंदृष्टंतस्यपुरंमया
अध्रुवंतेनतत्प्रोक्तंध्रुवंभवतितत्कुरु ३७
चंद्रभागोवाच-
तत्रमांनयविप्रर्षेपतिदर्शनलालसाम्
आत्मनोव्रतपुरायेनकरिष्यामिपुरंध्रुवम् ३८
आवयोर्द्विजसंयोगोयथाभवतितत्कुरु
प्राप्यतेहिमहत्पुरायंकृत्वायोगंवियुक्तयोः ३९
इतिश्रुत्वासहतयासोमशर्माजगामह
आश्रमंवामदेवस्यमंदराचलसंनिधौ ४०

वामदेवोऽशृणोत्सर्ववृत्तांतंकथितंतयोः
अभ्यषिञ्चच्चन्द्रभागांवेदमंत्रैरथोज्ज्वलाम् ४१
ऋषिमंत्रप्रभावेनविष्णुवासरसेवनात्
दिव्यदेहाबभूवासौदिव्यांगतिमवापह ४२
पत्युःसमीपमगमत्प्रहर्षोत्फुल्ललोचना
जहर्षशोभनोऽतीवदृष्ट्वाकांतांसमागताम् ४३
समाहूयस्वकेवामेपार्श्वेतांसंन्यवेशयत्
अथोवाचप्रियंहर्षाच्चंद्रभागाप्रियंवचः ४४
शृणुकांतहितंवाक्यंयत्पुण्यंविद्यतेमयि
अष्टवर्षाधिकाजातायदाहंपितृवेश्मनि ४५
ततःप्रभृतियच्चीर्णंमयाचैकादशीव्रतम्
यथोक्तविधिसंयुक्तंश्रद्धायुक्तेनचेतसा
तेनपुण्यप्रभावेनभविष्यतिपुरंध्रुवम् ४६
सर्वकामसमृद्धंचयावदाभूतसंप्लवम्
एवंसानृपशार्दूलरमतेपतिनासह ४७
दिव्यभोगादिव्यरुपादिव्याभरणभूषिता
शोभनोऽपितयासार्द्धंरमतेदिव्यविग्रहः ४८
रमाव्रतप्रभावेनमंदराचलसानुनि
चिंतामणिसमाह्येषाकामधेनुसमाथवा ४९
रमाभिधानानृपतेतवाग्रेकथितामया
तस्यामाहात्म्यमनघश्रुतंसर्वंत्वयानृप ५०
मयातवाग्रेकथितंमाहात्म्यंपापनाशनम्
एकादशीव्रतानांचपक्षयोरुभयोरपि ५१
यथाकृष्णातथाशुक्लाविभेदंनैवकारयेत्
सेवितैकादशीनृणांभुक्तिमुक्तिप्रदायिनी ५२
धेनुःश्वेतायथाकृष्णाउभयोःसदृशंपयः
तथैवतुल्यफलदंस्मृतमेकादशीद्वयम् ५३
एकादशीव्रतानांयोमाहात्म्यंशृणुतेनरः
सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ५४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापति-

नारदसंवादेकार्तिककृष्णारमैकादशीनामषष्टितमोऽध्यायः ६०

एकषष्टितमोऽध्यायः

युधिष्ठिरउवाच-
श्रुतंरमायामाहात्म्यंत्वत्तःकृष्णयथातथम्
कार्तिकेशुक्लपक्षेयातांमेकथयमानद १
श्रीकृष्णउवाच-
शृणुराजन्प्रवक्ष्यामिशुक्लेचोर्जदलेतुया
सायथानारदेप्रोक्ताब्रह्मणालोककारिणा २
नारदउवाच -
प्रबोधिन्याश्चमाहात्म्यंवदविस्तरतोमम
यस्यांजागर्तिगोविंदोधर्मकर्मप्रवर्त्तकः ३
ब्रह्मोवाच-
प्रबोधिन्याश्चमाहात्म्यंपापघ्नंपुरायवर्द्धनम्
मुक्तिप्रदंसुबुद्धीनांशृणुष्वमुनिसत्तम ४
तावद्गर्जंतितीर्थानिआसमुद्रसरांसिच
यावत्प्रबोधिनीविष्णोस्तिथिर्नायातिकार्तिके ५
तावद्गर्जंतिविप्रेंद्रगंगाभागीरथीक्षितौ
यावन्नायातिपापघ्नीकार्तिकेहरिबोधिनी ६
अश्वमेधसहस्राणिराजसूयशतानिच
एकेनैवोपवासेनप्रबोधिन्यालभेन्नरः ७
यद्दुर्ल्लभंयदप्राप्यंत्रैलोक्यस्यनगोचरम्
तदप्यप्रार्थितंपुत्रंददातिहरिबोधिनी ८
एश्वर्यंसंपदंप्रज्ञांराज्यंचसुखसंपदः
ददात्युपोषिताभक्त्याजनेभ्योहरिबोधिनी ९
मेरुमन्दर मात्राणिवपापान्युक्तानियानि च
एकेनैवोपवासेनदहतेपापनाशिनी १०
पूर्वजन्मसहस्रेषुयत्पापंसमुपार्जितम्
निशिजागरणंचास्यादहतेतूलराशिवत् ११
उपवासंप्रबोधिन्यांयःकरोतिस्वभावतः

विधिवन्मुनिशार्दूलयथोक्तंलभतेफलम् १२
यथोक्तंकुरुतेयस्तुविधिवत्सुकृतंनरः
स्वल्पंमुनिवरश्रेष्ठमेरुतुल्यंभवेत्फलम् १३
विधिहीनंतुयःकुर्यात्सुकृतंमेरुमात्रकम्
अणुमात्रंतदाप्नोतिफलंधर्मस्यनारद १४
येध्यायंतिमनोवृत्यायेकरिष्यंतिबोधिनीम्
वसंतिपितरोहृष्टाविष्णुलोकेचतस्यवै १५
विमुक्तानारकैर्दुःखैर्यातिविष्णोःपरंपदम्
कृत्वातुपातकंघोरंब्रह्महत्यादिकंनरः १६
कृत्वातुजागरंविष्णोर्द्धौतपापोभवेन्नरः
दुष्प्राप्यंयत्फलंविप्रअश्वमेधादिकैर्मखैः १७
प्राप्यतेतत्सुखेनैवप्रबोधिन्यास्तुजागरे
आप्लुत्यसर्वतीर्थेषुप्रदत्त्वाकांचनंमहीम् १८
तत्फलंसमवाप्नोतियत्कृत्वाजागरंहरेः
जातःसएवसुकृतीकुलंतेनैवपावितम् १९
कार्तिकेमुनिशार्दूलकृतायेनप्रबोधिनी
यथाध्रुवंनृणांमृत्युर्धनंगात्रंतथाध्रुवम् २०
इतिज्ञात्वामुनिश्रेष्ठकर्तव्यंवैष्णवंदिनम्
यानिकानिचतीर्थानित्रैलोक्येसंभवंतिच २१
तानितस्यगृहेसम्यग्यःकरोतिप्रबोधिनीम्
किंतस्यबहुभिःपुण्यैःकृतायेनप्रबोधिनी २२
पुत्रपौत्रप्रदाह्येषाकार्तिकेहरिबोधिनी
सज्ञानीचसयोगीचसतपस्वीजितेंद्रियः २३
भोगोमोक्षश्चतस्यास्तिउपास्तेहरिबोधिनीम्
विष्णोःप्रियतराह्येषाधर्मसारसहायिनी २४
यःकरोतिनरोभक्त्याभुक्तिभाक्सभवेन्नरः
प्रबोधिनीमुपोषित्वागर्भेनविशतेनरः २५
सर्वधर्मान्परित्यज्यतस्मात्कुर्वीतनारद
कर्मणामनसावाचापापंयत्समुपार्जितम् २६
तत्क्षालयतिगोविंदःप्रबोधिन्यांतुजागरे

स्नानंदानंजपःपूजांसमुद्दिश्यजनार्दनम् २७
नरोयत्कुरुतेवत्सप्रबोधिन्यांतदक्षयम्
येर्चयंतिनरास्तस्यांभक्त्यादेवंचमाधवम् २८
समुपोष्यप्रमुच्यंतेपापैस्तैःशतजन्मजैः
महाव्रतमिदंपुत्रमहापापौघनाशनम् २९
प्रबोधवासरंविष्णोर्विधिवत्समुपोषयेत्
व्रतेनानेनदेवेशंपरितोष्यजनार्दनम् ३०
विराजयन्दिशःसर्वाःप्रयातिहरिमंदिरम्
कर्तव्यैषाप्रयत्नेननरैःकांतिधनार्थिभिः ३१
बाल्येयत्संचितंपापंयौवनेवार्द्धकेतथा
शतजन्मकृतंपापंस्वल्पंवायदिवाबहु ३२
तत्क्षालयतिगोविंदश्चास्यामभ्यर्चितोनृणाम्
धनधान्यवहापुरयासर्वपापहरापरा ३३
तामुपोष्यहरेर्भक्त्यादुर्ल्लभंनभवेत्क्वचित्
चंद्रसूर्योपरागेचयत्फलंपरिकीर्तितम् ३४
तत्सहस्रगुणंप्रोक्तंप्रबोधिन्यांप्रजागरे
स्नानंदानंजपोहोमःस्वाध्यायोऽभ्यर्चनंहरेः ३५
तत्सर्वंकोटिगुणितंप्रबोधिन्यांकृतंतुयत्
जन्मप्रभृतियत्पुरयंनरेणोपार्जितंभवेत् ३६
वृथाभवतितत्सर्वमकृत्वाकार्तिकेव्रतम्
अकृत्वानियमंविष्णोःकार्तिकंयःक्षिपेन्नरः ३७
नजन्मार्जितपुरयस्यफलंप्राप्नोतिनारद
तस्मात्सर्वप्रयत्नेनदेवदेवंजनार्दनम् ३८
उपसेवेतविप्रेंद्रसर्वकामफलप्रदम्
परान्नंवर्जयेद्यस्तुकार्तिकेविष्णुतत्परः ३९
परान्नवर्जनाद्वत्सचांद्रायणफलंलभेत्
नित्यंशास्त्रविनोदेनकार्तिकेमधुसूदनः ४०
सदहेत्सर्वपापानियज्ञायुतफलंलभेत्
नतथातुष्यतेयज्ञैर्नदानैर्वाजपादिभिः ४१
यथाशास्त्रकथालापैःकार्तिकेमधुसूदनः

येकुर्वंतिकथांविष्णोर्येश्शृण्वंतिशुभान्विताः ४२
श्लोकार्द्धंश्लोकपादंवाकार्तिकेगोशतंफलम्
सर्वधर्मान्परित्यज्यकार्तिकेकेशवाग्रतः ४३
शास्त्रावधारणंकार्यंश्रोतव्यंचमहामुने
श्रेयसालोभबुद्ध्याचयःकरोतिहरेःकथाम् ४४
कार्तिकेमुनिशार्दूलकुलानांतारयेच्छतम्
नियमेननरोयस्तुशृणुतेवैष्णवींकथाम् ४५
कार्तिकेतुविशेषेणगोसहस्रफलंलभेत्
प्रबोधवासरेविष्णोःशृणुतेयोहरेःकथाम् ४६
सप्तद्वीपवतीदानेतत्फलंलभतेमुने
श्रुत्वाविष्णुकथांदिव्यांयेऽचयंतिकथाविदम् ४७
स्वशक्त्यामुनिशार्दूलतेषांलोकोऽक्षयःस्मृतः
गीतशास्त्रविनोदेनकार्तिकंयोनयेन्नरः ४८
नतस्यपुनरावृत्तिर्मयादृष्टाकलिप्रिय
गीतंनृत्यंचवाद्यंचभव्यांविष्णुकथांमुने ४९
यःकरोतिसपुण्यात्मात्रैलोक्योपरिसंस्थितः
बहुपुष्पैर्बहुफलैःकर्पूरागुरुकुंकुमैः ५०
हरेःपूजाविधातव्याकार्तिकेबोधवासरे
यस्मात्पुण्यमसंख्यातंप्राप्यतेमुनिसत्तम ५१
फलैर्नानाविधैर्द्रव्यैःप्रबोधिन्यांतुजागरे
शंखेतोयंसमादायअर्घोदेयोजनार्दने ५२
यत्फलंसर्वतीर्थेषुसर्वदानेषुयत्फलम्
तत्फलंकोटिगुणितंदत्त्वार्घंबोधवासरे ५३
गुरुपूजाततःकार्याभोजनाच्छादनादिभिः
दक्षिणाभिश्चदेवर्षेतुष्ट्यर्थंचक्रपाणिनः ५४
भागवतंशृणुतेयस्तुपुराणंचपठेन्नरः
प्रत्यक्षरंभवेत्तस्यकपिलादानजंफलम् ५५
कार्त्तिकेमुनिशार्दूलस्वशक्त्यावैष्णवंव्रतम्
यःकरोतियथोक्तंतुमुक्तिस्तस्यसुनिश्चला ५६
केतक्याएकपत्रेणपूजितोगरुडध्वजः

समाःसहस्त्रंसुप्रीतोभवतिमधुसूदनः ५७
अगस्तिकुसुमैर्देवंपूजयेद्योजनार्दनम्
दर्शनात्तस्यदेवर्षेनरकाग्निःप्रणश्यति ५८
मुनिपुष्पार्चितोविष्णुःकार्तिकेपुरुषोत्तमः
ददात्यभिमतान्कामान्शशिसूर्यग्रहेयथा ५९
विहायसर्वपुष्पाणिमुनिपुष्पेणकेशवम्
कार्तिकेयोऽर्चयेद्भक्त्यावाजिमेधफलंलभेत् ६०
तुलसीदलानिपुष्पाणियेयच्छंतिजनार्दने
कार्तिकेसकलंवत्सपापंजन्मायुतंदहेत् ६१
दृष्टास्पृष्टाथवाध्याताकीर्तितानामतस्तुता
रोपितासिंचितानित्यंपूजितातुलसीशुभा ६२
नवधातुलसीभक्तिंयेकुर्वंतिदिनेदिने
युगकोटिसहस्त्राणितन्वंतिसुकृतंमुने ६३
यावच्छाखाप्रशाखाभिर्बीजपुष्पदलैर्मुने
रोपितातुलसीपुंभिर्वर्द्धतेवसुधातले ६४
तेषांवंशेतुयेजातायेभविष्यंतियेगताः
आकल्पवर्षसाहस्त्रंतेषांवासोहरेर्गृहे ६५
यत्फलंसर्वपुष्पेषुसर्वपत्रेषुनारद
तुलसीदलेनचैकेनकार्तिकेप्राप्यतेतुतत् ६६
संप्राप्तंकार्त्तिकंदृष्ट्वानियमेनजनार्दनः
पूजनीयोमहाविष्णुःकोमलैस्तुलसीदलैः ६७
इष्ट्वाक्रतुशतैर्देवान्दत्त्वादानान्यनेकशः
तुलसीदलैस्तुतत्पुण्यंकार्तिकेकेशवार्चने ६८
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेउमापति
नारदसंवादेकार्त्तिकेशुक्लैकादशीमाहात्म्यंनामैकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

युधिष्ठिरउवाच –
भगवञ्छ्रोतुमिच्छामिव्रतानामुत्तमंव्रतम्
सर्वपापहरंविष्णोःफलदंव्रतिनांचयत् १

पुरुषोत्तममासस्यकथांब्रूहिजनार्दन
कोविधिःकिंफलंतस्यकोदेवस्तत्रपूज्यते २
अधिमासेचसंप्राप्तेव्रतंब्रूहिजनार्दन
कस्यदानस्यकिंपुण्यंकिंकर्त्तव्यंनृभिःप्रभो ३
कथंस्नानंचकिंजाप्यंकथंपूजाविधिःस्मृतः
किंभोज्यमुत्तमंचान्नंमासेऽस्मिन्पुरुषोत्तमे ४
श्रीकृष्णउवाच-
कथयिष्यामिराजेंद्रभवतःस्नेहकारणात्
पुरुषोत्तममासस्यमाहात्म्यंपापनाशनम् ५
अधिमासेतुसंप्राप्तेभवेदेकादशीतुया
कमलानामसानाम्नातिथिनामुत्तमातिथिः ६
तस्याव्रतप्रभावेनकमलाभिमुखीभवेत्
ब्राह्मेमुहूर्त्तेचोत्थायसंस्मृत्यपुरुषोत्तमम् ७
स्नात्वाचैवविधानेननियमंकारयेद्व्रती
गृहेत्वेकगुणंजाप्यंनद्यांतुद्विगुणंस्मृतम् ८
गवांगोष्ठेसहस्रोर्ध्वमग्न्यागारेशतान्वितम्
शिवक्षेत्रेषुतीर्थेषुदेवतानांचसन्निधौ ९
लक्षंतुलस्याःसांनिध्येह्यनंतंविष्णुसन्निधौ
अवंत्यामभवत्कश्चिच्छिवशर्माद्विजोत्तमः १०
तस्यात्मजास्तुपंचासन्कनिष्ठोदोषवानभूत्
तदापित्रापरित्यक्तस्त्यक्तःस्वजनबांधवैः ११
कुकर्मणःप्रभावेनगतोदूरतरंवनम्
एकदादैवयोगेनतीर्थराजंसमागतः १२
क्षुत्क्षामोदीनवदनस्त्रिवेण्यांस्नानमाचरत्
मुनीनामाश्रमांस्तत्रविचिन्वन्क्षुधयार्दितः१३
हरिमित्रमुनेस्तत्रददर्शाश्रममुत्तमम्
पुरुषोत्तममासेवैजनानांचसमागमे १४
तत्राश्रमेकथयतांकथांकल्मषनाशिनीम्
ब्राह्मणानांमुखात्तेनश्रद्धयाकमलाश्रुता १५
एकादशीपुण्यतमाभुक्तिमुक्तिप्रदायिनी

जयशर्माविधानेनश्रुत्वेमांकमलातिथिम् १६
एकादशीपुरायतमाभुक्तिमुक्तिप्रदायिनी
व्रतंकृतंचतैःसार्द्धंस्थित्वाशून्यालयेतदा १७
निशीथेसमनुप्राप्तेलक्ष्मीस्तत्रसमागता
वरंददामिभोविप्रकमलायाःप्रभावतः १८
जयशर्मोवाच –
कात्वंकस्यासिरंभोरुप्रसन्नाचकथंमम
इंद्राणीसुरनाथस्यभवानीशंकरस्यवा १९
गंधर्वीकिन्नरीवाथवधूर्वाचंद्रसूर्ययोः
त्वत्सदृक्षानदृष्टाचनश्रुताचशुभानने २०
लक्ष्मीरुवाच–
प्रसन्नासांप्रतंजातावैकुंठादहमागता
प्रेरितादेवदेवेनकमलायाःप्रभावतः २१
पुरुषोत्तममासस्ययापक्षेप्रथमेभवेत्
तस्याव्रतंत्वयाचीर्णंप्रयागेमुनिसंनिधौ २२
व्रतस्यास्यप्रभावेनवशगाहंनसंशयः
तववंशेभविष्यंतिमानवाद्विजसत्तम २३
मत्प्रसादादवाप्स्यंतिसत्यंतेव्याहृतंमया
ब्राह्मणउवाच–
प्रसन्नायदिमेपद्मेव्रतंविस्तरतोवद २४
यत्कथासुप्रवर्तंतेसाधवोयेजनाद्विजाः
लक्ष्मीरुवाच–
श्रोतृणांपरमंश्राव्यंपवित्राणामनुत्तमम् २५
दुःस्वप्ननाशनंपुरायंश्रोतव्यंयत्नतस्ततः
उत्तमःश्रद्धयायुक्तःश्लोकंश्लोकार्द्धमेववा २६
पठित्वामुच्यतेसद्योमहापातककोटिभिः
मासानांपरमोमासःपक्षिणांगरुडोयथा २७
नदीनांचयथागंगातिथिनांद्वादशीतिथिः
अद्यापिनिर्जराःसर्वेभारतेजन्मलिप्सवः २८
तमर्चयंतिविविधानारायणमनामयम्

येयजंतिसदाभक्त्यादेवंनारायणंप्रभुम् २९
तानर्चयंतिसततंब्रह्माद्यादेवतागणाः
येऽपिनामपरायेचहरिकीर्त्तनतत्पराः ३०
हरिपूजापरायेचतेकृतार्थाःकलौयुगेः
शुक्लेवायदिवाकृष्णेभवेदेकादशीद्वयम् ३१
गृहस्थानांभवेत्पूर्वायतीनामुत्तरास्मृता
एकादशीद्वादशीचरात्रिशेषेत्रयोदशी
तत्रक्रतुशतंपुण्यंत्रयोदश्यांतुपारणे ३२
एकादश्यांनिराहारःस्थित्वाहमपरेऽहनि
भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत ३३
अमुंमंत्रंसमुच्चार्यदेवदेवस्यचक्रिणः
भक्तिभावेनतुष्टात्माउपवासंसमाचरेत् ३४
कुर्याद्देवस्यपुरतोजागरंनियतोव्रती
गीतैर्वाद्यैश्चनृत्यैश्चपुराणपठनादिभिः ३५
ततःप्रातःसमुत्थायद्वादशीदिवसेव्रती
स्नात्वाविष्णुंसमभ्यर्च्यविधिवत्प्रयतेंद्रियः ३६
पंचामृतेनसंस्नाप्यएकादश्यांजनार्दनः
द्वादश्यांचपयःस्नानाद्धरेःसारूप्यमश्नुते ३७
अज्ञानतिमिरांधस्यव्रतेनानेनकेशव
प्रसीदसन्मुखोभूत्वाज्ञानदृष्टिप्रदोभव ३८
एवंविज्ञाप्यदेवेशंदेवदेवंगदाधरम्
ब्राह्मणान्भोजयेद्भक्त्यातेभ्योदद्याच्चदक्षिणाम् ३९
ततःस्वबंधुभिःसार्द्धंनारायणपरायणः
कृत्वापंचमहायज्ञान्स्वयंभुंजीतवाग्यतः ४०
एवंयःप्रयतःकुर्यात्पुण्यमेकादशीव्रतम्
सयातिविष्णुभवनंपुनरावृत्तिदुर्ल्लभम् ४१
इत्युक्त्वाकमलातस्मैवरंदत्त्वातिरोदधे
सोऽपिविप्रोधनीभूत्वापितुर्गेहंसमागतः ४२
श्रीकृष्णउवाच-
एवंयःकुरुतेराजन्कमलाव्रतमुत्तमम्

शृणुयाद्वासरेविष्णोःसर्वपापैःप्रमुच्यते ४३
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापति-
नारदसंवादेपुरुषोत्तममासस्यकृष्णाकमलानामैकादशीनाम-

द्विषष्टिमोऽध्यायः ६२

त्रिषष्टितमोऽध्यायः
युधिष्ठिरउवाच -
श्रुतानिबहुधर्माणिव्रतानिचजगत्प्रभो
एकादशीसमंकिंजिच्छ्रुतंनैवजनार्दन १
पुनस्त्वेकादशींब्रूहिपापघ्नींपुण्यदायिनीम्
यांकृत्वामनुजोलोकेप्राप्नुयात्परमंपदम् २
श्रीकृष्णउवाच-
शुक्लेवायदिवाकृष्णेयदाचैकादशीभवेत्
नत्याज्याजगतीपालमोक्षसौख्यविवर्द्धनी ३
एकादशीकलौराजन्भवबंधविमोचनी
कामदासर्वकामानांपापानांपापहाभुवि ४
रविवारेऽथमांगल्येसंक्रमेवानृपोत्तम
एकादशीसदोपोष्यापुत्रपौत्रविवर्द्धनी ५
एकादशीव्रतंक्वापिनत्याज्यंविष्णुवल्लभैः
आयुःकीर्तिप्रदंनित्यंसंतानारोग्यवित्तदम् ६
मोक्षदंरूपदंराज्यंनित्यमेकादशीव्रतम्
येकुर्वंतिमहीपालश्रद्धयापरयायुताः ७
यथोक्तविधिनालोकेतेनराविष्णुरूपिणः
जीवन्मुक्तास्तुभूपालदृश्यंतेनात्रसंशयः ८
युधिष्ठिरउवाच-
जीवन्मुक्ताःकथंकृष्णविष्णुरूपाःकथंपुनः
पापरूपाश्चदृश्यंतेपरंकौतूहलंहिमे ९
श्रीकृष्णउवाच-
येचराजन्कलौभक्त्यानिर्जलंव्रतमुत्तमम्
एकादश्याःप्रकुर्वंतिविधिदृष्टेनकर्मणा १०

नकथंविष्णुरूपास्तेजीवन्मुक्ताःकथंनहि
सर्वपापहरंपुण्यंव्रतमेकादशीसमम् ११
नकिंचिद्विद्यतेराजन्सर्वकामप्रदंनृणाम्
एकाशनंदशम्यांचनंदायांनिर्जलंव्रतम् १२
पारणंचैवभद्रायांकृत्वाविष्णुसमानराः
श्रद्धावान्यस्तुकुरुतेकामदायाव्रतंशुभम् १३
वांछितंलभतेसोऽपिइहलोकेपरत्रच
पवित्रापावनीह्येषामहापातकनाशिनी १४
भुक्तिमुक्तिप्रदाचैवकर्तृणांनृपसत्तम
कामदायांविधानेनपूजयेत्पुरुषोत्तमम् १५
पुष्पधूपादिभिश्चैवनैवेद्यैर्विविधैस्तथा
कांस्यमांसमसूरांश्चचणकान्कोद्रवांस्तथा १६
शाकंमधुपरान्नंचपुनर्भोजनमैथुनम्
वैष्णवोव्रतकर्त्ताचदशम्यांदशवर्जयेत् १७
द्यूतंक्रीडांतथानिद्रांतांबूलंदंतधावनम्
परापवादंपैशून्यंस्तेयंहिंसांतथारतिम् १८
क्रोधंचवितथंवाक्यमेकादश्यांविवर्जयेत्
कांस्यंमांसंमसूरांश्चतैलंवितथभाषणम् १९
व्यायामंचप्रवासंचपुनर्भोजनमैथुनम्
वृषपृष्ठंपरान्नंचशाकंचद्वादशीदिने २०
अनेनविधिनाराजन्विहितायैश्चकामदा
रात्रौजागरणंकृत्वापूजितःपुरुषोत्तमः २१
सर्वपापविनिर्मुक्तास्तेयांतिपरमांगतिम्
पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत् २२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखण्डे उमापतिनारदसंवादेपुरुषोत्तममासस्यशुक्लाकामदानामैकादशीनाम-त्रिषष्टितमोऽध्यायः ६३

चतुःषष्टितमोऽध्यायः

नारदउवाच-

चातुर्मास्यांतुनियमायेकेचिद्भुविविश्रुताः
तानहंश्रोतुमिच्छामिकथयस्वमहेश्वर १
चातुर्मास्येहरौसुप्तेकर्त्तव्यंकिंजनार्दने
षड्रसानांपरित्यागेनखकेशविधारणे
अन्यैश्चनियमैःस्वामिन्यत्फलंतद्ब्रवीहिमे २
सूतउवाच–
एतच्छ्रुत्वात्वसौदेवःप्रहस्योत्फुल्ललोचनः
प्रोवाचतंद्विजवरंनारदंतपसान्निधिम् ३
महादेवउवाच–
शृणुत्वमिहदेवर्षेकथयामिसविस्तरम्
आषाढस्यसितेपक्षेएकादश्यामुपोषितः ४
चातुर्मास्यव्रतानीहगृह्णीयाद्भक्तिपूर्वकम्
भूमिशय्यासमारूढोयोगनिद्रांगतेहरौ ५
नयेतचतुरोमासान्यावद्भवतिकार्तिकी
प्रतिष्ठानप्रवर्त्तेततथायज्ञादिकाःक्रियाः ६
विवाहव्रतसंबंधअन्यन्माङ्गल्यकर्मच
भूपयानंतथायात्राअन्याश्चविविधाःक्रियाः ७
प्रसुप्तेचजगन्नाथेअच्युतेगरुडध्वजे
व्रतक्रियांचरेद्यस्तुतस्यव्रतफलंशृणु ८
अश्वमेधसहस्रैस्तुयत्फलंप्राप्नुयान्नरः
चातुर्मास्यव्रतैश्चीर्णैस्तत्फलंसमवाप्नुयात् ९
मिथुनस्थेसहस्रांशौस्वापयेन्मधुसूदनम्
तुलाराशौगतेसूर्येपुनरुत्थापयेद्धरिम् १०
अधिमासेतुपतितेतदाचैषविधिक्रमः
स्थापयेत्प्रतिमांविष्णोःशंखचक्रगदाधरीम् ११
पीतांबरधरांसौम्यांपर्यंकेस्थापयेत्शुचौ
श्वेतवस्त्रसमाच्छन्नेसोपधानेतुनारद १२
इतिहासपुराणज्ञोविष्णुभक्तोऽथवापुनः
स्नापयित्वादधिक्षीरमधुलाजघृतस्तथा १३
समालभ्यशुभैर्गंधैर्धूपैःपुष्पैर्मनोरमैः

पूजितांकुसुमैःशुभ्रैर्मंत्रेणानेनवाडव १४
सुप्तेत्वयिजगन्नाथेजगत्सुप्तंभवेदिदम्
विबुद्धेत्वयिबुध्येतजगत्सर्वंचराचरम् १५
एवंतांप्रतिमांविष्णोःस्थापयित्वातुनारद
तस्यैवाग्रेस्वयंवाचागृह्णीयान्नियमंततः १६
स्त्रीवानरोवातद्भक्तोधर्माधर्मविभागतः
चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि १७
गृह्णीयान्नियमानेतान्दंतधावनपूर्वकम्
उपवासंततःकृत्वाप्रभातेविमलेसति १८
नित्यंकर्मचरित्वातुविष्णोरग्रेजितात्मवान्
तेषांफलानिवक्ष्यामितत्कतॄणांपृथक्पृथक् १९
मधुरत्वंलभेद्विद्वान्पुरुषोगुडवर्जनात्
तथैवसंततिंदीर्घांतैलस्यवर्जनाद्यतः २०
घृतस्यवर्जनाद्विप्रसुंदरांगःप्रजायते
कटुतैलपरित्यागीशत्रुनाशमवाप्नुयात् २१
सुगंधतैलत्यागेनसौभाग्यमतुलंलभेत्
पुष्पभोगपरित्यागीस्वर्गेविद्याधरोभवेत् २२
योगाभ्यासीनरोयस्तुसब्रह्मपदमाप्नुयात्
कट्वम्लमधुरक्षारतीक्ष्णकाषायषड्रसान् २३
वर्जयेद्यस्तुवैरूप्यंदौर्गंध्यंनाप्नुयान्नरः
तांबूलवर्जनाद्भोगीरक्तकंठस्तुजायते २४
घृतत्यागाच्चलावण्यंसदास्निग्धतनुर्भवेत्
फलत्यागाच्चविपेंद्रबहुपुत्रश्चजायते २५
पलाशपत्राशनकृद्रूपवान्भोगवान्भवेत्
दीप्तिमान्दीप्तिकरणःसाक्षाद्द्रव्यपतिर्भवेत् २६
दधिदुग्धपरित्यागीगोलोकंलभतेनरः
मौनव्रतीभवेद्यस्तुतस्याज्ञाऽस्खलिताभवेत् २७
इंद्रासनमवाप्नोतिस्थालीपाकस्यवर्जनात्
एवमादिपरित्यागाद्धर्मस्थोधर्मनंदनः २८
नमोनारायणायेतिजप्त्वाशतगुणंफलम्

एकएवसवैस्वर्गेविद्याधरपतिर्भवेत् २९
पुष्करस्नानमात्रेणगंगायाःस्नानजंफलम् ३०
भूमौभुंक्तेसदायस्तुसपृथिव्यधिपोभवेत्
विष्णोश्चैवगृहेकुर्यादुपलेपनमार्जनम् ३१
कल्पस्थायीभवेद्विद्वन्वैकुंठेनात्रसंशयः
प्रदक्षिणंचयःकुर्याच्छतमष्टोत्तरंनरः ३२
हंसयुक्तविमानेनदिव्येनसहगच्छति
गीतवाद्यकरोविष्णोर्गांधर्वलोकमाप्नुयात् ३३
पंचगव्याशनोविद्वन्चांद्रायणफलंलभेत्
नित्यंशास्त्रविनोदेनलोकान्यस्तुप्रबोधयेत् ३४
सव्यासरूपीविष्णवग्रेततोविष्णुपदंलभेत्
तुलसीदलपूजांतुकृत्वाविष्णुपुरंव्रजेत् ३५
कृत्वाप्रोक्षणकंदिव्यंस्थानमप्सरसांलभेत्
शीतांबुनागृहेस्नानात्निर्मलंदेहमाप्नुयात् ३६
उष्णोदकंपरित्यज्यस्नानंवैपौष्करंलभेत्
पत्रेषुयोनरोभुंक्तेकुरुक्षेत्रफलंलभेत् ३७
भुंक्तेशिलायांयोनित्यंतस्यपुरायंप्रयागजम्
धर्मोदयजलत्यागीनरोगैःपरिभूयते ३८
ताम्रपात्रेषुभुंजानोनैमिषंफलमाप्नुयात्
कांस्यपात्रंपरित्यज्यशेषपात्रमुपाचरेत् ३९
अलाभेसर्वपात्राणांमृन्मयंपात्रमुत्तमम्
स्वगृहीतैःकृतैर्वापिपात्रैःपालाशसंभवैः ४०
यस्तुसंवत्सरंपूर्णअग्निहोत्रमुपासते
पात्रैर्वाभोजनंविद्वान्सेवतेतत्समंस्मृतम् ४१
चांद्रायणसमंप्रोक्तंब्रह्मपात्रेषुभोजने
एकैकंभोजनंविद्वन्ब्रह्मपत्रेषुभुंजतः ४२
त्रिरात्रेणसमंप्रोक्तंमहापातकनाशनम्
एकादश्युपवासेनयत्पुरायंपरिकीर्तितम् ४३
सर्वदानफलंचैवसर्वतीर्थफलंलभेत्
नचापिनरकंपश्येत्पद्मपत्रेषुभोजनात् ४४

ब्राह्मणोयातिवैकुंठेऽन्योजनःस्वर्गमाप्नुयात्
एषब्रह्ममहावृक्षःपापहासर्वकामदः ४५
मध्यमंवर्जितंपत्रंशूद्रजातेर्नृपोत्तम
भुंजन्नरकमाप्नोतियावदिंद्राश्चतुर्दश ४६
वर्जयेन्मध्यमंपत्रंशेषपत्रेषुभोजनम्
मध्यपत्रेचयःशूद्रोभोजनंकुरुतेद्विज ४७
कपिलांब्रह्मणेदत्त्वाशुद्धिर्भवतिनान्यथा
कपिलांदोहयेद्यस्तुशूद्रोभुंक्तेनिजेगृहे ४८
दशवर्षसहस्राणिविष्ठायांजायतेकृमिः
कृमियोनिविनिर्मुक्तःपशुयोनिमवाप्नुयात् ४९
कपिलंयोह्यनड्वाहंशूद्रोभूत्वात्रवाहयेत्
यावंतितस्यरोमाणितावद्वर्षाणिनारद ५०
कुंभीपाकेषुपच्येतसनरोनात्रसंशयः
अजाचैवगृहेतस्यशूद्रस्यचविशेषतः ५१
तस्यावैदुग्धपानेनशूद्रोयातीहरौरवम्
ब्राह्मणैःसहव्यापारोयस्यशूद्रस्यदृश्यते ५२
सविप्रोवेदबाह्यःस्याच्छूद्रःकौलिकउच्यते
व्यापारेप्रेरितोविप्रःशूद्राज्ञांचकरोतियः ५३
यावत्पदानिचलतेतावद्भवतिनारकी
उदकार्थंतुयोविप्रःशूद्रेणप्रेषितोगृहे ५४
तदुदकंमद्यतुल्यंपीत्वावैनरकंव्रजेत्
शूद्रेणसर्वदानित्यंदानंदेयंद्विजन्मने ५५
तेषांचैवतुवैभक्तिःकर्त्तव्याचविशेषतः
इहलोकेसुखंभुक्त्वापरलोकंचगच्छति ५६
पांचभौतिकमेतद्धिअनर्थकमुदाहृतम्
अतोदेयंहिगुरवेयतोऽनतफलंलभेत् ५७
अस्मिन्कलियुगेघोरेपापाचारेदुरात्मनः
निंदांकुर्वंतिविप्रेंद्रजनानांपुण्यकर्मणाम् ५८
निंदयालभतेदुःखंयावदाभूतसंप्लवम्
नानाधर्माःप्रवर्त्तंतेकलौचैवमहामते ५९

धर्मोऽयदुर्ल्लभोलोकेधर्मकामार्थमोक्षदः
भूमिशायीभवेद्यस्तुनरःकोऽपिमहीतले ६०
दशवर्षसहस्राणिनरोगैःपरिपीड्यते
बहुपुत्रोधनैर्युक्तोह्यकुष्ठीजायतेनरः ६१
नक्तभोजीनरोयस्तुतीर्थयात्राफलंलभेत्
अयाचितेनचाप्नोतिवापीकूपक्रियाफलम् ६२
वर्जयेद्यस्तुवैद्रोहंप्राणहिंसापराङ्मुखः
अहिंसापरमोधर्मइतिवेदेषुगीयते ६३
दानंदयादमइतिसर्वत्रहिश्रुतंमया
तस्मात्सर्वप्रयत्नेनकार्यंवैमहतामपि ६४
गुरवेयेप्रयच्छंतिशरीरंपुत्रपौत्रकम्
तत्रदानप्रभावेनविष्णोर्वल्लभतामियात् ६५
शूद्रेणदीक्षितोयस्तुशूद्रःशूद्रेणदीक्षितः
उभौतौपापिनौप्रोक्तौयावदाभूतसंप्लवम् ६६
हिंसामतिंयदादत्तेशूद्रोवैपापसत्तमः
एकविंशतिकुलंतेननरकंप्रतिपात्यते ६७
कलौपाखंडिनःशूद्राद्दृश्यंतेबहवोभुवि
तेषांसंभाषणादेवनरकोभवतिद्विज ६८
ब्रह्मज्ञानरतायेचगायत्रीजापिनोद्विज
तेषांदर्शनमात्रेणब्रह्महत्यादिनेदिने ६९
शंखचक्रधराविप्राविष्णुधर्मेषुसंमताः
वेदधर्मरतानित्यंपंक्तिपावनपावनाः ७०
चातुर्मास्यमिदंकर्मकर्त्तव्यंतैःसदानरैः
किमन्यद्बहुनोक्तेनभूयोभूयश्चवाडव ७१
तेधन्याःपृथिवीमध्येनरायेवैष्णवाभुवि
तेषांकुलंधन्यतमंजातिर्धन्यतमास्मृता ७२
मधुभक्षयतेयस्तुसुप्तेदेवेजनार्दने
महत्पापंभवेत्तस्यवर्जनेयच्छृणुष्वतत् ७३
सर्वयज्ञैश्चविविधैर्यत्फलंतदवाप्नुयात्
दाडिमंमातुलिगंचनालिकेरंचवर्जयेत् ७४

देवोवैमानिकोभूत्वाह्यंतेविष्णुपदंव्रजेत्
वित्तवान्सुभगश्चैवकुलेश्रीमतिजायते ७५
यःक्षिपेदेकभक्तेननरोमासचतुष्टयम्
यावंतिचमुहूर्तानिउदितोदितभास्करे ७६
तावद्वर्षसहस्राणिविष्णुलोकेमहीयते
व्रीहिंश्चयवगोधूमान्वर्जयेद्यस्तुमानवः ७७
अश्वमेधादिकेकृतेविधिवद्भूरिदक्षिणे
यत्फलंमुनिभिःप्रोक्तंतत्फलंलभतेनरः ७८
धनधान्यसमायुक्तोबहुपुत्रश्चजायते
तुलसीतिलदर्भैश्चयेकुर्वंतिचतर्पणम् ७९
तत्फलंकोटिगुणितंचातुर्मास्येविशेषतः
यदासुप्तेहृषीकेशेकुर्याच्चैतत्त्रयान्वितम् ८०
तेऽपियुगसहस्राणिमोदंतेविष्णुसंनिधौ
पदंवापदमर्द्धंवाऋचांचार्द्धऋचांतथा ८१
विष्णवग्रेयेप्रगायंतिमुक्तास्तेवैनसंशयः
मैथुनंवर्जयेद्यस्तुसुप्तेदेवेजनार्दने ८२
एकमन्वंतरंसोऽपिविष्णुलोकेमहीयते
दधिदुग्धंतथातक्रंगुडंशाकंतथैवच ८३
वर्जनादेवभोविप्रमुक्तिभागीनसंशयः
स्नानमामलकेनैवयेकुर्वंतिचमानवाः ८४
दिनेदिनेमहत्पुण्यंप्राप्नुवंतिचतेमुने
धात्रीफलंपापहरंप्रवदंतिमनीषिणः ८५
त्रैलोक्यतारणार्थायनिर्मिताब्राह्मणापुरा
संध्यामौनंचरेद्यस्तुभुंक्तेमासचतुष्टयम् ८६
मन्वंतराणिचत्वारिवैकुंठेमोदतेपुनः
स्वयंपाकीनरोयस्तुभुंक्तेमासचतुष्टयम् ८७
दशवर्षसहस्राणिइंद्रलोकेमहीयते
चतुरोवार्षिकान्मासान्मौनंचैवसमाचरेत् ८८
सचविष्णुपुरंगच्छेद्ब्रह्मंचतदनंतरम्
मौनभोजीनरोयस्तुकदाचिन्नावसीदति ८९

मौनेनभुंजमानास्तुराक्षसास्त्रिदिवंगताः
कृमिकीटसमायुक्तंपक्वान्नमशुचीभवेत् ९०
गवांमांससमंज्ञेयमन्नंचापिद्विजोत्तम
तदन्नमशुचिज्ञेयंग्रसतेमानुषोयदि ९१
एतद्वैभोजनंप्रोक्तंराक्षसानांप्रियंसदा
तोषितोहिपुराब्रह्मातेनदत्तंमहात्मना ९२
मौनेनभोजयित्वातुस्वर्गंप्राप्तानसंशयः
संजल्पन्भुंजतेयस्तुतेनान्नमशुचीभवेत् ९३
पापंसकेवलंभुंक्तेतस्मान्मौनंसमाचरेत्
उपवाससमंभोज्यंज्ञेयंमौनेननारद ९४
पंचप्राणाहुतीर्यस्तुमौनभोजीनरोत्तमः
पंचवैपातकान्यस्यनश्यंतिनात्रसंशयः ९५
नकुर्यात्संधितंवस्त्रंपितृकर्मणिवाडव
अशुच्यंगेस्थितंचैववस्त्रंतदशुचीभवेत् ९६
कटिपृष्ठस्थितेवस्त्रेपुरीषंकुरुतेतुयः
मूत्रंवामैथुनंवापितद्वस्त्रंपरिवर्जयेत् ९७
पितृकर्मविशेषेणवर्जनीयंचवाडव
सर्वदाचमुनेप्राज्ञैर्देवार्चाचक्रपाणिनः ९८
कर्त्तव्याचविशेषेणशुचिभिर्विजितेंद्रियैः
संप्रसुप्तेहृषीकेशतृणशाककुसुंभिकाः ९९
संधितानिचवस्त्राणिवर्जितानिप्रयत्नतः
चातुर्मास्येहरौसुप्तेयस्तुएतानिवर्जयेत् १००
नरकंनतुसंगच्छेत्यावदाभूतसंप्लवम्
मद्यंमांसंनभक्षेतशाशकंसौकरंतथा १०१
चातुर्मास्येविशेषेणसुप्तेदेवेजनार्दने
सोऽपिदेवत्वमाप्नोतिअहिंसानिरतोनरः १०२
मिथ्याक्रोधंतथारौद्रयंतथापर्वसुमैथुनम्
वर्जितंयेनविप्रेंद्रसोऽश्वमेधफलंलभेत् १०३
ब्रह्मचर्येप्रजावृद्धिरायुर्वृद्धिस्तथैवच
पुष्पंपत्रंफलंशय्याअभ्यंगंचविलेपनम् १०४

वृथादुग्धानिमांसंचमद्यंचपरिवर्जयेत्
चातुर्मास्येहरौसुप्तेनियतंयद्विवर्जितम् १०५
प्रथमंतत्तुदातव्यंब्राह्मणायनसंशयः
तद्धनंचाक्षयंविद्वन्प्रदत्तंयद्द्विजातये १०६
कोटिकोटिगुणंविप्रलभतेनात्रसंशयः
येनकेनापिविप्रेंद्रनियमेनार्चितोहरिः १०७
ददातिविष्णुभवनंनात्रकार्याविचारणा
चातुर्मास्येहरौसुप्तेनियमंयोनकारयेत् १०८
सोऽपिनरकमाप्नोतितस्यजन्मवृथागतम्
यत्पुमान्कारयेन्नित्यंद्विजोक्तंविधिमुत्तमम् १०९
तथोक्तान्नियमांश्चैवसयातिपरमंपदम्
त्रिवर्गरहितंदानंदत्तंभवतिनिष्फलम् ११०
तस्मात्सर्वप्रयत्नेनदेवदेवंजनार्दनम्
तोषयेन्नियमैर्दानैर्यथाशक्त्यानरोत्तमः १११
अकृतस्नानदानंचब्राह्मणानांचपूजनम्
वृथागतंतुतत्सर्वंयावदिंद्राश्चतुर्दश ११२
नारदउवाच-
कीदृशंब्रह्मचर्यंचवदविश्वेश्वरप्रभो
येनचीर्णेनगोविंदःपरितुष्टोभवेन्नृणाम् ११३
महादेवउवाच-
स्वदारनिरतश्चैवब्रह्मचारीस्मृतोबुधैः
चांडालादधिकोविद्वन्यःस्वभार्यांपरित्यजेत् ११४
ऋतावभिगमंकृत्वाब्रह्मचर्यंविधीयते
परित्यजतियोभार्यांभक्तांदोषविवर्जिताम् ११५
पापकर्मानरोलोकेभ्रूणहत्यामवाप्नुयात्
अश्वमेधसहस्राणिवाजपेयशतानिच ११६
एकादश्युपवासस्यकलांनार्हंतिषोडशीम्
स्नानंदानंजपोहोमःस्वाध्यायंदेवतार्चनम् ११७
चातुर्मास्यकृतंयच्चसर्वंहिचाक्षयंभवेत्
एककालंद्विकालंवापुराणंशृणुतेतुयः ११८

सर्वपापविनिर्मुक्तोविष्णुलोकंसगच्छति
हरौसुप्तेविशेषेणहरेर्नामपठन्जपन् ११९
तत्फलंकोटिगुणितंलभतेद्विजसत्तम
वैष्णवोब्राह्मणोयस्तुपूजनंयःकरोतिहि १२०
सएवसर्वधर्मात्मापूज्यएवनसंशयः
चातुर्मास्यमिदंपुरयंपवित्रंपापनाशनम्
श्रुत्वातुलभतेपुरयंगंगास्नानफलंलभेत् १२१

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्त्र्यांसंहितायामुमापतिनारद-
संवादेउत्तरखंडेचातुर्मास्यमहिमानामचतुःषष्टितमोऽध्यायः ६४

## पञ्चषष्टितमोऽध्यायः

नारदउवाच-
चातुर्मास्यव्रतानांचप्रब्रूह्युद्यापनंविभो
उद्यापनेकृतेसर्वंसंपूर्णंभवतिध्रुवम् १
महादेवउवाच-
व्रतंकृत्वामहाभागयदिनोद्यापनंचरेत्
यस्तुकर्त्ताकर्मणांसनसम्यक्फलभाक्भवेत् २
व्रतवैकल्यमासाद्यकुष्ठीचांधःप्रजायते
एतस्मात्कारणाच्चैवकुर्यादुद्यापनंद्विज ३
गृहीत्वानियमानेतान्पालयित्वायथाविधि
सुप्तोत्थितेजगन्नाथेगत्वाब्राह्मणसंनिधौ ४
क्षमापयेद्देवदेवंयथाविधिचविस्तरात्
तैलत्यागेघृतंदद्याद्घृतत्यागेपयःस्मृतम् ५
मौनेपिंडास्तिलादेयाःसहिररयाद्विजातये
भोजनेभोजनंदद्यात्दध्योदनसमन्वितम् ६
अन्नंदद्याद्विशेषेणहिररयेनसमन्वितम्
अन्नदानान्मुनिश्रेष्ठविष्णुलोकेमहीयते ७
पालाशपात्रेयोभुंक्तेनरोमासचतुष्टयम्
भाजनंघृतपूर्णंतुदद्यादुद्यापनेद्विज ८
षड्रसंभोजनंदद्याद्ब्राह्मणेनक्तभोजने

अयाचितेह्यनड्वाहंसहिरण्यंप्रदापयेत् ९
माषंत्यजन्मुनिश्रेष्ठगांचदद्यात्सवत्सकाम्
धात्रीस्नानेनरोदद्यात्स्वर्णमाषिकमेवच १०
फलानांनियमेचैवफलानिचप्रदापयेत्
धान्यानांनियमेधान्यमथवाशालयःस्मृताः ११
तद्वद्भूशयनेशय्यांसतूलांगेंदुकान्विताम्
ब्रह्मचर्यंकृतंयेनचातुर्मास्येद्विजोत्तम १२
दंपत्योर्भोजनंदेयमुभयोर्भक्तिपूर्वकम्
सभोगंदक्षिणोपेतंसशाकंलवणंतथा १३
नित्यस्नानेनरोदद्यान्निस्नेहेसर्पिःसक्तवः
नखकेशव्रतेचैवप्रादेशंपरिकल्पयेत् १४
उपानहौप्रदातव्यौउपानहविवर्जनात्
आमिषस्यपरित्यागात्सवत्साकपिलास्मृता १५
नित्यंदीपप्रदोयस्तुसौवर्णंदीपमावहेत्
तंदीपंघृतसंयुक्तंदद्याच्चैवद्विजन्मने १६
विष्णुभक्तायविप्रायपरिपूर्णव्रतेप्सया
शाकस्यनियमेशाकंमाषेसौवर्णमाषकम् १७
मैथुनानांतुनियमेरौप्यंदद्याद्द्विजातये
नागवल्ल्यास्तुनियमेकर्पूरंसहरिण्यकम् १८
कालेकालेद्विजश्रेष्ठयत्कृतंनियमेनतु
तत्तद्देयंविशेषेणपरलोकगतीप्सया १९
आदौस्नानादिकंकृत्वाविष्णोरग्रेप्रकाशयेत्
अनादिनिधनोदेवःशंखचक्रगदाधरः
तस्याग्रेकेनकुर्वंतियतोविष्णुस्तुपापहा २०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेउमापतिनारद
संवादेचातुर्मास्योद्यापनंनामपंचषष्टितमोऽध्यायः ६५

## षट्षष्ठितमोऽध्यायः

नारदउवाच-
यमस्याराधनंब्रूहिमद्धितार्थंसुरोत्तम

कथंनगम्यतेदेवनरेणनरकांतरे १
श्रूयतेयमलोकेतुसदावैतरणीनदी
अनाधृष्यात्वपाराचदुस्तराबहुशोणिता २
दुस्तरासर्वभूतानांसाकथंसुतराभवेत्
भयमेतन्महादेवयमलोकंप्रतिप्रभो ३
तस्यनिर्मोचनार्थायब्रूहिकृत्यमशेषतः
भगवन्देवदेवेशकृपांकृत्वाममोपरि ४
महादेवउवाच-
द्वारवत्यांपुराविप्रस्नातोऽहलवणांभसि
ददृशेमुनिमायांतंमुद्गलंनामवाडव ५
ज्वलंतमिवचादित्यंतपसाद्योततांगकम्
मांप्रणम्यमुनिःप्राहमुद्गलोविस्मयान्वितः ६
मुद्गलउवाच-
अकस्मान्मूर्च्छितोदेवपतितोऽस्मिधरातले
प्रज्वलंतिममांगानिगृहीतोयमकिंकरैः ७
बलादाकृष्यमाणोऽहपुरुषोंगुष्ठमात्रकः
बद्धोयमभटैर्गाढंनीतोऽस्मिशमनांतिकम् ८
क्षणात्सभायांपश्यामियमंपिंगललोचनम्
कृष्णमुखंमहारौद्रंमृत्युव्याधिशतान्वितम् ९
वातपित्तश्लेष्मदोषैर्मूर्तिमद्भिस्तुसेवितम्
कायशोषज्वरातंकस्फोटिकालूतकादिभिः १०
ज्वालांगमर्दशीर्षार्तिभगंदरबलक्षयैः
कंठमालाक्षिरोगैश्चमूत्रकृच्छ्रज्वरव्रणैः ११
विमूर्च्छिकागलग्राहहृद्रोगैर्भूततस्करैः
इत्थंबहुविधैरौद्रैर्नानारूपैर्भयंकरैः १२
कपालशिरोहस्तैश्चसंग्रामेनरकेतथा
राक्षसैर्दानवैर्घोरैरुपविष्टैःपुरःस्थितैः १३
धर्माधिकारिभिश्चात्रचित्रगुप्तादिलेखकैः
व्याघ्रसिंहवराहैश्चशिखासर्पैःसुदुर्द्धरैः १४
वृश्चिकैर्दंष्ट्रिभिर्भूतैःकीटकैर्मत्कुणादिभिः

वृकचित्रादिशुनकैःकंकैर्गृध्रैश्चजंबुकैः १५
तस्करैर्भूतदारिद्रैर्मारिभिर्डाकिनीग्रहैः
मुक्तकेशैःश्वासकासैर्भ्रुकुटीकुटिलाननैः १६
बृहत्प्रतापैर्नोभीतैःशासकैःपापकर्मणाम्
यमःसभायांशुशुभेसेव्यमानःपरिग्रहैः १७
भीमाटविकजीवैश्चयथाव्यालांजनोगिरिः
ततोविश्वेश्वरःप्राहसमयःकिंकरान्प्रति १८
नामभ्रांतैर्भवद्भिश्चसमानीतःकथंमुनिः
भीमकस्यात्मजोग्रामेकौंडिन्येमुद्गलाभिधः १९
क्षीणायुःक्षत्रियःसोऽस्तिश्चानेयोमुच्यतामसौ
श्रुत्वैतत्तेगतास्तस्मादायाताःपुनरेवते २०
धर्मराजंपुनःप्राहुःसर्वेतेयमकिंकराः
तत्रास्माभिर्गतैर्देहीक्षीणायुर्नोपलक्षितः २१
यमउवाच-
किंकारणमदृश्यास्तेप्रायेणभवतांनराः
सुकृताद्द्वादशीयैस्तुख्यातावैतरणीनदी २२
उज्जयिन्यांप्रयागेवायमुनायांचयेमृताः
तिलहस्तिहिरण्यादिदत्तंयैस्तुगवाह्निकम् २३
दूताऊचुः -
तद्व्रतंकीदृशंब्रह्मन्ब्रूहिसर्वमशेषतः
किंतत्रदेवकर्त्तव्यंपुरुषैस्तवतोषदम् २४
येनकृतानरश्रेष्ठद्वादशीकृष्णपक्षजा
उपवासेचतेनैवकथंपापात्प्रमुच्यते २५
तद्व्रतंकेनविधिनाकर्त्तव्यंचयथावद
सुप्रसन्नेनवक्तव्यंदयांकृत्वादयानिधे २६
श्रीमुद्गलउवाच-
दूतानांवचनंश्रुत्वाउवाचमधुरंतदा
सर्वंवदामिभोदूतायथादृष्टंयथाश्रुतम् २७
यमउवाच-
मार्गशीर्षादिमासेतुयाइमाःकृष्णपक्षजाः

तासुपूर्वासुविधिवद्दूतावैतरणीव्रतम् २८
प्रतिमासंचकर्त्तव्यंयावद्वर्षंभवेद्ध्रुवम्
यांतुकृत्वातुभोदूतामुच्यतेनात्रसंशयः २९
उपवासस्यनियमःकर्त्तव्योविष्णुतुष्टिदः
अद्यमेदेवदेवेशउपवासोभविष्यति ३०
द्वादश्यांपूज्यगोविंदंभक्तिभावसमन्वितम्
स्वप्नेंद्रियस्यवैकल्याद्भोजनंयच्चमैथुनम् ३१
तत्सर्वंक्षममेदेवकृपांकृत्वाममोपरि
एवंवैनियमंकृत्वामध्याह्नेतीर्थमाव्रजेत् ३२
मृद्गोमयतिलान्नीत्वागंतव्यंविधिपूर्वकम्
स्नानंतत्रप्रकर्तव्यंव्रतसंपूर्णहेतवे ३३
अश्वक्रांतेतिमंत्रेणस्नानंकुर्याद्विशेषतः
अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ३४
मृत्तिकेहरमेपापंयन्मयापूर्वसंचितम्
तयाहतेनपापेनसर्वपापैःप्रमुच्यते ३५
काश्यांचैवतुसंभूतास्तिलावैविष्णुरूपिणः
तिलस्नानेनगोविंदःसर्वपापंव्यपोहति ३६
विष्णुदेहोद्भवादेविमहापापापहारिणी
सर्वपापंहरत्वंवैसर्वेषांहिनमोऽस्तुते ३७
तुलसीपत्रकंधृत्वानामोच्चारणपूर्वकम्
स्नानंसुकृतिभिःप्रोक्तंकर्तव्यंविधिपूर्वकम् ३८
एवंस्नात्वासमुत्तीर्यपरिधायसुवाससी
तर्पयित्वापितृन्देवांस्ततोविष्णोस्तुपूजनम् ३९
संस्थाप्यचाव्रणंकुंभंपंचपल्लवसंयुतम्
पंचरत्नसमोपेतंदिव्यस्रग्गंधवासितम् ४०
जलपूर्णंसद्रव्यंचताम्रपात्रसमन्वितम्
तत्रस्थंश्रीधरंदेवंदेवदेवंतपोनिधिम् ४१
पूर्णेनविधिनाराजन्कुर्यात्पूजांगरीयसीम्
मृद्गोमयादिरचितंमंडलंकारयेच्छुभम् ४२
तंडुलैःशुक्लधौतैश्चअश्मपिष्टैश्चकारयेत्

धर्मराजःप्रकर्त्तव्योहस्ताद्यवयवान्वितः ४३
नदींवैतरणींताम्रांस्थापयित्वातदग्रतः
पूजयेच्चपृथक्सम्यक्समावाहनपूर्वकम् ४४
आवाहयामिदेवेशंयमंवैविश्वरूपिणम्
इहाभ्येहिमहाभागसान्निध्यंकुरुकेशव ४५
इदंपाद्यंश्रियःकांतसोपविष्टंहरेप्रभो
विश्वोद्यानरतोनित्यंकृपांकुरुममोपरि ४६
भूतिदायनमःपादावशोकायचजानुनी
उरूनमःशिवायेतिविश्वमूर्तेनमःकटिम् ४७
कंदर्पायनमोमेढ्रमादित्यायफलंतथा
दामोदरायजठरंवासुदेवायवैस्तनौ ४८
श्रीधरायमुखंकेशान्केशवायेतिवैनमः
पृष्ठंशार्ङ्गधरायेतिचरणौवरदायच ४९
स्वनाम्नाशंखचक्रासिगदापरशुपाणये
सर्वात्मनेनमस्तुभ्यंशिरइत्यभिधीयते ५०
मत्स्यंकूर्मंचवाराहंनारसिंहंचवामनम्
रामंरामंचकृष्णंचबुधंकल्किंनमोऽस्तुते५१
सर्वपापौघनाशार्थंपूजयामिनमोनमः
एभिश्चसर्वशोमंत्रैर्विष्णुंध्यात्वाप्रपूजयेत् ५२
धर्मराजनमस्तेऽस्तुधर्मराजनमोऽस्तुते
दक्षिणाशापतेतुभ्यंनमोमहिषवाहन ५३
चित्रगुप्तनमस्तुभ्यंविचित्रायनमोनमः
नरकार्तिप्रशांत्यर्थंकामान्यच्छममेप्सितान् ५४
यमायधर्मराजायमृत्यवेचांतकायच
वैवस्वतायकालायसर्वभूतक्षयायच ५५
वृकोदरायचित्रायचित्रगुप्तायवैनमः
नीलायचैवदध्नायनित्यंकुर्यान्नमोनमः ५६
एवंद्वादशभिःपूज्योनामभिर्धर्मराट्प्रभुः
वैतरणीसुदुःपारेपापघ्निसर्वकामदे ५७
इहाभ्येहिमहाभागेगृहाणार्घंमयाकृतम्

यमद्वारपथेघोरेख्यातावैतरणीनदी ५८
तस्यामुद्धरणार्थायजन्ममृत्युजरातिगा
यादुस्तरादुष्कृतिभिःसर्वप्राणिभयापहा ५९
यस्यांभयात्प्रमज्जंतिप्राणिनोयातनापराः
तर्तुकामस्तुतांघोरंजयादेविनमोनमः ६०
तस्यांदेवाधितिष्ठंतियासावैतरणीनदी
साचापिपूजिताभक्त्याप्रीत्यर्थंकेशवस्यच ६१
यस्यास्तटेप्रविशंतिऋषयःपितरस्तथा
साचापिसिंधुरूपेणपूजितापापहारिका ६२
तरीतुंतांप्रदास्यामिसर्वपापविमुक्तये
पुण्यार्थंसंप्रवक्ष्यामितुभ्यंवैतरणीनदीम् ६३
मयासिपूजिताभक्त्याप्रीत्यर्थंकेशवस्यच
कृष्णाकृष्णजगन्नाथसंसारादुद्धरस्वमाम् ६४
नामग्रहणमात्रेणसर्वंपापंहरस्वमे
यज्ञोपवीतंपरमंकारितंनवतंतुभिः ६५
प्रतिगृह्णीष्वदेवेशप्रीतोयच्छममेप्सितम्
इदंतवचतांबूलंयथाशक्त्यासुशोभनम् ६६
प्रतिगृह्णीष्वदेवेशमामुद्धरभवार्णवात्
पंचवर्तीप्रदीपोऽयदेवेशारार्तिकंतव ६७
मोहांधकारद्युमणेभक्तियुक्तोभवार्तिहृत्
परमान्नंसुपक्वान्नंसमस्तरससंयुतम् ६८
निवेदितंमयाभक्त्याभगवन्प्रतिगृह्यताम्
द्वादशाक्षरमंत्रेणयथासंख्यजपेनच ६९
प्रीयतांमेश्रियःकांतःप्रीतोयच्छतुवांछितम्
पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ ७०
तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः
गांसंपूज्यविधानेनअर्घ्यंदद्यात्समाहितः ७१
सर्वकामदुघेदेविसर्वांतकनिवारिणी
आरोग्यंसंततिंदीर्घां देहिनंदिनिमेसदा ७२
पूजिताचवसिष्ठेनविश्वामित्रेणधीमता

कपिलेहरमेपापंयन्मयापूर्वसंचितम् ७३
गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः
नाकेमामुपतिष्ठंतुहेमशृंगीपयोमुचः ७४
सुरभ्यःसौरभेयाश्चसरितःसागरायथा
सर्वदेवमयेदेविसुभद्रेभक्तवत्सले ७५
एवंसंपूज्यविधिवद्दद्याद्गोषुगवाह्निकम्
सौरभेयःसर्वहिताःपवित्राःपापनाशनाः ७६
प्रतिगृह्णंतुमेग्रासंगावस्त्रैलोक्यमातरः
गंगदायैनमोभूत्यैसर्वपापप्रहाणये ७७
अनेनैवतुमंत्रेणगदांवैधारयेद्बुधः
पंनमःपद्मनाभायपद्मंवैधारयेत्सुधीः ७८
चंचक्ररूपिणेविष्णोधारणंचक्रजंस्मृतम्
शंशंखरूपिणेतुभ्यंनमोऽस्तुसुखकारिणे ७९
मंत्रेणानेनवैदूताधारणंशंखजंस्मृतम्
चतुर्णामायुधानांतुधारणंमुनिभिःस्मृतम् ८०
अग्निहोत्रंयथानित्यंवेदस्याध्ययनंतथा
ब्राह्मणस्यतथैवेदंतप्तमुद्रादिधारणम् ८१
चंदनेनसुगंधेनगोपिकाचंदनेनतु
धारणंचविशेषेणब्राह्मणैर्वेदपारगैः ८२
चांडालोऽपिभवेच्छुद्धोधारणाच्चनसंशयः
ऊर्ध्वपुंड्रमृजुंसौम्यंसचिह्नंधारयेद्यदि ८३
सचांडालोऽपिशुद्धात्मापूज्यएवसदाद्विजैः
चांडालानांगृहेदूतास्तुलसीयत्रदृश्यते ८४
तत्रत्यातुलसीग्राह्याभक्तिभावेनचेतसा ८५

इति श्रीपाद्मेमहापुराणेउत्तरखंडेपंचपंचाशत्साहस्र्यांसंहितायामुमापतिनारदसंवादेयमाराधनंनामषट्षष्टितमोऽध्यायः ६६

## सप्तषष्ठितमोऽध्यायः

महेश्वरउवाच-
इतिश्रुतंधर्ममुखान्मुद्गलोद्विजसत्तमः

कथयित्वाममाग्रेवैगतोयादृच्छिकोमुने १
गोपिकाचंदनंयत्रतिष्ठतेवैद्विजोत्तम
तद्गृहंतीर्थरूपंचविष्णुनाभाषितंकिल २
शोकमोहौनतत्रास्तांनभवत्यशुभंक्वचित्
गोपिकाचंदनंयस्यतिष्ठतिद्विजसद्मनि ३
सुखिनःपूर्वजास्तेषांसंततिर्वर्द्धतेसदा
गोपिकाचंदनंयस्यवर्त्ततेऽहर्निशंगृहे ४
गोपीपुष्करजामृत्स्नापवित्राकायशोधिनी
उद्वर्त्तनाद्विनश्यंतिव्याधयोह्याधयश्चये ५
अतोदेहेधृतंपुंभिर्मुक्तिदंसर्वकामिकम्
तावद्गर्जंतितीर्थानितावत्क्षेत्राणिसर्वदा ६
गोपिकाचंदनंयावन्नदृष्टंनश्रुतंद्विज
इदंध्येयमिदंपूज्यंमलदोषविनाशनम् ७
यस्यसंस्पर्शनादेवपूतोभवतिमानवः
अंतकालेतुमर्त्यानांमुक्तिदंपावनंपरम् ८
किंवदामिद्विजश्रेष्ठमुक्तिदंगोपिचंदनम्
विष्णोस्तुतुलसीकाष्ठंतथावैमूलमृत्तिका ९
गोपिकाचंदनंचैवतथावैहरिचंदनम्
चत्वारिह्येतानिसंमील्यअंगमुद्वर्तयेत्सुधीः १०
तेनतीर्थंकृतंसर्वंजंबूद्वीपेषुसर्वदा
तिलकंकुरुतेयस्तुगोपिकाचंदनद्रवैः ११
सर्वपापविनिर्मुक्तोयातिविष्णोःपरंपदम्
पितुःश्राद्धादिकंतेनगयांगत्वातुवैकृतम् १२
येनवापुरुषेणापिविधृतंगोपिचंदनम्
मद्यपोब्रह्महाचैवगोघ्नोवाबालहातथा
मुच्यतेतत्क्षणादेवगोपीचंदनधारणात् १३

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुमापतिनारदसंवादे-
गोपीचंदनमाहात्म्येसप्तषष्टितमोऽध्यायः ६७

अष्टषष्टितमोऽध्यायः

महेश्वरउवाच-

शृणुनारदवक्ष्यामिवैष्णवानांचलक्षणम् १
यच्छ्रुत्वामुच्यतेलोकोब्रहत्यादिपातकात्
तेषांवैलक्षणंयादृक्स्वरूपंयादृशंभवेत् २
तादृशंमुनिशार्दूलशृणुत्वंवच्मिसांप्रतम्
विष्णोरयंयतोह्यासीत्तस्माद्वैष्णवउच्यते ३
सर्वेषांचैववर्णानांवैष्णवःश्रेष्ठउच्यते
येषांपुण्यतमाहारस्तेषांवंशेतुवैष्णवः ४
क्षमादयातपःसत्यंयेषांवैतिष्ठतिद्विज
तेषांदर्शनमात्रेणपापंनश्यतितूलवत् ५
हिंसाधर्माद्विनिर्मुक्तायस्यविष्णौस्थितामतिः
शंखचक्रगदापद्मंनित्यंवैधारयेत्तुयः ६
तुलसीकाष्ठजांमालांकंठेवैधारयेद्यतः
तिलकानिद्वादशधानित्यंवैधारयेद्बुधः ७
धर्माधर्मंतुजानातियःसवैष्णवउच्यते
वेदशास्त्ररतोनित्यंनित्यंवैयज्ञयाजकः ८
उत्सवांश्चचतुर्विंशत्कुर्वंतिचपुनःपुनः
तेषांकुलंधन्यतमंतेषांवैयशउच्यते ९
तेवैलोकेधन्यतमाजाताभागवतानराः
एकएवकुलेयस्यजातोभागवतोनरः १०
तत्कुलंतारितंतेनभूयोभूयश्चवाडव
अंडजाउद्भिजाश्चैवयेजरायुजयोनयः ११
तेतुसर्वेऽपिविज्ञेयाःशंखचक्रगदाधराः
येषांदर्शनमात्रेणब्रह्महाशुद्ध्यतेसदा १२
किंतुवक्ष्यामिदेवर्षेतेभ्योधन्यतमाभुवि
वैष्णवायेतुदृश्यंतेभुवनेऽस्मिन्महामुने १३
तेवैविष्णुसमाश्चैवज्ञातव्यास्तत्वकोविदैः
कलौधन्यतमालोकेश्रुतामेनात्रसंशयः १४
विष्णोःपूजाकृतातेनसर्वेषांपूजनंकृतम्

महादानंकृतंतेनपूजितायेनवैष्णवाः १५
फलंपत्रंतथाशाकमन्नंवावस्त्रमेवच
वैष्णवेभ्यःप्रयच्छंतितेधन्याभुविसर्वदा १६
अर्चितोवैष्णवोयैस्तुसर्वेषांचैवपूजनम्
कृतंयैरर्चितोविष्णुस्तेवैधन्यतमामताः १७
तेषांदर्शनमात्रेणशुद्ध्यतेपातकान्नरः
किमन्यद्बहुनोक्तेनभूयोभूयश्चवाडव १८
अतोवैदर्शनंतेषांस्पर्शनेसुखदायकम्
यथाविष्णुस्तथाचायंनांतरंवर्ततेक्वचित् १९
इतिज्ञात्वातुभोवत्ससर्वदापूजयेद्बुधः
एकएवतुयैर्विप्रोवैष्णवोभुविभोज्यते
सहस्रंभोजितंतेनद्विजानांनात्रसंशयः २०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापतिनारद
संवादेवैष्णवमाहात्म्यंनामअष्टषष्टितमोऽध्यायः ६८

एकोनसप्ततितमोऽध्यायः

नारदउवाच-
उपवासासमर्थानांसदैवामरसत्तम
एकायाद्वादशीपुण्यातांवदस्वममानघ १
शिवउवाच-
मासिभाद्रपदेशुक्लेद्वादशीश्रवणान्विता
सावैसर्वप्रदापुण्याह्युपवासेमहाफला २
संगमेसरितःस्नात्वाद्वादशींतामुपोषितः
अयत्नात्समवाप्नोतिद्वादशद्वादशीफलम् ३
बुधश्रवणसंयुक्तायाचवैद्वादशीभवेत्
अतीवमहतीतस्यांकृतंसर्वमथाक्षयम् ४
द्वादशीश्रवणोपेतायदाभवतिनारद
संगमेसरितांस्नात्वालभेद्गोदानजंफलम् ५
जलपूर्णंतदाकुंभंस्थापयित्वाविचक्षणः
तस्योपरिन्यसेत्पात्रंस्थापयित्वाजनार्दनम् ६

ततस्तस्याग्रतोदेयंनैवेद्यंघृतपाचितम्
सोदकांश्चनवान्कुंभान्दद्याच्छक्त्याविचक्षणः ७
एवंसंपूज्यगोविंदंजागरंतत्रकारयेत्
प्रभातेविमलेस्नात्वासंपूज्यगरुडध्वजम् ८
पुष्पधूपादिनैवेद्यैःफलैर्वस्त्रैःसुशोभनैः
पुष्पांजलिततोदद्यान्मंत्रमेनमुदीरयेत् ९
नमोनमस्तेगोविंदबुधश्रवणसंयुत
अघौघसंक्षयंकृत्वासर्वसौख्यप्रदोभव १०
अन्नंतुब्राह्मणेपूतंवेदवेदांगपारगे
पुराणज्ञेविशेषेणविधिवत्संप्रदापयेत् ११
अनेनविधिनाचैवनद्यास्तीरेनरोत्तमः
सर्वंनिर्वर्त्तयेत्सम्यगेकचित्तरतोऽपिसन् १२
अत्राप्युदाहरंतीममितिहासंपुरातनम्
महत्यरण्येयद्वृत्तंभूमिदेवशृणुष्वतत् १३
यंश्रुत्वामानवोलोकेमहादुःखात्प्रमुच्यते
देशोदासरकोनामतस्यभागेचपश्चिमे १४
तत्रविद्वन्मरुर्देशःसर्वसत्वभयंकरः
सुतप्तसिकताभूमिर्यत्रदुष्टामहोरगाः १५
अल्पच्छायाद्रुमाकीर्णामृतप्राणिसमाकुला
शमीखदिरपालाशकरीरैःपीलुभिःसह १६
तत्रभीमाद्रुमगणाःकंटकैरचितादृढैः
जग्धप्राणजनाकीर्णायत्रभूर्दृश्यतेक्वचित् १७
तथापिजीवाजीवंतिसर्वेकर्मनिबंधनात्
नोदकंनोदकाधाराविद्वंस्तत्रबलाहकाः १८
पक्षांतरगतैःकैश्चिच्छिशुभिस्तृषितैःसमम्
उत्क्रांतजीविनोविप्रदृश्यंतेनुखगोत्तमाः १९
तस्मिंस्तथाविधेदेशेकश्चिद्दैववशाद्वणिक्
निजसार्थपरिभ्रष्टःप्रविष्टोमरुजांगले २०
बभ्रामोद्भ्रांतहृदयःक्षुत्तृट्भ्यांश्रमपीडितः
क्वग्रामःक्वजलंक्वाहंयास्यामिनबुबोधह २१

अथप्रेतान्ददर्शासौक्षुत्तृषाव्याकुलेंद्रियान्
उत्कटान्खलिनोभीमान्निर्मांसान्रौद्रदर्शनान् २२
प्रेतस्कंधसमारूढमेकंविकृतदर्शनम्
ददर्शबहुभिःप्रेतैःसमंतात्परिवारितम् २३
अगच्छमानमत्युग्रंप्रेतशब्दपुरःसरम्
प्रेतोऽपिदृष्ट्वातांघोरामटवीमागतंनरम् २४
प्रेतस्कंधान्महींगत्वातस्यांतिकमुपागमत्
प्रणिपत्यवणिक्श्रेष्ठमिदंवचनमब्रवीत् २५
अस्मिन्घोरतरेदेशेप्रवेशोभवतःकथम्
तमुवाचवणिक्धीमान्सार्थभ्रष्टस्यमेवने २६
प्रवेशोदैवयोगेनपूर्वकर्मकृतेनच
तृषामेबाधतेऽत्यर्थंक्षुधाचैवभृशंतथा २७
प्राणांतिकमनुप्राप्तंवचनंभ्रमतीवमे
अत्रोपायंनपश्यामिजीवेयंयेनकेनचित् २८
इत्येवमुक्तेप्रेतस्तंवणिजंवाक्यमब्रवीत्
फुल्लांशमींसमाश्रित्यप्रतीक्षत्वंमुहूर्त्तकम् २९
कृतातिथ्योमयापश्चाद्गमिष्यसियथासुखम्
एवमुक्तस्तथाचक्रेसवणिक्तृष्णयार्दितः ३०
मध्याह्नसमयेप्राप्तेप्रेतस्तंदेशमागतः
फुल्लांसवृक्षांशीतोदांवारिधानींमनोरमाम् ३१
दध्योदनसमायुक्तांवर्द्धमानेनसंयुताम्
अवतीर्यततःस्वन्नंप्रादादतिथयेतदा ३२
सतत्राशनमात्रेणपरंतृप्तित्वमागतः
वितृष्णोविज्वरश्चैवक्षणेनसमपद्यत ३३
ततश्चप्रेताःसंप्राप्ताःसोऽस्माद्भागंक्रमाद्ददौ
दध्योदनात्सपानीयात्प्रेतास्तृप्तिंपरांगताः ३४
अतिथिंतर्पयित्वातुप्रेतलोकंचसर्वतः
ततःस्वयंसबुभुजेभुक्तशेषंयथासुखम् ३५
तस्यभुक्तवतःस्वन्नंपानीयंचक्षयंययौ
प्रेताधिपंततस्तंवैवणिग्वचनमब्रवीत् ३६

आश्चर्यमेतत्परमंवनेऽस्मिन्प्रतिभातिमे
अन्नंपानंचपरमंसंप्राप्तंचकुतस्तव ३७
स्वल्पेनैवतथान्नेनत्वमेतांस्तुबहूनपि
अतर्पयःकथंत्वेतेनिर्मांसाभिन्नकुक्षयः ३८
कथमस्यांसुघोरायामटव्यांचकृतालयाः
तदेतत्संशयंछिंधिपरंकौतूहलंमम ३९
एवमुक्तःसवणिजाप्रेतोवचनमब्रवीत्
वाणिज्यसक्तस्यपुराजन्मातीतेममानघ ४०
सकलेनगरेनास्तिममान्योहिदुरात्मकः
धनलोभान्नकस्यापिदत्ताभिक्षामयातदा ४१
सखाचैवततश्चासीद्ब्राह्मणोगुणवान्मम
श्रावणद्वादशीयोगेमासिभाद्रपदेततः ४२
सकदाचिन्मयासार्द्धंतापींनामनदींययौ
तस्याश्चसंगमःपुण्योयत्रासीच्चंद्रभागया ४३
चंद्रभागाचंद्रसुतातापीचैवार्कनंदिनी
तयोःशीतोष्णसलिलेप्रविवेशसहद्विजः ४४
श्रवणद्वादशीयोगेनराश्चसमुपोषिताः
चंद्रभागासुतोयेनवारिधानींददुर्द्विजे ४५
दध्योदनयुतांसार्द्धंसंपूर्णैर्वर्द्धमानकैः
छत्रोपानद्युगंवस्त्रंप्रतिमांचतथाहरेः ४६
प्रददौविप्रमुख्येभ्योहरस्याग्रेमहामते
वित्तसंरक्षणार्थायतस्यास्तीरेव्रतेमया ४७
सोपवासेनदत्तैकावारिधानीमनोरमा
तत्कृत्वाहंगृहंप्राप्तःततःकालेनकेनचित् ४८
पंचत्त्वमहमासाद्यनास्तिक्यात्प्रेततांगतः
अस्यामटव्यांघोरायांयथाद्यहिकुलंतथा ४९
श्रवणद्वादशीयोगेवारिधान्यर्पितामया
सेयंमध्याह्नसमयेलभ्यतेचदिनेदिने ५०
ब्रह्मस्वरूपिणःसर्वेपापाःप्रेतत्वमागताः
परदारगताःकेचित्स्वामिद्रोहरताश्चये ५१

भूतप्रेतजरूपेणतेजाताह्यत्रमानवाः
देशेमरुस्थलेत्वस्मिन्ममैतेमित्रतांगताः ५२
अन्नयोभगवान्विष्णुःपरमात्मासनातनः
दीयतेयत्समुद्दिश्यह्यन्नयंतत्प्रकीर्तनम् ५३
अन्नयेनापिचान्नेनतृप्ताएतेपुनःपुनः
प्रेतत्वभावंदौर्बल्यंनविमुंचतिकर्हिचित् ५४
पूजयित्वाहमन्नैस्त्वामतिथिंसमुपस्थितम्
प्रेतभावाद्विनिर्मुक्तोयास्यामिपरमांगतिम् ५५
मयाविहीनाःकिंत्वेतेवनेऽस्मिन्भृशदारुणे
पीडामनुभविष्यंतिदारुणांकर्मयोनिजाम् ५६
एतेषांतुमहाभागममानुग्रहकाम्यया
प्रत्येकंनामगोत्राणिगृह्णीष्वलिखितानिच ५७
अस्तिकन्नागताचैवतवसंपुटिकाशुभा
हिमवंतमथासाद्यतत्रत्वंलप्स्यसेनिधिम् ५८
गयाशीर्षंततोगत्वाश्राद्धंकुरुमहामते
इत्याज्ञाप्यसवैप्रेतोवणिजंचयथासुखम् ५९
विसर्जयामासतदासवैप्रायात्समुत्सुकः
समासाद्यगृहंतत्रपश्चात्प्रायाद्धिमालयम् ६०
ततोदृष्टंनिधिंतत्रगृहीत्वाससमागतः
षष्ठांशंप्रतिगृह्याथगयाशीर्षंततोऽभ्यगात् ६१
तत्रगत्वागयायांसश्राद्धंकृत्वामहामतिः
प्रेतानांतुयथोद्दिष्टंश्राद्धंसम्यग्विधानतः ६२
प्रत्येकंनामगोत्राणिगृहीत्वापिंडमुत्सृजत्
यस्ययस्यभवेच्छ्राद्धंसकरोतिदिनेवणिक् ६३
ससतस्यतदास्वप्नेदर्शयत्यात्मनस्तनुम्
ब्रवीतिचमहाभागप्रसादाद्भवतोऽनघ ६४
प्रेतभावंमयात्यक्तंप्राप्तोऽस्मिपरमांगतिम्
एवंकृत्वाविधानेनगयाशीर्षंमहामनाः ६५
पश्चाज्जगामस्वगृहंविष्णुंध्यायन्पुनःपुनः
मासिभाद्रपदेप्राप्तेशुक्लपक्षेतथासुधीः ६६

श्रवणद्वादशीयोगेसंगमेसरितांपुनः
जगामसमहाबुद्धिःसर्वोपस्करसंयुतः ६७
संगमेसरितांस्नात्वाद्वादशींतामुपोषितः
तत्रस्नात्वापिदत्त्वातुपूजयित्वाजनार्दनम् ६८
अनंतरंब्राह्मणस्यह्युपहारांस्तदाददौ
शास्त्रोक्तेनापिविधिनाह्येकचित्तरतोऽपिसः ६९
निवर्त्तयामासतदावणिजोबुद्धिमान्सवै
वर्षेवर्षेतुसंप्राप्तेमासिभाद्रपदेतथा ७०
श्रवणद्वादशीयोगेसंगमेसरितांपुनः
एवंवैकृतवान्सर्वंविष्णुमुद्दिश्यसत्वरम् ७१
कालेनचातिमहतापंचत्वंसमुपागतः
अवापपरमंस्थानंदुर्लभंसर्वमानवैः ७२
क्रीडतेऽद्यापिवैकुंठेविष्णुदूतैःससेवितः
एवंकुरुत्वंभोब्रह्मन्श्रवणद्वादशीव्रतम् ७३
सर्वसौभाग्यदंचैवइहलोकेपरत्रच
सुबुद्धिजननंचैवसर्वपापहरंपरम् ७४
श्रवणद्वादशीयोगेयःकुर्याद्व्रतमीदृशम्
व्रतस्यास्यप्रभावेनविष्णुलोकंचगच्छति ७५

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापतिनारदसंवादेश्रवणद्वादशीव्रतनामैकोनसप्ततितमोऽध्यायः ६९

## सप्ततितमोऽध्यायः

नारदउवाच-
देवदेवजगन्नाथभुक्तिमुक्तिप्रदायक
कथयस्वसुरश्रेष्ठयेनदुःखंनपश्यति १
महेशउवाच-
शृणुवाडववक्ष्यामित्रिरात्रंसरितःशुभम्
येनचीर्णेननरकोमानवानांनजायते २
आयुरारोग्यमतुलंसौभाग्यंसुखसंपदम्
संतानंचाक्षयंप्राप्यस्वर्गलोकेमहीयते ३

आषाढमासिसंप्राप्तेनदीपूरेणसंयुता
सततंतोयसंस्थानेपुराणेसाचविश्रुता ४
वर्षर्तौघनसंपूर्णेकर्तव्यासाव्रतेनवा
तोयोघैःपरिपूर्णासासकलैःस्यान्नदीयदा ५
व्रतंत्रिरात्रमुद्दिश्यतदाकार्यंप्रयत्नतः
कृतंप्रतिपदाछंदःदर्शनंतुदिनत्रयम् ६
यथाप्राप्तंनदीपूरंस्त्रीभिस्तीरजलस्यतु
अथवातज्जलंकुंभेकृष्णेकृत्वागृहंनयेत् ७
प्रातःस्नायीतथानद्यांगत्वाअभ्यर्चयेत्सुधीः
त्रिरात्रस्योपवासस्ययथाशक्तोभवेद्द्विज ८
अशक्तश्चैकभक्तेनकुर्याच्चैवाप्युपोषणम्
दीपंदद्यादविछिन्नंप्रातःसायंचपूजनम् ९
महानदींसमुच्चार्यनाम्नाचवरुणंतथा
जलमूलेतुसंस्थाप्यकेशवंजलशायिनम् १०
नमोदेव्यैचगंगेतिगौतमीतिनदीतिच
सिंधोचैवचकावेरिसरस्वतिनमोऽस्तुते ११
तापीपयोष्णीपूर्णेतिमहेंद्रसुखदेतिच
काश्यपीगंडकीचैवसिंधुनद्यैनमोनमः १२
वरुणायनमस्तेऽस्तुजलवासहरिप्रिय
यादोनाथरसेशानकल्याणंदेहिमेसदा १३
गृहाणार्घंमयादत्तंदेहिमेवांछितंफलम्
कूष्मांडैर्नालिकेरैश्चफलैःकालोद्भवैःशुभैः १४
नैवेद्यंघृतपक्वंतुसरितःसंप्रकल्पयेत्
नमस्तेकेशवानंतजलशायिन्नमोऽस्तुते १५
परिपालयमामीशगोविंदवरदोभव
एवंपूजाप्रकर्तव्यायथाकालंक्रमेणतु १६
प्रार्थनाचोपचारैस्तुत्रिरात्रनियमःशुचिः
पारणेनतुसंपूज्यजलपात्रंसमाचरेत् १७
फलपुष्पैस्तथाविद्वन्स्त्रीभिर्बालैर्नरैरपि
गीतवादित्रसहितैर्नदीकुंभपरिप्लुतैः १८

जलेजलेसमास्थाप्यफलपुष्पैःप्रपूजयेत्
धान्यैर्नानाविधैश्चैवजलप्रद्वेपणैरपि १९
हास्यैर्गीतैश्चनृत्यैश्चगृहमागत्ययत्नतः
सप्तधान्यैःपूरितानिवंशपात्राणिपूजयेत् २०
सप्तवापंचवात्रीणियथाशक्त्याप्रपूरयेत्
त्रिरात्रंचनदीतोयंनपिबेद्धितमुल्लसन् २१
पारणेतुहविष्यान्नंहृतंवाह्यन्यथाभवेत्
कृतेस्नानार्चनेचैवनोपयोज्यंनदीजलम् २२
शुच्यन्नानिचभोज्यानिदापयत्त्रितयंतथा
सप्तैववंशपात्राणिसप्तवैमणिकास्तथा २३
हविष्यान्नंचभुंजीतकट्वम्लमधुवर्जितम्
माषान्नंचशिलापिष्टंयत्नेनपरिवर्जयेत् २४
एवंवर्षत्रयंकुर्याद्व्रतमेतद्द्विजोत्तम
वर्षत्रयेसमाप्यैवंतस्योद्यापनमाचरेत् २५
कृष्णांगांकृष्णवस्त्रांचतिलान्दद्याच्चनारद
दंपतीपरिदाप्यैवंसुवर्णंचापिशक्तितः २६
हैमंचवरुणंकुर्यानदीरूपेणनारद
मंडलंवारुणंचैवसर्वतोभद्रमेवच २७
कुंभंतत्रप्रतिष्ठाप्यसोपहारंप्रतिष्ठितम्
संपूज्यविधिवद्भक्त्याततोविप्रायदापयेत् २८
ब्राह्मणान्भोजयेच्छक्त्यायथावित्तानुसारतः
गुरवेर्चितशीलायसर्वशास्त्ररतायच २९
एवंकृतेतदाविद्वन्परिपूर्णंव्रतंभवेत्
सौभाग्यसुखसंपत्तिःसंततिश्चाद्वयाभवेत् ३०
नदुर्गतिमवाप्नोतिचिरंस्वर्गेमहीयते
देवपत्नीभिराचीर्णमृषिपत्नीभिरेवच ३१
नागसिद्धांगनाभिश्चव्रतमेतत्पुराकृतम्
नदीत्रिरात्रमतुलंकिमन्यच्छ्रोतुमिच्छसि
सौभाग्यंसंततिंचैवनिश्चयंप्राप्नुतेसदा ३२
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापतिनारद

संवादेनदीत्रिरात्रव्रतंनामसप्ततितमोऽध्यायः ७०

## एकसप्ततितमोऽध्यायः

ऋषयऊचुः -
सूतजीवचिरंसाधोत्वयातिकरुणात्मना
संवादोह्यद्भुतःप्रोक्तोयश्चासीन्नारदेशयोः १
भगवन्नाममहिमानारदेनमहात्मना
कीदृक्श्रुतःसमाख्याहिश्रद्धयाशृगवतांगुरो २
सूतउवाच-
शृगुध्वंमुनयःसर्वेपुरावृत्तंवदाम्यहम्
यस्मिञ्छ्रुतेद्विजश्रेष्ठाःकृष्णेभक्तिर्विवर्द्धते ३
एकदानारदोद्रष्टुंपितरंसुसमाहितः
जगाममेरुशिखरंसिद्धचारणसेवितम् ४
तत्रदेवंसमासीनंब्रह्माणंजगतांपतिम्
नमस्कृत्याब्रवीद्विप्रानारदोमुनिसत्तमः ५
नारदउवाच-
नाम्नोऽस्ययावतीशक्तिर्वदविश्वेश्वरप्रभो
कीदृक्तुनाममहिमाअव्ययस्यमहात्मनः ६
योऽयविश्वेश्वरःसाक्षादयंनारायणोहरिः
परमात्माहृषीकेशःसर्वजीवेषुसंगतः ७
मायाविमोहिताःसर्वेभगवंतमधोक्षजम्
नैवजानंत्यसारेऽस्मिन्नरामूढाःकलौयुगे ८
ब्रह्मोवाच-
अस्मिन्कलौविशेषेणनामोच्चारणपूर्वकम्
भक्तिःकार्यायथावत्सतथात्वंश्रोतुमर्हसि ९
दृष्टंपरेषांपापानामनुक्तानांविशोधनम्
विष्णोर्जिष्णोःप्रयत्नेनस्मरणंपापनाशनम् १०
मिथ्याज्ञात्वाततःसर्वंहरेर्नामपठन्जपन्
सर्वपापविनिर्मुक्तोयातिविष्णोःपरंपदम् ११
येवदंतिनरानित्यंहरिरित्यक्षरद्वयम्

तस्योच्चारणमात्रेणविमुक्तास्तेनसंशयः १२
प्रायश्चित्तानिसर्वाणिकृष्णानुस्मरणंपरम्
प्रातर्निशितथासायंमध्याह्नादिषुसंस्मरन् १३
नारायणमवाप्नोतिसद्यःपापक्षयंनरः
विष्णुसंस्मरतादेवसमस्तक्लेशसंक्षये १४
मुक्तिंप्रयातिस्वर्गाप्तिस्तस्यविष्णोस्तुकीर्त्तनात्
वासुदेवेमनोयस्यजपहोमार्चनादिषु १५
तदक्षयंविजानीयाद्यावदिंद्राश्चतुर्दश
क्वनाकपृष्ठगमनंपुनरावृत्तिलक्षणम् १६
क्वजपोवासुदेवस्यमुक्तिबीजमनुत्तमम्
तन्मुखंपरमंतीर्थंयत्रावर्त्तंवितन्वती १७
नमोनारायणायेतिभातिप्राचीसरस्वती
तस्मादहर्निशंविष्णुस्मरणात्पुरुषोत्तमः १८
नयातिनरकंपुत्रसंक्षीणकलिकल्मषः
सत्यंसत्यंपुनःसत्यंभाषितंममसुव्रत १९
नामोच्चारणमात्रेणमहापापात्प्रमुच्यते
रामरामेतिरामेतिरामेतिचपुनर्जपन् २०
सचांडालोऽपिपूतात्माजायतेनात्रसंशयः
कुरुक्षेत्रंतथाकाशीगयावैद्वारिकातथा २१
सर्वंतीर्थंकृतंतेननामोच्चारणमात्रतः
कृष्णकृष्णेतिकृष्णेतिइतिवायोजपन्पठन् २२
इहलोकंपरित्यज्यमोदतेविष्णुसंनिधौ
नृसिंहेतिमुदाविप्रसततंप्रजपन्पठन् २३
महापापात्प्रमुच्येतकलौभागवतोनरः
ध्यायन्कृतेयजन्यज्ञैस्त्रेतायांद्वापरेऽचयन् २४
यदाप्नोतितदाप्नोतिकलौसंकीर्त्यकेशवम्
एतज्ज्ञात्वानिमग्नाश्चजगदात्मनिकेशवे २५
सर्वपापपरिक्षीणायांतिविष्णोःपरंपदम्
मत्स्यःकूर्मोवराहश्चनृसिंहोवामनस्तथा २६
रामोरामश्चकृष्णश्चबुद्धःकल्कीततःस्मृतः

एतेदशावताराश्चपृथिव्यांपरिकीर्तिताः २७
एतेषांनाममात्रेणब्रह्महाशुध्यतेसदा
प्रातःपठन्जपन्ध्यायन्विष्णोर्नामयथातथा २८
मुच्यतेनात्रसंदेहःसवैनारायणोभवेत्
सूतउवाच-
श्रुत्वावैनारदोह्येतद्विस्मयंपरमंगतः २९
उवाचपितरंतत्रकिमुक्तंदेवसत्तम
देवाःसहस्रशःसंतिरुद्राःसंतिसहस्रशः ३०
पितरःसंतिशतशःयक्षाश्चकिन्नरास्तथा
भूताःप्रेताःपिशाचाश्चयेकेचिद्देवयोनयः ३१
तेषांनाम्नाचमाहात्म्यंश्रुतंदृष्टंतथानच
श्रीविष्णोर्नाममाहात्म्यंयादृशंचश्रुतंमया ३२
यस्यवैनाममात्रेणमुच्यतेनात्रसंशयः
किंवैतीर्थकृतेदेवपृथिव्यामटनेकृते ३३
यस्यवैनाममहिमाश्रुत्वामोक्षमवाप्नुयात्
तन्मुखंतुमहत्तीर्थंतन्मुखंक्षेत्रमेवच ३४
यन्मुखेरामरामेतितन्मुखंसर्वकामिकम्
कानिवैतस्यनामानिकतिवीर्याणिसुव्रत ३५
तत्सर्वंचविशेषेणममब्रूहिपितामह
ब्रह्मोवाच-
व्यापकोऽयसदाविष्णुःपरमात्मासनातनः ३६
अनादिनिधनःश्रीमान्भूतात्माभूतभावनः
यस्मादहंहिसंजातोसोऽयविष्णुःसदावतु ३७
सोऽयकालस्यकालोवैसोऽयममतुपूर्वजः
अक्षयःपुंडरीकाक्षोमतिमानव्ययःपुमान् ३८
शेषशायीसदाविष्णुःसहस्रशीर्षामहत्प्रभुः
सर्वभूतमयःसाक्षाद्विश्वरूपोजनार्दनः ३९
कैटभारिरयंविष्णुर्धातादेवोजगत्पतिः
तस्याहंनामगोत्रंचनवेद्मिपुरुषर्षभ ४०
वेदवाद्यप्यहंतातनाहंज्ञाताकदाचन

अतस्त्वंगच्छदेवर्षेयत्रास्तिकिलविश्वराट् ४१
सचतत्त्वंमुनिश्रेष्ठसर्वंतेकथयिष्यति
सएवपुरुषःश्रीमान्कैलासाधिपतिःसदा ४२
सर्वेषांविष्णुभक्तानामयंश्रेष्ठःपरात्परः
पंचवक्त्रोह्युमाकांतःसर्वदुःखनिबर्हणः ४३
विश्वेश्वरोविश्वनाथःसर्वदाभक्तवत्सलः
तत्रगच्छसुरश्रेष्ठतत्सर्वंकथयिष्यति ४४
पितुर्वचनमाकर्ण्यतत्रगंतुंप्रचक्रमे
विज्ञातुंनाममाहात्म्यंकैलासभवनंप्रति ४५
यत्रविश्वेश्वरोदेवोनित्यंतिष्ठतिभूतिदः
ददर्शनारदस्तत्रदेवंतंसुरपूजितम् ४६
कैलासशिखरासीनंदेवदेवंजगद्गुरुम्
पंचवक्त्रंदशभुजंत्रिनेत्रंशूलपाणिनम् ४७
कपालिनंसखट्वांगंतीक्ष्णंशूलासिधारिणम्
पिनाकधारिणंभीमंवरदंवृषवाहनम् ४८
भस्मांगंव्यालशोभाढ्यंशशांककृतशेखरम्
नीलजीमूतसंकाशंसूर्यकोटिसमप्रभम् ४९
क्रीडंतंतत्रदेवेशंसाष्टांगंदंडवत्पुनः
तंदृष्ट्वातुमहादेवोविस्मयोत्फुल्ललोचनः ५०
वैष्णवानांपरःश्रेष्ठःप्राहवाडवसत्तमम्
कस्मादिहसमायातोवददेवर्षिसत्तम ५१
नारदउवाच–
एकस्मिन्नेवकालेतुगतोऽहब्रह्मणोंतिकम्
श्रुतंतत्रमयादेवविष्णोर्माहात्म्यमुत्तमम् ५२
ब्रह्मणाकथितंतत्रममाग्रेदेवसत्तम
नाम्नोऽस्ययावतीशक्तिःसाश्रुताब्रह्मणोमुखात् ५३
तत्रपृष्टंमयापूर्वंविष्णोर्नामसहस्रकम्
तदाहंब्रह्मणाचोक्तंनाहंजानामिनारद ५४
जानात्ययंमहारुद्रस्तत्सर्वंकथयिष्यति
महाश्चर्यंतुसंप्राप्यह्यागतस्तवसन्निधौ ५५

अस्मिन्कलियुगेघोरेऽल्पायुषश्चैवमानवाः
विधर्मेषुरतानित्यंनामनिष्ठानवैपुनः ५६
पाखंडिनस्तथाविप्राधर्मेषुविरताःसदा
संध्याहीनव्रतभ्रष्टादुष्टामलिनरूपिणः ५७
यथाविप्रास्तथाक्षत्रावैश्याश्चैवपुनःपुनः
एवंशूद्रास्तथान्येचनवैभागवतानराः ५८
शूद्राद्विजातिबाह्याश्चकलौविश्वेश्वरप्रभो
धर्माधर्मौनजानंतिहितंवाऽहितमेववा ५९
एवंज्ञात्वाह्यहंस्वामिन्नागतःसंनिधौतव
पुनश्चनाममाहात्म्यंश्रुतंवैब्रह्मणोमुखात् ६०
त्वंदेवःसर्वदेवानांत्वंनाथोममसर्वदा
त्रिपुरारिश्चविश्वात्माधातात्वंचपुनःपुनः ६१
कथयस्वप्रसादेनविष्णोर्नामसहस्रकम्
सौभाग्यजननंपुंसांपरंभक्तिकरंसदा ६२
ब्राह्मणानांब्रह्मदंचक्षत्रियाणांजयप्रदम्
वैश्यानांधनदंनित्यंशूद्राणांसुखदायकम् ६३
तदहंश्रोतुमिच्छामित्वत्सकाशान्महेश्वर
त्वंसमर्थोऽसिभक्तानांसर्वदाकेशवंप्रति ६४
कथयस्वप्रसादेनयदिगोप्यंनसुव्रत
इदंपवित्रंपरमंसर्वतीर्थमयंसदा ६५
अतोवैश्रोतुमिच्छामिवदविश्वेश्वरप्रभो
श्रुत्वानारदवाक्यानिविस्मयोत्फुल्ललोचनः ६६
रोमांचितस्ततोजातोविष्णोर्नामानिसंस्मरन्
ईश्वरउवाच-
एतद्गोप्यंपरंब्रह्मन्विष्णोर्नामसहस्रकम् ६७
एतच्छ्रुत्वानरोवत्सनलभेद्दुर्गतिंक्वचित्
कदाचिद्धगतेकालेपार्वतीमामुवाचह ६८
पार्वत्युवाच -
कैलासाधिपतेमह्यंकथयस्वयथातथम्
त्वंकिंजपसिदेवेशपरैश्वर्यसमाहितः ६९

सदात्वंभस्मलिप्तांगःकृत्तिवासाःसदाकथम्
जटाधरःकथंजातोवदविश्वेश्वरप्रभो ७०
त्वंदेवःसर्वदेवानांत्वंगुरुःसर्वकर्मणाम्
त्वंपतिर्ममविश्वेशविश्वनाथजगत्प्रभो ७१
महादेवउवाच–
इतिपृष्टंममब्रह्मन्पार्वत्याचपुनःपुनः
तदासर्वंमयाख्यातंतस्याश्चाग्रेविशेषतः ७२
शृणुनारदवक्ष्यामियदुक्तंपार्वतींप्रति
येनप्रसन्नोभगवान्मुक्तिदातानसंशयः ७३
ममायंतुपितासाक्षाद्बन्धुश्चैवतुसर्वदा
तस्याहंसर्वदाभक्तोह्ययंममपतिःसदा ७४
तदहंसंप्रवक्ष्यामिशृणुष्वगदतोमम
सूतउवाच–
एवमुक्त्वानारदायकथयामासवैद्विजाः ७५
उमायैयत्पुराप्रोक्तंविष्णोर्नामसहस्रकम्
महेशाच्चैवतत्प्राप्तंकैलासेनारदेनवै ७६
कदाचिद्दैवयोगेनकैलासात्ससमागतः
नैमिषारण्यसंज्ञंतुतीर्थंवैपरमाद्भुतम् ७७
तत्रस्थाऋृषयःसर्वेदृष्ट्वातंऋृषिसत्तमम्
पूजांचक्रुर्विशेषेणनारदायमहात्मने ७८
आगतंनारदंज्ञात्वाविस्मयोत्फुल्ललोचनाः
पुष्पवृष्टिंप्रचक्रुस्तेवैष्णवाद्विजसत्तमाः ७९
पाद्यमर्घ्यंततःकृत्वाकृत्वाचारार्तिकंततः
निवेद्यफलमूलानिदंडवत्पतिताभुवि ८०
ऊचुश्चकृतकृत्याःस्मदेशेह्यस्मिन्महामुने
भवतोदर्शनंजातंपवित्रंपापनाशनम् ८१
त्वत्प्रसादाच्चदेवेशपुराणानिश्रुतानिच
ब्रह्मन्केनप्रकारेणसर्वपापक्षयोभवेत् ८२
विनादानेनतपसाविनातीर्थतपोमखैः
विनादानैर्विनाध्यानैर्विनाचेंद्रियनिग्रहैः

विनाशास्त्रसमूहैश्चकथंमुक्तिरवाप्यते ८३
नारदउवाच-
कैलासशिखरासीनंदेवदेवंजगद्गुरुम्
प्रणिपत्यमहादेवंपर्यपृच्छदुमाप्रियम् ८४
पार्वत्युवाच-
भगवंस्त्वंपरोदेवःसर्वज्ञःसर्वपूजितः
सत्वमत्त्यर्च्यतेदेवैरिंद्रसूर्यादिकैरपि ८५
लभंतेऽभिमतांसिद्धिंसर्वेऽभ्यर्च्यवरप्रदम्
त्वंजन्ममृत्युरहितःस्वयंभूःसर्वशक्तिमान् ८६
सदाध्यायसिकिंस्वामिन्दिग्वासामदनांतकः
तपश्चरसिकस्मात्त्वंजटिलोभस्मधूसरः ८७
किंवाजपसिदेवेशपरंकौतूहलंहिमे
अनुग्राह्यायदातेऽस्मितत्त्वंकथयसुव्रतम् ८८
महादेवउवाच-
नेदंकस्यापिकथितंगोपनीयमिदंमम
किंतुवक्ष्यामितेभद्रेत्वंभक्तासिप्रियासिमे ८९
पुरासत्ययुगेदेविविशुद्धमतयोऽखिलाः
यजंतिविष्णुमेवैकंज्ञात्वासर्वेश्वरेश्वरम् ९०
प्रयांतिपरमामृद्धिमैहिकामुष्मिकींप्रिये
यांनप्राप्ताःसुराःसर्वेऋषयःक्लेशसंयुताः ९१
तेतांगतिंप्रपद्यंतेयेनामकृतनिश्चयाः
मन्मुखादपिसंश्रुत्यदेवाविष्णुबहिर्मुखाः ९२
वेदैःपुराणैःसिद्धांतैर्भिन्नैर्विभ्रांतचेतसः
निश्चयंनाधिगच्छंतिकिंतत्वंकिंपरंपदम् ९३
तुलापुरुषदानाद्यैरश्वमेधादिभिर्मखैः
वाराणसीप्रयागादितीर्थस्नानादिभिःप्रिये ९४
गयाश्राद्धादिभिःपित्र्यैर्वेदपाठादिभिर्जपैः
तपोभिरुग्रैर्नियमैर्यमैर्भूतदयादिभिः ९५
गुरुशुश्रूषणैःसेव्यैर्धर्मैर्वर्णाश्रमान्वितैः
ज्ञानध्यानादिभिःसम्यक्चरितैर्जन्मकोटिभिः ९६

नयांतितत्परंश्रेयोविष्णुंसर्वेश्वरेश्वरम्
सर्वभावैःसमाश्रित्यपुराणपुरुषोत्तमम् ९७
अनन्यगतयोमर्त्याभोगिनोऽपिपरंतपे
ज्ञानवैराग्यरहिताब्रह्मचर्यादिवर्जिताः ९८
सर्वधर्मोज्झिताविष्णोर्नाममात्रैकजल्पिनः
सुखेनयांगतियांतिनतांसर्वेऽपिधार्मिकाः ९९
स्मर्त्तव्यःसततंविष्णुर्विस्मर्तव्योनजातुचित्
सर्वेविधिनिषेधाःस्युरेतस्यैवविधिंकराः १००
किंतुब्रह्मादयोदेवाऋषयश्चनिरंहसः
निर्भयंविष्णुनाम्नैवयथेष्टंपदमागताः १०१
अलब्ध्वाचात्मनःपूजांसम्यगाराधितोहरिः
मयास्मादपिचश्रेष्ठंवांच्छताहंकृतात्मना १०२
ततःसाक्षाज्जगन्नाथप्रसन्नोभक्तवत्सलः
अंशांशेनात्मनैवैतान्पूजयामासकेशवः १०३
देवान्पितॄन्द्विजान्हव्यकव्याद्यैःकरुणामयः
ततःप्रभृतिपूज्यंतेत्रैलोक्येसचराचरे १०४
ब्रह्मादयःसुराःसर्वेप्रसादाच्छार्ङ्गधन्वनः
मांचोवाचयथामत्तःपूज्यःश्रेष्ठोभविष्यसि १०५
त्वामाराध्यतथाशंभोगृहीष्यामिवरंसदा
द्वापरादौयुगेभूत्वाकलयामानुषादिषु १०६
स्वागमैःकल्पितैस्त्वंचजनान्मद्विमुखान्कुरु
मांचगोपययेनस्यात्सृष्टिरेषोत्तरोत्तरा १०७
एषमोहंसृजाम्याशुयोजनान्मोहयिष्यति
त्वंचरुद्रमहाबाहोमोहशास्त्राणिकारय १०८
अतथ्यानिवितथ्यानिदर्शयस्वमहाभुज
प्रकाशंकुरुचात्मानमप्रकाशंचमांकुरु १०९
ततस्तंप्रणिपत्याहमवोचंपरमेश्वरम्
ब्रह्महत्यासहस्रस्यपापंशाम्येत्कथंचन ११०
नपुनस्त्वदविज्ञानंकल्पकोटिशतैरपि
तस्मान्मयाकृतास्पर्द्धापवित्रःस्यांकथंहरे १११

तन्मेकथयगोविंदपायश्चित्तंयदिच्छसि
ततःप्रसन्नोभगवानवोचत्तत्त्वमात्मनः ११२
येनाहमधिकस्तस्मादभवंनगनंदिनि
तमेवतपसानित्यंभजामिस्तौमिचिंतये ११३
परमोविष्णुरेवैकस्तज्ज्ञानंमुक्तिसाधनम्
शास्त्राणांनिर्णयस्त्वेषस्तदन्यन्मोहनायच ११४
दानंविनाचयामुक्तिःसाम्यंचममविष्णुना
तीर्थादिमात्रतोज्ञानंममाधिक्यंचविष्णुतः ११५
अभेदश्चास्मदादीनांमुक्तानांहरिणातथा
इत्यादिसर्वमोहायकथ्यतेसतिनान्यथा
तेनाद्वितीयमहिमोजगत्पूज्योऽस्मिपार्वति ११६
पार्वत्युवाच –
तन्मेकथयदेवेशयथाहमपिशंकर
सर्वेश्वरीनिरुपमातवस्यांसदृशीप्रभो ११७
महादेवउवाच–
साधुसाधुत्वयापृष्टंविष्णोर्भगवतःप्रिये
नाम्नांसहस्रंवद्यामिमुख्यंत्रैलोक्यमुक्तिदम् ११८
अस्यश्रीविष्णोर्नामसहस्रस्तोत्रस्यश्रीमहादेवऋषिरनुष्टुपच्छंदः
ह्रींबीजंश्रींशक्तिःक्लींकीलकंचतुर्वर्गधर्मकामार्थमोक्षार्थेजपेविनियोगः
ॐवासुदेवायविद्महेमहाहंसायधीमहि
तन्नोविष्णुःप्रचोदयात् अंगन्यासकरन्यासौविधिपूर्वंयदापठेत्
तत्फलंकोटिगुणितंभवत्येवनसंशयः ११९
श्रीवासुदेवःपरंब्रह्मइतिहृदये
मूलप्रकृतिरितिशिरः
महावराहइतिशिखा
सूर्यवंशध्वजइतिकवचम्
ब्रह्मादिकाम्यललितजगदाश्चर्यशैशवइतिनेत्रम्
यथार्थखंडिताशेषइत्यस्त्रम्
नमोनारायणायेतिन्यासंसर्वत्रकारयेत्
ओंनमोनारायणायपुरुषायमहात्मने

विशुद्धसत्वधिष्ण्यायमहाहंसायधीमहि
ॐह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः
क्लींकृष्णायविष्णवेह्रींरामायधीमहितन्नोदेवःप्रचोदयात्
क्ष्रौंनृसिंहायविद्महेश्रींश्रीकंठायधीमहितन्नोविष्णुःप्रचोदयात्
ऋोंवासुदेवायविद्महेदेवकीसुतायधीमहितन्नःकृष्णःप्रचोदयात्
ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः
क्लींकृष्णायगोविंदायगोपीजनवल्लभायस्वाहा
इतिमंत्रम् समुच्चार्यजपेद्वाविष्णुमव्ययम्
श्रीनिवासंजगन्नाथंतस्यस्तोत्रंपठेत्सुधीः १२०
ॐवासुदेवःपरंब्रह्मपरमात्मापरात्परः
परंधामपरंज्योतिःपरंतत्वंपरंपदम् १२१
परःशिवःपरोध्येयःपरंज्ञानंपरागतिः
परमार्थःपरंश्रेयःपरानंदःपरोदयः १२२
परोव्यक्तात्परंव्योमपरमर्द्धिःपरेश्वरः
निरामयोनिर्विकारोनिर्विकल्पोनिराश्रयः १२३
निरंजनोनिरातंकोनिर्लेपोनिरबग्रहः
निर्गुणोनिष्कलोऽनतोऽभयोऽचित्योऽबलोचितः १२४
ऋतीन्द्रियोमितोपारोऽनीशोऽनीहोऽव्ययोऽक्षयः
सर्वज्ञःसर्वगःसर्वःसर्वदःसर्वभावनः १२५
सर्वशास्तासर्वसाक्षीपूज्यःसर्वस्यसर्वथृक्
सर्वशक्तिःसर्वसारःसर्वात्मासर्वतोमुखः १२६
सर्वावासःसर्वरूपःसर्वादिःसर्वदुःखहा
सर्वार्थःसर्वतोभद्रःसर्वकारणकारणम् १२७
सर्वातिशयितःसर्वाध्यक्षःसर्वसुरेश्वरः
षडिवंशकोमहाविष्णुर्महागुह्योमहाविभुः १२८
नित्योदितोनित्ययुक्तोनित्यानंदःसनातनः
मायापतिर्योगपतिःकैवल्यपतिरात्मभूः १२९
जन्ममृत्युजरातीतःकालातीतोभवातिगः
पूर्णःसत्यःशुद्धबुद्धस्वरूपोनित्यचिन्मयः १३०
योगप्रियोयोगगम्योभवबंधैकमोचकः

पुराणपुरुषःप्रत्यक्चैतन्यःपुरुषोत्तमः १३१
वेदांतवेद्योदुर्ज्ञेयस्तपत्रयविवर्जितः
ब्रह्मविद्याश्रयोनाद्यःस्वप्रकाशःस्वयंप्रभुः १३२
सर्वोपेयउदासीनःप्रणवःसर्वतःसमः
सर्वानवद्योदुष्प्राप्यस्तुरीयस्तमसःपरः १३३
कूटस्थःसर्वसंश्लिष्टोवाङ्मनोगोचरातिगः
संकर्षणःसर्वहरःकालःसर्वभयंकरः १३४
अनुल्लंघ्यश्चित्रगतिर्महारुद्रोदुरासदः
मूलप्रकृतिरानंदःप्रद्युम्नोविश्वमोहनः १३५
महामायोविश्वबीजंपरशक्तिःसुखैकभूः
सर्वकाम्योऽनतलीलःसर्वभूतवशंकरः १३६
अनिरुद्धःसर्वजीवोहृषीकेशोमनःपतिः
निरुपाधिप्रियोहंसोक्षरःसर्वनियोजकः १३७
ब्रह्मप्राणेश्वरःसर्वभूतभृद्देहनायकः
क्षेत्रज्ञःप्रकृतिःस्वामीपुरुषोविश्वसूत्रधृक् १३८
अंतर्यामीत्रिधामांतःसाक्षीत्रिगुणईश्वरः
योगिगम्यःपद्मनाभःशेषशायीश्रियःपतिः १३९
श्रीसदोपास्यपादाब्जोनित्यश्रीःश्रीनिकेतनः
नित्यंवक्षःस्थलस्थश्रीःश्रीनिधिःश्रीधरोहरिः १४०
वश्यश्रीर्निश्चलःश्रीदोविष्णुःक्षीराब्धिमंदिरः
कौस्तुभोद्भासितोरस्कोमाधवोजगदार्तिहा १४१
श्रीवत्सवक्षानिःसीमकल्याणगुणभाजनः
पीतांबरोजगन्नाथोजगत्त्राताजगत्पिता १४२
जगद्बंधुर्जगत्स्रष्टाजगद्धाताजगन्निधिः
जगदेकस्फुरद्वीर्योऽनहंवादीजगन्मयः १४३
सर्वाश्चर्यमयःसर्वसिद्धार्थःसर्वरंजितः
सर्वामोघोद्यमोब्रह्मरुद्राद्युत्कृष्टचेतनाः १४४
शंभोःपितामहोब्रह्मपिताशक्राद्यधीश्वरः
सर्वदेवप्रियःसर्वदेवमूर्तिरनुत्तमः १४५
सर्वदेवैकशरणंसर्वदेवैकदैवतम्

यज्ञभुग्यज्ञफलदोयज्ञेशोयज्ञभावनः १४६
यज्ञत्रातायज्ञपुमान्वनमालीद्विजप्रियः
द्विजैकमानदोविप्रकुलदेवोसुरांतकः १४७
सर्वदुष्टांतकृत्सर्वसज्जनानन्यपालकः
सप्तलोकैकजठरःसप्तलोकैकमंडनः १४८
सृष्टिस्थित्यंतकृच्चक्रीशार्ङ्गधन्वागदाधरः
शंखभृन्नंदकीपद्मपाणिर्गरुडवाहनः १४९
अनिर्देश्यवपुःसर्वपूज्यस्त्रैलोक्यपावनः
अनंतकीर्तिर्निःसीमपौरुषःसर्वमंगलः १५०
सूर्यकोटिप्रतीकाशोयमकोटिदुरासदः
मयकोटिजगत्स्रष्टावायुकोटिमहाबलः १५१
कोटींदुजगदानंदीशंभुकोटिमहेश्वरः
कंदर्पकोटिलावण्योदुर्गकोट्यरिमर्दनः १५२
समुद्रकोटिगंभीरस्तीर्थकोटिसमाह्वयः
कुबेरकोटिलक्ष्मीवाञ्छक्रकोटिविलासवान् १५३
हिमवत्कोटिनिष्कंपःकोटिब्रह्मांडविग्रहः
कोट्यश्वमेधपापघ्नोयज्ञकोटिसमार्चनः १५४
सुधाकोटिस्वास्थ्यहेतुःकामधुक्कोटिकामदः
ब्रह्मविद्याकोटिरूपःशिपिविष्टःशुचिश्रवाः १५५
विश्वंभरस्तीर्थपादःपुण्यश्रवणकीर्तनः
आदिदेवोजगज्जैत्रोमुकुंदःकालनेमिहा १५६
वैकुंठोऽनतमाहात्म्योमहायोगेश्वरोत्सवः
नित्यतृप्तोलसद्भावोनिःशंकोनरकांतकः १५७
दीनानाथैकशरणंविश्वैकव्यसनापहः
जगत्कृपाक्षमोनित्यंकृपालुःसज्जनाश्रयः १५८
योगेश्वरःसदोदीर्णोवृद्धिक्षयविवर्जितः
अधोक्षजोविश्वरेताःप्रजापतिशताधिपः १५९
शक्रब्रह्मार्चितपदःशंभुब्रह्मोर्ध्वधामगः
सूर्यसोमेक्षणोविश्वभोक्तासर्वस्यपारगः १६०
जगत्सेतुर्धर्मसेतुधरोविश्वधुरंधरः

निर्ममोऽखिललोकेशोनिःसंगोऽद्भुतभोगवान् १६१
वश्यमायोवश्यविश्वोविष्वक्सेनःसुरोत्तमः
सर्वश्रेयःपतिर्दिव्यानर्घ्यभूषणभूषितः १६२
सर्वलक्षणलक्षरायःसर्वदैत्येंद्रदर्पहा
समस्तदेवसर्वस्वं सर्व दैवत नायकः १६३
समस्तदेवकवचंसर्वदेवशिरोमणिः
समस्तदेवतादुर्गःप्रपन्नाशनिपंजरः १६४
समस्तभयहन्नामाभगवान्विष्टरश्रवाः
विभुःसर्वहितोदर्कोहतारिःस्वर्गतिप्रदः १६५
सर्वदैवतजीवेशोब्राह्मणादिनियोजकः
ब्रह्मशंभुःपरार्धायुर्ब्रह्मज्येष्ठःशिशुःस्वराट् १६६
विराड्भक्तपराधीनःस्तुत्यःस्तोत्रार्थसाधकः
परार्थकर्त्ताकृत्यज्ञःस्वार्थकृत्यसदोज्झितः १६७
सदानंदःसदाभद्रःसदाशांतःसदाशिवः
सदाप्रियःसदातुष्टःसदापुष्टसदार्चितः १६८
सदापूतोपावनाग्र्योवेदगुह्योवृषाकपिः
सहस्रनामात्रियुगश्चतुर्मूर्तिश्चतुर्भुजः १६९
भूतभव्यभवन्नाथोमहापुरुषपूर्वजः
नारायणोमुंजकेशःसर्वयोगविनिःसृतः १७०
वेदसारोयज्ञसारःसामसारस्तपोनिधिः
साध्यःश्रेष्ठःपुराणर्षिःनिष्ठाशांतिःपरायणः १७१
शिवत्रिशूलविध्वंसीश्रीकंठैकवरप्रदः
नरःकृष्णोहरिर्धर्मनंदनोधर्मजीवनः १७२
आदिकर्त्तासर्वसत्यःसर्वस्त्रीरत्नदर्पहा
त्रिकालजितकंदर्प्पउर्वशीसृङ्मुनीश्वरः १७३
आद्यःकविर्हयग्रीवःसर्ववागीश्वरेश्वरः
सर्वदेवमयोब्रह्मागुरुर्वागीश्वरीपतिः १७४
अनंतविद्याप्रभवोमूलाविद्याविनाशकः
सर्वज्ञदोजगज्जाडयनाशकोमधुसूदनः १७५
अनेकमंत्रकोटीशःशब्दब्रह्मैकपारगः

आदिविद्वान्वेदकर्त्तावेदात्माश्रुतिसागरः १७६
ब्रह्मार्थवेदहरणःसर्वविज्ञानजन्मभूः
विद्याराजोज्ञानमूर्त्तिर्ज्ञानसिंधुरखंडधीः १७७
मत्स्यदेवोमहाशृंगोजगद्बीजवहित्रदृक्
लीलाव्याप्ताखिलांभोधिश्चतुर्वेदप्रवर्त्तकः १७८
आदिकूर्मोऽखिलाधारस्तृणीकृतजगद्भरः
अमरीकृतदेवौघःपीयूषोत्पत्तिकारणम् १७९
आत्माधारोधराधारोयज्ञांगोधरणीधरः
हिरण्याक्षहरःपृथ्वीपतिःश्राद्धादिकल्पकः १८०
समस्तपितृभीतिघ्नःसमस्तपितृजीवनम्
हव्यकव्यैकभुक्हव्यकव्यैकफलदायकः १८१
रोमांतर्लीनजलधिःक्षोभिताशेषसागरः
महावराहोयज्ञघ्नध्वंसकोयज्ञिकाश्रयः १८२
श्रीनृसिंहोदिव्यसिंहःसर्वानिष्टार्थदुःखहा
एकवीरोऽद्भुतबलोयंत्रमंत्रैकभंजनः १८३
ब्रह्मादिदुःसहज्योतिर्युगांताग्न्यतिभीषणः
कोटिवज्राधिकनखोजगद्दुष्प्रेक्ष्यमूर्तिधृक् १८४
मातृचक्रप्रमथनोमहामातृगणेश्वरः
अचिंत्यामोघवीर्याढ्यःसमस्तासुरघस्मरः १८५
हिरण्यकशिपुछेदीकालःसंकर्षणीपतिः
कृतांतवाहनासह्यःसमस्तभयनाशनः १८६
सर्वविघ्नांतकःसर्वसिद्धिदःसर्वपूरकः
समस्तपातकध्वंसीसिद्धमंत्राधिकाह्वयः १८७
भैरवेशोहरार्तिघ्नःकालकोटिदुरासदः
दैत्यगर्भस्राविनामास्फुटद्ब्रह्मांडगर्जितः १८८
स्मृतमात्राखिलत्राताऽद्भुतरूपोमहाहरिः
ब्रह्मचर्यशिरःपिंडीदिक्पालोऽद्धांगभूषणः १८९
द्वादशार्कशिरोदामारुद्रशीर्षैकनूपुरः
योगिनीग्रस्तगिरजात्राताभैरवतर्जकः १९०
वीरचक्रेश्वरोऽत्युग्रोऽपमारिःकालशंबरः

क्रोधेश्वरोरुद्रचंडीपरिवारादिदुष्टभुक् १९१
सर्वाद्योभ्योमृत्युमृत्युःकालमृत्युनिवर्त्तकः
असाध्यसर्वरोगघ्नःसर्वदुर्ग्रहसौम्यकृत् १९२
गणेशकोटिदर्पघ्नोदुःसहाशेषगोत्रहा
देवदानवदुर्दर्शोजगद्भयदभीषणः १९३
समस्तदुर्गतित्राताजगद्भक्षकभक्षकः
उग्रशोंबरमार्जारःकालमूषकभक्षकः
अनंतायुधदोर्दंडीनृसिंहोवीरभद्रजित् १९४
योगिनीचक्रगुह्येशःशक्रारिपशुमांसभुक्
रुद्रोनारायणोमेषरूपशंकरवाहनः १९५
मेषरूपशिवत्रातादुष्टशक्तिसहस्रभुक्
तुलसीवल्लभोवीरोवामाचारोऽखिलेष्टदः १९६
महाशिवःशिवारूढोभैरवैककपालधृक्
किल्लीचक्रेश्वरःशक्रदिव्यमोहनरूपदः १९७
गौरीसौभाग्यदोमायानिधीर्मायाभयापहः
ब्रह्मतेजोमयोब्रह्मश्रीमयश्चत्रयीमयः १९८
सुब्रह्मरायोबलिध्वंसीवामनोऽदितिदुःखहा
उपेंद्रोनृपतिर्विष्णुःकश्यपान्वयमंडनः १९९
बलिस्वराज्यदःसर्वदेवविप्रान्नदोऽच्युतः
उरुक्रमस्तीर्थपादस्त्रिपदस्थस्त्रिविक्रमः २००
व्योमपादःस्वपादांभःपवित्रितजगत्त्रयः
ब्रह्मेशाद्यभिवंद्यांघ्रिर्द्रुतधर्मांघ्रिधावनः २०१
अचिंत्याद्भुतविस्तारोविश्ववृक्षोमहाबलः
राहुमूर्धापरांगच्छिद्भृगुपत्नीशिरोहरः २०२
पापत्रस्तःसदापुरायोदैत्याशानित्यखंडनः
पूरिताखिलदेवाशोविश्वार्थैकावतारकृत् २०३
स्वमायानित्यगुप्तात्माभक्तचिन्तामणिःसदा
वरदःकार्त्तवीर्यादिराजराज्यप्रदोऽनघः २०४
विश्वश्लाघ्यामिताचारोदत्तात्रेयोमुनीश्वरः
पराशक्तिसदाश्लिष्टोयोगानंदःसदोन्मदः २०५

समस्तेंद्रारितेजोहृत्परमामृतपद्मपः
अनुसूयागर्भरत्नंभोगमोक्षसुखप्रदः २०६
जमदग्निकुलादित्योरेणुकाद्भुतशक्तिकृत्
मातृहत्यादिनिर्लेपःस्कंदजिद्विप्रराज्यदः २०७
सर्वक्षत्रांतकृद्वीरदर्पहाकार्त्तवीर्यजित्
सप्तद्वीपावतीदाताशिवार्चकयशप्रदः २०८
भीमःपरशुरामश्चशिवाचार्यैकविश्वभुक्
शिवाखिलज्ञानकोशोभीष्माचार्योऽग्निदैवतः २०९
द्रोणाचार्यगुरुर्विश्वजैत्रधन्वाकृतांतजित्
अद्वितीयतपोमूर्त्तिर्ब्रह्मचर्यैकदक्षिणः २१०
मनुःश्रेष्ठःसतांसत्र्महीयान्वृषभोविराट्
आदिराजःक्षितिपितासर्वरत्नैकदोहकृत् २११
पृथुर्जन्माद्येकदक्षोगीःश्रीःकीर्तिःस्वयंवृतः
जगद्वृत्तिप्रदश्चक्रवर्त्तिश्रेष्ठोद्वयास्त्रधृक् २१२
सनकादिमुनिप्राप्यभगवद्भक्तिवर्द्धनः
वर्णाश्रमादिधर्माणांकर्त्तावक्ताप्रवर्त्तकः २१३
सूर्यवंशध्वजोरामोराघवःसद्गुणार्णवः
काकुत्स्थोवीरराड्राजाराजधर्मधुरंधरः २१४
नित्यस्वस्थाश्रयःसर्वभद्रग्राहीशुभैकदृक्
नररत्नंरत्नगर्भोधर्माध्यक्षोमहानिधिः
सर्वश्रेष्ठाश्रयःसर्वशास्त्रार्थग्रामवीर्यवान् २१५
जगद्वशोदाशरथिःसर्वरत्नाश्रयोनृपः
समस्तधर्मसूःसर्वधर्मद्रष्टाऽखिलाघहा २१६
अतींद्रोज्ञानविज्ञानपारदश्चक्षमांबुधिः
सर्वप्रकृष्टशिष्टेष्टोहर्षशोकाद्यनाकुलः
पित्राज्ञात्यक्तसाम्राज्यःसपत्नोदयनिर्भयः २१७
गुहदेशार्पितैश्वर्यःशिवस्पर्द्धाजटाधरः
चित्रकूटाप्तरत्नाद्रिर्जगदीशोवनेचरः २१८
यथेष्टामोघसर्वास्त्रोदेवेंद्रतनयाक्षिहा
ब्रह्मेंद्रदिनतैषीकोमारीचघ्नोविराधहा २१९

ब्रह्मशापहताशेषदंडकाररायपावनः
चतुर्दशसहस्रोग्ररक्षोघ्नैकशरैकधृक् २२०
खरारिस्त्रिशिरोहंतादूषणघ्नोजनार्दनः
जटायुषोऽग्निगतिदोऽगस्त्यसर्वस्व मंत्रराट् २२१
लीलाधनुःकोटचपास्तदुंदुभ्यस्थिमहाचयः
सप्ततालव्यधाकृष्टध्वस्तपातालदानवः २२२
सुग्रीवराज्यदोहीनमनसैवाभयप्रदः
हनुमद्रुद्रमुख्येशसमस्तकपिदेहभृत् २२३
सनागदैत्यबाणैकव्याकुलीकृतसागरः
सम्लेच्छकोटिबाणैकशुष्कनिर्दग्धसागरः २२४
समुद्राद्भुतपूर्वैकबंधसेतुर्यशोनिधिः
असाध्यसाधकोलंकासमूलोत्कर्षदक्षिणः २२५
वरदृप्तजगच्छल्यपौलस्त्यकुलकृंतनः
रावणिघ्नःप्रहस्तच्छित्कुंभकर्णभिदुग्रहा २२६
रावणैकशिरश्च्छेत्तानिःशंकेंद्रैकराज्यदः
स्वर्गास्वर्गत्वविच्छेदीदेवेंद्रानिंद्रताहरः २२७
रक्षोदेवत्वहृद्धर्माधर्मत्वघ्नःपुरुष्टुतः
नतिमात्रदशास्यारिर्दत्तराज्यविभीषणः २२८
सुधावृष्टिमृताशेषस्वसैन्योज्जीवनैककृत्
देवब्राह्मणनामैकधातासर्वामरार्चितः २२९
ब्रह्मसूर्येंद्ररुद्रादिवृंदार्पितसतीप्रियः
अयोध्याखिलराजन्यःसर्वभूतमनोहरः २३०
स्वामितुल्यकृपादंडोहीनोत्कृष्टैकसत्प्रियः
स्वपक्षादिन्यायदर्शीहीनार्थाधिकसाधकः २३१
व्याधव्याजानुचितकृत्तारकोखिलतुल्यकृत्
पार्वत्याधिक्यमुक्तात्माप्रियात्यक्तःस्मरारिजित् २३२
साक्षात्कुशलवच्छद्मेंद्रादितातोऽपराजितः
कोशलेंद्रोवीरबाहुःसत्यार्थत्यक्तसोदरः २३३
शरसंधाननिर्धूतधरणीमंडलोदयः
ब्रह्मादिकाम्यसांनिध्यसनाथीकृतदैवतः २३४

ब्रह्मलोकाप्तचांडालाद्यशेषप्राणिसार्थकः
स्वनीतगर्दभाश्वादिश्चिरायोध्यावनैककृत् २३५
रामद्वितीयः सौमित्रिर्लक्ष्मणः प्रहतेंद्रजित्
विष्णुभक्ताप्तरामांघ्रिपादुकाराज्यनिर्वृतः २३६
भरतोऽसह्यगंधर्वकोटिघ्नोलवणांतकः
शत्रुघ्नोवैद्यराजायुर्वेदगर्भौषधीपतिः २३७
नित्यामृतकरोधन्वंतरिर्यज्ञोजगद्धरः
सूर्यारिघ्नः सुराजीवोदक्षिणेशोद्विजप्रियः २३८
छिन्नमूर्धायदेशार्कः शेषांगस्थापितामरः
विश्वार्थाशेषकद्रास्त्रशिरच्छेदाक्षताकृतिः २३९
वाजपेयादिनामाग्निर्वेदधर्मपरायणः
श्वेतद्वीपपतिः सांख्यप्रणेतासर्वसिद्धिराट् २४०
विश्वप्रकाशितज्ञानयोगमोहतमिस्रहा
देवहूत्यात्मजः सिद्धः कपिलः कर्दमात्मजः २४१
योगस्वामीध्यानभंगसगरात्मजभस्मकृत्
धर्मोवृषेन्द्रः सुरभीपतिः शुद्धात्मभावितः २४२
शंभुस्त्रिपुरदाहैकस्थैर्थविश्वरथोद्वहः
भक्तशंभुजितोदैत्यामृतवापीसमस्तपः २४३
महाप्रलयविश्वैकद्वितीयाखिलनागराट्
शेषदेवः सहस्राक्षः सहस्रास्यशिरोभुजः २४४
फणामणिकणाकारयोजिताब्ध्यंबुदक्षितिः
कालाग्निरुद्रजनकोमुशलास्त्रोहलायुधः २४५
नीलांबरोवारुणीशोमनोवाक्कायदोषहा
असंतोषोदृष्टिमात्रपातितैकदशाननः २४६
बलिसंयमनोघोरोरौहिणेयः प्रलंबहा
मुष्टिकघ्नोद्विविदहाकालिंदीकर्षणोबलः २४७
रेवतीरमणः पूर्वभक्तिखेदाच्युताग्रजः
देवकीवसुदेवाह्वकश्यपादितिनंदनः २४८
वार्ष्णेयः सात्वतांश्रेष्ठः शौरिर्यदुकुलोद्वहः
नराकृतिः परंब्रह्मसव्यसाचीवरप्रदः २४९

ब्रह्मादिकाम्यलालित्यजगदाश्चर्यशैशवः
पूतनाघ्नःशकटभिद्यमलार्जुनभंजनः २५०
वातासुरारिःकेशिघ्नोधेनुकारिर्गवीश्वरः
दामोदरोगोपदेवोयशोदानंददायकः २५१
कालीयमर्दनःसर्वगोपगोपीजनप्रियः
लीलागोवर्द्धनधरोगोविंदोगोकुलोत्सवः २५२
अरिष्टमथनःकामोन्मत्तगोपीविमुक्तिदः
सद्यःकुवलयापीडघातीचाणूरमर्दनः २५३
कंसारिरुग्रसेनादिराज्यव्यापारितापरः
सुधर्मांकितभूर्लोकोजरासंधबलांतकः २५४
त्यक्तभग्नजरासंधोभीमसेनयशःप्रदः
सांदीपनमृतापत्यदाताकालांतकादिजित् २५५
समस्तनारकित्रातासर्वभूपतिकोटिजित्
रुक्मिणीरमणोरुक्मिशासनोनरकांतकः २५६
समस्तसुंदरीकांतोमुरारिर्गरुडध्वजः
एकाकीजितरुद्रार्कमरुदाद्यखिलेश्वरः २५७
देवेंद्रदर्पहाकल्पद्रुमालंकृतभूतलः
बाणबाहुसहच्छिन्नंनंद्यादिगणकोटिजित् २५८
लीलाजितमहादेवोमहादेवैकपूजितः
इंद्रार्थार्जुननिर्भंगजयदःपांडवैकधृक् २५९
काशिराजशिरश्छेत्तारुद्रशक्त्यैकमर्दनः
विश्वेश्वरप्रसादाढ्यःकाशीराजसुतार्दनः २६०
शंभुप्रतिज्ञाविध्वंसीकाशीनिर्दग्धनायकः
काशीशगतकोटिघ्नोलोकशिक्षाद्विजार्चकः २६१
युवतीव्रतयोवश्यःपुराशिववरप्रदः
शंकरैकप्रतिष्ठाधृक्स्वांशशंकरपूजकः २६२
शिवकन्याव्रतपतिःकृष्णरूपशिवारिहा
महालक्ष्मीवपुर्गौरीत्रातावैदलवृत्रहा २६३
स्वधाममुचुकुंदैकनिष्कालयवनेष्टकृत्
यमुनापतिरानीतपरिलीनद्विजात्मजः २६४

श्रीदामरंकभक्तार्थभूम्यानीतेंद्रवैभवः
दुर्वृत्तशिशुपालैकमुक्तिदोद्वारकेश्वरः २६५
आचांडालदिकप्राप्यद्वारकानिधिकोटिकृत्
अक्रूरोद्धवमुख्यैकभक्तस्वच्छंदमुक्तिदः २६६
सबालस्त्रीजलक्रीडामृतवापीकृतार्णवः
ब्रह्मास्त्रदग्धगर्भस्थपरीक्षिज्जीवनैककृत् २६७
परिलीनद्विजसुतानेताऽजुनमदापहः
गूढमुद्राकृतिग्रस्तभीष्माद्यखिलकौरवः २६८
यथार्थखंडिताशेषदिव्यास्त्रपार्थमोहहृत्
गर्भशापछलध्वस्तयादेवोर्वीभयापहः २६९
जराव्याधारिगतिदःस्मृतिमात्राखिलेष्टदः
कामदेवोरतिपतिर्मन्मथःशंबरांतकः २७०
अनंगोजितगौरीशोरतिकांतःसदेप्सितः
पुष्पेषुर्विश्वविजयिस्मरःकामेश्वरीप्रियः २७१
उषापतिर्विश्वकेतुर्विश्वदृप्तोऽधिपूरुषः
चतुरात्माचतुर्व्यूहश्चतुर्युगविधायकः २७२
चतुर्वेदैकविश्वात्मासर्वोत्कृष्टांशकोटिशः
आश्रमात्मापुराणर्षिर्व्यासःशाखासहस्रकृत् २७३
महाभारतनिर्माताकवींद्रोबादरायणः
कृष्णद्वैपायनःसर्वपुरुषार्थैकबोधकः २७४
वेदांतकर्ताब्रह्मैकव्यंजकःपुरुवंशकृत्
बुद्धोध्यानजिताशेषदेवदेवोजगत्प्रियः २७५
निरायुधोजगज्जैत्रःश्रीधरोदुष्टमोहनः
दैत्यवेदबहिःकर्त्तावेदार्थश्रुतिगोपकः २७६
शौद्धोदनिर्दष्टदृष्टिःसुखदःसदसस्पतिः
यथायोग्याखिलकृपःसर्वशून्योऽखिलेष्टदः २७७
चतुष्कोटिपृथक्तत्वंप्रज्ञापारमितेश्वरः
पाखंडवेदमार्गेशःपाखंडश्रुतिगोपकः २७८
कल्कीविष्णुयशःपुत्रःकलिकालविलोपकः
समस्तम्लेच्छदुष्टघ्नःसर्वशिष्टद्विजातिकृत् २७९

सत्यप्रवर्त्तकोदेवद्विजदीर्घक्षुधापहः
अश्ववारादिरेवंतःपृथ्वीदुर्गतिनाशनः २८०
सद्यःक्ष्माऽनतलक्ष्मीकृन्नष्टनिःशेषधर्मवित्
अनंतस्वर्णयोगैकहेमपूर्णाखिलद्विजः २८१
असाध्यैकजगच्छास्ताविश्ववंद्योजयध्वजः
आत्मतत्वाधिपःकर्तृश्रेष्ठोविधिरुमापतिः २८२
भर्तृश्रेष्ठःप्रजेशाग्रयोमरीचिर्जनकाग्रणीः
कश्यपोदेवराजेंद्रःप्रह्लादोदैत्यराट्शशी २८३
नक्षत्रेशोरविस्तेजःश्रेष्ठःशुक्रःकवीश्वरः
महर्षिराट्भृगुर्विष्णुरादित्येशोबलिस्वराट् २८४
वायुर्वह्निःशुचिःश्रेष्ठःशंकरोरुद्रराट्गुरुः
विद्वत्तमश्चित्ररथोगंधर्वाग्रयोक्षरोत्तमः २८५
वर्णादिरग्रयस्त्रीगौरीशक्त्याग्रयाशीश्चनारदः
देवर्षिराट्पांडवाग्रयोऽजुनोवादःप्रवादराट् २८६
पवनःपवनेशानोवरुणोयादसांपतिः
गंगातीर्थोत्तमोद्यूतंछलकाग्रयंवरौषधम् २८७
अन्नंसुदर्शनोऽस्त्राग्रयंवज्रंप्रहरणोत्तमम्
उच्चैःश्रवावाजिराजएरावतइभेश्वरः २८८
अरुंधत्येकपत्नीशोह्यश्वत्थोऽशेषवृक्षराट्
अध्यात्मविद्याविद्याग्रयःप्रणवच्छंदसांवरः २८९
मेरुर्गिरिपतिर्मार्गोमासाग्रयःकालसत्तमः
दिनाद्यात्मापूर्वसिद्धःकपिलःसामवेदराट् २९०
तार्क्ष्यःखगेंद्रऋत्वग्रयोवसंतःकल्पपादपः
दातृश्रेष्ठःकामधेनुरार्तिघ्नाग्रयसुहृत्तमः २९१
चिंतामणिर्गुरुश्रेष्ठोमाताहिततमःपिता
सिंहोमृगेंद्रोनागेंद्रोवासुकिर्नृवरोनृप २९२
वर्णेशोब्राह्मणश्चेतःकरुणाग्रयंनमोनमः
इत्येतद्वासुदेवस्यविष्णोर्नामसहस्रकम् २९३
सर्वापराधशमनंपरंभक्तिविवर्द्धनम्
अक्षयंब्रह्मलोकादिसर्वस्वर्गैकसाधनम् २९४

विष्णुलोकैकसोपानंसर्वदुःखविनाशनम्
समस्तसुखदंसद्यःपरंनिर्वाणदायकम् २९५
कामक्रोधादिनिःशेषमनोमलविशोधनम्
शांतिदंपावनंनृणांमहापातकिनामपि २९६
सर्वेषांप्राणिनामाशुसर्वाभीष्टफलप्रदम्
समस्तविघ्नशमनंसर्वारिष्टविनाशनम् २९७
घोरदुःखप्रशमनंतीव्रदारिद्र्यनाशनम्
ऋणत्रयापहंगुह्यंधनधान्ययशस्करम् २९८
सर्वैश्वर्यप्रदंसर्वसिद्धिदंसर्वधर्मदम्
तीर्थयज्ञतपोदानव्रतकोटिफलप्रदम् २९९
जगज्जाड्यप्रशमनंसर्वविद्यापवर्त्तकम्
राज्यदंभ्रष्टराज्यानांरोगिणांसर्वरोगहृत् ३००
वंध्यानांसुतदंचायुःक्षीणानांजीवितप्रदम्
भूतग्रहविषध्वंसिग्रहपीडाविनाशनम् ३०१
मांगल्यंपुण्यमायुष्यंश्रवणात्पठनाज्जपात्
सकृदस्याखिलावेदाःसांगामंत्राश्चकोटिशः ३०२
पुराणशास्त्रस्मृतयःश्रुतास्युःपठितास्तथा
जप्त्वाचैकाक्षरंश्लोकंपादंवापठतिप्रिये ३०३
नित्यंसिध्यतिसर्वेष्टमचिरात्किमुताखिलम्
नानेनसदृशंसद्यःप्रत्ययंसर्वकर्मसु ३०४
इदंभद्रेत्वयागोप्यंपाठ्यंस्वार्थैकसिद्धये
नावैष्णवायदातव्यंविकल्पोपहतात्मने ३०५
भक्तिश्रद्धाविहीनायविष्णुसामान्यदर्शिने
देयंपुत्रायशिष्यायसुहृदेहितकाम्यया ३०६
मत्प्रसादादृतेनेदंग्रहीष्यंत्यल्पमेधसः
कलौसद्यःफलंकल्पग्रामंनेष्यतिनारदः ३०७
लोकानांभाग्यहीनानांयेनदुःखंविनश्यति
द्वित्रेषुवैष्णवेष्वेतदार्यावर्तेभविष्यति ३०८
नास्तिविष्णोःपरंधामनास्तिविष्णोःपरंतपः
नास्तिविष्णोःपरोधर्मोनास्तिमंत्रोह्यवैष्णवः ३०९

नास्तिविष्णोःपरंसत्यंनास्तिविष्णोःपरोमखः
नास्तिविष्णोःपरंध्यानंनास्तिविष्णोःपरागतिः ३१०
किंतस्यबहुभिर्मंत्रैःशास्त्रैर्वाबहुविस्तरैः
वाजपेयसहस्त्रैर्वाभक्तिर्यस्यजनार्दने ३११
सर्वतीर्थमयोविष्णुःसर्वशास्त्रमयःप्रभुः
सर्वक्रतुमयोविष्णुःसत्यंसत्यंवदाम्यहम्
आब्रह्मसारसर्वस्वंसर्वमेतन्मयोदितम् ३१२
पार्वत्युवाच-
धन्यास्म्यनुगृहीतास्मिकृतार्थास्मिगत्पते
यन्मयेदंश्रुतंस्तोत्रंत्वद्रहस्यंसुदुर्लभम् ३१३
अहोबतमहत्कष्टंसमस्तदुःखहेहरौ
विद्यमानेऽपिदेवेशेमूढाःक्लिश्यंतिसंसृतौ ३१४
यमुद्दिश्यसदानाथंमहेशोऽपिदिगंबरः
जटिलोभस्मलिप्तांगोतपस्वीवीक्ष्यतेजनैः ३१५
ततोऽधिकोऽस्तिदेवःकोलक्ष्मीकांतान्मधुद्विषः
यत्तत्त्वंचिंत्यतेनित्यंत्वयायोगेश्वरेणहि ३१६
ततःपरंकिमधिकंपदंश्रीपुरुषोत्तमात्
तमविज्ञायकंमूढाःयजंतेज्ञानमानिनः ३१७
मुषितास्मित्वयानाथचिरंयदयमीश्वरः
प्रकाशितोनमेयस्मात्त्वदाद्यादिव्यशक्तयः ३१८
अहोसर्वेश्वरोविष्णुःसर्वदेवोत्तमोत्तमः
भवदादिगुरुर्मूढैःसामान्यइववीक्ष्यते ३१९
महीयसांहिमाहात्म्यंभजमानान्भजंतिते
द्विषतोऽपिवृथापापानुपेक्ष्यंतेक्षमान्विताः ३२०
मयापिबाल्येस्वपितुःप्रजादृष्टाबुभुक्षिताः
दुःखादशक्तयापोष्टुंश्रियमाराध्यवैभृताः ३२१
तयासंनिहिताभ्यश्चप्रजाभ्योभवदादयः
विलसंतिसशक्राद्याःससुहृन्मित्रबांधवाः ३२२
तयाविनाक्वदेवत्वंक्वैश्वर्यंक्वपरिग्रहः
सर्वेभवंतिजीवंतोयातनास्वेवसंस्थिताः ३२३

तामृतेनैवधर्मोऽथकामोमोक्षोऽपिदूरतः
क्षुधितानांदुर्गतानांकुतोयोगसमाधयः ३२४
सचसंसारसारैकःसर्वलोकैकनायकः
वशगाकमलायस्यत्यक्त्वातामपिशंकरः ३२५
अनौद्धत्येनशौचेनरूपेणार्जवसंपदा
सर्वातिशयवीर्येणसंपूर्णस्यमहात्मनः ३२६
कस्तेनतुल्यतामेतिदेवदेवेनविष्णुना
यस्यांशांशावतारेणविनासर्वंविलीयते ३२७
जगदेतत्तथाप्याहुर्दोषायैतद्विमोहिताः
नास्यजन्मनवामृत्युर्नाप्राप्यंस्वार्थमेवच ३२८
कामाद्यासक्तचित्तत्वात्किंतुसर्वेश्वरप्रभो
त्वन्मयत्वात्प्रमादाद्वाशक्नोमिपठितुंनचेत् ३२९
विष्णोःसहस्रनामैतत्प्रत्यहंवृषभध्वज
नाम्नैकेनतुयेनस्यात्तत्फलंब्रूहिमेप्रभो ३३०
महादेवउवाच-
रामरामेतिरामेतिरमेरामेमनोरमे
सहस्रनामतत्तुल्यंरामनामवरानने ३३१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापतिनारद
संवादेविष्णोर्नामसहस्रंसंपूर्णंनामैकसप्ततितमोऽध्यायः ७१

द्विसप्ततितमोऽध्यायः

श्रीमहादेवउवाच-
ब्राह्मणावाक्षत्रियावावैश्यावागिरिकन्यके
शूद्रावाथविशेषेणपठंत्यनुदिनंयदि १
धनधान्यसमायुक्तायांतिविष्णोःपरंपदम्
श्लोकंवाश्लोकमर्द्धंवापादंपादार्द्धमेववा २
पठनान्मोक्षमाप्नोतियावदाभूतसंप्लवम्
विन्यासेनयुतंदेविविष्णोर्नामसहस्रकम् ३
येपठंतिनरश्रेष्ठास्तेयांतिपदमव्ययम्
एककालंद्विकालंवात्रिकालंवाथयःपठेत् ४

धनायुर्वर्धतेतस्ययावदिंद्राश्चतुर्दश
पुत्रान्पौत्रांस्तथालक्ष्मीसंपदंविपुलांलभेत् ५
किमन्यद्बहुनोक्तेनभूयोभूयोवरानने
विष्णोर्नामसहस्रंतुपरंनिर्वाणदायकम् ६
पूजनंप्रथमंतस्यकृतंयेननरेणतु
संपूर्णंपूजितेविष्णौतस्यपूजाचवार्षिकी ७
व्यग्रत्वंचनकर्त्तव्यंपठनेतुविशेषतः
यदिचेत्क्रियतेपाठेह्यायुर्वित्तंचनश्यति ८
यावंतिभुवितीर्थानिजंबुद्विपेषुसर्वदा
तानितीर्थानितत्रैवविष्णोर्नामसहस्रकम् ९
तत्रैवगंगायमुनाचवेणीगोदावरीतत्रसरस्वतीच
सर्वाणितीर्थानिवसंतितत्रयत्रस्थितंनामसहस्रकंतत् १०
इदंपवित्रंपरमंभक्तानांवल्लभंसदा
ध्येयंहिदासभावेनभक्तिभावेनचेतसा ११
परंसहस्रनामाख्यंयेपठंतिमनीषिणः
सर्वपापविनिर्मुक्तास्तेयांतिहरिसंनिधौ १२
अरुणोदयकालेतुयेपठंतिजपंतिच
आयुर्बलंचतेषांश्रीर्वर्द्धतेचदिनेदिने १३
रात्रौजागरणेप्राप्तेकलौभागवतोनरः
पठनान्मुक्तिमाप्नोतियावदिंद्राश्चतुर्दश १४
एकैकेनतुनाम्नावैहरौतुलसिकारणात्
पूजासाचैवविज्ञेयाकोटियज्ञफलाधिका १५
मार्गेचगच्छमानास्तुयेपठंतिद्विजातयः
नदोषामार्गजास्तेषांभवंतिकिलपार्वति १६
शृणुदेविप्रवक्ष्यामिमाहात्म्यंकेशवस्यतु
येशृगवंतिनरश्रेष्ठास्तेपुगयाःपुगयरूपिणः १७

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापति
नारदसंवादेसहस्रनाममहिमानामद्विसप्ततितमोऽध्यायः ७२

## त्रिसप्ततितमोऽध्यायः

महादेवउवाच-
ॐरामरक्षास्तोत्रस्यश्रीमहर्षिर्विश्वामित्रऋषिः
श्रीरामोदेवता
अनुष्टुप्छंदः
विष्णुप्रीत्यर्थेजपेविनियोगः १
अतसीपुष्पसंकाशंपीतवाससमच्युतम्
ध्यात्वावैपुंडरीकाक्षंश्रीरामंविष्णुमव्ययम् २
पातुवोहृदयंरामःश्रीकंठःकंठमेवच
नाभिंपातुमखत्राताकटिंमेविश्वरक्षकः ३
करौपातुदाशरथिःपादौमेविश्वरूपधृक्
चक्षुषीपातुवैदेवसीतापतिरनुत्तमः ४
शिखांमेपातुविश्वात्माकर्णौमेपातुकामदः
पार्श्वयोस्तुसुरत्राताकालकोटिदुरासदः ५
अनंतःसर्वदापातुशरीरंविश्वनायकः
जिह्वांमेपातुपापघ्नोलोकशिक्षाप्रवर्त्तकः ६
राघवःपातुमेदंतान्केशान्रक्षतुकेशवः
सक्थिनीपातुमेदत्तविजयोनामविश्वसृक् ७
एतांरामबलोपेतांरक्षांयावैपुमान्पठेत्
सचिरायुःसुखीविद्वान्लभतेदिव्यसंपदम् ८
रक्षांकरोतिभूतेभ्यःसदारक्षातुवैष्णवी
रामेतिरामभद्रेतिरामचंद्रेतियःस्मरेत् ९
विमुक्तःसनरःपापान्मुक्तिंप्राप्नोतिशाश्वतीम्
वसिष्ठेनइदंप्रोक्तंगुरवेविष्णुरूपिणे १०
ततोमेब्रह्मणःप्राप्तंमयोक्तंनारदंप्रति
नारदेनतुभूर्लोकेप्रापितंसुजनेष्विह ११
सुप्त्वावाथगृहवापिमार्गेगच्छंतएववा
येपठंतिनरश्रेष्ठास्तेनराःपुण्यभागिनः १२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापतिनारदसंवादेरामरक्षास्तोत्रंनामत्रिसप्ततितमोऽध्यायः ७३

## चतुःसप्ततितमोऽध्यायः

महादेवउवाच-
शृणुदेविप्रवक्ष्यामिधर्ममाहात्म्यमुत्तमम्
यच्छ्रुत्वानपुनर्जन्मजायतेभुविकर्हिचित् १
धर्मादर्थंचकामंचमोक्षंचैतत्त्रयंलभेत्
तस्माद्धर्मंसमीहेतविद्वान्यःसबुधःस्मृतः २
तपसाचैवदानेनव्रतेननियमेनच
तपसाप्राप्यतेस्वर्गःसात्विकेनतथैवच ३
इहायातोलभेद्राज्यंक्रोधलोभविवर्जितः
जन्मांतरेणमुक्तिःस्यात्पदंविंदतिवैष्णवम् ४
तपसाराजसेनेहराजसश्चैवजायते
तप्त्वातामसभावेनक्रूरकर्माहिनिष्ठुरः ५
तपस्तद्रक्षसांचोक्तंभुक्तिदंतामसात्मनाम्
यत्तप्तंसात्विकंचैवतत्तपोभवतिध्रुवम् ६
रजस्तमोभ्यांनियतंतपस्यांवनेसतांवायुभुजांसुनिर्जने
तपस्विनांचैवधनादिवांच्छतांवनेऽपिदोषाःप्रभवंतिरागिणाम् ७
गृहेऽपिपंचेंद्रियनिग्रहस्तपस्त्वकुत्सितेकर्मणियःप्रवर्त्तते
निवृत्तरागस्यतपोवनंगृहंगृहाश्रमोऽतोगदितःस्वधर्मः ८
सुदुस्तरःसत्वजितेंद्रियाणांसंहन्यतेश्रेष्ठतमःशुभाश्रमः
गृहस्तुधर्मःप्रवरोमनीषिणांब्रह्मादिभिश्चाभिहितोनगात्मजे ९
तप्त्वातपस्वीविपिनेक्षुधार्तोगृहंसमायातिसदान्नदातुः
भक्त्यासचान्नंप्रददातितस्मैतपोविभागंभजतेहितस्य १०
गृहाश्रमंज्येष्ठमिहाश्रमाणांसम्यक्चयःपालयतेमनुष्यः
इहैवभुंजन्समनुष्यभोगान्स्वर्गंप्रयातीतिनसंशयोऽत्र
गृहंसदापालयतांनराणांपापंसमायातिकथंहिदेवि ११
गृहाश्रमःपुण्यतमःसर्वदातीर्थवद्गृहम्
अस्मिन्गृहाश्रमेपुण्येदानंदेयंविशेषतः १२
देवानांपूजनंयत्रअतिथीनांचभोजनम्
पथिकानांचशरणंअतोधन्यतमोमतः १३
तद्गृहंतुसमाश्रित्ययेऽचयंतिद्विजान्नराः

आयुर्लक्ष्मीस्तथापुत्रानहीयंतेकदाचन १४
शृणुसुंदरिवक्ष्यामिमहापापविशोधनम्
सर्वसंपत्करंदानंइहामुत्रफलप्रदम् १५
शुभेकालेसमायातेसमभ्यर्च्यस्वदैवतम्
नित्यंनैमित्तकंकृत्वादद्याद्दानंस्वशक्तितः १६
गृहीत्वापरद्रव्यंचद्विजदेवेभ्यएवहि
दद्यात्सनिरयंदृष्ट्वापश्चाद्यातिपरांगतिम् १७
शतानीकोयथादानात्सपुत्रश्चैवतारितः
दत्त्वान्येचद्विजेभ्यश्चसगंताधर्मतोदिवम् १८
धर्मस्थानेषुयैर्दत्तंतेषांधर्ममुदाहृतम्
शृणुदेविप्रवक्ष्यामिवित्तदानंसमासतः १९
देहशुद्धिकरंदानंनभूतंनभविष्यति
पापहीनोयेनपुमान्जायतेनात्रसंशयः २०
भोगान्भुक्त्वाततश्चायंयातिविष्णुंसनातनम्
पुरावैब्रह्मणाप्रोक्तंभार्गवायमहात्मने २१
पापयुक्तायरामायतुलावृषभमेवच
पापकर्मरतश्चैवभवबंधक्रियोनृपः २२
अभक्ष्यभक्षणरताभ्रूणहागुरुतल्पगः
एतेप्यनृतवादीचप्रसूयंतेवियोनिषु २३
अयाज्ययाजनंकृत्वायाचयित्वातुनिंदितान्
सदाकोपसमायुक्ताःसाधूनांपीडनेरताः २४
विश्वासोपहताश्चैषामसुभिर्धर्मनिंदकाः
पापैरेभिःसमायुक्ताज्ञात्वात्मानंगतायुषम् २५
इतिज्ञात्वातुतैर्देविदानंदेयंविशेषतः
बहवोधर्मकर्त्तारोवैष्णवाभुविविश्रुताः २६

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापति-
नारदसंवादेदानधर्मोनामचतुःसप्ततितमोऽध्यायः ७४

## पञ्चसप्ततितमोऽध्यायः-

महादेवउवाच-

गंडिकायास्तुमाहात्म्यंवद्त्येदेविविधानतः
यथागंगातथासाचकथितानगनंदिनि १
शालग्रामशिलायत्रजायतेबहुधातथा
माहात्म्यंचैवतस्याश्चकथितंमुनिसत्तमैः २
अंडजाउद्भिजायत्रस्वेदजाश्चजरायुजाः
यस्यादर्शनमात्रेणपुरायरूपास्तुपार्वति ३
उत्तरेसातुसंभूतागंडिकातुमहानदी
संस्मृतासंस्मृतानूनंपापंहंत्यगनंदिनि ४
यत्रनारायणोदेवोनित्यंतिष्ठतिभूतिदः
शंखचक्रधरास्तस्यसमीपेनिवसंतिये ५
तेमृत्युंसमनुप्राप्यदिव्यरूपाश्चतुर्भुजाः
ऋषयस्तत्रतिष्ठंतिदेवाश्चैवंविशेषतः ६
रुद्रानागास्तथायत्तानात्रकार्याविचारणा
तस्याःसमीपेह्येकोऽयस्थलोवैविष्णुरूपधृक् ७
स्थलेऽस्मिन्वर्ततेमूर्तिर्बहुरूपातिमुक्तिदा
चतुर्विंशतिभूतानांजातयःसंतितत्रवै ८
एकावैमत्स्यरूपाचकृष्णरूपातिमुक्तिदा
अन्याचयाबुधैःप्रोक्तास्थलेवैविष्णुसंज्ञके ९
कल्किनाम्नीतथापुरायाकपिलायामयोदिता
अन्यास्तुविविधाकारादृश्यंतेबहुधाअपि १०
तिष्ठंतिमूर्त्तयःसर्वानानारूपाह्यनेकशः
सागंगामहतीपुरायाधर्मकामार्थमुक्तिदा ११
यस्यांभूमौहृषीकेशोनियमेनसमन्वितः
वर्त्ततेऽद्यापितत्रैवमयासहनसंशयः १२
भ्रूणहत्याबालहत्यागोहत्याचविशेषतः
यस्याःस्पर्शनमात्रेणमुच्यतेसर्वकिल्बिषात् १३
ब्राह्मणाःद्त्रियावैश्याःशूद्राश्चैवान्यजातयः
सर्वेतेवैविमुच्यंतेदर्शनाद्गंडिकांबुनः १४
इयंवेणीसमापुरायापापिनांतुविशेषतः
मुच्यतेब्रह्महायत्रइतरेषांतुकाकथा १५

सर्वदासर्वकालेतुग्रहंगच्छामिपार्वति
तीर्थानांतीर्थराजोऽयब्रह्मणाभाषितःकिल १६
तत्रस्नानंचदानंचमुनिभिःपरिकल्पितम्
आषाढेपुरायकालेतुतत्रगच्छामिसुंदरि १७
मासैकविधिनाचैवस्नानंतत्रकरोम्यहम्
तारकंतत्रविशदंजपामितुनिरंतरम् १८
अतोऽहवैष्णवोजातोविष्णुक्षेत्रेयतोगतः
विष्णुनानिर्मितंपूर्वंक्षेत्रंतत्तुमहत्तरम् १९
वैष्णवानांचगतिदंपावनंपरमंस्मृतम्
भवेऽस्मिन्मानुषेजन्मदुर्लभंदेविसर्वदा २०
दुर्लभंगरिडकातीर्थंविष्णुक्षेत्रंतुदुर्लभम्
अतोह्याषाढमासेतुगंतव्यंद्विजसत्तमैः २१
तत्रगत्वाविशेषेणशंखचक्रादिधारणम्
कर्त्तव्यंतुद्विजश्रेष्ठैःपवित्रंपरमंस्मृतम् २२
शंखतीर्थंतुवामेवैदक्षिणेचक्रचिह्नितम्
द्विजानांमुक्तिदंप्रोक्तंधारितव्यंप्रयत्नतः २३
ब्राह्मणैश्चविशेषेणशंखचक्रादिधारणं
धृतेसतिमहादेविवैष्णवास्तेहिमानवाः २४
नगरिडकासमंतीर्थंनव्रतंद्वादशीसमम्
नदेवःकेशवादन्योभूयोभूयोवरानने २५
गंडिकायास्तुमाहात्म्यंयेशृरावंतिनरोत्तमाः
इहलोकेसुखंभुक्त्वाविष्णुलोकेहियांतिते २६
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापति
नारदसंवादेगंडिकातीर्थमाहात्म्यंनामपंचसप्ततितमोऽध्यायः ७५

षट्सप्ततितमोऽध्यायः

महादेवउवाच-
शृणुसुंदरिवक्ष्यामिस्तोत्रंचाभ्युदयंततः
यच्छ्रुत्वामुच्यतेपापीब्रह्महानात्रसंशयः १
धातावैनारदंप्राहतदहंतुब्रवीमिते

तमुवाचततोदेवःस्वयंभूरमितद्युतिः २
प्रगृह्यरुचिरंबाहुंस्मारयेच्चौर्ध्वदेहिकम्
भगवान्नारायणःश्रीमान्देवश्चक्रायुधोहरिः ३
शार्ङ्गधारीहृषीकेशःपुराणपुरुषोत्तमः
अजितःखड्गभृज्जिष्णुःकृष्णश्चैवसनातनः ४
एकशृंगोवराहस्त्वंभूतभव्यभवात्मकः
अक्षरंब्रह्मसत्यंतुआदौचांतेचराघवः ५
लोकानांतुपरोधर्मोविष्वक्सेनश्चतुर्भुजः
सेनानीरक्षणस्त्वंचवैकुंठस्त्वंजगत्प्रभुः ६
प्रभवश्चाव्ययस्त्वंचउपेंद्रोमधुसूदनः
पृश्निगर्भोधृतार्चिस्त्वंपद्मनाभोरणांतकृत् ७
शरण्यंशरणंचत्वामाहुःसेन्द्रामहर्षयः
ऋक्सामश्रेष्ठोवेदात्माशतजिह्वोमहर्षयः ८
त्वंयज्ञस्त्वंवषट्कारस्त्वमोंकारःपरंतपः
शतधन्वावसुःपूर्ववसूनांत्वंप्रजापतिः ९
त्रयाणामपिलोकानांआदिकर्तास्वयंप्रभुः
रुद्राणामष्टमोरुद्रःसाध्यानामपिपंचमः १०
आश्विनौचापिकर्णौतेसूर्यचंद्रौचचक्षुषी
अंतेचादौचमध्येचदृश्यसेत्वंपरंतपः ११
प्रभवोनिधनंचास्यनविदुःकोभवानिति
दृश्यसेसर्वलोकेषुगोषुचब्रह्मणेषुच १२
दिक्षुसर्वासुगगनेपर्वतेषुगुहासुच
सहस्रनयनःश्रीमाञ्छतशीर्षःसहस्रपात् १३
त्वंधारयसिभूतानिवसुधांचसपर्वताम्
अंतःपृथिव्यांसलिलेसर्वसत्वमहोरगः १४
त्रींल्लोकान्धारयन्नास्तेदेवगंधर्वदानवान्
अहंतेहृदयंरामजिह्वादेवीसरस्वती १५
देवारोमाणिगात्रेषुनिर्मितास्तेस्वमायया
निमिषस्तेस्मृताराात्रिरुन्मेषोदिवसस्तथा १६
संस्कारस्तेभवेद्देहोनतदस्तिविनात्वया

जगत्सर्वंशरीरेतत्स्थैर्यंचवसुधातलम् १७
अग्निःकोपःप्रसादस्तेशेषःश्रीमांश्चलक्ष्मणः
त्वयालोकास्त्रयःक्रांताःपुराणैर्विक्रमैस्त्रिभिः १८
त्वयेंद्रश्चकृतोराजाबलिर्बद्धोमहासुरः
लोकान्संहृत्यकालस्त्वंनिवेश्यात्मनिकेवलम् १९
करोष्येकार्णवंघोरंदृश्यादृश्येचनान्यथा
त्वयासिंहवपुःकृत्वापरमंदिव्यमुत्तमम् २०
भयदःसर्वभूतानांहिरण्यकशिपुर्हतः
त्वमश्ववदनोभूत्वापातालतलमाश्रितः २१
संहृतंपरमंहव्यंरहस्यंवैपुनःपुनः
यत्परंश्रूयतेज्योतिर्यत्परंश्रूयतेपरः २२
यत्परंपरतश्चैवपरमात्मेतिकथ्यते
परोमंत्रःपरंतेजस्तमेवहिनिगद्यसे २३
हव्यंकव्यंपवित्रंचप्राप्तिःस्वर्गापवर्गयोः
स्थित्युत्पत्तिविनाशांस्तेत्वामाहुःप्रकृतेःपरम् २४
यज्ञश्चयजमानश्चहोताचाध्वर्युरेवच
भोक्तायज्ञफलानांचत्वंवैवेदैश्चगीयसे २५
सीतालक्ष्मीर्भवान्विष्णुर्देवःकृष्णःप्रजापतिः
वधार्थंरावणस्यत्वंप्रविष्टोमानुषींतनुम् २६
तदिदंचत्वयाकार्यंकृतंधर्मभृतांवर
निहतोरावणोरामप्रहृष्टादेवताःकृताः २७
अमोघंदेववीर्यंतेनतेमोघःपराक्रमः
अमोघदर्शनंरामनचमोघस्तवस्तवः २८
अमोघास्तेभविष्यंतिभक्तिमंतोनराभुवि
येचत्वांदेवसंभक्ताःपुराणंपुरुषोत्तमम् २९
इममार्षस्तवंपुण्यमितिहासंपुरातनम्
येनराःकीर्तयिष्यंतिनास्तितेषांपराभवः ३०
कथमिहहिपराभवंव्रजेयुःपुरुषवराःपुरुषोत्तमेहिभक्ताः
नहिजगतिचतुर्भुजप्रियाणांत्रिदशइहास्तिवरप्रदोविशिष्टः ३१
स्तोत्राणांप्रवरंस्तोत्रंराघवस्यमहात्मनः

त्रिकालेयःपठेन्नित्यंमहापातकवानपि ३२
संध्याकालेद्विजश्रेष्ठैःश्राद्धकालेविशेषतः
पठनीयंप्रयत्नेनभक्तिभावेनचेतसा ३३
इदंगोप्यंहिपरमंनाख्येयंकर्हिचित्क्वचित्
पठनान्मुक्तिमाप्नोतिसात्त्वतःसभवेद्ध्रुवम् ३४
प्रथमंपिंडपूजांतेब्राह्मणैर्द्विजसत्तमैः
पठितव्यमिदंस्तोत्रंश्राद्धमक्षयमाप्नुयात् ३५
इदंपवित्रंपरमंजनानांमुक्तिदायकम्
लिखित्वावैगृहेयस्तुधारयेत्सुसमाधिना ३६
आयुःश्रीश्चबलंतस्यवृद्धिंयातिदिनेदिने
लिखित्वाब्राह्मणेदद्याद्धीमान्योवैकदाचन ३७
विमुक्ताःपूर्वजास्तस्ययांतिविष्णोःपरंपदम्
चतुर्णांचैववेदानांपाठेचैवतुयत्फलम् ३८
समवाप्नोतिजापेननरःस्तोत्रंपठन्जपन्
धृत्वावैशंखचक्रादिब्राह्मणैर्वेदतत्परैः ३९
श्राद्धकालेमहादेविश्रक्षयंतद्भवेद्ध्रुवम्
कंठेपद्माक्षमालांचशंखचक्रादिधारणम् ४०
ततःश्राद्धंप्रकुर्वीतइदंस्तोत्रंपठन्जपन्
विधिनाभक्तिभावेनपूर्णंभवतिनान्यथा ४१
अतोभक्तिमतापुंसापठनीयंप्रयत्नतः
पठनात्सर्वमाप्नोतिसनरःसुखमेधते ४२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर-
संवादेआभ्युदयिकमूर्ध्वदैहिकस्तोत्रंनामषट्सप्ततितमोऽध्यायः ७६

## सप्तसप्ततितमोऽध्यायः

महादेवउवाच-
पप्रच्छाहंजगन्नाथंव्रतानामुत्तमंव्रतम्
पुत्रपौत्रविवृद्ध्यर्थंसुखसौभाग्यदायकम् १
तवाग्रेसंप्रवक्ष्यामिशृणुसुंदरिसांप्रतम्
इदंकथानकंदिव्यमृषीणांव्रतमुत्तमम् २

रजस्वलातुयानारीसहसापापरूपिणी
कृतेनचव्रतेनैवमहापापैःप्रमुच्यते
पितृणामक्षयंदेयंधर्मकामार्थसाधनम् ३
श्रीविष्णुरुवाच–
पूर्वमासीन्महाबाहुर्ब्राह्मणोवेदपारगः
सदाध्ययनशीलस्तुदेवशर्माइतिद्विजः ४
अग्निहोत्रक्रियायुक्तः षट्कर्मनिरतःसदा
सर्ववर्णेषुसंपूज्यःसपुत्रपशुबांधवः ५
तस्यब्राह्मणमुख्यस्यभग्नाचगृहवाहिनी
प्राप्तेभाद्रपदेमासेशुक्लपक्षेतुपंचमी ६
पितुःक्षयाहंकुरुतेयतात्माचजितेंद्रियः
रात्रौनिमंत्रयेद्विप्रान्सुखसौभाग्यदायकान् ७
प्रभातेविमलेप्राप्तेभांडान्यन्यानिकारयेत्
पाकंसर्वेषुपात्रेषुसकारयतिजायया ८
अष्टादशरसोपेतंपितृणांप्रीतिदायकम्
आकारणंततोदत्त्वाविप्राणांचपृथक्पृथक् ९
सर्वेविप्रास्तुसंप्राप्तामध्याह्नेवेदपाठकाः
अर्घपाद्यादिविधिवत्कृतवान्द्विजसत्तमः १०
रजसादूषितःश्राद्धेप्रक्षाल्यविधिवत्तदा
गृहमध्येगताःसर्वेआसनेतेनिरूपिताः ११
प्रदत्तंभोजनंतेनमिष्टान्नेनविशेषतः
विधिनाचकृतंश्राद्धंपिंडदानप्रपूर्वकम् १२
तांबूलंदक्षिणांचैववस्त्राणिविविधानिच
सर्वंददौद्विजेभ्योवैपितृध्यानपरायणः १३
विप्राविसर्जिताःसर्वेआशीर्वादपरायणाः
गोत्रिणांबांधवानांचअन्येषांचबुभुक्षताम् १४
दत्तमन्नंतदातेनभोजनेविधिपूर्वकम्
निशायांतुकुटीद्वारेउपविष्टोयदातदा १५
ब्राह्मण्यावारिसंगृह्यपादप्रक्षालनंकृतम्
तदाशुनीबलीवर्दौपरस्परमभाषताम् १६

शृणुकांतवचोमह्यंयादृक्कृतवतीवधूः
तादृशंसंप्रवक्ष्यामिनान्यथाप्रब्रवीम्यहम् १७
कदाचिद्दैवयोगेनगताहंपुत्रसद्मनि
तत्रस्थितंपयःपातुंवध्वादृष्टंनतत्पुनः १८
पीतंपयस्तुसर्पेणतद्दृष्टंतुमयापुनः
पश्चात्पीतंमयासम्यक्दृष्टंवध्वातदापुनः १९
तेनसंपर्कदोषेणकटिर्भग्नाचमेसदा
तेनदुःखेनभोस्वामिन्जाताहंदुःखभागिनी
भग्नाकटिश्चसंजाताह्याहारोनैवरोचते २०
बलीवर्दउवाच-
शृणुत्वंशुनिवक्ष्यामिममदुःखस्यकारणम्
अस्मिन्वैदिवसेप्राप्तेब्राह्मणानांतुभोजनम् २१
कारितंममपुत्रेणममचिंतातुनोकृता
नोदकंनतृणंचैवनदत्तंकेनचित्क्वचित् २२
अनाहारोह्यहंपापीबद्धोऽस्मिन्पापभावितः
पूर्वपापविशेषेणजातंशुनिनसंशयः २३
तद्वाक्यंतुतदादेविश्रुतंपुत्रेणधीमता
ममायंतुपितासाक्षाज्जातोममगृहेपशुः २४
इयंतुजननीसाक्षान्ममचैवनसंशयः
दैवयोगाच्छुनीजाताकिंकरोमिसुनिश्चयम् २५
एवंविचार्यासौविप्रोनैवनिद्रामवापसः
रात्रौचिंतापरोभूत्वास्मरन्विश्वेश्वरंपरम् २६
नानाधर्मपरोऽहचममैवंचकथंशुभम्
विचारयित्वाचततोरात्रौसुप्तस्तदापुनः २७
प्रभातेविमलेप्राप्तेऋृषीणांपुरतोगतः
तेषांमध्येवसिष्ठेनतस्यसुस्वागतंकृतम् २८
ब्रूहित्वंब्राह्मणश्रेष्ठतवागमनकारणम्
इतिपृष्टस्तदाविप्रःप्रणाममकरोत्तदा २९
अद्यमेसफलंजन्मअद्यमेसफलाक्रिया
अद्यमेपितरस्तृप्तादुर्लभात्तवदर्शनात् ३०

यथोक्तंचकृतंश्राद्धंद्विजाश्चैवसुभोजिताः
कुटुंबिनांतुसर्वेषांभोजनंकारितंतथा ३१
भोजनानंतरंप्राप्ताशुनीतत्रउवाचह
अस्माकंतुगृहेह्येकोबलीवर्दस्तुवर्त्तते ३२
तंपतिंप्रतिवाक्यंयद्दिवजमत्तःशृणुष्वतत्
गृहेस्थितंदुग्धभांडमहिनादूषितंमया ३३
दृष्टंमेमहतीचिंतातदाजातानसंशयः
अनेनपयसाचैवपक्वमन्नंयदाभवेत् ३४
तदात्रसर्वेविप्राश्चम्रियंतेभोजनात्ततः
एवंविचार्यतत्स्वामिन्दुग्धंपीतंतदामया ३५
तदादृष्टंतुवध्वावैतयामेताडनंकृतम्
चरामितेनसंभग्नाकिंकरोमिसुदुःखिता ३६
तस्यादुःखंतुसंस्मृत्यवृषःप्राहशुनींप्रति
शृणुशुनिप्रवक्ष्यामिममदुःखस्यकारणम् ३७
अस्याहंतुपितासाक्षात्पूर्वजन्मनिवैशुनि
अद्यवैभोजिताविप्रादत्तमन्नंतुभूरिशः ३८
नतृणंनोदकंचैवममाग्रेसंनिवेदितम्
तेनदुःखेनमेदुःखंजातंबहुतरंतदा ३९
एतत्कथानकंश्रुत्वारात्रौनिद्रामवापन
ममचिंतातुतत्रैवजातावैऋषिसत्तम ४०
वेदाध्ययनशीलोऽहकुशलोवेदकर्मणि
अनयोश्चमहद्दुःखंकिंकरोमीतिचिंतयन्
आगतस्त्वत्समीपेतुममकष्टंनिवारय ४१
ऋषिरुवाच-
उग्रजन्मन्शृणुष्वत्वंपूर्वजन्मनियत्कृतम्
अयंवैतुद्विजश्रेष्ठोकुंडनेनगरेशुभे ४२
मासेभाद्रपदेचैवपंचमीयासमागता
तद्व्रतंतेननाज्ञातंपितुःश्राद्धादिकारणात् ४३
स्त्रीधर्मेणतुसंप्राप्ताक्षयहेतुतदानघ
तयाचैवकृतंसर्वंब्राह्मणानांचभोजनम् ४४

नज्ञातंचकृतंतेनपापिष्ठेनदुरात्मना
प्रथमेऽहनिचांडालीद्वितीयेब्रह्मघातिनी ४५
तृतीयेरजकीप्रोक्ताचतुर्थेऽहनिशुध्यति
तेनपापेनसाजाताशुनीस्वगृहचारिणी
बलीवर्दस्त्वयंजातःकर्मणानेनसुव्रत ४६
उग्रजन्मोवाच-
व्रतंदानंतथायज्ञंतीर्थंवाममसुव्रत
ब्रूहियेनविशेषेणमुक्तिःपित्रोर्भवेन्मम ४७
ऋषिरुवाच-
मासेभाद्रपदेशुक्लेजायतेऋषिपंचमी
रजसाविकृतंपापंनश्यतेकरणाद्यतः ४८
पुत्रपौत्रप्रदात्रीचपितृणांमुक्तिदायिनी
नद्याकूपेतडागेवाब्राह्मणस्यगृहेतथा ४९
गोमयंमंडलंकुर्यात्कुंभंतत्रैवविन्यसेत्
तस्योपरिन्यसेत्पात्रमृषिधान्येनपूरितम् ५०
यज्ञोपवीतसूत्रंचसहिरगयंफलंतथा
स्थाप्याश्चऋषयःसप्तसुखसौभाग्यदायकाः ५१
आवाहयित्वातेसर्वेपूजनीयाव्रतस्थितैः
नैवेद्यमृषिधान्यंचऋषिधान्यंतुभोजनम् ५२
एकभक्तेनकर्तव्यमृषीणामर्चनंतदा
पूजयेत्परयाभक्त्यामंत्रेणविधिपूर्वकम् ५३
निर्वापंसघृतंदेयंदक्षिणासंयुतंतदा
देयंविप्रायविधिवदृषीणांप्रीयतांप्रति ५४
कथांश्रुत्वाविधानेनकृत्वाचैवप्रदक्षिणाम्
धूपंदीपंचनैवेद्यमर्घ्यंदद्यात्पृथक्पृथक् ५५
ऋषयःसंतुमेनित्यंव्रतसंपूर्णकारिणः
पूजांगृह्णंतुमद्दत्तांऋषिभ्योऽस्तुनमोनमः ५६
पुलस्त्यःपुलहश्चैवक्रतुःप्राचेतसस्तथा
वसिष्ठमरिचात्रेयाअर्घंगृह्णंतुवोनमः ५७
एवंपूजाप्रकर्त्तव्याधूपैर्दीपैर्मनोरमैः

पितृणांजायतेमुक्तिःकृतस्यास्यप्रभावतः ५८
पूर्वकर्मविपाकेनरजसादोषभावतः
कृतंह्येवंतुभोवत्समुक्तिस्तस्यनसंशयः ५९
तद्व्रतंचकृतंतेनमुक्त्यार्थंपितृहेतवे
तेगतामुक्तिमार्गेणआशीर्वादपरायणाः ६०
ऋषिपंचमीव्रतंपुण्यंविप्रायपरिकीर्तितम्
येकुर्वंतिनरश्रेष्ठास्तेज्ञेयाःपुण्यभागिनः ६१
येकुर्वंतिनरश्रेष्ठऋषिव्रतमनुत्तमम्
भुक्त्वात्रभोगान्विपुलान्यांतिविष्णोःपदंतुते ६२
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापतिनारद संवादेऋषिपंचमीव्रतंनामसप्तसप्ततितमोऽध्यायः ७७

अष्टसप्ततितमोऽध्यायः-

महादेवउवाच-
अथातःसंप्रवक्ष्यामिअपामार्जनमुत्तमम्
पुलस्त्येनयथोक्तंतुदालभ्यायमहात्मने १
सर्वेषांरोगदोषाणांनाशनंमंगलप्रदम्
तत्तेऽहतुप्रवक्ष्यामिशृणुत्वंनगनंदिनि २
श्रीदालभ्यउवाच-
भगवन्प्राणिनःसर्वेविषरोगाद्युपद्रवैः
कुष्ठग्रहाभिभूताश्चसर्वकाले ह्युपद्रुताः ३
आभिचारिककृत्याद्याबहुरोगाश्चदारुणाः
नभवंतिमुनिश्रेष्ठतन्मेत्वंवक्तुमर्हसि ४
पुलस्त्यउवाच-
व्रतोपवासनियमैर्विष्णुर्वैतोषितस्तुयैः
तेनरानैवरोगार्त्ताजायंतेमुनिसत्तम ५
यैर्नकृतंव्रतंपुण्यंनदानंनतपस्तदा
नतीर्थंदेवपूजाचनान्नंदत्तंतुभूरिशः ६
तेवैलोकास्तदाज्ञेयारोगदोषैःप्रपीडिताः
आरोग्यंपरमामृद्धिंमनसायद्यदिच्छति ७

तत्तदाप्नोत्यसंदिग्धंविष्णोःसेवीविशेषतः
नाधिंप्राप्नोतिनव्याधिंनविषग्रहबंधनम् ८
कृत्यास्पर्शभयंनापितोषितेमधुसूदने
समस्तदोषनाशश्चसर्वदाचशुभाग्रहाः ९
देवानामप्यधृष्योऽसौतोषितेचजनार्दने
यःसर्वेषुचभूतेषुयथात्मनितथापरे १०
उपवासादिनातेनतोषितोमधुसूदनः
तोषितेतत्रजायंतेनराःपूर्णमनोरथाः ११
अरोगाःसुखिनोभोगभोक्तारोमुनिसत्तम
तेषांचशत्रवोनैवनचरोगाभिचारिकम् १२
ग्रहरोगादिकंचैवपापकार्यंनजायते
अव्याहतानिकृष्णस्यचक्रादीन्यायुधानिवै
रक्षंतिसकलापद्भ्योयेनविष्णुरुपासितः १३
श्रीदालभ्यउवाच–
अनाराधितगोविंदायेनरादुःखभागिनः
तेषांदुःखाभिभूतानांयत्कर्त्तव्यंदयालुभिः १४
पश्यद्भिःसर्वभूतस्थंवासुदेवंसनातनम्
समदृष्टिभिरप्यत्रतन्मेब्रूहिविशेषतः १५
श्रीपुलस्त्यउवाच–
तद्वक्ष्यामिमुनिश्रेष्ठसमाहितमनाःशृणु
रोगदोषाशुभहरंविज्वरादिविनाशनम् १६
शिखायांश्रीधरंन्यस्यशिखाधःश्रीकरंतथा
हृषीकेशंतुकेशेषुमूर्ध्निनारायणंपरम् १७
ऊर्ध्वश्रोत्रेन्यसेद्विष्णुंललाटेजलशायिनम्
विभुंवैभ्रूयुगेन्यस्यभ्रूमध्येहरिमेवच १८
नरसिंहंनासिकाग्रेकर्णयोरर्णवेशयम्
चक्षुषोःपुंडरीकाक्षंतदधोभूधरंन्यसेत् १९
कपोलयोःकल्किनाथंवामनंकर्णमूलयोः
शंखिनंशंखयोर्न्यस्यगोविंदंवदनेतथा २०
मुकुंदंदंतपंक्तौतुजिह्वायांवाक्पतिंतथा

रामंहनौतुविन्यस्यकंठेवैकुंठमेवच २१
बलघ्नंबाहुमूलाधश्चांसयोःकंसघातिनम्
अजंभुजद्वयेन्यस्यशार्ङ्गपाणिंकरद्वये २२
संकर्षणंकरांगुष्ठेगोपमंगुलिपंक्तिषु
वक्षस्यधोक्षजंन्यस्यश्रीवत्संतस्यमध्यतः २३
स्तनयोस्त्वनिरुद्धंचदामोदरमथोदरे
पद्मनाभंतथानाभौनाभ्यधश्चापिकेशवम् २४
मेढ्रेधराधरंदेवंगुदेचैवगदाग्रजम्
पीतांबरधरंकट्यामूरुयुग्मेमधोर्द्विषम् २५
मुरद्विषंपिंडकयोर्जानुयुग्मेजनार्दनम्
फणीशंगुल्फयोर्न्यस्यक्रमयोश्चत्रिविक्रमम् २६
पादांगुष्ठेश्रीपतिंचपादाधोधरणीधरम्
रोमकूपेषुसर्वेषुविष्वक्सेनंन्यसेद्बुधः २७
मत्स्यंमांसेतुविन्यस्यकूर्मंमेदसिविन्यसेत्
वाराहंतुवसामध्येसर्वास्थिषुतथाच्युतम् २८
द्विजप्रियंतुमज्ञायांशुक्रेश्वेतपतिंतथा
सर्वांगेयज्ञपुरुषंपरमात्मानमात्मनि २९
एवंन्यासविधिंकृत्वासाक्षान्नारायणोभवेत्
यावन्नव्याहरेत्किंचित्तावद्विष्णुमयःस्थितः ३०
गृहीत्वातुसमूलाग्रान्कुशान्शुद्धान्समाहितः
मार्जयेत्सर्वगात्राणिकुशाग्रैरिहशांतिकृत् ३१
विष्णुभक्तोविशेषेणरोगग्रहविषार्दिते
विषार्त्तानांरोगिणांचकुर्याच्छांतिमिमांशुभाम् ३२
जायतेतेनभोविप्रसर्वरोगप्रणाशनम्
ॐनमःश्रीपरमार्थायपुरुषायमहात्मने ३३
अरूपबहुरूपायव्यापिनेपरमात्मने
वाराहंनारसिंहंचवामनंचसुखप्रदम् ३४
ध्यात्वाकृत्वानमोविष्णोर्नामान्यंगेषुविन्यसेत्
निष्कल्मषायशुद्धायव्याधिपापहरायवै ३५
गोविंदपद्मनाभायवासुदेवायभूभृते

नमस्कृत्वाप्रवद्भयामियत्तत्सिध्यतुमेवचः ३६
त्रिविक्रमायरामायवैकुंठायनरायच
श्रीवाराहनृसिंहायवामनायमहात्मने ३७
हयग्रीवायशुभ्रायहृषीकेशहराशुभम्
परोपतापमहितंप्रमुक्तंचाभिचारिकम् ३८
गरस्पर्शमहारोगप्रयोगंजरयाजर
नमोऽस्तुवासुदेवायनमःकृष्णायखङ्गिने ३९
नमःपुष्करनेत्रायकेशवायादिचक्रिणे
नमःकिंजल्कवर्णाग्र्यपीतनिर्मलवाससे ४०
महादेववपुष्कंधधृतचक्रायचक्रिणे
दंष्ट्रोद्धृतक्षितितलत्रिमूर्तिपतयेनमः ४१
महायज्ञवराहायश्रीवल्लभनमोस्तुते
तप्तहाटककेशांतज्वलत्पावकलोचनः ४२
वज्राधिकनखस्पर्शदिव्यसिंहनमोऽस्तुते
कश्यपायातिह्स्वायऋग्यजुःसामलक्षण ४३
तुभ्यंवामनरूपायक्रमतेगांनमोनमः
वाराहाशेषदुःखानिसर्वपापफलानिच ४४
मर्दमर्दमहादंष्ट्रमर्दमर्दचतत्फलम्
नृसिंहकुलिशस्पर्शदंतप्रांतनखोज्वल ४५
भंजभंजनिनादेनदुःखान्यस्यार्त्तिनाशन
ऋग्यजुःसामभिर्वाग्भिःकामरूपधरादिधृक् ४६
प्रशमंसर्वदुःखानिनयत्वस्यजनार्दनः
एकाहिकंद्व्याहिकंचतथात्रिदिवसज्वरम् ४७
चातुर्थिकंतथात्युग्रंतथावैसततज्वरम्
दोषोत्थंसन्निपातोत्थंतथैवागंतुकज्वरम् ४८
शमंनयतुगोविंदोभित्वाछित्वास्यवेदनाम्
नेत्रदुःखंशिरोदुःखंदुःखंतूदरसंभवम् ४९
अनुच्छ्वासंमहाश्वासंपरितापंसवेपथुम्
गुदघ्राणांघ्रिरोगांश्चकुष्ठरोगंतथाक्षयम् ५०
कामलादींस्तथारोगान्प्रमेहादींश्चदारुणान्

येवातप्रभवारोगालूताविस्फोटकादयः ५१
तेसर्वेविलयंयांतुवासुदेवापमार्जिताः
विलयंयांतितेसर्वेविष्णोरुच्चारणेनवा ५२
क्षयंगच्छंतुचाशेषास्तेचक्राभिहताहरेः
अच्युतानंतगोविंदनामोच्चारणभेषजात् ५३
नश्यंतिसकलारोगाःसत्यंसत्यंवदाम्यहम्
स्थावरंजंगमंयच्चकृत्रिमंचापियद्विषम् ५४
दंतोद्भवंनखोद्भूतमाकाशप्रभवंचयत्
भूतादिप्रभवंयच्चविषमत्यंतदुःसहम् ५५
शमंनयतुतत्सर्वंकीर्तितोऽस्यजनार्दनः
ग्रहान्प्रेतग्रहांश्चैवतथान्याञ्छाकिनीग्रहान् ५६
मुखमंडलिकान्क्रूरान्रेवतींवृद्धिरेवतीम्
वृद्धिकाख्यान्ग्रहांश्चोग्रांस्तथामातृग्रहानपि ५७
बालस्यविष्णोश्चरितंहंतुबालग्रहानपि
वृद्धानांयेग्रहाःकेचिद्बालानांचापियेग्रहाः ५८
नृसिंहदर्शनादेवनश्यंतेतत्क्षणादपि
दंष्ट्राकरालवदनोनृसिंहोदैत्यभीषणः ५९
तंदृष्ट्वातेग्रहाःसर्वेदूरंयांतिविशेषतः
श्रीनृसिंहमहासिंहज्वालामालोज्ज्वलानन ६०
ग्रहानशेषान्सर्वेशनुदस्वास्यविलोचन
येरोगायेमहोत्पातायेद्विषोयेमहाग्रहाः ६१
यानिचक्रूरभूतानिग्रहपीडाश्चदारुणाः
शस्त्रक्षतेषुयेरोगाज्वालगर्दभिकादयः ६२
विस्फोटकादयोयेचग्रहागात्रेषुसंस्थिताः
त्रैलोक्यरक्षाकर्त्तस्त्वंदुष्टदानववारण ६३
सुदर्शनमहातेजश्छिंधिछिंधिमहाज्वरम्
छिंधिवातंचलूतांचछिंधिघोरंमहाविषम् ६४
उद्दंडामरशूलंचविषज्वालासगर्दभम्
ॐहांहांहूंहूंप्रधारेणकुठारेणहनद्विषः ६५
ॐनमोभगवतेसुदर्शनायदुःखदारणविग्रह

यानिचान्यानिदुष्टानिप्राणिपीडाकराणिवै ६६
तानिसर्वाणिसर्वात्मापरमात्माजनार्दनः
किंचिद्रूपंसमास्थायवासुदेवनमोस्तुते ६७
क्षिप्त्वासुदर्शनंचक्रंज्वालमालाविभीषणम्
सर्वदुष्टोपशमनंकुरुदेववराच्युत ६८
सुदर्शनमहाचक्रगोविंदस्यवरायुध
तीक्ष्णधारमहावेगसूर्यकोटिसमद्युते ६९
सुदर्शनमहाज्वालछिंधिछिंधिमहारव
सर्वदुःखानिरक्षांसिपापानिचविभीषण ७०
दुरितंहनचारोग्यंकुरुत्वंभोसुदर्शन
प्राच्यांचैवप्रतीच्यांचदक्षिणोत्तरतस्तथा ७१
रक्षांकरोतुविश्वात्मानरसिंहःस्वगर्जितैः
भूम्यांतरिक्षेचतथापृष्ठतःपार्श्वतोऽग्रतः
रक्षांकरोतुभगवान्बहुरूपीजनार्दनः ७२
यथाविष्णुमयंसर्वंसदेवासुरमानुषम्
तेनसत्येनसकलंदुःखमस्यप्रणश्यतु ७३
यथायोगेश्वरोविष्णुःसर्वदेवेषुगीयते
तेनसत्येनसकलंदुःखमस्यप्रणश्यतु ७४
परमात्मायथाविष्णुर्वेदांगेषुचगीयते
तेनसत्येनविश्वात्मासुखदोऽस्त्वस्यकेशवः ७५
शांतिरस्तुशिवंचास्तुप्रणाशंयातुचासुखम्
वासुदेवशरीरोत्थैःकुशैःसंमार्जितंमया ७६
अपामार्जितगोविंदनमोनारायणस्तथा
तथापिसर्वदुःखानांप्रशमोवचनाद्धरेः ७७
शांताःसमस्तदोषास्तेग्रहाःसर्वेविषाणिच
भूतानिचप्रशाम्यंतिसंस्मृतेमधुसूदने ७८
एतेकुशाविष्णुशरीरसंभवाजनार्दनोऽहस्वयमेवचाग्रतः
हतंमयादुःखमशेषमस्यवैस्वस्थोभवत्वेषवचोयथाहरेः ७९
शांतिरस्तुशिवंचास्तुप्रणश्यतुसुखंचयत्
यदस्यदुरितंकिंचित्क्षिप्तंतल्लवणांभसि ८०

स्वास्थ्यमस्यसदैवास्तुहृषीकेशस्यकीर्तनात्
यद्यतोऽत्रागतंपापंतत्तुतत्रप्रगच्छतु ८१
एतद्रोगेषुपीडासुजंतूनांहितमिच्छुभिः
विष्णुभक्तैश्चकर्त्तव्यमपामार्जनकंपरम् ८२
अनेनसर्वदुःखानिविलयंयांत्यशेषतः
सर्वपापविशुध्यर्थंविष्णोश्चैवापमार्जनम् ८३
आर्द्रंशुष्कंलघुस्थूलंब्रह्महत्यादिकंतुयत्
तत्सर्वंनश्यतेतूर्णंतमोवद्रविदर्शनात् ८४
नश्यंतिरोगादोषाश्चसिंहात्क्षुद्रमृगायथा
ग्रहभूतपिशाचादिश्रवणादेवनश्यतु ८५
द्रव्यार्थंलोभपरमैर्नकर्त्तव्यंकदाचन
कृतेपामार्जनेकिंचिन्नग्राह्यंहितकाम्यया ८६
निरपेक्षैःप्रकर्तव्यमादिमध्यांतबोधकैः
विष्णुभक्तैःसदाशांतैरन्यथासिद्धिदंभवेत् ८७
अतुलेयंनृणांसिद्धिरियंरक्षापरानृणाम्
भेषजंपरमंह्येतद्विष्णोर्यदपमार्जनम् ८८
उक्तंहिब्रह्मणापूर्वंपुलस्त्यायसुतायवै
एतत्पुलस्त्यमुनिदालभ्यायोतंस्वयम् ८९
सर्वभूतहितार्थायदालभ्येनप्रकाशितम्
त्रैलोक्येतदिदंविष्णोःसमाप्तंचापमार्जनम् ९०
तवाग्रेकथितंदेवियतोभक्तासिमेसदा
श्रुत्वातुसर्वंभक्त्याचरोगान्दोषान्व्यपोहति ९१
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमापतिनारद संवादेअपामार्जनस्तोत्रंनामअष्टसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः-

महादेवउवाच-
अपामार्जनकंदिव्यंपरमाद्भुतमेवच
पठितव्यंविशेषेणपुत्रकामार्थसिद्धये १
एतत्स्तोत्रंपठेत्प्राज्ञःसर्वकामार्थसिद्धये

एककालंद्विकालंवायेपठंतिद्विजातयः २
आयुश्चश्रीर्बलंतस्यवर्द्धयंतिदिनेदिने
ब्राह्मणोलभतेविद्यांक्षत्रियोराज्यमेववा ३
वैश्योधनसमृद्धिंचशूद्रोभक्तिंचविंदति
अन्यैश्चलभतेभक्तिंपठनाच्छ्रवणाज्जपात् ४
सामवेदफलंतस्यजायतेनगनन्दिनि
अखिलंपापसंघातंतत्क्षणादेवनश्यति ५
इतिज्ञात्वातुभोदेविपठितव्यंसमाहितैः
पुत्राश्चैवतथालक्ष्मीःसंपूर्णाभवतिध्रुवम् ६
लिखित्वाभूर्जपत्रेतुयोधारयतिवैष्णवः
इहलोकेसुखंभुक्त्वायातिविष्णोःपरंपदम् ७
पठित्वाश्लोकमेकंतुतुलसींयःसमर्पयेत्
सर्वंतीर्थंकृतंतेनतुलस्याःपूजनेकृते ८
एतत्स्तोत्रंतुपरमंवैष्णवंमुक्तिदायकम्
पृथ्वीदानसमंपाठाद्विष्णुलोकंतुगच्छति ९
जपेत्स्तोत्रंविशेषेणविष्णुलोकस्यवांछया
बालानांजीवनार्थायपठितव्यंसमाहितैः १०
रोगग्रहाभिभूतानांबालानांशांतिकारकम्
भूतग्रहविषंचैवपठनादेवनश्यति ११
कंठेतुलसिजांमालांधृत्वाविप्रोहियःपठेत्
सचवैवैष्णवोज्ञेयोविष्णुलोकंसगच्छति १२
कंठेमालाधृतायेनशंखचक्रादिचिह्नितः
वैष्णवःप्रोच्यतेविप्रःस्तोत्रंचैतत्पठन्सदा १३
इहलोकंपरित्यज्यविष्णुलोकंसगच्छति
मोहमायापरित्यक्तोदंभतृष्णाविवर्जितः १४
एतत्स्तोत्रंपठेद्दिव्यंपरंनिर्वाणमाप्नुयात्
तेधन्याःसंतिभूर्लोकेयेविप्रावैष्णवाःस्मृताः १५
स्वात्मावैतारितस्तैस्तुसकुलंनात्रसंशयः
तेवैधन्यतमालोकेनारायणपरायणाः
तैर्भक्तिश्चसदाकार्यातिवैभागवतानराः १६

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुमापतिनारद
संवादेऋपामार्जनमहिमानामैकोनाशीतितमोऽध्यायः ७९

## अशीतितमोऽध्यायः

श्रीपार्वत्युवाच-
अहोविष्णोश्चमाहात्म्यंवदविश्वेश्वरप्रभोः
यन्माहात्म्यंपुनःश्रुत्वानभवेजायतेक्वचित् १
महादेवउवाच-
शृणुसुन्दरिवक्ष्यामिविष्णोर्माहात्म्यमुत्तमम्
श्रुत्वातुलभतेपुण्यंह्यंतेमोक्षमवाप्नुयात् २
देवव्रतंमहाप्राज्ञंध्यानयोगपरायणम्
आश्रयंसर्वशास्त्राणांयतेंद्रियमकल्मषम् ३
अप्रधृष्यंमहाभागंदेवैरपिसवासवैः
सत्यसंधंजितक्रोधंसमत्वेपरिनिष्ठितम् ४
नारायणेजगन्नाथेशरण्येभक्तवत्सले
परांनिष्ठामनुप्राप्तंवाङ्मनःकायकर्मभिः ५
गुणानामाश्रयंशांतंभीष्मंकुरुपितामहम्
प्रणम्यशिरसाभूमौपप्रच्छेदंयुधिष्ठिरः ६
युधिष्ठिरउवाच-
केचिदाहुःपरंधर्मंकेचिदाहुःपरंधनम्
केचिद्दानंप्रशंसंतिसमुदायंतथापरे ७
सांख्यंकेचित्प्रशंसंतियोगमन्येतथापरम्
केचिज्ज्ञानंप्रशंसंतिकेचिदाहुःपरंश्रुतम्
सम्यक्ध्यानंपरंकेचित्केचिद्वैराग्यमुत्तमम् ८
अग्निष्टोमादिकंकर्मतथाकेचित्परंविदुः
आत्मज्ञानंपरंकेचित्समलोष्टाश्मकांचनाः ९
यमांश्चनियमांश्चैवकेचिद्वैराग्यमुत्तमम्
कारुण्यंचपरेकेचिदहिंसांचतपस्विनः १०
शौचंकेचित्परंप्राहुःकेचिद्देवार्चनंनराः
व्यामोहंचात्रगच्छंतिव्यामुग्धाःपापकर्मभिः ११

यदेतेषुपरंकृत्यमनुष्ठेयंमहात्मभिः
वक्तुमर्हसिधर्मज्ञसर्वशास्त्रभृतांवर १२
महादेवउवाच-
भूर्लोकेयाकथाजाताभैष्मीयौधिष्ठिरीसति
तामहंसंप्रवन्दयामिलोकानांचहितायवै
एतान्प्रश्नांस्तदाश्रुत्वाप्राहभीष्मोयुधिष्ठिरम् १३
भीष्मउवाच-
श्रूयतामिदमत्यंतंगूढंसंसारमोचनम्
श्रोतव्यंयत्त्वयासम्यग्ज्ञातव्यंधर्मनंदन १४
अत्रैवोदाहरंतीमंपुरायंचैवपुरातनम्
पुंडरीकस्यसंवादंमहर्षेर्नारदस्यच १५
ब्राह्मणःश्रुतिसंपन्नःपुंडरीकोमहामतिः
आश्रमेप्रथमेतिष्ठन्गुरूणांवशगःसदा १६
जितेंद्रियोजितक्रोधःसंध्योपासनतत्परः
वेदवेदांगनिपुणःशास्त्रेषुचविचन्नणः १७
समिद्भिःसाधुहव्येनसायंप्रातर्हुतानलः
ध्यात्वाजगत्पतिंविष्णुंसम्यगाराधयद्विभुम् १८
तपःस्वाध्यायनिरतःसान्नाद्ब्रह्मसुतोयथा
उदकेंधनपुष्पाद्यैरसकृत्पूजयन्गुरुम् १९
मातापित्रोश्चशुश्रूषुर्भिन्नाहारीविमत्सरः
ब्रह्मविद्यामधीयानःप्राणायामपरायणः २०
तस्यसर्वात्मभूतस्यसंसारेनिस्पृहस्यच
महात्मनोबुद्धिरासीत्संसारार्णवतारिणी २१
मातरंपितरंचैवभातृनथसुहृज्जनान्
मित्राणिमातुलांश्चैवसखीन्संबंधिबांधवान् २२
धनधान्यसमृद्धंचग्रहंवाशक्रसंनिभम्
न्नेत्राणिसुमहार्हाणिसर्वसस्योद्भवानिच २३
परित्यज्यमहासत्वस्तृणानीवमहासुखी
विचचारमहींरम्यांशाकमूलफलाशनः २४
गंगांचयमुनांचैवगोमतीमथगंडिकाम्

शतद्रुंचपयोष्णींचसरयूंचसरस्वतीम् २५
प्रयागंनर्मदांचैवशोणंचैवमहानदम्
प्रभासंविंध्यतीर्थानिहिमवत्प्रभवानिच २६
आश्रमेषुचयानिस्युर्नैमिषेपुष्करादिषु
कुरुक्षेत्रेचयानिस्युस्तथागोवर्द्धनादिषु २७
अन्यानिसुमहातेजास्तीर्थानिसुसमाहितः
विचचारमहायोगीयथाकालेयथाविधि २८
कदाचिदात्मवान्धीरःशालग्रामंतपोधनः
पुंडरीकोमहाभागःपूर्वकर्मवशानुगः २९
संसेव्यमानंमुनिभिस्तत्वविद्भिस्तपोधनैः
मुनीनामास्पदंरम्यंपुराणेष्वपिविश्रुतम् ३०
भूषितंचैवचक्राद्यैश्चक्रांकितशिलातलम्
रम्यंविविक्तविस्तीर्णंसदाविष्णुप्रसादकम् ३१
किंचचक्रांकितास्तत्रप्राणिनःपुण्यदर्शनाः
विचिरंतियथाकामंपूण्य तीर्थप्रदर्शिनः ३२
तस्मिन्क्षेत्रेमहापुण्येशालिग्रामेमहामतिः
स्नात्वादेवहृदेतीर्थेसरस्वत्यांचसुव्रतः ३३
जातिस्मर्यांचक्रकुंडेचक्रनद्याश्रितेषु च
तथान्यान्यपितीर्थानितस्मिन्नेवचचारसः ३४
ततःक्षेत्रप्रभावेनतीर्थानांचैवतेजसा
मनःप्रसादमभजत्तस्मिन्नेवमहामनाः ३५
सोऽपितीर्थविशुद्धात्मापुंडरीकस्तपोधनः
तत्रैववसतिंचक्रेध्यानयोगपरायणः ३६
तत्रैवसिद्धिमाकांक्षन्नाराध्यगरुडध्वजम्
शास्त्रोक्तेनविधानेनभक्त्यापरमयापुनः ३७
उवासचिरमेकाकीनिर्द्वंद्वःसजितेंद्रियः
शाकमूलफलाहारःसंतुष्टःसमदर्शनः ३८
यमैश्चनियमैश्चैवतथैवासनबंधनैः
प्राणायामैश्चतीर्थैश्चप्रत्याहारैश्चसंततैः ३९
धारणाभिस्तथाध्यानैःसमाधिभिरतंद्रितः

योगाभ्यासंसदासम्यक्चक्रेविगतकिल्बिषः ४०
वैदिकैश्चांगिकैश्चैवतथापौराणिकैरपि
आराधयतिसर्वेशंततःशुद्धिमवापसः ४१
रागद्वेषविनिर्मुक्तःस्वधर्मइवरूपवान्
आराधयामासदेवंतद्गतेनांतरात्मना ४२
तुतोषभगवान्विष्णुःपुंडरीकायतेक्षणः
भगवान्नारदमितिप्रसन्नोऽस्म्यस्यधीमतः ४३
ततःकदाचित्तंदेशंनारदःपरमार्थवित्
जगामसुमहातेजाःसाक्षादादित्यसन्निभः ४४
तंद्रष्टुकामोभगवान्पुंडरीकंतपोनिधिम्
विष्णुभक्तिपरीतात्मावैष्णवानांहितेरतः ४५
सदृष्ट्वानारदंप्राप्तंतेजोमंडलमंडितम्
महामतिर्महोदारःसर्ववेदैकभाजनम् ४६
प्रांजलिप्रणतोभूत्वाप्रहृष्टेनांतरात्मना
अर्घंदत्त्वाविधानेनप्रणाममकरोत्पुनः ४७
कोऽयमत्यद्भुताकारस्तेजस्वीहृद्यवेषधृक्
आतोद्यहस्तःसुमुखोजयमंडलमंडितः ४८
विवस्वानथवावह्निरिंद्रोवरुणएववा
इतिसंचिंतयन्स्थित्वाजगादपरमद्युतिम् ४९
पुंडरीकउवाच-
कोभवानिहसंप्राप्तःकुतोवापरमद्युतिः
त्वद्दर्शनंहिभगवन्प्रायेणभुविदुर्लभम् ५०
नैवदृष्टःपुमान्वापिमयातवसमःप्रभो
वक्तुमर्हस्यशेषेणयत्प्रदिष्टंमयानघ ५१
नारदउवाच-
नारदोऽहमनुप्राप्तस्त्वद्दर्शनकुतूहलात्
प्रभावंभगवद्भक्तंत्वादृशंसततंद्विज ५२
स्मृतःसंतोषितोवापिपूजितोवाद्विजोत्तमः
पुनातिभगवद्भक्तश्चांडालोऽपियदृच्छया ५३
दासोऽहवासुदेवस्यदेवदेवस्यशार्ङ्गिणः

शंखचक्रगदापाणेस्त्रैलोक्यस्यैकचक्षुषः ५४
इत्युक्तोनारदेनासौभक्तिपर्याकुलात्मना
प्रोवाचमधुरंविप्रंतद्दर्शनसुविस्मितः ५५
पुंडरीकउवाच-
धन्योऽहदेहिनांमध्येसुपूज्योऽहसुरैरपि
कृतार्थाःपितरोमेऽद्यसंप्राप्तंजन्मनःफलम् ५६
अनुगृह्णीष्वदेवर्षेत्वद्भक्तस्यविशेषतः
तंकरिष्याम्यहंविद्वन्भ्राम्यमाणःस्वकर्मभिः ५७
कर्तव्यंपरमंगुह्यंउपदेष्टुंत्वमर्हसि
त्वंगतिःसर्वभूतानांवैष्णवानांविशेषतः ५८
नारदउवाच-
अनेकानीहशास्त्राणिकर्माणिचतथाद्विज
धर्मवर्गंबहुविधंतथैवभुविमानसम् ५९
वैलक्षण्यंचजगतस्तस्मादेवद्विजोत्तम
अन्यथासर्वसत्वानांसुखंवादुःखमेवच ६०
विज्ञानमात्रंक्षणिकंनिरात्मकमिदंजगत्
इतिकैश्चित्परिज्ञातंबाह्यार्थनिरपेक्षकम् ६१
अव्यक्ताज्जायतेनित्यंनित्यान्नित्यमिदंजगत्
इत्येवंप्राहुरपरेतत्रैवलयमेतिच ६२
आत्मनोबहवःप्रोक्तानित्याःसर्वगतास्तथा
अन्येमतिमतांश्रेष्ठास्तत्वालोकनतत्पराः ६३
यावच्छरीरमात्मानंप्रतिपन्नास्तथापरे
हस्तिकीटादिदेहेऽपिमहांतमंडमेवच ६४
यथाऽद्यजगतोवृत्तिस्तथाकालांतरेष्वपि
प्रवाहोनित्यमेवैषकःकर्त्तेतिचकेचन ६५
यद्यत्प्रत्यक्षविषयंतत्तदत्रनविद्यते
कुतःस्वर्गादयःसंतीत्यन्येविजितमानसाः ६६
निरीश्वरमिदंप्राहुःसेश्वरंचतथापरे
अत्यंतभिन्नमतयःपरमार्थपराङ्मुखाः ६७
एवंमन्येऽपिकुहकायथामतियथाश्रुतम्

वदंतिविविधैर्भेदैःस्वयुक्तिस्थितिकारकाः ६८
तर्केष्ववहितोभूत्वाकथयामितपोधन
परमार्थमिमंपुरायंघोरंसंसारनाशनम् ६९
तन्मूलमनुजानंतिततोदेवादयोनराः
प्रमाणेनोपलभ्यंतेनप्रमाणंविमोहितैः ७०
अनागतमतीतंचविप्रकृष्टमतीवयत्
नगृहीतंयथाशक्त्यावर्त्तमानार्थनिष्ठितम् ७१
आगमोमुनिभिःप्रोक्तोपूर्वरूपक्रमागतः
प्रमाणंसतुविज्ञेयःपरमार्थप्रसाधकः ७२
यदभ्यासबलाज्ज्ञानंरागद्वेषमलापहम्
उत्पद्यतेद्विजश्रेष्ठसोऽयमागमसंज्ञकः ७३
फलंकर्मचयत्तत्वंविज्ञानंदर्शनंविभुम्
जात्यादिकल्पनाहीनंद्वितीयागमलक्षणम् ७४
आत्मसंवेदनंनित्यंसनातनमतींद्रियम्
चिन्मात्रममृतंज्ञेयमनंतमजमव्ययम् ७५
व्यक्ताव्यक्तस्वरूपेणव्यक्तस्थितमनंजनम्
व्याप्ताविष्णुरितिख्यातंख्यातभिन्नमवस्थितम् ७६
योगिध्येयमविज्ञेयंपरमार्थपराङ्मुखैः
लक्ष्यतेबुद्धिभिर्भिन्नमभिभिन्नंनचात्मनि ७७
शृणुष्वावहितस्तातकथयामितवानघ
यत्प्रोक्तंब्रह्मणापूर्वंपृच्छतोममसुव्रत ७८
कदाचिद्ब्रह्मलोकस्थंब्रह्माणंचपितामहम्
प्रणिपत्ययथान्यायमपृच्छमजमव्ययम् ७९
किमुज्ञानंपरंप्रोक्तंकश्चयोगःपरोमतः
एतन्मेतत्त्वतोब्रह्मन्समाचक्ष्वपितामह ८०
ब्रह्मोवाच-
शृणुष्वावहितस्तातज्ञानयोगमनुत्तमम्
अल्पग्रंथंप्रभूतार्थमदुःखोपासनक्रियम् ८१
यःपरंपरयाप्रोक्तःपुरुषःपंचविंशकः
सएवसर्वभूतात्मातेनइत्यभिधीयते ८२

नारायणोजगद्धामपरमात्मासनातनः
जगतःसृष्टिसंहारपरिपालनतत्परः ८३
त्रयाणामात्मनांचैकोदेवदेवःसनातनः
आराध्यःसर्वदाब्रह्मन्तेपश्यंतिजगत्पतिम् ८४
यथाजगदवस्थानंयथाकालांतरेपुनः
भूतंभव्यंभविष्यंचविप्रकृष्टंतथैवच ८५
स्थूलंसूक्ष्मंतथाचान्यत्पश्यंतिज्ञानचक्षुषा
तच्चित्तास्तद्गतप्राणानारायणपरायणाः ८६
अन्यथामंदबुद्धीनांप्रतिभातिदुरात्मनाम्
कुतर्कज्ञानदुष्टानांविभक्तेंद्रियवादिनाम् ८७
नारदउवाच-
श्रूयतामन्यदपिवैकथ्यमानंमयानघ
ब्रह्मणैवपुराप्रोक्तंजगतःकारणात्मना ८८
देवानामिंद्रमुख्यानामृषीणांचैवसुव्रत
हितानिकथयामासपृच्छतांकमलासनः ८९
ब्रह्मोवाच-
नारायणपरोधर्मस्तथालोकाश्चशाश्वताः
नारायणपरायज्ञाःशास्त्राणिविविधानिच ९०
वेदाःसांगास्तथाचान्येविष्णुर्विश्वेश्वरोहरिः
पृथिव्यादीनिविबुधाःपंचभूतानिसोऽव्ययः ९१
सर्वंविष्णुमयंज्ञेयंविबुधैःसकलंजगत्
तथापिमानुषाःपापनजानंतिविमोहिताः ९२
तस्यैवमाययाव्याप्तंचराचरमिदंजगत्
तन्मनास्तद्गतप्राणोजानातिपरमार्थवित् ९३
ईश्वरःसर्वभूतानांविष्णुस्त्रैलोक्यपालकः
तस्मिन्नेतज्जगत्सर्वंतिष्ठतिप्रभवत्यपि ९४
जगत्संहरतेरुद्रःपालनेविष्णुरुच्यते
उत्पत्तौचाहमेवात्रतथान्येलोकपालकाः ९५
सर्वाधारोनिराधारःसकलोनिष्कलस्तथा
अणुर्महांस्तथाप्यन्यत्तस्माच्चपरतःपरः ९६

तमेवशरणंयातसर्वसंहारकर्मगम्
सपिताजनितास्माकंकीर्तितोमधुसूदनः ९७
एवमुक्ताःसुराःसर्वेब्रह्मणापद्मयोनिना
प्रणेमुःसर्वलोकेशंदेवंविष्णुंजनार्दनम् ९८
तस्मात्त्वमपिविप्रर्षेनारायणपरोभव
तदन्यःकोमहोदारःप्रार्थितंदातुर्महति ९९
पितरंमातरंचैवतमेवपुरुषोत्तमम्
परिगृह्णीष्वलोकेशंदेवदेवंजगत्पतिम् १००
अग्निकार्येणवैतेनतपसाध्ययनेनवै
तोषयेद्देवदेवेशंगुरुंनित्यमतंद्रितः १०१
स्वर्गेक्षयंतथाभोगमनुष्ठेयंतथैवच
परिगृह्णीष्वविप्रर्षेतमेवपुरुषोत्तमम् १०२
किंतेनमंत्रैर्बहुभिःकिंतेनबहुभिर्व्रतैः
ॐनमोनारायणायेतिमंत्रःसर्वार्थसाधकः १०३
चीरवासाजटीविप्रदंडीमुंडितएववा
विभूषितोवाविप्रेंद्रनलिगंधर्मकारणम् १०४
येनृशंसादुरात्मानःपापाचारपराःसदा
तेपियांतिपरंस्थानंनारायणपरायणाः १०५
लिप्यंतेनचपापौघैर्वैष्णवंवीतकिल्बिषाः १०६
पुनंतिसकलंलोकंअहिंसाजितमानसाः १०७
क्षत्रबंधुरितिख्यातोराजाप्राणिविहिंसकः
प्राप्तवान्परमंधामवैष्णवंकेशवालयात् १०८
अंबरीषोमहासत्वोराजापरमतत्ववित्
हृषीकेशंसमाराध्यवैष्णवंपदमाप्तवान् १०९
अन्येब्रह्मर्षयःशांताबहवःसंशितव्रताः
ध्यात्वाचपरमात्मानंसंसिद्धिंपरमांगताः ११०
प्रह्लादःपरमाह्लादःपुरानारायणंहरिम्
सेवितोऽभ्यर्चितोध्यातस्तेनैवपरिरक्षितः १११
भरतोनामतेजस्वीराजापरमधार्मिकः
उपास्यैनंचिरंकालंपरांमुक्तिमवाप्तवान् ११२

ब्रह्मचारीगृहस्थोवावानप्रस्थोऽथभिक्षुकः
केशवाराधनंहित्वानैवयांतिपरांगतिम् ११३
जन्मांतरसहस्रेषुयस्यस्यान्मतिरीदृशी
दासोऽहविष्णुभक्तानामितिसर्वार्थसाधकः ११४
सयातिविष्णुसालोक्यंपुरुषोनात्रसंशयः
किंपुनस्तद्गतप्राणाःपुरुषाःसंशितव्रताः ११५
अनन्यमानसैर्नित्यंध्यातव्यस्तत्वचिंतकैः
नारायणोजगद्व्यापीपरमात्मासनातनः ११६
भीष्मउवाच-
इत्येवमुक्तादेवर्षिस्तत्रैवांतरधीयत
परोपकारनिरतोनारदःपरमार्थवित् ११७
पुंडरीकोऽपिधर्मात्मानारायणपरायणः
ॐनमोनारायणायेतिमंत्रमष्टाक्षरंजपन् ११८
प्रसीदममविश्वात्मन्नितिवाचंवदन्सदा
हृत्पुंडरीकेगोविंदंप्रतिष्ठाप्यामृतात्मकम् ११९
तपस्वीविमलेसौम्येशालग्रामेतपोधनः
उवासचिरमेकाकीनिर्द्वंद्वोनिष्परिग्रहः १२०
स्वप्नेऽपिकेशवान्नान्यत्पश्यतीतिमहामतिः
निद्रापिनैवतस्यासीत्पुरुषार्थविरोधिनी १२१
तपसाब्रह्मचर्येणशौचेनचविशेषतः
जन्मजन्मांतरारूढेसंस्कारेचयथातथा १२२
प्रसादाद्देवदेवस्यसर्वलोकस्यसाक्षिणः
अवापपरमांसिद्धिंवैष्णवींवीतकिल्बिषः १२३
शंखचक्रगदापाणिंपीतवाससमच्युतम्
श्यामलंपुंडरीकाक्षंसददर्शसदाकृतिम् १२४
सिंहाव्याघ्रास्तथाचान्येमृगाःप्राणिविहिंसकाः
विरोधंसहजंहित्वासमेतास्तस्यसंनिधौ १२५
विचरंतियथाकामंप्रसन्नेंद्रियवृत्तयः
परस्परहितंरम्यंसंप्राप्तंपांडुनंदन १२६
तथाप्रसन्नंसलिलंसरसांसरितामपि

ऋतवःसुप्रन्नाश्चविमलेंद्रियसंयुताः १२७
मारुताश्चसुखस्पर्शावृक्षाःपुष्पफलान्विताः
आनुकूल्यंययुःसर्वेपदार्थास्तस्यधीमतः १२८
प्रसन्नमभवत्तस्मैप्रसन्नंसचराचरम्
प्रसन्नेदेवदेवेशेगोविंदेभक्तवत्सले १२९
ततःकदाचिद्भगवान्पुंडरीकस्यधीमतः
आविरासीज्जगन्नाथःपुंडरीकायतेक्षणः १३०
शंखचक्रगदापाणिःपीतवासाःसमुज्ज्वलः
पुंडरीकविशालाक्षश्चंद्रबिंबनिभाननः १३१
किंकिणीकुंडलीहारीकेयूरीकटिसूत्रवान्
श्रीवत्सांकःपीतवासाःकौस्तुभेनविभूषितः १३२
वनमालापरीतांगःस्फुरन्मुकुटकुंडलः
स्फुरताब्रह्मसूत्रेणमुक्तादामविलंबिना १३३
विराजमानोदेवेशश्चामरव्यजनादिभिः
देवैःसिद्धैःसदेवेंद्रैर्गंधर्वैर्मुनिभिर्वरैः १३४
यक्षैर्नागवरैश्चैवसेव्यमानोऽप्सरोगणैः
तंदृष्ट्वादेवदेवेशंपुंडरीकोऽनघःस्वयम् १३५
ततोबुद्ध्यामहात्मानंतुष्टावचजनार्दनम्
प्रांजलिप्रणतोभूत्वाप्रहृष्टेनांतरात्मना १३६
पुंडरीकउवाच-
नमोऽस्तुविष्णवेतुभ्यंसर्वलोकैकचक्षुषे
निरंजनायनित्यायनिर्गुणायमहात्मने १३७
त्वमीशःसर्वभूतानांतथैवचनिरीश्वरः
तथाभयार्तिनाशायगोविंदोगरुडध्वजः १३८
अनुग्रहेणभूतानांअनेकाकारधारिणे
त्वयिसर्वमिदंप्राहुस्त्वन्मयंचैवकेवलम् १३९
त्वमस्माज्जगतोभिन्नोनिर्मितंचजगत्त्वया
नमोस्तुनाभिप्रसवनलिनायनमोनमः १४०
नमःसमस्तवेदांतविश्रुतात्मविभूतये
त्वमेवसर्वदेवेशकारणंकैटभार्दन १४१

प्रसीदहृदयावासशंखचक्रगदाधर
नमःसमस्तभूतानामादिभूतायभूभृते १४२
अनेकरूपरूपायविष्णवेप्रभविष्णवे
यस्यब्रह्मादयोदेवानविदंतिसुरेश्वराः १४३
महिमानंतपोमेयंतस्मैतुभ्यंनमाम्यहम्
वाचामगोचरोयस्यमहिमातवनाप्यते १४४
जात्यादिभिरसंस्पृष्टःसदाध्येयोऽसितत्त्वतः
तथाविभेदरूपेणभक्तानामनुकंपया १४५
मत्स्यकूर्मादिरूपेणदृश्यसेपुरुषोत्तम
भीष्मउवाच-
पुंडरीकोजगन्नाथंसंस्तुवन्पुरुषोत्तमम् १४६
तमेवालोकयद्धीरचिरप्रार्थितदर्शनम्
तमाहभगवान्विष्णुःपद्मनाभस्त्रिविक्रमः १४७
पुंडरीकंमहाभागंतथागंभीरयागिरा १४८
श्रीभगवानुवाच-
प्रीतोऽस्मिवत्सभद्रंतेपुंडरीकमहामते
वरंवृष्णीष्वदास्यामियत्तेमनसिवर्त्तते १४९
एतच्छ्रुत्वातुवचनंदेवदेवस्यभाषितम्
एवंविज्ञापयामासपुंडरीकोमहामतिः १५०
पुंडरीकउवाच-
क्वाहमत्यंतदुर्बुद्धिःक्वभवंतोहितैषिणः
यद्धितंममदेवेशतदाज्ञापयमाधव १५१
एवमुक्तःसभगवान्सुप्रीतश्चततोऽब्रवीत्
पुंडरीकंमहाभागंकृतांजलिमुपस्थितम् १५२
आगच्छकुशलंतेऽस्तुमयैवसहसुव्रत
उपकारीचनित्यात्मामयात्वंसर्वदासह १५३
भीष्मउवाच-
एवमुक्तवतिप्रीत्याश्रीधरेभक्तवत्सले
दिविदुंदुभयोनेदुःपुष्पवर्षंपपातह १५४
ब्रह्मादयस्तथादेवाःसाधुसाध्वितिचाब्रुवन्

जगुःसिद्धाश्चगंधर्वाःकिन्नराश्चविशेषतः १५५
तत्रैवतमुपादायदेवदेवोजगत्पतिः
जगामगरुडारूढःसर्वलोकनमस्कृतः १५६
तस्मात्त्वमपिराजेंद्रविष्णुभक्तिसमन्वितः
तच्चित्तस्तद्गतप्राणस्तद्भक्तानांहितेरतः १५७
अर्चयित्वायथायोग्यंभजस्वपुरुषोत्तमम्
शृणुष्वतत्कथांपुरायांसर्वपापप्रणाशिनीम् १५८
येनोपायेनराजेंद्रविष्णुभक्तिसमन्वितः
प्रीतोभवतिविश्वात्मातत्कुरुष्वसुविस्तरम् १५९
अश्वमेधशतैरिष्ट्वावाजपेयशतैरपि
प्राप्नुवंतिनरानैवनारायणपराङ्मुखाः १६०
सकृदुच्चरितंयेनहरिरित्यक्षरद्वयम्
बद्धःपरिकरस्तेनमोक्षायगमनंप्रति १६१
लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः
येषामिंदीवरश्यामोहृदयस्थोजनार्दनः १६२
यइदंशृणुयान्नित्यंपठेद्वापिसमाहितः
सर्वपापविनिर्मुक्तोविष्णुलोकंसगच्छति १६३
ईश्वरउवाच-
एतद्वैनाममाहात्म्यंश्रुत्वावैनगनंदिनि
धर्मार्थकाममोक्षास्तुभवंतिचनसंशयः १६४
शुक्लेकुलेऽवतीर्णोयोब्राह्मणोवेदतत्परः
वैष्णवोविष्णुरूपोऽसौनान्योविप्रस्तुकर्हिचित् १६५
मुखेनामोच्चरन्विष्णोर्हृदयेध्यानतत्परः
शंखचक्रधरोविद्वन्मालांतुलसिजांदधत् १६६
जीवन्मुक्तःसविज्ञेयोभुक्त्वाभोगांस्त्वनेकशः
एकविंशतिकुलैःसार्द्धंविष्णुलोकेसमोदते १६७
पुंडरीकोयथाशक्त्यामुक्तोह्यत्रनसंशयः
भक्तिभावेनगोविंदस्तुष्टिंप्राप्नोतिशाश्वतीम् १६८
कलौवैहरिगीतंतुस्वगृहेवाविशेषतः
सामगानसमंप्रोक्तंदेवार्चनसमाधिषु १६९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहियांउत्तरखंडे
उमामहेश्वरसंवादेविष्णुमहिमानामाशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

पार्वत्युवाच-
गंगायाश्चैवमाहात्म्यंपुनर्वदमहामते
यच्छ्रुत्वामुनयःसर्वेवीतरागाःपुनः पुनः १
माहात्म्यंकीदृशंचैवतस्याःसर्वेश्वरप्रभो
उत्पत्तिश्चश्रुतापूर्वंमहिमानश्रुतोमया
त्वमाद्यःसर्वभूतानांत्वंदेवश्चसनातनः २
महादेवउवाच-
बृहस्पतिसमंबुद्ध्याशक्रतुल्यपराक्रमम्
शरतल्पगतंभीष्मंऋषयोद्रष्टुमाययुः ३
अत्रिर्वसिष्ठश्चभृगुःपुलस्त्यःपुलहाक्रतुः
अंगिरागौतमोऽगस्त्यःसुमतिस्त्वापुरात्मवान् ४
विश्वामित्रःस्थूलशिराःसर्वज्ञःप्रमथाधिपः
रैभ्योबृहस्पतिर्व्यासःपावनःकश्यपोध्रुवः ५
दुर्वासाजमदग्निश्चमार्कंडेयोऽथगालवः
उशनाथभरद्वाजःक्रतुरास्तीकएवच ६
स्थूलाक्षःसर्वलोकाक्षःकण्वोमेधातिथिःकुशः
नारदःपर्वतश्चैवसुधन्वाच्यवनोद्विजः ७
मतिभूर्भुवनोधौम्यःशतानंदोकृतव्रणः
जामदग्न्योऽथरामश्चऋचीकश्चैवमादयः ८
तान्प्रणम्ययथान्यायंधर्मपुत्रःसहानुजः
पूजयामासविधिवज्जगत्पूज्यांस्तुतेजसः ९
तेपूजितामहात्मानःसुखासीनास्तपोधनाः
भीष्माश्रिताःकथाश्चक्रुर्दिव्यधर्माश्रितास्तथा १०
कथांतेतुततस्तेषांऋषीणांभावितात्मनाम्
प्रणम्यशिरसाभीष्मंपप्रच्छेदंयुधिष्ठिरः ११
युधिष्ठिरउवाच-

केदेशास्तुमहापुराया:केशैला:केऽपिचाश्रमा:
सेव्याधर्मार्थिभिर्नित्यंतन्मेब्रूहिपितामह १२
भीष्मउवाच-
अत्रैवोदाहरंतीममितिहासंनरोत्तम
शिलोंछवृत्तेःसंवादंसिद्धस्यचयुधिष्ठिर १३
कश्चित्सिद्धःपरिक्रम्यसमस्तांपृथिवीमिमाम्
उंछवृत्तेःशिबेराजन्गृहंप्राप्तोमहात्मनः १४
आत्मविद्यासुतत्वज्ञःसर्वदासजितेंद्रियः
रागद्वेषपरित्यक्तःकुशलीज्ञानकर्मसु १५
वैष्णवेषुसदाश्रेष्ठोविष्णुधर्मपरायणः
अनिंदकोवैष्णवानांसदाधर्मपरायणः १६
योगाभ्यासरतोनित्यंशंखचक्रविधारकः
त्रिकालपूजातत्वज्ञःश्रीकंठेऽनुरतःसदा १७
वेदविद्यासुविदुषोधर्माधर्मविचारकः
वेदपाठव्रतोनित्यंनित्यंचातिथिपूजकः १८
सतीर्थमतियुक्तस्तुशिलोंछेषुस्थितःसदा
चतुर्वेदेषुयद्ध्यानंगीतंयद्यत्स्वयंभुवा १९
तत्सर्वंसचजानातिद्विजोविष्णुस्वरूपधृक्
नानाधर्मार्थविशदोह्यव्ययेष्टमतिःसदा २०
एकस्मिन्नेवकालेतुगतोऽसौवैशिबेर्गृहम्
तंदृष्ट्वाविधिवच्चैवकृत्वातिथ्यंमहामनाः २१
शिबिःसंपृच्छयामासदेशानांहितकारणम् २२
उंछवृत्तिरुवाच-
केदेशाःकेजनपदाःकेशैलाःकेऽपिचाश्रमाः
पुरायाद्विजवरप्रीत्यामह्यंनिर्देष्टुमर्हसि २३
सिद्धउवाच-
तेदेशास्तेजनपदास्तेशैलास्तेऽपिचाश्रमाः
पुरायास्त्रिपथगायेषांमध्येनित्यंसरिद्वरा २४
तपसाब्रह्मचर्येणयज्ञैस्त्यागेनवापुनः
गतिंतांनलभेज्जंतुर्गंगांसंसेव्ययांलभेत् २५

स्नातानांतत्रपयसिगांगेयेनियतात्मनाम्
तुष्टिर्भवतियापुंसांनसाक्रतुशतैरपि २६
अपहृत्यतमस्तीव्रंयथाभात्युदयेरविः
तथापहृत्यपाप्मानंभातिगंगाजलाप्लुतः २७
अग्निंप्राप्ययथाविप्रतूलराशिर्विनश्यति
तथागंगावगाहश्चसर्वंपापंव्यपोहति २८
यस्तुसूर्यांशुसंतप्तंगांगेयंसलिलंपिबेत्
सगोनीहारनिर्मुक्तःपावकाद्धिविशिष्यते २९
चांद्रायणसहस्रंतुपादेनैकेनयःपुमान्
संप्लुतश्चापिगंगायांयोनरःसविशिष्यते ३०
लंबेदधःशिरायस्तुवर्षाणामयुतंनरः
मासमेकंतुगंगांभःसेवतेयोनरोत्तमः ३१
ब्रह्महत्याविनिर्मुक्तोयातिविष्णोरनामयम्
इयंवेणीसमापुण्यापवित्रापापनाशिनी ३२
यस्याःस्मरणमात्रेणबालहामुच्यतेक्षणात्
सप्रयागस्तीर्थराजोवैष्णवानांहिदुर्ल्लभः ३३
स्नात्वायत्रनरश्रेष्ठवैकुंठेसत्वरंव्रजेत्
प्रियाप्रियेनजानातिधर्माधर्मौनविंदति ३४
स्नात्वाचैवतुगंगायांमहापापात्प्रमुच्यते ३५
गंगागंगेतियोब्रूयाद्योजनानांशतैरपि
मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ३६
ब्रह्महाचैवगोघ्नोवासुरापीबालघातकः
मुच्यतेसर्वपापेभ्योदिवंयातिचसत्वरम् ३७
दर्शनंमाधवस्याथवरस्यदर्शनंतथा
वेण्यांस्नानंप्रकुर्वाणोवैकुंठंप्रतिगच्छति ३८
उदितेचयथासूर्येविलयंयातिवैतमः
तथैवतस्यांपापानिनश्यंतिस्नानमात्रतः ३९
गंगाद्वारेकुशावर्तेगल्लिकेनीलपर्वते
स्नात्वाकनखलेतीर्थेपुनर्जन्मनविद्यते ४०
एवंज्ञात्वानरश्रेष्ठोगंगास्नायीपुनःपुनः

स्नानमात्रेणभोराजन्मुच्यतेकिल्बिषादतः ४१
देवानांप्रवरोविष्णुर्यज्ञानांचाश्वमेधकः
अश्वत्थःसर्ववृक्षाणांनदीभागीरथीसदा ४२
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमापतिनारदसंवादेगंगामाहात्म्यंनामैकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

पार्वत्युवाच-
वैष्णवानांलक्षणंचकीदृशंप्रतिपादितम्
महिमाकीदृशश्चैववदविश्वेश्वरप्रभो १
महादेवउवाच -
विष्णोरयंयतःप्रोक्तोह्यतोवैवैष्णवोमतः
सर्वस्यादिस्तुविज्ञेयोब्रह्मारूपधरस्ततः २
यतःसकाशात्संजाताब्राह्मणावेदपारगाः
तेवैष्णवास्तुविज्ञेयानैवान्येतुकदाचन ३
शौचसत्यक्षांतियुक्तोरागद्वेषविवर्जितः
वेदविद्याविचारज्ञोयःसवैष्णवउच्यते ४
अग्निहोत्ररतोनित्यंनित्यंचातिथिपूजकः
पितृभक्तोमातृभक्तःसवैवैष्णवउच्यते ५
दयाधर्मेणसंयुक्तस्तथापापपराङ्मुखः
शंखचक्रांकितोयोवैसवैवैष्णवउच्यते ६
कंठेमालाधरोयस्तुमुखेरामंसदोच्चरेत्
गानंकुर्यात्सदाभक्त्यासनरोवैष्णवःस्मृतः ७
पुराणेषुरतानित्यंयज्ञेषुचरताःसदा
तेनरावैष्णवाज्ञेयाःसर्वधर्मेषुसंमताः ८
तेषांनिंदांप्रकुर्वंतियेनराःपापकारिणः
तेमृतास्तुकुयोनिंवैगच्छंतिचपुनःपुनः ९
गोपालनाम्नींमूर्तिंचयेऽचयंतिद्विजाःसदा
धातुमात्रमयींकृत्वाचतुर्हस्तांसुशोभिताम् १०
पूजांकुर्वंतियेविप्रास्तेज्ञेयाःपुण्यभाजिनः

कृत्वापाषाणजांमूर्तिंकृष्णाख्यांरूपसुंदरीम् ११
पूजांकुर्वंतियेविप्रास्तेज्ञेयाःपुण्यमूर्त्तयः
शालग्रामशिलायत्रयत्रद्वारवतीशिला १२
उभयोःसंगमोयत्रमुक्तिस्तत्रनसंशयः
मूर्तिंमंत्रेणसंस्थाप्यपूजनंक्रियतेयदि १३
तदर्चनंकोटिगुणंधर्मकामार्थमोक्षदम्
नवधातत्रवैभक्तिःकर्तव्याचजनार्दने
अतःपाषाणजामूर्तिस्तथाधातुमयीत्वया १४
तस्यांभक्तैःप्रकर्त्तव्यंध्यानंपूजनमेवच
राजोपचारकींपूजांमूर्तौतत्रप्रकल्पयेत् १५
सर्वात्मानंस्मरेन्नित्यंभगवंतमधोक्षजम्
दीनानाथैकशरणंलोकानांवृत्तिकारणम् १६
मूर्त्तौतत्रस्मरेन्नित्यंमहापातकनाशनम्
गोपालोऽयतथाकृष्णोरामोऽयमितिचब्रुवन् १७
पूजांकरोतियःसम्यक्सवैभागवतोनरः
गोकुलेतुयथारूपंधृतंवैकेशवेनतु १८
तादृग्रूपंप्रकर्त्तव्यंवैष्णवैर्नरसत्तमैः
आत्मसंतोषणार्थायस्वरूपंकारयेद्बुधः १९
यतोभक्तिस्तुबहुलाजायतेनात्रसंशयः
शंखचक्रगदादीनिविष्णोश्चैवायुधानिच २०
तस्यांमूर्तौविशेषेणकर्त्तव्यानिप्रमाणतः
चतुर्भुजांद्विनेत्रांचशंखचक्रगदाधराम् २१
पीतवासःपरीधानांशोभमानांगरीयसीम्
वनमालांदधानांतांलसद्वैडूर्यकुंडलाम् २२
मुकुटेमणिसंयुक्तांकौस्तुभोद्भासितांसदा
सौवर्णीचाथरौप्यांवाताम्रजांचाथपैत्तलीम् २३
कारयेत्परयाभक्त्यावैष्णवैर्द्विजसत्तमैः
आगमोक्तैर्वेदमंत्रैःप्रतिष्ठाप्यविशेषतः २४
पश्चाद्वैअर्चनंकार्यंयथाशास्त्रानुसारतः
षोडशोपचारैर्मंत्रैःपूजनंविधिपूर्वकम् २५

पूजितेतुजगन्नाथेसर्वेदेवाश्चपूजिताः
अतोयेनप्रकारेणपूजनीयोमहाप्रभुः २६
अनादिनिधनोदेवःशंखचक्रगदाधरः
सर्वंददातिसर्वेशोवैष्णवान्पुरायरूपिणः २७
यथाविष्णुस्तथाशर्वोनांतरंवर्त्ततेक्वचित्
एवंज्ञात्वातुभोदेविह्युभयोर्मूर्तिकल्पनम् २८
शिवपूजांप्रकुर्वाणोविष्णुनिंदासुतत्परः
रौरवेषुनरकेषुवसतेनात्रसंशयः २९
अहंविष्णुरहंरुद्रोह्यहंब्रह्मापितामहः
सर्वभूतेषुसततंसंवसामिपुनःपुनः ३०
पार्वत्युवाच-
केदासावैष्णवाःकेतुकेभक्ताभुविकीर्तिताः
तेषांवैलक्षणंब्रूहियथार्थंवैमहेश्वर ३१
महादेवउवाच-
शूद्राभवंतिवैदासावैष्णवानारदादयः
प्रह्लादश्चांबरीषाद्याभक्तास्तेनगनंदिनि ३२
ब्रह्मक्रियारतोनित्यंवेदवेदांगपाठकः
शंखचक्रांकितोयस्तुसवैवैष्णवउच्यते ३३
द्विजसेवारतोनित्यंनित्यंविष्णुप्रपूजकः
शृणोतिबहुधाचैवपुराणंवेदसंमितम् ३४
सशूद्रोहरिदासस्तुइत्युक्तोनगनंदिनि
पंचवर्षत्वमाश्रित्यकृताभक्तिरनेकधा ३५
सवैभक्तइतिप्रोक्तःसर्वसाधुषुसंमतः
ध्रुवादयस्तेविज्ञेयाअंबरीषादयश्चये ३६
भक्ताश्चमुनिभिःप्रोक्ताःसर्वकालेषुभामिनि
कलौधन्यतमाःशूद्राविष्णुध्यानपरायणाः ३७
इहलोकेसुखंभुक्तवायांतिविष्णोःसनातनम्
शंखचक्रांकितोयस्तुविष्णुभक्तिप्रकारकः ३८
चतुर्विधमहोत्साहकर्त्ताचैवविशेषतः
सशूद्रोविष्णुदासस्तुयथादृष्टंयथाश्रुतम् ३९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमा
महेश्वरसंवादेदासवैष्णवानांमहिमानामद्व्यशीतितमोऽध्यायः ८२

## त्र्यशीतितमोऽध्यायः

पार्वत्युवाच-
सर्वेषांचैवमासानांविधिंब्रूहिमहेश्वर
महोत्सवःप्रकर्त्तव्यःकोविधिस्तत्रसंमतः १
कोदेवःपूजनंकस्यमहिमाकीदृशोभवेत्
कस्यांतिथौप्रकर्त्तव्यंतन्मेवदसुरेश्वर २
मासंप्रतिकिमुक्तंचवैष्णवान्पुण्यकर्मणः
धन्याहंकृतकृत्याहंसुभगाहंधरातले
विष्णोःकथांशृणोमीतिदर्शनात्स्पर्शनात्तव ३
शिवउवाच-
उत्सवानांविधिंब्रूमोमासंप्रतितवानघे
यानाकर्ण्यपुनर्देविगीतवादित्रहर्षिता ४
तत्रादौचसितेपक्षेचैत्रमासेसुशोभने
एकादश्यांविशेषेणदोलारूढंप्रपूजयेत् ५
कुर्याद्भक्त्यासदादेविउत्सवंविधिपूर्वकम्
दोलारूढंप्रपश्यंतिकृष्णंकलिमलापहम् ६
अपराधसहस्रैस्तुमुक्तास्तेनगनंदिनि
तावत्तिष्ठंतिपापानिकोटिजन्मकृतान्यपि ७
यावन्नांदोलयेद्देवंविश्वेशंविश्वनायकम्
कलौवैयेप्रपश्यंतिदोलारूढंजनार्दनम् ८
गोघ्नादिकाःप्रमुच्यंतेकाकथाइतरेष्वपि
दोलोत्सवेप्रहृष्टास्तुरुद्रेणसहिताःसुराः ९
कुर्वंतिप्रांगणेनृत्यंगीतवाद्यंचहर्षिताः
ऋषयोगणगंधर्वारंभाद्यप्सरसांगणाः १०
वासुकिप्रमुखानागास्तथादेवाःसुरेश्वराः
दोलायांचसमायांतिविष्णुदर्शनलालसाः ११
दोलायात्रानिमित्तंतुदोलाह्नेमधुमाधवे

भूतानिसंतिभूपृष्ठेयेकेचिद्देवयोनयः १२
समायांतिमहादेविकृष्णेदोलास्थितेध्रुवम्
विष्णुंदोलास्थितंदृष्ट्वात्रैलोक्यस्योत्सवोभवेत् १३
तस्मात्कार्यशतंत्यक्त्वादोलाह्वेउत्सवंकुरु
प्रह्लादस्तुसमायातिविष्णुर्दोलाधिरोहणम् १४
कुरुतेचमहादेविवरदंतमनुस्मरन्
दोलास्थितस्यकृष्णस्ययेकुर्वंतिप्रजागरम् १५
सर्वपुरायफलप्राप्तिर्निमेषैकेनजायते
दोलायांसंस्थितंविष्णुंपश्यंतिमधुमाधवे १६
क्रीडंतिविष्णुनासार्द्धंदेवदेवेनवंदिताः
दच्चिणाभिमुखंदेवंदोलारूढंसुरेश्वरि १७
सकृद्दृष्ट्वातुगोविंदंमुच्यतेब्रह्महत्यया
ॐदोलारूढायविद्महेमाधवायचधीमहि
तन्नोदेवःप्रचोदयात् १८
इदंगायत्र्यापूजनम्
माधवायगोविंदायश्रीकंठायनमोनमः
पूजनंमंत्रपूर्वंचकर्तव्यंविधिपूर्वकम् १९
गुरवेदच्चिणांदद्याद्यथाशक्त्यासमाहितः
गायन्विष्णोःसदाभक्त्यापरिपूर्णंततोभवेत् २०
किमन्यद्बहुनोक्तेनभूयोभूयोवरानने
दोलायांसंस्थितोविष्णुःसर्वपापापहारकः २१
पूजितोयैर्नरैःसम्यक्सदासर्वंददातिच
यत्रदेवाःसगंधर्वाःकिन्नराऋषयस्तथा २२
आयांतिबहुधातत्रदोलारूढेनसंशयः २३
ॐनमोभगवतेवासुदेवायेतिमंत्रेणपूजनंतत्रकारयेत्
षोडशोपचारैःपूजाचकर्तव्याविधिपूर्वकम्
धर्मार्थमुख्यायेकामास्तेसर्वेप्राप्नुयुर्ध्रुवम् २४
अंगन्यासंकरन्यासंन्यासंशारीरकंचयत्
तत्सर्वंतुप्रकर्त्तव्यंमंत्रेणानेनसुव्रत २५
आगमोक्तेनमंत्रेणकर्त्तव्योहिमहोत्सवः

श्रीलक्ष्म्यासहितंदेवंदोलायांचप्रकल्पयेत् २६
देवाग्रेवैष्णवाःस्थाप्यानारदाद्याःसुरर्षयः
विष्वक्सेनादिकाभक्तास्थाप्यास्तेह्यग्रतःसदा २७
पंचवादित्रनिर्घोषैःकुर्यादारार्तिकंबुधः
यामेयामेतथादेविपूजनीयःप्रयत्नतः २८
नालिकेरैस्तथाशुभ्रैःकदलैर्वातथापुनः
अर्घंदद्यात्ततोदेविपूजनीयःप्रयत्नतः २९
देवदेवजगन्नाथशंखचक्रगदाधर
अर्घंगृहाणमेदेवकृपांकुरुममोपरि ३०
तच्छेषंवैष्णवानांतुदद्यात्प्राच्छादिकंपुनः
वादनंनर्त्तनंतत्रकर्त्तव्यंवैष्णवैर्नरैः ३१
आंदोलनंततःसर्वैःकर्त्तव्यंचविशेषतः
पृथिव्यांयानितीर्थानिक्षेत्राणिचसुरेश्वरि ३२
सर्वाण्येतानिवैतत्रद्रष्टुमायांतितद्दिने
एवंज्ञात्वासदादेविकर्त्तव्यःसोत्सवोमहान् ३३
ब्राह्मणाःक्षत्रियावैश्याःशूद्रायाश्चान्यजातयः
शंखचक्रगदाधाराज्ञातव्यानगनंदिनि ३४

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर-संवादे दोलामहोत्सवोनामत्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः-

महादेवउवाच-
अस्मिन्वैचैत्रमासेतुकार्योदमनकोत्सवः
द्वादश्यांतुतथासम्यग्विधिःकार्योविशेषतः १
वैष्णवैःश्रद्धयापुण्योजनतानंदवर्द्धनः
देवानंदसमुद्भूतादिव्यादमनमंजरी २
निवेद्यावैष्णवैर्भक्तैःसर्वपूजाफलेप्सुभिः
चैत्रेतुशुक्लपक्षेतुद्वादश्यांनगनंदिनि ३
कारयेत्परयाभक्त्यामहोत्सवमनास्तथा
तत्रादौचस्वयंगत्वाआरामंप्रतिचानघे ४

गुर्वाज्ञयाप्रकर्त्तव्यंपूजनंरतिनासह
कामदेवनमस्तेऽस्तुविश्वमोहनकारक ५
विष्णोरर्थेविचेष्यामिकृपांकुरुममोपरि
गीतवादित्रनिर्घोषैरानेतव्योगृहंप्रति ६
एकादश्यांसुरश्रेष्ठिह्यधिवासनपूर्वकम्
कर्त्तव्यंपूजनंतत्ररात्रौभक्त्यातुवैष्णवैः ७
कर्त्तव्यमग्रतस्तस्यसर्वतोभद्रमंडलम्
स्थापयित्वातुदेवेशंरतिनासहतत्रवै ८
ग्राच्छाद्यश्वेतवस्त्रेणदमनंस्थापयेद्बुधः
तत्रवैपूजनंकार्यंवैष्णवैर्द्विजसत्तमैः ९
क्लींकामदेवायनमोह्रींरत्यैचतथानमः
एंद्र्याादिदिशिसंस्थाप्यकंदर्प्पंपूजयेद्बुधः १०
गंधंपुष्पंतथाधूपंदीपमारार्तिकंतथा
रात्रौभक्त्याप्रकर्त्तव्यंविधिनात्रसुरेश्वरि ११
मदनायनमइतिप्राच्याम्
मन्मथायनमइतिग्राग्न्येय्याम्
कंदर्पायनमइतियाम्ये
ग्रनंगायनमइतिरक्षोदिशि
भस्मशरीरायनमःइतिवारुण्याम्
स्मरायनमइतिवायव्याम्
ईश्वरायनमःइतिकौबेर्याम्
पुष्पबाणायनमः
इतिईशान्याम्
चतुर्दिक्षुचसर्वासुपूजनंतत्रकारयेत्
पूजितेकेशवेचात्रसर्वेदेवाःसुपूजिताः १२
ग्रक्षतगंधधूपदीपैर्नैवेद्यैस्तांबूलैश्चदमनकंपूजयित्वातु
तत्पुरुषायविद्महेकामदेवायधीमहि
तन्नोऽनगःप्रचोदयात्
इतिवैकामगायत्र्याग्रष्टोत्तरशतवारंतंदमनकंग्रभिमंत्र्यनमस्कुर्यात्
नमोस्तुपुष्पबाणायजगदाह्लादकारिणे

मन्मथायजगन्नेत्रेरतिप्रीतिकरायच १३
देवदेवनमस्तेऽस्तुश्रीविश्वेशनमोस्तुते
रतिपतेनमस्तेस्तुनमस्तेविश्वमंडन १४
नमस्तेस्तुजगन्नाथसर्वबीजनमोस्तुते
एतैर्नानाविधैर्मंत्रैरागमोक्तैर्विशेषतः १५
पूजनीयःप्रयत्नेनलक्ष्म्यासहजनार्दनः
ततोनिवेद्यतत्कर्मजागरंकारयेद्बुधः १६
देवदेवजगन्नाथवांछितार्थप्रदायक
हृत्स्थान्पूरयमेविष्णोकामान्कामेश्वरीप्रिय १७
इत्येतैर्बहुभिर्मंत्रैःपूजनीयःप्रयत्नतः
श्रीनिवासोजगन्नाथोभक्तानांशमभीप्सकः १८
ततोदमनकमुष्टिंगृहीत्वातत्रमूलमंत्रेण
श्रीश्रीविष्णवादिदेवेभ्योदमनकंनिवेदयेत्
ततोगंधादिभिर्महतीपूजागीतवाद्यनृत्यैश्चमहोत्सवःकार्यः
देवाग्रेस्थापितःकलशोदकंदेवस्यपादयोर्निक्षिप्यजलक्रीडातस्मिन्दिनेकर्त्तव्य
ा
ततःस्वगुरुंवस्त्रालंकारद्रविणैःश्रद्धयाप्रपूजयेत्
ततःस्वयंवैष्णवैर्बंधुभिःसहअश्नीयात् १९
महादेवउवाच-
ततोदमनकमंजर्यायोवैविष्णुंप्रपूजयेत्
पूजितेवैजगन्नाथेह्यहंवैपूजितःसदा २०
ब्रह्महाहेमहारीचमद्यपोमांसभक्षकः
मुच्यतेपातकाद्देविदृष्ट्वादमनकोत्सवम् २१
एवंदमनकोदेविपूजितोयैःसुवैष्णवैः
सर्वंतीर्थंकृतं तैस्तुमंजर्यापूजनंकृतम् २२
वेदाध्ययनंकृतंतेनशास्त्राध्ययनमेवच
अग्निहोत्रंकृतंतेनमंजर्यापूजितोहरिः २३
तत्कुलंतुमहज्ज्ञेयंब्राह्मंवाचाथक्षात्रियम्
शौद्रंवैश्यंचयच्चान्यद्धन्यंधन्यतरंस्मृतम् २४
यस्मिन्कुलेऽवतीर्याथोत्सवोदमनकःकृतः

सचधन्यस्तुधन्योवैयेनविष्णुःप्रपूजितः २५
दमनकेनतुतथासंप्राप्तेमधुमाधवे
संपूज्यगोसहस्रस्यदेविसंलभतेफलम् २६
मल्लिकाकुसुमैर्देवंवसंतेगरुडध्वजम्
योऽचयेत्परयाभक्त्यामुक्तिभागीभवेत्तुसः २७
मरुकोदमनकश्चैवसद्यस्तुष्टिकरोहरेः
अतःपूजाप्रकर्त्तव्यावैष्णवैर्नरसत्तमैः २८
गोसहस्रंकृतंतेनकन्यादानंतथैवच
पृथ्वीदानंकृतंतेनविष्णोर्वैपूजनेकृते २९
एकामेकांगृहीत्वातुमंजरींदमनस्यतु
यःपूजयतिदेवेशंसंप्राप्तेमधुमाधवे ३०
पुगयसंख्यांनजानेवैतस्याहंनगनंदिनि
सवैचतुर्भुजोभूत्वाइहलोकेपरत्रच
धर्मानर्थांश्चकामांश्चप्रभुंक्तेवैष्णवंपदम् ३१

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
दमनकमहोत्सवोनामचतुरशीतितमोऽध्यायः ८४

## पञ्चाशीतितमोऽध्यायः

महादेवउवाच–
वैशाख्यांपूर्णमास्यांवैजलस्थंजगदीश्वरम्
पूजयेद्वैष्णवोभक्त्याकृतोत्साहोमुदान्वितः १
गीतंवाद्यंतथानृत्यंकृत्वापुगयंमहोत्सवम्
एकादश्यांसुरश्रेष्ठंपश्येद्वाथप्रहर्षितः २
गीतंगायन्हरेर्भक्त्याकर्त्तव्यःसोत्सवःशुभः
शयनंकुरुदेवेशजलेऽस्मिन्वैसुरेश्वर ३
त्वयिसुप्तेजगत्सुप्तंभवत्येवनसंशयः
घनागमेप्रकुर्वंतिजलस्थवैजनार्दनम् ४
येनरास्तुसुरश्रेष्ठेनदाहोनरकेभवेत्
स्वर्णपात्रेतथारौप्येताम्रेवाचसुरेश्वरि ५
मृन्मयेवाथकर्त्तव्यंशयनंविष्णुसंज्ञकम्

तत्रतोयंचसंस्थाप्यशीतलंगंधवासितम् ६
तस्मिंस्तोयेततोविष्णोःस्थापनंकारयेद्बुधः
गोपालनाम्नीमूर्त्तिश्चरामनाम्नीतथापिवा ७
शालग्रामशिलावापिस्थापनीयाविशेषतः
प्रतिमांवामहाभागतस्यपुरायमनंतकम् ८
यावद्धराधरालोकायावच्चंद्रदिवाकरौ
तावत्तस्यकुलेकश्चिन्नभवेद्देविनारकी ९
तस्माज्ज्येष्ठेमहादेवितोयस्थंपूजयेद्धरिम्
वीततापोनरस्तिष्ठेद्यावदाभूतसंप्लवम् १०
सुशीतलेतथातोयेतुलसीदलवासितम्
शुचिशुक्रगतेकालेपूजयेद्धरणीधरम् ११
शुचिशुक्रगतेकालेयेऽचयिष्यंतिकेशवम्
जलस्थंविविधैःपुष्पैर्मुच्यंतेयमपीडनात् १२
जलप्रेष्ठोयतोविष्णुर्जलशायीजलप्रियः
तस्माद्ग्रीष्मेविशेषेणजलस्थंपूजयेद्धरिम् १३
नीरमध्येस्थितंकृत्वाशालग्रामसमुद्भवम्
येनार्चितोमहाभक्त्यासभवेत्कुलपावनः १४
कर्कराशिगतेसूर्येमिथुनस्थेविशेषतः
येनार्चितोहरिर्भक्त्याजलमध्येतुसुंदरि १५
द्वादश्यांतुविशेषेणजलस्थजलशायिनः
येनार्चनंकृतंतेनकोटियज्ञशतंकृतम् १६
निक्षिप्यजलपात्रेतुमासेमाधवसंज्ञके
माधवंयेऽचयिष्यंतिदेवास्तेतुनराभुवि १७
पात्रेगंधोदकंकृत्वायःक्षिपेद्गरुडध्वजम्
द्वादश्यांपूजयेद्रात्रौमुक्तिभागीभवेत्तुसः १८
अश्रद्दधानःपापात्मानास्तिकोऽच्छिन्नसंशयः
हेतुनिष्ठश्चपंचैतेनपूजाफलभागिनः १९
तथामहादेविप्रभुंजलस्थंजगदीश्वरम्
पूजयेद्योनरोनित्यंमहापापैःप्रमुच्यते २०
ॐह्रीह्रींरामायनमः

इतिमंत्रेणदेवेशिपूजनंतत्रवैस्मृतम्
ॐक्लींकृष्णायगोविंदायगोपीजनवल्लभायनमः
इतिमंत्रेणगिरिजेउदकंचाभिमंत्रयेत्
देवदेवमहाभागश्रीवत्सकृतलांछन २१
महादेवनमस्तेऽस्तुनमस्तेविश्वभावन
अर्घंगृहाणभोदेवमुक्तिंमेदेहिसर्वदा २२
नानाविधैःसुपुष्पैश्चपूजयेद्गरुडासनम्
सर्वबाधाविनिर्मुक्तोविष्णोःसायुज्यतामियात् २३
रात्रौजागरणंतत्रद्वादश्यांसुसमाहितः
भक्तिपूर्वंभजेद्देवंविष्णुमव्ययमक्षयम् २४
एवंवैशाखसंबंधीभक्तिभावेनतत्परैः
उत्सवोविष्णुसंज्ञस्तुकर्त्तव्योभक्तिमिच्छुभिः २५
आगमोक्तेनमंत्रेणविधिंतत्रप्रकारयेत्
कृतेसतिमहादेविकोटियज्ञसमंफलम् २६
रागद्वेषविनिर्मुक्तोमहामोहनिवर्त्तकः
इहलोकेसुखंभुक्त्वायातिविष्णोःसनातनम् २७
ब्राह्मणोभक्तिभावेनयःकरोत्युत्सवंभुवि
सर्वपापविनिर्मुक्तोवैकुंठंगच्छतेध्रुवम् २८
वेदाध्ययनहीनोऽपिशास्त्राध्ययनवर्जितः
हरिभक्तिंतुसंप्राप्यलभतेवैष्णवंपदम् २९
आत्मारामःसदामुक्तोविजितात्माभवेत्तुसः
सवैविष्णुपदंयातियावच्चंद्रदिवाकरौ ३०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेशयनमहोत्सवोनामपञ्चाशीतितमोऽध्यायः ८५

## षडशीतितमोऽध्यायः-

महादेवउवाच-
श्रावणेमासिसंप्राप्तेपवित्रारोपणोविधिः
यस्मिन्कृतेतुदेवेशिदिव्यभक्तिःप्रजायते १
पवित्रारोपणंविष्णोःकर्तव्यंश्रद्धयाबुधैः

संपूर्णाजायतेतस्यपूजापार्वतिवार्षिकी २
पवित्रारोपणेविष्णोर्जायतेसुखमात्मनः
संपूजितेसदाविष्णौनानासुखमवाप्नुयात् ३
सूत्रंवाससमानीयब्राह्मरयाकर्तितंतथा
स्वेनैवकर्तितंसूत्रंतेनैवचप्रकारयेत् ४
सच्छूद्रयाकर्तितंसूत्रंतद्ग्राह्यंवातथैवच
अन्यथाविक्रयेणापिग्राह्यंचापियथातथम् ५
क्षौमेनैवप्रकर्तव्यःपवित्रारोपणोविधिः
रूप्येणवातथाकार्यंपवित्रंविष्णुदैवतम् ६
सौवर्णेनापिदेवेशिकर्तव्यंविधिपूर्वकम्
अभावेसर्वधातूनांग्राह्यंसूत्रंतथाबुधैः ७
कृत्वातुत्रिवृतंसूत्रंप्रक्षाल्यमुदकेनतु
लिगेलिगप्रमाणंचप्रतिमायांयथाविधिः ८
पादौवैजानुपर्यंतंतथानाभिसमंस्मृतम्
ज्येष्ठंमध्यंकनिष्ठंचपवित्रंकारयेद्बुधः ९
संवत्सरदिनैस्तद्वत्तदर्द्धार्द्धेनसंख्यया
सूत्रेणैवप्रकर्त्तव्यंग्रंथिनाष्टोत्तरंशतम् १०
तदर्द्धसंख्यकेनापियुक्तंवातत्रपार्वति
लिगेवैलिगसंज्ञंतुगंगानागैश्चसंयुतम् ११
प्रतिमायांतथादेविपवित्रंवनमालकम्
यथाशोभातथाकार्यंयेनविष्णुःप्रसीदति १२
एकंवैसुपवित्रंतुगंधाख्यंकारयेत्सदा
तंतुनायच्चसंयुक्तंकर्त्तव्यंवैष्णवैर्नरैः १३
देवानांचतथाप्रोक्तंपवित्रंविष्णुदैवतम्
अंबरीषाद्याभक्ताश्चअन्येऽपिचध्रुवादयः १४
पवित्राणिततःपश्चाद्दातव्यानीहपार्वति
प्रतिपद्धनदस्योक्तापवित्रारोपणेतिथिः १५
लक्ष्म्यादेव्याद्वितीयातुतिथीनामुत्तमातिथिः
तृतीयातुतवप्रोक्ताचतुर्थीगणपस्यच १६
पंचमीचंद्रमसश्चैवषष्ठीवैकार्त्तिकस्यच

सप्तमीचरवेःप्रोक्तादुर्गायाश्चाष्टमीस्मृता १७
नवमीचैवमातृणांयमस्यदशमीतथा
एकादशीतुसर्वेषांद्वादशीमाधवस्यच १८
त्रयोदशीतुकामस्यशर्वस्योक्ताचतुर्दशी
तद्वत्पंचदशीख्याताधातुर्वैह्यर्चनेपुनः १९
एतावैतिथयःप्रोक्ताःपवित्रारोपणोचिताः
कनिष्ठेद्वादशप्रोक्तामध्यमेद्विगुणास्मृताः २०
त्रिगुणाश्चोत्तमेचैवग्रंथयश्चपवित्रके
कर्पूरकेसराभ्यांवाचंदनेनहरिद्रया २१
रंजयित्वातुतत्सर्वंस्थाप्यंनवकरंडके
देवस्ययजनंयत्रस्थाप्यानिदेववत्तदा २२
आदौदेवार्चनंकृत्वावासनंसपवित्रकम्
अधिवासितेपवित्रेतुततोवैपूजनंस्मृतम् २३
पवित्रेषुचयद्देवास्तेषांनिकटमाचरेत्
ब्रह्माविष्णुस्तथारुद्रस्त्रयोवैसूत्रदेवताः २४
क्रियाचपौरुषीवीराचतुर्थीचापराजिता
जयाचविजयाचैवमुक्तिदाचसदाशिवा २५
मनोन्मनीतुनवमीदशमीसर्वतोमुखी
ग्रंथीनांदेवताश्चैवसूत्रेषुविनिवेशयेत् २६
आवाहनमुद्रयावैशास्त्रोक्तविधिनाततः
आवाह्यतत्रताःसम्यक्संनिधीकरणंस्मृतम् २७
संनिधीकरणमुद्रयासंनिधीकरणम्
रक्ष्यामुद्रयासंरक्ष्यधेनुमुद्रयाअमृतीकृत्य
आनीयदेवस्याग्रेकलशोदकंगृहीत्वा
आगमोक्तेनमंत्रेणप्रोक्षणंविधायक्लींकृष्णायइतिमंत्रेणप्रोक्षणंगंधधूपदीप
नैवेद्यादिकंदत्त्वातांबूलादिकंदत्त्वाषोडशोपचारादिनापवित्रदेवता
अभ्यर्च्यगंधपवित्रंधूपितंकृत्वादेवाभिमुखःसन्
नमस्कारमुद्रयादेवंअभिमंत्रयीत
आमंत्रितोमहादेवसार्द्धंदेव्यागणादिभिः
मंत्रैर्वालोकपालैश्चसहितःपरिवारकैः २८

आगच्छभगवन्विष्णोविधिसंपूर्णहेतवे
प्रातस्त्वत्पूजनंकुर्मःसान्निध्यंनियतंकुरु २९
तद्गंधंचपवित्रंचदेवस्यराघवस्यच
श्रीविष्णोश्चरणेतत्निक्षिप्यप्रातः
स्वक्रियांविधायपुण्याहस्वस्तिवाचनजयजयशब्दैर्घंटादिवादित्र
निर्घोषतूर्यादिशब्दैःपवित्रैःपूजांकुर्यात्
ततःप्रथमंज्येष्ठंततोमध्यमंकनिष्ठंच
एभिःसर्वैर्यथाक्रमेणपूजांकुर्यात्
ॐवासुदेवायविद्महेविष्णुदेवाधीयमहि
तन्नोदेवःप्रचोदयात्
इतिपवित्रदानंअथवास्वमंत्रैः
ततोवैमहतींपूजांविष्णोःकुर्यात्प्रसादिनीम्
ययावैकृतयादेविविष्णुरात्माप्रसीदति ३०
समंताद्दीपमालाचकर्त्तव्याचविधानतः
चतुर्विधंतथाचान्नं नैवेद्यंकारयेद्बुधः ३१
पवित्राणिततोदद्यात्पूजितानितुशोभने
भक्त्याचैवविशेषेणश्रीगुरुंपूजयेत्ततः ३२
वस्त्रालंकारविधिनापूजनीयोगुरुर्महान्
पूजयित्वागुरुंतत्रपवित्रंधारयेत्ततः ३३
अथयेवैष्णवाःसंतितेभ्यस्तांबूलादिकंदत्त्वापूर्णाहुतिमग्नयेदत्त्वाश्रीनिवासायश्र
ीकृष्णा
यकर्मनिवेदयेत्
मंत्रहीनंक्रियाहीनंभक्तिहीनंतुकेशव
यत्पूजितोमयासम्यक्संपूर्णंयातुमेध्रुवम् ३४
ततउद्वास्यइष्टबंधुभिस्तथावैष्णवैर्विप्रैर्वासहितःसन्मृष्टमन्नंस्वयंभुंजीत
एतत्पूजनकंदिव्यंयेशृण्वंतिद्विजोत्तमाः
सर्वपापविनिर्मुक्तायांतिविष्णोःपरंपदम् ३५
यावत्तपतिवैचंद्रोयावत्तपतिवैरविः
पवित्रारोपकस्तद्वत्तप्यतेनात्रसंशयः ३६
पृथिव्यांयानिदानानिनियमाश्चतथापुनः

सर्वेवैपूर्णतांयांतिपवित्रारोपणेकृते ३७
उत्सवानांचराजायंपवित्रारोपणोविधिः
ब्रह्महाशुध्यतेतत्रनात्रकार्याविचारणा ३८
सत्यंसत्यंपुनःसत्यंयदुक्तंनगनंदिनि
पवित्रारोपणेपुरायंदर्शनेतुतथास्मृतम् ३९
शूद्रैर्वाथमहाभागेपवित्रारोपणोविधिः
कृतोयैर्भक्तिभावेनतेवैधन्यतमाःस्मृताः ४०
धन्योऽहकृतकृत्योऽहसौभाग्योधरणीतले
मयातुयाकृताभक्तिर्वैष्णवीमुक्तिदायिनी ४१
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तरखंडेउमामहेश्वर
संवादेपवित्रारोपणंनामषडशीतितमोऽध्यायः ८६

सप्ताशीतितमोऽध्यायः-

महेश्वरउवाच-
चैत्रेतुचंपकेनैवजातीपुष्पेणवापुनः
पूजनीयःप्रयत्नेनकेशवःक्लेशनाशनः १
दमनकैर्मरुकैश्चैवबिल्वपुष्पैरथापिवा
पूजयेज्जगतामीशंविष्णुंसर्वेश्वरेश्वरम् २
शतपत्रैस्तथादिव्यैरक्तैर्वासुसमाहितः
पूजयंतिनराविष्णुंचैत्रमासेसुरेश्वरि ३
वैशाखेतुसदादेविह्यर्चनीयोमहत्प्रभुः
केतकीपत्रमादायवृषस्थेचदिवाकरे ४
येनार्चितोहरिर्भक्त्याप्रीतोमन्वंतरंशतम्
ज्येष्ठेमासेतुसंप्राप्तेनानापुष्पैःप्रपूजयेत् ५
पूजितेदेवदेवेशेसर्वेदेवाःसुपूजिताः
कृत्वापापसहस्राणिमहापापशतानिच ६
तेपियास्यंतिभोदेवियत्रविष्णुःश्रियासह
आषाढेमासिसंप्राप्तेपूजांकुर्याद्विशेषतः ७
करवीरैरक्तपुष्पैस्तथाब्जैर्वासदानराः
पूजांकुर्वंतियेविष्णोस्तेज्ञेयाःपुरायभागिनः ८

जातरूपनिभैर्विष्णुंकदंबकुसुमैस्तथा
येऽर्चयिष्यंतिगोविंदंनतेषांसौरिजंभयम् ९
घनागमेघनश्यामःकदंबकुसुमार्चितः
ददातिवांछितान्कामान्यावदिंद्राश्चतुर्दश १०
यथापद्मालयांप्राप्यप्रीतोभवतिमाधवः
कदंबकुसुमंलब्ध्वाप्रीतोभवतिलोककृत् ११
तुलसीकृष्णतुलसीवंजुलैर्वासुरेश्वरि
सर्वदापूजितोविष्णुःकष्टंहरतिनित्यशः १२
श्रावणेमासिसंप्राप्तेयेऽर्चयंतिजनार्दनम्
अतसीपुष्पमादायतथादूर्वादलेनतु १३
नानापुष्पैर्विशेषेणपूजनीयःप्रयत्नतः
ददातिविपुलान्कामान्यावदाभूतसंप्लवम् १४
भाद्रमासेतुसंप्राप्तेशृणुत्वंनगनंदिनि
चंपकैर्वाश्वेतपुष्पैरक्तसिंदूरकैस्तथा १५
कह्लारैर्वामहादेविसर्वकामफलंलभेत्
आश्विनेवैशुभेमासेकर्त्तव्यंविष्णुपूजनम् १६
यूथिकानवजातीभिस्तथानानाविधैःशुभैः
पूजनीयःप्रयत्नेनभक्तिपूर्वंसदाजनैः १७
पद्मान्येवसमानीययेऽर्चयंतिजनार्दनम्
धर्मार्थकाममोक्षांस्तेलभंतेमानवाभुवि १८
कार्तिकेमासिसंप्राप्तेपूजनीयोमहेश्वरः
यावंतिऋतुपुष्पाणिदेयानिमाधवस्यच १९
तिलानितिलपुष्पाणितैर्वाह्यर्चनकंचरेत्
पूजितेसतिदेवेशिअनंतफलमश्नुते २०
बकुलपुष्पैःपुन्नागैश्चंपकैर्वाजनार्दनम्
कार्तिकेपूजयिष्यंतितेदेवानहिमानवाः २१
मार्गशीर्षेप्रयत्नेनपूजनीयःसदाप्रभुः
नानापुष्पैःसनैवेद्यैर्धूपैर्नीराजनैस्तथा २२
मार्गशीर्षेविशेषेणदिव्यैः पुष्पैः प्रपूजयेत्
पौषमासेमहादेविस्वर्चनंशुभदंस्मृतम् २३

नानातुलसिपत्रैश्चमृगनाभिजलैस्तथा
माघमासेतुसंप्राप्तेनानापुष्पैःप्रपूजयेत् २४
पूजितेदेवदेवेशेवांछितंलभतेध्रुवम्
कर्पूरजातथापूजानानानैवेद्यमोदकैः २५
फाल्गुनेचैवसंप्राप्तेह्यर्चनंमाधवस्यच
कृत्वावासंतिकींपूजांपुष्पारायादायसर्वशः २६
नवीनैर्वाथदेवेशिसर्वैर्वापूजयेत्ततः
पूजितेतुजगन्नाथेवैकुंठपदमव्ययम्
प्राप्नोतिपुरुषोनित्यंश्रीविष्णोश्चप्रसादतः २७
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेउमा
महेश्वरसंवादेमासिकपुष्पोनामसप्ताशीतितमोऽध्यायः ८७

## अष्टाशीतितमोऽध्यायः-

सूतउवाच-
अतःपरंकार्तिकमाहात्म्यंप्रस्तूयते
सूत उवाच-
एकदाद्वारकामागादृषिःकृष्णदिदृक्षया
पुष्पारायादायदिव्यानिकल्पवृक्षोत्थितानिच १
नारदंस्वागतेनासौकृष्णःसत्कारमाचरत्
इदमर्घ्यमिदंपाद्यमित्युवाचासनंददत् २
नारदस्तानिपुष्पाणिकृष्णायोपाजहारच
कृष्णःषोडशसाहस्रस्त्रीभ्यस्तानिव्यभज्यत ३
विस्मृत्यसत्यभामांतुसर्वाभ्यस्तान्यदात्प्रभुः
सत्यभामाततःक्रुद्धाक्रोधागारंसमाविशत् ४
समाज्ञायततःकृष्णस्तत्रगत्वासमाहितः
सत्यभामांमानयित्वागरुडंमनसास्मरन् ५
स्मृतमात्रस्तुगरुडस्तदागत्याग्रतःस्थितः
आरुह्यवेगात्पत्रंतमित्युवाचप्रियांप्रभुः ६
सत्येत्वंमाकृथाःक्रोधंत्वत्कृतेदेवतैःसह
विरुध्यदेवराजानंरोपयिष्येतवांगणे ७

कल्पद्रुमंमहाभागेऽपराधंमेक्षमांकुरु
इतिकृत्वाप्रतिज्ञांतुकृष्णः ससत्यभामया ८
देवलोकमगात्तूर्णंयत्रदेवः सवृत्रहा
याचितः कल्पवृक्षार्थमुत्तरंदत्तवान्प्रभुम् ९
नायंदेवद्रुमोभूम्यांप्राप्तुंयोग्यस्त्वयाप्रभो
तदाक्रुद्धोमहाबाहुर्वृक्षमुत्पाटचमूलतः १०
वाहमारोपयामासवेगेनबलवत्तरः
तदावज्रधरोवेगाद्वज्रमुद्यम्यवीर्यवान् ११
गरुडंताडयामासकल्पवृक्षंत्यजेरिति
तदापत्ररथः पत्रंकुलिशस्यापिगौरवात् १२
एकंविसर्जयामासत्वरयाप्रजगामच
तेनवज्रप्रहारेणत्रयोभूवपतत्रिणः १३
मयूरोनकुलश्चाषः कृष्णोद्वारावतीमगात्
आगत्यसत्यभामायागृहेचैनमरोपयत्
तदैवनारदोऽभ्यागात्सत्ययामानितोबहु १४
सत्यभामोवाच-
ईदृशः कल्पवृक्षोऽयपतिरेतादृशः प्रभुः
भवेभवेकथंप्राप्यस्तदाख्यातुभवान्मम १५
इतिपृष्टस्तदाप्राहनारदोमुनिसत्तमः
प्राप्यतेसत्यभामेऽयतुलापुरुषदानतः १६
सत्यभामातदाकृष्णंकल्पवृक्षसमन्वितम्
नारदायैवसाप्रादात्तोलयित्वाविधानतः
सर्वोपस्करमाकृष्यनारदस्त्रिदिवंययौ १७
सूतउवाच-
श्रियः पतिमथामंत्र्यगतेदेवर्षिसत्तमे
हर्षोत्फुल्लाननासत्यावासुदेवमथाब्रवीत् १८
सत्यभामोवाच-
धन्यास्मिकृतकृत्यास्मिसफलंजीवितंचमे
मज्जन्मनिनिदानेचधन्यौतौपितरौमम १९
यौमां त्रैलोकसुभगांजनयामासतुर्ध्रुवम्

षोडशस्त्रीसहस्त्राणांवल्लभाहंयतस्तव २०
यस्मान्मयादिपुरुषःकल्पवृक्षसमन्वितः
यथोक्तविधिनासम्यङ्नारदायसमर्पितः २१
यद्वार्तामपिजानंतिभूमिसंस्थानजंतवः
सोऽयकल्पद्रुमोगेहेममतिष्ठतिसांप्रतम् २२
त्रैलोक्याधिपतेश्चाहंश्रीपतेरतिवल्लभा
अतोऽहप्रष्टुमिच्छामिकिंचित्त्वांमधुसूदन २३
यदित्वंमत्प्रियकरःकथयस्वात्रविस्तरात्
श्रुत्वातच्चपुनश्चाहंकरोमिहितमात्मनः २४
यथाकल्पंत्वयादेववियुक्तास्यांनकर्हिचित्
सूतउवाच-
इतिप्रियावचःश्रुत्वास्मेरास्योऽयगदाग्रजः २५
सत्याकरेकरंकृत्वागमत्कल्पतरोस्तलम्
निषिद्ध्यानुचरंलोकंसविलासंप्रियान्वितः २६
प्रहस्यसत्यामामंत्र्यप्रोवाचजगतांपतिः
तत्प्रीतिपरितोषार्थंलसत्पुलकितांगजः २७
कृष्णउवाच-
नमेत्वत्तःप्रियतमाकाचिदन्यानितंबिनी
षोडशस्त्रीसहस्त्राणांप्रियेप्राणसमाह्यसि २८
त्वदर्थंदेवराजेनविरोधोदैवतैःसह
त्वयायत्प्रार्थितंकांतेशृणुयच्चमहद्भवेत् २९
अदेयमथवाकार्यमकथ्यमपियत्पुनः
त्वत्कृतंतुकथंप्रश्नंकथयामिनतुप्रिये
पृच्छस्वसर्वंकथयेयत्तेमनसिवर्तते ३०
सत्योवाच-
दानंव्रतंतपोवापिकिंतुपूर्वंमयाकृतम्
येनाहंमर्त्यजामर्त्येभवानीवाऽभवंकिल ३१
तवांगार्द्धहरानित्यंगरुडोपरिगामिनी
इंद्रादिदेवतावासमगमंचत्वयासह ३२
अतस्त्वांप्रष्टुमिच्छामिकिंकृतंतुमयाशुभम्

जन्मांतरेचकिंशीलाकाचाहंकस्यकन्यका ३३
श्रीकृष्णउवाच-
शृणुष्वैकमनाःकांतेयत्त्वंवैपूर्वजन्मनि
पुण्यंव्रतंकृतवतीतत्सर्वंकथयामिते ३४
आसीत्कृतयुगस्यांतेमायापुर्यांद्विजोत्तमः
आत्रेयोदेवशर्मेतिवेदवेदांगपारगः ३५
आतिथेयोऽग्निशुश्रूषुःसौरव्रतपरायणः
सूर्यमाराधयन्नित्यंसाक्षात्सूर्य्यइवापरः ३६
तस्यातिवयसश्चासीन्नाम्नागुणवतीसुता
अपुत्रःसस्वशिष्यायचंद्रनाम्नेददौसुताम् ३७
तमेवपुत्रवन्मेनेसचतंपितृवद्वशी
तौकदाचिद्वनंयातौकुशेध्महरणार्थिनौ ३८
हिमाद्रिपादजवनेचेरतुस्तौयतस्ततः
तौततोराक्षसंघोरमायांतंसमपश्यताम् ३९
भयविह्वलसर्वांगावसमर्थौपलायितुम्
निहतौरक्षसातेनकृतांतसमरूपिणा ४०
तौतुक्षेत्रप्रभावेणधर्मशीलतयापुनः
वैकुंठभवनंनीतौमद्गणैर्मत्समीपगैः ४१
यावज्जीवंतुयत्ताभ्यांसूर्यपूजादिकंकृतम्
तेनवैकर्मणाताभ्यांसुप्रीतोऽहकिलाभवम् ४२
शैवाःसौराश्चगाणेशावैष्णवाःशक्तिपूजकाः
मामेवप्राप्नुवंतीहवर्षांभःसागरंयथा ४३
एकोऽहपंचधाजातःक्रीडयन्नामभिःकिल
देवदत्तोयथाकश्चित्पुत्राद्याह्वाननामभिः ४४
ततश्चतौमद्भवनाधिवासिनौविमानयानौरविवर्चसावुभौ
मत्तुल्यरूपौममसन्निधानगौदिव्यांगनाचंदनभोगभोगिनौ ४५

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायां
श्रीकृष्णसत्यभामासंवादेअष्टाशीतितमोऽध्यायः ८८

## एकोननवतितमोऽध्यायः

श्रीकृष्णउवाच-
ततोगुणवतीश्रुत्वारक्षसानिहतावुभौ
पितृभर्तजदुःखार्त्ताकरुणंपर्यदेवयत् १
गुणवत्युवाच-
हानाथहापितस्त्यक्त्वागच्छतंक्वमयाविना
बालाहंकिंकरोम्यद्यह्यनाथाभवताविना २
कोनुमामास्थितांगेहेभोजनाच्छादनादिभिः
अकिंचित्कुशलांस्नेहात्पालयिष्यतिदुःखिताम् ३
हतभाग्यागतसुखाहतेशाहतजीविता
शरणंकंव्रजाम्यद्यत्वन्नाथाबतबालिशा ४
श्रीकृष्णउवाच-
एवंबहुविलप्याथकुररीवभृशातुरा
पपातभूमौविकलारंभावातहतायथा ५
चिरादाश्वस्यसाभूमौविलप्यकरुणंबहु
निमग्नादुःखजलधौशोकार्त्तासमवर्त्तत ६
साग्रहोपस्करान्सर्वान्विक्रीयशुभकर्मकृत्
तयोश्चक्रेयथाशक्तिपारलौकिकसत्क्रियाम् ७
तस्मिन्नेवपुरेवासंचक्रेप्रभृतिजीवितम्
विष्णुभक्तिपराशांतासत्यशौचाजितेंद्रिया ८
व्रतद्वयंतयासम्यगाजन्ममरणात्कृतम्
एकादशीव्रतंसम्यक्सेवनंकार्त्तिकस्यच ९
एतद्व्रतद्व्यंकांतेममातीवप्रियंकरम्
भुक्तिमुक्तिकरंसम्यक्पुत्रसंपत्तिकारकम् १०
कार्तिकेमासियेनित्यंतुलासंस्थेदिवाकरे
प्रातःस्नास्यंतितेमुक्तामहापातकिनोऽपिच ११
संमार्जनंगृहेविष्णोःस्वस्तिकादिनिवेदनम्
विष्णुपूजांप्रकुर्वंतिजीवन्मुक्ताश्चतेनराः १२
स्नानंजागरणंदीपंतुलसीवनसेवनम्
कार्त्तिकेयेप्रकुर्वंतितेनराविष्णुमूर्त्तयः १३

इत्थंदिनत्रयमपिकार्तिकेयेप्रकुर्वते
देवानामपितेवंद्याःकिंयैराजन्मतःकृतम् १४
इत्थंगुणवतीसम्यक्प्रत्यब्दंप्रतिनीयते
नित्यंविष्णोःपरिकरेभक्तातत्परमानसा १५
कदाचिज्ज्वरसासाथकृशांगीज्वरपीडिता
स्नातुंगंगांगताकांतेकथंचिच्छनकैस्तथा १६
यावज्जलांतरगताकंपिताशीतपीडिता
तावत्साविह्वलापश्यद्विमानंप्राप्तमंबरात् १७
शंखचक्रगदापद्महस्तैरासन्नमंबरात्
विष्णुरूपधरैःसम्यग्वैनतेयध्वजांकितैः १८
आरोहयन्विमानंतमप्सरोगणसेवितम्
चामरैर्वीज्यमानांतांवैकुंठमनयन्गणाः १९
अथसातद्विमानस्थाज्वलदग्निशिखोपमा
कार्त्तिकव्रतपुण्येनमत्सान्निध्यगताभवत् २०
अथब्रह्मादिदेवानांयथाप्रार्थनयाभुवम्
आगच्छतागणाःसर्वेयातास्तेऽपिमयासह २१
एतेपियादवाःसर्वेमद्गणाएवभामिनि
पितातेदेवशर्माभूत्सत्राजिदधिपोह्ययम् २२
यश्चंद्रशर्मासोऽक्रूरस्त्वंसागुणवतीशुभे
कार्त्तिकव्रतपुण्येनबहुमत्प्रीतिवर्द्धनी २३
ममद्वारेत्वयापूर्वंतुलसीवाटिकाकृता
तस्मादयंकल्पवृक्षस्तवांगणतःशुभे २४
कार्तिकेदीपमानंचयत्त्वयातुकृतंपुरा
त्वद्देहगेहसंस्थेयंतस्माल्लक्ष्मीस्थिराभवत् २५
यच्चव्रतादिकंसर्वंविष्णवेभर्तृरूपिणे
निवेदितवतीतस्मान्ममभार्यात्वमागता २६
आजन्ममरणात्पूर्वंकार्त्तिकेयद्व्रतंकृतम्
कदाचिदपितेनैवमद्वियोगंनपश्यसि २७
एवंयेकार्त्तिकेमासिनराव्रतपरायणाः
मत्सान्निध्यंगतास्तेऽपिप्रीतिदात्वंयथामम २८

यज्ञदानव्रततपःकारिणोमानवाःखलु
कार्त्तिकव्रतपुरायस्यनाप्नुवंतिकलामपि २९
इत्थंनिशम्यभुवनाधिपतेस्तदानींप्राक्पुरायजन्मभववैभवजातहर्षा
विश्वेश्वरंत्रिभुवनैकनिदानभूतंकृष्णंप्रणम्यवचनंनिजगादसत्या ३०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांकार्त्तिकमाहात्म्येश्रीकृष्ण
सत्यभामासंवादेसत्यापूर्वजन्मवर्णनंनामैकोननवतितमोऽध्यायः ८९

## नवतितमोऽध्यायः

सत्योवाच-
सर्वेऽपिकालावयवास्तवकालस्वरूपिणः
समानास्तुकथंनाथमासानांकार्तिकोवरः १
एकादशीतिथीनांचमासानांकार्त्तिकःप्रियः
कथंतेदेवदेवेशकारणंकिंचकथ्यताम् २
श्रीकृष्णउवाच-
साधुपृष्टंत्वयासत्येशृणुष्वैकाग्रमानसा
पृथोर्वैन्यस्यसंवादंदेवर्षेर्नारदस्यच ३
एवमेवपुरापृष्टोनारदःपृथुनाप्रिये
उवाचकार्त्तिकाधिक्येकारणंसर्वविन्मुनिः ४
नारदउवाच-
शंखनामाभवत्पूर्वमसुरःसागरात्मजः
त्रिलोकीमथनेशक्तोमहाबलपराक्रमः ५
जित्वादेवान्निराकृत्यस्वर्गलोकान्महासुरः
इंद्रादिलोकपालानामधिकारांस्तथाहरत् ६
तद्भयादथतेदेवाःसुवर्णाद्रिगुहांगताः
न्यवसन्बहुवर्षाणिसावरोधाःसवासवाः ७
सुवर्णाद्रिगुहादुर्गसंस्थितास्त्रिदशायदा
तद्वश्यानबभूवुस्तेतदादैत्योव्यचारयत् ८
हृताधिकारास्त्रिदशामयायद्यपिनिर्जिताः
भवंतिबलयुक्तास्तेकरणीयंममात्रकिम् ९
अद्यज्ञातंमयादेवावेदमंत्रबलान्विताः

तान्हरिष्येततःसर्वेबलहीनाभवंतिहि १०
इतिमत्वाततोदैत्योविष्णुमालक्ष्यनिद्रितम्
सत्यलोकाज्जहाराशुवेदानांचगणंप्रभुः ११
नीतास्तुतेनतेवेदास्तद्भयात्तेनिराक्रमन्
तोयेनिविविशुस्तेऽत्रयज्ञमंत्रसमन्विताः १२
तान्मार्गमाणःशंखोऽपिसमुद्रांतर्गतोभ्रमन्
नददर्शततोदैत्यःक्वचिदेकत्रसंस्थितान् १३
अथब्रह्मासुरैःसार्द्धंविष्णुंशरणमन्वयात्
पूजोपकरणंगृह्यवैकुंठभवनंगतः १४
तत्रतस्यप्रबोधायगीतवाद्यादिकाःक्रियाः
चक्रुर्देवागंधपुष्पधूपदीपान्मुहुर्मुहुः १५
अथप्रबुद्धोभगवांस्तद्भक्तिपरितोषितः
ददृशेतैःसुरैस्तत्रसहस्रार्कसमद्युतिः १६
उपचारैःषोडशभिःसंपूज्यत्रिदशास्तदा
दंडवत्पतिताभूमौतानुवाचाथकेशवः १७
विष्णुरुवाच-
वरदोऽहसुरगणागीतवाद्यादिमंगलैः
मनोऽभिलषितान्कामान्सर्वानिवददामिवः १८
इषस्यशुक्लैकादश्यायावदुद्बोधिनीभवेत्
निशातुर्यांशशेषेणगीतवाद्यादिमंगलैः १९
कुर्वंतिमनुजानित्यंभवद्भिर्यद्यथाकृतम्
तेमत्प्रियकरानित्यंमत्सांनिध्यंव्रजंतिहि २०
पाद्यार्घाचमनीयाद्यैर्भवद्भिर्यद्यथाकृतम्
तदद्भुतगुणंयस्माज्जातंवःसुखकारणम् २१
वेदाःशंखहृताःसर्वेतिष्ठंत्युदकसंस्थिताः
तानानयाम्यहंदेवाहत्वासागरनंदनम् २२
अद्यप्रभृतिवेदास्तुमंत्रबीजमखान्विताः
प्रत्यब्दंकार्तिकेमासिविश्रमंत्वप्सुसर्वदा २३
अद्यप्रभृत्यहमपिभवामिजलमध्यगः
भवंतोऽपिमयासार्द्धमायांतुसमुनीश्वराः २४

कालेऽस्मिन्नेवकुर्वंतिप्रातःस्नानंद्विजोत्तमाः
तेसर्वयज्ञावभृथैः सुस्नाताःस्युर्नसंशयः २५
येकार्तिकेव्रतंसम्यङ्नित्यंकुर्वंतिमानवाः
तेदेहांतेत्वयाशक्रप्राप्यामद्भवनंसदा २६
विघ्नेभ्योरक्षणंतेषांययाकार्यंममाज्ञया
देयात्वयाचवरुणपुत्रपौत्रादिसंततिः २७
धनवृद्धिर्धनाध्यक्षत्वयाकार्याममाज्ञया
ममरूपधराःसाक्षाज्जीवन्मुक्ताश्चतेनराः २८
आजन्ममरणाद्यैश्चकृतमेतद्व्रतोत्तमम्
यथोक्तविधिनासम्यक्तेमान्याभवतामपि २९
एकादश्यांयतश्चाहंभवद्भिःप्रतिबोधितः
अतश्चैषातिथिर्मान्यासदैवप्रीतिदामम ३०
व्रतद्वयंसम्यगिदंनरैःकृतंकृष्णस्यसान्निध्यदमस्तिनान्यत्
दानानितीर्थानितपांसियज्ञाःस्वर्लोकदानेनसदासुरोत्तमाः ३१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांकार्तिकमाहात्म्ये
श्रीकृष्णसत्यभामासंवादेशंखासुरवधउद्यमोनामनवतितमोऽध्यायः ९०

## एकनवतितमोऽध्यायः

नारदउवाच−
इत्युक्त्वाभगवान्विष्णुःशफरीतुल्यरूपधृक्
सपपातांजलौविंध्येनिवासेकश्यपस्यच १
सतंकमंडलौक्षिप्रंकृपयाक्षिप्तवान्मुनिः
तावत्सनममौतत्रततःकूपेन्यवेशयत् २
तत्रापिनममौतावत्कासारेप्राक्षिपत्सताम्
एवंससागरेक्षिप्तस्तत्रसोऽप्यन्ववर्द्धत ३
ततोऽवधीत्सतंशंखंविष्णुर्वैमत्स्यरूपधृक्
अथतंस्वकरेधृत्वाबदरीवनमागतः ४
तत्राहूयऋृषीन्सर्वानिदमाज्ञापयद्विभुः
श्रीकृष्णउवाच−
जलांतरेविशीर्णांस्तुयूयंवेदान्प्रमार्जथ ५

आनयध्वंचत्वरिताःसरहस्यंजलांतरात्
तावत्प्रयागेतिष्ठामिदेवतागणसंयुतः ६
नारदउवाच-
ततस्तैःसर्वमुनिभिस्तपोबलसमन्वितैः
उद्धारिताःषडंगास्तेवेदायज्ञसमन्विताः ७
तेषुयावन्मितंयेनलब्धंतावन्मितस्यहि
ससएवऋषिर्जातस्तदाप्रभृतिपार्थिव ८
अथसर्वेऽपिसंगम्यप्रयागंमुनयोययुः
विष्णवेसविधात्रेतेलब्धान्वेदान्यवेदयन् ९
लब्ध्वावेदान्सयज्ञांस्तुब्रह्माहर्षसमन्वितः
अयजच्चाश्वमेधेनदेवर्षिगणसंवृतः १०
यज्ञातेदेवदेवेशसिद्धपन्नगगुह्यकाः
निपत्यदंडवद्भूमौविज्ञप्तिंतत्रचक्रिरे ११
देवाऊचुः
देवदेवजगन्नाथविज्ञप्तिंशृणुनःप्रभो
हर्षकालोऽयमस्माकंतस्मात्त्वंवरदोभव १२
स्थानेऽस्मिन्नृषयोवेदान्नष्टान्प्रापुःपुनःस्वयम्
यज्ञभागान्वयंप्राप्तास्त्वत्प्रसादाद्रमापते १३
स्थानमेतदपिश्रेष्ठंपृथिव्यांपुण्यवर्द्धनम्
भुक्तिमुक्तिप्रदंचास्तुप्रसादाद्भवतःसदा १४
कालोऽप्ययंमहापुण्योब्रह्मघ्नादिविशुद्धिकृत्
दत्ताक्षयकरश्चास्तुबरमेतद्वदस्वनः १५
श्रीविष्णुरुवाच
ममाप्येतन्मतंदेवायद्भवद्भिरुदाहृतम्
तत्तथास्तुलभत्वेतद्ब्रह्मक्षेत्रमितिप्रथाम् १६
सूर्यवंशोद्भवोराजागंगामत्रानयिष्यति
सासूर्यकन्ययाचात्रकालिंद्यासंगमिष्यति १७
यूयंचसर्वेब्रह्माद्यानिवसध्वंमयासह
तीर्थराजेऽतिविख्यातंतीर्थमेतद्भविष्यति १८
दानंतपोव्रतंहोमोजपपूजादिकाःक्रियाः

अनंतफलदाःसंतुमत्सांनिध्यप्रदाःसदा १९
ब्रह्महत्यादिपापानिबहुजन्मकृतान्यपि
दर्शनादस्यतीर्थस्यविनाशंयांतुतत्क्षणात् २०
देहत्यागंतथाधीराःकुर्वंतिममसन्निधौ
मत्तनुंप्रविशंत्येवपुनर्जन्मनिनोनराः २१
पितॄन्निर्दिश्ययेश्राद्धंकुर्वंत्यत्रसमागताः
तेषांपितृगणाःसर्वेयांतुतेमत्सलोकताम् २२
कालोऽप्येषमहापुण्यफलदोऽस्तुसदानृणाम्
सूर्य्येमकरगेप्रातःस्नायिनांपापनाशनम् २३
मकरस्थरवौमाघेप्रातःस्नानंप्रकुर्वताम्
दर्शनादेवपापानियांतिसूर्याद्यथातमः २४
सलोकत्वंसरूपत्वंसमीपत्वंत्रयंक्रमात्
नृणांददाम्यहंस्नानान्माघेमकरगेरवौ २५
यूयंमुनीश्वराःसर्वेशृणुध्वंवरदोऽस्मिवः
बदरीवनमध्येऽहसदातिष्ठामिसर्वगः २६
अन्यत्रदशभिर्वर्षैस्तपसावाप्यतेफलम्
तदत्रदिवसैकेनभवद्भिःप्राप्यतेसदा २७
स्थानस्यदर्शनंतस्ययेकुर्वंतिनरोत्तमाः
जीवन्मुक्तास्तदातेषुपापं नैवावतिष्ठते २८
सूतउवाच-
एवंदेवान्देवदेवस्तदुक्त्वातत्रैवांतर्द्धानमागात्सवेधाः
देवाःसर्वेऽप्यशकैस्तत्रतस्थुश्चांतर्द्धानंप्रापुरिंद्रादयस्ते २९
इमांचगाथांशृणुयान्नरोत्तमोयःश्रावयेद्वापिविशुद्धचित्तः
सतीर्थराजंबदरीवनंयत्कृत्वाफलंमांसमवाप्नुयाच्च ३०

इतिश्रीपाद्मेमहापुराणेउत्तरखंडेपंचपंचाशत्सहस्रसंहितायांकार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेशंखासुरवधोवेदागमेप्रयागमाहात्म्यंनामैकनवति-
तमोऽध्यायः ९१

द्विनवतितमोऽध्यायः

पृथुरुवाच-

महाफलंत्वयाप्रोक्तंमुनेकार्त्तिकमाघयोः
तयोःस्नानविधिंसम्यङ्नियमानपिनारद
उद्यापनविधिंचैवंयथावद्वक्तुमर्हसि १
नारदउवाच–
त्वंविष्णोरंशसंजातोनाज्ञातंविद्यतेतव
तथापिवदतःसम्यङ्माहात्म्यंशृणुवेनज २
आश्विनस्यतुमासस्ययाशुक्लैकादशीभवेत्
कार्तिकव्रतनियमंतस्यांकुर्यादतंद्रितः ३
रात्र्यांतुर्यांशशेषायांमुदोतिष्ठत्सदाव्रती
नैर्ऋत्यांसंव्रजेद्वासाद्बहिःसोदकभाजनः ४
दिवासंध्यासुकर्णस्थब्रह्मसूत्रउदङ्मुखः
अंतर्धायतृणंभूमौशिरःप्रावृत्यवाससा ५
वक्त्रंनियम्ययत्नेनष्ठीवनश्वासवर्जितः
कुर्यान्मूत्रपुरीषेचरात्रौचेद्दक्षिणामुखः ६
गृहीतशिश्नश्चोत्थायगृहीत्वाशुचिमृत्तिकाम्
गंधलेपक्षयकरंशौचंकुर्यादतंद्रितः ७
एकालिगेगुदेपंचतथावामकरेदश
उभयोःसप्तदातव्यास्तथातिस्रस्तुपादयोः ८
एतद्दिवत्रिगुणंप्रोक्तंब्रह्मचारिवनस्थयोः
यतेश्चतुर्गुणंरात्रौतदर्द्धंशौचमाचरेत् ९
तदर्द्धमपिमार्गस्थःस्त्रीशूद्राणांतदर्द्धकम्
शौचकर्मविहीनस्यसकलानिष्फलाःक्रियाः १०
मुखशुद्धिविहीनस्यनोमंत्राःफलदाःस्मृताः
दंतजिह्वाविशुद्धिंचततःकुर्यात्प्रयत्नतः ११
आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच
ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते १२
इतिमंत्रंसमुच्चार्यद्वादशांगुलकंसदा
समिधाक्षीरवृक्षास्यक्षयाहोपोषणंविना १३
प्रतिपद्दर्शनवमीषष्ठीश्चार्कदिनंविना
चंद्रसूर्योपरागेचनकुर्याद्दंतधावनम् १४

कंटकीवृन्नकार्पासनिर्गुंडीब्रह्मवृन्नजम्
बिल्वैरंडविगंधाढ्यंवर्जयेद्दंतधावनम् १५
ततोविष्णोःशिवस्यापिगृहंगच्छेत्प्रसन्नधीः
गंधपुष्पसुतांबूलान्गृहीत्वाभक्तितत्परः १६
तत्रदेवस्यपाद्यार्घाद्युपचारान्पृथक्पृथक्
कृत्वास्तुत्वापुनर्नत्वाकुर्याद्गीतादिमंगलम् १७
तालवेणुमृदंगादिध्वनियुक्तान्सनृत्तकान्
पुष्पैर्गंधैःसतांबूलैर्गायनानपिचार्चयेत् १८
देवालयेगानपरायतस्तेविष्णुमूर्त्तयः
तपांसियज्ञदानानिकृतानिचजगद्गुरोः १९
तुष्टिदानिकलौनित्यंभक्त्यादेवस्यसत्पतेः
क्वत्वंवससिदेवेशमयापृष्टस्तुपार्थिव २०
विष्णुरेवंतदाप्राहमद्भक्तिपरितोषितः
नाहंवसामिवैकुंठेयोगिनांहृदयेनच २१
मद्भक्तायत्रगायंतितत्रतिष्ठामिनारद
सत्पुराणकथांश्रुत्वामद्भक्तानांचगायनम् २२
नेच्छंतियेनरामूढामद्द्वेष्यास्तेभवंतिहि
तेषांपूजादिकंगंधपुष्पादिक्रियतेनरैः२३
तेनप्रीतिंतथायामिनतथामत्प्रपूजनात्
शिरीषोन्मत्तगिरिजामल्लिकाशाल्मलीभवैः २४
अर्कजैःकर्णिकारैश्चविष्णुर्नार्च्यस्तथान्ततैः
जपाकुंदशिरीषैश्चयूथिकामालतीभवैः २५
केतकीभवपुष्पैश्चनैवार्च्यःशंकरस्तथा
गणेशंतुलसीपत्रैर्दुर्गांनैवचदूर्वया २६
मुनिपुष्पैस्तथासूर्यंलक्ष्मीकामोनचार्चयेत्
सुगंधीनिप्रशस्तानिपूजायांसर्वदैवतु २७
एवंपूजाविधिंकृत्वादेवदेवंन्नमापयेत्
मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर २८
यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे
ततःप्रदक्षिणंकृत्वादंडवत्प्रणिपत्यच २९

पुनः क्षमापयेद्देवंगायनाद्यंक्षमापयेत्
विष्णोःशिवस्यापिचपूजनादिकंकुर्वंतिसम्यङ्निशिकार्तिकेये
निर्धूतपापाःसहपूर्वजैस्तेप्रयांतिविष्णोर्भवनंमनुष्याः ३०
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये
श्रीकृष्णसत्यभामासंवादेनियमवर्णनंनामद्विनवतितमोऽध्यायः ९२

## त्रिनवतितमोऽध्यायः

नारदउवाच-
नाडीद्वयावशिष्टायांरात्रौगच्छेज्जलाशयम्
तिलगंधाक्षतैःपुष्पैर्दीपाद्यैःसहितःशुचिः १
मानुषेदेवखातेचनद्यांनद्योश्चसंगमे
क्रमाद्दशगुणंस्नानंतीर्थेऽनतफलंस्मृतम् २
विष्णुंस्मृत्वाततःकुर्यात्संकल्पंसवनस्यतु
तीर्थादिदेवतादिभ्यःक्रमादर्घादिदापयेत् ३
ॐनमःकमलनाभायनमस्तेजलशायिने
नमस्तेऽस्तुहृषीकेशगृहाणार्घंनमोऽस्तुते ४
वैकुंठेचप्रयागेचतथाबदरिकाश्रमे
यतोविष्णुर्विचक्रमेत्रेधासनिदधेपदम् ५
अतोदेवामामवंतुयतोविष्णुर्विचक्रमे
तैरेवसहितैःसर्वैर्मुनिदेवसमन्वितैः ६
कार्तिकेऽहकरिष्यामिप्रातःस्नानंसुरोत्तम
प्रीत्यर्थंदेवदेवेशदामोदरमयासह ७
ध्यात्वाहंत्वांचदेवेशजलेऽस्मिन्स्नातुमुद्यतः
तवप्रसादात्पापंमेदामोदरविनश्यतु ८
नित्यनैमित्तिकेकृष्णेकार्तिकेपापनाशने
गृहाणार्घ्यंमयादत्तंराधयासहितोहरे ९
व्रतिनाकार्तिकेमासिस्नातस्यविधिवन्मम
गृहाणार्घ्यंमयादत्तंराधयासहितोहरे १०
स्मृत्वाभागीरथींविष्णुंशिवंसूर्यंजलेविशेत्
नाभिमात्रेजलेतिष्ठन्व्रतीस्नायाद्यथाविधि ११

तिलामलकचूर्णेनगृहीस्नानंसमाचरेत्
वनस्थानांयतीनांचतुलसीमूलमृत्तिका १२
सप्तमीदर्शनवमीद्वितीयादशमीषुच
त्रयोदश्यांचनस्नायाद्धात्रीफलतिलैःसह १३
आदौकुर्यान्मलस्नानंमंत्रस्नानंततःपरम्
स्त्रीशूद्राणांनवेदोक्तैर्मंत्रैस्तेषांपुराणजैः १४
स्नानमन्त्राः
त्रिधाभूद्देवकार्यायपुराभक्तिभावतः
सविष्णुःसर्वपापघ्नःपुनातुकृपयात्रमाम् १५
विष्णोराज्ञामनुप्राप्यकार्तिकव्रतकारणात्
रक्षंतुदेवास्तेसर्वेमांपुनंतुसदैवते १६
वेदमंत्राःसबीजास्तुसरहस्याःसवीर्यकाः
कश्यपाद्याश्चमुनयोमांपुनंतुसदैवते १७
गंगाद्याःसरितःसर्वास्तीर्थानिजलदानदाः
ससप्तसागराःसर्वेमांपुनंतुजलाशयाः १८
पतिव्रतास्त्वदित्याद्यायक्षाःसिद्धाःसपन्नगाः
ओषध्यःपर्वताश्चाशुमांपुनंतुत्रिलोकजाः १९
एभिःस्नात्वाव्रतीमंत्रैर्हस्तन्यस्तपवित्रकः
देवर्षीन्मानवपितृंस्तर्पयेच्चयथाविधि २०
यावंतःकार्तिकेमासिवर्तंतेपितृतर्पणे
तिलास्तत्संख्यकाब्दानिपितरःस्वर्गवासिनः २१
ततोजलाद्विनिष्क्रम्यशुचिवस्त्रावृतोव्रती
प्रातःकालोदितंकर्मसमाप्यार्चेद्धरिंपुनः २२
तीर्थादिदेवान्संस्मृत्यपुनरर्चांप्रदापयेत्
गंधपुष्पफलैर्युक्तोभक्तितत्परमानसः २३
अर्घमंत्रः
व्रतिनःकार्तिकेमासिस्नातस्यविधिवन्मम
गृहाणार्घ्यंमयादत्तंदनुजेंद्रनिषूदन २४
ततश्चब्राह्मणान्भक्त्याभोजयेद्वेदपारगान्
गंधपुष्पैःसतांबूलैःप्रणमेच्चपुनःपुनः २५

तीर्थानिदक्षिणेपादेवेदाश्चमुखमाश्रिताः
सर्वांगेसंस्थितादेवाःपूजिताःस्युर्द्विजार्चनात् २६
अव्यक्तरूपिणोविष्णोःस्वरूपंब्राह्मणाभुवि
नावमान्यानोविरोध्याःकदाचिच्छुभमिच्छता २७
तांवैहरिप्रियांदेवितुलसीमर्चयेद्व्रती
प्रदक्षिणनमस्कारान्कुर्यादेकाग्रमानसः २८
देवैस्त्वंनिर्मितापूर्वमर्चितासिमुनीश्वरैः
नमोनमस्तेतुलसिपापंहरहरिप्रिये २९
ततोविष्णुकथांश्रुत्वापौराणींस्निग्धमानसः
तंब्राह्मणंमुनिंविप्रंपूजयेद्भक्तिमान्व्रती ३०
एवंपूर्णविधिंसम्यक्पूर्वोक्तंभक्तिमान्नरः
करोतियःसलभतेनारायणसलोकताम् ३१
रोगापहंपापविनाशकृत्परंसद्बुद्धिदंपुत्रधनादिसाधनम्
मुक्तेर्निदानंनहिकार्तिकव्रताद्विष्णुप्रियादन्यतमंहिभूतले ३२
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये
श्रीकृष्णसत्यभामासंवादेस्नानविधिवर्णनोनामत्रिनवतितमोऽध्यायः ९३

## चतुर्नवतितमोऽध्यायः

नारदउवाच-
कार्तिकव्रतिनांपुंसांनियमायेप्रकीर्तिताः
ताञ्छृणुष्वमयाराजन्कथ्यमानान्समंततः १
सर्वामिषाणिमांसानिक्षौद्रंसौवीरकंतथा
राजमाषादिकंचापिनैवाद्यात्कार्तिकव्रती २
द्विदलंतिलतैलंचतथान्नमश्रुदूषितम्
भावदुष्टंशब्ददुष्टंवर्जयेत्कार्तिकव्रती ३
परान्नंचपरद्रोहंपरदारागमंतथा
तीर्थेप्रतिगृहंनापिगृह्णीयात्कार्तिकव्रती ४
देवदेवद्विजानांचगुरोश्चव्रतिनस्तथा
स्त्रीराजमहतांनिंदांवर्जयेत्कार्तिकेव्रती ५
प्राण्यंगमामिषंचूर्णंफलेजंबीरमामिषम्

धान्येमसूरिकाप्रोक्ताचान्नंपर्युषितंतथा ६
अजागोमहिषीक्षीरादन्यदुग्धादिचामिषम्
द्विजक्रीतारसाःसर्वेलवणंभूमिजंतथा ७
ताम्रपात्रस्थितंगव्यंजलंपल्वलसंस्थितम्
आत्मार्थंपाचितंचान्नमामिषंतत्स्मृतंबुधैः ८
ब्रह्मचर्यमधःसुप्तिःपत्रावल्यांचभोजनम्
चतुर्थकालेभुंजीतकुर्यादेवंसदाव्रती ९
नरकस्यचतुर्दश्यां तैलाभ्यंगंचकारयेत्
अन्यत्रकार्तिकस्नायितैलाभ्यंगंनकारयेत् १०
पलांडुंलशुनंशिग्रुछत्राकंगृंजनंतथा
नालिकांमूलकंहिंगुंवर्जयेत्कार्तिकव्रती ११
अलाबुंचापिवृंताकंकूष्मांडंबृहतीफलम्
श्लेष्मातकंकपित्थंचवर्जयेद्वैष्णवव्रती १२
रजस्वलांत्यजम्लेच्छपतितव्रात्यकैःसह
द्विजातिवेदबाह्यैश्चनवदेत्कार्तिकव्रती १३
श्वभिर्दृष्टंचकाकैश्चसूतकान्नंचवर्जयेत्
द्विःपाचितंचदग्धान्नंवर्जयेत्कार्तिकव्रती १४
तिलाभ्यंगंतथाशय्यांपरान्नंकांस्यभोजनम्
कार्तिकेवर्जयेद्यस्तुपरिपूर्णव्रतीभवेत् ।
एतानिवर्जयेन्नित्यंव्रतीसर्वव्रतेष्वपि
कृच्छ्राद्यंचापिकुर्वीतस्वशक्त्याविष्णुतुष्टये १५
क्रमात्कूष्मांडवृंताकंबृहतीमूलकंतथा
श्रीफलंचकलिंगंचफलंधात्रीभवंतथा १६
नारिकेरंमहालाबुंपटोलंबदरीफलम्
चर्मवैकतकंचापिबिसंवैकट्फलंतथा १७
शाकान्येतानिवर्ज्यानिक्रमात्प्रतिपदादिषु
धात्रीफलंरवौतद्वद्वर्जयेत्सर्वदागृही १८
एभ्योऽपिवर्जयेत्किंचिद्यद्विष्णुप्रीतयेनरः
तत्पुनर्ब्राह्मणेदत्त्वाभक्षयेत्सर्वदैवहि १९
एवमेवहिमाघेऽपिकुर्याद्वैनियमान्व्रती

हरिजागरणंतत्रविधिप्रोक्तंचकारयेत् २०
यथोक्तकारिणंदृष्ट्वाकार्तिकव्रतिनंनरम्
यमदूताःपलायंतेगजाःसिंहार्दितायथा २१
वरंविष्णुव्रतंह्येतदथयज्ञशताधिकम्
यज्ञकृत्प्राप्नुयात्स्वर्गंवैकुंठंकार्तिकव्रती २२
भुक्तिमुक्तिप्रदानीहयानिक्षेत्राणिभूतले
वसंतितानितद्देहेकार्तिकव्रतकारिणः २३
दुःस्वप्नंदुष्कृतंकिंचिन्मनोवाक्कायकर्मजम्
कार्त्तिकव्रतिनंदृष्ट्वाविलयंयांतितत्क्षणात् २४
कार्त्तिकव्रतिनःपुंसोविष्णुवाक्यप्रणोदिताः
रक्षांकुर्वंतिशक्राद्याराज्ञोवैकिंकरायथा २५
विष्णुव्रतकरानित्यंयत्रतिष्ठंतिपूजिताः
ग्रहभूतपिशाचाद्यानैवतिष्ठंतितत्रवै २६
कार्त्तिकव्रतिनःपुण्यंयथोक्तव्रतकारिणः
नसमर्थोभवेद्वक्तुंब्रह्मापीहचतुर्मुखः २७
विष्णुप्रियंसकलकल्मषनाशनंचसर्वत्रपुत्रधनधान्यसमृद्धिकारि
ऊर्जेव्रतंसनियमंकुरुतेमनुष्यःकिंतस्यतीर्थपरिशीलनसेवयाच २८
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्त्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेनियमवर्णनोनामचतुर्नवतितमोऽध्यायः ९४

## पञ्चनवतितमोऽध्यायः

नारदउवाच
अथोर्जव्रतिनःसम्यगुद्यापनविधिंनृप
तच्छृणुष्वमयाख्यातंकिंविधानंसमासतः १
ऊर्ज्जशुक्लचतुर्दश्यांकुर्यादुद्यापनंव्रती
व्रतसंपूर्णतार्थायविष्णुप्रीत्यर्थमेवच २
तुलस्याउपरिष्टात्तुकुर्यान्मंडपिकांशुभाम्
सुतोरणांचतुर्द्वारांपुष्पचामरशोभिताम् ३
द्वारेषुद्वारपालांश्चपूजयेन्मृन्मयान्पृथक्
पुण्यशीलंसुशीलंचजयंविजयमेवच ४

तुलसीमूलदेशेचसर्वतोभद्रमालिखेत्
चतुर्भिर्वर्णकैः सम्यक्शोभाढ्यंसमलंकृतम् ५
तस्योपरिष्टात्सपिधानंपंचरत्नसमन्वितम्
महाफलेनसंयुक्तंकुंभंतत्रनिधायच ६
पूजयेत्तत्रदेवेशंशंखचक्रगदाधरम्
कौशेयपीतवसनंयुक्तंजलधिकन्यया ७
इंद्रादिलोकपालांश्चपूजयेन्मंडलेव्रती
द्वादश्यांप्रतिबुद्धःसत्रयोदश्यांयतःसुरैः ८
दृष्टोऽचितश्चतुर्दश्यांतस्मात्पूज्यस्तथाधिकम्
तस्यामुपवसेद्भक्त्याशांतःप्रयतमानसः ९
पूजयेद्देवदेवेशंसौवर्णंगुर्वनुज्ञया
उपचारैःषोडशभिर्नानाभक्ष्यसमन्वितैः १०
रात्रौजागरणंकुर्याद्गीतवाद्यादिमंगलैः
गीतंकुर्वंतियेभक्त्याजागरेचक्रपाणिनः ११
जन्मांतरशतोद्भूतैस्तेमुक्ताःपापसंचयैः
जागरेवासरेविष्णोर्गीतंनृत्यंचकुर्वताम् १२
गोसहस्रंचददतांतत्फलंसमुदाहृतम्
गीतनृत्यादिकंकुर्वन्दर्शयेत्कौतुकानिच १३
पुरतोवासुदेवस्यरात्रौयोहरिजागरे
पठन्विष्णुचरित्राणियोरंजयतिवैष्णवान् १४
मुखेनकुरुतेवाद्यंस्वेच्छालापांश्चदर्शयन्
भावैरेतैर्नरोयस्तुकुरुतेहरिजागरम् १५
दिनेदिनेतस्यपुण्यंतीर्थकोटिसमंस्मृतम्
ततस्तुपौर्णिमास्यांवैसपत्नीकान्द्विजोत्तमान् १६
त्रिंशन्मिताननेकान्वास्वशक्त्यावानिमंत्रयेत्
वरान्दत्त्वायतोविष्णुर्मत्स्यरूपीअभूत्तदा १७
तस्यांदत्तंहुतंजप्तंतदक्षयफलंस्मृतम्
अतस्तान्भोजयेद्विप्रान्पायसान्नादिनाव्रती १८
अतोदेवाइतिद्वाभ्यांजुहुयात्तिलपायसम्
प्रीत्यर्थंदेवदेवस्यदेवानांचपृथक्पृथक् १९

दक्षिणांचयथाशक्तिप्रदद्यात्प्रणमेच्चतान्
पुनर्देवंसमभ्यर्च्यदेवांश्चतुलसींतथा २०
ततोगांकपिलांतत्रपूजयेद्विधिवद्व्रती
गुरुंव्रतोपदेष्टारंवस्त्रालंकरणादिभिः २१
सपत्नीकंसमभ्यर्च्यगांचतस्मैप्रदापयेत्
युष्मत्प्रसादाद्देवेशःप्रसन्नोमेभवेत्तदा २२
व्रतादस्माच्चयत्पापंसप्तजन्मकृतंमया
तत्सर्वंनाशमायातुस्थिरामेचास्तुसंततिः २३
मनोरथाश्चसफलाःसंतुनित्यंममार्चनात्
देहांतेवैष्णवंस्थानंप्राप्नुयामतिदुर्लभम् २४
इतिक्षमाप्यतान्विप्रान्प्रसाद्यचविसर्जयेत्
तामर्चांगुरवेदद्याद्रत्नयुक्तांतदाव्रती २५
तदासुहृद्गुरुयुतःस्वयंभुंजतिभक्तिमान्
कार्त्तिकेवाथतपसिविधिरेवंविधःस्मृतः २६
एवंयःकुरुतेसम्यक्कार्तिकस्यव्रतंनरः
विपाप्मासविनिर्मुक्तोविष्णुसान्निध्यगोभवेत् २७
सर्वव्रतैःसर्वतीर्थैःसर्वदानैश्चयत्फलम्
तत्कोटिगुणितंज्ञेयंसम्यगस्यविधानतः २८
तेधन्यास्तेमहापुण्यास्तेषांसर्वफलोदयः
विष्णुभक्तिरतायेस्युःकार्तिकेव्रतकारिणः २९
देहस्थितानिपापानिवितर्कंयांतितद्भयात्
क्वयास्यामोवदंत्येवंयद्ययंव्रतकृन्नरः ३०
इत्यूर्जव्रतनियमान्शृणोतिभक्तायेचैतत्कथयंतिचैववैष्णवाग्रे
तेसम्यग्व्रतकरणात्फलंलभेरन्तत्सर्वंकलुषविनाशनंलभंते ३१
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये
श्रीकृष्णसत्यभामासंवादेउद्यापनवर्णनोनामपंचनवतितमोऽध्यायः ९५

षण्णवतितमोऽध्यायः

पृथुरुवाच-
यत्त्वयाकथितंब्रह्मन्व्रतमूर्जस्यविस्तरात्

तत्रयातुलसीमूलेविष्णोःपूजात्वयोदिता १
तेनाहंप्रष्टुमिच्छामिमाहात्म्यंतुलसीभवम्
कथंसातिप्रियाविष्णोर्देवदेवस्यशार्ङ्गिणः २
कथमेषासमुत्पन्नाकस्मिंस्थानेचनारद
एतद्ब्रूहिसमासेनसर्वज्ञोऽसिमतोहिमे ३
नारदउवाच-
पुरारुद्रेणदैत्येंद्रेसिंधुसूनौनिपातिते
प्रणम्यशिरसारुद्रंदेवाब्रह्मादयोऽब्रुवन्
शृणुराजन्प्रवक्ष्यामिमाहात्म्यंतुलसीभवम् ४
सेतिहासंपुरावृत्तंतत्सर्वंकथयामिते
पुराशक्रःशिवंद्रष्टुमगात्कैलासपर्वतम्
सर्वदेवैःपरिवृतस्त्वप्सरोगणसेवितः ५
यावद्गतःशिवगृहंतावत्तत्राशुदृष्टवान्
पुरुषंभीमकर्माणंदंष्ट्रानयनभीषणम् ६
सपृष्टस्तेनकस्त्वंभोक्वगतोजगदीश्वरः
एवंपुनःपुनःपृष्टःसयदानोचिवान्नृप ७
ततःक्रुद्धोवज्रपाणिस्तन्निर्भर्त्स्यवचोऽब्रवीत्
रेमयापृच्छमानोऽपिनोत्तरंदत्तवानसि ८
अतस्त्वांहन्मिवज्रेणकस्तेत्रातास्तिदुर्मते
इत्युदीर्यततोवज्रीवज्रेणचाहनद्दृढम् ९
तेनास्यकंठेनीलत्वमगाद्वज्रंचभस्मतां
ततोरुद्रप्रजज्वालतेजसाप्रदहन्निव १०
दृष्ट्वाबृहस्पतिस्तूर्णंकृतांजलिपुटोऽभवत्
इंद्रश्चदंडवद्भूमौकृत्वास्तोतुंप्रचक्रमे ११
बृहस्पतिरुवाच-
नमोदेवाधिदेवायत्र्यंबकायकपर्दिने
त्रिपुरघ्नायशर्वायनमोंधकनिषूदिने १२
विरूपायातिरूपायबहुरूपायशंभवे
यज्ञविध्वंसकर्त्रेचयज्ञानांफलदायिने १३
कालांतकायकालायकालभोगधरायच

नमोब्रह्मशिरोहंत्रेब्राह्मणायनमोनमः १४
नारदउवाच-
एवंस्तुतस्तदाशंभुःद्विजर्षभंजगादह
संहरन्नयनज्वालंत्रिलोकीदहनक्षमाम् १५
वरंवरयभोब्रह्मन्प्रीतःस्तुत्यानयातव
इंद्रस्यजीवदानेनजीवतित्वंप्रथांव्रज १६
बृहस्पतिरुवाच-
यदितुष्टोऽसिदेवत्वंयाहींद्रंशरणागतम्
अग्निरेषशमंयातुभालनेत्रसमुद्भवः १७
ईश्वरउवाच-
पुनःप्रवेशमायातिभालनेत्रेकथंत्वयम्
एनंत्यक्ष्याम्यहंदूरेयथेंद्रं नैवपीडयेत् १८
नारदउवाच-
इत्युक्त्वातंकरेधृत्वाप्राक्षिपल्लवणांभसि
सोऽपतत्सिंधुगंगायाःसागरस्यचसंगमे १९
तदासबालरूपत्वमगात्तत्ररुरोदच
रुदतस्तस्यशब्देनप्राकंपद्धरणीमुहुः २०
स्वर्गश्चसत्यलोकश्चतत्स्वनाद्बधिरीकृतौ
श्रुत्वाब्रह्माययौतत्रकिमेतदितिविस्मितः २१
तावत्समुद्रस्योत्संगेतंबालंसददर्शह
दृष्ट्वाब्राह्मणमायांतंसमुद्रोऽपिकृतांजलि २२
प्रणम्यशिरसाबालंतस्योत्संगेन्यवेशयेत्
ततोब्रह्माब्रवीद्वाक्यंकस्यायंशिशुरद्भुतः २३
निशम्येतिवचोधातुर्वाक्यंतुसागरोऽब्रवीत्
ब्रह्माउवाच-
सरित्पतेकुतोलब्धोबालोह्येषमहाबलः २४
यस्यनादेनसंत्रस्तादेवासुरमहोरगाः
समुद्रउवाच-
भोब्रह्मन्सिधुगंगायांजातोऽयममपुत्रकः २५
जातकर्मादिसंस्कारान्कुरुष्वास्यजगद्गुरो

नारदउवाच-
इत्थंवदतिपाथोधौसबालःसागरात्मजः २६
ब्रह्माणमग्रहीत्कूर्चेविधुन्वंतंमुहुर्मुहुः
धुन्वतस्तस्यकूर्चंतुनेत्राभ्यामागमज्जलम्
कथंचिन्मुक्तकूर्चोऽथब्रह्माप्रोवाचसागरम् २७
ब्रह्मोवाच-
नेत्राभ्यांविधृतंयस्मादनेनैतज्जलंमम
तस्माज्जलंधरइतिख्यातोनाम्नाभवत्यसौ २८
अधुनैवैषतरुणः सर्वशस्त्रास्त्रपारगः
अवध्यःसर्वभूतानांविनारुद्रंभविष्यति २९
यातियत्रसमुद्भूतस्तत्रेदानींगमिष्यति ३०
नारदउवाच-
इत्युक्त्वाशुक्रमाहूयराज्येतंचाभ्यषेचयत्
आमंत्र्यसरितांनाथंब्रह्मांतर्द्धानमन्वगात् ३१
अथतद्दर्शनोत्फुल्लनयनः सागरस्तदा
कालनेमिसुतांवृंदांतद्भार्यार्थमयाचत ३२
तेकालनेमिप्रमुखास्ततोऽसुरास्तस्मैसुतांतांप्रददुःप्रहर्षिताः
सचापितान्प्राप्यसुहृद्वरान्वशीशशासगांशुक्रसहायवान्बली ३३
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेजालंधरोत्पत्तिवर्णनंनामषण्णवतितमोऽध्यायः ९६

सप्तनवतितमोऽध्यायः

नारदउवाच-
येदेवैर्निर्जिताःपूर्वंदैत्याःपातालसंस्थिताः १
तेहिभूमंडलंजातानिर्भयास्तमुपासितुम्
कदाचिच्छिन्नशिरसंराहुंदृष्ट्वासदैत्यराट्
पप्रच्छभार्गवंविप्रंकेनेदंविहितंप्रभो २
भार्गवस्तस्यशिरसश्छेदंराहोःशशंसह
अमृतार्थंसमुद्रस्यमथनंदेवकारितम् ३
रत्नापहरणंचैवदैत्यानांचपराभवम्

तच्छ्रुत्वाक्रोधरक्ताक्षः स्वपितुर्मथनंतदा ४
सदूतंप्रेषयामासघस्मरंशक्रसंनिधौ
दूतस्त्रिविष्टपंगत्वासुधर्मांप्राप्यसत्वरम् ५
गर्वादखर्वमौलिस्तुदेवेंद्रंवाक्यमब्रवीत्
दूतउवाच-
जलंधरोऽब्धितनयः सर्वदैत्यजनेश्वरः ६
दूतोऽहप्रेषितस्तेनसयदाहश्शृणुष्वतत्
कस्मात्त्वयाममपितामथितः सागरोऽद्रिणा ७
नीतानिसर्वरत्नानितानिशीघ्रंप्रयच्छमे
इतिदूतवचः श्रुत्वाविस्मितस्त्रिदशाधिपः
उवाचघस्मरंघोरंभयरोषसमन्वितः ८
ईश्वरउवाच-
शृणुदूतमयापूर्वंमथितः सागरोयथा
अद्रयोमद्भयाद्भीताः स्वकुक्षिस्थास्तथाकृताः ९
अन्येऽपिमद्द्विषस्तेनरक्षितादितिजास्तथा
तस्मात्तद्रत्नजातंतुमयाप्यपहृतंकिल १०
शंखोऽप्येवंपुरादेवानद्विषत्सागरात्मजः
ममानुजेननिहतः प्रविष्टः सागरोदरम् ११
तद्गच्छकथयस्वास्यसर्वंमथनकारणम् १२
नारदउवाच-
इत्थंविसर्जितोदूतस्तदेंद्रेणागमद्गृहम्
तदिंद्रवचनं दैत्यराजायाकथयत्तदा १३
तन्निशम्यतदादैत्योरोषात्प्रस्फुरिताधरः
उद्योगमकरोत्तूर्णंसर्वदेवजिगीषया १४
तदोद्योगेसुरेंद्रस्यदिग्भ्यः पातालतस्तथा
दितिजाः प्रत्यपद्यंतशतशः कोटिशस्तथा १५
अथशुंभनिशुंभाद्यैर्बलाधिपतिकोटिभिः
गत्वात्रिविष्टपं दैत्योयुद्धायाधिष्ठितोऽभवत् १६
निर्ययुस्त्वमरावत्यादेवायुद्धायदंशिताः
पुरमावृत्यतिष्ठंतिदृष्ट्वादैत्यबलंमहत् १७

ततःसमभवद्युद्धंदेवदानवसेनयोः
मुशलैःपरिघैर्बाणैर्गदापरशुशक्तिभिः १८
तेऽन्योन्यंसमधावेतांजघ्नतुश्चपरस्परम्
च्चणेनाभवतांसेनेरुधिरौघपरिप्लुते १९
पतितैःपात्यमानैश्चगजाश्वरथपत्तिभिः
व्यराजतरणेभूमिःसंध्याभ्रपटलैरिव २०
तत्रयुद्धेहतान्दैत्यान्भार्गवस्तूदतिष्ठयत्
विद्ययाऽमृतजीविन्यामंत्रितैस्तोयबिंदुभिः २१
देवास्तत्रतथायुद्धेजीवयेदंगिरस्सुतः
दिव्यौषधीःसमानीयद्रोणदेश्याःपुनःपुनः २२
दृष्ट्वादेवांस्तथायुद्धेपुनरेवसमुत्थितान्
जलंधरःक्रोधवशोभार्गवंवाक्यमब्रवीत् २३
जलंधरउवाच-
मयादेवाहतायुद्धेउत्तिष्ठंतिकथंपुनः
तवसंजीवनीविद्यानैवान्यत्रेतिविश्रुतम् २४
भृगुरुवाच-
दिव्यौषधीःसमानीयद्रोणाद्रेरंगिराःसुरान्
जीवयत्येषवैशीघ्रंद्रोणाद्रिंसमपाहर २५
नारदउवाच-
इत्युक्तःसतुदैत्येंद्रोनीत्वाद्रोणाचलंतदा
प्राच्चिपत्सागरेतूर्णंपुनरागान्महाहवम् २६
अथदेवान्हतान्दृष्ट्वाद्रोणाद्रिमगमद्गुरुः
तावत्तत्रगिरींद्रंतंनददर्शसुरार्चितः २७
ज्ञात्वादैत्यहृतंद्रोणंविषरणोभयविह्वलः
आगत्यदूराद्व्याजह्रेश्वासाकुलितविग्रहः २८
पलायध्वंपलायध्वंनायंजेतुंहिशक्यते
रुद्रांशसंभवोह्येषस्मरध्वंशक्रचेष्टितम् २९
श्रुत्वातद्वचनंदेवाभयविह्वलितास्तदा
दैत्यैस्तैर्वध्यमानास्तेपलायंतदिशोदश ३०
देवान्विदारितान्दृष्ट्वादैत्यःसागरनंदनः

शंखभेरीजयरवैःप्रविवेशामरावतीम् ३१
प्रविष्टेनगरंदैत्येदेवाःशक्रपुरोगमाः
सुवर्णाद्रिगुहांप्राप्यन्यवसन्दैत्यतापिताः ३२
ततश्चसर्वेष्वसुराधिकारेष्विंद्रादिकानांविनिवेशयत्तदा
शुंभादिकान्दैत्यवरान्पृथक्पृथक्स्वयंसुवर्णाद्रिगुहामगात्पुनः ३३
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडे
कार्तिकमाहात्म्येअमरावतीविजयोनामसप्तनवतितमोऽध्यायः ९७

## अष्टनवतितमोऽध्यायः

नारदउवाच-
पुनर्दैत्यंसमायांतंदृष्ट्वादेवाःसवासवाः
भयप्रकंपिताःसर्वेविष्णुंस्तोतुंप्रचक्रमुः १
देवाऊचुः
नमोमत्स्यकूर्मादिनानास्वरूपैःसदाभक्तकार्योद्यतायार्तिहंत्रे
विधात्रादिसर्गस्थितिध्वंसकर्त्रेगदाशंखपद्मारिहस्तायतेऽस्तु २
रमावल्लभायासुराणांनिहंत्रेभुजंगादिनाथायपीतांबराय
मखादिक्रियापाककर्त्रेविकर्त्रेशरण्यायतस्मैनताःस्मोनताःस्मः ३
नमोदैत्यसंतापितामर्त्यदुःखाचलध्वंसदंभोलयेविष्णवेते
भुजंगेशतल्पेशयायार्कचंद्रद्विनेत्रायतस्मैनतास्मोनताःस्मः ४
नारदउवाच-
संकष्टनाशनंस्तोत्रंनित्यंयस्तुपठेन्नरः
सकदाचिन्नसंकष्टैपीडयतेकृपयाहरेः ५
इतिदेवाःस्तुतिंयावत्कुर्वंतिदनुजद्विषः
तावत्सुराणामापत्तिर्विज्ञाताविष्णुनातदा ६
सहसोत्थायदैत्यारिःकृपयाखिन्नमानसः
आरुह्यगरुडंवेगाल्लक्ष्मींवचनमब्रवीत् ७
विष्णुरुवाच-
जलंधरेणतेभ्रात्रादेवानांकदनंकृतम्
तैराहूतोगमिष्यामियुद्धायाद्यत्वरान्वितः ८
लक्ष्मीरुवाच-

अहंतेवल्लभानाथभक्ताचयदिसर्वदा
तत्कथंतेममभ्रातायुद्धेवध्यःकृपानिधे ९
श्रीभगवानुवाच-
रुद्रांशसंभवत्वाच्चब्रह्मणोवचनादपि
प्रीत्याचतवनैवायंममवध्योजलंधरः १०
नारदउवाच-
इत्युक्त्वागरुडारूढःशंखचक्रगदासिभृत्
विष्णुर्वेगाद्ययौयोद्धुंयत्रदेवाःस्तुवंतिते ११
अथारुणानुजात्युग्रपक्षवातप्रपीडिताः
वात्याविवर्तितादैत्याबभ्रमुःखेयथाघनाः १२
ततोजलंधरोदृष्ट्वादैत्यान्वात्याप्रपीडितान्
नोवाचवचनंक्रोधात्ततोविष्णुंसमभ्ययात् १३
ततःसमभवद्युद्धंविष्णुदैत्येंद्रयोर्महत्
आकाशंकुर्वतोर्बाणैरंतेनिरवकाशवत् १४
विष्णुर्दैत्यस्यबाणौघैर्ध्वजंच्छत्रंधनुर्हयान्
चिच्छेदतंचहृदयेबाणेनैकेनताडयन् १५
ततोदैत्यंसमुत्पत्यगदापाणिस्त्वरान्वितः
आगत्यगरुडंमूर्ध्निपातयामासभूतले १६
विष्णुर्गदांचखड्गेनचिच्छेदप्रहसन्निव
तावत्ससुहृदेविष्णुंजघानदृढमुष्टिना १७
ततस्तौबाहुयुद्धेनयुयुधातेमहाबलौ
बाहुभिर्मुष्टिभिश्चैवजानुभिर्नादयन्महीम् १८
एवंसुरुचिरंयुद्धंकृत्वाविष्णुःप्रतापवान्
उवाचदैत्यराजानंमेघगंभीरयागिरा १९
विष्णुरुवाच-
वरंवरयदैत्येंद्रप्रीतोऽस्मितवविक्रमात्
अदेयमपितेददिमयत्तेमनसिवर्तते २०
जलंधरउवाच-
यदिभावुकतुष्टोऽसिवरमेतंददस्वमे
मद्भगिन्यासहतयामद्गृहेसगणोवस २१

नारदउवाच-
तथेत्युक्त्वासभगवान्सर्वदेवगणैःसह
जलंधरंनामपुरमगमद्रमयासह २२
जलंधरश्चदेवानामधिकारेषुदानवान्
स्थापयित्वासहर्षःसन्पुनरागान्महीतले २३
देवगंधर्वसिद्धेषुयत्किंचिद्रत्नसंज्ञितम्
तदात्मवशगंकृत्वातिष्ठत्सागरनंदनः २४
पातालभवनेदैत्यंनिशुंभंचमहाबलम्
स्थापयित्वासशेषादीननयद्भूतलंबली २५
देवगंधर्वसिद्धौघान्यक्षरासमानुषान्
स्वपुरेनागरान्कृत्वाशशासभुवनत्रयम् २६
एवंजलंधरःकृत्वादेवांश्चवशवर्त्तिनः
धर्मेणपालयामासप्रजाःपुत्रानिवौरसान् २७
नकश्चित्व्याधितोनैवदुःखितोनकृशस्तथा
नदीनोदृश्यतेतस्मिन्धर्माद्राज्यंप्रशासति २८
एवंमहींशासतिदानवेंद्रेधर्मेणसम्यक्चयदृच्छयाहम्
कदाचिदागामथतस्यलक्ष्मींविलोकितुंश्रीरमणंचसेवितुम् २९
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्त्तिकमाहात्म्ये
श्रीकृष्णसत्यभामासंवादेजलंधरप्रवेशोनामअष्टनवतितमोऽध्यायः ९८

## नवनवतितमोऽध्यायः

नारदउवाच-
समांसंपूज्यविधिवद्दानवेंद्रोऽतिभक्तितः
संप्रहस्यतदावाक्यंजगादनृपसत्तम १
जलंधरउवाच-
कुतस्त्वागम्यतेब्रह्मन्किंचदृष्टंत्वयाक्वचित्
यदर्थमिहचायातस्तदाज्ञापयमांमुने २
नारदउवाच-
गतःकैलासशिखरं दैत्येंद्राहंयदृच्छया
तत्रोमयासहासीनंदृष्टवानस्मिशंकरम् ३

योजनायुतविस्तीर्णेकल्पद्रुममहावने
कामधेनुशताकीर्णेचिंतामणिसुदीपिते ४
तंदृष्ट्वामहदाश्चर्यंवितर्कोमेऽभवत्तदा
क्वापीदृशीभवेद्वृद्धिस्त्रिलोक्यांवानवेति च ५
तावत्तवापिदैत्येंद्रसमृद्धिःसम्भृतामया
तद्विलोकनकामोऽहत्वत्सान्निध्यमिहागतः ६
त्वत्समृद्धिमिमांपश्यन्स्त्रीरत्नरहितांध्रुवम्
तर्कयामिशिवादन्यत्रिलोक्यांनसमृद्धिमान् ७
अप्सरोनागकन्याश्चयद्यपित्वद्वशेस्थिताः
तथापितानपार्वत्यारूपेणसदृशाध्रुवम् ८
यस्यालावरायजलधौनिमग्नश्चतुराननः
स्वधैर्यममुचत्पूर्वंतयाकान्योपमीयते ९
वीतरागोऽपिहियथामदनारिःस्वलीलया
विश्वतंत्रोऽपितपसासचात्मवशगःकृतः १०
सौंदर्यगहनेभ्रामन्शबरीरूपयापुरा
यस्याःपुनःपुनःपश्यन्रूपंधाताविसर्जने ११
ससर्जाप्सरसस्तास्तास्तत्समैकापिनाभवत्
अतःस्त्रीरत्नसंभोक्तुःसमृद्धिस्तस्यसावरा १२
तथानतवदैत्येंद्रसर्वरत्नाधिपस्यच
एवमुक्त्वातमामंत्र्यगतेमयिसदैत्यराट् १३
तद्रूपश्रवणादासीदनंगज्वरपीडितः
अथसंप्रेषयामासदूतंचसिंहिकासुतम् १४
त्र्यंबकायतदाकिंचिद्विष्णुमायाविमोहितः
कैलासमगमद्राहुःसर्वशुक्लेंदुवर्चसम् १५
कात्स्न्र्येनकृष्णपक्षेंदुवर्चसंस्वांगजेनतु
निवेदितस्तदादेशान्नंदिनाचप्रवेशितः
त्र्यंबकाभ्रूलतासंज्ञाप्रेरितोवाक्यमब्रवीत् १६
राहुरुवाच–
देवपन्नगसेव्यस्यत्रैलोक्याधिपतेःप्रभोः
सर्वरत्नेश्वरस्यत्वमाज्ञांशृणुवृषध्वज १७

श्मशानवासिनोनित्यंमुंडमालाधरस्यच
दिगंबरस्यतेभार्याकथं हैमवतीशुभा १८
अहंरत्नाधिनाथोऽस्मिसाचस्त्रीरत्नसंज्ञका
तस्मान्ममैवसायोग्यानैवभिक्षाशिनस्तव १९
नारदउवाच-
वदत्येवंतदाराहौभ्रूमध्याच्छूलपाणिनः
अभवत्पुरुषोरौद्रस्तीव्राशनिसमस्वनः २०
सिंहास्यःप्रचलज्जिह्वःसज्वलन्नयनोमहान्
ऊर्ध्वकेशःशुष्कतनुर्नृसिंहइवचापरः २१
सतंखादितुमारेभेदृष्ट्वाराहुर्भयातुरः
अधावदतिवेगेनबहिःसचदधारतम् २२
सचराहुर्महाबाहुर्मेघगंभीरयागिरा
उवाचदेवदेवेशंपाहिमांशरणागतम् २३
ब्राह्मणंमांमहादेवखादितुंसमुपागतः
एतस्माद्रक्षदेवेशशरणागतवत्सल २४
महादेवोवचःश्रुत्वाब्राह्मणस्यतदाब्रवीत्
नैवासौवध्यतामेतिदूतोऽयपरवान्यतः २५
मुंचेतिपुरुषःश्रुत्वाराहुंतत्याजसोंबरे
राहुंत्यक्त्वासपुरुषोमहादेवंव्यजिज्ञपत् २६
पुरुषउवाच-
क्षुधामांबाधतेस्वामिन्क्षुत्क्षामश्चास्मिसर्वथा
किंभक्ष्यंममदेवेशतदाज्ञापयमांप्रभो २७
ईश्वरउवाच-
संभक्षयात्मनःशीघ्रंमांसंत्वंहस्तपादयोः २८
नारदउवाच-
सशिवेनैवमाज्ञप्तश्चखादपुरुषःस्वयम्
हस्तपादोद्भवंमांसंशिरःशेषोयदाभवत् २९
दृष्ट्वाशिरोऽवशेषंतुसुप्रसन्नःसदाशिवः
पुरुषंभीमकर्माणंतमुवाचसविस्मयः ३०
ईश्वरउवाच-

त्वंकीर्तिमुखसंज्ञोहिभवमद्द्वारगःसदा
त्वदर्चां नैवकुर्वंतिनैवतेमत्प्रियंकराः ३१
नारदउवाच-
तदाप्रभृतिदेवस्यद्वारेकीर्तिमुखःस्थितः
नार्चयंतीहयेपूर्वंतेषामर्चावृथाभवेत् ३२
राहुर्विमुक्तोयस्तेनसोऽपतद्बर्बरस्थले
अतःसबर्बरोद्भूतइतिभूमौपृथांगतः ३३
ततश्चराहुःपुनरेवजातमात्मानमस्मिन्निति मन्यमानः
समेत्यसर्वंकथयांबभूवजलंधरायेशविचेष्टितंतत् ३४

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकामाहात्म्ये श्रीकृष्णसत्यभामासंवादेदूतसंवादोजालंधरोपाख्यानंनामनवनवतितमो-ऽध्यायः ९९

## शततमोऽध्यायः

नारदउवाच-
जालंधरस्तुतच्छ्रुत्वाकोपाकुलितविग्रहः
निर्जगामाशुदैत्यानांकोटिभिःपरिवारितः १
गतस्तस्याग्रतःशुक्रोराहुर्दृष्टिस्थितोऽभवत्
मुकुटश्चापतद्भूमौवेगात्प्रस्खलितस्तदा २
दैत्यसैन्यवृतैस्तत्रविमानानांशतैस्तदा
व्यराजतनभःपूर्णंप्रावृषीवबलाहकैः ३
तस्योद्योगंतदादृष्ट्वादेवाःशक्रपुरोगमाः
अलक्षितत्वराजग्मुःशूलिनंतेव्यजिज्ञपन् ४
देवाऊचुः
नजानासिकथंस्वामिन्देवाविज्ञापयंतिभो
तदस्मद्रक्षणार्थायजहिसागरनंदनम् ५
नारदउवाच-
इतिदेववचःश्रुत्वाप्रहस्यवृषभध्वजः
महाविष्णुंसमाहूयवचनंचेदमब्रवीत् ६
ईश्वरउवाच-

जालंधरःकथंविष्णोनहतःसंगरेत्वया
तद्भयाच्चापयातोऽसित्यक्त्वावैकुंठमात्मनः ७
भगवानुवाच-
तवांशसंभवत्वाच्चभ्रातृत्वाच्चतथाश्रियः
नमयानिहतःसंख्येत्वमेनंजहिदानवम् ८
ईश्वरउवाच-
नायमेभिर्महातेजाःशस्त्रास्त्रैर्वध्यतेमया
देवैःसर्वैःस्वतेजोंशःशस्त्रार्थेदीयतांमम ९
नारदउवाच-
अथविष्णुमुखादेवाःस्वतेजांसिददुस्तदा
तान्येकत्वंगतानीशोदृष्ट्वातेजोमहांस्तदा १०
तेनाकरोन्महादेवःसहसाशस्त्रमुत्तमम्
चक्रंसुदर्शनंनामज्वालामालातिभीषणम् ११
तेजःशेषेणचतदावज्रंचकृतवान्हरः
तावज्जलंधरोदृष्टःकैलासतलभूमिषु १२
हस्त्यश्वरथपत्तीनांकोटीभिःपरिवारितः
तंदृष्ट्वाहर्षिताःसर्वेदेवाजग्मुर्यथागतम् १३
गणाश्चसमनह्यंतयुद्धायातित्वरान्विताः
नंदीभवक्त्रसेनानीमुखाःसर्वेशिवाज्ञया १४
अवतेरुर्गणाःसर्वेकैलासाद्युद्धदुर्मदाः
ततःसमभवद्युद्धंकैलासोपत्यकाभुवि १५
प्रमथाधिपदैत्यानांघोरंशस्त्रास्त्रसंकुलम्
भेरीमृदंगशंखौघनिस्वनैर्वीरहर्षणैः १६
गजाश्वरथशब्दैश्चनादिताभूर्व्यकंपत
शक्तितोमरबाणौघैर्मुशलप्रासपट्टिशैः १७
व्यराजतनभःपूर्णमुल्काभिरिवसंवृतम्
निहतैरथनागाश्वैःसर्वाभूमिर्व्यराजत १८
वज्राहताश्चलशिरःशकलैरिवसंवृता
प्रमथाहतदैत्यौघैर्दैत्याहतगणैस्तथा १९
वसासृङ्मांसपंकाद्यैर्भूरगम्याभवत्तदा

प्रमथाहतदैत्यौघान्भार्गवःसमजीवयत् २०
युद्धेपुनःपुनश्चैवमृतसंजीवनीबलात्
तंदृष्ट्वाव्याकुलीभूत्वागणाःसर्वेभयार्दिताः २१
शशंसुर्देवदेवेशंतत्सर्वंशुक्रचेष्टितम्
अथरुद्रमुखात्कृत्याबभूवातीवभीषणा २२
तालजंघोदरीवक्रास्तनापीडितभूरुहा
सायुद्धभूमिमासाद्यभक्षयंतीमहासुरान् २३
भार्गवंस्वकरेधृत्वाजगामांतर्हिताभवत्
विधृतंभार्गवंदृष्ट्वादैत्यसैन्यगणास्तदा २४
प्रम्लानवदनादर्पान्निजघ्नुर्युद्धदुर्मदाः
अथाभज्यतदैत्यानांसेनागणभयार्दिता २५
वायुवेगहतायद्वत्प्रकीर्णतृणसंहतिः
भग्नांगतभयात्सेनांदृष्ट्वाहर्षंगणाययुः २६
निशुंभशुंभसेनान्यौकालनेमिश्चवीर्यवान्
त्रयस्तेवारयामासुर्गणसेनांमहाबलाः २७
मुंचतःशरवर्षाणिप्रावृषीवबलाहकाः
ततोदैत्यशरौघास्तेशलभानामिवव्रजाः २८
रुरुधुःखंदिशःसर्वागणसेनामकंपयन्
गणाःशरशतैर्भिन्नारुधिरासारवर्षिणः २९
वसंतेकिंशुकाभासानप्राज्ञायतकिंचन
पतिताःपात्यमानाश्चछिन्नाभिन्नास्तदागणाः ३०
त्यक्त्वासंग्रामभूमिंतेसर्वेऽपिविमुखाभवन् ३१
ततःप्रभग्नंस्वबलंविलोक्यगजास्यनंदीश्वरकार्तिकेयाः
चिरान्वितादैत्यवरान्प्रसह्यनिवारयामासुरमर्षणास्ते ३२

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेदैत्यसेनावधोनामशततमोऽध्यायः १००

## एकाधिकशततमोऽध्यायः

नारदउवाच-
तेगणाधिपतीन्दृष्ट्वानंदीभमुखषरामुखान्

अमर्षादभ्यधावंतद्वंद्वयुद्धायदानवाः १
नंदिनंकालनेमिश्चशुंभोलंबोदरंतथा
निशुंभःषरामुखंवेगादभ्यधावतदंशितः २
निशुंभःकार्तिकेयस्यमयूरंपंचभिःशरैः
हृदिविव्याधवेगेनमूर्छितःसपपातच ३
ततःशक्तिधरःशक्तिंयावज्जग्राहरोषितः
तावन्निशुंभोवेगेनस्वशक्त्यातमपातयत् ४
ततोनंदीश्वरोबाणैःकालनेमिमविध्यत
सप्तभिश्चहयान्केतूंस्त्रिभिःसारथिमच्छिनत् ५
कालनेमिस्तुसंक्रुद्धोधनुश्चिच्छेदनंदिनः
तदपास्यसशूलेनतंवत्तस्यहनद्दृढम् ६
सशूलभिन्नहृदयोहताश्वोहतसारथिः
अद्रेःशिखरमामुच्यशैलाद्रिंसोऽप्यपातयत् ७
अथशुंभोगणेशश्चरथमूषकवाहनौ
युध्यमानौशरव्रातैःपरस्परमविध्यताम् ८
अथशुंभंगणाध्यत्तोहृदिविव्याधपत्रिणा
सारथिंपंचभिर्बाणैःपातयामासभूतले ९
ततःशुंभोऽतिक्रुद्धोऽपिबाणषष्ट्यागणाधिपम्
मूषकंचत्रिभिर्विद्ध्वाननादजलदस्वनः १०
मूषकःशरभिन्नांगश्चचालकृतवेदनः
लंबोदरःसमुत्तीर्यपदातिरभवन्नृप ११
ततोलंबोदरःशुंभंहत्वापरशुनाहृदि
अपातयत्तदाभूमौमूषकंचारुहत्पुनः १२
कालनेमिर्निशुंभश्चउभौलंबोदरंशरैः
युगपज्जघ्नतुःकोपात्तोत्रेणेवमहाद्विपम् १३
तंपीड्यमानमालोक्यवीरभद्रोमहाबलः
अभ्यधावतवेगेनभूतकोटियुतस्तदा १४
कूष्मांडाभैरवाश्चापिवेतालायोगिनीगणाः
पिशाचायोगिनीसंघागणाश्चापितमन्वयुः १५
ततःकिलकिलाशब्दैःसिंहनादैःसघुर्घुरैः

विनादिताडमरुकैःपृथिवीसमकंपत १६
ततोभूतानिधावंतिभद्मयंतिस्मदानवान्
उत्पतंतिपतंतिस्मननृतुश्चरणांगणे १७
नंदीचकार्तिकेयश्चसमायातौत्वरान्वितौ
निजघ्नतूरणेदैत्यान्निरंतरशरव्रजैः १८
छिन्नभिन्नाहतैर्दैत्यैःपातितैर्भर्त्सितैस्तथा
व्याकुलासाभवत्सेनाविषरणवदनातदा १९
प्रविध्वस्तांततःसेनांदृष्ट्वासागरनंदनः
रथेनातिपताकेनगणानभिययौबली २०
हस्त्यश्वरथसंह्लादःशंखभेरीरवस्तदा
अभवत्सिंहनादश्चसेनयोरुभयोस्तदा २१
जालंधरशरव्रातैर्नीहारपटलैरिव
द्यावापृथिव्योराच्छन्नमंतरंसमपद्यत २२
गणेशंपंचभिर्विध्वाशैलाद्रिमपिपंचभिः
वीरभद्रंचविंशत्याननादजलदस्वनः २३
कार्तिकेयस्ततोदैत्यंशक्त्याविव्याधसत्वरः
व्याघूर्णःशक्तिनिर्भिन्नःकिंचिद्व्याकुलमानसः २४
ततःक्रोधपरीताद्मःकार्तिकेयंजलंधरः
गदयाताडयामाससचभूमितलेऽपतत् २५
तथैवनंदिनंवेगादपातयतभूतले
ततोगणेश्वरःक्रुद्धोगदांपरशुनाच्छिनत् २६
वीरभद्रस्त्रिभिर्बाणैर्हृदिविव्याधदानवम्
सप्तभिश्चहयान्केतून्धनुश्छन्नंचचिच्छिदे २७
ततोऽतिक्रुद्धोदैत्येंद्रःशक्तिमुद्यम्यदारुणाम्
गणेशंपातयामासरथमन्यंसमारुहत् २८
अभ्ययादथवेगेनवीरभद्रंरुषान्वितः
ततस्तौसूर्यसंकाशौयुयुधातेपरस्परम् २९
वीरभद्रस्तस्यहयांस्तथाबाणैरपातयत्
धनुश्चिच्छेददैत्येंद्रोयुयुधेपरिघायुधः ३०
सवीरभद्रंत्वरयाभिगम्यजघानदैत्यःपरिघेनमूर्ध्नि

सचापिदैत्यःप्रविभिन्नमूर्द्धापपातभूमौरुधिरंसमुद्गिरन् ३१
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्त्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेदैत्यसेनापराभवोनामएकाधिकशततमोऽध्यायः १०१

## द्व्यधिक शततमोऽध्यायः

नारदउवाच-
पतितंवीरभद्रंतुदृष्ट्वारुद्रगणाभयात्
आगतास्तेरणंहित्वाक्रोशमानामहेश्वरम् १
अथकोलाहलंश्रुत्वागणानांचंद्रशेखरः २
अभ्ययाद्वृषमारूढःसंग्रामंप्रहसन्निव
रुद्रमायांतमालोक्यसिंहनादैर्गणाःपुनः ३
निवृत्ताःसंगरेदेत्यान्निजघ्नुःशरवृष्टिभिः
दैत्याश्चभीषणंरुद्रंदृष्ट्वासर्वेविदुद्रुवुः ४
कार्त्तिकव्रतिनंदृष्ट्वापातकानीवतद्भयात्
अथजालंधरोदैत्यान्विद्रुतान्प्रेक्ष्यसंगरे ५
रोषादधावच्चंडीशंमुंचन्बाणान्सहस्रशः
शुंभोनिशुभोऽश्वमुखःकालनेमिर्बलाहकः ६
खड्गरोमाप्रचंडश्चघस्मरश्चशिवंययुः
बाणांधकारसंच्छन्नंदृष्ट्वागणबलंशिवः ७
तद्बाणजालंविच्छिद्यस्वबाणैरावृणोन्नभः
दैत्यांश्चबाणवात्याभिःपीडितानकरोत्तदा ८
प्रचंडजालबाणौघैरपातयतभूतले
खड्गरोम्णःशिरःकोपात्तथापरशुनाच्छिनत् ९
बलाहकस्यचशिरःखट्वागेनाकरोद्द्विधा
बद्धवाचघस्मरं दैत्यंपाशेनाभ्यहनाद्भुवि १०
वृषभेणहताःकेचित्केचिद्बाणैर्निराकृताः
नशेकुरसुराःस्थातुंगजाःसिंहार्दितायथा ११
ततःकोपपरीतात्मावेगाद्रुद्रंजलंधरः
आह्वयामाससमरेतीव्राशनिसमस्वनः १२
जलंधरउवाच-

युध्यस्वाद्यमयासार्द्धंकिमेभिर्निहितैस्तव
यच्चकिंचिद्बलंतेऽस्तितद्दर्शयजटाधर १३
नारदउवाच
इत्युक्त्वाबाणसप्तत्याजघानवृषभध्वजम्
तानप्राप्तान्शितैर्बाणैश्चिच्छेदप्रहसन्निव १४
ततोहयान्ध्वजंछत्रंधनुश्चिच्छेदसप्तभिः
सच्छिन्नधन्वाविरथोगदामादायवीर्यवान् १५
अभ्यधावच्छिवस्तावद्गदाबाणैर्द्विधाकरोत्
तथापिमुष्टिमुद्यम्यययौरुद्रजिघांसया १६
तावच्छिवेनबाणौघैःक्रोशमात्रमपाकृतः
ततोजालंधरोदैत्योमत्वारुद्रंबलाधिकम् १७
ससर्जमायांगांधर्वीमद्भुतांरुद्रमोहिनीम्
ततोजगुश्चननृतुर्गंधर्वाप्सरसांगणाः १८
तालवेणुमृदंगांश्चवादयंतःपरस्परम्
तंदृष्ट्वामहदाश्चर्यंरुद्रोनादविमोहितः १९
पतितान्यपिशस्त्राणिकरेभ्योनविवेदसः
एकाग्रभूतमालोक्यरुद्रं दैत्योजलंधरः २०
कामार्त्तःसजगामाशुयत्रगौरीस्थिताभवत्
युद्धेशुंभनिशुंभाख्यौस्थापयित्वामहाबलौ २१
दशदोर्दंडपंचास्यस्त्रिनेत्रश्चजटाधरः
महावृषभमारूढःसबभूवजलंधरः २२
अथरुद्रंसमायांतमालोक्यभववल्लभा
अभ्याययौसखीमध्यात्तद्दर्शनपथेऽभवत् २३
यावद्ददर्शचार्वंगींपार्वतींदनुजेश्वरः
तावत्सवीर्यंमुमुचेजडांगश्चाभवत्तदा २४
अथज्ञात्वातदागौरीदानवंभयविह्वला
जगामांतर्हितातावत्सातदोत्तरमानसम् २५
तामदृष्ट्वातदादैत्यःक्षणाद्विद्युल्लतामिव
जवेनायात्पुनर्युद्धंयत्रदेवोवृषध्वजः २६
पार्वत्यपिमहाविष्णुंसस्मारमनसातदा

तावद्ददर्शतंदेवीसोपविष्टंसमीपगम् २७
पार्वत्युवाच
विष्णोजलंधरोदैत्यःकृतवान्परमाद्भुतम्
तत्किंनविदितंतेऽस्तिचेष्टितंतस्यदुर्मतेः २८
श्रीभगवानुवाच-
तेनैवदर्शितःपंथावयमप्यन्वयामहे
नान्यथासभवेद्वध्यः पातिव्रत्यात्सुरक्षितः २९
नारदउवाच-
जगामविष्णुरित्युक्त्वापुनर्जालंधरंपुरम्
अथरुद्रश्चगंधर्वानुगतःसंगरेस्थितः ३०
अंतर्द्धानगतांमायांदृष्ट्वातुबुबुधेतदा
ततःशिवोविस्मितमानसःपुनर्जगामयुद्धायजलंधरंरुषा ३१
सचापिदैत्यःपुनरागतंशिवंदृष्ट्वाशरौघैःसमवाकिरद्रणे ३२
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्त्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेदैत्यकपटवर्णनोनामद्व्यधिकशततमोऽध्यायः १०२

## त्र्यधिकशततमोऽध्यायः-

नारदउवाच-
विष्णुर्जालंधरंगत्वातद्दैत्यपुटभेदनम्
पातिव्रत्यस्यभंगायवृंदायाश्चाकरोन्मतिम् १
अथवृंदारकादेवीस्वप्नमध्येददर्शह
भर्त्तारंमहिषारूढं तैलाभ्यक्तंदिगंबरम् २
कृष्णप्रसूनभूषाढ्यंक्रव्यादगणसेवितम्
दक्षिणाशांगतंमुंडंतमसाव्यावृतंतदा ३
स्वपुरंसागरेमग्नंसहसैवात्मनासह
ततःप्रबुद्धासाबालास्वस्वप्नंप्रविचिन्वती ४
ददर्शोदितमादित्यंसच्छिद्रंनिश्चलंमुहुः
तदनिष्टमितिज्ञात्वारुदतीभयविह्वला ५
कुत्रचिन्नालभच्छर्मगोपुराट्टालभूमिषु
ततःसखीद्वययुतानगरोद्यानमागमत् ६

तत्रापिसागताबालानालभत्कुत्रचित्सुखम्
वनाद्वनांतरंयातानैववेदात्मनस्तदा ७
ततोभ्रमंतेसाबालाददर्शातिविभीषणौ
राज्ञसौसिंहवदनौदंष्ट्रानयनभीषणौ ८
तौदृष्ट्वाविह्वलातीवपलायनपरातदा
ददर्शतापसंशांतंसशिष्यंमौनमास्थितम् ९
ततस्तत्कंठआसज्यनिजांबाहुलतांभयात्
मुनेमांरज्ञशरणमागतामित्यभाषत १०
मुनिस्तांविह्वलांदृष्ट्वाराज्ञसानुगतांतदा
हुंकारेणैवतौघोरौचकारविमुखौरुषा ११
यद्धुंकारभयत्रस्तौदृष्ट्वातौगगनंगतौ
प्रणम्यदंडवद्भूमौवृंदावचनमब्रवीत् १२
वृंदोवाच
रज्ञिताहंत्वयाघोराद्भयात्तस्मात्कृपानिधे
किंचिद्विज्ञप्तुमिच्छामिकृपयातन्निशामय १३
जलंधरोहिमेभर्त्तारुद्रंयोद्धुंगतःप्रभो
सतत्रास्तिकथंयुद्धेतन्मेकथयसुव्रत १४
नारदउवाच-
मुनिस्तद्वाक्यमाकर्ण्यकृपयोर्ध्वमवैज्ञत
तावत्कपीशावायातौतंप्रणम्याग्रतःस्थितौ १५
ततस्तद्भ्रूलतासंज्ञानियुक्तौगगनंगतौ
गत्वाज्ञणार्द्धादागत्यवानरावग्रतःस्थितौ १६
शिरःकबंधहस्तौतौदृष्ट्वाब्धितनयस्यसा
पपातमूर्छिताभूमौभर्तृव्यसनदुःखिता १७
कमंडलुजलैःसिक्तामुनिनाश्वासितातदा
स्वभर्तृभालेसाभालंकृत्वाखिन्नारुरोदह १८
वृंदोवाच-
यःपुरासुखसंवादैर्विनोदयसिमांविभो
सकथंनवदस्यद्यवल्लभांमामनागसम् १९
येनदेवाःसगंधर्वानिर्जिताहरिणासह

सकथंतापसेनत्वं त्रैलोक्यविजयीहतः २०
नारदउवाच-
रुदित्वेतितदावृंदातंमुनिंवाक्यमब्रवीत्
वृंदोवाच
कृपानिधेमुनिश्रेष्ठजीवनंमेऽस्यसुप्रियम् २१
त्वमेवास्यपुनःशक्तोजीवनायमतोमम
अथतद्वाक्यमाकर्ण्यप्रहस्यमुनिरब्रवीत् २२
मुनिरुवाच
नायंजीवयितुंशक्योरुद्रेणनिहतोयुधि
तथापित्वत्कृपाविष्टएवंसंजीवयाम्यहम् २३
नारदउवाच
इत्युक्त्वांतर्दधेयावत्तावत्सागरनंदनः
वृंदामालिंग्यतद्वक्त्रंचुचुंबेप्रीतमानसः २४
अथवृंदापिभर्त्तारंदृष्ट्वाहर्षितमानसा
रेमेतद्वनमध्यस्थातद्युक्ताबहुवासरम् २५
कदाचित्सुरतस्यांतेदृष्ट्वाविष्णुंतमेवहि
निर्भर्त्स्यक्रोधसंयुक्तावृंदावचनमब्रवीत् २६
वृंदोवाच
धिक्तवेदंहरेशीलंपरदाराभिगामिनः
ज्ञातोऽसित्वंमयासम्यङ्मायाप्रत्यक्षतापसः २७
यौत्वयामाययाद्वास्थौस्वकीयौदर्शितौमम
तावेवराक्षसौभूत्वाभार्यांतवहरिष्यथ २८
त्वंचापिभार्यादुःखार्तोवनेकपिसहायवान्
भ्रमसर्वेश्वरेणायंयस्तेशिष्यत्वमागतः २९
इत्युक्त्वासातदावृंदाप्राविशद्धव्यवाहनम्
विष्णुनावार्यमाणापितस्मिन्नासक्तमानसा ३०
ततोहरिस्तामनुसंस्मरन्मुहुर्वृंदाचिताभस्मरजोवगुंठितः
तत्रैवतस्थौमुनिसिद्धसंघैः प्रबोध्यमानोपिययौनशांतिम् ३१
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये
श्रीकृष्णसत्यभामासंवादेवृंदाचिताग्निप्रवेशोनामत्र्यधिकशततमोऽध्यायः

१०३

चतुरधिकशततमोऽध्यायः-

नारदउवाच-
ततोजलंधरोदृष्ट्वारुद्रमद्भुतविक्रमम्
चकारमाययागौरींत्र्यबकंमोहयंस्तदा १
रथोपरिगतांदृष्ट्वारुदंतींचतदाशिवः
शुंभनिशुंभदैत्यैश्चवध्यमानांददर्शसः २
गौरींतथाविधांदृष्ट्वाशिवोऽप्युद्विग्नमानसः
अवाङ्मुखःस्थितस्तूष्णींविस्मृत्यस्वपराक्रमम् ३
ततोजलंधरोवेगात्त्रिभिर्विव्याधसायकैः
आपुंखमग्नैस्तंरुद्रंशिरस्युरसिचोदरे ४
ततोजज्ञेसतांमायांविष्णुनासंप्रबोधितः
रौद्ररूपधरोजातोज्वालामालातिभीषणः ५
तस्यातीवमहारौद्रंरूपंदृष्ट्वामहासुराः
नशेकुःप्रमुखेस्थातुंभेजिरेचदिशोदश ६
ततःशापंददौदेवस्तयोःशुंभनिशुंभयोः
ममयुद्धादपक्रांतौगौर्यावध्यौभविष्यथः ७
पुनर्जलंधरोवेगाद्ववर्षनिशितैःशरैः
बाणांधकारसंच्छन्नंयथाभूमितलंमहत् ८
यावद्रुद्रःप्रचिच्छेदतस्यबाणांस्त्वरान्वितः
तावत्सपरिघेणाशुजघानवृषभंबली ९
वृषस्तेनप्रहारेणपरावृत्तोरणांगणात्
रुद्रेणाकृष्यमाणोऽपिनतस्थौरणभूमिषु १०
ततःपरमसंक्रुद्धोरुद्रोरौद्रवपुर्द्धरः
चक्रंसुदर्शनंवेगाच्चिक्षेपादित्यवर्चसम् ११
प्रदहद्रोदसीवेगात्तदासाद्यजलंधरम्
जहारतच्छिरःकायान्महदायतलोचनम् १२
रथात्कायःपपातोर्व्यांनादयन्वसुधातलम्
तेजश्चनिर्गतंदेहात्तद्रुद्रेलयमागमत् १३

दृष्ट्वादेहोद्भवंतेजस्तद्गौरीशेलयंगतम्
अथचेंद्रादयोदेवाहर्षादुत्फुल्ललोचनाः १४
प्रणम्यशिरसारुद्रंशशंसुर्विष्णुचेष्टितम्
देवाऊचुः
महादेवत्वयादेवारक्षिताःशत्रुजाद्भयात् १५
किंचिदन्यत्समुद्भूतंतत्रकिंकरवामहै
वृंदालावण्यसंभ्रांतोविष्णुस्तिष्ठतिमोहितः १६
ईश्वरउवाच
गच्छध्वंशरणंदेवाविष्णोर्मोहापनुत्तये
शरण्यांमोहिनींमायांसावःकार्यंकरिष्यति १७
नारदउवाच
इत्युक्त्वांतर्दधेदेवःसहभूतगणैस्तथा
देवाश्चतुष्टुवुर्मूलप्रकृतिंभक्तवत्सलाम् १८
देवाऊचुः
यदुद्भवाःसत्वरजस्तमोगुणाःसर्गस्थितिध्वंसनिदानकारणम्
यदिच्छयाविश्वमिदंभवाभवौतनोतिशुद्धांप्रकृतिंनताःस्मताम् १९
येहित्रयोविंशतिभेदिसंज्ञिताजगत्यशेषेसमधिष्ठितापुरा
यद्रूपकर्माणिजडास्त्रयोऽपितेदेवाविदुर्नप्रकृतिंनताःस्मताम् २०
यद्भक्तियुक्ताःपुरुषास्तुनित्यंदारिद्र्यव्यामोहपराभवादिकम्
नप्राप्नुवंत्येवहिभक्तवत्सलांसदैवविष्णोःप्रकृतिंनताःस्मताम् २१
नारदउवाच
स्तोत्रमेतत्त्रिसंध्यंयःपठेदेकाग्रमानसः
दारिद्रमोहदुःखानिनकदाचित्स्पृशंतितम् २२
इतिस्तुवंतस्तेदेवास्तेजोमंडलमास्थिताम्
ददृशुर्गगनेतत्रज्वालाव्याप्तदिगंतराम् २३
तन्मध्याद्भारतींसर्वेददृशुर्व्योमचारिणीम्
अहमेवत्रिधाभिन्नातिष्ठामित्रिविधैर्गुणैः २४
गौरीलक्ष्मीस्वराचेतिरजःसत्त्वतमोगुणैः
तत्रगच्छततंकार्यंविधास्यंतिचवःसुराः २५
नारदउवाच–

शृरवतामितिदेवानामंतर्द्धानमगान्महः
देवानांविस्मयोत्फुल्लनेत्राणांतत्तदानृप २६
ततःसर्वेऽपितेदेवागत्वातद्वाक्यनोदिताः
गौरींलक्ष्मींस्वरांचैवप्रणेमुर्भक्तितत्पराः २७
ततस्तास्तान्सुरान्दृष्ट्वाप्रणतान्भक्तवत्सलाः
बीजानिप्रददुस्तेभ्योवाक्यान्यूचुश्चभूमिप २८
देव्यऊचुः
इमानिक्षेत्रबीजानिविष्णुर्यत्रावतिष्ठति
निर्वपध्वंततःकार्यंभवतांसिद्धिमेष्यति २९
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेजालंधरवधोनामचतुरधिकशततमोऽध्यायः १०४

## पञ्चाधिशततमोऽध्यायः

नारदउवाच
क्षिप्तेभ्यस्तत्रबीजेभ्योवनस्पत्यस्त्रयोभवन्
धात्रीचमालतीचैवतुलसीचनृपोत्तम १
धात्र्युद्भवास्मृताधात्रीमाभवामालतीस्मृता
गौरीभवाचतुलसीतमःसत्त्वरजोगुणाः २
स्त्रीरूपिरयौवनस्पत्यौदृष्ट्वाविष्णुस्तदानृप
उत्तस्थौसंभ्रमाद्वृंदारूपातिशयमोहितः ३
ददर्शतास्तदामोहात्कामासक्तेनचेतसा
तंचापितुलसीधात्र्यौरागेणैवावलोकताम् ४
यच्चलक्ष्म्यापुराबीजंमाययैवसमर्पितम्
तस्मात्तदुद्भवानारीतस्मिन्नीर्ष्यायुताभवत् ५
अतःसाबर्बरीत्याख्यामाधवस्यातिगर्हिता
धात्रीतुलस्यैतद्रागात्तस्यप्रीतिप्रदेसदा ६
ततोविस्मृतदुःखोऽसौविष्णुस्ताभ्यांसहैवतु
वैकुंठमगमद्धृष्टःसर्वदेवनमस्कृतः ७
कार्तिकोद्यापनेविष्णोस्तस्मात्पूजाविधीयते
तुलसीमूलदेशेतुप्रीतिदासायतःस्मृता ८

तुलसीकाननंराजन्गृहेयस्यावतिष्ठते
तद्गृहंतीर्थरूपंतुनायांतियमकिंकराः ९
सर्वपापहरंपुण्यंकामदंतुलसीवनम्
रोपयंतिनरश्रेष्ठानतेपश्यंतिभास्करिम् १०
दर्शनंनर्मदायास्तुगंगास्नानंतथैवच
तुलसीवनसंसर्गःसममेतत्त्रयंस्मृतम् ११
रोपणात्पालनात्सेकाद्दर्शनात्स्पर्शनान्नृणाम्
तुलसीदहतेपापंवाङ्मनःकायसंचितम् १२
तुलसीमंजरीभिर्यःकुर्याद्धरिहरार्चनम्
नसगर्भगृहंयातिमुक्तिभागीनसंशयः १३
पुष्करादीनितीर्थानिगंगाद्याःसरितस्तथा
वासुदेवादयोदेवास्तिष्ठंतितुलसीदले १४
तुलसीमंजरीयुक्तोयदिप्राणान्विमुंचति
विष्णोःसायुज्यमाप्नोतिसत्यंसत्यंनृपोत्तम १५
तुलसीमृत्तिकालिप्तोयस्तुप्राणान्विमुचंति
यमोऽपिनेक्षितुंशक्तोयुक्तंपापशतैरपि १६
तुलसीकाष्ठजंयस्तुचंदनंधारयेन्नरः
तद्देहंनस्पृशेत्पापंक्रियमाणमपीहयत् १७
तुलसीविपिनच्छायायत्रयत्रभवेन्नृप
तत्रश्राद्धंप्रकर्त्तव्यंपितॄणांदत्तमक्षयम् १८
धात्रीछायासुयःकुर्यात्पिंडदानंनृपोत्तम
तृप्तिंचयांतिपितरस्तस्ययेनरकेस्थिताः १९
मूर्ध्निपाणौमुखेचैवदेहेचनृपसत्तम
धत्तेधात्रीफलंयस्तुसविज्ञेयोहरिःस्वयम् २०
धात्रीफलंचतुलसीमृत्तिकाद्वारकोद्भवा
यस्यदेहेस्थितानित्यंसजीवन्मुक्तउच्यते २१
धात्रीफलविमिश्रैस्तुतुलसीदलमिश्रितैः
जलैःस्नातिनरस्तस्यगंगास्नानफलंस्मृतम् २२
देवार्चनंनरःकुर्याद्धात्रीपत्रैःफलैरपि
सुवर्णपुष्पैर्विविधैरर्चनस्याप्नुयात्फलम् २३

तीर्थानिमुनयोदेवायज्ञाःसर्वेऽपिकार्तिके
नित्यंधात्रींसमाश्रित्यतिष्ठंत्यर्केतुलाश्रिते २४
द्वादश्यांतुलसीपत्रंधात्रीपत्रंतुकार्तिके
लुनातिसनरोगच्छेन्निरयानतिगर्हितान् २५
धात्रीछायांसमाश्रित्यकार्तिकेऽन्नभुनक्तियः
अन्नसंसर्गजंपापमावर्षंतस्यनश्यति २६
धात्रीमूलेतुयोविष्णुंकार्तिकेऽचयतेनरः
विष्णुक्षेत्रेषुसर्वेषुपूजितस्तेनसर्वदा २७
धात्रीतुलस्योर्माहात्म्यमपिदेवश्चतुर्मुखः
नसमर्थोभवेद्वक्तुंयथादेवस्यशार्ङ्गिणः २८
धात्रीतुलस्युद्भवकारणंचशृणोतियःश्रावयतेचभक्त्या
विधूतपाप्मासहपूर्वजैश्चस्वर्गंव्रजत्यग्र्यविमानसंस्थः २९
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्येश्रीकृष्णसत्यभामासंवादेधात्रीतुलस्योर्माहात्म्यंनामपंचाधिकशततमोऽध्यायः१०५

## षडधिकशततमोऽध्यायः

पृथरुवाच
सेतिहासमिमंब्रह्मन्माहात्म्यंकथितंत्वया
अत्याश्चर्यकरंसम्यक्तुलस्यास्तुश्रुतंमहत् १
यदूर्जव्रतिनःपुंसःफलंमहदुदाहृतम्
तत्पुनर्ब्रूहिमाहात्म्यंकेनचीर्णमिदंकथम् २
नारदउवाच
आसीत्सह्याद्रिविषयेकरवीरपुरेपुरा
ब्राह्मणोधर्मवित्कश्चिद्धर्मदत्तोऽतिविश्रुतः ३
विष्णुव्रतकरःशश्वद्विष्णुपूजारतःसदा
द्वादशाक्षरविद्यायांजपनिष्ठोऽतिथिप्रियः ४
कदाचित्कार्तिकेमासिहरिजागरणायसः
रात्र्यातुर्यांशशेषायांजगामहरिमंदिरम् ५
हरिपूजोपकरणान्प्रगृह्यव्रजतातदा

तेनदृष्टासमायाताराक्षसीभीमनिःस्वना ६
वक्रदंष्ट्राननाजिह्वानिमग्नारक्तलोचना
दिगंबराशुष्कमांसालंबोष्ठीघर्घरस्वना ७
तांदृष्ट्वाभयवित्रस्तःकंपितावयवस्तदा
पूजोपकरणैर्वेगात्पयोभिश्चाहनद्भयात् ८
संस्मृत्यचहरेर्नामतुलसीयुतवारिणा
साहतापातकंतस्मात्तस्याःसर्वमगात्क्षयम् ९
अथसंस्मृत्यसापूर्वजन्मकर्मविपाकजम्
स्वांदशामब्रवीत्सर्वांदंडवत्तंप्रणम्यसा १०
कलहोवाच
पूर्वकर्मविपाकेनदशामेतांगताह्यहम्
तत्कथंतुपुनर्विप्रयाम्युत्तमगतिंशुभाम् ११
नारदउवाच
तांदृष्ट्वाप्रणतामग्रेवदमानांस्वकर्मतत्
अतीवविस्मितोविप्रस्तदावचनमब्रवीत् १२
धर्मदत्तउवाच
केनकर्मविपाकेनत्वंदशामीदृशींगता
कुतस्त्वंकाचकिंशीलातत्सर्वंकथयस्वमे १३
कलहोवाच
सौराष्ट्रनगरेब्रह्मन्भिक्षुनामाभवद्द्विजः
तस्याऽहगृहिणीपूर्वंकलहाख्यातिनिष्ठुरा १४
नकदाचिन्मयाभर्तुर्वचसापिशुभंकृतम्
नार्पितंतस्यमिष्टान्नंभर्तुर्वचनभंगया १५
कलहप्रिययानित्यंभयोद्विग्नस्तदाद्विजः
परिणेतुंतदाऽन्यासमतिंचक्रेपतिर्मम १६
ततोगरंसमादायप्राणास्त्यक्तामयाद्विज
अथबध्वाबध्यमानांमांविनिन्युर्यमानुगाः १७
यमश्चमांतदादृष्ट्वाचित्रगुप्तमपृच्छत
यमउवाच
अनयाकिंकृतंकर्मचित्रगुप्तविलोकय १८

प्राप्नोत्वेषाकर्मफलंशुभंवाशुभमेवच
चित्रगुप्तस्ततोवाक्यंभर्त्सयन्समुवाचह १९
चित्रगुप्तउवाच
अनयातुशुभंकर्मकृतंकिंचिन्नविद्यते
मिष्टान्नंभुक्तमनयानभर्तरितदर्पितम् २०
अतश्चवल्गुलीयोन्यांस्वविष्ठादावतिष्ठतु
भर्तुर्द्वेषकरीत्वेषानित्यंकलहकारिणी २१
विष्ठादाशूकरीयोन्यांततस्तिष्ठत्वियंहरे
पाकभांडेसदाभुक्तंनित्यंचैवानयायतः २२
तस्माद्दोषाद्बिडालीतुस्वजातापत्यभक्षिणी
भर्तारमनयोद्दिश्यह्यात्मघातःकृतोयतः २३
तस्मात्प्रेतपिशाचेषुतिष्ठत्वेषातिनिंदिता
ततश्चैवमरुंदेशंप्रापितव्याभटैःसह २४
तत्रप्रेतशरीराख्याचिरंतिष्ठत्वियंततः
इत्थंयोनित्रयंत्वेषाभुनक्त्वाशुभकारिणी २५
कलहोवाच–
साहंपंचशताब्दानिप्रेतदेहेस्थिताकिल
क्षुतृड्भ्यांपीडितानित्यंदुःखितास्वेनकर्मणा २६
ततःक्षुत्पीडितानित्यंशरीरंवणिजस्त्वहम्
आयातादक्षिणंदेशंकृष्णावेरायास्तुसंगमे २७
तत्तीरसंश्रितायावत्तावत्तस्यशरीरतः
शिवविष्णुगणैर्दूरमपाकृष्टाबलादहम् २८
ततःक्षुत्क्षामयादृष्टोभ्रमंत्यात्वंमयाद्विज
प्रक्षिप्ततुलसीवारिसंसर्गगतपापया २९
तत्कृपांकुरुविप्रेंद्रकथंमुक्तिमियाम्यहम्
योनित्रयादतिभयादस्माच्चप्रेतदेहतः ३०
इत्थंनिशम्यकलहावचनंद्विजश्चतत्कर्मपाकभवविस्मयदुःखयुक्तः
तद्ग्लानिदर्शनकृपाचलचित्तवृत्तिर्ध्यात्वाचिरंसवचनंनिजगाददुःखात् ३१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिक
माहात्म्येकलहोपाख्यानंनामषडधिकशततमोऽध्यायः १०६

सप्ताधिकशततमोऽध्यायः

धर्मदत्तउवाच
विलयंयांतिपापानितीर्थदानव्रतादिभिः
प्रेतदेहस्थितायास्तेतेषुनैवाधिकारिता १
त्वद्ग्लानिदर्शनादस्मात्खिन्नंचमममानसम्
नैवनिर्वृतिमायातित्वामनुद्धृत्यदुःखिताम् २
पातकंचतवात्युग्रंयोनित्रयविपाकदम्
नैवान्यैःक्षीयतेपुण्यैःप्रेतत्वंचातिगर्हितम् ३
तस्मादाजन्मजनितंयन्मयाकार्तिकव्रतम्
तत्पुण्यस्यार्द्धभागेनसद्गतिंत्वमवाप्नुहि ४
कार्तिकव्रतपुण्येननसाम्यंयांतिसर्वथा
यज्ञदानानितीर्थानिव्रतान्यपियतोध्रुवम् ५
नारदउवाच
इत्युक्त्वाधर्मदत्तोऽसौयावत्तामभ्यषेचयत्
तुलसीमिश्रतोयेनश्रावयन्द्वादशाक्षरम् ६
तावत्प्रेतत्वनिर्मुक्ताज्वलदग्निशिखोपमा
दिव्यवपुर्धराजातालावण्याद्भासितादिशः ७
ततःसादंडवद्भूमौप्रणनामाथतंद्विजम्
उवाचचतदावाक्यंहर्षगद्गदभाषिणी ८
कलहोवाच
त्वत्प्रसादाद्द्विजश्रेष्ठविमुक्तानिरयादहम्
पापाब्धौमज्जमानायास्त्वंनोभूतोऽसिमेध्रुवम् ९
नारदउवाच
इत्थंसावदतीविप्रंददर्शायातमंबरात्
विमानंभास्वरंयुक्तंविष्णुरूपधरैर्गणैः १०
अथसातद्विमानाग्र्यद्वास्थाभ्यामधिरोहिता
पुण्यशीलसुशीलाभ्यामप्सरोगणसेवितम् ११
तद्विमानंतदापश्यद्धर्मदत्तःसविस्मयः
पपातदंडवद्भूमौदृष्ट्वातौपुण्यरूपिणौ १२
पुण्यशीलसुशीलौतमुत्थाप्यप्रणतंद्विजम्

अभ्यनंदयतांवाक्यमूचतुर्द्धर्मशालिनौ १३
गणाऊचतुः
साधुसाधुद्विजश्रेष्ठयस्त्वंविष्णुरतःसदा
दीनानुकंपीधर्मज्ञोविष्णुव्रतपरायणः १४
आजन्मसच्छुभंह्येतद्यत्त्वयाकार्त्तिकव्रतम्
कृतंतस्यार्द्धदानेनयदस्याःपूर्वसंचितम् १५
जन्मांतरशतोद्भूतंपापंतद्विलयंगतम्
हरिजागरणाद्यैश्चविमानमिदमागमत् १६
वैकुराठभवनंविष्णोःसान्निध्यंचस्वरूपता
तेधन्याःकृतकृत्यास्तेतेषांचसफलोभवः १७
यैर्भक्त्याराधितोविष्णुर्धर्मदत्तत्वयायथा
सम्यगाराधितोविष्णुःकिंनयच्छतिदेहिनाम् १८
औत्तानचरणिर्येनध्रुवत्वेस्थापितःपुरा
यन्नामस्मरणादेवदेहिनोयांतिसद्गतिम् १९
ग्राहगृहीतोनागेंद्रोयन्नामस्मरणात्पुरा
विमुक्तःसन्निधिंप्राप्तोजातोयोजयसंज्ञकः २०
अतस्त्वयार्चितोविष्णुःस्वसान्निध्यंप्रदास्यति
बहून्यब्दसहस्राणिभार्याद्वययुतस्यते २१
ततःपुरायक्षयेजातेयदायास्यसिभूतले
सूर्यवंशोद्भवोराजाविख्यातस्त्वंभविष्यसि २२
नाम्नादशरथस्तत्रभार्याद्वययुतःपुनः
तृतीयंयानयाचापियातेपुरायार्द्धभागिनी २३
तत्रापितवसान्निध्यंविष्णुर्यास्यतिभूतले
आत्मानंतवपुत्रत्वेप्रकल्प्यामरकार्यकृत् २४
तवाजन्मव्रतादस्माद्विष्णुसंतुष्टिकारकात्
नयज्ञानचदानानिनतीर्थान्यधिकानिते २५
धन्योऽसिविप्रप्रयतस्त्वयैतद्व्रतंकृतंतुष्टिकरंजगद्गुरोः
यदर्धभागाच्चफलान्मुरारेःप्रणीयतेस्माभिरियंसलोकताम् २६

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
कार्तिकमाहात्म्येश्रीकृष्णसत्यभामासंवादेकलहोपाख्यानोनाम

## सप्ताधिकशततमोऽध्यायः १०७

## अष्टाधिकशततमोऽध्यायः

नारदउवाच
इत्थंतद्वचनंश्रुत्वाधर्मदत्तःसविस्मयः
प्रणम्यदंडवद्भूमौवाक्यमेतदुवाचह १
धर्मदत्तउवाच
आराधयंतिसर्वेऽपिविष्णुंभक्तार्त्तिनाशिनम्
यज्ञैर्दानैर्व्रतैस्तीर्थैस्तपोभिश्चयथाविधि २
विष्णुप्रीतिकरंतेषांविष्णुसान्निध्यकारकम्
यत्कृत्वातानिचीर्णानिसर्वाण्यपिभवंतिहि ३
गणावूचतुः
साधुपृष्टंत्वयाविप्रशृणुष्वैकाग्रमानसः
सेतिहासांकथांविप्रकथ्यमानांपुराभवाम् ४
कांतिपुर्यांपुराचोलचक्रवर्त्तीनृपोऽभवत्
यस्यनाम्नाचतेदेशाश्चोलाख्याअभवन्किल ५
यस्मिन्शासतिभूचक्रंदरिद्रोनैवदुःखितः
पापबुद्धिःसरुग्वापिनैवकश्चिदभून्नरः ६
यस्याप्यत्यंतयज्ञस्यताम्रपर्णीतटावुभौ
सुवर्णयूपैःशोभाढ्यावास्तांचैत्ररथोपमौ ७
सकदाचिदगाद्राजाह्यनंतशयनंद्विज
यत्रासौजगतांनाथोयोगनिद्रामुपासते ८
तत्रश्रीरमणंदेवंसंपूज्यविधिवन्नृपः
मणिमुक्ताफलैर्दिव्यैःस्वर्णपुष्पैश्चशोभनैः ९
प्रणम्यदंडवद्यावदुपविष्टःसतत्रवै
तावद्ब्राह्मणमायांतमपश्यद्देवसन्निधौ १०
देवार्चनार्थमायांतंतुलस्युदकपाणिनम्
स्वपुरीवासिनंतत्रविष्णुदासावयंद्विजम् ११
तत्राभ्येत्यसविप्रर्षिर्देवदेवमपूजयत्
विष्णुसूक्तेनसंस्नाप्यतुलसीमंजरीदलैः १२

तुलसीपूजयातस्यरत्नपूजांतथाकृताम्
स्राच्छादितांसमालोक्यराजाक्रुद्धोऽब्रवीद्वचः १३
राजोवाच
माणिक्यस्वर्णपूजात्रशोभाढ्यायामयाकृता
स्रृविष्णुदासकथंसेयमाच्छन्नातुलसीदलैः १४
विष्णुभक्तिंनजानासिवराकोऽसिमतोमम
यस्त्विमामतिशोभाढ्यांपूजामाच्छादयस्यहो १५
इतितद्वचनंश्रुत्वासक्रोधःसद्विजोत्तमः
राज्ञोगौरवमुल्लंघ्यजगादवचनंतदा १६
विष्णुदासउवाच
राजन्मुक्तिंनजानासिगर्वितोऽसिनृपश्रिया
किंस्विद्विष्णुव्रतंपूर्वंत्वयाचीर्णंवदस्वतत् १७
गणावूचतुः
तद्ब्राह्मणवचःश्रुत्वाप्रहस्यसनृपोत्तमः
विष्णुदासंतदागर्वादुवाचवचनंद्विज १८
इत्थंचेत्कथ्यसेविप्रविष्णुभक्त्यातिगर्वितः
भक्तिस्तेकियतीविष्णोर्दरिद्रस्याधनस्यच १९
यज्ञदानादिकंचैवविष्णुतुष्टिकरंकृतम्
नापिदेवालयंपूर्वंत्वयाविप्रक्वचित्कृतम् २०
ईदृशस्यापितेगर्वएषतिष्ठतिभक्तितः
तच्छृणवंतुवचोमेऽद्यसर्वेप्येतेद्विजोत्तमाः २१
साक्षात्कारमहंविष्णोरेषवादोगमिष्यति
यथातुसर्वेऽपिततोभक्तिंज्ञास्यथचावयोः २२
गणावूचतुः
इत्युक्त्वासनृपोगच्छन्निजंराजगृहंद्विजः
स्रारेभेवैष्णवंसत्रंकृत्वाचार्यंतुमुद्गलम् २३
स्रृषिसंघसमाजुष्टंबभूवबहुदक्षिणम्
यद्वद्ब्रह्मकृतंपूर्वंगयाक्षेत्रेसमृद्धिमत् २४
विष्णुदासोऽपितत्रैवतस्थौदेवालयेव्रती
पंचैतान्नियमान्कृत्वाविष्णुतुष्टिकरान्सदा २५

माघोर्जयोर्व्रतंसम्यक्तुलसीवनपालनम्
एकादशीव्रतंजाप्यंद्वादशाक्षरविद्यया २६
उपचारैःषोडशभिर्गीतनृत्यादिमंगलैः
नित्यंविष्णोस्तथापूजांव्रतान्येतानिसोऽकरोत् २७
नित्यंसंस्मरणंविष्णोर्गच्छन्भुंजन्स्वपन्नपि
सर्वभूतस्थितंविष्णुमपश्यत्समदर्शनः २८
माघकार्तिकयोर्नित्यंविशेषनियमानपि
अकरोद्विष्णुतुष्ट्यर्थंसोद्यापनविधिंतथा २९
एवंसमाराधयतोःश्रियःपतिंतयोस्तुचोलेश्वरविष्णुदासयोः
अगादनेहाबहुतद्व्रतस्थयोस्तन्निष्ठकर्मेन्द्रियकर्मणोस्तयोः ३०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे कलहोपाख्याने
अष्टाधिकशततमोऽध्यायः १०८

## नवाधिकशततमोऽध्यायः

गणावूचतुः
कदाचिद्विष्णुदासोऽथकृत्वानित्यविधिंद्विजः
पाककर्माकरोद्यावदहरत्कोप्यलक्षितः १
तमदृष्ट्वाप्यसौपाकंपुनर्नैवाकरोत्तदा
सायंकालार्चनस्यासौव्रतभंगभयाद्द्विजः २
द्वितीयेऽह्नितपाकंकृत्वायावत्सविष्णवे
उपहारार्पणंकर्तुंतावत्कोप्यहरत्पुनः ३
एवंसप्तदिनंतस्यपाकंकोप्यहरद्द्विज
जातःसविस्मयःसोऽथमनस्येवव्यचारयत् ४
अहोनित्यंसमभ्येत्यकःपाकंहरतेमम
क्षेत्रसंन्यासिनांस्थानमत्याज्यंसर्वथामया ५
पुनःपाकंविधायात्रभुज्यतेयदिचेन्मया
सायंकालार्चनंचैतत्परित्याज्यंकथंमया ६
किंचित्पाकंविधायैतद्गोप्तव्यंतुमयानहि
अनिवेद्यहरौसर्वंवैष्णवैर्नैवभुज्यते ७

उपोषितोऽहचकथंतिष्ठाम्यत्रव्रतस्थितः
अद्यसंरत्तणंसम्यक्पाकस्यात्रकरोम्यहम् ८
इतिपाकंविधायासौतत्रैवालत्तितःस्थितः
तावद्ददर्शचांडालंपाकान्नहरणेस्थितम् ९
त्तुत्तामंदीनवदनमस्थिचर्माविशेषितम्
तमालोक्यद्विजाग्र्योभूत्कृपयापन्नमानसः १०
विलोक्यान्नहरंविप्रस्तिष्ठतिष्ठेत्यभाषत
कथमत्तिभवान्रूत्तंघृतमेतद्गृहाणभोः ११
इत्थंब्रुवंतंविप्राग्र्यंआयांतंचविलोक्यसः
वेगादधावत्तद्भीत्यामूर्च्छितश्चपपातह १२
भीतंतंमूर्च्छितंदृष्ट्वाचांडालंसद्विजोत्तमः
वेगादभ्येत्यकृपयास्ववस्त्रां तैरवीजयत् १३
अथोत्थितंतमेवासौविष्णुदासोव्यलोकयत्
सात्तान्नारायणंदेवंशंखचक्रगदाधरम् १४
पीतांबरंचतुर्बाहुंश्रीवत्सांकंकिरीटिनम्
अतसीपुष्पसंकाशंकौस्तुभोरःस्थलंविभुम् १५
तंदृष्ट्वासात्विकैर्भावैरावृतोद्विजसत्तमः
स्तोतुंचापिनमस्कर्तुंतदानालंबभूवसः १६
अथशक्रादयोदेवास्तत्रैवाभ्याययुस्तदा
गंधर्वाप्सरसश्चापिजगुश्चननृतुर्मुदा १७
विमानशतसंकीर्णंदेवर्षिगणसंकुलम्
गीतवादित्रनिर्घोषंस्थानंतदभवत्तदा १८
ततोविष्णुःसमालिग्य स्वभक्तं सात्विकं तथा
सायुज्यमात्मनोदत्त्वानयद्वैकुंठमंदिरम् १९
विमानवरसंस्थानमास्थितंविष्णुसन्निधौ
दीत्तितश्चोलनृपतिर्विष्णुदासंददर्शह २०
वैकुंठभवनंयांतंविष्णुदासंविलोक्यसः
स्वगुरुंमुद्गलंवेगादाह्वयेत्थंवचोऽब्रवीत् २१
चोलउवाच
यत्स्पर्धयामयाचैतद्यज्ञदानादिकंकृतम्

सविष्णुरूपधृग्विप्रोयातिवैकुंठमंदिरम् २२
दीक्षितेनमयासम्यक्सत्रेऽस्मिन्विष्णवेत्वया
हुतमग्नौकृताविप्रादानाद्यैःपूर्णमानसाः २३
नैवाद्यापिसमेदेवःप्रसन्नोजायतेध्रुवम्
भक्त्यैवतस्यविप्रस्यसाक्षात्कारंददौहरिः २४
तस्माद्दानैश्चयज्ञैश्चनैवविष्णुःप्रसीदति
भक्तिरेवपरंतस्यनिदानंदर्शनेविभोः २५
गणावूचतुः
इत्युक्त्वाभागिनेयंस्वमभिषिच्यनृपासने
आबाल्याद्दीक्षितोयज्ञेसापुत्रत्वमगाद्यतः २६
तस्मादद्यापितद्देशेसदाराज्यांशभागिनः
स्वस्रेयाएवजायंतेतत्कृताचारवर्तिनः २७
यज्ञवाटंततोऽभ्येत्यवह्निकुंडाग्रतःस्थितः
त्रिरुच्चैर्व्याजहाराशुविष्णुंसंबोधयंस्तदा २८
विष्णोभक्तिंस्थिरांदेहिमनोवाक्कायकर्मभिः
इत्युक्त्वासोऽपतद्वह्नौसर्वेषामेवपश्यताम् २९
मुद्गलस्तुतदाक्रोधाच्छिखामुत्पाटयत्स्वकाम्
ततस्त्वद्यापितद्गोत्रेमुद्गलाविशिखाभवन् ३०
तावदाविरभूद्विष्णुःकुंडाग्नौभक्तवत्सलः
तमालिंग्यविमानाग्र्यंसमारोहयदच्युतः ३१
तमालिंग्यात्मसारूप्यंदत्त्वावैकुंठमंदिरम्
तेनैवसहदेवेशोजगामत्रिदशैर्वृतः ३२
नारदउवाच
योविष्णुदासःसतुपुण्यशीलोयश्चोलभूपःससुशीलनामा
एतावुभौतत्समरूपभाजौद्वाःस्थौकृतौतेनरमाप्रियेण ३३
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांकार्तिकमाहात्म्ये
श्रीकृष्णसत्यभामासंवादेकलहोपाख्यानंनामनवाधिकशततमोऽध्यायः १०९

दशाधिकशततमोऽध्यायः

धर्मदत्तउवाच

जयश्चविजयश्चैवविष्णोर्द्वास्थौमयाश्रुतौ
किंतुताभ्यांपुराचीर्णंयस्मात्तद्रूपधारिणौ १
गणावूचतुः
तृणबिंदोस्तुकन्यायांदेवहूत्यांपुराद्विज
कर्दमस्यतुदृष्टयैवपुत्रौद्वौसंबभूवतुः २
ज्येष्ठोजयःकनिष्ठोऽभूद्विजयश्चेतिनामतः
अन्यस्यामभवत्पश्चात्कपिलोयोगधर्मवित् ३
जयश्चविजयश्चैवविष्णुभक्तिरतौसदा
संनियम्येंद्रियग्रामंधर्मशीलौबभूवतुः ४
नित्यमष्टाक्षरीजाप्यौविष्णुव्रतकरावुभौ
साक्षात्कारंददौविष्णुस्तयोर्नित्यार्चनेसदा ५
मरुत्तेनकदाचित्तावाहूतौयज्ञकर्मणि
जग्मतुर्यज्ञकुशलौदेवर्षिगणसेवितौ ६
जयस्तत्राभवद्ब्रह्मायाजकोविजयोऽभवत्
ततोयज्ञविधिंकृत्स्नंपरिपूर्णंचचक्रतुः ७
मरुतोऽवभृथस्नातस्ताभ्यांवित्तंददौबहु
तत्समादायतौवित्तंजग्मतुःस्वाश्रमंप्रति ८
यजनायतदाविष्णोस्तुष्टयर्थंतौतदामुने
तद्धनंविभजंतोवैपस्पर्द्धातेपरस्परम् ९
जयोऽब्रवीत्समोभागःक्रियतामितितत्रसः
विजयश्चाब्रवीत्तत्रयल्लब्धंयेनतस्यतत् १०
ततोजयोऽशपत्क्रोधाद्विजयंक्षुब्धमानसः
गृहीत्वानददास्येतत्तस्माद्ग्राहोभवेतितम् ११
विजयस्तस्यतंशापंश्रुत्वासोऽप्यशपच्चतम्
मदभ्रांतोशपद्यस्मात्तस्मान्मातंगतांव्रज १२
तौतथाचरुव्यतुर्विष्णुंदृष्ट्वानित्यार्चनेविभुम्
शापयोस्तुनिवृत्तिंतौययाचातेरमापतिम् १३
भक्तावावांकथंदेवग्राहमांतगयोनिगौ
भविष्यावःकृपासिंधोतच्छापोविनिवर्त्यताम् १४
श्रीभगवानुवाच

मद्भक्तयोर्वचोऽसत्यंनकदाचिद्भविष्यति
मयापिनान्यथाकर्तुंशक्यतेतत्कदाचन १५
प्रह्लादवचनात्स्तंभऽप्याविर्भूतोह्यहंपुरा
तथांबरीषवाक्येनजातोमार्गेस्वयंकिल १६
तस्माद्ध्रुवमिमौशापावनुभूयस्वयंकृतौ
लभेतांमत्पदंनित्यमित्युक्त्वांतर्दधेहरिः १७
गणावूचतुः
ततस्तौग्राहमातंगाबभूतांगंडकीतटे
जातिस्मरौचतद्योन्यामपिविष्णुव्रतेस्थितौ १८
कदाचित्सगजःस्नातुंकार्तिकेगंडकींगतः
तावज्जग्राहचग्राहःसंस्मरञ्छापकारणम् १९
ग्राहगृहीतोऽसौनागःसंस्मारश्रीपतिंतदा
तावदाविरभूद्विष्णुःशंखचक्रगदाधरः २०
तृतस्तौग्राहमातंगौचक्रंक्षिप्त्वासमुद्धृतौ
दत्त्वाचनिजसारूप्यंवैकुंठमनयद्विभुः २१
तदाप्रभृतितत्स्थानंहरिक्षेत्रमितिश्रुतम्
चक्रसंघर्षणाद्यस्मिन्पाषाणोऽपिहिलांछितः २२
ताविमौविश्रुतौलोकेजयश्चविजयश्चह
नित्यंविष्णुप्रियौद्वाःस्थौपृष्टौयौहित्वयाद्विज २३
अतस्त्वमपिधर्मज्ञनित्यंविष्णुव्रतेस्थितः
त्यक्तमात्सर्यदंभोहिभवस्वसमदर्शनः २४
तुलामकरमेषेषुप्रातःस्नायीसदाभव
एकादशीव्रतेतिष्ठतुलसीवनपालकः २५
ब्राह्मणानपिगाश्चापिवैष्णवांश्चसदाभज
मसूराश्चारनालाश्चवृंताकानपिखादमा २६
एवंत्वमपिदेहांतेतद्विष्णोःपरमंपदम्
प्राप्नोषिधर्मदत्तत्वंतद्भक्त्यैवयथावयम् २७
तवाजन्मव्रतात्तस्माद्विष्णुसंतुष्टिकारकात्
नयज्ञानचदानानिनतीर्थान्यधिकानिवै २८
धन्योऽसिविप्राग्र्ययतस्त्वयैतद्व्रतंकृतंतुष्टिकरंजगद्गुरोः

यत्पुरायभागाप्तफलंमुरारेःप्रणीयतेस्माभिरियंसलोकताम् २९
नारदउवाच
इत्थंतौधर्मदत्तंतमुपदिश्यविमानगौ
तयाकलहयासार्द्धंवैकुंठभवनंगतौ ३०
धर्मदत्तोप्यसौजातप्रत्ययस्तद्व्रतेस्थितः
देहांतेतद्विभोःस्थानंभार्याभ्यामन्वितोऽभ्यगात् ३१
इतिहासमिमंपुराभवंशृणुतेयश्चपुमान्यथाविधि
हरिसंनिधिकारिणींमतिंलभतेऽसौकृपयाजगद्गुरोः ३२

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तर
खराडेकार्तिकमाहात्म्येश्रीकृष्णसत्यभामासंवादेकलहो
पाख्यानेगणपूर्वपुरायवर्णनोनामदशाधिशततमोऽध्यायः११०

## एकादशाधिकशततमोऽध्यायः

पृथुरुवाच
कृष्णावेरायातटाद्यस्मात्शिवविष्णुगणैःपुरा
वणिक्शरीरात्कलहानिर्मिताकथितात्वया १
प्रभावोऽयतयोर्नद्योःकिंवाक्षेत्रस्यतस्यवा
तन्मेकथयधर्मज्ञविस्मयोऽत्रमहान्मम २
नारदउवाच
कृष्णाकृष्णतनुःसाक्षाद्वेरायादेवोमहेश्वरः
तत्संगमप्रभावंतुनालंवक्तुंचतुर्मुखः ३
तथापितत्समुत्पत्तिंकीर्तयिष्यामितच्छृणु
चाक्षुषस्यांतरेपूर्वंमनोर्देवःपितामहः ४
सह्याद्रिशिखरेरम्येयजनायोद्यतोऽभवत्
सकृत्वायज्ञसंभारान्सर्वदेवगणैर्वृतः ५
युक्तोहरिहराभ्यांचतद्गिरेःशिखरंययौ
भृग्वादयोमुनिगणामुहूर्तेब्रह्मदैवते ६
तस्यदीक्षाविधानायसमाजंतत्रचक्रिरे
अथज्येष्ठांस्वरांपत्नींविष्णुराह्वयतद्विजैः ७
साशनैराययौतावद्भृगुर्विष्णुमुवाचह

भृगुरुवाच
विष्णोस्वरात्वयाहूताश्चायातिनहिसत्वरा ८
मुहूर्त्तातिक्रमश्चायंकार्योदीक्षाविधिःकथम्
विष्णुरुवाच
नायातिचेत्स्वराशीघ्रंगायत्र्यत्रविधीयताम् ९
एषापिनभवत्यस्यभार्याकिंपुण्यकर्मणि
नारदउवाच
एवमेवहिरुद्रोऽपिविष्णोर्वाक्यममोदत १०
तच्छ्रुत्वासभृगुर्वाक्यंगायत्रींब्रह्मणस्तदा
निवेश्यदक्षिणेभागेदीक्षाविधिमथाकरोत् ११
यावद्दीक्षाविधिंतस्यविधेश्चक्रुर्विधानतः
तावदभ्याययौतत्रस्वरायज्ञस्थलेनृप १२
ततस्तांदीक्षितांदृष्ट्वागायत्रींब्रह्मणासह
सपत्नीर्षापराक्रोधात्स्वरावचनमब्रवीत् १३
स्वरोवाच
अपूज्यायत्रपूज्यन्तेपूज्यानांचव्यतिक्रमः
त्रीणितत्रभविष्यंतिदुर्भिक्षंमरणंभयम् १४
ममासनेकनिष्ठेयंभवद्भिःसन्निवेशिता
तस्मात्सर्वेजडीभूतानानारूपाभविष्यथ १५
इदंचदक्षिणेभागेह्युपविष्टामदासने
तस्माल्लोकैःसदाऽदृश्यातनुर्वहतुनिम्नगा १६
नारदउवाच
ततस्तच्छापमाकर्ण्यगायत्रीकंपितातदा
समुत्थायाशपद्देवैर्वार्यमाणापितांस्वराम् १७
तवभर्त्तायथाब्रह्माममाप्येषतथाखलु
वृथाशपस्त्वंयस्मान्मांभवत्वमपिनिम्नगा १८
नारदउवाच
ततोहाहाकृताःसर्वेशिवविष्णुमुखाःसुराः
तदालोकत्रयंह्येतद्विनाशंयास्यतिध्रुवम् १९
देवाऊचुः

देविसर्वेवयंशप्ताब्रह्माद्यायत्त्वयाधुना
यदिसर्वेजडीभूताभविष्यामोऽत्रनिम्नगाः २०
तदालोकत्रयंह्येतद्विनाशंयास्यतिध्रुवम्
अविवेकःकृतस्तस्माच्छापोऽयविनिवर्त्यताम् २१
स्वरोवाच
नार्चितोहिगणाध्यक्षोयज्ञादौयत्सुरोत्तमाः
तस्माद्विघ्नंसमुत्पन्नंमत्क्रोधजमिदंखलु २२
नापिमद्वचनंह्येतदसत्यंजायतेखलु
तस्मात्स्वांशैर्जडीभूतायूयंभवतनिम्नगाः २३
आवामपिसपत्न्यौचस्वांशाभ्यामपिनिम्नगे
भविष्यावोऽत्रवैदेवाःपश्चिमाभिमुखावहे २४
नारदउवाच
इतितद्वचनंश्रुत्वाब्रह्मविष्णुमहेश्वराः
जडीभूताभवन्नद्यःस्वांशैरेवतदानृप २५
तत्रविष्णुरभूत्कृष्णावेरायादेवोमहेश्वरः
ब्रह्माककुद्मिनीगंगापृथगेवाभवत्तदा २६
देवास्वानपितानंशान्जडीकृत्वाव्र्यिक्षणाः
सह्याद्रिशिखरेभ्यस्ताःपृथगासन्सुनिम्नगाः २७
देवांशैःपूर्ववाहिन्योबभूवुःसरितांवराः
गायत्रीचस्वराचैवपश्चिमाभिमुखेतदा २८
योगेनाभवतांनद्यौसावित्रीतिप्रथांगते
ब्रह्मणास्थापितौतत्रयज्ञेहरिहरावुभौ २९
महाबलातिबलिनौनाम्नादेवौबभूवतुः
तयोर्नद्योस्तुमाहात्म्यंनाहंवक्तुंक्षमोनृप
ययुर्ब्रह्मादयोदेवाःस्वांशैस्तिष्ठंतिचापगाः ३०
कृष्णोद्भवंपापहरंपरंयःशृणोतियःश्रावयतेचभक्त्या
स्यात्तस्यपुरायासकलाक्रियापितद्दर्शनस्नानसमुद्भवंफलम् ३१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये
सत्य भामासंवादेकृष्णावेरायामाहात्म्यवर्णनोनाम
एकादशाधिकशततमोऽध्यायः १११

## द्वादशाधिकशततमोऽध्यायः

श्रीकृष्णउवाच
इतितद्वचनंश्रुत्वापृथुर्विस्मितमानसः
संपूज्यनारदंभक्त्याविससर्जतदाप्रिये १
तस्माद्व्रतत्रयंह्येतन्ममातीवप्रियंकरम्
माघकार्तिकयोस्तद्वत्तथैवैकादशीव्रतम् २
वनस्पतीनांतुलसीमासानांकार्तिकःप्रियः
एकादशीतिथीनांचक्षेत्राणांद्वारकामम ३
एतेषांसेवनंयस्तुकरोतिचजितेंद्रियः
समेवल्लभतांयातिनतथायजनादिभिः ४
पापेभ्योनभयंतेनकर्त्तव्यंनियमादपि
एतेषांसेवनंकांतेकुर्वतामत्प्रसादतः ५
सत्यभामोवाच
विस्मापनीयंतन्नाथयत्त्वयाकथितंमम
परदत्तेनपुण्येनकलहामुक्तिमागता ६
इत्थंप्रभावोमासोऽयकार्त्तिकस्तेप्रियंकरः
स्वामिद्रोहादिपापानिस्नानदानैर्गतानियत् ७
दत्तंचलभतेपुण्यंयत्परेणकृतंविभो
अदत्तंकेनमार्गेणलभतेचापिमानवः ८
श्रीकृष्णउवाच
अदत्तान्यपिपुण्यानिपापानिचयथानरैः
प्राप्यंतेकर्मणायेनतद्यथावन्निशामय ९
देशग्रामकुलानिस्युर्भागभांजिकृतादिषु
कलौतुकेवलंकर्त्ताफलभुक्पुण्यपापयोः १०
अकृतेऽपिहिसंसर्गेव्यवस्थेयमुदाहृता
संसर्गात्पुण्यपापानियथायांतिनिबोधतत् ११
एकत्रमैथुनाद्यानादेकपात्रस्थभोजनात्
फलार्द्धंप्राप्नुयान्मर्त्योयथावत्पुण्यपापयोः १२
अध्यापनाद्याजनाद्वाप्येकपंक्त्यशनादपि
तुर्यांशंपुण्यपापानांनित्यंप्राप्नोतिमानवः १३

एकासनादेकयानान्निःश्वासस्यांगसंगतः
षडंशंफलभागीस्यान्नयतंपुरायपापयोः १४
स्पर्शनाद्भाषणाद्वापिपरस्यस्तवनादपि
दशांशंपुरायपापानांनित्यंप्राप्नोतिमानवः १५
दर्शनश्रवणाभ्यांचमनोध्यानात्तथैवच
परस्यपुरायपापानांशतांशंप्राप्नुयान्नरः १६
परस्यनिंदां पैशुन्यंधिक्कारंचकरोतियः
तत्कृतंपातकंप्राप्यस्वपुरायंप्रददातिसः १७
कुर्वतःपुरायकर्माणिसेवांयःकुरुतेनरः
पत्नीभृतकशिष्येभ्योयदन्यःकोऽपिमानवः १८
तस्यसेवानुरूपेणद्रव्यंकिंचिन्नदीयते
सोऽपिसेवानुरूपेणतत्पुरायफलभाग्भवेत्
एकपंक्त्यश्नतांयस्तुलंघयेत्परिवेषणम् १९
तस्यपापषडंशंतुलभेद्वैपरिवेषकः
स्नानसंध्यादिकंकुर्वन्यःस्पृशेद्वाप्रभाषते २०
सपुरायकर्मषष्ठांशंदद्यात्तस्मैसुनिश्चितम्
धर्मोद्देशेनयोद्रव्यमपरंयाचतेनरः २१
तत्पुरायकर्मजंतस्यधनदस्त्वाप्नुयात्फलम्
अपहृत्यपरद्रव्यंपुरायकर्मकरोतियः २२
कर्मकृत्पापभाक्तत्रधनिनस्तद्भवंफलम्
नापनुद्यऋृणंयस्तुपरस्यम्रियतेनरः २३
धनीतत्पुरायमाधत्तेस्वधनस्यानुरूपतः
बुद्धिदस्त्वनुमंताचयश्चोपकरणप्रदः २४
बलकृच्चापिषष्ठांशंप्राप्नुयात्पुरायपापयोः
प्रजाभ्यःपुरायपापानांराजाषष्ठांशमुद्धरेत् २५
शिष्याद्गुरुःस्त्रियोभर्त्तापितापुत्रात्तथैवच
स्वपतेरपिपुरायस्ययोषिदर्द्धमवाप्नुयात् २६
चित्तस्यानुव्रताशश्वद्वर्ततेतुष्टिकारिणी
परहस्तेनदानादिकुर्वतःपुरायकर्मणि २७
विनाभृतकपुत्राभ्यांकर्त्ताषष्ठांशमुद्धरेत्

वृत्तिदोवृत्तिसंभोक्तुः पुण्यमष्टांशमुद्धरेत् २८
आत्मनोवापरस्यापियदिसेवांनकारयेत् २९
श्रीकृष्णउवाच
इत्थंह्यदत्तान्यपिपुण्यपापान्यायांतिनित्यंपरसंचितानि
शृणुष्वचेमंइतिहासमग्र्यंपुराभवंपुण्यमतिप्रदंच ३०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
कार्त्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेपुण्यपापांशकथनंनाम
द्वादशाधिकशततमोऽध्यायः ११२

त्रयोदशाधिकशततमोऽध्यायः

श्रीकृष्णउवाच
पुरावंतीपुरेवासीविप्रआसीद्धनेश्वरः
ब्रह्मकर्मपरिभ्रष्टः पापनिष्ठः सुदुर्मतिः १
रसकंबलचर्मादिविक्रयानृतवर्त्तनः
स्तेयवेश्यासुरापानद्यूतसंसक्तमानसः २
देशाद्देशांतरंगच्छन्क्रयविक्रयकारणात्
माहिष्मतींपुरींयातः कदाचित्सधनेश्वरः ३
महिषेणकृतापूर्वंतस्मान्माहिष्मतीभवत्
यस्यांवप्रतटाभातिनर्मदापापनाशिनी ४
कार्तिकव्रतिनस्तत्रनानाग्रामागतान्नरान्
सदृष्ट्वाविक्रयंकुर्वन्मासमेकमुवासह ५
सनित्यंनर्मदातीरेभ्रमन्विक्रयकारणात्
ददर्शब्राह्मणान्स्नातान्जपदेवार्चनेरतान् ६
कांश्चित्पुराणंपठतः कांश्चित्तच्छ्रवणेरतान्
नृत्यगायनवादित्रविष्णुस्तवनतत्परान् ७
विष्णुमुद्रांकितान्कांश्चिन्मालातुलसिधारिणः
ददर्शकौतुकाविष्टस्तत्रतत्रधनेश्वरः ८
नित्यंपरिभ्रमंस्तत्रदर्शनस्पर्शभाषणात्
वैष्णवानांतथाविष्णोर्नामश्रावादिसोऽलभत् ९
एवंमासंस्थितः सोऽथकार्तिकोद्यापनेविधौ

क्रियमाणेददर्शासौभक्तैर्जागरणंहरेः १०
पौर्णमास्यांततोऽपश्यद्विविधंपूजनादिकम्
दक्षिणाभोजनाद्यंचदीपदानंव्रतस्थितैः ११
ततोऽकास्तमयेचैवंदीपोत्सवविधिंतदा
क्रियमाणंददर्शासौप्रीत्यर्थंत्रिपुरद्विषः १२
त्रिपुराणांकृतोदाहोयतस्तस्यांशिवेनतु
अतस्तुक्रियतेतस्यांतिथौभक्तैर्महोत्सवः
ममरुद्रस्ययःकश्चिदंतरंपरिकल्पयेत् १३
तस्यपुरायक्रियाःसर्वानिष्फलाःस्युर्नसंशयः
तत्रनृत्यादिकंपश्यन्बभ्रामसधनेश्वरः
तावत्कृष्णाहिनादष्टोविकलःसपपातह
जनास्तंपतितंवीक्ष्यपरिवव्रुःकृपान्विताः १४
तुलसीमिश्रितैस्तोयैस्तन्मुखंसिषिचुस्तदा
अथदेहेपरित्यक्तेतंबद्ध्वायमकिंकराः १५
बाध्यमानंकशाघातैर्निन्युःसंयमिनींरुषा
चित्रगुप्तस्तुतंदृष्ट्वानिर्भर्त्स्यावेदयत्तदा १६
यमायतेनबाल्यात्तुकर्मयद्दुष्कृतंकृतम्
चित्रगुप्तउवाच
नैवास्यदृश्यतेकिंचिदाबाल्यात्सुकृतंक्वचित् १७
दुष्कृतंशक्यतेवक्तुंशतवर्षैर्नभास्करे
पापमूर्तिरयंदुष्टःकेवलंदृश्यतेविभो १८
तस्मादाकल्पमर्यादंनिरयेपरिपाच्यताम्
श्रीकृष्णउवाच
निशम्येत्थंवचःक्रोधाद्यमःप्राहस्वकिंकरान् १९
दर्शयन्नात्मनोरूपंकालाग्निसदृशप्रभम्
यमउवाच
भोप्रेतापनयस्वैनंबध्यमानंस्वमुद्गरैः २०
कुंभीपाकेक्षिपस्वाशुतैलक्वथनशब्दिते
यावत्क्षिप्तस्तुतत्रासौतावच्छीतलतांययौ २१
कुंभीपाकोयथावह्निःप्रह्लादक्षेपणात्पुरा

तदृष्ट्वामहदादश्चर्यं प्रेतपोविस्मयान्वितः २२
वेगादागत्यतत्सर्वंयमायाकथयत्तदा
यमस्तुकौतुकंश्रुत्वाप्रेतपेननिवेदितम् २३
ग्राः किमेतदितिप्रोच्यसम्यगेतद्विचारयत्
तावदभ्यागतस्तत्रनारदःप्रहसंस्त्वरन् २४
यमेनपूजितःसम्यक्तंदृष्ट्वावाक्यमब्रवीत्
नारदउवाच
नैवायंनिरयान्भोक्तुंह्यमःसवितृनंदन २५
यस्मादेतस्यसंजातंकर्मयन्निरयापहम्
यःपुण्यकर्मणांकुर्याद्दर्शनस्पर्शभाषणम् २६
तत्षडंशमवाप्नोतिपुण्यस्यनियतंनरः
असंख्यातैस्तुसंसर्गैःकृतवानेषयद्धरेः २७
कार्तिकव्रतिभिर्मासंतस्मात्पुण्यांशभागयम्
परिचर्याकरस्तेषांसंपूर्णव्रतपुण्यभाक् २८
अतोऽस्योर्जव्रतोद्भूतपुण्यसंख्यानविद्यते
कार्त्तिकव्रतिनांपुंसांपातकानिमहांत्यपि २९
नाशयत्येवसर्वाणिविष्णुःसद्भक्तवत्सलः
अंतेतन्नामभिस्तोयैस्तुलसीमिश्रितैस्त्वयम् ३०
वैष्णवानुग्रहीयस्मान्नरकेनैवपच्यते
तस्मान्निहतपापोऽयसद्गतिंयातुमर्हति ३१
आर्द्रैःशुष्कैर्यथापापैर्निरयेभोगसंनिधिः
प्राप्यतेसुकृतैस्तद्वत्स्वर्गभोगस्यसंनिधिः ३२
तस्मादकामपुण्योहियह्मयोनिस्थितस्त्वसौ
विलोक्यनरकान्सर्वान्पापभोगमवाप्नुयात् ३३
श्रीकृष्णउवाच
इत्युक्त्वागतवतिनारदेऽथसौरिस्तद्वाक्यश्रवणविबुद्धतत्सुकर्मा
विप्रंतंपुनरनयत्स्वकिंकरेणतान्सर्वान्निरयगणान्प्रदर्शयिष्यन् ३४
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेधनेश्वरोपाख्यानेत्रयोदशाधिकशततमोऽध्यायः ११३

## चतुर्दशाधिक शततमोऽध्यायः

श्रीकृष्णवाच
ततोधनेश्वरंनीत्वानिरयान्प्रेतपोऽब्रवीत्
प्रदर्शयिष्यंस्तान्सर्वान्यमस्यानुचरस्तदा १
प्रेतपउवाच
पश्येमान्निरयान्घोरान्धनेश्वरमहाभयान्
येषुपापकरानित्यंपच्यंतेयमकिंकरैः २
तप्तवालुकनामायंनिरयोघोरदर्शनः
यस्मिन्नेतेदग्धदेहाःक्रंदंतेपापकारिणः ३
अतिथीन्वैश्वदेवान्तेक्षुत्क्षामानागतान्गृहे
येनार्चंतिनरास्तेहिपच्यंतेस्वेनकर्मणा ४
गुर्वग्निब्राह्मणान्देवांस्तथामूर्द्धाभिषिक्तकान्
ताडयंतिपदायेवैतेनिर्दग्धांघ्रयस्त्विमे ५
षड्भेदस्त्वेषनिरयोनानापापैःप्रपद्यते
तथैवचांधतामिस्रोद्वितीयोनिरयोमहान् ६
पश्यसूचीमुखैर्देहोभिद्यतेपापकर्मणा
क्रिमिभिर्घोरवक्त्रैश्चतत्संपर्कागमैर्द्विज ७
असावपिस्थितःषोढाश्वकाकमृगपक्षिभिः
परमर्मभिदोमर्त्याःपच्यंतेतेषुपापिनः ८
तृतीयःक्रकचोह्येषनिरयोघोरदर्शनः
यत्रेमेक्रकचैर्मर्त्याःपाटयंतेपापकारिणः ९
असिपत्रवनाद्यैस्तुषट्प्रकारोव्यवस्थितः
पत्नीपुत्रादिभिर्येवैवियोगंकारयंतिहि १०
इष्टैरन्यैरपिपरान्पच्यंतेतइमेनराः
असिपत्रैश्छिद्यमानाछेदभीत्यापलायिताः ११
पच्यंतेपापिनःपश्यक्रंदमानाइतस्ततः
अर्गलाख्योमहाघोरश्चतुर्थोनिरयोह्ययम् १२
पश्यनानाविधैःपाशैराबध्ययमकिंकरैः
मुद्गराद्यैर्वध्यमानाःक्रंदंतेतेचपापिनः १३
सज्जनान्ब्राह्मणाद्यांश्चविरुंधंतीहयेनराः

कंठग्रहाद्यैस्तेपापाःपच्यंतेयमकिंकरैः १४
असावपिहिषड्भेदोवधभेदादिभिःस्थितः
कूटशाल्मलिनामानंनिरयंपश्यपंचमम् १५
यत्रांगारनिभाएतेशाल्मल्याद्याःस्थिताद्विज
यत्रषोढाविपच्यंतेयातनाभिरिमेनराः १६
परदारापरद्रव्यपरद्रोहरताःसदा
रक्तपूयमिमंपश्यषष्ठंनिरयमद्भुतम् १७
अधोमुखाविपच्यंतेयत्रपापकृतोनराः
अभक्ष्यभक्षकानिंदापैशुन्यादिरताइमे १८
भज्यमानावध्यमानाःक्रंदंतेभैरवान्स्वरान्
षट्प्रकारैर्विगंधाढ्यैरसावपिचसंस्थितः १९
कुंभीपाकःसप्तमोऽयनिरयोघोरदर्शनः
षोढास्तैलादिभिर्द्रव्यैर्धनेश्वरविलोकय २०
महापातकिनोयत्रक्वथ्यंतेयमकिंकरैः
बहून्यब्दसहस्राणिसोन्मज्जननिमज्जनैः २१
चत्वारिंशन्मितानेतान्द्यवधिकान्पश्यरौरवान्
अकामात्पातकंशुष्कंकामादार्द्रमुदाहृतम् २२
आर्द्रशुष्कादिभिःपापैर्द्विप्रकारानवस्थितान्
चतुरशीतिसंख्याकैःपृथग्भेदैरवस्थितान् २३
यत्प्रकीर्णमपांक्तेयंमलिनीकरणंतथा
ज्ञातिभ्रंशकरंतद्वदुपपातकसंज्ञकम् २४
अतिपापंमहापापंसप्तधापातकंस्मृतम्
एभिःसप्तसुपच्यंतेनिरयेषुयथाक्रमम् २५
कार्तिकव्रतिभिर्यस्मात्संसर्गोह्यभवत्तव
तत्पुण्योपचयादेतेनिर्हृतानिरयाःखलु २६
श्रीकृष्णउवाच
दर्शयित्वेतिनिरयान्प्रेतपस्तमथाहरत्
धनेश्वरंयक्षलोकंपश्चादासीत्सतत्रहि २७
धनदस्यानुगःसोऽयधनयक्षेतिसस्मृतः
यदाख्यायाकरोत्तीर्थमयोध्यायांतुगाधिजः २८

एवंप्रभावःखलुकार्तिकोऽयमुक्तिप्रदोमुक्तिकरश्चयस्मात्
प्रयात्यनेकार्जितपातकोऽपिव्रतस्थसंदर्शनतोऽपिमुक्तिम् २९
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिक
माहात्म्येधनेश्वरोपाख्यानेचतुर्दशाधिकशततमोऽध्यायः ११४

पञ्चदशाधिकशततमोऽध्यायः

सूतउवाच
इत्युक्त्वावासुदेवोऽसौसत्यभामामतिप्रियाम्
सायंसंध्यादिकंकर्तुंजगामजननीगृहम् १
एवंप्रभावःप्रोक्तोयंकार्तिकःपापनाशनः
विष्णुप्रियकरोनित्यंभुक्तिमुक्तिप्रदःसदा २
हरिजागरणंप्रातःस्नानंतुलसिसेवनम्
उद्यापनंदीपदानंव्रतान्येतानिकार्तिके ३
पंचकैर्व्रतकैरेभिःसंपूर्णंकार्तिकव्रतम्
फलंप्राप्नोतितत्प्रोक्तंभुक्तिमुक्तिफलप्रदम् ४
ऋषयऊचुः
विष्णोःप्रियोऽतिफलदःप्रोक्तोऽयरोमहर्षणे
कार्तिकस्यविधिःसम्यक्पावनःपापनाशनः ५
अवश्यमेवकर्त्तव्यःप्राप्यदुःखनिवारणः
मोक्षार्थिभिर्नरःसम्यग्भोगकामैरथापिवा ६
एवंस्थितेयथाकश्चिद्व्रतस्थःसंकटेस्थितः
दुर्गारण्यस्थितोवापिव्याधिभिःपरिपीडितः
कथंतेनप्रकर्तव्यंकार्तिकव्रतकंशुभम् ७
सूतउवाच
यस्मादत्यंतफलदंकर्तव्यंतुयथानरैः
तत्सर्वंकथयिष्येऽहश्शृणुध्वंमुनिपुंगवाः ८
विष्णोःशिवस्यवाकुर्यादालयेहरिजागरम्
शिवविष्णुग्रहाभावेसर्वदेवालयेष्वपि ९
दुर्गारण्यस्थितोयश्चयदिवायद्गतोभवेत्
कुर्यात्तदाश्वत्थमूलेतुलसीनांवनेष्वपि १०

विष्णुनामप्रधानानांगायनाद्विष्णुसन्निधौ
गोसहस्रप्रदानस्यफलंप्राप्नोतिमानवः ११
वाद्यकृत्पुरुषश्चापिवाजपेयफलंलभेत्
सर्वतीर्थावगाहोत्थंनर्तकःफलमाप्नुयात् १२
सर्वमेतल्लभेत्पुरायंतेषांतुद्रव्यदःपुमान्
प्रशंसादर्शनाभ्यांहितत्षडंशमवाप्नुयात् १३
आपद्गतोयदाप्यंभोनलभेत्स्नपनायसः
व्याधितोवापुनःकुर्याद्विष्णोर्नामापमार्जनम् १४
उद्यापनविधिंकर्तुंनशक्तोयोव्रतेस्थितः
ब्राह्मणान्भोजयेच्छक्त्याव्रतसंपूर्णहेतवे १५
यस्मादत्यंतफलदोनत्याज्यःसर्वदानरैः
अव्यक्तरूपिणोविष्णोःस्वरूपंब्राह्मणाभुवि १६
तत्संतुष्टयासुसंतुष्टःसर्वदास्यांनसंशयः
अशक्तोदीपदानेतुपरदीपंप्रबोधयेत् १७
तेषांवारक्षणंकुर्याद्वातादिभ्यःप्रयत्नतः
अभावेतुलसीनांतुपूजयेद्वैष्णवंद्विजम् १८
यस्मात्संनिहीतोविष्णुःस्वभक्तेष्वेवसर्वदा
सर्वाभावेव्रतीकुर्याद्ब्राह्मणानांगवामपि १९
सेवांवाश्वत्थवटयोर्व्रतसंपूर्णहेतवे २०
ऋृषयऊचुः
कथंत्वयाश्वत्थवटौगोब्राह्मणसमौकृतौ
सर्वेभ्योऽपितरुभ्यस्तौकस्मात्पूज्यतरौकृतौ २१
सूतउवाच
अश्वत्थरूपीभगवान्विष्णुरेवनसंशयः
रुद्ररूपीवटस्तद्वत्पालाशोब्रह्मरूपधृक् २२
दर्शनंपूजनंसेवातेषांपापहरास्मृता
दुःखापद्व्याधिदुष्टानांविनाशकरणीध्रुवम् २३
ऋृषयऊचुः
कथंवृक्षत्वमापन्नाब्रह्मविष्णुमहेश्वराः
एतत्कथयसर्वज्ञसंशयोऽत्रमहान्हिनः २४

सूतउवाच
पार्वतीशिवयोर्देवैःसुरतंकुर्वतोःकिल
अग्निर्ब्राह्मणरूपेणप्रेषितोविघ्नकृत्पुरा २५
ततःसापार्वतीक्रुद्धाशशापत्रिदिवौकसः
रतोत्सवसुखभ्रंशात्कंपमानारुषातदा २६
पार्वत्युवाच
कृमिकीटादयोप्येतेजानंतिसुरतंसुखम्
तद्विघ्नकरणाद्देवाह्युद्भिज्जत्वमवाप्स्यथ २७
सूतउवाच
एवंसापार्वतीदेवानशपत्क्रुद्धमानसा
तस्माद्वृक्षत्वमापन्नाःसर्वेदेवगणाःकिल २८
तस्मादिमौविष्णुमहेश्वरावुभौबभूवतुर्बोधिवटौमुनीश्वराः
बोधिस्त्वगादार्किदिनेस्पृशत्वमस्पृश्यतामर्कजविष्टियोगात् २९
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्त्रसंहितायामुत्तरखंडेकार्त्तिक
माहात्म्येअश्वत्थवटप्रशंसनंनामपंचदशाधिकशततमोऽध्यायः ११५

## षोडशाधिकशततमोऽध्यायः

ऋषयऊचुः
अस्पृश्यत्वेकथंजातःसूतबोधितरुस्त्वयम्
स्पृश्यत्वंचकथंप्राप्तस्तथाचशनिवासरे
एतद्विस्तरतःसर्वंवक्तुमर्हतिनोभवान् १
सूतउवाच
समुद्रमथनाद्यानिरत्नान्यापुःसुरेश्वराः
श्रियंचकौस्तुभंतेषांविष्णवेप्रददुःसुराः २
यावदंगीचकारासौलक्ष्मींभार्यार्थमात्मनः
तावद्विज्ञापयामासलक्ष्मीस्तंचक्रपाणिनम् ३
लक्ष्मीरुवाच
असंस्कृत्यकथंज्येष्ठांत्वंकनिष्ठांप्रणीयसे
तस्मान्ममाग्रजामेतामलक्ष्मींमधुसूदन ४
विवाह्यनयमांपश्चादेषधर्मःसनातनः ५

सूतउवाच
इति तद्वचनंश्रुत्वासविष्णुर्लोकभावनः
उद्दालकायमुनयेसुदीर्घतपसेतदा ६
आत्मवाक्यानुरोधेनतामलक्ष्मींददौकिल
स्थूलास्यांशुभ्रदशनांराजतींबिभ्रतींतनुम् ७
विततांरक्तनयनांरूक्षपिंगशिरोरुहाम्
समुनिर्विष्णुवाक्यात्तामंगीकृत्यस्वमाश्रमम् ८
वेदध्वनिसमायुक्तमानयामासधर्मवित्
होमधूमसुगंधाढ्यंविद्याघोषविनादितम् ९
आश्रमंतंसमालोक्यव्यथितासाब्रवीदिदम्
ज्येष्ठोवाच
नहिवासोऽनुरूपोऽयवेदध्वनियुतोमम
नात्रागमिष्येभोब्रह्मन्नयस्वान्यत्रमाचिरम् १०
उद्दालकउवाच
कथंनायासिकिंवात्रवर्त्ततेसंमतंतव
तवयोग्याचवसतिःकाभवेच्चवदस्वतत् ११
ज्येष्ठोवाच
वेदध्वनिर्भवेद्यस्मिन्नतिथीनांचपूजनम्
यज्ञदानादिकंवापिनैवतत्रवसाम्यहम् १२
परस्परानुरागेणदांपत्यंयत्रवर्तते
पितृदेवार्चनंयत्रनैवतत्रसाम्यहम् १३
दुरोदररतायत्रपरद्रव्यापहारिणः
परदाररताश्चापितत्रस्थानेरतिर्मम १४
गोवधोमद्यपानंचयत्रसंजायतेनिशम्
ब्रह्महत्यादिपापानितस्मिन्स्थानेरतिर्मम
वृद्धसज्जनविप्राणांयत्रस्यादपमाननम्
निष्ठुरंभाषणंयत्रतत्रनित्यंवसाम्यहम् १५
सूतउवाच
इतितद्वचनंश्रुत्वाविषण्णवदनोऽभवत्
उद्दालकमुनिर्विष्णोर्वाक्यंस्मृत्वानचोचिवान् १६

सोऽगच्छद्यत्रतत्रास्यपूजामालोक्यसाब्रवीत्
नायामीतिततःसोऽपिभ्रमादत्यातुरोऽभवत्
उद्दालकस्ततोवाक्यंतामलक्ष्मीमुवाचह १७
उद्दालकउवाच
अश्वत्थवृक्षमूलेऽस्मिन्नलक्ष्मिस्थीयतांक्षणम्
आवासस्थानमालोक्ययावदायाम्यहंपुनः १८
सूतउवाच
इतितत्रससंस्थाप्यजगामोद्दालकस्तदा
प्रतीक्षंतीचिरंतत्रयदातन्नददर्शसा १९
तदारुरोदकरुणंभर्तृत्यागेनदुःखिता
तत्रस्थांरुदतीलक्ष्मींवैकुंठभुवनेऽशृणोत् २०
तदाविज्ञापयामासविष्णुमुद्विग्नमानसा २१
लक्ष्मीरुवाच
स्वामिन्मद्भगिनीज्येष्ठाभर्तृत्यागेनदुःखिता
तामाश्वासयितुंयाहिकृपालोयद्यहंप्रिया २२
सूतउवाच
लक्ष्म्यासहततोविष्णुस्तत्रागच्छत्कृपान्वितः
आश्वासयदलक्ष्मींतामिदंवचनमब्रवीत् २३
श्रीविष्णुरुवाच
अश्वत्थवृक्षमासाद्यसदाऽलक्ष्मिस्थिराभव
ममांशसंभवोह्येषआवासस्तेमयाकृतः २४
प्रत्यहंयेऽचयिष्यंतित्वांज्येष्ठांगृहधर्मिणः
तेष्वियंश्रीःकनिष्ठातेभगिनीनिश्चलास्तुवै २५
सूतउवाच
इत्यूर्जस्यचमाहात्म्यंयेशृरावंतिपठंतिच
तेषांविष्णुपुरेवासोभवेदाभूतसंप्लवम् २६
रोगापहंपातकनाशकृत्परंसुबुद्धिदंपुत्रधनादिसाधनम्
मुक्तेर्निदानंनहिकार्तिकाद्वैविष्णुप्रियादन्यदिहास्तिभूतले २७
विष्णुप्रियंसकलकल्मषनाशनंचसत्पुत्रपौत्रधनधान्यसमृद्धिकारि
ऊर्जव्रतंसनियमंकुरुतेमनुष्यःकिंतस्यतीर्थपरिशीलनसेवयाच २८

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेअलक्ष्म्युपाख्यानंनामषोडशाधिकशततमोऽध्यायः११६

## सप्तदशाधिकशततमोऽध्यायः

सूतउवाच
इतिसर्वंसमाकर्ण्यसत्राजितसुतातदा
हरेर्वाक्यंमहाभागासत्यावचनमब्रवीत् १
सत्योवाच
कार्तिकस्यचमाहात्म्यंनश्रुतंविस्तरात्प्रभो
सर्वेषामेवमासानांकार्तिकःप्रवरःकथम् २
श्रीकृष्णउवाच
साधुपृष्टंत्वयासत्येकार्तिकव्रतमादरात्
शौनकायपुराप्रोक्तंसूतेनसुमहात्मना ३
सूतउवाच
श्रूयतांतत्प्रवक्ष्यामिएतत्प्रश्नोत्तरंशुभम्
ईश्वरेणपुराप्रोक्तंपृच्छतेषण्मुखायवै ४
कार्तिकेयउवाच
बहूनिपद्मनाभस्यरहस्यानिश्रुतानिच
यथाहिप्रोच्यमानानिवैष्णवेनत्वयाप्रभो ५
संसारसागरेप्राप्तादुःखोरुलहरीवृते
तेषामुत्तारणार्थायकथयस्वप्रयत्नतः ६
कार्तिकस्यविधिश्चैवस्नानस्यवदतांवर
येनदुःखांबुधिंतातसंतरिष्यंतिमानवाः ७
फलंवैष्णवधर्मस्यकथयस्वसुविस्तरम्
येनधर्मप्रभावेनपदंगच्छतिवैष्णवम् ८
दीपदानस्यमाहात्म्यंमुनिपुष्पस्यसुव्रत
गोपीचंदनमाहात्म्यंतुलस्यास्तुतथाविभो ९
मालतीपुष्पमाहात्म्यंवारिजानांतथावद
धात्रीफलानांमाहात्म्यंतथादमनकस्यच १०

केतकीपुष्पमाहात्म्यं नैवेद्यस्यपरंतप
तीर्थोदकस्यमाहात्म्यंमाघस्नानफलंविभो ११
फलंब्रूहिसुरश्रेष्ठब्रह्मपत्रेषुभोजनात्
नीराजनफलंस्थाणोपरदीपप्रवेधनात् १२
पुष्करक्षेत्रमाहात्म्यंशूकरस्यतथाविभो
शालग्रामस्यमाहात्म्यंस्वस्तिकस्यविधानकम् १३
दानानांचफलंब्रूहिपरान्नस्यचवर्जनात्
मासोपवासस्यफलंखट्वायामोक्षणाद्विभो १४
दीपावल्याश्चमाहात्म्यंप्रबोधिन्याश्चसुव्रत
पंचभीष्मस्यमाहात्म्यंकथयस्वसुविस्तरात् १५
ईश्वरउवाच
साधुपृष्टंत्वयावत्सलोकोद्धरणहेतवे
कथयामिनसंदेहस्त्वत्समोनास्तिवैष्णवः १६
सत्पुत्रेणत्वयावत्सतारितोऽहनसंशयः
निश्चलाकेशवेभक्तिस्त्वयितिष्ठतिसर्वदा १७
नरेभ्योवैष्णवंधर्मंयोददातिद्विजोत्तमः
ससागरमहीदानेतत्पुरायंलभतेहिसः १८
कार्तिकस्यचमासस्यकोटच्यंशेनापिनार्हति
एकतःसर्वतीर्थानिसर्वदानानिचैकतः १९
एकतोगोप्रदानानिसर्वेयज्ञाःसदक्षिणाः
एकतःपुष्करेवासंकुरुक्षेत्रेहिमालये २०
एकतोमथुरातीर्थेवाराणस्यांचशूकरे
एकतःकार्तिकोवत्ससर्वदाकेशवप्रियः २१
सूतउवाच
इत्युक्त्वामुनिशार्दूलपुनर्वाक्यंजगौहरः
कार्तिकस्नानमाहात्म्यंकथयिष्येसुविस्तरात् २२
ईश्वरउवाच
ब्राह्मंकृतयुगंप्रोक्तंत्रेतातुक्षत्रियंस्वयम्
द्वापरंवैश्यमित्याहुःशूद्रंकलियुगंस्मृतम् २३
कलौवत्समनुष्याणांशैथिल्यंस्नानकर्मणि

तथापिकथयिष्यामिस्नानंकार्तिकमाघयोः २४
यस्यहस्तौचपादौनवाङ्मनश्चसुसंयतम्
विद्यातपश्चकीर्तिश्चसतीर्थफलभाङ्नरः २५
अश्रद्दधानःपापात्मानास्तिकश्छिन्नमानसः
हेतुवादीचपंचैतेनतीर्थफलभागिनः २६
प्रातरुत्थाययोविप्रस्तीर्थस्नायीसदाभवेत्
सर्वपापविनिर्मुक्तःपरंब्रह्माधिगच्छति २७
स्नानंचतुर्विधंप्रोक्तंस्नानविद्भिःषडानन
वायव्यंवारुणंदिव्यंब्राह्मंचेतितथास्मृतम् २८
वायव्यंगोरजःस्नानंवारुणंसागरादिषु
ब्राह्म्यब्राह्मणमंत्रोक्तंदिव्यंमेघांबुभास्करम् २९
स्नानानांचैवसर्वेषांविशिष्टंतत्रवारुणम्
ब्राह्मणःक्षत्रियोवैश्योमंत्रवत्स्नानमाचरेत् ३०
तूष्णीमेवहिशूद्रस्यस्त्रीणांचैवषडानन
बालाचतरुणीवृद्धानरनारीनपुंसकाः ३१
पापैःसर्वैःप्रमुच्यंतेस्नानात्कार्तिकमाघयोः
स्नातावैकार्तिकेलोकाःप्राप्नुवंतीप्सितंफलम् ३२
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिक
माहात्म्येश्रीशिवषडाननसंवादेसप्तदशाधिकशततमोऽध्यायः ११७

## अष्टादशाधिकशततमोऽधयायः

सूतउवाच
पुनःप्रोवाचभगवान्महादेवोवृषध्वजः
श्रोतारमुपसंगम्यभक्तियुक्तंषडाननम् १
ईश्वरउवाच
कार्तिकोवैष्णवोमासःसर्वमासेषुचोत्तमः
अस्मिन्मासेत्रयस्त्रिंशद्देवाःसंनिहिताःकलौ २
ऊर्जेमासिमहाभागौभोजनानिद्विजातये
तिलधेनुंहिरण्यंचरजतंभूमिवाससी ३
गोप्रदानानिदास्यंतिसर्वभावेनसुव्रत

सर्वेषामेवदानानांकन्यादानंविशिष्यते ४
ब्राह्मणायात्रयेकन्यांदास्यंतिविधिवन्नराः
वैकुंठेवसतिस्तेषांयावदिंद्राश्चतुर्दश ५
रोमकालेतुसंप्राप्तेसोमोभुंक्तेतुकन्यकाम्
ऋतुकालेतुगंधर्वावह्निस्तुकुचदर्शने ६
तावद्विवाहयेत्कन्यांयावन्नर्तुमतीभवेत्
विवाहस्त्वष्टवर्षायाःकन्यायाःशस्यतेबुधैः ७
दातव्याश्रोत्रियायैवब्राह्मणायतपस्विने
साक्षादधीतवेदायविधिनाब्रह्मचारिणे ८
कन्यावरप्रमाणायाएषएवविधिःस्मृतः
यावंतिचैवरोमाणिकन्यायाश्चतनौसुत ९
तावद्वर्षसहस्राणिरुद्रलोकेमहीयते
सहस्रमेवधेनूनांशतंचानुडुहांसमम् १०
दशानुडुत्समंयानंदशयानसमोहयः
हयदानसहस्रेभ्योगजदानंविशिष्यते ११
गजदानसहस्राणांस्वर्णदानंचतत्समम्
स्वर्णभारसहस्राणांविद्यादानंचतत्समम् १२
विद्यादानात्कोटिगुणंभूमिदानंविशिष्यते
भूमिदानसहस्रेभ्योगोप्रदानंविशिष्यते १३
गोप्रदानसहस्रेभ्योह्यन्नदानंविशिष्यते
अन्नाधारमिदंसर्वंजगत्स्थावरजंगमम् १४
तस्माद्देयंप्रयत्नेनकार्तिकेशिखिवाहन
त्रीणितुल्यप्रदानानित्रीणितुल्यफलानिच १५
कार्तिकेयउवाच
अन्यानपिमहादेवधर्मान्मेवक्तुमर्हसि
यान्कृत्वासर्वपापानिप्रक्षाल्यत्रिदशोभवेत् १६
सूतउवाच
इतिपृष्टस्तदाशंभुःपुनर्वक्तुंप्रचक्रमे
यावत्किंबहुधास्तुत्वात्तच्छृणुध्वंतपोधनाः १७
ईश्वरउवाच

परान्नंवर्जयेद्यस्तुकार्तिकेनियमेकृते
परान्नवर्जनादेवलभेच्चांद्रायणंफलम् १८
तंप्राप्तंकार्तिकंदृष्ट्वापरान्नंयस्तुवर्जयेत्
दिनेदिनेतुकृच्छ्रस्यफलंप्राप्नोतिमानवः १९
कार्तिकेवर्जयेत्तैलंकार्तिकेवर्जयेन्मधु
कार्तिकेवर्जयेत्कांस्यंसंघान्नंचविशेषतः २०
राक्षसींयोनिमाप्नोतिसकृन्मांसस्यभक्षणात्
षष्टिवर्षसहस्राणिविष्ठायांपरिपच्यते २१
तन्मुक्तोजायतेपापोविष्ठाशीग्रामसूकरः
प्रवृत्तानांतुभक्षाणांकार्तिकेनियमेकृते २२
अवश्यंविष्णुरूपत्वंप्राप्यतेमोक्षदंपदम्
नकार्तिकसमोमासोनदैवंकेशवात्परम् २३
नवेदसदृशंशास्त्रंनतीर्थंगंगयासमम्
नसत्यंनसमंवृत्तंनकृतेनसमंयुगम् २४
नतृप्तीरसनातुल्यानदानसदृशंसुखम्
नधर्मसदृशंमित्रंनज्योतिश्चक्षुषासमम् २५
अव्रतेनक्षिपेद्यस्तुमासंदामोदरप्रियम्
कर्मभ्रष्टःसविज्ञेयोहीनयोनिषुजायते २६
कार्तिकःप्रवरोमासोवैष्णवानांसदाप्रियः
समुद्रगानदीपुण्यादुर्लभास्नानशालिनाम् २७
कुलशीलवतीकन्यादुर्लभादंपतीनृणाम्
दुर्लभाजननीलोकेपिताचैवविशेषतः २८
दुर्लभंसाधुसन्मानंदुर्लभोधार्मिकःसुतः
दुर्लभोद्वारिकावासोदुर्लभंकृष्णदर्शनम् २९
दुर्लभंगोमतीस्नानंदुर्लभंकार्तिकव्रतम्
ब्राह्मणेभ्योमहींदत्त्वाग्रहणेचंद्रसूर्ययोः ३०
यत्फलंलभतेवत्सतत्फलंभूमिशायिनः
भोजनंद्विजदंपत्योःपूजयेच्चविलेपनैः ३१
कंबलानिचरत्नानिवासांसिविविधानिच
तूलिकाश्चप्रदातव्याःप्रच्छादनपटैःसह ३२

उपानहावातपत्रंकार्तिकेदेहिपावके
यःकरोतिनरोनित्यंकार्तिकेपत्रभोजनम् ३३
नदुर्गतिमवाप्नोतियावदिंद्राश्चतुर्दश
सर्वकामफलंतस्यसर्वतीर्थफलंलभेत् ३४
नचापिनरकंपश्येद्ब्रह्मपत्रेषुभोजनात्
ब्रह्माएषस्मृतःसाक्षात्पालाशःसर्वकामदः ३५
मध्यमंवर्जयेत्पत्रंकार्तिकेशिखिवाहन
ब्रह्माविष्णुश्चरुद्रश्चत्रयोदेवास्त्रिपत्रके ३६
एश्वरंवर्जयेत्पत्रब्रह्माविष्णुरनुत्तमः
सर्वपुगयमवाप्नोतिशेषपत्रेषुभोजनात् ३७
भोजनान्मध्यपत्रेतुकपिलापयसस्तथा
प्राशनान्मुनिशार्दूलनरोनरकमाप्नुयात् ३८
अज्ञानाद्भुंजतेयस्तुशूद्रोवाकपिलापयः
कपिलांब्राह्मणेदत्त्वाशुद्धोभवतिकार्तिके ३९
तिलदानंनदीस्नानंसर्वदासाधुदर्शनम्
भोजनंब्रह्मपत्रेषुकार्तिकेमुक्तिदायकम् ४०
मौनीपालाशभोजीचजलस्नायीसदाक्षमी
कार्तिकेक्षितिशायीचहन्यात्पापंयुगार्जितम् ४१
जागरंकार्तिकेमासियःकरोत्यरुणोदये
दामोदराग्रेसेनानीर्गोसहस्रफलंलभेत् ४२
पितृपक्षेऽन्नदानेनज्येष्ठाषाढेचवारिणा
कार्तिकेतत्फलंपुंसांपरदीपप्रबोधनात् ४३
बोधनात्परदीपस्यवैष्णवानांचसेवनात्
कार्तिकेफलमाप्नोतिराजसूयाश्वमेधयोः ४४
नदीस्नानंकथाविष्णोर्वैष्णवानांचदर्शनम्
नभवेत्कार्तिकेयस्यहरेत्पुगयंदशाब्दिकम् ४५
पुष्करंयःस्मरेत्प्राज्ञःकर्मणामनसागिरा
कार्तिकेमुनिशार्दूललक्षकोटिगुणंभवेत् ४६
प्रयागोमाघमासेतुपुष्करंकार्तिकेतथा
अवंतीमाधवेमासिहन्यात्पापंयुगार्जितम् ४७

धन्यास्तेमानवालोकेकलिकालेविशेषतः
कुर्वंतिस्कंदनित्यंयेसर्वथाहरिसेवनम् ४८
किंदत्तैर्बहुभिःपिंडैर्गयाश्राद्धादिभिर्मुने
तारितास्तेनपितरोनरकाञ्चनसंशयः ४९
क्षीरादिस्नपनंविष्णोःक्रियतेपितृकारणात्
कल्पकोटिंदिवंप्राप्यवसंतित्रिदशैःसह ५०
कार्तिकेनार्चितोयैस्तुकृष्णस्तुकमलेक्षणः
जन्मकोटिषुविप्रेंद्रनतेषांकमलागृहे ५१
दष्टामुष्टाविनष्टास्तेपतिताःकलिकंदरे
यैर्नार्चितोहरिर्भक्त्याकमलैरसितैःसितैः ५२
पद्मेनैकेनदेवेशंयोऽर्चयेत्कमलापतिम्
वर्षायुतसहस्रस्यपापस्यकुरुतेक्षयम् ५३
अपराधसहस्राणितथासप्तशतानिच
पद्मेनैकेनदेवेशःक्षमेतप्रणतोऽर्चितः ५४
तुलसीपत्रलक्षेणकार्तिकेयोऽर्चयेद्धरिम्
पत्रेपत्रेमुनिश्रेष्ठमौक्तिकंलभतेफलम् ५५
तुलसीगंधमिश्रंतुयत्किंचित्क्रियतेसुत
कल्पकोटिसहस्राणिप्रीतोभवतिकेशवः ५६
मुखेशिरसिदेहेतुकृष्णोत्तीर्णांतुयोबहेत्
तुलसींषरामुखप्रीत्यानतस्यस्पृशतेकलि ५७
कृष्णोत्तीर्णैस्तुनिर्माल्यैर्योगात्रंपरिमार्जयेत्
सर्वरोगैस्तथापापैर्मुक्तोभवतिषरामुख ५८
विष्णोरंगारशेषेणयस्यांगंस्पृशतेसुत
दुरितानिविनश्यंतिव्याधयोयांतिसंक्षयम् ५९
शंखोदकंहरेर्भक्तिर्निर्माल्यंपादयोर्जलम्
चंदनंधूपशेषंतुब्रह्महत्यापहारकम् ६०
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये श्रीशिवकार्तिकेयसंवादेप्रश्नोत्तरोनामअष्टादशाधिकशततमोऽध्यायः ११८

## एकोनविंशत्यधिक शततमोऽध्यायः

ईश्वरउवाच
माघस्नानस्यमाहात्म्यंशृणुभागवतोत्तम
त्वत्समोनास्तिलोकेऽस्मिन्विष्णुभक्तोमहामते १
चक्रतीर्थेहरिंदृष्ट्वामथुरायांचकेशवम्
यत्फलंलभतेमर्त्योमाघस्नानेनतत्फलम् २
जितेंद्रियःशांतमनाःसदाचारेणसंयुतः
स्नानंकरोतियोमाघेसंसारीनभवेत्पुनः ३
श्रीकृष्णउवाच
शूकरस्यचमाहात्म्यंकथयिष्येतवाग्रतः
यस्यविज्ञानमात्रेणसान्निध्यंममसर्वदा ४
सूतउवाच
इत्युक्त्वाभगवान्कृष्णःसत्यायैबहुधाजगौ
तदहंसंप्रवक्ष्यामितच्छृणुध्वंतपोधनाः ५
श्रीकृष्णउवाच
पंचयोजनविस्तीर्णेशूकरेहरिमंदिरे
यस्मिन्वसतियोजीवोगर्दभोऽपिचतुर्भुजः ६
त्रीणिहस्तसहस्राणित्रीणिहस्तशतानिच
त्रयोहस्ताशूकरस्यपरिमाणंविधीयते ७
षष्टिवर्षसहस्राणियोऽन्यत्रकुरुतेतपः
तत्फलंलभतेदेविप्रहरार्द्धेनशूकरे ८
सन्निहत्यांकुरुक्षेत्रेराहुग्रस्तेदिवाकरे
तुलापुरुषदानेनतत्फलंपरिकीर्त्तितम् ९
काश्यांदशगुणंप्रोक्तंवेरायांशतगुणंभवेत्
सहस्रगुणितंप्रोक्तंगंगासागरसंगमे १०
अनंतंचैवविज्ञेयंशूकरेहरिमंदिरे
अन्यत्रददतेलक्षंसंविधानेनकार्तिक ११
इहैवैकेनदत्तेनशूकरेतत्समंभवेत्
शूकरेचतथावेरायांगंगासागरसंगमे १२
सकृदेवनरःस्नात्वाब्रह्महत्यांव्यपोहति

अलर्केणपुराप्राप्तासप्तद्वीपावसुंधरा
शूकरक्षेत्रमाहात्म्यंश्रुत्वाचैवषडानन १३
मार्गशीर्षस्यद्वादश्यांशुक्लायांव्रजपुत्रक
कार्त्तिकेयउवाच
भगवन्श्रोतुमिच्छामिव्रतानामुत्तमंव्रतम्
विधिंमासोपवासस्यफलंचास्ययथोचितम् १४
यथाविधिनरैःकार्याव्रतचर्यायथाभवेत्
आरभ्यतेयथापूर्वंसमाप्यंहियथाविधि १५
यावत्संख्यंतुकर्त्तव्यंतत्प्रब्रूहिमहेश्वर
व्रतमेतत्सुखश्रीदंविस्तरेणममानघ १६
श्रीरुद्रउवाच
पावकेसाधुसर्वं तेयत्पृष्टंप्रब्रुवेऽनघ
भक्त्यामतिमतांश्रेष्ठशृणुष्वगदतोमम १७
सुराणांचयथाविष्णुस्तपतांचयथारविः
मेरुःशिखरिणांयद्वद्वैनतेयश्चपक्षिणाम् १८
तीर्थानांतुयथागंगाप्रजानांतुयथावणिक्
श्रेष्ठंसर्वव्रतानांतुतद्वन्मासोपवासनम् १९
सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुचैवहि
सर्वदानोद्भवंचैवलभेन्मासोपवासकृत् २०
अग्निष्टोमादिभिर्यज्ञैर्विविधैर्भूरिदक्षिणैः
नतत्पुण्यमवाप्नोतियन्मासपरिलंघनात् २१
तेनजप्तंहुतंदत्तंतपस्तप्तंकृतंस्वधा
यःकरोतिविधानेननरोमासमुपोषणम् २२
उद्दिश्यवैष्णवंयज्ञमामभ्यर्च्यजनार्दनम्
गुरोराज्ञांततोलब्ध्वाकुर्यान्मासोपवासनम् २३
वैष्णवानियथोक्तानिकृत्वासर्वव्रतानितु
द्वादश्यादीनिपुण्यानिततोमासमुपावसेत् २४
अतिकृच्छ्रंचपाराकंकृत्वाचांद्रायणंततः
मासोपवासंकुर्वीतगुरोर्विप्राज्ञयाततः २५
आश्विनस्यामलेपक्षेएकादश्यामुपोषितः

व्रतमेनंतुगृह्णीयाद्यावत्त्रिंशद्दिनानितु २६
वासुदेवंसमभ्यर्च्यकार्तिकंसकलंनरः
मासंचोपवसेद्यस्तुसमुक्तिफलभाग्भवेत् २७
अच्युतस्यालयेभक्त्यात्रिकालंकुमुदैःशुभैः
मालतींदीवरैर्बुध्नैःकमलैश्चसुगंधिभिः २८
कुसुमोशीरकर्पू रैर्विलिप्यवरचंदनैः
नैवेद्यापूपदीपाद्यैरर्चयेच्चजनार्दनम् २९
मनसाकर्मणावाचापूजयेद्गरुडध्वजम्
कुर्वन्नरःस्त्रीविधवाबृहद्भक्तिर्जितेंद्रियः ३०
नाम्नामेवतथालापंविष्णोःकुर्यादहर्निशम्
भक्त्याविष्णोःस्तुतिर्वाच्यामिथ्यालापविवर्जिता ३१
सर्वसत्वदयायुक्तःशांतवृत्तिरहिंसकः
सुप्तोबाह्यासनस्थोवावासुदेवंप्रकीर्तयेत् ३२
स्मृत्यालोकनगंधादिस्वादनंपरिकीर्त्तनम्
अन्नस्यवर्जयेद्वासंग्रासानांसंप्रमोक्षणम् ३३
गात्राभ्यंगंशिरोभ्यंगंतांबूलंसविलेपनम्
व्रतस्थोवर्जयेत्सर्वंयच्चान्यच्चनिराकृतम् ३४
नव्रतस्थःस्पृशेत्किंचिद्विकर्मस्थंनचालयेत्
देवतायतनेतिष्ठन्नगृहस्थश्चरेत्ध्रुवम् ३५
कृत्वामासोपवासंतुयथोक्तविधिनानरः
नारीवाविधवासाध्वीवासुदेवंसमर्चयेत् ३६
अन्यूनाधिकमेवंतुव्रतंत्रिंशद्दिनैरिदम्
कृत्वामासोपवासंतुसंयतात्माजितेंद्रियः ३७
ततोऽर्चयेदेवपुण्यंद्वादश्यांगरुडध्वजम्
पूजयेत्पुष्पमालाभिर्गंधधूपविलेपनैः ३८
वस्त्रालंकारवाद्यैश्चतोषयेदच्युतंनरः
संस्नापयेद्धरिंभक्त्यातीर्थचंदनवारिभिः ३९
चंदनेनानुलिप्तांगंधूपपुष्पैरलंकृतम्
वस्त्रदानादिभिश्चैवभोजयित्वाद्विजोत्तमान् ४०
दद्याच्चदक्षिणांतेभ्यःप्रणिपत्यक्षमापयेत्

एवंमासोपवासाद्धिकृत्वाभ्यर्च्यजनार्दनम् ४१
भोजयित्वाद्विजांश्चैवविष्णुलोकेमहीयते
एवंमासोपवासांतेकृत्वाविप्रान्त्रयोदश ४२
निर्यापयेत्ततस्तान्वैविधिनायेनतच्छृणु
कारयेद्वैष्णवंयज्ञमेकादश्यामुपोषितः ४३
पूजयित्वातुदेवेशमाचार्यानुज्ञयाहरिम्
अर्चयित्वायथाशक्त्याह्यभिवाद्यगुरुंतथा ४४
ततोनुभोजयेद्विप्रान्नमस्कारपुरःसरम्
विशुद्धकुलचारित्रविष्णुपूजनतत्परान् ४५
पूजयित्वातथासर्वान्भोजयित्वात्रयोदश
तांबूलवस्त्रयुग्मानिभोजनाच्छादनानिच ४६
योगपट्टानिसूत्राणिब्रह्मसूत्राणिचैवहि
दद्याच्चैवद्विजाग्र्येभ्यःपूजयित्वाप्रणम्यच ४७
ततोनुपूजयेच्छक्त्याशय्यांस्तरणसंस्कृताम्
साच्छादनांशुभांश्रेष्ठांसोपसोपधानामलंकृताम् ४८
कारयित्वात्मनोमूर्तिंकांचनींतुस्वशक्तितः
न्यसेत्तस्यांतुशय्यायामर्चयित्वास्त्रगादिभिः ४९
आसनंपादुकांछत्रंवस्त्रयुग्ममुपानहौ
पवित्राणिचपुष्पाणिशयायामुपकल्पयेत् ५०
एवंशय्यांतुसंकल्पप्रणिपत्यचतान्द्विजान्
प्रार्थयेच्चानुमोदार्थंविष्णुलोकंव्रजाम्यहम् ५१
ततोव्रजेन्नरश्रेष्ठोविष्णोःस्थानमनामयम्
मंडपस्थांस्तुतान्विप्रानितिवाच्यंमुहुर्मुहुः ५२
मंत्रहीनंक्रियाहीनंसर्वहीनंद्विजोत्तमाः
सर्वंसंपूर्णतांयातुभवद्वाक्यप्रसादतः
विधिर्मासोपवासस्ययथावत्परिकीर्तितः ५३

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहिताया
मुत्तरखंडेकार्तिकमाहात्म्येश्रीकृष्णसत्यभामासंवादेमासो
पवासकथनंनामैकोनविंशत्यधिकशततमोऽध्यायः११९

## विंशत्यधिकशततमोऽधयायः

सूतउवाच
इतिवाक्यंसमाकरार्यपुनःपप्रच्छपावकिः
शालग्रामार्चनंभूयस्तच्छृणुध्वंतपोधनाः १
कार्तिकेयउवाच
भगवन्योगिनांश्रेष्ठसर्वेधर्माःश्रुतामया
शालग्रामार्चनंब्रूहिविस्तरेणममप्रभो २
ईश्वरउवाच
साधुसाधुमहाप्राज्ञयन्मांहिपरिपृच्छसि
तदहंसंप्रवद्त्यामिश्रूयतांममवत्सल ३
शालग्रामशिलायांतुत्रैलोक्यंसचराचरम्
महाशयमहासेननित्यंतिष्ठतिसंहितम् ४
दृष्टंप्रणमितयेनस्नापितंपूजितंतथा
यज्ञकोटिगुणंपुरायंगवांकोटिफलंलभेत् ५
छिन्नस्तेनतथावत्सगर्भवासःसुदारुणः
पीतंयेनसदाविष्णोःशालग्रामशिलाजलम् ६
कामासक्तोऽपियोनित्यंभक्तिभावविवर्जितः
शालग्रामशिलापुत्रपूजयित्वाच्युतोभवेत् ७
शालग्रामशिलाबिंबंहत्वाकोटिविनाशनम्
स्मृतंसंकीर्तितंध्यातंपूजितंचनमस्कृतम् ८
शालग्रामशिलांदृष्ट्वायांतिपापान्यनेकशः
सिंहंदृष्ट्वायथायांतिवनेमृगगणाभयात् ९
नमस्कारंतुमनुजःशालग्रामशिलार्चने
भक्त्यावायदिवाऽभक्त्याकृत्वामुक्तिमवाप्नुयात् १०
वैवस्वतभयंनास्तितथामरणजन्मनोः
यःकरोतिनरोनित्यंशालग्रामशिलार्चनम् ११
गंधपाद्यार्घनैवेद्यैर्दी पैर्धूपैर्विलेपनैः
गीतैर्वाद्यैस्तथास्तोत्रैःशालग्रामशिलार्चनम् १२
कुरुतेमानवोयस्तुकलौभक्तिपरायणः
कल्पकोटिसहस्राणिरमतेविष्णुसद्मनि १३

शालग्रामनमस्कारोभावेनापिनरैःकृतः
मानुषत्वंकथंतेषांमद्भक्तायेनराभुवि १४
मद्भक्तास्तीव्रपापिष्ठामत्प्रभुंननमंतिये
वासुदेवंनतेज्ञेयामद्भक्ताःपापमोहिताः १५
मद्भक्तोऽपिचयोभूत्वाभुंक्तेत्वेकादशीदिने
सयातिह्यंधतामिस्रेनिरयंममघातकः १६
मल्लिंगस्पर्शनंकार्यंनान्याशुद्धिर्विधीयते
यातिथिर्दयिताविष्णोःसातिथिर्ममवल्लभा १७
यस्तांनोपवसेन्मर्त्यःसपापीश्वपचाधिकः
शालग्रामशिलायांतुसदापुत्रवसाम्यहम् १८
दंत्तदेवेनतुष्टेनस्वस्थानंममभक्तितः
पद्मकोटिसहस्रैस्तुपूजितेमयियत्फलम् १९
तत्फलंकोटिगुणितंशालग्रामशिलार्चनात्
पूजितोऽहनतैर्मर्त्यैर्नमितोऽहनतैर्न रैः २०
नकृतंमर्त्यलोकेयैःशालग्रामशिलार्चनम्
शालग्रामशिलाग्रेतुयःकरोतिममार्चनम् २१
तेनार्चितोऽहसेनानीर्युगानामेकविंशतिम्
किमर्चि तैर्लिंगशतैर्विष्णुभक्तिविवर्जि तैः २२
शालग्रामशिलाबिंबंनार्चितंयदिपुत्रक
अनर्हंममनैवेद्यंपत्रंपुष्पंफलंजलम् २३
शालग्रामशिलाग्रेतुसर्वंयातिपवित्रताम्
भुक्त्वान्यदेवनैवेद्यंद्विजश्चांद्रायणंचरेत् २४
भुक्त्वाकेशवनैवेद्यंयज्ञकोटिफलंलभेत्
पादोदकेनदेवस्यहत्याकोटिसमन्विताः २५
शुद्ध्यंतिनात्रसंदेहस्तथाशंखोदकेनहि
योहिमाहेश्वरोभूत्वावैष्णवंचनपूजयेत् २६
द्वेष्टाचयातिनरकंयावदिंद्राश्चतुर्दश
ज्येष्ठाश्रमीगृहेयस्यमुहूर्त्तमपिविश्रमेत् २७
पितामहायुगान्यष्टौभवत्यमृतभोजिनः
संसारेदुःखकांतारेनिमज्ज्यंतेनराधमाः २८

वर्षकोटिसहस्राणिकृष्णाराधनवर्जिताः
स्नेहादभ्यर्चि तैर्लिंगैःशालग्रामसमुद्भवैः २९
मुक्तिंप्रयांतिमनुजायोगसांख्येनवर्जिताः
मल्लिंगकोटिभिर्दृष्टैर्यत्फलंपूजितैःस्तुतैः ३०
शालग्रामशिलायांतुएकस्यामिहतद्भवेत्
द्वादशैवशिलायोवैशालग्रामसमुद्भवाः ३१
अर्चयेद्वैष्णवोनित्यंतस्यपुरायंनबोधमे
कोटिलिगसहस्रैस्तुपूजितैर्जाह्नवीतटे ३२
काशीवासेयुगान्यष्टौदिनेनैकेनतद्भवेत्
किंपुनर्बहुनायस्तुपुजयेद्वैष्णवोनरः ३३
नाहंब्रह्मादयोदेवाःसंख्यांकर्तुंसमीहते
तस्माद्भक्त्याचमद्भक्तैःप्रीत्यर्थंममपुत्रक ३४
कर्त्तव्यंममतद्भक्त्याशालग्रामशिलार्च्चनम्
शालग्रामशिलारूपीयत्रतिष्ठतिकेशवः ३५
तत्रदेवासुरायक्षाभुवनानिचतुर्दश ३६
सुराणांकीर्तनैःसर्वैःकोटिभिश्चफलंलभेत्
तत्फलंकीर्त्तनादेवकेशवेसुकृतंकलौ ३७
शालग्रामशिलाग्रेतुसकृत्पिंडेनतर्पिताः
वसंतिपितरस्तस्यनसंख्यातत्रविद्यते ३८
येपिवंतिनराभक्त्याशालग्रामशिलाजलम्
पंचगव्यसहस्रैस्तुप्राशितैःकिंप्रयोजनम् ३९
प्रायश्चित्तेसमुत्पन्नेकिंदानैःकिमुपोषणैः
चांद्रायणैःसुचीर्णैश्चपीत्वापादोदकंहरेः ४०
यःकरोतितडागेतुप्रतिमांजलशायिनीम्
कोटिभिश्चापिकिंकार्यमन्यदेवैश्चपूजितैः ४१
विष्णुमुख्यास्तुवैदेवास्तत्रजल्पंतिवैसह
प्रमाणमस्तिसर्वस्यसुकृतस्यहिपुत्रक ४२
फलप्रमाणं नैवास्तिशालग्रामशिलार्चन
योददातिशिलांविष्णोःशालग्रामसमुद्भवाम् ४३
विप्रायविष्णुभक्तायतेनेष्टंक्रतुभिःशतैः

गृहेऽपिवसतस्तस्यगंगास्नानंदिनेदिने ४४
सस्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः
शालग्रामशिलातोयैरभिषेकंसमाचरेत् ४५
स्वर्गेमर्त्येचपातालेपाषाणाःसंतिवैगुह
शालग्रामशिलाग्राव्णानास्तिनास्तिसमापुनः ४६
मानुषेदुर्ल्लभेलोकेसफलंतस्यजीवितम्
तिलप्रस्थशतंभक्त्यायोददातिदिनेदिने ४७
तत्फलंसमवाप्नोतिशालग्रामशिलार्चनात्
पत्रंपुष्पंफलंतोयंमूलंदूर्वादलंतथा ४८
जायतेमेरुणातुल्यंशालग्रामेसमर्पितम्
विधिहीनोऽपियःकश्चित्क्रियामंत्रविवर्जितः ४९
चक्रांकभुजआप्नोतिसम्यक्शास्त्रोदितंफलम्
यत्तुपूर्वंमयादृष्टंकेशवेक्लेशनाशनम् ५०
तत्सर्वंकथयिष्यामितवस्नेहेनपुत्रक
क्वत्वंवससिहेविष्णोकिमाधारःकिमाश्रयः ५१
कथंवाप्रीयसेदेवतत्सर्वंकथयस्वमे
श्रीकृष्णउवाच
निवसामिसदाशंभोशालग्रामोद्भवेऽश्मनि ५२
तत्रैवरथचक्रांकेयानिनामानिमेशृणु
द्वारदेशेसमेचक्रेदृश्येतेनांतरंयदि
वासुदेवःसविज्ञेयःशुक्लश्चैवातिशोभनः ५३
प्रद्युम्नःसूर्यवक्त्रस्तुनीलदीप्तिस्तथैवच
सुषिरंच्छिद्रबहुलंदीर्घाकारंतुतद्भवेत् ५४
अनिरुद्धस्तुपीताभोवर्त्तुलश्चातिशोभनः
रेखात्रयांकितोद्वारिदृष्टपद्मेनचिह्नवत् ५५
श्यामोनारायणोदेवोनाभिचक्रेतथोन्नते
दीर्घ रेषासमोपेतोदक्षिणेसुषिरान्वितः ५६
ऊर्ध्वंमुखंचजानीयात्सुंदरंहरिरूपिणम्
कामदंमोक्षदंचैवअर्थदंचविशेषतः ५७
परमेष्ठीचशुक्लाभःपद्मचक्रसमन्वितः

बिंबाकृतिस्तथापृष्ठेसुषिरंचातिपुष्कलम् ५८
कृष्णवर्णस्तथाविष्णुर्मूलेचक्रेसुशोभने
द्वारोपरितथारेखालद्दयतेमध्यदेशतः ५९
कपिलोनरसिंहश्चपृथुचक्रःसुशोभितः
ब्रह्मचर्येणपूज्योसावन्यथाविघ्नदोभवेत् ६०
वाराहःशक्तिलिगस्तुचक्रेचविषमेस्मृते
इंद्रनीलनिभःस्थूलस्त्रिरेखोनाभितःशुभः ६१
दीर्घाकांचनवर्णायाबिंदुत्रयविभूषिता
मत्स्याख्यासाशिलाज्ञेयाभुक्तिमुक्तिफलप्रदा ६२
कूर्मस्तथोन्नतःपृष्ठेवर्तुलश्चक्रपूरितः
हरितंवर्णमाधत्तेकौस्तुभेनतुचिह्नितः ६३
हयग्रीवोहयाकारोरेखापंचकभूषितः
बहुबिंदुसमाकीर्णःपृष्ठेनीलंचरूपकम् ६४
वैकुंठमविभिन्नांगंचक्रमेकंतथाध्वजम्
द्वारोपरितथारेखागुंजाकारासुशोभना ६५
श्रीधरस्तुतथादेवश्चिह्नितोवनमालया
कदंबकुसुमाकारोरेखापंचकभूषितः ६६
वर्तुलश्चापिह्रस्वश्चवामनःपरिकीर्तितः
अतसीकुसुमप्रख्योबिंदुनापरिशोभितः ६७
सुदर्शनस्ततोदेवःश्यामवर्णोमहाद्युतिः
वामपार्श्वेगदाचक्रेरेखाचैवतुदक्षिणे ६८
दामोदरस्तथास्थूलोमध्येचक्रंप्रतिष्ठितम्
दूर्वाभंद्वारसंकीर्णंपीतरेखंतथैवच ६९
नानावर्णोह्यनंतस्तुनानाभोगेनचिह्नितः
अनेकमूर्तिकोभिन्नःसर्वकामफलप्रदः ७०
विदिक्षुदिक्षुसर्वासुयस्योर्ध्वंदृश्यतेमुखम्
पुरुषोत्तमःसविज्ञेयोभुक्तिमुक्तिफलप्रदः ७१
दृश्यतेशिखरेलिगंशालग्रामशिलोद्भवम्
यस्ययोगेश्वरोदेवोब्रह्महत्यांव्यपोहति ७२
आरक्तःपद्मनाभस्तुपंकजंवक्त्रसंयुतम्

तस्याभ्यर्चनतोनित्यंद्ररिद्रस्त्वीश्वरोभवेत् ७३
चक्रांकितंहिरगयांगंरश्मिजालंविनिर्दिशेत्
सुवर्णरेखाबहुलंस्फाटिकद्युतिशोभितम् ७४
अतिस्निग्धासिद्धिकरीकृष्णाकीर्तिंददातिच
पांडुरापापदहनीपितापुत्रफलप्रदा ७५
नीलाप्रयच्छतीलक्ष्मींरक्तारोगप्रदायिनी
रूक्षाउद्वेगजननीवक्रादारिद्र्यभागिनी ७६
एकंसुदर्शनंज्ञेयंलक्ष्मीनारायणंद्वयम्
तृतीयंचाच्युतंविद्याच्चतुर्थंतुजनार्दनम् ७७
पंचमंवासुदेवंचषष्ठंप्रद्युम्नमेवच
संकर्षणंसप्तमंचअष्टमंपुरुषोत्तमम् ७८
नवमंचनवव्यूहंदशमंतुतदात्मकम्
एकादशंचानिरुद्धंद्वादशंद्वादशात्मकम् ७९
अतऊर्ध्वंतुचक्राणिदृश्यंतेऽनतसंज्ञके
खंडितेत्रुटितेभग्नेसालग्रामेनदोषभाक् ८०
इष्टाचयस्ययामूर्तिःसतांयत्नेनपूजयेत्
स्कंधेकृत्वातुयोऽध्वानंवहतेशैलनायकम् ८१
तस्यवश्यंभवेत्सर्वं त्रैलोक्यंसचराचरम्
शालग्रामशिलायत्रतत्रसंनिहितोहरिः ८२
तत्रदानंजपःस्नानंवाराणस्याःशताधिकम्
कुरुक्षेत्रेप्रयागेचनैमिषेपुष्करेतथा ८३
तत्रकोटिगुणंपुगयंवाराणस्यांमहाफलम्
ब्रह्महत्यादिकंपापंयत्किंचित्कुरुतेनरः ८४
तत्सर्वंनिर्दहत्याशुशालग्रामशिलार्चनम्
शालग्रामोद्भवोदेवोयत्रद्वारावतीभवः ८५
उभयोःसंगमोयत्रमुक्तिस्तत्रनसंशयः
ब्रह्मचारिगृहस्थैश्चवानप्रस्थैश्चभिक्षुभिः ८६
भोक्तव्यंविष्णुनैवेद्यंनात्रकार्याविचारणा
तत्पूजनेनमंत्राश्चनजपोनचभावना ८७
नस्तुतिर्नापिचाचारःशालग्रामशिलार्चने

शालग्रामशिलाग्रेतुकृत्वास्वस्तिकमादरात् ८८
कार्तिकेतुविशेषेणपुनात्यासप्तमंकुलम्
अणुमात्रंतुयःकुर्यान्मंडलंकेशवाग्रतः ८९
मृदाधातुविकारैश्चकल्पकोटिंदिवंवसेत्
यस्तुसंवत्सरंपूर्णमग्निहोत्रमुपासते ९०
कार्तिकेस्वस्तिकंकृत्वासममेतन्नसंशयः
अगम्यागमनेचैवह्यभक्षस्यतुभक्षणे ९१
तत्पापंनाशमायातिमंडयित्वाहरेर्गृहम्
मंडलंकुरुतेनित्यंयानारीकेशवाग्रतः
सप्तजन्मानिवैधव्यंनप्राप्नोतिकदाचन ९२
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये
श्रीकृष्णसत्यभामासंवादेशालिग्राममाहात्म्यंनाम
विंशत्यधिकशततमोऽध्यायः १२०

एकविशंत्यधिकशततमोऽध्यायः

ईश्वरउवाच
धात्रीच्छायांसमाश्रित्यकुर्यात्पिंडंतुयोगुह
मुक्तिंप्रयांतिपितरःप्रसादान्माधवस्यतु १
मूर्ध्निपाणौमुखेचैवदेहेचैवतुयोनरः
धत्तेधात्रीफलंवत्सधात्रीफलविभूषितः २
धात्रीफलकृताहारोनरोनारायणोभवेत्
यःकश्चिद्वैष्णवोलोकेधत्तेधात्रीफलंगुह ३
प्रियोभवतिदेवानांमनुष्याणांचकाकथा
नजह्यात्तुलसीमालांधात्रीमालांविशेषतः ४
यावत्तिष्ठतिकंठस्थाधात्रीमालानरस्यहि
तावत्तस्यशरीरेतुप्रतिष्ठतिचकेशवः ५
धात्रींफलंतुतुलसीमृत्तिकाद्वारकोद्भवा
सफलंजीवितंतस्यत्रितयंयस्यवेश्मनि ६
यावद्दिनानिवहतेधात्रीमालांकलौनरः
तावद्युगसहस्राणिवैकुंठेवसतिर्भवेत् ७

मालायुग्मंवहेद्यस्तुधात्रीतुलसिसंभवम्
वहतेकंठदेशेतुकल्पकोटिंदिवंवसेत् ८
संनियम्येंद्रियग्रामंशालग्रामशिलार्चनम्
यःकुर्यान्मानवोभक्त्यापुष्पेपुष्पेऽश्वमेधजम् ९
सुराणांचयथाविष्णुःपुष्पाणांतुलसीतथा
तुलस्यानुदिनंदेवंयोऽचयेद्गरुडध्वजम् १०
जन्मदुःखजरारोगैर्मुक्तोऽसौमुक्तिमाप्नुयात्
तुलसीमालयाविष्णुःपूजितोयेनकार्तिके ११
यमाद्धरकृतांमालांस्फुटंशौरिःप्रमार्जति
श्रीचंदनंसकर्पूरमगुरुंचसकुंकुमम् १२
केतकीदीपदानंचसर्वदाकेशवप्रियम्
कार्तिकेकेतकीपुष्पंदत्तंयेनकलौयुगे १३
दीपदानंमहासेनकुलानांतारयेच्छतम्
सरोरुहाणितुलसीकेतकीमुनिपुष्पकम् १४
कार्तिकेचदिनान्येवदीपदानंतुपंचमम्
केतकीमालयायेनकार्तिकेपुष्पमंडपम् १५
केशवस्यकृतंवत्सवसतिर्दिवितस्यच
केतकीपुष्पकेनैवपूजितोगरुडध्वजः १६
समाःसहस्रंसुप्रीतोजायतेमधुसूदनः
अर्चयित्वाहृषीकेशंकुसुमैःकेतकीभवैः १७
पुण्यंतद्भवनंयातिकेशवस्यशिवंगुह
दमनकेनापिदेवेशंसंप्राप्तेमधुमाधवे १८
समभ्यर्च्यमुनिश्रेष्ठअर्चनाल्लभतेफलम्
अगस्तिकुसुमैर्देवंयोऽचयेतजनार्दनम् १९
दर्शनात्तस्यभोविप्रनरकाग्निःप्रणश्यति
नतत्करोतिविप्रर्षेतपसातोषितोहरिः २०
यत्करोतिमहासेनमुनिपुष्पैरलंकृतः
विहायसर्वपुष्पाणिमुनिपुष्पेणकेशवम् २१
कार्तिकेयोऽचयेद्भक्त्यावाजिमेधफलंलभेत्
मुनिपुष्पकृतांमालांयोददातिजनार्दने २२

देवेंद्रोऽपिमुनिश्रेष्ठकुरुतेतस्यसत्कथाम्
गवामयुतदानेनयत्फलंप्राप्यतेगुह २३
मुनिपुष्पेणचैकेनकार्तिकेलभतेफलम्
कौस्तुभेनयथाप्रीतोयथाचवनमालया २४
तुलसीदलेनसंप्रीतःकार्तिकेचतथाहरिः
सूतउवाच
प्रश्रयावनतंदृष्ट्वाकुमारंभक्तितत्परम् २५
पुनःप्रोवाचभगवान्महादेवोवृषध्वजः
ईश्वरउवाच
शृणुदीपस्यमाहात्म्यंकार्तिकेशिखिवाहन २६
पितरश्चैववांच्छंतिसदापितृगणैर्वृताः
भविष्यतिकुलेऽस्माकंपितृभक्तःसुपुत्रकः २७
कार्तिकेदीपदानेनयस्तोषयतिकेशवम्
घृतेनदीपकोयस्यतिलतैलेनवापुनः २८
ज्वलतेयस्यसेनानीरश्वमेधेनतस्यकिम्
तेनेष्टंक्रतुभिःसर्वैःकृतंतीर्थावगाहनम् २९
दीपदानंकृतंयेनकार्तिकेकेशवाग्रतः
कृष्णपक्षेविशेषेणपुत्रपंचदिनानिच ३०
पुरयानितेषुयोदत्तेदीपंसोऽक्षयमाप्नुयात्
एकादश्यांपरैर्दत्तंदीपंप्रज्वाल्यमूषिका ३१
मानुष्यंदुर्ल्लभंप्राप्यपरांगतिमवापसा
लुब्धकोऽपिचतुर्दश्यांपूजयित्वामहेश्वरम् ३२
निर्भक्षःपरमंप्राप्यविष्णुलोकंजगामसः
श्वपाकस्याश्रयाद्वैश्यादीपंकृत्वापरैःकृतम् ३३
शुद्धालीलावतीभूत्वाजगामस्वर्गमक्षयम्
गोपःकश्चिदमावस्यांपूजांदृष्ट्वातुशार्ङ्गिणः ३४
मुहुर्मुहुर्जयेत्युक्त्वाराजराजेश्वरोऽभवत्
तस्माद्दीपाःप्रदातव्यारात्रावस्तमतेरवौ ३५
गृहेषुसर्वगोष्ठेषुसर्वेष्वायतनेषुच
देवालयेषुदेवानांश्मशानेषुसरस्सुच ३६

घृतादिनाशुभार्थाययावत्पंचदिनानिच
पापिनःपितरोयेचलुप्तपिंडोदकक्रियाः
तेपियांतिपरांमुक्तिंदीपदानस्यपुरायतः ३७
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकार्त्तिकमाहात्म्ये दीपगंधधात्रीमाहात्म्यवर्णनोनामएकविंशत्यधिकशततमोऽध्यायः १२१

## द्वाविंशत्यधिकशततमोऽध्यायः

कार्तिकेयउवाच
दीपावलिफलंनाथविशेषाद्ब्रूहिसांप्रतम्
किमर्थंक्रियतेसातुतस्याःकादेवताभवेत् १
किंचतत्रभवेद्देयंकिंनदेयंवदप्रभो
प्रहर्षःकोऽत्रनिर्दिष्टःक्रीडाकात्रप्रकीर्तिता २
सूतउवाच
इतिस्कंदवचःश्रुत्वाभगवान्कामशोषणः
साधूक्त्वाकार्तिकंविप्राःप्रहसन्निदमब्रवीत् ३
श्रीशिवउवाच
कार्तिकस्यासितेपक्षेत्रयोदश्यांतुपावके
यमदीपंबहिर्दद्यादपमृत्युर्विनश्यति ४
मृत्युनापाशहस्तेनकालेनभार्ययासह
त्रयोदशीदीपदानात्सूर्यजःप्रीयतामिति ५
कार्तिकेकृष्णपक्षेचचतुर्दश्यांविधूदये
अवश्यमेवकर्त्तव्यंस्नानंचपापभीरुभिः ६
पूर्वविद्धाचतुर्दश्याकार्तिकस्यसितेतरे
पक्षेप्रत्यूषसमयेस्नानंकुर्यादतंद्रितः ७
तैलेलक्ष्मीर्जलेगंगादीपावल्यांचतुर्दशीम्
प्राप्तःस्नानंहियःकुर्याद्यमलोकंनपश्यति ८
अपामार्गस्तथातुंबीप्रपुन्नाटंचवाह्वलम्
भ्रामयेत्स्नानमध्येतुनरकस्यक्षयायवै ९
सीतालोष्टसमायुक्तसकंटकदलान्वित
हरपापमपामार्गभ्राम्यमाणःपुनःपुनः १०

अपामार्गंप्रपुन्नाटंभ्रामयेच्छिरसोपरि
ततश्चतर्पणंकार्यंयमराजस्यनामभिः ११
यमायधर्मराजायमृत्यवेचांतकायच
वैवस्तायकालायसर्वभूतक्षयायच १२
औदुंबरायदध्नायनीलायपरमेष्ठिने
वृकोदरायचित्रायचित्रगुप्तायवैनमः १३
नरकायप्रदातव्योदीपःसंपूज्यदेवताः
ततःप्रदोषसमयेदीपान्दद्यान्मनोहरान् १४
ब्रह्मविष्णुशिवादीनांभवनेषुविशेषतः
कूटागारेषुचैत्येषुसभासुचनदीषुच १५
प्राकारोद्यानवापीषुप्रतोलीनिष्कुटेषुच
मंदुरासुविविक्तासुहस्तिशालासुचैवहि १६
एवंप्रभातसमयेह्यमावास्यांतुपावकं
स्नात्वादेवान्पितॄन्भक्त्यासंपूज्याथप्रणम्यच १७
कृत्वातुपार्वणंश्राद्धंदधिक्षीरघृतादिभिः
भोज्यैर्नानाविधैर्विप्रान्भोजयित्वाक्षमापयेत् १८
ततोपराह्णसमयेपोषयेन्नागरान्प्रिय
तेषांगोष्ठींचमानंचकृत्वासंभाषणंनृपः १९
वक्तृणांवत्सरंयावत्प्रीतिरुत्पद्यतेगुह
अप्रबुद्धेहरौपूर्वंस्त्रीभिर्लक्ष्मीःप्रबोधयेत् २०
प्रबोधसमयेलक्ष्मींबोधयित्वातुसुस्त्रिया
पुमान्वैवत्सरंयावल्लक्ष्मीस्तं नैवमुंचति २१
अभयंप्राप्यविप्रेभ्योविष्णुभीतासुरद्विषः
सुप्तंक्षीरोदधौज्ञात्वालक्ष्मींपद्माश्रितांतथा २२
त्वंज्योतिःश्रीरविश्चंद्रोविद्युत्सौवर्णतारकः
सर्वेषांज्योतिषांज्योतिर्दीपज्योतिःस्थितातुया २३
यालक्ष्मीर्दिवसेपुरायेदीपावल्यांचभूतले
गवांगोष्ठेतुकार्तिक्यांसालक्ष्मीर्वरदामम २४
शंकरश्चभवानीचक्रीडयाद्यूतमास्थितौ
भवान्याभ्यर्चितालक्ष्मीर्धेनुरूपेणसंस्थिता २५

गौर्याजित्वापुराशंभुर्नग्नोद्यूतेविसर्जितः
अतोऽयशंकरोदुःखीगौरीनित्यंसुखेस्थिता २६
प्रथमंविजयोयस्यतस्यसंवत्सरंसुखम्
एवंगतेनिशीथेतुजनेनिद्रार्धलोचने २७
तावन्नगरनारीभिस्तूर्यडिंडिमवादनैः
निष्कास्यतेप्रहृष्टाभिरलक्ष्मीश्चगृहांगणात् २८
पराजयेविरुद्धंस्यात्प्रतिपद्युदितेरवौ
प्रातर्गोवर्द्धनःपूज्योद्यूतंरात्रौसमाचरेत् २९
भूषणीयास्तथागावोवर्ज्यावहनदोहनात्
गोवर्द्धनधराधारगोकुलत्राणकारक ३०
विष्णुबाहुकृतोच्छ्रायगवांकोटिप्रदोभव
यालक्ष्मीर्लोकपालानांधेनुरूपेणसंस्थिता ३१
घृतंवहतियज्ञार्थेममपापंव्यपोहतु
अग्रतःसंतुमेगावोगावोमेसंतुपृष्ठतः
गावोमेहृदयेसंतुगवांमध्येवसाम्यहम् ३२
इतिगोवर्द्धनपूजा
सद्भावेनैवसंतोष्यदेवान्सत्पुरुषान्नरान्
इतरेषामन्नपानैर्वाक्यदानेनपंडितान् ३३
वस्त्रैस्तांबूलदीपैश्चपुष्पकर्पूरकुंकुमैः
भक्ष्यैरुच्चावचैर्भोज्यैरंतःपुरनिवासिनः ३४
ग्रामर्षभंचदानैश्चसामंतान्नृपतिर्धनैः
पदातिजनसंघांश्चग्रैवेयैःकटकैःशुभैः ३५
स्वानमात्यांश्चतान्राजातोषयेत्स्वजनान्पृथक्
यथार्थंतोषयित्वातुततोमल्लान्नटांस्तथा ३६
वृषभांश्चमहोक्षांश्चयुद्ध्यमानान्परैःसह
राजान्यांश्चापियोधांश्चपदातीन्ससमलंकृतान् ३७
मंचारूढःस्वयंपश्येन्नटनर्तकचारणान्
योधयेद्वासयेच्चैवगोमहिष्यादिकंचयत् ३८
वत्सानाकर्षयेद्गोभिरुक्तिप्रत्युक्तिवादनात्
ततोपराह्णसमयेपूर्वस्यांदिशिपावके ३९

मार्गपालद्यंप्रबध्नीयाद्दुर्गस्तंभेऽथपादपे
कुशकाशमयींदिव्यांलंबकैर्बहुभिर्गुह ४०
वीक्षयित्वागजानश्वान्मार्गपाल्यास्तलेनयेत्
गावैर्वृषांश्चमहिषान्महिषीर्घंटिकोत्कटाः ४१
कृतहोमैर्द्विजेंद्रैस्तुबध्नीयान्मार्गपालिकाम्
नमस्कारंततःकुर्यान्मंत्रेणानेनसुव्रतः ४२
मार्गपालिनमस्तुभ्यंसर्वलोकसुखप्रदे
मार्गपालीतलेस्कंदयांतिगावोमहावृषाः ४३
राजानोराजपुत्राश्चब्राह्मणाश्चविशेषतः
मार्गपालद्यंसमुल्लंघ्यनिरुजःसुखिनोहिते ४४
कृत्वैतत्सर्वमेवेहरात्रौदैत्यपतेर्बलेः
पूजांकुर्यात्ततःसाक्षाद्भूमौमंडलकेकृते ४५
बलिमालिख्यदैत्येंद्रंवर्णकैःपंचरंगकैः
सर्वाभरणसंपूर्णंविंध्यावलिसमन्वितम् ४६
कूष्मांडमयजंभोरुमधुदानवसंवृतम्
संपूर्णहृष्टवदनंकिरीटोत्कटकुंडलम् ४७
द्विभुजंदैत्यराजानंकारयित्वास्वकेपुनः
गृहस्यमध्येशालायांविशालायांततोऽचयेत् ४८
मातृभ्रातृजनैःसार्द्धंसंतुष्टोबंधुभिःसह
कमलैःकुमुदैःपुष्पैःकल्हारैरक्तकोत्पलैः ४९
गंधपुष्पान्ननैवेद्यैःसक्षीरैर्गुडपायसैः
मद्यमांससुरालेह्यचोष्यभक्ष्योपहारकैः ५०
मंत्रेणानेनराजेंद्रःसमंत्रीसपुरोहितः
पूजांकरिष्यतेयोवैसौख्यंस्यात्तस्यवत्सरम् ५१
बलिराजनमस्तुभ्यंविरोचनसुतप्रभो
भविष्येंद्रसुराराते पूजेयंप्रतिगृह्यताम् ५२
एवंपूजाविधिंकृत्वारात्रौजागरणंततः
कारयेद्वैक्षणंरात्रौनटनर्तकगायकैः ५३
लोकैश्चापिगृहस्यांतेसपर्यांशुक्लतंडुलैः
संस्थाप्यबलिराजानंफलैःपुष्पैश्चपूजयेत् ५४

बलिमुद्दिश्यवैतत्रकार्यंसर्वंचपावके
यानियान्यक्षयान्याहुऋृषयस्तत्वदर्शिनः ५५
यदत्रदीयतेदानंस्वल्पंवायदिवाबहु
तदक्षयंभवेत्सर्वंविष्णोःप्रीतिकरंशुभम् ५६
रात्रौयेनकरिष्यंतितवपूजांबलेर्नराः
तेषामश्रोत्रियंधर्मंसर्वंत्वामुपतिष्ठतु ५७
विष्णुनाचस्वयंवत्सतुष्टेनबलयेपुनः
उपकारकरंदत्तमसुराणांमहोत्सवम् ५८
तदाप्रभृतिसेनानेप्रवृत्ताकौमुदीसदा
सर्वोपद्रवविद्रावासर्वविघ्नविनाशिनी ५९
लोकशोकहराकाम्याधनपुष्टिसुखावहा
कुशब्देनमहीज्ञेयामुदहर्षेततोद्वयम् ६०
धातुत्वेनिगमैश्चैवतेनैषाकौमुदीस्मृता
कौमोदंतेजनायस्मान्नानाभावैःपरस्परम् ६१
हृष्टतुष्टाःसुखापन्नास्तेनैषाकौमुदीस्मृता
कुमुदानिबलेर्यस्यांदीयंतेतेनषण्मुख ६२
अर्घार्थंपार्थिवैःपुत्रतेनैषाकौमुदीस्मृता
एकमेवमहोरात्रंवर्षेवर्षेचकार्तिके ६३
दत्तंदानवराजस्यआदर्शमिवभूतल
यःकरोतिनृपोराज्येतस्यव्याधिभयंकुतः ६४
सुभिक्षंक्षेममारोग्यंतस्यसंपदनुत्तमा
नीरुजश्चजनाःसर्वेसर्वोपद्रववर्जिताः ६५
कौमुदीक्रियतेतस्माद्भावंकर्तुंमहीतले
योयादृशेनभावेनतिष्ठत्यस्यांचषण्मुख ६६
हर्षदुःखादिभावेनतस्यवर्षंप्रयातिहि
रुदितेरोदतेवर्षंहृष्टेवर्षंप्रहर्षितम् ६७
भुक्तेभोक्ताभवेद्वर्षंस्वस्थेस्वस्थंभविष्यति
तस्मात्प्रहृष्टैःकर्त्तव्याकौमुदीचशुभैर्नरैः ६८
वैष्णवीदानवीचेयंतिथिःप्रोक्ताचकार्तिके ६९
दीपोत्सवंजनितसर्वजनप्रसादंकुर्वंतियेशुभतयाबलिराजपूजाम्

दानोपभोगसुखबुद्धिमतांकुलानांहर्षंप्रयातिसकलंप्रभुदंचवर्षम् ७०
स्कंदैतास्तिथयोनूनंद्वितीयाद्याश्चविश्रुताः
मासैश्चतुर्भिश्चततःप्रावृट्कालेशुभावहाः ७१
प्रथमाश्रावणेमासितथाभाद्रपदेपरा
तृतीयाश्वयुजेमासिचतुर्थीकार्तिकेभवेत् ७२
कलुषाश्रावणेमासितथाभाद्रोपदेमला
आश्विनेप्रेतसंचाराकार्तिकेयाम्यकामता ७३
गुहउवाच
कस्मात्साकलुषाप्रोक्ताकस्मात्सानिर्मलामता
कस्मात्साप्रेतसंचाराकस्माद्याम्याप्रकीर्तिता ७४
सूतउवाच
इतिस्कंदवचःश्रुत्वाभगवान्भूतभावनः
उवाचवचनंश्लक्ष्णंप्रहसन्वृषभध्वजः ७५
महेशउवाच
पुरावृत्रवधेवृत्तेप्राप्तेराज्येपुरंदरे
ब्रह्महत्यापनोदार्थमश्वमेधःप्रवर्तितः ७६
क्रोधादिंद्रेणवज्रेणब्रह्महत्यानिषूदिता
षड्विधासाक्षितौक्षिप्तावृक्षतोयमहीतले ७७
नार्यांभ्रूणहणिवह्नौसंविभज्ययथाक्रमम्
तत्पापश्रवणात्पूर्वंद्वितीयायादिनेनच ७८
नारीवृक्षनदीभूमिवह्निभ्रूणहनस्तथा
कलुषीभवनंजातोह्यतोर्थंकलुषास्मृता ७९
मधुकैटभयोरक्तेपुरामग्नानुमेदिनी
अष्टांगुलापवित्रासानारीणांतुरजोमलम् ८०
नद्यःप्रावृणमलासर्वावह्निरूर्ध्वंमषीमलः
निर्यासमलिनावृक्षाःसंगाद्भ्रूणहनोमलाः ८१
कलुषानिचरंत्यस्यांतेनैषाकलुषामता
देवर्षिपितृधर्माणांनिंदकानास्तिकाःशठाः ८२
तेषांसावाङ्मलात्पूताद्वितीयातेननिर्मला
अनध्यायेषुशास्त्राणिपाठयंतिपठंतिच ८३

सांख्यकास्तार्किकाःश्रौतास्तेषांशब्दापशब्दजात्
मलात्पूताद्बितीयायांततोर्थेनिर्मलाचसा ८४
कृष्णस्यजन्मनावत्सत्रैलोक्यंपावितंभवेत्
नभस्येतेविनिर्दिष्टानिर्मलासातिथिर्बुधैः ८५
अग्निष्वात्ताबर्हिषदआज्यपाःसोमपास्तथा
पितृन्पितामहान्प्रेतसंचारात्प्रेतसंचरा ८६
प्रेतास्तुपितरःप्रोक्तास्तेषांतस्यांतुसंचरः
पुत्रपौत्रैस्तुदौहित्रैःस्वधामं त्रैस्तुपूजिताः ८७
श्राद्धदानमखैस्तृप्तायांत्यतःप्रेतसंचरा
महालयेतुप्रेतानांसंचारोभुविदृश्यते ८८
तेनैषाप्रेतसंचाराकीर्तिताशिखिवाहन
यमस्यक्रियतेपूजायतोऽस्यापावकेनरैः ८९
तेनैषायाम्यकाप्रोक्तासत्यंसत्यंमयोदितम्
एतत्कार्तिकमाहात्म्यंयेशृण्वंतिनरोत्तमाः ९०
कार्तिकस्नानजंपुण्यंतेषांभवतिनिश्चितम् ९१
कार्तिकेचद्बितीयायांपूर्वाह्णेयममर्चयेत्
भानुजायांनरःस्नात्वायमलोकंनपश्यति ९२
कार्तिकेशुक्लपक्षेतुद्बितीयायांतुशौनक
यमोयमुनयापूर्वंभोजितःस्वगृहेऽचितः ९३
द्बितीयायांमहोत्सर्गोनारकीयाश्चतर्पिताः
पापेभ्योविप्रयुक्तास्तेमुक्ताःसर्वनिबंधनात् ९४
आशंसिताश्चसंतुष्टाःस्थिताःसर्वेयदृच्छया
तेषांमहोत्सवोवृत्तोयमराष्ट्रसुखावहः ९५
अतोयमद्बितीयेयंत्रिषुलोकेषुविश्रुता
तस्मान्निजगृहेविप्रनभोक्तव्यंततोबुधैः ९६
स्नेहेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्द्धनं
दानानिचप्रदेयानिभगिनीभ्योविधानतः ९७
स्वर्णालंकारवस्त्राणिपूजासत्कारसंयुतम्
भोक्तव्यंसहजायाश्चभगिन्याहस्ततःपरम् ९८
सर्वासुभगिनीहस्ताद्भोक्तव्यंबलवर्द्धनम्

ऊर्जेशुक्लद्वितीयायांपूजितस्तर्पितोयमः ९९
महिषासनमारूढोदंडमुद्गरभृत्प्रभुः
वेष्टितःकिंकरैर्हृष्टैस्तस्मैयाम्यात्मनेनमः १००
यैर्भगिन्यःसुवासिन्योवस्त्रदानादितोषिताः
नतेषांवत्सरंयावत्कलहोनरिपोर्भयम् १०१
धन्यंयशस्यमायुष्यंधर्मकामार्थसाधनम्
व्याख्यातंसकलंपुत्रसरहस्यंमयानघ १०२
यस्यांतिथौयमुनयायमराजदेवःसंभोजितःप्रतितिथौस्वसृसौहृदेन
तस्मात्स्वसुःकरतलादिहयोभुनक्तिप्राप्नोतिवित्तशुभसंपदमुत्तमांसः १०३
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्ससहस्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये
द्वाविंशत्यधिकशततमोऽध्यायः १२२

त्रयोविंशत्यधिकशततमोऽध्यायः

कार्तिकेयउवाच
भगवञ्च्छ्रोतुमिच्छामिव्रतानामुत्तमंव्रतम्
विधिंमासोपवासस्यफलंचास्ययथोदितम् १
यथाविधिनरैःकार्याव्रतचर्यायथाभवेत्
आरभ्यतेयथापूर्वंसमाप्यंहियथाविधि २
यावत्संख्यंतुकर्तव्यंतत्प्रब्रूहिमहेश्वर
व्रतमेतत्सुरश्रेष्ठविस्तरेणममानघ ३
श्रीरुद्रउवाच
साधुपावकिसर्वं तेयत्पृष्टंप्रब्रुवेऽनघ
भक्त्यामतिमतांश्रेष्ठशृणुष्वगदतोमम ४
सुराणांचयथाविष्णुस्तपतांचयथारविः
मेरुःशिखरिणांयद्वद्वैनतेयश्चपक्षिणाम् ५
तीर्थानांतुयथागंगाप्रजानांतुयथावणिक्
श्रेष्ठंसर्वव्रतानांतुतद्वन्मासोपवासनम् ६
सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुचैवहि
सर्वदानोद्भवंचैवलभेन्मासोपवासकृत् ७
अग्निष्टोमादिभिर्यज्ञैर्विविधैर्भूरिदक्षिणैः

नतत्पुण्यमवाप्नोतियन्मासपरिलंघनात् ८
तेनजप्तंहुतंदत्तंतपस्तप्तंकृतास्वधा
यःकरोतिविधानेननरोमासमुपोषणम् ९
उद्दिश्यवैष्णवंयज्ञंसमभ्यर्च्यजनार्दनम्
गुरोराज्ञांततोलब्ध्वाकुर्यान्मासोपवासनम् १०
वैष्णवानियथोक्तानिकृत्वासर्वव्रतानितु
द्वादश्यादीनिपुण्यानिततोमासमुपावसेत् ११
अतिकृच्छ्ंचपाराकंकृत्वाचांद्रायणंततः
मासोपवासंकुर्वीतज्ञात्वादेहबलाबलम् १२
वानप्रस्थोयतिर्वापिनारीवाविधवामुने
मासोपवासंकुर्वीतगुरोर्विप्राज्ञयाततः १३
आश्विनस्यामलेपक्षेएकादश्यामुपोषितः
व्रतमेतत्तुगृह्णीयाद्यावत्त्रिंशद्दिनानितु १४
वासुदेवंसमभ्यर्च्यकार्तिकंसकलंनरः
मासंचोपवसेद्यस्तुसमुक्तिफलभाग्भवेत् १५
अच्युतस्यालयेभक्त्यात्रिकालंकुमुदैःशुभैः
मालतींदीवरैःपद्मैःकमलैस्तुसुगंधिभिः १६
कुंकुमोशीरकर्पूरैर्विलिप्यवरचंदनैः
नैवेद्यधूपदीपाद्यैरर्चयेच्चजनार्दनम् १७
मनसाकर्मणावाचापूजयेद्गरुडध्वजम्
कुर्वन्नरस्त्रीविधवाबृहद्भक्तिर्जितेंद्रियः १८
नाम्नामेवतथालापंविष्णोःकुर्यादहर्निशम्
भक्त्याविष्णोस्तुतिर्वाच्यामिथ्यालापविवर्जिता १९
सर्वसत्वदयायुक्तःशांतवृत्तिरहिंसकः
सुप्तोबाह्यासनस्थोवावासुदेवंप्रकीर्तयेत् २०
स्मृत्वालोकनगंधादिस्वादितंपरिकीर्तितम्
अन्नस्यवर्जयेद्ग्रासंग्रासानांसम्प्रमोक्षणम् २१
गात्राभ्यंगंशिरोभ्यंगंतांबूलंसविलेपनम्
व्रतस्थोवर्जयेत्सर्वंयच्चान्यच्चनिराकृतम् २२
नव्रतस्थःस्पृशेत्किंचिद्विकर्मस्थंनचालयेत्

देवतायतनेतिष्ठन्गृहस्थश्चाचरेद्व्रतम् २३
कृत्वामासोपवासंतुयथोक्तविधिनानरः
नारीवाविधवासाध्वीवासुदेवंसमर्चयेत् २४
अन्यूनाधिकमेवंतुव्रतंत्रिंशद्दिनैरिति
कृत्वामासोपवासंतुसंयतात्माजितेंद्रियः २५
ततोऽचयेदेवपुरायंद्वादश्यांगरुडध्वजम्
पूजयेत्पुष्पमालाभिर्गंधधूपविलेपनैः २६
वस्त्रालंकारवाद्यैश्चतोषयेदच्युतंनरः
संस्नापयेद्धरिंभक्त्यातीर्थचंदनवारिभिः २७
चंदनेनानुलिप्तांगंधूपपुष्पैरलंकृतम्
वस्त्रदानादिभिश्चैवभोजयित्वाद्विजोत्तमान् २८
दद्याच्चदक्षिणांतेभ्यःप्रणिपत्यक्षमापयेत्
विप्रान्क्षमापयित्वातुविसृज्याभ्यर्च्यपूज्यच २९
एवंवित्तानुसारेणभक्तियुक्तेनशक्तितः
एवंमासोपवासान्हिकृत्वाभ्यर्चजनार्दनम् ३०
भोजयित्वाद्विजांश्चैवविष्णुलोकेमहीयते
एवंमासोपवासांतेवृत्वाविप्रांस्त्रयोदश ३१
निर्यापयेत्ततस्तान्वैविधिनायेनतच्छृणु
कारयेद्वैष्णवंयज्ञमेकादश्यामुपोषितः ३२
पूजयित्वातुदेवेशमाचार्यानुज्ञयाहरिम्
अर्चयित्वायथाशक्त्याह्यभिवाद्यगुरुंतथा ३३
ततोनुभोजयेद्विप्रान्नमस्कारपुरःसरम्
विशुद्धकुलचारित्रान्विष्णुपूजनतत्परान् ३४
पूजयित्वातथासर्वान्भोजयित्वात्रयोदश
तांबूलवस्त्रयुग्मानिभोजनाच्छादनानिच ३५
योगपट्टानिसूत्राणिब्रह्मसूत्राणिचैवहि
दत्त्वाचैवद्विजाग्र्येभ्यःपूजयित्वाप्रणम्यच ३६
ततोनुपूजयेद्भक्त्याशय्यास्तरणसंस्कृताम्
साच्छादनांशुभांश्रेष्ठांसोपधानामलंकृताम् ३७
कारयित्वात्मनोमूर्तिकांचनींतुस्वशक्तितः

न्यसेत्तस्यांतुशय्यायामर्चयित्वास्त्रगादिभिः ३८
आसनंपादुकाछत्रंवस्त्रयुग्ममुपानहौ
पवित्राणिचपुष्पाणिशय्यायामुपकल्पयेत् ३९
एवंशय्यांतुसंकल्प्यप्रणिपत्यचतान्द्विजान्
प्रार्थयेच्चानुमोदार्थंविष्णुलोकंव्रजाम्यहम् ४०
ततोव्रजेन्नरःप्रेष्ठंविष्णोःस्थानमनामयम्
मंडपस्थांस्तुतान्विप्रानितिवाच्यंमुहुर्मुहुः ४१
मंत्रहीनंभक्तिहीनंक्रियाहीनंद्विजोत्तमाः
सर्वंसंपूर्णतांयातुभवद्वाक्यप्रसादतः
विधिर्मासोपवासस्ययथावत्परिकीर्तितः ४२
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेश्रीकृष्णसत्यभामा
संवादेमासोपवासकथनंनामत्रयोविंशत्यधिकशततमोऽध्यायः १२३

चतुर्विंशत्यधिकशततमोऽध्यायः

ईश्वरउवाच
प्रबोधिन्याश्चमाहात्म्यंपापघ्नंपुण्यवर्द्धनम्
मुक्तिदंतत्वबुद्धीनांशृणुष्वसुरसत्तम १
तावद्गर्जतिसेनानिगंगाभागीरथीह्नितौ
यावन्नायातिपापघ्नीकार्तिकेहरिबोधिनी २
तावद्गच्छंतितीर्थानिआसमुद्रसरांसिच
यावत्प्रबोधिनीविष्णोस्तिथिर्नायातिकार्तिके ३
अश्वमेधसहस्राणिराजसूयशतानिच
एकेनैवोपवासेनप्रबोधिन्यांयथाऽभवत् ४
दुर्लभंचैवदुष्प्राप्यं त्रैलोक्येसचराचरे
तदपिप्रार्थितंविप्रददातिप्रतिबोधिनी ५
एश्वर्यंसंसृतिंज्ञानंराज्यंचसुखसंपदम्
ददात्युपोषिताविप्रहेलयाहरिबोधिनी ६
मेरुमंदरतुल्यानिपापान्युपार्जितानिच
एकेनैवोपवासेनदहतेहरिबोधिनी ७
उपवासंप्रबोधिन्यांयःकरोतिस्वभावतः

विधिनानरशार्दूलयथोक्तंलभतेफलम् ८
पूर्वजन्मसहस्रेषुपापंयत्समुपार्जितम्
जागरेणप्रबोधिन्यांदह्यतेतूलराशिवत् ९
शृणुषरामुखवक्ष्यामिजागरस्यचलक्षणम्
यस्यविज्ञानमात्रेणदुर्लभोनजनार्दनः १०
गीतंवाद्यंचनृत्यंचपुराणपठनंतथा
धूपंदीपंचनैवेद्यंपुष्पंगंधानुलेपनम् ११
फलमर्घ्यंचश्रद्धाचदानमिंद्रियसंयमम्
सत्यान्वितंविनिद्रंचमुदायुक्तंक्रियान्वितम् १२
साश्चर्यंचैवसोत्साहमालस्यादिविवर्जितम्
प्रदक्षिणादिसंयुक्तंनमस्कारपुरःसरम् १३
नीराजनसमायुक्तमनिर्विरणेनचेतसा
यामेयामेमहाभागकुर्वन्नीराजनंहरेः १४
एतैर्गुणैःसमायुक्तंकुर्याज्जागरणंविभोः
एकाग्रमानसोयस्तुनपुनर्जायतेभुवि १५
यएवंकुरुतेभक्त्यावित्तशाठ्यविवर्जितैः
जागरंवासरेविष्णोर्नीयतेपरमांगतिम् १६
पुरुषसूक्तेनयोनित्यंकार्तिकेअर्चयेद्धरिम्
वर्षकोटिसहस्राणिपूजितस्तेनकेशवः १७
यथोक्तेनविधानेनपंचरात्रोदितेनवै
कार्तिकेत्वर्चयेन्नित्यंमुक्तिभागीभवेन्नरः १८
नमोनारायणायेतिकार्तिकेयोऽचयेद्धरिम्
समुक्तोनारकैर्दुःखैःपदंगच्छत्यनामयम् १९
हरेर्नामसहस्रंचगजराजस्यमोक्षणम्
कार्तिकेपठतेयस्तुपुनर्जन्मनविंदति २०
युगकोटिसहस्राणिमन्वंतरशतानिच
द्वादश्यांकार्तिकेमासिजागरीवसतेदिवि २१
कुलेतस्यचसंजाताःशतशोऽथसहस्रशः
प्राप्नुवंतिपदंविष्णोस्तस्मात्कुर्वीतजागरम् २२
कार्तिकेपश्चिमेयामेस्तवंगानंकरोतियः

श्वेतद्वीपेतुवसतेपितृभिःसहभामिनि २३
नैवेद्यदानंहरयेकार्तिकेदिनसंक्षये
युगानिवसतेस्वर्गेतावंतिमुनिसत्तमाः २४
अक्षयंमुनिशार्दूलमालतीकमलार्चनम्
अर्चयेद्देवदेवेशंसयातिपरमंपदम् २५
कार्तिकेशुक्लपक्षेतुकृत्वाह्येकादशींनरः
प्रातर्दत्त्वाशुभान्कुंभान्सयातिममर्मंदिरम् २६
कार्त्तिकेयउवाच
भगवन्नुच्यतांपुरयंव्रतानांपरमंव्रतम्
कर्तव्यंकार्तिकेमासिभवताभीष्मपंचकम् २७
विधानंतस्यचफलंतथैवसुरसत्तम
कथयस्वप्रसादान्मेमुनीनांचपितामह २८
ईश्वरउवाच
प्रवक्ष्यामिमहापुरयंव्रतंविधिमतांवरः
भीष्मेणैतद्यतःप्राप्तंव्रतंपंचदिनात्मकम् २९
सकाशाद्वासुदेवस्यतेनोक्तंभीष्मपंचकम्
व्रतस्यास्यगुणान्वक्तुंकःशक्तःकेशवादृते ३०
कार्त्तिकेशुक्लपक्षेतुशृणुधर्मंपुरातनम्
वसिष्ठभृगुगर्गाद्यैश्चीर्णंकृतयुगादिषु ३१
अंबरीषेणभोगाद्यैश्चीर्णं त्रेतायुगादिषु
ब्राह्मणैर्ब्रह्मचर्येणजपहोमक्रियादिभिः ३२
क्षत्रियैश्चतथावैश्यैःसत्यशौचपरायणैः
दुष्करंसत्यहीनानामशक्यंबालचेतसाम् ३३
दुष्करंभीष्ममित्याहुर्नशक्यंप्राकृतैर्नरैः
यस्तत्करोतिविप्रेंद्रतेनसर्वंकृतंभवेत् ३४
व्रतंचैतन्महापुरयंमहापातकनाशनम्
अतोनरैःप्रयत्नेनकर्त्तव्यंभीष्मपंचकम् ३५
कार्तिकस्यामलेपक्षेस्नात्वासम्यग्विधानतः
एकादश्यांतुगृह्णीयाद्व्रतंपंचदिनात्मकम् ३६
प्रातःस्नात्वाविशेषेणमध्याह्नेचतथाव्रती

नद्यांनिर्भरगर्तेवासमालभ्यचगोमयम् ३७
यवव्रीहितिलैःसम्यक्पितॄन्संतर्पयेत्क्रमात्
स्नात्वामौनंनरःकृत्वाधौतवासादृढव्रतः ३८
भीष्मायोदकदानंचअर्घ्यंचैवप्रयत्नतः
पूजाभीष्मस्यकर्त्तव्यादानंदद्यात्प्रयत्नतः ३९
पंचरत्नंविशेषेणदत्त्वाविप्राययत्नतः
वासुदेवोऽपिसंपूज्योलक्ष्मीयुक्तःसदाप्रभुः ४०
पंचकेपूजयित्वातुकोटिकल्पानितुष्यति
यत्किंचित्क्रियतेसर्वंपंचधातुप्रकल्पयेत् ४१
संवत्सरव्रतानांचलभतेसकलंफलम्
कृत्वातूदकदानंतुतथार्घ्यस्यचदापनम् ४२
मंत्रेणानेनयःकुर्यान्मुक्तिभागीभवेन्नरः ४३
वैयाघ्रपादगोत्रायसांकृतेप्रवरायच
अपुत्रायददाम्येतदुदकंभीष्मवर्मणे ४४
वसूनामवतारायशंतनोरात्मजायच
अर्घ्यंददामिभीष्मायआजन्मब्रह्मचारिणे ४५
इतिअर्घ्यमंत्रः
अनेनविधिनायस्तुपंचकंतुसमापयेत्
अश्वमेधसमंपुण्यंप्राप्नोत्यत्रनसंशयः ४६
पंचाहमपिकर्तव्यंनियमंचप्रयत्नतः
नियमेनविनापुत्रनभाव्यंव्रतकर्मणा ४७
उत्तरायणहीनायभीष्मायप्रददौहरिः
उत्तरायणहीनोऽपिशुद्धिंलग्नंविनाशुभाः ४८
ततःसंपूजयेद्देवंसर्वपापहरंहरिम्
अनंतरंप्रयत्नेनकर्तव्यंभीष्मपंचकम् ४९
स्नापयेतजलैर्भक्त्यामधुक्षीरघृतेनच
तथैवपंचगव्येनगंधचंदनवारिणा ५०
चंदनेनसुगंधेनकुंकुमेनाथकेशवम्
कर्पूरोशीरमिश्रेणलेपयेद्गरुडध्वजम् ५१
अर्चयेद्रुचिरैःपुष्पैर्गंधधूपसमन्वितैः

गुग्गुलुंघृतंसंयुक्तंदहेत्कृष्णायभक्तिमान् ५२
दीपकंतुदिवारात्रौदद्यात्पंचदिनादिषु
नैवेद्यंदेवदेवस्यपरमान्नंनिवेदयेत् ५३
एवमभ्यर्चयेद्देवंसंस्मृत्यचप्रणम्यच
ॐनमोवासुदेवायजपेदष्टोत्तरंशतम् ५४
जुहुयाच्चघृताभ्यक्तैस्तिलव्रीहियवादिभिः
षडक्षरेणमंत्रेणस्वाहाकारान्वितेनच ५५
उपास्यपश्चिमांसंध्याप्रणम्यगरुडध्वजम्
जपित्वापूर्ववन्मंत्रक्षितिशायीभवेद्व्रती ५६
सर्वमेतद्विधानंतुकार्यंपंचदिनानितु
विशेषोऽत्रव्रतेह्यस्मिन्यदन्यूनंशृणुष्वतत् ५७
प्रथमेऽह्निहरेःपादौपूजयेत्कमलैर्व्रती
द्वितीयेबिल्वपत्रेणजानुदेशंसमर्चयेत् ५८
ततोनुपूजयेच्छीर्षंमालत्याचक्रपाणिनः
कार्तिक्यांदेवदेवस्यभक्त्यातद्गतमानसः ५९
अर्चित्वातंहृषीकेशमेकादश्यांसमासतः
निष्प्राश्यगोमयंसम्यगेकादश्यामुपावसेत् ६०
गोमूत्रंमंत्रवद्भूमौद्वादश्यांप्राशयेद्व्रती
क्षीरंचैवत्रयोदश्यांचतुर्दश्यांतथादधि ६१
संप्राश्यकायशुद्ध्यर्थंलंघयित्वाचतुर्दिनम्
पंचमेदिवसेस्नात्वाविधिवत्पूज्यकेशवम् ६२
भोजयेद्ब्राह्मणान्भक्त्यातेभ्योदद्याच्चदक्षिणाम्
पापबुद्धिंपरित्यज्यब्रह्मचर्येणधीमता ६३
मद्यंमांसंपरित्यज्यमैथुनंपापकारिणम्
शाकाहारेणमुन्यन्नैःकृष्णार्चनपरोनरः ६४
ततोनक्तंसमाश्नीयात्पंचगव्यपुरःसरम्
एवंसम्यक्समाप्तस्ययथोक्तंफलमाप्नुयात् ६५
मद्यपोयत्पिबेन्मद्यंजन्मनोमरणांतिकम्
एतद्भीष्मव्रतंकृत्वाप्राप्नोतिपरमंपदम् ६६
स्त्रीभिर्ब्राह्मणवाक्येनकर्तव्यंधर्मवर्द्धनम्

विधवाभिश्चकर्तव्यंमोन्नसौख्याभिवृद्धये ६७
सर्वकामसमृद्ध्यर्थंपुरायार्थमपिपावके
नित्यस्नानेतथादानेयेकार्तिकमुपासते ६८
वैश्वदेवश्चकर्तव्योविष्णुध्यानपरायरौः
आरोग्यपुत्रदोवत्समहापातकनाशनः ६९
तीर्थेषुकार्तिकंकुर्यात्सर्वयत्नेनषरामुख
संवत्सरव्रतानांतुसमाप्तिःकार्तिकेमता ७०
पापस्यप्रतिमाकार्यारौद्रवस्त्रातिभीषरा
खड्गहस्ताविनिष्क्रांतालोहदंष्ट्राकरालिनी ७१
तिलप्रस्थोपरिस्थाप्याकृष्णवस्त्राभिवेष्टिता
रक्तपुष्पकृतापीडाज्वलत्कांचनकुंडला ७२
संपूज्यपरयाभक्त्याधर्मराजस्यनामभिः
इममुच्चारयेन्मंत्रंगृहीतकुसुमांजलि ७३
यदन्यजन्मनिकृतमिहजन्मनिवापुनः
पापंप्रशममायातुतवपादप्रसादतः ७४
एवंसंपूज्यविधिवत्प्रतिमांतांचकांचनीम्
कृत्वापूजांयथाशक्त्याविप्राणांवेदवादिनाम् ७५
प्रीतयेदेवदेवस्यकृष्णस्याक्लिष्टकर्मणः
ब्राह्मणायप्रदातव्यंधर्मोमेप्रीयतामिति ७६
वाचकायप्रदातव्यायथाशक्त्याचदन्निणा
दद्याद्धिररायंगाश्चैवकृष्णोमेप्रीयतामिति ७७
कृतकृत्यस्थितोभूत्वाविरक्तःसंयतोभवेत्
अन्येषामपिदातव्यंस्वशक्त्यादानमुत्तमम् ७८
शांतचित्तोनिरपराधःपरंपदमवाप्नुयात्
नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः ७९
अष्टपादैकनयनःशंकुकर्णःखरस्वनः
जडीद्विजिह्वस्ताम्रान्नोमृगराजतनुच्छदः ८०
चिंतनीयोमहादेवोयस्यरूपंनविद्यते
इंदभीष्मेणकथितंशरतल्पगतेनमे ८१
तदेतत्तेमयाख्यातंदुष्करंभीष्मपंचकं

धन्यंपुरायंपापहरंयुधिष्ठिरमहाव्रतम्
यत्कृत्वाब्रह्महागोघ्नःसर्वपापैःप्रमुच्यते ८२
यद्भीष्मपंचकमितिप्रथितंपृथिव्यामेकादशीप्रभृतिपंचदशीनिरुद्धम्
उक्तंनभोजनपरस्यतदानिषेधस्तस्मिन्व्रतेशुभफलंप्रददातिविष्णुः ८३
सूतउवाच
एतत्सर्वाधिकंपुरायंदुर्लभंभुवनेकृतम्
इदंगुह्यंमयाख्यातंशास्त्रसारसमुच्चयम् ८४
सुराणांगोपितंसर्वमतिगुह्यंचमोक्षदम्
श्रुत्वाचैकपदेदेविअगम्यागमनेरताः ८५
कन्याविक्रीस्वसाविक्रीह्युभयंतुविमोचयेत्
मोक्षदंचइदंशास्त्रंप्रकाशंनेतरेजने ८६
श्रुत्वाचैकपदेयस्तुमोक्षंगच्छतिमानवः
गोपनीयंप्रयत्नेनयेचापित्यागिनोनराः ८७
नतेषांकथ्यतेपुरायंसत्यंसत्यंचषरामुख
इत्येतत्सर्वमाख्यातंकार्तिकस्यतुयत्फलम् ८८
श्रीविष्णुरुवाच
कथितंदेवदेवेनपुत्रायहितकाम्यया
पितुस्तद्वाक्यमाकरार्यषरामुखोहर्षनिर्भरः ८९
ऊचुःप्रांजलयःसर्वेतंदेवंजगदायुषम्
कृतकृत्यावयंजाताःश्रुत्वाकार्तिकजंफलम् ९०
अपरंनास्तिश्रोतव्यंप्राप्तंमेजन्मनःफलम्
माहात्म्यमेतदाकरार्यपूजयेद्यस्तुपाठकम् ९१
गोभूहिरगयवस्त्रैश्चविष्णुतुल्योयतोहिसः
वाचकेपूजितेयस्माद्विष्णुर्भवतिपूजितः ९२
तथातंपूजयेन्नित्यंयदीच्छेत्सफलंशुभम्
धर्मशास्त्रंपुराणंचवेदविद्यादिकंचयत् ९३
पुस्तकंवाचकायैवदातव्यंधर्ममिच्छता
पुराणविद्यादातारोह्यनंतफलभोजिनः ९४
यःपठेतइदंभक्त्याश्रुत्वाचैवावधारयेत्
मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ९५

धनंधान्यंयशःपुत्रानायुरारोग्यमेवच
माहात्म्यश्रवणादेवलभ्यतेचनसंशयः ९६
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्त्रसंहितायामुत्तरखंडेकार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेचतुर्विंशत्यधिकशततमोध्यायः १२४

## पञ्चविंशत्यधिकशततमोऽध्यायः

ऋषयऊचुः
सूतसूतमहाभागत्वयालोकहितैषिणा
कथितंकार्तिकाख्यानंभुक्तिमुक्तिप्रदायकम् १
अधुनामाघमाहात्म्यंवदनोलोमहर्षणे
श्रुतेनयेनलोकानांसंशयःक्षीयतेमहान् २
पुराकेनमहाभागलोकेऽस्मिन्संप्रकाशितम्
माघस्नानस्यमाहात्म्यंसेतिहासंतदादिश ३
सूतउवाच
साधुसाधुमुनिश्रेष्ठायूयंकृष्णपरायणः
यत्पृच्छथमुदायुक्ताभक्त्याकृष्णकथामुहुः ४
कथयिष्यामिमाघस्यमाहात्म्यंपुण्यवर्धनम्
पापघ्नंशृणवतांपुंसांस्नातानांचारुणोदये ५
एकदापार्वतीविप्राःशंकरंलोकशंकरम्
पप्रच्छविनयोपेतास्पृष्ट्वातच्चरणांबुजम् ६
पार्वत्युवाच
देवदेवमहादेवभक्तानामभयप्रद
प्रसीदनाथविश्वेशयत्पृच्छेतद्वदाधुना ७
श्रुतानानाविधाधर्मास्त्वत्तःपूर्वंमयाविभो
अधुनाश्रोतुमिच्छामिमाहात्म्यंमाघजंवद ८
तत्तुकेनपुराचीर्णंकोविधिःकाचदेवता
तत्सर्वंविस्तराद्ब्रूहियतस्त्वंभक्तवत्सलः ९
महेशउवाच
अध्वराऽवभृथस्नातऋषिभिःकृतमंगलः
पूजितोनागरैःसर्वैःस्वपुरान्निर्गतोबहिः १०

दिलीपोभूभृतांश्रेष्ठोमृगयारसिकोनृपः
कौतूहलसमाविष्टश्राखेटव्यूहसंवृतः ११
उपानद्गूढपादस्तुनीलोष्णीषउरच्छदी
बद्धगोधांगुलित्राणोधनुष्पाणिःसरीसृपः १२
बद्धक्षुद्रासिधानुष्कैस्तथाभूतैश्चपत्तिभिः
गांधारेषुसुरम्येषुवनेषुविपुलेषुच १३
उल्लंघितमहास्रोतायुवापंचास्यविक्रमः
मुदाक्रीडतितैःसार्द्धंकुंजेषुमृगयन्मृगान् १४
हन्यतांहन्यतामेषमृगोवैषपलायते
इतिजल्पन्स्वभृत्येषुस्वयमुत्पत्त्यहंतिच १५
इतस्ततःपुनर्यातिक्वचित्पश्यन्वनस्थलीम्
विटपोड्डीनसंत्रस्तलीनकेकिकुलाकुलाम् १६
हरिणीगणवित्रस्तांधावच्छावकदिङ्मुखाम्
क्वचित्फेरवफेत्कारताराराववि भीषणाम् १७
खड्गयूथैःक्वचिल्लक्ष्मींदधानामिवदंतिनाम्
क्वचित्कोटरसंदष्टोलूकनादविनादिनीम् १८
मृगारिपदमुद्राभिर्मुद्रितांचक्वचित्क्वचित्
शार्दूलनखनिर्भिन्नरोहिद्रक्तारुणांक्वचित् १९
पीवरस्तनभारार्तसुस्निग्धमहिषीगणैः
अवरोधाजिरक्षोणींसूचयंतीमनःक्वचित् २०
क्वचिद्वृक्षघनच्छन्नांवन्यपुष्पसुगंधिनीम्
क्वचिल्लतागृहद्वारांभृंगशब्दसुशोभनाम् २१
अर्धनिःसृतनिर्मोकनागभीमबृहद्बिलाम्
बिलेषुलीनाजगरैर्भीमांनिर्मोकसर्पिणीम् २२
क्वचिद्दावानलज्वालांशिलाज्योतिःसुशोभनाम्
फूत्कारशब्दसंपूर्णांमृगव्याघ्रसमाकुलाम् २३
प्रविमुंचञ्छुनांयूथंशशकेषुक्वचित्क्वचित्
पल्वलेषुचविश्रम्यपुनर्यातिवनान्तरम् २४
एवंव्रजतिराजेन्द्रेव्याधवर्गेचवल्गति
कुर्वन्कोलाहलंतत्रसारंगोनिर्गतोवनात् २५

स्फालवेगक्रमाक्रांतदुर्गमार्गमहीतलः
कदाचिद्गगनारूढःकदाचिद्भूमिगोचरः २६
वक्रस्रोतोऽतिगंभीरंकराटकद्रुमसंकुलम्
प्रविष्टोविषमाररायंराजाऽसौतत्पदानुगः २७
दूराद्दूरतरंगत्वादेशाद्देशंचनिर्जनम्
मृगादर्शनसंरम्भसंशुष्कगलकन्धरः २८
ताम्रतालुमुखःस्विन्नःश्रांतपत्तिःस्खलद्ध्वनिः
अतीत्यदीर्घमार्गान्सतृषार्तोमध्यगेरवौ २९
ददर्शाग्रेतुकासारंस्पर्धयंतमपांपतिम्
घनपादपतीरस्थंसुतीर्थंविमलंशुभम् ३०
विशालंविकचांभोजंमधुमत्तमधुव्रतम्
पद्मिनीपत्रपालाशच्छन्नंमरकतैरिव ३१
स्वच्छंदमुच्छलन्मत्स्यंस्वच्छंसाधुमनोयथा
चलज्जलचरैर्मिश्रंवीचिराजिविराजितम् ३२
अंतर्ग्राहगणाक्रूरंखलानामिवमानसम्
क्वचिच्छैवालदुर्गम्यंकृपणस्यैवमंदिरम्
नानाविहङ्गसर्वार्तिंशमयंतंदिवानिशम् ३३
दातारमिवसर्वस्वैरापन्नार्तिप्रणाशनम्
तर्पयंतंनिजांभोभिःश्वापदान्स्वपितॄनिव ३४
हरंतंसर्वसंतापंहिमांशुरिवचाह्निकम्
तंदृष्ट्वाभूद्गतग्लानिश्चातकोजलदंयथा ३५
तत्रपीतजलोराजाकृतमाध्याह्निकक्रियः
भुक्त्वाखेटकमांसानिसहायैःसहितोनृपः ३६
उवाससरसस्तीरेसुरम्यांकथयन्कथाम्
ततःशरासनेबाणंकृत्वारात्रौस्थितस्तरौ ३७
व्याधाःसंधानमास्थायरुरुधुःककुभांपथः
एवंस्थितेषुवीरेषुवनेविस्तार्यवागुराम् ३८
निशार्धेनिर्गतंयूथंसूकराणांतटेतटे
चरित्वासरसीकंदान्पपातव्याधसंकुले ३९
राज्ञाविद्धाश्चतेक्रोडाव्याधैश्चबहवोहताः

न्नणेनैववराहास्तेविद्धाःपेतुर्महीतले ४०
तान्दृष्ट्वातुमुलंनादंव्याधाश्चक्रुःसुदर्पिताः
धावंतःप्रमुदायुक्तामिलितायत्रभूपतिः ४१
तानादायभटैर्भूयोनिःसृतःसरसीतटात्
स्वपुरंगंतुकामोऽसौदृष्टवान्पथितापसम् ४२
ब्राह्मणंवृद्धहारीतंशंखचक्रसुशोभितम्
नियमैर्दुष्करैरुग्रैःपरिन्नीणकलेवरम् ४३
अस्थिशेषंमहद्दांतंविस्फुरत्कर्कशत्वचम्
दधानंहारिणंचर्मवसानंमृदुवल्कलम् ४४
कुर्वाणं नैगमंजाप्यंनखलोमजटाधरम्
तंवनाश्रमिणंदृष्ट्वामार्गंदत्त्वाससंभ्रमः ४५
प्रणम्यशिरसाराजाकृतपद्मांजलिस्थितः
अथचैनमलंकारैर्द्विजोनिश्चित्यभूमिपम् ४६
उवाचश्रेयसेहेतोःपरोपकृतिवांच्छया
किमर्थंगम्यतेराजन्कालेपुण्यतमेशुभे ४७
माघमासेविहायैवप्रातःस्नानंसरोवरे
प्रत्युवाचततोराजानाहंजानेद्विजोत्तम ४८
माघस्नानफलंकीदृक्तन्मेकथयविस्तरात्
इतिभूपवचःश्रुत्वाप्राहवैखानसोमुनिः ४९
भगवान्द्युमणिःशीघ्रमभ्युदेतितमोपहा
स्नानकालोऽयमस्माकंनकथाऽवसरोनृप ५०
स्नात्वागच्छवसिष्ठंतंपृच्छस्वस्वकुलप्रभुम्
इत्युक्त्वातापसोमौनीप्रातःस्नानायनिर्गतः ५१
प्रत्यावृत्यदिलीपोऽपितत्रस्नात्वायथाविधि
पुनःस्वनगरींवीरोगतोऽसौहर्षपूरितः ५२
अन्तःपुरेनिवेद्याथवानप्रस्थकथांपुनः
श्वेताश्वरथमारुह्यसुश्वेतच्छत्रचामरः ५३
सालंकारःसुवासाश्चसंवृत्तोमंत्रिभिःसह
जयशब्दान्पुनःशृण्वन्स्तुतोमागधबंदिभिः ५४
वसिष्ठस्याश्रमंयातऋषिवाक्यमनुस्मरन्

तत्रैवनत्वाब्रह्मर्षिंविनयाचारपूर्वकम् ५५
दत्तासनोगृहीतार्घ्यश्राशीर्भिःसमलंकृतः
सानंदंमुनिनापृष्टःकुशलंभूपतिर्यदा ५६
तदाब्रवीद्वचोराजाहर्षयन्मुनिमानसम्
सोऽपिवैखानसेनोक्तंपप्रच्छमधुराकृतिः ५७
दिलीपउवाच
भगवंस्त्वत्प्रसादेनश्रुताविस्तरतोमया
श्राचारोदंडनीतिश्चराजधर्माश्चयेपरे ५८
चतुर्णामपिवर्णानामाश्रमाणांचयाःक्रियाः
दानानितद्विधानानियज्ञाश्चविधयस्तथा ५९
व्रतानितत्प्रदिष्टानिविष्णोराराधनंतथा
श्रधुनाश्रोतुमिच्छामिमाघस्नानेचयत्फलम्
विधेयंयद्विधानेनतन्मेब्रह्मन्मुनेवद ६०
वसिष्ठउवाच
सम्यगुक्तंपरंश्रेयोलोकत्रयहितावहम्
निर्मलीकरणंतेनमुनिनावनवासिना ६१
कटाक्षैःकामिनीनांतेप्रत्यासन्नमखंडिताः
कामयंतेमृगार्केतेस्त्रोतसिस्नातुमेवच ६२
विनावह्निंविनायज्ञमिष्टापूर्तंविनाप्रिये
वांच्छंतिसद्गतिंस्नातुंप्रातर्माघेबहिर्जले ६३
गोभूहिरगयमाणिक्यस्वर्णधेन्वादिकानिये
श्रदत्त्वेच्छंतिचैकार्णेमाघंस्नातानराधिप ६४
त्रिःसप्ताहव्रतैःकृच्छ्रैःपराकैश्चनिजांतनुम्
श्रशोष्येच्छंतियेस्वर्गंतपसिस्नांतुतेसदा ६५
हरेःपूजाचवैशाखेतपःपूजाचकार्तिके
तपोहोमस्तथादानंत्रयंमाघेविशिष्यते ६६
सानुबंधोऽतिपर्यासोधराधीशोभवेद्ध्रुवम्
कैवल्योत्पादकाबुद्धिययावानभवेत्पुनः ६७
पदध्यावरिवस्यासाविहितादिव्यलोचनैः
तदनन्नंतपोदानंमाघेमासिनृपोत्तम ६८

सकामोवाप्रजायेवाहरयेतद्विनापिवा
कायशुद्धिव्रतीभूत्वाचतुर्द्धास्नानजंफलम् ६९
निरन्नाश्रदितिःसस्नौमाघेद्वादशवत्सरे
पुत्रांश्चद्वादशादित्यान्लभेत्रैलोक्यदीपकान् ७०
सुभगारोहिणीमाघादानशीलात्वरुंधती
शचीचरूपसंपन्नाप्रासादेसप्तभूमिके ७१
विमलीकृतशोभाढ्योनर्तकीललिताजिरे
द्वीपवर्णसमुच्छिन्नेरूपवत्स्त्रीजनाकुले ७२
गीतवादित्रनिर्घोषेमंगलाचारशोभिते
वेदध्वनिपवित्रेचविद्वद्विप्रैरलंकृते ७३
सुरार्चनरतेरम्येसदातिथिनिषेविते
मुदितांस्तेवसंतीहयैःस्नानंमकरेरवौ ७४
यैर्दत्तंबहुमाघेचमुरारिश्चार्चितःस्तुतः
इष्टवस्तुपरित्यागान्नियमस्यतुपालनात् ७५
धर्मसूतिःसदामाघःपापमूलंनिकृंतति
काममूलःफलद्वारानिष्कामोज्ञानदःसदा ७६
येलोकाज्ञानशीलानांयेलोकाविपिनौकसाम्
येलोकाविष्णुभक्तानांतेमाघस्नायिनांसदा ७७
देवलोकान्निवर्तंतेपुण्यैरन्यैःपरंतप
कदाचिन्ननिवर्तं तेमाघस्नानरतानराः ७८
माघेस्नात्वातुयोधेनुंदद्यान्मर्त्यःपयस्विनीम्
तस्यायावंतिरोमाणिसर्वांगेचनृपोत्तम ७९
तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते
माघस्नानंप्रकुर्वाणोयोदद्यात्सगुडांस्तिलान् ८०
पातकंतस्यप्रक्षाल्यनिर्मलोभातिवैनरः
सर्वेषांधान्यराशीनांतिलाःपापप्रणाशनाः ८१
तस्मान्माघेप्रयत्नेनतिलादेयानृपोत्तम
माघस्नानंप्रकुर्वाणोदद्याद्ब्राह्मणभोजनम् ८२
पितॄन्संतर्प्यशुद्धात्मायातिविष्णोःपरंपदम्
तस्मात्सर्वप्रयत्नेनमाघोदानेननीयते ८३

अदानंनक्षिपेन्माघंसर्वदानृपसत्तम
वित्तानुसारंज्ञात्वावैमाघेदानंसदाददेत् ८४
माघस्नानंतुयःकुर्यादुपानहकमंडलून्
ददातिब्राह्मणेभ्यश्चसस्वर्गेतिष्ठतिध्रुवम् ८५
माघस्नानमयंराजन्कुर्वाणस्तपउत्तमम्
दानंविनाक्षिपेन्नैवदानात्स्वर्गमवाप्यते ८६
दानेनप्राप्यतेस्वर्गोदानेनप्राप्यतेसुखम्
दानेनहीयतेपापंमहापातकजंनृप ८७
अदानंनतपोभातिह्यसूर्यंगगनंयथा
असंततिकुलंयद्वादाचारेणविनागृहम् ८८
नातःपरतरंकिंचित्पवित्रंपापनाशनम्
विद्याधरायसंगीतंभृगुणामणिपर्वते ८९
राजोवाच
ब्रह्मन्कदाभृगुर्विप्रोनिजगादमहीधरे
तस्मैधर्मोपदेशंचकथ्यतांमेकुतूहलात् ९०
वसिष्ठउवाच
द्वादशाब्दंपुराराजन्नववर्षबलाहकः
तेनोद्विग्नाःप्रजाःक्षीणागताःसर्वादिशोदश ९१
खिलीभूतेतदामध्येहिमवद्विंध्ययोर्नृप
स्वाहास्वधावषट्कारवेदाध्ययनवर्जिते ९२
सोपप्लवेतदालोकेलुप्तधर्मेचनिष्प्रभे
फलमूलान्नपानीयशून्येवैभूमिमंडले ९३
विंध्यपादतरुच्छन्नरम्यरेवातटाश्रमात्
सहशिष्यैश्चनिर्गम्यहिमाद्रिंसगतोभृगुः ९४
तत्रतिष्ठतिकैलासगिरेःपश्चिमतोगिरिः
मणिकूटइतिख्यातोहेमरत्नशिलोच्चयः ९५
अधोऽधस्फटिकश्वेतोमध्येनीलशिलोगिरिः
भूतिभिःसर्वतःशुक्लोनीलकंठइवाबभौ ९६
सर्वत्रासौनीलशिलोहेमरेखांतरांतरः
स्फुरद्विद्युल्लतःकृष्णोजीमूतइवराजते ९७

मूर्ध्निनीलशिलः शैलग्रधः कांचनमेखलः
नारायणइवाभातिपरिवीतइवांबरः ९८
ग्रमेखलासुनीलाभोमध्येमध्येसितोपलः
सतारकमिवव्योमशुशुभेसमहीधरः ९९
लब्ध्वात्मनस्तनुंशुभ्रांदीप्तदिव्यौषधीधरः
बहुद्योतकरोभातिद्वितीयइवचंद्रमाः १००
ग्रधित्यकासुसंगीतैः किन्नरीणांसकीचकैः
रंभापत्रपताकाभिः शोभतेससदाऽचलः १०१
हरितोपलवैदूर्यपद्मरागशिताश्मनाम्
रुग्रश्मिमंडलैः सोऽगइंद्रचापैरिवावृतः १०२
सर्वधातुमयैर्हैमैर्नानारत्नैः प्रशोभितः
सोऽग्निज्वालैरिवात्युच्चैः शृगैः सर्वत्रवेष्टितः १०३
तस्यागत्यनितंबेषुसतृणासुशिलासुच
विद्याधर्यः प्रदेवंतेस्वपतीन्कामविक्लवाः १०४
निरुद्धांतर्मरुन्मार्गाजितक्लेशाविरागिणः
ध्यायंत्यहर्निशंब्रह्मरम्यसानुगुहासुच १०५
साक्षसूत्रकराः सिद्धाग्रर्धोन्मीलितलोचनाः
ग्राराधयंतिभूतेशंसुंदरीषुदरीषुच १०६
मंदारकुसुमामोदसुरभीकृतदिङ्मुखः
एषनिर्झरिणीवारिझंकारमुखरः सदा १०७
उपत्यकासुखेलद्भिर्वनस्थैः कलभैर्गजैः
कस्तूरीमृगयूथैश्चचारुचित्रमृगैस्तथा १०८
विलसच्चामरीवृंदैर्विचित्रैः श्वापदैस्तथा
नदत्पारावतैश्चैवचकोरैश्चापिकोकिलैः १०९
राजहंसमयूरैश्चसदारम्यः सपर्वतः
सेव्यमानः सदादेवैर्गुह्यकैरप्सरोगणैः ११०
राजोवाच-
वह्वाश्चर्यमयः शैलः सर्वसिद्धिसमाश्रयः
भगवन्कियदुच्छ्रायः कियदायामविस्तरः १११
ऋृषिरुवाच

षट्त्रिंशद्योजनोच्छ्रायोमस्तकेदशयोजनः
आयामविस्तराभ्यांसमूलेषोडशयोजनः ११२
हरिचंदनमंदारचूतराजिविराजितः
देवदारुद्रुमाकीर्णःसरलार्जुनशोभितः ११३
कालागरुलवंगैश्चनिकुंजैश्चलतागृहैः
विराजतेगिरिश्रेष्ठःसदापुष्पफलप्रदः ११४
तंदृष्ट्वापर्वतंरम्यंतदादुर्भिक्षपीडितः
भृगुश्चकारतत्रैववसतिंहृष्टमानसः ११५
तस्मिन्मनोहरेशैलेकंदरेषुवनेषुचा
चिरकालंतपस्तेपेतपःसुनिरतोभृगुः
एवंतिष्ठतिराजेंद्रद्विजेस्वाश्रमवासिनि ११६
अवतीर्यागतौशैलाद्द्वौविद्याधरदंपती
समागम्यमुनिंनत्वास्थितौतावतिदुःखितौ ११७
तथाविधौचतौदृष्ट्वामंजुवाक्यंद्विजोऽब्रवीत्
वदविद्याधरप्रीत्यायुवांकिमतिदुःखितौ ११८
श्रुत्वातस्यमुनेर्वाक्यंप्राहविद्याधरोद्विजम्
श्रूयतांतापसश्रेष्ठममदुःखस्यकारणम् ११९
सुकृतस्यफलंप्राप्यप्राप्तोऽस्मित्रिदशालयम्
लब्ध्वाऽपिदेवतादेहंमुखंव्याघ्रस्यमेऽभवत् १२०
नजानेकर्मणःकस्यविपाकोऽयमुपस्थितः
इतिसंस्मृत्यसंस्मृत्यनलेभेशर्ममेमनः १२१
अन्यच्चश्रूयतांविप्रयेनमेह्याकुलंमनः
जायेयंममकल्याणीमधुवाणीसुरूपिणी १२२
नृत्यगीतकलाभिज्ञासर्वसद्गुणशालिनी
यस्मिन्कालेकुमारीयंतदाचाऽमलयानया १२३
विपंचींपरिवादिन्यातंत्रीभिःसप्तभिर्भृशम्
वीणावादरसाभिज्ञस्तोषितनारदोमुनिः १२४
मुग्धभावेपिगायंत्यात्वनयारक्तकंठया
विचित्रस्वरनादज्ञोदेवराजोऽपितोषितः १२५
अस्याःकौतुकभिन्नांग्यावादयंत्याविपंचिकाम्

नानावक्रगतिस्निग्धंश्रुत्वातंपंचमध्वनिम् १२६
तुतोषोद्भिन्नरोमांचोधुन्वन्मौलिमहेश्वरः
शीलौदार्यगुणग्रामरूपयौवनसंपदा १२७
नानयासदृशीनाकेकाचिदस्तिनितंविनी
क्वेयंदेवमुखीरामाक्वाहंव्याघ्रमुखःपुमान् १२८
इतिब्रह्मन्सदाचिंत्यदह्यामिहृदिसर्वदा
इतिविद्याधरप्रोक्तंश्रुत्वाचेक्ष्वाकुनंदनः १२९
त्रिकालज्ञोभृगुःप्राहप्रहसन्दिव्यलोचनः
शृणुविद्याधरश्रेष्ठविचित्रंकर्मणांफलम् १३०
प्राप्यप्राज्ञानमुह्यंतिमुह्यंत्यिज्ञानचेतसः
मक्षिकापदमात्रंतुयथाहिविषमंविषम् १३१
क्रियात्वविहिताल्पापिविपाकेदारुणातथा
उपोष्यैकादशींमाघेतैलाभ्यंगःकृतस्त्वया १३२
द्वादश्यांप्राग्भवेदेहेतेनव्याघ्रमुखोभवान्
उपोष्यैकादशींपुण्यांद्वादश्यां तैलसेवनात् १३३
कुरूपंप्राप्तवान्देहंपुराह्येवंपुरूरवाः
दृष्ट्वात्मनःकुकायंसतेनदुःखेनदुःखितः १३४
गिरिराजंसमागम्यदेवतासरसस्तटे
स्थित्वाचपरमप्रीत्याशुचिःस्नातःकुशासने १३५
नवनीलघनश्यामंनलिनायतलोचनम्
शंखचक्रगदापद्मधरंपीतांवरावृतम् १३६
कौस्तुभेनविराजंतंवनमालाधरंहरिम्
चिंतयन्हृदयेराजानिग्रहीताखिलेंद्रियः १३७
मासत्रयंनिराहारस्तपस्तेपेसुदारुणम्
अल्पेनतपसातुष्टःसप्तजन्मकृतार्चनः १३८
संस्मरंस्तस्यभूपस्यतदाप्रादुरभूत्स्वयम्
माघस्यशुक्लपक्षेतुद्वादश्यांमकरेरवौ १३९
शंखाद्भिरभिषिच्याशुमुदातंचक्रवर्तिनम्
वासुदेवोददौतस्मैस्मारयंस्तैलचेष्टितम् १४०
अतीवसुंदरंरूपंकमनीयंमनोहरम्

येनतंचक्रमेदेवीउर्वशीदेवनायिका १४१
इत्थंलब्धवरोराजाकृतकृत्यःपुरंगतः
इतिकर्मगतिंज्ञात्वाकिंविद्याधरखिद्यते १४२
भवान्परिजिहीर्षुश्चेद्दानवस्यविरूपताम्
शीघ्रंमद्वचनादेवप्राचीनाघविनाशनम् १४३
माघमासेकुरुस्नानंमणिकूटनदीजले
मुनिसिद्धसुरैर्जुष्टेकथयिष्यामितद्विधिम् १४४
तवभाग्यवशान्माघोनिकटःपंचमेऽहनि
पौषस्यैकादशींशुक्लामारभ्यस्थंडिलेशयः १४५
मासमेकंनिराहारस्त्रिकालंस्नानमाचर
त्रिकालमर्चयन्विष्णुंत्यक्तभोगोजितेंद्रियः १४६
माघस्यैकादशीशुक्लायावद्विद्याधरोत्तम
ततोनिर्दग्धपापंत्वांद्वादश्यांपुरायवासरे १४७
अभिषिच्यशिवैस्तोयैर्मंत्रपूतैरहंसुर
कामवक्त्रोपमंवक्त्रंकरिष्यामितवानघ १४८
देवतावदनोभूत्वात्वंविद्याधरसत्तम
अनयावरवर्णिन्यासार्द्धंक्रीडयथासुखम् १४९
ज्ञातमाघप्रभावस्त्वंमाघस्नानंसदाकुरु
यथामनोरथावाप्तिर्जायतेतवसर्वदा १५०
इत्युक्तंभृगुणातस्मैसर्वज्ञेनमहात्मना
विद्याधरायराजेंद्रपुनर्गाथाउदाहृता १५१
माघस्नानैर्विपन्नाशमाघस्नानैरघक्षयः
सर्वयज्ञाधिकोमाघःसर्वदानफलप्रदः १५२
माघोगर्जतियज्ञेभ्योमाघोयोगाच्चगर्जति
तीव्राच्चतपसोमाघोभोविद्याधरगर्जति १५३
पुष्करेचकुरुक्षेत्रेब्रह्मावर्तेपृथूदके
अविमुक्तेप्रयागेचगंगासागरसंगमे १५४
यत्फलंदशभिर्वर्षैःप्राप्यतेनियमैर्नरैः
तत्फलंप्राप्यतेमाघेत्र्यहस्नानान्नसंशयः १५५
स्वर्गलोकेचिरंरागोयेषांमनसिवर्तते

यत्रक्वापिजलेतैस्तुस्नातव्यंमकरेरवौ १५६
आयुरारोग्यसंपत्तिरूपसौभाग्यतागुणाः
येषांमनोरथस्तैस्तुनत्याज्यंमाघमज्जनम् १५७
येचबिभ्यंतिनरकाद्येदरिद्राच्चसंचितात्
सर्वथातैःप्रयत्नेनमाघेकार्यंनिमज्जनम् १५८
दारिद्र्यपापदौर्भाग्यपंकप्रक्षालनायच
माघस्नानान्नचान्योऽस्तिउपायोराजसत्तम १५९
श्रद्धाहीनानिकर्माणितथात्यल्पफलानिवै
फलंददातिसंपूर्णंमाघस्नानंयथातथा १६०
अकामोवासकामोवायत्रक्वापिबहिर्जले
इहामुत्रचदुःखानिमाघस्नायीनविंदति १६१
पक्षद्वयेयथाचंद्रोवर्द्धतेक्षीयतेतथा
पातकंक्षीयतेमाघेपुण्यराशिश्चवर्धते १६२
यथाचखन्याजायंतेरत्नानिविविधानिच
स्नानात्पुण्यानिजायंतेनराणांमाघतस्तथा १६३
कामधेनुर्यथाकामंचिंतामणिस्तुचिंतितम्
माघस्नानंददातीहतद्वत्सर्वान्मनोरथान् १६४
कृतेतपःपरंज्ञानंत्रेतायांयजनंतथा
द्वापरेतुकलौज्ञानंमाघःसर्वयुगेषुच १६५
सर्वेषामेववर्णानामाश्रमाणांचभूपते
माघस्नानंतुधर्मस्यधाराभिरभिवर्षति १६६
वसिष्ठउवाच
इतिवाक्यंभृगोःश्रुत्वातस्मिन्नेवाश्रमेसुरः
सहैवभृगुणामाघेगिरौनिर्झरिणीतटे १६७
यथोक्तविधिनास्नानमकरोद्भार्ययासह
भृगोरनुग्रहात्सोऽथसंप्राप्यमनसेप्सितम् १६८
देवतावदनोभूत्वामुमुदेमणिपर्वते
आजगामभृगुर्विंध्यंतमनुग्राह्यहर्षितः १६९
मणिमयगिरिराजेस्नानमात्रेणमाघेमदनवदनरूपस्तत्रविद्याधरोऽभूत्
क्षपितनियमदेहोविंध्यपादावतीर्णोभृगुरपिसहशिष्यैराजगामाथरेवाम् १७०

अखिलभुवनसारंमाघमाहात्म्यमेतद्द्विजवरभृगुणोक्तंभूपविद्याधराय
विविधफलविचित्रंयःशृणोतीहनित्यंरुचिरसकलकामान्देववत्प्राप्नुयात्सः
१७१

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेमाघमाहात्म्ये
वसिष्ठदिलीपसंवादेपंचविंशत्यधिकशततमोऽध्यायः १२५

## षड्विंशत्यधिकशततमोऽध्यायः

वसिष्ठउवाच
अधुनामाघमाहात्म्यंप्रवक्ष्यामिनृपोत्तम
पृच्छतेकार्तवीर्यायदत्तात्रेयेणभाषितम् १
दत्तात्रेयंहरिंसाक्षाद्वसंतंसह्यपर्वते
पप्रच्छतंद्विजंगत्वाराजामाहिष्मतीपतिः २
सहस्रार्जुनउवाच
भगवन्योगिनांश्रेष्ठसर्वेधर्माःश्रुतामया
माघस्नानफलंब्रूहिकृपयाममसुव्रत ३
दत्तात्रेयउवाच
श्रूयतांनृपशार्दूलएतत्प्रश्नोत्तरंशुभम्
ब्रह्मणोक्तंपुराह्येतन्नारदायमहात्मने ४
तत्सर्वंकथयिष्यामिमाघस्नानफलंमहत्
यथादेशंयथातीर्थंयथाविधियथाक्रियम् ५
अस्मिन्वैभारतेवर्षेकर्मभूमौविशेषतः
अमाघस्नायिनांनृणांनिष्फलंजन्मकीर्तितम् ६
असूर्यंगगनंयद्वदचन्द्रमुडुमंडलम्
तद्वन्नाभातिसत्कर्ममाघस्नानंविनानृप ७
व्रतैर्दानैस्तपोभिश्चनतथाप्रीयतेहरिः
माघमज्जनमात्रेणयथाप्रीणातिकेशवः ८
नसमंविद्यतेकिंचित्तेजःसौरेणतेजसा
तद्वत्स्नानेनमाघस्यनसमाःक्रतुजाःक्रियाः ९
प्रीतयेवासुदेवस्यसर्वपापापनुत्तये
माघस्नानंप्रकुर्वीतस्वर्गलाभायमानवः १०

किंरक्षितेनदेहेनसुपुष्टेनबलीयसा
अध्रुवेणाप्यशुचिनामाघस्नानंविनाभवेत् ११
अस्थिस्तंभंस्नायुबद्धंमांसक्षतजलेपनम्
चर्मावनद्धंदुर्गंधंपात्रंमूत्रपुरीषयोः १२
जराशोकविपद्व्याप्तंरोगमंदिरमातुरम्
रजस्वलमनित्यंचसर्वदोषसमाश्रयम् १३
परोपतापितापार्तंपरद्रोहिपरंविषम्
लोलुपंपिशुनंक्रूरंकृतघ्नंक्षणिकंतथा १४
दुष्पूरंदुर्धरंदुष्टंदोषत्रयसमन्वितम्
अशुचिस्राविसच्छिद्रंतापत्रयविमोहितम् १५
निसर्गतोऽधर्मरतंतृष्णाशतसमाकुलम्
कामक्रोधमहालोभनरकद्वारसंस्थितम् १६
क्रिमिविड्भस्मभवतिपरिणामेशुनांहविः
ईदृक्शरीरंव्यर्थंहिमाघस्नानविवर्जितम् १७
बुद्बुदाइवतोयेषुपूतिकाइवजंतुषु
जायंतेमरणायैवमाघस्नानविवर्जिताः १८
अवैष्णवोहतोविप्रोहतंश्राद्धमयोगिच
अब्रह्मण्यंहतंक्षेत्रमनाचारंहतंकुलम् १९
सदंभश्चहतोधर्मःक्रोधेनैवहतंतपः
अदृढंचहतंज्ञानंप्रमादेनहतंश्रुतम् २०
गुर्वभक्ताहतानारीब्रह्मचारीतयाहतः
अदीप्तेऽग्नौहतोहोमोहताभुंक्तिरसाक्षिका २१
उपजीव्याहताकन्यास्वार्थेपाकक्रियाहता
शूद्रभिक्षोहतोयागःकृपणस्यहतंधनम् २२
अनभ्यासाहताविद्याहतोराजाविरोधकृत्
जीवनार्थंहतंतीर्थंजीवनार्थंहतंव्रतम् २३
असत्याचहतावाणीतथापैशुन्यवादिनी
संदिग्धश्चहतोमंत्रोव्यग्रचित्तोहतोजपः २४
हतमश्रोत्रियेदानंहतोलोकश्चनास्तिकः
अश्रद्धयाहतंसर्वंकृतंयत्पारलौकिकम् २५

इहलोकोहतोनृणांदरिद्राणांयथानृप
मनुष्याणांतथाजन्ममाघस्नानंविनाहतम् २६
मकरस्थेरवौयोहिनस्नात्यनुदितेरवौ
कथंपापैःप्रमुच्येतकथंसत्रिदिवंव्रजेत् २७
ब्रह्महाहेमहारीचसुरापोगुरुतल्पगः
माघस्नायीविपापःस्यात्तत्संसर्गीचपंचमः २८
माघमासेरटंत्यापःकिंचिदभ्युदितेरवौ
ब्रह्मघ्नंवासुरापंवाकंपतंतंपुनीमहे २९
उपपापानिसर्वाणिपातकानिमहांत्यपि
भस्मीभवंतिसर्वाणिमाघस्नानोद्यतंनरम् ३०
कंपंतिसर्वपापानिमाघस्नानसमागमे
नाशकालोऽयमस्माकंयदिस्नास्यतिवारिणि ३१
एवंक्रोशंतिपापानिदृष्ट्वास्नानोद्यतंनरम्
पावकाइवदीप्यंतेमाघस्नानैर्नरोत्तमाः ३२
विमुक्ताःसर्वपापेभ्योमेघेभ्यइवचंद्रमाः
आर्द्रंशुष्कंलघुस्थूलंवाङ्मनःकर्मभिःकृतम् ३३
माघस्नानंदहेत्पापंपावकःसमिधोयथा
प्रामादिकंचयत्पापंज्ञानाज्ञानकृतंचयत् ३४
स्नानमात्रेणतन्नश्येन्मकरस्थेदिवाकरे
निष्पापास्त्रिदिवंयांतिपापिष्ठायांतिशुद्धताम् ३५
संदेहोनात्रकर्तव्योमाघस्नानेनराधिप
सर्वेऽधिकारिणोमाघेविष्णुभक्तौयथानृप ३६
सर्वेषांस्वर्गदोमाघःसर्वेषांपापनाशनः
एषएवपरोमंत्रोह्येतदेवपरंतपः ३७
प्रायश्चित्तंपरंचैतन्माघस्नानमनुत्तमम्
नृणांजन्मांतराभ्यासान्माघस्नानेमतिर्भवेत् ३८
अध्यात्मज्ञानकौशल्यंजन्माभ्यासाद्यथानृप
संसारकर्दमालेपप्रक्षालनविशारदम् ३९
पावनंपावनानांचमाघस्नानपरंनृप
स्नांतिमाघेनयेराजन्सर्वकामफलप्रदे ४०

कथंतेभुंजतेभोगांश्चंद्रसूर्यग्रहोपमान्
शृणुराजन्महाश्चर्यंमाघस्नानप्रभावजम् ४१
कुब्जिकानामकल्याणीब्राह्मणीभृगुवंशजा
बालवैधव्यदुःखार्तातपस्तेपेसुदुस्तरम् ४२
विंध्यपादेमहाक्षेत्रेरेवाकपिलसंगमे
तत्रसाव्रतिनीभूत्वानारायणपरायणा ४३
सदाचारवतीनित्यंनित्यंसंगविवर्जिता
जितेंद्रियाजितक्रोधासत्यवागल्पभाषिणी ४४
सुशीलादानशीलाचदेहशोषणशालिनी
पितृदेवद्विजेभ्यश्चदत्वाहुत्त्वातथानले ४५
षष्ठेकालेचसाभुङ्क्तेह्युंच्छवृत्तिःसदानृप
कृच्छ्रातिकृच्छ्रपाराकतप्तकृच्छ्रादिभिर्व्रतैः ४६
पुण्यान्नयतिसामासान्नर्मदायाश्चरोधसि
एवंतयातपस्विन्यावल्कलिन्यासुशीलया ४७
सुमहासत्त्वशालिन्याधृतिसंतोषयुक्तया
षष्टिर्माघास्तयास्नातारेवाकपिलसंगमे ४८
ततःसातपसाक्षीणातस्मिंस्तीर्थेमृतानृप
माघस्नानजपुण्येनतेनसावैष्णवेपुरे ४९
उवासप्रमुदायुक्ताचतुर्युगसहस्रकम्
सुंदोपसुंदनाशायपश्चात्पद्मभवात्पुनः ५०
तिलोत्तमेतिनाम्नासाब्रह्मलोकेऽवतारिता
तेनपुण्यस्यशेषेणरूपस्यैकायनंययौ ५१
अयोनिजाबलारत्नंदेवानामपिमोहिनी
लावण्यहृदनीतन्वीसाभूदप्सरसांवरा ५२
निपुणस्यविधेःस्त्रष्टुर्नूनमाश्चर्यकारिणी
तामुत्पाद्यविधातावैतुष्टोऽनुज्ञांतदाददौ ५३
एणशावाक्षिगच्छत्वंदैत्यनाशायसत्वरम्
ततःसाब्रह्मणोलोकाद्वीणामादायभामिनी ५४
गतापुष्करमार्गेणयत्रतौदेववैरिणौ
तत्रस्नात्वातुरेवायाःपवित्रेनिर्मलेजले ५५

परिधायांबरंरक्तंबंधूककुसुमप्रभम्
रणद्वलयिनीचारुसिंजन्मेखलनूपुरा ५६
लोलमुक्तावलीकंठीचलत्कुंडलशोभना
माधवीकुसुमापीडाकंकेलीविटपेस्थिता ५७
गायंतीसुस्वरंसापिपीडयंतीतुवल्लकीम्
मूर्च्छयंतीस्वरषट्कंसुस्निग्धंकोमलंकलम् ५८
ऋृइत्थंतिलोत्तमाबालातिष्ठंत्यशोककानने
दृष्ट्वादैत्यभटैरिंदोःकलेवसुखदाहृदि ५९
तांदृष्ट्वाविस्मितैराजन्सानंदैःसैनिकैर्भृशम्
त्वरमाणैरदृष्ट्वैवगत्वासुंदोपसुंदयोः ६०
कथितासंभ्रमेणैव वर्णयित्वापुनःपुनः
हेदैत्यौनविजानीमोदेवीवादानवीनुकिम् ६१
नागांगनाथवायक्षीस्त्रीरत्नंसर्वथातुसा
युवांरत्नभुजौलोकेरत्नभूताहिसाबला ६२
वर्ततेनातिदूरेडग्रेग्रशोकेशोकहारिणी
गत्वातांपश्यतंशीघ्रमन्मथस्यापिमोहिनीम् ६३
इतिसेनापतीनांतौश्रुत्वावाचंमनोहराम्
चषकंसीधुनस्त्यक्त्वाविहायजलसेचनम् ६४
उत्तमस्त्रीसहस्राणित्यक्त्वातस्माज्जलाशयात्
शतभारायसींक्रूरांकालदंडोपमांगदाम् ६५
भिन्नाभिन्नांगृहीत्वातुजवेनाभिप्लुतंगतौ
यत्रशृंगारसज्ञासाहंतुंचंडीवसंस्थिता ६६
राजन्संधुक्षयंतीवदैत्ययोर्मन्मथानलम्
स्थित्वातस्याःपुरोजाल्मौतद्रूपेणविमोहितौ ६७
विशेषान्मधुनामत्तावूचतुस्तौपरस्परम्
भ्रातर्विरमभार्येयंममास्तुवरवर्णिनी ६८
त्वमेवार्यत्यजैतांमेभार्यांतुमदिरेक्षणाम्
इत्याग्रहेणसंरब्धौमातंगाविवसोन्मदौ ६९
अन्योन्यंकालनिर्दिष्टौगदयाजघ्नतुस्तदा
परस्परप्रहारेणगतासूपतितौभुवि ७०

तौमृतौसैनिकैर्दृष्ट्वाकृतःकोलाहलोमहान्
कालरात्रिसमाकेयंहाकिमेतदुपस्थितम् ७१
एवंवदत्सुसैन्येषुदैत्यौसुंदोपसुंदकौ
पातयित्वागिरेःशृंगेह्लादिनीवत्तिलोत्तमा ७२
प्रस्थितागगनंशीघ्रंद्योतयंतीदिशोदश
देवकार्यंततःकृत्वात्र्यागताब्रह्मणःपुरः ७३
ततस्तुष्टेनदेवेनविधिनासानुमोदिता
स्थानंसूर्यरथेदत्तंतवचंद्राननेमया ७४
भुंद्वभोगाननेकांस्त्वंयावत्सूर्योंबरेस्थितः
इत्थंसाब्राह्मणीराजन्भूत्वाचाप्सरसांवरा ७५
भुंक्तेद्यापिरवेर्लोकेमाघस्नानफलंमहत्
तस्मात्प्रयत्नतोराजन्श्रद्दधानैःसदानरैः ७६
स्नातव्यंमकरादित्येवांच्छद्भिःपरमांगतिम्
नानवाप्तोऽत्रतस्यास्तिपुरुषार्थोहिकश्चन ७७
नाक्षीणंपातकंकंचिन्माघेमज्ञतियोनरः
तुलयंतिनतेनात्रयज्ञाःसर्वेसदक्षिणाः ७८
माघस्नानेनराजेंद्रतीर्थेचैवविशेषतः
नचान्यत्स्वर्गदंकर्मनचान्यत्पापनाशनम् ७९
नचान्यन्मोक्षदंयस्मान्माघस्नानसमंभुवि ८०

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडे
माघमाहात्म्येवसिष्ठदिलीपसंवादेमाघस्नानप्रशंसायांसुंदोपसुंददैत्यवधोनाम
षड्विंशत्यधिकशततमोध्यायः १२६

## सप्तविंशत्यधिक शततमोऽध्यायः

कार्तवीर्यउवाच
हेतुनाकेनविप्रर्षेमाघस्नानेमहाद्भुतः
प्रभावोवर्ण्यतेनूनंतन्मेकथयसुव्रत १
गतपापोयदेकेनद्वितीयेनदिवंगतः
वैश्योऽसौमाघपुण्येनब्रूहिमेतत्कुतूहलम् २
दत्तात्रेयउवाच

निसर्गात्सलिलंमेध्यंनिर्मलंशुचिपांडुरम्
मलहंपुरुषव्याघ्रद्रावकंदाहनाशनम्
तारकंसर्वभूतानांपोषणंजीवनंचयत् ३
आपोनारायणोदेवःसर्ववेदेषुपठ्यते
ग्रहाणांचयथासूर्योनक्षत्राणांयथाशशी
मासानांचतथामाघःश्रेष्ठःसर्वेषुकर्मसु ४
मकरस्थेरवौमाघेप्रातःकालेतथाऽमले
गोष्पदेऽपिजलेस्नानंस्वर्गदंपापिनामपि ५
योगोऽयदुर्लभोराजंस्त्रैलोक्येसचराचरे
अस्मिन्योगेत्वशक्तोऽपिस्नायाद्यदिदिनत्रयम् ६
दद्यात्किंचिदशक्तोऽपिदरिद्राभाववांच्छया
त्रिस्नानेनापिमाघस्यधनिनोदीर्घजीविनः ७
पंचवासप्तवाहानिचंद्रवद्वर्धतेफलम्
संप्राप्तेमकरादित्येपुण्येपुण्यप्रदेनृणाम् ८
सत्कार्यास्तिथयःसर्वास्नानदानादिकर्मसु
कर्तारंदापयंतीहह्यक्षयंशाश्वतंपदम् ९
तस्मान्माघेबहिःस्नायादात्मनोहितकाम्यया
अथातःसंप्रवक्ष्यामिमाघस्नानविधिंपरम् १०
कर्तव्योनियमःकश्चिद्व्रतरूपीनरोत्तमैः
फलातिशयहेतोर्वैकिंचिद्भोज्यंत्यजेद्बुधः ११
भूमौशयीतहोतव्यमाज्यंतिलविमिश्रितम्
त्रिकालंचार्चयेद्विष्णुंवासुदेवंसनातनम् १२
दातव्योदीपकोऽखडोदेवमुद्दिश्यमाधवम्
इंधनंकंबलंवस्त्रमुपानत्कुंकुमंघृतम् १३
तैलंकार्पासकोष्ठंचतूलद्यंतूलवटींपटीम्
अन्नंचैवयथाशक्तिदेयंमाघेनराधिप १४
सुवर्णंरत्तिकामात्रंदद्याद्वेदविदेतथा
तद्दानमक्षयंराजन्समुद्रइवसर्वदा १५
परस्याग्निंनसेवेतत्यजेच्चैवप्रतिग्रहम्
माघांतेभोजयेद्विप्रान्यथाशक्तिनराधिप १६

देयाचदक्षिणातेभ्यश्चात्मनःश्रेयइच्छता
एकादशीविधानेनमाघस्योद्यापनंतथा १७
कर्तव्यंश्रद्दधानेनह्यक्षय्यस्वर्गवांछया
अनंतपुण्यावाप्त्यर्थंविष्णुसंप्रीतिहेतवे १८
मकरस्थेरवौमाघेगोविंदाच्युतमाधव
स्नानेनानेनभोदेवयथोक्तफलदोभव १९
इतिमंत्रंसमुच्चार्यस्नायान्मौनीसमाहितः
वासुदेवंहरिंकृष्णंमाधवंचस्मरेत्पुनः २०
गृहेऽपिसजलंकुंभंवायुनानिशिपीडितम्
तत्स्नानंतीर्थसदृशंसर्वकामफलप्रदम् २१
तत्रव्रतेनदातव्यंसान्नंचोपस्करान्वितम्
तत्स्नानस्यप्रभावेणनरोननिरयंव्रजेत् २२
तप्तेनवारिणास्नानंयद्गृहेक्रियतेनरैः
षडब्दफलदंतद्धिमकरस्थेदिवाकरे २३
बहिःस्नानंतुवाप्यादौद्वादशाब्दफलंस्मृतम्
तडागेद्विगुणंराजन्नद्यांचैवचतुर्गुणम् २४
शतधादेवखातेषुशतधातुमहानदे
शतंचतुर्गुणंराजन्महानद्याश्चसंगमे २५
सहस्रगुणितंसर्वंतत्फलंमकरेरवौ
गंगायांस्नानमात्रेणलभतेमानवोनृप २६
गंगायांयेऽवगाहंतिमाघमासेनृपोत्तम
चतुर्युगसहस्रंतुनपतंतिसुरालयात् २७
दिनेदिनेसहस्रंतुसुवर्णानांविशांपते
तेनदत्तंतुगंगायांयोमाघेस्नातिमानवः२८
शतेनगुणितंमाघेसहस्रंराजसत्तम
निर्दिष्टमृषिभिःस्नानंगंगायामुनसंगमे २९
पापौघभूरिभारस्यदाहार्थेचप्रजापतिः
प्रयागंविदधेभूपप्रजानांचहितेस्थितः ३०
शृणुस्थानमिदंसम्यक्सितासितजलंकिल
पापरूपपशूनांचब्रह्मणाविहितंपुरा ३१

सितासितजलेमज्जेदपिपापशतान्वितः
मकरस्थेरवौमाघेनैवगर्भेषुमज्जति ३२
सूनारतोऽपियोमर्त्यःप्रयागेस्नानमाचरेत्
माघेमासिनरव्याघ्रसयातिपरमंपदम् ३३
सितासितातुयाधारासरस्वत्याविगर्भिता
तन्मार्गंविष्णुलोकस्यसृष्टिकर्तासससर्जवै ३४
दुस्तरावैष्णवीमायादेवैरपिसुदुर्जया
प्रयागेदह्यतेसातुमाघेमासिनराधिप ३५
तेजोमयेषुलोकेषुभुक्त्वाभोगाननेकशः
पश्चाच्चक्रिणिलीयंतेप्रयागेमाघमज्जनात् ३६
उपस्पृशतियोमाघेमकरार्केसितासिते
नतत्पुरायंचसंख्यातुंचित्रगुप्तोऽपिवेत्यलम् ३७
सन्निमज्जतियोमाघेमकरस्थसितासिते
तस्यपुरायस्यमाहात्म्यंवक्तुंब्रह्मापिनक्षमः ३८
संवत्सरशतंसाग्रंनिराहारस्ययत्फलम्
प्रयागेमाघमासेतुत्र्यहस्नानस्यतत्फलम् ३९
स्वर्णभारसहस्रेणकुरुक्षेत्ररविग्रहे
यत्फलंलभतेमाघेवेरायाःस्नानाद्दिनेदिने ४०
राजसूयसहस्रस्यराजन्नविकलंफलम्
सितासितेतुमाघेचस्नानानांभवतिध्रुवम् ४१
पृथिव्यांयानितीर्थानिपुर्यःसप्तचयाःपुनः
वेरयांस्नातुंसमायांतिमाघेमासिनृपोत्तम ४२
सर्वतीर्थानिकृष्णानिपापिनांसंगदोषतः
भवंतिशुक्लवर्णानिप्रयागेमाघमज्जनात् ४३
आकल्पसंचितंपापंजन्मभिर्यन्नरैर्नृप
तद्भवेद्भस्मसान्माघेस्नातानांचसितासिते ४४
वाङ्मनःकायजंपापंनरस्यविलयंव्रजेत्
प्रयागेमाघमासेतुत्र्यहस्नातस्यनिश्चितम् ४५
प्रयागेमाघमासेयस्त्र्यहंस्नातिचमानवः
पापंत्यक्त्वादिवंयातिजीर्णांत्वचमिवोरगः ४६

कुरुक्षेत्रसमागंगायत्रकुत्रावगाहिता
तस्माद्दशगुणापुण्यायत्रविंध्येनसंगता ४७
तस्माच्छतगुणागंगाकाश्यामुत्तरवाहिनी
काश्याःशतगुणाःप्रोक्तागंगायामुनसंगमे ४८
सासहस्रगुणातासांभवेत्पश्चिमवाहिनी
याराजन्दर्शनादेवब्रह्महत्यापहारिणी ४९
यापश्चाद्वाहिनीगंगाकालिंद्यासहसंगता
हंतिकोटिकृतंपापंसामाघेनृपदुर्लभा ५०
यत्कथ्यतेऽमृतंराजन्सावेणीभुविकीर्तिता
तस्यांमाघेमुहूर्तंतुदेवानामपिदुर्लभम् ५१
ब्रह्माविष्णुर्महादेवोरुद्रादित्यमरुद्गणाः
गंधर्वालोकपालाश्चयक्षकिन्नरपन्नगाः ५२
अणिमादिगुणैःसिद्धायेचान्येतत्त्ववादिनः
ब्रह्माणीपार्वतीलक्ष्मीःशचीमेनादितिर्दितिः ५३
सर्वास्तादेवपत्न्यश्चतथानागांगनानृप
घृताचीमेनकारंभाउर्वशीचतिलोत्तमा ५४
गणाह्यप्सरसांसर्वेपितृणांचगणास्तथा
स्नातुमायांतितेसर्वेमाघेवेण्यांनराधिप ५५
कृतेयुगेस्वरूपेणकलौप्रच्छन्नरूपिणः
प्रयागेमाघमासेतुत्र्यहस्नानस्ययत्फलम् ५६
नाश्वमेधसहस्रेणतत्फलंलभतेभुवि
त्र्यहस्नानफलंमाघेपुराकांचनमालिनी ५७
राक्षसायददौभूपतेनमुक्तःसपापकृत्
कार्तवीर्यउवाच
भगवन्राक्षसःकोऽसौसाकाकांचनमालिनी ५८
कथंदत्तवतीधर्मंकथंवातस्यसद्गतिः
एतत्कथययोगींद्रअत्रिसंतानभास्कर
यदित्वंमन्यसेश्राव्यंपरंकौतूहलंहिमे ५९
दत्तात्रेयउवाच
शृणुराजन्विचित्रंत्वमितिहासंपुरातनम्

यस्यस्मरणमात्रेणवाजपेयफलंलभेत् ६०
अप्सरारूपसंपन्नानाम्नाकांचनमालिनी
प्रयागेमाघमासेसास्नात्वायातिहरालयम् ६१
निकुंजेगिरिराजस्यतिष्ठतागिरिरूपिणा
दृष्टागगनमारूढातेनवृद्धेनरक्षसा ६२
तेजस्विनीसुहेमाभासुश्रोणीदीर्घलोचना
चंद्राननासुकेशीचपीनोन्नतपयोधरा ६३
तांदृष्ट्वारूपसंपन्नामुवाचराक्षसस्तदा
कात्वंकमलपत्राक्षिकुतआगम्यतेत्वया ६४
आर्द्रंचवसनंकस्मात्सार्द्रातिकबरीकुतः
कुत्रआगम्यतेभीरुकुतस्तेखेचरीगतिः ६५
केनपुण्येनवाभद्रेतवतेजोमयंवपुः
अतीवरूपसंपन्नंसंभूतंचमनोहरम् ६६
त्वद्वस्त्रबिंदुपातेनममपूर्ध्निसुलोचने
क्षणेनह्यगमच्छांतिंक्रूरंमेमानसंसदा ६७
नीरस्यमहिमाकोऽयमेतद्व्याख्यातुमर्हसि
त्वंमेशीलवतीभासिनाकृतिर्निर्गुणाभवेत् ६८
अप्सरा उवाच
श्रूयतामप्सराश्चाहंभोरक्षःकामरूपिणी
प्रयागतश्चागताऽहनाम्नाकांचनमालिनी ६९
आर्द्रःपरिकरोमेऽतसुस्नाताऽहसितासिते
गंतव्यंतुमयारक्षःकैलासेतुनगोत्तमे ७०
तत्रास्तेपार्वतीनाथःसुरासुरसुपूजितः
वेणीवारिप्रभावेणरक्षस्तेक्रूरतागता ७१
जाताहंयेनपुण्येनगंधर्वस्यसुमेधसः
कन्यकादिव्यरूपातुतत्सर्वंकथयामिते ७२
कलिगाधिपतेराज्ञस्त्वहमासीच्चवेश्यका
रूपलावण्यसंपन्नासौभाग्यमदगर्विता ७३
अन्यासांयुवतीनांचतत्पुरेऽहशिरोमणिः
तज्जन्मनिमयारक्षोभुक्त्वाभोगान्यथेच्छया ७४

मोहितंतत्पूरंसर्वंमयायौवनसंपदा
रत्नानिचविचित्राणिभूषणानिधनानिच ७५
वासांसिचित्ररूपाणिकर्पूरागुरुचंदनम्
एतच्चोपार्जितंसर्वंमयामोहनरूपया ७६
नाहंजानामिहेम्नोंतंस्वनिवासेनिशाचर
संसेवंतेयुवानोमेचरणौकामपीडिताः ७७
मयातेवंचिताःसर्वेसर्वस्वेनतुमायया
अन्योन्यस्पर्धाभावेनमृताःकेचित्तुकामिनः ७८
इत्थंतन्नगरेरम्येसकलेमेगतिस्तदा
प्राप्तेतुवार्द्धकेकालेशुशोचहृदयंमम
नदत्तंनहुतंजप्तंनव्रतंचरितंमया ७९
नाराधितोमयादेवश्चतुर्वर्गफलप्रदः
नमयापूजितादेवीदुर्गादुर्गतिनाशिनी
सर्वपापहरोविष्णुर्नस्मृतोभोगलुब्धया ८०
नचसंतर्पिताविप्रानकृतंप्राणिनांहितम्
अणुमात्रमिदंपुण्यंनकृतंचप्रमादतः ८१
पातकंतुकृतंभद्रतेनमेदह्यतेमनः
बहुधैवंविलप्याहंब्राह्मणंशरणंगता ८२
ब्रह्मण्यंवेदविद्वांसंतस्यराज्ञःपुरोहितम्
सहिपृष्टोमयारक्षःकथंमेनिष्कृतिर्भवेत् ८३
पापस्यास्यद्विजश्रेष्ठकथंयास्यामिसद्गतिम्
स्वेनैवकर्मणातप्तांवराकींदीनमानसाम् ८४
पापपंकनिमग्नांत्वंमामुद्धरकचग्रहैः
मयिकारुण्यंजंवारिवर्षहर्षदृशाद्विज ८५
सज्जनेसाधवःसर्वेसाधुःसाधुरसज्जने
इत्यसौमद्वचःश्रुत्वाचकारानुग्रहंमयि ८६
द्विजउवाच
निषिद्धाचरणंजानेसर्वं तेऽहवरानने
कुरुमेसत्वरंवाक्यंयाहिक्षेत्रंप्रजापते ८७
तत्रगत्वाकुरुस्नानंतेनपापक्षयस्तव

सर्वंमनोगतंभद्रेत्वदीयंशोचितंमया ८८
नाहमन्यत्प्रपश्यामियत्तेपापप्रणाशनम्
प्रायश्चित्तंपरंतीर्थेस्नानंचऋषिभिःस्मृतम् ८९
किंतुतीर्थेत्यजेद्भीरुमनसाप्यशुभंकृतम्
प्रयागस्नानशुद्धात्वंस्वर्गंयास्यसिनिश्चितम् ९०
प्रयागस्नानमात्रेणनृणांस्वर्गोनसंशयः
अन्यदेशकृतंपापंतत्क्षणादेवभामिनि ९१
प्रयागेविलयंयातिपापंतीर्थकृतंविना
शृणुभीरुपुराशक्रोगौतमस्यमुनेर्वधूम् ९२
दृष्ट्वाकामवशंप्राप्तस्तांगतोगुप्तकामुकः
उग्रेणतेनपापेनतदैवजनितंफलम् ९३
ऋषिस्त्रीगंतुरिंद्रस्यतस्याश्चपुरतस्तदा
कुत्सितंगर्हितंजातमितिलज्जाकरंवपुः ९४
तद्भर्तुःशापमाहात्म्यात्सहस्रभगचिह्नितम्
अधोमुखस्ततोभूत्वादेवराजोविनिर्गतः ९५
निनिंदस्वकृतंकर्मसोऽभिभूतःसलज्जितः
मेरोःशिरसितोयाढ्येशतयोजनविस्तृते ९६
तत्रगत्वाप्रविष्टस्तुहेमांभोरुहकोरके
तत्रस्थोगर्हयन्नित्यमात्मानंमन्मथंतथा ९७
धिक्तांकामात्मतांलोकेसद्यःपातकदायिनीम्
ययाहिनरकंयातिसर्वलोकविगर्हितः ९८
आयुःकीर्तिर्यशोधर्मधैर्यध्वंसकरीतथा
धिङ्मन्मथंदुराचारमापदांनियतंपदम् ९९
देहस्थंदुर्दमंशत्रुसंतुष्टंसदावशम्
इत्थंवादिनिप्रच्छन्नेवासवेपद्मसद्मनि १००
आखंडलंविनाभीरुदेवलोकोनशोभते
ततोदेवाःसगंधर्वालोकपालाःसकिन्नराः १०१
शच्यासहसमागम्यपप्रच्छुस्तेबृहस्पतिम्
भगवन्बलभिद्देवं नैवजानीमहेवयम् १०२
क्वतिष्ठतिगतःकुत्रकुत्रवामृगयामहे

ननाकःशोभतेतेनविनादेवगणैःसह १०३
सुपुत्रेणविनायद्वत्कुलंश्रीमगुणान्वितम्
उपायश्चिंत्यतांसद्यःस्वर्लोकेयेनशोभते १०४
सनाथःसुश्रियायुक्तोनविलंबोऽत्रयुज्यते
इतितेषांवचःश्रुत्वागुरुर्वचनमब्रवीत् १०५
जानेऽहस्वापराधेनलज्जयायत्रतिष्ठति
रभसालब्धकार्यस्यभुंक्तेसमघवाफलम् १०६
नृणांनीतिपरित्यागाद्विपाकाःस्युर्भयंकराः
अहोराज्यमदैर्मत्तःकृत्याकृत्यमचिंतयन् १०७
कृतवान्निंद्यमानंहिदृष्टादृष्टक्षयंकरम्
कुर्वंतिबालिशायत्रदैवोपहतबुद्धयः १०८
अपराधाद्यथाजन्मस्यादिहामुत्रनिष्फलम्
अधुनातत्रगच्छामोयत्रशक्रःसतिष्ठति १०९
इत्युक्त्वानिर्गताःसर्वेबृहस्पतिपुरोगमाः
दृष्ट्वासरसिविस्तीर्णेस्वर्णपंकजकाननम् ११०
तुष्टुवुर्देवराजानंप्रबोधोयेनजायते
ततोगुरोःप्रबोधेननिर्गतःपद्मकुड्मलात् १११
दीनाननोविरूपस्तुव्रीडाकुंचितलोचनः
जग्राहचरणाविंद्रोगुरोस्तस्याग्रजन्मनः ११२
त्राहिमांनिष्कृतिंब्रूहिपापस्यास्यबृहस्पते
देवराजवचःश्रुत्वाजगौविप्रोबृहस्पतिः ११३
शृणुदेवेंद्रवक्ष्येऽहमुपायंपापनाशनम्
प्रयागस्नानमात्रेणतत्क्षणादेवपातकात् ११४
मुच्यसेदेवराजत्वंतत्रयामःसहैवते
अथपुरोधसासार्धमागत्यबलमर्दनः ११५
सस्नौसितासितेतीर्थेसद्योमुक्तोह्यघैस्ततः
अथदेवगुरुस्तस्मैप्रसन्नस्तुवरंददौ ११६
प्रयागस्नानमात्रेणक्षीणंपापंत्वयानघ
क्षीणपापस्यतेशक्रमत्प्रसादेनसत्वरम् ११७
सहस्रमेतद्योनीनांसहस्रंस्यादृशांतव

तदैवद्विजवाक्येनशुशुभेचशचीपतिः ११८
लोचनानांसहस्रेणपंकजैरिवमानसम्
अथवृंदारकैःसर्वैर्ऋषिभिश्चाभिपूजितः ११९
गंधर्वैःस्तूयमानस्तुगतःशक्रोऽमरावतीम्
इत्थंसद्योविपापोऽभूत्प्रयागेपाकशासनः १२०
याहित्वमपिकल्याणिप्रयागंदेवसेवितम्
सद्यःपापविनाशायतथास्वर्गतयेदृढम् १२१
इतितस्यवचःश्रुत्वासेतिहासंसमंगलम्
तदैवसंभ्रमापन्नानत्वापादौद्विजस्यतु १२२
त्यक्त्वाबंधुजनंसर्वंदासदासीगृहंतथा
सकलान्विषयान्रक्षोविषग्रासानिवस्फुटम् १२३
वपुश्चक्षणविध्वंसिपश्यंतीनिर्गताह्यहम्
नरकार्णवसंपातदारुणांतरवह्निना १२४
हृदयेकुणपव्याघ्रतदातत्तप्यमानया
मयागत्वाकृतंस्नानंमाघेमासिसितासिते १२५
तस्यस्नानस्यमाहात्म्यंशृणुवृद्धनिशाचर
त्र्यहात्पापक्षयोजातःसप्तविंशतिभिर्दिनैः १२६
शेषैर्मेयदभूत्पुरयंतेनदेवत्वमागता
रममाणातुकैलासेगिरिजायाःप्रियासखी १२७
जातिस्मरातथाजाताप्रयागस्यप्रभावतः
स्मृत्वाप्रयागमाहात्म्यंमाघेमाघेव्रजाम्यहम् १२८
इतिराक्षसयत्पृष्टंत्वयाविस्मितचेतसा
तन्मयाकथितंसर्वंचरितंप्रीतयेतव १२९
मत्प्रीतयेचरित्रंस्वंत्वंब्रूहिममराक्षस
कर्मणाकेनजातोऽसिविरूपोऽतिभयंकरः १३०
श्मश्रुलोदीर्घदंष्ट्रश्चक्रव्यादोगिरिगह्वरे
राक्षसउवाच
इष्टंददातिगृह्णातिगुह्यंवदतिपृच्छति १३१
प्रीत्याहिसज्जनोभद्रेतच्चसर्वंत्वयिस्थितम्
त्वयासंभावितोनूनंमन्येऽहवामलोचने १३२

भाविनीनिष्कृतिःसद्यस्त्वयास्यक्रूरकर्मणः
अतोवक्ष्यामितेभद्रेदुष्कृतंयत्स्वयंकृतम् १३३
निवेद्यसज्जनेदुःखंततःसर्वसुखीभवेत्
शृणुसुश्रोण्यहंकाश्यांबह्वृचोवेदपारगः १३४
जातःपुराद्विजःश्रेष्ठःकुलेमहतिनिर्मले
राज्ञांदुष्कृतिनांभीरुशूद्राणांचतथाविशाम् १३५
वाराणस्यांकृतोघोरोमयादुष्टप्रतिग्रहः
बहुधाबहुधावारंनिषिद्धःकुत्सितोबहु १३६
चांडालस्यापिनत्यक्तोमयादुष्टप्रतिग्रहः
अन्यच्चपातकंतत्रममाभून्मूढचेतसः
तन्नास्तिदुष्कृतंकर्ममयायत्रनयत्कृतम् १३७
अन्यच्चश्रूयतांदोषःक्षेत्रस्यवरवर्णिनि
अविमुक्तेऽणुमात्रंयत्तदघंमेरुतांव्रजेत्
नधर्मस्तुमयाकश्चित्संचितस्तत्रजन्मनि १३८
ततोबहुतिथेकालेमृतस्तत्रैवशोभने
अविमुक्तप्रभावेणनचाहंनरकंगतः १३९
अविमुक्तेमृतःकश्चिन्नरकंनेतिकिल्बिषी
अविमुक्तेकृतंकिंचित्पापंवज्रीभवेद्दृढम् १४०
वज्रलेपेनपापेनतेनमेजन्मराक्षसम्
रौद्रंक्रूरतरंपापंसंभूतंहिमपर्वते १४१
द्विर्जातोगृध्रयोनौप्राक्त्रिर्व्याघ्रोद्विःसरीसृपः
एकवारमुलूकस्तुविड्वराहस्ततःपरम् १४२
इदंतुदशमंजन्मराक्षसंममभामिनी
अतीतानिसहस्राणिवर्षाणिममजन्मनः १४३
नास्तिमेनिष्कृतिर्भद्रेएतस्माद्दुःखसागरात्
अत्रत्रियोजनंसुभ्रूर्निर्जंतुहिमयाकृतम् १४४
अनागसांचभूतानांबहूनांचकृतःक्षयः
कर्मणातेनमेसुभ्रूर्दह्यतेसततंमनः १४५
त्वद्दर्शनसुधासिक्तंगतंशैत्यंमनोमम
तीर्थफलतिकालेनसद्यःसाधुसमागमः १४६

अतःसत्संगतिंसुभ्रूःप्रशंसंतिमनीषिणः
एतत्तेकथितंसर्वंस्वदुःखंहृद्गतंमया १४७
विरलःसज्जनःसुभ्रूःस्वात्मायस्यनखिद्यते
जानास्यत्रोचितंत्वंहिकिंचिन्नोवच्म्यतःपरम् १४८
अस्यदुःखोदधेःपारंकथंयामीतिचिंतयन्
सज्जनानांसमाभूतिःसर्वेषामुपजीवनम् १४९
क्षीरार्णवःपयोदत्तेहंसायनबकायकिम्
दत्तात्रेयउवाच
इतितस्यवचःश्रुत्वादयार्द्रीकृतमानसा १५०
धर्मदानेमतिंकृताजगौकांचनमालिनी
करिष्येनिष्कृतिंरक्षइदानींखलुमाशुचः १५१
प्रतिज्ञांतुदृढांकृत्वायतिष्येतवमुक्तये
बहवोहिकृतामाघावर्षेवर्षेयथाविधि १५२
श्रद्धापूर्वंमयाभद्रब्रह्मक्षेत्रेसितासिते
तांवदामितुसंख्यातिंतस्यधर्मस्यराक्षस १५३
गूढोधर्मोहिकर्तव्यइत्यूचुर्विबुधाजनाः
आर्तेदानंप्रशंसंतिमुनयोवेदवादिनः १५४
सागरेवर्षतोभद्रकिंमेघस्यफलंभवेत्
अनुभूतंमयारक्षःस्वयंतत्पुण्यजंफलम् १५५
तत्तुदास्यामितेमित्रसद्यःपापविनाशनम्
निष्पीड्याथततोवस्त्रंजलंकृत्वाकरांबुजे १५६
ददौसामाघजंपुण्यंतस्मैवृद्धायरक्षसे
शृणुराजन्विचित्रंहिप्रभावंमाघधर्मजम् १५७
तदैवंप्राप्यतत्पुण्यंविमुक्ताराक्षसीतनुः
संभूतोदेवताकारस्तेजोभास्करविग्रहः १५८
देवयानंसमारूढःसहर्षोत्फुल्ललोचनः
द्योतमानस्तदाव्योम्निभासयन्प्रभयादिशः १५९
दिव्यरूपधरोरेजेद्वितीयइवभास्करः
ततोऽभिनंदयामाससतांकांचनमालिनीम् १६०
भद्रेवेत्तीश्वरोदेवःकर्मणांयःफलप्रदः

तत्त्वयोपकृतंसर्वंयत्रमेनास्तिनिष्कृतिः १६१
इदानीमपिकारुरायात्प्रसीदानुग्रहंकुरु
शिद्मांविधेहिमेदेविसर्वनीतिमयींशुभाम् १६२
सर्वधर्मकरींनूनंनकुर्वेपातकंयथा
तांश्रुत्वात्वदनुज्ञातःपश्चाद्यामिसुरालयम् १६३
दत्तात्रेयउवाच
एतन्निशम्यतेनोक्तंप्रियंधर्ममयंवचः
अतिप्रीत्याब्रवीद्धर्मराजन्कांचनमालिनी १६४
धर्मंभजस्वसततंत्यजभूतहिंसांसेवस्वसाधुपुरुषान्जहिकामशत्रुम्
अन्यस्यदोषगुणकीर्तनमाशुहित्वासत्यंवदार्चयहरिंव्रजदेवलोकम् १६५
देहेऽस्थिमांसरुधिरेस्वमतिंत्यजत्वंजायासुतादिषुसदाममतांविमुंच
पश्यानिशंजगदिदंद्मणभंगुरंहिवैराग्यभावरसिकोभवयोगनिष्ठः १६६
प्रीत्यामयानिगदितंतवधर्ममार्गंचित्तोनिधेहिसकलंभवशीलयुक्तः
संत्यज्यराद्मसतनुंधृतदेवदेहोज्योतिर्मयोव्रजयथासुखमाशुनाकम् १६७
श्रुत्वाधर्मंततोहृष्टःसंतुष्टोराद्मसोऽब्रवीत्
भवप्रमुदितानित्यंसर्वदाशिवमस्तुते १६८
आचन्द्रार्कंरमस्वत्वंकैलासेशिवसन्निधौ
उमयाऽखडितंप्रेमतवास्तुवरवर्णिनि १६९
धर्मनिष्ठातपोनिष्ठामातस्त्वंभवसर्वदा
मास्तुलोभःशरीरेतेआपन्नार्तिसदाहर १७०
इत्युक्त्वातुप्रणम्याथसतांकांचनमालिनीम्
जगामराद्मसःस्वर्गंगंधर्वैर्बहुभिःस्तुतः १७१
देवकन्यास्तदागत्यववर्षुःपुष्पवृष्टिभिः
तस्याःकांचनमालिन्यामूर्ध्निहर्षसमाकुलाः १७२
तामालिग्यततःप्रोचुःकन्यकास्तुप्रियंवचः
कृतंभद्रेत्वयाचित्रंराद्मसस्यविमोद्मणम् १७३
दुष्टस्यास्यभयात्कश्चिद्विशत्यस्मिन्नकानने
अधुनानिर्भयाह्यत्रविचरामोयथासुखम् १७४
श्रुत्वातद्वचनंराजंस्तासांकांचनमालिनी
हृष्टातेनैवदानेनकृतकृत्यातदासती १७५

तंराक्षसंकांचनमालिनीवरागन्धर्वकन्यापरिमोच्यसत्वरम्
क्रीडंत्यमूभिःप्रययौहरालयंप्रीत्यासपूर्णाचपरोपकारया १७६
संवादमेनंवरकन्यकेरितंभक्त्यापरंयःशृणुयाच्चमानवः
नबाध्यतेजातुसदासराक्षसैर्धर्मेमतिस्तस्यभृशंहिजायते १७७
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहिताया
मुत्तरखराडेमाघमासमाहात्म्येदिलीपवसिष्ठसंवादेराक्षसमोक्षोनाम
सप्तविंशत्यधिकशततमोऽध्यायः१२७

अष्टाविशंत्यधिकशततमोऽध्यायः

वसिष्ठउवाच
कथितंमाघमाहात्म्यंदत्तात्रेयेणभाषितम्
अधुनाऽहप्रवक्ष्यामिमाघस्नानस्ययत्फलम् १
सर्वक्रतुवरिष्ठंतुसर्वदानफलप्रदम्
सर्वव्रततपस्तुल्यंमाघस्नानंपरंतप २
स्नानेनमाघस्यविशुद्धमानसापितृन्दिविस्थाप्यकुलद्वयस्यवै
स्वर्गंप्रयांतिस्वयमुज्ज्वलाननावरैर्विमानैरुचिरैश्चकामगैः ३
येमानवाःपापकृतोऽपिसर्वदासदादुराचाररताविमार्गगाः
स्नात्वाहिमाघेहरिमर्चयंतियेमुंचंतितेपीहमहाघसंचयम् ४
सत्येनहीनाःपितृमातृदुःखदाह्यनाश्रमस्थाःकुलधर्मवर्जिताः
येदांभिकास्तेऽपिनराः सतांगतिंस्नानैःप्रयांत्यत्रहिमाघसंभवैः ५
पुरायेषुतीर्थेषुचमाघमासेस्नानंनराणामतिदुर्लभंभुवि
तस्माद्यतोब्रह्मविदांपदंनरैःसंप्राप्यतेनात्रविचारणामम ६
माघेतपोदानजपप्रसेवनंस्थानंहरेःपूजनमक्षयंनृप
तस्माद्यथाशक्तिनरैःप्रयत्नतःस्नात्वाप्रदेयंवसनान्नकांचनम् ७
माघेऽन्नदाताऽमृतपःसुरालयेहेम्नश्चदाताबलभित्समीपगः
दीपाग्निवासांसिददन्नरःसदासूर्यस्यलोकेवसतिप्रभामयः ८
यज्ञैःसुदानैःसुतपोभिरुज्ज्वलैःसुब्रह्मचर्यार्चनयोगसेवया
शुद्धाभवंतीहतथानपापिनःस्नानैर्यथापुरायभवैस्तुमाघजैः ९
दुःखौघसंतप्तिमसह्ययातनांयाम्यांनतेयांत्यपिपापकारिणः
येमाघमासेवरतीर्थमज्जनंकुर्वंतिचार्धोदितसूर्यमंडले १०

स्नात्वाचमाघेहरिमर्चयंतियेस्वर्गच्युताभूपतयोभवंति
भव्याःसुरूपाःसुभगाःप्रियंवदाधर्मान्विताभूरिधनाःशतायुषः ११
दीप्तानलेकाष्ठचयोयथाहुतोभस्मावशेषोभवतीहतत्क्षणात्
स्नानेनमाघस्यतथाविलीयतेक्षुद्रोऽपिपापौघमहाघसंचयः १२
कायेनवाचामनसापिपातकंज्ञातंयदज्ञातमलंकृतंनरैः
स्नानंचमाघेवरतीर्थसंभवंसर्वंदहद्वृष्णुरिवाशु हृद्गतः १३
संभुज्यमानाघफलंहिपार्थिवप्रमादतोपीहनृणांकदाचन
स्नानंहिमाघस्ययतःप्रसज्यतेतदैवतत्संक्षयमेतिनिश्चितम् १४
गंधर्वकन्याःपृथिवीशशापजंसंभुज्यमानाघफलंदुरत्ययम्
स्नानाद्विमुक्ताःखलुमाघमासजाद्वाक्यात्पुरालोमशजातमद्भुतम् १५
सूतउवाच
श्रुत्वैतत्पार्थिवः प्रीत्यानत्वातत्पादपंकजम्
श्रद्धयापरयानम्रस्तंपप्रच्छपुरोधसम् १६
भगवन्ब्रूहिकन्याभिःशापोह्यभिगतःकुतः
कस्यापत्यानितास्तासांनामकिंकीदृशंवयः १७
कथंलोमशवाक्येनविपाकाच्छापसंभवात्
विमुक्ताःकुत्रताः सस्नुर्मासंताः कतिसंख्यया १८
वसिष्ठउवाच
श्रूयतांराजशार्दूलधर्मगर्भांकथांपराम्
यथाऽरणिर्वह्निगर्भाधर्मसूर्वह्निसूरिव १९
गंधर्वःसुखसंगीतिस्तस्यकन्याप्रमोदिनी
सुशीलस्यसुशीलाचसुस्वरास्वरवेदिनः २०
सुताराचंद्रकांतस्यचंद्रिकासुप्रभस्यच
इमानिवरनामानि तासामप्सरसांनृप २१
कुमार्यः पंचसर्वास्तावयसासुसमाःपुनः
चंद्रादिवविनिष्क्रांताश्चंद्रिकेवसमुज्ज्वलाः २२
चंद्राननाः सुकेशिन्यश्चंद्रामृतरसाधराः
नेत्रेष्वानंदकारिण्यः कौमुदीकुमुदेष्विव २३
लावण्यपिंडसंभूताश्चारुरूपामनोहराः
उदिभन्नकुचकुंभिन्यःपद्मिन्यइवमाधवे २४

उन्मील्ययौवनंकांतंवल्लीवनवपल्लवैः
हेमगौराश्चहेमाभाहेमालंकारभूषिताः २५
हेमचंपकमालिन्योहेमच्छविसुवाससः
स्वरग्रामावलीहासुविविधामूर्च्छनासुच २६
तालदानविनोदेषुवेणुवीणाप्रवादने
मृदंगनादसंभिन्नंलास्यमार्गलवेषुच २७
चित्रादिषुविनोदेषुकलासुचविशारदाः
एवंभूतास्तुताःकन्यामुमुहुःक्रीडनेवने २८
पितृभिर्लालिताःसत्यश्चेरुश्चधनदालये
कौतुकादेकदापंचमिलित्वामासिमाधवे
कन्यामंदारपुष्पाणिविचिन्वंत्योवनाद्वनम् २९
गौरींसमाराधयितुंवरांगनाःकदाचिदच्छोदसरोवरंययुः
हेमांबुजानिप्रवराणिताःपुनस्तस्मादुपादायवरोत्पलैःसह ३०
वैडूर्यशुद्धस्फटिकाच्छविद्रुमेस्नात्वातडागेपरिधायचांबरम्
मौनेनचस्थंडिलपिंडिकामयीस्वर्णस्यसिक्ताभिरुमांविनिर्ममुः ३१
समर्चितांचंदनचंद्रकुंकुमैरभ्यर्च्यगौरींवरपंकजादिभिः
नानोपचारैश्चसुभक्तिभाविताास्तालप्रयोगैर्ननृतुःकुमारिकाः ३२
गांधारमाश्रित्यवरंस्वरंततोगेयंसुतारध्वनिभिःसुमूर्च्छितम्
एणीदृशस्ताःप्रजगुःकलाक्षरंचारुप्रबंधंगतिभिस्तुसुस्वरम् ३३
तस्मिन्सुनादेरसवर्षहर्षदेकन्यास्वलंनिर्भरनृत्यवृत्तिषु
अच्छोदतीर्थप्रवरेतदागतःस्नातुंमुनेर्वेदनिधेःसुताग्निपः ३४
रूपेणनिःसीमतरोवराननःसरोजपत्रायतलोचनोयुवा
विशालवक्षाःसुभुजोऽतिसुंदरःश्यामच्छविःकामइवापरोहिसः ३५
सब्रह्मचारीसशिखोविराजतेदंडेनयुक्तोधनुषैवमन्मथः
एणाजिनप्रावरणःसुसूत्रधृग्घेमाभमौंजीकटिसूत्रमेखलः ३६
तंदृष्ट्वाब्राह्मणंबालास्तास्तत्रसरसस्तटे
जहर्षुःकौतुकाविष्टाःकोऽयनोनयनातिथिः ३७
संत्यक्तनृत्यगीतास्तास्तस्यालोकनतत्पराः
हरिण्योलुब्धकेनेवविद्धाःकामेनसायकैः ३८
पश्यपश्येतिजल्पंत्योमुग्धाःपंचसुसंभ्रमम्

तस्मिन्विप्रवरेयूनिकामदेवभ्रमंययुः ३९
पुनःपुनस्तमभ्यर्च्यनयनैःपंकजैरिव
पश्चाद्विचारमायासुस्ताश्चकन्याःपरस्परम् ४०
यद्ययंकामदेवोहिरतिहीनःकथंव्रजेत्
अथायमश्विनौदेवौतौनूनंयुग्मचारिणौ ४१
गंधर्वःकिन्नरोवाथसिद्धोवाकामरूपधृक्
ऋषिपुत्रोथवाकश्चित्कश्चिद्वामानुषोत्तमः ४२
अस्तुवाकश्चिदेवायंधात्रासृष्टोहिनःकृते
यथाभाग्यवतामर्थेनिधानंपूर्वकर्मभिः ४३
तथास्माकंकुमारीणांगौर्यानीतोवरोत्तमः
करुणाजलकल्लोलप्लवार्द्रीकृतचित्तया ४४
मयावृतस्त्वयाचायंत्वयावृतस्तथामया
एवंपंचसुकन्यासुवदंतीषुनृपोत्तम ४५
श्रुत्वातद्वचनंतत्रकृत्वामाध्याह्निकीःक्रियाः
आलोच्यहृदयेसोऽपिविघ्नमेतदुपस्थितम् ४६
ब्रह्मविष्णुगिरिशादयःसुरायेचसिद्धमुनयःपुरातनाः
तेऽपियोगबलिनोविमोहितालीलयातदबलाभिरद्भुतम् ४७
योषितांनयनतीक्ष्णसायकैर्भ्रूलतासुदृढचापनिर्गतैः
धन्विनामकरकेतुनाहतःकस्यनोपततिहामनोमृगः ४८
तावदेवनयधीर्विराजतेतावदेवजनताभयंभजेत्
तावदेवदृढचित्तताभृशंतावदेवगणनाकुलस्यच ४९
तावदेबवतपसःप्रगल्भतातावदेवयमधारणंनृणाम्
यावदेववनितेक्षणबाणैर्मोहयंत्युरुमदैर्नमानुषाः ५०
मोहयंतुमदयंतुरागिणांयोषितःसुललितैर्मनोहरैः
मोहयंतिमदयंतिमामिमंधर्मरक्षणपरंहिकैर्गुणैः ५१
मांसशुक्रमलमूत्रनिर्मितेयोषितांवपुषिनिर्घृणेऽशुचौ
कामिनश्चपरिकल्प्यचारुतांमारमंतुसुविमूढचेतसः ५२
दारुणोहिपरिकीर्तितोंगनासन्निधिर्विमलबुद्धिभिर्बुधैः
यावदत्रनसमीपगाइमास्तावदेवहिगृहंव्रजाम्यहम् ५३
समीपंतस्ययावद्धिनागच्छंतिवरांगनाः

वैष्णवेनप्रभावेणतावदंतर्दधेद्विजः ५४
तस्ययोगबलाद्रूपगतस्यादर्शनंतदा
दृष्ट्वातदद्भुतंकर्मऋृषिपुत्रस्यधीमतः ५५
वित्रस्तनयनाबालाःकुरंग्यइवकातराः
संभ्रांतनयनाःशून्याददृशुस्तादिशोदश ५६
इंद्रजालंस्फुटंवेत्तिमायांजानातिवापुनः
दृष्टोऽप्यदृष्टरूपोऽभूदित्यूचुश्चपरस्परम् ५७
व्याप्तंतुहृदयंतासांसदैवविरहाग्निना
ज्वलद्दावानलेनेवसुस्निग्धंसांद्रकाननम् ५८
त्यक्त्वैंद्रजालिकींविद्यांकांतदर्शयसत्वरम्
स्वात्मानंनोमनोयुक्तंप्राग्गरासेमह्निकोपमम् ५९
हाकष्टंदर्शितःकस्माद्धात्रात्वंघटितःपुनः
ज्ञातंमहानुसंतापहेतोर्नस्त्वंविनिर्मितः ६०
कच्चित्तेनिर्दयंचेतःकच्चिदस्मासुनोमनः
कच्चिद्धूर्तोऽसि हेकांत कच्चिन्मुष्णासि नोमनः ६१
कच्चिन्नप्रत्ययोस्मासुकच्चिदऽस्मान्परीक्षसे
कच्चिन्नर्मकलाशीलःकच्चिन्मायाविशारदः ६२
कच्चिच्चित्तेप्रवेष्टुंचवेत्सिविज्ञानलाघवम्
कच्चिन्निष्क्रमणोपायंनजानासिकुतःपुनः ६३
कच्चिद्विनापराधंतुत्वमस्मासुप्रकुप्यसे
कच्चिद्दुःखंविजानासिपरेषांविप्रलंभजम् ६४
त्वद्दर्शनंविनानूनंहृदयेश्वरसांप्रतम्
नजीवामोऽथजीवामःपुनस्त्वद्दर्शनाशया ६५
अस्मांश्चनीयतांतत्रयत्रशीघ्रंगतोभवान्
त्वद्दर्शनहरोधाताव्यदधादंकुरच्छिदम् ६६
सर्वथादर्शनंदेहिकारुरायंभजसर्वथा
पर्यंतंनप्रपश्यंतिसर्वथासज्जनाजनाः ६७
इत्थंविलप्यताःकन्याःप्रतीक्ष्यचबहुक्षणम्
पितृभिर्यागृहंगंतुंशीघ्रमारेभिरेगतिम् ६८
तत्प्रेमनिगडैर्बद्धाभृशंविरहविक्लवाः

कथंचिद्धैर्यमालंब्यताःस्वंस्वंगृहमागताः ६९
आगत्यपतिताःसर्वाजलयंत्रसमीपतः
किमेतन्मातृभिःपृष्टाःकुतःकालात्ययोऽभवत् ७०
कन्याऊचुः
क्रीडंत्यःकिन्नरीभिस्तुसार्धंसंगीतकंमुदा
संस्थितास्तेननज्ञातंदिवसादिसरोवरे ७१
पथिश्रांतावयंमातःसंतापस्तेननस्तनौ
मोहेनमहतावक्तुंनकेनाप्युत्सहामहे ७२
इत्युक्त्वालुलुठुस्तत्रमणिभूमौकुमारिकाः
आकारंगोपयंत्यस्तामुग्धाजल्पंतिमातृभिः ७३
काचिन्नर्तयतिक्रीडामयूरंनमुदातदा
नपाठयतितंकीरंपंजरेऽन्याकुतूहलात् ७४
लालयेन्नकुलंनान्यानोल्लासयतिसारिकाम्
अपरातीवसंमुग्धानैवक्रीडतिसारसैः ७५
भेजिरेनविनोदांस्तारेमिरैनैवमंदिरे
ऊचिरेबांधवैर्नालंवीणावाद्यंनचक्रिरे ७६
कल्पद्रुमप्रसूनंयद्रसवत्तुसुधोपमम्
मंदारकुसुमामोदिनपपुर्मधुरंमधु ७७
योगिन्यइवताःकन्यानासाग्रन्यस्तलोचनाः
अलक्ष्यध्यानसंतानाःपुरुषोत्तममानसाः ७८
चंद्रकांतमणिच्छन्नेस्रवद्वारिकणद्रवे
क्षणंवातायनेस्थित्वाजलयंत्रेक्षणंक्षणात् ७९
रचयंतिक्षणंशय्यांदीर्घिकांभोजिनीदलैः
वीज्यमानासखीभिस्ताःशीतलैःकदलीदलैः ८०
इत्थंयुगसमांरात्रिंमन्वानास्तावरस्त्रियः
कथंचिद्धीरतांकृत्वाविह्वलाःसज्वराइव ८१
प्रातर्व्योममणिंदृष्ट्वामन्यमानाःस्वजीवितम्
विज्ञाप्यमातरंस्वांस्वांगौरींपूजयितुंगताः ८२
स्नात्वातेनविधानेनपुष्पैर्धूपैर्यथातथा
विधायपूजनंदेव्यागायंत्यस्तत्रताःस्थिताः ८३

एतस्मिन्नंतरेविप्रःस्नातुंसोऽपिसमागतः
पित्राश्रमपदात्तस्मादच्छोदेचसरोवरे ८४
मित्रंदृष्ट्वैवरात्र्यंतेनलिन्यइवकन्यकाः
उत्फुल्लनयनाजातास्तंदृष्ट्वाब्रह्मचारिणम् ८५
गत्वातदैवताःकन्याःसमीपंब्रह्मचारिणः
सव्यापसव्यबंधेनभुजपाशंचचक्रिरे ८६
गतोऽसिधूर्तपूर्वेद्युर्गंतुमद्यनशक्यसे
वृतस्त्वंनूनमस्माभिर्नात्रतेऽस्तुविचारणा ८७
इत्युक्तोब्राह्मणःप्राहप्रसन्बाहुपाशगः
युष्माभिरुच्यतेभद्रमनुकूलंप्रियंवचः ८८
प्रथमाश्रमनिष्ठस्यकिंतुनाद्यापिमेव्रतम्
वेदाभ्यसनशीलस्यपारंयातिगुरोःकुले ८९
आश्रमेयत्रयोधर्मोरक्षणीयःसपंडितैः
विवाहोऽयमतोमन्येनधर्मइतिकन्यकाः ९०
आकर्ण्यतस्यवाक्यानितमूचुस्तावचस्ततः
सकलध्वनिसोत्कंठाःकोकिलाइवमाधवे ९१
धर्मादर्थोर्थतःकामःकामाद्धर्मफलोदयः
इत्येवनिश्चितंशास्त्रंवर्णयंतिविपश्चितः ९२
सकामोधर्मवाहुल्यात्पुरस्तेसमुपागतः
सेव्यतांविविधैर्भोगैःस्वर्गभूमिरियंततः ९३
श्रुत्वातद्वचनंतासांप्राहगंभीरयागिरा
तथ्यंवोवचनंकिंतुसमाप्येहस्वकंव्रतम् ९४
प्राप्यनुज्ञांगुरोःसर्वंवैवाहंकर्मनान्यथा
इत्युक्त्वापुनरूचुस्ताःस्फुटंमूढोऽसिसुन्दरः ९५
दिव्यौषधंब्रह्मरसायनंचसिद्धिर्निधेःसाधुकलावरांगनाः
मंत्रस्तथासिद्धिरसश्चधर्मतोनेमानिषेध्याःसुधियासमागताः ९६
कार्यंहिदैवाद्यदिसिद्धमागतंतस्मिन्नुपेक्षांनचयातिनीतिगः
यस्मादुपेक्षानपुनःफलप्रदातस्मान्नदीर्घीकरणंप्रशस्यते ९७
सांद्रानुरागाःकुलजन्मनिर्मलाःस्नेहार्द्रचित्ताःसुगिरःस्वयंवराः
कन्याःसुरूपाःखलुचारुयौवनाधन्यालभंतेऽत्रनरास्तुनेतरे ९८

क्ववयंवरसुन्दर्यःक्वचाऽयतापसोबटुः
दुर्घटस्यविधानेहिमन्येधातातिपंडितः ९९
तस्मादस्मानिदानींतुस्वीकुर्यान्मंगलंभवान्
गांधर्वेणविवाहेनह्यन्यथानोनजीवितम् १००
श्रुतवाक्यस्ततःप्राहब्राह्मणोधर्मवित्तमः
भोमृगाच्यःकथंत्याज्योधर्मोधर्मधनैर्नरैः १०१
धर्मश्चार्थश्चकामश्चमोक्षश्चैतच्चतुष्टयम्
यथोक्तंसफलंज्ञेयंविपरीतंतुनिष्फलम् १०२
नाकालेऽहव्रतीकुर्यामतोदारपरिग्रहम्
नक्रियाफलमाप्नोतिक्रियाकालंनवेत्तियः १०३
यतोधर्मविचारेऽस्मिन्प्रसक्तंममममानसम्
तस्माच्छृणुतहेकन्यानसमीहेस्वयंवरम् १०४
एवंज्ञात्वाशयंतस्यसमीक्ष्यैताःपरस्परम्
करात्करंविमुच्याथजग्राहांघ्रीप्रमोदिनी १०५
भुजौजग्रहतुस्तस्यसुशीलासस्वरातथा
आलिलिंगसुताराचचुचुंबेचंद्रिकामुखम् १०६
तथापिनिर्विकारोऽसौप्रलयानलसन्निभः
शशापब्रह्मचारीताःक्रोधेनात्यंतमूर्च्छितः १०७
पिशाच्यइवमांलग्नास्तत्पिशाच्योभविष्यथ
एवंतेनाशुशप्तास्तास्तंसंत्यज्यपुरास्थिताः १०८
किमेतच्चेष्टितंपापह्यनागसिजनेत्वया
प्रियेकृत्येऽप्रियंकृत्वाधिक्ताधर्मज्ञतांतव १०९
अनुरक्तेषुभक्तेषुमित्रेषुद्रोहकारिणः
पुंसोलोकद्वयेसौख्यंनाशंयातीतिनःश्रुतम् ११०
तस्मात्त्वमपिनःशापात्पिशाचोभवसत्वरम्
इत्युक्त्वोपरताबालानिःश्वसंत्यःक्षुधाकुलाः १११
तदाचान्योन्यसंरंभात्तस्मिन्सरसिपार्थिव
ताःकन्याब्रह्मचारीसःसर्वेपैशाचमागताः ११२
पिशाच्याःसपिशाचश्चक्रंदमानाःसुदारुणम
क्षपयंतिविपाकंतंपूर्वोपात्तस्यकर्मणः ११३

स्वकालेतुफलत्येवपूर्वोपात्तंशुभाशुभम्
स्वच्छायाइवदुर्वारंदेवानामपिपार्थिव ११४
क्रंदंतिपितरस्तासांमातरस्तत्रतस्यच
अप्रमादश्चबालानां दैवंहिदुरतिक्रमम् ११५
ततऊर्ध्वंपिशाचास्तेआहारार्थेसुदुःखिताः
इतस्ततश्चधावंतोवसंतिसरसस्तटे ११६
एवंबहुतिथेकालेलोमशोमुनिसत्तमः
पौषेमासिचतुर्दश्यामच्छोदेस्नातुमागतः ११७
दृष्ट्वातंब्राह्मणंसर्वेपिशाचाःज्जुत्समाकुलाः
धावंतोहतुकामास्तेमिलित्वायूथवर्तिनः ११८
दह्यमानासुतीव्रेणतेजसालोमशस्यच
असमर्थाःपुरःस्थातुंसर्वेतेदूरतःस्थिताः ११९
तत्रवेदनिधिर्विप्रस्तदैवहिसमागतः
समीक्ष्यलोमशंराजन्साष्टांगंप्रणिपत्यसः १२०
उवाचसूनृतांवाचंबद्ध्वाशिरसिचांजलिम्
महाभाग्योदयेविप्रसाधूनांसंगतिर्भवेत् १२१
गंगादिसर्वतीर्थेषुयोनरःस्नातिसर्वदा
यःकरोतिसतांसंगंतयोःसत्संगतिर्वरा १२२
गुरूणांसंगमोविप्रदृष्टादृष्टफलोभुवि
स्वर्गदोरोगहारीचकिंतुसोपद्रवोमतः १२३
इत्युक्त्वाकथयामासपूर्ववृत्तांतमद्भुतम्
इमागंधर्वकन्यास्ताबटुःसोऽयममात्मजः १२४
सर्वेपिशाचरूपेणमिथःशापविमोहिताः
दीनाननास्तुतिष्ठंतितवाग्रेमुनिसत्तम १२५
त्वद्दर्शनेनबालानांनिस्तारोऽद्यभविष्यति
सूर्योदयेतमःस्तोमःकिंनलीयेतगह्वरे १२६
श्रुत्वातल्लोमशोराजन्कृपार्द्रीकृतमानसः
प्रत्युवाचमहातेजास्तंमुनिंपुत्रदुःखितम् १२७
मत्प्रसादाच्चबालानांस्मृतिःसपदिजायताम्
धर्मंचवच्मितंयेनमिथःशापोलयंव्रजेत् १२८

वेदनिधिरुवाच
महर्षेकथ्यतांधर्मोमुच्यंतेयेनबालकाः
नायंकालोविलंबस्यशापाग्निर्दारुणोयतः १२९
लोमशउवाच
मयासार्धंप्रकुर्वंतुमाघस्नानंविधानतः
शापान्मुच्यंतिमाघांतेनान्यथानिष्कृतिर्भवेत् १३०
शापःपापफलंविप्रपापनाशोभवेन्नृणाम्
माघस्नानेनतीर्थेचइतिमेनिश्चितामतिः १३१
सप्तजन्मकृतंपापंवर्तमानंचपातकम्
माघस्नानंदहेत्सर्वंपुण्यतीर्थेविशेषतः १३२
प्रायश्चित्तंनपश्यंतियस्मिन्पापेमुनीश्वराः
पातकंपुण्यतीर्थेषुनश्येत्तदपिमाघतः १३३
ज्ञानकृन्मानसेमाघस्तस्मान्मोक्षफलप्रदः
हिमवत्पृष्ठतीर्थेषुसर्वपापप्रणाशनः १३४
इंद्रलोकप्रदोच्छोदेनिर्दिष्टोवेदवादिभिः
सर्वपापहरोमाघोमोक्षदोबदरीवने १३५
पापहादुःखहारीचसर्वकामफलप्रदः
रुद्रलोकप्रदोमाघोनार्मदेपापनाशनः १३६
यामुनःसूर्यलोकायभवेत्कल्मषनाशनः
सारस्वतोऽघविध्वंसीब्रह्मलोकफलप्रदः १३७
विशालफलदोमाघोविशालायांद्विजोत्तम
पातकेंधनदावाग्निर्गर्भहेतुक्रियापहः १३८
विष्णुलोकायमोक्षायजाह्नवःपरिकीर्तितः
शरयूगंडकीसिंधुश्चंद्रभागाचकौशिकी १३९
तापीगोदावरीभीमापयोष्णीकृष्णवेणिका
कावेरीतुंगभद्राचअन्यायाश्चसमुद्रगाः १४०
आशुमाघीनरोयातिस्वर्गलोकंविकल्मषः
नैमिषेविष्णुसायुज्यंपुष्करेब्रह्मणोंतिकम् १४१
आखंडलस्यलोकोहिकुरुक्षेत्रेतुमाघतः
माघोदेवहृदेविप्रयोगसिद्धिफलप्रदः १४२

प्रभासेमकरादित्येस्नानाद्रुद्रगणोभवेत्
देवक्यांदेवतादेहोनरोभवतिमाघतः १४३
माघस्नानेनभोविप्रगोमत्यांनपुनर्भवः
हेमकूटेमहाकालेश्रोंकारेश्रमरेश्वरे १४४
नीलकंठेर्बुदेमाघाद्रुद्रलोकेमहीयते
सर्वासांसरितांविप्रसंगमेमकरेरवौ १४५
स्नानेनसर्वकामानामवाप्तिर्जायतेनृणाम्
माघस्तुप्राप्यतेधन्यैःप्रयागेद्विजसत्तम
श्रपुनर्भवदंतत्रसितासितजलंयतः १४६
गायंतिदेवाःसततंदिविस्थामाघःप्रयागेकिलनोभविष्यति
स्नानान्नरायत्रनगर्भवेदनांपश्यंतितिष्ठंतिचविष्णुसन्निधौ १४७
मज्जंतियेऽपित्र्यहमत्रमानवास्तीर्थेप्रयागेबहुपापकंचुकाः
व्रजंतितेनोनिरयेषुधर्मिणःस्वर्गेशुभेचारुचरंतिदेववत् १४८
तीर्थैर्व्रतैर्दानतपोभिरध्वरैःसार्धंविधात्रातुलयाधृतंपुरः
माघेप्रयागस्यतयोर्द्वयोरभून्माघोगरीयानतएवसोऽधिकः १४९
वातांबुपर्णाशनदेहशोषणैस्तपोभिरुग्रैश्चिरकालसंचितैः
योगैश्चसंयांतिनरानतांगतिंस्नानेनमाघस्यहियांतियांगतिम् १५०
स्नाताश्चयेमकरभास्करोदयेतीर्थेप्रयागेसुरसिंधुसंगमे
तेषांगृहद्वारमलंकरोतिकिंभृंगावलिकुंजरकर्णताडिता १५१
योराजसूयाद्धयमेधयज्ञतःस्नानात्फलंसंप्रददातिचाधिकम्
पापानिसर्वाणिविलोप्यलीलयानूनंप्रयागःसकथंनसेव्यते १५२
श्रवंतिविषयेराजावीरसेनोऽभवत्पुरा
नर्मदातीरमागत्यराजसूयंचकारसः १५३
षोडशैरश्वमेधैश्चस्वर्णवाटविराजितैः
स्वर्णभूषणयूपाढ्यैरीजेसोऽपियथाविधि १५४
प्रददौधान्यराशींश्चद्विजेभ्यःपर्वतोपमान्
वदान्योदेवताभक्तोगोप्रदःससुवर्णदः १५५
ब्राह्मणोभद्रकोनाममूर्खोहीनकुलस्तथा
कृषीवलोदुराचारःसर्वधर्मबहिष्कृतः १५६
कृषिकर्मसमुद्विग्नोबंधुभिश्चाप्यसंस्कृतः

इतस्ततःपरिभ्रम्यनिर्गतःक्षुत्प्रपीडितः १५७
दैवतःसार्थमाविश्यप्रयागंससमागतः
महामाघींपुरस्कृत्यसस्नौतत्रदिनत्रयम् १५८
अनघःस्नानमात्रेणभूत्वेहसद्विजोत्तमः
प्रयागाच्चलितस्तत्रपुनर्यस्मात्समागतः १५९
सराजासोऽपिविप्रश्चविपन्नावेकदातदा
तयोर्गतिःसमादृष्टामयाशक्रस्यसन्निधौ १६०
तेजोरूपंबलंस्त्रैणंदेवयानंविभूषणम्
पारिजातमयीमालानृत्यंगीतंतयोःसमम् १६१
इतिदृष्टंहिमाहात्म्यंक्षेत्रस्यकथमुच्यते
माघःसितासितेविप्रराजसूयैःसमोमतः १६२
धनुस्त्रिशतविस्तीर्णेसितनीलांबुसंगमे
अपुनरावृत्तिर्माघीराजसूयीपुनर्भवेत् १६३
माघमासीयवातोऽपिसितासितजलंस्पृशेत्
अधर्म्यंनस्पृशेन्नूनंमहापातकहाहिसः १६४
किमत्रबहुनोक्तेनश्रूयतांद्विजनिश्चितम्
समुद्भूतफलंपापंतीर्थेमाघःप्रणाशयेत् १६५
अत्रतेकथयिष्यामिसावधानमतिःशृणु
र्पिशाचमोचनंनामइतिहासंपुरातनम्
शृण्वंत्यप्सरसोबालाःशृणोतुत्वत्सुतस्तथा
मत्प्रसादात्स्मृतिर्लब्ध्वापैशाच्यान्मुक्तिकामिनः १
पुरादेवद्युतिर्विप्रोवैष्णवोवेदपारगः १६६
पिशाचान्मोचयामासकरुणाप्लुतमानसः १६७
दिलीपउवाच
कुत्रस्थितःकस्यपुत्रोनियमःकोऽस्यवाजपः
केनवावैष्णवोवृत्तःकेपिशाचाश्चमोचिताः १६८
एतद्विस्तरतःसर्वंकीर्तयस्वमहामुने
कौतूहलंमहापुण्यंशृणुमस्त्वत्प्रसादतः १६९
वसिष्ठउवाच
प्लक्षप्रस्रवणेपुण्येसरस्वत्यास्तटेशुभे

तत्राश्रमपदंतस्यशैलमाश्रित्यशोभनम् १७०
शालैस्तालैस्तमालैश्चबिल्वैर्बकुलपाटलैः
तिंतिडीचिरिबिल्वैश्चचूतचंपककांचनैः १७१
करंजैःकोविदारैश्चकेसरैःकुंजराशनैः
तिलकैःकर्णिकारैश्चकुंभैःखादिरतिंदुकैः १७२
वानीरैःसाल्वजंबीरैःपीलूदुंबरवेतसैः
शाकोटैरटरूषैश्चकरहाटैर्वटद्रुमैः १७३
घोंटाकुटजपालाशैरशोकैःशोकहारिभिः
जंबूनिंबकदंबैश्चद्मीरिकाकरमर्दकैः १७४
बीजपूरैःसनारिंगैरंभाराजिविराजितैः
पनसैरसवद्भिश्चनारिकेलैःसदाफलैः १७५
सप्तच्छदैस्त्रिपत्रैश्चशिरीषामलकैःशुभैः
कर्कंधूलकुचैरद्मैःपारिभद्रैर्वचादिभिः १७६
केतकैःसिंदुवारैश्चतगरैःकुन्दमल्लिकैः
पद्मेन्दीवरकह्लारमालतीयूथिकादिभिः १७७
मालतीमोगरैश्चैवजातीफलविराजितैः
पुन्नागैःकिंशुकैश्चैवबर्वरीतुलसीद्रुमैः १७८
ग्राश्रमोरमणीयःसद्रुमैर्नानाविधैर्नृप
वनमध्येनदीयातिपुरायतोयासरस्वती १७९
कूजंतिसारसास्तत्रमदस्निग्धकलंसदा
नदंतिकोकिलाःशब्दंगुंजंतिचमधुव्रताः १८०
बहुकोलाहलंभूपतद्वनंशुकसारिभिः
चरंतिश्वापदास्तत्रविविधाःकाननोत्तमे १८१
सदाफलंसदापुष्पंपरागकराधूसरम्
ग्राच्छन्नंकाननंसर्वंमधुवृद्मैःसमंततः १८२
नवपल्लवसंजातमंजरीभरवल्लिभिः
ग्राश्लिष्टमभितोरम्यंप्रियाभिरिववल्लभः १८३
तस्यशापभयात्त्रस्तोवातोवातिसमंततः
नवर्षंत्यश्मभिर्मेघानशोषयतिभास्करः १८४
वनंनोपद्रवंतद्धिसदासिद्धनिषेवितम्

आह्लादजनकंनित्यंवनंचैत्ररथंयथा १८५
तस्मिन्वसतिधर्मात्मादेवद्युतिर्द्विजोत्तमः
पुत्रःसुमित्रोविप्रस्यलब्धोलक्ष्मीपतेर्वरात् १८६
नियमःश्रूयतांतस्यसर्वदानियतात्मनः
ग्रीष्मेपंचतपानित्यंसूर्यन्यस्तविलोचनः १८७
वर्षत्कादंबिनीयावद्वर्षास्वभ्रावकाशगः
वातेप्रवातेनिष्कंपोदुःसहोहिमवानिव १८८
वसत्यप्सुसहेमंतेह्रदेसारस्वतेद्विज
उपस्पृशतिकालेसत्रिवारंवारिनिर्मलम् १८९
पितृन्देवानृषीन्नित्यंसंतर्पयतिश्रद्धया
ब्रह्मयज्ञपरोनित्यंसत्यवादीजितेंद्रियः १९०
भूमौविश्राम्यविश्रातःप्रदध्यौप्रार्थयन्हरिम्
वन्यैर्जुहोत्यग्निहोत्रंश्रद्धयातिथिपूजकः १९१
चांद्रायणविधानेनकालंनयतिसर्वदा
स्वयंविगलितैःपत्रैःफलैर्वृत्तिंसमीहते १९२
अनुद्विग्नस्तपोनिष्ठोवेदवेदांगपारगः
धमनीविकरालोसावस्थिमात्रकलेवरः १९३
इत्थंजगामवर्षाणांसहस्रंतस्यकानने
तदाजज्वालशैलोऽसौतपसस्तस्यतेजसा १९४
सोढुंनशक्यतेभूतैस्तेजस्तस्यमहात्मनः
वैश्वानरइवाभातिप्रज्वलंस्तपसाद्विज १९५
गतवैराणिभूतानिसमजायंततद्वने
मृगव्याघ्राखुमार्जारामिथःक्रीडंतिनिर्भयाः १९६
अन्योऽपिनियमस्तस्यश्रूयतामतिदुर्लभः
नारायणंत्रिकालंससंपूजयतिनित्यशः १९७
पुष्पाणांतुसहस्रेणविकचेनसुगंधिना
वेदसूक्तविधानेनविष्णुध्यानपरायणः १९८
विष्णोःसंप्रीतयेविप्रःकुरुतेकर्मचाखिलम्
दधीचेर्वरदानात्ससंजातोवरवैष्णवः १९९
एकदामासिवैशाखेएकादश्यांमहामुनिः

पूजांकृत्वाहरेरम्यांविचित्रामकरोत्स्तुतिम् २००
तदैवखगमारुह्यदेवोदेवोहरिःस्वयम्
ग्राजगामपुरस्तस्यतयास्तुत्यातिहर्षितः २०१
तंदृष्ट्वागरुडारूढंप्रत्यन्नंजलदच्छविम्
चतुर्बाहुंविशालान्नंसर्वालंकारभूषितम् २०२
उद्भूतपुलकोविप्रःसानंदजललोचनः
जगामशिरसाभूमौकृतकृत्यमनास्तदा २०३
नममौतेनहर्षेणसब्रह्मांडोदरेऽपिहि
नसस्मारनिजंदेहंब्रह्मभूतइवाभवत् २०४
ततःसंभाषितःप्रीत्याहरिणावैष्णवोमुनिः
देवद्युतेविजानामिमद्भक्तस्त्वंमदाश्रयः २०५
संन्यस्ताखिलकर्मासिमद्भावोमन्मनाःसदा
वरंब्रूहिप्रसन्नोऽस्मिस्तोत्रेणानेनचानघ २०६
इतिश्रुत्वाहरेर्वाक्यंप्रत्युवाचसतापसः
देवदेवारविंदान्नस्वमायाधृतविग्रह २०७
त्वद्दर्शनात्सदादेवदुर्लभोनापरोवरः
ब्रह्मादयःसुराःसर्वेयोगिनःसनकादयः २०८
त्वांसान्नात्कर्तुमिच्छंतिसिद्धाश्चकपिलादयः
ग्रहंममेतिपाशायेमोहलोभाःशुभाशुभाः २०९
सहेतुकाश्चदह्यंतेदृष्टेत्वयिपरावरे
जन्मनःकर्मणोबुद्धेराविर्भूतंफलंमम २१०
यदृष्टोऽसिजगन्नाथप्रार्थयेकिमतःपरम्
नवरार्थंहिदेवेशत्वत्पादपंकजंहृदि २११
चिंतयामिसदाभक्त्यात्वद्गतेनांतरात्मना
इममेववरंयाचेत्वद्भक्तिरचलामम २१२
ग्रस्तुवैकमलानाथप्रार्थयेनापरंवरम्
इतिश्रुत्वावचस्तस्यप्रसन्नवदनोहरिः २१३
प्रत्युवाचप्रसन्नात्माएवमस्तुद्विजोत्तम
ग्रन्यस्तेतपसःकश्चित्प्रत्यूहोनभविष्यति २१४
एतच्चत्वत्कृतंस्तोत्रंयेपठिष्यंतिमानवाः

तेषांमद्विषयाभक्तिर्निश्चलाचभविष्यति २१५
धर्मकार्यंचयत्किंचित्सांगंसर्वंभविष्यति
ज्ञानेचपरमानिष्ठातेषांस्थास्यतिनिश्चला २१६
इत्युक्त्वांतर्हितस्तत्रदेवदेवोजनार्दनः
देवद्युतिस्तदारभ्यनारायणपरोऽभवत् २१७
दिलीपउवाच
महर्षेऽनुगृहीतोऽस्मिकथयापावनीकृतः
अनयाविष्णुसंगत्यागंगयेवाहमद्यवै २१८
किंतत्स्तोत्रंसमाख्याहिप्रसन्नोयेनमाधवः
तस्यानघस्यविप्रस्यमहत्कौतूहलंमम २१९
त्वत्प्रसादादहंविप्रमन्येप्राप्तंमनोरथम्
महतांसंगतिःकस्यमहत्त्वायनकल्पते २२०
कथयस्वप्रसादेनविष्णोस्तोत्रमनुत्तमम्
येनतुष्टःसभगवान्ददौतस्यचदर्शनम् २२१
वसिष्ठउवाच
कथयामिरहस्यंतेयज्जप्तंस्तोत्रमुत्तमम्
प्राग्गृहीतंसुपर्णेनगरुडान्मयिचागतम् २२२
अध्यात्मगर्भसारंतन्महोदयकरंशुभम्
सर्वपापहरंभूपस्वात्मज्ञानकरंपरम् २२३
ओंनमोवासुदेवायनमोविश्वायचक्रिणे
भक्तप्रियायकृष्णायजगन्नाथायशार्ङ्गिणे २२४
स्तोतास्तुत्यःस्तुतिःसर्वंजगद्विष्णुमयंयदा
तदासंस्तूयतेकेनभक्तिर्मोदकरीनृणाम् २२५
यस्यदेवस्यनिःश्वासोवेदाःसांगाःससूत्रकाः
कास्तुतिःप्रमुदेतस्यभक्त्याऽहमुखरोऽभवम् २२६
चक्रवद्भ्रमतेसर्वंत्रैलोक्यंसचराचरम्
अतस्त्वंगीयतेदेवचक्रपाणिवरायुध २२७
वेदोनवक्तियंसाक्षान्नचवाग्वेत्तिनोमनः
मद्विधस्तंकथंस्तौतिभक्तिमान्वाकथंभवेत् २२८
ब्रह्मादिब्रह्मविष्णुस्त्वंत्वमेवसकलाश्रयः

स्रष्टाब्रह्मनिदानंचशुद्धंब्रह्मत्वमेवच २२९
कोऽयकायस्तवविभोभित्त्वास्पृशतिकायिनम्
कायदोषैर्नचाघ्रातस्तस्मैनमोस्तुयोगिने १ि
देवभावेनजागर्तिननिद्रातिनिजात्मनि
सुखसंदोहबुद्धिर्यासात्वंविष्णोनसंशयः २३०
महदादयोमहाभावास्तथावैकारिकागुणाः
त्वमेवनाथतत्सर्वंनानात्वंमूढकल्पना २३१
केशकेशवरूपाभिःकल्पनातिसृभिस्तथा
त्वमेवकल्पसेब्रह्मपुमानिवसुतादिभिः २३२
विदोषंविगुणंचैकंचिन्मूर्तिरखिलंजगत्
कवीनांभातियत्तत्त्वंतंविष्णुंनौमिनिर्मलम् २३३
यस्यज्ञानेनकुर्वंतिकर्मापिश्रुतिभाषितम्
निरीषणाजगन्मित्राःशुद्धंब्रह्मनमामितत् २३४
ध्वस्तेतरच्चसन्मात्रंयत्प्रबोधादुपासते
योगिनःसर्वभूतेषुसद्रूपंनौमितंहरिम् २३५
ब्रह्माहमितिगायंतियंज्ञात्वैकंवराद्विजाः
पश्यंतोहित्वयातुल्यंदेवतंनौमिमाधवम् २३६
माययामोहवैचित्र्यंतथाहंममतांनृणाम्
योनाशयतिपापौघान्नमस्तस्मैचिदात्मने २३७
प्रयाणेवाप्रयाणेचयन्नामस्मरतांनृणाम्
सद्योनश्यंतिपापौघानमस्तस्मैचिदात्मने २३८
मोहानललसज्ज्वालाज्वलल्लोकेषुसर्वदा
यत्पादांभोरुहच्छायांप्रविष्टश्चनदह्यते २३९
यस्यस्मरणमात्रेणनमोहोनैवदुर्गतिः
नरोगानैवदुःखानितमनंतंनमाम्यहम् २४०
कामयंतेप्रजानैवधिषणाभ्यःसमुत्थिताः
लोकमात्मैवपश्यंतियंबुद्धैकचराजनाः २४१
शब्दार्थःसंविदर्थश्चविष्णोर्नामपरोयदि
सत्येनतेनसंसारोमासंस्पृशतुमाधव २४२
नारायणोजगद्व्यापीयदिवेदादिसंमतः

सत्येनतेननिर्विघ्नाविष्णुभक्तिर्ममास्तुवै २४३
योनबीजंविनाबीजंबीजेयोबीजभावितः
सविष्णुर्भवबीजंमेसितविद्यासिनाद्यतु २४४
त्रितनुर्नटवद्यस्तुसृष्टिस्थितिलयेषुच
गुणैर्भवतिकार्येषुसप्रसीदतुमेहरिः २४५
दशधेहाऽवतीर्णोयोधर्मत्राणायकेवलम्
अभ्यर्थितःसुरैःसर्वैःसप्रसीदतुमेहरिः २४६
ब्रह्मादिस्तंबपर्यंतंप्राणिहृन्मंदिरेऽमलः
एकोवसतियोदेवःसप्रसीदतुमेहरिः २४७
इच्छांचक्रेसदेवाग्रेएकश्चैवबहुस्तथा
प्रविष्टोदेवताःस्रष्टासप्रसीदतुमेहरिः २४८
हृत्खगःखसमःखादिःखातीतःखक्रियःखगः
खंब्रह्माखादिभुक्चांतेखमूर्तिस्त्वंमखाशनः २४९
यद्भासायन्मुदायस्यमाययासज्यतेजगत्
जाड्यंदुःखमसत्यंचसभवानेवतन्मयः २५०
त्वत्सृष्टंमोदतेविश्वंत्वत्त्यक्तमशुचिर्भवेत्
तत्संगतोऽप्यसंगस्त्वंविकारस्तेनतेनहि २५१
भूतयोगजचैतन्यंचार्वाकायमुपासते
सौगताब्रवतेतर्कैस्त्वांबुद्धिंक्षणभंगुराम् २५२
शरीरपरिमाणंत्वांमन्यंतेजिनदेवताः
ध्यायंतिपुरुषंसांख्यास्त्वामेवप्रकृतेःपरम् २५३
जन्मादिरहितःपूर्वंयःस्यादानंदलक्षणम्
त्वामेवोपनिषद्ब्रह्मचिंतयंतिपरस्परम् २५४
खादिभूतानिदेहश्चमनोबुद्धींद्रियाणिच
विद्याविद्येत्वमेवात्रनान्यत्त्वत्तोऽस्तिकिंचन २५५
त्वंधातासर्वभूतानांत्वमेवशरणंमम
त्वमग्निस्त्वंहविःशक्रोहोतामंत्रःक्रियाफलम् २५६
त्वमस्तिनास्तिवैकुंठत्वामहंशरणंगतः
त्वंकर्मफलदाताचदीक्षितानांक्रियाफलम् २५७
त्वंहेतुःसर्वभूतानांत्वमेवशरणंमम

युवतीनांयथायूनियूनांचयुवतौयथा २५८
मनोऽभिरमतेतद्वत्प्रीतिर्मेरमतांत्वयि
अपिपापंदुराचारंनरंत्वत्प्रणतंहरे २५९
नेक्षंतेकिंकरायाम्याउलूकास्तपनंयथा
तापत्रयमघौघश्चतावत्पीडयतेजनम् २६०
यावत्स्मरतिनोनाथभक्त्यात्वत्पादपंकजम् २६१
यंनस्पृशंतिगुणजातिशरीरधर्मायंनस्पृशंतिगतयस्त्वखिलेंद्रियाणाम्
यंचस्पृशंतिमुनयोगतसंगमोहास्तस्मैनमोभगवतेहरयेकरोमि २६२
स्थूलंविलाप्यकरणेकरणंनिदानेतत्कारणंकरणकारणवर्जितेच
इत्थंविलाप्यमुनयःप्रविशंतितत्रतस्मैनमोस्तुहरयेमुनिसेविताय २६३
यद्ध्यानसंवहनघूर्णवशीकृतांतामैश्वर्यचारुगुणिनींसुखमोक्षलक्ष्मीम्
आलिग्यशेरतइहात्मसुखैकभाजस्तस्मैनमोऽस्तुहरयेमुनिसेविताय २६४
जन्मादिभावविकृतेर्विरहस्वभावेयस्मिन्नयंपरिधुनोतिषडूर्मिवर्गः
यंतापयंतिनसदामदनादिदोषास्तंवासुदेवममलंप्रणतोऽस्मिहार्दम् २६५
यद्ध्यानसंगतमलंविजहात्यविद्यांयद्ध्यानवह्निपतितंजगदेतिनाशम्
यज्ज्ञानमुल्लसदसिद्यतिसंशयारिंतंत्वांहरिंविंशदिबोधघनंनमामि २६६
चराचराणिभूतानिसर्वाणिचहरेर्वशे
यथात्रतेनसत्येनपुरस्तिष्ठतुमेहरिः २६७
यथानारायणःसर्वंजगत्स्थावरजंगमम्
तेनसत्येनमेरूपंप्रदर्शयतुकेशवः २६८
भक्तिर्यथाहरौमेऽस्तितद्वरिष्ठागुरौयदि
ममास्तितेनसत्येनस्वंदर्शयतुकेशवः २६९
तस्यैवंशपथैःसत्यैर्भक्तिंतस्यानुचिंतयन्
दर्शयामासचात्मानंसप्रीतःपुरुषोत्तमः २७०
ततोदत्त्वावरंतस्यपूरयित्वामनोरथम्
जगामकमलाकांतःस्तुत्याविप्रेणतोषितः २७१
कृतकृत्योद्विजःसोऽपिवासुदेवपरायणः
शिष्यैःसार्धंजपन्स्तोत्रंतस्मिन्नास्तेतपोवने २७२
कीर्तयेद्यइदंस्तोत्रंशृणुयाद्योऽपिमानवः
अश्वमेधस्ययज्ञस्यप्राप्नोतिविपुलंफलम् २७३

आत्मविद्याप्रबोधंचलभतेब्राह्मणः सदा
नपापेजायतेबुद्धिर्नैवपश्यत्यमंगलम् २७४
बुद्धिस्वास्थ्यंमनःस्वास्थ्यंस्वास्थ्यमैंद्रियकंतथा
नृणांभवतिसर्वेषामस्यस्तोत्रस्यकीर्तनात् २७५
विचार्यार्थंजपेद्यस्तुश्रद्धयातत्परोनरः
सविधूयेहपापानिलभतेवैष्णवंपदम् २७६
लभतेवांच्छितान्कामान्पुत्रपौत्रान्पशूंस्तथा
दीर्घमायुर्बलंवीर्यंलभतेससदापठन् २७७
तिलपात्रसहस्रेणगोसहस्रेणयत्फलम्
तत्फलंसमवाप्नोतियइमांकीर्तयेत्स्तुतिम् २७८
धर्मार्थकाममोक्षाणांयंयंकामयतेसदा
अचिरात्तमवाप्नोतिस्तोत्रेणानेनमानवः २७९
आचारेविनयेधर्मेज्ञानेतपसिसन्नये
नृणांभवतिनित्यंधीरिमांसंशृणवतांस्तुतिम् २८०
महापातकयुक्तोवायुक्तोवाह्युपपातकैः
सद्योभवतिशुद्धात्मास्तोत्रस्यपठनात्सकृत् २८१
प्रज्ञालक्ष्मीर्यशःकीर्तिर्ज्ञानधर्मविवर्धनम्
दुष्टग्रहोपशमनंसर्वाशुभविनाशनम् २८२
सर्वव्याधिहरंपथ्यंसर्वारिष्टनिषूदनम्
दुर्गतेस्तरणंस्तोत्रंपठितव्यंद्विजातिभिः २८३
नक्षत्रग्रहापीडासुराजचोरभयेषुच
अग्निचोरनिपातेषुसद्यःसंकीर्तयेदिदम् २८४
सिंहव्याघ्रभयंनास्तिनाभिचारभयंतथा
भूतप्रेतपिशाचेभ्योराक्षसेभ्यस्तथैवच २८५
पूतनाजृंभकेभ्यश्चविघ्नेभ्यश्चैवसर्वदा
नृणांक्वचिद्भयंनास्तिस्तवेह्यस्मिन्प्रकीर्तिते २८६
वासुदेवस्यपूजांयःकृत्वास्तोत्रमुदीरयेत्
लिप्यतेपातकैर्नासौपद्मपत्रमिवांभसा २८७
गंगादिपूण्यतीर्थेषुयास्नानैर्नाप्यतेगतिः
तांगतिंसमवाप्नोतिपठन्पुण्यामिमांस्तुतिम् २८८

एककालंद्विकालंवात्रिकालंवापियःपठेत्
सर्वदासर्वकालेषुसोऽक्षयंसुखमश्नुते २८९
चतुर्णामपिवेदानांत्रिरावृत्त्याचयत्फलम्
तत्फलंलभतेस्तोत्रमधीयानःसकृन्नरः २९०
अक्षय्यंधनमाप्नोतिस्त्रीणांभवतिवल्लभः
पूजांविंदतिलोकेऽस्मिच्छ्रद्धयासंस्मरन्हरीम् २९१
सर्वदासंपदायुक्तोविपदं नैवगच्छति
गोभिर्नह्रियतेस्तोत्रंनित्यंयःकीर्तयेद्धियत् २९२
अलक्ष्मीकालकर्णीचदुःस्वप्नंदुर्विचिंतितम्
सद्योनश्यंतिभक्तानामेतंसंश्रृणवतांस्तवम् २९३
प्रातरुत्थाययोऽधीतेशुचिर्विष्णुपरायणः
अक्षय्यंलभतेसौख्यमिहलोकेपरत्रच २९४
देवद्युतिप्रणीतंवैविष्णुप्रीतिकरंशुभम्
विष्णुप्रसादजननंविष्णुदर्शनकारकम् २९५
योगसारमिदंनामस्तोत्रंपरमपावनम्
यःपठेत्सततंभक्त्याविष्णुलोकंसगच्छति २९६
इतितेकथितंस्तोत्रंगुह्यंपापप्रणाशनम्
अतऊर्ध्वंप्रवक्ष्यामिपिशाचस्यविमोचनम् २९७

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहिता
यामुत्तरखंडेमाघमाहात्म्येवसिष्ठदिलीपसंवादे
योगसारस्तोत्रकथनंनामअष्टाविंशत्यधिकशततमोऽध्यायः १२८

## एकोनत्रिंशाधिक शततमोऽध्यायः

वसिष्ठउवाच
श्रूयतांयेपिशाचाश्चमोचितास्तेनतद्वने
आसीद्राजाचित्रनामाद्राविडेविषयेपुरा १
सोमान्वयेमहावीरःशूरःशस्त्रास्त्रपारगः
गजवाजिरथौघैश्चसंपन्नोविक्रमीसदा २
स्वर्णैर्नानाविधैरत्नैःपूर्णकोशोमहाधनः
मध्येनारीसहस्रस्यसदाक्रीडतितत्परः ३

स्त्रैणःकामीसदालुब्धश्चंडकोपःसपार्थिवः
नकरोतिवचोधर्म्यंसचिवैःसमुदीरितम् ४
विष्णुंनिंदतिसोऽत्यर्थंवैष्णवान्द्वेष्टिसर्वदा
कोऽसौविष्णुःक्वदृष्टोऽसौक्वचास्तेकेनकीर्त्यते ५
इत्थंनसहतेविष्णुंसराजादैवमोहितः
नारायणंभजंतेयेतान्पीडयतिकोऽपितः ६
नब्राह्मणान्नवेदांश्चवैदिकंकर्मनव्रतम्
नदानंमन्यतेदातुंपाखंडस्थितिसंस्थितः ७
अनीत्याचंडदंडैश्चप्रजापीडांकरोतिसः
निष्ठुरोनिर्दयःक्रूरःपुण्यकार्यपराङ्मुखः ८
च्युताचारोऽच्युतद्वेष्टाच्युताग्निश्चच्युतक्रियः
सोऽनुशास्तिजनंभूपःकालरूपइवापरः ९
ततोबहुतिथेकालेसराजापंचतांगतः
वैदिकेनविधानेनलेभेनैवोर्ध्व दैहिकम् १०
अथकिंकरयूथेनपीड्यमानोभृशंतदा
अयःकीलमयेमार्गेतप्तसिक्ताप्रपूरिते ११
चंडार्करश्मिसंतप्तेवृक्षच्छायाविवर्जिते
तप्तांगारप्रकीर्णेचवह्निज्वालासमाकुले १२
लोहतुंडैश्चकाकोलैर्हन्यमानःसुदारुणैः
वृकैर्दंष्ट्राकरालैश्चश्वभिर्घोरैश्चभक्षितः १३
शृण्वन्क्रंदितमन्येषांनृणांकिल्बिषकारिणाम्
जगामपार्थिवोलोकमंतकस्यभयावहम् १४
शृणुभूपगतिंतस्यतस्मिँल्लोकेसुदुःसहाम्
निरयान्निरयंयातःपर्यायेणसभूपतिः १५
आदौप्रयातस्तामिस्रेदारुणेभूरिदुःखदे
पुनश्चैवांधतामिस्रेयत्रदुःखंनिरंतरम् १६
गतोऽनतरमत्युग्रंमहारौरवरौरवम्
नरकंकालसूत्रंचमहानरकमेवच १७
पश्चान्मग्नःसभूपालोदुस्तरेदुःखमूर्छितः
संजीवनेमहावीचौतापनेसंप्रतापने १८

प्रतापनरकंराजादुःखाग्निप्लुष्टमानसः
संपातंचसकाकोलंकुड्मलंपूतिमृत्तिकम् १९
लोहशंकुंमृगीयंत्रंपंथानंशाल्मलिनदीम्
प्रविष्टोऽथमहाभीमंदुर्दर्शंदुर्गमंपुनः २०
असिपत्रवनंचैवलोहचारकमेवच
एवमेतेषुसर्वेषुपतित्वापापकृन्नृपः २१
अविंदन्नरकेघोरेसंतापंयातनामयम्
विष्णुप्रद्वेषघोषेणयुगानामेकविंशतिः २२
भुक्त्वाचयातनांयाम्यांनिस्तीर्णनरकोनृपः
समयाद्गिरिराजेतुपिशाचोऽभूत्तदामहान् २३
सभ्राम्यतिदिशःसर्वावनेतस्मिन्बुभुक्षितः
नपश्यत्यशनंतोयंमेरावपिसदागिरौ २४
कदाचित्पर्यटन्सोऽथपिशाचःशोकपीडितः
प्लक्षप्रस्रवणारण्यंप्रविष्टोभाविसत्फलम् २५
बिभीतकतरुच्छायांसमाश्रित्यसुदुःखितः
हाहतोऽस्मीतिचाक्रंदद्घोरमुच्चैःपुनःपुनः २६
क्षुत्तृड्भ्यांमुह्यमानस्यसर्वभूतद्रुहोमम
जन्मनोस्यदुरंतस्यकथमंतोभविष्यति २७
आदौपापसमुद्रेऽस्मिन्दुःखकल्लोलमालिनी
करावलंबनंकोद्यनिमग्नस्यप्रदास्यति २८
इत्थंतस्यपिशाचस्यरोदनंदीनचेतसः
देवद्युतिरधीयानःशुश्रावकरुणामयम् २९
समागम्यततस्तत्रतंपिशाचंददर्शसः
विकरालमुखंभीमंपिशंगनयनंकृशम् ३०
ऊर्ध्वमूर्धजकृष्णांगंयमदूतमिवापरम्
ललज्जिह्वंचलंबोष्ठदीर्घजंघंशिराकुलम् ३१
दीर्घांघ्रिंशुष्कतुंडंचगर्ताक्षंशुष्कपंजरम्
अथामुंकौतुकाविष्टःपप्रच्छमुनिपुंगवः ३२
देवद्युतिवाच
कोऽसित्वंभीषणाकारःकुतोरोदिषिदारुणम्

अवस्थेयंकुतोब्रूहिकिंचाहंकरवाणिते ३३
ममाश्रमप्रविष्टाहिदुःखभाजोनजंतवः
मोदंतेकेवलंसर्वेवैष्णवेभवनेयथा ३४
वदत्वंसत्वरंभद्रदुःखस्यैतस्यकारणम्
कालक्षेपंनकुर्वंतिप्राप्तेऽर्थेहिमनीषिणः ३५
वसिष्ठउवाच
श्रुत्वैतद्वचनंप्रीतःपिशाचस्त्यक्तरोदनः
उवाचदीनयावाचाप्रश्रयावनतस्तदा ३६
पिशाचउवाच
सर्वांगव्यापिसंतापंजहारत्वद्वचोमयि
ग्रीष्मेदावानलोद्भूतंवर्षन्मेघइवाचले ३७
यन्मेऽस्तिसुकृतंकिंचित्तेनदृष्टोऽसिमेद्विज
नह्यसंचितपुण्यानांसद्भिरेकत्रसंगमः ३८
इत्युक्त्वाकथयामासपूर्ववृत्तांतमात्मनः
विष्णुद्वेषप्रदोषेणदशामेतामहंगतः ३९
यन्नामप्राणान्मुक्तोहिस्मृत्वाविष्णुपदंव्रजेत्
पापिष्ठोहिहरौतस्मिन्ममद्वेषोऽभवद्द्विज ४०
यःपालयतिभूतानिधर्मंयातिजगत्त्रये
योंऽतरात्माचभूतानांतस्मिन्द्वेषोममाभवत् ४१
कर्मणांफलदोयोऽत्रसर्ववेदेषुगीयते
तपोभिरिज्यतेविप्रैःसमद्वेषवशंगतः ४२
त्यक्तक्रियैःप्रियारण्यैर्निःसंगैकचरैश्चयः
वेदांतेयतिभिश्चिंत्यःसमेद्वेषीहरिर्द्विज ४३
ब्रह्मादयःसुराःसर्वेयोगिनःसनकादयः
मुक्तयर्थमर्चयंतीहसविष्णुर्द्वेषितोमया ४४
आदौमध्येऽवसानेयोविश्वधातासनातनः
यस्यनैवादिमध्यांताःसमेद्वेषपदंययौ ४५
यन्मयासुकृतंकर्मकृतंप्राक्तनजन्मनि
विष्णुद्वेषाग्निनादग्धंतत्सर्वंभस्मसादभूत् ४६
कथंचिदस्यपापस्यसीमांद्रक्ष्यामिचेदहम्

मुक्त्वानारायणंनान्यमर्चयिष्यामिदेवताम् ४७
विष्णुद्वेषाच्चिरंभुक्त्वामयानरकयातनाम्
निरयान्निसृतःसोऽह पैशाचींयोनिमागतः ४८
अधुनाकर्ममंत्रैःकैरथानीतस्त्वदाश्रमम्
यत्रत्वद्दर्शनार्कान्मेनष्टंदुःखमयंतमः ४९
प्राप्यतेमरणंयत्रबंधनंश्रीःसुखंवधूः
सतत्रनीयतेस्वेनकर्मणागलहस्तिना ५०
इदानीमुचितंकर्मब्रूहिपैशाच्यनाशनम्
परोपकारकार्येहिनधन्यामंदगामिनः ५१
देवद्युतिरुवाच
अहोमुष्णातिमायेयंदेवासुरनृणांस्मृतिम्
ययादेवेष्वपिद्वेषोजायतेधर्मनाशनः ५२
स्रष्टापालयिताहंताजगतांयोमहेश्वरः
आत्माचसर्वभूतानांतंमूढोद्वेष्टिकःकथम् ५३
भवंतिसर्वकर्माणिसफलानियदर्पणात्
तद्भक्तिविमुखोमर्त्यःकोनयातीहदुर्गतिम् ५४
श्रुतिस्मृतिसदाचारविहितंकर्मकेवलम्
सेवितव्यंचतुर्वर्णैर्भजन्नारायणंसदा ५५
अन्यथानिरयंयांतिविनाह्यागमसेवनात्
अतोवेदविरुद्धार्थंशास्त्रोक्तंकर्मसंत्यजेत् ५६
स्वबुद्धिरचितैःशास्त्रैःप्रतार्येहतुबालिशान्
विघ्नंतिश्रेयसोमार्गंलोकनाशायकेवलम् ५७
विष्णुंनिंदंतिवेदांश्चतपोनिंदंतिसद्द्विजान्
तेनतेनरकंयांतिह्यसच्छास्त्रनिषेवणात् ५८
अयमेवयथाराजाद्रविडोनिरयंगतः
द्विषन्नारायणंदेवंदेवदेवंजगत्प्रभुम् ५९
तस्माद्द्वेषंहिदेवेषुब्राह्मणेषुविशेषतः
संत्यजेत्पुरायकामोऽत्रवेदबाह्यांक्रियात्यजेत् ६०
इत्युक्त्वाकथयामासपिशाचायहितंमुनिः
प्रयागंगच्छभोभद्रमाघमासंविचारय ६१

यत्रतेनिश्चितामुक्तिःपैशाच्यान्नात्रसंशयः
तत्राप्लुतादिवंयांतिश्रुतिरेषासनातनी ६२
विजहातिनरस्तत्रप्राक्तनंकर्मदुष्कृतम्
प्रयागस्नानतोनास्तिक्वाप्यन्यदधिकंपरम् ६३
प्रायश्चित्तंतपोरूपंदानरूपंक्रियात्मकम्
यागयोगाधिकंविद्धिप्रयागंपापिनामपि ६४
स्वर्गापवर्गयोर्द्वारंतत्पृथिव्यामपावृतम्
सितासितोदवेणीयातांहित्वाभुविनापरा ६५
पापनैगडबद्धस्यछेदनैककुठारिका
क्वविष्णुःसूर्यतेजोऽग्निर्गंगायामुनसंगमः ६६
क्ववराकीनृणांतुच्छापापराशितृणाहुतिः
मलीमसघनध्वंसेयथाशरदिचंद्रमाः ६७
भातिपापक्षयादूर्ध्वंनरोवेणीजलाप्लुतः
सितासितस्यमाहात्म्यमहंवक्तुंनतेक्षमः ६८
यत्तोयकणसंस्पृष्टोमुक्तःकेरलकोद्विजः
इतिवाक्यमृषेःश्रुत्वापिशाचस्तुष्टमानसः ६९
मुक्तदुःखइवप्रीतःपप्रच्छप्रणयान्मुनिम्
कथंकेरलदेशीयोद्विजोमुक्तोमहामुने ७०
एतंकथयवृत्तांतंसंश्रित्यकरुणांमयि ७१
देवद्युतिरुवाच
पिशाचशृणुपुण्यांमेकथांकथयतःशुभाम्
केरलेवसुनामात्रब्राह्मणोवेदपारगः ७२
दायादैर्हृतवित्तस्तुनिर्धनोबंधुवर्जितः
जन्मभूमिंपरित्यज्यमहादुःखेनदुःखितः ७३
देशाद्देशंपरिभ्राम्यकालेनमहतापुनः
प्रविश्यसमहारण्यमीषद्व्याधिप्रपीडितः ७४
गच्छंस्तीर्थांतरंश्रांतःक्षुत्क्षामोविंध्यपर्वते
दुर्भिक्षेणमृतिंलेभेनदाहंचौर्ध्वदेहिकम् ७५
तेनकर्मविपाकेनतत्रैवगिरिगह्वरे
प्रेतीभूतश्चिरंकालमुवासनिर्जनेवने ७६

शीतातपपरिक्लिष्टोनिराहारोनिरूदकः
दिगंबरोव्युपानत्कोगिराहाहेतिनिःश्वसन् ७७
इतस्ततःपरिभ्राम्यवायुभूतःसकेरलः
द्विजोनशरणंलेभेनसुखंकुत्रचित्तदा ७८
संशोचतिस्मदुःखार्तैनैवपश्यतिसद्गतिम्
सर्वदादत्तदानंसभुंक्तेस्वंकर्मणःफलम् ७९
हविर्जुह्वतिनाग्नौयेगोविंदंनार्चयंतिये
भजंतेनात्मविद्यांयेसुतीर्थविमुखाश्चये ८०
सुवर्णवस्त्रतांबूलंमणिमन्नंफलंजलम्
आर्तेभ्योनप्रयच्छंतिसर्वेतेकृतहीनकाः ८१
ब्रह्मस्वंचपरस्वंचस्त्रीधनानिहरंतिये
बलेनछद्मनावापिधूर्ताश्चपरवंचकाः ८२
दांभिकःकुहकाश्चौरायेचपावकवृत्तयः
बालवृद्धातुरस्त्रीषुनिर्दयाःसत्यवर्जिताः ८३
अग्निदागरदायेचयेचान्येकूटसाक्षिणः
अगम्यागामिनःसर्वेयेचान्येग्रामयाजिनः ८४
पितृमातृस्नुषापत्यस्वदारत्यागिनश्चये
येकदर्याश्चलुब्धाश्चनास्तिकाधर्मदूषकाः ८५
त्यजंतिस्वामिनंयुद्धेत्यजंतिशरणागतम्
गवांभूमेश्चहंतारोयेचान्येरत्नदूषकाः ८६
परापवादिनःपापादेवतागुरुनिंदकाः
महाक्षेत्रेषुसर्वेषुप्रतिग्रहरताश्चये ८७
परद्रोहरतायेचयथाचप्राणिहिंसकाः
कुप्रतिग्राहिणःसर्वेतेभवंतिपुनःपुनः ८८
प्रेतराक्षसपैशाचतिर्यग्वृक्षकुयोनिषु
नतेषांसुखलेशोऽस्तिइहलोकेपरत्रच ८९
तस्मात्त्यक्त्वानिषिद्धार्थंविहितंकर्मचाचरेत्
यज्ञंदानंतपस्तीर्थंमंत्रंदेवंगुरुंभजेत् ९०
विपाकंकर्मणांदृष्ट्वायोनिकोटिषुदुस्तरम्
चतुर्भिरपिवर्णैश्चसेव्योधर्मोनिरंतरम् ९१

इतिप्रेतगतिंदृष्ट्वापापबीजोत्थितांहिसः
कृत्वाधर्मोपदेशंचपुनस्तस्मैद्विजोऽब्रवीत् ९२
इत्थंसकेरलःप्रेतोवर्तमानोगिरौतदा
अतिवाह्यचिरंकालमपश्यत्पथिकंपथि ९३
वहंतंद्वौकरंडौचवेणीजलयुतौतथा
गायंतंप्रमुखादेवंपुण्यश्लोकंजनार्दनम् ९४
तंदृष्ट्वासहसाप्रेतोमार्गरोधंचकारसः
दर्शयामासचात्मानंमाभैषीरित्युवाचसः ९५
पानीयंपातुमिच्छामित्वत्तःकार्पाटिकोत्तम
नपास्यसिजलंचेन्मांप्राणायास्यंतिमेदृढम् ९६
इतिप्रेतवचःश्रुत्वापांथःप्रत्याहकौतुकात्
कार्पटीकउवाच
कस्त्वंदुःखाभिभूतस्तुकृशोम्लानोदिगंबरः ९७
जीवशेषोमुमूर्षुश्चविकृतोभयवर्धनः
नवधूममयाकारश्चंडश्चंचललोचनः ९८
पद्मामस्पृष्टभूमिस्त्वंनिर्मांसोदरबाहुकः
इतितद्वचनंश्रुत्वाप्रेतोवाक्यमथाब्रवीत् ९९
प्रेतउवाच
शृणुधर्मिष्ठतेवच्मियेनाहमीदृशोऽभवम्
ब्राह्मणोऽदत्तदानोऽहलोभीचमलिनक्रियः १००
परान्नंचसदाभुक्तमेकाकीमिष्टभोजनः
मयादत्तानभिक्षापिहंतकारोनपुष्कलः १०१
नकृतोवैश्वदेवस्तुप्रक्षिप्तोनबहिर्बलि
भूतानांतुतृषार्तानांनहतापयसाचतृट् १०२
कदाचित्पितरोनैवतर्पिताअटतामहीम्
नचश्राद्धंकृतंक्वापिपूजितानैवदेवताः १०३
वर्षातपपरित्राणंनदत्तंपादरक्षणम्
जलपात्रंनदत्तंचतांबूलंनौषधंमया १०४
नगृहेवसतिर्दत्तानातिथ्यंकस्यचित्कृतम्
अंधवृद्धाधनानाथदीनाःपानान्नतोषिताः १०५

गवांग्रासोनदत्तोवैनरोगीपरिमोचितः
नदत्तानहुताविप्रपवित्राश्चतिलामया १०६
पृथिव्यांतिलदातारोनभवंतितुमद्विधाः
व्यतीपातेनदत्तंहिकींचित्स्वर्णंमहाफलम् १०७
संक्रांतावुपरागेचनदत्तंसूर्यचन्द्रयोः
पर्वारयन्यानिसर्वाणिजग्मुःशून्यानिमेद्विज १०८
तिथयःकार्तिकेमुख्याजातावंध्याःसदामम
पितृभ्योनैवदत्तंवाअष्टकासुमघासुच १०९
द्विजानांनकृताप्रीतिर्मन्वादिषुयुगादिषु
नदत्तस्तिलतैलेनप्रदीपःकार्तिकेमया ११०
नस्नातोमाघमासेऽहरूपसौभाग्यकामदे
द्विजायवेदविदुषेगौतम्यांसिंहगेगुरौ १११
मयासंकल्पितंद्रव्यंनदत्तंपूर्वजन्मनि
नस्नातोऽहकृष्णवेरयांतथाकन्यागतेगुरौ ११२
अग्निंप्रज्वाल्यकाष्ठौघैःस्नातानांपौषमाघयोः
शीतार्तानांचविप्राणांनकृतोजाड्यनिग्रहः ११३
माधवादिषुमासेषुनदत्तंशीतलंजलम्
मयानारोऽपितोऽश्वत्थोन्यग्रोधोनैववर्धितः ११४
बंदीगृहान्मयामुक्तिर्नकृताप्राणिनांक्वचित्
नप्राणिभयसंत्रस्तोरक्षितःशरणागतः ११५
नोपोष्यात्रत्रिरात्राणितोषितोमधुसूदनः
कृच्छ्रातिकृच्छ्रपाराकंतथाचांद्रायणंद्विज ११६
अथान्यत्तप्तकृच्छ्रंचतथासांतपनानिच
व्रतान्येतानिपुरयानिजुष्टानींद्रादिभिःसुरैः ११७
चरित्वानमयातानिदेहःसंशोषितःपुरा
इत्थंपूर्वभवोवंध्योममजातोद्विजोत्तम ११८
पश्यद्विजमहाक्रूरामद्भुतामत्रजन्मनि
गतिंदूरप्रबोधांतुममपूर्वस्यकर्मणः ११९
संतिमांसानिमार्गेषुवृकव्याघ्रहतानिवै
फलान्यन्यानिशैलेस्मिन्शुकैस्त्यक्तानिसर्वतः १२०

पुराण्यानिचसुगंधीनिफलानिरसवंतिच
मूलानितुसुभक्ष्याणिमृदूनिमधुराणिच १२१
नानाविधानितिष्ठंतिमधूनिसुबहून्यपि
स्रोतसांनिर्झराणांचसंतिवारीणि सर्वशः १२२
सुलभेषुपदार्थेषुसर्वेष्वेतेषुपर्वते
नेक्षेहमशनंक्वापिदैवेनापिहतंसदा १२३
वाताहारेणजीवामियथाजीवंतिपन्नगाः
पुनर्जीवामिभोविप्रदेवयोनिप्रभावतः १२४
बलेनप्रज्ञयानित्यंमंत्रपौरुषविक्रमैः
सहायैश्चैवमित्रैश्चनालभ्यंलभतेनरः १२५
लाभालाभेसुखेदुःखेविवाहेमृत्युजीवने
भोगेरोगेवियोगेचदैवमेवहिकारणम् १२६
कुरूपाःकुकुलामूर्खाःकुत्सिताचारनिंदिताः
शौर्यविक्रमहीनाश्चदैवाद्राज्यानिभुंजते १२७
काणाःखंजाश्चभव्याश्चनीतिहीनाश्चदुर्गुणाः
नपुंसकाश्चदृश्यंतेदैवाद्राज्येप्रतिष्ठिताः १२८
यैर्दत्ताश्चतिलागावोहिरण्यंवसनानिच
गौरीकन्याचयैर्दत्तायैर्दत्ताचवसुंधरा १२९
शय्यासनानितांबूलंमंदिराणिधनानिच
भक्ष्यभोज्यानिदत्तानिचंदनान्यगरूणिच १३०
अटव्यांपर्वताग्रेचग्रामेवानगरेऽपिवा
पुरःपुरश्चतिष्ठंतितेषांभोगाःप्रयत्नतः १३१
संत्यत्रपर्वतेऽन्येऽपिराक्षसाबलवत्तराः
राक्षसाश्चपिशाचाश्चपिशाच्यश्चातिदारुणाः १३२
कदाचिच्चकथंचिच्चक्वापियत्रस्वकर्मणा
लभंतेचान्नपानानिपर्यटंतोवनेवने १३३
इतिश्रुत्वाऽत्रतेभ्यश्चमाभयंभवतांभवेत्
शुचिंगोविंदभक्तंत्वांनतेद्रष्टुमपिक्षमाः१३४
विष्णुभक्तितनुत्राणंनारायणपरायणम्
नस्पृशंतिनपश्यंतिराक्षसाःप्रेतपूतनाः १३५

भूतवेतालगंधर्वाःशाकिन्यश्चार्यकाग्रहाः
रेवत्योवृद्धरेवत्योमुखमंडयस्तथाग्रहाः १३६
यक्षाबालग्रहाःक्रूरादुष्टावृद्धग्रहाश्चये
तथामातृग्रहाभीमाग्रहाश्चान्येविनायकाः १३७
कृत्याःसर्पाश्चकूष्मांडायेचान्येदुष्टजंतवः
नपश्यंतिपरंविप्रवैष्णवंब्राह्मणंशुचिम् १३८
शुचिंरक्षंतिभूतानिधर्मिष्ठंपीडयंतिन
रक्षंतिचशुचिंनित्यंग्रहनक्षत्रदेवताः १३९
गोविंदनामजिह्वाग्रेहृदिवेदस्तुसंस्थितः
शुचिश्चदानशीलश्चत्वंसर्वत्राकुतोभयः १४०
एवंब्राह्मणतिष्ठामिभुंजानःकर्मणःफलम्
नशोचामीतिमत्वाऽहविमृश्यचपुनःपुनः १४१
नदुनोमितथातावद्यावज्जंबालिनीतटे
सारसोदीरितंवाक्येश्रुतंपर्यटतामया १४२
ब्राह्मणउवाच
सारसोदीरितंवाक्यंकीदृशंहिश्रुतंत्वया
तदहंश्रोतुमिच्छामिब्रूहित्वंप्रेतसत्वरम् १४३
प्रेतउवाच
ब्रवीमिसारसंवाक्यंशृणुकार्पाटिकोत्तम
धूसरानामकक्षेऽस्मिन्नदीगिरिसमुद्भवा १४४
सदाजलशयोत्तालामत्तदंतिकुलाकुला
महाककुभशोभाढ्यास्निग्धजंबूमनोहरा १४५
तस्यास्तीरमहंप्राप्तोगाहमानोवनंघनम्
मयितिष्ठतिवैतत्रफलभोजनकाम्यया १४६
वनांतरात्समुड्डीयसारसोलक्ष्मणायुतः
आगत्यपुलिनंनद्याःसेवितुंबहुपक्षिभिः १४७
पीत्वातत्रैवपानीयंरमित्वाभार्ययासह
सुप्तःपक्षपुटेवामेप्रवेश्यचशिरोमुखम् १४८
एतस्मिन्नंतरेदृष्टःपादपादवतीर्यच
रक्ताननःसुरक्ताक्षोदंडीदृढनखावलि १४९

लोमशोदीर्घलांगूलश्चलचेष्टोहिवानरः
यत्रासौसारसःसुप्तस्तत्रवेगेनचागतः १५०
समागत्यचजग्राहसारसंचरणेदृढम्
कराभ्यांक्रूरयाबुद्ध्यापश्यतांबहुपक्षिणाम् १५१
उड्डीयोड्डीयतेसर्वेगताश्चान्यत्रखेचराः
सारसीभीतभीताचविरावान्कुर्वतीस्थिता १५२
सारसोभग्ननिद्रस्तुत्रासाच्चलितलोचनः
अवलोकितवाञ्छीघ्रंतदोत्ताम्यशिरोधराम् १५३
विलोक्यवानरंदुष्टंहंतुकामंसुदारुणम्
तदासंभाषयामासगिरामधुरयाखगः १५४
अपराधंविनामांत्वंकिंशाखामृगबाधसे
सापराधाजनालोकेवध्यंतेभूमिपैरपि १५५
नपीडयितुमर्हंतित्वादृशाउत्तमाजनाः
अस्मानहिंसकान्साधून्परवृत्तिपराङ्मुखान् १५६
जलशैवालभक्षांश्चखेचरान्वनवासिनः
स्वदाररतिशीलांश्चपरदाराभिवर्जितान् १५७
नपीडयितुमर्हंतित्वद्विधावानरोत्तम
परापवादपैशुन्यान्द्विजान्परमसेवकान् १५८
शाखामृगविमुंचाशुसर्वथामामनागसम्
जानामितवजन्माहंनत्वंवेत्सितुमामकम् १५९
इत्याकर्ण्यवचस्तस्यमुमोचसारसंतदा
चपलोवानरःशीघ्रमाहदूरेव्यवस्थितः १६०
वानरउवाच
ब्रूहिरेत्वंकथंवेत्सिममजन्मपुरातनम्
त्वंपक्षीज्ञानहीनश्चतिर्यक्चाहंवनेचरः १६१
सारसउवाच
जानेऽहतावकंजन्मजातिस्मरमितिस्फुटम्
त्वंहिविंध्याधिपोराजाप्राग्भवेपर्वतेश्वरः १६२
अहंपूज्यतमोविप्रस्तववंशेपुरोहितः
तेनप्रत्यभिजानामित्वांसम्यग्वानरोत्तम १६३

इमांपालयताभूमिंप्रजाःसर्वाःप्रपीडिताः
त्वयाविवेकहीनेनभृशंसंचयताधनम् १६४
प्रजापीडानतापोत्थवह्निज्वालैस्तुवानर
प्राक्त्वंदग्धःपुनःक्षिप्तःकुंभीपाकेऽतिदारुणे १६५
पुनःपुनःश्चदग्धेनजातेनचपुनःपुनः
नारकेणशरीरेणसमास्त्रिंशद्गतंत्वया १६६
कुर्वतादारुणाञ्छब्दान्रुदताचपुनःपुनः
कुंभीपाकानलेतीव्राह्यनुभूताश्चयातनाः १६७
निस्तीर्णनरकोभूयःपापशेषेणसांप्रतम्
प्राप्तोऽसिवानरंजन्मयेनमांहंतुमिच्छसि १६८
विप्रस्योपवनात्पूर्वंपक्वरंभाफलानिवै
अननुज्ञाप्यभुक्तानित्वयापहृत्यपौरुषात् १६९
विपाकःकर्मणस्तस्यफलतेपश्यदारुणः
वानरस्त्वंवनेवासोह्यधुनातेनवर्तसे १७०
अशुभस्यशुभस्यापिपुराविहितकर्मणः
भोगःक्रीडतिभूतेषुनोल्लंध्यस्त्रिदशैरपि १७१
इत्थंत्वज्जन्मजानामियथावत्तुसहेतुकम्
प्राप्तःसारसदेहोऽपिज्ञानेनापरिमोहितः १७२
प्रेतउवाच
इतिश्रुत्वाकथांविप्रवानरोप्याहसारसम्
सम्यग्वेत्तिभवान्नूनंकथंत्वंपक्षितांगतः १७३
सारसउवाच
कथयिष्यामितत्कर्मयेनाहंदुर्गतिंगतः
पक्षियोनिंगतोयेनतत्सर्वंश्रोतुमर्हसि १७४
धान्यंखारिशतंसाग्रमुत्सृष्टंहित्वयापुरा
बहुभ्योब्राह्मणेभ्यश्चचर्मदायांरविग्रहे १७५
पौरोहित्यमदाल्लोभाद्वंचयित्वाद्विजांस्तथा
किंचिद्दत्त्वातुतेभ्यश्चगृहीतमखिलंमया १७६
विप्रसाधारणद्रव्यग्रहणोत्पन्नपातकात्
पतितःकालसूत्रेऽहनरकेरक्तकर्दमे १७७

चलत्क्रिमिसुसंपूर्णेदुर्गंधेपूयफेनिले
आनाभेस्तत्रमग्नोस्मिलिहन्पूयमधोमुखः १७८
तथोपरिमहागृध्रैर्भक्ष्यमाणस्तुवायसैः
क्रिमिभिस्तुद्यमानस्तुममदेहोनिरंतरम् १७९
तस्मिञ्छोणितपंकेऽहनिरुच्छ्वासोऽभवंतदा
मुहूर्तोऽपिमहाकल्पसमोजातोममात्रवै १८०
यातनाश्चानुभूताश्चसमास्त्रिरयुतंमया
वक्तुंचतन्नशक्नोमिदुःखंवानरनारकम् १८१
पौरोहित्यंमहाघोरंपापदंचस्वभावतः
देवोपजीवनंयत्रब्राह्मणस्योपजीवनम् १८२
राज्ञःप्रतिग्रहोघोरस्तेनदग्धाद्विजातयः
तेषामपिहरेद्द्रव्यंपुरोधास्तेननारकी १८३
राजायत्कुरुतेपापंपुरादेहेनधीयते
तस्यतेनपुरोधाश्चगीयतेतत्वदर्शिभिः १८४
दैवात्कथमपिप्राप्तउत्तारोनरकांबुधेः
मयादौदैवयोगेनशकुनित्वमुपस्थितम् १८५
अपहृत्यपुराकांस्यभाजनंभगिनीगृहात्
आह्निकायमयादत्तंतेनमेसारसीगतिः १८६
इयंचब्राह्मणीपूर्वंकांस्यचोरीसुदारुणा
तेनेयंसारसीजाताममभार्यासधर्मिणी १८७
इत्थंवानरतेसर्वंकथितंकर्मणःफलम्
वृत्तंचवर्तमानंचभविष्यंशृणुसांप्रतम् १८८
अहंहंसोभविष्यामित्वंचहंसोभविष्यसि
हंसीयमपिमद्भार्यासारसीचभविष्यति १८९
देशेचकामरूपेवैस्थास्यामोवैयथासुखम्
योगिनींभाविकल्याणींयास्यामस्तदनंतरम् १९०
ततश्चमानुषंजन्मप्राप्यामोदुर्लभंपुनः
श्रेयस्तद्विपरीतंचप्राणिभिर्यत्रसाध्यते १९१
एवंसर्वाञ्छिवोजंतून्मोहयित्वास्वमायया
सुखैर्भुनक्तिदुःखैश्चनास्मानेवतुकेवलम् १९२

अयंलोकेप्रवृत्तश्चमार्गोविविधनिर्मितः
धर्माधर्ममयोऽत्यर्थंसुखदुःखफलात्मकः १९३
सेवितःप्राणिभिःसर्वैःसर्वदावापुनःपुनः
देवासुरनरव्याघ्रक्रिमिकीटजलेचरैः १९४
नातिक्रांतोहिकेनापिपंथाऽयदुःखकंटकः
विरक्तान्योगिनोध्यायंविनावेदांतपारगान् १९५
अणोर्वापिगुरोर्वापिपुगयापुगयस्यकर्मणः
ददातीहफलंज्ञात्वादेशंकालंमहेश्वरः १९६
इत्थंविधिविधानज्ञांमायांज्ञात्वेश्वरस्यच
नशोचंतिनतप्यंतिनव्यथंतिमहाधियः १९७
नान्यथाशक्यतेकर्तुंविपाकःपूर्वकर्मणाम्
उपायैःप्रज्ञयावापिशाखामृगसुरैरपि १९८
पुरात्वंभूपतिर्जातःपश्चाज्जातोऽसिनारकी
अधुनावानरोभूयोजन्मप्राप्स्यसितादृशम् १९९
इतिमत्वाविशोकस्त्वंशाखामृगयथासुखम्
प्रतीक्षांकुरुकालस्यरममाणोऽत्रकानने २००
अहमप्येवमीशानमायाबद्धोवनेवने
क्षपयिष्यामिवैजन्मधैर्यमास्थायसारसम् २०१
वानरउवाच
मयात्वंपूजितःपूर्वंनौमित्वामधुनाप्यहम्
जातिस्मरोऽसिजानामिसर्वंमत्पूर्वदैहिकम् २०२
तिष्ठसारससारस्याशिवमस्तुसदातव
त्वद्वाक्याद्गतमोहोऽहविचरिष्यामिसर्वदा २०३
प्रेतउवाच
इमंरम्यंविचित्रंचपावनंपरमंद्विज
पक्षिवानरसंवादंश्रुतंयावन्नदीतटे २०४
तावन्ममापिबोधोऽभूत्तेनशोकःक्षयंगतः
इदानींजाह्नवीतोयमाहात्म्यंपरमाद्भुतम् २०५
दृष्ट्वात्रब्राह्मणश्रेष्ठत्वांयाचेजाह्नवीजलम्
प्रेतत्वात्तर्तुकामोऽहतीव्रातृष्णाप्रपीडितः २०६

अस्मिन्नेवाचलेदृष्टंमयाश्चर्यंचवैद्विज
गंगातोयस्यतावद्धिपातुमिच्छामितज्जलम् २०७
पारियात्रोद्भवःकोऽपिब्राह्मणोग्रामयाजकः
अयाज्ययाजनाद्विंध्येसंभूतोब्रह्मराक्षसः २०८
अस्मत्संगस्यलोभेनस्थितोऽसौहायनाष्टकम्
तस्यास्थीनिसुपुत्रेणसंचितानिद्विजोत्तम २०९
क्षिप्तान्यानीयगंगायांतीर्थेकनखलेऽमले
तत्क्षणादेवमुक्तोऽसौराक्षसत्वात्सुदारुणात् २१०
इतिगंगाजलस्नानमहिमामहदद्भुतम्
साक्षाद्दृष्टोमयातेनगांगेयंप्रार्थितंजलम् २११
पुरस्ताद्यत्कृतस्तीर्थेमयाभूरिपरिग्रहः
नकृतस्तुप्रतीकारस्तस्यजाप्यादिलक्षणः २१२
तेनमेप्रेतरूपस्यदुर्लभोदकभोजनम्
सहस्रंयत्रवर्षाणामतीतंविंध्यपर्वते २१३
इतितेकथितंसर्वंहित्वालज्जांगरीयसीम्
इदानींधार्मिकश्रेष्ठजलदानेनसत्वरम् २१४
संतर्पयममप्राणान्कंठमात्रावलंबितान्
दुर्लभंप्रेतभावेऽपिजीवितंप्राणिनामिह २१५
शरीरंरक्षणीयंहिसर्वथासर्वदानरैः
नहीच्छंतितनुत्यागमपिकुष्ठादिरोगिणः २१६
देवद्युतिरुवाच
इतितद्वचनंश्रुत्वाविस्मयंपरमंगतः
पथिकश्चिंतयामासकृपांप्रेतेसमुद्वहन् २१७
पापपुण्यफलंलोकेप्रत्यक्षंदृश्यतेखलु
देवदानवमानुष्यंतिर्यक्त्वंक्रिमिकीटकम् २१८
नानायोनिषुजन्मानिनानाव्याधिप्रपीडनम्
मरणंबालवृद्धानामंधत्वंकुब्जतातथा २१९
एश्वर्यंचदरिद्रत्वंपांडित्यंमूर्खतातथा
एताश्चरचनालोकेभवंतिकथमन्यथा २२०
तेधन्याःकर्मभूमौयेन्यायमार्गार्जितंधनम्

सत्पात्रेभ्यःप्रयच्छंतिकुर्वंतिचात्मनोहितम् २२१
भूमिरत्नहिरगयानिगावोधान्यंगृहंगजाः
रथाश्ववसनग्रामाःसिद्धमन्नंफलंजलम् २२२
कन्यादिव्यौषधमन्नंछत्रोपानद्वरासनम्
शय्यातांबूलमाल्यानितालवृंतंवरासनम् २२३
सर्वमेतत्प्रदातव्यंलोकत्रयजिगीषुभिः
दत्तंहिप्राप्यतेस्वर्गेदत्तमेवहिभुज्यते २२४
छत्रचामरयानानिवराश्ववरवारणाः
हर्म्याणिवरशय्याश्चगोमहिष्योवरस्त्रियः २२५
अन्नभूषणमुक्ताश्चपुत्रादास्योमहाकुलम्
आयुरारोग्यमैश्वर्यंकलाविद्यासुकौशलम् २२६
दानस्यैवफलंसर्वंप्राप्यतेभुविमानवैः
तस्माद्देयंप्रयत्नेननादत्तमुपतिष्ठति २२७
धर्मिष्ठेनतुपांथेनगाथेयंसमगायत
इतिश्रुत्वापुनःप्रेतःप्रोवाचह्यार्तमानसः २२८
मन्येधर्मज्ञकल्पोऽसिपांथत्वंनात्रसंशयः
देहिमेजीवनंवारिचातकायघनोयथा २२९
एतस्मिन्प्राणदानेहिमाविलंबंकृथाबहु
ततःप्रत्याहपांथस्तुवचनंन्यायगर्भितम् २३०
भृगुक्षेत्रेशृणुप्रेतपितरौममतिष्ठतः
तदर्थंतीर्थराजस्यमयावारिसमाहृतम् २३१
तत्सितासितपानीयंमध्येचप्रार्थितंत्वया
नजानेधर्मसंदेहःकिमत्रममयुज्यते २३२
बलाबलंविचारार्थंकरिष्येप्रबलंविधिम्
वेदेभ्योधर्मशास्त्रेभ्योनाहंमानेनकेवलम् २३३
हयमेधादियज्ञेभ्यःसर्वेभ्योप्यधिकंमतम्
ऋृषिभिर्देवताभिश्चप्राणिनांप्राणरक्षणम् २३४
इतिदत्त्वावरंवारिकृत्त्वाप्रेतस्यरक्षणम्
पित्रर्थंपुनरादायजलंनेष्यामिपावनम् २३५
एषमेप्रबलोभातिशुद्धधर्मप्रदोविधिः

परोपकरणादन्यत्सर्वमल्पंस्मृतंबुधैः २३६
परोपकारिभिर्दत्ताअपिप्राणानृभिर्मुदा
अद्भिःपरोपकारःस्यात्किंनलब्धंमयापुनः २३७
दधीचिनापुरागीतःश्लोकोऽयश्रूयतेभुवि
सर्वधर्ममयःसारःसर्वधर्मज्ञसंमतः २३८
परोपकारःकर्तव्यःप्राणैरपिधनैरपि
परोपकारजंपुण्यंतुल्यंक्रतुशतैरपि २३९
इत्युक्त्वाप्रददौतोयंगंगायामुनसंभवम्
प्रेतायप्राणरक्षार्थंसधर्मिष्ठोवरोद्विजः २४०
प्रेतःप्रीतोजलंपीत्वाह्यभिषिच्यशिरस्तथा
प्रजहौप्रेतदेहंतंदिव्यदेहोऽभवत्क्षणात् २४१
तदाश्चर्यंमहदृष्ट्वानिजगादसकेरलः
अहोविमुक्तःप्रेतत्वाद्वेणीपानीऽबिदुभिः २४२
ब्रह्मापिनैवशक्नोतिमन्येवक्तुमपांगुणम्
गङ्गातोयंमहादेवोधत्तेकेकथमन्यथा २४३
अचिंत्यशक्तिगंगांभस्तिलमात्रंतुयःपिबेत्
देवोभवेत्ससिद्धोवागर्भेनैवचसंविशेत् २४४
नगंगासदृशीसिद्धिर्नगंगासदृशीमतिः
नगंगासदृशीमुक्तिर्गंगासर्वाधिकायतः २४५
तस्मात्सर्वप्रयत्नेनमहाभक्त्याचधार्मिक
करस्थंतस्यकैवल्यंयोगंगांसेवतेसदा २४६
आयुष्मान्भवपांथत्वंमाधर्मविरतोभव
त्वयाऽहतारितःसद्योगंगांबुकणदानतः २४७
इत्युक्त्वाप्रस्थितोनाकंपिशाचस्तुसकेरलः
आशीर्भिरभिनंद्याथपांथंबंधुवरंनरम् २४८
प्रेतंविमोक्ष्यपांथोऽपिपुनरादायतज्जलम्
गतस्तेनैवमार्गेणस्मरंस्तीर्थोदकौतुकम् २४९
वसिष्ठउवाच
इत्थंप्रयागमाहात्म्यंश्रुत्वानत्वाचतंमुनिम्
प्रयागंसहसामाघेपिशाचःसत्वरंगतः २५०

स्नात्वासितासितेसोऽपिमाघमासेद्विजोत्तम
पिशाचःचीणपापस्तुपैशाचींविजहौतनुम् २५१
दिव्यदेहस्ततोभूत्वाद्राविडोभूपतिस्तदा
स्तुवन्नारायणंदेवंभक्त्यादोषविवर्जितः २५२
गंधर्वैःस्तूयमानस्तुनाकनारीसुपूजितः
उत्तमेनविमानेनपुरंदरपुरंययौ २५३
इतितेकथितंविप्रपूर्ववृत्तंसकौतुकम्
इतिहासंद्विजश्रेष्ठसद्यःपातकनाशनम् २५४
ज्ञानदंमोचदंविप्रश्रुतंदुर्गतिनाशनम्
इतितेकथितंसर्वंपुरावृत्तंसकौतुकम् २५५
इतिहासंद्विजश्रेष्ठश्रुतंदुर्गतिनाशनम्
अधुनातुमयासार्धमिमाःकन्याःसुतश्चते २५६
त्वंचायातुप्रयागंवैसर्वेसद्गतिमीप्सवः
माघस्नानंप्रकुर्मोऽत्रदेवानामपिदुर्लभम् २५७
तत्रमोद्त्यंतिपैशाच्यंसद्यःपापसमुद्भवम् २५८
महेशउवाच
एवंवसिष्ठवक्राब्जकथामधुरसंमुदा
पीत्वाप्रमुदिताःसर्वेनिस्तीर्णानरकार्णवात् २५९
प्रस्थितास्तेनसार्धंतेसत्वरंव्योम्निहर्षिताः
दिलीपशृणुतत्सर्वंतत्तीर्थंतुसितासितम् २६०
सत्वरंव्योममार्गेणकाममासाद्यदुःसहाः
समागम्यतदातत्रसंहृष्टहृदयाश्चते २६१
अथोचेलोमशस्तत्रसदयंगगनांगणे
पश्यंतुश्रद्धयासर्वेतीर्थराजमिमंभुवि २६२
विनाज्ञानंप्रयागेऽस्मिन्मुच्यंतेसर्वजंतवः
इष्ट्वात्रैवमहायज्ञंस्त्रष्टुकामःप्रजापतिः २६३
अवापसृष्टिसामर्थ्यंततःसृष्टिंचकारसः
अत्रनारायणःसस्नौपत्नीकामःसितासिते २६४
अतःसलब्धवान्लक्ष्मींभार्याममृतमंथने
उषित्वाचात्रषरामासंस्नात्वावेरायांयथेच्छया २६५

त्रिपुरंघातयामासत्रिबाणेनत्रिशूलभृत्
इमानित्रीणिकुंडानिदीप्तान्यजस्रवह्निभिः २६६
एषतृप्तिंगतोवह्निर्यःकेनापिचपुष्यति
अत्रदेवास्त्रयस्त्रिंशत्तृप्तामुमुदिरेभृशम् २६७
आविर्भूतोमहेशोऽत्रनीलकंठःकपालभृत्
अनिशंससुरैःसेव्यआयातोंजलयेबटुः २६८
मृकंडसूनुनाकल्पेप्रविश्ययन्मुखेस्थितम्
लोकेज्वालाकुलेसोऽययोगरूपीजनार्दनः २६९
सेयंभागीरथीशंभोःसर्वदुःखापहारिणी
सिद्ध्यर्थंसेव्यतेसिद्धैर्भुक्तिमुक्तिफलप्रदा २७०
अनिशंभूतिदायाचस्वर्गमार्गेह्यनुत्तमा
स्वर्गहेतुश्चयादेवीसेयंभागीरथीनदी २७१
यदंभःस्नानमात्रेणविकर्तनसलोकताम्
लभंतेप्राणिनःसर्वेनदीसायमुनास्वयम् २७२
अनयोःपुण्यनद्योश्चसंगमःसुखदोमुने
अत्रस्नातानपच्यंतेनरकेज्ञानभाविताः २७३
विनाज्ञानंप्रयागेऽस्मिन्मुच्यंतेसर्वजंतवः
अन्यच्चश्रूयतांविप्रइतिहासंपुरातनम् २७४
शृण्वतांसर्वपापघ्नंसर्वरोगविनाशनम्
ऋचीकेनपुराशप्तोगंधर्वोवायसोऽभवत् २७५
शापंमुमोचसोऽत्रैवस्नातःसद्यःसितासिते
वासवस्यतुशापेनस्वर्गाद्भ्रष्टाप्सरोर्वशी २७६
स्वर्गकामाचसासस्नौलेभेस्वर्गंततोचिरात्
पुत्रंचशंकरंलेभेययातिर्नाहुषोमुने २७७
पुत्रकामःप्रयागेहिस्नात्वापुण्येसितासिते
धनकामःपुराशक्रःसुस्नातोऽत्रद्विजोत्तम २७८
धनदस्यनिधीन्सर्वाञ्जहारसचमायया
कश्यपोऽत्रतपस्तेपेशिवाराधनतत्परः २७९
अस्मिंस्तीर्थेभरद्वाजोयोगसिद्धिमवाप्तवान्
अस्मिंस्तीर्थेपुराविप्रयोगेशाःशांतमानसाः २८०

योगस्यफलभूमिंतुलेभिरेसनकादयः
अस्मिन्माघेतुयेस्नातागंगायामुनसंगमे २८१
तारारूपाश्चतेसर्वे तैर्व्याप्तंसकलंजगत्
विंदंतिकामिनःकामान्मुक्तिंयांतिमुमुक्षवः २८२
विंदंतिसाधकाःसिद्धिंप्रयागेहिद्विजोत्तम
सांप्रतंमुक्तिकामास्तुकन्याश्चापिसुतश्चते २८३
मद्वाक्यादत्रमज्जंतुसर्वेत्वंचसितासिते
प्राक्कालीनाघविध्वंसिवेणीजलबलेनतु २८४
लभंतामखिलंलक्ष्मींप्राप्तशापमहाफलाम्
एवमार्षवचःसत्यमतींद्रियमलंघनम् २८५
श्रुत्वाचोत्कंठचित्तास्तेसर्वेस्नानायचोद्यताः
प्रयागंप्राप्यदुष्प्राप्यं पैशाच्यंविजहुःक्षणात् २८६
विमुक्ताःशापदुःखेनतनुंस्वांस्वांचलेभिरे
दृष्ट्वावेदनिधिःपुत्रंताःकन्यादिव्यरूपिणीः २८७
तुष्टावलोमशंप्रीत्याप्रसन्नेनांतरात्मना
त्वदनुग्रहमात्रेणोत्तीर्णःपापमहार्णवः २८८
इदानीमुचितंब्रूहिबालानामृषिसत्तम
लोमशउवाच
कुमारोधीतवेदोऽयसमाप्तनियमोयुवा २८९
आसांतुसानुरागाणांगृह्णातुकरपंकजम्
ततोलोमशवाक्येनस्वपितुर्वचनात्तदाः २९०
विवाहविधिनाचाशुब्रह्मचारीसधार्मिकः
शुभद्रव्यैश्चमंत्रैश्चऋषिभिःकृतमंगलः २९१
पंचानामपिकन्यानांपाणिंजग्राहधर्मतः
आनंदिन्यस्तदासर्वाःकन्याःपूर्णमनोरथाः २९२
बभूवःसकुमारश्चसंतुष्टश्चबभूवह
दत्त्वानुज्ञांमुनिःसोऽथलोमशस्तैर्नमस्कृतः २९३
जगामस्वाश्रमंमेरुंपर्वतंसुरसेवितम्
ततोवेदनिधीराजन्स्नुषाःपंचसुतंतथा
पुरस्कृत्यमुदायुक्तोधनदस्यपुरंययौ २९४

इतिनृपवरमाघेस्नानसंजातपुरायान्मुनिवरवचसाद्राक्तीर्थराजप्रयागे
सकलकलुषमुक्ताःपंचगंधर्वकन्याश्रलमभिगतलाभात्प्राप्यतर्षंचजग्मुः २९५
परमिममितिहासंपावनंतीर्थभूतंवृजिनविलयहेतुंयःशृणोतीहनित्यम्
सभवतिखलुपूर्णःसर्वकामैरभीष्टैर्व्रजतिचसुरलोकेदुर्लभोधर्मयुक्तः २९६
इतिहासमिमंश्रुत्वापूजयेद्यस्तुपाठकम्
गोभिर्हिररायवस्त्रैश्चब्रह्मतुल्योयतोहिसः २९७
वाचकेपूजितेयस्माद्विष्णुर्भवतिपूजितः
तस्मात्प्रपूजयेन्नित्यंयदीच्छेत्सफलंभवम् २९८
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्त्रसंहितायामुत्तरखंडे माघमाहात्म्ये वसिष्ठदिलीपसंवादेगंधर्वकन्यापरिणयोनामैकोनत्रिंशाधिकशततमोऽध्यायः
१२९

## त्रिंशाधिकशततमोऽध्यायः

पार्वत्युवाच
श्रुतंकार्तिकमाहात्म्यंमाघस्यचमयाविभो
अधुनाश्रोतुमिच्छामिमुक्तिदंकर्मचोत्तमम् १
श्रेष्ठाभक्तिस्तुकाप्रोक्तावदविश्वेश्वरप्रभो
येनविज्ञानमात्रेणनराःसुखमवाप्नुयुः २
महादेवउवाच
तल्लीनचित्तःसपुमान्साभक्तिःपरमामता
दयाधर्मपरोनित्यंविष्णुधर्मेषुतत्परः ३
फलमूलजलाहारीशंखचक्रप्रधारकः
त्रिकालंपूजयेद्विष्णुंसाभक्तिःसात्विकीमता ४
उत्तमासात्विकीप्रोक्ताराजसीचैवमध्यमा
कनिष्ठातामसीचैवत्रिविधाभक्तिरुच्यते ५
श्रीधरेतुप्रकर्त्तव्यामुक्तिकामफलेप्सुभिः
अहंकारेणरूपेणदंभमात्सर्यमायया ६
येकुर्वंतिजनाभक्तिंतामसीसाउदाहृता
परस्योत्सादनार्थंवादंभमुद्दिश्यवाऽथवा ७
याभक्तिःक्रियतेदेवेतामसीसाप्रकीर्तिता

विषयान्प्रतिसंधाययशएश्वर्यमेववा ८
अर्चादावर्चयेद्योमांपृथग्भावःसराजसः
कर्मक्षयार्थेकर्त्तव्याब्राह्मणैर्ज्ञानतत्परैः ९
विष्णौह्यात्मार्पणींबुद्धिंसाभक्तिःसात्विकीमता
अतोवैसर्वथादेविसंसेव्यःसर्वदाहरिः १०
तामसेनतुभावेनतामसत्वंहिलभ्यते
राजसोराजसेनैवसात्विकेनतुसात्विकः ११
वेदाध्यायरतःश्रीमान्रागद्वेषविवर्जितः
शंखचक्रधरोविप्रःसर्वदाशुचिरुच्यते १२
कर्मकांडेप्रवृत्तोयःसर्वदाविष्णुनिंदकः
निंदकस्तज्जनानांचमहाचंडालउच्यते १३
वेदाध्यायरतानित्यंनित्यंवैयज्ञयाजकाः
अग्निहोत्ररतानित्यंविष्णुधर्मपराङ्मुखाः
निंदंतिविष्णुधर्मांश्चवेदबाह्याःसुरेश्वरि १४
कुर्वंतिशांतिंविबुधाःप्रहृष्टाःक्षेमंप्रकुर्वंतिपितामहाद्याः
स्वस्तिप्रयच्छंतिमुनींद्रमुख्यागोविंदभक्तिंवहतांनराणाम् १५
शुभाग्रहाभूतपिशाचयुक्ताब्रह्मादयोदेवगणाःप्रसन्नाः
लक्ष्मीस्थिरातिष्ठतिमंदिरेचगोविंदभक्तिंवहतांनराणाम् १६
गंगागयानैमिषपुष्कराणिकाशीप्रयागंकुरुजांगलानि
तिष्ठंतिदेहेकृतभक्तिपूर्वंगोविंदभक्तिंवहतांनराणाम् १७
एवमाराधयेद्विद्वान्भगवंतंश्रियासह
कृतकृत्योभवेन्नित्यंसविप्रोनात्रसंशयः १८
क्षत्रियोवाथवैश्योवाशूद्रोवासुरसत्तमे
भक्तिंकुर्वन्विशेषेणमुक्तिंयातिसवैनरः १९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेविष्णु
भक्तिमहिमावर्णनंनामत्रिंशाधिकशततमोऽध्यायः १३०

## एकत्रिंशाधिक शतमोऽध्यायः

पार्वत्युवाच
शालग्रामशिलाशुद्धामूर्त्तयःसंतिभूतले

तासांचैवतुमूर्तीनांपूजनंकतिधास्मृतम् १
ब्राह्मणैःकतिपूज्यास्ताःक्षत्रियैर्वासुरेश्वर
वैश्यैर्वापिकथंशूद्रैःस्त्रीभिर्वापिसमादिश २
महादेवउवाच
शालग्रामशिलापुण्यापवित्राधर्मकारिणी
यस्यादर्शनमात्रेणब्रह्महाशुध्यतेनरः ३
तद्गृहंसर्वतीर्थानांप्रवरंश्रुतिनोदितम्
यत्रेयंसर्वदामूर्तिःशालग्रामशिलाशुभा ४
ब्राह्मणैःपंचपूज्यास्युश्चतस्त्रःक्षत्रियैस्तथा
वैश्यैस्तिस्त्रस्तथापूज्याएकापूज्याप्रयत्नतः ५
तस्यादर्शनमात्रेणशूद्रोमुक्तिमवाप्नुयात्
अनेनविधिनादेवियेनराःपूजयंतिवै ६
भोगान्सर्वांस्तत्रभुक्त्वायांतिविष्णोःसनातनम्
इयंसामहतीमूर्तिःसर्वदापापहारिणी ७
कैलासाद्यंफलंदेविजायतेपूजनाद्यतः
तत्रगंगाचयमुनागोदावरीसरस्वती ८
तिष्ठतेचशिलायत्रसर्वंतत्रनसंशयः
किमत्रबहुनोक्तेनभूयोभूयोवरानने ९
पूजनंमनुजैःसम्यक्कर्त्तव्यंमुक्तिमिच्छुभिः
भक्तिभावेनदेवेशियेऽचयंतिजनार्दनम् १०
तेषांदर्शनमात्रेणब्रह्महाशुध्यतेजनः
दासभावेनयेशूद्राःस्वर्चनंकुर्वंतेसदा ११
तेषांपुण्यंनजानंतिब्रह्माद्याश्चसुरेश्वरि
भक्तिभावेनयेविप्राहरिमभ्यर्चयंतिवै १२
एकविंशतिकुलं तैस्तुतारितंतेषुजन्मसु
शंखचक्रांकितोयस्तुविप्रःपूजनमाचरेत् १३
पूजितंतुजगत्सर्वं तेनविष्णुप्रपूजनात्
पितरःसंवदंत्यस्मत्कुलेजाताश्चवैष्णवाः १४
तत्कुलंतारितं तैस्तुयावदाभूतसंप्लवम्
तेतुचास्मान्समुद्धृत्यनयंतेविष्णुमंदिरम् १५

सएवदिवसोधन्योधन्यामाताऽथबांधवाः
पितातस्यचवैधन्योधन्यावैसुहृदस्तथा १६
सर्वेधन्यतमाज्ञेयाविष्णुभक्तिपरायणाः
तेषांदर्शनमात्रेणमहापापात्प्रमुच्यते १७
उपपातकानिसर्वाणिमहांतिपातकानिच
तानिसर्वाणिनश्यंतिवैष्णवानांचदर्शनात् १८
पावकाइवदीप्यंतेयेनरावैष्णवाभुवि
विमुक्ताःसर्वपापेभ्योमेघेभ्यइवचंद्रमाः १९
आर्द्रंशुष्कंलघुस्थूलंवाङ्मनःकर्मभिःकृतम्
तत्सर्वंनाशमायातिवैष्णवानांचदर्शनात् २०
हिंसादिकंचयत्पापंज्ञानाज्ञानंकृतंचयत्
तत्सर्वंनाशमायातिदर्शनाद्वैष्णवस्यच २१
निःपापास्त्रिदिवंयांतिपापिष्ठायांतिशुद्धिताम्
दर्शनादेवसाधूनांसत्यंतुभ्यंमयोदितम् २२
संसारकर्दमालेपप्रक्षालनविशारदः
पावनःपावनानांचविष्णुभक्तोनसंशयः २३
प्रत्यहंविष्णुभक्तायेस्मरंतिमधुसूदनम्
तेतुविष्णुमयाज्ञेयाविष्णुस्तत्रनसंशयः २४
नवनीलघनश्यामंनलिनायतलोचनम्
शंखचक्रगदापद्मधरंपीतांबरावृतम् २५
कौस्तुभेनविराजंतंवनमालाधरंहरिम्
उल्लसत्कुंडलज्योतिःकपोलवदनश्रिया २६
विराजितंकिरीटेनवलयांगदनूपुरैः
प्रसन्नवदनांभोजंचतुर्बाहुंश्रियान्वितम् २७
एवंध्यायंतियेविप्राविष्णुंचैवतुपार्वति
तेविप्राविष्णुरूपाश्चवैष्णवास्तेनसंशयः २८
तेषांदर्शनमात्रेणभक्तयावाभोजनेनवा
पूजनेनचदेवेशिवैकुंठंलभतेध्रुवम् २९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेशालग्रामशिलापूजनमाहात्म्यंनामैकत्रिंशाधिकशततमोऽध्यायः १३१

द्वात्रिंशाधिकशततमोऽध्यायः-

पार्वत्युवाच
अनंतवासुदेवस्यकीदृशंस्मरणंस्मृतम्
यच्छ्रुत्वानपुनर्मोहोमानुषाणांप्रजायते १
महादेवउवाच
दृष्टतत्वेनदेवेशिस्मरंतिविष्णुंनित्यशः
तृषातुरोयथावारितद्वद्विष्णुंस्मराम्यहम् २
हिमेनाकुलितंविश्वंस्मरत्यग्निंयथातथा
तद्वदेवतुवैविष्णुंस्मरंतिविबुधादयः ३
पतिव्रतायथानारीपतिंस्मरतिनित्यशः
तथास्मरंतिलोकेशंविष्णुंविश्वेश्वरेश्वरम् ४
भयार्त्तःशरणंयद्वदर्थलोभीयथाधनम्
पुत्रकामोयथापुत्रंतथाविष्णुंस्मराम्यहम् ५
दूरस्थोऽपियथागेहंचातकोमाधवंयथा
ब्रह्मविद्यांब्रह्मविदस्तथाविष्णुंस्मराम्यहम् ६
हंसामानसमिच्छंतिऋषयःस्मरणंहरेः
भक्ताश्चभक्तिमिच्छंतितथाविष्णुंस्मराम्यहम् ७
प्राणिनांवल्लभोदेहोयत्रआत्माऽवतिष्ठति
आयुर्वांच्छंतियेजीवास्तथाविष्णुंस्मराम्यहम् ८
भ्रमराश्चयथापुष्पंचक्रवाकादिवाकरम्
यथात्मवल्लभाभक्तिस्तथाविष्णुंस्मराम्यहम् ९
अंधेनाकुलितालोकादीपंवांच्छंतिवैयथा
तथावैपुरुषालोकेस्मरणंकेशवस्यच १०
यथाश्रमार्त्ताविश्रामंनिद्राव्यसनिनोयथा
गतालस्यायथाविद्यांतथाविष्णुंस्मराम्यहम् ११
मातंगाःपार्वतींभूमिंसिंहावनगजादिकम्
तथैवस्मरणंविष्णोःकर्तव्यंपापभीरुभिः १२
सूर्यकांतेरवेर्योगाद्वह्निस्तत्रप्रजायते
एवंवैसाधुसंयोगाद्धरौभक्तिःप्रजायते १३
शीतरश्मेर्यथाकांतश्चंद्रयोगादपःश्रयेत्

एवंवैष्णवसंयोगान्मुक्तिर्भवतिशाश्वती १४
कुमुद्वतीयथासोमंदृष्ट्वापुष्पंविकासते
तद्वद्देवेकृताभक्तिर्मुक्तिदासर्वदानृणाम् १५
यथानलायाःसंत्रस्ताभ्रमरीस्मरणंचरेत्
तेनस्मरणयोगेनानलासारूप्यतामियात् १६
गोपीभिर्जारबुद्ध्याचविष्णोश्चस्मरणंकृतम्
ताश्चसायुज्यतांनीतास्तथाविष्णुंस्मराम्यहम् १७
केऽपिवैदुष्टभावेनच्छद्मभावेनकेचन
केचापिलोभभावेनचिंतयंतिजनार्दनम् १८
भक्त्यावास्नेहभावेनद्वेषभावेनवापुनः
केऽपिस्वामित्त्वभावेनबुद्धयावाबुद्धिपूर्वकम् १९
येनकेनापिभावेनचिंतयंतिजनार्दनम्
इहलोकेसुखंभुक्त्वायांतिविष्णोःसनातनम् २०
अहोविष्णोश्चमाहात्म्यमद्भुतंलोमहर्षणम्
यदृच्छयापिस्मरणंत्रिधामुक्तिप्रदायकम् २१
नधनेनसमृद्धेनविपुलाविद्ययातथा
एकेनभक्तियोगेनसमीपेदृश्यतेक्षणात् २२
सांनिध्येऽपिस्थितोदूरेनेत्रयोरंजनंयथा
भक्तियोगेनदृश्येनभक्तैश्चैवसनातनः २३
इदंतत्वमिदंतत्वंमोहितोदेवमायया
भक्तितत्वंयदाप्राप्तंतदाविष्णुमयंजगत् २४
इंद्राद्यैरमृतंप्राप्तंसुखार्थेशृणुसुंदरि
तथापिदुःखितास्तेवैभक्त्याविष्णोर्यथाविना २५
भक्तिमेवामृतंप्राप्यपुनर्दुःखंनजायते
वैकुंठाख्यंपदंप्राप्यमोदतेविष्णुसन्निधौ २६
वारित्यक्त्वायथाहंसःपयःपिबतिनित्यशः
एवंधर्मान्परित्यज्यविष्णोर्भक्तिंसमाश्रयेत् २७
अन्यभक्तिंपरित्यज्यविष्णुभक्तिंसमाश्रयेत्
तोयंबद्धवातुवस्त्रेणकृतंकार्यंकथंभवेत् २८
प्राप्यदेहंविनाभक्तिंक्रियतेसवृथाश्रमः

विष्णुभक्तिंविनाधर्मानुपदिशंतियेजनाः
तेपतंतिसदाघोरेनरकेनात्रसंशयः २९
बाहुभ्यांसागरंतर्तुंयद्वन्मूर्खोऽभिवांछति
संसारसागरंतद्वद्विष्णुभक्तिंविनानरः ३०
विष्णुभक्तिंचरक्षंतिकर्मणापात्यतेयदि
अकिंचनःस्पृहायुक्तोमेरौधत्तेयथास्पृहाम् ३१
तवभक्तौतथादेवमयाहिक्रियतेस्पृहा
जन्मांतरेहिसाभक्तिर्मामकीयत्करोतिहि ३२
वह्निर्यथेहस्वल्पोऽपिदहतेविविधंवनम्
तद्वदेवतुसाभक्तिरणुमात्राकृतामया ३३
शतैश्चश्रूयतेभक्तिःसहस्रैरपिबुध्यते
तेषांमध्येतुदेवेशिभक्तोह्येकःप्रजायते ३४
बुद्धिंपरेषांदास्यंतिलोकेबहुविधाजनाः
स्वयमाचरतेसोऽपिनरःकोटिषुदृश्यते ३५
पूजयाहस्यतेभक्तिर्जयेनपरिहस्यते
एवंभावोहिदेवेशेभक्तिस्तेनैवगृह्यते ३६
सागरेचयथापातःकूपेत्राणोपवेशनम्
यस्यभावोहितद्वच्चभक्तिःसातेनगृह्यते ३७
मूलेसिक्तस्यवृक्षस्यपत्रंशाखासुदृश्यते
भजनादेवभोदेविफलमग्रेप्रतिष्ठितम् ३८
पानीयहारिणायद्वत्घटेचित्तंप्रधीयते
तद्वद्देवेहरौचित्तंधृत्वामोक्षमवाप्नुयात् ३९
शैशवेचयथामातागुडंस्तोकंददातिवै
पुनर्याचतिवैबालोगुडंवैलोभकारणात् ४०
नीरेनीरंयथाक्षिप्तंदुग्धेदुग्धेघृतेघृतम्
तद्वद्भेदंनपश्यंतिविष्णुभक्तिप्रसादतः ४१
भानुःसर्वगतोयद्वद्वह्निःसर्वगतोयथा
भक्तिःस्थितस्तथाभक्तःकर्मभिर्नैवबाध्यते ४२
अजामिलःस्वधर्मंचत्यक्त्वापापंसमाचरन्
पुत्रंनारायणंस्मृत्वामुक्तिंवैप्राप्तवान्ध्रुवम् ४३

दिवारात्रौचयेभक्तानाममात्रोपजीविनः
वैकुंठवासिनस्तेवैतत्रवेदाहिसाक्षिणः ४४
अश्वमेधादियज्ञानांफलंस्वर्गेऽपिदृश्यते
तत्फलंतुसमग्रंवैभुक्त्वावैसंपतंतिच ४५
विष्णुभक्तिस्तथादेविभुक्त्वाभोगाननेकशः
वैकुंठंप्राप्यवातेषांपुनरागमनंकदा ४६
विष्णुभक्तिःकृतायेनविष्णुलोकेवसत्यसौ
दृष्टांतंपश्यदेवेशिविष्णुभक्तिप्रसादतः ४७
ग्रावाणोजलमध्यस्थाःशतशस्तेनतारिताः
विनाजलंसोमकांतोविष्णुभक्तस्यमानसम् ४८
दर्दुरोवसतेनीरषट्पदोहिवनांतरे
गंधंवेत्तिकुमुद्वत्याभक्तोभक्तौतथाहरेः ४९
गंगातटेवसंत्येकेएकेवैशतयोजनम्
कश्चिद्गंगाफलंवेत्तिविष्णुभक्तिंपरस्तथा ५०
कर्पूरागुरुभारंहिउष्ट्रोवहतिनित्यशः
मध्यगंधंनजानातितथाविष्णुंबहिर्मुखाः ५१
मृगाःशालंहिजिघ्रंतिकस्तूरीगंधमिच्छवः
स्वनाभिस्थंनजानंतितथाविष्णुंबहिर्मुखाः ५२
उपदेशोहिमूर्खाणांवृथावैनगनंदिनि
तथैवविष्णुभक्तेर्हिउपदेशोबहिर्मुखे ५३
अहिनाचपयःपीतंतत्पयोहिविषायते
तथावैचान्यभक्तानांविष्णुभक्तिर्विषायते ५४
चक्षुर्विनायथादीपंदृष्ट्वादर्पणमेवच
समीपस्थानपश्यंतितथाविष्णुंबहिर्मुखाः ५५
पावकोहियथाधूमैरादर्शोपिमलेनच
यथोल्बेनावृतोगर्भोदेहेकृष्णस्तथावृतः ५६
दुग्धेसर्पिःस्थितंयद्वत्तिलेतैलंतुसर्वदा
चराचरेतथाविष्णुर्दृश्यतेनगनंदिनि ५७
एकसूत्रेमणिगणाधार्यंतेबहवोयथा
एवंब्रह्मादिभिर्विश्वंसंप्रोतंब्रह्मचिन्मये ५८

यथाकाष्ठेस्थितोवह्निर्मंथनादेवदृश्यते
एवंसर्वगतोविष्णुर्ध्यानादेवप्रदृश्यते ५९
आदिरेकोभवेद्दीपस्तस्माज्ञाताःसहस्रशः
एवमेकःस्थितोविष्णुःसर्वव्याप्यप्रतिष्ठति ६०
यथासूर्योदयेज्योतिःपुष्करेतिष्ठतेसदा
दृश्यतेबहुधानीरेलोकेविष्णुस्तथाहिसः ६१
मारुतःप्रकृतिस्थोऽपिनानागंधवहःसदा
ईश्वरःसर्वजीवस्थोभुंक्तेप्रकृतिजान्गुणान् ६२
शर्करविषसंयोगान्नीरंभवतियादृशम्
संभूत्त्वातादृशोह्यात्माकर्मणःफलमश्नुते ६३
उर्वीचनीरसंयोगान्नानावृक्षाप्रजायते
प्रकृतेर्गुणसंयोगान्नानायोनिषुजायते ६४
गजेवैमशकेचैवदेवेवामानुषेऽपिवा
नाधिकोनचन्यूनोवैनिष्ठोदेहेसनिश्चलः ६५
ब्रह्मादिस्तंबपर्यंतायेचात्रभुविमानवाः
देवायक्षास्तथानागागंधर्वाःकिन्नरादयः ६६
तेषुसर्वेषुदृश्यंतेजलेचंद्रमसोयथा
ससच्चिदानंदशिवःसमहेशोहिदृश्यते ६७
सवैविष्णुस्तथाप्रोक्ताःसोऽयसर्वगतोहरिः
वेदांतवेद्यःसर्वेशःकालातीतोह्यनामयः ६८
ऋृएवंतंवेत्तियोदेविसभक्तोनात्रसंशयः
एकोहिबहुधाज्ञेयोबहुधाप्येकएवसः ६९
नामरूपविभेदेनजल्प्यतेबहुधाभुवि
चक्षुषानरवेज्योतिर्भानुनाचक्षुरेधते ७०
परमात्मातथाचात्माप्रतिदेहेतुसर्वदा
घटेघटेयथाकाशस्तस्मिन्भग्नेयथास्थितः ७१
रूपेरूपेतथात्वंहिभग्नेतस्मिन्सुनिश्चलः
यथाकाष्ठमयंरूपंपततेप्रभुणाविना ७२
क्रिमिभेदमयोदेहोपततेचात्मनाविना
हेम्नोभवंतिवर्णाश्चवह्निनायांतिपूर्ववत् ७३

तद्वज्जीवाःप्रपद्यंतेभक्त्यावैपूर्वरूपताम्
स्वघनेनावृतंसूर्यंमूढाःपश्यंतिनिष्प्रभम् ७४
तथाऽज्ञानधियोमूढानजानंतितमीश्वरम्
निर्विकल्पंनिराकारंवेदां तैःपरिपाठ्यते ७५
निराकाराच्चसाकारंस्वेच्छयाचप्रकाशते
तस्मात्संजातमाकाशंनिःशब्दंगुणवर्जितम् ७६
आकाशान्मारुतोजातःसशब्दंचतदाऽभवत्
वातादजायतज्योतिर्ज्योतिषश्चाभवज्जलम् ७७
तज्जलेरुक्मगर्भश्चविराड्वैविश्वरूपधृक्
तस्यनाभिसरोजेचब्रह्मांडानांचकोटयः ७८
प्रकृतिःपुरुषस्तस्मान्निर्मितंतुत्रिधाजगत्
तयोर्द्वयोश्चसंयोगात्तत्त्वयोगोऽभ्यजायत ७९
सात्विकीविष्णुसंभूतिर्ब्रह्मावैराजसःस्मृतः
शिवस्तुतामसःप्रोक्तएभिःसर्वंप्रवर्तितम् ८०
एकाब्राह्मीस्थितिर्लोकेकर्मबीजानुसारतः
तयासंहरतेविष्णुःसर्वलोकानुशेषतः ८१
तिष्ठत्यसौतदातत्रभगवान्विष्णुरव्ययः
एवंसर्वगतोविष्णुरादिमध्यांतएवच ८२
अविद्ययानजानंतिलोकावैकर्मनिश्चिताः
वर्णोचितानिकर्माणियःकालेषुप्रकारयेत् ८३
यत्कर्मविष्णुदैवत्यंनहिगर्भस्यकारणम्
वेदांतशास्त्रेमुनिभिःसर्व दैवविचार्यते ८४
ब्रह्मज्ञानमिदंदेहेतदहंपरिकीर्त्तये
शुभाशुभस्यकार्यंचकारणंमनएवहि ८५
मनसाशुध्यतेसर्वंतदाब्रह्मसनातनम्
मनएवसदाबंधुर्मनएवसदारिपुः ८६
मनसातारिताःकेचिन्मनसायातिताश्चके
मध्येसर्वपरित्यागःबाह्येकर्मतथाचरन् ८७
एवमेवकृतंकर्मकुर्वन्नपिनलिप्यते
पद्मपत्रंयथानीरलेशैरपिनलिप्यते ८८

अग्निरग्नौयथाक्षिप्तोभक्त्याचकिंप्रयोजनम्
यदाभक्तिरसोज्ञातोनमुक्तीरोचतेतदा ८९
योगैरष्टविधैर्विष्णुर्नप्राप्यश्चेहजन्मनि
भक्त्यावाप्राप्यतेविष्णुःसर्वदासुलभोभवेत् ९०
वेदांतैःप्राप्यतेज्ञानंज्ञानेनज्ञेयमेवच
तत्तुज्ञेयंयदाप्राप्तंतदाशून्यमिदंजगत् ९१
बलेनप्राप्यतेविष्णुर्योगैरष्टविधैश्चकिम्
सर्वेषामेवभावानांभावशुद्धिःप्रशस्यते ९२
आलिंग्यतेयथाकांतायथाभावस्तथाफलम्
उपानद्युक्तपादोहिवेत्तिचर्ममयींमहीम् ९३
बुद्धिर्यथाविधायस्यतद्वत्समन्यतेजगत्
दुग्धेनसिक्तोनिंबोऽपिकटुभावंनतुत्यजेत् ९४
प्रकृतिंयांतिभूतानिउपदेशोनिरर्थकः
छित्वावैसहकारंचफलंपत्रंकथंलभेत् ९५
इंद्रियाणांसुखार्थेनवृथाजन्मकथंनयेत्
स्थाल्यांवैडूर्यमय्यांहिपच्यतेचौषधंयथा ९६
दह्यतेचागदस्तद्वद्वृथाजन्मकथंभवेत्
निधानंचगृहेक्षिप्त्वाशुभःसेवांकथंचरेत् ९७
त्यक्त्वावैकुंठनाथंतमन्यमार्गेकथंरमेत्
भक्तिहीनैश्चतुर्वे दैःपठितैःकिंप्रयोजनम् ९८
श्वापचोभक्तियुक्तस्तुत्रिदशैरपिपूज्यते
स्वकरेकंकणंबद्धादर्पणैःकिंप्रयोजनम् ९९
ब्रह्मरुद्रादिभिर्देवैर्दत्तैश्वर्याश्चसेवकाः
अर्पितं नैवगृह्णंतिप्रभोश्चैवतुकिंचन १००
अकिंचनायभक्तायदातुंनालंगतोवरम्
निःशरीरस्यकृष्णस्यतत्रध्यानंकथंभवेत् १०१
साकारंबहवोदृष्ट्वागताभक्त्याचतत्पदम्
पूजाभक्तिःकथंशून्येसाकारेकथ्यतेबुधैः १०२
शून्यमार्गेकथंयातिआधारेणविनानरः
साकारोयःस्वयंस्वामीनिराकारःसवैप्रभुः १०३

साकारोहिसुखेनैवनिराकारोनदृश्यते
सेवारसश्चसाकारेनिराकारेणवैरसः १०४
साकारेणनिराकारोज्ञायतेस्वयमेवहि
हरिस्मृतिप्रसादेनरोमांचिततनुर्यदा १०५
नयनानंदसलिलंमुक्तिर्दासीभवेत्तदा
बाल्येचयत्कृतंपापंतत्कथंनविनश्यति १०६
पूजादानव्रतैस्तीर्थैर्जपहोमैस्त्वदर्पितैः
निजधर्मंपरित्यज्यतपोघोरंकथंचरेत् १०७
स्वधर्मेनिधनंश्रेयःपरमधर्मोभयावहः
विधिंसंत्यज्यशास्त्रीयंतपोघोरंकथंचरेत् १०८
आश्रमेणविनामूढोनैवसिद्धिमवाप्नुयात्
ब्रह्मणानिर्मितावर्णाःस्वेस्वेधर्मेनियोजिताः १०९
स्वधर्मेणागतंद्रव्यंशुक्लद्रव्यंतदुच्यते
शुक्लद्रव्येणयद्दानंदीयतेश्रद्धयान्वितम् ११०
स्वल्पेनापिमहत्पुरायंतस्यसंख्यानविद्यते
नीचसंगेनयद्द्रव्यमानीतंगृहकर्मसु १११
तेनद्रव्येणयद्दानंकृतंवैमनुजादिभिः
तत्फलंनभवेत्तेवैनैवतत्फलभागिनः ११२
यादृशंकुरुतेकर्मइंद्रियाणांसुखेच्छया
तादृशींयोनिमाप्नोतिमूढोहिज्ञानदुर्बलः ११३
इहयत्कुरुतेकर्मतत्परत्रोपभुज्यते
पुरायमाचरतःपुंसोयदिदुःखंप्रजायते ११४
तदातापोनकर्त्तव्यस्तत्कर्मपूर्वदेहजम्
पापमाचरतःपुंसोजायतेदुःखमेवच ११५
नकर्त्तव्यस्तदाहर्षःसुखेतत्रसुरेश्वरि
रज्जुबद्धाश्चपशवःप्रभुणास्वेच्छयायथा ११६
नीयंतेकर्मबंधेनमनुजाअपिभूतले
शाखामृगोवनचरोनृत्यतेचगृहेगृहे ११७
एवंचकर्मणाजीवानीयंतेसर्वयोनिषु
क्रीडताकंदुकोयद्वत्प्रेर्यतेप्रभुणेच्छया ११८

कर्मणावातथाजंतुर्नीयतेसुखदुःखयोः
प्राणीस्वकर्मभिर्बद्धोनशक्तोबंधनिग्रहे ११९
देवोवैकर्मभिर्बद्धाऋषयश्चतथापरे
कैलासेरुद्रदेहस्थाभुजंगाविषभोजिनः १२०
असमर्थाःसुधाभोक्तुंकर्मयोनिर्बलीयसी
नीरोगदेहदातायोबुधैःसूर्योहिकथ्यते १२१
तद्रथेसारथिःपंगुःकर्मयोनिर्बलीयसी
इंद्रद्युम्नोहिराजर्षिगर्जत्वंकर्मणागतः १२२
समर्थस्वामिनातस्मिन्कर्मयोनिर्वृथाकृता
रुद्रब्रह्मादयोदेवामानवाश्चासुराश्चये १२३
तेसर्वेकर्मबद्धाश्चविचरंतिमहीतले
कर्माधीनंजगत्सर्वंविष्णुनानिर्मितंपुरा १२४
तत्कर्मकेशवाधीनंरामनाम्नाविनश्यति
सर्वत्रापिस्थितंतोयंमुक्तिदंतुसितासिते १२५
एवमाचरतांकर्ममुक्तिदंकेशवार्चनम्
इंद्रियाणांसुखार्थाययःकर्ममनसाचरेत् १२६
अहंकृतेनमन्येतकेवलंदेहमेवहि
मनसासंस्मरन्जंतुःप्रायश्चित्तंसमाचरेत् १२७
सपूर्वकर्मभोक्ताचअग्रेकर्मनवर्द्धते
प्रशंसंतिग्रहान्केचित्केचित्प्रेतपिशाचकान् १२८
केचिद्देवान्प्रशंसंतिह्योषधीःकेचिदूचिरे
केचिन्मंत्रंचसिद्धिंचकेचिद्बुद्धिपराक्रमम् १२९
उद्यमंसाहसंधैर्यंकेचिन्नीतिंबलंतथा
अहंकर्मप्रशंसाभिःसर्वेकामानुवर्तिनः १३०
इतिमेनिश्चिताबुद्धिःकथ्यतेपूर्वसूरिभिः
यदापुण्यमयोजंतुःपापंकिंचिन्नःविद्यते १३१
ज्ञानंहिद्विविधंचैवतदापुण्यंसुभंवेत्
पापंपुण्यंसमंयस्यतदाकर्मसुविद्यते १३२
समंयोगंयदाद्वंद्वंतदानंदपदंव्रजेत्
बाह्येसर्वपरित्यागीमनसासंस्पृहीभवेत् १३३

तद्वृथाचरितंतस्यतेनतत्पापभोगिनः
बाह्येकरोतिकर्माणिमनसानिःस्पृहोभवेत् १३४
त्यागोऽसौमध्यमोज्ञेयोनतुपूर्णफलंलभेत्
बाह्यमध्येपरित्यज्यबुद्ध्याशून्यावलंबनम् १३५
त्यागःसउत्तमोज्ञेयोयोगिनामपिदुर्ल्लभः
क्रोधात्सर्वंत्यजंत्येकेकेचिद्वादप्रभावतः १३६
कष्टात्सर्वंत्यजंत्येकेत्यागाःसर्वेनुमध्यमाः
सुबुद्ध्याश्रद्धयायुक्तोनक्रोधादिवशंगतः १३७
कर्मणांह्यवलिप्तोऽपिसुगतिंयातिमानवः
शुचीनांश्रीमतांगेहेधीमतांयोगिनामपि १३८
योगाद्भ्रष्टस्तुजायेतकुलेवैद्विजपूर्वके
स्वल्पेनैवतुकालेनपूर्णंयोगंचविंदति १३९
चिदानंदपदंगच्छेद्योगभक्तिप्रसादतः
पंकेनैवयथापंकंरुधिरंरुधिरेणवै १४०
हिंसयाकर्मणाकर्मकथंक्षालयितुंक्षमः
हिंसाकर्ममयोयज्ञःकथंकर्मक्षयेक्षमः १४१
स्वर्गकामकृतायज्ञास्वर्गेतेचाल्पसौख्यदाः
अनित्यानितुसौख्यानिभवंतिचबहून्यपि १४२
नित्यंसौख्यंनतेष्वस्तिविनाभक्त्याहरेःक्वचित्
सार्वभौमसुखंराज्यंस्वर्गेचापितथासुखम् १४३
अन्यत्किंचिन्नवांछामिगर्भवासाद्बिभेम्यहम्
ग्रावावैभिद्यतेलोहैर्माणिक्यं नैवभिद्यते १४४
नानाकाममयीबुद्ध्याविष्णुभक्तिर्नभिद्यते
बकोजलचरान्भुंक्तेमंडूकादींश्चवर्जयेत् १४५
तथायमःसर्वहंतावर्जयेत्कृष्णसेवकान्
योरक्षतिसहर्ताचसवैपालकउच्यते १४६
अपराधशतैर्युक्तंस्वंस्थानेयत्रवासिता
यथाकृतापराधस्यकृष्णस्तस्यकृपाकरः १४७
फलंचलभतेवाद्यरक्षकःकिंकरोतिचेत्
एवमात्माचदेहेस्मिन्परवश्यकृपाकरः १४८

प्राप्तोनपारःशनकैर्मल्लैर्युक्तानवापिता
व्याधस्यमुक्तिदाताचकुब्जकातारितास्वयम् १४९
ब्रह्माद्यैर्दुर्लभःस्वप्नेसुलभोगोपमंदिरे
गोपोच्छिष्टंयदाभुक्तंतदातेतारिताःस्वयम् १५०
योगिभिर्गीयतेनित्यंपरमात्माजनार्दनः
अव्ययःपुरुषश्रीमान्दृष्ट्वातैर्देविविस्मये १५१
एतत्स्मरणकंदिव्यंयेपठंतिदिनेदिने
सर्वपापविनिर्मुक्तायांतिविष्णोःसनातनम् १५२
अनयाभावबुद्ध्याचपठनंविष्णुसन्निधौ
इहलोकेसुखंभुक्त्वापरंपदमवाप्नुयात् १५३

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखण्डे
विष्णुस्मरणंनामद्वात्रिंशाधिकशततमोऽध्यायः १३२

## त्रयस्त्रिंशाधिकशततमोऽध्यायः

पार्वत्युवाच
द्वीपेऽस्मिन्यानितीर्थानितानिमेवदसुव्रत
द्वीपानांद्वीपराजोऽयसर्वदाभुविनिर्मितः
संख्ययात्वंवदस्वामिन्कृपांकृत्वाममोपरि १
महादेवउवाच
सर्वगःसर्वभूतेषुद्रष्टव्यःसर्वतोभुवि
सप्तलोकेषुयत्किंचिद्दृश्यतेसचराचरम् २
तत्वंतेनविनादेविनदृष्टंनश्रुतंमया
अतोविष्णुर्महादेवःकेशवःक्लेशनाशनः
तीर्थरूपेणवर्तेतद्वीपेह्यस्मिन्सुरेश्वरि ३
तानितीर्थानिवक्ष्यामिसांप्रतंनात्रसंशयः
प्रथमंपुष्करंक्षेत्रंतीर्थानांप्रवरंशुभम्
वाराणसीद्वितीयंतुक्षेत्रंमुक्तिप्रदायकम् ४
तृतीयं नैमिषंक्षेत्रमृषीणांपावनंस्मृतम्
प्रयागंवैचतुर्थंतुतीर्थानामुत्तमंस्मृतम् ५
कार्मुकंपंचमंप्रोक्तंउत्पन्नंगंधमादने

एकादशंकान्यकुब्जंयत्रतिष्ठतिवामनः ६
सप्तमंविश्वकायंतुअवरेपर्वतेशुभे
अष्टमंगौतमाख्यंचमंदरेनिर्मितंपुरा ७
मदोत्कटंतुनवमंदशमंरथचैत्रकम्
एकादशंकान्यकुब्जंयत्रतिष्ठतिवामनः ८
द्वादशंमलयंचैवकुब्जाम्रकमतःपरम्
विश्वेश्वरंगिरिकर्णंकेदारंगतिदायकम् ९
बाह्यंहिमवतःपृष्ठेगोकर्णेगोपकंतथा
स्थानेश्वरंहिमाद्रौचबिल्वकेबिल्वपत्रिकम् १०
श्रीशैलेमाधवंतीर्थंभद्रंभद्रेश्वरेतथा
वाराहेविजयंप्रोक्तंवैष्णवंवैष्णवेगिरौ ११
रौद्रंतुरुद्रकोटेतुपैत्र्यंकालिजरेगिरौ
कंपिलेकापिलंतीर्थंमुकुटेकर्कोटकंतथा १२
शालग्रामोद्भवंतीर्थंगल्लिकायांसुरेश्वरि
नर्मदायांशिवाख्यंतुमायायांविश्वरूपकम् १३
उत्पलाद्यंसहस्राद्यंजातंवैरैवतेगिरौ
गंगायांपितृतीर्थंचविष्णुपादोद्भवंतथा १४
विपाशायांविपापाचपाटलेपुंड्रवर्द्धनम्
नारायणंसुपार्श्वेतुत्रिकूटेविष्णुमंदिरम् १५
विपुलेविपुलंनामकल्याणंमलयाचले
कौरवंकोटितीर्थेचसुगंधंगंधमादने १६
कुब्जाम्रकेत्रिसंध्यंतुगंगांद्वारेहरिप्रियम्
शैलंविंध्यप्रदेशेतुबदर्यांसारस्वतंस्मृतम् १७
कालिद्यांकालरूपंचसह्येवैसायकंस्मृतम्
चांद्रंचंद्रप्रदेशेतुरमणंतीर्थनायकम् १८
यमुनायांमृगाख्यंतुकरवीरेकुरूद्भवम्
विनायकेपर्वतेवैउमाख्यंतीर्थमेवच १९
आरोग्यंभास्करेदेशेमहाकालेमहेश्वरम्
तीर्थंअभयदंनामामृताख्यंविंध्यकंधरे २०
मंडपेविश्वरूपंचस्वाहाख्यंईश्वरेपुरे

वैगलेयंप्रचंडायांचांडिकंमरकंटके २१
सोमेश्वरंतथातीर्थेप्रभासेपुष्करंतथा
देवमात्रंसरस्वत्यांपारावततटेस्थितम् २२
महालयंमहापद्मेपयोष्ण्यांपिंगलेश्वरम्
सिंहिकायांतथातीर्थंसौरवेरविसंज्ञकम् २३
कार्तिकंकृत्तिकाक्षेत्रेशांकरंशंकरेगिरौ
उत्पलाख्यंततोदिव्यंसुभद्रासिंधुसंगमे २४
गाणपत्यंततश्चैवपर्वतोविष्णुसंज्ञके
जालंधरेततःप्रोक्तंतीर्थंविष्णुमुखंचयत् २५
तारेवैतारकंप्रोक्तंपर्वतेविष्णुसंज्ञके
देवदारुवनेपौंड्रंपौष्कंकाश्मीरमंडले २६
भौमंहिमंहिमाद्रौचतुष्टिकंपौष्टिकंपुनः
कपालमोचनंतीर्थंजातंमायापुरेतथा २७
शंखोद्धारंततश्चैवदेवंवैशंखधारकम्
पिंडेवैपिंडनामानंसिद्धेवैखानसंभवेत् २८
अच्छोदेविष्णुकामंतुधर्मकामार्थमोक्षदम्
औषध्यंचोत्तरेकूलेकुशद्वीपेकुशोदकम् २९
मन्मथंहेमकूटेतुकुमुदेसत्यवादनम्
वदंत्यावाश्वकंतीर्थंविंध्येवैमातृकंस्मृतम् ३०
चित्तेब्रह्ममयंतीर्थंतीर्थानांपावनंस्मृतम्
एतेषांसर्वतीर्थानामुत्तमंशृणुसुंदरि ३१
विष्णोर्नाममयंतीर्थंनभूतंनभविष्यति
ब्रह्महाहेमहारीवाबालहागोघ्नएवच ३२
मुच्यतेनाममात्रेणप्रसादात्केशवस्यतु
कलौद्वारवतीरम्याधन्योदेवोजनार्दनः ३३
येपश्यंतिनरादेवंमुक्तिस्तेषांसुनिश्चला
एवंधन्यतमंदेवंविष्णुंसर्वेश्वरंप्रभुम् ३४
चिंतयामिमहादेविविद्वत्संस्थोजनार्दनम्
अष्टोत्तरंतुतीर्थानांशतमेतदुदाहृतम् ३५
योजपेच्छृणुयाद्वापिसर्वपापैःप्रमुच्यते

एषुतीर्थेषुयःस्नात्वापश्येन्नारायणंहरिम् ३६
सर्वपापविनिर्मुक्तोयातिविष्णोःसनातनम्
जगन्नाथंमहातीर्थंलोकानांपावनंस्मृतम् ३७
येगच्छंतिनरश्रेष्ठास्तेपियांतिपरांगतिम्
शताष्टकंमहापुरयंश्रावयेत्पितृकर्मणि ३८
इहलोकेसुखंभुक्त्वायातिविष्णोःसनातनम्
गोदानेश्राद्धदानेवाअहन्यहनिवापुनः ३९
देवार्चनविधौविद्वान्परंब्रह्माधिगच्छति ४०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तरखंडेजंबूद्वीपतीर्थवर्णनंनामत्रयस्त्रिंशाधिकशततमोऽध्यायः १३३

## चतुस्त्रिंशाधिकशततमोऽधयायः

महादेवउवाच
वेत्रवत्यास्तुमाहात्म्यंवक्ष्यामिशृणुसुंदरि
यत्रस्नात्वाविमुच्यंतेयावदाभूतसंप्लवम् १
वृत्रेणचकृतःकूपोमहागंभीरसंज्ञकः
कूपात्सानिःसृतादेवीमहापापौघनाशिनी २
यथागंगातथेयंचसरिच्छ्रेष्ठासुरोत्तमे
अस्यादर्शनमात्रेणपापौघाःशमयंतिच ३
शृणुदेविप्रवक्ष्यामिइतिहासंपुरातनम्
यच्छ्रुत्वापापिनोदोषैर्विमुक्ताःकर्मबंधनात् ४
चंपकेनगरेचैवराजाराज्यंकरोतिसः
सदादुष्टोदुष्टरूपोजनानांसप्रपीडकः ५
अधर्मोधर्मरूपश्चविष्णुनिंदापरायणः
देवद्विजनिहंताचआश्रमाणांविदूषकः ६
वेदनिंदापरःश्रीमान्मूर्खोवानिर्घृणःशठः
असच्छास्त्रेषुनिरतःपरदाराभिमर्शकः ७
विदारुणेतिनामाचसंजातोमूर्खएवच
कदाचिद्दैवयोगेनआगतस्तांनदींप्रति ८
आखेटकसमायुक्तःस्वयंकुष्ठीसुरेश्वरि

महापापादयंजातोब्राह्मणानांचनिंदनात् ९
वृथावादीदुरात्माचशठोवैनिर्घृणःपशुः
वेदनिंदारतोनित्यंगोशास्त्राणांप्रदूषकः १०
एवंविधोवनेभ्राम्यंस्तृषार्तःससुहृद्वृतः
अश्वादुत्तीर्यराजाऽसौजलंपीत्वागृहंगतः ११
तेनैवोदकपानेनगतंकुष्ठंनसंशयः
बुद्धिस्तुनिर्मलाजातातस्यराज्ञोविशेषतः १२
विष्णौभक्तिःसमुत्पन्नातदातस्यसुरेश्वरि
ततःप्रभृतिकालेनस्नानंवैकृतवान्सदा १३
निर्मलोबहुरूपाढ्योजातस्तत्रसुरेश्वरि
इहलोकेसुखंभुक्त्वाकृत्वायज्ञाननेकशः १४
विप्रेभ्योदक्षिणांदत्वासगतोवैष्णवंपदम्
इतिज्ञात्वातुभोदेविवेत्रवत्यांविशेषतः १५
स्नानंकुर्वंतियेविप्रास्तेमुक्तानगनंदिनि
राजन्योवाथवैश्योवाशूद्रोवासुरसत्तमे १६
यत्रस्नानंप्रकुर्वंतितेमुक्ताःपापबंधनात्
कार्तिकेवाऽथमाघेवाबाह्योवावेदनिंदकः १७
सरितांसंगमेस्नात्वामुच्यतेदेविकिल्बिषात्
साभ्रमत्याःसमंयत्रतस्याःसंगःप्रदृश्यते १८
तत्रस्नात्वाविशेषेणमुच्यतेब्रह्महासदा
खेटकंनगरंदिव्यंस्वर्गरूपंतुवाऽनघे १९
ब्रह्मणातत्रवैदेवियोगाश्चबहवःकृताः
तत्रस्नात्वाचभुक्त्वाचपुनर्जन्मनविद्यते २०
साद्वितीयास्मृतागंगाकलौदेविविशेषतः
येनराःसुखमिच्छंतिधनमिच्छंतियेनराः २१
स्वर्गमिच्छंतियेलोकास्तेवैस्नात्वापुनःपुनः
इहलोकेसुखंभुक्त्वायांतिविष्णोःसनातनम् २२
सूर्यवंशेचयेजाताःसोमवंशेतथैवच
आगतावेत्रवत्यांतुस्नात्वानिर्वृतिमागताः २३
दर्शनाद्धरतेदुःखंस्पर्शनान्मानसंह्यघम्

स्नात्वाभुक्त्वातथादेविमुक्तिभागीनसंशयः २४
स्नानाज्जपात्तथाहोमादनंतंफलमश्नुते
गत्वावाराणसीतीर्थंभक्त्याचांद्रायणंचरेत् २५
तत्रगत्वामहत्पुरायंतत्पुरायंसुरसत्तमे
वेत्रवत्यांविशेषेणपंचत्वंयदिगच्छति २६
सवैचतुर्भुजोभूत्वायातिविष्णोःपरंपदम्
पृथिव्यांयानितीर्थानियेदेवाःपितरस्तथा २७
तेसर्वेचवसंतीहवेत्रवत्यांसुरेश्वरि
किमन्यद्बहुनोक्तेनभूयोभूयोवरानने २८
वेत्रवत्याःसमंतीर्थंपृथिव्यांनसनातनि
अहंविष्णुस्तथाब्रह्मादेवाश्चपरमर्षयः २९
तिष्ठंतिदेवताःसर्वेवेत्रवत्यांमहेश्वरि
एककालंद्विकालंवात्रिकालंचविशेषतः ३०
स्नानंकुर्वंतियेतत्रतेवैमुक्तानसंशयः ३१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायांउत्तरखंडेवेत्रवती माहात्म्येचतुस्त्रिंशाधिकशततमोऽध्यायः १३४

## पञ्चत्रिंशाधिकशततमोऽध्यायः

श्रीमहादेवउवाच
साभ्रमत्यास्तुमाहात्म्यंवक्ष्येदेवियथातथम्
कश्यपोवैमुनिश्रेष्ठस्तपोवैतप्तवान्महत् १
अनेकवर्षपर्यंतंतेनतप्तंमहत्तपः
अर्बुदेपर्वतेरम्येनानाद्रुमसमाकुले २
तत्रगत्वातपस्तप्तंऋषिणाकश्यपेनवै
सरस्वतीयत्ररम्यापवित्रापापनाशिनी ३
एकस्मिन्दिवसेदेविगतोऽसौनैमिषंप्रति
तदातेऋषयःसर्वेकथांचक्रुरनेकशः ४
तदातैस्तुद्विजैःसम्यक्पृष्टोऽसौकश्यपोमुनिः
अहोकश्यपनःप्रीत्यैगंगेहानीयतांप्रभो ५
भवन्नाम्नातुसागंगाभविष्यतिसरिद्वरा

तेषांवाक्यमुपाकर्ण्यनमस्कृत्यद्विजांश्चतान् ६
आगतोह्यर्बुदारण्येसरस्वतीतीरसंनिधौ
तत्रतप्तंतदातेनतपःपरमदुष्करम् ७
आराधितोह्यहंतेनकश्यपेनद्विजेनवै
प्रत्यक्षोऽहतदाजातस्तस्यद्विजवरस्यच ८
वरंवरयभद्रंतेयत्तेमनसिवर्त्तते ९
कश्यपउवाच
वरंदातुंसमर्थोऽसिदेवदेवजगत्पते
शिरःस्थितायागंगेयंपवित्रापापहारिणी १०
ममदेयाविशेषेणमहादेवनमोस्तुते
तदादेविमयोक्तंचगृह्णीष्वत्वंद्विजोत्तम ११
जटामेकांपरित्यज्यदत्तागंगातदामया
तांगृहीत्वाद्विजश्रेष्ठःस्वस्थानंहर्षतोययौ १२
केशरन्ध्रंनामतीर्थंवासोवैकश्यपस्यच
गतस्तत्रतुदेवेशिमुनिभिःपरिवारितः १३
कश्यपेनसमानीताकाश्यपीसासरिद्वरा
यस्यादर्शनमात्रेणब्रह्महामुच्यतेकिल १४
पार्वत्युवाच
स्नानमात्रेणकिंपुण्यंतत्रतीर्थेवदस्वमे
विश्वनाथकृपालुस्त्वंदयांकुरुममोपरि १५
दर्शनेकिंभवेत्पुण्यंस्नानेकिंवददेवराट्
महिमाकीदृशोब्रह्मन्सर्वंत्वंवक्तुमर्हसि १६
महादेवउवाच
मयाश्रुतान्यनेकानितीर्थान्यायतनानिच
श्रीविष्णोश्चप्रसादाच्चनद्यःसागरगाःप्रभोः १७
गंगाचयमुनारेवातापीचैवमहानदी
गोदावरीतुंगभद्राकौशिकीगल्लिकातथा १८
कावेरीवेदिकाभद्रासरयूःपापहारिणी
अन्याश्चविविधानद्यःसर्वपापहराभुवि १९
प्रयागस्तीर्थराजश्चकाशीपुष्करएवच

नैमिषाररायसंज्ञंतुतीर्थंचामरकंटकम् २०
उत्तमंद्वारकाद्मेत्रमर्बुदाररायमुत्तमम्
एवंविधानिदिव्यानिद्मेत्राणिविविधानिच २१
श्रुतानितत्रदेवेशिमायाविष्णोःप्रसादतः
पूर्वंभगीरथेनैवयाचितोऽहतुपार्वति २२
तदादत्ताइयंगंगाविष्णोर्लोकमभीप्सुना
कश्यपायपुनर्दत्तात्रृषीणांवचनान्मया २३
इयंवैकाश्यपीगंगारोगदोषहरासदा
इयंयाकथ्यतेलोकेयुगेवैनामपूर्वकम् २४
तदहंकथयिष्यामिशृणुसुंदरितत्वतः
कृतेकृतवतीनामत्रेतायांगिरिकर्णिका २५
द्वापरेचंदनानामकलौसाभ्रमतीस्मृता
दिनेदिनेविशेषेणस्नानार्थंतुनराश्चये २६
सर्वपापविनिर्मुक्तायांतिविष्णोःसनातनम्
प्लद्मावतरणेतीर्थेसरस्वत्यांतथेश्वरि २७
केदारेचकुरुद्मेत्रेयत्फलंस्नानतोभवेत्
तत्फलंतुनृणांनूनंसाभ्रमत्यादिनेदिने २८
भवतीतिनसंदेहोव्यासस्यवचनंयथा
नभस्येपरपद्मेतुप्रत्यहंवासुरेश्वरि २९
अमावास्यादिनेसम्यक्श्राद्धदानेचयत्फलम्
नरस्तत्फलमाप्नोतिसाभ्रमत्यावगाहनात् ३०
कार्तिक्यांकृत्तिकायोगेश्रीस्थलेमाधवाग्रतः
तत्फलंलभतेमर्त्योसाभ्रमत्यावगाहनात् ३१
एषाश्रेष्ठतमादेविसर्वलोकेषुपावनी
इयंधन्यतमादेविपवित्राह्यघनाशिनी ३२
यस्यांवैसाभ्रमत्यांचएतेतिष्ठंतिनित्यशः
पूर्वसंबंधिनोयेचउत्तरेयेतथापुनः ३३
पाश्चात्यादाद्मिणात्याश्चसर्वेयांतिचनित्यशः
तीर्थयात्रामिषेणैवखेटकेब्रह्मसन्निधौ ३४
आयांतिसर्वदादेविकार्तिक्यांचनसंशयः

तत्रश्राद्धंप्रकुर्वंतितथावैविप्रभोजनम् ३५
नानाधर्मान्प्रकुर्वंतिनानायज्ञांश्चनित्यशः
विविधानिचदानानिप्रकुर्वंतिजनाःसदा ३६
चतुर्युगेषुसर्वेषुनात्रकार्याविचारणा
यवक्रीतोऽथरैभ्यश्चकाक्षीवानुशिजस्तथा ३७
भृग्वंगिरास्तथाकरवोमेधावीचपुनर्वसुः
बंदीचगुणसंपन्नःप्राच्यांदिशिउपश्रिताः ३८
उदीच्यांयेमहाभागामधुमत्प्रमुखास्तथा
सुबंधुश्चमहाभागोदत्तात्रेयश्चवीर्यवान् ३९
शिखीदीर्घतमाश्चैवगौतमःकश्यपस्तथा
श्वेतकेतुःकहोडश्चपुलहोदेवलस्तथा ४०
विश्वामित्रभरद्वाजौजमदग्निश्चवीर्यवान्
ऋचीकपुत्रोगर्गश्चऋषिरुद्दालकस्तथा ४१
देवशर्माऽथधौम्यश्चआस्तीकःकश्यपस्तथा
लोमशोनाभिकेतुश्चलोमहर्षणएवच ४२
ऋषिरुग्रश्रवाश्चैवभार्गवश्चयवनस्तथा
वालखिल्यादयोयेचसर्वेगच्छंतितत्रवै ४३
कृतस्नानानिराहाराःसदाविष्णुपरायणाः
शंखचक्रगदाधरास्तटेतिष्ठंतिनित्यशः ४४
पितृतीर्थंगयानामसर्वतीर्थवरंशुभम्
यत्रास्तेदेवदेवेशःस्वयमेवपितामहः ४५
गीतायाःपितृभिर्गाथाश्राद्धभागमपीप्सुभिः
एष्टव्याबहवःपुत्रायद्येकोऽपिगयांव्रजेत् ४६
यजेतवाश्वमेधेननीलंवावृषमुत्सृजेत्
तथावाराणसीपुरयापितृणांवल्लभासदा ४७
याचैवममसांनिध्याद्भुक्तिमुक्तिफलप्रदा
ममाज्ञयातुदेवेशोबिंदुमाधवसंज्ञकः ४८
नित्यंतिष्ठतिदेवेशिवाराणस्यांविशेषतः
अतोधन्यतमाश्रेष्ठापुरीयंममसर्वदा ४९
पितृणांवल्लभंतीर्थंपुरयंवैविमलेश्वरम्

पितृतीर्थंप्रयागंचसर्वतीर्थसमन्वितम् ५०
साभ्रमत्युदकेदेविश्रायांतिवचनान्मम
वटेश्वरश्चभगवान्माधवेनसमन्वितः ५१
दशाश्वमेधकंपुरयंगंगाद्वारंतथैवच
मन्नियोगाच्चदेवेशिसाभ्रमत्यांवसंतिहि ५२
नदाथललितादेवीतीर्थंयत्सप्तधारकम्
तथामित्रपदंनामकेदारंशंकरालयम् ५३
गंगासागरमित्याहुःसर्वतीर्थमयंशुभम्
तीर्थंब्रह्मसरस्तद्वच्छतद्रुसलिलेह्रदे ५४
तीर्थंतुनैमिषंनामश्राज्ञयाममसर्वदा
साभ्रमत्युदकेदेविनिवसंतिनसंशयः ५५
श्वेतावल्कलिनीपुरयाततःश्वेताहिररामयी
हस्तिमत्यथवार्त्तघ्नीनदीसागरगामिनी ५६
पितृणांवल्लभाह्येताःश्राद्धकोटिफलप्रदः
तत्रश्राद्धानिदेयानिपुत्रैःपितृहितायवै ५७
पाटलंवाडवारव्यंचनगरंतत्रसुंदरि
साभ्रमत्यांसदाएताःप्राप्तानद्योविशेषतः ५८
तत्रस्नानंचदानंचयेकुर्वंतिनराभुवि
इहलोकेसुखंभुक्त्वायांतिविष्णोःसनातनम् ५९
जंबूद्वीपंमहापुरयंयत्रपुरयंविवर्द्धते
तत्रार्यारव्यंमहापुरयंसर्वकामफलप्रदम् ६०
नीलकंठमितिख्यातंतीर्थंनंदह्रदस्तथा
तथारुद्रह्रदस्तीर्थंपुरयंरुद्रमहालयम् ६१
मंदाकिनीमहापुरयातथाच्छोदामहानदी
साभ्रमत्यांवहंत्येतेस्वात्मनादर्शनीकृते ६२
धूम्रामित्रपदंतद्वद्वैजनाथंदृषद्वरम्
क्षिप्रानदीमहाकालंतथाकालिजरोगिरिः ६३
गंगोद्भूतंहरोद्भेदंनर्मदाकारमेवच
गंगापिंडप्रदानेनसमान्याहुर्मनीषिणः ६४
एतानिब्रह्मतीर्थानिसाभ्रमत्युत्तरेतटे

गुप्तीकृतानिदेवेशिदेवैर्ब्रह्मपुरोगमैः ६५
स्मरणादपिलोकानांपापघ्नानिमहेश्वरि
किंपुनःश्राद्धदातृणांमानवानांसुरेश्वरि ६६
ॐकारंपितृतीर्थंचकावेरीकपिलोदकम्
संभेदश्चंडवेगायास्तथैवामरकंटकम्‌ ६७
कुरुक्षेत्राच्छतगुणमस्मिन्स्नानादिकंभवेत्
वार्तघ्नीसंगमेदेविगणेश्वरपुरःसरम्‌ ६८
साभ्रमत्यांपुरानीतंगणैस्तीर्थकदंकबम्
एषतूद्देशतःप्रोक्तस्तीर्थानांसंगमोमया ६९
वागीशापिनशक्नोतितीर्थानांतत्वविस्तरम्
सत्यंतीर्थंदयातीर्थंतीर्थमिंद्रियविग्रहः ७०
तस्यास्तीर्थेप्रयत्नेनस्नानंकुर्यान्नसंशयः
प्रातःकालोमुहूर्तांस्त्रीन्संगवस्तावदेवतु ७१
तदास्नानादिकंतीर्थेदेवानांप्रीतिदायकम्
मध्याह्नस्त्रिमुहूर्तःस्यादपराह्णस्ततःपरम्‌ ७२
पितृणांप्रीतिजननंस्नानपिंडादितर्पणम्
सायाह्नस्त्रिमुहूर्तःस्याच्छ्राद्धंतत्रनकारयेत्‌ ७३
राक्षसीनामसावेलागर्हितासर्वकर्मसु
अह्नोमुहूर्ताविख्यातादशपंचचसर्वदा ७४
तत्राष्टमोमुहूर्तोयःसकालःकुतुपःस्मृतः
मध्याह्नेसर्वदायस्मान्मंदीभवतिभास्करः ७५
तस्मादनंतफलदःपितृणांपिंडदानतः
मध्याह्नःखड्गपात्रंचतथानेपालकंबलः ७६
रूप्यंदर्भास्तथागावोदौहित्रंकुतपास्तिलाः
पापंकुत्सितमित्याहुस्तस्यसंतापकारकाः ७७
अष्टावेतेयतस्तस्मात्कुतपाइतिविश्रुताः
ऊर्द्ध्वंमुहूर्तात्कुतुपात्यन्मुहूर्तचतुष्टयम्‌ ७८
महूर्तपंचकंचैतच्छ्राद्धकालेसमिष्यते
विष्णोर्देहात्समुद्भूताःकुशाःकृष्णतिलाःस्मृताः ७९
श्राद्धस्यरक्षणार्थायएवमाहुर्दिवौकसः

तिलोदकांजलिर्देयोजलस्थैस्तीर्थवासिभिः ८०
सदर्भहस्तैरेकेनश्राद्धमेवंनहिंस्यते
साभ्रमत्यांनामधेयैरितितीर्थप्रवेशनम् ८१
कारयित्वामयादेविदत्तावैकश्यपायच
ममभक्तःकश्यपोसौवल्लभोममसर्वदा ८२
दत्तातस्मादियंगंगापवित्रापापनाशिनी
साभ्रमत्यांमहाभागेतीर्थेवैब्रह्मचारिके ८३
ग्रात्मानंचप्रतिष्ठाप्यतन्नाम्नाशंकरोह्यहम्
स्थितोलोकहितार्थायब्रह्मचारीशसंज्ञकः ८४
साभ्रमत्यामुपकंठेब्रह्मचारीशसंज्ञके
कलौभक्तोविशेषेणपूजनंकुरुतेयदा ८५
इहलोकेसुखंभुक्त्वायातिशैवंपदंमहत्
महद्भिर्व्याधिभिश्चैवपीडितोयदिगच्छति ८६
यस्याशुनश्यतिव्याधिर्दर्शनाच्चमहेश्वरि
गत्वावैतस्यसंस्थानेउपवासीजितेंद्रियः ८७
पूजनंकुरुतेभक्त्यारात्रौतिष्ठन्सुनिश्चलः
तदाहंयोगिरूपेणदर्शनंतस्ययामिहि ८८
ददामिवांच्छितान्कामान्सत्यंसत्यंवरानने
ममस्थानेविशेषेणसमायांतिचयेजनाः ८९
तेषांव्याधिप्रशमनंकरोमिसुचिरादहम्
चतुरशीतिसंज्ञेयोव्याधिःसंकथितोमया ९०
ससव्याधिर्विनश्येतदर्शनादेवसुंदरि
नलिगंवर्ततेतत्रमामकंनगनंदिनि ९१
स्नानमात्रंतुतत्रैवमामकंनात्रसंशयः
एकस्मिन्नेवकालेतुग्रस्यांभूमौमहातपाः ९२
राजावैसूर्यवंशीयोब्रह्मदत्तस्तुवीर्यवान्
तेनराज्ञातपस्तप्तंबहुकालंसुरेश्वरि ९३
पंचाग्निसाधनंतेनकृतंचबहुधाततः
मासोपवासकादीनितपस्तप्तान्यनेकशः ९४
एवंबहुतरंकालंराज्ञातप्तंतपोमहत्

प्रत्यक्षोऽहतदाजातोवरार्थंवरवर्णिनि ९५
ब्रह्मदत्तश्शृणुष्वत्वंमहद्वाक्यंनरेश्वर
यंयंवांछयसेनित्यंतंतंदद्मिनसंशयः ९६
तेनोक्तंममदेवेशवांच्छितंयदिदीयते
एकएववरोदेवदीयतांममसर्वदा ९७
ममनाम्नाहिदेवेशईश्वरोभुविजायताम्
तेनवाक्येनसंतुष्टोवरोदत्तोमयाऽनघे ९८
तदाहंतेनवैसार्द्धंनिवसामिसुरेश्वरि
अत्रस्थित्वानिराहारोभक्तिंकुर्यादशेषतः ९९
ददामिवांछितान्कामान्यावदिंद्राश्चतुर्दश
अत्रागत्यतुयेविप्रारुद्रजाप्यादिकंचयत् १००
प्रकुर्वंतिविशेषेणतेषांदद्मिशृणुष्वतत्
स्त्रीसौख्यंपुत्रसौख्यंचलक्ष्मीवृद्धिकरंपुनः १०१
यशएश्वर्यमेवापितथारोगादिनाशनम्
तत्सर्वंप्राप्यतेक्षिप्रंवांच्छितंवैकलौयुगे १०२
अस्मिन्कलौयुगेघोरेमद्भक्ताभुविपार्वति
अत्रागत्यप्रतिष्ठाप्यउषित्वादिनपंचकम् १०३
ददामिवांच्छितानर्थान्सत्यंसत्यंसुरेश्वरि
ब्रह्मदत्तंतुतन्नाम्नाद्वितीयंब्रह्मचारिणम् १०४
गंगाधरंप्रतिष्ठाप्यउषित्वादिनपंचकम्
सराजागतवांस्तत्रस्वकेराज्येततःपुनः १०५
ब्रह्मदत्तस्तुविख्यातोलोकेवैपरमोमहान्
राज्यंचकारधर्मज्ञोह्ययुतंवर्षसंज्ञकम् १०६
ततःकतिपयेकालेराज्यंभुक्त्वासवैनृपः
गतवाञ्शिवलोकंतंब्रह्माख्यंपदमुत्तमम् १०७
देवौद्वौतत्रवर्त्तेतेममनामाभिधायकौ
एकोवैब्रह्मचारीशोअन्योगंगाधरःस्मृतः १०८
ममस्थानेविशेषेणपूजांकुर्वंतियेजनाः
तेषांसर्वंददामीहवांच्छितंनात्रसंशयः १०९
स्थानमेवसदालिगंगंतव्यंचनृभिःसदा

तत्रपुष्पंचधूपंचनैवेद्यंविविधंतथा ११०
यःकरोतिनरःप्राज्ञःससर्वंलभतेध्रुवम्
बिल्वपत्रैश्चपुष्पैश्चतथावाचंदनादिभिः १११
पूजांकुर्वंतिमत्स्थानेतेषांसर्वंददाम्यहम्
यइदंशृणुयान्नित्यंब्रह्मचारिकथानकम् ११२
इहलोकेसुखंप्राप्यव्रजतेशिवसंनिधौ
यत्रगंगाधरोदेवोनित्यंतिष्ठतिभूतिदः ११३
ब्रह्मचारीशसंज्ञस्तुद्वितीयोवर्त्ततेसदा
ताभ्यांध्यानसमायोगाच्छिवत्वमश्नुतेध्रुवम् ११४
दर्शनान्नश्यतेरोगःपूजनादायुराप्नुयात्
स्नानात्तत्रतुदेवेशिमुक्तिभागीनसंशयः ११५
शृणुसुंदरिवक्ष्यामितीर्थंपरममद्भुतम्
राजखड्गइतिख्यातंसाभ्रमत्यांविशेषतः ११६
सूर्यवंशसमुत्पन्नोराजावैकर्त्तनस्तथा
दुराचारीतुपापात्माब्राह्मणानांचनिंदकः ११७
गुरुद्रोहीसदारुष्टोनिंदकःसर्वकर्मणाम्
परदाररतोनित्यंनित्यंविष्णुप्रदूषकः ११८
प्रजापीडनकंनित्यंकरोतिबहुधाततः
एवंविधःसदुष्टात्मापृथिव्यांवर्त्ततेसदा ११९
कियत्येवंगतेकालेशृणुसुंदरितत्वतः
पापेनदैवयोगाच्चकुष्ठत्वंसमजायत १२०
निरीक्ष्यस्वंशरीरंतुविचार्यचपुनःपुनः
किंकर्त्तव्यमितिध्यायन्इतिचिंतापरोऽभवत् १२१
कदाचिद्दैवयोगाच्चक्रीडार्थंगतवान्वने
तत्रसाभ्रमतीतीरंसमासाद्यसतिष्ठति १२२
तत्रस्नानंकृतंतेनपीतंपानीयमुत्तमम्
तत्रस्नानेनसपदिशरीरंदिव्यसंज्ञकम् १२३
सुसौवर्णमयीमूर्त्तिर्दृश्यतेनगनंदिनि
तत्तदैवतुसंजातःसराजानात्रसंशयः १२४
दिव्यरूपमनुप्राप्यकियत्कालंततोनृपः

राज्यंभुक्त्वातुदेवेशिगतोवैपरमंपदम् १२५
तदातीर्थमिदंजातंराजखङ्गेतिसंज्ञकम्
अत्रस्नानंप्रकुर्वंतिदानंयोवैददातिच १२६
इहलोकेसुखंभुक्त्वायातिविष्णोःसनातनम्
नरोगोवर्त्ततेतेषांनशोकश्चकदाचन १२७
प्रत्यहंकुरुतेस्नानंखङ्गेऽस्मिन्राजसंज्ञके
योनरःप्राप्नुयात्स्वर्गंब्रह्माद्यैःसचपूज्यते १२८
कृतेसत्येश्वरोनामत्रेतायांभुवनेश्वरः
राजेश्वरसमाख्यातोद्वापरेनगनंदिनि १२९
अस्मिन्कलियुगेघोरेगुप्तीभूतोऽथविश्वराट्
अतोवैतीर्थसंभूतंराजखङ्गेतिसंज्ञकम् १३०
पितॄणांतर्पणंचात्रश्रद्धयायेप्रकुर्वते
तेनराःपुण्यकर्माणःपृथिव्यांपरिकीर्तिताः १३१
ब्रह्मघ्नाबालहंतारःस्नानंयेऽत्रप्रकुर्वते
तैर्दोषैरहितास्तेचगच्छंतिशिवसन्निधौ १३२
नीलोत्सर्गंकरिष्यंतिसाभ्रमत्यांनराश्चये
तेषांवैपितरस्तृप्तायावदाभूतसंप्लवम् १३३
इदमाख्यानकंदिव्यंराजखङ्गेतिसंज्ञकम्
येशृण्वंतिनरादेविनतेषांविद्यतेभयम् १३४
रोगादोषाविनश्यंतिश्रवणात्पठनात्ततः १३५
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तरखंडेउमामहेश्वर संवादेसाभ्रमतीमाहात्म्यंनामपंचत्रिंशाधिकशततमोऽध्यायः १३५

षट्त्रिंशाधिकशततमोऽध्यायः-

पार्वत्युवाच
साभ्रमत्यपियान्देशान्नंदिकुंडाद्विनिःसृता
गच्छंतीपावयामासकान्कान्देशान्वदस्वमे
चकारकानितीर्थानिविलंघ्यार्बुदपर्वतम् १
सूतउवाच
इतितत्रोदितेदेव्यामहादेवःसविश्वराट्

उवाचवचनंतांवैपार्वतींविश्वमोहिनीम् २
महादेवउवाच
नंदिकुंडात्प्रथमतःतीर्थात्परमपावनात्
कपालमोचनंतीर्थंमुनिभिःसंप्रकारितम् ३
सर्वतेजोधिकंतीर्थंपावनात्पावनंपरम्
अत्रमयापरित्यक्तंकपालंब्रह्मसंज्ञकम् ४
कपालमोचनंतीर्थमतोजातंहिपार्वति
पावनंसर्वभूतानांप्रकटंलोकविश्रुतम् ५
कपालकुंडमाख्यातंतत्तीर्थंतीर्थराजकम्
यत्रदेवास्तथानागागंधर्वाःकिंनरादयः ६
निवसंतिमहात्मानस्तीर्थेवैनिर्मलेशुभे
त्रैलोक्येविश्रुतंतीर्थंदानदंमुक्तिदायकम् ७
तत्रस्नात्वाशुचिर्भूत्वाकपालेशंप्रपूजयेत्
उपोष्यरजनीमेकांकृत्वाब्राह्मणभोजनम् ८
तत्रापिवस्त्रदानेनअग्निहोत्रफलंलभेत्
तस्मिंस्तीर्थेतुयःकश्चिद्दर्शनव्रतमास्थितः ९
संत्यज्यदेहमात्मानंशिवलोकंव्रजेद्ध्रुवम्
अस्मिंस्तीर्थेपुरास्नानात्सौदासोब्रह्महत्यया १०
मोचितोविमलंज्ञानंप्राप्तवान्वैसुरेश्वरि
भागीरथ्यान्वयेजातःसुदासाख्योमहाबली ११
तस्यपुत्रोमित्रसहःसौदासेतिचविश्रुतः
वसिष्ठशापतःप्राप्तःसौदासोराक्षसींतनुम् १२
साभ्रमत्यांकृतस्नानोविमुक्तःशापजादघात्
अत्रगंगाचयमुनागोदावरीसरस्वती १३
नंदितीर्थेवसंत्येताःपवित्राःपुण्यदाःसदा
गोदानंभूमिदानंचशय्यादानंतथैवच १४
कन्यादानंविशेषेणकर्तव्यंज्ञानिभिर्नरैः
एतद्दानसमंप्रोक्तंसाभ्रमत्यावगाहनम् १५
यत्रवैसकलान्येवपतितानी भूतले
वारिणास्पर्शमात्रेणशुद्धत्वंयांतितान्यपि १६

अत्रश्राद्धंप्रकुर्वाणोनरोवैभक्तितत्परः
पितरस्तस्यसंतुष्टागच्छंतिपरमंपदम् १७
एतदाख्यानकंदिव्यंयेशृण्वंतिनराःसदा
सर्वपापविनिर्मुक्ताविष्णोःसायुज्यमाप्नुयुः १८
कर्मणामनसावाचायेस्तुवंतिमहेश्वरम्
नतेषांविद्यतेदुःखंयावदाभूतसंप्लवम् १९
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेउमामहेश्वरसंवादेनंदितीर्थमहिमानामषट्त्रिंशाधिकशततमोऽध्यायः १३६

## सप्तत्रिंशाधिकशततमोऽध्यायः

महादेवउवाच
अथनंदिप्रदेशात्तुयथासाभ्रमतीनदी
समायाताविकीर्णंचवनंविप्रर्षिसेवितम् १
बहुधाजलवेगेनपर्वतानांचरोधसः
सप्तधाप्रविभक्ताचदक्षिणोदधिगामिनी २
आद्यासाभ्रमतीपुण्याद्वितीयासेटिकातधा
तृतीयावल्किनीपुण्याचतुर्थीचहिरण्मयी ३
सर्वपापहराप्रोक्ताहस्तिमत्यथपंचमी
वेत्रवतीसाचषष्ठीवृत्रेणनिर्मितापुरा ४
इयंसापरमादेवीवृत्रकूपाद्विनिःसृता
वेत्रवतीततोजातामहापापप्रणाशिनी ५
भद्रामुखीशुभप्रायासप्तमीलोकपावनी
एतैस्तुसप्तभिर्देवितांस्तान्जनपदांस्तथा ६
पवित्रीकृत्यचैकेनसप्तस्त्रोताप्रतिष्ठिता
विकीर्णतीर्थेयःश्राद्धंपितॄनुद्दिश्यदास्यति ७
गयापिंडप्रदानस्यफलंयत्तद्भविष्यति
अवकीर्णाच्युतायेचलुप्तपिंडोदकक्रियाः ८
तेविकीर्णेप्रमुच्यंतेदत्तपिंडोदकक्रियाः
तत्रश्राद्धंतुयःकुर्याद्गाणपत्यंभवेद्ध्रुवम् ९
तस्मात्रयीविधानेनश्रद्धयाश्राद्धमाचरेत्

अस्मिंस्तीर्थेविशेषेणसप्तनद्युदयेद्विजाः १०
स्नानंकुरुतविप्रेंद्राऋषिलोकमभीप्सवः
इत्युक्तंकश्यपेनाथद्विजान्प्रतिविशेषतः ११
यदिचेत्क्रियतेस्नानंसर्वदुःखापहंसदा
तीर्थानांप्रवरंतीर्थंक्षेत्राणामुत्तमोत्तमम् १२
तीर्थमेतद्विकीर्णंचशुभदंरोगदोषहृत्
कुर्वंत्यत्रविशेषेणयेस्नानंसर्वदाकलौ १३
तेनराःपुरायभाजोहिजायंतेनात्रसंशयः
गयातीर्थसमंतीर्थंविकीर्णंपावनंपरम्
पितॄणांपुरायदंनित्यंलोकानांदुःखनाशनम् १४
इतिविकीर्णतीर्थम्
तीर्थादस्मात्परंतीर्थंश्वेतोद्भवमनुत्तमम्
यत्रश्वेतानदीजातामत्पृष्ठोदरभस्मना १५
विश्रुतात्रिषुलोकेषुसर्वपापप्रणाशिनी
हरांगभस्मसंयोगात्जातादेवैस्तुमानिता १६
तस्यांस्नातःशुचिर्दांतस्त्रिरात्रमुषितःपुमान्
महाकालेश्वरंदृष्ट्वारुद्रलोकेमहीयते १७
पिंडपितृभ्योयोदद्यात्तस्यास्तीरेकुशैस्तिलैः
सुतृप्ताःपितरस्तस्यभवंतीतिनसंशयः १८
श्वेतगंगामहापुरायादुःखदारिद्र्यमोचनी
यत्रस्नानेनभोदेविपरंसुखमवाप्यते १९
तस्यावैसंगमेपुरायेनित्यंतिष्ठामिपार्वति
येऽत्रदानंप्रकुर्वंतिस्नानंचतत्रसुंदरि २०
तदनंतफलंतस्यभवेद्वैनात्रसंशयः
तत्रभूतेश्वरोदेवःसंगमेवसतेध्रुवम् २१
तत्रधूपंचदीपंचपुष्पमारार्तिकंतथा
येकुर्वंतिनरश्रेष्ठास्तेनराःपुरायरूपिणः २२
बिल्वदलंसमादाययोददातिशिवोपरि
वांच्छितंलभतेनित्यंश्वेतायांशिवसंनिधौ २३
इति श्रीपाद्मेमहापुराणेपंचपंचात्साहस्र्यांसंहितायामुत्तरखंडे

उमामहेश्वरसंवादेश्वेतातीर्थनामसप्तत्रिंशाधिकशततमोऽध्यायः १३७

## अष्टत्रिंशाधिक शततमोऽध्यायः

महादेवउवाच
गणतीर्थंततोगच्छेत्तीर्थयात्रापरायणः
त्रिविष्टपमितिप्रोक्तंगणैस्तुचंदनातटे १
त्रिविष्टपेनरःस्नात्वापूर्णमास्यांसमाहितः
संशयोनात्रकर्त्तव्योमुच्यतेब्रह्महत्यया २
चतुरोवार्षिकान्मासान्स्थितिर्यस्यत्रिविष्टपे
सोऽपिपुण्योमहाभागेरुद्रलोकेमहीयते ३
गणतीर्थेनरःस्नात्वाकृष्णाष्टम्यामुपोषितः
बकुलासंगमेस्नात्वास्वर्गंगच्छतिमानवः ४
तस्मिंस्तीर्थेनरःस्नात्वाबकुलेशंविलोक्यच
गणेश्वरप्रसादेनगाणपत्यमवाप्नुयात् ५
इंदपवित्रंपरमंपुण्यायुष्यविवर्द्धनम्
श्रुत्वातुलभतेपुण्यंगंगास्नानसमंनरः ६
अत्रस्थित्वानिराहारोजितेंद्रियसमाहितः
जपत्येवंपरंदेवंगणेश्वरंमनोरमम् ७
संप्राप्नोत्यखिलान्भोगान्सत्यंसत्यंवरानने
अत्रराजासोमवंशीविश्वदत्तःसवीर्यवान् ८
तेनतपोमहत्तप्तंबहुकालंसुरेश्वरि
गाणपत्यंतदाप्राप्तंश्रीगणेशप्रसादतः ९
वसिष्ठोवामदेवश्चहोडःकौशीतकोमुनिः
भरद्वाजोंगिराश्चैवविश्वामित्रोऽथवामनः १०
एतेवैमुनयःसर्वेपुण्यरूपामहेश्वरि
नित्यंसेवांप्रकुर्वंतिश्रीगणेशप्रसादतः ११
अपुत्रोलभतेपुत्रान्निर्द्धनोलभतेधनम्
अविद्योलभतेविद्यां मोक्षार्थीमोक्षमाप्नुयात् १२
किमन्यद्बहुनोक्तेनभूयोभूयोवरानने
योऽत्रस्नानंप्रकुर्वीतपूजनंवाकरोतिच १३

सर्वपापविनिर्मुक्तोयातिविष्णोःपरंपदम्
शिवायविष्णुरूपायविष्णवेशिवरूपिणे १४
नांतरंदेविपश्यामिश्रीविष्णोश्चप्रसादतः १५
इति श्रीपाद्मेमहापुराणेपंचपंचात्साहस्र्यांसंहितायामुत्तरखराडेउमामहेश्वर
संवादेबकुलासंगमेगणतीर्थंनामाष्टत्रिंशाधिकशततमोऽध्यायः१३८

एकोन चत्वारिंशदधिकशततमोऽध्यायः

महादेवउवाच
साभ्रमत्युत्तरेकूलेअग्नितीर्थमितिश्रुतम्
तस्याश्चोत्तरपूर्वेणनातिदूरेकृतास्पदम् १
तीर्थंपालेश्वरंनामचंडीयत्रप्रतिष्ठिता
पीठंतद्योगमातृणांसर्वसिद्धिविधायकम् २
यत्रताःसर्वदेवानांकार्यार्थेमातरःस्थिताः
परमंयत्नमास्थायलोकानुग्रहकारणात् ३
त्रिरात्रमुषितोभूत्वातस्मिंस्तीर्थेदृढव्रतः
अभिगच्छेत्तमीशानंदेवेशंचंडिकेश्वरम् ४
साभ्रमत्यांकृतस्नानोमातृतीर्थस्यसंनिधौ
समाधिविधिनायुक्तोगच्छेद्वैमातृमंडलम् ५
गोसहस्रप्रदानस्यफलंप्राप्नोतिमानवः
अग्नितीर्थेनरःस्नात्वाचामुंडादर्शनेकृते ६
नभयंजायतेतस्यरक्षोभूतपिशाचजम्
गोखुराचनदीयत्रसाभ्रमत्यांतुसंगता ७
तत्रतीर्थसहस्राणितिष्ठंतीतिसुरेश्वरि
श्राद्धंतत्रप्रकर्त्तव्यंतिलचूर्णेनपार्वति ८
पिंडान्दत्त्वाद्विजान्भोज्यअक्षयंपदमाप्नुयात्
यत्रकुकर्दमोराजापापिष्ठोदुर्द्धरःखलः ९
मूढोऽहकारसंयुक्तोद्विजानांपरिनिंदकः
गोघ्नोऽपिबलहाचैवपापिष्ठोदुर्दमःसदा १०
राज्यंचकुर्वतस्तस्यपुरेपिंडारसंज्ञके
तदामृत्तिःसमापन्नाधर्मेयोगेसुरेश्वरि ११

मृतोऽसौतत्रसंजातःप्रेतरूपोमहेश्वरि
पीतास्यःशुष्कतुंडश्चपीतरोमाऽथकर्कशः १२
उच्चस्तरोबहुरोमाक्षुत्पिपासाप्रपीडितः
वायुभक्षंप्रकुर्वाणःप्रगच्छतिइतस्ततः १३
बहुप्रेतैःसमायुक्तोहाहेतिकरुणोरुदन्
किंकर्तव्यमितिप्राहुःप्रेतास्तेवैसमीपगाः १४
तेऽपितदारोदमानाःक्षुत्पिपासादिपीडिताः
अन्येप्रेतादुरात्मानोराज्ञःसंगतिमाययुः १५
राज्ञासार्द्धंचगच्छंतिलोकान्विजनकान्बहून्
नोदकमथवाचान्नंनमार्गेदृश्यतेकदा १६
तेप्रेतादुष्टरूपाश्चविचरंतिमहीतले
भक्षंतिशवमांसानिपिबंतिरुधिरंसदा १७
एवंकुकर्दमोराजासदातैःपरिवारितः
कदाचिद्दैवयोगेनगुरोराश्रममन्वगात् १८
पूर्वजन्मकृतंपुण्यंतेनयोगेनसंगतः
पार्वत्युवाच
किंकृतंतेनवैपुण्यंवदविश्वेश्वरप्रभो १९
अयंपापीदुरात्माचब्राह्मणानांचदुःखदः
सत्संगतिःकथंजातातन्मेदुस्तरतोवद २०
महादेवउवाच
एतेननरदेवेनपूर्वजन्मनियत्कृतम्
तत्सर्वंकथयिष्यामिशृणुत्वंनगनंदिनि २१
पूर्वजन्मन्ययंदेविब्राह्मणोवेदपाठकः
संपूज्यचमहादेवंकृत्वाचातिथिपूजनम् २२
भोजनंकुरुतेनित्यमसौवाडवसत्तमः
तेनपुण्यप्रभावेनपुरोऽपिडारसंज्ञके २३
राजावैतत्रसंजातःकुकर्दमइतिश्रुतः
कर्मणामनसाचैवनकृतंपुण्यमेवच २४
तेन देवा भियोगेन मृतोवैप्रेतराडभूत्
शुष्कास्यःशुष्करूपश्चपीतवर्णःकरालकः २५

पूर्वजन्मकृतंपुरायंननश्यतिसुरेश्वरि
तेनपुरयाभियोगेनसंगतोगुरुणाश्रमे २६
कहोडोवर्ततेतत्रतेनदृष्टोऽथप्रेतराट्
शुष्कास्यःशुष्करूपश्चपीतवर्णःकरालकः २७
गंभीराद्गोमहापापीदुष्टैःप्रेतैश्चसंयुतः
ऊर्द्ध्वरोमाजटायुक्तःकालरूपोभयंकरः २८
एवंदृष्ट्वातदादेविविह्वलोवाडवोऽभवत्
कहोडउवाच
अस्मिन्मनोरमेचाहंस्थानेवैपरमाद्भुते २९
अग्निपालेश्वरेतीर्थेनित्यंतिष्ठामिभूमिप
यजमानस्त्वमस्माकंकथंजातोऽसिप्रेतराट् ३०
दुरात्मादुष्टरूपश्चकालरूपोभयंकरः
केनकर्मविपाकेनजातोवैभूतलेशुभे ३१
प्रेतउवाच
शृणुवाडवमेपापंपूर्वजन्मनियत्कृतम्
अहंकुकर्दमोराजापुरेपिंडारसंज्ञके ३२
तत्रस्थेनमयादेवयत्कृतंतच्छृणुष्वहि
ब्रह्मणांहिंसनंचैवपुराऽसत्यादिभाषणम् ३३
प्रजानांपीडनंचैवजीवानांहिंसनंसदा
गवांवैदुःखकर्ताऽहब्राह्मणव्रतलोपनः ३४
अस्नातःसर्वदाविप्रसज्जनानांविदूषकः
विष्णुनिंदापरोनित्यंवैष्णवानांचनिंदकः ३५
दुराचारोदुरात्माचवृषलीसंयुतःसदा
तत्रतत्रप्रभुंजानोनाऽहशौचपरायणः ३६
तेनकर्माभियोगेनमृतोवैद्विजराट्ततः
पेंतयोनिंप्रपन्नोऽस्मिदुःखीजातोह्यनेकधा ३७
यस्यमातापितानास्तियस्यस्वजनबांधवाः
तस्यबंधुर्गुरुर्मातापितापिगुरुरेवच ३८
इतिज्ञात्वातुभोब्रह्मन्मुक्तिंदातुंत्वमर्हसि ३९
कहोडउवाच

शृणुत्वंनृपतिश्रेष्ठकरिष्येवचनंतव
मुक्तिंयास्यतिवैसद्योभवांस्त्विहनसंशयः ४०
एकादशपुरोगाश्चप्रेतायेतवसंगताः
तेचापिमुक्तिमायांतिसुतीर्थेऽस्मिन्विशेषतः ४१
तदावैतेनविप्रेणतीर्थेगत्वासुरेश्वरि
सर्वैश्चकारयामासतिलपिंडोदकक्रियाः ४२
नमासोनतिथिर्देवीतीर्थेगत्वापुनःपुनः
कर्त्तव्यंश्राद्धकर्मादिब्रह्मणोक्तंपुरामम ४३
कृतेकर्मणिदेवेशिमुक्तास्तेतीर्थराजके
विमानवरमारूढास्तेगतामामकींपुरीम् ४४
संगतागोखुरायत्रसाभ्रमत्यासुरेश्वरि
तत्रस्नानंचदानंचकोटियज्ञफलंलभेत् ४५
यत्राग्नितीर्थंवर्तेतकपालेश्वरसंज्ञकम्
तत्रमुक्तिस्तुसंप्रोक्तासत्यंसत्यंभवेद्ध्रुवम् ४६

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादेअग्निपालेश्वरमहिमानामैकोन
चत्वारिंशत्यधिकशततमोऽध्यायः १३९

## चत्वारिंशदधिकशततमोऽध्यायः

श्रीमहादेवउवाच
भोदेव्यन्यत्प्रवक्ष्यामिहिरण्यासंगमंमहत्
यदासाभ्रमतीगंगासप्तस्रोतापुराभवत् १
तदासाब्रह्मतनयासप्तस्रोतेतिविश्रुता
सप्तमंतद्धिरण्याख्यंस्रोतइत्यभिधीयते २
तस्मिंस्तीर्थेनरःस्नात्वापापीगतिमवाप्नुयात्
ऋक्षुमंजुमयोर्मध्येसत्यवान्नामपर्वतः ३
तस्यप्राक्सुमहत्तीर्थंहिरण्यासंगमंशुभम्
तत्रस्नात्वाचपीत्वाचशुभांगतिमवाप्नुयात् ४
वनस्थल्यांततोगच्छेद्दृष्ट्वानारायणंहरिम्
तीर्थमप्सरसांपुण्यंहिरण्यासंगमेश्वरम् ५

यत्रोर्वशीपुराजातासमस्ताप्सरसांशुभा
नरनारायणौतत्रतपस्तेपतुरुत्तमम् ६
हिरगयासंगमेरम्येमहापापहरेशुभे
यत्रवैऋृषयःसर्वेमज्जंतिवीतकल्मषाः ७
वसिष्ठाद्याश्चयेविप्रावालखिल्यादयश्चये
यत्रमज्जंतिदेवेशिहिरगयासहसंगमे ८
यत्रहिरगमयंरूपंस्नानाद्वैभवतिध्रुवम्
कपिलागोसहस्त्रस्यदानेनैवतुयत्फलम् ९
तत्फलंसमवाप्नोतिहिरगयासंगमेसदा
दशाश्वमेधेयत्पुगयंग्रहणेचंद्रसूर्ययोः १०
तदनंतगुणंप्रोक्तंहिरगयासंगमेपुनः
तुलापुरुषदानेचयत्फलंसमवाप्नुयात् ११
तत्फलंसमवाप्नोतिहिरगयासंगमेसदा
हिरगयाक्षोमहादैत्यस्तेनतप्तंमहत्तपः १२
हिरगयसदृशंतत्रशरीरमभवत्पुरा
जनमेजयेतथाराज्ञियत्रस्नानंप्रकुर्वति १३
ब्रह्महत्यागतादेविहिरगयासंगमेतदा
विश्वामित्रोऽथराजर्षिःस्नानार्थंवैसमागतः १४
स्नानंकृत्वाविशेषेणगतोऽसौमामकींपुरीम् १५
ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चाथसुरेश्वरि
स्नानंयेऽत्रप्रकुर्वंतितेगच्छंतिशिवालयम् १६
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेहिरगयासंगमंतीर्थंनामचत्वारिंशदधिकशततमोऽध्यायः १४०

## एकचत्वारिंशदधिक शततमोऽध्यायः

महादेवउवाच
ततोदेविप्रवक्ष्यामिहिरगयासंगमादनु
धर्मावतीनदीयत्रसंगतासहगंगया १
तत्रस्नात्वानरोधन्यस्त्रिदिवंयात्यसंशयम्
यत्रधर्मकृतंतीर्थंयःपश्यतिसपुगयभाक् २

श्राद्धंतत्रैवयेकुर्युर्मुच्यंतेपितृजादृणात्
ततश्चमधुरातीर्थंसर्वपापप्रणाशनम् ३
स्नातव्यंमधुरातीर्थेद्रष्टव्योमधुहाहरिः
यत्रविश्रांतवान्कृष्णोजरासंधभयाकुलः ४
कंसासुरवधेवृत्तेगंतुकामःकुशस्थलीम्
उषित्वासप्तरात्रंतुसदेवश्चंदनातटे ५
भोजवृष्ण्यंधकवृतोवी रैर्यादवपुंगवैः
मधुरातीर्थमासाद्यस्नानंकृंत्वाविधानतः ६
मधुरादित्यनामानंयत्रस्थापितवान्हरिः
अष्टादशसहस्राणिविप्राणांयज्ञशालिनाम् ७
स्थापयित्वाययौदत्त्वायानानिविविधानिच
तत्रतीर्थसहस्राणितिष्ठंतिचसुरेश्वरि ८
श्राद्धंतत्रप्रकर्तव्यंपितृणांहितकाम्यया
नभेतव्यंजरासंधान्मत्तीर्थेवसतांसदा ९
इत्युक्त्वातान्द्विजान्कृष्णःप्रययौद्वारकांप्रति
तस्मिंस्तीर्थेनरःस्नात्वामधुरार्कंप्रपूजयेत् १०
माघस्यशुक्लसप्तम्यांकपिलागोप्रदानतः
चिरंसौख्यानिभुंक्त्वेहपदमादित्यमाव्रजेत् ११
शृणुसुन्दरिवक्ष्यामिइतिहासंपुरातनम्
यंश्रुत्वामुच्यतेलोकोब्रह्महत्यादिपातकात् १२
एकस्मिन्समयेदेविमांडव्योऋषिसत्तमः
गङ्गाद्वारेमहापुण्यंतप्तवांस्तुमहत्तपः १३
पत्राशीचफलाशीचवायुभक्षकरःसदा
अहोरात्रंसदादेविविष्णुध्यानपरायणः १४
योगाभ्यासरतोनित्यंनित्यंधर्मपरायणः
तस्मिन्देशेतुवैदेविराजावैविश्वमोहनः १५
गजाश्वरथपत्तीनांसंपदोबहुलाभुवि
सोमचंद्रेतिविख्यातःपुत्रस्तस्यसुलक्षणः १६
एकदातुतदादेविगतोह्याखेटकेवने
तत्रगत्वातदातेनकृत्वाह्याखेटकक्रियाः १७

स्वात्मानंरमयामासस्वलोकैःपरिवारितः
क्रीडारतेतदाराज्ञिरात्रिर्जातासुरेश्वरि १८
तस्यांरात्रौतदाराजाउवासाखेटकेवने
तस्यांरात्र्यांव्यतीतायांमुहूर्तेब्रह्मसंज्ञके १९
हृतोऽश्वोऽथविशेषेणचौरेणात्रदुरात्मना
तदाहाहेतिशब्दोऽभूत्क्वगतःक्वगतोहरिः २०
तदाराज्ञोभयात्सर्वेगंतुकामाःसमुत्सुकाः
चौरेणापहृतश्चाश्वइत्येवंसंवदंतिहि २१
निरीक्ष्यमाणास्तेसर्वेहरिद्वारंसमागताः
ऋषिस्तत्रतुमांडव्यस्तपस्तपतिनित्यशः २२
ध्यानेनचसमायुक्तोदृष्टोऽसौतैर्भटैस्तदा
अयंचौरःसदापापीध्यानंकृत्वाप्रतिष्ठति २३
बद्ध्वाश्वंतुसमायातोज्ञात्वाराजभटैस्तदा
एवंविचार्यतेसर्वेगृहीत्वातंमहामुनिम् २४
राज्ञेनिवेदयामासुस्तंचौरंमुनिसत्तमम्
अश्वापहारीह्यानीतश्चौरोऽयनृपसर्वदा २५
आज्ञादत्तातदातेनशूलिकारोपणेपुनः
तदातैस्तुभटैःसर्वैर्मिलित्वाबंधनंकृतम् २६
पश्चाद्वैशूलिकाप्रोतस्तत्क्षणात्तुकृतस्तदा
नज्ञातंतेनतत्कर्मशूलिकायाःप्रतोदनम् २७
यतोयोगसमारूढोविष्णुध्यानपरायणः
शूलिकाप्रोतनंज्ञातंकतिचित्कालयोगतः २८
मांडव्योऽहमृषिश्रेष्ठःकेनकर्मइदंकृतम्
त्रिकालज्ञानीसर्वज्ञोभगवांस्तचिंतयत् २९
धर्मस्यचइदंकर्मनचान्यस्यकदाचन
योगारूढःसधर्मात्मागतोऽसौधर्मसंनिधौ ३०
तत्रगत्वाउवाचेदंशृणुत्वंधर्मसांप्रतम्
त्वंवैधर्मइतिख्यातोलोकेवेदेचसर्वदा ३१
शूलिकाप्रोतनंकर्मकथंचैवत्वयाकृतम्
तत्सर्वंश्रोतुमिच्छामित्वत्तोदेवनसंशयः ३२

धर्मउवाच
शृणुष्वत्वंद्विजश्रेष्ठपूर्वजन्मनिपातकम्
तदहंकथयिष्यामिकृपांकुरुमोपरि ३३
बालत्वेतुइदंकर्मपूर्वजन्मजपातकम्
तच्छृणुष्वमहाप्राज्ञभवेऽस्मिन्पातनंकृतम् ३४
एकस्मिन्समयेविप्रत्वंगतोविजनेवने
तत्रगत्वात्वयाविप्रजीवःशलभसंज्ञकः ३५
आरोऽपितःसवैशूल्यांकर्मणातेनदुःखितः
राज्ञाशूलेऽपितस्त्वंवैकर्मणानेनसुव्रत ३६
सर्वथैवप्रभोक्तव्यंकृतंकर्मशुभाशुभम्
अल्पमात्रमिदंकर्मत्वयाभुक्तंनसंशयः ३७
सुखीभवतुविप्रेंद्रगच्छत्वंहियथेच्छया
एतद्वाक्यंततःश्रुत्वामांडव्योद्विजसत्तमः ३८
उवाचवचनंतत्रसकोपादारुणेक्षणः
मांडव्यउवाच
रेपापिष्ठदुराचारकिंकृतंबहुपातकम् ३९
येनकृत्वाइदंकर्मशूलिकायाःप्रतोदनम्
ममवाक्यप्रकोपेनशूद्रस्त्वंभवसर्वथा ४०
कियताकालयोगेनवंशेवैचंद्रसंज्ञके
जातोविदुरनामाख्योविष्णुभक्तिपरायणः ४१
तीर्थयात्रामिषेणैवगतःसाभ्रमतींनदीम्
यत्रधर्मावतीसंगोवर्त्ततेचससुरेश्वरि ४२
तत्रवैकृतवान्स्नानंविदुरोधर्मरूपवान्
त्यक्तंतत्रहिशूद्रत्वंधर्मावत्यांनसंशयः ४३
एतस्मात्कारणाद्देवियत्रस्नानंप्रकुर्वते
तेनराःपुण्यकर्माणोगच्छंतिपरमंपदम् ४४
अत्रश्राद्धंचदानंचयेकुर्वंतिनराभुवि
इहलोकेपरामृद्धिंप्राप्यतैर्दिविमुद्यते ४५
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादेसाभ्रमतीमाहात्म्येमधुरादित्यमाहात्म्यं

नामैकचत्वारिंशदधिकशततमोऽध्यायः १४१

## द्विचत्वारिंशदधिक शततमोऽध्यायः

श्रीमहादेवउवाच
कंबुतीर्थेनरःस्नात्वाकृत्वावापितृतर्पणम्
अर्चयेद्देवदेवेशंनारायणमनामयम् १
दत्त्वादानानिविधिवद्ब्रह्मणेभ्योविधानतः
विष्णुलोकमवाप्नोतितीर्थस्यास्यप्रभावतः २
अत्रराजर्षिणापूर्वंविश्वामित्रेणधीमता
तपस्तप्तंविशेषेणप्रजाकामेनसुंदरि ३
वायुभक्षोनिराहारोयत्रासीदनिलाशनः
विष्णुपूजापरोनित्यंविष्णुध्यानपरायणः ४
तपसानेनसंजातःप्रजाकाममवाप्तवान्
प्रजाकामोनरोयश्चकंबुतीर्थंहिगच्छति ५
सप्रजांलभतेनित्यंसत्यंसत्यंवरानने ६
इतिकंबुतीर्थमाहात्म्यम्
ततोगच्छेत्सुरश्रेष्ठेतीर्थंनामकपीश्वरम्
संनिधौरक्तसिंहस्यमहापातकनाशनम् ७
बध्यमानेपुरासेतौरामरावणविग्रहे
गृहीत्वापर्वतश्रेष्ठंविशेषात्कपिभिःकृतम् ८
नाम्नाकपीश्वरादित्यंचक्रुस्तीर्थमनुत्तमम्
यत्रतीर्थेनरःस्नात्वाकृत्वावापितृतर्पणम् ९
दृष्ट्वाकपीश्वरादित्यंमुच्यतेब्रह्महत्यया
तत्रस्नानंप्रकर्तव्यंचैत्राष्टम्यांविशेषतः १०
हनुमत्प्रमुखैस्तत्रस्नातंयत्रदिनत्रयम्
कपितीर्थप्रभावोऽयभवत्यैसमुदीरितः ११
अस्मिंस्तीर्थेनरःस्नात्वापूजयित्वाकपीश्वरम्
रूपवान्बहुभोगश्चजायतेनात्रसंशयः १२
बलंवांछतियोलोकोधर्मंवापुत्रमेवच
सर्वंसतुलभेन्नित्यंकपितीर्थप्रभावतः १३

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेकपितीर्थमाहात्म्यंनामद्विचत्वारिंशदधिकशततमोऽध्यायः १४२

त्रिचत्वारिंशदधिक शततमोऽध्यायः

एकधारंततोगच्छेत्तीर्थंपरमपावनम्
एकधारेनरःस्नात्वाएकरात्रमुपोषितः १
अर्चयन्स्वामिदेवेशंकुलानांतारयेच्छतम्
स्वामितीर्थसमंज्ञेयंयत्रतीर्थेऽवगाहनम् २
रुद्रलोकेनरोगच्छेत्तीर्थस्यास्यप्रभावतः
यत्रस्नात्वाचपीत्वाचब्रह्मलोकेचगच्छति ३
त्रैलोक्येपुण्यकर्माणस्तटेऽस्मिन्संवसंतिहि ४
नभयंविद्यतेतेषांखङ्गधारादिकंचयत्
सत्सर्वमाशुनश्येततीर्थेह्येकप्रधारके ५
इतिएकधारतीर्थवर्णनम्
सप्तधारंततोगच्छेत्तीर्थानांतीर्थमुत्तमम्
सप्तसारस्वतंनामयत्कृतेमुनिभिःकृतम् ६
त्रेतायुगेमंकितीर्थंकृतंमंकिमहर्षिणा
द्वापरेपांडुपुत्रैस्तुसप्तधारंप्रवर्तितम् ७
सप्तधारकतांप्राप्तंतीर्थंहरजटाच्युतम्
सप्तरूपाणिगंगायायामिलोकेषुसप्तसु ८
वहंतितानिपुण्यानितीर्थेऽस्मिन्सप्तधारके
सप्तधारेकृतंश्राद्धंपितृणांतृप्तिदायकम् ९
शृणुदेविप्रवक्ष्यामिइतिहासंपुरातनम्
यच्छ्रुत्वादेवदेवेशिब्रह्मलोकंव्रजेद्ध्रुवम् १०
कौषीतकस्यपुत्रोवैमंकिनामेतेविश्रुतः
विष्णुध्यानरतोनित्यंविष्णुलोकप्रपूजकः ११
वेदाध्ययनकर्ताचअग्निहोत्रपरायणः
सुरूपाविश्वरूपेतिस्त्रियौद्वेस्तस्तुतद्गृहे १२
ताभ्यांपुत्रविहीनाभ्यांदृष्ट्वादेविविशंकितः
किंकर्तव्यमितिध्यायन्नतिचिंतापरोऽभवत् १३

स्थिरोवंशस्तुपुत्रेणह्यन्यथानरकंव्रजेत्
एवंचिंताप्रकुर्वाणोनसुखंलभतेक्वचित् १४
तदास्वगृहमुत्सृज्यगतोवैगुरुसन्निधौ
नमोवैगुरुवेतुभ्यंदेवानामुपकारिणे १५
त्वंनाथःसर्वलोकानांब्राह्मणानांचरक्षकः
यज्ञानांत्वंप्रकर्त्ताचद्विजराजनमोस्तुते १६
अपुत्रोऽहतुविप्रर्षेकिंकर्त्तव्यमितिप्रभो
वदत्वंतुयथासर्वंपुत्रोभवतिनिश्चितम् १७
अपुत्रस्यगतिर्नास्तिस्वर्गेनैवचनैवच
येनकेनाप्युपायेनपुत्रस्यजननंचरेत् १८
इतिवाक्यंतुसंस्मर्य्यह्यागतस्तवसन्निधौ १९
गुरुरुवाच
गच्छत्वंमुनिशार्दूलयत्रसाभ्रमतीनदी
तत्रगत्वामुनिश्रेष्ठपुत्रान्वैप्राप्स्यसेध्रुवम् २०
तद्वाक्यंतुसमाकर्ण्यनमस्कृत्वातुदंडवत्
सगतोविप्रराजस्तुनदींसाभ्रमतींप्रति २१
मंकिनामातुविप्रर्षिस्तत्रगत्वातपोमहत्
अतप्यततदादेवियावद्वर्षचतुष्टयम् २२
यत्रतीर्थंकृतंतेनमंकिनाब्रह्मवादिना
त्रेतायुगेतदादेवितदातीर्थंमहाद्भुतम् २३
जातंतत्रनसंदेहःपुत्रदंसार्वकामिकम्
अद्यापिमंकितीर्थाभंनभूतंनभविष्यति २४
सवैद्विजवरोमंकिःपुत्रान्प्राप्ययथासुखम्
भोगान्नानाविधान्भुक्त्वासगतोमंदिरंमम २५
एतदाख्यानकंदिव्यंपवित्रंपरमंमहत्
पुत्रसौख्यादिकंसर्वंलभतेश्रवणादतः २६
इति श्रीपाद्मेमहापुराणेपंचापंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेसप्तधारतीर्थमहिमानामत्रिचत्वारिंशदधिकशततमोऽध्यायः १४३

## चतुश्चत्वारिंशदधिकशततमोऽध्यायः

महादेवउवाच
ब्रह्मवल्लीमहत्तीर्थंततोगच्छेत्सुरेश्वरि
तस्यतीर्थस्यस्वरूपंसाद्यचाच्छृणुसुरोत्तम १
यत्रसाभ्रमतीतोयंब्रह्मवल्ल्यंभसासह
युज्यतेब्रह्मतीर्थंतत्प्रयागेनसमंस्मृतम् २
तत्रपिंडप्रदानेनतृप्तिर्द्वादशवार्षिकी
पितृणांजायतेनूनंब्रह्मणोवचनंयथा ३
गयाश्राद्धसमंपुण्यंब्रह्मवल्ल्यांविशेषतः
यत्रज्ञात्वाप्रकुर्वंतिपितरस्तृप्तिमाप्नुयुः ४
गोदानंभूमिदानंचअन्नदानंतथैवच
एतद्दानसमंपुण्यंब्रह्मवल्ल्यांविशेषतः ५
अत्रैवसनकाद्यास्तुस्नात्वाचविधिपूर्वकम्
परंब्रह्मपदध्यानाद्विष्णुलोकमवाप्नुयुः ६
पुष्करेचैवगंगायांक्षेत्रेचामरकंटके
तत्रगत्वातुदेवेशियत्फलंलभतेनरः ७
तत्फलंसमवाप्नोतिब्रह्मवल्ल्यांविशेषतः
चंद्रसूर्योपरागेचदानंयेददतेनराः ८
तत्फलंसमवाप्नोतिब्रह्मावल्लयांसुरेश्वरि
दिव्यरूपधरास्तेचशंखचक्रगदाधराः ९
तेऽपिस्वर्गेहिगच्छंतिस्नानंकृत्वासुरेश्वरि
धृत्वातुलसिजांमालांनारायणमनुस्मरन्
वैकुंठंदिव्यमानंदंयातिवैपदमव्ययम् १०
इति ब्रह्मवल्लीतीर्थमाहात्म्यम्
वृषतीर्थंततोगच्छेत्खंडतीर्थेऽतिविश्रुतम्
तत्रस्नात्वादिवंगावोगोलोकंचपुराश्रिताः ११
खंडरूपेणधर्मेणयागावोलोकमातरः
शापाद्भ्रष्टावितास्तेनखंडतीर्थमथोच्यते १२
पार्वत्युवाच
शापोहिलोकमातॄणांगवांकस्यपुराऽभवत्

कथंलोकात्परिभ्रष्टाःकथंधर्मेणरक्षिताः १३
महादेवउवाच
पुरावृषेणगोलोकेक्रीडतासहमातृभिः
मुक्तंतथाशकृन्मूत्रंपतितंहरमूर्द्धनि १४
ततस्तासांददौशापंतेनदोषेणवैहरः
नष्टसंज्ञास्वलोकाच्चगावोयास्यथमेदिनीम् १५
गावःशप्ताभगवतासंप्रसाद्यपुनर्हरम्
प्राप्स्यामहेपुनर्लोकंइतिदेवंययाचिरे १६
यदासाभ्रमतीतीर्थेब्रह्मवल्लीसमीपतः
खंडसंज्ञह्रदेस्नात्वास्वर्गंवैप्राप्स्यथध्रुवम् १७
ततस्तस्मिन्ह्रदेस्नात्वागावोगोपतिनासह
स्वर्गंगताशुद्धतमामहादेवसमीपतः १८
गोह्रदेतुनरःस्नात्वाकृत्वावैपितृतर्पणम्
गवांलोकमवाप्नोतिदाहप्रलयवर्जितम् १९
तत्रस्थित्वानिराहारोगोपिंडंचददातिवै
सनरःसुखमेधेतयावदिंद्राश्चतुर्दश २०
गवांकोटिप्रदानेनयत्फलंप्राप्यतेध्रुवम्
तत्फलंसमवाप्नोतिखंडतीर्थेनसंशयः २१
गृहीत्वावृषमूत्रंचतीर्थंयःपिबतेनरः
तत्क्षणादेवशुद्धिःस्यात्खंडतीर्थेनसंशयः २२
खंडतीर्थात्परंतीर्थंनभूतंनभविष्यति
येगच्छंतिसुरश्रेष्ठतेनराःपुरायभागिनः २३
तत्रगत्वासुरश्रेष्ठेगवांपूजनमाचरेत्
वृषभंचततःपूज्यस्नानंकृत्वासमाहितः २४
पूजनाद्वैनसंदेहोगोलोकेतुवसेच्चिरम्
तत्रगत्वाविशेषेणसौवर्णीगांददंतिये २५
तेनराभुंजतेसौख्यंयावदिंद्राश्चतुर्दश
दशधेनुंततःकृत्वायोददातिद्विजातये २६
खंडतीर्थेसुरश्रेष्ठेतदनंतफलंस्मृतम्
तत्रगत्वातुकर्त्तव्यंपिप्पलारोपणंबुधैः २७

तत्कृतेसतिदेवेशिपितृलोकंसगच्छति
पंचवामलकीर्दिव्यायेकुर्वंतिप्ररोपणम् २८
इहलोकेसुखंभुक्त्वाहरिलोकंव्रजंतिते २९
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेखंडतीर्थनामचतुश्चत्वारिंशदधिकशततमोऽध्यायः १४४

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः

श्रीमहादेवउवाच
ततोगच्छेःमहत्तीर्थेसंगमेश्वरमुत्तमम्
यत्रहस्तिमतीपुण्यासाभ्रमत्याहिसंगता १
शापंकौडिन्यमुनितःप्राप्यशुष्काभवन्नदी
बहिश्चर्येतिनाम्नावैलोकेख्यातिमुपागता २
तत्तीर्थंसंप्रवक्ष्यामिपुण्यं त्रैलोक्यविश्रुतम्
सर्वपापहरंपुण्यं त्रैलोक्येचापिविश्रुतम् ३
यत्रतीर्थेनरःस्नात्वादृष्ट्वादेवंमहेश्वरम्
मुच्यतेसर्वपापेभ्योरुद्रलोकंप्रगच्छति ४
शृणुदेविप्रवक्ष्यामिएतच्छापस्यकारणम्
यथैहशुष्करूपाहिजाताशापस्यकारणात् ५
यत्रसाभ्रमतीपुण्यागंगानाममहानदी
तत्रहस्तिमतीनामगंगयासहसंगता ६
तत्रारब्धंचमुनिनातपोवैपरमंमहत्
एवंबहुगतेकालेऋषिणापरमात्मना ७
आराधितोहृषीकेशोनारायणनिरंजनः
तस्यास्तटेतुदेवेशिवर्षाणिचबहून्यपि ८
गतानिचविशेषेणमुनेस्तस्यतुपार्वति
कदाचिद्दैवयोगाच्चवर्षाकालःसमागतः ९
नदीतत्रतुसंपूर्णाकालयोगेनसुव्रते
तत्कौंडिन्येनऋषिणास्थानंत्यक्तंतदानिशि १०
रात्रौदुःखंमहज्ञातंहाहेतिकरुणोरुदन्
किंकर्तव्यमितिध्यायन्नतिचिंतापरोऽभवत् ११

आश्रमोहिमहादिव्योऋृषिरौवसमायुतः
सगतोवारियोगेनहस्तिमत्यांसुरोत्तमे १२
फलानिचैवमूलानिपुस्तकानिबहून्यपि
तानितस्यांगतान्येववारियोगेनसुंदरि १३
सकौंडिन्योऋृषिश्रेष्ठःशशापतांनदींकिल
उदकेनविनात्वंचभविष्यसिकलौयुगे १४
एवंसदत्त्वावैशापंहस्तिमत्यामहेश्वरि
गतोऽसौविप्रप्रवरोविष्णुलोकंसनातनम् १५
अद्यापिवर्ततेतीर्थसंगमेश्वरसंज्ञकम्
यदृष्ट्वामुच्यतेपापीब्रह्महत्यादिपातकात् १६
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेसोमेश्वरतीर्थमहिमानमपंचचत्वारिंशदधिकशततमोऽध्यायः १४५

## षट्चत्वारिंशदधिकशततमोऽध्यायः

महादेवउवाच
ततोगच्छेतदेवेशितीर्थंरुद्रमहालयम्
केदारानुपमंसाक्षाद्रुद्रेणपरिनिर्मितम् १
श्राद्धंतत्रैवकर्तव्यंपितृणांतृप्तिकारणम्
तत्रश्राद्धप्रदानेनपितरः सपितामहाः २
तृप्ताःसमभिगच्छंतिरुद्रस्यपरमंपदम्
वृषमुत्सृजतेयस्तुतत्ररुद्रमहालये ३
कार्तिक्यामथवैशाख्यांरुद्रेणसहमोदते
केदारेउदकंपीत्वापुनर्जन्मनविद्यते ४
अत्रतुस्नानमात्रेणमुक्तिभागीनसंशयः
एकस्मिन्समयेदेवित्यक्त्वाकैलासमागतः ५
साभ्रमतींमहागंगांज्ञात्वालोकहितायवै
तत्रस्नात्वाचपीत्वाचकृत्वातीर्थमनुत्तमम् ६
ततोहंचस्वकंस्थानंकैलासंप्रतिभामिनि
तदनंतरंमहापुरायंतीर्थंजातंमहालयम् ७
रुद्रमहालयमितल्केख्यातिंगमिष्यति

कार्तिक्यामथवैशाख्यांयेगच्छंतिसुरोत्तमे
नतेषांविद्यतेदुःखसर्वसंसारजंपुनः ८
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांमुत्तरखंडेउमामहेश्वर संवादेरुद्रमहालयतीर्थंनामषट्चत्वारिंशाधिकशततमोऽध्यायः १४६

## सप्तचत्वारिंशदधिकशततमोऽध्यायः

महादेवउवाच
देविवैश्रूयतांतीर्थं देवानामपिदुर्ल्लभम्
खड्गतीर्थमितिख्यातंसर्वपापप्रणाशनम् १
खड्गतीर्थेनरःस्नात्वादृष्ट्वाखड्गेश्वरंशिवम्
ननरोदुर्गतिंगच्छेत्स्वर्गलोकंप्रगच्छति २
खड्गधारेश्वरंदेवंयःपश्यतिसुरोत्तमे
कार्तिक्यांतुविशेषेणपूजनंतत्रकारयेत् ३
अयंविश्वेश्वरोदेवःसर्वदाभुविवल्लभे
सर्वंददातिसर्वेशोवांच्छितार्थप्रदायकः ४
वैशाखेराज्यकामार्थीयःपश्यतितमीश्वरम्
तमर्थंलभतेह्निप्रंविश्वनाथप्रसादतः ५
पुष्पैर्धूपैश्चनैवेद्यैर्दीपैर्वानगनंदिनि
फलप्रदानैर्बिल्वैश्चविश्वेशंपूजयेत्ततः ६
धनधान्यप्रदंचाशुपुत्रपौत्रादिसंपदः
प्राप्यंतेनात्रसंदेहःश्रीविश्वेश्वरपूजनात् ७
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेखड्गतीर्थंनामसप्तचत्वारिंशदधिकशततमोऽध्यायः १४७

## अष्टचत्वारिंशदधिकशततमोऽध्यायः

महादेवउवाच
साभ्रमत्यास्तटेतीर्थंगयातीर्थमनुत्तमम्
चित्रांगवदनंनाममालार्काधिष्ठितंशुभम् १
कल्पपादपसंतानैर्मंदारैश्चोपशोभितम्
चूतनिंबकदंबैश्चकाश्मर्यश्वत्थतिंदुकैः २

तस्मादपहरेत्कुष्ठंयोजनस्मृतिविभ्रमात्
यस्यसंजायतेकुष्ठंतस्यमालार्ककोहरेत् ३
यातुवेदोक्तविधिनानारीतत्राभिषिंचति
मृतवत्साऽथवावंध्यापुत्रंप्राप्नोतिसाचिरात् ४
संध्यास्नानंजपोहोमःस्वाध्यायोदेवतार्चनम्
कृतंभास्करभक्तेनमालार्केह्यक्षयंभवेत् ५
अत्रगत्वातुदेवेशिश्रीरवेर्व्रतमाचरेत्
इहलोकेसुखंभुक्त्वारवेर्लोकंहियातिवै ६
मृतवत्सोहिराजर्षिस्तत्रगत्वाऽकरोत्तपः
सराजाप्राप्तवान्पुत्रंश्रीमालार्कप्रसादतः ७
अत्रगत्वाविशेषणउपवासीजितेंद्रियः
मालार्कंपूजयेद्योवैमुक्तिभागीभवेद्ध्रुवम् ८
वसिष्ठप्रमुखाविप्रादेवाइंद्रादयःसदा
निवसंतिसुरश्रेष्ठेमालार्केरविसन्निधौ ९
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेमालार्कतीर्थनामअष्टचत्वारिंशदधिकशततमोऽध्यायः १४८

## एकोनपञ्चाशदधिकशततमोऽध्यायः

महादेवउवाच
तीर्थादस्मात्परंतीर्थंमालार्कांतरतःस्थितम्
चंदनेश्वरमागच्छेदामोदस्थानमुत्तमम् १
दुःशासनस्यरुधिरंपीत्वाभीमोमहाबलः
प्रतिज्ञामात्मनःसर्वांपूरयित्वासुदारुणाम् २
कराभ्यांरुधिराक्ताभ्यांद्रौपद्याःकेशबंधनम्
कृत्वादत्त्वाद्विजातिभ्योतीर्थयात्रांततोऽगमत् ३
साभ्रमत्यास्तटेरम्येगतोवैभ्रातृभिःसह
आनीतःसाभ्रमत्यांयःस्वर्गाच्चंदनपादपः ४
सतुलिगतयाजातःपुरायतीर्थप्रभावतः
तत्रस्नात्वाचपीत्वाचकृत्वावैपितृतर्पणम् ५
ननरोनिरयंगच्छेद्रुद्रलोकमवाप्नुयात्

चंदनेशंततोदृष्ट्वाविश्वेशंलोकशंकरम् ६
पूजयेच्चयथाशक्त्यायत्रगत्वानशोचति
यत्रकैवर्तकोराजापूजांकृत्वाह्यनेकशः ७
सगतःशिवलोकंतंयत्रगत्वानशोचति
मज्जंतिऋषयोयत्रयत्रदेवःसनातनः ८
साक्षाद्विष्णुःपरमात्मानित्यंतिष्ठतिभूतिदः
इयंसाभ्रमतीधन्याधन्योविश्वेश्वरःप्रभुः ९
यत्रतीर्थान्यनेकानिजातानिभुविपार्वति
अत्रचामर्दकीपुण्यैःफलैर्नानाविधैःशुभैः १०
कर्त्तव्यमर्घदानंचविधिनातत्रसुंदरि ११

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेचंदनेश्वरमाहात्म्यंनामैकोनपंचाशदधिकशततमोऽध्यायः १४९

## पञ्चाशदधिकशततमोऽध्यायः

महादेवउवाच
जंबूतीर्थंततोगच्छेत्स्नानार्थंपापनाशनम्
कलिकालेचयत्पुंसांस्वर्गसोपानवत्स्थितम् १
यत्रजांबवतापूर्वंदशांगेपर्वतोत्तमे
स्थापितंऋक्षराजेशंलिगंसुरगणार्चितम् २
रामेणहियदापूर्वंहतोवैरावणोऽसुरः
तदाजांबवतादिक्षुभेरीघोषैःप्रघोषितम् ३
जितंवैरामचंद्रेणरावणोनिहतोरणे
लब्ध्वासीतेतिसंघुष्यस्नातंतीर्थवरेशुभे ४
स्थापितंतत्रलिगंतुस्वनाम्नातुसुरेश्वरि
तत्रस्नात्वानरःसद्यःस्मृत्वारामंसहानुजम् ५
जाबवंतेश्वरंस्नात्वारुद्रलोकेमहीयते
यत्रयत्रहिभोदेविश्रीरामस्मरणंकृतम्
भवबंधविमोक्षोहिदृश्यतेसचराचरे ६
अहंरामस्तुविज्ञेयोरामोवैरुद्रएवच
एवंज्ञात्वातुतेदेविनभेदोवर्ततेक्वचित् ७

रामरामेतिरामेतिमनसायेजपंतिच
तेषांसर्वार्थसिद्धिश्चभविष्यतियुगेयुगे ८
अहंहिसर्वदादेविश्रीरामस्मरणंचरे
यंश्रुत्वातुपुनर्देविनभवोजायतेक्वचित् ९
काश्यांहिनिवसन्नित्यंश्रीरामंकमलेक्षणम्
स्मरामिसततंदेविभक्तयाचविधिपूर्वकम् १०
जांबवतातदापूर्वंस्मृत्वारामंसुशोभनम्
जांबवंतमितिख्यातंप्रस्थाप्यजगतांगुरुम् ११
तत्रस्नात्वाचभुक्त्वाचकृत्वादेवस्यपूजनम्
शिवलोकमवाप्नोतियावदिंद्राश्चतुर्दश १२
अत्रहिस्नानमात्रेणयथाजांबवतोबलम्
तथावैबलमाप्नोतिश्रीविश्वेशप्रसादतः १३
अत्रगत्वातुभूदानंपुमान्यश्चकरोतिवै
फलंसहस्रगुणितंजांबवंतेशदर्शनात् १४

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउ-
मामहेश्वरसंवादेजांबवततीर्थमाहात्म्यंनामपंचाशदधिकशततमोऽध्यायः १५०

## एकपञ्चाशदधिक शततमोऽध्यायः

महादेवउवाच
अस्मात्तीर्थात्परंतीर्थंइंद्रग्राममितिस्मृतम्
यत्रस्नात्वापुराशक्रोविमुक्तोघोरकिल्बिषात् १
पार्वत्युवाच
केनेहकर्मणाशक्रःप्राप्तवान्घोरकिल्बिषम्
विपाप्माचकथंसोऽभूदितिविस्तरतोवद २
महादेवउवाच
इंद्रःसुरेश्वरःपूर्वंनमुचिश्चासुरेश्वरः
अशस्त्रवधमन्योऽन्यसमयंतौप्रचक्रतुः ३
अथेंद्रस्तुनभोवाणीनिर्देशान्नमुचिंतदा
जघानफेनमादायब्रह्महत्यातदाऽभवत् ४
पप्रच्छचगुरुंशक्रःपापनिर्नाशकारणम्

बृहस्पतेरथादेशात्साभ्रामत्युत्तरेतटे ५
अस्मिन्स्थानेसमागत्यस्थानंचक्रेसुरेश्वरः
तस्येहस्नानमात्रेणगतपापस्यतत्क्षणात् ६
पूर्णेंदुधवलाकांतिःशरीरेसमजायत
धवलेश्वरमीशानंस्थापयामासवृत्रहा ७
इंद्रनाम्नाचतल्लिंगंविश्रुतंपृथिवीतले
पूर्णिमास्यांतथादर्शेसंक्रांतौग्रहणेतथा ८
श्राद्धेकृतेपितृणांतुतृप्तिर्द्वादशवार्षिकी
धवलेश्वरमासाद्ययःकुर्याद्विप्रभोजनम् ९
एकस्मिन्भोजितेविप्रेसहस्रंभोजितंभवेत्
हिरण्यभूमिवासांसिदातव्यानिस्वशक्तितः १०
शुक्लागौब्राह्मणेदेयासवत्साचपयस्विनी
अत्रागत्यतुयोविप्रोरुद्रजाप्यादिकंचरेत् ११
तत्कृतंकोटिगुणितंश्रीमहेशप्रसादतः
अत्रतीर्थेनरोयस्तुउपवासादिकंचरेत् १२
सएवसर्वकामाढ्योभवत्येवनसंशयः
बिल्वपत्रंसमानीययःपूजयतितंप्रभुम् १३
धर्ममर्थंचकामंचलभतेमानवोभुवि
सोमवारेविशेषेणयेगच्छंतिनरोत्तमाः १४
तेषांरोगंतथादोषंशमयेद्धवलेश्वरः
रवौवाऽथविशेषेणअर्चनंकुरुतेयदा १५
तेषांमहिमातुभोदेविनज्ञातःकर्हिचिन्मया
दूर्वयाचार्कपुष्पैर्वाकल्हारैःकमलैर्दलैः १६
पूजनंकुर्वतेयेऽत्रतेनराः पुण्यभागिनः
श्वेतार्कपुष्पमानीयधवलेशंप्रपूज्यतु १७
वांच्छितंलभतेनित्यंधवलेशप्रसादतः
कृतेवैनीलकंठस्तुसर्वेषांशंकरःसदा १८
त्रेतायुगेसविख्यातोहरोवैभगवान्प्रभुः
द्वापरेशर्वसंज्ञस्तुकलौवैधवलेश्वरः १९
अत्रार्थेयत्पुरावृत्तंतच्छृणुष्वसुरेश्वरि

नंदिर्नामपुरावैश्यइंद्रग्रामेसमावसत् २०
शिवध्यानपरोभूत्वाशिवपूजांचकारसः
नित्यंतपोवनस्थंहिलिगंधवलसंज्ञकम् २१
उषस्युषसिचोत्थायप्रत्यहंशिववल्लभः
नंदीलिगार्चनरतोबभूवातिशयेनहि २२
यथाशास्त्रेणविधिनापुष्पार्चनपरोऽभवत्
एकदामृगयालुब्धःकिरातोभूतहिंसकः २३
पापीपापसमाचारश्चरन्साभ्रमतीतटे
अनेकश्वापदाकीर्णेहन्यमानोमृगान्शरैः २४
एवंविचरमाणोऽसौकिरातोभूतहिंसकः
यदृच्छयागतस्तत्रयत्रलिगंसुपूजितम् २५
धवलेश्वरविख्यातंअनेकाश्चर्यमंडितम्
दृष्टंसुपूजितंलिगंनानापुष्पैःफलैस्तथा २६
एवंलिगंसमालिग्यगतःसाभ्रमतीतटे
तत्रपीत्वापयःसोऽथमुखंगंडूषपूरितम् २७
कृत्वाचैकेनहस्तेनमृगमांसंसमुद्वहन्
करेणैकेनपूजार्थबिल्वपत्राणिवैदधत् २८
शीघ्रमागत्यलिगांतेपदापूजांसमाहनत्
पुष्पाणितानिसर्वाणिविधूतानिइतस्ततः २९
स्नापनंतस्यलिगस्यकृतंगंडूषवारिणा
करेणैकेनपूजार्थबिल्वपत्राणिसोऽपयत् ३०
द्वितीयेनकरेणैवमृगमांसंसमर्पयत्
दंडप्रणामसंयुक्तःसंकल्पंमनसाऽकरोत् ३१
अद्यप्रभृतिपूजांवैकरिष्यामिप्रयत्नतः
त्वंमेस्वामीचभक्तोऽहअद्यप्रभृतिशंकर ३२
एवंनियमवान्भूत्वाकिरातोगृहमागमत्
तथाप्रभातसमयेदेवायतनमागतः ३३
नंदीददर्शतंसर्वंकिरातेनचयत्कृतम्
अव्यवस्थंचतंदृष्ट्वाअमेध्यंशिवसन्निधौ ३४
विधूतानिचसर्वाणिहिंसकेनदुरात्मना

चिंतायुक्तोभवन्नंदीजातंकिंचित्रमद्यमे ३५
कथितानिचविघ्नानिशिवपूजारतस्यहि
उपस्थितानितान्येवममभाग्यविपर्ययात् ३६
एवंविमृश्यसुचिरंप्रक्षाल्यशिवमंदिरम्
यथागतेनमार्गेणनंदीस्वगृहमागमत् ३७
ततो नंदिनमालक्ष्यपुरोधागतमानसम्
अब्रवीद्वचनंतंतुकस्मात्त्वंगतमानसः ३८
पुरोहितंप्रतितदानंदीवचनमब्रवीत्
अद्यदृष्टंमयाविप्रअमेध्यंशिवसन्निधौ ३९
केनेदंकारितंतत्रनजानामीहकिंचन
ततःपुरोधावचनंनंदिनंचाब्रवीत्तथा ४०
येनविस्खलितंतत्रपुष्पादीनांप्रपूजनम्
सोऽपिमूढोनसंदेहःकार्याकार्येषुमंदधीः ४१
तस्माच्चिंतानकर्तव्यात्वयापुनरपिप्रभो
प्रभातेचमयासार्द्धंगम्यतांतच्छिवालयम् ४२
निरीक्षणार्थंदुष्टस्यतस्यदंडंकरोम्यहम्
एतच्छ्रुत्वातुवचनंनंदीतस्यपुरोधसः ४३
आस्थितःस्वगृहेनक्तंदूयमानेनचेतसा
तस्यांरात्र्यांव्यतीतायांआहूयचपुरोधसम् ४४
गतःशिवालयंनंदीसमंतेनमहात्मना
प्रक्षाल्यपूजनंकृत्वानानारत्नपरिच्छदम् ४५
पंचोपचारसंयुक्तंकृत्वावैब्राह्मणैःसह
एवंयामद्वयंजातंस्तूयमानस्यनंदिनः ४६
आयातोऽसौमहाकालस्तथारूपोमहाबलः
कालरूपोमहारौद्रोधनुष्पाणिःप्रतापवान् ४७
तंदृष्ट्वाभयसंत्रस्तोनंदीतत्रन्यलीयत
पुरोधाश्चैवसहसाभयभीतस्तदाभवत् ४८
किरातेनकृतंतत्रयथापूर्वमविस्खलन्
तांपूजांसपदाहृत्यबिल्वपत्रंसमर्पयत् ४९
नैवेद्येनपलेनैवकिरातःशिवमार्चयत्

दंडवत्पतितोभूमौउत्थायस्वगृहंगतः ५०
तंदृष्ट्वामहदाश्चर्यंचिंतयामासवैचिरम्
पुरोधसातदानंदीसहव्याकुलचेतसा ५१
तेनपृष्टास्तदाविप्राःकथ्यतांचयथातथम्
संप्रधार्यततःसर्वेमिलित्वाधर्मशास्त्रतः ५२
ऊचुःसर्वेतदाविप्रानंदिनंजातशंकितम्
ईशविघ्नंसमुत्पन्नंदुर्निवार्यंसुरैरपि ५३
तस्मादानयलिगंत्वंस्वगृहेवैश्यसत्तम
तथेतिमत्वाऽसौनंदीशिवस्योत्पाटनंमहत् ५४
कृत्वास्वगृहमानीप्रतिष्ठाप्ययथाविधि
सुवर्णपीठिकांकृत्वानवरंभासुशोभिताम् ५५
उपाहारैरनेकैश्चपूजयामासवैतदा
अथापरेद्युरायातःकिरातःशिवमंदिरम् ५६
यावद्विलोकयामासलिगमैशंनदृष्टवान्
मौनंविहायसहसासाक्रोशमिदमब्रवीत् ५७
हेशंभोक्वगतोऽसित्वंदर्शयात्मानमद्यवै
यदिनोदर्शनंहेयंत्यद्याम्यद्यकलेवरम् ५८
हेशंभोहेजगन्नाथत्रिपुरांतकशंकर
हेरुद्रहेमहादेवदर्शयात्मानमात्मना ५९
एवंसाक्षेपमधुरैर्वाक्यैःक्षिप्त्वासदाशिवम्
किरातोऽसौक्षुरिकयाधीरोवैजठरंस्वकम् ६०
बिभेद्याशुततोबाहुमासाद्योच्चैरुषाब्रवीत्
हेशंभोदर्शयात्मानंकुतोमांत्यज्ययास्यसि ६१
इतिक्षिप्त्वाततोंत्राणिमांसमुद्धृत्यसर्वतः
तस्मिन्गर्तेकरेणैवकिरातःसहसाक्षिपत् ६२
स्वच्छंचहृदयंकृत्वासाभ्रमत्यांनिमज्ञतु
तथैवजलमानीयबिल्वपत्रंत्वरान्वितः ६३
पूजयित्वायथान्यायंदंडवत्पतितोभुवि
यदाध्यानस्थितस्तत्रकिरातःशिवसन्निधौ ६४
प्रादुर्भूतस्तदारुद्रःप्रमथैःपरिवारितः

कर्पूरगौरोद्युतिमान्कपर्दीचंद्रशेखरः ६५
तंगृहीत्वाकरेरुद्रउवाचपरिसांत्वयन्
भोभोवीरमहाप्राज्ञमद्भक्तोऽसिमहामते ६६
वरंवृणीष्वभोभक्तयत्तेमनसिवर्त्तते
एवमुक्तःसरुद्रेणमहाकालोमुदान्वितः ६७
पपातदंडवद्भूमौभक्त्यापरमयायुतः
ततोरुद्रंबभाषेदंनवरंप्रार्थयाम्यहम् ६८
अहंदासोऽस्मितेरुद्रत्वंमेस्वामीनसंशयः
एतत्श्लाघ्यतमंलोकेदेहिजन्मनिजन्मनि ६९
त्वंमाताचपितात्वंचत्वंबंधुश्चसखाचमे
त्वंगुरुस्त्वंमहामंत्रोमंत्रैर्वेद्योऽसिसर्वदा ७०
निष्कामंवाक्यमाकर्ण्यकिरातस्यतदाभवः
ददौपार्षदमुख्यत्वंद्वारपालत्वमेवच ७१
तदाडमरुनादेननादितंभुवनत्रयम्
भेरीभांकारशब्देनशंखानांनिनदेनच ७२
तदादुंदुभयोनेदुःपटहाश्चसहस्रशः
नंदीतंनादमाकर्ण्यविस्मयात्त्वरितोययौ ७३
तपोवनंयत्रशिवःस्थितःप्रमथसंवृतः
किरातोहितथादृष्टोनंदिनाचतदाभृशम् ७४
उवाचप्रसृतोवाक्यंसनंदीविस्मयान्वितः
किरातंस्तोतुकामोऽसौपरमेनसमाधिना ७५
इहानीतस्त्वयाशंभुस्त्वंभक्तोऽसिपरंतपः
त्वद्भक्तोऽहमिहप्राप्तोमांनिवेदयशंकरे ७६
तच्छ्रुत्वावचनंतस्यकिरातस्त्वरयान्वितः
नंदिनंचकरेगृह्यशंकरंसमुपागतः ७७
प्रहस्यभगवान्रुद्रःकिरातंवाक्यमब्रवीत्
ब्रूहिकोऽसौत्वयानीतोगणानामिहसन्निधौ ७८
किरातउवाच
त्वद्भक्तोऽसौतदादेवतवपूजारतोह्यसौ
प्रत्यहंरत्नमाणिक्यपुष्पैश्चोच्चावचैरिह ७९

जीवितेनधनेनापिपूजितोऽसिनसंशयः
तस्माज्जानीहिभोस्वामिन्नंदिनंभक्तवत्सल ८०
महादेवउवाच
जानाम्यहंमहाभागनंदिनंवैश्यवर्त्तनम्
त्वंमेभक्तःसखाचेतिमहाकालमहामते ८१
उपाधिरहितायेचयेनिष्कपटमानसाः
तेप्रियास्तेचमेभक्तास्तेविशिष्टानरोत्तमाः
तावुभौस्वीकृतौतेनपार्षदत्वेनशंभुना ८२
ततोविमानानिबहुनितत्रसमागतान्येवमहाप्रभाणि
किरातवर्येणसवैश्यवर्यउद्धारितस्तेनमहाप्रभेण ८३
कैलासलोकमापन्नौविमानैर्वेगवत्तरैः
सारूप्यमेवसंप्राप्तोईश्वरस्यमहात्मनः ८४
नीराजितौगिरिजयापुत्रवत्तौगणावुभौ ८५
उवाचेदंततोदेवीप्रहस्यगजगामिनी
यथात्वंहिमहादेवतथाचेतौनसंशयः ८६
सारूप्येणचगत्याचहास्यभावैःसुपूजितैः
देव्यास्तद्वचनंश्रुत्वाकिरातोवैश्यएवच ८७
सद्यःपराङ्मुखौभूत्वाशंकरस्यचपश्यतः
ऊचतुस्त्वरयायुक्तौगणौरुद्रस्यपश्यतः ८८
उभावप्यनुकंप्यौचभवताहित्रिलोचन
तवद्वारिस्थितौनित्यंभवावस्तेनमोनमः ८९
तयोर्भावंसभगवान्विदित्वाप्रहसन्भवः
उवाचपरयाभक्त्याभवतोरस्तुवांछितम् ९०
ततःप्रभृतिद्वावेतौद्वारपालौबभूवतुः
शिवद्वारिस्थितौदेविमध्याह्नेशिवदर्शिनौ ९१
एकोनंदीमहाकालोद्वावेतौशिववल्लभौ
येपापिनोप्यधर्मिष्ठाश्रंधामूकाश्चपंगवाः ९२
कुलहीनादुरात्मानःश्वपचाद्याहिमानवाः
यादृशास्तादृशाश्चान्येश्राराध्यधवलेश्वरम् ९३
गतास्तेऽपिगमिष्यंतिनात्रकार्याविचराणा

अत्रस्नानंचदानंचसांनिध्यंशंकरस्यच ९४
साभ्रमत्यांकृतस्नानाधवलेश्वरपूजकाः
तेरुद्रलोकंगच्छंतिनात्रकार्याविचारणा ९५
अत्रस्नानंचदानंचयेकुर्वंतिनरोत्तमाः
धर्मार्थकामभोगाश्चभुक्त्वायांतिहरालयम् ९६
चंद्रसूर्योपरागेचपितुःसांवत्सरेदिने
यत्फलंलभतेमर्त्यस्तत्फलंप्राप्नुयाद्ध्रुवम् ९७
स्वर्गात्कामदुघादेविनित्यमायातिसर्वथा
आगत्यतंशिवंदेवंसमभ्यर्च्ययथातथा ९८
सागच्छतिसुरश्रेष्ठेस्वर्गंप्रतिनसंशयः
तेनदुग्धाभियोगेनलिगंतद्धवलीकृतम् ९९
धवलेश्वरंनामततःसंजातंभुविसर्वदा
जंतवोऽत्रसदादेविम्रियंतेकालनोदिताः
तेतेशिवपदंयांतियावच्चंद्रदिवाकरौ १००

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तरखंडेउमा महेश्वरसंवादेधवलेश्वरमाहात्म्यंनामैकपंचाशदधिकशततमोऽध्यायः १५१

## द्विपंचाशदधिकशततमोऽध्यायः

महादेवउवाच
तीर्थानांप्रवरंतीर्थंसाभ्रमत्यास्तटेस्थितम्
बालापइतिविख्यातंभुक्तिमुक्तिप्रदायकम् १
तपस्विधारितंतीर्थंविबुधानांसमाश्रयम्
तत्रकन्यातपस्तेपेपरमंसुदृढव्रता २
कन्याकरवमुनेःसाध्वीरूपेणाप्रतिमाभुवि
बालाबालावतीनामकुमारीब्रह्मचारिणी ३
व्रतंचचारसावित्र्यानियमैर्बहुभिर्युता
भर्तामेभास्करोभूयादितिनिश्चित्यभामिनि ४
समास्तस्यसमाक्रांतादशसाभ्रमतीतटे
चरंत्यानियमांस्तांस्तान्भक्त्यापरमदुश्चरान् ५
तस्यास्तुतेनव्रतेनतपसाव्रतचर्यया

भक्त्याचभगवान्प्रीतःपरयाभक्तिसंपदा ६
आजगामाश्रमपदंदेवदेवोदिवाकरः
आस्थायरूपंविप्रर्षेःप्रविष्टस्तुमहामनाः ७
सातंदृष्ट्वोग्रतपसावरिष्ठंब्रह्मवित्तमम्
वानप्रस्थविधानेनपूजयामासतंद्विजम् ८
उवाचरविभक्तासाकल्याणीतंतपोधनम्
भगवन्मुनिशार्दूलकिमाज्ञापयसिप्रभो ९
सर्वंतुभ्यंयथाशक्तिदास्यामिस्वतनुंविना
सूर्यभक्तास्मितेपाणिंदास्यामिनकथंचन १०
व्रतैश्चनियमैश्चापितपोभिश्चतपोधन
सूर्यस्तोषयितव्योमेदेवस्त्रिभुवनेश्वरः ११
इत्युक्तवत्यांतस्यांतुस्मयन्निवनिरीक्ष्यताम्
उवाचनियमस्थांतांसांत्वयन्निवभास्करः १२
उग्रंचरसिकल्याणितपःपरमदुष्करम्
यदर्थंचसमारंभस्तवबालेतथैवतत् १३
तपसालभ्यतेसर्वंसर्वंतपसितिष्ठति
देवत्वंप्राप्यतेभद्रेतपसामोक्षएवच १४
इमानिपंचसुभगेबदराणिप्रतीच्छमे
दत्त्वासबदराण्यस्यैपचेत्युक्त्वारविर्ययौ १५
अपृष्ट्वातांतुकल्याणींब्रह्मरूपीविहायताम्
स्थितोऽसौनातिदूरेणइंद्रग्रामेमहायशाः १६
स्थित्वाजिज्ञासयाभावंतस्याश्चब्राह्मणोरविः
बदराणामुपवनंकारयामासभास्करः १७
ततःसाप्रयताबालाप्रांजलिर्विगतश्रमा
पाकायबदराणांसापावकंसमधिश्रयत् १८
अपचत्परमादेविबदराणिमहाप्रभा
तस्याःपचंत्याःसुमहान्कालोऽगाच्चसुरेश्वरि १९
भस्मपुंजोमहान्जातोदिनंचक्षयमन्वगात्
हुताशनेनदग्धस्तुमहान्वैकाष्ठसंचयः २०
पादौप्रक्षाल्यसापश्चात्पावकेचारुदर्शने

ददाहबदरार्थंचब्राह्मणप्रियकाम्यया २१
दग्ध्वादग्ध्वापुनःपादौउपर्याधार्यतेऽनघे
अथास्याःकर्मतदृष्ट्वाप्रीतोदेवोदिवाकरः २२
ततःसंदर्शयामासकन्यायैरूपमात्मनः
उवाचपरमप्रीतस्तांकन्यांसुदृढव्रताम् २३
सूर्यउवाच
प्रीतोऽस्मिबालेभक्त्यातेतपसाव्रतचर्यया
यस्मादभिमतःकामोबालेसंपद्यतांतव २४
अस्मिंस्तीर्थेतपोयुक्तामद्गृहेत्वंनिवत्स्यसि
इदंचतीर्थप्रवरंतवनाम्नाचलक्षितम् २५
बालापइतिविख्यातंसाभ्रमत्यास्तटेस्थितम्
विख्यातंत्रिषुलोकेषुब्रह्मर्षिभिस्तुस्तुतंपुरा २६
बालातीर्थेनरःस्नात्वात्रिरात्रमुषितःशुचिः
रक्तादित्यमुखंदृष्ट्वासूर्यस्योदयनंप्रति २७
सूर्यलोकमवाप्नोतिनात्रकार्याविचारणा
सूर्यवारेऽथसंक्रांतौसप्तम्यांतुविशेषतः २८
विषुवत्ययनेचापिचंद्रसूर्यग्रहेऽपिच
स्नात्वासंतर्पयेद्देवान्पितृनथपितामहान् २९
गुडधेनुंततोदद्याद्ब्राह्मणेभ्योगुडोदनम्
करवीरैर्जपापुष्पैरक्तादित्यप्रपूजनम् ३०
येकुर्वंतिनरास्तेवैसूर्यलोकेवसंतिवै
रक्तांधेनुंनरोदद्यादेकंचैवधुरंधरम् ३१
सयज्ञफलमाप्नोतिननरोनिरयंव्रजेत्
व्याधितोमुच्यतेरोगात्बद्धोमुच्येतबंधनात्
तीर्थेऽस्मिन्पिंडदानेनतृप्तिंयांतिपितामहाः ३२
महादेवउवाच
तथान्यदपिमाहात्म्यंतीर्थस्यास्यतपोधने
श्रूयतांयत्पुरावृत्तंव्यासेनकथितंमहत् ३३
पुरात्रमहिषोवृद्धोजरयाजर्जरीकृतः
अशक्तोभारमुद्वोढुंसार्थवाहस्तमत्यजत् ३४

सनिदाघेजलंपातुंजगामचमहानदीम्
दैवात्पंकेनिमग्नोऽसौततोमृत्युवशंगतः ३५
प्लवितास्थिर्जलेपुगयेतीर्थस्यास्यप्रभावतः
कान्यकुब्जेश्वरसुतोराजाजातिस्मरोऽभवत् ३६
संस्मृत्यचस्ववृत्तांतंप्रभावंतीर्थजंमहत्
ग्रागत्यतज्जलेस्नात्वाददौदानान्यनेकशः ३७
सतत्रस्थापयामासदेवदेवंमहेश्वरम्
ग्रत्रतीर्थेनरःस्नात्वासंपूज्यमहिषेश्वरम् ३८
रक्तादित्यमुखंदृष्ट्वासर्वपापैःप्रमुच्यते
साभ्रमत्युदकंयत्रपूर्वतःपश्चिमंव्रजे ३९
प्रयागादपितत्पुगयंसर्वकामप्रदंमहत्
दत्तंद्विजेंद्रेषुहुतंयदग्नौश्राद्धंकृतंजाप्यमिहाक्षयंस्यात् ४०
गोभूतिलाःकांचनवस्त्रधान्यंशय्यासनंवाहनछत्रदानम्
यंयंवांछयतेकामंतंतंप्राप्नोतिमानवः ४१
श्रीमहेशप्रसादाच्चतीर्थस्यास्यप्रभावतः
बालापेंद्रंइदंतीर्थंपुगयपापहरंसदा ४२
यंदृष्ट्वामुनयःसर्वेवीतरागाःसदैवतु
यत्रमाहिषनामेतिश्वेताख्यंपुगयदंमहत् ४३
यत्रस्नात्वातुदेवेशिपुनर्जन्मनविद्यते
गोदावर्यांकृतेस्नानेयत्फलंलभतेनरः ४४
तत्फलंलभतेदेविग्रत्रतीर्थेनसंशयः ४५

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडे
बालापेंद्रंतीर्थंनामद्विपंचाशदधिकशततमोऽध्यायः १५२

## त्रिपञ्चाशदधिकशततमोऽध्यायः

महादेवउवाच
ग्रन्यत्तीर्थंप्रवक्ष्यामिदुर्द्धर्षेश्वरमुत्तमम्
यस्यस्मरणमात्रेणपापोऽपिपुगयवान्भवेत् १
वृत्तेदेवासुरेयुद्धेदैत्येचनिधनंगते
दुर्धर्षंचव्रतंकृत्वायत्रभार्गवनंदनः २

समाराध्यमहादेवंदुर्द्धर्षंलोककारणम्
मृतसंजीवनीमापयत्रविद्यांहित्र्यंबकात् ३
दैत्यार्थमुशनस्तीर्थंविख्यातंजगतीतले
काव्यतीर्थेकृतस्नानःपूज्यदेवंमहेश्वरम् ४
दुर्द्धर्षेश्वरसंज्ञंवैसर्वपापैःप्रमुच्यते
अत्रवृत्तंतुश्रोतव्यंत्वयाचनगनंदिनि ५
पुरायदाभवद्युद्धंवृत्रवासवयोरिह
तदासुरैर्जितादेवामघवान्वैसुरेश्वरः
किंकर्त्तव्यमितिध्यात्वागतोऽसौतंगुरुंप्रति ६
इंद्रउवाच
अस्माकंत्वंगुरुःसाक्षाद्देवानांपालकःसदा
ऋषीणांत्वंवरःश्रीमान्कृपांकुरुदयानिधे ७
वृत्रेणनिर्जितोऽहचक्वगच्छामिचसुव्रत ८
बृहस्पतिरुवाच
शृणुदेवेंद्रवक्ष्यामियेनत्वंहिसदासुखी
ममवाक्यंकुरुष्वैवयदीच्छेच्छुभमात्मनः ९
साभ्रमत्यांतदागच्छतत्रगत्वासुखीभव
दुर्द्धराख्योयत्रदेवोनित्यंतिष्ठतिभूतिदः १०
ददातिवांछितान्कामान्सत्यंसत्यंसुरेश्वर
गुरोर्वचनमाकर्ण्यसगतस्तांनदींप्रति ११
तत्रस्नात्वातुदेवेशोमहेशंतमपूजयत्
स्नानाच्चपूजनादेवसंतुष्टःश्रीमहेश्वरः १२
महादेवउवाच
यंयंप्रार्थयसेनित्यंतत्सर्वंहिददाम्यहम्
श्रुत्वावाक्यंतुदेवेशोह्युवाचपरमंवचः १३
इंद्रउवाच
त्वंनाथःसर्वलोकानांत्वमेवकारणंपदम्
त्वंहिविश्वेश्वरोदेवोसर्वदालक्ष्यसेमया १४
यदित्वंमेप्रसन्नोऽसिविश्वेश्वरसुरेश्वर
वृत्रंहनमहादेवएषकामोमहान्मम १५

महादेवउवाच
तववाक्यात्तुदेवेशवृत्रोऽसौनिहतोमया
मयायद्दीयतेशस्त्रंतद्गृह्णीष्वसुरेश्वर १६
तेनैवचासुयोगेनहनिष्यसिनसंशयः १७
इंद्रउवाच
किमस्त्रंवदविश्वेशयेनवृत्रंहिहन्म्यहम्
वज्रादप्यधिकंकिंत्तन्निर्मितंतुत्वयाकदा १८
महादेवउवाच
इदंपाशुपतंह्यस्त्रंनिर्मितंतुमयापुरा
नदत्तंकस्यचिच्छक्रतवार्थेरक्षितंमया १९
अत्रस्नातंत्वयादेवपूजनंवैत्वयाकृतम्
अतस्त्वंगृह्णमेशस्त्रंयेनवृत्रंहनिष्यसि २०
श्रीमहेशप्रसादाच्चप्राप्तंमघवताततः
तेनपाशुपतास्त्रेणहतोवृत्रोमहाबलः २१
तत्सर्वमत्रसंजातंदुर्द्धर्षेशप्रसादतः
स्नानमात्रात्तुदेवेशिपूजनादेवसांप्रतम् २२
तीर्थप्रभावात्संप्राप्तंसत्यंसत्यंवरानने
एवंज्ञात्वातुदेवेशितत्रवैस्नानमाचरेत्
दर्शनंतुमहेशस्यसर्वपापप्रणाशनम् २३
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तर
खंडेदुर्द्धर्षेश्वरमाहात्म्यंनामत्रिपंचाशदधिकशततमोऽध्यायः १५३

चतुष्पञ्चाशदधिकशततमोऽध्यायः
साभ्रमत्यास्तटेगुप्तंतीर्थंपरमपावनम्
खड्गधारमितिख्यातंकलौगुप्तंभविष्यति १
यत्रप्रसंगतःस्नात्वापीत्वावापोयदृच्छया
सर्वपापविनिर्मुक्तोरुद्रलोकेमहीयते २
यत्रसाभ्रमतीपुण्याकश्यपानुगतासती
रुद्रेणहिजटाजूटेधृतापातालगामिनः ३
खड्गधारेतिवैनाम्नारुद्रस्तत्रैवसंस्थितः

यत्रस्नात्वादिवंयाताःपापिनोऽपिसुरेश्वरि ४
अत्रैवोदाहरंतीममितिहासंपुरातनम्
किरातेनकृतंयच्चव्रतंपरमदुष्करम् ५
पार्वत्युवाच
किंनामवैकिरातोऽभूत्किंतेनव्रतमाहितम्
तत्सर्वंश्रोतुमिच्छामियथातथ्येनकथ्यताम् ६
नह्यन्योविद्यतेलोकेत्वांविनावदतांवरः
तस्मात्कथयभोदेवसर्वंशुश्रूषणेहितम् ७
महादेवउवाच
आसीत्पुरामहारौद्रश्चंडोनामदुरात्मवान्
क्रूरःशठोनैष्कृतिकोभूतानांचभयावहः ८
जालेनमत्स्यान्दुष्टात्माघातयत्यनिशंततः
भल्लैर्मृगान्श्वापदांश्चकृष्णसारान्सशल्लकान् ९
खगान्नानाविधांश्चैवविध्वाकांश्चित्प्रपातयेत्
पक्षिणोघातयन्क्रुद्धोबर्हिणश्चविशेषतः १०
लुब्धकोहिमहापापोदुष्टोदुष्टजनप्रियः
भार्यातथाविधातस्यपुंश्चलीचमहामया ११
एवंविहरतस्तस्यबहुकालोव्यवर्त्तत
एकदानिशिपापीयान्श्रीवृक्षोपरिसंस्थितः १२
कोलंहंतुंधनुःपाणिःशरंसंयोज्यकार्मुके
एवंनिशागतातस्यजाग्रतोनिमिषस्यहि
माघमासेसितायांवैचतुर्दश्यांनगात्मजे १३
श्रीवृक्षपत्राणिबहूनितत्रसंच्छेदयामासरुषान्वितोऽपि
श्रीवृक्षमूलेपरिवर्त्तमानंलिगंचतस्योपरितानिपेतुः १४
श्रीवृक्षपर्णानिचदैवयोगात्जातंचसर्वंशिवपूजनंतत् १५
गंडूषकारिणातेनस्नपनंचमहत्कृतम्
अज्ञानिनाचतेनैवपुष्कसेनदुरात्मना १६
माघमासेसितेपक्षेचतुर्दश्यांविधूदये
पुष्कसोहिदुराचारोनिष्पन्नोगतकल्मषः १७
तस्यभार्याप्रचंडाचआगतातस्यसन्निधौ

निराशाचनिराहारायत्रासौपुष्कसःस्थितः १८
नप्राप्तःशूकरस्तेनमृगोऽपिमहिषोऽपिवा
अशनार्थंचतस्यैवअन्नमादायभामिनी १९
तेनदृष्टाप्रचंडासाआयांतीक्रूरलोचना
सातस्यभार्यानद्यांवैजलमध्येपपातह २०
तावत्तयोक्तश्चंडात्माएहिशीघ्रंचभक्षय
समानीतंत्वदर्थंचमत्स्यमांसंमयाधुना २१
कृतंकिंमूढपूर्वेद्युर्मांसंपार्श्वेनदृश्यते
नाशितंचत्वयामूढकुटुंबंलंघतेतव २२
एतच्छ्रुत्वातुवचनंचंडायाश्चंडरूपवान्
शिवरात्र्युपवासेनरात्रौजागरणेनच २३
शुद्धांतःकरणोजातःस्नातुंनद्यांशुचिव्रतः
यावत्स्नातिसदुष्टात्मातावत्श्वातत्रचागतः २४
शुनातदाभक्षितंचसर्वंमांसंसुरेश्वरि
चंडाप्रकुपितातंचश्वानंहंतुमुपस्थिता २५
निवारिताहिचंडेनचंडाप्रकुपितातदा
नहंतव्यस्त्वयाचैषकिमनेनाशुभंकृतम् २६
तयोक्तंभक्षितंचान्नंअनेनैवदुरात्मना
किंत्वंभक्षयितामूढभविताद्यबुभुक्षितः २७
पुष्कसउवाच
यच्छुनाभक्षितंचान्नंतेनाहंपरितोषितः
किमनेनशरीरेणनश्वरेणगतायुषा २८
येपुष्यंतिशरीरंवैसर्वभावेनभामिनि
मूढास्तेपापिनोज्ञेयालोकद्वयबहिष्कृताः २९
तस्मान्मानंपरित्यज्यकामंचापिदुरात्मताम्
स्वस्थाभावविमर्शेनतत्वबुध्यास्थिराभव ३०
अहमेतच्छरीरंवैखङ्गधारव्रतेनच
त्यक्ष्याम्यद्यवरारोहेकिंचिरंजीवनेनमे ३१
इत्युक्त्वाखङ्गमाकृष्ययावद्भिनत्तिकंस्वकम्
आगताश्चगणास्तावद्बहवःशिवनोदिताः ३२

विमानानिबहून्यत्रआगतानितदंतिके
दृष्ट्वासचैवतान्येवंविमानानिगणांस्तथा ३३
उवाचपरयाभक्त्यापुष्कसोऽपिचतान्प्रति
कस्मात्समागतायूयंसर्वेरुद्राक्षधारिणः ३४
सर्वेस्फटिकसंकाशाःसर्वेचंद्रार्द्धशेखराः
कपर्दिनश्चर्मपरीतवाससोभुजंगभोगैःकृतहारभूषणाः ३५
श्रियान्वितारुद्रसमानवीर्यायथातथंभोवदतोचितंमम
पुष्कसेनतदापृष्टाऊचुस्तेरुद्रपार्षदाः ३६
गणाऊचुः
प्रेषितास्मोवयंचंडशिवेनपरमेष्ठिना
आगच्छत्वरितोभूत्वासस्त्रीकोयानमारुह ३७
लिगार्चनंकृतंयच्चत्वयारात्रौशिवस्यच
तेनकर्मविपाकेनप्राप्तोऽसिपरमांगतिम् ३८
तथोक्तोवीरभद्रेणउवाचप्रहसन्निव
किंमयासुकृतंचीर्णंपापिनापुष्कसेनहि ३९
मृगयारसिकेनैवमूढेनचदुरात्मना
पापाचारोह्यहंनित्यंकथंस्वर्गेवसाम्यहम् ४०
कथंलिगार्चनंचाद्याकृतमस्तितदुच्यताम्
परंकौतुकमापन्नःपृच्छामिकृपयावद ४१
वीरभद्रउवाच
देवदेवोमहादेवोयोगंगाधरसंज्ञकः
परितुष्टोऽद्यतेचंडसभार्यस्यउमापतिः ४२
प्रासंगिकंत्वयाचाद्यकृतमर्चनमेवच
कोलंनिरीक्षमाणेनविल्बपत्राणिचैवहि ४३
छेदितानित्वयाचंडपतितानितदैवहि
लिगस्यमस्तकेतानितेनत्वंसुकृतीप्रभो ४४
तवैवंजागरोजातोमहावृक्षोपरिध्रुवम्
तेनैवजागरेणैवतुतोषजगदीश्वरः ४५
छलेनैवमहाभागकोलसंदर्शनेनहि
शिवरात्रिदिनंव्याधप्रसंगेनाप्युपोषितम् ४६

तेनोपवासेनचजागरेणतुष्टोह्यसौदेववरोमहात्मा
तवप्रसादायमहानुभावोददातिसर्वान्वरदोवरांश्च ४७
एवमुक्तस्तदातेनवीरभद्रेणधीमता
पुष्कसोऽपिविमानाग्र्यमारुरोहचपश्यताम् ४८
गणानांदेवतानांचसर्वेषांप्राणिनामपि
तदादुंदुभयोनेदुर्भेरीतूर्याण्यनेकशः ४९
वीणावेणुमृदंगानिलास्यनाटययुतानिच
जगुर्गंधर्वपतयोननृतुश्चाप्सरोगणाः ५०
चामरैर्विज्यमानोहिछत्रैश्चविविधैरपि
महोत्सवेनमहताह्यानीतःशिवसन्निधौ ५१
पुष्कसोऽपितदाप्राप्तस्तीर्थस्नानशिवार्चनात्
किंपुनःश्रद्धयाभक्तयाशिवायपरमात्माने ५२
पुष्पादिकंफलंगंधंतांबूलाद्यतमेवच
येप्रयच्छंतिलोकेऽस्मिंस्तेरुद्रानात्रसंशयः ५३
महादेवउवाच
तदाप्रभृतितत्तीर्थंखङ्गधारेतिविश्रुतम्
एतत्तीर्थंकलौगुप्तंभविष्यतिसुरेश्वरि ५४
माघमासेऽथवैशाखेकार्तिक्यांचविशेषतः
स्नानंयेनप्रकुर्वंतिमुक्तास्तेनगनंदिनि ५५
वसिष्ठोवामदेवश्चभरद्वाजोऽथगौतमः
स्नानार्थेवैसमायांतिदेवंद्रष्टुंपिनाकिनम् ५६
त्रियुगेवर्त्ततेलिगंकलौनैवतुपार्वति
विश्वामित्रेणऋषिणादत्तशापोह्यहंतदा ५७
पार्वत्युवाच
कथंशापस्तुऋषिणादत्तश्चैवसुरेश्वर
तदहंश्रोतुमिच्छामित्वत्तोदेवनसंशयः ५८
महादेवउवाच
एकस्मिन्समयेदेविविश्वामित्रोमहातपाः
आगतःखङ्गधारेऽस्मिंस्तीर्थेवैपरमाद्भुते ५९
साभ्रमत्यांकृतस्नानोदर्शनंकृतवान्मम

तत्रतिष्ठतिनित्यंवैपूजांकुर्वन्ननेकधा ६०
तत्रकोऽपिमहादुष्टःकौलिकःपापरुपधृक्
मांसंदत्तंतदातेनशिवस्योपरिभामिनि ६१
दृष्ट्वातदपिमांसंचविश्वामित्रोऽथवैपुनः
अब्रवीच्चतदातत्रदुष्कृतंपापिनाकृतम् ६२
नदत्तस्तस्यदंडोहिशर्वेणपरमात्मना
तस्मादहंहिनिश्चित्यशापंदास्येनसंशयः ६३
विचार्यैवंतदातेनशप्तोऽहदेविवैतदा ६४
अस्मिन्कलियुगेघोरेगुप्तस्त्वंभवसर्वथा
इतिदत्वाथवैशापंगतवान्मुनिसत्तमः ६५
तदाप्रभृतिभोदेविगुप्तोऽहऋषिशापतः
ममस्थानेविशेषेणपूजनंकुरुतेयदि ६६
तेषांहिदुरितंयच्चनश्यतेतत्क्षणादपि
मृन्मयींमामकींमूर्तिंकृत्वायेपूजयंतिवै ६७
अत्रस्थानेविशेषेणमामकेतुवसंतिहि
खड्गधारेश्वरइतिनाम्नाख्यातःकलौयुगे ६८
कृतेवैमंदिरंनामत्रेतायांगौरवःस्मृतः
द्वापरेविश्वविख्यातःकलौखड्गेश्वरःस्मृतः ६९
दक्षिणंभागमाश्रित्यममस्थानंसुरेश्वरि
इतिज्ञात्वातुतत्रैवकृत्वामूर्तिंसदाबुधः ७०
पूजनंकुरुतेनित्यंवांछितंफलमाप्नुयात्
धर्मार्थकाममोक्षांश्चलभतेमानवोभुवि ७१
धूपंदीपंचनैवेद्यंतथावैचंदनादिकम्
येऽपयंतिहिदेवेशिलोकनाथेमहेश्वरि
नदुःखंतुभवेत्तेषांसत्यंसत्यंवरानने ७२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्रसहितायामुउत्तर
खंडेधारेश्वरमाहात्म्यंनामचतुष्पंचाशदधिकशततमोऽध्यायः १५४

पञ्चपञ्चाशदधिकशततमोऽध्यायः

महादेवउवाच

खड्गधाराद्दक्षिणतस्तीर्थंपरमपावनम्
दुग्धेश्वरमितिप्रोक्तंसर्वपापप्रणाशनम् १
यस्मिंस्तीर्थेनरःस्नात्वादृष्ट्वादुग्धेश्वरंहरम्
पुमान्सद्योविमुच्येतदुःखात्पापसमुद्भवात् २
दधीचिनातपस्तप्तंसाभ्रमत्यास्तटेशुभे
चन्द्रभागामहत्पुरायंगंगायासंगतायतः ३
तत्रस्नानंचदानंजपःपूजातपस्तथा
सर्वमक्षयतांयातिदुग्धतीर्थप्रभावतः ४
पार्वत्युवाच
दुग्धेश्वरसमुत्पत्तिंश्रोतुमिच्छामिवैप्रभो
महिमादुग्धतीर्थस्यकथ्यतांचसुरेश्वर ५
महादेवउवाच
पुरादेवासुरेयुद्धेदैत्यैर्देवाःपराजिताः
पलायनपराभूत्वादधीचाश्रममागताः ६
मुक्त्वातत्रायुधान्येवगतादेवादिशोदश
पश्चात्कोलाहलंश्रुत्वादधीचोदैत्यसंभवम् ७
पीतवांस्तानिशस्त्राणिजलेनाप्लाय्यभार्गवः
कालेनतेसुराःसर्वेअस्त्रारायादातुमुत्सुकाः ८
गुरुणासहिताःसर्वेपरस्परमुदान्विताः
नकुलैःसहसर्पाश्चक्रीडंतेतेपरस्परम् ९
एवंविधान्यनेकानिसाश्चर्याणितदाश्रमे
पश्यंतोविबुधाःसर्वेविस्मयंपरमंगताः १०
ददृशुस्तेमुनिवरंआसनोपरिसंस्थितम्
यत्रसाभ्रमतीपुरायामिलिताचंद्रभागया ११
वर्चसापरमेणैवभ्राजमानंयथारविम्
विभावसुद्वितीयंचसुवर्चाभार्ययासह १२
यथाब्रह्माहिसावित्र्यातथाऽसौमुनिसत्तमः
दृष्टःसुरवरैःसर्वैःप्रणिपातपुरःसरम् १३
ऊचिरेतंतदादेवाबृहस्पतिपुरोगमाः
त्वंदातात्रिषुलोकेषुविदितःपूर्वमेवच १४

याच्ञार्थंचवयंसर्वेत्वत्सकाशंसमागताः
भयभीतावयंसर्वेऽस्त्राणिनोदातुमर्हसि १५
इत्युक्तोमुनिवर्योऽसौदेवानाहमहामतिः
पीतानितानिभोदेवाजलेनाप्लाव्यमंत्रतः १६
ततोदेवाब्रुवन्विप्रं दैत्यानांनिधनायच
देह्यस्थीनित्वराविप्रदत्तानीतिद्विजोऽवदत् १७
इत्युक्त्वातान्स्वपत्नींसप्रेषयामासचाश्रमम्
तदोवाचद्विजोहृष्टोदेवान्स्मित्वामहामतिः १८
पीतानितानिभोदेवागृह्णीध्वंचयथातथम्
इत्युक्त्वाचद्विजोदेवियोगमास्थाययोगवित् १९
ततोब्रुवन्सुराविप्रंस्मयंतंछलयागिरा
त्वयिजीवतिभोब्रह्मन्कुतोस्थीनिलभामहे २०
प्रहस्योवाचविप्रर्षिस्तिष्ठध्वंक्षणमेकतः
स्वयमेवचभोदेवास्त्यक्ष्याम्यद्यकलेवरम् २१
इत्युक्त्वासद्विजोदेवियोगमास्थाययोगवित्
ब्रह्मलोकंगतःसद्योयतोनावर्त्ततेपुनः २२
ततःसर्वेसुरास्तत्रदृष्ट्वातंविलयंगतम्
चिंतयंतःसुरगणाःकथंचविशसामहे २३
सुरभिंचाह्वयामासतामुवाचशचीपतिः
कलेवरंद्विजेंद्रस्यलिहत्वंवचसामम २४
तथेतिचवचोमत्वातत्क्षणादेवलिह्यतत्
निर्मांसंचकृतंसद्यस्तयाधेन्वाकलेवरम् २५
जगृहुस्तानिचास्थीनिचक्रुःशस्त्राणिवैसुराः
तस्यवंशोद्भवंत्वस्त्रमासीद्ब्रह्मशिरस्तथा २६
शस्त्राण्यस्त्राणिकृत्वातेमहाबलपराक्रमाः
ययुर्देवास्त्वरायुक्तावृत्रघातनतत्पराः २७
ततःसुवर्चातुदधीचपत्नीसंप्रेषितायासुरकार्यसिद्धये
विलोकयामाससमेत्यतत्रमृतंपतिंदेहमथोविशस्तम् २८
ज्ञात्वातुतत्सर्वमथोसुराणांकृत्यंतदानींचचुकोपसाध्वी
ददौतदाशापमतीवरुष्टातदासुवर्चाऋषिवर्यपत्नी २९

अहोसुरादुष्टतराश्चसर्वेह्यनेकशप्ताश्चतथैवलुब्धाः
तस्मात्तुसर्वेह्यप्रजाभवंतुसेंद्रासुराद्यप्रभृतीत्युवाच ३०
एवंशापंददौतेषांसुराणांसातपस्विनी
उपविश्याश्वत्थमूलेसाभ्रमत्यास्तटेस्थिता ३१
सगर्भासासतीसाध्वीस्वोदरंविददारह
निर्गतोजठराद्गर्भोदधीचस्यमहात्मनः ३२
साक्षाद्रुद्रावतारोऽसौपिप्पलादोमहाप्रभुः
प्रहस्यजननीगर्भंउवाचवचनंमहत् ३३
सुवर्चातंपिप्पलादंचिरंतिष्ठास्यसन्निधौ
अश्वत्थस्यमहाभागसर्वेषांशुभदोभव ३४
तथैवभाषमाणासासुवर्चातनयंप्रति
पतिंप्रत्यगमत्साध्वीपरमेनसमाधिना ३५
एवंदधीचपत्नीसापतिनास्वर्गमास्थिता
तेदेवाःकृतशस्त्रास्त्रदैत्यान्प्रतिसमुत्सुकाः ३६
आजग्मुश्चेंद्रमुख्याश्चमहाबलपराक्रमाः
कामधेनुःप्रसुस्त्रावययौयत्रद्विजःक्षयम् ३७
मुनेःप्रभावतोदुग्धंलिंगरूपंव्यजायत
दुग्धेश्वरमितिख्यातंदेविसाभ्रमतीतटे ३८
तदाप्रभृतितीर्थंहितन्नाम्नाप्रथितंभुवि
अतुलंयस्यमाहात्म्यंश्रवणात्पातकापहम् ३९
येशृण्वंतिनराभक्त्यादुग्धेश्वरसमुद्भवम्
तेऽपिपापविनिर्मुक्तायांतिरुद्रपदंमहत् ४०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तर
खंडेदुग्धेश्वरमाहात्म्यंनामपंचपंचाशदधिकशततमोऽध्यायः १५५

## षट्पञ्चाशदधिकशततमोऽध्यायः

महादेवउवाच
दुग्धेश्वरस्यपूर्वेतुतीर्थंपरमपावनम्
चंद्रभागेतिवैनाम्नानदीयत्रतुसंगता १
तत्रचंद्रेश्वरोदेवोनित्यंतिष्ठतिपुण्यदः

योहरःसर्वदाव्यापीलोकानांसुखदोमहान् २
अत्रस्नानंप्रकुर्वंतिध्यानंकुर्वंतिनित्यशः
तत्फलंप्राप्नुयुस्तेवैसाभ्रमत्यांशिवार्चनात् ३
सोमेनात्रतपस्तप्तंकालंबहुतरंकिल
तस्माच्चन्द्रेश्वरोनामस्थापितोवैमहेश्वरः ४
शुक्रेणापितपस्तप्तंचन्द्रभागासमीपतः
अतस्तीर्थाधिकंतीर्थंपावनंसर्वदाभुवि ५
कलौगुप्तंतुऋषिणाकारितंवैसुरेश्वरि
यत्रहेममयंलिंगंदृश्यतेनात्रसंशयः ६
अत्रस्नात्वाचपीत्वाचकृत्वावैशिवपूजनम्
येनराःसंगमिष्यंतिधर्मानर्थांल्लभंतिते ७
वृषोत्सर्गादिकंकर्मयेकुर्वंतिविशेषतः
भुक्त्वास्वर्गपदंतेवैपश्चाद्यांतिहरालयम् ८
स्नानार्थेप्रत्यहंदेविचंद्रभागासमीपतः
आगमिष्यंतियेलोकास्तेज्ञेयाःपुण्यभागिनः ९
गत्वापरतटेयेवैह्यर्चयंतिचतंशिवम्
चंद्रेश्वरेतिनामानंश्रीहरंपापकृंतनम् १०
अत्रगत्वाविशेषेणरुद्रजाप्यादिकंतथा
येकुर्वंतिनरश्रेष्ठास्तेज्ञेयाःशिवरूपिणः ११
सर्वदातुसुरश्रेष्ठयत्रस्नानंप्रकुर्वते
तेनराविष्णुरूपाणिविज्ञेयानात्रसंशयः १२
येऽत्रश्राद्धंप्रकुर्वंतितिलपिंडेनवापुनः
तेऽएपिविष्णुपदंयांतिपिंडदानप्रभावतः १३
अत्रदानंप्रकर्त्तव्यंस्नानंवैविधिपूर्वकम्
यत्रस्नात्वातुमुच्यंतेब्रह्महत्यादिकिल्बिषात् १४
तटेस्मिन्येविशेषेणवटंचारोपयंतिते
मृताःशिवपदंयांतियावच्चंद्रदिवाकरौ १५
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तर
खंडेउमा०चंद्रेश्वरचंद्रभागामहिमानामषट्पंचाशदधिकशततमोऽध्यायः१५६

सप्तपञ्चाशदधिकशततमोऽध्यायः–

महादेवउवाच
दुग्धेश्वरसमीपतेतुतीर्थंचातीवपावनम्
रम्यंतत्पिप्पलादस्यनाम्नावैप्रथितंभुवि १
यत्रकृत्वातपःपूर्वंमातुर्वचनतोमुनिः
उत्पादयामासकृत्यांवडवानलसम्मिताम् २
पितुरानृरायमन्विच्छन्दधीचस्यमहात्मनः
तत्रस्नात्वाचपीत्वाचब्रह्महत्यांव्यपोहति ३
साभ्रमत्यास्तटेगुप्तंपिप्पलादंसुरेश्वरम्
तत्रस्नात्वातुभोदेविमुक्तिभागीभवेन्नरः ४
आरोपणंपिप्पलानांकर्त्तव्यंविधिपूर्वकम्
कृतेसतिमहादेविमुच्यतेकर्मबंधनात् ५
पार्वत्युवाच
किमर्थंसातुकृत्यावैउत्पन्नातांनिबोधय
तयावैकृत्ययापूर्वंकिंकृतंवदमेप्रभो ६
येनपुत्रेणसानीतापितुरानृरायकारणात् ७
महादेवउवाच
दाधीचोऋषिवर्योऽसौह्यागतस्तपकारणात्
अत्रतेनमहत्तप्तमृषिणापरमात्मना ८
तत्रकोलासुरोनामविघ्नार्थंवैसमागतः
तेनविघ्नंबहुतरंकृतंवैनात्रसंशयः ९
तदृष्टंतुसुपुत्रेणकहोडेनचधीमता
कृत्याह्युत्पादितातत्रहननार्थंसुरेश्वरि १०
तयावैनिहतोदैत्यःकोलोनाममहासुरः
तस्मात्तीर्थंमहज्ञातंकलौगुप्तंतुपार्वति ११
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तरखंडे
उमामहेश्वरसंवादेपिप्पलादतीर्थंनाम सप्तपंचाशदधिकशततमोऽध्यायः१५७

अष्टपञ्चाशदधिकशततमोऽध्यायः

महादेवउवाच

पिप्पलादात्ततस्तीर्थेपिचुमंदार्कमुत्तमम्
तीर्थंसाभ्रमतीतीरेव्याधिदौर्गंध्यनाशनम् १
पुराकोलाहलेयुद्धेदानवैर्निर्जिताःसुराः
वृक्षेषुविविशुस्तत्रसूक्ष्माःप्राणपरीप्सया २
तत्रबिल्वेस्थितःशंभुरश्वत्थेहरिरव्ययः
शिरीषेऽभूत्सहस्राक्षोनिंबेदेवःप्रभाकरः ३
एवमादियथायोग्यंवृक्षेषुविबुधास्तथा
यावत्कोलाहलोदैत्योविष्णुना प्रभविष्णुना ४
हतोमहाहवेतावत्स्थितास्तेवृक्षमाश्रिताः
येनयेनहियोवृक्षोविबुधेनसमाश्रितः ५
सतुतन्मयतांयातस्तस्मात्तंनविनाशयेत्
इतिसूर्य्यस्यविश्रामात्पिचुमंदार्कमुत्तमम् ६
तीर्थंरोगहरंस्नानात्साभ्रमत्यास्तटेऽभवत्
अत्रगत्वाविशेषेणतंरविंयदिपूजयेत् ७
पूजयित्वासुरश्रेष्ठेलभतेवांछितंफलम्
अत्रद्वादशनामानिगत्वायेवैपठंतिच ८
तेनराःपुण्यकर्माणोयावज्जीवंनसंशयः
आदित्यंभास्करंभानुंरविंविश्वप्रकाशकम् ९
तीक्ष्णांशुंचैवमार्तंडंसूर्यंचैवप्रभाकरम्
विभावसुंसहस्राक्षंतथापूषणमेवच १०
एवंद्वादशनामानियःपठेत्प्रयतःसुधीः
धनंवैपुत्रपौत्रांश्चलभतेनगनंदिनि ११
एकैकंनामआश्रित्ययोऽचयेतनरोभुवि
सप्तजन्मभवेद्विप्रोधनाढ्योवेदपरागः १२
क्षत्रियोलभतेराज्यंवैश्योधनमवाप्नुयात्
शूद्रोवैलभतेभक्तिंतस्मात्सूक्तंपरंजपेत् १३
निंबार्कतःपरंतीर्थंनभूतंनभविष्यति
अत्रस्नात्वाचपीत्वाचमुक्तिभागीभवेद्ध्रुवम् १४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तरखंडे उमामहेश्वर
संवादेनिंबार्कदेवतीर्थनामाष्टपंचाशदधिकशततमोऽध्यायः १५८

## एकोनषष्ट्य्धिकशततमोऽध्यायः

महादेवउवाच
तस्माद्दूरतरेदेविसिद्धक्षेत्रमनुत्तमम्
अनिरुद्धोवृतःपूर्वंउषार्थेचित्रलेखया १
नीतोबाणासुरपुरंतिष्ठतिस्मगृहेपुरा
पाशैर्बाणैश्चसंरुद्धःकोटराक्षीमथास्मरत् २
साक्षाद्यावैष्णवीशक्तिःसदारक्षणतत्परा
सेयंदेवीनदीतीरेकृष्णेनात्रप्रतिष्ठिता ३
जित्वाबाणासुरंसंख्येद्वारकांप्रतिगच्छता
अनिरुद्धस्यस्तोत्रेणसाक्षात्सांनिध्यमागता ४
तत्रतीर्थेनरःस्नात्वावर्षमेकंप्रयत्नतः
कोटराक्षीमुखंदृष्ट्वालक्ष्मीमाप्नोतिपुष्कलाम् ५
सिद्धतीर्थेनरःस्नात्वादृष्ट्वाकोटरवासिनीम्
सिंहयुक्तेनयानेनरुद्रलोकेमहीयते ६
यस्यांवैस्मरणादेवमुक्तःसोइऽपवरानने
अतोयेऽत्रप्रगच्छंतितेनरामुक्तिभागिनः ७
तत्रगत्वाविशेषेणस्नानंकृत्वातुपार्वति
कोटराक्ष्यास्ततःस्तोत्रंपठेद्वैबुद्धिपूर्वकम् ८
कोटराक्षीविश्वरूपामहामायाबलाधिका
त्रिपुरात्रिपुरघ्नीचशिवावैशिवरूपिणी ९
कन्यासारस्वतीप्रोक्तादुर्गादुर्गतिहारिणी
भैरवीभैरवाक्षीचलक्ष्मीदेवीजनप्रिया १०
एतानिबहुधोक्तानिनामानिचसुरेश्वरि
येपठंतिनरश्रेष्ठास्तेयांतिशिवसन्निधौ ११
अनिरुद्धकृतंस्तोत्रंयेजपंतिमनीषिणः
मुच्यंतेकष्टबंधात्तेसत्यंसत्यंवरानने १२
तीर्थानांपरमंतीर्थंकोटरानिर्मितंभुवि
दर्शनादेवनश्यंतिपापानांराशयस्तथा १३

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायांउत्तर
खंडेकोटरातीर्थनामैकोनषष्ट्यधिकशततमोऽध्यायः १५९

## षष्ट्य्धिकशततमोऽध्यायः

महादेवउवाच
अस्मात्तीर्थात्परंतीर्थंतीर्थराजेतिविश्रुतम्
सप्तनद्योवहंत्यत्रचंदनोदकमिश्रितम् १
अन्यतीर्थाच्छतगुणंस्नानंचात्रविशिष्यते
देवानांप्रवरोदेवोयत्रास्तेवामनःस्वयम् २
द्वादश्यांमाघमासस्यदद्याद्यस्तिलधेनुकम्
विमुक्तःसर्वपापेभ्यःकुलानांतारयेच्छतम् ३
पानीयमप्यत्रतिलैर्विमिश्रंदद्यात्पितृभ्यःप्रयतोमनुष्यः
श्राद्धंकृतंतेनसमाःसहस्रंरहस्यमेतत्पितरोवदंति ४
तीर्थेऽस्मिन्भोजयेद्योवैब्राह्मणान्गुडपायसैः
एकस्मिन्भोजितेविप्रेसहस्रंभोजितंभवेत् ५
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायांउत्तर
खंडेवामनतीर्थनामषष्ट्यधिकशततमोऽध्यायः १६०

## एकषष्ट्य्धिकशततमोऽध्यायः

महादेवउवाच
सोमतीर्थंततोगच्छेद्गुप्तंसाभ्रमतीतटे
पातालात्तत्रनिर्गत्यकालाग्निरभवद्भवः १
सोमतीर्थेनरःस्नात्वादृष्ट्वासोमेश्वरंशिवम्
सोमपानफलंसाक्षाद्भवतीतिनसंशयः २
रूपवान्सुभगोभोगीसर्वशास्त्रविशारदः
नरोभवतिलोकेऽस्मिन्परत्रचशिवंव्रजेत् ३
अत्रेतिहासंवक्ष्यामिशृणुसुंदरितत्वतः
यंश्रुत्वामुच्यतेचात्रब्रह्महत्यादिपातकात् ४
कौषीतकेनऋषिणातपस्तप्तंविशेषतः
निराहारीसवैजातःपर्णाशनरतःपरम् ५
वायुभक्षस्ततःकुर्वन्नात्मध्यानपरायणः
एवंबहुयुगंतत्रतप्तंतेनमहत्तपः ६
कदाचिद्दैवयोगेनसुप्रसन्नोमहेश्वरः

यंयंप्रार्थयसेविप्रतत्सर्वंप्रददाम्यहम् ७
कौषीतकउवाच
तवप्रसादाद्देवेशअत्रलिगंप्रजायताम्
अत्रसोमेश्वरइतिख्यातोदेवोभवेद्ध्रुवम् ८
यत्रस्नात्वाचभुक्त्वाचवांछितंफलमाप्नुयात्
अत्रस्थानेविशेषेणरुद्रजाप्यादिकंयदि ९
कारयंतिनरश्रेष्ठाधर्मानर्थाल्लँभंतिते
अपुत्रोलभतेपुत्रंनिर्धनोलभतेधनम् १०
राज्यकामीतुतद्राज्यंलभतेनात्रसंशयः
यदिचेत्त्वंप्रसन्नोऽसितत्सर्वं देहिमेप्रभो ११
ईश्वरउवाच
तदाचैवसुरेशेनसर्वंदत्तंद्विजन्मने
तदाप्रभृतितत्तीर्थंसोमलिगेतिविश्रुतम् १२
चंदनैर्वाबिल्वपत्रैर्येऽचयंतिसदाशिवम्
लभंतेमानुषेदेहेसौख्यंपुत्रादिसंभवम् १३
सोमवारेतथाप्राप्तेयोगच्छतिहरालयम्
वाछितंलभतेनित्यंसोमलिगप्रसादतः १४
अत्रगत्वातुयोदेवियद्ददातिफलादिकम्
ययाकामनयाचैवतंतंप्राप्नोतिनिश्चितम् १५
श्वेतैर्वाकरवीरैश्चपारिजातैस्तथापुनः
येऽचयंतिचतंदेवंश्रीमहेशंपिनाकिनम् १६
तेलभंतेसुरश्रेष्ठेशैवंपदमनुत्तमम् १७
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायांउत्तर
खंडेसोमतीर्थवर्णनंनामैकषष्ट्यधिकशततमोऽध्यायः १६१

## द्विषष्ट्य्धिकशततमोऽध्यायः

महादेवउवाच
ततोगच्छेत्तथादेवितीर्थंकापोतिकंपुनः
यत्रसाभ्रमतीतोयंप्राचीनंसंप्रवर्त्तते १
पिंडंददातियस्तत्रपितृतर्पणपूर्वकम्

वन्यैःफलैस्तथापुष्पैःसदापर्वणिपर्वणि २
काकादिभ्यश्चश्वादिभ्योबलिसंददतेतुयः
यमस्यपंथानंसोऽपिससुखंनिस्तरेन्नरः ३
तत्रतीर्थेनरःस्नात्वावैशाख्यांगौरसर्षपैः
पूजयेद्देवमीशानंप्राचीनेश्वरमुत्तमम् ४
आत्मानंतारयेत्सोऽथपितॄनथपितामहान्
कपोतोयत्रचात्मानंदत्त्वाचातिथयेमुदा ५
स्तुतोदेवगणैःसर्वैर्विमानेनदिवंगतैः
तदाप्रभृतितत्तीर्थंकापोतमितिविश्रुतम् ६
तत्रस्नात्वानरःपीत्वाब्रह्महत्यांव्यपोहति
पार्वत्युवाच
कपोतेनकथंदत्तंशरीरंचवदप्रभो
निमित्तंकिंतथादेवनाहंवेद्मिसुरेश्वर ७
महादेवउवाच
अत्रतीर्थेतिदेवेशिवटोवैपरमोमहान्
तस्यशाखाह्यनंताश्चदृश्यंतेविपुलाभुवि ८
तत्रजीवावसंतीहपक्षिणोबहवस्तथा
कपोतेनगृहंतत्रकारितंतुसुरेश्वरि ९
तत्रतिष्ठतिपक्षीशोनित्यंविष्णुपरायणः
कुटुंबेनसमायुक्तोशाखायांवसतिध्रुवम् १०
एकस्मिन्वासरेदेविद्वादश्यांविष्णुवासरे
श्येनस्तत्रसमायातोह्यतिथित्वेनभामिनि ११
कपोतभोदेहिमांसंतवशारीरकंमम
नोचेच्छापंप्रदास्यामिइत्युक्तंनगनंदिनि १२
अद्यवैवासरेविष्णोःक्षुधार्तोऽहसमागतः
तस्माद्देयंहिमांसंतत्क्षुधार्तायममप्रभो १३
श्येनोक्तंतत्तुवैश्रुत्वाकपोतोवैष्णवोमहान्
तेनदत्तंतदादेविशरीरंनात्रसंशयः १४
तेनदानप्रभावेनतीर्थंजातंसुरोत्तमे
कापोतकंमहत्तीर्थंपावनानांचपावनम् १५

अत्रतीर्थेनरःस्नात्वाकृत्वावैशिवपूजनम्
ददातिचातिथिभ्यश्चमिष्टमन्नंसुरोत्तमे १६
इहलोकेसुखंभुक्त्वायातिविष्णोःसनातनम्
दत्त्वावैस्वशरीरंतुकपोतोऽथमहात्मने १७
सगतोवैष्णवंतत्रयावच्चंद्रदिवाकरौ
अतोगत्वातुभोदेविअतिथिंपूजयेत्सदा
पूजितेचातिथौतत्रसर्वंचलभतेध्रुवम् १८
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तर
खंडेकपोततीर्थंनामद्विषष्ट्यधिकशततमोऽध्यायः १६२

त्रिषष्ट्य्धिकशततमोऽध्यायः

महादेवउवाच
तीर्थानांप्रवरंतीर्थंमहापातकनाशनम्
गोतीर्थमितिविख्यातंकाश्यपह्रदसमीपतः १
यानिकानिचपापानिब्रह्महत्यासमानिच
गोतीर्थेतुततःस्नात्वानश्यंतेनात्रसंशयः २
गावःकृष्णांतनुंप्राप्यपूर्वपातकयोगतः
यत्रतीर्थेततःस्नात्वाशुक्लत्वंपुनरागताः ३
तत्रतीर्थेनरःस्नात्त्वादत्वागोभ्योगवाह्निकम्
गोमातॄणांप्रसादेनमातॄणामनृणीभवेत् ४
गोतीर्थेतुनरोगत्वास्नात्वागांतुपयस्विनीम्
ददातिविप्रमुख्येभ्यःसयातिब्रह्मणःपदम् ५
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तर
खंडेसाभ्रमतीमाहात्म्येगोतीर्थंनामत्रिषष्टयधिकशततमोऽध्यायः १६३

चतुःषष्ट्य्धिकशततमोऽध्यायः

महादेवउवाच
अत्रतीर्थंमहच्चान्यत्कश्यपाख्यंसुरेश्वरि
यत्रह्रदोमहानासीन्नगदेवविनिर्मितः १
तत्रकुशेश्वरोनामदेवोयत्रविराजते

यत्रकुंडंतथारम्यंकश्यपेनविनिर्मितम् २
तत्रस्नात्वातुभोदेविननरोनिरयंव्रजेत्
अग्निहोत्रकराविप्रानित्यंवेदपरायणाः ३
निवसंतिमहदेविकाश्यपायांबहुश्रुताः
यथाकाशीतथाचेयंनगरीऋषिनिर्मिता ४
काश्यपेनयतश्चात्रतप्तंबहुतरंतपः
गंगावैतपसायेनआनीतेशजटोद्भवा ५
सागंगाकाश्यपीदेविमहापातकनाशिनी
यस्यादर्शनमात्रेणमुच्यंतेदुष्टकिल्बिषात् ६
गोदानंचप्रशंसंतिरथदानंतथैवच
श्राद्धंकृत्वातुतत्रैवदानंदेयंप्रयत्नतः ७
कलौयुगेतथाघोरेमहापातकनाशनम्
कश्यपाख्यंसमंतीर्थंनभूतंनभविष्यति ८
यत्रवैदेवताःसर्वाऋषयोवीतकल्मषाः
नित्यंतिष्ठंतिदेवेशितीर्थराजप्रसादतः ९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेसाभ्रमती माहात्म्येकश्यपह्रदमाहात्म्यंनामचतुःषष्ट्यधिकशततमोऽध्यायः १६४

## पंचपष्ट्यधिकशततमोऽध्यायः

महादेवउवाच
भूतालयंततोगच्छेत्तीर्थंपापहरंपदम्
भूतालयोवटोयत्रयत्रप्राचीतुचंदना १
भूतालयेनरःस्नात्वाकृष्णाष्टम्यामुपोषितः
यस्तुकृष्णतिलान्दद्यान्नसप्रेतोऽभिजायते २
पितृनुद्दिश्ययोदद्यादुदकुंभंतिलैःसह
पूर्वजान्प्रेतभावात्समोचयेन्नात्रसंशयः ३
यस्यनाम्नानरःस्नातिप्रेतत्वात्सविमुच्यते
चतुर्दश्यामथाष्टम्यांप्रभातेविमलोदके ४
तीर्थेभूतालयेस्नात्वादृष्ट्वाभूतालयंवटम्
भूतेश्वरप्रसादेनभूतेभ्योनलभेद्भयम् ५

इति श्रीभूतेश्वरतीर्थम्
अ्रतस्तीर्थात्परंतीर्थंघटेश्वरमितिस्मृतम्
यत्रस्नात्वातुतंदृष्ट्वामुक्तिभागीभवेद्ध्रुवम् ६
यत्रसाभ्रमतीतीर्थंघटोवैपरमोमहान्
दृष्ट्वाचैवमहादेवंमुच्यतेनात्रसंशयः ७
तत्रगत्वाविशेषेणप्लक्षपूजांकरोतियः
मनसाभीप्सितान्कामाँल्लभतेमानवोभुवि ८
इतिघटेश्वरतीर्थम्
ततोगच्छेन्नरोभक्त्यावैद्यनाथेतिविश्रुतम्
तत्रस्नात्वानरस्तीर्थेशिवपूजनतत्परः ९
पितॄन्संतर्प्यविधिनासर्वयज्ञफलंलभेत्
विजयोदेवसंभूतःसर्वपापक्षयंकरः
यंदृष्ट्वाविविधान्कामान्प्राप्नुयुस्तेनराःसदा १०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
विजयीतीर्थमाहात्म्यंनामपंचपष्ट्यधिकशततमोऽध्यायः १६५

षट्षष्ट्यधिकशततमोऽध्यायः

महादेवउवाच
वैद्यनाथात्परंतीर्थंसर्वसिद्धिप्रदायकम्
तीर्थानामुत्तमंतीर्थंदेवतीर्थमनुश्रुतम् १
विभीषणाद्राक्षसेंद्राद्गृहीत्वाकरमोजसा
प्रारब्धोधर्मपुत्रेणराजसूयोमहाक्रतुः २
दिग्जयेदक्षिणेजातेनकुलेनहिपांडुना
साभ्रमत्यास्तटेदेविपांडुरार्येतिविश्रुता ३
स्थापितापरयाभक्त्याभुक्तिमुक्तिप्रदायिनी
स्नातःसाभ्रमतीतोयेपांडुरार्यांनमस्यच ४
अ्रणिमाद्यासिद्धयोऽष्टौतथामेधांमहीयसीम्
नरःप्राप्नोतिवैनूनंनात्रकार्याविचारणा ५
पांडुरार्यांनमस्कृत्यशुद्धभावेनमानवः
संवत्सरकृतापूजादातव्यातत्त्वबुद्धिभिः ६

तत्रतीर्थेतनुंत्यक्त्वापांडुरार्यासमीपतः
कैलासशिखरंप्राप्यचंडेश्वरगणोभवेत् ७
पुराहनूमतातत्रतपस्तप्तंसुदुष्करम्
समुद्रप्लवनेशक्तिर्जातातीर्थप्रभावतः ८
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहिता
यामुत्तरखंडेपांडुरार्यातीर्थंनामषट्षष्ट्यधिकशततमोऽध्यायः १६६

सप्तषष्ट्य्धिकशततमोऽध्यायः

अत्रतीर्थात्परंतीर्थंचंडेशइतिविश्रुतम्
यत्रचंडेश्वरोदेवोनित्यंतिष्ठतिभूतिदः १
यंदृष्ट्वामुच्यतेपापादज्ञानादथवाकृतात्
सर्वाभिर्देवताभिश्चमिलित्वानगरंकृतम्
चंडेशइतिविख्यातंनाम्नाचैवमहेश्वरि २
इति चंडेशतीर्थम्
अत्रतीर्थात्परंतीर्थंगाणपत्यंततोभुवि
साभ्रमत्यांसमीपेतुविख्यातंदेविनिर्मितम् ३
तत्रस्नात्वानरोदेविमुच्यतेनात्रसंशयः
मन्येसाभ्रमतीतीरेजनानांहितकाम्यया ४
पृथिव्यांयानितीर्थानिसागरांतानियानिच
तानिसर्वाणिसंत्यज्यतीर्थेवैपरमाद्भुते ५
श्राद्धंकरोतियस्तत्ररुद्रभक्त्याजितेंद्रियः
फलंप्राप्नोतिशुद्धात्मासर्वयज्ञसमुद्भवम् ६
पितॄनुदिश्ययत्किंचिद्गणतीर्थेप्रदीयते
तत्सर्वंजायतेह्निप्रंगणनाथप्रसादतः ७
तस्मिंस्तीर्थेनरःस्नात्वावृषंविप्रायदापयेत्
सर्वलोकानतिक्रम्यसगच्छेत्परमांगतिम् ८
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
गणतीर्थंनामसप्तषष्ट्यधिकशततमोऽध्यायः १६७

# अष्ट षष्ट्यधिकशततमोऽध्यायः

महादेवउवाच
ततोगच्छेन्महादेविवार्त्रघ्न्यागिरिकन्यया
शक्रश्चैवतयासाध्व्यासंगमंयत्रलब्धवान् १
तत्रस्नानंप्रकुर्वंतिनरानियतमानसाः
दशानामश्वमेधानांयत्फलंस्नानकृल्लभेत् २
तत्रयःकुरुतेश्राद्धंपिडान्वैतिलचूर्णजान्
पुनातिपुरुषोवंशान्सप्तसप्तपरावरान् ३
संपूज्यविधिवत्स्नात्वासंगमेगणनायकम्
नविघ्नैरभिभूयेतलक्ष्म्यानैवविहीयते ४
पार्वत्युवाच
कस्मिन्कार्यसमारंभेसमायातःपुरंदरः
स्वर्गलोकादिमंलोकमेतदाख्यातुमर्हसि ५
वार्त्रघ्नीचनदीकेननिरुक्तेननिगद्यते
पुरंदरपुरंदेवब्रह्मघोषनिनादितम्
संभावयतियोऽजस्त्रंममतत्संगमंवद ६
महादेवउवाच
अस्मिंश्चैवतुभूर्लोकेप्रश्नोऽयसमभूत्पुरा
युधिष्ठिरेतिविख्यातोराजावैधार्मिकोमहान् ७
पृष्टवान्सतुभीष्मायधर्मिणेज्ञानरूपिणे
तेनोक्तंयत्तुतद्देविप्रवक्ष्यामितवाग्रतः ८
दशवर्षसहस्राणिदशवर्षशतानिच
वृत्रवासवयोर्युद्धमभवल्लोमहर्षणम् ९
ततःपराजितःशक्रःकृत्वावृत्रेणसंविधम्
अद्रोहेसरणंत्यक्त्वाजगामशरणंमम १०
वार्त्रघ्न्यासंगमेपुण्येतोषयामासशंकरम्
अथांतरिक्षेऽहदेविदर्शनंदत्तवांस्तदा ११
ममगात्रात्तुयद्भस्मपतितंकाश्यपीतटे
भस्मगात्रेतितत्पुण्यंलिगंदेविविनिर्मितम् १२
भूतेश्वरंभस्मगात्रंब्रह्मणासंप्रतिष्ठितम्

तस्यवैदर्शनादेवब्रह्महत्यालयंव्रजेत् १३
मुच्यतेसर्वपापेभ्यःश्राद्धंकृत्वायुगादिषु
तदहंसुप्रसन्नोऽभूदिन्द्रायसुमहात्मने १४
यद्यत्त्वंवांछसेदेवतत्सर्वंहिददामिते
अनेनवज्रयोगेनशीघ्रंवृत्रंहनिष्यसि १५
शक्रउवाच
भगवंस्त्वत्प्रसादेनदितिजंचदुरासदम्
वज्रेणनिहनिष्यामिपश्यतस्तेसुरोत्तम १६
एवमुक्त्वातदाइंद्रोगतवांश्चासुरंप्रति
तदादुंदुभयोनेदुर्देवसैन्येविशेषतः १७
मृदंगडिंडिमाश्चैवभेरीतूर्याण्यनेकशः
असुराणांचसर्वेषांवृत्तिलोभोमहानभूत १८
बलवान्मघवाचैवक्षणेनसमजायत्
तमाविष्टंततोज्ञात्वाऋषयःपन्नगास्तथा १९
स्तुवंतिशक्रमीशानंस्तुत्याजयजयेतिच
गच्छतस्तस्यशक्रस्ययुद्धकामस्यसन्निधौ
ऋषिभिःस्तूयमानस्यरूपमासीत्सुदुर्भरम् २०
महादेवउवाच
वृत्रस्यसहसादेवितदासंग्राममूर्द्धनि
अभवन्यानिलिगानिशरीरेतानिमेशृणु २१
ज्वलतास्योभवद्धोरोवैवर्ण्यमभवत्परम्
गात्रकंपश्चसुमहान्श्वासःसोष्माव्यजायत् २२
रोमहर्षश्चतीव्रोऽभूच्छ्वासश्चैवमहानभूत्
निष्पपातमहाघोराउल्काःपार्श्वंप्रपेदिरे २३
गृध्रावटाःश्येनकंकावचोमुंचन्सुदारुणाः
वृत्रस्योपरितेसर्वेचक्रवत्परिबभ्रमुः २४
ततःसगजमास्थायइंद्रस्तत्रसमागतः
वज्रोद्यतकरस्तत्रशक्रस्तं दैत्यमासदत् २५
अमानुषमथोनादंसमुमोचसुरेश्वरः
वृत्रासुरस्ययततःशक्रोवज्रमपातयत् २६

सवज्रःसुमहातेजाःकालाग्निसदृशोमहान्
समुद्रस्यतटेवृत्रंशक्रोदैत्यमपातयत् २७
ततोनादःसमभवत्पुनरेवसमंततः
वृत्रंविनिहतंदृष्ट्वासर्वदेवभयंकरम् २८
पुष्पवृष्टिस्तुमहतीइंद्रमूर्ध्निपपातह
वृत्रंहत्वासभगवान्दानवेशंभयंकरम् २९
स्तूयमानोऽमरैःसार्द्धंदेवदानींतमाविशत्
अथवृत्रशरीरात्तुनिर्गतंतेजउत्तमम् ३०
ब्रह्महत्यामहाघोरारौद्रलोकभयंकरी
करालवदनासाचविकृताकृष्णपिंगला ३१
कपालमालिनीचैवसुकृशानगनंदिनि
रुधिराक्ताचपापिष्ठामीनगंधातिभीषणा ३२
सानिष्क्रम्यमहादेवितादृग्रूपाभयावहा
इंद्रमन्वेषयामासतदावैसुरसत्तमे ३३
निर्धावतीततःसातुदृष्ट्वाशक्रंमहौजसम्
कंठेजग्राहदेवेंद्रंसुलग्नासाभवत्तदा ३४
सचतस्मिन्समुद्भ्रांतोब्रह्महत्याकृतेभये
निलिल्यबिसमध्येऽसौस्थितोवर्षगणान्बहून् ३५
तयागृहीतोभोदेविनिश्चेष्टःसमपद्यत
तस्याव्यपोहनेशक्रःप्रयत्नंचचकारह ३६
नशक्तोऽभून्महादेविब्रह्महत्यांव्यपोहितुम्
तयागृहीतमात्रस्तुदेवेंद्रोनिष्ठरूपधृक् ३७
पितामहमुपागम्यशिरसाप्रत्यपूजयत्
ज्ञात्वागृहीतंशक्रंतुद्विजप्रवरहत्यया ३८
ब्रह्मासंचितयामासतदावैसुरसत्तमे
साचिंत्यमानाब्रह्माणमुपगम्याब्रवीद्वचः ३९
प्राप्तस्मिभगवन्देवत्वत्सकाशंहिमानद
यत्कर्त्तव्यंमयादेवतद्भवान्वक्तुमर्हति ४०
तामुवाचमहाभागेब्रह्महत्यांपितामहः
स्वरेणमधुरेणाथसंक्षेपेणयथातथम् ४१

मुच्यतांदेवराजोऽयमत्प्रियंकुरुभामिनि
ब्रूहिकिंतेकरोम्यद्यकामंत्वंकिमिहेच्छसि ४२
हत्योवाच
शक्रादपगमिष्यामिवचनात्तेनरोत्तम
देवदेवनमस्तेस्तुनिवासंचददस्वमे ४३
महादेवउवाच
तथेतितांप्रतिज्ञायहत्यांचापिपितामहः
उपायमथशक्रस्यब्रह्महत्यापनोदने ४४
ततोवह्निंसमाहूयब्रह्मावचनमब्रवीत्
शक्रहत्याचतुर्थांशंजातवेदोगृहाणभो ४५
अग्निरुवाच
ममभोक्षस्यकोहेतुर्ब्रह्महत्याकृतेप्रभो
एतदिच्छामिविज्ञातुंतत्त्वतोलोकपूजित ४६
ब्रह्मोवाच
यस्त्वांज्वलंतमासाद्यनहोष्यतिनरःक्वचित्
बीजौषधितिलानग्रेफलमूलसमित्कुशान् ४७
तदैवत्यक्ष्यतित्वांचतत्रैवचनिवत्स्यति
ब्रह्महत्याहव्यवाहव्येतुतेमनसोज्वरः ४८
ततःसपरिजग्राहतद्वचोहव्यकव्यभुक्
पितामहश्चभगवान्तथातदलभत्प्रियम् ४९
ततोवृक्षौषधितृणान्याहूयसपितामहः
इममर्थंमहाभागेवक्तुंसमुपचक्रमे ५०
ततोवृक्षौषधितृणैस्तथैवोक्तंयथातथम्
व्यथितान्यग्निवद्देविब्रह्माणंवाक्यमब्रुवन् ५१
अस्माकंब्रह्महत्यायाःकथयंतःपितामह
स्वभावनिहितातस्मान्नपुनर्हंतुमर्हसि ५२
वयमग्निंतथाशीतंवर्षंचपवनेरितम्
सहामःसततंदेवतथाछेदनभेदनम् ५३
ब्रह्मोवाच
अकारणंनरोयस्तुयुष्मच्छेदनभेदनम्

करिष्यतिमहामोहात्तमेषानुप्रयास्यति ५४
महादेवउवाच
ततोमहौषधितृणैरोमित्युक्तंमहात्मभिः
ब्रह्माणमपिसंपूज्यजग्मुश्चाथयथागतम् ५५
आहूयाप्सरसोदेवस्ततोलोकपितामहः
वाचामधुरयाप्राहसांत्वयन्निवसत्तमे ५६
इयंवृत्रादनुप्राप्ताब्रह्महत्यावराङ्गनाः
चतुर्थमस्याभागंचमयोक्तंसंप्रतीच्छथ ५७
अप्सराऊचुः
ग्रहणेकृतबुद्धीनांदेवेशतवसासनात्
संमोक्षसमयोऽस्माकंचिंतनीयःपितामह ५८
पितामहउवाच
रजस्वलासुनारीषुयोवैमैथुनमाचरेत्
तमेषायास्यतिक्षिप्रंव्येतुवोमनसोज्वरः ५९
महादेवउवाच
तथेतिहृष्टमनसःप्रत्युक्ताह्यप्सरोगणाः
स्वानिस्थानानिसंप्राप्यरेमिरेशैलजेतदा ६०
ततश्चलोककृद्देवःपुनरेवपितामहः
आपःसंचिंतयामासततस्ताश्चसमागमन् ६१
ताश्चसर्वाःसमागम्यब्रह्माणममितौजसम्
इदमूचुर्वचोदेविप्रणिपत्यपितामहम् ६२
इमाःस्मदेवसंप्राप्तास्त्वत्सकाशमरिंदम
शासनात्तवदेवेशसमाज्ञापयतत्प्रभो ६३
ब्रह्मोवाच
इयंवृत्रादनुप्राप्तापुरुहूतंभयानका
ब्रह्महत्याचतुर्थांशंयूयमस्याःप्रतीच्छथ ६४
आपऊचुः
एवंभवतुलोकेशयत्त्वंवदसिनःप्रभोः
मोक्षस्यसमयंनस्त्वंसंचिंतयितुमर्हसि ६५
त्वंहिदेवेंद्रसर्वस्यजगतःपरमागतिः

कोऽन्येभ्योहिप्रसादोऽपियःकृच्छ्रान्नःसमुद्धरेत् ६६
ब्रह्मोवाच
अल्पमेवमतिंकृत्वायोनरोबुद्धिमोहितः ६७
श्लेष्ममूत्रपुरीषाणियुष्मासुप्रतिमोक्षति
तमेवयास्यतिक्षिप्रंतत्रैवचनिवत्स्यति
ततोवैभवितामोक्षइतिसत्यंब्रवीमिवः ६८
महादेवउवाच
ततोविमुच्यदेवेंद्रंब्रह्महत्यासुरेश्वरि
गतातिहृष्टोदेवेशोह्यभवद्देवशासनात् ६९
एवंशक्रेणसंप्राप्ताब्रह्महत्यापुरायुगे
अस्मिंस्तीर्थेतपस्तप्त्वाशुद्धात्मात्रिदिवंययौ ७०
अश्वमेधंततःकृत्वाविपाप्मासमपद्यत
इतिसाभ्रमतीतीर्थेवार्त्रघ्नीयंनगात्मजे ७१

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
वार्त्रघ्नीमाहात्म्यंनामाष्टषष्ट्यधिकशततमोऽध्यायः १६८

## एकोनसप्तत्यधिकशततमोऽध्यायः

महेशउवाच
ततःपरंदेवनदीवार्त्रघ्नीसंगमात्किल
प्रविष्टाभद्रयासार्द्धंसागरंवरुणालयम् १
समुद्रोऽपितयातावदागम्यप्रियकाम्यया
साभ्रमत्यानुरागेणकृतवान्प्रियमेलनम् २
भद्रावापिसुभद्रायावयस्यासानदीपुरा
सहायमकरोन्मार्गेसाक्षात्श्रीरूपधारिणी ३
तयोस्तुसंगमःपुण्यःसागरस्योत्तरेतटे
तत्रतीर्थेनरःस्नात्वामृष्टंवारिददातियः ४
नमस्कृत्यवराहायवारुणंस्थानमाप्नुयात्
प्रविश्यभगवान्विष्णुस्तेनमार्गेणसागरम् ५
जित्वावैदानवान्सर्वान्देवानांपरिपंथिनः
देवोयज्ञवराहश्चसंक्षोभ्यमकरालयम्

क्रीडित्वासुचिरंकालंकर्दमालेननिर्ययौ ६
पार्वत्युवाच
देवयज्ञवराहस्यसाभ्रमत्यांप्रवेशनम्
निर्गमंकर्दमालेनब्रूहित्वंममविस्तरात् ७
महादेवउवाच
अंतर्भूक्रीडितमिदंवराहस्यहरेःपुरा
तत्सर्वंकथयिष्यामिशृणुत्वंनगनंदिनि ८
योऽयवैभगवान्साक्षाद्भूतवान्सूकरंवपुः
देवानांकार्यसिद्ध्यर्थंरूपंधृत्वासुरेश्वरः ९
धृत्वावैपृथिवींदेवींनिर्गतःकर्दमालयम्
तत्रतीर्थंमहज्जातंवराहाख्यंतुसुंदरि १०
तत्रस्नातिनरोयस्तुमुक्तिभाक्सनसंशयः
अत्रश्राद्धंप्रकुर्वीतपितॄणांमुक्तिहेतवे
विमुक्तस्तैःसमंलोकंप्रयातिसुखदंमहत् ११
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तर
खंडेवाराहतीर्थनामैकोनसप्तत्यधिकशततमोऽध्यायः १६९

सप्तत्यधिकशततमोऽध्यायः-

महादेवउवाच
अत्रतीर्थात्परंतीर्थंसङ्गमाख्यमितिश्रुतम्
अत्रसाभ्रमतीगंगामिलितासागरेणतु १
तत्रस्नानंचदानंचकर्तव्यंविधिपूर्वकम्
यत्रस्नात्वातुमुच्यंतेमहापातकिनोऽपिये २
तत्रश्राद्धंप्रकर्तव्यंस्वानांचहितमिच्छता
यत्रवैतुकृतेश्राद्धेपितृलोकेवसेद्ध्रुवम् ३
यत्रवैसागरोदेवोनित्यंमिलतिगंगया
ब्रह्महातत्रमुच्येतकिमन्यैरितरैरघैः ४
यत्रतीर्थंनजानंतिलोकावैमंदबुद्धयः
तदावैममनाम्नाचकर्तव्यंतीर्थमुत्तमम् ५

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तर
खंडेसङ्गमतीर्थनामसप्तत्यधिकशततमोऽध्यायः १७०

एकसप्तत्यधिक शततमोऽध्यायः

महादेवउवाच
संगमस्यसमीपेतुसत्तीर्थंलोकविश्रुतम्
आदित्याख्यंपरंतस्मान्नभूतंनभविष्यति १
यस्यवैदर्शनंकार्यंस्नानंवैपुष्करेणतु
पूजनंचार्कपुष्पेणकरवीरैस्तथापुनः २
तत्रश्राद्धंचदानंचकुर्युर्वैमानवाःसदा
इदमादित्यकंतीर्थंपवित्रंपापनाशनम् ३
दर्शनात्पुण्यदतीर्थंमहापातकिनामपि ४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तर
खंडेसत्तीर्थमाहात्म्यंनामैकसप्तत्यधिकशततमोऽध्यायः १७१

द्विसप्तत्यधिक शततमोऽध्यायः

महादेवउवाच
तस्मात्तीर्थात्परंतीर्थंनीलकंठेतिविश्रुतम्
तस्यवैदर्शनंकार्यंमुक्तिंचैवेच्छतासदा १
बिल्वपत्रैस्तथाधूपैर्दीपैर्वाथसुरेश्वरि
वांछितंलभतेमर्त्योनीलकंठस्यदर्शनात् २
उपवासपरोदेविनिर्जनेसौस्थितःसदा
यद्यद्वांच्छंतियेलोकास्तेषांतत्तद्ददातिच ३
कलौसातुमहादेविविख्याताकाश्यपीतिवै ४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तर
खंडेनीलकंठमाहात्म्यंनामद्विसप्तत्यधिकशततमोऽध्यायः १७२

त्रिसप्तत्यधिक शततमोऽध्यायः

महादेवउवाच
दुर्गयासंगतायत्रदेविसाभ्रमतीनदी

संगमः सागरेणाथस्नानंतत्रसमाचरेत् १
वीतदोषाभविष्यंतिकलौवैनात्रसंशयः
तत्रश्राद्धंप्रकर्त्तव्यंदुर्गयासंगमेतथा २
तत्रगत्वाविशेषेणब्राह्मणानांचभोजनम्
दानंगोमहिषीणांचकर्तव्यंविधिपूर्वकम् ३
इयंधन्याधन्यतमापवित्रापापनाशिनी
यांदृष्ट्वाचापिभोदेविमुच्यतेपातकैर्नरः ४
यथागंगातथाचेयंज्ञेयासाभ्रमतीनदी
कलौदेविविशेषेणबहुकालफलप्रदा ५
यदिचेच्छतशोजिह्वामुखेवैमामकेसति
तस्याअपिनशक्नोमिगुणान्वक्तुंकदाचन ६

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेसाभ्रमतीमाहात्म्यंनामत्रिसप्तत्यधिकशततमोऽध्यायः १७३

## चतुःसप्तत्यधिक शततमोऽध्यायः

महादेवउवाच
शृणुदेविप्रवक्ष्यामिव्रतं त्रैलोक्यदुर्लभम्
यंश्रुत्वामुच्यतेलोकोब्रह्महत्यादिपातकात् १
उत्पतिःस्वप्रकाशस्यभक्तानांसुखहेतवे
तिथिर्वापिसमासोवैसंजातःपुण्यकारकः २
यस्यनामगृणन्देविमुक्तिंलभतिशाश्वतीम्
सएवपरमात्माचकारणानांचकारणम् ३
विश्वात्माविश्वरूपीचसर्वेषांभगवान्प्रभुः
द्वादशार्काधृतायेननृसिंहेनमहात्मना
सएवप्रकटीजातोभक्तानांशमभीप्सया ४
पार्वत्युवाच
अवताराह्यसंख्याताःकथिताःसुरसत्तम
नृसिंहाख्यंपरंधामवदविश्वेश्वरप्रभो
येनविज्ञानमात्रेणसुखलोकमवाप्नुयात् ५
महादेवउवाच

हिरगयकशिपुंहत्वादेवदेवंजगद्गुरुम्
सुखासीनंतदुत्संगेस्थितोवचनमब्रवीत् ६
प्रह्लादोज्ञानिनांश्रेष्ठःपितृहंतारमुत्तमम् ७
प्रह्लादउवाच
नमस्तेभगवन्विष्णोनृसिंहाद्भुतरूपिणे
त्वद्भक्तोहंसुरश्रेष्ठत्वांपृच्छामिचतत्वतः ८
स्वामिंस्त्वयिममाभिन्नाभक्तिर्जाताह्यनेकधा
कथंतेऽहप्रियोजातःकारणंवदमेप्रभो ९
नृसिंहउवाच
कथयामिमहाप्राज्ञशृणुष्वैकाग्रमानसः
भक्तेर्यत्कारणंवत्सप्रियत्वस्यचयत्पुनः १०
पुराकस्यद्विजस्यापिजातस्त्वंनाप्यधीतवान्
नाम्नातुवसुदेवोहिवेश्यायामतिलंपटः ११
तस्मिन्जन्मनिनैवंचचकारसुकृतंकियत्
भुक्त्वामधुघृतंचैववेश्यासंगमलालसः १२
मद्व्रतस्यप्रभावेनभक्तिर्जातातवानघ
प्रह्लादोवाच
विस्तराद्वददेवेशकस्यपुत्रस्यकिंव्रतम् १३
वेश्यायांवर्तमानेनकथंचिद्धिकृतंमया
ममोपरिकृपांकृत्वासर्वंकथयसांप्रतम् १४
नृसिंहउवाच
सृष्टयर्थंतुपुराब्रह्माचक्रेह्येतदनुत्तमम्
मद्व्रतस्यप्रभावेननिर्मितंसचराचरम् १५
ईश्वरेणव्रतंचीर्णंवधार्थंत्रिपुरस्यच
व्रतस्यास्यप्रभावेनत्रिपुरस्तुनिपातितः १६
अन्यैश्चबहुभिर्देवैर्ऋषिभिश्चपुरातनैः
राजभिश्चमहाप्राज्ञैर्विहितंव्रतमुत्तमम् १७
व्रतस्यास्यप्रभावेनसर्वेसिद्धिमवाप्नुयुः
ममतेवैप्रियाजातादिविभोगाननेकशः १८
भुक्त्वामयिविलीनास्तुप्रह्लादत्वंविशस्वमाम्

कार्यार्थमवतारस्तेमच्छरीरत्पृथग्यतः १९
नतेषांपुनरावृत्तिर्महाकल्पशतैरपि
दरिद्रोलभतेलक्ष्मींधनदस्यचयादृशी २०
ततःकामीलभेत्कामंराज्यार्थीराज्यमुत्तमम्
ग्रायुष्कामोलभेदायुर्यादृशंचशिवस्यहि २१
ग्रवैधव्यकरंस्त्रीणांपुत्रदंभाग्यदंतथा
धनधान्यकरंचैवतथाशोकविनाशनम् २२
स्त्रियोवापुरुषावापिकुर्वंतिव्रतमुत्तमम्
तेभ्योददाम्यहंसौख्यंभुक्तिमुक्तिफलंतथा २३
बहुनोक्तेनकिंवत्सव्रतस्यास्यफलस्यहि
मद्व्रतस्यफलंवक्तुंनाहंशक्तोनशंकरः २४
प्रह्लादउवाच
भगवंस्त्वत्प्रसादेनश्रुतंव्रतमनुत्तमम्
व्रतस्यास्यफलंश्रोतुंत्वयिमेभक्तिकारणम् २५
ग्रधुनाश्रोतुमिच्छामिव्रतस्यास्यविधिंपरम्
कस्मिन्मासेभवेदेवकस्मिंश्चिद्वासरेप्रभो २६
एतद्विस्तरतोदेववक्तुमर्हसिसांप्रतम्
विधिनायेनवैस्वामिन्समग्रफलभाग्भवेत् २७
नृसिंहउवाच
प्रह्लादवत्सभद्रंतेशृणुष्वैकमनाव्रतम्
वैशाखेसितपक्षेतुचतुर्दश्यांसमाचरेत् २८
ममाविर्भावसंयुक्तंममसंतुष्टिकारणम्
शृणुपुत्रममोत्पत्तिंभक्तानांसुखहेतवे २९
पश्चिमायांदिशायांचसंजातंकारणांतरात्
मौलिस्तानमिदंक्षेत्रंपवित्रंपापनाशनम् ३०
तस्मिन्क्षेत्रेतुविख्यातोब्राह्मणोवेदपारगः
हारीतइतिनाम्नाचज्ञानध्यानपरायणः ३१
तस्यस्त्रीतुमहापुरायासतीरूपासदाप्रभो
लीलावतीतुनाम्नाचभर्तुर्वशपरासदा ३२
ताभ्यांतपोमहत्तप्तंकालंबहुतरंसुत

एकविंशयुगाश्चैवयातास्तत्रनसंशयः
तस्मिन्क्षेत्रेतुवैताभ्यांप्रत्यक्षोवाभवत्तदा ३३
नृसिंहउवाच
यंयंवांछयसेब्रह्मंस्तंददामिनसंशयः
ताभ्यामुक्तंतदातस्मैदीयतेचेद्वरोमम ३४
त्वादृशोममपुत्रस्तुह्यधुनैवभवत्विति
मयोक्तंतुतदावत्सपुत्रोऽहतेनसंशयः ३५
विश्वकर्माह्यहंसाक्षात्परमात्मापरात्परः
उदरेऽहनवत्स्यामियतोऽहवैसनातनः ३६
हारीतेनतदाचोक्तंभवत्वेवंनसंशयः
तदाप्रभृतिवैक्षेत्रेस्थितोऽहभक्तकारणात् ३७
अत्रागत्यप्रकुर्वीतदर्शनंभक्तसत्तमः
तस्याहंसकलांबाधांनाशयामिनिरंतरम् ३८
एतस्मात्कारणाच्चैवव्रतंवैविधिपूर्वकम्
येकुर्वंतिनरश्रेष्ठानतेषांविद्यतेभयम् ३९
बालरूपमयंध्यात्वाताभ्यांसहविशेषतः
पूजनंकुरुतेरात्रौसवैनारायणोभवेत् ४०
चतुर्भुजंमहादंष्ट्रंकालरूपंदुरासदम्
सूर्यकोटिप्रतीकाशंयमकोटिदुरासदम्
सिंहवक्त्रमुखंयस्यनरवक्त्रांगसंयुतम् ४१
श्रीनृसिंहंदिव्यसिंहंकालरूपंभजेत्सदा
एवंज्ञात्वाविशेषेणयःस्थानंमामकंव्रजेत् ४२
व्रतंपवित्रंपरमंश्रीकदंबप्रदंमहत्
अंतेमुक्तिप्रदंचैवभक्तानांचनसंशयः ४३
येनवैक्रियमाणेनसहस्रद्वादशीफलम्
स्वातीनक्षत्रसंयोगेशनिवारेतुमद्व्रतम् ४४
सिद्धियोगस्यसंयोगेवणिजेकरणेतथा
योगैःसर्वैश्चसंयोगंहत्याकोटिविनाशनम् ४५
एतदन्यतरैर्योगैमद्दिनंपापनाशनम्
विज्ञायमद्दिनंयस्तुलंघयेत्सतुपापकृत् ४६

अकर्त्तानरकंयातियावच्चंद्रदिवाकरौ
प्राप्तेममदिनेवत्सदंतधावनपूर्वकम् ४७
ममाग्रेव्रतसंकल्पंमद्भक्तोविजितेंद्रियः
अद्याहंतेविधास्यामिव्रतंनिर्विघ्नतांनय ४८
व्रतस्थेननकर्त्तव्यंदुष्टसंभाषणादिकम्
ततोमध्याह्नसमयेनद्यादौविमलेजले ४९
गृहेवादेवखातेवातडागेवाथशोभने
वैदिकेनतुमंत्रेणस्नानंकुर्याद्विचक्षणः ५०
मृत्तिकागोमयेनैवतथाधात्रीफलेनच
तिलैश्चविधिवत्स्नायात्सर्वपापौघशांतये ५१
परिधायशुभेवस्त्रेनित्यकर्मसमारभेत्
ततोगृहंविलिप्याथकुर्यादष्टदलंशुभम् ५२
कलशंतत्रसंस्थाप्यताम्रंत्रसमन्वितम्
तस्योपरिन्यसेत्पात्रंतंडुलैःपरिपूरितम् ५३
हैमींचतत्रमन्मूर्तिंस्थाप्यलक्ष्म्यासमन्विताम्
निर्मायशक्त्यास्वर्णेनस्नाप्यपंचामृतैस्ततः ५४
ततोब्राह्मणमाहूयआचार्यंनातिलोलुपम्
शास्त्रज्ञमग्रतःकृत्वाततोदेवंसमर्चयेत् ५५
मंडपंकारयेत्तत्रपुष्पस्तबकशोभितम्
ऋतुकालोद्भवैःपुष्पैःपूज्योऽहचयथाविधि ५६
उपचारैःषोडशभिर्मं त्रैर्नियमैश्चयः
ततःपौराणिकैर्मंत्रैःपूजनीयोविशेषतः ५७
चंदनंचसकर्पूरंघनकुंकुममिश्रितम्
कालोद्भवानिपुष्पाणितथातुलसीदलानिच ५८
श्रीनृसिंहाययोदद्यात्समुक्तोनात्रसंशयः
कृष्णागुरुमयंधूपंसर्वदाहरिवल्लभम् ५९
हरयेगुरवेदद्यात्सर्वकामार्थसिद्धये
महादीपःप्रकर्त्तव्योह्यज्ञानध्वांतनाशनः
महानीराजनंकुर्याद्घंटानादपुरःसरम् ६०
नैवेद्यंशर्करांचापिभक्ष्यभौज्यसमन्वितम्

ददामितेरमाकांतसर्वपापक्षयंकुरु ६१
नैवेद्यमंत्र
नृसिंहाच्युतदेवेशतवजन्मदिनेशुभे
उपवासंकरिष्यामिसर्वभोगविवर्जितः ६२
तेनप्रीतोभवस्वामिन्पापंजन्मनिराकुरु
रात्रौजागरणंकार्यंगीतवादित्रनिःस्वनैः ६३
पुराणपठनंनित्यंश्रीनृसिंकथाश्रयम्
ततःप्रभातसमयेस्नानंकृत्वाह्यनंतरम् ६४
पूर्वोक्तेनविधानेनपूजयेन्मांप्रतर्पयन्
वैष्णवंकारयेच्छ्राद्धंमदग्रेस्वस्थमानसः ६५
ततोदानानिदेयानिवक्ष्यमाणानियान्युत
पात्रेभ्यःसद्विजेभ्योहिलोकद्वयजिगीषया ६६
सहस्वर्णमयोदेवोममसंतोषकारकः
गोभूतिलहिरण्यादिप्रददातिद्विजातये ६७
शय्यासतूलिकादेयासप्तधान्यसमन्विता
अन्यानिचयथाशक्त्यादेयानिनिजशक्तितः ६८
वित्तशाठ्यंनकुर्वीतयथोक्तफलकांक्षया
ब्राह्मणान्भोजयेत्पश्चात्तेभ्योदद्यात्सुदक्षिणाम् ६९
निर्धनैरपिकर्त्तव्यंदेयंशक्त्यनुसारतः
सर्वेषामेववर्णानामधिकारोऽस्तिमद्व्रते
मद्भक्तैस्तुविशेषेणकर्त्तव्यंमत्परायणैः ७०
ततःप्रार्थनामंत्रः
मद्वंशेयेनराजातायेभविष्याश्चमानवाः
तानुद्धरस्वदेवेशदुःखदाद्भवसागरात् ७१
पातकार्णवमग्नस्यव्याधिभिश्चांबुचारिभिः
जीवैस्तुपरिभूतस्यमहादुःखगतस्यमे ७२
करावलंबनंदेहिशेषशायीजगत्पते
व्रतेनानेनदेवेशभुक्तिमुक्तिप्रदोभव ७३
एवंप्रार्थ्यततोदेवंविसृज्यचयथाविधि
उपहारादिकंसर्वंआचार्यायनिवेदयेत् ७४

दक्षिणाभिश्चसंतोष्याब्राह्मणांश्चविसर्जयेत्
ममध्यानसमायुक्तोभुंजीतसहबंधुभिः ७५
अकिंचनोपिनियतमुपोष्यतिचतुर्दशीम्
सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः ७६
यइदंशृणुयाद्भक्त्याव्रतंपापप्रणाशनम्
तस्यश्रवणमात्रेणब्रह्महत्यांव्यपोहति ७७
पवित्रंपरमंगुह्यंकीर्तयेद्यस्तुमानवः
सर्वकामनवाप्नोतिव्रतस्यास्यफलंसदा ७८
यइदंकुरुतेशक्त्याकालेमध्याह्नसंज्ञके
लीलावत्यासहऋषिंश्रीनृसिंहप्रसादतः ७९
पूजयेत्परयाभक्त्यामुक्तिंप्राप्नोतिशाश्वतीम्
तस्मिन्क्षेत्रेतुयोगत्वाश्रीनृसिंहंप्रपूजयेत् ८०
वांच्छितलभतेनित्यश्रीनृसिहप्रसादतः
श्रीनृसिंहमहद्रूपकालकोटिदुरासद ८१
भैरवशहरार्तिघ्नबालरूपनमोस्तुते
श्रीनृसिंहायरूपायबालायबालरूपिणे ८२
व्यापकायसुनंदायस्वात्मप्रकटरूपिणे
सर्वजीवात्मकायैवविश्वेशायस्वरात्मने ८३
मार्तंडमंडलस्थायदयासिंधोनमोस्तुते
चतुर्विंशस्वरूपायकालरुद्राग्निरूपिणे ८४
जगदेकस्वरूपायनृसिंहायनमोस्तुते
भालेदधारयोदेवोनृसिंहोवीरभद्रजित् ८५
द्वादशादित्यबिंबानिसुतप्तानिप्रमाणतः
तत्रसिंधुर्महापुण्यानदीरम्याविशेषतः ८६
तस्याःसमीपेनगरंवर्त्ततेऽद्यापिसुंदरि
मौलिस्तानेतिविख्यातंसर्वदादेवनिर्मितम् ८७
वसतिर्वर्त्ततेतत्रहारीतस्यमहात्मनः
लीलावतीतुतत्रैवतिष्ठतेनात्रसंशयः ८८
प्रतिशब्दोभवेत्तत्रसिंधुनद्याःसमीपतः
कलौयुगेतुसंप्राप्तेम्लेच्छावैपापचारिणः ८९

निवसंतितुतत्रैवबहवोनात्रसंशयः
नृसिंहजन्मनियथाशब्दोऽभूदद्भुतःपरः ९०
नृसिंहेतिनृसिंहेतियउच्चैर्नदतेनरः
तादृशःप्रतिशब्दोवैजायतेनगनंदिनि ९१
ब्रह्महाहेमहारीवासुरापोगुरुतल्पगः
सिंधौगत्वाविशेषेणस्नानंकुर्वंतियेजनाः ९२
मुच्यतेनात्रसंदेहःश्रीनृसिंहप्रसादतः
दशारात्रिप्रमाणेनमानवायेवसंतिहि ९३
तेज्ञेयाःपुण्यकर्माणोनासत्यंमामकंवचः
निवसंतिकलौतत्रवर्णायेद्विजपूर्वकाः ९४
म्लेच्छवत्तेऽपिविज्ञेयावेदबाह्याःसुरोत्तमैः
मांसंखादंतितेतत्रमद्यपानंपपुःसदा ९५
अतोह्यधर्मरूपास्तेपापिष्ठानात्रसंशयः
संध्याहीनायथाविप्रावेदबाह्यास्तथैवच ९६
निवसंतिपुरेतस्मिन्पश्चिमायांसुरेश्वरि
एकमेवपरंतीर्थंनृसिंहाख्यंसुविस्तरम्
यंश्रुत्वामुच्यतेपापान्नरःसद्योनसंशयः ९७
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेनृसिंहोत्पत्तिर्नामचतुःसप्तत्यधिकशततमोऽध्यायः १७४

## पञ्चसप्तत्यधिक शततमोऽध्यायः

पार्वत्युवाच
भगवन्सर्वतत्वज्ञश्रीविष्णोस्त्वत्प्रसादतः
श्रुतानानाविधाधर्मालोकनिस्तारहेतवः १
अधुनाश्रोतुमिच्छमिगीतामाहात्म्यमप्यहम्
श्रुतेनयेनदेवेशहरौभक्तिर्विवर्द्धते
तद्वदस्वाधुनादेवयद्यहंतववल्लभा २
ईश्वरउवाच
अतसीपुष्पसंकाशंखगेंद्रासनमच्युतम्
शयानंशेषशय्यायांमहाविष्णुमुपास्महे ३

कदाचिदासनेरम्येसुखासीनंमुरद्विषम्
आनंदयित्रीलोकानांलक्ष्मीःपप्रच्छसादरात् ४
श्रीरुवाच
शयालुरसिदुग्धाब्धौभगवन्केनहेतुना
उदासीनइवैश्वर्यंजगंतिस्थापयन्निव ५
ईश्वरउवाच
इतिदेव्यावचःश्रुत्वामुरभिज्ज्ञानगर्वितम्
उवाचश्लक्ष्णयावाचाविस्मयस्मेरलोचनः ६
श्रीभगवानुवाच
नाहंसुमुखिनिद्रालुर्निजंमाहेश्वरंवपुः
दृशातत्वानुवर्त्तिन्यापश्याम्यंतर्निमग्नया ७
कुशाग्रयाधियादेवियदंतर्योगिनोहृदि
पश्यंतियच्चवेदानांसारंमीमांसतेभृशम् ८
तदेवमक्षरंज्योतिरात्मरूपमनामयम्
अखंडानंदसंदोहनिष्पादिद्वैतवर्जितम् ९
यदाश्रयाजगद्वृत्तिर्यन्मयाचानुभूयते
नयेनरहितंकिंचिज्जगत्तत्वंचराचरम् १०
निर्मथ्यबहुधालोक्यवेदशास्त्रांबुधिंसुधीः
द्वैपायनोयदासाद्यगीताशास्त्रंनिसृष्टवान् ११
यदास्थायमहानंदमानंदीकृतमानसः
निद्रालुरिवदेवेशिदुग्धाब्धौप्रतिभामिवै १२
इतितस्यमुरारातेर्मितमानंदवद्वचः
साहर्षोत्फुल्ललोलाक्षीलक्ष्मीश्रुत्वाविसिस्मिरे १३
श्रीरुवाच
भवानेवहृषीकेशध्येयोऽसियमिनांसदा
तस्मात्त्वत्तःपरंयत्तच्छ्रोतुंकौतूहलंहिमे १४
चराचराणांलोकानांकर्त्ताहर्त्तास्वयंप्रभुः
यथास्थितस्ततोऽन्यत्वंयदिमांबोधयाच्युत १५
श्रीभगवानुवाच
मायामयमिदंदेविवपुर्मेनतुतात्विकम्

सृष्टिस्थित्योपसंहारक्रियाजालोपबृंहितम् १६
अतोऽन्यदात्मनोरूपं द्वैताद्वैतविवर्जितम्
भावाभावविनिर्मुक्तमाद्यंतरहितंप्रिये १७
शुद्धसंवित्प्रभालाभंपरानंदैकसुंदरम्
रूपमैश्वरमात्मैक्यगम्यंगीतासुकीर्तितम् १८
इत्याकर्ण्यवचोदेविदेवस्यामिततेजसः
शंकमानाहवाक्येषुपरस्परविरोधिषु १९
स्वयंचेत्परमानंदमवाङ्मनसगोचरम्
कथंगीताबोधयतिइतिमेच्छिंधिसंशयम् २०
ईश्वरउवाच
श्रियःश्रुत्वावचोयुक्तमितिहासपुरःसरम्
आत्मानुगामिनींदृष्टिंगीतांबोधितवान्प्रभुः २०
अहमात्मापरेशानिपरापरविभेदतः
द्विधाततःपरःसाक्षीनिर्गुणोनिष्कलःशिवः २१
अपरःपंचवक्त्रोऽहद्विधातस्यापिसंस्थितिः
शब्दार्थभेदतोवाच्योयथात्माहंमहेश्वरः २२
गीतानांवाक्यरूपेणयन्निरुच्छिद्यतेदृढः
मदीयपाशबंधोऽयसंसारविषयात्मकः २३
यदाभ्यासपराधीनौपंचवक्त्रमहेश्वरौ
इतितस्यवचःश्रुत्वागीतासारमहोदधेः २४
इदंपरविभेदेनबुध्यतेभवभीरुभिः
तमपृच्छदिदंलक्ष्मीरंगप्रत्यंगसंस्थितम् २५
माहात्म्यंसेतिहासंचसर्वंतस्यैन्यवेदयत्
श्रीभगवानुवाच
शृणुसुश्रोणिवक्ष्यामिगीतासुस्थितिमात्मनः २६
वक्त्राणिपंचजानीहिपंचाध्यायाननुक्रमात्
दशाध्यायाभुजाश्चैकउदरंद्वौपदांबुजे २७
एवमष्टादशाध्यायावाङ्मयीमूर्तिरैश्वरी
विज्ञेयाज्ञानमात्रेणमहापातकनाशिनी २८
अतोध्यायंतदर्धंवाश्लोकमर्द्धंतदर्धकम्

अभ्यस्यतिसुमेधायःसुशर्मेवसमुच्यते २९
श्रीरुवाच
सुशर्मानामकोदेवकिंजातीयःकिमात्मकः
कुतस्तस्यचवैमुक्तिःकेनाजायतहेतुना ३०
श्रीभगवानुवाच
सुशर्मानामदुर्मेधाःसीमापापात्मनामभूत्
जातोनात्मविदांवंशेविप्राणांक्रूरकर्मणाम् ३१
नध्यानंनजपोहोमोनचैवातिथिपूजनम्
केवलंविषयेष्वेवबलाढ्येनाभिवर्त्तते ३२
कृषिकर्मरतोनित्यंपर्णजीवीसुराप्रियः
मांसोपहारीसुचिरंकालमेवंनिनायसः ३३
आनेतुकामःपर्णानिपर्यटन्नृषिवाटिकाम्
ततःसतत्रदष्टोऽभूत्कालसर्पेणमूढधीः ३४
कालधर्मंसमासाद्यगत्वाचनिरयान्बहून्
पुनरागत्यमर्त्येषुबलीवर्दत्वमीयिवान् ३५
पंगुनाकेनविक्रीतःसस्वजीवनहेतवे
नयन्पृष्ठेनशरदःसप्ताष्टौकष्टतोनयत् ३६
कदाचित्पंगुनासोऽपिचिरमावर्तितोजवात्
पपाततरसाभूमौमूर्च्छांचप्रतिपेदिवान् ३७
विकलांगोविवृत्ताक्षःफेनसंततिमुद्गिरन्
नजीवतिनमृत्युंवाप्रतिपेदेस्वकर्मणा ३८
कौतुकाकृष्टलोकेऽस्मिस्तस्मिन्जनसमागमे
श्रेयसेतस्यसुकृतीकश्चित्पुण्यंवितीर्णवान् ३९
कर्माणिस्वान्यनुस्मृत्यददुरन्येचकेचन
गणिकाकापितत्रस्थालोकयात्रानुवर्तिनी ४०
अज्ञातनिजपुण्यासाकिंचिदुत्सृष्टवत्यभूत्
परेतनगरीमादौसनीतःकालकिंकरैः ४१
गणिकादत्तपुण्येनपुण्यवानितिमोचितः
पुनरागत्यभूर्लोकंकुलशीलवतांगृहे ४२
द्विजन्मनामसौजज्ञेजातिंस्वामनुसंस्मरन्

कालेमहतिजिज्ञासुःश्रेयःस्वाज्ञाननोदनम् ४३
उपेत्यगणिकांदत्तंख्यापयित्वासपृष्टवान्
आचष्टमांशुकोनित्यंपंजरस्थःपठत्यसौ ४४
तेनपूतांतरात्माहंतत्पुण्यंपर्यकल्पयम्
ताभ्यांशुकस्तुपृष्टोऽसौव्याख्यातुमुपचक्रमे ४५
आख्यायिकांपुरावृत्तांस्मृत्वाजातिंनिजामपि
शुकउवाच
पुराविद्वानहंभूत्वावैदुष्यस्मयमोहितः ४६
रागद्वेषेणविद्वत्सुगुणवत्स्वपिमत्सरी
कालेनाहंततःप्रेत्यप्राप्यलोकाञ्जुगुप्सितान् ४७
सोऽहकीरकुलेऽभूवंसद्गुरावतिनिंदकः
कालेधर्मणिदुष्कर्मापितृभ्यांचवियोजितः ४८
निदाघेऽध्वनिसंतप्तेआनीतोऋषिपुंगवैः
पातितःपंजरस्थोऽहमाश्रमेमहदाश्रये ४९
आवर्तयद्भ्योगीतानामाद्यमध्यायमादरात्
श्रुत्वाऋषिकुमारेभ्यःपाठंचाकरवंमुहुः ५०
एतस्मिन्नंतरेकश्चिद्व्यागुरिश्चौरकर्मकृत्
मामाहृत्यतदाक्रीणादितिवृत्तमुदाहृतम् ५१
श्रीभगवानुवाच
अध्यायोऽयपुराम्नातोयेनपापमनोदयम्
पूतांतरात्मायेनासौमोचितश्चद्विजोत्तमः ५२
एवमन्योन्यमाभाष्यतन्माहात्म्यंप्रशस्यच
तेजपंतोनिशंधीरामुक्तिंगेहेप्रपेदिरे ५३
तस्मादध्यायमाद्यंयःपठतेशृणुतेस्मरेत्
अभ्यसेत्तस्यनभवेद्भवांभोधिर्दुरुत्तरः ५४

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेसतीश्वर संवादेगीतामाहात्म्येपंचसप्तत्यधिकशततमोऽध्यायः १७५

## षट्सप्तत्यधिकशततमोऽध्यायः

श्रीभगवानुवाच

आदिमस्यैवमाख्यानमुदीरितमनुत्तमम्
शृणुमाहात्म्यमन्येषामध्यायानामपींदिरे १
दक्षिणस्यांदिशिश्रीमानासीदाम्नायवादिनाम्
पुरेपुरंदराह्वानेदेवशर्मेतिविश्रुतः २
अर्चितातिथिराम्नातोवेदशास्त्रविशारदः
आहर्ताक्रतुसंघानांतापसानांप्रियःसदा ३
देवान्संतर्पयामासहव्यैर्हुतवहंचिरम्
नचोपलेभेधर्मात्माशांतिमेकांतिकींततः ४
निःश्रेयसंसजिज्ञासुस्तापसाननुवासरम्
सिषेवेसत्यसंकल्पाननल्पैरेवकल्पकैः ५
एवमाचरतस्तस्यकालेमहतिगच्छति
मुक्तकर्माततःकश्चित्प्रादुरासीत्पुराभुवि ६
अनुभूतनिराकांक्षीनासाग्रन्यस्तलोचनः
शांतचेताःपरंब्रह्मध्यायन्नानंदनिर्भरः ७
पादौतस्योपसंगृह्यप्रणतेनांतरात्मना
चकारविधिवत्तस्मैविद्वानतिथिसत्क्रियाम् ८
तंचशुद्धेनभावेनपरितुष्टंतपस्विनम्
प्रणतःपरिपप्रच्छनिर्वाणस्थितिमात्मनः ९
सतस्मैकथयामासपुरेऽसौपुरनामनि
मित्रवंतमजापालमुपदेष्टारमात्मवित् १०
सचाभिवंद्यतत्पादावेत्यसौपुरमूर्जितम्
तस्योत्तरदिशोभागेददर्शविपुलंवनम् ११
मारुतांदोलितानेककुसुमामोदसुंदरम्
उन्मत्तभ्रमरोद्गीतनादापूरितदिङ्मुखम् १२
तस्मिन्वनेसरित्तीरेनिषीदंतंशिलातले
मित्रवंतंददर्शाथसानंदस्तिमितेक्षणम् १३
अपिस्वाभाविकंवैरंहित्वान्योन्यंविरोधिभिः
सत्वैरावृतमुद्यानेमंदस्यंदनभास्वति १४
शांतेषुमृगयूथेषुदशानंदमनोज्ञया
कृपानुविद्धयाभूमिंनिषिंचंतमिवामृतम् १५

उपेत्यविनयेनामुमुन्मनाःप्रीतमानसः
किंचिदानम्रशिरसातेनापिसतुसत्कृतः १६
उपतस्थेततोविद्वान्मित्रवंतमनन्यधीः
समाप्तध्यानकालंसपर्यपृच्छत्समाहितः १७
देवशर्मोवाच
आत्मानंवेत्तुमिच्छामितदमुष्मिन्मनोरथे
लब्धसिद्धिमुपायंमामुपदेष्टुंत्वमर्हसि १८
श्रीभगवानुवाच
परामृश्यक्षणंसोऽपिमित्रवानिदमब्रवीत्
मित्रवानुवाच
विद्वन्विद्धिपुरावृत्तमुच्यमानमिदंमया १९
अस्तिगोदावरीतीरेप्रतिष्ठानाभिधंपुरम्
तत्रदुर्दमनामासीदन्वयेचमनीषिणाम् २०
तत्रास्तिविक्रमोनामसेव्यमानोमहीपतिः
दानानिप्रत्यहंगृह्णन्वर्त्ततेउदरंभरः २१
कालेनकालपाशेनबद्धानीतोयमालयम्
निरयेषुसमग्रेषुयातनाअनुभूयच २२
कस्मिंश्चित्सकुलेजातोदुर्वृत्तानांद्विजन्मनाम्
भवांतरानुवर्तिन्याविद्ययासपुरस्कृतः २३
उपयेमेदुराधर्षांकन्यकामधमेकुले
कालेनसावयोहित्वाशैशवंयौवनंययौ २४
पीनस्तनीचसुश्रोणीमदविह्वललोचना
पतिंनसेहेदुर्वृत्तंचकमेस्वपतीन्परान् २५
वृत्तिमाहर्तुकामस्मिन्निर्गतासापुराद्बहिः
संगताकामुकेनासौचिरंचांडालजन्मना २६
दधेगर्भमसौतस्मात्साचकन्योपपद्यते
सैवभार्यापितस्यासीत्पूर्वपापप्रसंगतः २७
सैववृद्धाततःकालेडाकिनीसमजायत
कुसंगात्कुमतिर्जातादुष्टनारीप्रसंगतः २८
चखादव्याधितंव्याधमसृगास्वादलालसा

भ्रमंतीविपिनेघोरेजनैर्दृष्ट्वाबहिष्कृता २९
परेतलोकमासाद्यव्याधौव्याघ्रोऽभ्यवर्त्तत
नरकान्दारुणान्भुक्त्वाजीवहिंसाप्रभावतः ३०
सापिकालेनदुष्टात्मामृत्युवेगमुपागता
निरयानेत्यदुर्द्धर्षनजाजायतमद्गृहे ३१
तामन्याश्चप्यहंविद्वन्पालयन्काननांतरे
अपश्यन्द्वीपिनघोरंजिघांसंतमिवाखिलम् ३२
समालोक्यतमायांतभयेनप्रपलायितम्
अजायूथंपरित्यज्यमयामरणभीरुणा ३३
उपदुद्रावसद्वीपीपूर्ववैरमनुस्मरन्
अजातुतत्समीपेऽगात्सत्वरंसरिदंतिके ३४
तत्रसाभयमुत्सृज्यहित्वावैरमनर्गला
अवतस्थेसचद्वीपीतूष्णीमासीदमत्सरः ३५
तंतथाविधमालोक्यसावक्तुमुपचक्रमे
द्वीपिन्नभीप्सितंभुंद्त्वमांसमुद्धृत्यसादरः ३६
नेयंभवतितेबुद्धिःकथंवैरमतिंत्यजः
इत्याकर्ण्यतदावाक्यंप्राहद्वीपीविमत्सरः ३७
स्थानेऽस्मिन्मेगतोद्वेषःक्षुत्पिपासाचनिर्ययौ
नप्रार्थयामितेनत्वांसमीपेसमुपस्थिताम् ३८
सैवमुक्तापुनःप्राहजाताहंनिर्भयाकथम्
किमत्रकारणंवेत्सियदिमेवक्तुमर्हसि ३९
एवमुक्तःपुनर्द्वीपीतामाहाजांनवेद्म्यहम्
पुरोगतमिमंप्रष्टुंमहांतमितिनिर्गतौ ४०
ताभ्यामुभाभ्यामागत्यपृष्टोऽहबहुविस्मयः
अहंचसहितस्ताभ्यामपृच्छंवानरेश्वरम् ४१
मयापृष्टःसविप्रेदमब्रवीत्सादरंकपिः
शृणुवक्ष्याम्यजापालवृत्तमत्रपुरातनम् ४२
इदमायतनंपश्यपुरोवनगतंमहत्
अत्रत्र्यंबकलिगंहिद्रुहिणेनप्रतिष्ठितम् ४३
सुकर्मानाममेधावीपर्युपास्तेतपश्चरन्

वनपुष्पाण्यपाहृत्यसुरपूज्यंपुरोभवम् ४४
संस्नाप्यसरिदंभोभिःकेवलंकर्मणावसन्
कालेमहतितस्यागादतिथिःकश्चिदंतिकम् ४५
उपाहृत्यफलाहारंसतस्मैपर्यकल्पयत्
तेनातिथ्येनसंप्रीतःसुकर्माणमभाषत ४६
किमिदंकर्मणोमूलंफलंभुक्त्वातुतिष्ठसि
गतानुगतयावृत्त्याकिंवाकेवलमीहसे ४७
सएवमुक्तःप्रायेणप्रीतेनात्मविदातदा
प्रत्युवाचवचःस्पष्टमात्मनोहितमुत्तमम् ४८
विद्वन्नवेद्मितत्वेनफलमेतस्यकर्मणः
बुभुत्सयापरःशंभुःसेव्यतेकेवलंयया ४९
फलमेतस्यसेवायाःपरिपाकंकपर्दिनः
यन्मांसमनुगृह्णासिसंस्पृश्यात्ममनोरथम् ५०
तस्यैवंसूनृतंवाक्यंश्रुत्वाप्रीतस्तपोधनः
द्वितीयमालिलेखाऽसौगीताध्यायंशिलातले ५१
आदिदेशाशुतंविप्रंपठनाभ्यसनायच
फलिष्यत्यात्मनःस्वैरंपरितस्तेमनोरथः ५२
इत्युक्त्वांतर्दधेधीमान्पुरतस्तस्यपश्यतः
विस्मितस्तस्यचादेशात्सोऽन्वतिष्ठदनारतम् ५३
ततःकालेनमहताभावितात्माप्रसन्नधीः
यत्रयत्रचचारासौशांतंतत्तत्तपोवनम् ५४
नद्वंद्वबाधानैवक्षुत्पिपासानचवाभयम्
तपसातस्यजानीहिद्वितीयाध्यायजापिनः ५५
मित्रवानुवाच
एवमुक्तश्चतेनाऽहख्यापयित्वापरांकथाम्
अनुज्ञातप्रसंनेनच्छागीव्याघ्रयुतोगमम् ५६
गत्वाशिलातलेपश्यमध्यायंलिखितंपठेत्
तस्यैवावर्त्तनादाप्तंतपसःपारमुत्तमम् ५७
तेनत्वमपिकल्याणनित्यमाहर्तुमर्हसि
अध्यायंतेनतेमुक्तिरदूरस्थाभविष्यति ५८

देवशर्मासमादिष्टस्तेनमित्रवतास्वयम्
अभ्यर्च्यप्रणतोभूत्वापुरंदरपुरंययौ ५९
तत्रात्मविदमासाद्यदेवतायतनेक्वचित्
वृत्तमेतन्निवेद्यादावध्यायमपठत्ततः ६०
शिक्षितस्तेनपूतात्मापठन्नध्यायमादरात्
द्वितीयमाससादोच्चैर्निरवद्यंपरंपदम् ६१
द्वितीयस्येदमाख्यानंकथितंशृणुसांप्रतम्
तृतीयस्याथवक्ष्यामिमाहात्म्यमपिचेंदिरे ६२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेगीता
माहात्म्येसतीश्वरसंवादेषट्सप्तत्यधिकशततमोऽध्यायः १७६

## सप्त सप्तत्यधिक शततमोऽध्यायः

श्रीभगवानुवाच
जनस्थानेजडोनामद्विजन्माकौशिकान्वयी
हित्वाजात्युचितंधर्मंवणिग्वृत्त्यांमनोदधे १
व्यसनीपरदारेषुदीव्यन्नक्षैःपिबन्मधु
मृगयानिरतोनित्यंकालमेवंनिनायसः २
क्षीणेवित्तेततोरात्रौचौर्यामारब्धवांस्ततः
प्रतिपेदेधनंतेनयज्वनांयष्टुमर्थिनाम् ३
सदूरमगमत्तेनवाणिज्यायोत्तरांदिशम्
कस्तूरिमगुरुंकृष्णांचामरांश्चंद्रिकोज्ज्वलान् ४
गृहीत्वावृत्यचानिन्येपंचषादध्वयोजनात्
अथापरस्मिन्नहनिप्रियादर्शनदोहनि ५
दूरमध्वानमुल्लंघ्यरवावस्तमितेसति
ध्वांतेप्रसर्पतिस्वैरंदिशोदशतरोस्तले ६
गतोवशंसदस्यूनांनिजघ्नेतैश्चसत्वरम्
धर्मलोपादसौजज्ञेघोरश्चोग्रतरोग्रहः ७
पिपासितोबुभुक्षार्तोलेलिहानश्चसृक्किणी
उर्ध्वकेशोऽतिजंघालुःपृष्टलग्नोदरोमहत् ८
अस्थिमात्रशरीरोऽभूद्दुर्वृत्तनयनोभृशम्

अत्रांतरेसुतस्तस्यधर्मात्मावेदकोविदः ९
पर्यपालयदत्यर्थंदिदृक्षुस्तंतदागमत्
नित्यमन्वेषयन्वार्त्तांपांथेभ्योनोपलब्धवान् १०
ततःकदाचिदायातेसहायिनिचमानवे
तस्माद्विदितवृत्तांतःशुशोचपितरंबहु ११
ततोविमृश्यमेधावीचिकीर्षुःपारलौकिकम्
वाराणसींससंभारःसगंतुमुपचक्रमे १२
मार्गेनिवासान्सप्ताष्टौनीत्वातस्यतरोस्तले
संध्यांप्रचक्रमेकर्तुंयत्रास्यनिहतःपिता १३
तत्राध्यायंसगीतानांतृतीयंसंजजापह
ततोघोरस्वरस्तत्रव्योममध्येपरामृशत् १४
ददर्शघोरमाकाशात्पतंतंपितरंततः
विस्मयेनभयेनापिविकलीकृतचेतनः १५
तेजसाभूयसाव्याप्तमालुलोकेपुरोऽम्बरे
किंकिणीकोटिसंकीर्णंतेजसाव्याप्तदिङ्मुखम् १६
विमानमग्रतोऽपश्यद्दिव्यमध्यग्रचेतनः
तत्रापश्यत्समारूढंदिव्याभिःस्त्रीभिरावृतम् १७
संस्तूयमानंमुनिभिःपितरंपीतवाससम्
प्रणतस्तंसमालोक्ययुयुजेतेनशाशिषा १८
ततोऽपृच्छदिदंवृत्तंसचतस्मैन्यवेदयत्
दुस्त्यजात्कर्मणोवत्सवपुषोपुण्यकारणात् १९
मोचितोऽस्मित्वयादैवादध्यायंजपतांतिके
तन्निवर्त्तस्वजपतःसांप्रतंत्वामुपस्थितम् २०
वाराणसींयदर्थंयत्तदनुष्ठितमात्मनः
श्रीभगवानुवाच
एवमुक्तःसचप्राहपितरंदीप्ततेजसम् २१
सुतउवाच
हितंममानुशाधित्वंकार्यमन्यन्मयानुकिम्
श्रीभगवानुवाच
ततःप्राहपितापुत्रं कार्यमेतत्त्वयानघ २२

यन्मयाचरितंकर्मभ्रात्रामममतुतत्कृतम्
सयातोनरकंघोरंतंमोचयितुमर्हसि २३
अन्येमदन्वयेयेवैनिरयंप्रतिपेदिरे
तेचमोचयितव्यास्तेइतिमेऽस्तिमनोरथः २४
इत्येवमुक्तःपुत्रस्तंपुनःप्राहकृतांजलि
कर्मणाकेनतान्सर्वान्मोचयामितदादिश २५
एवंनिवेदितोवाक्यंपितासुतमुवाचह
पितोवाच
येनाहंमोचितोवत्सतदनुष्ठातुमर्हसि २६
अनुष्ठायतदुत्पन्नंतेभ्यःपुगयंसमुत्सृज
ततोऽहमिवतेसर्वेपूर्वेसंत्यज्ययातनाम् २७
गमिष्यंत्यचिरेणैवतद्विष्णोःपरमंपदम्
ससंदिष्टोवदत्पुत्रोयद्येवंतातनारकान् २८
सर्वानपिविमोन्दयामियदितेरोचतेवचः
एवमस्तुशिवंभूयादुपपन्नंमहत्प्रियम् २९
इत्यादिश्यपितापुत्रंययौविष्णोःपरंपदम्
सोऽपितस्मात्परावृत्त्यजनस्थानंप्रपद्यच ३०
सुंदरस्यपुरःशौरेश्चालयेकालमभ्यगात्
सकुर्वाणःसमादीनिपित्राचयदुदीरितम् ३१
उत्ससर्जकृतंपुगयंमोचयिष्यन्सनारकान्
अत्रांतरेपदेविष्णोर्यातनापदमीयुषः ३२
नारकान्मोचयिष्यंतःकिंकरायममभ्ययुः
तेनतेपूजिताःसर्वेसत्क्रियाभिरनेकधा ३३
कुशलंपरिपृष्टास्तेसर्वतःसुखमूचिरे
एमंसत्कृत्यमेधावीपितृलोकमहेश्वरः ३४
हेतुमागमनेपृच्छत्तेचतस्मैन्यवेदयन्
विद्धिकीनाशनाथत्वंशेषपर्यंकशायिना ३५
शौरिणाप्रहितानस्मान्समादेष्टुंत्वदंतिके
अस्मन्मुखेनदेवस्त्वांकुशलंपरिपृच्छति ३६
नारकान्प्राणिनःसर्वान्विमोक्तुंचनियच्छति

इत्याकर्ण्यसमादिष्टंविष्णोरमिततेजसः ३७
नतेनमूर्ध्नासंभाव्यदध्यौकिंचनचेतसा
विमुक्तान्निरयात्सर्वांस्तान्विलोक्यमदोत्कटान् ३८
सतैरनुगतःसर्वैर्विष्णोरायतनंततः
ययौसवरयानेनयत्रास्तेदुग्धवारिधिः ३९
तदंतउदितानेकसूर्यकोटिसमप्रभम्
इंदीवरदलश्याममालुलोकजगद्गुरुम् ४०
शय्याफणिफणारत्नमरीच्यामिश्रतेजसम्
विलोक्यमानमानंदनिर्भरंप्रीतमानसम् ४१
भावानुगैर्दृगालीकैःश्रियाप्रेम्णेक्षितंमुहुः
योगिभिःपरितोजुष्टंध्याननिष्पंदतारकैः ४२
स्तूयमानंमहेंद्रेणपराजेतुंविरोधिनः
आम्नायवचसामंतेब्रह्मणोनिःसृतैर्मुखात् ४३
मूर्तिमद्भिर्वचोभिश्चगीयमानंगुणोत्करम्
संप्रीतंचाप्युदासीनमपिसर्वासुयोनिषु ४४
योगसंचितपुण्यानांयौगपद्येनजंतुषु
विलोकमानमात्मानमखिलंसचराचरम् ४५
आमोद्यन्नमालोकैरात्मानंदीप्तिपूरितैः
आबिभ्राणंवपुर्व्यापिद्योतितंभोगिनस्त्विषा ४६
इंदीवरदलश्यामंज्योत्स्नयेवनभस्तलम्
विलोक्यतंसतुष्टावधियाबहुलयानतः ४७
यमउवाच
नमःसमस्तनिर्माणनिर्मलीभूतचेतसे
वदनोद्गीर्णवेदायविश्वरूपायवेधसे ४८
बलवेगसुदुर्द्धर्षदानवेंद्रमदद्रुहे
नमःस्थितौचसत्वायविश्वाधारायविष्णवे ४९
नमःपातकसंघातजिष्णवेऽखिलदेहिनाम्
ईषदुन्मीलल्लालाटनेत्राग्निप्रभवार्चिषे ५०
त्वंहिसर्वस्यलोकस्यगुरुरात्मामहेश्वरः
विसृज्यवैष्णवान्सर्वानतस्त्वमनुकंपसे ५१

व्यापयन्नखिलंलोकंमाययापरिबृंहितम्
नतयापरिभूतोऽसिनचतत्प्रभवैर्गुणैः ५२
अंतरावर्तमानोऽपिनताभ्यामभिभूयसे
दृशाविषयवर्तिन्यानिग्रहीतमनाअपि ५३
तयाफलाभिगामिन्याआत्मन्येवाभिलीयसे
नतवास्तिमहिम्नोंतोयथानिरवधिःस्वयम् ५४
मौनमेवात्रयुक्तंमेविषयोऽसिकथंगिराम्
इतिस्तुत्वाततोवाक्यमिदमाहकृतांजलि ५५
विनियोगादमीयुक्तादेहिनोनिर्गुणामया
समादिशयदन्यन्मेकार्यमस्तिजगद्गुरो ५६
इतिविज्ञापितस्तेनतमाहमधुसूदनः
मेघगंभीरयावाचासिंचन्निवसुधारसैः ५७
पापादुद्धार्यतेलोकोमयासमयवर्तिना
त्वयिविन्यस्तभारोऽहनानुशोचामिदेहिनः ५८
तदाचरनिजंकर्मप्रयाहिस्वंनिकेतनम्
श्रीभगवानुवाच
इत्युक्त्वांतर्दधेदेवःसोऽपिस्वपुरमाययौ ५९
सोऽपिस्वजातिजान्सर्वान्निरयस्थाननेकशः
उद्धृत्यवरयानेनविष्णुलोकंययौस्वयम् ६०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेगीता माहात्म्येसप्तसप्तत्यधिकशततमोऽध्यायः १७७

## अष्टसप्तत्यधिक शततमोऽध्यायः

श्रीभगवानुवाच
चतुर्थस्यापिमाहात्म्यमाख्यास्याम्यधुनाशृणु
बदरीत्वंसमुत्सृज्ययेनकन्येदिवंगते १
श्रीरुवाच
कथंकन्येदिवंयातेबदरीत्वंविसृज्यवै
तेकचास्तांपुरादेवकथंप्राप्तेतुमुख्यताम् २
एतद्वेदितुमिच्छामिनाथवक्तुंत्वमर्हसि

नतुतृप्यामिशृरावंतीपरमांचकथामिमाम् ३
श्रीभगवानुवाच
अस्तिभागीरथीतीरेनाम्नावाराणसीपुरी
भरतोनामयुक्तात्मातत्रविश्वेश्वरालये ४
नित्यमात्मरतस्तुर्यंजपत्यध्यायमादरात्
तदभ्यासाददुष्टात्मानद्वंद्वैरभिभूयते ५
कालेकदाचनक्रीडन्ययौसनगराद्बहिः
उपांत्यवर्तिनोदेवान्दिदृक्षुःसतपोधनः ६
विशश्रामतयोर्मूलेबदर्योर्न्यपतत्फले
उपधायतयोरेकामन्यामालंब्यचांघ्रिणा ७
तपस्विनिततोयातेबदर्योश्चतथार्द्वयम्
शुष्कंनिष्पत्रशाखंचदिवसैःपंचषैरभूत् ८
गृहेक्वचनविप्राणांजज्ञातेकन्यकेततः
वर्द्धमानंतयोर्युग्मंसप्तभिःपरिवत्सरैः ९
विहृत्यदूरदेशेभ्योयतिमायांतमैक्ष्यत
गृहीत्वाचरणौतस्यवचःसूनृतमब्रवीत् १०
त्वत्प्रसादादेवमुनेमोचितंद्वंद्वमावयोः
उत्सृज्यबदरीभावंमानुष्यंप्रतिपद्यते ११
एवमुक्तोमुनिस्ताभ्यांविस्मृतःप्रत्युवाचसः
कदावत्सेयुवांकेनहेतुनामोचितेमया १२
युवयोर्बदरीत्वेचहेतुंब्रूतांनवेद्म्यहम्
ऊचतुःकन्यकेतस्मैबादर्येहेतुमात्मनः १३
आदौविमोचनेतस्माद्दुस्त्यजादपिकारणम्
अस्तिगोदावरीतीरेतीर्थंपुण्यप्रदंनृणाम् १४
च्छिन्नपापमितिख्यातंपरांकोटिमवापयत्
तत्रसत्यतपानामतपस्तेपेसुदारुणम् १५
ग्रीष्मेमहतिदीप्तानांमध्यगोजातवेदसाम्
वर्षासुजलधाराभिर्नित्यमासिक्तमूर्द्धजः १६
शिशिरेचवसन्नप्सुबिभ्रत्कंटकितांतनुम्
विशुद्धःसततंकालेतपस्तप्त्वाससंयमी १७

ञ्रात्मन्येवमतिंचक्रेपरांप्राप्यसुनिर्वृतिम्
सदाफलानिबिभ्रत्सुसांद्रच्छायेषुशाखिषु १८
निर्मत्सरेषुसत्वेषुबध्वाप्रीतिपरामपि
तपःफलानुसंधानेवैदुष्येनोपपादितम् १९
ब्रह्माप्येनंस्वयंपृच्छन्नुपतस्थेतमन्वहम्
तेनसंकोचहीनत्वाद्ब्रह्मरायनुगतेन्वहम् २०
तद्ध्यानानुगतव्यक्तिववृधेतस्यतत्तपः
विमुक्तकल्पंमन्वानःसमृद्धादात्मनःपदात् २१
ञ्रंतरायशतंचक्रेततोभीतःपुरंदरः
ञ्राहूयाप्सरसांमध्यादावांतुल्यंसमादिशत् २२
कुरुतंतत्तपोविघ्नमनेनाचरितंयुवाम्
योमांपदादवष्टभ्यस्वराज्यंभोक्तुमिच्छति २३
इतिसंदेशमापन्नेपुरस्ताच्चबिडौजसः
गोदावरीमगच्छावःसमुनिर्यत्रवर्तते २४
मृदंगैर्मंदगंभीरैर्वेणुभिःकलवादिभिः
कलंगीतंसमारब्धंतन्वंगीभिःसमन्वितम् २५
उद्वहंत्यौपृथुश्रोणींघनपीनपयोधरे
स्मयस्मेरमुखांभोजेकिंचिदाकुंचितालके २६
मणिकुंडलदृष्टांसेपुंडरीकोज्ज्वलेन्नणे
तनुमध्येसुवृत्तोरुवहंत्यौचसमेपदे २७
ञ्रानर्तायौवनस्यार्थेस्वरताललयानुगाम्
दर्शयंत्यौस्वतःकृत्स्नांगतिंभावानुगामिनीम् २८
मृदूपक्रममुत्पन्नंमंदंमंदंविवर्द्धनम्
गर्जयामासदिक्चक्रंतत्तयोर्नृत्यमानयोः २९
ततोंगहारवेगेनवायुर्वासःसुशीतलः
ईषदुच्छसितेचैलेदर्शयंत्यौपयोधरौ ३०
उद्वर्धयंतीकंदर्प्पमुल्बणागतिरावयोः
कोपमुत्पादयामासुमुनेरविकृतात्मनः ३१
ततःशापंददौकोपाज्जलमुत्सृज्यपाणिना
बदरीत्वंप्रपद्येथांजाह्नवीरोधसीतिनौ ३२

आवाभ्यांपारतंत्र्येणयद्दुश्चरितमास्थितम्
तत्क्षमस्वविनम्राभ्यांमुनिःपश्चात्प्रसादितः ३३
ततःशापविमोक्षंनौकल्पयामासपुण्यधीः
भरतागमनांतोयमितिसत्यतयामुनिः ३४
मर्त्येषुजन्मलाभश्चस्मृतिश्चातीतजन्मनाम्
आवयोरंतिकंगत्वाबदरीभूतयोस्ततः ३५
स्मरतातुर्यमध्यायंभवतानिष्कृतिःकृता
तत्तावत्प्रणमावस्त्वांशापादेवनकेवलात ३६
घोरादेवतुसंसारात्त्वयैतेनविमोचिते
श्रीभगवानुवाच
एवमुक्तोमुनिस्ताभ्यामतिप्रीतमनास्ततः ३७
पूजितस्तेसमामंत्र्ययथागतमसौययौ
कन्येचतुर्थमध्यायंजपेतांनित्यमादरात् ३८

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेगीता माहात्म्येअष्टसप्तत्यधिकशततमोऽध्यायः १७८

## एकोनाशीत्यधिक शततमोऽध्यायः

श्रीभगवानुवाच
पंचमस्याधुनादेविमहात्म्यंलोकपूजितम्
कथयामिसमासेनसावधानाशृणुप्रिये १
पिंगलोनामभद्रेषुपुरुकुत्सपुरेद्विजः
अवदातेकुलेजातोविश्रुतेवेदवादिनाम् २
कुलोचितानिशास्त्राणितथावेदान्विसृज्यसः
तौर्यत्रिकेमतिंचक्रेवादयन्मुरजादिकम् ३
कृतश्रमस्ततस्तत्रगीतेनृत्येचवादने
परांप्रसिद्धिमासाद्यनृपसद्मविवेशसः ४
समातस्थेसतेनासौपुराभूमिभुजासह
परदारानुपाहृत्यबुभुजेताअनन्यधीः ५
ततउत्सिक्तगर्वोऽयसूचमानोनिरंकुशः
परच्छिद्राणिचामुष्मैविविक्तेसनिरंतरम् ६

तस्यासीदरुणानामभार्याहीनकुलोद्भवा ७
भ्रमत्यन्वेषयंतीसाकामुकेनविहारिणी
तमंतरायंमन्वानानिशीथिन्यांनिजालये ८
निजघानशिरश्छित्त्वानिचखानमहीतले
वियोजितस्तःप्राणैरुपेत्ययमसादनम् ९
दुर्जयान्नरकान्भुंक्त्वागृध्रोऽभूद्विजनेवने
भगंदरेणरोगेणसापिहित्वावरांतनुम् १०
उपेत्यनरकान्घोरान्जज्ञेतत्रवनेशुकी
कणानादातुकामांतांसंचरंतीमितस्ततः ११
विददारनखैस्तीक्ष्णैर्गृध्रोवैरमनुस्मरन्
नृकपालेपयःपूर्णेनिपतंतींततःशुकीम् १२
अभिदुद्रावगृध्रोऽपिनिजघ्नेसचजालिकैः
पत्नीवियोजिताप्राणैर्नृकपालजलेततः १३
तत्रैवनिममज्ञासावेत्यक्रूरतरःखगः
पितृलोकंप्रपेदातेनीतौतौयमकिंकरैः
प्राक्कृतंदुष्कृतंकर्मस्मरंतौभयभागिनौ १४
ततोयमःसमालोक्यतयोःकर्मजुगुप्सितम्
अकस्मादेवतत्स्नानान्मरणेसुकृतंमहत् १५
अनुजज्ञेततोलोकमीप्सितंगंतुमेतयोः
महापातकसंघातैरपिदुर्द्धर्षमानसौ १६
ततोविस्मयमापन्नौस्मृत्वातौदुष्कृतंनिजम्
उपेत्यप्रणतौभूत्वावैवस्वतमपृच्छताम् १७
संचितंदुष्कृतंपूर्वमावाभ्यामपिगर्हितम्
लोकानामीप्सितानांतुकोहेतुस्तद्वदस्वनौ १८
एवमुक्तस्ततस्ताभ्यामाहवैवस्वतोवचः
आसीद्गंगातटेनाम्नाबुद्ध्वाब्रह्मसनातनम् १९
एकाकीनिर्ममःशांतोवीतरागोविमत्सरः
गीतानांपंचमाध्यायमावर्त्तयतिसर्वदा २०
तेनपुण्येनपूतात्माबुद्ध्वाब्रह्मसनातनम्
पापीयानपियंश्रुत्वातनुमुत्सृष्टवानसौ २१

निर्मलीकृतदेहस्यगीताभिर्भावितात्मनः
तत्कपालजलंप्राप्ययुवांयातौपवित्रताम् २२
तद्गच्छतंयुवांलोकान्मनोरथपथिस्थितान्
गीतानांपंचमाध्यायमाहात्म्येनपवित्रितौ २३
एवंतौबोधितौतेनमुदितौसमवर्तिना
व्योमयानंसमारुह्यजग्मतुर्वैष्णवंपदम् २४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेगीता
माहात्म्येएकोनाशीत्यधिकशततमोऽध्यायः १७९

अशीत्यधिकशततमोऽध्यायः

श्रीभगवानुवाच
षष्ठाध्यायस्यमाहात्म्यंप्रवक्ष्यामिवरानने
यदाकर्णयतांनृणांमुक्तिःकरतलेस्थिता १
अस्तिगोदावरीतीरेप्रतिष्ठानंपुरंमहत्
पिप्पलेशाभिधानोऽहयत्रास्मिस्मेरलोचने २
यत्रगोदावरीतीरशीकरैरवशीतलैः
हंसाःपक्षपुटैःकीर्णैर्हरंतियमिनांश्रमम् ३
स्फुरत्पद्मावलीकोशपरागसुरभीकृतम्
श्लाघ्यंगोदावरीतोयंयेनतेनिर्जरानराः ४
धिक्सुधामौषधीशस्यविकृत्क्षयविधायिनीम्
महाराष्ट्रवधूकानांमञ्जंतीनांमुनीश्वराः ५
स्पृशंतियत्रवक्त्राणिफुल्लपंकजशंकया
यत्रखेलन्महाराष्ट्रक्वणत्कंकणसुंदराः ६
हरंतिध्वनयोलीनांमनांस्यपितपस्विनाम्
अत्युच्चसौधशिखरविहारिवनितामुखम् ७
पश्यन्ननुदिनंयत्रक्षीयतेमृगलांच्छनः
अंत्युच्चसौधवलभीमहामणिमरीचिभिः ८
चुंब्यंतेमुनिगंधर्वैर्दूर्वाचंदनचंचलैः
यस्मिन्नाधूयमानानांपताकानांसमीरणैः ९
गतश्रमारवेर्यानिभवंतिरथवाजिनः

राशीकृतैर्मलयजैरसंख्यातैर्वणिग्गणैः १०
यस्मिन्नुपलशेषोऽसौलक्ष्यतेमलयाचलः
पुंजीकृतानिदृश्यंतेयत्रमुक्ताफलान्यपि ११
नगरीदेवताहास्यस्तबकाइवसर्वतः
तत्रज्ञानश्रुतिर्नाम्नामेदिनीवल्लभोऽभवत् १२
यस्मिन्नुद्धरतिक्षोणींशेषोऽयमणिसंनिभां
अपिप्रतापमार्तंडमंडलीतीव्रतेजसि १३
नित्यमध्वरधूमेनश्यामलाःकल्पशाखिनः
असाधारणदातृत्वंपश्यंतइवलज्जया १४
यदध्वरपुरोडाशचर्वणास्वादलंपटाः
नतत्यजुःसुपर्वाणःप्रतिष्ठानपुरंमनाक् १५
यस्यदानांबुधाराभिःप्रतापज्योत्स्नयानिशम्
मखधूमैश्चसंपुष्टाववृषुःसमयेघनाः १६
स्वल्पमात्रमपिक्वापिनपदंप्रापुरीतयः
नीतयःप्रसरंतिस्मयस्मिन्शासतिमेदिनीम् १७
वापिकूपतडागानांच्छद्मनायोऽनुवासरम्
हृदयस्थानिमेदिन्यानिधानानिव्यलोकयत् १८
पांडुराभिःपताकाभिःप्रासादोयस्यराजते
वियद्गंगातरंगोघैर्हिमाद्रिरिवसानुमान् १९
दानैस्तपोभिर्यज्ञैश्चप्रजानांपालनेनच
तुष्टाःस्वर्गौकसस्तस्मैवरंदातुंसमागमन् २०
ततोंतरिक्षमार्गेणधुन्वानाःपक्षसंहतीः
मृणालधवलादेवीदेवहंसाविनिर्गताः २१
त्वरयागच्छतांतेषामन्योन्यंतत्रभाषिणाम्
भद्राश्वप्रमुखाद्वित्राःपुरस्तान्निर्ययुर्जवात् २२
सर्वैर्मिलद्भिरूचुस्तेपुरस्तद्गच्छतोजवात्
कथंवेगेननिर्याताभवंतःपुरतःस्थिताः २३
सर्वैर्मिलित्वागंतव्यमस्मिन्नध्वनिदुर्गमे
प्रकाशमानंपुरतस्तेजःपुंजंनपश्यथ २४
ज्ञानश्रुतेर्महीभर्तुःपुण्यमूर्त्तेरतिस्फुटम्

निशम्येतिवचःसम्यक्पाश्चात्यानापुरःस्थिताः २५
हंसाहसित्वासावज्ञमूचुर्वचनमुच्चकैः
रैक्याभिधस्यदुर्द्धर्षतेजसोब्रह्मवादिनः २६
किंनुज्ञानश्रुतेरस्यराज्ञस्तीव्रतरंमहः
इतिशुश्रावहंसानांगिरोज्ञानश्रुतिर्नृपः २७
अत्युच्चसौधभवनमारुह्यचसुखंस्थितः
ततःसारथिमाहूयभूपालोविस्मयान्वितः २८
संदिदेशमहात्माऽसौ रैक्यआनीयतामिति
ततोऽवधार्यभूपालवचःपीयूषगर्भितम् २९
निर्जगाममहोनाम्नासारथिःप्रथयन्मुदम्
यत्रवाराणसीनामनगरीमुक्तिदायिनी ३०
यत्रविश्वेश्वरोनामह्युपदेष्टाजगत्पतिः
ततोगयाभिधेक्षेत्रेयत्रदेवोगदाधरः ३१
उद्धर्तुमखिलान्लोकान्वसत्युत्फुल्ललोचनः
ततोगौरीगुरोःपार्श्वेसर्वैस्तीर्थैरनेकधा ३२
पर्यटन्गतवान्यत्रकेदारःपापदारणः
यमालोक्यसकृन्मर्त्यामुक्ताःस्युर्नात्रसंशयः ३३
महापापविनिर्मुक्ताभुक्त्वाभोगान्यथेप्सितान्
ततोगौडेषुनिर्यातोयत्रास्तेपुरुषोत्तमः ३४
यस्यावलोकनादेवनराःस्वर्लोकगामिनः
ततोद्वारावतींप्रागान्नगरींमुक्तिदायिनीम् ३५
यत्रास्तेगोमतीतीरेरुक्मिणीवल्लभोहरिः
स्नात्वाचगोमतीतीर्थेपंचकृष्णान्विलोक्यच ३६
मर्त्योमुक्तिमवाप्नोतिभुक्त्वाभोगान्यथेप्सितान्
ततःसमुद्रमासाद्यसोमनाथंविलोक्यच ३७
भुक्तिमुक्तिप्रदंदेवंततोनिरगमन्सुधीः
अवंतिकांपुरींप्राप्तोभुक्तिमुक्तिप्रदायिनीम् ३८
यत्रोमयासुखंक्रीडन्महाकालोस्तिशंकरः
अथोंकारंसमासाद्यशर्मदंनर्मदातटे
भुक्तिमुक्तिप्रदातारंत्वरयानिर्गतस्ततः ३९

अश्वमेधकरंनाम्नानगरंपर्यटंस्ततः
यत्रशार्ङ्गधरःसाक्षादास्तेलक्ष्मीपतिःस्वयम् ४०
ततोविष्णुगयांप्राप्तःकुगडंलोणारसंज्ञितम्
यत्रस्नात्वाचपीत्वाचमुच्यतेबन्धनान्नरः ४१
ततःकोल्हापुरंनामगतोरुद्रगयांप्रति
आस्तेभगवतीयत्रलक्ष्मीर्भक्तिप्रदायिनी ४२
पञ्चनद्यांनरःस्नात्वामहालक्ष्मींविलोक्यच
भुक्त्वाभोगान्यथाकामंभक्तिंचप्रतिपद्यते ४३
ततोऽमलगिरिंनामनगरींप्रतिपद्यच
नन्दिकेश्वरमारुह्यसोमनाथोऽस्तियत्रतु ४४
दृष्ट्वाचतुर्भुजंदेवंवरदानोद्यतंशिवम्
सोमनाथंनृणांमुक्तिर्भवत्येवनसंशयः ४५
तुङ्गभद्रानदीतीरेदृष्ट्वाहरिहरंततः
युगेयुगेभुजायस्यपतन्त्यवनिमगडले ४६
यद्विलोक्यनराःसर्वेरम्यंहरिहरंवपुः
भुक्त्वाभोगान्यथाकामंमुच्यन्तेबन्धनान्नराः ४७
स्वर्गेकल्पशतंस्थित्वामुक्तसंसारबन्धनाः
ततःस्वामिनमालोक्यलोकानांस्वामिनंविभुम् ४८
यमालोक्यनपश्यन्तिनिरयंजातुचिन्नराः
स्वर्गेकल्पशतंस्थित्वामुक्तसंसारवासनाः ४९
मुक्तिंचप्रतिदद्यन्तेनात्रकार्याविचारणा
ततःश्रीशैलमासाद्यसिद्धगन्धर्वसेवितम् ५०
गिरिजावल्लभोयत्रमल्लिनाथोऽभिधानतः
उद्धर्तुमखिलाँल्लोकान्संसाराम्भोधिमध्यतः ५१
स्वर्गेकल्पशतंस्थित्वामुक्तसंसारबंधनाः
मुक्तिंचप्रतिपद्यंतेनात्रकार्याविचारणा ५२
ततःश्रीशैलमासाद्यसिद्धगंधर्वसेवितम्
गिरिजावल्लभोयत्रमल्लिनाथोऽभिधानतः ५३
उद्धर्तुमखिलाँल्लोकान्संसारांबुधिमध्यतः
कालेकालेपरंज्योतिर्यःसंदर्शयतेस्वयम् ५४

अवलोकयतांनॄँणांयमनुस्मरतामपि
दूरेतिष्ठंतिसंत्रस्तादूरंनिरययातनाः ५५
स्वर्गेलोकेसुखंभुक्त्वामुक्तसंसारबंधनाः
मुक्तिंचप्रतिपद्यंतेमानवानात्रसंशयः ५६
रामोस्तिसानुजःसार्द्धंजानक्यापिततोगतः
तत्रस्नात्वाचपीत्वाचमुच्यतेनरकाद्ध्रुवम् ५७
कल्पकोटिशतंभुक्त्वास्वर्गलोकसुखंनराः
मुक्तसंसारवर्त्मानोमुक्तिंयांतिनसंशयः ५८
ततोनिवृत्यआयातःपश्यन्भीमरथीतटे
द्विभुजंविठ्ठलंदेवंभुक्तिमुक्तिप्रदायकम् ५९
यत्रगोदावरीजन्मस्थानंब्रह्मगिरिर्महान्
गौतमालयमासाद्ययत्रास्तेत्र्यंबकोहरः ६०
अरुणावरुणयोर्मध्येयत्रगोदावरीनदी
तत्रस्नात्वाचपीत्वाचब्रह्महत्याविलीयते ६१
असंख्यतीर्थसंपन्नंदृष्ट्वाब्रह्मगिरिंनराः
मुक्तिमेवप्रपद्यंतेमुक्ताःसंसारदुःखतः ६२
गौतम्युभयतीरस्थतीर्थान्वेषणकौतुकी
ततोजगामसूतस्तुमथुरांपापनाशिनीम् ६३
यत्रस्वायंभुवंदेवंभजंतिसुरमानवाः
आद्यंभगवतःस्थानंमहन्मुक्तिप्रदायकम् ६४
त्रैलोक्येशजनिस्थानंविख्यातंवेदशास्त्रयोः
नानादेवगणैर्जुष्टंद्विजर्षिगणसेवितम् ६५
कालिदीकूलसंशोभिह्यर्द्धचंद्रप्रभाकृति
सर्वतीर्थनिवासैकपूर्णमानंदसुंदरम् ६६
गोवर्द्धनगिरिप्रख्यंपुण्यद्रुमलतावृतम्
द्विषड्वनंमहापुण्यंविश्रांतिश्रुतिसारभृत् ६७
ततःकाश्मीरनगरमपश्यत्प्रत्यगुत्तरम्
दृष्ट्वाधर्मधुरंक्षेत्रंकुरुक्षेत्रंसमंततः ६८
यत्राभ्रंलिहगेहानांपंक्तयःशंखपाण्डुराः
ताजाताधूर्जटेःस्पष्टअट्टहासदशाइव ६९

भक्तिप्रसादमालानांसुवर्णकलशैर्वृतम्
स्वःसिंधोःपतितानीवहेमपद्मानिमारुतैः ७०
यत्रप्रासादशिखरेनीलपट्टपताकिकाः
शैवालवलयाभांतिस्वःसिंधोर्लतिकाइव ७१
यत्रकाश्मीरमाश्रित्यनित्यंवसतिभारती
नौचेद्युगपदेवेदंकथंलिखतिवाङ्मयम् ७२
विश्रामंत्याःसरस्वत्याश्चिरंयत्रमदालसाः
मृणालचंचवोहंसावाहनानिचरंत्यमी ७३
कलाविशेषंप्रहितायत्रबोद्धुंविरंचिना
ताराइवविराजंतेहंसायाताःसमंततः ७४
स्थलपद्मानिदृश्यंतेकरस्पर्शसुखानिच
शयनायनितंबिन्यायस्मिन्दानववैरिणा ७५
उपन्यासैर्द्विजातीनांयत्रनश्रूयतेस्फुटम्
मूकोऽपिनिर्जरोवाचापदकल्लोलडंबरः ७६
यस्मिन्नध्वरधूमेनव्याप्तंगगनमंडलम्
अपिचद्मालितंमेघैःकालिमानंनमुंचति ७७
गलितायाःसुधायास्तुयत्राध्वरमहार्चिषा
लांछितंछद्मनास्थानंदृश्यतेतुहिनत्विषि ७८
जन्माभ्यासवशादेवपठंतिबटवःस्वयम्
यत्रोपाध्यासान्निध्यमाश्रित्यसकलाःकलाः ७९
यत्रब्राह्मणपत्नीनांकंकणध्वनिहुंकृतिः
लुंपत्यनुदिनंभ्राम्यद्भ्रमराणांचगर्जितम् ८०
यत्रब्राह्मणपत्नीनांकपोलफलकंमुहुः
स्पृशन्समीरणोमंदंवातिशापभयादिव ८१
माणिक्येश्वरनामासौयत्रशीतांशुशेखरः
वसत्यनुदिनंदेवोवरदानायदेहिनाम् ८२
अर्चितोभूपतीन्जित्वामणिकेशेनचादृतः
माणिक्येश्वरइत्याख्यांतदाप्रभृतियोदधौ ८३
राज्ञाकाश्मीरदेवेशदिग्जयोत्सवकारिणा
असौसुपूजितोयस्मान्माणिक्यैर्भूरिभूतिभिः ८४

संसेवमानंतद्वारिछायांशकटिकोपरि
कंडूयमानमंगानियंतारैक्यमपश्यत ८५
राज्ञापिकथितैस्तैस्तैश्चिह्नैःपरिचितंजवात्
प्रणतःसारथी रैक्यंप्रणम्यतमभाषत ८६
सारथिरुवाच
कस्मिन्ब्रह्मन्किन्नामासिस्वछंदोऽसिनिरंतरम्
किमर्थमत्रविश्रांतःकिंचकर्तुंचिकीर्षसि ८७
इत्याकर्ण्यचतद्वाक्यंपरमानंदनिर्भरः
स्मृत्वासारथिमित्यूचेवयंपूर्णमनोरथाः ८८
परंकेनापिबहुनापरिचर्याविधायिना
भवितव्यंमनोवृत्तिंजानतास्माकमेवहि ८९
हृदयस्थितमादायरैक्याभिप्रायमादरात्
शनैर्निरगमद्यंतायत्रास्तेवसुधाधिपः ९०
ततःप्रणम्यभूपालंयथावृत्तंन्यवेदयत्
बद्धांजलिपुटोहृष्टःसारथिःस्वामिदर्शनात् ९१
ततोनिशम्यतद्वाक्यंविस्मयस्मेरलोचनः
श्रद्धालुरभवद्भूपो रैक्यसंभावनाविधौ ९२
आदायाश्वतरीयुग्मयुक्तांशकटिकामगात्
मुक्ताहारदुकूलानिसहस्रंचगवांनृपः ९३
गतोऽसौतत्रयत्रास्तेयोगीकाश्मीरमंडले
तन्निवेद्यपुरोराजादंडवत्पतितोभुवि ९४
आनम्यपरयाभक्त्यारैक्योराज्ञेचुकोपह
रेशूद्रमामकंवृत्तंनजानासिदुरीश्वर ९५
गृहाणशकटीमेतामुत्थाप्याश्वतरीयुताम्
वस्त्राणिमुक्ताहारांश्चगाश्चदोग्ध्रीरपिस्वयम् ९६
इत्थमाज्ञतवान्भूपोरैक्यस्यभयमादधे
ततःशापभयाद्राजातत्पदांभोरुहद्वयम् ९७
गृह्णन्भक्त्याप्रसीदेतिब्रह्मन्नित्यूचिवान्स्वयम् ९८
राजोवाच
भगवंस्तवमाहात्म्यमेतदत्युद्भुतंकुतः

प्रसन्नीभूयभगवन्नाख्याहिममतत्त्वतः ९९
रैक्यउवाच
गीतानांषष्ठमध्यायंजपामिप्रत्यहंनृप
तेनैवतेजोराशिर्मेसुराणामपिदुःसहः १००
गीतानांषष्ठमध्यायंरैक्यादभ्यस्ययत्नतः
ज्ञानश्रुतिर्महीपालोमुक्तिमापततःसुधीः १०१
रैक्योऽपिसुखमालेभेमाणिक्येश्वरसन्निधौ
गीतानांषष्ठमध्यायंजपन्मोक्षप्रदायकम् १०२
मरालवेषमास्थायवरदानार्थमागताः
दिवौकसोऽपिनिर्जग्मुःस्वैरंविस्मयकारिताः१०३
इममध्यायमप्येकंयोजपेत्सततंनरः
सोऽपितत्पदवीमेतिविष्णोरेवनसंशयः १०४

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेगीता
माहात्म्येअशीत्यधिकशततमोऽध्यायः १८०

## एकाशीत्यधिक शततमोऽध्यायः

श्रीभगवानुवाच
अथतेवर्णयिष्यामिसप्तमाध्यायगौरवम्
यदाकर्णयसुधापूरपूर्तिर्भवतिकर्णयोः १
अस्तिपाटलिपुत्राख्यंदुर्गमुत्तुङ्गगोपुरम्
तत्राभूद्ब्राह्मणोनामशंकुकर्णोदयार्णवः २
वैश्यवृत्तिंसमासाद्यधनमर्जितवान्बहु
पितृन्नतर्पयामासपूजयामासनोसुरान् ३
पार्थिवान्भोजयांश्चक्रेधनार्जनपरायणः
तुरीयपाणिग्रहणंमंगलार्थंगृहांतरे ४
तनुजैर्बंधुभिःसार्धंसंप्रतस्थेकदाचन
रजन्यांधर्मकल्पायांनिद्रालोस्तस्यदोस्तले ५
दशतिस्मसमागत्यदंदशूकःकुतश्चन
सदष्टमात्रोऽसाध्यात्मामणिमंत्रौषधादिभिः ६
क्षणैःकतिपयैरेवगतासुरभवत्ततः

पिचुमंददलैर्नालैरवगुंठितविग्रहम् ७
तमारोप्यतरुस्कंधेसूनवोगृहमाययुः
ततःकालेनबहुनाततोजातःसरीसृपः ८
तद्वासनानिबद्धात्माजन्मपूर्वमनुस्मरन्
वंचयित्वासुतानेतान्पूरयामिगृहाद्बहिः ९
आत्मनःकोटिसंख्याकंयत्रास्तेस्थापितंवसु
ततोनारायणबलिश्रद्धयापरयान्विताः १०
कृतवंतःपरेतस्यसूनवोहिद्विजन्मनः
एकदास्वप्नमागत्यपीडितःसर्पजन्मना ११
अभाषयन्मनोवृत्तंपुत्राणामग्रतःपिता
ततस्तेप्रातरुत्थायपरंविस्मयमोहिताः १२
इतरेतरमाख्यायपर्यंतस्तेनिरंकुशाः
एकस्तत्रपितृस्नेहादुद्धर्तुमपिवांछति १३
अन्योद्रविणलोभेननिहंतुंसर्पमीहते
इतरस्तुपितृस्नेहरसमोहितमानसः १४
किंवाअहिमयोनस्याच्छोचन्नोदितिकेवलम्
मध्यमस्तुततःपुत्रोवंचयित्वासहोदरौ १५
केनापिछद्मनोत्थायजगामनिजमालयम्
ततःशनैःसमाहूयगृहिणींगुणशालिनीम् १६
कुद्दालहस्तोनिरगाद्यत्रास्तेपन्नगःपिता
तेनाविदितवित्तेनचिह्नैर्निश्चित्यतत्वतः १७
स्थानमागत्यतंहंतुंवल्मीकंलोभबुद्धितः
भार्ययोत्सार्यतेमृत्स्नास्वयंतेनचखन्यते १८
निखन्यमानादत्युग्रोवल्मीकादहिरुत्थितः
ततोगरलगंडूषैर्निर्गतैरतिदुःसहैः १९
गिरःसकथयांचक्रेफणीफूत्कारमारुतैः २०
अहिरुवाच
कस्त्वंकिमर्थमायातःकथंवाखन्यतेबिलम्
केनवाप्रहितोमूढतदाख्याहिममाग्रतः २१
पुत्रउवाच

पुत्रस्तेऽहशिवोनामहेमग्रहणकौतुकी
आगतोरात्रलब्धस्यस्वप्नस्यतुसुविस्मितः २२
शिवउवाच
इत्थमाकर्ण्यपुत्रस्यगिरंलोकविगर्हिताम्
वक्तुमारभतस्पष्टंहसन्नुच्चैःफणीतदा २३
सर्पउवाच
यदिपुत्रोऽसिमेतूर्णंमामुन्मोचयबंधनात्
निक्षेपार्थायसंजातंपन्नगंपूर्वजन्मनः २४
पुत्रउवाच
पितःकथंतेमुक्तिःस्यादित्याचक्ष्वममाग्रतः
परित्यक्त्वाखिलंलोकमागतोस्मियथानिशि २५
पितोवाच
नतीर्थानिनदानानिनतपांसिनचाध्वराः
मामुन्मोचयितुंपुत्रप्रभवंतिचसर्वथा २६
गीतानांसप्तमाध्यायमंतरेणसुधामयम्
जंतोर्जरामृत्युदुःखनिराकरणकारणम् २७
सप्तमाध्यायिनंविप्रंमदीयेश्राद्धवासरे
भोजयश्रद्धयापुत्रतेनमुक्तिर्नसंशयः २८
अन्यानपिद्विजान्वत्सवेदविद्याविशारदान्
संभोजययथाशक्तिपरमश्रद्धयान्वितः २९
इत्याकर्ण्यपितुर्वाक्यमुरगत्वमुपेयुषः
तेसर्वेसूनवोकुर्वन्यथादिष्टंततोऽधिकम् ३०
शंकुकर्णस्ततःश्रीमानुत्सृज्यतनुमौरगीम्
कृत्वाविभागंपुत्राणांदिव्यंदेहमुपाददे ३१
विभज्यदत्तंपित्रायद्द्रव्यंतत्कोटिसंख्यया
तेनतेसूनवःसर्वेमुमुदुःसाधुवृतयः ३२
वापीकूपसरोयज्ञदेवप्रासादहेतवे
अन्नशालांततःकुर्वन्पुत्रास्तेधर्मबुद्धयः ३३
सप्तमाध्यायजपतोमुक्तिभाजोभवंस्ततः
षष्ठमिष्टतमंज्ञात्वानिर्वाणार्पितदृष्टयः ३४

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेगीता माहात्म्येएकाशीत्यधिकशततमोऽध्यायः १८१

## द्व्यसशीत्यधिक शततमोऽध्यायः

शिवउवाच
अष्टमाध्यायमाहात्म्यंशृणुवक्ष्यामिपार्वति
यस्यश्रवणमात्रेणपरांमुदमवाप्स्यसि १
आमर्दकंपुरंनाम्नाविश्रुतंदक्षिणापथि
द्विजन्माभावशर्मेतितत्रासीद्गणिकापतिः २
खादन्मांसंपिबन्मद्यंचोरयन्साधुसंपदः
रममाणःपरस्त्रीभिराखेटककुतूहली ३
अत्यवाहयदत्युग्रोगरीयांसंमनोरथम्
सुहृदांविटगोष्ठ्यांचतालीफलसुधारसम् ४
निपीयकंठपर्यंतमजीर्णेनातिपीडितः
मृतःकालेनपापात्माजातस्तालीतरुर्महान् ५
तस्यच्छायामुपाश्रित्यनिबिडामतिशीतलाम्
अभूतांदंपतीकौचिद्ब्रह्मराक्षसतांगतौ ६
देव्युवाच
किंजातीयौकिमात्मानौकिंवृत्तावित्युदीरय
कर्मणाकेनवादेवब्रह्मराक्षसतातयोः ७
शिवउवाच
वेदवेदांगतत्वज्ञःसर्वशास्त्रार्थकोविदः
सदाचारोऽभवत्कश्चिद्द्विजोनामकुशीवलः ८
जायाचतस्यकुमतिनामधेयादुराशया
ससभार्योमहादानान्याददानोऽतिलोभवान् ९
महिषींकालपुरुषंहयादीननुवासरम्
अप्रयच्छन्द्विजातिभ्योदानलब्धांवराटिकाम् १०
कालेनदंपतीप्रेतौब्रह्मराक्षसरूपिणौ
पर्यटंतौमहीमेतांक्षुत्तृषाकुलविग्रहौ ११
विशश्रमतुरागत्यमूलंतालीतरोस्ततः

कथमेतन्महादुःखमावयोरपगच्छति १२
कथंवाजायतेमुक्तिर्ब्रह्मराक्षसयोनितः
इतिपृष्टोगृहिण्याऽसौब्राह्मणःसमभाषत १३
ब्रह्मविद्योपदेशेनविनाध्यात्मविचारणात्
विनाकर्मविधिज्ञानात्कथंमुच्येतसंकटात् १४
भार्योवाच
किंतद्ब्रह्मकिमध्यात्मंकिंकर्मपुरुषोत्तम
एतावदुक्तेतत्पत्न्यायदाश्चर्यमभूच्छृणु १५
अष्टमाध्यायश्लोकार्द्धश्रवणात्सतरुस्तदा
विहायतालीरूपंतद्बभूवद्विजसत्तमः १६
सद्योज्ञानविधूतात्माविमुक्तःपापकंचुकात्
तन्माहात्म्याद्विनिर्मुक्तौदंपतीतौबभूवतुः १७
एतावदेवमुक्तंचदैवान्निर्गत्यतन्मुखतात्
ततोंतरिक्षादायांतंक्वणत्किंकिणिकंशुभम् १८
दिविदिव्यांगनावक्त्रचंद्रमंडलमंडितम्
अप्सरोवदनांभोजभ्राम्यद्भ्रमरसंकुलम् १९
निर्मथ्यमानदुग्धाब्धिवेलाडिंडिरपांडुरैः
गंगातरंगसुभगैश्चामरैरुपशोभितम् २०
गायद्गंधर्वसुभगंनृत्यत्सुरवधूशतम्
दिव्यंविमानमारूढौदंपतीजग्मतुर्दिवम् २१
अत्रत्यंवृत्तमखिलमेतद्विस्मयकारकम्
ततोलिलेखमेधावीश्लोकार्द्धमिदमादरात् २२
ययौवाराणसींनामनगरींमुक्तिदायिनीम्
आराधयितुमन्विच्छन्देवदेवंजनार्दनम् २३
सतत्रकर्तुमारेभेतपःपरमुदारधीः
अत्रांतरेजगन्नाथोदेवदेवोजनार्दनः २४
पृष्टोदुग्धाब्धिसुतयासंयोज्यकरसंपुटम्
निद्रापथंविहायैवस्थीयतेकथ्यतामिति २५
श्रीभगवानुवाच
काश्यांभागीरथीतीरेतपस्यतितरांद्विजः

भावशर्मातिमेधावीमद्भक्तिरसपूरितः २६
जपन्गीताष्टमाध्यायश्लोकार्द्धंनियतेंद्रियः
संतुष्टवानहंदेवितदीयतपसाभृशम् २७
चिरंविचारयन्नेवतत्तपःसदृशंफलम्
दातुमुत्कंठितमनावर्तेयंसांप्रतंप्रिये २८
पार्वत्युवाच
हरिःप्रसन्नभूतोऽपिचिंतांप्रापयदिप्रभो
भावशर्माहरेर्भक्तःप्राप्तःकिंतत्फलंपुनः २९
श्रीमहादेवउवाच
ततःप्रसादमासाद्यप्रसन्नस्यमुरद्विषः
सुखमात्यंतिकंप्रापभावशर्माद्विजोत्तमः
लेभिरेपदवींसर्वेतदीयाअपिवंशजाः ३०
तत्कर्मवशतोयेवैसंप्राप्तायातनांपुरा
एतदेवाष्टमाध्यायमाहात्म्यंकिंचिदेवते ३१
कथितंमृगशावाक्षिद्रष्टव्यंतुसदैवच ३२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सा०उत्तरखंडेगीता
माहात्म्येद्व्यशीत्यधिकशततमोऽध्यायः १८२

## त्र्यशीत्यधिकशततमोऽध्यायः

श्रीमहादेवउवाच
अतःपरंप्रवक्ष्यामिनवमाध्यायमादरात्
संशृणुष्वस्थिरीभूयतुहिनाचलकन्यके १
अस्तिमाहिष्मतीनामनगरीनर्मदातटे
तत्रासीन्माधवोनामद्विजन्मासशिवोद्विजः २
वेदवेदांगतत्वज्ञःकालेकालेऽतिथिप्रियः
अर्जयित्वाबहुधनंविद्ययैवविशुद्धधीः ३
महांतमध्वरंकर्तुंसमारेभेकदाचन
आलंभनार्थमानीतश्छागःपूजितविग्रहः ४
वाचमूचेहसन्नुच्चैर्जगद्विस्मयकारकः
किमेतैर्बहुभिर्यागैर्विधिवद्विहितैरपि ५

विनश्वरफलैर्जन्मजरामरणहेतुभिः
एतावत्यपिमेविप्रदशेयंदृश्यतामिति ६
छागस्यैवंवचोतीवकुतूहलपरंजनाः
निशम्यविस्मयंयाताःकृतमंडपवासिनः ७
ततोबद्धांजलिपुटोद्विजातिस्तिमितेक्षणः
प्रणम्यश्रद्दधानस्तमपृच्छच्छागमादरात् ८
द्विजउवाच
किंजातीयःकिमात्मात्वंकिंवृत्तमितिमेवद
केनवाकर्मणावासीच्छागत्वमितिकारणम् ९
छागउवाच
आसंपुराद्विजातीनामन्वयेचातिनिर्मले
आहर्ताक्रतुसंघानांवेदविद्याविशारदः १०
एकदाममगेहिन्यापुत्ररोगप्रशांतये
छागःप्रयाचितोमत्तःचंडिकाभक्तिनम्रया ११
ततोनिहन्यमानस्यचंडिकामंडपस्थले
छागस्यजननीमांतुशशापब्रह्मवादिनी १२
अशास्त्रीयाध्वनापापमत्सुतंयज्जिघांससि
द्विजात्यधमतेनत्वमजायोनिमवाप्स्यसि १३
ततोऽहप्रेत्यकालेनछागोऽभूवंद्विजोत्तम
निस्तीर्यचानेकविधायोनिसंतापयातनाः १४
विप्रउवाच
जातिस्मरत्वमप्यस्तिपशुयोनिमुपेयुषः
त्वदीयजन्मशुश्रूषाकुतूहलरसोन्मुखम् १५
छागउवाच
मनःसर्वान्द्विजानेतानपितत्कथयाखिलम्
कदाचिन्मर्कटोभूवमाहितुंडिकशिक्षया १६
क्रीडद्भिर्वीक्षितोडिंभैर्नृत्यन्प्रतिगृहांगणे
उदारानात्मनोदारान्विलोक्यतनयानपि १७
क्रियापराङ्मुखोजातस्त्यक्तनर्तनसंभ्रमः
ततोवर्तुलदंडैश्चदुःसहैराहितुंडिकः १८

मामुच्चैस्ताडयांचक्रेरुषालोहितलोचनः
ततोऽहमूर्च्छितोऽभूवंक्षरत्क्षतजसंततिः १९
आजिघ्रन्नन्नमुदकमगमंकालधर्मताम्
ततोऽहमासीच्छुनकःपरिभ्राम्यन्गृहेगृहे २०
कुक्षिंभरिरहंमार्गेत्यक्तोच्छिष्टान्नभक्षकः
कदाचिदाविशंस्वांतरात्मवेश्ममहानसम् २१
बुभुक्षितोभक्षयितुंस्थालीस्थापितमोदनम्
जिघ्रन्भूमितलंपश्यन्दिशोदशशनैर्भयात् २२
शंकमानोजनरवात्पार्श्वेचविलिहन्निव
ततःकदाचिदागत्यवीक्षितस्तनुजैर्निजैः २३
जाययाचजरत्याहंताडितोलकुटादिभिः
ततोभग्नकटिर्यातोबहुशोणितमुद्वहन् २४
निर्जगामबहिर्गेहात्कथंचिन्मूर्च्छयाकुलः
अंगेषुपूतिगंधेषुक्रिमिगर्भेषुकालतः २५
ततःकदश्वतांप्राप्तःशौंडिकस्यचवेश्मनि
अश्वोभवमहंविद्वन्मृतःकालक्रमादिह २६
कदाचिच्चत्वरेतेनसमानीतोजनाकुले
विक्रयायजरालीढपतयालुरदावलि २७
जाययाद्वारकायात्रांकर्तुमुद्यतयासकृत्
मौल्येनाल्पीयसाक्रेतुंतुरंगंचेष्टमानया २८
जगृहेहंतयादाम्नाअल्पेनवसुनाजरन्
गंतुंचारभतद्वित्रैःपुत्रैरारुह्यमांसमम् २९
शनैःशनैसरस्तीरेमग्नोऽहगाढकर्दमे
तत्राहंकुटिलग्रीवश्चापतन्कर्दमान्तरे ३०
ताड्यमानोमुहुःपुत्रैःलकुटोपलपाणिभिः
उत्थाप्यमानोबहुधाप्राणान्मोचितवानहम् ३१
ततोनिश्चित्यमांतत्रमृतंभग्नोद्यमाःसुताः
आक्रुश्यमातरंदीनांप्रावृत्यनिर्ययुर्गृहम् ३२
ततःसंप्रेत्यबहुनाकालेनछागतांगतः
निस्तीर्णानेकहीनोच्चयोनिसंतापयातनः ३३

द्विजउवाच
किमनेनमहाछागदुःखजातेननित्यशः
यथावदंजसामह्यंसुखमात्यंतिकंभवेत् ३४
छागउवाच
आश्चर्यंकथयिष्यामिपुनरन्यदपिद्विज
स्वस्थमापृच्छमानस्यतवास्तियदिकौतुकम् ३५
अस्तिनाम्नाकुरुक्षेत्रंनगरंमोक्षदायकम्
सूर्यवंशोऽभवत्तत्रचंद्रशर्मामहीपतिः ३६
सूर्योपरागसमयेश्रद्धयापरयानिवतः
दानंसकालपुरुषंदातुंसमुपचक्रमे ३७
समाहूयद्विजन्मानंवेदवेदांगपारगम्
स्नातुंपुगयोदकैःपुगयैर्ययौसार्द्धंपुरोधसा ३८
अथोच्चैःकालपुरुषोवाचमूचेहसन्निव
अन्येनैवप्रगृह्णंतिक्षेत्रेचागवपिकिंचन ३९
सूर्योपरागसमयेकुरुक्षेत्राभिधेस्थले
दानंचकालपुरुषंजिघृक्षसिकथंद्विज ४०
ज्ञात्वापिनिश्चितंसर्वमेतत्पातककारकम्
प्रवर्तसेकथंकर्तुंधनलोभान्धयाधिया ४१
इत्थमाकगर्यतद्वाक्यंजगद्विस्मयकारकम्
किमनेनमहादानभयेनेत्यवदद्द्विजः ४२
एवंविधमहादानपातकागाधवारिधिम्
जानामितरितुंसम्यगुपायमहमेवहि ४३
ततःस्नात्वामहीपालःपरिधायचवाससी
शुचिःप्रसन्नहृदयःसितमाल्यानुलेपनः ४४
अवलंब्यकरांभोजंपार्श्ववर्तिपुरोधसः
समाययौसेव्यमानःसतत्कालोचितैर्जनैः ४५
समागत्यचभूपालःसंप्रादात्कालपूरुषम्
यथोचितेनविधिनातस्मैभक्त्याद्विजन्मने ४६
निर्भिद्यकालपुरुषहृदयंनिर्दयोदयः
पापात्मानिर्ययौकश्चिच्चांडालोरक्तलोचनः ४७

किंचप्रापितकालस्यपरनिंदारसोत्सवे
निंदाचांडालिकादेहपार्श्वमागाद्दिवजन्मनः ४८
एतच्चांडालयुगलंनिर्गत्यारुणलोचनम्
ततःसंचरितंचक्रेप्रसह्यांगेद्विजन्मनः ४९
गीतानांनवमाध्यायंजपन्नेवहृदिस्थितः
कंपमानंद्विजंकिंचित्तूष्णींपश्यतिभूपतौ ५०
अंतर्निद्राणगोविंदंकंपमानमिवांबुधिम्
मरुदांदोलनैर्विद्वान्द्विजन्मापापसंश्रयम् ५१
ततोगीताक्षरोद्भूतैर्वैष्णवैःपरिपीडितम्
पलायमानंचांडालयुगलंनिष्फलोद्यमम् ५२
तन्निश्चक्रामवेगेनद्विजातेःपार्श्ववर्तियत्
शरीरेवर्त्तमानंचपरनिंदारसोत्सवे ५३
इत्थंकलितवृत्तांतःप्रत्यक्षंक्षितिवल्लभः
पर्यपृच्छद्द्वीजन्मानंविस्मयस्मेरलोचनः ५४
कथमापदियंघोरानिस्तीर्णामहतीत्वया
कंमंत्रंजपताविप्रकंवासंस्मरतासुरम् ५५
कःपुमान्काचसायोषित्कथमेतावुपस्थितौ
कथंचशांतिमापन्नावित्युदीरयमेद्विज ५६
द्विजउवाच
चांडालमूर्तिमासाद्यमूर्तिकिल्बिषमुल्बणम्
योषिन्मूर्त्तिमयींनिंदाद्वयमेतदवैम्यहम् ५७
गीतायानवमाध्यायमंत्रमालामयास्मृता
तन्माहात्म्यमिदंसर्वंत्वमवेहिमहीपते ५८
गीतायानवमाध्यायंजपामिप्रत्यहंनृप
निस्तीर्णाश्चापदस्तेनकुप्रतिग्रहसंभवाः ५९
अभ्यस्यनवामाध्यायंराजातस्माद्दिवजन्मनः
तावुभावपिलेभातेपरांनिर्वृतिमुत्तमाम् ६०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेगीता
माहात्म्येत्र्यशीत्यधिकशततमोऽध्यायः १८३

## चतुरशीत्यधिकशततमोऽध्यायः

देव्युवाच
सर्वज्ञसर्वचैतन्यसर्वेश्वरगिरांगुरो
धन्यास्मिशिवमान्येनदृश्यमानेनयत्त्वया १
निरूपितमिदंपुरयंनवमाध्यायवैभवम्
अनेकविस्मयस्वादुकथानकमयंमधु २
शृरवंत्याममदेवेशनतृप्तिर्जातुजायते
अकुंठाश्रवणोत्कंठावर्द्धतेवृषभध्वज ३
आसीन्ममहिमांभोधेगीतानांश्रुतिजीवितम्
तत्रापिदशमाध्यायंप्रधानंमुनयोजगुः ४
तमुद्दिश्यमहाध्यायमभिधेहिकथानकम्
शिवउवाच
शृणुसुश्रोणिनिश्रेणींस्वर्गदुर्गस्यदुर्ल्लभाम् ५
सीमामिवप्रभावानांपावनींपरमांकथाम्
आसीत्काशीपुरेविप्रःपुरयकीर्त्तिपरायणः ६
प्रशांतचेतानिर्मुक्तहिंसाकार्कश्यसाहसः
निवृत्तिनिरतोनित्यंजितेंद्रियतयातथा ७
धीरधीरितिविख्यातोनंदीवमयिभक्तिमान्
निस्तीर्णनिगमांभोधिःसर्वशास्त्रार्थकोविदः ८
तस्यध्यानपराधीनचेतसःप्रतिगच्छतः
अंतरात्मनिनिर्मग्नमनसस्तत्त्वचक्षुषः ९
करावलंबनंतस्यधावन्प्रीत्याददाम्यहम्
कदाचनचमत्कारकारकंविमनामुनिः १०
आचांतःकिंचनासाग्रपरमानंदमेदुराम्
दृशमासाद्यनिद्राणकरणोयमिवास्थितः ११
उपाधास्यविशालाद्धिविशालांद्वारदेहलीम्
अशेतनिशिनिःशंकंतावल्लंबेक्षणःक्षणम् १२
मामपृच्छद्भृंगिरिटिःप्रणम्यपादपंकजम्
अनेनविधिनाकेनविहितंतवदर्शनम् १३
तपस्तप्तंहुतंजप्तंकिमनेनमहात्मना

दत्तेप्रतिपदंदेवोयस्यहस्तावलंबनम् १४
अयंनलभतेगंतुंकस्मादस्मात्पुराद्बहिः
यदृच्छयायदाकाशीसीमामुल्लंघ्यगच्छति १५
नपश्यतितदासर्वान्पार्श्वस्थानपिदेहिनः
अत्रहेतुमहंज्ञातुमिच्छामिस्वामिभाषिताम् १६
अनुग्राह्योस्मिचेद्वक्तुंयुक्तंचेत्तदुदीरय
भृंगिरिटेरिमंप्रश्नंसमाकर्ण्याहमूचिवान् १७
कदाचिदासंकैलासंपार्श्वेपुन्नागकानने
रणत्खेचरसुश्रोणिपूर्णस्तबककानने १८
कलकंठकुलालापकल्लोलितदिगंतरे
गरुत्मदादिदात्यूहसमूहस्वरसंकुले १९
भ्रमद्दारुघटीयंत्रप्रोल्लसद्बिंदुदंतुरे
प्रबुद्धसारणिप्रांतकदलीकंदलालसे २०
कस्तूरीहरिणोपेतेकिंनरस्वरमोहिते
रोमंथमंथरापांगैर्मृगैःक्वापिनिषेविते २१
हंसैःकीरेषुपांडित्यंकुर्वाणैःसंकुलेशुकैः
निर्ह्रदिक्वणिनीरंध्रसमीरणविलोडिते २२
माधवीपुष्पनिर्यासशीधुक्षीबमधुव्रते
उन्मीलित्त्रिवलीपुष्पगुच्छसौरभनिर्भरे २३
प्रोत्फुल्लबकुलामोदमदमंथरषट्पदे
सोमादुद्भूतपीयूषक्षालितक्षितिमंडले २४
अध्यास्यवेदिकामेकामहंक्षणमवस्थितः
उद्दंडशाखिसंघट्टस्फुटन्मंथामुखोत्करैः २५
प्रकंपिताचलच्छायोववौचंडसमीरणः
पश्चादभून्महाघोषोनिर्घोषितदरीतटः २६
अवातरत्ततःकश्चित्पक्षीगगनगह्वरात्
शारदानरिदच्छायःकज्जलानामिवोच्चयः २७
तमसामिवसंघातःपक्षच्छेदीवपर्वतः
अवष्टभ्यक्षितिंपद्भ्यांपक्षीमांप्रणनामसः२८
आनीयपद्ममम्लानमसौमत्पादयोर्व्यधात्

अथासौस्पष्टयावाचापक्षीस्तोत्रमुदीरयत् २९
जयदेवचिदानंदसुधासिंधोजगत्पते
सदासद्भावनासंगकल्लोलानंतविग्रह ३०
अद्वैतवासनामत्यामलत्रयविवर्जित
जितेंद्रियपराधीनसमाधिप्राप्यविग्रह ३१
निरुपाधिविनिर्मुक्तनिराकारनिरामय
निःसीमनिरहंकारनिरावरणनिर्गुण ३२
शरणागतसंत्राणप्रवीणचरणांबुज
भीममालमहाव्यालज्वालादग्धमनोभव ३३
कुठारभिन्नदैत्येंद्रगंडूषितमहाविभो
त्रिपुरप्रमदाभालसिंदूरोद्धूलिमार्जन ३४
कात्यायनीकुचांभोजवरकुंकुमचर्चित
नमःप्रमाणदूरायनमःप्रमतिरूपिणे ३५
नमश्चैतन्यनाथायनमस्त्रैलोक्यरूपिणे
वंदेतवपदांभोजंयोगिप्रवरचुंबितम् ३६
अपारभवपाथोऽधिपारावतरणाद्भुतम्
वाचस्पतिरपिस्तोत्रेभवतोनप्रगल्भते ३७
सहस्रवदनस्यापिफणींद्रस्यनचातुरी
त्वद्वर्णनेमहादेवकोऽहमल्पमतिःखगः ३८
स्तोत्रमेतत्समाकर्ण्यकृतंतेनपतत्रिणा
तमवोचमहंकोऽसिकुतस्त्योसिविहंगम ३९
हंसेनसदृशःकायोवर्णःकाकेनसंनिभः
प्रयोजनंकमुद्दिश्यप्राप्तोसीहतदुच्यताम् ४०
इतिपक्षीमयापृष्टःप्रश्रयानतकंधरः
जगादश्लक्ष्णयावाचापक्षीवाक्यविदांवरः ४१
देवेशधूर्जटेविद्धिमांमरालंस्वयंभुवः
कर्मणायेनमेकार्ष्ण्यंजातमाधुनिकंविभो ४२
तदाकर्णयसर्वज्ञपृष्टंयदितदुच्यते
मानसात्सरसःपृथ्वद्यंयातःप्राप्तोस्मिसंकटम् ४३
सौराष्ट्रनगरादारात्सरसिस्फुटदंबुजे

बालेंदुखंडधवलान्मृणालकवलानहम् ४४
आदायबलमाश्रित्यनिरगांगगनंद्रुतम्
विहायसस्ततस्तस्मादकस्मादपतंभुवि ४५
अथमोहपरीतात्मासर्वथाविकलेंद्रियः
वेपमानवपुर्मोहात्स्पृष्टःशीतैःसमीरणैः ४६
प्रबुद्धःपतनेहेतुमपश्यन्नात्मनस्तदा
अहोकिमेतदापन्नमद्यपातःकथंमम ४७
कालिमायेनकायेस्मिन्पक्वकर्पूरपांडुरे
इत्यहंविस्मयाविष्टोयावत्कुर्वेविचारणम् ४८
तावदंबुरुहाद्वाणीमश्रौषमहमीदृशीम्
उत्तिष्ठहंसवक्ष्यामिकारणंपातकार्ष्ण्ययोः ४९
अथोत्थायसमागत्यमयामध्येसरोवरे
दृष्टराजीविनीरम्याराजीवैःपंचभिर्युता ५०
कारणंप्रष्टुमारेभेकार्ष्ण्यस्यपतनस्यच
अथतत्रघनश्यामान्स्वर्णवर्णांबरावृतान् ५१
चतुर्भुजान्गदाशंखचक्रपंकेरुहायुधान्
किरीटहारकेयूरकुंडलद्युतिचित्रितान् ५२
अद्राक्षमंतरिक्षस्थान्पुरुषानयुतानिषट्
नत्वाप्रदक्षिणीकृत्यपंचपद्मांसरोजिनीम् ५३
आत्मीयंपातमारभ्यपृष्टंतदखिलंमया
पद्मिन्युवाच
कलहंसगतोऽसित्वंमांविलंघ्यविहायसा ५४
तेनपातकयोगेनपतितोऽसिमहीतले
तेनैवकालिमाकायेपक्षिसत्तमलक्ष्यते ५५
भवंतंपतितंवीक्ष्यकृपापूर्णेनचेतसा
मध्यमेनामुनाब्जेनवदताजातसौरभम् ५६
आघ्रायषट्पदाःषष्टिसहस्राणिदिवंययुः
एतेयेभवतांदृष्टाःनीलोत्पलसमत्विषः ५७
सर्वेतेसप्तमेऽतीतेजन्मन्यासन्मुनेःसुताः
अस्यैवसरसस्तीरेतेपुस्तेपरमंतपः ५८

कदाचित्कामिनीकाचिच्चंपकस्तबकस्तनी
चलापांगकालाकांततरंगितरसालिनी ५९
नासामुक्ताफलज्योत्स्नाचुंबितस्मितदीधितिः
वीणांविन्यस्यकुचयोर्वनेऽस्मिन्मधुरंजगौ ६०
गायंत्यास्वरमाकर्ण्यब्राह्मणाहरिणाइव
तांसमागत्यतेसर्वेसममेवव्यलोकयन् ६१
मयादृष्टाममैवेयमित्यूचुस्तेपरस्परम्
मुष्टामुष्टिततस्तेषांभ्रातॄणामभवद्रणः ६२
अन्योन्यमुष्टिनिष्पिष्टवक्षसस्त्यक्तजीविताः
तेभुक्त्वानिरयान्घोरान्बभूवुःसारसाभुवि ६३
तदातेश्वापदान्जघ्नुर्दग्धावन्येनवह्निना
ततोमातंगतामेत्यपथिपांथानघातयन् ६४
वनेविषोदकंपीत्वातेययुर्यममंदिरम्
खरोष्ट्रकपिमार्जारजन्मान्यासाद्यचक्रमात् ६५
ततोमधुव्रताजातावर्ततेऽत्रसरोवरे
अद्यमेगंधमाघ्रायप्रापुस्तेवैष्णवंपदम् ६६
शृणुपक्षींद्रवक्ष्यामियेनमय्यस्तिवैभवम्
एतस्माज्जन्मनःपूर्वेतृतीयेजन्मनिह्नितौ ६७
सरोजवदनानामद्विजातेःकन्यकाऽभवम्
पातिव्रत्यैकनिरतागुरुशुश्रूषणेरता ६८
कदाचित्सारिकामेकांपाठयंत्याविलंबितम्
सारिकाभवपापेत्वंपत्याशप्तास्मिकुप्यता ६९
प्रेत्यसारित्वमासाद्यपातिव्रत्यप्रसादतः
मुनीनामेवसदनेकन्याकाचित्पुपोषमाम् ७०
गीतानांदशमाध्यायंविभूतिरितिविश्रुतम्
प्रातःपठतिविप्रोसावश्रौषंतमघापहम् ७१
कालेनसारिकादेहमहंहित्वाविहंगम
दशमाध्यायमाहात्म्यादप्सराश्चाभवंदिवि ७२
पद्मावतीतिविख्यातापद्मायादयितासुखी
कदाचनमयायांत्याविमानेनविहायसा ७३

एतत्सरोवरंरम्यंविलोक्यविमलांबुजम्
अवतीर्यजलक्रीडायावदारभ्यतेमया ७४
दुर्वासास्तावदायातोविवस्त्रातेनवीक्षिता
तद्भयात्पद्मिनीरूपंधृतमेतन्मयास्वयम् ७५
पद्भ्यांपद्मद्वयंचैवद्वयंहस्तद्वयेनच
मुखेनपंचमांभोजमितिपंचांबुजास्म्यहम् ७६
दृष्टातेनमुनींद्रेणकोपज्वलितचक्षुषा
अनेनैवस्वरूपेणतिष्ठपापेशतंसमाः ७७
इतिशापंसमुत्सृज्यसचैवांतर्दधेक्षणात्
विभूत्यध्यायमाहात्म्याद्वाणीमेनविलीयते ७८
मद्विलंघनमात्रेणपतितोसिमहीतले
अद्यशापनिवृत्तिर्मेतिष्ठतस्तेखगोत्तम ७९
निशामयमयागीयमानमध्यायमुत्तमम्
यस्याकर्णनमात्रेणत्वमद्यैवविमोक्ष्यसे ८०
इत्यसौदशमाध्यायंपपाठश्लक्ष्णयागिरा
तमाकर्ण्यतयादत्तमादायचसरोरुहम् ८१
मयासमर्पितंतुभ्यंपद्मिन्यापद्ममुत्तमम्
इत्युक्त्वासजहौदेहंतदद्भुतमिवाभवत् ८२
भृंगिरिटिरुवाच
पुरातनेभवेकोऽयब्रह्महंसोऽभवत्कथं
तवाग्रतःकुतोहेतोरुत्ससर्जकलेवरम् ८३
इतिभृंगिरिटिर्वाक्यमाकर्ण्याहंतदाब्रुवम्
द्विजवेश्मनिपूर्वस्मिन्जन्मन्ययमजायत ८४
सुतपाइतिविख्यातोब्रह्मचारीजितेंद्रियः
वसन्गुरुकुलेकुर्वन्वेदाध्ययनमन्वहम् ८५
गुरुशुश्रूषणंसम्यग्विदधातिचभक्तितः
शयानस्यगुरोःशय्यांनिद्रितःसपदास्पृशत् ८६
तेनपापेनतिर्यक्त्वमयंस्वर्गेऽपिलब्धवान्
पद्मयोनिमरालानांमध्येजातस्ततोद्विजः ८७
अस्मिञ्जन्मन्यमुष्येहपुरास्मल्लोकनावधि

गीतानांदशमाध्यायंनलिन्याकथितंततः ८८
ग्राकर्ययविहगोलेभेब्रह्मज्ञानमनुत्तमम्
सोऽयविप्रकुलेजातोदशमाध्यायवैभवात् ८९
जन्माभ्यासवशादस्यशिशोरपिमुखांबुजात्
गीतानांदशमाध्यायःसमुल्लसतिसर्वदा ९०
तदर्थपरिणामेनसर्वभूतेष्ववस्थितम्
शंखचक्रधरंदेवमयंपश्यतिसर्वदा ९१
यस्मिन्यस्मिन्यदैवास्यदृष्टिःस्निग्धाशरीरिणः
ससमुक्तोभवेत्सर्वःसुरापोब्रह्महाऽपिवा ९२
तद्विज्ञायमयाविप्रःपरमात्मस्वरूपिणा
इदंनगरमानीतोमुक्तिक्षेत्रंस्वभावतः ९३
ग्रत्रत्यानांमनुष्याणांमुक्तिःकरतलेस्थिता
तेनास्यदृष्टिपातेनविशेषोऽन्योनजायते ९४
नददामिबहिर्गंतुमहमस्यपुराकृतम्
दशमाध्यायमहात्म्यात्तत्वज्ञानंसुदुर्लभम् ९५
लब्धमेतेनमुनिनाजीवन्मुक्तिरियंतथा
तेनास्यचलतोहस्तंददामिपथिगच्छतः ९६
दशमाध्यायमहिमाभृंगिरिटेमहानयम्
इतिभृंगिरिटेरग्रेकथितंयत्कथानकम् ९७
तवेदमत्रकथितंसर्वपापप्रणाशनम्
नरोवाप्यथवानारीयापिकोऽपिचवापुनः ९८
ग्रस्यश्रवणमात्रेणसर्वाश्रमफलंलभेत् ९९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
गीतामहात्म्येचतुरशीत्यधिकशततमोध्यायः १८४

## पञ्चाशीत्यधिकशततमोऽध्यायः

देव्युवाच
इतिहासोऽयमीशानश्रेयसांसाधनंपरम्
ग्राकर्ण्यकरुणापूर्णममकांक्षाप्रवर्त्तते १
एकादशस्यमाहात्म्यमध्यायस्यकथाश्रयम्

व्यावर्णयविरूपाक्षवक्तृणांप्रथमप्रभो २
ईश्वरउवाच-
आकर्णयकथांकांतेगीतावर्णनसंश्रयाम्
विश्वरूपाभिधानस्यमाहात्म्यमपिपावनम् ३
अध्यायस्यविशालाक्षिवक्तुंतावन्नशक्यते
सहस्राणिकथाः संतितत्रैकाकथ्यतेमया ४
प्रणीतायास्तटेनद्यामेघंकरमितिश्रुतम्
नगरंगरिमाधारतुंगप्राकारगोपुरम् ५
विशालाश्रमशालासुस्वर्णस्तंभविभूषितम्
श्रीमद्भिःसुखिभिः शांतैःसदाचारैर्जितेंद्रियैः ६
अधिष्ठितंजवैश्चारुशृंगाटकमनोहरम्
मणिस्तंभस्फुरत्स्वर्णापणचत्वरशोभितम् ७
पताकाकिंकिणीक्वाणकदंबककलस्वरम्
वेदाध्ययननिर्घोषवाचालितदिगंतरम् ८
तूर्यसंघोषणाकीर्णविशालव्योममंडलम्
पताकापल्लोद्भूतवातनिर्जितविग्रहम् ९
राजामार्गवरद्वारनारीमंजीरसिंजितैः
वल्लकीवेणुकैर्गीतिर्भातिवाजींद्रहेषितैः १०
प्रेक्षमाणमिवाभीक्ष्णंदिक्पालानांपुरैःसमम्
आस्तेजगत्पतिर्यत्रशार्ङ्गपाणिर्विराजितः ११
मूर्तिमत्परमंब्रह्मजगल्लोचनजीवितम्
लक्ष्मीनयनराजीवपूजिताकारगौरवः १२
त्रिविक्रमवपुर्मेघश्यामलः कोमलद्युति
श्रीवत्सवक्षाराजीव वनमालाविभूषितः १३
अनेकभूषणोपेतः सरत्नइववारिधिः
चलत्सौदामिनीदामसांद्रमेघसमद्युतिः १४
तस्यास्तेमुकुटेसाक्षात्शार्ङ्गपाणिःपरःपुमान्
तंदृष्ट्वामुच्यतेजंतुर्जन्मसंसारबंधनात् १५
यस्मिन्पुरेमहातीर्थंविद्यतेमेखलाभिधम्
यत्रस्नात्वानरैर्नित्यंप्राप्यतेवैष्णवं पदम् १६

तत्रवीन्द्यजगन्नाथंनरसिंहं कृपार्णवम्
सप्तजन्मार्जिताद्धोरान्मुच्यतेदुष्कृतान्नरः १७
मेखलायांगणाधीशंविलोकयतियोनरः
सनिस्तरतिविघ्नानिदुस्तराग्यपिसर्वदा
ब्रह्मचर्यपरोदांतोनिर्ममोनिरहंकृतिः १८
तस्मिन्मेघंकरेकश्चिदभूद्ब्राह्मणसत्तमः
सुनंदइतिविख्यातोवेदशास्त्रविशारदः १९
वशीकृतेंन्द्रियग्रामोवासुदेवपरायणः
देवस्यशार्ङ्गिणःपार्श्वेगीताध्यायमिमंप्रिये २०
एकादशंपठत्येषविश्वरूपप्रदर्शनम्
अध्यायस्यप्रभावेनब्रह्मज्ञानमवापसः २१
परमानंदसंदोहश्लाघ्यसंवित्समाधिना
प्रत्यङ्मुखेंद्रियतयानिश्चलांस्थितिमीयुषा २२
सततंस्थीयतेतेनजीवन्मुक्तेनयोगिना
एएकदासमहायोगीसिंहराशिस्थितेगुरौ २३
गोदावरीतीर्थयात्रांविधातुमुपचक्रमे
प्रथमेऽह्निसमागत्यविरजं तीर्थमुत्तमम् २४
नाभिमारभ्यतीर्थेषुससमभ्यर्च्यदेवताम्
मर्ज्जन्मज्जन्जगद्धात्रींकमलांसव्यलोकयत् २५
तांसंपूज्यमहामायांसर्वकामफल प्रदाम्
तारातीर्थेततःस्नात्वाकपिलासंगमेततः २६
अष्टतीर्थमसौचक्रेविधायपितृतर्पणम्
कुमारीशंशिवंनत्वाकपिलाद्वारमाययौ २७
तत्रनिर्मज्ज्यनिर्धुतप्राग्जन्मांतरदुष्कृतः
संपूज्यनत्वाश्रुत्वाचदेवंवैमधुसूदनम् २८
उषित्वातत्रतांरात्रिंप्रागात्प्रातःसहद्विजैः
नरसिंहवनेतत्रतीर्थे रामस्यदीर्घिका
प्रह्लादपूजितः साक्षादास्तेयत्रनृकेसरी २९
तंदृष्ट्वादेवदेवेशंपूजयित्वातुभक्तितः
तत्रतंदिवसंनीत्वासययावंबिकापुरम् ३०

अनुग्रहेणभक्तानामंबिकातत्रतिष्ठति
पूरयंतिमनुष्याणांवांच्छितान्यखिलान्यपि ३१
पूजयित्वांबिकांभक्त्या पुष्पगंधानुलेपनैः
उपहारैश्चविविधैःस्तौत्रैःप्रणमनैरपि ३२
विप्रस्तस्मात्पुराप्राप्तःकंठस्थानाभिधंपुरम्
यत्रास्तेपरमाशक्तिर्महालक्ष्मीर्महाद्युतिः ३३
तामवेक्ष्यसुधाभानुभास्करद्युतिमंडलाम्
संसारतापविच्छेदपद्मपीयूषवाहिनीम् ३४
योगिराजहृदंभोजराजहंसनिषेविताम्
अनाहतमहानादमयीमद्वयरूपिणीम् ३५
महालक्ष्मींभगवतींवांछितार्थप्रदायिनीम्
आराध्यभक्तिभावेनचेतसासमुनीश्वरः ३६
विवाहमंडपंप्रापपुरंविप्रैःसमन्वितः
पुरेतत्रप्रतिगृहंवासस्थानमयाचत ३७
नलेभेवसतिंस्थातुंगेहेकस्मिन्नपिद्विजः
दर्शितंग्रामपालेनविशालंवासमंदिरम् ३८
प्रविश्यवशतिंचक्रेब्राह्मणः संगिभिःसह
ततः प्रभातेविमलेसुनंदोऽसौद्विजोतमः ३९
बहिरालोकयांचक्रेवासगेहान्निजंवपुः
अध्वन्यानखिलान्यत्रजातान्क्वापियदृच्छया ४०
गम्यमानः समायांतंग्रामपालोददर्शसः
तंवभाषेग्रामपालआयुष्मानसिसर्वशः ४१
भागधेयवतांपुंसांपुण्यः पुण्यवतामसि
प्रभावोविद्यतेवत्सकोपिलोकोत्तरस्त्वयि ४२
क्वप्रयाताः सहायास्तेकथंतत्सदनाद्बहिः
तत्पश्यमुनिशार्दूलकथयामितवाग्रतः ४३
किंतुनान्यंत्वयातुल्यंपश्यामीहतपस्विनम्
किंजानासिमहामंत्रंकांविद्यामवलंबसे ४४
कस्यदेवस्यकारुण्याच्छक्तिर्लोकोत्तरात्वयि
तत्कारुण्यवशात्तिष्ठग्रामेऽस्मिन्ब्राह्मणोत्तम ४५

शुश्रूषामखिलामेवभगवंस्तेकरोम्यहम्
इतिसंवासयामासतस्मिन्ग्रामेमुनीश्वरम् ४६
परिचर्याचतस्यासौभक्त्याचक्रेदिवानिशम्
दिवसेषुप्रयातेषुसप्ताष्टसुसमेयिवान् ४७
प्रातरागत्यतस्याग्रे रुरोदभृशदुःखितः
अद्यमेभाग्यहीनस्यगुणवान्भक्तिमान्सुतः ४८
जाज्वल्यमानदंष्ट्रेणभक्षितोनिशिरक्षसा
इत्येवंरक्षकेणोक्तंतंपप्रच्छससंयमी ४९
क्वास्तेसराक्षसःपुत्रोभक्षितस्तेकथंवद
ग्रामपालउवाच-
वर्ततेनगरेघोरः पुरुषादोनिशाचरः ५०
सखादतिनरानेत्यनित्यं नगरगोचरान्
ससर्वैर्नागरैरत्रप्रार्थितः पुरुषैःपुरा ५१
रक्षराक्षसनःसर्वान्ग्रासंतेकल्पयामहे
पथिकानिशिनिद्रंतियेचतान्भुंक्ष्वराक्षस ५२
एतस्मिन्सदनेपांथान्ग्रामपालप्रवेशितान्
आहारंकल्पयांचक्रुरात्मीयप्राणगुप्तये ५३
भवान्सुप्तोगृहेऽमुष्मिन्नधन्यैः संयुतः परैः
तेग्रस्ताःकिलचानेननत्वंमुक्तोसिद्विजोत्तम ५४
प्रभावंभवतोवेत्तिभवानेवद्विजोत्तम
मदीयतनयस्याद्यमित्रमेकमुपागतम् ५५
अजानतामयासोऽपितनयस्यप्रियः सखा
अन्यैः पांथजनैः सार्द्धतस्मिन्गेहेप्रवेशितः ५६
श्रुत्वातत्रप्रविष्टंतंनिशीथेतनयोमम
तमानेतुंगतः सोऽपिभक्षितस्तेनरक्षसा ५७
दुःखितेनमयाप्रोक्तः प्रातः सपिशिताशनः
ममापिपुत्रोदुष्टात्मन्भवतानिशिभक्षितः ५८
भवज्जठरनिर्मग्नः सुतोऽसौयेनजीवति
अस्तिचैवमुपायस्तेब्रूहिमेत्वं निशाचर ५९
राक्षसउवाच-

अंतःप्रविष्टात्वत्पुत्रमज्ञात्वाहमभक्षयम्
अजानन्भक्षितः पांथैः सहितोऽसौसुतस्तव ६०
यथाजीवतिमे कुक्षौयथाभवतिरक्षितः
तथाविहितमप्यस्तिदैवेनपरमेष्ठिना ६१
गीतैकादशमध्यायंयः पठत्यनिशंद्विजः
तत्प्रभावेनमेमुक्तिर्मृतानांपुनरुद्भवः ६२
ग्रामपालउवाच-
कथमेकादशाध्यायसामर्थ्यमिदमद्भुतम् ६३
इतिपृष्टोमयाविप्रसबभाषेनिशाचरः ६४
पुरागृध्रेणकेनापिनभोमार्गेणगच्छता
अस्थिखंडंस्वतुंडाग्रात्पातितंक्वापिवारिणि ६५
तंजलाशयमागत्यकोऽपिज्ञानीश्वरस्तदा
महातीर्थमितिज्ञात्वाविदधेपितृतर्पणम् ६६
तमूचिरे जनाः सर्वेतीर्थमेतत्कथंवद
जपत्येकादशाध्यायंत्रिसन्ध्यंनियतेंद्रियः ६७
कृतमौनस्तुविप्रोऽसौचौरैर्व्यापादितः पथि
तस्यास्थिशकलंगृध्रवदनात्पतितंजले ६८
तेनतीर्थमिदंदिव्यंजातंपातकनाशनम्
ततस्तेमानवाः सर्वेसस्नुस्तत्रलाशये ६९
निष्कल्मषतयाचैवंप्रापुस्तेपरमंपदम्
एकादशस्यसामर्थ्यादध्यायस्यभविष्यति ७०
ममापिमुक्तिः पांथानांपुनरुत्थानमेवच
योमयाकश्चिदुद्गीर्णोब्राह्मणोऽत्रैवतिष्ठति ७१
सच एकादशाध्यायंजपतिस्मनिरंतरम्
सतेनाध्यायमंत्रेणसप्तवाराभिमंत्रितम् ७२
विधायवारिविप्रेंद्रःक्षिपेद्यदिममोपरि
ततोमेशापनिर्मुक्तिर्भविष्यतिनसंशयः
इतितेनास्मिसंदिष्टः समायातस्त्वदंतिकम् ७३
विप्रउवाच-
राक्षसः केनपापेनजातोसौवदरक्षक

यत्क्षपायां गृहेतस्मिन्नरान्खादतिनिद्रितान् ७४
ग्रामपालउवाच
अस्मिन्ग्रामेपुराकश्चिदासीद्विप्रःकृषीवलः
एकदाशालिकेदाररक्षणेव्याकुलोद्विजः ७५
नातिदूरेमहागृध्रःपांथमेकमभक्षयत्
तंविमोचयितुंदूराद्दयांचक्रेऽपितापसः ७६
भुक्त्वापांथंखगस्तावन्निरगादंबराध्वना
ततः स तापसः कोपात्तंबभाषेकृषीवलम् ७७
धिक्त्वांहालिकदुर्बुद्धेकठोरमतिनिर्घृण
कुक्षिभरंपरत्राणविमुखंहतजीवितम् ७८अं
चोरैश्चदंष्ट्रिभिःसर्प्पैररिवह्निविषांबुभिः
गृध्रराक्षसभुतैश्चवेतालादिभिराहतान् ७९
जनानुपेक्षतेशक्तःसतद्वधफलंलभेत्
नमोचयतियोविप्रंप्रभुश्चोरादिभिर्धृतम् ८०
सयातिनरकंघोरंसपुनर्जायतेवृकः
निहन्यमानंविपिनेगृध्रव्याघ्रेणपीडितम् ८१
मुंचमुचेतियोवक्तिसयातिपरमांगतिम्
गवा मर्थेहताव्याघ्रैर्न्याधैर्दुष्टैश्चराजभिः ८२
तेपियांतिपदंविष्णोर्दुष्प्राप्यंयोगिनामपि
अश्वमेधसहस्राणि वाजपेयशतानिच ८३
शरणागतसं त्राणकलांनार्हंतिषोडशीम्
दीनस्योपेक्षणंकृत्वाभीतस्यचशरीरिणः ८४
पुगयवानपिकालेनकुंभीपाकेसपच्यते
पश्यन्नपिभवान् पांथंदुष्टगृध्रेणभक्षितम् ८५
निवारणसमर्थोपिनचक्रेयन्निवारणम्
निष्कृपोसियतस्तस्माद्भविष्यसिनिशाचरः ८६
इमांशापंमुने श्रुत्वाकंपमानकलेवरः
प्रणम्यहालिकोविप्रंबभाषेकरुणांवचः ८७
अत्राहंक्षेत्ररक्षायांचिरंक्षिप्तेनचक्षुषा
नवेद्मिनिकटंगृध्रहन्यमानमिमंनरम् ८८

तेनमेऽनुग्रहंकर्तुंकृपणस्यत्वमर्हसि
विप्रउवाच
योवेत्त्येकादशाध्यायं जपत्यनुदिनंचयः ८९
तेनाभिमंत्रितंवारियदाशिरसितावके
पतिष्यतितदाशापात्तवमुक्तिर्भविष्यति ९०
इत्युक्त्वातापसोयातोहालिकोराक्षसोऽभवत्
तदागच्छद्विजश्रेष्ठतेनाध्यायेनमंत्रय
तीर्थोदकंस्वहस्तेनतस्यमूर्द्धनिनिक्षिप ९१
महादेवाउवाच
इतितत्प्रार्थितंतस्यश्रुत्वाचकरुणाप्लुतः
तथेतिसहपालेनमुनीरक्षोंतिकंययौ ९२
एकादशेनतेनांबुविश्वरूपेणमंत्रितम्
निक्षिप्तंतस्यशिसितेनविप्रेणयोगिना ९३
गीताध्यायप्रभावेणशापमोक्षमवापसः
विहायराक्षसंदेहंचतुर्वाहुस्ततोऽभवत् ९४
निगीर्णायेजनास्तेनपांथाश्चासन्सहस्रशः
चतुर्भुजाबभूवुस्तेशंखचक्रगदाधराः ९५
तेविमानान्यारुरुहुस्तावदूचेसराक्षसम्
मदीयस्तनयः कस्तंदर्शयस्वनिशाचर ९६
इत्युक्तेग्रामपालेनदिव्यधीराहराक्षसः
एवंचतुर्भुजंविद्धितमालश्यामलद्युतिम् ९७
माणिक्यमुकुटंदिव्यमणिकुंडलमंडितम्
हारहारिमहास्कंधंस्वर्णकेयूरभूषितम् ९८
राजीवलोचनंस्निग्धंहस्तेकृतसरोरुहम्
दिव्यंविमानमारूढंदेवत्वंप्राप्तमात्मजम् ९९
इतितस्यवचः श्रुत्वासुतंदृष्ट्वाचतादृशम्
स्वगेहंनेतुमारेभेजहाससस्सुतस्ततः १००
कतिवाराणिजातोऽसित्वंपुत्रो ममरक्षक
पूर्वपुत्रस्त्वदीयोऽस्मिन्नधुनाविबुधोऽस्म्यहम् १०१
यास्यामिवैष्णवंधामब्राह्मणस्यप्रसादतः

निशाचरोऽपिप्राप्तोऽयपश्यदेहंचतुर्भजम् १०२
एकादशस्यमाहात्म्याद्यातिस्वर्गंसमंजनैः
विप्रादस्मात्तमध्यायमधीष्वत्वंजपानिशम् १०३
भविस्यतिनसंदेहस्तवापिगतिरीदृशी
ताततस्मात्सतांसंगंदुर्लभंसर्वथाजनैः १०४
सोप्यद्यतेसमुत्पन्नोह्यात्मनः साधयेप्सितम्
किंधनैर्भोगदानैर्वाकिंयज्ञैस्तपसानुकिम् १०५
किंपूर्तैर्वापरंश्रेयोविश्वरूपस्यपाठतः
तद्विष्णोःपरमंरूपमध्यायस्यश्रुतेनच १०६
यत्पूर्णानंदसंदोहकृष्णब्रह्मास्यनिर्गतम्
कुरुक्षेत्रेऽजुनेमित्रेतत्कैवल्यरसायनम् १०७
नृणांचभवभीतानामाधिव्याधिभयापहम्
अनेकजन्मदुःखघ्नंनान्यत्पश्यामितत्स्मर
शिव उवाच
इत्युक्त्वा सहतैः सर्वैर्ययौविष्णोःपरंपदम् १०८
तमध्यायंततोविप्राद्ग्रामपालः पपाठसः
तावुभौतस्यमाहास्याज्ञग्मतुर्वैष्णवंपदम् १०९
इत्येकादशमाहात्म्यकथातुभ्यंनिरूपिता
यस्याः श्रवणमात्रेणमहापातकसंक्षयः ११०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेगीता-
माहात्म्येसतीश्वरसंवादेपंचाशीत्यधिकशततमोऽध्यायः १८५

## षडशीत्यधिकशततमोऽध्यायः

महादेवउवाच-
अस्तिकोल्हापुरंनामनगरंदक्षिणापथे
सुखानांसदनंसाध्विसाधूनां सिद्धिसंभवम् १
परशक्तेः परंपीठंसर्वदेवनिषेवितम्
पुराणेषुप्रसिद्धंयद्भक्तिमुक्तिफलप्रदम् २
कोटिशस्तत्रतीर्थानिशिवलिगानिकोटिशः
आस्तेरुद्रगयायत्रविशालंलोकविश्रुतम् ३

तुंगाचलमहावप्रगोपुरोल्लासितोरणम्
प्रासादशिखरेयत्रतुंगंचकनकध्वजम् ४
सोमकांतिमहासौधवलभीपंक्तिशोभितम्
जालरंध्रोद्गिरद्धूपधूमाऽमोदितदिक्तटम् ५
चलत्पताकविस्तीर्णच्छायंदेवालयान्वितम्
चतुरैः सुंदरैः स्निग्धैः श्रीमिद्भिःशुचि मानसैः ६
अधिष्ठितंसदाचारैःपुरुषेर्भूरिभूषणैः
कुरंगनयनाश्चंद्रवदनाःकुटिलालकाः ७
उत्फुल्लचंपकच्छायाः पीनतुंगपयोधराः
कृशमध्या निम्ननाभिवलित्रयविराजिताः ८
विशालजघनाश्चारुजंघायुग्मावरांघ्रयः
वाचालमेखलादामनिक्वणन्मणिनूपुराः ९
रणत्कंकणहस्ताब्जस्फुरत्करजरश्मयः
वसंतिप्रमदायत्रमादयंत्योमुनीनपि १०
समस्तवस्तुसंयुक्तंसर्वभोगसमन्वितम्
मंगलैःसकलैर्युक्तंमहालक्ष्मीसमन्वितम् ११
तत्रागच्छत्पुमान्कश्चिद्युवागौरंसुलोचनः
कंबुकंठःपृथुस्कंधोमहावक्षामहाभुजः १२
समस्तलक्षणोपेतोगोचरासक्तमानसः
प्रविश्यनगरंपश्यन्शोभांसौधेषुसर्वतः १३
उत्कंठितमनाद्रष्टुंमहालक्ष्मींसुरेश्वरीम्
मणिकुंडेकृतःस्नानः संपन्नपितृतर्पणः १४
महालक्ष्मींमहामायांनत्वातुष्टावभक्तितः
जयत्यपारकरुणाशरण्याजगदंबिका १५
कुर्वाणाजगतोजन्मपालनंक्षपणंदृशा
ययाशक्त्याकृतादिष्टःपरमेष्ठीसृजत्यसौ १६
अवष्टभ्यचतांशक्तिंपालयत्यच्युतोजगत्
ययाशक्त्याकृतावेशः संहरत्यखिलंहरः १७
तांभजेपरमांशक्तिंसर्गस्थितिलयोर्जिताम्
योगिध्येयांघ्रिकमलेकमलेकमलालये १८

स्वभावानखिलान्नस्त्वंगृह्णासींद्रियगोचरान्
त्वमेवकल्पनाजालंतत्कल्पंकुरुषेमनः १९
इच्छाज्ञानक्रियारूपापरसंवित्स्वरूपिणी
निष्फलानिर्मलानित्यानिराकारानिरंजना २०
निरंतरानिरातंकानिरालंवानिरामया
तवैवंमहिमानंहिकोवर्णयितुमीशते २१
वंदेनिर्भिन्नषट्चक्रद्वादशांतर्विहारिणीम्
अनाहतध्वनिमयींबिंदुनादकलात्मिकाम् २२
मातस्त्वंपूर्णशीतांशुगलत्पीयूषवाहिनी
पुष्णासिवत्सलेवालान्सनकादीन्दिगंबरान् २३
अनुस्यूताशिवासंविज्जाग्रत्स्वप्नसुषुप्तिषु
तुरीयायांवर्त्तमानांदयासूनृतसंधिषु २४
ददासि प्राणिनासर्वाः सततंब्रह्मसंपदः
संहृत्यतत्वसंघातंतुरीयातीतयात्वया २५
योगिनांबिंवतादत्म्यंदीयतेनिर्विकल्पया
परांनमामिपश्यंतींमध्यमांवैखरीमपि २६
रूपाणिदेविगृह्णासिजगत्संत्राणहेतवे
त्वंब्राह्मीवैष्णवीचत्वंमाहेशीचत्वमंबिके २७
वाराहित्वंमहालक्ष्मीर्नारसिंहीत्वमैंद्रिका
त्वंकौमारीचंडिकात्वंलक्ष्मीस्त्वंविश्वपावनी २८
सावित्रीत्वंजगन्माताशशिनीत्वंचरोहिणी
त्वंस्वाहात्वंस्वधात्वंहित्वं सुधापरमेश्वरी २९
चंडमुंडभुजादंडखंडदोर्दंडमंडिते
रक्तवीजगलद्रक्तपानघूर्णितलोचने ३०
उन्मत्तमहिषग्रीवोन्मूलनप्रौढदोर्युगे
शुंभासुरमहादैत्यदारणायातविक्रमे ३१
अनंतचरितेतुभ्यंनमस्त्रैलोक्यमातृके
भक्तकल्पलतेमह्यंप्रसीदपरमेश्वरि ३२
इतितेनस्तुतादेवीमहालक्ष्मीस्ततः स्वयम्
निजरूपंसमास्थायपुरुषंप्रत्युवाचतम् ३३

श्रीलक्ष्मीरुवाच-
राजपुत्रप्रसन्नाऽहवृणीष्ववरमुत्तमम्
राजपुत्रउवाच
पितामेधरणीपालोवाजिमेधंमहाक्रतुम् ३४
कुर्वाणोदैवयोगेनरोगाक्रांतोदिवंययौ
तद्वपुस्तप्ततैलेनशोषयित्वामयाततः ३५
स्थापितस्तत्रयागोऽसौयथापूर्वमवर्तत
अथक्रांतमहीचक्रोयूपेयागतुरंगमः ३६
निशीथेबंधनंहित्वानीतः केनापिकुत्रचित्
अदृष्ट्वातद्गतंक्वापिनिवृत्तेषुजनेष्वहम् ३७
आमंत्र्यऋत्विजः सर्वाञ्छरणंत्वामुपागतः
प्रसन्नायदिदेवित्वंतन्मेयागतुरंगमः ३८
दृष्टोभवतुयागोऽसौसंपूर्णोजायतेयथा
आनृण्यंममतातस्य तेनराज्ञोभविष्यति ३९
तथाकुरुजगद्धात्रिशरणागतवत्सले
देव्युवाच
ममद्वारंद्विजः सिद्धसमाधिरितिविश्रुतः ४०
ममाज्ञयासतेसर्वंकार्यंनिष्पादयिष्यति
इत्युक्तः श्रीमहालक्ष्म्याततोराजकुमारकः ४१
आजगाममुनिःसिद्धसमाधिर्यत्रतिष्ठति
प्रणम्यतस्यपादाब्जंकृतांजलिरवस्थितः ४२
तमुवाचततोविप्रःप्रहितोऽसित्वमंबया
त्वदीप्सितमिदंसर्वंसाधयामिविलोकय ४३
इत्युक्त्वात्रिदशान्सर्वानाचकर्षसमांत्रिकः
एवंतत्क्षितिपालस्यतनयोऽसौतदासुरान् ४४
कृतांजलिपुटान्देवान्वेपमानकलेवरान्
अथतानमरान्सर्वान्संबभाषेद्विजोत्तमः ४५
अमुष्यराजपुत्रस्यवाजीयज्ञायकल्पितः
नीतोस्तिदेवराजेनक्षपायामपहृत्यसः ४६
गीर्वाणाअश्वमेवास्यसमानयतमाचिरम्

अथतस्यमुनेर्वाक्याद्देवैर्यज्ञतुरंगमः ४७
समर्पितस्ततस्तेनतेऽनुज्ञात्वादिवौकसः अं
आकृष्टानमरान्दृष्ट्वागतंलब्ध्वातुरंगमम् ४८
महीपतिसुतोनत्वातंमुनिंवाक्यमब्रवीत्
आश्चर्यमिदमेतत्तेसामर्थ्यमृषिसत्तम ४९
कृतंत्वयाचित्रमिदंत्रिदशाकर्षणंक्षणात्
हस्तादाकृष्यदत्तोमे यज्ञीयोऽयतुरंगमः ५०
नकिंचिदपरंयावद्दुष्करंयत्सुरैरपि
प्रभविष्यतितत्कर्तुंभवानेवनचापरः ५१
शृणुविप्रमहीपालपितासीन्मेबृहद्रथः
प्रारब्धहयमेधोऽसौदैवेननिधनंगतः ५२
अद्यापितस्यदेहोस्तितप्ततैलेनशोषितः
तस्यसंजीवनंभूयः कर्त्तुमर्हसिसत्तम ५३
इत्याकर्ण्यस्मितंकृत्वासजगादमहामुनिः
यामस्तत्रपितायत्रतावकोयागमंडपः ५४
अथागत्यसमतेनतत्रसिद्धः समाधिना
पयोऽभिमंत्र्यविदधेतस्यप्रेतस्यमूर्द्धनि ५५
ततः प्रापनृपः संज्ञामुत्तस्थेवैददर्शच
सतंपप्रच्छविप्रेंद्रंकोऽसिधर्मेतिभूपतिः ५६
ततोराजसुतः सर्वंभूपालायन्यवेदयत्
सनत्वाब्राह्मणंराजातंपुनर्दत्तजीवितम् ५७
बभापेकेनपुण्येनत्वयिशक्तिरलौकिकी
ययाषेजीवितंदत्तमाकृष्टाश्चदिवौकसः ५८
यागश्चोद्धरितोविप्रयेनमेतन्निरूपय
इत्युक्तस्तेनविप्रोऽसौजगादश्लक्ष्णयागिरा ५९
गीतानांद्वादशाध्यायंजपाम्यहमतंद्रितः
तेनशक्तिरियंराजन्ययाप्राप्तोइऽसजीवितम् ६०
एतदाकर्ण्यराजाऽसौद्वादशाध्यायमुत्तमम्
पपाठतस्माद्विप्रर्षेः सकाशात्ब्राह्मणान्वितम् ६१
तस्याध्यायस्यमाहत्म्यात्तेसर्वेसद्गतिंययुः

अन्येपठित्वाजीवाश्चमुक्तिमापुरहोपराम् ६२
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेगीता-
माहात्म्येषडशीत्यधिकशततमोऽधयायः १८६

सप्ताशीत्यधिकशततमोऽध्यायः

देव्युवाच
द्वादशाध्यायमाहात्म्यंभवताकथितंमम
ब्रूहित्रयोदशाध्यायमाहात्म्यमतिसुंदरम् १
ईश्वरउवाच-
शृणुत्रयोदशाध्यायमहिमांभोनिधिंशिवे
यदाकर्णनमात्रेण परांमुद मवाप्स्यसि २
अस्तिदक्षिणदिङ्मार्गेतुंगभद्रामहानदी
तत्तटेनगरंरम्यंनाम्नाहरिहरंपुरम् ३
यत्राऽस्तेभगवान्देविदेवोहरिहरःस्वयम्
यस्यदर्शनमात्रेणपरंकल्याणमाप्यते ४
तस्मिन्पुरेद्विजन्मासीद्धरिदीक्षितसंज्ञिकः
तपः स्वाध्यायनिरतोश्रोत्रियोवेदपारगः ५
दुराचारेतितस्यासीद्भार्यानाम्नाचकर्मणा
नसुष्वापसमंपत्यादुरालापाकदाचन ६
क्षणमप्यात्मसदनेनचास्तेस्वैरचारिणी
कंठदघ्नंद्विजद्वारेधयंतीवारुणीरसम् ७
पतिसंबधिनः सर्वान्तर्जयंतीपुनःपुनः
विटैःसहसदोन्मत्तारममाणानिरंतरम् ८
कदचिद्भयाकुलंदृष्ट्वापुरंपौरैरितस्ततः
संकेतगेहमकरोत्कांतारेनिर्जनेस्वयम् ९
अथतत्रैवसाधूर्तारममाणाविटैःसह
निनायसाबहून्कालान्निजयौवनगर्विता १०
अथतस्मिन्पुरेरम्येनिवसंत्यानिरंकुशम्
वसंतकालं समभूत्परंचित्तेभुवःसखा ११
आमूलपल्लवाकीर्णं सहकारविकारिणा

पिकानांपंचमालापैः पुनः सजीवितः स्मरः १२
स्फुरच्चंपकसौरभ्यहारकैर्मलयानिलैः
मंदंमंदंप्रसर्पद्भिरांदोलितवनद्रुमः १३
उत्फुल्लमल्लिकामोदमदिरापारणावताम्
अलीनांकलटंकारैः समंताद्रावशोभितः १४
प्रसन्नचारुभिःस्मेरः सरोवरसुगंधिभिः
मीलन्मरालनिवहैः सरोभिः प्रकटीकृतः १५
घनच्छायासुखासीनहरिणार्भकधारिभिः
नीरंध्रपल्लवैर्नानाशाखिभिः शोभितावनिः १६
तस्मिन्वसंतसमयेमुदितासाभिसारिका
अपश्यज्जगदानंददायिनींचंद्रिकांनिशि १७
चंचच्चकोरचंच्वग्रगलत्पीयूषासीकराम्
द्रवदिंदुशिलानिर्यत्सुधानिर्झरनिर्भराम् १८
विकाशिकुसुमक्रोडसांद्रीभूतकरोत्कराम्
उल्लासितपयोराशिकल्लोलालिगितांबराम् १९
मनोभवमहासिंहकुलटाकंठकर्तरीम्
घनांधकारसंदोहविदारणपटीयसीम् २०
श्वेतीकृतसतीकारपरार्थहिमगर्भिणीम्
म्लानपंकजसंकोचाद्यूनामानंददायिनीम् २१
चक्रवाकवधूवक्त्रकरुणाक्रोशसाक्षिणीम्
मुक्ताश्रेणीविशुद्धांशुप्रभासितदिगंतराम् २२
अथतस्यांप्रभूतायांपूरयंत्यादिशोदश
कामांधाकामिनीजातापथिसौधविहारिणी २३
अपश्यंतीविटान्रात्रौनिर्भिद्यभवनार्गलम्
ययौसंकेतभवनंनिर्गत्यनगराद्बहिः २४
तत्रप्रियतमंकंचित्काममोहितमानसा
अन्वेषयंतीनाद्राक्षीत्कुंजेकुंजेतरौतरौ २५
आकर्णयंतीकांतस्यमंदालापान्पदेपदे
अभियातिततः क्रीडन्यत्रसंहारिनिस्वनः २६
चक्रवाकरवान्श्रुत्वाकांतालापभ्रमादसौ

सरोवराणिसर्वाणिपर्यटंतीमुहुर्मुहुः २७
कांतभ्रांत्यातरुतलेप्रसुप्तान्हरिणोत्करान्
प्रबोधयंतीसोच्छ्वासमागतास्मीतिभाषिणी २८
आलिगंतीवनस्थाणुंजीवनेश्वरशंकया
तदाननभ्रमाद्भूयंचुंवंतीविकचांबुजम् २९
तत्रतत्रकृतव्यर्थश्रमादृष्टप्रियास्वयम्
विललापवनेतस्मिन्मूर्च्छतीविविधोक्तिभिः
हाकांतहागुणाक्रांतमच्चैतन्यस्यनायक ३०
हेमनोहरसौभाग्यभाग्यलावण्यशेवधे
हापूर्णचंद्रवदनहासरोजायतेक्षण ३१
हाकांततत्वसौहित्यविश्रमायसुरद्रुम
यदिकोपेनकुत्रापिगुह्यवेषोऽत्रतिष्ठसि ३२
प्रसादयामित्वांकांतदत्त्वाप्राणान्प्रियानपि
इत्युच्चैः सर्वतोदिक्षुविलपंत्यावियोगतः ३३
तस्याः श्रुत्वावचः कोऽपिसुप्तोव्याघ्रः प्रबुद्धवान्
कुर्वन्घुरघुरध्वानंपश्यन्प्रतिदिशं रुषा ३४
आस्फालयन्नखैर्भूमिंगर्जन्नाकाशगह्वरम्
पृष्ठनिर्भग्नलांगूलदुतमुत्थायवेगवान् ३५
गतोव्याघ्रः समुत्पत्ययत्रास्तेसाभिसारिका
अथ सापितमायांतमालोक्यपतिशंकया ३६
निर्जगामपुरः स्थातुंप्रेममनिर्भरमानसा
ततस्तस्यनखक्रीडाक्रूरतांधीकृतासती ३७
जहौप्रियवपुःशंकांश्रुत्वागर्जितमूर्ज्जितम्
तथाविधापिसानारीभ्रांतिमुत्सृज्यसत्वरम् ३८
व्याघ्रत्वंतुकुतोहेतोर्मांनिहंतुमिहागतः
इदंसर्वंसमाख्याहियतस्त्वंहंतुमिच्छसि ३९
इतितस्यावचः श्रुत्वाशार्दूलश्चंडविक्रमः
क्षणंविहायतद्ग्रासमुवाचप्रहसन्निव ४०
मलापहानदीनाम्नादेशेतिष्ठतिदक्षिणे
नगरीमुनिपर्णेतितस्यारोधसिवर्तते ४१

तत्रास्तेभगवान्साक्षात्पंचलिगोमहेश्वरः
तस्यांपुर्यामहंविप्रपुत्रोभूत्वास्थितस्ततः ४२
अयाज्यान्याजयन्नश्नन्नेकोद्दिष्टेनदीतटे
वेदपाठफलंशश्वद्विक्रीणन्धनकांक्षया ४३
भिक्षुकानपरान्लोभात्तिरस्कुर्वन्दुरुक्तिभिः
अदेयद्रविणंगृह्णन्नदत्तमनिशंदिनम् ४४
छलयन्सकलंल्लोकान्क्षणग्रहणकौतुकात्
ततः कतिपयेकालेजरठत्वमुपागतः ४५
वलीपलितवानंधः प्रपतन्प्रस्खलद्गतिः
पतद्दंतोभवंभूयः प्रतिग्रहपरायणः ४६
हस्तेगृहीतदर्भोऽहमगमंतीर्थसन्निधिम्
धनग्रहणलोभेनभ्रमन्पर्वसुपर्वसु ४७
ततोऽहशिथिलांगः सन्कंचिद्भूनिर्जरालयम्
गतवान्याचितंभोक्तुंदष्टोमध्येपदेशुना ४८
अपतंमूर्छितोभूत्वाततः क्षितितलेक्षणात्
ततोऽहगलितप्राणोव्याघ्रयोनिमुपागतः ४९
अत्रतिष्ठामिकांतारेपूर्वपापमनुस्मरन्
नभक्षयामिधर्मिष्ठान्मुनीन्साधुजनान्सतीः ५०
किंतुपापान्दुराचारनसतीर्भक्षयाम्यहम्
अतोऽसतित्वंतत्वेनममैवकवलायसे ५१
इत्युक्त्वास्वैर्नखैःक्रूरैस्तांविभज्यांगखंडशः
अथतांभक्षितांतेनपापदेहमुपाश्रिताम् ५२
यमस्यकिंकरानिन्युःसद्यः संयमनींपुरीम्
यमादेशेनतत्रापिपातयामासुराशुताम् ५३
विरामूत्ररक्तपूर्णेषुघोरकुंडेष्वनेकथा
कल्पकोटिषुपीतासुतस्मादानीयतांमुहुः ५४
रौरवेस्थापयामासुर्मन्वंतरशतावधि
ततोप्याकृष्यतांदीनांरुदतींसर्वतोमुखीम् ५५
मुक्तकेशांभग्नगात्रांचिक्षिपुर्दहनानने
एवं पापपरांघोरां भुक्त्वानरकयातनाम् ५६

इहजातामहापापात्पुनः श्वपचयोनिषु
ततः श्वपचगेहेऽपिवर्द्धमानादिनेदिने ५७
पूर्वजन्मवशेनैवतथैवासीद्यथापुरा
ततः कतिपयेकालेपुनःस्वंभवनंययौ ५८
यत्रास्तेजृंभकादेवीशिवस्यातः पुरेश्वरी
तत्रापश्यद्द्विजन्मानंवासुदेवाभिधंशुचिम् ५९
गीतात्रयोदशाध्यायमुद्गिरंतमनारतम्
ततस्तच्छ्रवणादेवमुक्ताश्वपचविग्रहात् ६०
दिव्यंदेहंसमासाद्यजगामत्रिदशालयम् ६१

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेगीता-
माहात्म्येसप्ताशीत्यधिकशततमोऽध्य १८७

## अष्टाशीत्यधिकशततमोऽध्यायः

ईश्वरउवाच-
अतः परंप्रवक्ष्यामिभवानिभवमुक्तये
गीताचतुर्दशाध्यायमवधारयसुस्मिते १
मेदिन्यांयत्किलस्थूलमस्तिकाश्मीरमंडलम्
राजधानीसरस्वत्याआस्तेचैवमनोहरा २
यामधिष्ठायवाग्देवीब्रह्मलोकंप्रयच्छति
हंसमारुह्यमानापिसावित्रीप्रहतैरपि ३
सरस्वतीपदांभोजसेवामाश्रित्यकुंकुमैः
यत्रगौरवयंत्याशाहंसपक्षपुटोद्भवैः ४
निरंतरंतयाचैवनृणांसंस्कृतभाषिणाम्
सुपर्वाणमयीभाषानिषेणोपलभ्यते ५
प्रातर्गृहांगणोद्भूतैर्यत्रकुंकुमपांसुलैः
सर्वतोरुणितच्छायशशांकरविमंडलम् ६
तत्रासीत्तेजसांराशिः शौर्यवर्मानरेश्वरः
उद्यदुज्ज्वलवाणौघखंडितारातिमंडलः ७
अभूच्चसिंहलद्वीपेराजासिंहपराक्रमः
नाम्नाविक्रमवेतालः कलानामपिशेवधिः ८

उभौपरस्परंमैत्रींवर्द्धयांचक्रतुः क्रमात्
तत्तद्देशसमुत्पन्नैरपूर्वैः प्रचुरोत्करैः ९
एकदाप्रहितंप्रेम्णाप्रभूतंशौर्यवर्मणा
राजाविक्रमवेतालोविलोक्यशुनकीद्वयम् १०
मत्तमातंगतुरगमणिभूषणचामरम्
प्रेषयामासमित्रायप्रभूतं शौर्यवर्मणे ११
एकदाशिबिकारूढश्चारुचामरवीजितः
सुवर्णशृंखलारूढंवाद्यडिंडिमंडबरम् १२
शुनीयुगलमादायमृगयाकौतुकोत्सुकः
राजाजगामबाह्यालद्यंसमंराजकुमारकैः १३
पणबंधविधानेनसमुपेतंशशामिषम्
तत्रराजकुमाराणांमहान्कोलाहलोऽभवत् १४
ततः समानवयसाकेनचिद्राजसूनुना
बहुमूल्यंपणंकृत्वाराजाचिक्रीडकौतुकी १५
ततोवतार्यदोलायाविरुदावलिगर्विताम्
धावतः शशकस्योच्चैःपृष्ठेमुंचन्नृपंशुनीम् १६
मुमोचराजपुत्रोऽपिप्रेमपात्रंमहाभुजः
विररामशुनीमुच्चैःसंकीर्त्यविरुदावलीम् १७
अलक्ष्यमाणवेगेऽस्मिन्शुनीयुगलकेभृशम्
धावत्युत्थितमेवासीत्पश्यतांसर्वभूभृताम् १८
पपातगर्तेमहतिशशकोऽतिश्रमादसौ
पतितोऽपिशुनीवश्योनाभवच्छशशावकः १९
ततः शनैः समुत्थायधावन्नाक्रम्यरोषतः
जगृहेराजशुन्याऽसौशशकः फेनमुद्वमन् २०
ततः कथंचिदुप्लुत्यगच्छन्विस्खलयञ्छशः
राजपुत्रशुनक्यासौगृहीतः कंधरातटे २१
जितमस्माभिरत्यर्थमितिसंजल्पतांनृणाम्
कोलाहलेशंकितायाशुन्यानिर्गतवान्मुखात् २२
ततोदंष्ट्राव्रणश्रेणीक्षरद्रुधिरधारकः
क्वापिर्मर्मरभूभागेनिलीयस्थितवाञ्छशः २३

जिघ्रंत्याराजशुन्याऽसौभूभागंधनरोषया
दृष्टमात्रः परित्रस्तोहस्तमात्रंततोऽगमत् २४
यत्रकर्पूरकदलीक्रोडव्याघ्रदरीतलः
चोलीकपोलफलकान्चुबन्वातिसमीरणः२५
उद्भिन्नकेतकीकोशरजोमुकुलितेक्षणः
विस्रब्धाहरणायत्रच्छायांतांपरितन्वतः २६
नारिकेलफलैर्यत्रस्वयंनिपतितैरधः
अपिचूतफलैस्तृप्ताःपक्वैः शाखामृगाअपि २७
अपिकेसरिणोयत्रखेलंतिकलभैःसमम्
फणिनः केकिबर्हेषुनिर्विशंकंविशंतिच २८
यत्राश्रमांतरेविप्रोवत्सनामाजितेंद्रियः
शांतश्चतुर्दशाध्यायंजपन्नास्तेनिरंतरम् २९
तत्रतच्छिष्यपादाब्जप्रक्षालनजलैःकृते
कर्दमेन्यपतद्गत्वाजीवशेषोमुहुःश्वसन् ३०
ततः कर्दमसंस्पर्शमात्रनिस्तीर्णसंसृतिः
दिव्यंविमानमारुह्यनिर्ययौशशकोदिवम् ३१
ततःशुन्यपिलिप्तांगीस्तोकैःकर्दमबिंदुभिः
क्षुत्पिपासार्तिरहिताशुनीरूपंविहायसा ३२
ततोदिव्यांगनारम्यं गंधर्वैरुपशोभितम्
दिव्यंविमानमारुह्यशुन्यपित्रिदिवंययौ ३३
ततोजहासमेधावीशिष्योनाम्नास्वकंधरः
विचार्यविस्मितः पूर्वजन्मवैरस्यकारणम् ३४
राजापिपर्यपृच्छत्तंविस्मयस्मेरलोचनः
प्रणम्यपरयाभक्त्याविनयैकपयोनिधिः ३५
कथांकथयमेविप्रहीनयोनिनिषेवितौ
अज्ञौयौजग्मतुःस्वर्गेशुनीशशकशावकौ ३६
शिष्यउवाच-
वत्सनामाद्विजन्मास्तेवनेऽमुष्मिन्जितेंद्रियः
चतुर्दशंतुह्यध्यायंगीतानांसर्वदाजपन् ३७
शिष्योऽह तस्यभूपालब्रह्मबिद्याविशारदः

चतुर्दशतुअध्यायंजपामिप्रत्यहंनृप ३८
मदीयचरणांभोजप्रक्षालनजलेलुठन्
शशस्त्रिदिवमापन्नः शुनक्यासह भूपते ३९
राजोवाच
हेतुनाकेनकथयहसितंचद्विजोत्तम
अतः किमपिसाकूतंमन्यमानेनसादरम् ४०
शिष्यउवाच
महाराष्ट्रेतिनगरंनाम्नाप्रत्युदकंमहत्
तत्रासीद्ब्राह्मणोनाम्नाकेशवः कितवाग्रणीः ४१
विलोभनाभवत्तस्यजायास्वैरविहारिणी
तेनसाहन्यतेक्रोधाद्वैरंसंचित्यजन्मनः ४२
ततः स्त्रीवधपापेनशशकोजायतेद्विजः
किल्विपाच्छुनकीसापिजातावंचनजन्मनः ४३
पूर्वेणजन्मनाभ्यस्तंवैरंविस्मरतोनहि
आसेदिवद्भ्यांबहुधायोन्यंतरमपिक्वचित् ४४
इत्याकलय्यसकलंभूपालः श्रद्धयान्वितः
गीतामभ्यस्यसकलामवापपरमांगतिम् ४५
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेगीता-
माहात्म्येअष्टाशीत्यधिकशततमोऽध्यायः १८८

## एकोननवत्यधिक शततमोऽध्यायः

ईश्वरउवाच
प्रवक्ष्यामिविशालाक्षितुहिनाचलकन्यके
गीतापंचदशाध्यायमाहात्म्यमवधारय १
कृपालुर्नरसिंहोऽभून्नाम्नागौडेषुभूपतिः
यस्यासिधारयासंख्येदेवासंघावधीकृताः २
यदीयमत्तमातंगदानधाराजलैरिला
निदाघेपिचसेहेतांरविसंतापवेदनाम् ३
संक्रंदनपरित्रस्तायदीयशरणंगताः
रेजिरेकरिणोमत्ताश्चलंतः पर्वताइव ४

मत्तमातंगचीत्कारप्रतिस्वनमिवादरात्
यस्यगोपायतः शैलाव्याहरंतिकृपावतः ५
यदीयधावत्तुरगक्षुरसंघातजर्जरम्
नाभूच्चित्रंकथंकारंगतखंडंधरातलम् ६
यस्मिन्वृत्रहणोमित्रेसमुद्धरतिमेदिनीम्
पुनरुज्वलयांचक्रेमहाभाष्यंफणीश्वरः ७
तस्यासीत्सैनिकोधीमाञ्छस्त्रशास्त्रकलानिधिः
नाम्नासरभभेरुंडःप्रचंडभुजमंडलः ८
भांडारेणतुरंगैश्चभटैर्वीररसोद्भवैः
समानएवभूपालदुर्गैरत्यंतदुर्गमैः ९
सकदाचित्स्वयंराज्यंकर्तुंपापोदधेमनः
निहत्यवसुधापालंबलात्साकंकुमारकै १०
कर्तुंव्यवस्यदिवसैः स्वल्पैरित्थंचिकीर्षया
विषूचिकामयादाशुपरासुः समजायत ११
कालेनाल्पीयसाप्रेत्यपापात्मातेनकर्मणा
तेजस्वीतुरगोजातः सिंधुदेशेकृशोदरिः १२
मूलेनबहुनाक्रीत्वाहयतत्वविदाततः
बहुयत्नवतानीतः केनचिद्वैश्यसूनुना १३
राजापिपौत्रनप्त्त्राद्यैस्तस्यैवमरणात्परम्
कालेनबृद्धतांप्राप्तः स्वराज्यंचापिपालयन् १४
सवैश्यसूनुस्तंचाश्वंराज्ञे दातुं समागतः
राज्ञोद्वारिस्थतस्तत्रप्रतीक्षंस्तत्समागमम् १५
ज्ञातपूर्वोऽपिवैश्योऽसौ प्रतीहारेणदर्शितः
किमर्थंब्रूहिराज्ञेति पृष्टःस्पष्टमभाषत १६
देवत्रिजगतीरत्नमितिमत्वातुरंगमः
मयानियुतमूल्येनबहुनासाधुलक्षणः १७
ततोऽवलोक्यवक्त्राणिभूपालः पार्श्ववर्तिनाम्
समादिदेशवणिजमश्वोऽत्रनीयतामिति १८
शिरांसिधूनयन्नृणामश्वलक्षणवेदिनाम्
शूराणामपिचेतांसिमुहुरुत्साहयन्महान् १९

अखंडमेदिनीवेगबहुसंक्रमणार्जितम्
लालाफेनछलेनासौवमन्शुभ्रतरंयशः २०
उचैःश्रवस्तुलांभेजेगुणसाम्येनतत्त्वतः
विवृरावन्नतितेजस्वीहयेवनतकंधरः २१
चामरैरिंदुधवलैर्वीज्यमानोनिरंतरम्
दुग्धांभोनिधिलोलैस्तैः श्वासैरुच्चैःश्रवाइव २२
नीलातपत्रयुगलंघनच्छायतुलश्रिया
बिभ्राणोवारिदालीढहिमाद्रिशिखरश्रियम् २३
मेदिनीमंडलस्पर्शसंक्रांतमिवपावकम्
मुहुरुद्धरयन्धुन्वन्बंधुरंकंधरातटम् २४
दारयन्वैरिणः सर्वान्व्याहरंश्चजयश्रियम्
हेषारवेणगुरुणादिन्तुप्रख्यापयन्यशः २५
सत्त्वस्यराशिरत्युच्चैर्गतीनामिवशेवधिः
रूपस्यनिलयंसान्ताल्लन्तणानांपयोनिधिः २६
आनीतोवणिजावाजीराज्ञाचसमदृश्यत
बहुधावर्णितोऽमात्यैरश्वलन्तणवेदिभिः २७
यथेच्छंवणिजोदीर्णंस्वर्णंदत्त्वामहीपतिः
जग्राहतुरगंवेगादसीमानंदनिर्भरः २८
ततोऽश्वपालमाहूययत्नतस्तंनिरूप्यच
विसर्जितसभालोकोगृहांतरमगान्नृपः २९
अनेकधासमापृष्टोमहीपालरणांगणे
शस्त्रव्रणकिणश्रेणीभूषणंसत्वसन्निभम् ३०
एकदामृगयांखेलन्कुतूहलरसात्मना
तमारुह्यमहीपालोवनंप्रतिविवेशह ३१
विसृज्यसैनिकान्पृष्टेधावतः परितोऽखिलान्
आकृष्यमाणोहरिणैःपिपासाकुलितोऽभवत् ३२
ततउत्तीर्यतुरगाज्जलमन्वेषयन् नृपः
बध्वाश्वंतरुशाखायामारुरोहशिलांनृपः ३३
गीतापंचदशाध्यायश्लोकार्द्धलिखितंततः
पातितंमरुतातत्रयत्नखंडेविलोकयत् ३४

पत्रंवाचयतोराज्ञः श्रुत्वागीताक्षरावलीम्
ततोमुक्तिपदंलेभेतुरगस्त्वरयाऽपतत् ३५
ततोग्रंथिंसमाच्छिद्यपल्याणवतार्यच
उत्थापमानस्तुरगोराज्ञानोत्थितवान्मृतः ३६
ततं सरभभेरुंडोनृपमाभाष्यसुस्वरम्
दिव्यंविमानमारुह्यजगामत्रिदशालयम् ३७
ततोगिरिंसमारुह्यददर्शाश्रममुत्तमम्
पुन्नागकदलीचूतनारिकेलसमन्वितम् ३८
द्राक्षेक्षुवाटिकापूगनागकेसरचंपकम्
खेलत्करभसारंगंनृत्यत्केकिकुलंनृपः ३९
प्रणिपत्यद्विजन्मानमुटजाभ्यंतरस्थितम्
पप्रच्छपरयाभक्त्यामुक्तसंसारवासनात् ४०
तुरगोनिरगात्स्वर्गंहेतुनाकेनमेवद
इत्याकर्ण्यवचोराज्ञोद्विजन्मावाचमूचिवान् ४१
कालेनबहुनाप्रेत्यतत्पापात्तुरगोऽभवत्
अथपंचदशाध्यायश्लोकार्द्धंलिखितंक्वचित् ४२
ततोवाचयतः श्रुत्वानिरगात्तुरगोदिवम्
ततः समागतैस्तत्रपरिवारजनैर्वृतः ४३
प्रणिपत्यद्विजन्मानंहृष्टरोमाविनिर्गतः
पत्रंतदेवलिखितंगीतापंचदशाक्षरम् ४४
वाचयन्समहीपालोहर्षसंफुल्ललोचनः
अभिषिच्यनिजंपुत्रंमंत्रविन्मंत्रिभिः समम् ४५
सिंहासनेसिंहबलंमुक्तिमापविशुद्धधीः ४६

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेगीता-
माहात्म्येएकोननवत्यधिकशततमोऽध्यायः १८९

नवत्यधिकशततमोऽध्यायः

ईश्वरउवाच-
अतः परंप्रवक्ष्यामिषोडशाध्यायगौरवम्
आकर्णयकुरंगाक्षिहर्षोत्कंठप्रविर्षिणि १

अस्तिसौराष्ट्रिकंनाम्नापुरंगुर्जरमंडले
तत्रासीत्खड्गबाहुश्चराजाचंद्रइवापरः २
यदीयकुसुमामोदमालासुरभितोदरे
वारांनिधौहरिः स्वास्थ्यादशेतसहपद्मया ३
यदीयकीर्तिकर्पूरकणाभांतिनभोंगणे
कीर्णावैरिकृतश्वासमारुतैस्तारकाछलात् ४
यस्यासिधारातीर्थेषुस्नातावैरिपुभूभुजः
व्यावर्त्ततेदिवोऽद्यापिस्वर्गस्त्रीवाग्विमोहिताः ५
तस्यारिमर्दनोनाममदहस्तीमदोद्धुरः
मदांबुधारासलिलेगुंजद्भ्रमरमंडलः ६
कपोलफलकोत्तीर्णमदधाराजलाविलः
बभौयोनिर्झरोद्गारैरंजनाद्रिरिवाच्चकैः ७
यस्यांगेषुव्यराजंतचामराश्चंद्रिकोज्ज्वलाः
किरणाइवशीतांशोः पतिताः काननोदरे ८
सिंदूरपांसुपटलीराजत्कुंभस्थलोबभौ
यःसंध्यावारिदव्याप्तंवियत्खंडमिव स्थितम् ९
सकदाचिन्मोचयित्वा शृंखलान्निगडानपि
भंक्त्वालौहदृढस्तंभंप्रसह्यनिशिनिर्गतः १०
आधोरणगणान्सर्वान्पार्ष्णिविस्फूर्जदंकुशान्
क्रोधादवगणय्यैवनिजशालांबभंजसः ११
तीक्ष्णांकुशमुखैर्विष्वक्हन्यमानोऽपिवैणवैः
दंडैस्तुत्रासयामासुः सादिनोनमनागपि १२
ततोराजासमागत्य निशम्येदंकुतूहलम्
तत्रहस्तिकलाभिज्ञैः समंराजकुमारकैः १३
अदृश्यतसमागत्यराज्ञादंतावलोबली
मोहयन्नुद्भटाटोपोहृताट्टालिकमालिकः १४
ददृशुस्तंमहाभीमंपौरादूरतरंस्थिताः
गोपायंतः शिशून्भीत्यानिबृत्तान्यकुतूहलाः १५
रुद्धेषुतत्रमार्गेषुपलायनपरैर्जनैः
वासितेषुतदीयोग्रदानधारांबुसीकरैः १६

स्नात्वातेनाध्वनायातः सरसः कश्चनद्विजः
गीतानांषोडशाध्यायश्लोकान्कतिपयाञ्जपन् १७
निषिद्ध्यमानोबहुधापौरैराधोरणैरपि १८
अमन्यमानः करिणोभीतान्चलितवांस्ततः
फूत्कारेणसआवृणवञ्जनान्विपरिमर्दयन् १९
स्पृशन्दानांबुजंतस्यस्वस्तिमान्निर्गतोद्विजः
ततोमहानभूत्तत्रविस्मयोवागगोचरः २०
मानसेभूमिपालस्यपौराणामपिपश्यताम्
समाहूयततोराजाफुल्लराजीवलोचनः २१
तमापृच्छद्विजंवाहादवतीर्यप्रणम्यच २२
राजोवाच-
अलौकिकमिदंविप्रत्वयाद्याचरितंमहत्
कृतांतकल्पादेतस्मात्कथंनिर्यातवान्गजात् २३
कमर्चयसिगीर्वाणंकंमंत्रंजपसिप्रभो
काचशिद्धिस्तवास्तीतिद्विजन्मन्समुदीरय २४
द्विजउवाच
गीतायाःषोडशोध्यायः श्लोकान्कतिपयानहम्
जपामिप्रत्यहंभूपतेनैताःसर्वसिद्धयः २५
ततोविहायद्विरदंकौतूहलरसंनृपः
आजगामद्विजन्मानमादायनिजमंदिरम् २६
शुभं मुहूर्तमन्वीक्ष्यतोषयित्वाद्विजोत्तमम् २७
सुवर्णैर्लक्ष्यसंख्याकैर्गीतामंत्रमुपाददे
गीतायाःषोडशाध्यायश्लोकान्कतिपयानपि २८
समभ्यस्यततोराजासत्कारेणसकौतुकः
अथैकदाविनिर्गत्यबाह्यालक्ष्यंसहसैनिकैः २९
तमेवामोचयद्राजामत्तमाधोरणाद्गजम्
विस्पष्टमितिवाक्यानिराज्यसौख्यममानयन् ३०
तृणवज्जीवितंराजागजस्याग्रेविशत्ततः
आदायगंडफलकंमदपंक्तिनिरंकुशम् ३१
आययौमंत्रिविश्वासान्नृपः साहसिकाग्रणीः

राहोरिवमुखादिंदुःकालास्यादिवधार्मिकः ३२
साधुः खलस्यवदनान्नृयोनिरगमद्गजात्
आगत्यनगरंराजात्वभिषिच्यकुमारकम् ३३
गीतायाः षोडशाध्यायादवापपरमांगतिम् ३४

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरंखडेगीता-
माहात्म्येनवत्यधिकशततमोऽध्यायः१९०

## एकनवत्यधिकशततमोऽध्यायः

ईश्वरउवाच-
षोडशाध्यायसामर्थ्यंकथितं शृणुसांप्रतम्
स्पष्टंसप्तदशाध्यायमहिमांभोनिधिंशिवे १
खङ्गबाहोः सुतस्यैवभृत्योदुःशासनोऽभवत्
तंगजंधर्तुमागत्यगजात्प्राप्तोयमक्षयम् २
तद्वासनानिबद्धात्मागजयोनिमवाप्यच
गीतासप्तदशाध्यायंश्रुत्वाप्राप्तः परंपदम् ३
देव्युवाच
दुःशासनोगजत्वंचप्राप्यमुक्तइति श्रुतम्
तदेववदकल्याणविस्तरेणममप्रभो ४
ईश्वरउवाच-
स्थितः कश्चन दुर्मेधामंडलीककुमारकैः
बहुमूल्यंपणंकृत्वागजमारूढवांस्ततः ५
गत्वाकतिपयान्येवपदानिजनवारितः
नाम्नादुःशासनोमूढः प्रौढवाक्यमुदीरयन् ६
ततोनिशम्यतद्वाक्यंक्रोधांधःसिंधुरोऽभवत्
न्यपतच्चस्खलत्पादः कंपमानकुमारकैः ७
ततोनिपतितंकिंचिदुच्छ्वसंतंगजोरुषा
ऊद्ध्वर्वमुन्मूलयांचक्रेकृतांतकनिरंकुशः ८
गतासोरपिरोषेणतस्यास्थ्न्यांचगणंगजः
विकीर्णवान्पृथक्कृत्वामत्तोदंतावलस्ततः ९
ततः कालेनसंप्रेत्यगजयोनिमवापसः

महांतंकालमनयत्सिंहलद्वीपभूपतेः १०
मैत्रीगरीयसीसार्द्धंखड्गबाहुमहीभुजा
ततोऽयजलोमार्गेणप्रापितोवारुणोमतः ११
जयदेवेनखड्गबाहोः प्रीत्यानीतोमहीभुजा
जातिंस्मरन्स्वकीयांसपश्यन्बंधून्सहोदरान् १२
दुःखेनमहतास्तोकान्दिवसानत्यवाहयत्
उवासखड्गबाहोश्चगृहेतूष्णीमनिर्दिशन् १३
सकदाचित्तुसंतुष्टः समस्याश्लोकपूरणे
कस्मैचित्कवयेप्रादात्तमुपायनहस्तिनम् १४
शतेनतेनकविनारोगोपद्रबभीरुणा
मालवक्षोणिपालस्यविक्रीतश्चैत्यकुंजरः १५
कियत्यपिगतेकालेपाल्यमानोऽपियत्नतः
मुमूर्षुरभवत्तत्रकुंजरोदुर्जरज्वरः १६
नजिघ्रतिपयः शीतंनादत्तेकवलंगजः
स्वपित्यपिनसौख्येनमुंचत्यश्रूणिकेवलम्
ततोहस्तिपकाख्यातंबृत्तांतमवनीपतिः १७
आकर्ण्य ससमायातोयत्रास्तेज्वरितोगजः
सचावलोक्यभूपालंजगद्विस्मयकारिणीम् १८
वाचमूचेगजःसम्यग्विसृष्टज्वरवेदनः
राजन्नशेषशास्त्रज्ञराजनीतिपयोनिधे १९
निर्जितारातिसंघातमुरारिचरणप्रिय
किमौषधैरलंबैद्यैःकिंधानैःकिंनुजापकैः २०
गीतासप्तदशाध्यायजापकंद्विजमानय
तेनायंमामकोरोगः शाम्यत्यत्रनसंशयः २१
यथादिष्टंगजेनासौतथाचक्रेनराधिपः
ततोगजत्वमुत्सृज्यमुक्तोदुःशासनोऽभवत् २२
तेनविप्रेणाभिमंत्र्यजलेक्षिप्तेतदुत्तमे
अथदिव्यंसमारूढंविमानमवनीपतिः २३
तंदुःशासनमद्राक्षीत्पाकशासनतेजसम् २४
राजोवाच

किंजातीयः किमात्मात्वंकिंवृत्तइतिमेवद
केनवाकर्मणाजातोगजः कथमिहागतः २५
पृष्टोराज्ञाविमुक्तोऽसौविमानस्थः स्थिरात्तरम्
वृत्तंयथायदाचख्यौनिजंदुःशासनः क्रमात् २६
गीतासप्तदशाध्यायंजपन्मालवभूपतिः
नरवर्माभवन्मुक्तः कालेनाल्पीयसाततः २७

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेगीता-
माहात्म्येएकनवत्यधिकशततमोऽध्यायः १९१

## द्विनवत्यधिकशततमोऽध्यायः

पावर्त्युवाच-
उक्तंसप्तदशाध्यायगौरवंभवताशिव
सत्वमष्टादशाध्यायमहिमानमुदीरय १
ईश्वरउवाच-
आकर्णयचिदानंदनिष्पादिनिगमोत्तरम्
पुरायमष्टादशाध्यायमाहात्म्यंगिरिनंदिनि २
समस्तशास्त्रसर्वस्वंश्रोत्रप्राप्तंरसायनम्
संसारयातनाजालविदारणपरायणम् ३
परंरहस्यंसिद्धानामविद्योन्मूलनक्षमम्
चैतन्यंकैटभारातेरग्रगरायंपरंपदम् ४
विवेकवल्लरीमूलंकामक्रोधमलापहम्
पुरंदरादिगीर्वाणचित्तविश्रामकारकम् ५
सनकादिमहायोगिमनोरंजनकारणम्
पाठमात्रपराभूतकालकिंकरगर्जितम् ६
अष्टोत्तरशतव्याधिमूलोन्मूलनकारकम्
नातःपरतरंकिंचिद्रहस्यंहंसगामिनि ७
उपतापत्रयहरंमहापातकनाशनम्
यथाकालेष्वहंनित्योयथापशुषुकामधुक् ८
यथाव्यासोमुनींद्रेषु व्यासेषुब्रह्मवित्तमः
यथादिवौकसांशक्रोगुरुःशक्राद्यथावरः ९

यथारसानांपीयूषमुत्तमंविश्वविश्रुतम्
तथागिरीणांकैलासोयथाचेंद्रोदिवौकसाम् १०
तीर्थानांपुष्करंतीर्थंयथापुष्पेषुपंकजम्
पतिव्रतासुनारीषुयथालोकेष्वरुंधती ११
यथामखेष्वश्वमेधोयथोद्यानेषुनंदनम्
यथारुद्रेषुसर्वेषुवीरभद्रोममानुगः १२
यथादानेषुभूदानंयथासिंधुषुगौतमी
यथालोकेहरिक्षेत्रंप्रशस्तंधर्मकर्मसु १३
तथैवाष्टादशाध्यायमाहात्म्यंभुवनोत्तरम्
तत्राख्यानमिदंपुण्यंभक्त्याकर्णयपार्वति १४
यथाकर्णनमात्रेण जंतुः पापैः प्रमुच्यते
अस्तिमेरुगिरेःशृंगेपुरीरम्यामरावती १५
पुराममविनोदायनिर्मिताविश्वकर्मणा
निरंतरंगुणयुताकोटिगीर्वाणसेविता १६
तेजः पुंजवतीसाक्षाद्ब्रह्मविद्येवविश्रुता
चिंतामणिशिलाबद्धाःप्रासादायत्रकामदाः १७
जयंतिमेरुशिखरेचतुर्मुखपुरावधि
यत्रकल्पद्रुमच्छायासुखासीनापुलोमजा १८
शृणोतिश्यामलागीर्भिर्गीतंगंधर्वयोषिताम्
यत्रास्तेसबलारातिर्देवैश्चदलितायुषाम् १९
दैत्यानांरक्तकल्लोलैःस्वर्धुनीशोणतांगता
पुरातनसुधास्वादुस्मारंस्मारंदिवौकसः २०
धयंतियत्रक्षुत्क्षामाकलांप्रत्यहमैंदवीम्
तस्यांकैवल्यकल्पायामासीत्पूर्वंशतक्रतुः २१
शचीसमन्वितः श्रीमान्सर्वगीर्वाणसेवितः
सकदाचित्सुखासीनोविष्णुदूतैरधिश्रितम् २२
सहस्रनेत्रमायांतमपश्यत्पुरुषंपरम्
ततस्तदीयतेजोभिरभिभूतः पुरंदरः २३
मणिसिंहासनात्तूर्णंपतितःस्थानमंडपे
सिंहासनात्प्रयातस्यततस्तस्यहरेर्भटाः २४

गीर्वाणगणसाम्राज्यपट्टबंधंवितेनिरे
अथतस्याभिषिक्तस्यमहेंद्रस्यपुलोमजा २५
वामांकमारुरोहाशुदिव्यदुंदुंभिनिःस्वनैः
अथत्रिदिवसंगीतगीर्वाणाः प्रमदान्विताः २६
सुरानीराजयामासुर्दिव्यरत्नैः सुरस्त्रियः
ततोवैऋषयोवेदैराशीर्वादास्तदाददुः २७
रंभाद्याननृतुस्तस्यपुरस्तादप्सरोगणाः
गंधर्वाललितालापाञ्जगुर्मंगलकौतुकम् २८
एवंनूतनमिंद्रंतुजुष्टंबहुभिरुत्सवैः
विनाशतक्रतुंदृष्ट्वाशक्रोविस्मयमाययौ २९
नमयाविहितामार्गेतडागानविनिर्मिताः
नरोपितामहावृक्षाः पांथविश्रांतिकारकः ३०
नकदाचिदहोदृष्टोदेवस्त्रिपुरभैरवः
निधिवासेस्थितादेवीपूजितानमदालसा ३१
मेघंकरस्थितः शार्ङ्गधरोनैवनिरीक्षितः
नकृतंविरजेस्नानंनैवंकाशींपुरींगतः ३२
नदेववाटिकावासीदृष्टोनरहरिःस्वयम्
एरंडविष्णुर्हेरंबोनजातुपरिशीलितः ३३
रेणुकानेक्षिताजातुमातापुरनिवासिनी
नभक्त्यापूजितादेवीदानापुरनिवासिनी ३४
नभक्त्यात्रिपुरेदृष्टस्त्रिलिंगस्त्र्यंबकःस्वयम्
नशार्दूलतडागस्थोवीक्षितः सोमनाथकः ३५
रेवापुरस्थितोदेवोघुसृणेशोनवीक्षितः
नागदंतपुरेख्यातोनागनाथोनवेक्षितः ३६
पर्णग्रामस्थितोदृष्टोनमहानमृतेश्वरः
नतुंगभद्रातीरस्थोदृष्टोहरिहरः स्वयम् ३७
नवेंकटाद्रिनिलयः श्रीनिवासः सुलक्षितः
कावेरीकर्णिकातीरेश्रीरंगोनैववीक्षितः ३८
दीनास्त्वनाथाः क्रोशंतः कारागारान्नमोचिताः
अन्नदानेनदौर्भिक्षेप्राणिनोनैवपूजिताः ३९

रात्रौरात्रौकृताक्वापिनिर्जले नोदकप्रभा ४०
नगौतम्यांकृतंस्नानंनदृष्टोहरिणेश्वरः
कृष्णवेरायांचनकृतंस्नानंकन्यागतेगुरौ ४१
दत्तंनोभूखंडमपिकवयोनैवपूजिताः
नतीर्थेषुकृतंसत्रंनग्रामेषुकृतामखाः ४२
पुष्करिरयोनविहितामध्येमार्गंबहूदकाः
नप्रासादाः कृताः क्वापिब्रह्मविष्णुपिनाकिनाम् ४३
नजातुचिद्भयाक्रांतारक्षिताःशरणागताः
कथमेकेनपुरयेनदेवदत्तमिहार्जितम् ४४
इतिचिंताकुलोभूत्वाहरिंप्रष्टुंपुरंदरः
ययौसरभसंखिन्नःक्षीरकूपारगह्वरम् ४५
तत्रप्रविश्यगोंविंदंकृतनिद्रंनवैस्तवैः
अकस्मान्निजसाम्राज्यभ्रंशदुःखमुवाचह ४६
इंद्रउवाच-
रमाकांतभवत्प्रीत्यैकृतंक्रतुशतंपुरा
तेनपुरयेनसंप्राप्तंमयापौरंदरंपदम् ४७
इदानींनूतनः कोऽपिजातोदिविपुरंदरः
नतेनधर्मोविहितोनतेनक्रतवः कृताः ४८
ममसिंहासनंदिव्यंकथमाक्रांतमच्युत ४९
महादेवउवाच-
इत्येवंवदतस्तस्य श्रुत्वावाचंरमापतिः
उन्मीलितस्मिताक्षोसावुवाचमधुरंवचः ५०
श्रीभगवानुवाच-
किंदानैरल्पफलदैःकिंतपोभिःकिमध्वरैः
वर्त्तमानः क्षितितलेसत्वंप्रीणितवान्पुरा ५१
इन्द्रउवाच-
भगवन्कर्मणाकेनसत्वांप्रीणितवान्द्विजः
यत्प्रीत्याभगवान्प्रादात्तस्मैपौरंदरंपदम् ५२
श्री भगवानुवाच
जपत्यष्टादशाध्यायेगीतानां श्लोकपंचकम्

यत्पुरायेनचसंप्राप्तंतवसाम्राज्यमुत्तमम् ५३
सर्वपुरायशिरोरत्नभूतेनत्वंस्थिरोभव
इतिविष्णोर्वचः श्रुत्वाज्ञातोपायंपुरंदरः ५४
विप्रवेषधरोभूत्वागतोगोदावरीतटम्
तत्रापश्यत्पुरंपुरायंकालिकाग्राममुत्तमम् ५५
यत्रकालेश्वरोदेवोवर्त्ततेकालमर्दनः
तत्रगोदावरीतीरेस्थितंपरमधार्मिकम् ५६
अपश्यत्करुणावंतंब्राह्मणंवेदपारगम्
नित्यमष्टादशाध्यायं जपंतंदांतचेतसम् ५७
ततस्तच्चरणद्वंद्वेलुठित्वापरयामुदा
सत्वमष्टादशाध्यायमपठत्तेनशिक्षितम् ५८
अथपुरायेनतेनाऽसौविष्णोःसायुज्यमाययौ
हित्वापुरंदरादीनांदेवानांपदमल्पकम् ५९
ज्ञात्वातीव मुदायुक्तोवैकुंठमगमत्पुरम्
अतएवपरंतत्वंमुनीनामिदमुत्तमम् ६०
दिव्यमष्टादशाध्यायमाहात्म्यंकथितंमया
यस्यश्रवणमात्रेणसर्वपापैःप्रमुच्यते ६१
इत्येवंगीतामाहात्म्यंकथितंपापनाशनम्
पुरायंपवित्रमायुष्यंस्वर्ग्यंस्वस्त्ययनंमहत् ६२
यःशृणोतिमहाभागेश्रद्धयासंयुतः पुमान्
सर्वयज्ञफलंप्राप्यविष्णोःसायुज्यमाप्नुयात् ६३
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायांमुत्तरखंडेसतीश्वरसंवादे
गीतामाहात्म्येद्विनवत्यधिकशततमोऽध्यायः १९२

त्रिनवत्यधिकशततमोऽध्यायः

पार्वत्युवाच-
देवदेवमहादेवसर्वज्ञसकलार्थद
कृपांमयिपरांकृत्वायत्पृच्छेतद्वदस्वमे १
श्रुतंचगीतामाहात्म्यंबह्वाश्चर्यकथायुतम्
तेनमेभक्तिरुत्पन्नाश्रोतुंकृष्णकथांपराम् २

पुराणेषुतुसर्वेषुश्रीमद्भागवतंपरम्
यत्रप्रतिपदंकृष्णोगीयतेबहुधर्षिभिः
तन्माहात्म्यंयथातत्वंसेतिहासंवदाधुना ३
ईश्वरउवाच–
नैमिषेसूतमासीनमभिवाद्यमहामतिम्
कथामृतरसास्वादकुशलःशौनकोऽब्रवीत् ४
शौनकउवाच
अज्ञानध्वांतविध्वंसिकोटिजन्माघनाशनम् ५
श्रीमद्भागवताख्यानंसूताख्याहिरसायनम्
भक्तिज्ञानविरागाढ्योविवेकोवर्द्धतेकथम् ६
माहामोहनिरासश्चवैष्णवैः क्रियतेकथम्
इहघोरेकलौप्रायोजीवश्चासुरतांगतः ७
क्लेशाक्रांतस्यतस्याथशोधनेकिंरसायनम्
श्रेयसांयद्भवेच्छ्रेयः पावनानांचपावनम् ८
कृष्णप्रीतिकरंयच्चसाधनं तद्वदाधुना
चिंतामणिंलोकसुखंसुरेंद्रास्पदसंपदम् ९
प्रयच्छतिगुरुःप्रीतोवैकुंठंचातिदुर्लभम् १०
सूतउवाच–
प्रीतोऽहतेद्विजश्रेष्ठाःकथयिष्येयथाश्रुतम्
सारात्सारतरंयच्चसंसारभयनाशनम् ११
भक्तिप्रवर्द्धकंयच्चकृष्णसंतुष्टिहेतुकम्
तन्मेकथयतःसाधोसावधानतयाशृणु १२
कालव्यालमुखालीढजगत्त्राणविधायकम्
श्रीमद्भागवतंशास्त्रंकलौकृष्णेनभाषितम् १३
एतस्मादपरंकिंचिन्मनः शुद्धिकरंनहि
जन्मांतरकृतैःपुण्यैर्लभ्यतेसाधुभिस्तुतत् १४
राज्ञः परीक्षितोमोक्षंज्ञात्वाकमलसंभवः
तोलयामासाशास्त्राणिपुराणानिमहांतिच १५
श्रीमद्भागवतंतत्रगरीयोभुवि संगतम्
श्रीमद्भागवतीवार्तासुराणामपिदुर्लभा १६

इतिसंचित्यबहुशोमुनयः साधवोऽमलाः
मेनिरेभगवद्रूपंश्रीमद्भागवतंह्नितौ १७
पठनाच्छ्रवणाद्यस्यनरोयातिहरेः पदम्
वर्षेणश्रवणंतस्यबहुसौख्यप्रदायकम् १८
मासेनभक्तिराभास्यंलभतेद्विजसत्तम
सप्ताहेनश्रुतंचैतत्सर्वथामुक्तिदायकम् १९
किंबहूक्तेनवैसाधोश्रीमद्भागवताऽमृतम्
नित्यंसद्भिःप्रपातव्यंकृष्णलीलाप्रकाशकम् २०
सनकाद्यैः पुराप्रोक्तंनारदायदयापरैः
ब्रह्मणःश्रुतपूर्वायसप्ताहश्रवणेविधिः २१
शौनकउवाच-
पितुर्लब्ध्वावरंज्ञानं श्रीमद्भागवताभिधम्
नारदोलोकतत्वज्ञः सर्वदाह्यटतेमहीम् २२
कुत्रतैः संगमोजातोनारदस्यमहात्मभिः
श्रुतोदेवर्षिणायत्रसप्ताहश्रवणेविधिः २३
सूतउवाच-
अत्रतेवर्णयिष्यामिभक्तियुक्तंकथानकम्
यत्पुराब्रह्मरातेनमह्यंप्रोक्तंदयालुना २४
एकदातुविशालायामुपविष्टमधोमुखम्
नारदंसनकाद्यास्तेददृशुर्दीनमानसम् २५
तंदृष्ट्वाचिंतयानंतुदेवर्षिर्भ्रातरं स्वकम्
पप्रच्छुर्विस्मयाविष्टामुनयस्तत्वचिंतकाः २६
कुमाराऊचुः-
किंत्वंचिंतयसेब्रह्मन्नतिदीनइवातुरः
तवेत्थंमुक्तिसंगस्यनोचितं वदकारणम् २७
नारदउवाच-
अहंपृथ्व्यां समायातोज्ञात्वासर्वोत्तमोत्तमाम्
तीर्थैर्नानाविधैर्युक्तांपुरायदैः पुरायरूपिणीम् २८
पुष्करेच प्रयागेचकाश्यांगोदावरीतटे
हरिक्षेत्रेकुरुक्षेत्रेश्रीरंगेसेतुबंधने २९

एतेष्वन्येषुतीर्थेषुभ्रममाणइतस्ततः
नापश्यंकुत्रचिच्छर्ममनः संतोषकारकम् ३०
कलिनाधर्ममित्रेण धरेयंबाधिताऽधुना
सत्यंशौचंदयादानंनास्तिकुत्रापिभूतले ३१
उदरंभरिणोलोकावराकाःकूटसाक्षिणः
मंदाःसुमंदमतयोमहापाखंडसंश्रयाः ३२
स्त्रीप्रधानगृहस्थाश्चवर्णिनोव्रतवर्जिताः
वानप्रस्थाःपुरावासान्यासिनोभोगतत्परा ३३
कन्याविक्रयिणोलोभात्कृषिकर्मपरायणाः
भ्रष्टाचारादंभिनश्चस्वेच्छाचारनिदर्शिनः ३४
आश्रमायवनैरुद्धास्तीर्थानिसरितोह्रदाः
देवतायतनान्यत्रदुष्टैरुच्छेदितानि च ३५
योगीसिद्धोऽथवाज्ञानीसत्क्रियोऽत्रनदृश्यते
कलिदावानलेनाद्यसाधनंभस्मतांगतम् ३६
अट्टशूलाजनपदाः शिवशूलाद्विजातयः
कामिन्यःकेशशूलिन्योदृश्यंतेभुविसर्वतः ३७
एकदाहमनुप्राप्तोयमुनायास्तटंशुभम्
दृष्टंवृंदावनंतत्रयत्रलीलाहरेरभूत् ३८
तत्रयच्चाद्भुतंदृष्टंश्रूयतांतन्मुनीश्वराः
एकातुतरुणीतत्रनिषण्णाखिन्नमानसा ३९
द्वौवृद्धौपतितौपार्श्वेनिःश्वसंतावचेतनौ
शुश्रूषंतीप्रबोधंतीरुदतीचतयोः पुरः ४०
दृष्टादिशोनिरीक्षंतीरक्षितारमिवात्मनः
वीज्यमानाबहुस्त्रीभिर्बोध्यमानामुहुर्महुः ४१
दृष्ट्वादूराद्गतश्चाऽहकौतुकेनतदंतिकम्
मांदृष्ट्वोत्थायसाबालावचनं चेदमब्रवीत् ४२
बालोवाच-
भोसाधोऽत्रक्षणंतिष्ठमम चिंतामपाकरु
पुंसांचदर्शनंभद्रसर्वाघौघनिवारणम्
पुण्येनप्राक्तनेनैवदर्शनंतवाजायते ४३

अतोमेमानसंदुःखंच्छेत्तुमहंसिमानद
नारदउ०
एवमुक्तस्तयाचाहंकृपयास्निग्धमानसः
अपृच्छंतांवरारोहांकौतुकेनसमाकुलः ४४
कात्वमेतौचकौभद्रेकाश्चेमाः पद्मलोचनाः
आख्याहिमत्पुरः सर्वंतवदुःखस्यकारणम् ४५
इति पृष्टामयासातुबालादुःखितमानसा
प्रोवाचनिखिलंदुःखमात्मनोदुःखकारणम् ४६
बालोवाच–
अहंभक्तिरितिख्याताएतौ मेतनयौवरौ
ज्ञानवैराग्यनामानौकालयोगेनजर्जरौ ४७
गंगाद्याः सरितश्चेमाममसेवार्थमागताः
एताभिः सेवितानित्यंसत्कारेणापिनारद ४८
नचश्रेयोलभेकिंचित्क्षीणाऽहसर्वतोमुने
ममपूर्वंतुवृत्तातंशृंणुब्राह्मणसत्तम ४९
येनाऽहदुःखिताजातानलभेशर्मकुत्रचित्
उत्पन्नाद्रविडेचाहंकर्णाटेवृद्धिमागता ५०
स्थिताकिंचिन्महाराष्ट्रेगुर्जरेजीर्णतांगता
तत्रघोरकलेर्योगात्पाखंडैः खंडितांगका ५१
दुर्बलाहंचिरं जातापुत्राभ्यांसहमंदताम् ५२
वृंदावनमिदंप्राप्तादैवयोगेननारद
जाताहंतुपुनर्बालानवीनेवसुरूपिणी ५३
इमौतुशयितावत्रसुतौमेक्लिष्टमानसौ
अतिवृद्धौपरित्यज्यगंतुंनाहंक्षमाधुना ५४
अहंबालाकथं जातासुतौमेजरठौकुतः
त्रयाणामेकभावानांवैपरीत्यंकुतोऽभवत् ५५
घटतेजरठामाताबालकौतनयाविति
अतः शोचामिचात्मानंविस्मयाविष्टमानसा ५६
यदित्वंवेत्सिधर्मज्ञकृपालोदीनपालक
वदसर्वंयथातत्वंकारणंचात्रयद्भवेत् ५७

एवं पृष्टस्तयाचाहंचणंचैवविमृश्यतु
अवोचंभक्तिमाभाष्यक्लिष्टांकालेनभूयसा ५८
ज्ञानेनाहंप्रपश्यामि वृत्तंसर्वंतवानघे
माविषादंकुरुप्राज्ञेहरिःशंतेकरिष्यति ५९
सर्वसत्वहरोबालेयुगोऽयदारुणः कलि
लुप्तोऽनेनसदाऽचारोयोगमार्गस्तपांसिच ६०
जनाश्चाघा द्यिा सुरायंतेशाठ्यदुष्कृतकारिणः
संतोह्यस्मिन्सुदुःखार्ताश्रसंतोहृष्टमानसाः ६१
दृश्यतेधीरचित्तस्तुपंडितोऽपिनकोऽपिच
अस्पृश्य नवलोक्येयंदुष्टभाराकुलाधरा ६२
अन्वब्दंक्रमतोजातोमंगलंहीयतेऽन्वहम्
नत्वांतवसुतौचेमौकोऽपिपश्यति भामिनि ६३
यूयंतुरागबहुलैस्त्यक्ताजर्जरतांगताः
वृंदावनस्यसंयोगाद्बालात्वमभवः पुनः ६४
धन्यंवृंदावनंचेदंभक्तिर्यत्राभवन्नवा
अत्रेमौग्राहकाभावान्नवीनत्वंनचागतौ ६५
किंचिदात्मसुखेनेहप्रसुप्ताविवितिलक्ष्यते
भक्तिरुवाच-
कथंपरिक्षिताराज्ञास्थापितोह्यशुचिःकलि
दयापरेणहरिणाह्यधर्मः किमुपेक्षितः ६६
एनंमेसंशयंछिधित्वद्वाचासुखितास्म्यहम्
तस्यावचः समाकर्ण्यभूयोऽहमवदंद्विजाः ६७
यदिपृष्टस्त्वयाबालेप्रेमतः श्रवणंकुरु
यदामुकुंदोभगवान्क्ष्मांत्यक्त्वास्वपदंगतः ६८
कलिस्तद्दिनमारभ्यप्रवृत्तः सत्यबाधकः
दृष्टोदिग्विजयेराज्ञादीनवच्छरणंगतः ६९
नहतोऽस्यगुणद्रष्टासर्वसाधारणंत्विदम्
यत्फलंतपसानैतिनयोगेनसमाधिना ७०
तत्फलंलभतेधीमान्कलौकेशवकीर्तनात्
एतादृशंकलिदृष्ट्वासारात्सारफलप्रदम् ७१

विष्णुरातःस्थापितवान्कलिजानांहितायच
कुकर्माचरणात्सारःसर्वतोनिर्गतोऽधुना ७२
पदार्थाःसंस्थिताभूमौबीजहीनास्तुषायथा
विप्रैर्भागवतीवार्त्तागेहेगेहेजनेजने ७३
कारिताधनलोभेनकथासारस्ततोगतः
अत्युग्रभूरिकर्माणोनास्तिकादांभिकाजनाः ७४
तिष्ठंतिसर्वतीर्थेषुतीर्थसारस्ततोगतः
कामक्रोधमहालोभतृष्णाव्याकुलचेतसः ७५
समारंभंतेकर्माणिकर्मसारस्ततोगतः
मनसश्चाजयाल्लोभाद्दंभात्पाखंडसंश्रयात् ७६
शास्त्रानभ्यसनाच्चैवध्यानयोगफलंगतम्
पंडितास्तेकलत्रेषुरमंतेमहिषाइव ७७
पुत्रोत्पादनदक्षाश्चनदक्षामुक्तिसाधने
नहिवैष्णवताकुत्रसंप्रदायपुरःसराः ७८
देवनिंदापराः सर्वेसाधुनिंदापरायणाः
अयंतुयुगधर्मोऽस्तिदीयतेकस्यदूषणम् ७९
अतस्त्वंपुंडरीकाक्षंस्मृत्वासौख्यमवाप्स्यसि ८०
एवंमयोक्तंवचनंश्रुत्वासाविस्मयंगता
उवाचवचनंभूयोमांप्रशस्यद्विजोत्तमाः ८१
भक्तिरुवाच-
देवर्षेत्वंतुधन्योऽसिमद्भाग्येनसमागतः
साधूनांदर्शनंलोकेसर्वसिद्धिप्रदायकम् ८२
सुखोपायोयथामेस्यात्तथादिशमुनेऽधुना
सर्वज्ञस्यतवब्रह्मन्नसाध्यंकिमपीहवै ८३
अजयदजितमायांयस्यकायाधवस्तेवचनरचनमेकंकेवलंचाकलय्य
ध्रुवपदमुपयातोयत्कृपातोध्रुवोवैतमहमरणभूतंब्रह्मपुत्रंनतास्मि ८४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेभागवतमा-
हात्म्येत्रिनवत्यधिकशततमोऽध्यायः १९३

## चतुर्नवत्यधिकशततमोऽध्यायः

सूतउवाच-
एवंसंप्रार्थितोविप्रास्तयाभक्त्यातिदीनया
यतश्चाकथयंतद्वैतच्छृणुध्वंदयालवः १
नारदउवाच-
माखिदस्त्वंवृथाबालेसमाधायमनोहृदि
श्रीकृष्णचरणांभोजंस्मरसौख्यंलभिष्यसि २
द्रौपदीचपरित्रातायेनकौरवकश्मलात्
पालितागोपसुंदर्यः सकृष्णः क्वापिनोगतः ३
त्वंतुभक्तिः प्रियातस्यसततंप्राणतोऽधिका
त्वयाहूतस्तुभगवान्यातिनीचगृहेष्वपि ४
सत्यादित्रियुगेबोधोविरागोमुक्तिसाधकौ
कलौतुकेवलाभक्तिर्ब्रह्मसायुज्यकारिणी ५
इतिनिश्चित्यविद्रूपीस्वकांगात्त्वांससर्जह
परमानंदचिन्मूर्तिःस्वप्रियांप्रीतमानसः ६
बध्वांजलित्वयापृष्टःकिंकरोमीतिवै हरिः
त्वांतदाज्ञापयत्कृष्णोमद्भक्तान्पोषयेतिच ७
अंगीकृतंत्वयातद्वैप्रसन्नोऽभूद्धरिस्तदा
मुक्तिदासींददौतुभ्यंज्ञानवैराग्यआत्मजौ ८
भक्तानांपोषणंनित्यंवैकुंठस्थाकरोषिच
भूमौचभक्तपोषायछायारूपंसमाश्रिता ९
विमुक्तिज्ञानवैराग्यैःसहचैवागतात्रहि
कृतादिद्वापरांतेहिकालेमुक्तिमुदास्थिता १०
कलौतुसंक्षयंप्राप्तापाषंडामयपीडिता
त्वदाज्ञयागताशीघ्रंवैकुंठेपुनरेवसा
स्मृतमात्रात्वयाद्यापिमुक्तिरायातिसत्वरम् ११
पुत्रीकृत्यत्वयैमौचस्वपार्श्वेपरिरक्षितौ
उपेक्षातः कलौमंदौवृद्धौजातौसुतौतव १२
तथापिचिंतांमुंचत्वमुपायंचिंतयाम्यहम्
कलिनासदृशःकोऽपियुगोनास्तिवरानने १३

तस्मिंस्त्वांख्यापयिष्यामिगेहेगेहेजनेजने
अन्यधर्मास्तिरस्कृत्यपुरस्कृत्यमहोत्सवान् १४
यदिप्रवर्त्तयेनत्वांतदादासोहरेर्नहि
त्वदन्विताश्चयेजीवाभविष्यंतिकलाविह १५
पापिनोऽपिगमिष्यंतिनिर्भयाहरिमंदिरम्
येषांचित्तेभवेद्भक्तिः सर्वदाप्रेमरूपिणी १६
नतेपश्यंतिकीनाशंस्वप्नेऽप्यमलमूर्त्तयः
नप्रेतोनपिशाचोवाराक्षसोवासुरोपिच १७
भक्तियुक्तमनस्कानांस्पर्शनेदर्शनेप्रभुः
नतपोभिर्नवेदैश्चनज्ञानेनापिकर्मणा १८
हरिर्हिसाध्यतेभक्त्याप्रमाणंतत्रगोपिकाः
नृणांजन्मसहस्रेणभक्तिः सुकृतिनांभवेत् १९
कलौभक्तिः कलौभक्तिर्भक्त्याकृष्णःपुरःस्थितः
भक्तिद्रोहकरायेचतेसीदंतिजगत्त्रये २०
दुर्वासादुःखमापन्नःपुराभक्तिविनिंदकः
अलं वृत्तैरलंतीर्थैरलंयोगैरलंमखैः २१
अलंज्ञानकथालापैर्भक्तिरेकैवमुक्तिदा
एवमुक्तंमयासातुस्वमाहात्म्यंनिशम्यवै २२
सर्वांगहर्षसंयुक्तामांपुनर्वाक्यमब्रवीत्
अहोनारदधन्योऽसिप्रीतिस्तेमयिनिश्चला २३
नकदाचिन्विमुंचामिचित्तंतेमयिसंगतम्
कृपालुनात्वयासाधोमद्बाधाध्वंसतिताक्षणात् २४
पुत्रयोश्चेतनानास्तिममेमौप्रतिबोधय
तस्यास्तद्वचनंश्रुत्वाकारुण्येनान्वितोह्यहम् २५
तयोःप्रबोधनं कर्तुंप्रवृत्तःपाणिनास्पृशन्
मुखंसंसृज्यकर्णांतिशब्दमुच्चैः समुच्चरन् २६
ज्ञानप्रबुद्ध्यतांशीघ्रंवैराग्यप्रतिबुध्यताम्
वेदवेदांतघोषैश्चगीता पाठैर्मुहुर्मुहुः २७
बोध्यमानौतदातेनकथंचिद्बोधमागतौ
नेत्रैरनवलोकंतौजृंभंतौसालसावुभौ २८

बकवत्पलितौप्रायः शुष्ककाष्ठसमांगकौ
क्षुत्क्षामौतौनिरीक्ष्यैवपुनः स्वापमुपागतौ २९
तदाचिंतापरोऽभूवंकिंविधेयंमयेतिच
अहोनिद्राकथंयातिवृद्धत्वंचानयोः परम् ३०
चिंतयन्नितगोविंदंस्मरन्नासंद्विजोत्तमाः
व्योमवाणीतदैवाभून्माऋषेखिद्यतामिति ३१
उद्यमस्सफलस्तेतुभविष्यतिनसंशयः
एतदर्थंतुसत्कर्मसुरर्षेत्वंसमाचर ३२
तत्कर्मतेऽभिधास्यंतिसाधवः साधुभूषणाः
सत्कर्मणिकृतेतस्मिन्स्वपनंबृद्धतानयोः ३३
गमिष्यतिक्षणाद्भक्तिः सर्वतःप्रसरिष्यति
इत्याकाशवचः स्पष्टंनिशम्यापिमयाद्विजाः ३४
नज्ञातंयन्नभोवाणयागोप्यत्वेननिरूपितं
किंतत्कर्मचयेनैतौभवतोज्ञानसंयुतौ ३५
क्वभविष्यंतिते संतः कथंवक्ष्यंतिकर्मसत्
मयात्रकिंप्रकर्त्तव्यंयदुक्तंव्योमभाषया ३६
अथतौतत्रसंस्थाप्यनिर्गतोऽहबहिर्द्विजाः
वृंदारणयादपृच्छंचयत्रतत्रद्विजोत्तमान् ३७
वृत्तांतंसर्वएवाथ श्रुत्वाविस्मितमानसाः
नैवोत्तरंप्रयच्छंतिह्यनभिज्ञानभोगिरः ३८
असाध्यंकेचनप्रोचुराविज्ञेयमथापरे
मूकीबभूवुरन्येतुचिंतयानाः पुनः पुनः ३९
वेदवेदांतघोषैश्चगीतापाठैर्मुहुर्मुहुः
बोध्यमानंत्रिकंतत्तुनोदतिष्ठदहोविधिः ४०
योगिनानारदेनापिस्वयंनज्ञायतेतुयत्
तत्कथंशक्यते कर्तुमितरैरिहमानुषैः
ततश्चिंतातुरश्चाहंबदरीवनमागतः ४१
तपश्चरामिचात्रैवतदर्थंकृतनिश्चयः
तावद्ददर्शपुरतः सनकाद्यान्मुनीश्वरान्
कोटिसूर्यसमाभासानुवाचमुनिसत्तमान् ४२

इदानींभूरिभागेनभवतांदर्शनंह्यभूत्
तदुपायंमहाभागावदंतुप्रीतमानसाः ४३
भवंतोयोगिनांश्रेष्ठाबुद्धिमंतोबहुश्रुताः
कुमाराएवपंचाब्दाः पूर्वेषामपिपूर्वजाः ४४
सदावैकुंठनिलयाहरिकीर्त्तनतत्पराः
लीलामृतकथोन्मत्ताहरिस्मरणतत्पराः ४५
अतोहिकालदुहितायुष्मान्नैवप्रबाधते
येषांभ्रूभंगमात्रेणद्वारपालौहरेः पुरा ४६
दैत्यौभुत्वात्रिजन्मानिपुनस्तत्स्थानमास्थितौ
अशरीरगिरोक्तंयत्किंतत्साधनमुच्यताम् ४७
अनुष्ठेयंयथायत्रप्रब्रुवंतुकृपालवः
भक्तिज्ञानविरागाणांसुखमुत्पद्यतेयथा
ख्यातिर्वःसर्बलोकेषुतथासाधूच्यतांबुधाः ४८
कुमाराऊचुः-
माचिंतांकुरुदेवर्षेस्वचित्तेहर्षमावह
उपायः सुखासाध्योऽत्रविद्यतेविश्वसौख्यदः ४९
अहोनारदधन्योऽसिविरक्तानांशिरोमणिः
श्रीकृष्णप्रेमपात्राणामग्रणीर्वदतांबरः ५०
त्वयिचित्रंनदेवर्षेभक्तिसाधनतत्परे
उचितंकृष्णदासानांभक्तेः संचारणंभुवि ५१
ऋषिभिर्बहुधालोकेउपायाःसिद्धयेकृताः
श्रमसाध्याश्चतेसर्वेप्रायःस्वर्गफलप्रदाः ५२
वैकुंठसाधकः पंथागुप्तोलोकेषुवर्त्तते
तस्योपदेशकः साधुःप्रायोभाग्येनलभ्यते ५३
यत्तेसत्कर्मनिर्दिष्टंव्योमवाचामुनीश्वर
तज्ज्ञेयमिहसर्वज्ञैर्ज्ञानयज्ञःपुरातनैः ५४
श्रीमद्भागवतालापोज्ञानयज्ञःशुकोदितः
भक्तिज्ञानविरागाणांसुखदः प्रतिभातिनः ५५
कलिदोषाइमेसर्वेश्रीमद्भागवतध्वनेः
प्रभीताःप्रलयायंतेसंहशब्दाद्वृकाइव ५६

ज्ञानवैराग्यसंयुक्ताभक्तिःप्रेमरसावहा
प्रतिगेहंप्रतिजनंसुखक्रीडांकरिष्यति ५७
सूतउवाच-
कुमारोक्तंसमाकर्ण्यनारदःप्रीतमानसः
पुनःप्रोवाचभगवांस्तदुत्कर्षंविभावयन् ५८
नारदउवाच-
वेदवेदांतघोषैश्चगीतापाठैः प्रबोधितम्
नोदतिष्ठत्त्रिकंतत्तुकलिदोषतिरस्कृतम् ५९
कथंभागवतालापात्तद्विबोधमिहैष्यति
छिंदंतुसंशयंह्येनंभवंतोऽमोघदर्शनाः ६०
विलंबोनात्रकर्त्तव्यः शरणागतवत्सलाः
ततस्तेसनकाद्यास्तुविरक्तह्यूर्द्धर्वरेतसः ६१
सिद्धाःसनातनाबिप्रानारदंप्रोचुरादरात् ६२
कुमाराऊचुः
वेदोपनिषदांसाराज्जाता भागवतीकथा
अत्युत्तमाततोभातिपृथग्भूताफलोन्नतिः ६३
आमूलाग्रंरसोस्त्येवरसालस्ययथाफले
पृथग्भूतंतुपानेनयथाविश्वमनोहरः ६४
यथादुग्धेस्थितंसर्पिर्नचस्वादूपकल्प्यते
पृथग्भूतंतुतद्दिव्यंदेवानांप्रीतिबर्द्धनम् ६५
इक्षुष्विवादिमध्यांतंशर्कराव्याप्यतिष्ठति
पृथग्भूतातुसामिष्टातथाभागवतीकथा ६६
श्रीमद्भागवतंनामपुराणंरसमेवहि
भक्तिज्ञानविरागाणांसौख्यायस्वप्रकाशितम् ६७
कृष्णेनब्रह्मणेनाभिकंजस्थायहृदैवहि
तच्चतुःश्लोकमखिलंब्रह्मैवप्रतिभासते ६८
तुभ्यंचब्रह्मणाप्रोक्तंतच्चरित्रनिदर्शनम्
त्वयापिव्यासदेवायप्रोक्तंतत्तापहानये ६९
यदीयस्मरणात्सद्योनिर्विण्णोबादरायणः
चकारमहदाख्यातुमात्माराममनोहरम् ७०

अत्रतेविस्मयः केनयेनपृच्छेःपुनः पुनः
श्रीमद्भागवतं शास्त्रंब्रह्मकृष्णानुकर्षणे ७१
सूतउवाच–
एतन्निशम्यवचनंसमुदाहृतंतुयोगीश्वरैःसनकमुख्यतमैरभीष्टम्
भक्त्याविधृत्यचरणंचप्रणम्यमूर्ध्नाहृष्टोजगादजगदाधिनिवर्त्तकांस्तान् ७२
नारदउवाच–
संदर्शनंचभवतांविनिहंत्यघौघं श्रेयस्तनोतिभवदुःखदवार्दितानाम्
निःशेषशेषमुखगीतकथैकपानात्प्रेमप्रकाशनकृतेशरणंगतोवः ७३
पुरायोदयेनबहुजन्मसमर्जितेनसत्संगमोयदिभवेत्कृतिनोजनस्य
अज्ञानहेतुकृतमोहमहांधकारोनश्येत्तदाह्युदयमेतिमहान्विवेकः ७४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्रयांसंहितायामुत्तरखंडे
श्रीभागवतमाहात्म्येचतुर्नवत्यधिकशततमोऽध्यायः १९४

## पञ्चनवत्यधिकशततमोऽध्यायः

सूतउवाच–
अथदेवऋषिस्तत्रकुमाराननुमान्यच
उवाचप्रणतोवाक्यंज्ञानयज्ञकृतादरः १
नारदउवाच–
ज्ञानयज्ञंकरिष्यामिशुकशास्त्रकथोज्वलम्
भक्तिज्ञानविरागाणांस्थापनार्थेप्रयत्नतः २
यत्रकार्योमयायज्ञः स्थानंतत्कथ्यतांद्विजाः
चत्वारोयज्ञवाहाश्चयूयमेववृतामया ३
कियद्भिर्दिवसैः श्राव्याश्रीमद्भागवतीकथा
कोविधिस्तत्रकर्तव्योज्ञानयज्ञविशारदाः ४
कुमाराऊचुः
शृणुनारदवक्ष्यामस्तुभ्यंयत्रकथानृणाम्
शृरावतांपापराशिघ्नोभवेत्पुरायविबर्द्धिनी ५
गंगाद्वारसमीपेतुकामदाख्यंपुरंमहत् ६
स्वर्णद्याश्चोत्तरे पुरायेतटमानंदनामकम्
नानाऋषिगणैर्जुष्टंदेवसिद्धनिषेवितम् ७

नानातरुलताकीर्णंस्वच्छकोमलवालुकम्
रम्यमेकांतदेशस्थंस्वर्णपंकजशोभितम् ८
यत्समीपस्थजीवानांक्षेत्रस्यैवप्रभावतः
मिथःसंस्निग्धचित्तानां वैरंचेतसिनस्थितम् ९
ज्ञानयज्ञस्त्वयातत्रकर्त्तव्योहिप्रयत्नतः
अपूर्वरसदात्रीचकथातत्रभविष्यति १०
वृंदावनप्रतोलिस्थंजराजीर्णकलेवरम्
सुतद्वयंपुरस्कृत्यभक्तिस्तत्रागमिष्यति ११
यत्रभागवती वार्ताभक्तिस्तत्रसहात्मजा
कृष्णकीर्तिसुधांपीत्वातरुणीवाभविष्यति १२
सूत उवाच-
एवमुक्त्वाकुमारास्तेनारदेनसमंततः
गंगाद्वारेसमाजग्मुर्ज्ञानयज्ञायसत्वराः १३
यदाप्राप्तास्तटंतेतुगंगायाभार्गवर्षभ
तदाकोलाहलश्चासीद्भूर्लोकादिकसप्तसु १४
श्रीमद्भागवतास्वादलंपटासाप्तलौकिकाः
धावंधावंसमाजग्मुःप्राचीनावैष्णवाश्चये १५
भृगुर्वसिष्ठश्च्यवनश्चगौतमोमेधातिथिर्देबलदेवरातौ
रामस्तथागाधिजशाकलौचमृकंडपुत्रात्रिजपिप्पलादाः १६
योगेश्वरौव्यासपराशरौचशुकादयोभागवतप्रधानाः
शिष्यैरुपेताबहुशास्त्रविज्ञाःकृष्णामृतास्वाद कृतौप्रधानाः १७
वेदांतानिचवेदाश्चमंत्रास्तंत्राणिसंहिताः
दशसप्तपुराणानिषट्शास्त्राणितथाययुः १८
गंगाद्याःसरितस्तत्रपुष्करादिसरांसिच
क्षेत्राणिचदिशःसर्वादंडकादिवनानिच १९
हिमादयोनगास्तत्रदेवगंधर्वकिन्नराः
द्वीपाःसमुद्रादिक्पालाः पातालस्थास्तथाययुः २०
दीक्षायांनारदेनाथदत्तमासनमुत्तमम्
कुमारावंदितासर्वेनिषेदुः कृष्णतत्पराः२१
वैष्णवाः सुविरक्ताश्चन्यासिनोब्रह्मचारिणः

मुख्याह्यग्रेस्थिता स्तेषांपुरतोनारदः स्थितः २२
वामभागेमुनिगणादक्षिणेचदिवौकसः
वेदोपनिषदोऽन्यत्रतीर्थानिचभृगूद्वह २३
जयशब्दोनमः शब्दःशंखशब्दस्तथैवच
बभूवाकाशसंस्पर्शीघोषयन्विदिशोदश २४
विमानानिसमारुह्यप्रहृष्टानाकवासिनः
कल्पवृक्षप्रसूनैश्चतांसभांसमवाकिरन् २५
सूतउवाच–
एवंतेषुनिविष्टेषुभृग्वादिषुयथार्हतः
श्रीभागवतमाहात्म्यमूचिरेनारदायते २६
कुमाराऊचुः
शृणुनारदवक्ष्यामोमहिमानंमहाद्भुतम्
श्रीमद्भागवताख्यस्यशास्त्रस्यविधिपूर्वकम् २७
सदानरैः सुकृतिभिःसेव्याभागवतीकथा
यस्याःश्रवणमात्रेणकृतार्थत्वंप्रयांतिते २८
ग्रंथोऽष्टादशसाहस्रोद्वादशस्कंधसंयुतः
परीक्षिच्छुकसंवादः श्रीमद्भागवताभिधः २९
तावत्संसारचक्रेस्मिन्भ्रमत्यज्ञानमोहितः
यावत्कर्णगतंनोस्याच्छुकशास्त्रंजनस्यच ३०
किंश्रुतैर्बहुभिः शास्त्रैःपुराणैःसंहितागमैः
यदिभागवतंपुंभिर्नश्रुतंभक्तिभावनैः ३१
कथाभागवतस्यापिनित्यंभवतियद्गृहे
तद्गृहंतीर्थरूपंहिनृणांपापविनाशनम् ३२
अश्वमेधसहस्राणिराजसूयशतानिच
भागवत्याः कथायाश्चकलांनार्हंतिषोडशीम् ३३
तावत्पापानितिष्ठंतिदेहेऽस्मिन्मुनिपुंगव
यावन्नश्रूयतेसम्यक्श्रीमद्भागवतंनरैः ३४
नगंगानगयाकाशीप्रतिष्ठानंनपुष्करः
कथायाभागवत्याश्चसमापुण्यफलेनच ३५
श्लोकार्द्धंश्लोकपादंवानित्यंभागवतोद्भवम्

पठस्वस्वमुखेनापियदीच्छसिभवक्षयम् ३६
वेदादिर्वेदमाताचपौरुषंसूक्तमेवच
त्रयीभागवतंचैवद्वादशाष्टाक्षरौमनू ३७
द्वादशात्माप्रयागश्चकालः संवत्सरात्मकः
ब्राह्मणश्चाग्निहोत्रंचसुरभिर्द्वादशीतिथिः ३८
तुलसीचवसंतर्तुः पुरुषोत्तमएवच
एतेषांवस्तुतोनास्तिपृथग्भावोमुनीश्वर ३९
यश्चभागवतंशास्त्रंव्याकुर्यादन्वहंद्विज
जन्मकोटिकृतंपापंतस्यनश्यतिनारद ४०
श्रुतंचपठितंध्यातं श्रीमद्भागवतंनृभिः
ददातिमुक्तिंभक्तिंवातुलस्यग्न्योश्चसेवनम् ४१
अंतकालेतुसंप्राप्तेभयंत्यक्त्वासुदूरतः
श्रीमद्भागवतंभक्त्याशृणुयाद्यःसमुक्तिभाक् ४२
प्रौष्ठपद्यांचराकायांहेमसिंहसमन्वितम्
अलंकृत्यद्विजाग्र्यायश्रीमद्भागवतंददेत् ४३
भक्तियुक्तोविमानश्चमिताशीचजितेंद्रियः
श्रुत्वादितःसकृष्णस्यसायुज्यंलोकमाप्नुयात् ४४
आजन्ममात्रमपियेनशठेनचित्तंसम्यङिनयम्यभुविकृष्णकथानपीता
चांडालवच्चपशुवद्धततेननीतंमिथ्यास्वजन्मजननीभृशमर्दिताच ४५
यैर्नश्रुतंभागवतंपुराणमाराधितोनोपुरुषः पुराणः
मुखेहुतंनैवधरामराणांतेषांवृथाजन्मगतंनराणाम् ४६
चित्तंनयस्यतुनरस्यहरेःकथायांसंप्रीयतेदुरितदुष्टमसत्प्रसंगात्
धिक्तंनरंपशुसमंभुविभारभूतमेवंवदंतिमुनयःकिलपूर्वसिद्धाः ४७
दुर्ल्लभैवकथालोकेश्रीमद्भागवतोद्भवा
कोटिजन्मसमुत्थेनपुण्येनैवतुलभ्यते ४८
तेनयोगनिधेसाधोश्रोतव्यासात्वतीकथा
प्रत्यहंनियमोनास्तिदिनानांवस्तुतोद्विज ४९
सत्येनब्रह्मचर्येणयतोऽस्यश्रवणंमतम्
ततः कलौविशेषोहिविधिःसप्तदिनात्मकः ५०
मनसश्चाजयाद्रोगात्पुंसांचैवायुषःक्षयात्

कलेर्दोषबहुत्वाच्चसप्ताहश्रवणंमतम् ५१
मनसोनिग्रहश्चैवनियमाचरणंतथा
कर्तुंसप्तदिनंशक्यंततोनियमकल्पना ५२
श्रद्धयाश्रवणेनित्यमाद्यंतावधियत्फलम्
तत्फलंशुकदेवेनसप्ताहश्रवणेकृतम् ५३
यत्फलंनास्तितपसानयोगेनसमाधिना
अनायासेनतत्सर्वंसप्ताहश्रवणाल्लभेत् ५४
यज्ञाद्व्रताच्चतपसोध्यानाज्ज्ञानाच्चतीर्थतः
श्रीभागवतसप्ताहनियमोह्युत्तमोमतः ५५
यदाकृष्णोभुवंत्यक्त्वास्वपदंगंतुमुद्यतः
तदाज्ञायोद्धवोधीमान्गोविंदंवाक्यमब्रवीत् ५६
उद्धवउवाच-
भगवन्भवतासर्वंदेवकार्यंप्रसाधितम्
अधुनागंतुमिछुस्त्वंस्वंपदंतमसः परम् ५७
अतश्चिंता ममोत्पन्नात्वद्वियोगभियाबिभो
तामपाकुरुदेवेशत्वामहंशरणंगतः ५८
आगतोऽयकलिर्घोरोऽत्रसर्वेऽपिजनाःखलाः
भविष्यंतिततोनाथकिंविधेयंतदादिश ५९
इयंभारवतीभूमिःशरणंकिंप्रयास्यति
त्वदन्योदृश्यतेनात्रत्रातास्यायदुनंदन ६०
अतोऽस्मासुदयांकृत्वातिष्ठात्रैवदयानिधे
साधूनांरक्षणायैवत्वमाविरभवः प्रभो ६१
निर्गुणोऽपिनिराकारः सच्चिदानंदविग्रहः
त्वद्वियोगेनतेभक्ताः कथंस्थास्यंतिभूतले ६२
निर्गुणोपासनेकष्टमतोऽस्मद्धितमाचर
सूतउवाच-
इत्युद्धववचःश्रुत्वाचिंतयित्वाक्षणंहरिः ६३
ददौभागवतंतस्मैकृपयापरयायुतः
निजंतेजः समाधायश्रीमद्भागवतेद्विज ६४
दत्वोद्धवायभगवान्स्वकीयंपदमाविशत्

तेनेयंवाङ्महीमूर्तिर्वर्त्ततेश्रीहरेरिह ६५
सेवनात्सततंचास्याः पापंनश्येन्नृणांक्षणात्
सप्ताहश्रवणंतेनकथितंसर्वतोऽधिकम् ६६
श्रोतावक्तापृच्छकश्चयांतितन्मयतांद्विज
दुःखदारिद्र्यदौर्भाग्यपापप्रक्षालनायच ६७
कामक्रोधजयार्थंचकलौभागवतंक्षमम्
अन्यथावैष्णवीमायादेवानामपिदुर्जया
कथंनिवर्ततेपुंसांश्रीमद्भागवतंविना ६८
सूतउवाच-
इत्येवमुक्त्वामाहात्म्यंश्रीमद्भागवतस्यते
कथांभागवतींदिव्यांप्रवक्तुमुपचक्रमुः ६९
वेदोपनिषदांसारेश्रीमद्भागवतेद्विजैः
आरभ्यमाणेतत्रैव भक्तिराविरभूत्क्षणात् ७०
प्रेमान्विताचारुतनुर्मुदान्वितौसुतौगृहीत्वातरुणौस्वदोर्भ्याम्
श्रीकृष्णगोविंदहरेमुरारेनाथेतिनामानिमुहुर्वदंती ७१
तामागतांभागवतार्थभूषांसुचारुवेषांददृशुःसदयाः
व्यतर्कयंश्चापिकथंकुतासौकास्तीतिसर्वेऽपिसुविस्मिताक्षाः ७२
ततः कुमाराजगदुःकृतार्थाकथार्थतोनिष्पतिताधुनेयम्
एवंगिरः साससुतानिशम्यजगादनम्राब्जभुवः कुमारात् ७३
भक्तिरुवाच-
भवद्भिरद्यैवकृतास्मिपुष्टाकलौप्रणष्टापिकथारसेन
तिष्ठामिकुत्राहमभीष्टमाभ्यांसहास्पदंमह्यमुपादशध्वम् ७४
सूतउवाच-
तद्वाक्यमाकर्ण्यविधेःकुमाराविचार्यसम्यक्प्रणिधायचित्ते
उचुश्चभक्तिंभवरोगहर्त्रीं प्रेमैकदात्रींहरिभक्तिभाजाम् ७५
कुमाराऊचुः
भक्तेषुगोविंदपरायणेषुसाधुष्वथोदीनदयापरेषु
मनोनियम्योत्पथसंप्रवृत्तंकृत्वैकतानंहरिपादपद्मे ७६
ततोहिदोषाः कलिजाइमेत्वांद्रष्टुंनशक्ताः प्रभवोपिलोके
कलौत्वमेकैवजगद्धितायभविष्यसेनारदसंप्रणीता ७७

सकलभुवनमध्येनिर्धनाश्चातिधन्यानिवसतिहृदियेषां श्रीहरिर्भक्तिरेका
हरिरपिनिजलोकंसत्वरंसंविहायप्रविशतिहृदियेषांप्रेमसूत्रापिनद्धः ७८
इति श्रीपाद्मेमहापुराणेपचंपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
श्रीभागवतमाहात्म्येपंचनवत्यधिकशततमोऽध्यायः १९५

षराणवत्यधिकशततमोऽध्यायः

सूतउवाच–
अथवैष्णवचित्तेषुदृष्ट्वाभक्तिमलौकिकीम्
निजलोकंपरित्यज्यभुवमभ्यगमद्धरिः १
वनमालीघनश्यामःपीतवासाः किरीटधृक्
कांचीकलापपर्यस्तोलसन्मकरकुंडलः २
त्रिभंगललितश्चारुकौस्तुभेनविराजितः
कोटिमन्मथलावरयोहरिचंदनचर्चितः ३
परमानंदचिन्मूर्तिर्मधुरोमुरलीधरः
आविवेशस्वभक्तानांहृदयान्यमलानिच ४
वैकुंठवासिनोयेचवैष्णवाः शांतमानसाः
गूढरूपाःसमायाताः श्रवणायहरेः कथाः ५
तदाजयजयेत्युच्चैःशब्दोऽभूत्कंबुशब्दयुक्
येनामंगलमत्युग्रंकलिजंप्रलयंगतम् ६
तत्रस्थानांजनानांचदृष्ट्वागेहात्मविस्मृतिम्
नारदोऽध्यात्मतत्वज्ञः कुमारान्प्रत्युवाचह ७
नारदउवाच–
अलौकिकोऽयमहिमामुनीश्वराः सप्ताहजन्योद्यविलोकितोमया ८
मूढाःशठायेपशुपद्मिणोऽपितेपिप्रयांत्येवगतिंपराख्यात्
अतोनृलोकेनतुशास्त्रमन्यच्चित्तस्यशुध्यैबिहितंपवित्रम् ९
अघौघविध्वंसिकृतार्थतावहंकलौयुगेदोषनिधौकुमाराः केकेनशुध्यंतिवदं–
तुमह्यंसप्ताहजज्ञेनकथामयेन १०
कृपालुभिर्लोकहितोभवद्भिः प्रकाशितं कोऽपिनवीनमार्गः
कुमाराऊचुः
येमानवाःपापकृतः सुदुष्टाःसदादुराचाररताःसमत्सराः ११

क्रोधाग्निदग्धाःकुटिलाश्चकामिनःसप्ताहयज्ञेनहरिंव्रजंतिते १२
सत्येनहीनाः पितृमातृदूषकास्तृष्णाकुलाश्चाश्रमवर्णबाह्याः
येदांभिकाजीवविहिंसकाश्चसप्ताहयज्ञेनहरिंव्रजंतिते १३
पंचोग्रपापाश्च्छलकारिणश्चक्रूराः पिशाचाइवनिर्दयाश्च
ब्रह्मस्वपुष्टाव्यभिचारिणश्चसप्ताहयज्ञेनहरिंव्रजंतिते १४
कायेनवाचामनसापिपातकंनित्यंप्रकुर्वंतिशठाहठेनये
नीचाःकृतघ्नामलिनादुराशयाः सप्ताहयज्ञेनहरिंव्रजंतिते १५
सूतउवाच-
अथैवंतुष्टचित्तेऽथनारदेदेवपूजिते
प्रसन्नास्तेकुमाराश्चपुनरूचुश्चनारदम् १६
कुमाराऊचुः
अत्रतेकीर्तयिष्यामइतिहासंपुरातनम्
यस्यश्रवणमात्रेणपापहानिःप्रजायते १७
तुंगभद्रातटेपूर्वंपत्तनेकोहलाभिधे
वर्णाश्रमाचारयुतेधनधान्यसमाकुले १८
आत्मदेवइतिख्यातस्तत्रासीद्द्विजसत्तमः
वेदविद्याविधिप्राज्ञोनित्यकर्मपरायणः १९
तत्प्रियाधुंधुलीनामनित्यंस्वीयहितेरता
स्ववाक्यस्थापनाचापिसुंदरीसुकुलोद्भवा २०
पूर्वकर्मविपाकेनप्रायशोबहुजल्पिनी
शूराचगृहकृत्येषुक्रूराचकलहप्रिया २१
एवंनिवसतोस्तत्रदंपत्योर्निरपत्ययोः
व्यतिक्रांतंवयश्चापिपंचाशद्वर्षसंमितम् २२
अथतौदुःखितौजातौनिरपत्यौगृहेस्थितौ
संतानोत्पत्तयेताभ्यांदत्तंचापिधनादिकम् २३
गोभूहिरण्यवासांसिदत्तान्यपि बहूनिच
नपुत्रोनापिदुहिताजायतेपूर्वकर्मणा २४
सचैकदातुनिर्विण्णआत्मदेवोद्विजोत्तमः
गृहंत्यक्त्वागतोऽरण्यमानपत्येनदुःखितः २५
यत्रतत्रभ्रमन्भ्रांतोदुःखाकुलितमानसः

क्षुत्क्षामस्तृट्परीतश्चदैवात्प्राप्तोजलाशयम् २६
जलंपीत्वाततस्तस्मिंस्तडागेसद्विजोत्तमः
वृक्षच्छायांसमाश्रित्यनिषराणस्तत्रनारद २७
अथतत्रतदैवागात्कश्चित्सिद्धोभ्रमन्महीम्
जलंपीत्वातडागेतुसोऽपितत्रैवचागतः २८
तंदृष्ट्वान्यासिनंशांतमात्मदेवउदारधीः
सत्कृत्योत्थायतत्पादौजग्राहस्वगुरोरिव २९
उपविष्टौततस्तौद्वौकृतप्रश्नौपरस्परम्
सुस्निग्धमानसौभूत्वागुरुशिष्याविवाश्रमे ३०
अथतंसयतिर्दृष्ट्वाश्वसंतंदुःखितांतरम्
पप्रच्छकरुणासिंधुरात्मदेवंपुरः स्थितम् ३१
सिद्धउवाच–
कातेचिंताद्विजश्रेष्ठदुःखायहृदिवर्तते
तांसमाचक्ष्वधर्मज्ञपरितापप्रदायिनीम् ३२
तच्छ्रुत्वावचनंतस्यसिद्धस्यसुमहात्मनः
आत्मदेवउवाचाथस्वस्यदुःखस्यकारणम् ३३
आत्मदेवउवाच–
किंब्रवीमिमुनेदुःखंसंचितंपूर्वकर्मणा
मदीयाः पूर्वजास्तोयंकवोष्णमुपभुंजते ३४
मद्दत्तंनैवगृह्णंतिपितरोदेवताबलिम्
तेनदुःखेननिर्विराणःप्राणांस्त्यक्तुमिहागतः ३५
धिग्जीवितंप्रजाहीनंगृहंचैवधनंकुलम्
पाल्यतेयामयाधेनुःसाऽपिवंध्यात्वमेतिह ३६
योमयारोपितोवृक्षःसोपिवंध्यत्वमागतः
निर्भाग्यस्यानपत्यस्यकिमतोजीवितेनमे ३७
कुमाराऊचुः
इत्युक्त्वासरुरोदोच्चैस्तत्पुरोदुःखपीडितः
यदातदायतेश्चित्तेकरुणाभूद्गरीयसी ३८
ललाटाक्षरमालांचदृष्ट्वाज्ञात्वासयोगवान्
आत्मदेवंद्विजंप्राज्ञः पुनरूचेसविस्तरम् ३९

सिद्धउवाच
शृणुविप्रमयातेऽद्यप्रारब्धमवलोकितम्
सप्तजन्मावधिप्राप्तिःपुत्रस्यनचदृश्यते ४०
मुंचाग्रहंप्रजाहेतोर्बलिष्टाकर्मणोगतिः
विवेकंतुसमासाद्यसुखीभवमहामते ४१
एवमुक्तंसमाकर्ण्यसिद्धस्यद्विजसत्तमः
प्रजाशाबद्धचित्तस्तुसिद्धंप्राहातिदुःखितः ४२
विप्रउवाच-
विवेकेनभवेत्किंमेपुत्रंदेहिवलादपि
नोचेत्त्यजाम्यहंप्राणांस्त्वदग्रेशोकमूर्च्छितः ४३
इतिविप्राग्रहंदृष्ट्वाप्राब्रवीत्सतपोधनः
संततेःसगरोदुःखमवापांगःप्रजापतिः ४४
चित्रकेतुर्गतः कष्टंविधिलेखविमार्ज्जनात्
अतस्त्वमपिधर्मज्ञयदि पुत्रंलभेरपि ४५
सुतेननसुखीभूयाः दैवंहिबलवत्तरम्
इत्युक्त्वाद्विजवर्यायससिद्धः साधुसंमतः ४६
ददावेकंफलंतस्मैप्राग्रहेणसुतार्थिने
इदंफलंमयातुभ्यंदत्तंपुत्राप्तयेद्विज ४७
भार्यायैदेहिपुत्रस्तेभविष्यतिनसंशयः
सत्यंशौचंदयादानमेकभक्तंतुभोजनम् ४८
वर्षावधिस्त्रियाकार्यं तेनशुद्धोभवेत्सुतः
एवमुक्त्वाययौयोगीविप्रःस्वगृहमागतः ४९
दत्त्वापत्न्यैफलंतत्तुसिद्धोक्तमवदच्चह
अथसाधुंधुलीक्रूरास्ववाक्यस्थापनोत्सुका ५०
स्वसख्यैप्राहतत्सर्वं पत्योक्तंसिद्धभाषितम्
यद्यहंभक्षयेचेदंफलंसिद्धेनचार्पितम् ५१
गर्भोममभवेत्तर्हिकथंचाहंसहाम्यहम्
स्वल्पंभक्ष्यमशक्तिश्चगमनेगृहकर्मणि ५२
तिर्यक्चेदागतोगर्भोतदामेमरणंभवेत्
प्रसूतौदारुणंदुःखंसुकुमारीकथंसहे

मंदयांमयिसर्वस्वंननांदासंहरेत्सदा ५३
चिंतामेसमनुप्राप्ताकिंकरोमिशुचिस्मिते
सातद्वचनमाकर्ण्यस्नेहभंगभयाद्द्विज ५४
एवमेवेतितांप्राहप्रीत्याप्रहसितानना
एवंकुतर्कयोगेनतत्फलंनैवभक्षितम् ५५
पत्यापृष्टेफलंभुक्तंभुक्तंचेतितयेरितम्
एकदाभगिनीतस्याः स्वेच्छयातद्गृहंगता ५६
तदग्रे कथितंसर्वंचिंतेयंमहतीहिमे
किंकरोमिसगर्भोऽहत्वंप्रब्रूहियथातथम् ५७
साब्रवीन्ममगर्भोस्तितुभ्यंदास्येप्रसूतितः
तावत्कालंसगर्भेवगुप्तातिष्ठगृहेसुखम् ५८
तंबालंपोषयिष्यामित्वद्गृहेचैवनित्यदा
फलंधेनोःप्रयच्छाद्यपरीक्षार्थंशुभानने ५९
इत्युक्त्वासाययौगेहमात्मनोहृष्टमानसा
धुंधुल्यापियथोद्दिष्टंतद्भगिन्यातथाकृतम् ६०
अथप्रसूयसाबालंधुंधुल्यैचार्पयद्द्रुतम्
तयाचकथितंभर्त्रेप्रसूतःसुखमर्भकः६१
लोकस्यसुखमुत्पन्नमात्मदेवप्रजोदयात्
दत्त्वादानंद्विजाग्रेभ्योजातकर्मचकारच ६२
गीतवादित्रनिर्घोषोगृहेतस्यातिमङ्गलम्
बभूवहर्षमापन्नआत्मदेवोमहामतिः ६३
अथसाप्राहभर्त्तारंदुग्धंमेस्तनयोर्नहि
पालयिष्येकथंबालंसद्यःसूतंप्रभोऽधुना ६४
मत्स्वसुश्चप्रसूतायामृतोबालःपुराभवत्
तामानीयगृहेरक्षसार्भकंपोषयिष्यति ६५
इतिश्रुत्वावचस्तस्याधुंधुल्याद्विजसत्तमः
तथैवकृतवान्भ्रांतरात्मदेवोमुदान्वितः ६६
धुंधुकारीतिनामास्यकृतंमात्रायथार्थतः
स्तन्येनपोषमाप्नोतिनित्यंमातृष्वसुःसुतः ६७
त्रिमासेनिर्गतेचाथसाधेनुःसुषुवेऽभकम्

सर्वांगसुंदरंदिव्यंनिर्मलंकनकप्रभम् ६८
दृष्ट्वाप्रसन्नस्तंबिप्रःसंस्कारान्स्वयमादधे
तंदिदृक्षवआयाताजनाः सर्वेऽतिविस्मिताः ६९
आत्मदेवस्यविप्रस्यमहाभाग्योदयेनच
धेन्वाबालः प्रसूतश्चदेवरूपोऽतिकौतुकम् ७०
नज्ञातंतद्रहस्यंतुकेनापिविधियोगतः
गोकर्णःतंसुतंदृष्ट्वागोकर्णेत्येवचाभ्यधात् ७१
कियत्कालेनसंप्राप्तौतारुण्यंताबुभावपि
गोगकर्णपंडितोज्ञानीधुंधुकारीमहाखलः ७२
स्नानशौचक्रियाहीनोभक्ष्याभक्षीक्रुधाप्लुतः
चौरःसर्वजनद्वेषीदुष्टचांडालसंगतः ७३
क्रीडतोह्यर्भकान्धृत्वाबलात्कूपेनिपातयेत्
एवंवेश्याप्रसंगेनानयद्द्रव्यंक्षयंपितुः ७४
पिताकृपणवत्तस्यशुचानिः स्वोरुरोदह
अनपत्यः सुखीनित्यंकुपुत्रोदुःखदायकः ७५
सिद्धेनोक्तंवचः सत्यमनुभूतंमयाधुना
क्वगच्छामिक्वतिष्ठामिकोमेदुःखंनिवारयेत् ७६
प्राणांस्त्यक्ष्येजले वह्नौभृगोर्वापिपतेह्यहम्
इत्येवंचिंतयानंतमधोमुखमुपागतः ७७
गोकर्णोजनकंज्ञानीबोधयामासतत्वतः
गोकर्णउवाच-
असारस्तातसंसारदुःखमोहप्रदोनृणाम् ७८
कःसुत किंधनंकस्यकाजायाकः पतिःपितः
मोहेनबद्धोदीनात्मालोकः क्लिश्यतिनान्यथा ७९
नचेंद्रस्यसुखंकिंचिन्नसुखंचक्रवर्तिनः
विरक्तस्यसुखंतातमुनेरेकांतशीलिनः ८०
मुंचाज्ञानंप्रजारूपंमोहंनरककारणम्
निर्द्वंद्वोनिरभीमानोब्रजत्यक्त्वाखिलंवनम् ८१
ततस्तद्वाक्यमाकर्ण्यगोकर्णंसद्विजोऽब्रवीत्
द्विजउवाच-

यत्कर्त्तव्यंवनेसाधोतन्ममाचद्दवविस्तरात् ८२
मोहपाशनिबद्धंहिशठंकृपणमानसम्
संसारगर्तेपतितंमामुद्धरदयानिधे ८३
पितुरित्थंवचःश्रुत्वागोकर्णोज्ञानपंडितः
उवाचदीनंनिर्विरणंपितरंहृष्टमानसः ८४
गोकर्णउवाच-
मांसास्थिरक्तनिकरेस्वशरीरकेऽस्मिन्स्वत्वंत्यजाशुममतांवनितासुतादौ
पश्यानिशंजगदिदंन्नणभंगनिष्ठंज्ञानीविरागरसिकोभवभक्तिनिष्ठः ८५
धर्मंभजस्वसततंत्यजलोकधर्मान्संसेव्यसाधुपुरुषान्जहिकामतृष्णाम्
अन्यस्यदोषगुणचिंतनमाशुमुक्त्वाविष्णोःकथारसमथोनितरांपिबत्वम् ८६
कुमाराउचुः-
एवंसुतोक्तविदितानुभवोनिरीहस्त्यक्त्वागृहंस्थिरमतिर्गतषष्टिवर्षः
नित्यंहरिप्रियजनानुगतोमहात्मादुष्प्रापमापचपदंसहरेर्वनस्थः ८७

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेश्रीभागवत माहात्म्येषराणवत्यधिकशततमोऽध्यायः १९६

## सप्तनवत्यधिकशततमोऽध्यायः

कुमाराऊचुः
पितर्येवंवनंप्राप्तेपश्चादागत्यनारद
जननींतर्जयामासधुंधुकारीमहाखलः १
क्ववित्तंतिष्ठतिब्रूहिमातरंप्रतिनारद
सर्वथात्वांहनिष्यामिनचेद्ब्रूयानिधानकम् २
सातस्यवचनात्त्रस्तारात्रौदुःखितमानसा
निपत्यकूपेतुमृतालोकैर्ज्ञात्वाबहिःकृता ३
गोकर्णस्तांतुनिर्हृत्यद्विजैस्तज्ज्ञातिबांधवैः
तीर्थयात्रांययौप्राज्ञः समदुःखसुखोमुने ४
धुंधुकारीगृहेतिष्ठन्स्वकेपरायवधूवृतः
अत्युग्रकर्माचारेणतत्पोषणविमूढधीः ५
भूषणान्यभिलिप्प्स्यंत्यस्तमूचुर्वारयोषितः
भोभोप्रियवयंसर्वास्त्वयानाथेनसंगताः ६

स्थितानैवात्रकोप्यन्योधनदोभ्येतिमानद
तस्यात्सूक्ष्माणिवस्त्राणिभूषणानिद्युमंतिच ७
देहिनोचेद्व्रजिष्यामस्त्वत्सकाशान्नरांतरम्
इति श्रुत्वावचस्तासांचिंतयित्वाक्षणंसच ८
निर्गतः स्वगृहाद्रात्रौकामांधोमृत्युमस्मरन्
मुषित्वाकस्यचिद्देहाद्वस्त्राण्याभरणानिच ९
ददौताभ्योमुदायुक्तःप्रीत्यैतासांसनारद
तानिदृष्ट्वाह्यमूल्यानिवस्त्राण्याभरणानिच १०
ताःस्त्रियश्चिंतयामासुश्चौर्येणैतानिचामुना
आहृतानीतिनिश्चित्यपरस्परममंत्रयन् ११
चौर्यंकरोत्यसौनित्यमेनंराजागृहीष्यति
वित्तंहृत्वापुनश्चैवमारयिष्यतिनिश्चितम् १२
अतोरहसिचास्माभिर्हत्वामुंचौर्यकारिणम्
वित्तंचबहुसंगृह्यकिमन्यत्रनगम्यते १३
इतिताःक्रूरहृदयांसुप्तंकंठग्रहंतदा
पाशैःसुतीक्ष्णैर्बद्ध्वाचव्यापादयितुमुद्यताः १४
यदाचनमृतश्चासौभृशंकंठग्रहेणवै
तदांगाराणिबहुशोमुखेचास्यविचिक्षिपुः १५
अग्निज्वालातिदुःखेनव्याकुलोनिधनंगतः
तद्देहंचिक्षिपुर्गर्तेप्रायःसाहसिकाः स्त्रियः १६
नज्ञातंतच्चरित्रं तुकेनापिमुनिसत्तम
लोकैःपृष्टावदंतिस्मदूरेयातः पतिर्हिनः १७
आगमिष्यतिदीर्घेणकालेनधनकर्षितः
अतःस्त्रीणांनविश्वासः कर्त्तव्योविदुषां वरैः १८
विश्वस्तंसर्वथाघ्नंतिप्रार्थयंत्योनवंनवम्
सुधामयंवचोयासांकामिनांरसवर्द्धनम् १९
हृदयंक्षुरधाराभंप्रियःकोनामयोषिताम्
अथताबहुलंवित्तंगृहीत्वावारयोषितः २०
ग्रामांतरंययुःशीघ्रंभयाद्राज्ञोऽतिविह्वलाः
धुंधुकारीबभूवाथमहाप्रेतः कुकर्मकृत् २१

वात्यारूपधरोनित्यंधावन्दुर्मृत्युतोदिशः
शीतातपपरिक्लिष्टोनिराहारः पिपासितः २२
नचलेभेसुखंक्वापिहाहेतिप्रबदन्मुहुः
कियत्कालांतरेत्वेनंमृतंचैवावबुध्यच २३
गोकर्णस्तीर्थयात्रायांगयाश्राद्धमथाकरोत्
समाप्यतीर्थयात्रांतुस्वंपुरंसमुपेयिवान २४
सभाजितः सपौरैस्तुप्रीत्यास्वजनबांधवैः
उवासस्वगृहेचैवदिनानिकतिचिद्द्विजः २५
रात्रौप्रसुप्तंगोकर्णंज्ञात्वावेश्मांगणेसतु
धुंधुकारीमहादुष्टोरौद्रंरूपंव्यदर्शयत् २६
क्षणंनागः क्षणंचोष्ट्रः क्षणंसमहिषोऽभवत्
क्षणमग्निः क्षणंसर्पः क्षणेनपुरुषोऽभवत् २७
वैपरीत्यमिदंदृष्ट्वागोकर्णोधैर्यसंयुतः
चिंतयामासमेधावीकिमेतदितिविस्मितः २८
अयंदुर्गतिमापन्नः कोप्यस्तिपुरुषाधमः
इतिनिश्चित्यमनसातमुवाचदयान्वितः २९
गोकर्णउवाच–
कस्त्वमुग्रतरोरात्रौभीषयन्मामुपागतः
प्रेतोचाथपिशाचोवाकुतःप्राप्तोदशामिमाम् ३०
तद्ब्रूहित्वंमहाभागकिंकार्यं तेमयाधुना
घोररूपोयतोरात्रौमत्समीपमुपागतः ३१
इति श्रुत्वावचोभ्रातुर्धुंधुकारीमहाखलः
प्रेतभावमनुप्राप्तोरुरोदभृशमातुरः ३२
वक्तुंनैवक्षमोवाचाप्रेतत्वेन विमोहितः
संज्ञयानिर्दिदेशाथजलंपातुंपिपासितः ३३
अथासौसुमहाभागोगोकर्णः साधुसंमतः
स्वकांजलौजलंकृत्वाप्राक्षिपत्तमुदीरयन् ३४
तत्क्षिप्तंतज्जलंभ्रात्रागोकर्णेनमहात्मना
उपस्थितंचतृप्त्यर्थं प्रेतस्यधुंधुकारिणः ३५
अथोवाचागतज्ञानः प्रदत्तेनांबुनामुना

पुण्यात्मनात्मनो भ्रात्रागोकर्णेनचनारद ३६
प्रेतउवाच-
अहंभ्रातात्वदीयोऽस्मिधुंधुकारीतिनामतः
आत्मनः कर्मदोषेणप्रेतत्वंसमुपागतः ३७
मममातामृतादुःखाद्बहुशस्तर्जितामया
द्रव्यहेतोस्ततः पश्चाद्वारस्त्रीपोषणोत्सुकः ३८
निषिद्धंकृतवान्कर्मचौर्यादिधनलोभतः
एकदाप्रार्थितस्ताभिर्भूषणान्यंबराण्यहम् ३९
धनिकस्यगृहाद्रातौमुषित्वातान्युपानयम्
ततस्ताधनलोभेनपाशैर्बद्ध्वागलेबलात् ४०
मांतुव्यापादयामासुर्वह्निक्षेपेणमानद
गृहीत्वामद्धनं भूरिताः सर्वाभूपतेर्भयात् ४१
पलायिताःपुरादस्मात्स्वार्थोन्मूलितसौहृदाः
अतः प्रेतत्वमापन्नोभ्रातरद्यत्वयांबुना ४२
सिक्तः संज्ञामहंप्राप्तः पुण्येनातिकृपालुना
वाताहारेणजीवामिदैवादिष्टफलोदयः ४३
अपश्यंत्वामहंसुप्तंभ्रातरंस्वगृहांगणे
ततस्त्वामनभिज्ञंमांधर्षणायकृतोद्यमः ४४
अभवंसहसासाधोज्ञातश्चाहंत्वयाधुना
दीनबंधोदयासिंधोभ्रातर्मामाशुमोचय ४५
प्रेतभावादमुष्मात्त्वंकृतार्थोऽसिनसंशयः
इति श्रुत्वावचोभ्रातुर्गोकर्णोज्ञानवान्सुधीः ४६
भ्रातरंप्राहखिन्नात्मादुःखितंधुंधुकारिणम्
गोकर्णउवाच-
तुभ्यंदत्तोमयापिंडोगयायांत्वामहंभृतम् ४७
श्रुत्वालोकमुखाद्भ्रातस्त्वंकथंप्रेततांगतः
गयापिंडप्रदानेनदुर्गतोऽपिशुभांगतिम् ४८
प्राप्नोतिनात्रसंदेहस्त्वंकथंनदिवंगतः
भ्रातुरित्थंवचः श्रुत्वागोकर्णस्यमहात्मनः ४९
धुंधुकारीदुःखितात्माप्रोवाचपुरतःस्थितः

गयाश्राद्धशतेनापिनमेमुक्तिर्भविष्यति ५०
उपायोऽन्यश्चिंतनीयोममोद्धारायवैत्वया
इतितद्वाक्यमाकर्ण्यगोकर्णोविस्मयंगतः ५१
प्राहश्राद्धैर्नमुक्तिश्चेत्तर्ह्यसाध्यागतिस्तव
इदानींत्वंनिजस्थानमातिष्ठप्रेतनिर्भयः ५२
विचार्याहंकरिष्यामिमुक्त्युपायंपरंतव
इतिवाक्यंसमाकर्ण्यधुंधुकारीततोगतः ५३
निजंस्थानंश्मशानस्थंकलिद्रुममतःपरम्
शेषांरात्रिंसगोकर्णश्चिंतयन्नेवन्नारद ५४
तस्यमुक्तिंस्थितस्तत्रतदुपायंनचाध्यगात्
प्रातस्ततः सगोकर्णःस्वज्ञाति कुलबांधवान् ५५
धर्मशास्त्रविदोविप्रान्रात्रिवृत्तंन्यवेदयत्
तेविचार्यचतद्वृत्तंशास्त्रेषुबहुशोद्विजाः ५६
यदानज्ञातवंतस्तद्वृत्तंसूर्यंतदास्तुवन्
द्विजाऊचुः-
नमस्तेभास्करादित्यतमोहंतर्गभस्तिमन् ५७
लोकसाक्षिन्जगद्धामसुरासुरनमस्कृत
द्वादशात्मन्हरिहयभास्वन्लोकप्रबोधक ५८
त्वंगतिः सर्वलोकानांसततंधर्मशीलिनाम्
त्वंब्रह्मात्वंहरिःशूलीसृष्टिस्थितिविनाशकृत् ५९
त्वामृतेनास्तिलोकेस्मिञ्छरणंप्राणिनांविभो
शर्वस्त्वंक्षितिरूपोऽसिभवोऽसिजलरूपधृक् ६०
त्वमग्निरुपोरूद्रोसिवायुरस्युग्ररूपधृक्
भीमोस्याकाशदेहस्त्वंयज्वापशुपतिःस्वयम् ६१
महादेवः सोममूर्तिरीशानः सूर्यएवहि
तवाष्टौमूर्त्तयोदिव्याइज्यंतेवेदवादिभिः ६२
सर्वकामसमृद्ध्यर्थंव्याप्तलोकत्रयस्यच
मत्स्यस्त्वंवेदधृक् चासिकूर्मश्चाद्रिधरोवरः ६३
धराधरोवराहोसिलोकधृक्त्वंत्रिविक्रमः
ब्रह्मधुन्घोभार्गवस्त्वंलोकधुक्न्घोसिराघवः ६४

भूभारहंताकृष्णोसिबुद्धोस्यसुरमोहकृत्
कल्क्यसिम्लेच्छहंतात्वंधर्मग्लानौयुगेयुगे ६५
देवासुरमनुष्याणांपशुपद्दयंबुचारिणाम्
नानाविधानं जीवानांत्वंस्त्रष्टाब्रह्मरूपधृक् ६६
इंद्रोसिधर्मराजोसिवरुणस्त्वंधनेश्वरः
लोकपालस्वरूपेणवर्त्तसेगोगणेश्वर ६७
त्रयीमूर्त्तिस्त्रिकालेज्यस्त्रिधामात्रिगुणात्मकः
त्वमेवपूज्यसेलोकैस्त्रिधाभिन्नोदिवाकरः ६८
पद्मप्रबोधनकरस्त्वमेवासिजगत्पते
इत्युदीर्यद्विजश्रेष्ठायावत्तस्थुर्मुनीश्वर ६९
तावदाकाशगःप्राहस्फुटंतेषांतुशृण्वताम्
श्रीसूर्यउवाच-
श्रूयतांभोद्विजश्रेष्ठायावत्तस्थुर्मुनीश्वर ६९
तावदाकाशगः प्राहस्फुटंतेषांतुशृण्वताम्
श्रीसूर्यउवाच-
श्रूयतांभोद्विजश्रेष्ठायदर्थंवर्णितोस्म्यहम् ७०
भवद्भिर्धुंधुलीसूनोर्महापातकशांतये
आत्मदेवस्यपुण्येनगोकर्णोरौहिणोह्ययम् ७१अं
श्रीभागवतसप्ताहस्तस्योद्धर्ताभविष्यति
यद्भवद्भिःकृतंस्तोत्रंममवैभववर्णनम् ७२
तेनस्तुत्वा नरोविप्रादेवयानंलभिष्यति
पुत्रार्थीचधनार्थीचधर्मार्थीमोक्षकामुकः ७३
वांछाचिंतामणिस्तोत्रंपठित्वात्यंतमाप्नुयात्
इत्युक्त्वाभास्करोदेवोविररामदिविस्थितः ७४
तेद्विजाः साध्वितिप्रोचुर्गोकर्णंहृष्टमानसाः
ततः समाजेविप्राणांतुंगभद्रातटेशुभे ७५
कौतुकंसुमहद्द्रष्टुंतत्रागान्नागरीप्रजा
गोकर्णोज्ञाततत्वार्थोवक्ताध्यासनमास्थितः ७६
नारायणादिकान्नत्वासप्ताहंसमवर्त्तयन्
श्रीहरेस्तुवचःशास्त्रंतीर्थपादाब्जसंभवम् ७७

यदिसत्यं तदाप्नोतुधुंधुलीतनयोगतिम्
इतिसंकल्प्यमनसाश्रीमद्भागवताभिधम् ७८
जन्माद्यस्ययतश्चेतिधीमह्यंतमुपावदत्
तत्रप्रेतं समागत्यस्थानंपश्यन्नितस्ततः ७९
सप्तग्रंथियुतंवंशंप्रविष्टोवातरूपधृक्
शृरावत्सुवैष्णवाग्र्येषुब्राह्मरोष्वथनारद ८०
शुश्रावधुंधुलीपुत्रोग्रंथिछिद्रस्थितोऽन्वहम्
यदाकथाविरामोऽभूत्प्रथमेऽहनिनारद ८१
तदैकाकीचकग्रंथिः पुस्फोटत्यद्भुतंह्यभूत्
द्वितीयादिष्वहः स्वेवमेकैकग्रंथिभेदनम् ८२
बभूवसप्तमेभिन्नेससद्यः प्रेततांजहौ
दिव्यरूपधरोभूत्वातुलसीदाममंडितः ८३
पीतवासाघनश्यामः प्रबभौभूषणान्वितः
गोकर्णंभ्रातरंनत्वाप्रोवाचाखिलतत्वदृक् ८४
त्वयाऽहमोचितोबंधोकृपयाप्रेतकश्मलात्
धन्याभागवतीवार्ताप्रेतत्वोन्मूलिनीश्रुता ८५
सप्ताहोपितथाधन्योविष्णुलोकगतिप्रदः
यत्प्रभावाद्विमुक्तोऽह प्रेतभावाद्भृशातुरः ८६
आर्द्रंशुष्कंलघुस्थूलंवाङ्मनः कर्मभिःकृतम्
पातकंभस्मसात्कुर्यात्सप्ताहोऽग्निरिवेंधनम् ८७
अस्मिन्वैभारतेवर्षेदेवानामप्यभीप्सिते
शृरावतांभगवच्छास्त्रंगतिरत्युत्तमाभवेत् ८८
स्नाय्वस्थिमज्जामांसासृक्संघातंदेहमुच्यते
शुचिभागवतास्वादादशुचित्वन्यथामतम् ८९
कर्मकश्मलसंदुष्टोदेहोनरकभाजनम्
अतोदोषनिवृत्यर्थमेतदेवहिसाधनम् ९०
बुद्बुदाइवतोयेषुमशकाइवजंतुषु
जायंते मरणायैबभगवच्छास्त्रवर्जिताः ९१
भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः
क्षीयंतेचास्यकर्माणिश्रुतेभागवतेद्विजाः ९२

एवंब्रुवतिवैतस्मिन्विमानवरमागतम्
वैकुंठात्तदधिष्ठायगतोऽसौविष्णुमंदिरम् ९३
विष्णुलोकंगतेतस्मिन्सर्वेविस्मितमानसाः
बभूवुश्चापिपप्रच्छुर्गोकर्णं तेद्विजोत्तमाः ९४
द्विजाऊचुः
श्रुतंभागवतंसर्वैरस्माभिरिहसंगतैः
किंकारणंमहाभागत्वद्भ्रातैकोगतोहरिम् ९५
गोकर्णउवाच-
श्रूयतामभिधास्यामिकारणंभातृसद्गतौ
यच्छ्रुत्वायूयमेवापिगोलोकंचगमिष्यथ ९६
सप्ताहश्रवणंकार्यमुपवासपरायणैः
कृष्णैकतानमतिभिर्गोलोकगतिदायकम् ९७
पुनः शृणुध्वंसप्ताहंश्रीमद्भागवतंद्विजाः
एकाग्रचित्ताः सततंकृष्णप्रेमामृतप्रदम् ९८
इति श्रुत्वावचस्तस्यगोकर्णस्य द्विजोत्तमाः
पुनः श्रोतुंभागवतंसप्ताहंसमुपावसन् ९९
कृष्णैकतानमतयोनियमेनचनारद
पुनस्तेशुश्रुवुंसर्वेश्रीमद्भागवतंद्विजाः १००
कथावसानेभगवान्कृष्णः कमललोचनः
आविरासीन्मुनिश्रेष्ठंशखचक्रगदाब्जधृक् १०१
किरीटकुंडलधरोवनमालीविभूषितः
पीतवासाघनश्यामःकटकांगदभूषितः १०२
तंदृष्ट्वातेद्विजाःसर्वेविष्वक्सेनादिभिर्युतम्
पार्षदप्रवरैर्हृष्टाःप्रणेमुर्भुविसंगताः १०३
जयशब्दोनमः शब्दस्तदासीत्सर्वतोमुने
अथशंखध्वनिंचक्रेहरिःसंहर्षयन्द्विजान् १०४
तदानेकेविमानास्तुवैकुंठात्समुपागताः
द्विजानांपश्यतांतत्रपार्षदप्रवरैर्युताः १०५
गोकर्णंतुसमालिग्यददौसारूप्यमात्मनः
श्रोतॄनन्यान्घनश्यामान्पीतकौशेयवाससः १०६

किरीटिनः कुंडलिनोहारिणोवनमालिनः
चकारतत्त्वणात्तत्रमहदाश्चर्यमप्यभूत् १०७
तस्मिन्ग्रामेस्थितायेतुग्राचांडालजनामुने
समारुह्यविमानांस्तान्ययुःकृष्णाज्ञयादिवम् १०८
गोकर्णसहितः कृष्णोगोपगोपीजनप्रियः
गोलोकंसमनुप्राप्तःसर्वलोकोपरिस्थितम्
यत्रवृंदावनंरम्यंशतशृंगसमावृतम् १०९
तद्व्राह्येपरितोवृतंविजययाह्यत्यद्भुतंराजतेऽरण्यंयत्रुतमंडपानिसुबहून्यच्छोद
वाप्योह्रदाः
गावः कामदुघाः सुरद्रुमततिच्छायाश्रितागोपकैः क्रीडातत्परमानसैः
परिवृतोनंदात्मजःक्रीडति ११०
मध्येत्वस्यसुकाननस्यरचितोवृंदावनेशेच्छयारम्यंरत्नसमूहभर्मखचितं
प्राकारमुद्भासयन्
न्यग्रोधःसुमहांस्ततः
प्रतिदिशंगोपीजनाध्यासितंवत्सालंकृतमद्भुताकृतिमहच्छ्री
गोकुलंराजते १११
तन्मध्येभवनंहरेरधिकृतंप्रोद्भासतेभास्वरंयस्मिन्नंदगृहेश्वरीसमुदितास्ते
राधयाराधिताः
यद्भाग्यंमहदप्युमापतिमुखैश्चिंत्यंसदाभ्यंतरैस्तत्सूनोर्मधुराकृतेरधिचकास्त्यंडौ
घभास्यांशु
भिः ११२
वातांबुपर्णाशनदेहशोषणैस्तपोभिरुग्रैर्जपयज्ञकर्मभिः
असाध्यमप्यायसधेनुसंभवोलोकंनगाहाख्यमखप्रवर्त्तनात् ११३
इतिहासमिमंपुण्यंयःपठेच्छृणुयादपि
सोऽपिगोलोकमभ्येतिकिंश्रीभागवतंपुनः ११४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
भागवतमाहात्म्येसप्तनवत्यधिकशततमोऽध्यायः१९७

अष्टनवत्यधिकशततमोऽध्यायः

कुमाराऊचुः-

अथतेसंप्रवक्ष्यामः सप्ताहश्रवणेविधिम्
येनभागवतंसिद्ध्यैत्पुंसांकृष्णार्पितात्मनाम् १
दैवज्ञंशास्त्रकुशलंसमाहूयधनांशुकैः
समभ्यर्च्यमुहुर्तंतुप्राक्पृच्छेद्भक्तिमान्नरः २
सवदेद्यंमुहूर्तंतुतत्रारंभःप्रशस्यते
नभोनभस्येषोर्जाश्चसहःशुचिसमन्विताः ३
मासाःश्रेष्ठाःकथारंभेपूर्णाचापितिथिःशुभा
भौमार्किवर्जितावाराभानिध्रुवमृदूनिच ४
शुभेयोगेशुभेलग्नेप्रारंभःशस्यतेसदा
नित्यायांचकथायांतुपुराणानांमुनीश्वर ५
द्वादशींवर्जयेत्प्राज्ञःसूतसूतकसंभवात्
श्रीमद्भागवतस्यापिसप्ताहेनैवकेऽपिच ६
ननिषेधोस्तिदेवर्षेप्राहुरेवंपुराविदः
श्रीभागवतसप्ताहोमहायज्ञः स्मृतोबुधैः ७
अतोनिमंत्रणंकार्यंवैष्णवानांसमंततः
सतांसमाजोभवितासप्ताहंवेष्णवोत्तमाः ८
आगंतव्यमतश्चात्रवैष्णवैःश्रवणार्थिभिः
समागतानांतेषांतुनिवासंपरिकल्पयेत् ९
तीर्थेवापिवनेवापिग्रामेवापिप्रयत्नतः
संशोधितायांभूम्यांतुमंडपंपरिकल्पयेत् १०
कदलीस्तंभसंयुक्तंचतुर्दिक्षुध्वजान्वितम्
उच्चमासनमप्युक्तंवक्तुस्तस्याग्रतोमुने ११
आपार्श्वद्वयमुक्तानिश्रोतृणामासनानिच
उदङ्मुखोभवेद्वक्तासमाजेस्मिन्विदांवरः १२
वेदशास्त्रार्थतत्वज्ञोवैष्णवोब्राह्मणोत्तमः
दृष्टांतकुशलोधीरोवक्ताकार्योऽतिनिस्पृहः १३
सर्वसंदेहहर्त्तापिकार्योवक्तानचैवहि
वक्तुःपार्श्वेसहायार्थंस्थाप्योऽन्य पंडितः सुधीः १४
श्रोतृणांसंशयच्छेत्ताज्ञानांबोधविधायकः
कथाविघ्नविघातार्थंगणेशंप्राक्प्रपूजयेत् १५

ततोदुर्गांहरंविष्णुंब्रह्माणंभास्करंद्विजान्
संपूज्यविधिवद्भक्त्यातर्पयेद्देवताः पितृन् १६
मुख्यः श्रोताततः पश्चात्पूजयेत्पुस्तकेहरिम्
ततः प्रदक्षिणीकृत्यद्रव्यवस्त्रफलानिच १७
धृत्वांजलौपुस्तकस्थंहरिंसंप्रार्थयेन्मुने
त्वंभागवतलोकेस्मिन्स्वयंकृष्णोव्यवस्थितः १८
समाश्रितोमयानाथमुक्त्यर्थंभवसागरे
मनोरथोमदीयोऽयसर्वथासफलस्त्वया १९
निर्विघ्नेनप्रकर्तव्योदासोऽहतवकेशव
इत्युच्चार्यमुनेद्रव्यं पुस्तकाग्रेसमर्प्यतु २०
वक्तारंप्रार्थयेच्चापिनमस्कुर्वन्कृतांजलि
शुकरूपद्विजश्रेष्ठसर्वशास्त्रविशारद २१
श्रीभागवतव्याख्यानादज्ञानंमेविनाशय
इति संप्रार्थ्यवक्तारंवरयेत्पंचवाडवान् २२
द्वादशाक्षरमंत्रस्यजपार्थंमुनिसत्तम
गीतवाद्यविधिज्ञांश्चसंपूज्यार्थांशुकादिभिः २३
स्थापयेत्कीर्तनार्थंतुकथांतेविधिवन्मुने
यस्तुजायाधनागारपुत्रचिंतांव्युदस्यच २४
शृणुयादेकचित्तस्तुससमग्रंफलंलभेत्
सूर्योदयंसमारभ्यसार्द्धत्रिप्रहरांतकम् २५
पठित्वार्थः प्रकर्त्तव्योवाक्यमध्यायमेववा
मध्याह्नेषटिकायुग्मंविरमेदपिनारद २६
कथाऽवसानेकर्त्तव्यंकीर्तनंकेशवस्यच
उपवासःप्रकर्त्तव्यः श्रोतृभिस्तत्फलेप्सुभिः २७
तदशक्तोहविष्यान्नंसकृत्स्वल्पंसमाहरेत्
जलेनापिफलेनापिदुग्धेनचघृतेनवा २८
केवलेनैवकर्त्तव्यंनिर्विघ्नंधारणंतनोः
सप्ताहव्रतिनांपुंसानियमान्शृणुनारद २९
विष्णुदीक्षाविहीनानांनाधिकारोऽत्रकीर्तितः
ब्रह्मचर्यमधःसुप्तिः पत्रावल्यांचभोजनम् ३०

समाचरेन्नित्यमेवसप्ताहेमुनिसत्तम
द्विदलंमधुतैलंचपरान्नंचेद्गुजंरसम् ३१
भावदुष्टंक्रियादुष्टंजह्यात्पर्युषितंव्रती
पलांडुलशुनंहिंगुंमूलकंगृंजनंतथा ३२
नालिकांचैवकूष्मांडंनरोनाद्यात्कथाव्रती
कामंक्रोधंमदंलोभंदंभंमात्सर्यमेवच ३३
मोहंद्वेषंतथाहिंसांनैवकुर्यात्कथाव्रती ३४
वेदवैष्णवविप्राणांगुरुगोव्रतिनांतथा
स्त्रीराजमहतांचापिनिंदां जह्यात्कथाव्रती ३५
सत्यंशौचंदयामौनमार्जवं विनयंतथा
मनः प्रसन्नतांचापिबुधःकुर्यात्कथाव्रती ३६
श्रीकामस्तनयार्थीचजयकामश्चमोक्षधीः
शृणुयाद्वैभागवतंनिष्कामः श्रीहरिंलभेत् ३७
सप्तमेदिवसेकुर्याल्लंघनंतत्समाप्तिके
वक्तुश्चपूजाकर्त्तव्यागोभूस्वर्गवरादिभिः ३८
प्रसादतुलसींमालांश्रोतृभ्यःप्रतिपदापयेत्
उत्सवश्चतथाकार्योगीतवाद्यविशारदैः ३९
गीतार्थंशृणुयाच्चापिपरेऽहनिविचक्षणः
प्रतिश्लोकंचजुहुयाद्गायत्र्यावायथाविधि ४०
पायसंमधुसर्पिश्चतिलांस्तंडुलकान्यवान्
शर्करांचप्रियालंचद्राक्षांवातामखर्जुरौ ४१
अंभोजानिचकर्पूरंचंदनागुरुणीपुरम्
लवंगंबिल्वपत्राणिसहस्रंचपृथक्पृथक् ४२
विघ्नस्यचविघातार्थंन्यूनाधिक्यनिवृत्तये
आत्मनःपूततार्थंचपठेन्नामसहस्रकम् ४३
द्वादशाष्टादशाथापिश्रद्धयाह्यधिकांस्तथा
पायसेनाशयेद्विप्रान्स्वर्णंधेनुश्चदक्षिणा ४४
व्रतसिद्ध्यर्थमप्यत्रप्रौष्ठपद्यामथापिवा
स्वर्णसिंहविनिर्मायतस्यपृष्ठेनिधायच ४५
श्रीमद्भागवतंवक्त्रेलेखयित्वासमर्पयेत्

एवंकृतेविधानेतुसर्वपापनिवारणम् ४६
भवेच्छ्रोतुःसुफलदंश्रीमद्भागवतंश्रुतम्
धर्मकामार्थमोक्षाणांसाधनंभक्तिदायकम् ४७
नकार्यंविद्यतेलोकेयदनेननसिध्यति
ततोभागवतंलोकेपुराणेभ्योऽधिकंमतम् ४८
दोषाष्टादशनिर्मुक्तोवाचकः परिकीर्तितः
द्वात्रिंशदपराधैर्हिमुक्तोश्रोतामतोबुधैः ४९
श्रीमद्भागवतंनामपुराणंकामदंनृणाम्
तथापिश्रवणंचास्यनिष्कामस्यैवभक्तिदम् ५०
श्रीमद्भागवताभिधःसुरतरुस्तारांकुरःसज्जनिःस्कंधैर्द्वादशभिस्ततःप्रविलसद्भक्त
्या
लवालोदयः
द्वात्रिंशत्त्रिशतंचयस्यविलसच्छाखाः
सहस्राण्ययलंपर्णान्यष्टदशेष्टदोतिसुलभोवर्वर्तिसर्वोपरि ५१
इतितेकथितंसर्वंकृतंचापितवेप्सितम्
ज्ञानवैराग्यभक्तीनांतारुण्यंलोकमोक्षदम् ५२
सूतउवाच–
इत्युक्तातेकुमारास्तुकृष्णांघ्रिसुधयाप्लुताः
विरेमुर्भगवद्भक्तादीनोद्धरणतत्पराः ५३
तद्वाक्यंतुसमाकर्ण्यनारदोभगवत्प्रियः
प्रेमगद्गदयावाचातानुवाचकृतांजलि ५४
नारदउवाच–
धन्योस्म्यनुगृहीतोस्मिभवद्भिःकरुणापरैः
यद्भागवतसप्ताहान्निकटेदर्शितोहरिः ५५
एवंब्रुवतिवैतस्मिन्नारदेवैष्णवोत्तमे
पर्यटंस्तंसमायातस्तत्रयोगेश्वरःशुकः ५६
द्विरष्टवर्षाकृतिरंबुजाक्षोव्यासात्मजोज्ञानपयोधिचंद्रः
कथावसाने निजलाभतुष्टोहृदानिशंभागवतंपठंश्च ५७
दृष्ट्वासदस्यास्तमथोरुतेजसंसद्यःसमुत्थायवरासनंददुः
सचोपविष्टः सुखमासनेयदातदाविरासीद्धरिरब्जलोचनः ५८

भवोभवान्याकमलासनः सुतैस्तत्रागतः कीर्तनदर्शनायच
सुरेशमुख्यास्त्रिदशाविमानकैः समागतास्तैरभवद्वृतंनभः ५९
प्रह्लादस्तालधारीतरलगतितयाह्युद्धवः
कांस्यधारीवीणाधारीसुरर्षिःस्वरकुशलतयारागकर्ताऽजुनोऽभूत्
इंद्रोमार्दंगिकोऽभूज्ञयजयसुवचःप्रावदंस्तेकुमाराःसद्भावस्यप्रवक्तानिरतिशय
गुणोव्या
सपुत्रोबभूव ६०
ननर्त्तमध्येत्रिकमेवतत्रज्ञानादिकानांनवरूपयुक्तम्
अलौकिकंकीर्त्तनकंसमीद्त्यप्रसन्नचेताहरिरित्युवाच ६१
मत्तोवरंभागवतावृणीध्वंप्रीतात्कथाकीर्त्तनतोभृशंवः
श्रुत्वाथतद्वाक्यमतिप्रसन्ना प्रेमार्द्रचित्ताहरिमूचिरेते ६२
कुमाराऊचुः-
सप्ताहयज्ञेनवितायतेनसद्यः प्रसन्नोभवितामुरारे
कलौयुगेघोरतरेनराणांस्वल्पायुषांविघ्नशताकुलानाम् ६३
एवंवरंविश्वविधानपालनप्रणाशहेतोर्भवतोखिलात्मनः
वृणीमहेऽन्योनमनोरथोविभोभवत्पदांभोजनिषेविणांहिनः ६४
एवमस्त्वितिचैवोक्त्वातत्रैवांतर्दधेहरिः
नारदःसुप्रसन्नात्माकुमारानभ्यवादयत् ६५
ततस्तेसनकाद्याश्चभृग्वाद्याश्चशुकादयः
प्रययुःस्वाश्रमान्हृष्टाःपीत्वातच्चकथामृतम् ६६
भक्तिःसुताभ्यांसहितानारदेनप्रवर्तिता
भूमंडलेसमस्तेऽस्मिस्तदाप्रभृतिशौनक ६७
शिवउवाच-
आख्यानंमहदाकर्ण्यप्रीतात्माशौनकः प्रिये
पर्यपृच्छत्पुनः सूतंसर्वसंदेहभंजनम् ६८
शौनकउवाच-
शुकेनोक्तंकदाराज्ञेगोकर्णेनकदापुनः
सुरर्षयेकदाब्राह्मैरेतदाख्याहिमानद ६९
सूतउवाच-
श्रीकृष्णनिर्गमात्त्रिंशद्वर्षावधिगतेकलौ

भाद्रशुक्लनवम्यांवैकथारंभंशुकोऽकरोत् ७०
परीक्षिच्छ्रवणांतेतुगतेवर्षशतद्वये
शुचिशुक्लनवम्यांतुगोकर्णोकथयत्कथाम् ७१
कलौसहस्रमब्दानामधुनाप्रगतंद्विज
परीक्षितोजन्मकालात्समाप्तिंनीयतांमखः ७२
ईश्वरउवाच-
इति श्रुत्वावचस्तस्यशौनकोमुनिसत्तमः
पूर्णंचकारतंयज्ञंसहस्रपरिवत्सरम् ७३
ब्राह्मंपाद्मंवैष्णवंचकौर्म्यंमात्स्यं चवामनम्
वाराहंब्रह्मवैवर्त्तनारदीयंभविष्यकम् ७४
आग्नेयमर्द्धंवैसूताच्छुश्रुवुर्लोमहर्षणात्
एतानितुपुराणानिद्वापरांते श्रुतानिहि ७५
शौनकाद्यैर्मुनिवरैर्यज्ञारंभात्पुरैवहि
यदातुतीर्थयात्रायांवलदेवः समागतः ७६
नैमिषंमिश्रिकंनामसमाहूतोमुनीश्वरैः
तत्रसूतंसमासीनंदृष्ट्वात्वध्यासनोपरि ७७
चुक्षुभेभगवान्रामः पर्वणीवमहोदधिः
आषाढशुक्लद्वादश्यांपारणाहनिपार्वति ७८
पूर्वार्द्धयामवेलायांभावित्वात्कृष्णमायया
मुग्धोदर्भकरोरामःप्राहरल्लोमहर्षणम् ७९
ततोमुनिगणाःसर्वेहाकारपरायणाः
बभूवुर्नगजेत्यर्थंशोकदुःखाकुलांतराः ८०
ऊचुश्चरामंलोकेशंविनयेनक्षमापराः
ऋषयऊचुः-
रामराममहाबाहोभवतालोककारिणा ८१
अजानतेवाचरिताहिंसाब्रह्मवधाधिका
व्यासशिष्योह्ययंसाक्षात्पुराणर्षिर्महातपाः ८२
अस्मैह्यध्यासनंदत्तमस्माभिर्यज्ञकर्मणि
अष्टादशपुराणानांवाचकायकृतक्षणैः ८३
कथायांजगदीशस्यदीर्घमायुश्चमानद

तद्भवांल्लोकरक्षार्थंधर्मसेतुप्रवर्तकः ८४
आविर्भूतोजगन्नाथोनिग्रहानुग्रहक्षमः
इत्युक्त्वामुनयस्तेतुबलदेवाग्रतः प्रिये ८५
तूष्णींबभूवुः सहसास्मरंतोनियतेर्बलम्
ततः प्रोवाचभगवान्रामः शत्रुनिषूदनः ८६
विप्रान्संप्रीणयंस्तास्तुलोकवेदपथानुगः
श्रीरामउवाच-
विप्राः शृणुतभद्रंवः कोपंत्यक्त्वासुदूरतः ८७
यदहंवेद्मिभवतामभीष्टंकार्यसिद्धिदम्
अस्यपुत्रोमहाज्ञानीभविष्यतिवरान्मम ८८
भवतामीप्सितंसर्वंशास्त्रंवैकथयिष्यति
यदर्थमहमाहूतस्तच्चकार्य्यंसमुच्यताम् ८९
ईश्वरउवाच-
इति श्रुत्वावचस्तेतुरामस्यसुमहात्मनः
बल्वलस्यवधार्थायप्रेरयामासुरीश्वरम् ९०
ततः सबल्वलंहत्वाप्रसाद्यमुनिपुंगवान्
प्रणिपत्याभ्यनुज्ञातस्तीर्थयात्रामुपागमत् ९१
तीर्थयात्रांगतेरामेशौनकाद्यामुनीश्वराः
लौमहर्षणिमाहूयसत्कृत्यनगनंदिनि ९२
तत्पदेस्थापयामासुः शेषंसंकीर्तनायवै
आग्नेयोत्तरमाहात्म्यं श्रीमद्भागवतांतकम् ९३
पुराणसप्तकंसार्द्धंशुश्रुवुर्हृष्टमानसाः
दशसप्तपुराणानिकृत्वासत्यवतीसुतः ९४
नाप्तवान्मनसस्तोषंभारतेनापिभामिनि
ज्ञात्वास्यहृदयंखिन्नंनारदोदेवदर्शनः ९५
समाजगाम भगवान्व्यासस्याश्रममुत्तमम्
तंदृष्ट्वावासवीसूनुःसत्कृत्यासनपूर्वकम् ९६
नारदंपूजयामासविधिदृष्टेनकर्मणा
अथतंनारदः प्राहकिंभवान्क्लिष्टमानसः ९७
ध्यायतेतत्समाचक्ष्वसर्वंसंदेहकारणम्

इति पृष्टःसमुनिनापराशर सुतोऽब्रवीत् ९८
ब्रह्मन्किंकारणंचेतोमोहेजानेनतत्त्वहम्
भवान्विज्ञानकुशलोज्ञात्वातत्प्रब्रवीतुमे ९९
एवंविज्ञापितस्तेननारदोऽध्यात्मकोविदः
उवाचपरमंतत्वंयदुक्तंविधिनात्मने १००
नारदउवाच–
शृणुपाराशरेमत्तः कारणंयेनवैतव
असंपन्नंमनोभातिशास्त्रयोनेरपिप्रभोः १०१
त्वयावतीर्यलोकेस्मिन्वेदाव्यस्ताविभागशः
कृतानिचपुराणानिसेतिहासानिचानघ १०२
यत्रसर्वस्त्रयीधर्मोवर्णाश्रमनिवासिनाम्
निर्दिष्टोवीद्त्यकालेननृणामल्पायुषांकलौ १०३
यत्राधिकारःसर्वेषांदृश्यतेश्रवणादिषु
स्त्रीशूद्रद्विजबंधूनांसाधूनांसाधूसंगमः १०४
धर्मादयोयथाशश्वद्वर्णितास्तेषुवैत्वया
प्राधान्येनतथानैववर्णितोमहिमाहरेः
सर्वधर्मक्रियाशून्येकलौदोषनिधौमुने १०५
नगतिःपापकर्तृणांविनाकृष्णकथाऽमृतम्
एषएवगुणोह्यस्मिन्घोरेकलियुगेनराः १०६
यत्कृष्णकीर्तनेनैवमुच्यंतेकर्मबंधनात्
यज्ञोदानंतपःकर्मज्ञानंध्यानंकृतादिषु १०७
सिद्धिदंचतथाब्रह्मन्नामकीर्त्तनकंकलौ
अतोवैकलिजातानामुद्धारार्थंनृणांभवान् १०८
श्रीमद्भागवतंनामपुराणंवर्णयत्वलम्
येनप्रवर्तितेनांगभवतोमानसंध्रुवम् १०९
तोषमेष्यतिलोकाश्चप्राप्स्यंतिकृतकृत्यताम् ११०
ईश्वरउवाच–
एवमादिश्यसमुनिर्व्यासायामिततेजसे
ययौयादृच्छिकःशश्वद्गायन्हरिगुणान्प्रिये १११
नारदेतुगतेपश्चाद्व्यासः सर्वार्थदर्शनः

चकारसंहितामेतांश्रीमद्भावतींपराम् ११२
पैलादींश्चतुरोवेदानध्याप्यविधिपूर्वकम्
पुराणसंहिताःसर्वाःसूतायप्रत्यपादयत् ११३
श्रीमद्भागवतंनामपुराणंब्रह्मसंमितम्
शुकमध्यापयामासविरतं लोकवेदतः ११४
सासंहिताभागवतीलोमहर्षणसूनुना
श्रुताकथयतोराज्ञेश्रौत्तरेयायवैशुकात् ११५
शौनकादिऋषिभ्यस्तुतेनप्रोक्तायथार्थतः
वरीवर्त्तिपुराणानामुपरीयंनगात्मने ११६
अस्यांसंलग्नचित्तानांनृणामन्यत्रनोरतिः
जायतेमानसेकृष्णोनंदसूनुश्चकास्तिच ११७
यत्तुपृष्टंत्वयाभद्रेलोकनिस्तारहेतवे
श्रीभागवतमाहात्म्यंमह्यंसंकीर्त्तयेतिह ११८
तत्सर्वंचमयातुभ्यंनिर्दिष्टंगणपांबिके
नानेतिहाससहितंभक्तिमुक्तिप्रदायकम् ११९
यःशृणोतिनरोभक्त्यामाहात्म्यंपठतेऽपिच
अनुमोदनेनवासोपिलभतेपरमांगतिम् १२०
द्विजोऽधीत्याप्नुयाद्वेदान् क्षत्रियस्तुलभेज्जयम्
धनंवैश्यस्तथाशूद्रःश्रुत्वैवलभतेगतिम् १२१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहे श्वरसंवादेश्रीमद्भागवतमाहात्म्येअष्टनवत्यधिकशततमोऽध्यायः १९८

## एकोनद्विशततमोऽध्यायः

ऋषयऊचुः-
कालिंद्याश्चैवमाहात्म्यंवदसूतसविस्तरम्
यस्मैप्रकाशितंयेनतदाख्यानसमन्वितम् १
सूतउवाच-
एकदापांडुतनयःशुश्रूषुःसौभरेःशुभम्
ज्ञानंतत्स्थानमभ्येत्यनत्वातमितिपृष्टवान् २
युधिष्ठिरउवाच-

ब्रह्मन्मार्तंडतनयातीरतीर्थेषुयच्छुभम्
तीर्थंतद्वदवैकुंठजन्मभूमिपरात्परम् ३
सौभरिरुवाच-
एकदातुमुनिश्रेष्ठौदिविनारदपर्वतौ
गच्छंतौखांडवंपश्यन्पश्यतःसुमनोहरम् ४
तत्रावतीर्णोनभस उपविष्टौतटेशुभे
कालिंद्याःक्षणविश्रांतौस्नातुंविविशतुर्जले ५
शिबिरौशीनरोराजामृगयांतौचरन्वने
दृष्ट्वातान्निर्गमापेक्षीनिषसादसरित्तटे ६
तौमुनीविधिवत्स्नात्वापरिधायांबराणिच
वंदितौशिरसाराज्ञातेनोपाविशतांतटे ७
तत्रालोक्यसुवर्णस्यशिबिर्यूपान्सहस्रशः
नारदंगर्वरहितः पर्वतंचजगादसः ८
शिबिरुवाच-
कथ्यतांमुनिशार्दूलौकस्येमायागयष्टयः
केनात्रविहितोयज्ञः सुरेणाथनरेणवा ९
मुक्त्वाकाश्यादितीर्थानियज्ञैरीज्येऽत्रकःपुमान्
कोविशेषोऽत्रतीर्थेभ्यस्तेभ्योविज्ञानसन्निधिः १०
नारदउवाच-
पुराहिरण्यकशिपुर्जित्वाशक्रादिदेवताः
त्रैलोक्यराज्यमासाद्यसोखर्वंगर्वमाददे ११
प्रह्लादस्तस्यतनयोनारायणपरायणः
तस्मैसोद्रुह्यताभीक्ष्णंपापात्मानष्टमंगलः १२
तद्रोहाद्विष्णुनासद्योनृसिंहतनुधारिणा
हत्वादैत्यपतिंस्वर्गराज्यंस्वः पतयेऽपितम् १३
स्वपदंप्राप्यदेवेशोबृहस्पतिमथावदत्
मूर्ध्नाभिवंद्यतत्पादौनारायणगुणान्स्मरन् १४
इंद्रउवाच-
गुरोनृसिंहरूपेणहरिणालोकधारिणा
दत्तंमेदेवताराज्यंयष्टुमिच्छामितंमखैः १५

स्थानंपवित्रंकथयब्राह्मणांश्चैवमेगुरो
नविधेयोविलंबोऽत्रत्वयानोहितकारिणा १६
बृहस्पतिरुवाच-
अस्तितेखांडववनंरम्यंपरमपावनम्
केतक्यशोकबकुलमधुमत्तमधुव्रतम् १७
तत्रास्तियमुनापुण्याधन्यात्रैलोक्यपावनी
ददातिस्मरणेस्वर्गंमरणेब्रह्मणःपदम् १८
तत्तीरेयजदेवेशकेशवंबहुभिर्मखैः
यदीच्छसिस्वकीयानांकल्याणंत्वंनिरंतरम् १९
नारदउवाच-
गुरोर्वचनमाकर्ण्यतूर्णमारुह्यवाहनम्
शिवप्रदमिमंशक्रः स्वकीयवनमागमत् २०
गुरुणासहदेवैश्चयज्ञोपकरणैस्तथा
अत्रागत्यविलोक्यैतद्वनंलेभेमुदंपराम् २१
गुरुणानोदितः शक्रोसप्तर्षीन्ब्रह्मणःसुतान्
वसिष्ठादीन्द्विजानवृत्वायजतिस्मजगत्पतिम् २२
तस्यप्रसन्नोभगवान्ब्रह्मेशाभ्यांसहागतः
क्रतौशतक्रतोर्यत्रमहानभवदुत्सवः २३
देवत्रयींसतांवीक्ष्यशक्रोवक्रमतिस्तदा
उत्थायासनतस्तूर्णंववंदेमुनिभिः सह २४
वाहनेभ्योऽवरुह्याशुतदंतेषूपविश्यते
आसनेषुसुहैमेषुबभुर्वेदीष्विवाग्नयः २५
सितरक्तांगयोः शंभुब्रह्मणोर्हरिराबभौ
नीलच्छविः पीतवासास्तडित्वानिवशृंगयोः २६
शक्रः प्रक्षाल्यतत्पादान्मूर्ध्नातज्जलमादधे
अब्रवीच्चमुदायुक्तोवचनंमधुराक्षरम् २७
इंद्रउवाच-
विहितोऽयमयादेवयज्ञोऽद्यसफलोऽभवत् २८
यद्ययंदर्शनंप्राप्तादुर्लक्ष्याअपियोगिभिः
एकेनैवत्वयाविष्णोकृतामूर्तिस्त्रयीमयी २९

गुणैस्तथापिनानात्वंस्फटिकस्येवतेमृषा
यथादारुषुगूढोऽग्निर्घर्षणेनविनाविभो ३०
नाविर्भवतिभूतानांहृत्सुभक्त्यातथाभवान्
एकस्यत्वयिभक्तिःस्यात्सर्वभूतोपकारिणी ३१
बभूवुःसुखिनोदेवाःप्रह्लादकृतयातया
वयंविषयिणोदेवत्वन्मायावृतचेतसः ३२
नजानीमःस्वरूपंतेयथावत्पादसेवकाः
भोब्रह्मन्भोमहादेवयुवामपिजगद्गुरू ३३
एतस्यैवगुरुत्वेनयतोनातः पृथक्युवाम्
यत्किंचिदुच्यतेवाचामनसाचविचिंत्यते
अस्यैवमायातत्सर्वेंगद्वयीदूरवर्त्तिनः ३४
प्रपंचजातंयदिदंविलोक्यतेनसत्यमित्येवविचिंतयेन्नसः
भजंतिविष्णोश्चरणंतरंतितेयदंबुमूर्ध्नाहरधार्यतेत्वया ३५
विधेस्यभूयादनुजन्मपादयोरतिर्मदीयाकमलाभयोर्भृशम्
यदीक्षणक्षोभितयातयाजगत्समस्तमेतन्महदादिजायते ३६
भवादृशोनास्तिकृपापरोपरोविपक्षपक्षेवितनोषियत्सुखम्
स्वलोकशोकापनयेकृपालुतायदुच्यतेतेनृहरेतदज्ञता ३७
नारदउवाच-
इत्यभिष्टूयदेवेशंकेशवंप्रणतोऽग्रतः
तस्थौतद्वाक्यशुश्रुषादत्तचित्तोमहीयते ३८
एवमाकर्ण्यमुनयस्तुतिंतस्यरमापतेः
कृतामिंद्रेणसदसिसाधुसाध्वितिचाब्रुवन् ३९
शतमन्योवर्षशतंयेकुर्वंतिमहत्तपः
नतेषामीदृशीभक्तिर्यादृशीतवमाधवे ४०
नयोगःसुलभोष्टांगःख्यातिर्येनाधिगम्यते
समत्वेनचतत्त्यागस्तद्भक्तिःशरणंनृणाम् ४१
स्वधर्मार्जितवित्तैर्यद्यथा विधिविधीयते
कर्मतस्यार्पणंविष्णौभक्तिरेषाशिवप्रदाः ४२
ननिंदेद्देवतामन्यांविष्णुबुद्ध्यांचयोनमेत्
नत्यजेद्वेदवाक्यानिसभक्तोऽस्य हरेःप्रियः ४३

येशृणवंतिहरेर्गुणानहरहःकुर्वंतियेकीर्तनंयेचास्यस्मरणंयदोश्चभजनंयेऽमुजयंतेत
था ४४
येदास्येननमंतिचैनममुनाकुर्वंतियेमित्रतांयेचस्वंचनिवेदयंतिनहितेवांच्छंतिमु
क्त्यादिकम् ४५
इंद्रभक्त्यात्वमप्येनमाराधयजगद्गुरुम्
नकामयेकिमप्यास्मत्कृतकृत्योभविष्यति ४६
नारदउवाच-
मुनिभिरितिशिक्षितेसमस्तसेव्यांत्रिभुवनपारपदप्रदांनिशम्य
हरिरनिशगुरुःकृतांस्वभक्तिंमधुरमुवाचवचोहरिंसमाजे ४७
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
कालिंदीमाहात्म्येइंद्रयागविधिनोनामएकोनद्विशततमोऽध्यायः१९९

द्विशततमोऽध्यायः

श्रीभगवानुवाच-
नैतच्चित्रंसुराधीशमुनयोज्ञानवत्तराः
मदीयांपदवींभक्तिंगुर्वींकुर्बंतिसत्कृताम् १
एतेज्ञानोपदेष्टारस्त्रिलोकतलवासिनाम्
प्रवर्तयंत्यमीनष्टंवेदमार्गंयतःसदा २
भक्त्याभवानपिस्वर्गभोगासक्तोऽपिमांयतः
प्रपन्नोऽसिकिमाश्चर्यंयतस्तवगुरुर्गुरुः ३
यजस्वसुरशार्दूलमखैर्मांबहुदक्षिणैः
निष्कामस्त्वंसमीपस्थंतूर्णंप्राप्स्यसिमत्पदम् ४
प्रतियागंप्रयच्छत्वंरत्नप्रस्थान्यनेकशः
आख्ययास्थानमेतत्तेइंद्रप्रस्थंभविष्यति ५
विधेत्वमत्ररचयप्रयागंतीर्थपुंगवम्
सरस्वतींसमानीयगंगांचजनपाविनीम् ६
काशींचशिवकांचींचत्वमत्रस्थापयेश्वर
गोकर्णंचसमंगौर्यानिवासंकुरुसर्वदा ७
भोभोब्रह्मसुतायूयंज्ञानविज्ञानकोविदाः
निजयोगबलेनात्रकुरुध्वंतीर्थसप्तकम् ८

निगमोद्बोधकंतीर्थंत्वंगुरोप्रतिपादय
विनाध्ययनमप्यत्रस्नानाद्बोधोस्तुछंदसाम् ९
स्मृतिश्चजायतांपूर्वजन्मनस्तुपरात्मनोः
अहमारोपयाम्यत्रद्वारकांसुमनोहराम् १०
समुद्रेणसमंयत्रगोमत्यासंगमोऽभवत्
कोशलांचकरोम्यत्रमध्वरण्यंचवासव ११
ययोरवतरिष्यामिवपुर्भ्यांरामकृष्णयोः
बदर्याश्रममप्यत्रनरनारायणास्पदम् १२
विदधामिसदायत्रवसामिसुरनायक
हरिद्वारंपुष्करंच तीर्थद्वयमनुत्तमम् १३
तदपिस्थापयाम्यत्रतवैवहितकाम्यया
नैमिषेयानितीर्थानियानिकालंजरेगिरौ १४
सरस्वतीतटेयानिस्थापयाम्यहमत्रवै
नारदउवाच-
शिवेशिवतरंवाक्यंहरेः श्रुत्वाकृतंचतत् १५
दृष्ट्वातदुक्तमपितेचक्रुर्ब्रह्मशिवादयः
सर्वतीर्थमयेऽमुष्मिन्स्थानेसत्रिदशाधिपः १६
स्वर्णयूपैर्बहुमखैरीजेभूयोरमापतिम्
रत्नप्रस्थानिविप्रेभ्यःकृष्णस्यपुरतोददौ १७
नारायणःसमस्तात्माममायमितितुष्यतु
इंद्रप्रस्थमिदंतीर्थंततःप्रभृतिकथ्यते १८
सर्वतीर्थमयेयत्रमृतोभूयोनजायते
इंद्रदत्तानितेलब्ध्वारत्नप्रस्थानिभूसुराः १९
तस्मैददुरवितथामाशिषंतत्रसंसदि
इंद्रायतवगोविंदोदानेनानेनतुष्यतु २०
तावकीभक्तिरप्यस्मिन्भूयादव्यभिचारिणी
कर्मभूमाविहविभोपुण्यज्ञशतंकृतम् २१
तेनपुण्येनलब्धंतेसकामेनसुरास्पदम्
अधुनापूजितोविष्णुर्निःकामेनत्वयामखैः २२
स्वपदाद्विच्युतोभूमौभविष्यतिद्विजाग्रणीः

तत्रापिनिजधर्मेणविष्णुमाराधयन्भवान् २३
स्मरिष्यतिनिजंकर्मकृतमत्रमखादिकम्
तत्स्मृतेगृर्हमुत्सृज्यभवान्तीर्थानिपर्यटन् २४
जनकेनसमंशक्रतीर्थेऽस्मिन्संप्रपत्स्यते
चतुर्थाश्रममादायत्यक्ष्यत्यत्रकलेवरम् २५
ततोविमानमारुह्यगणानीतंरविप्रभम्
भवान्दिव्यांगवान्भूत्वाप्राप्स्यति श्रीहरेः पदम् २६
नारदउवाच-
एवमाकर्ण्यविप्राणामाशिषंत्रिदशाधिपः
भविष्यपिशुनांचोक्तिंशिवेमुदमगात्तराम् २७
समाप्यविधिवद्यज्ञान्नात्रसौवर्णयष्टिकान्
माधवप्रमुखान्देवान्पूजितान्सव्यसर्जयत् २८
ऋत्विजोब्रह्मणः पुत्रानभ्यर्च्यचधनादिभिः
बृहस्पतिंपुरस्कृत्यययौशक्रस्त्रिविष्टपम् २९
तत्रराज्यंविधायेंद्रोहरिभक्तियुतःशिवे
अवातरद्धविख्यीणपुण्येहास्तिनपत्तने ३०
शिवशर्माद्विजःकश्चिद्वेदवेदांगपारगः
तस्यभार्यागुणवतीनाम्नान्वर्थवतीभृशम् ३१
तस्यांजातःसुवेलायामिंद्रःश्रीपतिसेवकः
ज्योतिर्विदःसमाहूतालग्नदृष्ट्वाबभाषिरे ३२
ज्योतिर्विदऊचुः-
शिवशर्मन्नयंबालः तवभावीहरिप्रियः
उद्धरिष्यतितेवंशंब्रूमः सत्यंनवैमृषा ३३
त्रयोदशाब्ददेहोयः सांगंवेदचतुष्टयम्
अधीतज्ञानसंपन्नोविवाहंतुकरिष्यति ३४
पुनरुत्पाद्यसत्पुत्रंवानप्रस्थोभविष्यति
तीर्थेषुपर्यटन्धीरः संन्यासंधारयिष्यति ३५
इंद्रस्यखांडववनेयमुनास्तिसरिद्वरा
तत्तीरेस्तिहरिप्रस्थंमरणंतत्रयास्यति ३६
नारदउवाच-

गणकोदितमाकर्ण्यशिवशर्माशिवंवचः
चकारविष्णुशर्माणंनाम्नानिजसुतंतदा ३७
तान्विसृज्यचवित्तेनचिंतयामासबुद्धिमान्
धन्योऽहयस्यमेपुत्रो विष्णुभक्तोभविष्यति ३८
साधयिष्यतिपुत्रोऽयमाश्रमांश्चतुरोमम
मरिष्यतिचसत्तीर्थेमदन्यः कोऽस्तिभाग्यवान् ३९
एवंविचिंत्यमनसा जातकर्माद्यकारयत्
शिशोर्द्विजातिप्रवरैःशिवशर्माशुभेऽहनि ४०
अथसप्तस्वतीतेषुवर्षेषुद्विजसत्तमः
सुतोपनयनंचक्रेचैत्रमास्यष्टमेऽब्दके ४१
आद्वादशाब्दादध्याप्यवेदानन्वगतःसुतम्
शिवशर्माशिवेराजन्युयोजसहभार्यया ४२
विष्णुशर्मास्वभार्यायांपुत्रमुत्पाद्यबुद्धिमान्
चकारतीर्थयात्रायांमनोनिर्विषयंस्वकम् ४३
अभ्येत्यपितरंप्राहनत्वातच्चरणद्वयम्
विष्णुशर्मामहाप्राज्ञोमुनिवाक्यमनुस्मरन् ४४
विष्णुशर्मोवाच -
अनुजानीहिमांतातविष्णुमाराधयाम्यम्
तृतीयाश्रममासाद्यसत्संगतिविधायकम् ४५
दारागारधनापत्यसुहृदःक्षणभंगुराः
बुद्बुदाइवतोयेषु सुधीस्तेषुनसज्जते ४६
स्वाध्यायेनचसंतत्यामयातीर्णमृणद्वयम्
तीर्थेषुकामरहितोयष्टुमिच्छामिकेशवम् ४७
सन्यस्तगुणरागोऽहपश्चात्तीर्थोत्तमेक्वचित्
स्थातुमिछाम्यहंतावद्यावत्प्रारब्धमस्तिमे ४८
इत्युक्तस्तेनपुत्रेणसपिताबुद्धिमत्तरः
स्मृत्वाज्योतिर्विदांवाक्यमाहसंसारनिस्पृहः ४९
शिवशर्मोवाच-
चतुर्थाश्रमकालोऽयममापिनिरहंकृतेः
विषयान्विषवत्त्यक्त्वासेविष्येकेशवामृतम् ५०

गृहेमममनः पुत्ररमतेनाद्यवार्द्धके
आनीतस्यवनाद्वद्धवागजस्येवनृपालये ५१
तवानुजंसुशर्मायंकुटुंबंधारयिष्यति
आवाभ्यामुज्झितंविद्याश्रीकुलाभ्यांयथानरम् ५२
प्रव्रजंतंतुमामेवतवमातापतिव्रता
अनुयास्यतिमार्तंडंयथाकांतिर्दिनात्यये ५३
तस्मादावामविज्ञातोतयातातततवांबया
गच्छावश्चिंतयंतौश्रीहरेःपादसरोरुहम् ५४
नारदउवाच-
इत्यालोच्यमुमुचूतौनिशीथेतमसावृते
सुप्तंकुटुंबमुत्सृज्यगृहान्निर्याय जग्मतुः ५५
सहैवपर्यटंतौतौसुतीर्थेनिरहंकृती
शिवेऽत्रशिवदेतीर्थेशक्रप्रस्थेसमीयतुः ५६
अत्रागतःस्वविहितान्पूर्वजन्मनियूपकान्
विष्णुशर्माशमालोक्यसस्मारहरिसंगमम् ५७
ऊचेचपितरंधीमान्शक्रआसमहंपुरा
मयात्रविहितायज्ञामाधवप्रीणनेच्छया ५८
अत्रैवमेप्रसन्नोऽभूत्केशवोभक्तवत्सलः
संतोषितामणिप्रस्थैःद्विजाःसप्तर्षयश्चमे ५९
तैरेववैष्णवीभक्तिर्दत्तामोत्तोभवेऽत्रच
विष्णवादिभिःसमस्तैस्तुतीर्थान्यत्रकृतानिवै ६०
सर्वतीर्थमयंतीर्थमिन्द्रप्रस्थमिदंकृतम्
अत्रैवमेमृतिश्चोक्तातैरेवमुनिपुंगवैः ६१
ततोहरिपदप्राप्तिरेतत्सर्वंस्मराम्यहम्
इमेगंगासरस्वत्यौनिजलोकाद्विरिंचिना ६२
समानीतेययोर्योगेप्रयागोऽयनिगद्यते
एषाकाशीशिवपुरीप्रयागात्पूर्वदेशके ६३
द्विपंचाशद्धनुर्मात्रिमृतोयस्यांनजायते
काश्याःपश्चिमकेभागेधनुषामेकविंशतिः ६४
शिवकांचीशिवेनैषास्थापितामृतमुक्तिदा

गोकर्णाख्यमिदंक्षेत्रंशंभोःपरमवल्लभम् ६५
धनुर्द्वयप्रमाणेतुभूमिभागेव्यवस्थितम्
इयंद्वारवतीपुरायातीर्थराजस्यपश्चिमे ६६
धनुषांसप्ततिर्यत्रमृतोभावीचतुर्भुजः
अतोऽसौपूर्वदिग्भागेकोशलाजनवत्सला ६७
अष्टादशधनुर्मात्रेदृश्यतेपुरायदर्शना
एतन्मधुवनंतातस्थापितंविष्णुनास्वयम् ६८
कोशलापश्चिमेभागेदशचापप्रमाणतः
अतउत्तरतस्तातनरनारायणास्पदम् ६९
एतदेकादशधनुर्भूमिदेशेचतिष्ठति
एतत्तीर्थंहरिद्वारमतोदक्षिणतःस्थितम् ७०
त्रिंशद्धनुर्महीदेशेदृश्यतेदेवदुर्ल्लभम्
एतत्तुपुष्करंनामतीर्थंतीर्थशिरोमणिम् ७१
द्वादशेष्वासमात्रेभूभागेभोताततिष्ठति
प्रयागादिकगव्यूतिःसप्तर्षीणांमहात्मनाम् ७२
पूर्वस्यांदिशितीर्थानिसप्ततत्तीर्थसप्तकम्
तीर्थसप्तककाशोस्तुसंतितीर्थान्यनेकशः ७३
पदेपदेयेषुमृतोजायतेसचतुर्भुजः
प्रयागादेकगव्यूतिमात्रेपश्चिमभूतले ७४
निगमोद्बोधकंनामतीर्थंगुरुकृतंपुरा
तीर्थसप्तकनिगमोद्बोधयोरंतरंमहत् ७५
इंद्रप्रस्थमिदंक्षेत्रंस्थापितं दैवतैः पुरा
पूर्वपश्चिमयोस्तातएकयोजनविस्तृतम् ७६
कालिंद्यादक्षिणेयावद्योजनानांचतुष्टयम्
इंद्रप्रस्थस्यमर्यादाकथितैषामहर्षिभिः ७७
देवत्रय्यांचयोह्यत्रत्यजत्यंगंभवत्यजः
नारदउवाच-
पुत्रस्यैतद्वचः श्रुत्वाशिवशर्माशिवेद्विजः ७८
प्रत्याहसंदिहानस्तंस्वपुत्रंसत्यवादिनम्
शिवशर्मोवाच-

कथमेतद्विजानीयांत्वंपुरासीःसुरेश्वरः ७९
त्वमत्रकृतवान्यज्ञान्मणिभिस्तोषिताद्विजाः
त्वदुक्तज्ञानवान्पुत्रयथाऽहस्यांतथाकुरु ८०
इंद्रप्रस्थस्यमर्यादाकुतएषात्वयाश्रुता
यतः प्रभृतितेजातामतिस्त्वंनात्यजोगृहम् ८१
मत्तएवत्वयाधीतंसांगंवेदचतुष्टयम्
पूर्वजन्मकृतेकृत्येज्ञानमासीत्कुतस्तव ८२
विष्णुशर्मोवाच -
ऋषिभिर्मेवरोदत्तःपूर्वजन्मस्मृतिप्रदः
तेभ्यएवास्यतीर्थस्यश्रुताह्येषास्मृतिर्मया ८३
निगमोद्बोधकेतीर्थेस्नानमत्रपितः कुरु
दुर्लभंप्राप्स्यसेज्ञानंपूर्वजन्मस्मृतिप्रदम् ८४
ममापिपूर्वजनुषः प्रवृत्तित्वंस्मरिष्यसि
एतत्तीर्थजलस्पर्शात्तातसत्यंवदामिते ८५
नारदउवाच-
शिवशर्मणिविप्रेंद्रेश्रुत्वैतत्स्नातुमुद्यते
निगमोद्बोधकेतीर्थेस्मृतयेपूर्वजन्मनः ८६
सिंहेनानुगतः कश्चिद्भिल्लोधावन्समागतः
अतित्रासपरीतांगोनिःश्वसन्श्रमविह्वलः ८७
हिंसात्मकोवर्त्मघातीवणिजांलुंठकःसदा
कृष्णांगःपिंगकेशश्चखर्वोमार्जारलोचनः ८८
कुंतहस्तोभीममूर्तिदेहीपाप्मेवभूयते
सतःपश्चात्कियद्दूरेसिंहमालोक्यतावुभौ ८९
पितृपुत्रौसमीपस्थेद्रुममारुह्यतस्थतुः
वदंतावितिहाकृष्णमोचयातोऽपमृत्युतः ९०
सकिरातस्तुराजेंद्रगृहीतुंवेगवत्तरम्
वीक्ष्यसिंहद्रुमंभीतःसमारोढुंप्रचक्रमे ९१
आरोहणंप्रकुर्वंतंसिंहोजग्राहवेगवान्
पादयोरथभूपृष्ठेपातयित्वारुरोहतम् ९२
अधःस्थितोकिरातोऽपिकुंतेनोदरमस्यवै

ददाररुधिरौघात्क्तनिसृतांत्रकदंबकम् ९३
जातव्यथोविधायाथनादंपरमदारुणम्
सिंहःपिपेषभिल्लस्यशिरःसद्योममारच ९४
तयोःपंचत्वमापन्नेभूतसंघेऽत्रभूपते
विमानद्वयमुत्तीर्णंगणाभ्यांसहसत्पदात् ९५
नवीनघनवर्णाभ्यांस्फटिकोपलनिर्मितम्
चारुकुंडलकर्णाभ्यांमणिप्रकरमंडितम् ९६
शंखचक्रगदापद्महस्ताभ्यांचारुचित्रभृत्
दधद्भ्यांपीतवस्त्राणिहेममित्तिविभूषितम् ९७
प्रफुल्लांबुजनेत्राभ्यांपद्मरागगवाक्षभृत्
धीरनिह्दमंजीरपद्भ्यांरणितकिंकिणी ९८
प्रकोष्ठेवलयश्रेणींबिभ्रद्भ्यांचारुवेदिकम्
मुक्ताहारैर्मनोहारिवक्षोभ्यांसवितानवत् ९९
कुटिलालकवक्त्राभ्यांमुन्नतध्वजिराजितम्
भ्रूयुगाक्षिप्तपंचेषुधनुर्भ्यामुच्चतोरणम् १००
नासालञ्जितकीराभ्यांनिर्व्यूहशतशोभितम्
नवविद्रुमसच्छायतलाभ्यांदर्पणामलम् १०१
दिव्यांगौभिल्लपंचास्यौत्यक्त्वांगंप्राकृतंस्थितौ
पुरैवप्राणनिर्याणेतीर्थस्यास्यप्रभावतः १०२
तयोःसमीपमानीयविमानौतौहरेर्गणौ
ऊचतुस्तावथारूपवेषाकृतिधरौततः १०३
भोकिरातनरश्रेष्ठभोपंचास्यमृगाधिप
आवांजानीतमायातौवैकुंठात् श्रीहरेर्गणौ १०४
नेष्यामस्तत्पदंसत्यंयुवांतत्रनचोर्मयः
स्वंस्वंविमानमारुह्यगम्यतामाशुमाचिरम् १०५
स्वंस्वंविमानमारूढौतौकिरातमृगाधिपौ
ऊचतुर्विस्मयाविष्टौलक्ष्मीपतिगणौप्रति १०६
भोभोत्रिदशशार्दूलौश्रूयतांवाक्यमावयोः
युवयोर्दर्शनाज्ञातंज्ञानंतौपारमार्थिकम् १०७
अत्रजन्मनिनावाभ्यांकृतंसुकृतमल्पकम्

स्मृतिर्नोजायतेपूर्वकर्मणांवांप्रसादतः १०८
मांसाहारौप्राणिहिंसारतौक्रूरांतरेंद्रियौ
पापाचारकुलेजातौदर्शनेनभयप्रदौ १०९
आवामेतादृशेलोकेह्यभूतामितिपापिनौ
केनपुण्येनयुवयोर्जातंदर्शनमावयोः ११०
सारूप्यंचकुतःपुण्याद्यायावः श्रीहरेःपदम्
गणावूचतुः
तीर्थेत्रमरणान्नूनंसुराचार्यकृतेपुरा १११
युवयोर्दर्शनंजातंनौचसारूप्यमद्भुतम्
लक्ष्मीपतिपदप्राप्तिर्भविष्यतिचवांचिरम् ११२
तावत्पापानिगर्जंतिब्रह्महत्यादिकानिवै
जातंनदर्शनंयावत्तीर्थस्यास्यबृहस्पतेः ११३
यथातमांसिनश्यंतिभास्करस्योदयादिह
तथापापानिनिगमोद्बोधकस्यावलोकनात् ११४
इंद्रप्रस्थाख्यमेतद्वैक्षेत्रमिंद्रस्यपावनम्
तेनात्रपूजितोविष्णुःक्रतुभिर्बहुदक्षिणैः ११५
तुष्टेनविष्णुनातस्मैवरोदत्तोनिशम्यताम्
भोशक्रतावकेक्षेत्रेसर्वतीर्थमयेजनाः ११६
तनुंत्यक्ष्यंतियेतेवैमत्तुल्याहिंसकाअपि ११७
नारदउवाच-
इत्युक्त्वातौगणः श्रेष्ठौनीत्वातौजग्मतुःपदम्
हरेर्यत्रगतोभूयोविश्वाब्धौननिमज्जति ११८
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिदी माहात्म्येभिल्लसिंहवैकुंठारोहणंनामद्विशततमोऽध्यायः २००

## एकाधिकद्विशततमोऽध्यायः

नारदउचाव-
अथावरुह्यतौवृक्षात्पितृपुत्रौसुविस्मितौ
दृष्ट्वाहरिपदप्राप्तिमभूतांपापिनोरपि १
शिवशर्माथविप्रेंद्रःश्रुत्वातीर्थस्तुतिंतदा

गणोक्तांविष्णुशर्माणमुवाचसुतमात्मनः २
शिवशर्मोवाच–
यत्पदंनसुलभंद्विजन्मनांसाधितेनतपसापिलीलया
प्रापतुःशबरदंष्ट्रिणौचतत्तीर्थराजमहिमाविलोक्यताम् ३
जन्मनःप्रभृतितावदामृतेः पापिनावपिचयत्प्रभावतः
जग्मतुःसुतहरेः सरूपतामस्यतीर्थवृषभस्यकास्तुतिः ४
शुद्धसत्वमपिरूपमैश्वरंक्वाम्बुजन्मजनिदेवदुर्ल्लभम्
तामसौक्वमृगनाथभिल्लकौकिंतुतीर्थमिदमद्भुतक्रियम् ५
तातभोपततिवेधसःपदात्जंतुरंतमधिगम्यकर्मणाम्
अत्रदेवगुरुनिर्मितेमृतिंप्राप्यमाधवपदान्नविच्युतिः ६
नारदउवाच–
एवंप्रत्यक्षमालोक्यमाहात्म्यंसद्विजोत्तमः
तीर्थस्यास्यगुरोराजन्स्नातुंतत्रप्रचक्रमे ७
मुखदंतपदानांसः कृत्वाशुद्धिंचचेतसः
पंचकच्छःशिखाबंधोपग्रहीमाधवंस्मरन् ८
अश्वक्रांतेतिश्लोकेनपाठेनतटमृत्तिकाम्
स्पृशंस्तयैवविदधत्तिलकंजलमाविशत् ९
तत्रप्रवाहाभिमुखोनिमज्जन्पुनरुत्थितः
पुनर्मग्नोहरिंस्मृत्वागंगांचजनपावनीम् १०
अयोध्याद्यापुरीः सप्तपुनरुत्थायसंस्मरन्
पुनर्ममज्जसलिलेगोविंदार्पितमानसः ११
कृत्वायथाविधिस्नानंधौतवस्त्रेचपर्यधात्
बहिरागत्यतिलकंचक्रेचद्विजसत्तमः १२
करपादशिखासूत्रैर्दर्भांश्चविदधद्वशी
संध्यांचकारविधिवत्तर्पणंत्रिविधंतथा १३
सूर्यायकुसुमैर्दत्त्वासजलैरर्घमादृतः
शिरोबद्धांजलिपुटोनमश्चक्रेद्विजोत्तमः १४
आवाहनादिनैवेद्यपर्यंतमथविप्रराट्
जगत्पूज्यपदाब्जस्यविष्णोःपूजामचीकरत् १५
कृतक्रियःसूपविष्टःतादृशंसुतमात्मनः

जगादसंस्मरन्पूर्वजन्मकर्माणिकृत्स्नशः १६
शिवशर्मोवाच-
विष्णुशर्मन्नतेमिथ्यावाक्यंतातयतःस्मृतिः
अत्रस्नानेनमेजातापूर्वेषांजन्मकर्मणाम् १७
आकर्णयमाहाभागकथयामितवाग्रतः
पुराहमन्वयेजातोविशांधनिकधर्मिणाम् १८
पितामेशरभोनाम्नाकान्यकुब्जेपुरेऽवसन्
वाणिज्येनार्जयन्वित्तंभूरिधर्मधनाश्रितः १९
व्यतीतस्तुमहान्कालस्तस्यनाभवदात्मजः
जरागृहीतदेहस्यतच्चिंतातुरचेतसः २०
अचिंतयदहोरात्रमितिवैश्यवरस्तदा
विनासुतेनमेव्यर्थंधनंभूर्यपिसंचितम् २१
अृतेसुतमृणीलोकेपितृणांधनवानपि
सजलोऽपिविनावर्षंचातकानांयथाघनः २२
पुमान्जयतिसंतत्याविश्वंधर्मधुरीणया
शक्त्यात्रिविधयाराजाविपक्षमिवदुर्जयम् २३
प्रीणातिसंततिः शुद्धासुमनः पितृमानवान्
मित्रप्रत्यर्थ्युयदा सीनान्सूनृतावाग्यथेरिता २४
उदयस्थेनपुत्रेणवर्द्धतेस्वयशः पितुः
निर्मलंद्विजराजेननीरंतीरनिधेरिव २५
तस्माद्यतेत्सुतोत्पत्यैशरीरेणधनेनवा
तमृतेहिद्वयंव्यर्थंजनानांतडिदायुषाम् २६
एवंचिंतयतस्तस्यगृहेमुनिवरस्तदा
देवलोऽतीद्रियज्ञानोवरंदातुंसमाययौ २७
आगतंतंसमालोक्यप्रत्युत्थायासनात्पिता
दत्त्वार्घमथपाद्यंचवबंदेशिरसामुनिम् २८
उपवेश्यासनेदत्तेस्वहस्तेनपितामम
पप्रच्छचमुनिश्रेष्ठंदेवलंदेवदर्शनम् २९
स्वागतंतुमुनिश्रेष्ठशमस्तिभवतांकुले
तपःस्वाध्यायनियमानिष्प्रत्यूहाभवंतिच ३०

कालेचातिथयःकच्चिदायांतिभवदाश्रमे
कच्चिदाश्रमवृक्षावःफलंतिमनसेप्सितम् ३१
व्याघ्रादयोनकुर्वंतिकच्चिद्वैरंमृगादिभिः
त्वदीयाश्रममभ्येत्यभ्रातरोभ्रातृभिर्यथा ३२
तवाटनंभुविमुदेगृहिणामन्यथाकथम्
तेषांगृहाधिमग्नानांदर्शनंक्वभवादृशः ३३
हरिपादरजोबुद्धेः कामंकामोनकुत्रचित्
मुनेतवतथाप्याशुहेतुमागमनेवद ३४
शिवशर्मोवाच-
इत्युक्तस्तेनसमुनिर्देवलोदेवपूजितः
अब्रवीत्तन्मनोभावंज्ञातुकामोविशांपतिम् ३५
देवलउवाच-
वैश्यवर्यत्वयाभूरिधनंधर्मेणसंचितम्
करोषियेनधर्मज्ञनित्यनैमित्तिकीक्रियाः ३६
आदरंराजसदसिधनेन लभतेनरः
सुभटःशत्रुसंग्रामेविक्रमेणयथाजयम् ३७
गृहस्थस्तुधनंप्राप्यपरांपुष्टिंव्रजत्यलम्
शरत्परिणतंसस्यमनड्वानिवविश्पते ३८
धनिनांनविमुंचंतिबंधवोऽन्येचयेजनाः
मधुमत्सुमनोयुक्तं पादपंमधुपा इव ३९
धनाभावेनगृहिणांकृशत्वमुपजायते
सर्वतोग्रीष्मसमयेनभसांसरसामिव ४०
तद्धनंवर्त्ततेभूरिगृहेतवविशांपते
कुतः कृशत्वमंगानांगोप्यंचेन्नवदाद्यमे ४१
वैश्यउवाच-
हितोपदेशविरताभवंतः पितरोयथा
गोपनीयंभवद्भ्यःकिंमादृशैःपुत्रतांगतैः ४२
त्वत्प्रसादान्मुनिश्रेष्ठसर्वतोऽस्तिशिवंमम
वार्द्धकेपिसुताभावोदुःखमेकमिदंमम ४३
तस्मात्कृशत्वमंगानांविद्धिमेमुनिपुंगव

बिभेम्यहंपितृऋृणाद्यतोऽध पतनंनृणाम् ४४
तमुपायंकुरुमुनेयेनस्यांसुतवानहम्
किंचित्कर्तुमशक्यंनभूतलेऽत्रभवादृशैः ४५
शिवशर्मोवाच-
इत्याकर्ण्यवचस्तस्यवैश्यवर्यस्यदेवलः
मनःक्षणंस्थिरंकृत्वादध्यौमीलितलोचनः ४६
संततेर्मत्पितुर्दृष्ट्वाप्रतिवंधस्यकारणम्
देवलोतींद्रियज्ञानीवभाषेकारयन्स्मृतिम् ४७
देवलउवाच-
एकदातुपुरावैश्यतवेयंधर्मचारिणी
यंचकारस्वचित्तेतंकथयामिमनोरथम् ४८
गुर्विणीयद्यहंगौरिभवेऽहशंभुवल्लभे
तदात्वांतोषयिष्यामिषड्रसान्वितभोजनैः ४९
धूपदीपकमालाभिस्तांबूलैर्नृत्यबाधकैः
तंत्रीमुखोद्गतैर्गीतैर्नानाविधविलेपनैः ५०
एवंप्रतिश्रुत्यपुरः सखीनांदयितातव
प्रतीक्षमाणातंकालंतस्थौतद्भक्तिसंयुता ५१
तस्मिन्नेवाभवद्गर्भोमासेऽस्यायोषितस्तव
ऊचुरेनांततः सख्यःसर्वाःसस्नेहचेतसः ५२
यस्त्वयावांछितोगर्भोगौर्यासंप्रतिपादितः
अतःप्रतिश्रुतंदेव्याः पूजनंसुभगेकुरु ५३
नोचेद्विकाराद्भवतिविघ्नंतुतदनुष्ठितात्
तोषितारोषिताश्चात्रदेव्योहिवरशापदाः ५४
सखीभिरितितेभार्याकथितेयंमुदान्विता
त्वामुवाचमहाभागाविनयेनपतिव्रता ५५
नाथपूजयितुंगौरींवांछाम्यखिलकामदाम् अं
यत्प्रसादादहंयातावांछितार्थवतीप्रभो ५६
वैश्यवर्यत्वमेवैतच्छ्रुत्वास्यावचनंशुभम्
अमन्यतगर्भवतीमेनांनिजगृहेश्वरीम् ५७
परमोत्सवयामोदमानः सद्योभवानपि

भृत्यानाज्ञापयामासपूजावस्तूपपादने ५८
तैरानाय्यसमस्तानिवस्तूनिभवताततः
अस्यैदत्तानिमध्वन्नद्राक्षागंधादिकान्यपि ५९
ततोनिजसखीःसर्वाआहूयेदमिदंजगौ
सख्यःसमस्ताःसामग्रीसमानीतांबिकार्चने ६०
नीत्वापूजोपकरणंयूयंयातांबिकालयम्
संतोषयततांदेवींपूजयाविधिदृष्टया ६१
गुर्विणीतिकुलेऽस्माकंननिर्यातिगृहाद्बहिः
अतोऽहनागमिष्यामियूयंयाततदर्चने ६२
इत्याज्ञप्तास्तुताः सख्योनीत्वोपकरणंययुः
अंबिकालयमुन्मत्तभ्रमद्भ्रमरकेतनम् ६३
कोकिलाकुलसंकेलिसहकारकुलाकुलम्
हंससारसचक्राह्वमंडितंस्वच्छसारसम् ६४
महादेवगुणालापिशुकसारिसमावृतम्
हारपूरालतासेकेतत्परोमासखीधरम् ६५
उमापतेरुमापादन्यासपूतमहीतलम्
स्फटिकोपलसंबद्धजलाधारसुरद्रुमम् ६६
पार्वतीपतिसंनाटयगायद्गंधर्वनादितम्
मन्दानिलमनाग्धूतचूतचंपककोरकम् ६७
नृत्यन्मयूरनिर्ह्लादप्रतिनादिलतागृहम्
तल्लीलाचलविद्योतमानंरत्नलसत्प्रभम् ६८
तत्रगत्वागिरिसुतांप्रणेमुस्ताःसभर्तृकाः
प्रदक्षिणीकृत्यततोभक्त्यातांचबभाषिरे ६९
जगदंबेनमतुभ्यंशन्नोदेहिशिवप्रिये
त्वत्पूजार्थेसमानीतोबलिरेषप्रगृह्यताम् ७०
वैश्यस्तुशरभोनाम्नातस्यास्तिललितांगना
तयाभिलषितोगर्भस्तत्प्राप्तौतवपूजनम् ७१
त्वत्प्रसादादभूत्तस्याःसगर्भःशंभुवल्लभे
त्वत्पूजनायप्रहितोबलिरस्माभिरेषकः ७२
तस्याःकुलेगर्भवतीननिरेतिबहिर्गृहात्

अतःसानागतादेविप्रसीदैनगृहाणवै ७३
इत्युक्त्वातांतदावैश्यत्वत्स्त्रीसख्यस्तुतंबलिम्
समर्पयित्वाविधिवदानर्चुश्चंदनादिभिः ७४
प्रतिवाक्यमलब्ध्वातागौर्याप्रत्याययुर्गृहम्
निजसख्यैसमाचख्युर्विषण्णांतांशिवप्रियाम् ७५
तासामाकर्ण्यवचनमितिवैश्यतवाबला
उन्मनाश्चिंतयामासकुतोगौरीनपिप्रिये ७६
साजानातियथाभक्तिस्तत्पूजायाकृतामया
तादृशीनांकिमज्ञातंबाह्यंचाभ्यंतरंनृणाम् ७७
नगताहंयतस्तत्रतज्ज्ञानात्यपिकारणम्
मयादत्तेनबलिनाकुतःसानतुतोषवै ७८
नाहमन्यत्प्रजानामितदतोषेहिकारणम्
ऋतेमदगतेस्तत्रनूनंरम्येतदालये ७९
यदतीतंनतच्छक्यमन्यथाकर्तुमद्यवै
गर्भान्मुक्तागमिष्यामितत्पूजायैतदालये ८०
नमस्तस्यैमहादेवभार्यायैसाकरोतुशम्
इत्युक्त्वादधतीगर्भंतस्थौवैश्यतवांगना ८१
शिवशर्मोवाच–
विष्णुशर्मन्निदंपूर्ववृत्तमाज्ञायमत्पिता
पप्रच्छमुनिशार्दूलंदेवलंज्ञानवत्तरम् ८२
वैश्यउवाच–
मुनेयथाप्रतिश्रुतापूजातेस्नुषयातया
तथैवाकारिपार्वत्याविषादेकारणंवद ८३
यतोऽसौनगतातत्रतज्ज्ञानातिशिवास्वतः
सखीभ्यश्चोक्तमस्यास्तद्विषण्णासाकुतोभवत् ८४
देवलउवाच–
वैश्यवर्यशृणुष्वेदंकारणंकथयामिते
यतस्तस्याविषादोऽभूत्पार्वत्यागर्भनाशकः ८५
निवृत्तासुसखीष्वस्याःसंपूज्यस्कंदमातरम्
विजयापार्वतींप्राहकौतूहलसमन्विता ८६

विजयोवाच-
गिरिजेश्रद्धयातुभ्यंदत्तोमूभिरयंबलि
मानुषीभिः कुतः प्रीतानाभवस्त्वंवरानने ८७
धूपदीपकनैवेद्यैःपूजितातोषहेतवे
प्रत्युताकारणंदेवित्वंविषादंकुतोगता ८८
देवलउवाच-
इत्याकरार्यवचः सख्यादेवीदेववरार्चिता
अब्रवीद्विजयांवैश्यविषादेकारणंसखीम् ८९
पार्वत्युवाच-
विजयेसखिजानामिवैश्यभार्यागृहाद्बहिः
निर्गंतुमक्षमांगर्भधारणास्वविवेकतः ९०
समागतास्तुतत्सख्योमत्पूजायैतदीरिताः
मादृशोनचगृह्णंतिपरहस्तकृतंबलिम् ९१
तत्पतिश्चेत्समायास्यदभविष्यत्तदाशिवम्
तस्यास्तुमदवज्ञातोगर्भपातोभविष्यति ९२
यद्व्रतंपूजनंयच्चकर्तुंनक्षमतेंगना
तत्कारयतिनाथेननभंगःस्यात्तयोःसखि ९३
अथवाविप्रमुख्येनपृष्ट्वापतिमनन्यधीः
यतःस्वयमनागत्यतत्कृतंमेतयार्चनम् ९४
नकारितंचभर्त्रातोभवितादोहदोऽफलः
यद्युभौतौसमागत्यदंपतीश्रद्धयापुनः ९५
मांपूजयिष्यतः पुत्रोभविष्यतितदातयोः
देवलउवाच-
सशापोनत्वयावैश्यनचैवतवभार्यया ९६
श्रुतःसखीभिरस्यानोप्रसादश्चतयार्पितः
तयोरज्ञानतोवैश्ययुवयोर्नाभवत्सुतः ९७
अजानतोप्रतिविधिंपरत्रात्रसुखप्रदम्
एतत्तेकथितंवैश्यसंतानाभावकारणम् ९८
वसिष्ठेनयथापूर्वंदिलीपस्यमहीपतेः
तच्छ्रुत्वासयथाराजानंदिनींसमतोषयत् ९९

सस्त्रीकस्त्वंतथावैश्यगौरिंतोषयकामदाम्
सायथाराधिताराज्ञेदिलीपायददौसुतम् १०० 
आराधय तथागौरींत्वंसातुभ्यंचदास्यति 
वैश्यउवाच-
दिलीपइतिभूपःकःकाचसानंदिनीमुने १०१ 
यामाराध्यसुतंलेभेसभूयोभूपसत्तमः 
महेशादिसुरान्मुक्त्वात्रिवर्णफलदायिनः १०२ 
आराधिताकुतः सैवसुतार्थं तेनभूभुजा 
एतत्सर्वंसमाख्याहिमुनेयत्पृष्टवानहम् 
श्रुत्वाततोगिरिसुतांसेविष्येसहभार्यया १०३ 
शिवशर्मोउवाच-
गदितमितिनिशम्यविष्णुशर्मन्विनययुतेनविशामदीयपित्रा 
मुनिरितिगदितुंदिलीपवृत्तंजगतिपवित्रतरंविचक्रमेसः १०४ 
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेकालिदी माहात्म्येएकाधिकद्विशततमोऽध्यायः २०१

द्व्यधिकद्विशततमोऽध्यायः

देवलउवाच-
शृणुष्वभोमहाप्राज्ञदिलीपस्यमहीपतेः 
कथांदिव्यांविचित्रांचशृणुतांपापनाशिनीम् १ 
वैवस्वतमनोर्वंशेदिलीपोभूभुजांवरः 
आसीत्प्राचीनबर्हिस्तुस्वायंभुवमनोरिव २ 
सतुधर्मभृतांश्रेष्ठोधर्मेणप्रतिपालयन् 
महींमहीपतिर्लोकान्गुणैराढ्यैररंजयत् ३ 
मगधाधिपतेःपुत्रीमहिषीतस्यभूपतेः 
सुदक्षणाख्ययाख्याताशचीवासीद्दिवस्पतेः ४ 
गतेमहतिकाले तुमहिष्यांनाभवत्सुतः 
दध्यावितिनिजस्वांतेससम्राट्कोशलाधिपः ५ 
रत्नाकरसुमेर्वादिनगरत्नैर्विराजितम् 
धृतंभूवलयंदोषोभूषायैनाप्रजस्यमे ६

वर्गत्रयीयथाकालंसेवितानविरोधिता
तथापिमेऽनपत्यस्यनसौख्यंविद्यतेहृदि ७
यज्ञैराराधितोविष्णुरिंद्राद्याश्चसुरोत्तमाः
दीर्घिकारामकूपाश्चकारिताःसर्वतोभुवि ८
गोभूहिरण्यवासोभिःषड्रसान्वितभोजनैः
विप्राश्चातिथयश्चैवभक्त्यासंतोषितामया ९
बृत्यर्थंपृथिवीपालानुद्धृत्ययुधिधर्मतः
धनेनमहताकोशोमयाहिबहुलीकृतः १०
उन्मार्गगामिनोमत्तानिजधर्मविलंघिनः
विमुखःपितृदेवेभ्योदंड्यास्तेदंडितामया ११
पंचपर्वसुवैष्णव्यांरवौपित्र्येचकर्मणि
दशम्यैकादशीतिथ्योर्नस्त्रीसेवाकृतामया १२
ऋतुकालावधौस्नातांस्वस्त्रियंनाहमत्यजम्
अनृतावपितद्योग्येकालेचेत्प्रार्थितस्तया १३
तदातस्यांसकामिन्यांसकामंरमितंमया
एवंधर्मार्थकामामेयथाकालंनिषेविताः १४
महिष्यांकेनदोषेणजायतेमेनसंततिः
अतीतानागतज्ञानोवसिष्ठोगुरुरेवनः १५
कथयिष्यतितंदोषंयन्मेपुत्रोनजायते
देवलउवाच–
इत्यालोच्यसभूपालोगमिष्यन्नाश्रमंगुरोः
मंत्रिष्वारोपयामासकोशलामृद्धिकोशलाम् १६
अथप्रजासृजंदेवंपूजयित्वाश्रमंगुरोः
प्रतस्थातेपुत्रकामौदंपतीतौशुभेऽहनि १७
कतिचिद्वासरैर्मार्गमुल्लंघ्यैकरथेस्थितौ
तौदंपतीगुरोःसायमाश्रमंप्रापतुःशुभम् १८
वैश्वदेवांतसंप्राप्तातिथिसत्कारकृन्मुनिम्
हुताशनहुतद्रव्यप्रसरद्धूममालया १९
पवित्रयंतमात्मस्थान्मुनीनागंतुकानपि
मृगैर्दूर्वाप्रतानौघप्रपूर्णोदरमंथरम् २०

अभ्यागच्छद्भिरभितोमंडपंसमृगीगणैः
वासवृक्षमिलत्पक्षिकुलकोलाहलाकुलम् २१
परस्परविनिर्मुक्तवैरव्याघ्रमृगादिकम्
जपध्यानपरर्षीणां क्षणश्रांतश्रुतिध्वनिम् २२
अनध्ययनकालोत्थक्रीडारक्तकुमारकम्
तस्मिन्वसिष्ठमद्राष्टांदंपतीतौकृतक्रियम् २३
बृस्यांनिषण्णमव्यग्रमरुंधत्योपसेवितम्
सववंदेगुरोः पादौमहिषीसाचतत्स्त्रियः २४
आशिषागुरुरप्येनंयुयोजारुंधतीचताम्
अतिथिंतमथाभ्यर्च्यमधुपर्कादिभिर्गुरुः २५
अर्हणैरर्हतां श्रेष्ठोवसिष्ठइतिपृष्टवान्
वसिष्ठउवाच-
भोभोभूमिभृतांश्रेष्ठराज्येकुशलमस्तिते २६
कुलेचकच्चिल्लोकेचनिजधर्मानुवर्त्तिनि
धर्मेणपालिताकच्चित्वयावीरवसुंधरा २७
संवर्द्धयतितेकोशंर्मधीरिवसात्विकी
तवजानपदाराजन्पौराश्चस्थितिमात्मनः २८
सारवंतोविमुंचंतिकच्चिन्नांबुधयोयथा
स्नेहेनसाहचर्येणसहवासतयाप्रभो २९
लक्ष्मीनारायणायेतेकच्चित्तेपुरदंपती
काम्यव्रतानिराजेंद्रप्रजानांनगरेतव
फलंतिवांछितंकच्चिद्धरिचंदनवद्दिवि ३०
देवलउवाच-
पृष्टैवंसमुनिश्रेष्ठोवसिष्ठोमुनिपुंगवः
योगप्रभावोपनतैर्नृपंभोज्यैरभोजयत् ३१
अरुंधतीचतांराज्ञींबह्वादरसमन्विता
नानाव्यंजनपक्वान्नैरभोजयदुदारधीः ३२
कृतभोजनमासीनंस्वस्थः स्वस्थंमुनिर्नृपम्
पुनःपप्रच्छसंगृह्यपाणिनायाणिमानतम् ३३
वसिष्ठउवाच-

सप्तांगसंयुतंराज्यंनिजधर्मरतप्रजम्
प्रीतबंधुजनामात्यंशस्त्रास्त्रविधिवद्भटम् ३४
वश्यमित्रंहतामित्रंकृष्णार्चापरमानसम्
यंस्यास्तिनृपतेराज्यंस्वर्गराज्येनतस्यकिम् ३५
इक्ष्वाकुवंशराजानः पुत्रानुत्पाद्यधार्मिकाः
राज्यंचतेषुविन्यस्यप्रपन्नास्तपसिप्रभो ३६
त्वंयुवादृष्टपुत्रास्योनाधिकारीतपोविधौ
किमर्थमागतोह्यत्रराज्यंत्यक्त्वातथाविधम् ३७
राजोवाच-
ब्रह्मन्नाहंतपः कर्तुमागतस्तावकाश्रमे
स्वर्गकामनयात्यक्त्वाराज्यमत्रतथाविधम् ३८
ब्रह्मन्सत्य मिदंचोक्तंभवतायत्तपोवनम्
राज्यमारोप्यपुत्रेषुप्राप्ताइक्ष्वाकुवंशजाः ३९
नतैस्त्यक्तंमहीराज्यमिदंस्वर्गगतैरपि
तन्मूर्तिरस्यांविमनास्तिष्ठतिह्येवसंततिः ४०
यथाबाल्यंगतंतातयौवनंचसमागतम्
यास्यत्यदोपिचतथाजराप्येष्यतिनिश्चितम् ४१
जरसोऽनतरंमृत्युःपुरुषस्यनसंशयः
मृत्युंगतेमयिब्रह्मन्विनातनयसंभवम् ४२
कस्येदंजगतीराज्यंभविष्यतिगुरोवद
तस्मादपत्यहीनस्यराज्येऽपिममतिष्ठतः ४३
ममत्वंविद्यतेनात्रपुरस्तात्तदभावतः
वर्गत्रयस्यवैसम्यक्संवेत्तात्वंगुरोमम ४४
केनदोषेणमेपुत्रोजायतेनतपोनिधे
ध्यानेनदोषमालोक्यतंगुरोकथयाशुमे ४५
तस्यप्रतिक्रियांकुर्यांश्रुत्वासंतानलब्धये
देवलउवाच-
इत्याकरार्यवसिष्ठस्तुवचस्तस्यमहीपतेः ४६
उवाचसंततिस्तंभहेतुंवीक्ष्यसमाधिना
वसिष्ठउवाच-

त्वंपुराराजशार्दूलसंसेव्यसुरनायकम् ४७
स्नातामिमांवधूंस्मृत्वाचलितोनिजमंदिरम्
गच्छतस्त्वरयातातसंतानोत्कंठितस्यते ४८
स्रासीत्सुरतरोर्मूलेकामेधनुः स्थितापथि
उत्पादितात्वयातस्याः पूज्यांघ्रिरजसोऽतिरुट् ४९
प्रदक्षिणनमस्कारसदाचारमकुर्वता
साऽशपत्त्वामतिक्रोधात्पुत्रोनोत्पत्स्यतेतव ५०
ममसंतानशुश्रूषांयावत्त्वंनकरिष्यसि
गच्छंस्त्वमृतुदानायत्वरयासुतकामुकः ५१
तन्मनानाश्रृणोः शापंनयंतान्ननिनादतः
तस्याःसुतासुतांधेनुंनंदिनींससुतांमम ५२
स्राराधयानयावध्वासार्द्धंसादास्यतेसुतम्
देवलउवाच-
इत्युक्तवतितत्रर्षौवसिष्ठेसातुनंदिनी ५३
तपोवनात्समायातावत्सस्नेहस्नुतस्तनी
तांदृष्ट्वाहृष्टहृदयोवसिष्ठोमुनिपुंगवः
उवाचभूपतिंभूयोदर्शयित्वाचनंदिनीम् ५४
वसिष्ठउवाच-
राजन्समागताह्येषास्मृतमात्रशुभाह्वया
स्रतोविद्धिसमीपस्थांकार्यसिद्धिमिहात्मनः ५५
स्राराधितानुगत्येयंत्वयारण्येतथाश्रमे
वध्वाप्रसादात्तेपुत्रंदास्यतेनात्रसंशयः ५६
यथानाभिभवेदेनांजंतुःकश्चिद्वनोद्भवः
तथाचारयराजेंद्रवनेहिंस्त्रोधनुर्द्धर ५७
देवलउवाच-
तथेतिलघुवादिनेनृपतयेस्नुषायैचसन्नपाशयनहेतवैसदुटजंददौतापसः
सतत्रसहभार्ययासमधिशय्यदर्भास्तृतांमहीमगमयन्निशांनियतमानसो
विश्पतिः ५८
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेकालिदी
माहात्म्येद्व्यधिकद्विशततमोध्यायः २०२

## त्र्यधिकद्विशततमोऽध्यायः

देवलउवाच
अथोषसिनराधीशः पूजितांकुसुमादिभिः
महिष्यानंदिनींधेनुंनीत्वाररायंजगामसः १
गच्छंतीमनुतांदेवींछायेवनृपतिर्ययौ
खादंतीमनुशष्पादिसोऽपिमूलाद्यभन्नयत् २
तरुच्छायामुपासीनामनुसोऽप्युपविष्टवान्
पिबंतीमनुपानीयंराजापिसलिलंपपौ ३
सचराजामृदुग्रासैर्दंशापनयनेनच
कंडूयनैः कामधेनुंगुरोरेवमसेवत ४
अथप्रत्याश्रमंसायंन्यवर्त्ततमहीपतेः
अंगंपवित्रयंतीसाखुरोद्धूतैरजःकरौः ५
अधोभारेणगुरुणागच्छंतीमंथरंबभौ
महीपालमहत्कार्यभाराक्रांतेवनंदिनी ६
तांमुनेराश्रमाभ्याशेराज्ञीप्रत्युज्जगामह
चंदनान्ततनैवेद्यधूपादीनुपनीयच ७
तांपूजयित्वाविधिवत्प्रणम्यचपुनः पुनः
कृत्वाप्रदन्निणंराज्ञीतस्थौप्रांजलिरग्रतः ८
सागृहीत्वा चतांपूजांविहितां श्रद्धयातया
राज्ञानिश्चलमास्थायययौताभ्यांसहाश्रमम् ९
आराधयतितामेवंदिलीपेतुदृढव्रते
एकाधिकाव्यतीयायदिनानांवेश्यविंशतिः १०
अथभूमिपतेस्तस्यभावजिज्ञासयातुसा
विवेशनिर्भयस्वांतासशष्पांहिमवद्गुहाम् ११
पश्यताहिमवत्सानुशोभामथमहीभृता
अलन्नितागमः सिंहोबलाज्जग्राहनंदिनीम् १२
साचक्रंदभृशंधेनुर्दुःखितेवदयास्वना
चित्तेधनुर्भृतस्तस्यजनयंतीदयो दयम् १३
तदाक्रंदितमाकरार्यतस्याः सजगतीपतिः
हिमवत्सानुसंलग्नांनिजदृष्टिंन्यवर्त्तयत् १४

उपर्युपरितांधनुंस्त्रवदश्रुमुखींनृपः
तीक्ष्णदंष्ट्रनखंसिंहंदृष्ट्वासव्यथितोऽभवत् १५
गृहीतांतेनसिंहेनतामालक्ष्यधनुर्द्धरः
निषंगाद्बाणमुद्धर्तुंप्राहिणोद्दक्षिणंभुजम् १६
बाणमुद्धृत्यतूणीरान्निहंतुंतंमृगाधिपम्
गुणेनापूर्णमायोज्यचकर्षवसुधाधिपः १७
जडीभूतः समस्तांगस्तत्सिंहालोकनेनसः
नाशकद्बाणमुत्सृष्टुंराजासीद्विस्मितस्ततः १८
तादृशंनृपमालक्ष्यजगादसमृगाधिपः
नरवाचाभृशंभुयोविस्मयंप्रापयन्निदम् १९
सिंहउवाच-
दिलीपंत्वामहंराजन्जानामिरविवंशजम्
त्वंचजानीहिमांशंभोर्गणंकुंभोदराभिधम् २०
देवदारुरयंयस्तेवर्त्ततेदृष्टगोचरे
पार्वत्यापुत्रवद्वीरपालितः स्निग्धचित्तया २१
एकदामुष्यवन्येनगजेनाघर्षताकटम्
उदपाटिमहाराजवल्कलंमृदुलंभृशम् २२
एनंतादृशमालक्ष्यमृडानीकरुणान्विता
मामत्रस्थापयामाससिंहंकृत्वास्यरक्षणे २३
ममाहचेतिसादेवीकुंभोदरनिशम्यताम्
योऽत्रजंतुःसमागच्छेत्तंखादेस्त्वंवसन्निह २४
ततः प्रभृतिराजेंद्रतदाज्ञांपालयन्नहम्
पालितांत्रिदशैःसर्वैःकंदरेऽत्रवसाम्यहम् २५
जडीभावेस्वदेहस्यत्वयाकार्योनविस्मयः
महतीशांभवीमायावर्त्ततेऽत्रहिमाचले २६
अन्यस्मिन्निवसिंहेत्वंप्रहर्तुंनमयिक्षमः
यतोमत्पृष्ठमारुह्यवृषमारोहतिप्रभुः २७
निवर्त्तस्वनिजंदेहंरक्षसर्वार्थसाधनम्
दैवेनासादितावीरगौरियंभक्षणायमे २८
देवलउवाच-

इत्याकर्ण्यवचस्तस्यवीरसंबोधनान्वितम्
प्रत्युवाचदिलीपस्तंसजडीभूतविग्रहः २९
राजोवाच-
सर्गस्थितिविसर्गाणांकारणंजगतः शिवम्
अंबिकांजगदंबांचनमामिमृगराजतौ ३०
त्वंचतत्सेवकत्वेनमान्योममृगाधिप
ब्रवीमियदहंवाक्यंश्रुत्वाशाधिकरोमिकिम् ३१
वसिष्ठोब्रह्मणःपुत्रोगुरुर्नोविदितस्तव
तस्येयंनंदिनीनामधेनुःसर्वार्थसाधिका ३२
संतानोत्पत्तयेतेनदत्ताराधयितुंमम
येयमाराधितासम्यक्दिनानिकतिचिन्मया ३३
लघुतर्णक मातेयंधृतातेगिरिकंदरे
शंभुभृत्याद्बलात्त्वत्तोशक्तामोचयितुंमया ३४
अहंतस्यमुनेरग्रेगच्छाम्येनामृतेकथम्
कामधेनोस्तुदौहित्रीजगत्सेव्यायशस्विनी ३५
अनयासदृशीनान्यागौर्ययातोषयामितम्
तस्माद्विमुच्यगामेनामग्र्यांकुरुनिजाशनम् ३६
ददामिदेहमात्मीयमपकीर्तिमलीमसम्
एवंनधर्महानिः स्याद्वृषेस्तवतुभोजनम्
गवार्थेत्यजतः प्राणान्ममापिगतिरुत्तमा ३७
देवलउवाच-
एवमाकर्ण्यसिंहेनकृतेमौनेविशांपते
तदग्रेऽवाङ्मुखोराजान्यपतद्धर्मकोविदः ३८
तस्यप्रतीक्षमाणस्यसिंहपातंसुदुःसहम्
पपातोपरिपुष्पाणांवृष्टिर्मुक्तासुरेश्वरैः ३९
पुत्रोत्तिष्ठेतिवचनंश्रुत्वाराजासउत्थितः
जननीमिवतांधेनुंददर्शनमृगाधिपम् ४०
तंविस्मितमुवाचेदंनंदिनीनृपसत्तमम्
नंदिन्युवाच-
माययासिंहरूपिण्यात्वंमयासिपरीक्षितः ४१

मुनिप्रभावान्मांराजन्गृहीतुंनक्षमोंऽतकः
मनसापिकुतोऽन्येषां यद्ग्रहेशक्तिरंगिनाम् ४२
स्वशरीरस्यदानेनत्वंमांरक्षितुमुद्यतः
अतस्तेऽहप्रसन्नास्मिवृणीष्ववरमीप्सितम् ४३
राजोवाच-
नगुप्तंदेहिनामंतर्वर्तिवृत्तं भवादृशम्
अतोजननिजानासिवांच्छितंममदेहितत् ४४
मगधेशसुतायांमेवंशकर्तारमात्मजम्
प्रयच्छकिंचित्स्वच्छानांनासाध्यंहिभवादृशाम् ४५
इत्युक्त्वांजलिमाधायतत्पुरस्तस्थिवान्नृपः
तूष्णींतदुत्तरापेक्षीतत्पुरोबद्धलोचनः ४६
देवलउवाच-
निशम्येतिवचस्तस्यभूपतेरिदमब्रवीत्
नंदिनीपितृदेवर्षिनरभूतार्थसाधिका ४७
नन्दिन्युवाच-
पुत्रपत्रपुटेदुग्ध्वापयोममपिबेप्सितम्
आश्रमेगुरुणाज्ञप्तःपुनःपास्यसिशेषितम् ४८
भवितावंशकर्तातिसुतःशस्त्रास्त्रतत्ववित्
देवलउवाच-
इत्युक्तःसौरभेय्यातामुवाचविनयेनसः ४९
दिलीपउवाच-
मातस्तवैवपास्यामिशेषंसर्वक्रियाविधेः
तृप्तोऽहमातरासाद्यमिष्टंतेवचनामृतम् ५०
नान्यदिच्छामिसारंगःकादंबिन्यायथाजलम्
तवशुश्रूषणान्मातरभवंसकलोद्भवः ५१
समस्तजनपूज्यायाविद्यायाइवमूढधीः
तवमातामहीदत्तः शापोऽप्यासीद्गुरोमम ५२
तमृते पुत्रलाभोमेकुतस्तवचदर्शनम्
वरायैवतथाप्यंबसमाराध्याभवादृशः
नहिकश्चिद्विषाकांक्षीमहादेवात्त्रिवर्गदात् ५३

देवलउवाच-
श्रुत्वेतितद्वचःसागौःप्रसन्नासाधुसाध्विति
ग्राभाष्यहिमहादर्पाययौतेनसहाश्रमम् ५४
पूर्वेद्युरिवतत्रापिपूजिताराजभार्यया
प्रसन्नासावभौधेनुःकार्यसिद्धिरिवांगभाक् ५५
मुखंप्रसन्नमालद्त्यमृगाद्तीसाद्तितीशितुः
ग्रज्ञासीत्तंनिजंकार्यंसिद्धंयन्नस्तुयत्कृते ५६
ग्रथतौदंपतीधेन्वाविधिवद्विहितार्चया
तयासहगुरोरग्रेकृतकृत्यस्यजग्मतुः ५७
निरीद्त्यतौमुनिवरः प्रसन्नमुखपंकजौ
ग्रतींद्रियज्ञाननिधिः प्रोवाचेदंप्रहर्षयन् ५८
वसिष्ठउवाच-
राजञ्ज्ञानामिगौरेषाप्रसन्नावामभूत्किल
ग्रपूर्वायुवयोरद्यमुखकांतिर्हिलद्त्यते ५९
सुरभिःसुरशाखीचविश्रुतौकामपूरिणौ
तदपत्यंसमाराध्यसिद्धोऽथ स्यात्किमद्भुतम् ६०
योददातिनिखिलंमनोरथंकीर्तितेयमनधापिदूरतः
श्रद्धयानिकटएवसेविताकिंपुनः सुरतरंगिणीवसा ६१
ज्ञानतोविदितमद्भुतंमयात्वत्कृतंयदनयापरीद्तणम्
भूपतेत्वमपिधर्ममात्मनोरद्तसिस्मचयथाचतत् ६२
त्वय्यसौमममनोऽनुकूलतांभावमात्मनिविबुध्यतेतथा
तुष्यति स्मकमलायथाहरेः पार्वतीवगिरिशस्यसञ्जते ६३
रात्रिरत्रसहाभार्ययानयाधेनुपूजनपरेणनीयताम्
भूपभव्यभवतागमिष्यतेश्वः समाप्तविधिनानिजांपुरीम् ६४
देवलउवाच-
वैश्यैवंधेनुमाराध्यसभार्यःप्राप्तवांछितः
प्रातर्युक्तरथः प्राप्यगुरोराज्ञामगाद्गृहम् ६५
कतिचिद्वासरैस्तस्य दिलीपस्याभवद्रघुः
यस्यनाम्नारघोर्वंशः पृथिव्यांविश्रुतोऽभवत् ६६
यःपठिष्यतिभूपस्यदिलीपस्यकथामिमाम्

धनंधान्यंसुतंवैश्यलप्स्यतेसपुमानिह ६७
शरभवरसुताप्तयेस्वबुद्ध्यासममनयापरितोषयाशुगौरीम्
त्वमपिकुलधुरंगुणान्वितंसासुतमनघंखलुदास्यतेचतुभ्यम् ६८
शिवशर्मोवाच-
मुनिरितिचरितंदिलीपराज्ञोललिततरंशरभायपुण्यमुक्त्वा
अभिमतगतमात्मनः प्रपेदेविधिमुपदिश्यचपूजजनेंबिकायाः ६९
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिदी
माहात्म्येत्र्यधिकद्विशततमोऽध्यायः २०३

## चतुरधिकद्विशततमोऽध्यायः

शिवशर्मोवाच-
विष्णुशर्मंस्ततोवैश्यःशरभःसहभार्यया
नीत्वापूजोपकरणंययौश्रीचंडिकालयम् १
तत्रतौविधिवत्स्नात्वासुमनोधूपदीपकैः
आनर्चतुर्भक्तियुक्तौचंडिकांपुत्रकाम्यया २
श्रद्धयापूजिताताभ्यांदिनैःसप्तभिरंबिका
उवाचवाचाप्रत्यक्षंभूत्वाविशदमानसा ३
पार्वत्युवाच-
भोभोवैश्यप्रसन्नास्मिभक्त्यासुदृढयातव
ददामिपुत्रंतेसाधोयदर्थेयत्नवानसि ४
गच्छत्वंमाविलंबस्ववनमैंद्रंचखांडवम्
तत्रतीर्थंमहापुण्यमिंद्रप्रस्थाख्यमुत्तमम् ५
निगमोद्बोधकंतत्रतीर्थंनिखिलकामदम्
बृहस्पतिकृतंतत्रस्नाहित्वंसुतवांछया ६
भविष्यतिसुतस्तातातवस्नानेनतत्रहि
तत्रस्नात्वामयाप्यंगलब्धः स्कंदःसुरारिहा ७
शिवशर्मोवाच-
इत्याकर्ण्यवचोदेव्याः पितामममसहस्त्रिया
अत्राजगामसत्तीर्थेसस्नौचसुतवांछया ८
उंपस्करवतीर्धेनूर्द्विजेभ्यः प्रददौशतम्

देवान्पितृंश्चसंतर्प्ययथाविध्यत्रबुद्धिमान् ९
सप्तरात्रमुषित्वातुदंपतीयतमानसौ
जग्मतुःस्वगृहानिष्टलाभोत्फुल्लमुखांबुजौ १०
तस्मिन्नेवाभवद्गर्भोमासिमातुर्ममान्वहम्
व्यतीतेनवमेमासिजातोऽहदशमेशुभे ११
विष्णुशर्मन्यदुक्तंतेपुरावृत्तमिदंमया
दशाब्दद्वयमेवैतच्छ्रुतंसर्वंपितुर्मुखात् १२
एकदाक्षममालोक्यगृहकर्मणिमांपिता
गृहंमामर्पयामास विश्वाद्वैराग्यमाप्नुवन् १३
मांचोवाचसधर्मात्मागोविंदासक्तमानसः
विनिंदन्विषयासक्तिंविष्णुभक्तिंस्तुवन्मुहुः १४
पितोवाच–
सुमतेवार्द्धकंप्राप्तंपलिताश्चिकुराऽमम
गोविंदचरणांभोजंसेविष्येसाधुसेवितम् १५
तत्सैवयाभवेत्स्वच्छंमनोयस्यचसुस्थिरम्
सपुमानात्मसंतुष्टोनकिंचिदभिबांछति १६
निष्कामः सुखदुःखाभ्यांभुंजन्सुकृतदुष्कृते
प्राकृतेतत्समाप्तौचत्यजन्देहंभवत्यजः १७
तांवद्द्रव्यंगुणसुखंयावत्प्राप्तंनचित्सुखम्
तत्प्राप्तौतद्भवेत्तुच्छंसुधायाइवतक्रकम् १८
हरेर्मायाबलवतीयंमोहयतिदेहिनम्
हितानितंनजानातिसयथामदिरामदः १९
प्रवृत्तिंचनिवृत्तिंचविद्ययाविद्ययाचसः
करोतिस्वेच्छयाकालेबाललीलोहिसप्रभुः २०
वेदोदितंयदाकर्मक्रियतेफलमिच्छता
प्रवृत्तिंसापरातातषामर्पणमीश्वरे २१
यथानिर्दग्धाबीजानिनप्ररोहंतियत्नतः
यथाकर्माणिविश्वेशेनिःकामेनार्पितानितु २२
कार्मणांचलयोमोक्षः सुखदुःखप्रदायिनाम्
तदुत्पत्तिस्तुबंधःस्यादित्यसौशास्त्रनिर्णयः २३

अतोऽहकर्मवेदोक्तंकुर्वन्नाभिवषन्फलम्
पर्यटिष्यामितीर्थेषुहृदिभक्तिदधद्धरेः २४
एवंप्रारब्धकर्माणिभुंजन्नान्यान्यतर्जयन्
हनिष्यामिजगद्रोगंपीत्वासत्संगमौषधम् २५
शिवशर्मोवाच-
एवमाकर्ण्यवचनंतस्याहंपितुरात्मनः
अवदंविष्णुशर्मस्त्वंतन्निशामयतत्वतः २६
वैश्यपुत्रउवाच-
अयंजनोदुराराध्यःकथयिष्यतिनोयशः
दुष्टकुटुंबादुद्विज्यनिःसृत्यगतइत्ययम् २७
इयंविष्णुपदीतातभुवनत्रयपावनी
स्मृताहरत्यघंदूरात्कस्मादेनांविमुंचसि २८
पापकारीजनस्तातम्रियते मगधेतुयः
सोप्यस्तपापोगंगायांस्वर्यातित्यजमाशुभम् २९
पुत्राःषष्टिसहस्राणिसगरस्यमहात्मनः
कपिलक्रोधनिर्दग्धागतायत्स्पर्शनाद्दिवम् ३०
तामिमांत्रिदिवश्रेणींमुक्तेरपिविधायिनीम्
मुमुक्षुसेवितांतातमुक्त्वामान्यत्रगम्यताम् ३१
मावजानीहिसामीप्येगंगात्रिदशमानिताम्
यदिच्छसिमहाभागसेवितैषाप्रदास्यति ३२
तिर्यंचोऽपिविनाज्ञानाज्जलेचेत्स्युर्गतासवः
भवेयुस्तर्हितेब्रह्मसाकथंत्यज्यतेत्वया ३३
शिवशर्मोवाच-
निशम्यैतद्वचस्तातस्ततोममअमृतप्रियः
उवाससदनेसर्वविषयेभ्यःपराङ्मुखः ३४
त्रिषुकालेषुंगगायांप्रत्यहंस्नानमाचरन्
पुराणंस्याद्गृहेयत्रतत्रयातिसनित्यशः ३५
एकदाकर्णयन्धीरोयमुनातीर्थगौरवम्
तत्रशुश्रावमाहात्म्यमस्यतीर्थस्यपुत्रसः ३६
अविमुक्तहरिद्वारप्रयागेभ्यश्चपुष्करात्

ग्रयोध्याद्वारिकाकांचीमथुराभ्यस्तथान्यतः ३७
सर्वतीर्थमयस्यास्यपुरयंशतगुणाधिकम्
कथितंतेनविदुषासुतेनाकरर्यमत्पिता ३८
त्यक्त्वागृहमगादत्रतीर्थेसर्वैरलज्ञितः
ग्रावामिवमहाभागोगोविंदपदसेवकः ३९
ग्रत्रागत्यमहाभागोमत्पितामोज्ञवांछया
निगमोद्बोधकेतीर्थेत्रिकालंस्नानमाचरन् ४०
उवासकतिचिन्मासानत्रतीर्थोत्तमेहिसः ४१
कुर्वन्निजक्रियांधीमान्निस्पृहोप्यजवेश्मनि
एकदासहसातस्यज्वरोऽभूदतिदारुणः ४२
महत्यापीडयातस्यमुमोहगतचेतनः
मुहूर्तंसपितामुह्यंतदवस्थोव्यतिष्ठित ४३
पश्चात्समागतप्राणोविचिंत्ययदिदंतदा
ग्रहोमेकष्टमापन्नंदूरेपुत्रःसधार्मिकः ४४
योमांज्वरवितप्तांगमाश्वासयतिबुद्धिमान्
ग्रगम्यागमनंपापंकृतंयन्मेसुदारुणम् ४५
प्रायश्चित्तंनतस्यापिकृतंकामेगतिर्भवेत्
ग्रागमिष्यतिपुत्रोमेतस्मैदास्यामिवस्विति ४६
यन्मयागोपितंगेहेनदृष्टंचतदप्यहम्
शिवशर्मोवाच-
इतिचिंतयतस्तस्यपान्थोवर्षेणपीडितः ४७
शीतार्तःकंपितवपुरुटजंप्राविशत्तदा
सतंसंविष्टमालोक्यभूयोगत्वातदंतिके ४८
मुनिरेषइतिज्ञात्वाववंदेशिरसाध्वगः
ऊचेचकस्मात्सुप्तोसिमुनेसंध्यासमागता ४९
रविरस्तंप्रयात्येषनसुप्तेःकालएषते
इत्युक्तमात्रेवचसिपथिकेनपितामम ५०
शरभोज्वरतप्तांगस्तमाहकथमप्यहो
शरभउवाच-
श्रूयतांवचनंपांथयद्वदामिपुरस्तव ५१

श्रुत्वामद्भाग्ययातेनत्वयासाधोविधीयताम्
वैश्योऽहशरभोनाम्नाकान्यकुब्जेगृहंमम ५२
अत्रागतोनिषिद्धोपिजायामित्रसुतैरहम्
अस्यतीर्थस्यमाहात्म्यंश्रुत्वासूनुमुखेरितम् ५३
मासास्तुकतिचित्साधोव्यतीतामयिचागते
दिनत्रयमतिक्रांतंज्वरितस्यममाधुना ५४
प्राणामेविगताआसन्नद्यभूयःसमागताः
कियानप्यायुषः शेषः साधोमेखलुतिष्ठति ५५
शमनस्यगृहं दृष्ट्वायदहंपुनरागतः
भाग्योदयेनकेनापिममात्रत्वंसमागतः ५६
नयमांमद्गृहंमित्रद्रव्यंबहुददामिते
दास्याम्यपिगृहंगत्वाकृपांकुरुकृपानिधे ५७
इहभूभागउत्खायगृह्यतांमामकंधनम्
शिवशर्मोवाच-
इत्याकर्ण्यसदुर्बुद्धिर्ग्राम्योविषयलंपटः ५८
उवाचधनलुब्धस्तंत्वदुक्तंसाधयाम्यहम्
इत्युक्त्वाधनमुत्खायतस्माद्भूभागतस्तदा ५९
अग्रतः स्थापयामासशरभस्याहचाध्वगः
अध्वगउवाच-
धनमेतद्विशांनाथतवभूभागतोमया ६०
निष्कासितंप्रयच्छाशुशिबिकानयनायमे
यामारोप्यज्वरार्तंत्वांनयामितवकेतनम् ६१
शिवशर्मोवाच-
इत्युक्तस्तेनसतदाददौस्वर्णपलत्रयम्
सोपिनीत्वापितुर्द्रव्यंययौलवणपत्तनम् ६२
उषित्वारात्रिमेकांतुशिबिकांसपरिच्छदाम्
सवाहामानयत्पुत्रदत्त्वास्वर्णपलद्वयम् ६३
पलंद्वयंगृहीतंतत्तेनैवाधर्मबुद्धिना
आरोप्यशिबिकांतंतुशरभंवैश्यसत्तमम् ६४
पांथःसचलितोवाहांस्त्वरयन्कान्यकुब्जकम्

अस्यतीर्थवरस्याथकमंडलुजलंधृतम् ६५
पाययन्नल्पमल्पंतंतृषार्तंसोध्वगोययौ
अथतेसरसस्तीरेउत्तीर्णाभोक्तुमध्वनि ६६
स्नात्वाभुक्त्वापुनस्तस्मात्स्थानाच्चेलुस्त्वरान्विताः
कियंतिभूमिमुल्लंघ्यतृषार्तास्तेकमंडलोः ६७
जलंपीत्वातृषार्ततंशरभंचाप्यपाययत्
अथकश्चिन्महाभीमोविकटोनामराक्षसः ६८
विचरन्निर्जनेऽरण्येगच्छतस्तानवैक्षत
तान्दृष्ट्वासक्षुधाक्रांतोवेगवान्विवृताननः ६९
अभिदुद्रावचरणाघातेनाकंपयन्महीम्
आगत्यतरसापार्श्वेतान्वाहान्पथिकंचतम् ७०
सकोशेषुसमादायभ्रामयामासखेचरः
गतासून्भ्रामणेनैवभूतलेतानपोथयत् ७१
चखादपिशितंतेषांपपौकोशाच्चशोणितम्
कुत्रयास्यतिरोगार्तोनरोऽयपुरतोमम ७२
एनंतुभक्षयिष्यामिपश्चादंबुपिबाम्यहम्
इति कृत्वामतिर्वारितीर्थस्यास्यकमंडलोः ७३
मुखेचिक्षेपसतदारजनीचरपुंगवः
क्षिप्तमात्रेजलेतस्यपूर्वजन्मभवास्मृतिः ७४
जातासतुवधात्तस्यशरभस्यन्यवर्तत
पूर्वजन्मकृतंपापंतदपिस्मृतिमागमत् ७५
येनराक्षसभावस्तुभूतोविप्रोद्भवादपि
स्मृत्वापापमुपेत्याशुसमीपेशरभस्यतु
उवाचज्ञानमापन्नोराक्षसःपितरंमम ७६
राक्षसउवाच–
भोभोमनुष्यशार्दूलकस्त्वंकेचजनाअमी
भक्षितायेमयाघोररूपेणाधमरक्षसा ७७
कस्यतीर्थवरस्येदंजलंयस्यप्रभावतः
पापिनोऽपिस्मृतिर्जातापूर्वजन्मभवामम ७८
वैश्यउवाच–

वैश्योऽहराक्षसश्रेष्ठकान्यकुब्जेगृहंमम
तीर्थानिपर्यटन्निंद्रप्रस्थेऽहसमुपागतः ७९
तत्राहमभवंदुःखीज्वरेणविधियोगतः
ततोमेबुद्धिरुत्पन्नागंतुंगृहमसत्पथ
तत्रकश्चित्समायातःपांथोवर्षेणपीडितः ८०
प्रार्थितःसमयानीयशिबिकांमांगृहं नय
सचायंशिबिकांपांथःसमुपानीयसत्वरः ८१
मामारोप्यचतांधीरश्चलितोमद्गृहंप्रति
सपांथस्तेचशिबिकावाहाः संप्रतिभक्षिताः ८२
त्वयाजलमिदंयस्यतीर्थस्यापिचतच्छृणु
इंद्रस्यखांडववनेयमुनास्तिसरिद्वरा ८३
तत्तीरेऽस्तिहरिप्रस्थंतीर्थंतीर्थोत्तमोत्तमम्
सुराचार्यस्यतत्रास्तितीर्थंसर्वार्थसाधकम् ८४
निगमोद्बोधकंजातास्मृतिस्तेयज्जलाशनात्
एतत्तेसर्वमाख्यातंयत्पृष्टोऽहमिहत्वया ८५
पृच्छामित्वामहंकिंचित्तद्वदाशुनिशाचर
पूर्वजन्मकृतंकर्मस्मरसित्वमिहाधुना
वदकिंतेकृतंपापंयेनजातोऽसिराक्षसः ८६
राक्षसउवाच-
पुराहमभवंविप्रःपुण्येवेदविदांकुले
दुराचारोह्यधर्मात्माशृणुसर्वंवदामिते ८७
क्रीडताहिमयानित्यंद्यूतेनसहतद्विदैः
हारितंद्रविणंभूरिस्वकीयंपितुरेव च ८८
पित्रानिवेद्यभूपायमामकंकर्मतज्ज्ञनैः
पुरान्निःसारितोनिःस्वोगतोऽहग्राममंतिके ८९
तत्रासीन्मेसखानामदेवकोब्राह्मणोत्तमः
तेनाऽहरक्षितोगेहेकुर्वताचिरमादरम् ९०
वस्तुंतत्रसुखेनाहंतद्भार्यांरूपशालिनीम्
कामातुरोऽहमभजंबलान्मित्रेगतेक्वचित् ९१
सामृतातत्क्षणात्साध्वीभक्षयित्वामहाविषम्

तांदृष्ट्वातमसायुक्तेनिशीथेऽहपलायितः ९२
पलायमानस्तरसाधृतोऽहराजकिंकरैः
चौरोऽयमितिखङ्गेनचिच्छिदुस्तेशिरोमम ९३
मृतंमांयातनादेहमावेश्ययमकिंकराः
रौरवेनिरयघोरेचिन्हिपुर्यमशासनात् ९४
षष्टिवर्षसहस्राणितत्राऽहतीव्रयातनाम्
भुक्त्वातेनैवपापेनराक्षसत्वमुपागतः ९५
शतवर्षाण्यतीतानिराक्षसत्वेविशांपते
वदामितमुपायंमेयेनास्मान्मुक्तिमाप्नुयाम् ९६
पुण्यंतदर्पितेसाधोवदामि शृणुसादरम्
येनतीर्थवरस्येदंजलंममुखेगतम् ९७
तत्रैवजन्मनिमयाकृत्वाहरिदिनेव्रतम्
संसर्गान्निच्छयावैश्यरात्रौजागरणं कृतम् ९८
द्वादश्यामथसंस्नात्वाभोक्तुंमपिसमुद्यते
मद्गृहेकश्चिदायातोवैष्णवोविष्णुरूपधृक् ९९
कुपितोऽहतमालोक्यदुर्वचोवदमग्रतः
क्वगच्छसिदुराचारदांभिकस्त्रीजनांतरे १००
इत्युक्तंसमयाधीरस्तुल्योमानापमानयोः
तूष्णीमेवनिकेतान्मेनिर्गत्यचलितोयदा १०१
तदाभिमुखमायांतीपत्नीममपतिव्रता
पतित्वापादयोस्तस्यतंसाधुंगृहमानयत् १०२
मयापमानितस्यापिनक्रोधोऽभून्महात्मनः
तयादृतस्याप्यानंदोयतः सोरिसुहृत्समः १०३
तमर्चयित्वाविधिवद्विष्टरेचोपवेश्यसा
भोज्यंभोजयजीवेशजयताद्भुवनत्रयम् १०४
इत्युक्तोऽहतयासाध्व्यान्यगदंतंमहाशयम्
म्लानवक्त्रःप्रसन्नास्यमुत्तिष्ठशमयक्षुधाम् १०५
इत्युक्त्वातस्यचरणौनोदितस्तनुमध्यमा
प्राक्षालयंपुनस्तंतुनिवेश्यासनमुत्तमम् १०६
अददांपात्रमन्नेनपूर्णंतस्मैविवेकिने

जलंचतत्करेसाध्व्याप्रेरितोऽहतयामुहुः १०७
उपभुज्यस धर्मात्मास्वैरंविगतविक्रियः
हरेरामहरेकृष्णजपन्निति जगामह १०८
कृतंपुरायमिदंबैश्यनोदितेनमयास्त्रिया
पूर्वजन्मनियेनेदंप्रापितंतीर्थवारिमे १०९
शिवशर्मोवाच-
विष्णुशर्मन्निदंवाक्यमुक्त्वातिष्ठतिराक्षसे
पथिकःसचतेवाहाःप्राहुःखेदिव्यदेहिनः ११०
पथिकवाहाऊचुः
भोभोविशांपतेसाधोप्राप्ताश्चप्यपमृत्युताम्
त्वत्प्रसादादिदंवारिपीत्वादेवत्वमागताः १११
त्वत्संगेधनलोभेनविट्पतेचलितायतः
विगतानधनाकांक्षामरणावसरेप्यतः ११२
तीर्थराजजलस्यास्यतिष्ठतोजठरेहिनः
मरणेह्यनुभावात्तुमैत्रीप्राप्ताधनेशितुः ११३
नमामस्त्वांवयंयामोधनेशनगरींप्रभो
विमानैस्तद्गणानीतैर्नानामणिविभूषितैः ११४
प्रयाहिमाविलंबस्वतीर्थेनिगमबोधके
त्वमनेनसमंसाधोतारयैनमपिद्रुतम् ११५
शिवशर्मोवाच-
इत्युक्त्वातेगतास्तातदिश्युदीच्यांसमंततः
विमानकिंकिणीनादैर्नादयंतोऽथरोदसी ११६
अथवैश्योममपितातमाहरजनीचरम्
शरभउवाच-
उत्तिष्ठनयमामाशुतीर्थेनिगमवोधके ११७
ज्वरार्त्तेनमयापद्भ्यांतत्रगंतुंनशक्यते
योमांनयतितत्तीर्थत्वदन्योनास्तिकश्चन ११८
शिवशर्मोवाच-
तथेतितमथाश्वास्यवैश्यंसरजनीचरः
स्कंधमारोप्यवेगेनतत्तीर्थंपावनंययौ ११९

ऊषतुस्ताबुभौतत्रविश्पतिःसचराक्षसः
कुर्वंतौस्नानमात्रंतुसर्वतीर्थोत्तमोत्तमे १२०
अथाऽहपितुराकरार्यमहतींगुरुवेदनाम्
तंप्रतिप्रेरितोमात्राचलितोनिजसद्मतः १२१
अत्रागत्यमयादृष्टःसमहाज्वरपीडितः
मूर्ध्नाचवंदितस्तेनदत्ताशीर्मेऽभ्यभाषिच १२२
शरभउवाच-
किमर्थमिहभोतातदूरमार्गेसमागतः
दिनानिकतिचित्तिष्ठन्कुर्वन्नत्रनिजक्रियाम् १२३
विकटोनाममेमित्रःराक्षसःसमुपैतिवै
उत्तिष्ठवपुषामुष्यदंडवत्पतपादयोः १२४
नभेतव्यंत्वयामुष्मात्त्यक्तहिंसादिकर्मणः
अधुनातीर्थमासाद्यसन्निधौममतिष्ठति १२५
शिवशर्मोवाच-
इत्युक्तोऽहतदापित्राशरभेणमहात्मना
उत्थायपतितस्तस्य पादयोर्दंडवद्भुवि १२६
दोर्भ्यामुत्थाप्यमांसोऽथगाढमालिग्यराक्षसः
स्वागतंमित्रपुत्रेतिजगादाशिषमीरयन् १२७
राक्षसउवाच-
भाग्यवानसिभोतातयत्त्वमत्रसमागतः
पितुर्धर्मात्मनः श्रुत्वाज्वरपीडांसुदारुणाम् १२८
पितुराणयमाप्नोषितीर्थेकृत्वातिलोदकम्
स्नात्वाकुरुक्रियां स्वीयाः पूर्वजन्मस्मरिष्यसि १२९
शिवशर्मोवाच-
एवमुक्तस्तदातेनस्नातुंतीर्थेवरांभसि
प्रविष्टोऽहस्मरंस्तातपूर्वजन्मशुभाशुभम् १३०
स्नात्वाविधिवदत्रैवपितुरंतिकमागतः
अपृच्छंरक्षसोवृत्तंकुतोऽयधर्मधीरिति १३१
पित्रोक्तंरक्षसोवृत्तंवाहानांपथिकस्यच
श्रुत्वाऽहतीर्थराजस्यस्तुतिमस्यचकारवै १३२

पितामेरोगनिर्मुक्तोभविष्यतियदातदा
यास्यामिगृहमित्यत्रदशोषितमहानिमे १३३
दशाहाभ्यंतरेतातततातस्यमरणंमम
अभूदर्धजलेह्यस्यतीर्थराजस्यपश्यतः १३४
अथोगरुडमारुह्यवक्षसोधारयन्श्रियम्
आजगामस्वयंविष्णुर्नवीनघनविग्रहः १३५
पीतवासाचतुर्बाहुःपंकजारुणलोचनः
ब्रह्मेंद्रादिभिरादिव्यैःसनाथैरंधकारिणा १३६
सेव्यमानोगुणग्रामान्गायद्भिःकिन्नरैःसह
हाहाहूहूप्रभृतिभिःस्तूयमानश्चसर्वतः १३७
दत्त्वास्वकीयसारूप्यमारोप्यगरुडंतदा
पितरंममब्रह्माद्यैर्वृतोवैकुंठमारुहत् १३८
पितुःसारूप्यमालोक्यविष्णोरहमचिंतयम्
इतिचित्तेतदालोक्यजाततत्वोदयेतदा १३९
नहिवर्णयितुंशक्योह्यस्यतीर्थशिरोमणेः
महिमायज्जलार्द्धेस्यान्मृतोजंतुश्चतुर्भुजः १४०
नमयासर्वथात्याज्यंतीर्थराजमिदंननु
अंजसादृढमाहात्म्यंधनरोगादितृष्णया १४१
पितुरत्रोटजेतावत्स्थातव्यंहिमयामम
या वत्तुकर्मणांभुक्तः प्रारब्धानांमहीतले १४२
एवंविचिंतयित्वाचपितुःकृत्वातुसत्क्रियाम्
रक्षसातेनसहितः स्थितोऽहमोक्षवांछया १४३
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसहितायामुत्तरखंडेकालि
दीमाहात्म्येचतुरधिकद्विशततमोऽध्यायः २०४

पंचाधिकद्विशततमोऽध्यायः

शिवशर्मोवाच-
एकदाऽत्रमहातीर्थेपंकेमग्नांपयस्विनीम्
दृष्ट्वासराक्षसश्रेष्ठस्तामुद्धर्तुंविवेशह १
गोरक्षणेमहान्धर्मोरक्षतुःस्वर्गतिर्भवेत्

चिंतयन्नितिमध्येतुसगृहीतोंबुहस्तिना २
नीतस्तुवारिणोऽधस्ताज्जलपूर्णोदरस्तदा
तत्याजजीवितंसद्यस्तेनपीडितविग्रहः ३
दिव्यरूपंसमास्थायविमानमपिढौकितम्
गणेनप्रहितेनाथदैवैरिंद्रपुरोगमैः ४
गछन्नितिमयापृष्टः सनिशाचरपुंगवः
मुक्तिदेऽत्रमहातीर्थेमृत्युंप्राप्यसदुर्लभे ५
कथंदेवपदप्राप्तिर्जातातवमहामते
इत्युक्तोमामुवाचेदंवांछासीदत्रमेऽनघ ६
तस्मिन्गतेपुणयजनेस्वर्गंपुणयवतांपदम्
एकाकिनामयाविष्णुःसद्गतिःप्रापितस्तदा ७
गच्छंस्तिष्ठन्स्वपन्जाग्रत्स्नानंकुर्वंश्चनित्यशः
तमेवपुंडरीकाक्षमहंदध्यावनन्यधीः ८
हरेतवपदांभोजमहंशरणमागतः
ब्रह्मत्वेचमहेशत्वेनेंद्रत्वेमममानसम् ९
प्रार्थयन्नित्यहंतातातमेवपुरुषोत्तमम्
उषितोऽत्रमहातीर्थेकृत्वानिर्विषयंमनः १०
विष्णुशर्मोवाच-
वसतोऽत्रमहातीर्थेमरणंचेत्तवाभवत्
कथंजन्मपुनः प्राप्तंत्वयेतिममसंशयः ११
मर्यादांयस्यतीर्थस्यत्यक्त्वापिधनलोभतः
राक्षसान्मरणंप्राप्ताः पथिकस्तेचवाहकाः १२
यस्यतीर्थवरस्यास्यजलपानाद्दिवंगताः
तथैवराक्षसोऽप्यस्मिन्नपमृत्युमवाप्यसः १३
नक्रतःस्वेच्छयास्वर्गजगामतवपश्यतः
ननूनंतत्रमरणंजातंयज्जन्मदृश्यते १४
नारदउवाच-
शिवेनिशम्यपुत्रस्यशिवशर्माशुभंवचः
उवाचपूर्ववृत्तांतंकारणंनिजजन्मनः १५
शिवशर्मोवाच-

विष्णुशर्मन्शृणुष्वेदंकारणंममजन्मनः
कथयामितवाग्रेऽहश्रुत्वानिःसंशयोभव १६
एकदाविष्णुपूजायांमयिध्यानंसमास्थिते
दुर्वासाःप्रकृतिक्रोधीममाश्रममुपागतः १७
तमागतमविज्ञायविष्णुध्यानपरायणः
तस्थिवांस्तदवस्थोऽहचिरंतंनामसंस्मरन् १८
समुहूर्तंमुनिःस्थित्वाममाग्रेक्रोधमूर्छितः
आत्मनात्मानमाहेदमुच्चैरारक्तलोचनः १९
दुर्वासाउवाच-
अहोअत्रेरहंपुत्रोऽनसूयागर्भसंभवः
शिवांशोमानुषेणालमवज्ञातोऽमुनाभवम् २०
त्रिलोकीराज्यतः शक्रोमयायेनप्रपातितः
तंमामपिमनुष्योऽयमवजानातिदुर्मतिः २१
योबिभेतिनकःसोसिमत्तःकालानलादिव
मुक्त्वादेवत्रयींलोकयतः सार्हत्तमामम २२
यामसौध्यायतेमूढोदेवतांध्यानमास्थितः
नकथंबोधयत्येनंसेतिमूर्त्तिस्थितोयमः २३
नूनंनारायणंदेवंध्यायत्येषजगद्गुरुम्
यद्ध्यानामृततृप्तोहिनबाह्यज्ञानवानयम् २४
हरिंवाब्रह्मवाशंभुमन्यंवाध्यायतामहम्
मयायंसर्वथादंड्योमदवज्ञाकरोह्ययम् २५
शिवशर्मोवाच-
एवंविचिंतयित्वाससुमतिंमाम बोधयत्
शशापचबिबुद्धंमामितिक्रोधारुणेक्षणः २६
मामवज्ञाययश्चित्तेध्यानकालेमनोरथः
कुतस्तेनभवेद्यस्मिन्भविष्यतिहिसर्वथा २७
इत्युक्त्वासयदातातचलितोमुनिरत्रिजः
तदामयाचरणयोर्गृहीतोभयभीरुणा २८
इत्युक्तश्चमुनिश्रेष्ठक्षम्यतांरुडिबमुच्यताम्
मादृशान विजानंतिसम्यक्कर्मभवादृशाम् २९

शापंत्वंदत्तवान्घोरंसांप्रतंमेनिरेनसः
प्रसीदममनम्रस्यशापांतेकुर्वनुग्रहम् ३०
इत्युक्तः कोपमुत्सृज्यदुर्वासाशीतलोभवत्
किमेतन्नोचितंतातसयतश्चंद्रशेखरः ३१
उवाचेतिसमांधीमांस्तंभूत्वाब्राह्मणोत्तमः
अत्रैवमरणंप्राप्यनभूयोजन्मलप्स्यसे ३२
इतिमामनुगृह्याथसजगामदिगंबरः
उषित्वातद्दिनंतातमयासत्कारपूजितः ३३
नमुनेर्भाषितंमिथ्याचिंतयित्वाहमित्यपि ३४
जगामस्वगृहंचित्तेपश्चात्तापंवहन्निति
अहोमेध्यायतोनित्यंसतीर्थाश्रमिणस्तथा ३५
दर्शनंदुर्लभंजातंश्रीपतेरिहजन्मनि
चातकस्येवमेघस्यशुचौसंतापकारिणि ३६
कुतोऽयमागतोमह्यंवैकुंठगतिरोधकः
जनस्यप्रस्थितस्येवजलदो कालवारिमुक् ३७
नदोषोऽस्तिमुनेर्नूनंतस्यैवेच्छाहरेःखलु
सुदर्शनंहिदत्त्वापिममजन्मांतरंकृतम् ३८
मयासंसारभीतेनग्राह्यंपादांबुजंहरेः
निदाघातपतप्तेनपथिकेनेवपादपः ३९
किंधनापत्ययोषिद्भिरनित्यैश्चान्यबंधुभिः
गोविंदपरमानंदरामेतिममजल्पतः ४०
उदासीनवदासीनःकुंटुबेषुहरिंभजन्
प्रारब्धमेवभोक्ष्यामिकर्माण्यन्यान्यतर्जयन् ४१
चिंतयन्नित्यहंतातकियद्भिर्वासरैरहम्
प्राप्तवान्स्वगृहंस्नात्वाहरिपादोदकांतरे ४२
पितुर्मरणमाख्यातंमात्रेबंधुभ्यएवच
श्रुत्वातेऽपिशुचंचक्रुर्नाविंदन्निममस्थिरम् ४३
सत्यलोकादिलोकेषुनिस्पृहोऽहगृहेवसन्
मरणंप्राप्तवान्कूलेगंगायामुनिसेविते ४४
मुनेर्दुर्वाससः शापाज्जातोऽहवैष्णवेकुले

मरणंचात्रसत्तीर्थेलब्ध्वाप्राप्स्येहरेःपदम् ४५
नारद उवाच-
एवंसुराचार्यविनिर्मितेतदातीर्थेमहाभागपुराकृतानितौ
द्विजोत्तमौप्रोच्यमिथः सुतस्थतुर्विचिंतयंतौहरिपादपल्लवम् ४६
विचिंतयंतौहरिमब्जलोचनंचतुर्भुजंनीरदनीलविग्रहम्
निजायुधालंकरणावभासितंस्मृत्वात्रसारूप्यमवापतुर्हरेः ४७
यस्यक्षेत्रमिमंपुण्यमिंद्रप्रस्थाख्यमुत्तमम्
तस्योपाख्यानमाख्यातंफलमस्यशिवेशृणु ४८
गंगास्नानेनयत्पुण्यंकन्यादानोद्भवंचयत्
श्रवणादस्यतत्पुण्यंश्रद्धयालभतेनरः ४९
पुत्रे जातेतुगोदानात्सिंहगेचबृहस्पतौ
गोदावरीजलेस्नानाद्यत्फलंभुविजायते ५०
तत्फलंश्रवणादस्यजायतेनात्रसंशयः
अतस्तीर्थोत्तमादन्यत्तीर्थंनास्त्यखिलार्थदम्
यस्मिन्मरणतोनूनंतिर्यंचोऽपिचतुर्भुजाः ५१

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिंदी माहात्म्येनिगमबोधोपाख्याननामपंचाधिकद्विशततमोऽध्यायः २०५

## षडधिकद्विशततमोऽध्यायः

सौभरिरुवाच-
धर्मराजशिबिः श्रीमानाकर्ण्यतद्वचोमुनेः
नारदस्याब्रवीत्प्रीतमनाइतितमुत्तमम् १
शिबिरुवाच-
मुनेतीर्थवरस्यास्यनिगमोद्बोधकस्यते
माहात्म्यंवर्णितंसम्यक्श्रुतंपापहरंमया २
इंद्रप्रस्थेत्रशतशः संतितीर्थानिवैमुने
अन्यस्यापिसमाचक्ष्वमाहात्म्यंयदिविद्यते ३
नारदउवाच-
इंद्रप्रस्थांतरावर्तिन्येषायाद्वारकानृप
अस्यांपुराहियद्वृत्तंतत्तेवच्मिशृणुष्वमे ४

काम्पिल्येऽथद्विजःकश्चितपुष्पेषुर्मूर्तिमानिव
सर्वासांयोषितांचित्तहारीस्यादग्रविभ्रमैः ५
संगीतविद्याकुशलः कोकिलामधुरध्वनिः
एकदासकरेवीणांधारयन्वादयन्मुहुः ६
कंठेनकोकिलालापमधुरेणनराधिप
गायन्बभ्रामनगरेप्रतिरथ्यंमहामतिः ७
तस्यगीतिध्वनिंश्रुत्वामूर्छनातानसंयुतम्
त्वक्त्वास्वगृहकार्याणितमीयुःपौरयोषितः ८
मोहितास्तस्यरूपेणकामवेगंनसेहिरे
जातास्खलितवीर्यास्तागीतं श्रुत्वासमन्ततः ९
ब्रह्मणोमानसंयेनलोभितंभारतींप्रति
शिवस्यार्द्धशरीरंचपार्वत्यैयेनदापितम् १०
ताभ्यामन्योजनोलोकेवशीवाज्ञानवानपि
यःस्मरंतंक्षमोजेतुंस्त्रियःप्रकृतिचंचलाः ११
ताःस्मरावेशमासोढुंनसाध्योपिविषेहिरे
वक्तव्यमितिकिंराजन्लोकेकामोहिदुर्जयः १२
अथतास्तत्रतत्रेयुर्यत्रयत्रव्रजत्यसौ
प्रगायन्कंठवीणाभ्यांप्रगायन्स्वरमोहितः १३
तासांपतिसुतभ्रातृपितरोऽथनराधिप
आगत्यभर्त्सयित्वातानिन्युःस्वान्स्वान्गृहान्प्रति १४
तमन्विष्यपुनस्तास्तुजग्मुःसर्वास्तदंतिके
यदातदापौरजनावृत्तं तत्प्राहुरीश्वरे १५
राजापितंसमाहूयपप्रच्छरहसिद्विजम्
केनमंत्रेणभोविप्रमोहितास्ताःपुरस्त्रियः १६
तन्ममाचक्ष्वविप्रेंद्रदास्यामिबहुतेधनम्
नोचेन्निष्कासयामित्वांनिजराज्यान्नसंशयः १७
नारदउवाच–
श्रुत्वेतिनृपतेर्वाक्यंनृपतिंसद्विजोत्तमः
उवाचसत्यंतस्याग्रेवचोरूपगुणार्णवः १८
द्विजउवाच–

नमंत्रंनौषधंराजन्विद्यतेमयिभित्तुके
किंतुतेनगरेसर्वायोषितोह्यजितेंद्रियाः १९
रूपंममसमालोक्यश्रुत्वागीतध्वनिंतथा
स्मरवेगंसहंतेनराजंस्तवपुरेस्त्रियः २०
किंकरोमिमहाराजकोऽपराधोस्तिमेविभो
पुराकृतमिवोल्लंघ्यंशासनं नमहीपते २१
नारदउवाच-
उशीनरशीबेराजन्नेवंकथयतिद्विजे
सर्वेपौराःसमेत्याथप्रावदन्नितिभूपतिम् २२
पौराऊचुः -
राजन्ननेनविप्रेणमोहिताःपौरयोषितः
गृहेषुनहितिष्ठंतिह्यस्माभिरनिवारिताः २३
यद्ययंमोहनः स्त्रीणांनगरेवत्स्यतिप्रभो
तदादेशांतराण्येवयास्यामोवयमद्यवै
गतोऽस्माकंवृषोदेवोहव्यकव्यक्रियात्मकः २४
तमनुप्रस्थितात्वेत्राद्गौरियंपापिनामिव
विनातंशरणंयातंत्यक्तश्रीभिर्नरेश्वर २५
अथैनमनुयास्यंतिवासिताभिर्वृषंयथा
शून्यालयेकथंलक्ष्मीर्यन्नतोप्यवतिष्ठति २६
धर्मोऽथश्चगृहंचैतत् त्रयंस्त्रीवशगंयतः
कांताधर्मधनाधीनातयोर्नाशेनतिष्ठति २७
नारदउवाच-
एवंवदत्सुपौरेषुस्त्रियस्तेषांसमागताः
राजांतिकउपाविष्टाइत्यूचुस्ताःपरस्परम् २८
पौरस्त्रियऊचुः
कामंवामाकृतिंविप्रमेनंप्राप्यमनांसिनः
उल्लसंतिदिवाधीशंकमलानीववारिणि २९
संकुचंतिविनातेनकुमुदानियथेंदुना
आगच्छंतमिलित्वैनंधारयामोनृपाग्रतः ३०
अवध्योऽयवयंचास्यकिंकरिष्यतिभूपतिः

नारद उवाच-
इत्युक्त्वातास्त्वरावत्योजगृहुस्तंद्विजोत्तमम् ३१
पश्यतांनिजभर्तॄणांराज्ञश्चैवपुरस्तदा
ऊचुश्चैनंमनोनाथगृहानागच्छहृच्छयम् ३२
शमया शुविनाद्यत्वांस्थातुं नैवचशक्नुमः
इत्याकर्ण्यवचस्तासांसविप्रःप्रत्युवाचह ३३
विप्रउवाच-
भवतीनामहंपुत्रोभवत्योमातरोमम
गृहान्किमर्थमुत्सृज्यभवत्यःपर्यटंतिहि ३४
आराधयतनाथान्स्वान्यतोलोकद्वयंध्रुवम्
आराधितेषुपतिषुविष्णुःसर्वसुरेश्वरः ३५
प्रसन्नोभवतित्वत्रप्रसन्नेकिमुदुर्लभम्
यास्त्रीस्वपतिमुत्सृज्यसेवतेऽन्यसुखेच्छया ३६
सापवादमवाप्नोतियातिघोरांचदुर्गतिम्
उषित्वातत्रकल्पांतेयावत्सापतिवंचना ३७
पुनस्तस्माद्विनिर्गत्यस्थावरत्वंप्रपद्यते
तस्मादपिपशुत्वंसालभतेबहुजन्मसु ३८
ततो मुक्तामनुष्यत्वेव्यंगाभवतितत्रसा
एवंपापगतिंज्ञात्वानिवर्तध्वमतोजनात् ३९
नोवायास्यथदेहांतेनरकंभृशदारुणम्
यदिच्छंतिभवंत्योमेसुखंतन्नेहलप्स्यथ
पापमेवहियुष्माकंयतोधःपतनंनृणाम् ४०
नारदउवाच-
श्रुत्वैवंवचनंतस्यदृष्ट्वाभर्तृसुखानिच
लज्जयानम्रमुख्यस्तालतावातहताइव ४१
तासांतुपुरनारीणांस्मराग्निर्भृशदारुणः
शशामतस्यशीतेनबटोर्वचनवारिणा ४२
उत्थायचेलुःसर्वास्ताविनिंदंत्यइतिस्मरम्
ब्रह्मशक्रादिदेवानामपिमोहकरंनृप ४३
स्त्रियऊचुः

धिगिमंपापकर्माणंशीलदारुकुठारकम्
कामवामदृशांप्रीत्यैधन्योयेनहतःस्मरः ४४
किंवदेमजगत्पूज्यांरुक्मिणींजठरेयया
धृतःप्रद्युम्ननाम्नाऽसौराहुःस्त्रीशीलचंद्रभुक् ४५
सदेवाधमत्रायातियदिनोदृष्टगोचरम्
भुयोध्यानकृतेशानदृगग्नौतंह्निपामहे ४६
येनायंजनितःपापोह्यात्मारामेणविष्णुना
कृतःषोडशसाहस्त्रस्त्रीप्रियः काहिनः कथा ४७
एवंविनिंद्यतंकामंतुष्टुवुस्तंद्विजोत्तमम्
शीलंस्वस्यचतासांचरह्नितंयेनभूपते ४८
धन्यासामुष्यजननीययायंब्राह्मणोत्तमः
स्मरजिन्निर्मितोलोकेपरधर्मस्यरक्षकः ४९
धिगस्तुनोराजलोकैर्हसिताःस्मरनिर्जिताः
याभिर्वाक्यमनोभ्यांचजनितंपापमुल्वणम् ५०
नारदउवाच-
एवंविचिंतयंत्यस्ताएक्यमत्ययुताः स्त्रियः
जग्मुःस्वंस्वंगृहंसर्वाद्विजवाक्येनवोधिताः ५१
अथराजापिकांपिल्यस्तंद्विजंवस्त्रभूषणैः
संपूज्यप्रेषयामाससद्गृहेसंयतेंद्रियम् ५२
अथागच्छतिकालेतुकारूषाधिपतिर्बली
कापिल्याधिपतिंसैन्यैर्नगरंरुरुधेतदा ५३
तयोर्युद्धमभूद्धोरंतेनयुद्धेसघातितः
नगरंलुठितंसर्वहताः शूराश्चसर्वशः ५४
तास्त्रियःकालकूटंतुखादित्वामरणंगताः
प्रायश्चित्तंतुनकृतंताभिः पापस्यतस्यतु ५५
येनपापेनताः सर्वाभीषणाख्यस्यरक्षसः
राक्षस्योनगरेजातामहाकायाभयानकाः ५६
तत्रतानिहिताः सर्वाःपुरनार्योहनूमता
यज्ञांश्वरसतोजिष्णोस्तिष्ठतांरथकेतने ५७
पुनस्ताएवराक्षस्योबभूवुर्मारवेध्वनि

क्षुधार्ताश्चतृषार्ताश्चदर्शनेनभयप्रदाः ५८
एएवंतेनतुपापेनवाङ्मनोविहितेनतु
ताभिर्जन्मद्वयंप्राप्तंराक्षसीयोनिमिश्रितम् ५९
पापेननाशितंतासांसनृपंनगरद्वयम्
अतएवनकर्त्तव्यंपरकांतनिषेवणम् ६०
नारीभिःपापभीताभिर्वाङ्गनोभ्यामपिप्रभो
रोगीजडोदरिद्रोवानेत्राभ्यांवर्जितोऽपिवा
नत्याज्यःस्वपतिः स्त्रीभिःइच्छंतीभिस्तुसद्गतिम् ६१
कथितमिदंमयामनोवचोभ्यांजनितमघंचयदन्यकांतभक्त्या
फलमपिचयदेव लब्धमाभिस्तदपिशिबेबहुविस्तरेणतुभ्यम् ६२
इंद्रप्रस्थगतानयेममनघायाद्वारकादृश्यतेतास्तस्याजलबिंदुदेहपतनात्पौरस्त्रियो रेभिरे
स्वर्गंचित्तवचोऽन्यकांतभजनाज्ञातंविमुच्योल्बणंक्रव्यादत्वमवाप्यदेववनिता भावंसुराह्लाददम् ६३

इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
कालिंदीमाहात्म्येद्वारकावर्णनंनाम षष्ठाधिकद्विशततमोऽध्यायः २०६

## सप्ताधिकद्विशततमोऽध्यायः

सौभरिरुवाच-
धर्मात्मजनिशम्यैतद्वचस्तस्यमहात्मनः
नारदस्यशिबीराजाप्रोवाचेदंविनीतवत् १
शिबिरुवाच-
तिष्ठंत्योमरुमार्गेताराक्षस्योमुनिपुंगव
एतस्याद्वारिकायास्तुलेभिरेसलिलं कुतः २
नारदउवाच-
शृणुराजन्कथांदिव्यांपूतांपापप्रणाशिनीम्
विमलाख्यस्यविप्रस्यहिमवद्द्रोणिवासिनः ३
एकस्तुहिमवद्द्रोण्यांविमलोनामभूसुरः
देवर्षिपितृवह्नीनांपूजकोऽतिथिपूजकः ४
हरिपादार्चनरतोवेदवेदांगधर्मवित्

वासुदेवगुणग्रामपुराणश्रुतिमानसः ५
वार्द्धकेतस्यपुत्रोऽभूत्प्रसादाच्चक्रपाणिनः
चकारहरिदत्तेतिनाम्नातंजनकस्तदा ६
विधिवद्विदधेचास्यचौरकर्मादिकंचतत्
गुरोः सकाशाज्जग्राहछंदांसिहरिदत्तकः ७
अधीत्यविधिवद्वेदान्दत्त्वाचगुरुदक्षिणाम्
प्रवव्राजविरक्तः सन्समूलंचाश्रमद्वयम् ८
ज्ञात्वातत्कर्मतन्माताव्यलपत्पुत्रवत्सला
स्नापयंतीकुचद्वंद्वंपुत्रविश्लेषजाश्रुभिः ९
मातोवाच-
मामनाथांपरित्यज्यतातयातोऽसिकुत्रवै
पितरंचजराग्रस्तंषट्पदोबल्वजाविव १०
वार्द्धकेत्वंमयाप्राप्तः श्रीपतेःपादसेवया
मांविहायाभजस्त्वंवैचरणंतस्यमुक्तये ११
अंहमूढाध्रुवंतातध्रुवमाराध्ययद्धरिम्
अध्रुवंवांछितवतीभवन्तंतुसुखलब्धये १२
त्वंसुधीर्वत्ससर्वार्थंयद्विष्णुंभजसेस्वयम्
अध्रुवंजगदेतद्वैमत्वासीस्त्वमपिध्रुवम् १३
किंकरोमिक्वगच्छामिमायाज्ञानंछिनत्तिमे
सुफलोत्पादकंशास्त्रीरंभामूल मिवोल्बणा १४
धन्योदशरथोराजायोमृतोरामशोकतः
धिङ्मांपुत्रस्यविश्लेषाद्धारयंतीस्वजीवितम् १५
आगच्छदर्शनदेहितातमांपरितारय
वदवेदमयींवाणींपितुरग्रेगुणार्णव १६
नारदउवाच-
एवंविलप्यतन्माताराजन्सापतिताभुवि
दलनाद्राहुदत्तानांलेखाचांद्रमसीयथा १७
अथाजगामविप्रर्षिर्विमलोनृपसत्तमः
दृष्ट्वातांपतितांभूमौकिंकिमित्यभ्यभाषत १८
कस्मादियंकीर्णकेशव्यस्तवस्त्रविभूषणा

पतिताभुविकल्याणंहरिदत्तस्यविद्यते १९
तस्यावयस्यास्ताःसर्वाःप्रोचुस्तंविमलंनृप
वयस्याऊचुः –
अधीत्यवेदांस्तेपुत्रोदत्त्वाचगुरुदक्षिणाम् २०
नारायणपरोभूत्वाप्राव्रजद्धरिदत्तकः
तस्यविश्लेषशोकेनपतितेयंधरातले २१
नारदउवाच–
इत्याकर्ण्यवचस्तासांविमलोबुद्धिमत्तरः
प्राबोधयन्निजांभार्यामितिवागमृतेनसः २२
विमलउवाच–
उत्तिष्ठजायेशृणुवाक्यमीरितंमयाकिमर्थंपतिताविषीदसि
धन्यःसुतस्तेयइमंविनश्वरंविज्ञायभेजेहरिपादपल्लवम् २३
धन्यात्वमप्यस्यजनिप्रदायिनीयस्याःसुतस्तेहरिपादभागभूत्
संतारयिष्यत्यपिमामसंशयंकुलंकुलोत्थानपिपूरुषान्शुभे २४
क्वविश्वमेकतच्चपतच्चलंक्वसेवनंशाश्वतलोकदंहरेः
मत्वेतिभेजुर्भरतादयोनृपायथाहरिंसाध्वितथैवतेसुतः २५
दाराधनागारशरीरबांधवाएतेभवंतिप्रतिजन्मदुःखदाः
तावन्नयावद्धरिपादपल्लवंभजेतधीरोऽखिलकामवर्जितः २६
नारदउवाच–
एवंप्रबोधितातेनधीरेणधरणीतलात्
उत्थायनिजभर्तारमब्रवीद्दीनयागिरा २७
भार्योवाच
सर्वंजानाम्यहंकांतयत्त्वयासाधुभाषितम्
कुलधुर्यंनपश्यामियतस्तप्यामिवैभृशम् २८
पुत्रेसतिमहत्तीर्थेकिंवाकेशवसेवया
गृहएवावयोर्मृत्युश्चेत्स्याल्लोकद्वयंतदा २९
सत्पुत्रोत्पादनेयत्नः कर्त्तव्यःखलुमानवैः
तारयंतिपितॄन्पुत्रायतः संसारवारिधेः ३०
स्रष्टारंसर्वजंतूनांधातारंपुत्रकाम्यया
भजवांछसिचेत्पुत्रंकुलधुर्यंमहामते ३१

नारदउवाच-
इत्याकर्ण्यवचस्तस्याः प्रत्याहविमलोद्विजः
ब्रह्मक्षेत्रंप्रयागंहियाम्यहंपुत्रकाम्यया ३२
इत्युक्त्वाचलितः सोऽथहरिद्वारमगाद्द्विजः
स्नात्वातत्रापिविधिवदिंद्रप्रस्थमथागमत् ३३
कतिभिर्वासरैर्वीरसायंकालेऽखिलार्थिदम्
स्नात्वाभुक्त्वानिशायांससुष्वापयमुनातटे ३४
निशीथेस्वपतस्तस्य विमलस्यांतिकेविधिः
हंसमारुह्यदेवेशस्तीर्थैःसर्वैरनुद्रुतः ३५
आगत्योत्थापयामासविमलंपुत्रवांच्छकम्
उवाचचसुरश्रेष्ठोवचनंमधुराक्षरम् ३६
ब्रह्मोवाच-
जानेसमीतिंचित्तंत्वदीयेमनसिस्थितम्
नतत्पूरयितुंकल्पोयतस्तत्कारणंशृणु ३७
एकदामेरुशिखरेमिलिताः सर्वदेवताः
तुष्टुवुर्मद्भवमुखामाधवंकार्यसिद्धये ३८
स्तुतोस्मदादिविबुधैः कृपयाभगवान्हरिः
प्रन्नोभूत्तदाविष्णुर्वृणुध्वमितिचाब्रवीत् ३९
इत्युक्तास्तेनतेदेवायथाभिलषितंवरम्
श्रीपतेःप्राप्यतेजग्मुःसर्वेस्वंस्वंनिकेतनम् ४०
मयोक्तमितिदेवेशदेहिमेवरमुत्तमम्
प्रयागंनाममेक्षेत्रंभवत्वखिलकामदम् ४१
ततःसतगुणंभूयाद्द्वितीयंक्षेत्रकंमम
इंद्रप्रस्थगतंसम्यग्वृत्तंत्वत्तोमयानघ ४२
इत्याकर्ण्यवचोमह्यंभगवानाहमांतदा
तथास्त्वितिपुनर्वाचमुवाचश्रूयतांवचः ४३
श्रीभगवानुवाच
इंद्रस्यखांडवारण्येइंद्रप्रस्थाभिधंशुभम्
क्षेत्रंकलिदजातीरेमत्तुल्यास्तत्रयेमृताः ४४
विरिंचेरचितातत्रस्वकीयाद्वारकापुरी

मयाशतगुणांभोधीतीरस्थायाः पुरागुणैः ४५
तामुल्लंघ्यनरोयस्तुतीर्थमन्यन्निषेव्यते
नतीर्थफलमाप्नोतिसपुमान्नमृषोदितम् ४६
सर्वतीर्थोदितंपुरायंशक्रतीर्थेलभेन्नरः
द्वारकाचपुरीमायातीर्थमन्यच्चरद्वति ४७
योनिमज्ज्यान्यतीर्थेषुकृत्वाचविविधांक्रियाम्
अत्रैष्यतिफलंतेभ्यःफलंप्राप्स्यतिसध्रुवम् ४८
इत्युक्त्वांतर्द्धधेविष्णुरहमप्यगमंस्वकम्
लोकंद्विजेंद्रवैकुंठादधोभागेव्यवस्थितम् ४९
प्रयागान्मामकात्क्षेत्रात्काशीशतगुणास्मृता
काश्याःशतगुणंतीर्थनिगमोद्बोधकंतथा ५०
तीर्थसप्तकमेतत्तुत्रयंतुल्यफलंस्मृतम्
एतत्त्रयमनुल्लंघ्ययोगच्छतिसितासितम् ५१
तस्याहंवांछितंविप्रददामिखलुनान्यथा
केचिदाहुःसप्तपुरीसमपुरायामहर्षयः ५२
अयोध्याद्याः शतंताभ्यइंद्रप्रस्थंप्रचक्षते
त्वमत्रागत्यविप्रेंद्रसर्वकामफलप्रदे ५३
तीर्थेश्रीद्वारकाख्येहिकुरुस्नानंसुतेच्छया
यावंतिसर्वतीर्थानिब्रह्मांडकलशोदरे ५४
तेभ्योपरिमितंपुरायंशतनामनिकीर्तिते
सुतंतेकुलधौरेयंतीर्थमेतत्प्रदास्यति ५५
स्नानाच्चतवगोविंदःप्रसन्नात्माभविष्यति
नारदउवाच-
इत्युक्त्वादेवदेवेशोब्रह्मातत्रतिरोधते ५६
विमलोऽपितदा स्नात्वादेवादीनप्यतर्पयत्
इत्युवाचसधर्मात्माद्वारकेकृष्णवल्लभे ५७
सुतंवंशकरंदेहिमह्यंभक्तायतेनमः
इत्युक्तेतेनविप्रेणदेववागभवत्तदा ५८
देववागुवाच-
पुत्रस्तेधर्म्मतत्वज्ञोवंशकर्त्ताभविष्यति

प्रसादादस्यतीर्थस्यसर्वतीर्थशिरोमणेः ५९
याहिगेहंविलंबंमासुकृतं तेनमज्जनम्
नारदउवाच-
इत्याकर्ण्यसतांवाणींविश्वस्तःपुत्रजन्मनि ६०
चचालजलमादायद्वारकायाः कमंडलौ
मार्गेतस्यसखाविप्रोमलयाचलकेतनः ६१
मीलितश्चलितोगेहंकृत्वातीर्थानिसर्वतः
तस्मैस्ववृत्तमाख्यातंब्रह्मसंवादकात्मकम् ६२
यद्भूतंद्वारकातीर्थेश्रुत्वासोऽपिविसिस्मये
उवाचसचधर्मात्मासखेममवचः शृणु ६३
यावंतिभारतेक्षेत्रेतीर्थानिविहितानिमे
तावंतिकर्तुमिच्छामित्वदुक्तंतीर्थमुत्तमम् ६४
नीत्वामांदर्शयसखेतत्तीर्थंसर्वकामदम्
सखायस्तेवराभूमावुपकुर्वंतियेसखीन् ६५
नतैर्ननुसमोलोकेपितामाताऽथवासुतः
निर्द्धनंपुरुषंलोकेसर्वेमुंचंतिबांधवाः ६६
नमुंचंतिसखायस्तुतस्यदुःखेनदुःखिताः
संसारार्णवनिर्मग्नान्सखीनुद्धरतेसखा ६७
उपदिश्यहरेर्भक्तिमार्गंजन्मेंधनानलम्
अतस्त्वंमेसखाश्रेष्ठउपकारंविधेहिमे ६८
दर्शयैतद्वरश्रेष्ठंतीर्थाख्यंद्वारकांद्विज ६९
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिदीमाहात्म्येसप्ताधिकद्विशततमोऽध्यायः २०७

## अष्टोत्तरद्विशततमोऽध्यायः

नारदउवाच-
विमलस्तंद्विजंनीत्वाद्वारकायामिहागतः
पुनस्तौसस्नतुंधीरौश्रीपतेर्भक्तिकाम्यया
भूयःखेमेघगंभीरावागासीदितिभूपते १
आकाशवागुवाच-

शृणुतंद्विजशार्दूलौहरेस्तीर्थमिदंशुभम्
एतत्तीर्थ प्रसादाद्वांविष्णुभक्तिर्भविष्यति
ययाजहातिलोकोऽयमवविद्यामोहमुल्वणम् २
नारदउवाच-
निशम्येतिद्विजश्रेष्ठौतांवाचमशरीरिणीम्
प्रसादोऽयहरेरासीदित्यूचातेपरस्परराम् ३
स्नात्वातौविधिवत्तत्रलंब्ध्वाभक्तिंहरेः पराम्
चेलतुःप्रणिपत्येदंभाषमाणौमिथस्तदा ४
द्विजावूचतुः
यथावयोर्हिसंयोगः पथिजातो विचारतः
यथागृहकलत्रादिसंयोगोभुविजायते
सांप्रतंविरहोभावीयथानौमार्गवर्तिनौ ५
तथादारसुतादीनांकालव्यास्यवर्तिनाम्
धन्यःसपुरुषोलोकेयोदारसुतसंगमम् ६
विज्ञायक्षणिकंनित्यंसंश्रयेत्श्रीपतिंभजेत्
नारदउवाच-
स्मरणंकरणीयंमेदासोऽहत्वत्पदाश्रयः ७
संदेशःप्रेषणीयोमामित्युक्त्वास्वगृहंगतौ
शृणुराजन्यथातेनमित्रेणविमलस्यतु ८
मोक्षणंराक्षसीनांतुविहितंपथिगच्छया
व्रजन्सब्राह्मणःप्राप्तस्तंदेशंजलवर्जितम् ९
यत्रताःपापविप्लुष्टाराक्षस्यः क्षुत्तृषाकुलाः
अथताः पथिगच्छंतंदूराद्दृष्ट्वाद्विजोत्तमम् १०
सजलामत्रहस्तंतंमिथस्त्वितिबभाषिरे
राक्षस्यऊचुः -
आयातिपथिकःकश्चिज्जलपात्रंकरेदधत् ११
अस्माकंक्षुत्तुषोःशांतिर्मनागपिभविष्यति
एनंसंभक्षयिष्यामः पास्यामोऽस्यकरेस्थितम् १२
पात्रंजलंवयंतृष्णाक्षुधार्ताःशतवर्षतः
नारदउवाच-

काचिदाहेत्यहंपूर्वमस्योष्णांकालखंडकम् १३
भक्षयित्वाततोरक्तंपीत्वायास्यामिजीवितम्
अन्याप्राहकियद्द्रव्यंविद्यतेऽस्यगजानने १४
ममव्याघ्राननायास्तुपानायापिनदृश्यते
अन्यावैरथचक्राख्याश्रूयतांवचनंमम १५
करिष्येकुंडलमहंकेनां त्रैरस्यमेखलाम्
अन्यावददहंदं तैरेकतःश्यामलीकृतैः १६
रमेषोडशभिर्द्यूतशालायांतद्विशारदः
इत्युक्त्वाताः मिथःसर्वास्तंद्विजंप्रतिदुद्रुवुः १७
विवृतास्यालललज्जिह्वाः प्रद्योतैकमहाभुजाः
आयांतीस्ताःसमालोक्यब्राह्मणोभयविह्वलः १८
आत्मानमभितश्चक्रेरक्षांवेदोदितांनृप
ताआगत्यस्थितादूरंराक्षस्योभीमविक्रमाः १९
तेजसातस्यमंत्रैश्चप्रत्यादिष्टानराधिपः
ऊचुश्चकोभवानत्रकुतः प्राप्तोऽसितद्वद २०
त्वद्दर्शनान्मनोऽस्माकंप्रसादमधिगच्छति
त्वत्पादस्पर्शनात्किंनोनविप्रभविताफलम्
अतोमूर्द्धसुनोदेहिस्वकीयंपादपंकजम् २१
नारदउवाच-
इत्याकर्ण्यवचस्तासांजगादहरिदत्तजः
द्विजउवाच-
कृत्वापवित्रतीर्थानिब्राह्मणोऽहसमागतः २२
सांप्रतंपुष्करंयामिभवतीभिःकिमिच्छते
यतस्तत्प्राथ्र्यतांदातुंशक्तोदास्यामिचेत्तदा २३
राक्षस्यऊचुः
येषुतीर्थेषुविप्रेंद्रत्वयास्नातंवदस्वनः
तानिसर्वाणिपुण्यानिमोचयातः कुजन्मनः
अस्मानतितरांतृष्णाक्षुद्भ्यांदारुणदुःखदात् २४
ब्राह्मणउवाच-
अवंतीमाश्रमात्पूर्वमहंहरिपुरीमितः

गतोऽहद्वारकांतस्मात्स्नात्वासोमोद्भवाजले २५
ततःप्राप्तःप्रभासाख्यंतीर्थंनीरधितीरगम्
तस्मात्सेतुनिबंधेऽहस्नातः परमपावने २६
तस्मादहंमहापुरायांकिष्किंधांसमुपागतः
हतोयत्रतुरामेणवालीकपिगणेश्वरः २७
तस्मान्मठंसरस्वत्यानर्मदातीरसंस्थितम्
समागतोऽहयत्रास्तिभारतीसर्वसेविता २८
ततोऽहमावेशंवेणींतांनत्वादक्षिणापथे
शिवकांचीविष्णुकांच्यौदृष्टेतत्रमयापुरौ २९
ययोर्मरणतोजंतुःशिवोविष्णुश्चजायते
ततोऽहमुत्कलंप्राप्तोयत्रास्तिहरिरीश्वरः ३०
चतुर्वर्गप्रदःसाक्षाद्भक्तानामपिकांक्षितम्
तमर्चयित्वाविधिवद्भक्षयित्वानिवेदितम् ३१
प्रसादभूतंतस्यैवगंगासागरसंगमम्
तत्रदेवानृषीन्पितृंस्तर्पयित्वायथाविधि ३२
यत्रगंगाशतमुखीजातातत्राहमागमम्
ततोगयामुपागत्यपिंडान्दत्त्वायथाविधि ३३
पितृभ्यस्तुलसीपुष्पचंदनोदकपूजितान्
कोशलांशरयूंवारिकर्णधारनभस्वता ३४
पवित्रिताखिलजनांस्पर्शनेनाहमागमम्
तत्रास्तिगोप्रताराख्यंतीर्थंत्रिदशदुर्ल्लभम् ३५
तत्रस्नानादिकंकर्मनिशाचर्यःकृतंमया
ततः काशीमहंप्राप्तोराजधानीमुमापतेः ३६
नत्वाविश्वेश्वरंदेबंबिंदुमाधवमेवच
स्नातंमणिकर्णिकायांज्ञानवाप्यांचभक्तितः ३७
त्रिरात्रिमुषितस्तत्रप्रयागंपुनरागमम्
पौषशुक्लचतुर्दश्यांसाक्षाद्यत्रप्रजापतिः ३८
एकस्मिन्माघमासेतुस्नानंकृत्वाऽरुणोदये
पुनस्तस्मात्समायातोनैमिषंगोमतीतटे ३९
यत्रतीर्थानिसर्वाणिवसंतिचस्वमायया

ततोऽहमथुरांप्राप्तोयत्रविश्रांतिसंज्ञकम् ४०
तीर्थंतत्सन्निधौपुरायमसिकुंडाख्यमुत्तमम्
कृष्णगंगाध्रुवाक्रूरकेशिकालीयतीर्थभृत् ४१
यमुनास्तिमहापुरायायत्रसर्वार्थदायिनी
उभयोःकूलयोस्तस्यावनानिद्वादशश्रिया ४२
राजमानानिखेचर्यःसमस्तार्थकराणिच
संतितेषुनरःस्नात्वापीत्वाभूयोनजायते ४३
ततोहमागमंपुरायंहस्तिनापुरमुत्तमम्
यत्रश्रीपतिपादाब्जजातागंगासरिद्वरा ४४
ततोनारायणस्थानंहिमवद्भूमिसंस्थितम्
आगत्यमाधवं दृष्ट्वाकेदारमहमागमम् ४५
तत्रसंपूज्यविश्वेशंपीत्वाहंसोदकंपुनः
हरिद्वारंमहापुरायमागमंजाह्नवीतटे ४६
तत्रस्नात्वापितॄन्देवानृषीन्संतर्प्यचाप्यहम्
समागतः कुरुक्षेत्रयत्रप्राचीसरस्वती ४७
तत्राप्यहंक्रियाःसर्वाःकृतवान्नियतेंद्रियः
अर्चयित्वाचपादाब्जं श्रीपतेः पुष्करंप्रति ४८
चलितोमार्गमध्येतुविमलोनाममेसखा
मिलितोमांव्रजन्गेहमिंद्रप्रस्थात्तुतीर्थतः ४९
नीतोऽहतेनराक्षस्यः पुनस्तत्रद्विजन्मना
तीर्थेतिमेपरावृत्यशक्रप्रस्थेऽखिलार्थदे ५०
तत्रास्तिद्वारकापुरायानिर्मिताविष्णुनास्वयम्
तत्रावलोकितः साक्षाद्विष्णुर्वाक्यान्नरूपतः ५१
तत्राहंसचसंस्नातौविष्णुभक्तिप्रलब्धये
दत्तासाविष्णुनामह्यंतस्मैचकृष्णमूर्तिना ५२
श्रुत्वातत्रहरेर्वाणीनरूपंवैविलोकितम्
भक्तिर्लब्धाततः स्थानाद्यमहंपुष्करंप्रति ५३
तस्यतीर्थाधिपस्येदंद्वारकाख्यस्यवैजलम्
कमंडलुगतंपुरायंनिशाचर्योवदाम्यहम् ५४
भवतीभिरहंपृष्टोयत्तदाख्यातमेवमे

दृष्ट्वावोदुर्दशामेतांकृपामेजायतेहृदि ५५
उच्यतांकिंकरोम्यद्यभवतीनांवशोह्यहम्
ज्ञानंभवतुयुष्माकमितिताः सिषिचेंभसा ५६
तास्तज्जलाभिमर्शात्तुसर्वेषांजन्मकर्मणां
संस्मृत्यतत्यजुश्चैवराक्षसंदेहमुल्वणम् ५७
आसाद्यदेवतादेहंविमानंसप्तमागतम्
आरुह्याप्सरसोभुत्वाताः प्रणेमुर्द्विजन्मने ५८
ऊचुश्चभोद्विजश्रेष्ठद्वारकाजलसंगमात्
राक्षसत्वाद्वयंमुक्तागच्छामस्त्रिदशालयम् ५९
इंद्रप्रस्थांतरावर्तिन्येषायाद्वारकाद्विज
नातःपरतरंलोकेऽन्यत्तीर्थमखिलार्थदम् ६०
नारदउवाच-
इत्युक्त्वाताःसमारूढाविमानेषुमहीपते
जग्मुःप्राचींदिशंतेनदत्ताज्ञावैद्विजन्मना ६१
यमुनातीरवर्तिन्याद्वारकायामहीपते
शृरावन्माहात्म्यमेतस्यानरः पापैःप्रमुच्यते ६२
वेदज्ञानांब्राह्मणानांशतस्येच्छासु भोजनात्
यत्फलंश्रवणादस्मान्महिम्नस्तत्प्रजायते ६३
गोविंदाराधनेसम्यग्यथावैसौख्यमिंद्रियम्
माहात्म्यश्रवणादस्याद्वारकायास्तथानृप ६४
सूर्येंदुग्रहणेदानात्सुवर्णपलविंशतेः
यत्फलंशृरावतैतस्यामाहात्म्यंतदवाप्यते ६५
विमलस्यसुतप्राप्तिंश्रुत्वासुतइहाप्यते
तत्सख्युर्भक्तिलाभंचलभ्यतेभक्तिरुत्तमा ६६
राक्षसीनांविमोक्षंयः शृणोतिश्रद्धयान्वितः
सयातिताइवश्रेष्ठंविमानेनसुरालयम् ६७
नृपवरमहिमातेवर्णितोद्वारकायास्त्रिभुवनजनसेव्याशक्रतीर्थस्थितायाः
किमपरमतिपुरायंवर्णयामित्वदग्रेकथयनहिविधेयः श्रेयसिस्वेविलंबः ६८
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिन्दी
माहात्म्येद्वारकायाख्यानंनामअष्टाधिकद्विशततमोऽध्यायः २०८

## नवधिकद्विशततमोऽध्यायः

युधिष्ठिरउवाच-
सौभरेकस्यतीर्थस्यमाहात्म्यंनारदोमुनिः
वर्णयामासशिबयेशक्रतीर्थगतस्यच १
अतस्तुममशुश्रूषाजायतेमुनिपुगवः
शिविनारदसंवादब्रूहिपुण्यंनतायमे २
सौभरिरुवाच-
धर्मराजशिबीराजाश्रुत्वानारदवर्णितम्
द्वारकायास्तुमाहात्म्यंतमेवापृच्छदादरात् ३
शिबिरुवाच-
ब्रह्मांगजसुरश्रेष्ठश्रुतंमाहात्म्यमुत्तमम्
इंद्रप्रस्थतटस्थायाद्वारकायामयाद्भुतम् ४
अयोध्यायांयदिमुनेकिंचिदस्तिपवित्रकम्
चरितंममतद्ब्रूहिपिपासोस्त्वद्वचोऽमृतम् ५
नारदउवाच-
अस्त्यत्रचरितंपुण्यंमहापातकनाशनम्
नापितस्याद्ययुक्तस्यमुकुंदस्यद्विजस्यच ६
ब्रह्महानापितोराजन्नपमृत्युंगतोद्विजः
प्रसादात्कोशलायास्तुद्वावपिस्वर्गतिंगतौ ७
चंद्रभागानदीतीरेपुरीसाचनिवेशिता
तत्रास्तिनापितः पापश्चंडकोनामगर्हितः ८
चौर्येणपरवित्तानामपहर्तासपापकृत्
घातकःशस्त्रपाशाद्यैः पांथानामवलुंठकः ९
द्यूतमद्यरतोनित्यंपरस्त्रीलंपटेंद्रियः
भित्वादेवालयंभित्तिमिष्टिकाग्राववविक्रयी १०
सतस्योद्वसिताभ्यासेब्राह्मणोवसतिश्रिया
संयुक्तोब्रह्मकर्मज्ञोमुकुंदोनामतोनृप ११
सएकदासमालिग्यतरुणीमात्मयोषितम्
सुष्वापसुरतायासश्लथांगोनिशिनिर्भयम् १२
सचंडकोनिशीथेऽथप्रविवेशतदालयम्

मुकुंदस्यसमाहर्तुंहर्म्येभूषादिवस्तुयत् १३
उपकार्याबहिस्थंयत्तद्गृहीत्वोऽगमद्गृहम्
स्वकीयंचपुनस्तस्यब्राह्मणस्याविशद्गृहम् १४
कपाटोत्पाटनार्थीतुयत्नेनमहताऽभवत्
लोहयंत्रावरुद्धश्चसनोद्धाटयितुंन्नमः १५
आरुरोहतदातस्यब्राह्मणस्याविशद्गृहम्
प्रविश्यतद्गृहंक्रूरःकृपणंपाणिनादधत् १६
अट्टालिकांसपापिष्ठोनापितस्तस्करक्रियः
तत्रापश्यत्प्रसुप्तौतौदंपतीरतिविह्वलौ १७
जगामचतयोःपार्श्वेहेमभूषाजिघृन्नया
शय्यायाएकदेशस्थंगृहीत्वाभूषणंबहु १८
हर्तुंतदंगतोहस्तंप्रससारस नापितः
तस्करस्पर्शतोविप्रोजजागारभयातुरः १९
नकिंचिदूचेसंमील्यनेत्रेतत्रैवसंस्थितः
यदासतस्करःपापोगृहीत्वादेहभूषणम् २०
चलितः सतदातेनदोर्भ्यामात्तोद्विजेनहि
पश्चादागत्यवित्तस्यासहमानेनसंन्नयम् २१
तेनापिनृपचौरेणकृपाणेनहतोद्विजः
विदीर्णोदरमध्यस्तुतातमातरितीरयन् २२
वदंतःकिंकिमेत्येतत्पार्श्वंतस्याययुर्जनाः
ददृशुस्तंनिः सृतांत्रंरुधिरालिप्तविग्रहम् २३
पप्रच्छुश्चमुकुंदेदंकर्मकेनेदृशंकृतम्
सोऽपिकृच्छ्रेणमहताप्रोवाचेदंस्वबांधवान् २४
मुकुंदउवाच–
ममैवपरिपाकोऽयपूर्वोपार्जितकर्मणाम्
नकश्चित्सुखदुःखस्यदाताकस्यापिदेहिनः २५
धर्मोऽधर्मश्चतावेवतेषांमूलंपुराकृतौ
नारदउवाच–
इत्युक्त्वासतुभूयस्यापीडयागाढपीडितः २६
तत्याजभूपतेप्राणान्पश्यतांसुहृदांतदा

विललापतदातस्यमाताद्विजसतीनृप २७
निधायतच्छिरःस्वांकेकुंडलाभ्यामलंकृतम्
मातोवाच-
हाहतास्मित्वयावत्सदशामंत्यांचगच्छता २८
दिंनश्रीरिवसूर्येणपश्चिमाचललंबिना
यदंगंचंदनालेपयोग्यंतवमहामते २९
मांमज्ञयार्तिशोकाब्धौतदिदंधुलिधूसरम् ३०
तांबूलचर्वणेभ्यासोयस्त्वयाविहितस्त्वसौ
सएवरुधिरोद्गारमिश्रेणक्रियतेध्रुवम्
तवयेलोचनेपूर्वंजिग्यतुः कमलश्रियम् ३१
तएवसांप्रतंजातेतिमिरौघावृतेइव
उत्तिष्ठोत्तिष्ठवत्सत्वंशिष्यानध्यापयात्मनः ३२
यथावद्वैश्वदेवांतेपूजयातिथिमागतम्
द्वारिस्थितावयस्यास्तेत्वाह्वयंतिप्रयाहितान् ३३
दातव्यंयद्ददस्वैभ्योगृहीतव्यंगृहाणतत्
हाहादेहिप्रतिवचः पतामितवपादयोः ३४
नोचेदहंविमोक्ष्यामिप्राणांस्तवसमीपतः
नारद उवाच-
इत्युक्त्वामूर्छितातस्यमुकुंदस्यप्रसूस्तदा ३५
भार्यातस्यशिरःस्वांकेविधायव्यलपच्चसा
भार्योवाच-
नाममार्गेण पाथोधेमदीयंवचनंशृणु ३६
रुष्टोऽसिचेत्समंमात्राकुतोवदममाग्रतः
नकदाचित्त्वयासाधोमौनमीदृक्कृतंपुरा
केनापिलघुनाभ्रात्राह्यपमानः कृतस्तव ३७
शुकोऽयपंजरस्थस्तेनान्नमत्तित्वया विना
भोजयैनंसुसिद्धान्नंकलवाचंचसारिकाम् ३८
रामरामहरेकृष्णविष्णोनामावलीमिति
पाठयोत्तिष्ठनिपुणौद्वावेतौसारिकाशुकौ ३९
अपराद्धंमयाकिंतेयत्वंमांनाभिभाषसे

यत्त्वयामेधनंदत्तंतन्मयासाधुरच्चिणम् ४०
अर्पितंयत्त्वयानाथनिजतेजोममोदरे
सूतिकालमहंतस्य नोपेच्चेत्वामनुव्रजे ४१
नारदउवाच-
एवंविलप्यसातस्यमुकुंदस्यप्रियातदा
नरुरोदस्वभर्तारमनुगंतुमनासती ४२
अथतस्यमुकुंदस्यगुरुर्वेदायनाभिधः
संन्यासीपर्यटन्पृथ्वय्चांतस्यवेश्मययौनृप ४३
मुकुंदःक्वगतोमाताभार्यातस्यचधीमतः
नदृश्यतेतदातेनपृष्टेत्याचष्टचेटिका ४४
चेटिकोवाच
स्वामिन्केनापिचौरेणममस्वामीहतोनिशि
स्नुषायाभूषणंनीतंदुकूलानिचसर्वशः ४५
समृतः पतितोभूमौहर्म्यस्योपरितिष्ठति
तस्यमातावधूश्चैवभ्रातरश्चतदंतिके ४६
विलपंतिमहाशोकसागरेपतितागुरो
नारदउवाच-
इत्याकर्ण्यपरिव्राट्सवचनंचेटिकोदितम् ४७
आरुह्यहर्म्यमद्राच्चीदात्मांतेवासिनंमृतम्
तदंतिकेसमालोक्यबंधूनांक्रंदतोभृशम् ४८
उद्धरिष्यन्निदंधीरः शोकाब्धेस्तानुवाचह
वेदायनउवाच-
देहमुद्दिश्यवात्मानंशोकोऽयक्रियतेत्वया ४९
मातःकथयसत्यंमेनोभयोर्युज्यतेहिसः
देहोऽयभूतसंघातः प्रारब्धेःसमुपार्जितः ५०
तेषुच्चीणेषुभूतानांपृथक्त्वमुपजायते
यदेकीभवनंतेषांकर्मभिर्जन्मतन्नृणाम् ५१
तन्नाशेतत्पृथक्त्वंचतदेवमरणंस्मृतम्
एक्यंपृथक्त्वंभूतानांकर्माधोनेयतोबुधैः ५२
अतोदेहेनकर्तव्यः शोकः परवशेजडे

अनाद्यविद्ययाजीवेदृष्टेमरणजन्मनी ५३
देहस्यात्मन्यहबुंद्ध्यामन्यतेनहितत्रते
तन्निवृत्तौसतद्ब्रह्मयच्छुद्धंरूपवर्जितम् ५४
स्वप्रकाशंजगद्धेतुहेत्वतीतंगुणोर्जितम्
नित्यंविज्ञानमानंदस्वभासाभासयज्जगत् ५५
नजिह्वालेढितच्चक्षुर्नपश्यति शृणोतिन
श्रुतिर्जिघ्रतिनघ्राणंनत्वक्स्पृशतिकर्हिचित् ५६
अतीतमिंद्रियेभ्यस्तत्स्वप्रकाशकमात्मदृक्
अविषयंमनोदूरंबुद्धेरपिनगोचरम् ५७
तस्यावताररूपाणिशुद्धसत्वानिदेवताः
सेवंतेतन्नजानंतिरूपंयत्सदसत्परम् ५८
एवंस्वरूपमात्मायस्तंसमुद्दिश्यकःकुधीः
क्रोधंकुर्याद्यतस्तस्यनोत्पत्तिर्नैवसंक्षयः ५९
इतिश्रीपाद्मेमहापुराणेपचंपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिदीमाहात्म्येनवाधिकद्विशततमोऽध्यायः २०९

दशाधिकद्विशततमोऽध्यायः

नारदउवाच-
एएवंप्रबोध्यतान्सर्वान्वचोभिः पारमार्थिकैः
सहंसः कारयामासक्रियास्तस्यात्मसंभवाः १
अंतर्वत्नीमुकुंदस्यनिर्बंधंकुर्वतीवधूः
अनुगंतुंस्वभर्तारंविदुषातेनवारिता २
तस्यास्थीनिसमादायतेनसन्यासिनासमम्
तद्भ्राताप्रययौगंगाजलेपातयितुंनृप ३
विप्रसन्यासिनौतौहिकतिभिर्वासरैर्नृप
सार्थलोकवशात्प्राप्तौइंद्रप्रस्थेऽत्रसत्पदे ४
इंद्रप्रस्थांतरावर्तिन्येषायाकोशलानृप
अत्रसुप्तौनिशायांतौयमुनातीरभूतले ५
आत्मनोरुभयोर्मध्येन्यस्यास्थिपटसंपुटम्
मार्गखेदपरिक्रांतौदशांसौषुप्तिकींगतौ ६

निशीथेऽथप्रसुप्तेषुसार्थलोकेषुकश्चन
एकःश्वातत्रसंप्राप्तः पक्वान्नादिजिहीर्षया ७
बभ्रामसर्वशिविरेजिघ्रन्पाकस्थलद्यंमुहुः
भाजनानिलिहन्मूर्ध्निक्वचदंडाहतिंसहन् ८
केनचित्ताडितोमूर्ध्निनिशब्दंविद्रुतस्ततः
प्रतिचक्रुमशक्तस्तुस्त्रीजितः स्वस्त्रियायथा ६
यत्रावकंडितः सश्वादंडग्रावेष्टकादिभिः
पुनर्विवेशतत्रैवसान्नपात्रलिलिप्सया १०
भोगेच्छयायथावेश्यास्नेहवान्निर्द्धनोजनः
भ्रमन्नेवंसचात्रापियत्रसुप्तौहिताबुभौ ११
सारमेयस्तयोर्मध्याञ्जह्रेसपटसंपुटम्
नीत्वासकियतींभूमिंदंतैस्तत्पटसंपुटम् १२
विदार्यास्थीनितत्स्थानिनिर्मांसान्यवलोक्यसः
एतस्याः कोशलायास्तुजलमध्येसमाक्षिपत् १३
क्षिप्तमात्रेषुतेनास्थिष्वेतदंबुनिभूपते
दिव्यंविमानमास्थाय मुकुंदोऽत्रसमागतः १४
दृष्ट्वागुर्वनुजौसुप्तौशनैः प्राबोधयत्तदा
उवाचचनमस्कृत्यगुरुंदिव्याकृतिर्नृप १५
मुकुंदउवाच
वेदायनगुरोतुभ्यंनमश्राशीस्तवानुज
प्रासादाद्वांममास्थीनितीर्थेऽत्रपतितानिवै १६
अयंमृत्युमहंगत्वानिरयंप्राप्यतत्फलम्
एतत्तीर्थप्रसादेनदैवीलब्धामयागतिः १७
त्वांगुरुंतीर्थभूतंतुनमस्कर्तुमिहागतः
अहंगच्छन्विमानेनदिव्येनत्रिदशालयम् १८
नमस्कृतोभवानेतत्तीर्थचायंसहो दरः
दृष्टोमामनुजानीहियामिस्वर्गंसुखोदयम् १६
नारदउवाच–
श्रुत्वैवंवचनंतस्यमुकुंदस्यगुरुस्तदा
वेदायनोविमानस्थंतमूचे गतविस्मयः २०

देवायनउवाच-
मुकुंदाख्याहिमेसत्यंलब्ध्वायन्मरणंभवान्
कस्मिंल्लोकेगतस्तातयतोयात्यधुनादिवम् २१
किंवृत्तंतत्रतेतातत्स्यलोकस्यकोऽधिपः
कीदृशीचप्रजाकीदृक्धर्मस्तत्राखिलंवद २२
मुकुंदउवाच-
कथयामिगुरोतुभ्यंयद्बृत्तंमरणादनु
तीर्थस्यास्यप्रसादेनस्मृतिर्मेजायतेऽधुना २३
यदाहंतेननिहतश्चंडकेनदुरात्मना
नापितेनतदाजग्मुर्यमभृत्याः सुदारुणाः २४
पिंगाक्षारक्तकेशाश्चश्यामदेहनखाधराः
वामनादीर्घचरणाह्रस्वनासाश्चदंतुराः २५
नीयतांनीयतामेषधर्मराजस्यशासनात्
पुरींसंयमनीमेवमूचिरेतेपरस्परम् २६
इत्युक्त्वायातनादेहेमांनिवेश्यमहारुषा
निबध्यदारुणैःपाशैर्जघ्नुर्लोहस्यमुद्गरैः २७
तैरहंनीयमानस्तुमार्गेह्युत्तप्तवालुके
अरुदंभृशदुःखार्तस्ताडितोऽहपुनश्चतैः २८
प्रोचुश्चतेध्रुवंकृत्वानिर्भर्त्स्येतिचमांबहु
यमदूताऊचुः
त्वयालुप्तोगुरुर्यस्माद्वदताब्रह्मनिश्चलम् २९
किंकरोषियमस्याग्रेद्रष्टव्यंदारुणंमुखम्
तस्यपापस्यभोक्तव्यंदारुणस्यफलंत्वया ३०
तेनैवपाप्मनापापिन्नपमृत्युंगतोभवान्
इत्युक्त्वामांमुहूर्तेनबहुयोजनसंस्थिताम् ३१
पुरींसंयमनींनिन्युर्यत्रराजास्वयंयमः
प्रणम्यधर्मराजानंस्थापयित्वातुमांपुरः ३२
आनीतोऽयद्विजःपापइतिमांतेन्यवेदयन्
दृष्ट्वामांधर्मराजोऽथप्रोवाचस्वसभासदः ३३
यमउवाच-

भोसभ्यामामकींवाचंशृरावंतुसुसमाहिताः
यदाहंब्रह्मणाह्यस्मिन्नधिकारेनिवेशितः ३४
तदामामित्युवाचासौब्रह्मालोकपितामहः
ब्रह्मोवाच-
अधर्मिणांनराणांत्वंशास्तासंयमनीपतिः ३५
यथापराधमाधत्स्वदंडंचंडकरात्मज
पित्रोरपोषकोयस्तुसमर्थोगुरुध्रुक्तुयः
एतौमहापातकिनौनिपात्यौनिरयेषुते ३६
सर्वेषुयावद्वर्षाणांप्रत्येकमयुतंभवेत्
एतयोर्नत्वयाकार्यादयाजातुककुप्पते ३७
यमउवाच-
इत्यहंब्रह्मणोवाक्यात्स्वगुरुद्रुहिमानवे
नकरोमिक्रियांसभ्यास्तथापित्रोरपोषके ३८
ब्राह्मणोऽयगुरुद्रोहीतद्रोहादपमृत्युताम्
प्राप्तोमच्छासनाद्भृत्यैरानीतोदर्शनान्मम: ३९
भोभृत्याः प्रथमंघोरेरौरवेवत्सरायुते
पात्यतांचपुनस्तस्मान्निःसार्य्यान्यत्रपात्यताम् ४०
तावंतमेवकालंवैपापोऽयगुरुलोपकः
नरकेष्वितिसर्वेषुयथाकालंस्थितंद्रुतम् ४१
मुकुंदउवाच-
वेदायनगुरोस्वामिन्भृत्यास्तेयमशासनात्
नीत्वामांरौरवेघोरेपाशैर्बध्वान्यपातयन् ४२
तत्राहंतांव्यथांगुर्वीलब्धवानतिदारुणाम्
यथाकोऽपिन्नणस्तातनीतोमेयुगवत्तदा ४३
त्रिंशद्दिनानितन्नीतंदुःखंमेतत्रतिष्ठता
एकत्रिंशतमेह्यस्मिन्दिनेऽहनिर्गतस्तदा ४४
पतितेष्वस्थिखंडेषुतीर्थेऽस्मिन्नुतमोत्तमे
गुरुलोपोद्भवंपापंसद्योनष्टंममाभवत ४५
तीर्थस्यास्यप्रसादेनलब्धाचस्वर्गतिर्मया
सुखंस्वर्गेनिवत्स्यामियावदिंद्राश्चतुर्दश ४६

यमस्यनगरेतस्मिन्याःप्रजानिवसंतिवै
पापिनांभयदायिन्योधर्मिणांतामनोहराः ४७
सिंहास्यागजकोलास्यामहादंष्ट्रोन्नतोदरीः
बिडालास्याः पिंगकेश्योभामिन्योदीर्घपत्कराः ४८
तीर्थस्यास्यप्रसादेननिःपापोहंयदाभवम्
तदामयाप्रजादृष्टादिव्यरूपायमालये ४९
सर्वास्ताः सत्यवादिन्योविनयाचारसंचिताः
दिव्याभरणधारिण्योदिव्यांबरविभूषिताः ५०
इत्येतत्कथितंतातयत्पृष्टोऽहत्वयानघ
अनुजानीहिमांगंतुममरेशपुरींप्रति ५१
नारदउवाच-
इत्याकर्ण्यससन्यासीस्वशिष्योक्तंवचस्तदा
भूयःपप्रच्छधर्मात्मामुकुंदंतंद्विजंनृप ५२
वेदायनउवाच-
बाल्यावधिगुरुस्नेहंमत्तोऽधीतंत्वयाखिलम्
शब्दशास्त्रसमेतश्चवेदस्तुसपदक्रमः ५३
विहितामम शुश्रूषाभावेनभवतोत्तमा
त्वयिसंतिसतांसाधोगुणाःशमदमादयः ५४
गुरुलोपकृतंपापंकथंतेसमजायत
एतदाख्याहिमेतातयथाजानामितत्वतः ५५
मुकुंदउवाच-
जन्मोपवीतकन्यानांधातारोनिगमस्यच
यज्ञोपवीतदातुश्चनाज्ञाभंगःकृतोमया ५६
श्वश्रुश्वशुरयोःसेवाभृत्येनेवकृतामया
तवापिशास्त्रदातुश्चनाज्ञाभंगःकृतोमया ५७
पुरोधायःकुलाचार्योवेदवेदांतपारगः
तस्यापराद्धंकेचिन्मेतत्रत्वंश्रोतुमर्हसि ५८
यद्यस्माकंकुलेपुत्रोजायतेधर्मकोविद
तदापुरोधसेधेनुमेकांवातस्यदक्षिणाम् ५९
दत्त्वासंच्छिद्यतेनालमितिवंशस्यनः स्थितिः

पुराममैवपुत्रेतुजातमात्रेशुभेऽहनि ६०
कुलक्रियामयातातनकृतामूढबुद्धिना
तस्याश्चाकरणेनैवगुरुलोपकरोऽभवम् ६१
निवेदितमिदंसर्वंगुरुलोपाद्यथामम
पापमासीदनुज्ञामेदेहियामि सुरालयम् ६२
वेदायनउवाच-
इंद्रप्रस्थांतरावर्तिन्येषांयाकोशलाशुभा
स्मृतिरस्याःप्रसादेनदृश्यतेपूर्वजन्मनः ६३
केनपुरायेनतीर्थेऽस्मिन्नस्थीनिपतितानिते
मुकुंदाख्याहिचैतस्यस्मृतिरस्तितवानघ ६४
मुकुंदउवाच-
एकस्तुब्राह्मणःकश्चित्सायंमद्गृहमागतः
तस्मैस्थानंमयादत्तंभोजनंचयथाविधि ६५
सोऽपिभुक्त्वायथाकामंसुष्वापशयनेशुभे
निशीथेतस्यसर्वांगेज्वरोऽभूदतिदारुणः ६६
तेनपीडितसर्वांगोनिद्रांलेभेनसद्विजः
प्रभातएवतत्याजप्राणान्मृत्यावुपस्थिते ६७
तस्यदाहादिकर्माणिविहितानिमयागुरो
तदस्थीनिचगंगायांपातितानिविधानतः ६८
तेनपुरायेनमेस्थीनिपतितानिशिवप्रदे
तीर्थेऽस्मिन्कोशलेनाम्निब्रह्मदेवविनिर्मिते ६९
नारदउवाच-
स्वचरितमितिराजन्सद्विजः प्रोच्यसद्यःसुरसुभगशरीरोद्यांययौयानगत्या
इदमकथितमयातंतस्करात्प्राप्यमृत्युंव्यलभतदिवमेतत्तीर्थराजप्रसादात् ७०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिदी
माहात्म्येमुकुंदोपाख्यानेदशाधिकद्विशततमोऽध्यायः २१०

एकादशधिकद्विशततमोऽध्यायः

नारदउवाच-
शिवेतवपुरःसर्वंमुकुंदाख्यानमुत्तमम्

कथितंचंडकस्यापिनापितस्य शृणुष्वमे १
यस्मिन्दिनेमुकुंदस्तुब्राह्मणस्तेनघातितः
चंडकेनतदाराजंस्तद्वृत्तंनागरैः श्रुतम् २
श्रुत्वातैस्तन्नृपस्याग्रेनिवेदितमितिस्फुटम्
नागराऊचुः
चंडकेनहतो राजन्मुकुंदोब्राह्मणोत्तमः ३
नीतंचतद्धनंभूरियद्युक्तंतद्विधीयताम्
त्वमस्माकंप्रजानांहिरक्षकःशासकोऽसताम् ४
नारदउवाच-
इत्याकर्ण्यसभूपालोमंत्रिणंपार्श्ववर्तिनम्
उवाचकोपरक्ताक्षःकिमेभिःकथ्यतेशृणु ५
शीघ्रमानयतंपापंनोचेत्त्वांघातयाम्यहम्
उत्तिष्ठोत्तिष्ठपापिष्ठसाधूनांशंबिधीयताम् ६
पीड्यंतेविषयेयस्यप्रजादस्युभिरुल्बणैः
सनृपोनरकंयातितेभ्यस्ताश्चेन्नरक्षति ७
नारदउवाच-
निशम्येतिवचोराज्ञःसचिवःसशिवेनृपः
वेगेनहयमारुह्यपदातिशतसंयुतः ८
ययौगृहेमुकुंदस्यतस्यबंधूनपृच्छत
मुकुंदःकेननिहतःसत्यंब्रूतममाग्रतः ९
तंपापंनिहनिष्यामिशासनाद्भूपतेरहम्
नारदउवाच-
श्रुत्वेतिमंत्रिणोवाक्यंप्रत्यूचुर्विप्रबांधवाः १०
विप्रबांधवाऊचुः -
चंडकेनहतोमंत्रिन्मुकुंदोनापितेनहि
इदंपलायमानस्यतस्योष्णीषंपपातवै ११
दृष्टःस्वचक्षुषावध्वामुकुंदस्यैव सोघकृत्
किंकुर्मस्तेनापापेनमज्जिताःशोकसागरे १२
नारदउवाच -
इत्याकर्ण्यवचस्तेषांबंधूनांब्राह्मणस्यहि

समंत्रीतस्यपापस्यनापितस्यगृहंययौ १३
अश्वादुत्तीर्यतरसातद्गृहंस्वयमाविशत्
कतिभिःपत्तिभिः सार्द्धंशयानचददर्शह १४
पत्तयस्तुतदाज्ञप्ताः केशेष्वाकृष्यतत्क्षणात्
तल्पादुत्थापयामासुस्तंपापंनापिताधमम् १५
किंकिमित्येवसंजल्पन्नेत्रेउन्मीलयत्यसौ
यावत्सनापितः पापस्तावत्तंददृशे पुरः १६
संस्मरंतंनिजंकर्मरात्रौयत्कृतवानघम्
अधोमुखःक्षणंतस्थौपश्यन्मूर्घ्निस्थितंयमम् १७
ग्राहयित्वाचसचिवस्तंपापंचस्वपत्तिभिः
निनायनृपतेःपार्श्वमितिचोवाचभूपतिम् १८
आनीतोब्रह्महारजन्नयंचंडकनापितः
यदाज्ञापयसिस्वामिंस्तरसातत्करोम्यहम् १९
राजोवाच-
धर्मज्ञसचिवश्रेष्ठंशृणुत्वंवचनंमम
इयंसरिद्वरायुष्मंश्चंद्रभागात्रनिर्मलाः २०
त्यजंतियेऽत्रवैप्राणाल्लँभंतेतेसुरास्पदम्
अतएषनहंतव्यः पापात्माह्यत्रनापितः २१
पंचकोशांतरेह्यस्यामर्यादायाबहिर्यदि
नरकान्दारुणान्ह्येषब्रह्महायातुमाचिरम् २२
नारदवाच-
इत्युक्तस्तेनवैराज्ञासराजन्मंत्रिसत्तमः
श्वपचान्प्रेरयामासहंतुंतंभूपशासनात् २३
श्वपचास्तेतमुन्नीयचंद्रभागापरेतटे
योजनद्वयभूभागंचिच्छिदुस्तस्यमस्तकम् २४
सपापोमारवेदेशेसर्पोऽभूत्कालविग्रहः
धवकोटरमध्यस्थोविषज्वालाकराननः २५
सशुष्कोधववृक्षस्तुतस्यफूत्कारवह्निना
तथातपनतापेनसरसोऽपियथाह्रदः २६
गमनात्तस्यपापस्यसर्वतोवृक्षमूषरम्

उच्छिद्यतृणजातादिजातंपश्वहितं तदा २७
तत्रजातुसमायातः सार्थोदक्षिणदेशतः
नारायणाश्रमंगच्छन्बदर्याख्यंसिवेनृप २८
तत्रैकोब्राह्मणः कश्चित्सार्थेसंमीलितः पथि
निश्छिद्रांकाष्ठमंजूषांपितृमात्रस्थिसंयुताम् २९
स्कंधेनधारयन्यातितानिपातयितुंनृप
गंगांभसिमहाभागपापिनामपिकामदे ३०
सोऽप्यागतस्तत्रवनेयत्रास्तिसभुजंगमः
विविक्तेक्षिप्यमंजूषांशलाकालोहनिर्मिताम् ३१
अथागत्यभुजंगोऽसौशलाकांफणयाघटत्
किंचिदुद्घाटितायांसमंजूषायांसमाविशत् ३२
पुनःशलाकास्वंस्थानमागताथसकुंडली
तत्रैवतस्थौनिश्चेष्टोमंजूषायांविषोल्बणः ३३
अथप्रभातेसंर्वेतेचेलुः स्थानात्ततोनृप
ब्राह्मणःसोऽपिमंजूषांकंबलेनसमावृताम् ३४
कृत्वाशिरसिराजेंद्रचचालप्रतिजाह्नवीम्
कतिभिर्वासरैः सार्थःसंप्राप्तस्तीर्थगामिनाम् ३५
इहैवकोशलायांवैपुनीतायांमहीपते
अथशीतातुरोविप्रःकंबलंचोदघाटयत् ३६
मंजूषावरणंराजन्तत्रायोध्यातटेशुभे
सोऽपिसर्पोनिराहारोलब्ध्वामारुतभोजनम् ३७
निश्चक्रामबहिस्तस्मादुत्क्षेप्यसुशलाकिकाम्
तंनिःसृतंसमालोक्यसर्प्पसर्पइतिक्रुधा३८
व्याहरंतोजनाःसर्वेलोष्टहस्ताःसमभ्ययुः
यावत्पलायतेसर्पस्तावदेकेनघातितः ३९
तत्याजसतदाप्राणान्पश्यतांतीर्थगामिनाम्
त्यक्त्वाभुजंगदेहंसदेवत्वंप्रापदुर्लभम् ४०
दिव्यंविमानमारुह्यप्रोवाचेदंजनानिह
सर्पउवाच-
भोदाक्षिणात्याःशृणुतब्राह्मणावचनंमम ४१

पुराचंडकनमाहंनापितोब्रह्महाधमः
ब्रह्महत्याप्रदोषेणसर्पत्रासंमरुस्थले ४२
भुक्त्वानरकदुःखानिवर्षाणांलक्षपंचकम्
अतीतंसर्पयोनौमेवर्षाणामयुतद्वयम् ४३
तीर्थस्यास्यप्रसादेनप्राप्तंदेवत्वमुत्तमम्
तस्मादिदंनवैत्याज्यंतीर्थंवैकोशलाभिधम्
सर्वार्थदंयतोनाकःप्राप्तःपापीयसामया ४४
नारदउवाच-
एवंसनापितः पापोयोनिंप्राप्यविनिंदिताम्
जगामद्यांविमानस्थस्तीर्थस्यास्यप्रसादतः ४५
तेदाक्षिणात्यायतयोभुत्वातत्रैवतीर्थके
ऊषुर्गोविंदपादाब्जमानसादृष्टवैभवे ४६
माहात्म्यमस्यतीर्थस्यदृष्ट्वासब्राह्मणोत्तमः
तीर्थेऽत्रजातविश्रद्धः पित्रोरस्थीनिसोऽक्षिपत् ४७
पतितेष्वस्थिखंडेषुपितरौतस्यतत्क्षणात्
विमानवरमारूढौदिव्यौतत्रसमागतौ ४८
ऊचतुश्चस्वतनयंशृरावानेषुजनेषुवै
वत्सजीवचिरंलोकेधनधान्यसुखीभव ४९
आवयोर्मुक्तिदानाच्चमुक्तिंयास्यसिनोमृषा
गंगायांपिंडदानेनयत्फलंस्यात्सुतस्यवै
पितृणांयागतिश्चात्रद्वयंस्यादस्थिपाततः ५०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
कालिदीमाहात्म्येमुकुंदोपाख्यानंनामैकादशाधिकद्विशतमोध्यायः २११

## द्वादशाधिकद्विशततमोऽध्यायः

नारदउवाच-
इत्युक्त्वातस्यविप्रस्यपितरौदिव्यरूपिणौ
विमानवरमारुह्यगतौहरिपुरप्रति १
तयोः पुत्रस्तुतत्रैवकोशलायांदिनत्रयम्
उषित्वास्वगृहंप्रायात्चितयंस्तीर्थवैभवम् २

इयमेवतुकथ्यंते विबुधैः कोशलानृप
कथयिष्यामितत्तेऽहश्रवणोत्सुकचेतसे ३
तेदाक्षिणात्याबटवस्तस्यामूषुमुमूर्षवः
समर्थार्थप्रदायिन्यांकोशलायांविपद्यताम् ४
कश्चिदेकस्तदातेषुतामनादृत्यकोशलाम्
गच्छन्नारायणस्थानंविष्णुनावारितःपथि ५
बृद्धब्राह्मणरूपेणप्रोक्तंचेतिद्विजंप्रति
बृद्धब्राह्मणउवाच-
क्वयासिब्राह्मणश्रेष्ठत्यक्त्वेमांकोशलांशुभाम् ६
इंद्रप्रस्थमिदंतीर्थंसर्वतीर्थोत्तमंद्विज
कोशलाह्यत्रपुत्रेयंमुक्तिदाविष्णुवल्लभा ७
यत्रयासिविहायैनांनिष्कामपददायिनीम्
नसिद्धिर्भवितातत्रविष्णुस्तेचपराङ्मुखः ८
मुक्तिंचेदिच्छसेविप्रतीर्थेन्यासंप्रगृह्यच
यस्ययस्येच्छयास्नासितंतंवर्गंप्रदास्यति ९
तवदृष्टिपथेविप्रसर्पोऽपिसुरतामियात्
अस्याःप्रसादतोमुक्तौस्वर्गस्थौविप्रदंपती १०
संजातप्रत्ययोऽपित्वमेतन्माहात्म्यदर्शनात्
लब्ध्वाभाग्योदये नापिकथमेनांविमुंचसि ११
यथाकश्चित्तृषार्तोऽपिलब्ध्वाप्यमृतवारिधिम्
तंत्यक्त्वायातिपंकांभस्तद्वत्त्वंमूढदृश्यसे १२
यथाचिंतामणिंकश्चित्कूपेक्षिपतिमोहितः
हस्तस्थंयागतिस्तस्यदृश्यतेसागतिस्तव १३
आराध्यविष्णुंविश्वेशंयथाकश्चित्पुमान्कुधीः
सुखमैंद्रियकंतुच्छंयाचतेसागतिस्तव १४
नयातिकोशलामेनांत्यक्त्वासर्वार्थदायिनीम्
स्नातस्यात्रदिवप्राप्तिर्मृतस्यामृतसंस्थितिः १५
नारदउवाच-
राजन्नाकर्ण्यविप्रोऽसौद्विजश्रेयभृतोहरेः
वाक्यंप्रोवाचविप्रायश्रेष्ठंबदरिकाश्रमम् १६

विप्रउवाच-
भोभोविप्रवरश्रद्धातववाक्येनजायते
ममश्रुतवतः पूर्वमल्पग्रामस्यवैभवम् १७
इंद्रप्रस्थमिदंतीर्थंनकदाचिन्मयाश्रुतम्
कुतस्तुकोशलाबृद्धएतदंतरवर्तिनी १८
यत्रनारायणः सात्तान्मुक्तायत्रचयोगिनः
मुक्त्वातमाश्रमंपुरायंतिष्ठाम्यत्रकथंद्विज १९
यथागत्यस्वयंविष्णुरित्युक्त्वामां निवारयेत्
बदर्याश्चाधिकंत्तेत्रमिंद्रप्रस्थमिदंद्विज २०
तदाहंनप्रतिष्ठामिचालितोऽपितमाश्रमम्
मुक्तिकामःस्वसदनान्नान्यथास्थितिरत्रमे २१
नारदउवाच-
इत्युक्तेतेनविप्रेणप्रादुरासीच्चतुर्भुजः
विहायप्राकृतंरूपंदिव्यरूपधरोहरिः २२
उवाचचमहाभागंतंद्विजंमोत्तकामुकम्
विष्णुवाच-
इंद्रप्रस्थमिदंविप्रसर्वतीर्थोत्तमोत्तमम्
ब्रह्मज्ञेष्विवसर्वेषुशंभुर्गंगानदीष्विव २३
हिमवानिवशैलेषुपत्तिराडिवपत्तिषु
त्रिदशेषुयथाशक्रोवैष्णवेष्विवनारदः २४
तेजस्विषुयथासूर्यःत्तीराब्धिरिवचाब्धिषु
यथावर्णेषुभूदेवः सृष्टिष्विवपितामहः २५
विष्णोर्यथावतारेषुकौशल्याजनितोवरः
तथासमस्ततीर्थेषुशक्रप्रस्थमिदंवरम् २६
निष्कामोवासकामोवायातितीर्थेक्वचिन्नरः
तत्रतत्रसमस्तात्माफलदाताहमेववै २७
इंद्रप्रस्थांतरगतांत्यक्त्वायोयातिकोशलाम्
सनोफलमवाप्नोतिभक्तोवरदवृंदपात् २८
नारदउवाच-
एवंनिशम्यतद्वाक्यंदृष्ट्वातद्रूपमुत्तमम्

प्रणिपत्यरमाकांतंतस्यामेवागमद्दिवजः २९
भगवानपिविश्वात्मासपद्यंतर्दधेविभुः
तत्त्वमुद्दिश्यतंविप्रंतेनभावेनपूजितः ३०
तत्रागत्यसविप्रोऽसौकोशलायांनराधिप
कथयामासतद्वृत्तंसर्वंसर्वान्स्वंसंगिनः ३१
तेपिश्रुत्वा महाभागादाक्षिणात्याद्विजातयः
तस्यामनशनंकृत्वातत्यजुःप्राकृतंवपुः ३२
तदेवगरुडारूढः श्रीविष्णुंसमुपागतः
विमानैःस्वगणैःसार्द्धंतावद्भिर्दीप्तिभास्वरैः ३३
तेतंदृष्ट्वासमायांतंविमानंगणसंयुतम्
वपुषादिव्यरूपेणदंडवत्पतिताभुवि ३४
तुष्टवुश्चद्विजाःसर्वेदिव्यज्ञानवपुर्द्धराः
तंदिव्यरूपिणंदेवदेववंद्यपदांबुजम् ३५
ब्राह्मणाऊचुः -
नमस्तेऽतसीपुष्पसंकाशभासंतनुंबिभ्रतेपीतवासोवृताय
लसत्कुंडलप्रोतनानोपलायश्रुतौचंचलाव्यापिनीलांबुदाय ३६
भक्तिस्त्वदीयाकिलकल्पवल्लीसमाश्रितायच्छतिचित्तवांच्छितम्
यथातथैपातवकोशलाविभोजनैरुभेतेकृपयातवाप्यते ३७
वंदामहेतेचरणारविंदंवृदांरकैर्वृंदितमीश्वराद्यैः
विचिंत्यमानंहृदियोगिवृंदैःकंदंपरानंदभुवोविमुक्तेः ३८
प्राप्ताःकामंश्रीपतेत्वत्स्वरूपंश्रीवत्साद्यैर्लक्षितंचारुचिह्नैः
वांच्छामस्तेदासभावंतथापिप्राप्तंसर्वैरादृतंनारदाद्यैः ३९
यत्सौख्यंतेदासभावंगतानांतन्नोलक्ष्म्यावक्षसोंतर्वसंत्याः
तज्ञानातिश्रीपतेश्रीमहेशोनान्योलोकेयेनतच्चानुभूतम् ४०
मध्येऽस्माकंश्रीपतेसेवकानांनीरागाणामप्यसौमाननीयः
अस्मात्तंतेनारदाद्यामुनीशास्त्वद्भक्ताप्तैर्लोकनाथंभजंते ४१
कामंब्रह्मानंदमासोतरात्मात्वद्दास्येनोतृप्तिमायातिशंभुः
वारंवारंत्वद्गुणानाग्रहीतुंनृत्यत्युच्चैस्त्वत्परोभावयुक्तः ४२
हेतोरस्माद्देहिनःस्वस्यदास्यंयत्प्राप्तानांनोर्मयः संभवंति
त्वच्चिह्नांगौद्वारपालौतदीयौमोहाद्धामप्राप्यतौतत्स्वकीयम् ४३

लोकादस्मादंतरेणत्वदिच्छात्वल्लोकानांनोद्यतेचाशुपातः
कोजानीयात्तावकीमत्रमायांदुविज्ञेयांब्रह्मशर्वादिदेवैः ४४
नारदउवाच-
एवं तैः स्तूयमानः सप्रभुर्निजपदोन्मुखः
उवाचतान्दाक्षिणात्यान्मेघगंभीरयागिरा ४५
श्रीभगवानुवाच-
भोभोद्विजाभवंतोऽस्याकोशलायाःप्रसादतः
सारूप्यमपिमेप्राप्तादासभावंचयास्यथ ४६
अद्यप्रभृतिमेविप्रास्तीर्थमेतदनुत्तमम्
दक्षिणकोशलेत्युच्चैर्नाम्नाख्यातंभविष्यति ४७
यत्रदाशरथीभूत्वानिहनिष्यद्दशाननम्
साकथ्यतेमुनिवरैः सर्वैरुत्तरकोशला ४८
विपन्नोज्ञानवान्यस्यावैकुंठमधिरोहति
विनापितद्वसेद्योऽस्यासोऽपिस्वर्गंचगच्छति ४९
इमांततोदशगुणामाहुर्दक्षिणकोशलाम्
एकादशगुणामेकेसम्यगाहुर्मुनीश्वराः ५०
इयानेवविशेषोऽस्तितस्याअस्यामतिर्मम
तस्यांमृतंनयंत्येतेवैकुंठंमामकागणाः ५१
अस्यांमृतंस्वयमहमनन्यवदमानसम्
आरोप्यगरुडंदत्त्वासारूप्यंप्रापयामितत् ५२
नारदउवाच-
इत्युक्त्वातान्द्विजान्विष्णुर्नीत्वावैकुंठमभ्यगात्
महिमानंस्तुवन्नस्यस्वयंतीर्थस्यभूपते ५३
एतत्तेसर्वमाख्यातंकारणंजगतीपते
येनेयंकथ्यते विज्ञैरिहदक्षिणकोशला ५४
कलिमलकुलहंताशृणवतांमानवानांकमलनयनपादप्राप्तयेवांच्छितश्च
नृपवरमहिमातेवर्णितः कोशलायामधुवनभववृत्तंशृणवतस्तेवदामि ५५
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिदी
माहात्म्येकोशलामहिमावर्णनंनामद्वादशाधिकद्विशततमोऽध्यायः २१२

## त्रयोदाशाधिकद्विशततमोऽध्यायः

नारदउवाच-
एतन्मधुवनंतातशिवेपरमपावनम्
देवराजायतुष्टेनस्थापिताविष्णुनापुरी १
अत्रविश्रांतिनामेदंतीर्थंत्रिभुवनोत्तमम्
विविदांमुक्तिदंपुंसांपवनंसाधुसेवितम् २
नित्यंवसतिविश्वात्माविष्णुःश्रीकोलरूपधृक्
अत्रतीर्थोत्तमेपुण्येनृपविश्रांतिसंज्ञके ३
बहुभिर्जन्मभिर्येनविष्णुराराधितः सदा
मरणंतस्यतीर्थेऽस्मिन्जायतेकिलभूपते ४
कालिंद्याएवकूलेतुद्वितीयंहरिणाकृतम्
तीर्थेविश्रांतिसंज्ञंतुयत्रकंसोनिपातितः ५
एतद्द्वयंसमंराजन्गुणैर्वैकुंठदातृभिः
भाग्योदयेनकेनापिलभ्यते सकलार्थदम् ६
अथतीर्थस्यमाहात्म्यंकथयामितवाग्रतः
यच्छ्रुत्वासर्वतीर्थेषुमज्जनाल्लप्स्यसेफलम् ७
हिमाचलोपत्यकायांकिरातनगरेशुभे
ब्राह्मणोनामकुशलोराजन्नासीद्दरिद्रतः ८
तस्यपत्नीदुराचारादुराचारनरेरता
कर्मणामोहयामासपतिंसाबंधकीवरा ९
पतिस्तयामोहितस्तुननिबारयितुंक्षमः
तदाज्ञातत्परोदीनःक्रयक्रीतइवाभवत् १०
लोकाउपहरंतिस्मतंद्विजंकुलटापतिम्
उपहासभयात्सोऽपिनिर्ययौनगृहात् कुधीः ११
महार्हाणिदुकूलानिभूषणानिचसादधौ
जारैर्दत्तानिदुष्टात्माहसितापिनलज्जते १२
वस्त्रंपुरातनंदास्यादुत्तीर्णंयच्छरीरतः
अवज्ञापूर्वकंदुष्टास्वभर्त्रेसंप्रयच्छति १३
एवंतयाकुलटयासोऽवज्ञातंस्वकःपतिः
नितांतंदुःखमापन्नोविषमत्त्वामृतोनिशि १४

साभीताराजतः पापाद्धनयात्स्वैरिणीतदा
अनुयास्यामिभर्त्तारमित्युवाचमृषावचः १५
तयैवंशिक्षितासख्यःस्वकीयस्तांसमीपगाः
निवारयामासुरितिकथयित्वामहीपतेः १६
सख्यऊचुः -
भोमृगाक्षिकिमर्थंतेक्रियतेऽनर्थईदृश
यत्सुवर्णनिभंकायंत्वंनाशयितुमुद्यता १७
भवत्याकिंसुखंदृष्टंममुष्याव्यवसायिनः
दरिद्रस्यासमर्थस्यसखिस्वोदरपूरिणः १८
पालयैनंसुतंबालंत्वदृतेकोऽस्यपालकः
मरिष्यामोवयंसर्वामृतायांत्वयिसुंदरि १९
गृहमेतदवेक्षस्वसमुत्तिष्ठवरानने
जीयादयंतवसुतोयस्त्रीभाविसुखप्रदः २०
वांछंतिबांधवाः सर्वेत्वदीयास्तवजीवितम्
उत्तिष्ठनिजबंधुनांकुरुचित्तंसमीहितम् २१
रुदंतितवरागेणवयस्याःसकलाःसति
निजवाक्यप्रदानेनवारयैताः सुदुःखिताः २२
नारदउवाच-
इत्याकर्ण्यवचस्तासांदुष्टासाधर्मविश्रुतम्
उन्नमय्यमुखंप्राहश्रावयंतीस्वबांधवान् २३
सख्युवाच-
युष्माभिर्यद्वचोधर्मंप्रोक्तंजानेमृतंननु
तथापिस्वपतिः स्त्रीभिर्मान्योलोकद्वयप्रदः २४
यदुच्यतेमयावाक्यंधर्मशास्त्रसमन्वितम्
तद्वचः श्रूयतांसख्योयुक्तंचेदनुमोदत २५
यास्त्रीनिधनमापन्नंपतिमन्वेतितत्परा
पापापिसहतेनैवस्वर्गेवसतिसाचिरम् २६
स्त्रीभिःपतिर्नहातव्योनिर्धनारोगवानपि
जीवन्मृतोऽनुगंतव्यः श्रुतिरेषासनातनी २७
विचिंत्येतिस्वमनसिसख्योन्वेमिस्वकंपतिम्

वर्तिष्यतेस्वभाग्येनकरिष्येऽहकिमस्यवै २८
नारदउवाच-
इत्युक्तास्तास्तयासख्योदुष्टादुष्टमतिप्रदाः
ऊचुस्तांधर्मवाक्येनसमस्त जनमोहिनीम् २९
सख्यऊचुः -
जहिपूर्वंहिनः सुभ्रुपश्चादन्वेहिवल्लभे
समस्तास्त्वद्वियोगंनवयंसोढुंक्षमामहे ३०
अस्मांस्तवविनिघ्नंत्याअनुयांत्याःस्वकंपतिम्
धर्मोऽल्पपापबाहुल्यंस्वर्गप्राप्तिस्तुकीदृशी ३१
जीवन्नयंपतिःस्वीयः साध्वयंप्रतिपालितः
यदुक्तंपतिपत्नीभ्यांतत्त्वयाविहितंसखी ३२
यावत्स्वजीवनोपायंविधातुमयमक्षमः
तावत्त्वदीयभाग्येनजीविष्यतिसुतस्तव ३३
नारदउवाच-
इत्युक्तासानिववृतेस्वभर्त्तुरनुयानतः
सुतेनकारयामासतदातद्विरतिक्रियाम् ३४
अथकालेनकियतासुतोपनयनेमतिम्
कारयामाससाविप्रैर्दत्त्वाजारार्पितंधनम् ३५
कृतोपनयनःकुंडःसतत्त्वज्ञानवान्शिशुः
गृहान्निर्गम्यसपदिनारायणपरोऽभवत् ३६
सतांसंगतिमासाद्यत्यक्त्वास्वंप्राकृतंवपुः
आरुरोहनिजंलोकमप्राप्यंयोगिभिश्चतत् ३७
अथसानिर्गतेपुत्रेमनोदुःखंचकारवै
तस्मिन्नेवदिनेराजन्भूयोजारैः सहारमत् ३८
इतितैरममाणायांतस्यांजारैःसमंनृप
समागताजराकालेलावण्यमदनाशिनी ३९
त्यक्तोपपतिभिर्दृष्टासाजराग्रस्तविग्रहा
बभूवदूतिकान्यासंकुलशीलविनाशिनी ४०
तदाह्येकस्यविप्रस्यसवत्सांगामपाहरत्
विक्रीताकियताराजन्द्रव्येणननुसातया ४१

तयेतिगमितः कालोदूतित्वेनकियान्नृप
पश्चाच्छुष्करशरीरोऽस्याविगुणःसमजायत ४२
तस्याःकुष्ठेसमुत्पन्नेगलितंह्यंगपंचकम्
हस्तौपादौचनृपतेपंचमानासिकतदा ४३
एवंभूतायदाहारंनलभेतकुतश्चन
तदातुतत्रोदितयादास्यासानीयतापणम् ४४
तत्रसापतितापापालोकान्संप्रार्थ्यदीनया
गिराधिगितिकुर्वाणाचक्रेस्वोदरपूरणम् ४५
तदिहाभ्यासवर्त्तर्येकोद्विजः सर्वागमार्थवित्
तांविलोक्यमहावाग्मीप्रोवाचेदंवचोनृप ४६
जनानांदुःखदंपापमिहलोकेपरत्रच
तस्मात्पापंनकर्त्तव्यंमानवैर्दुःखभीरुभिः ४७
पापंकृत्वाजनोयस्तुप्रायश्चित्तंकरोतिवै
नतदाचरितेभूयोनतत्फलमवाप्नुयात् ४८
यः कृत्वामुहुरेनांसिप्रायश्चित्तंकरोतिन
तस्यास्याइवपापायागतिरत्रपरत्रच ४९
अनयापापसंघातोलोकेऽत्रसमुपार्जितः
इहैवतत्फलंभुंक्तेभोद्यतेनरकेऽप्यसौ ५०
सर्वशास्त्रेषुदृष्टंवैसर्वेषांपापकर्मणाम्
प्रायश्चित्तंनचस्त्रीणांविन्मुखानांतुकर्मणः ५१
नारदउवाच-
इत्युक्त्वासद्विजश्रेष्ठोनमस्कृत्यरविंययौ
विष्णुंसंस्मृत्यसंस्मृत्यभीतस्तदवलोकनात् ५२
एवंसादुःखमापन्नाभुंजानाकर्मणः फलम्
अर्जितस्यस्वयंराजन्मृताकतिपयैर्दिनैः ५३
नतस्याअग्निसंस्कारः संजातः पापकर्मणः
आकृष्यकेशेसानीताश्वपचैर्नगराद्बहिः ५४
मरणावसरेतस्यायमभृत्याः समागताः
प्रापप्ययातनादेहंतांनिन्युर्भास्करेःपुरीम् ५५
सौम्यःसधर्मिणांदेवःसाक्षाद्दुह्यस्तुपापिनाम्

तस्याविलोकनाद्भूयः सोप्यभुद्वैपराङ्मुखः ५६
भृत्यानाज्ञापयामासयमएवपराङ्मुखः
रौरवेनरकेघोरेपात्यतांसामयेरिता ५७
इत्युक्तास्तेतदाभृत्यानीत्वातांघोररौरवे
न्यपातयन्नधोववक्त्रांस्मरंतींकर्मयत्कृतम् ५८
एकमन्वंतरंयावत्सास्थित्वातत्ररौरवे
पश्चाद्गोधासमुत्पन्नाश्मशानेमृतमांसभुक् ५९
तत्रापिसावर्षशतंलेभेदुःखंस्वकर्मणः
फलंमृतकमांसेकुर्वत्याहारमुत्कटम् ६०
एकदासमुनेःपुत्रोयोऽस्याकुक्षौव्यजायत
विप्रयोनौसमायातः श्मशानेतत्रपर्यटन् ६१
मुनिपुत्रस्तुतांवीक्ष्यमृतानांक्रव्यमश्नतीम्
ध्यात्वाक्षणंस्वमनसिबुबुधेतांस्वमातरम् ६२
सउवाचात्मनात्मानं बुद्धातांनिजमातरम्
मुनिपुत्रउवाच-
एतांतुतारयाम्यद्यदुस्तराद्दुःखवारिधेः ६३
अहोनमुच्यतेजंतुर्जातपापेनकर्मणा
आत्मनोपार्जितेनैवभोगकालावधिंविना ६४
अस्याःकालोव्यतीयायनिरयेमानवाभिधः
सांप्रतंचजनैस्त्वत्रवत्सराणांशतंगतम् ६५
कियदग्रेचभोक्तव्यमेतयापापमुल्बणम्
नारदउवाच
इत्यालोच्यपुनर्दध्यौज्ञानेनामील्यचक्षुषी ६६
दृष्ट्वातस्यागतिंघोरांपापायादिव्यचक्षुषा
पुनरात्मानमादेहंसद्विजप्रवरोनृप ६७
मुनिपुत्रउवाच-
अहोकल्पशतेनापिनिस्तारोऽस्यानदृश्यते
विनासत्तीर्थमरणंशरणंवारमापतेः ६८
अथवापिंडदानेनगयायां मत्कृतेनच
विनास्याः सद्गतिंनैवकल्पकोटिशतैरपि ६९

नघटेतद्वयंचास्याअस्यांयोनौकदाचन
तत्तीर्थविषयेमृत्युःसेवायां श्रीपतेरतिः ७०
अस्याउद्धारहेतुर्वैमग्नायाः पापसागरे
भवितामत्कृतंश्राद्धंगयायांचहित्रकम् ७१
नारदउवाच–
इत्यालोच्यसधर्मात्माययौस्वपितुराश्रमम्
आचख्यौपितरंसर्वंस्वमातुर्दुःखकारणम् ७२
निशम्यपुत्रवचनंमातृदुःखनिवेदकम्
उवाचसमुनिश्रेष्ठःपुत्रंप्रणतकंधरम् ७३
मुनिरुवाच–
हेतातमातरंस्वीयांशीघ्रमुद्धरदुर्गतेः
नयविद्भूपतिःशत्रोर्जयलक्ष्मीमिवाहवे ७४
नतारयतियःपुत्रोमातरंपितरंस्वकम्
दुःखात्सयातिनरकंयदितारयितुंक्षमः ७५
स्वपुत्रात्प्राप्यपानीयंपिंडांश्चवरतीर्थके
पितरोनरकात्स्वर्गंस्वर्गाद्यांतिहरेः पदम् ७६
तस्मादाशुसमुत्तिष्ठगच्छखांडवकानने
तत्रास्तियमुनापुरायामुनिवर्यनिषेविता ७७
तत्तीरेऽस्तिहरिप्रस्थंसर्वतीर्थमयंततः
पुरायंमधुवनंतत्रविष्णुनास्थापितंस्वयम् ७८
तत्रस्नात्वातुविधिवत्कृत्वानित्यक्रियांनिजाम्
तामुद्दिश्यकुरुश्राद्धंस्वप्रसूंचकुरुक्रियाम् ७९
त्वयातत्रकृते श्राद्धेतस्याः सद्गतिमिच्छता
साप्राप्स्यतिहरेर्लोकंहित्वागोधांगमुल्बणम् ८०
गयायांपिंडदानेनयत्फलंतातजायते
ततःशतगुणंपुरायंसद्भिर्मधुवनेस्मृतम् ८१
इदानींवर्त्ततेतातकन्याराशिगतोरविः
पुत्रगत्वाकुरुश्राद्धंपूर्वानुद्दिश्यबांधवान् ८२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिंदी
माहात्म्येत्रयोदशाधिकद्विशततमोऽध्यायः २१३

## चतुर्दशाधिकद्विशततमोऽध्यायः

नारदउवाच-

इत्याकर्ण्यपितुर्वाक्यंसजगामत्वरान्वितः
पुण्यंमधुवनंराजन्गयाशतगुणाधिकम् १
तत्तीर्थवासिनोविप्रान्सायमामंत्र्यमंत्रवित्
कालेपुनःसमाहूयबभाषेस्वागतंवचः २
ततः प्रक्षाल्यतत्पादौगंधाद्यैरभिपूज्यच
पादार्घ्यमददात्प्रीत्यासमेनस्वयमाचमत् ३
ततस्तान्ब्राह्मणान्नीत्वाश्राद्धदेशेन्यवेशयत्
कुशांबुतुलसीपुष्पगंधाक्षततिलैःसह ४
पूरयित्वाकर्मपात्रंपुंडरीकाक्षमस्मरत्
देवताभ्यइतिश्लोकंत्रिःकृत्वासोऽपठद्द्विजः ५
सतिलंशोधितकुशैर्विदधेबंधनंततः
अग्निष्वात्तेतिमं त्रेणपूर्वादीनांदिशांक्रमात् ६
रक्षोभूतेतिमंत्रेणनीवीबंधंव्यधाच्चसः
ततः प्रतिज्ञामाधायददौद्विजकुशासनम् ७
पितॄन्समाह्वयामाससतदाब्राह्मणोत्तमः
दत्त्वाततस्तुहस्तार्घ्यंपात्रंन्युब्जीचकारवै ८
कृत्वागंधादिदानंचपुनःसव्येनचाचमत्
सव्यापसव्येनतदादत्वापात्राणिसद्विजः ९
तैर्ब्राह्मणैरनुज्ञातश्चक्रेऽग्नौकरणंततः
आज्यादिहविषाराजं स्तान्यमत्राण्यपूरयत् १०
अनुत्तानोत्तानपाणिः कुर्वन्पात्रावलंबनम्
पपाठपाठितोविप्रैः पृथ्वीत्वेतिद्विजन्मनाम् ११
असंस्कृतप्रणीतानामितिमंत्रेणसद्विजः
दर्भेषुदक्षिणाग्रेषुददौचविकिरासनम् १२
अग्निदग्धेतिमंत्रेणघृतमिश्रान्नमक्षिपत्
जलेनसहराजेंद्रविष्टरेकुशकल्पिते १३
सव्येनपुनराचम्यददौचुलकजीवनम्
तृप्ताःस्थेतिचसंपृच्छ्यातृप्तास्म प्रतिभाषिताः १४

शेषान्नभोजनेतेषांजग्राहाज्ञांद्विजन्मनाम्
पिंडार्थंवेदिकांकृत्वावितस्तिप्रमितांद्विजः १५
रेखांचकारदर्भेणदक्षिणाभिमुखींनृप
येरूपाणीतिमंत्रेणदधेऽग्निदिशिचोल्मुकम् १६
पूर्वजन्मनियामातापितायश्चमहीपते
तयोश्चपितरौयौहियौचराजन् पितामहौ १७
यःप्रमातामहश्चापिपितरौराजसत्तम
पित्रादीन्षट्सपत्नीकांस्तानुद्दिश्ययथाविधि १८
कुशासनानिदत्त्वावैददौपिंडान्षडैवहि
गंधादिभिश्चसंपूज्यमध्यपिंडविसर्जनम् १९
कृत्वाघ्रायचवामांसेपिंडपात्रंन्यवेशयेत्
जलपात्रंतदादायवाजेवाजेपठन्निति २०
पाद्यार्घंचपुनर्दत्त्वादक्षिणाद्यैरतूतुषत्
आद्वारंताननुव्रज्यतेभ्योलब्ध्वानुशासनम् २१
बुभुजेचस्वयंराजन्बांधवैः सहसद्विजः
एवंसमाप्यराजेंद्रश्राद्धंसद्विजसत्तमः २२
पूर्वसबंधिनांतत्रतीर्थेमधुवनेशुभे
यदाचचालशांतात्मापितुराश्रमकंप्रति २३
तदासंमिलितामार्गेसर्वेतेश्राद्धभोजिनः
विमानषट्कमारूढादिव्याभरणभूषिताः
दिव्यांबरधराराजन्नित्यूचुस्तंद्विजोत्तमम् २४
पितरऊचुः -
भोवत्सविप्रशार्दूलवृणीष्ववरमुत्तमम्
तीर्थेऽत्रकुर्वताश्राद्धंभवतातारितावयम् २५
वयंगणत्वमापन्नाःश्रीपतेस्त्वत्प्रसादतः
प्रार्थयस्वमहाबुद्धेयदिष्टंतवचेतसि २६
मुनिपुत्रउवाच-
केयूयंकुतआयातागणत्वंहिकुतोगताः
उपकारंविनाकस्माद्वरंयन्मेप्रयच्छत २७
नारदउवाच-

इत्याकर्ण्यवचस्तस्यपूर्वजन्मसुतस्यवै
पिताप्रोवाचयोदुःखाद्भक्षयित्वाविषंमृतः २८
पितोवाच -
अहंतवपिताविप्रपूर्वजन्मनिभूसुरः
भार्ययाव्यभिचारिण्यामात्रातेपीडिताभृशम् २९
अतीवदुःखमापन्नोभक्षयित्वाविषंनिशि
अपमृत्युंगतस्तस्मादभवंरजनीचरः ३०
एवंमन्वतरंतात शतंपंचदशाधिकम्
वर्षाणांचव्यतीतंतद्राक्षसत्वंगतेमयि ३१
इदानींषोडशाब्देतुत्वयाश्राद्धेकृतेऽत्रवै
पुण्येमधुवनेतीर्थेदेवत्वंप्राप्तवानहम् ३२
एतद्विमानमायांतंस्वर्गादिंद्रप्रणोदितम्
सगणंसाप्सरोवृंदंममारोहणहेतवे ३३
अत्रतुभ्यंवरंदातुंसगणः साप्सरोगणः
विमानवरमारुह्यगच्छन्स्वर्गेऽहमागमम् ३४
वरंवरयभद्रंतेनविलंबसहावयम्
एरावतगजारूढःसुरेशोमामवेक्षते ३५
नारदउवाच
इत्युक्त्वानिजवृत्तांतंदत्त्वाचनिजसूनवे
तत्प्रार्थितांहरेर्भक्तिंजगामसदिवंनृप ३६
अथप्रोवाचतन्मातापूर्वजन्मसुतंचतम्
मातोवाच-
त्वत्प्रसादादहंजातादेवीमुक्ताचपापतः ३७
प्राप्तंशच्याःसखीत्वंमेपापयापिद्विजोत्तम
त्वयात्रविहितेश्राद्धेतीर्थेविश्रांतिसंज्ञके ३८
प्रार्थयस्वमहाभागनिजचित्तसमीहितम्
ददामितेयतोऽस्माकंदेवीनांनवचोमृषा ३९
येनपापेनजाताहंगोधाचपितृकानने
नरकेचिरमास्थायतत्त्वंवेत्सिद्विजोत्तम ४०
अनुजानीहिमांपुत्रपुलोमतनयादिवि

मामपेच्चितमाकाशेवृतादेवांगनागणैः ४१
नारदउवाच-
इत्युक्त्वासापितन्मातानिष्कामायस्वसूनवे
ययौत्रिविष्टपंराजन्शिरसातेनवंदिता ४२
ततः पितामहस्तस्यस्वपौत्रंतंद्विजोत्तमम्
उवाचवचनंभूयःहरेर्बिभ्रत्स्वरूपताम् ४३
पितामहउवाच-
वत्सवत्सचिरंजीवलभस्वनिजवांच्छितम्
त्वत्प्रसादाद्वयंतीर्णादुस्तराद्भवसागरात् ४४
पितामहोऽहतेवत्सतवेयंचपितामही
मृतंमानुगतासाध्वीसालोक्यमचिरंगता ४५
अद्यत्वयात्रविश्रांतौविहितेश्राद्धकर्मणि
आवयोस्तुहरेर्लोकेलब्धातस्यस्वरूपता ४६
नारदउवाच-
एवमुक्त्वातयासार्द्धस्वस्त्रियाभूपसत्तम
ब्रह्मलोकमतिक्रम्यवैकुंठंसययौद्विजः ४७
अथप्रोवाचराजेंद्रवचस्तत्प्रपितामहः
यत्तेतत्कथयाम्यद्यशृणुष्वैकमनाद्विज ४८
प्रपितामहउवाच-
भोभोवत्समहाभागतवाहंप्रपितामहः
भ्रूणहत्याफलेनाहंशौकरींयोनिमाप्तवान् ४९
ततोविनिर्गतस्तातश्चाभवंपापपीडितः
ततःस्थावरतांप्राप्तोविंध्येपर्वतसत्तमे ५०
तत्रापिचिरकालेनस्थितं स्थावरतांदधत्
हस्तिनाकेनचित्तातमूलादुत्पाटितोबलात् ५१
तस्मिन्नेवततः कालेत्वयाश्राद्धमकारिवै
अस्मिंस्तीर्थोत्तमेतातमुक्तोऽहस्थावरात्ततः ५२
प्राप्तोऽययच्चराजस्यनगर्य्यांवासउत्तमः
देह्यनुज्ञांद्विजश्रेष्ठयामितांत्वत्प्रसादतः ५३
त्वांदिदृच्चुरिहायातोदृष्टस्त्वंपुण्यदर्शनः

तीर्थचसर्वतीर्थेषुश्रेष्ठंमधुवनंमया ५४
नारदउवाच-
इत्युक्तस्तेनराजेंद्रमुनिपुत्रःसधर्मवित्
पप्रच्छशिरसानम्यतंनिजंप्रपितामहम् ५५
ऋषिरुवाच-
ब्राह्मणानांकुलेतातजातोऽसित्वंगरीयसि
कथंविहितवान्पापंभ्रूणहत्याभिधंगुरो ५६
येननिंद्यांसमापन्नोभवान्योनिपरंपराम्
समाचद्दवमहाभागयदितत्स्मृतिरस्तिते ५७
प्रपितामहउवाच-
पुराहंद्विजशार्दूलब्राह्मणस्यैवजन्मनि
मंत्रयंत्रविधानेनकृतवान्वृत्तिमात्मनः ५८
धनलोभेननारीणांगर्भार्थमहमौषधम्
दत्तवांश्चैवनाशायदैवोपहतचेतनः ५९
लोभोहिधनहीनानांजनानांज्ञानमाहरेत्
शुचिकालेदिनाधीशःकुल्यानामिवजीवनम् ६०
ज्ञानेनष्टेजनस्तातपापमाचरतेध्रुवम्
पापान्नरकमाप्नोतिततोयातिकुयोनिताम् ६१
काचिदेकातदानारीगुर्विणीमामपृच्छत
किंजनिष्याम्यहंविप्रपुत्रंवेत्यथवास्त्रियम् ६२
तदाहमुक्तवांस्तांवैतवकन्याभविष्यति
पुत्रोत्पत्तिकृतेतुभ्यंप्रदास्यामिमहौषधम् ६३
इत्युक्ताचमयानारीदुर्बुद्धिस्त्रीसिरोमणिः
जग्राहममपादौतुदत्तंहेमपलंचमे ६४
इत्युवाचचसामह्यंषट्कन्याजनितामया
सप्तमीयंत्वयाचोक्ताजीविष्येस्यानजन्मनि ६५
तथाकुरुमहाबुद्धेयथाहंवैनकन्यकाम्
जनयिष्यामिविप्रान्यांनिजप्राणविनाशिनीम् ६६
इत्याकर्ण्यवचस्तस्यास्तामहंपुनरुक्तवान्
प्रसूतिकालेदास्यामिपुत्रोत्पाद्यहमौषधम् ६७

तथेतिसावचोमह्यंप्रतिश्रुत्यगतागृहम्
अपेक्षमाणातंकालंतस्यौवाक्यप्रतीतिकृत् ६८
तस्यांगतायांभोतातचिंतयाभवमातुरः
इत्यहंद्विजशार्दूलतच्छृणुष्ववदामिते ६९
पुत्रोत्पत्तिप्रतीतेयंमह्यंदत्तवतीपलम्
सुवर्णस्यनजानामिकिमस्याःसंभविष्यति ७०
किमत्रकरणीयंमेकथमेतत्सुवर्णकम्
पलप्रमाणंतिष्ठेद्वैदरिद्रस्यगृहेमम ७१
एवंविमृश्यतद्दास्यास्तस्यैहस्तेनदापितम्
गर्भपातकरंतातमयादारुणमौषधम् ७२
तेनौषधेनतस्यास्तुगर्भस्रावेऽभवत्तदा
मासेतृतीयेनज्ञातंचिह्नंपुरुषकन्ययोः ७३
तदासामद्गृहंप्राप्ताविषण्णागर्भस्रावतः
अथार्थयत्सुवर्णंतन्निराशापुत्रजन्मनि ७४
तदाहमिष्टकाचूर्णंभस्मनाचसमन्वितम्
हरिद्राचूर्णसंयुक्तंसांबुतस्यैअदर्शयम् ७५
एतच्चूर्णंकृतंमातस्त्वत्पुत्रोत्पत्तयेमया
त्वद्दानाद्दिवगुणंद्रव्यंलग्नमेतस्यसाधने ७६
इत्युक्त्वासामयातात्यक्त्वाचूर्णंगृहंययौ
मामुक्त्वेतिगृहीष्यामिकालेत्वत्तोद्विजोत्तम ७७
एवंमयाकृतातातभ्रूणहत्यातिदारुणा
ययातिकुत्सितेयोनित्रितये भ्रमितंमया ७८
त्वत्प्रसादादहंमुक्तः सांप्रतंस्थावरत्वतः
देह्यनुज्ञांमुनिश्रेष्ठयाम्यहंह्यलकांशुभाम् ७९
नारदउवाच-
एवमुक्त्वातु राजेंद्रतस्यतुप्रपितामहः
तेनाभिवंदितोमूर्ध्नाप्रययौदिशमुत्तराम् ८०
विमानेनविचित्रेणकिंकिणीजालमालिना
नृत्यद्गंधर्वजुष्टेनमणिप्राकारशोभिना ८१
अथतस्यमहाराजविप्रस्यप्रपितामही

उवाचस्वप्रपौत्रंतंविमानवरमास्थिता ८२
प्रपितामह्युवाच
नान्यत्रकुत्रगंतासिपुण्येनानेनसुब्रत
विनापद्मापतेःपादपद्मचिह्नितमंदिरम् ८३
अयंममपतिःपापोमुनेत्वत्प्रपितामहः
वारितोऽपिमयापापमाचचारसुदुष्टधीः ८४
सोऽपित्वयातिपापात्मातारितोदुःखसागरात्
शक्यतेकेनवैकर्तुंतावकंगुणवर्णनम् ८५
नारदउवाच-
इत्युक्त्वा सापिराजेंद्रपतिलोकंजगामह
अलकायांचिरंपत्यातेनैवमुमुदेसह ८६
अथतेमुनिपुत्रस्यसर्वेमातामहादयः
सपत्नीकाः समारुह्यविमानेषुययुर्दिवम् ८७
सोऽपिद्विजवरस्तस्मात्तीर्थात्स्वपितुराश्रमम्
गत्वातंसर्ववृत्तांतंस्वपित्रेसमवर्णयत् ८८
सोऽपितत्रगतः सार्द्धंकुटुंबेनवनेमधोः
चकारपर्णशालांवैविश्रांतेस्तुसमीपतः ८९
तत्रविश्रांततीर्थंतुत्रिकालंस्नानमाचरन्
नाकरोद्विष्णुलोकेऽपिस्पृहांसमुनिसत्तमः ९०
एकदाजलमध्येसस्नानंकुर्वन्मुनिर्नृप
आचकांक्षेचभवताकदामेहरिदर्शनम् ९१
एवंकामयमानस्यमुनिवर्यस्यभूपते
आजगामत्वरायुक्तोपक्षिराजासनोहरिः ९२
लक्ष्म्यावक्षःस्थयासार्द्धंचतुर्बाहुधरोहरिः
नवीनघनवर्णांगोविद्युद्वर्णांबरावृतः ९३
कौस्तुभोद्भासिसद्वक्षाः शंखचक्रगदाब्जभृत्
वनमालालसत्कंठोमकराकृतिकुंडलः ९४
फुल्लांबुजपलाशाक्षःस्वलकालंकृताननः
विद्रुमाकारकरजोरुणहस्तांघ्रिसत्तलः ९५
उवाचतंद्विजश्रेष्ठंदंतभासाविभासयन्

शरन्निशापतिस्तोमतिरस्कारकृतादिशः ९६
श्रीभगवानुवाच-
भोभोद्विजवरैतन्मेतीर्थंमधुवनंशुभम्
विश्रांतसंज्ञकंस्नानात्सर्वकामोपपादकम् ९७
अत्रत्वयास्नानकालेवांछितंममदर्शनम्
तुभ्यंहितन्मयादत्तंब्रह्मादिसुरदुर्लभम् ९८
त्यजदेहमिमंविप्रमानुषंदिव्यमाप्नुहि
आयाहिमद्गृहंसार्द्धंमयारुह्यखगेश्वरम् ९९
नारदउवाच-
इत्याकर्ण्यवचस्तस्यश्रीपतेःसमुनीश्वरः
तुष्टावप्रणतोभूत्वाजलएवविशांपते १००
मुनिरुवाच-
श्रीपतेश्रीमदंभोजसंमर्दितपदांबुजम्
भवतोभवतापघ्नंवंदेत्रिदशवंदितम् १०१
त्वदीयमाय्यानाथमोहितायेऽत्रजंतवः
तेषांकदाचिन्निस्तारोनकृपामंतरेणते १०२
सत्तीर्थसेवनादीशतथासज्जनसंगमात्
पुसांभक्तिस्तुयेषांवैजायतेकृपयातव १०३
साधुभिर्बहुभिरीरितंहरेयोनिशम्यगुणकीर्त्तनंतव
कीर्तयत्यखिलपापनाशनंगातृगर्भकुहरेसनोपतेत् १०४
श्रीपतेतवजनस्यमानसंदैवतस्तुपतितंमहारणे
गुंठितंचरजसाजहातिनोनिर्मलत्वमिवरत्नमुत्तमम् १०५
यःपुमान्पतितितेपदांबुजेदंडवत्पुलकमंगकेदधत्
सोन्वयंनयतितावकंपदंस्वंचवांछितमशेषयोगिभिः १०६
जीवएवतवमाययाविभोमोहितोभ्रमतिविश्ववर्त्मसु
त्वत्कृपाललितलोचनां चलैस्तत्क्षणंतरतिविश्ववारिधिम् १०७
नारदउवाच-
इतिसंस्तुत्यगोबिंदंदंडवत्तस्यपादयोः
पपातसमुनिश्रेष्ठोजयेतिमुहुरीरयन् १०८
श्रीपतिस्तंमुनिश्रेष्ठंदंडवत्पतितंभुवि

उत्थाप्यबाहुभिस्तूर्णंसुपर्णेसमरोपयत् १०९
तत्कुटुंबंचविश्वात्मावैकुंठंचजगामह
इत्येतत्कथितंराजन्शिवेमधुवनस्यवै ११०
महात्म्यंसर्वपापघ्नंकिमन्यच्छ्रोतुमिच्छसि
यद्वदं शृणुयान्मर्त्यःसर्वपापैःप्रमुच्यते १११
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेकालिंदी
माहात्म्येमधुवनमाहात्म्यंनामचतुर्दशाधिकद्विशततमोऽध्यायः २१४

## पञ्चदशाधिकद्विशततमोऽध्यायः

सौभरिरुवाच–
युधिष्ठिरेदमाकर्ण्यनारदस्यवचःशुभम्
शिबिरौशीनरोराजाविनीतस्तमुवाचह १
शिबिरुवाच–
मुनेमयातुमाहात्म्यंश्रुतं मधुवनस्यवै
त्वन्मुखात्किंतुसंदेहोह्येकोस्तिमममानसे २
येनधर्मात्मनासर्वेतारितानिजबांधवाः
जन्मद्वयकृताह्यासीत्सकथंस्वैरिणीसुतः ३
एतदाचक्ष्वभगवन्सर्वंस्त्वंवेत्सितत्त्वतः
अतीतंवर्त्तमानंचभविष्यमपिनारद ४
नारदउवाच–
एकदामुनयः सर्वेहरिद्वारेसमागताः
दशम्यांज्येष्ठशुक्लस्ययुक्तायांसर्वपर्वभिः ५
तत्रतेविधिवत्स्नात्वाकृत्वाचस्वक्रियांशुभाम्
हिमाचलस्यपृष्ठेतुस्वस्थचित्ताउपाविशन् ६
तारात्मजोबुधस्तत्रमुनिसंगेसमागतः
सौंदर्यभरसंयुक्तःस्मरोमूर्त्तइवापरः ७
तंसमागतमालोक्यसमुत्तस्थुर्मुनीश्वराः
तेनाभिवंदितामूर्ध्नापुनस्तेसमुपाविशन् ८
बुधस्यादरमालोक्यविहितंमुनिपुंगवैः
मुनिपुत्रःसपप्रच्छपितरंस्वमितिप्रभो ९

मुनिपुत्रउवाच-
कोऽयतातसमायातः सौंदर्येणापरःस्मरः
व्यासादिभिर्मुनिवरैर्भृशंतस्यादरःकृतः १०
नारदउवाच-
इत्याकर्ण्यसधर्मात्मास्वस्यपुत्रस्य भाषितम्
बभाषेमुनिशार्दूलःपुत्रंनिर्बंधसंयुतम् ११
पितोवाच-
बृहस्पतेःसुरगुरोःसुतस्तारोदरोदोद्भवः
बुद्धिमान्बुधनामायंशशिवंशकरः परः १२
पुत्रउवाच-
किंत्वयाकथितंनात निः संबंधपरंवचः
बृहस्पतेः सुतोयस्तुसकथंशशिवंशकृत् १३
जज्ञेनसूययातातविधुरत्रेर्मुनीश्वरात्
तस्यवंशस्यकर्त्तायंकथंसुरगुरोः सुतः १४
एषमेमानसेतातसंशयोवर्ततेमहान्
तमपाकुरुविप्रेंद्रसंदिहानस्यमेशिशोः १५
पितोवाच-
पुराबृहस्पतेर्भार्यातारानामयशस्विनी
चंद्रेणापहृतातातबलाद्बलवतातदा १६
अपहृत्यतदानीतास्वगृहंविधिनागुरोः
भार्यासातुतयासार्द्धरमितंतेनवैचिरम् १७
तस्मागर्भोऽभवत्तातकालेनकियतातदा
ततोबृहस्पतिर्भार्यानिजांतांसमयाचत १८
चंद्रमापिमदाविष्टोनददौ बलदर्पितः
ततोबृहस्पतिस्तातदेवैःशक्रादिभिःसह १९
सन्नद्धोयोद्धुमारेभेसमंबलवदिंदुना
सहायार्थंविधोःशुक्रःसमंदितिजदानवैः २०
समागतस्तदाताततस्मिन्रणसमुद्यमे
ततस्तारानिमित्तंवैयुद्धंप्रावर्त्ततोल्बणम् २१
करिष्यतेसर्वजनैः प्रधानंतारकामयम्

तस्मिन्युद्धे महाभीमेहतादेवाश्चदानवाः २२
नकस्यचिज्जयस्तातबभूवनपराजयः
ततःसमागतोब्रह्मासंनिवार्योल्बणंरणम् २३
ददौबृहस्पतेस्तारांबोधयित्वानिशापतिम्
बृहस्पतिस्तुतांवीक्ष्यतारांगर्भवतींतदा
क्रुद्धोविरिंचेःप्रत्यक्षंसमाजेदेवदैत्ययोः २४
बृहस्पतिरुवाच-
शृणुष्वमामकंवाक्यंतारेतरललोचने
कस्यायंध्रियतेगर्भोभवतेदोंर्ममाथवा २५
पितोवाच-
एवंमुहुर्मुहुःपृष्टासाचलज्जावतीशुभा
यदानकथयामासकिंचित्तातातदग्रतः २६
तदायंपश्यतांतेषांदेवानांचसुरद्विषाम्
उत्पन्नस्तामुवाचेदंजननींचरुषान्वितः २७
बुध उवाच-
कस्मान्नकथ्यतेदुष्टेमदीयोजनकस्त्वया
लज्जांविहायसंपश्यशापस्यममवैभवम् २८
पितोवाच-
इत्युक्त्वाजलमादाययदा शप्तुंसमुद्यतः
तदासामंदमाहेदंपितातवसुधाकरः २९
इत्युक्तेचतयासाध्व्याचंद्रःस्वतनयंबुधम्
अमुंगृहीत्वासानंदंजगामनिजमंदिरम् ३०
बृहस्पतिस्तुतांतारांगृहीत्वास्वगृहंययौ
ब्रह्मादेवाश्चदैत्याश्चतेपिस्वंस्वंगृहंययुः ३१
एतत्तेसर्वमाख्यातंयस्त्वंमांपरिपृष्टवान्
बृहस्पतिस्त्रियांजातोयथायंचंद्रवंशकृत् ३२
नारदउवाच-
इत्याकर्ण्यपितुर्वाक्यंजहासोच्चैर्मुनेःसुतः
उवाचचस्वपितरं कुंडोऽयस्वैरिणीसुतः ३३
उवाचचपितापुत्रंहापुत्रेदंनभणयताम्

सर्वसत्वांतरज्ञोऽयशप्स्यतेत्वांत्वदुक्तवित् ३४
नारदउवाच-
इत्युक्तेतेनमुनिनाचांद्रिर्ज्ञात्वातदीरितम्
सर्वेषांशृरावतांप्राहमुनीनामितिभूपते ३५
बुधउवाच-
शृरावंतुमुनिशार्दूलाभवंतोममभाषितम्
यदिसाध्वथवासाधुविचारयतमाचिरम् ३६
भवतांतत्वबुद्धीनांदर्शनार्थमिहागतः
कृतवान्कस्यचिन्नाहमपराधंमनागपि ३७
असूययाकिमर्थंमामवजानंतिदुर्मदाः
स्वजन्मसफलत्वायभवद्दर्शनलालसः ३८
स्वभावएवदुष्टानांसाधूनपिनिरेनसः
उद्वेजयंतियत्क्वापिमिष्टवाचः पिकाइव ३९
दुःस्वभावंनमुंचंतिदुष्टाःसत्संगमादपि
गंगाबुसंगमेनापिद्मारतामिवनीरधिः ४०
अहोव्याधस्यदुष्टत्वंमुनिवृत्तीन्यतोमृगान्
वनेमृगचरान्हंतिनिजगानविदोऽपिसः ४१
मत्स्यैः किमपराद्धंहिधीवराणांदुरात्मनाम्
यज्जलेचरतस्तीर्थेघ्नंतितत्प्रकृतिर्हिसा ४२
साधवोऽपिनमुंचंतिस्वभावंदुष्टसंगताः
वृताविषाग्नियुक्सर्पैः श्रीखंडाइवशीतताम् ४३
परोदयेपिनृत्यंतिकिंस्वपद्मस्यसाधवः
यथोन्मनामुनिवरावारिवाहस्यबर्हिणः ४४
धारयंतिपरार्थेहिनिजांगमपिसाधवः
पितृदेवमनुष्याणामर्थेमत्पितृवत्कलाः ४५
निजोदयस्तुसाधूनांस्वच्छस्यानंदहेतवः
यथा कुमुदपुष्पाणांमत्पितुःशीतलत्विषः ४६
नारदउवाच-
इत्युदीर्यवचः क्रोधाद्बुधस्तंमुनिबालकम्
शशापेतित्वमप्याशुकुंडोभवमहीतले ४७

एवमाकर्ण्यतंशापंपिताबुधविसर्जितम्
स्वपुत्रंपातयामासतदंघ्र्योः क्षम्यतामिति ४८
उवाचचनजानातिबालोऽयतववैभवम्
नोचितंक्रोधकरणमस्मिन्बालेभवादृशैः ४९
कुतश्चित्कारणात्साधोःक्रुद्धस्यप्रकृतिक्षमा
हुताशनप्रतप्तस्यशीतत्वमिवचांबुनः ५०
अतः क्षमांविधायाशुविधेह्यस्मिन्ननुग्रहम्
बालेविवेकरहितेक्षमासाराहिसाधवः ५१
नारदउवाच-
इत्युक्तस्तेनमुनिनाशीतांशुतनयस्तदा
क्रोधंतत्याजशांतात्माचक्रेतस्मिन्ननुग्रहम् ५२
बुधउवाच-
अयंतवमुनेबालःकुंडत्वंप्राप्यभूतले
दत्तयज्ञोपवीतः सल्लँप्स्यसेहिनिजास्पदम् ५३
एवंसमुनिपुत्रोवैबुधशापान्नृपोत्तम
कुंडत्वंपाप्तवान्भूमौपितरोयेनतारिताः ५४
इदंपवित्रंमाहात्म्यंश्रुत्वामधुवनस्यवै
समस्तमश्वमेधस्यफलंप्राप्नोतिमानवः ५५
येनराधारयंत्यस्यमाहात्म्यस्यार्थमुत्तमम्
हृदयेयत्रतत्तेषांविषयैर्नाभिभूयते ५६
येपठिष्यंतिमाहात्म्यंश्रोष्यंतिचमहाधियः
देहांतेविष्णुसालोक्यंगमिष्यंतिनसंशयः ५७
इदमनिशपवित्रंतुभ्यमावर्णितंमेमधुवनसुचरित्रंश्रीपतेः प्रीतिकारि
कलिकलुषकलापच्छेदनेदक्षमक्षोत्पथगमननिरासेकारणंपुण्यमूर्तौ ५८
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिंदी
माहात्म्येमधुवनवर्णनोनामपंचदशाधिकद्विशततमोऽध्यायः २१५

षोडशाधिकद्विशततमोऽध्यायः

नारदउवाच-
अतोमधुवनाद्राजन्नयंबदरिकाश्रमः

एकादशधनुर्मा त्रेभूभागेव्यवतिष्ठति १
अस्यतीर्थवरस्याहंमहिमानंमहद्भुतम्
वर्णयामिपुरस्तात्तेयं श्रुत्वामुच्यते भयात् २
एकस्तुमगधेराजन्देवदासोहिनामतः
ब्राह्मणःसत्यवान्दांतः साक्षाद्धर्मइवापरः ३
निष्णातःसर्वविद्यासुबृहस्पतिरिवापरः
हरिसंतोषकोभक्त्याप्रह्लादइवदैत्यराट् ४
सस्त्रीकोऽपिस्मरंजेतापार्वत्याइववल्लभः
सदाचारपरोनित्यंविश्वामित्रोमुनिर्यथा ५
मगधेशगृहेमान्योद्रोणतत्कुरुवेश्मनि
दानशीलःसुपात्रेषुबलिर्दैत्याधिपोयथा ६
तस्यभार्योत्तमानामलक्ष्मीरिवगुणोत्तमा
पतिशुश्रूषणपरायजथानकनंदिनी ७
तस्यैकश्चसुतोराजन्नंगदो नामबुद्धिमान्
एकापुत्रीतुवलयानामसल्लक्षमणान्विता ८
तयोर्ज्यायान्सुतः कन्यातस्माद्रूपकनीयसी
तयोर्यथाक्रमंचक्रेविवाहंसद्विजोत्तमः ९
विवाहितातुसाकन्याययौश्वशुरवेश्मनि
शुभलक्षणसंपन्नाकालेनकियतानृप १०
अंगदस्तुमहाबुद्धिर्गृहभारंबभारह
पितृवत्सर्वशास्त्रज्ञोयौवनश्रीविभूषितः ११
एकदासतुविप्रेंद्रः पुत्रंतंगृहकर्मणि
क्षमंविज्ञायराजेंद्रनिजभार्यामुवाचह १२
देवदासउवाच
समाकर्णयमेसाध्विकालेऽस्मिन्नुचितंवचः
ततोयदुचितंभद्रेतदद्यायबिधीयताम् १३
एषाजरासमायाताशरीरंपातयिष्यति
अंगान्याकंपयंतीववात्यापक्वफलंयथा १४
अक्ष्णामपिद्युतिंमंदांनूनमेषाकरिष्यति
नक्षत्राणांसचंद्राणांप्रातर्वेलेवसुव्रते १५

स्खलितोपादयोर्मंदांगतिंप्रतिपदक्रमम्
करिष्यति जराह्येषायथानिगडशृंखला १६
तस्मादेषाजरायावन्नपौढाजायतेशुभे
अात्मनस्तावदावाभ्यांकरणीयंहि तंद्रुतम् १७
गृहपुत्रसुहृद्भ्रातृपितरोहिविनश्वराः
द्रव्यादिकंचसुभगेतेषुसज्ञेतनोबुधः १८
अतोऽहसर्वतीर्थेषुपयर्यटन्विजितेंद्रियः
वानप्रस्थेनविधिनावीक्षिष्येहरिमीश्वरम् १९
ततः संन्यासमादायक्वचित्तिर्थोत्तमेशुभे
प्रारब्धकर्मणामंतेत्यक्ष्यामिस्वंकलेवरम् २०
एवंचेत्प्राणमुक्तःस्यान्मुक्तिः स्यान्नात्रसंशयः
ममश्रीपतिपादाब्जसम्यक्स्थापितचेतसः २१
उत्तमोवाच-
पुमान्वास्त्रीजनोवापिकोरमेतविनश्वरे
संसारेमाधवंमुक्त्वानित्याश्रममचेतनः २२
तस्मान्मामपिजीवेशत्वत्पादांबुजसेविनीम्
नीत्वास्वसंगमेतावद्विश्वाब्धेराशुतारय २३
पुत्रोऽयमंगदः श्रीमान्गृहभारस्यधारणे
समर्थोऽभूत्स्नुषाचेयंकल्याणीतत्सहायिनी २४
पुत्रेसमर्थेयोमूढःपुरुषःस्त्रीजनोऽथवा
नविरज्येतयोर्मूढोवंचितः श्रेयसाहिसः २५
नारदउवाच-
एवमन्योन्यमामंत्र्यदंपतीतौरहस्तदा
पुत्रमाहूयकथयांचक्रतुस्त्विदमंगदम् २६
दंपत्यूचतुः-
जरागमश्लथद्गात्रावावांविद्धित्वमंगद
स्वश्रेयसेयतिष्यावः कुत्रचित्पुण्यभूतले २७
हरेराराधनंभक्त्याश्रेयः परममुच्यते
तदर्थमेवनिष्कामायतंतेसाधवोभुवि २८
विषयेषुनसंसक्तिः समत्वंसर्वजंतुषु

येषांहर्षविवादौचनजातुसुखदुःखयो २९
तएवसाधवोलोकेगोविंदपदसेविनः
तेषांदर्शनमात्रेणकृतार्थोजायतेनरः ३०
तीर्थानिपर्यटन्धीरस्तद्दर्शनसमुत्सुकः
भाग्योदयेनकेनापितद्दर्शनमवाप्नुयात् ३१
तस्माद्भारंकुटुंबस्यभुजयोर्युगदीर्घयोः
आरोप्यनौविसर्जस्वतीर्थयात्रार्थमंगद ३२
तीर्थयात्राप्रसंगेनकदाचित्साधुदर्शनम्
भवेद्यदितदापुत्रद्वयोर्नौस्यात्कृतार्थता ३३
नारदउवाच-
इत्युक्तः पितृभ्यांपुत्रःसाधुवादमवादयत्
नारदउवाच-
समस्तकुलनिस्तारोभवद्भ्यामयमीरितः ३४
आशुमामवजानीतंकिंकरोमिभवद्धितम्
अहमाज्ञाकरोनित्यंयुवयोः पूज्यपादयोः ३५
पुरयतीर्थेषुदानार्थंगृहीतंधनमुत्तमम्
नयतंमामपिप्रेष्यंसेवायैनिजसंगमम् ३६
नारदउवाच-
इत्युक्त्वाधनमादायगत्वाक्रोशद्वयंतयोः
संगेगृहमगात्ताभ्यांकथंचित्संनिवर्तितः ३७
तौगृहीत्वाधनंकिंचिद्विष्णुर्नौसंयतामिति
कंदमूलफलाहारौतत्रोषित्वादिनत्रयम् ३८
यदातस्मात्प्रचलितौदंपतीजगतीपते
तदामार्गेमहान्कश्चित्सिद्धः संमीलितस्तयोः ३९
ताभ्यामुभाभ्यांशिरसावंदितः सउपाविशत्
उपविष्टस्तदाताभ्यामितिपृष्टः ससिद्धराट् ४०
कोभवान्कुतआयातोकिंचिकीर्षतितद्वद
सिद्धउवाच-
सिद्धोऽहतापसश्रेष्ठकल्पग्रामेगृहंमम ४१
इंद्रप्रस्थात्समायातोदृष्टंतत्रमहाद्भुतम्

तत्रास्तिकपिलः सिद्धोनारायणसमोगुणैः ४२
तस्मादहंपठन्सांख्यंनिवसामितदाश्रमे
एकदामद्गुरुःश्रीमान्स्वाश्रमात्कपिलोययौ ४३
बदर्याख्यंमहापुरयंस्नातुंसयमुनाजले
तत्रैकोररायमहिषस्तृषार्तोयमुनाजले ४४
प्रविष्टोजलमापीयपूर्वजन्मस्वमस्मरत्
स्मृत्वासपूर्वकर्माणिमहिषोऽरगयसंभवः ४५
जलान्निसृत्यतरसाववंदेकपिलंगुरुम्
उवाचनरवाचाचमयिशृगवतितापसः
यतत्तेकथयाम्यद्यश्रृणत्वंपरमाद्भुतम् ४६
महिषउवाच-
भोभोविष्णुकलाभूत सिद्धानांकपिलेश्वर
किंनामेदंमहातीर्थंनतायकथयस्वमे ४७
अस्यतीर्थवरस्यांबुस्पर्शाद्विपूर्वजन्मनि
जाताममममहाभागपापस्यापिचकर्मणः ४८
सिद्धउवाच-
एवमाकगर्यतद्वाक्यंमहिषस्यमहामुनिः
जानन्नपिचतद्वृत्तंविहस्येदमुवाचह ४९
कपिलउवाच-
भवान्महिषशार्दूलकत्रासीत्पूर्वजन्मनि
तत्रकिंकृतवान्कर्मयोनिंयेनापमाहिषीम् ५०
महिषउवाच-
शृणुष्वमुनिशार्दूलवृत्तंवैपूर्वजन्मनः
अहमासंपुराराजाकलिगाधिपतिर्बली ५१
स्वांपरां नैवजानामियोषितंकाममोहितः
वणिजांसाधुवृत्तीनांधनहर्तानिरेनसाम् ५२
निशीथेनगरेराजन् गतभीः पर्यटाम्यहम्
सुंदरीभिः परस्त्रीभिः क्रीडितुंरतिलीलया ५३
यद्गृहेसुंदरींनारींपश्यामिस्मरमोहितः
वसामिनिशितत्राहंक्षेत्रेमध्येगजोयथा ५४

क्रीडित्वातत्रनिःशंकंधनंहृत्वाचतद्गृहात्
स्वगृहंपुनरायामिकियद्भिर्वासरैरहम् ५५
उपविष्टःसभामध्येदिवाद्वौपुरवालकौ
अनार्यबाहुयुद्धेनयोधयामिनिजाग्रतः ५६
नियोधयतियोबालस्तंमत्वाधनिनंबलात्
गृह्णामितत्पितुर्वित्तंस्वल्पंवाभूरिवामुने ५७
यः पराजयतेतत्रकातरत्वान्महामुने
नायमर्हःपुरेस्थातुंममेतिविनिहन्मितम् ५८
एवमप्यद्यमारेभेवर्त्तमानेमहीपतौ
पौरानगरमुत्सृज्यप्रययुर्विषयांतरम् ५९
एकदामुनिशार्दूलोदुर्वासापर्यटन्महीम्
पुरेममसमायातोदुर्वासारुद्रसंभवः ६०
मिंलित्वानागराःसर्वेतदाजग्मुस्तदंतिके
प्रणिपत्येदमाहुस्तंस्वदुःखज्ञापकंवचः ६१
पौराऊचुः
आत्रेयमुनिशार्दूलकृपांकुरुकृपानिधे
अधर्मनिरतंभूपमेनंधर्मेणयोजय ६२
भाग्योदये नकेनापिभवानस्माकमागतः
उद्वेलाद्भूपदुःखाब्धेरस्मांस्तारयपोतवत् ६३
धनंलोभयतातेनहृतंनोमुनिपुंगव
दूषिताश्चस्त्रियःसाध्व्यःसकामेननिरेनसा ६४
दशवत्सरदेशीयाबहवः शिशवोहताः
अगरायवैगुरायनिधिरेषभूपोमहामुने ६५
महिषउवाच-
एवमाकरार्यपौराणांवचःसमुनिरत्रिजः
दंडयोयमितिसंचित्यसभास्थंमामथाययौ ६६
दृष्ट्वाहितंसमायांतडवधूतंदिगंबरम्
आवारयमहंभृत्यैर्नेत्ययंदर्शनोचितः ६७
रेणुनासर्वलिप्तांगोमहिषाकृतिरेववै
वार्यतामितिपार्श्वस्थान्बहुशोऽहसमादिशम् ६८

ततस्तेतरसाभृत्यास्तंवारयितुमभ्यगुः
हुंकारेणैवतान्सर्वान्सचक्रेभस्मसान्मुनिः ६९
यज्ञाश्वंरक्षतः स्वस्यपितुस्त्वमिवसागरात्
सर्वशस्तानहंभृत्यान्भस्मीभूतांस्तुतेजसा ७०
आलक्ष्यसहसोत्थायगृहमावेष्टुमुद्यतः
रेरेपापेतिसंबोध्यततोमांमुनिसत्तमः ७१
शशापेतिमहारण्येमहिषोभवसांप्रतम्
तेनाहमितिशप्तोवैमुक्त्वाराजतनुंतदा ७२
मरुदेशेमहारण्येजातोऽहमहिषोमुने
चिरकालमहंतत्रन्यवसंमुनिपुंगवः ७३
अत्रागतस्तुकेनाहंपुण्येनतदपिशृणु
वापीकूपसरस्यस्तुबहवः कारितामया ७४
सहकारादिबृक्षाणामारोपोबिहितःपथि
पुण्येनानेनमेदेवपातोननरकेऽभवत् ७५
तीर्थस्यचमयाप्राप्तोह्यमुष्यजलसंगमः
एतत्तेकथितंसर्वंपूर्वजन्मशुभाशुभम् ७६
येनतीर्थंमयाप्राप्तमेतद्योनिश्चमाहिषी
अस्यतीर्थवरस्यांबुस्पर्शाज्जातिस्मरोभवम्
कथमस्याअसद्योनेर्मुक्तिः स्यात्तन्मुनेवद ७७
कपिलउवाच-
एतत्तीर्थंमहापुण्यंबदर्याख्यंरमापतेः
अत्रस्नाहिद्रुतंकामंस्वचित्तस्थंहिलप्स्यसे ७८
सिद्धउवाच-
एतच्छ्रुत्वावचस्तस्यमहिषस्यमहामुने
तत्रतीर्थेवरेस्नातुंप्राविशत्स्वर्गवांछया ७९
स्नात्वास्वर्गेच्छयातस्मिन्जलात्तटमुपागते
तत्क्षणंगजमारूह्यशक्रः स्वर्गात्समाययौ ८०
इंद्रउवाच-
हेकलिगपतेनैजंदेहंजहिहिमाहिषम्
प्रतिलभ्यवपुर्दिव्यंसममायाहिमेदिवम्

त्वयास्वर्गेच्छयास्नातंप्राप्तंतत्तेसुरास्पदम् ८१
सिद्धउवाच–
इत्युक्तःसतदातेनत्यक्त्वादेहंतुमाहिषम्
दिव्यंवपुःसमासाद्यगजराजंसमारुहत् ८२
गजराजंसमारुह्यस्थित्वाचगगनेक्षणम्
प्रणम्यशिरसादेवंतुष्टावकपिलंमुनिम् ८३
कलिङ्गउवाच
नमस्तेपरमेशानकेवलज्ञानहेतवे
सेतवेवेदविद्यानांरिपवेतद्विरोधिनाम् ८४
त्वत्तःप्रवृत्तिःसांख्यस्यजातातत्वावबोधिनी
देहिनांमाययाग्रस्तचेतसामपितेविभो ८५
येवेदविहितंत्यक्त्वावर्ततेस्वेच्छयामुने
तान्दंडयसिदंड्यांस्त्वंमज्जयंस्तिर्यगादिषु ८६
इंद्रादयोलोकपालाःसर्वेत्वदधिकारिणः
त्वदिच्छामनुवर्ततेभीतादंडकृतोहिते ८७
त्रयीधर्मविरोद्धारः पूर्वदेवायुगेयुगे
अवतीर्यविनाशायकृतासर्वात्मनात्वया ८८
येयेत्वयाहतानाथचक्रिणात्रिदशारयः
तेतेतमोमयींहित्वातनुंवैकुंठमभ्यगुः ८९
आज्ञापयजगन्नाथगंतुमांत्रिदशालयम्
अनुगृह्णीष्वशक्रंचनमंतंवीक्षणामृतैः ९०
प्रसादात्तवदेवेश बदर्याख्यस्यचप्रभो
तीर्थस्यस्वतनुंहित्वातामसींसात्विकींगतः ९१
इंद्रेणसहनागेंद्रमारुह्यत्रिदशालयम्
गच्छामिस्वेच्छयानाथकृपातस्तेकृपानिधेः ९२
सिद्धउवाच–
इत्यभिष्टूयदेवेशंकपिलंसकलिगपः
नमस्कृत्यचतत्पादौजगामत्रिदशालयम् ९३
एतन्मयाद्भुतंविप्रदृष्टंबदरिकामश्रमे
गुरुंशुश्रूषमाणेनपापस्यापिविमोक्षणम् ९४

नातः परंत्रिलोक्यांतुतीर्थंसर्वार्थदायकम्
याहितत्रैवसस्त्रीकः परंश्रेयोयदीच्छसि ९५
अहंयामिसमानेतुंबदर्याख्यंगृहान्द्विज
वृद्धंस्वकीयपितरंनिस्पृहंमोक्षकामुकम् ९६
नारदउवाच-
इतितीर्थवरस्यास्यबदर्याख्यस्यभूपते
महिमानंसमुत्कीर्त्यससिद्धः स्वगृहंययौ ९७
अथकालेनकियतासद्विजः सहभार्यया
तीर्थानपर्यटन्धीरः इंद्रप्रस्थेभ्यगादहम् ९८
तेनैववपुषाराजन्नीतवांस्तौनिजालयम्
ससिद्धोऽपिस्वपितरंगृहादानीयसत्वरः ९९
तत्रैवस्नापयामासतत्तीर्थेमोक्षकामुकम्
सोऽपिश्रीवासुदेवेनबृद्धःसिद्धपितातदा १००
ततोनीतोनिजगृहंवृंदारकविबंदितः
इंद्रप्रस्थांतरगतमिदंसद्बदर्याख्यमीशः
स्नानाद्दद्यादखिलजनितामानसेष्टंपदार्थम्
माहात्म्यंतेनृपनतिमतेवर्णितंतस्यपूतंयच्छ्रुत्वावैपततिनजनोमातृगर्भेकदाचित्
१०१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिदी
माहात्म्येबदरिकाश्रमवर्णननामषोडशाधिकद्विशततमोऽध्यायः२१६

## सप्तदशाधिकद्विशततमोऽध्यायः

राजोवाच-
वर्णितंमेत्वयासाधोमाहात्म्यंवदरीभवम्
यंनिशम्यमनोयातिममनिर्मलतांमुने १
एतदद्भुतमाहात्म्यंशक्रप्रस्थाख्यमुत्तमम्
सकलंमुनिशार्दूलचतुवर्गप्रदायकम् २
भुविनातःपरंतीर्थंतिरश्चातमपिमुक्तिदम्
श्रेष्ठंसकलपापघ्नंदर्शनादेवनारद ३
एतदंतर्गतस्यास्यहरिद्वारस्यनारद

माहात्म्यंश्रोतुमिच्छामित्वत्तः संतोषकारकात् ४
मामुद्धरमुनेदीनमविद्याकामकर्म्मभिः
वर्णनेनास्यतीर्थस्यशक्रप्रस्थगतस्यवै ५
नारदउवाच–
आकर्णयमहाभागवर्णयामितवाग्रतः
हरिद्वारस्यमाहात्म्यमश्वमेधफलप्रदम् ६
अत्रैकः श्वपचःपापःयथास्वर्गतिमाप्तवान्
तत्तेऽहकथयाम्यद्यशृणुष्वैकमनाःप्रभो ७
धर्मक्षेत्रेकुरुक्षेत्रेकालिगइतिविश्रुतः
श्वपचःपापकर्म्मावैवसतिस्मपुराद्बहिः ८
पंचषड्वर्षदेशीयान्वालान्नगरवासिनाम्
प्रसह्यवंचयित्वाचवनेनीत्वाजघानसः ९
तेषामलंकारमयंरजतंहेमवन्नृपः
रत्नादिकंचकायस्थंहत्वातान्जगृहेऽधमः १०
विवेशसाधुनिलयेरात्रौधनजिहीर्षया
पथिकान्धनमालक्ष्यसजघ्नेनिर्जनंवने ११
कुरुक्षेत्रेसमायाताएकदारविपर्वणि
नानादिग्भ्योजनाराजन्नानादानजिहीर्षया १२
तस्मिन्यथाविधिस्नात्वारविपर्वणिभूपते
दानंदत्त्वायथावच्चलोकाःस्वान्स्वान्गृहान्ययुः १३
एकः कश्चिद्विशांश्रेष्ठोधनेनमहतायतः
पश्चात्सर्वजनेभ्यस्तुचचालस्वगृहंप्रति १४
अश्ववारः पदातीनांविंशतिंपुरतोदधत्
कालिगः समहापापस्तमनुप्रस्थितः श्रियै १५
कतिचिद्वसतीर्गत्वासहतेनविशाधमः
सोंऽत्यजस्तद्धनंहर्तुंनलेभेसमयंनृप १६
बलेनापिगृहीतुंनक्षमोऽभूत्तस्यसश्रियम्
वैश्यस्तुजनविंशत्यासंयुक्तस्तुसएकलः १७
अत्रागतः सपापात्मावैश्यस्यार्थेनपार्थिव
निशीथेशिबिरंतस्यधनंहर्त्तुंसमाविशत् १८

एकेनतस्यवैश्यस्यजनेनसतुलच्चितः
प्रविशन्नेवपापात्मादददताप्रहरंस्वकम् १९
तमालच्यसमीपस्थंसजनः प्रहरप्रदः
उभयोःपादयोराजन्स्वपन्नेवगृहीतवान् २०
तौगृहीत्वाजनानन्यान्बोधयन्प्रहरप्रदः
हस्तेनैवतुपापेनचौरेणाघातितोहिसः २१
श्रुत्वापलायमानस्तुगृहीतोऽन्यैर्जनैस्तदा
गृहीतारंपुनर्हत्वासहसासपलायितः २२
एकेनकेनचिद्राजन्सेवकेनधनुर्भृता
दूरादेवशरेणाशुधावन्सनिहतोऽधमः २३
हतमात्रःशरेणाशुतत्याजसचजीवितम्
चौरेणनिहतौराजन्वैश्यस्यानुचरावुभौ २४
तेत्रयोवरयानानिगणानीतानिभूपते
समारुह्यदिविस्थित्वावैश्यमेतद्बभाषिरे २५
कालिगवैश्यानुचराऊचुः
भोभोवैश्यपते साधोतीर्थमेतदनुत्तमम्
इंद्रप्रस्थेहरिद्वारंशिवकृत्पापिनामपि २६
वयंत्रयःसुतीर्थेऽस्मिन्नपमृत्युगताअपि
गच्छामस्त्रिदिवंवैश्यसांप्रतंशिवमस्तुते २७
श्रीनारद उवाच-
इत्युक्त्वातेययुः स्वर्गंशिवेशिवकृतांपदम्
यत्रेच्छयाहिलभ्यंतेभोग्यवस्तून्यनेकशः २८
अथरात्रौव्यतीतायांप्रातरत्रविशांवरः
स्वभृत्यदेहयोः कृत्वादाहमस्थीन्यपातयत् २९
तीर्थेऽत्रपात्यमानेषुभृत्यौतावस्थिषुप्रभो
स्वर्गात्पुनरिहायातौतंवैश्यमिदमूचतुः ३०
भृत्याऊचतुः
भोभोवैश्यपतेसाधोतीर्थेऽत्रमरणाद्भुवि
पापानामपिजंतूनांस्वर्गप्राप्तिर्नसंशयः ३१
स्थलेमृतस्यजंतोश्चेत्पतंत्यस्थीनिवारिणि

तीर्थस्यास्यतदावैश्यसत्यलोकेस्थितिर्भवेत् ३२
स्थलेमृताभ्यामावाभ्यामस्थिपातेनवारिणि
संप्राप्ताब्रह्मणोलोकेस्थितिराब्रह्मसंस्थिते ३३
स्थलेमृतस्यचौरस्यापेतुरस्थीनिनांबुनि
यतोऽत सविशांनाथतस्थौवृंदारकालये ३४
तस्यापिदेहमन्विष्यतीर्थेस्मिन्नाशुपातय
यथासोऽपिसुरश्रेष्ठप्राप्नुयान्नौगतिंपराम् ३५
उपकारः सदाकार्यः परेषामपिसाधुभिः
अपकारोनमंतव्यः कृतोभृशमसज्जनैः ३६
नारदउवाच-
इत्युक्त्वातौमहाभागौगतौहरिपुरंप्रति
हरिद्वारस्यतीर्थस्यसलिलेनास्थिपातनात् ३७
सवैश्यस्तुमहाभागस्तस्यचौरस्यविग्रहम्
दग्धुमन्वेषयामासनलब्धंतत्तुभूपते ३८
पुनराबृत्यतत्रैवसर्वतीर्थशिरोमणौ
हरिद्वारेमहाराजससस्नावितिवांच्छया ३९
अहमुत्पाद्यसत्पुत्रान्धर्म्मार्जितधनेनच
संतोष्यविप्रान्बंधूंश्चविष्णुमाराध्यसेवया ४०
त्वय्येवमरणंप्राप्यगच्छामिहरिमंदिरम्
तीर्थराजनमस्तुभ्यमेतत्कर्तव्यमस्तिते ४१
इतिकामनयाराजन्सवैश्यस्तत्रकामदे
तीर्थेस्नात्वागतः सर्वैर्भृत्य्स्वंसमगाद्गृहम् ४२
तत्रगत्वासपत्न्यांतुपुत्रानुत्पाद्यबुद्धिमान्
धर्मोपार्जितवित्तेनतोषयामासबांधवान् ४३
भक्त्यापरमयाराजन्नाराध्यकमलापतिम्
तीर्थेऽस्मिन्मरणंप्राप्तोयतोवैकुंठमाप्नुयात् ४४
इतिवैवर्णितोराजंस्तीर्थस्यमहिमातव
हरिद्वारस्यपुरायस्यश्रवणेऽस्यफलंशृणु ४५
तिलद्रोणस्यदानेनमाघेयत्फलमाप्नुयात्
जनस्तत्फलमाप्नोति शृरावन्माहात्म्यमस्यतु ४६

गोपीचंदनदानेनब्रह्मपत्रेषुभोजनात्
यत्फलंतन्महिम्नोऽस्यश्रवणादेवकार्तिके ४७
जागरेचप्रबोधिन्यांप्रहरेपश्चिमेनृप
यत्फलंन्तन्महिम्नोऽस्यतीर्थस्याकर्णनाद्भवेत् ४८
हरिद्वारस्यसदृशंशक्रप्रस्थगतस्यवै
नतीर्थंपृथिवीलोकेचतुर्वर्गफलप्रदम् ४९
इतिं श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेइंद्रप्रस्थ
माहाम्त्येहरिद्वारवर्णनंनामसप्तधिकद्विशततमोऽध्यायः २१७

अष्टादशाधिकद्विशततमोऽध्यायः

नारदउवाच-
भूयःशृणुमहाभागमाहात्म्यंपरमाद्भुतम्
अत्रस्थितस्यतीर्थस्यपुष्करस्यशिवप्रदम् १
प्रसादात्तस्यतीर्थस्यविष्णुःसर्वसुरेश्वरः
प्रसन्नंपुंडरीकस्यमासमेकंगृहेवसेत्
अत्रमुक्तिंतदनुजोलेभेपापरतोऽपिहि २
शिबिरुवाच-
कःपुंडरीकोधर्मात्माकृतंतेनचकर्म्मकिम्
येनप्रसन्नोभगवांस्तद्गृहेमासमावसत् ३
कथंतदनुजःप्रापपापात्माश्रीहरेःपदम्
तीर्थस्यास्यप्रसादेनसर्वमाख्याहिमेमुने ४
शृणवतोऽस्यनसंतोषोमाहात्म्यंममजायते ५
नारदउवाच-
विदर्भनगरेराजन्मालवाख्येमहायशाः
ब्राह्मणोब्रह्मविच्छांतोविद्वान्विष्णुपरायणः ६
देवर्षिपितृभूतानांमानुषाणांचपोषकः
विषयेषुनसंसक्तोलोभमोहादिवर्जितः ७
सएकदामहाभागसिंहंप्राप्तेबृहस्पतौ
गोदावरींमहापुण्यांस्नातुंप्रतिजगामह ८
दातुंतत्रसुवर्णस्यगृहान्निन्येपलायुतम्

गच्छन्पथिसधर्मात्मामनसैतदचिंतयत् ९
मालवउवाच-
गृहाद्दानार्थमानीतंमयाहेमपलायुतम्
यस्मैकस्मैनदातव्यंदातव्यंपूज्यसाधवे १०
निष्किंचनायविप्रायपात्रायानुपकारिणे
पूज्यायदेशेकालेचदत्तमक्षयतांव्रजेत् ११
उञ्छवृत्त्यासमानीतंदत्त्वादुर्वाससेमुनिः
शिलोंच्छवृत्तिर्धर्मात्मास्वंत्यक्त्वागात्परंपदम् १२
दानवेंद्रोबलीराजापात्रंविज्ञायवामनम्
विपद्मायाप्यदात्तस्मैत्रिलोकींस्वभुजार्जिताम् १३
तस्मात्पात्रायदातव्यंधनंधर्म्माजितंमया
गोविंदतुष्टयेसम्यक्वांच्छनीयंनतत्फलम् १४
पुंडरीकस्तुधर्मात्माभागिनेयोगजाह्वयात्
आयास्यतिमयाहूतः सर्वपात्रशिरोमणिः १५
आनीतस्यधनस्यार्द्धंतस्मैपात्राय सूनवे
स्वसुर्द्दास्यामिशेषंतुश्रोत्रियेभ्योयथाविधि १६
नारदउवाच-
एवंविचिंत्यधर्मात्मामालवं सद्विजोत्तमः
कतिचिद्वासरैःप्राप्तःपुण्यांगोगदावरींनृप १७
मिलितस्तस्यधर्मात्मापुंडरीकःस्वसुःसुतः
तस्यवैपूर्वमायातोमालवस्यमहीपते १८
सतत्रविधिनास्नात्वा सिंहसंक्रमवासरे
पुंडरीकायवित्तार्द्धंददौमेप्रीयतांहरिः १९
पुंडरीकोऽपिधर्मात्मास्नात्वागोदावरीजले
स्ववित्तस्यचतुर्थांशंश्रोत्रियेभ्योददौमुदा २०
सतत्रविधिवत्स्नात्त्वादत्वादानंचशक्तितः
गच्छंतंस्वगृहान्राजन्नित्युवाचस्वसुः सुतम् २१
मालव उवाच-
गुरून्प्रतिनमस्कारोवाच्योआशीर्लघून्प्रति
यथावयोर्हिसंयोगः क्षणिकोऽयबभूवह २२

एवंहिसर्वजंतूनांपुत्रदारादिभिः सह
तस्मात्क्षणिकसंयोगात्संसाराद्यः सुधीर्नरः २३
विरज्येतकृपापात्रंसहरेस्याद्विनिश्चितम्
कृपातः श्रीहिरेः प्राणीसत्संगमरतोभवेत् २४
तस्तस्यहरेर्लीलाश्रवणेच्छाहिजायते
श्रुत्वाचकीर्तितासद्भिर्हरिलीलाअपिस्वयम् २५
सुस्पृहंकीर्त्तयत्येवततः स्मरतिकेवलम्
ततस्तस्यभवेत्प्रेमगोविंदपद सेवने २६
नरस्ततस्तरत्याशुपोतेनेवमहार्णवम्
एतदर्थंहिसाधूनांज्ञानिनांकर्मणांतथा
यत्नोभवतिधर्मात्मन्नपित्वंयत्नवान्भव २७
नारदउवाच-
एवमुक्त्वासवैदर्भःसुतंकथमपिस्वसुः
विसृज्याश्रुमुखोवाष्पपर्याकुलदृशंययौ २८
पुंडरीकोऽपिधर्मात्माचचालस्वगृहं प्रति
कतिभिर्वासरैराजन्नागतोऽत्रशुभास्पदे २९
भरताख्यंकनीयांसंभ्रातरंपतितंभुवि
श्वसंतंक्षतनिर्गच्छद्रुधिराक्तमवैक्षत ३०
पप्रच्छय रुदन्नुच्चैर्भ्रातः केनेदृशींदशाम्
गमितोसिकिमर्थंवागृहादिहसमागतः ३१
इतिपृच्छतिराजेंद्रपुंडरीकेसपीडया
महत्याभरतःसद्यःपीडितोसूनमुंचत ३२
अवातरत्तदायानमैकंसगणमद्भुतम्
आकाशात्पश्यतांभूपजनानांतद्गुरोरपि ३३
तदारुह्यसदिव्यांगोभरतः पापकार्यपि
उवाचवचनं ज्येष्ठंभ्रातरंविनमन्निदम् ३४
भरतोवाच-
पुंडरीकमहाबुद्धेतीर्थस्यास्यप्रसादतः
पुष्करस्यमयाप्राप्तापापिनापिदिविस्थितिः ३५
मदीयंदारुणंकर्मभ्रातर्जानासियद्यपि

तथापिकथयाम्यद्यकिंचिदज्ञातमस्तिते ३६
यथामयाप्रभावत्यावेश्ययारमितंसह
तद्गृहंव्ययितंभूरिधनंचमदिराकृते ३७
द्यूतेनहारितंयच्चचौरकर्मसमार्जितम्
शिवरात्र्यांमयाशंभुनिर्माल्यंयच्चभक्षितम् ३८
यत्कृतेभवताविप्रोजेबुकोनामदूषितः
एतन्मयाकृतंकर्म्मविदितंपुंडरीकते ३९
गोदावरींगतेभ्रातस्त्वयियत्कृतवानहं
नतत्तेविदितंकर्मकथयामितदप्यहो ४०
चलितेत्वय्यतिक्रांतोयदापक्षस्तदाह्यहम्
श्रुतवानितिलोकेभ्योवचनंहरिदुःसहम् ४१
पुंडरीकोधनंदातुमाहूतोमातुलेनहि
निजसोदरमाहत्यपुंडरीकंतदाहृतम् ४२
गृहीष्यामिधनंभूरिमालवेनसमर्पितम्
महतावसुनातेनतोषयामिप्रभावतीम् ४३
दुरोदरेणक्रीडामिस्वेच्छयातद्विदैःसह
इत्यालोच्यत्वदध्वानंनिरुध्याहमिहस्थितः ४४
हत्वात्वांचधनंभूरिगृहीतुंचमहामते
अतिक्रांतेधनेभ्रातः कुतश्चित्सार्थमागतः ४५
वणिजामत्रसुप्तोऽहरात्रौतत्रमहामते
अथकश्चिन्निशीथेतुतस्करोवणिजांधनम् ४६
हर्तुंतत्रसमाविष्टःसार्थेजनसमाकुले
नीत्वायदाधनंकिंचित्सचौरस्तुपलायितः
तमन्वधावन्सहसाक्रोशंतइवसेवकाः ४७
सेवकाऊचुः
गृह्यतांगृह्यतामेषचौरोऽययातिसत्वरम्
मध्याद्बहूनामस्माकमपहृत्यधनंबहु ४८
भरतउवाच-
इत्याकर्ण्यवचस्तेषांपुरतस्तुतमन्वहम्
अधावंसहसाभ्रातस्तद्गृहीतुंजिहीर्षया ४९

ततस्तेवणिजांभृत्याज्ञात्वामांतस्यरक्षकम्
प्रजहुस्तरसासर्वेसखड्गंखड्गपाणयः ५०
तेषुकश्चिद्द्विजश्रेष्ठोब्राह्मणोऽहमितिब्रुवन्
खड्गेनशितधारेणमया पापीयसाहतः ५१
वणिजांसेवकैस्तैस्तुखड्गधारैरहंहतः
गतास्तेवणिजः प्रातर्निजगंतव्यनीवृतम् ५२
ततोभवानिहप्राप्तः श्वसंतंमांददर्शह
चलद्रुधिरलिप्तांगंपीडामोहविचेतनम् ५३
इत्येतत्कथितंभ्रातर्यदर्थमहमागतः
अपमृत्युंयथाप्राप्तस्तच्चापिकथितंमया ५४

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडे
कालिदीमाहात्म्येऽष्टादशाधिकद्विशततमोऽध्यायः २१८

## एकोनविंशाधिकद्विशततमोऽध्यायः

नारदउवाच-
इत्याकर्ण्यवचस्तस्यपुंडरीकोमहामनाः
उवाचनिजबंधुंतंशृण्वतांनिजसंगिनाम् १
पुंडरीकउवाच-
केनपुण्येनतीर्थेऽस्मिन्मृत्युर्भरततेऽभवत्
यदिजानासितद्ब्रूहिपापंविख्यातमेवते २
भरतउवाच-
पुंडरीकशृणुष्वेदंकथयामितवाग्रतः
एतत्तीर्थप्रदंपुण्यंकृतंयदिहजन्मनि ३
एकदातुधनंजित्वासमागच्छन्निजंगृहम्
अपश्यंमृतकंबालंमृतस्यानाथमापणे ४
निधायतमहंमूर्ध्निनीत्वागंगातटेशुभे
वस्त्रादिभिरलंकृत्यचक्रे दाहादिसत्क्रियाम् ५
द्यूतेनोपार्जितंद्रव्यंतत्सर्वंव्ययितंमया
तेनपुण्येनप्राप्तंमेतीर्थमेतच्छुभावहम् ६
कुरुत्वंममदेहस्यसंस्कारंदाहपूर्वकम् ७

श्रीनारदउवाच–
संस्कारेविहिते राजन्भरतः पापवानपि
तीर्थस्यास्यप्रसादेनपुष्करस्यगतोदिवि
मासमेकंयथाविष्णुःपुंडरीकगृहेहरिः ८
उवासास्यप्रसादेनतीर्थस्य शृणुसांप्रतम्
अत्रतीर्थेसधर्मात्माभरतस्यापिसद्गतिम्
दृष्ट्वेतिहृदयेमेनेतीर्थमेतत्तुकामदम् ९
अत्रेतिवांच्छयासस्नौपुंडरीकः सपंडितः
माघमासंस्वरूपेणहरिर्वसतुमेगृहे १०
एवंस्नात्वासकामेनययौनिजगृहंप्रति
तीर्थेऽत्रनृपतिश्रेष्ठपुंडरीकोऽखिलार्थदे ११
बंधुभ्योमरणंभ्रातुर्भरतस्यजगादह
तेपिश्रुत्वाशुचंचक्रुर्माययावृतबुद्धयः १२
पुंडरीकस्तदाकुर्वन्गृहेस्वस्मिन्निजक्रियाः
उवासेतिमहानंदस्तपस्यायास्यतेहरिः १३
पूर्णिमायामथोपौष्यांचक्रेसपरमोत्सवम्
मत्वेतिश्वोगृहेमह्यंहरिरायास्यतिध्रुवम् १४
श्रीखंडजलसेकेनगोमयालेपनेनच
मुक्ताचूर्णचतुष्केनसमस्कुरुतकेतनम् १५
शतद्वयंब्राह्मणानांनानाभोज्यैरभोजयत्
वह्वीभिर्दक्षिणाभिश्चतानेवसमतोषयत् १६
नानावादित्रकुशलैःकलकंठैश्चगायनैः
रजन्यांस्वजनैर्गायंश्चक्रेजागरणंतथा १७
अथप्रभातेतान्सर्वान्गायनादीन्विसृज्यसः
गोविंदागमनाकांक्षीगृहमध्येउपाविशत् १८
अथ तस्यगृहाभ्यासेनिवर्त्यनिजवाहनम्
प्राविशद्गृहमध्येतुकर्तुंस्वजनवांछितम् १९
सपुंडरीकस्तंदृष्ट्वामाधवंसमुपागतम्
उत्थायासनतस्तूर्णंववंदेशिरसानृप २०
उवाचचसधर्म्मात्मागोविंदालोकनिर्वृतः

संपूज्यार्घादिदानेनविष्टरेतंनिवेशितम् २१
पुंडरीकउवाच-
भवताभवतापघ्नंसुस्पष्टंतदनुष्ठितम्
तावदत्रत्वयाविष्णोस्थ्यतांस्थितिकारिणा २२
यावदस्यपुनीतस्यसमाप्तिस्तपसोभवेत्
यत्रत्वंसेवकास्तेचवसंतिपरिचर्यया २३
तत्रैवखलुवैकुंठं सर्वदोषविवर्जितः
यद्गृहेतवकर्माणिवर्ण्यं तेसाधुभिर्विभो २४
हरिर्निवसतेतत्रसन्मुखादितिनः श्रुतम्
येषांवचसितेनामहृदिरूपंचसुंदरम् २५
कर्णयोश्चगुणारोपस्तएवखलुसाधवः
भवतोभवतेस्वांतंयेषांशुश्रूषणेविभो २६
उत्तमांगेचनिर्माल्यंत एवखलुसाधवः
येषांतुबुद्धिःशत्रौचमित्रेचकमलापते २७
चयापचययोश्चैवतएव खलुसाधवः
येषांविकुरुतेचेतोनविकारस्यकारणे २८
संतिलक्ष्मीपतेनूनंतएवखलुसाधवः
यत्रत्वंसाधवस्तत्रसंतोयत्रततो भवान्
भवान्अतोविज्ञायतांसाधुंमाघेममगृहेवस २९
नारदउवाच-
इत्याकर्ण्यवचस्तस्यपुंडरीकस्यमाधवः
उवाचवचनं भासादंतानांभासयन्दिशः ३०
श्रीभगवानुवाच-
साधूनामुत्तमःसाधुस्त्वंपृथिव्यांमहामते
यत्त्वयापुण्यतीर्थेतुस्नातंमत्संगवांछया ३१
उत्तिष्ठजाह्नवीतोयमाघेस्नानंकुरुद्विज
माघांतेस्नापयामित्वांपूर्णिमायांतुपुष्करे ३२
प्रयागेमाघमासे तुपूर्णंयत्स्नानजंफलम्
तत्सर्वंपुष्करेतीर्थेदिनैकस्नानतोभवेत् ३३
नारदउवाच-

एवमुक्तःसविप्रेंद्रःपुंडरीकोमुरारिणा
किंचिदभ्युदितेसूर्येस्नानंगंगाजलेऽकरोत् ३४
प्रत्यक्षपुंडरीकाक्षपुंडरीकःसमर्चयत्
तुलसीविकसत्पुष्पयवकुंकुमचंदनैः ३५
धूपैरगरुजैरंगवासितांगंरमापतिम्
नीराजयतिकर्पूरदीपकैः पंचभिः स्मसः ३६
चतुर्विधमयैर्भोज्यैर्भोजयित्वाजगद्गुरुम्
सुप्तंसमणिपर्यंकेचामरैस्तमवीजयत् ३७
पादसंवाहनंजातुचक्रेतस्यरमापतेः
जातकर्पूरसंयुक्तंददौतांबूलवीटकम् ३८
उष्णीषंबध्नतस्तस्यश्रीपतेः पुरतस्तदा
तस्थौजातुसविप्रेंद्रः करेणानीयदर्पणम् ३९
एवंनिजगृहेतस्यवसतः सभवच्छिदः
सपर्यांविदधद्विप्रोमाघंनिन्येसमस्तकम् ४०
अथमाघावसानेतुपूर्णिमायांरमापतेः
स्मृतिमात्रागतंताक्ष्र्यमपश्यत्पुरतः स्थितम् ४१
तंदृष्ट्वापुंडरीकाक्षः पुंडरीकमुवाचह
श्रीभगवानुवाच-
श्रूयतांभोद्विजश्रेष्ठयद्वचोऽहवदामिते ४२
इंद्रप्रस्थगतेतीर्थेपुष्करेतेयदृच्छया
स्नानायतेमयादत्तंयन्मासमुषितंमया ४३
अद्यपक्षींद्रमारुह्यमयासहमहामते
व्रजतीर्थशिरोरत्नंतदेवप्रतिपुष्करे ४४
चतुर्वर्गप्रदेतस्मिन्स्नानंकुर्वन्यदीच्छसि
तदहंतेप्रदास्यामियदहंतद्वशेद्विज ४५
पापोऽपिभरतस्तेवैभ्रातायत्रमृतोगतः
स्वर्गंस्वर्गसुखाकांक्षीकिमन्यत्तस्यवरार्यते ४६
नारदउवाच-
एवमुक्त्वासदेवेंद्रोब्राह्मणेंद्रंनरेंद्रतम्
पतगेंद्रंसमारोप्यसर्वतीर्थेंद्रमागमत् ४७

पुंडरीकस्यदेहात्तुतेनतत्प्राणवायुना
समंज्योतिः सनिर्गत्यगोविंदपदमाविशत् ४८
एवंपुष्करतीर्थेऽस्मिन्निंद्रप्रस्थगतेनृप
स्नानेनपुंडरीकस्तुलेभेसायुज्यमीश्वरे ४९
एवंतीर्थानुरोधेनगोविंदोऽपिचतद्गृहे
मासमेकंसुखंराजन्नुवासनिजबंधुवत् ५०
केनवर्णयितुंशक्योमहिमापुष्करस्यवै
शक्रप्रस्थगतस्यास्यकोटयंशोवर्णितोमया ५१
माहात्म्यश्रवणादस्यश्रद्धयालभतेनरः
अश्वमेधक्रतुफलंपठनादपिभूपते ५२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेकालिदी माहात्म्येपुष्करमहिमावर्णनोनामैकोनविंशाधिकद्विशततमोऽध्यायः २१९

## विंशाधिकद्विशततमोऽध्यायः

नारदउवाच–
शिवस्यतीर्थराजस्यप्रयागस्यतवाग्रतः
महिमानंमहापुण्यंश्रद्धयावर्णयामिते १
विश्वावसुर्मही पालगंधर्वोलोकविश्रुतः
एकदासगतोगातुंसुमेरौब्रह्मणः सभाम् २
तत्रसर्वैः सुरश्रेष्ठमुपविष्टंसुविष्टरे
जुष्टंसुरगणैर्भूपविश्वावसुरवैक्षत ३
ब्रह्मासनसमीपेतुवरासनगतंनृप
द्वितीयमिवलोकेशमिंद्रप्रस्थंसएक्षत ४
सुरराजतीर्थराजौब्रह्मेंद्रप्रस्थयोर्नृप
चामरोद्धूननं मूर्ध्निकुर्वंतौसददर्शह ५
अन्यानिदेवतीर्थानितयोर्दूरेमहीपते
स्थितानितेनदृष्टानिबद्धांजलिपुटानितु ६
तयोरग्रेजगौराजन्गांधर्वंरागमुत्तमम्
तीर्थैःसममगात्सत्यलोकंदेवान्विसृज्यहि ७
अथविश्वावसुर्धीमान्दृष्ट्वातीर्थस्यवैभवम्

इंद्रप्रस्थस्यराजेंद्रहाहामेतदुवाचह ८
विश्वावसुरुवाच-
भोभोगंधर्वशार्दूलतीर्थमेतन्महाद्भुतम्
इंद्रप्रस्थाख्यमेतस्मिन्संसारेतीर्थराशिषु ९
चराचरगुरुर्ब्रह्मासुरवंद्यपदांबुजः
तस्यासनसमीपस्थंयदतिष्ठसमासनम् १०
तीर्थराजोऽपिपृष्ठस्थश्चामरंयस्यमस्तके
अधुनाभृत्यवज्ञातस्तीर्थेष्वन्येषुकाकथा ११
पृथिव्यांयानितीर्थानित्रिवर्गफलदानितु
इंद्रप्रस्थमिदंतीर्थंचतुर्वर्गफलप्रदम् १२
अत्रस्थितानितीर्थानितादृशानिगुणैर्ध्रुवः
शेषेनापिनशक्यंतेस्तोतुंतेषांमहागुणाः १३
नारदउवाच-
एवंविश्वावसुर्धीमान्दृष्ट्वेंद्रप्रस्थवैभवम्
गत्वातस्यगृहंराजन्पावनंसर्वकामदम् १४
यथादेवेषुसर्वेषुशक्रः श्रेष्ठःशचीपतिः
तस्माद्ब्रह्माचतीर्थेषुप्रयागोऽयतथावरः १५
तस्मादपिमहाराशक्रप्रस्थमिदंवरम्
अस्यांतरगतोयोऽयप्रयागोनृपदृश्यते १६
कथयाम्यत्रयद्वृत्तंमोहिन्याःपरायोषितः
नर्मदासरितस्तीरेपुरीमाहिष्मतीनृप १७
मोहिनीनामतत्रासीद्वेश्याबहुधनान्विता
रूपयौवनसंपन्नानिष्णातानृत्यगीतयोः १८
तयाबहूनिपापानिकृतानिधनलुब्धया
ब्रह्महत्याःकृताःसप्तदास्यश्चबहवोहताः १९
तासांचपातितागर्भाःबहुशःपापयातया
एवंतयासुतारुरायंगमितंपापकर्मभिः २०
ततोजराकियत्कालेतद्देहेसमपद्यत
जराग्रस्तशरीरासानिवृत्तविषयस्पृहा २१
नचक्रेमानसंयूनांतेचतांपतिभूपते

पापार्जितंधनंस्वीयंनविश्वसितिकस्यचित् २२
नदत्तेनस्वयंभुंक्तेननिद्विपतिवैक्वचित्
एकदासानिशीथेतुविबुध्येतिविचिंतयत् २३
मृतायांमयिकस्येदंधनंपापैरुपार्जितम्
तंनयिष्यतिमांघोरंनरकंभृशदारुणम् २४
दास्यस्तासांचभर्त्तारस्तद्धोन्दयंतिधनंमम
मयैवसद्गतिस्तस्यकथंनक्रियतेऽधुना २५
एवंविचिंत्यसाधर्मेविधायमति मुत्तमाम्
चकारारामसरसिवापीकूपसुरालयान् २६
अभितःपुरमाधत्तेप्रपाःपथिकहेतवे
निदाघेचमहाराजतेभ्योऽन्नप्रददौचसा २७
धर्मशालांगृहाभ्याशेनिवासायविदेशिनाम्
विदधेसापुनस्तेभ्योददावाहारमुत्तमम् २८
एवंप्रवर्त्तमानाहिधर्मेसाभूपमोहिनी
ज्वरातुराभवत्काले क्वचिच्चेतिविचिंतयत् २९
धर्मार्थेहिमयावित्तंव्ययितंभूरियद्यपि
तथापिस्वर्णरूप्यादिप्रचुरंवर्त्ततेपरम् ३०
श्रोत्रियेभ्योददाम्येतज्ज्ञानेनेतिव्यचिंतयत्
विचिंत्येतिसमाहूतामोहिन्यानगरद्विजाः ३१
नागतास्तेमहीपालज्ञात्वाघोरंप्रतिग्रहम्
यदातदाद्विभागंचचक्रेतत्तुधनं स्वकम् ३२
एकोभागस्तुदासीनांदत्तोन्यश्चविदेशिनाम्
स्वयंतुनिर्द्धनाराजन्नभवत्सातुमोहिनी ३३
तथासमागतंमृत्युंविज्ञायांतिकमंतिके
मुक्त्वादास्योधनंनीत्वायथेष्टगतयोऽभवत् ३४
इतिमत्वायदाह्येषाज्वरमुक्ताभविष्यति
तदानींयद्धनंदत्तंनूनमादास्यतेहितत् ३५
अथसालंघनान्यष्टादशकृत्वामहीपते
निजायुषस्तुशेषेणज्वरमुक्तातदाभवत् ३६
एकाजरद्गवानामसखीतस्यामहीपते

सातामुपचचाराशुपथ्यादिभिरतंद्रिता ३७
कियद्भिर्वासरैः सातुपूर्णाहाराव्यजायत
तस्याजरद्गवायास्तुगृहेभुक्तंस्मलज्जया ३८
मयास्थितंसुखेनात्रदुःखमद्यसमागतम्
दारिद्र्यान्नमयास्थेयंसचिंत्येतिगतान्यतः ३९
गच्छतीसावनेराजन्मोहिनीपुरतस्करैः
इति मत्वाविनिहतागृहीत्वायात्यसौधनम् ४०
धनमप्राप्यत्स्तस्याः सकाशात्पुरतस्करैः
श्वसतीसापरित्यक्तातस्मिन्नेववनेनृप ४१
अथवैखानसः कश्चित्प्रयागस्यास्यवैजलम्
बिभ्रत्कमंडलौराजन्नत्रारण्येसमाययौ ४२
अथतांपतितांवीक्ष्यशस्त्रविक्षतविग्रहाम्
याचमानामिदंराजन् जीवनंहस्तसंज्ञया ४३
वैखानसउवाच-
कात्वंकेनशितैः शस्त्रैःसक्षतीकृतविग्रहा
एकाकिनीकिमर्थंवानिर्जनारण्यमागता ४४
इंद्रप्रस्थगतस्येदंप्रयागस्यजलेशुभे
भाग्योदयेनकेनापिप्रापितंप्रियकाम्यया ४५
इत्युक्तातेनसावक्तुमक्षमाव्याददेमुखम्
पातुंतद्वारिमहिषीभवेयमितिवांछया ४६
अथैतस्यप्रयागस्यपातितेंबुनितन्मुखे
तत्याजजीवितंसातुमोहिनीगणिकानृप ४७
प्राणप्रयाणकालेतुमहिषीत्वंचवांच्छयत्
अतःसामहिषीजाताद्राविडेवीरवर्मणः ४८
संभूयकेरलाधीशगृहेतीर्थांबुपानतः
कुलशीलधनैश्वर्यसंयुक्तस्यमहीपते ४९
हेमगौरंततः सांगंबभारकमलेक्षणा
अतस्तस्यपितानामहेमांगीतिचकारह ५०
एकदासातुहेमांगीहेमाभरणभूषिता
कलायाःस्ववयस्यायामंत्रिपुत्र्यागृहंययौ ५१

तत्रयावकतैलेन स्नापिताभोजिताचसा
विविधान्नैस्तदाराजन्निविष्टावरविष्टरे ५२
पुष्पोद्ग्रथितधमिल्लाद्धामद्धौमविभूषिता
कलांप्रोवाचदधतीमुखेतांबूलवीटिकाम् ५३
हेमांग्युवाच -
कलेकलयमेवाक्यंकोकिलाकलभाषिणि
गृहेयदद्भुतंवस्तुतवमामभिदर्शय ५४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सास्त्र्यांसंहितायामुत्तरखंडेकालिदी
माहात्म्येइंद्रप्रस्थवर्णनोनामविंशाधिकद्विशततमोऽध्यायः २२०

## एकविंशाधिकद्विशततमोऽध्यायः

नारदउवाच-
इत्युक्तासाकलाराजंस्तयानृपतिभार्यया
स्वकोशात्स्वर्णमंजूषामानाय्यविदधेपुरः १
उवाचचमहाराजभार्येऽस्यामहदद्भुतम्
पुस्तकंवर्ततेदेवितत्रचित्राणिसंतिवै २
उद्धाटचदृश्यतांकिंचित्किंकिमस्त्यत्रपुस्तके
रंस्यतेतेमनोनूनंतत्रस्थालेख्यदर्शने ३
इत्युक्त्वाभूपपत्नीसादास्यातामुदघाटयत्
मंजूषांतत्रसंस्थंचपुस्तकंपाणिनाऽग्रहीत् ४
तत्रावलोकयामाससावतारान्समासतः
पूर्वंततस्तुभूगोलंपंचाशत्कोटियोजनम् ५
तत्रांधकारसंयुक्तारसंयुक्ताभूमिर्दृष्टाथकांचनी
एतयोरंतरेराजल्लोँकालोकश्चपर्वतः ६
सप्तद्वीपास्ततोदृष्ट्वासमुद्रैःसप्तभिर्वृताः
एतेषुनद्यःशैलाश्चखंडानितुमहामते ७
एतद्भारतखंडंसापश्यंतीभूपतिप्रिया
यमुनाजाह्नवीमुख्यासरितः समवैद्धत ८
यमुनातीरगंराजन्निंद्रप्रस्थमिदंशुभम्
ददर्शसामहाभागातीर्थंव्रजयुतंनृप ९

अत्रतीर्थमिदंदृष्ट्वाप्रयागंब्रह्मनिर्मितम्
पूर्वजन्मकृतंकर्मसासस्मारमनस्विनी १०
ततस्तूष्णींसमुत्थायतूर्णंसास्वगृहंययौ
निश्चित्येतिनभोक्ष्यामिततःप्रस्थायतीर्थकम् ११
तदैवसातुहेमांगीसहगंतुमसुप्रियम्
वीरवर्माणमाहेदंतीर्थराजंप्रियासती १२
हेमांग्युवाच-
भोभोप्राणपतेवाक्यंमदीयंशृणुधर्मदम्
विधेहिचमहाभागतूर्णंपूर्णोभविष्यति १३
पुराहंमोहिनीनामवेश्याचबहुपापकृत्
यौवनेवार्द्धकेकिंचिद्धर्मेजातामतिर्मम १४
पापेनोपार्जितांवित्तंधर्मेणव्ययितंमया
निर्द्धनाहंयदाराजन्निर्गतानिजपत्तनात् १५
तदामांनिर्जनेऽरण्येयांतीजघ्नुस्तुतस्कराः
बृथादारिद्र्यसंतप्तापापाधनजिघृक्षया १६
शितशस्त्रक्षतांगींमांश्वसंतींगतचेतनाम्
विसृज्यतस्करास्तत्रगताहतमनोरथाः १७
ततोवैखानसोह्येकः प्रयागस्यजलंवहन्
इंद्रप्रस्थगतस्यैववनेतत्रसमागतः १८
तत्रमांपतितांदृष्ट्वातदवस्थांसतापसः
कात्वंकुतःकिमर्थंवाहताकेनेतिपृष्टवान् १९
तदाकिमपिनोक्तंमेप्रार्थितंपुण्यमंबुतत्
तेनतन्मेमुखेक्षिप्तंततोऽहदेहमत्यजम् २०
प्राणप्रयाणकालेतुवारितत्सर्वकामदम्
श्रुत्वेतिवांच्छितवतीमहिषीस्यामितिप्रभो २१
तस्यतीर्थांभसोराजन्प्रसादात्तेगृहेश्वरी
जाताहंसत्कुलाचाराशीलयापरयोनिधेः २२
सांप्रतंद्रष्टुमिच्छामिशक्रप्रस्थगतंनृप
प्रयागंतीर्थराजंतंभवतासहकामदम् २३
प्रस्थास्येहंयदाराजन् तीर्थराजंप्रतिप्रभो

तदाहमन्नंभोक्ष्यामिमयेतिविहितःपणः २४
राजोवाच-
कथमेतद्विजानीयांत्वदुक्तंचललोचने
प्रतीतंकुरुमेभद्रेत्वदुक्तंकरवाण्यहम् २५
नारदउवाच-
इत्युक्तेतेनभूपेनखेवागित्यभवत्तदा
आकाशवागुवाच-
सत्यमुक्तंवचोराजन्ननयातवभार्यया २६
इंद्रप्रस्थेगतेपुण्येप्रयागेतीर्थपुंगवे
तत्रगत्वाकुरुस्नानंलप्स्यसेयद्यदिच्छसि २७
नारदउवाच-
निशम्येतिततोवाणींनृपोगगनसंभवाम्
दंडवत्पतितोभुमौतद्वक्तारंनमाम्यहम् २८
अथमंत्रिणमाहूयराज्यमारोप्यतत्रवै
तयासहसमारुह्यरथंतीर्थवरंययौ २९
कतिभिर्वासरैरत्रहेमांग्यासहआययौ
उपजह्तीर्थराजेक्षीरंभार्यायुतोनृपः ३०
सस्नतुस्तौशिवेतीर्थेदंपतीतत्रकामदे
प्रयागेतेनवपुषावैकुंठप्राप्तिरस्तुमे ३१
प्रतीच्छयास्नानमात्रेमिथुनेतत्रभूपते
आगतौसुरशार्दूलौहंसपक्षींद्रवाहनौ ३२
आगतौतौसमालोक्यवीरवर्मासभूपतिः
प्रणम्यशिरसादेवौतुष्टावैकाग्रमानसः ३३
राजोवाच-
नमोवांसुरशार्दूलौबिभ्रद्ध्यामसितारुणे
वपुषीक्षौमवासांसिहेमसिंदूरभानिच ३४
वंदेयुवांसत्वरजः प्रधानौचराचरस्यस्थितिसर्गहेतू
वैकुंठसत्याद्भुतलोकनाथौचतुर्द्विबाहूखगराजवाहौ ३५
वैराग्यसंरागवतांजनानांसन्मुक्तिभुक्तिप्रतिपादिकौच
वृंदारकेवंदितपादपद्मौसद्भावनम्रेणनमामिमूर्ध्ना ३६

गोविंदवृंदारकवंद्यपादनकोऽपिजानातितवस्वरूपम्
यतः परस्त्वंप्रकृतेश्चपुंसोमनोवचोभ्यामपिदूरवर्ती ३७
धन्यःसलोकेपुरुषःपरात्मन्योविश्वमेतत्त्वणिकंविचिंत्य
अनन्यचेताभजतित्वदीयपादारविंदंमुनिवृंदवंद्यम् ३८
त्वत्पादसेवनंनामतीर्थमेतच्चदुर्लभम्
जनानांभजमानानांवांछितार्थफलप्रदम् ३९
तथाप्येतद्द्वयंसेव्यंमुक्तयेनान्यलब्धये
अन्यकामनयायस्तुसेवतेसतुवंचितः ४०
संतोभवंतमासेव्यतीर्थमेतच्चमुक्तिदम्
नान्यमिच्छंत्यतिक्रम्यसर्वलोकान्जिजीषवः ४१
नारदउवाच–
इत्यभिष्टूयदेवेशंलोकेशंसचभूपतिः
तस्थौयदातदाराजन्हेमांगीसाजगादह ४२
पद्मापतेपद्मपलाशलोचनब्रह्मन्करालासनभारतीगुरो
नमोयुवाभ्यांयदिदीनचेतसेप्रसीदतांतारयतांभवाब्धेः ४३
तीर्थस्यास्यप्रसादेनजाताहंमहिषीप्रभो
युवयोर्दर्शनंजातंदेवानामपिदुर्लभ् ४४
युवामखिलचित्तज्ञौदत्तंनौमानसेप्स्तिम्
स्नानकालेयदावाभ्यांविहितंपारमार्थिकम् ४५
एवंताभ्यामुभाभ्यांतौसंस्तुतौदेवपुंगवौ
प्रसन्नवदनौभूत्वाप्रोचतुर्दंपतीप्रति ४६
हरिब्रह्माणावूचतुः
धन्यात्वमसिहेमांगियतोऽयतारितः पतिः
त्वयाराज्यसुखासक्तचित्तोप्येतत्समागमात् ४७
राज्ञांविषयसक्तानांदुर्लभामुक्तिरीदृशी
त्वद्भर्तुर्यादृशीजातातीर्थस्यास्यप्रसादतः ४८
नारदउवाच–
इत्युक्त्वातौसमालोक्यगरुडंपक्षिपुंगवम्
जग्मतुस्तौसुरश्रेष्ठौसत्यलोकंनरेश्वर ४९
तत्रतेब्रह्मणासर्वेपूजिताविधिवन्नृप

तस्यचित्तानुरोधेनतस्थुरेकंमुहूर्तकम् ५०
अथताभ्यामुभाभ्यांसदंपतीभ्यांसमंहरिः
आरुह्यगरुडंश्रीमद्वैकुंठमगमन्नृप ५१
इत्येतत्कथितंतुभ्यंतीर्थराजस्यवैभवम्
पुण्यंसमस्तपापघ्नंयशस्यंसुतदंनृप ५२
यएतच्छृणुयान्नित्यंपठेदपिच मानवः
सगच्छेद्वांछितंस्थानंसत्यमेतन्मयोदितम् ५३
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेइंद्रप्रस्थ माहात्म्येप्रयागवर्णनंनामैकविंशत्यधिकद्विशततमोऽध्यायः २२१

## द्विविंशत्यधिकद्विशततमोऽध्यायः

नारदउवाच-
आकर्णयशिबेराजन्वर्णयामितवाग्रतः
पुण्यंयशस्यमायुष्यंकाश्यामाहात्म्यमुत्तमम् १
इंद्रप्रस्थतटस्थायांकाश्यामेकस्तुपादपः
शिंशपाख्योभवेद्राजन् पुरापुण्ययुगेकृते २
तत्रैकोवायसोह्यासीत्कृतनीडोवनस्पतौ
तस्याधस्तान्महासर्पं कोटरेवसतिस्मह ३
एकदातस्यकाकस्यभार्यांडद्वयमालये
प्रतिमुच्यगताक्वापिननीडेस्वेसमागता ४
स्वयमेवसकाकस्तुपालयन्नंडकद्वयम्
तामेवशिंशपामुच्चैरध्यतिष्ठन्महीपते ५
अथैकदानिशीथेतुमहावात्यासमागता
अभनक्शिंशपांराजन्मूलादपिदृढादपि ६
वात्ययापात्यमानायाशिंशपायास्तदातले
चूर्णितौकाकसर्पौतौगतप्राणौबभूवतुः ७
दिव्यांगास्तेत्रयोभूत्वाशिंशपावायसादयः
विमानत्रयमारूढाजग्मुःश्रीपतिकेतनम् ८
शिबिरुवाच-
देवर्षेकेनपुण्येनप्राप्तातैर्मुक्तिदापुरी

ग्रासंस्तेकेत्रयःपूर्वंसर्वंकथयनारद ९
नारदउवाच-
कुरुजांगलदेशीयोब्राह्मणः श्रवणाभिधः
तस्यभार्याकुडानामभ्राताभूच्चकुरंटकः १०
ग्रस्नातभोक्तानित्यंसकवलोमिष्टभुग्ग्रहः
श्रवणस्तेनदोषेणबभूवग्रामवायसः ११
कुरंटकस्तुतद्भ्रातानास्तिकोऽभवदुल्बणः
श्रुतिस्मृतिपथोच्छेत्तादेवतानांचनिंदकः १२
तेनदोषेणसमृतोह्यभवत्कालकुंडली
साकुंडाश्रवणस्यस्त्रीवभूवोभयदोषभाक् १३
ग्रतःसास्थावरत्वंहिलब्ध्वासीदुभयाश्रया
एतत्तेकथितं भूपतद्वृत्तंपूर्वजन्मनि १४
ग्रतः परंप्रवक्ष्यामितेषांपुरायंयतस्त्रयः
प्रापुस्तेनपुरींरम्यांकाशींवैश्वेश्वरींनृप १५
ग्रामांतरादेकादातौप्रत्यायातौनिजालयम्
कस्यचित्पथिकस्याथकूपमग्नांपयस्विनीम् १६
ग्रवलोक्यतदुद्धारंचक्रतुस्तेननोदितौ
ताभ्यांगदितमाकरार्यकुंडासाध्वित्यभाषत १७
तेत्रयस्तेनपुरायेनमरणंप्राप्यदुर्लभम्
इंद्रप्रस्थतटस्थायांकाश्यांवैकुंठमारुहन् १८
इयंकाशीमहेशस्यपुरीयद्यपिभूपते
तथाप्यस्यांमृतंजंतुर्वैकुंठेस्यात्सुखीहरेः १९
एतत्तेकथितंराजन्काश्यामाहात्म्यमुत्तमम्
किमन्यच्छ्रोतुमिच्छातेविद्यतेतद्वदस्वमे २०
शिबिरुवाच-
मुनेत्वयामहेशस्यक्षेत्रत्रयमुदीरितम्
काशीचशिवकांची चगोकर्णंचतथापरम् २१
एकस्यमहिमाप्रोक्तोत्वयाकाश्यामहामुने
गो कर्णशिवकांच्योश्चकथ्यतांयदिविद्यते २२
नारदउवाच-

गोगकर्णेकेवलंशैवंक्षेत्रंपरमपावनम्
तस्मिन्मृतोनरोराजन्शिवः स्यान्नात्रसंशयः २३
स्थलेजलेंतरिक्षेचजंतुस्तत्रमृयेतचेत्
तदाकैलासशिखरोशिवः संभूयदीव्यति २४
अत्रगोकर्णतीर्थेस्यान्मृतस्यनपुनर्भवः
शिवेनससमंराजन्मुक्तिंयास्यतिकर्हिचित् २५
अस्यापितवमाहात्म्यंगोकर्णस्यमहामते
वर्णयामियदाकर्णिमयाब्रह्ममुखात्प्रभो २६
प्रयागादेकगव्यूतौगुरुतीर्थसमीपगः
मर्यादापर्वतोयोऽयदृश्यते पुण्यदर्शनः २७
तत्रैकः कर्कटोनामभिल्लआसीत्सुदारुणः
तस्यभार्याजरानामसाजघ्नेपतिपंचकम् २८
साजराविषसंयुक्तंषष्ठंकर्कटकंतदा
अकरोन्मोदकंहंतुंतदातेनस्वसुः श्रुतम् २९
निजायामुखतोराजन्भिल्लेनचमहात्मना
बालांतांहंतुमारेभेकर्कटोभृशदारुणः ३०
खड्गपाणिर्यदायातितद्वधायसभिल्लपः
यावत्तावत्तुसायायाज्ज्ञात्वानिजवधोद्यमम् ३१
वनमभ्यद्रवद्भीतानिजप्राणपरीप्सया
तामनुद्रवतातेनर्ककटेनमहीपते ३२
अत्रगोकर्णतीर्थेतुगृहीताखड्गपाणिना
शिरश्छित्वातुखड्गेनपातयित्वाजलेवपुः ३३
तस्यगोकर्णतीर्थस्यनिजस्थानमगाच्चसः
साजरातत्रगोकर्णेपापापिनिधनंगता ३४
कैलासशिखरेराजन्पार्वत्याअभवत्सखी
अहंकथितवानेतत्तवगोकर्णवैभवम् ३५
शिवकांच्याश्चमाहात्म्यंपवित्रंवर्णयामिते
इंद्रप्रस्थतटस्थायांशिवकांच्यामपिप्रभो ३६
गतिः सा परमापुंसांगोकर्णेयामयोदिता
अत्रश्रीमन्महादेवोविष्णुंसर्वसुरेश्वरम् ३७

आराध्यभक्तराजत्वंलेभेज्ञानंचतात्विकम्
अतःसर्वेवयंपुत्राब्रह्मणस्तंमहेश्वरम् ३८
आराधयामः सततंसद्भक्तिज्ञानलिप्सया
अत्रबाणासुरोराजन्नारराधमहेश्वरम् ३९
निराहारोवर्षशतंतद्गुणत्वबुभूषया
तस्मैप्रसन्नोभगवान्गणत्वंदत्तवान्निजम् ४०
स्वयंचसर्वदातस्यपुरपालोबभूवह
इयंपुरीपुराराजन्नासीद्विष्णोर्महात्मनः ४१
दत्ताशिवायतुष्टेनतपसातस्यविष्णुना
अस्यामेकंपुरावृत्तंमहदाश्चर्यकारकम् ४२
विप्रस्यशिवभक्तस्यवैकुंठाप्तिर्यथाभवत्
एकस्तुब्राह्मणोराजन् हेरंबोनामधार्मिकः ४३
कायेनमनसावाचाशिवपूजारतः सदा
एकदासमहाभागःशिवतीर्थानिपर्यटन् ४४
शिवभक्तः शिवेराजन्शिवकांच्यामिहागतः
एनांमनोहरांचैवनतत्याजसबुद्धिमान् ४५
पश्चात्तत्रैवतत्याजप्राणानस्याजलांतरे
तत्रैवश्रीमहादेवगणास्तंब्राह्मणोत्तमम् ४६
नीत्वाकैलासमचलंचेलुस्तदनुशासनात्
अथमध्येसमायातागणावैकुंठतोहरेः ४७
तेभ्योबलात्समादातुंतंद्विजश्रेष्ठमुद्यताः
आसीत्तेषांमहयुद्धंगणानांहरि शर्वयोः ४८
तत्रयुद्धेनवैकेषांविजयोनपराजयः
तत्रवैकुंठतोविष्णुरागतोगरुडासनः ४९
कैलासाद्वृषभारूढोमहेशश्चत्रिलोकधृक्
तावन्योन्यंमुखंदृष्ट्वाविहस्यजगदीश्वरौ ५०
पश्यतस्ममहद्युद्धंनभस्येवगणैः कृतम्
अथस्वीयान्गणान्विष्णुःशैवांश्चदिवियुद्धतः ५१
निवार्यतंद्विजंतार्क्ष्यमारोप्यागाच्छिवालयम्
शिवेनतद्गणैश्चापिस्वकीयैरपिमाधवः ५२

वृतोगछन्पथिश्रीमान्स्तुतस्त्रिदशवंदितः
गत्वाविवेशतंचागंमहादेवपुरःसरः ५३
तस्मैद्विजायवैतस्यदर्शयन्नमणीयताम्
अथतस्मात्तुकैलासान्महादेवेनवंदितः ५४
माधवःपरयाभक्त्यावैकुंठमगमत्तदा
द्विजःसोऽपिमहाभागस्तीर्थस्यास्यप्रसादतः ५५
गोविंददर्शनंप्राप्यमुमुदेहरसन्निधौ
एतत्तेकथितंराजन्शिवकांच्यास्तुवैभवम् ५६
तीर्थसप्तकनाम्नस्तुशृणुष्वसुसमाहितः
तीर्थमेतन्महाराजचतुर्वर्गफलप्रदम् ५७
दर्शनात्स्पदर्शनाद्ध्यानात्स्मरणादपिभूपते
वसिष्ठादिभिरेतस्मिन्महर्षिभिरनुष्ठितम् ५८
महत्तपस्तुसृष्ट्यर्थंतत्रासंस्तुद्गमानृप
मरीचिरपिधर्मात्मापुत्रार्थंस्नानमाचरन् ५९
अत्रलेभेमहाभागः कश्यपंसुतमुत्तमम्
अत्रिरत्रापितपसातोषयद्देवपुंगवान् ६०
सोमंदुर्वाससंदत्तंतेभ्योलेभेसुतत्रयम्
अंगिराअपिधर्मात्मातीर्थस्यास्यप्रसादतः ६१
लेभेसुतांस्तुतद्वंश्याजाताआंगिरसाद्विजाः
पुलहोऽपिसुतंलेभेदंभोलिगुणवत्तरम् ६२
योऽगस्त्योभूत्पुराराजंस्तीर्थेऽत्रैवनिमज्जनात्
पुलस्त्यस्यात्रतीर्थेवैपुत्रोलब्धोतपस्यतः ६३
कुबेरोभून्महाभागोयः सखासीदुमापतेः
क्रतोरपिसुताजातावालखिल्याः सहस्रशः ६४
तीर्थस्यास्यप्रसादेनतेसर्वेह्युर्ध्व रेतसः
रजआदीन्सुताँलेभेवसिष्ठोऽपिमहातपाः ६५
सप्तैवराजशार्दूलमहिमातस्यवर्णितः
अन्यान्यपिचतीर्थानिसंत्यनेकानिभूपते ६६
कपिलाश्रमकेदारप्रभासादीनिवैप्रभौ
नियुतैरपिवर्षाणांतेषांचमहिमानृप

अनंतेनापिनोवक्तुंशक्यतेकिमुमादृशैः ६७
सौभरिरुवाच-
एवमुक्त्वामुनि श्रेष्ठोनारदोमुनिपुंगवः
शिवंजगामनभसोनारायणगुणान्गृणन् ६८
शिबिरौशीनरोराजाशक्रप्रस्थस्यवैभवम्
श्रुत्वामुनिमुखाद्राजन्कृतार्थंस्वममन्यत ६९
तत्रस्नात्वाहिविधिवदिंद्रप्रस्थेसभूपतिः
विधायसत्क्रियाःसर्वाजगामनिजपत्तनम् ७०
इंद्रप्रस्थस्यमाहात्म्यमेतत्तवमयाविभो
यमुनातीरतीर्थस्यवर्णितंजनपावनम् ७१
नास्यादरंकरिष्यंतिकलौश्रद्धाविवर्जिताः
इंद्रप्रस्थस्यराजेंद्रसर्वतीर्थशिरोमणेः ७२
अष्टादशपुराणानां श्रवणाद्भारतस्यच
यत्फलंतन्महिम्नस्यशक्रप्रस्थस्यजायते ७३
अरुणोदयवेलायांमाघलक्षैकमज्जनात्
यत्फलंतन्महिम्नोस्यश्रवणाच्छ्रद्धयाभवेत् ७४
श्रद्धयास्यतुमाहात्म्यंयः शृणोतिमहीपते
तर्पितास्तेनपितरोदेवाश्चमुनयस्तथा ७५
कृच्छ्रातिकृच्छ्रपाराकचांद्रायणव्रतादिभिः
यत्फलंतन्महिम्नोऽस्यश्रद्धयाश्रवणाद्भवेत् ७६
अश्वमेधादियज्ञानांसमस्तानांमहीपते
यत्फलंतन्महिम्नोऽस्यश्रद्धयाश्रवणाद्भवेत् ७७
सूतउवाच-
एवंयुधिष्ठिरोराजाश्रुत्वाशौनकसौभरेः
इंद्रप्रस्थस्यमाहात्म्यंसययौहस्तिनंपुरम् ७८
ततोविनीयसद्भ्रातॄन्दुर्योधनपुरः सरान्
इंद्रप्रस्थमगात्पुरयंराजसूयचिकीर्षया ७९
द्वारकायाः समागम्यगोविंदंकुलदैवतम्
राजसूयेनयज्ञेनसइयाजमहीपतिः ८०
मुक्तिदंतीर्थमेतत्तुशपतोस्याप्यजायत

इतिमत्वाहरिस्तत्रशिशुपालंजघानह ८१
शिशुपालोऽपितस्यैवतीर्थस्यमरणाद्धुवि
सायुज्यमगमत्कृष्णेनिखिलार्थप्रदायके ८२
शिशुपालोहतोयत्रविहितोयत्रचक्रतुः
गदयातत्रभीमेनकृतंकुंडंसुविस्तरम् ८३
भीमकुंडंतुविज्ञातंजातंतद्धुविपावनम्
कालिद्यादक्षिणेभागेगव्यूत्यर्धंमहीतले ८४
इंद्रप्रस्थगतायायत्कालिद्याः स्नानतः फलम्
तत्फलंतत्रकुंडेतुजायतेनात्रसंशयः ८५
सूतउवाच-
यस्मिन्क्षेत्रेस्थितोजंतुस्तंक्षेत्रमनुवत्सरम्
प्रदक्षिणादिभिर्धर्मैं स्वापराधान्क्षमापयतेत् ८६
प्रतिसंवत्सरंचैवपरिक्रामतियोनरः
क्षेत्रापराधदोषैश्चनसलिप्येत्तुपातकैः ८७
प्रदक्षिणमकुर्वाणः क्षेत्रसिद्धिंनविंदति
तस्मात्प्रदक्षिणातीर्थेदातव्याचफलार्थिभिः ८८
हरेर्नामनिसंजल्पन्प्रकरोतिप्रदक्षिणाम्
पदेपदेसलभतेकपिलादानजंफलम् ८९
चैत्रकृष्णाचतुर्दश्यांशक्रप्रस्थप्रदक्षिणाम्
यः करोतिनरोधन्यः सर्वपापैःप्रमुच्यते ९०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेकालिदी माहात्म्येइंद्रप्रस्थगतकाशीगोकर्णशिवकांचीतीर्थसप्तकभीमकुंडवर्णनोनामद्वा विंशत्यधिकद्विशततमोऽध्यायः २२२

## त्रयोविंशत्यधिकद्विशततमोऽध्यायः

शौनकउवाच-
सूतसूतमहाभागधन्योसित्वंभवांबुधौ
यन्नोऽत्यर्थंनिमग्नानांपाययस्वमृतोत्करम् १
साधोऽत्रभवनिस्तारवांछतांनःसमादिश
मंत्ररत्नंभावशुद्धंयन्मयंसचराचरम् २

सूतउवाच-
शृणुशौनकवक्ष्यामिमंत्ररत्नंमहाद्भुतम्
यद्दिलीपायगदितं वसिष्ठेनमहात्मना ३
एकदातुदिलीपेनपृष्टमेतद्गुरुंप्रति
वसिष्ठंद्विजशार्दूलंप्रणिपत्ययथात्वया ४
दिलीपउवाच-
भगवन्भवताप्रोक्तास्सर्वधर्माविशेषतः
वर्णाश्रमयुताधर्मानित्यनैमित्तिकाः क्रियाः ५
राजधर्म्माश्चयज्ञाश्चतीर्थदानव्रतादिकम्
श्रुतामयामुनिःश्रेष्ठअक्षय्यस्वर्गभोगदाः ६
अधुनाश्रोतुमिच्छामिमोक्षमार्गंसनातनम्
दिष्ट्याहंयेनगच्छामितद्ब्रह्मन्वक्तुमर्हसि ७
कोमंत्रंसर्वमंत्राणांभवरोगैकभेषजम्
सर्वेषामेवदेहीनांकोहिमोक्षप्रदःपरः ८
तत्समाख्याहितत्त्वेनमयिवात्सल्यगौरवात् ९
वसिष्ठउवाच-
साधुपृष्टंत्वया राजन्सर्वलोकहितैषिणा
वक्ष्यामिपरमंगुह्यमेकंसंसारतारकम् १०
पुरामहर्षयः सर्वेयज्ञदानपराःशुभाः
पप्रच्छुर्ब्रह्मणः पुत्रंनारदंमुनिसत्तमम् ११
महर्षयऊचुः -
भगवन्केनमंत्रेणगच्छामः परमंपदम्
तन्नोब्रूहिमहाभागप्रसादंकर्तुमर्हसि १२
नारदउवाच-
पितामहंपुरासर्वेयोगिनः सनकादयः
पप्रच्छुरेकमेकांतमोक्षमार्गंसुदुर्ल्लभम् १३
ब्रह्मोवाच-
शृणुध्वंयोगिनःसर्वेरहस्यमिदमद्भुतम् १४
न जानंतिसुराःसर्वेऋषयश्चतपोधनाः
सर्गादौप्रोक्तवान्देवोमह्यंनारायणोऽव्ययः १५

ईश्वर्यासहदेव्याचसम्यक्संपूजितोमया
ततः प्रसन्नोभगवान्ममनारायणोऽव्ययः १६
प्राजापत्यंददौमह्यंश्रुतिजंसर्ववाङ्मयम्
प्रकाशकानिमंत्राणिव्यापकाव्यापकानिच १७
ततस्तमब्रुवेंदेवंपुराणपुरुषोत्तमम्
भगवन्केनमंत्रेणसंसारोत्तारणंनृणाम् १८
तन्ममाचक्ष्वतत्त्वेनसर्वलोकहितायवै
कोमन्त्रःसर्वमन्त्राणांपुरश्चरणवर्जितः १९
सकृदुच्चारणान्नृणांददातिपरमंपदम्
श्रीभगवानुउवाच-
साधुपृष्टंमहाभागसर्वलोकहितैषिणा २०
तस्माद्वक्ष्यामितेगुह्यंयेनमामाप्नुयुर्नराः २१
सर्वेषामेवमंत्राणांमंत्ररत्नंशुभावहम्
सकृत्स्मरणमात्रेणददातिपरमंपदम् २२
मंत्ररत्नद्वयंन्यासंप्रयतिःशरणागतिः
लक्ष्मीनारायणमितिमन्त्रःसर्वफलप्रदः २३
नामानिमंत्ररत्नस्यपर्य्यायेणनिबोधतः
तस्योच्चारणमात्रेणपरितुष्टोस्मिनित्यशः २४
कुलजोवातपस्वीवावेदवेदांगपारगः
यज्ञदानपरोवापिसर्वतीर्थोपसेवकः २५
व्रतीवासत्यवादीवायतिर्वाज्ञानवानपि
मन्त्राधिकारीनभवेत्तंप्रयत्नेनवर्जयेत् २६
ब्राह्मणाःक्षत्रियावैश्यास्त्रियः शूद्रास्तथेतराः
तस्याधिकारिणः सर्वेममभक्तास्तुतेयदि २७
अनन्यशरणानांचतथैवानन्यसेविनाम्
अनन्यसाधकानांचवक्तव्योमन्त्रउत्तमः २८
आर्तानामाशुफलदस्सकृदेवकृतोह्यसौ
दृप्तानामपिजन्तूनांदेहान्तरनिवारणः २९
आर्त्तोजिज्ञासुरर्थार्थीज्ञानीवापिप्रजापतिः
सकृन्मांशरणंयातिततःकामानवाप्नुयात् ३०

नादीन्निताायवक्तव्यंनाभक्तायचमानिने
नास्तिकायनलुब्धायनश्रद्धाविमुखायच ३१
नचाशुश्रूषवेवाच्यंनासंवत्सरवासिने
कामक्रोधविमुक्तस्तुदंभलोभविवर्जितः ३२
मांचयोव्यंभिचारेणभक्तियोगेनसेवते
वक्तव्यतस्यविधिवन्मंत्ररत्नमनुत्तमम् ३३
देशकालादिनियमानरिमित्रादिशोधनम्
न्यासमुद्रादिकंतस्यपुरश्चरणसंयुतम् ३४
मच्चक्रांकितदेहत्वंमदीयाराधनंतथा
मयिसन्यस्तकर्मत्वंमदनन्यशरण्यतता ३५
मयिसर्वफलन्यासोमहाविश्वासपूर्वकम्
अनन्यसाधनोयत्नस्त्वकिंचनत्वमात्मनः ३६
अवैष्णवानांसंभाषावंदनादिविवर्जनम्
अनन्यदेवतानांचवन्दनंपूजनंतथा ३७
एवमाद्यादिनियमांप्रपन्नस्यप्रकीर्तिताः
इत्यादिगुणयुक्तस्यवक्तव्यंमंत्रमुत्तमम् ३८
तस्यनारायणश्चाहमृषिर्विष्णुःसनातनः
देवताचश्रियासार्द्धमहंवात्सल्यसागरः ३९
सर्वलोकेश्वरः श्रीमान्सुशीलः सुभगस्तथा
सर्वज्ञःसर्वशक्तिश्चसदापूर्णमनोरथः ४०
सर्वगःसर्वबधुश्चकृपापीयूषसागरः
श्रीमन्नारायणश्चाहंदेवतासमुदाहृतः ४१
छंदस्तुदेवीगायत्रीपंचविंशान्नरात्मिका
द्विस्सप्तषट्त्रिपंचद्विषडंगानिनियोजयेत् ४२
लक्ष्म्यामदनपायिन्यामांध्यायेद्विश्वरूपिणम्
चक्रशंखगदापद्मपाणिनंदिव्यरूपिणम् ४३
वामांकस्थश्रियासार्द्धंपूजयेत्प्रयतं शुचिः
अनेनमंत्ररत्नेनगंधपुष्पनिवेदनैः
सकृत्संपूज्यमानोऽपिसंतुष्टोस्मिप्रजापते ४४
ब्रह्मोवाच-

सम्यगुक्तंत्वयानाथरहस्यमिदमुत्तमम्
मंत्ररत्नप्रभावश्चसर्वसिद्धिप्रदोनृणाम् ४५
पितात्वंसर्वलोकानांमातात्वं गुरुरेवच
त्वंचस्वामीसखाभ्रातागतिस्त्वंशरणंसुहृत् ४६
अहंतुतवदेवेशदासश्शिष्यस्तथासुहृत्
तस्मान्ममदयासिंधोप्रोक्तवानिदमुत्तमम् ४७
अधुनामंत्ररत्नस्यदीक्षांसम्यग्विधानतः
ब्रूहिसर्वत्रतत्वेनलोकानांहितकाम्यया ४८
श्रीभगवानुवाच –
शृणुवत्सप्रवक्ष्यामिमंत्रदीक्षाविधिंपरम्
आचार्यंसंश्रयेत्पूर्वंमदाश्रयणसिद्धये ४९
आचार्योवेदसंपन्नोविष्णुभक्तोविमत्सरः
मंत्रज्ञोमन्त्रभक्तश्चसदामंत्राश्रयःशुचिः ५०
सत्संप्रदायसंयुक्तोब्रह्मविद्याविशारदः
अनन्यसाधनश्चैवतथानन्यप्रयोजनः ५१
ब्राह्मणोवीतरागश्चक्रोधलोभविवर्जितः
सद्वृत्तौशासिताचैवमुमुक्षुःपरमात्मवित् ५२
एएवमादिगुणोपेतआचार्यः समुदासुहृत्
आचाराञ्शासयेद्यस्तुसआचार्यंइतीरितः ५३
यस्त्वाचार्यपराधीनस्सद्वृत्तौशास्यतेयदि
शासनेस्थिरवृत्तश्चशिष्यः सद्भिरुदाहृतः ५४
एवंलक्षणसंयुक्तंशिष्यंसर्वगुणान्वितम्
अध्यापयेद्विधानेनमन्त्ररत्नमनुत्तमम् ५५
द्वादश्यांश्रवणेवापिकर्हिचिद्वैष्णवेदिने
सदाचार्योपसंप्रीतौतत्रदीक्षांसमाचेत् ५६
सुदर्शनंपांचजन्यंसुवर्णेनप्रकारयेत्
रौप्येणवापिताम्रेणकांस्येनापिप्रकारयेत् ५७
स्नाप्यपंचामृतैः शुद्धैरर्चयेत्पुरतोमम
अर्च्चयेद्गंधपुष्पाद्यैस्तन्मंत्रेणविधानतः ५८
तत्रसंस्थापयेदग्निस्वगृह्योक्तविधानतः

आचार्योजुहुयादाज्यंमंत्रेणाथद्विजोत्तमः ५९
अष्टोत्तरससहस्त्रंवाशतमष्टोत्तरंतुवा
जुहुयान्मंत्ररत्नेनतथान्यैर्वैष्णवैः शुभैः ६०
मंत्रैःपुरुषसूक्ताद्यैर्जुहुयाघृतपायसम्
तस्मिन्नग्नौचिपेच्चक्रंशंखंचेद्विजत्तमः ६१
षडचरेणजुहुयादाज्यं विंशतिसंख्यया
प्रतप्तंचक्रमादायमं त्रेणैवतथागुरुः ६२
शंखेनैवांकनंकुर्याद्वाह्वोर्दचिणसव्ययोः
होमशेषंसमाप्याथपुनः पूजांसमाचरेत् ६३
ततः कलशमादायपवित्रोदकपूरितम्
मंत्रेणैवाभिमंत्र्याथतस्यमूर्ध्न्यभिषेचयेत् ६४
सितवस्त्रधरंसम्यगाचांतंविनयान्वितम्
ऊर्द्धपुराड्रधरंशिष्यंमंत्रमध्यापयेद्गुरुः ६५
मंत्रार्थश्चप्रवक्तव्योवृत्तिश्चैवविशेषतः
लब्धमंत्रस्तदाचार्यंपूजयेद्भूषणादिभिः ६६
अनेनविधिनामंत्रंयोऽधीतेवैष्णवाद्गुरोः
ततः सवैष्णवंयातिनान्यथासुरसत्तम ६७
नारद उवाच-
एवमुक्त्वाविधातारंदेवदेवोहरिः पिता
स्वचक्रेणांकयित्वातुतस्मैमंत्रंददौस्वयम् ६८अं
सर्वलोकेश्वरोदेवोब्रह्मामपिताप्रभुः
ममापिविधिवन्मंत्रंसददौमुनिसत्तमाः ६९
तस्माद्यूयंमुनिश्रेष्ठाधारयित्वासुदर्शनम्
नारायणपदंद्वंद्वंगच्छध्वंशरणंद्विजाः ७०
वसिष्ठउवाच-
इत्युक्त्वामुनयः सर्वेनारदेनसुरर्षिणा
द्वयाधिकारिणः सर्वेयाताविष्णोः परंपदम् ७१
तस्मात्त्वमपिराजर्षेविष्णुसायुज्यमिच्छसि
दीचामार्गविधानेनधारयित्वासुदर्शनम् ७२
नारायणपदद्वंद्वंतदेकंशरणंव्रज

सर्वलोकेश्वरः साक्षाद्ब्रह्मात्रिभुवनेश्वरः ७३
ममापिनारदस्यापिप्रोक्तवान्मंत्रमुत्तमम्
शौनकादिमहर्षीणांनैमिषारण्यवासिनाम् ७४
नारदः प्रददौ मंत्रंप्रपत्तिंशरणागतिम्
एतद्गुह्यतमंराजन्नजानंतिमहर्षयः ७५
देवाताश्चनजानंतिसिद्धासाध्याश्चदानवाः
मयापिप्रापितोमंत्रंशक्तिपुत्रः पराशरः ७६
इहंरहस्यंपरमंलक्ष्मीनारायणंद्वयम्
राजंस्तवापिवक्ष्यामिप्रपत्तिशरणागतिम् ७७
द्वयात्परतरंमन्त्रंनास्तिसत्यंब्रवीमिते
अस्मात्परतरंधर्म्मंनास्तिलोकेषुकिंचन ७८
सत्यंसत्यंपुनःसत्यंब्रह्मणाकथितंपुरा
नारायणात्परोदेवोनास्तिमुक्तिप्रदोनृणाम् ७९
तत्सेवैवभवेन्मोक्षःसर्वकर्म निकृंतनः ८०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेवसिष्ठदिलीप संवादेविद्योपदेशोनामत्रयोविंशत्यधिकद्विशततमोऽध्यायः २२३

## चतुर्विंशत्यधिक द्विशततमोऽध्यायः

दिलीपउवाच-
भगवन्सर्वमाचक्ष्वहरिभक्तिसुधामयम्
शृणवतोनैवतृप्तिर्मेविष्णुभक्तिंसुखावहाम् १
तापत्रयमहाज्वालावह्निभिःसततंनृणाम्
संतप्तानांमुनिश्रेष्ठविष्णुभक्तिसुधार्णवम् २
विनाकिमन्यच्छरणंभवारण्येभयानके
आचक्ष्वविस्तरेणाथभक्तिभेदान्महामुने
उपास्यमानान्सततंमुनिभिः परमात्मनः ३
वसिष्ठउवाच-
साधुपृच्छसिराजेंद्रसंसारोत्तारणंनृणां
वैकुंठस्यपरेशस्यभक्तिंनित्यसुखावहाम् ४
इममेवंमहाप्रश्नंकैलासशिखरेपुरा

पप्रच्छगिरिजादेवीशंकरंलोकपूजितम् ५
पार्वत्युवाच-
देवदेवमहादेवत्रिपुरघ्नसुरेश्वर
विष्णुभक्तिंममाचक्ष्वमुक्तिदांसर्वदेहिनाम् ६
उपास्यभेदान्मंत्रांश्चतस्यपूजाविधींस्तथा
तस्यविष्णोःस्वरूपंचतद्विभूतिर्गुणादिकम् ७
तस्यलोकस्वरूपंचयंप्राप्यननिवर्तते
सर्गस्थितिलयंयेनकरोति भगवान्हरिः ८
यद्गत्वाननिवर्तं तेतद्धामपरमंहरेः
येनकेनचकृत्येनसाधनेनपरंपदम् ९
प्राप्नुवंतिनराःपापाविषयासक्तचेतसः
विस्तरेणमयिप्रीत्याब्रूहिसर्वमशेषतः १०
वसिष्ठउवाच-
इतिपृष्टोमहादेव्याहरस्त्रिपुरहातदा
उवाचपरमप्रीत्यानमस्कृत्यजनार्दनम् ११
रुद्रउवाच-
साधुसाधुमहादेविसर्वलोकहितैषिणि
साधुपृच्छसिमांदेविश्रीशमाहात्म्यमुत्तमम् १२
धन्यासिकृतपुण्यासि विष्णुभक्तासिपार्वति
परितुष्टोऽस्मितेभद्रेशीलरूपगुण् सदा १३
अथवक्ष्यामिगिरिजेभगवद्भक्तिमुत्तमाम्
तन्मंत्राणांविधानंचस्वरूपंतस्यशार्ङ्गिणः १४
तत्वंनारायणोविष्णुर्वासुदेवस्सनातनः
परमात्मापरंब्रह्मपरंज्योतिः परात्परः १५
अच्युतः पुरुषःकृष्णः शाश्वतः शिवईश्वरः
नित्यः सर्वगतः स्थाणूरुद्रस्साक्षीप्रजापतिः १६
यज्ञोयज्ञपतिः साक्षाद्ब्रह्मणः पतिरेवच
हिरण्यगर्भंसवितालोककृल्लोकभृद्विभुः १७
अकारवाच्योभगवान् श्रीभूनीलापतिः प्रभुः
उतामृतत्वस्येशानो यदन्नेनातिरोहति १८

सहस्रमूर्द्धाविश्वात्मासहस्राक्षः सहस्रपात्
सभूमिंसर्वतः स्पृत्वाह्यत्यतिष्ठद्दशांगुलम् १९
अनंतः श्रीपतीरामोगुणभृन्निर्गुणोमहान्
सर्वलोकेश्वरः श्रीमान्सर्वज्ञः सर्वतोमुखः २०
तस्यलोकप्रधानस्यजगन्नाथस्यपार्वति
माहात्म्यंवासुदेवस्ययच्छक्यंतद्ब्रवीमिते २१
अशक्यंतन्मयावक्तुंब्रह्मणासहदैवतैः
सर्वोपनिषदामर्थंवेदांतेपरिनिश्चितम् २२
तस्योपासनभेदांश्चशृणुवच्मिपुनः पृथक्
आद्यंतुवैष्णवंप्रोक्तंशंखचक्रांकनंहरेः २३
धारणं चोर्ध्वपुंड्राणांतन्मंत्राणांपरिग्रहः
अर्चनंचजपोध्यानंतन्नामस्मरणंतथा २४
कीर्तनंश्रवणंचैववंदनंपादसेवनम्
तत्पादोदकसेवाचतन्निवेदितभोजनम् २५
तदीयानांचसेवाश्चद्वादशीव्रतनिष्ठितम्
तुलसीरोपणंविष्णोर्देवदेवस्यशार्ङ्गिणः २६
भक्तिः षोडशधाप्रोक्ताभवबंधविमुक्तये
सर्वेषामेवदेवानांममापिपुरुषोत्तमः २७
पूजनीयोहरिर्नित्यंब्राह्मणानांविशेषतः
तस्मात्तुब्राह्मणोनित्यंविधिवत्पूजयेद्धरिम् २८
तच्चिह्नैरंकितः श्रीशपदंप्राप्नोत्यसंशयम्
शंखचक्रांकनंकुर्याद्ब्राह्मणोबाहुमूलयोः २९
हुताग्निनैवसंतप्यसर्वपापापनुत्तये
चक्रंवाशंखचक्रेवातथापंचायुधानिवा ३०
धारयित्वैवविधिवद्व्रह्मकर्मसमारभेत्
अग्नितप्तंपवित्रंचधृत्वावैभुजमूलयोः ३१
त्यक्त्वायमपुरंघोरंयातिविष्णोःपरंपदम्
चक्रचिह्नविहीनस्तुयः पूजयतिकेशवम् ३२
तत्सर्वंविफलंयातिपूजामंत्रजपादिकम्
अग्नितप्तेनचक्रेणब्राह्मणोबाहुमूलयोः ३३

अंकयित्वाजपन्मंत्रंसंसारान्मोक्षमाप्नुयात्
सुदर्शनंधारयित्वावह्नितप्तंद्विजोत्तमः ३४
उपनीयविधानेनपश्चात्कर्मसुयोजयेत्
विष्णुचक्रविहीनंतुयश्राद्धेभोजयिष्यति ३५
व्यर्थंभवतितत्सर्वंनिराशाःपितरोगताः
विष्णुचक्रांकितंविप्रंपूजयेच्छ्राद्धकर्मणि ३६
विष्णुचक्रविहीनंतुप्रयत्नेनविवर्जयेत्
दद्याद्गोभूहिरण्यादिचक्रांकितभुजायवै ३७
यद्दत्तंचक्रहीनायतत्सर्वमसुरायवै
अग्नितप्तेनचक्रेणबाहुमूलेतुलांछिताः ३८
सर्वपापविनिर्मुक्तायांतिविष्णोः परंपदम्
हुताग्नितप्तचक्रेणशरीरंयस्यचिह्नितम् ३९
तस्यतीर्थानियज्ञाश्चसंप्राप्तानात्रसंशयः
अधृत्वाविधिनाचक्रंब्राह्मणः प्राकृतोभवेत् ४०
नतस्यकिंचिदश्नीयादपिक्रतुसहस्रिणः
अधृत्वाविधिना चक्रंब्राह्मणोज्ञानदुर्लभः ४१
गर्हितस्सर्वलोकेषुब्राह्मण्यात्प्रच्युतोभवेत्
शङ्खचक्रधरोदेवोहरिःपूज्योयथात्मभिः ४२
तथैवसर्वैस्संपूज्योवि प्रश्चक्रादिचिह्नितः
सर्ववेदविदोवापिसर्वशास्त्रविशारदः ४३
अधृत्वाविधिनाचक्रंब्राह्मणःपतितोभवेत्
ऊर्द्ध्वपुंड्रविहीनस्तु शंख चक्रविवर्जितः ४४
तंगर्दभेसमारोप्यबहिःकुर्यात्स्वपत्तनात्
प्रकृतिस्पर्शरहितोवासुदेवोजनार्दनः ४५
तथैवब्राह्मणोदेविविष्णुचक्रेणचिह्नितः
तस्मात्प्रकृतिसंसर्गपापौघदहनंहरेः ४६
प्रतप्तंबिभृयाच्चक्रंशंखंचभुजमूलयोः
स्त्रीशूद्राणांसदाधार्य्येचंदनेनसुगंधिना ४७
बाहुमूलेलिखेच्चक्रंतप्तंतुब्राह्मणस्यवै
तप्तेनैवांकनंकुर्याद्ब्राह्मणस्यविधानतः ४८

श्रौतस्मार्त्तादिसिध्यर्थंमंत्रसिध्द्यैतथैवच
हरेःपूजाधिकारार्थंचक्रंधार्यांविधानतः ४९
वैष्णवत्वस्यसिद्ध्यर्थंज्ञानसिद्ध्यर्थमेवच
प्रतपेच्चक्रशंङ्खाभ्यांहुत्वाहोमंविधानतः ५०
अन्यैर्नदाहयेद्गात्रंब्राह्मणोहरिलांछनात्
शंखचक्रगदा खड्गशार्ङ्गादन्यैर्ह रेरपि ५१
लक्षणेनदहेद्देहंनान्यदग्धोऽहतिक्रियाम्
अचक्रधारिणंविप्रंदूरतः परिवर्जयेत् ५२
श्वपाकमिवनेक्षेतलोकेविप्रमवैष्णवम्
वैष्णवोवर्णबाह्योऽपिपुनातिभुवनत्रयम् ५३
तस्मात्तुविधिनाचक्रंधार्यंविप्रैःशुभानने
ब्राह्मणामंत्रसिद्ध्यैचज्ञानसिद्ध्यैचमुक्तये ५४
अप्राकृतामहात्मानोविष्णुचक्रेणलांच्छिताः
विष्णुचक्रविहीनास्तुब्राह्मणाः प्राकृताः स्मृताः ५५
सर्वाश्रमेषुवसतांब्राह्मणानांविशेषतः
विधिनावैष्णवंचक्रंधार्यंहिश्रुतिनोदनात् ५६
दक्षिणेतुभुजोविप्रोबिभृयाद्वैसुदर्शनम्
वामेतुशंखंबिभृयादितिब्रह्मविदोविदुः ५७
एवम्महोपनिषदिप्रोक्तंचक्रादिधारणम्
तथैवसाम्नियजुषिऋचिप्रोक्तंशुभानने ५८
प्रतेविष्णोअब्जचक्रेपवित्रेजन्माम्भोधिंतर्तवेचर्षणीन्द्राः
मूलेबाह्वोर्दधतेऽन्येपुराणालिङ्गान्येन्येतावकान्यर्पयन्ति ५९
चरणंपवित्रंविततंपुराणंवाङ्मयंशुभम्
तेनचक्रेणसन्तप्तास्तरेयुः पातकाम्बुधिम् ६०
पवित्रंब्राह्मणस्पत्यंजगद्व्याप्तंहरेस्सदा
ते नातप्ततनूर्येषांनतेयान्तिपरंपदम् ६१
तेनतप्तातनूर्येषांतेप्रयांति परंपरदम्
पवित्रचरणंनेमिर्हरेश्चक्रंसुदर्शनम् ६२
सहस्त्रारंप्राकृतघ्नंलोकद्वारंमहौजसम्
नामानिविष्णुचक्रस्यपर्यायेणनिबोधमे ६३

शुद्धेनवह्नितप्तेनब्रह्मत्वेन पुनीहिनः
यत्तेपवित्रमर्चिवदग्नेतेनपुनीहिनः ६४
येनदेवाः पवित्रेणआत्मानंपुनतेसदा
तेनसहस्रधारेणपावमान्यः पुनंतुमाम् ६५
प्रजापत्यंपवित्रंतुशतोद्यामंहिरण्मयम्
वयंब्रह्मविदस्तेनपूतंब्रह्मपुनीमहे ६६
सनेमिचक्रमजरंचक्षुरस्यमहात्मनः
अस्मिन्हिविधृतेदेवामहोन्नतपदययौ ६७
तस्माद्वैविधिवद्धार्याः शंखचक्रादिहेतयः
ब्राह्मणानांविशेषेणवैष्णवानांविशेषतः ६८
धृतोद्धर्वपुंड्रःकृतचक्रधारीविष्णोः पदंध्यायतियोमहात्मा
स्वरेणमं त्रेणसदाहृदिस्थंपरात्परंयातिविशुद्धचेताः ६९
येकंठलग्नतुलसीनलिनाक्षमालायेबाहुमूलपरिचिह्नितशंखचक्राः
येवाललाटफलकेलसदूर्ध्वपुंड्रास्तेवैष्णवाभुवनमाशुपवित्रयंति ७०
दिवस्पतेः सुविततंपवित्रंयेतुरक्षिणः
नवहंतिभुजेसम्यक्नहिशोचंतिजन्तवः ७१
येवहंतिभुजेचक्रंसस्थिरंविधिनाद्भुतम्
परंव्योम्नितुते स्थानमधितिष्ठन्तितेजसा ७२
होमाग्निसंतप्तपवित्रलांछितामूलेतुबाह्वोः परमात्मनोहरेः
संतारयित्वा भवसागरंमहच्छुद्धंपरंयातिपरेशलोकम् ७३
अङ्कयेत्तप्तचक्राद्यैरात्मनोबाहुमूलयोः
कलत्रापत्यभृत्येषुपश्वादिषुचअङ्कयेत् ७४
इत्येवंश्रुतयस्सर्वाःकथयंतिवरानने
तथैवसेतिहासेषुपुराणेष्वपिकथ्यते ७५
द्विविधंवैष्णवंप्रौक्तंबाह्यमाभ्यंतरंतथा
शंखचक्रादिभिर्बाह्यमांतरंवीतरागता ७६
बाह्याभ्यंतरसाम्यंयत्तद्वैष्णवमुदाहृतम्
तस्माच्चक्रादिचिह्नंतुप्रथमंवैष्णवंस्मृतम् ७७
आंतरंस्मरदोषादिविमुक्तंस्वात्मदर्शनम्
सर्वभूतदयाशांतिरिंद्रियार्थेष्वलोलता ७८

पुत्रदाराद्यसंगत्वंयोगाभ्यासरतिस्तथा
अनन्यभक्तियोगेनपरेशस्याभिषेवणम् ७९
तस्माच्चक्रादिहेतीनामंकनंवैष्णवंस्मृतम्
चक्रादिचिह्नहीनत्वाद्वैष्णवत्वंनलभ्यते ८०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेसुदर्शनादिमाहात्म्यंनामचतुर्विंशत्यधिकद्विशततमोऽध्यायः २२४

## पञ्चविंशत्यधिक द्विशततमोऽध्यायः

शंकरउवाच-
ऊर्द्ध्वपुंड्रस्यमाहात्म्यंवक्ष्यामिशुभदर्शने
धारणादेवमुच्येतभवबंधाद्द्विजोत्तमः १
ऊर्द्ध्वपुंड्रस्यमध्येतुविशालेसुमनोहरे
लक्ष्म्यासार्द्धंसमासीनोदेवदेवोजनार्दनः २
तस्माद्यस्यशरीरेतुऊर्द्ध्वपुंड्रंधृतोभवेत्
तस्येदेहंभगवतोविमलंमंदिरंशुभम् ३
सस्नातः सर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः
धारयेदूर्द्ध्वपुंड्रंयोमृदाशुभ्रेणवैष्णवः ४
ऊर्द्ध्वपुड्रंधरोविप्रःसर्वलोकेषुपूजितः
विमानवरमारुह्ययातिविष्णोःपरंपदम् ५
धारयेदूर्द्ध्वपुंड्रंतुत्रिसंध्यंतुद्विजोत्तमः
सर्वपापविशुद्ध्यर्थमिष्टापूर्तफलाप्तये ६
ऊर्द्ध्वपुड्रंधरंदृष्ट्वासर्वपापैःप्रमुच्यते
नमस्कृत्वाथवाभक्त्यासर्वदानफलंलभेत् ७
ऊर्द्ध्वपुंड्रधरंविप्रंयः श्राद्धेभोजयिष्यति
आकल्पकोटिपितरस्तस्यतृप्तानसंशयः ८
ऊर्द्ध्वपुंड्रंधरोयस्तुकुर्याछ्रांद्धंशुभानने
कल्पकोटिसहस्राणिगयाश्राद्धफलंलभेत् ९
यज्ञदानतपश्चर्याजपहोमादिकंचयत्
ऊर्द्ध्वपुंड्रधरः कुर्यात्तस्यपुण्यमनंतकम् १०
ऊर्द्ध्वपुंड्रविहीनस्तुकिंचित्कर्मकरोतियः

इष्टापूर्तादिकंसर्वनिष्फलंस्यान्नसंशयः ११
यच्छरीरंमनुष्याणामूर्द्ध्वपुंड्रंविवर्जितम्
द्रष्टव्यं नैवतत्किंचित्श्मशानसदृशंभवेत् १२
ऊर्द्ध्वपुंड्रंविहीनस्तुसन्ध्याकर्मादिकंचरेत्
तत्सर्वंराक्षसैर्नीतंनरकंचावगच्छति १३
ऊर्द्ध्वपुड्रधरोद्विप्रोमृदाशुभ्रेणवैदिकः
नतिर्यग्धारयेद्विद्वानापद्यपिकदाचन १४
विप्राणामूर्द्ध्वपुंड्रंस्यात्तिलकंतुमहीभृतः
पट्टाकारंतुवैश्यानांशूद्राणांवैत्रिपुंड्रकम् १५
ऊर्द्ध्वपुंड्रंमृदाकार्यंकस्तूर्य्यास्तिलकंतथा
पट्टाकारंतुगंधेनभस्मनैवत्रिपुंड्रकम् १६
ऊर्द्ध्वपुंड्रंतुसर्वेषांननिषिद्धंकदाचन
धारयेत्क्षत्रियाद्योऽपिविष्णुभक्तोभवेद्यदि १७
विप्राणां नैवकार्य्यस्यात्तिर्य्यक्पट्टादिधारणम्
नारायणात्परेशानादन्येषामर्चनंनतु १८
ब्राह्मणःकुलजोविद्वान्भस्मधारीभवेद्यदि
वर्जयेत्तादृशंदेविमद्योच्छिष्टंघटंयथा १९
त्रिपुंड्रंशूद्रकल्पानांशूद्राणांचविधिस्तथा
त्रिपुंड्रधारणाद्विप्रःपतितः स्यान्नसंशयः २०
एकांतिनोमहाभागाः सर्वभूतहितेरताः
सांतरालंप्रकुर्वीरन्पुंड्रंहरिपदाकृतिम् २१
हरेःपादाकृतिंकुर्यादूर्द्ध्वपुंड्रंविधानतः
मध्यछिद्रेणसंयुक्तंतद्धिवैमंदिरंहरेः २२
ऊर्द्ध्वपुड्रमृजुंसौम्यंसुपार्श्वंसुमनोहरम्
दंडाकारंसुशोभाढ्यंमध्येछिद्रंप्रकल्पयेत् २३
तस्माच्छिद्रान्वितंपुंड्रंदराडाकारंसुशोभनम्
विप्राणांसततंकार्यंस्त्रीणांचशुभदर्शने २४
ऊर्ध्वपुराड्रस्यमध्येतुविशालेसुमनोहरे
सान्तरालेसमासीनोहरिरस्तिश्रियासह २५
निरन्तरालंयः कुर्यादूर्द्ध्वपुंड्रंद्विजाधमः

सहितत्रस्थितंविष्णुंश्रियंचैवव्यपोहति २६
अच्छिद्रमूर्द्धवपुंड्रंतुयेकुर्वंतिद्विजाधमाः
तेषांललाटेसततंशुनः पादोनसंशयः २७
तस्माच्छिद्रान्वितंपुंड्रंसहरिद्रंशुभान्वितम्
धारयेद्ब्राह्मणोनित्यंहरिसालोक्यसिद्धये २८
आदायपरयाभक्त्यावेङ्कटाद्रौह्रदेमृदम्
धारयेदूर्ध्वपुण्ड्राणिहरिसायुज्यसिद्धये २९
श्रीकृष्णतुलसीमूलेमृदमादायभक्तिमान्
धारयेदूर्द्धवपुंड्राणिहरिस्तत्रप्रसीदति ३०
द्वारवत्यांशुभेरम्येवासुदेवह्रदेतथा
तत्रोद्भवांमृदंरम्यामादायद्विजसत्तमः ३१
धारयेदूर्द्धवपुंड्रांणिसर्वकामफलाप्तये
आदायपरयाभक्त्यागंगातीरोद्भवांमृदम् ३२
तथाधृतोर्द्धवपुंड्रांणिसर्वयज्ञफलोलभेत्
चंदनंचहरिद्राचतथाभस्माग्निहोत्रजम् ३३
सर्ववश्यकरंप्रोक्तमूर्द्धवपुंड्रस्यधारणात्
यत्रपुण्यंहरिक्षेत्रंतत्रवैमृदमाहरेत् ३४
पर्वताग्रेनदीतीरेबिल्वमूलेजलाशये
सिंधुतीरेचवल्मीकेहरिक्षेत्रेविशेषतः ३५
विष्णोःस्नानोदकंयत्रप्रवाहयतिनित्यशः
पुंड्राणांधारणार्थायगृह्णीयात्तत्रमृत्तिकाम् ३६
श्रीरङ्गेवेङ्कटाद्रौचश्रीकूर्मेद्वारकेशुभे
प्रयागेनारसिंहाद्रौवाराहेतुलसीवने ३७
गृहीत्वामृत्तिकांभक्त्याविष्णुपादजलैःसह
धृत्वापुंड्राणिचांगेषुविष्णुसायुज्यमाप्नुयात् ३८
यस्मिन्कस्मिन्महाभागावैष्णवाधारयंतिवै
तस्मिन्वैमृत्तिकाग्राह्याऊर्द्धवपुंड्रस्यधारणे ३९
श्यामंशांतिकरंप्रोक्तंरक्तंवश्यकरंतथा
श्रीकरंपीतमित्याहुःश्वेतंमोक्षकरंशुभम् ४०
वर्तुलंतिर्यगछिद्रंह्रस्वंदीर्घंततंतनुम्

वक्रंविरूपंबद्धाग्रंछिन्नमूलंपदच्युतम् ४१
अशुभंरूक्षमासक्तंतथानंगुलिकल्पितम्
विगंधमवसह्यंचपुंड्रमाहुरनर्थकम् ४२
आरभ्यनासिकामूलंललाटंतंलिखेन्मृदा
समारभ्यभ्रुवोर्मध्यमंतरालंप्रकल्पयेत् ४३
अंतरालंद्व्यंगुलंस्यात्पार्श्वावंगुलिमात्रकौ
मृदाशुभ्रेणविलिखेतपुराड्रंऋजुतरंशुभम् ४४
ललाटेकेशवंध्यायेन्नारायणमथोदरे
वक्षस्थलेमाधवंचगोविंदंकंठकूवरे ४५
विष्णुंचदक्षिणेकुक्षौबाहौचमधुसूदनम्
त्रिविक्रमंकंधरेतुवामनंवामपार्श्वके ४६
श्रीधरंबाहुकेवामेहृषीकेशंतुकंधरे
पृष्ठेवैपद्मनाभंतुत्रिकेदामोदरंन्यसेत् ४७
तत्प्रक्षालनतोयेनवासुदेवंतुमूर्द्धनि
ललाटेभुजयुग्मेतुपृष्ठयोः कंठकूबरे ४८
धारयेदूर्द्ध्वपुंड्रंतुचतुरंगुलमात्रतः
कुक्षौतत्पार्श्वयोः प्रोक्तमायतंतुदशांगुलम् ४९
बाह्वोर्वक्षस्थलेपुंड्रंमष्टांगुलमुदाहृतम्
एवंद्वादशपुंड्राणिब्राह्मणःसततंधरेत् ५०
तत्तत्पुराड्राणितन्मूर्तीर्ध्यात्वामंत्रेणधारयेत्
अंतरालेषुसर्वेषुहरिद्रांधारयेच्छ्रियाम् ५१
चत्वारिभूभृतामाहुः पुंड्राणिद्वेविशांस्मृते
एकपुंड्रंतुनारीणांशूद्राणांचविधीयते ५२
ललाटेहृदिबाह्वोश्चचतुःपुंड्राणिधारयेत्
ललाटेहृदयेद्वेतुफालेत्वेकंविधीयते ५३
ऊर्द्ध्वपुंड्रंललाटेतुसर्वेषांप्रथमंस्मृतम्
ललाटादिक्रमेणैवधारणंतुविधीयते ५४
मूर्तीस्तुवासुदेवाद्याश्चतुःपुंड्रेषुधारयेत्
द्वयोर्गोविंदकृष्णौतुएकंनारायणंधरेत् ५५
एवंपुंड्रविधिः प्रोक्तः सर्वेषांगिरिजेमया

अश्वत्थपत्रसंकाशोवेणुपत्राकृतिस्तथा ५६
पद्मकुड्मलसंकाशोमोहनंत्रितयंस्मृतम्
महाभागवतःशुद्धःपुंड्रंहरिपदाकृतिम् ५७
दंडाकारंतुवादेविधारयेदूर्द्ध्वपुंड्रकम्
सुदर्शनेनांकितबाहुमूलास्तथोर्द्ध्वपुंड्रांकितसर्वगात्राः ५८
मालारविंदाक्षधराविशुद्धारक्षंतिलोकान्दुरितौघसंगात् ५९
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेऊर्द्ध्वपुंड्रंमाहात्म्यंनामपंचविंशत्यधिकद्विशततमोऽध्यायः २२५

## षड्विंशत्यधिकद्विशततमोऽध्यायः

शंकर उवाच -
न्यासेवाप्यर्चनेवापिमंत्रमेकांतिनः श्रयेत्
अवैष्णवोपदिष्टेनमंत्रेणनपरागतिः १
अवैष्णवोपदिष्टंचेत्पूर्वमंत्रवरंद्वयम्
पुनश्चविधिनासम्यक्वैष्णवाद्ग्राहयेद्गुरोः २
सहस्रशाखाध्यायीवासर्वयज्ञेषुदीक्षितः
कुलेमहतिजातोऽपिनगुरुःस्यादवैष्णवः ३
यस्तुमंत्रद्वयंसम्यगध्यापयतिवैष्णवः
सआचार्यस्तुविज्ञेयोभवबंधविदारकः ४
आचार्यंसंश्रयित्वाथवत्सरंसेवयेद्द्विजः
तस्यवृत्तिपरिज्ञात्वामंत्रमध्यापयेद्गुरुः ५
कृत्वातापादिसंस्कारान्पश्चान्मंत्रमुदीरयेत्
तापंपुंड्रंतथानामकृत्वावैविधिनागुरुः ६
पश्चादध्यापयेन्मंत्रंशिष्यंनिर्मलचेतसम्
चक्रेणविधिनातप्तंतापइत्यभिधीयते ७
पुंड्रमूर्द्ध्वंतथाप्रोक्तंनामवैष्णवमुच्यते
ततोमंत्रंविधानेनशिष्यमध्यापयेद्गुरुः ८
न्यासमष्टाक्षरंमंत्रमन्यंवावैष्णवंमनुम्
न्यासमेवात्रपरमंवैष्णवानांशुभानने ९
तस्मात्तुन्यासमेवैषामतिरिक्तमिहोच्यते

न्यासविद्यापरोयस्तुब्राह्मणः श्रेष्ठउच्यते १०
न्यासात्परतरंनास्तिमन्त्रंसत्यंब्रवीमिते
न्यासंद्वयंप्रपत्तिःस्यात्पर्यायेणनिबोधमे ११
द्वयोपदेशपूर्वंतुसर्वकर्मसमाचरेत्
द्वयाधिकारीनभवेत्सर्वकर्मसुनार्हति १२
तस्माद्वयमधीत्येवपश्चान्मंत्रमनुत्तमम्
श्रीमदष्टाक्षरंसम्यगभ्यसेद्दिवजसत्तमः १३
मंत्रमष्टाक्षरंप्रोक्तंप्रणवस्यैवसंग्रहात्
नैसर्गप्रणवाद्यन्तुमंत्रेमित्युच्यतेबुधैः १४
नान्यत्रसर्वमत्रेषुप्रणवस्वस्वभावतः
पूर्वंतुसर्वमंत्राणांयोजयेत्प्रणवंशुभम् १५
ॐकारः प्रणवंब्रह्मसर्वमंत्रेषुनायकः
आदौसर्वत्रयुंजीतमंत्राणांतुशुभानने १६
स्वभावात्प्रणवन्तस्मिन्मूलमंत्रेप्रतिष्ठितम्
ओमित्येकाक्षरंपूर्वंद्व्यक्षरंनमइत्यथ १७
ततोनारायणायेतिपंचार्णानियथाक्रमम्
एवमष्टाक्षरोमंत्रोज्ञेयः सर्वार्थसाधकः १८
सर्वदुःखहरः श्रीमान्सर्वमंत्रात्मकः शुभः
ऋषिर्नारायणस्तस्यदेवताश्रीशएवच १९
छंदस्तुदेवीगायत्रीप्रणवोवीजमुच्यते
नित्यानपायिनीदेवीशक्तिः श्रीरुच्यतेमनोः २०
प्रथमंपदमोङ्कारद्वितीयंनमउच्यते
तृतीयंनारायणायेतिपदत्रयमुदाहृतम् २१
अकारश्चाप्युकारश्चमकारश्चततः परम्
वेदत्रयात्मकंप्रोक्तंप्रणवंब्रह्मणःपदम् २२
अकारेणोच्यतेविष्णुः श्रीरुकारेणचोच्यते
मकारस्त्वनयोर्दासः पंचविंशःप्रकीर्तितः २३
वासुदेवस्वरूपंतदकारेणोच्यतैबुधैः
उकारेणश्रियोदेव्यारूपंमुनिभिरुच्यते २४
मकारेणोच्यतेजीवः पंचविंशोदितः पुमान्

भूतानिचकवर्गेणचवर्गेणेन्द्रियाणिच २५
टबर्गेणतवर्गेणज्ञानंधादयस्तथा
मनः पकारेणैवोक्तंफकारेणत्वहंकृतिः २६
बकारेणभकारेणमहान्प्रकृतिरुच्यते
आत्मातुसमकारः स्यात्पंचविंशःप्रकीर्तितः २७
देहेंद्रियमनः प्राणादिभ्योन्योऽनन्यसाधनः
भगवच्छेषभूतोऽसौमकाराख्यःसचेतनः २८
अवधारणवाच्येवमुकारः कैश्चिदुच्यते
श्रीतत्वमपितत्पक्षेवकारेणैवचोच्यते २९
भास्करस्यप्रभायद्वत्तस्यनित्यानपायिनी
आकारेणोच्यतेविष्णुः कल्याणगुणसागरः ३०
श्रीशःसर्वात्मनांशेषोजगद्वीजंपरः पुमान्
जगत्कर्त्ताजगद्धर्त्ताईश्वरोलोकबांधवः ३१
जगतामीश्वरीनित्याविष्णोरनपगामिनी
मातासर्वस्यजगतः पत्नीविष्णोर्मनोरमा ३२
जगदाधारभूताश्रीरुकारेणात्रचोच्यते
मकारेणतयोर्दासः क्षेत्रज्ञः प्रोच्यतेबुधैः ३३
ज्ञानाश्रमोज्ञानगुणश्चेतनः प्रकृतेःपरः
नजडोनिर्विकारश्चएकरूपस्वरूपभाक् ३४
अणुर्नित्योव्याप्तिशीलश्चिदानंदात्मकस्तथा
अहमर्थोऽव्ययः क्षेत्रीभिन्नरूपं सनातनः ३५
अदाह्योच्छेद्योह्यक्लेद्यस्त्वशोष्योक्षरएवच
एवमादिगुणोपेतश्शेषभूतः परस्यवै ३६
मकारेणोच्यतेजीवः क्षेत्रज्ञः परवान्सदा
दासभूतोहरेरेवनान्यस्यतुकदाचन ३७
एवंदासत्वमेवास्यमध्यमेवावधार्यते
इत्येवंप्रणवस्यार्थोज्ञातव्योक्तोमयानघे ३८
विवृतिः प्रणवस्यार्थमन्त्रशेषेणवैशुभे
परस्यदासभूतस्यस्वातन्त्र्यंनेहविद्यते ३९
तस्मान्महदहंकारौमनसाविनिवर्त्तयेत्

स्वोपायबुद्ध्यायत्कृत्यंतदपिप्रतिषिध्यते ४०
अ्रहंकृतिर्मकारः स्यान्नकारस्तन्निषेधकः
तस्मात्तुमनसैवास्यअ्रहंकारविमोचनम् ४१
मनसासर्वसिद्धिः स्यादन्यथानाशमाप्नुयात्
नमसासहितंकिंचित्तदहंकारउच्यते ४२
अ्रहंकारेणयुक्तस्यसुखंकिंचिन्नविद्यते
अ्रहंकारविमूढात्माअ्रंधेतमसिमज्जति ४३
तस्मान्नमनसाचात्रस्वातंत्र्यंप्रतिषिध्यते
भगवत्परतंत्रोऽसौतदायत्तश्चजीवति ४४
तस्मात्साधनकर्तृत्वंचेतनस्यनविद्यते
ईश्वरस्यैवसंकल्पाद्वर्त्ततेस्वचराचरम् ४५
तस्मात्स्वसामर्थ्यविधिंत्यजेत्सर्वमशेषतः
ईश्वरस्यतुसामर्थ्यान्नालभ्यंतस्यविद्यते ४६
तस्मिन्यस्तभरः श्रीशेतत्कर्मैवसमाचरेत्
परमात्माहरिस्स्वामीस्वमहंतस्यसर्वदा ४७
इच्छायाविनियोक्तव्यस्तस्यैवात्मेश्वरस्यहि
इत्येवंमनसात्यक्तमहंताममतोर्जितम् ४८
देहेष्वहंमतिर्मूलंसंसृतौकर्मबंधने
तस्मान्महदहंकारौमनसावर्जयेद्बुधः ४९
अ्रथनारायणपदंवद्त्यामिगिरजेशुभे
नाराइत्यात्मनांसंघास्तेषांगतिरसौपुमान् ५०
तएवचायनंतस्यतस्मान्नारायणः स्मृतः
सर्वंहिचिदचिद्वस्तुश्रूयतेदृश्यतेजगत् ५१
योऽसौव्याप्यस्थितो नित्यंसवैनारायणः स्मृतः
नाराश्चेतिसर्वपुंसांसमूहाः परिकीर्तिताः ५२
गतिरालंबनं तेषांतस्मान्नारयणः स्मृतः
नराज्जातानितत्वानिनाराणीतिविदुर्बुधाः ५३
तान्येवचायनंतस्यतेननारायणस्स्मृतः
कल्पांतेपिजगत्कृत्स्नंग्रसित्वायेनधार्यते ५४
पुनः संसृज्यतेयेनसवैनारायणः स्मृतः

चराचरंजगत्कृत्स्नंनारइत्यभि धीयते ५५
तस्यवासंगतिर्येनतेननारायणः स्मृतः
नारोनराणांसंघातस्तस्यासावयनंगतिः ५६
तेनासौमुनिभिर्नित्यंनारायणइतीरितः
प्रभवन्तियतोलोकामहाब्धौपृथुफेनवत् ५७
पुनर्यस्मात्प्रलीयन्तेतस्मान्नारायणः स्मृतः
योवैनित्यपदेनित्योनित्यमुक्तैकभोगवान् ५८
ईशः सर्वस्यजगतः सवैनारायणः स्मृतः
नारायणः परंब्रह्मतत्वंनारायणः परम् ५९
यच्चकिंचिज्जगत्यस्मिन्दृश्यतेश्रूयतेऽपिवा
अंतर्बहिश्चतत्सर्वंव्याप्य नारायणःस्थितः ६०
अपहतपाप्मापुरुषः सर्वभूतांतरस्थितः
दिव्यएकस्सदानित्योहरिर्नारायणोऽच्युतः ६१
यस्तुद्रष्टाचद्रष्टव्यंश्रोताश्रोतव्यमेवच
स्प्रष्टाचस्पर्शितव्यश्चध्याताध्यातव्यमेवच ६२
वक्ताचवाच्यंज्ञाताचज्ञातव्यंचिदचिज्जगत्
तच्चसर्वंहरिःश्रीशोनारायणउदाहृतः ६३
सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात्
सलोकान्सर्वतोव्याप्यअत्यतिष्ठद्दशांगुलम् ६४
यद्भूतंयच्चभव्यंतत्सर्वंनारायणोहरिः
उतामृतत्वस्येशानोयदन्नेनविराट्पुमान् ६५
सएवपुरुषोविष्णुर्वासुदेवोऽच्युतोहरिः
हिरण्मयोऽथभगवान्सोऽमृतः शाश्वतः शिवः ६६
पतिर्विश्वस्यजगतः सर्वलोकेश्वरंप्रभुः
हिरण्यगर्भाःसविताअनंतोऽसौमहेश्वरः ६७
भगवानितिशब्दोऽयतथापुरुषइत्यपि
वर्त्ततेनिरुपाधिश्चवासुदेवोऽखिलात्मनि ६८
ईश्वरोभगवान्विष्णुःपरमात्माजगत्सुहृत्
शास्ताचराचरस्यैकोयतीनांपरमागतिः ६९
योवेदादौस्वरःप्रोक्तोवेदांतेचप्रतिष्ठितः

तस्यप्रकृतिलीनस्ययः परः समहेश्वरः ७०
योसावकारोवैविष्णुर्योऽसौनारायणोहरिः
सएवपुरुषोनित्यःपरमात्मामहेश्वरः ७१
यस्मादुद्भूतमैश्वर्यंयस्मिन्कस्मिंश्चवर्तते
तस्मिन्नीश्वरशब्दोऽपिप्रोच्यते मुनिभिस्तथा
निरुपाधीश्वरत्वंहिवासुंदेवेप्रतिष्ठितम् ७२
आत्मेश्वरइति प्रोक्तोवेदवादैःसनातनैः
तस्मान्महेश्वरत्वंतुवासुदेवेप्रतिष्ठितम् ७३
असौत्रिपाद्विभूतेस्तुलीलयाअपिचेश्वरः
विभूतिद्वयमैश्वर्यंतस्यैवसकलात्मनः ७४
श्रीभूनीलापतिर्योसावीश्वरस्सउदाहृतः
तस्मात्सर्वेश्वरत्वंतुवासुदेवेप्रतिष्ठितम् ७५
असौयज्ञेश्वरोयज्ञोयज्ञभुक्यज्ञकृद्विभुः
यज्ञभुग्यज्ञपुरुषःसएवपरमेश्वरः ७६
यज्ञेश्वरोहव्यसमस्तकव्यभोक्ताव्ययात्माहरिरीश्वरोऽत्र
तत्संनिधानादपयांतिसद्योरक्षांस्यशेषाणयसुराश्चसर्वे ७७
योऽसौविराट्त्वमापन्नोहरिर्भूतोजनार्दनः
संतर्पयतिलोकांस्त्रीन्सएवपरमेश्वरः ७८
येनपूर्णेनहविषादेवायज्ञमतन्वत
तस्माद्यज्ञात्समुत्पन्नायेकेचोभयादतः ७९
तस्माद्यज्ञात्सर्वहुतऋचः सामानिजज्ञिरे
तस्मादश्वाअजायंतगावश्चपुरुषादयः ८०
पुरुषस्यतनोरस्यसर्वयज्ञमयस्यवै
हरेःसर्वंसमुद्भूतंजगत्स्थावरजंगमम् ८१
मुखबाहूरुपादाः स्युस्तस्यवर्णायथाक्रमम्
पद्भ्यांतुपृथिवीतस्यशिरसाद्यौरजायत ८२
मनसश्चंद्रमाजातश्चक्षुषश्चप्रभाकरः
मुखादग्निः सहस्राक्षोवायुः प्राणात्सदागतिः ८३
नाभेर्विरिंचिर्गगनंजगत्सर्वंचराचरम्
यस्मात्सर्वंसमुद्भूतंजगद्विष्णोः सनातनात् ८४

तस्मात्सर्वमयोविष्णुर्नारायणइतीरितः
एवंसृष्ट्वाजगत्सर्वंपुनः संग्रसतेहरिः ८५
निजलीलासमुद्भूतंतान्तवंचोर्णनाभिवत्
ब्रह्माणमिंद्रंरुद्रंचयमंवरुणमेवच ८६
निगृह्यहरतेयस्मात्तस्माद्धरिरिहोच्यते
असावेकार्णवीभूतेमायावटतलेपुमान् ८७
जगत्स्वजठरेकृत्वाशेतेतस्मिन्सनातनः
आसीदेकोहिबैचात्रविष्णुर्नारायणोऽच्युतः ८८
नब्रह्मानचरुद्रश्चनदेवानमहर्षयः
नेमेद्यावापृथिव्यौचनसोमोनचभास्करः ८९
ननक्षत्राणिलोकाश्चनचांडंमहदावृतम्
यस्माज्जगद्भूतंतेनसकलंहरिणाशुभे ९०
सृष्टंपुनस्तथासर्गेतस्मान्नारायणस्स्मृतः
तस्यदास्यंचतुर्थ्यानुमंत्रेप्रोक्तंतुपार्वति ९१
दासभूतमिदंतस्यब्रह्माद्यंसकलंजगत्
एवमर्थंविदित्वावैपश्चान्मंत्रंप्रयोजयेत् ९२
अविदित्वा तुमन्त्रार्थंसिद्धिंनैवाधिगच्छति
नतुभुक्तिंचभक्तिंचनचमुक्तिंवरानने ९३
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेमंत्रार्थोपदेशोनामषड्विंशत्यधिकद्विशततमोऽध्यायः २२६

## सप्तविंशत्यधिकद्विशततमोऽध्यायः

पार्वत्युवाच-
विस्तरेणमयाचक्ष्वमंत्रार्थपदगौरवम्
ईश्वरस्यस्वरूपंचतद्विभूतिगुणांस्तथा १
तद्विष्णोःपरमंधामव्यूहभेदांस्तथाहरेः
सर्वमाख्याहितत्त्वेनममसर्वसुरेश्वर २
ईश्वरउवाच-
शृणुदेविप्रवक्ष्यामिस्वरूपंपरमात्मनः
विभूतिगुणसंघातंतदवस्थात्मकंहरेः ३

यःपरःपुरुषोविष्णुर्नारायणउदाहृतः
सईश्वरश्च जगतांपरमात्मासनातनः ४
विश्वतःपाणिपादश्चचक्षुष्मान्विश्वतःप्रभुः
विश्वानिभुवनान्यस्मिन्धामानिपरमाणिवै ५
धारयन्सोऽप्यत्यतिष्ठेन्मनांसिचमनीषिणाम्
एवंबहुस्वरूपःसञ्छ्रीपतिः पुरुषोत्तमः
ईश्वर्य्यासहभोगार्थंदिव्यमंगलरूपवान् ६
बृहच्छरीरोऽग्निसमानरूपोयुवाकुमारत्व मुपेयिवान्हरिः
रेमेश्रियासौजगतांजनन्यास्वज्योत्स्नयाचंद्रइवामृतांशुः ७
अयंचजगदीश्वर्य्याकुमारोनित्ययौवनः
कंदर्प्पकोटिलावरायः सतस्थेपरमेपदे ८
भोगार्थंपरमंव्योमलीलार्थमखिलंजगत्
भोगेनक्रीडयाविष्णोर्विभूतिद्वयसंस्थितिः ९
भोगेनित्यस्थितिस्तस्यलीलांसंहरतेकदा
भोगोलीलाउभौस्तस्यधार्य्येतेशक्तिमत्तया १०
त्रिपाद्व्याप्तिः परेधाम्निपादोस्येहाभवत्पुनः
त्रिपाद्विभूतिर्नित्यास्यादनित्यंपादमैश्वरम् ११
नित्यंतद्रूपमीशस्यपरेधाम्निस्थितंशुभम्
अच्युतंशाश्वतंदिव्यंसदायौवनमाश्रितम् १२
नित्यंसंभोगमीश्वर्याश्रियाभूम्याचसंवृतम्
नित्यैवेषाजगन्माताविष्णोःश्रीरनपायिनी १३
यथासर्वगतोविष्णुस्तथालक्ष्मीश्शुभानने
ईशानासर्वजगतोविष्णुपत्नीसदा शिवा १४
सर्वतः पाणिपादांतासर्वतोऽक्षिशिरोमुखी
नारायणीजगन्मातासमस्तजगदाश्रया १५
यदपाङ्गाश्रितंसर्वंजगत्स्थावरजङ्गमम्
जगत्स्थितिलयौयस्याउन्मीलननिमीलनात् १६
सर्वस्याद्यामहालक्ष्मीस्त्रिगुणापरमेश्वरी
लक्ष्यालक्ष्यस्वरूपासाव्याप्यकृत्स्नंव्यवस्थिता १७
शून्यंतदखिलंविश्वंविलोक्यपरमेश्वरी

शून्यंतदखिलंस्वेनपूरयामासतेजसा १८
सालक्ष्मीर्धरणीचैवनीलादेवीतिविश्रुता
आधारभूता जगतः पृथिवीरूपमाश्रिता १९
तोयादिरसरूपेणसैवनीलावपुर्भवेत्
लक्ष्मीरूपत्वमापन्नाधनवाग्रूपिणीहिसा २०
एवंदेवीस्वरूपासाजगतः श्रीःश्रीताहरिम्
समस्तविद्याभेदास्युर्लक्ष्मीरूपावरानने २१
श्रीरूपमखिलंसर्वंतस्याहिवपुरुच्यते
सौंदर्यंशीलवृत्तंचसौभाग्यंस्त्रीषुसंस्थितम्
तस्यारूपंचगिरिजेसर्वासांमूर्ध्नियोषिताम् २२
यस्याःकटाक्षायतमोग्रदृष्ट्याब्रह्माशिवस्स्वर्गपतिर्महेंद्रः
चंद्रश्चसूर्योधनदोपमोग्निः प्रभूतमैश्वर्यमवाप्नुवंति २३
लक्ष्मीःश्रीःकमलाविद्यामाताविष्णुप्रियासती
पद्मालयापद्महस्तापद्माक्षीलोकसुंदरी २४
भुतानामीश्वरीनित्यासह्यासर्वगताशुभा
विष्णुपत्नीमहादेवीक्षीरोदतनयारमा २५
अनंतालोकमाताभूर्नीलासर्वसुखप्रदा
रुक्मिणीचतथासीतासर्ववेदवतीशुभा २६
सतीसरस्वतीगौरीशांतिः स्वाहास्वधारतिः
नारायणीवरारोहाविष्णोर्नित्यानपायिनी २७
एतानिपुण्यनामानिप्रातरुत्थाययः पठेत्
समहाश्रियमाप्नोतिधनधान्यमकल्मषम् २८
हिरण्यवर्णांहरिणींसुवर्णरजतः स्त्रजाम्
चंद्रांहिरण्मयींलक्ष्मींविष्णोरनपगामिनीम् २९
गन्धद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम्
ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ३०
एवंऋक्संहितायांतुस्तूयमानामहेश्वरी
सर्वैश्वर्यसुखंप्रादाच्छिवादीनांदिवौकसाम् ३१
अस्येशानाहिजगतोविष्णुपत्नीसनातनी
यदपाङ्गाश्रितंसर्वंजगत्स्थावरजंगमम् ३२

यस्यवद्मसिसादेवीप्रभाम्नाविवतिष्ठति
सवैसर्वेश्वरः साद्मादद्मरः पुरुषोऽव्ययः ३३
सवैनारायणः श्रीमान्वात्सल्यगुणसागरः
स्वामीसुशीलःसुभगःसर्वज्ञः सर्वशक्तिमान् ३४
नित्यंसंपूर्णकामश्चनैसर्गिकसुहृत्सखा
कृपापीयूषजलधिःशरणंसर्वदेहिनाम् ३५
स्वर्गापवर्गसुखदोभक्तानांकरुणाकरः
श्रीमतेविष्णवेतस्मैदास्यंसर्वंकरोम्यहम् ३६
देशकालाद्यवस्थातुसर्वासुकमलापतेः
इतिस्वरूपंसंसिद्धंसुखंदास्यमवाप्नुयात् ३७
एवंविदित्वामंत्रार्थंतद्भक्तिंसम्यगाचरेत्
दासभूतमिदंतस्यजगत्स्थावरजंगमम् ३८
श्रीमन्नारायणःस्वामीजगतांप्रभुरीश्वरः
मातापितासुतोबंधुर्निवासः शरणंगतिः ३९
कल्याणगुणवान्श्रीशःसर्वकामफलप्रदः
योऽसौनिर्गुणइत्युक्तःशास्त्रेषुजगदीश्वरः ४०
प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते
यत्रमिथ्याप्रपञ्चत्वंवाक्यैर्वेदांतगोचरैः ४१
दृश्यमानमिदंसर्वमनित्यमितिचोच्यते
अत्रापिप्राकृतंरूपमराडस्यैवविनाशनम् ४२
प्राकृतानांहिरूपाणामनित्यत्वंतथोच्यते
इममर्थंमहादेविप्रकृतेरुद्भवंहरेः ४३
कीडार्थंदेवदेवस्यविष्णोर्लीलाधिकारिणः
लोकैश्चतुर्भिर्दशभिः सागरैर्द्वीपसंयुतैः ४४
भूतैश्चतुर्विधैश्चापिभूधरैश्चमहोच्छ्रयैः
परिपूर्णमिदंरम्यमंडंप्रकृतिसंभवम् ४५
दशोत्तरगुणोपेतंसप्तावरणसंवृतम्
कलाकाष्ठादिरूपेणयः कालं परिवर्तते ४६
कालेनैवजगत्सर्गस्थितिसंहरणंभवेत्
चतुर्युगसहस्त्रंवैब्रह्मणोदिवसोभवेत् ४७

तावंतिरात्रिवर्षाणिब्रह्मणोऽव्यक्तजन्मनः
क्षयेतुब्रह्मणः प्राप्तेसर्वसंहारकोभवेत् ४८
अंडमंडगतालोकादह्यंतेकालवह्निना
सर्वात्मानस्तथाविष्णोः प्रकृतौविनिवेशिताः ४९
अंडावरणभूतानिप्रकृतौलयमाप्नुयुः
सासर्वजगदाधाराप्रकृतिर्हरिसंश्रिता ५०
तयाजगत्सर्गलयौकरोतिभगवान्सदा
क्रीडार्थंदेवदेवेनसृष्टामायाजगन्मयी ५१
अविद्याप्रकृतिर्मायागुणत्रयमयीसदा
सर्गस्थितिलयानांसाहेतुभूतासनातनी ५२
योगनिद्रामहामायाप्रकृतिस्त्रिगुणान्विता
अव्यक्ताचप्रधानंचविष्णोर्लीलाविकारिणः ५३
जगत्सर्गलयौस्यातांप्रकृतेरेवसर्वदा
असंख्यप्रकृतेःस्थानंनिबिडध्वान्तमव्ययम् ५४
ऊर्ध्वंतुसीम्निविरजानिस्सीमाधस्सनातनी
तयादृतंजगत्सर्वंस्थूलसूक्ष्माद्यवस्थया ५५
विकाससंकोचावस्थेतस्यांसर्गलयौस्मृतौ
एवंसर्वाणिभूतानिप्रकृत्यंतर्गतानिवै ५६
ततः शून्यमिदंसर्वंप्रकृत्यंतर्गतंमहत्
एवंप्रकृतिरूपायाविभूतेरूपमुत्तमम् ५७
त्रिपाद्विभूतिरूपंतुशृणुभूधरनंदिनि
प्रधानपरमव्योम्नोरंतरेविरजानदी ५८
वेदांगस्वेदजनिततोयैः प्रस्राविताशुभा
तस्याः पारेपरेव्योम्नित्रिपाद्भूतिस्सनातनी ५९
अमृतंशाश्वतंनित्यमनन्तंपरमंपदम्
शुद्धंसत्वमयंदिव्यमक्षरंब्रह्मणः पदम् ६०
अनेककोटिसूर्याग्नितुल्यवर्चसमव्ययम्
सर्ववेदमयंशुद्धंसर्गप्रलयवर्जितम् ६१
असंख्यमजरंनित्यंजाग्रत्स्वप्नादिवर्जितम्
हिरण्मयंमोक्षपदं ब्रह्मानंदसुखावहम् ६२

समानाधिक्यरहितमाद्यंतरहितंशुभम्
तेजसात्यद्भुतंरम्यंनित्यमानंदसागरम् ६३
एवमादिगुणोपेतंतद्विष्णोः परमंपदम्
नतद्भासयतेसूर्योनशशांकोनपावकः ६४
यद्गत्वाननिवर्तंतेतद्धामपरमंहरेः
तद्विष्णोः परमंधामशाश्वतंनित्यमच्युतम्
नहिवर्णयितुंशक्यं कल्पकोटिशतैरपि ६५
हरेःपदंवर्णयितुंनशक्यंमयाचधात्राचमुनींद्रसङ्घैः
यस्मिन्पदेह्यच्युतईश्वरोयःसोअङ्गवेदयदिवानवेद ६६
यदक्षरंवेदगुह्यंयस्मिन्देवाअधिविश्वेनिषेदुः
यस्तन्नोवेदकिमृचाकरिष्यतियेतद्विदुस्तइमेसमासते ६७
तद्विष्णोः परमंधामसदापश्यंतिसूरयः
अक्षरंशाश्वतंदिव्यंदेवि चक्षुरिवाततम् ६८
तत्प्रवेष्टुमशक्यंचब्रह्मरुद्रादिदैवतैः
ज्ञानेनशास्त्रमार्गेणवीक्ष्यतेयोगिपुंगवैः ६९
अहंब्रह्माचदेवाश्चनजानंतिमहर्षयः
सर्वोपनिषदामर्थंदृष्ट्वावक्ष्यामिसुव्रते ७०
विष्णोःपदेहिपरमेपदेतत्सशुभाह्वयेः
यत्रगावोभूरि शृगाआसतेसुसुखाः प्रजाः ७१
अत्राहतत्परंधामगोपवेषस्यशार्ङ्गिणः
तद्भातिपरमंधामगोभिर्गोपैस्सुखाह्वयैः ७२
आदित्यवर्णंतमसः परस्ताज्ज्योतिरच्युतम्
आधारोब्रह्मणोलोकश्शुद्धसत्त्वस्सनातनः ७३
सामान्याविभितेभूमिन्तेऽस्मिन्शाश्वतेपदे
तस्थतुर्जागरूकेस्मिन्युवानौश्रीसनातनौ ७४
यतः स्वसारौयुवतीभूनीलेविष्णुवल्लभे
अत्रपूर्वेयेचसाध्याविश्वेदेवास्सनातनाः ७५
तेहनाकंमहिमानस्सचन्तेशुभदर्शनाः
तत्रविज्ञानिनोविप्राजागृवांसस्समिन्धते ७६
तत्पदंज्ञानिनोविप्रायांतिसंवासमिच्छवः

तद्विष्णोःपरमंधाममोक्षइत्यभिधीयते ७७
तस्मिन्बंधविनिर्मुक्ताः प्राप्नुवन्तिसुखंपदम्
तत्प्राप्यननिवर्तंतेतस्मान्मोक्षउदाहृतः ७८
मोक्षंपरंपदंदिव्यममृतंविष्णुमंदिरम्
अक्षरंपरमंधामवैकुण्ठंशाश्वतंपदम् ७९
नित्यञ्चपरमंव्योमसर्वोत्कृष्टंसनातनम्
पर्य्यायवाचकान्यस्यपरधाम्नोच्युतस्यच
तस्यत्रिपाद्विभूतेस्तुरूपंवक्ष्यामिविस्तरात् ८०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सास्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेत्रिपाद्विभूतिकथनंनामसप्तविंशत्यधिकद्विशततमोऽध्यायः २२७

## अष्टाविंशत्यधिक द्विशततमोऽध्यायः

श्रीमहादेवउवाच-
त्रिपाद्विभूतेर्लोकास्तुअसंख्याताः प्रकीर्तिताः
शुद्धसत्वमयाः सर्वेब्रह्मानंदसुखाह्वयाः १
सर्वेनित्यानिर्विकाराहेयरागादिवर्जिताः
सर्वेहिरण्मयाश्शुद्धाः कोटिसूर्य्यसमप्रभाः २
सर्वेवेदमयार्दिव्याः काम क्रोधविवर्जिताः
नारायणपदांभोजभक्त्येकरससेविताः ३
निरंतरंसामगानपरिपूर्णसुखंश्रिताः
सर्वेपंचोपनिषद स्वरूपावेदवर्चसः ४
सर्वेवेदमयैर्दिव्यैःपुरुषैः स्त्रीभिरावृताः
वेदैकरसतोयाढ्यैस्सरोभिरुपशोभिताः ५
श्रुतिस्मृतिपुराणादिरूपस्थावरसंयुताः
सर्वंवर्णयितुंशक्यंनमयालोकविस्तृतम् ६
विरजापरमव्योम्नोरंतरंकेवलंस्मृतम्
तत्स्थानमुपभोक्तव्यमव्यक्तब्रह्मसेविनाम् ७
स्वात्मानुभवजानंदसुखदंकेवलंपदम्
निःश्रेयसंचनिर्वाणंकैवल्यंमोक्षउच्यते ८
श्रीशांघ्रिभक्तिसेवैकरसभोगविवर्धिताः तम्

तदिच्छन्त्यल्पमतयोमोह्यंसुखविवर्जितम्
महात्मानोमहाभागाभगवत्पादसेवकाः ९
तद्विष्णोः परमंधामयांतिब्रह्मसुखप्रदम्
नानाजनपदाकीर्णवैकुंठंतद्धरेःपदम् १०
प्राकारैश्चविमानैश्चसौधैरत्नमयैर्वृतम्
तन्मध्येनगरीदिव्यासाऽयोध्येतिप्रकीर्तिता ११
मणिकांचनचित्राढ्यप्राकारैस्तोरणैर्वृता
चतुर्द्वारसमायुक्तारत्नगोपुरसंवृता १२
चंडादिद्वारपालैश्चकुमुदाद्यैश्चरक्षिता
चंडप्रचंडौप्राग्द्वारयाम्येभद्रसुभद्रकौ १३
वारुण्यांजयविजयौसौम्येधातृविधातरौ
कुमुदःकुमुदाक्षश्चपुंडरीकोऽथवामनः १४
शंकुकर्णःसर्वनेत्रः सुमुखः सुप्रतिष्ठितः
एतेदिक्पतयः प्रोक्ताःपुर्य्यामत्रशुभानने १५
कोटिवैश्वानरप्रख्यगृहपंक्तिभिरावृता
आरूढयौवनैर्नित्यैर्दिव्यनारीनरैर्युता १६
अन्तःपुरंतुदेवस्यमध्येपुर्याम्मनोहरम्
मणिप्राकारसंयुक्तंरत्नतोरणशोभितम् १७

विमानैर्गृहमुख्यैश्चप्रासादैर्बहुभिर्युतम्
दिव्याप्सरोगणैः स्त्रीभिस्सर्वतस्समलंकृतम् १८
मध्येतुमंडपंदिव्यंराजस्थानंमहोच्छ्रयम्
माणिक्यस्तंभसाहस्त्रजुष्टंरत्नमयंशुभम् १९
दिव्यैर्मुक्तैः समाकीर्णंसामगानोपशोभितम्
मध्येसिंहासनंरम्यंसर्ववेदमयंशुभम् २०
धर्मादिदैवतैर्नित्यैर्वृतंवेदमयात्मकैः
धर्म्मज्ञानमहैश्वर्यवैराग्यैः पादविग्रहैः २१
ऋग्यजुःसामचाथर्वैरूपैर्नित्यंवृतंक्रमात्
शक्तिराधारशक्तिश्चचिच्छक्तिश्चसदाशिवा २२
धर्मादिदेवतानांचशक्तयः परिकीर्तिताः

वसंतिमध्यमेतत्रवह्निसूर्यसुधांशवः २३
कूर्मश्चनागराजश्चवैनतेयस्त्रयीश्वरः
छंदांसिसर्वमंत्राश्चपीठरूपत्वमास्थिताः २४
सर्वाक्षरमयंदिव्यंयोगपीठमितिस्मृतम्
तन्मध्येऽष्टदलंपद्ममुदयार्कसमप्रभम् २५
तन्मध्येकर्णिकायांतुसावित्र्यांशुभदर्शने
ईश्वर्य्यासहदेवेशस्तत्रासीनः परः पुमान् २६
इंदीवरदलश्यामः कोटिसूर्यप्रकाशवान्
युवाकुमारः स्निग्धश्चकोमलावयवैर्वृतः २७
फुल्लरक्तांबुजनिभः कोमलांघ्रिसरोजवान्
प्रबुद्धःपुंडरीकाक्षःसुभ्रूलतायुगाङ्कितः २८
सुनासस्सुकपोलाढ्यस्सुश्रोत्रमुखपंकजः
मुक्ताफलाभदन्ताढ्यः सस्मिताधरविद्रुमः २९
परिपूर्णेंदुसंकाशः सुस्मिताननपंकजः
तरुणादित्यवर्णाभ्यांकुंडलाभ्यांविराजितः ३०
सस्निग्धनीलकुटिलकुन्तलैरुपशोभितः
मन्दारपारिजाताढ्यकबरीकृतकेशवान् ३१
प्रातरुद्यत्सहस्रांशुनिभकौस्तुभशोभितः
हारस्वर्णस्रगासक्तकम्बुग्रीवोविराजितः ३२
सिंहस्कंधनिभैःप्रोच्चैः पीनैरंसैर्विराजितः
पीनवृत्ताय तभुजैश्चतुर्भिरुपशोभितः ३३
अङ्गुलीयैश्चकटकैःकेयूरैः परिमण्डितः
बालार्ककोटिसंकाशैः कौस्तुभाद्यैःसुभूषणैः ३४
विराजितमहावक्षोवनमालाविभूषितः
विधातृजननस्थाननाभिपङ्कजशोभितः ३५
बालातपनिभश्लक्ष्णपीतवस्त्रसमन्वितः
नानारत्नविचित्रांघ्रिःकटकाभ्यांविराजितः ३६
सज्योत्स्नचंद्रप्रतिमनखपंक्तिसमन्वितः
कोटिकंदर्पलावण्यसौंदर्य्यनिधिरच्युतः ३७
दिव्यचंदनलिप्तांगोदिव्य मालाविभूषितः

गृहीतशंखचक्राभ्यामुद्बाहुभ्यांविराजितः ३८
वरदाभयहस्ताभ्यामितराभ्यांतथैवच
वामाङ्केसंस्थितादेवीमहालक्ष्मीर्महेश्वरी ३९
हिररायवर्णाहरिणीसुवर्णरजतस्रजा
सर्वलक्षणसंपन्नायौवनारंभविग्रहा ४०
रत्नकुंडलसंयुक्तानीलाकुंचितशीर्षजा
दिव्यचंदनलिप्तांगीदिव्यपुष्पोपशोभिता ४१
मंदारकेतकीजातीपुष्पाञ्चितसुकुंतला
सुभ्रूस्सुनासासुश्रोणीपीनोन्नतपयोधरा ४२
परिपूर्णेंदुसंकाशासुस्मिताननपंकजा
तरुणादित्यवर्णाभ्यांकुंडलाभ्यांविराजिता ४३
तप्तकांचनवर्णाभातप्तकांचनभूषणा
हस्तैश्चतुर्भिःसंयुक्ताकनकांबुजभूषिता ४४
नानाविचित्ररत्नाढ्याकनकांबुजमालया
हारकेयूरकटकैरंगुलीयैश्चशोभिता ४५
भुजद्वयधृतोदग्रपद्मयुग्मोपशोभिता
गृहीतमातुलुंगाख्यजांबूनदकराञ्चिता ४६
एएवंनित्यानपायिन्यामहालक्ष्म्यामहेश्वरः
मोदतेपरमेव्योम्निशाश्वतेसर्वदाप्रभुः ४७
पार्श्वयोर्धरणीनीलेसमासीनेशुभासने
अष्टदिक्षुदलाग्रेषुविमलाद्याश्चशक्तयः ४८
विमलोत्कर्षिणीज्ञानाक्रियायोगातथैवच
प्रह्वीसत्यातथेशानाशक्तयःपरमात्मनः ४९
गृहीत्वाचामरान्दिव्यान्सुधाकरसमप्रभान्
सर्वलक्षणसंपन्नामोदंतेपतिमच्युतम् ५०
दिव्याप्सरोगणाः पंचशतसंख्याश्चयोषितः
अंतःपुरनिवासिन्यः सर्वाभरणभूषिताः ५१
पद्महस्ताश्चताः सर्वाः कोटिवैश्वानरप्रभाः
सर्वलक्षणसंपन्नाःशीतांशुसदृशाननाः ५२
ताभिःपरिवृतोराजाशुशुभेपरमः पुमान्

अनंतविहगाधीशसेनान्याद्यैस्सुरेश्वरे ५३
अन्यैःपरिजनैर्नित्यैर्मुक्तैश्चपरिसंवृतः
मोदतेरमयासार्द्धंभोगैश्वर्यरतः पुमान् ५४
एवंवैकुंठनाथोऽसौराजतेपरमेपदे
तद्व्यूहभेदाँल्लोकांश्चवक्ष्यामिगिरिजेशुभे ५५
प्राच्यांवैकुंठलोकस्यवासुदेवस्य मंदिरम्
आग्नेय्यांलक्ष्म्यालोकस्तुयाम्यांसंकर्षणालयः ५६
सारस्वतस्तुनैर्ऋत्याप्राद्युम्नः पश्चिमेतथा
रतिलोकस्तुवायव्यामुदीच्यामनिरुद्धभूः ५७
एशान्यांशांतिलोकःस्यात्प्रथमावरणंस्मृतम्
केशवादिचतुर्विंशत्यमीलोकास्ततः क्रमात् ५८
द्वितीयावरणंप्रोक्तंवैकुंठस्यशुभाह्वयम्
मत्स्यकूर्मादिलोकास्तुतृतीयावरणंशुभम् ५९
सत्याच्युतानंतदुर्गाविष्वक्सेनगजाननाः
शंखपद्मनिधीलोकाश्चतुर्थावरणंशुभम् ६०
ऋग्यजुःसामाथर्वाणोलोकादिक्षुमहत्सुच
सावित्र्याविहगेशस्यधर्मस्यचमखस्यच ६१
पंचमावरणंप्रोक्तमक्षयंसर्ववाङ्मयम्
शंखचक्रगदापद्मखड्गशार्ङ्गहलंतथा ६२
मौशलंचतथालोकाः सर्वशस्त्रास्त्रसंयुताः
षष्ठमावरणंप्रोक्तंमंत्रास्त्रमयमक्षरम् ६३
एंद्रपावकयाम्यानिनैर्ऋतंवारुणंतथा
वायव्यंसौम्यमैशानंसप्तमंमुनिभिः स्मृतम् ६४
साध्यामरुद्गणाश्चैवविश्वेदेवास्तथैवच
नित्याःसर्वेपरेधाम्नियेचान्येचदिवौकसः ६५
तेवैप्राकृतलोकेस्मिन्ननित्यास्त्रिदशेश्वराः
तेहनाकंमहिमानः सचंतइतिवैश्रुतिः ६६
एवंपरंपदंनित्यैर्मुक्तैर्भोगपरायणैः
दिव्याभिर्महिषीभिश्चराजतेविभुरीश्वरः ६७
नतद्भासयतेसूर्योनशंशांकोनपावकः

यद्गत्वाननिवर्त्तंतेयोगिनः संशितव्रताः ६८
द्वयैकमंत्रनिष्ठायेतेवैयांतितदव्ययम्
नवेदयज्ञाध्ययनैर्नदानैर्नव्रतैः शुभैः ६९
नतपोभिर्निराहारैर्नचसाधनकर्मभिः
एकेनद्वयमंत्रेणतथाभक्तयात्वनन्यथा ७०
तद्गम्यंशाश्वतंस्थानंप्रपत्त्यावैसनातनम्
पार्वत्युवाच-
साधूक्तंपरमंस्वर्गस्वरूपंभवताप्रभो ७१
परव्योम्निस्थितोनित्यंकथंप्रकृतिमराडले
स्थितवान्किंनिमित्तेनलीलयाकिंप्रयोजनम् ७२
शुद्धसत्वमयेलोकेसंस्थितः परमेश्वरः
कथंरजस्तमोमिश्रविभूत्यास्थिवान्प्रभुः ७३
रुद्रउवाच-
त्रिपाद्विभूतौभगवानीश्वर्य्यापरमेश्वरः
नित्यमुक्त्यैकभोग्योऽसौमोदतेसततंविभुः ७४
तमीश्वरंमहामायाप्रकृतिर्जगदाश्रया
कृतांजलिपुटाभूत्वातुष्टावपरमेश्वरम् ७५
महामायोवाच-
नमस्तेत्रिजगद्धाम्नेनमस्तेविश्वरूपिणे
पुराणायनमस्तुभ्यंजगदुत्पत्तिहेतवे ७६
श्रीभूलीलाधिपतयेनमोनारायणायच
नमोभगवतेतूभ्यंवासुदेवायशार्ङ्गिणे ७७
सर्वदेवस्वरूपायविष्णवेजिष्णवेनमः
सहस्रमूर्तयेतुभ्यमनंतायनमोस्तुते ७८
अच्युतायविकारायशुद्धसत्त्वस्वरूपिणे
आदिमध्यांतरहितस्वरूपायनमोनमः ७९
नमोहिरगयगर्भायज्ञानायपरमात्मने
सर्वभूतात्मनेतुभ्यंसर्वभूताश्रयायच ८०
ब्रह्मणेज्योतिषेतुभ्यंनमस्ते विश्वरूपिणे
नमः शुचिषदेतुभ्यंहंसायपरमायच ८१

संकर्षणायरुद्रायसर्वभूतधरायच
हयग्रीवायदीप्तायकालायहरयेनमः
नमस्तेयज्ञपुरुषहव्यकव्यस्वरूपिणे ८२
नमः प्रजापतयेतस्मैसूर्यायशुभवर्चसे
अग्नयेहव्यभोक्त्रेचतस्मैयज्ञात्मनेनमः ८३
नमस्तेप्रसवित्रेचसर्गस्थित्यंतहेतवे
नमोवेदांतवेद्यायचतुरात्मस्वरूपिणे ८४
ब्रह्मणेविष्णवेतुभ्यंनमस्तेशंकारायच
त्रिगुणायनमस्तुभ्यंसर्गस्थित्यंतहेतवे ८५
निर्गुणायनमस्तुभ्यंसर्वात्मान्तरवर्तिने
अव्यक्तायनमस्तस्मैविष्णवेलोकसाक्षिणे ८६
नारायणायश्रीशायपूर्णषाड्गुणयमूर्त्तये
अनंतगुणपूर्णायनमः सर्वार्थदायिने ८७
नमस्तेवासुदेवायपंचावस्थस्वरूपिणे
नमः पंचनवव्यूहभेदरूपायतेनमः ८८
नमोयज्ञवराहायगोविंदायनमोनमः
अविकारायशुद्धायहेयप्रतिभटायच ८९
नमोरामायकृष्णायनरसिंहायतेनमः
केशवायनमस्तुभ्यंजगतांक्लेशहारिणे ९०
त्वमेवसर्वलोकनामाश्रयः पुरुषोत्तमः
प्रसीददेवदेवेशसर्वलोकहितायवै ९१
मत्संस्थाश्चेतनास्सर्वेनिराधारानिराश्रयाः
हीनदेहानिराकाराः सर्वेन्द्रियविवर्जिताः ९२
सर्वानुष्ठानरहिताः सततंदुःखभोगिनः
तेषांलोकांश्चदेहांश्चदातुमर्हसिकेशव ९३
लीलाविभूतिंसर्वज्ञयथापूर्वंप्रकल्पय
चेतनाचेतनंकृत्स्नंजगत्स्थावरजंगमम् ९४
मयासंमोहितंपश्यलीलार्थंपरमेश्वर
प्राकृताण्डंमयासार्धंसृजस्वपुरुषोत्तम ९५
धर्म्माधर्म्मौसुखंदुःखंतस्मिन्नक्षिप्यसंसृतौ

मामधिष्ठायलीलांवैकर्तुमर्हसिमाचिरम् ९६
श्रीमहादेवउवाच-
एवमुक्तस्तयादेव्यामाययापरमेश्वरः
तस्यांनिवेश्यमायायां जगत्स्रष्टुंप्रचक्रमे ९७
योऽसौप्रकृतिपुरुषःप्रोच्यतेसइहाच्युतः
सएवभगवान्विष्णुः प्रकृत्यांप्रविवेशह ९८
असृजत्प्रकृतौब्रह्मभूतादिमहदाश्रयम्
महतः पुरुषादस्मादहंकारोऽभ्यजायत ९९
अहंकारात्तुवैतस्माद्गुणत्रयमजायत
त्रिभ्योगुणेभ्यस्तन्मात्रामसृजद्विश्वभावनः १००
तन्मात्रेभ्योऽभ्यजायंतमहाभूतानितत्क्षणात्
ओंकारःप्रथमंजातोब्रह्मणस्त्रिगुणात्मनः १०१
आकाशादभवद्वायुर्वायोरग्निरजायत
अग्नेरापः समुद्भूताअद्भ्यश्चपृथिवीमता १०२
आकाशादीनिभूतानिसृष्टान्येकोत्तराणिवै
शब्दस्पर्शश्चरूपंचरसोगंधश्चतद्गुणाः १०३
एकोत्तरगुणान्सृष्ट्वातानादायमहाप्रभुः
तेषांविमिश्रणंकृत्वाजगदंडंमहत्तरम्
असृजत्तत्रलान्वैसंख्ययायेचतुर्दश १०४
ब्रह्मादित्रिदशांस्तस्मिन्नसृजत्पुरुषोत्तमः
दैवतिर्य्यक्तथामर्त्यंस्थावरंचचतुर्व्विधम् १०५
तथासृष्टोमहासर्गन्तेनवैजलजेक्षणे
तत्रकर्मानुरूपेणत्रिदशादिषुयोनिषु १०६
संस्थिताः प्रकृतौपूर्वआत्मनः प्रभवंतिहि १०७
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेपरमव्योमादि
वर्णनंनामअष्टाविंशत्यधिकद्विशततमोऽध्यायः २२८

एकोनत्रिंशदधिकद्विशततमोऽध्यायः

पार्वत्युवाच-
विस्तरेणममाख्याहिदेवसर्गमनुत्तमम्

ब्रह्मादित्रिदिवश्रेष्ठाःकथंजाताः सनातनाः
ईश्वरस्यावतारांश्चविस्तरेणतदस्वमे १
रुद्रउवाच-
आकाशानिलतेजोंबुभुवः सृष्टायथाक्रमम्
तासांमध्येऽसृजद्ब्रह्माअगाधजलमर्णवम् २
अस्मिन्नेकार्णवीभूतेजलमायावटच्छदे
आदायसर्व्वभूतानियोगनिद्रांययौहरिः ३
सजगत्स्रष्टुकामस्तुयोगनिद्रामुपेयिवान्
तयारेमेचिरंकालंमायया मधुसूदनः ४
तस्यांतुजनयामासकालात्मानमनुत्तमम्
कलाकाष्ठादिभूतायेपक्षमासादिरूपिणः ५
तस्मिन्कालेहरेर्न्नाभिपंकजंमुकुलाकृति
विकसत्सर्वजगतोबीजभूतंसुवर्चसम् ६
उदस्थादुदभूत्तत्रब्रह्माचसुमहामतिः
सजगत्स्रष्टुकामस्तुरजोगुणविचोदितः
तुष्टावयोगनिद्रायांशयानंपरमेश्वरम् ७
ब्रह्मोवाच-
नमोस्तुविष्णवेतुभ्यंसर्गस्थित्यंतहेतवे
जगद्भूषणभूषायश्रीमतेविश्वरूपिणे ८
नमोब्रह्मण्यदेवायगोब्राह्मणहितायच
जगद्धितायकृष्णायगोविंदायनमोनमः ९
प्रधानकालरूपायपुरुषायेश्वरायच
नमःप्रपंचरूपायनिष्प्रपंचस्वरूपिणे १०
नारायणायविश्वायविश्वेशायनमोनमः
श्रीभूलीलाधिपतयेब्रह्मणेपरमात्मने ११
नमोस्तुवासुदेवायविश्वरूपायशार्ङ्गिणे
त्रयीनाथायहरयेविश्वनाथस्वरूपिणे १२
अनंतकल्याणगुणपरिपूर्णायतेनमः
जगच्चसर्व्वंस्वपितित्वयिसुप्तेजगन्मये १३
वृतंसर्वंजगन्नाथप्रपंचेसचराचरम्

त्वमेवकारणंकर्त्ताकार्य्यंचत्रिगुणोद्भवम् १४
स्रष्टाध्याताविधाताचत्वमेवपरमेश्वरः
जागर्षिशुद्धसत्वस्थस्तवनिद्राकुतःप्रभो
देवत्वयि स्थितालोकाः समाधिष्ठाः सनातनाः १५
शिवउवाच-
एवमुक्तोहृषीकेशोब्रह्मणापरमेश्वरः
उत्तस्थौशयनात्तस्माद्विमुक्तोयोगनिद्रया १६
नियम्ययोगनिद्रांतांजगत्स्रष्टुंप्रचक्रमे
अचिंत्यस्तत्क्षणाद्देवोजगतांप्रभुरच्युतः १७
चिंतयित्वाजगत्सर्वमसृजत्सपुमांस्ततः
लोकान्सर्व्वांस्तदाह्यप्सुगतमंडंहिरणमयम् १८
सप्तद्वीपान्समुद्रांतान्मेदिनीभूधरैर्युतान्
सहैकाराडकटाहेननाभिपद्मेऽसृजत्प्रभुः १९
तदराडमध्येचास्थानमीश्वरः कृतवान्हरिः
अथनारायणंकस्तुदध्यावध्यात्मचेतसा २०
ध्यानांतेतस्यभालात्तुस्वेदबिंदुरजायत
सबिंदुर्बुद्बुदाकारःपृथिव्यामपतत्क्षणात् २१
तस्मात्तुबुद्बुदात्सोऽहमुत्पन्नोस्मिवरानने
त्र्यक्षस्त्रिशूलहस्तोऽहजटामुकुटमंडितः २२
किंकरोमीतिदेवेशमवोचंविनयान्वितः
ततोनारायणोदेवोमामित्याहमुदान्वितः २३
कर्त्तासिजगतोरुद्रसंहारंभीमदर्शनम्
साक्षात्संकर्षणांशेनसंहारार्थेवरानने २४
तस्मान्नारायणाद्देविउत्पन्नोस्मिभयंकरः
नियोज्यमांतुसंहारेपुनरेवजनार्दनः २५
नेत्राभ्यामसृजच्चंद्रसूर्य्यौध्वांतापहारिणौ
वायुंदिशश्चश्रोत्राभ्यामिंद्राग्नीमुखतोऽसृजत् २६
नासाभ्यांवरुणंमित्रमसृजत्पंकजेक्षणः
बाहुभ्यामखिलान्देवान्ससाध्यान्समरुद्गणान् २७
समस्तरोमकूपेभ्योरत्नान्योषधयस्तथा

त्वचिशैलान्समुद्रांश्चगवाद्याः पशवस्तथा २८
मुखतोब्राह्मणः सृष्टोबाहुभ्यांक्षत्रियस्तथा
ऊर्व्वोर्वैश्यस्ततः पद्भ्यांशूद्रश्चैवमजायत २९
एवंसृष्ट्वाजगत्सर्व्वमचेतनमवस्थितम्
विश्वरूपेणदेवेशोयस्यांतरमधिष्ठितः ३०
शक्तयाविनाहरेस्तस्यनोन्मेषोविद्यतेयतः
तस्मात्सर्वजगत्प्राणोविष्णुरेवसनातनः ३१
सएवाव्यक्तरूपःसन्परमात्माव्यवस्थितः
सर्गस्थितिलयंब्रह्मास्वयमेवप्रवर्त्तते ३२
षाड्गुण्यपरिपूर्णोऽसौवासुदेवः सनातनः
त्रिगुणादात्मनोरूपंचतुर्द्धाकुरुतेजगत् ३३
प्रद्युम्नमूर्त्तिर्भगवान्सर्वैश्वर्य्यसमन्वितः
विधेःप्रजापतीनांचकालस्य चजनस्यच ३४
अंतर्य्यामित्वमापन्नोसर्गंसम्यक्करोतिहि
सेतिहासांस्ततोवेदान्ददौतस्मैमहात्मने ३५
प्रद्युम्नस्यांशभागोऽसौब्रह्मालोकपितामहः
जगत्सर्गस्थितिंसर्व्वंप्रकरोत्यंशसंभवः ३६
अनिरुद्धश्चभगवाञ्छक्तितेजःसमन्वितः
मनूनांपार्थिवानांचकालस्यचजनस्यच ३७
स्थितिंकरोतिभगवानंतर्य्यामित्वमास्थितः
संकर्षणोमहाविष्णुर्विद्याबलसमन्वितः ३८
कालस्यसर्वभूतानांरुद्रस्यचयमस्यच
अंतर्य्यामित्वमास्थायजगत्संहरतेप्रभुः ३९
इत्यंतर्य्याम्यवस्थायामंतर्य्यामित्वमात्मनः
मत्स्यःकूर्म्मोवराहश्चनरसिंहोऽथवामनः ४०
रामोरामश्चकृष्णश्चबुद्धःकल्कीचतेदश
एतेतुविभवावस्थाब्रह्मणः परमात्मनः ४१
नृसिंहारामकृष्णेषुषाड्गुण्यंपरिकीर्तितम्
परावस्थातुदेवस्यदीपादुत्पन्नदीपवत् ४२
साह्यवस्थाहरेरस्यशृणुष्वगिरिजेशुभे

वैकुंठंपरमंलोकंविष्णुलोकमनुत्तमम् ४३
श्वेतदीपंस्वरूपंतुक्षीरसागरमुत्तमम्
एवंचतुर्द्धाव्यूहंतुसम्यगुक्तंमहर्षिभिः ४४
जलावरणमध्येतुवैकुंठंकारणंशुभम्
कोटिवैश्वानरप्रख्यंसर्वंधर्म्मवदव्ययम् ४५
आमोदमंदारकरैर्बृक्षैर्वह्निभिरास्थितम्
नानामणिमयंदिव्यंविमानकोटिभिर्य्युतम् ४६
यदुक्तंपरमंधामतादृक्लक्षणसंस्थितम्
तस्मिन्वैकुंठनगरेनानारत्नसमुज्ज्वले ४७
मध्येदेवजयारामंपुरंरम्यमनुत्तमम्
चतुर्द्वारसमायुक्तंहेमप्राकारतोरणम् ४८
चंडादिद्वारपालाद्यैःकुमुदाद्यैश्चरक्षितम्
नानामणिमयैर्दिव्यैर्गृहैः पंक्तिभिरावृतम् ४९
विततंपंचपद्माभिर्योजनैश्चसमंततः
सहस्त्रयोजनोत्तुंगैःप्रासादैःकोटिभिर्वृतम् ५०
आरूढयौवनैर्द्दिव्यैः पुंभिस्त्रीभिश्चशोभितम्
स्त्रियश्चपुरुषाश्चास्मिन्सर्वलक्षणशोभिताः ५१
समरूपाश्चश्रीविष्णोःसर्व्वालंकारभूषिताः
दिव्यस्त्रग्वस्त्रसंछन्नादिव्यचंदनभूषिताः ५२
मोदंतेतत्रदेवेशभक्तयात्वात्ममनोरमे
मंत्राष्टाक्षरसंसिद्धाभक्त्याषोडशरूपया ५३
वृतास्तत्पदमाविश्यमोदंतेमनसीप्सितम्
गत्वांस्मिन्ननिवर्तं तेविष्णुनासहसंस्थिताः ५४
अविच्छिन्नात्मनातेवैविष्णुनासंगताः शुभाः
तत्समानसुखंनित्यंप्राप्नुवंतिमनीषिणः ५५
यत्रतत्रहरेर्लोकानाविश्यशुभचेतसः
प्राप्नुवंतिपुनःस्वर्गंस्वर्गस्थाइवजंतवः ५६
यथासौमित्रिभरतौयथासंकर्षणादयः
तथातेपिचजायंतेसत्यलोकेयथेच्छया ५७
पुनस्तेनैवयास्यंतितत्पदंशाश्वतंपरम्

नकर्म्मबंधनंजन्मवैष्णवानांचविद्यते ५८
विष्णोरनुचरत्वंहिमोक्षयाहुर्मनीषिणः
नदास्यममरेशस्यबंधनंपरिकीर्तितम् ५९
सर्वबंधननिर्मुक्ताहरिदासानिरामयाः
आब्रह्मभुवनाँलोकाःपुनरावृत्तिलक्षणाः ६०
कर्मबंधमयादुःखमित्रासख्यभयप्रदाः
बह्वायासफलादेविजनिनाशकहेतवः ६१
सुखभोगस्तुयन्नृणांविषमिश्राशनंयथा
स्वर्गसंस्थान्नरान्दृष्ट्वाक्षीणेकर्म्मणिदेवताः ६२
कुपिताः पातयन्त्येवसंसृतौकार्य्यबंधने
तस्मात्स्वर्गसुखंदेविबहुधायाससाधनम् ६३
अनित्यंकुटिलंदुःखमिश्रंयोगीपरित्यजेत्
सततंसंस्मरेद्विष्णुंसर्वदुःखौघनाशनम् ६४
नामोच्चारणमात्रेणप्राप्नुवंतिपरंपदम्
तस्मात्तुवैष्णवंलोकंगौरिसंप्रार्थयेत्सुधीः ६५
भक्त्यात्वनन्ययादेवं भजेतकरुणांबुधिम्
ससर्वज्ञानगुणवान्रक्षत्येवनसंशयः ६६
तस्मादष्टाक्षरंमन्त्रंजप्त्वासुखतरंशुभम्
संप्राप्नोतिपरंलोकंवैष्णवंसर्वकामदम् ६७
तस्मिन्मणिमयेतल्पेसहस्रसूर्य्यरश्मिनि
विमानेशुशुभेदिव्येसंस्थितोभगवान्हरिः ६८
तत्रचाधारशक्त्यादिधृतेपीठेहिरण्मये
नानारत्नमयेदिव्ये नानावर्णसमन्विते ६९
तस्मिन्नष्टदलेपद्मेमंत्राक्षरपदेशुभे
कर्णिकायांसुरम्यायांलक्ष्मीबीजशुभाक्षरे ७०
तस्मिन्वालार्कसाहस्रकोटितुल्य समप्रभे
दिव्येनारायणः श्रीमानासीनः पंकजासने ७१
तस्यदक्षिणकेपार्श्वेजगन्माताहिरण्मयी
गृहीत्वाचामरान्दिव्यान् दिव्यमाल्यविभूषणा ७२
वसुपात्रंमातुलुंगंस्वर्णपद्मंधृतंकरैः

वामतःपृथिवीदेवीनीलोत्पलदलद्युतिः ७३
नानाभरणसंयुक्ताविचित्रांबरभूषिता
साधृत्वाचोर्द्ध्वबाहुभ्यांरम्यंरक्तोत्पलद्वयम् ७४
इतराभ्यांधृतं देव्याधान्यपात्रयुगंतथा
गृहीत्वाचामरान्दिव्यान्शक्तयोविमलादिकाः ७५
दलाग्रेषुसमासीनाः सर्वलक्षणशोभिताः
तासांमध्येसमासीनोभगवानच्युतोहरिः ७६
शंखचक्रगदापद्मपाणिभिर्दिव्यभूषणैः
केयूरांगदहाराद्यैर्भूषणैरूपशोभितः ७७
प्रातरुद्यत्सहस्रांशुकुराडलाभ्यांविराजितः
पूर्वोक्तैस्त्रिदशैर्न्नित्यैः सेवितः परमेश्वरः ७८
आस्तेवैकुराठनगरेनित्येसत्येचभोगवान्
श्रीमदष्टाक्षरंमंत्रंसिद्धानांवैमनीषिणाम् ७९
गम्यंतद्वैष्णवंलोकंनेतरेषांकथंचन
इत्येवंप्रथमंव्यूहंकथितंतेवरानने ८०
द्वितीयंवैष्णवंलोकंशृणुवक्ष्यामिसुव्रते
योऽयनित्यइतिख्यातोलोकाग्र्योवैष्णवः स्मृतः ८१
तंलोकंविपुलंपुरायंशुद्धंसत्वमयंशुभम्
मध्याह्नसूर्य्यसाहस्रयुगपद्भासितंतदा ८२
कल्पांतेऽपिनलीयेततत्वलोकंमहत्तरम्
ममब्रह्मादिदेवानांनद्रष्टुमपिशक्यते ८३
सर्वकल्पद्रुमवनैः परिपूर्णंसमंततः
सुधाम्बुपरिपूर्णाभिर्दिर्घिकाभिःसमन्वितम् ८४
स्वर्णरत्नमयैर्दिव्यैःपंकजैरुपशोभितम्
जलदग्निनिभैर्दिव्यैर्भूषणैः कोटिभिर्वृतम् ८५
निरंतरंसामभिश्चकूजितैःकोकिलादिभिः
ऊह्यमानैर्गन्धर्वृक्षैःपुष्पकैरपिशोभितम् ८६
ऊनषोडशवर्षाब्दैर्दिव्यनारीनरैर्वृतम्
सर्वलक्षणशोभाढ्यैर्दिव्यकल्पविभूषणैः ८७
तत्रप्रदेशेरम्येषुदेशेषुकमलापतिम्

मुदितैःपतिभिःसार्द्धमर्चयंतिस्मयोषितः ८८
तत्प्रसादोपलभ्यंवैसुखमश्नन्तिसर्वदा
गायंतिपरमानंदंकृष्णस्यचरितंमहत् ८९
पद्मेक्षणाः पद्महस्ताः पद्मयासदृशःशुभाः
दिव्यस्रग्वसनोपेताः क्रीडंतिस्मसुयोषितः ९०
शंखचक्रगदापद्मधराभूषणभूषिताः
स्रग्विणः पीतवसनाःपुरुषास्तत्रसंस्थिताः ९१
अनन्यस्पर्शनात्तत्रस्त्रीपुंसोःक्रीडमानयोः
भवत्यनुदिनंवृद्धंहरिभक्तिसुखंरसम् ९२
तन्मध्येंतः पुरंरम्यंवासुदेवस्यशोभितम्
चंदनागुरुकर्प्पूरकुंकुमोदकसंयुतम् ९३
नानापुष्पविमानाद्यैः सर्वतः समलंकृतम्
तन्मध्येकल्पवृक्षस्य च्छायायांकमलासने ९४
विचित्रश्लक्ष्णपर्यंकेशुभास्तरणसंवृते
दिव्यगंधसुशोभाढ्यैर्नानापुष्पपरिच्छदैः ९५
तस्मिन्मनोरमेदिव्येसमासीनः श्रियासह
ईश्वर्य्यासहदेवेशोवासुदेवः सनातनः ९६
सुधांशुकोटिसंकाशोदिव्याभरणभूषितः
सुवर्णशुभ्रयुगलश्लक्ष्णनासांचिताननः ९७
स्निग्धायतसुलावण्यकपोलाभ्यांविराजितः
नीलकुंचितकेशाढ्योरक्ताब्जदललोचनः ९८
मंदारकेतकीजातीकैरवीकृतशेखरः
स्निग्धबिम्बफलाभौष्ठः सुस्मिताननपंकजः ९९
अनर्घ्यमौक्तिकाभासदंतावलिविराजितः
हरिचंदनलिप्तांगःकस्तूरीतिलकांकितः १००
उन्नतांसभुजैर्दीर्घैश्चतुर्भिरुपशोभितः
जपाकुसुमसंकाशकरपल्लवशोभितः १०१
श्रीवत्सकौस्तुभाभ्यांचशोभितः पृथुवक्षसा १०२
मुक्तामयैःसुशोभाढ्यैर्दिव्यस्त्रग्भिरलंकृतः
बालार्कसदृशज्योत्स्नापीतवस्त्रेणवेष्टितः १०३

माणिक्ययनूपुरोपेतपद्मपत्रविराजितः
अकलंकितचंद्राभनखपंक्तिविराजितः १०४
रक्तोत्पलनिभश्लक्ष्णशुभ्रांघ्रिकरपंकजः
पांचजन्यरथांगाभ्यांबाहुयुग्मविराजितः १०५
इतराभ्यांश्रियोगात्रमाश्लिष्यन्निजवक्षसि
श्लिष्यद्विद्युल्लतोद्गीथशिताभ्रइवराजते १०६
सप्तजांबूनदश्लक्ष्णशुभांघ्रियुगपंजकः
अत्रक्रीडतिदेवेशोवासुदेवः सनातनः १०७
तप्तकांचनसंकाशासर्वाभरणभूषिता
सुस्निग्धनीलकुटिलचंद्राविविराजिता १०८
मंदारपारिजातादिदिव्यपुष्पविराजिता
कर्णावतंसशोभाढ्याचिकुरांतालिसन्निभा १०९
पीनोन्नतस्तनाभ्यांचपीडंतिहरिवक्षसि
केयूरांगदहाराद्यैर्भूषणैरुपशोभिता ११०
आरूढयौवनानित्यंसर्वलोकेशसुंदरी
तत्रक्रीडतिलोकेशपत्यासहनिरंतरम् १११
सएववासुदेवोऽत्रसर्वभूतमनोहरः
क्रीडतेसर्वलोकेस्मिन्सर्वकामप्रदोनृणाम् ११२
अत्राष्टशक्तयोलक्ष्म्यास्तनवःपरितः स्थिताः
रमाचरुक्मिणीसीतापद्मापद्मालयाशिवा ११३
सुलक्षणासुशीलाचरतिकामप्रदाश्चताः
शंखचक्रगदापद्मशार्ङ्गाद्यैर्हेतिभिस्तथा ११४
परितः पुष्कराकारैस्तंलोकंपरिरक्षते
एवंद्वितीयंरूपंचसम्यक्तेशुभदर्शने ११५
संक्षेपतोमयाप्रोक्तंनशक्यंविस्तरेणहि
द्वादशाक्षरमंत्रंवैयेजपंतिसुखाह्वयम् ११६
तेप्राप्नुवंतिसततंशाश्वतंशुभमक्षयम्
नवेदाध्ययनैर्यज्ञैर्नव्रतैर्नोपवासतः ११७
नप्राप्यं वैष्णवंलोकंविनादास्येनकुत्रचित्
तस्माद्दास्यंहरेर्भक्तंभजेतानन्यमानसः ११८

प्राप्नोतिपरमांसिद्धिंकर्मबंधविमोचनीम्
एवंसंप्रोच्यतेदेविद्वितीयंव्यूहमव्ययम् ११९
तृतीयंतुपरंव्यूहंशृणुवक्ष्यामिपार्वति
तोयाब्धेरुत्तरंकूलंश्वेतद्वीपेमहामते १२०
संदर्शनाययोगानांसनकादिमहात्मनाम्
सनकश्चसनंदश्चतृतीयश्चसनातनः १२१
सनत्कुमारजाताश्चवोढुःपंचशिखस्तथा
सप्तैतेब्रह्मणः पुत्रायोगिनः सुमहौजसः १२२
विरक्ताः सर्वभोगेषुशुद्धाःसत्वगुणाःसदा
भगवद्दर्शनोद्भूतसुखैकरससेविनः १२३
नरनारायणाद्याश्चश्वेतद्वीपेवसंतिये
तेषांसंदर्शनार्थायतत्रसंनिहितोहरिः १२४
शुभ्रांशुकोटिसंकाशेनानारत्नमयोज्ज्वले
श्वेतद्वीपेमहायोगिसेवितेभयवर्जिते १२५
तत्रोद्यानानिरम्याणिपारिजातसमानिवै
संतानकलताकीर्णंचन्दनद्रुममंडितम् १२६
फुल्लपद्मोत्पलोपेतंनानातोयालयैर्युतम्
तन्मध्येनगरीरम्यानाम्नाचैरावतीशुभा १२७
नानारत्नमयैर्दिव्यैर्विमानैरुपशोभिता
दिव्यस्त्रीपुंभिराक्रांताबहुप्रासादसंकुला १२८
तन्मध्येऽन्तपुरंरम्यंरत्नद्रुमसमाकुलम्
बालसूर्यनिभैस्तुंगैःप्रासादैर्बहुभिर्वृतम् १२९
तन्मध्येमंडपंदिव्यंमणिकांचनशोभितम्
चंदनागुरुकर्पूरकुंकुमामोदवाशितम् १३०
नानाकुसुमशोभाढ्यैर्वितानैः समलंकृतम्
दिव्याप्सरःसमाकीर्णंसामगानोपशोभितम् १३१
मध्येसिंहासनंतत्रसूर्यवैश्वानरप्रभम्
तन्मध्येऽष्टदलंपद्मंचंद्रबिंबमिवापरम् १३२
तन्मध्येकर्णिकायांतुसमासीनोजनार्दनः
शुद्धजांबूनदप्रख्योमुक्ताहारविभूषितः १३३

शंखचक्रगदापद्मशक्तिहस्तचतुष्टयः
हारकेयूरकटकैरंगुलीयैश्चशोभितः १३४
सुवर्णपंकजप्रख्यःपदयुग्मविराजितः
संतानकनिभैःशुभ्रैर्नखपंक्तिविराजितः १३५
षोडशाब्दवयोरूपयौवनेनविराजितः
विशालभालदेशेतुकुंकुमेनसुगंधिना १३६
रचितेनोर्ध्वपुंड्रेणसीमंतेनोपशोभितः
मथितामृतफेनाभशुक्लवस्त्रसुवेष्टितः १३७
मुक्तामयाभ्यांशुभ्राभ्यांकुंडलाभ्यांविराजितः
पद्मासनसमासीनोजगन्मोहनविग्रहः १३८
वामांकेसंस्थितादेवीतस्यदिव्यस्वरूपिणी
तस्यैवसदृशीलक्ष्मीःशीलसुष्टुगुणादिभिः १३९
पद्मकिंजल्कसंकाशायौवनारंभशोभिता
सर्वलक्षणसंपन्नातप्तकांचनभूषणा १४०
दिव्यस्त्रग्वसनोपेतानीलकुंचितमूर्धजा
चतुर्भुजैर्विराजंतीकेयूराङ्गदभूषिता १४१
मुक्ताहार्विराजंतीमंदारांचितशीर्षजा
श्लक्ष्णनासापुटयुतालसद्दंतिवराजिता १४२
कस्तूरीतिलकोपेतानासाग्रांचित मौक्तिका
स्वर्णकुंभसमप्रख्यपीनोन्नतपयोधरा १४३
दिव्यकुंकुमलिप्तांगीपद्ममालोपशोभिता
वस्त्रपात्रंमातुलिङ्गंदर्पणंहेमपंकजम् १४४
करपद्मधृतादेवीचेतसाभीष्टदायिनी
तस्यैताः सदृशास्तत्रशक्तयः परितोहरेः १४५
ईशावास्यामहादेवीजाह्नवीकमलालया
सावित्रीसर्वगापद्माशक्तयः परिकीर्तिताः १४६
श्रद्धामेधाधृतिःप्रज्ञाधारणाशांतिरेवच
श्रुतिस्मृतिर्धृतिर्मेधावृद्धिर्बुद्धिर्मनीषिणी १४७
दास्यस्तेताःश्रियःप्रोक्ताः सर्वकार्यस्यकारिकाः
अनंतवैनतेयादिदेवतानित्यकिंकराः १४८

साध्यामरुद्गणाश्चैवसेवंतेनित्यदेवताः
प्रासादेषुविमानेषुवनेषुनगरेषुच १४९
तत्प्रसादोपलब्धेषुभोगेष्वत्रानुरंजिताः
क्रीडंतीसततंनित्याहेयनिष्फलवर्जिताः १५०
येविष्णुमंत्रजप्तारःसततंश्रद्धयान्विताः
येद्वादशीव्रतेयुक्तास्तत्पदंयांतितेऽव्ययम् १५१
नवेदैर्नचदानैश्चनयज्ञैर्नव्रतैरपि
प्राप्तुंचशक्यंगिरिजेविष्णुलोकंसनातनम् १५२
भक्त्याचानन्ययाप्राप्तुंशक्यंविष्णुपदंनृणाम्
तस्मात्संपूजयेन्नित्यंभक्त्यादेवंजनार्दनम् १५३
कीर्तनंनाममात्रंचध्यायन्मंत्रंजपेत्सदा
जुहुयात्तर्पयेद्भक्त्यासर्वगंसर्वकामदम् १५४
एवमुक्तंतृतीयंतुव्यूहंतुपरमात्मनः
स्वरूपंतवसुश्रोणियथाप्रोक्तंपुरातनैः १५५
अतः परंप्रवक्ष्यामिचतुर्थंव्यूहमुत्तमम्
दिवौकसारक्षणार्थंदुग्धाब्धौपरमेश्वरः १५६
सुधांशुकोटिशंकाशः सहस्राक्षेणशोभिते
पुरंदरसयूथैस्तुच्छादितेदुग्धवारिधौ १५७
तस्मिन्ननंतपर्यंकेशेतेऽसौविस्तृतेशुभे
दिव्यासनसमासीनः पद्मनाभोऽच्युतोहरिः १५८
नीलजीमूतसंकाशः पद्मपत्रायतेक्षणः
विवस्वत्कोटिसंकाशकिरीटेनविराजितः १५९
नानारत्नोज्ज्वलद्दिव्यंकुंडलाभ्यांविराजितः
बालार्कसदृशज्योत्स्नापीतवस्त्रेणवेष्टितः १६०
स्फुरद्रक्तारविंदाभहस्तांघ्रितलशोभितः
हारकेयूरकटकैरंगुलीयैर्विराजितः १६१
शंखचक्रगदाशार्ङ्गखड्गहस्तैर्विभूषितः
सुपुष्पफलशाखाढ्यकल्पवृक्षैर्विराजितः १६२
विश्वस्यजन्ममरणनाभिपंकजशोभितः
हरिचंदनलिप्तांगःसर्वाभरणभूषितः १६३

मंदारपारिजातादिदिव्यपुष्पैर्मनोरमैः
सुस्निग्धनीलकुटिलकवरीकृतकेशवान् १६४
श्लक्ष्णोन्नतसुनासांसजानुयुग्मविराजितः
मणिविद्रुमशाखाढ्यनूपुराङ्घ्रिविराजितः १६५
अकलंकितचंद्राभनखपंक्तिविराजितः
अशोकपुष्पसंकाशरक्तोष्ठमुखपंकजः १६६
अनर्घ्यमुक्तिकाभासदंतपंक्तिविराजितः
संपूर्णचंद्रप्रतिमस्मितवक्त्रसुशोभितः १६७
आरूढयौवनः श्रीमान्कोमलावयवोज्ज्वलः
शरणयःसर्वलोकानांसर्वलोकफलप्रदः १६८
सदृशीतस्यदेवीतुरूपशीलगुणादिभिः
तप्तकांचनसंकाशातप्तकांचनभूषणा १६९
तरुणीरूपलावरायाकान्तिशीलगुणान्विता
दुग्धाब्धिफेनसंकाशशुभवस्त्रेणवेष्टिता १७०
मंदारकेतकीजातीपुष्पार्चितशिरोरुहा
कस्तूरीतिलकोपेतारत्नसीमंतशोभिता १७१
नानावर्णसुशोभाढ्याकर्णभूषणभूषिता
प्रवालसदृशज्योत्स्नारक्तधारसुविस्मिता १७२
मत्तभृङ्गोपमैः स्निग्धैरलकैःसुविराजिता
तनुमध्याविशालाक्षीपीनोन्नतपयोधरा १७३
चतुर्हस्तैर्विराजंतीसर्वाभरणभूषिता
उद्बाहुभ्यांधृतादेवीहेमपद्मयुगंशुभम् १७४
इतराभ्यांसमाश्लिष्यभर्तारंनिबिडंस्थिता
आलोकयंतीसततंत्रिदशांश्चकटाक्षकै १७५
निरीक्षितास्तयादेव्याधन्यास्तेसततंशिवे
तत्रेदेवाविमानस्थाः सिद्धचारणकिन्नराः १७६
गायंतिसततंदेवीमानंदाश्रुपरिप्लुताः
दैतेयैर्बाधयमानैस्तुब्रह्मरुद्रादिभिःसुरैः १७७
संस्तूयमानस्तत्रेशोदेवानामभयंददौ
देवानामभयंदत्त्वासर्वदेवेश्वरोहरिः १७८

राक्षसान्हंतुमारेभेजगत्संरक्षणायवै
एवंचतुर्थंव्यूहंतुहरेः प्रोक्तंतवानघे १७९
किमन्यच्छ्रोतुकामासीत्तद्ब्रवीमिवरानने
धन्यासिकृतकृत्यासिभक्तासिपुरुषोत्तमे १८०
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेविष्णुव्यूहभेदवर्णनंनामएकोनत्रिंशदधिकद्विशततमोऽध्यायः २२९

## त्रिंशदधिक द्विशततमोऽध्यायः

पार्वत्युवाच-
भगवन्यत्रदेवेशोराक्षसान्मधुसूदनः
जघानकेनरूपेणयथावद्वक्तुमर्हसि १
वैभवंचस्थवीयस्यमत्स्यकूर्म्मादिरूपकम्
विस्तरेणसमाख्याहिममप्रीत्यामहेश्वर २
महादेव उवाच-
शृणुदेविप्रवक्ष्यामिवैभवंस्वस्थमानसा
मत्स्यकूर्म्मादियद्रूपमवतारात्मकंहरेः ३
दीपादुत्पाद्यतेदीपोयथावत्तद्भविष्यति
परावस्थापरेशस्यसव्यूहाविभवादयः ४
उक्तादेवावतारास्तुविविधाकारकाःशुभाः
अर्च्चावतारादेवस्यवैभवाः परमात्मनः ५
प्राजापत्येनवैब्रह्मासमम्राट्परमोत्सवः
भृगुंमरीचिमत्रिंचदक्षंकर्द्दममेवच ६
पुलस्त्यंपुलहंचैवगिरिशंचतथाक्रतुम्
नवप्रजानांपतयइमेप्रोक्तायथाक्रमम् ७
मरीचिर्भगवांस्तत्रजनयामासकश्यपम्
कश्यपस्याभवञ्जायाश्चतस्रःशुभदर्शने ८
अदितिश्चदितिश्चैवकद्रुश्चविनतातथा
अदितिर्जनयामासदेवांस्तुशुभदर्शनान् ९
दितिश्चराक्षसान्पुत्रांस्तामसान्सुमहासुरान्
शंबूकस्तुहयग्रीवोहिरण्याक्षोमहाबलः १०

हिरगयकशिपुर्जंभोमयाद्याः सुमहातपाः
मकरस्तुमहावीर्योब्रह्मलोकमुपागतः ११
ब्रह्मागंमोहयित्वाऽसौवेदाञ्जग्राहवीर्यवान्
ग्रसित्वाचश्रुतिं सोऽथप्रविवेशमहार्णवम् १२
ततः सर्वंजगच्छून्यमभवद्धर्मसंकरः
नाधीतंनवषट्कारंवर्णाश्रमविवर्जितम् १३
ततः प्रजापतिर्देवः सर्वदेवगणैर्वृतः
गत्वादुग्धांबुधिंदेवंतुष्टावशरणंगतः १४
ब्रह्मोवाच-
प्रसीददेवमेनाथनागपर्यंकसंस्थित
सर्वेशसर्वदेवात्मन्सर्ववेदमयाच्युत १५
आद्यंजगद्भवोबीजंमध्येत्वंसर्वतोऽधिकः
अंतेचपशुनाथस्त्वंस्वेच्छयातस्तमेवच १६
त्वमेवधत्सेचिद्रूपंजगत्सर्वंसनातनम्
त्वमव्यक्तोहिभूतादिःप्रधानपुरुषोऽव्ययः १७
त्वमादिमध्यांतवपुर्जगतः परमेश्वरः
त्वमेवसर्वलोकानामाश्रयः पुरुषोत्तमः १८
भूतादिस्त्वंमहद्भूतंभूतसंघस्यकारणम्
त्वमेवकारणमाश्रित्यरमतेधामआत्मवान् १९
त्वमादिभूतश्चांतस्त्वंत्वंवायुःसर्व्वगोमहान्
त्वमादिस्त्वमनादिश्चत्वमग्निस्तेजसाः निधिः २०
त्वमापःसर्व्वजगतांजीवनं परमेश्वरः
त्वंभूमिर्जगदाधारोभूधरस्त्वंमहामते २१
सरितं सागरस्त्वंवैसर्व्वस्यादिस्त्वमेवच
देवर्षिःसर्वभूतानित्वमेवपुरुषोत्तम २२
त्वयैवप्रेरितालोकाश्चेष्टंतेसाध्वसाधुषु
दैत्येनोपद्रुतावेदाः प्रविष्टामहदर्णवम् २३
वेदाधारमिदंसर्व्वंजगत्स्थावरजंगमम्
वेदाश्चैवहिसर्व्वेषांधर्माणांपरितः स्थितिः २४
वेदेषुसर्वदेवानांनित्यतृप्तिर्भविष्यति

तस्माद्वेदान्समानेतुंत्वमेवार्हसिकेशव २५
श्रीमहादेवउवाच-
एवमुक्तोहृषीकेशोब्रह्मणापरमेश्वरः
मत्स्यरूपंसमास्थायप्रविवेशमहोदधिम् २६
तं दैत्यंसुमहाघोरंमाकररूपमास्थितः
तुण्डाग्रेणविदार्याथजघानामरपूजितं २७
तंहत्वासर्ववेदांश्चसाङ्गोपाङ्गसमन्वितान्
गृहीत्वाप्रददौतस्मैब्रह्मणेसमहाद्युतिः २८
अन्योन्यमिश्रितावेदाग्रसितास्तेनरक्षसा
व्यक्ताभगवतातेनव्यासरूपेणधीमता २९
पृथग्भूतासमंवेदाव्यासेनैवमहात्मना
एवंमत्स्यावतारेणरक्षिताःसर्व्वदेवताः ३०
श्रुतिप्रदानेनजगत्त्रयंतदाकृत्वानिरातंकमहोरमाधवः
संस्तूयमानः सुरसिद्धसंघैरंतर्दधेयोगिभिरर्च्चितांघ्रिः
वासुदेवोहिभवगान्सर्वदेवमयोहरिः ३१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्सहस्रसंहितायामुत्तरखंडेउमामहेश्वर
संवादेमत्स्यावतारवर्णनंनामत्रिंशदधिकद्विशततमोऽध्यायः २३०

## एकत्रिंशदधिक द्विशततमोऽध्यायः

श्रीरुद्रउवाच-
यत्कौर्म्यवैभवंविष्णोः सर्वलोकनमस्कृतम्
तद्वक्ष्यामिप्रियेसम्यक्शृणुष्वेकाग्रचेतसा १
अत्रिपुत्रोमहातेजादुर्वासाइतिविश्रुतः
प्रचण्डः सर्वलोकानांक्षोभकारीमहातपाः २
सययौहिमवत्पृष्ठंब्रह्मर्षिस्तपसोनिधिः
ममांशभूतोब्रह्मर्षिःसर्वेषांभयदस्सदा ३
उषितस्तत्रवर्षंतुकिन्नरीभिः सपूजितः
महेंद्रंद्रष्टुकामोऽसौस्वर्लोकंप्रययौमुनिः ४
तस्मिन्कालेमहातेजागजारूढंमहेश्वरम्
ददर्शसर्वदेवैस्तंपूज्यमानंशचीपतिम् ५

तच्चदृष्ट्वासहृष्टात्मादुर्वासासुमहातपाः
पारिजातस्रजंतस्मैप्रददौविनयान्वितः ६
आदायदेवताधीशस्तांस्रजंगजमूर्द्धनि
विन्यस्यतत्रदेवेशःप्रययौनंदनंप्रति ७
करेणादायतांमालांमदोद्रिक्तस्ततोगजः
पीडयित्वाथचिक्षेपसंस्थितांधरणीतले ८
ततः क्रुद्धोमहातेजादुर्वासारक्तलोचनः
प्रशप्तवान्महेंद्रंतंसंतप्तक्रोधवह्निना ९
दुर्वासाउवाच–
त्रैलोक्यैकश्रियायुक्तोयस्मान्मामवमन्यते
तस्मात्त्रैलोक्यश्रीर्नष्टाभवत्वेवनसंशयः १०
रुद्रउवाच–
इतिशप्तस्ततः शक्रोजगामस्वपुरंपुनः
ततः श्रीर्जगतांधात्रीक्षणादंतर्दधेस्वयम् ११
अंतर्द्धानंगतालक्ष्मीस्तदानष्टंजगत्त्रयम्
यदपांगाश्रितंसर्वंजगत्स्थावरजंगमम् १२
तस्यामंतर्द्धानवत्यांसर्वंनष्टतरंभवत्
ब्रह्मादित्रिदशाः सर्वेगंधर्वायक्षकिन्नराः १३
दैत्याश्चदानावानागामनुष्याराक्षसास्तथा
पशवः पक्षिणः कीटाःसर्वेस्थावरजंगमाः १४
तयालक्ष्म्याजगन्मात्रातेसर्वेनावलोकिताः
दारिद्र्येनैवविहितास्तेसर्वेदुःखभागिनः १५
क्षुत्पिपासार्दितादेवाश्चुक्रुशुर्गतचेतसः
नववर्षजलधरः सर्वेशुष्काजलाशयाः १६
सर्वेतेपादपाशुष्काःफलपुष्पविवर्जिताः
तदादेवाः सगंधर्वा दैत्यदानवराक्षसाः १७
क्षुत्पिपासार्द्दिताजग्मुः ब्रह्माणममितौजसम्
ऊचुस्तंदेवदेवेशमब्जयोनिंपितामहम् १८
देवाऊचुः –
भगवन्क्षुत्पिपासाभ्यांपीडितंहिजगत्त्रयम्

नहुतंनवषट्कारः सर्वधर्म्मविवर्जितम् १९
क्षुत्पिपासार्द्दिताः सर्वेदेवदानवमानवाः
त्रातारंसर्वलोकेशंभवंतंशरणंगताः २०
त्रातुमर्हसिदेवेशक्षुत्पिपासार्दिताञ्जनान्
रुद्रउवाच-
इतितेषांवचः श्रुत्वासर्वलोकपितामहः २१
उवाचपरमप्रीतस्तान्सर्वान्प्रतिमानदः
ब्रह्मोवाच-
शृणुध्वंदेवताःसर्वे दैत्यगंधर्वमानवाः २२
महेंद्रस्यापचारेणसर्वमेतदुपस्थितम्
समुद्भूतमिदंघोरंजगत्संवर्त्तकंमहत् २३
दुर्वासाः सुमहात्मातुयतः क्रोधमवाप्तवान्
तस्मात्क्रोधेनतेनेदंनष्टंलोकत्रयंसुराः २४
असौरोषपरीतात्माक्रोधेनकलुषीकृतः
जगत्त्रयंचश्रीनष्टंभवत्वित्याहदुर्मतिः २५
तच्छापाज्जगतांधात्रीलक्ष्मीर्न्नारायणप्रिया
अंतर्द्धानंगतादेवीजगन्मातामहेश्वरी २६
यदपाङ्गेक्षितालोकाभवंतिसुखितास्तथा
नालोकिताजगन्मात्रादुःखभागिनएवहि २७
तस्मात्सर्वेवयंगत्वादुग्धाब्धौस्थितमुत्तमम्
तत्रनारायणंदेवमर्च्चयामः सनातनम् २८
तस्मिन्प्रसन्नेदेवेशेशिवमेतद्भवेज्जगत्
इति निश्चित्यमनसाब्रह्मादेवगणैर्युतः २९
भृग्वादिमुनिभिः सार्द्धंप्रययौक्षीरसागरम्
क्षीराब्धावुत्तरतटेब्रह्मरुद्रादिदेवताः ३०
विष्णुंसमर्च्चयामासुः पौरुषेणविधानतः
जपन्नष्टाक्षरंमंत्रंपौरुषंसूक्तमेवच ३१
ध्यायंतोऽनन्यमनसोजुहुवुःपरमेश्वरम्
तुष्टुवुःस्तवनैर्दिव्यैर्नमश्चक्रुर्विचित्रधा ३२
ततःप्रसन्नोभगवान्सर्वेषांचदिवौकसाम्

तेषांसंदर्शनेतस्थौस्तूयमानोमहर्षिभिः ३३
वैनतेयंसमारुह्यसर्वदेवमयंविभुम्
तंदृष्ट्वाजगतामीशंशंखचक्रगदाधरम् ३४
पीतवस्त्रंचतुर्बाहुंपुंडरीकनिभेक्षणम्
श्रीवत्सकौस्तुभोरस्कंवनमालाविभूषितम् ३५
किरीटहारकेयूरनूपुरैरुपशोभितम्
तुष्टुवुर्जयशब्देननमश्चक्रुर्निरंतरम् ३६
ततः प्रोवाचभगवान्कृपयासर्वदेवताः
वरदोस्मिवरंदेवावृणीध्वमितिचाब्रवीत् ३७
इति श्रुत्वातदासर्वेदेवाब्रह्मपुरोगमाः
ऊचुःप्रांजलयोदेवमिदंवचमीश्वरम् ३८
देवाऊचः
भगवन्मुनिशापेनसंप्रतीदंजगत्त्रयम्
क्षुत्पिपासार्दितंसर्वंसदेवासुरमानुषम् ३९
तस्माद्भवंतंशरणंयाताः स्मपुरुषोत्तम
त्राहिसर्वमिमंलोकंनान्यः शक्तोभवेत्क्वचित् ४०
रुद्रउवाच–
इत्युक्तोदेवतैःसर्वैरच्युतः परमेश्वरः
विचार्य्यैतदुवाच्तान्देवान्ब्रह्मपुरोगमान् ४१
श्रीभगवानुवाच–
अत्रिसूनोर्मुनेः शापादंतर्द्धानंगतारमा
कटाक्षदर्शनात्तस्याजगदैश्वर्य्यसंयुतम् ४२
तस्माद्यूयंसुराः सर्वेशिवब्रह्मपुरोगमाः
उत्पाट्यमंदरंशैलंनिधायक्षीरसागरम् ४३
मंदरंघर्घरंकृत्वासर्प्पराजेनवेष्टितम्
कुरुध्वंमथनंदेवादैत्यगंधर्वदानवैः ४४
उत्पद्यते चसालक्ष्मीर्जगत्संरक्षणायवै
तयाहृष्टामहाभागाभविष्यथनसंशयः ४५
धारयाम्यहमेवाद्रिंकूर्मरूपेणसंवृतः
ममशक्त्यासुरान्सर्वान्प्रविश्यचबलीयसः ४६

रुद्रउवाच-
इत्युक्तादेवताः सर्वाहरिणाकामलक्षणे
साधुसाध्विति देवेशमूचुर्ब्रह्मपुरोगमाः ४७
संस्तूयमानोभगवानच्युतःसुरसत्तमैः
अंतर्दधेततः श्रीमान्सर्वलोकनमस्कृतः
सर्वाधारःसर्वदेवः सर्वत्रसमदर्शनः ४८

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादे दुर्वाससःशापकथनंनाम
एकत्रिंशदधिकद्विशततमोऽध्यायः २३१

द्वात्रिंशदधि द्विशततमोऽध्यायः

शंकरउवाच-
ततःसुरगणाःसर्वेदानवाद्यामहाबलाः
उत्पाट्यमंदरंशैलंचिक्षिपुःपयसांनिधौ १
ततोनारायणः श्रीमान्भगवान्भूतभावनः
कूर्मरूपेणतंशैलंदधारामितविक्रमः २
अनादिमध्यांतवपुर्विश्वरूपःसनातनः
अधारयद्गिरिवरंसंपूज्योजगदीश्वरः ३
तथैकेनभुजेनैवईश्वरः सर्वगोऽव्ययः
ततोदेवासुराःसर्वेममंथुःक्षीरसागरम् ४
सर्प्पराजेनसंवेष्ट्यघर्घरंमंदराचलम्
मथ्यमानेऽथदुग्धाब्धौदैवतैः सुमहाबलैः ५
उत्पादनार्थंलक्ष्म्याश्चसर्वएवमहर्षयः
उपोष्यनियमंकृत्वाजेपुःश्रीसूक्तमेवच ६
सहस्रनामपठनंचक्रुर्दिव्याद्विजोत्तमाः
एकादश्यांतुशुद्धायांमथ्यमानेमहांबुधौ ७
उपोष्यऋषयःसर्वेजप्तंश्रीमंत्रमुत्तमम्
कांक्षमाणाश्चयेजप्तुंलक्ष्मीनारायणंहरिम् ८
ध्यात्वा समर्च्चयामासुर्द्विजाग्र्यामुनिसत्तमाः
ततस्तस्मिन्मुहूर्तेतुमथ्यमानेमहांबुधौ ९

समभूत्तत्रप्रथमंकालकूटंमहाविषम्
महापीडंमहाघोरंसंवर्ताग्निसमप्रभम् १०
दृष्ट्वाप्रदुद्रुवुःसर्वेभयार्तादेवदानवाः
ततस्तान्विद्रुतान्दृष्ट्वाभयार्त्तान्सुरसत्तमान् ११
ततस्तानब्रुवंवाक्यमहं तत्रशुभेक्षणे
भोभोदेवगणाःसर्वैर्नभेतव्यंविषंप्रति १२
अहमाहारयिष्यामिकालकूटंमहाविषम्
इत्युक्तास्तेमयासर्वेदेवाइंद्रपुरोगमाः १३
साधुसाध्वितिवाक्यैर्मातुष्टबुःप्रणताभृशम्
तदृष्ट्वामेघसंकाशंप्रादुर्भूतंमहाविषम् १४
ध्यात्वानारायणंदेवंहृदयेगरुडध्वजम्
उदयादित्यसंकाशंशंखचक्रगदाधरम् १५
श्रीभूमिसहितंदेवंतप्तकांचनकुराडलम्
एकाग्रमनसाध्यात्वासर्वदुःखहरंप्रभुम् १६
नामरूपंमहामंत्रंजप्त्वालक्ष्म्यासमन्वितम्
तद्विषंतुमहाघोरमाद्यंसर्वभयंकरम् १७
नामत्रयप्रभावाच्चविष्णोःसर्वगतस्यवै
विषंतदभवज्जीर्णंलोकसंहारकारकम् १८
अच्युतानंतगोविन्दइतिनामत्रयंहरेः
योजपेत्प्रयतोभक्त्याप्रणवाद्यंनमोंतकम् १९
तस्यमृत्युभयंनास्तिविषरोगाग्निजंमहत्
नामत्रयंमहामंत्रजपेद्यःप्रयतात्मवान् २०
कालमृत्युभयंचापितस्यनास्तिकिमन्यतः
इतिनामत्रयेणैवपीतंदेविमयाविषम् २१
ततः प्रहृष्टास्त्रिदशास्तुष्टुवुर्मांसुविस्मिताः
मांप्रणम्यपुनर्देवाममंथुःक्षीरसागरम्
तस्मिन्प्रमथ्यमानेतुमयादेवैश्चभामिनि २२
ज्येष्ठादेवीसमुत्पन्नारक्तस्त्रग्वाससावृता
उत्पन्नासाऽब्रवीद्देवान्किंकर्त्तव्यंमयेतिवै २३
तामब्रुवंस्तुतेदेवींसर्वदेवगणाभृशम्

देवाऊचुः
येषांगृहांतरेरम्येकलहःसंप्रवर्त्तते २४
तत्तेस्थानंप्रयच्छामोवस तत्राशुभान्विता
परुषंभाषणन्नित्यंवदंत्यनृतवादिनः २५
संध्याकालेतुयेपापाःस्वपंतिमलचेतसः
तेषांवेश्मनिसंतिष्ठदुःखदारिद्य्रदायिनी २६
कपालकेशभस्मास्थितुषांगारानियत्रतु
तत्रतेसततंस्थानंभविष्यतिनसंशयः २७
यस्यवेश्मकपालास्थिभस्मकेशादिचिह्नितम्
तत्रवसाशुभेनित्यंकलिनासहनित्यशः २८
अकृत्वापादयोः शौचंयस्त्वाचामतिदुर्म्मतिः
तंभजस्वमहादेविकलुषेणभृशंवृतम् २९
तुषांगारक पालाश्मवालुकावस्त्रचर्म्मभिः
दंतधावनकर्तारोभविष्यंतिनराधमाः ३०
रमस्वकलिनादेवितेषांवेश्मसुनित्यशः
तिलपिष्टंकलंजंचकलिंगंशिग्रुगृंजनम् ३१
छत्राकंविड्वराहंचबिल्वंकोशातकीफलम्
अलाबुंचपलांडुंचयेखादंतिनराधमाः
तेषांगेहेह्यवस्थानंदेवीदारिद्य्रदेसदा ३२
रुद्रउवाच-
इत्यादिश्यसुराः सर्वेज्येष्ठांचकलिवल्लभाम्
पुनश्चमंथनंचक्रुःक्षीराब्धिंसुसमाहिताः ३३
ततश्चवारुणीदेवीसमुत्पन्नाशुभानने
अनंतोनागराजोऽथतां जग्राहसुलोचनाम् ३४
ततः सुरासमुत्पन्नासर्वाभरणभूषिता
वैनतेयस्यभार्याभूत्सर्वलक्षणशोभिता ३५
ततोऽप्सरोगणादिव्यागंधर्वाश्चमहौजसः
जज्ञिरेरूपसंपन्नामधुगायनतत्पराः ३६
एरावतस्ततोजज्ञेतथैवोच्चैःश्रवाहयः
धन्वंतरिःपारिजातं सुरभिःसर्वकामधुक् ३७

एतान्सर्वान्सहस्राक्षोजग्राहप्रीतमानसः
ततः प्रभातसमयेद्वादश्यामुदितेरवौ ३८
मथ्यमानेपुनस्तस्मिन्देवैरिद्रपुरोगमैः
ततः प्रहृष्टवदनैस्तूयमानामहर्षिभिः ३९
उत्पन्नाश्रीर्महालक्ष्मीसर्वलोकेश्वरीशुभा
बालार्ककोटिसंकाशाकनकांगदभूषिता ४०
हेमांबुजसमासीनासर्वलक्षणशोभिता
पद्मपत्रविशालाक्षीनीलकुंचितमूर्द्धजा ४१
दिव्यचंदनलिप्तांगीदित्यपुष्पैरलंकृता
नानारत्नमयैर्दिव्यैः सर्वैराभरणैर्युता ४२
तनुमध्याजगद्धात्रीपीनोन्नतपयोधरा
चतुर्हस्ताविशालाक्षीपूर्णेंदुसदृशानना ४३
वसुपात्रंमातुलुंगंस्वर्णपद्मयुगंशुभम्
विभ्राणाहस्तकमलैः सर्वाभरणभूषितैः ४४
अम्लानपंकजांमालांधारयंतीह्युरः स्थले
ददृशुस्तांमहादेवींसर्वलोकहितैषिणीम् ४५
ईश्वरींसर्वभूतानांमातरंपद्ममालिनीम्
नारायणींजगद्धात्रींनारायणहृदालयाम् ४६
तांविलोक्यमहालक्ष्मींप्रहृष्टाःसर्वदेवताः
अवादयंतःपटहान् दिविदेवगणाभृशम् ४७
ववर्षुःपुष्पवर्षाणिवनदेव्योनिरंतरम्
जगुर्गंधर्वपतयोननृतुश्चाप्सरोगणाः ४८
ववुःपुण्यास्तथावाताः सुप्रभोऽभूद्दिवाकरः
जज्बलुश्चाग्नयः शांताःप्रसन्नाश्चदिशोदश ४९
अनंतरंशीतरश्मिरुदभूत्क्षीरसागरे
सुधामय्खवान्सोमोमातुर्भ्रातासुखावहः ५०
नक्षत्राधिपतिश्चाभूच्चंद्रोवैलोकमातुलः
ततोजायाहरेः पुण्यातुलसीलोकपावनी ५१
समुत्पन्नाजगद्धात्रीपूजार्थंशार्ङ्गिणोहरेः
ततः प्रहृष्टमनसः सर्वेदेवादिवौकसः ५२

तंशैलंपूर्ववत्स्थाप्यपरिपूर्णमनोरथाः
समेत्यमातरंसर्वेशिवब्रह्मपुरोगमाः ५३
स्तुत्वानामसहस्रेणजेपुः श्रीसूक्तसंहिताः
ततःप्रसन्नासादेविसर्वान्देवानुवाचह ५४
श्रीरुवाच-
वरंवृणीध्वंभद्रंवोवरदाहंसुरोत्तमाः
रुद्रउवाच-
ऊचुःप्रांजलयोदेवाः श्रियंनम्रात्ममूर्तयः ५५
देवाऊचुः -
प्रसीदकमलेदेविसर्वलोकेश्वरप्रिये
विष्णोर्वक्षस्थलेदेविभवनित्यानपायिनी ५६
त्रैलोक्यंपालयादेवीनित्यात्वंपरमेश्वरी
यदपांगाश्रितंसर्वंजगत्स्थावरजंगमम् ५७
त्वयाविलोकिताः सर्वेप्रभवंतिदिवौकसः
मातारुद्रादिदेवानामैश्वर्यंत्वत्कटाक्षतः ५८
एतदिच्छामहेदेविजगन्मातर्नमोस्तुते
रुद्रउवाच-
इत्युक्तादैवतैःसर्वैर्लोकमातामहेश्वरी ५९
एवमस्त्वितितान्देवान्प्राहनारायणप्रिया
ततोनारायणः श्रीशःशंखचक्रगदाधरः ६०
तथैवाविरभूद्ब्रह्मापूर्ववत्क्षीरसागरे
ततः प्रतुष्टुवुर्देवानमस्कृत्वाजनार्दनम् ६१
ऊचुः प्रांजलयः सर्वेप्रहृष्टवदनाः शुभाः
देवाऊचुः-
गृहाणदेवींसर्व्वेशमहिर्षीतववल्लभाम् ६२
जगत्संरक्षणार्थायलक्ष्मीमनपगामिनीम्
रुद्रउवाच-
इत्युक्त्वामुनिभिः सर्वेदेवाब्रह्मपुरोगमाः ६३
नानारत्नमयेदिव्येपीठेबालार्कसंनिभे
निवेश्यदेवींदेवंचआनंदाश्रुपरिप्लुताः ६४

दिव्याम्बरैर्दिव्यमाल्यैर्नानारत्नविभूषितैः
लक्ष्म्यासहसमासीनमर्चयामासुरच्युतम् ६५
गंधैर्धूपैश्चदीपैश्चनैवेद्यैश्चसुधामयैः
अप्राकृतैःफलैर्दिव्यैरर्चयामासुरीश्वरीम् ६६
अमृतादुत्थितादेवीतुलसीकोमलाशुभा
तयाश्रीपादयुगलमर्च्चयामासुरंजसा ६७
प्रदक्षिणत्रयंकृत्वानमस्कृत्वामुहुर्मुहुः
तष्टुवुस्तुतिभिर्देवाहर्षपूर्णाश्रुविक्लवाः ६८
ततःप्रसन्नोभगवान्सर्वदेवेश्वरोहरिः
अभीष्टान्प्रददौतेभ्योवरान्देव्यासहप्रभुः ६९
ततः सुहृष्टाःसुरमानुषाद्यालक्ष्मीकटाक्षार्प्पितदृष्टिपूताः
प्रभूतधान्यार्थयुतानिरंतरंसुखंपरंप्रापुरनामयाभृशम् ७०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमा महेश्वरसंवादेलक्ष्म्युत्पत्तिर्नामद्वात्रिंशदधिकद्विशततमोऽध्यायः २३२

## त्रयस्त्रिंशदधिक द्विशततमोऽध्यायः

शंकरउवाच-
ततःप्रोवाचभगवान्सुरांश्चैवमहामुनीन्
देव्यासहप्रहृष्टात्मासर्वलोकहितायवै १
श्रीभगवानुवाच-
शृणुध्वंमुनयःसर्वेदेवताश्चमहावलाः
एकादशीमहापुण्यासर्वोपद्रवनाशिनी २
लक्ष्मीसंदर्शनार्थायभवद्भिःसमुपोषिता
तस्मात्तुसर्वदापुण्याद्वादशीममवल्लभा ३
अद्यप्रभृतियेलोकाउषिताःपूर्ववासरे
द्वादश्यामुदितेभानौश्रद्धयापरयायुताः ४
येपूजयंतिमांभक्तयातुलस्याचश्रियासह
सर्वेतेबन्धनिर्मुक्ताः प्राप्नुवंतिपदंमम ५
नार्च्चयंतिचयेवैमांद्वादश्यांपुरुषोत्तमम्
तेनराःपापकर्माणोममभायाविमोहिताः ६

येनार्चयंतिपापिष्ठानरानरकगामिनः
तान्पापान्विषयैर्बद्धान्ममपूजापराङ्मुखान् ७
क्षिपत्यजस्रंसंसारेमायाममदुरत्यया
रुद्रउवाच-
एवमुक्त्वातुभगवान्परमात्मासनातनः ८
संस्तूयमानोमुनिभिः प्रययौकमलालयम्
क्षीराब्धौशेषपर्य्यंङ्केविमानेसूर्य्यसन्निभे ९
देव्यासहविशालाक्ष्यारमयापरमेश्वरः
दर्शनार्थंसुराणांचतत्रसन्निहितोऽभवत् १०
ततःसुरगणाःसर्व्वेकूर्म्मरूपंसनातनम्
भक्त्यासंपूजयित्वाथतुष्टुवुर्हृष्टमानसाः ११
ततः प्रसन्नोभवगान्कूर्म्मरूपीजनार्द्दनः
भगवानुवाच-
वरंवृणीध्वंदेवेशायद्वोमनसिवर्त्तते
रुद्रउवाच-
ततोदेवगणाःसर्वेकूर्म्मरूपंजनार्दनम् १२
उचुःप्रांजलयः सर्व्वेहर्षनिर्भरमानसाः
देवाऊचुः-
शेषस्यदिग्गजानांचसहायार्थंमहाबल १३
धर्तुमर्हसिदेवेशसप्तद्वीपवतींमहीम्
रुद्रउवाच-
एवमस्त्वितिहृष्टात्माभगवाल्लोँकभावनः १४
धारयामासधरणींसप्तद्वीपसमावृताम्
ततोदेवाःसगंधर्वादैत्यदानवमानुषाः १५
महर्षिभिरनुज्ञाताःस्वर्लोकान्प्रतिपेदिरे
तदाप्रभृतितेसर्व्वेदेवाब्रह्मपुरोगमाः १६
सिद्धायेमानुषाश्चैवयोगिनोमुनिसत्तमाः
विष्णोराज्ञांपुरस्कृत्यभक्त्यापरमया युताः १७
एकादश्यामुपोष्याथभक्त्याचैवजनार्दनम्
द्वादश्यामर्च्चनंचक्रुर्विधिनावरवर्णिनि १८

एतत्तुसर्वमाख्यातंदेव्याजन्मवरानने
कौर्म्यंचवैभवंविष्णोःकिमन्यच्छ्रोतुमिच्छसि १९
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादे एकादश्युपवासकथनंनाम
त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः २३३

चतुस्त्रिंशदधिकद्विशततमोऽध्यायः

पार्वत्युवाच-
भगवञ्छ्रोतुमिच्छामिद्वादश्याश्चविधानकम्
विष्णोःपूजाविधानंचकर्त्तव्यंतत्रवैप्रभो १
एकादश्याः प्रभावंचसर्वपापहरंनृणाम्
आचक्ष्वविस्तरेणैवमयिप्रीत्यामहेश्वर २
महादेवउवाच-
शृणुदेविप्रवक्ष्यामिद्वादश्याश्चविधानकम्
तस्याःस्मरणमात्रेणसंतुष्टः स्याज्जनार्दनः ३
एकादश्यांतुप्राप्तायांसमुपोष्येहमानवः
सर्वपापविनिर्मुक्तायांतिविष्णोः परम्पदम् ४
सप्तजन्मार्जितंपापज्ञानतोऽज्ञानतः कृतम्
क्षणादेवलयंयातिद्वादश्यांहरिपूजनात् ५
अश्वमेधसहस्राणिवाजपेयशतानिच
एकादश्युपवासस्यकलांनार्हंतिषोडशीम् ६
धर्म्मदाह्यर्थदाचैवकामदामोक्षदाकिल
सर्व्वकामदुघानृणांद्वादशीवरवर्णिनी ७
एकादशीसमंकिंचित्पापत्राणंनविद्यते
एकादशीसमंकिचिद्व्रतंनास्तिशुभेक्षणे ८
एकादशींपरित्यज्ययोह्यन्यद्व्रतमाचरेत्
सकरस्थंमहाराज्यंत्यक्त्वाभैक्ष्यंतुयाचते ९
एकादशेंद्रियैःपापंयत्कृतंभवतिप्रिये
एकादश्युपवासेनतत्सर्वंविलयंव्रजेत् १०
रटंतीहपुराणानिभूयोभूयोवरानने

नभोक्तव्यंनभोक्तव्यंसंप्राप्तेहरिवासरे ११
अभक्ष्यंसर्वदाप्रोक्तंकिंपुनःशुक्लकृष्णयोः
वर्णानामाश्रमाणांचसर्वेषांवरवर्णिनी १२
एकादश्युपवासस्तुकर्त्तव्योनात्रसंशयः
एकादश्यांचप्राप्तायांमातापित्रोमृतेऽहनि १३
द्वादश्यांतुप्रदातव्यंनोपवासदिनेक्वचित्
गर्हितान्नंनवाश्नंतिपितरश्चदिवौकसः १४
एकादश्यांनभोक्तव्यंसुरांवानपिबेत्क्वचित्
ब्राह्मणं नैवहन्यात्तुसम मेतत्त्रयंमतम् १५
तस्मादेकादशींशुद्धामुपवासंसमाचरेत्
अवस्थात्रितयेयस्तुयत्नोवाक्कायकर्म्मभिः १६
दशमीमिश्रितांतांतुप्रयत्नेनविवर्ज्जयेत्
अरुणोदयवेलायां दशमीमिश्रिताभवेत् १७
तांत्यक्त्वाद्वादशींशुद्धामुपोष्येहाविचारयन्
कलायांविद्यमानायांसूर्य्यस्योदयनंप्रति १८
त्रयोदश्यांतथादेविद्वादशीपरिविद्यते
तथाचद्वादशीशुद्धाह्युपवासेविधीयते १९
अरुणोदयवेलायांकृत्यंसर्वंसमाचरेत्
कलायामपिद्वादश्यांपारणंतत्रचोदितम् २०
शुद्धामेकादशींचापित्यजेदत्रनसंशयः
कलाप्येकादशीयत्रद्वादश्यामुदितेरवौ २१
सर्वामेकादशींत्यक्त्वातत्रैवोपवसेद्द्विजः
एवंविधिंविनिश्चित्यसमुपोष्यंहरेर्द्दिनम् २२
सायमाद्यंतयोरह्नोःसायंप्रातस्तुमध्यमे
तत्रोपवासंकुर्वीतत्यक्त्वा भुक्तिचतुष्टयम् २३
दशम्यामेकभक्तस्तुनारीसंगमवर्जितः
अवनीतल्पशायीचपरेऽहनिवसेच्छुचिः २४
धात्रीफलानुलिप्तांगःस्नानंसंध्यांसमाचरेत्
उपवासपरोभूत्वारात्रौसंपूजयेद्धरिम् २५
पाखंडिनंविकर्मस्थंपतितंश्वपचंतथा

नावलोकेन्नसंभाषेन्नस्पृशेत्तत्रवैष्णवः २६
अवैष्णवस्तुयोविप्रःसपाषराडःप्रकीर्तितः
शिखोपवीतत्यागीचविकर्मस्थइतीरितः २७
महापापोपपापाभ्यांयुक्तःपतितउच्यते
अंत्यजःश्वपचःप्रोक्तोवेदैस्तत्रसुनिर्णयः २८
रात्रौसंपूज्यदेवेशंजागरंचसमाचरेत्
गंधैःपुष्पैस्तथादीपैर्वस्त्रैराभरणैःशुभैः २९
जपैस्तोत्रैर्नमस्कारैःपूजयेन्निशिभक्तितः
ततः प्रभातसमयेतुलसीमिश्रितैर्जलैः ३०
स्नात्वासम्यग्विधानेनसंतर्प्यपितृदेवताः
पूजयेज्जगतामीशंलक्ष्म्यासहजनार्दनम् ३१
कोमलैस्तुलसीपत्रैःपुष्पैश्चैवसुगंधिभिः
दीपान्नीराजयेत्तत्रवारमष्टोत्तरंशतम् ३२
शतपत्रकृतांमालांताभ्यांसम्यङ्निवेदयेत्
धूपंदीपंचनैवेद्यंतांबूलंचसमर्प्पयेत् ३३
शर्करासहितंदिव्यंपायसान्नंसमर्पयेत्
कर्पूरेणचसंयुक्तंतांबूलंचनिवेदयेत् ३४
प्रदक्षिणेनमस्कारंकृत्वा भक्त्यासमन्वितः
आज्येनजुहुयाद्वह्नौशतमष्टोत्तरंतथा ३५
प्रत्यृचंपुरुषसूक्तेनलक्ष्मीसूक्तेनपायसम्
ब्राह्मणान्भोजयेद्भक्त्यास्वयंभुंजीतवाग्यतः ३६
पुराणादिप्रपाठेनक्षपयेत्तद्दिनंमहत् अं
क्षितिशायीब्रह्मचारीतस्यामेवनिशिस्वपेत् ३७
एवंसंपूज्यमानं सद्द्वादश्यांकमलापतिः
क्षणात्प्रसन्नोभगवान्सर्वाभीष्टप्रदोध्रुवम् ३८
इत्येतत्कथितंदेविद्वादशीव्रतमुत्तमम्
किमन्यच्छ्रोतुकामासितद्वक्तव्यंब्रवीम्यहम् ३९
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहयांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेद्वादशीमाहात्म्यंनामचतुस्त्रिंशदधिकद्विशततमोऽध्यायः २३४

पंञ्चत्रिंशदधिकद्विशततमध्यायः

श्रीपार्वत्युवाच-
पाषंडानांचसंवादंवर्जयेदितियत्त्वया १
उक्तंममेहभगवान्श्वपचादपिगर्हितम्
तेयादृशाः समाख्याताःकैर्लिङ्गैश्चिह्निताभुवि
रुद्रउवाच-
येऽन्यदेवंपरत्वेनवदंत्यज्ञानमोहिताः २
नारायणाज्जगन्नाथात्तेवैपाषंडिनःस्मृताः
कपालभस्मास्थिधरायेह्यवैदिकलिङ्गिनः ३
ऋृतेवनस्थाश्रमाच्चजटावल्कलधारिणः
अवैदिकक्रियोपेतास्तैवैपाषंडिनस्तथा ४
शंखचक्रोर्ध्वपुंड्रादिचिह्नैःप्रियतमैर्हरेः
रहितायेद्विजादेवितेवैपाषंडिनः स्मृताः ५
श्रुतिस्मृत्युदिताचारंयस्तुनाचरतिद्विजः
सपाषंडीतिविज्ञेयः सर्वलोकेषुगर्हितः ६
विनावैभगवत्प्रीत्याते वैपाषंडिनःस्मृताः
समस्तयज्ञभोक्तारंविष्णुंवैब्रह्मदैवतम् ७
उदिश्यदेवताएवजुहोतिचददातिच
सपाषण्डीतिविज्ञेयः स्वतंत्रःसर्वकर्मसु ८
स्वातंत्र्यात्कुरुतेयस्तुकर्मवेदोदितंमहत्
यस्तुनारायणंदेवंब्रह्मरुद्रादिदैवतैः ९
सममन्यैर्निरीक्षेतसपाषंडीभवेत्सदा
अवस्थात्रितयेयस्तुमनोवाक्कायकर्म्मभिः १०
वासुदेवंनजानातिसपाषंडीभवेद्द्विजः
किमत्रबहुनोक्तेनब्राह्मणायेप्यवैष्णवाः ११
नस्प्रष्टव्यानवक्तव्यानद्रष्टव्याःकदाचन
पार्वत्युवाच-
भगवन्परमंगुह्यंपृच्छामिसुरसत्तम १२
मयिप्रीत्यासमाचक्ष्वसंशयोवर्त्ततेभृशम्
कपालभस्मचर्म्मास्थिधारणंश्रुतिगर्हितम् १३

तत्त्वयाधार्य्यतेदेवगर्हितंकेनहेतुना
स्त्रीचापल्येनदेवेशपृच्छामित्वांमहामते १४
महाप्रभावात्कथितंनकर्त्तव्यं क्वचिद्भवेत्
त्वयेतिनपुराप्रोक्तंविस्तरेणमहाप्रभो १५
अकर्त्तव्यमितिप्रश्नंवंतुमर्हसिमेप्रभो
वसिष्ठउवाच-
इतिदेव्याहरः पृष्टोरहस्ये जनवर्जिते १६
उवाचपरमंगुह्यंयद्यदाचरितंस्वकम्
शिवउवाच-
शृणुदेविप्रवक्ष्यामियद्गुह्यंपरमाद्भुतम् १७
नवक्तव्यंत्वयादेविजनेषुकथितंमया
अपृथक्त्वाच्छरीरस्यवक्ष्यामितवसुव्रते १८
नमुच्याद्यामहादैत्याः पुरास्वायंभुवेंतरे
महाबलामहावीर्यामहावीरामहौजसः १९
सर्वेविष्णुरताः शुद्धाः सर्वपापविवर्जिताः
त्रयीधर्मवृताः सर्वेभग्नाइंद्रपुरोगमाः २०
विष्णोः समीपमागम्यभयार्त्ताः शरणंगताः
देवाऊचुः
अजेयान्सर्वदेवानांतपोनिर्द्धूतकल्मषान् २१
त्वमेवैतान्महादैत्याञ्जेतुमर्हसिकेशव
महादेवउवाच-
इत्याकर्ण्यहरिर्वाक्यंदेवानांचभयानकम् २२
तान्समाश्वास्यदिक्पालान्मामाहपुरुषोत्तमः
श्रीभगवानुवाच-
त्वंहिरुद्रमहाबाहोमोहनार्थेसुरद्विषाम् २३
पाषंडाचरणंधर्मंकुरुष्वसुरसत्तम
तामसानिपुराणानिकथयस्वचतान्प्रति २४
मोहनानिचशास्त्राणिकुरुष्वचमहामते
मयिमुक्ताश्चविप्रश्चभविष्यंतिमहर्षयः २५
मद्भक्त्यातान्समाविश्यकथयस्वचतामसान्

काणादंगौतमंशक्तिमुपमन्युंचजैमिनिम् २६
कपिलंचैवदुर्वासंमृकंडुंचबृहस्पतिम्
भार्गवंजामदग्न्यंचदशैतांस्तामसानृषीन् २७
भावशक्त्यासमाविश्यकुर्वताजगतोशिवम्
त्वच्छक्त्याचनिविष्टास्तेतमसोद्रिक्तयाभृशम् २८
तामसास्तेभविष्यंतिक्षणादेवनसंशयः
कथयिष्यंतितेविप्रास्तामसानिजगत्त्रये २९
पुराणानिचशास्त्रणित्वयासत्वेनबृंहिताः
कपालचर्म्मभस्मास्थिचिह्नान्यमरसर्वशः ३०
त्वमेवधृतवान्लोकान्मोहयस्वजगत्त्रये
तथापाशुपतंशास्त्रंत्वमेवकुरुसत्कृतः ३१
कंकालशैवपाषंडमहाशैवादिभेदतः
अलक्ष्यंचमतंसम्यग्वेदबाह्यंनराधमाः ३२
भस्मास्थिधारिणःसर्वेभविष्यंतिह्यचेतसः
त्वांपरत्वेनवक्ष्यंतिसर्वशास्त्रेषुतामसाः ३३
तेषांमतमधिष्ठायसर्वेदैत्याःसनातनाः
भवेयुस्तेमद्विमुखाःक्षणादेवनसंशयः ३४
अहमप्यवतारेषुत्वांचरुद्रमहाबल
तामसानां मोहनार्थंपूजयामियुगेयुगे ३५
मतमेतदवष्टभ्यपतंत्येवनसंशयः
महादेवउवाच-
तच्छ्रुत्वाहंयथोक्तंतुवासुदेवेनभामिनि ३६
सुमहद्वदनोदीनोबभूवात्रवरानने
नमस्कृत्वाथतंदेवमब्रवंपरमेश्वरम् ३७
त्वयोदितमिदंदेवकरोमियदिभूतले
तस्मान्नाशायमेनाथभविष्यतिनसंशयः ३८
तत्रशक्यंमयाकर्तुमेतत्कृत्यंहरेऽधुना
त्वदाज्ञापिचनोल्लंघ्याएतद्दुःखतरंमहत् ३९
एवमुक्तेततोदेविसमाश्वास्यचमांपुनः
आत्मनाशायतेनात्रभवत्वित्याहमांहरिः ४०

देवतानांहितार्थायकुरुष्ववचनंमम
तवापिजीवनोपायंकथयामिसुरोत्तम ४१
दत्तवान्कृपयामह्यमात्मनामसहस्रकम्
हृदयेमांसमाधायजपमंत्रंममाव्ययम् ४२
षडक्षरंमहामंत्रंतारकंब्रह्मउच्यते
येजपंतिहिमांभक्त्यातेषांमुक्तिर्नसंशयः ४३
इंदीवरदलश्यामंपद्मपत्रविलोचनम्
शंखांगशार्ङ्गेषुधरंसर्वाभरणभूषितम् ४४
पीतवस्त्रंचतुर्बाहुंजानकीप्रियवल्लभम्
श्रीरामायनमइत्येवमुच्चार्य्यमन्त्रमुत्तमम् ४५
सर्वदुःखहरंचैतत्पापिनामपिमुक्तिदम्
इमंमंत्रंजपन्नित्यममलस्त्वंभविष्यसि ४६
भस्मास्थिधारणाद्यत्तुसंभूतंकिल्बिषंत्वयि
मंगलंतदभूत्सर्वंमन्मंत्रोच्चारणाच्छुभात् ४७
तर्पितोनाशयिष्यामिपापंसर्वंसुरोत्तम
मदन्यदेवताभक्तिर्जायते नतुसुव्रत ४८
मनसैवार्च्चयहृदिमांनाथंपुरुषोत्तमम्
मदाज्ञांकुरुमत्प्रीत्यासर्वमेतच्छुभंतव ४९
इतिसंदिश्यमांदेविविससर्जमरुद्गणान्
विसृष्टास्तेततोदेवानिवृत्ताः स्वाश्रमंययुः ५०
ततोमांप्रार्थयामासुर्देवाइंद्रपुरोगमाः
इन्द्रादयऊचुः
शीघ्रंकुरुहितंदेवयथोक्तंहरिणाधुना ५१
महादेवउवाच-
देवतानांहितार्थायवृत्तिंपाखंडिनांशुभे
कपालचर्मभस्मास्थिधारणंतत्कृतंमया ५२
तामसानिपुराणानियथोक्तंविष्णुनाशुभे
पाषंडशैवशास्त्राणियथोक्तंकृतवानहम् ५३
मच्छक्त्यापिसमाविश्यगौतमादिद्विजानपि
वेदबाह्यानिशास्त्राणिसम्यगुक्तंमयानघे ५४

इमंमतमवष्टभ्यदुष्टाः सर्वेचराक्षसाः
भगवद्विमुखाःसर्वेबभूवुस्तामसावृताः ५५
भस्मादिधारणंकृत्वामहोग्रतपसावृताः
मामेवपूजयांचक्रुर्म्मांसासृक्चंदनादिभिः ५६
मत्तोवरप्रदानानिलब्ध्वामदबलोद्धताः
अत्यंतविषयासक्ताःकामक्रोधसमन्विताः ५७
सत्वहीनास्तुनिर्वीर्य्याजितादेवगणैस्तदा
सर्वधर्म्मपरिभ्रष्टाःकालेयांत्यधमांगतिम् ५८
येमेमतमवष्टभ्यचरंतिपृथिवीतले
सर्वधर्मैश्चरहिताः पश्यंतिनिरयंसदा ५९
एवंदेवहितार्थायवृत्तिर्मेदेविगर्हिता
विष्णोराज्ञांपुरस्कृत्यकृतं भस्मास्थिधारणम् ६०
बाह्यचिह्नमिदंदेविमोहनार्थायविद्विषाम्
अथांतर्हृदयेनित्यं ध्यात्वादेवंजनार्दनम् ६१
जपन्नेवचतन्मंत्रंतारकंब्रह्मवाचकम्
सहस्रनामसदृशंविष्णोर्नारायणस्यतु ६२
षडक्षरंमहामंत्रंरघूणांकुलबर्द्धनम्
जपन्वैसततंदेविसदानंदसुधाप्लुतम्
सुखमात्यंतिकंब्रह्मह्यश्नामसततंशुभे ६३
एतत्तेसर्वमाख्यातंत्वयापृष्टंशुभानने
किमन्यच्छ्रोतुकामासिप्रीत्यातत्परिपृच्छमाम् ६४
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे पाषंडोत्पत्तिवर्णनंनामपंचत्रिंशदधिकद्विशततमोऽध्यायः २३५

षट्त्रिंशदधिकद्विशततमोऽध्यायः

पार्वत्युवाच–
तामसानिचशास्त्राणिसमाचक्ष्वममानघ
संप्रोक्तानिचतैर्व्विप्रैर्भगवद्भक्तिवर्जितैः
तेषांनामानिक्रमशः समाचक्ष्वसुरेश्वर १
रुद्रउवाच–

शृणुदेविप्रवक्ष्यामितामसानियथाक्रमम् २
तेषांस्मरणमात्रेणमोहःस्याज्ज्ञानिनामपि
प्रथमंहिमयैवोक्तंशैवंपाशुपतादिकम् ३
मच्छक्त्यावेशितैर्व्विप्रैःप्रोक्तानिचततःशृणु
कणादेनतुसंप्रोक्तंशास्त्रंवैशेषिकंमहत् ४
गौतमेनतथान्यायंसांख्यंतुकपिलेनवै
धिषणेनतथाप्रोक्तंचार्व्वाकमतिगर्हितम् ५
दैत्यानांनाशनार्थायविष्णुनाबुद्धरूपिणा
बौद्धशास्त्रमसत्प्रोक्तंनग्ननीलपटादिकम् ६
मायावादमसच्छास्त्रंप्रच्छन्नंबद्धउच्यते
मयैवकथितंदेविकलौब्राह्मणरूपिणा ७
अपार्थंश्रुतिवाक्यानांदर्शयन्लोकगर्हितम्
स्वकर्म्मरूपंत्याज्यत्वमत्रैवप्रतिपाद्यते ८
सर्वकर्म्मपरिभ्रष्टैर्वैधर्म्मत्वंतदुच्यते
परेशजीवपारैक्यंमयातुप्रतिपाद्यते ९
ब्रह्मणोस्यस्वयंरूपंनिर्गुणंवक्ष्यते मया
सर्वस्यजगतोऽप्यत्रमोहनार्थंकलौयुगे १०
वेदार्थवन्महाशास्त्रंमाययायदवैदिकम्
मयैवकल्पितंदेविजगतांनाशकारणात् ११
मदाज्ञयाजैमिनिनापूर्वंवेदमपार्थकम्
निरीश्वरेणवादेनकृतंशास्त्रंमहत्तरम् १२
शास्त्राणिचैवगिरिजेतामसानिनिबोधमे
पुराणानिचवक्ष्यामितामसानियथाक्रमात् १३
ब्राह्मंपाद्मंवैष्णवंचशैवंभागवतंतथा
तथैवनारदीयंतुमार्कण्डेयन्तुसप्तमम् १४
आग्नेयमष्टमंप्रोक्तंभविष्यंनवमंतथा
दशमंब्रह्मवैवर्तंलिङ्गमेकादशंस्मृतम् १५
द्वादशंचवराहंचवामनंचत्रयोदशम्
कौर्म्मंचतुर्दशंप्रोक्तंमात्स्यंपंचदशंस्मृतम् १६
षोडशंगारुडंप्रोक्तंस्कंदंसप्तदशंस्मृतम्

अष्टादशंतुब्रह्मांडंपुराणानियथाक्रमम् १७
मात्स्यंकौर्मंतथालैङ्गंशैवंस्कांदंतथैवच
आग्नेयंचषडेतानितामसानिनिबोधमे १८
वैष्णवंनारदीयंचतथाभागवतंशुभम्
गारुडंचतथापाद्मंवाराहंशुभदर्शने १९
सात्विकानिपुराणानिविज्ञेयानिशुभानिवै
ब्रह्मांडब्रह्मवैवर्त्तमार्कंडेयंतथैवच २०
भविष्यंवामनंब्राह्मंराजसानिनिबोधमे
सात्विकामोक्षदाः प्रोक्ताराजसाः सर्वदाशुभाः २१
तथैवतामसादेविनिरयप्राप्तिहेतवः
तथैवस्मृतयःप्रोक्ता ऋषिभिस्त्रिगुणान्विताः २२
सात्विकाराजसाश्चैवतामसा शुभदर्शने
वासिष्ठंचैवहारीतंव्यासंपाराशरंतथा २३
भारद्वाजंकाश्यपंचसात्विकामुक्तिदाःशुभाः
याज्ञवल्क्यंतथात्रेयं तैत्तिरंदाक्षमे वच २४
कात्यायनंवैष्णवंचराजसां स्वर्गदाःशुभाः
गौतमंबार्हस्पत्यंचसांवर्त्तंचयमंस्मृतम् २५
साख्यंचौशनसंचेतितामसा निरयप्रदाः
किमत्रबहुनोक्तेनपुराणेषुस्मृतिष्वपि २६
तामसानरकायैववर्जयेत्तान्विचक्षणः
एतत्तेसर्वमाख्यातंप्रसंगाच्छुभदर्शनम्
शेषांचप्रभवावस्थांहरेर्वक्ष्यामितेशृणु २७

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेतामसशास्त्र कथनंनामषट्त्रिंशदधिकद्विशततमोऽध्यायः २३६

## सप्तत्रिंशदधिक द्विशततमोऽध्यायः

श्रीरुद्रउवाच-
हिरण्यकहिरण्याक्षौकाश्यपेयौमहाबलौ
दितिपुत्रौमहावीर्य्यौसर्व्वदैत्यपतीउभौ १
नाम्नातौजयविजयौश्वेतद्वीपेहरिंगतौ

तस्मिन्प्रविष्टयोगीन्द्रान्सनकादीन्महाबलौ २
वारयामासतुर्देवविहरिसंदर्शनोत्सुकान्
तैःप्रशप्तौमहावीर्य्यौद्वारपालौसुरोत्तमौ ३
सनकादयऊचुः-
उत्सृज्यतत्पृथिव्यांचयातौदेवस्यकिंकरौ
रुद्रउवाच-
इति शापंतयोर्दत्त्वातत्रतस्थुर्मुनीश्वराः ४
देवस्तमर्थंज्ञात्वाचतानाहूयचतावपि ५
तौचोत्थायाब्रवीत्तत्रभगवान्भूतभावनः
भगवानुवाच-
कृतवंतौमहावीर्य्यावपराधंमहात्मनाम् ६
नातिक्रमणीयमिदंभवद्भ्यांद्वारपालकौ
दासत्वंसप्तजन्मानियुवांभक्तौममानघौ ७
अमित्रतस्तथात्रीणिजन्मानिभजतोऽपिवा
रुद्रउवाच-
इत्युक्तौतौमहावीर्य्यावब्रूतांपरमेश्वरम् ८
जयविजयावूचतुः
चिरकालंमहींगंतुंनसमर्थौस्व मानद
तस्माद्वैरायजन्मानिविद्धिवांचव्रजावहे ९
देवत्वयैवनिहतोप्राप्स्यावोभवदंतिकम्
रुद्रउवाच-
इत्युक्त्वाद्वारपालौ तौपूर्वंजातौमहाबलौ १०
कश्यपस्यमहावीर्य्यौदितिगर्भेमहासुरौ
हिरगयकशिपुर्ज्येष्ठोहिरगयाक्षःकनिष्ठकः ११
उभौतौलोकविख्यातौमहावीर्य्यवलोद्धतौ
अप्रमाणशरीरःसहिरगयाक्षोमहोद्धतः १२
उत्पाटयबाहुसाहस्रैःपृथिवींसमहीधराम्
ससागरांद्वीपयुतांसर्व्वप्राणिसमन्विताम् १३
उत्पाटयशिरसाकृत्वाप्रविवेशरसातलम्
ततोदेवगणाःसर्वेचुक्रुशुर्भयपीडिताः १४

शरणंप्रययुर्देवंनारायणमनामयम्
ततस्तदद्भुतंज्ञात्वाशंखचक्रगदाधरः १५
वाराहरूपमास्थायविश्वरूपंजनार्दनः
अनादिमध्यांतवपुःसर्वदेवमयोविभुः १६
विश्वतः पाणिपच्चक्षुर्महादंष्ट्रोमहाभुजः
दंष्ट्रैकयातुतंदैत्यंजघानपरमेश्वरः १७
संचूर्णितमहागात्रोममारदितिजाधमः
पतितांधरणींदृष्ट्वादंष्ट्रयोद्धृत्यपूर्ववत् १८
संस्थाप्यधारयामासशेषेकूर्म्मवपुस्तदा
तंदृष्ट्वादेवताःसर्व्वेक्रोडरूपंमहाहरिम्
तुष्टवुर्म्मुनयश्चैवभक्तिनम्रात्ममूर्त्तयः १९
देवाऊचुः-
नमोयज्ञवराहायनमस्तेशतबाहवे
नमस्तेदेवदेवायनमस्तेविश्वरूपिणे २०
नमः स्थितिस्वरूपायसर्वयज्ञस्वरूपिणे
कलाकाष्ठानिमेषायनमस्तेकालरूपिणे २१
भूतात्मनेनमस्तुभ्यमृग्वेदवपुषेतथा
सुरात्मनेनमस्तुभ्यंसामवेदायतेनमः २२
ॐकारायनमस्तुभ्यंयजुर्वेदस्वरूपिणे
ऋचःस्वरूपिणेचैवचतुर्वेदमयायच २३
नमस्तेवेदवेदाङ्गसांगोपांगायतेनमः
गोविंदायनमस्तुभ्यमनादिनिधनायच २४
नमस्तेवेदविदुषेविशिष्टैकस्वरूपिणे
श्रीभूलीलाधिपतयेजगत्पित्रेनमोनमः २५
रुद्रउवाच-
इत्यादिस्तुतिभिःस्तुत्वादेवंवाराहरूपिणम्
अर्च्चयामासुरात्मेशंगंधपुष्पादिभिर्हरिम् २६
समर्च्यमानस्तैर्देवैस्तेषामिष्टंवरंददौ
गंधर्वैरप्सरोभिश्चगायमानोमुदाहरिः २७
महर्षिभिःस्तूयमानस्तत्रैवांतरधीयत

एभिःस्तुत्वानरोभक्त्याप्रातरुत्थायभक्तिमान् २८
ईप्सितांलभते भूमिंचिरंसस्यफलान्विताम्
एतत्तेसर्वमाख्यातंवाराहवैभवंहरैः
नारसिंहंतथावक्ष्येशृणुदेविवरानने २९
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
वराहावतारकथनंनामसप्तत्रिंशदधिकद्विशततमोऽध्यायः २३७

## अष्टत्रिंशदद्विक द्विशततमोऽध्यायः

रुद्रउवाच-
भ्रातरंनिहतंज्ञात्वाहिरगयकशिपुस्ततः
तपस्तेपेमहादैत्योमेरोःपार्श्वेचमांप्रति १
दिव्यवर्षसहस्राणिवायुभक्षोमहाबलः
जपन्पंचाक्षरंमंत्रंपूजयामासमांशुभे २
ततः प्रहृष्टमनसातमवोचंमहासुरम्
वरंवृणीष्वदैतेययत्तेमनसिवर्त्तते
ततः प्रोवाचदैतेयोमांप्रसन्नंशुभानने ३
हिरगयकशिपुरुवाच-
देवासुरमनुष्याणांगंधर्वोरगरक्षसाम्
पशुपक्षिमृगाणांचसिद्धानांवैमहात्मनाम् ४
यक्षविद्याधराणांचकिन्नराणांतथैवच
सर्वेषामेवरोगाणामायुधानांतथैवच
सर्वेषामृषिमुख्यानामवध्यत्वंप्रयच्छमे ५
रुद्र उवाच-
एवमस्त्वितितद्दक्षस्त्वब्रुवंप्रियदर्शने
मत्तोमहद्वरंप्राप्यसदैतेयोमहाबलः ६
जित्वामहेंद्रंदेवांश्चसत्रैलोक्येश्वरोऽभवत्
सर्वांश्चयज्ञभागांश्चस्वयमेवाग्रहीद्बलात् ७
त्रातारंनाधिगच्छंतिदेवतास्तेननिर्जिताः
तस्यैवकिंकराः सर्वेगंधर्वादेवदानवाः ८
यक्षाश्चनागाःसिद्धाश्चसाध्याश्चवशवर्तिनः

उत्तानपादस्यसुतांकल्याणींनामकन्यकाम् ९
उपयेमेविधानेनदैत्यराजोमहाबलः
तस्यांजातोमहातेजाः प्रह्लादोदैत्यराट्शुभे १०
अनुरक्तोहृषीकेशेगर्भवासेऽपियोहरौ
सर्वावस्थासुकृत्येषुमनोवाक्कायकर्म्मभिः ११
नान्यंजानातिदेवेशात्प्रसन्नात्मासनातनात्
सकालेऽपिविनीतः सन्गुरुगेहेवसत्सुधीः १२
अधीत्यसर्ववेदांश्चशास्त्राणिविविधानिच
कस्यचित्त्वथकालस्यगुरुणासहदैत्यजः १३
पितुःसमीपमागत्यववंदेविनयान्वितः
तंपरिष्वज्यबाहुभ्यांतनयंशुभलक्षणम्
अंकेनिधायदैत्येंद्रःप्रोवाचेदंसुविस्मितम् १४
हिरण्यकशिपुरुवाच-
प्रह्लादचिरकालंत्वंगुरुगेहेनिवेशितः
यदुक्तागुरुणाविद्यातन्ममाचक्ष्वसुव्रत १५
रुद्रउवाच-
इति पृष्टःस्वपित्रावैप्रह्लादोजन्मवैष्णवः
प्राहदैत्येश्वरंप्रीत्यावचनंकलुषापहम् १६
प्रह्लादउवाच-
योवैसर्वोपनिषदामर्थःपुरुषईश्वरः
तंवैसर्वगतंविष्णुंनमस्कृत्वाब्रवीमिते १७
रुद्रउवाच-
इति विष्णुस्तुतिंश्रुत्वादैत्यराडिवस्मयान्वितः
उवाचतंगुरुंरोषात्किंत्वयोक्तंममात्मजे १८
ममात्मजस्यदुर्बुद्धेहरिसंस्तवमीदृशम्
किमर्थमुक्तवान्जाड्यमकार्य्यंब्राह्मणोचितम् १९
अश्राव्यंमदमित्रस्यस्तवमेतंममाग्रतः
बालेनापिकृतंत्वेतत्त्वत्प्रसादाद्द्विजाधम २०
इत्युक्त्वापरितोवीक्ष्यदैत्यराट्क्रोधमूर्च्छितः
उवाचदैत्यमेकंतुबंधयैनंद्विजाधमम् २१

इतिराजवचः श्रुत्वासबबंधभृगोःसुतम्
बध्यमानंगुरुंदृष्ट्वाप्रह्लादोब्राह्मणप्रियः
उवाचपितरंतातइदंमेनोक्तवान्गुरुः २२
कृपयादेवदेवस्यशिक्षितोस्मिहरेःप्रभो
नान्योगुरुर्मेभवतिसएवप्रेरकोहरिः २३
श्रोतामंतातथावक्ताद्रष्टासर्वगईश्वरः
हरिरेवाव्ययःकर्त्तानियंतासर्वदेहिनाम्
तस्मादनागसोविप्रोमोक्तव्योऽयगुरुःप्रभो २४
रुद्रउवाच–
इतिपुत्रवचः श्रुत्वाहिरगयकशिपुस्ततः
तंब्राह्मणंमोचयित्वास्वसुतंप्राहविस्मयात् २५
किंवत्सत्वंभ्रमस्येवंमिथ्यावाक्यैर्द्विजन्मनः
कोविष्णुः किंतुतद्रूपंकुत्रासौसंस्थितोहरिः २६
अहमेवेश्वरोलोके त्रैलोक्याधिपतिर्यतः
मामेवार्च्चयगोविंदंत्यजशत्रुंदुरासदम् २७
अथवाशंकरंदेवंरुद्रंलोकगुरुंप्रभुम्
अर्च्चयस्वासुराध्यक्षंसर्वैश्वर्य्यप्रदंशिवम् २८
त्रिपुंड्रधारणंकृत्वाभस्मनादैत्यपूजितम्
पूजयित्वामहादेवंपाशुपत्योक्तमार्गतः २९
रुद्रउवाच–
इतिदैत्यपतेर्वाक्यंश्रुत्वादैत्यपुरोहिताः ३०
पुरोहिताऊचुः–
एवमेवमहाभागकुरुष्ववचनंपितुः
त्यजशत्रुंकैटभारिंपूजयस्वत्रिलोचनम् ३१
रुद्रात्परतरोदेवोनास्तिसर्वप्रदोनृणाम्
पितातवापितस्यैवप्रसादादीश्वरोऽभवत् ३२
रुद्रउवाच–
इतितेषांवचःश्रुत्वाप्रह्लादोजन्मवैष्णवं ३३
प्रह्लादउवाच–
अहोभगवतः श्रेष्ठायन्मायामोहितंजगत्

अहोवेदांतविदुषःसर्वलोकेषुपूजिताः ३४
ब्राह्मणाअपिचापल्याद्वदंत्येवंमदान्विताः
नारायणःपरंब्रह्मतत्वंनारायणःपरम् ३५
नारायणः परोध्याताध्यानंनारयणःपरम्
गतिर्विश्वस्यजगतः शाश्वतंशिवमच्युतः ३६
धाताविधाताजगतोवासुदेवःसनातनः
विश्वमेवेदंपुरुषस्तद्विश्वमुपजीवति ३७
हिरएमयवपुर्नित्यःपुंडरीकनिभेक्षणः
श्रीभूलीलापतिः सौम्योनिर्म्मलः शुभविग्रहः ३८
तेनैवसृष्टौब्रह्मेशौसर्गेदेवोत्तमौविभू
तस्यैवाज्ञांपुरस्कृत्यवर्त्तेतेब्रह्मशंकरौ ३९
भीषास्माद्वातिपवनोभीषोदेतिदिवाकरः
भीषास्मादग्निश्चंद्रोऽथमृत्युर्धावतिपंचमः ४०
आसीदेकोहरिर्दिव्योदेवोनारायणःपरः
ब्रह्मानेंद्रोनचेशानोनचचंद्रदिवाकरौ ४१
नवाद्यावापृथिव्यौचनक्षत्राणिदिवौकसः
तस्यविष्णोःपरंधामसदापश्यंतिसूरयः ४२
एवंसर्वोपनिषदामर्थंहित्वाद्विजोत्तमाः
रागाल्लोभाद्भयाद्वापिकिंब्रवीथममाग्रतः ४३
तंसर्वरक्षकंदेवंत्यक्त्वासर्वेश्वरंहरिम्
कथंपाषंडमाश्रित्यपूजयामिचशंकरम् ४४
लक्ष्मीपतिंदेवदेवमनंतंपुरुषोत्तमम्
इंदीवरदलश्यामंपद्मपत्रायतेक्षणम् ४५
श्रीवत्सलक्षितोरस्कंसर्व्वाभरणभूषितम्
सदाकुमारंसर्व्वेशंनित्यानन्दसुखप्रदम् ४६
कृष्णंदध्युर्महात्मानोयोगिनः सनकादयः
यमर्चयंतिब्रह्मेशशक्राद्यादेवतागणाः ४७
यस्यपत्न्याः कटाक्षार्द्धदृष्ट्यादृष्टादिवौकसः
ब्रह्मेंद्ररुद्रवरुणयमसोमधनाधिपाः ४८
यन्नामस्मरणादेवपापिनामपिसत्वरम्

मुक्तिर्भवतिजंतूनांब्रह्मादीनांसुदुर्लभा ४९
सएवंरक्षकःश्रीशोदेवानामपिसर्वदा
तमेवपूजयिष्यामिलक्ष्म्यासंयुतमच्युतम् ५०
प्राप्स्यामिसुसुखेनैवतद्विष्णोःपरमंपदम्
रुद्रउवाच-
इतितस्यवचः श्रुत्वाहिरगयकशिपुस्ततः ५१
क्रोधेनमहताविष्टोजज्वालाग्निरिवापरः
परितोवीक्ष्यदैतेयानित्याहक्रोधमूर्छितः ५२
हिरगयकशिपुरुवाच -
भीषणैः शस्त्रसंघातैःप्रह्लादंपापकारिणम्
ममाज्ञयाघातयध्वंशत्रुपूजनतत्परम् ५३
रक्षिताहरिरेवेतिरक्षतेतेनवात्सलात्
अद्यैवसफलंतस्यपश्येयंहरिरक्षणम् ५४
रुद्रउवाच-
तदोद्यतास्त्रादैतेयाहंतुं दैत्येश्वरात्मजम्
परिवार्यमहात्मानंतस्थुर्दैत्येश्वराज्ञया ५५
प्रह्लादोऽपितथाविष्णुंध्यात्वाहृदयपंकजे
जपन्नष्टाक्षरंमंत्रंतस्थौगिरिरिवापरः ५६
तंजघ्नुःपरितोवीराःशूलतोमरशक्तिभिः
प्रह्लादस्यवपुस्तत्रहरिसंस्मरणाच्छुभे ५७
विष्णोःप्रभावाद्दुद्धर्षाद्वज्रभूतमभूद्दृशम्
ततः संप्राप्यतद्गात्रंमहास्त्राणिसुरद्विषाम् ५८
नीलोत्पलदलानीवपेतुश्छिन्नाःक्षितौशुभे
अल्पमप्यस्यतद्गात्रंभेत्तुं दैत्यानचक्षमाः ५९
विस्मितावाङ्मुखास्तस्थुर्दैत्यराजांतिकेभटाः
तादृग्विधंमहात्मानंदृष्ट्वापुत्रंमहाबलम् ६०
विस्मयंपरमंगत्वादैत्यराट्क्रोधमूर्छितः
आदिदेशततःसर्वान्दंदशूकान्महाविषान् ६१
वासुकिप्रभृतीन्भीमान्खादयध्वमितिक्रुधा
आदिष्टास्तेनराज्ञाथतेनागाःसुमहाबलाः ६२

ज्वलितास्यामहाभीमास्तंचखादुर्महाबलम्
गरुडध्वजभक्तंतंविदश्यगरलायुधाः ६३
निर्विषाश्चिछन्नदशनाबभूबुरनिलाशनाः
वैनतेयसहस्रेणछिन्नगात्राःसुविह्वलाः ६४
प्रदुद्रुवुर्दिशःसर्वावमंतोरुधिरंभृशम्
तादृग्विधान्महासर्पान्दृष्ट्वादैत्यपतिस्तदा ६५
आदिदेशततः क्रुद्धोदिग्गजान्सुमदान्वितान्
निर्दिष्टास्तेनराज्ञाथदिग्गजाश्चमदोद्धताः ६६
परिवार्याथतंजघ्नुर्दंतैः पृथुतरैर्भृशम्
अथदिग्गजदंताश्चछिन्नमूलाःपतन्भुवि ६७
दंतैर्विनाकृतानागाभयार्तावैप्रदुद्रुवुः
तान्दृष्ट्वाथमहानागान्दैत्येंद्रःकुपितोबली ६८
प्रज्वाल्यचमहावह्निंचिक्षेपसुतमात्मनः
जलशायिप्रियंदृष्ट्वाप्रह्लादंहव्यवाहनः ६९
नददाहचतंधीरंसुशीतः समभूच्छिखी
अदह्यमानंतंबालंदृष्ट्वाराजासुविस्मितः ७०
प्रादात्तस्मैविषंघोरंसर्वभूतहितंतदा
तस्यविष्णोःप्रभावाच्चविषमस्यामृतंभवेत् ७१
अर्पणात्तस्यदेवस्यविषंचामृतमश्नुते
एवमाद्यैर्वधोपायैर्घोररूपैःसुदारुणैः ७२
मोहयित्वात्मजंराजातस्यावध्यत्वमीक्ष्यच
ततः साम्नासुतंप्राहदैत्यराड्विस्मयाकुलः ७३
हिरण्यकशिपुरुवाच-
त्वयाविष्णोःपरत्वंचसम्यगुक्तंममाग्रतः
व्यापित्वात्सर्वभूतानांविष्णुरित्यभिधीयते ७४
योऽसौसर्वगतोदेवःसएवपरमेश्वरः
तस्यसर्वगतत्वंवैप्रत्यक्षंदर्शयस्वमे ७५
एश्वर्यशक्तितेजांसिज्ञानवीर्यबलानिच
परस्यतस्यपरमंरूपंगुणविभूतयः ७६
सम्यग्दृष्ट्वाप्रयत्नेनविष्णुंमन्येदिवौकसाम्

ममप्रतिबलोलोकेनास्तिदेवेषुकश्चन ७७
ईशानवरदानेनसर्वभूतेष्वबध्यताम्
प्राप्तवान्सर्वभूतानांदुर्जयत्वंचमानद
ईश्वरत्वंलभेद्विष्णुर्मांजित्वाबलवीर्यतः ७८
रुद्रउवाच-
इतितस्यवचः श्रुत्वाप्रह्लादःप्राहविस्मितः
हरेःप्रभावं दैन्यस्यकथयामाससुव्रतः ७९
प्रह्लादउवाच-
योऽसौनारायणः श्रीमान्परमात्मासनातनः
वसनात्सर्वभूतेषुवासुदेवःसउच्यते ८०
सर्वस्यापिजगद्धाताविष्णुरित्यभिधीयते
नकिंचिदस्मादन्यंतुजगत्स्थावर जंगमम् ८१
सर्वत्रचिदचिद्वस्तुरूपंतस्यैवनान्यथा
त्रिपाद्व्याप्तिः परंव्योम्निपादव्याप्तिकलाद्भुता ८२
योऽसौचक्रगदापाणिःपीतवासाजनार्दनः
योगिभिर्दृश्यतेभक्त्यानाभक्त्यादृश्यतेक्वचित् ८३
द्रष्टुंनशक्योरोषाच्चमत्सराद्वाजनार्दनः
देवतिर्यङ्मनुष्येषुस्थावरेष्वपिजंतुषु
व्याप्यतिष्ठतिसर्व्वेषुक्षुद्रेष्वपिमहत्सुच ८४
रुद्रउवाच-
इतिप्रह्लादवचनंश्रुत्वादैत्यवरस्तदा
उवाचरोषताम्राक्षोभर्त्सयंश्चसुतंमुहुः ८५
हिरण्यकशिपुरुवाच-
असौसर्वगतोविष्णुरपिचेत्परमः पुमान्
प्रत्ययंदर्शयस्वाद्यबहुभिःकिंचलापितैः ८६
महादेवउवाच-
इत्युक्त्वासहसादैत्यःप्रासादस्तंभमात्मनः
ताडयामासहस्तेनप्रह्लादमिदमब्रवीत् ८७
हिरण्यकशिपुरुवाच-
अस्मिन्दर्शयतंविष्णुंयदिसर्वगतोभवेत्

अन्यथात्वांवधिष्यामिमिथ्यावाक्यप्रलापिनम् ८८
रुद्रउवाच-
इत्युक्त्वासहसाखड्गमाकृष्यदितिजेश्वरः
प्रह्लादोरसिचिक्षेपहंतुंखड्गेनतंरुषा ८९
तस्मिन्क्षणेमहाशब्दःस्तंभेसंश्रूयतेभृशम्
संवर्ताशनिसंरावैःखमिवस्फुटितांतरम् ९०
तेनशब्देनमहतादैत्यश्रोत्रविघातिना
सर्वेनिपातिताभूमौछिन्नमूलाइवद्रुमाः ९१
बिभ्यंतःसंप्लुतं दैत्यामेनिरेवैजगत्त्रयम्
ततः स्तंभेमहातेजानिष्क्रांतोवैमहाहरिः ९२
चकारसमहाघोरंजगत्क्षयनिभंस्वनम्
तेननादेनमहतातारकाः पतिताभुवि ९३
नृसिंहवपुरास्थायतत्रैवाविरभूद्धरिः
अनेककोटिसूर्य्याग्नितेजसासमावृतः ९४
मुखेपंचाननप्रख्यः शरीरेमानुषाकृतिः
दंष्ट्राकरालवदनः स्फुरज्जिह्वाम्बरोद्धतः ९५
ज्वालावलितकेशांतस्तप्तालातेक्षणोविभुः
सहस्रबाहुभिर्दीर्घैःसर्वायुधसमन्वितैः ९६
वृतोमेरुरिवाभातिबहुशाखानगान्वितः
दिव्यमाल्यांवरधरोदिव्याभरणभूषितः ९७
तस्थौनृकेसरीरूपःसंहर्त्तुंसर्वदानवान्
तंदृष्ट्वाघोरसंकाशंनरसिंहंमहाबलम् ९८
दग्धाक्षिपक्ष्मोदैत्येंद्रोविह्वलांगःपपातह
प्रह्लादोऽथतदादृष्ट्वानारसिंहोपमंहरिम् ९९
जयशब्देनदेवेशंनमश्चक्रेजनार्दनम्
ददर्शतस्यगात्रेषुनृसिंहस्यमहात्मनः १००
लोकान्समुद्रान्सद्वीपान्सुरगंधर्वमानुषान्
अजांडानांसहस्रंतुसटाग्रेतस्यदृश्यते १०१
दृश्यंते तस्यनेत्रेषुसोमसूर्य्यादयस्तथा
कर्णयोरश्विनौदेवौदिशश्चविदिशस्तथा १०२

ललाटेब्रह्मरुद्रौचनभोवायुश्चनासिके
इंद्राग्नीतस्यवक्त्रांतेजिह्वायांतुसरस्वती १०३
दंष्ट्रासुसिंहशार्दूलाः शरभाश्चमहोरगाः
कंठेचदृश्यतेमेरुःस्कंधेष्वपिमहाद्रयः १०४
देवतिर्य्यङ्मनुष्याश्चबाहुष्वपिमहात्मनः
नाभौचास्यांतरिक्षंचपादयोःपृथिवीतथा १०५
रोमस्वोषधयः सर्वाःपादपानखपंक्तिषु
निःश्वासेषुचवेदाश्चसाङ्गोपाङ्गसमन्विताः १०६
आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः
सर्वाङ्गेषुप्रदृश्यंततेगंधर्वाप्सरसश्चये १०७
इत्थंविभूतयस्तस्यदृश्यंतेपरमात्मनः
श्रीवत्सकौस्तुभोरस्कंवनमालाविभूषितम् १०८
शंखचक्रगदाखड्गशार्ङ्गाद्यैर्हेतिभिर्युतम्
सर्वोपनिषदामर्थंदृष्ट्वादैत्येश्वरात्मजः १०९
हर्षाश्रुजलसिक्तांगःप्रणाममुहुर्मुहुः
दैत्येंद्रस्तुहरिंदृष्ट्वाक्रोधान्मृत्युवशेस्थितः ११०
योद्धुंखड्गंसमुद्यम्यनृसिंहंतमभिद्रवत्
अथदैत्यगणाःसर्व्वेलब्धसंज्ञामहाबलाः १११
स्वान्यायुधानिचादायहरिंजघ्नुस्त्वरान्विताः
पलालकाराडानियथावन्हौक्षिप्तान्यनेकशः ११२
तथैवभस्मतांयांतिमहास्त्राणिहरेस्तनौ
तान्यनीकानिदैत्यानांदृष्ट्वानरहरिस्तदा ११३
सटैर्ददाहचज्वालामालाविरचित स्फुटैः
नृकेसरिसटोद्भूतवह्निनादानवा भृशम् ११४
निर्भस्मितागणाः सर्वेनिःशेषंतदभूद्बलम्
प्रह्लादंसानुगंहित्वाभस्मितेवीक्ष्यतद्बले ११५
क्रोधाद्दैत्यपतिः खड्गमाकृष्याभिप्रपद्यत
खड्गहस्तंतुदैत्येंद्रंजग्राहैकेनबाहुना ११६
पातयामासदेवेशोयथाशाखांमहानिलः
गृहीत्वापतितंभूमौमहाकायंनृकेसरी ११७

स्वोत्संगेस्थापयामासददर्शासौमुखंहरेः
विष्णुनिंदाकृतंपापंतथावैष्णवदोषजम् ११८
नृसिंहस्पर्शनादेवनिर्भस्मितमभूत्तदा
अथदैत्येश्वरस्याथमहद्गात्रंनृकेसरी ११९
नखेर्विदारयामासतीक्ष्णैर्वज्रनिभैर्घनैः
सनिर्म्मलात्मादैत्येंद्रःपश्यन्साक्षान्मुखंहरेः १२०
नखनिर्भिन्नहृदयःकृतार्थोविजहावसून्
तद्गात्रंशतधाभित्त्वानखैस्तीक्ष्णैर्महाहरिः १२१
आकृष्यांत्राणिदीर्घाणिकंठेसंसक्तवान्प्रियान्
अथदेवगणाःसर्व्वेमुनयश्चतपोधनाः १२२
ब्रह्मरुद्रौपुरस्कृत्यशनैःस्तोतुंसमाययुः
तेप्रसादयितुंभीताज्वलंतंविश्वतोमुखम् १२३
मातरंजगतांधात्रींचिंतयामासुरीश्वरीम्
हिरण्यवर्णांहरिणींसर्व्वोपद्रवनाशिनीम् १२४
विष्णोर्नित्यानवद्यांगींध्यात्वानारायणींशुभाम्
देवीसूक्तजपैर्भक्त्यानमश्चक्रुःसनातनीम् १२५
तैश्चिंत्यमानासादेवीतत्रैवाविरभूत्तदा
चतुर्भुजाविशालाक्षीसर्वाभरणभूषिता १२६
दुकूलवस्त्रसहितांदिव्यमालानुलेपनाम्
तांदृष्ट्वादेवदेवस्यप्रियांसर्वेदिवौकसः १२७
ऊचुःप्रांजलयोदेवींप्रसन्नंकुरुतेप्रियम्
त्रैलोक्यस्याभयंस्वामीयथादद्यात्तथाकुरु १२८
रुद्रउवाच-
इत्युक्तासहसादेवीप्रियंप्राप्यजनार्दनम्
प्रणिपत्यनमस्कृत्यप्रसीदेतिउवाचतम् १२९
तांदृष्ट्वामहिषींस्वस्यप्रियांसर्व्वेश्वरोहरिः
रक्षःशरीरजंक्रोधंतत्याजप्रीतवत्क्षणात् १३०
अंकमादायतांदेवींसमाश्लिष्यदयानिधिः
कृपासुधार्द्रदृष्ट्यावैनिरैक्षत सुरान्हरिः १३१
ततोजयजयेत्युच्चैःस्तुवतांनमतांतदा

तद्दयादृष्टिदृष्टानांसानंदःसंभ्रमोऽभवत् १३२
ततोदेवगणाःसर्वेहर्षनिर्भरमानसाः
ऊचुःप्रांजलयोदेवं नमस्कृत्यजगत्पतिम् १३३
देवगणाऊचुः -
द्रष्टुमत्यद्भुतंतेजोनशक्तास्तेजगत्पते
अत्यद्भुतमिदंरूपंबहुवाहुपदांकितम् १३४
जगत्त्रयसमाक्रांतंतेजस्तीक्ष्णतरंतव
द्रष्टुंस्थातुंनशक्ताःस्मः सर्व्वएवदिवौकसः १३५
महादेवउवाच-
इत्यर्थितस्तुविबुधैस्तेजस्तदतिभीषणम्
उपसंहृत्यदेवेशोबभूवसुखदर्शनः १३६
शरत्कोटींदुसंकाशः पुंडरीकनिभेक्षणः
सुधामयसटापुंजविद्युत्कोटिनिभःशुभः १३७
नानारत्नमयैर्दिव्यैःकेयूरैःकटकान्वितैः
बाहुभिःकल्पवृक्षस्यशाखौघैरिवसत्फलैः १३८
चतुर्भिःकोमलैर्दिव्यैरन्वितः परमेश्वरः
जपाकुसुमसंकाशैः शोभितः करपंकजैः १३९
शंखचक्रगृहीताभ्यामुद्बाहुभ्यांविराजितः
वरदाभयहस्ताभ्यामितराभ्यांनृकेसरी १४०
श्रीवत्सकौस्तुभोरस्कोवनमालाविभूषितः
उद्यद्दिनकाराभ्यांचकुण्डलाभ्यांविराजितः १४१
हारकेयूरकटकैर्भूषणैःसमलंकृतः
सव्यांगस्थश्रियायुक्तोराजतेनरकेसरी १४२
लक्ष्मीनृसिंहंतंदृष्ट्वादेवताः समहर्षयः
आनन्दाश्रुजलैःसिक्ताहर्षनिर्भरचेतसः १४३
आनंदसिंधुमग्नास्तेनमश्चक्रुर्निरंतरम्
अर्चयामासुरात्मेशंदिव्यपुष्पसमर्पणैः १४४
रत्नकुंभैः सुधापूर्णैरभिषिच्यसनातनम्
वस्त्रैराभरणैर्गंधैः पुष्पैधूपैर्म्मनोरमैः १४५
दिव्यैर्निवेदितैर्दीपैरर्च्चयित्वानृकेसरिम्

तुष्टुवुःस्तवनैर्दिव्यैर्नमश्चक्रुर्म्मुहुर्म्महुः १४६
ततः प्रसन्नोलक्ष्मीशस्तेषामिष्टान्वरान्ददौ
ततोदेवगणैः सार्धंसर्व्वेशोभक्तवत्सलः १४७
प्रह्लादंसर्वदैत्यानांचक्रेराजानमव्ययम्
आश्वास्यभक्तंप्रह्लादमभिषिच्यसुरोत्तमैः १४८
ददौतस्मैवरानिष्टान्भक्तिंचाव्यभिचारिणीम्
ततोदेवगणैःसर्वैःस्तूयमानोनृकेसरी १४९
विकीर्णपुष्पवपुभिस्तत्रैवांतरधीयत
ततः सुरगणाःसर्वेस्वंस्वंस्थानंप्रपेदिरे १५०
पुनश्चयज्ञभागान्स्वान्बुभुजुःप्रीतमानसाः
ततोदेवाः सगंधर्वानिरातंकाभवंस्तदा १५१
तस्मिन्हतेमहादैत्येसर्वएवप्रहर्षिताः
प्रह्लादस्तुतदाचक्रेराज्यंधर्मेणवैष्णवः १५२
हरेः प्रसादाल्लब्धंतुराज्यंवैष्णवसत्तमः
बहुभिर्यज्ञदानाद्यैरर्चयित्वानृकेसरिम् १५३
कालेहरिपदंप्रापयोगिगम्यंसनातनम्
एतत्प्रह्लादचरितंयेतुशृणवंतिनित्यशः १५४
तेसर्वेपापनिर्मुक्तायास्यंतिपरमांगतिम्
एतत्तेकथितंदेविनृसिंहंवैभवंहरेः
शेषांचवैभवावस्थांशृणुदेवियथाक्रमम् १५५

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसहिंतायामुत्तरखंडेउमामहेश्वरसंवादेनृसिंहप्रादुर्भावोनामाष्टत्रिंशदधिकद्विशततमोऽध्यायः २३८

## एकोन चत्वारिंशदधिक द्विशततमोऽध्यायः

रुद्रउवाच-
प्रह्लादस्यसुतोजज्ञेविरोचनइतीरितः
तस्यपुत्रोमहाबाहुर्वलिर्वैश्वानरः प्रभुः १
सतुधर्मविदांश्रेष्ठःसत्यसंधोजितेंद्रियः
हरेःप्रियतमोभक्तोनित्यंधर्मरतः शुचिः २
सजित्वासकालान्देवान्सेंद्रांश्चसमरुद्गणान्

त्रील्लोँकान्स्ववशेस्थाप्यराज्यंचक्रेमहाबलः ३
अकृष्टपच्यापृथिवीबहुसस्यफलप्रदा
गावःपूर्णदुघाःसर्वाः पादपाः फलपुष्पिताः ४
स्वधर्म्मनिरताः सर्वेनराः पापविवर्जिताः
अर्चयंति हृषीकेशंसततंविगतज्वराः ५
एवंचकारधर्मेणराज्यंदैत्यपतिर्बली
इंद्रादित्रिदशास्तस्यकिंकराःसमुपस्थिताः ६
एश्वर्यंत्रिषुलोकेषुबुभुजेबलदर्प्पहृत्
भ्रष्टराज्यंसुतंदृष्ट्वातस्यापिहितकाम्यया ७
कश्यपोभार्ययासार्द्धंतपस्तेपेहरिंप्रति
अदित्यासहधर्मात्मापयोव्रतसमन्वितः ८
अर्चयामासदेवेशंपद्मनाभंजनार्दनम्
ततोवर्षसहस्राणितेनसंपूजितोहरिः ९
तत्रैवाविरभूत्तस्यदेव्यासहसनातनः
तंदृष्ट्वापुंडरीकाक्षंशंखचक्रगदाधरम् १०
इंद्रनीलमणिश्यामंसर्वाभरणभूषितम्
स्फुरत्किरीटकेयूरहारकुंडलशोभितम् ११
कौस्तुभोद्भासितोरस्कंपीतवस्त्रेणवेष्टितम्
श्रियासहसमासीनंमंडलेंद्रेमहात्मनि १२
तंदृष्ट्वाजगतामीशंहर्षनिर्भरचेतसा
पत्न्यासहनमस्कृत्वातुष्टावद्विजसत्तमः १३
कश्यपउवाच–
नमोनमस्तेलक्ष्मीशसर्वज्ञजगदीश्वर
सर्वात्मन्सर्वदेवेशसृष्टिसंहारकारकः १४
अनादिनिधनानंतवपुषेविश्वधारिणे
नमस्तेवेदवेदांगवपुषेसर्वचक्षुषे १५
सर्वात्मनेनमस्तुभ्यंनमः सूक्ष्मतरायच
कल्याणगुणपूर्णाययोगिध्येयात्मनेनमः १६
नमोयुवकुमारायश्रीभूलीलाधिपायच
नित्यमुक्तैकभोगायपरधाम्निस्थितायच १७

चतुरात्मन्नमस्तुभ्यंचतुर्व्यूहनमोस्तुते
पंचावस्थायतेतुभ्यंनमस्तेपंचमात्मकम् १८
पंचमात्मकनिष्ठैस्तुयोगिभिःपूज्यसेसदा
पंचार्थतत्वविदुषांपंचसंस्कारसंस्थितः १९
पंचापरंस्वरूपंतेविज्ञेयंसततंहरे
चतुर्धापरिपूर्णात्मन्नियतंकवयोविदुः २०
त्वत्प्रसूतिंजगत्सर्वंपुनंतितबकिंकराः
त्रयीमयाःकर्म्मनिष्ठायेद्विजाभक्तवत्सलाः २१
तेषांदयेत्त्वणादेवभवबंधविमुक्तये
नमोस्तुत्रिजगद्धात्रेस्वयंधात्रेऽखिलात्मने २२
धात्रेविधात्रेविश्वायविश्वरूपायतेनमः
नारायणायकृष्णायवासुदेवाय शार्ङ्गिणे
विष्णवेजिष्णवेतुभ्यंशुद्धसत्वायतेनमः २३
महादेवउवाच–
इत्यादिस्तुतिभिःसम्यक्स्तूयमानोमहर्षिणा
प्राहगंभीरयावाचापरितुष्टोजनार्दनः २४
श्रीभगवानुवाच–
संतुष्टोऽहद्विजश्रेष्ठत्वयाभक्त्यासमर्च्चितः
वरंवृणीष्वभद्रंतेकरोमितववांछितम् २५
महादेवउवाच–
ततः प्राहहृषीकेशंभार्य्ययासहकश्यपः २६
कश्यपउवाच–
पुत्रत्वंममदेवेशसंप्राप्यत्रिदशांहितम्
कुरुष्वबलिनादेवत्रैलोक्यंनिर्जितंबलात् २७
इंद्रस्यावरजोभूत्वाउपेंद्रइतिविश्रुतः
येनकेनचमार्गेणबलिनिर्जित्यमायया
त्रैलोक्यंममपुत्रायदहिशक्रायशाश्वतम् २८
महादेवउवाच–
इत्युक्तस्तेनविप्रेणतथेत्याहजनार्द्दनः
संस्तूयमानस्त्रिदशैस्तत्रैवांतरधीयत २९

एतस्मिन्नेवकालेतुकश्यपस्यमहात्मनः
अ्रदित्यागर्भमागच्छद्भगवान्भूतभावनः ३०
तस्मिन्कालेबलिर्यागंदीर्घसत्रंमहातपाः
अ्रष्टमहर्षिभिं सार्द्धमारेभेतद्विधानतः ३१

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेवामनप्रादुर्भावोनामैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः २३९

## चत्वारिंशदधिकद्विशततमोऽध्यायः

श्रीमहादेवउवाच-
अ्रथवर्षसहस्रांतेसर्वलोकमहेश्वरम्
अ्रदितिर्जनयामासवामनं विष्णुमच्युतम् १
श्रीवत्सकौस्तुभोरस्कंपूर्णेंदुसदृशद्युतिंम्
सुन्दरंपुंडरीकाद्नमतिखर्वतनुंहरिम् २
वटुवेषधरंदेवंसर्ववेदांगगोचरम्
मेखलाजिनदराडादिचिह्नैरंकितमीश्वरम् ३
तंदृष्ट्वादेवताःसर्वेशतक्रतुपुरोगमाः
स्तुत्वामहर्षिभिःसार्द्धंनमश्चक्रुर्महौजसम् ४
ततः प्रसन्नोभगवान्प्रोवाचसुरसत्तमान्
वामनउवाच-
किंकर्तव्यंमयाचाद्यतद्ब्रवीथसुरोत्तमाः ५
श्रीशंकरउवाच-
ततःप्रहृष्टास्त्रिदशास्तमूचुः परमेश्वरम्
देवाऊचुः
अ्रस्मिन्कालेबलेर्यज्ञोवर्त्ततेमधुसूदन ६
अ्रप्रत्याख्यानकालोऽयतस्यदैत्यपतेःप्रभो
याचित्वात्रिदिवंलोकंतन्नस्त्वंदातुमर्हसि ७
शंकरउवाच-
इत्युक्तास्त्रिदशैस्सर्वैराजगामबलिहरिः
यागदेशेसमासीनमृषिभिस्सार्द्धमष्टभिः ८
अ्रभ्यागतंतुतंदृष्ट्वासहसोत्थायदैत्यराट्

अभ्यागतः स्वयंविष्णुरितिहाससमन्वितः ९
पूजयामासविधिनानिवेश्यकुसुमासने
प्रणिपत्यनमस्कृत्यप्राहगद्गदयागिरा १०
बलिरुवाच-
धन्योऽस्मिकृतकृत्योस्मिसफलंममजीवितम्
त्वामर्च्चयित्वाविप्रेंद्रकिंकरोमितवप्रियम् ११
आगतोऽसियदर्थंत्वंमामुद्दिश्यद्विजोत्तमः
तत्प्रयच्छामितेशीघ्रंब्रूहिवेदविदांवर १२
शंकरउवाच-
ततःप्रहृष्टमनसातमुवाचमहीपतिम्
वामनउवाच-
शृणुराजेंद्रवक्ष्यामिममागमनकारणम् १३
अग्निकुण्डस्यपृथिवींदेहिदैत्यपतेमम
ममत्रिविक्रमपदांनान्यदिच्छामिमानद १४
सर्वेषामेवदानानांभूमिदानमनुत्तमम्
योददातिमहींराजाविप्रायाकिंचनायवै १५
अंगुष्ठमात्रामपिवासभवेत्पृथिवीपतिः
नभूमिदानसदृशंपवित्रमिहविद्यते १६
भूमिंयःप्रतिगृह्णातिभूमिंयश्चप्रयच्छति
उभौतौपुण्यकर्म्माणौनिधनेस्वर्गगामिनौ १७
तस्माद्भूमिं महाराजप्रयच्छत्रिपदींमम
एतदल्पांमहींदातुंमाविशंकमहीपते
जगत्त्रयप्रदानंतन्नामभूपभविष्यति १८
शंकरउवाच-
ततः प्रहृष्टवदनस्तथेत्याहमहीपतिः
तस्मैमहीप्रदानंतुकर्तुंमेनेविधानतः १९
तंदृष्ट्वादैत्यराजानंतदातस्यपुरोहितः
उशनाह्यब्रवीद्वाक्यंमाराजन्दीयतांमहीम् २०
शुक्रउवाच-
एषविष्णुःपरेशोऽथदेवैःसंप्रार्थितोनृप

वंचयित्वामहींसर्वांत्वत्तःप्राप्तुमिहागतः २१
तस्मान्महीनदातव्यातस्मैराजन्महात्मने
ग्रन्यमर्थंप्रयच्छस्ववचनान्ममभूपते २२
श्रीशंकरउवाच-
ततः प्रहस्यराजासौतंगुरुंप्राहधैर्य्यतः
बलिरुवाच-
प्रीतयेवासुदेवस्यसर्वंपुरायंकृतंमया २३
ग्रद्यधन्योस्म्यहंविष्णुःस्वयमेवागतोयदि
तस्यप्रदेयमेवाद्यजीवितंचमहत्सुखम् २४
तस्मादस्मैप्रयच्छामित्रिलोकीमपिमाचिरम्
श्रीशंकरउवाच-
इत्युक्त्वाभूपतिस्तस्यपादौप्रद्माल्यभक्तितः २५
वांच्छितांप्रददौभूमिंवारि पूर्वंविधानतः
परिणीयनमस्कृत्यदत्वावैदद्मिणांवसु २६
प्रोवाचतंपुनर्विप्रंप्रहृष्टेनांतरात्मना
बलिरुवाच-
धन्योस्मिकृत कृत्योस्मितवदत्वामहींद्विज २७
यथेष्टातवविप्रेंद्रतद्गृहाणमहीमिमाम्
श्रीशंकरउवाच-
तमुवाचनृपंविष्णूराजंस्तवसमीपतः २८
मापयामिपदेनाद्यपृथिवींतवपश्यतः
इत्युक्त्वाखर्वरूपंतद्विहायपरमेश्वरः २९
त्रिविक्रमवपुर्भूत्वाजग्राहपृथिवीमिमाम्
पंचाशत्कोटिविस्तीर्णससमुद्रमहीधराम् ३०
ससागरांचसद्वीपांसदेवासुरमानुषाम्
पादेनैकेनवपुषोव्यक्रांतमधुसूदनः ३१
उवाचदैत्यराजेंद्रकिंकरोमीतिशाश्वतः
तद्वैत्रिविक्रमंरूपमीश्वरस्यमहौजसम् ३२
हितार्थमपिदेवानामृषीणांचमहात्मनाम्
नदृष्टमपिशक्यंस्याद्ब्रह्मणःशंकरस्यच ३३

तत्पदंपृथिवींसर्वामाक्रम्यगिरिजेशुभे
अतिरिक्तंसमभवच्छतयोजनमायतम् ३४
दिव्यचक्षुर्ददौतस्मैदैत्यराज्ञेसनातनः
तस्मैसंदर्शयामासस्वकंरूपंजनार्दनम् ३५
तद्विश्वरूपंदेवस्यदृष्ट्वादैत्येश्वरोबलि
प्रहर्षमतुलंलेभेसानंदाश्रुपरिप्लुतः ३६
दृष्ट्वादेवंनमस्कृत्यस्तुत्वास्तुतिभिरेवच
प्राहगद्गदयावाचाप्रहृष्टेनांतरात्मना ३७
बलिरुवाच-
धन्योस्मिकृतकृत्योस्मित्वांदृष्ट्वापरमेश्वरम्
लोकत्रयंत्वमेवैतद्गृहाणपरमेश्वर ३८
श्रीशंकरउवाच-
अथसर्वेश्वरोविष्णुर्द्वितीयंपदमव्ययम्
ऊर्ध्वंप्रसारयामासब्रह्मलोकांतमच्युतः ३९
सनक्षत्रग्रहोपेतंसर्वदेवसमावृतम्
पदेनपरिपूर्णोऽभूदच्युतस्यशुभानने ४०
ततःपितामहोब्रह्मचक्रपद्मादिचिह्नितम्
पादंतद्देवदेस्यहर्षसंकुलचेतसा ४१
धन्योस्मीतिवदन्ब्रह्मागृहीत्वास्वकमंडलुम्
भक्त्याप्रक्षालयामास तत्रसंस्थितवारिणा ४२
अक्षय्यमभवत्तोऽयतस्यविष्णोःप्रभावतः
तत्तीर्थंमेरुशिखरेपपातविमलंजलम् ४३
जगतः पावनार्थंवैचतुर्दिक्षुप्रवाहितम्
सिताचालकनन्दाचचक्षुर्भद्रायथाक्रमम् ४४
ततश्चालकनन्दाचमेरोर्दक्षिणतः स्मृता
त्रिधानाम्नात्रिपथगात्रिस्रोतालोकपावनी ४५
स्वर्गेमंदाकिनीप्रोक्तात्वधोभोगवतीतथा
मध्येवेगवतीगंगापावनार्थं नृणांशिवा ४६
तांदृष्ट्वामेरुमध्येतुप्रस्रवंतींशुभानने
आत्मनःपावनार्थायशिरसाहमधारयम् ४७

दिव्यंवर्षसहस्त्रंतुधृत्वागंगाजलंशुभम्
शिवत्वमगमंदेविसर्वलोकेषुपूजितः ४८
योवहेच्छिरसागंगातोऽयविष्णुपदोद्भवम्
प्राशयेद्वाजगत्पूज्योभविष्यतिनसंशयः ४९
गंगागंगेतियोब्रूयाद्योजनानांशतैरपि
मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ५०
ततो भगीरथोराजागौतमश्चमहातपाः
तपसापूजयित्वामांगंगार्थंसमयाचत ५१
सर्वलोकहितार्थायतांगंगांवैष्णवींशिवाम्
तयोरहंतामददांप्रीत्यादेविसरिद्वराम् ५२
गौतमेनसमानीतागौतमीतेनकीर्त्तिता
भागीरथीतिविख्यातातेनराज्ञावृतायतः ५३
प्रसंगात्तेसमाख्यातंगंगाजन्मात्यनुत्तमम्
ततोनारायणः श्रीमान्बलि दैत्यपतिंप्रभुः ५४
रसातलंशुभंलोकंप्रददौभक्तवत्सलः
सर्वेषांदानवानांतुनागानांयादसामपि ५५
राजानंतुबलिचक्रेयावदाभूतसंप्लवम्
प्रतिगृह्यबलेर्लोकान्बटुवेषेणदैत्यहा ५६
महेंद्रायददौप्रीत्याकाश्यपोविष्णुरव्ययः
ततोदेवाः सगंधर्वाऋषयश्चमहौजसः ५७
तुष्टवुःस्तुतिभिर्दिव्यैःपूजयामासुरच्युतम्
संक्षिप्यतन्महद्रूपंतेषांसंदर्शनायवै ५८
संपूज्यमानास्त्रिदशैरंतर्द्धानंययौहरिः
इत्थंसुरक्षितः शक्रोविष्णुनाप्रभविष्णुना ५९
त्रैलोक्यंमहदैश्वर्य्यमवापत्रिदिवेश्वरः
एतत्तेसर्वमाख्यातंवामनंवैभवंशुभम्
शेषंयद्वैभवंदेवितद्वक्ष्यामियथाक्रमात् ६०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेवामनप्रादुर्भावोनामचत्वारिंशदधिकद्विशततमोऽध्यायः २४०

## एकचत्वारिंशदधिक द्विशततमोऽध्यायः

ईश्वरउवाच-
भृगुपुत्रोमहानासीज्जमदग्निर्द्विजोत्तमः
समस्तवेदवेदांगपारगश्चमहातपाः १
तपस्तेपेसुधर्मात्मामहेंद्रंप्रतिभामिनि
सहस्रवर्षपर्य्यंतंगंगायाः पुलिनेशुभे २
ततः प्रसन्नःप्राहेद्रंभगवान्पाकशासनः
इंद्रउवाच-
वरंवृणीष्वविप्रेंद्रयत्तेमनसिवर्त्तते ३
ईश्वरउवाच-
ततःप्रोवाचविप्रर्षिः परितुष्टंशतक्रतुम्
जमदग्निरुवाच-
सुरभिंदेहिमेदेवसर्वकामदुघांसदा ४
ईश्वरउवाच-
ततः प्रसन्नोदेवेशस्तस्मैविप्रायगोत्रभित्
प्रददौसुरभिंदेवींसर्वकामदुघांतदा ५
सलब्ध्वासुरभींदेवींजमदग्निर्महातपाः
उवासमहदैश्वर्यःशतक्रतुरिवापरः ६
रेणुकस्यसुतांरम्यां रेणुकांनामनामतः
उपयेमेविधानेनजमदग्निर्महातपाः ७
तयासहसधर्मात्मारेमेवर्षाण्यनेकशः
पौलोम्याशुभयादेव्यायथासंक्रन्दनोविभुः ८
ततः सपुत्रकामत्वादिष्टिंचक्रेसुधार्म्मिकः
इष्ट्यासंतोषयामासपाकशासनमीश्वरम् ९
परितुष्टःशचीभर्त्तातस्मैपुत्रंमहाबलम्
महौजसंमाहबाहुंसर्वशत्रुप्रतापनम् १०
अथकालेनविप्रेंद्रोरेणुकायांशुचिस्मिते
पुत्रमुत्पादयामासमहावीर्य्यंबलान्वितम् ११
विष्णोरंशांशभागेनसर्वलक्षणलक्षिणम्
तस्मिन्सुतेमहावीर्य्येभृगुस्तस्यपितामहः १२

नामचास्मैददौहर्षाद्विष्णोरंशोपलक्षितम्
चक्रेऽथनामधेयंतुरामइत्यस्यशोभनम् १३
जमदग्नेःसमुत्पन्नोजामदग्न्यइतीरितः
तद्भार्गवान्वयःसोऽपिववृधेद्विजपुंगवः १४
उपनीतंस्तुतोयेनसर्वविद्याविशारदः
तपस्तप्तुंजगामाथशालग्रामाचलंप्रति १५
ददर्शकश्यपंतत्रब्रह्मर्षिममितौजसम्
हर्षेणपूरितस्तस्मिन्मरीचितनयोद्विजः १६
विधिनाप्रददौतस्मैमंत्रंवैष्णवमव्ययम्
लब्धमंत्रस्तदारामं कश्यपात्तुमहात्मनः १७
पूजयामासविधिनासतदाकमलापतिम्
षडक्षरंमहामंत्रंजपन्नेवदिवानिशम् १८
ध्यायन्कमलपत्राक्षंविष्णुंसर्वगतंहरिम्
तपस्तेपेसधर्मात्माबहुवर्षाणिभार्गवः १९
जितेंद्रियस्तुयतवाक्तदातस्थौमहातपाः
जमदग्निस्तुविप्रर्षिःस्थितोगंगातटेशुभे २०
चकारविधिवद्धर्म्यंयज्ञदानादिकंमहत्
धेन्वाःप्रसादादिंद्रस्यसंपूर्णास्तस्यसम्पदः २१
कस्यचित्त्वथकालस्यहैहयाधिपतिः प्रभुः
विजित्वासर्वराष्ट्राणिसर्वसैन्यसमावृतः २२
भार्गवस्याश्रमंप्राप्य जमदग्नेर्महीपतिः
समीक्ष्यतंमहाभागं ववंदेमुनिसत्तमम् २३
पृष्ट्वातुकुशलंतस्यमहर्षेर्भावितात्मनः
प्रददौनृपतिस्तस्मैवस्त्राण्याभरणानिच २४
सचसंपूजयामासराजानंगृहमागतम्
मधुपर्केणविधिनापूजयित्वानृपोत्तमम् २५
ससैन्यायनृपेंद्रायभोजनंप्रददौमुनिः
प्रार्थितासुरभिस्तेनभार्गवेणसुधीमता २६
संपूर्णमन्नपानादिससर्जशबलातदा
अक्षय्यमन्नपानादितयासृष्टंमहातपाः २७

ससैन्यायनृपेंद्रायप्रददौमुनिसत्तमः
तांदृष्ट्वाशबलांराजाकुतूहलसमन्वितः २८
स्पृहांचकारयामासतस्यांगविसुदुर्म्मतिः
अयाचत्सुरभिंतत्रजमदग्निंनृपोत्तमः २९
कार्त्तवीर्यउवाच-
शबलांदेहिमे विप्रकपिलांसर्वकामदाम्
अन्यधेनुसहस्राणिदास्यामितवसुव्रत ३०
ईश्वरउवाच-
इत्युक्तस्तेनराज्ञाथजमदग्निर्महातपाः
जमदग्निरुवाच-
नदेयाशबलाराजन्मयातवमहीपते ३१
इयंचदेवदेवेनशक्रेणपरिपालिता
देवतानांधनंराजन्दातव्यंस्यात्कथंमया ३२
ईश्वरउवाच-
इत्युक्तःसतदाराजाक्रोधेनकलुषीकृतः
बलाज्जग्राहशबलांसर्वसैन्यसमावृतः ३३
ततःक्रुद्धामहाभागाशबलावरवर्णिनि
जघानतस्यसैन्यानिशृंगैःखुरतलैरपि ३४
घातयित्वामुहूर्त्तेनतत्सैन्यंशबलाबलात्
अंतर्द्धानंगतादेवीययौशक्रांतिकंक्षणात् ३५
स्वसैन्यं निहतंदृष्ट्वासोऽजुनः क्रोधमूर्च्छितः
मुष्टिनाताडयामासभार्गवंद्विजसत्तमम् ३६
ताडितस्तेनबहुशोविकलांगःप्रकल्पितः
पपातसहसाभूमौममारद्विजसत्तमः ३७
हत्वामुनिवरंतत्रपापत्माहैहयाधिपः
महासैन्यपरीवारोविवेशनगरंस्वकम् ३८
रामस्तुदेवदेवेशंपूजयामासभार्गवः
तेनसंपूजितोदेवः प्रसन्नः प्राहकेशवः ३९
श्रीभगवानुवाच-
प्रीतोस्मितपसावत्सभवतोनियतात्मनः

संप्रदास्यामितेविप्रमच्छक्तिंपरमांशुभाम् ४०
आवेशितोऽथमच्छक्त्याजहिदुष्टान्नृपोत्तमान्
भूभारकविनाशायदेवतानांहितायवै ४१
ईश्वरउवाच-
इत्युक्त्वाप्रददौदेवः परशुंशत्रुधर्षणम्
वैष्णवंचमहच्चापंदिव्यारायस्त्रारायनेकशः
दत्वाप्रोवाचभगवाञ्जामदग्निंजनार्द्दनः ४२
श्रीभगवानुवाच-
मदोत्कटान्नृपान्हत्वाबहुशः परवीरहा
गृहाणपृथिवींसर्वांसागरान्तांद्विजोत्तम ४३
पालयस्वचधर्मेणवीर्य्येणमहतावृतः
कालेनमत्पदंचापिमत्प्रसादाद्गमिष्यसि ४४
ईश्वरउवाच-
इत्युक्त्वांतर्हितोदेवोवरंदत्वाद्विजन्मने
रामोऽपिचाथसहसाप्रययौपितुराश्रमम् ४५
पितरंनिहतंदृष्ट्वाभार्गवः क्रोधमूर्च्छितः
निष्क्षत्रांकर्तुमन्विच्छन्महींनृपसमाकुलाम् ४६
जगामहैहयपतेर्नगरंनृपसंवृतम्
क्रोधावेशज्वलद्गात्रोद्वार्य्यतिष्ठदुदायुधः ४७
तंदृष्ट्वातत्पुरजनाजामदग्न्यंमहौजसम्
जाज्वल्यमानंवपुषाकालाग्निमिवमेनिरे ४८
भयार्ताविद्रुताः सर्वेराजानंहैहयाधिपम्
शशंसुस्तंमहासत्वंसर्वायुधसमन्वितम् ४९
श्रुत्वासराजातद्वाक्यंप्राहविस्मितचेतसा
हैहयाधिपउवाच-
कोऽसौममपुरद्वारिसायुधः संस्थितोबलात् ५०
महेंद्रोवायमोवापिरुद्रोवाधनदोऽपिवा
सायुधोमत्पुरद्वारिस्थातुंशक्तोनकर्हिचित् ५१
महादेवउवाच-
इत्युक्त्वापार्थिवेंद्रोऽसौकिंकरान्सुमहाबलान्

प्रेरयामासतंद्रष्टुंगृह्णीतेत्याहदुर्मतिः ५२
तेगत्वाददृशुर्वीरंपुरद्वारिमहाबलम्
ज्वलंतमिवकालाग्निंदुर्निरीक्ष्यंस्वतेजसा ५३
तस्यसंदर्शनेऽप्यत्रनशक्तास्तेमहाबलाः
ग्रहीतुकामस्तंवीरंसमंतात्प्रययुर्भृशम् ५४
तान्दृष्ट्वासायुधान्सर्वान्पार्थिवेन्द्रस्यकिंकरान्
प्रहसन्प्राहविप्रेन्द्रोजामदग्निर्महाबलः ५५
परशुरामउवाच-
भार्गवस्यसुतोरामःसंप्राप्तोऽहनराधमाः
स्वपितुर्निधनात्सर्वान्हनिष्यामिनृपोत्तमान् ५६
कार्तवीर्यस्यरुधिरंमत्पित्रेतिलसंयुतम्
दास्यामिपिण्डदानंचतच्छिरःकमलेनवै ५७
महादेवउवाच-
इत्युक्तास्तेमहावीर्य्याः किंकरास्तस्यभूपतेः
शरैःस्मताडयामासुः पलालैरिबपावकम् ५८
ततः क्रुद्धोमहावीर्योरामस्सत्यपराक्रमः
वैष्णवंचापमाकृष्यज्यानिनादमथाकरोत् ५९
तेननादेनमहतापूरितंभुवनत्रयम्
देवानामपिसंत्रासोबभूवमहदद्भुतम् ६०
ततः पावकसंकाशैराशुगैः सुमहाबलः
ताडयामासतान्वीरान्किंकरान्वैमहाबलान् ६१
हत्वातुकिंकरास्तस्यपार्थिवस्यमहात्मनः
कालाग्निरिव संतस्थौसर्वभूतभयंकरः ६२
श्रुत्वातुकिंकरान्स्वस्यहतान्रामेणधीमता
हैहयाधिपतिर्वीरःक्रोधसंरक्तलोचनः ६३
निर्य्ययौसहसैन्येनयत्रास्तेभागवोऽव्ययः
तंदृष्ट्वाघोरसंकाशंज्वलंतंस्वेनतेजसा ६४
त्रस्ताः सर्वेजनास्तत्रशंकमानाजनक्षयम्
ततोयुद्धंमहाघोरंरामस्यनृपतेस्तदा ६५
शस्त्रास्त्रपातनैर्भीमैर्मेघयोरिववर्षतोः

ततोरामोमहातेजास्तत्सैन्यंनृपतेस्तदा ६६
निर्ददाहक्षणात्सर्वंवैष्णवास्त्रेणलीलया
ततः परशुनारामस्तीक्ष्णेनामितविक्रमः ६७
चिच्छेदवाहुसाहस्त्रंकार्त्तवीर्यस्यदुर्मतेः
नशशाकमहावीर्योयोद्धुंरामेणभूपतिः ६८
नष्टवीर्य्योबभूवात्रपापेनस्वेनदुर्म्मतिः
चिच्छेदतच्छिरः क्रुद्धोरेणुकातनयोबली ६९
महाद्रिशृङ्गंवज्रेणयथादेवपतिर्बली
हत्वासहस्त्रबाहुंतंजामदग्न्यः प्रतापवान् ७०
जघानपार्थिवान्सर्वान्क्रुद्धःपरशुनामृधे
रामंदृष्ट्वामहारौद्रंपार्थिवाः पृथिवीतले ७१
भयार्त्ताविद्रुताःसर्वेमातंगाइवकेसरिम्
विद्रुतानपिभूपालान्पितुर्निधनमन्युना ७२
जघानभार्गवः क्रुद्धोनागानिवखगेश्वरः
निःक्षत्रंकृतवान्सर्वंजामदग्निःप्रतापवान् ७३
ररक्षभगवानेकमिक्ष्वाकोःसुमहत्कुलम्
मातामहस्यान्वयत्वाद्रेणुकावचनादथ ७४
तान्भ्रष्टराज्यान्कृत्वावैमातामहकुलोद्भवान्
नहत्वामनुवंशांस्तान्रामोनृपकुलांतकः ७५
सर्वंतुभूभृतांवंशंनाशयामासवीर्य्यवान्
कृत्वाचोवीतुनिःक्षत्रांजमदग्निसुतोबली ७६
अश्वमेधंमहायज्ञंचकारविधिवद्द्विजः
प्रददौविप्रमुख्येभ्यःसप्तद्वीपवतींमहीम् ७७
दत्वामहींसविप्रेभ्योजामदग्न्यःप्रतापवान्
तपस्तप्तुंययौसोऽथनरनारायणाश्रमम् ७८
एतत्तेकथितंदेविजामदग्नेर्महात्मनः
शक्त्यावेशावतारस्यचरितंशार्ङ्गिणःप्रभोः ७९
नोपास्यंहिभवेत्तस्यशक्त्यावेशान्महात्मनः
उपास्यौभगवद्भक्तैर्विप्रमुख्यैर्महात्मभिः ८०
रामकृष्णावतारौतुपरिपूर्णौहिसद्गुणैः

उपास्यमानावृषिभिरपवर्गप्रदौनृणाम् ८१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेपरशुरामचरितंनामैकचत्वारिंशदधिकद्विशततमोऽध्यायः २४१

## द्विचत्वारिंशदधिक द्विशततमोऽध्यायः

रुद्रउवाच-
स्वायम्भुवोमनुःपूर्वंद्वाशार्णंमहामनुम्
जजापगोमतीतीरेनैमिषेविमलेशुभे १
तेनवर्षसहस्रेणपूजितः कमलापतिः
मत्तोवरंवृणीष्वेतितंप्राहभगवान्हरिः २
ततः प्रोवाचहर्षेणमनुःस्वायम्भुवोहरिम्
मनुरुवाच-
पुत्रत्वंभजदेवेशत्रीणिजन्मानिचाच्युत ३
त्वांपुत्रलालसत्वेनभजामिपुरुषोत्तमम्
रुद्रउवाच-
इत्युक्तस्तेनलक्ष्मीशः प्रोवाचसुमहागिरा ४
विष्णुरुवाच-
भविष्यतिनृपश्रेष्ठयत्तेमनसिकांक्षितम्
ममैवचमहत्प्रीतिस्तव पुत्रत्वहेतवे ५
स्थितिप्रयोजनेकालेतत्रतत्रनृपोत्तम
त्वयिजातेत्वहमपिजातोस्मितवसुव्रत ६
परित्राणायसाधूनांविनाशायचदुष्कृताम्
धर्म्मसंस्थापनार्थायसंभवामितवानघ ७
रुद्रउवाच-
एवंदत्वावरंतस्मैतत्रैवांतर्दधेहरिः
अस्याभूत्प्रथमंजन्ममनोःस्वायंभुवस्य च ८
रघूणामन्वयेपूर्वंराजादशरथोह्यभूत्
द्वितीयोवसुदेवोऽभूद्वृष्णीनामन्वयेविभुः ९
कलेर्दिव्यसहस्राब्दप्रमाणस्यांत्यपादयोः
शंभलग्रामकंप्राप्यब्राह्मणः संजनिष्यति १०

कौशल्यासमभूत्पत्नीराज्ञोदशरथस्यहि
यदोर्वंशस्यसेवार्थंदेवकीनामविश्रुता ११
हरिव्रतस्यविप्रस्य भार्य्यादेवप्रभापुनः
एवंमातृत्वमापन्नात्रीणिजन्मानिशार्ङ्गिणः १२
पूर्वंरामस्यचरितंवक्ष्यामितवसुव्रते
यस्यस्मरणमात्रेणविमुक्तिः पापिनामपि १३
हिरगयकहिरगयाक्षौद्वितीयंजन्मसंश्रितौ
कुंभकर्णदशग्रीवावजायेतांमहाबलौ १४
पुलस्त्यस्यसुतोविप्रोविश्रवानामधार्मिकः
तस्यपत्नीविशालाक्षीराक्षसेंद्रसुताऽनघे १५
सुकेशितनयासास्यात्सुमालीदानवस्यच
केकसीनामकन्यासीत्तस्यभार्यादृढव्रता १६
कामोद्रिक्तातुसादेवीसंध्याकालेमहामुनिम्
रमयामासतन्वंगीयथेष्टंशुभदर्शना १७
कामात्संध्याभवाद्यत्वात्तस्यांजातौमहाबलौ
रावणःकुंभकर्णश्चराक्षसौलोकविश्रुतौ १८
कन्याशूर्पणखानामजातातिविकृतानना
कस्यचित्त्वथकालस्यतस्यांजातोविभीषणः १९
सुशीलोभगवद्भक्तःसत्यवाग्धर्म्मवाञ्शुचिः
रावणःकुंभकर्णश्चहिमवत्पर्वतोत्तमे २०
महोग्रतपसामांवैपूजयामासतुर्भृशम्
रावणस्त्वथदुष्टात्मास्वशिरः कमलैःशुभैः २१
पूजयामासमांदेविदारुणेनैवकर्म्मणा
ततस्तमब्रुवंसुभ्रूःप्रहृष्टेनांतरात्मना २२
वरंवृणीष्वमेवत्सयत्तेमनसिवर्त्तते
ततः प्रोवाचदुष्टात्मादेवदानव रक्षसाम् २३
अवध्यत्वंप्रदेहीतिसर्वलोकजिगीषया
ततोऽहदत्तवांस्तस्मैराक्षसायदुरात्मने २४
देवदानवयक्षाणामवध्यत्वंवरानने
राक्षसोऽसौमहावीर्योवरदानात्तुगर्वितः २५

त्रील्लोँकान्पीडयामासदेवदानवमानुषान्
तेनसंबाध्यमानाश्चदेवाब्रह्मपुरोगमाः २६
भयार्त्ताःशरणंजग्मुरीश्वरंकमलापतिम्
ज्ञात्वाथवेदनांतेषामभयायसनातनः २७
उवाचत्रिदशान्सर्वान्ब्रह्मरुद्रपुरोगमान्
श्रीभगवानुवाच-
राज्ञोदशरथस्याहमुत्पतस्यामिरघोःकुले २८
वधिष्यामिदुरात्मानंरावणंसहबांधवम्
मानुषंवपुरास्थायहन्मिद्वतकंटकम् २९
नंदिशापाद्भवंतोऽपि वानरत्वमुपागताः
कुरुध्वंममसाहाय्यंगंधर्वाप्सरसोत्तमाः ३०
रुद्रउवाच-
इत्युक्तादेवतास्सर्वादेवदेवेनविष्णुना
वानरत्वमुपागम्यजज्ञिरेपृथिवीतले ३१
भार्गवेणप्रदत्तातुमहीसागरमेखला
दत्तामहर्षिभिःपूर्वरघूणांसुमहात्मनाम् ३२
वैवस्वतमनोःपुत्रोराज्ञां श्रेष्ठोमहाबलः
इक्ष्वाकुरितिविख्यातस्सर्वधर्म्मविदांवरः ३३
तदन्वयेमहातेजाराजादशरथोबली
अजस्यनृपतेःपुत्रःसत्यवान्शीलवान्शुचिः ३४
सराजापृथिवींसर्वांपालयामासवीर्य्यतः
राज्येषुस्थापयामाससर्वान्पार्थिवसत्तमान् ३५
कोशलस्यनृपस्याथपुत्रीसर्वांगशोभना
कौशल्यानामतांकन्यामुपयेमेसपार्थिवः ३६
मागधस्यनृपस्याथतनयाचशुचिस्मिता
सुमित्रानामनाम्नाचद्वितीयातस्यभामिनी ३७
तृतीयाकेकयस्याथनृपतेर्दुहितातथा
भार्य्याभूत्पद्मपत्राक्षीकेकयीनामनामतः ३८
ताभिस्मराजाभार्याभिस्तिसृभिर्धर्मसंयुतः
रमयामासकाकुत्स्थः पृथिवींचानुपालयन् ३९

अयोध्यानामनगरीसरयूतीरसंस्थिता
सर्वरत्नसुसंपूर्णाधनधान्यसमाकुला ४०
प्राकारगोपुरैर्जुष्टाहेमप्राकारसंकुला
उत्तमैर्नागतुरगैर्महेंद्रस्ययथापुरी ४१
तस्यांराजासधर्मात्माउवासमुनिसत्तमैः
पुरोहितेनविप्रेणवसिष्ठेनमहात्मना ४२
राज्यंचकारयामाससर्वंनिहतकंटकम्
यस्मादुत्पत्स्यतेतस्यांभगवान्पुरुषोत्तमः ४३
तस्मात्तुनगरीपुरायासाप्ययोध्येतिकीर्तिता
नगरस्यपरंधाम्नोनामतस्याप्यभूच्छुभे ४४
यत्रास्तेभगवान्विष्णुस्तदेवपरमंपदम्
तत्रसद्योभवेन्मोक्षःसर्वकर्म्मनिकृंतनः ४५
जातेतत्रमहाविष्णौनराः सर्वेमुदंययुः
सराजापृथिवींसर्वांपालयित्वाशुभानने ४६
अयजद्वैष्णवेष्टयाचपुत्रार्थीहरिमच्युतम्
तेनसंपूजितः श्रीशोराजासर्वगतोहरिः ४७
वैष्णवेनतुयज्ञेनवरदःप्राहकेशवः
तस्मिन्नाविरभूदग्नौयज्ञरूपोहरिस्तदा ४८
शुद्धजाम्बूनदप्रख्यःशंखचक्रगदाधरः
शुक्लांबरधरः श्रीमान्सर्वभूषणभूषितः ४९
श्रीवत्सकौस्तुभोरस्कोवनमालाविभूषितः
पद्मपत्रविशालाक्षश्चतुर्बाहुरुदाधीः ५०
सव्यांकस्थश्रियासार्द्धमाविरासीद्रमेश्वरः
वरदोस्मीतितंप्राहराजानंभक्तवत्सलः ५१
तंदृष्ट्वासर्वलोकेशंराजाहर्षसमाकुलः
ववंदेभार्य्ययासार्द्धंप्रहृष्टेनांतरात्मना ५२
प्रांजलिप्रणतोभूत्वाहर्षगद्गदया गिरा
पुत्रत्वंमेभजेत्याहदेवदेवंजनार्दनम् ५३
ततः प्रसन्नोभगवान्प्राहराजानमच्युतः
विष्णुरुवाच–

उत्पत्स्येऽहनृपश्रेष्ठदेवलोकहितायवै ५४
परित्राणायसाधूनांराक्षसानांवधायच
मुक्तिंप्रदातुंलोकानांधर्म्मसंस्थापनायच ५५
महादेवउवाच-
इत्युक्त्वापायसंदिव्यंहेमपात्रस्थितंशृतम्
लक्ष्म्याहस्तस्थितंशुभ्रंपार्थिवायददौहरिः ५६
विष्णुरुवाच-
इदंवैपायसंराजन्पत्नीभ्यस्तवसुब्रत
देहितेतनयास्तासुउत्पत्स्यन्तेमदंगजाः ५७
महादेवउवाच-
इत्युक्त्वामुनिभिः सर्वैःस्तूयमानोजनार्दनः
स्वात्मानंदर्शयित्वाथतथैवांतरधीयत ५८
सराजातत्रदृष्ट्वाचपत्नींज्येष्ठांकनीयसीम्
विभज्यपायसंदिव्यंप्रददौसुसमाहितः ५९
एतस्मिन्नन्तरेपत्नीसुमित्रातस्यमध्यमा
तत्समीपंप्रयातासापुत्रकामासुलोचना ६०
तांदृष्ट्वातत्रकौशल्याकैकेयीचसुमध्यमा
अर्द्धमर्द्धंप्रददतुस्तेतस्यैपायसंस्वकम् ६१
तत्प्राश्यपायसंदिव्यंराजपत्न्यःसुमध्यमाः
संपन्नगर्भाःसर्वास्ताविरेजुःशुभ्रवर्च्चसः ६२
तासांस्वप्नेषुदेवेशः पीतवासाजनार्दनः
शंखचक्रगदापाणिराविर्भूतस्तदाहरिः ६३
अस्मिन्कालेमनोरम्येमधुमासिशुचिस्मिते
शुक्लेनवम्यांविमलेनक्षत्रेऽदितिदैवते ६४
मध्याह्नसमयेलग्नेसर्वग्रहशुभान्विते
कौसल्याजनयामासपुत्रंलोकेश्वरंहरिम् ६५
इंदीवरदलश्यामंकोटिकंदर्प्पसन्निभम्
पद्मपत्रविशालाक्षंसर्वाभरणशोभितम् ६६
श्रीवत्सकौस्तुभोरस्कंसर्वाभरणभूषितम्
उद्यद्दिनकरप्रख्यकुण्डलाभ्यांविराजितम् ६७

अनेकसूर्य्यसंकाशंतेजसामहतावृतम्
परेशस्यतनोरम्यंदीपादुत्पन्नदीपवत् ६८
ईशानंसर्वलोकानायोगिध्येयंसनातनम्
सर्वोपनिषदामर्थमनंतंपरमेश्वरम् ६९
जगत्सर्गस्थितिलयेहेतुभूतमनामयम्
शरगयंसर्वभूतानांसर्वभूतमयंविभुम् ७०
समुत्पन्नेजगन्नाथेदेवदुंदुभयोदिवि
विनेदुःपुष्पवर्षाणिववर्षुःसुरसत्तमाः ७१
प्रजापतिमुखादेवाविमानस्थानभस्तले
तुष्टवुर्मुनिभिःसार्द्धंहर्षपूर्णांगविह्वलाः ७२
जगुर्गंधर्वपतयोननृतुश्चाप्सरोगणाः
वबुःपुगयशिवावाताः सुप्रभोभूद्दिवाकरः ७३
जज्वलुश्चाग्नयः शांताविमलाश्चदिशोदश
ततस्सराजाहर्षेणपुत्रंदृष्ट्वासनातनम् ७४
पुरोधसावसिष्ठेनजातकर्म्मतदाऽकरोत्
नामचास्मैददौरम्यंवसिष्ठोभगवांस्तदा ७५
श्रियःकमलवासिन्यारमणोऽयमहान्प्रभुः
तस्माच्छ्रीरामइत्यस्यनामसिद्धंपुरातनम् ७६
सहस्रनाम्नांश्रीशस्यतुल्यंमुक्तिप्रदंनृणाम्
विष्णुनाससमुत्पन्नोविष्णुरित्यभिधीयते ७७
एवं नामास्यदत्वाथवसिष्ठोभगवानृषिः
परिणीयनमस्कृत्यस्तुत्वास्तुतिभिरेवच ७८
संकीर्त्यनामसाहस्रंमंगलार्थंमहात्मनः
विनिर्ययौमहातेजास्तस्मात्पुगयतमाद्गृहात् ७९
राजाथविप्रमुख्येभ्योददौबहुधनंमुदा
गवामयुतदानंचकारयामासधर्म्मतः ८०
ग्रामाणांशतसाहस्रंददौरघुकुलोत्तमः
वस्त्रैराभरणैर्दिव्यैरसंख्येयैर्धनैरपि ८१
विष्णोस्संतुष्टयेतत्रतर्प्पयामासभूसुरान्
कौसल्याचसुतंदृष्ट्वारामंराजीवलोचनम् ८२

फुल्लहस्तारविंदाभंपद्महस्ताम्बुजान्वितम्
तस्यश्रीपादकमलेपद्माब्जेचवरानने ८३
शंखचक्रगदापद्मध्वजवस्त्रादिचिह्निते
दृष्ट्वावक्षसिश्रीवत्संकौस्तुभंवनमालया ८४
तस्यांगेसाजगत्सर्वंसदेवासुरमानुषम्
स्मितवक्त्रेविशालाक्षीभुवनानिचतुर्दश ८५
निश्वासेतस्यवेदांश्चसेतिहासान्महात्मनः
द्वीपानब्धीन्गिरींस्तस्यजघनेवरवर्णिनि ८६
नाभ्यांब्रह्मशिवौतस्यकर्णयोश्चदिशःशुभाः
नेत्रयोर्वह्निसूर्यौचघ्राणेवायुंमहाजवम् ८७
सर्वोपनिषदामर्थंदृष्ट्वातस्यविभूतयः
कृत्स्नाभीतावरारोहाप्रणम्यचपुनः पुनः
हर्षाश्रुपूर्णनयनाप्रांजलिर्वाक्यमब्रवीत् ८८
कौशल्योवाच-
धन्यास्मिदेवदेवेशलब्ध्वात्वांतनयंप्रभो
प्रसीदमेजगन्नाथपुत्रस्नेहंप्रदर्शय ८९
ईश्वरउवाच-
एवमुक्तोहृषीकेशोमात्रासर्वगतो हरिः
मायामानुषतांप्राप्यशिशुभावाद्रुरोदसः ९०
अथप्रमुदितादेवीकौशल्याशुभलक्षणा
पुत्रमालिंग्यहर्षेणस्तन्यंप्रादात्सुमध्यमा ९१
तस्याःस्तन्यंपपौदेवोबालभावात्सनातनः
उवासमातुरुत्संगेजद्धर्तामहाविभुः ९२
देशेतस्मिञ्छुशुभेरम्येसर्वकामप्रदेनृणाम्
उत्सवंचक्रिरेपौराहृष्टाजनपदानराः ९३
कैकेय्यांभरतोजज्ञेपांचजन्यांशचोदितः
सुमित्राजनयामासलक्ष्मणंशुभलक्षणम् ९४
शत्रुघ्नंचमहाभागादेवशत्रुप्रतापनम्
अनंतांशेनसंभूतोलक्ष्मणः परवीरहा ९५
सुदर्शनांशाच्छत्रुघ्नः संजज्ञेऽमितविक्रमः

तेसर्वेववृधुस्तत्रवैवस्वतमनोःकुले ९६
संस्कृतास्तेसुताः सम्यग्वसिष्ठेनमहौजसा
अधीतवेदास्तेसर्वेश्रुतवंतस्तथानृपाः ९७
सर्वशास्त्रार्थतत्वज्ञाधनुर्वेदेचनिष्ठिताः
बभूवुःपरमोदारालोकानांहर्षवर्द्धनाः ९८
युग्मंबभूवतुस्तत्रराजानौरामलक्ष्मणौ
तथाभरतशत्रुघ्नौतयोर्युग्मंबभूवह ९९
अथलोकेश्वरीलक्ष्मीर्जनकस्यनिवेशने
शुभक्षेत्रेहलोद्धातेसुनासीरेशुभेक्षणे १००
बालार्ककोटिसंकाशारक्तोत्पलकराम्बुजा
सर्वलक्षणसंपन्नासर्वाभरणभूषिता १०१
धृत्वावक्षसिचार्वङ्गीमालामम्लानपङ्कजाम्
सीतामुखेसमुत्पन्नाबालभावेनसुंदरी १०२
तांदृष्ट्वाजनकोराजाकन्यांवेदमयींशुभाम्
उद्धृत्यापत्यभावेनपुपोषमिथिलापतिः १०३
जनकस्यगृहेरम्येसर्वलोकेश्वरप्रिया
ववृधेसर्वलोकस्यरक्षणार्थंसुरेश्वरी १०४
एतस्मिन्नंतरेदेविकौशिकोलोकविश्रुतः
सिद्धाश्रमेमहापुरायेभागीरथ्यास्तटेशुभे १०५
क्रतुप्रवरमारेभेयष्टुंतत्रमहामुनिः
वर्त्तमानस्यतस्यास्ययज्ञस्याथ द्विजन्मनः १०६
क्रतुविध्वंसिनोऽभूवन्रावणस्यनिशाचराः
कौशिकश्चिंतयित्वाथरघुवंशोद्भवंहरिम् १०७
आनेतुमैच्छद्धर्मात्मालोकानांहितकाम्यया
सगत्वानगरींरम्यामयोध्यांरघुपालिताम् १०८
नृपश्रेष्ठंदशरथंददर्शमुनिसत्तमः
राजापिकौशिकंदृष्ट्वाप्रत्युत्थायकृतांजलि १०९
पुत्रैःसहमहातेजाववंदेमुनिसत्तमम्
धन्योऽहमस्मीतिवदन्हर्षेणरघुनंदनं ११०
अर्चयामासविधिनानिवेश्यपरमासने

परिणीयनमस्कृत्यकिंकरोमीत्युवाचतम् १११
ततः प्रोवाचहृष्टात्माविश्वामित्रोमहातपाः
विश्वामित्रउवाच-
देहिमेराघवंराजन्रक्षणार्थंक्रतोर्मम ११२
साफल्यमस्तुमेयज्ञेराघवस्यसमीपतः
तस्माद्रामंरक्षणार्थंदातुमर्हसिभूषते ११३
ईश्वरउवाच-
तच्छ्रुत्वामुनिवर्य्यस्यवाक्यंसर्वविदांवरः
प्रददौमुनिवर्य्यायराघवंसहलक्ष्मणम् ११४
आदायराघवंतत्रविश्वामित्रोमहातपाः
स्वमाश्रममभिप्रीतः प्रययौद्विजसत्तमः ११५
ततः प्रहृष्टास्त्रिदशाःप्रयातेरघुसत्तमे
ववृषुःपुष्पवर्षाणितुष्टवुश्चमहौजसः ११६
अथाजगामहृष्टात्मावैनतेयोमहाबलः
अदृश्यभूतोभूतानांसंप्राप्यरघुसत्तमम् ११७
ताभ्यांदिव्येचधनुषीतूणौचाक्षयसायकौ
दिव्यान्यस्त्राणिशस्त्राणिदत्वाचप्रययौद्विजः ११८
तौरामलक्ष्मणौवीरौकौशिकेनमहात्मना
गच्छंतौज्ञापितारण्येराक्षसीघोरदर्शना ११९
नाम्नातुताडकादेविभार्यासुंदस्यरक्षसः
जघ्नतुस्तांमहावीरौबाणैर्दिव्यधनुश्च्युतैः १२०
निहताराघवेणाथराक्षसीघोरदर्शना
त्यक्त्वातनुंघोररूपांदिव्यरूपाबभूवसा १२१
जाज्वल्यमानावपुषासर्वाभरणविभूषिता अं
प्रययौवैष्णवंलोकंप्रणम्यचरघूत्तमौ १२२
तांहत्वाराघवः श्रीमान्कौशिकस्याश्रमंशुभम्
प्रविवेशमहातेजालक्ष्मणेनमहात्मना १२३
ततः प्रहृष्टामुनयः प्रत्युद्गम्यरघूत्तमम्
निवेश्यपूजयामासुरर्घाद्यैः परमात्मने १२४
कौशिकःकृतदीक्षस्तुयंष्टुंयज्ञमनुत्तमम्

आरेभेमुनिभिःसार्द्धंविधिनामुनिसत्तमः १२५
वर्त्तमानेमहायज्ञेमारीचोनामराक्षसः
भ्रात्रासुबाहुनातत्रविघ्नंकर्तुमवस्थितः १२६
दृष्ट्वातौराक्षसौघोरौराघवः परवीरहा
जघानैकेनबाणेनसुबाहुंराक्षसेश्वरम् १२७
पवनास्त्रेणमहतामारीचंसनिशाचरम्
सागरेपातयामासशुष्कपर्णमिवानिलः १२८
सरामस्यमहावीर्य्यंदृष्ट्वाराक्षससत्तमः
न्यस्तशस्त्रस्तपस्तप्तुंप्रययौमहादाश्रमम् १२९
विश्वामित्रोमहातेजाःसमाप्तेमहतिक्रतौ
प्रहृष्टमनसातत्रपूजयामासराघवम् १३०
समाश्लिष्यमहात्मानंकाकपक्षधरंहरिम्
नीलोत्पलदलश्यामंपद्मपत्रायतेक्षणम् १३१
उपाघ्रायतदामूर्ध्नितुष्टावमुनिसत्तमः
एतस्मिन्नंतरेराजामिथिलायाअधीश्वरः १३२
वाजपेयंक्रतुंयष्टुमारेभेमुनिसत्तमैः
तंद्रष्टुंप्रययुस्सर्वेविश्वामित्रपुरोगमाः १३३
मुनयोरघुशार्दूलसहिताः पुण्यचेतसः
गच्छतस्तस्यरामस्यपदाब्जेनमहात्मनः १३४
अभूत्सापावनीभूमिःसमाक्रांतामहाशिला
सापिशप्तापुराभर्त्रागौतमेनद्विजन्मना १३५
अहल्यारघुनाथस्यपादस्पर्शाच्छुभाऽभवत्
अथसंप्राप्यनगरींमिथिलांमुनिसत्तमाः १३६
राघवाभ्यांतुसहिताबभूवुः प्रीतमानसाः
समागतान्महाभागान्दृष्ट्वाराजामहाबलः १३७
प्रत्युद्गम्यप्रणम्याथपूजयामासमैथिलः
रामंपद्मविशालाक्षमिंदीवरदलप्रभम् १३८
पीताम्बरधरंश्लक्ष्णंकोमलावयवोज्ज्वलम्
अवधीरितकंदर्प्पकोटिलावण्यमुत्तमम् १३९
सर्वलक्षणसम्पन्नंसर्वाभरणभूषितम्

स्वस्यहृत्पद्ममध्येयः परेशस्यतनुर्हरिः १४०
उत्पन्नोदीपवद्दीपात्सौशील्यादिगुणैःपरैः
तंदृष्ट्वारघुनाथंसजनकोहृष्टमानसः १४१
परेशमेवतंमेनेरामंदशरथात्मजम्
पूजयामासकाकुत्स्थंधन्योस्मीतिब्रुवन्नृपः १४२
प्रसादंवासुदेवस्यविष्णोर्मेनेनरेश्वरः
प्रदातुंदुहितांतस्मैमनसाचिंतयन्प्रभुः १४३
आत्मजौरघुवंशस्यज्ञात्वातत्रनृपोत्तमः
पूजयामासधर्मेणवस्त्रैराभरणैः शुभैः १४४
ऋषीन्समर्चयामासमधुपर्कादिपूजनैः
ततोऽवसानेयज्ञस्यरामोराजीवलोचनः १४५
भंक्त्वाशैवंधनुर्दिव्यंजितवान्जनकात्मजाम्
अथासौवीर्यशुल्केनमहतापरितोषितः १४६
मुदाधरणिजांतस्मैप्रददौमिथिलाधिपः
केशवायश्रियमिवयथापूर्वंमहार्णवः १४७
सदूतंप्रेषयामासराघवंमिथिलाधिपः
पुत्राभ्यांसहधर्मात्मामिथिलायांविवेशह १४८
वसिष्ठवामदेवाद्यैःप्रीतैःसहमहीपतिः
उवासनगरेरम्येजनकस्यरधूत्तमः १४९
तस्मिन्नेवशुभेकालेरामस्यधरणीसुताम्
विवाहमकरोद्राजामिथिलेनसमर्चितः १५०
लक्ष्मणस्योर्मिलांनामकन्यांजनकसंभवाम्
जनकस्यानुजस्याथतनयेशुभवर्चसी १५१
मांडवीश्रुतकीर्त्तिश्चसर्वलक्षणलक्षिते
भरतस्यचसौमित्रेर्विवाहमकरोन्नृपः १५२
निर्वर्त्यौद्वाहिकंतत्रराजादशरथोबली
अयोध्यांप्रस्थितः श्रीमान्पौरैर्जनपदैर्वृतः १५३
पारिबर्हंसमादायमैथिलेनचपूजितः
ससुतःसस्नुषःसाश्वःसगजःसबलानुगः १५४
तदध्वनिमहावीर्य्योजामदग्निःप्रतापवान्

गृहीत्वापरशुंचापंसंक्रुद्धइवकेसरी १५५
अभ्यधावच्चकाकुत्स्थंयोद्धुकामोनृपांतकः
संप्राप्यराघवंदृष्ट्वावचनंप्राहभार्गवः १५६
परशुरामउवाच-
रामराममहाबाहोशृणुष्ववचनंमम
बहुशःपार्थिवान्हत्वासंयुगेभूरिविक्रमान् १५७
ब्राह्मणेभ्योमहींदत्वातपस्तप्तुमहंगतः
तववीर्यबलंश्रुत्वात्वयायोद्धुमिहागतः १५८
इक्ष्वाकवोनवध्यामेमातामहकुलोद्भवाः
वीर्य्यंक्षत्रबलंश्रुत्वानशक्यंसहितुंमम १५९
रौद्रंचापंदुराधर्षंभज्यमानांत्वयानृप
तस्माद्भदान्ययुद्धंमेदीयतांरघुसत्तम १६०
इदंतुवैष्णवंचापंतेनतुल्यमरिंदम
आरोपयस्ववीर्येणनिर्जितोस्मित्वयैवहि १६१
अथवा त्यजशस्त्राणिपुरस्ताद्बलिनोमम
शरणंभजकाकुत्स्थकातरोस्यथचेतसी १६२
ईश्वरउवाच-
एवमुक्तस्तुकाकुत्स्थोभार्गवेणप्रतापवान्
तच्चापंतस्यजग्राहतच्छक्तिंवैष्णवीमपि १६३
शक्त्यावियुक्तस्सतदाजामदग्निःप्रतापवान्
निर्वीर्योनष्टतेजाभूत्कर्म्महीनोयथाद्विजः १६४
विनष्टतेजसंदृष्ट्वाभार्गवंनृपसत्तमाः
साधुसध्वितिकाकुत्स्थंप्रशशंसुर्मुहुर्मुहुः १६५
काकुत्स्थस्तन्महच्चापंगृहीत्वारोप्यलीलया
संधायबाणंतच्चापेभार्गवंप्राहविस्मितम् १६६
रामउवाच-
अनेनशरमुख्येनकिंकर्त्तव्यंतवद्विज
छेद्मिलोकमिमंचाधःस्वर्गंवाहन्मितेतपः १६७
ईश्वरउवाच-
तन्दृष्ट्वाघोरसंकाशंबाणंरामस्यभार्गवः

ज्ञात्वातंपरमात्मानंप्रहृष्टोराममब्रवीत् १६८
परशुरामउवाच-
रामराममहाबाहोनवेद्मित्वांसनातनम्
जानाम्यद्यैवकाकुत्स्थतववीर्य्यगुणादिभिः १६९
त्वमादिपुरुषःसाक्षात्परब्रह्मपरोऽव्ययः
त्वमनंतोमहाविष्णुर्वासुदेवःपरात्परः १७०
नारायणस्त्वंश्रीशस्त्वमीश्वरस्त्वंत्रयीमयः
त्वंकालस्त्वंजगत्सर्वमकाराख्यस्त्वमेवच १७१
स्रष्टाधाताचसंहर्त्तात्वमेव परमेश्वरः
त्वमचिंत्योमहद्भूतरूपस्त्वंतुमनुर्महान् १७२
चतुःषट्पंचगुणवांस्त्वमेवपुरुषोत्तमः
त्वंयज्ञस्त्वंवषट्कारस्त्वमोंकारस्त्रयीमयः १७३
व्यक्ताव्यक्तस्वरूपस्त्वंगुणभृन्निर्गुणःपरः
स्तोतुंत्वाहमशक्तश्चवेदानामप्यगोचरम् १७४
यच्चापलत्वंकृतवांस्त्वांयुयुत्सुतयाप्रभो
तत्क्षंतव्यंत्वयानाथकृपयाकेवलेनतु १७५
तवशक्त्यानृपान्सर्वाञ्जित्वादत्वामहींद्विजान्
त्वत्प्रसादवशादेवशांतिमाप्नोतिनैष्ठिकीम् १७६
ईश्वरउवाच-
एवमुक्त्वातुकाकुत्स्थंजामदग्निर्महातपाः
परिणीयनमस्कृत्वाराघवंलोकरक्षकम् १७७
शतक्रतुकृतंस्वर्गंतदस्त्रायन्यवेदयत्
राघवोऽथमहातेजाववंदेतंमहामुनिम् १७८
विधिवत्पूजयामासपाद्यार्घाचमनादिभिः
तेनसंपूजितस्तत्रजामदग्निर्महातपाः १७९
तपस्तप्तुंययौरम्यंनरनारायणाश्रमम्
राजादशरथःसोऽथपुत्रैर्दारसमन्वितैः १८०
स्वांपुरींसुमुहूर्त्तेनप्रविवेशमहाबलः
राघवोलक्ष्मणश्चैवशत्रुघ्नोभरतस्तथा १८१
स्वान्स्वान्दारानुपागम्यरेमिरेहृष्टमानसाः

तत्रद्वादशवर्षाणिसीतयासहराघवः १८२
रमयामासधर्मात्मानारायणइवश्रिया
तस्मिन्नेवतुराजाथकालेदशरथःसुतम् १८३
ज्येष्ठंराज्येनसंयोक्तुमैच्छत्प्रीत्यामहीपतिः
तस्यभार्याथकैकेयीपुरादत्तवराप्रिया १८४
अयाचतनृपश्रेष्ठंभरतस्याभिषेचनम्
विवासनंचरामस्यवत्सराणिचतुर्दश १८५
सराजासत्यवचनाद्रामंराज्यादथोः सुतम्
विवासयामासतदादुःखेनहतचेतनः १८६
शक्तोऽपिराघवस्तस्मिन्राज्यंसंत्यज्यधर्मतः
दशग्रीववधार्थायपितुर्वचनहेतुना १८७
वनंजगामकाकुत्स्थोलक्ष्मणेनचसीतया
राजापुत्रवियोगार्त्तःशोकेनचममारसः १८८
नियुज्यमानोभरतस्तस्मिन्राज्येसमंत्रिभिः
नैच्छद्राज्यंसधर्म्मात्मासौभ्रात्रमनुदर्शयन् १८९
वनमागम्यकाकुत्स्थमयाचद्भ्रातरंततः
रामस्तुपितुरादेशान्नैच्छद्राज्यमरिंदमः १९०
स्वपादुकेददौतस्मैभक्त्यासोऽप्यग्रहीत्तथा
रामस्यपादुकेराज्यमवाप्यभरतः शुभे १९१
प्रत्यहंगंधपुष्पैश्चपूजयन्कैकयीसुतः
तपश्चरणयुक्तेनतस्मिंस्तस्थौनृपोत्तमः १९२
यावदागमनंतस्यराघवस्यमहात्मनः
तावद्व्रतपराः सर्वेबभूवुःपुरवासिनः १९३
राघवश्चित्रकूटाद्रौभरद्वाजाश्रमेशुभे
रमयामासवैदेह्यामन्दाकिन्याजलेशुभे १९४
कदाचिदंकेवैदेह्याःशेतेरामोमहामनाः
एंद्रिःकाकस्समागम्यतस्मिन्नेव चचारह १९५
सदृष्ट्वाजानकींतत्रकंदर्प्पशरपीडितः
विददारनखैस्तीक्ष्णैःपीनोन्नतपयोधरम् १९६
तंदृष्ट्वावायसंरामःकुशंजग्राहपाणिना

ब्रह्मणास्त्रेणसंयोज्यचिक्षेपधरणीधरः १९७
तंतृणंघोरसंकाशंज्वालारचितविग्रहम्
दृष्ट्वाकाकःप्रदुद्रावविमुंचन्कातरंस्वरम् १९८
तंकाकंप्रत्यनुययौरामस्यास्त्रंसुदारुणम्
वायसस्त्रिषुलोकेषुबभ्रामभयपीडितः १९९
यत्रयत्रययौकाकः शरणार्थीसवायसः
तत्रतत्रतदस्त्रंतुप्रविवेशभया वहम् २००
ब्रह्माणमिंद्रंरुद्रंचयमंवरुणमेवच
शरणार्थीजगामाशुवायसः शस्त्रपीडितः २०१
तंदृष्ट्वावायसंसर्वैरुद्राद्यादेवदानवाः
नशक्ताःस्मवयंत्रातुमितिप्राहुर्मनीषिणः
अथप्रोवाचभगवान्ब्रह्मात्रिभुवनेश्वरः २०२
ब्रह्मोवाच-
भोभोबलिभुजांश्रेष्ठतमेवशरणंव्रज
सएवरक्षकः श्रीमान्सर्वेषांकरुणानिधिः २०३
रक्षत्येवक्षमासारोवत्सलंशरणागतान्
ईश्वरःसर्वभूतानांसौशील्यादिगुणान्वितः २०४
रक्षिताजीवलोकस्यपितामातासखासुहृत्
शरणंव्रजदेवेशंनान्यत्रशरणंद्विज २०५
महादेवउवाच-
इत्युक्तस्तेनबलिभुग्ब्रह्मणारघुनंदनम्
उपेत्यसहसाभूमौनिपपातभयातुरः २०६
प्राणसंशयमापन्नंदृष्ट्वासीताथवायसम्
त्राहित्राहीतिभर्तारमुवाचविनयाद्विभुम् २०७
पुरतःपतितंदेवीधरण्यांवायसंतदा
तच्छिरःपादयोस्तस्ययोजयामासजानकी २०८
समुत्थाप्यकरेणाथकृपापीयूषसागरः
ररक्षरामोगुणवान् वायसंदययार्दितः २०९
तमाहवायसंरामोमाभैरितिदयानिधिः
अभयंतेप्रदास्यामिगच्छगच्छयथासुखम् २१०

प्रणम्यराघवायाथसीतायैचमुहुर्मुहुः
स्वर्ल्लोकंप्रययावाशुराघवेणचरक्षितः २११
ततोरामस्तुवैदेह्यालक्ष्मणेनचधीमता
उवासचित्रकूटाद्रौस्तूयमानोमहर्षिभिः २१२
तस्मिन्संपूज्यमानस्तुभरद्वाजेनराघवः
जगामात्रेस्सुविपुलमाश्रमंरघुसत्तमः २१३
समागतंरघुवरंदृष्ट्वामुनिवरोत्तमः
भार्ययासहधर्म्मात्माप्रत्युद्गम्यमुदायुतः २१४
आसनेसुशुभेमुख्येनिवेश्यसहसीतया
अर्घ्यपाद्याचमनीयंचवस्त्राणिविविधानिच २१५
मधुपर्कन्ददौप्रीत्याभूषणंचानुलेपनम्
तस्यपत्न्यनसूयातुदिव्यांबरमनुत्तमम् २१६
सीतायैप्रददौप्रीत्याभूषणानिद्युमंतिच
दिव्यान्नपानभक्षाद्यैर्भोजयामासराघवम् २१७
तेनसंपूजितस्तत्रभक्त्यापरमयानृपः
उवासदिवसंतत्रप्रीत्यारामस्सलक्ष्मणः २१८
प्रभातेविमलेरामः समुत्थायमहामुनिम्
परिणीयप्रणम्याथगमनायोपचक्रमे २१९
अनुज्ञातस्ततस्तेनरामोराजीवलोचनः
प्रययौदंडकारण्यंमहर्षिकुलसंकुलम् २२०
तत्रातिभीषणंघोरंविराधंनामराक्षसम्
हत्वाथशरभंगस्यप्रविवेशाश्रमंशुभम् २२१
सतुदृष्ट्वाथकाकुत्स्थंसद्यः संक्षीणकल्मषः
प्रययौब्रह्मलोकंतुगंधर्वाप्सरसान्वितम् २२२
सुतीक्ष्णस्याप्यगस्त्यस्यह्यगस्त्यभ्रातुरेवच
क्रमेणप्रययौरामस्तैश्चसंपूजितस्तथा २२३
पचंवट्यांततोरामोगोदावर्यास्तटेशुभे
उवाचसुचिरंकालंसुखेनपरमेणच २२४
तत्रगत्वामुनिश्रेष्ठास्तापसाधर्मचारिणः
पूजयामासुरात्मेशंरामंराजीवलोचनम् २२५

भयंविज्ञापयामासुस्तंचरक्षोगणेरितम्
तानाश्वास्यतुकाकुस्थोददौचाभयदक्षिणाम् २२६
तेतुसंपूजितास्तेन स्वाश्रमान्संप्रपेदिरे
तस्मिंस्त्रयोदशाब्दानिरामस्यपरिनिर्य्ययुः २२७
गोदावर्य्यास्तटेरम्येपंचवट्यांमनोरमे
कस्यचित्त्वथकालस्यराक्षसीघोररूपिणी २२८
रावणस्यस्वसातत्रप्रविवेशदुरासदा
सातुदृष्ट्वारघुवरंकोटिकंदर्प्पसन्निभम् २२९
इंदीवरदलश्यामंपद्मपत्रायतेक्षणम्
प्रोन्नतांसंमहाबाहुंकम्बुग्रीवंमहाहनुम् २३०
संपूर्णचंद्रसदृशंसस्मिताननपंकजम्
भृंगावलिनिभैःस्निग्धैःकुटिलैःशीर्षजैर्वृतम् २३१
रक्तारविंदसदृशंपद्महस्ततलांकितम्
निष्कलंकेन्दुसदृशंनखपंक्तिविराजितम् २३२
स्निग्धकोमलदूर्वाभंसौकुमार्य्यनिधिंशुभम्
पीतकौशेयवसनंसर्वाभरणभूषितम् २३३
युवाकुमारवयसंजगन्मोहनविग्रहम्
दृष्ट्वातंराक्षसीरामंकंदर्प्पशरपीडिता २३४
अब्रवीत्समुपेत्याथरामंकमललोचनम्
राक्षस्युवाच-
कस्त्वंतापसवेषेणवर्त्तसेदंडकेवने २३५
आगतोऽसिकिमर्थंचराक्षसानांदुरासदे
शीघ्रमाचक्ष्वतत्त्वेननानृतंवक्तुमर्हसि २३६
महेश्वरउवाच-
इत्युक्तःसतदारामःसंप्रहस्याब्रवीद्वचः
रामउवाच-
राज्ञोदशरथस्याहंपुत्रोरामइतीरितः
असौममानुजोधन्वीलक्ष्मणोनामचानघः २३७
पत्नीचेयंचमेसीताजनकस्यात्मजाप्रिया
पितुर्वचननिर्देशादहंवनमिहागतः २३८

विचरामोमहारगयमृषीणांहितकाम्यया
आगतासिकिमर्थंत्वमाश्रमंममसुंदरि २३९
कात्वंकस्यकुलेजातासर्वंसत्यंवदस्वमे
महेश्वरउवाच-
इत्युक्तासातुरामेणप्राहवाक्यमशंकिता २४०
राक्षस्युवाच-
अहंविश्रवसः पुत्रीरावणस्यस्वसानृप
नाम्नाशुर्पणखानामत्रिषुलोकेषुविश्रुता २४१
इदंचदंडकारगयंभ्रात्रादत्तंममप्रभो
भक्षयन्नृषिसंघान्वैविचरामिमहावने २४२
त्वांतुदृष्ट्वामुनिवरंकंदर्पशर पीडिता
रंतुकामात्वयासार्द्धमागतास्मिसुनिर्भया २४३
ममत्वंनृपशार्दूलभर्ताभवितुमर्हसि
इमांतवसतींसीतांग्रसितुंभूपकामये २४४
वनेषुगिरिमुख्येषुरमयामित्वयासह
महेश्वरउवाच-
इत्युक्त्वाराक्षसीसीतांग्रसितुंवीक्ष्यचोद्यताम् २४५
श्रीरामःखङ्गमुद्यम्यनासाकर्णौप्रचिच्छिदे २४६
रुदंतीसभयंशीघ्रंराक्षसीविकृतानना
खरालयंप्रविश्याहतस्यरामस्यचेष्टितम् २४७
सतुराक्षससाहस्रैर्दूषणत्रिशिरोवृतः
आजगामभृशंयोद्धुंराघवंशत्रुसूदनः २४८
तान्रामःकाननेघोरेबाणःकालांतकोपमैः
निजघानमहाकायान्राक्षसांस्तत्रलीलया २४९
खरंत्रिशिरसंचैवदूषणंतुमहाबलम्
रणेनिपातयामासबाणैराशीविषोपमैः २५०
निहत्यराक्षसान्सर्वान्दंडकारगयवासिनः
पूजितःसुरसंघैश्चस्तूयमानोमहर्षिभिः २५१
उवासदंडकारगयेसीतयालक्ष्मणेनच
राक्षसानांवधंश्रुत्वारावणः क्रोधमूर्च्छितः २५२

आजगामजनस्थानंमारीचेनदुरात्मना
संप्राप्यपंचवट्यांतुदशग्रीवः सराक्षसः २५३
मायाविनामरीचेनमृगरूपेणरक्षसः
अपहृत्याश्रमाद्दूरेतौतुदशरथात्मजौ २५४
जहारसीतांरामस्यभार्यांस्ववधकांक्षया
ह्रियमाणांतुतांदृष्ट्वाजटायुर्गृध्रराड्बली २५५
रामस्यसौहृदात्तत्रयुयुधेतेनरक्षसा
तंहत्वाबाहुवीर्येणरावणंशत्रुवारणः २५६
प्रविवेशपुरींलंकांराक्षसैर्बहुभिर्वृताम्
अशोकवनिकामध्येनिःक्षिप्यजनकात्मजाम् २५७
निधनंरामबाणेनकांक्षयन्स्वगृहंविशत्
रामस्तुराक्षसंहत्वामारीचंमृगरूपिणम् २५८
पुनराविश्यतत्राथभ्रात्रासौमित्रिणाततः
राक्षसापहृतांभार्यांज्ञात्वादशरथात्मजः २५९
प्रभूतशोकसंतप्तोबिललापमहामतिः
मार्गमाणोवनेसीतांपथिगृध्रंमहाबलम् २६०
विच्छिन्नपादपक्षंचपतितंधरणीतले
रुधिरापूर्णसर्वांगंदृष्ट्वाविस्मयमागतः २६१
पप्रच्छराघवं श्रीमान्केनकिंत्वंजिघांसितः
गृध्रस्तुराघवंदृष्ट्वामंदमंदमुवाचह २६२
गृध्रउवाच-
रावणेनहृतारामतवभार्याबलीयसा
तेनराक्षसमुख्येनसंग्रामेनिहतोस्म्यहम् २६३
महेश्वरउवाच-
इत्युक्त्वाराघवस्याग्रेसहसात्यक्तजीवितः
संस्कारमकरोद्रामस्तस्यब्रह्मविधानतः २६४
स्वपदंचददौतस्मैयोगिगम्यंसनातनम्
राघवस्यप्रसादेनसगृध्रःपरमंपदम् २६५
हरेःसामान्यरूपेणमुक्तिंप्रापखगोत्तमः
माल्यवंतंततोगत्वामतंगस्याश्रमेशुभे २६६

अभिगम्यमहाभागांशबरींधर्मचारिणीम्
सातुभागवतश्रेष्ठादृष्ट्वातौरामलक्ष्मणौ २६७
प्रत्युद्गम्यनमस्कृत्वानिवेश्यकुशविष्टरे
पादप्रक्षालनंकृत्वावन्यैःपुष्पैःसुगंधिभिः २६८
अर्चयामासभक्त्यावैहर्षनिर्भरमानसा
फलानिचसुगंधीनिमूलानिमधुराणिच २६९
निवेदयामासतदाराघवाभ्यांदृढव्रता
फलान्यास्वाद्यकाकुत्स्थस्तस्यैमुक्तिंददौपराम् २७०
ततः पंपासरोगत्वाराघवः शत्रुसूदनः
जघानराक्षसंतत्रकबंधंघोररूपिणम् २७१
तंनिहत्यमहावीर्योददाहस्वर्गतश्चसः
ततोगोदावरींगत्वारामोराजीवलोचनः २७२
पप्रच्छसीतांगंगेत्वंकिंतांजानासिमे प्रियाम्
नशशंसतदातस्मैसागंगातमसावृता २७३
शशापराघवः क्रोधाद्रक्ततोयाभवेतिताम्
ततोभयात्समुद्विग्नापुरस्कृत्यमहामुनीन् २७४
कृतांजलिपुटादीनाराघवंशरणंगता
ततोमहर्षयस्सर्वेरामंप्राहुस्सनातनम् २७५
ऋषयऊचुः-
त्वत्पादकमलोद्भूतागंगात्रैलोक्यपावनी
त्वमेवहिजगन्नाथतांशापान्मोक्तुमर्हसि २७६
महेश्वरउवाच-
ततः प्रोवाचधर्मात्मारामः शरणवत्सलः
रामउवाच-
शवर्याः स्नानमात्रेणसंगताशुभवारिणा
मुक्ताभवतुमच्छापाद्गंगेयंपापनाशिनी २७७
एवमुक्त्वातुकाकुत्स्थः शबरीतीर्थमुत्तमम्
गंगागयासमंचक्रेशार्ङ्गकोट्यामहाबलः २७८
महाभागवतानांचतीर्थंयस्योदकेऽभवत्
तच्छरीरंजगद्वंद्यंभविष्यतिनसंशयः २७९

एवमुक्त्वातुकाकुत्स्थऋृष्यमूकंगिरिंययौ
ततः पंपासरस्तीरेवानरेणहनूमता २८०
संगतस्तस्यवचनात्सुग्रीवेणसमागतः
सुग्रीववचनाद्धत्वावालिनंवानरेश्वरम् २८१
सुग्रीवमेवतद्राज्येरामोसावभ्यषेचयत्
सतुसंप्रेषयामासदिदृक्षुर्जनकात्मजाम् २८२
हनुमत्प्रमुखान्वीरान्वानरान्वानराधिपः
सलंघयित्वाजलधिंहनूमान्मारुतात्मजः २८३
प्रविश्यनगरींलंकांदृष्ट्वासीतांदृढव्रताम्
उपवासकृशांदीनांभृशंशोकपरायणाम् २८४
मलपंकेनदिग्धांगींमलिनाम्बरधारिणीम्
निवेदयित्वाऽभिज्ञानंप्रवृत्तिंचनिवेद्यताम् २८५
सप्तमंत्रिसुतांस्तत्ररावणस्यसुतंतथा
तोरणस्तंभमुत्पाट्यनिजघानस्वयंकपिः २८६
समाश्वास्यचवैदेहींबभंजोपबनंतदा
वनपालान्किंकरांश्चपंचसेनाग्रनायकान् २८७
रावणस्यसुतेनाथनिगृहीतोयदृच्छया
दृष्ट्वाचराक्षसेंद्रंतुसंभाषित्वातथैवच २८८
ददाहनगरींलंकांस्वलांगूलाग्निनाकपिः
तयादत्तमभिज्ञानंगृहीत्वापुनरागमत् २८९
सोऽभिगम्यमहातेजारामंकमललोचनम्
न्यवेदयद्वानरेंद्रोदृष्टासीतेतितत्वतः २९०
सुग्रीवसहितोरामोवानरैर्बहुभिर्वृतः
महोदधेस्तटंगत्वातत्रानीकंन्यवेशयत् २९१
रावणस्यानुजोभ्राताविभीषणइतीरितः
धर्मात्मासत्यसंधश्चमहाभागवतोत्तमः२९२
ज्ञात्वासमागतंरामंपरित्यज्यस्वपूर्वजम्
राज्यंसुतांश्चदारांश्चराघवंशरणंययौ २९३
परिगृह्यचतंरामोमारुतेर्वचनात्प्रभुः
तस्मैदत्वाऽभयंसौम्यंरक्षोराज्येऽभ्यषेचयत् २९४

ततस्समुद्रंकाकुत्स्थस्तर्तुकामः प्रपद्यवै
सुप्रसन्नजलंतंतुदृष्ट्वारामोमहाबलः २९५
शार्ङ्गमादायबाणौघैः शोषयामासवारिधिम्
ततस्तुसरितामीशःकाकुत्स्थंकरुणानिधिम् २९६
प्रपद्यशरणंदेवमर्चयामासवारिधिः
पुनरापूर्यजलधिंवरुणास्त्रेणराघवः २९७
उदधेर्वचनात्सेतुंसागरेमकरालये
गिरिभिर्वानरानीतैर्नलःसेतुमकारयत् २९८
ततो गत्वापुरींलंकांसन्निवेश्यमहाबलम्
सम्यगायोधनंचक्रेवानराणांचरक्षसाम् २९९
ततोदशास्यतनयःशक्रजिद्राक्षसोबली
वबंधनागपाशैश्चतावुभौरामलक्ष्मणौ ३००
वेनतेयःसमागत्यतान्यस्त्राणिप्रमोचयत्
राक्षसानिहतास्सर्वेवानरैश्चमहाबलैः ३०१
रावणस्यानुजंवीरंकुंभकर्णमहाबलम्
निजघानरणेरामोबाणैरग्निशिखोपमैः ३०२
ब्रह्मास्त्रेणेन्द्रजित्क्रुद्धःपातयामासवानरान्
हनूमतासमानीतोमहौषधिमहीधरः ३०३
तस्यानीतस्यचस्पर्शात्सर्वएवसमुत्थिताः
ततोरामानुजोवीरःशक्रजेतारमाहवे ३०४
निपातयामासशरैर्वृत्रंवज्रधरोयथा
निर्ययावथपौलस्त्योयोद्धुंरामेणसंयुगे ३०५
चतुरंगबलैःसार्द्धंमंत्रिभिश्चमहाबलः
समंततोभवद्युद्धंवानराणांचरक्षसाम् ३०६
रामरावणयोश्चैवतथासौमित्रिणासह
शक्त्यानिपातयामासलक्ष्मणंराक्षसेश्वरः ३०७
ततः क्रुद्धोमहातेजाराघवोराक्षसांतकः
जघानराक्षसान्वीराञ्शरैःकालांतकोपमैः ३०८
प्रदीप्तैर्बाणसाहस्रैःकालदंडोपमैर्भृशम्
छादयामासकाकुत्स्थोदशग्रीवंचराक्षसम् ३०९

सतुनिर्भिन्नसर्वांगोराघवास्त्रैर्निशाचरः
भयात्प्रदुद्रावरणाल्लंकांप्रतिनिशाचरः ३१०
जगद्राममयंपश्यन्निर्वेदाद्गृहमाविशत्
ततोहनूमतानीतोमहौषधिमहागिरिः ३११
तेनरामानुजस्तूर्णंलब्धसंज्ञोऽभवत्तदा
दशग्रीवस्ततोहोममारेभेजयकांक्षया ३१२
ध्वंसितंवानरेंद्रैस्तदभिचारात्मकंरिपोः
पुनर्युद्धायपौलस्त्योरामेणसह निर्ययौ ३१३
दिव्यस्यन्दनमारुह्यराक्षसैर्बहुभिर्युतः
ततः शतमखोदिव्यंरथंहर्यश्वसंयुतम् ३१४
राघवायससूतंहिप्रेषयामासबुद्धिमान्
रथंमातलिनानीतंसमारुह्यरघूत्तमः ३१५
स्तूयमानं सुरगणैर्युयुधेतेनरक्षसा
ततोयुद्धमभूद्घोरंरामरावणयोर्महत् ३१६
सप्ताह्निकमहोरात्रंशस्त्रास्त्रैरतिभीषणम्
विमानस्थाःसुरास्सर्वेददृशुस्तत्रसंयुगम् ३१७
दशग्रीवस्यचिच्छेदशिरांसिरघुसत्तमः
समुत्थितानिबहुशोवरदानात्कपर्दिनः ३१८
ब्राह्ममस्त्रंमहारौद्रंवधायास्यदुरात्मनः
ससर्जराघवस्तूर्णंकालाग्निसदृशप्रभम् ३१९
तदस्त्रंराघवोत्सृष्टंरावणस्यस्तनांतरम्
विदार्यधरणींभित्त्वारसातलतलेगतम् ३२०
संपूज्यमानंभुजगैराघवस्यकरंययौ
सगतासुर्महादैत्यःपपातचममारच ३२१
ततो देवगणास्सर्वेहर्षनिर्भरमानसाः
ववृषुःपुष्पवर्षाणिमहात्मनिजगद्गुरौ ३२२
जगुर्गंधर्वपतयोननृतुश्चाप्सरोगणाः
ववुःपुण्यास्तथा वाताः सुप्रभोऽभूद्दिवाकरः ३२३
तुष्टुवुर्मुनयःसिद्धादेवगंधर्वकिन्नराः
लंकायांराक्षसश्रेष्ठमभिषिच्यविभीषणम् ३२४

कृतकृत्यमिवात्मानंमेनेरघुकुलोत्तमः
रामस्तत्राब्रवीद्वाक्यमभिषिच्यविभीषणम् ३२५
रामउवाच-
यावच्चंद्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी
यावन्ममकथालोकेतावद्राज्यंविभीषणे ३२६
गत्वाममपदंदिव्यंयोगिगम्यंसनातनम्
सपुत्रपौत्रःसगणःसंप्राप्नुहिमहाबलः ३२७
ईश्वरउवाच-
एवंदत्वावरंतस्मैराक्षसायमहाबलः
संप्राप्यमैथिलद्यंतत्रपरुषंजनसंसदि ३२८
उवाचराघवः सीतांगर्हितंवचनंबहु
सातेनगर्हितासाध्वीविवेशचानलंमहत् ३२९
ततोदेवगणास्सर्वेशिवब्रह्मपुरोगमाः
दृष्ट्वातुमातरंवह्नौप्रविशंतींभयातुराः
समागम्यरघुश्रेष्ठंसर्वेप्रांजलयोऽब्रुवन् ३३०
देवाऊचुः-
रामराममहाबाहोशृणुत्वंचातिविक्रम
सीतातिविमलासाध्वीतवनीत्यानपायिनी ३३१
अत्याज्यातुवृथासाहि भास्करेणप्रभायथा
सेयंलोकहितार्थायसमुत्पन्नामहीतले ३३२
मातासर्वस्यजगतः समस्तजगदाश्रया
रावणःकुंभकर्णश्चभृत्यौपूर्वपरायणौ ३३३
शापात्तौसनकादीनांसमुत्पन्नौमहीतले
तयोर्विमुक्त्यैवैदेहीगृहीतादराडकेवने ३३४
तावुभौवैवधंप्राप्तौत्वयाराक्षसपुंगवौ
तौविमुक्तौदिवंयातौपुत्रपौत्रसहानुगौ ३३५
त्वंविष्णुस्त्वंपरंब्रह्मयोगिध्येयःसनातनः
त्वमेवसर्वदेवानामनादिनिधनोऽव्ययः ३३६
त्वंहिनारायणः श्रीमान्सीतालक्ष्मीःसनातनी
मातासासर्वलोकानांपितात्वंपरमेश्वर ३३७

नित्यैवैषजगन्मातातवनित्यानपायिनी
यथासर्वगतस्त्वंहितथा चेयंरघूत्तम ३३८
तस्माच्छुद्धसमाचारांसीतांसाध्वींदृढव्रताम्
गृहाणसौम्यकाकुत्स्थक्षीराब्धेरिवमाचिरम् ३३९
ईश्वरउवाच–
एतस्मिन्नंतरेतत्रलोकसाक्षीसपावकः
आदायसीतांरामायप्रददौसुरसन्निधौ
अब्रवीत्तत्रकाकुत्स्थंवह्निःसर्वशरीरगः ३४०
वह्निरुवाच–
इयंशुद्धसमाचारासीतानिष्कल्मषाविभो
गृहाणमाचिरंरामसत्यंसत्यंतवाब्रुवन् ३४१
ईश्वरउवाच–
ततोऽग्निवचनात्सीतांपरिगृह्यरघूद्वहः
बभूवरामःसंहृष्टःपूज्यमानः सुरोत्तमैः ३४२
राक्षसैर्निहतायेतुसंग्रामेवानरोत्तमाः
पितामहवरात्तूर्णंजीवमानाः समुत्थिताः ३४३
ततस्तुपुष्पकंनामविमानंसूर्यसन्निभम्
भ्रात्रागृहीतंसंग्रामेकौबेरंराक्षसेश्वरः ३४४
तद्राघवायप्रददौवस्त्राण्याभरणानिच
तेनसंपूजितः श्रीमान्रामचंद्रःप्रतापवान् ३४५
आरुरोहविमानाग्र्यंवैदेह्याभार्ययासह
लक्ष्मणेनचशूरेणभ्रात्रादशरथात्मजः ३४६
ऋक्षवानरसंघातैः सुग्रीवेण महात्मना
विभीषणेनशूरेणराक्षसैश्चमहाबलैः ३४७
यथाविमानेवैकुंठेनित्यमुक्तैर्महात्मभिः
तथासर्वेसमारुह्यऋक्षवानरराक्षसाः ३४८
अयोध्यांप्रस्थितोरामःस्तूयमानः सुरोत्तमैः
भरद्वाजाश्रमंगत्वारामः सत्यपराक्रमः ३४९
भरतस्यांतिकेतत्रहनूमंतंव्यसर्जयत्
सनिषादालयं गत्वागुहंदृष्ट्वाऽथवैष्णवम् ३५०

राघवागमनंतस्मैप्राहवानरपुंगवः
नंदिग्रामंततोगत्वादृष्ट्वातंराघवानुजम् ३५१
न्यवेदयत्तथातस्मैरामस्यागमनोत्सवम्
भरतश्चागतंश्रुत्वावानरेणरघूत्तमम् ३५२
प्रहर्षमतुलंलेभेसानुजःससुहृज्जनः
पुनरागत्यकाकुत्स्थंहनूमान्मारुतात्मजः ३५३
सर्वंशशंसरामायभरतस्यचवर्तितम्
राघवस्तुविमानाग्र्यादवरुह्यसहानुजः ३५४
ववंदेभार्ययासार्द्धंभारद्वाजंतपोनिधिम्
सतुसंपूजयामासकाकुत्स्थंसानुजंमुनिः ३५५
पक्वान्नैःफलमूलाद्यैर्वस्त्रैरामभरणैरपि
तेनसंपूजितस्तत्रप्रणम्यमुनिसत्तमम् ३५६
अनुज्ञातः समारुह्यपुष्पकंसानुगस्तदा
नंदिग्रामंययौरामःपुष्पकेणसुहृद्वृतः ३५७
मंत्रिभिःपौरमुख्यैश्चसानुजः केकयीसुतः
प्रत्युद्ययौनृपवरैः सबलैःपूर्वजंमुदा ३५८
संप्राप्यरघुशार्दूलंववंदेसानुगैर्वृतः
पुष्पकादवरुह्याथराघवःशत्रुतापनः ३५९
भरतंचैवशत्रुघ्नमुपसंपरिषस्वजे
पुरोहितंवसिष्ठंचमातृबृद्धांश्चबांधवान् ३६०
प्रणनाममहातेजाःसीतयालक्ष्मणेनच
बिभीषणंचसुग्रीवंजाम्बवंतंतथांगदम् ३६१
हनुमंतंसुषेणंचभरतः परिषस्वजे
भ्रातृभिःसानुगैस्तत्रमंगलस्नानपूर्वकम् ३६२
दिव्यमाल्यांबरधरोदिव्यगंधानुलेपनः
आरुरोहरथंदिव्यंसुमंत्राधिष्ठितंशुभम् ३६३
संस्तूयमानस्त्रिदशैर्वैदेह्यालक्ष्मणेनच
भरतश्चैवसुग्रीवः शत्रुघ्नश्चविभीषणः ३६४
अङ्गदश्चसुषेणश्चजाम्बवान्मारुतात्मजः
नीलोनलश्चसुभगः शरभोगंधमादनः ३६५

अन्येचकपयःशूरानिषादाधिपतिर्गुहः
राक्षसाश्चमहावीर्याःपार्थिवेंद्रामहाबलाः ३६६
गजानश्वानथोसम्यगारुह्यबहुशःशुभान्
नानामंगलवादित्रैःस्तुतिभिःपुष्कलैस्तथा ३६७
ऋक्षवानररक्षोभिर्निषादवरसैनिकैः
प्रविवेशमहातेजाःसाकेतंपुरमव्ययम् ३६८
आलोक्यराजनगरींपथिराजपुत्रोराजानमेवपितरंपरिचिंतयानः
सुग्रीवमारुतिबिभीषणपुण्यपादसंचारपूतभवनंप्रविवेशरामः ३६९
इतिश्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वरसंवादेरामस्यायोध्याप्रवेशोनामद्विचत्वारिंशदधिकद्विशततमोऽध्यायः २४२

## त्रिचत्वारिंशदधिक द्विशततमोऽध्यायः

शंकरउवाच-
अथतस्मिन्दिनेपुण्येशुभलग्नेशुभान्विते
मंगलस्याभिषेकार्थंमंगलंचक्रिरेजनाः १
वसिष्ठोवामदेवश्चजाबालिरथकश्यपः
मार्कंडेयश्चमौद्गल्यःपर्वतोनारदस्तथा २
एतेमहर्षयस्तत्रजपहोमपुरस्सरम्
अभिषेकंशुभंचक्रुर्मुनयोराजसत्तमम् ३
नानारत्नमयेदिव्येहेमपीठेशुभान्विते
निवेश्यसीतयासार्द्धंश्रियाइवजनार्दनम् ४
सौवर्णकलशैर्दिव्यैर्नानारत्नमयैःशुभैः
सर्वतीर्थोदकैःपुण्यैर्माङ्गल्यद्रव्यसंयुतैः ५
दूर्वाग्रतुलसीपत्रपुष्पगंधसमन्वितैः
मंत्रपूतजलैःशुद्धैर्मुनयःसंशितव्रताः ६
अजपन्वैष्णवान्सूक्तान्चतुर्वेदमयान्शुभान्
अभिषेकंशुभंचक्रुःकाकुत्स्थंजगतःपतिम् ७
तस्मिन्शुभतमेलग्नेदेवदुंदुभयोदिवि
विनेदुःपुष्पवर्षाणिववृषुश्चसमंततः ८
दिव्यांबरैर्भूषणैश्चदिव्यगंधानुलेपनैः

पुष्पैर्नानाविधैर्दिव्यैर्देव्यासहरघूद्वहः ९
अलंकृतश्चशुशुभेमुनिभिर्वेदपारगैः
छत्रंचचामरंदिव्यंधृतवान्लक्ष्मणस्तदा १०
पार्श्वेभरतशत्रुघ्नौतालवृंतौविरेजतुः
दर्पणंप्रददौश्रीमान्राक्षसेंद्रोविभीषणः ११
दधारपूर्णकलशंसुग्रीवोवानरेश्वरः
जाम्बवांश्चमहातेजाःपुष्पमालांमनोहराम् १२
वालिपुत्रस्तुतांबूलंसकर्पूरंददौहरेः
हनुमान्दीपकांदिव्यांसुषेणश्चध्वजंशुभम् १३
परिवार्यमहात्मानंमंत्रिणः समुपासिरे
सृष्टिर्जयंतोविजयःसौराष्ट्रोराष्ट्रवर्द्धनः १४
अकोपोधर्मपालश्चसुमंत्रोमंत्रिणः स्मृताः
राजानश्चनरव्याघ्रानानाजनपदेश्वराः १५
पौराश्चनैगमावृद्धाराजानंपर्युपासत
ऋक्षैश्चवानरेंद्रैश्चमंत्रिभिःपृथिवीश्वरैः १६
राक्षसैर्द्विजमुख्यैश्चकिंकरैश्चसमावृतः
परेव्योम्नियथालीनोदैवतैः कमलापतिः १७
तथानृपवरःश्रीमान्साकेतेशुशुभेतदा
इंदीवरदलश्यामंपद्मपत्रनिभेक्षणम् १८
आजानुबाहुंकाकुत्स्थंपीतवस्त्रधरंहरिम्
कंबुग्रीवंमहोरस्कंविचित्राभरणैर्युतम् १९
देव्यासहसमासीनमभिषिक्तंरघूत्तमम्
विमानस्थाःसुरगणाहर्षनिर्भरमानसाः २०
तुष्टुवुर्जयशब्देनगंधर्वाप्सरसांगणाः
अभिषिक्तस्ततोरामोवसिष्ठाद्यैर्महर्षिभिः २१
शुशुभेसीतयादेव्यानारायणइवश्रिया
अतिमर्त्यतयाभीतउपासितुंपदांबुजम् २२
दृष्ट्वातुष्टावहृष्टात्माशंकरोहृष्टमागतः
कृतांजलिपुटोभूत्वासानंदोगद्गदाकुलः
हर्षयन्सकलान्देवान्मुनीनपिचवानरान् २३

महादेवउवाच-
नमोमूलप्रकृतयेनित्यायपरमात्मने
सच्चिदानंदरूपायविश्वरूपायवेधसे २४
नमोनिरंतरानंदकन्दमूलायविष्णवे
जगत्त्रयकृतानंदमूर्त्तयेदिव्यमूर्त्तये २५
नमो ब्रह्मेंद्रपूज्यायशंकराभयदायच
नमोविष्णुस्वरूपायसर्वरूपनमोनमः २६
उत्पत्तिस्थितिसंहारकारिणेत्रिगुणात्मने
नमोस्तुनिर्गतोपाधिस्वरूपायमहात्मने २७
अनयाविद्ययादेव्यासीतयोपाधिकारिणे
नमःपुंप्रकृतिभ्यांचयुवाभ्यांजगतांकृते २८
जगन्मातापितृभ्यांचजनन्यैराघवायच
नमःप्रपंचरूपिण्यैनिष्प्रपंचस्वरूपिणे २९
नमोध्यानस्वरूपिण्यैयोगिध्येयात्ममूर्त्तये
परिणामापरीणामरिक्ताभ्यांचनमोनमः ३०
कूटस्थबीजरूपिण्यैसीतायैराघवायच
सीतालक्ष्मीर्भवान्विष्णुःसीतागौरीभवान्शिवः ३१
सीतास्वयंहिसावित्रिभवान्ब्रह्माचतुर्मुखः
सीताशचीभवान्शक्रःसीतास्वाहानलोभवान् ३२
सीतासंहारिणीदेवीयमरूपधरोभवान्
सीताहिसर्वसम्पत्तिःकुबेरस्त्वंरघूत्तम ३३
सीतादेवीचरुद्राणीभवान्रुद्रोमहाबलः
सीतातुरोहिणीदेवीचंद्रस्त्वंलोकसौख्यदः ३४
सीतासंज्ञाभवान्सूर्यःसीतारात्रिर्दिवाभवान्
सीतादेवीमहाकालीमहाकालोभवान्सदा ३५
स्त्रीलिङ्गेषुत्रिलोकेषुयत्तत्सर्वंहिजानकी
पुन्नामलांछितंयत्तुतत्सर्वंहिभवान्प्रभो ३६
सर्वत्रसर्वदेवेशसीतासर्वत्रधारिणी
तदात्वमपिचत्रातुंतच्छक्तिर्विश्वधारिणी ३७
तस्मात्कोटिगुणंपुण्यंयुवाभ्यांपरिचिह्नितम्

चिह्नितंशिवशक्तिभ्यांचरितं तवशांतिदम् ३८
आवांरामजगत्पूज्यौममपूज्यौसदायुवाम्
त्वन्नामजापिनीगौरीत्वन्मंत्रजपवानहम् ३९
मुमूर्षोर्मणिकरार्यांतुअर्द्धोदकनिवासिनः
अहंदिशामितेमंत्रंतारकंब्रह्मदायकम् ४०
अतस्त्वंजानकीनाथपरब्रह्मासिनिश्चितम्
त्वन्मायामोहितास्सर्वेनत्वांजानंतितत्वतः ४१
ईश्वरउवाच-
इत्युक्तःशंभुनारामः प्रसादप्रवणोऽभवत्
दिव्यरूपधरः श्रीमानद्भुताद्भुतदर्शनः ४२
तथातंरूपमालोक्यनरवानरदेवताः
नद्रष्टुमपिशक्तास्तेतेजसंमहदद्भुतम् ४३
भयाद्वैत्रिदशश्रेष्ठाः प्रणेमुश्चातिभक्तितः
भीताविज्ञायरामोऽपिनरवानरदेवताः
मायामानुषतांप्राप्य सदेवानब्रवीत्पुनः ४४
रामचंद्रउवाच-
शृणुध्वंदेवतायोमांप्रत्यहंसंस्तुविष्यति
स्तवेनशंभुनोक्तेनदेवतुल्योभवेन्नरः ४५
विमुक्तःसर्वपापेभ्योमत्स्वरूपंसमश्नुते
रणेजयमवाप्नोतिनक्वचित्प्रतिहन्यते ४६
भूतवेतालकृत्याभिर्ग्रहैश्चापिनबाध्यते
अपुत्रोलभतेपुत्रंपतिं विंदतिकन्यका ४७
दरिद्रःश्रियमाप्नोतिसत्ववान्शीलवान्भवेत्
आत्मतुल्यबलः श्रीमाञ्जायतेनात्रसंशयः ४८
निर्विघ्नंसर्वकार्येषुसर्वारंभेषुवैनृणाम्
यंयंकामयतेमर्त्यःसुदुर्लभमनोरथम् ४९
षरामासात्सिद्धिमाप्नोतिस्तवस्यास्यप्रसादतः
यत्पुरायंसर्वतीर्थेषुसर्वयज्ञेषुयत्फलम्
तत्फलंकोटिगुणितंस्तवेनानेनलभ्यते ५०
ईश्वरउवाच-

इत्युक्त्वारामचंद्रोऽसौविससर्जमहेश्वरम्
ब्रह्मादित्रिदशान्सर्वान्विससर्जसमागतान् ५१
अर्चितामानवाःसर्वेनरवानरदेवताः
विसृष्टारामचंद्रेणप्रीत्यापरमयायुताः ५२
इत्थंविसृष्टाःखलुतेचसर्वेसुखंतदाजग्मुरतीवहृष्टाः
परंपठंतः स्तवमीश्वरोक्तंरामंस्मरंतोवरविश्वरूपम् ५३
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर
संवादेविश्वदर्शनंनामत्रिचत्वारिंशदधिकद्विशततमोऽध्यायः २४३

## चतुश्चत्वारिंशदधिक द्विशततमोऽध्यायः

शंकरउवाच-
अथरामस्तुवैदेह्याराज्यभोगान्मनोरमान्
बुभुजेवर्षसाहस्रंपालयन्सर्वतोदिशः १
अंतःपुरजनास्सर्वेराक्षसस्यगृहेस्थिताम्
गर्हयंतिस्मवैदेहींतथाजानपदाजनाः २
लोकापवादभीत्याचरामः शत्रुनिवारकः
दर्शयन्मानुषंधर्ममंतर्वत्नींनृपात्मजाम् ३
वाल्मीकेराश्रमेपुण्येगंगातीरेमहावने
विससर्जमहातेजागर्भिणींमुनिसंसदि ४
साभर्तुःपरतंत्राहिउवासमुनिवेश्मनि
अर्चितामुनिपत्नीभिर्वाल्मीकमुनिरक्षिता ५
तत्रैवासूतयमलौनाम्नाकुशलवौसुतौ
तौचतत्रैवमुनिनासंस्कृतौचववर्धतुः ६
रामोऽपिभ्रातृभिस्सार्द्धंपालयामासमेदिनीम्
यमादिगुणसम्पन्नस्सर्वभोगविवर्जितः ७
अर्चयन्सततंविष्णुमनादिनिधनंहरिम्
ब्रह्मचर्यपरोनित्यंशशासपृथिवींनृपः ८
शत्रुघ्नोलवणंहत्वामथुरांदेवनिर्मिताम्
पालयामासधर्मात्मापुत्राभ्यांसहराघवः ९
गंधर्वान्भरतोहत्वासिंधोरुभयपार्श्वतः

स्वात्मजौस्थापयामासतस्मिन्देशेमहाबलौ १०
पश्चिमेमद्रदेशेतुमद्रान्हत्वाचलन्दमणः
स्वसुतौचमहावीर्यौअभिषिच्यमहाबलः ११
गत्वापुनरयोध्यांतुरामपादावुपस्पृशत्
ब्राह्मणस्यमृतंबालंकालधर्ममुपागतम् १२
जीवयामासकाकुत्स्थः शूद्रंहत्वाचतापसम्
ततस्तुगौतमीतीरेनैमिषेजनसंसदि १३
इयाजवाजिमेधंचराघवः  परवीरहा
कांचनींजानकींकृत्वातयासार्द्धंमहाबलः १४
चकारयज्ञान्बहुशोराघवः परमार्थवित्
अयुतान्यश्वमेधानिवाजपेयानिचप्रभुः १५
अग्निष्टोमंविश्वजितंगोमेधंचशतक्रतुम्
चकारविविधान्यज्ञान्परिपूर्णसदक्षिणान् १६
एतस्मिन्नंतरेतत्रवाल्मीकिः सुमहातपाः
सीतामानीयकाकुत्स्थमिदंवचनमब्रवीत् १७
वाल्मीकिरुवाच-
अपापांमथिलद्यंरामत्यक्तुंनार्हसिसुव्रत
इयंतुविरजासाध्वीभास्करस्यप्रभायथा
अनन्यातवकाकुत्स्थकस्मात्त्यक्तात्वयानघ १८
रामउवाच-
अपापांमैथिलद्यंब्रह्मन्जानामिवचनात्तव
रावणेनहृतासाध्वीदराडकेविजनेपुरा १९
तंहत्वासमरेसीतांशुद्धामग्निमुखागताम्
पुनर्यातोस्म्ययोध्यायांसीतामादायधर्मतः २०
लोकापवादः सुमहानभूत्पौरजनेषुच
त्यक्तामयाशुभाचारातद्भयात्तवसन्निधौ २१
तस्माल्लोकस्यसंतुष्ट्यैसीताममपरायणा
पार्थिवानांमहर्षीणांप्रत्ययंकर्तुमर्हति २२
महेश्वरउवाच-
एवमुक्तातदासीतामुनिपार्थिवसंसदि

चकारप्रत्ययंदेवीलोकाश्चर्यकरंसती २३
दर्शयंस्तस्यलोकस्यरामस्यानन्यतांसती
अब्रवीत्प्रांजलिसीतासर्वेषांजनसंसदि २४
सीतोवाच-
यथाऽहराघवादन्यंमनसापिनचिंतये
तथामेधरणीदेवीविवरन्दातुमर्हति २५
यथैवसत्यमुक्तंमेवेद्मिरामात्परंनच
तथास्वपुत्र्यांवैदेह्यांधरणीसहसाइयात् २६
महेश्वरउवाच-
ततोरत्नमयंपीठंपृष्ठेधृत्वाखगेश्वरः
रसातलात्तदावीरोविज्ञायजननींतदा २७
ततस्तुधरणीदेवीहस्ताभ्यांगृह्यमैथिलीम्
स्वागतेनाभिनंद्यैनामासनेसंन्यवेशयत् २८
सीतांसमागतांदृष्ट्वादिविदेवगणाभृशम्
पुष्पवृष्टिमविच्छिन्नांदिव्यांसीतामवाकिरन् २९
सापिदिव्याप्सरोभिस्तुपूज्यमानासनातनी
वैनतेयंसमारुह्यतस्मान्मार्गाद्दिवंययौ ३०
दासीगणैः पूर्वभागेसंवृताजगदीश्वरी
संप्राप्यपरमंधामयोगिगम्यंसनातनम् ३१
रसातलप्रविष्टांतुतांदृष्ट्वासर्वमानुषाः
साधुसाध्वितिसीतेयमुच्चैःसर्वेप्रचुक्रुशुः ३२
रामःशोकसमाविष्टःसंगृह्यतनयावुभौ
मुनिभिःपार्थिवेंद्रैश्चसाकेतंप्रविवेशह ३३
अथकालेनमहतामातरः संशितव्रताः
कालधर्मंसमापन्नाभर्तुःस्वर्गंप्रपेदिरे ३४
दशवर्षसहस्त्राणिदशवर्षशतानिच
चकारराज्यंधर्मेणराघवःसंशितव्रतः ३५
कस्यचित्त्वथकालस्यराघवस्यनिवेशनम्
कालस्तापसरूपेणसंप्राप्तोवाक्यमब्रवीत् ३६
कालउवाच-

रामराममहाबाहोधात्रासंप्रेषितोऽस्म्यहम्
यद्ब्रवीमिरघुश्रेष्ठतच्छृणुष्वमहामते ३७
द्वन्द्वमेवहिकार्यंस्यादावयोः परिभाषितम्
तदंतरेप्रविष्टोयस्सवद्ध्योहिभविष्यति ३८
महेश्वरउवाच-
तथेतिचप्रतिश्रुत्यरामोराजीवलोचनः
द्वास्थंकृत्वातुसौमित्रिंकालोवाक्यमभाषत
वैवस्वतोऽब्रवीद्वाक्यंरामंदशरथात्मजम् ३९
कालउवाच-
शृणुरामयथावृत्तंसमागमनकारणात्
दशवर्षसहस्राणिदशवर्षशतानिच ४०
वसामिमानुषेलोकेहत्वाराक्षसपुंगवौ
एवमुक्तःसुरगणैरवतीर्णोसिभूतले ४१
तदयंसमयः प्राप्तःस्वर्लोकंगमितुंत्वया
सनाथाहिसुरास्सर्वेभवंत्वद्यत्वयानघ ४२
महेश्वरउवाच-
एवमस्त्वितिकाकुत्स्थोरामः प्राहमहामुनिम्
एतस्मिन्नंतरेतत्रदुर्वासास्तुमहातपाः ४३
राजद्वारमुपागम्यलक्ष्मणंवाक्यमब्रवीत्
दुर्वासाउवाच-
मांनिवेदयकाकुत्स्थंशीघ्रंगत्वानृपात्मज ४४
महेश्वरउवाच-
तमब्रवील्लक्ष्मणस्तुअसांनिध्यमितिद्विज
ततःक्रोधसमाविष्टःप्राहतंमुनिसत्तमः ४५
दुर्वासाउवाच-
शापंदास्यामिकाकुत्स्थंरामंनयदिदर्शये
महेश्वरउवाच-
तस्माच्छापभयाद्विप्रंराघवायन्यवेदयत्
तत्रैवांतर्दधेकालः सर्वभूतभयावहः ४६
पूजयामासतंप्राप्तमृषिंदुर्वाससंनृपः

अग्रजस्यप्रतिज्ञातंविज्ञायरघुसत्तमः ४७
तत्याजमानुषंरूपंलक्ष्मणः सरयूजले
विसृज्यमानुषंरूपंप्रविवेशस्वकांतनुम् ४८
फणासहस्रसंयुक्तः कोटींदुसमवर्चसः
दिव्यमाल्यांबरधरोदिव्यगंधानुलेपनः ४९
नागकन्यासहस्रैस्तुसंवृतःसमलंकृतः
विमानंदिव्यमारुह्यप्रययौवैष्णवंपदम् ५०
लक्ष्मणस्यगतिंसर्वांविदित्वारघुसत्तमः
स्वयमप्यथकाकुत्स्थःस्वर्गंगंतुमभीप्सितः ५१
अभिषिच्याथकाकुत्स्थःस्वात्मजौचकुशीलवौ
विभज्यरथनागाश्वंसधनंप्रददौतयोः ५२
कुशवत्यांकुशंतंचशरवत्यांलवंतथा
स्थापयामासधर्मेणराज्येस्वेरघुसत्तमः ५३
अभिप्रायंतुविज्ञायरामस्यविदितात्मनः
आजग्मुर्वानराः सर्वेराक्षसाः सुमहाबलाः ५४
विभीषणोऽथसुग्रीवोजाम्बवान्मारुतात्मजः
नीलोनलःसुषेणश्चनिषादाधिपतिर्गुहः ५५
अभिषिच्यसुतौवीरौशत्रुघ्नश्चमहामनाः
सर्वएतेसमाजग्मुरयोध्यांरामपालिताम् ५६
तेप्रणम्यमहात्मानमूचुःप्रांजलयस्तथा
वानरप्रभृतयऊचुः -
स्वर्लोकंगंतुमुद्युक्तंज्ञात्वात्वांरघुसत्तम ५७
आगताःस्मवयंसर्वेतवानुगमनंप्रति
नशक्ताःस्मक्षणंरामजीवितुंत्वांविनाप्रभो
तस्मात्त्वयाविशालाक्षगच्छामस्त्रिदशालयम् ५८
महेश्वरउवाच-
तैरेवमुक्तःकाकुत्स्थोबाढमित्यब्रवीत्ततः
अथोवाचमहातेजाराक्षसेंद्रंविभीषणम् ५९
रामउवाच-
राज्यंप्रशासधर्मेणमाप्रतिज्ञांवृथाकृथाः

यावच्चंद्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी
तावद्रमस्वसुप्रीतोकालेममपदंव्रज ६०
महेश्वरउवाच-
इत्युक्त्वाथसकाकुत्स्थःस्वाङ्गंविष्णुंसनातनम्
श्रीरंगशायिनंसौम्यमिक्ष्वाकुकुलदैवतम् ६१
संप्रीत्याप्रददौतस्मैरामोराजीवलोचनः
हनुमंतमथोवाचराघवः शत्रुसूदनः ६२
रामउवाच-
मत्कथाःप्रचरिष्यंतियावल्लोकेहरीश्वर
तावत्त्वमासमेदिन्यांकालेमांव्रजसुव्रत ६३
महेश्वरउवाच-
तमेवमुक्त्वाकाकुत्स्थोजांबवंतमथाब्रवीत्
रामउवाच-
द्वापरेसमनुप्राप्तेयदूनामन्वयेपुनः ६४
भूभारस्यविनाशायसमुत्पत्स्याम्यहंभुवि
करिष्येतत्रसंग्रामंस्वयंभल्लूकसत्तम ६५
महेश्वरउवाच-
तमेवमुक्त्वाकाकुत्स्थःसर्वांस्तानृक्षवानरान्
उवाचवाचागच्छध्वमितिरामोमहाबलः ६६
मंत्रिणोनैगमाश्चैवभरतः कैकयीसुतः
राघवस्यानुगमनेनिश्चितास्तेसमाययुः ६७
ततःशुक्लांबरधरोब्रह्मचारीययौपरम्
कुशान्गृहीत्वापाणिभ्यांसंसक्तः प्रययौपरम् ६८
रामस्यदक्षिणेपार्श्वेपद्महस्तारमागता
तथैवधरणीदेवीदक्षिणेतरगातथा ६९
वेदाःसांगाःपुराणानिसेतिहासानिसर्वतः
ॐकारोऽथवषट्कारःसावित्रीलोकपावनी ७०
अस्त्रशस्त्राणिचतदाधनुराद्यानिपार्वति
अनुजग्मुस्तथारामंसर्वेपुरुषविग्रहाः ७१
भरतश्चैवशत्रुघ्नःसर्वेपुरनिवासिनः

सपुत्रदाराः काकुत्स्थमनुजग्मुःसहानुगाः ७२
मंत्रिणोभृत्यवर्गाश्चकिंकरानैगमास्तथा
वानराश्चैवऋक्षाश्चसुग्रीवसहितास्तदा ७३
सपुत्रदाराःकाकुत्स्थमन्वगच्छन्महामतिम्
पशवःपक्षिणश्चैवसर्वेस्थावरजंगमाः ७४
अनुजग्मुर्महात्मानंसमीपस्थानरोत्तमाः
येचपश्यंतिकाकुत्स्थंस्वपथांतर्गतंप्रभुम् ७५
तेतथानुगतारामंनिवर्त्तंतेनकेचन
अथत्रियोजनंगत्वानदींपश्चान्मुखींस्थिताम् ७६
सरयूंपुण्यसलिलांप्रविवेशसहानुगः
ततःपितामहोब्रह्मासर्वदेवगणावृतः ७७
तुष्टावरघुशार्दूलमृषिभिःसार्द्धमक्षरैः
अब्रवीत्तत्रकाकुत्स्थंप्रविष्टंसरयूजले ७८
ब्रह्मोवाच-
आगच्छविष्णोभद्रंतेदिष्ट्याप्राप्तोऽसिमानद
भ्रातृभिस्सहदेवाभैःप्रविशस्वनिजांतनुम् ७९
वैष्णवींतांमहातेजांदेवाकारांसनातनीम्
त्वंहिलोकगतिर्देवनत्वांकेचित्तुजानते ८०
त्वामचिंत्यंमहात्मानमक्षरंसर्वसंग्रहम्
यमिच्छसिमहातेजस्तांतनुंप्रविशस्वभोः ८१
महेश्वरउवाच-
तस्मिन्सूर्यकराकीर्णेपुष्पवृष्टिनिपातिते
उत्सृज्यमानुषंरूपंस्वांतनुंप्रविवेशह ८२
अंशाभ्यांशंखचक्राभ्यांशत्रुघ्नभरतावुभौ
तदातेनमहात्मानौदिव्यतेजस्समन्वितौ ८३
शंखचक्रगदाशार्ङ्गपद्महस्तश्चतुर्भुजः
दिव्याभरणसम्पन्नोदिव्यगंधानुलेपनः ८४
दिव्यपीतांबरधरःपद्मपत्रनिभेक्षणः
युवाकुमारःसौम्यांगःकोमलावयवोज्ज्वलः ८५
सुस्निग्धनीलकुटिलकुंतलःशुभलक्षणः

नवदूर्वांकुरः श्यामः पूर्णचंद्रनिभाननः ८६
देवीभ्यांसहितःश्रीमान्विमानमधिरुह्यच
तस्मिन्सिंहासनेदिव्येमूलेकल्पतरोःप्रभुः ८७
निषसादमहातेजाः सर्वदेवैरभिष्टुतः
राघवानुगतायेचऋृक्षवानरमानुषाः ८८
स्पृष्ट्वैवसरयूतोयंसुखेनत्यक्तजीविताः
रामप्रसादात्तेसर्वेदिव्यरूपधराःशुभाः ८९
दिव्यमाल्यांबरधरादिव्यमंगलवर्चसः
आरुरोहविमानंतदसंख्यास्तत्रदेहिनः ९०
सर्वैःपरिवृतः श्रीमान्रामोराजीवलोचनः
पूजितःसुरसिद्धौघैर्मुनिभिस्तुमहात्मभिः ९१
आययौशाश्वतंदिव्यमक्षरंस्वपदंविभुः
यःपठेद्रामचरितंश्लोकंश्लोकार्धमेववा ९२
शृणुयाद्वातथाभक्त्यास्मरेद्वाशुभदर्शने
कोटिजन्मार्जितात्पापाज्ज्ञानतोऽज्ञानतःकृतात् ९३
विमुक्तोवैष्णवंलोकंपुत्रदारसबांधवैः
समाप्नुयाद्योगगम्यमनायासेनवैनरः ९४
एतत्तेकथितंदेविरामस्यचरितंमहत्
धन्योऽस्म्यहंत्वयादेविरामचंद्रस्यकीर्त्तनात्
किमन्यच्छ्रोतुकामासितद्ब्रवीमिवरानने ९५
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमामहेश्वर संवादेश्रीरामचरितकथनंनामचतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः२४४

पञ्चचत्वारिंशदधिक द्विशततमोऽध्यायः

श्रीपार्वत्युवाच–
रघुनाथस्यचरितंसाधूक्तंहित्वयाविभो
श्रुत्वाधन्यास्मिदेवेशत्वत्प्रसादान्महेश्वर १
वसुदेवसुतस्यास्यकृष्णस्यचरितंमहत्
श्रोतुमिच्छामिदेवेशचरितंकल्मषापहम् २
रुद्रउवाच–

शृणुदेविप्रवद्म्यामिकृष्णस्यास्यमहात्मनः
चरितंवासुदेवस्यसर्वेषांफलदंनृणाम् ३
यदूनामन्वयेदेविवसुदेवइतीरितः
देवमीढस्यपुत्रोऽभूत्सर्वधर्मविदांबरः ४
देवकस्यैवदुहितांदेवकींदेववर्णिनीम्
उपयेमेविधानेनमथुरायांनृपात्मजः ५
उग्रसेनस्यपुत्रोऽभूत्कंसःशूरोमहाबलः
तयोरथवरंतत्रचोदयामाससारथिः ६
समागतेषुतेष्वेवंपथिरम्येशुभावहे
अंतरिक्षेऽशरीरावाक्प्राहगंभीरयागिरा ७
आकाशवागुवाच-
अस्यास्तवाष्टमोगर्भःकंसप्राणान्हरिष्यति ८
रुद्रउवाच-
तच्छ्रुत्वाहंतुमारेभेकंसोऽपिभगिनींतदा
तमब्रवीत्सुसंरब्धंवसुदेवः स्वबुद्धिना ९
वसुदेवउवाच-
नहंतव्यामहाभागभगिनीधर्मतस्त्वया
गर्भानेवसमुत्पन्नाञ्जहिराजन्महाबल १०
रुद्रउवाच-
तथेत्याहतदाकंसोवसुदेवंचदेवकीम्
निबध्यस्वगृहेरम्येसर्वभोगेन्यवेशयत् ११
एतस्मिन्नंतरेदेविपापिभारप्रपीडिता
जगामधरणीदेवीसहसाब्रह्मणोंतिकम् १२
समेत्यजगतामीशंब्रह्माणंपरमेष्ठिनम्
प्राहगंभीरयावाचाधरणीलोकधारिणी १३
धरण्युवाच-
प्रजापतेनशक्तास्मिधर्तुंलोकानिमान्प्रभो
राक्षसाःपापकर्माणःसंस्थितामयिसुव्रत १४
जगतः सकलान्धर्मान्विध्वंशसंतोमहाबलाः
अधर्मवर्च्चसःसर्वेनराःपापविमोहिताः १५

स्वल्पमल्पतरंधर्मंलोकेऽस्मिन्नचदृश्यते
धर्मेणैवधृतादेवसत्यशौचदमेनच
तस्मादधर्मसंभूतंनलोकंधर्तुमुत्सहे १६
रुद्रउवाच–
इत्युक्त्वाधरणीदेवीतत्रैवांतरधीयत
ततःसुरगणाःसर्वेब्रह्मरुद्रपुरोगमाः १७
क्षीराब्धेरुत्तरंकूलमधिगम्यजगत्पतिम्
तुष्टुवुःस्तुतिभिर्दिव्यैर्मुनयश्चमहातपाः
ततः प्रसन्नःप्राहेशः सर्वांस्तान्मुनिसत्तमान् १८
श्रीभगवानुवाच–
भोभोदेवगणास्सर्वेकिन्निमित्तमिहागताः
रुद्रउवाच–
ततःपितामहःप्राहदेवदेवंजनार्दनम् १९
ब्रह्मोवाच–
देवदेवजगन्नाथपृथिवीभारपीडिता
राक्षसाबहवोलोकेसमुत्पन्नादुरासदाः २०
जरासंधश्चकंसश्चप्रलम्बोधेनुकादयः
दुरात्मानः प्रबाधंतेसर्वलोकान्सनातनान् २१
भारावतरणं कर्तुंपृथिव्यास्त्वमिहार्हसि
रुद्रउवाच–
एवमुक्तोहृषीकेशोब्रह्मणापरमेष्ठिना
प्राहगंभीरयावाचाजगतीपतिरव्ययः २२
श्रीभगवानुवाच–
अवतीर्याथलोकेस्मिन्यदूनामन्वयेसुराः
अवनीभारमव्यग्रमपास्यामिमहाबलाः २३
रुद्रउवाच–
एवमुक्ताःसुरास्सर्वेनमस्कृत्वाजनार्दनम्
स्वान्स्वान्लोकान्समासाद्यपरेशंतेन्वचिंतयन्
ततोनारायणींमायांपरमेशःसमब्रवीत् २४
श्रीभगवानुवाच–

हिरण्याक्षस्यषट्पुत्रान्समानीयावनीतले
वसुदेवस्यपत्न्यांतुदेवक्यांसन्निवेशय २५
अनंतांशः सप्तमोऽत्रसंप्रविष्टस्तुमाचिरम्
तस्याःसपत्न्यांरोहिण्यांददस्वशुभदर्शने २६
ततोऽष्टमेममांशस्तुदेवक्यांसंभविष्यति
नंदगोपस्यपत्न्यांतुयशोदायांसनातनी २७
तवांशभूतामहानिद्राविंध्यंगत्वामहाचलम्
तत्रसंपूज्यमानाहिदेवैरिंद्रपुरोगमैः
हन्याद्दैत्यान्महावीर्याञ्शुंभासुरपुरोगमान् २८
रुद्रउवाच-
तथेत्युक्त्वामहामायाहिरण्याक्षसुतांस्तदा
पर्यायेणचदेवक्यांषड्ग र्भान्संन्यवेशयत् २९
ताञ्जघानतदाकंसोजातमात्रान्महाबलः
ततस्तुसप्तमोगर्भोह्यनंतांशेनचोदितः ३०
वर्धमानंतुगर्भंतंरोहिण्यांसमुपानयत्
गर्भसंकर्षणात्तस्यांजातः संकर्षणोऽव्ययः ३१
कृष्णाष्टम्यांतुरोहिण्यांप्रौष्ठपद्यांशुभोदये
रोहिणीजनयामासपुत्रंसंकर्षणंप्रभुम् ३२
ततस्तुदेवकीगर्भमापेदेभगवान्हरिः
आपन्नगर्भांतांदृष्ट्वाकंसोभयनिपीडितः ३३
ततः सुरगणाःसर्वेहर्षनिर्भरमानसाः
तुष्टुवुर्देवकींतत्रविमानस्थानभस्तले ३४
ततस्तुदशमेमासिकृष्णेनभसिपार्वति
अष्टम्यामर्द्धरात्रेचतस्यांजातोजनार्दनः ३५
इंदीवरदलश्यामः पद्मपत्रायतेक्षणः
चतुर्भुजः सुंदरांगोदिव्याभरणभूषितः ३६
श्रीवत्सकौस्तुभोरस्कोवनमालाविभूषितः
वसुदेवस्यजातोऽसौवासुदेवः सनातनः ३७
तंदृष्ट्वाजगतांनाथंकृष्णमानकदुंदुभिः
उवाचप्रांजलिर्भुत्वानमस्कृत्यजगन्मयम् ३८

वसुदेवउवाच-
जातोऽसिमेजगन्नाथभक्त कल्पतरोप्रभो
त्वमेवसर्वदेवानामनादिः पुरुषोत्तमः ३९
त्वमचिन्त्यमहद्भूतोयोगिध्येयःसनातनः
ममपुत्रत्वमापन्नोधरगयांधरणीधर ४०
दृष्ट्वैतदद्भुतंरूपमैश्वरंपुरुषोत्तम
दानवाःपापकर्माणोनसहंतेमहौजसः ४१
रुद्रउवाच-
इत्यर्थितः स्तुतस्तेनपद्मनाभःसनातनः
उपसंहृतवान्रुपंचतुर्भुजसमन्वितम् ४२
मानुषेणैवभावेनद्विभुजेनव्यरोचत
येचांगरक्षकाःसर्वेदानवास्तत्रसंस्थिताः ४३
तेचापिमाययातस्यामोहितास्तमसावृताः
एतस्मिन्नंतरेदेवमादायानकदुंदुभिः ४४
प्रययौनगरात्तूर्णंसर्वदेवैरभिष्टुतः
पयोधरेवर्षमाणेनागराजोमहाबलः ४५
फणासहस्रेणाच्छाद्यभक्त्यादेवंसमन्वगात्
तौगोपुरकपाटौतुतत्पादस्पर्शनात्तदा ४६
भिद्यमानौसुविवृतौतत्रस्थाश्चविमोहिताः
स्रोतस्विनीसुपूर्णायायमुनापिमहात्मनः ४७
प्रवेशाज्ञानुमात्रंतुजलंसाचाप्युपावहत्
उत्तीर्यमुनांसोथाव्रजत्तत्तीरसंस्थितम् ४८
संस्तूयमानस्त्रिदशैःप्रविवेशयदूत्तमः
तत्रनंदस्यपत्नीसाप्रसूतागोव्रजेशुभे ४९
विमोहितामाययैवसुषुप्तातमसावृता
तस्यास्तुशयनेदेवंविनिक्षिप्यसयादवः ५०
तांकन्यांसमुपादायप्रययौमथुरांपुनः
पत्न्यैदत्वाऽथतांबालामुवाससुसमाहितः ५१
रुरोदबालभावात्सादेवकीशयनंगता
अथबालाध्वनिंश्रुत्वातद्गृहंसाङ्गरक्षकाः ५२

कंसायावेदयामासुर्देवकीप्रसवंशुभम्
कंसस्तूर्णमुपेत्यैनांजग्राहबालिकांतदा ५३
चिक्षेपचशिलापृष्ठेसापितूर्णंवियत्स्थिता
तस्योत्तमांगेस्वपदंदत्वापूर्णमुखास्थिता ५४
उवाचाष्टभुजादेवीतदाराक्षसपुंगवम्
देव्युवाच-
किंमयाक्षिप्तयामंदजातोयस्त्वांवधिष्यति ५५
सर्वस्यजगतः स्रष्टाधर्ताहर्ताचयः प्रभुः
अस्मिन्लोकेसमुत्पन्नः सतेप्राणान्हरिष्यिति ५६
रुद्रउवाच-
इत्युक्त्वातेजसादेवीसहसापूरयन्नभः
जगामदेवगंधर्वैःस्तूयमानाहिमाचलम् ५७
कंसस्तदोद्विग्नमनाःसमाहूयस्वदानवान्
प्रलंबचाणूरमुखानुवाचभयपीडितः ५८
कंसउवाच-
अस्माद्भयात्सुरगणाउपेत्यक्षीरसागरम्
आचचक्षुर्हरेः सर्वंरक्षोविध्वंसनंप्रति ५९
तेषांतुवचनंश्रुत्वाधरण्यांधरणीधरः
मानुषेणैवभावेनसमुत्पन्नोहिसोऽव्ययः ६०
तदद्यसर्वेयूयंवैराक्षसाः कामरूपिणः
समुद्रिक्तबलान्बालान्मारयध्वमशंकिताः ६१
रुद्रउवाच-
इत्यादिश्यततःकंसोवसुदेवंचदेवकीम्
आश्वास्यमोचयित्वाथस्ववेश्मांतर्विवेशह
वसुदेवस्ततोगत्वानंदव्रजमनुत्तमम् ६२
तेनसंपूजितस्तत्रनिक्षिप्यतनयंमुदा
उवाचनंदपत्नींतांयशोदांयदुनंदनः ६३
वसुदेवउवाच-
सुभगेमत्सुतमिमंरोहिणीजठरोद्भवम्
स्वपुत्रमिवरक्षस्वभियाकंसादिहागतम् ६४

रुद्रउवाच-
तथेत्याहतदातन्वीनंदपत्नीदृढव्रता
लब्ध्वैवयुगलंपुत्रमुत्पुपोषमुदान्विता ६५
निक्षिप्यतनयौगेहंनंदगोपस्ययादवः
विश्रब्धःप्रययौतूर्णंमथुरांकंसपालिताम् ६६
ततोगर्गःशुभदिनेवसुदेवेननोदितः
नंदगोपव्रजंगत्वातत्रस्थैःपूजितोद्विजः ६७
विधिनाजातकंकर्मकृत्वादेवस्यगोकुले
नामचात्राकरोद्दिव्यंपुत्रयोर्वासुदेवयोः ६८
संकर्षणोरौहिणेयोबलभद्रोमहाबलः
रामइत्यादिनामानिपूर्वजस्याकरोद्द्विजः ६९
श्रीधरः श्रीकरः श्रीमान्कृष्णोऽनतोजगत्पतिः
वासुदेवोहृषीकेशइत्याद्यवरजस्यच ७०
रामकृष्णावितिख्यातिमस्मिँल्लोकेगमिष्यतः
एवमुक्त्वाद्विजश्रेष्ठःसंपूज्यपितृदेवताः ७१
संपूज्यमानोगोपालैराययौमथुरांपुनः
कंसेनप्रेषितारात्रौपूतनाबालघातिनी ७२
विषलिप्तंस्तनंदत्वाकृष्णायामिततेजसे
कृष्णस्तुराक्षसींज्ञात्वापपौगाढंस्तनंभृशम् ७३
प्राणैःसहमहातेजाराक्षस्यायदुपुंगवः
साविह्वलांगीसहसाविच्छिन्नस्नायुबंधना ७४
पपातवेपमानासाममारचमहास्वना
तस्याःशब्देनमहतापूरितंचनभस्तलम् ७५
त्रस्ताःसर्वेततोगोपादृष्ट्वातांपतितांभुवि
कृष्णंचक्रीडमानंतंराक्षस्यामहतोरसि ७६
समुद्विग्नास्ततस्तूर्णमादायतनयंतदा
रक्षोभियातदातस्मिन्गोपुरीषेणमूर्द्धनि ७७
संमार्जयामासतदागोवालेनतदाननम्
नंदगोपःसमभ्येत्यसुतमादायभामिनि ७८
भगवन्नामभिस्तस्यसर्वांगेषुप्रमार्जनम्

कृत्वातांतामसींभीमांबहिर्विन्यस्यगोव्रजात् ७९
ददाहगोपवृंदैश्चत्रासितैस्तत्रगोव्रजे
कदाच्छिकटस्याधःशयानोभगवान्हरिः ८०
प्रसार्यचरणौतत्ररुरोदमधुसूदनः
तस्यपादप्रहारेणशकटंपरिवर्तितम् ८१
विध्वस्तकुंभभाडंतद्विपरीतंपपातवै
ततोगोप्यश्चगोपाश्चदृष्ट्वातच्छकटंमहत् ८२
विस्मयंपरमंजग्मुः किमेतदितिशंकिताः
यशोदाचतदातूर्णंबालंजग्राहविस्मिता ८३
अल्पेनैवहिकालेनबालकौतौयदूत्तमौ
वर्द्धमानौयशोदायाःस्तनपानेनपोषितौ ८४
जानुभ्यामथहस्ताभ्यांरिंगमाणौविरेजतुः
मायावीराक्षसस्तत्रकृतश्चबटुवेषधृक् ८५
कृष्णंहंतुंसमारब्धोविचचारमहीतले
ज्ञात्वाकृष्णस्तुतंरक्षोनिजघानतलेनवै ८६
राक्षसेनैवरूपेणनिपपातममारच
विचचारततःसर्वंगोव्रजंमधुसूदनः ८७
नवनीतंजहाराशुगोपीनांचगृहेगृहे
तदायशोदाकुपितादाम्नामध्येउलूखले ८८
निबध्यकृष्णंप्रययौविक्रेतुंगोरसादिकम्
कर्षमाणस्ततः कृष्णोदाम्नावद्धउलूखले ८९
यमलार्जुनयोर्मध्येजगामधरणीधरः
उलूखलेनगोविंदः पातयामासतौद्रुमौ ९०
भग्नस्कंधौनिपतितौस्वरेणधरणीतले
तेनशब्देनमहताजग्मुस्तत्रमहौजसः ९१
गोपवृद्धास्ततोदृष्ट्वाविस्मयंपरमंगताः
यशोदापिसमुद्विग्नाविमुच्यधरणीधरम् ९२
तंविस्मितंसमादायस्तनंप्रादान्महात्मने
यस्मिन्निवध्यमानस्तुदाम्नामात्राजगत्पतिः ९३
तस्मिन्महर्षिभिःसर्वैर्दामोदरइतीरितः

तौतुकिंनरतांप्राप्तौविमुक्तौयमलार्जुनौ ९४
गोपवृद्धास्ततःसर्वेनंदगोपपुरोगमाः
महोत्पातमिमंज्ञात्वास्थानांतरमुपाययुः ९५
वृंदावनेमनोरम्येयमुनायास्तटेशुभे
निवासंचक्रिरेरम्यंगवांगोपीजनस्य च ९६
तत्रतौरामकृष्णौतुवर्द्धमानौमहाबलौ
वत्सपालयुतौवत्सान्पालयामासतुस्तदा ९७
गोवत्समध्यगंकृष्णंबकोनाममहासुरः
बकरूपेणतंहंतुमुद्युक्तोऽत्रयदूत्तमम् ९८
तंदृष्ट्वावासुदेवोऽपिलोष्टमुद्यम्यलीलया
ताडयामासपन्नांतेपपातोर्व्यांमहासुरः ९९
ततः कतिपयाहस्तु गोवत्सान्पालयन्वने
छायायांजंबुवृन्नस्यप्रसुप्तौपल्लवेमृदौ १००
एतस्मिन्नंतरेदेवोब्रह्मादेवगणैर्वृतः
द्रष्टुंकृष्णंसमागम्यसुप्तौदृष्ट्वायदूत्तमौ १०१
वत्सान्गोपशिशून्हत्वाजगामत्रिदिवंपुनः
प्रबुद्धौतौसमालोक्यविनष्टाञ्शिशुवत्सकान् १०२
गोवत्सागोपबालाश्चक्वगताइतिविस्मितौ
ज्ञात्वाकृष्णस्तुतत्कर्मप्रजापतिकृतंतदा १०३
तथैवससृजेबालान्गोवत्सांश्चसनातनः
यथातूर्णंयथारूपंतथैवमधुसूदनः १०४
ससर्जवत्सान्गोपालानविताजगतांप्रभुः
दृष्ट्वासायाह्नसमयेगावस्त्वेषांचमातरः १०५
स्वान्स्वान्वत्सानुपागम्ययथापूर्वंप्रवर्तिताः
एवंसंवत्सरेकालेगतेतत्रमहात्मनः १०६
प्रजापतिःपुनस्तस्मैददौवत्सान्सबालकान्
कृतांजलिपुटोभूत्वापरिणीयप्रणम्यच
भयादुवाचगोबिंदंब्रह्मात्रिभुवनेश्वरः १०७
ब्रह्मोवाच–
नमोनमस्तेसर्वात्मंस्तत्वज्ञानस्वरूपिणे

नित्यानंदस्वरूपायप्रियतात्मन्महात्मने १०८
अणुर्बृहत्स्थूलतररूपःसर्वगतोऽव्ययः
अनादिमध्यांतरूपस्वरूपात्मन्नमोस्तुते १०९
नित्यज्ञानबलैश्वर्यवीर्यतेजोमयस्यच
महाशक्तेनमस्तुभ्यं पूर्णषाड्गुरायमूर्तये ११०
त्वंवेदपुरुषोब्रह्मन्महापुरुषएवच
शरीरपुरुषत्वस्यछंदःपुरुषएवच १११
चत्वारःपुरुषास्त्वंचपुराणः पुरुषोत्तम
विभूतयस्तवब्रह्मन्पृथिव्यग्न्यनिलादयः ११२
तववाचासमुद्भूतौद्मावह्नीजगदीश्वर
अंतरिक्षंचवायुश्चसृष्टौप्राणेनतेविभो ११३
चक्षुषातवसंसृष्टौद्यौश्चादित्यस्तथाव्यय
दिशश्चचंद्रमाः सृष्टाः श्रोत्रेणतवचानघ ११४
अपांस्त्रावश्चवरुणोमनसातेमहेश्वर
उक्तेमहतिमीमांसे यत्तद्ब्रह्मप्रकाशते ११५
तथैवचाध्वरेष्वेतदेतदेवमहाव्रते
छंदोगेयेनभस्येतद्दिव्येतद्वायुरेवतत् ११६
आकशएतदेवेदमोषधीष्वेवमेवच
नक्षत्रेषुचसर्वेषुग्रहेष्वेतद्दिवाकरे ११७
एवंभूतेष्वेवमेवब्रह्मेत्याचक्षतेश्रुतिः
तदेवपरमंब्रह्मप्रज्ञातंपरितोमृतम् ११८
हिररामयोऽव्ययोयज्ञः शुचिः शुचिषदित्यपि
वैदिकान्यभिधेयानितथैतान्यस्यनक्वचित् ११९
चक्षुर्मयंश्रोत्रमयंछंदोमयमनोमयम्
वाङ्मयंपरमात्मानंपरेशंशंसतिश्रुतिः १२०
इतिसर्वोपनिषदामर्थस्त्वंकमलेक्षण
स्तोतुंनशक्तोऽयत्वांतुसर्ववेदांतपारगम् १२१
महापराधमेतत्तेवत्सापहरणंमया
कृतंतत्क्षम्यतांनाथशरणागतवत्सल १२२
महेश्वरउवाच–

एवंस्तुत्वाहरिंवेधाः प्रणम्यचपुनः पुनः
वत्सान्दत्वापुनस्तस्मैप्रययौस्वयमालयम् १२३
हृदिकृत्वासदादेविबालरूपंहरिंविधिः
उवासत्रिदशैःसार्द्धंहृष्टपुष्टोमहातपाः १२४
कृष्णेनसृष्टावत्सावैपूर्ववत्सास्तथार्भकाः
अवापुरैक्यतांतत्रपश्यतांत्रिदिवौकसाम् १२५
कृष्णस्तुवत्सपालैर्वैप्रययौनंदगोकुलम्
ततःकतिपयाहस्सुगोपालैर्यदुपुंगवः १२६
ह्रदंगत्वाऽथकालिद्यास्तत्रस्थंसुमहाविषम्
सहस्रशीर्षबलिनंनागराजानमच्युतः १२७
निष्पिष्यफलसाहस्रंपादेनैकेनलीलया
प्राणसंशयमापन्नंचकारमधुसूदनः १२८
सकालियोलब्धसंज्ञस्तमेवशरणंययौ
ररक्षभगवान्कृष्णोनागंत्यक्तविषंतदा १२९
वैनतेयभयाद्भीतंस्वपदेनांक्यमूर्द्धसु
ह्रदाद्विवासयामासकालिद्यायदुपुंगवः १३०
त्यक्त्वासतंह्रदंतूर्णंपुत्रदारसमन्वितः
नमस्कृत्वाथगोविंदंप्रययौकालियस्तदा १३१
विषदग्धास्तुयेपूर्वंतत्तीरस्थाश्चशाखिनः
कृष्णेनवीक्षितास्तूर्णंफलिनः पुष्पिणोऽभवन् १३२
अथकालेनकौमारमवाप्यमधुसूदनः
गोवृंदंपालयामाससर्वदेवमयः प्रभुः १३३
स्वसमानवयोभिस्तुगोपालैस्तुयदूत्तमः
वृंदावनेमनोरम्येसरामोविचचारह १३४
तत्रहत्वामहाघोरंसर्परूपंमहासुरम्
अपहत्यमहाकायंमेरुमंदारगौरवम् १३५
धेनुकस्यवनंप्राप्यतालहिंतालगह्वरम्
प्रविश्यतद्वनंरम्यंफलितंतालगह्वरम्
धेनुकंपर्वताकारंखररूपधरंसदा १३६
पादौगृह्यसमुत्क्षिप्यतालेनविजघानह

तत्क्षणादेवतत्पालास्तदंतेरेमिरेतदा १३७
निष्क्रम्यतद्वनात्तूर्णंभांडीरंवटमागताः
तत्रतेरामकृष्णाभ्यांचिक्रीडुर्बाललीलया १३८
गोपवेषेणतत्रागात्प्रलंबोनामराक्षसः
रामंस्वपृष्ठमारोप्यययौतूर्णंनभस्तलम् १३९
मत्वातंराक्षसंरामोमुष्टिनातस्यमूर्द्धनि
ताडयामासरोषेणविह्वलांगस्ततोऽपतत् १४०
राक्षसेनैवरूपेणविनदन्भैरवंस्वनम्
भिन्नशीर्षतनुस्तत्रममाररुधिरोक्षितः १४१
ततः प्रदोषसमयेगोब्रजेनंदनंदनः
उवासगोपकन्याभिःक्रीडन्कौमोदवर्चसे १४२
अरिष्टनामादैत्येशोगत्वातत्रवृषाकृतिः
कृष्णंहंतुंसमागत्यजगर्जचमहास्वनम् १४३
तंदृष्ट्वाविद्रुताःसर्वेगोपालाभयपीडिताः
कृष्णोऽपिदृष्ट्वातंरौद्रमागतंदनुजाधिपम् १४४
तालवृक्षंसमुत्पाट्यशृंगमध्येव्यपीडयत्
सतुभग्नशिरः शृगोवमन्वैरुधिरंबहु १४५
पपातभीमवेगेननिनदंस्त्यक्तजीवितः
इत्थंहत्वामहाकायमरिष्टंदनुजाधिपम् १४६
आहूयगोपबालांश्चतत्रैवोवासगोव्रजे
ततः कतिपयाहस्सुकेशीनाममहासुरः १४७
हयकायेनगोविंदंहंतुंव्रजमुपाययौ
सगत्वागोव्रजंरम्यमुच्चैर्हेषामथाकरोत् १४८
तेनशब्देनमहतापूरितंभुवनत्रयम्
भीताः सर्वेसुरगणाः शंकमानायुगक्षयम् १४९
तत्रस्थामोहिताः सर्वेगोपागोप्यश्चविह्वलाः
लब्धसंज्ञास्तुतेसर्वेविद्रुताश्चसमंततः १५०
गोप्यस्तुशरणंजग्मुःकृष्णंत्राहीतिचाब्रुवन्
नभेतव्यंनभेतव्यमित्याहभक्तवत्सलः १५१
समाश्वास्यततस्तूर्णंमुष्टिनावासवानुजः

ताडयामासशिरसितस्यदैत्यस्यलीलया १५२
विभिन्नदंतनेत्रोऽसौविननादमहास्वनम्
महाशिलांसमुत्क्षिप्यतस्यांगेवैन्यपातयत् १५३
सतुचूर्णितसर्वांगोनिनदन्भैरवंस्वनम्
पपातसहसाभूमौममारचमहासुरः १५४
केशिनंनिहतंदृष्ट्वादिविदेवगणाभृशम्
मुमुचुः पुष्पवर्षाणिसाधुसाध्वितिचाब्रुवन् १५५
इत्थंशिशुत्वेवैदैत्यान्हरिर्हत्वाबलोत्कटान्
समुमोदसुखेनैवबलरामसमन्वितः १५६
इंदीवरदलश्यामःपद्मपत्रनिभेक्षणः
पीतांबरधरःस्रग्वीवनमालाविभूषितः १५७
कौस्तुभोद्भासितोरस्कश्चित्रमाल्यानुलेपनः
विचित्राभरणैर्युक्तः कुंडलाभ्यांविराजितः १५८
आमुक्ततुलसीमालः कस्तूरीतिलकांचितः
सुस्निग्धनीलकुटिलकबरीकृतकेशवान् १५९
बद्धैर्नानाविधैःपुष्पैर्बर्हिबर्हावतंसकः
रक्तारविंदसदृशहस्तपादतलाधरः १६०
पद्ममध्यगशीतांशुकलंकभ्रूलताननः
हारनूपुरकेयूरैः कटकाभ्यांविराजितः १६१
वृंदावनेमहारम्येफलपुष्पविराजिते
रम्यंनिनादयन्वेणुंतत्रास्तेयदुनंदनः १६२
अवधीरित कंदर्पकोटिलावरायमच्युतम्
सर्वागोपस्त्रियोदृष्ट्वामन्मथास्त्रेणपीडिताः १६३
पुरामहर्षयः सर्वेदंडकाररायवासिनः
दृष्ट्वारामंहरिंतत्रभोक्तुमैच्छत्सुविग्रहम् १६४
तेसर्वेस्त्रीत्वमापन्नाः समुद्भूतास्तुगोकुले
हरिंसंप्राप्यकामेनततोमुक्ताभवार्णवात् १६५
क्रोधेनैवयथादैत्याःसमेत्यमधुसूदनम्
निधनंप्राप्यसंग्रामेहतामुक्तिमवाप्नुयुः १६६
कामक्रोधौनृणांलोकेनिरयस्यैवकारणम्

हरिंसमेत्यभावेनमुक्तागोप्यःसुरद्विषः १६७
कामाद्भयाद्वाद्वेषाद्वायेभजंतिजनार्दनम्
तेप्राप्नुवंतिवैकुंठंकिंपुनर्भक्तियोगतः १६८
तस्यवेणुध्वनिंश्रुत्वारजन्यांबल्लवांगनाः
शयनादुत्थिताः सर्वाविकीर्णांबरमूर्द्धजाः १६९
त्यक्त्वापतीन्सुतान्बधूंस्त्यक्त्वालज्जांकुलंस्वकम्
जगत्पतिंसमाजग्मुःकंदर्पशरपीडिताः १७०
समेत्यगोप्यःसर्वास्तुभुजैरालिग्यकेशवम्
बुभुजुश्चाधरंदेव्यःसुधामृतमिवामराः १७१
ताभिःसर्वाभिरात्मेशः क्रीडयामासगोव्रजे
तेनापिताः स्त्रियः सर्वा रेमिरेनिर्भयाव्रजे १७२
इत्येवंरमयामासुरहन्यहनिकेशवम्
वृंदावनेमनोरम्येकालिदीपुलिनेतथा १७३
पार्वत्युवाच-
धर्मसंरक्षणार्थायजगत्यामवतीर्यसः
परदाराभिगमनंकथंकुर्याज्जनार्दनः १७४
रुद्रउवाच-
स्वशरीरेपरेष्वंगभेदोनास्तिशुभानने
सर्वंजगच्चतस्यांगंपृथगत्रनविद्यते १७५
स्त्रीपुंभेदोनवैतस्यपुरुषस्यमहात्मनः
नैसर्गिकस्यभर्तृत्वादात्मेशत्वाज्जगत्पतेः १७६
तथापहृतपाप्मत्वसामर्थ्याद्व्यापिनःप्रभोः
दोषोऽत्रनास्तिसुभगेदेवस्यपरमात्मनः १७७
वसिष्ठउवाच-
एवमुक्त्वातुगिरिजांरुद्रः श्रीत्रिपुरान्तकः
कृष्णस्यशेषंचरितमाख्यातुंसंप्रचक्रमे १७८
रुद्रउवाच-
शरत्कालेतुसंप्राप्तेनंदगोपपुरोगमाः
गोपामहोत्सवंकर्तुमारब्धास्त्रिदशांपतेः १७९
तदुत्सवंतुगोविंदोनिवार्याथशतक्रतोः

गोवर्द्धनाद्रिराजस्यकारयामासवीर्यवान् १८०
ततः क्रुद्धःसहस्राक्षोनंदगोपस्यगोव्रजे
ववर्षचमहावृष्टिंसप्तरात्रंनिरंतरम् १८१
गोवर्द्धनंसमुत्पाट्यमहाशैलंजनार्दनः
गवांसंरक्षणार्थायधारयामासलीलया १८२
तस्यच्छायांगिरेः प्राप्यगोपागोप्यश्चसुव्रते
अवसंश्चसुखेनैवहर्म्यांतरगताइव १८३
ततः शक्रःसहस्राक्षोभीतःसंभ्रांतचेतसा
वारयामासतद्वर्षंययौनंदस्यतद्व्रजम् १८४
कृष्णोऽपितंमहाशैलंयथापूर्वंनिवेशयत्
गोपवृद्धाश्चतेसर्वेनंदगोपपुरोगमाः १८५
परिपूज्यचगोविंदंपरंविस्मयमाययुः
ततः शतक्रतुर्देवः समेत्यमधुसूदनम्
तुष्टावप्रांजलिर्भूत्वाहर्षगद्गदयागिरा १८६
इन्द्रउवाच–
नमस्तेपुंडरीकाक्षसर्वज्ञातित्रिविक्रम
त्रिगुणातीतसर्वेशविश्वस्यात्मन्नमोस्तुते १८७
त्वंयज्ञस्त्वंवषट्कारस्त्वमोङ्कारःक्रतुर्हविः
त्वमेवसर्वदेवानांपितामाताचकेशव १८८
अग्रेहिरण्यगर्भस्त्वंभूतस्यसमवर्त्तत
त्वमेवैकःपतिरसिपुरुषस्त्वंहिरण्मयः १८९
पृथिवींद्यामिमांदेवत्वमेवधृतवानसि
आत्मदःफलदोयश्चस्यादेवंजगदीश्वर १९०
अवाप्तंतच्चत्रिदशैःप्रकाशंजगतांपतेः
अमृतंचैवमृत्युश्चछायातवसनातन १९१
तस्मैदेवायभवतेविधेमहविषावयम्
हेमवंतइमेयस्यसमुद्भूताहिरण्मयाः १९२
समुद्रारसनायस्यवाहस्तस्यैवकेशव
इमादिशःप्रतिदिशोवायुर्यस्यतवाव्यय १९३
तस्मैदेवायभवतेविधेमहविषावयम्

येनत्वयासमारूढापृथिवीवर्द्धतापुनः १९४
स्वर्लोकः स्तंभितोयेनत्वयाब्रह्मन्महेश्वर
त्वमंतरिक्षेरजसोवसानः सर्वगोव्ययः १९५
तस्मैदेवायभवतेविधेमहविषावयम्
यंक्रंदसिराजमानेतप्तभासेगुणान्विते १९६
अभ्यैक्षेतांचमनसाअवश्यंश्रीश्चसर्वदा
यत्रास्तिसूरउदितोविभातिपरमेपदे १९७
तस्मैदेवायभवतेविधेमहविषावयम्
यदापोबृहतीर्विश्वब्रह्ममायंजनार्दनाः १९८
गर्भंदधानाः सर्गेऽत्रजनयंतीरघौघकृत्
समवर्ततदेवानामसुरेकोऽव्ययोविभुः १९९
तस्मैदेवायभवतेविधेमहविषावयम्
याआपोमहिनादक्षंपर्यपश्यत्प्रजापतिम् २००
यज्ञंदधानास्तत्रादौजनयंतीर्हविः पुमान्
योदेवेष्वेकएवासीदधिदेवः परात्परः २०१
तस्मैदेवायभवतेविधेमहविषावयम्
मानोहिंसीज्जनितायःपृथिव्याअव्ययः पुमान् २०२
योवादिवंसत्यधर्माजजानाव्ययईश्वरः
यश्चंद्रोबृहतीरपोजजानसकलंजगत् २०३
तस्मैदेवायभवतेविधेमहविषावयम्
एतानिविश्वजातानिबभूवपरिताप्रभो २०४
त्वदुत्पन्नप्रजाध्यक्षभविष्यद्भूतमच्युतः
यजामस्त्वांचयत्कामास्तन्नोअस्तुसमासतः २०५
त्रयाणांपतयःस्यामतवकारुण्यवीक्षणात्
हिरण्मयाख्यःपुरुषोहिरण्यश्मश्रुकेशवान् २०६
आप्रणखात्सर्वंहिरण्यंसवितातुहिरण्यभाक्
असौसर्वगतोब्रह्मायस्त्वादित्येव्यवस्थितः २०७
तद्वैदेवस्यसवितुर्वरेण्यंभर्गउत्तमम्
सदाधीमहितेरूपंधियोयोनः प्रभातिहि २०८
नमस्ते पुंडरीकाक्षश्रीशसर्वेशकेशव

वेदांतवेद्ययज्ञेशयज्ञरूपनमोस्तुते २०९
नमस्तेवासुदेवायगोपवेषायतेनमः
तत्सर्वध्वंसनादेवअपराधंमयाकृतम् २१०
तत्क्षम्यतांजगन्नाथघृणाब्धेपुरुषोत्तम
अल्पेनैवहिकालेनजहिकंसंदुरासदम्
देवानांहिहितंकृत्वासुखेवस्थायमेदिनीम् २११
महादेवउवाच-
इतिसंस्तुत्यगोविंदंसर्वदेवेश्वरोहरिः
सुधामृतेनाभ्यषिंचद्दिव्यांबरविभूषणैः २१२
अर्चयित्वातुदेवेशंजगामत्रिदिवंपुनः
गोपवृद्धाश्चगोप्यश्चदृष्ट्वातत्रशतक्रतुम् २१३
तेनतेपूजिताश्चैवप्रहर्षमतुलंययुः
रामकृष्णौमहावीर्यौदिव्याभरणभूषितौ २१४
नंदस्य गोव्रजेरम्येसुसुखेनैवतस्थतुः
एतस्मिन्नंतरेदेविनारदोमुनिसत्तमः २१५
सहसामथुरांगत्वाकंसस्यांतिकमाविशत्
राज्ञासंपूजितास्तत्रसमासीनःशुभासने २१६
सर्वंविज्ञापयामासचेष्टितंशार्ङ्गिणस्तदा
देवतानांसमुद्योगंजन्मवैकेशवस्यच २१७
तथाचवसुदेवेनपुत्रनिक्षेपणंव्रजे
निधनंराक्षसानांचसर्पराजविवासनम् २१८
धारणंगिरिवर्यस्यशतक्रतुसमागमम्
निवेदयित्वाकंसस्यसर्वंनिरवशेषतः २१९
प्रययौब्रह्मभवनंपूजितस्तेनरक्षसा
कंसः समुद्विग्नमनामंत्रिभिः परिवेष्टितः २२०
मंत्रयामासतैः साकमात्मनोनिधनंप्रति
तत्रबुद्धिमतांश्रेष्ठमक्रूरंधर्मवत्सलम्
उवाचात्महितं कार्यंदानवेंद्रोमहाबलः २२१
कंसउवाच-
मद्भयात्त्रिदशाः सर्वेशतक्रतुपुरोगमाः

विष्णोःसमीपमागत्यभयार्त्ताः शरणंगताः २२२
सतेषामभयंदत्वाभगवान्भूतभावनः
उत्पन्नोदेवकीगर्भेमांहंतुंमधुसूदनः २२३
वसुदेवोऽपिदुष्टात्मावंचयित्वातुमांनिशि
पुत्रंनिक्षिप्तवान्गेहेनंदस्यसुदुरात्मनः २२४
बालेनैवदुराधर्षोविजघानमहासुरान्
मांहंतुमपिसंनद्धोभवेदेवनसंशयः २२५
सतुहंतुंनवैशक्तः सेंद्रैरपिसुरासुरैः
उपायेनैवहंतव्यः समानीयमयातदा २२६
मदोत्कटैस्तुमातंगैर्मल्लैश्चवरवाजिभिः
येनकेनाप्युपायेनहंतुंशक्यमिहैवतु २२७
तस्मात्त्वंगोव्रजंगत्वाकृष्णंरामंचयादव
सर्वान्गोपालवृद्धांश्चनंदगोपपुरोगमान्
उपभोक्तुंधनुर्यागामिहानययदूत्तम २२८
महादेवउवाच-
तथेत्युक्त्वायदुश्रेष्ठोरथमारुह्यवीर्यवान्
प्रययौगोकुलंरम्यंकृष्णंसंदर्शनोत्सुकः २२९
महाभागवतश्रेष्ठोगवांमध्येव्यवस्थितम्
ददर्शकृष्णमक्लिष्टमक्रूरोविनयान्वितः २३०
नीलनीरदसंकाशंसर्वाभरणभूषितम्
पद्मपत्रविशालाक्षंदीर्घबाहुमनामयम् २३१
पीतवस्त्रेणसंवीतंसर्वावयवसुंदरम्
कौस्तुभोद्भासितोरस्कंरत्नकुंडलशोभितम् २३२
तुलसीवनमालाढ्यंवन्यपुष्पावतंसकम्
गोपकन्यापरिवृतंदृष्ट्वातत्रजनार्दनम् २३३
पुलकांकितसर्वांगोहर्षाश्रुप्लुतलोचनः
अवरुह्यरथात्तस्मात्प्रणनामयदूद्वहः २३४
हर्षात्समेत्यगोपालंपरिणीयप्रणम्यच
रक्तारविंदसदृशौवज्रचक्राङ्कचिह्नितौ २३५
स्वमूर्ध्निधृत्वापादाब्जौप्रणनामपुनः पुनः

कैलासशिखराभासंनीलांबरधरंप्रभुम् २३६
शरत्पूर्णेंदुसदृशंमुक्तादामविभूषितम्
बलरामंततोदृष्ट्वाप्रणनामसयादवः २३७
हर्षेणोत्थाप्यतौवीरौपरिगृह्ययदूत्तमौ
गृहमाजग्मतुर्वीरौतेनाक्रूरेणवृष्णिना २३८
नंदगोपस्तुतंदृष्ट्वायदुश्रेष्ठंसमागतम्
अभिगम्यमहातेजानिवेश्यपरमासने २३९
अर्चयामासविधिवदर्घ्यपाद्यादिभिर्मुदा
वस्त्रैः समर्हणैर्दिव्यैरर्चयामासभक्तितः २४०
अक्रूरोरामकृष्णाभ्यांवस्त्राण्याभरणानिच
प्रददौनंदगोपाययशोदायैचयादवः २४१
पृष्ट्वाकुशलमव्यग्रमासीनस्तुकुशासने
राजकार्याणिसर्वाणिसंपृष्टोवाचबुद्धिमान् २४२
अक्रूरउवाच-
एषकृष्णोमहातेजास्साक्षान्नारायणोऽव्ययः
देवतानांहितार्थायसाधूनांरक्षणायच २४३
भूभारकविनाशायधर्मसंस्थापनायच
कंसादीनांतुदैत्यानांसर्वेषांनिधनायच २४४
संप्रार्थितः सुरगणैर्मुनिभिश्चमहात्मभिः
देवकीजठरेजातःप्रावृट्कालेमहानिशि २४५
भयात्कंसस्यदेवेशमानीयानकदुंदुभिः
तवगेहेतदारात्रौपुत्रंनिःक्षिप्तवान्हरिम् २४६
तस्मिन्नेवतुकालेऽपियशोदातुयशस्विनी
कन्यां मायांशसंभूतांप्रसूतातुशुभाननाम् २४७
तयासंमोहितंसर्वमिदंव्रजकुलंशुभम्
मूर्च्छितायायशोदायाः शयनेयदुपुङ्गवम् २४८
कृष्णंनिक्षिप्यतां कन्यामादायस्वगृहंययौ
तांतुनिक्षिप्यदेवक्याः शयनेबहिरागमत् २४९
सारुरोदततः क्षिप्रदेवकीशयनेस्थिता
तच्छ्रुत्वासहसाकंसःकन्यामादायसुव्रत २५०

भ्रामयित्वाशिलापृष्ठेचिक्षेपोत्पत्यवीर्यवान्
समुत्थायचसाकन्यासायुधाष्टभुजान्विता
गगनस्थारुषाकंसंप्राहगंभीरया गिरा २५१
कन्योवाच-
योऽनतःसर्वदेवानामीश्वरः पुरुषोत्तमः
यातस्तववधार्थायगोव्रजेदानवाधम २५२
अक्रूर उवाच-
इत्युक्त्वासामहामायाहिमवंतंसमाययौ
तदाप्रभृतिदुष्टात्माभयादुद्विग्नमानसः २५३
दानवान्प्रेषयामासनिधनायमहात्मनः
बालेनैवहताः सर्वेलीलयानेनधीमता २५४
अत्यद्भुतानिकर्माणिकृतवान्परमेश्वरः
गोवर्द्धनादिधरणंनागराजविवासनम् २५५
समागमंमहेंद्रस्यनिधनंसर्वरक्षसाम्
श्रुत्वादेवर्षिणाख्यातमतीवभयपीडितः २५६
इतोनीत्वामहाबाहूरामकृष्णौदुरासदौ
मदोत्कटैर्महानागैर्मल्लैर्वाहंतुमुद्यतः २५७
कृष्णस्यानयनार्थायप्रेरयामासमामिह
वसुदेवस्यदुष्टात्मानिग्रहंकृतवानसौ २५८
एतत्सर्वंसमाख्यातंचेष्टितंसुदुरात्मनः
उपभोक्तुंधनुर्यागंयूयंसर्वेव्रजौकसः २५९
दध्याज्यादिगृहीत्वावैश्वोभूतेगंतुमर्हथ
सहितारामकृष्णाभ्यांगोपाःसर्वेतदंतिकम् २६०
कृष्णेननिहतः कंसोभविष्यतिनंसशयः
परित्यज्यभयंतस्माद्गमिष्यध्वंनृपाज्ञया २६१
ईश्वरउवाच-
इत्युक्त्वासतदाक्रूरस्तूष्णीमासीत्सुबुद्धिमान्
तस्यतद्वचनंश्रुत्वादारुणंरोमहर्षणम् २६२
नंदगोपमुखाः सर्वेगोपवृद्धाभयातुराः
अभाषिरेमहादुःखसागरेशोकमोहिताः २६३

तानाश्वास्यहरिस्तत्रदृष्ट्वाकमललोचनः
नभीःकार्येतिसंप्राहराद्मसंप्रतिवीर्यवान् २६४
विनाशायप्रयास्यामिकंसस्यास्यदुरात्मनः
मथुरांसहरामेणभवद्भिःसहसंगतः २६५
तत्रहत्वादुरात्मानंकंसंदानवपुंगवम्
सर्वांश्चराद्मसान्हत्वापालयिष्यामिमेदिनीम् २६६
तस्माच्छोकंपरित्यज्यगच्छध्वंमथुरांपुरीम्
एवमुक्तास्तुहरिणागोपानंदपुरोगमाः २६७
मुहुर्मुहुःपरिष्वज्यमूर्द्धघ्राणंप्रचक्रिरे
अप्रमेयानिकर्माणिविचार्यसुमहात्मनः २६८
अक्रूरवचनाच्चैवगोपाःसर्वेगतव्यथाः
दुग्धदध्याज्ययुक्तानिशुचीनिविविधानिच २६९
पक्वान्नानिसुहृद्यानिस्वादूनिमधुराणिच
अक्रूरायददौसौम्यंयशोदाभोजनंबहु २७०
सहितोरामकृष्णाभ्यांनंदाद्यैर्गोपसत्तमैः
सुहृद्भिर्बालवृद्धैश्चभवनेसमलंकृते २७१
दत्तंयशोदयासौम्यंभोजनंकलुषापहम्
बुभुजेयादवश्रेष्ठोह्यन्नंरोगापहंशुभम् २७२
भोजयित्वायथान्यायंदत्त्वाचमनमंभसा
सकर्पूरंसतांबूलंददौतस्मैदृढव्रता २७३
अस्तंयातेदिनकरेसंध्यामन्वास्ययादवः
सहितोरामकृष्णाभ्यांभुक्त्वाद्मीरान्नमुत्तमम् २७४
ताभ्यामेवतदाक्रूरःशयनंसमुपाविशत्
तस्मिंस्तुभवनेश्रेष्ठेरम्येदीपविराजिते २७५
श्लद्मणेविचित्रपर्यंकेनानापुष्पविराजिते
तस्मिन्शेतेहरिःकृष्णः शेषेनारायणोयथा २७६
तंदृष्ट्वासहसाऽक्रूरोहर्षाश्रुपुलकांकितः
विहायतामसींनिद्रांसुश्रेयः समुदीद्मयवै २७७
पादसंवाहनं विष्णोश्चक्रेभागवतोत्तमः
एतावतामेसाफल्यंजीवितंचसुजीवितम् २७८

इदं त्रैलोक्यमैश्वर्यमिदंवैसुखमुत्तमम्
इदंराज्यमिदंधर्म्यमिदंमोक्षसुखंपरम् २७६
नशक्यंमनसास्मर्तुंशिवब्रह्मादिदैवतैः
सनकाद्यैर्मुनींद्रैस्तुवसिष्ठाद्यैर्महर्षिभिः २८०
तच्छ्रीशस्यपदद्वंद्वंशरदंबुरुहोज्ज्वलम्
संस्पृष्टमिंदिरालक्ष्म्याकराभ्यांसुसुखंपरम् २८१
दिष्ट्यालब्धंमयाविष्णोः श्रीपादाब्जयुगंशुभम्
व्यतीतासाक्षणाद्रात्रिस्तब्रह्मानंदगौरवात् २८२
ततः प्रभाते विमलेदिविदेवगणोत्तमैः
संस्तूयमानोबुबुधेतस्मात्तुशयनाद्धरिः २८३
उपस्पृश्ययथान्यायंसहरामेणधीमता
पपातपादयोर्मातुःप्रयाणंचाभ्यरोचयत् २८४
समुत्थाप्ययशोदातुदुःखहर्षसमान्विता
अश्रुपूर्णमुखीपुत्रौप्रेम्णासंपरिषस्वजे २८५
आशिषंप्रददौदेवीतनयाभ्यांदृढव्रता
विससर्जमहावीरौसमालिङ्ग्यमुहुर्मुहुः २८६
अक्रूरोऽपियशोदायैप्रणम्यप्राहसांजलि २८७
अक्रूरउवाच–
प्रयास्यामिमहाभागेप्रसादंकुरुमेऽनघे
एषकृष्णोमहाबाहुः कंसंहत्वामहाबलम् २८८
सर्वस्यजगतोराजाभविष्यतिनसंशयः
तस्माच्छोकंपरित्यज्यसुखीभववरानने २८९
ईश्वरउवाच–
इत्युक्तयातयाऽक्रूरोविसृष्टोयदुसत्तमः
सहितोरामकृष्णाभ्यामारुरोहरथोत्तमम् २९०
प्रययौमथुरांशीघ्रंस्तूयमानोऽप्सरोगणैः
नंदगोपमुखाःसर्वेगोपवृद्धास्तमन्वयुः २९१
पुनर्गृहीत्वादध्याज्यंफलानिविविधानिच
तंप्रयांतंहरिंदृष्ट्वागोकुलाद्गोपयोषितः २९२
अनुजग्मुर्विनिष्क्रांतंरथस्थंमधुसूदनम्

निवर्त्तयामासहरिस्ताः सर्वागोपयोषितः २९३
शोकसंतप्तहृदयाविलेपुःकमलेन्नगाम्
हाकृष्णकृष्णकृष्णोतिगोविंदेत्यरुदन्मुहुः २९४
अश्रुपूर्णेन्नगादीनारुदंत्यस्तत्रसंस्थिताः
अथाक्रूरोरथंदिव्यंचोदयामासगोव्रजात् २९५
सहितोरामकृष्णाभ्यांमथुरांप्रतियादवः
उत्तीर्ययमुनांशीघ्रंकूलेस्थाप्यरथोत्तमम् २९६
अवरुह्यरथात्तस्मात्स्नातुंतत्रोपचक्रमे
तथा चावश्यकंकर्तुंनिमज्ज्याथजलेशुभे २९७
तत्राघमर्षणंसम्यग्जपन्भागवतोत्तमः
ददर्शतौजले तत्ररामकृष्णौशुभान्वितौ २९८
शरत्कोटींदुसंकाशंनीलांबरधरंप्रभुम्
दिव्यचंदनदिग्धांगंमौक्तिकाभरणच्छविम् २९९
रक्तारविंदनयनंपुडंरीकावतंसकम्
रामंददर्श कृष्णंचनीलनीरदसन्निभम् ३००
दिव्यपीतांबरधरंपुंडरीकायतेन्नगाम्
हरिचंदनलिप्तांगंनानारत्नविभूषितम् ३०१
दृष्ट्वातत्रयदुश्रेष्ठोविस्मयं परमंगतः
उत्थायस्यंदनेतत्रतौददर्शमहाबलौ ३०२
पुनरप्यत्रनिर्मज्ज्यजपन्मंत्रद्वयंहरिम्
सुधाब्धौशेषपर्यंकेरमयासहितंहरिम् ३०३
सनकाद्यैस्तूयमानंसर्वैर्देवैरुपासितम्
दृष्ट्वातस्मिन्जलेदेवंविस्मयंपरमंययौ
तुष्टावाथयदुश्रेष्ठोहरिंसर्वगमीश्वरम् ३०४
अक्रूरउवाच–
कालात्मनेनमस्तुभ्यमनादिनिधनायच
अव्यक्तायनमस्तुभ्यमविकारायतेनमः ३०५
भूतभर्त्रेनमस्तुभ्यंभूतव्याघ्रनमोनमः
नमस्तेसर्वभूतानांनियन्त्रेपरमात्मने ३०६
विकारायाविकारायप्रत्यन्नपुरुषायच

गुणभर्त्रेनमस्तुभ्यंनियमायनमोनमः ३०७
देशकालादिनिर्भेदरहिताय परात्मने
अनंतायनमस्तुभ्यमच्युतायनमोनमः ३०८
गोविंदायनमस्तुभ्यंत्रयीनाथायशार्ङ्गिणे
नारायणायविश्वायवासुदेवायतेनमः ३०९
विष्णवेपुरुरूपायशाश्वतायनमोनमः
पद्मनेत्रायनित्यायशंखचक्रधरायच ३१०
उद्यत्कोटिरविप्रख्यभूषणांचितवर्चसे
हरयेसर्वलोकानामीश्वरायनमोनमः ३११
सवित्रेसर्वजगतांबीजायपरमात्मने
संकर्षणायकृष्णायप्रद्युम्नायनमोनमः ३१२
अनिरुद्धायधात्रेचविधात्रेविश्वयोनये
सहस्रमूर्त्तयेतुभ्यं बहुमूर्द्धांघ्रिबाहवे ३१३
सहस्रनाम्नेनित्याय पुरुषायनमोनमः
नमस्तेनागपर्यंकशायिनेसौम्यरूपिणे ३१४
केशवायनमस्तुभ्यं पीतवस्त्रधरायच
लक्ष्मीघनकुचाश्लेषविमर्दोज्ज्वलवर्चसे
श्रीधरायनमस्तुभ्यंश्रीशायानंतरूपिणे ३१५
ईश्वरउवाच-
स्नानकाले पठेद्यस्तुदेवंध्यायन्सनातनम्
इमंस्तवंनरोभक्त्यामहद्भिर्मुच्यतेह्यघैः ३१६
सर्वतीर्थफलंप्राप्यविष्णुसायुज्यमाप्नुयात्
एवमंतर्जलेदेवंस्तुत्वाभागवतोत्तमः ३१७
अर्चयामाससजलैःकुसुमैश्चसुगंधिभिः
कृतकृत्यस्तदाक्रूरोनिर्गत्ययमुनाजलात् ३१८
समेत्यरामकृष्णौतुप्रणनामशुभान्वितः
तंदृष्ट्वाप्राहगोविंदोविनीतंविस्मितंहरिः ३१९
श्रीकृष्णउवाच-
किमाश्चर्यंजलेतस्मिन्दृष्टवानसियादव
ईश्वरउवाच-

अक्रूरस्तुयदुश्रेष्ठंप्राहकृष्णंसुतेजसम् ३२०
अक्रूरउवाच-
तवसर्वगतस्येशमहिम्नोजगतः प्रभो
किमाश्चर्यंहृषीकेशजगत्सर्वंत्वमेवहि ३२१
त्वमापस्त्वंनभोवह्निस्त्वंभूमिरनिलस्तथा
चतुर्विधमिमंसर्वंजगत्स्थावरजंगमम् ३२२
त्वत्तोनान्यद्वासुदेवजीमूतादमृतंयथा
त्वंयज्ञस्त्वंवषट्कारस्त्वमोंकारोहविस्तथा ३२३
त्वमेवसर्वदेवानामीश्वरः शाश्वतोऽव्ययः
नाकारणात्कारणाद्वाकरणाकारणात्परः ३२४
धर्मत्राणायदेवेशशरीरग्रहणंतव
मत्स्यकूर्मवराहादिवैभवत्वमुपागतः ३२५
पासिसर्वमिमंलोकंत्वमेवत्वन्मयंबिभो ३२६
ईश्वरउवाच-
इतिसंस्तुत्य गोविंदंप्रणम्यजगतांपतिम्
आरुरोहरथंदिव्यंताभ्यांसहयदूत्तमः ३२७
ततस्तूर्णंसमासाद्यमथुरांदेवनिर्मिताम्
रामकृष्णौपुरद्वारिनिवेश्यांतःपुरंययौ ३२८
तयोरागमनंतस्यनिवेद्यनृपतेस्तदा
राज्ञासंपूजितस्तेनततःस्वगृहमाविशत् ३२९
अथसायाह्नसमये रामकृष्णौमहाबलौ
परस्परंकरौगृह्यमथुरायांसमागतौ ३३०
गछन्तौचमहावीर्यौराजमार्गेयदूत्तमौ
ददृशतुर्महात्मानौरजकंवस्त्ररंजकम् ३३१
दिव्यवस्त्रवृतंराजगेहमायांतमच्युतः
ययाचेतानिवस्त्राणिसहरामेणवीर्यवान् ३३२
नदत्तवांस्तदातस्मैरुषावैवस्त्ररंजकः
बहूनिकटुवाक्यानिप्राहतत्राध्वनिस्थितः ३३३
ताडयामासतंकृष्णस्तलेनैवमहाबलः
तत्रैवनिहतोमार्गेवमन्वैरुधिरंबहु ३३४

तानिवस्त्राणिरम्याणिगोपालैःसहबांधवैः
धारयामासतुर्वीरौयथाहंरामकेशवौ ३३५
मालाकारगृहंप्राप्यतेनदृष्टौनमस्कृतौ
सुगंधिभिर्दिव्यपुष्पैः पूज्यमानौमुदान्वितौ ३३६
ददतुस्तौबरंतस्मैवांछितंयदुपुंगवौ
समागतौपुनर्वीथ्यामायांतींचशुभाननाम् ३३७
कुब्जांस्त्रियंमहाभागौधृतचंदनभाजनाम्
वक्रांगपृष्ठांवनितांदृष्ट्वागंधमयाचतम् अं३३८
प्रहसंतीतदाताभ्यांददौचंदनमुत्तमम्
आदायचंदनंदिव्यमुपलिप्ययथेच्छया ३३९
तस्यैकांततरंरूपंदत्त्वाऽध्वनिसमागतौ
निरीक्ष्यमाणौयोषिद्भिःसुकुमारौशुभाननौ ३४०
विवेशतुर्महात्मानौयज्ञशालांसहानुगैः
दृष्ट्वासमर्चितंदिव्यंकार्मुकंतत्रकेशवः ३४१
लीलयैवगृहीत्वाऽथबभंजमधुसूदनः
बिभज्यमानंतच्चापंश्रुत्वाकंसःसुविह्वलः ३४२
आहूयमल्लान्सूतांस्तुप्रमुखान्दैत्यपुंगवान्
विमृश्यमंत्रिभिःप्राहचाणूरं दैत्यपुंगवः ३४३
कंसउवाच-
रामकृष्णौसमायातौसर्व दैत्यविनाशकौ
प्रभातेमल्लयुद्धेनहन्यतामविशंकया ३४४
येनकेनाप्युपायेनहंतव्यौबलदर्पितौ
मदोत्कटैर्गजैर्वापिमल्लमुख्यैश्चयत्नतः ३४५
ईश्वरउवाच-
इत्यादिश्यततोराजासानुजःसचिवैःसह
आरुरोहभयात्तूर्णंदिव्यप्रासादमूर्द्धनि ३४६
द्वारेषुसर्वमार्गेषुगजान्मत्तानयोजयत्
मल्लान्मदोत्कटान्नागान्स्थापयामाससर्वतः ३४७
ज्ञात्वाकृष्णोऽपितत्सर्वंसहरामेणधीमता
उवासरजनींतत्रयज्ञगेहेसहानुगैः ३४८

ततोरजन्यांव्युष्टायांप्रभातेविमलेसति
शयनादुत्थितौवीरौरामकृष्णौकृतोदकौ ३४९
स्वलंकृतौचतौभुक्त्वासंग्रामाभिमुखोत्सुकौ
विनिर्गतौगृहात्तस्मात्सिंहाविवमहागुहात् ३५०
राजद्वारिस्थितंनागंहिमाद्रिशिखरोपमम्
नाम्नाकुवलयापीडंकंसस्य जयवर्द्धनम् ३५१
देवकुंजरदर्पघ्नंमहाकायंमदोत्कटम्
दृष्ट्वातंचमहानागंपंचास्यइवकेशवः ३५२
करेणैवकरंगृह्यसम्यगुत्प्लुत्यलीलया
भ्रामयित्वाथचिक्षेपधरणयांधरणीधरः ३५३
सतुचूर्णिसतसर्वांगोनिनदन्भैरवंस्वनम्
पपातसहसाभूमौममारचमहागजः ३५४
हत्वा दंतौसमुत्पाट्यगृहीत्वारामकेशवौ
मल्लैरायोधनंकर्तुंरंगंविविशतुस्तदा ३५५
तत्रस्थादानवादृष्ट्वागोविंदस्यपराक्रमम्
भीताः प्रविद्रुताःसर्वेराज्ञोंतःपुरमाययुः ३५६
कपाटौसुदृढौबध्वातत्रतस्थुःसहस्रशः
दृढबंधकपाटांस्तुदृष्ट्वाकृष्णस्तुलीलया ३५७
ताडयित्वापदेनैवपातयामासवीर्यवान्
तौभग्नौपातितौतत्रसेनानीकेव्यवस्थिते ३५८
तत्रस्थानिहताःसर्वेचूर्णितांगशिरोधराः
ततः प्रविश्यभवनंकंसस्यास्यमहाबलौ ३५९
भ्रामयंतौमहाभागश्रृंगौपीनौरणोत्सुकौ
ददृशातेमहात्मानौमल्लौचाणूरमुष्टिकौ ३६०
कंसोऽपिदृष्ट्वागोविंदंरामंचसुमहाबलम्
भयमाविश्यचाणूरंप्राहमल्लवरंतदा ३६१
कंसउवाच–
अस्मिन्नवसरेमल्लजहिगोपालबालकौ
विभज्यतवराज्यार्द्धमहंदास्याम्ययत्नतः ३६२
ईश्वरउवाच–

तस्मिन्नवसरेकृष्णोमल्लाभ्यांदृश्यतेमहान्
मध्येवनेचसंग्रामेमहामेरुरिवापरः ३६३
कंसस्यदृष्टिविषयेसंवर्त्ताग्निरिवाच्युतः
स्त्रीणांचसाक्षान्मदनः पित्रोःशिशुरिवापरः ३६४
त्रिदशानांहरिरिवगोपालानांसखायथा
बहुरूपेणददृशुस्तत्रसर्वगतंहरिम् ३६५
वसुदेवस्तथाऽक्रूरोनंदगोपोमहामतिः
अन्यंप्रासादमारुह्यददृशुःकदनंमहत् ३६६
स्त्रीभिरंतःपुरस्थाभिर्देवकीतत्रसंस्थिता
मुखंपुत्रस्यददृशे साश्रुपूर्णेक्षणाशुभा ३६७
ताभिराश्वासितादेवीभवनांतरमाविशत्
ततोदेवगणाः सर्वेविमानस्थानभस्तले ३६८
तुष्टुवुर्जयशब्देनपुंडरीकाक्षमच्युतम्
जहिकंसमितिप्राहुरुच्चैर्देवामरुद्गणाः ३६९
एतस्मिन्नंतरेतत्रतूर्यघोषनिनादिते
आसेदतुर्महामल्लौयदुसिंहौमहाबलौ ३७०
चाणूरेण तुगोविंदोमुष्टिकेनहलायुधः
युयुधातेमहात्मानौनीलश्वेताद्रिसन्निभौ ३७१
मल्लयुद्धविधानेनमुष्टिभिःपादताडनैः
बभूवकदनंघोरंदेवानांचभयावहम् ३७२
चाणूरेणचिरंकालंक्रीडित्वाऽथजनार्दनः
निष्पिष्यगांत्रंमल्लस्यपातयामासलीलया ३७३
सपपातमहीपृष्ठेसंवमन्रुधिरंबहु
ममारचमहामल्लोदेवदानवदुःखदः ३७४
मुष्टिकेनतथारामश्चिरकालमयुध्यत
मुष्टिभिस्ताडयामासतस्यवक्षसिवीर्यवान् ३७५
भिन्नास्थिस्नायुबंधोऽसौपपातधरणीतले
ततस्तुदुद्रुवुःसर्वेमल्लादृष्ट्वापराक्रमम् ३७६
कंसोमहद्भयंतीव्रमाविशद्वेदनातुरः
एतस्मिन्नंतरेवीरौरामकृष्णौदुरासदौ ३७७

आरोहतुर्महात्मानौचैत्यप्रासादमूर्जितम्
ताडयित्वातलेनैवकंसंमूर्ध्निजनार्दनः ३७८
अपातयद्धरापृष्ठेप्रासादशिखराद्धरिः
स तुनिर्भिन्नसर्वांगोधरएयांत्यक्तजीवितः ३७९
कृष्णेननिहतेकंसेरामोऽपिसुमहाबलः
तस्यानुजंसुनामानंमुष्टिनैवजघानह ३८०
धरएयांपातयामासानुजंचधरणीधरः
हत्वाकंसंदुरात्मानंसानुजंरामकेशवौ ३८१
पित्रोःसमीपमागम्यभक्त्याचैवप्रणेमतुः
देवकीवसुदेवश्चपरिष्वज्यमुहुर्मुहुः ३८२
स्नेहेनमूर्ध्न्युपाघ्राणंचक्रतुःपुत्रलालसौ
तयोरुपरिदेवक्याः स्तनौक्षीरंववर्षतुः ३८३
ततआश्वास्यपितरौरामकृष्णौबहिर्गतौ
एतस्मिन्नंतरेदेविदेवदुंदुभयोदिवि ३८४
विनेदुःपुष्पवर्षाणिववृषुस्त्रिदशेश्वराः
स्तुत्वामरुद्गणैर्दिव्यैर्नमस्कृत्यजनार्दनम् ३८५
परंहर्षमनुप्राप्यलोकान्स्वान्स्वान् प्रपेदिरे
नंदगोपंनमस्कृत्यगोपवृद्धांश्चकेशवः ३८६
रामेणसहधर्मात्मामुदासंपरिषस्वजे
बहुरत्नधनंतस्मैददौप्रीत्याजनार्दनः ३८७
सर्वांस्तान्गोपवृद्धांश्चवस्त्रैराभरणादिभिः
बहुभिर्धनधान्यैश्चपूजयामासकेशवः ३८८
विसृष्टास्तेनकृष्णेननंदगोपपुरोगमाः
प्रययुर्गोव्रजंदिव्यंहर्षशोकसमन्विताः ३८९
मातामहंसमासाद्यरामकृष्णौदुरासदौ
बंधाद्विमोचयित्वाथसमाश्वास्यमुहुर्मुहुः ३९०
चक्रेतस्याभिषेकंतुतद्राज्येमधुसूदनः
अकारयद्द्विजश्रेष्ठैः सकंसस्योर्ध्वदैहिकम् ३९१
अक्रूरप्रमुखान्राज्येसंस्थाप्ययदुपुंगवान्
राजानमुग्रसेनंतुकृत्वाधर्मेणमेदिनीम्

पालयामासधर्मात्मावसुदेवसुतोहरिः ३९२

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादे श्रीकृष्णचरितेकंसवधोनाम
पंचत्वारिंशदधिकद्विशततमोऽध्यायः २४५

षट्चत्वारिंशधिक द्विशततमोऽध्यायः

श्रीमहेश्वरउवाच-
अथोपनयनंनामचकारानकदुंदुभिः
पुत्रयोर्वेदविधिनातस्मिन्वैरामकृष्णयोः १
आचार्येणहिगर्गेणसंस्कृतौरामकेशवौ
पंडितैर्वैष्णवैर्दिव्यैःस्नापनैर्विमलैः शुभैः २
कृतसंस्कारकर्माणौरामकृष्णौमहाबलौ
सांदीपनेर्गृहंगत्वानमस्कृत्यमहात्मनः ३
अधीत्यवेदशास्त्राणितस्मात्तौद्विजपुंगवात्
मृतंपुत्रंसमानीयददतुस्तस्यदक्षिणाम् ४
आशिषोवचनंलबध्वागुरोस्तस्मान्महात्मनः
तस्मैप्रणम्यमथुरांजग्मतुर्यदुपुंगवौ ५
अथकृष्णेननिहतंश्रुत्वाकंसंदुरासदम्
श्वशुरस्तस्यनृपतेर्जरासंधोमहाबलः ६
अक्षौहिणीसहस्रैस्तुसेनानीकैर्महाबलैः
कृष्णंहंतुंसमागत्यरुरोधमथुरांपुरीम् ७
रामकृष्णौमहावीर्यौविनिर्गत्यपुरोत्तमात्
गजवाजिसमाकीर्णंतद्बलौघमपश्यताम् ८
सस्मारवासुदेवस्तुपूर्वंरूपंसनातनम्
तस्यस्मरणमात्रेणदारुकोविष्णुसारथिः ९
सुग्रीवपुष्पकंनामसमानीयमहारथम्
वाजिभिर्दिव्यपुष्पाद्यैरुह्यमानंसनातनम् १०
दिव्यायुधैरुपेतंतंशंखचक्रगदादिभिः
वैनतेयपताकेनशोभितंदेवदुर्जयम् ११
अवनींप्राप्यगोविंदंप्रणम्यहरिसारथिः

प्रददौस्यंदनंशुभ्रंसायुधाश्वसमन्वितम् १२
दृष्ट्वाहर्षेणकृष्णोऽपिपरिणीयमहारथम्
आरुरोहाग्रजेनैवस्तूयमानोमरुद्गणैः १३
चतुर्भुजंवपुर्भूत्वाशंखचक्रगदासिभृत्
किरीटीकुंडलीस्रग्वीसंग्रामाभिमुखंययौ १४
बलदेवोऽपिमुशलंलांगलंगृह्यवीर्यवान्
तत्सैन्यंहंतुमारेभेमहेश्वरइवापरः १५
दारुकश्चरथंशीघ्रंनोदयामासतद्रणे
तृणगुल्मलताक्रांतेकाननेऽग्निमिवानिलः १६
ततोगदाभिः परिघैःशक्तिभिर्मुद्गरैस्तथा
तद्रथंछादयामासुर्जरासंधस्यसैनिकाः १७
चक्रेणैवहरिस्तूर्णंतानिचिच्छेदलीलया
बहूनितृणकाष्ठानिमहावह्निरिवार्चिषा १८
ततः शार्ङ्गंसमादायसायकैरक्षयैःशितैः
चिच्छेदतानिसैन्यानिनप्राज्ञायतकिंचन १९
चक्रच्छिन्नास्यकमलाःकेचित्तत्रमहाबलाः
गदयाचूर्णिताः केचित्केचिदन्यैर्महारणे २०
केचिच्चैवासिनाछिन्नास्तथान्येशरताडिताः
लांगलाग्रहतग्रीवामुशलाहतमस्तकाः २१
क्षणेनतद्बलंसर्वंनिहत्यमधुसूदनः
शंखंदध्मौयदुश्रेष्ठोलयाशनिनिभस्वनम् २२
शंखरावविनिर्भिन्नहृदयास्तेमहाबलाः
योधाःसाश्वाःसनागाश्चपतितास्त्यक्तजीविताः २३
अक्षौहिणीसहस्रंतुसाश्वंसरथकुंजरम्
कृष्णेनैकेननिहतंनिःशेषंतदभूद्बलम् २४
निहतंवासुदेवेनप्रहरार्द्धेनशार्ङ्गिणा
ततोदेवगणाः सर्वेहर्षनिर्भरचेतसः २५
ववृषुःपुष्पवर्षाणिसाधुसाध्वितिचाब्रुवन्
सर्वमप्यवनीभारंविमुच्यधरणीधरः २६
संस्तूयमानस्त्रिदशैर्बभौसंग्राममूर्द्धनि

निहतंस्वबलंदृष्ट्वाजरासंधोऽतिवीर्यवान् २७
योद्धुमभ्याययौतूर्णंबलदेवेनदुर्मतिः
तयोर्युद्धमभूद्घोरंसंग्रामेष्वनिवर्तिनोः २८
रामोलांगलमादायरथंतस्यससारथिम्
विनिपात्यरणेशूरोगृहीत्वातंमहाबलम् २९
उद्यम्यमुशलंतूर्णंतंहंतुमुपचक्रमे
प्राणसंशयमापन्नंजरासंधंनृपोत्तमम् ३०
कृतंरामेणबलिनासिंहेनेवमहागजम्
दृष्ट्वाकृष्णोग्रजंप्राहनहंतव्यइतिप्रभुः ३१
मोचयामासधर्मात्माजरासंधंमहामतिः
विमुच्यकृष्णवाक्येनशत्रुंसंकर्षणोऽव्ययः ३२
सानुजोरथमारुह्यमथुरांप्रविवेशह
सकालयवनंप्राप्यमहावीर्यंबलान्वितम् ३३
पुत्रयोर्वसुदेवस्यसमाचष्टपराक्रमम्
दानवानांवधंचैवकंसस्यनिधनंतथा ३४
अक्षौहिणीनांचवधंतथास्वस्यपराजयम्
सर्वंनिवेदयामासकृष्णस्यचरितंमहत् ३५
तच्छ्रुत्वायवनः क्रुद्धोमहाबलपराक्रमैः
म्लेच्छकोटिसहस्रैस्तुसंवृतोमदसंयुतैः ३६
मगधाधिपतेस्तस्यसहायार्थंमहाबलः
तेनैवसहितस्तूर्णंजगाममथुरांपुरीम् ३७
बलैराच्छाद्यपृथिवींनानाजनपदान्विताम्
संनिवेश्यमहासैन्यंरुरोधमथुरांपुरीम् ३८
कृष्णोऽपिचिंतयित्वाऽथपौराणांकुशलंतदा
ययाचेसागरंभूमिंनिवासार्थंजनस्यच ३९
त्रिंशद्योजनविस्तीर्णांददौकृष्णस्यसागरः
असृजत्पयसांमध्येतत्रद्वारवतींपुरीम् ४०
बहुप्रासादसंयुक्तांहेमप्राकारतोरणाम्
नानामणिमयैर्दिव्यैर्गृहपंक्तिभिरावृताम् ४१
उद्यानैश्चतथारम्यैस्तडागैर्बहुभिर्युताम्

असृजत्पुंडरीकाक्षोयथेंद्रस्यामरावतीम् ४२
सुषुप्तान्मथुरायांतुपौरांस्तत्रजनार्दनः
उद्धृत्यसहसारात्रौद्वारावत्यांनिवेशयत् ४३
प्रबुद्धास्तेजनाःसर्वेपुत्रदारसमन्विताः
हेमहर्म्यतलेविष्टाविस्मयंपरमंययुः ४४
बहुभिर्धनधान्यैश्चदिव्यवस्त्रविभूषणैः
परिपूर्णैरिवाभोगैर्गृहमुख्यैःसमावृताः ४५
तस्मिन्प्रहृष्टाःसंतस्थुर्दिविदेवगणाइव
यवनेनतदायोद्धुंरामकृष्णौमहाबलौ ४६
विनिर्ययतुरात्मेशौमथुरायाबहिस्तदा
रामोलांगलमादायमुशलंचमहारथः ४७
जघानसमरेक्रुद्धोयवनानांमहद्बलम्
कृष्णस्तुशार्ङ्गमासज्यवाणैरग्निशिखोपमैः ४८
निर्ददाहबलंसर्वंम्लेच्छानांदेवकीसुतः
निहतंस्वबलंदृष्ट्वासकालयवनोबली ४९
युयुधेवासुदेवेनगदयायवनेश्वरः
कृष्णोऽपिकदनंतेनकृत्वाचिरमनामयः ५०
विमुखःप्राद्रवत्तस्मात्संग्रामात्कमलेक्षणः
सोनुयातोऽतिवेगेनतिष्ठतिष्ठेतिचाब्रुवन् ५१
वेगात्कृष्णोगिरिगुहांप्रविवेशमहामतिः
तत्रप्रसुप्तोराजाऽसौमुचुकुंदोमहामुनिः ५२
अदृश्यस्तस्यनृपतेःसंस्थितोभगवान्हरिः
यवनोऽपिमहावीरोगदामुद्यम्यपाणिना ५३
कृष्णंहंतुसमारब्धोगुहांतांप्रविवेशह
दृष्ट्वाशयानंराजानंमत्वाकृष्णंजनार्दनम् ५४
पादेनताडयामासमुचुकुंदंमहामुनिम्
ततःप्रबुद्धोभगवान्मुचुकुंदोमहामुनिः ५५
क्रोधात्संरक्तनयनोहुंकारंकृतवानसौ
तस्यहुंकारशब्देनतथाक्रोधनिरीक्षणात् ५६
निर्दग्धोभस्मतांप्रापयवनस्त्यक्तजीवितः

ततस्तुकृष्णोददृशेराजर्षेःपुरतःप्रभुः ५७
नीलोत्पलदलश्यामः पुंडरीकनिभेक्षणः
शंखचक्रगदापाणिः पीतवासाजनार्दनः ५८
दृष्ट्वातंसहसोत्थायराजर्षिरमितौजसम्
अहोभाग्यमहोभाग्यमित्युवाचमहामुनिः ५९
पुलकांकितसर्वांगःसानंदाश्रुजलाकुलः
स्तुवन्वैजयशब्देनप्रणनाममुहुर्मुहुः ६०
मुचुकुंदउवाच-
धन्योस्मिकृतकृत्योस्मिदर्शनात्परमेश्वर
अद्यमेसफलंजन्मजीवितंसफलंमम ६१
नमस्तेवासुदेवायजगन्नाथायशार्ङ्गिणे
दामोदरायदेवायतेजसांनिधयेनमः ६२
अधोक्षजायहरयेनृसिंहवपुषेनमः
राघवायनमस्तुभ्यंपुंडरीकेक्षणायच ६३
अच्युतायाविकारायतथानंतायतेनमः
गोविंदायनमस्तुभ्यंविष्णवेजिष्णवेनमः ६४
नारायणाय श्रीशायकृष्णायपरमात्मने
मुकुंदायनमस्तुभ्यंचतुर्व्यूहायतेनमः ६५
नमः परमकल्याणनमस्तेपरमात्मने
वासुदेवायशांताययदूनांपतयेनमः ६६
महेश्वरउवाच-
एवंस्तुत्वातुगोविंद्रंप्रणनामपुनः पुनः
संतुष्टोभगवान्प्राहमुचुकुंदंमहामुनिम् ६७
श्रीभगवानुवाच-
वरंवृणीष्वराजर्षेयत्तेमनसिवर्त्तते
महेश्वरउवाच-
सोऽपिमुक्तिंययाचाथपुनरावृत्तिवर्जिताम् ६८
तस्मैददौतदाकृष्णोदिव्यंलोकंसनातनम्
राजातुमानुषंरूपंविहायाथमहामतिः ६९
समानंरूपमास्थायदेवस्यपरमात्मनः

वैनतेयंसमारुह्यशाश्वतंपदमाविशत् ७०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमाहेश्वरसंवादे श्रीकृष्णचरितेमुचुकुंदमोक्षोनाम
षट्चत्वारिंशदधिकद्विशततमोऽध्यायः २४६

## सप्तचत्वारिंशदधिक द्विशततमोऽध्यायः

रुद्रउवाच-
हत्वाथयवनंतत्रमुचुकुंदेनधीमता
दत्त्वातस्मैवरंमुक्तिंनिष्क्रांतोयदुनंदनः १
हतंचयवनंश्रुत्वाजरासंधःसुदुर्मतिः
ययुधेरामकृष्णाभ्यांस्वबलेनसमावृतः २
कृष्णेननिहतंसैन्यंसर्वंतस्यदुरात्मनः
सपपातमहीपृष्ठेमूर्च्छितोमगधाधिपः ३
चिरेणलब्ध्वासंज्ञांतुविह्वलांगोभयातुरः
नशशाकरणेयोद्धुंरामेणमगधेश्वरः ४
विमुखःप्राद्रवत्तूर्णंहतशेषबलानुगः
अजेयाविततौमत्वारामकृष्णौमहाबलौ ५
तयोर्विरोधंत्यक्त्वाथनगरींस्वांविवेशह
अथतौवसुदेवस्यतनयौसहसेनया ६
मथुरांत्यज्यनगरींप्रविष्टौद्वारिकांपुरीम्
इंद्रेणप्रेषितोवायुःसभांतत्रदिवौकसाम् ७
कृष्णायप्रददौप्रीत्यानिर्मितां विश्वकर्मणा
वज्रवैडूर्यरचितांबह्मासनविचित्रिताम् ८
नानारत्नमयैर्दिव्यैः स्वर्णच्छत्रैर्विराजिताम्
तांप्राप्यरम्यांतुसभामुग्रसेनादयोनृपाः ९
मोदंतेनैगमैः सार्द्धंदिविदेवगणाइव
इक्ष्वाकुवंशसंभूतोरैवतोनामपार्थिवः १०
कन्यांदुहितरंस्वस्यसर्वलक्षणसंयुताम्
रामायप्रददौप्रीत्यारेवतीनामनामतः ११
उपयेमेविधानेनसरामस्तांचरेवतीम्

रमयामासचतयाशच्याइवसुरेश्वरः १२
विदर्भराजोधर्मात्माभीष्मकोनामधार्मिकः
वभूवुस्तस्यपुत्रास्तुरुक्मप्रभृतयः शुभाः १३
तेषामवरजाकन्यारुक्मिणीवरवर्णिनी
कमलांशेनसंभूतासर्वलक्षणसंयुता १४
राघवत्वेभवत्सीतारुक्मिणीकृष्णजन्मनि
अन्येष्वेवावतारेषुविष्णोरेषासहायिनी १५
हिरण्यकहिरण्याक्षौसंभूतौद्वापरेपुनः
शिशुपालोदंतवक्त्रइतिनामसमन्वितौ १६
चैद्यान्वये समुद्भूतौ महाबलपराक्रमौ
रुक्मिणीशिशुपालायदातुमैच्छत्तदात्मजः १७
तंनेच्छतीपतिंसातुशिशुपालंशुभानना
बाल्यात्प्रभृतिवैविष्णुमनुरक्तादृढव्रता १८
उद्दिश्यकृष्णंभर्त्तारंसुराणामर्चनंसदा
चकाररुक्मिणीकन्यादानानिविविधानिच १९
व्रतचर्यापराभूत्वाध्यायंतीपुरुषोत्तमम्
आत्मेशंस्वस्यभर्तारमुवासपितृमंदिरे २०
कर्त्तुंतांशिशुपालायविवाहंपार्थिवोत्तमः
चकारयत्नंपुत्रेणरुक्मिणासविधीमता २१
पुरोहितसुतंविप्रंप्रेषयामासरुक्मिणी
उद्दिश्यकृष्णंभर्त्तारंसतूर्णंद्वारकांययौ २२
समेत्यकृष्णंरामंचताभ्यांविधिवदर्चितः
एकांतेसर्वमाचष्टरुक्मिणीभाषितं तयोः २३
तच्छ्रुत्वारामकृष्णौतुतेनविप्रेणधीमता
सर्वशस्त्रास्त्रसंपूर्णंरथमाकाशगंप्रभुः २४
आरुह्यसूतमुख्येनदारुकेणमहात्मना
विदर्भनगरींतूर्णंजग्मतुः पुरुषोत्तमौ २५
राजानः सर्वराष्ट्रेभ्योविवाहंद्रष्टुमागताः
जरासंधमुखाः सर्वेशिशुपालस्यधीमतः २६
तस्मिन्नुद्वाहसमयेरुक्मिणीरुक्मभूषणा

दुर्गांनिःसृतार्चयितुंसखीभिर्नगराद्बहिः २७
एतस्मिन्नेवकालेतुसंप्राप्तोदेवकीसुतः
रथस्थांतांचजग्राहबलावान्मधुसूदनः २८
सहसारथमारोप्यययौतूर्णंस्वमालयम्
ततः क्रोधसमाविष्टाजरासंधमुखानृपाः २९
रुक्मिणाराजपुत्रेणयुद्धायसमुपस्थिताः
अनुयाताहरिंक्रुद्धाश्चतुरंगबलान्विताः ३०
बलभद्रोमहावाहुरवरुह्यरथोत्तमात्
लांगलंमुशलंगृह्यनिजघानक्षणादरीन् ३१
रथानश्वान्महानागांस्तथापादचरानपि
लांगलमुशलाभ्यांवैनिजघानबलाद्रणे ३२
तस्यलांगलपातेनचूर्णितारथपंक्तयः
नागाश्चपतिताभुमौवज्रेणेवमहीधराः ३३
निर्भिन्नमस्तकाः सर्वेवमंतोरुधिरंवहु
क्षणेनैवहतंसैन्यंबलरामेणवैतदा ३४
साश्वंसनागंसरथंसपदातिंमहारणे
समंतात्समरेतत्रसुस्रुवुः शोणितापगाः ३५
प्रभग्नाः पार्थिवाःसर्वेदुद्रुवुर्भयपीडिताः
कृष्णेनकदनंचक्रेरुक्मीक्रोधवशाद्बली ३६
धनुरुद्यम्यबाणौघैस्ताडयामासाशार्ङ्गिणम्
ततः प्रहस्यगोविंदः शार्ङ्गमादायलीलया ३७
जघानैकेनबाणेनरथाश्वांस्तस्यसारथिम्
रथंध्वजंपताकांचचिच्छेदधरणीधरः ३८
विरथः खड्गमादायधरगयांसउपस्थितः
कृष्णस्तुखड्गंचिच्छेदबाणेनैकेनवीर्यवान् ३९
ततः समुष्टिमुद्यम्यकृष्णंवक्षस्यताडयत्
तंजग्राहरणेवीरंनिबध्यनिबिडंहरिः ४०
तीक्ष्णंक्षुरप्रमादायप्रहसन्मधुसूदनः
शिरसोमुंडनंकृत्वामुमोचचजनार्दनः ४१
सतुशोकसमाविष्टोनिःश्वसन्नुरगोयथा

आविवेशपुरंस्वीयंसतुतत्रैवचावसत् ४२
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादे श्रीकृष्णचरितेविदर्भसेनाविध्वंसनंनाम
सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः २४७

## अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः

रुद्रउवाच-
अथकृष्णस्तुरामेणरुक्मिण्यादारुकेणच
दिव्यंस्यंदनमारुह्ययौतूर्णंस्वमालयम् १
ततः प्रविश्यनगरींद्वारकांदेवकीसुतः
शुभेह्निशुभलग्नेवैवेदोक्तविधिनाहरिः २
उपयेमेनृपसुतांरुक्मिणींरुक्मभूषिताम्
तस्मिन्नुद्वाहसमयेदेवदुंदुभयोदिवि ३
विनेदुःपुष्पवर्षाणिववृषुः सुरसत्तमाः
वसुदेवोग्रसेनौचतथाक्रूरोयदूत्तमः ४
बलभद्रोमहातेजायेचान्येयदुपुंगवाः
चक्रुःकृष्णस्यरुक्मिण्याविवाहंसुसुखंयथा ५
नंदगोपोथगोपालैर्गोपवृंदैःसमागतः
स्वलंकृताभिर्योषाभिर्यशोदाचसमागता ६
वसुदेवस्त्रियःसर्वादेवकीप्रमुखास्तथा
रेवतीरोहिणीदेवीयाश्चान्याः पुरयोषितः ७
सर्वाण्युद्वाहकर्माणिचक्रुर्हर्षसमन्विताः
सुराणामर्चनंप्रीत्याकर्त्तव्यंतत्रदेवकी ८
वृद्धाभिर्नृपयोषिद्भिश्चकारविधिनातदा
सर्वमौद्वाहिकंकर्मउत्सवंहिद्विजोत्तमैः ९
ब्राह्मणान्भोजयामासवस्त्रैराभरणैःशुभैः
उग्रसेनादयस्तत्रराजानश्चसुपूजिताः १०
नंदगोपादयोगोपायशोदाद्याश्चयोषितः
बहुभिःस्वर्णरत्नाद्यैर्वासोभिः सविभूषणैः ११
पूजिताः संप्रहृष्टास्तेतद्विवाहमहोत्सवे

तौदंपतीसमाश्लिष्यप्रणतौजातवेदसम् १२
वेदविद्भिर्विप्रमुख्यैराशीर्भिरभिनंदितौ
तस्यांविवाहवेद्यांतुशुशुभाते वधूवरौ १३
ब्राह्मणेभ्योऽथवृद्धेभ्योराजन्यः सहभार्य्यया
ववंदेदेवकीपुत्रोज्येष्ठस्यभ्रातुरेवच १४
एवमौद्वाहिकंसर्वंनिर्वर्त्यमधुसूदनः
व्यसर्जयन्नृपान्सर्वान्येचतत्रसमागताः १५
प्रस्थिताहरिणातत्रपूजितानृपपुंगवाः
ब्राह्मणाःसुमहात्मानोनिर्ययुः स्वकमालयम् १६
रुक्मिरायासहधर्मात्मादेवकीनंदनोऽव्ययः
उवाससुसुखेनैवदिव्यहर्म्यतलेशुभे १७
तयावैरमयामासनारायणइवश्रिया
संस्तूयमानोमुनिभिर्दिविदेवगणैरपि १८
अहन्यहनिहृष्टात्मासुखेनैवजनार्दनः
अथोवाससुशोभायांद्वारवत्यांसनातनः १९

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादे श्रीकृष्णचरितेरुक्मिणीविवाहकथनंनाम
अष्टाचत्वारिंशदधिकद्विशततमोऽध्यायः २४८

## एकोनपञ्चाशदधिक द्विशततमोऽध्यायः

श्रीरुद्रउवाच–
सत्राजितस्यतनयानाम्नासत्यायशस्विनी
पृथिव्यंशेनसंभूताभार्याकृष्णस्यवापरा १
वैवस्वतीमहाभागाकालिदीनामनामतः
तृतीयातस्यभार्यासालीलांशासमुपस्थिता २
विंदानुविंदस्यसुतांमित्रविंदांशुचिस्मिताम्
स्वयंवरस्थितांकन्यामुपयेमेजनार्दनः ३
पाशेनैकेनबद्धातान्बृषभान्सप्तदुर्मदान्
तांवीर्यशुल्कांजग्राहपद्मपत्रायतेक्षणः ४
सत्राजितोमहारत्नंस्यमंताख्यंमहीपतिः

अनुजायददौसोऽयप्रसेनायमहात्मने ५
ययाचेतंमणिवरंकदाचिन्मधुसूदनः
उवाचवासुदेवंतंप्रसेनः प्रसभंतदा ६
प्रसेनउवाच-
भारानष्टसुवर्णानित्यंप्रसवतेमणिः
तस्मात्कस्यनदातव्यंस्यमंताख्यमिदंमया ७
महादेवउवाच-
कृष्णस्तुतदभिप्रायंज्ञात्वातूष्णीमुवासह
कदाचिन्मृगयांकर्त्तुंकृष्णःसर्वैर्यदूत्तमैः ८
प्रविवेशमहारण्यंप्रसेनाद्यैर्महाबलैः
प्रत्येकंवैमृगान्हंतुमनुयाताः सहस्रशः ९
एकएवमहारण्येप्रसेनोदूरमागतः
तंसिंहोदृष्टमासाद्यहत्वारत्नंजहारसः १०
तंसिंहंजांबबान्हत्वामणिंगृह्यमहाबलः
प्रविवेशबिलंतूर्णंदिव्यस्त्रीभिर्निषेवितम् ११
तस्मिन्नस्तंगतेसूर्येवासुदेवं सहानुगः
चतुर्थ्यामुदितंचंद्रंदृष्ट्वास्वंपुरमाविशत् १२
ततः सर्वेपुरजनाःकृष्णंप्रोचुःपरस्परम्
हत्वाप्रसेनंगोविंदोमृगव्याजेनकानने १३
स्यमंतकंमणिवरमग्रहीदविशंकया
तदाकर्ण्यहरिस्तस्मिन्द्वारकाजनभाषितम् १४
अज्ञलोकभयात्सर्वैर्यदुभिर्गहनंययौ
दर्शयामासतान्सर्वान्सिंहेननिहतंवने १५
लब्धात्मशुद्धिस्तत्रैवसंस्थाप्यमहतींचमूम्
एकःशार्ङ्गगदापाणिर्जगामगहनंवनम् १६
दृष्ट्वामहाबिलंकृष्णःप्रविवेशविशंकितः
तत्रनानामणिवरद्योतितेविमलेगृहे १७
सुतंजांबवतोधात्रीदोलामारोप्यलीलया
दोलामुखेमणिंधृत्वादोलयन्गायतीमुदा १८
सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः

सुकुमारकमारोदीस्तवह्येषस्यमंतकः १९
तच्छ्रुत्वावासुदेवोऽथशंखंदध्मौप्रतापवान्
तेननादेनमहतानिर्जगामात्रजांबवान् २०
तयोर्युद्धमभूद्धोरंदशरात्रंनिरंतरम्
मुष्टिभिर्वज्रकल्पैश्चसर्वभूतभयावहम् २१
कृष्णस्यबलवृद्धिंचतथात्मबलसंक्षयम्
अवेक्ष्यपूर्ववचनंबुबुधेपरमात्मनः २२
सोऽयरामोऽवतीर्णोऽत्रधर्मत्राणायवैपुनः
सआगतोममस्वामीदातुंममनोरथम् २३
एवंज्ञात्वाथऋक्षेशोनिर्बर्त्यरणकर्मतत्
प्रांजलिप्राहगोविंदंकोभवानितिविस्मयात् २४
निवर्त्यकदनंशौरिःप्रोचेगंभीरयागिरा
श्रीकृष्णउवाच-
पुत्रोऽहवसुदेवस्यवासुदेवइतीरितः २५
ममरत्नंस्यमंताख्यंहृतवांस्त्वंसुनिर्भयः
तद्दीयतांचशीघ्रंमेअन्यथावधमेष्यसि २६
महादेवउवाच-
तच्छ्रुत्वाजांबवान्हृष्टः प्रणनामाथदंडवत्
परिणीयनमस्कृत्यविनयात्प्राहकेशवम् २७
जांबवानुवाच-
धन्योस्मिकृतकृत्योस्मितवसंदर्शनात्प्रभो
दासोऽह पूर्वभावेनतवदेवकिनंदन २८
दत्तवानसिगोविंदकदनंपूर्वकांक्षितम्
मयेदंकदनंमोहाद्यत्कृतंस्वामिनात्वया
तत्क्षम्यतांजगन्नाथकरुणाकरशाश्वत २९
महादेवउवाच-
इत्युक्त्वाप्रणतोभूत्वानमस्कृत्यपुनः पुनः
नानारत्नमयेपीठेनिवेश्यविनयात्प्रभुम् ३०
शारदाब्जनिभौपादौप्रक्षाल्यशुभवारिणा
मधुपर्कविधानेनपूजयित्वायदूद्वहम् ३१

वस्त्रैराभरणैर्दिव्यैःपूजयित्वाविधानतः
पुत्रींजांबवतींनामकन्यांलावण्यसंयुताम् ३२
कन्यारत्नंददौतस्मैभार्यार्थममितौजसे
अन्यैश्चमणिमुख्यैश्चस्यमंताख्यंददौमणिम् ३३
तत्रैवोद्वाह्यतांकन्यांप्रहृष्टपरवीरहा
ददौतस्मैपरांमुक्तिंप्रीत्याजांबवतेहरिः ३४
गृहीत्वातनयांतस्यकन्यांजांबवतींमुदा
विनिर्गत्यबिलात्तस्मात्प्रययौद्वारकांपुरीम् ३५
सत्राजितेददौरत्नंस्यमंताख्यंयदूत्तमः
दुहित्रेप्रददौसोऽपिकन्यायैमणिमुत्तमम् ३६
मासिभाद्रपदेशुक्लेचतुर्थ्यांचंद्रदर्शनम्
मिथ्याभिदूषणंप्राहुस्तस्मात्तत्परिवर्जयेत् ३७
प्राप्यतेदर्शनंतत्रचतुर्थ्यांशीतगोर्नरः
स्यमंतस्यकथांश्रुत्वामिथ्यावादात्प्रमुच्यते ३८
सुलक्ष्मणांनाग्नजितींसुशीलांचयशस्विनीम्
मद्रराजसुतास्तिस्रःकन्यकास्ताःशुभाननाः ३९
स्वयंवरस्थास्ताःकृष्णंवरयामासुरुज्ज्वलाः
एकस्मिन्दिवसेतास्तुउपयेमेयदूद्वहः ४०
अष्टौमहिष्यस्ताः सर्वारुक्मिण्याद्यामहात्मनः
रुक्मिणीसत्यभामाचकालिदीचशुचिस्मिता ४१
मित्रविंदाजांबवतीनाग्नजित्यःसुलक्ष्मणा
सुशीलानामतन्वंगीमहिषीचाष्टमीस्मृता ४२
भूमिपुत्रोमहावीर्योनरकोनामराक्षसः
जित्वादेवपतिंशक्रंसर्वांश्चैवसुरान्रणे ४३
अदित्यादेवमातुश्चकुंडलेचसुवर्चसी
बलाज्जग्राहदेवानांरत्नानिविविधानिच ४४
एरावतंमहेंद्रस्यतथैवोच्चैःश्रवंहयम्
माणिक्यादिधनेशस्यशंखपद्मनिधिंतथा ४५
स्त्रियश्चाप्सरसश्चैवहृतवान्दितिनदंनः
वज्रादिहेतीस्तेषांचबलाद्धृत्वादिवौकसाम् ४६

तैरेवससुरान्हत्वासभांमयविनिर्मिताम्
उवासव्योमगोदिव्योनगर्याविमलेंबरे ४७
ततोदेवगणाःसर्वेपुरस्कृत्यशचीपतिम्
भयार्ताःशरणंजग्मुः कृष्णमक्लिष्टकारिणम् ४८
कृष्णोऽपितदुपश्रुत्यसर्वंनरकचेष्टितम्
देवानामभयंदत्वावैनतेयंव्यचिंतयत् ४९
तस्मिन्क्षणेहरेस्तस्यवैनतेयोमहाबलः
प्रांजलि पुरतस्तस्थौसर्वदेवनमस्कृतः ५०
तमारुह्यद्विजश्रेष्ठंसत्ययासहकेशवः
संस्तूयमानोमुनिभिः प्रययौराक्षसालयम् ५१
प्रदीप्यमानमाकाशेयथासूर्यस्यमंडलम्
राक्षसैर्बहुभिर्युक्तंदिव्यैराभरणैर्युतम् ५२
ददर्शतत्पुरंकृष्णोदुर्भेद्यंत्रिदशैरपि
तदावरणानिभगवान्वीक्ष्यचक्रेणवीर्यवान् ५३
चिच्छेदतेजसादीप्त्यातमांसिचदिवाकरः
ततस्तेराक्षसाःसर्वेशतशोऽथसहस्रशः ५४
उद्यम्यशूलानितदायुद्धायाभिमुखंययुः
ततस्तुतोमरैर्दिव्यैर्भिण्डपालैःसुपट्टिशैः ५५
केशवंताडयामासुः पलालैरिवपावकम्
ततस्तु शार्ङ्गमादायभगवान्गारुडध्वजः ५६
दिव्यशस्त्राणिचिच्छेदबाणैरग्निशिखोपमैः
तेषांशिरोधरानागानश्वांश्चैवतरस्विनः ५७
चक्रेणैवप्रचिच्छेदवीर्यवान्पुरुषोत्तमः
केचिच्चक्रेणसंछिन्नास्तथान्येशरताडिताः ५८
गदयानिहताः केचिद्राक्षसास्तद्रणाजिरे
एवंतेराक्षसाःसर्वेपातिताधरणीतले ५९
शक्रोत्सृष्टेनवज्रेणनिर्भिन्नाइवभूधराः
निहत्यदानवान्सर्वान्पुंडरीकायतेक्षणः ६०
पाञ्चजन्यंमहाशंखंप्रदध्मौपुरुषोत्तमः
ततःसनरकोदैत्योधनुरादायवीर्यवान् ६१

दिव्यंस्यंदनमारुह्यययौयुद्धायकेशवम्
तयोर्युद्धमभूद्धोरंतुमुलंलोमहर्षणम् ६२
बहुभिर्बाणसाहस्रैर्मेघयोरिववर्षतोः
ततोऽर्द्धचंद्रवाणेनवासुदेवःसनातनः ६३
तस्यराक्षसमुख्यस्यधनुश्चिच्छेदवीर्यवान्
ससर्जास्त्रंमहादिव्यंनरकस्यमहोरसि ६४
सतेनभिन्नहृदयःपपातोर्व्यांमहासुरः
शक्रवज्रेणनिर्भिन्नोमहाचलइवोन्नदन् ६५
उपगम्यततः कृष्णःसमीपंतस्यरक्षसः
भूम्यासंप्रार्थितः प्राहवरंवृणिवतिराक्षसम्
सचाहराक्षसःकृष्णंगरुडोपरिसंस्थितम् ६६
नमेकृत्यंवरेणास्तिनरकोऽहतथापिच
अन्यलोकहितार्थायवृणेऽहवरमुत्तमम् ६७
मृताहनितुमेकृष्णसर्वभूतेश्वरेश्वर
येनरामंगलस्नानंकुर्वंतिमधुसूदन
नतेषांनिरयप्राप्तिर्भवत्वेवंभयापह ६८
महादेवउवाच–
एवमस्त्वितिगोविंदोददौतस्मैवरंप्रभुः
ततः पश्यन्हरेः साक्षाच्छरदंबुजसन्निभौ ६९
चरणौवज्रवैडूर्य्यनूपुराभ्यांविराजितौ
अर्चितौविधिरुद्राद्यैस्त्रिदशैर्मुनिभिस्तथा ७०
त्यक्त्वाप्राणान्महीपुत्रःसारूप्यमगमद्धरेः
ततोदेवगणाःसर्वेहर्षनिर्भरमानसाः ७१
ववृषुःपुष्पवर्षाणितुष्टुवुश्चमहर्षयः
प्रविश्यनगरंतस्यकृष्णःकमललोचनः ७२
बलात्तेनगृहीतानिरत्नानित्रिदिवौकसाम्
कुंडलेदेवमातुश्चतथैवोच्चैःश्रवोहयम् ७३
एरावतंगजश्रेष्ठंप्रदीप्तंमणिपर्वतम्
सर्वमेतद्यदुश्रेष्ठोददौशक्रायवज्रिणे ७४
पार्थिवान्सर्वराष्ट्रेभ्योजित्वाऽसौ नरकोवली

कन्याषोडशसाहस्रंहृतवान्नरकस्तदा ७५
सन्निरुद्धास्तुताःसर्वानरकांतःपुरेतदा
दृष्ट्वाकृष्णंमहावीर्यंकंदर्पशतसंनिभम् ७६
भर्तारंवव्रिरेसर्वा पतिंविश्वस्यसर्वगम्
एतस्मिन्नेवकालेतुगोविंदोऽनतरूपवान् ७७
तासांकरग्रहंचक्रेविधिनापुरुषोत्तमः
नरकस्यसुताः सर्वेपुरस्कृत्यमहींतदा ७८
गोविंदंशरणंजग्मुस्तानरक्षद्घृणानिधिः
तद्राज्येस्थाप्यतान्सर्वान्पृथिव्यावाक्यगौरवात् ७९
एंद्रंविमानमारोप्यताश्चसर्वावरस्त्रियः
देवदूतैर्महाभागैर्द्वारवत्यांन्यवेशयत् ८०
वैनतेयंसमारुह्यसत्ययासहकेशवः
स्वर्लोकंप्रययौतूर्णंद्रष्टुंतांदेवमातरम् ८१
प्रविश्यनगरींतत्रदेवराज्ञोजनार्दनः
अवरुह्यद्विजश्रेष्ठात्पत्न्यासहमहाबलः ८२
ववंदेमातरंतत्रवंद्यांतांत्रिदिवौकसाम्
संपरिष्वज्यबाहुभ्यामदितिः पुत्रवत्सला ८३
निवेश्यासनमुख्येतुपूजयामासभक्तितः
आदित्यावसवोरुद्राःशतक्रतुपुरोगमाः ८४
तत्रसंपूजयामासुर्यथार्हंपरमेश्वरम्
शचीगृहंसमागम्यसत्यभामायशस्विनी ८५
तयासमर्चितादेव्यासमासीनासुखासने
तस्मिन्कालेसुपुष्पाणिपारिजातस्यकिंकराः ८६
शच्यैदेव्यैददुःप्रीत्यासहस्राक्षेणचोदिताः
प्रगृह्यतानिपुष्पाणिशचीदेवीसुमध्यमा ८७
नीलनिर्मलकेशेचबबंधस्वस्यमूर्धनि
अवमान्यशचीतत्रसत्यभामांयशस्विनीम् ८८
अनर्हामानुषीचेयंदेवार्हंकुसुमंशुभम्
इतिकृत्वामतिंतस्यैनददौकुसुमानिसा ८९
विनिष्क्रम्यपुरात्तस्मात्सत्याकोपसमन्विता

समेत्यकृष्णंभर्त्तारमुवाचकमलेक्षणा ९०
सत्योवाच-
एषाशचीयदुश्रेष्ठपारिजातेनगर्विता
अदत्त्वाममगोविंदबबंधस्वस्यमूर्द्धनि ९१
महादेवउवाच-
सत्ययाभाषितंश्रुत्वावासुदेवोमहाबलः
उत्पाट्यपारिजातंतुनिवेश्यगरुडोपरि ९२
आरुह्यसत्ययातूर्णंवैनतेयंमहाबलम्
प्रययौद्वारकांरम्यांनगरींदेवकीसुतः ९३
ततःकोपसमाविष्टोदेवराजःशतक्रतुः
रुद्रैर्वसुभिरादित्यैःसाध्यैश्चमरुतांगणैः ९४
एरावतंसमारुह्यययौयुद्धायकेशवम्
ततोदेवगणाः सर्वेपरविर्य्यजनार्दनम् ९५
ववृषुःशस्त्रवर्षाणिमेघाइवमहाचलम्
कृष्णश्चिच्छेदचक्रेणतान्यस्त्राणिदिवौकसाम् ९६
वैनतयस्तुसंक्रुद्धःपक्षपातेनवीर्यवान्
पातयामासतान्देवान्पलालानीवमारुतः ९७
ततः क्रुद्धःसहस्राक्षोदेवानामीश्वरःप्रभुः
मुमोचसहसादीप्तंवज्रंकृष्णजिघांसया ९८
जग्राहकृष्णस्तंवज्रंहस्तेनैकेनलीलया
ततोभीतः सहस्राक्षोनागेंद्रादवरुह्यसः ९९
प्रांजलिपुरतः स्थित्वानमस्कृत्वाजनार्दनम्
प्राहगद्गदयावाचास्तुत्वास्तुतिभिरेवच १००
इंद्रउवाच-
देवयोग्यमिदंकृष्णपारिजातंत्वयापुरा
दत्तोममसुराणांचकथंस्थास्यतिमानुषे १०१
महादेवउवाच-
ततः प्रोवाचभगवान्सहस्राक्षमुपस्थितम्
शच्यावमानितासत्यातवगेहेसुरेश्वर १०२
अदत्त्वापारिजातानिसत्यायैसापुलोमजा

स्वयमेवस्वशिरसिधारयामासतेप्रिया १०३
अस्यानिमित्तंदेवेंद्रपारिजातोहृतोमया
अस्यैप्रतिश्रुतंदातुंमयासुरगणेश्वर १०४
तवगेहेपारिजातंस्थापयामीतिवासव
तस्मादद्यनदातव्यःपारिजातः सुरेश्वर १०५
देवतानांहितार्थायप्रापयिष्यामिभूतले
तावत्तिष्ठतुदेवेंद्रपारिजातोममालये १०६
मयिस्वर्गंगतेशक्रगृहाणत्वंयथेच्छया
महादेवउवाच-
एवमुक्त्वायदुश्रेष्ठस्तस्मैवज्रंददौस्वयम् १०७
एवमस्त्वितिगोविंदंनमस्कृत्यसवज्रभृत्
प्रययौस्वपुरंदिव्यंसहदेवगणैर्वृतः १०८
कृष्णोऽपिसत्ययादेव्यागरुडोपरिसंस्थितः
संस्तूयमानोमुनिभिर्द्वारवत्यांविवेशह १०९
सत्ययानिकटेस्थाप्यपारिजातंसुरद्रुमम्
रमयामासभार्याभिःसर्वाभिःसर्वगोहरिः ११०
निशासुतासांसर्वासांगृहेषुमधुसूदनः
विश्वरूपधरः श्रीमानुवाससुखप्रदः १११

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्त्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादे श्रीकृष्णचरितेश्रीवासुदेवविवाहकथनं
नामैकोनपंचाशदधिकद्विशततमोऽध्यायः २४९

## पञ्चाशदधिक द्विशततमोऽध्यायः

श्रीरुद्रउवाच-
रुक्मिरायांकृष्णस्यप्रद्युम्नोमदनांशेनजज्ञे १
असौ मदनशंभूतोमहाबलः शंबरंजघ्निवान् २
तस्यरुक्मिणःसुतायामनिरुद्धोजज्ञे ३
सोऽपिबाणपुत्रीमुषांनामकन्यामुपयेमे ४
सातुस्वप्नेनीलोत्पलदलश्यामंपुंडरीकनिभेक्षणं
महाबाहुंविचित्राभरणोपेतंषोडशसमायथावदुपभुज्यप्रबुध्यतंपुरतोनदृष्ट्वा

मदनेनपीडिताभ्रांत
चित्तामांतुत्यक्त्वावयस्कंरक्तारविंदवक्त्रंक्वासिक्वयासीतिबहुधाविललाप ५
ततस्तस्याः सखीचित्रलेखेतिनाम कन्यांतादृशीम
वस्थांगतांविलोक्यकिंनिमित्तविभ्रांतचित्तासीतिपप्रच्छ ६
सापिस्वप्नलब्धंपतिंयथावदाचष्ट ७
सापिसकलदेवमानुषादिश्रेष्ठान्पटेविलिख्यतस्यैदर्शयामास ८
यदुवंशसंभूतान्कृष्णसंकर्षणप्रद्युम्नानिरुद्धादीनपिसम्यङ्गिनवेदयामास ९
सातेषांकृष्णमनुमान्यप्रद्युम्नानंतरमनिरुद्धंदृष्ट्वासइत्येषइत्यालिलिग १०
अथचित्रलेखाबह्वीभिर्मायावतीभिर्दैत्यस्त्रीभिर्द्वारवतींगत्वारात्रावंतःपुरेसुप्तमनिरुद्धं
दृष्ट्वागृहीत्वामोहयित्वामाहिष्मत्यांबाणस्यांतः
पुरेचैत्यप्रासादादियुक्तेतस्याबाणपुत्र्याः
शय्यायांचिक्षेप ११
सोऽपिप्रबुद्धोतिरम्येऽनगपावकेसंस्थितामुषांसर्वलक्षणलक्षितांविचित्राभरणवसनगंध
माल्यालंकृतांकांचनवर्णांसुकेशींसुजातस्तनींदृष्ट्वागाढमालिग्यकरिण्या
गंधहस्तीवतयातिप्रीतिसंयुक्तयायथासुखंरमयामास १२
एवंमासमात्रंनिरंतरतयानिरुद्धंरममाणंकदाचिदंतःपुरनिवासिन्योवृद्धादैत्यस्त्रियोज्ञात्वारा
ज्ञेनिवेदयामासुः १३
सराजाक्रोधताम्राक्षः परंविस्मयंगत्वातमिहानयतेतिपुरः किंकरान्प्रेषयामास १४
तेऽपितूर्णंनृपप्रासादमारुह्यराजपुत्र्याःशयनेसंस्थितमनिरुद्धंग्रहीतुमाजग्मुः १५
सतान्समारब्धान्दृष्ट्वाप्रासादस्तंभमेकंहेलयोत्पाट्यनियुतसंख्याकान् किंकरान्मु
हूर्तमात्रणैवस्तंभेनचूर्णितमात्रंचकार १६
अथदैत्यपतिर्निहतान्किंकरान्दृष्ट्वाकौतूहलंगत्वाअसौश्रीकृष्णपौत्रइतिदेवर्षिणाप्रोक्तो
धनुरादायस्वयमेवानिरुद्धंग्रहीतुंतत्समीपमाजगाम १७
अनिरुद्धोऽपियोद्धुमायांतंसहस्रबाहुंराजानंदृष्ट्वातत्परिघं

भ्रामयित्वाबाणस्योपरिचिक्षेप १८
स्वचापनिर्मुक्तेनबाणेनतंपरिघंचिच्छेद १९
अनंतरमुरगास्त्रेणअनिरुद्धंनिबिडंबद्धवास्वांतःपुरेनिवेशयामास २०
अथकृष्णोप्येवंविधमेवदेवर्षिणाज्ञात्वाबलदेवप्रद्युम्नसहितःस्वसेनयाविहंगमें
द्रमारुह्यत
स्यबाणस्यभुजवनंछेत्तुमाजगाम २१
बलिपुत्रेणपुराशंकरोऽचितःप्रसन्नोवरंवृणीष्वेत्युवाच २२
तमीश्वरंबाणोममपुरद्वारिरक्षार्थंसर्वदोपविश्यसमागतंपरसैन्यंजहीत्येवंवरमया
चत२३
तंतथेत्युक्त्वाशंकरोऽपितस्यपुरद्वारिसायुधःसपुत्रः
सगणःसमासीनस्तमिन्नेवकालेरुषा
स्वसेनयासमागतंवासुदेवंदृष्ट्वावृषमारुह्यसर्वायुधोपेतः
स्वपुत्रगणसंवृतोयोद्धुंनिश्चक्राम २४
कृष्णोऽपितंभूतपतिंगजचर्मकपालभस्मधरंज्वलितोरगाकल्पंपिंगलंत्रिलोच-
नंत्रिशूलधरं
सर्वभूतगणसंहतिकर्त्तारंसर्वभूतभयावहं
संवर्त्ताग्निप्रभंपुत्रद्वयसमन्वितंसमस्तगणावृतं
त्रिपुरांतकंदृष्ट्वासेनांसुदूरेपृष्ठतोनिवेश्यबलभद्रप्रद्युम्नसहितस्तेनरुद्रेणसहप्रहर्ष
न्न
वयोद्धुमारेभे २५
प्रथमंतदभूद्घोरं कृष्णशंकरयोस्तदा
पिनाकशार्ङ्गनिर्मुक्तैर्बाणैःसंवर्त्तकोपमैः २६
रामोऽपिचक्रेबाणेनप्रद्युम्नः षरामुखेनच
युयुधातेमहावीर्यौसिंहाविवबलोत्कटौ २७
विनायकःस्वदंतेनजघानोरसियादवम्
रामोमुशलमादायतस्यदंतमताडयत् २८
निर्भिन्नदंतः सहसाप्रदुद्रावाखुवाहनः
तदाप्रभृतिलोकेऽस्मिन्हतदंतोगणेश्वरः २९
देवदानवगंधर्वै रेकदंतइतीरितः
प्रद्युम्नेनसमंयुद्धंचकारशिखिवाहनः ३०

गणान्विद्रावया मासमुशलेनहलायुधः
कृष्णेनसुचिरंकालंयुद्धासौनीललोहितः ३१
तापज्वरंमहादीप्तमस्मिन्संयोज्यसायके
कोपान्मुमोचतदसौभृशंसंरक्तलोचनः ३२
तदस्त्रंवारयामासकृष्णः शीतज्वरेणतु
ताभ्यांहरिहराभ्यांतुविसृष्टौताविमौज्वरौ ३३
विशतुर्मानुषेलोकेतयोरेवाज्ञयाभृशम्
हरिशंकरयोर्युद्धंयेतुशृणवंतिमानवाः ३४
तेसर्वेज्वरनिर्मुक्ताः प्राप्नुवंतिनिरामयम्
ततः सतुहृषीकेशोमोहनास्त्रंदुरासदम् ३५
नियुज्यबाणं भूतेशेमुमोचमधुसूदनः
मुहुर्मुहुर्व्यजृंभद्वैतेनास्त्रेणविमोहितः ३६
पपातमूर्च्छितोभूमौशंकरस्त्रिदशेश्वरः
पितरंमोहितंदृष्ट्वाशक्तिमुद्यम्यवीर्यवान् ३७
योद्धुमभ्याययौकृष्णंषण्मुखःशिखिवाहनः
हुंकारेणैवतंकृष्णश्चकारात्रपराङ्मुखम् ३८
एवंजित्वायदुश्रेष्ठः शूलपाणिंत्रिलोचनम्
महास्वनंपांचजन्यंशंखंदध्मौप्रतापवान् ३९
कृष्णेननिर्जितंश्रुत्वासात्मजंशंकरंतदा
बाणः स्यंदनमास्थाययौयुद्धायकेशवम् ४०
सदृष्ट्वासहसाकृष्णंगरुडोपरिसंस्थितम्
छादयामासगोविंदंबहुशस्त्रास्त्रवृष्टिभिः ४१
गदाभिः परिघैः शूलैः शक्तिभिस्तोमरैरपि
भिंडिपालैश्चखड्गैश्चचक्रैर्बाणैर्निरंतरम् ४२
तानिसर्वाणिचिच्छेदचक्रेणैवजनार्दनः
ससर्जतस्यबाहूनांछेदनार्थंसुदर्शनम् ४३
मुक्तंदनुजराजस्यसहस्रारंसुदर्शनम्
तद्बाहुकाननंतूर्णंछिन्नंचक्रेसहस्रधा ४४
एतस्मिन्नंतरेदेविपार्वतीसंशितव्रता
हरेःसमीपमागत्यकृतांजलिरभाषत ४५

पार्वत्युवाच-
कृष्णकृष्णजगन्नाथनारायणदयानिधे
दास्यस्मितवदेवेशपूर्वभावेयदूत्तम ४६
त्वयादत्तंवरंमह्यंतदाकौशलपर्वते
सौभाग्यंशाश्वतंसौम्यप्रसन्नेनमहात्मना ४७
तवमुख्यंसहस्रस्यनाम्नामन्यतमंविभो
गौरीसौभाग्यदातेतिमुनिभिः परिकीर्तितम् ४८
तत्सत्यंकुरुगोविंदगरुडारूढशाश्वत
तस्मान्ममपतिंदेवत्वंजीवयितुमर्हसि ४९
रुद्रउवाच-
एवमुक्तस्ततोदेव्याकृष्णः कमललोचनः
अस्त्रंसंहारयामासयेनासौमोहितः पतिः ५०
कृष्णास्त्रेणविनिर्मुक्तः सर्वभूतपतिः शिवः
उत्थायप्रांजलिर्भूत्वातुष्टावजगतांपतिम् ५१
शंकरउवाच-
कृष्णकृष्णजगन्नाथभवगन्पुरुषोत्तम
परेशपरमेशानअनादिनिधनाव्यय ५२
तीव्रवीर्यंमनुष्येषुशरीरग्रहणात्मिका
सर्वस्यतवचेष्टेयंमानलक्षणमेवतत् ५३
प्रसीदमेनमस्तुभ्यंप्रसीदममशाश्वत
प्रसीदमेजगत्स्वामिन्प्रसीदाच्युतकेशव ५४
त्वमेवजगतांस्रष्टाधाताहर्त्ताजगद्गुरुः
त्वमेवचिदचिद्वस्तुरूपंब्रह्मसुरेश्वर ५५
त्वमादिस्त्वमनादिस्त्वमीश्वरः शेषएवच
त्वंमहत्त्वंपरंब्रह्मप्रत्यगात्मात्वमेवहि ५६
समस्तामरवर्य्यस्त्वममर्त्यस्त्वंसुरेश्वर
त्वंमत्तर्येशःसयोनिस्त्वंसौशील्येनतवप्रभो ५७
तव श्वाससमुत्पन्नौपरजीवौसनातनौ
ततश्चपाल्यतेचैवतववात्सल्यगौरवात् ५८
क्षराक्षरेपरेधाम्निरुचोनित्यंसुराश्रये

अधिविश्वेनिधेषित्वांदास्यकर्मणिनान्यथा ५९
यस्त्वांनवेदलोकेऽस्मिन्समूढः सर्वभावनः
परावरेश्वरंधामविदुर्दास्ये मनीषिणः ६०
तेवैसमासतेयुक्तास्तत्पदंत्रिदशैःसमम्
सामान्योभजतेदूरेनंतुंनित्यंपदंतव ६१
तस्यतुर्याचारुकेशीचावस्थाघटतेतव
मिथुनानितवाध्यत्तब्रुवतेयदुशाश्वत ६२
तवनामानिकर्माणिगुणानिशाश्वतानिच
एश्वर्याणिगुणातीतब्रुवतेचोत्तमेइमे ६३
कर्मज्ञानमयेरूपेइमे पुर्वोत्तरेश्रुते
ससुतौयुवतीशस्यस्तोतारौतवकेशव ६४
त्वंप्रज्ञानंपरंब्रह्मत्वयाप्राज्ञेनशाश्वत
जीवयैतेनप्रज्ञेनपरेणैवात्मनात्वया ६५
तस्माच्छरीरादुत्क्रम्यकृपयातवकेवलम्
आमुष्मिकेपरेस्वर्गेत्वयादत्तात्मबोधवान् ६६
प्रज्ञानंचैवविज्ञानंमेधांदृष्टिंतथाधृतिम्
सर्वान्कामानवाप्नोति अमृतंसभवेत्तदा ६७
एतत्संज्ञानमात्मानंयदेतद्धृदियन्मनः
मनीषाच्चयुक्तिश्चस्मृतिः संकल्पएवच ६८
तपश्चक्रतवःकामोदशइत्यादितेप्रभो
भवंतिनामधेयानिप्रज्ञानस्यघृणानिधेः ६९
एषत्वंपरमंब्रह्मएषत्वंवैप्रजापतिः
एषत्वमिंद्रोरुद्रश्चएषत्वंसर्वदेवताः ७०
एतानिसर्वभूतानित्वमेवपरमेश्वर
सुतमित्राणिजीवायुस्तथान्यानिसनातन ७१
जरायुजाण्डजातानिस्वेदजोद्भिद्यजानिच
अश्वागावश्चपुरुषाहस्तिनश्चेतराणिच ७२
यत्किंचित्प्राणिजातंचजंगमाश्चैवजंतवः
स्थावरायेचवैनाथसर्वेत्वत्तोभवंतिच ७३
त्वांहिसवंगतंचेत्थंवदंतिश्रुतयोहरिम्

त्वयैवप्रेरितालोकाश्चेष्टंतेसाध्वसाधुषु ७४
तस्मान्मयाकृतंयच्चअपराधमिदंप्रभो
क्षमस्वकरुणासिंधोगुणैः शुभतमैस्तव ७५
नमस्तेपुंडरीकाक्षगोविंदाच्युतमाधव
वासुदेवजगद्वंद्यनारायणनमोस्तुते ७६
नमस्यामिजगत्स्वामिन्नृसिंहकरुणाकर
श्रीशसर्वगतश्रीमन्परमात्मन्नमोस्तुते ७७
निजावसथवैकुंठनित्यमुक्तार्चितप्रभो
त्रयीनाथनमस्तुभ्यंरामराजीवलोचन ७८
भूभारकविनाशायकृष्णानंदस्वरूपिणे
विष्णवेजिष्णवे तुभ्यंनमस्तेयदुनंदन ७९
एवंस्तुत्वाथगोविंदंप्रणिपत्यउमापतिः
प्रांजलि प्राहभूतेशोवाक्यंगंभीरयागिरा ८०
रुद्रउवाच-
मया दत्तवरोह्येषबाणोबलिसुतः प्रभो
अहंचदत्तवांस्तस्मैपुरानेनार्थितोवरम् ८१
अमरत्वंयदुश्रेष्ठसर्वंकर्तुंत्वमर्हसि
तस्मादेनंबलिसुतंत्रातुमर्हसि मेप्रियम् ८२
तथेत्युक्त्वाचभगवान्बाणंबलिसुतंतदा
प्राणसंशयमापन्नंच्छिन्नबाहुमसृक्चितम् ८३
संहृत्यचक्रंगोविंदोमुमोचकरुणानिधिः
मोचयित्वाबलिसुतंशंकरः संशितव्रतः ८४
वृषभेंद्रंसमारुह्यपार्वत्यासहितःप्रभुः
ययौचवसतिस्थानंकैलासंधरणीधरम् ८५
सतुबाणोनमस्कृत्यरामकृष्णौमहाबलौ
ताभ्यांवैनगरींगत्वामुमोचमदनात्मजम् ८६
वस्त्रैराभरणैर्दिव्यैः पूजयित्वायथार्हतः
उषांसंप्रददौतस्मै कृष्णपौत्रायशौरये ८७
उद्वाह्यरामकृष्णौतमनिरुद्धंयथाविधि
बाणेनपूजितौतत्रप्रद्युम्नसहितौतदा ८८

उषयासहितंतत्रानिरुद्धंवैजनार्दनः
आरोप्यस्यंदनेदिव्येययौद्वारवतींतदा ८९
रामप्रद्युम्नसहितःसेनयासहितोहरिः
प्रविवेशपुरींरम्यांत्रिदशैर्मघवानिव ९०
अनिरुद्धोबाणपुत्र्यानानारत्नमयेगृहे
अनिशंरमयामासनानाभोगैर्मुदान्वितः ९१
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडेउमा
महेश्वरसंवादेबाणासुरसंग्रामकथनंनामपंचाशदधिकद्विशततमोऽध्यायः२५०

## एकपंचाशदधिकद्विशततमोऽध्यायः

श्रीरुद्रउवाच-
अथपौंड्रकवासुदेवः
काशिराजोवाराणस्यांविविक्तेद्वादशवर्षंमहेशमर्च्चयन्निराहारः
पंचाक्षरंजजाप १
पौरश्चरणकालेशंकरंस्वनेत्रकमलेनपूजयामास २
ततःशूलपाणिरुमापतिः प्रसन्नोवरंवृणीष्वेतितमाह ३
असौपंचवक्त्रंसर्वभूतपतिंशिवंप्रसन्नंवरदममवासुदेवसमानरूपंप्रयच्छेत्युवाच
४
शिवस्तस्मैशंखचक्रगदापद्मयुतचतुर्भुजंपुंडरीकदलनिभलोचनं वासुदे-
वसंमानकिरीट
ललितकुंतलंपीतवस्त्रकौस्तुभाभरणादिचिह्नान्यपिमह्यंदेहीतियाचितः शिवः
सर्व
मपितस्मैप्रददौ ५
सतुवासुदेवोऽहमितिसर्वलोकान्मोहयामास ६
कदाचित्स्वर्गतःमदबलोत्कटंतंकाशिपतिंनारदोऽभ्येत्यवसुदेवसुतमजित्वाव
ासुदेवत्वंन विद्यतेइत्युवाच ७
सतुतस्मिन्नेवक्षणेगरुडपताकायुतरूपंरथमारोप्यचतुरंगाक्षौहिणीबलेनद्वारका
मवाप
८
तत्रपुरद्वारिस्वर्णयानेसंस्थितोवासुदेवोऽहयुद्धार्थंसंप्राप्तोस्मि

मामजित्वातववासुदेवत्वंनास्तीतिदूतंप्रेषयामास ९
विष्णुरपितच्छ्रुत्वावैनतेयमारुह्यपौड्रकेणयोद्धुंपुरद्वारिविनिष्क्रम्याद्यौहिणीब
लेनस्यंदनेस
मासीनंशंखचक्रगदापद्महस्तंपौंड्रकंददर्श १०
कृष्णोऽथशार्ङ्गमादायसंवर्ताग्निप्रभैर्बाणैस्तथाश्वगजपदातियुक्तंमहदद्यौहिणीब
लंमुहूर्त
मात्रेणनिःशेषंददाह ११
शरेणैकेनतस्यहस्तावसक्तशंखचक्रगदादिहेतीरपिलीलयैवचिच्छेद १२
पवित्रेणसुदर्शनेनकिरीटकुंडलयुतंतस्यशिरःकमलंछित्त्वावाराणस्यामंतः
पुरेनिपातयामास १३
तद्दृष्ट्वासर्वेकाशीनिवासिनः किमेतदित्याशंक्यविस्मिताबभूवुः १४
तस्यपौंड्रकस्यसुतोदंडपाणिरितिवासुदेवेनभगवतानिहतंस्वपितरं
श्रुत्वामात्रामृत्युनास
मादिष्टः स्वपुरोहितेनाभियुक्तोमाहेश्वरेणक्रतुनाशंकरमियाज १५
सतुप्रसन्नः कृष्णजिघांसयासमर्थांमाहेश्वरींकृत्यांतस्मैसंप्रीत्याचदत्तवान् १६
सकाशिराजस्तांमहोश्वरींज्वालाकुलोपचितविग्रहांसंदीप्तसटाकलापांपिंगलने
त्रांज्वलत्क
रालवदनांत्रिशूलहस्तांभस्मांगरागलिप्तांनरमुंडमालाविभूषितांसर्वदेवभयंकरीं
रुद्रदत्तांस
मीद्ग्यसपुत्रदारबांधवसहितंकृष्णंजहीतिप्रेरयामास १७
सातुसर्वलोकभयावहासर्वांपृथ्वद्यंस्वतेजसानिर्दहंतीप्रलयाशनिनिर्भरस्वनंन
वदंतीद्वारका मवाप १८
तत्रत्याः सर्वेजनास्तांदृष्ट्वामहाप्रलयमितिमत्वाहाहाकारंकुर्वंतः
कृष्णंनिवेदयामासुः
१९
कृष्णोऽपितान्सर्वान्नभेतव्यमित्युक्त्वाप्राकारतोरणेस्थितांमहारौद्रांकृत्यांतथावि
धांदृष्ट्वा
सकलशस्त्रास्त्रानिवारणसमर्थंसहस्रारंसुदर्शनंतस्याकृत्यायांसहसामुमोच
२०
सातुकल्पान्तार्ककोटिसमवर्चसाशतयोजनोद्गतंसकलदीप्तास्त्रयुतंहिरण्मयंप्रभ

ापूर्णास
कलजगत्प्रलयस्थितिसमर्थंसहस्त्रारंसर्वदेवनमस्कृतंजगच्छरणभूतंमहासुदर्श
नंविलोक्य
विनष्टतेजाभयार्ताक्रोशंतीवाराणसींप्रतिदुद्राव २१
सुदर्शनमपितांकृत्यांभृशमन्वगात् २२
सापिभयार्ताक्रोशंतीकाशिपतेस्तस्यांतःपुरंप्रविवेश २३
सुदर्शनोऽपितांवाराणसींपुरींप्राप्यसभृत्यबलवाहनंपौंड्रकसुतंदंडपाणिंनामकाि
शराजंबहु
प्रासादहर्म्यमालिनींपुरींमाहेश्वरीमपिभस्मावशेषांकृत्वासकलदेवमहर्षिभिः
पूज्यमानः
पुनरेवद्वारवत्यांकृष्णहस्तंसुसौम्यंकल्पमिवआविवेश २४
अत्रचश्लोकागीयंते
शस्त्रास्त्रमोक्षमजरंदग्ध्वातद्बलमोजसा
कृत्यांभस्मावशेषंतांततोवाराणसींपुरीम् २५
प्रभूतरथमातंगांसाश्वांपुंस्त्रीसमन्विताम्
साशेषकोषकोष्ठांतांदुर्निरीक्ष्यांसुरैरपि २६
द्वारोपलक्षिताशेषगृहप्राकारचत्वराम्
प्रददाहहरेश्चक्रंसकलामेवतांपुरीम् २७
अक्षीणगतिसामर्थ्यमसाध्यकृतसाधनम्
तच्चक्रंप्रज्वलद्भासंविष्णोरभ्याययौकरम् २८

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादेश्रीकृष्णचरितेपौंड्रकपुत्रकृत्याविध्वंसनं
नामैकपंचाशदधिकद्विशततमोऽध्यायः २५१

## द्विपञ्चाशदधिक द्विशततमोऽध्यायः

श्रीरुद्रउवाच-
अथमगधाधिपः कंसवधानंतरंद्विषन्नेवयादवान्सदापीडयामासतेदुः खिताः
कृष्णमूचुः १
सचभीमार्जुनावाहूयसंमंत्रयामासकृष्णः
अनेनरुद्रःपूजितस्तत्प्रसादाच्छस्त्रैरवध्यःपरंके

नापिप्रकारेणहंतव्यइति २
अथविचार्यभीममाहएनंप्रतिमल्लयुद्धं कुरुतत्तेनप्रतिज्ञातम् ३
अथसकलचराचरजगद्वंद्योवासुदेवोभीमार्जुनसहितोजरासंधस्यपुरींगत्वाविप्र
वेषेण
तस्यांतःपुरमवाप ४
सोऽपिमहावीर्यान्क्षत्रियान्युद्धेनिर्जित्यबलाद्गृहीत्वास्ववेश्मनिनिरुध्यमा
समासिकृ
ष्णाचतुर्दश्यामेकैकंहत्वातद्रक्तेनैवबलिभैरवायाकरोत् ५
एवंविधंसकलजनपार्थिववधंकुर्वतोजरासंधस्यसमुद्यमानोभीमार्जुनसहितस्त
स्यगृहे
विप्रवेषेणैवप्रविवेश ६
सतुतान्दृष्ट्वादंडवत्प्रणतोभूत्वायथोचितासनेषुनिवेश्यमधुपर्कविधानेनसंपूज्य
धन्योस्मि
कृतकृत्योस्मिकिमर्थंभवन्तोमेसमीपआगतास्तद्वक्तव्यमहंतत्सर्वंभवद्भ्योदास्या
मीत्युवाच
७
तेषांवासुदेवःप्रहसन्पार्थिवंतमुवाचकृष्णभीमार्जुनायुद्धार्थमागताःस्मअस्माक
मन्यतमं
द्वंद्वयुद्धार्थंवृणीष्वेत्यवदत् ८
सोऽपितथेत्यवदत्ततोद्वंद्वयुद्धार्थंमारुतिंवरयामास ९
ततोभीमजरासंधयोरभितोभयंकरंमल्लयुद्धंनिरंतरंपंचविंशतिवासरमभूत् १०
ततः कृष्णेनैवसंचोदितोवायुपुत्रस्तस्यशरीरंद्विधाकृत्यभूमौनिपातयामास
एवं
जरासंधंपांडुपुत्रेणहत्वातान्जरासंधनिरोधितान्वासुदेवोऽपिपार्थिवान्मोचया
मास
११
निहत्यवायुपुत्रेणजरासंधंयदूद्वहः
तद्गृहेसन्निरुद्धांस्तुमोचयामासपार्थिवान् १२
तेचतत्रनमस्कृत्यस्तुत्वाचमधुसूदनम्
स्वान्स्वान्जनपदान्सर्वेजग्मुःकृष्णेनरक्षिताः १३

अथताभ्यामिंद्रप्रस्थंगत्वावासुदेवस्तत्रमहाक्रतुंराजसूयंयुधिष्ठिरंकारयामास
१४
तत्रसमाप्तेक्रतौअग्रपूजांभीष्मानुमतेनकृष्णायदत्तवान् १५
तत्रशिशुपालःकृष्णंबहून्याक्षेपवाक्यान्युक्तवान् १६
कृष्णोऽपिसुदर्शनेनतस्यशिरश्चिच्छेद १७
असौजन्मत्रयावसानेहरेःसारूप्यमगमत् १८
अथ शिशुपालंनिहतंश्रुत्वादंतवक्त्रःकृष्णेनयोद्धुंमथुरामाजगाम १९
कृष्णस्तुतच्छ्रुत्वारथमारुह्यतेनयोद्धुंमथुरामाययौ २०
दंतवक्त्रवासुदेवयोरहोरात्रंमथुरापुरद्वारियमुनातीरेसंग्रामःसमवर्त्ततकृष्णस्तुग
दयातंजघान
२१
सतुचूर्णितसर्वांगोवज्रनिर्भिन्नमहीधरइवगतासुरवनितलेपपात २२
सोऽपिहरेःसायुज्यंयोगिगम्यंनित्यानंदसुखंशाश्वतंपरमंपदमवाप २३
इत्थंजयविजयौसनकादिशापव्याजेनकेवलंभगवतोलीलार्थंसंसृतावववतीर्यज
न्मत्रये
ऽपितेनैवनिहतौजन्मत्रयावसानेमुक्तिमवाप्तौ २४
कृष्णोऽपितंहत्वायमुनामुत्तीर्यनंदव्रजंगत्वा
प्राक्तनौपितरावभिवाद्यआश्वास्यताभ्यांसाश्रुकंठमालिगितः
सकलगोपवृद्धान्प्रणम्याश्वास्यरत्नाभरणादिभिस्तत्रस्थान्संतर्पयामास २५
कालिंद्याःपुलिनेरम्येपुण्यवृक्षसमावृते
गोपनारीभिरनिशंक्रीडयामासकेशवः २६
रम्यकेलिसुखेनैवगोपवेषधरोहरिः
बद्धप्रेमरसेनात्रमासद्वयमुवासह २७
अथतत्रस्थानंदगोपादयः सर्वेजनाः पुत्रदारसहिताः
पशुपक्षिमृगादयश्चवासुदेवप्रसादे
नदिव्यरूपधराविमानमारूढाःपरमंवैकुंठलोकमवापुः २८
कृष्णस्तुनंदगोपव्रजौकसांसर्वेषांपरमंनिरामयंस्वपदंदत्वादिविदेवगणैः
संस्तूयमानोद्वा
रवतींश्रीमतींविवेश २९
तत्रवसुदेवोग्रसेनसंकर्षणप्रद्युम्नानिरुद्धाक्रूरादिभिःप्रत्यहंसंपूजितषोडशसहस्र

भार्याभिरष्टा
भिर्दिव्यमहिषीभिश्चविश्वरूपधरोदिव्यरत्नमयनानागृहांतरेषुसुतकुसुमांचितश्ल
क्ष्णतर
पर्यंकेषुरमयामास ३०
अथरामकृष्णसतीर्थ्योविप्रोबालसखासदात्यंतदारिद्र्यपीडितोमुष्टिमात्रान्याच
नाप्तपृथु-
काञ्जीर्णवाससिनिबध्यवासुदेवंद्रष्टुंश्रीमतींद्वारकानगरीमाजगाम ३१
सतुरुक्मिण्यंतःपुरद्वारिक्षणंतूष्णींतस्थौ ३२
कृष्णोऽपिसमागतंब्राह्मणंज्ञात्वाप्रद्युम्नेननमस्कृत्वावामकरंगृहीत्वागृहांतरेस्वा
सनेनिवेश्य
भयाद्वेपमानंतंरुक्मिणीहस्तगतसुवर्णकलशजलेनपादौप्रक्षाल्यमधुपर्केणपूजया
मास
३३
सुधामृतोपमैरन्नपानाद्यैस्तर्पयित्वातस्य
जीर्णवस्त्रांतरेयाचनाप्तपृथुकान्स्वयमेवहस्तेन
गृहीत्वाप्रहसन्जग्रास ३४
कृष्णेनपृथुकेभक्षितेतस्मिन्नेवक्षणेतस्यबहुधनधान्यवस्त्राभरणसंभूतंमहदैश्वर्यम
भूत्
३५
सतुकृष्णेनविसृष्टोममकिंचिद्वस्त्रंवाधनंवाकृष्णेननदत्तमितिमन्यमानः
स्वपुरंविवेश
३६
अथबहुधनधान्ययुतंस्वगृहंदृष्ट्वातत्प्रसादादिदंलब्धमितिवदन्प्रहृष्टेनांतरात्मना
दिव्य
वस्त्राभरणादिनाभार्ययासहसर्वान्कामान्भुक्त्वाहरिसंतुष्टयैबहुयज्ञानिष्ट्वातत्प्रस
ादेनपरमं
नित्यंस्वर्गसुखमवाप ३७
अथधृतराष्ट्रतनयोदुर्योधनः-
पांडुतनयान्कपटद्यूतव्याजेनराज्यमपहृत्यस्वराष्ट्राद्विवासयामास ३८
तेतुयुधिष्ठिरभीमार्जुननकुलसहदेवाःसुपत्न्याद्रौपद्यासहमहारण्यंगत्वातत्रद्वाद

शाब्दा
न्स्थित्वासंवत्सरपर्यंतमज्ञाताःसर्वेमत्स्यदेशाधिपतेर्विराटस्यनिवेशनेस्थित्वा
वासु
देवेनसहायेनधार्तराष्ट्रान्योद्धुमाजग्मुः ३९
तेषांधार्तराष्ट्रपांडुपुत्राणांनानादेशाधिपनृपैःकुरुक्षेत्रमहापुण्येदेवानामपिभयंकरो
महासं
ग्रामोऽभवत् ४०
अथश्रीकृष्णोऽप्यर्जुनसारथ्यंकुर्वन्नर्जुनेस्वशक्तिमावेश्यतेनदुर्योधनभीष्मद्रोणप्र
मुखान्सर्वा
न्पार्थिवानेकादशाक्षौहिणीबलसहितान्कुरुक्षेत्रेहत्वापांडवान्राज्येस्थापयित्वा
निःशेषेण
सर्वभूभारमपास्यस्वांपुरींप्रविवेश ४१
कस्यचित्त्वथकालस्यकतिपयाहनिवैदिकोब्राह्मणोमृतंपंचवार्षिकंबालमादाय
राजद्वा
रिनिधायबहुशोविलपन्बहून्याक्रोशवाक्यानिकृष्णंजगाद ४२
कृष्णस्तमाक्रोशंश्रुत्वातुष्णीमुवास ४३
सतुममपंचपुत्राःपूर्वंहताअयंतुषष्ठःएनंकृष्णोनजीवयिष्यतितर्हिराजद्वारिमरिष्य
ामीत्युवाच
४४
तस्मिन्कालेअर्जुनः कृष्णंद्रष्टुमागतस्तथाविधंतंपुत्रशोकेनविलपंतंददर्श ४५
अर्जुनोऽपिकालधर्ममुपागतंपंचवार्षिकंबालकंदृष्ट्वाकृपयाविष्टस्तवपुत्रमहंजी
वयिष्या
मीतिब्राह्मणायाभयंदत्वाप्रतिश्रुतवान् ४६
ब्राह्मणस्तुतेनाश्वासितोहृष्टवान् ४७
अथैतंब्राह्मणशिशुंबहुभिः
संजीविनास्त्रैरभिमंत्र्यअलब्धजीवितंदृष्ट्वावृथाप्रतिज्ञामवाप्यबहुशोकसमन्वि
तस्तेनैवप्रा
णांस्त्यंक्तुमैच्छत् ४८
कृष्णस्तुतत्सर्वंज्ञात्वांतःपुराद्विनिष्क्रम्यतंवैदिकंप्राहतवपुत्रान्सर्वानहंदास्यामीत
युक्त्वा

श्वास्यवैनतेयमारुह्यार्जुनसहितोवैष्णवंलोकमाजगाम ४९
तत्रदिव्यमणिमंडपोद्देशेदेव्यासहसमासीनंनारायणंदृष्ट्वाकृष्णार्जुनौनमश्चक्रतुः
५०
सतौबाहुभ्यांपरिष्वज्यकिमर्थमागतावित्युवाच ५१
कृष्णश्चभगवन्वैदिकस्यतनयान्ममदेहीत्युवाच ५२
सतुनारायणस्तादृग्वयसिसंस्थितान्ब्राह्मणपुत्रान्कृष्णायसंददौ ५३
श्रीकृष्णोऽपितान्वैनतेयस्कंधेसमारोप्यहर्षसमन्वितोऽजुनसहितःस्वयमप्यारु
ह्यदिविदेवग
णैःसंस्तूयमानोद्वारवतीमाविवेश ५४
तस्मैब्राह्मणायपंचवर्षवयःस्थान्षट्पुत्रान्ददौसोऽप्यत्यंतर्हषसमन्वितः
कृष्णंवर्द्धयस्वेत्याशिषंप्रायच्छत् ५५
अर्जुनस्तुसफलांप्रतिज्ञामवाप्यकृष्णंनमस्कृत्ययुधिष्ठिरपालितांस्वांपुरीमाजगा
म ५६
कृष्णस्यषोडशसहस्रभार्यास्वयुतसाहस्रपुत्राजज्ञिरे
तेषांपुत्रपौत्रसंख्यांवक्तुंनशक्यते
५७
अत्रापि श्लोकः
अष्टौशतानिपुत्राणांसहस्राण्ययुतंतथा
प्रद्युम्नःप्रथमस्तेषांसर्वेषांरुक्मिणीसुतः ५८
असंख्यैस्तैर्यादवैरियंपृथिवीसंवृताऽभवत् ५९
पुनरप्यवनीभारशंकयाकृष्णस्तुतानृषिशापव्याजेनसंहर्तुमैच्छत् ६०
कदाचित्सर्वेकुमारानर्मदायांविहर्तुमाजग्मुः ६१
तत्रतपंतंकण्वंमहर्षिंदृष्ट्वाजांबवत्याः
पुत्रंयोषिद्वेषंकृत्वातस्योदरेकात्वायसंमुसलंबद्ध्वात्रृषेः
समीपमागत्यसर्वेनमस्कृत्वापत्नीरूपंसांबंकुमारंतस्यपुरतोनिधाय
अस्यागर्भेस्त्रीवापुरुषोवाभविष्तीतिब्रूहीत्यूचुः ६२
सतुमनसातद्विज्ञायतानमर्षमाणः
सर्वाननेनमुसलेनयूयंसर्वेनिहताभवतेत्युवाच ६३
सर्वेसमुद्विग्नमनसःकृष्णंसमेत्यमहर्षिणोक्तंतत्कर्मनिवेदयामासुः ६४
कृष्णोऽपितदायसंमुसलंचूर्णीभूतंह्रदेनिपातयामास ६५

तदयश्चूर्णीभूतबीजसमुद्भूतावज्रसन्निभामहाकाशाः संबभूवुः ६६
तत्रतंमुसलावशिष्टंकनिष्ठांगुलिमात्रंमत्स्योजग्रासतंमत्स्यंनिषादोगृहीत्वातदुद
रस्थंमुशल
खण्डमादायबाणाग्रेफलकमकरोत् ६७
कदाचित्सर्वेयादवारामकृष्णप्रद्युम्नादयोमघवताप्रेषितांवारुणींपीत्वामत्ताबभू
वुः६८
परस्परंवीरणांनीत्वाबहून्याक्रोशवाक्यानिवदंतोयुद्धंचक्रुःक्षयंचगताः ६९
कृष्णस्तुयुद्धश्रांतःकल्पतरुच्छायायांशयनंचकारसनिषादोधनुर्बाणंगृहीत्वाखे
टकवृत्तिंज
गाम ७०
एवंनिःशेषंत्यक्तजीविताबभूवुस्तेसर्वेस्वान्स्वांस्त्रिदशान्प्रपेदिरे ७१
एवंमुशलेनसंहृत्यसर्वंस्वयमेकोदेवोबहुगुल्मसमाकीर्णमहाद्रुमछायायांसुप्तश्च
तुर्विधव्यूह
गतंवासुदेवात्मकमात्मानंचिंतयज्ञानूपरिपदंनिधायात्मनोमानुषंवपुस्त्यक्तुमनु
नषसाद
७२
एतस्मिनन्तरेमृगयाजीविकोहरेः
सतदाकालप्रभावेनचक्रवज्रध्वजांकुशादिचिह्नितमतिरक्ततमंहरेःपादकम-
लंदृष्ट्वा
विव्याध ७३
तदनंतरंश्रीकृष्णंज्ञात्वा सुमहाभयार्तः प्रवेपमानः कृतांजलिपुटोमहदपराधः
सकलोपह्नियतामितितंप्रणनाम ७४
श्रीकृष्णस्तथाभूतंदृष्ट्वासुधामयकराभ्यांतमुत्थाप्यभ
वतानापराद्धंकृतमितिवदन्महाभयपीडितमाश्वासयन्नुवाच ७५
ततोयोगिगम्यमपुनरावृत्तिशाश्वतंसर्वोपनिषदमयंवैष्णवंलोकंप्रददौ ७६
असौतस्मिन्नेवमुहूर्तेमानुषंरूपंविहायपंचोपनिषन्मयंसकलपुत्रदारसहितोदीप्ति
मयंवैष्णवं
लोकंदिव्यंविमानमास्थायसहस्त्रार्कद्युतिसदृशंदिव्याप्सरोगणाकीर्णंहि
रण्मयंवासुदेवेत्येकंजगाम ७७
तस्मिन्कालेदारुकोरथमारुह्यविष्णोःसमीपंविवेश ७८

कृष्णोऽपिमत्स्वरूपमर्जुनंपूर्वमानयस्वेतिप्रेषयामास ७९
सतुमनोजवस्यंदनमारुह्यार्जुनसमीपमाजगाम ८०
एतस्मिन्नंतरेदेव्यर्जुनस्तदारुह्यपरिणीयनमस्कृत्वाकिंकरोमीतिपुटांजलिरुवाच ८१
कृष्णस्तुतमाहपार्थाहंस्वलोकंयास्यामित्वंतुद्वारवतींगत्वातत्रस्थारुक्मिरायाद्य ष्टभार्या
आनीयममशरीरेप्रेषय ८२
सदारुकेणसहितोनगरीमाजगाम ८३
एतस्मिन्नंतरेदेवाविमानस्थानभसिसंस्थिताःस्वर्लोकंयियान्तंकृष्णंदृष्ट्वाऋषिभि ःसार्द्धंस्तु
त्वापुष्पवर्षाणिववृषुः ८४
कृष्णोऽपिमानुषदेहं-
संन्यस्यसकलजगत्स्थितिसंहारहेतुभूतंसकलक्षेत्रज्ञमंतर्यामियोगिध्ये
यमनामयंवासुदेवात्मकंदेहंधृत्वावैनतेयमारुह्यमहर्षिभिस्तूयमानोजगाम ८५
अर्जुनोवसुदेवोग्रसेनाभ्यांरुक्मिरायादिमहिषीभ्यस्तत्सर्वंकथयामास ८६
तच्छ्रुत्वासर्वेपौरजनाःस्त्रियश्चद्वारवतीमुत्सृज्यांतःपुराद्बहिर्निष्क्रम्यसर्वास्ताः
कृष्णवल्लभावसुदेवोग्रसेनसहिताः शीघ्रमेवहरेः समीपंजग्मुः ८७
तेसर्वेवसुदेवोग्रसेनाक्रूराः
सर्वेयदुवृद्धावपुस्त्यक्त्वासनातनवासुदेवंसमाजग्मुः८८
रेवतीचबलभद्रशरीरंपरिष्वज्याग्निंप्रविश्यतस्मिन्देहंप्राप्यदिव्यविमानारूढाभ र्तुः
स्थानंसंकर्षणलोकंदिव्यमवाप ८९
तथैवप्रद्युम्नेनसहरुक्मपुत्रीतथानिरुद्धेनोषापिसर्वाश्चयादवस्त्रियः स्वस्वभर्तुः
शरीराणिसंपूज्याग्निप्रवेशंचक्रुः ९०
तेषांसर्वेषामर्जुनश्चौर्द्ध्वदैहिकंकृतवान् ९१
तस्मिन्कालेदिव्यवाजिसमायुक्तंसुग्रीवाख्यकंसर्वरत्नोपेतंदिव्यंस्यंदनमारुह्यद ारुकोप्या
जगाम ९२
पारिजाततरुर्देवसभासुधर्मात्रिदर्शेंद्रलोकमयाताम् ९३
तस्मिन्समयेद्वारवतीपुरीमहोदधौनिमग्नाभूत् ९४

ततःसर्वाषोडशसहस्रभार्य्याअर्जुनेनसहेंद्रप्रस्थंगच्छंतीर्दस्यवोजगृहुः ९५
पूर्वंदेवगंधर्वयोषितोह्यष्टावक्रंमहामुनिंदृष्ट्वाजहसुस्ततस्तेनशप्तावेश्याभविष्य
थततस्ता
भिप्रसादितःपूजितश्चतत्प्रसादात्सर्वलोकैश्चनमस्कृतंवासुदेवंभर्तारमवाप्यापिते
नैवदस्यु हस्तंगताअभवन् ९६
अर्जुनोऽपिदस्युभिर्निर्जितः–
शोकसमाविष्टोममभुजबलंसवीर्यंकृष्णेनैवसहसर्वमैश्वर्यंनिर्यातमितिमत्वाअ
द्यममभाग्य
क्षयइतिवदन्सायंसंध्यारविरिवनिःशेषविनष्टतेजाः स्वांपुरींसमाजगाम ९७
एवंहितार्थायसर्वदेवानांसमस्तभूभारविनाशाययदुवंशेऽवतीर्यसकलराक्षसवि
वनाशंकृ
त्वामहांतमपिचोर्वीभारंनाशयित्वानंदव्रजद्वारकामथुरानिवासिनः
सर्वान्स्थावर
जंगमान्कालभवबंधैर्मोचयित्वापरमैश्वर्गेशाश्वतेयोगिगम्येहिरण्मयेरम्येसात्वि
केसंस्था
प्यनित्यंदिव्यमहिष्यादिसंसेव्यमानोवासुदेवउवास ९८
अत्रश्लोकाः –
अन्येसर्वेऽवताराःस्युःकृष्णस्यचरितंमहत्
भूभारकविनाशायप्रादुर्भूतोरमापतिः ९९
एतत्कृष्णस्यचरितंदुष्टानांनाशहेतवे
श्रीकृष्णः करुणासिंधुर्वैकुंठेमोदतेसदा १००
अत्यद्भुतमिदंदेविकृष्णस्यचरितंशुभम्
संग्रहेणमयैवोक्तंतवसर्वफलप्रदम् १०१
वासुदेवस्यचरितंयःपठेद्धरिसन्निधौ
स्मरेद्वाशृणुयाद्भक्त्यासयातिपरमंपदम् १०२
महापातकयुक्तोवातथोपपातकसंयुतः
बालकृष्णस्यचरितं श्रुत्वापापैः प्रमुच्यते १०३
द्वारवत्यांसमासीनंरुक्मिणीसहितंहरिम्
स्मरन्वैमहदैश्वर्यमनेनाप्नोत्यसंशयः १०४
संग्रामेसंकटेदुर्गेशत्रुभिः परिवेष्टिते

नेतारंसर्वदेवानांध्यात्वासुविजयीभवेत् १०५
यःस्मरेद्गोपकन्याभिः क्रीडंतंगोव्रजेशुभे
सर्वकामानवाप्नोतिसौभाग्यंचैवविंदति १०६
महोपसर्गरोगाद्यैर्युक्तोयस्तुसनातनम्
जेतारंचमहारौद्रींकृत्यांकाशीपुरेस्थिताम् १०७
किमत्रबहुनोक्तेनसर्वकालेषुचाप्सुभे
कृष्णायनमइत्येवंमंत्रमुच्चारयेद्बुधः १०८
कृष्णायवासुदेवायहरयेपरमात्मने
प्रणतः क्लेशनाशायगोविंदायनमोनमः १०९
इमंमंत्रंजपन्देविभक्त्याप्रतिदिनंनरः
सर्वपापविनिर्मुक्तोविष्णुलोकमवाप्नुयात् ११०
सवेषामेवदेवानामीश्वरोऽसौजनार्दनः
रक्षणायचलोकानामवस्थांतरमेतिवै १११
त्रिपुरंहंतुकामेनमयासंपूजितोहरिः
बुद्धरूपधरः श्रीमान्मोहयामासतद्रिपून् ११२
मोहितास्तेनशास्त्रेणसर्वधर्मविवर्जिताः
नारायणास्त्रेणमयानिहतादेवशत्रवः ११३
अवतीर्यकलावंतेब्राह्मणस्यनिवेशने
हनिष्यतितथारौद्रान्म्लेछान्सर्वाञ्जनार्दनः ११४
तैस्तैर्भावैर्मयावस्थाः सर्वाः प्रोक्ताजगत्पतेः
किमन्यच्छ्रोतुकामासितद्ब्रवीमिशुभानने ११५

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादे श्रीकृष्णचरितेश्रीकृष्णस्वधामगमननिरूपणंनाम
द्विपंचाशदधिकद्विशततमोऽध्यायः २५२

त्रिपञ्चाशदधिकद्विशततमोऽध्यायः

श्रीपार्वत्युवाच-
भगवन्सर्वमाख्यातंबैभवावस्थितंहरेः
एतस्मिन्रामकृष्णाभ्यांचरित्रमतिविस्मितम् १
अहोरामस्यचरितंकृष्णस्यचमहात्मनः

शृणवत्याममदेवेशकल्पांतरशतैरपि २
तृप्तिंनैवेतिभूतेशचेतोहरिकथामृतम्
अधुनाश्रोतुमिच्छामिविष्णोर्माहात्म्यमुत्तमम्
तत्पूजनविधिंदेवश्रोतुमिच्छाम्यहंतथा ३
श्रीरुद्रउवाच-
शृणुदेविप्रवक्ष्यामिहरेश्चसुमहात्मनः
स्थापनंचस्वयंव्यक्तंद्विविधंतत्प्रकीर्तितम् ४
शिलामृद्दारुलोहाद्यैः कृत्वाप्रतिकृतिंहरेः
श्रौतस्मार्तागमप्रोक्तक्रियासंस्थापनंहियत् ५
तत्स्थापनमितिप्रोक्तंस्वयंव्यक्तंहिमेशृणु
यस्मिन्संनिहितोविष्णुः स्वयमेवनृणांभुवि ६
पाषाणदार्वोरात्मेशः स्वयंव्यक्तंहितत्स्मृतम्
स्वयंव्यक्तंस्थापितंवापूजयेन्मधुसूदनम् ७
देवतानांमर्हषीणामर्चनार्थेसनातनः
स्वयमेवजगन्नाथःसान्निध्यंयातिकेशवः ८
यस्ययद्विग्रहेभोग्यंतदेवाविरभूद्भुवि
तदेवपूजयेन्नित्यंतस्मिन्नेवरमेत्सदा ९
श्रीरङ्गशायीदेवेशोविधिनार्च्यः सुरोत्तमः
सएवेक्ष्वाकुनाथानांतपसाविरभूद्भुवि १०
ममापिकाश्यांसंपूज्योमाधवः कलुषापहः
यत्रयत्रगृहेरम्येस्वयंव्यक्तः सनातनः ११
तत्रतत्रसमागम्यरमेऽहसंव्यवस्थितः
नाष्टांगयोगेयज्ञेशस्त्वर्चायांविंदतेनृणाम् १२
चक्षुषोर्विषयंप्राप्यददातिवरमीप्सितम्
सर्वावस्थासुसौलभ्यमर्चायांलभ्यतेजनैः १३
अज्ञानामपिसान्निध्यंसर्वदापृथिवीतले
जंबूद्वीपेमहापुण्येवर्षेवैभारतेशुभे १४
अर्चायांसंनिधौविष्णुर्नेतरेषुकदाचन
तत्तस्माद्भारतेवर्षेमुनिभिस्त्रिदशैरपि १५
सेवितः सततंदेवितपोयज्ञक्रियादिभिः

भारतेऽस्मिन्महावर्षेनित्यंसंनिहितोहरिः १६
एंद्रद्युम्नेतथाकौर्मेसिंहाद्रौकरवीरके
काश्यांप्रयागेसौम्येचशालग्रामाचलेतथा १७
द्वारवत्यांनैमिषेचतथाबदरिकाश्रमे
कृतशौचेहरेत्पापंपौंडरीकेचदंडके १८
माथुरेवेङ्कटाद्रौचश्वेताद्रौगरुडाचले
कांच्यामनंतशयनेश्रींरंगेवासवाचले १९
नारायणाचलेसौम्येवाराहेवामनाश्रमे
एवमाद्याःस्वयं व्यक्ताः सर्वकामफलप्रदाः २०
स्वयमेवहिसान्निध्यंयस्मिन्यातिजनार्दनः
तस्मिन्नेवस्वयंव्यंक्तंवदंतिमुनयःशुभाः २१
महाभागवतश्रेष्ठोविधिनास्थाप्यकेशवम्
मंत्रेणकुर्यात्सांनिध्यंस्थापनंतद्विशिष्यते २२
तस्मिन्संपूजयेद्देवंग्रामेषुचगृहेषुच
शालग्रामशिलायांतुगृहार्चासद्भिरिष्यते २३
अर्चनंमंत्रपठनंयागयोगोमहात्मनः
नामसंकीर्तनंसेवातच्चिह्नैरंकनंतथा २४
तदीयाराधनंचस्यान्नवधाभिद्यतेशुभे
तत्तत्कर्मविधानंचविप्रस्यसततंस्मृतम् २५
महाभागवतः श्रेष्ठोब्राह्मणोवैगुरुर्नृणाम्
सर्वेषामेवलोकानामसौपूज्योयथाहरिः २६
तापादिपं चसंस्कारिनवेज्याकर्मकारकः
अर्थपंचकविद्विप्रोमहाभागवतःस्मृतः २७
तत्तत्कर्मविधानेज्याक्षत्रियस्यविधीयते
तच्चिह्नैरंकनेसेवातदीयानांचपूजनम् २८
मंत्रवर्णस्यजपनंनामसंकीर्तनंहरेः
वंदनंचविशांप्रोक्तंषट्कर्मेज्याविधानतः २९
नामसंकीर्तनंसेवापूजनंवंदनं तथा
अर्चनंचतदीयानांपंचेज्याशूद्रजन्मनः ३०
साधारणेनसर्वेषांमानसेज्यानृणांप्रिये

स्वाधिकारानुरूपंचकार्याचेज्याजगत्पतेः ३१
अनन्यदेवताभक्तैरनन्यफलसाधकैः
वेदविद्ब्रह्मतत्त्वज्ञैर्वीतरागैर्मुमुक्षुभिः ३२
गुरुभक्तिसमायुक्तैःसुप्रसन्नैः सुसाधुभिः
ब्राह्मणैरितरैश्चापिपूजनीयोहरिःसदा ३३
यथोचिताचवर्णस्यकार्याइज्याहरेर्नृणाम्
वर्णाश्रमानुरूपंचकर्त्तव्यंवैष्णवैःशुभैः ३४
श्रुतिस्मृत्युदितंसंम्यङ्नित्यमत्रसमाचरेत्
श्रुतिस्मृत्युक्तकर्माणिनातिक्रामेतबुद्धिमान् ३५
श्रुतिस्मृत्युक्तमाचारंयोनसेवेतवैष्णवः
सचपाखंडमापन्नोरौरवेनरकेवसेत् ३६
तस्माद्वर्णानुरूपांवैकुर्यादिज्यांजगत्पतेः
तस्मात्स्मृत्युक्तमाचारंकुर्याद्वैमानवः सदा ३७
साधारणाहिसर्वेषांमानसेज्याशुभेनृणाम्
स्वाधिकारंनिरीक्ष्यैवकर्मकुर्यादतंद्रितः ३८
शमोदमस्तपः शौचंसत्यमामिषवर्जनम्
अस्तेयमेवाहिंसाचसर्वेषांधर्मसाधनम् ३९
तस्माद्वर्णानुरूपेणपूजयेन्मधुसूदनम्
रात्रावंतेसमुत्थायउपस्पृश्ययथाविधि ४०
नमस्कृत्यगुरून्स्वस्यसंस्मरेदच्युतंहृदि
सहस्रनामभिर्भक्त्याकीर्तयेद्वाग्यतः शुचिः ४१
बहिर्ग्रामात्समुसृज्यमूलमंत्रंयथाविधि
शौचंकृत्वायथान्यायमाचम्यप्रयतःशुचिः ४२
दंतधावनपूर्वंतुस्नानंकुर्याद्यथाविधि
आदायतुलसीमूलमृदंतत्पत्रसंयुताम् ४३
मूलमंत्रेणाभिमंत्र्यगायत्र्याचशुभानने
मंत्रेणैवानुलिप्तांगः स्नायात्कृत्वाघमर्षणम् ४४
हरिपादोद्भवांगंगांतत्रावाह्यसुनिर्मले
निमज्ज्याशुजपेत्सूक्तमघमर्षणमुत्तमम् ४५
आचम्यमार्जनंकुर्यात्पौरुषोक्तक्रमादथ

पश्चादाशुनिमज्ज्याथमूलमंत्रंजपेद्बुधः ४६
अष्टाविंशतिवारंवाशतमष्टोत्तरंचवा
प्रार्थयेदभिमंत्र्याथजलमंत्रेणवैष्णवः ४७
आचम्यतर्पयेद्देवान्नृषींश्चैवपितृंस्तथा
निपीडच्य वस्त्रमाचम्यधौतवस्त्रेणवेष्टितः ४८
विमलांमृत्तिकांरम्यामादायद्विजसत्तमः
मंत्रेणैवाभिमंत्र्याथललाटादिषुवैष्णवः ४९
धारयेदूर्द्ध्वपुंड्रानियथासंख्यमतंद्रितः
उपास्यविधिवत्संध्यांसावित्रींचजपेद्बुधः ५०
संयतात्मागृहंगत्वापादौप्रक्षाल्यवाग्यतः
आचम्यैकाग्रमनसापूजामंडपमाविशेत् ५१
रम्येशुभ्रतरेपीठेपुष्पोपचयशोभिते
तस्मिन्निवेश्यदेवंतंलक्ष्मीनारायणंप्रभुम् ५२
पूजयेद्विधिनासम्यग्गंधपुष्पाक्षतादिभिः
स्थापनेवास्वयंव्यक्तेगृहार्चायांबिधानतः ५३
श्रौतस्मार्तागमोक्तानामर्चनंविधिनाद्विजः
कुर्याद्भक्त्यायथार्हंच विष्णोःप्रयतमानसः ५४
यथोपदिष्टंगुरुणातथाकुर्वीतवैष्णवः
श्रौतंवैखानसंप्रोक्तंवासिष्ठंस्मार्तमुच्यते ५५
पंचरात्रविधानंचदिव्यागममितीरितम्
क्रियालोपंनकर्त्तव्यंविष्णोराराधनंपरम् ५६
आवाहनासनार्घ्याद्यैर्गंधपुष्पाक्षतादिभिः
धूपैर्दीपैश्चनैवेद्यैस्तांबुलाद्यैर्नमस्कृतैः ५७
कुर्यादाराधनंविष्णोर्यथाशक्त्यामुदान्वितः
प्रत्यृचंपुरुषसूक्तेनमूलमंत्रेणवैष्णवः ५८
मंत्रद्वयेनकुर्वीतषोडशैरुपचारकैः
भूयःप्रत्युपचारेषुदद्यात्पुष्पाञ्जलिततः ५९
आवाहयेज्जगन्नाथंमुद्रयाचैववैष्णवः
आसनंतुयथादद्यात्पुष्पकेणचमुद्रया ६०
दीपार्घ्याचमनंस्नानंपात्रस्थैर्विमलैर्जलैः

मंगलद्रव्यसंयुक्तैस्तुलसीदलमिश्रितैः ६१
दद्यात्प्रत्युपचारंतुमूलमंत्रद्वयेनच
सुवासितेनतैलेनकुर्यादभ्यंजनंततः ६२
कस्तूर्याचंदेनेनापिकुर्यादुद्वर्त्तनादिकम्
सुगंधवासितैस्तोयैः स्नाप्यमंत्रयुतैः शुभैः ६३
वस्त्रैराभरणैर्दिव्यैरलंकृत्ययथाविधि
मधुपर्कंततोदद्याद्गंधंदद्यात्सुवासितम् ६४
सुरभीणिसुपुष्पाणिभक्तयासम्यङ्निवेदयेत्
धूपंदशांगमष्टांगंदीपंचसुमनोहरम् ६५
नैवेद्यंविविधंदद्यात्पायसापूपमिश्रितम्
कर्पूरंतुसतांबूलंभक्तयाचैवनिवेदयेत् ६६
दीपैर्नीराजनंकृत्वापुष्पमालांसमर्चयेत्
परिणीयप्रणम्याथस्तुत्वास्तोत्रैरनुत्तमैः ६७
गरुडाङ्केशाययित्वामङ्गलार्घ्यंनिवेदयेत्
संकीर्त्यनामभिःपुण्यैःपश्चाद्धोमंसमाचरेत् ६८
हरेर्नैवेद्यशेषेणजहुयाद्वह्निमंडले
प्रत्यृचंपौरुषंसूक्तंश्रीसूक्तंमंगलाह्वयम् ६९
होतव्यमाज्यसंमिश्रंहविषावैदिकानले
प्रोक्तेनमंत्ररत्नेनजुहुयाद्भक्तिसंयुतम् ७०
अष्टोत्तरशतवारमष्टाविंशतिमेव च
यज्ञरूपंमहाविष्णुंध्यायन्वैजुहुयाद्धविः ७१
शुद्धजांबूनदनिभंशंखचक्रगदाधरम्
समस्तवेदवेदांतसांगोपांगयुतंप्रभुम् ७२
देव्याश्रियासमासीनंध्यात्वाहोमंसमाचरेत्
एकैकामाहुतिंपश्चान्नामभिर्जुहुयाद्धविः ७३
नित्यान्भक्तान्समुदिदश्यमहाभागवतोत्तमः
भूलीलाविमलाद्याश्चशक्तयः प्रथमंक्रमात् ७४
अनंतंविहगेंद्रादिदेवतास्तदनंतरम्
वासुदेवादयः पश्चात्तथाशक्तयादिदेवताः ७५
मूर्त्तयःकेशवाद्याश्चतथासंकर्षणादयः

मत्स्यकूर्मादयश्चैवतथाचक्रादिहेतयः ७६
कुमुदादयश्चत्रिदशास्तथाचंद्रादिदेवताः
इंद्रादिलोकपालाश्चतथाधर्मादिदेवताः ७७
होतव्याः क्रमशस्तस्मिन्संपूज्याश्चविशेषतः
एतद्वैकुंठहोमंतुमहाभागवतोत्तमः ७८
नित्यार्चनविधौनित्यंकुर्वीतसुसमाहितः
गृहार्चनेगृहद्वारिपंचयज्ञविधानतः ७९
दत्त्वाबलिविधानेनपश्चादाचमनंचरेत्
उपविश्यासनेशुभ्रेकृष्णाजिनकुशोत्तरे ८०
मंत्रयोगेप्रकुर्वीतभोगार्थंसुखमात्मनः
सम्यक्पद्मासनासीनोभूतशुद्धिंसमाचरेत् ८१
प्राणायामत्रयंकुर्यान्मन्त्रेणविजितेंद्रियः
उदङ्मुखंततः कृत्वाहृत्पङ्कजमनुत्तमम् ८२
विकासंतस्यकुर्वीतविज्ञानरविणाहृदि
तत्कर्णिकायांवह्न्यर्कशशिबिंबान्यनुक्रमात् ८३
त्रयंत्रयीमयेतस्मिंश्चिंतयेद्वैष्णवोत्तमः
नानारत्नमयंपीठंतेषामुपरिचिंतयेत् ८४
तस्मिन्हृत्पद्ममूलांतेबालार्कसदृशद्युतिम्
अष्टैश्वर्यदलंपद्मंमंत्राक्षरमयंचरेत् ८५
तस्मिन्देव्यासमासीनंकोटिशीतांशुसंनिभम्
चतुर्भुजंसुंदरांगंशंखचक्रगदाधरम् ८६
पद्मपत्रविशालाक्षंसर्वलक्षणलक्षितम्
श्रीवत्सकौस्तुभोरस्कंपीतवस्त्रधरंप्रभुम् ८७
विचित्राभरणैर्युक्तंदिव्यमंडनमंडितम्
दिव्यचंदनलिप्तांगंदिव्यपुष्पोपशोभितम् ८८
तुलसीकोमलदलवनमालाविभूषितम्
बालार्ककोटिसदृशंकांत्यादेव्याश्रियासह ८९
सर्वलक्षणलक्षण्यासमाश्लिष्टतनुःशिवम्
एवंध्यात्वाजपेन्मंत्रंसमाहितमनाःशुचिः ९०
सहस्रंशतवारंवायथाशक्त्याऽथवापिच

मनसैवार्चनंकृत्वाविरमेत्तत्रभक्तितः ९१
तदीयानर्च्चयेद्भक्त्यातस्मिन्कालेसमागतान्
तर्पयित्वान्नपानाद्यैरनुव्रज्यविसर्जयेत् ९२
अर्च्चयित्वापितृन्देवांस्तर्पयेच्चविधानतः
संपूज्यातिथिभृत्यांश्चभुंजीयातांचदम्पती ९३
यक्षराक्षस भूतानामर्चनंवर्जयेत्सदा
योमोहात्कुरुतेविप्रःसचांडालोभवेद्ध्रुवम् ९४
यक्षाणांचपिशाचानांमद्यमांसभुजांतथा
दिवौकसांतुभजनंसुरापानसमंस्मृतम् ९५
ब्रह्मराक्षसवेतालयक्षभूतार्चनंनृणाम्
कुंभीपाकमहाघोरनरकप्राप्तिसाधनम् ९६
कोटिजन्मकृतंपुण्यंयज्ञदानक्रियादिकम्
सद्यःसर्वंलयंयातियक्षभूतादिपूजनात् ९७
स्त्रियोवापुरुषोवापियक्षभूतादिकार्च्चनात्
कल्पकोटिसहस्राणिकल्पकोटिशतानिच ९८
क्रिमिर्भूत्वाथविष्ठायांपितृभिः सहमज्जति
यक्षाणांचपिशाचानांतामसानांदिवौकसाम् ९९
निवेदितान्नंयोऽश्नातिपूयशोणितभुग्भवेत्
यक्षान्भूतगणांश्चान्यान्क्रूरान्वैब्रह्मराक्षसान् १००
उद्दिश्यभुङ्क्तेयोविप्रःसद्यश्चाण्डालएवसः
यानारीपूजयेद्यक्षान्पिशाचोरगराक्षसान् १०१
सायातिनरकंघोरंकालसूत्रमधोमुखी
पितृभिःसहकल्पांतमुषित्वातत्रदारुणे १०२
लिहन्मूत्रपुरीषंवैकृच्छ्रात्सूचिमुखैस्तथा
कृमिभिर्भक्षमाणांगोयावदाभूतसंप्लवम् १०३
पश्चाद्भूमौदशाहेषुजायतेशतसंख्यया
तस्माद्यक्षादिकानांचदेवानामर्च्चनंत्यजेत् १०४
स्वतंत्रपूजनं यत्रवैदिकानामपित्यजेत्
अर्च्चयित्वाजगद्वंद्यंदेवंनारायणंहरिम् १०५
तदावरणसंस्थानंदेवस्यपरितोऽर्च्चयेत्

हरेर्भुक्तावशेषेणबलितेभ्योविनिःक्षिपेत् १०६
होमंचैवप्रकुर्वीततच्छेषेणैववैष्णवः
हरेर्निवेदितुंसम्यग्देवेभ्योजुहुयाद्धविः १०७
पितृभ्यश्चापितद्द्यात्सर्वमानंत्यमाप्नुयात्
प्राणिनांपीडनंयत्तद्विदुषांनिरयायवै १०८
अदत्तंचैवयत्किंचित्परस्वंगृह्यतेनरैः
स्तेयंतद्विद्धिगिरिजेनरकस्यैवकारणम् १०९
लशुनंमद्यपानादिमूलकंगृंजनंतथा
तिलपिष्टंशिग्रुबिल्वंतथाकोशातकींतथा ११०
अलाबुंचैववार्ताकंबीजालद्यंकवचानिच
एवमन्यान्यभक्ष्याणिशास्त्रदृष्टानिवैनरः १११
खादन्नरकमाप्नोतिविचित्रमशिवंतथा
अवैष्णवानांयच्चान्नंपतितानांतथैवच ११२
अनर्पितंतथाविष्णोःश्वमांससदृशंभवेत्
यक्षराक्षसभूतान्नंसुरामद्यंचगृञ्जनम् ११३
योऽश्नातिनिरयंयातिपूयशोणितभोजनम्
एतैः संस्थापनस्पर्शसहवासादिभिर्नरः ११४
तेपियान्त्येवनिरयंविरामूत्रकृमिभोजनम्
पतितानांचसंसर्गात्पाखंडानांतथैवच ११५
सर्वयज्ञस्यभोक्तारंपुराणंपुरुषोत्तमम्
ज्ञात्वासर्वंप्रकुर्वीतनित्यनैमित्तिकाः क्रियाः ११६
यक्षराक्षसभूताश्चकूष्माराडगणभैरवाः
नार्च्चनीयाःसदादेविस्वर्गलोकमभीप्सुभिः ११७
यक्षराक्षसभूतानामर्च्चनंवर्जयेद्द्विजः
पैशाचत्वमवाप्नोतिकल्पकोटिशतत्रयम् ११८
तस्माद्राक्षसभूतानामर्चनंप्रतिषिध्यते
कल्पकोटिसहस्राणिकल्पकोटिशतानिच ११९
रौरवंनरकंयातियक्षभूतगणार्चनात्
शंखचक्रादिभिश्चिह्नैरन्यैः प्रियतमैर्हरेः १२०
रहितःसर्वधर्मेभ्यः प्रच्युतोनरकंव्रजेत्

अगम्यागमनाद्धिंसापरद्रव्यापहारणात् १२१
अभक्ष्यभक्षणात्सद्योनरकंसमवाप्नुयात्
यस्तुपाणिगृहीतांचहित्वाऽन्यायोस्त्रियंव्रजेत् १२२
अगम्यागमनंतद्धिसद्योनरककारकम्
पतितानांचसंसर्गात्पाखंडानांतथैवच १२३
विकर्मस्थानांचतथायात्येवनिरयंनरः
संसर्गिणांचसंसर्गंतत्संसर्गमपित्यजेत् १२४
वैष्णवःकुलमेकंतुवर्जयेत्पापसंयुतम्
एकांतीसंत्यजेद्ग्राममंमहापातकमिश्रितम् १२५
तथैवपरमेकान्तीतद्देशमपिवर्जयेत्
स्वकर्म्मज्ञानभक्त्यादिसाधनंवैष्णवंस्मृतम् १२६
हरेराज्ञानुरूपेणकर्मज्ञानादियश्चरेत्
सएकांतीभवेद्विप्रोवासुदेवपरायणः १२७
अकृत्यंवैष्णवः पापबुद्ध्यासम्यक्परित्यजेत्
एकांतीसंत्यजेच्छास्त्रंदूषणान्मनसापिच १२८
तथैवपरमैकांतीहेयबुद्ध्यापरित्यजेत्
नित्यंनैमित्तिकंकाम्यंकृत्यंतुत्रिविधंस्मृतम् १२९
ज्ञानंतथैवलोकेऽस्मिन्मुनिभिःसंप्रकीर्तितम्
कृत्याकृत्यविवेकंचपरलोकस्यचिंतनम् १३०
तत्प्राप्तिसाधनंविष्णोःस्वरूपज्ञानमेवच
भक्तियुक्तोभवेद्भक्तोनवधासाप्रकीर्तिता १३१
सुदर्शनोद्ध्वर्वपुंड्रादितच्चिह्नैरंकनंशुभम्
सद्गुरोमंत्रपठनमर्चनंविधिनाहरेः १३२
स्मरणंकीर्तनंविष्णोःसेवाचपरमात्मनः
प्रणामस्तस्यपुरतस्तदीयानांचपूजनम् १३३
प्रसादतीर्थसेवाचभक्तिर्नवविधास्मृता
यस्मात्प्रपद्यतेदेवंशरणंवैष्णवोहरिम् १३४
प्रपत्तिःसातुविज्ञेयात्रिविधासंप्रकीर्तिता
तामसीराजसीचैवसात्विकीत्रिविधास्मृता १३५
सापित्रिधाकृतासिद्धिःसामान्यासर्वदेहिनाम्

एतच्चतुष्टयंदेविहेयंसंत्यज्यवैष्णवः १३६
उपायभूतंब्रह्मैवमवलंबेतवैष्णवम्
उपायभावात्संत्यज्यकर्मज्ञानादिकंनरः १३७
कुर्वीतभगवत्प्रीत्यैमहाभागवतोत्तमः
त्रिकालमर्चयेद्विष्णुंभक्तयावैपुरुषोत्तमम् १३८
नैमित्तिकेविशेषेणपूजयेद्विधिनाशुभे
प्रत्यहंकार्तिकेमासिजातीपुष्पैःसमर्चयेत् १३९
दद्यादखंडंदीपंचनियतात्मादृढव्रतः
ब्राह्मणान्भोजयित्वांतेहरिसायुज्यमाप्नुयात् १४०
धनुष्युषसिदेवेशंमासमेकंनिरंतरम्
अर्चयेदुत्पलैर्देविकरवीरैः सितासितैः १४१
धूपदीपैश्चनैवेद्यैर्यथाशक्तयानिवेदयेत्
समाप्तौभोजयेद्विप्रान्महाभागवतोत्तमान् १४२
अश्वमेधसहस्रस्यफलमाप्नोत्यसंशयम्
तपोमास्युदितेभानौस्नात्वानद्यांविशेषतः १४३
अर्च्चयेन्माधवंपुष्पैरुत्पलैश्चशुभानने
पायसंसघृतंदिव्यंभक्तयातत्रनिवेदयेत् १४४
स्नात्वा संपूजयेद्विष्णुंमासमेकंनिरंतरम्
शर्करांबुयुतंनित्यमुद्यानंविनिवेदयेत् १४५
वैष्णवान्पूजयेद्भक्त्यामासान्तेशुभदर्शने
मधुमासितथानित्यंबकुलैश्चंपकैरपि १४६
पूजयेज्जगतामीशंगुडान्नंचनिवेदयेत्
मासांतेवैष्णवान्विप्रान्भोजयेत्सुसमाहितः १४७
सहस्रवार्षिकींपूजांप्रतिनित्यमवाप्नुयात्
माधवेपूजयेद्देवंशतपत्रैर्महोत्पलैः १४८
पूजयित्वाविधानेनदध्यन्नंफलसंयुतम्
गुडोदकंचभक्तयावैतस्मिन्देविनिवेदयेत् १४९
लक्ष्म्यायुक्तोजगन्नाथः प्रीतोभवतिपार्वति
शुक्रेतुशुक्लकमलैःपाटलैःकुमुदोत्पलैः १५०
अर्चयित्वाहृषीकेशमन्नंचूतफलैर्युतम्

निवेदयित्वाभक्त्यावैगवांकोटिप्रदोभवेत् १५१
वैष्णवान्भोजयित्वाथसर्वमानंत्यमाप्नुयात्
आषाढेदेवदेवेशंलक्ष्मीभर्तारमच्युतम् १५२
श्रीपुष्पैरर्चयेन्नित्यंपायसान्नंनिवेदयेत्
मासान्तेभोजयेद्विप्रान्महाभागवतोत्तमान् १५३
षष्टिवर्षसहस्रस्यपूजांप्राप्नोत्यसंशयः
नभोमास्यर्चयेद्विष्णुंपुन्नागैःकेतकीदलैः १५४
अर्चयित्वाच्युतंभक्त्यानभूयोजन्मभाग्भवेत्
दद्यादपूपान्भक्त्याथशर्कराघृतमिश्रितान् १५५
ब्राह्मणान्भोजयेत्तद्वत्सर्वमानंत्यमाप्नुयात्
नभस्येऽप्यर्चयेदीशंकुंदैःकुरबकैरपि १५६
क्षीरान्नंगुडसंमिश्रंभक्त्यातत्रनिवेदयेत्
गवांकोटिप्रदानस्यप्रत्यहंफलमाप्नुयात् १५७
नीलोत्पलैरिषेमासिपूजयेन्मधुसूदनम्
भक्त्यानिवेदयेत्तस्मिन्क्षीरमापूपमिश्रितम् १५८
कल्पकोटिसहस्राणिकल्पकोटिशतानिच
वैष्णवंलोकमाप्नोतिमुदितः स्वजनैर्वृतः १५९
ऊर्जेमासितथादेविकोमलैस्तुलसीदलैः
पूजयित्वाच्युतंभक्त्यातत्सायुज्यमवाप्नुयात् १६०
क्षीराज्यशर्करोपेतमन्नंवैपायसंतथा
अपूपंचक्रमेणैवभक्त्यासम्यङ्निवेदयेत् १६१
अमायांमंदवारेचवैष्णवर्क्षेतथैवच
रविसंक्रमेव्यतीपातेग्रहणंचंद्रसूर्ययोः १६२
विशेषेणार्चयेद्विष्णुंयथाशक्त्यावरानने
गुरोरुत्क्रांतदिवसेजन्मर्क्षेषुतथाहरेः १६३
इष्टिंचवैष्णवींकुर्याच्छक्त्यावैद्विजसत्तमः
दद्यात्पुष्पांजलितत्रप्रत्यर्चंवेदसंमितम् १६४
पारणंचापिकुर्वीतचरुणापायसेनवा
वैष्णवान्भोजयेद्विप्राञ्छक्त्यादद्याच्चदक्षिणाम् १६५
कुलकोटिंसमुधृत्यवैष्णवंपदमाप्नुयात्

सर्ववेदैरशक्तश्चेद्यष्टुंभागवतोत्तमम् १६६
वैष्णवैरनुवाकैर्वासप्तरात्रंनिरंतरम्
पुष्पांजलिसहस्रंतुहोमंचप्रत्यहंचरेत् १६७
प्रीतयेवाभगवतः प्रतिश्लोकंयजेदबुधः
अथवामंत्ररत्नंहिसप्तरात्रंनिरंतरम् १६८
अष्टोत्तरसहस्रंतुजुहुयाद्धविषायजेत्
विशेषेणार्चयेद्विद्वान्महाभागवतोत्तमान् १६९
अंतेचावभृथंकुर्याद्यथाविभवसारतः
वैष्णवैरनुवाकैश्चकुर्यादवभृथंद्विजः १७०
अत्रस्नात्वाविधानेनयथाशक्त्याद्विजोत्तमः
शुभेपात्रांतरेरम्येपादौप्रक्षाल्यभक्तितः १७१
अर्चयेद्गंधपुष्पाद्यैर्वस्त्रैराभरणादिभिः
तांबूलेनफलैर्वापियथाशक्त्यासमर्चयेत् १७२
भोजयित्वान्नपानाद्यैःप्रणम्यचपुनःपुनः
आसीमांतमनुव्रज्यनमस्कृत्यविसर्जितम् १७३
पुनः प्रणम्यभक्त्याथशनैस्तत्रनिवर्त्तितः
गृहंप्रविश्यदेवेशंपूजयेत्प्रयतात्मवान् १७४
एवमभ्यर्चयेद्विष्णुंयावज्जीवमतंद्रितः
तदीयांश्चविशेषेणपूजयेत्सर्वदाशुभे १७५
आराधनानांसर्वेषांविष्णोराराधनंपरम्
तस्मात्परतरंदेवितदीयानांसमर्चनम् १७६
अर्चयित्वापिगोविंदंतदीयान्नार्चयेत्पुनः
नसभागवतोज्ञेयःकेवलंदांभिकःस्मृतः १७७
पुमांस्तस्मात्प्रयत्नेनवैष्णवान्पूजयेत्सदा
सर्वंतरतिदुःखौघंमहाभागवतार्चनात् १७८
एवमुक्तंमयादेविविष्णोराराधनंपरम्
नित्यनैमित्तिकंचैवतदीयानांचपूजनम् १७९
पौरुषंतस्ययाथात्म्यंफलसाधनमेवच
तस्यावसथदेहंचकर्माद्यपिचतुष्टयम्
तवप्रोक्तंमयादेविकिमन्यच्छ्रोतुमिच्छसि १८०

इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादेविष्णुपूजाविधानवैष्णवाचारकथनंनाम
त्रिपंचाशदधिकद्विशततमोऽध्यायः २५३

चतुःपञ्चाशदधिकद्विशततमोऽध्यायः

वसिष्ठउवाच-
एवमुक्तातुसादेविपतिनाशूलपाणिना
प्रणिपत्यमहात्मानमुवाचप्रांजलिस्तदा १
पार्वत्युवाच-
साधूक्तंहित्वयानाथवैष्णवंधर्ममुत्तमम्
गुह्याद्गुह्यतमंविष्णोःस्वरूपंपरमात्मनः २
धन्यास्मिकृतकृत्यास्मिसर्वदेवनमस्कृत
तवप्रसादाद्देवेशमर्चयामिसनातनम् ३
वसिष्ठउवाच-
ततस्तद्वचनं श्रुत्वासभवस्त्रिपुरांतकः
समाश्लिष्यावदद्देवींप्रहृष्टेनांतरात्मनाः ४
रुद्रउवाच-
साधुसाधुमहादेविसाधुसाधुवरानने
अर्चयस्वहृषीकेशंलक्ष्मीभर्त्तारमच्युतम् ५
कृतकृत्योऽस्म्यहंभद्रेवैष्णव्याभार्ययात्वया
गुरुणातवचार्वंगिवामदेवेन धीमता ६
अनुज्ञातार्चयस्वेशंपुराणंपुरुषोत्तमम्
गुरूपदेशमार्गेणपूजयित्वैवकेशवम्
प्राप्नोतिवाछितंसर्वंनान्यथाभूधरात्मजे ७
वसिष्ठउवाच-
एवमुक्तातदादेविवामदेवांतिकंनृप
जगामसहसाहृष्टाविष्णुपूजनलालसा ८
समेत्यतंगुरुंदेविपूजयित्वाप्रणम्यच
विनीताप्रांजलिर्भूत्वाउवाचमुनिसत्तमम् ९
पार्वत्युवाच-

भगवंस्त्वत्प्रसादेनसम्यगाराधनंहरेः
करिष्यामिद्विजश्रेष्ठत्वमनुज्ञातुमर्हसि १०
वसिष्ठउवाच-
इत्युक्तस्तुतयादेव्यावामदेवोमहामुनिः
तस्यैमंत्रवरंश्रेष्ठंददौसविधिनागुरुः ११
नाम्नांसहस्रंविष्णोश्चप्रोक्तवान्मुनिसत्तमः
निवेदयित्वापूजायाविधानमपिदेशिकः
उवाचपरमप्रीत्यापार्वतींसंशितव्रताम् १२
वामदेवउवाच-
अर्चयित्वाहृषीकेशंप्रातर्नित्यंवरानने
सहस्रनामपठनंकुरुष्वतदनंतरम् १३
वसिष्ठउवाच-
इत्युक्तातेनगुरुणाप्रहृष्टेनांतरात्मना
पूजयित्वानमस्कृत्यपुनरायात्स्वमालयम् १४
शिक्षितागुरुणातेनवामदेवेनपार्वती
ततः कतिपयाहस्तुद्वादश्यांवृषभध्वजः १५
कैलासशिखरेरम्येविष्णुमाराध्यशंकरः
उपविष्टस्ततोभोक्तुंपार्वतींशंकरोऽब्रवीत् १६
शंकरउवाच-
पार्वत्येहिमयासार्द्धंभोक्तुंभुवनवंदिते
वसिष्ठउवाच-
तमाहपार्वतीदेवीजप्त्वानामसहस्रकम् १७
ततोभोक्ष्याम्यहंदेवभुज्यतांभवताप्रभो
ततस्तांपार्वतींप्राहप्रहसन्परमेश्वरः १८
शंकरउवाच-
धन्यासिकृतकृत्यासिविष्णुभक्तासिपार्वति
दुर्लभावैष्णवीभक्तिर्भागधेयंविनेश्वरि १९
रामरामेतिरामेतिरमेरामेमनोरमे
सहस्रनामतत्तुल्यंरामनामवरानने २०
रकारादीनिनामानिशृरावतोममपार्वति

मनःप्रसन्नतांयातिरामनामाभिशंकया २१
रामेत्युक्त्वामहादेविभुंक्ष्वसार्धंमयाधुना
वसिष्ठउवाच-
ततोरामेतिनामोक्त्वासहभुंक्त्वाऽथपार्वती २२
रामेत्युक्तामहादेवीशंभुनासहसंस्थिता
पप्रच्छशंकरंदेवंप्रीतिप्रणवमानसा २३
पार्वत्युवाच-
सहस्रनामभिस्तुल्यंरामनामत्वयोदितम्
तस्यापराणिनामानिसंतिचेद्रावणद्विषः
कथ्यतांममदेवेशतत्रमेभक्तिरुत्थिता २४
श्रीमहादेवउवाच-
शृणुनामानिवक्ष्यामिरामचंद्रस्यपार्वति
लौकिकावैदिकाः शब्दाःयेकेचित्संतिपार्वति २५
नामानिरामचंद्रस्यसहस्रंतेषुचाधिकम्
तेषुचात्यंतमुख्यंहिनाम्नामष्टोत्तरंशतम् २६
विष्णोरेकैकनामैवसर्ववेदाधिकंमतम्
तादृङ्नामसहस्राणिरामनामसमानिच २७
यत्फलंसर्ववेदानांमंत्राणांजपतःप्रिये
तत्फलंकोटिगुणितंरामनाम्नैवलभ्यते २८
नामानिशृणुरामस्यमुख्यानिशुभदर्शने
ऋषिभिःपरिगीतानितानिवक्ष्यामितेप्रिये २९
ॐश्रीरामोरामचंद्रश्चरामभद्रश्चशाश्वतः
राजीवलोचनः श्रीमान्राजेंद्रोरघुपुंगवः ३०
जानकीवल्लभोजैत्रोजितामित्रोजनार्दनः
विश्वामित्रप्रियोदांतःशरण्यत्राणतत्परः ३१
वालिप्रमथनोवाग्मीसत्यवाक्सत्यविक्रमः
सत्यव्रतोव्रतफलःसदाहनुमदाश्रयः ३२
कौशलेयःखरध्वंसीविराधवधपंडितः
विभीषणपरित्रातादशग्रीवशिरोहरः ३३
सप्ततालप्रभेत्ताचहरकोदंडखंडनः

जामदग्निमहादर्प्पदलनस्ताडकांतकृत् ३४
वेदांतपारोवेदात्माभवबंधैकभेषजम्
दूषणत्रिशिरोरिश्चत्रिमूर्त्तिस्त्रिगुणस्त्रयी ३५
त्रिविक्रमस्त्रिलोकात्मापुरायचारित्रकीर्त्तनः
त्रिलोकरक्षकोधन्वीदंडकाररायवासकृत् ३६
अहल्यापावनश्चैवपितृभक्तोवरप्रदः
जितेंद्रियोजितक्रोधोजितलोभोजगद्गुरुः ३७
ऋृक्षवानरसंघातीचित्रकूटसमाश्रयः
जयंतत्राणवरदःसुमित्रापुत्रसेवितः ३८
सर्वदेवाधिदेवश्चमृतवानरजीवनः
मायामारीचहंताचमहाभागोमहाभुजः ३९
सर्वदेवस्तुतः सौम्योब्रह्मरायोमुनिसत्तमः
महायोगीमहोदारः सुग्रीवस्थिरराज्यदः ४०
सर्वपुरायाधिकफलःस्मृतः सर्वाघनाशनः
आदिपुरुषोमहापुरुषःपरमः पुरुषस्तथा ४१
पुरायोदयोमहासारःपुराणपुरुषोत्तमः
स्मितवक्त्रोमितभाषीपूर्वभाषीचराघवः ४२
अनंतगुणगंभीरोधीरोदांतगुणोत्तरः
मायामानुषचारित्रोमहादेवाधिपूजितः ४३
सेतुकृज्जितवारीशःसर्वतीर्थमयोहरिः
श्यामांगःसुंदरःशूरःपीतवासाधनुर्द्धरः ४४
सर्वयज्ञाधिपोयज्ञोजरामरणवर्जितः
शिवलिंगप्रतिष्ठातासर्वाद्यगुणवर्जितः ४५
परमात्मापरब्रह्मसच्चिदानंदविग्रहः
परंज्योतिःपरंधामपराकाशःपरात्परः ४६
परेशःपारगःपारःसर्वभूतात्मकःशिवः
इति श्रीरामचन्द्रस्यनाम्नामष्टोत्तरंशतम् ४७
गुह्याद्गुह्यतरंदेवितवस्नेहात्प्रकीर्तितम्
यःपठेच्छृणुयाद्वापिभक्तियुक्तेनचेतसा ४८
सर्वैःप्रमुच्यतेपापैः कल्पकोटिशतोद्भवैः

जलानिस्थलतांयांतिशत्रवोयांतिमित्रताम् ४९
राजानोदासतांयांतिवह्वयोयांतिसौम्यताम्
आनुकूल्यंचभूतानिस्थैर्यंयांतिचलाःश्रियः ५०
अनुग्रहंग्रहायांतिशांतिमायांत्युपद्रवाः
पठतोभक्तिभावेननरस्यगिरिसंभवे ५१
पठेत्परमयाभक्त्यातस्यवश्यंजगत्त्रयम्
यंयंकामंप्रकुरुतेतंतमाप्नोतिकीर्त्तनात् ५२
कल्पकोटिसहस्राणिकल्पकोटिशतानिच
वैकुंठेमोदतेनित्यंदशपूर्वैर्दशापरैः ५३
रामंदूर्वादलश्यामंपद्माक्षंपीतवाससम्
स्तुवंतिनामभिर्द्दिव्यैर्नतेसंसारिणोजनाः ५४
रामायरामभद्रायरामचंद्रायवेधसे
रघुनाथायनाथायसीतायाः पतयेनमः ५५
इमंमंत्रंमहादेवि जपन्नेवदिवानिशम्
सर्वपापविनिर्मुक्तोविष्णुसायुज्यमाप्नुयात् ५६
इतितेरामचंद्रस्यमाहात्म्यंवेदसंमितम्
कथितंवैमयासुभ्रूस्तवप्रीत्याशुभाह्वयम् ५७
वसिष्ठउवाच-
तच्छ्रुत्वाशंकरेणोक्तंमाहात्म्यंपरमात्मनः
प्रहर्षमतुलंलेभेआनंदाश्रुजलाप्लुता ५८
प्रणम्यप्राहदेवेशंभर्तारंवृषभध्वजम्
पार्वत्युवाच-
अहोमाहात्म्यमतुलंरामस्यपरमात्मनः
श्रोत्रतृप्तिर्हिमेनस्यात्कल्पायुतशतैरपि ५९
धन्याहंकृतकृत्यास्मिसर्वमुक्तंत्वयानघ
त्वत्प्रसादाद्धरेर्भक्तिर्जन्मजन्मनिचास्तुमे ६०
वसिष्ठउवाच-
एवमुक्त्वास्वभर्तारंगौरीभागवतोत्तमा
रामायरामभद्रायरामचंद्रायवेधसे
रघुनाथायनाथायसीतायाः पतयेनमः ६१

इममेव जपन्मंत्रंसर्वावस्थासुपार्वती
उवासचसुखेनैवकैलासेपतिनासह ६२
एतत्तेसर्वमाख्यातंगुह्याद्गुह्यतमंनृप
रुद्रप्रोक्तानिशास्त्राणितामसान्येवपार्थिव ६३
संमोहनार्थंलोकानांप्रोक्तवान्वृषभध्वजः
रहसिप्रोक्तवान्देव्याइदमेकंहरःप्रभुः ६४
यथार्थमर्थंगुह्यंचसारंमंत्रस्यभूपते
देव्याप्रीत्यैमहादेवःकथयामासतत्परः ६५
उमामहेश्वरंराजन्संवादमिममद्भुतम्
यःपठेच्छृणुयाद्वापिभक्तियुक्तेनचेतसा ६६
ससर्ववंद्यःसर्वज्ञोमहाभागवतोभवेत्
सर्वधर्मविनिमुक्तःप्राप्नोतिपरमंपदम् ६७
धन्यःखलुभवान्लोकेपार्थिवेंद्रमहाबल
त्वदन्वयेहरिः श्रीमान्पुराणःपुरुषोत्तमः ६८
उत्पत्स्यतेदाशरथिः सर्वलोकहितायवै
तस्मादिक्ष्वाकवःपूज्याः सुराणामपिपार्थिव ६९
येषांजातोहिभगवान्रामोराजीवलोचनः

इति श्रीपाद्मेमहापुराणेपंचपचाशत्साहस्र्यांसंहितायामुत्तरखंडे
उमामहेश्वरसंवादे रामचंद्राष्टोत्तरशतनामकथनंनाम
चतुःपंचाशदधिकद्विशततमोऽध्यायः २५४

## पञ्चपञ्चाशदधिक द्विशततमोऽध्यायः

दिलीपउवाच-
कथितंभवताब्रह्मन्सर्वधर्ममशेषतः
सामान्यंचविशिष्टंचस्वरूपंपरजीवयोः १
स्वर्गापवर्गौकथितौसाधनंचतयोरपि
धन्योऽस्म्यहंद्विजश्रेष्ठत्वत्प्रसादात्सदागुरो २
एकमन्यंद्विजश्रेष्ठपृच्छामित्वांकुतूहलात्
कथयस्वयथातथ्यमपि वात्सल्यगौरवात् ३
महाभागवतश्रेष्ठोरुद्रस्त्रिपुरहंतकः

कस्माद्विगर्हितंरूपंप्राप्तवान्सहभार्य्यया ४
योनिलिंगस्वरूपंचकथंस्यात्सुमहात्मनः
पंचवक्त्रश्चतुर्बाहुःशूलपाणिस्त्रिलोचनः ५
कथंविगर्हितंरूपंप्राप्तवान्द्विजपुंगव
एवंसर्वंसमाचक्ष्वमित्रावरुणनंदन ६
वसिष्ठउवाच-
शृणुराजन्प्रवक्ष्यामियन्मांपृच्छसिगौरवात्
विशुद्धहृदयेपुंसांबुद्धिः श्रेयसिजायते ७
स्वायंभुवोमनुः पूर्वंमंदरेपर्वतोत्तमे
जगाममुनिभिःसार्द्धंदीर्घसत्रमनुत्तमम् ८
तस्मिन्समागताः सर्वेमुनयः शंसितव्रताः
नानाशास्त्रविदः श्रेष्ठाबालसूर्य्यानलप्रभाः ९
सर्ववेदविदोविप्राः सर्वधर्मपरायणाः
वर्तमानेमहासत्रेमुनयः क्षीणकल्मषाः १०
अन्वेष्टुंदेवतातत्वंमिथः प्रोचुस्तपोधनाः
विप्राणांवेदविदुषांकः पूज्योदेवतावरः ११
ब्रह्मविष्णुमहेशानांकःस्तुतोमुक्तिदोनृणाम्
कस्यपादोदकंसेव्यंभुक्तोच्छिष्टंचपावनम् १२
कोऽव्ययःपरमंधामपरमात्मासनातनः
कस्यप्रसादंतीर्थंचपितृणांतृप्तिदंभवेत् १३
तेषांसमुपविष्टानांइतिवादोमहानभूत्
रुद्रमेकमितिप्रोचुःकेचिदत्रमहर्षयः १४
ब्रह्मैवपूज्यइत्यन्येवदंतिमुनिसत्तमाः
सूर्यएवात्मनांपूज्यइत्यन्येप्राहुरुत्तमाः १५
योऽसोसर्वगतः श्रीमाञ्छ्रीपतिः पुरुषोत्तमः
अव्ययःपुंडरीकाक्षोवासुदेवः परात्परः १६
अनादिनिधनो विष्णुःसएवपरमेश्वरः
संपूज्योदेवताश्रेष्ठइत्यन्येचोचिरेद्विजाः १७
तेषांविवदतांतत्रमनुःस्वायंभुवोऽब्रवीत्
शुद्धसत्वमयोयोऽसौकल्याणगुणवान्प्रभुः १८

पुंडरीकेक्षणः श्रीमाञ्छ्रीपतिः पुरुषोत्तमः
विप्राणांवेदविदुषांएकएवार्चितःप्रभुः १९
विप्राणांनेतरेपूज्यारजस्तमविमिश्रिताः
इतितस्यवचः श्रुत्वासर्वएवमहर्षयः
भृगुंतपोनिधिंविप्रंप्रोचुःप्रांजलयस्तथा २०
ऋषयऊचुः-
अस्माकंसंशयंछेत्तुंत्वंसमर्थोऽसिसुव्रत
ब्रह्मविष्णुमहेशानामंतिकंव्रजसुव्रत २१
गत्वातेषांसमीपंतुतथादृष्ट्वातुविग्रहान्
शुद्धसत्वगुणंतेषांयस्मिन्संविद्यतेमुने २२
सएवपूज्यो विप्राणांनेतरस्तुकदाचन
शुद्धसत्वमयःसाक्षाद्ब्रह्मरायःसभविष्यति २३
तीर्थप्रसादवाँल्लोकेविप्राणांसभविष्यति
देवतानांपितृणांचतस्योच्छिष्टंसुपावनम् २४
तस्माद्याहिमुनिश्रेष्ठविबुधानांनिवासनम्
क्षिप्रंकुरुमुनिश्रेष्ठसर्वलोकहितंप्रभो २५
एवमुक्तस्ततस्तूर्णंकैलासंमुनिसत्तमः
जगामवामदेवेनयत्रास्तेवृषभध्वजः २६
गृहद्वारमुपागम्यशंकरस्यमहात्मनः
शूलहस्तंमहारौद्रंनंदिंदृष्ट्वाब्रवीद्द्विजः २७
संप्राप्तोऽहभृगुर्विप्रोहरंद्रष्टुंसुरोत्तमम्
निवेदयस्वमांशीघ्रंशंकरायमहात्मने २८
तस्यतद्वचनंश्रुत्वानंदीसर्वगणेश्वरः
उवाचपरुषंवाक्यंमहर्षिममितौजसम् २९
असांनिध्यंप्रभोस्तस्यदेव्याक्रीडतिशंकरः
निवर्त्तस्वमुनिश्रेष्ठयदिजीवितुमिच्छसि ३०
एवंनिराकृतस्तेनतत्रातिष्ठन्महातपाः
बहूनिदिवसान्यस्मिन्गृहद्वारिमहेशितुः ३१
नारीसंगममत्तोऽसौयस्मान्मामवमन्यते
योनिलिगस्वरूपंवैतस्मात्तस्यभविष्यति ३२

ब्राह्मणंमावजानातितमसासमुपागतः
अब्रह्मरायत्वमापन्नोह्यपूज्योऽसौद्विजन्मनाम् ३३
तस्मादन्नंजलंपुष्पंतस्मैदत्तंहविस्तथा
निर्माल्यमस्यतत्सर्वंभविष्यतिनसंशयः ३४
एवंशप्त्वामहातेजाःशंकरंलोकपूजितम्
उवाचगणमत्युग्रंनंदिंशूलधरंनृप ३५
रुद्रभक्ताश्चये लोकेभस्मलिगास्थिधारिणः
तेपाखंडत्वमापन्नावेदबाह्याभवंतुवै ३६
एवंशप्त्वामुनिस्तत्ररुद्रंत्रिपुरहंतकम्
जगामब्रह्मलोकंवैसर्वलोकनमस्कृतम् ३७
तत्रदैवैःसहासीनंब्रह्माणंपरमेष्ठिनम्
दृष्ट्वाप्रांजलिनादेवंप्रणनाममहामतिः ३८
प्रणम्यपुरतस्तस्यतूष्णीमासमहातपाः
तंदृष्ट्वामुनिशार्दूलंरजोगुणसमाबृतः ३९
नार्चयामासधाताऽसौमहर्षिंसमुपागतम्
प्रत्युत्थानंप्रियंवाक्यंनकृतंतस्यवेधसा ४०
एश्वर्येणैवमहतातस्थौ तत्रांबुजासनः
तंदृष्ट्वारजसोद्रिक्तंमहर्षिः पंकजासनम् ४१
व्याजहारमहातेजावाक्यंलोकपितामहः
रजसामहतोद्रिक्तोयस्मान्मामवमन्यसे ४२
तस्मात्त्वंसर्वलोकानामपूज्यत्वंसमाप्नुहि
एवंशप्त्वामहात्मानंब्रह्माणंलोकपूजितम् ४३
जगामसहसाविप्रोभगवन्मंदिरंभृगुः
प्रविश्यवैष्णवंलोकंक्षीराब्धेरुत्तरेतटे ४४
तत्रस्थितैर्महाभागैः पूज्यमानोयथार्हतः
तत्रानिवार्य्यमाणस्तुप्रविष्टोंतःपुरंद्विजः ४५
प्रविश्यतस्मिन्विमलेविमानेरविसन्निभे
शयानंनागपर्यंकेददर्शकमलापतिम् ४६
लक्ष्मीकरसरोजाभ्यांमृज्यमानपदद्वयम्
तंदृष्ट्वामुनिशार्दूलोभृगुःकोपसमन्वितः ४७

सव्यंपादंप्रचिक्षेपविष्णोर्वक्षसिशोभने
तूर्णमुत्थायभगवान्धन्योस्मीतिवदन्मुदा ४८
हस्ताभ्यांचरणंतस्यपीडयामासहर्षितः
शनैर्मृदित्वातत्पादंमधुरंवाक्यमब्रवीत् ४९
धन्योस्म्यद्यैवविप्रर्षेकृतकृत्योस्मिसर्वदा
त्वत्पादस्पर्शनाद्देहेमंगलंमेभविष्यति ५०
समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः
अपारसंसारसमुद्रसेतवः पुनंतुमांब्राह्मणपादपांसवः ५१
विप्रपादरजोयस्यदेहेतिष्ठतिसर्वदा
गंगादिसर्वतीर्थानितस्यतिष्ठंत्यसंशयम् ५२
इत्युक्त्वासहसोत्थायदेव्यासार्द्धंजनार्दनः
भक्त्यासमर्चयामासदिव्यस्रक्चंदनादिभिः ५३
तंदृष्ट्वामुनिशार्दूलोहर्षपूर्णोऽश्रुलोचनः
उत्थायासनमुख्यात्तंप्रणनामदयानिधिम्
कृतांजलिपुटोभूत्वाहर्षात्प्राहमहातपाः ५४
श्रीभृगुरुवाच-
अहोरूपमहोशांतिरहोज्ञानमहोदया
अहोसुनिर्मलाक्षांतिरहोसत्वगुणंहरेः ५५
नैसर्गिकंशुभंसत्वंतथैवगुणवारिधेः
नान्येषांविद्यतेकिंचित्सर्वेषांत्रिदिवौकसाम् ५६
ब्रह्मण्यश्चशरण्यश्चत्वमेवपुरुषोत्तमः
ब्राह्मणानांत्वमेवेशोनान्यःपूज्यः सुरःक्वचित् ५७
येऽचयंतिसुरानन्यांस्त्वांविनापुरुषोत्तम
तेपाखंडत्वमापन्नाः सर्वलोकविगर्हिताः ५८
विप्राणांवेदविदुषांत्वमेवेज्योजनार्दनः
नान्यः कश्चित्सुराणांतुपूजनीयः कदाचन ५९
अनर्च्याब्रह्मरुद्राद्याराजस्तमोविमिश्रिताः
त्वंशुद्धसत्वगुणवान्पूजनीयोऽग्रजन्मनाम् ६०
त्वत्पादसलिलंसेव्यंपितॄणांचदिवौकसाम्
सर्वेषांभूसुराणांचमुक्तिदंकल्मषापहम् ६१

त्वद्भुक्तोच्छिष्टशेषंवैपितॄणांचदिवौकसाम्
भूसुराणांचसेव्यंस्यान्नान्येषांतुकदाचन ६२
इतरेषांतुदेवानामन्नंपुष्पंजलंतथा
अस्पृश्यंतुभवेत्सर्वंनिर्माल्यंसुरयासमम् ६३
तस्माद्वैब्राह्मणोनित्यंपूजयित्वासनातनम्
त्वत्तीर्थंभुक्तमन्नंचभजेतैवानिशंबुधः ६४
नान्यंदेवं तुवीक्षेतब्राह्मणोनचपूजयेत्
नान्यप्रसादंभुंजीतनान्यदायतनंविशेत् ६५
नददातीहयोविप्रः पितॄणांश्राद्धकर्मणि
त्वद्भुक्तमन्नंतीर्थंचतत्सर्वंनिष्फलंभवेत् ६६
कल्पकोटिसहस्राणिकल्पकोटिशतानिच
पतंतिपितरस्तस्यनरकेपूयशोणिते ६७
निवेदितंतवविभोयोजुहोतिददातिवा
देवतानांपितॄणांचतृप्तिरानंत्यमश्नुते ६८
तस्मात्त्वमेवविप्राणांपूज्योनान्योस्तिकश्चन
मोहाद्यः पूजयेदन्यान्सपाखंडीभविष्यति ६९
त्वंहिनारायणः श्रीमान्वासुदेवः सनातनः
विष्णुःसर्वगतोनित्यः परमात्मामहेश्वरः ७०
त्वमेवसेव्योविप्राणांब्रह्मण्यः शुद्धसत्ववान्
पूज्यत्वाद्ब्राह्मणानांवैशुद्धसत्वगुणादपि ७१
सर्वेषामेवदेवानांब्राह्मणत्वमवाप्नुहि
त्वामेवहिसदाविप्राभजंतिपुरुषोत्तमम् ७२
ब्राह्मणास्तेबभूवुस्तुनान्यास्तत्रनसंशयः
ब्रह्मण्योदेवकीपुत्रोब्रह्मण्योमधुसूदनः ७३
ब्रह्मण्यःपुंडरीकाक्षोब्रह्मण्योविष्णुरच्युतः
ब्रह्मण्योभगवान्कृष्णोवासुदेवोऽच्युतोहरिः ७४
ब्रह्मण्योनारसिंहः स्यात्तथा नारायणोऽव्ययः
ब्रह्मण्यः श्रीधरः श्रीशोगोविंदोवामनस्तथा ७५
ब्रह्मण्योयज्ञवाराहः केशवः पुरुषोत्तमः
ब्रह्मण्योराघवः श्रीमान्रामोराजीवलोचनः ७६

ब्रह्मरायःपद्मनाभः स्यात्तथादामोदरः प्रभुः
ब्रह्मरायोमाधवोयज्ञस्तथात्रिविक्रमः प्रभुः ७७
ब्रह्मरायश्चहृषीकेशःपीतवासाजनार्दनः
नमोब्रह्मरायदेवायवासुदेवायशार्ङ्गिरो ७८
नारायरायश्रीशायपुंडरीकेन्त्ररायच
नमोब्रह्मरायदेवायवासुदेवायविष्णवे ७९
कल्यारागुरापूर्णायनमस्तेपरमात्मने
नमोब्रह्मरायदेवायसर्वदेवस्वरूपिरो ८०
वाराहवपुषेनित्यंत्रयीनाथायतेनमः
नमोब्रह्मरायेदवायनागपर्य्यंकशायिने ८१
राजीवदलनेत्रायराघवायनमोनमः
माययामोहिताः सर्वेदेवाश्चऋषयस्तव ८२
नजानंतिमहात्मानंसर्वलोकेश्वरंप्रभो
त्वांनजानंतिभगवन्सर्ववेदविदोऽपिहि ८३
नामरूपगुरौः श्रीशचारित्रैरपिदुष्कृतैः
परत्वसूचकंसत्वंतववेदितुमीश्वरः ८४
महर्षिभिः प्रेषितोऽहमागतोस्मितवांतिकम्
तवशीलगुराञ्ज्ञातुंचररांममकेशव ८५
दत्तंवन्नसिगोविंदतत्त्वंतव्यंकृपानिधे
एवमुक्त्वाभृगुर्देवंप्रराम्यचमुहुर्मुहुः ८६
दिव्यैर्महर्षिभिस्तत्रपूज्यमानोमहात्मभिः
पुनर्जगामहृष्टात्मायज्ञभूमिंशुभाह्वयाम् ८७
समागतंमहात्मानंतत्रदृष्ट्वामहर्षयः
प्रत्युत्थायनमस्कृत्वापूजांचक्रुर्विधानतः ८८
तेषांविज्ञापयामासतत्सर्वंमुनिपुंगवः
रजस्तमगुरोद्रिक्तोविधीशानौसुरोत्तमौ ८९
शप्तौमयानपूज्यौतौविप्राराामृषिसत्तमाः
अब्रह्मरायत्वमापन्नोगर्हितंरूपमास्थितः ९०
शप्तःकैलासशिखरेशंकरस्तमसावृतः
शुद्धसत्वमयोविष्णुःकल्यारागुरासागरः ९१

नारायणः परंब्रह्मविप्राणांदैवतंहरिः
ब्रह्मण्यः श्रीपतिर्विष्णुर्वासुदेवोजनार्दनः ९२
ब्रह्मण्यःपुंडरीकाक्षोगोविंदोहरिरच्युतः
सएवपूज्योविप्राणांनेतरः पुरुषर्षभाः ९३
मोहाद्यःपूजयेदन्यंसपाखंडीभविष्यति
स्मरणादेवकृष्णस्यविमुक्तिः पापिनामपि ९४
तस्यपादोदकंसेव्यंभुक्तोच्छिष्टंचपावनम्
स्वर्गापवर्गदंनृणांब्राह्मणानांविशेषतः ९५
विष्णोर्निवेदितंनित्यंदेवेभ्योजुहुयाद्धविः
पितृभ्यश्चैवतद्दद्यात्सर्वमानंत्यमश्नुते ९६
योनदद्याद्धरेर्भुक्तंपितृणांश्राद्धकर्मणि
अश्नंतिपितरस्तस्यविण्मूत्रंसततंद्विजाः ९७
तस्माद्विष्णोःप्रसादोवैसेवितव्योद्विजन्मनाम्
इतरेषांतुदेवानांनिर्माल्यंगर्हितंभवेत् ९८
सकृदेवहियोश्नातिब्राह्मणोज्ञानदुर्बलः
निर्माल्यंशंकरादीनांसचांडालोभवेद्ध्रुवम् ९९
कल्पकोटिसहस्राणिपच्यतेनरकाग्निना
निर्माल्यंभोद्विजश्रेष्ठारुद्रादीनांदिवौकसाम् १००
रक्षोयक्षपिशाचान्नंमद्यमांससमंस्मृतम्
तद्ब्राह्मणैर्नभोक्तव्यंदेवानांभुंजितंहविः १०१
तस्मादन्यंपरित्यज्यविष्णुमेवसनातनम्
पूजयध्वंद्विजश्रेष्ठायावज्जीवमतंद्रिताः १०२
तद्विष्णोःपरमंधाममन्यंतोगतसंशयाः
तापादिपंचसंस्कारैरन्विष्टाः शुभचेतसः १०३
अप्राकृतंहरिंसम्यगर्चयध्वंद्विजर्षभाः
चक्रांकितभुजाविप्राभवंत्यप्राकृताः शुभाः १०४
चक्रलांछनहीनास्तुप्राकृतास्तामसास्मृताः
तस्मात्प्राकृतसंसर्गपापौघदहनंहरेः १०५
प्रतप्तंबिभृयाच्चक्रंशंखंचभुजमूलयोः
उद्धर्वपुंड्राणिचांगेषुधृत्वाशास्त्रोक्तमार्गतः १०६

अर्चयेन्मंत्ररत्नेनविधिनापुरुषोत्तमम्
तस्यप्रसादसेवांचकुर्य्यान्नित्यमतंद्रितः १०७
तस्यावरणपूजायांत्रिदशानर्चयेत्सदा
तमेवसर्वयज्ञानांभोक्तारंपरमेश्वरम् १०८
ज्ञात्वावैजुहुयाद्द्याज्जपेद्वैसततंद्विजाः १०९
वसिष्ठउवाच-
एवमुक्तास्तुतेसर्वेऋषयः क्षीणकल्मषाः
नमस्कृत्यभृगुंसम्यगूचुःप्रांजलयस्तदा ११०
ऋषयऊचुः
भगवन्संशयछेत्तात्वमेवद्विजसत्तम
त्वंवैलोकगतिर्ब्रह्मंस्त्वमेवपरमागतिः १११
त्वमेवपरमोधर्मस्त्वमेवपरमंतपः
त्वत्प्रसादाद्वयंविप्रभविष्यामोहिनान्यथा ११२
वसिष्ठउवाच-
एवंस्तुत्वाभृगुंविप्रंसर्वएवमहर्षयः
तस्मात्संप्राप्तमंत्रावैपूजयामासुरच्युतम् ११३
एतत्तेसर्वमाख्यातंप्रसंगात्पार्थिवोत्तम
रामस्यहस्तकमलस्पर्शनाद्वैनृपोत्तम ११४
भविष्यत्यमलंतच्चरूपंलोकविगर्हितम्
राघवः सर्वदेवानांपावनः पुरुषोत्तमः ११५
स्पृष्टादृष्टाश्चतेनैवविमलाःशंकरादयः
सर्वेषामपिदेवानांपितामाताजनार्दनः ११६
त्राताचसर्वलोकानांवात्सल्यगुणसागरः
तमेवशरणंगच्छयदीच्छेत्परमंपदम् ११७
एतत्तेसर्वमाख्यातंपुराणंवेदसंमितम्
ब्रह्मणाकथितंराजन्मनुस्वायंभुवोंतरे ११८
विष्णुभक्तिविनीतस्यशुद्धसत्वस्यनान्यथा
तस्यसंश्रावयेन्नित्यंविमुक्तासाहरेःकथा ११९
शंखचक्रोद्धर्वपुंड्रादिविहितोवाचकः पुमान्
तन्मुखाच्छ्रूयतांनित्यंपुत्रीभवसिनान्यथा १२०

यस्त्विदंश्रावयेन्नित्यंपठेद्वासुसमाहितः
अनन्यभक्तिःश्रीशस्यजायतेतस्यसर्वदा १२१
विद्यार्थीलभतेविद्यांधर्मार्थीधर्ममाप्नुयात्
मोक्षार्थीलभतेमोक्षंकामार्थीलभतेसुखम् १२२
द्वादश्यांश्रवणार्केचसंक्रांतौग्रहणेतथा
अमावस्यांपौर्णमास्यांपठेद्भक्तिसमन्वितः १२३
श्लोकार्द्धंश्लोकपादंवापठेद्यस्तुसमाहितः
अश्वमेधसहस्रस्यफलंप्राप्नोत्यसंशयः १२४
इत्येतत्कथितंगुह्यंपुराणंसंहितात्मकम्
अर्चयस्वहृषीकेशंयदीच्छसिपरमंपदम् १२५
सूतउवाच-
एवमुक्तोवसिष्ठेनगुरुणानृपसत्तमः
प्रणम्यचगुरुंराजापूजयित्वायथार्हतः १२६
तस्मात्संप्राप्तमंत्रोऽसौविधिनाद्विजसत्तमात्
अर्चयित्वाहृषीकेशंयावज्जीवमतंद्रितः
कालेहरिपदंप्रापयोगिगम्यंसनातनम् १२७
इति श्रीपाद्मेमहापुराणेपंचपंचाशत्साहस्र्यांसंहतियांवैयासिक्यांमुत्तरखंडे
भृगुपरीक्षाकथनंनाम पंचपंचाशदधिकद्विशततमोऽध्यायः २५५
इति श्रीपाद्मेमहापुराणेषष्ठमुत्तरखण्डं समाप्तम्

# अथ श्रीपाद्मे महापुराणे सप्तमं क्रियाखंडं प्रारभ्यते

## अथ प्रथमोऽध्यायः

श्रीगणेशाय नमः
अथ क्रियायोगसारखण्डमारभ्यते
लक्ष्मीनाथपदारविंदयुगलंब्रह्मेश्वराद्यामरश्रेणीनम्रशिरोलिरोलिमाश्रमलं वंदामहेसंततम्
भक्त्यायोगिमनस्तडागसुषमासंदोहपुष्यत्तमंगङ्गाम्भोमकरंदविन्दुनिकरंसंसार दुःखापहम् १
योमूर्तीर्बहुधाविधायभगवान्रक्षन्नशेषंजगद्यत्पादार्चनतत्परानहिपुनर्मज्जंतिविश्व ार्णवे
सर्वप्राणिहृदंबुजेषुवसतिर्यस्यप्रभोः
संततंरम्यक्रोडवपुर्धरायहरयेदेवायतस्मैनमः २
वेदेभ्यउद्धृत्यसमस्तधर्मान्योऽयपुराणेषुजगाददेवः
व्यासस्वरूपेणजगद्धितायवंदेतमेतंकमलासमेतम् ३
एकदामुनयः सर्वेसर्वलोकहितैषिणः
सुरम्येनैमिषारण्येगोष्ठींचक्रुर्मनोरमाम् ४
तत्रांतरेमहातेजाव्यासशिष्योमहायशाः
सूतः शिष्यगणैर्युक्तःसमायातोहरिंस्मरन् ५
तमायांतंसमालोक्यसूतंशास्त्रार्थपारगम्
नेमुःसर्वेसमुत्थायशौनकाद्यास्तपोधनाः ६
सोऽपितान्सहसाभक्त्यामुनीन्परमवैष्णवान्
ननामदंडवद्भूमौसर्वधर्मविदांवरः ७
वरासनेमहाबुद्धिस्तैर्दत्तेमुनिसत्तमैः
उवासहमुनिर्मध्येसर्वैःशिष्यगणैर्वृतः ८
तत्रोपविष्टंतंसूतंशौनकोमुनिसत्तमः
बद्धाञ्जलिरिमांवाचमुवाचविनयान्वितः ९
शौनकउवाच–
महर्षेसूतसर्वज्ञकलिकालेसमागते
केनोपायेनभगवन्भूरिभक्तिर्भवेन्नृणाम् १०

कलौसर्वेभविष्यंतिपापकर्मरताजनाः
वेदविद्याविहीनाश्चतेषांश्रेयःकथंभवेत् ११
कलावन्नगताःप्राणालोकाः स्वल्पायुषस्तथा
निर्धनाश्चभविष्यंतिनानादुःखप्रपीडिताः १२
प्रयाससाध्यंसुकृतंशास्त्रेषुक्रियतेद्विज
तस्मात्केऽपिकरिष्यंतिकलौनसुकृतंजनाः १३
सुकृतेषुविनष्टेषुप्रवृत्तेपापकर्मणि
सवंशाःप्रलयंसर्वेगमिष्यंतिदुराशयाः १४
स्वल्पश्रमैरल्पवित्तैरल्पकालैश्चसत्तम
यथाभवेन्महापुण्यंतद्वैकथयसूतज १५
यस्योपदेशतः पुण्यंपापंवाकुर्वतेजनाः
सतद्भागीभवेन्मर्त्यइतिशास्त्रेषुनिश्चितम् १६
पुण्योपदेशःसदयः कैतवैश्चविवर्जितः
पापमार्गविरोधीचचत्वारः केशवोपमाः १७
ज्ञानंसंप्राप्यसंसारेयः परेभ्योनयच्छति
ज्ञानरूपीहरिस्तस्मैप्रसन्नइवनेक्षते १८
ज्ञानरत्नैश्चरत्नैश्चपरसंतोषकृन्नरः
सज्ञेयः सुमतिर्नूनंनररूपधरोहरिः १९
त्वमेवमुनिशार्दूलवेदवेदाङ्गपारगः
त्वदृतेनहिवक्ताऽन्योयतस्त्वंव्यासशासितः २०
सूतउवाच-
धन्योऽसित्वंमुनिश्रेष्ठत्वमेववैष्णवाग्रणीः
यतःसमस्तलोकानांहितंवाञ्छसिसर्वदा २१
शृणुशौनकवक्ष्यामियत्त्वयाश्रोतुमिच्छितम्
सर्वलोकहितार्थायवैष्णवानांविशेषतः २२
पृष्टोजैमिनिनासर्वंयदुवाचशृणुष्वतत्
महर्षिर्जैमिनिर्नामयोगाभ्यासरतःसदा २३
प्रणम्यशिरसाव्यासंपप्रच्छमुनिसत्तमः
जैमिनिरुवाच-
भगवन्सर्वधर्मज्ञव्याससत्यवतीसुत २४

कलौकस्माद्भवेन्मोक्षस्तन्ममाचक्ष्वमूलतः
सुतउवाच-
जैमिनेर्वचनंश्रुत्वाव्यासः संतुष्टमानसः २५
प्रारेभेमुनिशार्दूलकथांमंगलसंयुताम्
व्यासउवाच-
जैमिनेमुनिशार्दूलधन्योऽसित्वंमहामते २६
नारायणकथांश्रोतुंयतोवांछसिसर्वदा
सत्कथाश्रवणेबुद्धिर्यस्ययस्यप्रवर्तते २७
तस्यतस्यभवेज्ज्ञानंज्ञानंमोक्षप्रदंविदुः
नवैष्णवकथायस्मैरोचतेपापिनेभुवि २८
वृथैवसृष्टाविधिनाभूमिर्भारवतीकृता
कथायैजगतीवक्तुंश्लाघ्यतेवैष्णवैर्जनैः २९
तांमिथ्यामिवयोवक्तिसज्ञेयःपापिनांवरः
यस्मिन्दिनेमुनिश्रेष्ठश्रूयतेनहरेः कथा ३०
तद्दिनंदुर्दिनंमन्येघनच्छन्नंनदुर्दिनम्
यत्रयत्रमहीभागेवैष्णवीवर्ततेकथा ३१
सांनिध्यंतत्रभगवान्नजहातिकदाचन
योवैष्णवकथारम्भेविघ्नकृन्मानवोभवेत् ३२
तमेवशप्त्वाभगवान्दैवतैः सहगच्छति
प्रभावंवासुदेवस्य श्रुत्वाहृष्यंतियेजनाः ३३
ज्ञेयास्तएवदेवांशाःपूज्यादृश्याश्चसत्तमाः
नारायणप्रभावंयेश्रुत्वाचोपहसंतिवै ३४
तेविज्ञेयादानवांशानरानरकभागिनः
तत्रतीर्थानिसर्वाणिगङ्गादीनिद्विजोत्तम ३५
देवर्षयश्चदेवाश्चमुनयश्चतपोधनाः
शृणवतांलोकसंघानांपापव्याधिविनाशनी ३६
नारायणकथायत्रवर्ततेप्रतिवासरम्
मुनेक्रियायोगसारंबह्वर्थंपापनाशनम् ३७
नारायणकथोपेतंसेतिहासंनिशामय ३८
इति श्रीपाद्मेमहापुराणेक्रियायोगसारेजैमिनिव्याससंवादेप्रथमोऽध्यायः १

## द्वितीयोऽध्यायः

व्यासउवाच-
सृष्टेरादौमहाविष्णुःसिसृक्षुःसकलंजगत्
स्रष्टापाताचसंहर्तात्रिमूर्तिरभवत्स्वयम् १
सृष्ट्यर्थमस्यजगतः ससर्जब्रह्मसंज्ञकम्
दक्षिणांगतश्रात्मानमात्मनाश्रेष्ठपूरुषः २
ततस्तुपालनार्थायजगतोजगतीपतिः
विष्णुंससर्जवामांशान्निजांशंकेशवंमुने ३
अथसंहरणार्थायजगतोरुद्रमव्ययम्
मुनेससर्जमध्यांगात्कृतपद्मालयः प्रभुः ४
रजःसत्वंतमश्चेतिपुरुषंत्रिगुणात्मकम्
वदंतिकेचिद्ब्रह्माणंविष्णुंकेचिच्चशंकरम् ५
एकोविष्णुस्त्रिधाभूत्वासृजत्यत्तिचपातिच
तस्माद्भेदोनकर्त्तव्यस्त्रिषुलोकेषुसत्तमैः ६
आद्याप्रकृतिरेतस्यमहाविष्णोःपरात्मनः
निदानंभूतविश्वस्यविद्याविद्येतिगीयते ७
भावाभावस्वरूपासाजगद्धेतुःसनातनी
ब्राह्मीलक्ष्मीरम्बिकेतित्रिमूर्तिःसहसाऽभवत् ८
सृष्टिस्थितिविनाशेषुयांनियोज्यततोमुने
आद्यांचैवाद्यपुरुषस्तत्रैवांतरधीयत ९
यस्याज्ञयाततोब्रह्मामहाभूतान्ससर्जह
पृथिव्याकाशवाय्वंबुवह्नीन्पञ्चसमाधिना १०
भूर्भुवःस्वस्तथा चैवमहश्चैवजनस्तथा
तपश्चसत्यमित्यादीन्सृष्टवान्कमलासनः ११
अतलंसृष्टवान्ब्रह्माततोऽधोवितलंद्विज
ततोऽधसुतलंचैवततोऽधश्चतलातलम् १२
महातलमधस्तस्मात्ततोऽधश्चरसातलम्
तस्मादधश्चपातालंलोकानेवंयथाक्रमम् १३
देवतानांनिवासार्थंरत्नसानुंमहागिरिम्
सृष्टवान्पृथिवीमध्येजाम्बूनदसमुज्ज्वलम् १४

मंदरंचरमंचैवत्रिकूटमुदयाचलम्
अन्यांश्चपर्वतांश्चैवसृष्टवान्विविधानपि १५
लोकालोकस्ततश्चैवतन्मध्येसप्तसागराः
सप्तद्वीपाश्चविप्रेन्द्रपरमेशस्वयंभुवा १६
जम्बुद्वीपोद्विजश्रेष्ठद्वीपश्चप्लक्षसंहितः
विज्ञेयोद्विगुणस्तस्माच्छाल्मलोद्विगुणस्ततः १७
तेचप्लक्षादयोद्वीपाःसर्वभागसमन्विताः
समस्तगुणसंयुक्तादेवदेवर्षिमूर्तयः १८
सप्तद्वीपाइमेविप्रसप्तसागरवेष्टिताः
तेषांनामानिवक्ष्यामिसागराणांनिशामय १९
लवणेक्षुसुरासर्पिर्दधिदुग्धजलांतकाः
एतेसमुद्रादेवर्षेपूर्वस्माच्चपरः पराः २०
विज्ञेयाद्विगुणाःसर्वआलोकालोकपर्वताः
द्वीपेद्वीपेततोब्रह्मावृक्षगुल्मलतादिकान् २१
तिर्यग्योनिगताञ्जतून्सृष्टवान्द्विजसत्तम
अथदेवान्मनुष्यांश्चनागान्विद्याधरांस्तथा २२
क्रमात्ससर्जपुत्रांश्चततोदक्षादिकान्मुनीन्
ब्रह्मक्षत्रियविट्शूद्रानन्यांश्चैवांत्यजांस्तथा २३
तेषांचवर्तनादीनिसृष्टवान्सप्रजापतिः
हेमाद्रिदक्षिणंयद्वैविंध्याद्रेरुत्तरंतथा २४
आहुस्तद्भारतंवर्षंशुभाशुभफलप्रदम्
आसाद्यभारतेवर्षेयेजन्मनिनरोत्तमाः २५
धर्मकर्माणिकुर्वंतितेसर्वेकेशवोपमाः
कर्मभूमौकृतंकर्मशुभंवाशुभमेववा २६
तत्फलंभुंजतेलोकोभोगभूमिषुसत्तम
कर्मभूमिंसमागत्ययोधर्मकर्मसूद्यतः २७
नचतेनसमःकोऽपित्रिषुलोकेषुविद्यते
तस्यस्यात्सफलं जन्मजीवितंचसुजीवितम् २८
श्रीनारायणसेवायांमतिर्यस्यनविद्यते
जन्मकोटयर्जितैःपुण्यैःसंसारैकाधिनायके २९

नारायणेदेवदेवेभक्तिःस्यात्सुदृढानृणाम्
समस्तसुखदश्चापिसश्लाघ्योनिर्भयोऽपिच ३०
त्याज्यःसदेशः सहसानातिष्ठेद्यत्रवैष्णवः
जन्मांतरार्जितंपापंस्वल्पंवायदिवावहु ३१
तत्क्षणात्क्षयमाप्नोतिभगवद्भक्तदर्शनात्
वैष्णवांघ्रिजलंयस्तुसमस्तपातकापहम् ३२
वहेत्स्वशिरसाभक्तयागङ्गास्नानेनतस्यकिम्
मुहूर्तमपियः कुर्यात्सङ्गंभागवतैः सह ३३
समुच्यतेसर्वपापैर्ब्रह्महत्यामुखैरपि
धर्मकर्माणिविप्रेन्द्रक्रियंतेयानिकानिच ३४
भगवद्भक्तपुरतस्तानिस्युरक्षयाणिच
मुहूर्त्तंवामुहूर्तार्द्धंयत्रतिष्ठंतिवैष्णवाः ३५
सत्यंसत्यंपुनःसत्यंतत्तीर्थंतत्तपोवनम्
अन्नंवासलिलंवापिफलंवावैष्णवायच ३६
यत्किंचिद्दीयतेविप्रतद्दानमक्षयंभवेत्
समस्तदेवतारूपोवैष्णवः परिकीर्तितः ३७
सचेत्संतोषितोयेनतोषिताः सर्वदेवताः
संसारेऽस्मिन्महाघोरेनानादुःखसमन्विते ३८
भगवद्भक्तपुरुषःकदाचिन्नावसीदति
तस्मात्त्वमपिविप्रेन्द्रक्रियायोगेनकेशवम् ३९
समाराध्यसदाभक्तयाव्रजविष्णोःपदंपरम्
सूतउवाच-
तदेतद्वचनंश्रुत्वाकानीनस्यमहात्मनः ४०
शिरसांजलिमादायजैमिनिः पर्यपृच्छत
जैमिनिरुवाच-
भगवद्भक्तमाहात्म्यंत्वयाप्रोक्तंपुनः पुनः ४१
गुरोकिंलक्षणंतेषांतत्सर्वंब्रूहिसांप्रतम्
कथंवावैष्णवालोकाज्ञातव्यामुनिसत्तम ४२
आदितोब्रूहितत्सर्वंयदितेमय्यनुग्रहः
व्यासउवाच-

मधुकैटभयोः पूर्वंहतयोर्वेधसास्वयम् ४३
पृष्टोयदाहभगवांस्तन्निशामयवेद्म्यहम्
कल्पांतेरुद्ररूपेणसंहार्यसकलंजगत् ४४
स्वयमेकश्चभगवान्सुष्वापयोगमायया
सुप्तेतस्मिन्भगवतियोगनिद्राविमोहिते
अभवत्पृथिवीसर्वासलिलौघपरिप्लुता ४५
अतोब्रह्माजगत्स्रष्टातन्नाभिकमलोपरि
तमादिपुरुषंध्यात्वातस्थौतद्गतमानसः ४६
तस्मिन्कालेमहाघोरेविष्णोःकर्णमलाद्द्विज
जातौमहासुरौघोरौमधुकैटभसंज्ञितौ ४७
अंतरिक्षेभ्रमंतौतौदानवावतिदारुणौ
श्रीविष्णोर्नाभिकमलेब्रह्माणंतावपश्यताम् ४८
तंहंतुमथदैत्यौतौमहाबलपराक्रमौ
उद्यमंचक्रतुर्विप्रक्रोधसंरक्तलोचनौ ४९
ततोब्रह्माजगत्स्रष्टाविचिंत्यतद्वधंहृदा
योगनिद्रांभगवतींतुष्टावश्लक्ष्णयागिरा ५०
तस्यस्तवंसमाकर्ण्यब्रह्मणः परमेष्ठिनः
उवाचेतिवचःप्रीत्याकिंतेऽभिमतमुच्यताम् ५१
ब्रह्मोवाच-
अत्युग्रदानवावेतौहंतुंमांकृतनिश्चयौ
माययामोहयद्विप्रंत्रातारमच्युतंत्यज ५२
ततोभागवतीनिद्रामहाविष्णुंतमत्यजत्
दानवाभ्यांततस्ताभ्यामंतरिक्षेकृपामयः ५३
युयुधेबाहुयुद्धेनशरणागतवत्सलः
पञ्चवर्षसहस्राणिकृत्वायुद्धंसुदारुणम् ५४
विजयंनागमत्कोऽपिनचकोऽपिपराभवम्
अथतौदानवौतत्रमहामायाविमोहितौ ५५
वरंवृणिवतिचास्मत्तोऽगदतांकेशवंप्रति
ततः प्रहस्यदेवेशउवाचेतिवचोद्विज ५६
यदितुष्टौचवांदैत्यौमद्वध्यौभवतंद्रुतौ

ततस्तौदानवौघोरौभगवंतंजनार्दनम् ५७
इत्यूचतुर्महामायौमहामायाविमोहितौ
अयमेववरोदत्तोभवतेनात्रसंशयः ५८
मारयावांविनावारिमहीयत्रजनार्द्दन
महासुरौततस्तौतुआनीयजघनंप्रति ५९
निहतौसहसाविप्रचित्रयाचक्रधारया
चक्रिणानिहतौदृष्ट्वादानवौमधुकैटभौ
तुष्टावदेवदेवेशंब्रह्माविगतसाध्वसः ६०
ब्रह्मोवाच-
नमोनमस्तेपरमेश्वरायप्रपन्नसर्वार्तिविनाशनाय
नमोनमस्तेत्रिगुणात्मकायनारायणायामितविक्रमाय ६१
त्वत्पादपाथोजयुगंप्रपन्नाजनाःक्वचिन्नोविपदंमनुष्याः
एतन्मयाज्ञातमनंतकीर्तेसद्योहृतेयंमहतीममापत् ६२
योगेश्वरोऽसिसदयोऽसिजगत्त्रयेशत्वंदेवदेवशरणागतपालकेश
त्वंनिर्द्दयोऽरिनिकरस्यविनाशनेषुयद्रक्षितोऽहमसुरौनिहतौत्वयैतौ ६३
यद्यप्यत्यंतकठिनौमधुकैटभौतौमन्येतथापिस्वजनाविहचेतसाहम्
यस्मात्स्वजीवनविनाश वरप्रदानैः संतोषितोऽखिलशुभप्रदईश्वरस्त्वम् ६४
रम्यजगत्त्रयमिदंपुरुषस्यतस्यनश्यंतिसर्वरिपवः स्वकुलैःसमेताः
वृद्धिंव्रजंतिसुहृदोऽखिलबांधवाश्चयंपश्यसित्वममरेशदयाभिरत्र ६५
लक्ष्मीमुखांबुजमधुव्रतदेवदेवसंसारलोकभयशोकविनाशकारिन्
त्वच्चारुपादकमलद्वयमाश्रयंतंमांपाहिनाथकृपयासततंनमस्ते ६६
प्रसीदपुण्डरीकाक्षप्रसीदकमलेश्वर
प्रसीदसर्वभूतेशविश्वंभरनमोस्तुते ६७
नमस्तेभक्ततुष्टायनमस्तेभक्तिदायिने
नमस्तेज्ञानरूपायशरणंमेभवानघ ६८
नमस्तुभ्यंनमस्तुभ्यंनमस्तुभ्यंनमोनमः
परित्राहिपरित्राहिपरित्राहिजगन्मय ६९
व्यासउवाच-
एतैरन्यैरपिस्तोत्रैर्ब्रह्मणालोककारिणा
स्तुतः सदेवोभगवान्परमांप्रीतिमाययौ ७०

श्रीभगवानुवाच -
स्तोत्रेणानेनतेभक्त्यातुष्टोऽस्मिकमलासन
किमस्त्यभिमतंब्रूहितत्तेदास्याम्यहंभुवि ७१
ब्रह्मोवाच-
यदितुष्टोऽसिदेवेशकरुणाब्धे जगन्मय
नापदस्तवभक्तानांभवंत्वितिवरोमम ७२
श्रीभगवानुवाच-
एवमस्तुसुरश्रेष्ठदत्तोऽयतेमयावरः
मद्भक्तस्यकदाप्यापन्नभवेत्क्षितिमण्डले ७३
वैष्णवानांशरीरेषुसततंनिवसाम्यहम्
लभंतेनापदस्तस्मात्कदाचिद्वैष्णवानराः ७४
ब्रह्मोवाच-
सर्वमेवजगन्नाथत्वयादत्तंनसंशयः
यद्येतौचमहादैत्यौसंग्रामेविनिपातितौ ७५
कियत्कालंसमासाद्यस्तोत्रेणानेनवैप्रभो
स्तौतित्वांपरयाभक्त्यातस्य त्राताभविष्यसि ७६
अहोध्यानैरपिध्यातुंदेवैस्त्वंनहिशक्यसे
सत्वंवैष्णवदेहेषुभ्रमसीत्यद्भुतंमहत् ७७
क्षणमात्रमपिस्वामिंस्त्वयितुष्टेनकिं भवेत्
सत्वंवैष्णवसंगेनभ्रमसीत्यद्भुतंमहत् ७८
केवैष्णवाः कैटभारेकिंवातेषांचलक्षणम्
कथंज्ञेयास्तुतेसर्वेतन्मेकथयकेशव ७९
श्रीभगवानुवाच-
वैष्णवानांलक्षणानिकल्पकोटिशतैरपि
सम्यग्वक्तुंनशक्तोऽस्मिसंक्षेपाच्छृणुसत्तम ८०
संसारोवैष्णवाधीनोदेवा वैष्णवपालिताः
अहंचवैष्णवाधीनस्तस्माच्छ्रेष्ठाश्चवैष्णवाः ८१
क्षणमात्रमपिब्रह्मन्विहायवैष्णवंजनम्
तिष्ठामिनाहमन्यत्रवैष्णवाममबांधवाः ८२
कामक्रोधविहीनायेहिंसादंभविवर्जिताः

लोभमोहविहीनाश्चज्ञेयास्तेवैष्णवाजनाः ८३
अमत्सरादयायुक्ताःसर्वभूतहितैषिणः
सत्योक्तिभाषिणश्चैवविज्ञेयास्तेचवैष्णवाः ८४
धर्मोपदेशिनश्चैवधर्माचारधरास्तथा
गुरुशुश्रूषिणश्चैवविज्ञेयास्तेचवैष्णवाः ८५
समानंयेचपश्यन्तित्वांचमांचमहेश्वरम्
कुर्वन्तिपूजामतिथेर्ज्ञेयास्तेवैष्णवाजनाः ८६
वेदविद्यानिरुक्तायेविप्रभक्तिरताःसदा
नपुंसकाः परस्त्रीषुज्ञेयास्तेवैष्णवाजनाः ८७
एकादशीव्रतंयेचभक्तिभावेनकुर्वते
गायंतिममनामानिज्ञेयास्तेवैष्णवाजनाः ८८
देवायतनकर्तारस्तुलसीमाल्यधारकाः
पद्माक्षधारिणोयेचज्ञेयास्तेवैष्णवाजनाः ८९
शङ्खचक्रगदापद्मैरङ्किता निममायुधैः
ब्रह्मन्येषांशरीराणिज्ञेयास्तेवैष्णवाजनाः ९०
धात्रीफलस्त्रजोयेषांगलेषुकमलासन
मांपूजयंतितत्पत्रैर्ज्ञेयास्तेवैष्णवाजनाः ९१
तुलसीमूलमृद्भिश्चतिलकानिनयंतिये
तुलसीकाष्ठपंकैश्चज्ञेया स्तेवैष्णवाजनाः ९२
गङ्गास्नानरतायेचगङ्गानामपरायणाः
गङ्गामाहात्म्यवक्तारोज्ञेयास्तेवैष्णवाजनाः ९३
शालग्रामशिलायेषांगृहेवसतिसर्वदा
शास्त्रंभागवतंचैवज्ञेयास्तेवैष्णवाजनाः ९४
संमार्जयंतियेनित्यंममस्थानानिसत्तम
दीपंयच्छंतितत्रैवज्ञेयास्तेवैष्णवाजनाः ९५
शीर्णंमन्मंदिरंयेचकुर्वन्तिनूतनंपुनः
तत्रायतनशोभांचज्ञेयास्तेवैष्णवाजनाः ९६
अभयंयेचयच्छन्तिभीरुभ्यश्चतुरानन
विद्यादानंचविप्रेभ्योज्ञेयास्तेवैष्णवाजनाः ९७
मत्पादसलिलैर्येषांसिक्तानिमस्तकानिच

ममनैवेद्यमश्नन्तिज्ञेयास्तेवैष्णवाजनाः ९८
ज्ञुत्तृट्प्रपीडितेभ्यश्चयेयच्छंत्यन्नमंबुच
कुर्युर्येयोगशुश्रूषांज्ञेयास्तेवैष्णवाजनाः ९९
आरामकारिणोयेचपिप्पलारोहिणोऽपिच
गोसेवांयेचकुर्वन्तिज्ञेयास्तेवैष्णवाजनाः १००
अत्यन्तभक्तायेब्रह्मन्पितृयज्ञंप्रकुर्वते
कुर्वन्तिदीनशुश्रूषांज्ञैयास्तेवैष्णवाजनाः १०१
तडागग्रामकर्तारः कन्यादानरताश्चये
सेवंतेश्वशुरौयेचज्ञेयास्तेवैष्णवाजनाः १०२
सेवंतेज्येष्ठभगिनींज्येष्ठभ्रातरमेवच
परनिंदांनकुर्वंतिज्ञेयास्तेवैष्णवाजनाः १०३
वैष्णवेषुगुणाः सर्वेदोषलेशोनविद्यते
तस्माच्चतुर्मुखत्वंचवैष्णवोभवसांप्रतम् १०४
समाराधयमांनित्यंक्रियायोगैःप्रजापते
सर्वमेवाशुभद्रंतेभविष्यतिनसंशयः १०५
देवस्वंब्राह्मणद्रव्यंपरस्वंचचतुर्मुख
पश्यन्तिविषवद्येचज्ञेयास्तेवैष्णवाजनाः १०६
पाखंडभक्तिरहिताः शिवभक्तिपरायणाः
चतुर्दशीव्रतरताज्ञेयास्तेवैष्णवाजनाः १०७
बहुनात्रकिमुक्तेनभाषितेनपुनः पुनः
ममार्चायेचकुर्वंतिविज्ञेयास्तेचवैष्णवाः १०८
भूयः पूर्वस्थितमिवसृज्यतांसकलंजगत्
इत्युक्त्वांतर्दधेदेवस्तत्रैवपरमेश्वरः १०९
ततस्तुपूर्ववद्ब्रह्मासृष्टवान्सकलंजगत्
क्रियायोगैर्हरिंचेष्ट्वाजगामपरमंपदम् ११०
येपठंतीममध्यायं भक्त्यानारायणाग्रतः
सर्वपापविनिर्मुक्ताअन्तेयान्तिहरेर्गृहम् १११
इति श्रीपाद्मेमहापुराणेक्रियायोगसारेद्वितीयोऽध्यायः २

तृतीयोऽध्यायः

जैमिनिरुवाच-
क्रियायोगस्यतत्वंमेब्रूहिव्यासमहामते
क्रियायोगमहंज्ञातुमिच्छामिभवदग्रतः १
व्यास उवाच-
शरीरंमानुषंविप्रदुर्लभंचात्रभूतले
धीरः शरीरमासाद्यमोक्षार्थंयोगमभ्यसेत् २
क्रियायोगध्यानयोगावुभौयोगौप्रकीर्तितौ
तयोराद्यः क्रियायोगः कुर्वतांसर्वकामदः ३
गङ्गाश्रीर्विष्णुपूजाचदानानिद्विजसत्तम
ब्राह्मणानांतथाभक्तिर्भक्तिरेकादशीव्रते ४
धात्रीतुलस्योर्भक्तिश्चतथाचातिथिपूजनम्
क्रियायोगाङ्गभूतानिप्रोक्तानीतिसमासतः ५
क्रियायोगादृतेविप्रध्यानयोगेनसिद्ध्यति
क्रियायोगरतोयातितद्विष्णोःपरमंपदम् ६
जैमिनिरुवाच-
क्रियायोगाङ्गभूतानियानिप्रोक्तानिभोःप्रभो
तन्महात्म्यानिकथययदिभोमय्यनुग्रहः ७
गङ्गायाः केगुणाब्रह्मन्विष्णुपूजाफलं चकिम्
श्रेष्ठानिकानिदानानिकावाभक्तिर्द्विजन्मनाम् ८
एकादश्याःफलंकिंबाधात्रीभक्तिश्चकीदृशी
तुलस्याःकीदृशीभक्तिः किंवाचातिथिपूजनम् ९
एतत्सर्वंमुनेब्रूहिश्रोतुमस्तिममादरः
त्वत्तोऽन्यकथितुंकोऽपिनशक्नोतिजगत्त्रये १०
व्यासउवाच-
साधुसाधुद्विजश्रेष्ठमनस्तेविमलंध्रुवम्
यतोगुह्यकथामेतां श्रोतुंश्रद्धाचकौतुकम् ११
भागीरथ्यागुणांसम्यक्कथितुंनहिशक्यते
तस्मात्समासतोवक्ष्ये श्रूयतामेकचेतसा १२
गङ्गेत्यक्षरयुग्मंचजपत्यत्यन्तकोमलम्

मन्येव्रजेत्तथाप्येनोमहाभूतरसायनम् १३
सर्वत्रसुलभागङ्गात्रिषुस्थानेषुदुर्लभा
गङ्गाद्वारे प्रयागेचगङ्गासागरसङ्गमे १४
सवासवाःसुराः सर्वेगङ्गाद्वारंमनोरमम्
समागत्यप्रकुर्वन्तिस्नानदानादिकंमुने १५
दैवयोगान्मुनेतत्रयेत्यजंतिकलेवरम्
मनुष्यपशुकीटाद्यालभंतेपरमंपदम् १६
अत्रेतिहासंविप्रर्षेकथ्यमानंमयाशृणु
सम्यक्छ्रवणमात्रेणसर्वपापैः प्रमुच्यते १७
मनोभद्रोनामराजासोमवंशसमुद्भवः
पूर्वमासीज्जगत्यस्मिन्बलवान्सर्वधर्म्मवित् १८
तस्यहेमप्रभानाममहिषीप्रियवादिनी
पतिव्रतामहाभागासर्वलक्षणसंयुता १९
सराजासमरेहत्वासकलानेवशात्रवान्
शशासपृथिवींकृत्स्नांसाब्धिद्वीपांमहाबलः २०
सएकदामहीपालः समाहूयस्वमंत्रिणः
उवाचेदंवचः प्रीत्यासभामध्येमहायशाः २१
मनोभद्रउवाच-
अमात्याः पृथिवीसर्वामयेयंपरिपालिता
निहतारिपवःसर्वेसपुत्रबलवाहनाः २२
पालितानिस्वगोत्राणिदानैर्विप्राश्चतोषिताः
शिष्टाश्चत्रिदशाः सर्वेसपुत्रबलवाहनाः २३
पालितानिस्वगोत्राणियज्ञैःसर्वैःसदक्षिणैः
एतद्धिजरयासर्वंमहत्यामेबलंहृतम् २४
कर्माणिकानिचित्कर्त्तुंनहिशक्नोमिदुर्बलः
सामर्थ्यहीनेपुरुषेराजश्रीर्नहिशोभते २५
सर्वाभरणसंयुक्तावृद्धाङ्गाइवकामिनी
तावद्बिभ्यतिसर्वेऽपिशत्रवः पृथिवीतले २६
यावद्धिगतसामर्थ्यंनेच्छन्तिचारुचक्षुषा
समस्तगुणसम्पन्नामपितद्गतमानसम् २७

पृथ्वीत्यजेन्नृपंवृद्धंस्वैरिणीपालितायथा
भक्तिलभ्यागुणाःसर्वेगुणलभ्यंमहद्यशः २८
निःश्रेयसंदानलभ्यंबललभ्यातुमेदिनी
सामर्थ्यहीनः कृपणोनिश्चितोरिपुशासने २९
मूर्खमात्रवचोग्राहीसनृपः शत्रुनंदनः
ततोऽहसकलंराज्यंविभज्यवरमंत्रिणः ३०
दातुमिच्छामिपुत्राभ्यांयुष्माभिर्यदिमन्यते
मन्त्रिणऊचुः -
यदेतद्वचनंप्रोक्तंत्वयानीतिविदानृप ३१
तदेवमतमस्माकंसदेहोनात्रविद्यते
अथायातौनृपादेशात्संसदंप्रतिसत्तमौ ३२
वीरभद्रयशोभद्रनामानौतनयाबुभौ
तौचसर्वगुणोपेतौकुमारौप्रियवादिनौ ३३
पितृभक्तौसदाशांतौबलिनौधर्मतत्परौ
ततः सभूपः सहसाराजनीतिविदांवरः ३४
विभज्यसकलंराज्यंददौताभ्यांकुतूहलात्
अत्रांतरेगृध्रएकःस्वकीयस्त्रीसमन्वितः ३५
आगत्यतत्सभामध्येउपविष्टोद्विजोत्तमाः
तावागतौसमालोक्यपक्षिणावतिहर्षितौ ३६
राजाहयुवयोः कस्माच्छुभागमनमुच्यताम्
गृध्रउवाच-
गृध्रोऽहपृथिवीपालममेयंस्त्रीपरंतपः ३७
आगतोऽस्मिमुदाद्रष्टुंसंपदंपुत्रयोस्तव
एतयोर्महतीदृष्टाविपत्तिः पूर्वजन्मनि ३८
इहजन्मनिसंपत्तिंद्रष्टुमावांसमागतौ
तस्यैतद्वचनंश्रुत्वागृध्रस्यपरमाद्भुतम्
राजोवाचपुनर्विप्रविस्मयाविष्टमानसः ३९
राजोवाच-
अत्यद्भुतंवचोगृध्रत्वत्तः श्रुतमिदंमया
एतयोःपूर्ववृत्तान्तोभवताज्ञायतेकथम् ४०

यदिजानासितत्वेनपूर्ववृत्तांतमेतयोः
ब्रूहितर्हिखगश्रेष्ठसर्वमेतदशेषतः ४१
गृध्रउवाच-
नृपतेवृषलावेतौयुगेद्वापरसंज्ञके
गरसंगरनामानौसत्यघोषसुतौस्थितौ ४२
एककालेचभूपालमृतौनिजगृहांतरे
ततोनेतुमिमौभूपदंष्ट्रिरणोयमकिंकराः ४३
पाशहस्ताःसमायाताः कोटिकोटिसहस्रशः
बबंधुश्चर्मपाशेनद्वावेतौतौमदोद्धतौ ४४
निन्युश्चनिलयंमृत्योरतिदुर्गमवर्त्मना
इमौदृष्ट्वाधर्मराजश्चित्रगुप्तमुवाचह ४५
एतयोः सकलंवृत्तंचित्रगुप्तविचार्यताम्
तस्याज्ञयाचित्रगुप्तः सर्वकर्मशुभाशुभम् ४६
मूलाद्विचारयामासततइत्याहचांतकम्
चित्रगुप्तउवाच-
सत्यमेतौमहाबाहोपुरायव्रतमहाशयौ ४७
अस्तिचेद्दुष्कृतंकिञ्चित्सर्वकर्मविलोकितम्
स्वयंदानंसमुत्सृज्यनहिदत्तंद्विजातये ४८
तेनैवकर्मणाराजन्निमौनरकगामिनौ
दातादानंसमुत्सृज्ययोनदद्याद्द्विजातये ४९
सयातिनरकंघोरंसर्वभूतभयावहम्
दाताहिनस्मरेद्दानंप्रतिग्राहीनयाचते ५०
उभयोर्नरकेवासोयावच्चन्द्रदिवाकरौ
तस्मादिमौमहापापौब्रह्मस्वाहारिणौप्रभो ५१
नयंतुकिंकराःशीघ्रंनरकंप्रतिदारुणम् ५२
यमाज्ञयाततोदूताः संदष्टौष्ठपुटाःक्रुधा
चिक्षिपुर्नरकेघोरेतावेतौपृथिवीपते ५३
तस्मिन्नेवदिनेराजन्ननयाभार्ययासह
यमदूतैः समागत्यनीतोऽहयममन्दिरम् ५४
मयापितत्कृतंकर्मतदाकर्णयभूपते

मूलात्सर्वंप्रवक्ष्यामिशृणवतांविस्मयप्रदम् ५५
पुरासीत्सर्वगोनामब्राह्मणोऽहमहाकुलः
सौराष्ट्रदेशवासीचवेदवेदाङ्गपारगः ५६
इयंमंजूकषानाममममपत्नीयशस्विनी
पतिव्रतामहाभागापवित्रकुलसंभवा ५७
प्रमत्तोऽहमहाभागविद्ययावयसाधनैः
अवज्ञांमनसापित्रोश्चकाराहंयुवैकदा ५८
अहंभूरिसभाश्लाघ्योवनस्थः सर्वकर्मकृत्
धनवान्सुन्दरोज्ञानीज्ञातिपोषणतत्परः ५९
ममैवपुंसःपितरौतौचपापपरायणौ
मुखरौदययाहीनौपाखंडिसङ्गलोलुपौ ६०
पौरुषंजीवनंचैवधनंचैवकुलंतथा
विद्याकीर्तिश्चसर्वस्वंपितृभ्यांविफलीकृतम् ६१
एतद्विचिन्त्यमनसामयानृपमुहुर्मुहुः
अवज्ञयापरित्यक्तापित्रोःसेवाशुभप्रदा ६२
अनेनकर्मणाराजन्सदारोऽहयमाज्ञया
विक्षिप्तोनरकेदूतैर्यत्रतौपापिनांवरौ ६३
एताभ्यांसहपापाभ्यां सदारेणमयानृप
स्थितंचनरकेघोरेयावत्कालंशृणुष्वतत् ६४
युगकोटिसहस्राणियुगकोटिशतानिच
अनुभूतंमहादुःखंनरकस्यनृपोत्तम ६५
नरकांतेततः सोऽहकांतयासहभूपते
गृध्रपक्षकुलेजातौमृतमांसाशनौतथा ६६
एतावपिचतौराजन्नरकांतगतैषिणौ
जातौशलभयोर्वंशेभोक्तुंफलंस्वकर्मणः ६७
यदेताभ्यांकृतंकर्म्मराजञ्छलभजन्मनि
तदाकर्णयवक्ष्यामिश्रोतॄणांविस्मयप्रदम् ६८
एकदासुमहान्वायुःसमायातोमहीपते
उड्डीयपातितौतेनगङ्गागर्भेसुनिर्मले ६९
निपत्यगङ्गासलिलेकोमलाङ्गाविमौतथा

जग्मतुःपंचतांसद्यः समस्तकलुषापहम् ७०
ततोनेतुमिमौदूताश्रायाताश्चारुचक्षुषः
श्रायातानिविमानानिसर्वभोगान्वितानिच ७१
विमुक्तौसर्वपापेभ्यस्तुलसीमाल्यशोभितौ
दिव्यंविमानमारुह्यगतौविष्णुपुरंप्रति ७२
तावत्कालंस्थितौराजन्ब्रह्मणोऽव्यक्तजन्मनः
ब्रह्माज्ञयासमायातौततइन्द्रपुरंप्रति ७३
भुक्तवंतौसुखंतत्रदुर्ल्लभंयत्सुरैरपि
तावत्कालंस्थितौराजन्भोक्तुंकृच्छ्रांवसुंधराम् ७४
पवित्रेभवतोवंशेजातावेतौमहायशौ
गङ्गायांत्यजतोदेहंभूयोजन्मनविद्यते ७५
तथापिवसुधांभोक्तुंजातौपुरायतमाविमौ
चिरंभुक्त्वामहींकृत्स्नांपुत्रपौत्रसमन्वितौ ७६
गङ्गामरणमासाद्ययोगिनामपिदुर्ल्लभम्
नारायणस्यसायुज्यमिमौभूपगमिष्यतः ७७
एतत्सर्वंमयाप्रोक्तंपूर्ववृत्तांतमेतयोः
जातिस्मरप्रभावेननृपवर्गशिरोमणी ७८
गङ्गामरणमासाद्यगतावेतौदशामिमाम्
श्रावयोःकःपरित्राणंकरिष्यतिदुरात्मनोः ७९
मित्रावज्ञामनुष्याणांनरकक्लेशदायिनी
ममैवपृथिवीपालदृष्टाकेवलमेवतत् ८०
पित्रभक्तिर्द्विजश्रेष्ठइहामुत्रचदुःखदा
इहसंपद्विनाशायपरत्रनरकायच ८१
वरंमन्येमहीपालब्रह्महत्यादिपातकम्
कदाचिन्निष्कृतिस्तस्मादियंभवतिशाश्वती ८२
दुःखार्जितंपुरायवृक्षंसर्वक्लेशविनाशनम्
पित्रवज्ञाकुठारेणच्छिंदंतिभुविमानवाः ८३
यत्किञ्चिद्दीयतेराजन्पित्र्येवक्त्रेपरंतप
तदश्नातिस्वयंविष्णुः पितृरूपोहरिर्यतः ८४
प्रत्यक्षदेवौपितरौसेवंतेयेत्वहर्निशम्

सर्वसिद्धिर्भवेत्तेषांप्रसादाञ्जगतीपतेः ८५
पितृभक्तिविहीनायेदिनंतिष्ठंतिमानवाः
तावत्कल्पसहस्रंतुतिष्ठंतिनरकेजनाः ८६
तस्मादिदंमहादुःखंबभूवममसांप्रतम्
मोक्षंकदागमिष्यामिसदारोऽहनवेद्मितत् ८७
व्यासउवाच-
एतत्तस्यवचः श्रुत्वाप्रगृह्यद्विजसत्तम
बभूवहर्षितोराजाविस्मितश्चपुनः पुनः ८८
राजोवाच-
आंश्चर्यंहिवचोगृध्रश्रुतमेतन्मुखात्तव
ममचैषांचहृदयेप्रतीतिर्नहिजायते ८९
अथांतरिक्षेवागुच्चैरितिजातानृपोत्तम
सत्यंसत्यंसत्यमिदंसंदेहोनात्रविद्यते ९०
ततः सपक्षीविप्रर्षेसहसाभार्ययासह
गङ्गामाहात्म्यकथनात्पूर्वस्थितइवाभवत् ९१
दिविदुंदुभयोनेदुर्जगुर्गन्धर्वसत्तमाः
ननृतुश्चाप्सरोवर्गाह्यपतत्पुष्पवर्षणम् ९२
विमानमागतंदिव्यंसर्वभोगसमन्वितम्
समायातादूतगणाःप्रेषिताः कैटभद्विषा ९३
अथासौसर्वगोविप्रप्रियनयासहभार्यया
सद्योविमानमारुह्यजगामभवनंहरेः ९४
एतच्छ्रुत्वाद्भुतंकर्मसराजाद्विजसत्तम
सपुत्रदारः सेवायांगङ्गायास्तत्परोऽभवत् ९५
भागीरथ्यासमंतीर्थंनास्तिवैभुवनत्रये
यन्नामोच्चारणादेवसर्वगोमोक्षमाप्नुयात् ९६
गङ्गाद्वारस्यमाहात्म्यंकथितंतेद्विजोत्तम
समस्तपापविध्वंसिकिमन्यच्छ्रोतुमिच्छसि ९७
अध्यायमेतत्परमादरेणपठंतियेदेवगृहेमनुष्याः
शृण्वंतियेचद्विजवर्गभक्तानश्यंतितेषांदुरितानिसद्यः ९८
इति श्रीपद्मपुराणेक्रियायोगसारेतृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

जैमिनिरुचवाच-
गङ्गाद्वारस्यमाहात्म्यंत्वत्प्रसादाच्छ्रुतंमया
प्रयागस्यचमाहात्म्यमिदानींश्रोतुमिष्यसे १
गङ्गाब्धिसङ्गमस्यापिमाहात्म्यंकथ्यतांमुने
नसम्यक्कथितुंकोऽपिशक्नोतित्वदृतेद्विजौ २
व्यासउवाच-
प्रयागस्यफलंवत्सगङ्गाब्धिसङ्गमस्यच
सम्यग्वक्तुंनशक्नोमिसंक्षेपाच्छ्रुयतांद्विज ३
कोटिब्रह्माण्डमध्येषुयानितीर्थानिवैमुने
प्रयांतितानिसर्वाणिप्रयागप्रतिमांतुकिम् ४
गङ्गायायमुनायाश्चसरस्वत्याश्चसङ्गमे
प्रशंसंतिसुराःसर्वेब्रह्मविष्णुशिवादयः ५
मकरस्थेरवौमाघेस्नानंयेतत्रकुर्वते
तेषामागमनंनास्तिविष्णुलोकात्कदाचन ६
गवांकोटिसहस्राणिवाजिमेधमुखाध्वराः
मेरुतुल्यसुवर्णानिदानान्यन्यानिचद्विज ७
कुरुक्षेत्रेपुष्करेचप्रभासेचगयासुच
हुत्वादत्वाचविप्रेभ्योयत्फलंप्राप्यतेबुधैः ८
माघेस्नात्वाप्रयागेतुतस्मात्कोटिगुणंभवेत्
तस्मात्समस्ततीर्थानांप्रयागः परमःस्मृतः ९
सिंहराशिस्थितेसूर्येगोदावर्यांद्विजोत्तम
चिरमुग्रतपस्तप्त्वास्नानदानव्रतादिभिः १०
वेदागमपुराणोक्तंयत्पुण्यमक्षयंभवेत्
माघेस्नात्वाप्रयागेतुतत्पुण्यंनात्रसंशयः ११
फाल्गुनेकृष्णपक्षेतुचतुर्दश्यामुपोषितः
काश्यांयत्फलमाप्नोतितन्मेनिगदतःशृणु १२
कोटिजन्मार्जितैः पापैर्विमुक्तःसर्वरूपधृक्
उद्धृत्यकोटिपुरुषाञ्छिवेनसहमोदते १३
माघेमासेप्रयागेतुस्नात्वासकृदपिद्विजः

कल्पकोटिशतंविष्णुंसंपूज्यान्यत्रयत्फलम् १४
एकाहमपिसंपूज्यमकरस्थेदिवाकरे
सत्यंसत्यमहंवच्मिसर्वमेवाक्षयंभवेत् १५
यावद्दिनंमाघमासेतत्रतिष्ठतिमानवः
तावत्कल्पशतंविप्रमोदतेविष्णुनासह १६
गङ्गायमुनयोस्तोयेस्नानंयेनकृतंसकृत्
सद्यस्तद्दर्शनात्पापैर्मुच्यतेसर्वपातकैः १७
तर्तुंयदीच्छंतिजनाः संसाराब्धिंसुदुस्तरम्
गङ्गायमुनयोःस्नात्वाभक्त्यापश्यंतुमाधवम् १८
यजंतिमानवास्तत्रयद्यदिष्ट्वाकलेवरम्
सद्योलभंतेविप्रर्षेतत्तदेवनसंशयः १९
इतिहासमिहैवाहंकथयामिनिशामय
यच्छ्रुत्वासर्वपापेभ्योमुक्तोभवतिमानवः २०
प्रणिधिर्नामतत्रासीद्वैश्यएकोमहाधनी
देवतातिथिपूजासुविप्रभक्त्येकतत्परः २१
तस्यपद्मावतीनामधर्मपत्नीपतिव्रता
चार्वङ्गीशीलयुक्ताचकुलजाप्रियवादिनी २२
स्त्रीणांयोग्यागुणायेयेसृष्टाःश्रीपरमेष्ठिना
तच्छरीरेगुणास्तेतेनिवसंतिद्विजोत्तम २३
अथासौप्रणिधिर्वैश्यःसमादायधनंबहु
वाणिज्यार्थेगतोविप्रशुभेलग्नेशुभेतिथौ २४
धनाद्धर्मःप्रभवतिधनाच्चविपुलंयशः
धनात्कुलमवाप्नोतिभवेत्किंवाधनादृते २५
धनहीनंजनंदृष्ट्वासखापिवापलायते
मेघःशरद्यंबुहीनः खंडंखंडंनयेन्महत् २६
खादितुंप्राप्यतेयावत्तावदेवहिबांधवाः
धनंयस्यकुलंतस्यबुद्धिस्तस्यसपंडितः २७
अर्थैर्विहीनः पुरुषोजीवन्नपिमृतोपमः
धर्मार्थविद्यार्जनतोमतिर्यस्यनिवर्तते २८
ज्ञेयःसमूर्खःसुतरामधिकस्याधिकंफलम्

कर्त्तव्यःसततंधर्मश्चार्जितव्यंसदाधनम् २९
शिक्षितव्यासदाविद्यापुंभिरेवविचक्षणैः
दानाद्धनंचविद्याचवर्द्धतेप्रतिवासरम् ३०
धर्मस्तुवर्द्धतेनैव रक्षतेनविनानृणाम्
काष्ठंतृणंतुषंवापिसंप्राप्यनपरित्यजेत् ३१
पुमान्संचयशीलोऽपिकदाचिन्नावसीदति
ततोऽसौप्रणिधिर्वैश्योनियोज्यस्त्रियमालये ३२
गृहव्यापारनिष्णातोवाणिज्येनजगामह
अथैकदातस्यपत्नीगृहीत्वोद्वर्तनादिकम् ३३
सखीभिःसहविप्रर्षेजगामस्नानहेतवे
ततोधनुर्ध्वजोनामस्वयंचपातकाश्रयः ३४
निजेच्छयाप्रकुर्वंतींस्नानकर्मददर्शताम्
विकसत्स्वर्णपुष्पाढ्यांप्रफुल्लकमलाननाम् ३५
मृगशावदृशंचारुपीनोन्नतपयोधराम्
तांवैश्यपत्नीमालोक्यश्वपचोऽसौस्मरातुरः ३६
उवाचप्रहसन्वाणींनिजमूर्तिमचिंतयन्
धनुर्ध्वजउवाच–
कासिकल्याणिसुश्रोणिचारुहासिनिसुन्दरि ३७
मनोहरसिमेकस्मात्सुयौवनरसैःप्रिये
विशालजघनेतन्विमयागुणवतासह ३८
गुणवत्यात्वयासर्वंसुखमत्यनुभूयताम्
धनुर्ध्वजवचः श्रुत्वातस्याःसख्यस्ततोद्विज ३९
ऊचुर्वाक्यंतथाक्रुद्धाः संदष्टदशनच्छदाः
सख्यऊचुः–
अरेमूढदुराचारदुराचारकुलोद्भव ४०
पादनिष्प्रेक्षणमपिनैतस्यास्तेप्रदीयते
इयंपतिव्रतानारीधर्मकर्मपरायणा ४१
आत्मानंसुखमिच्छद्भिःपापदृष्ट्यानदृश्यते
परस्त्रीमुखसौंदर्यंपरद्रव्यंचसर्वदा ४२
दृष्ट्वाकामाग्निसंखिन्नादह्यंतेमूढमानसाः

याहिपापमतेदूरंमावदोक्तिंसुदुःसहाम् ४३
वयमेवभवंतंनस्पृशामश्वरगैरपि
धनुर्ध्वजउवाच-
धिगस्त्वमुंजातिशब्दंसंजानन्नखिलंगुणम् ४४
संभावितोनयुष्माभिः श्वपचत्वेयतोऽधुना
कनकंमंदिरापूर्णंकलशाभ्यंतरस्थितम् ४५
संप्राप्यकोनगृह्णातितद्गुणग्रामवित्पुमान्
अतोऽहयुवतीमेनांयथाप्राप्नोमिसांप्रतम् ४६
तथाकुरुतहेसख्यः शरणंभोगतोस्मियत्
इतिब्रुवंतंतंमूढंभूयोभूयोद्विजोत्तम ४७
ऊचुर्वाक्यमिदंतास्तुजातात्यंतकुतूहलाः
सख्यऊचुः-
यद्येतांरमणींनूनमिच्छसित्वंसुदुर्म्मते ४८
गङ्गायमुनयोःशीघ्रंशरीरंसंगमे त्यज
मिथःकृतमुखालोकाहसंत्यस्तास्ततोद्विज ४९
तांसाधुपत्नीमादायययुर्निजगृहांतरम्
ततोऽसौश्वपचोमोहाद्ब्रह्महत्यासहस्रकृत् ५०
गंगायमुनयोस्तोयेतामिष्ट्वापंचतांगतः
तत्स्वामिसदृशाकारः समस्तगुणवान्बली ५१
सचएवश्वपाकोऽसौस्ववृत्तांतंस्मरन्नभूत्
ततोऽसौप्रणिधिर्वैश्यस्तस्मिन्नेवदिनेशुभे ५२
कृत्वावाणिज्यमायातःस्वकीयंनिलयंप्रति
श्वपाकोऽपिततोविप्रस्तस्यावासंविवेशह ५३
प्रणिधेःसदृशोरूपैर्वयोभिश्चगुणैरपि
एकाकारौसमालोक्यपुरः स्थौतौगुणाकरौ ५४
कस्याहंदयिताकोवाममभर्त्तेत्यचिंतयत्
ततः साविस्मितासाध्वीविलोक्यतत्पतिद्वयम् ५५
तुष्टावमाधवंदेवंवचनैः कोमलाक्षरैः ५६
पद्मावत्युवाच-
नमामिगोविन्दमनन्तमूर्तिंशक्रादिदेवार्चितपादपद्मम्

योगेश्वरंयोगविदांनिरीहंयोगप्रदंयोगिभिरर्चनीयम् ५७
नमोऽस्तुतेकैटभमर्द्दनायनमोमधुध्वंसकरायतुभ्यम्
नमोऽस्तुकंसासुरनाशनायनमोऽस्तुचाणूरनिपातनाय ५८
नमोऽस्तुवेदोद्धरणाग्रनित्यंनमोऽस्तुभूम्युद्धरणायतुभ्यम्
नमोस्तुपृथ्वीधरणक्षमायनमोस्तुदैत्यांतकरायतुभ्यम् ५९
गङ्गांबुधौतांघ्रियुगायतुभ्यंनमोस्तुराजन्यकुलांतकाय
नमोस्तुतेरावणवंशहंत्रेऋलंचदैत्यांतकरायतुभ्यम् ६०
नमोस्तुतेचाध्वरनिंदकायनमोस्तुतेम्लेच्छकुलांतकाय
नमोऽस्तुतेहृत्कमलासनायनमोऽस्तुतेसर्वरिपुध्वजाय ६१
प्रसीदगोपीजनवल्लभप्रभोधृतैकहस्ताचलदेवदेव
प्रसीदलक्ष्मीमुखपद्मभृंगप्रसीदविष्णोसततंनमस्ते ६२
प्रसीदपद्मेक्षणचक्रपाणेकौमोदकीहस्तगदाधरत्वम्
प्रसीदविष्णोधृतपांचजन्यनमोस्तुतेपद्मधरायनित्यम् ६३
संसारकौतुहलमंदिरेतेमोहांधकारेचविवेकदीपे
संमोहिताकेशवमाययाहित्वदीययानित्यमहंभ्रमामि ६४
विरञ्चिसेन्द्रार्कमुखाः सुरेन्द्रामायांनजानन्तितवासुरारे
मानुष्यहंकिंतववेद्मिमायांपुरोभ्रमंमेहरसानुकंपम् ६५
व्यास उवाच-
तस्याः स्तवंसमाकर्ण्यभगवान्माधवः प्रभुः
समालोक्यजगन्नाथश्चतुर्वर्गफलप्रदः ६६
आविर्बभूवसहसासूर्यकोटिसमप्रभः
सामूर्ध्नाभूमिमालोक्यववंदेतत्पदद्वयम् ६७
नमस्तेकमलाकान्तभुक्तिमुक्तिफलप्रद
हरमेज्ञानहीनायाःस्वकीयमतिविभ्रमम् ६८
श्रीभगवानुवाच-
भ्रमंजहीहिचार्वंगिद्वावेतौहिपतीतव
एकभावेनसुश्रोणिकुरुसेवांतयोःसदा ६९
यश्चतेप्रणिधिःस्वामीमद्भक्तस्तरुणःसुधीः
भोक्तुंसुखफलंसाध्विसोऽभवद्द्विविधःस्वयम् ७०
अनन्तरूपिणीलक्ष्मीर्यथाक्रीडेमयासह

तथात्वमपिसुश्रोणिभुंद्त्वताभ्यांसुखंसदा ७१
पद्मावत्युवाच-
एकस्याद्रौपतीदेवनप्रशंसन्तिमानवाः
मग्नांलज्जाब्धिकल्लोलेमामुद्धरदयामय ७२
श्रीभगवानुवाच-
यदापकीर्तितः साध्विबिभेषित्वंध्रुवंभुवि
तदामत्पुरमागच्छताभ्यांसहवरानने ७३
विमानमागतंसद्यस्ततोभगवदाज्ञया
तौसमादायवैकुण्ठंसागंतुमुपचक्रमे ७४
अथसापथिगच्छन्तीभर्तृभ्यांसहजैमिने
ददर्शैकंमहात्मानंरथस्थंस्त्रीसमन्वितम् ७५
धृतंकमलपत्राक्षैरतसीकुसुमप्रभैः
चतुर्भुजैर्दूतगणैरासीनैर्गरुडोपरि ७६
विष्णुदूतांस्ततस्तांस्तुविष्णुरूपान्वरांगना
कोऽयरथस्थःपुरुषइतिपप्रच्छसासती ७७
केवायूयंमहात्मानःपुण्डरीकनिभेक्षणाः
सर्वेपिविष्णुसदृशाःशङ्खचक्रादिपाणयः ७८
ततस्तेभगवद्दूताविष्णुतुल्यपराक्रमाः
विहस्योच्चुर्मुहुःसर्वेपरमामोदसंयुताः ७९
विष्णुदूताऊचुः
विष्णुदूतावयंसाध्विपुण्यात्मानमिमंजनम्
समादायपदंयामउदारंलोकमुत्तमम् ८०
पद्मावत्युवाच-
केनपुण्यप्रभावेनगतोऽयमीदृशींगतिम्
विष्णुदूतामहात्मानः कथ्यतामित्यहोमम ८१
विष्णुदूताऊचुः -
अयंबृहद्ध्वजोनामराक्षसोलोकशोककृत्
अरण्यादिनिवासीचमहाबलपराक्रमः ८२
परदारपरद्रव्यहारकोरिपुकोद्यतः
गोमांसाशीनिष्ठुरोक्तिभाषीचदेवनिन्दकः ८३

यद्यत्पापरतंकर्म्मतदनेनकृतंसदा
स्वप्नेऽपिनकृतंकर्मशुभंनचपतिव्रते ८४
अयंरथंसमारुह्यसततंकामपीडितः
परस्त्रीहरणार्थायसुश्रोणिनभसिभ्रमन् ८५
यांयांसुयौवनांनारींयत्रयत्रायमीक्षते
बलाच्चालिङ्गितस्तांतुतत्रतत्रस्मरातुरः ८६
अथैकदाभीमकेशनाम्नोनरपतेः प्रियाम्
ददर्शक्रीडामध्यस्थांसुंदरींनवयौवनाम् ८७
अथासौतांसमालोक्यसुवर्णकुसुमप्रभाम्
इत्युवाचवचःप्रेम्णाकात्वमत्रकरोषिकिम् ८८
सैवोवाचततः कांताभीमकेशस्यभूपतेः
अहंसुरतशास्त्रज्ञाकेशिनीनामभूषिता ८९
अयिसर्वगुणज्ञांमांप्रेमहृष्टांनभूपतिः
स्ववंशजांदोषहीनांपश्यतिक्षणमप्यसौ ९०
स्थीयतेनित्यमत्रैवभर्त्राखंडितचर्चया
मयास्वकर्मशोचंत्याविरहानलतप्तया ९१
कस्त्वंकथमिदंप्राप्तमुद्यानं प्रतिसत्तम
समायातोऽसितत्सर्वंप्रसन्नोवक्तुमर्हसि ९२
अथायमित्याहवचः पूर्णचन्द्रनिभानने
मायावीराक्षसोऽहत्वामालिङ्गितुमिहागतः ९३
जहीहिरुष्टभर्तारंसर्वदादोषदर्शिनम्
तन्विमांभजसर्वं तेदास्यामिसुखमुत्तमम् ९४
ततोविहस्यसाध्वीयंराक्षसेन्द्रमिमंमुदा
बबंधबाहुलतयाविन्यस्यवदनेमुखम् ९५
सतामालिग्ययुवतींविवेकोद्वेगविह्वलाम्
अनयासहसुश्रोणिदिव्यमारूढवान्रथम् ९६
दंपतीभावमाश्रित्यतौजातावतिकौतुकम्
वायुवेगरथारूढौयातौगगनवर्त्मनि ९७
अथैनामयमित्याहपश्यतन्विवरानने
त्वद्भर्तृदेशादायातौगङ्गासागरसङ्गमे ९८

ततोरथस्थनारीयमधिगङ्गाब्धिसङ्गमम्
जगामपंचतांसद्यःसंदृश्यात्यंतसाध्वसैः ९९
विलप्यबहुधासाध्वींतत्रायमपिराक्षसः
गतप्राणांसमालोक्यसद्योमृत्युंजगामह १००
व्नतेयध्वजादेशादिमौगलितकल्मषौ
नयामः पुरायकर्माणौवैकुराठंप्रतिसंप्रति १०१
जलेस्थलेचांतरिक्षेगङ्गासागरसङ्गमे
देहंसंत्यज्यगच्छन्तिपापिनोहिपरांगतिम् १०२
त्रैलोक्यदुर्लभंतीर्थंगङ्गासागरसंगमे
माघेतपसिशुक्लायामेकादश्यामुपोषितः १०३
तत्रशुद्धिमवाप्नोतिब्रह्महापिनसंशयः
गङ्गाब्धिसङ्गमेस्नात्वाहरिंदृष्ट्वाचमाधवम् १०४
कार्तिकेयमुखंदृष्ट्वापुनर्जन्मनविद्यते
कार्तिकेयोहरिःसाक्षादित्यभेदःकृतः सदा १०५
येकार्तिकेयंपश्यंतितेसर्वेमोक्षगामिनः
सर्वतीर्थाधिकंतीर्थंगङ्गाब्धिसङ्गमंशृणु १०६
जलेस्थलेचांतरिक्षेमृतोमोक्षमवाप्नुयात्
व्यासउवाच-
इत्युक्त्वाविष्णुदूतास्तेतौसमादायजैमिने १०७
जग्मुर्विष्णुगृहंसर्वेसहसाकाशवर्त्मनि
याचपद्मावतीसाध्वीभर्तृद्वयसमन्विता १०८
गतासारूप्यतांविष्णोश्चतुर्वर्गप्रदायिनः
तत्रभुक्त्वाखिलान्भोगान्दुर्ल्लभान्द्विजसत्तम १०९
परमंज्ञानमासाद्यययुः सारूप्यतांहरेः
सर्वतीर्थमयीगङ्गासर्वतीर्थमयोहरिः ११०
गङ्गायाश्चहरेश्चैवतस्माद्भक्तिर्विधीयते
गङ्गाब्धिसंगमेपूर्वंमाधवो नामभूभुजः १११
तप्त्वातपश्चिरंतत्रसदारोमोक्षमाप्तवान् ११२
जैमिनिरुवाच-
त्वयोक्तोमाधवः कोऽसौकिंकर्मसचकारह

कथंतेपेतपस्तन्मेसर्वंकथयसत्तम ११३
व्यासउवाच-
चरितंतस्यविप्रर्षेमाधवस्यमहात्मनः
आकर्णयप्रवक्ष्यामिसमासेनमहामते ११४
इति श्रीपद्मपुराणेक्रियायोगसारेव्यासजैमिनिसंवादेप्रयागवर्णनंनाम
चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

व्यासउवाच-
अस्तितालध्वजानामनगरीत्रिदशोपमा
सर्वलोकेषुविख्याताप्रकीर्णागुणिनांगणैः १
तत्रासीद्विक्रमोनामाराजाशुद्धकुलोद्भवः
धार्मिकःसत्यवादीचप्रजापालनतत्परः २
तस्यहारावतीनामवल्लभाभुविदुर्ल्लभा
आसीत्स्वकीयवदनप्रभाजितशशिप्रभा ३
तस्यसैवप्रियाराज्ञः स्त्रीगणेऽपिचतिष्ठति
गङ्गेवसरितांभर्त्तुस्तिष्ठत्यपिसरिद्गणे ४
भूदेवदैवपरतः कालेनकियताद्विज
व्यजायतसुतस्तस्यांसर्वलक्षणसंयुतः ५
शास्त्रोक्तविधिनातस्यसराजासर्वशास्त्रवित्
माधवेतिततोनामचक्रवर्तीचकारह ६
ततोऽसौमाधवोविप्रःकालेनकियताबली
सर्वविद्यासरित्पारंगतः सद्गुणसंगतः ७
अथासौयौवराज्येनराज्येनरपतिःसुतम्
सिक्तवांस्तंमहीदेवसर्वदेवगणार्चकम् ८
एकस्मिन्दिवसेविप्रचतुरंगबलैर्वृतः
जगामकौतुकेनासौमृगयायैमहद्वनम् ९
तत्रहत्वाबहूञ्जतून्मध्याह्नेसमयेततः
कृतवान्नगरेगंतुमुद्यमंविपिनादसौ १०
नगरंस्वकमागच्छत्ससैन्योमाधवोमुदा

ददर्शयुवतीमेकांसरसिस्नानतत्पराम् ११
स्नानार्हद्रव्यवसनैर्व्यक्तीकृतकलेवराम्
स्वकीयमुखसौन्दर्य्यजितपूर्णनिशाकराम् १२
सुवर्णकुण्डलद्वन्द्वविभ्राजद्गण्डमण्डलाम्
सुदीर्घकेशकैश्छन्ननितंबांचारुहासिनीम् १३
सुवर्णपद्मकलिकांचारून्नतपयोधराम्
मृगारिकृशमध्यांचवसंतेकोकिलस्वराम् १४
यूनांमनोहराराज्येकन्दर्पेणमहात्मना
आरोपितापताकेवसुन्दरीसाव्यजायत १५
तादृशींतांसमालोक्यप्रान्तरेसङ्गवर्जिते
कःकामवशगोनस्यात्क्षितौप्राणान्वहन्पुमान् १६
अथविक्रमपुत्रोऽसौतामालोक्यवराननाम्
कंदर्पबाणव्रणितहृदयश्चेतिचिंतयन् १७
एतस्याःसदृशीकापिनदृष्टाक्षितिमण्डले
एतामिहसमालिङ्ग्यसफलंजन्मचेष्यते १८
श्रेष्ठोऽस्मिसर्वलोकानांवयस्तेजोगुणैरहम्
यद्यपीन्द्रांगनेयंस्यान्नेतव्याद्यतथापिच १९
परस्त्रीहरणेयोवादोषोभवतिसांप्रतम्
कोवाशक्नोतितद्वक्तुंयतोराजापितामम २०
इतिसंचिंत्यमनसासुदृढंतेनकामिना
दूरेसंस्थाप्यसैन्यानिययौसास्नातियत्रह २१
एश्वर्यंचमदश्चैवकामश्चैवमहीतले
त्रयएतेविवेकस्यतेजोघ्नंतिकिमद्भुतम् २२
पितास्यदुरितध्वंसीधर्मरक्षाकरोनृणाम्
धिक्स्वयंकामदेवोऽसौमोहयत्यखिलंजगत् २३
तमायातंसमालोक्यवेगेनमहताततः
एकाकिनीसारमतेभृशंचिंताकुलाभवत् २४
एकाकिनींसमालोक्यकांतारस्थांसयौवनाम्
अयंधावतिवेगेनतन्मेमनसिवर्तते २५
जल्पंतिमुनयः सर्वेधर्मोरक्षतिरक्षितः

नचज्ञातव्यमत्रैवकिमत्रचभविष्यति २६
सहायहीनंयत्स्थानंपुरोधावतिशत्रवः
श्लाघ्यंपलायनंतत्रनिवासःप्राणनाशकः २७
इत्यालोच्यवरारोहासव्यकच्छेघटंततः
कृत्वापलायनेभीत्यामनश्चक्रेसरोवरात् २८
ततः समाधवश्चापिजवेनमहताद्विज
एवंतस्याःपुरोगत्वाप्रसारितकरःस्थितः २९
श्रीमाधवउवाच-
वराङ्गनेचारुदेहेसुयौवनबलान्मम
पलायसेमनोहृत्वाहतोस्म्यहमचेतनः ३०
किंनामचंचलापांगिचार्वङ्गितवकःपतिः
स्वर्गात्किंवागतासित्वंत्वत्तुल्यानास्तिभूतले ३१
सुन्दरित्वमिहश्रेष्ठासर्वलक्षणसंयुता
कथंवहसिपानीयंदासीवकमलानने ३२
पयोधरौशातकुंभौसदावहसिवक्षसि
कक्षेणजलकुम्भंचकोमलाङ्गीदमद्भुतम् ३३
दिवाकरकरात्यंतसंतप्तेपथिलोहिताः
पादांगुल्यंतराभांतिजपानांकलिकाइव ३४
सुश्रोणिभजमांप्रीत्यात्यजकुंभंवरानने
तवदुःखावसानोऽभून्ममदर्शनमात्रतः ३५
श्रीमद्विक्रमभूभर्त्तुःपुत्रोऽहमाधवाह्वयः
सर्वभावैर्भविष्यामिवराङ्गस्तवसुन्दरि ३६
ममस्त्रीगणमध्येषुसुभगात्वंभविष्यसि
सुपुष्पवल्लीमध्येषुद्विरेफस्येवमालती ३७
अथवाममवाक्यंत्वंगर्वाल्लंघितुमिच्छसि
नत्यक्षामितथापित्वांयतोऽहनृपतेः सुतः ३८
व्यासउवाच-
तेनोक्तंवचनंश्रुत्वापंथानंप्रविहायसा
तस्थावधोमुखीविप्रप्राहेतिचशनैःशनैः ३९
कदापिचेत्परस्यापिनशृणोतिवचोमम

तथापिलज्जांसंत्यज्यवच्म्यात्म्येवभवाग्रतः ४०
तथाह्यहंमहावीरसुबाहुक्षत्रियप्रिया
नयामिदेवपूजार्थंजलंचंद्रकलाह्यहम् ४१
यद्वचोभवताप्रोक्तंनचतत्त्वत्कुलोचितम्
त्वद्वंशप्रभवाःसर्वेपरस्त्रीषुनपुंसकाः ४२
अहमेकाकिनीनारीवीराणांप्रभबोभवान्
बलादालिङ्ग्यमामत्रयशः किंतेभविष्यति ४३
परस्त्रियंसमालिङ्ग्यक्षणमात्रसुखंभवेत्
इहापकीर्तिः शेषंचदुःखंकल्पशताधिकम् ४४
कर्मभूमिरियंशूरपुण्यमत्रविधीयताम्
परस्त्रीहरणेचित्तंकदाचिन्मांकरिष्यसि ४५
लोभात्प्रवर्ततेकामःकामात्पापंप्रवर्त्तते
पापान्मृत्युर्मृतेऽपिस्याद्दुस्तरेनरकेस्थितिः ४६
सर्वेऽपित्वद्गुणाव्यर्थंत्वज्जन्मापिचनिष्फलम्
कामस्यवशतांगत्वारंतुमिच्छेःपरस्त्रियम् ४७
मांसमूत्रपूरीषास्थिनिर्मितंमेकलेवरम्
एतदेवसमालोक्यस्मरस्यवशतांगतः ४८
भूपालवंशोत्पत्तित्वात्पौरेभ्योनबिभेषिकिम्
मस्तकोपरिगर्जंतंनेक्षसेसमवर्त्तिनम् ४९
ग्रसंतिबडिशंमत्स्यास्तेसर्वेज्ञानवर्जिताः
ज्ञानीचेत्प्राप्यबडिशंभवान्कस्माद्ग्रसिष्यसि ५०
विवेकस्त्रिषुलोकेषुसंपदांपरमंपदम्
अविवेकोहिलोकानामापदांपरमंपदम् ५१
तयोक्तंवचनंश्रुत्वामाधवः काममोहितः
उवाचजैमिनेवाचंविनयावनतः पुनः ५२
तवोद्वीक्षणनाराचधाराजर्जरमानसम्
प्रियेमांत्राहित्राहीतितवास्मिशरणंगतः ५३
तावत्प्रियतमानारीयावत्तिष्ठतियौवने
मृणालकोषांनलिनींहेमभृंगोनगच्छति ५४
प्रसीदहरिणीनेत्रेरक्षमांसेवकंस्वकम्

त्वद्वाचंनीरसां श्रुत्वाभिनत्तिहृदयंमम ५५
चन्द्रकलोवाच-
त्यजदुःखंमहावीरश्शृणुमद्वचनंशुभम्
प्रवक्ष्यामिमनोदुःखंहंतुंयद्भवतःक्षमाम् ५६
समुद्रपारेविख्यातापुरंदरपुरोपमा
प्लक्षद्वीपेऽस्तिदीप्यंतीविख्यातासंज्ञयापुरी ५७
गुणाकराह्वयस्तत्रराजाश्रेष्ठोमहायशाः
आस्तेसर्वगणैर्युक्तः प्रतापेऽग्निसमोबली ५८
सुशीलानामतद्भार्यासर्वलक्षणसयुता
सेवावशीकृतस्वामिहृदयासदयाजनैः ५९
सुलोचनाख्यातत्कन्यावीरतत्कुक्षिसंभवा
सदूहरूपैरजयत्सकलान्सुन्दरीगणान् ६०
तस्यारूपंगुणौघंचवर्णितुंभुविकःक्षमः
तद्रूपदर्शमालोक्यासृजदन्यांस्वयंविधिः ६१
अहमासंमहावीरतस्यादासीनृपात्मजः
समागतास्मिदैवेनत्वद्देशंप्रतिसुन्दरी ६२
तत्समासुन्दरीनास्तित्वत्समोनास्तिसुन्दरः
गृहाणतांविवाहेनस्वर्गभोगंयदीच्छसि ६३
जंबुकींबलवान्सिंहोविहायांकगतामपि
हस्तिनींनहिकिंधत्तेयत्नतःप्रतिपत्तये ६४
उद्योगीपुरुषोलोकेलभतेपरमांश्रियम्
उद्योगेनविनाब्रूहिकिंकार्यंभुविविद्यते ६५
व्यासउवाच-
तस्यास्तद्वचनंश्रुत्वामाधवोमाधवार्चकः
दूरीकृत्यस्मरोद्भावंतामित्याहवराननाम् ६६
माधवउवाच-
केनचिह्नेनतांकन्यांज्ञास्यामिकमलानने
तन्मेकथयसुश्रोणियदितेमय्यनुग्रहः ६७
सिंधुपारप्रतीपाज्ञः कथंयास्यामिमानुषः
भविष्यतितयासार्द्धंकथंसंदर्शनंमम ६८

चन्द्रकलोवाच-
तस्यास्तुवामजघनेतिलकंतिलसन्निभम्
अस्तितद्दर्शनेनैवज्ञास्यसित्वंसुलोचनाम् ६९
उच्चैःश्रवससंज्ञस्यतुरगस्यमहात्मनः
त्वन्मंदुरायांपुत्रोस्तिसर्वगामीहयोत्तमः ७०
तमश्वश्रेष्ठमारुह्यजवेनपवनोपमम्
गमिष्यसिसमुद्रांतंसुखासाध्यामहीयतः ७१
ततोभूपालपुत्रोऽसौससैन्योगृहमागतः
सापिचन्द्रकलासाध्वीसुप्रीतास्वगृहंगता ७२
विचिंत्यवचनंतस्यामाधवोऽतित्वरान्वितः
चिंताकुलितचित्तोऽसौसहसामंदुरांययौ ७३
तत्रबद्धाञ्जलिर्भूत्वावैक्रमिर्विक्रमान्वितः
तुरंगमानितिप्राहगुणयुक्तान्महाबलान् ७४
माधवउवाच-
यूयंसर्वेमहात्मानः सर्वलक्षणसंयुताः
समुद्रपारेमांनेतुंकःशक्नोतितुरङ्गमः ७५
अथतेतुरगाःसर्वेश्रुत्वातद्वचनंभिया
परस्परंक्षितिमुखास्तस्थुर्नोनेतुमुद्यताः ७६
अथैकस्तुरगस्तत्रसमस्तलक्षणैर्युतः
माधवस्यपुरोगत्वावाचमेतामुवाचह ७७
अहं भवंतंनेष्यामिसिंधुपारंनसंशयः
किंत्वाकर्णयदुःखानिमदीयानिनृपात्मज ७८
अन्यभुक्तावशिष्टंयत्तत्तृणंममभक्षणम्
ग्रंथिकोटिप्रयुक्ताभीरज्जुभिर्ममबंधनम् ७९
स्वप्नेऽपिब्रीहयोवीरनदृष्टाबलिनामया
अन्येषामपिभोगानांकाकथात्रनृपात्मज ८०
गौरवेणविनावीरनसतांविक्रमोभवेत्
जनिष्यतिकथंवह्निर्विनाकाष्ठंघृतादिभिः ८१
अहमीदृगिमेसर्वेनानाभूषासमन्विताः
नतुसिंहसमाःश्वानः सर्वाभरणभूषिताः ८२

प्रदक्षिणाकारतयासशैलद्वीपसागराः
क्षणमात्रेणपृथिवींशक्नोमिभूपतेप्रभो ८३
माधवउवाच-
क्षमस्वदोषंसकलंमत्पित्राविहितंहय
अद्यप्रभृतिमुख्योऽसिमंदुराभ्यंतरेमम ८४
परेणदत्तःसंतापःसदातिष्ठतिनोत्तमे
सलिलंवह्निसंतप्तंक्षणाच्छीतलतांव्रजेत् ८५
स्वमाधुर्यैर्भवेदिक्षुःक्षणमपिहितृप्तये
इत्युक्त्वातंनमस्कृत्यतुरंगंनृपनंदनः ८६
ततःशुभेक्षणेतस्यपृष्ठमारुह्यवाजिनः
प्रचेष्टाख्येनभृत्येनविलंघ्यजलधिंययौ ८७
पुरींसर्वगुणैर्युक्तांपुरंदरपुरोपमाम्
जगाममाधवोभ्राजन्सौधाबलिभिरुज्ज्वलाम् ८८
तत्रोपस्थांचयुवतींगंधिनींमाधवोद्विजः
दृष्ट्वास्मितमुखोवाक्यमुवाचेतिचकोमलम् ८९
वृद्धेमातरहंपार्थोदिनमेकंतवालये
स्थातुमिच्छामिकाऽज्ञातेधनवान्माधवाह्वयः ९०
आतिथेयीगंधिनीसातमादायातिथिंततः
हर्षित्वास्वगृहंतत्रजगामात्यंतभक्तितः ९१
यथोक्तविधिनाविप्रतयातस्यार्हणाकृता
माधवस्तांनिशांनिन्येचिंताव्याकुलमानसः ९२
अथप्रभातेविमलेगन्धिन्याः पुरतोद्विज
माधवःसकलंकार्यंकथयामासभूसुरः ९३
देवीसुलोचनायाश्चतस्मिन्नेवदिनेशुभे
गन्धादिवासनंकर्मरचयामाससाचतत् ९४
श्रुत्वाधिवासनंकर्मराजपुत्र्यास्ततोद्विज
शोकसागरकल्लोलनिकरोमाधवोऽभवत् ९५
यदर्थंराज्यवसतिर्मयात्यक्तातदिच्छुना
यदर्थंबांधवास्त्यक्तालंघितश्चमहोदधिः ९६
अद्यैवतस्यादैवेनभविष्यत्यधिवासनम्

निष्फलाःसकलाएवयावंतोविहिताः श्रमाः ९७
किंतुलोकानजल्पंतिमाध्व्यामुग्धोगतोऽखिलम्
कोऽपिभग्नोद्यमोनस्यात्प्रज्ञात्वाकार्यनिश्चयम् ९८
एतद्विचिंत्यमनसामाधवोऽसौपुनः पुनः
मालापुष्पादिकेकार्येलिलेखप्रेमवर्णितम् ९९
कन्येमाधवनामाहंकुमारोधरणीपतेः
तालध्वजाधिराजस्यविक्रमस्यमहात्मनः १००
त्वच्चेटीतत्रकाप्यस्तिकन्येचन्द्रकलाह्वया
तयातवगुणग्रामः कथितोमेपुराकिल १०१
त्वद्गुणग्रामसंलग्नचित्तोऽहनिम्नसागरम्
विलङ्घ्यतुरगारूढःसमायातः पुरींतव १०२
अधुनामांवरत्वेनवृणुकन्येसुलोचने
यतः संसारमध्येऽस्मिस्तवास्मिशरणंगतः १०३
यथागुणवतींत्वांहिनान्योजानातितत्पुमान् १०४
सरोजिनीगुणंवेत्तिभृंगएवनदर्दुरः
शुभ्रस्यजलदस्यापिगगनैकस्यनोदयः १०५
तथापिनभजेदन्यंविनाचन्द्रंकुमुद्वती
अथतल्लिखनंवीरोमालाकारप्रियाकरे १०६
स्वर्णांगुलीयसहितंददौसविनयोनृपः
पुष्पमालांतरे कृत्वातंलेखंसांगुलीयकम् १०७
राजपुत्रीसमीपेसागंधिनीतरसाययौ
पुष्पमालांबलितस्यैदत्वासागंधिनीततः १०८
तस्थौबद्धाञ्जलिर्भूत्वादूरंगत्वाभियाकियत्
ततः साराजतनयालिखितंसांगुलीयकम् १०९
विलोक्यसकलंमूलात्पपाठात्यंतपण्डिता
सापितत्पृष्ठपत्रेतुतद्योग्यमुत्तरंद्विज ११०
अलिखद्विस्मिताकन्यायद्यच्चसर्वमुच्यते
राजपुत्रमहाबाहोत्वद्वाक्यमखिलंश्रुतम् १११
शृणुसत्तमवाक्यंमेयथोचितमिदंवचः
अद्याधिवासनंकर्मश्वोविवाहोममध्रुवम् ११२

पितुर्यत्संमतंकार्यंपृथिव्यांकोऽपिनत्यजेत्
कार्येतुदुःखसाध्येतुकार्योनातिश्रमोजनैः ११३
कार्येसिद्धेश्रमोनस्यादसिद्धेश्रमएवहि
तथापिश्रृणुवक्ष्यामियेनप्राप्नोतिमांभवान् ११४
यदर्थोभवताचैवसमुद्रोपिचलंघितः
मयाप्रदक्षणीकार्योवरोविद्याधरोह्ययम् ११५
तत्पुरोऽहगमिष्यामिनानाभरणभूषिता
वामबाहूद्धर्वंकृत्वाचवीरःस्यान्ममसंमुखः ११६
येनमांशक्यतेनेतुंसमेभर्ताभविष्यति
सत्यंसत्यमिदंसत्यंपत्रेऽस्मिल्लिखितंमया ११७
अन्यथासुदृढंकार्यंलंघितुंनहिशक्यते
एतद्विलिख्यसाकन्यातस्याएवकरेददौ ११८
सापितत्पत्रमादायगतामाधवसन्निधिम्
तयायल्लिखितंपत्रेतत्पठित्वातुमाधवः ११९
भूयोपिलिखितंविप्रलिलेखात्यंतकौतुकैः
त्वयायदुक्तंहेकन्येधन्येधन्यकुलोद्भवे १२०
तदेवमन्मतंसर्वंकोऽपिनास्त्यत्रसंशयः
ततस्तुगंधिनीभूयोगत्वातन्निकटेद्विज १२१
ददौसुलोचनायैसालिखनंसुन्दराक्षरम्
अथतल्लिखनंज्ञात्वाकुमारांगीकृतंद्विज १२२
बभूवात्यन्तसंहृष्टाविस्मिताचपुनः पुनः
तस्मिन्नसंशयंकार्यंयदासौस्वीकृतंददौ १२३
तदाकिंस्वयमिन्द्रोवायन्मायामाधवः पुमान्
इहलोकेपरत्रास्तिस्नेहभूमिः पतिः सदा १२४
विनासंदर्शनेनापिनवरत्वेदृतोमया
इतिसंचिन्त्यसासाध्वीनिःश्वस्यचपुनः पुनः १२५
स्नानव्याजाद्गतावासंगन्धिन्याश्चसहालिभिः
हस्तेविधृत्यतांकन्यांगंधिनीसापुरंध्रिका १२६
माधवंदर्शयामासशयानंमंचकोपरि
तंसमालोक्यसाकन्याकंदर्पसदृशंततः १२७

रोमांचितंसमस्ताङ्गमुदात्तंपश्यतिक्रमात्
तन्नेत्रयुगलंतस्मिन्यत्रयत्रनिमज्जति १२८
कष्टदृष्ट्याचनान्यत्रतस्मान्नामात्रगच्छति
साक्षादयंवाकन्दर्पोदेवकीनन्दनोऽपिवा १२९
शर्वोवाविषयाधीशः साक्षाद्वापार्वतीपतिः
रूपैरेतैर्जगन्मध्येमानुषोनहिजायते १३०
अनेनस्वामिनाजन्मसफलंहरिणीदृशः
मद्भक्तिवशगोभूत्वाविधातात्यंतयत्नतः १३१
यदाहंकन्यकाजातातदैनंकिंससर्जह
अद्यप्रभृतिनाथोऽयस्वयंनास्त्यत्रसंशयः १३२
इत्युक्त्वासामतिंचक्रेगंतुंनिजगृहंप्रति
गन्धिन्युवाच-
कन्येयुक्तिरियंभद्रेत्वयापिहृदिसेव्यताम् १३३
यथासुमूर्तिःपुरुषोनतथाभाति निन्दया
उल्लासोगात्रभंगश्चमन्ददृष्टिश्चविस्मितम् १३४
सर्वाणिविष्णुचिह्नानिनिद्रायांमृगलोचने
संदष्टौष्ठपुटाक्षेपात्प्रोक्तोनोत्तिष्ठतिध्रुवम् १३५
शनैः शनैः करंतस्यस्वकराभ्यामदर्शयत्
त्वांद्रष्टुंराजकन्यायाः संधृत्यागमनंशृणु १३६
श्रुत्वैतत्सोपिचोत्तस्थौ संभ्रमाक्रांतमानसः
विनयावनतोवाक्यंमाधवश्चेत्युवाचताम् १३७
माधवउवाच-
कन्येमज्जन्मसफलंश्रमश्चसफलोमम
त्वच्चारुवदनांभोजंसाक्षादेवमयेक्षितम् १३८
सकलैर्यौवनैः कन्येत्वंवरत्वेनमांवृणु
त्वद्योगोस्तिवरोनान्योमांविनाभुविसुन्दरि १३९
सुलोचनोवाच-
सुगतेत्वंममस्वामीभाग्येनमहताभवेः
मयायद्वचनंप्रोक्तंतदेवसुदृढंखलु १४०
आज्ञांकुरुमहाभागगच्छामिनिजमंदिरम्

माधवउवाच-
तिष्ठेतियदिवावच्मिकन्येगर्वस्तदाभवेत् १४१
गच्छेतिवचनंवक्तुंनायातिवदनान्मम
स्वयंविचार्यचार्वंगियद्युक्तंतद्विधीयताम् १४२
सत्येहवचनंतस्मिन्भविष्यसिसुतत्परा
इत्युक्तातेनसाकन्याहर्षितास्वगृहंगता १४३
तत्रैवमाधवस्तस्थौवृतोबहुपरिच्छदैः
चारुविद्याधरएवस्थितोविद्याधरोवरः १४४
तत्रस्थाश्चजनाः सर्वेस्त्रक्चन्दनविभूषिताः
दिव्यांवरपरीधानारेजुर्देवगणाइव १४५
क्वचिद्गीतंक्वचिन्नृत्यंक्वचित्कोलाहलध्वनिः
क्वचित्केनप्रदीपालिस्तत्पुरेसमवर्तत १४६
हेषितैःसप्तिवृंदानांहस्तिनांचैवबृंहितैः
हर्षस्वनैश्चपत्रीणांपूरिताः ककुभोदश १४७
नानापताकानिवहैर्धवलैर्नृपसद्मभिः
समंताद्गगनंसर्वंव्याप्तंहियत्रजैमिने १४८
केऽपिशङ्खान्समादध्मुर्ढक्काडिंडिमझर्झरान्
वादयांचक्रिरेकेऽपिमधुकोहलकादिकम् १४९
ततोयुवतयः सर्वाःसरोजकोरकस्तस्था
ललितानिसुगीतानिजगुश्चन्द्रनिभाननाः १५०
परस्परंयौवनतोघर्षणच्युतमालया
प्रस्वेदाम्बुगलद्गंधैर्बभौकन्येवतत्रभूः १५१
गंभारीकाष्ठरचितंपीठमारुह्यसुन्दरी
ज्ञातिभिर्वेष्टितायातावरंस्थानंसुलोचना १५२
अत्रांतरेविक्रमपुत्रएषशय्योपरिष्टात्किललब्धनिद्रः
नवेददैवेनविवाहकार्यंसुलोचनायाश्चसुलोचनायाः १५३
विधातृमायाशतमोहितानांकदापिनस्याद्भुवनेसुखाय
ततःस्वसंकेतविधिंजनोऽयविस्मृत्यनिद्रामभजत्सुखेन १५४
वनंपरित्यज्यकृशानुभीत्याजलंप्रविष्टानलिनीसुखार्थम्
संदह्यतेतत्रहिमानलेनयद्यस्यकर्मनतदन्यथास्यात् १५५

वेदादिशास्त्रमखिलंप्रपठंतुलोकाः कुर्वंतुनामक्षितिपालसेवाम्
उग्रंतपः प्रतिदिवंप्रतिसाधयंतुनश्रीस्तथापिचभजत्यतिभाग्यहीनम् १५६
मस्तकोपरितिष्ठंतिदुःखानिचसुखानिच
अन्यकालेसमायान्तिहठादन्यानिसत्तम १५७
निद्रावंतंसमालोक्यमाधवंदुःखभागिनम्
प्रचेष्टश्चिंतयामासजानन्संकेतमेतयोः १५८
धिगस्त्वमुंराजपुत्रंदैवमायाविमोहितः
विस्मृत्यनिजसंकेतंनिद्रांसंप्राप्यसेवते १५९
असौदुःखागताकन्यावरस्यनिकटेऽधुना
किंभवेन्नयनेतादृक्संकेतंयातिनिष्फलम् १६०
तिष्ठत्वंवैपापकर्मन्निद्रांसंसेव्यमस्तके
मयाहयंसमारुह्यनेतव्यासावराङ्गना १६१
कन्यारत्नंचरत्नंचमुदाप्राप्नोतिदुर्ल्लभम्
तदाकिंसेवयाकार्यंमाधवस्यास्यदुर्मतेः १६२
धनार्थंक्रियतेसेवासर्वभावेनभूभुजाम्
तच्चेन्मुदास्वयंप्राप्तंसेवादुःखेनकिंतदा १६३
प्रचेष्टइतिसंचिंत्यसमारुह्यतुरंगमम्
साराजकन्यायत्रास्तेययौतत्रनभः पथा १६४
वरंप्रदक्षिणीकृत्यस्मरंतीसमयंस्वकम्
वामहस्तंसमुद्धृत्यतस्थौविद्याधराग्रतः १६५
हस्तेविधृत्यतांकन्यांप्रचेष्टोऽतिजवेनसः
पृष्ठेनिवेशयामाससप्तेस्तस्यमहाबलः १६६
तांराजपुत्रीमादायपुरींकांचींसुशोभनाम्
तामथासौसमालोक्यप्रचेष्टोऽतित्वरान्वितः १६७
उवाचप्रवहन्पाणिंनष्टमानससाध्वसः
प्रचेष्टउवाच–
समुद्रांतरतीरस्थांकांचींनामपुरीमिमाम् १६८
पश्यसर्वत्रविख्यातांजनसर्वसुखप्रदाम्
अत्रमाधववीरस्यतस्यविद्याधरस्यवा १६९
कस्यापिचभयंनास्तिपश्यचन्द्रनिभानने

मच्चित्तेंधनसंलग्नांकामानलशिखावलिम् १७०
कुचकुंभकरैः सिद्धंनिर्वाणंदेहिसुंदरि
त्वच्चारुमुखपद्मेऽस्मिन्मन्मुखभ्रमरोऽधुना १७१
इच्छेत्पातुंमधून्यत्रकाऽज्ञातेतिष्ठतिप्रिये
त्वच्चारुगात्रसंस्पर्शाच्छरैस्तुदतिमांस्मरः १७२
त्राहित्राहिप्रियेत्राहितवास्मिशरणंगतः
इतिब्रुवंतंतंमूढमभिवीक्ष्यवरांगना १७३
शोकाग्नितप्तसर्वाङ्गीचिंतयामासचेतसा
अयंमूढोदुष्टचेष्टःप्रचेष्टोनामवेधसा १७४
लिखितः किंललाटेमेयन्मया हाहतास्म्यहम्
क्वमाताक्वचमेतातः क्वचविद्याधरोवरः १७५
अनेनाहंसमानीताधिगस्तुघटनांविधेः
अलंलोकाःप्रकुर्वंतिगर्वंजगतिसर्वदा १७६
वेत्तिच्छेतुंगर्ववृक्षंविधाताघटनासिना
तथापिविपदेधैर्यंनिर्भयत्वंचतत्परम् १७७
उपायाश्चेतिचत्वारःप्रशस्यादीर्घदर्शिभिः
इत्यालोक्यहृदाकन्यावचोभिः कोमलाक्षरैः १७८
प्रचेष्टंप्रत्युवाचासौसर्वकार्यविचक्षणा
सुलोचनोवाच
दृढंकुरुमनोवीरकन्याहमविवाहिता १७९
मांसमालिङ्ग्यमोहमेकथं यास्यसि दुर्मते
शास्त्रोक्तविधिनावीरविवाहेनगृहाणमाम् १८०
तवसेवांकरिष्यामिदासीवत्कोऽत्रसंशयः
त्वंमेप्राणाश्चमित्रश्चभूषणंबांधवस्तथा १८१
अनन्यगतयोनार्योभवान्नीतिमवैतिकिम्
विवाहयोग्यवस्तूनिविवाहार्थंसमानय १८२
मत्पाणिग्रहणंशीघ्रंकुरुजाड्यंगृहीतिच
अंतर्दृढंबहिःश्लक्ष्णंवदरीफलवद्वचः १८३
आकर्ण्यतस्यामूढोऽसौपरमांप्रीतिमाययौ
तुरंगमंचतांकन्यांसंस्थाप्यैकत्रदुर्मतिः १८४

करकंकणमादायतस्यास्तत्पुरमाययौ
ततः साचिंतयामासविधिंनूनंप्रशस्यतम् १८५
यत आवांपरित्यज्यमूढोऽसौहर्षितोययौ
किंकर्तव्यंक्वगंतव्यंक्वस्थातव्यंमयाधुना १८६
अतिसंकटकार्येस्मिन्निस्तारोमेभवेत्कथम्
यदाहमत्रतिष्ठमिकिंवदिष्यंतितेतदा १८७
पुण्यतीर्थंसमासाद्यपरत्रजन्मकाम्यया
पंचतांप्रतियास्यामिसापिश्रेयस्करीयतः १८८
मद्वियोगादयंमूढोनविद्याधरमाधवौ
जीविष्यंतित्रयोप्येतेक्षणमात्रमपिस्मरन् १८९
मयिस्थितायामेतेषांभवेज्जीवनरक्षणम्
मृतायामपियास्यंतित्रयोऽप्येतेतुपंचताम् १९०
मामुद्दिश्ययदाप्राणाः यद्यंतेतेऽत्रमेजनाः
भविष्यामितदानूनमहंतद्वधभागिनी १९१
इदानींपुण्यतीर्थेषुयष्टव्योभगवान्हरिः
तस्मिन्प्रसन्नेभद्रंमेसर्वमेवभविष्यति १९२
प्राणेषुचविनष्टेषुसर्वमेवविनश्यति
तेषुस्थितेषुसकलंस्तोकस्तोकेनसिध्यति १९३
निशावशिष्टानलिनीहिमाकरेदूरीकृतेचण्डकरेणभास्वता
सुगन्धपुष्पप्रकरोऽतिसुंदरीनाप्नोतिकिंभृगवरस्यसंगमम् १९४
हृदाविचिंत्येतिवरांगनासासप्तिंसमारुह्यमहाजवंतम्
तप्तुंतपःसागरविष्णुपत्न्योर्जगामविज्ञोत्तमसंगमाय १९५
तस्मिन्क्षेत्रवरेपुण्येगङ्गासागरसंगमे
वसेद्राजासुषेणाख्यः सोमवंशसमुद्भवः १९६
गंतुंतस्यसभांराज्ञश्चेतसासाव्यचिंतयत्
मयायुवत्याकर्तव्यंकथंभूपालदर्शनम् १९७
अधिवासनसूत्राणिसदूर्वाणिभुजेमम
कन्याहंतुरगारूढायुवतीसंगवर्जिता १९८
चारित्रंमामकंनूनंमनोविस्मयकारकम्
आत्मानंगोपयित्वाहंयास्यामिनृपतेः सभाम् १९९

इन्द्रजालप्रभावेणसाभूत्वापुरुषाकृतिः
प्रविवेशसभांराज्ञःसुधर्मामिवजैमिने २००
तंसपन्नमिवायांतंशक्तिहस्तंहयासनम्
स्वयंपप्रच्छभूपालः कस्त्वंकुतइहागतः २०१
तस्यैतद्वचनंश्रुत्वासाकन्यापुरुषाकृतिः
प्रणम्योवाचराजानंसुहृदंसज्जनाश्रयम् २०२
देववीरवरोनामपुत्रोऽहपृथिवीपतेः
वर्तनायसमायातस्त्वद्राज्यंप्रतिसंप्रति २०३
यद्यत्कार्यमसाध्यंस्यात्तदेवसाधयाम्यहम्
मयिस्थितेनमद्भर्त्तुःकुत्रापिस्यात्पराजयः २०४

इति श्रीपद्मपुराणेक्रियायोगसारेवीरवरप्रदर्शोनामपंचमोऽध्यायः ५

## षष्ठोऽध्यायः

राजोवाच-
तिष्ठात्रैवमहाबाहोममराज्येसुशोभने
कर्तव्यातेमयावृत्तिःसंशयोनात्रविद्यते १
ततोवीरवरस्तस्यसन्निधौधरणीपतेः
उवाससततंविप्रतत्सेवागतमानसः २
अथैकदातस्यपुरेजैमिनेसकलाःप्रजाः
भीमनादोनामखड्गःक्षोभयामाससंततम् ३
तद्वधायततोराजाप्रेषयामासतंरुषा
ततोऽसौगंडकंहंतुययौवीरवरोजनैः ४
ददर्शपर्वताकारंसुप्तंतंधरणीतले
दंष्ट्राकरालवदनंखड्गिनंतंसशक्तिधृक् ५
नभसिभ्रामयन्सप्तिंसचवीरवरोरुषा
खड्गिनंतमितिप्राहमेघगंभीरयागिरा ६
उपार्जितास्त्वयायेयेदुरात्मन्पापपादपाः
बभूवुःफलिनस्तेतेऋतुंप्राप्ययथाद्रुमाः ७
खादिताः प्राणिनोयेयेराज्येऽस्मिन्पापिनात्वया
यमालयेसमस्तैस्तैर्दर्शनंतेभविष्यति ८

मुंचनिद्रामरेदुष्टमांपश्यान्तकरंनिजम्
अनयानिद्रयाकिन्तेमहानिद्रभविष्यति ९
ततः सोऽपिसमुत्तस्थौक्रोधसंरक्तलोचनः
धूलिधूसरसर्वाङ्गस्त्यक्तनिद्रोमहाबलः १०
भीमनादउवाच-
गर्वंमाकुरुदुर्बुद्धेतवायुः शेषतांगतम्
तत्संदर्शनमात्रेणप्राप्तः कोनुविमुच्यते ११
ज्वलदग्निशिखाश्रेणींप्रविशेच्छलभोयथा
मत्कोपानलराशौत्वंतथैवनिपतिष्यसि १२
इतिब्रुवंतंतंद्रष्टुंशक्त्यानिशितयातया
सजज्वालमहाकोपात्कृत्वाहुंकारनिःस्वनम् १३
सपपातमहीपृष्ठेगतायुर्गंडकस्ततः
चालयन्पृथिवींसर्वांस्वनितौघपरिप्लुतः १४
खङ्गिनंपतितंदृष्ट्वागङ्गाब्धिरोधसिद्विज
समीपंतस्य भूपस्यसगंतुमुपचक्रमे १५
सगच्छन्पथिविप्रर्षेददर्शैकंमहाशयम्
जाज्वल्यमानंतेजोभिर्द्वितीयमिवभास्करम् १६
विष्णुदूतगणैर्युक्तंतुलसीमाल्यभूषितम्
दिव्याम्बरधरंदिव्यंरथारूढंस्मिताननम् १७
पप्रच्छेतिततोभक्त्यासचवीरवरश्चतम्
कस्त्वंकुतइहायातः क्वगच्छसिवदस्वनः १८
पुरुषउवाच-
कन्येविधृतपुंवेशेमद्वृत्तांतंनिशामय
कथयामिसमासेनश्रोतुमिच्छसिचेन्मुदा १९
अहमासंपुराराजाचौरवंशवनानलः
धर्मबुद्धिरितिख्यातः सर्वधर्मपरायणः २०
मयायज्ञाःकृताः सर्वेदानानिसकलानिच
चतुर्वर्षसहस्राणिपालिताचवसुन्धरा २१
पाखण्डजनवाक्येनमया भूमिर्द्विजन्मनः
लंघिताकोपमासाद्यदोषितानहिकुत्रचित् २२

मयातेनापराधेनस्वयमेवविधिस्ततः
जहारतत्क्षणादेवसर्वांराजश्रियंरुषा २३
अथाहंगतसंपत्तिः शोकाग्निदग्धमानसः
कियिद्भिर्दिवसैः साध्वियमराजवशंगतः २४
मांदृष्ट्वाचित्रगुप्तेनतत्कर्मप्रकटीकृतम्
उक्तश्चभास्करिर्देवश्चारुहासगतिः प्रभुः २५
धर्मबुद्धिरयंराजाकृतपुण्यक्रियः सदा
अस्त्यस्यदुरितंकिञ्चित्तन्निशामयवच्म्यहम् २६
पाखण्डैर्बोधितोऽयतुजहारद्विजशासनम्
तेनैवकर्मणास्थानंनरकेचास्यदुत्तरे २७
वृत्तिच्छेदःसूर्यपुत्रयस्ययेनविधीयते
सतस्यवधमाप्नोतिशास्त्रेषुइतिनिश्चितम् २८
तस्मादयंपापकर्माब्रह्महापृथिवीपतिः
एतस्यनिरयेस्थानंकल्पकोटिशतावधि २९
आत्मदत्तांहरेद्यस्तुपरदत्तांच मेदिनीम्
सकोटिकुलसंयुक्तःप्रयातिनरकंविभो ३०
योहरेच्चमहींतावद्देवस्यब्राह्मणस्यच
नतस्यनिष्कृतिर्दृष्टाकल्पकोटिशतावधि ३१
परदत्तांक्षितिंयस्तुरक्षितुर्यस्तुरक्षति
सकोटिगुणमाप्नोतिपुण्यंदातृगुणादपि ३२
ततोऽहशमनादेशाद्भुक्त्वावैपूतिमृत्तिकाम्
कल्पयोनौप्राणिहिंसासर्व दैवमयाकृता ३३
गावश्चब्राह्मणाश्चैवतथैवान्येऽपिजीविनः
मयादुष्टेननिहताःकोटिकोटिसहस्रशः ३४
कालेनप्रेरितासाध्विमांसर्वक्षयिताश्रयम्
खड्गयोनिंसमुत्पन्नंभवतीप्रजघानह ३५
गङ्गाब्धिसङ्गमंतीर्थंदुर्ल्लभंदैवतैरपि
स्थलेऽपिमृत्युमासाद्ययत्रेयंममसद्गतिः ३६
गच्छसुश्रोणिभद्रंतेभविष्यतिनसंशयः
अचिरेणैवपतिनादर्शनंतेभविष्यति ३७

व्यासउवाच-
तस्यैतद्वचनंश्रुत्वासाकन्यापरमाद्भुतम्
ववंदेचरणौतस्यधर्मबुद्धिर्महीपतिः ३८
ततोरथंसमारुह्यसराजात्रिदिवंययौ
सोऽपिवीरवरोविप्रजगामनृपतेःसभाम् ३९
राजाचतंमृतंश्रुत्वाखड्गिनंभीमविक्रमम्
तस्यैददौविवाहेनजयंतींनिजकन्यकाम् ४०
जयंतींतांसमादायसाकन्यापुरुषाकृतिः
तपस्तप्तुंमनश्चक्रेगङ्गासागरसङ्गमे ४१
गङ्गाब्धिसंगमेस्नात्वाप्रभातेद्विजसत्तम
गीतैर्वाद्यैश्चनृत्यैश्चयजेन्नारायणंप्रभुम् ४२
निरामिषंहविष्यंचफलाहारंद्विजोत्तम
कदाचिदुपवासंसाकुरुतेचवराङ्गना ४३
एकाकिनींसमालोक्यकोऽग्रहीदत्रभूतले
मांनीचमितिमत्वासौसमारुह्यचवाजिनम् ४४
भूयएवनिजंराज्यंसाजगामवराङ्गना
माधवस्यवियोगेनतस्यविद्याधरस्यवा ४५
मृतासाराजतनयायतोऽन्यनभजत्यपि
तस्यांमृतायांभृत्योऽसौनिर्जगामयदृच्छया ४६
विलप्यबहुधातत्रप्रचेष्टोऽत्यतशोकभाक्
जगाममरणार्थायगङ्गासागरसङ्गमम् ४७
गङ्गाब्धिसङ्गमेस्नात्वातुलसीमृद्विभूषितः
कृताञ्जलिरितिप्राहप्रचेष्टोभीष्ममातरम् ४८
पवित्रेत्वज्जलेमातस्त्यजाम्यत्रकलेवरम्
सुलोचनामेकांतास्याद्यथातत्त्वंकरिष्यसि ४९
भूयोभूयोब्रुवंतंतमितितस्याश्चकिंकराः
बध्वापाशेनतंनिन्युर्निरुक्तांतत्सभांप्रति ५०
तप्तावीरवरादेशात्किंकरास्तेसुदारुणाः
कारायांस्थापयामासुः प्रचेष्टमनुविह्वलम् ५१
एतस्मिन्नेवकालेतुदृष्ट्वातत्कार्यमद्भुतम्

हाहाकारोमहानासीत्तद्राज्येद्विजसत्तम ५२
एतच्छ्रुत्वाद्भुतंकर्मसचराजागुणाकरः
आयातोऽत्यतसंतप्तोवदतीतिद्विजोत्तम ५३
निषंगिणश्चरथिनश्चर्मिणः खड्गिनस्तथा
धानुष्काश्चकौंतकाश्चकोटिकोटिसहस्रशः ५४
स्थानेस्थानेपुरेतस्मिन्राजावैशोकविह्वलः
नियोजयामासतदारक्षायैद्विजसत्तम ५५
तेनाज्ञप्तास्ततः सर्वेयोद्धारोऽमितविक्रमाः
सत्वराः पतिरक्षासुतस्थुस्तस्मिन्पुरेरुषा ५६
गीतानिगायकैः सर्वैर्नृत्यानिनर्तकैस्तथा
वाद्यानिवादकैश्चैवतत्रत्यक्तानिसाध्वसैः ५७
ततः सराजाविप्रर्षेसमाहूयस्वमंत्रिणः
किमेतदितिपप्रच्छशोकोपहतमानसः ५८
मंत्रिणऊचुः-
देवाद्भुतमिदंकर्मनदृष्टंनश्रुतंक्वचित् अं
एतावतांनृणांमध्येपश्यतांक्वजगामसा ५९
कोऽपिजल्पतिसालक्ष्मीःशापेनागत्यभूतले
त्वदीयंसौधमेतर्हिस्वयमंतरधीयत ६०
मायामयीसारमणीमाययात्वद्गृहेस्थिता
मायांस्वकीयांदर्शित्वागतेत्यन्येवदंतिवै ६१
केचिद्वदंति रमणीसर्वलक्षणसंयुता
आगमिष्यतिभूयोऽपिभगाङ्गोमघवायतः ६२
तन्मुखंचन्द्रवन्मत्वाविचिंत्यात्मानमात्मना
केचिद्वदंतिचन्द्रेणनीतासुप्रतिपत्तये ६३
वदंतिकेऽपिसाकन्यासद्गुणादीर्घवासना
भ्रान्त्याचन्द्रमसाग्रस्तापूर्णचंद्रनिभानना ६४
दिग्गजैर्नलिनीभ्रान्त्याप्रफुल्लकमलानना
विषदण्डप्रहस्ताचनीरजाकलिकाकुचा ६५
केचिद्वदंतिसृष्ट्वासास्रष्टुमन्यांस्त्रियंनृपं
तद्रूपादर्शनालोक्येनीतारूपगुणास्थिता ६६

केचिद्वदंतिभूपालत्वयासर्वदिशोजिताः
रूपैर्दैवांगनाजेतुंगतासात्रिदिवंप्रति ६७
अथतेमंत्रिणोऽन्योन्यमालोक्येतिमुखश्रियः
स्तब्धाइवाभवन्सर्वेनिरुत्साहाः ससाध्वसाः ६८
भूपःसुलोचनेपुत्रिक्वगतासिविहायमाम्
इत्युक्त्वासमहीपालः पृथिव्यांमूर्च्छितोऽपतत् ६९
राजानंपतितं दृष्ट्वाशोकेनमहातातततः
जज्ञेहाहारवस्तस्मिन्नगरेद्विजसत्तम ७०
तत्क्रंदनध्वनिंविप्रप्रतिश्रुत्वाचजायते
उत्प्रेक्षतेतत्रलोकेक्रंदंतिककुभो दश ७१
धूलिधूसरतांगंतुनृपतिंमुक्तकेशकम्
बिधृत्यमंत्रिणः सर्वेतरसासौधमाययुः ७२
अथविद्याधरस्तत्रश्रीविक्रमदेवजः
तस्याः पीठंसमालिङ्ग्यरुरोदकरुणस्वनैः ७३
हाप्रियेचंचलापाङ्गिसुवर्णकुसुमप्रभे
शोकाब्धौपातयित्वामांक्वगतासिवरानने ७४
ममकिंदूषणंदृष्टंत्वयानिर्दोषयाप्रिये
नददासिकथंभद्रेदर्शनंकमलानने ७५
नजीविष्याम्यंहंभद्रेक्षणमात्रंत्वयाविना
अतोमेदर्शनंदत्वाक्रियतांप्राणरक्षणम् ७६
किंधनैः किंजनैः किंमेमित्रैः किंवाधनैर्गृहैः
नाप्नोमियदिभद्रेत्वांप्राणेभ्योऽपिगरीयसीम् ७७
एतच्चान्यच्चविप्रर्षेस कृत्वाकरुणंमहत्
शोकान्मृत्युंविनिश्चित्यययौगङ्गाब्धिसङ्गमम् ७८
तत्रगङ्गाम्भसिस्नात्वासमुद्रजलमिश्रिते
निवेद्यभास्करायार्घंगंगानत्वाह मातरम् ७९
गंङ्गेदेविजगन्मातस्त्वज्जलेविमलेतनुम्
त्यजामितांयथाभूयःप्राप्नोमितत्करिष्यसि ८०
इतिब्रुवंतंतंविप्रतत्किंकरवरास्ततः
विधिंविनिन्युःसदृशंक्रुद्धावीरवरस्यच ८१

ततोवीरवरः प्राहकस्त्वंभोःकुतआगतः
कथमत्रतनुत्यागंकुरुषेतद्वदस्वमे ८२
तद्वाक्यमेतदाकर्ण्यततोविद्याधरोऽखिलाम्
तांकथांकथयामासशृण्वतांविस्मयप्रदाम् ८३
अथत्वंमूर्खलोकानांप्रवरोसिनसंशयः
गान्धर्वीराक्षसीवापिपन्नगीवापिकिन्नरी ८४
शापागतेवसाकन्यातस्मादन्तर्हितास्वयम्
सादेवरूपिणीकन्यादेवानांनिलयंगता ८५
कथंतयासमंभूयोदर्शनंतेभविष्यति
चकोरपेयंपीयूषंगगनेरोहिणीपतेः ८६
किंशक्नुवंतितंपापावायसाबलिनोऽपिच
यदप्राप्यंनतत्प्राप्यंप्राप्यंयत्तच्चलभ्यते ८७
जानंतितज्ञनंकश्चिन्मोहंप्रतिनगच्छति
केनापिदीयतेकन्याकन्याकेनापिगृह्यते ८८
पूर्वजन्मनियाकन्यातांकन्यांलभतेपतिः
पुत्रप्रयोजनाभार्यापुत्राःपिण्डप्रयोजनाः ८९
कुर्वंतिदारग्रहणमतएवमनीषिणः
यथेहदीयतेनार्यातथानारीसमश्नुते ९०
क्रंदन्नजन्यामप्येषभृङ्गःकुमुदिनींसहेत्
सद्रूपोऽपिपतिःस्त्रीणांसंतोषायभवेन्नहि ९१
रवौस्थितेऽपिपद्मिन्यामधूनिभ्रमरः पिबेत्
नारीषुसततंचित्तंविष्णुभक्तिष्वनादरः ९२
शोकैःकैश्चित्तनुत्यागस्तिस्त्रःपुंसांविडंबनाः
दाराःपुत्रास्तथाभ्रातादेशाश्चबांधवास्तथा ९३
पुनर्लभ्याइमेसर्वेपुनर्लभ्यानचासवः
नमुक्तोविषयोधर्मोनचकर्मकृतंत्वया ९४
वर्तमानेगतेमूढभविष्यंजन्मदुर्ल्लभम्
ममनातामम्पिताभार्याभ्राताधनंमम ९५
निष्फलंयातिवैजन्मनृणांममतयातया
एवंप्रबोधितः सम्यक्तेनधीरवरेणसः ९६

दौर्मनस्यंपरित्यज्यतस्थौतत्रैवजैमिने
ततस्तुगन्धिनीप्रीत्याहसंतीस्वगृहंगता ९७
गत्वाचमाधवंमंचेस्वपंतंसाददर्शह
गन्धिन्युवाच-
उत्तिष्ठोत्तिष्ठदुर्बुद्धेभ्रमस्तेविफलोऽभवत् ९८
विवाहकालेसाकन्याबभूवांतर्हितास्वयम्
एवंतस्यावचः श्रुत्वासमुत्तस्थौसमाधवः ९९
विललापाकुलः शोकैर्महद्भिःक्ष्मातलेलुठन्
कन्यायादूषणंनास्तिनास्तिविद्याधरस्यवा १००
ममैवदूषणंसर्वंयतोहीनस्यसंगभाक्
नीचसंगेकृतेपुंसासुखंयच्छतिनोविधिः १०१
एतदेवमयाज्ञातंयतोगतिरियंमम
नप्राप्नोतिसुखंकिञ्चिन्नीचःसङ्गान्महानपि १०२
प्रेतसंगान्महादेवोनग्नोभग्नविभूषणः
प्रविश्यनीलयंनीचंस्त्रीधनादिकमीक्षते १०३
किञ्चित्प्रसङ्गमासाद्यषड्वक्त्रःसषडाननः
सतांश्रुत्वागुणंनीचः सद्यएवविषीदति १०४
दोषंसंश्रोतुमाप्नोतिशतरूपोभवेत्तदा
शुभमिच्छन्निजं प्राज्ञोनीचेभ्योनहिनिश्चयेत् १०५
क्षणमेकमपिप्राज्ञोनीचेभ्योनहिनिश्चयेत्
पादमेकमपिप्राज्ञोनीचैः सहनगच्छति १०६
विश्वासवचनंनीचः सद्यएवविषीदति
दोषंसाश्रोतुमाप्नोतिश्रोतुमायातियत्नतः १०७
ततःसमयमासाद्यप्रकाशयतिचोद्धसन्
मनस्येकंवचस्येकंकर्म्मण्येकंयतात्मनाम् १०८
मनस्यन्यद्वचस्यन्यत्कर्म्मण्यन्यद्दुरात्मनाम्
यदाकरिष्यतिकन्याविवाहंसानृपात्मजा १०९
नाभविष्यत्तदाशोकःस्वल्पोऽपिहृदयेमम
स्वर्गंगताचेत्साकन्यासर्वलक्षणसंयुता ११०
नीतानीचेनशोकोऽयहृदयेदुःसहोऽभवत्

लिखितामिवसर्वत्रतां पश्यामिवराननाम् ११९
विस्मर्तुंनहिशक्नोमिजीवतानेनचात्मना
नीचक्रोडगतासाध्वीनजीविष्यतिसाद्धणम् ११२
विद्याधरोऽपि तच्छोकैर्नजीविष्यतिदारुणैः
यथामातापितात्यक्तोदेशस्तत्प्राप्तयेमया ११३
तथैवसंप्रतिप्राणास्त्यक्तव्यानात्रसंशयः
पुनस्तत्प्राप्तयेप्राणान्गंगासागरसङ्गमे ११४
त्यद्दयामीतिदृढंकृत्यसगंतुमुपचक्रमे
एतस्मिन्नेवकालेतुनारदान्मुनिसत्तमात् ११५
पादलेपंमहाबुद्धिरभिगम्यसमाधवः
ययौकियद्भिर्दिवसैर्गङ्गासागरसङ्गमम् ११६
गङ्गाब्धितोयेस्नात्वाचपूजयामासचाच्युतम्
तुलसीपत्रमालाभिर्भूषितोमाधवस्तदा ११७
बद्धाञ्जलिरितिप्राहजह्नुकन्यांसरिद्वराम्
माधवउवाच-
देवित्वत्सलिलेदेहंप्राप्तशोकस्त्यजाम्यहम् ११८
भाविजन्मनितांकन्यांमह्यंदास्यसिशोभनाम्
इत्युक्त्वातांनमस्कृत्यगङ्गांत्रैलोक्यमातरम् ११९
ततस्तत्सलिलंनिम्नेप्रवेष्टुमुपचक्रमे
अथवीरवरःपृष्ठेतंविधृत्यनृपात्मजम् १२०
तत्सभांप्रतिविप्रर्षेजवेनागत्यतज्ञनैः
ततः समालोक्यनृपात्मजंतंप्रीतिंसमासाद्यअनिंद्यशोभाम् १२१
कस्त्वंत्यजस्यत्रकथंशरीरंब्रूहीतितंवीरवरंजगाद
माधवउवाच-
अहंविक्रमराजस्यपुत्रोमाधवसंज्ञकः १२२
मृगयायैवनंघोरं ससैन्योऽगममेकदा
अस्त्येकानगरोपांतेसरसीपद्मशोभना १२३
नारीमेकाकिनींरम्यामपश्यंतत्रकामुकः
साचचन्द्रकलानामभामिनीमांस्मरातुरम् १२४
सुलोचनायाःप्रस्तावंकथयामासभूतले

ततस्तुरगमारूढोविलङ्घ्यसरितांपतिम् १२५
प्रचेष्टाख्येनभृत्येनगतस्तस्याःपुरंप्रति
तस्मिन्नेवदिनेतस्याअधिवासनमुत्तमम् १२६
तथाकर्णमयातत्रप्रेरितंसांगुलीयकम्
ममपत्रंसमालोक्यसांगुलीयकमुत्तमम्
सापितत्पृष्ठपत्रेषुयल्लिलेखतदुच्यते १२७
श्रीत्रिविक्रमदेवस्यपुत्रोविद्याधराह्वयः
पितातस्मैविवाहेनमांप्रदास्यतिसत्तम १२८
अथाधिवासनंकर्म्मश्वोविवाहोममध्रुवम्
तथाप्युपायंवक्ष्यामियेनप्राप्नोतिमांभवान् १२९
वामबाहुंसमुद्धृत्यस्थिताहंवरसंमुखी
येनमांशक्यतेनेतुंसमेभर्तानसंशयः १३०
विलिख्यपत्रंसाकन्यागंधिन्यास्तत्करेददौ
गंधिन्याचतयादत्तंतत्पत्रंमह्यमुत्तमम् १३१
तत्संकेतंप्रचेष्टेनसंश्रुत्यममसंमुखे
हयमारुह्यसानीतातत्राहंनिद्रयाजितः १३२
अनयाव्यथयातत्रपुनस्तत्प्राप्तिहेतवे
तदाद्यजागरंभद्रशृणुष्वात्रविधानतः १३३
इत्युक्तास्यरक्षायैनियुज्यपदगान्बहून्
विहस्यांतःपुरंगत्वासाकन्यापुरुषाकृतिः १३४
ततोविधृत्यस्त्रीवेषंनानालंकारभूषिता
स्वदासींप्रेषयामासतमानेतुंनृपात्मजम् १३५
तदाज्ञयासमागत्यततोनृपतिनंदनः
ईक्षांचक्रेचतांसाध्वींलक्ष्मींमूर्तिमतीमिव १३६
साचकन्यासमुत्थायसुवर्णासनतोद्विज
ववंदेचरणौतस्यपुलकांचितविग्रहा १३७
ततोगान्धर्वविधिनासराजतनयःसुधीः
चक्रेविवाहेतां कन्यांतत्रैवप्राप्तकौतुकः १३८
तत्प्रेमवारिधाराभिःसंसिक्तोनृपनंदनः
तत्रैवतांनिशांनिन्येकुर्वन्केलितयासह १३९

अथप्रभातेविमले सामृगीलोचनासती
आदितःसर्ववृत्तांतंकथयामासमाधवम् १४०
ततःसुलोचनासाध्वीजयंतींतांनृपात्मजाम्
माधवंचसमादायसुषेणस्यसभांययौ १४१
तांकन्यासनृपः श्रुत्वाहर्षितोमाधवायवै
सुलोचनांजयंतींचविवाहेनददौततः १४२
तस्मैतुयौतुकत्वेनसराजाधर्मतत्परः
सुप्रीतोनिजराज्यार्द्धंददौस्वर्णशतानिच १४३
ततोविचित्रमावासंनिर्मायसनृपात्मजः
तस्मिन्पुण्यतमेतीर्थेचकारवसतिंद्विज १४४
तत्रांतरे प्रचेष्टंतंकारागारनिवासिनम्
सभांसमानीयततश्चिंतयामासमाधवः १४५
अयंपापमतिःक्रूरःस्वामिविश्वासघातकः
शत्रूणांप्रवरोमूढोरक्षणीयोमयानहि १४६
पालितोऽपिमुहुर्नित्यंप्रसादधनभोजनैः
शत्रुकर्मकरोत्येवसमयंप्राप्यनिर्दयः १४७
विपत्त्यांयेनहस्तेननयेत्पादरजः खलु
शिरःकृंततितेनैवस्वामिनंप्राप्यसंपदम् १४८
नूनमेवप्रभुंघ्नंतिवशगानृपराजयः
तप्तमप्युदकंवह्निंसद्योनिर्वाणतांनयेत् १४९
इतिसंचिंत्यमनसातेनक्ष्मापतिसूनुना
प्रचेष्टोनष्टचेष्टोऽसौनिरस्तोद्विजसत्तम १५०
ताभ्यांस्त्रीभ्यांतदाविप्रसुखेनसनृपात्मजः
किञ्चित्कालंतत्रतस्थौ शोकव्याधिविवर्जितः १५१
तस्यांसुलोचनायांतुमाधवस्यमहात्मनः
शतंपुत्राजयंत्यांचद्वेशतेजज्ञिरेसुताः १५२
माधवस्यसुतास्तेऽपिशस्त्रशास्त्रविदोत्तमाः
बभूबुःसर्वलोकानांप्रीतयेधर्मतत्पराः १५३
जन्मांतरोपार्जितयाविष्णुभक्त्याचसंगतः
एकदाचिंतयामासमनसासचमाधवः १५४

कोऽहकस्मात्समायातः कस्यवाकेननिर्मितः
भूयःक्वचगमिष्यामिकुत्रवास्थास्यतेमया १५५
विषयंभुंजतोजन्मविनापुण्येनमेगतम्
तस्माद्विघ्नार्णवेमग्नंकोऽत्रमामुद्धरिष्यति १५६
संसारेऽस्मिञ्जनंप्राप्ययेननाराधितोहरिः
आत्मघातीसविज्ञेयः सर्वधर्मवहिष्कृतः १५७
भूयोभूयोभवेज्जन्मभूयोभूयोऽपिपंचता
संसारोऽयमतः सर्वःक्लेशदोभैरवोमहान् १५८
विष्णुभक्तिंविनानस्याज्जन्ममृत्युनिवारणम्
अतोऽद्यसकलंत्यक्त्वाकरिष्याम्यर्चनंहरेः १५९
एतद्विचिन्त्यमनसाविश्वस्यचमुहुर्मुहुः
विश्वकर्माणमाहूयसवाक्यमिदमब्रवीत् १६०
माधवउवाच-
विश्वकर्मन्महाबाहोमह्यंविष्णोः शिलामयीम्
प्रतिमांदेहिनिर्मायसर्वकामफलप्रदाम् १६१
तस्यादेशात्ततोविप्रशिल्पिनाविश्वकर्मणा
प्रतिमारचितातेनमहाविष्णोःशिलामयी १६२
नवीननीरदश्यामापुण्डरीकनिभेक्षणा
शङ्खचक्रगदापद्मधारिणीच चतुर्भुजा १६३
लक्ष्मीसरस्वतीयुक्तावनमालाविभूषिता
समस्तलक्षणैर्युक्ताभूषितासर्वभूषणैः १६४
विचित्रमण्डपेतांचसंस्थाप्यप्रतिमांहरेः
सपूजांकर्तुमारेभेकामदांचक्रपाणिनीम् १६५
तस्मिन्नेवालयेविप्रघृतदीपंद्विजोत्तम
दीपंप्रतिदिनंयच्छेदविच्छिन्नशिखंसच १६६
प्रातः स्नायीस्वयंभूत्वाकुर्यात्संमार्जनादिकम्
मार्गशोभांचविप्रर्षेतत्रोपलेपनंपुनः १६७
स्नात्वागङ्गाब्धिसलिलेकृत्वापंचमहाध्वरान्
त्रिसंध्यंपूजयेद्विष्णुमुपहारैरनुत्तमैः १६८
गंधैर्धूपैश्चनैवेद्यैस्तांबूलैर्धूपदीपकैः

गीतवाद्यैः प्रबंधैश्चस्तवपाठैः सुशोभनैः १६९
प्रदक्षिणैर्नमस्कारैरर्ध्वैश्चैवदक्षिणैः
निरामिषैर्हविष्यैश्चफलाहारैश्चसत्तम १७०
नमोनारायणायेतिजपेत्प्रणवपूर्वकम्
अष्टाक्षरंमहामंत्रंसर्वकामफलप्रदम् १७१
एवमब्दसहस्राणिमहाविष्णोःपरात्मनः
चकारपरयाभक्त्यासपूजांसर्वकामदाम् १७२
तस्याभक्त्याततस्तुष्टः सर्वदेवशिरोमणिः
आविर्बभूवभगवांस्तुलसीकुसुमप्रभः १७३
आविर्भूतंहरिंदृष्ट्वासदारोमाधवस्ततः
शिरसाभूमिमालिङ्ग्यववंदेचरणौहरेः १७४
माधवउवाच-
नमस्तेदेवदेवायनमस्तेपरमात्मने
परेशायसुरेशायनमस्तेज्ञानदायिने १७५
नमस्तेपरमानन्दपुरुषोत्तमकेशव
नमस्तेपद्मनेत्रायकमलापतये नमः १७६
नमस्तेबहुरूपायनीरूपायनमोनमः
विचिन्त्यायाविचिन्त्यायदृश्यादृश्यायवैनमः १७७
नमस्त्रैलोक्यनाथायलोकपित्रेनमोनमः
नमस्तेज्ञानगम्यायनमस्तेसर्वशाखिने १७८
कंसारयेनमस्तुभ्यनमस्तेकैटभारये
मधुहर्त्रेनमस्तुभ्यंविधात्रेचनमोनमः १७९
येनत्वयोद्धृतावेदामीनरूपधरेणवै
गंभीरांभोनिधेरम्भोऽभ्यतरात्तमहंभजे १८०
येनत्वयोद्धृतापृथ्वीसशैलवनकानना
कूर्मरूपधरेणेयंतस्मैतुभ्यंनमो नमः १८१
वाराहमूर्तिनायेनधरणीधरणीपते
उद्धृतानिजदंतेनतस्मैतुभ्यंनमोनमः १८२
नृसिंहमूर्तिनायेनत्वयादैत्योविदारितः
हिरण्यकशिपुःक्रुद्धस्तस्मैतुभ्यंनमोनमः १८३

बलियज्ञस्तथाध्वस्तोयेनवामनरूपिणा
तस्मैतुभ्यंनमोदेवकश्यपादानकारिणे १८४
पितरस्तर्पितायेनत्वयाक्षत्रियशोणितैः
कार्तवीर्योहतोयेनतस्मैरामायतेनमः १८५
रावणोनिहतोयेनकौशल्यासूनुनात्वया
मारीचःकुंभकर्णश्चतस्मैरामायतेनमः १८६
प्रलंबोनिहतोयेनरेवतीपतिनात्वया
कालिन्दीभेदिनेतुभ्यंतस्मैरामायतेनमः १८७
वेदाविनिंदितायेनविलोक्यपशुहिंसनम्
सकृपेनत्वयायेनतस्मैबुद्धायतेनमः १८८
म्लेच्छाश्चविहितायेनयुगांतेकल्किमूर्तिना
सर्वलोकहितार्थायतस्मैतुभ्यंनमोनमः १८९
हरे विष्णोदैत्यजिष्णोनारायणकृपामय
संसारसागरेघोरेपतितंमांसमुद्धर १९०
ततोहर्षान्माधवोऽसौप्रक्षाल्यचरणौहरेः
भुमौनिपात्यसर्वाङ्गंजगादमाधवोहरिम् १९१
माधवउवाच-
गोविन्दपरमानन्दमुकुन्दमधुसूदन
त्राहिमांपापिनंकृष्णयतस्त्वंसर्वपापहा १९२
इतिस्तोत्रंतस्यश्रुत्वाभगवान्भक्तवत्सलः
परमांप्रीतिमासाद्यतमित्याहवचःस्वयम् १९३
श्रीभगवानुवाच-
वरंवरयभोवत्समाधवक्षत्रियर्षभ
ब्रह्मत्वंवाशिवत्वंवाशक्रत्वंवाकिमिच्छसि १९४
माधवउवाच-
सर्वमेवमयाप्राप्तंजगदीशनसंशयः
दैवतैरप्यदृश्यंत्वांपश्यामिवरदंप्रभुम् १९५
भुक्तिंमुक्तिंधनैश्वर्यंदातुंसर्वंभवान्क्षमः
प्रभोनभक्तियोग्योऽस्मिभक्तिमेवप्रयच्छमे १९६
श्रीभगवानुवाच-

तवशक्त्याऽनयावत्सप्रीतोऽहनात्रसंशयः
किमस्तिवस्तुयद्दत्वातवानृणंभजाम्यहम् १९७
सूतउवाच-
इत्युक्त्वापरमप्रीतः प्रसार्य्यचतुरोभुजान्
तमालिङ्गितवान्विष्णुःपितापुत्रमिवद्विज १९८
श्रीभगवानुवाच-
आलिङ्गनप्रभावेणतवानृणंगतोऽस्म्यहम्
सर्वमेवशुभंभद्रभविष्यतिनसंशयः १९९
कामिनाप्रतिमावत्सक्रियायोगेनसर्वदा
पूजितामामतेनत्वांनेष्याम्यहंतनुंप्रति २००
व्यासउवाच-
इतिदत्वावरंतस्मैचतुर्भिर्दीर्घबाहुभिः
भूयःप्राणैःसमालिङ्ग्यतत्रैवांतरधीयत २०१
ततस्तांप्रतिमांविष्णोःसदारोमाधवस्तदा
आराधयामासभक्त्याक्रियायोगैरनुत्तमैः २०२
सभुक्त्वासकलान्भोगान्पुत्रपौत्रसमन्वितः
गङ्गायांमृत्युमासाद्यसदारोमोक्षमाप्तवान् २०३
पठतिहरिचरित्रैर्युक्तमध्यायमेतत्सकलदुरितराशिध्वंसिभिःसर्वभक्त्या
इहजगतिसभुक्त्वासर्वभोगांस्ततोंऽतेव्रजति भगवतःश्रीवासुदेवस्यधाम २०४

इति श्रीपद्मपुराणेक्रियायोगसारेगंगासागरसंगममाहात्म्यवर्णनंनाम
षष्ठोऽध्यायः ६

## सप्तमोऽध्यायः

श्रीव्यासउवाच-
भूयएवप्रवक्ष्यामिगङ्गामाहात्म्यमुत्तमम्
तच्छ्रुत्वामानवाः सर्वेसर्वान्कामानवाप्नुयुः १
येननाचरितंस्नानंगङ्गायांलोकमातरि
आलोक्यतन्मुखंसद्यः कर्त्तव्यंसूर्यदर्शनम् २
प्रभातेयः स्मरेद्भक्त्यागङ्गाइत्यक्षरद्वयम्
तस्यनश्यंतिपापानितमोवदरुणोदये ३

नदृष्टायेनसरितांप्रवराजह्नुकन्यका
तस्याग्राह्याणिसर्वाणिअन्नादिसलिलानिच ४
शरीराणिपरित्यज्यगङ्गास्नानंप्रकुर्वताम्
गात्राणयायान्ति पापानिगङ्गास्नानमकुर्वताम् ५
अहोचित्रमहोचित्रमहोचित्रमिदंपुनः
पतंतिनरकेमूढागङ्गानाम्निस्थितेसति ६
शिरसायोवहेद्भक्त्यागङ्गाम्भःकणिकामपि
समुच्यतेमहापापैर्ब्रह्महत्यादिभिर्द्विजः ७
ललाटेदृश्यतेयस्यगङ्गासैकतमुत्तमम्
सपुण्यात्माजगत्सर्वंपुनातिनात्रसंशयः ८
गङ्गातीरात्समायांतंयः पश्येत्परमादरैः
सोऽश्वमेधसहस्राणिफलंप्राप्नोतिमानवः ९
गङ्गातीरमहंयामित्वमागच्छेतिवक्तियः
तस्यविष्णुःप्रसन्नात्मासर्वान्कामान्प्रयच्छति १०
गंगेतिनामसंस्मृत्ययस्तुकूपजलेऽपिच
करोतिमानवः स्नानंगङ्गास्नानफलं लभेत् ११
गङ्गाम्मःशीकरंयस्तुसंमितंसर्षपस्यच
प्राप्नोतिमृत्युकालेषुसगच्छेत्परमंपदम् १२
अत्रैवशृणुविप्रर्षेइतिहासंपुरातनम्
यस्यश्रवणमात्रेणगङ्गादेवीप्रसीदति १३
आसीत्त्रेतायुगेविप्रोधर्मस्वोनामधार्मिकः
शांतोदांतोदयायुक्तोवेदवेदाङ्गपारगः १४
सत्यवादीक्रोधहीनोहिंसाहीनोजितेन्द्रियः
सर्वभूतहितैषीचयोगाभ्यसरतः सदा १५
संसारसागरंतर्त्तुंसविप्रोवैष्णवोजनः
पूजयामासदेवेशंक्रियायोगेनकेशवम् १६
कदाचित्प्राप्यपुण्याहंसच विप्रर्षभोद्विज
जगामजाह्नवीतीरंमुमुक्षुःस्नानहेतवे १७
तत्रगंगांभसिस्नात्वाकृत्वाचतर्पणादिकम्
गृहंगंतुंमनश्चक्रेगंगांभः कर्त्तरींवहन् १८

तस्मिन्कालेततोविप्रवैश्योरत्नकराह्वयः
कृत्वावाणिज्यमायांतंसकलैः किंकरैर्वृतः १९
तस्यैकः किंकरोविप्रः कालकल्पइतिस्मृतः
दंडहस्तः समायातोविहिताखिलपातकः २०
अथवर्त्मश्रमश्रांतस्तस्यरत्नकरस्यच
सुष्वापैकोबलीवर्द्दःपथिब्राह्मणसत्तम २१
पथिस्वपंतंतंदृष्ट्वाकालकल्पोवृषंततः
दण्डेनताडयासबाहुधाऽत्यतनिर्द्दयः २२
तद्दण्डघातजनितक्रोधेनवृषभेनसः
विषाणाभ्यांसुतीक्ष्णाभ्यांसमुत्थायविदारितः २३
तच्छृङ्गद्वयनिभिन्नवक्षाः सगतलोचनः
तत्सन्निधिंदयायुक्तोधर्मस्तुत्वरितोययौ २४
ततःकर्णात्समादायतुलसीपत्रमुत्तमम्
गङ्गाम्भःशीकरैर्दिव्यैः सिक्तोसौतेनधीमता २५
गतप्राणंसमालोक्यसविप्रःपरमार्थवित्
विस्मितःस्वगृहंगंतुंमनश्चक्रेद्विजोत्तम २६
अथगच्छन्पथिप्राज्ञोगङ्गानामानिकीर्तयन्
यमदूतान्ददर्शाग्रेकोटिकोटिसहस्रशः २७
छिन्नैकपादाःकेचिच्चकेचिच्छिन्नैकपाणयः
केऽपिकेऽपिच्छिन्नकर्णाःकेऽप्येकनयनास्तथा २८
केचिच्चच्छिन्ननासाश्चच्छिन्नजिह्वाश्चकेचन
भग्नदंताः केऽपिकेऽपिकेऽपिदंतविवर्जिताः २९
केऽपिशोणितधाराभिर्लिप्तसर्वकलेवराः
विमुक्तकैशिकाःकेऽपिकऽएपिवक्त्रविवर्जिताः ३०
केऽपिकऽएपितथानग्नाः केऽपिनिर्भिन्नवक्षसः
केऽपिजर्जरितांगाश्चमहातीक्ष्णैः शिलीमुखैः ३१
निषिद्धांगुलिहस्ताश्चदृढपाशैस्तथापरे
क्रंदंतोव्यथयाकेऽपिपलायनपरायणाः ३२
एवंभूतान्यमप्रेष्यान्सविलोक्यद्विजोत्तमः
सकंपहृदयोभीत्याततः स्तब्धइवाभवत् ३३

अवलंब्यततोधैर्यंसविप्रोहरिभक्तिकृत्
इत्यपृच्छन्मधुरयाकिरातान्यमकिंकरान् ३४
धर्मउवाच-
केयूयंविकृताकाराःपाशमुद्गरपाणयः
दंष्ट्राकरालवदनाअंगारसदृशप्रभाः ३५
यूयंसर्वेमहावीरज्वलत्पावकलोचनाः
कृतातथापियुष्माकमियंकेनापिदुर्गतिः ३६
यमदूताऊचुः -
यमदूतावयंसर्वेयमाज्ञाहारिणःसदा
सदंडोऽयद्विजास्माकंसुमहान्कदनोदयः ३७
धर्मस्वउवाच-
अकस्मादागतायूयंमहाबलपराक्रमाः
एतावतइयंकेनकथंवादुर्गतिः कृता ३८
यमदूताऊचुः-
भयंमुंचद्विजश्रेष्ठवृत्तांतंसकलंशृणु
यथास्माकमिदंदुःखंबभूवात्यंतदुःसहम् ३९
योऽसौवृषेणशृङ्गाभ्यांकालकल्पोविदारितः
तंनेतुंधर्मराजेनप्रेरिताः किंकरावयम् ४०
तेनाज्ञप्तावयंसर्वेसमस्तायुधपाणयः
बद्धवातंपापिनाश्रेष्ठंनेतुमिहसमागताः ४१
अथासौप्राप्तकालश्चकालकल्पोदुराशयः
बृषेणहेतुभूतेनविषाणाभ्यांविदारितः ४२
सदयेनतथातत्रगङ्गापानीयसीकरैः
सिक्तः पातकिनांश्रेष्ठोगङ्गानामानिजल्पता ४३
गङ्गाम्भःकणिकासेकैर्गतकल्मषमप्यमुम्
बद्धवापाशैर्दृढंनेतुमुद्यमंप्रतिचक्रिरे ४४
नेतुंतमपिदेवेशः शरणागतपालकः
स्वदूतान्प्रेषयामासमहाबलपराक्रमान् ४५
केऽपिदूताः समागत्यततोनारायणाज्ञया
सकोपाःप्राहुरित्यस्मान्पथिब्राह्मणसत्तम ४६

विष्णुदूताऊचुः
केभवंतोमहात्मानः कथमेनंमहाशयम्
बद्धवानयथपाशेनयूयंवाकस्यकिंकराः ४७
विहायैनंमहात्मानंपलायध्वंयथासुखम्
नचेच्छिरांसियुष्माकंछेत्स्यामश्चक्रधारया ४८
तेषामेतानिवाक्यानिगर्वितानिद्विजोत्तम
संश्रुत्याच्युतदूतानांतेऽस्माभिरतिजल्पिताः ४९
दण्डपाणेर्वयंदूताः सर्वेप्राणाधिपस्यवै
नीत्वैनंपापिनांश्रेष्ठंप्रयामः शमनालयम् ५०
यूयंसर्वेमहात्मानस्तुलसीमाल्यभूषिताः
स्फुटपद्मपलाशाक्षाबलिनोगरुडध्वजाः ५१
दिव्यांबरधरायूयंमयूरगलसुंदराः
शंखचक्रगदापद्मधारणाश्चचतुर्भुजाः ५२
केयूयमीदृशाः सर्वेसर्वलक्षणसंयुताः
इमंपातकिनांश्रेष्ठंकथंवानेतुमिच्छथ ५३
विष्णुदूताऊचुः-
वयंसर्वेविष्णुदूताःपुण्यात्मानमिमंनरम्
नेतुमत्रसमायातावैकुंठंप्रतिसंप्रति ५४
इमंश्रीभगवद्भक्तंस्वजनंगतकल्मषम्
मुंचताशुयमप्रेष्यायदिजीवितुमिच्छथ ५५
भूयस्तेषामिदंवाक्यं श्रुत्वासर्वगतंद्विज
कोपाद्यदुक्तमस्माभिस्तदाकर्णयकथ्यते ५६
अयंपापीदुराचारोब्रह्महत्यासहस्रकृत्
कृतघ्नश्चैवगोघ्नश्चमित्रघ्नश्चदुराशयः ५७
मेरुप्रमाणहेमानिहृतानिसुबहूनिच
परदाराहृतानित्यमनेनातिदुरात्मना ५८
कोटिकोटिसहस्राणिजंतूनांविष्णुकिंकराः
कृताश्चबहुधाहत्याः स्त्रीहत्याचतथैवच ५९
अयंन्यासापहरणंस्वमातृगमनंतथा
गोमांसभक्षणंचैवचकारप्रतिवासरम् ६०

परहिंसाकृतानेनदाहश्चपरवेश्मनः
सभायांपरनिंदाचविधवागर्भपातनम् ६१
गृहमायांतमतिथिंधनलोभेनसत्तम
अहनन्निशितैःखड्गैर्निशायांयवनोपमः ६२
एतान्यन्यानिपापानिमहान्त्यगणितानिच
चकारनीचोमूढोऽसौनाल्पमात्रंशुभावहम् ६३
तस्मादयंमहापापीनीयतेयातनागृहम्
ज्ञेयाहिपापिनोदंड्याधर्मराजस्यसत्तमाः ६४
यूयंवैदेवदेवस्यदूताभगवतोयदि
तदाकथमिमंनेतुंपापिनांश्रेष्ठमिच्छथ ६५
विष्णुदूताऊचुः
भवद्भिःसत्यमेवोक्तंकोऽपिनास्त्यत्रसंशयः
दण्ड्याःपातकिनः सर्वेजीविताधिपतेः सदा ६६
अयंपापविनिर्मुक्तोगङ्गाशीकरसेचनात्
तस्मादेनंवयंसर्वेनेष्यामोहरिमंदिरम् ६७
तावत्तिष्ठंतिदेहेषुपातकानिशरीरिणाम्
गङ्गाम्भःशीकराया वन्नस्पृशंतिसुदुर्ल्लभम् ६८
चंद्रैककलयासर्वंतिमिरंहन्यतेयथा
गङ्गाम्भःशीकरेणापिपातकंहन्यतेतथा ६९
गंगानामानिसंस्मृत्यपापीमुच्येतपातकात्
साक्षात्तत्सलिलंदृष्ट्वामुच्यतेऽत्रकिमद्भुतम् ७०
शीतमप्युदकंगाङ्गंवह्निवत्पापकानने
यथाग्निवत्पद्मवनेशीतंतोयंचदाहकृत् ७१
तस्मादयंपुण्यकर्माद्वितीयइवकेशवः
गच्छध्वंशमनप्रेष्यायदिकल्याणमिच्छत ७२
तेषांकेशवदूतानांश्रुत्वास्माभिरिदंवचः
भूयएवनिरुक्तंयद्विहस्योच्चैः शृणुष्वतत् ७३
अहोचित्रमहोचित्रमयंकल्मषमंदिरः
गङ्गाम्भःसेचनादेवविमुक्तः सर्वपातकैः ७४
स्वहस्तोपार्जितंकर्मशुभंवायदिवाशुभम्

नाभुक्त्वामुच्यतेमर्त्यःकल्पकोटिशतैरपि ७५
यमाज्ञयानेतुमिमंवयंसर्वेसमागताः
कस्यायंवचसास्माभिस्त्यज्यतेपापिनांवरः ७६
विष्णुदूताऊचुः
यूयंपापधियोनूनंविवेकपरिवर्जिताः
युष्माभिर्जह्नुकन्यायानज्ञायंतेयतोगुणाः ७७
कार्यंवेदेनिषिद्धंयत्तत्पातकमितिस्मृतम्
यद्वेदसंमतंकार्यंतदेवधर्म्यमुच्यते ७८
देवोनारायणः साक्षात्स्वयंभूरितिशुश्रुम
यथाविष्णुस्तथागंगागंगैवसर्वपापहा ७९
अशुभंवाशुभंकर्मस्वहस्तरचितंहरिः
हरौप्रसन्नेपापानिकुत्रतिष्ठंतिदेहिनाम् ८०
जन्मान्तरार्जितैः पापैर्गतायूयमिमांगतिम्
अद्यापिपापकर्माणः किमर्थंपापमिच्छथ ८१
गङ्गानिन्दाकरायूयंविष्णुनिंदाकरास्तथा
अतोयुष्मान्हनिष्यामः पापिनश्चक्रधारया ८२
इत्युक्त्वाविष्णुदूतास्तेकोपादरुणलोचनाः
चक्रिरेसमरारंभमस्माभिःसहसत्तम ८३
जीवेशदूताहन्यंतामितिप्रोचुश्चतेरुषा
भूयोभूयोवदंतोऽस्मान्निजघ्नुश्चक्रधारया ८४
इत्युक्त्वाविष्णुदूतास्तेसंग्रामेत्यंतदारुणाः
सर्वेशंखान्समादध्मुः सहसाहृष्टमानसाः ८५
ततोऽस्माकंसिंहनाद् पयोदस्तनितैरिव
कोदंडानांचविस्तारैर्व्याप्तंविप्रजगत्त्रयम् ८६
अथवृक्षैःशिलाभिश्चतथापर्वतवृष्टिभिः
अस्माभिर्विष्णुदूतास्तेबाणैश्चविदलीकृताः ८७
ऋष्टिभिर्भिंदिपालैश्चबाणैश्चपरिघैस्तथा
कुठारैश्छुरिकाभिश्चदंडैश्चशंकुभिस्तथा ८८
खड्गैश्चशक्तिभिश्चैवनिशितैश्चशिलीमुखैः
गदाभिश्चक्रधाराभिर्नाराचैश्चसुभीषणैः ८९

एतैरन्यैश्चविषमैरस्त्रैस्तेविष्णुकिंकराः
निजघ्नुर्बहुधाकोपाद्वज्रकल्पैर्महार्णवे ९०
तदास्त्रजर्जराः सर्वेवयंभीत्यापलायिताः
निपेतुःकेऽपिसंग्रामेगतप्राणाः सहस्रशः ९१
ततोऽस्मास्तेसमालोक्य पलायनपरायणान्
मुदाकंबून्समादध्मुर्बलिनोविष्णुकिंकराः ९२
अथच्छित्त्वाद्विजश्रेष्ठकालकल्पस्यबंधनम्
विमानेतंसमारोप्यजग्मुर्भगवतः पुरम् ९३
गङ्गाशीकरसेकस्यप्रभावेनैवसत्तम
जगामहरिसालोक्यंकालकल्पोऽतिपातकी ९४
स्थित्वाकल्पशतंतत्रभुक्त्वा भोगान्मनोहरान्
ज्ञानमासाद्यतत्रैवपरमंमोक्षमाप्तवान् ९५
गङ्गाप्रभावैरस्माकमेतद्दुःखंगतंप्रभो
गच्छब्राह्मणभद्रंतेसुप्रीतोनिजमंदिरम् ९६
इत्युक्त्वायमदूतास्तेययुर्यमपुरंद्विज
भूयएवसधर्मस्वः प्रीतोगङ्गातटंययौ ९७
गंगायांस्नानमाचर्यसर्वलोकस्यमातरि
बद्धाञ्जलि सविप्रस्तांतुष्टावपरमेश्वरीम् ९८
धर्मस्वउवाच-
गंगेसमस्तजगदंबचलत्तरंगेऽनगादिचारुतरमस्तकपुष्पमाले
कंसारिचारुचरणद्वयरेणुहन्त्रिभक्त्यानमामिदुरितक्षयकारिणींत्वाम् ९९
मातः समस्तसुखदेप्रवरेनदीनांव्यासादिविप्रचयगीतगणेगुणाढ्ये
संसारभैरवमहार्णवमध्यनौकेवंदेतवांघ्रियुगलंदुरितापहारि १००
यस्यास्तवाबुकणिकामपिजह्नुकन्येसौदासनामनृपतिर्द्विजकोटिहत्याम्
संप्राप्यमुक्तिमगमत्त्रिसुरैरलभ्यांतांत्वांनमामिशिरसावरदेप्रसीद १०१
नारायणाच्युतजनार्द्दनकृष्णरामगङ्गादिनामगदतोममदेविमातः
संसारपातकनिवारिणिदेहपातस्त्वद्वारिणीहभवतुत्वदनुग्रहेण २
किंवातपोभिरखिलेश्वरिकिंजपैर्वादानैश्चकिंतुरगमेद्युमखैश्चकिंवा
त्वन्नीरशीकरमवाप्यसुरैरलभ्यांमुक्तिंव्रजंतिमनुजाअतिपापिनोऽपि ३
स्वाहात्वमेवपरमेश्वरियास्वधात्वंगीर्वाणवृंदपितृलोकसुतृप्तिहेतोः

सत्वंरजस्तमइतित्रिगुणस्वरूपांसृष्टिस्थितिप्रलयकारिणिनौमितांत्वाम् ४
धत्तेललाटफलकेतवसैकतंयः पुण्ड्रंचदेवितवतीरमृदासदैवम्
त्वन्नामसर्वरसधामवदेच्चभक्त्यात्वत्पादरेणुरखिलोस्तुममैवमूर्ध्नि ५
त्वद्रोधसित्रिपथगेवसतिंविधायपीत्वाचवारितवपातकनाशकारि
स्मृत्वाचनामतववीचिरसंचदृष्ट्वासंसारबंधनहरेमम जातुजन्म ६
नाकंशुभेसुमहदुल्लसितामनुष्याःकुर्वंतिभीतिरतिदुर्गमवर्त्ममत्वा
व्यर्थैवसाकिलयतोऽमृतदेत्वदीयंसोपानभूतमुदकंत्रिदिवप्रयाणे ७
पापानिरोगनिकराश्चशरीरदेहेतिष्ठंतितावदखिलेश्वरिभुक्तिदात्रि
कुर्वंतियावदमलेषुतवोदकेषुस्नानंनहित्रिपथगेसरितांप्रधाने ८
यस्यास्तवाच्युतविरंचिशिवादयोऽपिशक्रादिदेवनिकराव्रजितुंमहिम्नाम्
पारंपरेपरममोक्षपदप्रदात्रींतांत्वांवदंतितटिनीमितिकेऽपिमोहात् ९
गङ्गेसमस्तसुखदायिनिकिंचिदेवजानातितेपशुपतिर्भगवान्महत्त्वम्
यस्मादसौसुमनसांप्रवरोऽतिभक्त्याधत्तेसदैवशिरसाजगदीश्वरींत्वाम् ११०
गंगेदेविजगन्मातः प्रसीदपरमेश्वरि
परिपाहिनमस्तुभ्यंरक्षमांसेवकंस्वकम् ११
परब्रह्मस्वरूपांत्वांसर्वलोकैकमातरम्
शक्नोमिकिमहंस्तोतुंभ्रांतचित्तोऽत्रमोक्षदे १२
व्यासउवाच-
इतिस्तुताजगद्धात्रीतेनविप्रेणधीमता
आविर्बभूवसहसागङ्गामूर्तिमतीद्विज १३
ददर्शपुरतोगङ्गांद्विभुजांमकरासनाम्
कुन्देन्दुशङ्खधवलांसर्वालङ्कारभूषिताम् १४
तांदृष्ट्वापुरतोगङ्गांगङ्गागङ्गेतिकीर्तयन्
ववंदेचरणौतस्याः शिरसालिङ्ग्यमेदिनीम् १५
मोहयंतीस्मितालोकैःसुप्रीतापरमेश्वरी
तमुवाचततोविप्रवरंवृणिवतिजैमिने १६
धर्मस्वउवाच-
मातस्त्वत्सलिलस्पर्शाद्ब्रह्महापिचमोक्षभाक्
मयात्वंदृश्यतेसाक्षात्साध्यंकिमपरंमम ११७
तथाप्येकंवरंयाचेत्वन्नीरेपरमेश्वरि

मृत्युर्भवतुमेदेवित्वन्नामस्मरतोमम ११८
मयाकृतेनस्तोत्रेणयस्त्वांस्तौतिसदेश्वरि
सोऽपिभुक्त्वाखिलान्कामानंतेयास्यतिसद्गतिम् ११९
गङ्गोवाच-
अनयाभवतोभक्त्यासंतुष्टास्मिद्विजोत्तम
शीघ्रंतेकुशलंसर्वंभविष्यतिनसंशयः १२०
त्वयाकृतमिदंस्तोत्रंत्रिसंध्यंयःपठेन्नरः
तस्याहमपिसंतुष्टादास्यामिमुक्तिमुत्तमाम् १२१
व्यासउवाच-
इतिदत्वावरंतस्मैसादेवीभक्तवत्सला
धर्मस्वनाम्नेविप्रेन्द्रतत्रैवांतरधीयत १२२
सचविप्रोवरंप्राप्यकृतकृत्यइवाभवत्
गङ्गारोधसितत्रैवतस्थौविप्रमनोरमे १२३
ततः कालेनमहताविमलेजाह्नवीजले
सुखमृत्युंसमासाद्यजगामपदमुत्तमम् १२४
कालकल्पोऽपिपापात्मासिक्तोगङ्गाम्बुशीकरैः
प्राप्तवानुत्तमंमोक्षमन्येषांकाकथाद्विज १२५
अनिच्छयापिगाङ्गेयंजलंस्पृष्ट्वाफलान्वितम्
स्पृशतांभक्तिभावेनकिंभवेन्नहिवेद्मितत् १२६
गङ्गासमंनास्तितीर्थंभूयोभूयोमयोच्यते
यदम्बुकणिकांस्पृष्ट्वापरमंधामलभ्यते १२७
येभक्तिभावेनसरिद्वरायाः स्पृशंतियेंऽभकणिकामपीह
तेयांतिनूनंपदमच्युतस्यपापैर्विमुक्ताः सकलैर्महोग्रैः १२८
इति श्रीपद्मपुराणेक्रियायोगसारेगङ्गाशीकरमाहात्म्येसप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

व्यासउवाच-
पुनर्वक्ष्यामिविप्रेन्द्रगङ्गामाहात्म्यमुत्तमम्
गङ्गाकथासुधापानंकुरुमुक्तिंयदीच्छसि १
दानंदत्तंतेनसर्वंतेनसर्वेमखाःकृताः

तेनप्रपूजितोविष्णुर्यद्भक्तिर्भीष्ममातरि २
गङ्गायांधर्मकर्माणिक्रियंतेयानिकानिच
अक्षयानिभवंत्यस्यतानिसर्वाणिजैमिने ३
वहंतंजलमालोक्यगाङ्गेयानिजलानियः
भक्त्यागच्छेत्समुत्थायसोऽश्वमेधसहस्रकृत् ४
गङ्गाजलेष्वागतेषुयोनोतिष्ठतिभक्तितः
पशुताशाश्वतीतस्यजन्मजन्मनिजैमिने ५
गाङ्गेयंजलमासाद्ययोनगृह्णातिभक्तितः
जन्मकोटयर्जितंपुण्यंक्षणादेवतुनश्यति ६
गङ्गातीरंजिगमिषुंयस्तुवारयतेद्विज
सकोटिकुलसंयुक्तोरौरवंनरकंब्रजेत् ७
मूत्रंवाथपुरीषंवागंगातीरेकरोतियः
नदृष्टानिष्कृतिस्तस्यकल्पकोटिशतैरपि ८
श्लेष्माणंवापिनिष्ठीवंदूषिकांवाश्रुवामलम्
गंगातीरेत्यजेद्यस्तुसनूनंनारकीभवेत् ९
उच्छिष्टंकफकंचैवगङ्गागर्भेचयस्त्यजेत्
सयातिनरकंघोरंब्रह्महत्यांचविंदति १०
गङ्गारोधसियः पापंकुरुतेमूढधीर्नरः
तदक्षयभवेन्नूनंनान्यतीर्थेषुशाम्यति ११
अन्यतीर्थेकृतंपापंगङ्गायांचविनश्यति
गङ्गायांयत्कृतंपापंतत्कुत्रापिनशाम्यते १२
तस्मात्पापंनकर्तव्यंगङ्गायांशास्त्रकोविदैः
कर्मणामनसावाचाकर्तव्योधर्मसंग्रहः १३
नतेदेशानतेशैलानचतानिवनानिच
पापविध्वंसिनीयत्रनतिष्ठेत्सुरनिम्नगा १४
गङ्गातीरंपरित्यज्यमुहूर्तमपिजैमिने
नचस्थातव्यमन्यत्रयदिकार्यशतान्यपि १५
भिक्षान्नमपिभुक्त्वाचस्थातव्यंजाह्नवीतटे
नचान्यत्रक्षणमपिप्राप्यभूपालतामपि १६
संत्यज्यदेहंगङ्गायांब्रह्महापि विमुच्यते

अन्यत्रमुक्तयेनस्यादश्वमेधसहस्रकृत् १७
गङ्गातीरेवसन्यस्तुहरिपूजापरोभवेत्
जन्मजन्मांतरेयेनकदाचिन्नार्चितोहरिः १८
भक्तिर्भवतिनैतस्यगङ्गायांलोकमातरि
श्रूयतांमानवाः सर्वेभूयोभूयोब्रमीम्यहम् १९
स्नानंविधायगङ्गायांगम्यतांपरमंपदम्
मृत्युकालेभजेद्यस्तुगङ्गागङ्गेतिमानवः २०
विमुक्तःपातकैः सर्वैर्दिविदेवयुगायुतम्
यस्यगङ्गाकथारम्भोमृत्युकालेभवेद्विज २१
सगच्छेद्विष्णुभवनंगलिताखिलकल्मषः
यस्तुस्मरतिवैप्राज्ञोमृत्युकालेद्विजोत्तम २२
गङ्गेतिमुक्तिदंनामतस्यतुष्टोभवेद्धरिः
मृत्युकालेभवेद्यस्तुगङ्गामृत्पुण्ड्रमुत्तमम् २३
गङ्गास्नायिनमालोक्यत्यजेद्यस्तुकलेवरम्
श्मशानेऽपिद्विजश्रेष्ठसगङ्गामरणंलभेत् २४
तिष्ठत्यस्थीनिगङ्गायांयावत्कालंशरीरिणः
तावत्कल्पसहस्राणिविष्णुलोकेमहीयते २५
यस्यमज्जन्तिगङ्गायांभस्मास्थीनिनखानिच
शिरोरुहाण्यपिप्राज्ञः सविष्णोर्भुवनंवसेत् २६
स्थितेष्वस्थिषुगङ्गायांयत्कर्मलभतेनरः
ब्रवीमितत्फलंसर्वंशृणुनान्यमनाद्विज २७
एकदाभगवाञ्छक्रोनानालंकारभूषितः
क्रीडागृहंययौकामीयुवत्यापद्मगंधया २८
पद्मगंधारसज्ञासासंप्राप्तनवयौवना
नानारसप्रदानेनचकारसुरसंप्रति २९
सपत्न्याःस्वर्णपर्यंकेतस्याः शिशुमृगीदृशः
प्रीतःपादतले जिष्णुरुवासस्मरमोहितः ३०
अथतस्यैस्वयंशक्रोनिर्मायस्वर्णवीटिकाम्
ददातिपरमप्रीतस्तद्गुणाकृष्टमानसः ३१
एतस्मिन्नेवकालेतुपौलोमीवरसुन्दरी

भूषणैर्भूषिता सर्वैःस्वयंतद्गृहमाययौ ३२
दृष्ट्वातथाविधंशक्रंसर्वदेवाधिपंप्रभुम्
भृशंचुकोपपौलोमीप्राहेतिचसुलक्षणा ३३
शच्युवाच-
देवकिंकुरुषेकांतत्वंसमस्तसुराधिप
ममदासीस्वरूपायैददासिस्वर्णवीटिकाम् ३४
स्पृशंतित्रिदशाः सर्वेशिरसाचरणौतव
त्वंकथंपद्मगन्धायादास्याः पादतलेप्रभोः ३५
याचितश्चसुगन्धित्वाद्भृंगःस्यानचतद्यशः
सुंदरीकोटिभर्त्तात्वंसमस्तरसवित्प्रभो ३६
कथमेवंविधंकर्मकरोष्यत्यंतकुत्सितम्
निर्गुणेपद्मगन्धेहेदासिदूरंपरिव्रज ३७
त्वमीश्वरीचपर्यंकेशक्रः पादतलेतव
व्यासउवाच-
तयानिर्भर्त्सितासाध्वीपौलोम्याबहुधाततः ३८
उवाचपद्मगन्धासाक्रोधादितिवरांगना
पद्मगंधोवाच-
गुणंचममदोषंचस्वयंस्वाम्येववेत्तिवै ३९
केनाधिकारेणागत्यत्वंमांनिंदसिनिर्गुणे
अन्येनेत्रद्वयेनापिपश्यंतिगुणदोषकौ ४०
सहस्रनेत्रैरप्येषनपश्येत्किंदुराशये
यथादोषोहिलोकानांप्रचरेन्नगुणंतथा ४१
आदौकलंकश्चन्द्रस्यदृश्यतेगुणवज्जनैः
अनर्थभाषिणीक्रूराकुमूर्त्तिर्गुणवर्जिता ४२
यदाहंनास्मिगुणिनीभजतुत्वांतदापतिः
व्यास उवाच-
इत्युक्त्वापद्मगंधासाक्रोधात्कोकनदेक्षणा ४३
उत्तस्थौस्वर्णपर्यङ्कात्कुर्वंतीकरुणंमहत्
इन्द्रउवाच-
प्रियेप्राणेश्वरिश्रेष्ठेमांविहायक्वगच्छसि ४४

मयाकिमपराद्धंतेममतद्वदसुंदरि
कांतेदासोऽस्म्यहंनूनंदासकर्मकरोमिते ४५
दासपत्नीभवेद्दासीवाक्यंत्वंनशृणोऽषिकम्
समुत्थायततः शक्रस्तन्मोहाकुलमानसः ४६
अंकेनिवेशयामासभूयस्तांवरसुंदरीम्
शच्युवाच-
क्रौंचित्वज्जीवनंधन्यंव्यर्थंमज्जीवनंध्रुवम् ४७
त्वंस्वामिसुभगानित्यंदुर्भगाहंबरांगना
यावत्पुण्यक्षयंक्रौंचितत्पुण्यंयास्यतेक्षयम् ४८
क्रौंचवंशसमुत्पन्नादुःखंभूयोऽपिभोक्ष्यसि
देवेन्द्रेणसमंतावत्कुरुकेलियथासुखम् ४९
कियद्भिर्दिवसैः क्रौंचिनभवेत्तवनिर्गुणे
अत्यद्भुतंवचस्तस्याःपद्मगन्धानिशम्यसा ५०
द्वन्द्वभावंपरित्यज्यप्रणम्योवाचतांसतीम्
पद्मगंधोवाच-
पुलोमजेवरारोहेचित्रमेतत्त्वयोदितम् ५१
क्रौंचीकथमहंब्रूहिश्रोतुमिच्छामि यत्नतः
काहंकुत्रस्थिताचापिकथमत्रागतासती ५२
कालैःकियद्भिर्मत्पुण्यंक्षीणत्वंप्रतियास्यति
शच्युवाच-
पद्मगन्धेपुरात्वंहि क्रौंचीपक्षिसमुद्भवा ५३
अमेध्यमामिषंकीटान्भक्षयंतीक्षितौस्थिता
न्यग्रोधतरुरेकोऽस्तिगङ्गातीरेमनोरमे ५४
तत्रनीडंविनिर्मायभवत्यावसतिः कृता
एकदाकृष्णसर्पेणतस्मिन्न्यग्रोधपादपे ५५
नीडंप्रविश्यदष्टात्वंसहसापंचतांगता
क्रव्याणितवसर्वाणिससर्पोभक्षयत्क्रुधा ५६
स्थितानितत्रैवास्थीनिनिर्मांसानिवरानने
कदाचित्पवनैर्भग्नैमहद्भिः सचपातितः ५७
भग्नः पपातगङ्गायांसमूलोऽपिवरांगने

गङ्गायांपतितेतस्मिन्न्यग्रोधेधरणीरुहे ५८
गङ्गाजलैःप्लावितानितान्यस्थीनितवोत्तमे
यावदस्थीनिगङ्गायांतावत्तिष्ठंतितानिच ५९
तावत्त्वंस्वामिसुभगाभविष्यसिसदैबहि
इतितेकथितंसर्वंपद्मगंधेमयाधुना ६०
येनपुण्यप्रभावेणशक्रोऽपिवशगस्तव
धन्यातुजाह्नवीदेवीक्रौंचीयस्याः प्रसादतः ६१
त्वमस्पृश्यासिचाण्डालैरंक्स्वपिषिवज्रिणः
तेनापमानितासाध्वीशक्रेणापिपुलोमजा ६२
परिम्लानमुखांभोजासाजगामयथागता
शक्रांकएवसातस्थौपद्मगन्धावरांगना ६३
तद्वाक्यंहृदयेतस्याजागरूकमिवस्थितम्
अथैकदासुराधीशः सुप्रीतस्तद्गुणैर्द्विज ६४
वरंवरयसुश्रोणिस्वयंतामित्युवाचह
पद्मगंधोवाच
त्वंसर्वदेवताधीशोनारीकोटिपतिस्थता ६५
तथाप्यसिममाधीनः स्वामिन्किमपरैर्वरैः
तथापित्वंवरंदित्सुर्यदानूनंसुरोत्तम ६६
कर्मणामनसावाचाप्रतिज्ञांकुरुमत्पुरः
इंद्रउवाच-
जीवितंचधनंचैवराज्यंचैवपरिच्छदम् ६७
आज्ञापयकिमेतद्वैतुभ्यंदास्यामिसुंदरि
सत्यंसत्यंपुनः सत्यंसंदेहोनात्रविद्यते ६८
यदीच्छसिमृगीनेत्रेतत्तेदास्याम्यहंध्रुवम्
पद्मगंधोवाच-
नूनमेवप्रसन्नोऽसियदित्वंत्रिदशेश्वर ६९
जन्ममेहस्तियोनौचभूयोदेहीतिमेवरम्
इंद्रउवाच-
कृतप्रतिज्ञःसुश्रोणिवरंतेऽहददामिवै ७०
किंतुदुःखानियातानिबहूनिहृदयेमम

त्वामदृष्ट्वावरारोहेप्रीतिर्नप्राप्यतेत्त्क्षणम् ७१
कथंतेचिरविच्छेदंसोढुंशक्नोमिदुःसहम्
यदामय्यनुकंपास्तितवपीनपयोधरे ७२
तदाकियद्दिनंतिष्ठमयासहवराङ्गने
ततोदेवाधिराजस्यवदंतीबहुसंपदम् ७३
वर्षाणामयुतंतस्थौसादेवनिलयेसती
पद्मगन्धोवाच-
आज्ञांदेहिसुराधीशसाधितुंसुमनोरथम् ७४
व्रजाम्यहंकर्मभूमिंवंदेपादद्वयंतव
इन्द्रउवाच-
त्वत्प्रेमसिंधुमानेनमयाचन्द्रनिभानने ७५
स्थित्वाकतिदिनंपश्चाद्गमिष्यसियथासुखम्
ततस्तुकौतुकागारेतेनसार्द्धमहर्निशम् ७६
क्रीडंतीपद्मगंधासातस्थौवर्षायुतत्रयम्
सुराधीशंततःसेतितदाप्राहमुदान्विता ७७
आदेशंकुरुगच्छामिपृथिवींप्रतिसंप्रति
इंद्रउवाच-
जाडयंजहीहिसुश्रोणितिष्ठात्रैवमयासह ७८
त्वांत्यक्तुंनहिशक्नोमिप्राणेभ्योऽपिगरीयसीम्
पद्मगन्धोवाच-
पुण्यक्षयेसुराधीशयदायास्याम्यहंभुवि ७९
तदाचिरंतेविच्छेदोभविष्यतिमयासह
यद्विच्छेदेमयानाथपुनर्गंतुंभुवंप्रति ८०
इच्छाम्यहंपुनर्द्यौश्चपुण्योपार्जनहेतवे
कर्मभूमिमहंगत्वायेनोपायेनवासव ८१
तत्करिष्यामिविच्छेदः कदाचित्स्यात्त्वयानमे
इन्द्रउवाच-
भद्रेत्वयायदानूनंकर्मेदंकर्तुमिच्छितम् ८२
तदागच्छपुनः शीघ्रमागमिष्यसिसुंदरि
सहनेत्राद्धिविगलद्वाष्पसिक्ततनुस्ततः ८३

दोर्भ्यामालिङ्गयतांशक्रोगच्छेत्याहप्रियेवदन्
तदादेशात्ततःसाध्वीकर्मभूमिंसमागता ८४
जाताचहस्तिनीयोनौभूत्वाजातिस्मराद्विज
स्मरंतीनिजवृत्तांतंसाकियद्भिर्दिनैस्ततः ८५
जगामजाह्नवीतीरंहस्तियोनिसुसंभवा
गङ्गायांस्नानमासाद्यगङ्गाकर्दमभूषिता ८६
गंगागंगेतिजल्पंतीह्लदंनिम्नंविवेशसा
तस्मिन्गंगाह्लदेगत्वाहस्तिनीपर्वताकृतिः ८७
निजांजातिंस्मरंतीसाजगामपंचतांपुनः
तस्याःसाहसमालोक्यहस्तिनींसर्वदेवताः ८८
ववर्षुःपारिजाताद्यैः कुसुमैरुत्तमैर्मुदा
तामानेतुंततःशक्रः सर्वदेवगणैर्वृतः ८९
वेगात्तच्चिरविच्छेदात्कृष्णांगींसुमनाययौ
पुष्पकेतांसमालोक्यदिव्यदेहांसुराधिपः ९०
कथयन्निजदुःखानिनिजावासंजगामह
पुलोमजाचरंभाचप्रम्लोचाचोर्वशीतथा ९१
सुंदर्योऽन्याश्चयुवतीस्तस्यास्त्यक्त्वामुदागताः
शक्रस्यहृदयोत्साहंतन्वंतीसावरांगना ९२
पुरंदरपुरेतस्थौसुभगाप्रीतिवल्लभा
यस्यास्तिष्ठंतिगङ्गायांयावदस्थीनिजैमिने ९३
कुलकोटिशतंतावत्तस्थावाससुरालये
राजानोदिविराज्येषुयेयेभूतास्तपोबलात् ९४
तेषांतेषांस्नेहभूमिर्भवत्यमरसुंदरी
गंगास्थिमज्जनादेवजैमिनेफलमीदृशम् ९५
गंगायांत्यजतोदेहंफलंवक्तुंनशक्यते
मृतंशरीरंगंगायांयावदस्थीनिजैमिने ९६
कल्पकोटिशतंतावत्तस्यावासःसुरालये
मृतंशरीरंगंगायांस्रोतोभिश्चलितंद्विज ९७
दृश्यतेदेहिनस्तस्यतत्फलंशृणुजैमिने
स्वर्गेदेवांगनात्रस्तचारुचामरवायुभिः ९८

वीजितः स्वर्णपर्यंकेसुप्तस्तिष्ठतिकौतुकी
जाह्नवीसैकतेयस्यशरीरंदृश्यतेमृतम् ९९
दिवाकरर्कस्तप्तंकुलंतस्यवदाम्यहम्
सुगन्धैश्चंदनैर्दिव्यैर्लिप्तसर्वकलेवरः १००
दिव्याङ्गनाभिः सहितोदिविक्रीडतिसर्वदा
काकैर्गृध्रैश्चकंकैश्चशकुंतैर्भीष्ममातरि १०१
वपुर्विदलितंयस्यदृश्यतेतत्फलंशृणु
दिविदिव्यांगनापीनप्रोत्तुङ्गरुचिरस्तनैः १०२
श्लिष्टवत्ताश्चपर्यंकेनिद्रातिनित्यमेवसः
पिपीलिकाभिः कीटैश्चमत्तिकाभिश्चवेष्टितः १०३
गंगायांयस्यदृश्यंतेअस्थीनिपतितानिच
तस्यात्तयंफलंविप्रवदतोमेनिशामय १०४
प्रणमत्त्रिदशव्यूहशिरोमुकुटभूषणैः
हतपादरजाःस्वर्गेसचशक्रायतेचिरम् १०५
अनिच्छयापिगङ्गायांयद्देहपतनंभवेत्
सविमुक्तोऽखिलैःपापैर्नरोनारायणोभवेत् १०६
यस्यांगाराश्चदृश्यंतेगङ्गायांचलिताजलैः
अङ्गारसङ्ख्ययास्वर्गेतिष्ठेत्कल्पशताधिकम् १०७
सर्वेषामेवपुण्यानांकदाचित्तयमीत्तते
गङ्गायांपतितेदेहेभवेत्पुण्यत्तयोनहि १०८
बहुनात्रकिमुक्तेननिश्चितंकथ्यतेऽधुना
गङ्गायांत्यक्तदेहस्यमहिमाज्ञायतेनहि १०९
विषमदुरितराशीनाशिगाङ्गनरोयः स्पृशतिभुविकदाचिद्भावुकोभक्तिभावैः
जगदुदधिजलंविलंघ्यघोरंव्रजतिसपारमपारतुष्टिनावा ११०
इति श्रीपद्मपुराणेक्रियायोगसारेगङ्गामाहात्म्येऽष्टमोऽध्यायः ८

## नवमोऽध्यायः

जैमिनिरुवाच–
भूयएवगुरोब्रूहिगङ्गामाहात्म्यमुत्तमम्
गङ्गाकथामृतंपातुंमाधुर्यात्पुनरिष्यते १

व्यासउवाच-
तदप्यहंब्रवीमित्वांगङ्गाभक्तोयतोभवान्
तौपादौसफलौनृणांजाह्नवीतटगामिनौ २
गङ्गाकल्लोलनिनदश्राविणौश्रवणौचतौ
साजिह्वयाचजानातिस्वादुभेदंतदंभसः ३
तेनेत्रेजाह्नवीचारुतरंगदर्शनेचते
तल्ललाटमितिप्रोक्तंगङ्गामृत्पुण्ड्रधारियत् ४
तौहस्तौजाह्नवीतीरेहरिपूजापरायणौ
शरीरंसफलंतच्चविमलेजाह्नवीजले ५
पतितंतद्द्विजश्रेष्ठचतुर्वर्गफलप्रदम्
स्वर्गस्थाःपितरःसर्वेगच्छंतोजाह्नवीतटे ६
संदृश्यहृष्टाःशंसंतिवदंतइतिजैमिने
तत्पुण्यंकृतमस्माभिः सद्गतिप्राप्तयेपुरा ७
भविष्यत्यक्षयंतच्चयतःपुत्रोऽयमीदृशः
अनेनगाङ्गैःसलिलैर्वयंसंप्रतितर्पिताः ८
यास्यामः परमंधामदुर्ल्लभंयत्सुरैरपि
गङ्गायांयानिद्रव्याणिदास्यत्यस्माकमात्मजः ९
अस्मभ्यंतानिसर्वाणिभविष्यंत्यक्षयाणिवै
नरकस्थाश्चपितरःसर्वदुःखसमन्विताः १०
वदंतीतिसुतंदृष्ट्वागच्छंतंजाह्नवीतटम्
कृतानियानिपापानिनरकक्लेशदानिवै ११
यास्यंतिसंक्षयंतानिपुत्रस्यापिप्रसादतः
विमुक्तानरकक्लेशैर्वयंसर्वेसुदुःसहैः १२
अथपुत्रप्रसादेनयास्यामः परमांगतिम्
यात्रांविधाययोमर्त्योगृहंमोहान्निवर्तते १३
निराशाः पितरस्तस्ययांतिसर्वेयथागताः
आमिषंमैथुनंचैवदोलामश्वंगजंतथा १४
उपानहंचाततपत्रंगंगायात्रासुवर्जयेत्
अध्वश्रमोद्भवंदुःखंदुष्करंनहिमन्यते १५
गृहेपद्मसुखंतत्रगङ्गास्नानेस्मरेन्नच

असत्यभाषणंचैवपाखंडसंगमेवच १६
द्विर्भोजनंचकलहंगंगायात्रासुवर्जयेत्
परनिंदांचलोभंचगर्वंचक्रोधमत्सरौ १७
अत्यंतहास्यशोकंचगंगायात्रासुवर्जयेत्
मंचसुप्तमिवात्मानं चिंतयेद्भूमिशायिनम् १८
गंगानामसुनामानिवदेद्गच्छञ्जनःपथि
माहात्म्यंजाह्नवीदेव्याःसर्वपापप्रणाशनम् १९
सुखदंमोक्षदंचैवकथयन्पथिगच्छति
गङ्गेदेविजगन्मातर्देहिसंदर्शनंमम २०
वचोभिःकोमलैरेभिःकुर्याच्छ्रमनिवारणम्
हाकथंसदनंत्यक्तमागतंवाकथंमया २१
श्रमैरितिवदेद्यस्तुसंपूर्णंतत्फलंनहि
क्वपर्यङ्कःक्वमेपत्नीक्वचमेचसुहृद्गृहम् २२
स्वपामिप्रांतरेभूमौकथंवाहंसमागतः
धनधान्यादिवस्तूनांकागतिर्वागृहेमम २३
कियद्भिर्दिवसैर्भूयोगमिष्याम्यहमालयम्
इतिचिंताकुलायेचपथिगच्छंतिमानवाः २४
गंगा स्नानफलंतेषांसंपूर्णंनभवेद्द्विज
गङ्गेगंतुंप्रतीतीरेयात्रेयंविहितातव २५
निर्विघ्नांसिद्धिमाप्नोमित्वत्प्रसादात्सरिद्वरे
इमंमंत्रंसमुच्चार्ययात्राकालेविशेषतः २६
हर्षितोनिलयाद्गच्छेद्वैष्णवैः सहजैमिने
नातिवेगेनगंतव्यंनतथाचशनैः शनैः २७
गङ्गायात्रासुकर्त्तव्यंनान्यत्कर्मविचक्षणैः
गंगातीरेप्रयागेतुवाणिज्यप्रमुखानिच २८
कार्याणिकुरुतेयस्तुतत्पुण्यार्द्धंविनश्यति
जन्मजन्मार्जितंपापंस्वल्पंवादिवाबहु २९
गंगादेवीप्रसादेनसर्वंमेयास्यतिक्षयम्
इत्युक्त्वापरमप्रीतः प्राज्ञोगङ्गातटंव्रजेत् ३०
दृष्ट्वाचमातरंगङ्गामिमंमंत्रमुदीरयेत्

अद्यमेसफलंजन्मजीवितंचसुजीवितम् ३१
साक्षाद्ब्रह्मस्वरूपांत्वामपश्यमितिचक्षुषा
देवित्वद्दर्शनादेवमहापातकिनोमम ३२
विनष्टमभवत्पापंजन्मकोटिसमुद्भवम्
इत्युक्त्वासकलंदेहंनिपात्यपृथिवीतले ३३
प्रणमेज्जाह्नवींदेवींभक्तिभावसमन्वितः
ततः स्रोतः समीपेचबद्धाञ्जलिरिमंपुनः ३४
पठेन्मंत्रंभक्तिभावैः सुप्रीतोद्विजसत्तम
गंगेदेविजगद्धात्रिपादाभ्यांसलिलंतव ३५
स्पृशामीत्यपराधंमेप्रसन्नाक्षंतुमर्हसि
स्वर्गारोहणसोपानंत्वदीयमुदकंशुभे ३६
अतःस्पृशामिपादाभ्यांगंगेदेविनमोनमः
ततस्तुमस्तकेधृत्वागांगेयंवारिभक्तितः ३७
स्नानार्थंप्रविशेत्स्रोतः प्राज्ञोगंगेतिकीर्तयन्
त्वत्कर्दमैरतिस्निग्धैःसर्वपापप्रणाशनैः ३८
मयासंलिप्यतेगात्रंमातर्मेहरपातकम्
गङ्गाकर्दमलिप्ताङ्गोगङ्गागङ्गेतिकीर्तयन् ३९
सर्वकल्मषनाशिन्यांगङ्गायांस्नानमाचरेत्
भूयःपूर्वोक्तमन्त्रेणगृहीत्वामृत्तिकांततः ४०
वक्ष्यमाणेनमन्त्रेणगृहीत्वामृत्तिकांपुनः
वक्ष्यमाणेनमंत्रेणभक्तितःस्नानमाचरेत् ४१
ब्रह्मस्वरूपेहेगङ्गेस्नानमाचर्यतेमया
त्वदीयेनिर्मलेतोयेयथोक्तफलदाभव ४२
ततोनिजेच्छयाविप्रगङ्गायांलोकमातरि
स्नानंसमाचरेत्प्राज्ञोगङ्गानारायणंस्मरन् ४३
एवंस्नात्वातुगङ्गायांगात्रंवस्त्रेणमार्जयेत्
परिधेयांबरांबूनिगङ्गास्रोतसिनत्यजेत् ४४
नदंतधावनंकुर्याद्गङ्गागर्भेविचक्षणः
कुर्याच्चेन्मोहतः पुण्यंनगङ्गास्नानजंलभेत् ४५
प्रभातेऽन्यत्रतांकृत्वादंतकाष्ठादिकक्रियाम्

रात्रिवासंपरित्यज्यगङ्गायांस्नानमाचरेत् ४६
बाह्यभूमिमगत्वायोगङ्गायांस्नानमाचरेत्
गङ्गास्नानफलंसोऽपिसंपूर्णंचलभेन्नहि ४७
स्नात्वाचगङ्गामृत्पुंड्रंस्थानेस्थानेनयेद्बुधः
ततः स्थिरमनाःकुर्याद्विधिनातर्पणाधिकम् ४८
गाङ्गेयैरुदकैर्यस्तुकुरुतेपितृतर्पणम्
पितरस्तस्यतृप्यंतिवर्षकोटिशतावधि ४९
गङ्गायांकुरुतेयस्तुपितृश्राद्धंद्विजोत्तम
पितरस्तस्यतिष्ठंतिसंतुष्टास्त्रिदशालयम् ५०
समाप्यस्नानकर्माणिगङ्गायांसमुपोषितः
दानंदेवार्चनंचैवजयोऽन्याश्चक्रियास्तथा
कृतास्तुयास्तुगङ्गायांक्षयस्तासांनविद्यते ५१
समाप्यस्नानकर्माणिगंगायांसमुपोषितः
कृतपंचमहायज्ञोगंगापूजांसमाचरेत् ५२
गंगायाःप्रतिमांदेव्याः श्रीविष्णोःप्रतिमांतथा
नालिकेरोदकैर्दिव्यैःस्नापयेद्भक्तितोबुधः ५३
जाह्नवीप्रतिमाभावान्नालिकेरोदकानिवै
निक्षिपेज्जाह्नवीतोयेजाह्नवींहृदिसंस्मरन् ५४
दिव्यैर्गंधैश्चदीपैश्चघृतपूर्णसमुज्ज्वलैः
धूपैःसुवासितैश्चैवनानापुष्पमनोहरैः ५५
नानाफलैःसुपक्वैश्चनैवेद्यैरुत्तमास्तथा
पाद्यार्घाचमनीयैश्चतांबूलैः खादिरान्वितैः ५६
अन्यैरप्युपहारैश्चविशिष्टैर्निजभक्तितः
स्तवैर्नानाचनैवेद्यैर्गङ्गांविष्णुंचपूजयेत् ५७
ततः संपूजितांदेवींविष्णुंचपरमेश्वरम्
अंगप्रदक्षिणांकुर्याद्भक्त्यावारत्रयंबुधः ५८
अथस्थित्वानिराहारोऽपरेहनिसरिद्वरे
भोक्ष्यामिजह्नुतनयेशरणंमेभवानघे ५९
एवंसंकल्प्यमतिमान्कर्मणामनसागिरा
रात्रौजागरणंकुर्याज्जितनिद्रोऽतिहर्षितः ६०

अशक्तयाचद्विजश्रेष्ठफलाहारोभवेदधः
अन्नमात्रंनभुंजीतनचकुर्याद्धिभोजनम् ६१
प्रातर्गङ्गांचविष्णुंचपुनरभ्यर्च्यजैमिने
विप्रायदक्षिणांदद्याद्विभवस्यानुरूपतः ६२
अर्चनंजागरंचैवयत्कृतंपुरतस्तव
अच्छिद्रमस्तुतत्सर्वंत्वत्प्रसादात्सरिद्वरे ६३
इत्युक्त्वातांनमस्कृत्यकृतनित्यक्रियोद्विजः
ततः सबंधुभिःसार्द्धंपारणांस्वयमाचरेत् ६४
तीर्थोपवासमेवंयः कुरुतेजाह्नवीतटे
तस्यपुण्यफलंवत्सवदतोमेनिशामय ६५
जन्मांतरार्जितैःपापैर्विमुक्तोविष्णुरूपधृक्
विष्णोःपुरंसमासाद्यविष्णुनासहमोदते ६६
कल्पकोटिसहस्राणिकल्पकोटिशतानिच
स्थित्वाविष्णुपुरंसर्वंसुखंभुंक्तेसुदुर्ल्लभम् ६७
ततोनारायणादेशाद्ब्रह्मलोकंसगच्छति
ब्रह्मलोकेसुखंभुंक्तेदुर्ल्लभंयत्सुरैरपि ६८
तावत्कालंब्रह्मलोकेस्थित्वाब्रह्मक्षयात्ततः
महादेवंततोगच्छेद्रथमारुह्यशोभनम् ६९
सुखंनानाविधंतत्रभुङ्क्तेऽत्यन्तसुदुर्ल्लभम्
गाणपत्यमवाप्नोतिकिमन्यैर्बहुभाषितैः ७०
तावत्कालंशिवपुरेस्थित्वावैपुण्यवान्नरः
इन्द्रलोकंततोगच्छेद्द्वितीयइववासवः ७१
तेनपुण्यात्मनासार्द्धंवसेदेकासनेततः
तत्रभुक्त्वाखिलान्कामान्कल्पकोटिशतावधि ७२
सूर्यलोकंततोगच्छेद्द्वितीयइवचन्द्रमाः
तत्रामृतानिभुक्त्वावैचिरंचन्द्रस्यसन्निधौ ७३
पुनरागत्यपृथिवींचक्रवर्तीनृपोभवेत्
पालयित्वाचिरंपृथ्वद्यंजित्वावैसकलान्रिपून् ७४
आयुषोंऽतेचगङ्गायांसुखंमृत्युमवाप्नुयात्
भूयःसएवमारुह्यविमानंसुमहायशाः ७५

पुरंभगवतोयातिदैवतैरपिदुर्ल्लभम्
तत्रभुक्त्वाखिलान्भोगान्मन्वंतरचतुष्टयम् ७६
परमंज्ञानमासाद्यदुर्ल्लभंमोक्षमाप्नुयात्
जाह्नवीतीरयात्रायांदैवाद्यस्यभवेत्पथि ७७
पंचतासोऽपिपरमंधामगच्छेन्नसंशयः
सत्यधर्मोनामराजाधार्मिकश्चप्रियंवदः ७८
त्रेताद्वापरसंधौचबभूवक्षितिमण्डले
विजयानाममहिषीतस्यभूमिपतेरभूत् ७९
सुंदरीशीलयुक्तासापतिसेवापरायणा
सप्तवर्षसहस्राणिभुक्त्वावसुमतीमिमाम् ८०
कादाचित्प्राप्तकालोऽसौसदारः पंचतांगतः
ततोयमभटैर्बद्धौदंपतीतौभयंकरौ ८१
दुःखप्रदेनमार्गेणजग्मतुर्यममंदिरम्
तौदृष्ट्वाधर्मराजोऽपिचित्रगुप्तमुवाचह ८२
एतयोःसर्वकर्माणिचित्रगुप्तविचारय
तेनाज्ञप्तश्चित्रगुप्तस्तयोःकर्माणिजैमिने ८३
मूलाद्विचारयामासप्राहचेतिकृताञ्जलि
चित्रगुप्तउवाच-
एतयोःसकलंकर्मशृणुराजन्वदाम्यहम् ८४
शुभंवाप्यशुभंकर्मयदेताभ्यां कृतंभुवि
किंचिदस्यानयोपायंवदामितदहंशृणु ८५
एकादात्रासितोव्याघ्रैः कश्चिदेकोमृगःप्रभो
वनाज्जीवनरक्षार्थमागतोऽस्यसभांप्रति ८६
तमायांतंसमालोक्यभूयोऽयप्राप्तकौतुकः
जघनेस्वयमुत्थायखङ्गेनतरसामृगम् ८७
जघानहमृगंराजाशरणागतमप्यमुम्
तस्मात्सदारोभूपोऽयदंडनीयस्त्वयाप्रभो ८८
यावंतितस्यरोमाणिसंस्थितानिकलेवरे
मन्वंतरसहस्राणिमन्वंतरशतानिच ८९
कोटिकोटिकुलैर्युक्तानारकीस्यान्नसंशयः

शरणागतरक्षांयःप्राणैरपिधनैरपि ९०
कुरुतेयोनरोज्ञानीतस्यपुरयंनिशामय
सर्वपापैर्विनिर्मुक्तोब्रह्महत्यामुखैरपि ९१
आयुषोऽन्तेव्रजेन्मोक्षंयोगिनामपिदुर्ल्लभम्
यमाज्ञयाततोदूतैः सदारोऽसौमहीपतिः ९२
असिपत्रवनेघोरेस्थापितोऽत्यतदुःखदे
असितुल्यानिपत्राणियतस्तेषांचशाखिनाम् ९३
असिपत्रवनंप्राहुरतस्तद्वैमनीषिणः
स्थित्वासिपत्रविपिनेयुगकोटिशतानिच ९४
सदारोनरकंभेजेव्याघ्रभक्षयाह्वयंततः
निरयंतंप्रविशतिसर्वोपद्रवसंयुतम् ९५
भवेच्चभक्षयोव्याघ्रेणव्याघ्रभक्षयस्ततःस्मृतः
युगकोटिसहस्राणिस्थित्वातत्रसभूपतिः ९६
सदारोऽजनिपापांतेभेकयोनिंगतः क्षितौ
जातिस्मरौततस्तौतुभेकीभेकौसुदुःखितौ ९७
तीरेतस्थतुरेकस्मिन्सततंकीटभोजिनौ
अथैकदातेनपथापुरयाहंप्राप्यमानवाः ९८
गच्छंतिजाह्नवीतीरंतांस्तौददृशतुर्द्विज
भेकउवाच-
वर्षाभ्विमोहाद्यत्सर्वंपापंकर्मकृतंमया ९९
अद्यापिकर्मणातेनदुःखमावांनमुंचति
त्यक्त्वाशरीरंगंगायांमुक्ताःस्युःपापिनोऽपिच १००
तथाप्येवंविधंदुःखमनुभूयावहेकथम्
गंगायांत्यक्तुमिच्छामिसंप्रत्येतत्कलेवरम् १०१
कायुक्तिर्ब्रूहितांकांतेतितीर्षुर्दुःखसागरम्
वर्षाभ्वीतद्वचः श्रुत्वाप्राहेतिविनयान्विता १०२
वर्षाभ्व्युवाच-
दुःखंनशक्यतेसोढुंस्वामिन्नेतद्द्रुतंकुरु
ततस्तौदंपतीविप्रस्मृत्वागंगांशुभप्रदाम् १०३
सहसाचक्रतुर्यात्रांमरणायोपहर्षितौ

अथैतौपथिगच्छंतौचिरकालंबुभुक्षितौ १०४
अपश्यत्पापकृत्क्ष्वेडःकालसर्पोभयंकरः
कालसर्प्पउवाच-
दर्दुरौपापिनौयेथाः प्राप्तकालौयुवांततः १०५
अथनूनंभक्षितव्यौक्षुधितेनमयायुवाम्
ततस्तावतिसंत्रस्तौदंपतीदुःखभागिनौ १०६
इत्यूचतुर्वचोभक्त्याकालसर्पंपुरोगतम्
नास्ति मृत्युभयंसर्पस्वल्पमप्यावयोर्हृदि १०७
अहमासंपुराराजासत्यधर्माह्वयः क्षितौ
इयंचविजयानाममहिषीसंस्थितामम १०८
मयादुरात्मनामोहान्निदृतःशरणंगतः
तेनैवकर्मणाभुक्तंचिरंदुःखंयमालये १०९
भोक्तुंस्वकर्मणःशेषंभेकयोनौस्त्रियासह
सोऽहयातोऽस्मिपापेनकृतंकर्मनमुंचति ११०
सत्यमावांजिगामिषूपरमंधामपन्नग
व्रजावोजाह्नवीतीरंशरीरत्यागहेतवे १११
त्यजाविवेकतांसर्पनरकक्लेशदायिनीम्
आवांसंखाद्यभवतोभविष्यतिसुखंकियत् ११२
आवयोर्हृदयेविष्णुस्तवापिहृदयेहरिः
अतएवत्वयासार्द्धंशत्रुताकाभुजंगम ११३
प्राणिहिंसानकर्तव्याकदापिचविचक्षणैः
क्रियतेऽपिचतद्धिंसांविदधातिस्वयंविधिः ११४
आयुःपुत्राश्चदाराश्चसंपदश्चयशांसिच
हिंसांदत्वामनुष्याणांहरेद्दुष्टोविधिःस्वयम् ११५
किंजपैःकिंतपोभिर्वाकिंदानैः किमुचाध्वरैः
हिंसेतिवर्णद्वितयंयस्यास्तिहृदयेसदा ११६
यःप्राणिहिंसकोमर्त्यःसएवहरिहिंसकः
सर्वप्राणिशरीरस्थोभगवान्कमलापतिः ११७
आत्मानंबहुधासृष्ट्वाभगवान्भूतभावनः
संसारकौतुकागारेक्रीडेच्छिशुरिवस्वयम् ११८

शरीरिणःशरीरंहिनिलयःपरमात्मनः
परमात्मास्वयंविष्णुरतोहिंसांविवर्जयेत् ११९
परप्राणविनाशेनचात्मतुष्टिर्विधीयते १२०
क्षणंस्यादात्मनस्तुष्टिरन्यस्यप्राणसंक्षयः
चरित्रमेतल्लोकानामत्यद्भुतमिवक्षितौ १२१
आत्मतृप्तिंप्रकुर्वंतिपरं हत्वातियत्नतः
धीमान्नात्मपरिज्ञानंकदाचित्कुरुतेनहि १२२
अंहविष्णुरसौविष्णुरितिचेतसिभावयेत्
परदुःखेनयोदुःखीसुखीयश्च परश्रिया १२३
संसारेऽस्मिन्सविज्ञेयःसाक्षादेवहरिः स्वयम्
धिगस्तुतत्सुखंनृणांमोहवंचितचेतसाम् १२४
परहिंसाविधानेनसुखंयत्स्याद्भुजंगम
सुखानिवापिदुःखानिदीयंतेयानिजंतवे १२५
अचिरेणैवतानिस्मलभंतेभुविमानवाः
तस्माद्धिंसांपरित्यज्यभुजंगमसुखीभव १२६
त्वयिप्रसन्नेगच्छावः पारंदुःखमहोदधेः
सर्पउवाच-
यदास्यात्परहिंसायांनूनंमेनातिपातकम् १२७
तदाकथमहोसृष्टैवेधसाभक्ष्यभक्षकौ
परहिंसानकर्तव्यासत्यमेतत्त्वयोदितम् १२८
किंतुसर्वेषुभक्ष्येषुहिंसासंभाव्यतेनहि
नारायणोविश्वरूपःसत्यमेतन्नसंशयः १२९
भक्ष्यभक्षकसंयुक्तंस्वयमेवससर्जह
सृजतिस्वयमात्मानमात्मानंरक्षतिस्वयम् १३०
आत्मानंस्वयमेवात्तिसृष्टिरेवंविधाहरेः
शक्तोऽहकिंयुवांहंतुंकालरूपीस्वयंविधिः १३१
संप्रतिप्रेषयामासकार्येस्मिन्मांस्वयंहरिः
युवांससर्जयोदेवोयश्चरक्षतिवांसदा १३२
कालरूपीसएवाद्यहंतिहेतुंविधाय माम्
व्यासउवाच-

ततस्तेनभुजंगेनभक्षितौतौचदंपती १३३
गङ्गागंगेतिजल्पंतौमहत्याक्षुधयापथि
जाह्नवीतीरयात्रायांपादेपादेजनाविमौ १३४
अश्वमेधाख्ययज्ञानांप्राप्तवंतौमहाफलम्
तस्मादेनौमहात्मानौबह्वश्वमेधधारिणौ १३५
एतयोःसदृशोनास्तिशतक्रतुरहंयतः
निजाधिकारेणैवान्यमवलंब्यपुरंदरः १३६
अर्घ्यहस्तः पादचारीवृतोदेवैः समाययौ
अथरम्भोर्वशीचैवसुंदर्योऽन्याश्चहर्षिताः १३७
अन्योन्यंकथयामासुर्निजयौवनगर्विताः
अयंपुण्यात्मनांश्रेष्ठोरसज्ञोऽत्यतसुन्दरः १३८
आयातोऽमुकरिष्यामिस्ववशंसेवितैःस्वकैः
काचित्कांचिद्वदत्येतज्ञानामिसकलांकलाम् १३९
अतएवभविष्यामिकांताहमस्यभूपतेः
काचित्कांचिदितिब्रूयात्तेशक्रोपिवशोमम १४०
किमत्रचित्रंवशगोभूपालोऽयभविष्यति १४१
भर्त्तामममायंचपतिर्ममायंस्वामीममायंममनाथएषः
इतीवसर्वाःपरमप्रमोदैर्वदंतिनार्योखिलसद्गुणज्ञाः १४२
उच्चावचंविप्रनिशम्यतासांजगादकाचिद्गुणिनीरसज्ञा
सौदास्यकांतांनृपतिःस्वयंयांभजत्ययंकिंकलहेननार्यः १४३
सुन्दर्य्यस्तास्ततःसर्वाःसंत्यज्यकलहंद्विज
आजग्मुर्हृदयोत्साहैःसर्वाभरणभूषिताः १४४
अथतंनृपतिश्रेष्ठसदारंगतकल्मषम्
पाद्याद्यैःपूजयामासुःप्राहेतिचपुरंदरः १४५
रथेनिवेशयामासपुष्पकेस्त्रीसमन्वितम्
भेरीमृदंगमधुरीडिंडिमानकनिःस्वनैः १४६
करकंकणनादैश्चकरतालस्वनैस्तथा
जयशब्दैश्चदेवानांनाकःशब्दमयोऽभवत् १४७
देवाङ्गनाचारुहस्तश्वेतचामरमारुतैः
वीजितःसरथारूढःसदारस्त्रिदिवंययौ १४८

ततःशक्रः स्वयंतस्मैसत्यधर्मायभूभुजे
दत्तवान्निजासनार्द्धंशुभोवैक्षयशंकया १४६
शक्रेणसहभूपोऽसौवसन्नेकासनेसदा
शक्रत्वमकरोत्स्वर्गेकेशवस्यानुकंपया १५०
युगकोटिसहस्राणिदिविभुक्त्वाखिलंसुखम्
रथमारुह्यवैकुंठंययौभगवदाज्ञया १५१
तत्रमन्वंतरंभुक्त्वासर्वभोगमनोरमम्
परमंज्ञानमासाद्यासदारोमोक्षमाप्तवान् १५२
जाह्नवीतीरयात्रायांशरीरंत्यजतः पथि
फलमेवंविधंविप्रमयासर्वंप्रकीर्तितम् १५३
जाह्नवीतीरगमनेमुनिभिस्तत्वदर्शिभिः
नकालनियमःप्रोक्तोनारदाद्यैर्महर्षिभिः १५४
यदायदाद्विजश्रेष्ठगङ्गायांस्नानमाचरेत्
तदातदाऽक्षयंपुण्यंलभतेमानवोध्रुवम् १५५
गंगासर्वाणिपापानिनाशयंतीतिनिश्चयः
कुर्यात्पुनःपुनःपापंनचगंगापुनातितम् १५६
पापबुद्धिंपरित्यज्यगंगायांलोकमातरि
स्नानंकुरुतहेलोकायदिसद्गतिमिच्छथ १५७
यत्पुण्यगंगास्नानात्तुमानवानांभवेद्विज
तत्पुण्यंप्राप्यतेविप्रकर्मभिः कैःसुदुस्तरैः १५८
आसाराणांभूमिरेणोःसंख्यांकर्तुंतुशक्यते
भागीरथीगुणास्तेनशक्यावक्तुनचद्विज १५९
विचार्यसर्वशास्त्राणित्वदीयानिमयोच्यते
गंगाभसिसकृत्स्नात्वामोक्षमाप्नोतिमानवः १६०
स्नानंकूपजलेऽपियस्तुकुरुतेगंगांविचिंत्यप्रभुंदेवानांसकलार्त्तशोकदुरितत्रासौघ-
विध्वंसिनीम्
मुक्तःसोऽपिसमस्तपातकचयैर्गोविप्रहत्यादिभिर्गच्छेद्विष्णुपुरंसमस्तसुखदं-
गंगाप्रसादाद्विज १६१

इति श्रीपद्मपुराणेक्रियायोगसारेगंगामाहात्म्येनवमोऽध्यायः ९

## दशमोऽध्यायः

जैमिनिरुवाच-
माहात्म्यमेतद्गाङ्गायास्त्वत्प्रसादाच्छ्रुतंमया
इदानींश्रोतुमिच्छामिविष्णुपूजाफलंगुरो १
व्यासउवाच-
शृणुलक्ष्मीपतेर्वत्ससपर्याफलमुत्तमम्
यच्छ्रुत्वामानवाः सर्वेलभंतेज्ञानमुत्तमम् २
विप्रद्वादशमासेषुमाघादिषुसनातनः
पूजितव्योविधानैर्यैः शृणुतानिवदाम्यहम् ३
माघेमासिसमायातेसर्वमासोत्तमेशुभे
आमिषंमैथुनंचैवत्याजयेद्वैष्णवोत्तमः ४
प्रातःस्नायीभवेन्नित्यंतैलान्यपिचवर्जयेत्
द्विर्भोजनंपरान्नंचमाघेमासिपरित्यजेत् ५
प्रातः शुक्लांबरधरः कृतपंचमहाध्वरः
सपर्यामारभेद्विष्णोःस्थिरचित्तोहिमानवः ६
ईषदुष्णजलैःशुद्धैःस्नापयेद्विष्णुमव्ययम्
अतिश्लथैश्चंदनैश्चविष्णोरङ्गानिलेपयेत् ७
पूजयेज्जगदीशस्यदेवदेवस्यचक्रिणः
प्रक्षालितानिपात्राणिजलहीनानिकारयेत् ८
स्नापयित्वाजगन्नाथमीषदुष्णेनवारिणा
प्रोक्षितव्यंतच्छरीरंदिव्यवस्त्रेणयत्नतः ९
सलिलैरीषदुष्णैश्चप्रस्नापयतिकेशवम्
माघेमासिद्विजश्रेष्ठफलंतस्यमयोच्यते १०
विमुक्तःपातकैःसर्वैर्जन्मजन्मांतरार्जितैः
इहभुंक्तेसुखंसर्वंशेषेयातिहरेर्गृहम् ११
यत्नात्प्रक्षाल्यपात्राणिकृत्वाशुद्धानिवारिभिः
यःपूजयेज्जगन्नाथंतस्यपुण्यंनिशामय १२
इहभुक्त्वाखिलान्कामान्सर्वव्याधिविवर्जितः
अंतेयुगसहस्राणितिष्ठेत्केशवमंदिरम् १३
प्रभातेविश्वसंध्यायांपुरतश्चक्रपाणिनः

ज्वलंतंस्थापयेद्वह्निंनिर्द्धूमंवैष्णवोजनः १४
शीतस्यवारणार्थायसायंप्रातश्चवैष्णवः
माघेविष्णवग्रतोवह्निंज्वालयेत्तत्फलंशृणु १५
इहभुक्त्वाखिलान्कामान्पुत्रपौत्रसमन्वितः
अंतेविष्णुपुरंयातिदैवतैरपिदुर्ल्लभम् १६
यथैवात्मातथाविष्णुःसंदेहोनात्रविद्यते
स्वपंतंदेवदेवेशंपर्यंकोपरिकेशवम् १७
आत्मनःकुरुतेमर्त्योयथाशीतनिवारणम्
क्षीरेणस्नापयेद्यस्तुमाघेमासिजनार्दनम्
तस्मैदेवोत्तमोविष्णुःसंतुष्टोनददातिकिम् १८
तथाशीतक्षयंकुर्याद्दिव्यवस्त्रेणचक्रिणः १९
यःपूजयेत्सकृन्माघेस्नापयित्वाचतुर्भुजम्
नालिकेरोदकैर्दुग्धैःफलंतस्यवदाम्यहम् २०
नरकाब्धौमज्जमानान्दुस्तरेस्वेनकर्मणा
उद्धृत्यकोटिपुरुषान्सयातिचक्रिणः पदम् २१
माघेमासेचशुक्लायांपंचम्यांद्विजसत्तम
एकादश्यांचपंचम्यांहरिपूजाविशेषतः २२
दातव्योदेवदेवायसपद्मायमुरारये
पायसोधूपसहितोमाघेमासिदिनेदिने २३
सधूपपायसंयस्तुमाघेयच्छतिचक्रिणे
तस्यपुण्यफलंवच्मिशृणुवैष्णवजैमिने २४
अंतेविष्णुपुरंगत्वामन्वंतरचतुष्टयम्
भुंक्तेमनोरमान्भोगान्प्रसादाच्चक्रपाणिनः २५
पुनरागत्यधरणींचक्रवर्तीनृपोभवेत्
भुंक्तेचभोगंसुचिरंमृतोयातिहरेर्गृहम् २६
पंचम्यांवापिसप्तम्यामेकादश्यांचजैमिने
अशक्तोवैष्णवोदद्यात्परमान्नंमुरारये २७
कृष्णपक्षाद्द्विजश्रेष्ठशुक्लपक्षेविशेषतः
शुक्लपक्षेतिथिष्वेषुदद्यादन्नंमुरारये २८
एकाहमपियोमाघेविष्णवेदैत्यजिष्णवे

सपूपंपायसंदद्यान्नतस्यदुर्ल्लभोहरिः २९
यत्किञ्चिद्द्विजतुष्ट्यर्थंमाघेमासिप्रदीयते
तदक्षयंभवेत्पुंसःकोऽपिनास्त्यत्रसंशयः ३०
माघेमासिकृतंकर्मशुभंवाशुभमेववा
तस्यनास्तिक्षयंविप्रमन्वंतरशतैरपि ३१
माघेचंपकपुष्पेणयोऽर्चयेत्कमलापतिम्
सगच्छेत्परमंधामविमुक्तः सर्वपातकैः ३२
यावंतिस्वर्णपुष्पाणिदीयंतेचक्रपाणये
तावद्युगसहस्राणिस्थीयतेविष्णुमंदिरम् ३३
मेरुतुल्यसुवर्णानिदत्वाभवतियत्फलम्
एकेनस्वर्णपुष्पेणहरिंसंपूज्यतत्फलम् ३४
सुवर्णपुष्पंविप्रेन्द्रसर्वदाकेशवप्रियम्
माघेमासिविशेषेणपवित्रंकेशवप्रियम् ३५
सुवर्णकुसुमैर्दिव्यैर्येननाराधितोहरिः
रत्नैर्हीनःसुवर्णाद्यैः सभवेज्जन्मजन्मनि ३६
फलंचंपकपुष्पस्यब्रवीम्यहंविशेषतः
आकर्णयद्विजश्रेष्ठसेतिहासमनुत्तमम् ३७
सुवर्णोनामभूपालोबलवान्सर्वशास्त्रवित्
आर्यावर्तेषुसर्वेषुबभूवविप्रवर्चसा ३८
राजश्रियाविद्ययाचवयसाचसभूपतिः
अतिप्रमत्तोविप्रर्षेसदापापरतोऽभवत् ३९
पाखंडमंत्रिणांवाक्यैर्विनादोषैरपिद्विज
धनलोभात्तेनराज्ञादंडयंतेसाधवो जनाः ४०
अन्यायोपार्जितंवित्तंगीतवाद्यादिभिर्वृतः
समस्तंनाशयामासयज्ञदानविवर्जितः ४१
नज्ञातिपोषणंचक्रेनदेवद्विजभोजनम्
नचयाचकसंतुष्टिंसर्वदापापमोहितः ४२
नचकारातिथेःपूजांसदापापपरायणः
ययौचमंदिरान्नित्यंसभूपः पापमंदिरः ४३
कृतानितेनपापानियान्यन्यान्यविवेकिनाम्

अपिवर्षशतैःशक्तःसंख्यातुंजनितानिकिम् ४४
एकदासमहीपालः कामेनपरिमोहितः
जगामवेश्यानिलयं निशीथेदुरिताशयः ४५
तमायांतंततोदृष्ट्वाभूपालमुज्ज्वलाह्वया
सहसोत्थायपर्यंकेचक्रेतत्पादवंदनम् ४६
प्रक्षाल्यतत्पादयुगं भृंगारसलिलैश्चसा
मंचेनिवेशयामासदोर्भ्यामालिङ्ग्यतंनृपम् ४७
तत्प्रेमामृतधाराभिः सिक्तोऽसौपृथिवीपतिः
तस्मिन्नुवासपर्यंकेतयासहकुतूहली ४८
ततः सागणिकाप्रीत्याहसंतीनवयौवना
ददौचंपकपुष्पाणांतस्मैभूमिभुजेस्वयम् ४९
पुष्पमालापुष्पमेकंतस्माद्भूपतिहस्ततः
पपातधरणीपृष्ठेगन्धव्याप्तदिगंतरम् ५०
तच्च्युतंकुसुमंदृष्ट्वासराजाऽत्यतसंभ्रमात्
नमोनारायणायेति जगादोङ्कारपूर्वकम् ५१
नारायणायेतिवाक्यात्सर्वाणिपातकानिच
स्वर्णपुष्पप्रदानेनतस्यनष्टानिभूभुजः ५२
ग्रामीणाअथसर्वेऽपिसमागत्यातिदुर्जये
तस्यामेवनिशायांतंजघ्नुर्वेश्यागृहेस्थितम् ५३
नेतुंतमथभूपालंसर्वपातकिनांवरम्
किंकरान्प्रेषयामासक्रुद्धोवैवस्वतोभृशम् ५४
तेनाज्ञप्तास्ततोदूताः पाशमुद्गरपाणयः
अतिवेगात्समायाताःक्रोधसंरक्तलोचनाः ५५
उद्यमंचक्रिरेनेतुंयमदूताःस्वमालयम्
ततोनारायणप्रेष्याःशङ्खचक्रगदाधराः ५६
आयातागरुडारूढास्तंनेतुंपृथिवीपतिम्
पाशेनियंत्रितंदृष्ट्वातंभूपंविष्णुकिंकराः ५७
जघ्नुश्चक्रैर्गदाभिश्चयमदूतान्महाबलाः
समारोप्यरथेदिव्येशंखान्दध्मुरनुत्तमान् ५८
तथाराजारथारूढस्तुलसीमाल्यभूषितः

पीतकौशेयवासाश्चस्वर्णालंकारभूषितः ५९
स्तूयमानोमुनिगणैर्वेदवेदाङ्गपारगैः
विष्णुदूतैःपरिवृतोहरेः सालोक्यमाययौ ६०
अथोत्थायस्वयंविष्णुश्चतुर्भिर्दीर्घबाहुभिः
तमालिंगितवान्भूपंप्रोक्तवांश्चद्विजोत्तम ६१
श्रीभगवानुवाच-
नृपतेकुशलंब्रूहिसर्वपुण्यात्मनांवर
किमस्तिसाध्यंभवतस्तदाज्ञापयसंप्रति ६२
नमोनारायणायेतिवारैकमपियोवदेत्
नित्यंतस्यानुपाल्योऽहसमेभ्रातासमेपिता ६३
नारायणेतिमन्नामकदाचिद्यःस्मेरन्नरः
साधयाम्यखिलंतस्यपितुःपुत्रइवेप्सितम् ६४
भक्तोऽसिनृपतिश्रेष्ठतस्मान्निजमनोरथम्
प्रकाशयाद्भुतंतातकिंतेदास्यामिचाधुना ६५
राजोवाच-
सर्वमेवदयासिन्धोत्वयादत्तंनसंशयः
पापिनापिमयाप्राप्तंतवस्थानंसुदुर्ल्लभम् ६६
तस्यानेनतुवाक्येनप्रसन्नःकमलापतिः
स्नेहान्निवेशयामासभूपालंतन्निशामय ६७
ततः सुवर्णालंकारैर्विश्वकर्मविनिर्मितैः
चकारमण्डलंतस्यस्वयमेवदयामया ६८
अथनानाविधैर्भक्ष्यैर्दिव्यैरपिसुदुर्ल्लभैः
तोषितःसमहीपालोविष्णुनातिसहिष्णुना ६९
एवंप्रतिदिनंतस्थौसराजाविष्णुमंदिरम्
मन्वन्तरसहस्त्राणिनववर्षशतानिच ७०
प्रजानांपालनंचक्रेसराजाधर्मतत्परः
पूजयामाससततंभक्त्यापरमयाहरिः ७१
चारुचंपकपुष्पैश्चनैवेद्यैर्विविधैश्चसः
आयुःशेषेसभूपालोमरणंजाह्नवीजले ७२
समासाद्ययौमोक्षंप्रसादाच्चक्रपाणिनः

व्यासउवाच-
विप्रचंपकपुष्पस्यप्रभावोऽयप्रकीर्तितः ७३
चपंकैर्हरिमभ्यर्च्यमुक्ताःस्युःपापिनोजनाः
स्फुटचंपकपुष्पेणपूजितोभगवान्हरिः ७४
अचिरेणैवविप्रर्षेददातिपरमंपदम्
येयजंतिपरात्मानमिच्छयावाप्यनिच्छया ७५
तेऽपियांतिपरंधामविमुक्ताः सर्वपातकैः ७६
हरौप्रसन्नेदुरितीनकोऽपियतः सराजाकृतपातकोऽपि
जगाममोक्षंकृपयामुरारेर्विश्वार्णवंनिम्नमिमंवितीर्य ७७
दिव्यैः सुगन्धैः कनकप्रसूनैर्नारायणंपद्मदलायताक्षम्
भक्त्यायजेद्यःपरमादरेणमर्त्योव्रजेत्तत्तुविहायपापम् ७८
इति श्रीपद्मपुराणेक्रियायोगसारेचंपकपुष्पमहिमानामदशमोऽध्यायः १०

## एकादशोऽध्यायः

व्यासउवाच-
जैमिनेविधिनायेनपूजितव्योहरिःसदा
तमहंवच्मिविप्रर्षेशृणुवत्ससमाहितः १
कल्यउत्थायपर्यंकाद्गृहीत्वापात्रमंभसाम्
बहिर्देशंव्रजेत्प्राज्ञः शीर्षमाच्छाद्यवाससा २
तत्रोदीच्यांदिशिमौनीयज्ञसूत्राणिकर्णयोः
कृत्वोपविष्टःप्राज्ञस्तुमलमूत्रंविसर्जयेत् ३
देवतायतनेमार्गेगोष्ठेषुचत्वरेषुच
रथ्यायांकृष्टभूमौचदर्भमूलेतथांगणे ४
तटिनीपुलिनेचैत्त्यवृक्षमूलेतथावने
तडागवापीगर्भेषुमलमूत्रंचन त्यजेत् ५
रविंचंद्रमसंचैवद्विजान्गाश्चदिशोदश
मलमूत्रंत्यजेद्यावत्तावत्प्राज्ञोनपश्यति ६
खनितांमूषिकाद्यैश्चबिलाभ्यंतरवर्तिनीम्
फालकृष्टांमृदंचैवनगृह्णीयाच्छौचहेतवे ७
जलाञ्जलंसमानीयशौचंकुर्याद्विचक्षणः

पादंजलेषुवैदत्वानशौचंकुरुतेबुधः ८
दक्षिणाभिमुखोरात्रौकुर्यात्प्राज्ञोबहिःक्रियाम्
शिरःप्रावृत्यवस्त्रेणततः शौचंसमाचरेत् ९
मृत्तिकैकाप्रदातव्यालिंगेतिस्रस्तुवैगुदे
सप्तसव्येकरेप्राज्ञैर्हस्तयोरुभयोर्दश १०
पादयोःषट्प्रदातव्यामृत्तिकाचविचक्षणैः
कृतशौचक्रियःप्राज्ञः कुर्याद्दंतस्यधावनम् ११
जिह्वपामार्जनंचैवदशनाच्छादनादिभिः
दक्षिणाभिमुखोभूत्वापश्चिमाभिमुखस्तथा १२
नदंतधावनंकुर्यात्कुर्याच्चेन्नारकीभवेत्
मध्यमानामिकाभ्यांचवृद्धांगुष्ठेनचद्विज १३
दंतस्यधावनंकुर्यान्नतर्जन्याकदाचन
अश्वत्थवटवृक्षाणांधात्र्याकैथिकयाबुधः १४
नदंतधावनंकुर्यात्तथेंद्रस्यसुरस्यच
नित्यंक्रियाफलंतस्यसर्वमेवविनश्यति १५
यःस्नानसमयेकुर्याज्जैमिनेदंतधावनम्
निराशाःपितरोयांतितस्यदेवाःसुरर्षयः १६
दंतस्यधावनंकुर्याद्योमध्याह्नापराह्णयोः
तस्यपूजांनगृह्णंतिदेवताः पितरोजलम् १७
स्नानकालेपुष्करिण्यांयः कुर्याद्दंतधावनम्
ततोज्ञेयःसचांडालोयावद्गंगांनपश्यति १८
भगवत्युदितेसूर्येयःकुर्याद्दंतधावनम्
तद्दंतकाष्ठंपितरोभुक्त्वागच्छंतिदुःखिनः १९
उपवासदिनेविप्रपितृश्राद्धदिनेतथा
नतत्फलमवाप्नोतिदंतधावनकृन्नरः २०
प्रभातेमार्जयेद्दंतान्वाससारसनांतथा
कुर्याद्द्वादशविप्रेंद्रकल्लोलानिजलैर्बुधः २१
उपवासेपितृश्राद्धेविधिनाऽनेनजैमिने
दंतधावनकृन्मर्त्यः संपूर्णंलभतेफलम् २२
अनेनविधिनाकृत्वादीर्घदर्शीबहिः क्रियाम्

ततोनिजगृहंगत्वारात्रिवस्त्रंपरित्यजेत् २३
ततोदेवगृहद्वारेचोपविष्टोबुधःशुचिः
स्मरेन्नारायणंदेवमनंतंपरमेश्वरम् २४
रामश्यामतनोविष्णोनारायणदयामय
जनार्दनजगद्धामपापंमेहरकेशव २५
पीतांबरधरानंतपद्मनाभजगन्मय
वामनप्रणतस्येशविभोत्वंशरणंभव २६
दामोदरयदुश्रेष्ठश्रीकृष्णकरुणार्णव
कमलेक्षणदेवेंद्रवासुदेवकृपांकुरु २७
गरुडध्वजगोविंदविश्वंभरगदाधर
शंखपाणेचक्रपाणेपद्महस्तहरापदः २८
लक्ष्मीविलासवैकुंठहृषीकेशसुरोत्तम
पुरुषोत्तमकंसारेकैटभारेभयंहर २९
श्रीपतेश्रीधरविभोश्रीदश्रीकरमाधव
परंब्रह्मपरंधामशरणंमेभवाव्यय ३०
इत्थंकृत्वाद्विजश्रेष्ठश्रीविष्णुस्मरणंबुधः
वद्धांजलिरितिब्रूतेप्रविश्यनिलयंगतः ३१
ईश्वरश्रीपतेकृष्णदेवकीनंदनप्रभो
निद्रांमुंचजगन्नाथप्रभातसमयोऽभवत् ३२
अथोस्थितमिवप्राज्ञःपर्यंकेदेवकीसुतम्
निद्रांत्यक्त्वासलक्ष्मीकंचिंतयेन्निजचेतसा ३३
ततःकृतच्छदंदिव्यंपात्रंचजलपूरितम्
मुखप्रक्षालनार्थायदद्यात्कृष्णायवैष्णवः ३४
ईश्वरंवर्तनार्थायसेवतेसेवकायथा
तथैवमतिमंतोपिसेवंतेपरमेश्वरम् ३५
यस्तुसेवकरूपेणसेवतेजगदीश्वरम्
अचिरेणैवविप्रर्षेतस्यसिध्यतिवांछितम् ३६
यथेश्वरस्यसभयाःसेवांकुर्वंतिचेटकाः
प्राज्ञास्तथैवसेवंतेसर्वदैवहरिंप्रभुम् ३७
निजेच्छयानयाविष्णुंनिर्भयःपूजयेन्नरः

कुसेवकःसएवास्तितदानहिभवेदिद्विज ३८
अतएवद्विजश्रेष्ठत्वरयाकमलापतेः
कर्त्तव्यासर्वदासेवापुंसाकैवल्यमिच्छुना ३९
निर्माल्यंरात्रिवस्त्रंचगंधंपर्युषितंतथा
हरेरुत्तारयेदंगात्प्रभातेवैष्णवोजनः ४०
ततोदेवालयेतस्मिन्स्वयमेवहिमार्जयेत्
कुर्याच्छनैःशनैःप्राज्ञःसंमार्जन्यापरिष्क्रियाम् ४१
यावंतोनिलयात्तस्माद्गच्छंतिरेणवोबहिः
तावन्मन्वंतरशतंतिष्ठेद्विष्णुगृहेनरः ४२
यस्तुसंमार्जनंकुर्याद्ब्रह्महापिहरेर्गृहे
सोपियातिपरंधामकिमन्यैर्बहुभाषितैः ४३
तथोपलेपनंकुर्याद्दूर्णकैर्गोमयैर्द्विज
तस्मिन्विष्णुगृहेप्राज्ञःस्मरेन्नारायणंप्रभुम् ४४
यस्तूपलेपनंकुर्यात्केशवस्यचमंदिरे
तस्यपुण्यमहंवच्मिसंक्षेपाच्छृणुजैमिने ४५
रजांसितत्रयावंतिविनश्यंतिद्विजोत्तम
तावत्कल्पसहस्राणितिष्ठेद्विष्णुगृहेसुखी ४६
संमार्जनंविष्णुगृहेजनःकृत्वोपलेपनम्
लभतेपरमंधामकिंपूजाफलवित्प्रभोः ४७
देवराजविरोधेननशक्नोतियदास्वयम्
तदाविष्णुगृहेचापिधर्मपत्नींनियोजयेत् ४८
अथवातनयंभक्तंसुचरित्रंतथात्मनः
भ्रातरंभगिनींवापिदेवागारेनियोजयेत् ४९
हरेःसपर्यावस्तूनिसप्तधा शुद्धवारिभिः
प्रक्षालयेत्त्रिधावापिस्वयमेवातियत्नतः ५०
अम्लेनताम्रपात्राणिकांस्यपात्राणिभस्मना
वह्निनालोहपात्राणिशुध्यंतिनात्रसंशयः ५१
धनाढ्योलोहपात्रस्थैर्यःस्नापयतिवारिभिः
नारायणंजगन्नाथंतस्यतुष्टोनकेशवः ५२
अज्ञानाद्वापिचेत्तर्हिगंगास्नानेनशुद्ध्यति

संपदिब्राह्मणश्रेष्ठकर्त्तव्योनियमः सदा ५३
विपत्त्यांनियमोनास्तिशास्त्रेष्विति विनिश्चयः
यत्नात्प्रक्षालितः शङ्खोयदाभूमिंस्पृशेत्पुनः ५४
तदा सशङ्खोविप्रेंद्रशतधौतेनशुध्यति
इत्थंप्रक्षाल्ययत्नेनपूजाद्रव्याणिचक्रिणः ५५
गृहीत्वा स्नानवस्तूनिस्नानार्थंसरसींव्रजेत्
अकृत्वास्नानकर्माणिगृहमायातियः पुनः ५६
तस्मिन्दिनेपितृगणस्तस्यनाप्नोतितर्पणम्
स्नानार्थंभोजनार्थंवागच्छतोविघ्नकृद्भवेत् ५७
यस्तुमोहाद्व्रजश्रेष्ठसनूनंनारकीभवेत्
स्नानार्थंसरसींगत्वामलमूत्रंकरोतियः ५८
पितरस्तस्यविण्वमूत्रभोजिनः स्युर्नसंशयः
ततः कृत्वाविधानेनस्नानंचतर्पणादिकम् ५९
स्वकीयंगृहमागच्छेत्स्मरेन्नारायणंबुधः
ततश्चप्रांगणेविप्रप्रक्षाल्यचरणद्वयम् ६०
प्रविशेद्देवतागारंशुचिर्ब्राह्मणसत्तमः
अप्रक्षालितपादोयः प्रविशेन्निलयंजनः ६१
संवत्सरकृतंपुण्यंतस्यनश्यतितत्क्षणात्
स्नानंकृत्वासमागत्यप्रांगणेषुविचक्षणः ६२
तस्मात्प्रक्षाल्यचरणौप्रविशेद्देवतागृहम्
उपविश्यपादयुग्मंबुधःसव्येनपाणिना ६३
यत्नात्प्रक्षालयेद्विप्रतथापाणिद्वयं पुनः
पादेनपादंविप्रेंद्रतथादक्षिणपाणिना ६४
यश्चप्रक्षालयेन्मूढस्तंलक्ष्मीस्त्यजतिध्रुवम्
अथोपविष्टोमतिमान्केशवार्चनमारभेत् ६५
अनन्यमानसोभूत्वासर्वकामफलप्रदम्
मृगचर्मासनेशुद्धव्याघ्रचर्मासनेऽपिवा ६६
वस्त्रासनेकेवलेचतथाकुशमयासने
पुष्पासनेचोपविष्टः पूजयेत्कमलापतिम् ६७
काष्ठासनेद्विजोविद्वान्नकुर्य्याद्विष्णुपूजनम्

विष्णुनात्वंधृतापृथ्विसर्वेलोकास्त्वयाधृताः ६८
अतः सर्वसहेदेहिवस्तुंमेस्थानमुत्तमम्
इत्युक्त्वासनमास्तीर्यवसेन्नारायणार्चकः ६९
दक्षिणाभिमुखोभूत्वानकुर्याद्विष्णुपूजनम्
शङ्खंकृत्वातुपानीयंमंत्रपूतंसुवासितम् ७०
स्नापयेत्कमलाकांतंकमलासहितंप्रभुम्
शङ्खेनस्नापयेद्यस्तुभगवंतंजनार्दनम् ७१
तत्फलंतस्यवक्ष्यामिशृणुविप्रेंद्रजैमिने
विप्रगोस्त्रीभ्रूणहत्यासुरापानादिपातकैः ७२
विमुक्तोयातिवैकुंठंभुंक्तेहिसकलंसुखम्
यदिदृष्ट्वाहृषीकेशंपूजयेन्मानवोद्विज ७३
लभतेतत्तदेवाशुप्रसादात्कमलापतेः
शंखाभावेतुविप्रेंद्रसुगंधितोयकंबुधः ७४
कृत्वाचतुलसींपात्रेस्नापयेत्केशवंबुधः
ततोदेवंस्नापयित्वासंस्थाप्यचवरासने ७५
सुगन्धैश्चंदनैस्तस्यकुर्यात्सर्वांगलेपनम्
तुलसीकाष्ठपंकेचचक्रिणोदेहपालनम् ७६
यः करोतिजनस्तस्यप्रसन्नः सततंहरिः
तुलसीपत्रमालेयंनिजगन्धसुखप्रदा ७७
दीयतेतेजगन्नाथसुप्रीतोभवसर्वदा
मंत्रेणानेनविप्रेंद्रतुलसीपत्रमालया ७८
अलंकृतोमहाविष्णुः प्रसन्नोनददातिकिम्
ततस्तुवैदिकैर्मंत्रैःकर्तव्यंस्वस्तिवाचनम् ७९
दिग्वंधनंचकर्तव्यंमंत्रैःपौराणिकैर्बुधैः
कृष्णोरक्षतुपूर्वस्यामाग्नेय्यांदेवकीसुतः ८०
याम्यांरक्षतुदैत्यारिर्नैर्ऋत्यांमधुसूदनः
विदिक्षुरक्षतुश्रीमानूर्ध्वंचश्रीधरः प्रभुः ८१
अधोरक्षतुविश्वात्माकूर्ममूर्तिः कृपामयः
येविघ्नकारकाः सर्वेपूजाकालेभवंतिह ८२
दूरंगच्छंतुतेसर्वेहरिनामास्त्रताडिताः

इत्थंदिग्बंधनंकृत्वाततः प्रह्वःकृतांजलि ८३
वक्ष्यमाणेनमंत्रेणसंकल्पंकुरुतेदृढम्
मयारब्धामिमांपूजांदेवदेवजनार्दन ८४
सिद्धिंप्रापयनिर्विघ्नांप्रसीदपरमेश्वर
ततस्तुकृतसंकल्पोवैष्णवःसर्वतत्ववित् ८५
अंगन्यासादिकंकृत्वाध्यायेन्नारयणंहृदा
नवीनमेघसंकाशंपुंडरीकनिभेक्षणम् ८६
पीतांबरधरंदेवंस्मितचारुतराननम्
कदंबपुष्पमालाभिर्भूषितंसुमहाभुजम् ८७
बर्हिर्बश्रेणिबद्धशिखंडधृतकुंडलम्
वंशीमधुरनादेनमोहयंतंदिशोदश ८८
आवृतंगोपनारीभिश्चारुवृंदावनेस्थितम्
एवंसंचिंत्यदेवेशंगोविंदंसर्वकामदम् ८९
ततश्चावाहनंकुर्याद्भक्तिभावेनवैष्णवः
आवाहितायकृष्णायचतुर्वर्गप्रदायिने ९०
पाद्यार्घ्याचमनीयानितत्रदद्याद्विचक्षणः
कोमलैस्तुलसीपत्रैरम्यैर्वाकुसुमैर्बुधः ९१
पूजयेत्सर्वदेवेशंश्रीकृष्णंदेवकीसुतम्
नमोमत्स्यायकूर्मायवराहायनमोनमः ९२
नमोऽस्तुहरयेतुभ्यं वामनायनमोनमः
नमोरामायरामायरामायबलिनेनमः ९३
नमोबुद्धायशुद्धायसकृपायनमोनमः
नमोस्तुकल्किनेतुभ्यंनमस्तेबहुमूर्त्तये ९४
नारायणायकृष्णायगोविंदायचशार्ङ्गिणे
दामोदरायदेवायदेवदेवायतेनमः ९५
हृषीकेशायशांतायव्योमपादायवैनमः
नमोस्तुपद्मापतयेनमस्तेपद्मचक्षुषे ९६
अनंतायनमस्तुभ्यंगदाहस्तायवैनमः
तार्क्ष्यध्वजायवैतुभ्यंनमस्तेचक्रपाणये ९७
पद्महस्तायवैतुभ्यमच्युतायनमोनमः

नमोदैत्यारयेतुभ्यंसर्वकामप्रदायिने ९८
माधवायसुरेशायविष्णवेपरमात्मने
किरीटिनेकुराडलिनेनमोऽस्तुहरयेसदा ९९
नमोभगवतेतुभ्यंवाहनंगरुडाह्वयम्
ॐनमोगरुडायेतिमंत्रेणैवविचक्षणः १००
नमःशंखायचक्रायगदायैचनमोनमः
नमःपद्मायखङ्गायनंदकायनमोनमः १०१
इतिसंपूज्यदेवेशंसदारंचसवाहनम्
सायुधंचततोमंत्रंजपेदष्टाक्षरंबुधः १०२
निजभक्त्याततोजप्त्वामंत्रमष्टाक्षरंबुधः
गोविंदायततोदद्यान्नानानैवेद्यमुत्तमम् १०३
धूपंदीपंचतांबूलंदेवदेवायविष्णवे
अन्यान्यप्युपहाराणिप्रदद्याद्वैष्णवो जनः १०४
यस्तुधूपंद्विजश्रेष्ठचंदनागरुवासितम्
दद्यान्मुरारयेतस्यद्रुतंसिध्यतिवांछितम् १०५
धूपंयच्छतियोविप्रहरयेघृतवासितम्
सगच्छेद्विष्णुभवनंविमुक्तः पापकोटिभिः १०६
नारायणाययोधूपंदद्याद्गुग्गुलुवासितम्
सयातिपरमंधामदुर्ल्लभंयत्सुरैरपि १०७
घृतेनदीपंयोदद्यात्तिलतैलेनवापुनः
निमेषात्सकलंतस्यपापंहरतिकेशवः १०८
कर्पूरवासितंयस्तुतांबूलंचक्रपाणये
दद्यात्तस्यद्विजश्रेष्ठमुक्तिर्भवतिजैमिने १०९
यस्तुयच्छतितांबूलंखदिरेणसमन्वितम्
इहभुक्त्वाखिलान्भोगानंतेयातिहरेः पदम् ११०
षष्ठीमधुरिकायुक्तंतथाजाति फलादिभिः
तांबूलंहरयेदत्वास्वर्गमाप्नोतिमानवः १११
शङ्खंकृत्वातुपानीयंकुर्याद्विष्णुप्रदक्षिणाम्
वक्ष्यमाणेनमंत्रेणजैमिनेवैष्णवोजनः ११२
जनार्दनजगद्बंधोशरणागतपालक

त्वद्दासदासदासत्वंदासस्यदेहिमेप्रभो ११३
मंत्रेणानेनयः कुर्यान्नारायणप्रदक्षिणाम्
तस्यपुण्यफलंवच्मिसंक्षेपाच्छृणुजैमिने ११४
ब्रह्महत्यादिपापानियानियानिमहांतिच
तानितानिप्रणश्यंतिप्रदक्षिण पदेपदे ११५
यावत्पादंनरोभक्त्यागच्छेद्विष्णुप्रदक्षिणे
तावत्कल्पसहस्राणिविष्णुनासहमोदते ११६
हरिप्रदक्षिणेयावत्पदंगच्छेच्छनैःशनैः
पदेपदेऽश्वमेधस्यफलंप्राप्नोतिमानवः ११७
प्रदक्षिणीकृत्यसर्वंसंसारेयत्फलंभवेत्
हरिंप्रदक्षिणीकृत्यतस्मात्कोटिगुणंफलम् ११८
अंगंप्रदक्षिणीकृत्ययस्तुनारायणाग्रतः
सोऽपितत्फलमाप्नोतिकिमन्यैर्बहुभाषितैः ११९
नलंघयेत्सोमसूत्रंधीमाञ्शंभुप्रदक्षिणे
लंघयित्वायदाविप्रसापूजानिष्फलाभवेत् १२०
प्रदक्षिणाकारतयावारैकंयोहरिंव्रजेत्
जन्मजन्मनिविप्रेंद्रसार्वभौमोभवेद्ध्रुवम् १२१
यस्तुवारद्वयंविप्रकुर्याद्विष्णुप्रदक्षिणाम्
ऐंद्रंपदमवाप्नोतित्रिदिनेनात्रसंशयः १२२
विष्णुप्रदक्षिणांयस्तुकुर्याद्वारद्वयंजनः
विमुक्तःसकलैःपापैःप्रविशेन्माधवींतनुम् १२३
भ्रामयेत्सोदकंशङ्खंकेशवोपरिजैमिने
अंतेदेवालयंगत्वासभवेत्सुरवंदितः १२४
प्रणमेद्दंडवद्भूमौसप्तधायस्तुकेशवम्
पातकंतच्छरीरस्थंभस्मीभवतितत्क्षणात् १२५
शिरस्यंजलिमाधायप्रणमेद्योजनार्दनम्
तस्मैलक्ष्मीपतिर्विष्णुर्ददातिपरमंपदम् १२६
भूमौनिपात्यसर्वांगंहरिंप्रणमतांनृणाम्
पुण्यप्रभावंविप्रर्षेवदतोमेनिशामय १२७
यावद्भूरेणुभिर्नृणां भूषितंस्यात्कलेवरम्

तावत्कल्पसहस्राणितिष्ठंतिहरिसंनिधौ १२८
ततःकेशवनिर्माल्यंवैष्णवेभ्यःप्रदीयते
वैष्णवांस्तान्प्रवक्ष्यामिशृणुसत्तमजैमिने १२९
शुकः सूतस्तथाव्यासोनारदः कपिलोमुनिः
प्रह्लादश्चांवरीषश्चतथाक्रूरोद्धवावपि १३०
बिभीषणोहनूमांश्चतथैवान्येऽपिवैष्णवाः
निर्माल्यंवासुदेवस्यगृह्णंतुसर्वकामदम् १३१
इत्युक्त्वाविष्णुनिर्माल्यंनिक्षिपेद्भुविवैष्णवः
ततस्तुहरिनिर्माल्यंस्वयंगृह्णातिभक्तितः १३२
मस्तकेदृश्यतेयस्यहरिनिर्माल्यमुत्तमम्
सविज्ञेयोद्विजश्रेष्ठसाक्षादेवहरिः स्वयम् १३३
दुर्लभंविष्णुनैवेद्यंनिर्माल्यंपापनाशनम्
गृह्णंतित्रिदशाः सर्वेमनुष्याणांचकाकथा १३४
जैमिनेतुलसीपत्रंयस्तुजिघ्रतिवैष्णवः
तस्यदेहांतरस्थंहिसर्वपापंविनश्यति १३५
तुलसीपत्रगंधस्तुप्रविशेद्यस्यनासिकाम्
आपदस्तच्छरीरस्थाः सद्योगच्छंतिसंक्षयम् १३६
तुलसीछदनघ्राणमाघ्राययोऽभिनंदति
तस्यालयेभवेन्नित्यमानंदोद्विजसत्तम १३७
स्तवैःस्तुत्वाजगन्नाथंकमलाप्रियमच्युतम्
कृतांजलिस्ततः प्राज्ञइमंमंत्रमुदीरयेत् १३८
नारायणजगद्रूपगच्छधामजगत्पते
गच्छदेवनिजस्थानंप्रसन्नोभवसर्वदा १३९
येयंस्वशक्त्यादेवेंद्रतवपूजाकृतामया
अच्छिद्रास्तुजगन्नाथत्वत्प्रसादाज्जगन्मय १४०
ततःपादोदकंप्राज्ञोमहाविष्णोः परात्मनः
समस्तपातकध्वंसिगृह्णीयाद्भक्तिभावतः १४१
कणमात्रंवहेद्यस्तुविष्णोःपादोदकंशुभम्
सस्नातः सर्वतीर्थेषुजैमिनेसत्यमुच्यते १४२
स्पृशेत्पादोदकंविष्णोर्गंगास्नानफलंभवेत्

गांगेयंसलिलंविप्रविष्णुपादोदकंयतः १४३
अकालमरणंनास्तिनास्तिव्याधिभयंतथा
यःस्पृशेत्पादसलिलंकेशवस्यमहात्मनः १४४
पापव्याधिविनाशार्थंविष्णुपादोदकौषधम्
पापिनोऽपिनरास्तेचपिबंतुप्रतिवासरम् १४५
विष्णुपादोदकंविप्रयःपिबेद्वैष्णवोजनः
पातकंतच्छरीरस्थं क्षणादेवतुनश्यति १४६
यथौषधेनदेहस्थंहन्यतेदेहिनोभृशम्
तथैवपातकंसर्वंविष्णुपादोदकेनच १४७
विष्णुपादोदकंशुद्धंतुलसी पत्रसंयुतम्
योवहेच्छिरसाविप्रतस्यपुण्यंवदाम्यहम् १४८
ब्रह्महत्यादिभिः पापैर्विमुक्तोविष्णुरूपधृक्
अंतेविष्णुपुरंगत्वाविष्णुनासहमोदते १४९
मेरुप्रमाणहेमानिदत्वाभवतियत्फलम्
विष्णुपादोदकंस्पृष्ट्वातद्भवेदधिकंफलम् १५०
अश्वकोटिप्रदानेनतत्फलं प्राप्यतेजनैः
सप्तद्वीपांमहींदत्वाद्विजेभ्योयत्फलंलभेत् १५१
तत्फलंलभतेमर्त्योविष्णुपादोदकंस्पृशन्
अश्वमेधसहस्राणिकृत्वाभवतियत्फलम् १५२
विष्णुपादोदकंस्पृष्ट्वातद्भवेदधिकंफलम्
दीर्घिकाशतदानेनयत्पुण्यंपरिकीर्तितम् १५३
तस्मादप्यधिकंपुण्यंलभेत्पादोदकंस्पृशन्
बहुनात्रकिमुक्तेनसंक्षेपादुच्यतेमया १५४
विष्णुपादोदकस्पर्शान्मुक्तोभवतिमानवः
भूयोभूयोपिविप्रेंद्रसुदृढंकथ्यतेमया १५५
पुनर्नलभतेजन्मस्पृशन्पादोदकंहरेः
विष्णुनैवेद्यशेषंयः सर्वपापविनाशनम् १५६
योऽश्नातिभक्तिभावेनसगच्छेत्परमंपदम्
दुर्लभंविष्णुनैवेद्यभुंजतेद्विजसत्तम १५७
देहंत्यजतिपापानिब्रह्महत्यामुखान्यपि

भुंजतोहरिनैवेद्यंदासीववशगाभवेत् १५८
मुक्तिभूमिः सुरश्रेष्ठदैवतैरपिदुर्लभा
संपूज्यकमलाकांतंकिंचिन्नैवेद्यमत्यजन् १५९
अचिरेणैवतंविष्णुर्नयतिस्वांतनुंप्रति
नैवेद्यस्यमहाविष्णोर्गुणंकिंकथयाम्यहम् १६०
यद्भुंजतः केशवोऽपिस्यादधीनोद्विजप्रभो
अनेनविधिनाविप्रप्रतिमासेजनार्दनम् १६१
विधिहीनामपिश्रेष्ठांपूजांश्रीकमलापतेः
यःकुर्याद्भक्तिभावेनसोऽपिस्यात्केशवप्रियः १६२
विधिज्ञोविधिनाविष्णुमभ्यर्च्यर्यत्फलंलभेत्
यथोक्तविधिनाविप्रनैवेद्यैर्बहुभिः प्रभो १६३
पूजितोऽपिनतुष्टःस्याद्यदिभक्तिर्नतिष्ठति
यस्यवैयावतीभक्तिर्देवदेवेजनार्दने १६४
तावदेवफलावाप्तिस्तस्य नास्त्यत्रसंशयः
अभक्त्यायाहरेः पूजाक्रियतेभुविमानवैः १६५
सापूजाब्राह्मणश्रेष्ठपूजाकालेभवेत्किल
ज्ञानमूलंहरेर्भक्तिर्भक्तिमूलंजगत्पतेः १६६
पूजामोक्षद्रुमोत्पत्तौमूलमाराधनंहरेः
अल्पमात्रमपिप्राज्ञश्रद्धयाकुरुतेहियत् १६७
तदक्षयंभवेत्सर्वंश्रद्धायुक्ताखिलाक्रिया
भक्त्यायःपूजयेद्विष्णुंवारिमात्रमपिद्विज १६८
संस्थानंलभतेविष्णोर्यतोभक्तवशोहरिः १६९
असारमेतद्भुवनंसमस्तंसारंहरेः पूजनमेवविप्र
तस्मान्मनुष्योनिजमंगलैषीभक्त्यायजेत्कृष्णमनंतमूर्तिम् १७०
इति श्रीपद्मपुराणेक्रियायोगसारेहरिपूजाविधिर्नामएकादशोऽध्यायः ११

## द्वादशोऽध्यायः

व्यास उवाच-
फाल्गुनेब्राह्मणश्रेष्ठश्रीकृष्णंसुरवंदितम्
पूजयेद्भक्तिभावेनप्रत्यहंवैष्णवोजनः १

फाल्गुनेस्नापयेद्यस्तुसर्पिषादेवकीसुतम्
फलंतस्यप्रवक्ष्यामियतः सम्यङ्निशामय २
सर्वयज्ञफलंप्राप्यसर्वदानफलंतथा
अंतेयातिहरेःस्थानंसर्वपापविवर्जितः ३
युगकोटिसहस्राणिभुक्त्वाभोगंहरेर्गृहे
तत्रैवमोक्षमाप्नोतिसंप्राप्यज्ञानमुत्तमम् ४
यस्तुयच्छतिकृष्णायशिशिरेगोपमूर्तये
तिलानांमोदकंदिव्यंसगच्छेद्धरिमंदिरम् ५
योदुग्धलड्डुकान्दद्यात्केशवायमहात्मने
सपिबेदमृतंस्वर्गेमन्वंतरशतावधि ६
हरयेललितंखंडंयस्तुयच्छतिजैमिने
तस्यविष्णुःप्रसन्नात्माछिनत्तिभवबंधनम् ७
विचित्रंफलितंदिव्यंदद्याद्भगवतेद्विज
अंतेशक्रपुरंगत्वासभवेत्सुरवंदितः ८
निर्मलांशर्करायच्छेद्यस्तुकृष्णायभक्तिमान्
सकिंनलभतेविप्रवासुदेवप्रसादतः ९
सुपक्वंफाल्गुनेमासिमधुरंबदरीफलम्
यस्तुयच्छतिकृष्णायफलंतस्यनिशामय १०
इहभुङ्क्तेसुखंसर्वंपुत्रपौत्रसमन्वितः
अंतेहरेर्गृहंयातिरथमारुह्यशोभनम् ११
नदद्याद्गुडसंयुक्तंहरयेबदरीफलम्
अज्ञानाद्ब्राह्मणश्रेष्ठदद्याच्चेन्नारकीभवेत् १२
फाल्गुनेमासियोदद्याद्धरयेदाडिमीफलम्
सुपक्वंतत्फलंविप्रवदतोमेनिशामय १३
तत्रयावंतिबीजानितिष्ठंतिदाडिमीफले
तावन्मन्वंतरंविष्णोर्गृहेतिष्ठतिभाग्यवान् १४
फाल्गुनेमासियोदद्याद्धरयेगुडपिष्टकम्
सविज्ञेयोद्विजश्रेष्ठवाजिमेधसहस्रकृत् १५
चैत्रेमासिद्विजश्रेष्ठमधुनामधुसूदनम्
स्नापयेल्लभतेमर्त्यस्तद्विष्णोःपरमंपदम् १६

मधुनास्नापयेद्यस्तुनारायणमनामयम्
नचर्चाक्रियतेतस्यकदाचिद्रविसूनुना १७
चैत्रेकिंशुकपुष्पेणयोऽचयेत्कमलापतिम्
तन्नामचित्रगुप्तेनपंजिकायांनलिख्यते १८
चैत्रकेजगतामीशंकृष्णंतिलकपुष्पकैः
पूजतोनास्तिवैजन्मपुनरस्मिन्महीतले १९
कृष्णवंजुलपुष्पेणसर्वदेवशिरोमणिम्
पूजयन्मनुजोविप्रलभतेनापदंक्वचित् २०
वासंतीभिः सुगंधीभिर्वसंतेयस्तुपूजयेत्
भगवंतंप्रसन्नात्मासदेवैरपिपूज्यते २१
तथाकिसलयैर्दिव्यैरखण्डैर्योऽचयेद्धरिम्
तंवंदतेसमुत्थायस्वयंपीठासनोपिच २२
धात्रीपत्रैर्नवैर्यस्तुकोमलैर्हरिमर्चयेत्
अचिरेणैवलभतेसकलंवांछितंजनः २३
शांडिल्याखंडपत्रैश्चधत्तूरैश्चार्कपुष्पकैः
योऽचयेद्विष्णुमीशंचससंसाराब्धिपारगः २४
योदद्याद्विष्णवेविप्रकदलीफलमुत्तमम्
शक्राद्यास्त्रिदशाः सर्वेवंदंतेतमहर्निशम् २५
योदद्याच्चैत्रकेमासिभक्त्यागोपालरूपिणे
गोधूमपिष्टकंविप्रसर्वपापैः प्रमुच्यते २६
आयातेमाधवेमासिपवित्रेमाधव प्रिये
आमिषंमैथुनंतैलंविष्णुभक्तः परित्यजेत् २७
प्राप्तः समाचरेत्स्नानंमाधवेमासिवैष्णवः
परित्यजेत्परान्नंचनकुर्याच्चद्विभोजनम् २८
प्रभातेपूजयेद्विष्णुंपूर्वोक्तविधिनाद्विज
वैशाखेस्नापयेद्विष्णुंपुष्पवासितवारिणा २९
स्नापयेच्छीततोयेषुसंध्यापर्यंतमच्युतम्
त्रिसंध्यंपूजयेद्भक्त्यानैवेद्यैर्विविधैःप्रभुम् ३०
वैशाखेदमनस्त्रग्भिर्लक्ष्मीपतिरलंकृतः
नकिंददातिविप्रर्षेप्रसन्नः परमेश्वरः ३१

वैशाखेमासियोदद्याद्यवान्नंचक्रपाणये
तस्यपुण्यानिसंख्यातुंकः समर्थोऽस्तिपंडितः ३२
यत्किंचिन्माधवेमासिमाधवप्रीतिहेतवे
दीयतेमाधवायैवतत्सर्वमक्षयंभवेत् ३३
यदन्यत्सुकृतंकर्मक्रियतेमासिमाधवे
माधवप्रीतयेविप्रक्षयस्तस्यनविद्यते ३४
वैशाखेमासियः कुर्यात्प्रपांमाधवतुष्टये
दिनेदिनेऽश्वमेधस्यफलमाप्नोतिमानवः ३५
वैशाखोदुर्ल्लभोमासः सर्वकर्मफलप्रदः
पूजितव्योहरिस्तत्रहित्वाकर्मशतान्यपि ३६
एकाहमपियः पूजांवैशाखेकुरुतेहरेः
षड्वर्षंहरिंपूजित्वायत्फलंलभतेसतत् ३७
वैशाखेमासियोनित्यंविष्णुमश्वत्थरूपिणम्
चतुर्वर्गफलप्राप्तिहेतवेवैष्णवोजनः ३८
गण्डूषमात्रतोयेनकुर्याद्योऽश्वत्थसेवनम्
सोऽपियातिपरंस्थानंविमुक्तः कोटिपातकैः ३९
अश्वत्थमूलंविप्रर्षेयोबध्नातिशिलादिभिः
अश्वत्थरूपीभगवान्किंकिंतस्मैनयच्छति ४०
अश्वत्थद्रुममालोक्यप्रणामंकुरुतेयदि
सोऽपियातिपरंस्थान मायुर्बृद्धिर्नसंशयः ४१
यदश्वत्थतलेविप्रधर्मकर्मकरोतियः
न्यूनातिरिक्ततानस्यात्तस्मिन्कर्मणिजैमिने ४२
तत्रतीर्थानिसर्वाणित्रिस्त्रोतादीनिजैमिने
यत्राश्वत्थतरुस्तिष्ठेदेकोपिशाखिनांवरः ४३
अश्वत्थंपूजयेद्यस्तुसएवविष्णुपूजकः
अश्वत्थमूर्तिर्भगवान्स्वयमेवयतोद्विज ४४
अवज्ञानाद्द्विजश्रेष्ठयोऽश्वत्थंहंतिमूढधीः
संसारेनास्तितत्कर्मयत्कृत्वासचशुद्ध्यति ४५
अश्वत्थोवृक्षराजोऽयहरिमूर्तिः प्रकीर्तितः
तस्मादश्वत्थहंतृणांत्राताकोऽपिनविद्यते ४६

अश्वत्थंपश्यतोविप्रस्पृशतः परतस्तथा
देहस्थंपातकंसर्वंहरेत्प्रणमतोहरिः ४७
विलोक्याश्वत्थहंतारंयः शक्तोननिवारयेत्
तन्नेत्रयुग्मंबडिशैर्यमेनोत्पाटचतेस्वयम् ४८
अश्वत्थच्छेदनंमूढोमाकुर्वितिवदेन्नयः
तस्यजिह्वांछुरिकयास्वयंकृंततिप्रेतराट् ४९
अश्वत्थशाखामेकांयःस्वल्पामपिनिहंतिवै
सकोटिब्रह्महत्यानांफलमाप्नोतिमानवः ५०
यत्पापंब्रह्महत्यायांगुरुस्त्रीगमनेनच
सुरापानेतथास्तेयेन्यासापहरणेऽपिच ५१
यत्पापंभ्रूणहत्यायांगोहत्यायांद्विजोत्तम
स्त्रीहत्यायांचयत्पापंपरस्त्रीगमनेतथा ५२
शरणागत हत्यायांहत्यायांसुहृदस्तथा
विश्वासवाक्याकथनेपतिहिंसाविधौचयत् ५३
यत्पापंपरनिंदायांहरिवासरभोजने
अश्वत्थच्छेदनाद्धोरंतत्पापंप्राप्यतेजनैः ५४
विष्णुमूर्त्तेर्जनोमोहादश्वत्थस्यनिहंतियः
तत्तुल्यः पातकीकोऽपिनश्रुतःक्षितिमंडले ५५
वदाम्यश्वत्थमाहात्म्यंसर्वपापविनाशनम्
सेतिहासंद्विजश्रेष्ठशृणुवत्ससमाहितः ५६
पूर्वंधनंजयोनामब्राह्मणोहरिभक्तिकृत्
आसीत्त्रेतायुगेविप्रसर्वप्राणिहितेरतः ५७
ज्ञातिपूजारतोनित्यंदीपदानेरतःसदा
सत्यवादीजितक्रोधोहिंसादंभविवर्जितः ५८
मुमुक्षुःसद्विजश्रेष्ठसर्वदापरमेश्वरम्
पूजयामासपरयाभक्त्यानारायणंप्रभुम् ५९
तस्यभक्तिंततोज्ञात्वामहतींसुदृढांप्रभुः
जहारसकलंवित्तंहेतुमात्रेणकेनचित् ६०
तथापिसद्विजश्रेष्ठःकेशवस्यमहात्मनः
पूजामनुदिनेचक्रेभक्त्यापरमयासुधीः ६१

दुःखेनोपार्जितंवित्तंविनष्टंसकलंद्विज
दृष्ट्वापितेनविप्रेणदुःखेनाचिंत्यचेतसा ६२
भक्षणेवर्जनंचक्रेसविप्रः परमार्थवित्
महाविष्णुसपर्यायांदृढंबद्धवामनोनिजम् ६३
भूयोऽपितस्यविप्रस्य भक्तिंज्ञात्वाजनार्दनः
चकारबंधुविच्छेदंसुदृढः शमदस्ततः ६४
बांधवास्तस्यविप्रस्यविष्णुमायाविमोहिताः
हिंसामारेभिरेकर्तुंसर्वदैवद्विजोत्तम ६५
ततोविप्रोहिनिर्वृत्तोनिर्बंधैः पुरुषोत्तमम्
पूजयामाससततंप्रीतः प्रचुरभक्तितः ६६
परिकल्प्यचभूदेवोधनंकेशवपूजने
माधवंचजगन्नाथंसबंधुशुचमत्यजत् ६७
भूयएवमहाविष्णुःकौतुकीतस्यजैमिने
जहारसानुकंपोऽपिपुत्रानपिदिनेदिने ६८
तथापिसद्विजश्रेष्ठःकेशवंक्लेशनाशनम्
पूर्वद्विगुणयाभक्त्यानित्यंविष्णुमपूजयत् ६९
तस्यपत्नीततोविप्रदुःखशोकातिदुःखिता
पितृगेहंगताविष्णोर्माययापरिमोहिता ७०
अथैकाकीसभूदेवोविष्णुभक्तिपरायणः
विपदंचिंतयामासनकदापिसुचेतसा ७१
एकदासद्विजश्रेष्ठविष्णुभक्तिमतांवरः
स्कंधेपरशुमादायकाष्ठार्थंविपिनेययौ ७२
वनात्काष्ठंसमादायनित्यमेवचसद्विजः
हिमागमेवस्त्रहीनः कुरुतेशीतवारणम् ७३
कदाचिद्विपिनंगंतुंनाशक्नोद्दिवजसत्तमः
जघानप्रांगणस्थस्यशाखामश्वत्थशाखिनः ७४
अत्रांतरे महाविष्णुस्तस्मादश्वत्थपादपात्
निश्चक्रामसुरश्रेष्ठोव्यथाव्यथितमानसः ७५
ददर्शविष्णुंपुरतः सविप्रश्चतुर्भुजंपद्मदलायताक्षम्
पीतांबरंकुंडलिनंसुकेशंदधानमब्जादिनिजायुधानि ७६

परिस्रवद्भिस्तररक्तधारासंध्यासुशोणीकृतनव्यमेघम्
विभावसुंचैवसुखंपरेशंसंदृश्यतेदेवगणैरदृश्यम्
हर्षाश्रुधारारुचिराक्षियुग्मस्तुष्टाववविप्रोमृदुलैर्वचोभिः ७७
ब्राह्मणउवाच-
हरेमुरारेजगदेकनाथगोविंददामोदरमाधवेति
लक्ष्मीपतेकेशवकेशिशत्रोनारायणानंतविभोप्रसीद ७८
तवावतारंकिमहंब्रवीमित्वयाविनानास्तिभुवीहकोऽपि
किंवागुणव्याप्तसमस्तलोकंकिंवादयांमित्रपरैकतुल्याम् ७९
दत्वास्वीयांकस्यचिदीशविष्णोभक्तिंहरस्यच्युतदेहसंस्थाम्
श्रियंसमादायमुदंप्रदास्येभक्तिःप्रदत्तामहतःसुधन्या ८०
मन्येमहात्मानमनंतमूर्त्तेपापात्मनांश्रेष्ठमिवानिशंयत्
तदर्थमेवांघ्रियुगंत्वदीयंनपातकीपश्यतिदैवचिंत्यम् ८१
यद्यप्यहंदुःखवतांवरिष्ठोमन्येतथापीन्द्रमिवाद्यविष्णो
आत्मानमात्माजगतांभवंतंसाक्षात्समीक्षेयतईक्षणाभ्याम् ८२
पूजांतवाल्पामपिवेद्मिनाहंद्रव्यंकदापिनददामितुभ्यम्
तथापिचाग्रेममूर्तिमांस्त्वंदृष्टोसिमेकेशवएकपूज्यः ८३
दत्तस्त्वयायंममभक्तिवृक्षोधमार्थकामत्रयएवसोऽयम्
त्वद्दर्शनांभोमयवृष्टिसिक्तःप्रभोऽद्यकैवल्यफलंदधार ८४
मूर्धामदीयोऽखिललोकमूर्ध्नांश्रेष्ठोभवेत्केशवविश्वमूर्तेः
त्वत्पादपाथोजयुगेमनोमेसंयातिवैसंप्रतिदेवदेव ८५
व्यासउवाच-
इत्थंस्तुत्वाजगन्नाथंनारायणमनामयम्
कृतांजलिपुनःप्राहभक्त्यातमितिसद्द्विजः ८६
ब्राह्मणउवाच-
देवदेवजगन्नाथलोकानुग्रहकारक
कशाप्रहरणैरेतद्गात्रंतेरुधिरोक्षितम् ८७
सर्वेषामेवदैत्यानांयुधिवंशास्त्वयाहताः
त्वांहंतुंकःक्षमःपृथ्व्यांप्रभोऽद्भुतमिदंमहत् ८८
भगवानुवाच-
वत्ससत्यमिदंप्रोक्तंत्वयानास्त्यत्रसंशयः

दानवोराक्षसोवापिमांहंतुंकोऽपिनक्षमः ८९
अश्वत्थमूर्तिरेवाहंकुठारेणहतस्त्वया
अतोऽजनिशरीरेमेरक्तपातोऽधुनाद्विज ९०
व्यासउवाच-
तस्यवाक्यमिदंश्रुत्वासविप्रोभयविह्वलः
निनिंदस्वयमात्मानमात्मनाबहुधाद्विजः ९१
धिगस्तुतत्वतोभाग्यंसर्वपातकिनांवरम्
त्रैलोक्याधिपतेर्दाताहृदयेमहतींव्यथाम् ९२
सर्वपापहरोविष्णुःसमयाव्याधितः कृतः
एतत्पापंमयापारंकर्तुं नैकेनशक्यते ९३
यस्मिंस्तुष्टेपापिनोऽपिभवंतिसुरवंदिताः
मद्दत्तयासव्यथयाव्यथितोहाहतोऽस्म्यहम् ९४
प्रसादयंतियंदेवाब्रह्माद्याअतिभक्तितः
अहोमयापापवतातस्यदत्ताहृदिव्यथा ९५
किंतपोभिर्जपैःकिंवाकिंगृहैर्जीवनैश्चमे
धर्मार्थकाममोक्षाणांदातैकोऽयव्यथातुरः ९६
इत्युक्त्वासद्विजश्रेष्ठतमेवपरशुंनिजे
दातुंकंठेमनश्चक्रेविष्णुप्रीणनहेतवे ९७
तस्यभक्तिंदृढांज्ञात्वादयालुः कमलापतिः
तद्धस्तात्तत्परंनिन्येजवेनभक्तवत्सलः ९८
श्रीभगवानुवाच-
कथंत्वमेवकुरुषेवत्सकर्मातिदारुणम्
आत्महत्याकृतांपुंसांतुष्टोस्मिनकदाप्यहम् ९९
तवभक्त्यातितुष्टोऽस्मिभीतिंमाकुरुसत्तम
वरंवरयविप्रेन्द्रयत्तेमनसिवर्तते १००
ब्राह्मणउवाच-
मयाव्यथाप्रदत्तेयंमहतीपरमेश्वर
मातिष्ठतुशरीरेतेयाचेवरमिमंप्रभो १०१
श्रीभगवानुवाच-
अज्ञानाद्भवतावत्सकर्मेदंविहितंद्विज

अतोऽपराधोनेतव्योमहानपिनतेयथा १०२
नित्यंतवानुपाल्योऽस्मिभक्तश्रेष्ठोयतोभवान्
भवदीयानहंमन्येदोषान्वत्सदिनेदिने १०३
तथापिममभक्तिस्तेववृधेमहतीसदा
तस्माद्वत्सतवानृरायंगंतुमिच्छामिसंप्रति १०४
विहायसकलांभीतिंवरंवृणुममाग्रतः
ब्राह्मणउवाच-
त्वयिसर्वसुरश्रेष्ठममजन्मनिजन्मनि १०५
तिष्ठतांसुदृढाभक्तिर्हरेकिमपरैर्वरैः
व्यास उवाच-
श्रुत्वावाक्यमिदंतस्यकेशवप्रणयोदितम् १०६
निजकराठस्थितांमालांप्रीतस्तस्मैददौततः
समालिङ्ग्यततोविप्रंपितापुत्रमिवप्रभुः १०७
चतुर्भिर्बाहुभिर्दीर्घैरुवाचमृदुलंवचः
श्रीभगवानुवाच-
मद्भक्तोऽसियदाविप्रतथातेमत्प्रसादतः १०८
अचिरेणैवसकलंभद्रंविप्रभविष्यति
अश्वत्थरूपंमांनित्यंक्रियायोगेनसत्तम १०९
समाराधयसर्वंतेसाधयिष्यामिवांछितम्
इत्युक्त्वातंद्विजश्रेष्ठंभूयोऽप्यालिङ्ग्यकेशवः ११०
अभवत्सहसादृश्यस्तत्रैवकरुणालयः
विष्णोःकंठस्त्रजंप्राप्यसविप्रोवैष्णवोत्तमः १११
कृतकृत्यमिवात्मानंमत्वातस्थौनिजेगृहे
ततःकुबेरोविप्रर्षेतस्यविप्रस्यसद्मनि ११२
स्वयंववर्षवित्तानिबहूनिकेशवाज्ञया
प्रासादोरचितस्तस्यशिल्पिनाविश्वकर्मणा ११३
नारायणाज्ञयातत्रवैजयंतइवोत्तमः
दासदासीसमायुक्तोनानावस्तुविभूषितः ११४
गजाश्वकोटिसंकीर्णविबभौतस्यमन्दिरम्
बभुवुःसंगतास्तस्यनष्टाअपिचबांधवाः ११५

कृतावज्ञाचतत्पत्नीस्वयंतद्गृहमाययौ
मृतपुत्रापितत्पत्नीकेशवस्यानुकंपया ११६
स्थिरप्रजाभवद्विप्रस्वामिभक्तिपरायणा
चिरंभुक्त्वाखिलान्भोगान्पुत्रपौत्रसमन्वितः ११७
आयुषोंऽतेययौमोक्षंसदारोविप्रसत्तमः
व्यासउवाच-
साक्षादेवस्वयंविष्णुरश्वत्थोवृक्षसत्तमः ११८
तद्भक्तिंकुर्वतां पुंसांविद्यतेनाशुभंक्वचित्
अश्वत्थंसेवतेयस्तुविष्णुंध्यात्वानरोत्तम ११९
तस्यप्रसन्नोभगवान्ददातिपरमंपदम् १२०
इति श्रीपद्मपुराणेक्रियायोगसारेअश्वत्थमाहात्म्येद्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

व्यास उवाच-
ज्येष्ठेमासिद्विजश्रेष्ठभगवंतंजनार्दनम्
पूजयेद्भक्तिभावेनजलैःसंस्नाप्यशीतलैः १
उद्वर्तनंचदातव्यंसुगन्ध्यामलकंतथा
तैलंसुगंधंहरयेग्रीष्मकालेदिनेदिने २
सुवासितेशीतलेचमन्दिरेऽतिमनोरमे
प्रत्यहंकमलाकांतंस्थापयेज्जनमंडपे ३
नरौद्रदेशेविप्रेन्द्रसधूमेइंधनालये
नसूतिकागृहेचैवस्थापयेत्कमलापतिम् ४
चामरैर्वीजितःश्वेतैः सुदीर्घैः कमलापतिम्
ज्येष्ठेमासिद्विजश्रेष्ठसुप्रीतः किंनयच्छति ५
मयूरपुच्छव्यजनैर्निदाघैर्वीजितोहरिः
ददात्यभिमतंसर्वमचिरेणैवसत्तम ६
तालवृंतकवातेनपवित्रांबरवायुना
यैग्रीष्मेवीज्यतेविष्णुस्तेसर्वेस्वर्गगामिनः ७
योगात्रलेपनंकुर्यात्सुगन्धीयैश्चकर्दमैः
ग्रीष्मेहरिंचंदनैश्चसविशेन्माधवींतनुम् ८

उष्मागमेद्विजश्रेष्ठसमुक्तोनात्रसंशयः
प्रफुल्लकुसुमोद्यानेतुलसीकाननेतथा ९
संध्यायांस्थापयेद्विष्णुंदेशेधीरसमीरणे
स्रग्भिःपाटलपुष्पाणांयेनविष्णुरलंकृतः १०
ज्येष्ठेमासिसविज्ञेयोऽश्वमेधसहस्रकृत्
यस्तुमुक्तावलिदद्याद्ग्रीष्मेवैश्रीपतेर्जनः ११
भूपालत्वंहरिस्तस्मैयच्छेज्जन्मनिजन्मनि
यस्तुमण्डयतिग्रीष्मेश्रीकृष्णंमणिमालया १२
तस्यपुण्यफलंविप्रवदतोमेनिशामय
यावद्ब्रह्मासृजत्येतज्जैमिनेसकलंजगत् १३
तिष्ठेद्विष्णुपुरेतावन्मणिमालाविभूषितः
सुवर्णाभरणैर्यस्तुरजताभरणैस्तथा १४
कृष्णंमंडयतिग्रीष्मेसोऽपितत्फलमाप्नुयात्
विचित्रंयस्तुपर्यंकंसगंडूकंप्रयच्छति १५
हरयेदेवदेवायनसदुःखीकदाचन
ग्रीष्मकालेनदेयानिगुरूणिवसनानिच १६
हरयेब्राह्मणश्रेष्ठदेयंतन्वंशुंकंशुचि
यस्त्वच्युतफलैर्दिव्यैःसुगंधैःपूजयेद्धरिम् १७
अंतेशक्रपुरंगत्वासपिबेदमृतंमुदा
प्रियालानांफलैर्दिव्यैर्योऽचयेत्कमलापतिम् १८
सोऽपितत्फलमाप्नोतिकिमन्यैर्बहुभाषितैः
निदाघेहरयेयस्तुयवागूमतिशीतलाम् १९
नानाव्यंजनसंयुक्तांश्रद्धयावैष्णवो जनः
आषाढेमासिविप्रेन्द्रदेवदेवंजगद्गुरुम् २०
दधिभिःस्नापयित्वाचपूजयेद्भक्तितोबुधः अं
मात्रुःपयोधरपयःपुनस्तेननपीयते २१
घनागमेघनश्यामंकदंबकुसुमैर्हरिम्
आराधयतिविप्रर्षेपराङ्गतिमवाप्नुयात् २२
कदम्बपुष्पमालाभिर्मण्डपंज्वलनोपमम्
यस्तस्यब्राह्मणश्रेष्ठवाजिमेधफलंभवेत् २३

सुगन्धैःकेतकीपुष्पैःपूजितः कमलापतिः
सर्वदुःखंहरत्येवमानवानांद्विजोत्तम २४
पनसानांफलैर्दिव्यैःसुपक्वैर्घृतमिश्रितैः
पूजितोभगवान्विष्णुर्दद्यादैश्वर्यमुत्तमम् २५
आषाढेमासिदध्यन्नंहरयेप्रतिवासरम्
श्रद्धयावैष्णवोदद्यान्मुक्तिमिच्छन्द्विजोत्तम २६
कृष्णायनवनीतंयोददातिवैष्णवोजनः
विशुद्धःसकलैःपापैर्ब्रह्मलोकंसगच्छति २७
शेफालिकाप्रसूनैश्चयूथिकाकुसुमैस्तथा
योऽचयेत्परमात्मानंसगच्छेत्परमंपदम् २८
प्रफुल्लमालतीपुष्पैःसुगन्धैर्योऽचयेद्धरिम्
तत्पुण्येनास्यतत्पुण्यंयेननोभविताद्विज २९
कंदपुष्पैश्चवकुलैर्जगद्वंधुंजनार्दनम्
अर्चयन्सकलंकामंप्राप्नोतिभुविमानवः ३०
महामहाप्रसूनैश्चतथाकुरुबकैर्हरिम्
प्रफुल्लैःपूजयेद्यस्तुतस्यतुष्टःसदाहरिः ३१
सैरीयकैश्चयोविष्णुंप्रसूपुष्पैश्चयोऽचयेत्
करवीरप्रसूनैश्चसयातिहरिसन्निधिम् ३२
श्रावणेचैवयोदद्याल्लाजान्धृतसमन्वितान्
हरयेतस्यविप्रर्षेगृहेश्रीःसर्वतोमुखी ३३
भाद्रेमासिद्विजश्रेष्ठनारायणमनामयम्
श्रद्धयापूजयेत्प्राज्ञश्चतुर्वर्गप्रदायकम् ३४
निर्मितेनूतनागारेसर्वोपद्रववर्जिते
स्थापयेत्पुण्डरीकाक्षंभगवंतंजनार्दनम् ३५
दंशैश्चमशकैश्चापिप्रकीर्णेमक्षिकादिभिः
हरिंपुरातनागारेस्थापयेन्नहिमानवः ३६
सकर्दमेपतद्द्वारेगलद्भित्तौगृहेतथा
हरिंनस्थापयेत्प्राज्ञोवर्षासुपरमेश्वरम् ३७
विष्णवाल्येद्विजश्रेष्ठप्रकुर्याद्यस्तुऽमानवः
चन्द्रातपंविचित्रंचचन्द्रलोकंसगच्छति ३८

रात्रौनानाविधैर्धूपैर्मनिन्दरेजगतीपतेः
दंशाश्चमशकाश्चैवपूजाकालेनिवारयेत् ३९
मंसारिकाभिः प्राबृत्यमंचशायिनमच्युतम्
प्रावृषिस्थापयेद्विष्णुंनिशायांदिव्यमंदिरे ४०
कह्लारपत्रैर्देवेशंसुगंधैर्नूतनस्तथा
मुमुक्षुःपूजयेन्मर्त्योभाद्रेमासि दिनेदिने ४१
नभाद्रेकेतकीपुष्पैःपूजितव्योजनार्दनः
यतोभाद्रपदेमासिकेतकीस्यात्सुरासमा ४२
पक्वैस्तालफलैर्दिव्यैर्योऽचयेद्यदुनंदनम्
गर्भवासमहादुःखंसभूयोलभतेनच ४३
संयुक्तंघृतदुग्धाभ्यांपक्वतालंमुरारये
योदद्याच्छ्रद्धयामर्त्यःसगच्छेन्मन्दिरंहरेः ४४
भाद्रेमासिद्विजश्रेष्ठहरयेतालपिष्टकम्
सघृतंवैष्णवोदद्यात्केवलप्राप्तिहेतवे ४५
मासिभाद्रपदेविप्रनकुर्याच्छाकभक्षणम्
नरात्रौभोजनंकुर्यान्मुमुक्षुर्वैष्णवोजनः ४६
आश्विनेमासिविप्रेन्द्रकेशवंक्लेशनाशनम्
यत्तोयंदीयतेविप्रपूर्वाह्णेहरयेजनैः ४७
पीयूषमिवतत्तोयंगृह्णातिकमलापतिः
मध्याह्नेदीयतेयच्चतत्तोयंचक्रपाणये ४८
तत्तोयमिववेत्तव्यंतद्गृह्णातिद्विजोत्तम
अपराह्णेचयत्तोयंगोविन्दायप्रदीयते ४९
तत्तोयंरक्ततुल्यंस्यान्नगृह्णातिततोहरिः
अतएवद्विजश्रेष्ठपूर्वाह्णेहरिमर्चयेत् ५०
समस्तंलभतेकामंकेशवस्यानुकंपया
एकवस्त्रेणविप्रेन्द्रनकुर्यात्पूजनंहरेः ५१
कुर्याद्वापितथापूजांनगृह्णातिचकेशवः
अधौतेनचवस्त्रेणयःपूजांकुरुतेहरेः ५२
विफलासाचपूजास्यान्नचविष्णुःप्रसीदति
यैस्त्वबद्धशिखैःपूजाक्रियतेचक्रिणोजनैः ५३

पूजाफलंनाप्नुवंतिबलिग्राह्याचसाभवेत्
असंस्कृतगृहेपूजाक्रियतेजगतीपतेः ५४
सापूजाब्राह्मणश्रेष्ठबलिग्राह्याभवेत्खलु
स्नानंदेवार्चनंचैवदानंचपितृपूजनम् ५५
तिलकेनविनाविप्रकुरुतेनविचक्षणः
तिलकान्यगृहीत्वायत्पुण्यकर्मविधीयते ५६
भस्मीभवतितत्सर्वंकर्ताचनारकीभवेत्
शङ्खचक्रगदापद्मैरङ्कितंयस्यदृश्यते ५७
शरीरंब्राह्मणश्रेष्ठविज्ञेयः सोऽच्युतःस्वयम्
योलिखेद्दक्षिणेबाहौशङ्खपद्मेचवैष्णवः ५८
सव्येचक्रंगदांचैवसविष्णुर्नात्रसंशयः
पङ्कजंदक्षिणेबाहौशङ्खस्योपरियोलिखेत् ५९
पातकंसकलंतस्य क्षणादेवतुनश्यति
चक्रोपरिगदांयस्तुलिखेत्सव्येभुजेद्विज ६०
तंवंदंतेद्विजश्रेष्ठशक्राद्याअपिनिर्जराः
मुरारिपादयुग्मंचस्वललाटेलिखेद्बुधः ६१
पापात्मापिचतंदृष्ट्वामुक्तोभवतिपातकात्
अष्टाक्षरंमहामंत्रंमत्स्यंकूर्मंचयोहृदि ६२
लिखेत्सवैष्णवश्रेष्ठःपुनातिभुवनत्रयम्
कृष्णायुधांकितंयस्यशरीरंस्याद्दिनेदिने ६३
तस्यकृष्णोजगन्नाथोददातिपरमंपदम्
कृष्णायुधांकिततनुर्यत्कर्मकुरुतेनरः ६४
शुभंवाप्यशुभंवापितत्सर्वमक्षयंभवेत्
दानवाराक्षसाश्चैवभूतवेतालकास्तथा ६५
पिशाचाःपन्नगाश्चापियक्षविद्याधरास्तथा
किन्नरागुह्यकाश्चैवग्रहावालग्रहास्तथा ६६
कूष्माण्डाश्चैवडाकिन्यस्तथान्येविघ्नकारकाः
सर्वेभीत्यापलायंतेदृष्ट्वाकृष्णायुधाङ्कितम् ६७
द्वीपाश्चद्वीपिनश्चैवतथान्येवनवासिनः
दृष्ट्वैवप्रपलायंतेभयात्कृष्णायुधांकितम् ६८

कामलाद्यामहारोगादेहदेहावपातिनः
कृष्णायुधांकिततनुंभक्त्यापश्यतियोजनः ६९
कृष्णदर्शनतुल्यस्यफलंप्राप्नोतिमानवः
त्रिपत्रीकृतदूर्वाभिरश्विनेयोऽचयेद्धरिम् ७०
दूर्वावत्संततिस्तस्यअविच्छिन्नाप्रवर्तते
आश्विनेमासियोदद्याद्धरये कर्कटीफलम् ७१
शोकोनजायतेतस्यकदाचिद्धृदयेद्विज
कार्तिकेचसमायातेसर्वमासोत्तमेशुभे ७२
दामोदरंदेवदेवंभक्त्याप्राज्ञः प्रपूजयेत्
कार्तिकेमासिविप्रेन्द्रविष्णुप्रीणनहेतवे ७३
यथोक्तविधिनाप्राज्ञःप्रातःस्नानंसमाचरेत्
आमिषंमैथुनंचैवकार्तिकेमासियस्त्यजेत् ७४
जन्मान्तरार्जितैः पापैर्मुक्तोयातिपराङ्गतिम्
तुलाराशिगतेसूर्येप्रातःस्नानंद्विजोत्तम ७५
हविष्यंब्रह्मचर्यंचमहापातकनाशनम्
आमिषंमैथुनंचैवकार्तिकेमासिसेवते ७६
जन्मजन्मनिविप्रेन्द्रसभवेद्ग्रामशूकरः
द्विभोजनंपरान्नंचतैलंचवैष्णवोजनः ७७
आयातेकार्तिकेमासियत्नादपिपरित्यजेत्
दामोदरायनभसिदीपंयस्तुप्रयच्छति ७८
फलंतस्यप्रवक्ष्यामिसमासेनशृणुद्विज
ब्रह्महत्यादिभिः पापैर्विमुक्तःक्लेशदायकैः ७९
दामोदरपुरंगत्वातिष्ठेत्कोटियुगावधि
दीपंज्वलंतंनभसित्रिदशावासवादयः ८०
विलोक्यहर्षिताः सर्वेवदंतीतिपरस्परम्
असौपुण्यात्मनांश्रेष्ठःकेशवार्चनतत्परः ८१
प्रदीपंकार्तिकेमासियतोयच्छतिचक्रिणे
कार्तिकेमासिविप्रेन्द्रतस्यतुष्टःसदाहरिः ८२
दद्यादक्षयदीपंयःकार्तिकेहरिमंदिरे
दिनेदिनेऽश्वमेधस्यफलंप्राप्नोतिमानवः ८३

तुलसीदललक्षैर्यः कार्तिकेपूजयेद्धरिम्
लक्षैकवाजिमेधस्यमानवोलभतेफलम् ८४
बिल्वस्यदललक्षेणयोऽर्चयेद्विष्णुमव्ययम्
परमंमोक्षमाप्नोतिप्रसादाज्जगतीपते ८५
यत्किञ्चित्कार्तिकेमासिविष्णुमुद्दिश्यदीयते
तदक्षयंभवेत्सर्वंसत्यमेतन्मयोच्यते ८६
घृताक्तंसुरपत्रंयः कार्तिकेमासिवैष्णवे
दद्याद्दिनेदिनेविप्रतस्यविष्णोःपुरेस्थितिः ८७
प्रफुल्लपद्मपत्रेणसितेनाप्यसितेनवा
योऽर्चयेत्कमलाकांतंतस्यकिंभुविदुर्ल्लभम् ८८
द्विजाग्र्यःकार्तिकेमासिहरयेयेनपङ्कजम्
नदत्तंतेनकिंविप्रविष्णवेदैत्यजिष्णवे ८९
एकमेवांबुजंहृत्वाददातिकैटभारये
तस्मैकिंभगवान्विष्णुर्नददातिश्रियःपतिः ९०
कमलैःकार्तिकेमासियेननाराधितोहरिः
जन्मजन्मनितद्गेहेकमलानहितिष्ठति ९१
पद्मवीजानियोदद्यात्केशवायमहात्मने
सजायतेविप्रकुलेशुद्धेचप्रतिजन्मनि ९२
ब्राह्मणस्यकुलेजातश्चतुर्वेदसुहृद्भवेत्
धनवान्बहुपुत्रश्चकुटुंबानांचपोषकः ९३
नास्तिपद्मसमंपुष्पंजैमिनेसत्यमुच्यते
येनसंपूज्यगोविन्दंपापात्मापिचमोक्षभाक् ९४
पद्मपुष्पस्यमाहात्म्यंविशेषादुच्यतेमया
सेतिहासंद्विजश्रेष्ठसावधानंनिशामय ९५
आसीदेकःप्रजानामब्राह्मणःसर्वशास्त्रवित्
हरिपादांबुजेयस्यमनोभृङ्गसदास्थितिः ९६
देवानांब्राह्मणानांचगुरूणांचैवसर्वदा
कृतापूजाद्विजश्रेष्ठकार्याकार्यशतान्यपि ९७
परद्रव्यंविषंचैवपरस्त्रीषुस्वमातृवत्
कृतंतेनैवयच्चैवंतथामित्रेचशात्रवे ९८

आयांतमतिथिंदृष्ट्वासविप्रःपरमार्थवित्
भृशंमानंनचाप्नोतियाचकंचद्विजोत्तमम् ९९
सर्वयज्ञाःकृतास्तेनव्रतानिसकलानिच
संसारसागरंघोरमपारंचतितीर्षुणा १००
एकदासद्विजश्रेष्ठोहरिभक्तिपरायणः
स्वमृत्युंचनिजांजातिंचिंतयामासचेतसा १०१
अहंपूर्वंस्थितः कोवाकिंवाकर्मकृतंपुरा
कथंवाजन्मसंप्राप्तंगमिष्यामिक्ववापुनः १०२
इतिसंचिंत्यविप्रोऽसौनिःश्वस्यचपुनः पुनः
विज्ञातुंपूर्ववृत्तांतंशिवक्षेत्रंजगामह १०३
तत्रवद्धाञ्जलिर्विप्रोभक्त्यापरमयायुतः
तुष्टावशंकरंदेवंवाचामधुरयाशिवम् १०४
ब्राह्मणउवाच-
नमस्तुभ्यंमहादेवनमस्तेपरमेश्वर
नमस्तेशंकरेशाननमस्तेवरदप्रभो १०५
नमस्तेज्ञानरूपायनमस्तेज्ञानदायिने
नमस्तेसर्वभूतानांहृदम्बुजनिवासिने १०६
जगत्स्त्रष्ट्रेनमस्तुभ्यंजगत्पित्रेनमो नमः
नमःसंहराकर्त्रेचपशूनांपतयेनमः १०७
मनस्तेवह्निनेत्रायनमस्तेवह्निचक्षुषे
नमस्तेचन्द्रनेत्रायसूर्यनेत्रायवैनमः १०८
नमस्तेभस्मभूषायनमस्तेकृत्तिवाससे
नमोऽस्थिमालिनेतुभ्यंनीलकंठायवैनमः १०९
नमस्तेपंचवक्त्रायनमस्तेशूलपाणिने
कन्दर्पदर्पविध्वंसकारिणेभीममूर्तये ११०
नमस्तेदेवदेवायनमस्तेत्रिपुरारये
पार्वतीपतयेतुभ्यंनमस्तेभीममूर्तये १११
बाणभक्त्यातिसंतुष्टमानसायनमोस्तुते
बहुरूपायवैतुभ्यंविश्वरूपायवैनमः ११२
गङ्गाधरायवैतुभ्यंदक्षयज्ञविनाशिने

प्रेतानांपतयेतुभ्यंनमस्तुभ्यंपिनाकिने ११३
ईशानायनमस्तुभ्यंमनीषायनमोनमः
तुभ्यंनमोऽस्तुदृश्यायअदृश्यायनमोनमः
नमश्चिन्त्यायवैतुभ्यमचिन्त्यायनमोनमः ११४
ब्रह्मात्वमेवत्रिदशैकनाथस्त्वमेवविष्णुस्तपनस्त्वमेव
त्वमेवसोमः सकलार्त्तिहारीनमोनमस्तेपरमेश्वराय ११५
तस्यस्तवंसमाकर्ण्यशंकरो लोकशंकरः
आविर्बभूवसहसाप्रसन्नः परमेश्वरः ११६
आविर्भूतंसमालोक्यसर्वदेवनमस्कृतम्
ववंदेचरणौतस्यसविप्रोऽत्यतभक्तिमान् ११७
भूयोऽपिसद्विजश्रेष्ठोहर्षनिर्भरमानसः
कृताञ्जलिर्महादेवंतुष्टाववरदंप्रभुम् ११८
ब्राह्मणउवाच-
यंनपश्यंतिदेवेशंदेवाअपिसवासवाः
पश्यामितमहंसाक्षान्महाभाग्यमिदंमम ११९
ध्यानावस्थितचित्तेनयोऽदृश्यःपरमेश्वरः
पश्यामितमहंसाक्षान् साध्यंकिमपरंमम १२०
त्वन्नामस्मरणादेवमहापातकिनोऽपिच
गच्छंतिपरमंस्थानंसमीक्षेतमहंप्रभुम् १२१
कृतार्थोऽस्मिकृतार्थोऽस्मिकृतार्थोऽस्मिचभाग्यवान्
नमस्तुभ्यंनमस्तुभ्यंप्रसीदपरमेश्वर १२२
महादेवउवाच-
भवतोऽनेनवाक्येनतुष्टोऽस्मिद्विजसत्तम
वरंवृणुमहाभागवरंदित्सुरहंखलु १२३
ब्राह्मणउवाच-
भवंतंपरमात्मानमदृश्यंदैवतैरपि
साक्षात्पश्याम्यहंनाथकिंकार्यमपरैर्वरैः१२४
तथापित्वंमहादेववरंदित्सुःकृपामयः
पृच्छामियदहंकिंचित्तद्ब्रूहिपरमेश्वर १२५
कोऽहतस्थौपुरादेवकिंवाकार्यंकृतंपुरा

संसारसागरेनाथपतितोऽस्मिकथंप्रभो १२६
कर्मणाप्राप्यतेदेहोदेहीपापेनलिप्यते
पुनः पापप्रभावेणप्राप्यतेविषमागतिः १२७
प्रभावैःकर्मणांकेषांजन्मप्राप्तमिदंमया
नानादुःखप्रदंनाथप्रसन्नोब्रूहिशंकर १२८
पापमूलमिदंजन्मजन्मदुःखस्यकारणम्
ज्ञातुमिच्छाम्यहंतस्मात्पूर्ववृत्तांतमात्मनः १२९
स्थितोऽहजननीकुक्षौजनठरानलतापितः
मूत्रविष्ठाप्रकीर्णेचविपाकेनचकर्मणाम् १३०
गर्भवाससमंदुःखंसंसारेनहिमन्यते
कथंमयानुभूतंतत्प्रभोभक्तार्तिनाशन १३१
संसारेऽस्मिन्महाघ्रेनानादुःखसमन्विते
असारेमाययाविष्णोर्मोहितेपातकाश्रये १३२
दुस्तरेबंधुहीनेचकामक्रोधादिसंयुते
शोकरोगप्रदेचैवजन्ममृत्युप्रदेतथा १३३
अपारेजगतामीशपतितोऽस्मिकथंशिव
एतत्सर्वंविभोब्रूहियदितेमय्यनुग्रहः १३४
महादेवउवाच-
यद्यप्येतद्द्विजश्रेष्ठगुह्याद्गुह्यतरंमहत्
अप्रकाश्यंतथापित्वांभक्तंप्रतिवदाम्यहम् १३५
पुरात्वंब्राह्मणःश्रेष्ठशबरान्वयसंभव
दण्डपाणिरितिख्यातः स्थितः सल्लोकदुःखुदः १३६
परलोकभयंत्यक्त्वाविवेकैः परिवर्जितः
दस्युवृत्तिंप्रपन्नार्तिपरमक्लेशदायिनीम् १३७
दस्युवृत्तिगतंदृष्ट्वाभवंतमतिनिर्दयम्
अपरेभ्रातरःसर्वेबभूवुस्तेचदस्यवः १३८
तेषांनामानिविप्रेन्द्रभ्रातृणांनिगदाम्यहम्
यैःसार्द्धंभवतापूर्वंभ्रातृभिर्दस्युताकृता १३९
दंडीदंडायुधश्चैवदत्तवान्दत्तभूस्तथा
सुंदडोदंडकेतुश्चभ्रातरः षट्प्रकीर्तिताः १४०

तैर्भ्रातृभिर्महाघोरैर्दयाभिः परिवर्जितः
दंडेनभवतानित्यं सर्वेव्यग्रीकृताजनाः १४१
धनलोभेनभवतादुष्टैस्तैर्भ्रातृभिः सह
अरण्येप्रांतरोविप्रहताः शतसहस्रशः १४२
हत्वाचसायकैस्तीक्ष्णैर्वनस्थेनत्वयासदा
गवांक्रव्याणिभुक्त्वाचमदिराभिः सहद्विज १४३
ततोयानविधिंसर्वेवणिजस्त्वद्भयात्तथा
तत्यजुर्विपिनेतस्मिन्ननर्थःपतितः सदा १४४
यस्यवित्तंनतद्वित्तंगृहंयस्यनतद्गृहम्
यस्यभार्यानतद्भार्यात्वयिदस्युत्वमागते १४५
एवंस्वभ्रातृभिस्तैस्तुतस्मिन्नेवमहावने
गतोवर्त्मश्रमश्रांतः स्नानार्थंसरसींप्रति १४६
तत्रस्नानंसमाचर्यक्षुधितेनद्विजोत्तम
भक्षितानिमृणालानिभ्रातृभिस्तैर्जलानिच १४७
अथत्वयाद्विजश्रेष्ठकौतुकात्तत्रसत्तम
भुक्तानिपद्मपुष्पाणिप्रफुल्लानिबहूनिच १४८
तस्मिन्नेवततः कालेब्राह्मणोविपिनेचरः
सर्ववेदाइतिख्यातस्तत्रस्नानार्थमागतः १४९
तत्रस्नात्वासधर्मात्माभगवंतंजनार्दनम्
यष्टुंत्वामकमंभोजंययाचेविनयान्वितः १५०
अथत्वयाचविप्रेन्द्रपद्ममेकंसुनिर्मलम्
दत्तंपरमयाभक्त्यापूजार्थंकमलापतेः १५१
त्वयादत्तेनपद्मेनसचप्रीतोद्विजोत्तमः
पूजयामासतत्रैवविष्णुंसकलकारकम् १५२
विष्णुपूजापरंदृष्ट्वातंविप्रंसर्ववेदसम्
त्वमपिप्रहसन्विष्णुंननन्थचसुकामदम् १५३
अथाभ्यर्च्यपरात्मानंचतुर्वर्गफलप्रदम्
यथोक्तविधिनाविप्रसजगामयथागतः १५४
तेनाम्बुजप्रदानेनप्रणामेनचसत्तम
विष्णुपूजादर्शनेननष्टंतेसर्वपातकम् १५५

ततः कियद्भिर्दिवसैस्तस्मिन्नेवमहावने
संप्राप्तकालः पंचत्वंगतोऽसित्वंद्विजोत्तम १५६
तेनैवकर्मणातुष्टोभगवान्करुणालयः
ददौतुभ्यंपरंस्थानंदेवैरपिसुदुर्ल्लभम् १५७
मन्वंतरसहस्राणिमन्वंतरशतानिच
भुक्तंनानासुखंतत्रकृपयाकमलापतेः १५८
ततःकर्मावसानेतुकर्मभूमिमिमांद्विज
आगत्यतैः पुण्यफलैर्जातोऽसिद्विजसंततौ १५९
ब्राह्मणस्यकुलेशुद्धेजन्मसंप्राप्यसत्तम
सर्वगुणाश्रयालब्धाहरिभक्तिरचंचला १६०
आराधितोमहाविष्णुःक्रियायोगैस्त्वयाप्रभुः
तुभ्यंदास्यतिविज्ञानंज्ञानान्मुक्तोभविष्यति १६१
गच्छब्राह्मणभद्रंतेसुप्रीतोनिजमंदिरम्
मद्दर्शनंत्वयाप्राप्तंमुक्तोऽसिभवबंधनात् १६२
व्यासउवाच-
इत्युक्त्वांतर्दधेविप्रतत्रैवजगदीश्वरः
कृतार्थोब्राह्मणःसोऽपिजगामभवनंस्वकम् १६३
अथसत्रिदिनंविष्णुंपद्मपुष्पैर्मनोरमैः
यत्नादाराधयामासस्तुत्यर्थंपरमेश्वरम् १६४
विष्णुंसमाराध्यचिरंप्रसुप्तः पद्मप्रसूनैर्विचित्रैः सुपुष्पैः
ज्ञानंसमासाद्यजगाममोक्षंप्रसादतः श्रीगरुडध्वजस्य १६५
अनिच्छयापिकमलंयच्छतःफलमीदृशम्
विष्णवेयच्छतोभक्त्यानजानेकिंभवेदिति १६६
सत्यंसत्यंपुनःसत्यंसत्यमेवमयोच्यते
कमलैर्हरिमभ्यर्च्यप्राप्यतेपरमंपदम् १६७
एकमेवारविंदंयः प्रददातिमुरारये
तस्यनास्तिपुनर्जन्मसंसारेषुभयावहे १६८
नारायणंयेचप्रफुल्लवारिजैर्दयामयंकामदमर्चयंति
एकाहमप्युत्कटपापयुक्तास्तेयांतिमुक्तिंप्रतिपापिनोऽपि १६९
इति श्रीपद्मपुराणेक्रियायोगसारेत्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

व्यासउवाच-
मार्गशीर्षेद्विजश्रेष्ठमहालक्ष्म्यासमन्वितम्
पूजयेदव्ययंविष्णुंभक्तिभावेनवैष्णवः १
म्लेच्छदेशेचविप्रेंद्रतथैवपतितालये
दुर्गंधैश्चपरिव्याप्तेस्थानेविष्णुंनपूज्येत् २
पाखंडानांसमीपेचमहापातकिनांतथा
असत्यभाषिणांचैवनकुर्याद्विष्णुपूजनम् ३
क्रंदतांसन्निधौचापिकलहानपि कुर्वताम्
तथोपहसतांस्थानेनकुर्यात्पूजनंहरेः ४
प्रतिग्रहरतानांचस्थानेविष्णुंनपूजयेत्
कृपणानांगृहेचैवपरवित्ताभिलाषिणाम् ५
तथाकपटवृत्तीनांनकुर्याद्विष्णुपूजनम्
नारायणार्चनेविप्रपरंभक्तिपरायणः ६
अन्यचित्तंपरित्यज्यहरिध्यानपरोभवेत्
हाहाकारंचनिश्वासंविस्मयंसद्विजोत्तम ७
पाखंडजनसंभाषंनकुर्याद्धरिपूजनम्
अनन्यमानसोभूत्वादेवदेवंजगद्गुरुम् ८
भस्मन्यपिचयत्पुष्पंदीयतेलभतेहरौ
चिंतागमशतश्रांतःशिलाचक्रेष्वपिद्विज ९
पुष्पंददातियन्मर्त्योनलभेदथतत्प्रभुः
अनन्यमानसोभूत्वाभक्त्याविष्णुंजयेद्बुधः १०
भ्रांतचित्तेनयत्कर्मक्रियतेतच्चनिष्फलम्
सर्वकर्ममनोधीनंमनोधीनंजगत्त्रयम् ११
तस्मान्मनोदृढीकृत्यपूजयेत्कमलापतिम्
पूजान्यत्रमनोऽन्यत्र भवेद्यस्यद्विजोत्तम १२
नचतस्यफलेत्कार्यंकल्पकोटिशतैरपि
यत्नाद्विहितशौचोऽपिविष्णुपूजापरोऽपिच १३
मनःशुद्धिविहीनश्चेच्चांडालइवगम्यते
अभक्त्यायत्तपस्तप्तंसुचिरंविधिनाद्विज १४

भवेन्निरर्थकंसर्वंकेवलंकायशोधनम्
मेरुप्रमाणकंस्वर्णंब्राह्मणायकुटुंबिने १५
दत्तमभ्यर्थनाशायअभक्त्याश्रेयसेऽपिच
तस्मादेकमनाभूत्वाभक्तिश्रद्धासमन्वितः १६
सवास्तुकादिशाकंचदद्यात्सदसिवैष्णवे
नारंगस्यफलंदिव्यंसुपक्वंयस्तुयच्छति १७
केशवायद्विजश्रेष्ठसोऽस्माभिरभिपूज्यते
यत्नेननूतनंवस्तुप्रियंभगवतोहरेः १८
तदेवाग्रयणेमासिभक्त्यादद्यान्मुरारये
पौषेमासिसमायातेश्रीकृष्णंवरदंप्रभुम् १९
देवमिक्षुरसैर्दिव्यैःस्नापयेद्वैष्णवोजनः
यःस्नापयतिविप्रेन्द्रविष्णुमिक्षुरसैःप्रभुम् २०
इहभुंक्तेसुखंसर्वंमृतोयातीक्षुसागरम्
योदद्यादिक्षुनैवेद्यंदेवदेवायविष्णवे २१
सोऽपितत्फलमाप्नोतिकिमन्यैर्बहुभाषितैः
सुदुग्धपृथुकंपौषेदधिभिर्वासमन्वितम् २२
दत्वामुरारयेमर्त्यः सर्वान्कामानवाप्नुयात्
सर्वैःपुरातनंवस्त्रंदूरीकृत्यमुरारये २३
शीतस्यवारणार्थायदद्याद्वस्त्रंचनूतनम्
पौषसंक्रमणेविप्रसलक्ष्मीकायविष्णवे २४
दद्यान्मुमुक्षुर्मनुजोदशवर्णंचपीठकम्
यस्तुशङ्खध्वनिंकुर्यात्संपूज्यकमलापतिम् २५
तस्यपुण्यफलंवच्मिशृणुवत्ससमाहितः
अगम्यागमनाद्यैश्चविमुक्तःसर्वपातकैः २६
अंतेविष्णुपुरंगत्वाविष्णुनासहमोदते
ऽन्तेयांकितांघंटांयस्तुवादयतेहरेः २७
पूजाकालेद्विजश्रेष्ठतस्यपुण्यंवदाम्यहम्
अभक्ष्यभक्षणाद्यैश्चविमुक्तःसर्वपातकैः २८
प्रयातिमंदिरंविष्णोरथमारुह्यशोभनम्
तत्रभुक्त्वाखिलान्कामान्कल्पकोटिशतावधि २९

पुनरागत्यधरणींचतुर्वेदीद्विजोत्तमः
तत्रभुक्त्वाखिलान्कामान्कल्पकोटिशतावधि ३०
पुनर्विष्णुपुरंगत्वामोक्षंप्राप्नोत्यनुत्तमम्
वीणांवादयतेयस्तुपूजाकालेजगत्पतेः ३१
पंडितानामग्रणीःस्यात्समर्त्यः प्रतिजन्मनि
मृदंगवाद्यकृद्यस्तुपूजायांकैटभद्विषः ३२
तस्यप्रसन्नोभगवान्ददात्यभिमतंफलम्
डमरुंडिडिमंचैवझर्झरींमधुरींतथा ३३
पटहंदुंदुभिंचैवकाहलंसिंधुवारकम्
कांस्यंचकरतालंचवेणुंवादयतेतुयः ३४
पूजाकालेमहाविष्णोस्तस्यपुण्यंनिशामय
स्तेयार्थैःपातकैर्मुक्तोमंदिरंयातिचक्रिणः ३५
परमंज्ञानमासाद्यतत्रैवपरिमुच्यते
कलशब्दंचयः कुर्यात्पूजाकालेजगद्गुरोः ३६
मुखवाद्यंचविप्रेन्द्रतस्यपुण्यंमयोच्यते
कोटिकोटिकुलैर्युक्तः प्रयातिमन्दिरंहरेः ३७
ज्ञानमासाद्यतत्रैवमोक्षमक्षय्यमाप्नुयात्
विष्णोरायतनेयस्तुभक्तियुक्तः प्रनृत्यति ३८
सयातिब्राह्मणश्रेष्ठतद्विष्णोःपरमंपदम्
यस्तुगायतिगीतानि भक्त्यानारायणाग्रतः ३९
सनृपत्वमवाप्नोतिगन्धर्वाणांपुरेषुच
स्तौतिस्तोत्रैर्जगन्नाथं भक्त्याचवैष्णवोजनः ४०
तस्यप्रसन्नोभगवान्सर्वान्कामान्प्रयच्छति
मासेमासेहरिंयस्तुविधिनानेनपूजयेत् ४१
अचिरेणैवविप्रर्षेप्रसादयतिसोऽच्युतः ४२
जगदुदधिमिमंयेतर्तुमिच्छंतिमर्त्याः प्रचुरतरगभीरंसर्वदुःखप्रदंच
परमपुरुषपादांभोजयुग्मंमनोज्ञंत्रिदशनिवहसेव्यंतेचसर्वेयजंतु ४३
इति श्रीपद्मपुराणेक्रियायोगसारेभगवत्पूजामाहात्म्यंनामचतुर्दशोऽध्यायः १४

पंचदशोऽध्यायः

व्यास उवाच-

नारायणस्यमाहात्म्यंपुनर्वच्मिशृणुद्विज
यच्छ्रुत्वासर्वपापेभ्योमुक्तोभवतिमानवः १
विष्णवंशभूतंसकलंजगदेतद्द्विजोत्तम
तस्माद्विष्णुमयंधीराःपश्यंतिपरमार्थिनः २
ब्रह्मशंकररुद्राद्याविष्णवंशाःसकलाःसुराः
तस्मात्समस्तदेवार्चाविष्णुमेकंप्रपद्यते ३
स्मरतांविष्णुनामानिसर्वपापहराणिच
येनकेनाप्युपायेनविद्यतेनाशुभंक्वचित् ४
सर्वमेवद्विजश्रेष्ठकर्मणापापमुच्यते
अनपायिइदंविष्णोःस्मरणंपापनाशनम् ५
स्वपन्भुञ्जन्वदंस्तिष्ठन्नुत्तिष्ठंश्चव्रजंस्तथा
स्मरेदविरतंविष्णुंमुमुक्षुर्वैष्णवोजनः ६
उक्तंगैर्मुनिभिःसर्वैः स्मरणेकमलापतेः
नकालनियमः प्रोक्तःसर्वदुःखविनाशनः ७
नामप्रभावंविप्रर्षेकेशवस्यमहात्मनः
ब्रवीम्यहंसमासेनसेतिहासंनिशामय ८
आसीत्सपरशुर्नामपूर्वंकृतयुगेशुचिः
वैश्योवैश्यकुलश्रेष्ठःसमस्तगुणपारगः ९
सवैश्योदैवयोगेनप्रथमेवयसिद्विज
जगामवशतांमृत्योःकासश्वासगदार्दितः १०
जीवंतीनामतत्पत्नीसुमध्यानवयौवना
मृतेभर्तरितातस्यजगामनिलयंयतः ११
साजीवंतीद्विजश्रेष्ठनवयौवनगर्विता
गतिंचकारजारेषुबाध्यमानापिबांधवैः १२
व्रतस्यनियमंवापि गृहव्यापारमेवच
जारानुरक्तचित्तासातत्याज्यनवयौवना १३
अंधीकृतासाकामेनसुश्रोणीपीवरस्तनी
धर्ममार्गंद्विजश्रेष्ठनकदाचिद्ददर्शह १४

दुःशीलांचैवतांदृष्ट्वाततिपताधर्मतत्परः
अपकीर्तिभयाद्भीरुरित्याहात्यंतकोपवान् १५
दुष्टेपापिनिमद्वंशेसर्वदोषविवर्जिते
आसाद्यजन्मकिमितिक्रियतेपातकंत्वया १६
यदितेपातकेचित्तंह्यदितुंनैवएहिवै
अभद्रेगच्छसदनान्नहीहिममंदिरम् १७
तातेनेतिनिरुक्तासाक्रोधारुणितलोचना
पितुर्गेहंपरित्यज्यसाजगामयथासुखम् १८
अथसास्वेच्छयानारीभ्रमंतीजारकांक्षया
वेश्यावृत्तिंसमाश्रित्यतस्थौलज्जाविवर्जिता १९
पुलिदःशबरोवापिचाराडालोवापितद्गृहम्
आयातितस्यास्तेनापिमुदाक्रीडतिसाऽसती २०
परलोकभयंविप्रकदाचिदपिचेतसा
नचिंतयामासचसावारनारीयथाक्रमात् २१
कदाचिद्ब्राह्मणश्रेष्ठकश्चिद्व्याधस्तदालये
शुकशावंसमादायविक्रयार्थंसमाययौ २२
सापिवाराङ्गनातंचशुकशावकमुत्तमम्
जगृहेपरमप्रीत्याधनैः संपूज्यलुब्धकम् २३
तद्योग्याहारदानेनवारस्त्रीनित्यमेवसा
शुकस्यपोषणंचक्रेतस्य जातकुतूहला २४
वारांगनानपत्यासातमेवशुकशावकम्
मत्वापुत्रमिवात्मानंचक्रेतत्प्रतिपालनम् २५
सोऽपिपक्षीद्विजश्रेष्ठनित्यमेवतदाज्ञया
ज्ञातिवच्चित्तवात्सल्यव्यवहारंकरोतिच २६
ततोऽसौलब्धभावश्चशुकोगणिकयातदा
रामेतिसततंनामपाठ्यतेसुंदराक्षरम् २७
रामनामपरंब्रह्मसर्वदेवाधिकंमहत्
समस्तपातकध्वंसिसशुकस्तुसदापठन् २८
रामोच्चारणमात्रेणतयोश्चशुकवेश्ययोः
विनष्टमभवत्पापंसर्वमेवसुदारुणम् २९

कदाचिद्वारमुख्यासाशुकोऽपिचद्विजोत्तम
उभावपिचपंचत्वमेककालेगतौततः ३०
समानेतुंततस्तौतुविहिताखिलपातकौ
किंकरान्प्रेषयामासचंडाद्यान्धर्मराट्ततः ३१
ततस्तेकिंकराःसर्वेचंडाद्याःअतिवेगिनः
यमाज्ञयासमायाताःपाशमुद्गरपाणयः ३२
आनेतुंतौसमायाताः सर्वेविष्णुपराक्रमाः
पाशबद्धौतुतौदृष्ट्वापतितौविष्णुकिंकराः ३३
ऊचुर्वाक्यमिदंक्रुद्धायमदूतान्सुरासदान् ३४
विष्णुदूताऊचुः -
अहोचित्रमिदंवाक्यंयमदूतामुखाच्छ्रुतम् ३५
भक्तावपिहरेरेतौदंडयौभास्करसूनुना
अहोचरित्रंदुष्टानांकदाचिदपिनोत्तमम् ३६
यत्नादपियतोहिंसांकुर्वंतिसततंसताम्
दुष्टानांकृतपापानांचरित्रमिदमद्भुतम् ३७
निष्पापमपिपश्यन्तिपुण्यात्मानोऽखिलंजगत्
पापिनस्तुनपश्यन्तिकृतपापमिवाखिलम् ३८
श्रुत्वापुण्यात्मनांपुण्यमभितृप्यंतिधर्मिणः
तृप्यंतिपातकंश्रुत्वापापिनांपापिनोजनाः ३९
पापचर्चांसमाकर्ण्ययथातृप्यंतिपापिनः
नतृप्यन्तियथा प्राप्यस्वर्णभारशतान्यपि ४०
अहोबलवतीमायामहाविष्णोर्महात्मनः
आत्मपीडाकरमपिपापंकुर्वंतितेद्विज ४१
व्यासउवाच-
इत्युक्त्वाविष्णुदूतास्तेविष्णुभक्तिपरायणाः
छिन्नवंतस्तयोर्विप्रबंधनंचक्रधारया ४२
ततस्तुशमनप्रेष्याः क्रुद्धास्तेवह्निसंन्निभाः
ववर्षुःसहसातत्रज्वलदंगारसंचयान् ४३
दंडउवाच-
विहितंचमयाप्येवंशुकंवेश्यांचपापिनीम्

नेतुंयूयंसमायाताइत्यद्भुतमिवाभवत् ४४
नूनमेतौयदानेतुंयूयमिच्छतसत्तमाः
तदाकुरुतसंग्राममस्माभिः सहसंप्रति ४५
इत्युक्त्वारामदूतास्तेबलिनोविधृतायुधाः
सिंहनादैर्दिशःसर्वेपूरयामासुरुद्धताः ४६
विष्णुदूतामहात्मानःसुप्रतीकादयस्तथा
शङ्खनादैःसुललितैश्चक्रुःशब्दमयंजगत् ४७
याम्यैस्ततोमहादूतैर्धनुर्मुक्तैःशिलीमुखैः
छादिताविष्णुदूतास्तेसंग्रामेऽत्यतदारुणे ४८
शूलान्यध्यक्षिपुः केचिच्छक्तिंकेचिन्महार्णवे
केचिच्छरसहस्राणिकेचिच्चक्राणितेरुषा ४९
तैर्मुक्तानिमहास्त्राणिविष्णुदूतामहामराः
बाणान्विचूर्णयामासुर्गदाप्रहरणादिभिः ५०
ततोभागवतैरेतर्याम्यानांचक्रधारया
केषांचिच्चरणाश्छिन्नाःकेषांचिद्बाहवस्तथा ५१
केचिद्विच्छिन्नशिरसः केचिन्निर्भिन्नवक्षसः
अत्यद्भुतक्षताःकेचिद्व्यास्याः पेतुर्गतासवः ५२
छिन्नैकचरणाःकेचित्केचिच्छिन्नैकपाणयः
संत्यज्यसहसायाम्याः संग्रामाच्चप्रदुद्रुवुः ५३
तानालोक्यततोदूतान्पलायनपरायणान्
प्रविवेशरुषाचंडःसंग्रामंधृतमुद्गरः ५४
यमदूतगणश्रेष्ठश्चंडोऽत्यतप्रतापवान्
ताडयामासशतशोमुद्गरैर्विष्णुकिङ्करान् ५५
अथभागवतादूतानिशितायुधवर्षणैः
ववर्षुस्तरसाक्रुद्धास्तंचंडंचंडविक्रमम् ५६
मुद्गरेणततश्चण्डोविष्णुदूतान्पृथक्पृथक्
ताडयामासविगलद्रक्तसंसिक्तविग्रहः ५७
चंडेनताडितास्तेनदूताभगवतोयुधि
त्यक्तसत्वाः पृष्टभागंसुप्रकाशस्यवैययुः ५८
सुप्रकाशस्ततःक्रुद्धोजपापुष्पनिभेक्षणः

प्रविवेशरणे युद्धंगदापाणिर्महाबलः ५९
ताडयामाससंक्रुद्धोविष्णुतुल्यपराक्रमः
मुद्गराच्चंडहस्ताच्चप्रेद्व्यजनभयप्रदात् ६०
समुत्तस्थौमहाभीष्मःसधूमः पूतिगन्धवान्
समुद्गरेणचंडेनताडितस्तस्यवेगिना ६१
स्फुलिगावर्षणंसद्योमुमोचात्यंतभीतिदम्
ततः क्रुद्धेनचंडोऽसौतेनैवमुद्गरेणच ६२
ताडयामासविप्रर्षेसुप्रकाशंमहाबलम्
सुप्रकाशस्ततोविप्रव्यथांविस्मृत्यकोपवान् ६३
गदयाताडयामासचंडंशमनकिंकरम्
तेनप्रताडितश्चंडस्तत्ररक्तः परिप्लुतः ६४
पपातमूर्च्छितोभूमौबालार्कइवजैमिने
याम्यदूतास्ततस्तेचचंडमादायमूर्च्छितम् ६५
हाहाकारंप्रकुर्वंतोयुद्धाद्भीताः प्रदुद्रुवुः
विष्णुदूतास्ततोविप्रसर्वेचातिप्रहर्षिताः ६६
अथशंखान्समादध्मुर्जैमिनेद्विजसत्तम
यमदूतास्ततस्तेचशोणितौघपरिप्लुताः ६७
यमस्यसन्निधिंजग्मुः क्रंदंतोभयविह्वलाः ६८
यमदूताऊचुः-
सूर्यपुत्रमहाबाहोतवाज्ञाकारिणोवयम्
तथापिविष्णुदूतैर्नः कृतादुर्गतिरीदृशी ६९
महापातकिनांश्रेष्ठौप्रभोयद्यपितौखलु
रामनामप्रभावेणगतौनारायणालयम् ७०
भवतादंडनीयायेदुरात्मानः कृतैनसः
तेऽपिविष्णुपुरंयांतिप्रभुत्वंतवकिंतदा ७१
नास्माकंविष्णुदूतैस्तैः कृतः परिभवस्त्वयम्
तवैवकेवलंनाथयतोवैकिंकरावयम् ७२
यमउवाच-
दूताः स्मरंतौतौरामरामनामाक्षरद्वयम्
तदानमेदंडनीयौतयोर्नारायणः प्रभुः ७३

संसारेनास्तितत्पापंयद्रामस्मरणैरपि
नयातिसंक्षयंसद्योदृढंशृणुतकिंकराः ७४
येमानवाःप्रतिदिनंमधुसूदनस्यनामानिघोरदुरितौघविनाशनानि
भक्त्यास्मरंतिविबुधप्रवरार्चितस्यतेपापिनोऽपिहिभटाममनैवदंड्याः ७५
गोविन्दकेशवहरेजगदीशविष्णोनारायणप्रणतवत्सलमाधवेति
भक्त्यावदंतिपुरुषाः सततंक्षितौयेदंड्यानतेममभटाश्रतिपापिनोऽपि ७६
भक्तार्तिनाशनसुरेश्वरदीनबंधोलक्ष्मीपतेसकलपापविनाशकारिन्
एतद्वदांतसततंभुवियेमनुष्यास्तेपापिनोऽपिनभटाममदंडनीयाः ७७
दामोदरेश्वरमुखामरवृन्दसेव्य श्रीवासुदेवपुरुषोत्तममाधवेति
येषांवदंतिवदनेषुसदैवशब्दा दूतानमाम्यहमपिप्रतिवासरंतान् ७८
नारायणस्यजगदेकपतेर्मुरारेश्चर्चासुचित्तमतिहार्द्दिनृणांचयेषाम्
तेषामहंचसततंसुभटाह्यधीनोयेतेप्रफुल्लकमलेक्षणरूपभाजः ७९
येविष्णुपूजनरताहरिभक्तभक्ताएकादशीव्रतरताः कपटैर्विहीनाः
येविष्णुपादसलिलंशिरसावहंतितेपापिनोऽपिनभटाममदंडनीयाः ८०
येभुञ्जतेभगवतोमधुसूदनस्यनैवेद्यशेषमखिलौघविनाशकारि
येकर्णयोश्चशिरसिच्छदनंतुलस्यानित्यंबहंतिचभटाःप्रणमाम्यहंतान् ८१
येकृष्णपादकमलार्चनतत्पराश्चयेब्राह्मणार्चनरतागुणसेविनश्च
येदीनलोकहृदयातिसुखप्रदाश्चतेषामहंसततमेवभटाश्रधीनः ८२
येसत्यवाक्यकथनेषुसदानुरक्तालोकप्रियाश्चशरणागतलोकपालाः
पश्यंतियेचसततंविषवत्परस्वंतेमानवाममभटानहिदंडनीयाः ८३
येचान्नदाननिरताः सलिलप्रदाश्चभूमिप्रदानिखिललोकहितैषिणश्च
येवृत्तिहीनजनतृप्तिकराःप्रशांतादूतानतेखलुकदापिचदंडनीयाः ८४
येज्ञातिपोषणरताः प्रियवादिनश्चयेदम्भकोपमदमत्सरहीनचित्ताः
येपापदृष्टिरहिताविजितेंद्रियाश्चतेषामहंनविदधामिकदापिचर्चाम् ८५
व्यासउवाच-
एवं प्रबोधितास्तेनयमेनयमकिंकराः
ज्ञातवंतोजगद्भर्तुःप्रभावमतुलंहरेः ८६
विष्णोर्नामानिविप्रेन्द्रसर्वदेवाधिकानिवै
तेषांमध्येतुतत्त्वज्ञारामनामवरंस्मृतम् ८७
रामेत्यक्षरयुग्मंहिसर्वमंत्राधिकंद्विज

यदुच्चारणमात्रेणपापीयातिपराङ्गतिम् ८८
रामनामप्रभावंहिसर्वदेवप्रपूजनम्
महेशएवजानातिनान्योजानातिजैमिने ८९
विष्णोर्नामसहस्राणांपठनाल्लभतेफलम्
तत्फलंलभतेमर्त्योरामनामस्मरन्नपि ९०
अहोचित्रंमनुष्याणांचरित्रमिदमुच्यते
रामेतिमुक्तिदंनामनस्मरंतिदुराशयाः ९१
वक्तुंश्रमोनचाल्पोऽपिश्रोतुमत्यंतसुन्दरम्
तथापिरामरामेतिनवदंतिदुराशयाः ९२
अत्यंतदुःखलभ्यापिमुक्तिर्जगतिमानवैः
लभ्यतेरामनाम्नैवकर्मास्तिकिमतः परम् ९३
तावत्तिष्ठंतिपापानिदेहेषुदेहिनांवर
रामरामेतियावद्वैनस्मरंतिसुखप्रदम् ९४
श्राद्धेचतर्पणेचैवबलिदानेतथोत्सवे
यज्ञेदानेव्रतेचैवदेवताराधनेऽपिच ९५
अन्येष्वपिचकार्येषुवैदिकेषुविचक्षणः
स्मरेद्यस्तत्फलप्रेप्सूरामरामेतिभक्तितः ९६
नमोरामायेतिविप्रेन्द्रमन्त्रमोङ्कारपूर्वकम्
षडक्षरंजपेद्यस्तुसायुज्यंप्राप्यते हरेः ९७
षडक्षरेणमंत्रेणहरिपूजनकृन्नरः
सर्वान्कामानवाप्नोतिप्रसादाच्चक्रपाणिनः ९८
मृत्युकालेद्विजश्रेष्ठरामरामेतियःस्मरेत्
सपापिष्ठोऽपिपरमंमोक्षमाप्नोतिमानवः ९९
रामेतिनामयात्रायांयेस्मरंतिमनीषिणः
सर्वसिद्धिर्भवेत्तेषांयात्रायांनात्रसंशयः १००
अरण्येप्रांतरेवापिश्मशानेयोभयानके
रामनामस्मरेत्तस्यविद्यंतेनापदोद्विज १०१
राजद्वारेतथादुर्गेविदेशेदस्युसंमुखे
दुःस्वप्नदर्शनेचैवग्रहपीडासुजैमिने १०२
औत्पातिकेभयेचैववातरोगभयेतथा

रामनामस्मरन्मर्त्योलभतेनाशुभंक्वचित् १०३
रामनामद्विजश्रेष्ठसर्वाशुभनिवारणम्
कामदंमोक्षदंचैवस्मर्तव्यंसततंबुधैः १०४
रामनामेतिविप्रर्षेयस्मिन्नस्मर्यतेक्षणे
क्षणःसएवव्यर्थः स्यात्सत्यमेवमयोच्यते १०५
स्मरंतोहरिनामानिनावसीदंतिमानवाः १०६
जन्मकोटिदुरितक्षयमिच्छुःसंपदंचलभतेभुविमर्त्यः
विष्णुनामसततंभुविभक्त्यामोक्षदातिमधुरंस्मरतिस्म १०७
इति श्रीपद्मपुराणेक्रियायोगसारेपंचदशोऽध्यायः १५

षोडशोध्यायः

व्यासउवाच-
भूयएवद्विजश्रेष्ठमहाविष्णोःपरात्मनः
ब्रवीमिशृणुमाहात्म्यंसर्वदुःखविनाशनम् १
ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चान्येन्त्यजास्तथा
हरिभक्तिंप्रपन्नायेतेकृतार्थानसंशयः २
हरेरभक्तोविप्रोऽपिविज्ञेयः श्वपचाधिकः
हरिभक्तःश्वपाकोऽपिविज्ञेयोब्राह्मणाधिकः ३
सकथंब्राह्मणोयस्तुहरिभक्तिविवर्जितः
सकथंश्वपचोयस्तुभगवद्भक्तिमानसः ४
अव्याजेनयदाविष्णुःश्वपाकेनापिपूज्यते
तदापश्येत्तमप्येवंचतुर्वेदद्विजाधिकम् ५
पुरासीच्चक्रिकोनामशबरोलोककर्षकृत्
सुजातिवृत्तिहीनश्चयुगेद्वापरसंज्ञके ६
विप्रवादीजितक्रोधःपरहिंसाविवर्जितः
दयालुर्दम्भहीनश्चपितृमातृपरायणः ७
नकृतोवैष्णवोलापोमोक्षशास्त्रंनचश्रुतम्
तथापिजातातच्चित्तेहरिभक्तिरचञ्चला ८
हरेकेशवगोविन्दवासुदेवजनार्दन
इत्यादीनिस्मरन्नित्यंसचनामानिचक्रिणः ९

वन्यंफलंचयत्किञ्चित्प्राप्नोतिद्विजसत्तम
ञ्रादौददातितद्वक्त्रेनिजेशबरवंशजः १०
तन्माधुर्यंततोज्ञात्वावक्त्रान्निष्कास्यतत्पुनः
ददातिहरयेभक्त्यासुप्रीतः प्रतिवासरम् ११
उच्छिष्टंवा प्यनुच्छिष्टंद्वयमेवनवेत्तिसः
निजजातिस्वभावोहिसततंमूर्ध्निवर्तते १२
कदाचित्सद्विजश्रेष्ठकाननाभ्यंतरेभ्रमन्
फलमेकंप्राप्यपक्वंप्रियालस्येतिशाखिनः १३
ञ्रथासौहर्षितस्तस्यफलमप्राप्यचक्रिकः
ससंरंभेणज्ञात्वावैनिजवक्त्रांतरेददौ १४
सददौतत्फलंयावन्निजवक्त्रांतरेद्विज
प्रविवेशगलंतावत्तत्फलंशृणुजैमिने १५
तावत्सव्येनहस्तेनगलरन्ध्रंबबंधसः
यत्नाद्विधृत्यसव्येनपाणिनासकलंद्विज १६
चक्रिकश्चिन्तयामासहरिभक्तिपरायणः
फलमेतद्यदातस्मैनददामिमुरारये १७
नजातः कोऽपिसंसारेतदाहमिवपातकी
हरिंसंचिंत्यबहुधासचकारमतिंततः १८
तथापितत्फलंतस्यननिष्क्रांतंगलाद्दि्वज
हरेरेकांतभक्तोऽसौछित्त्वापरशुनागलम् १९
ञ्रानीयतत्फलंपक्वंददौदेवायविष्णवे
तत्सन्निधिंसमायातस्तमेवहृदिचिंतयन् २०
रुधिरोक्षितसर्वाङ्गःपतितः क्षितिमण्डले
तंदृष्ट्वाभगवान्विष्णुर्गतासुंव्यथितोऽभवत् २१
एतस्यसदृशोभक्तोममकोऽपिनविद्यते
यतोनिजगलंछित्त्वाममसंतोषणंकृतम् २२
यथाभक्तिमताऽनेनसात्विकंकर्मवैकृतम्
यद्दत्वानृणयमाप्नोतितथावस्तुकिमस्तिमे २३
धन्योऽयमतिधन्योऽयधन्योऽयनात्रसंशयः
प्राणानपिपरित्यज्यममसंतोषणंकृतम्‌ २४

ब्रह्मत्वंवाशिवत्वंवाचक्रित्वंवापिदीयते
तदाप्यानृरायमेतस्यभक्तस्यनहिगम्यते २५
इत्युक्त्वात्यंतसंतुष्टोभगवान्गरुडध्वजः
स्वहस्तकमलेनास्यततोमस्तकमस्पृशत् २६
तद्धस्तकमलस्पर्शाच्छबरोऽसौगतव्यथः
समुत्तस्थौमहासत्वोनारायरापरायराः २७
व्यास उवाच-
ततोऽस्यभक्तश्रेष्ठस्यनिजवस्त्रेराकेशवः
पुत्रस्येवपितागात्ररजःप्रोद्धितवान्द्विज २८
चक्रिकस्तंसमालोक्यमूर्तिमंतंजनार्दनम्
वाचामधुरयाऽस्तौषीत्प्रह्वमस्तः कृताञ्जलि २९
चक्रिकउवाच-
गोविन्दकेशवहरेजगदीशविष्णोजानामियद्यपिनतेस्तुतियोगवाक्यम्
स्तोतुंतथापिरसनाममवांछतित्वांस्वामिन्प्रसीदहरदोषमिमंप्रवृद्धम् ३०
त्यक्त्वाभवंतमखिलेश्वरचक्रपारोअन्यंयजंतिमनुजाजगतीहयेवै
मूढास्तएवदुरितप्रकरैकधामसानुग्रहस्त्वमसिमय्यपि देवयस्मात् ३१
जानातिदेवभवतोभवनैकनाथभक्त्यैवयद्यपिनृराांभवबंधहर्त्रीम्
एकांतपापशबरान्वयलब्धजन्माविष्णोस्तथापिभगवान्मयिसुप्रसन्नः ३२
यस्यप्रभोतवमनोज्ञकरारविंदंस्पर्शंचतुर्मुखमुखाअपिदेववृन्दाः
नप्राप्नुवंतिविदितस्यमयाद्यलब्धंत्वत्तोनकोऽपिसदयोनिजसेवकेषु ३३
येनत्वयाभगवतात्रिदशाद्यवैरीकंसासुरोनिमिसुतः कृतसर्वपापः
सेन्द्रामरप्रकरमर्त्यहितायपूर्वंतस्मैनमः परममंगलदायतुभ्यम् ३४
येनत्वयातिबलिनायमलार्जुनौतोदेवोत्तमेननिहतौवसुदेवजेन
दुष्टश्चकालयवनोयुधिधेनुकश्चतस्मैनमोऽस्तुनवमेघनिभायतुभ्यम् ३५
श्रीकृष्णदामोदरभोह्यनंतयेनत्वयामरपतेरचलाविभूतिः
पूर्वंकृताभगवतापरमेश्वरेणतस्मैनमोऽस्तुयदुवंशपरायतूभ्यम् ३६
पारिजातोहृतोयेनविजितोऽखडलस्त्वया
लीलाजितमहेशायतस्मैतुभ्यंनमोनमः ३७
कृत्वावृकोदरंहेतुंजरासंधोनिपातितः
बाणासुरस्यनिहताबाहवोयेत्वयाहताः ३८

शिशुपालोहतोयेनतस्मैनित्यंनमोनमः
भूमेरपहृतोभारस्त्वयायेनमहात्मना ३९
क्षत्रियान्माययाहत्वातस्मैनित्यंनमोनमः
व्यास उवाच-
इतितेनस्तुतोविष्णुश्चक्रिकेनमहात्मना ४०
उवाचपरमप्रीतोवरंवृणिवतिजैमिने
चक्रिकउवाच-
परंब्रह्मपरंधामपरमात्मन्कृपामय ४१
पश्यामित्वामहंसाक्षाद्वरैःकिमपरैर्द्विज
नध्याताभवतोमूर्तिःपूजाचनकृतातव ४२
नैवेद्यैर्दिव्यपुष्पैश्चदिव्यधूपैःप्रदीपकैः
नतेस्मृतानिनामानिकदाचिद्भवतोमया ४३
त्वत्पादसलिलंस्वामिन्विधृतंनहिमूर्द्धनि
नभुक्तंतवनैवेद्यंत्वद्‌व्रतंनमयाकृतम् ४४
तथाप्यहमपश्यंत्वांकिंकरोम्यपरैर्वरै
शबरान्वयजन्मास्मिंसर्वधर्मबहिष्कृतः ४५
तथापिपादपद्मंतेदैवतैरपिदुर्ल्लभम्
तदेवाद्यमयाप्राप्तंवरैः किमपरैर्मम ४६
तथापिकमलाकांतवरदित्सुर्यदाभवान्
त्वयितिष्ठतुमेचित्तंनमज्जेत्त्वदनुग्रहात् ४७
श्रीभगवानुवाच-
वचनाऽमृतवर्षेणत्वदीयेनमहाशय
संप्राप्यमहतींतुष्टिंमयासेवकपापिना ४८
यदिदंवत्समेदत्तंत्वयाकमलमुत्तमम्
अनेनात्यंततुष्टोऽस्मिभक्तिंगृह्णामिहर्षितः ४९
व्यास उवाच-
इत्युक्त्वाभगवान्विष्णुर्भक्तिग्राहीदयामयः
तमालिगितवान्भक्तंचतुर्भिर्दीर्घबाहुभिः ५०
श्रीभगवानुवाच-
तुष्टोऽस्मिभवतोभक्त्यावत्सचक्रिकसत्तम

यदिदंवत्समेदत्तंद्विप्रंभवतिनिश्चितम् ५१
भूयोऽपितंमहाभक्तमालिङ्ग्यपरमेश्वरः
तत्रैवांतर्द्धेविप्रविश्वात्माविश्वपालकः ५२
सचक्रिकोऽतिसंतुष्टोहरिभक्तिपरायणः
पुत्रदारादिकंत्यक्त्वाजगामद्वारकांपुरीम् ५३
तत्रचैवंसमासाद्यकृपयाकमलापतेः
आयुषोऽन्तेययौमोक्षंदेवानामपिदुर्ल्लभम् ५४
तस्माद्भक्तवशोदेवोभक्तिमात्रेणतुष्यति
नचस्तोत्रैर्नवित्तैश्चनतपोभिर्जपेनच ५५
फलंयद्यपिचोच्छिष्टंदत्तंतेनद्विजोत्तम
तथापितुष्टवान्विष्णुर्ज्ञात्वाभक्तिमचञ्चलाम् ५६
तस्मान्नारायणोदेवः संसारेऽस्मिन्मुमुक्षुभिः ५७
येयजंतिदृढयाकिलभक्त्यावासुदेवचरणांबुजयुग्मम्
वासवादिविबुधप्रवरेज्यंतेव्रजन्तिमनुजाःकिलमोक्षम् ५८
इति श्रीपद्मपुराणेक्रियायोगसारेषोडशोऽध्यायः १६

सप्तदशोऽध्यायः

जैमिनिरुवाच–
पुनरेवगुरोब्रूहिमाहात्म्यं कमलापतेः
हरेःकथामृतंपीत्वातृप्तिर्वैकस्यजायते १
श्रीव्यास उवाच–
त्वत्तुल्यःकोऽपिसंसारेसुकृतीनहिविद्यते
यतः केशवमाहात्म्यं श्रोतुमिच्छसिभक्तितः २
नारायणकथारम्यापुनात्येवंजगत्त्रयम्
श्रोतारंपृच्छकंचैववक्तारंचद्विजोत्तम ३
शृणुलक्ष्मीपतेर्वत्समाहात्म्यंपापनाशनम्
कथयामिसमासेनचतुर्वर्गफलप्रदम् ४
भक्त्यापरमयाविष्णुमेकाहमपियोऽर्चयेत्
जन्मकोटिकृतंपापंसद्यस्तस्यहरेद्धरिः ५
पुण्यात्मासकथंमर्त्योयेननाराधितोहरिः

सकथंपातकीयस्यभक्तिर्नारायणेप्रभौ ६
अस्तिसर्वपुरश्रेष्ठंपुरुषोत्तमसंज्ञकम्
पुरंसर्वगुणैर्युक्तंसर्वदेव गणाश्रयम् ७
सर्वेषामेवतीर्थानांवरिष्ठंतन्निगद्यते
यतस्तस्मिन्पुरेरम्येसाक्षाद्वसतिकेशवः ८
तत्रभद्रतनुर्नामपूर्वमेकोऽभवद्द्विजः
सुन्दरःप्रियवादीचपवित्रकुलसंभवः ९
संप्राप्तयौवनोविप्रःसुंदरः काममोहितः
परलोकभयंत्यक्त्वावारस्त्रीनिरतोऽभवत् १०
नवेदाध्ययनंचक्रेपुराणानिचसर्वशः
तत्याजोत्तमसंज्ञांचपाखंडजनसङ्गमात् ११
अयाज्यदानग्राहीचपरद्रव्यापहारकः
अभवद्धर्मनिन्दीचसविप्रःपापतत्परः १२
तत्याजब्राह्मणाचारंतथैवसत्यभावनम्
गुरूणामतिथीनांचपूजनंब्राह्मणाधमः १३
यद्यत्पापतरंकर्मतत्तदेवविधीयते
नचपुण्यतमंकर्मकदाचित्तेनजैमिने १४
एकदाकृतपापोऽसौलोकलज्जाभयान्वितः
श्राद्धंचकारविप्रोवैश्राद्धभक्तिविवर्जितः १५
वारनारीमितिप्राहगतः सनिशितद्गृहम्
ब्राह्मणउवाच-
एतद्विशालजघनेपितृश्राद्धदिनंमम १६
आयातस्त्वद्गुणैर्बद्धस्तथापिनिलयंतव
पश्यरात्रिमिमांकांतेसर्वलोकभयावहाम् १७
स्रवदंबुदसंघातंपरिव्याप्तंनभःस्थलात्
नवांबुलुप्तमार्गायांत्वद्गुणाकृष्टमानसः १८
अस्यामपिविभावर्यांतवाहंगृहमागतः
मेघविद्युत्प्रतीपेनकामेनार्थोपदेशिना १९
त्वद्गुणाध्यानविश्वासआगतोऽहनिशिप्रिये
त्वामदृष्ट्वाक्षणमपिप्रीतिर्मेनहिजायते २०

अपिदुःखेनहेतन्वित्वांद्रष्टुमहमागतः
तीर्थतोयाभिषेकेनकांतेकिंमेप्रयोजनम् २१
त्वत्प्रेमतीर्थतोयेनसिक्तःप्राप्तोऽस्म्यहंदिवि
परत्रसुखदांसेवामाराध्यममकिंफलम् २२
जीवतैवमयास्वर्गःप्राप्यतेत्वत्प्रसादतः
अपकीर्तिभयात्कांतेश्राद्धकर्मकृतंगृहे २३
अस्मिञ्छ्राद्धेममश्रद्धास्वल्पापिनहिगम्यते
त्वंमेजपस्तपस्त्वंमेत्वंमेनीतिश्चसुन्दरि २४
त्वामेकामेवसंसारेसर्वभावेनसुन्दरि
प्रपन्नोऽसिसदाऽहतेआज्ञापयकरोमिकिम् २५
सुमध्यमोवाच-
त्वयापुत्रेणतातस्तुपुत्रहीनइवाभवत्
पितृश्राद्धदिनेऽपित्वंमैथुनंकर्त्तुमिच्छसि २६
दुर्मतेमैथुनंयस्तुकुरुतेपितृवासरे
रेतोभोजिनएवस्युःपितरस्तस्यसोऽपिच २७
कुरुतेमैथुनंमूढोमोहात्पितृदिनेयदि
तच्छ्राद्धंराक्षसग्राह्यंभवेन्नास्त्यत्रसंशयः २८
मय्यद्धागदितंयत्तेयथास्नेहेनमानसम्
तथायदिभवेद्विष्णौतदाप्राप्नोतिकिंनहि २९
यमदंडांतरस्थायिजीवितंचशरीरिणाम्
तथापिपातकंमूढकुरुषेनिर्भयःसदा ३०
जलबुद्बुदवन्मूढःक्षणविध्वंसिजीवितम्
किमर्थंशाश्वतधियाकुरुषेच्छुरितंसदा ३१
ललाटेलिखितंयस्यमृत्युरित्यक्षरद्वयम्
सकथंकुरुतेपापंसमस्तक्लेशदायकम् ३२
अहोमायामहाविष्णोरेकाबलवतीक्षितौ
यतः पापंप्रकुर्वाणः सततंहर्षितोद्विज ३३
स्थानंपापायमेदेहिनिजदेहेदुराश्रये
दहत्याश्रममेधोहिवीतिहोत्रइवज्वलन् ३४
व्यासउवाच-

दैवप्रेरितपापाच्चतयेत्युक्तंसुवेश्यया
मनसाचिंतयामासब्राह्मणः कृतपातकः ३५
धिग्धिङ्मांचमहापापंमूढंपातकिनांवरम् अं
वेश्यायाएवतज्ज्ञानंतन्मेनास्तिदुरात्मनः ३६
ब्राह्मणस्यकुलेशुद्धेजन्मसंप्राप्यवैमया
आत्मघातकरंपापंनित्यमेवकृतंमहत् ३७
जातोयदाध्रुवोमृत्युर्मृतेस्वामीयदायमः
अविवेकतयापापंकथंतर्हिकरोम्यहम् ३८
जपस्तपस्तथाहोमोवेदाध्ययनमेवच
विप्राचारोऽतिथेः पूजागुरुभक्तिर्द्विजार्चनम् ३९
पितृयज्ञादिकंकर्मपूजाचकमलापतेः
मयानचक्रेकस्माद्वैभविष्यत्युत्तमागतिः ४०
मार्कंडेयंमहात्मानंसर्वधर्मविदांवरम्
तुष्टावसद्विजोवाचाप्रणम्यभुविदण्डवत् ४१
ब्राह्मणउवाच-
नमस्तुभ्यंद्विजश्रेष्ठदीर्घजीवनमोऽस्तुते
नारायणस्वरूपायनमस्तुभ्यंमहात्मने ४२
नमोमृकण्डपुत्रायसर्वलोकहितैषिणे
ज्ञानार्णवायवैतुभ्यं निर्विकारायवैनमः ४३
स्तुतस्तेनेतिविप्रेणमार्कंडेयोमहातपाः
उवाचपरमप्रीतः सर्वशास्त्रार्थपारगः ४४
मार्कंडेयउवाच-
तवभक्त्याऽतितुष्टोऽस्मिमहाभागवरंवृणु
तवाभिलषितंसद्यःसाधयिष्यामिनान्यथा ४५
ब्राह्मणउवाच-
अहंपापात्मनांश्रेष्ठोद्विजाचारविवर्जितः
परहिंसान्वितोनित्यंपरस्त्रीनिरतः सदा ४६
मयामूढेनविप्रेन्द्रसदापापंकृतंमहत्
नामुत्रापिकृतंपुण्यंकदाचिदपिसादरम् ४७
संसारसागरेघोरेदुःखदेऽत्यतभैरवे

कथंभवतिनिस्तारोमहापातकिनोमम ४८
मार्कंडेयउवाच-
कृतपापोऽपिविप्रेन्द्रत्वंहिपुरायात्मनांवरः
यतोबुद्धिरियंजातात्वयिसंसारदुर्ल्लभा ४९
पुरायात्मनांपुरायदृष्टिर्वर्धतेप्रतिवासरम्
पापात्मनांपापदृष्टिर्वर्द्धतेतुदिनेदिने ५०
पापत्मनापिभवतापापदृष्टिर्निवार्यते
अतस्तुभ्यंजगन्नाथः प्रसन्नइवलक्ष्यते ५१
पापंकृत्वापियोमर्त्यःपापाद्भूयोनिवर्तते
तमुत्तरंनरंप्राहुःपूर्वजन्मार्चिताच्युतम् ५२
निजभक्तंमहाविष्णुर्दृष्ट्वापापरतंप्रभुः
ददातिविपुलांबुद्धिंयथाभवतिसद्गतिः ५३
अतस्त्वंब्राह्मणश्रेष्ठंप्रतिजन्माच्युतार्चकः
अचिरेणैवभद्रंतेभविष्यतिनसंशयः ५४
यद्यत्पृष्टंत्वयाविप्रमत्तः श्रोष्यसितंनहि
यतोनित्यक्रियाकालोममसंप्रतिवर्तते ५५
दांतोनामद्विजःकश्चिदस्तिसर्वार्थतत्ववित्
कथयिष्यतितत्सर्वंसचतस्याश्रमंव्रज ५६
तेनोपदिष्टोऽसौविप्रोमार्कंडेयेनधीमता
दांताश्रमंययौ क्षिप्रंपवित्रमतिसुन्दरम् ५७
अश्वत्थैश्चंपकैश्चैवबकुलैः प्रियकैस्तथा
अन्यैश्चपुष्पितैर्वृक्षैःशोभितंसुमनोहरम् ५८
प्रफुल्लकुसुमामोदंपरिव्याप्तदिगंतरम्
गुञ्जद्भ्रमरसंघातंफलशब्दातिशब्दितम् ५९
मन्दंमन्दंवहद्वायुशीतलंचैववारिच
शतश्वापदसंकीर्णंशिष्योपशिष्यसंकुलम् ६०
तस्याश्रमंततोविप्रःप्रविश्यातिमनोहरम्
ददर्शदांतंतत्वज्ञंसर्वशिष्यगणैर्वृतम् ६१
स्तुत्वातंब्राह्मणश्रेष्ठदांतंनारायणात्मकम्
ववंदेचरणौतस्यशिरसासद्विजोत्तमः ६२

दांतउवाच-
कस्त्वंभद्रसमायातः किमस्त्यत्रप्रयोजनम्
ब्रूहितत्त्वंतुमांस्तौषिहेतुनाकेनसांप्रतम् ६३
भद्रतनुरुवाच-
ब्राह्मणोऽहमहाभागब्राह्मणाचारवर्जितः
नाम्नाभद्रतनुःख्यातोविहिताखिलपातकः ६४
संसारपापविच्छेदःकथंमेपापिनोभवेत्
एतन्मेकथयब्रह्मन्यतस्त्वंसर्वतत्ववित् ६५
दांतउवाच-
शृणुविप्रपरंगुह्यंतवस्नेहान्मयोच्यते
येनसंसारपाशस्यविच्छेदोभवतेनृणाम् ६६
त्यजपाखंडसंसर्गंसंगंभजसतांसदा
कामंक्रोधंचमोहंचलोभंचदर्पमत्सरौ ६७
असत्यंपरहिंसांचत्यजयत्नादपिद्विज
स्मरन्नामानिसततंमहाविष्णोर्महात्मनः ६८
संमार्जनंद्विजश्रेष्ठतथोपलेपनंपुनः
मार्गशोभांचदीपंचकेशवायतनेकुरु ६९
कुरुब्राह्मणसेवांचज्ञातिसेवांचसर्वदा
कुर्वन्नतोयदानंचनित्यंपंचमहाध्वरान् ७०
कथांशृणुहरेर्मंत्रंजपत्वंद्वादशाक्षरम्
कर्माण्येतानिसर्वाणिकुर्वतस्तवसत्तम ७१
भविष्यत्युत्तमंज्ञानंज्ञानान्मोक्षमवाप्स्यसि ७२
ब्राह्मणउवाच-
यान्येतानित्वयाब्रह्मन्प्रोक्तानिशुभदानिवै
तेषांविवरणंब्रूहिकिंमोहोदंभमत्सरौ ७३
किमसत्यंचकाहिंसादयाशांतिर्दमश्चकः
समदृष्टिश्चकाप्रोक्ताकापूजाकमलापतेः ७४
अहोरात्रश्चकःप्रोक्तः किंविष्णुस्मरणंतथा
केवापंचमहायज्ञाः कोमंत्रोद्वादशाक्षरः ७५
एषांविवरणंसर्वंब्रूहिब्राह्मणसत्तम

तथातवप्रसादेनप्राप्नोमिपरमंपदम् ७६
दांतउवाच-
येवेदसंमतंकार्यंत्यक्त्वान्यत्कर्मकुर्वते
निजाचारविहीनायेपाखंडास्तेप्रकीर्तिताः ७७
निजाचारग्राहिणोयेकुर्वते वेदसंमतम्
पापाभिलाषरहिताः सज्जनास्तेप्रकीर्तिताः ७८
योऽभिलाषः सदास्त्रीषुविभवोपार्जनादिषु
वर्त्ततेब्राह्मणश्रेष्ठसकामइति कथ्यते ७९
समाकर्ण्यात्मनोनिन्दांयस्तापोहृदिजायते
सक्रोधइतिविज्ञेयः सर्वधर्मावघातकः ८०
परवित्तादिकंदृष्ट्वानेतुंयोहृदिजायते
अभिलाषोद्विजश्रेष्ठसलोभइतिकीर्तितः ८१
मममातामपितामयेयंगृहिणीगृहम्
एतदन्यन्ममत्वंहिसमोहइतिकीर्तितः ८२
अहंमहात्माधनवान्नतुल्यःकोऽपिभूतले
इदंयज्जायतेचित्तेमदःप्रोक्तः सकोविदैः ८३
निंदंतिमांसदालोकाधिगस्तुममजीवनम्
इत्यात्मानंवदेद्यस्तुधिक्कारः सचमत्सरः ८४
यथार्थकथनंयच्चसर्वलोकसुखप्रदम्
तत्सत्यमितिविज्ञेयमसत्यंतद्विपर्ययम् ८५
एश्वर्यंदारपुत्राद्यायान्त्यमुष्यकदाक्षयम्
इतियाजायते चित्तेसाहिंसापरिकीर्तिता ८६
यत्नादपिपरक्लेशंहर्तुंयद्धृदिजायते
इच्छाभूमिर्द्विजश्रेष्ठसादयापरिकीर्तिता ८७
यातुष्टिर्जायते चित्तेशान्तिःसागद्यतेबुधैः
कुत्सितात्कर्मणोऽन्यत्रयच्चित्ताविनिवारणम् ८८
संकीर्तितोदमःप्राज्ञैःसंमतस्तत्वदर्शिभिः
दुःखेसुखेचविप्रेन्द्रयातुष्टिर्वर्तसेसदा ८९
तथाशत्रौचमित्रेचसमदृष्टिर्हिसास्मृता
नैवेद्यगंधपुष्पाद्यैः श्रद्धयापुरुषोहरेः ९०

योऽचनंकुरुतेविप्रसापूजापरिकीर्तिता
मध्याह्नेचैवरात्रौचलंघनंयद्विधीयते ९१
तद्विज्ञेयमहोरात्रंपूर्वापरदिनाशनम्
आत्मनः केशवस्यापिद्वयोरपिचसत्तम ९२
यदेकीकरणंतच्चविष्णुस्मरणमुच्यते
ब्रह्मयज्ञोनृयज्ञश्चदेवयज्ञश्चसत्तम ९३
पितृयज्ञोभूतयज्ञः पंचयज्ञाःप्रकीर्तिताः
नमोभगवतेवासुदेवायोङ्कारपूर्वकम् ९४
महामंत्रमिमंप्राहुस्तत्वज्ञाद्वादशाक्षरम्
इतितेकथितंसर्वंपृष्टंब्राह्मणसत्तम ९५
यज्ज्ञात्वामानवाःसर्वेलभंतेज्ञानमुत्तमम्
ततः प्रतिदिनंविप्रनाम्नामष्टोत्तरंशतम् ९६
पठित्वाकमलाभर्तुर्दुर्ल्लभंमोक्षमाप्स्यसि
भद्रतनुरुवाच-
ब्रूहिलक्ष्मीपतेर्विष्णोर्नाम्नामष्टोत्तरंशतम् ९७
दांतउवाच-
शृणुविप्रप्रवक्ष्यामिनाम्नामष्टोत्तरंशतम्
सहस्रनामचाकृष्यसारंविष्णोःपरात्मनः ९८
अष्टोत्तरशतंनाम्नांमहापातकनाशनम्
पठितव्यंयथाध्यात्वा शृणुध्यानंमयोच्यते ९९
अतसीकुसुमाकारंप्रफुल्लकमलेक्षणम्
गवांचरणधूलीभिर्भूषिताखिलविग्रहम् १००
गोपुच्छवालपाशेनमंडितोत्तममस्तकम्
वंशीध्वनिपरिन्यस्तरुचिरौष्ठपुटंप्रभुम् १०१
गोगोष्ठवासिभिःस्निग्धैःशिशुभिः परिवारितम्
पीतांबरंस्मरमुखंध्यात्येकृष्णास्यमुत्तमम् १०२
ॐनमोऽस्यकृष्णाष्टोत्तरशतनाम्नांवेदव्यासऋषिरनुष्टुप्छंदः
श्रीकृष्णोदेवताश्रीकृष्णप्रीत्यर्थेजपेविनियोगः १०३
नमःकृष्णःकेशवश्चकेशिशत्रुःसनातनः
कंसारिर्धेनुकारिश्चशिशुपालरिपुःप्रभुः १०४

देवकीनन्दनः शौरिःपुराडरीकनिभेक्षणः
दामोदरोजगन्नाथोजगत्कर्ताजगन्मयः १०५
नारायणोबलिध्वंसीवामनोऽदितिनन्दनः
विष्णुर्यदुकुलश्रेष्ठोवासुदेवोवसुप्रदः १०६
अनंतः कैटभारिश्चमल्लजिन्नरकांतकः
अच्युतःश्रीधरः श्रीमाञ्छ्रीपतिः पुरुषोत्तमः १०७
गोविन्दोवनमालीचहृषीकेशोऽखिलार्तिहा
नृसिंहोदैत्यशत्रुश्चमत्स्यदेवोजगन्मयः १०८
भूमिधारीमहाकूर्मोवराहः पृथिवीपतिः
वैकुराठःपीतवासाश्चचक्रपाणिर्गदाधरः १०९
शंखभृत्पद्मपाणिश्चनन्दकीगरुडध्वजः
चतुर्भुजोमहासत्वोमहाबुद्धिर्महाभुजः ११०
महोत्सवोमहातेजामहाबाहुप्रियःप्रभुः
विष्वक्सेनश्चशार्ङ्गीचपद्मनाभोजनार्दनः १११
तुलसी वल्लभोऽपारः परेशः परमेश्वरः
परमक्लेशहारीचपरत्रसुखदः परः ११२
हृदयस्थोंऽबरस्थोयोमोहदोमोहनाशनः
समस्तपातकध्वंसीमहाबलबलांतकः ११३
रुक्मिणीरमणोरुक्मिप्रतिज्ञाखराडनोमहान्
दामबद्धः क्लेशहारीगोवर्द्धनधरोहरिः ११४
पूतनारिर्मुष्टिकारिर्यमलार्जुनभञ्जनः
उपेन्द्रोविश्वमूर्तिश्चव्योमपादःसनातनः ११५
परमात्मापरब्रह्मप्रणतार्तिविनाशनः
त्रिविक्रमोमहामायोयोगविद्विष्टरश्रवाः ११६
श्रीनिधिःश्रीनिवासश्चयज्ञभोक्तासुखप्रदः
यज्ञेश्वरोरावणारिःप्रलंबघ्नोऽक्षयोऽव्ययः ११७
सहस्रनाम्नांचैतत्तेनाम्नामष्टोत्तरंशतम्
विष्णुप्रीतिकरंसर्वंसर्वपापविनाशनम् ११८
दुःस्वप्ननाशनंचैवग्रहपीडाविनाशनम्
सर्वरोगक्षयकरंपरमैश्वर्यदंतथा ११९

सर्वोपद्रवविध्वंसिसर्वकर्मफलप्रदम्
मयाप्रोक्तंद्विजश्रेष्ठवैष्णवप्रीतिहेतवे १२०
त्रिसंध्यंयः पठेन्नित्यंभक्तितः पुरतोहरेः
शतमष्टोत्तरशतंनाम्नांतुष्टःसदाहरिः १२१
श्राद्धेचयःपठेदेतद्भक्तिमान्वैष्णवोजनः
संतुष्टाःपितरस्तस्यप्रयांतिपरमंपदम् १२२
यज्ञकालेपठेद्यस्तुदेवताराधनेतथा
दानकालेचयात्रायांसवैतत्फलमाप्नुयात् १२३
अपुत्रोलभतेपुत्रंधनार्थीलभतेधनम्
विद्यार्थीलभतेविद्यांस्तवस्यास्यप्रकीर्तनात् १२४
येपठंतिहरेर्भक्त्यानाम्नामष्टोत्तरंशतम्
नाशुभंविद्यतेतेषांकदाचिदपिभूतले १२५
दांतउवाच-
गच्छब्राह्मणभद्रंतेप्रोक्तेनविधिनामया
समाराध्यहरिंभक्त्यापरमंक्षेममाप्स्यसि १२६
एवंप्रबोधितस्तेनदांतेनपरमार्थिना
तस्मिन्क्षेत्रवरेपुण्येहरिपूजापरोऽभवत् १२७
नित्यंतुभक्त्याविप्रोऽसौपंचाहानिचजैमिने
दांतप्रोक्तेनविधिनाचकारहरिपूजनम् १२८
ज्ञात्वाभक्तिंहरिस्तस्यसुदृढांकरुणामयः
आविर्बभूवसहसाकोटिसूर्यइवांशुमान् १२९
तंदृष्ट्वाजगतामीशंकमलाप्रियमच्युतम्
ववंदेशिरसाविप्रस्तत्पादकमलद्वये १३०
अथासौब्राह्मणश्रेष्ठोहर्षनिर्भरमानसः
कृताञ्जलिर्जगन्नाथमस्तौषीत्कमलापतिम् १३१
दृष्टिंहरेदुरितगामपिमेकृपालांभक्तिंनिजांप्रतिविभोशुभदामनैषीः
तस्मादहंविहितविस्तरपातकोऽपिग्राम्यस्त्वयाकारिपुमानिवाद्य १३२
रुष्टेत्वयित्रिदशवंदितपादयुग्मेदृष्टिःप्रयातिदुरितंखलुमानवस्य
तुष्टेचयातिसुकृतंप्रतिसैवदृष्टिर्ज्ञातंमयैवपरमेश्वरकेवलंच १३३
त्वांवच्मिनाथभवतःस्मरणंप्रभावंयस्माद्व्रजामिनिखिलार्जितपातकोऽपि

स्थानंजगामपरमंत्रिदशैकलभ्यमारुह्यशुद्धकनकच्छुरितंविमानम् १३४
त्वत्पादपद्मसलिलस्यसदागुणाढ्योव्याधः सवेत्तिकनिकः कृतसर्वपापः
त्वद्वेश्ममार्जनफलंजगदेकनाथयज्ञध्वजः क्षितिपतिः सुरवंदितश्च १३५
वेश्मोपलेपनफलंभवतोमुरारेसृष्टिस्थितिप्रलयकारणईश्वरस्य
जानातिपन्नगरिपुध्वजयज्ञमालीभ्राताचतस्यकृतपापभयःसुमाली ३१६
हरिंप्रदक्षिणीकृत्यभवंतंयत्फलंभवेत्
धर्मएवसजानातिनान्यःकश्चिज्जगत्त्रये १३७
तवचित्तंदयांनाथगदितुंभुविकःक्षमः
त्वांविद्ध्वापिशरैर्व्याधोजगामपरमंपदम् १३८
निंदित्वापिजगन्नाथभवंतंत्रिदशेश्वरम्
शिशुपालोययौमोक्षंतवभक्तस्यकाकथा १३९
ब्रह्मरूपेणयेनासौत्वया सृष्टमिदंजगत्
त्वयितस्मिन्महाविष्णोरमतांममानसम् १४०
सर्वोविष्णोत्वयानेनक्रियतेजगतःक्षयः
रुद्ररूपेणसंसारेतस्मैतुभ्यंनमोऽस्तुमे १४१
यस्मादल्पतमंनास्तियस्मान्नास्तिमहत्तमम्
येनव्याप्तंजगत्सर्वंत्वयातस्मैनमोऽस्तुते १४२
नेत्राभ्यांयस्यदेवस्यसूर्योऽजनिदिवाकरः
मुखादग्निश्चजायेततवतस्मैनमोऽस्तुते १४३
यस्यश्रोत्राद्वायवोऽपिजाताःप्राणाश्चकेशव
तवतस्मैसुरश्रेष्ठनमोऽस्तुममसर्वदा १४४
लक्ष्मीर्यस्यसदाक्रोडेश्यामाङ्गस्यसुनिर्वृता
सौदामिनीवमेघस्यतवतस्मैनमोऽस्तुते १४५
गंतुंमहिम्नांसीमानंब्रह्माद्याअपिनिर्जराः
नशक्नुवंतिवैयस्यतवतस्मैनमोऽस्तुते १४६
धर्माणांस्थापनार्थायविनाशायचपापिनाम्
युगेयुगेयःप्रभवेत्तस्मैतुभ्यंनमोऽस्तुमे १४७
माययामोहितंयेनजगदेतन्महात्मना
क्षिणोतिमाययाशंभुर्यस्तस्मैतेनमोऽस्तुमे १४८
भक्तिमात्रेणयस्तुष्टोनधनैर्नस्तवैस्तथा

नदानैर्नतपोभिश्चतस्मैतुभ्यंनमोऽस्तुमे १४९
गवांचब्राह्मणानांचसाधूनांचहितंतथा
कृपांचकुरुतेयस्तुतस्मैतुभ्यंनमोऽस्तुमे १५०
अनाथानांचबंधुनांयोगिनांदुःखिनांतथा
दुःखंहरतियोदेवस्तस्मैतुभ्यंनमोऽस्तुमे १५१
मनुष्येषुचदेवेषुगजेषुसकलेषुच
वर्ततेयःसमत्वेनतस्मैतुभ्यंनमोऽस्तुमे १५२
यस्मिंस्तुष्टेपर्वतोऽपिसद्यएवतृणायते
शैलीयतेतृणंरुष्टेतस्मैतुभ्यंनमोऽस्तुमे १५३
पुण्यानांचयथापुण्येनिजेपुत्रेयथापितुः
यथापत्यौसतीनांच तथात्वयिममास्तुवै १५४
यूनांचित्तंयथास्त्रीषुलुब्धानांचयथाधने
क्षुधितानांयथाचान्नेतथात्वयिममास्तुऽ १५५
घर्मार्तानांयथाचन्द्रेशीतार्तानांरवाविति
तृषार्तानांयथातोयेतथात्वयिममास्तुवै १५६
यन्मयाबुद्धिहीनेनगुरुस्त्रीगमनंकृतम्
तत्पातकंक्षयंयातुभवंतंपश्यतोममम १५७
अवध्यानांवधोयस्तुमायामोहवताकृतः
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १५८
अपेयपानंचमयाविहितंपरमेश्वर
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १५९
अप्सुयोनौतथातोयेयद्रेतः सेचनंकृतम्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १६०
भ्रूणहत्याकृतायाचरेतसांसेचनंभुवि
तत्पातकंक्षयंयातुभवंतंपश्यतोमम ६११
विश्वासघातकंयच्चअज्ञात्वामाययाकृतम्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १६२
असत्यवचनंयच्चमयाप्रोक्तंक्षणेक्षणे
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १६३
सतांनिंदाकृतायाचपरहिंसाचसर्वदा

तत्पातकंक्षयंयातुभवंतंपश्यतोमम १६४
श्लेष्माचकफकंचैवयद्वक्त्रेचमयाकृतम्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १६५
वनस्पतिगतेसोमेयत्कृतंतरुघातनम्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १६६
पथिदेवालयेगोष्ठेमूलमंत्रंचयत्कृतम्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १६७
अभक्तिर्विततायाचपितुर्मातुश्चकेशव
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १६८
स्नानार्थंभोजनार्थंचगच्छन्यस्तुनिवारितः
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १६९
एकादश्यांसुरश्रेष्ठयन्मयाभोजनंकृतम्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १७०
अतिथिर्गृहमागच्छन्पूजितोनमयाप्रभो
तत्पातकंक्षयंयातुभवंतंपश्यतो मम १७१
द्वादश्यांचदशम्यांचकृतंयच्चद्विभोजनम्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १७२
निबारणंकृतंयच्चपानार्थंधावतीगवाम्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १७३
असमाप्यपरित्यक्तंव्रतमारभ्ययन्मया
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १७४
कूटसाक्ष्यंनिरुक्तंयन्मित्रवात्सल्यतोमया
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १७५
ऋतुकालाभिगमनंनिजपत्न्यांकृतंनयत्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १७६
असंस्कृतेगृहेयच्चभोजनंविहितंमया
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १७७
ग्रामयाचकवृत्तिश्चयामयानृहरेकृता
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १७८
दण्डयमानेमयाभूपेप्रभुत्वंयत्कृतंप्रभो

तत्पातकंक्षयंयातुभवंतंपश्यतोमम १७९
पौराणिककथामध्येयोविघ्नोविहितोम्या
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १८०
आदरेणमयायाचपरपाककथाश्रुता
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १८१
अश्वत्थच्छेदनंयच्चधात्र्याश्चच्छेदनंकृतम्
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १८२
दधिदुग्धघृतानांचविक्रयोयः कृतोमया
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १८३
आशांदत्वापरेभ्यश्चकृतासानिष्फलामया
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १८४
द्विजाश्चयाचकाश्चैवकोपदृष्ट्यामयेक्षिताः
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १८५
जीवनोपायदातारः कोपान्निर्भर्त्सितामया
तत्पातकंक्षयंयातुभवंतंपश्यतोमम १८६
बहुनात्रकिमुक्तेनबहुजन्मार्जितानिच
क्षयंगतानिपापानिभवंतंपश्यतोमम १८७
कृतार्थोऽस्मिकृतार्थोऽस्मिकृतार्थोऽस्मिनसंशयः
नमस्तुभ्यंनमस्तुभ्यंनमस्तुभ्यंजगत्पते १८८
इत्युक्त्वाऽसौद्विजोभक्त्यापुलकांचितविग्रहः
पपातजैमिनेविष्णोश्चारुपादांबुजद्वये १८९
श्रीभगवानुवाच-
उत्तिष्ठोत्तिष्ठतेविप्रतुष्टोऽस्मितवभक्तितः
किंतेऽभिलषितंब्रूहितत्तेदास्याम्यहंध्रुवम् १९०
भद्रतनुरुवाच-
परमेश्वरगोविन्ददयालोपरमाच्युत
यत्संप्रतिमयाप्राप्तंतत्केनभुविलभ्यते १९१
तथाप्येकंवरंयाचेमुरारेतवसन्निधौ
जन्मजन्मनिमेभक्तिस्त्वय्यस्तुसुदृढाप्रभो १९२
मया कृतमिदंस्तोत्रंयः पठेद्भक्तितोनरः

तस्याभिलषितंसर्वंप्रसन्नस्त्वंप्रदास्यसि १९३
श्रीभगवानुवाच-
दत्तोऽयतेवरः कोऽपिविप्रनास्त्यत्रसंशयः
किंतुत्वयासहप्राज्ञसख्यंकर्तुंमयेष्यते १९४
नमेसेवकयोग्यास्तेभवानहमिहद्विज
अतः सख्यंप्रविवृतंत्वयासहमयाधुना १९५
व्यास उवाच-
ततोनारायणोदेवोदयालुर्भक्तवत्सलः
चकारजैमिनेसख्यंतेनपुण्यात्मनासह १९६
निजकण्ठगतांमालांददौतस्मैमुदाहरिः
सोऽपिविप्रोददौभक्त्याहरेस्तुलसिकास्रजम् १९७
प्रसार्यचतुरोबाहूंस्तमालिंगितवान्हरिः
सविप्रोऽपिमुदाविष्णुंतमालिंगितवान्प्रभुः १९८
इत्थंकृत्वाहरिः सख्यंतेनाग्रजन्मनासह
भक्तिग्राहीदयालुः सतत्रैवांतरधीयत १९९
ततः प्रतिदिनंतत्रक्षेत्रेचपुरुषोत्तमे
आरेभेकंदुकक्रीडांहरिस्तेनाग्रजन्मना २००
कदाचिद्दुर्बलंदृष्ट्वातंविप्रंकरुणामयः
उवाचवाचंविप्रर्षेमित्रवात्सल्यतोहरिः २०१
श्रीभगवानुवाच-
सखेकथंदुर्बलस्त्वंहृतंकेनधनं तव
हृदिकावाचतेचिन्तासखेतद्वक्तुमर्हसि २०२
भद्रतनुरुवाच-
त्वत्प्रीतयेजगन्नाथनित्यमेवमयातपः
क्रियतेतेनमेगात्रंयातिदुर्बलतांप्रभो २०३
श्रीभगवानुवाच-
यथात्वयिप्रसन्नोऽस्मिकस्मिंश्चनतथासखे
कायक्लेशंपुनः कस्मात्करोषिद्विजसत्तम २०४
दुर्बलंत्वांसमालोक्यहृदिमेजायतेव्यथा
कायक्लेशमतःसर्वंजहीहिद्विजसत्तम २०५

निजोत्तरीयैर्निजवस्त्रभूषण्सुचारुचामीकरकुड्मलाभ्याम्
स्वहस्तराजद्वलयैश्चविप्रःस्वयंसुरेशेनचमंडितोऽसौ २०६
किरीटमानीयनिजाल्ललाटात्पादाच्चपादांगदयुग्ममीशः
सुवर्णहारंनिजकंठदेशात्तस्मैददौविप्रवरायकृष्णः २०७
तैर्भूषणैः श्रीहरिणाप्रदत्तैर्विभूषितोऽयसुकृतीद्विजन्मा
क्रीडेत्सदाकंदुककेलिवेत्ताकृष्णेनकृष्णांबुजसुंदरेण २०८
तमेकदाभूषणभूषिताङ्गंतांबूलरागारुचिरोष्ठयुग्मम्
दिव्यांबरंचारुतरोत्तरीयंस्मेराननंतत्रददर्शदांतः २०९
दांतउवाच-
भद्रभद्रतनोऽद्यापिपापदृष्टिंनमुंचसि
दृष्ट्वापिभवतः कार्यंनिंदितंसकलैर्जनैः २१०
शिष्यः कृतस्त्वंयस्मान्मेसर्वमेवहिभूषणम्
अहंयुश्चापिदुःशीलोनिर्दयः पापतत्परः २११
गुरुकीर्तिविनाशीचपंचैतेशिष्यपांसुलाः
अभक्तोबहुभाषीचतथाचंचलमानसः २१२
परोक्षगुरुनिंदाकृत्प्रोक्ताः शिष्याधमाइमे
चरित्रमुत्तमंज्ञात्वाशिष्यःकार्योविचक्षणैः २१३
यतोदुर्जनगाविद्यागुरूणांचापिदुःखदा
कीर्तिदास्तैश्चयाविद्यानिरुक्तास्तत्वदर्शिभिः २१४
तावैदुर्जनगाः सद्योगुरोर्घ्नंतियशस्तरुम्
पापेभ्यःपुण्यकर्माणिनरोचंतेकदापिच २१५
नरोचतेमक्षिकाभ्यःसुगन्धिचंदनंयथा
यथामिष्टान्नपानेननहितृप्यंतिगर्दभा २१६
दुर्जनानहितृप्यंतियथाधर्मस्यचिंतया
अपकीर्तिभयाल्लक्ष्मीर्धर्मश्चसर्वकामदः २१७
कदाचिन्नभजेद्दुष्टंभजेद्वागच्छतिक्षयम्
प्रतिजन्मनियाविद्याभाग्येनलभतेपरा २१८
कदाचिल्लभतेवापितदात्वंतरतेविधिः २१९
भद्रतनुरुवाच-
सत्यंब्रवीषिविप्रर्षेनास्मिशास्त्रविशारदः

मयाशिष्येणतेक्वापिनापकीर्तिर्भविष्यति २२०
त्वत्प्रसादाद्द्विजश्रेष्ठसर्वाभिलषितंमम
सिद्धिंप्रतिगतंयस्मात्त्वमेकोभुविदुर्ल्लभः २२१
दांतउवाच-
किंतेऽभिलषितंविप्रसिद्धिंप्रतिगतंवद
अचिरेणैवतपसांकथमुद्यापनंकृतम् २२२
भद्रतनुरुवाच-
स्वल्पश्रमैरपिप्राप्तंमयासंदर्शनंहरेः
यस्याज्ञयागुरोत्यक्तंमयानित्यक्रियादिकम् २२३
निजोत्तरीयंवस्त्रंचसुवर्णकलशद्वयम्
स्वहस्तवलयंचापिस्वललाटकिरीटकम् २२४
निजपादतुलाकोटिंनिजमुक्तावलद्यंददौ
तथामेभगवान्विष्णुःसुप्रीतोद्विजसत्तम २२५
मयासहसकृत्वास्तेसख्यंसेवकदुःखहा
करोमिकंदुकाक्रीडांगुरोतेनसहानिशम् २२६
एतन्मेवचनंश्रुत्वागच्छामिनहियद्यपि
प्रतीत्याचमयाप्रोक्तंतथापितवसन्निधौ २२७
दांतउवाच-
सप्तवर्षसहस्राणिभक्त्यापरमयामया
आराधितोऽपिमेविष्णुर्दर्शनंनददौविभुः २२८
अहोविष्णुंसमाराध्यपंचाहान्येवसत्तम
त्वयासंदर्शनंप्राप्तंदैवतैरपिदुर्ल्लभम् २२९
धन्योऽसित्वंकृतार्थोऽसिसाक्षाद्देवस्त्वमुच्यते
यतस्त्वयासहस्वामीप्रेम्णासख्यंचकारह २३०
यदामायितवस्नेहोविद्यतेद्विजसत्तम
कथंकथयमेविप्रदुर्ल्लभंविष्णुदर्शनम् २३१
व्यासउवाच-
इत्युक्तोगुरुणाविप्रोविपिनेनिजमाश्रमम्
जगामविस्मितोधीमान्विष्णुभक्तिपरायणः २३२
अथान्यस्मिन्दिनेगत्वाकंदुकक्रीडनंकृतम्

उवाचेतिजगन्नाथंदयालुंविनयान्वितः २३३
भद्रतनुरुवाच-
गुरुर्हिममदेवेंद्रतवदर्शनमिच्छति
काज्ञातेतिष्ठतोब्रूहिदयालोकमलापते २३४
एकांतभक्तोविप्रोऽसौतवपद्मनिभेक्षण
अतस्तस्मैसुरश्रेष्ठदर्शनं दातुमर्हसि २३५
श्रीभगवानुवाच-
अनेकजन्मविप्रेन्द्रभक्त्यापरमयात्वया
पूजितोऽहमतोदत्तंदर्शनंतेमयाऽधुना २३६
कतिचिद्दिवसांतेनमामभ्यर्च्यद्विजःसच
मांद्रष्टुमिच्छतिप्राज्ञस्त्वदृश्यंदैवतैरपि २३७
ममसोऽपिमहाभक्तोमत्सपर्यापरायणः
ममसंदर्शनंतस्मात्कदाचिद्द्विजलप्स्यति २३८
व्यासउवाच-
इतितस्यवचः श्रुत्वासविप्रःकमलापतिम्
इत्युवाचपुनर्भक्त्याकेशवंक्लेशनाशनम् २३९
भद्रतनुरुवाच-
अनुग्रहोस्तिदेवेशयदामयिजगत्पते
तदामेसंमुखेदेहिदर्शनंभक्तवत्सल २४०
अयाचतगुरुर्देवतवदर्शनदक्षिणाम्
अहोमेगुरवेदत्वादर्शनंपाहिमांप्रभो २४१
श्रीभगवानुवाच-
यदानूनंत्वयोत्सृष्टामत्संदर्शनदक्षिणा
तदागुरुंसमानीयदर्शनंममकारय २४२
इत्याज्ञप्तस्ततस्तेनगुरोराश्रममुत्तमम्
ययौभद्रतनुःप्रीत्यापुनःस्वगुरुरागतः २४३
तस्मिन्विप्रेसमायातेदान्तेदातृवरेहरिः
आत्मानंदर्शयामाससर्वलक्षणसंयुतम् २४४
ततोहरिंसमालोक्यसविप्रोहरिभक्तिकृत्
बद्धाञ्जलिस्तमस्तौषीद्धर्षबाष्पविलोचनः २४५

दांतउवाच-
दयालोकमलाकांतशरणागतपालक
नमस्तुभ्यंनमस्तुभ्यंनमस्तुभ्यंनमोनमः २४६
अद्यमेसफलंजन्मअद्यमेसफलंतपः
अद्यमेसफलंसर्वंप्राप्तंत्वद्दर्शनंमया २४७
पूर्वमालोचितंयद्यद्वचनंश्रीपतेप्रभो
सिंधुकोटिगभीरस्यप्रसृतंपुरतस्तव २४८
स्तोत्रंतन्नास्ति संसारेवागीशस्यजगत्पतेः
येनस्तोत्रेणतेप्रीतिंजनयिष्यामिचेतसि २४९
रक्षरक्षप्रभोरक्षमांप्रसीदजगत्पते
त्वद्दासदासदासानांदासत्वेनापिमांवृणु
व्यासउवाच-
ततः प्रहस्यदेवेशोभक्तिग्राहीदयामयः
करारविंदंतन्मूर्ध्निदत्वाप्राहेतिजैमिने २५०
श्रीभगवानुवाच-
मद्भक्तोऽसिद्विजश्रेष्ठप्राप्तंमद्दर्शनंत्वया
मत्प्रसादेनभद्रंतेसर्वमेवभविष्यति २५१
व्यास उवाच-
तमालिङ्गयततोदांतंप्रेम्णाभद्रतनुंचतम्
तत्रैवांतर्दधेविप्रसहसापरमेश्वर २५२
तस्मिन्क्षेत्रवरेपुण्येदुर्ल्लभेपुरुषोत्तमे
क्रियायोगैर्हरिन्दृष्ट्वादांतोधामपरंययौ २५३
सोऽपिभद्रतनुर्विप्रोहरिभक्तिपरायणः
आयुषोंतेंययौमोक्षंदेवानामपिदुर्ल्लभम् २५४
एकाहमपियोभक्त्यापूजयेत्परमेश्वरम्
बहुजन्मकृतंपापंप्रीतिःसंवर्द्धतेहरौ २५५
अद्यापित्रिदशाःसर्वेब्रह्माद्याअपिजैमिने
प्रभावंनहिजानंतिहरिभक्तस्यभूतले २५६
कर्मभूमिरियंविप्रस्वर्गादपिचदुर्ल्लभा
यत्रविष्णुंसमभ्यर्च्यमर्त्याःस्युःसुरवंदिताः २५७

शक्राद्यास्त्रिदशाः सर्वेसुपुरयक्षयभीरवः
अन्योन्यमपिजल्पंतोऽनिशंचद्विजसत्तम २५८
भूयएवगमिष्यामः कर्मभूमिंकदावयम्
कदातत्रकरिष्यामः पूजांश्रीकमलापतेः २५९
अतिधन्याइमेलोकाअस्मत्तोऽपिमहत्तराः
दुर्ल्लभेभारतेवर्षेपूजयंतिहरिंप्रभुम् २६०
अहोभारतवर्षस्यकः शक्तोगुणभाषणे
यत्राराध्यहरिंपूर्ववयंदेवत्वमागताः २६१
इत्थंदेवगणाः सर्वेवासवाद्याद्विजोत्तम
नित्यंभारतभूभागंप्रशंसंतिशुभप्रदम् २६२
तत्रजन्मसमासाद्ययेननाराधितोहरिः
तत्तुल्यः कोऽपिसंसारेकोऽपिदृष्टः श्रुतोनच २६३
सत्यंसत्यंपुनरपिगद्यतेसत्यमेवतत्
विश्वात्मानंसकृदपिमानवायेऽचयंतिच २६४
अप्यश्रांतंद्विजसुदृढयाकर्मभूमौचभक्त्या
मुक्ताः पापैः सुकररचितैर्यांतिकैवल्यमाशु २६५

इति श्रीपद्मपुराणेक्रियायोगसारेपुरुषोत्तमक्षेत्रेभद्रतनुवरप्रदानं नामसप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

जैमिनिरुवाच-
तीर्थश्रेष्ठमितिप्रोक्तंयत्त्वयापुरुषोत्तमम्
तन्माहात्म्यंगुरोब्रूहियदितेमय्यनुग्रहः १
व्यासउवाच-
पुरुषोत्तमस्यमाहात्म्यंसमासेनशृणुद्विज
सम्यग्वक्तुंजगत्यस्मिन्कः शक्तोविष्णुनाविना २
लवणांभोनिधेस्तीरंपुरुषोत्तमसंज्ञितम्
पुरंतद्ब्राह्मणश्रेष्ठस्वर्गादपिचदुर्ल्लभम् ३
स्वयमस्तिपुरेतस्मिन्यतः श्रीपुरुषोत्तमः
पुरुषोत्तममित्युक्तंतस्मात्तन्नामकोविदैः ४

क्षेत्रंतद्दुर्ल्लभंविप्रसमंताद्दशयोजनम्
तत्रस्थदेहिनोदेवैर्दृश्यंतेचचतुर्भुजाः ५
प्रविशन्वैतुतत्क्षेत्रंसर्वेस्युर्विष्णुमूर्तयः
तस्माद्विचारणातत्रनकर्त्तव्याविचक्षणैः ६
चाण्डालेनापिसंस्पृष्टंग्राह्यंतत्रान्नमग्रजैः
साक्षाद्विष्णुर्यतस्तत्रचाण्डालोद्विजसत्तम ७
तत्रान्नपाचिकालक्ष्मीःस्वयंभोक्ताजनार्द्दनः
तस्मात्तत्रौदनंविप्रदैवतैरपिदुर्ल्लभम् ८
हरिभुक्तावशिष्टंयत्पवित्रंभुविदुर्ल्लभम्
अन्नंयेभुञ्जतेलोकास्तेषांमुक्तिर्नदुर्ल्लभा ९
ब्रह्माद्यास्त्रिदशाः सर्वेतदन्नमतिदुर्ल्लभम्
भुञ्जतेनित्यमागत्यमानुषाणांचकाकथा १०
नयस्यरमतेचित्तंतस्मिन्नन्नेसुदुर्ल्लभे
तमेवविष्णुद्वेष्टारंप्राहुःसर्वमहर्षयः ११
पवित्रंभुविसर्वत्रयथागङ्गाजलंद्विज
तथापवित्रंसर्वत्रतदन्नंपापनाशनम् १२
तदन्नंकोमलंदिव्यंयद्यपिद्विजसत्तम
कृकचस्योदरप्रायंतथाप्यघविदारणे १३
पूर्वार्जितानिपापानिक्षयंयास्यंतियस्यवै
भक्तिःप्रवर्ततेयस्यतस्मिन्नन्नेसुदुर्ल्लभे १४
बहुजन्मार्जितंपुण्यंयस्ययास्यतिसंक्षयम्
तस्मिन्नन्नेद्विजश्रेष्ठतस्यभक्तिर्नजायते १५
इन्द्रद्युम्नस्यसरसिमार्कंडेयह्रदेतथा
रोहिण्यांचसमुद्रेचश्वेतगङ्गाजलेषुच १६
स्नानंयेकुर्वतेमर्त्याभक्तिभावसमन्विताः
तेषांनविद्यतेजन्मपुनरस्मिन्महीतले १७
लवणांभोनिधेस्तोयैःपितरस्तर्पिताद्विज
सर्वदुःखविनिर्मुक्ताव्रजंतिहरिमंदिरम् १८
तीर्थराजःसमुद्रोऽसौकीर्तितस्तत्वदर्शिभिः
तस्मात्तत्रकृतंकर्मसर्वमेवाक्षयंभवेत् १९

पित्रर्चनंतथादानंभगवच्चरणार्चनम्
जपयज्ञंतथान्यच्चतस्मिन्क्षेत्रेमनोरमे २०
यत्कर्मकुरुतेमर्त्योविष्णुप्रीणनहेतवे
सर्वमेवाक्षयंतच्चभवेन्नास्त्यत्रसंशयः २१
बलभद्रंसुभद्रांचकृष्णंचकमलेक्षणम्
येमानवाःप्रपश्यंतितेषांकिंचिन्नदुर्ल्लभम् २२
अदृष्ट्वाश्रीजगन्नाथंसुभद्रांचबलंतथा
मोक्षंनलभतेमर्त्यःकुर्वन्पुण्यशतान्यपि २३
तत्रवेत्रप्रहारेणशरीरंयस्यलोहितम्
तंवंदंतेद्विजश्रेष्ठदेवाः शक्रादयोऽखिलाः २४
स्थित्वांतरिक्षेशक्राद्याःसर्वदेवगणाद्विज
विमानचारिणोऽन्योन्यंप्रवदंतीतिहर्षिताः २५अं
कदामानुष्यमस्मभ्यंदास्यतेकमलापतिः
मनुष्यइवगच्छामस्तदाद्रष्टुंहरिंप्रभुम् २६
कदावेत्रप्रहारेणक्षेत्रेश्रीपुरुषोत्तमे
भविष्यंत्यस्मदीयानिलोहितानिवपूंषिच २७
वासवाद्याःसुराःसर्वेतस्मिन्क्षेत्रेवरप्रदे
सदावेत्रप्रहारांश्चवांछंतिद्विजसत्तम २८
तत्राक्षयवटंयेतुभक्त्यापश्यंतिमानवाः
कोटिजन्मार्जितैः पापैर्मुक्तायांतिपरांगतिम् २९
सुभद्रांबलभद्रंचजगन्नाथमनामयम्
श्वेतंमाधवदेवेशंमार्कंडेयह्रदंतथा ३०
ज्यामेश्वरंहनूमंतंतत्राक्षय्यंवटंद्विज
पश्यंतिभक्त्यायेमर्त्यास्तेषांमुक्तिर्हिशाश्वती ३१
दोलायमानंगोविन्दंफाल्गुनेमासितत्रये
पश्यंतिमानवाभक्त्यातेषांपुण्यंनिशामय ३२
विमुक्ताः सकलैःपापैरंतेयांतिहरेर्गृहम्
ज्ञानंसंप्राप्यतत्रैवमोक्षंयांतिसुदुर्ल्लभम् ३३
चैत्रकेमासिवारुण्यांयोजगन्नाथमीक्षते
समृतःप्रविशेद्देहंजगन्नाथस्यजैमिने ३४

वैशाखेचैवशुक्लायामेकादश्यांजगत्पतिम्
तृतीयायांचयः पश्येन्मुक्तएवसमानवः ३५
प्रविशेद्यस्तुमनुजोमहास्नानंजगत्पतेः
तस्यसिद्ध्यंतिविप्रर्षेसर्वएवमनोरथाः ३६
ब्रह्माद्यास्त्रिदशाः सर्वेस्थित्वाकाशेजगत्पतेः
महास्नानंप्रपश्यंतिभक्तिभावसमन्विताः ३७
महाज्येष्ठ्यांचविप्रर्षेजगन्नाथमनामयम्
आलोक्यलभतेमर्त्योविष्णोस्तत्परमंपदम् ३८
गुंडिकामण्डपंयांतमाषाढेकमलापतिम्
बलभद्रंचयःपश्येत्समुक्तोनात्रसंशयः ३९
यः पश्यतिजगन्नाथंरथस्थंकमलेक्षणम्
तस्यनास्तिपुनर्जन्मसंसारेसर्वदुःखदे ४०
रथारूढांसुभद्रांचभक्त्यापश्यंतिमानवाः
छिनत्तिभगवांस्तस्य दुःखदंभवबंधनम् ४१
अपुत्रामृतपुत्राचयासुभद्रांप्रपश्यति
बह्वपत्याजीववत्सासानारीभवतिद्विज ४२
दुर्भगाकाकवंध्यावासुभद्रांयाप्रपश्यति
सास्वामिसुभगानारीबह्वपत्याभवेत्खलु ४३
गुंडिकामंडपस्थंचकृष्णंपश्यतियः पुमान्
बलभद्रंसुभद्रांचसयातिपरमंपदम् ४४
रोगीदुःखीचयः पश्येद्गुण्डिकामंडपेहरिम्
रोगाच्छोकाच्चसहसाजैमिनेसप्रमुच्यते ४५
यस्त्वपुत्रोजगन्नाथंगुंडिकामण्डपेस्थितम्
पश्येत्सचद्विजश्रेष्ठपुत्रंप्राप्नोतिवैष्णवम् ४६
विद्यार्थीलभतेविद्यांधनार्थीलभतेधनम्
दारार्थीलभतेदारान्मोक्षार्थीमोक्षमाप्नुयात् ४७
भ्रष्टराज्योनृपोयस्तुहरिंपश्यतिभक्तितः
गुंडिकामंडपेविप्रनिजराज्यंलभेतसः ४८
शत्रुभिर्वर्जितोयस्तुगुंडिकामंडपेहरिम्
भक्त्यापश्यतिविप्रर्षेतस्यनश्यंतिशत्रवः ४९

गुंडिकामंडपेपश्येद्योराजपीडितोभृशम्
ससद्यएवराजानंस्वकीयंवशमानयेत् ५०
सर्वासामेवयात्राणांगुंडिकाप्रवरामता
तस्मात्समानवैः कार्यात्यक्त्वाकार्यशतान्यपि ५१
शयनेचतथोत्थानेतस्मिन्क्षेत्रेमनोरमे
हरिंपश्यतियोमर्त्यःसदेवैरपिपूज्यते ५२
पुरुषोत्तममाहात्म्यवक्तुंशक्नोतिकःक्षितौ
यस्यप्रवेशमात्रेणनरोनारायणोभवेत् ५३
बहुनात्रकिमुक्तेनसंक्षेपादुच्यतेमया
सर्वेषामेवतीर्थानांवरिष्ठंपुरुषोत्तमम् ५४
संसारसिन्धुमतिनिम्नमिमंतितीर्षुः क्लेशप्रदंविषमपापगणाश्रयंयः
क्षेत्रेसमस्तसुखदेपुरुषोत्तमाख्येपश्येदमुंसुरवरंपुरुषोत्तमंच ५५
इति श्रीपद्मपुराणेक्रियायोगसारेपुरुषोत्तममाहत्म्यंनामअष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

व्यासउवाच–
नारायणप्रपन्नायेनराभक्तिसमन्विताः
कदाचिदशुभंतेषांविद्यतेनद्विजोत्तम १
पुनरेवप्रवक्ष्यामिमाहात्म्यंकमलापतेः
यच्छ्रुत्वामानवाः सर्वेलभंतेपरमंपदम् २
वासुदेवस्यमाहात्म्यंश्रुत्वातृप्यंतिवैष्णवाः
पाखण्डानहितृप्यंतिनरकेक्लेशभागिनः ३
पाखण्डानांसमीपेतुविष्णुमाहात्म्यमुत्तमम्
नवक्तव्यंद्विजश्रेष्ठवक्तव्यंवैष्णवाग्रतः ४
पूर्वं त्रेतायुगेविप्रउर्वीशुर्नामजैमिने
आसीत्पापरतोनित्यंधर्मनिंदापरायणः ५
ब्रह्मस्वहारीविप्रेन्द्रपरस्त्रीगमनोद्यतः
गोमांसाशीसुरापीचवेश्याविभ्रमलोलुपः ६
शरणागतहंताचपरनिंदाकरःसदा
विश्वासघातीमित्रघ्नोज्ञातिपीडाकरस्तथा ७

असत्यभाषीक्रूरश्चपाखंडजनसङ्गभाक्
वृत्तिच्छेदीद्विजातीनांन्यासापहारकस्तथा ८
तादृशंतंसमालोक्यदुष्टंपापपरायणम्
आजग्मुर्ज्ञातयः सर्वेक्रुद्धास्तस्यनिजंगृहम् ९
ज्ञातयऊचुः –
प्रतिष्ठोपार्जितापूर्वैरस्माकंविमलेकुले
साप्रतिष्ठात्वयामूढविनाशंप्रतिनीयते १०
धर्ममार्गंपरित्यज्यकुरुषेपातकंसदा
मद्वंशकीर्तिहननंजातोऽसिज्ञातिदुःखदः ११
अतिविस्मयदासृष्टिर्विधातुर्मन्यतेत्वयि
यस्मिन्सिंधौशशीजातस्तत्रद्वेडोद्भवोऽपिच १२
अहोशक्तिःकुपुत्राणांसंख्यातुंनचशक्यते
अनेकैःपुरुषैः कीर्तिंसंचितांहंतितत्क्षणात् १३
जातेपुत्रोत्तमेवंशःश्रेष्ठःस्यादधमोऽपिच
पुत्रेधमेतुश्रेष्ठोऽपिवंशोगच्छतिहीनताम् १४
व्यासउवाच–
इत्युक्त्वाज्ञातयस्तेचतंसर्वेपापिनांवरम्
अपकीर्तिभयात्क्रुद्धास्तत्यजुःसहसाद्विज १५
ज्ञातिभिःसपरित्यक्तोजनैः सर्वैश्चधिक्कृतः
प्रपेदेदस्युतांदुःखीविभ्रष्टाखिलवैभवः १६
तंदस्युकर्मकुर्वंतंनिर्दयंपरहिंसकम्
धृत्वाजनपदाः सर्वेभूपालायन्यवेदयन् १७
तेनभूमिभुजातस्यपितृस्नेहाद्द्विजोत्तम
नहतोऽसौदुराचारोनिजदेशाद्बहिष्कृतः १८
ततोऽसौवनमाश्रित्य दस्युभिःसहनिर्दयः
पांथस्वहरणार्थायतस्थौबहुभिरुद्धतैः १९
कदाचित्तटिनीतीरंदस्युभिः सहजैमिने
वनपर्यटनेश्रांतोजगामस्नानहेतवे २०
तस्यांतटिन्यांभगवत्परिचर्यापरायणान्
असौददर्शदुष्टात्माब्राह्मणाकृतिनोबहून् २१

अथतेब्राह्मणाःसर्वेसमाराध्यजनार्दनम्
अन्योन्यंकथयामासुर्विहिताअतिकौतुकात् २२
अद्यचंपकपुष्पाणिमयात्यक्तानितानिवै
कश्चिद्वदतितांबूलंमयादत्तंमुरारये २३
न खादितव्यंतांबूलंकदाचिदपिजन्मनि
मयाद्यहरयेदत्तंकदलीफलमुत्तमम् २४
जन्मजन्मानिचमयाभक्ष्यंचकदलीफलम्
कोऽपिवक्तिमयादत्तंहरयेदाडिमीफलम् २५
कोऽपिवक्तिमयादत्तंरसालफलमुत्तमम्
अन्योऽन्यमेतद्वदतांतेषांश्रुत्वावचांसिच २६
उर्वीशुश्चिन्तयामासकिंप्रदास्यामि विष्णवे
संसारेयानिवस्तूनिभक्ष्याणिसंतितान्यहम् २७
नहिशक्नोमिसंत्यक्तुंकिंदास्यामिमुरारये
नित्यंवनांतरस्थोऽहचौरोराजभया कुलः २८
शकटारोहणेनास्तिह्यधिकारः कदापिमे
व्यासउवाच-
इत्युक्त्वादस्युनातेनभूयोभूयोद्विजोत्तम २९
शकटंहरयेदत्तंचतुर्वर्गप्रदायिने
अथतेब्राह्मणाःसर्वेजग्मुर्विप्रयथागताः ३०
सोऽपिदस्युर्दस्युभिश्चजगामनिजमाश्रयम्
एकदागुडकंडोलंतेनैवखलुवर्त्मना ३१
गृहीत्वापथिकः कश्चित्काकीमंडलमागतः
ततोऽसौसहसादस्युर्निर्भयः परहिंसकः ३२
जहारगुडकंडोलमध्वनीनस्यतस्यच
अथतेदस्यवश्चक्रुर्गुडकंडोलभंजनम् ३३
उर्वीशुश्चापतद्भागेशकटंगुडनिर्मितम्
उर्वीशुःशकटंगौडंसमासाद्यद्विजोत्तम ३४
मनसाचिंतयामासवचःस्मरणपूर्वकम्
अनोमयापुरादत्तंस्वयमेवमुरारये ३५
तस्मादनोनमेग्राह्यंकदाचिदिहजन्मनि

विचिन्त्येतिहृदादातुंतदनोगुडनिर्मितम् ३६
दत्तंविप्रायकस्मैचिन्माधवप्रीतिहेतवे
तांभक्तिंतस्यविज्ञायमहापातकिनोद्विज ३७
जहारसकलंपापंसद्यःप्रीतोजनार्दनः
तस्मिन्नेवदिनेविप्रप्रविश्यचमहावनम् ३८
हतःपौरजनैःसर्वैरथक्रुद्धैःसउर्विशुः
भगवानथतंनेतुंविमानंस्वर्णनिर्मितम् ३९
दूतांश्चप्रेषयामासनानाभरण भूषितान्
अथतेभगवद्दूतास्तमुर्वीशुंगतैनसम् ४०
समारोप्यविमानेतंसद्योजग्मुःपुरंहरेः
ततौऽसौहरिसान्निध्यंप्राप्यपुण्यात्मनांवरः ४१
पुनर्मन्वंतरशतंस्थित्वाकेशवसन्निधिम्
परमंज्ञानमासाद्यसविवेशतनुंहरेः ४२
व्यासउवाच-
येनकेनाप्युपायेनहरिभक्तिंकरोनरः
संसारजलधेःपारंराजहंसइवव्रजन् ४३
क्षणमेवहरेर्भक्तिर्वर्ततेयस्यचेतसि
तत्पदंपरमंयातिसपापात्मापिगच्छति ४४
एकमप्युत्तमंवस्तुदत्वाऽसौतन्मुरारये
स्वयमेवहिभोक्तव्यंपश्चात्पापोपशांतये ४५
यद्वस्तुहरयेदत्तंतच्चदद्याद्द्विजातये
किंचिच्छेषंनभोक्तव्यंतस्यावश्यंस्वयं बुधैः ४६
वस्तूनिब्राह्मणश्रेष्ठमिष्टानियानिकानिच
अदत्वाविष्णवेतानिनभोक्तव्यानिवैष्णवैः ४७
विष्णुनैवेद्यमाहात्म्यंसर्वपापप्रणाशनम्
सेतिहासंपुनर्वच्मिशृणुविप्रसमाहितः ४८
आसीत्सर्वजनिर्नामब्राह्मणःशुद्धवंशजः
शांतोदांतोदयायुक्तोगुरुब्राह्मणपूजकः ४९
हरेःपूजापरश्चैवहरिस्मरणतत्परः
प्रपन्नक्लेशविध्वंसीसत्यवादीजितेन्द्रियः ५०

प्रातःस्नायीनिजाचारग्राहीहिंसाविवर्जितः
एकादशीब्रतरतोज्ञातिपूजापरायणः ५१
कदाचित्सद्विजश्रेष्ठःस्वप्नेऽपश्यच्चकेशवम्
श्यामंविरजपद्माक्षंस्मेरास्यंपीतवाससम् ५२
स्वर्णकुण्डलमञ्जीरकिरीटोज्ज्वलविग्रहम्
कौस्तुभोद्भासितोरस्कंवनमालाविभूषितम् ५३
चतुर्बाहुंशङ्खचक्रगदापद्मधरंप्रभुम्
समस्तैर्लक्षणैर्युक्तंस्वर्णयज्ञोपवीतिनम् ५४
संप्राप्यदर्शनंस्वप्नेसविप्रोजगतीपतेः
कृताञ्जलिस्तमस्तौषीद्रोमांचिततनुर्मुदा ५५
तुभ्यंनमोऽस्तुजगतःसकलस्यभर्त्रेसल्लोकशोकभयरोगविनाशनाय
नारायणायकमलाहृदयप्रियायधर्मार्थकामपरमामृतदायतुभ्यम् ५६
पापानिचैवसकलानिमया कृतानिमत्तेनमोहवशगेनसदामुरारे
तस्माद्बिभेमिजगदंबुनिधेर्गभीरान्मामुद्धरस्वनिजभक्तितरींप्रदाय ५७
जानामियद्यपिहरेदुरितंमनुष्योव्यामोहमाशुचलभेभुविकैटभारे
पापंतथापिचमुदासततंकरोमितस्मान्नकोऽप्यहमिवास्तिजनोविमूढः ५८
पुण्यद्रुमःसुखफलंसहसैवधत्तेकिंवेद्मिनेतिनृहरेकृतपातकोऽहम्
पुष्पद्रुमार्पणविधौनममास्तिवित्तंनाथप्रसीदभगवन्किमहंकरोमि ५९
त्वत्पादपद्मयुगलंपरमामृतस्यस्थानंविहायममचित्तमधुव्रतोऽयम्
नारीमुखंव्रजतिदेवमृतिप्रदंयच्छ्लेष्मप्रकीर्णमनिशंकमलभ्रमेण ६०
पाणिःप्रदानरहितोऽनृतभाषिवक्त्रंकर्णौचपापश्रवणायसदैवदक्षौ
दोषानिमान्ममहरेहरसेवकस्ययस्मान्नुनाथशरणागतदोषहंता ६१
संसारघोरजलधौनृहरेकदाचित्त्वद्भक्तिनौरिहमयासुदृढाचलब्धा
तत्रापिदैववशगोऽहमहोदुरात्मावर्तेतएवसततंममदुःखकालः ६२
संसारपारगमनायलसत्पथोऽस्तिकिंसर्वदुःखरहितः सदयःप्रसन्नः
अंधीकृतस्यममोहमहत्तमिस्रैर्दृष्टिस्त्वयीहनकदापिचयातिविष्णो ६३
पापात्मनोऽपिममचित्तमिदंमुरारेनष्टंविनष्टजनकष्टविनष्टिकारि
यस्त्वांसमस्तसुरवंदितपादपद्मस्वप्नेऽपिकेशिमथनाद्यविभोसमीक्षे ६४
व्यासउवाच–
इति तेनस्तुतोदेवोभगवान्कमलापतिः

उवाचवाक्यंवाक्यज्ञः संसारार्णवतारकः ६५
श्रीभगवानुवाच–
भक्तिभिस्तवविप्रेंद्रतुष्टोऽहनित्यमेव च
तस्मात्तवाचिरेणैवसर्वंभद्रंभविष्यति ६६
पापिनोऽपितवोद्धारोमयापूर्वंकृतोद्विज
अधुनाममभक्तोऽसिनविपत्तिर्भविष्यति ६७
ब्राह्मणउवाच
कोऽहतस्थौपुराविष्णोकिंवापापंमयाकृतम्
पापिनोऽपिममोद्धारः कथंपूर्वंत्वयाकृतः ६८
संसारेऽस्मिन्कथंजातोजनितोऽहकथंत्वया
एतत्सर्वंविभोब्रूहियतस्त्वंसदयः सदा ६९
श्रीभगवानुवाच–
अप्रकाश्यमिदंगुह्यंयद्यपिद्विजसत्तम
तथापितववात्सल्यान्निगदामिनिशामय ७०
पुरात्वंब्राह्मणश्रेष्ठपक्षिवंशसमुद्भवः
भूतोऽसिभूमिभागेषुनिजकर्मविपाकतः ७१
क्षुधयातृषयावापिसततंव्याकुलोभवान्
बभ्रामभक्षयन्कीटान्निर्झरोष्णोदकंतथा ७२
नानादुःखंसदाभुंजन्पक्षियोनौसमुद्भवः
चतुर्वर्षसहस्राणिस्थितोऽसित्वंपुराक्षितौ ७३
एकदाकुलभद्राख्योब्राह्मणःसर्वतत्ववित्
पूजयामासमांभक्त्यानैवेद्याद्यैर्नदीतटे ७४
समभ्यर्च्यसविप्रेंद्रोममनैवेद्यतंदुलम्
ययौतत्रैवनिक्षिप्यभूयएवनिजंगृहम् ७५
ततोवृक्षात्समागत्यक्षुधिनापक्षिणात्वया
ममनैवेद्यसंबंधिभक्षितंसर्वतंदुलम् ७६
भुक्त्वैवसद्योमुक्तोऽसिपातकैरतिदारुणैः
कदाचित्प्राप्तकालस्त्वंकालधर्मगतोद्विज ७७
त्वामानेतुंमयादूताःप्रेषिताः सर्वथानिजाः
ततोरथेसमारोप्यभवंतंनष्टकल्मषम् ७८

सद्योदूतगणाःसर्वेसमायाताःपरंपदम्
युगकोटिसहस्राणिस्थितोऽसिममसन्निधौ ७९
भुंजन्सुखानिसर्वाणिदुर्ल्लभानिसुरैरपि
ततोयातोऽसिविप्रेन्द्रविशुद्धेब्राह्मणान्वये ८०
तत्रापिमयिभक्तिस्तेजातातिसुदृढापुनः
क्रियायोगेनमांनित्यंसमाराध्यद्विजोत्तम ८१अं
आयुषोंतेमत्प्रसादान्मामकंपदमाप्स्यसि
यदातुष्टोऽस्म्यहंविप्रसपापात्मापिमुक्तिभाक् ८२
कदाचिद्यस्यरुष्टोस्मिपुण्यात्मापिचपापभाक्
तस्माद्ब्राह्मणभद्रंतेभक्तोऽसिममसुव्रत ८३
दास्यामितेपरंस्थानंयदलभ्यंसुरैरपि
ब्राह्मणउवाच-
त्वत्प्रसादाच्छ्रुतंनाथपूर्ववृत्तांतमात्मनः ८४
इदानींश्रोतुमिच्छामियत्किञ्चिद्ब्रूहितत्प्रभो
कस्यतुष्टोऽसिदेवेन्द्रकस्यरुष्टोऽसिवाप्रभो ८५
महत्याकृपयासर्वमेतन्मेवक्तुमर्हसि
श्रीभगवानुवाच-
कर्मणायेनविप्रेन्द्रतुष्टिर्मेहृदिजायते ८६
क्रोधश्चतत्समस्तंचकथयामिसमासतः
योदयावान्द्विजश्रेष्ठसर्वभूतेषु सर्वदा ८७
अहंकारविहीनश्चतस्यतुष्टोऽस्म्यहंसदा
कर्मकुर्यान्मदर्थंयोधर्मभक्तिसमन्वितः ८८
ब्रूतेमदर्थंयःशांतंतस्यतुष्टोऽस्म्यहंसदा
मिष्टंवस्तुसमासाद्यदत्वामेयश्चमानवः ८९
मानापमानेसदृशस्तस्यतुष्टोऽस्म्यहंसदा
सर्वभूतशरीरस्थंयोमांजानातिमानवः ९०
परहिंसाविहीनोयस्तस्यतुष्टोऽस्म्यहंसदा
कर्माणिकुरुतेयस्तुसुविचार्यपुनः पुनः ९१
गोब्राह्मणहितैषीयस्तस्यतुष्टोऽस्म्यहंसदा
स्वयंनिरुक्तंवचनं यत्नाद्यःपरिपालयेत् ९२

प्रपन्नंयातियन्नाद्यस्तस्यतुष्टोऽस्म्यहंसदा
ददात्यनुपकारिभ्योदानानिद्विजसत्तम ९३
मयिचित्तंसदायस्यतस्यतुष्टोऽस्म्यहंसदा
कर्मणायेनतुष्टोऽस्मिनिरुक्तंतत्समासतः ९४
रुष्टोऽस्मिकर्मणायेनविप्रवच्मिशृणुष्वतम्
परहिंसारतोयस्तुनिर्दयःसर्वजंतुषु ९५
अहंयुःसर्वदाक्रुद्धः समांनयतिशत्रुताम्
असत्यभाषीक्रूरश्चपरनिंदापरस्तुयः ९६
कविवर्तनविध्वंसीसमांनयतिशत्रुताम्
अदृष्टदोषौपितरौस्त्रीभ्रातृभगिनीतथा ९७
मोहात्त्यजतियोमूढःसमांनयतिशत्रुताम्
पितृभिर्भर्त्सनंयस्तुकुरुतेमूढधीर्नरः ९८
गुर्ववज्ञाकरोविप्रसमांनयतिशत्रुताम्
आरामच्छेदिनोयेचजलाशयविलायिनः ९९
ग्रामनाशकरायेचतेमांनयंतिशत्रुताम्
परस्त्रियंसमालोक्यविषादंयान्तियेजनाः १००
शृणवंतिपापचर्चांचतेषांरुष्टोस्म्यहंसदा
द्विषंतिनाथंयेमूढाअनाथस्वंहरंतिये १०१
विश्वासघातिनोयेचतेषांरुष्टोऽस्म्यहंसदा
येचगोवीर्यहंतारोवृषलीपतयश्चये १०२
अश्वत्थघातिनोयेचतेषांरुष्टोऽस्म्यहंसदा
ब्रह्मविष्णुमहेशानांमध्येयेभेदकारिणः १०३
परदारातिरक्तायेतेषांरुष्टोऽस्म्यहंसदा
एकादश्यांभुंजतेयेलोभात्पापधियोनराः १०४
वेदनिंदाकरायेचतेषांरुष्टोऽस्म्यहंसदा
पापबुद्धिरतायेचमित्रद्रोहरतास्तथा १०५
धात्रीतरुंचयेघ्नंतितेषांरुष्टोऽस्म्यहंसदा
दिवसेमैथुनंयेचकुर्वंतेकाममोहिताः १०६
रजस्वलास्त्रियांचैवतेषांरुष्टोऽस्म्यहंसदा
येचादृष्टार्तवांनारींमोहाद्गच्छंतिसत्तम १०७

व्रतस्थांचसदाजाल्मास्तेमांनयंतिशत्रुताम्
अमावास्यातिथौयेचकुर्वंतेनिशिभोजनम् १०८
भोजनद्वयमेवार्केतेषांरुष्टोऽस्म्यहंसदा
आमिषंमैथुनं तैलममावास्यादिनेद्विजाः १०९
नयेत्यजंतिविप्रेन्द्रतेषांरुष्टोऽस्म्यहंसदा
बहुनात्रकिमुक्तेनसंक्षेपात्तेवदाम्यहम् ११०
निंदंतिवैष्णवान्येचतेषांरुष्टोस्म्यहंसदा
व्यास उवाच-
इत्युक्त्वाभगवान्विष्णुरदृश्यः सहसाऽभवत् १११
सचविप्रःसमुत्तस्थौत्यक्तनिद्रस्तुमंचतः
केशवोक्तेनवाक्येनसविप्रोहरिभक्तिकृत् ११२
संत्यज्यसकलंकार्यंक्रियायोगरतोऽभवत्
नारायणस्यनैवेद्यंभुंजतोऽपिफलंत्विदम् ११३
हरिपूजाकृतांपुंसांनजानेकिंभवेदिति
समासेनब्रवीमित्वांशृणुसत्तमजैमिने ११४
सकृत्कृत्वाहरेः पूजांप्राप्यतेपरमंपदम्
मानुष्यंदुर्ल्लभंलोकेपूजातत्रापिचक्रिणः ११५
भक्तिस्तत्रापिविप्रेन्द्रदुर्ल्लभापरिकीर्तिता ११६
संसाराब्धिंसर्वदुःखप्रपूर्णंतर्तुंवांछायस्यचित्तेस्तिपुंसः
भक्त्यानित्यंवासुदेवस्यपूजांकुर्यादार्यःकर्मणांसोऽखिलानाम् ११७
इति श्रीपद्मपुराणेक्रियायोगसारे एकोनविंशतितमोऽध्यायः १९

## विंशतितमोऽध्यायः

व्यास उवाच-
विष्णुपूजाफलंविप्रसंक्षेपात्कथितंमया
इदानींवच्मिदानानिनिशामयसमाहितः १
दानंतपोद्वयोर्मध्येदानमेकंपरंस्मृतम्
तपसापापमित्युक्तंनपापोदानकर्मणि २
तपःकृतयुगेश्रेष्ठंत्रेतायांध्यानमेवच
सपर्याद्वापरेश्रेष्ठादानंश्रेष्ठंकलौयुगे ३

तस्मात्कलियुगेदानंप्रीतयेकमलापतेः
कर्तव्यंसततंप्राज्ञैरिच्छद्भिःपरमंपदम् ४
कलयाकलयाचन्द्रकलांसंवर्द्धतेतथा
दानस्यसागतिः प्रोक्तातपसश्चमनीषिभिः ५
पलादपिद्विजश्रेष्ठकर्तव्योवित्तसंग्रहः
संचितं तुधनंप्राज्ञोदानकर्मणिसंक्षिपेत् ६
धनेस्थितोपियोमर्त्योनाश्नातिनददातियः
दरिद्रःसचविज्ञेयोदानभोगविवर्जितः ७
वित्तंकेनसहायातियातितेनतुकोद्विज
आयातितत्पुरादत्तमिहपंचत्वमागते ८
दत्वादत्वासदादानंमानवायेदरिद्रति
नतेदरिद्राविज्ञेयाः परलोकेमहेश्वराः ९
धनंरक्षंतिकार्पण्याद्येतेज्ञेयाःसुदुःखिताः
अंतेत्यक्त्वाचतत्सर्वंनिराशायांतिजैमिने १०
परलोकेद्विजश्रेष्ठःसाधुसद्बलवर्जितः
निर्द्धनेबंधुहीनेचनादत्तमुपतिष्ठते ११
स्तोकंस्तोकंचविप्रेन्द्रभक्तिश्रद्धासमन्वितः
नित्यंदेयानिदानानिवैष्णवैर्निजभक्तितः १२
सर्वेषामेवदानानामन्नदानंद्विजोत्तम
जलदानंचतत्वज्ञैरतिश्रेष्ठंप्रकीर्तितम् १३
विनान्नेननतिष्ठंतिप्राणादेहेषुदेहिनाम्
अन्नदःप्राणदोज्ञेयःप्राणदःसकलप्रदः १४
तस्मात्समस्तदानानामन्नदोलभतेफलम्
अन्नदानसमंदानंजलदानंचजैमिने १५
विनातोयेननान्नंस्यादतस्तोयंप्रदीयते
क्षुधातृषापिविप्रेन्द्रद्वेतुल्येतुप्रकीर्तिते १६
तस्माद्दत्वाचतोयंचश्रेष्ठंप्रोक्तंमनीषिभिः
जीवनंजीवनंनृणांजीवनंनचजीवनम् १७
अतोजीवनरक्षार्थंजीवनंप्राज्ञउत्सृजेत्
अन्नंतोयंचविप्रेन्द्रदत्तंयेनमहीतले १८

तेनसर्वाणिदानानिकृतानिनात्रसंशयः
अन्नदानस्यमाहात्म्यंजलदानस्यवैशृणु १९
बभूवहास्तिनपुरेकुबेरइववित्तवान्
तस्मिन्नेवपुरेवेश्याबभूवसुरसुंदरी २०
ख्यातारतिविदग्धेतिसर्वलक्षणसंयुता
तत्रक्षेमंकरीनामब्राह्मणीश्रेष्ठवंशजा २१
समस्तगुणसम्पन्नाविधवासीद्द्विजात्मजा
साब्राह्मणीद्विजश्रेष्ठजारानुरक्तमानसा २२
निषिद्धंकर्मकुर्वंतीत्यक्त्वायात्यविवेकताम्
तयासंनिहिताविप्रवेश्यापिब्राह्मणीचसा २३
चकारसख्यंस्नेहेनवेश्यावृत्तिमुपेत्यसा
सावेश्याब्राह्मणीचापिद्वेऽप्येकत्रदिनेदिने २४
पापानिचक्रतुःप्रीत्याअसंख्यातानिजैमिने
ततोरतिविदग्धासावृद्धभावमुपागता २५
ब्राह्मणीचापिविप्रेन्द्रदुःशीलात्यंतपापिनी
कदाचिद्वारमुख्यासाजरंतीतांनिजांसखीम् २६
प्राहेतिविस्मिताविप्रवचनंविनयान्विता
रतिविदग्धोवाच -
सखित्वयासहानेकंदारुणंपातकंकृतम् २७
अद्यापिपातकेदृष्टिर्महतीवर्ततेमम
सौन्दर्यंचबलंचैवसर्वंमेजरयाहृतम् २८
इत्थमस्वास्थ्यकृन्नित्यमाशांत्यक्तुंनशक्यते
स्थावरंसुमहत्प्राप्तंकृतपातकयामया २९
समागतमिवैतर्हिसमीक्ष्यमरणंगतम्
उपार्जितेनपापेनयानिवित्तानिवैमया ३०
रक्षिष्यंत्यनपत्यायांमृतायांमयितानिके
तस्मात्सर्वाणिवित्तानिअन्यायोपार्जितानिच ३१
दातुमिच्छामिविप्रेभ्योयदित्वंमन्यसेसखि
ब्राह्मण्युवाच-
मयायावन्तिवित्तानिपश्येतिसंचितानिच ३२

असत्पात्रेषुदत्तानितानिसर्वाणिनित्यशः
तस्मादहंधनैर्हीनाकिंदास्यामिद्विजातये ३३
अस्तिचेद्यदिवित्तंतेदानमाशुतदाकुरु
तस्याएवंवचः श्रुत्वासावेश्यात्यंतहर्षिता ३४
वित्तेनसकलेनैवअन्नदानंचकारह
हरिशर्माचविप्रेन्द्रोधनवानतिभक्तितः ३५
पूजयामाससततंभगवंतंजनार्दनम्
जितेन्द्रियोजितक्रोधोहिंसादम्भविवर्जितः ३६
प्रीतयेकमलाभर्तुः सतेपेसुमहत्तपः
गंधपुष्पैश्चबलिभिर्घृतधूपैःप्रदीपकैः ३७
पूजयामासदेवेशंनित्यमेवजनार्दनम्
धनवानपिविप्रोऽसौवित्तस्यक्षयशंकितः ३८
पिपीलिकामूषिकाश्चतथान्येऽपिचजंतवः
कृपणस्यद्विजश्रेष्ठगृहेनित्यंबुभुक्षिताः ३९
उपार्जितंधनंसर्वंस्वयमेवदिनेदिने
बुभुजेब्राह्मणश्रेष्ठदानकर्मविवर्जितः ४०
सुहृदांब्राह्मणानांचबांधवानांकदापिसः
चकारनचसंभाषामर्थप्रार्थनशंकया ४१
विगणय्यस्ववित्तानिसुबहूनिनिजालये
मत्वाश्रेष्ठमिवात्मानंमोदतेऽसौद्विजोत्तम ४२
कदाचित्प्राप्तकालोऽसौब्राह्मणोऽत्यतवित्तवान्
गणिकाब्राह्मणीसाचएककालेमृताद्विज ४३
अथदूताःसमायातास्तान्नेतुमतिभीषणाः
धर्मराजस्यदेवस्यपाशमुद्गरपाणयः ४४
तेचचण्डादयोदूतास्तान्समादायजैमिने
ययुर्धर्मपुरंसद्योदुर्गमेनपथाततः ४५
चण्डउवाच-
आनीतोहरिशर्माचवेश्याचब्राह्मणीचसा
तवाज्ञयाजीवितेशपश्यैतान्पुरतः स्थितान् ४६
तान्समालोक्यजीवेशःप्रहस्यद्विजसत्तम

चित्रगुप्तमितिप्राहसर्वकार्यविचक्षणम् ४७
यमउवाच-
एतेषांसर्वकार्याणिशुभदान्यशुभानिच
मूलाद्विचारयप्राज्ञचित्रगुप्तमहामते ४८
यमादेशात्ततस्तेषांचित्रगुप्तोविचक्षणः
सर्वंविचारयामासशुभकर्माशुभंतथा ४९
चित्रगुप्तउवाच-
देवाकर्णयवक्ष्यामिपुण्यंचपातकंतथा
इयंवेश्याब्राह्मणीचहरिशर्माचकारयत् ५०
एषारतिविदग्धाख्यागणिकातिदुराशया
चकारयानिपापानिवक्तुंतानिनशक्यते ५१
अन्यायोपार्जितैर्वित्तैरखिलैरेवसूर्यज
अन्नदानंचकारेयंगणिकागतयौवना ५२
अन्नदानप्रभावेणयातनागृहवासदैः
त्यक्तेयंपातकैःसर्वैः कोटिजन्मार्जितैरपि ५३
अन्नदानंमहाराजयेकुर्वंतिजनाःक्षितौ
तेपापिनोऽपिगच्छंतितद्विष्णोःपरमंपदम् ५४
यावन्त्यन्नानियच्छंतिमानवाः क्षितिमण्डले
तावंत्योब्रह्महत्याश्चतस्यनश्यंत्यसंशयः ५५
अन्नानियच्छतांत्यक्त्वाशरीराणिचपातकम्
गृह्णतामेवपात्राणिसहसायातिसूर्यज ५६
तस्मात्पापिनामन्नानिनगृह्णंतिविचक्षणाः
मोहाद्गृह्णंतियेमूढास्तएवपापभागिनः ५७
शुभकर्माशुभंवापिवेश्यायाः कथितंप्रभो
ब्राह्मण्याःशृणुकर्माणिशुभानिचाशुभानिच ५८
इयंक्षेमंकरीनामब्राह्मणीशुद्धवंशजा
भद्रकीर्तिप्रियासर्वंचकारदुरितंप्रभो ५९
त्यक्त्वानिजाश्रमाचारंनिजयौवनगर्विता अं
बभूवात्यंतपापिष्ठाजारसंगमलोलुपा ६०
कदाचिच्छैशवेराजन्खेलंतीशिशुभिःसह

रथ्यायांखननंचक्रेचतुष्कोणसमन्वितम् ६१
तस्मिन्नेवदिनेमेघउदकानिववर्षच
पूरितंतज्जलैःखातंतयाविनिर्मितंप्रभो ६२
ततोमध्याह्नसमयेगौरेकस्तृषितोनृप
अपिबत्तत्रपानीयंतापितस्तपनातपैः ६३
तेनैवसर्वपापानिविनष्टानिमहांतिवै
तस्याः सूर्यसुतप्राज्ञजलदानप्रभावतः ६४
विमुक्ताः सकलैःपापैर्व्रजेन्नारायणालयम्
कृतपापाहिदेवेशब्राह्मणीयंदुराशया ६५
विमुक्तासकलैः पापैर्जलदानप्रभावतः
अयंविप्रोमहाभक्तोदेवदेवस्यचक्रिणः ६६
ततोऽस्योपरिजीवेशप्रभुरेकोऽच्युतः स्मृतः
व्यासउवाच-
चित्रगुप्तस्यतद्वाक्यंसमाकर्ण्यसदंडभृत् ६७
तांवेश्यांब्राह्मणींचापिववंदेब्राह्मणंचतम्
दिव्यैःसुवर्णालंकारैर्वस्त्रैर्नानाविधैस्तथा ६८
तेषांपूजांयमः श्रुत्वाकुटुंबिनांचजैमिने
उवाचप्रहसन्वाक्यंसुप्रीतोमृदुलाक्षरम् ८९
यमउवाच-
यूयंसर्वे महात्मानोविनष्टाखिलपातकाः
समस्तसुखदंस्थानंगच्छतश्रीपतेःप्रभोः ७०
तानारोप्यततोदिव्येयमः कांचननिर्मिते
राजहंसयुतेस्थानेप्रेषयामासचक्रिणः ७१
ततोदिव्यरथारूढाःसर्वाभरणभूषिताः
पुरंभगवतोजग्मुस्तेसर्वेगतपातकाः ७२
गणिकाब्राह्मणीसाचविनष्टाखिलकल्मषा
सान्निध्यंप्राप्यदेवस्यतस्थौविप्रचिरंसुखम् ७३
हरिशर्माणमालोक्यसमायांतंजनार्द्दनः
ददौवरासनंतस्मैस्नेहात्कनकनिर्मितम् ७४
पाद्यार्घ्याचमनीयैश्चतमभ्यर्चद्विजोत्तमम्

वरासनोपविष्टंचपप्रच्छेतिमुदाहरिः ७५
श्रीभगवानुवाच-
द्विजन्मकुशलंब्रूहिमद्भक्तप्रवरोऽसियत्
चिरंमेमंदिरंतिष्ठसर्वोपद्रववर्जिते ७६
ब्राह्मणउवाच-
त्वांस्मृत्वापीड्नितोदेवलभतेकुशलंप्रभो
त्वत्सान्निध्यंमया प्राप्तंकुशलंकिमतः परम् ७७
व्यासउवाच-
एतस्यवचनंश्रुत्वाभगवान्प्रणयोदितम्
दत्तवान्निजसारूप्यंप्रीतस्तस्मैद्विजन्मने ७८
ददौतस्मैसुखंसर्वंदुर्ल्लभंकमलापतिः
आहारमात्रंनददौतत्कार्पण्यंस्मरन्प्रभुः ७९
दिनद्वयांतरेविप्रोनिराहारः क्षुधाकुलः
प्रोवाचविष्णुंदेवेशंविनयावनतःस्थितः ८०
ब्राह्मणउवाच-
प्रभोप्राप्तंतवस्थानमनेकतपसांफलैः
अत्रापिक्षुधयानित्यंविफलोऽस्मिकथंप्रभो ८१
देवकन्या गणैर्दिव्यैःसंप्राप्तनवयौवनैः
श्वेतचामरवातेनमंचेष्वपिनिवीजितः ८२
सुगंधानांप्रसूनानांमहास्रग्भिरलंकृतः
चंदनैर्लिप्तसर्वांगोराजश्रेष्ठइवप्रभो ८३
चार्वङ्गीभिःकामिनीभिर्नित्यंमत्पुरतः प्रभो
गीतेननृत्यतेचापिनारायणतवाज्ञया ८४
वासवाद्याःसुराःसर्वेरजांसिममपादयोः
शिरःकिरीटशोभीनिनित्यमेववहंतिवै ८५
देवदेवर्षयश्चापिमुनयश्चजगत्पते
स्तुवंतिमांस्तवैर्नित्यंकिंकराइवसर्वदा ८६
चतुर्बाहुरहंश्यामः शङ्खचक्रगदाब्जभृत्
प्रफुल्लपुण्डरीकाक्षःपीतवासाःसुकुण्डलः ८७
स्वर्णयज्ञोपवीतीचकिरीटीकुण्डलीतथा

दृश्येत्वमिवदेवाद्यैर्द्वितीयोगरुडध्वजः ८८
सुखान्येतानिदत्तानिदुर्ल्लभानित्वयाप्रभो
ददासिकथमाहारंनमह्यंपरमेश्वर ८९
क्षुधाग्निनाचसुमहच्छरीरंममदह्यते
यथैवज्वलितोवृक्षःकोटरस्थेनवह्निना ९०
सुखमेतत्त्वयादत्तंहरेमह्यंनरोचते
प्रज्वलज्जठराग्नौतुविह्वलाङ्गायकेशव ९१
कर्मणामनसावाचात्वांविनाजगदीश्वरम्
नपूजितोमयाकश्चिद्देवदेवगणार्चितः ९२
स्वप्नेनापिजगन्नाथतस्यभक्तिःकृतानहि
आहारंकेनदोषेणददासिनहिमेप्रभो ९३
व्यासउवाच-
अथासौभगवान्विष्णुःकौतुकीसमुवाचतम्
गच्छब्राह्मणभद्रंतेब्रह्माणंप्रतिसत्वरम् ९४
इतिश्रुत्वावचोविप्रःशीघ्रंब्रह्माणमाययौ
ब्रह्मातंप्रतिप्रोवाचकार्पण्यंतस्यदर्शयन् ९५
ब्रह्मोवाच-
दुःखादुपार्जितंकर्मदीयतेयन्नभूसुरे
स्वयंनभुंजतेतच्चनष्टमेवनसंशयः ९६
कारणंतवदुःखस्यसर्वमेवमयोदितम्
गच्छब्राह्मणभद्रंतेनिःसंदेहोयमागतः ९७
ब्राह्मणउवाच-
निजकर्मविपाकोऽयत्वत्प्रसादाच्छ्रुतोऽखिलः
इदानींब्रूहिदानानिकानिदेयानिमानवैः ९८
ब्रह्मोवाच-
बहूनिसंतिदानानितानिवक्तुंनशक्यते
संक्षेपात्कथ्यतेविप्रनिशामयसमाहितः ९९
भूमिदानंद्विजश्रेष्ठसर्वदानोत्तमोत्तमम्
कृतंपुण्यात्मनायेनसज्ञेयःसर्वदानकृत् १००
गोचर्ममात्रंभूमिंयोददातिद्विजसत्तम

सगच्छेत्परमंस्थानंविमुक्तःसर्वपातकैः १०१
भूमिंसस्यसमेतांयोदरिद्रायद्विजातये
ददातिब्राह्मणश्रेष्ठतस्यपुण्यंनिशामय १०२
सर्वपापविनिर्मुक्तोनारायणपुरंव्रजेत्
तत्रभुंक्तेसुखंसर्वंयावदिंद्राश्चतुर्दश १०३
भूयोभूमिंसमासाद्यसार्वभौमोनृपोभवेत्
चिरंभुक्त्वामहींकृत्स्नांनरोनारायणोभवेत् १०४
यस्माद्भूमिर्द्विजैर्ग्राह्यात्यक्त्वादानशतान्यपि
भूमिदोभूमिनेताचद्वावपिस्वर्गगामिनौ १०५
मंदबुद्धिर्द्विजोयस्तुभूमिदानंपरित्यजेत्
प्रतिजन्मनिविप्रेन्द्रसभवेदतिदुःखितः १०६
अन्येभ्योऽपिसमादायभूमिदानंयआचरेत्
तस्यविष्णुरतिप्रीतोददातिपरमंपदम् १०७
ग्रामंयच्छतियोविप्रदरिद्रायद्विजातये
दापयत्यपिवातस्यपुण्यंवापिनिशामय १०८
यावंतोरेणवोभूमौयावंतोवृष्टिबिंदवः
मन्वंतराणितावंतिविष्णुलोकेवसेत्सुधीः १०९
धेनुंपयस्विनींयस्तुसवत्सां यच्छतिद्विज
तस्यब्रवीम्यहंपुण्यमाकर्णयमहात्मनः ११०
सप्तद्वीपांमहींदत्वाससस्यांयत्फलंलभेत्
तत्फलंलभतेमर्त्योधेनुंयच्छन्द्विजातये १११
ददातिवृषभंयस्तुब्राह्मणायकुटुंबिने
विमुक्तःपातकैरुद्रैरुद्रलोकंसगच्छति ११२
तस्ययावंतिरोमाणिशरीरेवृषभस्यच
तावत्कल्पसहस्राणिरुद्रेणसहमोदते ११३
यस्तुवेदविदेधेनुंदद्यादुभयतोमुखीम्
नतस्यपुनरावृत्तीरुद्रलोकात्कदाचन ११४
वृषंतिलसमायुक्तं कृष्णांयस्तुप्रयच्छति
सरुद्रभवनेतिष्ठेद्दिवजेन्द्रतिलसंख्यया ११५
तिलप्रमाणमपिचस्वर्णंदद्याद्दिवजातये

सयातिविष्णुभवनंकुलकोटिसमन्वितः ११६
योभक्त्यारजतंयच्छेद्दरिद्रायद्विजातये
चंद्रलोकंसमासाद्यसुधापानंकरोतिसः ११७
हीरकंमौक्तिकंचापिप्रवालंचमणिंतथा
योददातिद्विजश्रेष्ठशक्रलोकंसगच्छति ११८
अश्वदानंद्विजश्रेष्ठयः करोतिमहाशयः
गन्धर्वराजराजत्वंसप्राप्नोतिनसंशयः ११९
ददातिवारणंयस्तुयुवानंदोषवर्जितम्
देवराज्येविभागीसभवेदिन्द्रइवद्विज १२०
नरदोलांचयोदद्याद्ब्राह्मणायसदक्षिणाम्
सोऽपीन्द्रपदमासाद्यवसेत्कल्पचतुष्टयम् १२१
शालिग्रामशिलादानंयोददातिद्विजातये
तस्यपुण्यंप्रवक्ष्यामिसमासेनशृणुद्विज १२२
सप्तद्वीपांमहींदत्वासशैलवनकाननाम्
यत्फलंतच्चलभतेशालग्रामशिलाप्रदः १२३
तुलापुरुषदानेनयत्फलंप्राप्यतेनरैः
शालग्रामशिलांयच्छंस्तस्मात्कोटिगुणंलभेत् १२४
शालग्रामशिलायेनप्रदत्ताद्विजसत्तम्
नूनंतेनप्रदत्तानिभुवनानिचतुर्दश १२५
तुलापुरुषदानंयःप्रकरोतिनरोत्तम
दिविदिव्यांबरधरश्चिरंसचमहीपतिः १२६
जननीजठरेभूयस्तस्यजन्मनविद्यते
ददातियस्तुवैकन्यांसालंकारांनरोत्तमः १२७
सगच्छेद्विष्णुभवनंपुनरावृत्तिवर्जितः
यःकन्याविक्रयंमूढोमोहात्प्रकुरुतेनरः १२८
सगच्छेन्नरकंघोरंपुरीषह्रदसंज्ञकम्
विक्रीतायाश्चकन्यायायः पुत्रोजायते द्विज १२९
सचांडालइवज्ञेयः सर्वधर्मबहिष्कृतः
कन्याविक्रयिणः पुंसोमुखंपश्येन्नशास्त्रवित् १३०
पश्येदज्ञानतोवापिकुर्याद्भास्करदर्शनम्

यत्किंचित्क्रियतेकर्मकन्याविक्रयिणः पुरः १३१
शुभंतत्सकलंकर्मगच्छेद्विफलतांद्विज
कन्याविक्रयिणोनास्तिनरकान्निष्कृतिःपुनः १३२
कन्यादानकृतोनास्तिस्वर्गादागमनंपुनः
बहुनात्रकिमुक्तेनसंक्षेपेणब्रवीमिते १३३
हीरकक्षितिकन्यानांफलंस्याच्चशताधिकम्
उपानहंचातपत्रंयस्तुयच्छतिभूतले १३४
शृणुतस्यतुवैपुण्यंसंक्षेपेणब्रवीमिते
इहवर्षशतंजीवेत्सर्वसंपत्समन्वितः १३५
मृतःशक्रपुरंप्राप्यशतकल्पचतुष्टयम्
ददातिनूतनंवस्त्रंसयातिपरमांगतिम् १३६
वस्त्रंपुरातनंयच्छेद्धेनुंचरजतींतथा
कन्यांरजस्वलांयस्तुससदानरकंव्रजेत् १३७
फलदोमानवोविप्रगच्छतित्रिदशालयम्
भुंक्तेकल्पसहस्राणिफलंतत्रामृतोपमम् १३८
शाकप्रदोयातिविप्रशंभोर्भगवतःपदम्
तत्रकल्पद्वयं भुंक्तेपायसंदुर्ल्लभंसुरैः १३९
दुग्धदोदधिदश्चैवघृतदस्तक्रदस्तथा
प्राप्नोतिवैसुधापानंपुरोभगवतोहरेः १४०
पुष्पदोमनुजोविप्रगन्धदश्चसुरालयम्
तिष्ठेद्युगसहस्राणिपुष्पगन्धविभूषितः १४१
शय्यादानंद्विजश्रेष्ठयः करोतिद्विजोत्तम
सब्रह्मलोकमागत्यपर्यंकशयनश्चिरम् १४२
दीपदःपीठदश्चैवसर्वपापविवर्जितः
दिव्यसिंहासनस्थश्चजलदीपावलीवृतः १४३
तांबूलदोनरोराजन्भुविभुंक्तेऽखिलंशुभम्
दिविदेवाङ्गनाक्रोडेसुप्तस्तांबूलमत्तिवै १४४
विद्यादानंद्विजश्रेष्ठ्यःकरोतिनरोत्तम
संप्राप्यसंनिधिंविष्णोस्तिष्ठेद्युगशतद्वयम् १४५
ततोज्ञानंसमासाद्यतत्रैवद्विजसत्तम

प्राप्नोतिदुर्ल्लभंमोक्षंप्रसादात्कमलापतेः १४६
अनाथंब्राह्मणंयस्तुपाठयत्यतिदुःखितम्
सयातिविष्णुभवनंपुनरावृत्तिदुर्ल्लभम् १४७
कुलीनोऽपिद्विजश्रेष्ठोनभातिविद्ययाविना
तस्माद्द्विजंपाठयंतःप्रयांतिपरमंपदम् १४८
भुविप्रत्यक्षदेवोऽपिब्राह्मणोदेवताश्रयः
सर्ववर्णगुरुर्नैवविद्याहीनोविराजते १४९
संसारेयानिदानानिसंतिहेमादिकानिच
तानितेनप्रदत्तानिब्राह्मणोयेनपाठितः १५०
कुर्यात्पुस्तकदानंयोनरोभक्तिसमन्वितः
तस्यपुण्यंद्विजश्रेष्ठसंक्षेपात्तेवदाम्यहम् १५१
तत्राक्षराणियावंतिपत्रेपत्रेचपुस्तके
प्रत्यक्षरेलभेत्पुण्यंकपिलाकोटिदानजम् १५२
यावद्दिनंपुस्तकंतत्प्रपठंतिद्विजातयः
तावन्मन्वंतरंतिष्ठेद्वैकुंठेपुस्तकप्रदः १५३
एवमादीन्यनेकानिसंतिदानानिभूसुर
सम्यग्वक्तुंजगत्यस्मिन्कःशक्तोद्विशतैरपि १५४
ब्रह्महत्यादिपापानिक्रियंतेयानिमानवैः
हन्यंतेतानिपापानितस्माद्दानंसमाचरेत् १५५
आत्मपुण्येनयद्दानंदीयतेचत्रिभिर्जनैः
यावद्द्रव्यंफलंतस्मात्तस्यदानस्यलभ्यते १५६
प्रीतयेकमलाभर्तुर्यद्दानंदीयतेजनैः
तस्यकोटिगुणंपुण्यंलभतेनात्रसंशयः १५७
तस्मान्नारायणप्रीतिहेतवेमतिमान्नरः
दानंसमाचरेद्विप्रभक्तिकर्मसमन्वितः १५८
तपसोऽपिपरंदानंनिरुक्तंतत्वदर्शिभिः
अतोयत्नादपिप्राज्ञोदानकर्मसमाचरेत् १५९
दानंतपोद्वेअपियः प्रकरोतिनरोत्तमः
तस्यतुल्योजगत्यस्मिन्विद्यतेनहिभूसुर १६०
इति श्रीपद्मपुराणेक्रियायोगसारेसर्वदानमाहात्म्यंनामविंशोऽध्यायः २०

## एकविंशोऽध्यायः

व्यास उवाच-
ब्रह्मणोवचनंश्रुत्वाहरिशर्माद्विजोत्तमः
भूयोऽपितंनमस्कृत्यभक्त्याप्राहेतिजैमिने १
हरिशर्मोवाच-
प्रोक्तानियानिदानानिसुखहूनित्वयाप्रभो
कस्मैदेयानिदानानितन्मेगदितुमर्हसि २
ब्रह्मोवाच-
सर्वेषामेववर्णानांब्राह्मणः परमोगुरुः
तस्मैदेयानिदानानिभक्तिश्रद्धासमन्वितैः ३
सर्वदेवाश्रयोविप्रःप्रत्यक्षस्त्रिदशोभुवि
सतारयतिदातारंदुस्तरेविश्वसागरे ४
ब्राह्मणउवाच-
सर्ववर्णगुरुर्विप्रस्त्वयप्रोक्तः सुरोत्तम
तेषांमध्येतुकः श्रेष्ठःकस्मैदानंप्रदीयते ५
ब्रह्मोवाच-
सर्वेऽपिब्राह्मणाःश्रेष्ठाःपूजनीयाः सदैवहि
स्तेयादिदोषतप्तायेब्राह्मणाब्राह्मणोत्तम ६
अस्माकंद्वेषिणस्तेचपरेभ्य्नकदाचन
अनाचाराद्विजाः पूज्यानचशूद्राजितेन्द्रियाः
अभक्ष्यभक्षकागावोलोकानांमातरःस्मृताः ७
माहात्म्यंभूमिदेवानांविशेषादुच्यतेमया
तवस्नेहाद्द्विजश्रेष्ठनिशामयसमाहितः ८
क्षत्रियाणांचव्श्यानांशूद्राणांगुरवोद्विजाः
अन्योन्यंगुरवोविप्राःपूजनीयाश्चभूसुराः ९
ब्राह्मणंपूजयेद्यस्तुविष्णुबुद्ध्यानरोत्तम
आयुःपुत्रश्चकीर्तिश्चसंपत्तिस्तस्यवर्द्धते १०
संचिनोतिद्विजंयस्तुमूढधीर्मानवोभुवि
सुदर्शनेनतच्छीर्षंहंतुमिच्छतिकेशवः ११
पुष्पहस्तंपयोहस्तंदेवहस्तंचजैमिने

ननमेद्ब्राह्मणंप्राज्ञस्तैलाभ्यंगिकतवग्रहम् १२
जलस्थंदेववेश्मस्थंध्यानमज्ञितचेतसम्
देवपूजांप्रकुर्वंतंननमेद्ब्राह्मणंबुधः १३
बहिष्क्रियांप्रकुर्वंतंभुंजानंचद्विजोत्तम
तथासामानिगायंतंननमेद्ब्राह्मणंबुधः १४
ब्राह्मणायत्रतिष्ठंतिबहबोद्विजसत्तम
प्रत्येकंतुनमस्कारस्तत्रकार्योनधीमता १५
कृताभिवादनंविप्रंभक्त्यायोनाभिवादयेत्
सचाण्डालसमोज्ञेयोनाभिवाद्यः कदाचन १६
कृतप्रणामंतनयंनमेतांपितरौनच
कृतप्रणामाः सर्वेऽपिनमस्कार्याद्विजैर्द्विजाः १७
कृतदोषान्द्विजान्गाश्चनद्विषन्तिविचक्षणाः
द्विषंतिवापिमोहेनतेषांरुष्टःसदाहरिः १८
याचकान्ब्राह्मणान्यस्तुकोपदृष्ट्याप्रपश्यति
सूचीप्ररोपणंतस्यनेत्रयोःकुरुतेयमः १९
विप्रनिर्भर्त्सनंमूढायेनवक्त्रेणकुर्वते
तस्मिन्वक्त्रेयमस्तप्तंलोहदंडंददातिवै २०
ब्राह्मणोयद्गृहंभुंक्तेतद्गृहेकेशवः स्वयम् भ्रं
देवताः सकलायेचपितरश्चसुरर्षयः २१
विप्रपादोदकंयस्तुकणमात्रंवहेद्वुधः
देहस्थंपातकंतस्यसर्वमेवाशुनश्यति २२
कोटिब्रह्माण्डमध्येषुसंतितीर्थानियानिवै
तीर्थानितानिसर्वाणिविप्रपादे तुदक्षिणे २३
विप्रपादोदकैर्नित्यंसिक्तंस्याद्यस्यमस्तकम्
सस्नातः सर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः २४
सर्वपापानिघोराणिब्रह्महत्यादिकानिच
सद्यस्तस्यविनश्यंतिविप्रपादांबुधारणात् २५
क्षयाद्याव्याधयः सर्वाः परमक्लेशदायिकाः
गच्छंतिविलयंसद्योविप्रपादांबुधारणात् २६
पित्रर्थंयानितोयानिदीयंतेविप्रपादयोः

तैस्तृप्ताःपितरःस्वर्गेतिष्ठंत्याचंद्रतारकम् २७
प्रक्षाल्यविप्रचरणौदूर्वाभिर्योऽचयेद्बुधः
तेनार्चितोजगत्स्वामीविष्णुः सर्वसुरोत्तमः २८
विप्राणांपादनिर्माल्यंयोमर्त्यः शिरसावहेत्
सत्यंसत्यमहंवच्मिप्रतस्यमुक्तिर्हिशाश्वती २९
विप्रंप्रदक्षिणीकृत्येवंदतेयोनरोत्तमः
प्रदक्षिणीकृतातेनसप्तद्वीपावसुन्धरा ३०
योदद्यात्फलतांबूलंविप्राणांपादसेचनात्
रोगीरोगात्प्रमुच्येतपापीमुच्यतपातकात् ३१
मुच्यतेबन्धनाद्बद्धोविप्राणांपादसेचने
अनपत्याश्चयानार्योमृतापत्याश्चयाः स्त्रियः ३२
बह्वपत्याजीववत्साविप्रपादस्यसेचनात्
माहाम्त्यं शृणुविप्रेन्द्रसर्वपापप्रणाशनम् ३३
द्विजांघ्रिसेचनस्याहंसमासेनब्रवीमिते
पूर्वंभद्रक्रियोनामपवित्रकुलसंभवः ३४
बभूवब्राह्मणोविष्णोः परिचर्यापरायणः
वेदवित्सदयःशांतः पितृभक्तिपरायणः ३५
अतिथीनांकृतापूजाज्ञातिपूजाकरस्तथा
एकदासद्विजश्रेष्ठस्तैलाभ्यंगितविग्रहः ३६
जगामसरसींस्नातुंगृहीतस्नानवस्त्रकः
कृतस्नानः सविप्रेन्द्रोविधिनातर्पणादिकम् ३७
चकारसर्वशास्त्रज्ञःसर्वलोकहितेरतः
समाप्यस्नानकर्माणिहरिनामानिकीर्तयन् ३८
आजगामस्वकेगेहेहरिपूजापरोऽभवत्
पादौप्रक्षालयामासपानीयैरतिशीतलैः ३९
प्रक्षालितांघ्रिहस्तोऽसौब्राह्मणोब्राह्मणार्चकः
स्थापयामाससर्वाणिस्नानोपकरणानिच ४०
द्वारदेशेद्विजश्रेष्ठनिदाघतपनातपैः
तापितोभषकः कश्चिदग्निकल्पैः समागतः ४१
विप्रपादोदकेतस्मिन्प्रसुप्तोत्यंतशीतले

विप्रपादोदकस्पर्शाद्भषक्तोऽत्यतपातकी ४२
विमुक्तःपातकैः सर्वैःकोटिजन्मकृतैरपि
ससुप्तोमन्दिरद्वारिभषकोविकलस्तृषा ४३
पानीयंयाचयामासताडितोद्विजकिंकरैः
जगामपंचतांसद्यस्तत्रैवभषकोद्विजः ४४
द्विजाङ्घ्रिसेचनस्पर्शाद्भषकोवीतकल्मषः
तमालोक्यमहात्मानंमूर्तिमंतमिवेश्वरम् ४५
विनयावनतः प्राहब्राह्मणोऽसौतपोधनः
ब्राह्मणउवाच-
कस्त्वंब्रूहिमहाभागकेनदुःखीतुकर्मणा
भषकस्यकुलेजातोनानादुःखसमाकुले ४६
ब्रह्मोवाच-
वचनंतस्यविप्रर्षेः समाकर्ण्यमहायशाः
कथयामासवृत्तांतंमूलतः सर्वमात्मनः ४७
अहमासंसर्वभौमःशङ्खनामामहाबलः
चतुर्वर्षसहस्राणिमहींकृत्स्नामपालयम् ४८
मयाज्ञयाकृताःसर्वेजिताश्चरिपवोयुधि
दत्तानिसर्वदानानिपालिताज्ञातयोनिजाः ४९
एकदाऽहमहाभागंसंधितः स्मरसायकैः
बलाज्जनवधूंकांचिज्जहारभृशसुंदरीम् ५०
तेनपापप्रभावेणममश्रीःसंशयंगता
ततस्समस्तैर्लोकैश्चनिरस्तोऽहमहाबलः ५१
ततस्तुभ्रष्टराज्योऽहकाननाभ्यंतरेस्थितः
क्षुधातृषापरिश्रांतःकदाचित्पंचतांगतः ५२
अंतकस्यपुरंगत्वादुःखंभुक्तंमयाचिरम्
तदाकर्ण्यविप्रेन्द्रश्शृणवतांचित्तदुःखदम् ५३
संतप्तलोहशस्त्रायांतप्तातामृमयींमहीम्
संरेमेप्रज्वलद्वह्निशिखातिसुभीषणाम् ५४
ततस्तुशमनादेशाल्लोहस्तंभंसुभीषणम्
ज्वलतावह्निनातप्तंसमालिङ्ग्यस्थितोऽस्म्यहम् ५५

शीतेत्तुरांबुधाराभिःसिक्तोऽहयमकिङ्करैः
दुःखमन्यच्चसुमहद्भुक्तंतत्रयमालये ५६
ततोनरकशेषेचजन्मासाद्यमुहुर्मुहुः
पापयोनौमयादुःखमनुभूतंचिरंमहत् ५७
त्वत्पादजलसंसर्गान्मुक्तोऽहपापरज्जुना
गच्छामिपरमंधामदुर्ल्लभंयोगिनामपि ५८
त्वंमेगुरुर्द्विजश्रेष्ठनमस्तेऽस्तुमहात्मने
त्वत्प्रसादाद्विमुक्तोऽहपापैर्यामिपुरंहरेः ५९
भद्रक्रियउवाच-
पूर्वजन्मकथाराजन्मनुष्योनकदाचन
अतस्तुतनयंत्यक्त्वासर्वदानीतिमाचरेत् ६०
नीतिग्राहीनृपोयस्तुविपत्तिर्नास्तितस्यवै
चिरंभुनक्तिपृथिवींकंटकैः परिवर्जिताम् ६१
यस्मैनरोचतेनीतिर्भूपालायदुरात्मने
भ्रष्टश्रीरचिरेणापिसभवेन्नात्रसंशयः ६२
आयुर्बलंयशोमित्रंविजयंसुखमिच्छता
मंत्रिणः पंडिताराज्ञानियोज्याः सर्वदैवहि ६३
अवज्ञायमहीभर्तुस्त्यजंतेसादरंबुधाः
सभायांबुधहीनायांनीतिर्बलवतीनहि ६४
ततोनीतौविनष्टायांसहसाधरणीपतेः
राजश्रियोविनश्यंतिसकोशबलवाहनाः ६५
ब्राह्मणान्गणकांश्चैववैद्यांश्चबांधवांस्तथा
नृपाःकल्याणमिच्छंतिनद्विषंतिकदाचन ६६
गतश्रीर्गणकद्वेष्टावैद्यद्वेष्टायुवर्जितः
ज्ञातिद्वेष्टानिष्कुलःस्याद्द्विवजद्वेष्टाखिलार्तिभाक् ६७
राजानः पितरः प्रोक्ताः पुत्राजानपदास्तथा
ततोभूपाःपालयंतिप्रजाःपुत्रमिवौरसान् ६८
पौरलोकेतथाकुर्याद्यथास्नेहोनिजात्मजे
प्रजापीडाकरायेचभूपालाअतिपापिनः ६९
शिरःस्थाविपदस्तेषांविज्ञेयादीर्घदर्शिभिः

विवेकिनोमहीपालाःपालयंतियथाप्रजाः ७०
तथातानपिदेवेशः पालयत्यनिशंहरिः
प्रजानांपालनंदंडंद्वेऽपिराज्ञेशुभावहे ७१
द्वाभ्यांविवर्जिताभूपास्तेविज्ञेयानृपाधमाः
दुष्टानांशासनंचैवशिष्टानांप्रतिपालनम् ७२
प्रकुर्वंतोमहीपालाश्चिरंनंदंतिभूतले
न्यायेनोपार्जितंवित्तंयत्नाद्रक्षेन्महीपतिः ७३
दुर्वृत्तोहि महीपालोविपत्तौनहिविस्तरेत्
नृपाः कल्याणमिच्छंतोनिजराज्यंशुभाशुभम् ७४
पश्यंतिनित्यंविप्रेन्द्रसत्वराश्चारचक्षुषा
परचक्रभयंयावन्नायाति चिंतयेद्भयम् ७५
आगतेतुभयेभूपआचरेन्निर्भयोऽपिच
ज्ञातौवापिचमित्रेवापुत्रेवापिचमंत्रिणि ७६
कुर्यान्मुखेनगांभीर्यंमनसाप्रेमकेवलम्
मंत्रिणोज्ञातयःपुत्राःप्रजाश्चभ्रातरस्तथा ७७
गांभीर्यहीनंभूपालंमन्यंतेनहिभूपवत्
तिष्ठंतिप्रथमंदूरेनसंतिपुरतस्तथा ७८
लोकाश्रयंनहीच्छन्तित्यक्तगांभीर्यभूपतेः
एकश्चमंत्रीराजावैचिरंराज्यत्वमिच्छता ७९
कर्तव्यःसकलेराज्येवृद्धयेनहिभूसुर
अत्यंतबुद्धिवृत्तीनांभृत्यानांसपदंहरेत् ८०
तस्मात्संसदिभूपालोभृत्यमन्यंनियोजयेत्
मूर्खस्त्रीविजितोराजागीतवाद्यरतःसदा ८१
तुरंगवाहनैर्हीनः सहसाविपदंव्रजेत्
आचारग्रहणंसत्यंस्ववाक्यप्रतिपालनम् ८२
गांभीर्यंचेतिभूपानांलक्षणानिद्विजोत्तम
सकथंनृपतिर्यस्तुप्रतापेनविवर्जितः ८३
सकथंनृपतिर्येनाऽनिर्जितापरमेदिनी
जितायांपरमेदिन्यांयावत्पादंव्रजेन्नृपः ८४
प्रतिपादेऽश्वमेधस्यफलंप्राप्नोतिचाक्षयम्

परभूमिजयाकांक्षीहतोनृपतिभिर्युधि ८५
तदागच्छेत्परंस्थानंविमुक्तःसर्वपातकैः
युधिप्राप्तजयोराजाप्राप्नोतिपरमंपदम् ८६
संग्रामेप्राप्तमृत्युर्वादिवीन्द्रसंपदंलभेत्
त्यक्तशस्त्रंत्यक्तसत्वंपलायनपरायणम् ८७
योद्धारंयदियोहंतिसभूपोयात्यधोगतिम्
पलायनपरोयुद्धेतद्धंताचद्विजोत्तम ८८
तावुभावपितिष्ठेतांनरकेऽत्यतदुःसहे
युद्ध्येत्साहसवान्योद्धातद्धंताचद्विजोत्तम ८९
तिष्ठेतांतावपिस्वर्गेयावच्चन्द्रदिवाकरौ
बहुनात्रकिमुक्तेनसंक्षेपादुच्यतेमया ९०
प्रजापालनकृद्राजाकदाचिन्नावसीदति
ब्रह्मोवाच-
इतिब्रुवतिभूपालेतस्मिन्गलितकल्मषे ९१
पुष्पवृष्टिरभूत्तस्मिन्महतीगगनाद्द्विज
अथदूताःसमायाताःकेशवस्यमहात्मनः ९२
राजहंसयुतंदिव्यंरथमादायसुन्दरम्
रथंसतंसमारुह्यदिव्यंकनकनिर्मितम् ९३
जगामविष्णुभवनंसराजागतकल्मषः
विप्रपादोदकस्यैतन्माहात्म्यंतेप्रकीर्तितम् ९४
तच्छ्रुत्वाभक्तिभावेननरोनिर्वाणमाप्नुयात्
इतितेकथितंसर्वंश्रोतुंयद्वांछितंत्वया ९५
गच्छब्राह्मणभद्रंतेचक्रिणोनिलयंप्रति
हरिशर्मोवाच-
क्षुधानलेनमहताशरीरंममदह्यते ९६
केनोपायेनभगवन्क्षुधाशांतिर्भवेन्मम
एतन्मेवददेवेशभक्तस्त्वंभक्तवत्सलः ९७
प्राप्नोमिसुमहद्दुःखंनित्यंदग्धक्षुधानलैः
ब्रह्मोवाच-
यच्छरीरंत्वयापुष्टंसततंभोजनैःकृतम् ९८

भुंद्वतस्यशरीरस्यमांसानिद्विजसत्तम
आत्मतृप्तिंप्रकुर्वन्तिभोजनेनपरस्यये
मांसानिस्वशरीराणांभुंजतेतेपरत्रहि ९९
व्यासउवाच-
ब्रह्मणोवचनंश्रुत्वानिष्ठुरंद्विजसत्तमः
पुनस्तुष्टावतंदेवंवचनैः कोमलाक्षरैः १००
ब्राह्मणउवाच-
प्रसीददेवदेवेशशरणागतपालक
क्षमस्वसकलंदोषंसुरश्रेष्ठनमोऽस्तुते १०१
मलमूलप्रकीर्णानिवपूंषिवहतांनृणाम्
सर्वएवप्रभोदोषाः संतिकेचिद्गुणानच १०२
कृतंमयामोहवतादूषणंक्षंतुमर्हसि
शरणापन्नलोकानांसद्भिर्दोषोनचेक्ष्यते १०३
आत्मदेहस्यमांसानिभोक्तुंब्रह्मन्नशक्यते
देहिनांवदयद्योग्यंसंतुष्टिर्जायतेयतः १०४
इत्येवमुक्तंवचनंभक्त्यातेनाग्रजन्मना
उवाचसदयोब्रह्मासर्वज्ञोब्राह्मणप्रियः १०५
ब्रह्मोवाच-
शोकंमाकुरुविप्रेन्द्रश्शृणुमेवचनंशुभम्
आहारोलभतेयेनप्रकारेणात्रसंप्रति १०६
आत्मनोजायतेपुत्रोयथैवात्मातथासुतः
तस्मात्पुत्रकृतंकर्मलभंतेपितरःखलु १०७
चिरंतिष्ठसिदेवस्यभवनेऽत्यतशोभने
एवमुक्तस्ततस्तेनसविप्रः क्षुधयाकुलः १०८
स्वप्नेसंदर्शनंदत्वापुत्रंवचनमब्रवीत्
ब्राह्मणउवाच-
दीक्षितोऽसिसुतश्रेष्ठतथास्तुपरमांशिवम् १०९
तवास्मिजनकःसौम्यममदुःखंनिशामय
तपःप्रभावैःपरमंधामप्राप्तंमयासुत ११०
क्षुधानलेनसंतप्तस्तत्रसीदाम्यहंसदा

यदामयिपितृस्नेहस्तवास्तिसुतसंप्रति १११
तदान्नमुदकंचापिमदर्थंदीयतांद्विज
यत्किंचिद्दीयतेपुत्रैःपित्रर्थंक्षितिमंडले ११२
लभंतेपितरस्तच्चयत्पुत्राःपितृदेहजाः
पुरापरमयाभक्त्यापूजितोभगवान्मया ११३
गीतैर्वाद्यैश्चनृत्यैश्चस्तवपाठैश्चशोभनैः
गंधैर्धूपैश्चनैवेद्यैर्घृतपूर्णप्रदीपकैः ११४
पाद्यार्घ्याचमनीयैश्चध्यानैरावाहनादिभिः
नदत्तंजगदीशायकृपणेनमयात्मज ११५
अन्नमत्रमपिक्वापिनैवेद्यंपापहारिणे
अतिथेर्नकृतापूजातोयैरन्यैः कदाचन ११६
ज्ञातीनांयाचकानांचसंतुष्टिर्नकृतामया
तेनैवकर्मणापुत्रनारायणगृहेऽपिच ११७
क्षुधानलेनसंतप्तः सीदामिप्रतिवासरे
अतोऽन्नतोयदानानिदरिद्रायद्विजातये ११८
दत्वाक्षिप्रंसुरश्रेष्ठप्राणरक्षांकुरुष्वभोः
अथवानकरोषित्वंनिष्ठुरत्वाद्यदाभवान् ११९
स्वमांसान्येवभोक्ष्यामितदावैविष्णुमंदिरे
अथाऽसौक्षुधितोविप्रःशुष्ककंठोष्ठतालुकः १२०
इत्युक्त्वादीक्षितंपुत्रमदृश्यःसहसाऽभवत्
ततः प्रभातेविमलेप्रादुर्भूतेदिवाकरे १२१
स्वप्नेयदुक्तंपित्रातुचिंतयामासदीक्षितः
आत्मनः कर्मदोषेणपरलोकेऽपिमत्पिता १२२
क्षुधयादग्धसर्वाङ्गःसीदतिप्रतिवासरम्
धिगस्तुमांमंदधियंकृपणप्रवरञ्जनम् १२३
मयापिपितृपुण्येननकिञ्चिदपिदीयते
इतिसंचिंत्यबहुधादीक्षितोऽपिद्विजोत्तम १२४
ददौदानानिविप्रेभ्यः श्रद्धाभक्तिसमन्वितः
तेनपुण्यप्रभावेणतृषयारहितःक्षुधा १२५
तस्थौनारायणागारेयावत्कालंशृणुष्वतत्

चतुर्युगसहस्त्राणिब्रह्मणोऽहप्रकीर्तितम् १२६
भवंतितस्मिन्नेवाह्निमनवश्चचतुर्दश
इंद्राश्चतुर्द्दशप्रोक्तास्तस्मिन्नेवदिनेचते १२७
भुंजतेब्राह्मणःश्रेष्ठविषयान्स्वान्पृथक्पृथक्
एकस्मिन्ब्रह्मदिवसे भुक्त्वास्वान्विषयाञ्छुभान् १२८
इन्द्राश्चमनवश्चैवविनश्यंतिचतुर्दश
विष्णुलोकेस्थितेतस्मिन्हरिशर्मातिभास्वरे १२९
समस्तसुखदेरम्येब्रह्मणोदिवसोगतः
तत्रासौकालमेतावद्भुक्त्वाभोगान्मनोरमान् १३०
परमंज्ञानमासाद्यप्रविवेशहरेस्तनुम्
व्यासउवाच-
अन्नतोयसमंदानंसंसारेनास्तिजैमिने १३१
सर्वदानफलान्येवअन्नतोयप्रदानतः
नचपात्रपरीक्षाचनकालनियमः क्वचित् २३२
अन्नतोयप्रदानेषुनिरुक्तस्तत्वदर्शिभिः
अन्नतोयप्रदानानिकर्तव्यानिसदैवहि १३३
एतत्पठंतिमनुजाः परमादरेणमाहात्म्यमन्नजलयोश्चतथाद्विजानाम्
तेप्राप्यचान्नजलदानफलंततोऽतेनारायणस्यनिलयंसुखदंप्रयांति १३४
इतिश्रीपद्मपुराणेक्रियायोगसारेअन्नदानजलदानमाहात्म्यंनाम
एकविंशतितमोऽध्यायः २१

## द्वाविंशोऽध्यायः

जैमिनिरुवाच-
गङ्गायाःशुभमाहात्म्यंविष्णुपूजाफलंतथा
अन्नदानस्यमाहात्म्यंजलदानस्यचोत्तमम् १
विप्रपादोदकस्यापिमाहात्म्यंपापनाशनम्
त्वत्प्रसादाच्छ्रुतंसर्वंसेतिहासंगुरोमया २
इदानींमुनिशार्दूलश्रोतुमिच्छामिसादरम्
एकादश्याःफलंसर्वंसर्वपातकनाशनम् ३
कस्मादेकादशीश्रेष्ठातस्याः कोवाविधिःस्मृतः

कदाचित्क्रियतेकिंवाफलंतस्यावदस्वमे ४
कावापूज्यतमातत्रदेवतासद्गुणार्णव
अकुर्वतः स्यात्कोदोषस्तन्मेवक्तुमिहार्हसि ५
व्यासउवाच-
एकादश्याःफलंसर्ववक्तुंनारायणादृते
शक्नोतिनान्योविप्रर्षेतस्माद्वच्मिसमासतः ६
सृष्ट्वादौपुरुषश्रेष्ठःसंसारंसचराचरम्
सर्वेषांदमनार्थायसृष्टवान्पापपूरुषम् ७
द्विजातिहत्यामूर्द्धानंमदिरापानलोचनम्
स्वर्णस्तेयंच वदनंगुरुतल्पगतिः श्रुतिः ८
स्त्रीहत्यानासिकंचैवगोहत्यादोषबाहुकम्
न्यासापहारणग्रीवंभ्रूणहत्यागलंतथा ९
परस्त्रीगतवुक्काग्रंसुहृल्लोकवधोदरम्
शरणापन्नहत्यादिनाभिगर्तावधिंकटिम् १०
गुरुनिंदासक्थिभागंकन्याविक्रयशेफसम्
विश्वासवाक्यकथनंपायुंप्रीतिवधांघ्रिकम् ११
उपपातकरोमाणंमहाकायंभयंकरम्
कृष्णवर्णंपिंगनेत्रंस्वाश्रयात्यंतदुःखदम् १२
तंदृष्ट्वापापपुरुषमत्युग्रंपुरुषोत्तमम्
सदयश्चिंतयामासप्रजाक्लेशहरःप्रभुः १३
सृष्टोऽयदुर्जनः क्रूरःस्वाश्रयक्लेशदायकः
प्रजानांदमनार्थायसृजाम्येतस्यकारणम् १४
अथासौभगवान्विष्णुर्बभूवस्वयमंतकः
ससर्जरौरवादींश्चनिरयान्पापिदुःखदान् १५
पापंयःसेवतेमूढोनयातिपरमंपदम्
यमाज्ञयाव्रजेत्तत्रनरकंरौरवादिकम् १६
एकदाभगवान्विष्णुःप्रजानांदुःखनाशनः
वैनतेयंसमारुह्यजगामयममंदिरम् १७
तंदृष्ट्वाजगतामीशंनारायणमनामयम्
धूपाद्यैःपूजयामासभास्करिस्तुष्टमानसः १८

यमेनाभ्यर्चितोविष्णुःसर्वलोकैकनायकः
उवासद्विजशार्दूलपीठेकनकनिर्मिते १९
तत्रोपविष्टोभगवान्यमेनसहदैत्यहा
शुश्रावक्रंदनंध्यानंदक्षिणस्यांदिशिप्रभो २०
अथासौकमलाकांतोविस्मयाविष्टमानसः
उवाचेतियमंतेषांकुतोऽयक्रंदनध्वनिः २१
यमउवाच-
देवपातकिनोमर्त्यानिरयेऽत्यतदुःखदे
स्वहस्तार्जितदोषेणसीदंतिचममालये २२
पापवृक्षफलंविष्णोभोक्तुमत्यंतदुःखदम्
रुदंतिपापिनस्तस्मात्तेषांध्वनिरसौमहान् २३
इत्युक्तःसूर्यपुत्रेणकृष्णः कमललोचनः
जगामसहसातत्रपापवंतोरुदंतिते २४
तान्दृष्ट्वापापिनोमर्त्यान्नौरवादिषुसंस्थितान्
भगवांश्चिंतयामासहृदिजातदयःप्रभुः २५
मयासृष्टाः प्रजाः सर्वादोषेणनिजकर्मणाम्
मयिस्थितेऽपिनरकेसीदंत्येकांतदुःखदे २६
एतच्चान्यच्चविप्रेन्द्रविचिंत्यकरुणामयः
बभूवसहसातत्रस्वयमेकादशीतिथिः २७
ततस्तान्पापिनःसर्वान्कारयामासतच्छ्रुतम्
तेचसर्वेपरंधामययुर्गलितकल्मषाः २८
तस्मादेकादशींविष्णोमूर्तिंविद्धिपरात्मनः
समस्तदुष्कृतिश्रेष्ठंव्रतानांव्रतमुत्तमम् २९
एकादशींतिथिंकृत्वापावयंतींजगत्त्रयम्
शंकितःपापपुरुषो विष्णुंस्तोतुमुपाययौ ३०
ततोबद्धाञ्जलिर्भक्त्यासपापपुरुषोद्विज
तुष्टावकमलाकांतंभगवंतंजनार्दनम् ३१
तस्यस्तवंसमाकर्ण्यप्रसन्नःपरमेश्वरः
उवाचाहंप्रसन्नोऽस्मिकिंतेऽभिमतमुच्यताम् ३२
पापपुरुषउवाच-

सृष्टोभगवताविष्णोनिजानुग्रहदुःखदः
एकदश्याःप्रभावेणच्तयंप्राप्नोमिसांप्रतम् ३३
मृतेमयिजगत्यस्मिन्सर्वेतेचशरीरिणः
भविष्यंतिविनिर्मुक्ताभवबंधैःशरीरिणः ३४
सर्वेषुचविमुक्तेषुदेहिश्रेष्ठेषुपूरुषम्
संसारकौतुकागारेकैस्त्वंक्रीडिष्यसेप्रभो ३५
क्रीडितुंयदितेवांछाजगत्कौतुकमंदिरे
एकादशीतिथिभयात्तदामांत्राहिकेशव ३६
अन्यैःपुण्यसहस्रैस्तुमांहंतुंनहिशक्यते
शक्नोत्येकादशीपुण्यामांहंतुंवरदोभव ३७
मनुष्यपशुकीटेषुतथाऽन्येषुचजंतुषु
पर्वतेषुचवृत्तेषुस्थानेषुचजलेषुच ३८
नदीषुचसमुद्रेषुवनेषुप्रांतरेषुच
स्वर्गेमर्त्येचपातालेदेवगंधर्वपत्तिषु ३९
एकादशीतिथिभयाद्भूयान्विष्णोपलायितः
कुत्रापिनिर्भयस्थानंनचतेनचकुत्रचित् ४०
कोटिब्रह्माण्डमध्येषुदेवदेवसनातन
एकादश्यांतिथौस्थातुंमयास्थानंनलभ्यते ४१
एकादश्यामहंकुत्रवत्स्यामिनिर्भयः प्रभो
तन्मेकथयदेवेशत्वयासृष्टोऽस्म्यहेतुकः ४२
व्यासउवाच-
इत्युक्त्वा पापपुरुषः क्लेशनाशनमच्युतम्
भूमौनिपत्यचक्रंदस्त्रवद्बाष्पविलोचनः ४३
ततः प्रहस्यभगवान्मधुकैटभमर्दनः
एकादशीभयात्त्रस्तमुवाचपापपूरुषम् ४४
श्रीभगवानुवाच-
उत्तिष्ठपापपुरुषत्यजशोकंमुदंकुरु
एकादश्यांतिथौयत्रतवस्थानंवदामिते ४५
एकादश्यांसमायांत्यांप्रपुनन्त्यांजगत्त्रयम्
स्थातव्यमन्नमाश्रित्यभवतापापपूरुषः ४६

अन्नमाश्रित्यतिष्ठंतंभवंतंपापपूरुषम्
नहनिष्यतिमन्मूर्तिरियमेकादशीतिथिः ४७
तत्देवोऽपिविप्रर्षेतत्रैवांतर्हितोऽभवत्
कृतार्थःपापपुरुषोययौचसयथागतः ४८
तस्मादन्नंनभोक्तव्यंकदाचिदपिसत्तमैः
आत्मनोहितमिच्छद्भिःसंप्राप्तेहरिवासरे ४९
संसारेयानिपापानितान्येवैकादशीदिने
अन्नमाश्रित्यतिष्ठंतिश्रीमन्नारायणाज्ञया ५०
कुर्वतांसर्वपापानिनरकान्निष्कृतिर्भवेत्
येचान्नंभुञ्जतेऽत्रापितेज्ञेयाः पापिनांवराः ५१
भूयोभूयोदृढंवच्मिश्रूयतांश्रूयतांजनाः
नभोक्तव्यंनभोक्तव्यंनभोक्तव्यंकदाचन ५२
ब्रह्मक्षत्रियविट्शूद्रैरन्यैश्चद्विजसत्तम
सर्वैरेकादशीकार्याचतुर्वर्गफलप्रदा ५३
अष्टादशनिमेषास्तुकाष्ठाप्रोक्तामनीषिभिः
त्रिंशत्काष्ठाभिरुक्ताचकलासर्वार्थदर्शिभिः ५४
क्षणंत्रिंशत्कलाभिःस्यान्मुहूर्तोद्वादशक्षणैः
त्रिंशन्मुहूर्तालोकानामहोरात्रःप्रकीर्तितः ५५
तैःपंञ्चदशभिःपक्षोविज्ञेयोद्विजसत्तम
पक्षाभ्यांशुक्लकृष्णाभ्यांमासस्तुपरिकल्पितः ५६
तस्मिन्मासेद्विजश्रेष्ठपक्षयोःशुक्लकृष्णयोः
महापातकयुक्तोऽपिकरोत्येकादशींयदि ५७
सर्वपापविनिर्मुक्तोविष्णुलोकमवाप्नुयात्
मातानप्रोच्यतेमातामाताह्येकादशीतिथिः ५८
इहैवपालयेन्मातासर्वत्रैकादशीतिथिः
एकादशीव्रतंत्यक्त्वाव्रतमन्यत्करोतियः ५९
स्वकरस्थंमणिंत्यक्त्वालोष्ठंगृह्णातिमूढधीः
एकादशीव्रतंयैस्तुकृतंभक्तिसमन्वितैः ६०
तैस्तुयज्ञाकृताःसर्वेव्रतानिसकलानिच
एकादश्यांचभुञ्जन्तियेमोहात्पापिनोनराः ६१

शुक्लायांवापिकृष्णायांतेषांरुष्टःसदाहरिः
तेनधर्माःकृताःसर्वेलङ्घितायेनसातिथिः ६२
यथासमस्तदेवानांश्रेष्ठोविष्णुःप्रकीर्तितः
तथासर्वव्रतानांचश्रेष्ठमेकादशीव्रतम् ६३
आदित्यानांयथासूर्योनक्षत्राणांयथाशशी
तथासर्वव्रतश्रेष्ठंप्रोक्तमेकादशीव्रतम् ६४
वृक्षाणांचयथाश्वत्थोवेदानांसामकीर्तितम्
तथासर्वव्रतश्रेष्ठंप्रोक्तमेकादशीव्रतम् ६५
कवीनामुशनाश्रेष्ठोवर्णानांब्राह्मणोयथा
तथासर्वव्रतश्रेष्ठंप्रोक्तमेकादशीव्रतम् ६६
व्यासःश्रेष्ठोमुनीनांचदेवर्षीणांचनारदः
तथाव्रतानांसर्वेषांश्रेष्ठमेकादशीव्रतम् ६७
यथासमस्तदानानामन्नदानंवरंस्मृतम्
तथासर्वव्रतश्रेष्ठंप्रोक्तमेकादशीव्रतम् ६८
यथापुण्यसमंमित्रंनास्तिशास्त्रसमोगुरुः
तथैवैकादशीतुल्यंव्रतंनास्तिजगत्त्रये ६९
इन्द्रियाणांयथाश्रेष्ठंमनःप्रोक्तंमनीषिभिः
मासानांकार्तिकः श्रेष्ठःपाण्डवानांयथार्जुनः ७०
यथासमस्तशास्त्राणांश्रेष्ठावेदाः प्रकीर्तिताः
तथाव्रतानांप्रवरंस्मृतमेकादशीव्रतम् ७१
वेदागमपुराणेषुशास्त्रेष्वन्येषुच द्विज
कुत्राप्येकादशीतुल्यंव्रतंप्रोक्तंनकोविदैः ७२
निर्भयामानवाः सर्वेतिष्ठंतिक्षितिमण्डले
एकादशीव्रतंकृत्वाकिंकरिष्यतिभास्करिः ७३
एकामेकादशींसम्यक्कुर्वतांकिंकरोयमः
एकादशीव्रतंतस्मात्कर्तव्यंहिशुभप्रदम् ७४
एकादशीव्रतविधिंसंक्षेपात्कथयाम्यहम्
समाहितमनाभूत्वाशृणुसत्तमजैमिने ७५
दशम्यांप्रातरुत्थायकर्तव्यंदंतधावनम्
ततस्तैलादृतेस्नानंकर्तव्यमन्नवर्जनैः ७६

ततोविष्णुंसमभ्यर्च्यपाद्याद्यैर्जगदीश्वरम्
हरिध्यानपरोभूत्वाएकभोजनमाचरेत् ७७
आमिषंलवणंचैवतथामांसंमसूरकम्
बृहन्माषंतथाशाकंदशम्यांपरिवर्जयेत् ७८
द्विर्भोजनंपरान्नंचमधूनिमैथुनंतथा
भोजनंकांस्यपात्रेषुदशम्यांपरिवर्जयेत् ७९
निम्बपत्रंचवृंताकंदग्धंजंबीरमेवच
घृतहीनंतथागव्यंदशम्यांपरिवर्जयेत् ८०
अत्यन्तभोजनंचैव अत्यन्ताशनभोजनम्
तांबूलभक्षणंचैवदशम्यांपरिवर्जयेत् ८१
दशम्यांयानिवस्तूनिनिषिद्धानिद्विजोत्तम
द्वादश्यामपितान्येवनिषिद्धानिनसंशयः ८२
दशम्यांविप्रशार्दूलद्वादश्यामपिवैष्णवः
सम्यग्व्रतफलप्रेप्सुर्नकुर्यान्निशिभोजनम् ८३
अतोहविष्यंकृत्वातुदशम्यांसत्वरोव्रती
अपराह्णेपुनः कुर्याद्विधिनादंतधावनम् ८४
सायंदेवालयंगत्वागृहीत्वाकुसुमाञ्जलिम्
केशवंमनसा ध्मायन्मंत्रमेतमुदीरयेत् ८५
एतद्गृहीतंगोविंदमयात्वत्पुरतोव्रतम्
सिद्धिंगच्छतुनिर्विघ्नंतवपादानुकंपया ८६
अतिचंचलचित्तोऽहलोभमोहमयोनरः
शक्नोम्येतद्व्रतंकर्तुंकिंतवानुग्रहादृते ८७
इमौमंत्रौपठित्वातुतमेवकुसुमांजलिम्
दत्वानारायणायाथदंडवत्प्रणमेद्भुवि ८८
तस्मिन्नेवगृहेविष्णोर्विष्णुस्मरणतत्परः
कुशेनशय्यामास्तीर्यभूमौशयनमाचरेत् ८९
ततः प्रभातेविमलेनकुर्याद्दंतधावनम्
कल्लोलैर्मुखशुद्धिंतुकुर्याद्द्वादशभिर्बुधः ९०
नित्यक्रियांप्रकुर्वीतविष्णुपूजादिकक्रियाम्
ततोनिशायांविप्रेन्द्रसकलैर्व्रतिभिर्जनैः ९१

एकत्रजागरंकुर्यात्पुरतोजगतांपतेः
समातृकःसभार्यश्चसभ्रातासपितातथा ९२
तथासपुत्रमित्रश्चकुरुतेजागरंहरेः
सतिष्ठेद्विष्णुभवनेचिरंव्रतकरोद्विज ९३
शङ्खचक्रादिकंचित्रंयोलिखेद्विष्णुमंदिरे
बहुजन्मकृतंपापंहरेत्तस्यजनार्दनः ९४
तंडूलचूर्णपंकेनविष्णोरायतनेषुच
अन्यैर्वन्यैश्चवाचित्रंलिखेत्तस्यफलंशृणु ९५
पुत्रपौत्रप्रपौत्रैश्चभुङ्क्तेचसकलंशुभम्
शेषेविष्णुपुरंगत्वातत्रमोक्षमवाप्नुयात् ९६
वासरेकमलाभर्तुर्ध्वजारो पणकृन्नरः
उद्धृत्यकोटिपुरुषान्नारायणपुरंव्रजेत् ९७
पताकावल्लिभिर्युक्तंविष्णोरायतनंजनः
मण्डयत्यवनीपालःसलभेत्प्रतिजन्मनि ९८
पताकाप्रचलंतीचयावद्भवतिवायुना
तत्कर्तुःपातकंसर्वंतावदेवविनश्यति ९९
पताकावलयाःप्राज्ञैर्नानावर्णाहरेर्गृहे
स्थापितव्याः परंस्थानमिच्छद्भिर्हरिवासरे १००
विष्णोःशिरसियच्छत्रंधत्तेचारुतरंजनः
प्रतिजन्मनिविप्रर्षेक्षत्रीभवतिसक्षितौ १०१
वासरेवासुदेवस्यपुष्पमंडपकृन्नरः
प्रतिपुष्पंलभेत्पुण्यंवाजिमेधशतोत्तरम् १०२
वासुदेवदिनेपुष्पैःसुंगधैर्मंडयन्बुधः
यत्नादपिचकर्तव्यंचतुर्वर्गफलाप्तये १०३
योवस्त्रगृहनिर्माणंकुरुतेहरिवासरे
ससौधवासीविप्रर्षेभवतित्रिदशालये १०४
निर्मायवस्त्रभवनंतत्रबध्नातिमानवः
श्वेतंवालोहितंवापिकृष्णंवासोऽच्युतप्रियः १०५
शालिग्रामशिलांतत्रप्रतिमांवाश्रियःपतेः
पञ्चामृतेनसंस्नाप्यस्थापयेद्भक्तितो व्रती १०६

आदौस्वस्त्ययनंकुर्यात्संकल्पंचतथाबुधः
यत्नादपिचकर्तव्यंचतुर्वर्गफलाप्तये १०७
भूतशुद्धिंनिजांविप्रविधानंशास्त्रभाषितैः
ततश्चैकमनाभूत्वागृहीत्वापुष्पमुत्तमम् १०८
ध्यायन्नारायणंदेवंहृदयांभोजवासिनम्
आसीनंहेमपीठेचतथामणिमयेऽपिच १०९
आसीनंहेमपीठेमणिमयज्वलनालंकृतंक्रीडवेशंबिभ्रल्ले
खोज्ज्वलाभ्रद्युतिरुचिरतनुंदीर्घदोर्भिश्चतुर्भिः
नित्यंविभ्राजमानंसकलकरलयैःसायुधैः पद्मनेत्रैः पश्यंतंश्रीमुखंतच्छ्रमनुद-
मनिशंतंभजेऽपाङ्गदृष्ट्या ११०
आगच्छभगवन्देवसहितः श्रीपतेःप्रिय
कर्तव्याहिमयाभक्त्यासपर्यास्मिन्व्रतेतव १११
सर्वलक्षणसंपन्नलक्ष्म्यासहजगद्गुरो
अस्मिन्वरासनेतिष्ठयावत्पूजांकरोमिते ११२
समस्तलोकविख्यातकीर्तेनारायणप्रभो
कच्चित्तेकुशलंसर्वंसर्ववंदसुरार्चित ११३
पाद्यंगृहाणदेवेशनारायणसुवासितम्
पादद्वयरजोहारिपवित्रमतिशीतलम् ११४
अर्घ्यंददामितेविष्णोदूर्वापल्लवसंयुतम्
अखंडतंडुलोपेतंपुंडरीकनिभेक्षण ११५
इदमाचमनीयंतेसुपवित्रंददाम्यहम्
गृहाणपरमानंदपरमानंदवर्द्धनम् ११६
मयादत्तेनगंधेनजरासंधविनाशन
तवास्तुभूषितंगात्रंलक्ष्मीनाथसुगंधिना ११७
ददाम्यहंपवित्रार्थंजगतामादिकारकम्
इदमाचमनंदेवतद्गृहाणसुरेश्वर ११८
सृष्टोऽयविधिनापूर्वंदेवानांतुष्टिवृद्धये
अतस्तुभ्यंसुरश्रेष्ठधूपोऽयदीयतेमया ११९
तमसः स्तोमसंहर्ताघृतपूर्णोजनार्दन
तवास्तुप्रीतयेदेवएषदीपोजनार्दन १२०

सोत्तरीयमिदंवस्त्रंबस्तिश्रोणिसुशोभनम्
ददाम्यहंतेदेवेशसोपवीतंजगद्गुरो १२१
अन्नंचतुर्विधंस्वादुरसैः षडिंभसमन्वितम्
मयानिवेदितंभक्त्यागृहाण परमेश्वर १२२
मुखदुर्गन्धहरणंकर्पूरखदिरान्वितम्
गृहाणविष्णोतांबूलंकैवल्यदमहामते १२३
विधिनानेनगोविन्दमुपहारैरनुत्तमैः
पूजयेत्संवृतोभक्त्याप्रहरेषुचतुर्ष्वपि १२४
नानोपहारान्हरयेयोयच्छेद्धरिवासरे
वित्तशाठ्यंनकर्तव्यं कर्मणांफलमिच्छता १२५
ततस्तुव्रतिभिः सर्वैर्नारायणपरायणैः
निशिजागरणंकार्य्यंनृत्यगीतस्तवादिभिः १२६
प्रदक्षिणंद्विजश्रेष्ठनामानिकमलापतेः
सर्वपापविनाशीनिस्मर्तव्यानिव्रतेरतैः १२७
स्फुरंतंप्रतिवक्त्रेभ्योहरिनामध्वनिंजनाः
शृणवंतितेविमुक्ताःस्युर्महद्भिः पापसंचयैः १२८
नपाखंडजनालापः कर्तव्योहरिवासरे
पाखंडालापमात्रेणसर्वधर्मोविनश्यति १२९
नारायणयशोगीतंप्रतिकंठंविनिःसृतम्
श्रुत्वामूढानतृप्यंतिश्वानोवीणाक्वणंयथा १३०
संतोहर्षंसमायांतिश्रुत्वागीतंजगत्पतेः
समस्तपापविध्वंसिवीणाक्वाणंयथामृगाः १३१
गायंतंहरिगीतानिनृत्यंतिनृत्यमुत्तमम्
तृप्यंतिव्रतिनोदृष्ट्वातृप्यंतिकमलापतेः १३२
व्रतिनोयेनतृप्यंतिविष्णोरायतनेद्विज
प्रतिजन्मनिवैतेषांपशुताशाश्वतीभवेत् १३३
नयेगीतानिगायंतिव्रतिनोहरिवासरे
विहीनावचनैस्तेचभ्रमंतिप्रतिजन्मनि १३४
मृदंगादीनिवाद्यानिकर्तव्यानिहरेःपुरः
यतोवाद्यैर्भवेत्तुष्टोभगवान्मधुसूदनः १३५

कुर्वंतिजागरंविष्णोर्वेदाध्ययनमुत्तमम्
पुराणपठनंवापिकर्तव्यंवैष्णवैर्जनैः १३६
रामायणंभागवतंभारतंव्यासभाषितम्
अन्यानिचपुराणानिपाठ्यानिहरिवासरे १३७

येपठंतिपुरोविष्णोर्येश्शृरावन्तिहरेर्दिने
प्रत्यक्षरेलभंतेतेकपिलादानजंफलम् १३८
निशिजागरणंकुर्यात्सानंदोवैष्णवोजनः
जितनिद्रोभवेत्सम्यग्ध्यायतेकेशवंहृदा १३९
प्रदक्षिणाकारतयाभूयोभूयोहरेर्दिने
निपत्यदण्डवद्भूमौप्रणमेच्चजनार्दनम् १४०
ततःप्रभातेविमलेकृतपंचमहाध्वरः
हरिंसंस्नाप्यदुग्धेनपूजयेद्भक्तिमान्व्रती १४१
व्रतस्यदक्षिणांदद्यान्निजशक्त्याद्विजन्मने
ततस्तुद्वादशीमध्येव्रतीपारणमाचरेत् १४२
पारणंकुरुतेयस्तुविलंघ्यद्वादशीतिथिम्
जन्मकोट्यर्जितंपुण्यंतस्यचैवविनश्यति १४३
द्वादशीतिथिमध्येतुकर्तव्यंपारणंबुधैः
नकदाचित्त्रयोदश्यांव्रतस्यफलमिच्छुभिः १४४
उपवासदिनेविप्रनिशायामपिवैष्णवः
उपवासफलप्रेप्सुर्यत्नात्स्वापंविवर्जयेत् १४५
विनाजागरणंनूनमुपवासोनिरर्थकः
अतोजागरणंकार्य्यमुभयोरपिपक्षयोः १४६
एकादशीव्रतंयेनविधिनानेनकुर्वते
सत्यंसत्यंद्विजश्रेष्ठसर्वेतेमोक्षगामिनः १४७
जन्ममृत्युहरणैकनिदानंसेंद्रदेवनिकरैरपिकार्यम्
वासुदेवदिवसव्रतसारंजैमिनेत्वमनिशंकुरुयत्नात् १४८
इति श्रीपद्मपुराणेक्रियायोगसारेएकादशीमाहात्म्येद्वाविंशोऽध्यायः २२

## त्रिविंशोऽध्यायः

व्यास उवाच-
पूर्वंकोचरशोनामराजाऽभूत्क्षितिमंडले
शांतःपरमधर्मज्ञोराजनीतिविदांवरः १
सत्यवादीजितक्रोधोजितवैरिसमुच्चयः
नारायणार्चनपरोहरिसेवा रतःपरः २
सुप्रज्ञानाममहिषीतस्यासीत्प्रियवादिनी
सर्वलक्षणसंपन्नापतिसेवापरायणा ३
एकादशीव्रतरतासर्वप्राणिहितैषिणी
जातिस्मरामहाभागासुशीलावरवर्णिनी ४
सराजादशमींकृत्वासदारः परमार्थवित्
एकादशींनिशीथिन्यांजागरंकर्तुमुद्यतः ५
तत्रांतरेद्विजः कश्चिच्छौरिर्नाममहीपतेः
आजगाममहातेजास्तस्यजागरमण्डपम् ६
तमायांतंसभूपालोनारायणपरायणः
पाद्याद्यैःपूजयामाससदारोऽत्यतहर्षितः ७
तेषांमध्येसूपविष्टःसविप्रोऽखिलतत्ववित्
विष्णुपूजापरांस्तत्रददर्शव्रतिनोबहून् ८
पूजयंतिहरिंकेचिन्नानापुष्पैर्मनोरमैः
गंधैर्धूपैस्तथादीपैरुपहारैरनुत्तमैः ९
गङ्गामृद्भूषिताकेचित्तुलसीपत्रमालया
अलंकृताहरेरग्रेनृत्यंतिव्रतिनोमुदा १०
केचिद्गायंतिगीतानिललितानिहरेःपुनः
करतालंसमादायव्रतिनोभगवत्प्रियाः ११
स्तवैरनुत्तमैःकेचिन्नारायणमनामयम्
स्तुवंतिजगतामीशंदिव्यार्थैःकोमलाक्षरैः १२
श्वेतचामरवातेनशीतलेनजगत्पतेः
वीजयंतिहरेःप्रीतिंकेचिच्चमहतींतथा १३
केचिद्वीणादिकंवाद्यंललितंशुचिमंगलम्
वादयंतोमहात्मानः केचिद्गायंतिकेशवम् १४

सराजाराजमहिषीद्वावप्यत्यंतहर्षितौ
गायतांललितंगीतंनृत्यतांनृत्यमुत्तमम् १५
तौदंपतीमहात्मानौनृत्यगीतादिकारिणौ
वाचामधुरयाप्राहसशौरिर्ब्राह्मणोत्तमः १६
शौरिरुवाच-
धन्योऽसित्वंमहीपालधन्याचमहिषीतव
चरित्रंयुवयोरेतन्मङ्गलंभुविदुर्ल्लभम् १७
त्वांवद्त्यामियतः कश्चिन्नदृष्टोवैष्णवोत्तमः
त्वयाभूमिभुजापृथ्वीधन्येयंनात्रसंशयः १८
एकादशीव्रतमिदंपवित्रंभगवत्प्रियम्
सदारःकुरुषेभूपतस्मात्त्वंवैष्णवाग्रणीः १९
सप्तद्वीपैकनाथश्चसदारस्त्वंनृपोत्तम
नारायणाग्रतः प्रीत्यायतोनृत्यसिगायसि २०
चरित्रंयुवयोरेतद्दंपत्योर्दृष्टमद्भुतम्
कस्माद्बुद्धिरियंजातायुवयोरतिनिर्मला २१
व्यासउवाच-
तस्येदंवाक्यमाकर्ण्यशौरिनाम्नोद्विजन्मनः
ईषद्धास्यमुखीप्राह सुप्राज्ञातमथोद्विजम् २२
सुप्राज्ञोवाच-
एकादशीप्रभावेनपूर्वमावांद्विजोत्तम
अतिपातकिनौमुक्तौसूर्यजेनमहात्मना २३
जातिस्मृतिप्रभावेणदिव्यमेकादशीव्रतम्
कुर्वःसंप्रतिविप्रेन्द्रपरमस्थानकाङ्क्षया २४
शौरिरुवाच-
यदिनूनंवरारोहेपूर्वांजातिंत्वमात्मनः
वेत्सिमेब्रूहितांश्रोतुंजायतेकौतुकंहृदि २५
पूर्वंस्थिताकाभवतीपतिर्वाकः स्थितस्तव
कथंभास्करिणात्यक्तौयुवांपातकिनावपि २६
सुप्राज्ञोवाच-
अप्रकाश्यमिदंवाक्यंयद्यपिद्विजसत्तम

स्थितास्मिवारमुख्याऽहरतिशास्त्रविशारदा २७
तस्मिञ्जन्मनिपापानिघोराणिसुबहूनिच
मयाकृतानिविप्रेन्द्रनरकक्लेशदानिवै २८
अयंनित्योदयोनामशूद्रःस्वाचारवर्जितः
परदारहरःक्रूरःपरद्रव्यापहारकः २९
सुरापोमित्रहंताचभ्रूणहापरहिंसकः
अत्यहंकारयुक्तश्चधर्मनिंदाकरः सदा ३०
एकदाज्ञातिभिःसर्वैःपरित्यक्तोहिसद्व्रतैः
आजगाममगारंवेश्याविभ्रमलोलुपः ३१
युवानंसुंदरंदृष्ट्वातमेनंद्विजसत्तम
मयापिप्रीतिमासाद्यसंतुष्टः सुरतैरपि ३२
ततोऽनुभूयसुरतंमयासहतपोधन
अयमाहचमांप्रेम्णाविनयावनतोवचः ३३
अहंसुरतशास्त्रज्ञः परित्यक्तः स्वबंधुभिः
यदित्वंमन्यसेतस्मिंस्तिष्ठाम्यत्रत्वयासह ३४
विनयावनतंवाक्यमिदंशुश्रावतद्द्विज
दंपतीभावमासाद्यसहानेनस्थितास्म्यहम् ३५
कदाचिद्द्विजशार्दूलएकादश्यांतिथौहरेः
महद्भिःपीडिताहंचदेहदेहावघातकैः ३६
तस्मिन्नेवद्विजश्रेष्ठज्वरजर्जरदेहया
नपीतमुदकंनान्नंभुक्तंचपरयाभिया ३७
ममस्नेहोदयोऽयचतस्मिन्नेवदिनेहरेः
तत्याजान्नंचतोयं चविषण्णइवजन्मना ३८
अथरात्रौद्विजश्रेष्ठदीपंप्रज्वाल्यसर्पिषा
मयाकृतंजागरणंज्वरापहतचेतसा ३९
नारायणहरेकृष्णरक्षमामितिजल्पता
मुहुर्मुहुरनेनापिकृतंजागरणंनिशि ४०
उपवासप्रभावेणकेशवोच्चारणेनच
आवयोःसकलंपापंविनष्टमभवद्द्विज ४१
ततः प्रभातेविमले भगवत्युदितेरवौ

ज्वरार्दिताहंपंचत्वंगताब्राह्मणसत्तम ४२
संप्राप्तपंचतांदृष्ट्वामामयंचततःशुचिः
सहत्यामरणंभेजेनिंदितःसकलैर्जनैः ४३
सूर्य्यजस्यततःप्रेष्यैर्ज्वलदग्निनिभेक्षणैः
बद्ध्वादृढेनपाशेननीतौदुर्गमवर्त्मना ४४
शुभकर्माशुभंवापिचित्रगुप्तोयमाज्ञया
सर्वंविचारयामासमूलात्सतुविचक्षणः ४५
चित्रगुप्तउवाच–
यद्यप्येतौमहाबाहोमहापातकिनांवरौ
तथापिपातकैर्मुक्तौह्येकादश्यामुपोषणात् ४६
अनिच्छयापियःकुर्यात्पुण्यमेकादशीव्रतम्
सोऽपिगच्छेत्परंस्थानंसर्वपापविवर्जितः ४७
इत्युक्तश्चित्रगुप्तेनधर्मराजोमहायशाः
आसनात्सहसोत्थायववंदेताममुंचसः ४८
सुगंधैश्चंदनैर्दिव्यैर्धूपैःपुष्पैश्चमृत्युना
सुवर्णाभरणैरेवमंडितौपापवर्जितौ ४९
फलैर्नानाविधैस्तत्रमधुरैरमृतोपमैः
भास्करिःकारयामासप्रीत्याभोजनमावयोः ५०
अथस्तुत्वास्तवैर्दिव्यैः स्वयमावांयमः प्रभुः
समारोप्यरथेदिव्येप्रोवाचेतिकृताञ्जलि ५१
यमउवाच–
युवांपुण्यवतांश्रेष्ठौसर्वपापविवर्जितौ
यत्रास्तेभगवान्विष्णुर्गच्छेतांतत्रसंप्रति ५२
इत्युक्तौधर्मराजेनविनयावनतेनवै
अथैतदुक्तमावाभ्यांनत्वातत्पादपङ्कजे ५३
गंतव्यंनान्यथादेवतद्विष्णोःपरमंपदम्
किंत्वस्तिनरकंद्रष्टुंत्वद्गृहस्थंस्पृहावयोः ५४
यमाज्ञयाततोविप्ररथमारुह्यशोभनम्
दुष्प्रेक्ष्यानिरयादृष्टाआवाभ्यांतत्रविस्तराः ५५
ब्राह्मणउवाच–

तत्रावस्थापापवतांयायादृष्टाःपतिव्रते
विस्तरेणसमाख्यातुंतास्ताः सर्वास्त्वमर्हसि ५६
पुण्यात्मानः पथायेनव्रजन्तियममंदिरम्
पापात्मानश्चसुश्रोणितन्मेकथयविस्तरात् ५७
पुण्यात्माकीदृशंपश्येत्तत्रवैवस्वतंप्रभुम्
पुण्यात्मनांपापिनांचपंथानंसुखदुःखदम् ५८
सुप्राज्ञोवाच-
आदौब्रवीमिपंथानंनृणांपुण्यवतामहम्
शृणुष्वद्विजशार्दूलशृण्वतांप्रीतिवर्द्धनम् ५९
प्रस्तरैर्विस्तरैर्बद्धोदिव्यवस्त्रैःसमावृतः
भातिपुण्यवतांपंथाःसर्वोपद्रववर्जितः ६०
क्वचिद्गंधर्वकन्याभिर्गीयतेगानमद्भुतम्
क्वचिन्मञ्जुशरीराभिरप्सरोभिश्चनृत्यते ६१
क्वचिद्वीणाक्वणंनानावाद्यंचक्रुर्मनोरमम्
क्वचित्कुसुमवृष्टिश्चक्वचिद्वायुश्चशीतलः ६२
क्वचित्प्रपाशीततोयाक्वचिच्चभुक्तिशालिकाः
क्वचिद्देवाश्चगंधर्वाःपठंतिस्तवमुत्तमम् ६३
क्वचित्क्वचिद्दीर्घिकाश्चफुल्लपद्माःसुशोभनाः
सुच्छायाःपादपाः क्वापिपुष्पितावंजुलादयः ६४
ततस्तुसुखसम्पन्नाः पथिगच्छंतिमानवाः
पुण्यात्मानोद्विजश्रेष्ठसुखमृत्युमवाप्यच ६५
केचित्तुरंगमारूढानानालंकारभूषिताः
उद्दण्डधवलच्छत्रैर्गच्छंत्यावृत्यमस्तकम् ६६
केचिद्यांतिगजारूढारथारूढाश्चकेचन
यानारूढाजनाःकेचित्सुखेनयममंदिरम् ६७
केचिद्देवाङ्गनाहस्तन्यस्तचामरवायुभिः
गच्छंतिवीजितामर्त्याःस्तूयमानाःसुरर्षिभिः ६८
केचिद्दिव्यायुधधराःस्रक्चन्दनविभूषिताः
भुंजंतोयांतितांबूलंपुण्यात्मानोयमालयम् ६९
निजगात्रत्विषाकेचिज्ज्वालयंतोदिशोदश

व्रजंतिशमनागारंजलग्रहनिवासिनः ७०
केचिच्चपायसंदिव्यंभुंजतोयांतिसत्तम
सुभद्मणंप्रकुर्वंतःपथियांतः सुखेनच ७१
केचिद्दुग्धंपिबंतश्चकेचिदिद्मुरसंतथा
केचित्तक्रंपिबंतश्चगच्छंतियममंदिरम् ७२
केचिद्दधीनिभद्मंतः केचिन्नानाफलानिच
केचिन्मधुपिबंतश्चपुरायवंतोव्रजंतिवै ७३
तानागतांस्ततोदृष्ट्वाबहून्धर्मपरायणान्
भास्करींप्रीतिमासाद्यस्वयंनारायणोभवेत् ७४
चतुर्बाहुःश्यामवर्णःप्रफुल्लकमलेद्मणः
शङ्खचक्रगदापद्मधारीगरुडवाहनः ७५
स्वर्णयज्ञोपवीतीचस्मरचारुमहाननः
किरीटीकुराडलीचैववनमालाविभूषितः ७६
चित्रगुप्तोमहाप्राज्ञश्चंडाद्यायमकिंकराः
सर्वेनारायणाकाराबभूवुर्मधुरोक्तयः ७७
ततःस्वयंधर्मराजस्तान्सर्वान्मनुजोत्तमान्
परमांप्रीतिमासाद्यमित्रवच्चार्चयेद्द्विवज ७८
दिव्यरत्नैःफलैश्चैवतेषांपुरायवतांनृणाम्
भोजनंकारयत्वितुतानुवाचाथभास्करिः ७९
यमउवाच–
यूयंसर्वेमहात्मानोनरकक्लेशभीरवः
निजकर्माभावेणगम्यतांपरमंपदम् ८०
संसारेजन्मसंप्राप्यपुरायंयः कुरुतेनरः
समेपितासमेभ्रातासमेबंधुसमःसुहृत् ८१
इत्युक्ताधर्मराजेनतेसर्वेद्विजसत्तम
दिव्यंरथंसमारुह्यनारायणपुरंगताः ८२
पुरायात्मनांगतिःप्रोक्तासमासेनद्विजोत्तम
पापात्मनांशृणुगतिंविस्तरेणवदाम्यहम् ८३
षडशीतिसहस्त्राणियोजनानिदुरात्मनाम्
प्रोक्तोमार्गस्यविस्तारः सर्वदुःखान्वितःसच ८४

कुत्रचिद्वह्निवृष्टिश्चकुत्रचिच्चाश्मवर्षणम्
क्वचित्क्वचिद्द्विजश्रेष्ठसंतप्तंतप्तवालुकम् ८५
क्वचित्क्वचित्तीक्ष्णशिलाःक्वचित्तप्तशिलास्तथा
क्वचित्क्वचिच्छस्त्रवृष्टिःक्वचिदंगारवर्षणम् ८६
क्वचिदग्निरिवातीवसंतप्तावांतिमारुताः
गंभीरांधकराःक्वापितृणावर्तमुखाद्द्विज ८७
क्वचित्कंटकवृष्टिश्चनाराचमयकंटकैः
पाषाणश्रेणयःक्वापिदुःखरोहाः सपन्नगाः ८८
गच्छंतिपापिनस्तत्रशुष्ककंठोष्ठतालुकाः
एवंबहुविधक्लेशेछायाजलविवर्जिते ८९
तस्मिन्मार्गेद्विजश्रेष्ठपापिनोयांतिदुःखिताः
नाम्नाविमुक्तकेशाश्चप्रेताकाराभयंकराः ९०
रुधिरौघप्लुताःकेचित्केचित्कर्दमभूषिताः
केचित्केचिच्चकृष्णांगाः पथिगच्छंतिपापिनः ९१
क्रंदंतोव्यथयाकेचित्स्रवद्बाष्पाकुले क्षणाः
शोचंतःस्वानिकर्माणिकेचिद्गच्छंतिपापिनः ९२
कस्यचिच्चर्मपाशस्यबंधनंपापिनांगले
कंकालेकस्यचिद्बद्धाःकस्यचिच्चपदद्वये ९३
गलेसूचीसमुत्कीर्णेपाशंदत्वादृढंरुषा
आकृष्यंतेयमप्रेष्याः केषांचिच्चकृतैनसाम् ९४
वर्त्मस्थान्गुरुपाषाणान्वहंतः कर्णरन्ध्रकैः
अयोभारांश्चशीर्षाग्रैर्व्रजंतिपथिपापिनः ९५
कांश्चिद्ध्रुजेषुपाशेषुनयंतियमकिंकराः
ग्रीवासुपापिनः केचित्करप्रहरणैर्दृढैः ९६
क्षिप्तक्षिप्तायमप्रेष्यानयंतियमकिंकराः
यांत्यधःशिरसःकेचिदूर्ध्वपादास्तथापरे ९७
गच्छंतिबाहुभिः केचिदेकपादाश्चकेचन
इत्येवंविकृताकाराआर्तरावविरावणाः ९८
यमदूतैस्ताडयमानाःपापिनोयांतितत्पथे
तेष्वागतेषुसर्वेषुपापात्मासुरुषायमः ९९

दिव्यांमूर्तिंपरित्यज्यबभूवात्यंतभैरवः
त्रिंशद्योजनदीर्घांगोवापीसदृशलोचनः १००
धूम्रवर्णोमहातेजाःप्रलंबोघर्घरध्वनिः
सुदीर्घदशनश्रेणिःशूर्पोपमनखावलि १०१
प्रचण्डमहिषारूढःसंदष्टदशनच्छदः
दंडहस्तश्चर्मपाशोभ्रुकुटीकुटिलाननः १०२
चित्रगुप्तोमहामायःक्रोधारुणितलोचनः
अट्टाट्टहासंकुर्वाणः समवर्तीविराजते १०३
चंडाद्याः किंकराःसर्वेपाशमुद्गरपाणयः
बभूवुर्भैरवाःक्रुद्धागर्जंतोजलदा इव १०४
जहिजह्याशुपापिष्ठान्भिन्धिच्छिंदयविंधय
समंतादेवधावंतोवल्गंतियमकिंकराः १०५
तानाहपततःसर्वान्पापिनोधर्मराट्प्रभुः
तर्जयेत्कालदंडेनत्यजन्हुंकारनिःस्वनम् १०६
यमउवाच–
रेरेपापादुराचारायुष्माभिरविवेकिभिः
अहोकृतानिपापानिआत्मपीडाकराण्यपि १०७
मस्तकोपरितिष्ठंतंनेक्षध्वंसमवर्तिनम्
ज्ञात्वापिमांजीवितेशंयुष्माभिः पातकंकृतम् १०८
पुण्यात्मनामहंबंधुरहंपापात्मनांरिपुः
इतिकुत्रापियुष्माभिर्नश्रुतंश्रवणैःस्वकैः १०९
निरयादुःसहाःसंतिनानादुःखसमन्विताः
पापिनोभुंजतेतांश्चयुष्माभिर्नेतिविश्रुतम् ११०
मत्वामिथ्यैवयुष्माभिश्चर्चाममदुराशयाः
अद्यसैवस्वकैर्नेत्रैर्दृश्यतांकृतपातकाः १११
वित्तांध्येनवचोमत्तायूयंसर्वेसदैवहि
चक्रिरेपापजालानियुष्माभिःसततंयथा ११२
तथापापफलंदुष्टाभुंजतांक्रंदनेनकिम्
सुप्राज्ञोवाच–
इत्युक्त्वाभास्करिर्देवश्चित्रगुप्तमुवाचह ११३

एतेषांपापकर्माणिमहाभागविचारय
धर्मराजवचः श्रुत्वाचित्रगुप्तोमहत्तदा ११४
तेषांयावंतिपापानितावंतिप्राहचोदितः
ततस्तेपापिनः सर्वेक्रंदंतिद्विजसत्तम ११५
इत्यूचुःशमनंभीताश्चर्मपाशेनियंत्रिताः
पापिनऊचुः
अस्माभिर्यानिपापानिकृतानिभास्करात्मज ११६
के स्थिताः साक्षिणस्तत्रकेवायूयंनिवेदिताः
अशुभंवाशुभंवापियतोऽस्माभिःकृतंपुरा ११७
तथाचदृष्टंकेनात्रपुरोऽस्माकंनिगद्यताम्
ततःप्रहस्य भगवान्कोपेनमहताद्विज ११८
आहूयसाक्षिणः सर्वानिदंवचनमब्रवीत्
यमउवाच-
यूयंसर्वेयथावृत्तंसंनिधौसाक्षिणस्तथा ११९
आकाशंपृथिवींचैवजलंचतिथयस्तथा
दिनंरात्रिरुभेसंध्येधर्मश्चैतेतुसाक्षिणः १२०
तेषांपापात्मनामूचुः सर्वंकर्मशुभाशुभम्
यस्ययस्यचवेलायांकर्मयद्यदिकारितम् १२१
ससासाक्षीतस्यतस्यजगादयमसन्निधौ
तच्छ्रुत्वापापिनः सर्वेसाध्वसाकृष्टमानसाः १२२
सकंपहृदयास्तस्थुर्मेघंदृष्ट्वामृगाइव
ततस्तुदंतावलिभिः कुर्वन्कडकडध्वनिम् १२३
धर्मराट्कालदंडेनताञ्जघानपृथक्पृथक्
ताडिताधर्मराजेनतेसर्वेकृतपातकाः १२४
क्रंदंतिनिजकर्माणिशोचंतःप्राप्तसाध्वसाः
ततस्तान्पापिनः सर्वान्दूताश्चंडादयोरुषा १२५
नरकेषुयमादेशाद्रौरवादिषुचिक्षिपुः
तपनेचिक्षिपुःकांश्चिदवीचौकृतपातकान् १२६
संघातेकालसूत्रेचमहारौरवकेतथा
संतप्तेवालुकाकुंडेकुंभीपाकेतथापरान् १२७

निरुच्छ्वासेमहाघोरेचिद्दिपुश्चप्रमर्द्दने
असिपत्रवनेघोरेनानाभद्गेषुपापिनः १२८
वैतरण्यांतथाकेऽपिचिद्दिपुर्यमकिंकराः
घोरेविष्ठाह्रदेकांश्चित्तुषांगारास्थिकंटकैः १२९
पूर्णेनितांतसंतप्तेचिद्दिपुर्यमकिंकराः
पुरीषलेपनेचैवपुरीषभोजनेतथा १३०
स्वमांसभोजनेचैवस्थापितायमकिंकरैः
श्लेष्माणंभुंजतेकेचित्केचिद्वीर्यंचभुंजते १३१
पिबंतिकेचिन्मूत्राणिकेचिद्रक्तानिपापिनः
केषांचिद्वदनेष्वेवजलौकाःपन्नगोपमाः १३२
पूर्यंतेपन्नगाश्चैवयमदूतैर्भयंकरैः
उत्पाद्यंतेऽतिसंतप्तैर्जिह्वाश्चद्विजसत्तम १३३
केषांचित्कर्णरंध्रेषुमुखेषुचकृतैनसाम्
तप्ततैलानिपूर्यंतेनिर्द्दयैर्यमकिंकरैः १३४
केषांचित्खड्गधाराभिर्बाहुंचचरणंतथा
कर्णादिनासिकाश्चैवच्छिंदंतिचदुरात्मनाम् १३५
शयनंकुर्वतेकेचिज्ज्वलदंगारसंचये
केचिन्नाराचतुल्येषुशयनंकंटकेषुच १३६
कर्दमेषुचतप्तेषुकांश्चिच्छमनकिंकराः
पातयंतिद्विजश्रेष्ठकेशेष्वाकृष्यपापिनः १३७
वमनेषुचकेषांचिन्नखसंधिषुपापिनाम्
तप्तसूचीसहस्राणिप्रद्दिपंतिमुहुर्मुहुः १३८
संतप्तलोहशूलाग्रेकांश्चिदारोपयंतिवै
क्रंदंतिकंटकैस्तीद्दणैः केषांचिन्मस्तकानिवै १३९
गृहीत्वाहस्तपादेषुशाल्मलिद्रुमकंटकैः
निष्कुषंतिरुषाकांश्चिदार्त्तरावविराविणः १४०
बद्ध्वागलेषुपाषाणंकांश्चिच्छमनकिंकराः
रक्तगर्तेपयोगर्तेपातयंतिपुनःपुनः १४१
याम्यैर्दूतैरुद्गिरंतिशिरांसिपापिनांनृणाम्
चूर्णयंत्युपलैर्याम्यामुहुर्मुहुरतिक्रुधा १४२

वक्षोमध्येषुकेषांचिल्लोहकीलकसंचयान्
आरोपयंतिलोकानांक्रंदतांदुरितात्मनाम् १४३
चक्षूंषिबडिशैःकेषामुत्पाट्यंतेकृतैनसाम्
केषांचिन्नासिकाएवपूर्य्यंतेवृश्चिकैर्द्विज १४४
केषांचिद्वृक्षशाखायांबद्ध्वापादांश्चपाशकैः
ज्वालयंतितलेवह्निंसधूमंयमकिंकराः १४५
धूमपानंप्रकुर्वन्तितेतत्रकृतकिल्विषाः अं
अधोमुखाऊर्ध्वपादास्तस्थुराचन्द्रतारकम् १४६
मुसलैर्मुद्गरैः केचित्ताड्यमानाःपुनः पुनः
याम्यैर्दूतैरुद्गिरन्तिशोणितानिव्यथाकुलाः १४७
अन्धकारमयेगेहेपूतिगन्धवतिद्विज
दंशैश्चमशकैश्चैवकेचित्सीदंति पापिनः १४८
भस्मानिभुञ्जतेकेचित्कृमीन्केचिच्चभुञ्जते
केचिद्दुर्गन्धमांसानिकेचिच्चपूतिमृत्तिकाम् १४९
श्वभिर्व्याघ्रैःशृगालैश्चवज्रदन्तनखैस्तथा
गृध्रैःकेचिद्भक्ष्यमाणाः क्रंदन्तिरुधिराप्लुताः १५०
नितांतोग्रविषैः सर्पैर्भक्ष्यमाणास्तथापरे
अन्येमहिषशृंगाग्रनिर्भिन्नवक्षसोद्विज १५१
पतन्तिमूर्च्छिताः पृथ्वय्यांसिंचंतोरुधिरैर्महीम्
यमदूतधनुर्मुक्तैर्घोरैराशीविषोपमैः १५२
जर्जराखिलदेहाश्चलुठंत्यन्येमहीतले
तप्तायः पिण्डनिलयंतप्तपाषाणमेवच १५३
दंशशस्त्रेणकेषांचित्कुष्णंतिवदनेषुच
नासारन्ध्रेषुकेषांचिद्यमदूतामुखेषुच १५४
श्वासानिलनिरोधार्थंनासारन्ध्रंवयंतिवै
केषांचित्तीक्ष्णधाराभिर्यमशाक्तिभिरुद्धतैः १५५
उत्पाट्यंतेंगचर्माणियमदूतैर्महाबलैः
कांश्चिद्गृहीत्वाकेशेषुनिपात्यपृथिवीतले १५६
कीलैः पादादिभिर्घातैस्ताडयंतिसदैवहि
केचित्क्षारांबुधाराभिः संतप्ताः कृतपातकाः १५७

क्षारांबुपानंकुर्बंतिक्रंदंतोवहुधाद्विज
पित्तपानंमहाभागकेचित्कुर्वन्तिपापिनः १५८
स्नुहीक्षीराणिकेचिच्चपिबंतिपापिनांवराः
केषांचित्स्वपतांभूमौवक्षःसुयमकिंकरैः १५९
दीयंतेगुरुपाषाणाः संतप्ताः पर्वतोपमाः
काष्ठखंडद्वयंदत्वाग्रीवायांचगलेतथा १६०
उदग्रमुखंबध्नन्तिकेषांचिदृढपाशकैः
आरोप्यवृक्षशाखायांकांश्चिद्भूमौक्षिपंतिच १६१
उत्थापयंतिभूमौचप्रक्षिपंतिपुनः पुनः
एवंतेपापिनःसर्वेक्षुधितास्तृषितास्तथा १६२
त्राहित्राहीतिजल्पंतोरुदंतियातनागृहे
युगकल्पांतपर्यंतंभुक्त्वानिरययातनाम् १६३
नातिभुक्त्वापापशेषेजायंतेपापयोनिषु
पापयोनौसमुत्पन्नाभवंतिव्याधिपीडिताः १६४
हीनांगाअधिकांगाश्चदुःखिनः पापसेवकाः
अपुत्रातिमूर्खाश्चपरहिंसापरायणाः १६५
अल्पायुषोऽल्पमतयः कुभार्यापतयस्तथा
नित्यंपापानिकर्माणिकर्मणामनसागिरा १६६
पुनःपापप्रभावेननिरयंयांतिपूर्ववत्
तस्मात्पापंनकर्तव्यंकदाचिदपिसत्तमैः १६७
नराणांकृतपापानांनरकान्नास्तिनिष्कृतिः
संक्षेपात्पापिनांदुःखंनिरुक्तंद्विजसत्तम १६८
सम्यग्वक्तुंकः क्षमोस्तिवर्षायुतशतैरपि
दुर्गतीनांततोदृष्ट्वामनुजानांकृतैनसाम् १६९
आवांविमानमारुह्यनारायणपुरंगतौ
कल्पकोटिसहस्राणिभुक्त्वाभोगान्हरेर्गृहे १७०
जातौवैराजवंशेऽस्मिन्विशुद्धेद्विजसत्तम
अत्रभुक्त्वाखिलान्भोगान्सर्वसंपत्समन्वितान् १७१
सुखमृत्युंसमासाद्यगंतव्यंपरमंपदम्
एकादशीव्रतसमंव्रतंनास्तिजगत्त्रये १७२

अनिच्छयापियत्कृत्वागतिरेवंविधाऽवयोः
एकादशीव्रतंयेतुभक्तिभावेनकुर्वते १७३
नजानेकिंभवेत्तेषांवासुदेवानुकम्पया
इतितेकथितंसर्वंपृष्टंब्राह्मणसत्तम १७४
विष्णोर्दिवसमाहात्म्यंकिमन्यच्छ्रोतुमर्हसि
व्यास उवाच-
तस्यैतद्वचनंश्रुत्वासविप्रः परमार्थवित् १७५
एकादशीव्रतेचित्तंचकारसुदृढंनिजम्
सराजाराजमहिषीचिरंभुक्त्वा वसुंधराम् १७६
अंतेविष्णुपुरंगत्वाप्राप्तवंतौपरंपदम्
व्रतराजस्यमाहात्म्यंयेशृणवंतिपठंतिच १७७
पापजालैर्विनिर्मुक्तालभंतेहरिसन्निधौ १७८
इति श्रीपद्मपुराणेक्रियायोगसारेएकादशीमाहात्म्येत्रयोविंशतितमोऽध्यायः २३

## चतुर्विंशोऽध्यायः

सूत उवाच-
एकादश्याःफलंश्रुत्वासुप्रीतोजैमिनिस्ततः
कृताञ्जलिरुवाचेदंकृष्णद्वैपायनंप्रभुम् १
जैमिनिरुवाच-
विष्णोर्देवस्यमाहात्म्यंत्वत्प्रसादाच्छ्रुतंमया
तुलस्याब्रूहिमाहात्म्यं शृणवतांपापनाशनम् २
व्यासउवाच-
इन्द्राद्यैर्दैवतैः सर्वैस्तुलसीभगवत्यसौ
संसेव्यासर्वदाविप्रचतुर्वर्गफलप्रदा ३
स्वर्गेमर्त्येचपातालेतुलसीदुर्ल्लभासताम्
चतुर्वर्गफलप्राप्तिस्तस्यांभक्तिःकरोतिवै ४
यत्रैकस्तुलसीवृक्षस्तिष्ठत्यपिचसत्तम
तत्रैवत्रिदशाःसर्वेब्रह्मविष्णुशिवादयः ५
केशवः पत्रमध्येचपत्राग्रेचप्रजापतिः
पत्रवृंतेशिवस्तिष्ठेत्तुलस्याःसर्वदैवहि ६

लक्ष्मीसरस्वतीचैवगायत्रीचंडिकातथा
सर्वाश्चान्यादेवपत्न्यस्तत्पत्रेषुवंसतिच ७
इन्द्रोऽग्नि शमनश्चैवनैर्ऋतिर्वरुणस्तथा
पवनश्चकुबेरश्चतच्छाखायांवसंत्यमी ८
आदित्यादिग्रहाः सर्वेविश्वेदेवाश्चसर्वदा
वसवोमुनयश्चैवतथादेवर्षयोऽखिलाः ९
कोटिब्रह्माण्डमध्येषुयानितीर्थानिभूतले
तुलसीदलमाश्रित्यतान्येव निवसंतिवै १०
तुलसींसेवतेयस्तुभक्तिभावसमन्वितः
सेवितास्तेनतीर्थाश्चदेवाब्रह्मादयस्तथा ११
छिन्दंतितृणजालानितुलसीमूलजानिये
तद्देहस्थांब्रह्महत्यांक्षिणत्तितत्क्षणाद्धरिः १२
ग्रीष्मकालेद्विजश्रेष्ठसुगंधैः शीतलैर्जलैः
तुलसीसेचनंकृत्वानरोनिर्वाणमाप्नुयात् १३
चन्द्रातपंवाछत्रंवातस्यैयस्तुप्रयच्छति
विशेषतोनिदाघेषुसमुक्तः सर्वपातकैः १४
वैशाखेऽक्षतधाराभिरद्भिर्यस्तुलसींजनः
सिंचयेत्सोऽश्वमेधस्यफलंप्राप्नोतिनित्यशः १५
प्रसृतोदकमात्रेणतुलसींयस्यसेचयेत्
सोऽपिस्वर्गमवाप्नोतिसर्वपापविवर्जितः १६
कदाचित्तुलसींदुग्धैःसेचयेद्योनरोत्तमः
तस्यवेश्मनिविप्रर्षेलक्ष्मीर्भवतिनिश्चला १७
गोमयैस्तुलसीमूलंयःकुर्यादुपलेपनम्
संमार्जनंचविप्रर्षेतस्यपुण्यफलंशृणु १८
रजांसितत्रयावंतिदूरीभूतानिजैमिने
तावत्कल्पसहस्राणिमोदतेविष्णुनासह १९
प्रदीपंयस्तुसंध्यायांस्थापयेत्तुलसीतले
सयातिमंदिरंविष्णोःकुलकोटिसमन्वितः २०
गोभ्यःश्वभ्यःखरेभ्यश्चमनुष्येभ्यश्चरक्षति
शिशुभ्यस्तुलसींयस्तुतंरक्षेत्केशवः सदा २१

तुलस्यारोपणंयस्तुभक्तितः कुरुतेनरः
समृतः परमंमोक्षंप्राप्नोत्येवनसंशयः २२
प्रभातेतुलसींपश्येद्भक्तिमान्योनरोत्तमः
सविष्णुदर्शनस्यैवफलंप्राप्नोतिचाक्षयम् २३
तुलसींप्रणमेद्यस्तुनरोभक्तिसमन्वितः
आयुर्बलंयशोवित्तंसंततिस्तस्यवर्द्धते २४
तुलसीस्मरणेनैवसर्वपापंविनश्यति
तुलसीस्पर्शनेनैवनश्यंतिव्याधयोनृणाम् २५
योऽश्नातितुलसीपत्रंसर्वपापहरंशुभम्
तच्छरीरांतरस्थायिपापंनश्यतितत्क्षणात् २६
तुलसीकाष्ठसंभूतांमालांवहति योनरः
तद्देहेपातकंनास्तिसत्यमेतन्मयोच्यते २७
तुलसीपत्रगलितंयस्तोयंशिरसावहेत्
गंगायाःस्नानजंपुण्यंलभतेनात्रसंशयः २८
दूर्वाभिरक्षतैः पुष्पैर्नैवेद्यैस्तुलसींशुभाम्
समाराध्यनरोभक्त्याविष्णुपूजाफलंलभेत् २९
येनार्चिताभगवतीतुलसीकदाचिन्नैवेद्यपुष्पवरधूपघृतप्रदीपैः
धर्मार्थकामपरमामृतदायिविप्राः किंतस्यविष्णुचरणापचितिप्रयोगैः ३०
स्थानेषुदोषरहितेषुसुरौघसेव्यामारोपयंतितुलसींहरितुष्टिकर्त्रीम्
तुष्टोहरिस्त्रिजगतामधिपोऽमुरारिस्तेभ्योददातिपरमंपदमाशुविप्र ३१
यज्ञंव्रतंचपितृपूजनमच्युतार्चांदानंयदन्यदपिकर्मशुभंमनुष्याः
कुर्वंतिदोषरहितेतुलसीतलेचतान्यक्षयाणिसकलानिभवंतिनूनम् ३२
यद्धर्मकर्मकुरुतेमनुजः पृथिव्यांनारायणप्रियतमांतुलसींविनाच
तत्सर्वमेवविफलं भवतिद्विजेन्द्रपद्मेक्षणोऽपिनहितुष्यतिदेवदेवः ३३
यात्रासुपश्यतिशुभांतुलसींपवित्रांयोभक्तिभावसहितोमनुजोहिनूनम्
यात्राफलंसकलमेवहरिप्रसादात्तस्याशुसिद्ध्यतिवचःसुदृढंममैतत् ३४
त्यक्त्वासुगन्धिकुसुमंभुवनैकनाथोमंदारकुन्दनलिनादिकमप्यनंतः
गृह्णातिसद्गुणमयींतुलसींप्रमोदैःशुष्कामपिप्रचुरपापविनाशदक्षाम् ३५
उत्पाट्यचैवतुलसींभुविनिक्षिपंतिपापाशयाऽमृतलताभनिदानभूताम्
अज्ञानतोनरहरिस्तुलसीप्रियोऽसौतेषांश्रियंहरतिसंततमेवसत्यम् ३६

मूत्रंपुरीषंतुलसीतलेषुकुर्वंतियेऽपिचमलंसततंमनुष्याः
देवाश्रयेसंचितपातकानांतेषांहरत्याशुहरिर्धनानि ३७
नारायणस्यपूजार्थंचिनोमित्वांनमोस्तुते
कुसुमैःपारिजाताद्यैर्गंधाद्यैरपिकेशवः ३८
त्वयाविनानैतितृप्तिंचिनोमित्वामतः शुभे
त्वयाविनामहाभागेसमस्तंकर्मनिष्फलम् ३९
अतस्तुतुलसीदेविचिनोमिवरदाभव
चयनोद्भवदुःखंतेयद्देविहृदिजायते ४०
तत्क्षमस्वजगन्नाथेतुलसित्वांनमाम्यहम्
कृताञ्जलिरिमान्मन्त्रान्पठित्वावैष्णवोजनः ४१
करतालद्वयंदत्वाचिनोतितुलसीदलम्
यथानकंपतेशाखातुलस्याद्विजसत्तम ४२
पत्रस्यचयनेदेवीभग्नशाखायदाभवेत्
तदाहृदिव्यथाविष्णोर्ज्ञायतेतुलसीपतेः ४३
शाखाग्रात्पतितंभूमौपत्रंपत्रंपुरातनम्
तेनापिपूज्योगोविन्दोमधुकैटभमर्द्दनः ४४
कोमलैस्तुलसीपत्रैर्योऽचयेदच्युतंप्रभुम्
सर्वंसलभतेशीघ्रंयद्यदिच्छतिचेतसा ४५
जैमिनिरुवाच-
तुलसीवृक्षसदृशः कोवृक्षोऽस्तिद्विजर्षभ
तमहंज्ञातुमिच्छामिब्रूहिसत्यवतीसुत ४६
व्यासउवाच-
यथाप्रियतमाविष्णोस्तुलसीसततंद्विज
तथाप्रियतमाधात्रीसर्वपापप्रणाशिनी ४७
तुलसीवृक्षमासाद्ययायास्तिष्ठंतिदेवताः
आमलक्यास्तलेतास्तानिवसंतिद्विजोत्तम ४८
गंगादीनिचतीर्थानितत्रैवद्विजसत्तम
विष्णुप्रियतमाधात्रीपवित्रायत्रतिष्ठति ४९
अशुभंवाशुभंवापियत्कर्मामलकीतले
क्रियतेमानवैर्विप्रभवेत्तत्सत्यमक्षयम् ५०

पवित्रैर्नूतनेःपत्रैर्धात्र्यायःपूजयेद्धरिम्
समुक्तःपापजालेनसायुज्यंलभतेहरेः ५१
धात्रीचतुलसीदेवीनतिष्ठेद्यत्रजैमिने
स्थानंतदपवित्रंस्यान्नचक्रियाफलंलभेत् ५२
नतिष्ठत्याश्रमेयस्यधात्रीचतुलसीशुभा
तेनकर्मकृतंसर्वंनूनं गच्छतिनिष्फलम् ५३
धात्र्यातुलस्याहीनंचनिलयंयस्यभूसुर
अलक्ष्मीःपातकंसर्वंकलिश्चतेनतोषितः ५४
स्थानेतस्मिन्द्विजश्रेष्ठनधात्रीतुलसीनच
श्मशानतुल्यंस्थानंतद्विज्ञेयंतत्वदर्शिभिः ५५
धात्रीचतुलसीयत्रतिष्ठेत्तत्राखिलाः सुराः
नधात्रीतुलसीपत्रंतत्रैवाखिलपातकम् ५६
धात्रीफलस्रजंयस्तुपापहर्त्रींवहेद्बुधः
तस्याश्रित्यतनुंविष्णुः सदातिष्ठेच्छ्रियासह ५७
धात्रीकाष्ठस्यमालांचयोवहेन्मतिमान्नरः
तस्य देहंसमाश्रित्यतिष्ठंतिसर्वदेवताः ५८
धात्रीफलस्रजंगृह्णन्यत्कर्मकुरुतेनरः
तत्सर्वमक्षयंप्रोक्तंशुभंवायदिवाशुभम् ५९
यस्तुधात्रीफलंभुंक्तेमानवोऽखिलतत्ववित्
तद्देहाभ्यंतरस्थायिसर्वंपापंविनश्यति ६०
धात्रीफलमयींमालांयोवहेद्द्विजसत्तम
ब्रवीमिशृणुमाहात्म्यंसर्वपापहरंपरम् ६१
श्मशानेऽपियदामृत्युस्तस्यस्याद्दैवयोगतः
गङ्गामरणजंपुण्यंसंप्राप्नोतिनसंशयः ६२
तंदृष्ट्वापापिनः सर्वेपापजालैः सुदारुणैः
सद्यएवप्रमुच्यंतेजन्मकोटिशतैरपि ६३
नित्यंगृह्णातिविप्रेंद्रयोधात्रीफलकर्द्दमम्
दिने दिनेलभेत्पुण्यंसंप्राप्नोतिनसंशयः ६४
धात्रीतरुंचयो हंतिसर्वदेवगणाश्रयम्
सददातिहरेरंगेघातंनास्त्यत्रसंशयः ६५

सर्वदेवमयीधात्रीविशेषात्केशवप्रिया
सम्यग्वक्तुंगुणंतस्याब्रह्मणापिनशक्यते ६६
धात्र्यास्तुलस्याविदधातिभक्तिंयोमानवोज्ञातसमस्ततत्वः
भुक्त्वाचभोगान्सकलांस्ततोंऽतेसमुक्तिमाप्नोतिहरेःप्रसादात् ६७
इति श्रीपद्मपुराणेक्रियायोगसारेतुलसीमाहात्म्यंनामचतुर्विंशोऽध्यायः २४

पञ्चविंशोऽध्यायः

जैमिनिरुवाच-
भूयएवमहाभागतुलस्याः पापनाशनम्
अतिथेः पूजनस्यापिमाहात्म्यंब्रूहिविस्तरात् १
सूतउवाच-
ततोव्यासोमहातेजास्तुलस्याद्विजसत्तम
माहात्म्यं वक्तुमारेभेशृणवतांपापनाशनम् २
व्यासउवाच-
इयंसाक्षान्महालक्ष्मीस्तुलसीभवगत्प्रिया
तस्मादिमांनपश्यंतिवृक्षज्ञानेनजैमिने ३
सदैवतुलसींमर्त्योयथैवभुविसेवते
तथैवसेन्द्राविबुधाःसेवंतेतंसुरालये ४
परब्रह्मस्वरूपेयंतुलसीयत्रतिष्ठति
तत्रैवकुशलंसर्वंसुदृढंप्रोच्यतेमया ५
प्राप्नोतिमृत्युकालेयस्तोयंपातकवानपि
तुलसीपत्रगलितंसयातिहरिसन्निधिम् ६
तुलसीमृत्तिकापुण्ड्रंयोमृत्युसमयेवहेत्
समुक्तःसकलैः पापैः पुरंगच्छतिचक्रिणः ७
यस्यस्यात्तुलसीपत्रंमुखेशिरसिकर्णयोः
मृत्युकालेद्विजश्रेष्ठतस्यस्वामीनभास्करिः ८
पवित्रनामासुमतिर्बभूवपरमार्थवित्
बभूवब्राह्मणीतस्यबहुलानामधारिणी ९
सद्वंशप्रभवासाध्वीपतिसेवापरायणा
अनपत्यपतिर्नामतत्रैकोस्तिद्विजोत्तमः १०

सख्यंतेनपवित्रोऽसौचकारद्विजसेविना
ततोऽनपत्यपतिनाकथालोभेनसत्तमः ११
उपविष्टःपवित्रोऽसौस्नेहादेकवरासने
तत्रांतरेमहातेजालोमशोनामसद्विजः १२
कथयंतौकथाश्चित्राःसमागत्यददर्शतौ
अथतंलोमशंविप्रंविप्रावुत्थायपीठतः १३
पाद्यार्घ्याचमनीयाद्यैः पूजयामासतुश्चतौ
सुप्रीतोलोमशस्ताभ्यांनारायणपरायणः १४
उवासब्राह्मणश्रेष्ठआसनेकीर्तयन्हरिम्
आसनस्थंमहात्मानंलोमशंतंकृताञ्जलिम् १५
पवित्रानापत्यमुनीभक्त्याप्राहतुर्लोमशम्
भगवन्सर्वधर्मज्ञत्वत्पादयुगलैर्नृभिः १६
सद्भिर्ग्राह्यैराश्रमोऽयपूतोऽभून्नूनमावयोः
कृतानियानिपापानिआवाभ्यांमोहतः पुरा १७
तानिसर्वाणिनष्टानित्वत्पादयुगदर्शनात्
भवान्नारायणः साक्षात्पूजनीयोऽमरैरपि १८
सम्यक्तेपूजनंकर्तुंकिमावांमानुषौक्षमौ
अतिथेर्याकृतापूजातेऽस्माभिर्निजशक्तितः १९
अनयाभवसुप्रीतः क्षमस्वदोषमावयोः
इत्युक्त्वातौमहात्मानौतस्यागंतोः पदद्वये
निपेततुर्द्विजश्रेष्ठवयस्यौगृहमेधिनौ २०
व्यासउवाच-
ततोभक्त्यासुसंतुष्टोलोमशोविदुषांवरः
युवांविनयिनांश्रेष्ठौद्विजाग्र्यौधर्मतत्परौ २१
आप्यायितोऽस्मिसुतरांयुवयोर्विनयोक्तिभिः
साक्षाद्ब्रह्माशिवो विष्णुरतिथिःप्रोच्यतेबुधैः २२
तस्मिन्नेतावतीभक्तिर्युवयोरस्तुमङ्गलम्
आराधितोऽस्म्यहंसम्यगतिथिर्भूरिभोजनैः २३
व्यासउवाच-
ततउत्थायतौविप्रौतत्पादकमलद्वये

भूयोऽपितंनमस्कृत्यप्राहतुर्लोमशंमुनिम् २४
ब्राह्मणावूचतुः
ब्रह्मन्नतिथिपूजायामाहात्म्यंवक्तुमर्हसि
यांकृत्वाप्राप्यतेमुक्तिर्दुःखलभ्यापिमानवैः २५
कोऽतिथिःप्रोच्यतेलोकेतस्यपूजाचकीदृशी
आतिथेयोऽतिथिश्चेमौलभेतेकामुभौगतिम् २६
लोमशउवाच-
वानप्रस्थोब्रह्मचारीभिक्षुश्चैषांप्रपूजनात्
निरुच्यतेगृहंश्रेष्ठमाश्रमेषुचतुर्ष्वपि २७
चतुराश्रममध्येषुप्रधानागृहिणोमताः
तैश्चातिथीनांकर्तव्यापूजाभक्तिसमन्वितैः २८
गृहिणांपरमोधर्मः प्रोक्तश्चातिथिपूजनम्
आश्रमाचारतोऽभ्रष्टास्ततस्तेगृहिणोमताः २९
वंहत्यतिथिपूजायांदक्षतांगृहिणोयदि
तदाप्रयोजनंतेषांकिमन्यैःपुण्यकर्मभिः ३०
यस्यनश्रूयतेनामनचगोत्रंनचस्थितिः
अकस्माद्गृहमागच्छेत्सोऽतिथिःप्रोच्यतेबुधैः ३१
ब्राह्मणाःक्षत्रियावापिवैश्यावावृषलास्तथा
गृहागताःपूजिताश्चविष्णुवत्तत्त्वदर्शिभिः ३२
चाण्डालप्रमुखायेऽन्येहीनवर्णसमुद्भवाः
विष्णुवत्पूजितव्यास्तेपाद्याघ्यैर्भूरिभोजनैः ३३
समागतेष्वतिथिषुप्रयाणंकुरुतेगृही
अपिसत्वरयादद्यात्पाद्याघ्यादीनिचद्विजः ३४
कुर्याच्चकुशलंप्रश्नंवचनैः कोमलाक्षरैः
कारयेद्भोजनंवापिदिव्यरत्नैर्मुदागृही ३५
सुखदेमन्दिरेतस्यशयनंकारयेद्वुधः
प्रातर्जिगमिषुंदृष्ट्वातमायांतंविवर्जयेत् ३६
यदिकर्मविपाकेनगृहीभवतिवित्तवान्
अतिथ्येनातिथिःपूज्यस्तदहंवच्मिसत्तमौ ३७
समागतेष्वतिथिषुभक्त्यादद्यात्तृणादिकम्

तृणाभावेनवैब्रूयाद्भूमौतिष्ठेतिभक्तितः ३८
पादप्रक्षालनार्थंतुदद्यादुदकमुत्तमम्
अतोमधुरयावाचापृच्छेच्चकुशलादिकम् ३९
फलादिकंततोदद्याद्भक्त्याभोजनहेतवे
तदभावेनमतिमान्मुदाविप्रप्रकाशयेत् ४०
वदेच्चाहंमहापापीदरिद्रप्रवरोऽतिथे
कर्त्तुमिच्छामिभक्तिंतेदैवतंत्रंविरोधकम् ४१
अनेनविधिनादीनःसत्यक्त्वातिथिपूजनम्
स्वाचारपतितोनान्योयथोक्तंफलमाप्नुयात् ४२
अनर्चितोऽतिथिर्यस्यगच्छेद्वैगृहिणोगृहात्
जन्मकोटयर्जितंपुण्यंतस्यगच्छतिसंक्षयम् ४३
एकएवातिथिर्येनभक्तिभावेनपूज्यते
हरेत्तस्यहरिःसद्योपातकंकोटिजन्मजम् ४४
सत्यंवच्मिहितंवच्मिदृढंवच्मिप्रयत्नतः
विनातिथिसपर्याभिर्गृहिणोनास्तिवागतिः ४५
सत्यंसत्यंपुनःसत्यमागंतुपूजयाविना
गतिर्नास्त्येवनास्त्येवनास्त्येवगृहिधर्मिणाम् ४६
ज्ञातिधर्मइतिख्यातोवल्लभोद्वापरेयुगे
बभूवसर्वधर्मज्ञस्तस्य श्रीवल्लभाह्वया ४७
तेनसर्वाणिकर्माणिकृतानिज्ञातिसेविना
सौराष्ट्रेवसतिंचक्रेतयासहसभार्यया ४८
तत्रदुर्ग्रहसंचाराद्द्वादशाब्दंचवासवः
नववर्षांबुतेनासीद्दुर्भिक्षंसुमहद्द्विजौ ४९
तस्मिन्महतिदुर्भिक्षेलोकास्तद्देशवासिनः
बभूवुर्दुःखिताःसर्वेमर्यादामपितत्यजुः ५०
ज्ञानभद्रोमहायोगीयुगेद्वापर संज्ञके
दुर्भिक्षहृतसंपत्तिर्बभूवात्यन्तदुःखितः ५१
क्षुधाकुलान्सुतान्दृष्ट्वादारांश्चद्विजसंमतौ
फलमूलादनार्थायजगामोत्पत्यकांगिरेः ५२
गिरेरुपत्यकाप्रांतेचिरायुःसबुभुक्षितः

कूष्माराडफलमेकंचलेभेब्राह्मणसत्तमौ ५३
समादायफलंतच्चहर्षितोऽसौनिजालयम्
जवैर्जगामविप्रेन्द्रोज्ञानभद्रोमहायशाः ५४
एतस्मिन्नन्तरेविप्रमेघैर्न्नीलपदैरिव
आवृतेगगनेवृष्टिर्महासारैर्बभूवह ५५
समुनिश्चतयावृष्ट्याप्लाविताखिलविग्रह
वनाद्वनचरः कश्चिच्छीतार्तश्चाययौगृहम् ५६
दृष्ट्वातिथिंतुशीतार्तंववंदेशिरसाततः
ददौतृणासनंभक्त्यातस्मैपाद्यादिकंततः ५७
ततोमधुरयावाचातेनैवातिथिनासह
तस्थौस्वस्थेनमनसाप्रज्ञालापंप्रकुर्वता ५८
गृहिरायासहगोपेनस्वामिसेवासुदत्तया
ततः कूष्माराडकंनव्यंपक्वमत्यंतयत्नतः ५९
संप्राप्यहर्षितासाध्वीददौभागंविधायसा
अथासौदुर्बलोगोपोदिनविंशमुपोषणात् ६०
आतिथेयोमहाभागंददौचातिथयेमुदा
ततस्तद्गृहिणीसाध्वीस्वामिभक्तिपरायणा ६१
ददौसापतितंभागंतस्मैचातिथयेमुदा
अथातिथेस्तयोस्तत्रदंपत्योःसुमहात्मनोः ६२
अभूद्भागद्वयंभुक्त्वासुप्रीतोद्विजसत्तम
विष्णुवत्पूजितस्ताभ्यांसोऽतिथिर्दृढभक्तितः ६३
विश्रामंरात्रौतत्रैवप्रातःस्नात्वाचिरंययौ
गतैवमुपवासेनदिनानामेकविंशतिः ६४
दंपतीतौमहात्मानौपंचतांययतुस्ततः
तेनपुरायप्रभावेरादंपतीतौमहाशयौ ६५
प्रापतुर्विष्णुसायुज्यंदुर्ल्लभंयोगिनामपि
तयोःपुरायप्रभावेराविहितातिथिपूजया ६६
तस्मिन्राज्येतुदुर्भिक्षंविनष्टमभवत्ततः
अत्यंतसुखिनोलोकाः शोकव्याधिविवर्जिताः ६७
धनधान्यादिसम्पन्नाबभूवुर्धर्मतत्पराः

विनष्टादस्यवस्तत्रनृपोऽभूल्लोकपालकः ६८
निजाचाररतालोकाजलदाःकामवर्षिणः
पूर्वजाःकोटिपुरुषास्तथैवापरजास्तयोः ६९
तेनैवकर्मणामुक्तिंजग्मुःपापविवर्जिताः
निर्दोषाधनसंपन्नाःसर्वलोकैकपूजिताः ७०
शोकव्याधिविहीनाचववृधेसंततिस्तयोः
लोमश उवाच–
आगंतुपूजामाहात्म्यंसेतिहासंमयोदितम् ७१
युवयोः प्रीतयोर्विप्रौकिमन्यच्छ्रोतुमिच्छथ
व्यासउवाच–
इतिब्रुवतिवैतस्मिँल्लोमशेतपसांधने ७२
कालग्रस्तः कृष्णआखुस्तत्रोत्तस्थौबिलान्निजात्
तमुत्थितंबिलात्कृष्णमूषकंक्रोधविह्वलः ७३
पवित्रस्तत्रचोत्तस्थौवदन्नितिमुहुर्मुहुः
अयंपापाशयोदुष्टोमूषकोनिशिचाश्रमम् ७४
खनतेतीक्ष्णदंतौघैर्गृहद्रव्यंचकृंतति
सर्वेषामेववर्णानांकृपाश्रेष्ठाप्रकीर्तिता ७५
साचसर्वेषुकर्तव्यानचदुष्टेषुजंतुषु
इत्युक्त्वासौमूषिकंतंद्विजश्रेष्ठकृतैनसम् ७६
नाराचेनातितीक्ष्णेनप्राप्तकालंजघानह
स्रवच्छोणितधाराभिःप्लाविताङ्गःसमूषकः ७७
पपातभूमौविप्रर्षेव्यथयाहतचेतनः
आखौनिपतितेतस्मिन्दयालुर्द्विजसत्तमः ७८
हाहाकारंततःकृत्वासमुत्तस्थौजवेनसः
निजकर्णात्समानीयतुलसीपत्रमुत्तमम् ७९
तस्याखोर्वदनेशीर्षेकर्णयोश्चप्रदत्तवान्
मातस्तुतुलसीदेविगोगिन्दह्लादकारिणि ८०
अस्याखोःकृतपापस्यकुरुत्वंगतिमुत्तमाम्
इत्युक्त्वासद्विजश्रेष्ठसर्वलोकोपकारकः ८१
हरेनारायणानन्तइत्युच्चैरकरोद्ध्वनिम्

तुलसीपत्रसंस्पर्शान्मूषकोवीतकल्मषः ८२
श्रवणाद्धरिनाम्नश्चमुक्तोऽभूद्भवबंधनात्
ततोदूतामहाविष्णोः सर्वलक्षणसंयुताः ८३
आजग्मुःसुरथैः शीघ्रंनेतुंतंगतकल्मषम्
समारुह्यरथंदिव्यंविष्णुदूतगणैर्वृताः ८४
जगामपरमंस्थानंमूषकोद्विजसत्तम
युगकोटिसहस्राणिस्थित्वानारायणाश्रमे ८५
ज्ञानमासाद्यतत्रैवमोक्षमाखुर्जगामसः
व्यासउवाच-
माहात्म्यंतुलसीदेव्याः कथितंतेद्विजोत्तम ८६
इदानींब्रूहिकिंश्रोतुंमहाभागत्वमिच्छसि ८७
इति श्रीपद्मपुराणेक्रियायोगसारेपंचविंशोऽध्यायः २५

## षडिवंशोऽध्यायः

जैमिनिरुवाच-
कलौयुगेमहाभागसमायातेसुदारुणे
भविष्यंतिजनाःसर्वेकीदृशास्तद्वदस्वमे १
व्यासउवाच-
आद्यंसत्ययुगंप्राहुस्तत्रविप्रादयोजनाः
नारायणार्चनपराः शोकव्याधिविवर्जिताः २
सत्योक्तिभाषिणः सर्वेसदयादीर्घजीविनः
धनधान्यादिसम्पन्नाहिंसादंभविवर्जिताः ३
परोपकरणाश्चैवसर्वशास्त्रविदस्तथा
एवंविधाःसत्ययुगेसर्वेलोका द्विजोत्तम ४
राजधर्मग्राहिणश्चभूपालाजनपालनाः
अहोसत्ययुगस्यास्तिकोव्याख्यातुंगुणंयशः ५
अधर्मोच्चारणंयत्रजनाःकेऽपिनकुर्वते
त्रेतायुगेसमायातेधर्मः पादोनकंगतः ६
अल्पशोकान्वितालोकाःकेचित्केचिदघाश्रयाः
विष्णुध्यानरतालोकायज्ञदानपरायणाः ७

वर्णाश्रमाचाररताःसुखिनः स्वस्थचेतसः
क्षेत्रभूमिकृतःशूद्राःसर्वेब्राह्मणसेविनः ८
ब्राह्मणाश्चमहात्मानोवेदवेदाङ्गपारगाः
प्रतिग्रहनिवृत्ताश्चसत्यसन्धाजितेन्द्रियाः ९
तपोव्रतरतानित्यंदातारोविष्णुसेविनः
त्रेतायुगस्यावसानेद्वापरेयुगआगते १०
द्विपादहीनोधर्मःस्यात्सुखदुःखान्वितानराः
केचित्केचित्पापरताः केचित्केचिच्चधर्मिणः ११
केचित्केचिद्गुणैर्हीनाःकेचित्केचिन्महागुणाः
अत्यन्तदुःखिनःकेचित्केचिच्चसुखिनस्तथा १२
प्रतिग्रहेब्राह्मणश्चकदाचित्कुरुतेस्पृहाम्
भूभुजैर्धनलोभेनकदाचित्पीडयतेप्रजा १३
विष्णुपूजापराविप्राः शूद्राश्चद्विजसेविनः
यदायुगेयुगेधर्मःपादोनतांगतोद्विज १४
तदाव्यासोविष्णुरूपीवेदभागंचकारह
कलौयुगेचविप्रेन्द्रसर्वपापैकर्मंदिरे १५
एकपादोभवेद्धर्मः सर्वेपापरताजनाः
ब्राह्मणाःक्षत्रियावैश्याःशूद्राःपापपरायणाः १६
अत्यंतकामिनःक्रूराभविष्यंतिकलौयुगे
वेदनिंदाकराश्चैवद्यूतचौर्यकरास्तथा १७
विधवासंगमग्नाश्चभविष्यंतिकलौयुगे
वृत्त्यर्थब्राह्मणाःकेचिन्महाकपटधर्मिणः १८
सर्वेस्त्रैणाभविष्यंतिमादकद्रव्यसेविनः
सदा स्त्रीयोनिनिरताःपरद्रव्यंहरंतिच १९
परान्नलोलुपानित्यंतपोव्रतपराङ्मुखाः
पाखण्डसङ्गबद्धाश्चभविष्यंतिकलौयुगे २०
रक्ताम्बराभविष्यंतिब्राह्मणाः शूद्रधर्मिणः
कलौयास्यंतिनिर्वृत्ताउत्तमाअतिनीचताम् २१
नीचाश्चधनसम्पन्नायास्यंत्युच्चपदंप्रति
प्रदास्यंत्युपकारिभ्योदानानिसकलाजनाः २२

यत्नादपिचनेष्यंतिवृषलाविप्रवर्त्तनम्
मित्रस्नेहाद्वदिष्यंतिकूटसाक्ष्यंकलौजनाः २३
अधर्मबुद्धिलपनाधर्मबुद्धिविलापिनः
परोक्षनिंदकाःक्रूराः संमुखेप्रियवादिनः २४
साध्वीवादंवदिष्यंतिभर्तारंपुंश्चलीस्त्रियः
परस्त्रीहिंसकाश्चैवगोत्रविक्रयिणोद्विजाः २५
कन्याविक्रयिणश्चैवभविष्यंतिकलौयुगे
स्त्रीजिताः पुरुषाःसर्वेस्त्रियोऽप्यत्यंतचञ्चलाः २६
कलौयुगेभविष्यंतिकलौमर्त्यादुराशयाः
अल्पसस्यावसुमतीमेघाःस्वल्पोदकास्तथा २७
अकालवर्षिणश्चापिभविष्यंतिकलौयुगे
कलौविड्भोजिनोगावः स्वल्पक्षीराश्चजैमिने २८
घृतहीनंचतत्क्षीरंभविष्यंतिनसंशयः
आत्मस्तुतिपरालोकाः परनिंदापरायणाः २९
भविष्यंतिचखर्वाङ्गाबालाबह्वन्नभोजनाः
पितृयज्ञंकरिष्यंतिदंभार्थंब्राह्मणाःकलौ ३०
सर्वेवचःस्नेहिनःस्युर्यावत्कार्यंनसिद्ध्यति
नरान्धर्मपरान्दृष्ट्वासर्वेचोपहसंतिवै ३१
वर्धंत्यधर्मतोलोकास्तस्मात्पापरताजनाः
दशद्वादशवर्षेचसमूलोऽप्येतिसंक्षयम् ३२
जलस्येवभविष्यंतियथावर्षासुवृद्धयः
ततो लोकाभविष्यंतिकलौगलितयौवनाः ३३
पंचमेवापिषष्ठेवावर्षेस्त्रीगर्भधारिणी
बह्वपत्याश्चपुरुषाभविष्यंत्यतिदुःखिनः ३४
नेतुकामाश्चसर्वेऽपिदातुकामानकेऽपिच
कलौम्लेच्छाभविष्यंतिराजानः पापतत्पराः ३५
एकवर्णाभविष्यंतिविषयार्थंकलौजनाः
कलेःप्रथमसंध्यायांहरिंनिंदंतिमानवाः ३६
कलेर्मध्येनपश्यंतिहरेर्नामानिकेवले
ब्राह्मणाःक्षत्रियावैश्यावृषलाश्चकलौयुगे ३७

एकवर्णाभविष्यंतिवर्णाश्चत्वारएवच
यदायदाद्विजश्रेष्ठहानिः सुकृतिनांभवेत् ३८
वृद्धिश्चपापिनांनृणांज्ञेयावृद्धिस्तदाकलौ
यद्यप्ययंकलिर्घोरोमयाप्रोक्तोद्विजोत्तम ३९
तथाप्यस्तिमहानस्यगुणोगुणवतांवर
सत्येद्वादशभिर्वर्षैर्भवेत्पुण्यस्यसाधनम् ४०
तदर्धेनचत्रेतायांमासेनद्वापरेभवेत्
अहोरात्रेणैवविप्रभवेत्तच्चकलौयुगे ४१
तस्मात्कलियुगेनृणांमर्त्यैनैवोत्तमागतिः
द्वादशाब्दैर्युगेऽन्यस्मिन्हरिमभ्यर्च्ययत्फलम् ४२
तत्फलंलभतेमर्त्योहरिमुच्चार्यवैकलौ
हरेर्नामैकमप्यत्रकलौवदतियोनरः ४३
कलिर्नबाधतेतंचसत्यंसत्यंनसंशयः
जैमिनिरुवाच-
मनःशुद्धिविहीनत्वात्समस्तंकर्मनिष्फलम् ४४
इतिपूर्वंत्वयाप्रोक्तंमनोविस्मयदंमम
कलौसर्वेभविष्यंतिमनःशुद्धिविवर्जिताः ४५
तेषांयथाभवेत्कर्मसकलंब्रूहितद्गुरो
व्यास उवाच-
यत्किंचित्कुरुतेकर्ममर्त्योधर्मंकलौयुगे ४६
तदर्पयेन्महाविष्णौभक्तिभावसमन्वितः
विष्णौसमर्पितंकर्मसर्वमेवाक्षयंभवेत् ४७
व्यासउवाच-
इतितेकथितंसर्ववृत्तंब्राह्मणसत्तम
यच्छ्रुत्वाभक्तिभावेननरोमोक्षमवाप्नुयात् ४८
सूतउवाच-
एवंप्रबोधितस्तेनजैमिनिः परमात्मना
क्रियायोगरतोभूत्वाजगामपरमंपदम् ४९
इमंक्रियायोगसारंव्यासेनोक्तंमहात्मना
येपठंतिजनाभक्त्याशृण्वंतिचमुमुक्षवः ५०

तेसर्वेपातकैर्घोरैर्बहुजन्मार्जितैरपि
विमुक्ताःपरमांमुक्तिंलभंतेनात्रसंशयः ५१
यद्यदिष्टंपठंत्येतच्छृणवन्तिचमुमुक्षवः
लभंतेतत्तदेवाशुप्रसादात्कमलापतेः ५२
श्लोकार्द्धंश्लोकमेकंवाश्लोकपादमथापिवा
नरःपठित्वा श्रुत्वाचलभतेवांछितंफलम् ५३
लिखित्वालेखयित्वावायः शास्त्रमिदमर्चयेत्
सविष्णुपूजनस्यैवफलंप्राप्नोतिमानवः ५४
इदमतिशयगुह्यंनिःसृतंव्यासवक्त्राद्द्बुद्विर्चिरतरपुराणंप्रीतिदंवैष्णवानाम्
चिरममरवराद्यैर्वंदितांघ्रेर्मुरारेःसकलभुवनभर्त्तुश्चक्रिणः प्रीतयेऽस्तु ५५

इति श्रीपद्मपुराणेक्रियायोगसारखण्डेव्यासजैमिनिसंवादेयुगधर्मनिरूपण
पूर्वकंपुराणमाहात्म्यवर्णननामषड्विंशतितमोऽध्यायः २६